धर्मो विश्वस्य जगतः प्रतिष्ठा

प्राज्ञपाठशालामण्डलग्रन्थमाला

# मीमांसाकोषः

सप्तमो भागः

(व–ह)

संपादकः

ब्रह्मीभूतः केवलानन्दसरस्वती

मार्गशीर्षः शुक्लः १ भौमवासरः शकः १८८८

Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# MĪMĀṂSĀKOṢAḤ

## Part VII

✦

*Edited by*

The Late Kevalānandasaraswatī

1966

Rs. 50

( All rights reserved )

L146107

*Printed by M. S. Sathe, at the Prajna Press, Wai ( Satara )*

*&*

*Published by M. S. Sathe, for Prajna Pathashala Mandal, Wai ( Satara )*

**Price Rs. 50**

# अनुक्रमणिका

# प्रकाशकस्य निवेदनम्

अयं सप्तमोऽन्तिमश्च भागो मीमांसाकोशस्य । अस्मद्गुरुचरणैः रचितोऽयं कोशोऽस्मिन् भागे हकारेण समाप्तिं गच्छति । गुरुचरणान्तेवासिना मीमांसाभूषणेन आहिताग्निना ताम्वे इत्युपाख्येन दत्तात्रेयशास्त्रिणा अस्य भागस्य संस्कारः संपादितः । विशेषतः सर्वेषां भागानामादितोऽन्तपर्यन्तं संपादनं मुद्रणं प्रकाशनं चास्मत्सहकारिणा कार्यकारिसंपादकेन श्रीरङ्गनाथशास्त्रिणा वझायासेन निर्वर्तितम् । अस्य भागस्य मुद्रणव्ययार्थं भारतसंघराज्यशिक्षामन्त्रणालयेन महाराष्ट्रराज्यशासनशिक्षाविभागेन च वित्तानुदानं कृतमिति तदुभयं हार्दिकीं प्रशंसामर्हति ।

गुरुचरणैस्तु अस्य कोशस्य विरचनार्थं कस्मादप्यन्यस्मात् वित्तानुदानमस्वीकृत्यैव, एतद्विरचनं स्वाध्यायरूपं तप इत्येवं मत्वा, बहवः संवत्सरा अस्मिन्नेव कार्ये समाहितचित्तैर्व्यतीताः । गुरुचरणर्णापाकरणमस्य कोशस्य समाप्त्या निःशेषं संपन्नमिति कृत्वा अस्मत्प्राज्ञपाठशालामण्डलमात्मानं कृतार्थं मन्यते ।

अस्मिन् महाकोशे गुरुचरणविरचिता पूर्वमीमांसासूत्रवृत्तिः अधिकरणाद्यसूत्राक्षरानुक्रमेण अधिकरणशः समाविष्टाऽस्ति । सा इत उद्धृत्य पृथक्तया मीमांसादर्शनसूत्रानुक्रमेण प्रकाशिता चेद्भविष्यति मीमांसादर्शनाध्ययनरसिकानुपकरिष्यतीति मत्वा तस्याः पृथक् प्रकाशनेऽस्मन्मनसि संकल्पोऽस्ति । वित्तानुकूल्ये सोऽपि संकल्पः साफल्यं गच्छेदित्याशास्महे ।

कोशेऽस्मिन् स्वीकृतवर्णक्रमविषयकं विवरणं तृतीयभागे द्रष्टव्यम् ।

**अधिकरणादिसंख्या**— सप्तमेऽस्मिन् भागे भाष्याधिकरणानि १५६, संकर्षाधिकरणानि ५४, केवलनन्दीवृत्त्यधिकरणानि १९१, तौतातिताधिकरणानि ९, न्यायाः २०६, लघुसिद्धान्ताश्च ६२०७ भवन्ति ।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ९३५, संकर्षाधिकरणानि ३२२, केवलानन्दीवृत्त्यधिकरणानि ( पूर्वमनवधानादगणितानि १९, मिलित्वा ) ९००, तौतातिताधिकरणानि ८९, न्यायाः १४२२, लघुसिद्धान्ताश्च २८४८७ इति ।

**लक्ष्मणशास्त्री जोशी, तर्कतीर्थः**
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

मार्गशीर्षः शुक्लः १
शकः १८८८

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च ।

**अद्वैत**— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता ।

**अद्वैत. चं**— अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम ।

**अलंकारः**— भाट्टालंकारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

**आचारमयूखः**— श्री. ज. र. घारपुरेसंपादितः, मुंबई ।

**आपध**— आपस्तम्बधर्मसूत्रम् । प्रश्नः, कण्डिका, सूत्रं इति अङ्कत्रयम् ।

**आपस्तम्बाचार्यः**— प्रसिद्धः कल्पसूत्रकारः ।

**आभरणम्**— शांकरशारीरकभाष्यस्य टीका । अध्याय- पाद- सूत्राङ्काः । क्वचित् तृतीयोऽङ्कः अधिकरणस्य ।

**आर्षेयब्राह्मणम्**— सामवेदीयम् ।

**आश्व. गृ**— आश्वलायनगृह्यसूत्रम् , तत्रत्या नारायणवृत्तिश्च ।

**आश्व. श्रौ**— आश्वलायनश्रौतसूत्रम् । पुण्यपत्तनस्थानन्दाश्रमे मुद्रितम् ।

**इ**— इत्यादि ।

**उद्योत**— व्याकरणमहाभाष्यस्य टीका ।

**उपदेशसाहस्री**— श्रीशंकराचार्यप्रणीता । रामतीर्थः टीकाकारः । प्रकरणश्लोकाङ्कौ । गद्यं पद्यं च ।

**ऋजु**— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बासीरीज् १९२९ सने मुद्रिता ।

**ऋसं**— ऋग्वेदसंहिता । मण्डलम् , सूक्तम् , ऋक् इत्यङ्कत्रयम् ।

**ऐआसा**— ऐतरेयारण्यकस्य सायणभाष्यम् ।

**ऐब्रा**— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्रं इत्यङ्कत्रयम् ।

**ऐब्रासा**— ऐतरेयब्राह्मणस्य सायणभाष्यम् । अध्याय-खण्ड-सूत्राणामङ्काः । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् ।

**कठोप**— कठोपनिषत् ।

**कणादसूत्रम्**— वैशेषिकदर्शनम् । अध्याय-आह्निक-सूत्राणामङ्काः ।

**कणिका**— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता । काशी मेडिकलहॉलमुद्रणालये १९०७ सने मुद्रिता ।

**कर्कः**— कर्काचार्यः , कात्यायनश्रौतसूत्रस्य भाष्यकारः ।

**कल्पतरु**— भामत्याः टीका । अमलानन्दसरस्वतीप्रणीतः , १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः । अध्यायः , पादः , सूत्रं इत्यङ्कत्रयम् ।

**कस्तूरि**— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः । १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

**कातीयसूत्रम्**— कात्यायनश्रौतसूत्रम् ।

**कासं**— काठकसंहिता ।



**कु., कुतूहलम्**— अध्वरमीमांसाकुतूहलवृत्तिः श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग-वाणीविलासे मुद्रिता । अध्यायः , पादः , अधिकरणम् , सूत्रं इत्यङ्कचतुष्टयम् ।

**के**— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

**कैउ**— कैवल्योपनिषत् ।

**कैयटः**— व्याकरणमहाभाष्यस्य टीकाकारः । काश्यां मुद्रितः ।

**कौ., कौस्तुभः**— मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः , अधिकरणम् , सूत्रं इत्यङ्कचतुष्टयम् , पृष्ठाङ्कश्च ।

**कौब्रा., कौषीतकिब्राह्मणम्**— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

**चतुर्ग्रन्थी**— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभिः प्रणीता न्यायामृत-अद्वैतसिद्धि-न्यायामृत-तरङ्गिणी-लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

**चन्द्रिका**— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

**जै**— जैमिनिकृतद्वादशलक्षणी । अध्यायः , पादः , अधिकरणम् , सूत्रं इत्यङ्कचतुष्टयम् ।

**जैब्रा**— जैमिनीयब्राह्मणम् ।

**टुप्**— टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम् । पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३३ सनादौ मुद्रिता ।

**तत्त्वप्रकाशिका**— परिभाषेन्दुशेखरटीकायाः भूतेः टीका । २००२ संवति काश्यां मुद्रिता ।

**तत्त्वबोधिनी**— सिद्धान्तकौमुद्याः टीका निर्णयसागरीया १९२९ सने मुद्रिता ।

**तन्त्ररत्नम्**— टुप्टीकायाः पार्थसारथिप्रणीता टीका । लिखिता । अध्यायः , पादः , अधिकरणम् , सूत्रं चेति अङ्कचतुष्टयम् ।

**ताण्ड्य**— ताण्ड्यब्राह्मणं पञ्चविंशं नाम । अध्यायः , खण्डः , सूत्रं चेति अङ्कत्रयम् ।

**ताण्ड्यसा**— ताण्ड्यब्राह्मणस्य सायणप्रणीतं भाष्यम् ।

**तैसं**— तैत्तिरीयसंहिता । काण्डम् , प्रपाठकः , अनुवाकः इत्यङ्कत्रयम् ।

**तैसंसा**— तैत्तिरीयसंहितायाः सायणभाष्यम् । पुण्यपत्तने आनन्दाश्रमे मुद्रितम् ।

**तौता**— तौतातितमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः । काश्यां मुद्रितः ।

**दमी**— दत्तकमीमांसा श्रीनन्दपण्डितकृता ।

**द्र०**— द्रष्टव्यम् ।

**धर्मसिन्धुः**— श्रीकाशीनाथोपाध्यायविरचितः ।

**निरुक्त**— यास्काचार्यप्रणीतं निरुक्तम् । अध्यायः खण्डश्च ।

**निर्णयसिन्धुः**— श्रीकमलाकरभट्टविरचितः ।

**न्या. माला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता, चौखम्बायां मुद्रिता ।

**न्यायनि**— न्यायनिर्णयः नाम शांकरशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय-पाद-सूत्राङ्काः ।

**न्या. सू**— न्यायदर्शनसूत्रम् । अध्यायः, आह्निकम् , सूत्रं इति त्रयोऽङ्काः ।

**पं**— पङ्क्तिः ।

**पञ्जिका**— प्रकरणपञ्जिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी । अनेकप्रकरणात्मको ग्रन्थः । चौखम्बायां मुद्रितः ।

**पराक्रमः**— उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखितः । पत्रम्, पृष्ठं इत्यङ्कद्वयम् ।

**शास्त्रप्रकाशिका**— बृहदारण्यकोपनिषच्छांकरभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता ।

**शेखर**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः भूत्यादिसहितः ।

**श्राद्धमयूखः** — श्री. ज. र. घारपुरेप्रकाशितः, मुम्बई ।

**श्रीकर**— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी ।

**श्लोवा**— श्लोकवार्तिकं आचार्यकुमारिलभट्टविरचितम् । तर्कपादः । चौखम्बायां १८९८ सने मुद्रितम् ।

**संस्कारकौस्तुभः**— श्रीअनन्तदेवविरचितः निर्णयसागरे मुद्रितः ।

**संकर्ष**— संकर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः । काश्यां मेडिकलहॉल-मुद्रणालये १८९४ सने मुद्रिता ।

**संक्षेपशारीरकम्**— रामतीर्थकृतटीकासहितम् । अध्यायः, श्लोकः इति अङ्कद्वयम् ।

**संग्रहः** — न्यायसंग्रहः । लिखितः ।

**सत्याश्रौ**— सत्यापाढीयं श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सत्यापाढः** — तैत्तिरीयहिरण्यकेशिशाखीयकल्पसूत्रं आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सदर्सं**— सर्वदर्शनसंग्रहः ।

**सना. ध. प्र.** — सनातनधर्मप्रदीपः । श्रीकुकरमुण्डेकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः ।

**समयमयूखः**— श्री. ज. र. घारपुरेसंपादितः, मुम्बई ।

**साहस्री**— भुवनेशलौकिकन्यायसाहस्री । मुम्बई वेङ्कटेश्वरे १८३० शके मुद्रिता । साहस्र्यां यो न्याय-क्रमाङ्को निर्दिष्टः स एवास्माभिः प्रदर्श्यते ।

**सि. कौ.** — सिद्धान्तकौमुदी भट्टोजीदीक्षितप्रणीता । निर्णयसागरे १९२९ सने मुद्रिता ।

**सिद्धान्तचन्द्रिका**— तर्कपादस्थशास्त्रदीपिकायाः टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता ।

**सिद्धान्तदर्शनम्**— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सिद्धिव्याख्या**— अद्वैतसिद्धेः टीका ।

**सु., सुधा**— न्यायसुधा, तन्त्रवार्तिकस्य टीका । भट्टसोमेश्वरविरचिता राणकापरपर्याया । चौखम्बायां मुद्रिता । अत्र पृष्ठाङ्का एव केवलमुपन्यस्ताः । यत्र च 'सु. ३।७' इति स्यात्तत्र सुधायाः तृतीयाध्यायस्य सप्त-माष्टमपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठं अमुकं इत्यर्थः । तत्र भागे किल पृथगेव अङ्का मुद्रिता आदित आरभ्य ।

**सोम**— सोमनाथी मयूखमालिका नाम शास्त्रदीपिकायाष्टीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता । निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता । अत्र अध्यायः, पादः, अधिकरणं इति अङ्कत्रयम् ।

---

# शुद्धिपत्रकम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३६३९ | २ | ८ | वर्हिव | वर्हिर्व |
| ३६४१ | ,, | ६ | श्रतौ | श्रुतौ |
| ३६४३ | ,, | १५ | भिधान | भिधानं |
| ३६४४ | १ | ,, | शेषषाच्च | शेषाच्च |
| ,, | २ | १४ | पादकं | पदिकं |
| ३६५२ | १ | १ | त्राथ | त्रार्थ |
| ,, | ,, | ४ | श्रति | श्रुति |
| ,, | ,, | १७ | श्रतेः | श्रुतेः |
| ,, | २ | २० | श्रत्य | श्रुत्य |
| ३६५३ | १ | ४ | प्यरन्य | ऽयन्य |
| ३६६० | ,, | ६ | स्मति | स्मृति |
| ,, | ,, | ६ | श्रत्य | श्रुत्य |
| ,, | ,, | १७ | शिताय | शितार्थ |
| ,, | २ | २८ | स्मते | स्मृते |
| ३६६१ | १ | ८ | श्रति | श्रुति |
| ३६६५ | ,, | १३ | श्रति | श्रुति |
| ,, | २ | ३ | श्रत्य | श्रुत्य |
| ,, | ,, | २४ | श्रति | श्रुति |
| ३६६६ | १ | १० | अनमी | अनुमी |
| ,, | ,, | २० | दशन | दर्शन |
| ,, | २ | १४ | स्मति | स्मृति |
| ३६६८ | १ | २ | मेवकं | मेवैकं |
| ३६७३ | ,, | ५ | श्रुसंख्या | श्रुतसंख्या |
| ३६७४ | २ | ७ | योनम | योगभ |
| ३६८५ | ,, | ६ | रथत | रथंत |
| ३७०० | ,, | २१ | तिसभिः | तिसृभिः |
| ३७०६ | ,, | १ | कमव | कर्मैव |
| ३७०९ | ,, | २२ | ब्रूवाणै | ब्रुवाणै |
| ३७४७ | ,, | २६ | दवेन | देवेन |
| ३७९९ | १ | ७ | ऐता | एता |
| ,, | २ | ८ | चरो | चरौ |
| ३८०८ | १ | ३३ | सक्तुन् | सक्तून् |
| ३८२५ | २ | २४ | छुति | छुति |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३८२६ | १ | १९ | मतान्य | मुतान्य |
| ३८२७ | २ | ११ | मदः | भेदः |
| ३८५३ | १ | ६ | चतद | चैतद |
| ३८६७ | ,, | ३ | मिन्नन्द्रि | मिन्नेन्द्रि |
| ,, | ,, | ११ | सवः | सर्वैः |
| ,, | २ | १ | रिक्त | रिक्तं |
| ३८७२ | १ | ६ | चत्य | चैत्य |
| ३८७३ | २ | ३ | तत्मात्स | तस्मात्स |
| ३८७४ | ,, | १५ | हुम्रि | हुरम्रि |
| ३८७७ | १ | ३ | ब्रुवाणा | ब्रुवाणा |
| ३८७९ | २ | २१ | सगयो | सर्गयो |
| ३८८७ | १ | ,, | शस्त्र | शस्त्रे |
| ३८८८ | ,, | १९ | नषां | नैषां |
| ,, | २ | १३ | बाह्यभ्यः | बाह्येभ्यः |
| ३८९८ | १ | १५ | थैवेति | स्थैवेति |
| ३९२२ | ,, | १० | पद थें | पदार्थे |
| ,, | ,, | २० | शस्यै | शस्यैव |
| ३९२३ | ,, | ३२ | मत्रा | मन्त्रा |
| ३९२५ | २ | ८ | धद्धर्म | धर्मे |
| ३९३१ | ,, | १२ | दशना | दर्शना |
| ३९३४ | १ | २० | सिद्धयथ | सिद्धयर्थं |
| ३९४१ | २ | ३० | औपत्ति | औत्पत्ति |
| ३९४३ | ,, | २ | कम्मी | कुम्मी |
| ,, | ,, | ८ | शृग | शृङ्ग |
| ,, | ,, | २४ | धम | धर्मं |
| ,, | ,, | २६ | घ्रते | घृते |
| ३९४६ | ,, | २८ | काय | कार्य |
| ३९७३ | ,, | २९ | श्रति | श्रुति |
| ३९७५ | ,, | ६ | मूद्तिकं | दूर्मूतिकं |
| ३९७६ | १ | १ | धम | धर्मं |
| ३९९९ | ,, | २४ | आकृत्यै | आकूत्यै |
| ४००५ | ,, | १५ | ग्रक्ष | ग्रहक्ष |
| ४०१० | २ | १० | नैमत्ति | नैमित्ति |
| ४०२७ | ,, | ४ | षोडशि | **भाष्यम्-षोडशि** |
| ४०२९ | १ | २२ | इयुक्तम् | इत्युक्तम् |
| ४०३५ | ,, | २८ | रित्या | रीत्या |
| ४०५२ | २ | ८ | द्ववचनं | द्वचनं |



| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४०६५ | १ | ६ | सौर्य | सीर्य |
| ४०९० | ,, | १ | जोतिः | ज्योतिः |
| ४०९६ | २ | २७ | चेत् । | चेत् । ४७ ॥ |
| ४१०० | | | ५००० | ४१०० |
| ४१०१ | | | ५००१ | ४१०१ |
| ४१०२ | | | ५००२ | ४१०२ |
| ४१०३ | | | ५००३ | ४१०३ |
| ४१०४ | | | ५००४ | ४१०४ |
| ४११५ | १ | २५ | प्रकान्तं | प्रक्रान्तं |
| ४१२७ | ,, | ११ | मूंध्रा | मूर्ध्रा |
| ,, | २ | २६ | मूंध्रा | मूर्ध्रा |
| ४१४२ | ,, | १४ | प्रधा | प्राधा |
| ४१४३ | १ | ३२ | सखड | सखण्ड |
| ४१५३ | ,, | २० | उर्जे | ऊर्जे |
| ४१७३ | ,, | १५ | जूहोति | जुहोति |
| ४१८६ | २ | ३० | एकैकौ | एकैको |
| ४१९६ | १ | २० | बह्मणी | ब्रह्मणी |
| ४२०४ | ,, | १९ | कृष्टते | घ्कृते |
| ४२०५ | ,, | ३३ | षोऽयति | षोऽवयति |
| ४२०७ | २ | ११ | प्रकान्ता | प्रक्रान्ता |
| ४२३५ | ,, | १५ | ✱ सर्वस्वारे | * सर्वस्वारे |
| ४२४२ | ,, | २० | पश | पशु |
| ४२४३ | ,, | ५ | मपरि | मुपरि |
| ४२५४ | १ | १३ | स्त्रग्दण्ड | स्त्रुग्दण्ड |
| ४२७८ | ,, | १७ | ऋक् | ॠक् |
| ४२८३ | ,, | ३० | कमति | कमिति |
| ४२८६ | ,, | ७ | श्लोके | श्लोकेन |
| ४३२१ | ,, | १ | ऋत्वर्थ | ऋत्वर्थे |
| ४३३९ | २ | २८ | धारयति | धारयति |
| ४३४७ | ,, | २६ | शतम् | शृतम् |
| ४३६८ | ,, | ७ | वाल्मीक | वल्मीक |
| ४३६९ | ,, | २९ | फलन्त | फलान्त |
| ४३७३ | ,, | २१ | श्रत्या | श्रुत्या |
| ४३७९ | १ | १२ | पृथ | पृथक् |
| ४३८३ | २ | ७ | चुर्णन | चूर्णन |
| ४४१० | १ | ३४ | मात्रयि | मात्र्वि |
| ४४२१ | २ | २८ | प्रकता | पक्वता |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४४२७ | २ | ४ | तकार्य | तत्कार्य |
| ४४२८ | ,, | ३ | प्रयवा | प्रत्यवा |
| ४४४० | १ | ३३ | वेदे | वेद |
| ४४४७ | ,, | २३ | स्वतःप्र | स्वतःप्रा |
| ४४५१ | ,, | १९ | समावाये | समवाये |
| ४४५२ | २ | १६ | प्रयणी | प्रायणी |
| ४४६७ | १ | ९ | प्रतिति | प्रतीति |
| ,, | २ | १२ | पर्वाय | पर्याय |
| ४४८३ | ,, | ३१ | स्वहा | स्वाहा |
| ४४८५ | १ | १३ | अग्नि | अग्नी |
| ४४९० | ,, | १ | हविषा | हविषां |
| ४४९७ | २ | ३० | तो ऽहुते | तोऽहुते |
| ,, | ,, | १४ | कल्पात्यां | कल्पायां |
| ४४९९ | ,, | २५ | ख्यास्यात् | ख्या स्यात् |
| ४५०६ | १ | ५ | उज्बल | उज्ज्वल |
| ४५१३ | २ | २६ | उदपेश्यो | उपदेश्यो |
| ४५१४ | १ | १३ | हिरय | हिरण्य |
| ४५१७ | ,, | ३३ | अक्ष | अय |
| ४५२५ | ,, | ,, | देवत्ता | देवदत्ता |

# मीमांसाकोषः

* विधिव्यापारः । सर्वत्र हि भावनातद्विशेषणार्थातिरिक्तेऽर्थे विधिव्यापारो नास्ति इति उत्तराधिकरणे वक्ष्यामः । वा. ३।१।६।१२ पृ. ६९१. * **विधिव्यापारं** विनैव यत् पुरुषस्याभिलषितं तस्य विधीयमानसाधनं प्रति उद्देश्यत्वमात्रं विधिगम्यम् । **सोम.** २।१।४.

* **विधिव्यापारसंस्पर्श**परिमाणं अन्वेष्टव्यम् ('दशापवित्रेण ग्रहं संमार्ष्टि' इत्येवमादौ), यद् विधित्वेन संस्पृष्टं तत् कर्तव्यं नेतरत् इत्यवधारणात् । **वा.** ३।१।७।१३ पृ. ७००–७०१.

* **विधिशक्तिः** आख्यातविशेषाणां मन्त्रत्वेन तिरोधीयते इति न नियमः । **वा.** २।१।६।३० पृ. ४३१, * विधिशक्तिः गुणे संचरति । ३।३।१०।२१ पृ. ८६९, * विधिशक्तिः नामपदे नास्ति । १।४।३।३ पृ.३३२. * विधिशक्तिः प्रतिबध्यते यच्छब्देन 'न ता नशन्ति' इत्यादौ । आमन्त्रणविभक्त्या– 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यादौ । उत्तमपुरुषेण 'दामि गृह्णामि' इत्यादौ । यदिशब्देन 'यदि सोममपहरेयुः' इत्यादौ । 'येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् । विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥' वा. २।१।६।३१ पृ. ४३३ । **सुधा**– 'आत्मनि प्रेरणाऽयोगान्निमित्तत्वाभिधानतः । विधिशक्तिविहन्तृ स्यात् यच्छब्दादिचतुष्टयम् ॥' पृ. ६६८. * '**विधिशक्त्या** गृहीतं यत् तत्सर्वं हि विवक्षितम् । तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ॥' **वा.** ३।१।७।१३ पृ. ७०३.

* **विधिशक्त्यभावः** अर्थवादः । **पराक्रमः**. ५।२.

* **विधिशक्तिक्षयः** यच्छब्देन, उत्तमपुरुषेण, संबोधनविभक्त्या च भवति । 'यस्योभयं हविरार्तिमार्छेत्' इत्यत्र यच्छब्दः । 'बर्हिर्देवसदनं दामि' इत्यत्र उत्तमपुरुषः । 'अग्नीत् अग्नीन् विहर इत्यत्र, हे 'अग्नीत्' इति संबोधनम् । **वि.** २।१।६.

* **विधिशक्तिविघातकम्**— 'सिद्धत्वद्योतनात् वक्त्राभिमुख्यासंभवाद् विधौ । आत्मनि प्रेरणायोगान्निमित्तत्वाभिधानतः ॥ विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम् । प्राप्त्ययोगेऽपि तत्रापि क्वचित्स्यादपि हन्तृता ॥' यच्छब्दः, आमन्त्रणविभक्तिः, उत्तमपुरुषः, यदिशब्दश्चेति चतुष्टयम् । **सु.** पृ. ६६८.

* **विधिशतेनापि** तथा पुरुषो न हि प्रवर्तते यथा लोभेन । **वा.** ३।४।१०।२८ पृ. ९६०.

* '**विधिशब्दाश्च**' । १।२।४।४५ ॥ इत्यत्र 'अग्ने गृहपते सुगृहपतिः' इत्यादिमन्त्रेषु 'शतं हिमाः' इत्याद्यंशानां 'शतं त्वा हेमन्तान् इन्धिषीय इति वावैतदाह' इत्यादिवाक्यशेषाः मन्त्राणां विवक्षितार्थत्वे लिङ्गं इति व्यवस्थापितम् । **कु.** १।२।१।१८ पृ. ३०. * न च गौणोऽर्थो **विधिशब्दात्** अवगम्यते । **भा.** १०।२।१७।४७.

**卐 विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना । १०।४।१२।२३ ॥**

दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति श्रुतम् । अष्टाकपालस्य पुरोडाशस्य अग्निर्देवता । अग्नेश्च अग्निः, शुचिः, पावकः, धूमकेतुः, कृशानुः इत्यादीनि नामधेयानि । तथा सति आवाहनादिनिगदमन्त्रेषु 'अमुष्मै इदं न मम' इति त्यागमन्त्रे च कतमन्नामधेयं वक्तव्यं इति विचारे सिद्धान्तमाह । मन्त्रत्वे इत्यत्र त्वप्रत्ययः स्वार्थे, मन्त्रे इत्यर्थः । निगदमन्त्रेषु त्यागमन्त्रे च विधिशब्दस्य विधिवाक्यगतस्य अग्निशब्दस्यैव भावः स्यात् उच्चारणं कर्तव्यं नान्यस्य पर्यायशब्दस्य । यस्मात् तेन अग्निशब्देनैव चोदना विधिः प्रवृत्तः । तस्मात् विधिगतदेवताबोधकशब्देनैव त्यागे निगदेषु च निर्देशः इति सिद्धान्तः ।

**शेषाणां चोदनैकत्वात् तस्मात् सर्वत्र श्रूयते । २४ ॥**

विधिवाक्यगतदेवतावाचकशब्दस्यैव आवाहनादिनिगदेषु उच्चारणं इति सिद्धान्ते हेत्वन्तरमाह । यस्मात् शेषाणां शेषभूतानां मन्त्राणां चोदनैकत्वात् एकचोदनागतशब्दसंयुक्तत्वात् विधिशब्दस्य मन्त्रत्वे भावः, तस्मात् सर्वत्र अयाट्–उज्जिति-स्वाहाकारेष्वपि विधिगतशब्द एव श्रूयते । तस्मात् आवाहनादिनिगदेषु त्यागे अयाडादिनिगमेषु चेति सर्वत्र अग्निशब्द एव उच्चारणीयः इति । के.

* 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना' ( १०।४।१२।२३ ) । आवाहनादौ येन केनचित् पर्यायेण देवताभिधानसिद्धेर्विधिगताग्न्यादिशब्दानादरः इति पूर्वपक्षयित्वा, 'आग्नेयोऽष्टाकपालः' इति विधिगतेनाग्निशब्देन देवतायाः हविःसंबन्धविधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यं इति तत्र सूत्रे सिद्धान्तितम् । सु. पृ. ६४३. * 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इति दशमे ( १०।४।१२।२३ ) विधिमात्रप्रमाणिका देवता इत्युक्तम् । बाल. पृ. १२२. * 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना' ( १०।४।१२।२३ ) इति दशमाधिकरणन्यायेन आवाहनादिविषये निगमे मन्त्रकार्ये विधिगतस्यैव शब्दस्य उच्चारणमवधार्यते । सु. पृ. ६५१, * 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्०' इति दशमाधिकरणन्यायेन द्रव्येऽपि देवतावत् विधिगतस्यैव शब्दस्य प्रयोगनियमः । पृ. ४६८, * आग्नेयादियागाङ्गभूतेषु आवाहनादिषु निगमस्थानेषु किं येन केनचित् पर्यायेण देवता अभिधेया अथ विधिगतेनैव शब्देनेति संदिह्य, येन केनचिदर्थसिद्धेरनियमे प्राप्ते, देवतायाः प्रतिग्रहादिव्यापाराभावात् स्वरूपेण कर्मसमवायानुपपत्तेः शब्देन अग्निमुद्दिश्य हविस्त्यजेत् इति विध्यर्थावगमात्, केन शब्देनेत्यपेक्षायां बुद्धिस्थाग्निशब्दातिक्रमे कारणाभावात् अग्निशब्देनैव अग्निमुद्दिशेत् इति विधिगतेनैव शब्देन देवतात्वविधानात् मन्त्रकार्ये तस्यैवोच्चारणं कार्यं इति '**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना**' इतिसूत्रोक्तदाशमिकन्यायेन ( १०।४।१२।२३ ) विधिगतप्रयोगानुसारेणैव विकृतौ देवतापदानि उह्यमानानि प्रयोक्ष्यन्ते । पृ. २८२. * चेतनाचेतनसाधारण्येन अर्थस्यैव देवतात्वं दशमे ( 'विधिशब्दस्य मन्त्रत्वे०' ) वक्ष्यते । कौ. २।१।६।१५ पृ. ८९. * देवतापदानि तावत् 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्०' इत्येतेन न्यायेन सर्वानेव साध्वसाधुत्वसंमतान् पर्यायान् परित्यज्य विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते । वा. १।३।८।२४ पृ. २६३, * न चान्यशब्दोच्चारणे तेषां ( विश्वेषां देवानां ) देवतात्वं भवति 'विधिशब्दस्य मन्त्रत्वे भावः०' इति वक्ष्यति । २।२।९।२३ पृ. ५३८. * यदा तु दाशमिकाधिकरणवक्ष्यमाणरीत्या ( 'विधिशब्दस्य मन्त्रत्वे०' ) विधिगतशब्दविशिष्टस्य अर्थस्य तादृशशब्दमात्रस्य वा देवतात्वम्, तदा कः प्रसङ्गः शब्दान्तरस्य । भाट्ट. ६।३।५.

**विधिशब्दाधिकरणम्** । त्यागादौ विधिगतशब्देनैव देवताप्रकाशनं कार्यम् ॥

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना । १०।४।१२।२३॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्रेदमाम्नायते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । सन्ति चाग्नेरभिधानानि, अग्निः शुचिः पावकः धूमकेतुः कृशानुर्वैश्वानरः शाण्डिल्यः इत्येवमादीनि । तत्र संदेहः वाचिषु निगमेषु किं येन केनचिदग्नेः शब्देनाभिधानं कर्तव्यमुत विधिशब्देन अग्निशब्देनेति । किं प्राप्तम् ? येन केनचिदिति । कुतः ? अग्न्यर्थनिर्देशात् । अग्न्यर्थेन पुरोडाशः संबद्धव्यः । अग्न्यर्थो देवता कर्तव्या । त्यागकाले उद्देष्टव्या । सा येन शब्देन शक्यते उद्देष्टुम्, तेनोद्देशनीया । सैषां शब्दानामन्यतमेन शक्योद्देष्टुम् । तस्माद्येन केनचिद्वाचिषु निगमेषूद्देशः कर्तव्य इति । एवं प्राप्ते, **ब्रूमः** । विधिशब्देनैव अग्निशब्देन उद्देष्टव्या, नान्येन शुच्यादिना इति । कुतः ? तेन चोदना । तेन विधिशब्देन अस्य हविषः संबन्धचोदना



भवति । कथमिव ? आग्नेयः कर्तव्य इत्यग्निरस्य देवता कर्तव्येत्यर्थः ।

का पुनरियं देवता नाम । **एकं तावन्मतम्**, या एता इतिहासपुराणेष्वग्न्याद्याः संकीर्त्यन्ते नाकसदः, ता देवता इति । उच्यते । तासु देवतासु, अहरादीनां शार्दूलादीनां वा न संग्रहः । स्मर्यते च कालवाचिनां देवतात्वम् 'कालेभ्यो भवति, मासो देवता, संवत्सरो देवता' इति ।

**अपरं मतम्**, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते 'अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता' इत्येवमादिषु, तेऽत्र देवताशब्देनोच्यन्ते इति । तत्राप्यहरादीनामनुपसंग्रह एव । किंच सामान्यवचनस्य शब्दस्य लौकिके व्यवहारे अभावात् अर्थस्याप्रसिद्धिः स्यात् । तस्मात् सूक्तभाजो हविर्भाजश्च देवताः । काः सूक्तभाजः ? 'इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥' ( ऋसं. १।९३।१ ) इति । हविर्भाजः आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशकपालमिति ।

आह । यदि हविर्भाजो देवताः कपालानामपि देवतात्वं प्राप्नोति । तान्यपि हविर्भाञ्जि । एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविषः । सूक्तस्याप्येवमेव । अत्र हि देवताशब्दः स्मर्यते । अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविरिति । तथा अतिथिदेवत्यम्, पितृदेवत्यमिति । एवं मूर्तानां अमूर्तानां चेतनानामचेतनानां श्रुत्या कञ्चिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं भविष्यति । सामान्यवचनं चोपपत्स्यते । किमतः ? यद्येवम् । यस्या वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति संकल्पः क्रियते, सा देवता भवति तत्र । **ननु** एवं सति सुतरां येन केनचिदग्नेः शब्देन निर्देशः करणीयः । अत्रोच्यते । भवेदेतदेवम्, यद्यग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत । अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत । न तु अत्राग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्यते । यत्र ह्यर्थे कार्यमासाद्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो भवति, यत्रार्थेन प्रयोजनम् । यत्र पुनः शब्द एव कार्यम्, तत्र कार्यसंबन्धार्थः शब्द एव प्रत्याययितव्यः । देवतायाश्च यज्ञसाधनभावो न रूपेण भवति । केन तर्हि ? संबन्धिना शब्देन । यथा 'अध्वर्युर्हस्ताभ्यामुपकरोति' एवं 'देवता शब्देनोपकरोति' । यथा 'होतुः पाणौ द्विर्लेपेनोपस्तृणाति' इति पाणिसंबन्धे अपि होतैवोपकरोति, एवं संबन्धिना शब्देनोपकुर्वती देवता उपकारिणी गम्यते । देवतायामप्युपकारिण्यां चोदितायां शब्दस्यैव यज्ञे समवायः । तस्मान्न शब्दोऽर्थप्रत्यायनार्थमुच्चारितः । स चार्थः पुनः शब्दं प्रत्याययेदिति लक्षितलक्षणा हि तथा स्यात् । किं तर्हि ? शब्द एव हविषा संबध्यते । तत्संबन्धादर्थोऽपि देवता भविष्यति । यस्य हि शब्दो हविषा तादर्थ्येन संबध्यते, सा देवता । शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञायते । इह तु शब्द एव कार्यं संभवति । तस्मान्नार्थप्रत्यायनार्थः शब्द इति ।

तदुक्तं **वृत्तिकारेण** । न वा शब्दपूर्वको हि अर्थसंप्रत्ययस्तस्मादर्थनिष्पत्तिरिति । एवं चेदग्निशब्देन हविषः संबन्धः । नास्ति प्रसङ्गः शुच्यादीनां शब्दानामिति । तस्मात् मन्त्रत्वे विधिशब्द उपादातव्य इति । उच्यते । नन्वेवं शब्द एव देवता प्राप्नोति । अत्रोच्यते । नैतदस्माभिः परिहर्तव्यम् । न हीदमुच्यमानमस्मत्पक्षं बाधते । सुतरां शुच्यादीनामप्रसङ्ग इति ।

**टुप्**—अस्य अधिकरणस्य बाधसंबन्धो वक्तव्यः । पूर्वपक्षे न किञ्चिद्बाध्यते । सिद्धान्ते पर्यायशब्दो बाध्यते । इन्द्रादीनां यद्यर्थो विद्यते लोकव्यवहारे, यथा गवादीनाम्, ततः पर्यायशब्दानामवकाशो भवेत् । न त्वर्थो विद्यते । इन्द्रादीनामप्रत्यक्षत्वात् । उच्यते । इन्द्रशब्द उच्चरिते किमपि प्रतीयते सामान्येन । तत्रोपपदाद्व्यवहारात् स्मरणाच्चेन्द्रादीनामर्थो विद्यते । यथा प्राची दिगिति न प्रत्यक्षेण प्रतीयते, नानुमानेन । शब्दादेव प्रतीयते । इन्द्रशब्देन च यदुच्यते, शक्रशब्देन च तदेवोच्यते इति लोकस्मरणम् । अनादि च स्मरणं न शक्यं पर्यनुयोक्तुम् । यथा प्रत्यक्षेण रूपमवबुध्यमानं न शक्यते पर्यनुयोक्तुम्, किमर्थमवबुध्यते इति । एवमिहापीत्युभयोरर्थ एव देवता । तस्य च वाचकः शब्दः । सः

हविषा संबध्यमानः अर्थस्य देवतात्वं प्रतिपादयति, नान्यथा।

**पूर्वपक्षस्तु**—शब्दोऽर्थं प्रति अत्यन्तगुणभूतः। अर्थ एव कार्ययोगी, प्रधानत्वात्। अग्निशब्दो न स्वयं कार्येण द्रव्येण सह संबध्यते। किं तर्हि? अर्थेन संबध्यते। अर्थपरत्वाच्च निर्देशस्य पर्यायशब्दानामनिवृत्तिः। न च अग्निशब्दपदार्थक एव द्रव्येण संबध्यते (लिङ्गबलात्तद्धित एव वर्तते। वाक्येन पुरोडाशेन। न चेतिकरणेन निष्कृष्य निर्दिश्यते। येन लिङ्गं बाध्यते। यदि निष्कृष्य पुरोडाशेन संबध्यते) तथा सति तद्धितानुत्पत्तिः। अपि च वाक्यार्थे पदनिर्वचनम्। वाक्यार्थश्च पदार्थपूर्वको भवति। यदि शब्द एव देवता भवेत्तथा सति देवतापदमर्थशून्यं स्यात्। अर्थशून्ये च तस्मिन्, अन्यशब्देन योऽर्थ उच्यते, स एव केवलः स्यात्। तत्र साकाङ्क्षत्वादनिराकाङ्क्षीकृतत्वाच्च वाक्यमेव न स्यात्।

नन्वेवमपि पर्यायशब्दानामप्रसङ्ग एव। कथम्? अग्निशब्दः स्वमर्थं पुरोडाशं प्रति देवतात्वेन प्रतिपादयति। तत्तु देवतात्वं यदि वाचिकां श्रुतिमुद्दिश्य परित्यजति द्रव्यम्, ततः संपादितं भवति, नान्येन प्रकारेण। अस्यां चावस्थायामग्निशब्द एव मनसि विपरिवर्तते, नान्यः। तस्माद्विपरिवर्तमानः स एव ग्रहीतव्यो नान्यः। स च शब्दः। तस्मात्स एवोच्चारयितव्यो वाचकश्रुतिवेलायाम्।

अत्रोच्यते। अग्निशब्दः स्वमर्थं पुरोडाशस्य देवतात्वेन प्रतिपाद्य कृतार्थः। उच्चारणवेलायां शब्देन प्रयोजनम्। नान्यथा यागो भवतीति। एतस्यामवस्थायामग्निशब्दो न विद्यते। येन केनचिच्छब्देन उच्चारणं कर्तव्यम्। अग्निशब्दस्य व्यवहितत्वात्। तस्मादग्निशब्दो न शक्यो नियन्तुमिति।

**सिद्धान्तस्तु**— अग्निशब्द एवाष्टाकपालेन संबध्यमानोऽर्थात्तस्य देवतात्वं प्रतिपादयति। यथा 'वैष्णवीमनुब्रूयात्' इति ऋगुच्यमाना ऋगर्थं प्रतिपादयति। न च विवक्षितः ऋगर्थः कार्ययोगेन। एवमिहाप्यग्न्यर्थो न कार्ययोगेन विवक्षितः। अपि च योऽर्थमष्टाकपालेन संबन्धयितुमिच्छति, तस्यापि वाचिका श्रुतिरुच्चारयितव्या। तद्द्वारेण देवता क्रियया संबध्यते। तत्र प्रथममर्थस्य देवतात्वम्। पश्चाच्च शब्दोच्चारणं विधीयते इति श्रुत्यर्थाभ्यामर्थद्वयं बोध्यते। यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन संबध्यते, तदुच्चारणमेव विधीयते, अग्नय इत्युच्चार्याष्टाकपालं त्यजेदिति, तस्याग्न्यर्थो देवतेत्यनुवाद एव। यथा 'पूतिकामभिषुणुयात्' इति यागोऽर्थाल्लभ्यते।

**शेषाणां चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते। २४॥**

**भाष्यम्** — इतश्च विधिशब्देन वाचिषु वचनं कर्तव्यम्। कुतः? शेषाणां मन्त्राणामेकः शब्दः। य एवासौ विधिशब्दः, स एव सर्वत्र श्रूयते, अयाट्कारे उज्जित्यां स्वाहाकारे च। 'अयाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामानि' इत्ययाट्कारे। 'अग्नेरुज्जितिमनूज्जेषम्, सोमस्योज्जितिमनूज्जेषम्' इत्युज्जित्याम्। 'स्वाहाऽग्निं स्वाहा सोमम्' इत्येवमादि स्वाहाकारे। एवं च नित्यवत् श्रूयमाणा अपाक्षिका भविष्यन्ति, यथाऽस्माभिर्न्यायोऽपदिष्टः। तस्मात् विधिशब्दस्य मन्त्रत्वे भावः स्यादिति।

**शा**— दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालः' इति। बहूनि च अग्नेरभिधानानि अग्निः शुचिः पावकः इत्यादीनि। तत्र तद्वाचिषु निगमेषु येन केनचिच्छब्देन अग्नेः अभिधानं कर्तव्यं उत विधिगतेनैव अग्निशब्देन इति। तत्र '**देवतात्वं विधायाग्नेश्चोदना विनिवर्तते। प्रयोगकाल उद्देशो येन केनापि सिध्यति॥**' अग्न्यर्थो देवताकर्तव्यः इत्येतावांश्चोदनार्थः। तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापतति, तन्नियमे तु नास्ति प्रमाणम्। पावकशब्देनापि हि उद्दिश्यमाने चोदनाभिहितमग्नेर्देवतात्वं संपादितमेव भवति, तस्मादनियमः। **इति प्राप्ते**, सत्यम्, अर्थस्यैव देवतात्वं चोदनयोच्यते। तस्य तु इदमेव देवतात्वं यच्छब्देन उद्देशः। तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः, स्वव्यापारे चासौ नियोक्तव्यः, तेन अर्थस्यापि देवतात्वमुक्त्वा तन्मात्रेण



अपर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति। तस्यां च अवस्थायां विधिगतस्य शब्दस्य संनिहितस्य परित्यागे कारणाभावात् तदुच्चारणमेव विधीयते न शब्दान्तरस्य। तस्मात् विधिशब्दनियम इति।

**सोम**— पूर्वत्र यथा आवापोद्वापयोः संकोचः, एवं इह देवतानिर्देशो विधिशब्देनैव कार्य इति संकोचे प्रमाणाभावात् येन केनचिच्छब्देन देवतानिर्देशः कार्य इत्युत्थितेः **संगतिः। लक्षणसंगतिस्तु** बाधप्रसङ्गात् पर्यायशब्दबाधपर्यवसानात् विचारस्य इति (ज्ञेया)। **सूत्रार्थस्तु**– मन्त्रत्वे मन्त्रवद्देवतावाचकशब्दोच्चारणावश्यंभावे विधिगतस्य अग्निशब्दस्य भावः उच्चारणं स्यात्, यतः तेन विधिशब्देन हविःसंबन्धचोदनेति।

**वि**— 'पर्यायेणापि देवोक्तिर्वैधेनैव पदेन वा।
अर्थाभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः॥'

**भाट्ट**— सर्वत्र 'आग्नेयोऽष्टाकपालः' इत्यादौ किं विधिगत एव देवताशब्दस्त्यागादावुच्चारणीयः, अथवा नायं नियम इति चिन्तायाम्, न तावच्छब्दस्यैव देवतात्वम्, तद्धि अर्थमनङ्गीकृत्याङ्गीकृत्य वा उच्यते? न तावदाद्यः, अग्न्यादिशब्दानामर्थपरत्वस्य लोकवेदयोः प्रसिद्धत्वात् अर्थपरत्वाभावे अग्न्यादिशब्दानां प्रातिपदिकसंज्ञाभावेन विभक्त्याद्यनापत्तेश्च। नान्त्यः। अर्थवाचित्वे तस्यैव देवतात्वोपपत्तौ अग्न्यादिपदे शब्दलक्षणायां प्रमाणाभावात्। न च तत्र त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वासंभवः, द्रव्यत्यागकालीनोच्चारणकर्मत्वरूपस्य तस्य शब्दधर्मत्वादिति वाच्यम्, उद्देश्यत्वस्योच्चारणघटितत्वे प्रमाणाभावेन द्रव्यत्यागकालीनज्ञानकर्मत्वरूपस्य तस्यार्थेऽप्युपपत्तेः। न च ज्ञानस्यापि शब्दोच्चारणाधीनत्वमेवेत्येवं नियमोऽस्ति। द्रव्यादिसंबन्धिदर्शनादिनाऽपि स्मरणोपपत्तेः। अतः शब्दोच्चारण एव प्रमाणाभावे विधिगतशब्दनियमस्य दूरापास्तत्वमेव।

अस्तु वोद्देश्यत्वस्य उच्चारणघटितत्वम्, तथाप्युच्चार्यमाणशब्दप्रतिपाद्यत्वमेव देवतात्वमिति न तस्यार्थे असंभवः। न च तथाप्युच्चार्यमाणशब्दविशेषापेक्षायां श्रुतत्वाद्विधिगतशब्दस्यैव नियमो भविष्यतीति वाच्यम्, श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दनियामकत्वानुपपत्तेः। आकाङ्क्षायाः वाचकपदमात्रग्रहणेनापि शान्तेः। इतरथा द्रव्यवाचिपदस्थलेऽपि यत्र– 'व्रीहीणां मेध सुमनस्यमानः' इत्यादौ विकृतौ प्रैयङ्गवादिचरावूहप्रसक्तिः तत्र विधिगतशब्दनियमापत्तेः। यद्यपि च द्रव्यस्य स्वरूपेणैव कर्मणि समवायः, देवतायास्तु शब्दद्वारेणेत्येतावानस्ति तयोर्भेदः, तथापि श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दविशेषापेक्षायामुपस्थितत्वात्तस्यैव नियमे तुल्यत्वमेव।

किञ्चैवं यत्र पर्यायशब्दद्वयप्रयोगः, यथा– 'अग्नये पावकाय' इत्यादौ, तत्र पदद्वयप्रयोगो भवतः कथं सिध्येत्। तत्र ह्यपेक्षायामेकशब्दनियमस्यैवोपपत्तौ शब्दद्वयनियमे प्रमाणाभावः। अतो न क्वापि त्यागादौ विधिगतशब्दनियमः। **इति प्राप्ते**, न तावदुच्चारणमन्तरेणैव ज्ञानमात्रेणार्थस्य देवतात्वम्, तथात्वे 'अग्नये पावकाय' इत्यादावर्थस्यैकेनापि पदेन विधानसंभवे पदद्वयवैयर्थ्यापत्तेः। अत एव यद्यपि पुराणादिपर्यालोचनया पावकपदमग्निविशेषवाचि, तथापि तेनैवाग्नित्वसमानाधिकरणविशेषधर्मोपस्थित्युपपत्तेः अग्निपदवैयर्थ्यापत्तिः। अतः शिष्टाचारानुरोधेन च शब्दोच्चारणमावश्यकमेव। अत एव 'प्रजापतिं मनसा ध्यायेत्' इत्यादावेव तदभावो वाचनिकः। 'नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो वदेत्। संकीर्त्य देशकालादि तुभ्यं संप्रददे इति॥ न ममेति स्वसत्ताया निवृत्तिमपि कीर्तयेत्। दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः॥' इति हेमाद्रिधृतवृद्धवसिष्ठवचनाच्चायमर्थो निर्णीयते। अतश्च लाघवाद्धविस्त्यागकालीनविहितशब्दोच्चारणकर्मत्वमेव देवतात्वं न तु निरुक्तज्ञानकर्मत्वम्, न वा त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वं गौरवात्। अत्र यादृच्छिक–यत्किञ्चिच्छब्दोच्चारणमादायातिप्रसङ्गवारणार्थं विहितेति। इदमेव च तद्धितार्थः। अतः प्रधानभूततदर्थानुरोधेनाग्न्यादिप्रातिपदिके शब्दलक्षणामप्यङ्गीकृत्य तस्यैव देवतात्वं विधिना विधीयते। एवं च पदद्वयस्थले उभयोरपि समुच्चयेन देवतात्वम्, समुच्चयश्चैकवाक्योपादानादिना बोध्यः। अर्थस्य तु आनुषङ्गिक-

तया प्रतीतेः आवश्यकत्वात् तादृशशब्दप्रतिपाद्यत्वरूपं भाक्तं देवतात्वमपि अर्थसिद्धमिति न तत् शास्त्रेण विधीयते ।

एतेन शुद्धस्यार्थस्यैव देवतात्वम्, देवतात्वं च त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वम्, तच्च ' अग्नये पावकाय ' इत्यादौ एकस्मिन्नेवार्थे तत्तच्छब्दघटितं देवतात्वद्वयम्, तच्चैकवाक्योपादानात् समुच्चितम्, तेन न तत्र एकपदोच्चारणापत्तिरित्यपास्तम्, गुरुभूतदेवतात्वे तद्धितादिशक्तिकल्पनायां गौरवात् । उक्तार्थस्यान्यलभ्यत्वाच्च ।

एतेनैव ' शब्दविशिष्टार्थे एव प्रातिपदिकलक्षणामङ्गीकृत्य तस्यैव निरुक्तदेवतात्वेऽन्वयः' इति न्यायसुधाकृत्स्वारस्यमपि अपास्तम्, तद्धितादिपदशक्यतावच्छेदके गौरवात् । अतः शब्द एव वाक्यार्थान्वयीति नान्यशब्दप्रयोगप्रसक्तिस्त्यागकाले । आवाहनादिमन्त्रेषु तु पठितत्वादेव नान्यशब्दप्रयोग इति निर्विवादमेव । तत्रत्याग्निपदे परं न शब्दलक्षणा शब्दवदर्थस्यापि तत्प्रतिपाद्यत्वसंबन्धेन यागसंबन्धात्तस्यैव शक्त्याऽग्न्यादिपदेन स्मरणोपपत्तेः । अस्य चाधिकरणस्य लक्षणोपयोग्यग्रिमाधिकरणोपोद्घाततया लक्षणसंगतिः ।

**मण्डन**— ' विधिशब्दस्तु मन्त्रे स्यात् । ' विधिशब्दः विधिवाक्यगतदेवतावाची शब्दः इत्यर्थः ।

**शंकर**-- ' विधिशब्दो देवतायाम् । ' १५.

* यस्य वाचकं शब्दमुद्दिश्य स्मृत्या वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा देवता भवति इति **विधिशब्दाधिकरणे** देवतालक्षणं वक्ष्यते । सु. पृ. ७४२.

* **विधिश्रुतिः** इतरश्रुतिभ्यो बलीयसी । विधिश्रुत्या स्वव्यापारलाघवाय आग्नेयीश्रुतिसंकोचस्य अपेक्षितत्वात् ( आग्नेय्या आग्नीध्रं ) तस्याश्च पुरुषप्रवृत्तिहेतुत्वेन श्रुत्यन्तरेभ्यो बलीयस्त्वात् न आग्नेयीश्रुतिसंकोचो दोषः । सु पृ. ११२९. * विधिश्रुतिरेव पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसंबन्धमात्रं बोधयति । **मीन्या.**

* **विधिसंनिधौ** श्रुतायाः निन्दायाः निषेधाकल्पनेन विधेयस्तुत्यर्थत्वं दशमे वक्ष्यते ( १०।८।४।७ ) । सु. पृ. ६१.

* नहि **विधिसंभवे** समस्तवाक्यानुवादत्वं युक्तम् । वा. ३।५।२०।५३ पृ. १०२४, * मुख्यविधिसंभवे लक्षणया न स्तुतिः प्रतिपत्तव्या । १।२।२।१९ पृ. १३४.

* **विधिसहस्रेणापि** अशक्यार्थप्रतिपादनशक्तेः आधातुमशक्यत्वम् । **सोम.** १।२।१ पृ. ६.

* ' **विधिस्तुत्योः** सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धमितरेणावधार्यते ॥ ' **वा.** १।४।१३।२४ पृ. ३६५.

* **विधीयमानं** हि दुर्बलं विरुद्धं बाध्यते नानुगुणम् । **वा.** २।२।६।१७ पृ. ५१३. * अज्ञातवत् ज्ञाप्यते **विधीयमानोऽर्थः**, ज्ञातवदनूद्यते गुणसंबन्धार्थम् । नच सकृदुच्चार्यमाणः ज्ञातवत् अज्ञातवच्च भवितुमर्हति । **भा.** ३।१।६।१२ पृ. ६९०, * **विधीयमानस्य** अन्या वचनव्यक्तिः, गुणेन संबध्यमानस्य चान्या । ३।१।६।१२ पृ. ६९०.

* **विधृती** । ' अरत्निमात्रे विधृती करोति ' दर्शपूर्णमासयोः । ते च परिभोजनीयाद् बर्हिषः कर्तव्ये न तु वेदिस्तरणार्थाद् बर्हिषः । ३।८।१७।३३. * आतिथ्यायां इष्टौ ' ऐक्षव्यौ **विधृती** ' इत्युक्तम् । ऐक्षव्यौ काशपिञ्जूले, न तु इक्षुपत्रे । ( याज्ञिकास्तु इक्षुपत्रे एव स्वीकुर्वन्ति । के. ) । **शा.** १।३।५. * जुह्वाः धारकं दर्भद्वयम् । तच्च वेद्यामास्तृते बर्हिषि उपरि प्रसार्य मूले प्रस्तरः आसाद्यते तदुपरि च जुहूः आसाद्यते । **विधृत्योरधस्तात्** उपभृत् अग्रोपरि च ध्रुवा । **शा. सोम.** १।३।५.

**विधृतिपवित्राधिकरणम्** । विधृतिः पवित्रं च लौकिकाद् बर्हिषः कार्यम् ॥

**विरोधे च श्रुतिविशेषादव्यक्तः शेषे । ३।८।१७।३३ ॥**

**भाष्यम्**— दर्शपूर्णमासयोरामनन्ति ' समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति ' । तथा ' अरत्निमात्रे विधृती करोति ' इति । तत्र संशयः किं वेदिस्तरणार्थाद्बर्हिषो विधृतिपवित्रे, उतान्यत इति । किं तावत् प्राप्तम् ? वेदिस्तरणार्थाद्बर्हिषः कार्ये । किं कारणम् ? तद्धि प्रकृतम्, धर्माश्चाविशेषात् सर्वबर्हिषामर्थेन । तस्मात्तत इति **प्राप्ते, ब्रूमः** । अन्यतः क्रियेत । कुतः ? विरोधात् । कथं विरोधः ? श्रूयते हि ' त्रिधातु पञ्चधातु वा वेदिं स्तृणाति ' इति । तत्तेनाऽऽस्तीर्यते, कथं तद्विधृतिपवित्रं क्रियेत । न हि संभवत्येकं स्तरणाय विधृतिपवित्राय च । तदेतदुपदिष्टवचनमनेकगुणत्वं चोभे अप्यसंभविनी प्रतिज्ञाते स्याताम् । तस्मान्न ततः क्रियेतेति । यदि न ततः, कुतस्तर्हि । अव्यक्त एवंजातीयकः शेषे । अस्ति तत्र परिभोजनीयं नाम बर्हिः, ततः कर्तव्यम् ।

**वा**— इदानीं प्रकृतावपि नातीव सर्वार्थतेत्येतत्साधयति । यथा लूनस्य बर्हिषस्त्रिधातु पञ्चधातु वेति सकलस्य स्तरणविधानात् अशक्योऽन्यविनियोग इति सामान्यभूतो विधृतिपवित्रार्थो दर्भविधिरन्यो द्रष्टव्यः । धातुरिति स्तरणचयोऽभिधीयते ।

**शा**-- इदानीं प्रकृतावपि नातीव सर्वार्थता इत्युच्यते । दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थं च यत् बर्हिः तदपि धर्मवत् स्यात् अविशेषादिति **प्राप्ते, ब्रूमः** । धर्मवतः कृत्स्नस्य बर्हिषो यथा लूनस्य संनद्धस्य आसादितस्य आस्तरणे विनियोगात् नान्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ।

**सोम**--**सूत्रार्थस्तु**- त्रिधातु श्रुतिविशेषात् इति संस्कृतस्य स्तरणादन्यत्र विनियोगे विरोधे सति शेषे विधृत्यादिकार्ये अव्यक्तो धर्मरहितः परिभोजनीयः स्यादिति ।

**वि**— ' यद्बर्हिस्तत्पवित्रार्थं न वाऽऽद्यस्तस्य संभवात् । संस्कृतं स्तरणे क्षीणं पवित्रं त्वन्यतो भवेत् ॥ '

**भाट्ट**-- प्रकृतावपि न समन्त्रकबर्हिर्लवनादिधर्माणां प्रकृत्यपूर्वसंबन्धिबर्हिर्मात्रार्थत्वम्, अपि तु हविरासादनार्थबर्हिरर्थत्वमेव । अत एव पवित्रविधृत्यादिबर्हिषि नैते संस्काराः । ' त्रिधातु पञ्चधातु वा बर्हिर्लुनाति ' इति विहितलवनसंस्कृतस्य बर्हिषः तथैव सन्नद्धस्यासादितस्य ' त्रिधातु पञ्चधातु वा बर्हिः स्तृणाति ' इति वचनेन सर्वस्यैव स्तरणे विनियोगात् । अमन्त्रकलवनमात्रसंस्कृतस्य परिभोजनीयबर्हिषः प्राकृततदितरसर्वकार्यार्थत्वेन तत एव पवित्रादिकरणोपपत्तेः ।

**मण्डन**-- ' नोपात्तदर्भौ विधृती पवित्रे । '

**शंकर**-- ' पवित्रविधृती तद्वत् । ' (तद्वत्- यूपावटबर्हिवत् ) ।

* **विधेयम्** । ' तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ' । श्लोवा. अनुमानं ११०.

**विधेयं स्तूयते वस्त्विति न्यायः** । अयं न्यायः तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनविषये अवतरतीति । **साहस्री.** ७८६.

* न च यत् प्राक् वचनाद् गम्यते, तद् **विधेयं** भवति । **भा.** ६।१।५।२३. * यद्यदुपादीयते तत्तत् विधेयं इति तन्त्रव्यवहारः ( तन्त्रे व्यवहारः ) । **बृहती.** पृ. ३०. * यद्विधेयमवधार्यते तदेव स्तोतव्यम् । **वा.** १।४।११।२०, * **विधेयस्य** कर्मणः पापफलत्वासंभवः । ३।४।१०।२८ पृ. ९५८.

* **विधेयान्वयः** । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः शब्दस्वभावसिद्धः । **भाट्ट.** १०।८।९.

* **विधेयार्थभेदे** वाक्यभेदो भवति । ' ग्रहं संमार्ष्टि ' अत्र ग्रहस्य एकत्वस्य च विधेयत्वे ' ग्रहं संमृज्यात्, तं चैकम् ' इति वाक्यभेदप्रसङ्गः । वि. ३।१।७.

* **विधेयगता** संख्या विवक्षिता भवति । **यथा**– ' यजेत ' इति । अत्र विधेयकर्तृगता एकत्वसंख्या विवक्षिता । एकं यागं द्वौ न कर्तुं शक्नुतः । वि. ६।२।२.

* **विधेयतद्विशेषणव्यतिरिक्तप्रशंसाद्वारा** विधेयप्रशंसार्थः कश्चित् अर्थवादः यथा- ' अभिघार्यास्त्रैयम्बकाः नाभिघार्या इति यदभिघारयेत् तद्रुद्रायास्ये पशून्निदध्यात्, यन्नाभिघारयेत् न तद्रुद्रायास्ये पशून् निदध्यात्, तन्न सूर्क्ष्यं अभिघार्या एव न ह्यनभिघृतं हविरस्ति ' इति । **बाल.** पृ. ५२.

* **विधेयता च** ( पुरुषार्थलक्षणे ) स्वरूपसंबन्धरूपविषयताविशेषरूपा न तु अनुष्ठेयत्वरूपा । **भाट्ट.** ४।१।२.

* **विधेयत्वमेव** विवक्षाबीजम्, नोपादेयत्वं तद्विशेषणत्वं वा । **बाल.** पृ. १३. * विधेयत्वम् । अज्ञातस्य अनुष्ठेयत्वकथनं विधिः शब्दोपाधिको धर्मः । **वि.** १।४।६.

* **विधेयभेदे** विधेयताऽवच्छेदकभेदः औत्सर्गिकः । अतश्च यागत्वादिव्याप्या जातयः समिद्यागत्वतनूनपाद्यागत्वादिरूपाः तत्तद्वाक्यगतेन यजिना लक्षयित्वा तत्तदवच्छिन्नयागव्यक्तयो विधीयन्ते । **कौ.** २।२।२।२ पृ. १५१.

* ' **विना तेन यदि वाऽसौ न सिध्यति** ' इत्यनेन न्यायेन यागे देवतोद्देशस्य इष्टत्वम् । **सु.** पृ. ८०२

Ⅸ ' **विना मलयमन्यत्र चन्दनं न प्ररोहति** ' **इति न्यायः** । अयं महान्तं गुणश्रेष्ठं जनं संश्रित्य बुधः उन्नतिं प्राप्नोति नान्यत्रेति विवक्षायामवतरतीति । **साहस्री.** ७९२.

* **विनाशः** आत्यन्तिकी अनुपलब्धिः इति लोके दृष्टम् । **ऋजु.** पृ. २४९, * **विनाशस्य** प्राभाकरैः अर्थान्तरभूतस्य अनभ्युपगमात्, यैव हि घटादीनामुपलब्धानां सत्यपि उपलम्भहेतुसाकल्ये अनुपलब्धिः, सैव तेषां विनाशः । अनुपलब्धिरपि सैव तस्य । पृ. २५१.

Ⅸ **विनिगमनाविरहन्यायः** । एकतरपक्षपातिनी युक्तिर्विनिगमना, वैकल्पिके वस्तुन्येकस्मिन् अवधारणा शक्तिरिति यावत्, तस्या विरहो वियोग इत्यर्थः । यथा – केचित् सूर्यसिद्धान्तानुयायिगणितस्य सम्यक्त्वादतिसूक्ष्मत्वम् । अपरे बहवस्तु दृग्गणितैक्यापन्नत्वस्यैवाऽतिसूक्ष्मत्वमतो बहुसंमतत्वात् विनिगमनाविरहेण वैपरीत्यापत्तौ दृग्गणितस्यैव विनिगमकस्यैतैरपि वक्तव्यत्वेन सौरा एवाऽतिसूक्ष्मा इति रिक्तं वच इति भावः । **साहस्री.** १७.

* **विनियुक्तेन** । नहि विनियुक्तेन न विधातव्यं इति किंचित् प्रमाणमस्ति, यदि स्वतो विधिशक्तिरस्त्येव । **वा.** २।१।६।३०.

* **विनियुक्तविनियोगः** अन्याय्यः । न हि भोजने उपयुक्तं कदलीपत्रं पुनः शिष्टा उपयुञ्जन्ति । **वि.** ६।४।१४. * विनियुक्तविनियोगोऽपि अविरुद्धः, पुरोडाशश्रपणे विनियुक्तस्य कपालस्य तुषोपवापे विनियोगवत् । **सु.** पृ. ११२०.

* ' **विनियोक्त्री** अपरा तथा ' ( श्रुतिः ) । पदस्य कारकविभक्तीनां च विनियोजकत्वम् । **वा.** ३।१।७।१३ पृ. ७०० । **सुधा**– विनियोगः अन्वयमात्रबोधः षष्ठ्या अपि पदान्तरोक्तार्थान्वयबोधकत्वात् विनियोजकत्वम् । पृ. १००५.

* **विनियोक्त्रीश्रुतिः** अष्टधा– १ विधिः, २ परस्मैपदम्, ३ आत्मनेपदम्, ४ सुबन्ततिङन्ताद्येकपदरूपा या उपश्लेषलक्षणा इति गीयते, ५ एकप्रत्ययरूपा, ६ कारकविभक्तिः, ७ उपपदविभक्तिषु तादर्थ्यचतुर्थी, ८ शेषषष्ठी च । **बाल.** पृ. ४१. * विनियोक्त्रीश्रुतिः त्रिधा– ( १ ) विभक्तिरूपा– ' व्रीहिभिर्यजेत ' ' अरुणया क्रीणाति ' इत्यादि । ( २ ) समानाभिधानरूपा– ' पशुना यजेत ' अत्र एकत्व–पुंस्त्वयोः समानाभिधानश्रुत्या ( ' ना 'प्रत्ययेन ) कारकाङ्गत्वम् । ( ३ ) एकपदरूपा– ' यजेत ' । तिङन्तं पदम् । अत्र आख्यातवाच्य–एकत्वसंख्यायाः यागाङ्गत्वं एकपदश्रुत्या । **मीन्या.** * विनियोक्त्रीश्रुतिः भट्टसोमेश्वरमते अन्याऽपि– इतिकरणः, णमुल्, क्त्वा, ल्यप्, तुमुन्, ण्वुल्, भाववचनाः, अण्, कृत्वसुच्, सुच्, ल्यट् इति । तत्सर्वं पार्थसारथिविरुद्धं नास्मत्संमतम् । **बाल.** पृ. ४६–४७. * यस्य शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा **विनियोक्त्रीश्रुतिः** । ' पशुना यजेत ' अत्र तृतीयया पशोः यागेन संबन्धः प्रतीयते । **मीन्या.**

* **विनियोगः** अग्निविहरणमन्त्रस्य विहरणे । **भा.** ३।२।४।१०. * विनियोगः ऊहेन इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ज्योतिष्टोमे । ३।२।११।२८–२९, ३९, ४४. **मीको.** पृ. १०५० 'इन्द्रपीताधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः क्रमेण ( तदाख्यप्रमाणेन ) । ३।३।५।१२. **मीको.** पृ. १०५९ ' क्रमाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।



* विनियोगः ' गायत्रच्छन्दसः ' इत्यादेर्मन्त्रस्य नानाच्छन्दस्के । ३।२।१८।४२–४३. **मीको.** पृ. १७२७ ' छन्दोऽधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः तादर्थ्यबोधनम् । **सु.** पृ. ११९३. * विनियोगस्तु सामर्थ्यानुसारीति । **वा.** ३।३।७।१४ पृ. ८२९. * विनियोगः प्रकरणेन । ३।३।४।११. **मीको.** पृ. २६६४ ' प्रकरणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः प्रवृत्तिजनकीभूतज्ञानविषयीभूतधर्मरूपः काम्यनैमित्तिकोभयसाधारण एव । **भाट्ट.** ६।३।१. * विनियोगः भक्षानुवाकस्य यथालिङ्गं ग्रहणादौ ज्योतिष्टोमे । **वि.** ३।२।९. * विनियोगः मनोतामन्त्रस्य गौणेऽर्थे । **भाट्ट.** ३।२।१. * विनियोगः मन्त्राणां मुख्येऽर्थे । ३।२।१।१–२. **मीको.** पृ. २९१३ 'बर्हिर्न्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः लवनमन्त्रस्य मुख्ये बर्हिषि एव । **भा.** ३।२।१।१–२. * विनियोगः श्रुत्या । **कौ.** ३।१।४।७–१०. * विनियोगः समाख्यया । ३।३।६।१३. ' समाख्याऽधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः सूक्तवाकस्य अर्थानुसारेण दर्शपूर्णमासयोः । **भाट्ट.** ३।२।८. * विनियोगः सूक्तवाकविशेषांशस्य दर्शपूर्णमासयोः वाक्यस्य प्रकरणात् प्राबल्येन । **भा.** ३।३।७।१४ पृ. ८५३. * विनियोगः स्थानेन । ( स्थानमिति क्रमस्यैव नामान्तरम् ) । ३।३।५।१२. **मीको.** पृ. १५०९ ' क्रमाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः ' हविष्कृदेहि ' इति आह्वानमन्त्रस्य आह्वाने दर्शपूर्णमासयोः । ३।२।३।५–९. **मीको.** पृ. १०२२ ' आह्वानाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' उत्पत्तिविनियोगयोः **विनियोगो** बलवान् ' इति न्यायमूलकं ( ३।३।२।९ ) इदमधिकरणम् । **वा.** ३।३।२।९ पृ. ८१४. * यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्थाः प्रयोगविधिना विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात् क्रमोऽपि प्रयोगविधिना विधीयते । न च तार्तीयैः श्रुतिलिङ्गादिभिरेव सर्वस्य विनियोज्यत्वनियमः । तन्नियमस्य पदार्थविनियोगमात्रविषयत्वेन क्रमस्य प्राकरणिकश्रुत्यर्थादिभिः **विनियोगे**ऽप्यविरोधात्, यथासंभवमेतेषामपि तार्तीयेष्वन्तर्भावस्य वक्तुं शक्यत्वाच्चेति भावः । **सोम.** ५।१।१.

* **विनियोगानुसारेण** मन्त्रार्थः । ' यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति ' । **बृहती.** पृ. २७०. ( विनियोगवशेन च अनेकार्थः अस्मात् प्रत्येतव्यः इति अतो भवति अनेकार्थः मन्त्रः । **ऋजु.** )

* **विनियोगकारणानि** श्रुतिः लिङ्गं वाक्यमिति उक्तानि । **भा.** ३।३।४।११, * विनियोगकारणानि श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्यानं इति उक्तानि । तेषां समवाये किं बलीय इति चिन्त्यते । ३।३।७।१४ पृ. ८२२.

* **विनियोगविधिः** । अङ्गताबोधको विधिः विनियोगविधिः । यथा ' दध्ना जुहोति ' इति । नियमपरिसंख्याविधी प्रायेण विनियोगविषयावेव । **मणि.** पृ. ९९. * विनियोगविधिः अनुष्ठापकत्वान्मुख्यः । उत्पत्तिविधिस्तु अतथाविधत्वात् गुणः । **वि.** ३।३।२. * विनियोगविधिः द्विविधः– क्रत्वर्थः पुरुषार्थश्च । तत्र क्रत्वर्थः यथा ' व्रीहीन् प्रोक्षति ' इत्यादिः । पुरुषार्थः यथा– द्रव्यार्जनविधिः । **बाल.** पृ. १३. * अङ्गप्रधानसंबन्धबोधको विधिः **विनियोगविधिः** । यथा ' दध्ना जुहोति ' इति । अत्र होमः प्रधानं दधि अङ्गम्, तयोः संबन्धः अनेन विधिना बोध्यते । **मीन्या.** * इष्टसाधनत्वबोधको विधिः विनियोगविधिः । **भाट्ट.** ११।२।१ पृ. १५१. * विनियोगाभिधानात्मिका श्रुतिः विनियोगविधिः । **वा.** ३।३।४।११ पृ. ८१७.

* **विनियोगविधिसहकारीणि** षट् प्रमाणानि । श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपाणि । **मीन्या.**

* **विनियोगविधिसिद्धिः** । लिङादयः खलु विधौ स्मर्यन्ते, विधिः कर्तुरपेक्षितोपायता । ततश्च ते धातोः परे श्रूयमाणाः स्वार्थस्य भावनायाः समीहितं भाव्यमुपनयन्ति । धात्वर्थस्य भावनाऽनुरञ्जनस्य समीहितार्थप्रवृत्तभावनाभाव्यस्य समीहितांशसाधनत्वं समीहितभावनासाधनत्वं वा तद्रूपस्य तस्य स्वतो-

ऽलाभात् श्रुत्यैवाभिदधति इति विनियोगार्थत्वम् । फलतद्भावनोपायत्वमेव हि तादर्थ्यप्रतिपादनम् । कणिका. पृ. ३७७.

* **विनियोगवेदधर्मः** कर्तव्यः न उत्पत्तिवेदधर्मः । वा. ३।३।२।९ पृ. ८१४.

* **विनियोगश्रुत्या** अन्वयमात्रपरिच्छेदात् अन्वयविषयकार्यत्वबुद्ध्यनुत्पादः । सु. पृ. १००५.

* **विनियोगसाधारण्यविधिर्यथा**– 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति । यथा वा बर्हिषः बर्हिर्धर्माणां च, वेद्याः वेदिधर्माणां च विधिः अङ्गप्रधानसाधारणः । बाल. पृ. २०.

* **विनियोगसामर्थ्यात्मकं** लिङ्गम् । वा. ३।३।४।११.

* कारकविभक्तिश्रुतेरेव **विनियोगहेतुत्वम्** । सु. पृ. १२०९.

* **विनियोजकानि** प्रमाणानि षट् (प्रमाणशब्दः वैदिकोपदेशपरः) –– श्रुतिर्लिङ्गं वाक्यं प्रकरणं क्रमः समाख्या चेति तार्तीयानि । बाल. पृ. ८. * श्रुत्यादीन्येव तादर्थ्यप्रतिपादनरूपेण शेषस्य **विनियोजकानि** इति तद्विवेकार्थं शेषलक्षणम् । वा. ३।१।२।२ पृ. ६५८, * अगत्या हि तेनैवोत्पत्तिः तेनैव च विनियोगः क्रियते ('एतयाऽन्नाद्यकामं याजयेत्' इत्यत्र अवेष्ट्या) । सत्यां तु गतौ **विनियोजकस्य** उत्पत्तिविध्यर्थापत्त्यनुत्पादात् अन्येनैवोत्पादितानां च विपरिवर्तमानानां विनियोगसामर्थ्यमात्रमेव ज्ञायते । २।३।१३।२६ पृ. ६१०.

* **विनियोजकत्वं** अधिकारलक्षणस्य प्रकरणस्य, आनन्तर्यलक्षणस्य क्रमस्य, रूढिशब्दलक्षणायाश्च समाख्यायाः नाभ्युपगम्यते । सु. पृ. ११९२, * **विनियोजकत्वं**, पदसंनिधौ वाक्यसंनिधौ सादेश्यनिमित्तसंनिधौ यौगिकशब्दे च अवसीयते । पृ. ११९३.

* **विनियोजकवेदस्वरः** उत्पादकवेदस्वरात् बलवान् । आधाने गेयानि सामानि सामवेदे उत्पन्नानि, सामवेदस्य स्वरः उच्चैष्ट्वम् । तेषां साम्नां विनियोगस्तु यजुर्वेदेन कृतः । यजुर्वेदस्य स्वरस्तु उपांशुत्वम् । (अतः) आधाने गेयानि सामानि उपांशु गेयानि । वि. ३।३।२.

**विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् । ६।५।५।१८ ॥**

दर्शयागकालं मत्वा दर्शेष्टिरारब्धा । निर्वापे प्रवृत्ते मुष्टिद्वयं निरुप्तं प्राकृतदेवतायै । एतावति काले अभ्युदितश्चन्द्रो दृष्टः । तथा सति किं कर्तव्यमिति विचारः । तत्राह । विनिरुप्ते अर्धनिरुप्ते चतुर्मुष्टिमध्ये मुष्टिद्वये निरुप्ते, चन्द्रोदये ज्ञातेऽपि मुष्टीनां चतुर्मुष्टीनां पूर्वदेवतायाः सकाशात् अपनयः न कर्तव्यः । मुष्टिद्वयं यथा पूर्वदेवता उद्दिश्य निरुप्तं तथा अवशिष्टमुष्टिद्वयमपि पूर्वदेवता उद्दिश्यैव निर्वप्तव्यम् । तद्गुणत्वात् निर्वापगुणत्वात् देवतानाम् । निर्वापस्य च चतुर्मुष्ट्यात्मकस्य एकत्वात् । तस्मात् अर्धनिर्वापोत्तरं चन्द्रोदयज्ञानेऽपि चतुर्मुष्ट्यात्मको निर्वापः प्राकृतीभ्यो देवताभ्यः स्यात् इति **पूर्वः पक्षः** ।

**अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् । १९॥**

दर्शयागकालं मत्वा दर्शेष्टिरारब्धा । निर्वापे प्राप्ते मुष्टिद्वयं निरुप्तं प्राकृतदेवतायै । एतावति च काले चन्द्र उदितो दृष्टः । तथा सति अवशिष्टस्य मुष्टिद्वयस्य अप्राकृतेन प्राकृतभिन्नेन वैकृतेन देवताविशेषेण अग्निना दात्रा संयोगः कर्तव्यः । प्रथमं मुष्टिद्वयं 'अग्नये जुष्टं निर्वपामि' इति निरुप्तम्, उत्तरं मुष्टिद्वयं तु 'अग्नये दात्रे जुष्टं निर्वपामि' इति निर्वप्तव्यं इत्यर्थः । तत्स्थानीयत्वात् वैकृतदेवतानां प्राकृतदेवतास्थानीयत्वात् । तस्मात् निर्वापशेषः वैकृतीनां संयोगेन कर्तव्यः । इति **द्वितीयः पूर्वपक्षः** । हिशब्दः अवधारणार्थः सन् पक्षान्तरं सूचयति ।

**अभावाच्चेतरस्य स्यात् । २० ॥**

दर्शयागकालं मत्वा दर्शेष्टिरारब्धा । निर्वापे प्रवृत्ते मुष्टिद्वयं अग्नये प्राकृतदेवतायै निरुप्तम् । एतावति काले अभ्युदितश्चन्द्रो दृष्टः । तथा सति अवशिष्टं मुष्टिद्वयं तूष्णीमेव निर्वप्तव्यं स्यात् । इतरस्य अवशिष्टस्य निर्वापार्धस्य देवतासंयुक्तस्य अभावात् । इदानीं न प्राकृतदेवतामुद्दिश्य निर्वप्तुं शक्यते न वैकृतीं इति तूष्णीमेव अवशिष्टं मुष्टिद्वयं निर्वप्तव्यं इति **सिद्धान्तः** । चशब्दः तुशब्दस्थानीयः पूर्वपक्षद्वयं निरस्य सिद्धान्तबोधकः । **के.**



* '**विन्ध्यो** हिमवता यथा' न संबद्धः । ('शब्दः अर्थेन न संगतः' इत्यत्र अयं दृष्टान्तः) । श्लोवा. संबन्धाक्षेपे ७.

* **विपरिणामः** । आनर्थक्यपरिहाराय फलचोदनया संबन्ध एषितव्यो भवति । अन्यस्माच्चैषितव्यात् एकवाक्यगतस्य विपरिणामो लघीयान् । भा. ३।४।८।२४. * **विपरिणामेन** विधिर्यथा– 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति । अत्र 'प्रतितिष्ठासन्ति' 'उपेयुः' इति विपरिणामः । बाल. पृ. २६.

* **विपरिणामोदाहरणं** सूत्रे । 'विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते' । श्लोवा. १।१।१।५५ । अत्र **न्यायरत्नाकरः**– विपरिणाममुदाहरति 'विप्रकर्षात्' इति । ज्योतिष्टोमे सौत्ये अहनि सवनीयः पशुः सवनीयाश्च पुरोडाशाः । तत्र पशुतन्त्रस्य पुरोडाशेषु प्रसङ्गार्थं पशुतन्त्रमध्ये पुरोडाशानां विधानं प्रतिपादयितुं सूत्रं 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' (१२।२।१२।३२) इति । अत्र तन्त्रमध्ये विधानं साध्यत्वात् प्रथमार्हम्, न पञ्चम्यर्हं इति पञ्चमी प्रथमया विपरिणम्यते । तथा विप्रकर्षोऽपि वपायाः 'प्रातःसवने' इत्यादिप्रत्यक्षवचनसिद्धत्वात् हेतुत्वेन पञ्चमीमर्हति न प्रथमां इति पञ्चम्या विपरिणम्यते । तदयमर्थः, पशोश्च विप्रकर्षात् तत्तन्त्रमध्ये पुरोडाशानां विधानं इति ।

* **विपरिणामकल्पना** वाक्यदोषः । 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यमी ॥' इति । वा. १।४।२।३ पृ. ३२९.

* **विपरीता** पङ्क्तिः । पादेषु अक्षराणि ८।१२।८।१२ । उदा० 'य ऋष्वः श्रावयत्' (ऋसं. ८।४६।१२) ।

* **विपर्ययः** अग्रहणादेव । कथं तर्हि विपर्ययः ? अग्रहणादेवेति वदामः । अग्रहणनिमित्तता च दर्शिता भाष्यकारेण 'यदि (यदा च) चक्षुरादिभिरुपहतं मनः' इति (पृ. २७ पं. ९) । कथमनेन अग्रहणनिमित्तता दर्शिता भवति ? 'यदन्यविषयं ज्ञानं' इत्यस्याः प्रतिज्ञायाः हेतुत्वेन उपन्यासात् । युक्तं च दुष्टतायाः कार्याक्षमत्वम्, न पुनः कार्यान्तरसामर्थ्यम् । तस्मात् अग्रहणनिबन्धन एव विपर्यय इति । **बृहती.** पृ. ५२–५३ । **ऋजु** – विवेकाग्रहणात् गृह्यमाणस्मर्यमाणयोरिव ग्रहणस्मरणयोरपि भेदं न मन्यते । तेन ग्रहणव्यवहारं स्मरणे प्रवर्तयति । स्मरणं नाम गृहीतग्रहणम् । तत्र गृहीतत्वाननुसंधाने ग्रहणमात्रमेव अवभाति । तत् ग्रहणव्यवहारहेतुतां प्रतिपद्यमानं व्यवहारविसंवादकत्वात् व्यवहारे विपर्ययमावहति । पृ. ५२.

**विपुलकदलीफललिप्सया जिह्वाछेदनमिति न्यायः** । अयं च सर्वदर्शनसंग्रहे पूर्णप्रज्ञनये ह्युदाहृतः । तथाहि– एवं च परमेश्वराऽभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णासमत्वाभिधान विपुलकदलीफललिप्सया जिह्वाछेदनमनुहरत्येतादृशविष्णुविद्वेषणान्धतमसप्रवेशप्रसङ्गादिति । **साहस्री.** ६७८.

* **विप्रकर्षः** संनिकर्षश्च तत्रापेक्ष्यते यत्र विरोधः कश्चित् । वा. ३।५।१०।२१.

* **विप्रकृष्टार्थता** च (श्रुतिलिङ्गादौ) बाधने हेतुभूता । भा. ३।३।७।१४ पृ. ८५०.

* **विप्रकृष्टार्थविधिः** उपपदानर्थक्यप्रसक्तिहेतुकः । बाल. पृ. ९५.

* '**विप्रतिपत्तौ** वा प्रकृत्यन्वयाद्यथाप्रकृति' । ५।१।१०।१८ इति सूत्रे विकृतिप्रयोगवचनस्य (दौर्बल्यं) प्राकृतधर्मानुसाराख्य-प्रकृत्यनुगमवाचिना प्रकृत्यन्वयशब्देन वक्ष्यते । सु. ३।७ पृ. ४९.

**विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वात् । ९।३।५।१५ ॥**

अग्नीषोमीये पशौ पाशैकत्वाभिधायी पाशबहुत्वाभिधायी च मन्त्रौ समाम्नातौ । तत्र किं एकत्वाभिधायी प्रकरणे निविशते, बहुत्वाभिधायी तु प्रकरणादुत्कृष्यते उत उभावपि प्रकरणमभिनिविशेते इति विचारे सिद्धान्तमाह । प्रकृते पाशैकत्वे सति पाशान् इति बहुवचनस्य

विप्रतिपत्तौ विरोधे सति पाशैकत्वाभिधायिना मन्त्रेण सह पाशबहुत्वाभिधायिनो मन्त्रस्य विकल्पः स्यात् । समत्वात्, पाशोन्मोचनक्रियायां कर्मत्वेन पाशाभिधानस्य उभयोरपि मन्त्रयोः अविशिष्टत्वात् । ननु तथापि बहुवचनस्य बहुपाशके प्रयोगे अर्थवत्ता तस्मात् बहुवचनं उत्कर्ष्यं उत्कृष्टे च तस्मिन् प्रातिपदिकस्यापि स्यादुत्कर्षः । इति चेन्न । गुणे तु अप्रधाने बहुवचने अन्यायकल्पना कर्तु शक्यते पाशस्य एकत्वेन बहुवचनं अन्याय्यः अविवक्षणीयं तत् इति वक्तुं शक्यते वचनस्य एकदेशत्वात् । प्रातिपदिकं प्रधानं तत्र न अन्यायकल्पना कर्तुं शक्या इति प्रातिपदिकार्थो विवक्षणीय एवेति नोत्कर्षः । तस्मात् प्रकृतौ एकवचनान्तवत् बहुवचनान्तोऽपि मन्त्रः विकल्पेन निविशते इति सिद्धान्तः ।

**प्रकरणविशेषाच्च । १६ ॥**

अग्नीषोमीये पशौ पाशैकत्वाभिधायी पाशबहुत्वाभिधायी च मन्त्रौ विकल्पेन उभावपि निविशेते समत्वात् इत्युक्तम्, तत्र समत्वं साधयति । उभयोरपि मन्त्रयोः एकमेव प्रकरणम् । इति प्रकरणविशेषात् एकप्रकरणत्वात् समत्वम् । समत्वाच्च उभयोरपि प्रकरणे निवेशः । विकल्पेन च प्रयोगः । नोत्कर्षः कस्यापीति सिद्धान्तः । 'प्रकरणाविशेषात्' इति पाठोऽत्र उपयुक्तः, स तु न क्वापि उपलभ्यते । इति व्यर्था मनीषा ।

**उत्कर्षो वा द्वियज्ञवत् । १७ ॥**

अग्नीषोमीयपशुप्रकरणे पाशैकत्वपाशबहुत्वाभिधायिनौ द्वौ मन्त्रौ शाखाभेदेन आम्नातौ द्वावपि प्रकरणे एव निविशेते इत्युक्ते सिद्धान्तिना, पूर्वपक्षी शङ्कते । वाशब्दः सिद्धान्तपक्षव्यावर्तकः । नानुत्कर्षः किंतु पाशबहुत्वाभिधायिनो मन्त्रस्य बहुपशुके बहुपाशके विकारे उत्कर्षः स्यात् । द्वियज्ञवत् 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इत्युक्तत्वात् द्वियज्ञे द्वयोः यजमानयोः यज्ञे कुलाययज्ञे 'युवं हि स्थः' इत्यस्याः प्रतिपदः उत्कर्षः क्रियते तद्वत् ।

**अर्थाभावात्तु नैवं स्यात् गुणमात्रमितरत् । १८ ॥**

'युवं हि स्थः स्वर्पती' इत्यस्याः प्रतिपदः यथा ज्योतिष्टोमात् एकयजमानकात् द्वियजमानके कुलाययज्ञे उत्कर्षः एवं पाशबहुत्वाभिधायिनो मन्त्रस्य 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इत्यस्य बहुपशुके उत्कर्षः स्यात् इति पूर्वपक्षिणः शङ्कां निरस्यति सिद्धान्ती । अर्थाभावात् अर्थस्य यजमानद्वित्वस्य अग्निष्टोमे अभावात् एवं 'युवं हि स्थः०' इति प्रतिपदः निवेशः न स्यात् । गुणमात्रं तु एवं न स्यात् । गुणमात्रं पाशबहुत्वमात्रं एवं प्रतिपद्वत् प्रकृतौ निविष्टं न स्यात् नापि उत्कृष्टं स्यात् । किंतु बहुवचनं अविवक्षितं वा स्यात् पाशावयवविवक्षया वा उपपन्नं स्यात् प्रकृतावेव । इतरत्तु एवं स्यात् इतरत् प्रातिपादकं तु एवं प्रकृतौ समवेतत्वात् निविष्टं स्यात् । तथा च विषमो दृष्टान्तः । तस्मान्नोत्कर्षः ।

**द्यावोस्तथेति चेत् । १९ ॥**

यथा 'द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोऋध्यासम्' इति द्यावापृथिव्यहुतानुमन्त्रणमन्त्रो याजमानः प्रकृतेः सकाशात् तद्देवताके कर्मणि उत्कृष्यते तथा पाशबहुत्वाभिधायी मन्त्रः बहुपशुके कर्मणि उत्कृष्यतां इति चेत् पूर्वपक्षी ब्रूयात् । यथा द्यावोः तथा पाशमन्त्रः इति योजना । द्यावोः इत्यस्य द्यावापृथिव्योरित्यर्थः ।

**नोत्पत्तिशब्दत्वात् । २० ॥**

दर्शपूर्णमासप्रकरणे पठितः द्यावापृथिव्यानुमन्त्रणमन्त्रो याजमानः तद्देवताके कर्मणि उत्कृष्यते तथा पाशबहुत्वाभिधायी मन्त्रः पशौ पठितः बहुपशुके उत्कृष्यतां इति पूर्वपक्षिणः शङ्कां निरस्यति सिद्धान्ती । द्यावोस्तथेति चेत्, न, पाशमन्त्रस्य उत्पत्तिशब्दत्वात् द्यावापृथिव्यानुमन्त्रणमन्त्रस्य तु उत्पत्तिशब्दत्वाभावात् । नहि दर्शपूर्णमासयोरुत्पत्तिवाक्ये द्यावापृथिवी देवता विहिताऽस्ति । पाशबहुत्वाभिधायी मन्त्रस्तु प्रकृतावेव पशौ विहितः इति वैषम्यम् । तस्मात् पशौ द्वावपि मन्त्रौ अविकारेण विकल्पेन प्रवर्तेते इति सिद्धान्तः । के.

* 'विप्रतिपत्तौ विकल्पः स्यात् समत्वाद्०' ( ९।३।५।१५ ) इत्यधिकरणे, 'अदितिः पाशं प्रमुमोक्त्वेतं, अदितिः पाशान् प्रमुमोक्त्वेतान्' इति एकवचनबहुवचनान्तमन्त्रयोः दैक्षप्रकरणाम्नातयोः बहुवचनान्तस्य एकपाशके कर्मणि असमवेतार्थत्वात् उत्कर्षं पूर्वपक्षयित्वा बहुवचनस्य असमवेतार्थत्वेऽपि तदनुरोधेन अनुपसंजातविरोधावस्थायां श्रुतस्य प्रातिपदिकस्य उत्कर्षायोगात् तस्यैव तु प्रातिपदिकात्परप्रयोज्यत्वस्मृतेः प्रातिपदिकपारतन्त्र्यलक्षणगुणत्वावसायात् प्रातिपदिकानुरोधेन प्रातिपदिकार्थद्रव्यलक्षित–तदवयवसंख्यावाचित्वलक्षणन्यायकल्पनाया युक्तत्वात् कर्मबहुत्वरूपानेकबहुवचनार्थसमुदायैकदेशत्वाच्च बहुत्वस्य समवेतकर्मत्वप्रकाशनार्थं प्रयोज्यत्वेन अवगतस्य बहुवचनस्य अर्थैकदेशबहुत्वानुरोधेन उत्कर्षायोगात् मन्त्रद्वयस्य प्रकरणाम्नानसाम्यात् विकल्पः इति सिद्धान्तो वक्ष्यते । सु. पृ. १०४९.



ꕯ **विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् । ८।१।१७।३२॥**

'ऐन्द्रमेकादशकपालं निर्वपेत्' इति 'आग्नेयं पयः' इति च श्रूयते । तत्र किं ऐन्द्रे पुरोडाशे देवतासामान्यात् सांनाय्यस्य विध्यन्तः आग्नेये पयसि च आग्नेयपुरोडाशस्य विध्यन्तः, किंवा हविःसामान्यात् ऐन्द्रे आग्नेयस्य, पयसि च सांनाय्यस्य इति विचारे सिद्धान्तमाह । विप्रतिपत्तौ अस्यां हविर्देवतयोः सत्याम्, हविषा हविर्द्रव्येण विध्यन्तो नियम्येत । कर्मणः तदुपाख्यत्वात् तेन हविषा उपाख्यायते कर्म । हविषा उपाख्यायमानत्वात् । कर्मणः अन्तरङ्गं हविः, देवता तु बहिरङ्गम् । अतो हविःसामान्यं बलीयः ।

**तेन च कर्मसंयोगात् । ३३ ॥**

विध्यन्तातिदेशे हविर्देवतयोः विप्रतिपत्तौ हविषा नियमः इति सिद्धान्ते युक्त्यन्तरमाह । चकारो हेतुसमुच्चये । तेन हविषा संयोगात् कर्म चोद्यते । 'आग्नेयं', 'सौर्यं' इति हविर्वाचकः शब्दोऽयम् । अतो हविरत्र बुद्धौ संनिहितम्, तल्लिङ्गं भवति । ततोऽपि हविर्बलीयः । कर्मसंयोगात् इत्यैकपद्यपक्षेऽपि तेन हविषा कर्मणः संयोगात् हविर्बलीयः इत्यर्थः ।

**गुणत्वेन देवताश्रुतिः । ३४ ॥**

विध्यन्तातिदेशे हविर्देवतयोर्विप्रतिपत्तौ हविर्बलीयः इत्यत्र हविःसंयोगः कारणमुक्तम् । तत्र ननु देवताऽपि श्रूयतेऽत्र आग्नेयं सौर्यं इति, तत्राह । सत्यं देवतायाः श्रुतिः देवताश्रवणं विद्यते अत्र, तत् गुणत्वेन, न प्रधानत्वेन । 'साऽस्य देवता' इत्यत्र सर्वनामार्थो हविरेव प्रधानम् । तस्मात् देवतासामान्यात् हविःसामान्यं बलीयः ।

**एवं वा ।** ननु हविःसामान्यात् देवतासामान्यं बलीयः । सर्वोऽयं प्रयासो देवताया आराधनार्थः । सा प्रसन्ना फलं दास्यति । यश्च इन्द्रस्य प्रसादनोपायः एकत्र ज्ञातः स एवान्यत्रापि युक्तः । इति चेत्, न । गुणत्वेन देवताश्रुतिः । यागे गुणभूता देवता । तस्या दातृत्वं स्तुत्या उच्यते । हविरेव तु प्रधानम् । तस्मात् हविःसामान्यमेव बलीयः । ततश्च ऐन्द्रे पुरोडाशे आग्नेयस्य विध्यन्तः औषधसामान्यात् । आग्नेये पयसि सांनाय्यविध्यन्तः पयःसामान्यात् इति **सिद्धान्तः । के.**

* 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' ( ८।१।१७।३२ ) इति न्यायेन द्रव्यसादृश्यस्य ( देवतासादृश्यात् ) बलीयस्त्वम् । सु. पृ. ४४७.

ꕯ **विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । १२।२।७।२२ ॥**

पञ्चदशरात्रे प्रथममहः अग्निष्टुदेकाहः । ततो ज्योतिर्गौरायुः इति त्र्यहः । परिशिष्टानि एकादशाहानि द्वादशाहप्रकृतीनि । तत्र विप्रतिषिद्धधर्माणां ज्योतिर्गौरायुषां अग्निष्टुतश्च एकादशानां चाह्नां समवाये एतस्मिन् पञ्चदशरात्रे भूयसां एकादशानामह्नां सधर्मत्वं स्यात् । तदीयो धर्मः सर्वत्र कर्तव्यः । अग्निष्टुति आग्नेयी सुब्रह्मण्या इतरेषु अहःसु ऐन्द्री, तत्र ऐन्द्री कर्तव्या । इदं भाष्यानुसारेणोक्तम् । **वार्तिककारस्तु** द्वे अपि सुब्रह्मण्ये आह्वातव्ये इत्याह । उदाहरणं तु वार्तिकोक्तं **शास्त्रदीपिकायां** प्रपञ्चितम् । यथा— 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं, दधि, मधु, घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः' इति । अत्र सप्त हवींषि आग्नेयं

ऐन्द्रं प्राजापत्यानि च इतराणि पञ्चेति । तत्र ऐन्द्रः पुरोडाशः प्राजापत्यं च दधि तयोः ऐन्द्राग्नसांनाय्यविकारत्वात् अमावास्याधर्मापेक्षा, मधुव्रतापां तु उपांशुयाजविकारत्वात् पौर्णमासिकधर्मापेक्षा । तदेतेषु सप्तसु यागेषु सहप्रक्रान्तेषु पौर्णमासीविकाराणां वार्त्रघ्नौ आज्यभागमन्त्रौ प्राप्तौ, दर्शविकारयोस्तु द्वयोः वृधन्वन्तौ प्राप्तौ, भूयसां मध्वादीनां धर्मो वार्त्रघ्नौ अनुग्रहीतव्यौ इति । के.

* 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वम्' ( १२।२।७।२२ ) इत्यस्मात् 'मुख्यं वा पूर्वचोदनाल्लोकवत्' ( १२।२।८।२३ ) इत्यस्य भिन्नाधिकरणता । सु. पृ. ११७३, * 'विप्रतिषिद्धधर्म०' अयमेव भूयोऽनुग्रहन्यायः । पृ. ८१२, अल्पस्य मुख्यत्वेऽपि भूयोऽनुसारित्वं सूचितं अनेन न्यायेन । पृ. ११७३.

**विप्रतिषेधेन करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् । ३।८।१०।२१ ॥**

अस्ति ज्योतिष्टोमे अग्नीषोमीयः पशुः । तस्य यूपस्य परिव्याणे मन्त्रौ– एक आध्वर्यवः 'परिवीरसि' इति करणः, अपरो होतुः 'युवा सुवासाः' इति क्रियमाणानुवादः । तयोश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तयोर्भवति संदेहः । कः पुनरसौ ? अत्र ऋत्विक्समास आम्नातः 'यो होता सोऽध्वर्युः' इति । किं करणमात्रं आध्वर्यवं होता कुर्यात् किंवा हौत्रं क्रियमाणानुवादिनमपि । इदमपि प्रसङ्गादनन्तरं निरूप्यते । अत्रायं पूर्वपक्षः– 'परिवीरसि, युवा सुवासाः' इत्येतयोः करणक्रियमाणानुवादिनोरध्वर्युणा होत्रा च प्रकृतौ युगपत्प्रयुक्तयोः कौण्डपायिनामयने 'यो होता सोऽध्वर्युः' इति वचनेन होत्रध्वर्युकर्मणोरेककर्तृकत्वमेवावगम्यते । तत्रापि प्रयोगोपनिपतितमनुपजातविरोधं होतृशब्दमेव मुख्यार्थे परिगृह्य चरमोपनिपतितो विरोधदशां प्राप्तोऽध्वर्युशब्दः कार्यलक्षणार्थो वर्णनीयः । तेन होत्रैव करणक्रियमाणार्थानुवादिनौ मन्त्रौ प्रयोक्तव्याविति प्राप्नोति । न चोभयमन्त्रप्रयोगं कर्तुं युगपदेकः शक्नोतीत्यनियमेन कदाचित् करणमन्त्रस्य कदाचित् क्रियमाणानुवादिनो मन्त्रस्य होत्रा प्रयोगः कर्तव्यः इति । अथवा 'यो होता सोऽध्वर्युः' इत्यजहल्लक्षणयैव होतुराध्वर्यवविधानात् स्वतन्त्रं क्रियमाणानुवादी होत्रा प्रयोक्तव्यः । आध्वर्यवः करणमन्त्रः । प्रयोगान्वयस्तु 'यो होता सोऽध्वर्युः' इत्येतस्मादुपदेशात् । अतिदेशाच्चोपदेशो बलवानिति करणमन्त्र एव होत्रा प्रयोक्तव्यः । यत्त्वजहल्लक्षणार्थ एव होता आध्वर्यवेण संबध्यते इत्युक्तम्, न हि होत्रा योगाद्धौत्रम् । अपि तर्हि होतुः कर्म हौत्रम् । यथा राज्ञः कर्म राज्यम्, न तु राज्ययोगाद्राजेति । तेन ऋग्वेदाध्ययनमात्रेणैव योग्यतया होत्रान्वयसिद्धेः परित्यक्तस्वकार्यस्यापि होतुराध्वर्यवे विधानोपपत्तेः, उपदेशसामर्थ्यात् होत्रा करण एव मन्त्रः प्रयोक्तव्यः । होतृप्रतिपुरुषेण क्रियमाणानुवादी मन्त्रः प्रयोक्तव्य इति । ननु करणस्य 'मन्त्रान्तेन कर्मादिसंनिपातः' (१२।३।१०।२५) इत्यनेन न्यायेन परिव्याणादेव करणमन्त्रस्य प्रयोगः प्राप्नोति, क्रियमाणानुवादिनस्तु क्रियमाणे एव परिव्याणे प्रयोगः । तेन भिन्नकालयोर्मन्त्रयोरेकेनापि होत्रा प्रयुज्यमानयोर्न कश्चिद्विरोधः । तदुक्तम् '**एककालप्रयोगो हि विरोधो मन्त्रयोर्भवेत् । करणः प्राक् क्रियातस्तु परतश्चेतरः स्थितः ॥**' इति ( वा. पृ. ११२५ ) । उच्यते । क्रियमाणता हि परिव्याणस्य आद्यपरिस्पन्दात्प्रभृतिसमाप्तिपर्यन्तम् । आद्यपरिस्पन्दात्प्रभृत्येव क्रियमाणानुवादिनः कालः । 'युवा सुवासाः परिवीरसि' इति मन्त्रेऽपि असीत्यनेन संनिहितो यूपो निर्दिश्यते । रशनाच्छादनाय परिव्याणाय यूपमुपस्थितस्यासौ यूपः संनिहितो भवति । तत एवाद्यपरिस्पन्दात्प्रभृतिपरिव्याणवर्तमानत्वम् । अतः समकालत्वाद्भवति विरोधः । एवं च सत्युपदेशात् होतृप्रतिपुरुषेणैव प्रयोक्तव्यः । प्रतिपुरुषेषु मध्ये यस्मिन् विशेषो गृह्यते प्राधान्येन वा कार्यताव्यग्रतया वा तेनैव प्रयोक्तव्य इति । तौता.

**विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् । ३।८।१०।२२ ॥**

अग्नीषोमीये पशौ यूपस्य परिव्याणे अध्वर्योः 'परिवीरसि परि त्वा०' इति करणमन्त्रः यजुर्वेदे



पठितः । होतुश्च 'युवा सुवासाः परिवीत आगात्०' इति क्रियमाणानुवादी मन्त्रः ऋग्वेदे पठितः । तत्र करणमन्त्रान्ते कर्मारम्भः । क्रियमाणानुवादी तु परिव्ययणसमानकालिकः । इमौ मन्त्रौ कुण्डपायिनामयने चोदकपरंपरया प्राप्नुतः । कुण्डपायिनामयने च 'यो होता सोऽध्वर्युः, स पोता । य उद्गाता स नेष्टा, सोऽच्छावाकः । यो मैत्रावरुणः स ब्रह्मा, स प्रतिहर्ता । यः प्रस्तोता स ब्राह्मणाच्छंसी, स ग्रावस्तुत् । यः प्रतिप्रस्थाता सोऽग्नीत्, स उन्नेता । गृहपतिः गृहपतिः । सुब्रह्मण्यः सुब्रह्मण्यः' इति ऋत्विक्कर्मणां विपरिवर्तनं श्रुतम् । एवं सति होत्रा चोदकप्राप्तः क्रियमाणानुवादी मन्त्रोऽपि पठनीयः, परिवर्तनश्रवणाच्च आध्वर्यवः करणमन्त्रोऽपि पठनीयः इति भाति । परंतु करणमन्त्रस्य अन्तिमानि कानिचिदक्षराणि यदा पठनीयतां प्राप्तानि तदैव क्रियमाणानुवादिमन्त्रस्य आदिमानि कानिचित् अक्षराणि पठनीयानि इति प्राप्नोति इति विप्रतिषेधो भवति । तथा सति संदेहः, किं होत्रा करणमन्त्र एव पठनीयः अथवा क्रियमाणानुवादी मन्त्र एव पठनीयः इति । तत्र अनियमेन इच्छानुसारेण कश्चिदपि पठनीयः । इति प्राप्ते, **सिद्धान्तमाह** सूत्रम् । विप्रतिषेधे तुल्यबलविरोधे सति करणः करणमन्त्र एव होत्रा पठनीयः । कुतः ? समवायविशेषात् संबन्धविशेषात् । क्रियमाणानुवादी मन्त्रः चोदकप्राप्तत्वात् आनुमानिकः । करणमन्त्रश्च 'यो होता सोऽध्वर्युः' इति प्रत्यक्षश्रवणात् प्रत्यक्षः । प्रत्यक्षं च अनुमानाद्बलीयः । उपदेशः अतिदेशात् बलीयान् । अस्मात् प्रत्यक्षश्रुतात् उपदिष्टात् समवायविशेषात् हेतोः 'परिवीरसि परि त्वा०' इति आध्वर्यवं करणमन्त्रमेव होता पठेत् इति सिद्धान्तः । ननु तर्हि 'युवा सुवासाः' इति हौत्रं मन्त्रं कः पठतु ? आह– इतरमन्यः इतरं 'युवा सुवासाः' इतिमन्त्रं अन्यः कश्चित् ऋत्विक् ब्रूयात् । तत्रापि तेषां होतृपुरुषाणां मध्ये यतः यस्मिन् होतृपुरुषसमवायाकृतः विशेषः यस्य यूपपरिव्याणकाले अन्यव्यापाराभावरूपो विशेषः स्यात् स ब्रूयात् । के.

* 'विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्' ( ३।८।१०।२१ ) इति सूत्रम् । ( **सुधायां** तु अत्र 'विप्रतिषेधे समवायविशेषादितराभ्यामन्यस्तेषां यतो विशेषः स्यात्' इति मुद्रितम् । ) केन परेण मैत्रावरुणो नियोक्तव्यः इत्यपेक्षायां स च परो होता नियोक्ता 'विप्रतिषेधे०' इति सूत्रशेषोक्तेन न्यायेन विज्ञायते इत्युक्तेऽपि अपकृष्टस्य उत्कृष्टकार्यकारित्वप्रसिद्धेः मैत्रावरुणादुत्कृष्टस्य होतुः मैत्रावरुणकार्यकारित्वायोगात् मैत्रावरुणादपकृष्टस्थानन्तरस्य होतृपुरुषत्वेन मैत्रावरुणसदृशस्य अच्छावाकस्यैव अनेन न्यायेन मैत्रावरुणकार्यकारित्वप्राप्तिः । सु. पृ. १२४८.

* 'विप्रतिषेधे करणसमवाय- ( करणः समवाय )- विशेषादितरमन्यस्तेषां यतो विशेषः स्यात्' ( ३।८।१०।२२ ) । कुण्डपायिनामयने श्रूयते 'यो होता सोऽध्वर्युः' इति । तत्र होत्रध्वर्युशब्दयोः भिन्नपुरुषवाचिनोः मुख्यसामानाधिकरण्यायोगात् अन्यतरस्य लक्षकत्वे कल्पनीये प्रथमश्रुतस्य होतृशब्दस्य मुख्यवृत्त्या चरमश्रुतस्य अध्वर्युशब्दस्य अध्वर्युकर्मलक्षकत्वं इति तल्लक्षिते अध्वर्युकर्मणि कर्तृत्वेन होतुर्विधिः । तेन प्रकृतितः प्राप्तयोः अध्वर्युहोत्रोः अध्वर्योर्निवृत्तिः, होत्रैव आध्वर्यवमपि कर्तव्यमिति व्यवस्था । तत्र यूपपरिव्याणकाले 'परिवीरसि' 'युवा सुवासाः' इत्यनयोः परिव्याणे क्रियमाणानुवादिकरणमन्त्रयोः अध्वर्युणा होत्रा च प्रयोज्ययोः परिव्याणसंकल्पप्रभृतितत्समाप्तिपर्यन्तमनुवर्तमानः क्रियमाणानुवादी, तन्मध्यपाती परिव्याणारम्भसंनिपाती करणमन्त्र इति कालैक्यमापन्नयोः तथैव कुण्डपायिनामयनेऽपि प्राप्तौ एकेन होत्रा युगपदुभयोः प्रयोक्तुमशक्यतया अवश्यमन्यतरबाधे वक्तव्ये प्रत्यक्षश्रुतिविधीयमानाध्वर्युकर्मबाधायोगात् आनुमानिकप्रकृतिवच्छब्दप्राप्तहोतृकर्मबाधः इति । तत्र होतुः प्रकृतिवच्छब्देन प्राप्तिः प्रत्यक्षवचनस्योपजीव्या विकृतौ पदार्थप्राप्तिः उपकारमुखेन इति होतृकर्मप्राप्तिरपि होतृप्राप्त्यर्थत्वेन उपजीव्या । सा च उपजीव्यहोतृकर्मप्राप्तिः अविशेषप्रवृत्ता 'युवा सुवासाः' इति मन्त्रप्रयोगमपि स्पृशति । अध्वर्युशब्दश्च अध्वर्युकर्माणि लक्षयन् 'परिवीरसि' इति

मन्त्रप्रयोगमपि स्पृशति । उभयोरपि उदाहृतमन्त्रद्वय-प्रयोगातिरिक्तविषयत्वेन सावकाशताऽप्यस्ति । एवं सत्यपि उपजीवकस्य प्रत्यक्षवचनत्वेन प्राबल्यात् उपजीव्यस्यैवोपमर्दः संश्रितः । **परिमल.** १।१।१।१ पृ. ९ **ब्रसू.**

**§ विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात् । १०।२।३१।७१ ॥**

साद्यस्क्रे 'खलेवाली यूपो भवति' इति श्रूयते । कृषकस्य धान्यखले मध्ये बलीवर्दपरिभ्रामणार्थं या स्थूणा निखन्यते सा खलेवाली । अत्र प्रकृतिप्राप्तखदिरा-विरोधाय खादिरी खलेवाली कर्तव्या किंवा या कस्यचिद् वृक्षस्य खलेवाली स्यात् सैव यूपत्वेन स्वीकार्या इति विचारे **सिद्धान्तमाह** । विप्रतिषेधे प्राकृतवैकृतयोर्गुणयोः विरोधे सति तद्वचनात् 'खलेवाली यूपः' इति वैकृतवचनविशेषात् प्राकृतगुणलोपः प्राकृतस्य खादिरत्वस्य गुणस्य लोपः बाधः स्यात् । ननु यूपं उद्दिश्य खलेवालीत्वविधानं कुतो न स्वीक्रियते तत्राह । तेन यूपेन समीपवर्तिना कर्मणा भावनया संयोगात् अन्वयात् यूपस्यैव विधानं युक्तमिति । इति **सुबोधिनी** । ननु एवं यूपशब्दस्य गौणत्वं प्रसज्येत तत्राह– तेन खलेवालीद्रव्येण पशुनियोजनात्मकेन दृष्टेन कर्मणा संयोगात् इति । संभवति दृष्टे फले यूपशब्दस्य गौणत्वाश्रयणं न दोष इति भावः इति **कुतूहलम् । के.**

* **विप्राणां** एव आर्त्विज्यम्, न राजन्यवैश्ययोः । **वि.** ६।६।३.

* **विप्रराजन्यौ** सत्यपि सामर्थ्ये न वैश्यस्तोमं कुरुतः । **वा.** ३।३।७।१४ पृ. ८४३ .

* **विप्रलम्भकवाक्यवत्** 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतिः वेदमूलत्वाभावात् अप्रमाणम् । **वि.** १।३।२.

* **विभक्तिः** । का पुनः क्रियासंबन्धस्य वाचिका, का वा गुणसंबन्धस्येति ? कारकलक्षणा क्रियासंबन्धे विवक्षिते भवति द्वितीयादिः । अविवक्षिते पुनः कारके संबन्धमात्रविवक्षायां षष्ठी भवति । **भा.** ३।१।६।१२ पृ.६८८. * विभक्तिः निष्कृष्टां कारकशक्तिं ब्रवीति । **वा.** १।४।१।२ पृ. ३२४, * विभक्तिः प्रातिपदिकार्थानुग्रहार्था इति द्रष्टव्यम् । कारकप्रतीतिपरा वा सती नान्तरीयकत्वात् संख्यां प्रतिपादयति । ३।१।७।१४ पृ. ७२३. * विभक्तिः प्रातिपदिकार्थैकारकत्ववाचिनी । सु. पृ. ७३९. * विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां श्रुत्यैव क्रियार्थतामाह । क्रिया साध्या, साधनं तत्परिच्छेदकानि च लिङ्गसंख्यादीन् अपेक्षते । अतः सर्वविशेषणविशिष्टा क्रियैव विधीयते । तत्र प्रत्ययः पूर्वं विशेषणे व्याप्रियते अन्यथानुपपत्त्या, न हि अगृहीतविशेषणा विशिष्टे बुद्धिः इति । **टुप्.** ४।१।५।१५. * विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतं संख्यार्थं ब्रूते । **भा.** ४।१।५।११ । विभक्तिश्रुत्या एकत्वस्य प्रातिपदिकार्थत्वात् न क्रियार्थता । **टुप्.** * क्रियासंबन्धस्य वाचिका **विभक्तिः** कारकविभक्तिः तृतीयादिका । गुणसंबन्धस्य वाचिका विभक्तिः षष्ठी । **भा.** ३।१।६।१२ पृ. ६८८, * प्रातिपदिकार्थगतं हि विभक्तिः स्वं अर्थं श्रुत्यैव वदति । ३।१।७।१४ पृ. ७२३, * **समर्थतराणि** समानविभक्तीनि, दुर्बलो विविभक्तिः । अपि च समानविभक्तीनि समर्थतराणि । तेषां हि आशुतरा वृत्तिः । विलम्बिता विविभक्तीनाम् । स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमान्तानि भवन्ति । परपदार्थं षष्ठ्यन्तो विशिनष्टि । १०।३।११।४२, * **विभक्तयः** आख्यातिक्यः तिप्–तस्–झीत्यादयः इत्युच्यन्ते । २।१।१।४, * विभक्तयः नामिक्यः ( नाम्नः सकाशादुत्पद्यमानाः स्वौजसमौडित्यादयः ) इत्युच्यन्ते । २।१।१।३. * **विभक्त्या** प्रातिपदिकार्थो विनियुज्यते । **ऋजु.** १।१।१ पृ. ३. * विभक्त्या हि कारकं प्रत्याय्यते । सा च यत्रैका अग्नीषोमादौ तत्र सकृदेव प्रत्ययस्य व्यापारो भवति । यत्र पुनर्भिन्नविभक्तिसंबद्धानेकपदोपात्तमेकमपि कारकं भवति यथा 'अग्नये च प्रजापतये च' इति, तत्र युगपत्प्रत्यवेक्षणाभावात् अवश्यं भेदेन अग्निप्रजापती प्रत्ययेन आलोचयितव्यौ । कारकविभक्तिर्हि नामपदार्थालोचनाय प्रत्ययं प्रयुङ्क्ते, सा च नानोच्चारितानां नैव प्रयुङ्क्ते इति आवृत्तिप्रसङ्गः । **वा.** २।२।५।१६ पृ. ५०७.



* घटः कर्मत्वं आनयनं कृतिः ( घटमानय ) इति वाक्ये क्रियाकर्मभावेन अन्वयाभावात् **विभक्त्या** तदुपस्थितेरेव प्रयोजकत्वम् । **सोम.** ६।१।१३ . * **विभक्तिभिः** एव अङ्गाङ्गिभावे अभिधीयमाने निष्प्रयोजनत्वमपवादः न तु प्रयोजनसद्सद्भावेन अङ्गाङ्गित्वम् । **वा.** २।१।४।१२ पृ. ४१३. * **विभक्तेः** वचनमेवैकं न प्रयोजनम्, किं तर्हि कारकसंबन्धोऽपि । अविवक्षिते एकत्वे कारकसंबन्धार्थं अस्योच्चारणं भविष्यति । तस्मान्नानर्थकम् । **भा.** ३।१।७।१४ पृ. ७२३ . * निमित्तफलहेतुषु सर्वासां ( **विभक्तीनां** ) प्रायदर्शनम् । **टुप्.** ९।१।१।१ वर्णके २ .

* **विभक्त्यर्थः** गुणः, प्रधानं प्रातिपदिकार्थः । प्रातिपदिकार्थविशेषो विभक्त्याऽभिधीयते । सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम् । **भा.** ९।३।५।१५.

* **विभक्तिजन्योपस्थितेः** अभेदातिरिक्तसंबन्धेन नामार्थप्रकारकबोधे हेतुत्वम् । **मणि.** पृ. १४७.

* **विभक्तिप्रातिपदिकयोः** प्रातिपदिकं प्रधानम्, धर्मिवाचकत्वात् । विभक्तिस्तु कर्मत्वकरणत्वादिधर्मवाचकत्वात् गुणभूता । **वि.** ९।३।५.

* **विभक्तिरूपा** विनियोक्त्री––श्रुतिः–– १ 'व्रीहिभिर्यजेत' व्रीहीणां यागाङ्गत्वं तृतीयया । 'अरुणया क्रीणाति' आरुण्यस्य गुणस्य क्रयाङ्गत्वं तृतीयया । आरुण्यस्याङ्गत्वं च एकहायनीरूपद्रव्यपरिच्छेदद्वारा । क्रयसाधनत्वं एकहायन्याः अरुणाया एव न कृष्णायाः इत्यर्थः । २ 'व्रीहीन् प्रोक्षति' प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयया । द्वितीया हि व्रीहीणां प्राधान्यं बोधयन्ती प्रोक्षणस्य व्रीह्यङ्गत्वं बोधयति । श्रुतिरेवेयं प्रकरणसहकृता प्रोक्षणस्य क्रत्वङ्गत्वे पर्यवस्यति । 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र मन्त्रस्य अभिधान्यङ्गत्वं द्वितीयया । ३ 'यदाहवनीये जुहोति' इति आहवनीयस्य होमाङ्गत्वं सप्तम्या । ४ 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र मैत्रावरुणस्य दण्डदानाङ्गत्वं चतुर्थ्या । ५ 'वासिष्ठानां नाराशंसः' इत्यत्र मन्त्रनियमस्य वसिष्ठाङ्गत्वं षष्ठ्या । ६ 'मध्यात् पूर्वार्धात्' प्रातिपदिकार्थस्य अवदानाङ्गत्वं पञ्चम्या । **मीन्या.**

* **विभक्तिवचनयोः** विभक्तेः प्राधान्यं कर्मादिकारकवाचित्वात् । वचनस्य तु गुणत्वं कारकसंख्याभिधायित्वात् । **वि.** ९।३।५.

* **विभक्तिवैरूप्यादिनिमित्तः** ( अपरः ) वाक्यभेदः । **वा.** ३।१।७।१४ पृ. ७२१.

* **विभक्तिव्यत्यये** अपि प्रत्ययो भवति । 'अश्मकैरागच्छामि' इति अश्मकशब्दैकदेश उपलब्धे, अश्मकेभ्य इत्येव शब्दः स्मर्यते । ततोऽश्मकेभ्यः इत्येषोऽर्थं उपलभ्यते इति । **भा.** १।३।८।२९.

* **वि–भजेत्** इत्यत्र वि-उपसर्गः कर्मव्यतिहारार्थीयः । अथवापक्षे विभागार्थीयो वि–शब्दः श्रुतिवृत्तः । **टुप्.** ६।५।२।११.

* **विभागः** द्वादशशतदक्षिणायाः ज्योतिष्टोमे अध्वर्य्वादिसमाख्यानुरोधेन । १०।३।१३।५३–५५. **मीको.** पृ. १८१३ 'ज्योतिष्टोमे द्वादशशतदक्षिणायाः ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विभागः पुरोडाशस्य भक्षार्थः दर्शपूर्णमासादौ । ३।४।१७।४८–५१. **मीको.** पृ. १६६९ 'चतुर्धाकरणं भक्षार्थम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * यत्र विशेषो न श्रूयते तत्र समो **विभागः** भवितुमर्हति । **भा.** १०।३।१३।५३ .

* **विभागमन्त्रावृत्तिः** नास्ति यत्र पुरोडाशानां बहूनां एक एव पिण्डः तत्र । प्रदानकालेऽपि अविभक्तानामेव हविषां प्रतिदैवतं प्रदीयमानत्वात् यथा सर्वपृष्ठायाम् । **संकर्ष.** १।३।२४ .

* **विभागलक्षणः** वाक्यभेदः । अत्र गम्यमानसंबन्धत्यागः अनेकादृष्टकल्पना च दोषः । **बाल.** पृ. १८० .

* **सभागविभागशब्दौ** बौद्धानां निकायप्रसिद्ध्या सजातीयविजातीययोर्वर्तेते । **ऋजु.** पृ. १५१.

**§ विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते । ६।५।१७।४९॥**

अग्निष्टोमे प्रातःसवने ग्रहग्रहणानन्तरं अध्वर्युः बर्हिर्मुष्टिद्वयं गृहीत्वा बहिष्पवमानार्थं शालाया बहिः प्रसर्पति । तं उद्गाता अन्वारभते, उद्गातारं प्रस्तोता, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारं यजमानः, यजमानं

ब्रह्मा । अन्वारम्भणं च दक्षिणहस्तेन । तत्र पुरतो गच्छतः कच्छं गृहीत्वैव पाश्चात्यो गच्छति । एवं पिपीलिकापङ्क्तिवत् गच्छतां मध्ये प्रस्तोतृद्गात्रोः उद्गातृप्रतिहर्त्रोर्वा यदि कदाचित् अपच्छेदः ( अन्वारम्भभङ्गः ) युगपत् स्यात् तदा अपच्छेदयोः यौगपद्ये सति प्रायश्चित्तं न विद्यते न कर्तव्यम् । एकस्य विभागे नाम अपच्छेदे प्रायश्चित्तं श्रूयते न अपच्छेदद्वये । तथा च विभागश्रुतेः एकस्यैव विभागस्य निमित्तत्वश्रवणात् अपच्छेदयौगपद्ये प्रायश्चित्तं न विद्यते । इति **पूर्वः पक्षः ।**

**स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकम् । ५० ॥**

अग्निष्टोमे प्रातःसवने ग्रहग्रहणानन्तरं बहिष्पवमानार्थं अध्वर्युः बर्हिर्मुष्टिद्वयं गृहीत्वा शालाया बहिः प्रसर्पति । तमुद्गाता अन्वारभते, तं प्रस्तोता, तं प्रतिहर्ता, तं यजमानः, तं ब्रह्मा । एवं अन्वारभ्य गच्छतां यदि अपच्छेदः स्यात् तदा प्रायश्चित्तं भवति । अपच्छेदद्वययौगपद्ये तु प्रायश्चित्तं न विद्यते इति पूर्वपक्षः प्राप्तः सूत्रेण । तं वाशब्देन निरस्यन् सिद्धान्तमाह । अपच्छेदयोः यौगपद्येऽपि स्यात् प्रायश्चित्तम् । प्राप्तनिमित्तत्वात् , प्राप्तं निमित्तं अपच्छेदरूपं यस्य प्रायश्चित्तस्य तत् प्राप्तनिमित्तम् , प्राप्तनिमित्तकत्वात् यौगपद्येऽपि प्रायश्चित्तं स्यात् । यौगपद्येऽपि अपच्छेदयोः ऐक्यं नास्ति, कालमात्रं तु एकम् । न च कालैक्येऽपि अपच्छेदैक्यं भवति । तस्मात् अपच्छेदयोर्द्वयोर्यौगपद्येऽपि प्रायश्चित्तं स्यादेव इति **सिद्धान्तः । के.**

* ‘**विभाषा**’ ( पा० २।१।११ ) इत्यनेन समासो वाक्यं वा भवति । यदि समासलक्षणमेव आश्रीयेत, राज्ञः पुरुषः इत्यपप्रयोगः स्यात् । तस्मात् राज्ञः पुरुष इत्येतदपि साधु । राजपुरुष इत्यपि, उभयोरप्यनुगमात् । यत्रानुगमो नास्ति तत्रासाधुप्रयोगः । यथा गावीति । तेनासत्यपि समासे स एवार्थः समासेऽपि । तेनासमासत्वं अदोषः । **टुप्.** १०।८।१।४ पृ. २०६०.

* **विभिन्नदेवताकेषु** एकजातीयेषु ऐकादशिनेषु पशुषु कुम्भी-शूल-वपाश्रपणीनां तन्त्रम् । ११।४।९। ३४-३५. **मीको.** पृ. १३०६ ‘ऐकादशिनेषु पशुषु०’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विभुसंयोगसिद्धिः** विभुनी मिथः संयुक्ते निरन्तरद्रव्यत्वात् घटाकाशवत् इत्यनुमानेन । **मणि.** पृ. २०.

꠸ **विमुञ्चेन्मुच्यमानेष्विति न्यायः ।** यथा कालग्रस्तस्वप्राणपितृभ्रातृसुतसुहृदादयः अनित्यत्वात् नङ्क्ष्यन्त्येवमेव बुद्ध्वा बुधः पुरैव तेषां स्नेहादिकं मुञ्चेदिति विषयेऽयं न्यायोऽवतरतीति श्रीवल्लभाः । **साहस्री.** ५९०.

* **विमोकः** अग्नेः प्रधानानन्तरमेवाग्निचयने । ११।३।९।१९-२२ . **मीको.** पृ. ४१ ‘ अग्निचयने प्रधानादौ अग्नियोगः प्रधानान्ते च अग्निविमोकः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * विमोकः पूर्वमाम्नातः पश्चात्तद्योगः । अर्थात् विपरीतः कार्यः ( पूर्वं योगः पश्चात् विमोक इति आर्थः क्रमोऽत्र ) । **भा.** ५।१। २।२ . * अग्निचयने ‘ इमं स्तनं ’ ( तैसं. ५।५।१० ) इतिमन्त्रहोमो **विमोकः ।** स च प्रधानान्ते भाष्यमतेन, सर्वान्ते वार्तिकमतेन । **वि.** ११।३।९.

* **विरक्तस्य** कर्मार्थं न दारक्रिया, किंतु आश्रमान्तरमेव । **भाट्ट.** ६।८।२ .

* **विरण्यशब्दः** विस्तीर्णे भवति । यथा विरण्यान्यरण्यानि, विस्तीर्णानि इति गम्यते । **भा.** १०।४। २।५ .

* **विराट् अनुष्टुप्** । पादेषु अक्षराणि १०।१०। १० । उदा० ‘ प्रेद्धो अग्ने दीदिहि ’ ( **ऋसं.** ७। १।३ ) । किंवा ११।११।११ । उदा० ‘ अग्निं नरो दीधिति ’ ( **ऋसं.** ७।१।१ ) । * विराट् पङ्क्तिः । पादेषु अक्षराणि १०।१०।१०।१० । उदा० ‘ वि पिप्रोरहिमा ’ ( **ऋसं.** ६।२०।७ ) ।

* **विराट्पूर्वा** त्रिष्टुप् । पादेषु अक्षराणि १०।१०। ८।८।८ । उदा० ‘ एवेन्द्राग्निभ्यामहावि ’ ( **ऋसं.** ५।८६।६ ) । पङ्क्त्युत्तरा त्रिष्टुप् इयमेव ।



* **विराड्रूपा** त्रिष्टुप् । पादेषु अक्षराणि ८।११। ११।११ । उदा० ‘ क्रीळन्तो रुक्म ’ ( **ऋसं.** ५।१९। ५ ) । किंवा ११।११।११।८ । उदा० ‘ श्रुतं मे मित्रावरुणा ’ ( **ऋसं.** १।१२२।६ ) ।

* **विराट्शब्दस्य** दशाक्षरत्वम् । **सु.** पृ. ७८१.

* **विराट्स्थाना** त्रिष्टुप् । पादेषु अक्षराणि ९।९। १०।११ । उदा० ‘ स्वस्ति न इन्द्रो० ’ ( **ऋसं.** १। ८९।६ ) । किंवा १०।९।१०।११ । उदा० ‘ श्रुधी हवमिन्द्र० ’ ( **ऋसं.** २।११।१ ) । किंवा १०।९।११। ९ । उदा० ‘ शुष्मं नु ते० ’ ( **ऋसं.** २।११।४ ) ।

* **विरामः** करणानन्तरं अकरणम् । **रहस्य.** पृ. ११६. * विरामः गीत्युपायः ( पञ्चसु ) अन्यतमः । **भा.** ९।२।७।२९.

* **विरुद्धं** अपि ज्ञानद्वयं अन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यते । तत्र नास्त्युत्पत्तिप्रतिबन्धः । श्रुतिलिङ्गादौ तु उत्तरस्योत्पत्तिप्रतिबन्धः , पूर्वसापेक्षत्वादुत्तरस्य । **वि.** ६।५।१९. * ‘ **विरुद्धौ** सदसद्भावौ न स्यातामेकवस्तुनि । ’ **श्लोवा.** संबन्धाक्षेपपरिहारे ३४.

* **विरुद्धार्थकविभक्त्यवरुद्धयोः** प्रातिपदिकार्थयोः भेदेन अन्वयः व्युत्पत्तिसिद्धः । राज्ञः पुरुषः राजपुरुषः राजसंबन्धी पुरुषः इत्यत्र यथा । **मणि.** पृ. १५१.

* धर्म्यन्तरेषु विरुद्धार्थख्यातं हेतुद्वयं एकत्र एकदेशिनि दृश्यमानं **विरुद्धाव्यभिचारि** । **रत्नाकरः.** पृ. ३७४.

* **विरुद्धत्रिकद्वयं** उपादेयत्वोद्देश्यत्व– विधेयत्वानुवाद्यत्व–गुणत्वप्रधानत्वरूपम् । **सु.** पृ.५०६.

* **विरुद्धत्रिकद्वयापत्तिः ।** ‘ वाजपेयेन स्वाराज्यकामो यजेत ’ अत्र वाजरूपगुणविधित्वपक्षे यागे विरुद्धं त्रिकद्वयं प्राप्नोति । उद्देश्यत्वं अनुवाद्यत्वं मुख्यत्वं इत्येकं त्रिकम् । उपादेयत्वं विधेयत्वं गुणत्वं इत्यपरं त्रिकम् । ‘ वाजेन यागं भावयेत् ’ इत्येकं वाक्यम् , ‘ यागेन स्वाराज्यं भावयेत् ’ इत्यपरं वाक्यं कल्पनीयम् , तत्र उद्देश्यत्वादयः त्रयः स्वाराज्यरूपफलनिष्ठा धर्माः, उपादेयत्वादयस्त्रयः साधनभूतयागनिष्ठा धर्माः । फलमुद्दिश्य याग उपादीयते । फलमनूद्य यागो विधीयते । फलं प्रधानं यागो गुणः । इति यागे उपादेयत्वादिकं त्रिकं सिद्धम् । पुनश्च यागमुद्दिश्य वाज उपादीयते, यागमनूद्य वाजो विधीयते । यागः प्रधानं वाजो गुणः इति यागे एव उद्देश्यत्वादिकं त्रिकं प्राप्नोति । इति यागे विरुद्धं त्रिकद्वयं प्राप्तं भवति । तच्चानिष्टम् ।

उद्देश्यत्वं मानसापेक्षो विषयत्वाकारः । उपादेयत्वं अनुष्ठीयमानताकारः । तौ उभौ मनःशरीरोपाधिकौ धर्मौ । अनुवाद्यत्वविधेयत्वधर्मौ शब्दोपाधिकौ । अनुवादः ज्ञातस्य कथनम् , विधिः अज्ञातस्यानुष्ठेयत्वकथनम् । फलयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे । **वि.** १।४।६.

* **विरुद्धविभक्तिरहित**प्रातिपदिकार्थयोः अभेदान्वयव्युत्पत्तिः । **मणि.** पृ. १८७ .

* **विरेचनवमनयोः** ( सोमस्य ) प्रायश्चित्तं आम्नातम् । **वा.** ३।५।९।२६.

* **विरोधः** प्रतियोगिनि दृष्टे विज्ञायते । **वा.** ३।३।१।२. * न च अनवगतो **विरोधः** बाधकारणं भवितुमर्हति । ३।८।१०।२१ पृ. ११२६, * सर्वत्र चाविरोधसंभवे विरोधो नाश्रीयते । २।२।७।२१ पृ. ५२५. * **विरोधे** च श्रुतिर्लिङ्गाद् बलीयसी । **भा.** ३।३।७.१४ पृ. ८४७.

꠸ **विरोधे च श्रुतिविशेषादव्यक्तः शेषे ।** **३।८।१५।३२ ॥**

दर्शपूर्णमासयोरामनन्ति ‘ समौ अप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कुरुते ’ तथा ‘ अरत्निमात्रे विधृती करोति ’ इति । तत्र संशयः किं वेदिस्तरणार्थस्य बर्हिषो विधृती पवित्रे उतान्यतः इति । इदानीं प्रकृतावपि बर्हिर्धर्माणां न सर्वबर्हिरर्थत्वमिति प्रसङ्गान्निरूप्यते ।

अत्रायं पूर्वपक्षः– ‘ बर्हिर्लुनाति ’ इति लवनविधौ प्रयोजनविशेषाश्रवणात् यावत्प्रकरणवर्तिबर्हिःकार्यार्थमेव लवनमवधार्यते । विधृती पवित्रे अपि बर्हिःकार्ये । तेन तदर्थमपि लवनमिति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यद्यत्र विशेषो न गृह्येत । तथाहि लूनं बर्हिः स्तृणातीति धातुशब्देन स्तरणमभिधीयते । तेन लूनस्य बर्हिषः सकलस्यैव वेदिस्तरणार्थत्वान्नान्यत्र विनियोगः

संभवतीति । अतोऽसर्वार्थत्वं बर्हिषः, विधृतिपवित्राथ दर्भग्रहणमिति सिद्धम् ।

**प्रयोजनम्**– पक्षोक्तम् । **सूत्रं तु**– ऊनस्य कृत्स्नस्यैव बर्हिषः श्रुतिविशेषाद्वेदिस्तरणे विनियोगाद्विधृतिपवित्रार्थं न तत्र ग्रहणे विरोधादव्यक्तः सामान्यभूतो विधृतिपवित्रार्थदर्भविधिः शेषे परिभोजनीयाभिधाने बर्हिषीति । **तौता.**

**विरोधे च श्रुतिविशेषादव्यक्तः शेषे । ३।८।१७।३३ ॥**

दर्शपूर्णमासयोः 'समौ अप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' इति 'अरत्निमात्रे विधृती करोति' इति च श्रुतम् । पवित्राख्यं दर्भद्वयं विधृत्याख्यं च दर्भद्वयमत्र विहितम् । एते दर्भाः वेदिस्तरणार्थात् बर्हिषो ग्राह्याः इति **प्राप्ते, सिद्धान्तमाह** । 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति' इति श्रुतिविशेषात् संस्कृतं बर्हिः सर्वं वेदिस्तरणार्थमेवेति ज्ञायते । पवित्रविधृत्यर्थदर्भाणां तत एव ग्रहणे उक्तश्रुतेः विरोधः स्यात् । एवं श्रुतिविशेषात् विरोधे सति शेषे पवित्रविधृत्यादिशेषकार्ये उपयुक्तो दर्भसमुच्चयः अव्यक्तः असंस्कृतः स्यात्, परिभोजनीयं नाम यद् बर्हिः, तस्मात् स्यात् ।

अनेन प्रकृतावपि बर्हिरादिधर्माणां नातीव सर्वार्थता इति साधितम् । **के.**

**विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् । १।३।२।३ ॥**

यत्र श्रुतिविरोधस्तत्र कथम् ? यथा औदुम्बर्याः सर्ववेष्टनं 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्' इतिश्रुतिविरुद्धम् । 'अष्टाचत्वारिंशतं वर्षाणि वेदब्रह्मचर्यचरणम्' (बौध. १।३।१) 'कृष्णकेशोऽग्नीनादधीत' इतिश्रुतिविरुद्धम् । 'क्रीतराजको भोज्यान्नः' इति 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इतिश्रुतिविरुद्धम् । अत्र प्रभाकरेण संगतिलोभादित्थमधिकरणमुपवर्णितम्– इह प्रत्यक्षानुमितश्रुत्योः परस्परव्याघातादप्रामाण्यम् । न चाग्रोपस्थितया प्रत्यक्षश्रुत्या विलम्बोपस्थिताया अनुमितश्रुतेर्विरोधाद्बाध एवेति वक्तव्यम् । विलम्बभवेनापि ज्वालाभेदग्राहिणाऽनन्यथासिद्धेन अनुमानेन अग्रोपस्थितस्यापि ज्वालैकत्वग्राहिणः प्रत्यक्षस्यान्यथासिद्धस्य बाधदर्शनात् । इह तु प्रत्यक्षानुमितश्रुत्योर्द्वयोरपि अन्यथासिद्धिसंभावना समस्ति । यथा हि पौरुषेयत्वेन स्मृतौ भ्रान्त्यादिमूलत्वसंभावना, तथा वेदेऽप्युच्चारणस्य पौरुषेयत्वात् 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतौ नकारानुच्चारणेन स्पृष्ट्वा उद्गायेदिति प्रतितिसंभावना समस्त्येव । अतो विनिगमनकारणाभावात् द्वयोरपि प्रत्यक्षानुमितश्रुत्योरन्यथासिद्धत्वसंभावनया न बाध्यबाधकभावः, नापि विकल्पः । अथ द्वयोरपि श्रुतत्वाविशेषादनन्यथासिद्धत्वम्, तथापि न तावत् तुल्यबलत्वात् बाध्यबाधकभावः संभवति, नापि विकल्पः । युगपदुपस्थितयोर्हि प्रयोगविशेषान्वयव्यवस्थया विकल्पो भवति । इह तु प्रथमोपस्थितेनानुपजातविरोधिना सकलप्रयोगव्याप्तेर्विलम्बोपस्थितेनाप्यनन्यथासिद्धेन तथैव व्याप्तेः परस्परव्याघातादप्रामाण्यमेवेति **पूर्वः पक्षः ।**

**सिद्धान्तस्तु**– भवेदेवं यदि प्रत्यक्षश्रुतिविरोधे स्मृतेः श्रुत्यनुमानं भवेत् । तदेव तु न संभवति । बाधितविषयत्वेनानुमानोदयासंभवात्, वह्नाविव शैत्यानुमानोदयस्य । अतः श्रुत्यनुमानासंभवान्न परस्परव्याघातः, किन्तु स्मृतेर्बाध एवेति ।

तदेतद्बालजल्पितम् । यदि हि प्रत्यक्षानुमितश्रुत्योरतुल्यबलत्वं तदा बाध्यबाधकभावः । अथ तुल्यबलत्वम्, तदा विकल्प एव । परस्परव्याघातस्तु कुतः ? न च द्वयोरपि अन्यथासिद्धिसंभावनया परस्परव्याघातः, तत्र प्रत्यक्षश्रुतौ तावन्नकाराद्यनुच्चारणसंभावनाऽनादिसकलाध्येतृगताध्ययनपरम्परापराहतैव । एवं मन्वादिस्मृतिष्वपि भ्रान्त्यादिमूलत्वसंभावनाभिधानं अनन्तरोक्तस्मृत्यधिकरणसिद्धान्तविस्मरणेन मनोवैक्लव्यमेव अभिव्यनक्ति । न चानन्यथासिद्धत्वेऽपि अग्रपश्चात्प्रवृत्तयोः प्रत्यक्षानुमितश्रुत्योः सकलप्रयोगव्याप्त्यवगमात् न बाध्यबाधकभावो नापि विकल्प इति **वाच्यम्** । युगपदुपस्थितयोरपि यवव्रीहिशास्त्रयोरेकैकशास्त्रपर्यालोचनेन सकलप्रयोगव्याप्त्यवगमात् । तदुक्तम्— '**नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी**' इति (वा. १।३।२।३



पृ. १७६) । अथ तत्रानन्यथासिद्धशास्त्रद्वयदर्शनात् प्रयोगविधिना विकल्प आश्रीयते, तदिहापि समानम् । याऽप्यग्रत उपस्थितिरन्यतरश्रुतेः, साऽप्यध्ययनक्रमेण यवव्रीहिशास्त्रयोरप्यन्यतरस्याऽविशिष्टेति तयोरपि परस्परव्याघातात् अप्रामाण्यमापद्येतेति यत्किञ्चिदेतत् । सिद्धान्तयुक्तिस्तु भङ्गावसर एव निरसनीयेति यथाभाष्यमेव तावदधिकरणं प्रस्तूयते– पूर्वत्र मन्वादिस्मृतीनां वेदमूलत्वेन प्रामाण्ये निरूपिते इदानीं वेदविरोधे सति तदपोद्यते ।

अत्रायं **पूर्वपक्षिणोऽभिसंधिः** । न ह्येकमन्वादिप्रणीतानां क्वचित् वेदमूलत्वं क्वचित् भ्रान्त्यादिमूलत्वमिति शक्यते वक्तुम्, सर्वत्रैवानाश्वासप्रसङ्गात् । तदुक्तम्–'**कदाचित् श्रुतिमूलत्वमुक्त्वा भ्रान्त्यादिमूलता । स्मृतिभिः प्रतिपन्ना चेत्कस्तामिन्द्रोऽपि वारयेत् ॥**' इति (वा. १।३।२।३ पृ. १६९) । तत्रापि यदि श्रुतिविरुद्धार्थविषयिणी श्रुतिर्न संभवत्येव, तदा न कल्प्येतापि । न त्वेवम् । दृश्यन्ते हि परस्परविरुद्धार्थाः श्रुतयः । उदितहोमानुदितहोमषोडशिग्रहणाग्रहणादिविषयाः सहस्रशः । तदुक्तम्– '**परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि । स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेत् ॥**' इति (वा. १।३।२।३ पृ. १७०) । अतः प्रत्यक्षश्रुतिविरुद्धाऽपि स्मृतिः श्रुतिमूलतया प्रमाणमेवेत्येवं **प्राप्ते, अभिधीयते** । स्मृतितो हि श्रुतिविज्ञानमानुमानिकं वक्तव्यम् । अनुमानस्य च व्याप्तिपक्षधर्मतावदबाधितविषयत्वमपि सामग्रीमध्यनिविष्टम् । तेन यद्यपि स्मृतित्वरूपेण अष्टकादिस्मृतितः सर्ववेष्टनस्मृतेर्नास्ति विशेषः कश्चित्, तथापि औदुम्बरीस्पर्शनश्रुतेः प्रत्यक्षत्वेनाऽग्रप्रवृत्तत्वादसर्ववेष्टितैवौदुम्बरी क्रत्वपूर्वसाधनमित्यवरुद्धबुद्धेः पुरुषस्यौदुम्बरीसर्ववेष्टनश्रुत्यनुमानं बाधितविषयत्वादुत्पत्तुमेव नोत्सहते, अग्नाविव प्रत्यक्षावगतोष्णत्वावरुद्धबुद्धेः शैत्यानुमानम् । इतरथा तु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादिश्रुतिविरोधेऽपि मन्त्रलिङ्गात् श्रुत्यनुमानं प्रसज्येत । तदुक्तम्–'**सिद्धेन हि साध्यमुत्पत्तिमुखनिरोधेन बाध्यत इति बाधविदो नैयायिकाः**' इति । न चैवं सति अनैकान्तिकत्वादष्टकादिस्मृतावपि न वेदानुमानमिति वक्तव्यम् । प्रत्यक्षश्रुत्यविरुद्धाया एव स्मृतेर्लिङ्गत्वेनाऽनैकान्तिकत्वाभावादिति । अतः प्रत्यक्षश्रुतिविरुद्धाः स्मृतयो न प्रमाणमिति ।

**प्रयोजनम्**— यदि पूर्वः पक्षः, तदा षोडशिग्रहणाग्रहणवद्विकल्पः । **सिद्धान्ते तु**–– स्पर्शनमात्रमनुष्ठेयमिति । **सूत्रं तु**– प्रत्यक्षश्रुतिविरोधे लिङ्गबाधेन स्मृतिप्रामाण्यं अनपेक्ष्यं अनादरणीयम् । यस्मात् असति विरोधे स्मृतितो वेदानुमानमिति । **तौता.**

**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् । १।३।२।३॥**

स्मृतिर्धर्मे प्रमाणं इत्युक्तं श्रुतिमूलकत्वानुमानात् । यत्र तु स्मृतेः प्रत्यक्षश्रुत्या विरोधो दृश्यते तत्र श्रुत्या विरोधे सति तु अनुमानं (स्मृतिः) अनपेक्षं श्रुतिमूलानपेक्षं स्यात् श्रुतिमूलकत्वानुमानासंभवात् अप्रमाणं स्यात् स स्मृत्यंशो यः श्रुतिविरुद्धः । असति तु श्रुतिविरोधे श्रुतिमूलकत्वस्यानुमानं कर्तव्यं प्रामाण्यं च स्वीकर्तव्यम् । हिशब्दः अवधारणार्थः, असत्येव विरोधे श्रुतिमूलकत्वानुमानं इति । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षा श्रुतिः 'सा सर्वा वेष्टयितव्या' इति स्मृतिः तया श्रुत्या विरुध्यते इति सर्वांशे न प्रमाणम् । सर्वशब्दस्यात्र संकोचः कर्तव्यः । कियन्तंचित् औदुम्बर्या मूलभागं त्यक्त्वा शेषं सर्वा वेष्टयितव्या अहतेन वाससा इति ।

**हेतुदर्शनाच्च । ४ ॥**

प्रत्यक्षश्रुतिविरोधे विरुद्धांशे स्मृतिः अप्रमाणं इति सिद्धान्त उक्तः । तत्रैव हेत्वन्तरमाह । अहतेन वाससा सदसि निमिता औदुम्बरी शाखा सर्वा वेष्टयितव्या इति प्रतिपादने लोभो हेतुर्दृश्यते अधिकवस्त्रलोभात् तथोक्तं स्यात् स्मृतिकारेण । बुभुक्षाणाः केचित् क्रीतराजकस्य भोजनमाचरितवन्तः, अपुंस्त्वं छादयन्तः अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चक्रुः । तत् दृष्ट्वा स्मृतिकारैस्तत् निबद्धं स्यात् । तथा च तथा करणे स्मरणे च लोभादिहेतुर्दृश्यते । तस्मात् तादृशी स्मृतिः अप्रमाणं इति भाष्यम् । वार्तिककारस्तु नैतत्कारणं मन्यते ।

अथवा इदं सूत्रं अधिकरणान्तरत्वेन व्याख्येयम्। अक्षरार्थस्तु स एव। उदाहरणमात्रं भिन्नम्। 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिः अध्वर्योर्लोभमूलिका इति न प्रमाणम्। के.

* विरोधे द्रव्यसंस्कारयोर्द्रव्यस्यैवोपादानम्। ६।३।१८।३८. मीको. पृ. २१८५ 'द्रव्यसंस्कारविरोधाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * विरोधे श्रुतिवाक्ययोः, श्रुतिर्बलीयसी वाक्यात्। भा. २।१।१।४.

**☸ विरोधाधिकरणम्।** प्रत्यक्षवेदवाक्यविरोधे स्मृत्यर्थो नानुष्ठेयः॥

## विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्। १।३।२।३॥

**भाष्यम्—** अथ यत्र श्रुतिविरोधस्तत्र कथम्? यथा औदुम्बर्याः सर्ववेष्टनं 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या विरुद्धम्। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन विरुद्धम्। 'क्रीतराजको भोज्यान्नः' इति 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इत्यनेन विरुद्धम्। तत्प्रमाणं कर्तृसामान्यात्, इत्येवं प्राप्ते, ब्रूमः। अशक्यत्वाद् व्यामोह इत्यवगम्यते। कथमशक्यता? स्पर्शविधानान्न सर्वा शक्या वेष्टयितुमुद्गायता स्प्रष्टुं च। तामुद्गायता स्प्रष्टव्यामवगच्छन्तः केनेमं संप्रत्ययं बाधेमहि? सर्ववेष्टनस्मरणेनेति ब्रूमः।

ननु निर्मूलत्वात् व्यामोहस्तत्स्मरणमिति वैदिकं वचनं मूलं भविष्यतीति। भवेद्वैदिकं वचनं मूलं यदि स्पर्शनं व्यामोहः। अव्यामोहे त्वशक्यत्वादनुपपन्नम्। यथा अनुभवनं अनुपपन्नमिति न कल्प्यते, तथा वैदिकमपि वचनम्। कथं तर्हि सर्ववेष्टनस्मरणम्? व्यामोहः। कथं व्यामोहकल्पना? श्रौतविज्ञानविरोधात्। अथ किमर्थं नेमौ विधी विकल्प्येते व्रीहियववत् बृहद्रथन्तरवद्वा। नासति व्यामोहविज्ञाने विकल्पो भवति, यदि सर्ववेष्टनविज्ञानं प्रमाणं स्पर्शनं व्यामोहः। यदि स्पर्शनं प्रमाणं स्मृतिर्व्यामोहः। विकल्पं तु वदन् स्पर्शनस्य पक्षे तावत्प्रामाण्यमनुमन्यते। तस्य च मूलं श्रुतिः। सा चेत्प्रमाणमनुमता न पाक्षिकी। पाक्षिकं च सर्ववेष्टनस्मरणं पक्षे तावन्न शक्नोति श्रुतिं परिकल्पयितुम्, स्पर्शविज्ञानेन बाधितत्वात्। ततश्च अव्यामोहे न तस्मिन्नशक्या श्रुतिः कल्पयितुम्। न चासावव्यामोहः पक्षे, पक्षे व्यामोहो भविष्यतीति। यदेव हि तस्यैकस्मिन्पक्षे मूलम्, तदेवेतरस्मिन्नपि। एकस्मिंश्चेत्पक्षे न व्यामोहः श्रुतिप्रामाण्यतुल्यत्वादितरत्राप्यव्यामोहः। न चासावेकस्मिन्पक्षे श्रुतिः, निबद्धाक्षरा हि सा न प्रमादपाठः इति शक्या गदितुम्। तेन नैतत्पक्षे विज्ञानं व्यामोहात् पक्षान्तरं संक्रान्तमित्यवगम्यते। तत्र दुःश्रुतस्वप्नादिविज्ञानमूलत्वं तु सर्ववेष्टनस्येति विरोधात् कल्प्यते। न हि तस्य सति विरोधे प्रामाण्यमभ्युपगन्तव्यमिति किञ्चिदस्ति प्रमाणम्। तस्मात् यथैवैकस्मिन् पक्षे न शक्या श्रुतिः कल्पयितुमेवमपरस्मिन् पक्षे, तुल्यकारणत्वात्।

अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात्। केयमितरेतराश्रयता? प्रमाणायां स्मृतौ स्पर्शनं व्यामोहः, स्पर्शने प्रमाणे स्मृतिर्व्यामोहः, तदेतदितरेतराश्रयं भवति। तत्र स्पर्शनस्य क्लृप्तं मूलं कल्प्यं स्मृतेः। सोऽसावन्यतः परिच्छेदः। कल्प्यमूलत्वात् स्मृतिप्रामाण्यमनवक्लृप्तम्। तदप्रामाण्यात् स्पर्शनं न व्यामोहः। तदव्यामोहात् स्मार्तश्रुतिकल्पनाऽनुपपन्ना प्रमाणाभावात्। ननु एवं सति व्रीहिसाधनत्वविज्ञानस्याप्यव्यामोहात् यवश्रुतिर्नोपपद्येत। सत्यं नोपपद्यते, यद्यप्रत्यक्षा स्यात्। प्रत्यक्षा त्वेषा। न हि प्रत्यक्षमनुपपन्नं नामास्ति। द्वयोस्तु श्रुत्योर्भावात्। द्वे श्रूयेते वाक्ये। तत्रैकेन केवलयवसाधनता गम्यते, एकेन केवलव्रीहिसाधनता। न च वाक्येनावगतोऽर्थः अपह्नूयते। तस्मात् व्रीहियवयोरुपपन्नो विकल्पः, बृहद्रथंतरयोश्च। तस्मादुक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणमिति। अतश्च सर्ववेष्टनादि न आदरणीयम्।

वा— '**स्मृतिप्रामाण्यमुत्सृष्टं प्रसक्तं सर्वगोचरम्। सति वेदविरुद्धत्वे तदिदानीमपोद्यते॥ विरोधे त्वनपेक्षं स्यादसति ह्यनुमीयते। विरोधे वेदवाक्येन तेन चार्थेऽनधिष्ठिते॥**' यावती



स्मृतिः प्रत्यक्षवेदवाक्यविरुद्धा तां सर्वामुदाहृत्य संप्रधार्यते। किं पुनस्तादृश्यपि धर्मप्रमाणत्वेन अवधार्यते, किंवा पर्युदस्यते इति। कुतः संशय इति चेदुच्यते— '**विरोधपरिहाराद्वा सति वा तुल्यमूलतः। अबाधो वा भवेदस्या बाधो वा तद्विपर्ययात्॥**' एकविषये विरुद्धार्थोपसंहारिणी विज्ञाने विरुध्येते बलवदबलवत्त्वनिर्णयाच्च बाध्यबाधकभावं प्रतिपद्येते। तद्यदि शङ्कितविरोधयोरपि श्रुतिस्मृत्योः केनचित्प्रकारेण भिन्नविषयत्वेन व्यवस्था सिध्येत्। विधेयप्रतिषेध्ययोर्वा विरोधाभावादेकस्मिन्नपि विषये समुच्चयसंभवात् एकप्रयोगगतत्वासंभवाद्वोभयोः प्रामाण्याङ्गीकरणेन प्रयोगान्तरे चोभयानुग्रहः स्यात् इत्येवं विकल्पाश्रयणेऽपि अत्यन्तविरोधाभावात् प्रत्यक्षानुमितश्रुतिजनितज्ञानयोश्च वैदिकत्वाविशेषे तुल्यबलत्वकल्पनात् उभयप्रामाण्यमुपपत्स्यते। ततो यथोपन्यस्तविषयेऽपि स्मृतिप्रामाण्यमपेक्षितव्यम्। अथ तु प्रयत्नेनान्विष्यमाणेऽपि न विषयान्तरकृता व्यवस्था नापि प्रमेयाविरोधात् समुच्चयो नापि विकल्पेनोभयानुग्रहः किं तर्हि उभयपीडनादत्यन्तविरोध एव। प्रत्यक्षानुमेयश्रुत्योश्च लौकिकप्रत्यक्षानुमानवत् महान् बलविशेषस्तदा गत्यन्तराभावादुभयानुग्रहासंभवे श्रुतिबलीयस्त्वेन स्मृतिप्रामाण्यमुपेक्षणीयं भविष्यतीति। '**किं तावत्प्राप्नुयादत्र विरोधेऽपि प्रमाणता। अप्रामाण्यप्रसङ्गे हि मर्यादातिक्रमो भवेत्॥**' अनाशङ्कितविप्रलम्भभ्रान्त्यादिमूला ह्यव्याहतवेदमूलत्वावधारणाः स्मृतयो निर्व्याजप्रामाण्याः शक्यन्ते धर्मव्यवहाराङ्गत्वेन स्थापयितुम्। यदा तु वेदविरुद्धत्वहेतुदर्शनपरस्परविगानादिना केनचित् अपि च्छलेन आसामप्रामाण्यं कल्प्यते तदा बहुशाखाखिलप्रकरणादिभेदभिन्नेषु (बहुशाखाश्च खिलाः प्रकरणादयश्च ये तेषां ये भेदास्तैर्भिन्नेषु वेदेषु) वेदेषु श्रुतिलिङ्गाद्यात्मकोपदेशनामादिद्वारातिदेशात्मकविचित्रप्रमाणभागेषु (श्रुतिलिङ्गाद्यात्मकोपदेशो यश्च नामादिद्वारोऽतिदेशस्तदात्मका ये विचित्रप्रमाणभागास्तेष्विति विग्रहः) को जानाति का स्मृतिः कीदृशेन वेदभागेन विरुध्यमाना कदाऽनुमास्यते इति। अतश्चैवं जाताशङ्कैर्नैव कचिदपि विश्वस्येत। अविश्वासाच्चात्यन्तमेव प्रामाण्यं प्रतिहन्येत। तथाहि— '**कदाचित् श्रुतिमूलत्वमुक्त्वा भ्रान्त्यादिमूलता। स्मृतिभिः प्रतिपन्ना चेत्कस्तामिन्द्रोऽपि वारयेत्॥ एकमूलव्यवस्थायां मूलान्तरनिराक्रिया। अप्रामाण्यनिवृत्त्यर्थं शक्या न तदुपेक्षणे॥**' किंच— '**परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि। स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेत्॥**' यदा तूदितानुदिताग्निहोत्रहोमविधिवदतिरात्रगतषोडशिग्रहणवच्च सहस्रशः श्रुतयोऽप्यसंभवद्युगपदनुष्ठानार्थतया परस्परविरुद्धा दृश्यन्ते तदा यदि नाम कासांचित् स्मृतीनां स्ववेदशाखागतवचनविपरीतार्थशाखान्तरवचनमूलानां अधीतवाक्यविरोधो दृश्यते अतः तावतैव सर्वशाखाप्रत्ययकर्मव्यवहारिणां स्वयमश्रुतानधीतत्वमात्रेण दृढस्मरणोपस्थापितपुरुषान्तरस्थश्रुतिनिराकरणं न शोभते 'न चैकं प्रति शिष्यते' इति हि सर्वश्रुतीनां सर्वपुरुषान् प्रति प्रामाण्यादध्ययनवच्च स्मृतेरपि श्रुतिधारणसामर्थ्यात्। '**तस्माद्यथा विरोधेऽपि पठ्यमानप्रमाणता। पठितस्मर्यमाणानां तथैवेत्यवधार्यताम्॥**' किंच— '**अविरोधे श्रुतिर्मूलं न मूलान्तरसंभवः। विरोधे त्वन्यमूलत्वमिति स्याद्धर्मवैशसम्॥ मूलान्तरं निरस्तं च सामान्येनैव यत्पुरा। तदनुप्राण्यते पश्चाद्विरोधे नेत्यतिक्रिया॥ तेनाऽऽसां श्रुतिमूलत्वं सर्वदैव व्यवस्थितम्। मूलान्तरप्रवेशे वा किं तत्प्रामाण्यतृष्णया॥ किंच भ्रान्त्यादिमूलानां संभवासंभवाश्रयः। स्मृतीः प्रति विरुद्धोऽयं बाधपक्षो न युज्यते॥ तेनाऽऽसां यदि वा नैव कचिदस्ति प्रमाणता। सर्वत्राव्याहता वा स्यान्न त्वर्धजरतीयता॥ विरुद्धत्वं च जानन्ति स्मर्तारस्ताः स्मरन्ति यत्। वेदमूलबलं त्यक्त्वा किमन्यत्तत्र कारणम्॥ गृह्यमाणनिमित्तत्वाद्युच्येताप्रमाणता। उत्प्रेक्षणीयहेतुत्वात्सा सर्वत्र प्रसज्यते॥ रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः। क वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः॥ अदुष्टेन हि चित्तेन सुलभा साधुमूलता। दुष्टमूलत्वलाभस्तु भवत्या-**

शयदोषतः ॥ का वा धर्मक्रिया यस्यां दृष्टो हेतुर्न युज्यते । कथञ्चिद्वा विरुद्धत्वं प्रत्यक्षश्रुतिभिः सह ॥ लौकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते । यावत्किञ्चिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ॥ वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः । अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥ तेभ्यश्चेत्प्रसरो नाम दत्तो मीमांसकैः क्वचित् । न च कञ्चन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥ प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचरे ॥ क्वचिद्दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः । जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम् ॥ तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् । एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥ यच्चाऽऽदौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम् । आज्ञासिद्धप्रमाणत्वं पुराणादिचतुष्टयम् ॥ तत्तथैवानुमन्तव्यं कर्तव्यं नान्तराश्लथम् । सर्वं श्लथयतः सीदेद्दुर्नद्धशकटादिवत् ॥ पक्षो योऽङ्गीकृतो येन तमत्रस्यन्स निर्वहेत् । हारयेदन्तरा त्रस्यन् भीतोपद्रवकारिभिः ॥ वेदश्च यदि दृष्टार्थं श्रूयमाणविरोधि वा । न विद्ध्यात्ततस्तादृक्स्मृतिस्तन्मूलतां त्यजेत् ॥ यदा तु हन्तिपिष्यादिकर्म दृष्टं सहस्रशः । दृष्टार्थं विहितं वेदे तदा किं हेतुदर्शनैः ॥ ऋत्विग्भ्यो दक्षिणादानं तानूनप्त्रादिकर्म च । (ऋत्विजां यजमानस्य च परस्परमव्यभिचारार्थं कर्मारम्भे शपथकर्म तत् तानूनप्त्रम्) यदृत्विग्यजमानानां दृष्टार्थं सर्वमिष्यते ॥ तद्यद्यवैदिकं तादृक्स्यात्ततोऽन्यदवैदिकम् । यदा चैवंविधान्येव वेदे कर्माणि सन्ति नः ॥ तदा किं नाम दृष्टार्थं बुद्ध्या सिध्येदवैदिकम् । तेनाऽऽदावेव या क्लृप्ता स्मार्तानां वेदमूलता ॥ निर्वोढव्येह सैकान्तात्किमिदं खिद्यतेऽधुना ॥ तस्माद्वेदविरुद्धानां दृष्टार्थानां च हेतुभिः । स्मृतीनां न प्रमाणत्वं विहन्तव्यं मनागपि ॥ अविशिष्टं प्रमाणत्वं सर्वासां प्राप्तमीदृशम् । विरोधेऽप्यधुना युक्तमेवं प्राप्तेऽभिधीयते ॥ विरोधे त्वनपेक्षं स्यात्प्रामाण्यं स्मृतिबन्धनम् । अविरोधे हि वेदेन तन्मूलमनुमीयते ॥ या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते । सा तु स्याद्भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका ॥ स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न संमतम् । वेदमूलानुमानं च प्रत्यक्षेण विरुध्यते ॥ वेदवाक्यानुमानं हि तावदेव प्रवर्तते । तदर्थविषयं यावत्प्रत्यक्षं नोपलभ्यते ॥ प्रत्यक्षे श्रूयमाणे तु न विधेतानुमानिकम् । न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते ॥ स्मृतीनां श्रुतिलिङ्गत्वमस्ति हस्तिपदादिवत् । तत्प्रत्यक्षविरुद्धत्वे तद्वदेव निवार्यते ॥ तावदेव स्फुरन्त्यर्थाः पुरस्तादानुमानिकाः । यावत्प्रत्यक्षशास्त्रेण मूलमेषां न कृत्यते ॥ कृत्तमूलाः स्फुरन्त्योऽपि स्मृतयो न चिरायुषः । निराधारत्वदोषेण शाखा इव वनस्पतेः ॥ न हि साक्षात्प्रमाणत्वं स्मृतीनामुपपद्यते । नान्यमूलं यतस्तत्स्यात्तत्तु मूलं न विद्यते ॥ प्रत्यक्षप्रतिबद्धा हि श्रुतिर्नास्त्यानुमानिकी । नैराकाङ्क्ष्यात्प्रमातॄणामनुमानं न लभ्यते ॥ प्रमेयं यत्परिच्छेद्यं भवेत्केनचिदात्मना । तस्य स्यात्तत्परिच्छेदात्सावकाशप्रमाणता ॥ ताद्रूप्येण परिच्छिन्ने तद्विपर्ययतोऽपि वा । भूयस्तस्मिन्प्रमेये हि न प्रमाणं प्रवर्तते ॥ भिन्नकक्षागते ये च प्रमाणे तत्र धावतः । तयोः शीघ्रेण निर्णीते मन्थरं न प्रवर्तते ॥ तद्धि दूरमपि प्राप्तमेकमप्यगतं पदम् । इतरेण गतेनाऽऽदावेकान्तेनैव जीयते ॥ यत्र शीघ्रतरं नास्ति तस्यार्थस्यापहारकम् । चिरेणापि व्रजेत्तत्र दुर्बलं न निवार्यते ॥ न हि येन प्रमाणत्वं लब्धपूर्वं कदाचन । तेन तत्सर्वदा लभ्यमित्याज्ञापयतीश्वरः ॥ सर्वमुत्पद्यमानं हि यद्यन्येन विरोधिना । न रुध्यते ततस्तस्य सिद्धिः कालेन लभ्यते ॥ यस्य तूत्पद्यमानस्य मूलमेव निकृत्यते । मुखं वा रुध्यते तस्य नाऽऽत्मलाभः कदाचन ॥ न च यद्बलवद्रुद्धमात्मानं नैव विन्दति । अविरोधेऽपि तेनात्मा न लब्धव्यः कथंचन ॥ न चापि बाधकाभावा-



ल्लब्ध आत्मेति सर्वदा । लब्धव्यः स विरोधेऽपि पूर्वसामान्यदर्शनात् ॥ उत्सर्गश्चापवादश्च सर्वत्रैवोपलभ्यते । तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यते ॥ अपवादेन वा यस्मादुत्सर्गो बाधितः क्वचित् । तस्मात् सर्वत्र बाध्योऽसावित्येतदपि नेष्यते ॥ विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः । बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥ यो हि सामान्यदृष्टेन व्यवहारं निनीषति । तृष्णाच्छेदो भवेत्तस्य मृगतृष्णाजलैरपि ॥ बाधितां मृगतृष्णां वा दृष्ट्वा ह्रदगतोऽप्यसौ । विप्रलम्भभयादेव न स्नानादि समाचरेत् ॥ तावदेव हि तोयादिज्ञानस्येष्टा प्रमाणता । न तोयं मृगतृष्णेयमिति यावन्न बुध्यते ॥ अनुमानं प्रमाणं च तावदर्थेषु जायते । रुध्यते विषयो यावन्नास्य प्रत्यक्षजन्मना ॥ एवं स्मृतिप्रमाणत्वे तावत् श्रुत्यनुमानजम् । यावत्प्रत्यक्षया श्रुत्या विषयो नावरुध्यते ॥ अतः क्वचित्प्रमाणत्वं क्वचिदप्यप्रमाणताम् । व्यवस्थापयता न्यायैर्न भवेदर्धवैशसम् ॥ प्रमाणत्वाप्रमाणत्वे प्रत्यक्षमृगतृष्णयोः । यथा तथैव ते स्मृत्योरविरुद्धविरुद्धयोः ॥ तस्मादेवं न वक्तव्यं सर्वासां वा प्रमाणता । अथवा सा न कस्याश्चिद्यदि क्वचिदनाश्रिता । तेन वेदविरुद्धानां स्मृतीनामप्रमाणता । रुद्धश्रुत्यनुमानत्वादन्यमूला हि ता यतः ॥ विकल्पः किं पुनस्तासां नेष्यते श्रुतिभिः सह । ' उच्यते— ' विकल्पस्याष्टदोषत्वान्न तावत्स्वभ्युपेयता । पाक्षिके चाप्रमाणत्वे स्मृतयः सुनिराकराः ॥ '

तुल्यबलविकल्पो हि तावदष्टदोषत्वादगतिकगतिन्यायेन क्वचिदेवाऽऽश्रीयते । किमुत कक्षान्तरितप्रामाण्यविषमशिष्टविकल्पः । तथाहि ' प्रमाणपदवीं यावन्नारोहत्येव हि स्मृतिः । बाध्यते तावदत्यन्तं श्रुत्याऽन्यनिरपेक्षया ॥ स्मृतेर्धर्मप्रमाणत्वं न तावत्स्वत इष्यते । तुल्यकक्षतया येन विकल्पपदवीं व्रजेत् ॥ पराधीनप्रमाणत्वान्न प्रमाणपदे स्थिता । श्रुत्या बाधितमात्राऽसौ पुनर्नोज्जीवितुं क्षमा ॥ तुल्यकक्षविकल्पोऽपि नाप्रामाण्येऽस्त्यकल्पिते । प्रमाणस्याप्रमाणत्वकल्पना च द्विदोषभाक् ॥ प्रमाणत्वं प्रतीतं यदुज्ज्वलत्तदपह्नुतम् । एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात् ॥ तथा तदप्रमाणत्वं यदभावप्रमाणकम् । भावे सत्यथ भावेन विनैवं परिकल्प्यते ॥ सोऽपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् । अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना ॥ प्रयोगान्तरकाले तु पुनर्दोषद्वयं भवेत् । यदभावप्रमाणत्वं पूर्वमेतस्य कल्पितम् ॥ संप्रत्यपह्नुवानस्य दोष एको हि जायते । प्रत्यक्षं दृढरूपं च यत्पुरस्तान्निराकृतम् ॥ एष जायेत दोषोऽन्यस्तदुज्जीवयतः पुनः । एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः ॥ एत एव प्रसज्येरन् द्वितीयेऽपि प्रकल्पिते । एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ॥ विकल्प आश्रितस्तत्र गतिरन्या न विद्यते । व्रीहिशास्त्रप्रवृत्तौ हि यवशास्त्रेण कृष्यते ॥ श्रोता तत्र प्रवृत्तोऽपि व्रीहिशास्त्रेण कृष्यते । द्वाभ्यामश्वमुखीवच्च श्रुतिभ्यामभितः ममम ॥ श्रोतुराकृष्यमाणस्य बलाबलमपश्यतः । एकस्मिन्नुपसंहर्तुं बुद्धिं युक्त्या न पश्यतः ॥ उभयोरप्रमाणत्वं प्रतिघातात्प्रसज्यते । तत्र प्रामाण्ययोग्यस्य यदप्रामाण्यकल्पनम् ॥ तदनन्यगतित्वेन तथाऽप्यभ्युपगम्यते । सति गत्यन्तरे त्वेतन्नैव कल्पनमर्हति ॥ एकस्य वा प्रमाणत्वं परिहर्तुं न शक्यते । तदप्रामाण्यमात्रे तु न द्वयोरप्रमाणता ॥ सिद्धो लोकप्रवादोऽयमेकानेकविनाशिनाम् । सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ॥ स चायमुभयोर्नाश उभयार्थापरिग्रहात् । मिश्रैर्वा यजमानस्य मिश्राणां विध्यदर्शनात् ॥ नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी । प्राप्ते चान्यनिवृत्त्यंशः फलमर्थात्प्रतीयते ॥ व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम् । यवाश्चैवमतस्तेषां मिश्रत्वं नात्रकल्पते ॥ नैव व्रीहिभिरिष्टं स्याद्यवैर्न च यथाश्रुतैः । मिश्रैरिज्येत

चेत्तत्र भवेदुभयबाधनम् ॥ एवमप्रतिपत्त्यैव
तुल्यैषा मिश्रतामतिः । तेनोभयाप्रमाणत्वाच्छुक्तैके-
काप्रमाणता ॥ सेयमत्यन्तमन्याय्या द्वयोरप्यनव-
स्थितिः । अव्यवस्था न युक्ता हि व्यवस्था
यत्र लभ्यते ॥' सर्वत्रैव ह्येकरूपत्वावधारणेन निरू-
पितरूपं व्यवहर्तुं शक्यम् । 'तेन यस्य प्रमाणत्वं
प्रमाणं सर्वदाऽस्तु तत् । यस्यापि त्वप्रमाणत्वम-
प्रमाणं तदुच्यताम् ॥' तदेव तु कदाचित्प्रमाणं
कदाचिदप्रमाणमिति न कथंचिदपि विश्रम्भः स्यात्
तदेतद्व्रीहियवश्रुत्योरत्यन्तापरिहार्यत्वादवश्यमापतितम् ।
'न हि तत्रैकरूपत्वे चिह्नं किंचिद्व्यवस्थितम् ।
येनैकत्र प्रमाणत्वं स्यादन्यत्राप्रमाणता ॥ श्रुति-
स्मृत्योः पुनः स्पष्टं व्यवस्थाकारणद्वयम् । येन
श्रुतेः प्रमाणत्वं स्यात्स्मृतेश्चाप्रमाणता ॥ स्वरूपेण
तयोस्तावत्प्रमाणत्वाप्रमाणते । ततोऽन्यापेक्षया
स्यातामप्रामाण्यप्रमाणते ॥' यो यस्य स्वरूपाश्रयो
धर्मः प्राप्तः स बलवता कारणान्तरेण विपर्ययं प्रति-
पद्यते । न च श्रुतिजनितप्रत्ययस्य स्मृतिजनितो बाध-
कत्वं प्रतिपद्यते । 'स्मार्तस्य बाधकः श्रौतो बलव-
त्त्वात्प्रतीयते । प्रत्यक्षे चानुमाने च प्रागेतद्व्यव-
धारितम् ॥ श्रुतिलिङ्गे यथा चेष्टे व्यवस्थितबला-
बले । संनिकृष्टविकृष्टार्थे तथैवेह श्रुतिस्मृती ॥
स्मृत्या प्रतीयते यावत् श्रुत्या तावत्प्रमीयते ।
विरुद्धधर्मतामेको न च धर्मः प्रतीच्छति ॥ न च
शीघ्रहृतेऽर्थेऽस्ति चिरादागच्छतो गतिः । अश्वैर-
पहृतं को हि गर्दभैः प्राप्तुमर्हति ॥ स्मृत्या चार्थं
परामृश्य यावत्तद्विषयां श्रुतिम् । अनुमातुं प्रवर्तेत
तावत्सोऽर्थोऽन्यतो गतः ॥ किं कर्तव्यमितीदं च
कर्ता यावदपेक्षते । प्रमाणं क्रमते तावत्प्रमितं
तन्न जायते ॥ युगपत्प्रमिमीयातां यदि चार्थं
श्रुतिस्मृती । अगृहीतविशेषत्वात्स्यातां तुल्यबले
ततः ॥ यद्वा यावच्छ्रुतेरर्थः साक्षादेव प्रतीयते ।
तस्मिन्नेव क्षणे मूलं कल्पयेत्त्वं स्मृतिः श्रुतिम् ॥
ततोऽर्थविप्रकर्षेऽपि प्रमाणत्वेन तुल्यता । भवे-
देव श्रुतिस्मृत्योरर्थः श्रुतिपरिग्रहात् ॥ यतः

स्मृत्या गृहीतेऽपि चिरेण श्रुतिकल्पना । जायते
कॢप्तया तस्मात्सा बाध्येताप्रतिष्ठिता ॥ स्मृति-
मूलानपेक्षा हि स्मृतित्वादेव हीयते । तदपेक्षा
पुनः श्रुत्या बाध्यते मूलवर्जिता ॥' एष ताव-
द्विकल्पपदमनारूढाया एव स्मृतेरेको बाधप्रकारः ।
'द्वितीयेन प्रकारेण विकल्पपदवीं गता । आपन्ना
पाक्षिकं बाधमत्यन्तं बाध्यते स्मृतिः ॥' तद्दर्श-
यति । विकल्पं तु वदन्पक्षे तावत् श्रुतिप्रामाण्यमभ्यु-
पैतीति । तदा च स्मृत्यप्रामाण्यमवश्यंभावि तस्याश्चा-
प्रामाण्यकल्पनायां न श्रुतेरिव तदध्यारोपः । 'किं तु
तस्याः प्रमाणत्वं श्रुतिमूलत्वकारितम् । यतस्त-
स्मादतन्मूला तदानीं साऽवधार्यते ॥' श्रुतिमूलत्व-
विच्छेदोत्तरकालं च प्राङ्निराकृतमूलान्तरोपन्यासादविगान-
स्मृतपुरुषप्रणीतत्वनिर्णयाच्च नित्यत्ववद्वा निर्मूलत्वासंभवा-
दवश्यंभावि विप्रलम्भाभिप्रायादि किंचिदेकं मूलमाप-
द्यते । 'श्रुतिं मुक्त्वा च यन्मूलं स्मृतेरन्यत्प्रक-
ल्प्यते । तेनैवास्याः प्रमाणत्वमत्यन्तं प्रतिहन्यते ॥'
व्रीहिश्रुतिपरिग्रहकाले हि यवश्रुतेरभूतमेवाप्रामाण्यमध्या-
रोपितम् । तत्प्रयोगान्तरवेलायां तुल्यसांप्रदायिकाम्नाय-
मानत्वेन संनिकृष्टविप्रकृष्टार्थत्वादिविशेषाभावेन च पुनः
सहजेन प्रामाण्येनाभिभूयते । 'न तु स्मृतेः प्रमाणत्वं
पुनरुज्जीवितुं क्षमम् । विच्छिन्नश्रुतिमूलत्वाद्ग्रस्तं
भ्रान्त्यादिहेतुभिः ॥' न हि एकस्या एव स्मृतेः
प्रत्यक्षश्रुत्यर्थापरिग्रहकाले अनुमितश्रुतिमूलत्वं तत्परि-
ग्रहाश्रयणे तु भ्रान्त्यादिमूलत्वमिति विरुद्धावधारणाऽव-
कल्पते । आह । सत्यं यदि प्रथममेव विकल्पकारी
श्रुत्यर्थं परिगृह्य द्वितीयादिप्रयोगे स्मृत्यर्थपरिग्रहणायोप-
तिष्ठेत । 'ततस्त्वदुक्तमार्गेण प्रतिहन्येत सर्वदा ।
न त्वेतस्य प्रसङ्गोऽस्ति स्मृतेः पूर्वपरिग्रहे ॥'
यो हि श्रुतिं प्रथममश्रुत्वा श्रुतिमेवैकां पश्यति तस्या-
प्रतिहतश्रुत्यनुमाने वृत्ते । 'न पश्चात् श्रूयमाणाऽपि
श्रुतिः स्यात्प्रतिबन्धिका । गर्दभेनापनीतं हि
हरेन्नाश्वश्चिराद्गतः ॥' न चैष नियमोऽस्ति
जिज्ञासुभिः स्मृतिविरुद्धा श्रुतिरेव प्रथमं श्रोतव्येति ।
'बहुजिज्ञासमानानां कदाचित्किंचिदापतेत् ।



पूर्वपश्चाद्विभागेन न तद्धेतुबलाबलम् ॥ आद्ये
प्रपाठके येन व्रीहिशास्त्रं प्रतीयते । द्वितीये
यवशास्त्रं च न तत्तत्प्रति दुर्बलम् ॥ स्वशाखा-
विहितैश्चापि शाखान्तरगतान्विधीन् । कल्पकारा
निबध्नन्ति सर्व एव विकल्पितान् ॥ सर्वशाखो-
पसंहारो जैमिनेश्चापि संमतः । न तु पूर्वावबुद्धो-
ऽर्थो बाधेतैवोत्तरं विधिम् ॥' तस्मात्पौर्वापर्यश्रवण-
मनाश्रित्य 'न चैकं प्रति शिष्यते' इत्यनेन न्यायेन
सर्वपुरुषान् प्रति नित्यावस्थितसमस्तपठ्यमानसार्वगाण-
वेदशाखायत्तज्ञानैर्जिज्ञासुभिः आत्मीयशक्तिमात्रावरित-
पूर्वापरग्रहणविभागैरेकवाक्यगतपूर्वोत्तरवर्णपदवत् बला-
बलमनपेक्ष्य मातापितृप्रणीतोपदेशवन्निर्विचिकित्समेव
प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा हि– 'पूर्वप्राप्तौ
प्रमाणत्वं परत्वेनाप्रमाणताम् । प्रसज्यमानिकामेवं
कोऽध्यवस्येत्सचेतनः ॥ इत्थं च भ्रान्तिमूलत्व-
प्रसङ्गे कल्पिते स्मृतेः । अविरोधेऽपि हि श्रुत्या
प्रामाण्यं दुर्लभं भवेत् ॥ सर्वैव श्रुतिमूलाऽतः
सर्वा वा भ्रान्तिमूलिका । स्मृतिरेवं निरूप्येत
न तु स्यान्मूलसंकरः ॥' उच्यते । यद्यपि पूर्वो-
पलब्धया स्मृत्या श्रुतिमनुपलभमानस्य प्रतिबन्धरहित-
श्रुत्यनुमानं क्रियेत तथाऽपि कालान्तरे श्रुतिं श्रुत्वा
तत्प्रतिपक्षस्मृतेः बाधाध्यवसानादवश्यंभाविश्रुतिमूलत्व-
विच्छेदवशेन मूलान्तरसंचरणम् । 'ततश्च पूर्व-
विज्ञानं मिथ्यैतदिति चिन्तयन् । आदावेवा-
प्रमाणत्वं स्मृतेरित्यध्यवस्यति ॥' यो हि कूट-
कार्षापणेन कंचित्कालमज्ञो लोकमध्ये व्यवहरति न तेन
विवेकज्ञानजनितव्युत्पत्तिनाऽपि तथैव व्यवहर्तव्यम् ।
न चास्य तदानींतनज्ञानमात्रबाधबुद्धिर्भवति । 'समान-
विषयत्वाद्धि पूर्वेषामपि बाधनम् । न हि
तेषाममिथ्यात्वे मिथ्येदानींतनं भवेत् ॥ ननु
च प्रागवस्थायां श्रुतिर्यैवानुमीयते । सैवे-
दानीं विरुद्धेति गम्यते न पुनः स्मृतिः ॥'
नैतदेवम् । प्रतिप्रयोगं प्रमाणपर्यालोचनात् । यदि ह्येक-
प्रयोगमात्रालोचनेनैव प्रयोगान्तराण्यप्यनुतिष्ठेयुस्ततो येन
व्रीहिशास्त्रमप्रमाणीकृत्य यवाः परिगृह्येरन् स याव-

ज्जीवं तैरेव यजेतेति नैव प्रतिपुरुषमुभाभ्यां विकल्प्य-
मानाभ्यां व्यवहारः सिध्येत् । तेन यावत्प्रयोग-
भाविप्रमाणालोचनवशात्पूर्वानुमितां श्रुतिं क्वचिदप्य-
शृण्वन् पुनरपि स्मृतिमेवोपलभ्य कर्तृसामान्यलिङ्गेनैव
श्रुतिमनुमिमानः प्रत्यक्षया श्रुत्या आक्षिप्तचित्ततया तत्प्रा-
माण्येनान्यथानुपपद्यमानेन स्मृत्यप्रामाण्यं कल्पयन्पूर्वा-
वधारितमूलव्यत्ययमेव प्रतिपद्यते न पूर्वक्लृप्तमूलस्या-
प्रामाण्याध्यारोपम् । अपठ्यमानतयैवास्य मूलभावज्ञान-
त्वात् । 'यच्चैतदनवस्थानं त्वया मां प्रति चोद्यते ।
भवतोऽपि तदस्त्येव तेनाचोद्यत्वमेकतः ॥ यदा
ह्यादौ श्रुतिं श्रुत्वा स्मृतेर्नान्याऽनुमीयते । तदाऽ-
न्यमूलतापत्तेरेकान्तेनैव बाध्यते ॥ कालान्तरेऽपि
यो बाधः स्फुटत्वेनावधार्यते । यत्तेनाप्यप्रमाणत्वं
कृतं तन्न निवर्त्यते ॥' पूर्वस्मृतिग्राहिणां च स्वयं बाधम-
चेतयमानानामपि पुरुषान्तरस्य श्रुतिश्रवणप्राथम्यबलेन
बाधसंतानोऽनुवर्तत एव । 'पुरुषान्तरबाधोऽपि
नैवाल्पं भ्रान्तिकारणम् । न हि द्विचन्द्रदिङ्मोहौ
न बाध्येते नरान्तरैः ॥' ननु यवश्रुतेरपि तर्हि
प्रमाणत्वेन परिगृह्यमाणायाः पुरुषान्तरबाधस्तदानीमस्तीति
मिथ्यात्वप्रसङ्गः । 'उच्यते पठ्यमानत्वादुन्मज्जन-
निमज्जने । सर्वान् प्रति तयोस्तुल्ये विशेषोऽन्यो
न गृह्यते ॥ स्मृतिस्तु यावतां पुंसां प्रथमं गोचरी-
भवेत् । तावतां सर्वदाऽभावान्नाप्रामाण्येन
मुच्यते ॥ अप्रामाण्यपदं चैकमस्त्येवं प्रथमं
स्मृतेः । तावता लब्धमिथ्यात्वान्न श्रुतिं बाधितुं
क्षमा ॥ अध्यारोप्येत मिथ्यात्वमुज्ज्वलायाः श्रुतेः
पुनः । लब्धमेव स्मृतौ तच्चेत्किमर्थं कल्प्यते
श्रुतेः ॥' विरुद्धयोर्हि श्रुतिस्मृत्योर्विकल्पप्रसङ्गेनावश्यं
कल्पनीयेऽन्यतरस्याप्रमाणत्वे यावच्छतो पटाच्छादनन्यायेन
कल्पयितुमारभ्यते तावत्स्मृतौ स्वरूपाश्रयं क्लृप्तमेवोपलभ्य
संशयच्छेदे जाते न कदाचिदप्यभूताप्रामाण्याध्यारोप-
कल्पनोपपत्तिः । 'ननु श्रुत्यविरुद्धायाः श्रुतिमूलत्व-
निश्चयः । अनुमानादपि प्राप्स्यन् केनचित्प्रति-
बध्यते ॥ तस्मात्कारणवैषम्यान्नोभयत्रैकरूपता ।
सिध्येन्मूलव्यवस्था हि प्रतिपक्षानुसारिणी ॥'

ततश्चार्धवैशसप्रसङ्गनिवृत्तिः । यथा—'**प्रमाणत्वाप्रमाणत्वे लिङ्गादीनां व्यवस्थिते । पूर्वैः सह विरुद्धत्वाविरुद्धत्वनिबन्धने ॥ तथेहापि व्यवस्थेष्टा न परस्परसंकरः । प्रतिबन्धाभ्यनुज्ञाभ्यां श्रुत्या नास्त्येकरूपता ॥**' यद्यप्यौदुम्बरीसर्ववेष्टनं धर्मशास्त्राध्येतृस्मतिविलक्षणप्रत्यक्षश्रुत्यर्थोपसंहारपरसूत्रकारोपनिबद्धं तथापि उपरिष्टात् वक्ष्यमाणाल्पान्तरत्वाभिप्रायेण पुरुषोपदिष्टत्वाविशेषाच्च स्मृतिवदेवोदाहृतम् । क्रीतराजकभोज्यान्नत्ववचनं यद्यप्यथर्ववेदेऽस्ति तथाऽपि तस्याऽऽहवनीयसंबद्धयज्ञकर्मोपकाराभावात्तदधिकृतत्रयीप्रतिपादिताग्नीषोमीय-संस्थावधिभोजनप्रतिषेधविरोधात् 'प्रकरणविशेषाद्विकृतौ विरोधि स्यात्' इत्यनेन न्यायेनाधिकृतानधिकृतबलाबलविशेषाभिप्रायेण स्मृतिपक्षनिक्षेपाद्भाष्यकारेण उदाह्रियते । कृष्णकेशत्वं च यद्यप्यनवस्थितवयोवस्थाकालविशेषं जातपुत्रत्वपक्षे संदिग्धसमावेशं च तथाऽपि युवैव धर्ममन्विच्छेदित्येवमादिस्मरणप्रकाशिताथ यौवनावस्थापरिग्रहात् अन्ततो वा वयोर्धानतिक्रमाश्रयणादष्टाचत्वारिंशद्वर्षब्रह्मचर्यप्रागुपनयनसंबद्धकालस्य च वयसः सातिरेकद्विपञ्चाशच्चतुष्पञ्चाशन्मात्रसंवत्सरपरिमितत्वेनापरिहार्यवयोऽर्धातिक्रमावश्यंभावित्वात् व्यक्त एव विरोधो दृश्यते । ननु च पूर्वकृतसर्ववेष्टनोत्तरकालविहितं वेष्टिताया एव स्पर्शनं संभवतीत्यविरोधः । कथमविरोधो यदा स्पर्शनं नाम त्वगिन्द्रियद्वारं स्पृश्यसंवेदनम् । न च वस्त्रान्तरिताया औदुम्बर्याः स्पर्शो गृह्यते । न च वस्त्रे स्पृश्यमाने औदुम्बरी स्पृष्टा भवति । वस्त्रौदुम्बरीजातिव्यक्तिस्पर्शानामत्यन्तभेदात् । '**अथ संबन्धिसंस्पर्शात्स्पृष्टैवेत्यभिधीयते । भूमिस्पर्शेन तत्सिद्धेर्वृथा स्पर्शविधिर्भवेत् ॥**' ननु भूमावौदुम्बरीबुद्ध्यभावाद्वस्त्रान्तरितायां च तद्बुद्ध्यव्यतिरेकाद्दृष्टान्तवैषम्यम् । तथाहि '**वस्त्रान्तरितचण्डालस्पर्शेऽप्यापतिते क्वचित् । साक्षात्स्पृष्टवदेवेष्टा सचेलस्नानशुद्धता ॥ सत्यं तत्रेष्यते स्नानं तद्वस्त्रस्पर्शकारितम् । अशुद्धकारणं तद्धि चण्डालस्पर्शवन्मतम् ॥ तथा च तद्वियुक्तेऽपि वस्त्रे तत्स्पर्शदूषिते । स्पृश्यमाने भवत्येव दोषः संयुक्तवस्त्रवत् ॥**' कथं पुनरयं धर्मशास्त्रेष्वनुपनिबद्धोऽपि चण्डालस्पृष्टवस्त्रस्पर्शननिमित्तो दोषोऽध्यवसीयते । '**कथं वा नेष्यते दोषः काष्ठलोष्टतृणादिषु । तत्स्पृष्टस्पृश्यमानेषु न क्रमन्तेऽत्र युक्तयः ॥**' तदुच्यते — '**यथा काष्ठतृणादीनां मारुतादेव शुद्धता । स्मर्यते वाससो नैवं तोयप्रक्षालनाद्विना ॥ नन्वमेध्येन लिप्तस्य सा शुद्धिरभिधीयते । न लिप्तग्रहणं तत्र पाठेऽस्ति तु चिरंतने ॥**' अमेध्यस्यैवं यस्मात्पठन्ति । चण्डालस्पृष्टवाससश्चास्त्येवामेध्यता । तस्मादस्ति सलिलादिशुद्धिः । ननु च मनुष्यस्यैव चण्डालस्पर्शनिमित्तप्रायश्चित्तविधानादशुद्धिरूपममेध्यत्वं गम्यते न द्रव्यान्तरस्य गवाश्वादेः । ततश्च वस्त्रं किं गवाश्वादिवददुष्टमुत पुरुषवद्दुष्टमिति संदेहे गवाश्वादितुल्यमेवावधारयितुं युक्तम् । उच्यते—'**पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते । तस्मात्पुरुषवद्वस्त्रं न गवाश्वादिवन्मतम् ॥**' यदाऽपि हि शुद्धेनैव हस्तादिना चण्डालः स्पृश्यते गवादीनां तु चण्डालादिस्पृष्टानां स्नानप्रक्षालनविध्यभावात् शुद्धिर्विज्ञायते इति न तन्मध्यपातित्वम् । अतश्च नानेन प्रकारेणौदुम्बरीसंबद्धवस्त्रस्पर्शनात्तत्स्पर्शनज्ञानोपपत्तिः । यदा तु तयैवोद्गाता स्पृष्ट उद्गायेदिति विधिस्तदाऽवश्यमेवौदुम्बरीत्वचोद्गातृशरीरं प्राप्तव्यम् । उपाश्रयणाभ्युपगमपक्षोऽपि च स्पृष्टत्वापरित्यागेनैव स्थित इति न समस्ताच्छादितायामवकल्पते । पराश्रितमपि च वस्त्रमुद्गातुराश्रयत्वं प्रतिपद्यते । तेनचौदुम्बर्याश्रितेनोद्गायेत् । तस्मादस्ति सर्ववेष्टनस्पर्शनयोर्विरोध इति युक्तं बाध्यबाधकव्यवस्थापनम् । अथ किमर्थं नेमौ विधी विकल्प्येते इति । स्मृतेरविधायकत्वात्स्वयमतुल्यबलत्वाच्च तदनुमितशाखान्तरपठितविधिपरिग्रहाभिप्रायेणोक्तम् । नास्ति व्यामोहविज्ञाने इति । '**पूर्वोक्तेनैव मार्गेण व्यामोहैकान्तकल्पनाम् । विकल्पेऽवश्यमापन्नां स्मृतावेव नियच्छति ॥**' व्यामोहविज्ञानं च ज्ञानान्तरगतव्यामोहत्वावधारणं तद्विज्ञानगतव्यामोहरूपं वा विवक्ष्यते । तेन षष्ठीसमासः कर्मधारयो वा योज्यः । विकल्पं तु वदन्निति । कदाचित्स्मृतिमूलश्रुतिविच्छेदात्



भ्रान्त्यादिमूलत्वमापादयति । तादृश्या च सकृदपि श्रौतं विज्ञानमनुज्ञातमध्यारोप्यमाणव्यामोहाविषयत्वान्न कदाचित्प्रामाण्यं त्यजतीत्यपाक्षिकत्वाभिधानम् । एवं केवलाप्रमाणत्वपक्षग्रहग्रस्तस्य पुनर्जीवनासंभवादपाक्षिकं च सर्ववेष्टनस्मरणमित्याह— पाक्षिकं चेति वा । विकल्पवादिसंमतपाक्षिकत्ववशादेव श्रुतिप्रामाण्यपक्षे स्मार्तश्रुतिकल्पनायामकृतायां मूलान्तरसंक्रान्तेः सर्वकालाप्रमाणत्वप्रसङ्गः । एकदाऽपि च लब्धप्रामाण्यावकाशा श्रुतिर्दुर्बलप्रतिपक्षतया न कदाचिदपि व्यामोही भविष्यतीति समर्थयमानः 'यदेव हि तस्यैकस्मिन् पक्षे मूलम्' इत्याह । '**नहि प्रमादपाठत्वं शक्यं कल्पयितुं श्रुतेः । दुःश्रुतस्वप्नविज्ञानमूला त्वापद्यते स्मृतिः ॥**'

'तेन नैतत्पक्षे विज्ञानम्' इति प्रमाणविज्ञानमभिप्रेत्योक्तम् । 'व्यामोहात्पक्षान्तरम्' इति । व्यामोहकल्पनातः प्रमाणाभावपक्षान्तरसंक्रमणं प्रतिषेधति । यद्वा स्मार्तज्ञानमेव पूर्वावधारितव्यामोहात् प्रामाण्यपक्षान्तरं न संक्रान्तमिति । दुःश्रुतस्वप्नादिमूलत्वेन श्रुतिविरोधं दर्शयति— 'तुल्यकारणत्वात्' इति । बलीयः प्रतिपक्षनिराकृतत्वात्सर्वदैव श्रुत्यनुमानप्रतिबन्धात् न स्मृतेः प्रामाण्यपक्षसंक्रान्तिः । 'अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात्' इति । उपरिष्टादितरेतरविरोधविवरणाद्विरोधमेवेतरेतराश्रयमाह—'**परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत् । प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः ॥**' प्रमाणशब्दस्य ज्ञानसमानाधिकरणत्वेन भावोत्पन्नल्युडन्तत्वेन वा नपुंसकलिङ्गत्वात् वेदाः प्रमाणं स्मृतयः प्रमाणमितिवत् प्रमाणे स्मृती स्पर्धनं व्यामोह इति भवितव्यम् । करणविशेषविवक्षायां वा अभिधेयलिङ्गवचनानुवृत्तौ ल्युडन्तात्टिड्ढाणञिति ङीपि प्राप्ते प्रामाण्यं स्मृताविति प्रयोक्तव्यम् । तमिममुभयभ्रष्टं भाष्यकारप्रयोगं समर्थयमानैः एवमनुगमः कर्तव्यः । '**प्रमाणमयते याति मूलभूतां श्रुतिं यतः । क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते ॥ तत्र यद्यपि नित्यत्वात्क्विब्लोपः प्रथमं भवेत् । यलोपोऽपि भवेदेव वलादिप्रत्ययाश्रयः ॥ न च वर्णाश्रयत्वेन यलोपो न भविष्यति । व्योर्वलीति यलोपो हि वलादिप्रत्ययाश्रयः ॥ यद्वा योगविभागेन वेर्व्यवस्य च लुप्यते । वकारश्च यकारश्चेत्येवं लोपो भविष्यति ॥ यलोपे च कृतेऽकारो यः शुद्धः परिशिष्यते । तदन्तावधिकात्पश्चादतष्टाप्क्रियते स्त्रियाम् ॥ अकः सवर्णदीर्घत्वं परयोरन्तरङ्गतः । सर्वेणापि ततः कृत्वा प्रमाणेत्यनुगम्यते ॥**' तदेतदितराश्रयं भवतीत्युक्तम् । '**यद्वा श्रुत्यप्रमाणत्वात्स्मृतेः प्रामाण्यमिष्यते । सिद्धाच्च तत्प्रमाणत्वात् श्रुत्यप्रामाण्यकल्पना ॥ तथा श्रुतिप्रमाणत्वात्स्मृत्यप्रामाण्यकल्पनम् । तदप्रामाण्यसिद्ध्या च श्रुतिप्रामाण्यनिश्चयः ॥**' तदिदं विकल्पवादिन उभयत्रेतरेतराश्रयत्वमेकान्तवादिनस्त्वन्यतरत्र । '**तत्रान्यतः परिच्छदाद्वाच्यं हेत्वन्तरं स्फुटम् । भाष्यकारस्त्विहोक्त्वैवं तयोरेकैकमुक्तवान् ॥**' 'तत्र स्पर्शनस्य क्लृप्तं मूलं कल्प्यं स्मृतेः' इति । नैवात्यन्ताप्रकृतहेत्वन्तराभिप्रायेणान्यतः परिच्छेदोऽभिहितः । प्रकृतयोरपि च यत्कृतमितरेतराश्रयत्वं तद्व्यतिरिक्तधर्मदर्शनान्निश्चीयमाने भवत्येवान्यतः परिच्छेदः । '**स्वतः स्थितात्प्रमाणत्वात् श्रुतेः स्यात् क्लृप्तमूलता ।**' स्मृतेः श्रुत्यनुमापकप्रामाण्यात्कल्प्यमूलता ततश्च प्रत्यक्षश्रुत्यप्रामाण्यकल्पनायत्त स्मृतेः प्रामाण्यं तद्बलेन च श्रुत्यप्रामाण्यं कल्पयत इतरेतराश्रयत्वमपरिहार्यम् । '**न चाध्यारोप्यमाणाऽपि श्रुतेः स्यादप्रमाणता । न च तस्यामसिद्धायां स्मृतिप्रामाण्यसंभवः ॥ बलवन्तं पराजित्य यः प्रतिष्ठातुमिच्छति । हस्तिना पादयोर्वीव संतिष्ठेताच्चिरादसौ ॥**' एवं तावत्स्मृतिप्रामाण्यं कल्पयन्नेव तद्वादी पराजीयते । यदा तु श्रुतिप्रामाण्यगतमितरेतराश्रयत्वमालोच्यते तदा तत्रापि प्रतिपक्षभूतस्मृत्यप्रामाण्यापेक्षया निरपवादप्रामाण्यावधारणसिद्धेः पराधीनत्वात् पूर्वसिद्धस्मृत्यप्रामाण्यलिप्सायाम् '**सिद्धमेवाप्रमाणत्वं स्वरूपाश्रयमादितः । क्षणमात्रमपि प्राप्य श्रुतिः प्रामाण्यमश्नुते ॥**' तेन यत्तदाद्ये पदके अननुमितावस्थायां श्रुतावापातक्षणमात्रे स्मृतेः अप्रामाण्यं दृश्यते तावतैव लब्धप्रमाणत्वा श्रुतिः सर्वदा

निरपवादप्रामाण्या भवतीत्यन्यतः परिच्छेदः । 'तेनैकत्र श्रुतेराद्यात्प्रामाण्यादवसीयते । स्मृत्यप्रामाण्यतोऽन्यत्र क्षणमात्रावधारितात् ॥ कृत्वैकमवधिं तस्मात्सिद्धमाद्ये क्षणे दृढम् । आनुपूर्व्या व्रजेत्तावद्यावत्सिद्धोऽपरः स्फुटः ॥' तदेकेन मार्गेण दर्शयति—'कल्प्यमूलत्वात्स्मृतिप्रामाण्यमनवक्लृप्तमित्यादि यावत्स्मार्तश्रुतिकल्पनमनुपपन्नं प्रमाणाभावात्' इति । द्वितीयमार्गेऽपि श्रुतिप्रामाण्यदर्शनात् आरभ्य तावन्नेतव्यं यावत्तदेव निरपवादं सिद्धमिति । व्रीहियववृहद्रथंतरविधीनां त्वनन्यगतिकत्वात्कक्षान्तरितपदका इव स्थानभेदाभावात्तुल्यबलतयाऽनवस्थितविकल्पाश्रयणं प्रागुपदिष्टमेव योज्यम् । अतो नापेक्ष्यं प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमिति ।

हेतुदर्शनाच्च । ४ ॥

भाष्यम्— लोभाद्वास आदित्समानाः औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित् । तत्स्मृतेर्बीजम् । बुभुक्षमाणाः "केचित् क्रीतराजकस्य भोजनमाचरितवन्तः । अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः । तत एषा स्मृतिरित्यवगम्यते ।

[ इतः परं विद्यमानः 'अधिकरणान्तरं वा' इत्यादिभाष्यग्रन्थः अधिकरणान्तरत्वेन 'वैसर्जनहोमीयवासोन्यायः' इति बिन्दौ संगृहीतः । अतस्तत्रैव द्रष्टव्यः । ]

वा— 'इतश्च न प्रमाणत्वं मूलहेत्वन्तरेक्षणात् । व्यभिचारे हि नोत्पत्तिरर्थापत्त्यनुमानयोः ॥' श्रुतिविरोधभग्नप्रसरायां हि स्मृतौ पूर्वोक्तेन न्यायेन श्रुत्यनुमानप्रतिबन्धादाकाङ्क्षितमूलान्तरावश्यकल्पयितव्यत्वाच्च ।

'क्वचिद्भ्रान्तिः क्वचिल्लोभः क्वचिद् युक्तिविकल्पनम् । प्रतिभाकारणत्वेन निराकर्तुं न शक्यते ॥ स्मृतेश्च श्रुतिभग्नायाः कारणान्तरसंभवः । न तु श्रुतेरतः सैव तद्विरोधे हि बाध्यते ॥ यथैव वेदमूलत्वमनेकान्तान्न लभ्यते । तथाऽन्यमूलताऽपीति तदाशङ्क्येदमुच्यते ॥ उपपन्नतरं चैतद्वेदवाक्यानुमानतः । दृष्टे हि सत्यदृष्टस्य कल्पना निष्प्रमाणिका ॥'

एतावच्चिहाधिकरणद्वयेऽपि वक्तव्यम् । 'स्मृतीनां श्रुतिमूलत्वे दृढे पूर्वं निरूपिते । विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम् ॥' शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात् स्वरूपेणानुपन्यस्य अर्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते । तत्र यथैवाऽऽप्तप्रत्ययादिदमिह पठ्यते इति कथितमुच्चारितमनुच्चारितं वा शिष्याः प्रतिपद्यन्ते तथैव सूत्रकारवचनानि अध्यापकवचनस्थानीयानि स्वानुरूपवेदवाक्यसमर्पणमात्रं कृत्वा निवृत्तव्यापाराणीति न ताल्वादिध्वनिप्रेरणवत् पौरुषेयत्वेन परिभवितव्यानि । 'वेदो हीदृश एवायं पुरुषैर्यः प्रकाश्यते स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक् ॥ अनुच्चारणकाले च संस्कारैरेव केवलैः । तत्कृतस्मरणैर्वाऽयं वेदोऽध्येतृषु तिष्ठति ॥ तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः । पठिताभिः समानाऽसौ केन न्यायेन बाध्यते ॥ स्मृतिशास्त्रं च यद्येकं भवेत्कृत्स्नमवैदिकम् । तन्मुक्त्वैकं ततोऽन्यानि व्यवहाराङ्गतामियुः ॥ कठमैत्रायणीयादिपठितश्रुतिमूलिकाः । दृश्यन्ते स्मृतयः सर्वा भद्रोपनयनादिषु ॥ तदा तन्मध्यपात्येकं वाक्यं किंचित्तपस्मृतिः । मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्तते ॥ बाधिता च स्मृतिर्भूत्वा काचिन्न्यायविदा यदा । श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ॥ तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः । बाधाबाधानवस्थानं ध्रुवमेवं प्रसज्यते ॥'

यच्चैतत्सर्ववेष्टनस्मरणं स्पर्शनश्रुतिविरुद्धत्वेनोदाह्रियते । एतज्जैमिनिनैव च्छान्दोग्यानुवादे शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेनौदुम्बरीप्रकरणे च शाट्यायनिनां तामूर्ध्वदशेनोभयत्र वाससा दर्शयतीति 'वेष्टितं वै वासः श्रीर्वै वासः श्रीः सामे' इति दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टनवाससोऽपि प्रकाशश्रुतिमूलत्वमेवान्वा-



ख्यातम् । 'ततश्च श्रुतिमूलत्वाद्बाध्योदाहरणं न तत् । विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥ विरुद्धत्वे च बाधः स्यान्न चेहास्ति विरुद्धता । न हि वेष्टनमात्रं नः स्पर्शश्रुत्या विरुध्यते ॥ यदि द्वित्र्यङ्गुलं मध्ये विमुच्योत्तरभागतः । वेष्ट्येतौदुम्बरी तत्र किं नाम न कृतं भवेत् ॥ सर्वा वेष्टयितव्येति न ह्येवं सूत्रकृद्वचः । न ह्यस्याः क्रियते कैश्चित्कर्णमूलेषु वेष्टनम् ॥ परिशब्दोऽपि यस्तत्र सर्वतो वेष्टनं वदेत् । तद्वर्जितसमन्तत्वे सोऽर्थवानेव जायते ॥ लोभमूलं च यत्तस्याः कल्प्यते सर्ववेष्टनम् । तल्लोभः सुतरां सिध्येन्मूलाग्रपरिधानयोः ॥ अन्तरीयोत्तरीये हि योषितामिव वाससी । स्मरेत्कौशेयजातीये नोद्गातैकं गुणैर्विना ॥ प्राक् च लोभादिह स्पर्शः कुशैरेवान्तरीयते । वेष्टितैषा कुशैः पूर्वं वाससा परिवेष्ट्यते ॥ कुशवेष्टनवाक्ये च न किंचिद्धेतुदर्शनम् । नियमेऽपि च तद्दृष्टं नैवोर्ध्वदशवाससः ॥ क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् । न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणम् ॥ यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः । अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते ॥ शान्तिपुष्ट्यभिचारार्था ह्येकब्रह्मर्त्विगाश्रिताः । क्रियास्तया प्रमीयन्तेऽत्राप्येवाऽऽत्मीयगोचराः ॥ न चायमपि यज्ञाङ्गविधिः शान्त्यादिशास्त्रवत् । अतोऽस्यापि प्रमाणत्वं पुरुषार्थेन वार्यते ॥ न ह्येतद्यजमानस्य नर्त्विजामुपदिश्यते । सर्वेभ्यः पुरुषेभ्यो हि भोज्यान्नत्वमिदं श्रुतम् ॥ वाक्यान्तरैर्निषिद्धं यद्दीक्षितान्नस्य भोजनम् । तस्यैव श्रूयते पश्चादभ्यनुज्ञाविधिद्वयम् ॥ अग्नीषोमीयसंस्थायां क्रीते वा सति राजनि । सोऽयं कालविकल्पः स्यादाशौचच्छेदकालवत् ॥ ननु चाशौचकालोऽपि धर्मपीडाद्यपेक्षया । अतः समविकल्पत्वं नैव तस्यापि संमतम् ॥ यस्य ह्यल्पेन कालेन शुद्धिर्भोज्यान्नताऽपि वा । स कस्मात्तावता शुद्धो दीर्घकालत्वमाश्रयेत् ॥ एकरात्रे त्रिरात्रे वा शुद्धस्य ब्राह्मणस्य च । अशुद्धिरनुवर्तेत दशरात्रं कथं पुनः ॥ पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा । प्राग्दशाहात्कथं तस्य सद्सद्भावकल्पना ॥ एवं प्राक् पशुसंस्थानादीक्षितान्नविशुद्धता । अस्ति नास्तीति चेत्येवं सहते नावधारणम् ॥ स्यादेतद्येन यः कालः पुरस्तात्परिगृह्यते । तस्यासावेव होमस्य प्रागूर्ध्वोदयकालवत् ॥ युक्तं समविकल्पत्वमुदितानुदितत्वयोः । न काचिदत्र पूर्वोक्ता सदसत्त्वविरोधिता ॥ न चानुदितहोमोक्तावुदितोक्तिरनर्थिका । क्लेशक्षयव्ययादीनां नातिरेकोऽत्र कश्चन ॥ इह त्वल्पेन कालेन शुद्धेर्या दीर्घकालता । न वर्धयेदघाहानि साऽनेनापि निवार्यते ॥ क्लेशप्रायं च तं पक्षं नाऽऽश्रयेतैव कश्चन । ततोऽनङ्गीकृते तस्मिन् स्यात्तद्वाक्यमनर्थकम् ॥ तेनर्ते विषयान्यत्वान्न विकल्पोऽवकल्पते । स चोक्तो धर्मपीडाख्यस्तत्र चाह्नामवर्धनम् ॥ दन्तजातानुजातान्यकृतचूडेषु च क्रमात् । चितिक्रिया त्र्यहैकाहास्तत्र चाह्नामवर्धनम् ॥'

तथा गौतमेनाप्युक्तम्— राज्ञां च कार्यविघातार्थं ब्राह्मणानां च स्वाध्यायानिवृत्त्यर्थमिति । 'अथवाऽन्तर्यदाऽऽशौचनिमित्तं किंचिदापतेत् । तत्र शेषेण या शुद्धिस्तच्छेषोऽयं भविष्यति ॥ न वर्धयेदघाहानि निमित्तादागतान्यपि । पूर्वस्यैव हि कालस्य प्रसङ्गेन तदङ्गता ॥ प्रवृत्तोऽनपवृक्तश्च दशरात्रादिकोऽवधिः । अन्तः पतितमाशौचं स व्याप्नोति स्वसंख्यया ॥ वितत्य दश संख्या हि तान्यहानि व्यवस्थिता । शक्नोत्येव परिच्छेत्तुमन्तराशौचमागतम् ॥ शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति । नन्वेवं भोजनस्यास्ति विषयावधिकारणम् ॥ तत्र दीर्घावधिर्व्यर्थः स्यादल्पावध्यनुज्ञया । तस्मादिहापि वैषम्यहेतुर्वाक्योऽवधिद्वये ॥ अत्राप्यसंभवे तस्य दीक्षिते वा ददत्यपि । तन्नियुक्तकदत्तान्नं भोज्यं सोमक्रये कृते ॥ आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।

तथैव प्राणपीडायां क्रीतराजकभोजनम् ॥ हन्तैवमप्रमाणत्वमुक्तमन्यप्रकारकम् । जग्धवानापदि ह्यार्तो विश्वामित्रः श्वजाघनीम् ॥' उच्यते— 'एकं विनाऽप्यनुज्ञानात् क्रियते गत्यसंभवात् । क्रियतेऽनुज्ञया त्वन्यद्विशेषश्च तयोर्महान् ॥ सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते । विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया ॥ तथा च मनुनाऽप्युक्तमापद्धर्मगतं प्रति । तत्रत्यपापशेषाणामन्ते शौचं भविष्यति ॥ कर्मणा येन केनेह मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥' इति । 'धर्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् । ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥'

यत्तु क्रीतराजकभोज्यान्नत्ववचनं तद्वृत्यन्तरासंभवे निर्दोषत्वज्ञापनार्थमेव ज्ञायते । तत्रापि तु 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम ॥' इति निन्दितत्वाच्च संभवद्भोज्यान्तरेणापि लोकयात्रादिवशेन भोक्तव्यम् । 'यदि वा कालवैषम्याद्सत्समविकल्पयोः । अर्थभेदव्यवस्थानादविरोधोऽवधार्यते ॥ दीक्षितान्नमभोज्यं स्यादक्रीते राजनि ध्रुवम । क्रीते त्वभोजनं नाम मनः कर्म नियम्यते ॥ यथैवाश्राद्धभोजित्वं यथा वाऽमांसभक्षणम् । श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ॥ श्राद्धमन्तर्दशाहं हि नियोगेन निषिध्यते । एकोद्दिष्टं सदेकेषां न तु पित्र्यं कदाचन ॥' तत्राश्राद्धभोजित्वनियमः स्वर्गायेति विज्ञायते । तथा षष्ठ्यष्टमीचतुर्दशीपञ्चदशीषु मांसभक्षणमैथुनादिक्रियाप्रतिषेधात् गृहस्थस्यान्यत्र कामचारे प्राप्ते तदकरणनियमः श्रेयसे विहितः । यथाऽऽह 'न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥' इति ।

ननु च वाक्यद्वयदर्शनात्तत्र संयोगपृथक्त्वं युक्तमिह त्वेकमेव दीक्षितान्नभोजनप्रतिषेधवाक्यं कथं प्राक्क्रयात्प्रतिषेधति तदुत्तरकालं च प्रागग्नीषोमीयसमाप्तेर्निःश्रेयसेन नियच्छतीति । तदुच्यते—'स्याद्वाक्यद्वयमेवैतदवधिद्वयकल्पितम् । यः पूर्वः प्रतिषेधोऽत्र संस्थितः क्रीतराजके ॥ परोऽवधिः पुनस्तस्य नैकत्वादवकल्पते । द्वितीयान्नादनानुज्ञादर्शनात्तेन गम्यते ॥ अभोजनविधिर्नूनमस्त्यन्योऽप्यान्तरालिकः । न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः ॥ वरणादभ्यनुज्ञाते निर्वापे किमनुज्ञया ॥' यथा अध्वर्योर्वरणवेलायामेव सर्वं यजमानेन यज्ञोपयोगि स्वयमनुज्ञातमेवेति निर्वापमन्त्रे प्रसवशब्देन तदानींतनयजमानानुज्ञाप्रकाशनं न क्रियते तथेह क्रीतराजकावस्थानुज्ञातभोजनानुज्ञावचनमग्नीषोमीयसमाप्तौ पुनरुक्तमित्यवश्यं नियमेन प्रतिषेधान्तरेण वा वारितस्यानुज्ञानार्थमित्यवगम्यते । 'प्रतिषिद्धाभ्यनुज्ञा च विकल्पेनैव दुष्यते । पर्युदस्ताभ्यनुज्ञानं तस्मादिष्टं व्यवस्थया ॥' दीक्षितान्नविशिष्टाभोजननियमो हि श्रेयोर्थिभ्यो विधीयते । 'पाश्चात्त्यभोजनानुज्ञा नान्यथा ह्युपपद्यते । अदृष्टार्थप्रसङ्गित्वान्न विधिश्चाश्रयमिष्यते ॥ एवं विषयनानात्वादविरोधादबाधनम् ।'

अष्टाचत्वारिंशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पोपनिबन्धनादाश्रमान्तरविषयत्वसंभवाद्वा विरोधाभावः । तथा हि— 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥' गोतमेनापि 'द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेत्' इति प्रथमकल्पमाश्रु गार्हस्थ्यप्रतिपत्त्यर्थमुक्त्वा द्वितीयकल्पे द्वादश प्रतिवेदं वा सर्वेष्वित्यष्टाचत्वारिंशत्परिग्रहः कृतः । 'तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा । तैरवश्यं ग्रहीतव्या तेनाऽऽदावेतदुच्यते ॥ उपकुर्वाणकेनैव याप्यः कालो बहुस्ततः । संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषैः ॥ सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः । स्तोकैरप्याश्रमाचारैर्गतिमिष्टां गमिष्यति ॥'



द्वैपायनादयश्च आहुः— 'परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' (मैत्रः— हिंसारहितः)

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः । यो वा कश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन् ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षीकृताविति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ । 'तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते । श्रुत्योरेव ह्यसौ दृष्टः क्वचिद्वा नैव विद्यते ॥ तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते । यदि वा बाध्यमानत्वमुक्तं वाह्यं स्मृतीः प्रति ॥'

एतद्धि जैमिनिनाऽत्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते । 'यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते । तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥' व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् । 'ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् । तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥' यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्याजसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते । सूत्रार्थोऽप्येवं योजयितव्यः । श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यस्य वाऽपेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्दमनुषङ्गेण संबन्ध्य यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते ।

ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्कायां सत्यामेवात्यन्तनिराकरणपक्षः परिग्रहीष्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु क्वचित् शाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षी भविष्यति तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम् । 'वार्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते । यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते ॥ अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते । नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥'

**सोम**— पूर्वाधिकरणे सर्वस्मृतीनां प्रामाण्यमुक्तम्, इदानीं विरुद्धानामप्रामाण्यमुच्यते इति परस्परविरोध इति शङ्कां परिहरन्नापवादिकीं **संगतिं** दर्शयति ।

**सूत्रार्थः**— श्रुतिविरोधे यन्मानान्तरानपेक्षं श्रुतिवाक्यं तदेव प्रमाणं स्यान्न तु स्मृतिवाक्यम्, यस्मादसत्येव विरोधे स्मृतेः श्रुत्यनुमापकत्वमिति ।

**वि**— 'औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः । अमितिर्वेति संदेहे, मितिः स्यादष्टकादिवत् ॥ औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः । विरोधान्मूलवेदस्याननुमानादमानता ॥, प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् । अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत् । अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥'

**भाट्ट**— श्रुतिविरुद्धानामपि 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम् । न च 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरोधात् तदनुपपत्तिः । परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्, तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च । न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्तते, येन कल्पनामूलोच्छेदनात् विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात् । न वा शैत्यौष्ण्यत्वयोरिवात्र विषययोरत्यन्तविरोधः, येनौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणबाधः स्यात् । न त्वेतदस्ति, विकल्पेन द्वयोः संभवात् । इति प्राप्ते—

भाष्यकारैरेवं सिद्धान्तितम्– सर्वत्रानुमाने अनुमेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधानेनावेष्टितत्वरूपेण औदुम्बर्याः परिच्छिन्नत्वात् जिज्ञासाऽभावेन नौदुम्बरीवेष्टनविषयकश्रुत्यनुमानसंभवः । तथा प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शनम्, यथा 'वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति' इत्यादौ तत्रापि न श्रुतिकल्पनं क्लृप्तहेतोरेव मूलतोपपत्तेरिति ।

वार्तिककारास्तु— न जिज्ञासाया अनुमित्यङ्गत्वम्, अन्यायजिज्ञासायामपि तदुदयात् सत्यपि वा तस्याः कारणत्वे अनमितिविषयश्रुतेर्जिज्ञासितत्वाच्च प्रत्यक्षश्रुतिविरोधाभावेऽपि लोभादिमूलकत्वाङ्गीकारे च अष्टकादिस्मृतेरपि तदापत्तेः । अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलकत्वकल्पनोपपत्तेर्युक्तमेव प्रामाण्यम् । परन्तु यावच्छ्रुतिदर्शनं वेष्टनं नानुष्ठेयम्, अर्थवादाद्युन्नीतविधिमूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य संभावितत्वात् । तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसंभवात् । अतश्च यावच्छ्रुतिदर्शनं अननुष्ठानलक्षणं अप्रामाण्यमित्यभिप्रायं सूत्रमिति प्राहुः ।

यद्वा— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शनसंभवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वम्, तन्मूलभूतवेदश्चेदानीं प्रलीनः, इति प्राप्ते— शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्युताप्रमाणत्वेनैव तेषां स्मरणात् वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकारात् वेदमूलकत्वकल्पनाऽनुपपत्तेरप्रामाण्यमिति सूत्रार्थः ।

मण्डन— 'श्रुत्या विरुद्धा स्मृतिरप्रमाणम् ।'

शंकर— 'न तत् श्रुतिविरोधतः ।'

* विरोधाधिकरणं विषयान्तरासंभवात् अनङ्गीकृतमपि केनचित् शाक्यादिग्रन्थस्य वेदमूलत्वसंभावनामात्रेण आशङ्क्य तन्निराकरणार्थत्वेन व्याख्यातम् । सु. पृ. २२८. * प्रामाण्याप्रामाण्यविचारो न फलविचारः किन्तु अधिकरणाङ्गविचार एव । अतश्च विरोधे सत्यपि प्रामाण्यव्युत्पादनात् विरोधाधिकरणेन ( शिष्टाकोपाधिकरणस्य) आपवादिकी संगतिः अस्मिन् पक्षे द्रष्टव्या । सोम. १।३।४. * विरोधाधिकरणस्य शाक्यादिग्रन्थविषयत्वम् । ( वार्तिकमते ) । सु. पृ. २२८. * विरोधाधिकरणे च उभयोरपि स्मृत्याचारयोः श्रुतिविरोधे प्रामाण्यमपोदितम् । कौ. १।३।४।८ पृ. ५४. * विरोधाधिकरणे विरुद्धस्मृतिप्रामाण्यापवादेन अविरुद्धस्मृतिप्रामाण्यं निरपवादमुक्तम् । सु. पृ. २०४. * विरोधाधिकरणे शाक्यादिग्रन्थानां अप्रामाण्यं व्युत्पादितम् । कौ. १।३।३।७. * विरोधाधिकरणे सर्ववेष्टनस्मृत्युदाहरणमुपन्यस्तम् । सु. पृ. २२७. * वार्तिककारमते विरोधाधिकरणे शाक्यादिग्रन्थानां वेदमूलत्वासंभवेन अप्रामाण्यं प्रतिपादितम् । तदधिकरणाक्षेपोऽपि कल्पसूत्राधिकरणे पूर्वपक्षे ( कृतः ) । कौ. १।३।६।११. * स्मृत्यधिकरणे एवाचारप्रामाण्यस्यापि व्युत्पादितत्वात् विरोधाधिकरणे तस्यापि स्मृतिवत् वेदविरोधविषये प्रामाण्यं अपोदितम् । सु. पृ. २०७.

* यद्वा नात्र ( शिष्टाकोपाधिकरणे १।३।४ ) विरोधाविरोधमात्रं विचार्यते, किन्तु सत्यपि विरोधे किमाचमनादीनां धर्मित्वेन बलीयस्त्वाद्बाधः उत प्रामाण्यदौर्बल्याद् बाधः इति विरोधाधिकरणापवादार्थं विचार्यते । सु. पृ. १७४.

* स्मृतेः श्रुतिविरोधे तावत् विरोधाधिकरणन्यायेन श्रुत्यकल्पनम् । कौ. १।३।३।७.

* विरोधाधिकरणभङ्गटीकाव्याख्यानान्ते सोमेश्वरेणोक्तम्– मन्त्रकल्पो देवताविधिः अश्वदानफलविधिश्च । बाल. पृ. १२.

* भाष्यकारीयविरोधाधिकरणभङ्गावसरे श्रुतिविरुद्धानामपि स्मृतीनां प्रामाण्यं व्यवस्थापितं परंतु तत्र विकल्पेन उभयानुष्ठानसंभवात् प्रामाण्यम् । कु. १।३।५।८ पृ. ६४.

* 'विरोध एव क्वास्ति क्व नास्ति' इत्येवं विरोधाधिकरणविषयव्याप्त्यर्थत्वमस्या– (१।३।४) धिकरणस्य इति तेनास्य संगतिः । सोम. १।३।४.

* विरोधावगतिः । द्वयी हि विरोधावगतिः, सहानवस्थानं वा छायाऽऽतपवत्, परस्परपरिहारो वा भावाभाववत् । कणिका. पृ. ११२.



☙ विरोधिनामेकश्रुतौ नियमः स्याद् ग्रहणस्यार्थवत्त्वाच्छरवत् श्रुतितो विशिष्टत्वात् । १०।७।१६।५१ ॥

विरोधिनां पदार्थानां मध्ये एकश्रुतौ एकस्य अन्यतमस्य श्रवणे नियमः स्यात् नियमविधित्वं स्वीकार्यम् । ग्रहणस्य अन्यतमश्रवणस्य अर्थवत्त्वात् सफलत्वसिद्धेः । श्रुतितः श्रुत्या विशिष्टत्वात् विहितत्वात् चोदकप्राप्तान् बाधेरन् । यथा वाजपेये 'खादिरो यूपो भवति' इति खादिरस्य नियमः, पालाशादेश्च बाधः । त्रैधातव्यायां 'यवमयो मध्यमः पुरोडाशः' इति श्रुतेः यवानां नियमः, व्रीहीणां बाधः । शरवत् यथा 'शरमयं बर्हिर्भवति' इत्युक्तेः शराणां नियमः, कुशानां बाधः तद्वत् । इति सिद्धान्तः ।

उभयप्रदेशान्नेति चेत् । ५२ ॥

पूर्वपक्षी शङ्कते । उभयोः खादिरपालाशयोः, बृहद्रथंतरयोः, व्रीहियवयोर्वा प्रदेशात् चोदकेन उपदेशात् न पालाशरथंतरव्रीहीणां निवृत्तिः संभवति । तस्मान्न नियमः किंतु विकल्पः ।

शरेष्वपि । ५३ ॥

उक्त–पूर्वपक्षिणः शङ्कायां सिद्धान्ती प्रतिबन्द्या प्रतिशङ्कते । यदि उभयोपदेशात् पालाशादिषु न निवृत्तिः तर्हि शरेष्वपि न निवृत्तिः स्यात् तत्रापि विकल्पः प्रसज्येत । इति ।

विरोध्यग्रहणात् तथा शरेष्विति चेत् । ५४ ॥

पूर्वपक्षी शरदृष्टान्तं शोधयति । न शरेषु दोषः । विरोध्यग्रहणात् विरोधिनां ग्रहणाभावात् कुशविरोधिषु शरेषु अङ्गीक्रियमाणेषु शरविरोधिनां कुशानां ग्रहण संभवति । ततः शरेषु तथा कुशनिवर्तकत्वं स्यात् ।

तथेतरस्मिन् । ५५ ॥

सिद्धान्ती शरसाम्येनाह । तर्हि इतरस्मिन् खदिरादौ पालाशादिविरोधिनि अङ्गीक्रियमाणे खादिरादिविरोधिनः पालाशादयः अङ्गत्वेन शक्या उपादातुम् । तस्मात् खादिरादीनां नियमः, पालाशादीनां निवृत्तिः ।

श्रुत्यानर्थक्यमिति चेत् । ५६ ॥

पुनः पूर्वपक्षी शङ्कते । विरोध्यग्रहणात् पलाशादीनां निवृत्तौ स्वीकृतायां श्रुत्यानर्थक्यं श्रुतेः चोदकस्य खदिरपलाशाद्युभयप्रापकस्य अनर्थकत्वं प्रसज्येत । तस्मात् न पलाशादीनां निवृत्तिः किंतु विकल्पः । इति चेत् ।

ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिः स्यात् । ५७॥

सिद्धान्ती आह । 'खादिरो यूपो भवति' 'बृहत् पृष्ठं भवति' 'यवमयो मध्यमः पुरोडाशः' इति खदिरबृहद्यवानां ग्रहणस्य विधानस्य अर्थवत्त्वात् सफलत्वसिद्ध्यर्थं उभयोः खदिरपलाशयोः द्वयोरपि एवं बृहद्रथंतरयोः यवव्रीह्योश्च अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् । किंतु खदिरादीनां नियमः पलाशादीनां निवृत्तिः इति सिद्धान्तः । के.

* विरोधिनां च न सह प्रवृत्तिः । भा. १०।७।१९।६६.

* विरोधित्वाच्च लोकवत् । १०।७।१९।६६ ॥

एकस्मिन् कार्ये ये विकल्पेन साधकाः ते परस्परं विरोधिनः । तेषां न सह प्रवृत्तिः विरोधित्वात् । लोकवत् यथा 'मत्स्यान् न पयसा समश्नीयात्' इति मत्स्यैः पयो निवर्त्यते तद्वत् । इति न्यायः । वृ. १०।७।१९।६६.

* विलापनं आज्यधर्मः । भा. ३।१।४।७.

* विलेशः । अथ आधिकच्छन्दस्काः ऋच उपादास्यामहे ततो गीतिं विलेशयाम । ( अधिकपरिमाणासु ऋक्षु सामगाने ऋक्शेषे सामादर्शनं विलेशः ) । भा. ९।२।४।२१. * विलेशः अल्पत्वं न्यूनता । वि. ९।२।४. * विलेशः साम्नः ऋगपेक्षयाऽल्पत्वम्, यदि न्यूनच्छन्दस्कायामृचि उत्पन्नं साम अधिकच्छन्दस्कायामृचि गीयेत तदा अल्पं साम ऋक्परिपूरणाक्षमं स्यात् । रसायनम्. पृ. ४७.

* विवक्षाऽविवक्षयोः वेदे संभवासंभवविचारः मीको. पृ. १६२९–१६३१ 'ग्रहन्यायः' इत्यधिकरणे द्रष्टव्यः ।

* विवक्षावीजं विधेयत्वमेव, नोपादेयत्वं तद्विशेषणत्वं वा इति नयटीकायां ( नयटी०– 'सुगं न

पिवेत्' इत्यस्य विवेचकं वार्तिकं पृ. २११–२१३।) उक्तम्– 'नोपादेयत्वमेवकं विवक्षाकारणं मतम्। विशेषणविवक्षायां कारणं हि महद्विधिः ॥' बाल. पृ. १३.

* **विवक्षितमेकत्वं** 'पशुमालभेत' 'पशुना यजेत' इत्यादौ पशोः। ४।१।५।११–१६. **मीको.** पृ. २४९४ 'पश्वेकत्वाधिकरणम्' इत्यत्र द्रष्टव्यम्। * विवक्षितं पुंस्त्वादि लिङ्गं पशौ। ४।१।६।१६–१८. **मीको.** पृ. ३३५४ 'लिङ्गाधिकरणम्' इत्यत्र द्रष्टव्यम्। * यद्धि प्रयोजनवत् तत् **विवक्षितं** इत्युच्यते। **भा.** ४।१।५।११.

* **विवक्षितार्थापेक्षया** न्यूनत्वाभ्युपगमे लक्षणाप्रसङ्गः, वाक्यभेदप्रसङ्गश्च। विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्यप्रसङ्गः। तत्र विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणा इत्यत्रोदाहरणम्– 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। अत्र हि विवक्षितोऽर्थः उत्तरकालविशिष्टबृहस्पतिसवान्तराङ्गकत्वं वाजपेयस्य, तदपेक्षया न्यूनोऽर्थः प्रसिद्धस्यैव बृहस्पतिसवस्य वाजपेयोत्तरत्वं तदभ्युपगमे वाजपेयश्रुतौ काललक्षणा इति। विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेदः इत्यत्र उदाहरणम्– 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। अत्र हि विवक्षितोऽर्थः द्रव्यदेवताकालद्वयविशिष्टयागविधिः। तदपेक्षया न्यूनोऽर्थः द्रव्यदेवतमेव विधीयते न यागविधिरिति। तदभ्युपगमे वाक्यभेदः इति। विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्यं इत्यत्रोदाहरणम्– 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति। अत्र 'सांग्रहण्या ग्रामकामो यजेत' इति प्रधानवाक्यगतग्रामकामपदानुषङ्गेण विवक्षितार्थापेक्षया आमनहोमविधेः आधिक्याभ्युपगमे ग्रामकामपदानुषङ्गानर्थक्यम्। **बाल.** पृ. ३.

* **विवक्षितवचनाः** मन्त्राः। नियतोच्चरणं तु अदृष्टार्थम्। १।२।४।३१–४५. **मीको.** पृ. ३१०१ 'मन्त्राधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **विवर्तवादन्यायः**। रज्जौ यथा दृश्यमानोऽपि सर्पः अनिर्वचनीयत्वात् विवर्तरूपः तथा ब्रह्मणि विश्वं इति न्यायार्थः। **के.**

* **विवाहः** विंशतिवर्षे पुरुषस्य न अशास्त्रीयः। तदुक्तं **विस्तरे** (६।७।१३) 'विंशतिवयस्को विवाहं कृत्वा' इति। **के.** * **विवाहे** 'इष एकपदी भव' इत्यादिषु 'भव' इति शेषानुषङ्गस्यापि अनुषङ्गन्यायविषयत्वम्। तत्र केषांचित् सकृत् प्रयोगो दृश्यते स न युक्तः। **सुधा.** पृ. ६९६.

* **विवाहार्थमिथ्यावादस्य** विधेयत्वे अपि धर्मत्वं नास्ति तस्य विवाहमात्रसाधनतया अलौकिकत्वाभावात्। अत एव 'पञ्चानृतान्याहुरपातकानि' इति पातकत्वाभावमात्रं न तु धर्मत्वम्। **मणि.** पृ. ९.

* **विवाहकाले**। उद्वाहकाले एव अनयोः (दंपत्योः) वचनेन द्रव्यसाधारण्यं प्रतिपादितम्, 'धर्मे चार्थे च कामे च नातिचरितव्या' इति प्रतिपादितत्वात्। **टुप्.** ६।१।४।१७.

* मातुलसुता, मातृगोत्रा, समानप्रवरा च कुमारी न **विवाहयोग्या**। वि. १।३।५ वर्णकं २.

* **विविधसंख्याकानां** दक्षिणानां आधाने विकल्पः। १२।४।५।९. **मीको.** पृ. ९२२ 'आधाने दक्षिणानां संख्यासु विकल्पः' इत्यत्र अधिकरणं द्रष्टव्यम्।

**विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापौ** (विवृद्धत्वे आवापः, अविवृद्धत्वे उद्वापः) ॥

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात्। १०।४।११।२१॥**

**भाष्यम्**— इह विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणम्। ते एव ये पूर्वस्मिन्नधिकरणे उदाहृताः। तत्रैषोऽर्थः समधिगतः। विवृद्धस्तोमकेष्वनिवृत्तिः अविवृद्धस्तोमकेषु निवृत्तिरिति। अथेदानीमिदं संदिह्यते किं यस्मिन् कस्मिंश्चिदावापो यतः कुतश्चिदुद्वापः उत पवमानेष्वेव आवापोद्वापाविति। किं प्राप्तम्? अविशेषादनियम इति। **एवं प्राप्ते, ब्रूमः।** पवमाने आवापोद्वापौ स्यातामिति। कुतः? अस्मिन्नेव हि तौ



दृश्येते 'त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप्। अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्ति' इति।

**वचनानि त्वपूर्वत्वात्। २२॥**

**भाष्यम्**-- ननु दर्शनमिदम्, प्राप्तिः उच्यताम्। उच्यते— 'वचनानि त्वपूर्वत्वात्'। असति न्याये वचनान्येवैतानि कल्प्यन्ते। तस्मात् पवमाने एव आवापोद्वापस्थानमिति।

**शा**— अविवृद्धौ प्रत्यक्षश्रुतैः 'कौत्सं भवति' इत्यादिभिः तावत्संख्यानां प्राकृतानामुद्वापः, विवृद्धौ तु प्रत्यक्षश्रुतानां राजसामादीनामधिकानां आवाप इति स्थितम्। तत्र चिन्त्यते किं यस्मिन्कस्मिंश्चित्स्तोत्रे यस्यां कस्यांचित् ऋचि प्रत्यक्षश्रुतानां आवापो यतःकुतश्चिच्च प्राकृतानामुद्वापः अथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्सु आवापोद्वापौ इति। तत्र यत्र क्वचिदपि निवेशे वैकृतानामर्थवत्त्वादविशेषः तन्निबन्धनश्च प्राकृतानामुद्वाप इति सोऽप्यविशेषेणैव स्यात्। 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इत्येतत्तु हिशब्दोपबन्धात् वर्तमानापदेशरूपत्वाच्चाविधायकं नावापोद्वापौ नियन्तुमलम्। यद्यपि नियामकं तथापि पवमानविषययोरेव आवापोद्वापयोर्देशविधानार्थं न स्तोत्रान्तरपरिसंख्यार्थमिति। उच्यते-- अपूर्वत्वात् अस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकं अतो वचनात् पवमानेषु एव आवापोद्वापौ।

**सोम**— पूर्वोक्तविषयचिन्तनात् **संगतिः। सूत्रार्थस्तु**-- पवमानेष्वेव आवापोद्वापौ स्यातां तत्रैव तयोः, 'त्रीणि ह वै' इति वाक्ये दर्शनादिति।

**वि**-- 'क्वापि स्तोत्र ऋचि क्वापि स्यादावापस्तथोद्वृतिः। पवमानेषु गायत्र्यादिष्वेवोताविशेषतः ॥, आद्यो नो परिसंख्यानादत्र ह्येवेति तद्विधेः। विध्यन्तराशेषभूतमपूर्वं तद्विधीयते ॥'

**भाट्ट**— विवृद्धौ प्रत्यक्षश्रुतानां राजसामादीनां संख्यासंपत्त्यर्थमागम्यमानानां च प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् संख्यासंपत्तये च सर्वस्तोत्रेषु समुच्चित्यावापे प्राप्ते 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति वचनेनाप्राप्तिबललब्धविधिशक्तिकेन इतरस्तोत्रेषु आवापपरिसंख्यानात् पवमानस्तोत्रयोरेव सः। **न चानेन** पवमानस्तोत्रयोरेव गायत्र्यादिऋग्भिन्नऋक्ष्वेव सामावापपरिसंख्यानेऽपि स्तोत्रान्तरे तत्परिसंख्यायां मानाभाव इति **वाच्यम्**, अत्र पवमानपदानुपादानात् प्रत्युत यज्ञपदोपादानेन यज्ञसंबन्धिगायत्र्यादिभिन्नऋक्ष्वेव सामावापपरिसंख्यावगतेः स्तोत्रान्तरेऽपि तत्परिसंख्यावश्यकत्वात्। अत्र हि ऋगधिकरणकत्वश्रवणादावापः साममात्रविषयोऽन्यस्याप्रसक्तेः। अत एव गायत्र्यादयोऽपि पवमानस्तोत्रसंबन्धिन्य एव, स्तोत्रान्तरे तासामभावात्, न तु सामिधेन्यादिसंबन्धिन्य इत्यपि ध्येयम्।

इयं च प्राप्तपरिसंख्याऽपि श्रौती, एवकारेण अन्ययोगव्यावृत्तेरुक्तत्वात्। अत एव नास्यां त्रैदोष्यमपि। न चैवकारार्थस्यान्ययोगव्यावृत्तिरूपस्येतरपदार्थेऽन्वयानुपपत्तिः, भूतले एव घटोऽस्तीत्यादौ एवकारार्थस्यान्ययोगव्यावृत्तिरूपस्य प्रतियोगितासंबन्धेन घटेऽन्वयाङ्गीकारात्, भूतलस्य च प्रथमतः क्रियायामन्वितस्यापि पार्ष्ठिकोऽन्यपदार्थेऽन्वय इति भूतलभिन्नाधिकरणे संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगी घटः इत्यर्थबोधोपपत्तेः। भूतलपदस्य च पार्ष्ठिकसंबन्धो घटपदेनापि, अन्यथा भूतल एवाकाश इत्यस्याप्यापत्तेः। अत एव भूतलवृत्तिर्घटः उक्तविधाभावप्रतियोगीति वाक्यार्थः। अतश्चात्रापि गायत्र्यादिषु तद्भिन्नऋगधिकरणकाभावप्रतियोगी सामावापः कार्य इति शाब्दबोधेऽपि प्राप्ताप्राप्तविवेकेन तद्भिन्नऋक्षु सामावापाभाव एव विधीयते इति युक्तेयं श्रौती परिसंख्या त्रैदोष्यरहिता च। अतश्च राजसामादीनां प्रत्यक्षश्रुतानां संख्यासंपत्त्यर्थमागम्यमानानां च साम्नामावापः पवमानविषय एवेति सिद्धम्। अत एव स्तोत्रान्तरे संख्यासंपत्तिरभ्यासेनैव।

वस्तुतस्तु नात्र प्राप्तपरिसंख्या, तथात्वे 'न तौ पशौ करोति' इतिवत् न्यायप्राप्तस्यापि शास्त्रीयत्वेन तदभावबोधने विकल्पापत्तेः। एकस्मिन्नेवकारपदे उद्देश्यविधेययोर्द्वयोरप्यङ्गीकारेणैकप्रसरताभङ्गापत्तेश्च। अपि

तु न्यायप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण गायत्र्यादिषु सामावापविधिरेवायं परिसंख्याफलकः । अत एव एवकारार्थोऽप्यनुवाद एव । न च गायत्र्यादीनामुद्देश्यत्वेऽनेकोद्देशः । अत्रेत्यस्य एकस्योद्देश्यपरत्वेन तदभावात् । सप्तम्याश्च प्राधान्यपरत्वेऽप्याधेयत्वसंबन्धतात्पर्यग्राहकत्वान्नान्यसंबन्धेन सामावापविधिः । यद्यपि च गायत्र्यादिषु सामावापे विहितेऽपि न स्तोत्रान्तरे तदाकाङ्क्षाशान्तिरिति नाप्राप्ताभिधानीन्यायेन फलतः परिसंख्यात्वम्, तथाऽप्यावापविधेः प्रयोजनजिज्ञासायां प्रयोजनान्तरासंभवे गमकविधयैव स्तोत्रान्तरेषु अभ्यासविधिकल्पनेन परिसंख्याफलकत्वोपपत्तेः ।

अत एवाविवृद्धस्तोमके क्रतौ उपदिष्टकौत्सादिनिवेशार्थं यत्र कुत्रचित्स्तोत्रे प्राकृतसामोद्वापे नियमेन प्राप्ते 'अत एवोद्वपन्ति' इत्यनेन गायत्र्यादिभ्य उद्वापस्य श्रुत्या फलतो वा नियमकरणात् स नियमविधिरेवेत्युक्तं **कौस्तुभे ।**

तत्त्वं तु आवापविधिबलादेवोद्वापस्यार्थसिद्धत्वात् अयमनुवाद एव तत्स्तुत्यर्थः । अत एवावापविधेरपि विवृद्धस्तोमांशे परिसंख्याफलकत्वं अविवृद्धस्तोमांशे नियमफलकत्वमित्यपि बोध्यम् ।

वस्तुतस्तु आवापविधिरयमनारभ्याधीतोऽपि न प्रकृतौ निविशते, तत्र कस्मिन्नपि स्तोत्रे आवापाभावात् । तथाहि बहिष्पवमाने तावत् साम्नोऽभ्यास एव । ऋचां तु नवानामेव पाठ इति न तत्र कस्याप्यागमः । एवमितरयोः पवमानयोः यावत्संख्यमृचां साम्नां च विधानादेव नावापः । आज्यपृष्ठाग्निष्टोमस्तोत्रेषु तु साम्नां ऋचां चाभ्यासादेव स्तोमसंपत्तिरिति न कोऽप्यावापविधेर्विषयः । अत एव प्रकृतौ आज्यादिस्तोत्रेषु एकैकसामविशिष्टैकैकतृचाम्नानात् स्तोमसंपत्त्यर्थं सामान्तराणामृगन्तगणां चागमे प्राप्तेऽपि नानेन वचनेन तत्परिसंख्या, पवमानयोरावापप्रसक्त्यभावेन तत्रावापविधिमुखेनेतरस्तोत्रेषु तत्परिसंख्यापकस्यास्य प्राकृताज्यादिविषयत्वानुपपत्तेः । अत एव प्रकृतावाज्यादिस्तोत्रेषु न्यायप्राप्तोऽप्यागमः 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा, पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा' इति पवमानद्वयविधावावापपदश्रवणात् परिसंख्यायते ।

अत्र हि प्रकृतौ पवमानद्वये आवापाभावेऽप्यावापसमाख्या प्रकृतौ विकृतौ वा यत्र यत्रावापप्रसक्तिः साऽत्रैव, न स्तोत्रान्तरे इत्येवंपरा सती प्रकृतावपि स्तोत्रान्तरेऽभ्यासविध्यापादनद्वारा आगमपरिसंख्यार्था विज्ञायते । अतो विकृतावपि तत एव स्तोत्रान्तरेष्वभ्यासविधिसंभवात् न 'त्रीणि ह वा' इत्यादिवचनं श्रुत्या फलतो वा तत्रावापपरिसंख्यार्थम् । अपि तु विवृद्धस्तोमके क्रतौ पवमानद्वये संख्यासंपत्त्यर्थमृक्सामयोरुभयोरागमे प्राप्ते गायत्र्याद्यधिकरणकसामावापविधिस्तादृशऋगभ्याससंपादनद्वारा ऋगन्तरागमपरिसंख्यार्थः, पवमानवृत्तित्रिष्टुभाद्यधिकरणत्वपरिसंख्यार्थो वा ।

एवं चाविवृद्धस्तोमके कौत्सादीनां न्यायादेव पवमानद्वय एव प्राकृतऋगधिकरणकावापसिद्धौ 'अत्र ह्येवावपन्ति' इत्ययं पवमानवृत्तित्रिष्टुभाद्यधिकरणत्वव्यावृत्तिफलको गायत्र्याद्यधिकरणनियम इति ध्येयम् । 'अत एवोद्वपन्ति' इत्ययं तदंशे त्वनुवाद एव । सर्वथा राजसामादीनां पवमानयोरेव निवेश इति सिद्धम् ।

**मण्डन**— 'पवमानेऽधिकोद्धृती ।' अधिकोद्धृती अधिकम्— आधिक्यम्, आवापः, वृद्धिः । उद्धृतिः— उद्धरणं उद्वापः । ते ते पवमाने एव भवत इति शेषः ।

**शंकर**— 'स्तोमवृद्धौ न बाधः स्यात् ।' 'बाधाबाधौ न सर्वगौ ।'

* **विवृद्धसुत्याह्वानुपलक्षणं** द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वाने । ११।४।७।३०–३२. **मीको.** पृ. २१९१ 'द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वाने०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विवृद्धस्तोमकाः** अविवृद्धस्तोमकाश्च विकृतिरूपाः क्रतवः सन्ति । वि. १।४।१२. * विवृद्धस्तोमकाः क्रतवः । प्रकृतौ यत्र स्तोत्रे यावन्तः स्तोमा भवन्ति ततोऽधिकाः स्तोमाः तत्र स्तोत्रे यत्र क्रतौ भवन्ति ते विवृद्धस्तोमकाः क्रतवः । ( १०।५।१०।२० ) । **के.**



**☞ विवृद्धस्तोमके क्रतौ बहिष्पवमाने सामैकत्वात् ऋगागमेन संख्या पूरयितव्या ॥**

**बहिष्पवमाने तु ऋगागमः सामैकत्वात् । १०।५।७।२६॥**

**भाष्यम्**-- विवृद्धस्तोमकेषु क्रतुषु संशयः । बहिष्पवमाने किं साम्नामागमोऽभ्यास इति । पूर्वेण न्यायेन आगम इति । **एवं प्राप्ते, ब्रूमः** । बहिष्पवमाने तु नैवम् । ऋगागमस्तत्रेति । कुतः ? सामैकत्वात् । कथम् ? यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिंकरोति । अथ कस्माद्बहिष्पवमाने सकृदेव हिंकरोतीति । एकं हि तत्र सामेति ब्रूयात् । 'स्वारमेव गायत्रम्' ( 'स्वरसामैव गायति' इत्येवं भाट्टदीपिकादिधृतः पाठः ) इति वचनात्सामैकत्वे ज्ञाते ऋगागमेन संख्या पूरयितव्येति । सामाभ्यसितव्यमिति ।

**शा**— बहिष्पवमानेऽपि किं सामागमः उत ऋगागम इति संशये पूर्वेण न्यायेन सामागमे **प्राप्ते, ब्रूमः**— 'एकं हि तत्र सामेति ब्रूयात्स्वरसामैव गायति' इति वचनात् सामागमो न संभवति । न च अभ्यासेनापि संख्यापूरणं संभवति, 'पराग्बहिष्पवमानेन स्तुवीत' इत्यनभ्यासवचनेन पराक्शब्देन अभ्यासस्य श्रुत्यैव निषिद्धत्वात् । तस्मात् ऋगागमः ।

**वि**-- 'किं बहिष्पवमानर्धौ साम्नर्चा वाऽभिपूरणम् । साम्ना पूर्वोक्तितो मैवं सामैकत्वपराक्श्रुतेः ॥'

**भाट्ट**-- न्यायप्राप्तस्यापि सामागमस्य गायत्र्याद्यधिकरणकत्वविधानादेव गायत्र्यादिरहितेषु स्तोत्रान्तरेषु परिसंख्या । 'त्रिच्छन्दा आवापः' इत्यादौ आवापपदं त्ववयुत्यानुवाद एव । अतश्च बहिष्पवमानेऽपि गायत्रतृचस्य सत्त्वात् तत्रापि स्तोमविवृद्धौ सामावापः । **न च** गायत्रीमात्रसत्त्वेऽपि गायत्रीबृहत्यनुष्टुभां त्रयाणामभावात् कथं तत्रावापविधिरिति **वाच्यम्**, उद्देश्यसाहित्यस्याविवक्षितत्वेन माध्यंदिनपवमाने इव गायत्रीमात्रसत्त्वेऽपि आवापोपपत्तेः । **न च** 'यदुत्तरयोः पवमानयोस्तृचाय हिंकरोति, अथ कस्माद्बहिष्पवमाने सकृदेव हिंकरोति, एकं हि तत्र सामेति ब्रूयात् स्वरसामैव गायति' इति वचनेन सामैकत्वविधानात् न तत्रागम इति **वाच्यम्**, एतस्य हिंकारैकत्वे हेतुमात्रपरतया प्रकृतौ पाठप्राप्तसामैकत्वानुवादकत्वेन तद्विधायकत्वाभावात् । अतः प्रकृतौ तृचत्रये एकस्यैव साम्नोऽभ्यासेऽपि विवृद्धस्तोमकायां विकृतौ साम्नः आगमे न किञ्चिद्बाधकम् । इति **प्राप्ते**, न तावदागम्यमानगायत्र्याद्यधिकरणत्वेनैव 'त्रीणि ह वै' इत्यनेन सामावापविधिः । गायत्र्यादीनां सिद्धवद्यज्ञसंबन्धानुवादानुपपत्तेः । अतः अवश्यविधेये प्राकृतगायत्र्यधिकरणके सामागमे गायत्र्या अभ्यासस्यावश्यकत्वात् 'पराक् बहिष्पवमानेन स्तुवते' इत्यनभ्यासवाचिपराक्छब्देन तत्पर्युदासानुपपत्तेः 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः सप्तच्छन्दा आवाप आर्भवः' इति पवमानद्वये एवावापग्रहणस्य स्तोत्रान्तरे इव बहिष्पवमानेऽप्यावापपरिसंख्यार्थत्वाच्च । 'अत्र ह्येवावपन्ति' इत्यस्य पवमानवृत्तित्रिष्टुब्व्यावृत्तिफलकत्वस्योक्तत्वात् अतस्तत्रैकस्यैव साम्नोऽभ्यासः ।

न चैवमपि ऋचामनभ्यासस्य न्यायादेव सिद्धेस्तत्र तद्विध्यानर्थक्यम्, तस्य स्तोत्रान्तरेषु न्यायप्राप्तऋगागमपरिसंख्यार्थत्वस्य तत्र तत्रोक्तत्वात् । किंच 'स्वरसामैव' इत्यत्र साम्नः पाठादेव प्राप्तत्वेन एवकारार्थस्यैव सामान्तराभावरूपस्य प्रकृतौ विकृतौ वा विधेयत्वाद्बहिष्पवमाने सामाभ्यास आवश्यक एव । अत एव आवापसमाख्यया पराग्वाक्येन च पवमानत्रयातिरिक्ते ऋक्सामोभयपरिसंख्या । पवमानत्रये तु उभयागम इत्यप्यपास्तम् । 'त्रीणि ह वा' इत्यादिना क्रियमाणस्य प्राकृतगायत्र्याद्यधिकरणकसामावापविधेः निर्विषयत्वापत्तेः । तस्मादावापसमाख्या सामावापविषयिण्येवोक्तवचनेनोपसंह्रियते । एवं च बहिष्पवमानेऽपि सामावापस्य परिसंख्यातत्वादनभ्यासस्य ऋङ्मात्रविषयत्वावगतेरुक्तव्यवस्थासिद्धिः । अतो बहिष्पवमाने साम्नोऽभ्यास ऋचामागम इति सिद्धम् ।

**मण्डन**--- 'ऋगागमः स्यात् पवमान आद्ये ।'

**शंकर**-- 'पवमाने त्वाद्यऋचा ।'

* विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये अप्राकृतानां साम्नामागमः । १०।५।६।१५–२५. **मीको.**

पृ. २५६ ‘ अतिरात्रे एकविंशादौ० ’ इत्यत्र द्रष्टव्यम् । * **विवृद्धस्तोमकेषु** अविवृद्धस्तोमकेषु च विकृतियागेषु उपदिष्टैः सामभिः अतिदिष्टानां बाधः, विवृद्धस्तोमकेषु तु उपदिष्टानामतिदिष्टानां च साम्नां समुच्चयः । **वि.** १०।४।१२, * विवृद्धस्तोमकेषु क्रतुषु ‘ एकविंशेनातिरात्रेण प्रजाकामं याजयेत् , त्रिणवेनौजस्कामम् , त्रयस्त्रिंशेन प्रतिष्ठाकामम् ’ । विवृद्धिश्चेयं पवमानेष्वेव । बहिष्पवमाने चोर्ध्वंगानमेव नावृत्तगानम् । ततश्च एकविंशस्तोमपूरणाय चत्वारस्तृचा आगमयितव्याः, त्रिणवे षट्, त्रयस्त्रिंशे च अष्टौ । एतेषामागन्तूनां तृचानां निवेशः अन्ते कर्तव्यः न तु पर्यासात् प्राक् , क्लृप्तक्रमबाधप्रसङ्गात् । ५।३।४. * विवृद्धस्तोमकेषु क्रतुषु माध्यंदिनार्भवपवमानयोः आगम्यमानानां साम्नां गायत्रीबृहत्यनुष्टुप्सु निवेशः न तु अन्ते तृचे । ५।३।५।१३–१४. **मीको**. पृ. २६० ‘ अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थ० ’ इत्यत्र द्रष्टव्यम् ।

**विवृद्धस्तोमक्रतुषु उपदिष्टैः सामभिः प्राकृतसाम्नां न बाधः, अविवृद्धस्तोमक्रतुषु च उपदिष्टैः सामभिः प्राकृतसाम्नां बाधः ॥**

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च । १०।४।१०।२०॥**

**भाष्यम्—** सन्ति विवृद्धस्तोमकाः अविवृद्धस्तोमकाश्च क्रतवः । ‘ एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम् , त्रयस्त्रिंशेन प्रतिष्ठाकामम् ’ इति । तथा द्वात्रिंशाः पवमानाः अभिषेचनीयस्य । तत्र नव राजसामानि, एकादश राजसामानि, वलौघश्रवसे वसिष्ठस्य जनिजनित्रे च साकं प्रवेदनान्याहुः । शुद्धाशुद्धीये च संश्रवोपपदे चोभे । तथा, रथहविर्धाने पुनःस्तोमस्य यज्ञस्य । तथा अपचितिवत्यः पुनःस्तोमस्य यज्ञस्य । **‘ पुनःस्तोमस्य सवनं मध्यमं द्वादशं स्मृतम् । कार्यौ नवदशस्तोमाववमितः सवने उभे ॥’** इति । तदत्र क्वचित्प्राकृती स्तोत्रसंख्या विवृद्धा, क्वचिद्धीना । तत्र संदेहः किं विकृतौ विवृद्धौ हानौ च प्राकृतानां साम्नां निवृत्तिः, उत हानौ निवृत्तिः, विवृद्धावनिवृत्तिरिति । किं प्राप्तम् ? उभयत्र निवृत्तिः । प्रत्यक्षश्रुतेन हि चोदकप्राप्तं निवर्त्यते । साम्नां चोत्पत्तिरर्थवती भविष्यति, अपूर्वेषु क्रियमाणेष्विति । **एवं प्राप्ते, ब्रूमः ।** स्तोमविवृद्धौ अनिवृत्तिराधिक्यं स्यात् । कुतः ? आगमेन हि साम्नां संख्यापूरणं वक्ष्यते । आगमेन वाऽभ्यासस्याश्रुतित्वादिति । एवं चोदकानुग्रहो भविष्यति । अविवृद्धौ तु प्राकृतं निवर्त्येत । यावता निवृत्तेन सा संख्या पूर्यते, तावत्प्राकृतं बाधितव्यम् । अन्यत्प्राकृतमेव स्यात् । कुतः ? इतरस्याश्रुतित्वात् । इतरन्न श्रूयते, आगमः कर्तव्य इति । संख्यामात्रं श्रूयते । तस्माद्विवृद्धस्तोमकेष्वनिवृत्तिः । हीनस्तोमकेषु यावदर्थं निवर्तयितव्यम् । अथ यदुक्तम्, साम्नामुत्पत्तिरर्थवती भविष्यतीति । उच्यते । बाध्यतामार्षं चोदकेन । गुणमात्रमार्षं विशिष्टगुणश्चोदक इति ।

**शा—** यत्र स्तोमविवृद्धिः यथा ‘ द्वात्रिंशः पवमानोऽभिषेचनीयः ’ इत्यादौ, तत्र प्रत्यक्षश्रुतैः राजसामभिः प्राकृतानि विक्रीयन्ते किंवा समुच्चयः इति । तत्र विवृद्धस्तोमकेषु आगमेन संख्यापूरणं वक्ष्यते । तत्र आगमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धौ अवकाशमलभमानानि प्राकृतबाधेन वर्तन्ते, तेन अविवृद्धौ विवृद्धौ च सर्वत्र बाधः । **इति प्राप्ते, ब्रूमः । ‘ प्राकृतानामबाधेन वैकृतानामसंभवः । यत्र तत्रैव बाधः स्याद्विवृद्धौ त्वस्ति संभवः ॥ ’** तस्मात् विवृद्धौ समुच्चयः ।

**सोम—** आपवादिकी **संगतिः । सूत्रार्थस्तु–** स्तोमविवृद्धौ प्राकृतसमुच्चयः स्यात् इतरस्यागमस्याश्रुतत्वात् अविवृद्धौ यत्र प्राकृतसंख्या यथाप्रकृत्यवतिष्ठते यत्र वा ‘ पुनःस्तोमस्य सवनं मध्यमं द्वादशं स्मृतम् ’ इत्यादौ हीयते तत्र उभयत्रापि परं प्राकृतनिवृत्तिः तां विना वैकृतनिवेशासंभवादिति ।

**वि—** ‘ स्तोमस्यथोर्वृद्ध्यवृद्धयोः प्राकृतः किं निवर्तते । अवृद्धावेव वाऽऽद्यः स्यात्सामोत्पत्त्युपयोगतः ॥ अवृद्धावुपयोगाय प्राकृतस्य निवर्तकम् । वृद्धिं प्रत्युपयोगित्वाद्वृद्धौ तु न निवर्तकः ॥ ’

**भाट्ट—** यत्र यथाप्रकृत्येव स्तोमः, यत्र वा न्यूनः, यथा ‘ त्रिवृदग्निष्टुदग्निष्टोमः’ इत्यादौ तत्र उपदिष्टैः कौत्सादिभिः प्राकृतानां तावत्समसंख्याकानां बाध इत्युक्तम् । यत्र तु प्रकृत्यपेक्षया विवृद्धस्तोमकता, यथा ‘ एकविंशेनातिरात्रेण प्रजाकामं याजयेत् , त्रिणवेनौजस्कामम् ’ इत्यादौ, तत्र उपदिष्टानां राजसामादीनां न प्राकृतसामनिवर्तकता श्रुसंख्यासंपत्तेरुपदिष्टातिदिष्टसामविशिष्टमन्त्रैरेवोपपत्तेः । अत एव आगमेन संख्यापूरणमपि उपदिष्टातिदिष्टैः समुच्चितैरपि तदपूरणे इति वक्ष्यते ।

**मण्डन—** ‘ न बाधः स्तोमवृद्धौ तु । ’

**शंकर—** ‘ स्तोमवृद्धौ न बाधः स्यात् । ’

**विवृद्धिः कर्मभेदात् पृषदाज्यवत् तस्यतस्योपदिश्येत । ५।३।१।१॥**

प्रकृतौ पञ्च प्रयाजाः श्रुताः । अग्नीषोमीये पशौ तु ‘ एकादश प्रयाजान् यजति ’ इति श्रुतम् । चातुर्मास्येषु च ‘ नव प्रयाजान् यजति ’ इति । तत्र किं प्रतिप्रयाजं एकादशत्वसंख्याया अन्वयः प्रयाजसमुदायेन वा अन्वयः इति विचारे पूर्वपक्षमाह । विवृद्धिः प्राकृतपञ्चत्वसंख्यापेक्षया अधिका एकादशत्वसंख्या तस्यतस्य एकैकस्य प्रयाजस्य उपदिश्येत । कर्मभेदात् प्रयाजलक्षणस्य प्रधानकर्मणः भेदात् । पृषदाज्यवत् ‘ पृषदाज्येन अनुयाजान् यजति ’ इति प्रत्यनुयाजं पृषत्त्वगुणो भिद्यते तद्वत् । तथा च पशौ पञ्चपञ्चाशत् प्रयाजाः स्युः चातुर्मास्येषु च पञ्चचत्वारिंशत् ।

**अपिवा सर्वसंख्या स्यात् तद्विकारः प्रतीयेत । २ ॥**

अपिवाशब्दः पूर्वपक्षनिरासार्थः । न एकादशत्वसंख्या तस्यतस्य, किन्तु सर्वसंख्या स्यात् । सर्वेषां पञ्चानां प्रयाजानाम् , सर्वेषां त्रयाणां चानुयाजानां इयं विकारभूता एकादशत्वसंख्या स्यात् । तद्विकारः तस्याः पञ्चत्वसंख्यायाः त्रित्वसंख्यायाश्च विकारः एकादशत्वसंख्या प्रतीयेत, न तु तस्यतस्य प्रत्येकं प्रतीयेत । तस्मात् सर्वसंपाद्या इति सिद्धान्तः । पशौ एकादशएकादशैव प्रयाजाश्चानुयाजाश्च, चातुर्मास्येषु नवनवैव । **के.**

**‘ विवेकभ्रष्टानां भवति विनिपातः शतमुखः ’ इति न्यायः ॥ साहस्री.** ९९२.





* **विशदं** विभक्तावयवं इति ‘ भक्ष्येण मिश्रीकरणं ’ इत्यत्र ( पा० २।१।३५ ) हरदत्तः । **सोम.** ८।१।१८ । कठिनत्वापरपर्यायविशदत्व... । **भाट्ट.** ८।१।९.

**विशयेऽलौकिकं सर्वार्थत्वात् । ७।३।१२।३० ॥**

गर्गत्रिरात्रे, आज्यदोहानि सामानि प्रकृत्य श्रूयते ‘ अग्निमुपनिधाय स्तुवते ’ इति । तत्र किं अलौकिकं लौकिकं वा अग्निमुपनिदध्यात् इति विशये संशये अलौकिकं वैदिकं अग्निं उपनिदध्यात् । कुतः ? सर्वार्थत्वात् सर्ववैदिककर्मार्थत्वात् वैदिकस्य आहवनीयादेः । इति **पूर्वः पक्षः ।** अत्र लौकिकः लौकिकं इति लिङ्गभेदेन विभक्तिभेदेन च द्वेधा पाठोऽन्यत्र । अकारप्रश्लेषः नास्ति । तत्र प्रथमान्तपाठानुसारेण स्यात्–पदमपि सूत्रे पठितम् । द्वितीयान्तत्वपक्षे तु सूत्रे स्यात्–पदं नास्ति किंतु उपनिदध्यात् इत्यध्याहारः ।

**न वैदिकमर्थनिर्देशात् । ३१ ॥**

गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य श्रूयते ‘ अग्निमुपनिधाय स्तुवते ’ इति । तत्र वैदिकं अग्निं उपनिदध्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं निषिध्य परिशेषन्यायेन सिद्धान्तमाह । न वैदिकं अग्निं उपनिदध्यात् । कुतः ? अर्थनिर्देशात् । वैदिकस्याग्नेः अर्थविशेषः प्रयोजनविशेषो निर्दिष्टः । तत्र च आज्यदोहसामपठनकाले उपनिधानं नोक्तम् । तस्मात् वैदिकं नोपनिदध्यात् । परिशेषात्तु लौकिकमग्निं उपनिदध्यात् इति सिद्धान्तः ।

**तथोत्पत्तिरितरेषां समत्वात् । ३२ ॥**

गर्गत्रिरात्रे आज्यदोहसामगानकाले अग्निरुपनिधातव्यो विहितः । स च परिशेषात् लौकिक इति सिद्धान्तितम् । ननु न परिशेषोऽवतरति कस्यचित् धिष्ण्याग्नेरुपनिधानस्य संभवात् इति चेन्नेत्याह । इतरेषां धिष्ण्यानामग्नीनामपि उत्पत्तिस्तथा, यथा आहवनीयादीनाम् । तेऽपि असाधारणे व्याघारणरूपे कार्ये विहिताः तेषामपि अन्यतमस्य उपनिधानं न संभवति । समत्वात् आहवनीयादिभिर्धिष्ण्यानाम् । तस्मात् परि-

शेषात् लौकिकस्याग्नेरेव उपनिधानम् । **वार्तिके** तु 'व्याघारणे कृते अपवृत्ते कर्मणि लौकिकः इति प्रसङ्गादुपनिधाने संभवति (सति) यः अन्यः आनीयते (लौकिकः) तत्र प्रयत्नः कर्तव्यः (स चायुक्तः इति व्याघारणोत्तरं धैष्ण्यस्यापि उपनिधानं संभवति लाघवात्)' इत्युक्तम् । **के.**

**विशये प्रायदर्शनात् । २।३।६।१६॥**

अथात्र भगवानाचार्य इदमुदाहृत्य 'वत्समालभेत, वत्सनिकान्ता हि पशवः' इति इमं संशयमुपन्यस्यति स्म– किं यजतिमदभिधान एवालभतिः, उत आलम्भमात्रवचनः इति । आलम्भनिर्वापवाक्ययोः द्रव्यदेवतासंबन्धभेदानुमितयागभेदं प्रतिपाद्येदानीं प्रसङ्गेन देवतासंबन्धप्रत्युदाहरणे प्रतिपादयितव्ये प्रथमं स्पष्टत्वादालम्भे प्रतिपाद्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । अग्निहोत्रं प्रकृत्य दोहविधिमाम्नाय 'वत्समालभेत, वत्सनिकान्ता हि पशवः' इति श्रूयते । तेन नात्र प्रकृतिभूतदैक्षपश्वालम्भानुवादेन वत्सस्पर्शविधानमात्रं शङ्कनीयम् । आरम्याधीतत्वेन प्रकरणबाधाभिप्रायप्रकृतिगामित्वासंभवात् । संस्कार्यत्वेन श्रूयमाणस्य विनियोगभङ्गं विना कर्मानुवादे विधानासंभवाच्च यागविधिरेव अयमिति हैतुकः प्रत्यवतिष्ठते । तथाहि– 'वत्समालभेत' इत्यत्र आलभतिधातुर्यागावबोधार्थः, वैदिकप्राणिकर्मालम्भक्रियाविषयत्वात् । एवंविधः स यागावबोधार्थो यथा वायव्यवाक्यस्यालभतिधातुरिति । अत्र वैदिकग्रहणं 'कान्तामालभेत' इति व्यवच्छेत्तुम् । प्राणिकर्मक्रियाविषयत्वग्रहणं 'ईषामालभेत' इति व्यवच्छेत्तुम् । न चायमसिद्धः, विशेषणविशेष्यविशिष्टानां पक्षधर्मतायाः प्रमाणसिद्धत्वात् । नापि विरुद्धः, साध्यविपरीतव्याप्त्यभावात् । नापि साधारणानैकान्तिकः, विपक्षवृत्त्यभावात् । नापि असाधारणः, साधर्म्यदृष्टान्तसंभवात् । यागान्तरविधिर्वेति द्वेधा पूर्वपक्षसंभवः । तत्र पूर्वस्मिन् कल्पे प्रकरणाधीतमन्त्रप्रातच्छागबाधप्रसङ्गात् विकल्पस्य चाष्टदोषदुष्टस्यान्याय्यत्वात् मन्त्रस्य चान्यार्थत्वप्रसङ्गात् यागान्तरविधिरेवायं तस्य च देवताप्राप्तिरतिदेशात् । प्रकरणादग्निहोत्राङ्गत्वेन पृथक्फलकल्पना । तस्मात् पूर्वाधिकरणवत् कल्पितयजिपदेन यागविधानमेवेति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यदि पूर्वाधिकरणवदालभतौ यजिः कल्पयितुं शक्यते । तत्र हि विधेयार्थदेवतापदानुरोधेन यजिः कल्पितः । न चात्र तथाभूतं देवतापदमस्ति । किञ्च यागविधिपक्षे वत्सस्य यागसाधनत्वात् विनियोनभङ्गेन वत्सेन यागं कुर्यादिति वाक्यार्थो वर्णनीयः । तथा च सति अग्निहोत्रहोमीयदोहोपयोगितया प्रयोजनवतो वत्सस्य द्वितीयाश्रुत्यवगतं संस्कार्यत्वं बाध्येत, ईदृशं चापेक्षितं धेनुप्रस्नवनं हीयते । अतोऽनुमानमप्येतदागमबाधितविषयं नात्मानमेव लब्धुमलम् । आलम्भभावनं च नालभतौ यागानुमापकम्, देवतासंबन्धस्यैव यजत्यव्यभिचारात् । तस्मिन् अव्यभिचरितसंबन्धे सति हिंसात्ववदप्रयोजकश्चायं हेतुरिति । **किञ्च** 'वत्सनिकान्ता हि पशवः' इति वाक्यशेषश्च श्रूयते । अयं च हेतुवन्निगदार्थवादो वत्सप्रीत्यर्थः स्पर्शनं विधातुमुपपद्येत । मारणार्थालम्भपक्षे तु वत्सप्रियत्वं पशूनामुच्यमानमसंबद्धमेव स्यादिति । तेन यावदुक्तालम्भविधिरेवेति सिद्धम् । **प्रयोजनम्**— पूर्वपक्षे वत्ससाधनकयागानुष्ठानम् । सिद्धान्ते तु वत्ससंस्कारालम्भमात्रानुष्ठानम् । **सूत्रं तु**–– पूर्वाधिकरणोक्तयागानुमानहेतोर्देवतासंबन्धस्याभावेन 'यावदुक्तं वा कर्मणः श्रुतिमूलत्वात्' इत्यनेनैव पूर्वपक्षसूत्रेण सिद्धान्तसिद्धेः लिङ्गदर्शनमात्रपरं 'वत्समालभेत' इति किं यागविधिः, उत वत्ससंस्कारालम्भविधिः इति संशये प्रायदर्शनात्संस्कारत्वनिश्चयः, प्रायदर्शनं चात्र बहुप्रदेशाम्नानम् । यथाग्न्यप्राये लिखितोऽग्न्य इति । **तौता.**

* 'विशये प्रायदर्शनात्' (२।३।६।१६) इत्यत्र संदिग्धस्य वस्तुनः प्राये वचननिर्णयत्वाभिधानम् । **सु.** पृ. १४७६. * 'विशये प्रायदर्शनात्' (२।३।६।१६) इत्यधिकरणसिद्धान्तबीजभूतो न्यायः 'देवतासंबन्धाभावात् आलभतिर्न यागवचनः, दृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यति' इति । **के.** * 'विशये 'प्रायदर्शनात्' (२।३।६।१६) इति संस्कारप्राये यत्र अन्ये संस्काराः गोदोहनादयः तत्रास्य दर्शनमिति । **वा.** ३।३।१।२ पृ. ८०५.

**विशये प्रायदर्शनात् । २।३।६।१६॥**

'पयसा अग्निहोत्रं जुहोति' इति विहितस्य पयसो दोहनविषये 'वत्समालभेत' इति श्रुतम् । किमयं यागविधिः उत संस्पर्शनमात्रविधिः इति विचारे 'वायव्यं श्वेतमालभेत' इतिवत् प्राणिद्रव्यकालम्भत्वात् यागविधिः इति पूर्वपक्षे उत्सूत्रे सिद्धान्तमाह । विशये यागविधिः, संस्पर्शमात्रविधिः इति संशये प्रायदर्शनात् उपसर्जनावर्तनानुमन्त्रणादिकर्मसु वत्सालम्भनस्य पाठात् नायं यागः किंतु संस्पर्शमात्रं इति निर्णयो भवति । गोप्रस्नवनातिशये चायं संस्पर्श उपयुज्यते । आलभनमिदं च चाटूकरणात्मकस्पर्शविशेषरूपम् ।

**अर्थवादोपपत्तेश्च । १७॥**

'पयसाऽग्निहोत्रं जुहोति' इति प्रकृत्य 'वत्समालभेत' इति श्रुत आलभतिः वत्सचाटूकरणरूपसंस्पर्शनं विदधाति न यागं इति 'वत्सनिकान्ता हि पशवः' इत्यर्थवादस्य उपपत्तेरपि सिद्धं भवति । निकान्तशब्दः नितरां प्रियत्ववाची । वत्साः निकान्ताः अतिप्रिया येषां ते पशवः वत्सनिकान्ताः । आलभतेः यागवाचित्वे तु नायमर्थवाद उपपद्येत । तस्मात् वत्समालभेत इति आलभतिः संस्पर्शनमात्रमाह इति **सिद्धान्तः । के.**

* 'विशये प्रायदर्शनात्' । २।३।६।१६ ॥ 'पूषाऽसि' इति मन्त्रो वत्सालम्भे विनियुज्यते न वा इति संदेहात् पूषशब्दो देवतावाची न वा इति संदेहाच्च वत्सालम्भे देवतासंयोगसंदेहो योग्यत्वात् व्यवहितानुपक्तयावदुक्तत्वरूपसाध्यसिद्ध्यै विशयशब्देन हेतुतया उक्तः इत्येवं सूत्रव्याख्यां सूचयति (वार्तिककारः) 'सिद्धान्तस्तु' इत्यादिना । **सु.** पृ. ९३३, * 'विशये लौकिकं (कः) स्यात् सर्वार्थत्वात् । न वैदिकमर्थनिर्देशात्' (७।३।१२।३०–३१, एकसूत्रत्वं सु–बिन्दुः) इत्यधिकरणे 'अग्निमुपनिधाय स्तुवते' इति स्तुत्यङ्गत्वेन आरादुपकारके अग्न्युपनिधाने विहिते लौकिकस्याग्नेरुपनिधानं वक्ष्यते । पृ. ६४०.

* **विशसनं** पशुधर्मः । **भा.** ३।६।७।१८.

* **विशसनस्थले** पशुः प्रकृतिद्रव्यम्, हृदयादि तु हविः । उत्सर्गस्थले तु पशुरेव साक्षात् हविः । **मीन्या.**

* **विशिष्टः ।** न हि अविधाय विशेषणं शक्यते विशिष्टो विधातुम् । **भा.** २।२।१२।२७ पृ. ५५९.

* **विशिष्टस्य** तादर्थ्ये विशेषणस्यापि तादर्थ्यं भवति क्वचित् । यथा– 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र मन्थनस्यापि पाकाङ्गत्वम् । 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र ऐन्द्याः न केवलं उपस्थानाङ्गता एव किंतु गार्हपत्याङ्गत्वमपि । एवं 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यादावपि । वाक्यसंयोगात् । विशिष्टस्य तादर्थ्येऽपि न विशेषणस्य तादर्थ्यं क्वचित् । यथा– अभिक्रमणस्य प्रयाजद्रव्यदेवतामन्त्राणां च प्रयाजाङ्गत्वं न तु दर्शाङ्गत्वं वाक्यसंयोगाभावात् । विशिष्टं प्रति तादर्थ्ये अपि विशेषणं प्रति न तादर्थ्यं इष्यते क्वचित् । यथा– अर्थज्ञानं प्रति स्वाध्यायस्य अध्ययनस्य वा तादर्थ्येऽपि न विशेषणं अर्थकर्म प्रति तादर्थ्यमिष्यते, प्रकरणाभावात् । **बाल.** पृ. १०२

**विशिष्टस्य वैशिष्ट्यमिति न्यायः ।** यथा– अनेन स्वार्थः काङ्क्षितो योग्यश्च स्वार्थोपस्थितिविषयो भवति, तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यतेऽनन्तरं च महावाक्यार्थबोध इति नवनैयायिकमतमाश्रित्य शाब्दबोधोऽङ्गीक्रियते इति संक्षेपः । **साहस्री.** १८४.

* '**विशिष्टां** भावनां प्राप्य वृत्तिर्विधिनिषेधयोः' । इति **न्यायेन** अवधारितदमर्थ्यस्यैव निषेध्यत्वात्, तादृशस्यैवानुवाद्यत्वावगतिः । **सु.** पृ. १३६९.

* शुद्धस्य क्रतोः साम्नो वा ग्रहाग्रताविधौ निमित्तत्वायोगात् विशिष्टस्यैव निमित्तत्वावगतेः न **विशिष्टानुवाददोषापत्तिः । सु.** पृ. ८८६.

* **विशिष्टार्थप्रतीतौ** संबन्धस्य नान्तरीयकत्वात् संबन्धशब्देन लक्षणया वैशिष्ट्याभिधानम् । **सु.** पृ. ७५२.

* '**विशिष्टार्थप्रयुक्ता** हि समभिव्याहृतिर्जने' इति न्यायः । **शास्त्रप्रकाशिका.** ६०२.

* **विशिष्टार्थविधौ** समासोपात्ते वाक्यभेदो नास्ति । **बाल.** पृ. १०१–१०२.

* **विशिष्टाधानविधेयत्वाधिकरणम् ।** २।३।३।४. **मीको.** पृ. ९३० 'आधानाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **विशिष्टोद्देशस्य** अनुमतिवाक्ये अदोषत्वात् समासपदस्यैवानुमेयत्वम् । **संकर्ष.** ३।३।३.

* '**विशिष्टग्रहणं** नेष्टमगृहीतविशेषणम् । अभिधानाभिधाने तु न केनचिदिहाश्रिते ॥' अगृहीतविशेषणे तदनुरक्ता विशेष्यबुद्धिर्नोपजायते इति तद्ग्रहणमादर्तव्यम् । न तु अनभिहितविशेषणत्वेन किंचित् दुष्यति । **वा.** ३।४।४।१३ पृ. ९१५–९१६.

* **विशिष्टज्ञाने** विशेषणज्ञानस्य हेतुत्वं नाङ्गीक्रियते इति शिरोमणिः । **मणि** पृ. २८, * विशिष्टज्ञाने विशेषणज्ञानस्य न हेतुत्वम्, विशेष्यविशेषणेन्द्रियसंनिकर्षस्य विशिष्टज्ञानहेतुत्वात् इति केचित् । पृ. २१.

§ **विशिष्टधर्मे वृत्तस्य विशेषणप्रवृत्तित्वनियम इति न्यायः ।** यथा– दृश्यते हि 'कुण्डली याति' इत्यादौ विशिष्टवृत्तेर्धर्मस्य गत्यादेः कुण्डलादिरूपविशेषणवृत्तित्वमिति । 'कुण्डली भुङ्क्ते' इत्यादौ तु कुण्डलादिरूपलक्षणत्वाद्विशेष्यस्यैव भोजनान्वय इति । **साहस्री.** २६३.

* **विशिष्टनिषेधात्** विशेषणनिषेधः । अयं निषेधकल्प्यः प्रतिषेधः । **बाल.** पृ. ३०.

* **विशिष्टप्रतीतौ** अपि देवदत्तगृहस्य पुरुषस्य च केवलस्य अभिधानं युक्तं काकनिश्चयनदण्डयोः प्रत्यक्षदण्डशब्दावगतयोः विशेषणत्वोपपत्तेः । काकवत् (देवदत्तगृहं) दण्डी (पुरुषः) । **वा.** १।३।९।३३ पृ. ३१८.

* **विशिष्टप्रत्ययादेव** सर्वत्र अर्थापत्त्या एकस्य द्वयोर्वा अवयवयोः विशेषणविशेष्ययोः व्यापारः शब्दे कल्प्यते । सा (अर्थापत्तिः) चान्यथानुपपत्तिरूपत्वादनन्यलभ्ये विषये भवति । **वा.** ३।४।४।१३ पृ. ९१६.

* **विशिष्टबुद्धिः ।** शोणादिशब्दे विशेषणबुद्धिं विनापि विशिष्टबुद्धिदर्शनात् विशेषणविशेष्यग्राहकप्रमाणद्वयसद्भावे एव विशिष्टबुद्धेर्विशेषणबुद्धिपूर्वकत्वनियमः, न सर्वत्र । **सु.** पृ. १४०८.

* **विशिष्टरूपावयवत्वात्** विशेषणविशेष्ययोः, तज्ज्ञानं विना विशिष्टज्ञानानुत्पत्तिः । **सु.** पृ. १४०१.

* दण्डिशब्दः केवले दण्डे न प्रयुज्यते इति **विशिष्टवचनो**ऽवधार्यते । **वा.** १।३।९।३३ पृ. ३१८.

* '**विशिष्टवाचकस्य** पदस्य एकदेशपरत्वे लक्षणा' इति **न्यायात्** 'त्रिवृता यूपं परिवीय' इत्यादौ नवकमात्रग्रहणे लाक्षणिकत्वप्रसङ्गो दुर्वारः एव । अतश्चैतादृशविषये त्रैगुण्यमेव (त्रिवृत्पदार्थः) । **कौ.** १।३।४।९ पृ. ७६.

* **विशिष्टविधानम् ।** यदा केनचिदपि प्रमाणेन नास्ति प्राप्तिरित्यवगम्यते, तदा विशिष्टविधानं अङ्गीकरोति । तथा च प्रकरणादिप्राप्तार्थानुवादेन श्रुतयो गुणानां विधात्र्य इष्टाः । **वा.** ३।५।१०।३१.

* **विशिष्टविधानात्** शुद्धधात्वर्थविधिश्रुतिः बलीयसी । **सु** पृ. ७६८. * **विशिष्टविधाने** वाक्यभेदो नास्ति । यथा 'वायव्यं श्वेतमालभेत' । ननु अत्रापि श्वेतं वायव्यं कुर्यात्, तं चालभेत इत्यर्थद्वयविधानात् भिद्येतैव वाक्यम् । नेति ब्रूमः । नहि आलभेत इत्यस्य अयमतिभारः, यद् द्रव्यदेवतासंबन्धेन पुरुषप्रयत्नं ब्रूयात् । यथा 'रक्तमश्वं योजय' इति यदा गुणविधिपरं भवति वाक्यम्, तदा द्वाभ्यां वाक्याभ्यां प्रयोजनं गुणद्वयविधाने । अथ 'शोणमानय' इत्युच्येत तत्र गुणविधिपरेऽपि वाक्ये पर्यवसित एव गुणद्वयविधानम् । श्रुत्यैव विशिष्टगुणद्रव्यस्य प्रतीतत्वात् न भवति एकस्य वाक्यस्य अतिभारः । **भा.** २।३।५।१४, * **विशिष्टविधाने** वाक्यभेदो न भवति । यदुक्तं अनेकगुणविधाने वाक्यं भिद्येतेति । यदीमौ गुणौ आधानविशिष्टौ विधीयेयाताम्, भवेद्वाक्यभेदः । द्वाभ्यां तु विशेषणाभ्यां विशिष्टं एकमाधानं विधायिष्यते । तेन न भविष्यति वाक्यभेदः । २।३।३।४ पृ. ५९४.



* कथञ्चिदनुवादत्वे संभवति **विशिष्टविधानानुपपत्तिः ।** **वा.** ३।५।१०।३१ पृ. १००६.

* **विशिष्टविधानन्यायः ।** यत्र हि एकक्रियाविशेषणं अनेकमुपादीयते तत्र तद्द्वारेण तद्विधिः सुलभः इति, तत्र विशिष्टविधानन्यायः । **के.**

* **विशिष्टविधिः** अविशिष्टविधिमपेक्ष्य दुर्बलो भवति । **वा.** ३।३।१५।४६. * विशिष्टविधिः गुणविधिना बाध्यते यथा 'दध्ना जुहोति' इत्यादौ । **बाल.** पृ. १४०. * सर्वप्रकारासंभवे च **विशिष्टविधिः** भवति । **वा.** २।३।३।४ पृ. ५९०. * **विशिष्टविधेः** विशेष्यविशेषणोभयपरत्वे वाक्यभेदापत्त्या विशिष्टमात्रपरस्य विशेषणांशेऽपि प्रामाण्यं इष्यते एव इति रेवत्यधिकरणे वक्ष्यते । **कु.** १।१।८।३२. * **विशिष्टविधौ** अपि विशेषणभूतपदार्थान्तरविधिः । **सु.** पृ. ७६८. * विशिष्टविधौ मत्वर्थलक्षणा । 'सोमेन यजेत' सोमवता यागेन इष्टं भावयेत् इति । **मीन्या.** * विशिष्टविधौ विशेषणविधिरार्थिकः । **मीन्या.**

* **विशिष्टविधिनिरूपणम् ।** 'यदाग्नेयोऽष्टाकपालः' 'सोमेन यजेत' 'अरुणयैकहायन्या' इत्यादौ विशिष्टविधिः अभिमतः । तत्र वार्तिककृता आघाराग्निहोत्राधिकरणे (२।२।५।१३–१६) अष्टौ श्रुतिप्रकारान् पारदौर्बल्यवतः निरस्यता दूषणमुक्तं 'दध्ना जुहोति' इत्यादिगुणमात्रविधौ समानपदोपात्तसंनिकृष्टधात्वर्थग्रहणासंभवात् विप्रकृष्टग्रहणम्, अतो विशिष्टविधौ उभयोः विशेषणविशेष्ययोः विध्याश्रयणात् संनिकृष्टविध्यर्थे तत्संभवः, विप्रकृष्टविध्यर्थं च तदसंभवः अभ्युपगन्तव्यः इति युगपद्विरुद्धसंभवासंभवापत्तिः इति । अतः श्रुतेन प्रत्ययेन शुद्धयागं विधाय उपपदार्थविधानाय अश्रुतं प्रत्ययान्तरं कल्प्यम्, तेन उत्पत्तिशिष्टबलीयस्त्वं विशिष्टविध्यङ्गीकारप्रयोजनं न सिध्यति, उत्पत्तिशिष्टाया अपि आमिक्षायाः वाजिनवत् उत्पन्नशिष्टत्वात् विकल्पोपपत्तेः कर्मान्तरविधिः वाजिनवाक्ये न स्यात् । यद्यप्यत्र तद्धितचतुर्थीकृतबलाबलादपि भेदः सिध्येत् तथापि 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादौ उभयत्र तद्धिताविशेषे नोत्पत्तिबलीयस्त्वेन विना भेदः सिध्येदिति । **अत्रोच्यते ।** शुद्धस्य कर्मणः अनुष्ठानाशक्तेर्विधानासंभवात् संभवति विशिष्टविधिः । न चैवं 'अग्निहोत्रं जुहोति' इत्यादौ शुद्धकर्मविध्यसंभवः, विध्यनुपपत्त्या तत्रापि उत्पत्तिविधौ सामान्यतः इष्टभाव्यवत् द्रव्यसामान्ये कल्पितेऽपि तद्विशेषाकाङ्क्षायां वाक्यान्तरविहितविशेषलाभेन उपपन्नस्य प्रधानविधेः तद्विधानक्लेशाङ्गीकरणायोगात् । स्ववाक्योपात्ते तु विशेषे तद्विधानमात्रपर्यवसानोपपत्तेः ।

यत्तूक्तं संनिकृष्टविध्यसंभवनिमित्तो विप्रकृष्टार्थविधिरिति । तन्न । तस्य उपपदानर्थक्यप्रसक्तिहेतुकत्वात् । तदुक्तं '**प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च । अधिकत्वात् प्रवृत्तेश्च गुणरूपं विधीयते ॥**' इति (वा. १।४।१।१ पृ. ३२१–२२) । अत्र व्रीह्यादिवत् उद्भिदादेः गुणविधित्वं प्रयोजनवत्त्वं हेतुं वदन् विपर्ययपर्यवसानेन दृष्टान्तेऽपि व्रीहिविधौ अन्यथा तदुपादानानर्थक्यमेव हेतुं ब्रूते । किंच आघाराग्निहोत्राधिकरणे गुणस्य क्रियाद्वारैव विधेयतोक्तेः विप्रकृष्टविध्यर्थमपि संनिकृष्टविधिसंभव एव वाच्यः । स तु तत्प्राप्तौ विशिष्टरूपेण वाच्यः, अप्राप्तौ तु स्वरूपत एव इति न युगपद्विरुद्धसंनिकृष्टविप्रकृष्टविधिसंभवासंभवदोषः । न चानेकविशेष्यविशेषणविधानार्थं विध्यावृत्त्यापत्तिः । विशेषणमनुतिष्ठन्नेव हि विशिष्टमनुतिष्ठति नान्यथा, इति विशिष्टविध्यन्यथाऽनुपपत्त्या विशेषणविधिकल्पनात् । तदुक्तं पूर्णमास्यधिकरणे (२।२।३।३–८) 'विशिष्टायां भावनायामाधाय श्रौतं विधित्वं यदि अन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत ततः पुनरुच्चारणदोषं अवैदिकत्वापरत्वा लभेत । अयं पुनः सकृद् विधाय निवृत्तव्यापारः स्वार्थान्यथाऽनुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराणि आविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते' इति, 'विशेषणान्यनुपादाय विशिष्टे व्यापारासंभवात्' इति च (वा. पृ. ४८५) । ग्रहैकत्वाधिकरणेऽपि (३।१।७।१३–१५) 'पशौ पुनर्द्रव्यसंख्यालिङ्गानां भावनां यागं च प्रति उपादेयत्वात् अवैरूप्येण विशिष्टैकभावनाविधानात् अर्थापत्तिलभ्यविशेषणविध्यन्तराविर्भावाच्च

एकवाक्यत्वसिद्धिः ' इति ( वा. ३।१।७।१५ )। एवं विशिष्टविध्यन्यथाऽनुपपत्त्या विशेषणविधिषु कल्प्यमानेष्वपि यागादेर्धात्वर्थस्य विशेषणत्वेऽपि न तद्विषयो विशेषणविधिः, श्रुतेनैव तु प्रत्ययेन धात्वर्थानुरक्तैव भावना विधीयते, न शुद्धा शब्दान्तरन्यायात् ( २।२।१।१ )। तत्र हि उक्तं ' संबन्धिनिरूपणाधीननिरूपणः संबन्धीव ज्ञेयनिरूपणाधीननिरूपणं च ज्ञानमिव अवच्छेदकधात्वर्थनिरूपणाधीननिरूपणा भावना ' ( सु. पृ. ७०४ ) इति। अतो या धात्वर्थं विना निरूपयितुमेवाशक्या, सा सुतरां तद्विधिं विना शुद्धा प्रत्ययेनोक्ताऽपि विधातुमशक्या इति श्रुतेनैव विधिना धात्वर्थानुरक्ताया एव विधानात् न धात्वर्थरूपविशेषणविषयं विध्यन्तरं कल्प्यते इति । ग्रहैकत्वाधिकरणन्यायसुधायामपि धात्वर्थावच्छिन्नैव भावना श्रुतविधिविषयः इत्युक्तम् । इति विशिष्टविधिनिरूपणम् । बाल. पृ. ९४–९६.

* **विशिष्टविधिव्युत्पादनप्रयोजनं** उत्पत्तिशिष्टबलीयस्त्वं समर्थयितुं वैश्वदेवाधिकरणम् ( १।४।१०। १३–१६ )। अयमाशयः– सत्यपि विशिष्टविधौ गुणविशिष्टस्यापि कर्मणो विहितस्य विशिष्टविध्यन्यथाऽनुपपत्तिप्रसूतेन विधिना विशेष्यस्य अपि विशेषणवत् विधानात् शुद्धानुवादेनापि वाक्यान्तरस्थस्यापि गुणस्य वाक्यस्थवत् वाक्यीयत्वाविशेषात् विकल्पेन विधानोपपत्तेः उत्पत्तिशिष्टेनापि सोमेन उत्पन्नशिष्टस्य खनित्रादेः बाधायोगात् उद्भिदादिशब्दानां ज्योतिष्टोमे गुणविधित्वोपपत्तेः उत्पत्तिशिष्टबलीयस्त्वेन गुणविधित्वनिरासाय उत्पत्तिशिष्टबलीयस्त्वसिद्ध्यर्थं विशिष्टविधिव्युत्पादनं व्यर्थं इत्याशङ्क्य अनुष्ठानायोग्यत्वेन शुद्धस्य विधातुमशक्यत्वात् ' अग्निहोत्रं जुहोति ' इत्यादावपि सामान्यतो द्रव्यदेवताविशिष्टस्यैव विधेयत्वाभ्युपगमात् विशिष्टविधौ स्ववाक्यश्रुतद्रव्यादिविशेषविशिष्टस्यैव प्राप्तत्वेन अनुवादापत्तेः तादृशेन च नैराकाङ्क्ष्ये स्ववाक्यश्रुतगुणविरोधिगुणान्तरविध्यनुपपत्तेः विशिष्टविधौ सति उत्पत्तिशिष्टेन उत्पन्नशिष्टस्य बाधसिद्धिः इति विशिष्टविधिव्युत्पादनप्रयोजनं उत्पत्तिशिष्टबलीयस्त्वं समर्थयितुं वैश्वदेवाधिकरणम् । सु. पृ. ४७१ .

* **विशिष्टविधिसंदष्टन्यायः** । यदि ( सत्रादुदवसाय पृष्ठशमनीयेन यजेरन् ) साहित्यं असंभवत्प्रासंगिकं स्यात् ततो भवेत् विशिष्टविधिसंदष्टन्यायेन कथंचित् विशिष्टविधिगौरवापादकत्वमपि कर्तृत्वविधिं अङ्गीकृत्य तत्साहित्यविवक्षा। तत्तु एकपदोपादानेन नान्तरीयकतया प्राप्तमनुवदिष्यते इति न विवक्षितम् । कौ. ३।१।७।१४ पृ. १८४.

* **विशिष्टवृत्तेः** धर्मस्य विशेषणवृत्तित्वं नियतम्। यथा ' कुण्डली गच्छति ' इति कुण्डलमपि गच्छत्येव। के.

* **विशिष्टवैशिष्ट्यज्ञाने** विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुता । मणि. पृ. १५.

* **विशिष्टवैशिष्ट्यप्रत्यक्षे** ज्ञानस्य विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वम् । मणि. पृ. ३०.

* **विशिष्टवैशिष्ट्यबोधे** विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वं नाङ्गीक्रियते इति शिरोमणिः । मणि. पृ. २८.

* **विशिष्टवैशिष्ट्यरूपवाक्यार्थस्य** भानं चतुर्विधम्। ( १ ) विशिष्टस्य वैशिष्ट्यं यथा ' दण्डिमद्भूतलम् '। ( २ ) विशेष्ये विशेषणं तत्र च विशेषणान्तरं यथा ' नीलदण्डवान् पुरुषः ' । ( ३ ) एकविशिष्टे अपरवैशिष्ट्यं ( विशिष्टे वैशिष्ट्यं ) यथा ' दण्डी देवदत्तः कुण्डली '। ( ४ ) एकत्र द्वयं यथा ' दण्डी कुण्डली देवदत्तः '। मणि. पृ. ७९.

§ **' विशुद्धसत्त्वा विरलाः पुनः स्त्रियः ' इति न्यायः** । साहस्री. ९५०.

* **' विशेषः '** इति असाधारण्यमुच्यते । टुप्. ८।१।१।१. * विशेषः एकविषयत्वे सामान्यं बाधते । वा. ३।८।७।१७. * विशेषः सामान्यात् प्रबलः। सामिधेनीपाञ्चदश्यं सामान्यम् , साप्तदश्यं च वैश्यस्य विशेषः । तेन वैश्यस्य साप्तदश्येन पाञ्चदश्यबाधः। वि. ३।६।३. * विशेषः सामान्यात् बलवान् । टुप्. १०।५।२५।८९ पृ. १९८१. * विशेषः सामान्य-



प्राप्तौ सत्यां शक्यो विधातुं नान्यथा । वा. ३।२।८।२२ पृ. ७७९. * सामान्ये प्राप्ते **विशेषः** विधीयते । टुप्. १०।३।२।१५. * सामान्ये हि कश्चित् विशेषो भवत्यपि । न तु निःसामान्यः कश्चित् विशेष उपपद्यते । वा. ३।४।१४।४१ पृ. ९८२. * ' सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते ' । वा. ३।२।८।२२ पृ. ७७८. * **विशेषेण** सामान्यं बाध्यते । ' आहवनीये जुहोति ' इति सामान्यम्, ' पदे जुहोति ' इति विशेषः । पदेन आहवनीयस्य बाधः । वि. १०।८।८. * विशेषेण सामान्यं बाध्यते । किं कारणम्? स्वाश्रयेषु अव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसंभवात् , विशेषस्य च अन्यपरिच्छिन्नस्य एकावसायिनस्तदसंभवे विषयाभावप्रसङ्गात् उपदेशवैयर्थ्यं मा भूदिति । भा. १२।४।७।२०। स्वाश्रयेषु ब्राह्मणपिण्डेषु, अव्यावृत्तविषयस्य सामान्यस्य अपरिच्छिन्नविषयस्य, विशेषापेक्षया ततोऽन्यत्रापि वृत्तिसंभवात् । तस्मात् विशेषात् कौण्डिन्यात् अन्यत्रापि ब्राह्मणपिण्डेषु वृत्तिः संभवत्येव । तस्मात् सामान्यशास्त्रं कृतार्थमन्यस्मिन् विषये । विशेषस्य पुनः कौण्डिन्यादेः अन्येभ्यो ब्राह्मणपिण्डेभ्योऽवच्छिन्नस्य, तदवसायिनः तदसंभवे तस्मिन्नसंभवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं स्यात् । टुप्. * ' तत्र नाम **विशेषेण** सामान्यस्य निराक्रिया । प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते ॥ ' तुल्यप्रमाणको हि विशेषो बाधको भवति, न दुर्बलप्रमाणकः । वा. ३।६।२।९ पृ.१०३०, * बाध्यते च सामान्यं सावकाशं वा विशेषेण निरवकाशेन वा । ३।६।१६।४२ पृ. १०६३. * **विशेषस्य** सामान्यात्मकत्वे एव सामान्यविधेः विशेषविधौ पर्यवसानम्। कु. ३।७।६।१४. * **विशेषे** असति व्यवहाराभावः। भा. १०।७।३।११, * विशेषे गृह्यमाणे भेदो दृष्टः । ११।४।१२।४२. * **विशेषेषु** सर्वेषु सामान्यमन्तर्गतम्। वा. ३।२।८।२२ पृ. ७७९.

* **विशेषातिदेशे** सामान्यातिदेशस्य आवश्यकत्वम् । रहस्य. पृ. १३९.

* **विशेषातिदेशप्रतिज्ञाधिकरणम्** । ८।१।१।१. मीको. पृ. २४६ ' अतिदेशविशेषप्रतिपादनप्रतिज्ञा ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

§ **विशेषाऽभावे विशिष्टाभाव इति न्यायः** । अयमपि न्यायः पक्षतालक्षणे संघटते । तद्यथा– यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि प्रकृतन्यायेन पक्षता भवति । तत्र विशेषीभूतायाः सिद्धेरभावाद्विशेषणस्याप्यभावः । एवमन्यत्र । साहस्री. ५४७.

* **विशेषाभिधानशक्तिः** सामान्यं अनभिधायापि संभवति। शिंशपाशब्दो हि वृक्षत्व–पार्थिवत्व–द्रव्यत्व–सत्ता-प्रमेयत्व-ज्ञेयत्वानां न तावदभिधायकः अथ च तद्विशेषमेव शिंशपां अभिधत्ते । वा. ३।४।४।१३ पृ. ९४०.

* **विशेषाश्रयत्वं** संज्ञायाः । भा.२।२।५।१४.

* **विशेषतोदृष्टमनुमानं** स्वार्थं परार्थं चेति द्विविधम् । बाल. पृ. ८.

* **' विशेषदर्शनाच्च** पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ' । २।२।३।४ ॥ समप्राधान्यनिरासार्थं सूत्रम् । पूर्वेषां प्राकृतानां प्रयाजादीनां विकृतौ कृष्णलहोमादिविशेषदर्शनात् न सर्वेषां समप्राधान्यम् । सु. पृ. ७३६.

* **विशेषधर्माणां** श्येनीयानां इषौ अतिदेशः । ७।१।२।१३–१६. मीको. पृ. १९६ ' अतिदेशः इषौ श्येनीयविशेषधर्माणाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विशेषधर्मप्रकारकज्ञानेच्छाहेतुत्वं** सामान्यतो धर्मज्ञानस्य । मणि. पृ. २.

* **विशेषप्रतिषेधो** यथा– ' ब्राह्मणं न हन्यात् ' इति । बाल. पृ. ३३.

* **विशेषरूपः** निषिद्धविषयः अभ्यनुज्ञाविधिर्यथा– ' क्रीतराजकः अभोज्यान्नः ' इति निषेधे ' जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥ ' इति मनुः । अत्र निर्दोषत्वं फलम् । बाल. पृ. १६, * विशेषरूपः पर्युदस्तविषयः अभ्यनुज्ञाविधिः यथा ऐतरेयब्राह्मणे– ' अशितव्यं वपायां हुतायाम् ' इति । पृ. १७.

* **विशेषवचनेन** प्रत्यक्षश्रवणं परिसंख्यातुं न शक्यम् । **भा.** १०।५।१३।५४ वर्णकं २, * विशेषवचनेन विशेषविधानं प्रत्यक्षं भवति । सामान्यवचनेन विशेषविधानं परोक्षं भवति । प्रत्यक्षं परोक्षात् प्रबलम् । विशेषवचनं सामान्यवचनात् प्रबलम् । ३।१।५।११ पृ. ६७२.

**विशेषवाक्यादर्शने हि सामान्यवाक्यस्य नानाविधोऽर्थो व्याकर्तुं शक्यते इति न्यायः । साहस्री.** ५७०.

* **विशेषवाचिनोः** द्वयोः नास्ति बाध्यबाधकभावः । **टुप्.** ९।१।६।२५.

* **विशेषविधिना** च अविशेषविधिर्बाध्यते । **भा.** ३।६।३।१०.

* **विशेषविधिभेदाः** बाल-ग्रन्थस्थाः **मीको.** पृ. ३५४६ ' विधिः द्विविधः ' इति बिन्दौ बाल-ग्रन्थे द्रष्टव्याः ।

* **विशेषविधिविषयं** परिहाय सामान्यशास्त्राणि प्रवर्तन्ते । **वा.** ३।२।८।२१ पृ. ७७४.

* **विशेषविहितेन** सामान्यविहितं बाध्यते । तदपि विधेयभेदे विधेयैक्ये वेति द्वेधा । तत्र आद्योदाहरणं यथा– पदेन आहवनीयबाधः । द्वितीयोदाहरणं उपसंहारः । **बाल.** पृ. १३२.

* **विशेषवृत्ति** वाक्यं सामान्यवृत्ति पदम् । **भा.** ३।१।६।१२ पृ. ६८९.

* **विशेषशास्त्रेण** शीघ्रप्रवृत्तेन मन्थरप्रवृत्तस्य सामान्यशास्त्रस्य बाधः । **सोम.** १।३।१० वर्णकं १. * विशेषशास्त्रेण सामान्यशास्त्रबाधः । **सु.** पृ. ६७८. * **विशेषशास्त्रैः** सामान्यशास्त्राणि उपसंह्रियमाणानि । **वा.** ३।१।५।११ पृ. ६७२.

* **विशेषश्रुतिः** सामान्यश्रुतिं बाधते । **भा.** १।१।७।२५ पृ. ९९. * विशेषश्रुतिः सामान्यश्रुतेर्बलवती श्रुत्योर्विरोधे । **वा.** ३।३।७।१४ पृ. ८४०.

* **विशेषसंयोगबोधकश्रुतिः** सामानाधिकरण्यबोधकश्रुतेर्बलीयसी । **वा.** ३।३।७।१४ पृ. ८४०.

**विशेषसंनिधाने ह्याम्नातं सामान्यं तद्व्यतिरिक्ते सामान्ये वर्तते इति न्यायः ।** ब्राह्मणा आयाता वसिष्ठोऽप्यागत इतिवत् । यथा– ' चतुर्नाड्यस्त्वहल्यायां पञ्चाले पञ्चनाडिकाः । त्रिनाड्यः सर्वदेशेषु वर्जनीयाः प्रयत्नतः ॥ ' इति जगन्मोहनधृतनारदवचने अहल्यापाञ्चालौ देशविशेषौ । सर्वदेशशब्दोऽहल्यापाञ्चालव्यतिरिक्तदेशेषु वर्तते इति ज्योतिश्चिन्तामणिः । **साहस्री.** ५७१.

* **विशेषसमाख्या** सामान्यसमाख्या इत्येवं समाख्या द्विविधा । **बाल.** पृ. १२. * विशेषसमाख्या सामान्यसमाख्याया बलीयसी । **वा.** ३।३।७।१४ पृ. ८४१. * **विशेषसमाख्यया** सामान्यसमाख्याया बाधः । **सु.** ३।८ पृ. ६१.

* **विशेषणं** अनभिधाय तद्विशिष्टविशेष्याभिधानासंभवात् विशेषणस्य च विशेष्येण अत्यन्तासंबन्धः । **वा.** १।३।९।३० पृ. २९९. * विशेषणं अनुतिष्ठन्नेव हि विशिष्टमनुतिष्ठति नान्यथा । **बाल.** पृ. ९५. * विशेषणं कार्यान्वये अपेक्ष्यते । **सु.** पृ. ८९५. * विशेषणं तावत् सर्वत्र पूर्वतरमभिधीयते इति स्थितम् ( आकृत्यधिकरणे ) । **वा.** ३।१।६।१२ पृ. ६७३. * विशेषणं संभवे व्यभिचारे वा अर्थवत् । **कणिका.** पृ. ३६५. * अनन्तरसंबद्धं हि **विशेषणं** विशेष्टुं शक्नोति, न हि व्यवहितम् । **भा.** १०।३।११।४१, * असाधारणं च भवति विशेषणम् । विशेषणविशेष्यभावे च सामर्थ्यं भवति । समर्थानां च पदानां समासो भवति । २।३।१।१, * असाधारणं हि विशेषणं भवति । १।१।८।२७. * ' असाधारणभावेन सर्वत्रेष्टं विशेषणम् ' । **वा.** २।३।२।३ पृ. ५८६. * उद्दिश्यमानस्य च विशेषणमविवक्षितं भवति इति स्थितमेव ( ३।१।७।१४ इत्यत्र ) । **वा.** ६।४।६।२२, **टुप्.** ९।१।१।१. * उद्दिश्यमानत्वात् यागस्य स्वपदगतं पदान्तरगतं च विशेषणं अविवक्षितम् । **टुप्.** ७।१।१।२, * क्रियाप्राधान्ये तस्याः विधीयमानत्वात् विशेषणं विवक्षितम् । गुणभूतायां तु यत् प्रधानस्य विशेषणं तदविवक्षितम् । ६।४।६।२३. * न हि अविधाय विशेषणं



शक्यते विशिष्टो विधातुम् । **भा.** २।२।१२।२७ पृ. ५५९. * प्रधानस्य चोद्दिश्यमानस्य विशेषणमविवक्षितम् । **टुप्.** ७।१।१।२, * प्रधानभूते आख्याते विशेषणं विवक्षितम्, गुणभूते अविवक्षितम् । शब्दवृत्तेनाविधीयमानं परार्थमुच्चार्यते । तेनायमर्थः– यत्राख्यातार्थः स्वविधानार्थमुच्चार्यते, तत्र विवक्षितं विशेषणम् । यत्र परविधानार्थमुच्चार्यते यथा ' दध्ना जुहोति ' इति दधिसंबन्धविधानार्थं होमः उच्चार्यते, तत्र द्वितीयपदसंबन्धो नास्ति । वाक्यभेदप्रसङ्गात् । ६।४।६।२३ पृ. १४४४. * प्रयुज्यमानमपि हि विशेषणं अशक्तं न विशेष्यं विशिनष्टि । **भा.** १०।३।१७।६३. * ' प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम् । ' **वा.** २।२।३।३ पृ. ४७६, * प्रधानक्रिया हि विशेषणानि पिण्डीकरोति । १।४।२।३ पृ. ३३२. * **विशेषणस्य** अङ्गत्वं विना विशिष्टस्य अङ्गत्वं न सिध्यति । **सु.** पृ. ७६९. * विशेषणस्य पदान्तरेण संबन्धो न भवति, यथा ' राजपुरुषो गच्छति ' इति । **भा.** ९।१।९।३३ पृ. १६७६. * विशेषणस्य पूर्वतराभिधानम् । **वा.** १।३।९।३० पृ. २९८. * विशेषणस्य ' प्रातः, मध्यंदिने, सायं ' इत्येकत्वस्य विवक्षितत्वात् चातुर्मास्य-साकमेधीयानीकवत्यादीष्टयः सद्यस्काला एव ( इति राद्धान्तः ) । **भाट्ट.** ५।१।११. * उपलक्षणोपन्यासे **विशेषणस्य** दृष्टान्तता न युक्ता । **वा.** १।३।९।३३ पृ. ३१८, * ' एकखण्डेन शब्देन विशिष्टो यत्र गम्यते । विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते ॥ ' २।१।११।३६. * **विशेषणानां** अपि आख्यातेनैव अन्वयः इति मीमांसकाः । **रहस्य.** पृ. १२५. * **निमित्तविशेषणानां** अविवक्षा इति हविरार्त्यधिकरणे ( ६।४।९।२८–२९ ) सिद्धम् । **वृ.** ६।५।३।१३. * **विशेषणे** अप्रतीते विशेष्याप्रतीतिः । **वा.** १।३।९।३३ पृ. ३१८. * विशेषणे प्रतीते विशिष्टः प्रतीयते । **भा.** १।३।९।३३ पृ. ३१८.

**विशेषणाभावे विशिष्टाभाव इति न्यायः ।** इमं न्यायं नैयायिकाः पक्षतालक्षणे प्रकाशयन्ति । तद्यथा —' सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता ' इति लक्षणे सति प्रकृतन्यायेन सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव । तत्र सिषाधयिषाविरहात्मकविशेषणाभावात् प्रतिबन्धकीभूतायाः विशेषायाः सिद्धेरप्यभावः, एवमन्यत्र । **साहस्री.** ५४६.

* **विशेषणज्ञानं** ( विशिष्टज्ञाने ) कारणं न्यायमते, न हि अप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्ति । यदि च आकृतिविशिष्टा व्यक्तिः प्रतीयेत पूर्वतरं विशेषणमवगम्येत । प्रतीते विशेषणे विशिष्टः प्रतीयते । **भा.** १।३।९।३३.

* **विशेषणतादर्थ्यविचारः ।** इह क्वचित् विशिष्टस्य तादर्थ्ये विशेषणस्यापि तादर्थ्यं भवति, यथा ' निर्मन्थ्येनेष्टकाः पचन्ति ' इति मन्थनस्यापि पाकाङ्गत्वम् । यथा वा ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इति ऐन्द्र्याः न केवलं उपस्थानाङ्गतैव, किन्तु गार्हपत्याङ्गत्वमपि व्यवहृतम् । एवं ' दशापवित्रेण ग्रहं संमार्ष्टि ' इत्यादावपि ॥ क्वचित् विशिष्टस्य तादर्थ्येऽपि न विशेषणस्य तादर्थ्यं संमतम्, यथा अभिक्रमणस्य प्रयाजद्रव्यदेवतामन्त्राणां च प्रयाजमात्राङ्गत्वम्, न दर्शाङ्गत्वम् । एवं अवघाताङ्गमन्त्रोलूखलमुसलतत्प्रोक्षणादेः अवघातमात्राङ्गत्वम्, निर्वापाङ्गमन्त्रशूर्पादेश्च निर्वापमात्राङ्गत्वम्, न दर्शाङ्गत्वमिति ॥ तत्र किं वैषम्यबीजम् ? तथा इह क्वचित् विशिष्टं प्रति तादर्थ्ये विशेषणं प्रत्यपि तादर्थ्यमिष्यते, यथा अवघातस्य दर्शापूर्वसाधनीभूतेषु व्रीहिषु विनियोगात् दर्शापूर्वाङ्गताऽपि । क्वचित्तु विशिष्टं प्रत्यपि तादर्थ्ये विशेषणं प्रति न तादर्थ्यमिष्यते, यथा अर्थज्ञानं प्रति स्वाध्यायस्य अध्ययनस्य वा तादर्थ्येऽपि न विशेषणमर्थकर्म प्रति तादर्थ्यमिष्यते । एवं ' अष्टवर्षं ब्राह्मणमुपनयीत ' ' तप्ते पयसि दध्यानयति ' इति उपनयनदध्यानयनयोः क्रमेण अष्टवर्षविशिष्टं ब्राह्मणं प्रति, तापविशिष्टं पयश्च प्रति तादर्थ्येऽपि न विशेषणीभूतानि अष्टसंख्यानि वर्षाणि प्रति उपनयनस्य, तापं प्रति च दध्यानयनस्य तादर्थ्यमिष्यते । तत्रापि किं वैषम्यबीजमिति । अत्र ब्रूमः । ऐन्द्री–दशापवित्रयोः वाक्यीयसंयोगात् गार्हपत्य–ग्रहार्थत्वं यथाक्रममभि-

मतम् । एवं सोमस्य यागस्वरूपे आनर्थक्यात् अपूर्वसाधनांशे विधानात् अपूर्वशेषत्वं वाक्यात् । एवं ‘ सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ’ इत्यादौ वाक्यसंयोगात् द्रव्यस्य फलशेषत्वम् । अत एव सोमादीनां फलभावनेतिकर्तव्यतात्वमुक्तं सप्तमाद्यादौ । सोमस्य तु फलभावनाकरणत्वं आघाराग्निहोत्राधिकरणे उक्तम् । न च करणत्वमितिकर्तव्यतात्वं चैकस्य विरुद्धम्, करणस्यैव सतो यागोपकारकतया इतिकर्तव्यतात्वात् । तदुक्तं ‘ नहि तत् करणं लोके वेदे वा किञ्चिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ ’ इति । ( श्लोवा. संबन्धाक्षेपवादे ३७ ) । तस्मात् ऐन्द्री–दशापवित्र–सोमादीनां उपस्थानादिकरणकगार्हपत्यादिकर्मकभावनेतिकर्तव्यतात्वात् द्रव्यभूतगार्हपत्याद्यर्थताऽपि वाक्यात् युक्ता । अभिक्रमण– प्रयाजद्रव्य– देवता–मन्त्राणां तु प्रयाजकरणकभावनामात्रेतिकर्तव्यतात्वं अवान्तरप्रकरणादिभिः, न वाक्यीयः संयोगो दर्शादिभिः अस्ति दर्शेतिकर्तव्यताऽऽकाङ्क्षात्मकेन तु प्रकरणेन प्रयाजमात्रस्य ग्रहणं इति न विशिष्टस्य तत्र विनियोगे प्रमाणमस्ति इति न विशेषणानां दर्शाङ्गत्वं इति वैषम्यम् । एवमेव अवघातादेः दर्शप्रकरणात् तदपूर्वीयव्रीह्यादौ विनियोगात् तदपूर्वाङ्गता युक्ता । अध्ययनस्य तु अर्थज्ञानाङ्गत्वेऽपि अर्थभूतकर्मप्रकरणाभावात् न तदङ्गता इष्टा । तापाष्टवर्षादेस्तु ग्रहगार्हपत्यवत् क्वचित् विनियोगाभावेन वाक्यीयसंयोगे सत्यपि न तदङ्गत्वं उपनयनदध्यानयनयोः इति ब्राह्मणत्वजातिवत् उद्देश्यताऽवच्छेदकतैव, न तु उद्देश्यतायै अर्थापत्तिः प्रभवति इति वैषम्यमिति ।

ननु एवं उद्देश्यविशेषणविवक्षायां वाक्यभेदः स्यात् । सत्यम्, उद्देश्यतादशायां अविवक्षितमेव विशेषणम्, अवान्तरवाक्ये तु ‘ तमध्यापयीत ’ इति ‘ सा वैश्वदेव्यामिक्षा ’ इति तच्छब्देन उपनयनसंस्कृताष्टवर्षब्राह्मणस्य, दध्यानयनसंस्कृततप्तपयसश्च परामर्शेन उपादेयत्वात् विशेषणविवक्षासिद्धिः । एवं ‘ यस्य पिता पितामहो वा न सोमं पिबेत् स व्रात्यः ’ इत्यत्रापि तच्छब्देनैकेन उभयपरामर्शात् । न च अष्टवर्षब्राह्मणतप्तपयःप्रभृतिवत् उभयविशेषणसमुच्चयः, एकशब्दोपादाने अपि वैकल्पिकोभयपरामर्शात् । एवं ‘ कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् ’ इत्यत्र कर्तृविशेषगामित्वात् इति वार्तिकात् ( ३।३।१२।३३ पृ. ८८० ) कर्तृविध्यवगतेः, प्राप्ते च कर्मणि भिन्नपदोपात्तानेककर्तृविशेषणविधौ वाक्यभेदात् तच्छब्देनैव उभयपरामर्शात् उभयविधिः इति । **इति विशेषणतादर्थ्यविचारः** । **बाल.** पृ. १०३–१०४.

* स्वानुरूपबुद्धिजनकत्वं **विशेषणत्वम्** । **सु.** पृ. १४२१.

* अप्रतीतस्य **विशेषणत्वासंभवः** । **वा.** १।३।९।३३ पृ. ३१८.

* **विशेषणत्वप्रसिद्धिः** विरोधिव्यावृत्त्या । **सु.** पृ. १३०३.

* **विशेषणपदे** सामानाधिकरण्यं विशेष्यसमानलिङ्गरूपत्वानुरोधकृतसमानविभक्तिविशेषकत्वम् । अत्र लिङ्गनियमाननुशिष्टविभक्त्यन्तत्वं विवक्षणीयम् । तेन ‘ देवदत्तो मित्रं ’ इत्यादौ न व्यभिचारः । **मणि.** पृ. १५०–१५१.

* **विशेषणप्रत्ययाच्च** सहचरिते विशिष्टे प्रत्ययः । **भा.** ७।२।१।१३.

* नहि अत्र **विशेषणफलमस्ति** ‘ अग्निरुष्णः ’ इति । **वा.** २।३।१।२ पृ. ५७७. * ‘ **विशेषणफले** चास्मिन् वाक्यभेदो भविष्यति ’ इति **न्यायेन** कर्मविधानेऽपि तात्पर्यस्य फलेऽवतारात् गुणविशिष्टत्वानुपपत्तिः ( इत्याशङ्का ) । **सु.** पृ. ८६९.

* ‘ **विशेषणविधिस्त्वन्यत्र** गृह्णाति विशेषणम् । ’ **वा.** १।४।२।३ पृ. ३२९.

* **विशेषणविभक्तेः** साधुत्वार्थत्वं इति केचित् । **मणि.** पृ. १५२.

* **विशेषणविशेषणस्यापि** सुतरां विधेरुपपत्तिः, अष्टाकपालादिवाक्ये क्रियाविशेषण–पुरोडाशविशेषण–कपालविशेषणभूतस्य अष्टत्वादेरपि विधिप्रतीतेः । **सु.** पृ. १०१२.



* **विशेषणविशेष्ययोः** विशिष्टप्रत्यये जाते किं शब्देनोपात्तं किमन्येनेति परीक्षायां यत्र यत्र विशेष्यमन्यतः सिध्यति तत्र विशेषणे शब्दव्यापारः, यत्र विशेषणमन्यतो लभ्यते तत्र विशेष्ये । **वा.** ३।४।४।१३ पृ. ९१६.

* **विशेषणविशेष्यता** सामानाधिकरण्यनिबन्धना अरुणैकहायन्यादौ । **सु.** पृ. ४०९.

* **विशेषणविशेष्यत्वादिन्यायः** । सूत्राक्षराणि च ‘ द्व्येकयोः ’ इत्येवमादीनि एतदपेक्ष्य नियम्यमानानि विशेषण०न्यायानुगतानि भविष्यन्ति । **वा.** ३।४।४।१३ पृ. ९२६.

* **विशेषणविशेष्यन्यायः** **मीको.** पृ. ३०३० ‘ भावनातः प्राप्तत्वात्० ’ इति न्याये द्रष्टव्यः । **सु.** पृ. १४२६.

* **विशेषणविशेष्यभावः** अवच्छेद्यावच्छेदकत्वरूपः । **सु.** पृ. १४२१. * विशेषणविशेष्यभावः पदेऽपि प्रकृतिप्रत्यययोर्भवति ‘ अश्वः ’ इति । वाक्ये पदयोरपि भवति ‘ शुक्लः पटः ’ इति । वाक्यान्तरस्थयोरपि भवति ‘आर्षेयं वृणीते’ इति । **टुप्.** ६।८।१०।३७. * विशेषणविशेष्यभावः । वैयधिकरण्ये अत्यन्तभिन्नार्थत्वात् विशेषणविशेष्यत्वायोगमाशङ्क्य अत्यन्तभिन्नस्य विशेष्ये स्वानुरूपबुद्धिजनकत्वरूपविशेषणत्वायोगेऽपि क्रियाकारकयोः शेषशेषिणोश्च अवच्छेद्यावच्छेदकत्वाख्यविशेषणविशेष्यत्वोपपत्तिः । **सु.** पृ. १४२१, * विशेषणविशेष्यभावः समानविभक्त्यन्तानां सामानाधिकरण्येन, भिन्नविभक्त्यन्तानां च वैयधिकरण्येन । पृ. १४२१. * विशेषणविशेष्यभावः सामानाधिकरण्येन वा भवति समानविभक्त्यन्तानाम्, वैयधिकरण्येन वा क्रियाकारकरूपः शेषशेषिरूपश्च । **वा.** ३।४।४।१३ पृ. ९२३. * **विशेषणविशेष्यभावात्** एकार्थतायां एकवाक्यत्वे मन्त्रैक्यं उपपद्यते । **भा.** ३।२।१०।२७, * **विशेषणविशेष्यभावे** सामर्थ्यं भवति । असाधारणं च भवति विशेषणम् । २।३।१।१ पृ. ५७२.

* **विशेषणविषयत्वं** विना विशिष्टविषयत्वायोगः । **सु.** पृ. १४००.

* **विशेषणसंबन्धः** उपसर्जनस्य न युज्यते । **वा.** ३।४।४।१३ पृ. ९३७.

* **विशेषणसंबन्धार्थं** आवृत्तिर्दृष्टा । ‘ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् ’ ‘ दध्ना जुहोति ’ ‘ पयसा जुहोति’ ‘ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति’ इत्यादिषु । **वा.** २।२।१।१ पृ. ४६३.

* ‘ संभवव्यभिचाराभ्यां स्याद् **विशेषणसंभवः** । ’ **वा.** १।३।८।२४ पृ. २६४.

* **विशेष्यं** च बुद्धौ संनिहितं भवति, न विशेषणम् । तत् विशेष्यं विशेष्य निवर्तते । कथं ज्ञायते ? विशेष्यानुबन्धसंयोगात् । यथा– राजपुरुषः पूज्यः इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा । **भा.** ८।१।१७।३४. * ‘ विशेष्यं नाभिधा गच्छेत् क्षीणबुद्धिर्विशेषणे । ’ आत्मानात्मसु सत्तासामान्ययोगेन प्रयुज्यमानः सच्छब्दः सत्तासामान्यस्यैव वाचकः ‘विशेष्यं०’ इति न्यायात् । ‘ सन् घटः ’ इत्यादिप्रयोगे तु घटशब्दादिसामानाधिकरण्यात् धर्मिपर्यन्तता । **परिमल.** ३।३।८।१६–१७ ब्रसू. वर्णकं २. * ‘विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ’ इति न्यायेन संस्थाविशेषविशिष्टेषु क्रतुषु उक्थ्यादिशब्दप्रयोगो लाक्षणिकः । **रसायनम्.** पृ. १९५. * **विशेष्यस्य** अनेकविशेषणवशीकारसामर्थ्यम् । **सु.** पृ. ११९०. * **विशेष्ये** एव कार्यं प्रतीयते, न विशेषणे । यथा ‘ राजपुरुष आनीयताम् ’ इत्युक्ते पुरुष आनीयते न राजा । यथा च ‘ मृष्टं भुङ्क्ते देवदत्तः ’ इत्युक्ते न शाकं सूपो वा प्रतीयते । यदेव प्रधानं तत् प्रतीयते । **भा.** ७।४।३।१७.

**विशेष्ये विशेषणं तत्रापि च विशेषणमिति न्यायः** । यथा भूतलं जलवद्घटवत् इत्यादौ भूतले घटो विशेषणम्, स च भूतलांशे विशेषणमिति रीत्या यत्र भासते तत्रास्य प्रवृत्तिरिति । **साहस्री.** ५०४.

* ‘ विशेष्ये विशेषणं तत्र च विशेषणान्तरम् ’ इति रीत्या विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वाभावः । **मणि.** पृ. १५.

* **विशेष्यत्वं** प्राधान्यम्, न शेषित्वम् । **रत्नाकरः.** पृ. ३४७.

* **विशेष्यप्रकारभेदे**ऽपि तदनुगमकधर्मैक्ये न तदानन्त्यम् ( विशेष्यप्रकारभावानन्त्यम् ) । नहि श्वेत-रक्तादिप्रकारभेदे घटपटादिरूपविशेष्यभेदे वा 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तिर्भिद्यते । **रहस्य.** पृ. ४१.

* 'विशेषणादिना नेष्टो विशेष्यप्रत्ययोद्भवः ।' **वा.** ३।१।६।१२ पृ. ६७५.

* **विश्लेषः** गीत्युपायः अन्यतमः । **भा.** ९।२।७।२९.

* **विश्वे देवाः** नाम कश्चित् वसुरुद्रादिवत् गणो वा सर्वे देवा एव विश्वे देवा इति वा इति चिन्तायां सूत्रं भाष्यं च—'न वैश्वदेवो हि' १२।१।१२।२६॥ अस्ति सोमे वैश्वदेवो ग्रहयजिः । तत्र सर्वदेवता इज्यन्ते । 'स्याद्वा व्यपदेशात्' । २७ ॥ न तत्र सर्वा देवता इज्यन्ते । कथं ज्ञायते ? व्यपदेशात् । व्यपदेशो भवति 'अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृहस्पतिर्विश्वैर्देवैः' इति वस्वादिभ्योऽर्थान्तरभूतान् विश्वान् देवान् दर्शयति । यदि च सर्वे देवा उच्येरन् विश्वदेवशब्देन तेभ्योऽर्थान्तरभूता न स्युः । तस्मात् विश्वदेवशब्दो गणवचन एव । २७ ॥ 'न गुणार्थत्वात्' । २८ ॥ नैतदेवम् । कस्मात् गुणार्थत्वात् । नानेन व्यपदेशेन गणो वैश्वदेवः शक्यः कल्पयितुम् । गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रशंसार्थः । अग्न्यादयो वस्वादिभिः केवलैः समेताः, बृहस्पतिस्तु सर्वैः देवैः, तैश्चान्यैश्चेति । यथा सेनापतिर्भृत्यबलेन सहागतः, समाहर्ता निजेन बलेन, राजा तु सर्वैर्बलैः तैश्चान्यैश्चेति । अपि च वैश्वदेवो गणः कल्प्यः । सर्वे तु देवाः शब्दादेवावगम्यन्ते । २८ ॥

**सोम**— वस्तुतस्तु नैवमत्र अर्थवर्णनं युक्तम् । 'देवासुराः संयत्ता आसन्, ते देवा मिथो विप्रिया आसन्, तेऽन्योन्यस्मै ज्यैष्ठ्यमातिष्ठमानाः पञ्चधा व्यक्रामन्' इति देवानामन्योन्यस्पर्धया पृथक्पृथक्व्यूहकल्पनामुपक्रम्य अग्निर्वसुभिः इत्यादेः तद्विवरणरूपतया प्रवृत्तत्वेन तत्र 'विश्वैर्देवैः इति तैश्चान्यैश्च सर्वैः देवैः' इत्यर्थवर्णनानुपपत्तेः । तस्मात् विशेषतः परिगणितवस्वादिव्यतिरिक्तैः सर्वैर्देवैः इत्येवार्थवर्णनं युक्तम् । एवं च पुरूरवार्द्रवप्रभृतिष्वपि यौगिक एव विश्वदेवशब्दः कथंचिदुपपादनीयः । अस्तु वा गणविशेषे रूढिकल्पनया वैश्वदेवग्रहे तद्गणविशेषस्यैव देवतात्वम् ।

**भाट्ट**— यत्तु अत्र सूत्रकारादिभिः अङ्गीकृत्यैव दीक्षणीयायाः प्रधानमात्रार्थत्वं प्रधानदेवतायां वैश्वदेवग्रहीयायां विश्वशब्दस्य सर्ववाचित्वात् सर्वेषामेव देवानां देवतात्वप्रतीतेः अङ्गदेवतानामपि तत्परिग्रहेण परिग्रहात् प्रसङ्गोपपत्तिः इति समाहितम्, तत् विश्वदेवशब्दस्य 'आदित्यविश्वसवः' इति त्रिकाण्डीस्मरणेन गणविशेषे रूढत्वावगतेः, दीक्षणीयाया देवतापरिग्रहार्थत्वपक्षे प्रधानमात्रार्थत्वे प्रमाणाभावाच्च उपेक्षितम् ।

सोमे वैश्वदेवशस्त्रे ये मन्त्रा उक्ताः तेषु सविता द्यावापृथिव्यौ ऋभवः इत्यादय एव देवताः । यद्यपि वैश्वदेवं इति सूक्तमपि पृथगुक्तं तथापि तदीयासु ऋक्षु वरुणो मित्रः अग्निः उषाः अश्विनौ इत्यादय एव देवताः स्तुताः । अत एव सूक्तविनियोगे 'विश्वेभ्यो देवेभ्य इदं' इत्यादिरेव त्यागादिमन्त्रः प्रयुज्यते तथापि ऋग्विनियोगपक्षे वरुणादिभ्यः पृथक् पृथक् देवताभ्य एव त्यागादिमन्त्रः प्रयुज्यते । तथा च नास्ति कश्चित् वैश्वदेवो नाम गणः इत्येव शास्त्रीयोऽर्थः । त्रिकाण्डीस्मरणं तु लोकानुसारित्वात् लोकेषु वैश्वदेवगणस्य प्रसिद्धत्वात् युक्तमेव । शास्त्रीयस्तु सिद्धान्तः सूत्रभाष्यकारादिभिरुक्तः इति **केवलानन्दः** ।

* **विश्वजित्** । विश्वजिदयं सत्रफलार्थः, सत्रापरिसमाप्तिदोषोपघाताय वा न तु स्वर्गफलाय, अश्रवणात् ( साम्युत्थाने ) । **टुप्.** ६।५।७।२५. * विश्वजित् अष्टरात्रीयं प्रथममहः, एकाहविश्वजितो विकृतिः । **वि.** १२।३।१.

※ **विश्वजित्स्वप्रवृत्ते भावः कर्मणि स्यात् । ६।४।११।३२ ॥**

सत्रेण यक्ष्ये इति संकल्प्य यः सत्रे न प्रवर्तते तस्मिन् सत्रानुष्ठाने पुरुषे अप्रवृत्ते सति तस्य विश्वजित् यागः



स्यात् तेन सत्रफललाभाय विश्वजित् अतिरात्रः सर्वपृष्ठः सर्ववेदसदक्षिणः कर्तव्यः । तस्य कर्मणि विश्वजिति कृते भावः सत्रफलस्य स्यात् । स सत्रफलं लभेत । तुशब्देन उत्सूत्रपूर्वपक्षव्यावृत्तिः ।

**निष्क्रयवादाच्च । ३३ ॥**

'सत्रेण यक्ष्ये' इति संकल्प्य सत्रं न करोति तस्य विश्वजित् कर्तव्यो भवति इति सिद्धान्ते हेत्वन्तरमाह । चकारो हेतुसमुच्चये । 'सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानं निष्क्रीणीते' इति विश्वजित् निष्क्रयः इति निष्क्रयवादो भवति । ततश्च विश्वजिता अनुष्ठितेन सत्रफललाभस्तस्य भवति । तस्मात् य आगूर्य अशक्त्या न सत्रेण यजेत तस्य विश्वजित् इति **सिद्धान्तः । के.**

* विश्वजित् नाम क्रतुः ज्योतिष्टोमविकारः अष्टरात्रादौ, स्वतन्त्रश्च एकाहः । **वि.** ६।७।८, ७।३।३. * विश्वजित् ( यागः ) विश्वजयात् । **भा.** १।४।१।२. * विश्वजित् सत्रिणामन्यतमस्य सोमक्रयात् प्राक् पश्चाद्वा अनुष्ठानं परित्यज्य उत्तिष्ठासोः कर्तव्यो भवति । सोमादिद्रव्यं स्वीयं तु तेन विभजनीयं न वा । तत्र सोमक्रयोत्तरमुत्थाने विभज्यगृहीतेनैव विश्वजित् स्यात् सोमक्रयात् प्रागुत्थाने तु नूतनेन क्रीतेन विश्वजित् स्यात् । **वि.** ६।५।७. * विश्वजित् सर्वपृष्ठः अग्निष्टोमेतरसंस्थः । **संकर्ष.** १।३।१३. * 'विश्वजित् सर्वपृष्ठः' इति श्रूयते । तत्र माध्यंदिनपवमानमैत्रावरुणसाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि किंवा यथावचनं देशव्यवस्था इति संशयः । उत्तरा कोटिः सिद्धान्तः । वचनं चेत्थम्— 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि । वैरूपं होतुः पृष्ठम्, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम' इति । **वि.** १०।६।५. * विश्वजित् सर्वपृष्ठः । तत्र एकस्यैव पृष्ठदेशे निवेशः अन्येषां परिसामकार्ये । 'पवमाने रथंतरं करोति, आर्भवे बृहत् । मध्ये इतराणि, वैरूपं होतुः पृष्ठम्, वैराजं ब्रह्मसाम, शाक्करं मैत्रावरुणसाम, रैवतमच्छावाकसाम' । **भा.** १०।६।५।१४. * 'विश्वजित् सर्वपृष्ठो भवति' अनेन षडहगतषट्पृष्ठानि रथंतर–बृहत्–वैरूप–वैराज–शाक्वर–रैवतसामनिष्पन्नानि अतिदिश्यन्ते, न तु सर्वशब्दः ज्योतिष्टोमिकमाहेन्द्रादीनां चतुर्णाम्, न वा ज्योतिष्टोमे विकल्पितयोः रथंतर–बृहत्–पृष्ठयोः ग्राहकः । **वि.** ७।३।३, * 'विश्वजित् सर्वपृष्ठः'। षडपि पृष्ठसामानि रथतरादीनि पृष्ठस्तोत्रदेशे माध्यंदिनपवमानमैत्रावरुणसाम्नोरन्तरालरूपे कार्याणि इति पक्षः । यथावचनं देशव्यवस्था– 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्ये इतराणि । वैरूपं होतुः पृष्ठम्, वैराजं ब्रह्मसाम, शाक्करं मैत्रावरुणसाम, रैवतमच्छावाकसाम' इति सिद्धान्तः । १०।६।५. * '**विश्वजिता** यजेत' अत्र न्यूनस्य अधिकार्थविषयत्वे अध्याहारदोषः । स्वर्गकामपदस्य अध्याहारः । **बाल.** पृ. ३. * 'विश्वजिता यजेत' अत्र फलं नास्ति इति चेत्, न, भाव्याकाङ्क्षाया अनिवृत्तत्वात् किंचित् फलं कल्पनीयमेव पुरुषप्रवृत्तिसिद्ध्यर्थम् । **वि.** ४।३।५, * 'विश्वजिता यजेत' अत्र यत् यत्किंचिदेकं फलं कल्पनीयम्, विशेषे मानाभावात् इति चेन्न, दुःखमिश्रितत्वाभावात् निरतिशयत्वाच्च स्वर्ग एव फलं कल्पनीयम् । ४।३।७, * 'विश्वजिता यजेत' अत्र यत् फलं कल्पनीयं तत् पशुपुत्रादिकं सर्वमिष्टं कल्पनीयमिति चेन्न, लाघवात् एकमेव कल्पनीयम् । ४।३।६. * 'विश्वजिता यजेत' अत्र सौमिको विध्यन्तः न दार्शपौर्णमासिकः । **भा.** ८।१।९।१६. * 'विश्वजिता यजेत' अयं अध्याहारेण विधिः । स्वर्गकामपदस्याध्याहारः । **बाल.** पृ. २६. * 'विश्वजिता यजेत' इत्यत्र फलस्याश्रवणात् फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलम् 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' ( ४।३।७।१५ ) । **मीन्या.** * 'विश्वजिता यजेत' इति विश्वजिच्छब्दः कर्मनामधेयम् । १।४।१।१–२. * **विश्वजिति** अन्यथाऽनुपपत्त्या फलकल्पना । **टुप्.** ७।१।१।२. * विश्वजिति अपि सर्वस्वदाने प्रतिषिद्धत्वात् अश्वादीनां अदानमिति वक्ष्यति ('अकार्यत्वाच्च.' ६।७।३।४ इत्यत्र ) । **वा.** ३।४।१०।२८ पृ. ९६१.

**विश्वजिति अश्वादयः केसरिणो न देयाः ॥**

**अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् । ६।७।३।४॥**

**भाष्यम्**— विश्वजित्येव संदेहः, किमश्वादयो देया नेति । किं प्राप्तम् ? सर्वस्य विहितत्वात् देया अश्वा इति । **एवं प्राप्ते, ब्रूमः** । यस्य च दानमकार्यं तच्च न देयम्, यथा अश्वानाम् । तेषां हि दानमकार्यम् । एष हि विशेषः अश्वानां अन्येभ्यो द्रव्येभ्यः यदेषां दानं प्रतिषिध्यते ‘ न केसरिणो ददाति ’ ‘ नोभयतोदतः प्रतिगृह्णाति ’ इति विश्वजित्येव समाम्नायते । तस्मान्नाश्वा देया इति ।

**सुधा**-- ( पृ. १४९२ ) विश्वजित्प्रकरणाम्नातस्यापि अश्वदाननिषेधस्य असंभवत्क्रत्वर्थत्वप्रतिग्रहनिषेधसाहचर्यात् धर्मत्वभ्रान्त्यादिना च अवैधे अपि अश्वदाने निषेधोपपत्तेः विध्यधीनात्मलाभत्वाभावात् सामान्यविधिना सह विकल्पायोगं मत्वा ‘ अश्वानां दानमकार्यम्, एष हि विशेषोऽश्वानां अन्येभ्यो द्रव्येभ्यः, यदेषां दानं निषिध्यते ’ इति भाष्येण । अश्वानां निषिद्धत्वात् अदानं वक्ष्यति । तत्रत्यभाष्ये अश्वशब्दस्य केसरिमात्रोपलक्षणार्थत्वम् ।

**शा**— विश्वजित्येव ‘ न केसरिणो ददाति ’ इति श्रुतम्, तत्र केसरिणो दानं न इति विहितप्रतिषिद्धत्वात् पक्षे दानम् । **उच्यते** । पर्युदासस्तु अयं ‘ अपि तु वाक्यशेषः स्यात्० ’ ( १०।८।१।४ ) इत्यनेन न्यायेन । अयं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः ।

**सोम**— इह स्वत्वादस्तु दानं इति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**--अश्वादिदानस्य अकर्तव्यत्वात् तत इतरधनात् अश्वादीनां पुनर्विशेषः स्यात् इति ।

**वि**-- ‘दानं केसरिणां नो वा, विहितप्रतिषेधतः । विकल्पः, पर्युदासोऽयं येयजामहनीतितः ॥ ’

**भाट्ट**-- अश्वादयः केसरिणोऽपि सर्वस्वे न देयाः ‘ न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति ’ इति तेषां पर्युदासात् । **यद्यपि** च अनारभ्याधीतेन अनेन रागतः प्राप्तस्यैव मित्रादिभ्योऽश्वदानस्य, ‘ यथाश्रद्धं दक्षिणां ददाति ’ इत्यादौ अनियमेन विहितस्यापि च अश्वविषये ऐच्छिकस्य दानस्य प्रतिषेध एव क्रियते, **तथापि** विश्वजित्प्रकरणस्थेन अनेन पर्युदास एव । सर्वस्वपदेन नियमत एव सर्वस्वदानस्य विहितत्वेन अश्वांशेऽपि तत्प्रवृत्तेर्वैधतया निषेधपक्षे विकल्पस्यापरिहार्यत्वात् । आवश्यकी चेयं वाक्यद्वयकल्पना । इतरथा अश्वप्रतिग्रहेष्ट्यधिकरणादौ ( ३।६।१५ ) लौकिकाश्वदाननिषेधकल्पनानुपपत्तेः । ‘नोभयतोदतः प्रतिगृह्णाति’ इत्यत्र तु पुरुषार्थः प्रतिषेधः, दानलक्षणया वा पर्युदासः इत्यपि ध्येयम् ।

वस्तुतस्तु प्राकृतस्यैव नैमित्तिकस्य सर्वस्वदानस्य अनैमित्तिकत्वार्थं विधेयत्वस्य वक्ष्यमाणत्वात् प्रकृतौ च दक्षिणार्थभागे इच्छयैव अश्वानां प्रसक्तेः अनारभ्याधीतेनैव तन्निषेधोपपत्तौ न विश्वजित्प्रकरणे वाक्यान्तरकल्पनमपि । अत एव ज्योतिष्टोमतद्विकारानङ्गे ( राङ्गे ? ) सर्वस्वदाने अश्वानां दानमिष्टमेव । ( इदमत्र चिन्त्यम्, ज्योतिष्टोमे सर्वस्वदानपक्षे सर्वस्वं द्वादशशतगवाश्वादिघटितदक्षिणादिकं इत्यस्य अग्रे स्थापयिष्यमाणत्वात् नाश्वस्य सर्वस्वघटितत्वं आवश्यकमिति । )

**मण्डन**-- ‘ नाश्वा देयाः पर्युदासात् । ’

**शंकर**-- ‘ न देयः केसरी तथा । ’

* विश्वजिति अष्टाहस्य प्रथमाहरूपे वत्सत्वक् परिधानार्था चोदकप्राप्ता । अभिप्लवषडहे अभिजिति च वासः प्राप्तम्, तत्रोभयोः समुच्चयः कर्तव्यः । वाससः कौपीनयोग्यत्वात् त्वचश्च प्रावरणयोग्यत्वात् । इति विश्वजिति प्रथमाहेऽपि त्वचश्च वाससश्चोभयोर्ग्रहणम् । **वि**. १२।३।१, * विश्वजिति अष्टरात्रान्तर्गतप्रथमाहरूपे सर्वस्वदानं इति भाष्यम्, द्वादशशतं देयं इति वार्तिकम् । ६।७।८. * विश्वजिति अष्टरात्रगतेऽपि सर्वस्वदानम् । ६।७।८।१४-१७. **मीको**. पृ. ७५१ ‘ अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * विश्वजिति अष्टरात्रगते वत्सत्वगहतवाससोः समुच्चयः । १२।३।१।१-२. **मीको**. पृ. ७५१ ‘ अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः समुच्चयः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * विश्वजिति एकाहे वत्सत्वक् परिधानार्थमाम्नाता ‘ अवभृथादुदेत्य वत्सत्वचं परिधत्ते ’ इति । **भा**. १२।३।१।१. * विश्वजिति किमंशसाकाङ्क्षत्वात् फलमनुषज्यते । **टुप्** . ७।४।१।१. * विश्वजिति ज्योतिष्टोमधर्मातिदेशः, अव्यक्तत्वलिङ्गात् । **वि**. ८।१।९.



**विश्वजिति दक्षिणार्थनिर्दिष्टो भाग एव सर्वो देयः ॥**

**अशेषत्वात् तदन्तः स्यात्, कर्मणो द्रव्यसिद्धित्वात् । ६।७।७।८॥**

**भाष्यम्**-- तस्मिन्नेव विश्वजिति संदेहः किं दक्षिणाकाले एव सर्वस्वं दत्त्वा विश्वजिदुत्स्रष्टव्यः, उत न सर्वस्वं दातव्यम्, परिसमापनीय इति । किं प्राप्तम् ? उत्स्रष्टव्य इति । कुतः ? अशेषत्वात् । कथमशेषता ? ‘ विश्वजिति सर्वस्वं ददाति ’ इति । न च शक्यमन्तरेण द्रव्यं परिसमापयितुम् । तस्मात्तदन्तः स्यात् ।

**अपिवा शेषकर्म स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् । ९ ॥**

**भाष्यम्**-- अपिवेति पक्षव्यावृत्तिः । शेषकर्म स्यात् । न सर्वस्वं दक्षिणाकाले देयम्, यावता तत्कर्म परिसमाप्यते, तावच्छेषयितव्यम् । कुतः ? क्रतोः प्रत्यक्षशिष्टत्वात् । क्रतोः परिसमाप्तिः प्रत्यक्षशिष्टा । ‘ विश्वजिता यजेत ’ इति विश्वजितमुपक्रम्य परिसमापयेदित्यर्थः । परिसमापयता यच्छक्यते दातुम्, तावत्सर्वमित्यर्थः । तस्मान्न तदन्तमुत्स्रष्टव्यमिति ।

**तथा चान्यार्थदर्शनम् । १०॥**

**भाष्यम्**-- एवं च कृत्वा अन्यार्थदर्शनमुपपद्यते । ‘ अवभृथादुदेत्य वत्सत्वचमाच्छादयति ’ इति शेषे सत्यवकल्पते ।

**अशेषं तु समञ्जसाऽऽदानेन शेषकर्म स्यात् । ११ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । एतत्समञ्जसाभूतम्, यदशेषं प्रदीयते इति । एवं ‘ सर्वस्वं ददाति ’ इति शब्द उपपन्नो भवतीति । यत्तु प्रत्यक्षा समाप्तिरिति । तत्र ब्रूमः । आदानेन शेषकर्म भविष्यतीति ।

**नाऽऽदानस्य नित्यत्वात् । १२ ॥**

**भाष्यम्**— उच्यते- ‘ नाऽऽदानस्य नित्यत्वात् ’ इति । आदानं त्वनित्यम् । नित्यं च शेषकर्म । न हि तयोः संबन्धोऽवकल्पते । तस्मात् शेषयितव्यं किंचिदिति ।

**दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात् । १३ ॥**

**भाष्यम्**-- तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति किंचिच्छेषयितव्यमिति । दीक्षासु तु विनिर्देशो भवति, प्रकृतावेव ज्योतिष्टोमे । स इह चोदकेन प्राप्तः, इदं क्रत्वर्थमिदं भक्षार्थमिदमानमनाय इति । तदिह यदानमनाय दातव्यं तस्यायं विकारः सर्वता नाम । कुतः एतत् ? यतः स्वं ददातीत्यनूद्यते, सर्वतैव विधीयते । तेन नादातव्यस्य दानं विधीयते । न च भक्षार्थं क्रत्वर्थं च दातव्यम् । तस्मादविरोधो भविष्यतीति ।

**शा**-- प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेन आत्मीयं धनं वचनबलात् व्यवस्थापितम्- इदं मे भक्षार्थं इदं क्रत्वर्थं इदं दक्षिणार्थमिति । तत्र यद्दक्षिणार्थं तन्मध्ये द्वादशशतं दत्तम् । इह तु किं त्रिविधमपि दातव्यं कर्मशेषं च उत्स्रष्टव्यम्, उत यावता क्रतुशेषं निर्वर्तते तावत् शिष्ट्वा अन्यत्सर्वं देयं उत यद्दक्षिणार्थं निहितं तदेव सर्वं देयमिति संशयः । ‘ **प्रत्यक्षवचनादिष्टसर्वदानविरोधतः । चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् । किञ्चित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥ दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनूद्य तु । विधेयं सर्वतामात्रं लाघवं हि तथा विधेः ॥** ’

**सोम**— इह त्रिविधस्यापि स्वत्वेन भाविवैषम्येण प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**-कर्मणो द्रव्याधीनसिद्धिकत्वादशेषत्वात्कर्मशेषलोपात् तदन्तं दक्षिणादानान्तं स्यादिति । यद्वाऽशेषत्वात् द्रव्यशेषत्वाभावादिति ।

**वि**-- ‘ दक्षिणाक्रतुभुक्त्यर्थं त्रयं देयमुतेष्यते । शिष्ट्वाऽथवा दक्षिणार्थमेवाद्यः सर्वशब्दतः ॥ क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात् । मध्योऽन्त्यो दक्षिणार्थस्यानुवादात्सर्वताविधेः ॥ ’

**भाट्ट**—ज्योतिष्टोमे तद्विकारे तदन्यत्र च यत्र सर्वस्वदानमाम्नातं तत्र वृत्ता कथा । तत्र तु कर्मारम्भे एव त्रिधा यजमानेनात्मीयं धनं वचनाद्व्यवस्थापितं भक्षार्थं क्रत्वर्थं दक्षिणार्थं चेति । तत्र सर्वस्य स्वत्वाविशेषात् त्रिविधस्यापि दानं न तु दक्षिणार्थभागस्यैव सर्वता । तस्य प्रकृतौ दक्षिणार्थत्वे सर्वस्वदानविधिवैयर्थ्यम् । तदभावे भागत्रयस्याप्यविशेषात् दक्षिणार्थोऽयं भाग इति व्यपदेशानुपपत्तिः । अतश्च प्रत्यक्षवचनोपदिष्टसर्वस्वदानवशेनातिदेशप्राप्तकर्मशेषलोपः । पदार्थानां प्रधानत्वादङ्गभूतदक्षिणानुरोधेन बाधस्य प्रमेयत्वबलाबलन्यायेनानुपपत्तेर्वा किञ्चित् क्रत्वे शिष्ट्वा सर्वमन्यत्प्रदीयतामिति प्राप्ते, दक्षिणार्थेन निर्दिष्टस्य तत्संबन्धप्राप्तौ सर्वतामात्रविधाने लाघवमिति तस्यैव सर्वदानम् । न चैवं प्रकृतावपि तस्य दानापत्तेरत्र विधिवैयर्थ्यम्, इतरथा तस्य दक्षिणार्थत्वानुपपत्तिरिति वाच्यम्, 'यद्येतावता ऋत्विजो नानमेयुः, अपि तु सर्वस्वेन' इत्यनेन वचनेन द्वादशशतेनानत्यसंभवे तस्यापि दक्षिणार्थत्वात् । अत्र च दक्षिणार्थभागस्यैव देयत्वेऽवस्थिते पूर्वतनानि षडधिकरणानि कृत्वाचिन्त्येति केचित् ।

**वस्तुतस्तु**- पित्रादीनामपि दक्षिणाभागान्तःपातित्वेन विचारोपपत्तेर्न कृत्वाचिन्तात्वम् ।

**मण्डन**—'क्रत्वर्थं नैव दातव्यम् ।'

**शंकर**—'दक्षिणार्थं च सर्वं स्यात् ।'

**※ विश्वजिति दक्षिणाकाले विद्यमानस्यैव सर्वस्वस्य दानम् ॥**

**दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् । ६।७।६।७॥**

**भाष्यम्**— विश्वजित्येव संदेहः किं प्राग्दक्षिणाकालाद्विद्यमानं नियोगतो दक्षिणाकाले दातुं निधातव्यम्, ऊर्ध्वं च दक्षिणाकालात् भविष्यदनागतमपि दक्षिणाकाले देयमुत यदेव दक्षिणाकाले विद्यते तदेव देयमिति । किं प्राप्तम् ? यस्यापि प्रागूर्ध्वं च स्वता, तदपि देयम् । स्वमात्रस्य दानविधानात् । एवं प्राप्ते, ब्रूमः । दक्षिणाकाले यत्स्वं विद्यते तदेव देयम्, न यत्प्रागूर्ध्वं च । कुतः ? स्वस्यात्र दानमनूद्य साकल्यं विधीयते । तच्च दानं दक्षिणाकाले प्राप्तत्वात्तस्मिन्नेव कालेऽनूद्यते । तस्माद्दक्षिणाकाले एव विद्यमानं देयमिति ।

**शा**— किं दक्षिणाकालात् प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयं यदपि भावित्वेन निश्चितं तदसदपि देयं उत यद्दक्षिणाकालेऽवस्थितं तदेव देयमिति संशये सर्वशब्दानुग्रहाय भूतभाविनोरपि दानम् । दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारणप्रयुक्तिः । भाविनश्च तदानीं स्वत्वाभावात् अशक्यमेव दानम् ।

**वि**—'भूतं भावि च देयं स्यात्कालेऽवस्थितमेव वा । आद्यः सर्वश्रुतेरन्त्योऽसंभवादन्ययोस्तदा ॥'

**भाट्ट**— दक्षिणाकाले यत्रास्य स्वत्वं तस्यैव दानं न तु ततः प्रागपि यत्प्राप्तोपभोगं धनं तदनुपभुज्य प्रयत्नेन धारयित्वा देयम् । धारणप्रयोजकत्वे प्रमाणाभावात् । भाविनस्तु तदानीं स्वत्वाभावादेवाशक्यं दानम् । न च भाविन्यपि प्रतिश्रवणमात्रेण स्वत्वोत्पत्तिः । तथात्वे दत्तस्य पुनर्दानासंभवेन 'देयं प्रतिश्रुतं चैव' इति विधिवैयर्थ्यप्रसङ्गात् । ददातेः समर्पणमात्रार्थत्वे लक्षणाप्रसङ्गाच्च । प्रतिश्रवणेन च स्वोपभोगान्यदानायोग्यता परं जन्यते उक्तदाननियमात् 'यच्चान्यस्मै प्रतिश्रुतम्' इत्यन्यस्मै दाननिषेधाच्च, न तु स्वत्वं निर्वापवत् ।

**मण्डन**—'तत्कालं तु प्रदीयते ।' (दानकाले वर्तमानमेव प्रदीयते न तु तत्काले अविद्यमानं भूतं भावि वा इत्यर्थः)।

**शंकर**—'दानकाले च यद्भवेत् ।'

* विश्वजिति द्वादशशतन्यूनधनस्य नास्त्यधिकारः । ६।७।१।१८–२०. मीको. पृ. ३१४ 'अधिकारो नास्ति विश्वजिति द्वादशशतन्यूनधनस्य' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**※ विश्वजिति धर्मार्थसेवकः शूद्रो न देयः ॥**

**शूद्रश्च धर्मशास्त्रत्वात् । ६।७।५।६॥**

**भाष्यम्**— विश्वजित्येव संदिह्यते । किं परिचारकः शूद्रो देयो नेति । किं प्राप्तम् ? सर्वस्य स्वस्य



विहितत्वात् देय इति । एवं प्राप्ते, ब्रूमः । शूद्रश्च न देय इत्यन्वादेशः । कुतः ? धर्मशास्त्रत्वात् । धर्मशासनोपनतत्वात्तस्य । एवमसौ तस्मै त्रैवर्णिकायोपनत इमं शुश्रूषमाणो धर्मेण संभन्त्स्ये इति । सोऽन्यस्मै दीयमानो नेच्छेदपि । न चानिच्छतस्तस्य स प्रभवति । न च बलात् स्वीकर्तव्यः । यस्त्वन्यायेन स्वीकुर्यात् स दद्यादपि । धर्मोपनतमात्रेण तु न शक्यो दातुम् ।

**शा**— धर्मार्थं परिचारकत्वेन यजमानमुपस्थितो यः शूद्रः स किं देयो न वेति सर्वशब्दानुग्रहात् परविधेयीकरणसंभवाच्च देयः । स्वत्वाभावात् अनिच्छया परवश्यत्वानभ्युपगमसंभवाच्च अदेयः । दासस्तु देयः एव ।

**सोम**— धर्मशासनार्थं उपनतस्य शूद्रस्य तदानीं विधेयतया स्वत्वसद्भावात् दानं स्यादिति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**- शूद्रश्च न देयः धर्मशास्त्रत्वात् । धर्मशासनार्थं उपनतत्वादिति यावत् ।

**वि**—'धर्मार्थसेवकः शूद्रो देयो नो वा, स दासवत् । देयोऽस्वत्वात्पराधीनत्वाभावाच्च न दीयते ॥'

**भाट्ट**— धर्मार्थं भृत्यर्थं वा परिचारकत्वेनावस्थितः शूद्रोऽपि न देयः तत्रास्य स्वत्वाभावात् परवश्यत्वानभ्युपगमसंभवाच्च । गर्भदासादयस्तु देया एव ।

**मण्डन**—'न धर्मोपनतो देयः ।'

**शंकर**—'धर्मदासस्तथैव च ।' (न देय इत्यर्थः) 'क्रीतादिर्देय एव स्यात् ।'

* विश्वजिति 'न केसरिणो ददाति' अत्र पर्युदासः । अश्वव्यतिरिक्तं सर्वस्वं देयं इत्यर्थः । अश्वस्तु न देयः । वि. ६।७।३. * विश्वजिति (यथा) न बृहदादीनां सर्वेषामेकत्र निवेशः । भा. १०।६।८।२४. * विश्वजिति नामधेयेन आग्रयणाग्रता प्राप्नोति गवामयने । टुप्. १०।५।२५।८५ पृ. १९८०. * विश्वजिति (सर्वपृष्ठे) 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य' । भा. ७।३।३।८.

**※ विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् । १२।३।१।१॥**

विश्वजिति एकाहे परिधानार्थं वत्सत्वक् आम्नाता 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति । ज्योतिष्टोमे अहतं वासः परिधानार्थम् । अष्टरात्रे उभयं प्राप्तम् । तयोः परिधानयोरेकार्थत्वात् विकल्पे प्राप्ते पूर्वपक्षमाह । अष्टरात्रस्य प्रथमेऽहनि विश्वजिति वत्सत्वक् स्यात् न विकल्पः । नामधेयात् विश्वजिन्नाम्ना एकाहाद्विश्वजितः प्राप्तत्वात् । इतरथा नामातिदेशाभावे तन्त्रभूयस्त्वात् ज्योतिष्टोमप्रकृतिकेषु अष्टरात्रगतेषु भूयःसु अहःसु ज्योतिष्टोमतन्त्रात् भूयस्त्वेन प्राप्तात् अहतं स्यात् । तस्मात् विश्वजिन्नाम्ना वत्सत्वगेव स्यात् न अहतं इति ।

**अविरोधो वा, उपरिवासो हि वत्सत्वक् । २॥**

अष्टरात्रगते विश्वजिति एकाहात् विश्वजितः यजमानस्य परिधानार्थं वत्सत्वक् प्राप्ता अग्निष्टोमाच्च अहतं वासः प्राप्तम्, तयोर्विरोधात् वत्सत्वगेव ग्राह्या इति पूर्वपक्षे समुच्चयः सिद्धान्तः । अविरोधः न च वत्सत्वगहतवाससोर्विरोधः । हि यस्मात् वत्सत्वक् उपरिवासः, अहतं च अन्तोवासः योग्यत्वात् । तस्मात् वत्सत्वचः अहतवाससश्च समुच्चयः सिद्धान्तः । वाशब्दः विकल्पपूर्वपक्षनिरासाय । के.

**※ विश्वजिति विद्यमानस्यैव सर्वस्वस्य दानम् ॥**

**नित्यत्वाच्चानित्यैर्नास्ति संबन्धः । ६।७।४।५॥**

**भाष्यम्**— विश्वजित्येव संदेहः सर्वस्वं ददाति, इति किमर्जयित्वोपकरणानि यावन्ति मनुष्यस्य, यावन्ति च शक्नोत्युपार्जयितुम्, सर्वाणि तानि दद्यात्कृतभाण्डकानि, उत यान्येवास्य विद्यन्ते तानि सर्वाणि देयानि, नाविद्यमानानि कर्तव्यानीति । कुतः संशयः ? उभयथा वचनव्यक्तेः संभवात् । यदि वैवं वचनं व्यज्यते, यानि सर्वाणि स्वानि । कानि तानि ? यानि पुरुषस्योपकारकाणि शयनादीनि, तानि सर्वाणि दद्यादिति विधीयते । यद्वा यानि स्वानि पुरुषस्य दाने शक्यानि,

तानि सर्वाणीति सर्वस्वं विधीयते । यदि दानं विधीयते, ततोऽप्राप्तदानानां कृतभाण्डकानामपि दानम् । अथ सर्वता विधीयते, ततो विद्यमानानामेव । किं तावत् प्राप्तम् ? कृतभाण्डकानि देयानीति । तथा दानविधाने श्रुतिरनुगृह्यते । इतरथा वाक्यम् । तयोश्च श्रुतिर्बलीयसी । तस्मात् कृतभाण्डकानि देयानीति ।

**एवं प्राप्ते, ब्रूमः ।** नित्यत्वाच्चानित्यैर्नास्ति संबन्धः । चशब्दोऽन्वादेशे । नाश्वा दातव्या इत्युक्तम् । कृतभाण्डकानि च न देयानीति । नित्यं हि विश्वजिति दानं चोदकेन प्राप्तमनूद्यते । अनित्यानि च कृतभाण्डकानीति न शक्यानि सर्वाणि विश्वजिति क्रियमाणे उपसंहर्तुम् । तत्र कृतभाण्डकानां केषांचिदुत्पत्तिं विश्वजिति दानं प्रतीक्षेत । नैमित्तिकं तत् स्यान्न नित्यम् । नित्यवच्च तच्चोदकेन विधीयते, न निमित्तसंयोगेन । तस्मात् अवश्यमेतदभ्युपगन्तव्यं साकल्यं देयानां प्राप्तानां विधीयते इति । श्रुत्यसंभवे च वाक्यार्थो ग्रहीतव्य एव भवति । तस्मान्न कृतभाण्डकानि दातव्यानि ।

**शा**-- 'सर्वस्वं ददाति' इति किं यत्पुरुषोपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददाति इति शास्त्रार्थः । ततश्च यस्यापि यन्नास्ति सोऽपि तदर्जयित्वा दद्यादुत यद्यस्य विद्यते तत्सर्वं ददातीति संशये यत् सर्वं स्वं तत् दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते । चोदकेन तु दानस्य प्राप्तत्वात् यस्य यत् अस्ति स तस्मिन् द्वादशशतमात्रं दातुं प्रवृत्तः सन् सर्वमेव दद्यादिति सर्वता विधीयते । किञ्च अयं सर्वशब्दः प्रसिद्धस्वत्वेष्वेव सर्वेषु उपपन्नत्वात् न असिद्धस्वत्वानां आक्षिपति अर्जनम् । तस्मान्नार्जयित्वा देयम् ।

**सोम**--पूर्ववत् इह नास्ति पर्युदासः इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**--दानस्य नित्यत्वात् अर्जनीयानां द्रव्याणां कदाचित् अलाभेन अनित्यत्वात् न तैर्दानस्य अस्ति संबन्धः इति ।

**वि**-- 'अर्जयित्वाऽपि किं सर्वं देयं यद्वा यदस्ति तत् ।, सर्वोद्देशविधेराद्यो न प्राप्ते सर्वताविधेः ॥'

**भाट्ट**— यत्किञ्चित्पुरुषस्य उपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददातीति शास्त्रार्थावधारणात् यस्यापि यत् नास्ति सोऽपि तदार्जयित्वा दद्यात् धात्वर्थविधिलाभात् । **इति प्राप्ते**, षष्ठविधिप्रकारापत्तेश्चोदकप्राप्तदानानुवादेन द्वादशशतबाधेन सर्वतामात्रविधानात् प्रसिद्धस्वत्वेष्वेव सर्वशब्दस्योपपत्तौ अप्रसिद्धस्वत्वार्जनाक्षेपकत्वानुपपत्तेश्च नार्जयित्वा देयम् ।

**मण्डन**-- 'स्थितमेव च दीयते ।'

**शंकर**-- 'उपार्ज्यापि न देयं च ।'

* विश्वजिति षडहगतपृष्ठानां अतिदेशः । ७।३।३। ७-१२. **मीको**. पृ. २२० 'अतिदेशः विश्वजिति षडहगतपृष्ठानाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठस्तोत्रार्थं निवेशः ॥**

**सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् । १०।६।५।१३॥**

**भाष्यम्**--इदमाम्नायते 'विश्वजित्सर्वपृष्ठः' इति । तत्र अयमर्थः सांशयिकः किं सर्वेषां पृष्ठदेशे निवेशः उत एकस्य पृष्ठदेशे अन्येषामन्यत्रेति । किं प्राप्तम् ? सर्वपृष्ठे एतस्मिन् सर्वेषां साम्नां पृष्ठदेशे निवेशः । कः पुनः पृष्ठदेशः ? ऊर्ध्वं माध्यंदिनपवमानात् प्राक् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठदेशः । स एवैको देशः स्यात्सर्वेषां साम्नाम् । कुतः ? पृष्ठशब्दात् । पृष्ठकार्ये वर्तमानस्य चायं कृतो देशः । तस्मात् सर्वेषां पृष्ठदेशे निवेशः ।

**विधेस्तु विप्रकर्षः स्यात् । १४ ॥**

**भाष्यम्**-- तुशब्दः पक्षं व्यावर्तयति । एवं न्यायेन प्राप्तम्, वचनादन्यथा भवितुमर्हति । एकस्य पृष्ठकार्ये विधिरन्येषां परिसामकार्ये । कथम् ? 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि—वैरूपं होतुः पृष्ठं, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम' इति । एवमेकस्य पृष्ठकार्ये विधानमर्थवत् भविष्यति । यदीतरेषां परिसामकार्ये निवेशः । इतरथा, एकस्य पृष्ठकार्ये विधानं नोपपद्यते,



तत् मा भूदिति । अतः पश्याम एकस्य पृष्ठकार्ये निवेशः, अन्येषां परिसामकार्ये इति ।

**शा**-- 'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते । तत्र षाडहिकानां रथंतरादिपृष्ठानां विधिरिति स्थितं सप्तमे । तत्र संशयः किं षण्णामपि साम्नां पृष्ठस्तुतिसाधनत्वं ततश्च पृष्ठदेशे माध्यंदिनपवमानमैत्रावरुणसाम्नोर्मध्ये निवेशः, उत वैरूपस्यैव तत्साधनत्वेन तत्र निवेशः अन्येषां स्तोत्रान्तरसाधनत्वेन तत्तद्देशे प्रयोग इति । तत्र षडहे तेषां पृष्ठसाधनत्वेन इहापि पृष्ठशब्देन तत्साधनत्वानवगमात् पृष्ठदेश एव प्रयोगः सर्वेषामिति **प्राप्ते, ब्रूमः ।** 'रथंतरं बहिःपवमाने कुर्यादार्भवे बृहन्मध्यत इतराणि वैरूपं होतुः पृष्ठे' इत्यादिवचनात् वैरूपस्यैव पृष्ठसाधनत्वं इतराणि स्तोत्रान्तरसाधनानि । **न च** पृष्ठस्तुतौ प्रयुक्तानामेव पुनर्वचनात् स्तोत्रान्तरेऽपि प्रयोगोऽस्त्विति **वाच्यम् ।** वैरूपस्य पृष्ठे विधेरानर्थक्यप्रसङ्गात् । किंच सर्वपृष्ठशब्देन लक्षणया पृष्ठसाधनभूतानि रथंतरादीनि सामानि षाडहिकानि विधीयन्ते । स्तुतेः बहुत्वाभावेन सर्वशब्दविषयत्वासंभवात् तेषां च साम्नामिहातिदिष्टानां कार्याकाङ्क्षिणां वाचनिकैरेव कार्यैरुपपत्तौ को नाम सर्वेषां पृष्ठसाधनत्वं कल्पयेत् ? तस्माद्विभज्यैव निवेशः ।

**सोम**-- पूर्वत्र चोदकप्राप्तकृत्स्नालम्भबाधेऽपि इह पृष्ठशब्दस्वारस्यबललब्धः पृष्ठदेशो न बाधनीय इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**- सर्वशब्दे सर्वपृष्ठ इति यावत् । तत्र तेषां साम्नां पृष्ठस्तोत्राणां वा एकदेशत्वं स्यात् पृष्ठशब्दात्पृष्ठशब्दस्य च नियतदेशत्वादिति ।

**वि**-- 'किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा ।, पृष्ठशब्दात्पृष्ठदेशे वचनात्तु व्यवस्थितिः ॥'

**भाट्ट**-- 'विश्वजित् सर्वपृष्ठः' इत्यत्र षाडहिकानां रथंतरादीनां साम्नां विश्वजिदङ्गत्वेन विधिरिति स्थितम् । तत्र षण्णामपि षडहे माहेन्द्राख्यरथंतरपृष्ठस्तोत्रसाधनत्वस्यैव क्लृप्तेरिहापि तत्रैव संस्तवादिवत् समुच्चयेन निवेशः । **इति प्राप्ते**, 'पवमाने रथंतरं आर्भवे बृहत् मध्यत इतराणि वैरूपं होतुः पृष्ठे वैराजं मैत्रावरुणस्य शाक्वरं ब्राह्मणाच्छंसिनः रैवतमच्छावाकस्य' इति वचनेन स्तोत्रान्तरेषु संनिवेशविधानात् न सर्वेषां होतुः पृष्ठे एव निवेशः । न च तत्र कृतानामप्यनेन वचनेन स्तोत्रान्तरेषु पुनर्विधानम्, विशिष्टविधौ गौरवापत्तेः । वैरूपस्य होतुः पृष्ठे पुनर्विधिवैयर्थ्यापत्तेश्च । अतश्च क्रतुसंबन्धित्वेन प्राप्तानां साम्नां लाघवात्स्तोत्रान्तररूपद्वारसंबन्धमात्रकरणेन सर्वेषां क्लृप्तसंबन्धस्यापि बाधनम् ।

न चैवं रथंतरादिधर्माणां पृष्ठापूर्वसाधनत्वस्यैव क्लृप्तत्वेनेह स्तोत्रान्तरे तदनापत्तिः । 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति न्यायेन आवश्यकस्तोत्रत्वाद्यनुरोधेन च साङ्गस्यैव रथंतरस्य रथंतरपदेन लक्षणया विधानादिहैव पवमानापूर्वसाधनत्वबोधोपपत्तेः ।

**मण्डन**-- 'प्रत्यहं न द्विसामत्वम् ।' द्विसामत्वं सामद्वयप्रयोगः प्रत्यहं सर्वेष्वहःसु न भवतीति संबन्धः ।

**शंकर** — 'विश्वजित्सर्वपृष्ठे सा ।'

* विश्वजिति सर्वपृष्ठे ग्रहीतव्याः, अप्यग्निष्टोमे ग्रहीतव्याः (लोकंपृणाः एकविंशतिः) । **संकर्ष**. १।३।१३.

**विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः । ७।३।३।७॥**

'विश्वजित् सर्वपृष्ठो भवति' इति श्रूयते । तत्र सर्वपृष्ठशब्दः अनुवादो विधिर्वा इति विचारे अनुवाद इति पूर्वपक्षमाह । विश्वजिति यागे स्वयमेव सर्वपृष्ठे सति सर्वपृष्ठशब्देन पुनस्तत्र सर्वेषां पृष्ठानां विधिर्न संभवति । कथं विश्वजितः सर्वपृष्ठता ? तत्पूर्वकत्वात् ज्योतिष्टोमपूर्वकत्वात् ज्योतिष्टोमप्रकृतिकत्वात् ज्यौतिष्टोमिकानि पृष्ठानि पृष्ठाख्यस्तोत्राणि विश्वजिति चोदकेन प्राप्नुवन्ति । तस्मात् सर्वपृष्ठ एव विश्वजित् । ज्योतिष्टोमे च चत्वारि पृष्ठस्तोत्राणि माहेन्द्रादीनि, तानि विश्वजित्यपि । अस्ति च माहेन्द्रादिषु स्तोत्रेषु 'सप्तदशानि पृष्ठानि' इति पृष्ठशब्दः प्रसिद्धः । तस्मात् विश्वजिति सर्वपृष्ठशब्दः अनुवाद इति पूर्वः पक्षः ।

**षडहाद्वा तत्र हि चोदनाः । ८ ॥**

'विश्वजित् सर्वपृष्ठः' इति सर्वपृष्ठशब्दः अनुवादः, ज्योतिष्टोमात् विश्वजिति पृष्ठातिदेशः इति सूत्रप्राप्तं पूर्व-

पक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । षडहात् पृष्ठानां अतिदेशो विश्वजिति, न ज्योतिष्टोमात् । हि यस्मात् तत्र षडहे 'रथंतरं पृष्ठं भवति' इत्याद्याः रथंतर-बृहत्-वैरूप-वैराज-रैवत-शाक्कराणां षण्णां पृष्ठानां चोदनाः सन्ति । यद्यपि ज्योतिष्टोमे पृष्ठानि स्युः तथापि न सर्वाणि । षडहे तु सर्वाणि । विश्वजिति सर्वाण्येव । तस्मात् षाडहिकान्येव पृष्ठानि विश्वजिति अतिदिश्यन्ते । तस्मात् आतिदेशिको विधिः सर्वपृष्ठशब्दो विश्वजिति ।

**लिङ्गदर्शनाच्च । ९ ॥**

'विश्वजित् सर्वपृष्ठः' इति विश्वजिति सर्वेषां पृष्ठानां अतिदेशः षडहादेव न ज्योतिष्टोमात् इति सिद्धान्ते हेत्वन्तरमाह । 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्ये इतराणि । वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्करमच्छावाकस्य' इति विनिवेशपरे वाक्ये लिङ्गं विश्वजिति षाडहिकानि पृष्ठानि दर्शयति । तस्मात् षडहादतिदेशः ।

**उत्पन्नाधिकारो ज्योतिष्टोमे । १० ॥**

ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु पृष्ठशब्दः उत्पन्नाधिकारः । उत्पन्नानि स्तोत्राणि अधिकृत्य प्रवृत्तः 'पृष्ठैः स्तुवते' इति न तु उत्पद्यमानानि अधिकृत्य । षडहे तु उत्पद्यमानान्यधिकृत्य प्रवृत्तः । किंच 'बृहत्पृष्ठं भवति' इत्येकमेव पृष्ठं वस्तुतः ज्योतिष्टोमे उत्पन्नं माहेन्द्रादिषु तु तत्र पृष्ठशब्दः लाक्षणिक एव । तस्मात् विश्वजिति षडहादेव सर्वेषां षण्णामपि पृष्ठानामतिदेशः । इति सिद्धान्तः ।

**द्व्योर्विधिरिति चेत् । ११ ॥**

'विश्वजित् सर्वपृष्ठः' इत्यत्र षाडहिकानां पृष्ठानां अतिदेशः इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । षाडहिकानां विधौ स्वीकृते द्वयोर्विधिः प्रसज्यते पृष्ठानि च विधातव्यानि तेषां सर्वत्वं चेति । तस्मात् षाडहिकातिदेशो न युक्तः । किंतु ज्योतिष्टोमे बृहद्रथंतरयोः विकल्पेन सत्त्वात् तयोः द्वयोः समुच्चयः विश्वजिति सर्वपृष्ठशब्देन विधेयः इति द्वयोर्विधिः स्यात् । इति चेत् ।

**न व्यर्थत्वात् सर्वशब्दस्य । १२ ॥**

ज्योतिष्टोमे विकल्पेन प्राप्तयोः बृहद्रथंतरयोः द्वयोः पृष्ठयोः समुच्चयः विश्वजिति सर्वपृष्ठशब्देन विधीयते इति यत् पूर्वपक्षिणा उक्तं तत् न । सर्वशब्दस्य व्यर्थत्वात् व्यर्थत्वप्रसङ्गात् । बहुविषयोऽयं सर्वशब्दः द्वयोः न युज्यते । षाडहिकानां तु षण्णां विधाने नायं दोषः । तस्मात् षाडहिकानामेव विधानम् । तत्रापि सर्वत्वमेव विधेयम्, पृष्ठानि तु अर्थात् भविष्यन्ति । नहि पृष्ठान्यकुर्वता सर्वत्वं संपादयितुं शक्यते । तेन न विधिद्वयप्रसङ्गः । तस्मात् विश्वजिति षाडहिकानां षण्णां पृष्ठानां अतिदेशः न ज्योतिष्टोमिकानां इति सिद्धान्तः । एवं च पृष्ठनाम्ना षाडहिकधर्मातिदेशोऽयम् । के.

* 'विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः' ( ७।३।३।७ ) इति । तत्र 'विश्वजित् सर्वपृष्ठो भवति' इति उदाहृत्य किमयं पृष्ठशब्दः अतिदेशार्थो न वेति विचारयितुं ज्यौतिष्टोमिकपृष्ठविषयोऽयं पृष्ठशब्दः षाडहिकपृष्ठविषयो वा इति संदिग्धे विश्वजितो ज्योतिष्टोमपूर्वकत्वात् तत्र च 'पृष्ठैः स्तुवते' इति 'सप्तदशानि पृष्ठानि' इति बहुवचनवशेन माहेन्द्रादिषु चतुर्षु स्तोत्रेषु पृष्ठशब्दवाच्यत्वावगतेः पृष्ठबहुत्वसंभवात् अतिदेशप्राप्तज्यौतिष्टोमिकपृष्ठानुवादत्वात् नातिदेशार्थोऽयं पृष्ठशब्दः इति पूर्वपक्षयित्वा 'बृहद्वा रथंतरं वा पृष्ठं भवति' इत्येकस्यैव पृष्ठस्य ज्योतिष्टोमे विकल्पेन विधानात् पृष्ठबहुत्वाभावेन सर्वशब्दायोगात् षाडहिकानामेव रथंतर-बृहत्-वैरूप-वैराज-शाक्वर-रैवतानां षण्णां पृष्ठानां अतिदेशार्थः पृष्ठशब्दः इति 'षडहाद्वा तत्र हि चोदना' ७।३।३।८ इति सूत्रेण सिद्धान्तयिष्यते । सु. पृ. ४२६. * 'विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात्०' ( ७।३।३।७ ) इति सप्तमाधिकरणे 'रथंतरं पृष्ठं भवति', 'बृहत् पृष्ठं भवति' इत्युत्पत्तिवाक्ययोः माहेन्द्रस्तोत्रनामत्वेन प्रथमावगतपृष्ठशब्दस्य 'सप्तदशानि पृष्ठानि' इत्यनुवादवाक्ये माहेन्द्रादिषु चतुर्षु स्तोत्रेषु प्रयोगो लाक्षणिक इति प्रकृतौ पृष्ठबहुत्वं नास्ति इति प्रपञ्चितम् । **रसायनम्** पृ. २९. * विश्वजिति सर्वस्वं देयम्,



सर्वस्वं च द्वादशशतादधिकम् । तथैव ज्योतिष्टोमे स्थितत्वात् । तादृशं च सर्वस्वं चोदकप्राप्तमपि नियम्यते । तथा च विश्वजिति द्वादशशतात् अधिकमेव सर्वस्वम्, न द्वादशशतं ततो न्यूनं वा । वि. ६।७।९, * विश्वजिति सर्वस्वदाने धर्मज्ञानार्थे सेवमानः शूद्रः न देयः स्वत्वाभावात् । गर्भदासास्तु देयाः स्वत्वात् । ६।७।५. * विश्वजिति सर्वस्वदाने पित्रादीनामदेयता । ६।७।१।१-२. 'सर्वस्वदानन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विश्वजिति सर्वस्वदाने भुक्त्यर्थे यज्ञार्थे च विभज्य यदवशिष्टं तत्सर्वं देयम्, विभागश्च चोदकप्राप्त एव । वि. ६।७।७.

## ☸ विश्वजिति सर्वस्वदाने महाभूमिर्न देया ॥

**न भूमिः स्यात् सर्वान् प्रत्यविशिष्टत्वात् । ६।७।२।३॥**

**भाष्यम्**— अत्रैव सर्वदाने संशयः किं भूमिर्देया नेति ? का पुनर्भूमिरत्राभिप्रेता ? यदेतन्मृदारब्धं द्रव्यान्तरं पृथिवीगोलकं नाम, न क्षेत्रमात्रं मृत्तिका वा । तत्र किं प्राप्तम् ? अविशेषाद्देया । प्रभुत्वसंबन्धेन हि तत्र स्वशब्दो वर्तते । शक्यते च मानसेन व्यापारेण स्वस्वत्वं निवर्तयितुमिति । एवं प्राप्ते, ब्रूमः । न भूमिर्देयेति । कुतः ? क्षेत्राणामीशितारो मनुष्या दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्येति । आह, य इदानीं सार्वभौमः स तर्हि दास्यति । सोऽपि नेति ब्रूमः । कुतः ? यावता भूमिभागेन सार्वभौमो भूमेरीष्टे, तावताऽन्योऽपि । न तत्र कश्चिद्विशेषः । सार्वभौमस्य त्वेतदधिकं यदसौ पृथिव्यां संभूतानां व्रीह्यादीनां रक्षणेन निर्विष्टस्य कस्यचिद्भागस्येष्टे, न भूमेः । तन्निविष्टाश्च ये मनुष्यास्तैरन्यत्सर्वप्राणिनां धारणचङ्क्रमणादि यद्भूमिकृतम्, तत्रेशित्वं प्रति न कश्चिद्विशेषः । तस्मान्न भूमिर्देया ।

शा— येयं महापृथिवी सेयं देया न वेति । साऽपि सार्वभौमस्य धनमिति मन्यमानो दानमाह, नासौ कस्यचित्स्वम् । राज्यं हि स्वविषयपरिपालनकण्टकोद्धरणभृतिवृत्तित्वेन कर्षकादिभ्यः करादानं दण्ड्येभ्यश्च दण्डादानमित्येतावान् संबन्धः न हि स्वामित्वम् । अतो न सार्वभौमो महापृथिवीं दद्यात् माण्डलिकश्च मण्डलम् ।

**सोम**— धनमित्यनेन पित्रादीनां धनत्वाभावात् अदानेऽपि भूमेर्धनत्वात् दानं स्यादिति प्रत्यवस्थानात् संगतिः सूचिता ।

वि— 'देया न वा महाभूमिः, स्वत्वाद्राजा ददातु ताम् ।, पालनस्यैव राज्यत्वान्न स्वं भूर्दीयते न सा ॥'

**भाट्ट**— येयं महापृथिवी तस्याः सार्वभौमधनत्वात् तेन तद्दानम् । इति प्राप्ते, सार्वभौमस्य अपि न तस्यां स्वत्वम् । जयस्यापि च शत्रुस्वामिकधनगृहक्षेत्रादिविषये एव स्वत्वोत्पादकत्वात् । महापृथिव्यां तु राज्यमात्राधिकारस्यैव जयेन संपादनात् राज्यं हि स्वविषयपरिपालनकण्टकोद्धारणरूपम्, तन्निमित्तकं च तस्य कर्षकेभ्यः करादानं दण्ड्येभ्यश्च दण्डादानं इत्येतावन्मात्रम् । न त्वेतावता तस्यां स्वत्वम् । तथात्वे वनगततृणकाष्ठादावपि स्वत्वापत्तौ तत्र स्वत्वोत्पादकपरिक्रयविधिविरोधापत्तेः तद्विषयस्थप्रजापतिगृहादिष्वपि स्वत्वापत्तेश्च । तस्मात् नासौ देया । माण्डलिकेनापि न मण्डलम् । परिक्रयादिलब्धं गृहक्षेत्रादिकं तु देयमेव ।

मण्डन— 'देयं भूगोलकं न तु ।'

शंकर— 'देया भूर्मण्डलं नापि ।'

* विश्वजिति सोमस्य विध्यन्तः न दार्शपौर्णमासिकः । ८।१।९।१६. * 'स स्वर्गः स्यात् सर्वान् प्रत्यविशेषात्' ( ४।३।७।१५ ) इति सूत्रेण विश्वजिति अश्रूयमाणमपि अधिकारिणं संपादयितुं तद्विशेषणं स्वर्गफलं युक्त्या स्थापितम् ( इति पूर्वपक्षः ) । वि. १।१।१.

* विश्वजिदधिकरणे ( ४।३।५ ) हि सर्वेषामनारभ्यवादानामश्रुतफलानां क्रतुसंबन्धप्रमाणश्रुत्यादिशून्यानां अफलत्वनिराकरणेन फलवत्त्वं साध्यते । **रत्न.** ४।१।३।३.

* विश्वजिदधिकरणसिद्धान्तसूत्रगतस्य ( ४।३।५।११ ) 'अर्थानां ह्यर्थवत्त्वेन' इत्याद्यवयवस्य योग्यतानुरोधेन व्यवहितान्वयपरतया व्याख्यानम् । **सु. पृ.** ५८२.

## विश्वजिदादि एकफलकम् ॥

**तत् सर्वार्थमनादेशात् । ४।३।६।१३॥**

**भाष्यम्--** ' तस्मात् पितृभ्यः पूर्वेद्युः करोति ' इति । ' विश्वजिता यजेत ' इति फलवदेवंविधं कर्मेत्येतत्समधिगतम् । इदं तु संदिह्यते किं सर्वफलमेतत्कर्म, उत एकफलमिति । किं प्राप्तम् ? तत् सर्वार्थमिति । कुतः ? अनादेशात् । न किंचिदिहातिदिश्यते इदं नाम फलमिति । अस्ति चेत् विज्ञायेत । तस्मात् सर्वार्थमविशेषात् ।

**टुप्--** अनादेशाद्यद्यत्कामयते फलमनियमेन तस्य तस्योपायत्वेन विधीयमानत्वात् सर्वार्थता ।

**एकं वा चोदनैकत्वात् । १४ ॥**

**भाष्यम्--** एकफलं स्यात्, न वा सर्वार्थम् । कुतः ? चोदनैकत्वात् । साकाङ्क्षत्वात् एतदर्थिपदेन संबध्यते इत्युक्तम् । यच्चानेकेनापि संबद्धुं शक्नोति, तत् एकेन संबध्यते । एकेन संबद्धं सत् निराकाङ्क्षं भवति । न तदपरेणापि संबन्धमर्हति । तस्मादेकैव कर्तव्यचोदना न्याय्या । तस्मादेकफलतेति ।

**टुप्—** यजेतेत्यस्य फलमाकाङ्क्षतः फलमध्याह्रियते । यस्यैव करणतां गतस्तेन विशेषेण निराकाङ्क्षः, कुतोऽनियमप्रसङ्गः । तस्मात् नियतमेकं फलं साधयतीति ।

**शा--** स्थिते फलार्थत्वे किं सर्वफलार्थमुतैकार्थमिति विशेषानिर्देशात् सर्वार्थत्वे प्राप्ते, अभिधीयते- ' **येनैवैकेन तद्वाक्यं साकाङ्क्षं परिपूरितम् । तेनैवैतन्निराकाङ्क्षमिति नानेककल्पना ॥** '

**सोम—** पूर्वोक्तस्य विशेषपर्यवसानकथनेन निर्वाहात् **संगतिः** । अनादेशात् फलविशेषानिर्देशादित्यर्थः ।

**वि--** ' सर्वं फलमुतैकं स्यात्, सर्वमस्त्वविशेषतः ।, एकेन तन्निराकाङ्क्षमतोऽनेकं न कल्प्यते ॥ '

[ **भाट्टे** नेदं पृथगधिकरणम् । ]

**मण्डन--** ' एकमेव फलं ततः । ' ततः विश्वजिद्यागात् एकमेव फलं सिध्यति इति शेषः ।

**शंकर--** ' तत्रानेकं त्वेकमेव । '

## विश्वजिदादि सफलम् ॥

**चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते । ४।३।५।१० ॥**

**भाष्यम्--** इदमामनन्ति ' तस्मात्पितृभ्यः पूर्वेद्युः करोति ' इति । तथा ' सर्वेभ्यो वा एष देवेभ्यः सर्वेभ्यः छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानमागुरते, यः सत्रायाऽऽगुरते, स विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत ' इत्येवंलक्षणके श्रुते भवति संदेहः किं निष्फलमेतत्कर्ममात्रं उत सफलमिति । किं प्राप्तम् ? निष्फलमिति । कुतः ? फलाश्रुतेः, शब्दप्रमाणके कर्मण्येवंजातीयके । न ह्यशब्दं प्रतीयते । **ननु** वैदिकानि कर्माणि फलवन्ति भवन्तीत्येवमुक्तम् ! **उच्यते** । फलदर्शनात्तानि फलवन्तीत्युक्तम् , न वैदिकत्वात् । एवं तर्हि कर्तव्यतावगमात् फलवन्तीत्यध्यवस्यामः । सुखफलं हि कर्तव्यं भवतीति ; उच्यते । प्रत्यक्षविरुद्धमेवंजातीयकस्य कर्तव्यत्वम् । साक्षाद्धि तद्दुःखफलमवगच्छामः । न चैवंजातीयकं प्रत्यक्षविरुद्धं वचनं प्रमाणं भवति । यथा अम्बुनि मज्जन्त्यलाबूनि, शिलाः प्लवन्ते, पावकः शीत इति । अपि चानुमानादत्र सुखफलता । यस्मात् कर्तव्यमतः सुखफलमिति । प्रत्यक्षं चानुमानात् बलीयः । तस्मान्निष्फलमेवंजातीयकमिति । एवं ह्यत्र फलं कल्प्येत । यद्येतत् फलवत् , एवमुपदेशोऽर्थवान् भवतीति । उच्यते । कामं वाक्यमनर्थकमिति न्याय्यं वचनं भवेत् । भवन्ति ह्यनर्थकान्यपि वचनानि, दश दाडिमानि षडपूपा इत्येवंजातीयकानि । **ननु** विश्वजिद्व्यापारः सुखफल इति । सुखफलं हि भवत्यपूर्वम्, न व्यापारः । न चायमपूर्वस्य कर्तव्यतामाह । फलकर्तव्यतायां हि सत्यां तदवगम्यते । वाक्यार्थश्च फलस्य कर्तव्यतामाह, न पदार्थः । न चात्र फलसंबद्धं वाक्यमस्ति । तस्मात् नायमपूर्वस्य विधायकः शब्दः । व्यापारमात्रमेव विदधाति । स च व्यापारो न तदात्वे सुखफलः, नाप्यायत्याम्, भङ्गित्वात् । तत्रापूर्वं कल्पयित्वा फलमवगम्येत । फलं च कल्पयित्वाऽपूर्वम् । एवमितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तस्मात् निष्फलमेवंजातीयमिति ।



आह । अध्याहरिष्यामहे फलवचनम् । उच्यते । न शक्यं परिपूर्णे वाक्येऽध्याहर्तुम् । परिपूर्णं हीदं वाक्यम् , विश्वजिद्यागः कर्तव्य इति । न किंचित्पदमस्ति साकाङ्क्षम् , येनाध्याहृत्य फलं संबध्येत । यथा अक्षेमेऽपि पथि भवति विप्रलम्भकोपदेशः । क्षेमोऽयम् , यथा गच्छतु भवाननेनेति । परिपूर्णमेव इदं वाक्यम् , नाध्याहारमर्हति विप्रलम्भकत्वेऽपि । एवमिदमपि परिपूर्णं वाक्यं नाध्याहारमर्हति । अपि च अध्याह्रियमाणे नैवेदं वाक्यं संबध्येत । विश्वजिद्यागः कर्तव्यः , इदं च फलं भवतीति, द्वाविमावर्थौ । एकार्थं च वाक्यं समधिगतम् । तस्मादनर्थकमेवंजातीयकं कर्मेति ।

**टुप्—** विश्वजिदसाधनं ( फलाभावात् ) फलाश्रवणात् । कर्तव्यतावचनस्तस्य कर्तव्यताविनाभूतो न फलेन । तस्मादविनाभावात् , यस्मात्परः प्रत्ययः तस्य कर्तव्यतां बोधयति । एवं श्रुत्यनुग्रहो भवति । अथोच्येत, फलेन विना यागे न प्रवर्तते । तस्मात् कर्तव्यत्वात् नूनं सुखदोऽयमित्यवसायः । उच्यते । अनुमानात् सुखं कल्प्यते । प्रत्यक्षेण तु दुःखम् । अध्याहृतेन फलेनैकवाक्यतेति चेत् । उच्यते । यजेतेति निराकाङ्क्षत्वात् अस्य कुतोऽध्याहारः । अध्याहृतेनापि साध्यसाधनसंबन्धस्यानवगमान्नास्ति संबन्धः । यजेत स्वर्गमिति कुतः संबन्धः । तस्मात् सति साध्यसाधनसंबन्धे भवति फलार्थताऽपूर्वद्वारेण । यत्र पुनर्यजेतेति केवलः पदार्थस्तत्र साध्यसाधनसंबन्धो नास्ति । तदभावे अपूर्वाभावोऽपूर्वाभावे फलाभावः ।

**अपिवाऽऽम्नानसामर्थ्याच्चोदनाऽर्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धस्तस्मात् श्रुत्येकदेशः सः । ११ ॥**

**भाष्यम्--** अपिवेति पक्षव्यावृत्तिः । न चैतदस्ति, अफलमिति । फलचोदना अर्थेन गम्येत । कतमेन अर्थेन ? कर्तव्यतावचनेन । आह । ननु व्यापारस्य प्रत्यक्षविरुद्धा कर्तव्यता । न व्यापारस्योच्यते । कस्य तर्हि ? व्यापारेणान्यस्य कस्यचिदिति । भवति तेनेदानीं वाक्यं साकाङ्क्षम् । तत्राध्याहारोऽवकल्पते । भवति चाध्याहारेणापि कल्पना । यथा, द्वारं द्वारमित्युक्ते, संव्रियतामपाव्रियतामिति वा । कथं पुनरवगम्यते, इहाध्याहारेण कल्पयितव्यमिति । आम्नानसामर्थ्यात् । एवमिदमाम्नानमर्थवत् भविष्यति । शक्नोति चार्थमवगमयितुम् । तस्मान्नानर्थकम् ।

**ननु** यत्पदमध्याह्रियते तत्पौरुषेयम् । तेनावगतं चाप्रमाणम् । **उच्यते** । नापूर्वमध्याहरिष्यामः । वैदिकेनैवास्य सहान्यत्र समाम्नातेन एकवाक्यतामध्यवस्यामः । आह । नैवं शक्यम् । अन्तिकादुपनिपतितं हि पदं वाक्यार्थमुपजनयितुमलं भवति, न दूरादवतिष्ठमानम् । **अत्रोच्यते** । व्यवहितमपि हि पराणुद्य व्यवधायकं आनन्तर्येण मनसि विपरिवर्तमानमलमेव भवति विशेषमुपजनयितुम् । यथा- ' इतः पश्यसि धावन्तं दूरे जातं वनस्पतिम् । त्वां ब्रवीमि विशालाक्षि या पिनक्षि जरद्गवम् ॥ ' इति । अत्र, इतः पश्यसीति शब्दो बुद्धौ भवति । सः , दूरे जातं वनस्पतिमित्येतैः पदैर्व्यवहितेन जरद्गवमित्यनेन शब्देन व्यवधायकान्यपोह्य संबध्यमानः संबध्यते । अर्थानां ह्यर्थवत्त्वेन हेतुना व्यवहितान्यपि वचनानि संबध्यन्ते । यानि पुनरर्थतो ह्यसमर्थानि तान्यानन्तर्येऽपि सति न परस्परेण संबन्धमर्हन्ति । यथा, या पिनक्षि जरद्गवमित्येवमादीनि । तस्मान्न पौरुषेयता भविष्यति । आह । ननु अत्रापि अपेक्षा पौरुषेयी । उच्यते । नापेक्षा वेदे । वेदार्थप्रतिपत्तावभ्युपाय एष भवति । अनन्तरापेक्षायां असंभवन्त्यां आम्नानसामर्थ्यादितरापेक्षावृत्तिराश्रीयते । तस्मात् श्रुत्येकदेशः सः । फलकामपदं दूरेऽपि सत् तस्य वाक्यस्यैकदेशभूतमित्यर्थः ।

**टुप्--** कर्तव्यतावचनो भावनायां पुरुषं प्रवर्तयति । तस्याश्च प्रयोज्येन भाव्यम् । स च पुरुषार्थः प्रयोज्यतां प्रतिपद्यते । तस्मात् पुरुषार्थो भाव्यमानः । अतः सर्वाख्यातेषु पुरुषार्थोऽविनाभूतः, प्रयाजादिषु द्वारेण, दर्शपूर्णमासादिषु साक्षात् । विश्वजिदादयोऽप्यनङ्गत्वात् साक्षात् पुरुषार्थस्य साधकाः । विश्वजितेति च यागनामधेयं करणविभक्तिसंयुक्तम् । तत्र यदि यागोऽपि करणम्, ततः सामानाधिकरण्येन नामधेयत्वमुप-

द्यपते। कर्मीभूते पुनः सामानाधिकरण्याभावान्नामधेया-भावः। न च विश्वजिद्द्रव्यम्। अप्रसिद्धत्वात्। अपि वाऽऽम्नानसामर्थ्यात् भावनासामर्थ्यादित्यर्थः। एकाह-काण्डपठितो विश्वजिदिहोदाहरणम्।

**वाक्यार्थश्च गुणार्थवत्। १२ ॥**

**भाष्यम्**-- 'इन्द्राय राज्ञे सूकरः' इति यथा वाक्यान्तरस्थेन विधिशब्देन गुणविधानं भवति, एवं फलविधानमपि भवितुमर्हतीति। यथा 'वरुणो वा एतं गृह्णाति' इति व्यवधारणकल्पनायामपि प्रामाण्य-मेवमिदमपि द्रष्टव्यम्।

**शा**-- 'विश्वजिता यजेत' इत्यादिषु अश्रुतफलासु चोदनासु फलं अस्ति नेति संशयः। '**नास्त्येव फल-मेतस्यां चोदनायां फलाश्रुतेः। शब्दगम्यमदृष्टं हि फलं तेन विना कथम् ॥ प्रत्येतुं शक्यते तच्चेदध्याहारेण लभ्यते। परिपूर्णमिदं वाक्यं नाध्याहारमपेक्षते ॥' 'तदभावे तु धात्वर्थ-भाव्यत्वं को निवारयेत्। तथा च सति संपूर्णं वाक्यं नाध्याहृतिक्षमम् ॥'** तस्मात् निष्फल-मेवेदं कर्मेति प्राप्ते, उच्यते- '**विधियुक्ता क्रिया नैव धात्वर्थं भाव्यमृच्छति। भाव्येन च विना वाक्यं नैव तत्परिपूर्यते ॥ वाक्यसंपूरणायाऽतः फलमध्याहरिष्यते ॥' 'तेनाश्रुतफलानामप्य-ध्याहृतफलान्वयात्। सर्वेषां कर्मणामत्र फल-वत्त्वमवस्थितम् ॥'**

**सोम**— व्रतवदेव फलाश्रवणाद्विश्वजिदादेरपि न फलार्थत्वमिति प्रत्यवस्थानात् **संगतिः।**

**वि**-- 'नैवास्ति विश्वजिद्यागे फलमस्त्युत नाश्रुतेः। भाव्यापेक्षाद्विधेः कल्प्यं फलं पुंसः प्रवृत्तये ॥'

**भाट्ट**— 'विश्वजिता यजेत' इत्येकाहकाण्डपठित-विश्वजिदादावश्रुतफलके भावनाया भाव्यापेक्षायां समान-पदश्रुत्युपनीतोऽपि यागो न भाव्यः, ततोऽप्यन्तरङ्ग-विधिश्रुत्यवगतप्रवर्तकत्वबलेन पुरुषार्थस्यैव भाव्यत्वा-वगतेः, तृतीयान्तनामधेयसामानाधिकरण्येन यागस्य करणत्वावगतेश्च। अतोऽश्रुतेऽपि फले तद्वाचककाम-पदान्तफलपदाध्याहारेण पुरुषार्थफलकत्वमेव। तच्च पदमध्याहृतमपि वेदाकाङ्क्षया अध्याहृतत्वाद्वैदिकमेव। वेदतुल्यं वा। तच्च फलमेकमेव कल्प्यते न सर्वाणि, एककल्पनयैव निराकाङ्क्षत्वात्। तदप्येकं स्वर्ग एव, न तु पुत्रपश्वादिः 'यन्न दुःखेन संभिन्नम्' इत्यादि-वाक्यात् स्वर्गशब्दस्य सुखविशेषमात्रवाचित्वेन विजा-तीयस्वर्गत्वस्यैव जन्यतावच्छेदकत्वे लाघवात्, पुत्रादीनां तु सुखसाधनतया पुरुषार्थत्वस्य विलम्बोपस्थितिकत्वाच्च। स्वर्गस्य बहुभिः प्रार्थ्यमानतया शास्त्रस्य महाविषयत्व-लाभाच्च। लाघवाविशेषेऽपि च न सुखत्वस्य ऐहिका-मुष्मिकसाधारणस्य विलम्बोपस्थितिकत्वाच्च जन्यताव-च्छेदकत्वम्, स्वरसतो दुःखासंभिन्नसुखस्यैवेच्छाविषय-त्वात् दुःखसंभिन्नसुखस्य फलत्वानुपपत्तेः, व्याप्यधर्मेण जन्यत्वसंभवे व्यापकधर्मेण अन्यथासिद्धत्वाच्च व्यभि-चारेण सुखत्वस्य स्वर्गत्ववदेव कार्यतावच्छेदकत्वानुपप-त्तेश्च। अतो विश्वजित्त्वावच्छिन्नकारणतानिरूपितजन्य-तावच्छेदकत्वं विजातीयस्वर्गत्वस्यैव युक्तम्। मोक्षोऽपि च यदि दुःखध्वंसरूपः, तदा पापक्षयादिवदेव न विश्वजिज्जन्यः जन्यतावच्छेदकगौरवात्। यदि त्वानन्दा-वाप्तिरूपः तदा तस्य ज्ञानैकजन्यत्वान्न विश्वजिज्जन्यत्वम्। यदाऽपि 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति वचनात्कर्ममात्रजन्यत्वम्, ज्ञानकर्मसमुच्चयो वा प्रामाणिकः तदाऽपि 'त्यक्त्वा कर्मफलासङ्गम्' इत्या-द्युपक्रमोपसंहारपर्यालोचनया कर्मशब्दस्य सर्वकर्मपरत्वा-वसायादश्रुतफलकविश्वजिदादिमात्रपरत्वे प्रमाणाभावः। न चैवमपि कर्मान्तरसाधारण्येन अस्यापि तत्फलकत्वो-पपत्तेः विश्वजिद्वाक्यस्य चोत्पत्तिपरत्वेनापि चरितार्थ-त्वात्फलकल्पनानुपपत्तिरिति वाच्यम्, उक्तवाक्येन कल्पनालाघवानुरोधेन क्लृप्तप्रयोगविधीनामेव कर्मणां मोक्षफलकत्वावगतेः अक्लृप्तप्रयोगकस्य विश्वजिदादे-र्ग्रहणे वैरूप्यप्रसङ्गेन विश्वजिद्वाक्येऽपि प्रयोगविधि-सिद्ध्यर्थं कर्मफलकल्पनाया आवश्यकत्वात्। एतेन 'विविदिषन्ति यज्ञेन' इत्यादिवाक्यात् 'कर्मणा पितृलोकः' इत्यादिवाक्याद्वा विविदिषामात्रार्थत्वं पितृलोकमात्रार्थत्वं वा विश्वजिदादेरपास्तम्। अत एव प्रयोगान्तरकल्पनाभियैव न प्रयाजादीनामपि विविदिषा-



र्थत्वम्। एतेन 'धर्मेण पापमपनुदति' इत्यादिवाक्येन पापक्षयफलकत्वं विश्वजितोऽपास्तम्। तस्य नित्यस्थले निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वेन विश्वजिति प्रयो-जकत्वकल्पने वैरूप्यापत्तेः।

**मण्डन**-- 'विश्वजित् सफलो यागः।'

**शंकर** — 'फलं विश्वजितोऽस्ति च।'

## ☸ विश्वजिन्न्यायः ( स्वर्गः फलम् ) ॥

**स स्वर्गः स्यात्, सर्वान् प्रत्यविशिष्टत्वात्। ४।३।७।१५॥**

**भाष्यम्**--एवंजातीयकेष्वेवोदाहरणेषु एतत् समधि-गतमेकं फलमिति। इदमिदानीं संदिह्यते किं यत्किंचित्, उत स्वर्ग इति। यत्किंचिदिति प्राप्तम्, विशेषानभि-धानात्। तत उच्यते। स स्वर्गः स्यात् सर्वान् प्रत्यवि-शिष्टत्वात्। सर्वे हि पुरुषाः स्वर्गकामाः। कुत एतत्? प्रीतिर्हि स्वर्गः। सर्वश्च प्रीतिं प्रार्थयते। किमतो यद्येवम्? अविशेषवचनः शब्दो न विशेषे व्यवस्थापितो भवि-ष्यति। यजेत कुर्यादिति। तस्मात् स्वर्गफलमेवंजाती-यकमिति।

**प्रत्ययाच्च ।१६॥**

**भाष्यम्**-- भवति च अनादिष्टफले कर्मणि स्वर्गः फलमिति प्रत्ययो लोके। एवमुच्यते। आरामकृत् देवदत्तः, नियतोऽस्य स्वर्गः। तडागकृत् देवदत्तः, नियतोऽस्य स्वर्ग इति। किमतो यद्येवम्? इत्थ-मनेन न्यायेन स्वर्गे संप्रत्ययो भवति। यस्मात् स्वर्गफलेषु कर्मसु कर्तव्येषु फलवचनं नैवोच्चारयन्ति, गम्यत एवेति। तस्मादप्यवगच्छामः, एवंजातीयकेषु स्वर्गः फलमिति।

**शा**— एकं फलमित्युक्तम्, तदेकं किमिति न ज्ञायते, अतः पुनरपि सर्वार्थत्वं अप्रामाण्यं वा अनध्य-वसायात् प्राप्नोति। तदुच्यते-'**स्वर्गोऽनतिशयप्रीति-रूपो दुःखविवर्जितः। भूयांसोऽभिलषन्त्येनमल्पे त्वल्पसुखं नराः ॥**' सति संभवे शास्त्रस्य भूयोविषयत्वं न्याय्यम्, अविशेषप्रवृत्तस्यातिसंकोचपरिहारात्। स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषां अभिमतः। पश्वादिसुखं तु दुःखानुषक्तमल्पं च केचिदेव प्रार्थयन्ते। प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया कियताऽपि विलम्बेन हृदयमागच्छति। '**ततस्तु सुकरज्ञानं सुखमेव परं फलम्। तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम् ॥**'

**सोम**-- यत् एकं फलं सः स्वर्गः स्यात् सर्व-पुरुषान् प्रति अविशिष्टत्वादिति **सूत्रार्थः।**

**वि** — 'एकं यत्किंचिदथवा नियतं, न नियाम-कम्। तस्मादाद्यः सर्वपुंसामिष्टत्वात्स्वर्ग एव तत् ॥'

**मण्डन**-- 'स स्वर्गस्त्वविशिष्टत्वात्।' ( सर्वैः पुरुषैः ईप्सिततमत्वात् इत्यर्थः )।

**शंकर**-- 'तत्रापि स्वर्ग एव नः।'

**☸ विश्वजिन्न्यायः।** यथा- विश्वजिदधिकरणे हि 'विश्वजिता यजेत' इत्यत्र फलस्याश्रवणात् फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभि-लषितत्वेन स्वर्गः फलमित्युक्तम्। एवं च यत्रार्थवादवाक्ये विधिवाक्ये फलं न श्रूयते तत्र स्वर्गः फलं कल्प्यते इति प्रकृतन्यायविषयः। एवं प्रकृतान्तरेऽपि ऊह्यमिति। **साहस्री**. ८५७.

* **अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः** ( अध्ययनस्य )। वि. १।१।१, * ऋत्विग्गामिफलस्य कस्यचिदश्रवणात्। न च विश्वजिन्न्यायेन कल्पयितुं शक्यम्, परार्थकर्मणि प्रवृत्तस्य अर्थवृत्तेरेव असंभवात्। १०।८।१४, * 'तस्मात् सुवर्णं हिरण्यं भार्यम्। सुवर्ण एव भवति' इत्यत्र क्रतौ नियन्तुमशक्यत्वात् पुरुषार्थ-मिदं धारणम्। न चात्र फलाभावः, विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्। ३।४।१२. * 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यं फलसंबन्धमपि न करोति उत्पत्तिवाक्येन कृतत्वात् विश्वजिन्न्यायेन। **टुप्**. ९।१। ११ पृ. १६३६. * द्वादशाहादूर्ध्वंभाविनः त्रयोदश-रात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः। 'त्रयोदश-संख्याका रात्रयो यस्मिन् सत्रविशेषे सोऽयं त्रयोदशरात्रः' इति समुदायप्राधान्येन एकवचनान्ततया प्रायेण निर्देशो भवति। क्वचित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं प्राधान्यमभ्युपेत्य एक एव सत्रविशेषः बहुवचनान्तेन रात्रिशब्देनाम्नायते। तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीयः इति पूर्वपक्षः। वि. ४।३।८.

* धर्मजिज्ञासाधिकरणे अध्ययनविधिः स्वर्गार्थे इति विश्वजिन्न्यायेन पूर्वपक्षः । बाल. पृ. २. * 'न कलञ्जं भक्षयेत्' अत्र पर्युदासः । तस्य च अभक्षणसंकल्पस्य विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीयः ( इति पूर्वपक्षः) । वि. ६।२।५. * 'न कलञ्जं भक्षयेत्' इत्यादौ भक्षणाभावसंकल्पस्य विश्वजिन्न्यायेन स्वर्गार्थत्वेन विधानं इति ( पूर्वपक्षोऽयम् ) । भाट्ट. ६।२।५. * न चात्र ( हिरण्यधारणे ) फलाभावः, विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात् । वि. ३।४।१२. * पापक्षयस्यैव भाव्यत्वं नित्यस्थले 'धर्मेण पापमपनुदति' इत्यादिवाक्येभ्यः प्रतीयते । अत एव न विश्वजिन्न्यायेन स्वर्गकल्पनम् । भाट्ट. ६।३।२. * फलसंबन्धश्च (न क्रियते) विश्वजिन्न्यायेन प्राप्तत्वात् । टुप्. ७।१।१२ पृ. १५२५. * 'मलवद्वाससा न संवदेत' इति प्रतिषेधस्य पुरुषार्थत्वे आर्थवादिकस्यापि फलस्याभावात् विश्वजिन्न्यायेन तत्कल्पनापत्तेः क्रत्वर्थ एवायं प्रतिषेधः । कु. ३।४।११।२४. * 'सोमेन यजेत', 'स्वाध्यायमधीयीत', 'प्रजामुत्पादयेत्' इति । तत्र सोमः काम्यः, 'ज्योतिष्टोमेन स्वर्गकामो यजेत इति कामसंयोगेन आम्नातत्वात् । अध्ययनप्रजोत्पादनयोरपि विश्वजिन्न्यायेन स्वर्गे फलत्वेन कल्पिते कमियोगोऽपि कल्प्यते ( पूर्वपक्षे इदम् ) । वि. ६।२।११, * 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' अत्र श्रुतेन ब्रह्मवर्चसफलेनैव निराकाङ्क्षे विधिवाक्ये विश्वजिन्न्यायेन स्वर्गफलकल्पनाया असंभवात् । तस्मात् श्रुतमेव फलम् । ४।३।९. * 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यत्र विश्वजिन्न्यायेन स्वर्गकामपदाध्याहारः शङ्कितः चतुर्थे । बाल. पृ. ३. * 'स्वाध्यायोऽध्येतव्यः' इत्यत्र अक्षरग्रहणमात्रं विधेयम् । अश्रुतोऽपि च स्वर्गः विश्वजिन्न्यायेन कल्पनीयः । वि. १।१।१.

* **विश्वजिद्यागः**, यः सत्रं संकल्प्य नानुतिष्ठति तस्य प्रायश्चित्तत्वेनापि विहितः 'यः सत्रायागुरते स विश्वजिता यजेत' । वि. ६।४।११ .

* 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायाध्ययनेन भावयेत् 'किं' इति तत्र विश्वजिद्वत् फलं न कल्प्यते ( विश्वजिति यथा कल्प्यते तथा नात्र ) । टुप्. ५।१।४।६.

* **विश्वजिद्विधानं** सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया । ६।४।११।३२-३३. 'सत्रसंकल्पानन्तरं सत्रमकुर्वतः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विश्वजिद्विधिः** सत्राय प्रवृत्तमात्रस्यापि साम्युत्थाने । ६।५।७।२५-२७. 'सत्राय प्रवृत्तमात्रस्य साम्युत्थाने विश्वजिद्विधानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विश्वजिच्छब्दः** यागनामधेयम् । वि. १।४।२, * **विश्वजिच्छब्दस्य** यागनामधेयतया प्रामाण्यम् । १।४।१.

* **विश्वजिदतिरात्रः** पशुकामस्य इति कातीयसूत्रे । बाल. पृ. ३४.

* **विश्वज्योतिः** । 'अथैष विश्वज्योतिः' अत्र संज्ञाभेदात् कर्मभेदः । वि. २।२।८. * विश्वज्योतिः यज्ञः । जैब्रा. १।२३५ । 'नवतिशतं स्तोत्रियाः । ( अधिके ) द्वे स्तोत्रिये उपप्रस्तुत्ये । अथो पक्षौ एतौ पवमानौ तावेव तौ समौ करोति । अथो विश्वज्योतिरेव यज्ञक्रतुर्भवति ।'

*'**विश्वसृजामयनं** सहस्रसंवत्सरम्' विश्वसृजामयनं नाम सत्रं सहस्रदिनम् । संवत्सरशब्दो दिनपरः । वि. ६।७।१३. * **विश्वसृजामयने** मनुष्याणामेवाधिकारः, संवत्सरशब्दस्य दिवसपरत्वात् । ६।७।१३।३१-४०. मीको. पृ. २९८ 'अधिकारः विश्वसृजामयने०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विश्वामित्रस्य** चाण्डालयाजनं धर्मव्यतिक्रमः । उच्यते । विश्वामित्रस्य यत् रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितम्, तत् 'सर्वं बलवतः पथ्यम्' इत्यनेन न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयतः, उत्तरकालं वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि । मन्दतपसां गजैरिव महावटकाष्ठादिभक्षणं आत्मविनाशायैव स्यात् । वा. १।३।३।७ पृ. २०३, २०८ । सुधा—विश्वामित्रः क्षत्रियमपि त्रिशङ्कुं ब्राह्मणकन्याहरणकुपितस्य पितुः शापात् चाण्डालत्वमापन्नं



याजयामास । पृ. १८५, व्यामोहाभावेऽपि 'आपदि मत्कुटुम्बं भृतवतः त्रिशङ्कोः प्रत्युपकर्तव्यं मया' इति प्रत्युपकारेच्छया 'चण्डालमपि वा सशरीरं स्वर्गं नयामि' इति स्वप्रभावख्यापनेच्छया त्रिशङ्कुद्वेष्टरि वसिष्ठे द्वेषाच्च 'तपोबलेन पापं नाशयामि' इत्यध्यवसाय चण्डालं याजयामास । पृ. १९१.

* **विश्वामित्रतत्समान**कल्पानामेवाधिकारः (सत्रे) । ६।६।४।२४-२६. मीको. पृ. ३०४ 'अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव' इत्यत्र अधिकरणं द्रष्टव्यम् ।

⧗ **विषं मृत्युरिति न्यायः** । मृत्योर्निमित्तमिति गम्यते । साहस्री. १९१.

* '**विषं** भुङ्क्ष्व' इत्यत्र अनीप्सितकर्मत्वपरा द्वितीया । मणि. पृ. ३. * न हि मन्दविषेण वृश्चिकेनापि दष्टो म्रियेत न जातुचित्, कदापि तत्र चिकित्सा नाऽऽदरेण कर्तव्या भवेत् ( न तु तथा किंतु कर्तव्यैव चिकित्सा ) । भा. २।३।६।१६.

⧗ **विषस्य विषमौषधमिति न्यायः** । अयं लौकिकगाथारूपः स्पष्टः । साहस्री. ८३९.

⧗ **विषकीटन्यायः** । यथा विषात् जातः कीटो विषं भक्षन् सन् विषस्थो जीवति, तद्वत् प्रकृतेऽपि । विवृतश्च अयं पद्येन । तद्यथा— "विप्रास्मिन्नगरे महान्कथय कस्तालद्रुमाणां गणः, को दक्षः परवित्तदारहरणे सर्वोऽपि पौरो जनः । को दाता रजको ददाति वसनं प्रातर्गृहीत्वा निशि, तत्किं जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम् ॥' इति । साहस्री. १०९.

* **विषघ्नः** ओषधिः । 'यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम् । दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ॥' इति । वा. १।३।३।७ पृ. २०७.

* **विषघ्नमन्त्रः** । 'यथा वा वरदानादौ देवताराधनोद्भवे । यद् वक्ष्यसि स मन्त्रस्ते विषघ्न इति मन्त्रिते ॥ लोकः स्मरति तं मन्त्रं विषापहरणादिषु ॥' वा. १।३।३।७ पृ. २०७.

⧗ **विषभक्षणन्यायः** । दिव्यविशेषात्मकोऽयं न्यायः । साहस्री. ११७.

⧗ **विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति न्यायः** । अयं न्यायो हि कुमारसंभवाख्यकाव्यस्य द्वितीयसर्गीयपञ्चपञ्चाशत्तमश्लोकेन विवृतः । यथा– 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् । विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥' इति । साहस्री. १३४.

* **विषव्रणानां** पाटनमन्तरेण नोपशान्तिः । वि. ३।८।४.

* **विषमा** हि पक्तिः आजानां आविकानां च मांसानाम् । यावता कालेन आजानि पच्यन्ते तावता आविकानि विलीयन्ते । भा. ११।४।९।३७.

⧗ **विषममन्त्रकर्मन्यायः** । एकस्मिन् कर्मणि शाखाभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः ॥

ऐन्द्राग्नाः षड् यागाः काम्याः याज्यानुवाक्यायुगले तु द्वे एवाम्नाते तत्राद्यं युगलमाद्यस्य कर्मणोऽङ्गं निर्विवादम् । अन्यत्तु युगलं पञ्चानामपि कर्मणामङ्गम् । युगलद्वयं वा पुनः पुनरावर्त्य त्रिरनुवाकपाठे तदन्तर्गतमन्त्राणामिव दण्डकलितवद्विषमाणामेकं समानानामन्यदङ्गम् । इति प्राप्ते, 'समं स्यात्' इति न्यायेनाङ्गिनामङ्गयोश्च विभागे सति आद्यत्रयस्याद्यमन्त्यत्रयस्यान्त्यमङ्गमिति स्वस्थानविवृद्धिः । संकर्ष. १।२।२.

* **विषमपदा** बृहती । पादेषु अक्षराणि ९।८।११।८ । उदा० 'सनितः सुसनित' ( ऋसं. ८।४६।२० ) ।

* '**विषयः** संशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' संगतिश्चेति क्वचित् पाठः । मणि. पृ. ५. * विषयः— एवं यथासंयोगं शेषविनियोगः स्थितः । इदानीं तद्विशेषचिन्ता । वा. ३।१।७।१३-१५.

* **विषयावबोधने** विध्यर्थवादयोः शक्तिस्तुल्या । वा. ३।४।११।३१ पृ. ९६७.

⧗ **विषयाऽऽकृष्यमाणा हि तिष्ठन्ति सुपथे कथमिति न्यायः** । साहस्री. ७३९.

* **विषयता** ज्ञानोत्पाद्या भाविभूतयोरपि पदार्थयोः तिष्ठति । **मणि** पृ १६, * विषयता ज्ञानविषया-भ्यामतिरिक्ता । सा च नित्या, ज्ञानजन्या वा । ( इदं 'प्रामाण्यवादः' इति हिन्दी **मीको.** २८५७ पृष्ठे द्रष्टव्यम् ) । पृ. १६–१७, * **विषयतायाः** अपि पर्याप्त्यङ्गीकारात् इति परे । पृ. ९८, * विषयतायाः पदार्थान्तरत्वेन समवायेन उत्पत्त्यभावेन समवायिकारणा-नावश्यकत्वम् । पृ. १७.

* **विषयरूपः** अर्थः– योगरूढानां पङ्कजादि-शब्दानां विषयः पद्मत्वादिः ( टिप्पणी द्रष्टव्या ) । **वा.** ३।४।४।१३ पृ. ९३३.

* **विषाणायाः** कण्डूयनं प्रयोजकं प्रासनं तु न प्रयोजकं ज्योतिष्टोमे । ४।२।७।१९.

* **विषाणाकण्डूयनं** सर्वस्मिन्नहर्गणे नियम्येत । अन्त्येऽहनि च प्रासनं स्यात् । **भा.** ११।३।६।१४.

* **विषुवान्** नाम एकाहविशेषः । तत्र अतिदेशतः चत्वारि आज्यसंज्ञकानि शस्त्राणि होतृ–मैत्रावरुण–ब्राह्मणाच्छंसि– अच्छावाकप्रयोज्यानि प्राप्तानि । **सु.** पृ. ११०. * **विषुवति** 'अर्के गृह्णाति' इति । तेन प्राकृतग्रहाणां बाधः इति पूर्वपक्षः । वैकृतप्राकृतानां समुच्चयः इति सिद्धान्तः । **वि.** ५।४।३. * विषुवति अर्कग्रहेण ऐन्द्रवायवादीनां समुच्चयः । १०।४।२।३–५. **मीको.** पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विषुवति आग्रयणाग्रतायाः निवेशः । १०।५।१५।५८. **मीको.** पृ. ८५७ 'आग्रयणाग्रताया विषुवति निवेशः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विषुवति जगत्यामुत्पन्नं साम विद्यते स जगत्सामा । तत्र आग्रयणाग्रान् ग्रहान् गृह्णीयात् शुक्राग्रो विषुवान् इति तु कामाय भविष्यति । **भा.** १०।५।१५।५८. * विषुवति 'महादिवाकीर्त्यं पृष्ठं भवति' इति 'विभ्राड् बृहत् पिबतु' इति जगत्यामुत्पन्नस्य महादिवाकीर्त्यस्य साम्नः पृष्ठसाधनत्वेन विधानम् । **सु.** पृ ८९२.

* **विषुवन्नामके** मुख्ये अहनि पृष्ठस्तोत्रे जगत्सामत्वे सति आग्रयणाग्रत्वं 'यदि जगत्सामाऽऽग्रयणाग्रान्' इति विधीयते न तु कर्मान्तरम् । **वि.** २।३।१.

* **विषुवदतिरात्रः** ज्येष्ठस्य ज्यैष्ठिनेयस्य वा – इति कातीयपुत्रे । **बाल.** पृ. ३४.

* **विष्टारपङ्क्तिः** उत्तरा, बृहती योनिः तयोरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २. **मीको.** पृ. १८१९ 'ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * विष्टारपङ्क्तिः पङ्क्तिः । पादेषु अक्षराणि ८।१२।१२।८ । उदा॰ 'अतीयाम निदस्तिरः' ( **ऋसं.** ५।५३।१४ ) ।

* **विष्टारबृहती** बृहती । पादेषु अक्षराणि ८।१०। १०।८ । उदा॰ 'युवं ह्यास्तं महो॰' ( **ऋसं.** १। १२०।७ ) ।

* **विष्टुतिः अष्टाचत्वारिंशस्तोमस्य ।** 'षोडशभ्यो हिं करोति, स तिसृभिः, स द्वादशभिः, स एकया, षोडशभ्यो हिं करोति, स एकया, स तिसृभिः, स द्वादशभिः, षोडशभ्यो हिं करोति, स द्वादशभिः, स एकया, स तिसृभिः' इति । **तैसं.** ७।२।६ **सायणः.** * विष्टुतिः उद्यती नाम । **वि.** १।४।३, * विष्टुतिः एकविंशस्तोमस्य । सप्तभ्यो हिं करोति, स तिसृभिः, स तिसृभिः, स एकया । सप्तभ्यो हिं करोति, स एकया, स तिसृभिः, स तिसृभिः । सप्तभ्यो हिं करोति, स तिसृभिः, स एकया, स तिसृभिः' इति । ( अस्यार्थः **मीको.** पृ. १२८८ 'एकविंशस्य स्तोमस्य विष्टुतिः' इति हिन्दी द्रष्टव्यः ) । ९।२।६ वर्णकं ३ . * विष्टुतिः **चतुश्चत्वारिंशस्तोमस्य ।** 'पञ्चदशभ्यो हिं करोति, स तिसृभिः, स एकादशभिः, स एकया । चतुर्दशभ्यो हिं करोति, स एकया, स तिसृभिः, स दशभिः । पञ्चदशभ्यो हिं करोति, स एकादशभिः, स एकया, स तिसृभिः' इति । **तैसं.** ७।२।६ **सायणः.** * विष्टुतिः **चतुर्विंशस्तोमस्य ।** 'अष्टाभ्यो हिं करोति, स तिसृभिः, स चतसृभिः, स एकया । अष्टाभ्यो हिं करोति, स एकया, स तिसृभिः, स चतसृभिः । अष्टाभ्यो हिं करोति, स चतसृभिः, स एकया, स तिसृभिः ।' इति । **तैसं.** ७।२।६ **सायणः,** * विष्टुतिः **त्रिवृत्स्तोमस्य ।** तत्र



उद्यती नाम– 'तिसृभ्यो हिं करोति स प्रथमया, तिसृभ्यो हिं करोति स मध्यमया, तिसृभ्यो हिं करोति स उत्तमया, उद्यती त्रिवृतो विष्टुतिः' प्रथमे पर्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये चोत्तमाः । तिसृभ्यः इति तृतीयार्थे पञ्चमी । हिं करोति गायतीत्यर्थः ।। अथ परिवर्तिनी नाम– 'तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः परिवर्तिनी त्रिवृतो विष्टुतिः' इति । पराचीभिः अनुक्रमेण आम्नाताभिः ।। अथ कुलायिनी नाम– 'तिसृभ्यो हिं करोति स पराचीभिः । तिसृभ्यो हिं करोति या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा । कुलायिनी त्रिवृतो विष्टुतिः' इति अत्र प्रथमसूक्ते पाठक्रम एव, द्वितीये मध्यमोत्तमप्रथमाः, तृतीये तु उत्तमप्रथममध्यमाः इत्येवं व्यत्ययेन गातव्याः । तदिदं विष्टुतित्रयं विकल्पितम् । **वि.** १।४।३, * विष्टुतिः **पञ्चदशस्तोमस्य ।** 'पञ्चभ्यो हिं करोति स तिसृभिः, स एकया, स एकया । पञ्चभ्यो हिं करोति स एकया, स तिसृभिः, स एकया । पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः' । एकं सूक्तं त्रिरावर्तनीय तत्र प्रथमावृत्तौ प्रथमाया ऋचः त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ उत्तमायाः । इति । १।४।३, * विष्टुतिः **सप्तदशस्तोमस्य ।** 'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया । पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया । सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः' । अत्र प्रथमावृत्तौ प्रथमाया ऋचः त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तौ मध्यमोत्तमयोः । १।४।३ पृ.४४, * विष्टुतिः स्तुतिप्रकारः । सा च त्रिवृत् पञ्चदश–सप्तदशादीनां स्तोमानामन्यान्या भवति । अत्र ऋचां संख्यादीनां परिवर्तनं भवति । १।४।३. * विष्टुतिः स्तुतिप्रकारविशेषः । तत्रापि ऋचामावृत्तिविशेषेण रचनाविशेषो भवति । किंच पञ्चदशस्य सप्तदशस्य एकविंशस्य इत्यादे. स्तोमस्य विष्टुतयो भिन्ना भवन्ति । **के.** (वि. १।४।३). * स्तोत्रीयापरिगणनार्थाः औदुम्बर्यः प्रादेशमात्राः कुशाः **विष्टुतिः । सु.** पृ. १६०.

* 'विष्णुः उपांशु यष्टव्योऽजामित्वाय' ( 'प्रजापतिः' 'इन्द्राग्नी' ) इत्येवमादयो जामित्वाजामित्वोपक्रमोपसंहारमध्यपातिनः अन्तरालसंबन्धविध्येकवाक्यत्वेन अर्थवादत्वात् पृथग्विधित्वमलभमानाः न देवताविशिष्टकर्मत्रयविधानार्थाः विज्ञायन्ते । **वा.** ३।१।१।१ पृ. ६४९. * विष्णुर्वा उपांशुयाजे देवता स्यात् । तत्र हौत्राम्नानात् । **भा.** १०।८।१७।५३. * 'विष्णुर्वा स्याद्धौत्राम्नानात्॰' ( १०।८।१७।५३ ) इत्यादिना मान्त्रवर्णिकत्वं जैमिनिराश्रयिष्यति । **वा.** २।२।४।१० पृ. ४९५. * 'विष्णुर्वा स्याद्धौत्राम्नानात्॰' ( १०।८।१७।५३ ) उपांशुयाजे, पूर्वाधिकरणपूर्वपक्षे द्रव्यानियमवत् किं देवतायामप्यनियमः, शास्त्रैकप्रमाणत्वाद्वा देवतायास्तेन विना कल्पनाऽयोगात् 'आग्नेयं उपांशुयाजमन्तरा यजति' 'ऐन्द्रं उपांशुयाजमन्तरा यजति' इत्यादिप्राकरणिकवाक्यान्तरस्थाग्नेयादिपदानुषङ्गेण वैकल्पिकप्रकृताग्न्यादिदेवताविधिकल्पनया प्रकृतानामेव मध्ये या काचित् प्रजापतिधर्मोपांशुत्वदर्शनाद्वा प्रजापतिविधिकल्पनया स एव प्रजापतिर्वा, 'प्रजापतिं मनसा यजेत' इति प्रजापतेस्तूर्ष्णीभावधर्मकत्वविधानेन उपांशुत्वधर्मकत्वाभावात् प्रजापतिविधिकल्पनानुपपत्तेः नियमसंभवे चानियमायोगात् मुख्यत्वेन आग्नेयपदमात्रानुषङ्गेण अग्निविशिष्टोपांशुयागविधिकल्पनया अग्निनियमः इति विचारपूर्वकं 'विष्णुर्वा॰' इति सूत्रेण मान्त्रवर्णिकदेवताश्रयणम् । **सु.** पृ. ७५५–५६, * 'विष्णुर्वा स्याद्धौत्राम्नानात्॰' ( १०।८।१७।५३ ) । शाखाभेदेन उपांशुयाजक्रमे वैष्णवादियाज्यानुवाक्यायुगलाम्नानात् श्रुत्यविनियुक्तस्यापि मन्त्रस्य प्रधानाकाङ्क्षितदेवताप्रकाशनलक्षणोपकारकत्वसंभवे अनाकाङ्क्षितादृष्टोपकारकल्पनाऽयोगात् देवताकल्पकत्वोपपत्तेः मन्त्रवर्णकल्प्यो देवताविधिः स्थितः । सूत्रे विष्णुग्रहणं अन्तरेण एकशाखायां अमावास्यायां विष्णुयाज्यानुवाक्याम्नानात् अमावास्यायामेव उपांशुयाजहविः कार्यं इति प्रदर्शनार्थं पूर्वपक्षस्थेन कृतम्, न देवतान्तरनिवृत्त्य-

र्थम् । पृ. ७५७. * न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः क्वचिदङ्गीक्रियते । भा. १२।४।१।१. * विष्णोरुरुक्रमस्य आवाहनस्य बाधः वैश्वदेवीयदेवताऽऽवाहनकाले । १०।१।१।१–३ वर्णकं ३. 'वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विष्णोः सर्वदेवानां मध्ये प्राधान्यप्रसिद्धिः 'अग्निर्वै देवानामवमो विष्णुः परमः' इति श्रुतेः । सु. पृ. ७५५.

* **विष्ण्वादिर्देवता** वैकल्पिकी उपांशुयाजे पौर्णमासीकालश्च । १०।८।१७।५१–६१. **मीको.** पृ. १२०२ 'उपांशुयाजे वैकल्पिकी विष्ण्वादिर्देवता पौर्णमासीकालश्च' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विष्णुदेवताकं** हौत्रं अमावास्यां प्रकृत्य आम्नायते– 'इदं विष्णुर्विचक्रमे०' 'प्र तद्विष्णुः स्तवते वीर्येण०' इति । भा. १०।८।१७।५३.

* **विष्णुप्रजापती** हि उपांशुधर्माणौ । भा. २।२।४।१० पृ. ४९५.

* **विष्णुप्रतिमान्यायः** । यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति तदयुक्तम् । ( प्राक् पूर्वपक्षिणा एवमुक्तं " अन्यत्वेऽपि जीवब्रह्मणोः 'अहं ब्रह्मास्मि' इति तादात्म्यदर्शनं शास्त्रात् कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति " इति । तत्रेदमुत्तरम् । **शांभा.** ४।१।३. ब्रसू.

* **विसर्गः** अन्तः । भा. १०।६।१३।३९.

* **विस्तरसंक्षेपौ** । 'तस्माद्विस्तरसंक्षेपावर्थमार्गावुभावपि । व्याख्यायामुपयुज्येते इति कश्चित् क्वचित् कृतः ॥' । वा. ३।१।१।१ पृ. ६५१.

卐 **विहङ्गमन्यायः** । यथा पिपीलिकाप्लवङ्गमापेक्षया विहङ्गमोऽनायासेन उच्चतममपि मधुरं फलरसं आस्वादते, तथैव उत्तमाधिकारी ज्ञानी मध्यमाधिकार्यपेक्षया अनायासेन जन्मान्तरीयसंस्कारैः शुद्धान्तःकरणतया लब्धपूर्णज्ञानोऽचिरादेव चिदानन्दरूपतां प्राप्नोति इति । **साहस्री.** ५१७.

* **विहरणानि** धिष्ण्यानां सवनत्रये त्रीणि, अग्निष्टोमसामकाले चतुर्थम्, इति चत्वारि । **संकर्ष.** ३।२।१६.

* विहवेषु स्पर्धास्थानेषु । 'ममाग्ने वर्चो विहवेष्वस्तु' भोः अग्ने विहवेषु मम वर्चः शारीरं बलमस्तु । वर्चः यशः इति तु भाष्यम् ( ३।८।१३।२६ ) । **भा.** ३।८।१३।२५.

* **विहारः** अन्यपदार्थैः अन्यस्योपभोगः । वृ. ५।३।१४।४०. * विहारः इति गार्हपत्यादिः अग्निः त्रेता उच्यते, विहरणात् । **भा.** १२।२।१।१, * विहारः ऐकादशिनेषु 'एकैकमन्वहमालभेत' इति । तस्यैव विकारः 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति । १०।६।४।९. * विहारः नाम गार्हपत्यादिस्त्रिविधोऽग्निः । त्रिविधाग्निपरिसरो देशविशेषः , यत्र यागकर्मनिष्पादनार्थं ऋत्विगादिसंचारो भवति सोऽपि विहार एव । वि. १२।२।१.

卐 **विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् । १२।२।१।१ ॥**

विहार इति गार्हपत्यादिः अग्निः त्रेता उच्यते, विहरणात् । स लौकिकानां कर्मणां पार्वणस्थालीपाकादीनां अन्येषां च पचनदहनप्रकाशनादीनां अर्थं प्रयोजनं साधयेत्, प्रभुत्वात् आहुतिप्रक्षेपणे पाकादौ च समर्थत्वात् इति पूर्वः पक्षः ।

**मांसपाकप्रतिषेधश्च तद्वत् । २ ॥**

त्रेताग्नयः सर्वलौकिककर्मसंपादका अपि भवेयुः । अत एव मांसपाकप्रतिषेधः सफलो भवति तद्वत् प्रभुत्वात् इत्यर्थः । 'मांसं न पचेयुस्तस्मिन्नग्नौ, यत् पचेयुः क्रव्यादं कुर्युः' इति मांसस्य पाकः त्रैताग्नौ निषिध्यते । प्रसक्तस्य च निषेधः । लौकिके पाके मांसप्रसङ्गः शामित्रे मांसपाकः । तस्मात् त्रेता लौकिकानामर्थं साधयेत् इति पूर्वः पक्षः ।

**निर्देशाद्वा वैदिकानां स्यात् । ३ ॥**

त्रैताग्निः विहारो नाम वैदिकानामेव कर्मणां स्यात् न लौकिकानाम् । वाशब्दः पूर्वपक्षं व्यावर्तयति । वैदिकानामेव कुतः ? निर्देशात् । 'यदाहवनीये जुहोति



तेन सोऽस्याभीष्टः प्रीतो भवति' इत्यादिभिर्वाक्यैः आहवनीयादीनां कार्यं निर्दिष्टम् । नियमशासनं चैतत् । तेन स्थालीपाकादीनामपि स्मार्तानां निवृत्तिः । तेषां तु औपासनोऽग्निराश्रयः ।

**सति चौपासनस्य दर्शनात् । ४ ॥**

सति च विहारे त्रैताग्नौ राजसूये औपासनस्य अग्नेः दर्शनात् वैदिकानामेव विहारः साधनमित्यवगम्यते । 'यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति तस्यौपासने प्रतिहितमालभ्य ( पशुमालभ्य ) जुहुयात्' इति राजसूये कर्मणि प्रवृत्तं वचनम् । यदि च त्रेतैव लौकिकानां कार्यं साधयेत्, तदा नौपासनः स्यात् । तस्मात् लौकिकार्थे न विहारः इति सिद्धान्तः ।

**अभावदर्शनाच्च । ५ ॥**

अभावस्य दर्शनात् । मांसपाकस्य गार्हपत्याद्यग्निषु अभावं दर्शयति 'मांसीयन्ति ह वा एतस्याजुह्वतोऽग्नयो यजमानस्य, ते यजमानमेव ध्यायन्ति यजमानं संकल्पयन्ति, पचन्ति ह वा अन्येष्वग्निषु वृथा मांसं, अथैतेषां नातोऽन्या मांसाशा विद्यते' इति वचनम् । तस्मात् लौकिकेषु कर्मसु विहारप्रसङ्गो नास्ति । इति सिद्धान्तः ।

**मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् । ६ ॥**

यदुक्तं पूर्वपक्षिणा 'मांसपाकप्रतिषेधश्च तद्वत्' इति ( १२।२।१।२ ) आहवनीये वपायाः श्रपणं विहितं तस्यायं प्रतिषेधः स्यात् । विहितस्य प्रतिषेधः । कस्मात् ? प्राप्तत्वात् आहुतिसंयोगात् च । 'तस्मिन्नग्नौ न मांसं पचति यस्मिन्नाहुतीर्जुहोति' इति आहुतिसंयोगेन वाक्यशेषः श्रूयते आहवनीये च आहुतयो हूयन्ते । तस्मात् वपाश्रपणस्यायं प्रतिषेधः । तस्मान्न लौकिकेषु कर्मसु विहारप्रसङ्गः इति सिद्धान्तः ।

**वाक्यशेषो वा दक्षिणस्मिन्नारभ्यविधानस्य । ७ ॥**

यदुक्तं पूर्वपक्षिणा 'मांसपाकप्रतिषेधश्च' इति ( १२।२।१।२ ) तस्य अन्यः परिहारः । दक्षिणेऽग्नौ पत्न्या व्रतस्य श्रपणमाम्नातम् । यदा आमयदोषात् मांसं व्रतकार्ये उपादीयते तदा तत्र दक्षिणेऽग्नौ श्रपयितव्यं इति । 'दक्षिणेऽग्नौ पत्नीव्रतं श्रपयति' इति दक्षिणस्मिन् अग्नौ आरभ्यविधानस्य ( आरभ्य इति भाष्यसूत्रे अनारभ्य इति सुबोधिन्यां ) वाक्यशेषः अयं अन्यत्र मांसादिति । दक्षिणाग्नौ च फलीकरणपिष्टलेपाहुती भवतः । ततश्च दक्षिणाग्न्यभिप्रायः प्रतिषेधः । तस्मात् त्रेताग्निषु वैदिकान्येव कर्माणि न लौकिकानि इति **सिद्धान्तः** । वाशब्दः शङ्कायाः समाधानान्तरत्वार्थः । **के.**

* 'विहारो लौकिकानां०' ( १२।२।१ ) इति द्वादशद्वितीयाद्याधिकरणे 'मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात्' इति गुणसूत्रे तद्भाष्यादौ च 'मांसं न पचेयुस्तस्मिन्नग्नौ' इति सामान्यनिषेधस्य 'तस्मिन्नग्नौ मांसं न पचन्ति यस्मिन्नाहुतीर्जुह्वति' इति विशेषवचनानुसारेण आहवनीयविहितवपाश्रपणनिषेधपरत्वं अभ्युपगतम् । कु. ३।१।१५।२७. * विहारः हविःश्रपण–अन्वाहार्यपचन–होमरूपवैदिककार्यार्थं एव, न तु लौकिकपचनाद्यर्थः । वि. १२।२।१. * **विहारस्योपदेशः** 'प्राचीनप्रवणे यजेत' इति वैश्वदेवपर्वणि । **संकर्ष.** २।४।१३ . वैश्वदेवपर्वणि 'प्राचीनप्रवणे यजेत०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **विहारस्य** 'प्रत्यञ्चोऽवभृथेन चरन्ति' इति कर्तृगर्भविहारस्य विधानमवभृथे । **संकर्ष.** २।४।१६. **मीको.** पृ. ६९८ 'अवभृथेन प्रत्यञ्चश्चरन्ति इति कर्तृगर्भविहारविधानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

卐 **विहारस्य प्रभुत्वादनग्नीनामपि स्यात् । ६।६।५।२७॥**

विहारः अग्निः । परकीयस्यापि विहारस्य सर्वेषामुपकर्तुं प्रभुत्वात् समर्थत्वात् साग्नीनां अनग्नीनामपि च सत्रे अधिकारः स्यात् । कस्यचित् अग्निना अनग्नीनामितरेषां क्रतूपकारः सिध्येत् । इति पूर्वपक्षः ।

**सारस्वते च दर्शनात् । २८ ॥**

'परस्यैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासते' इति स्पष्टमेव सारस्वते सत्रे अनग्नीनां अधिकारस्य दर्शनात् सत्रसामान्येऽपि अनग्नीनामपि

साग्निभिः कैश्चित् सहाधिकारः सिध्यति । इति पूर्वपक्षे हेत्वन्तरम् । अत एव चकारः ।

**प्रायश्चित्तविधानाच्च । २९ ॥**

‘ अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत् , यस्याहिताग्नेः अन्यैरग्निभिः अग्नयः संसृज्येरन् ’ इति एकस्य अग्नीनां अन्यस्य अग्निभिः संसर्गे प्रायश्चित्तं विहितम् , सत्रे च यदि सर्वे साग्नयः स्युः, तदा अवश्यं सर्वेषामग्नीनां संसर्गः स्यात् । तस्मात् अन्यतमः साग्निः , इतरे अनग्नयः, तैः संभूय सत्रं कर्तव्यं इति ज्ञायते प्रायश्चित्तविधानात् । चकारः पूर्वपक्षे हेत्वन्तरसमुच्चयं सूचयति ।

**साग्नीनां वेष्टिपूर्वत्वात् । ३० ॥**

सत्रे अग्निमता सह अनग्निमतां संभूयाधिकारः इति पूर्वपक्षं सूत्रैः प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । साग्नीनामेव सत्राधिकारः नानग्नीनाम् । कस्मात् ? इष्टिपूर्वकत्वात् सोमस्य, सोमपूर्वकत्वाच्च सत्रस्य, अग्निपूर्वकत्वाच्च इष्टेः । तस्मात् साग्नीनामेवाधिकारः ।

**स्वार्थेन च प्रयुक्तत्वात् । ३१ ॥**

साग्नीनामेव सत्राधिकारः इति सिद्धान्ते हेतुसमुच्चयं चकारेण द्योतयन् हेत्वन्तरमाह । अग्नीनां स्वार्थेन प्रयुक्तत्वात् । ‘ अग्नीनादधीत ’ इत्यात्मनेपदेन अग्न्याधानस्य स्वार्थत्वमुक्तम् । तस्मादन्यस्याग्निभिः अन्यस्य न सिद्धिः । तेन यदुक्तं ‘ विहारस्य प्रभुत्वात् ’ ( ६।६।५।२७ ) इति तत् निरस्तम् ।

**संनिवापं च दर्शयति । ३२ ॥**

साग्नीनामेव सत्राधिकारः इति सिद्धान्ते चकारेण हेत्वन्तरं सूचयन् अन्यं हेतुमाह । ‘सावित्राणि होष्यन्तः संनिवपेरन् ’ इति सावित्रहोमेभ्यः प्राक् सप्तदशानामपि यजमानानां ये अग्नयः तेषां संनिवापं एकस्मिन् कुण्डे स्थापनं एकीकरणं दर्शयति श्रुतिः । अनग्नीनां अग्नय एव न सन्ति, कुतः संनिवापः । तस्मात् अनग्नीनां सत्रे नाधिकारः, किन्तु साग्नीनामेव ।

**प्रायश्चित्तमापदि स्यात् । ३५ ॥**

‘ प्रायश्चित्तविधानाच्च ’ ( ६।६।५।२९ ) इति सूत्रे अनग्नीनां सत्राधिकारः इति पूर्वपक्षे यो हेतुरुक्तः, तस्य परिहारमाह सिद्धान्ती । ‘ अग्नये विविचये ’ इत्यादिना यत् प्रायश्चित्तमुक्तं तत् आपदि स्यात् । अरण्ये कान्तारे गच्छतां स्थितानां वा दस्युभयात् श्वापदभयाद्वा त्रासे जाते दावाग्निना वा संसृज्येरन् अग्नयः , मिथो वा, स विषयः प्रायश्चित्तस्य भविष्यति । सत्रे तु श्रुत्यैव संनिवाप उक्तः इति नात्र प्रायश्चित्तप्रसक्तिः । तस्मात् साग्नीनामेव सत्राधिकारः इति **सिद्धान्तः । के.**

* **विहारे** दक्षिणे क्रियमाणमार्त्व्यर्थं पृथगङ्गानुष्ठानं चातुर्मास्य–वरुणप्रघासेषु । ११।२।९।३५–४३. **मीको.** पृ. ३४२४ ‘ वरुणप्रघासेषु दक्षिणविहारे॰ ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * विहारे दक्षिणे चातुर्मास्येषु वरुणप्रघासेषु अध्वर्योः पृथक् प्रतिप्रस्थात्रा मन्त्रोच्चारणं कार्यम् । १२।१।९।१८. **मीको.** पृ. ३४२६ ‘ वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा॰ ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

**विहाराधिकरणम् ।** अग्नित्रयं वैदिककर्मार्थमेव, न स्थालीपाकादिपचनादिकर्मार्थम् । गार्हपत्याद्यग्निषु लौकिककर्मणां नानुष्ठानम् ॥

**विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् । १२।२।१।१ ॥**

**भाष्यम्**— विहार इति गार्हपत्यादिरग्निस्त्रेतोच्यते, विहरणात् । स लौकिकानां कर्मणां पार्वणस्थालीपाकादीनाम् , अन्येषां चाग्निसाध्यानां पचनदहनप्रकाशनादीनामर्थं साधयेत् निर्वृत्तिं कुर्यात्, प्रभुत्वात् । प्रभवति ह्याहुतिप्रक्षेपणे पाकादौ च । संयुक्तं च न केनचित् प्रयोजनेनाग्निद्रव्यमुत्पन्नम् , ‘ वसन्तेऽग्नीनादधीत ’ इति । तत्सामर्थ्याद्यत्रयत्रोपयुज्यते तत्रतत्रोपयोज्यम् । एवं तस्योत्पत्तिरर्थवती भवति ।

**टुप्**—किमाहवनीयादिभिर्यद्यच्छक्यं कर्तुं तत्कर्तव्यम् , उत यदेव निर्दिष्टं तदेव कर्तव्यम् । तत्र लिङ्गेन प्रमाणेन यद्यच्छक्यते तत्तत्कर्तव्यम्, वैदिकं लौकिकं वाऽग्निसाध्यम् ।



**मांसपाकप्रतिषेधश्च तद्वत् । २ ॥**

**भाष्यम्**— मांसपाकप्रतिषेधो भवति तद्वत् । यद्वत् न्यायोऽपदिष्टः । ‘ मांसं न पचेयुस्तस्मिन्नग्नौ, यत्पचेयुः क्रव्यादं कुर्युः ’ इति । लौकिके हि पाके मांसप्रसङ्गो न वैदिके, शामित्रे मांसपाकः ।

**निर्देशाद्वा वैदिकानां स्यात् । ३ ॥**

**भाष्यम्**— वैदिकानां वा कर्मणां विहारोऽर्थं साधयेत् , न लौकिकानाम् । कुतः ? निर्देशात् । निर्दिश्यते गार्हपत्यादीनां कार्यम् , ‘ यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति ’ इत्येवमादिभिः वाक्यैः । याऽसावुत्पन्ना कार्याकाङ्क्षा सा एतैर्वचनैर्निवर्तिता । अत एवमर्थैवैषामुत्पत्तिः । तस्मान्न लौकिकेषु प्रसज्येरन् । भवेत् पाकादीनामयं परिहारः, न स्थालीपाकादीनाम् । तेषामप्याहवनीये एव होमः प्राप्नोति । नैष दोषः । ‘यदाहवनीये जुहोति ’ इति नियमार्थं एष वादः । अन्तरेणापि हि वचनमाहवनीये होमोऽन्यत्र च प्राप्तः । तदेतन्नियमशासनम्, यत्र अनियमप्रसङ्गस्तद्विषयो विज्ञायते । वैदिकेषु चानियमप्रसङ्ग आगतः । आयतनस्यानिर्दिष्टत्वात् । लौकिकानां तु निर्दिष्टमायतनम् , औपासनोऽग्निः । तस्मान्न तान्याहवनीये प्रसज्येरन् ।

**टुप्**— एवं प्राप्ते, आह । आहवनीयादय उत्पन्नाः साकाङ्क्षा वाक्येनैव निराकाङ्क्षी क्रियन्ते । ‘ यदाहवनीये जुहति ’ ‘ गार्हपत्ये हवींषि श्रपयति ’ ‘ दक्षिणाग्नावन्वाहार्यं पचति ’ इति । न च लौकिकेषु शक्या विधातुम् । ते हि मर्हैवाऽऽधारेणोत्पद्यन्ते होमादयः । यथा पदहोमः ।

**सति चौपासनस्य दर्शनात् । ४ ॥**

**भाष्यम्**— सति च विहारे औपासनोऽग्निर्दृश्यते ‘ यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति, तस्यौपासने प्रतिहितमालभ्य जुहुयात् ’ इति । राजसूये प्रवृत्ते कर्मण्येतद्वचनम् । तस्मिंश्च काले विहारोऽस्ति । यदि च त्रेतैव लौकिकानां कार्यं साधयेत् , सत्यां तस्यां नौपासनः कार्याभावात् स्यात् ।



**अभावदर्शनाच्च । ५ ॥**

**भाष्यम्**— मांसपाकस्य च वैहारिकेऽग्नौ अभावं दर्शयति । ‘ मांसीयन्ति ह वा एतस्याजुह्वतोऽग्नयो यजमानस्य, ते यजमानमेव ध्यायन्ति, यजमानं संकल्पयन्ति, पचन्ति ह वाऽन्येष्वग्निषु वृथा मांसम् , अथैतेषां नातोऽन्या मांसाशा विद्यते ’ इत्यन्यत्र पशुबन्धात् मांसस्पर्शनमेव वैहारिकाणामग्नीनां परिहरति । तस्मादपि न लौकिकेषु विहारप्रसङ्गः ।

**मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् । ६ ॥**

**भाष्यम्**— यत्तु, मांसपाकप्रतिषेधश्च तद्वदिति । तत् विहितप्रतिषेधः स्यात् । आहवनीये वपायाः श्रपणं विहितम् । तस्यायं प्रतिषेधः । कस्मात् ? प्राप्तत्वात् , आहुतिसंयोगाच्च । ‘ तस्मिन्नग्नौ न मांसं पचति, यस्मिन्नाहुतीर्जुहोति ’ इत्याहुतिसंयोगेन वाक्यशेषः श्रूयते । आहवनीये चाऽऽहुतयो हूयन्ते । तस्मात् वपाश्रपणस्य अयं प्रतिषेधः ।

**वाक्यशेषो वा दक्षिणस्मिन्नारभ्यविधानस्य । ७ ॥**

**भाष्यम्**—अथवा अयमन्यः परिहारः । दक्षिणेऽग्नौ पत्न्या व्रतस्य श्रपणमाम्नातम् । यदाऽऽमयदोषान्मांसं व्रतकार्ये उपादीयते तदा तत्र दक्षिणाग्नौ श्रपयितव्यमिति, तस्य दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं शेषः, अन्यत्र मांसादिति । ‘ या सरस्वती वेशमती ’ इति योऽसौ दक्षिणाग्नौ होमस्तस्यैतत् श्रूयते । तस्मात् दक्षिणाग्न्यभिप्रायं विज्ञायते ।

**शा**— गार्हपत्याग्निः किं लौकिकानां पार्वणस्थालीपाक–ताप–पचन–प्रकाशादीनां चरुपुरोडाशहोमहविःश्रपणादीनां च वैदिकानां सर्वेषामग्निकार्याणामङ्गम् , उत वैदिकानामेव इति संशये, सामर्थ्यात्मकात् लिङ्गात् मांसपाकप्रतिषेधदर्शनात् च सर्वार्थताप्राप्तौ, उच्यते । ‘ गार्हपत्ये हवींषि श्रपयति ’ ‘ दक्षिणाग्नावन्वाहार्यं पचति ’ ‘ यदाहवनीये जुहोति ’ इति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न लिङ्गेन सर्वार्थता शक्या कल्पयितुम् । मांसपाकप्रतिषेधस्तु वैदिकवपाश्रपणे

एवोपपन्नः । स्थालीपाकादयस्तु औपासने विहिताः न सामान्यविहितान् गार्हपत्यादीन् गृह्णन्ति । तस्मात् वैदिकानामेव विहारोऽङ्गम् । पूर्वं बर्हिःसंस्काराणां साधारण्यासाधारण्ये विचारिते, तत्प्रसङ्गात् अग्नीनां लौकिकालौकिकसाधारण्यं विचारितमिति संबन्धः ।

**वि**— ' सर्वार्थो वैदिकार्थो वा विहारः शक्तिमत्त्वतः । आद्यः, प्रत्यक्षवचनैर्निराकाङ्क्षत्वतोऽन्तिमः ॥ '

**भाट्ट**— आहवनीयादीनामाधानेन उत्पन्नानां प्रयोजनापेक्षायां सामर्थ्यादेवाग्निसाध्यश्रौतस्मार्तलौकिकसाधारण्येन कार्यमात्रार्थत्वं ' आहवनीये जुहोति ' ' गार्हपत्ये हवींषि श्रपयति ' ' दक्षिणाग्नावन्वाहार्यं पचति ' इत्यादिवाक्यानि तु अवयुत्यानुवादः । अथवाऽस्त्वेतेषां विनियोजकत्वम् , तथापि कार्यान्तराणामग्न्यपेक्षायां लाघवादेतेषामेव प्रसङ्गात् ग्रहणं अग्न्यन्तराक्षेपे गौरवात् । इति प्राप्ते, सामर्थ्यादेव सर्वार्थत्वप्राप्तावेतद्विशेषविनियोगविधिवैयर्थ्यादेव न सर्वार्थत्वम् , नाप्यन्यत्र प्रसङ्गसिद्धिः । अत एव नाग्न्यन्तरसाधारण्येनापि एतेषां ग्रहणम् , आयतनाद्बहिर्भावनिषेधात् , श्रौताग्निषु पाकादिनिषेधस्य स्मृतिषु श्रवणाच्च, स्मार्तेषु औपासनाग्नेर्वाचनिकत्वाच्च । तस्मात् श्रौतेष्वेव होमादिषु विनियोगः । अत एव ' मांसीयन्ति ह वा एतस्याजुह्वतो यजमानस्याग्नयो यजमानमेव ध्यायन्ति यजमानं संकल्पयन्ति पचन्ति ह वाऽन्येष्वग्निषु वृथा मांसं अथैतेषां नातोऽन्या मांसाशा विद्यते ' इति पशुबन्धं विना अन्यमांसस्पर्शनिवृत्तिलिङ्गं लौकिकमांसस्य च अन्याग्निषु पाकलिङ्गमुपपद्यते । यत्तु ' मांसं न पचेयुस्तस्मिन्नग्नौ, यत् पचेयुः क्रव्यादं कुर्युः ' इति मांसपाकप्रतिषेधोऽन्यपाकाभ्यनुज्ञार्थः इति, तत् ' तस्मिन्नेवाग्नौ न मांसं पचति यस्मिन्नाहुतीर्जुहोति ' इति वाक्यान्तरानुसारादाहवनीये वपाश्रपणस्य विहितस्यायं निषेध इत्यसाधकम् । वस्तुतस्तु, विकल्पापत्तेर्दाक्षिणाग्निकहोमविधिसंनिधौ पाठाच्च वाक्यद्वयमपीदं दक्षिणाग्न्यधिकरणकपत्नीव्रतश्रपणविषयम् । यदा हि रोगादिना मांसमेव व्रतकार्ये उपादीयते, तदा तत्पाकस्यायं दक्षिणाग्नौ पर्युदासः ।

**मण्डन**— ' त्रेतायां श्रौतकर्मव । '

**शंकर**— ' त्रेता पाकाद्यसाधनम् । '

* एतेन आहवनीयादेर्वाक्येनैव उपधानाङ्गत्वप्रतिपादनेन **विहाराधिकरणाविरोधः** सूचितः । तत्र हि ( विहाराधिकरणे ) संस्कृतानां प्रयोजनापेक्षायां लिङ्गात् लौकिकं वैदिकं वा यदग्निसाध्यं तत्र सर्वत्र विनियोग इत्याशङ्क्य 'आहवनीये जुहोति' इत्यादिभिर्निराकाङ्क्षत्वात् न लिङ्गाद्विनियोगः संभवतीत्युक्तम् । **सोम.** ७।३।१२.

* **विहारद्वयं** वरुणप्रघासेषु । तत्र दक्षिणे प्रतिप्रस्थाता मारुतीमामिक्षां अनुतिष्ठति, उत्तरे विहारे अध्वर्युः अष्टौ हवींषि अनुतिष्ठति । तत्रोभयत्राङ्गानां भेदेनानुष्ठानम् । **वि.** ११।२।९. * **विहारद्वये** कर्तृभेदात् पत्नीसंयाजानां तन्त्रं न वरुणप्रघासेषु । ११।२।११।४९-५०. * विहारद्वये चातुर्मास्यगतवरुणप्रघासेषु होतुः आग्नीध्रस्य ब्रह्मणश्च तन्त्रम् , अध्वर्युप्रतिप्रस्थात्रोस्तु वचनात् भेदः । ११।२।१०। ४४-४८.

* **विहितस्य पुनर्विधानानुपपत्तिः** । **वा.** २।३।३।४ पृ. ५९३. * विहिते एव काले अग्निहोत्रादीनि कर्तव्यानि । ६।२।७।२३-२६. **मीको.** पृ. ८४ ' अग्निहोत्रन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विहिताकरणाद्धि प्रत्यवायः स्मर्यते । **टुप्.** ६।३।१।२ पृ. १४०९.

* विहितत्वं विधिविषयभावनान्वयित्वम् । **मणि.** पृ. ८.

* विहितधर्मके कर्मणि दृष्टः शब्दः अन्यस्मिन् अविहितधर्मके श्रूयमाणो धर्माणां ग्राहक इत्युक्तम् ' उक्तं क्रियाभिधानं० ' ( ७।३।१।१ ) इत्यत्र । **भा.** ७।३।६।१७.

* **वीक्षणे** ' स्वर्दृक् '— पदपाठकालविधानम् । १०।६।२।३. **मीको.** पृ. ३३०० " रथंतरगाने ' स्वर्दृशं प्रति वीक्षेत ' इति वीक्षणे स्वर्दृक्पदपाठकालस्य विधानम् " इत्यत्र अधिकरणं द्रष्टव्यम् ।



**वीचीतरङ्गन्यायः** । तद्यथा— यद्यपि वीचितरङ्गशब्दौ पर्यायौ, ' भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः ' इति कोशात् । तथापि वीचेः स्वल्पतरङ्गस्यैव तरङ्गो यत्र वीचितो यथोत्तरोत्तरं तरङ्गजननं वाय्वादिसंयुक्तात् ह्रदादेर्वीचिर्जायते, तद्भावापन्नाच्च तस्मात्तरङ्गान्तरम् , तस्मात्तद्भावापन्नाच्च तरङ्गान्तरम् , एवं स्वजन्यजन्यादिरूपो न्यायः । यथा— शब्दस्य ढक्कादिदेशे ह्युद्भवः, स च प्रकृतिन्यायात् स्वसंनिहितशब्दान्तरमारभते, स च शब्दः शब्दान्तरमिति तज्जन्यजन्यशब्दपरम्परया श्रोत्रेण सह संबन्धात् श्रवणम् । तदुक्तं तार्किकैः— ' वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ' । वीचिशब्दो ह्रस्वान्तो दीर्घान्तोऽपि । वीचीत्यत्र छन्दोभङ्गदोषः प्रतीयते इति । **साहस्री.** २२८.

* वीचीतरङ्गन्यायः । स्तब्धे जले क्षुद्रपाषाणादिपाते वीचयः तरङ्गाश्च दीर्घदीर्घत्रिज्याजनितवर्तुलानि समुत्पद्यन्ते सा रीतिः वीचीतरङ्गन्यायः । **के.** * **वीचीतरङ्गन्यायेन** कदम्बमुकुलन्यायेन वा तार्किकाणां शब्दगुणस्य इन्द्रियसंनिकर्षो बोध्यः । **कु.** १।१।६।१५.

* **वीप्सा** च बहुषु भवति नैकस्मिन् । **भा.** ९।१।६।२५. * वीप्सा बहुत्वविषया । **सु.** पृ. ७३०. * विशिष्टविधाने न भवति वीप्सा । यथा ' ग्रामो ग्रामो रमणीयः ' इति नानवगते ग्रामार्थे वीप्सा । एवमिहापि (' प्रयाजे प्रयाजे कृष्णलं जुहोति ') अनवगतोऽत्र प्रयाजार्थः, विधेयत्वात् । **टुप्.** ७।४। २।५. * **वीप्सया** नित्यत्वसिद्धिः ' वसन्ते वसन्ते ज्योतिषा यजेत ' इति ज्योतिष्टोमस्य नित्यत्वं सिध्यति । **वि.** ६।२।११. * **वीप्सायाः** अवगतार्थविषयत्वम् । **सु.** पृ. ७३८.

* **वीप्सार्थे** किंचिदिति वर्तते । न चैकस्मिन् वस्तुनि वीप्सा संभवति ! उच्यते । किंशब्दोऽयं अज्ञाते ज्ञातुमिष्टे वर्तते । **टुप्.** ९।१।६।२५.

* **वीप्सान्यायः** । चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते, चतुर्थपदानुरोधात् अहीनान्तराभिप्रायेण वीप्सा न्यायप्राप्तानुवादः, विधाने वाक्यभेदापत्तेः । **भाट्ट.** १०।५।१४.

* **वीयुः** (' यस्य सजाता वीयुः ') विगताः विप्रतिपन्नाः इत्यर्थः । **वि.** ३।२।७

* **वीरजननं** प्रथमं त्रिसंयुक्तं राजसूये । **भा.** ११।४।१।३.

* **वीर्यकामस्य** खादिरो यूपः इति फलविधिः । ४।३।१।१-३. * वीर्यकामस्य पञ्चदशातिरात्रः कातीये उक्तः । **बाल.** पृ. ३४. * वीर्यकामस्य सांवत्सरिके चयने त्रिष्टुप्चिते त्रैष्टुभान्येव आग्नेयसूक्तानि नेतरच्छन्दस्कानि । **संकर्ष.** २।१।३७.

* ' **वीर्यसंस्तवो** राजन्यस्य ' अत्र फलेन संबन्धोऽनूद्यते । **भा.** ६।६।२।१८.

**वृकबन्धनन्यायः** । यथा वृकं जिघृक्षुः कश्चित् सूर्यरश्मिसंतप्तशिरस्के वृके नवनीतं **निधाय** तेन विलेपनेन तन्नेत्रयोः पूर्णयोरन्धीभूतं तं जिघृक्षति । तस्य यथा नवनीतप्रक्षेपायासो वृथा, तं विनाऽपि तदैव ग्रहीतुं शक्यत्वात् , तथा प्रकृतेऽपि । **साहस्री.** २५१.

* **वृक्षच्छेदनस्य** स्वरुः न प्रयोजकः । स्वरोर्नाशादौ (पशोः) अञ्जनाद्यर्थं किंचित्काष्ठं ग्राह्यम् । **भाट्ट.** ४।२।१.

**वृक्षप्रकम्पनन्यायः** । यथा वृक्षमारूढः पुमानधः स्थितैर्नरैः पूर्वमियं शाखा प्रकम्पितव्या पूर्वमियमिति भिन्नशाखाप्रचालने नियोजितस्तदधःस्थेनैव च केनचित् सर्ववृक्षप्रकम्पने प्रेरितः सर्वैः पूर्वप्रचालनस्याऽऽज्ञप्ततया यौगपद्यासंभवेन क्रमविकल्पोपगमेऽपि सर्वविरोधासिद्धेस्तच्चिकीर्षया वृक्षं प्रकम्पयति, तत्प्रकम्पने च सर्वाः शाखाः प्रकम्पिताः स्युरिति भवति च सर्वैरविरोधः, तथा सर्वमतैरविरोधाय एक औपनिषदाभिमतो महेशोऽङ्गीकार्यो वीतरागैः मुमुक्षुभिरित्यन्यत्र विस्तरः । **साहस्री.** ५२.

**वृक्षमूलनिषिञ्चनन्यायः** । यथा— ' यथा तरोर्मूलनिषिञ्चनेन तृप्यन्ति तत्स्कन्धभुजोऽपि शाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ ' इत्यनेनायं व्याख्यातः । **साहस्री.** ५३.

**वृक्षवृत्तिन्यायः** । अयं विनोद्यमं स्वतःसिद्ध-वस्तुप्राप्तिजीवनविवक्षायां प्रवर्तते । यथा- वृक्षो मेघोदकेन चन्द्रकिरणैश्च जीवतीति प्रसिद्धम् । तथाऽऽह कालिदासः- ' वृक्षवृत्तिव्यतिरिक्तसाधनः ' इत्येतेन । **साहस्री**. ९५६.

* **वृक्षशब्दे** उच्चरिते वृक्षार्थ एव मनसि विपरिवर्तते, नान्यसहितः । उच्चरिते तु चशब्दे इतरेतरयोगः प्रतीयते । स तस्यार्थः । **टुप्**. १०।३।१४।५६.

* **वृतानामेव** ऋत्विजां राजसूयोपक्रमे समाप्तिपर्यन्तता । ११।४।२।४-८. **मीको**. पृ. ३२१८ ' राजसूयोपक्रमे वृतानामेव ऋत्विजां समाप्तिपर्यन्तता ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वृत्तस्य** च विशेषणयोगो न । ' सविशेषणानां वृत्तिर्न ' इत्यादिः । **मणि**. पृ. १४६.

* **वृत्तवशेन** पादव्यवस्था ऋक्षु अपर्यवसितेऽर्थे । **वा**. २।१।१०।२५.

* **वृत्तान्तान्वाख्यानं** न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनायैव । **भा**. १।२।३।३०. * असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन, प्रशंसाया गम्यमानत्वात् । इहान्वाख्याने वर्तमाने द्वयं निष्पद्यते- यच्च वृत्तान्तज्ञानम्, यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा तत्र **वृत्तान्तान्वाख्यानं** न प्रवर्तकं न निवर्तकं चेति प्रयोजनाभावात् अनर्थकमिति अविवक्षितम् । **भा**. १।२।१।१०। **वा**- उपाख्यानासत्यत्वं अतन्त्रम् । अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः ।

* **वृत्तयः** सर्वा अजहत्स्वार्थाः इति तत्सिद्धिसूत्रे उक्तम् । **सु**. पृ. १०८०, * **वृत्तीनां** सर्वासां अजहत्स्वार्थत्वं तत्सिद्धिसूत्रे भाष्यकृता (१।४।२।२३) ' अर्थेन नित्यसंयोगात् ' (३।२।१।१) इत्यत्र सूत्रकृता चोक्तम् पृ. १४४५.

* **वृत्त्युपायाः** याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव स्मृत्युक्ताः । **भा**. १२।४।१५।४३.

* **वृत्तिपक्षे** च समासस्य नित्यत्वात् । **भा**. १०।६।३।८, न चैष नियोगो वृत्तिपक्षे नित्यः समास इति । विभाषां हि स्म भगवान् पाणिनिरधीते । १०।६।३।५.

* **वृत्तिविग्रहयोः** भिन्नार्थत्वायोगः । **सु**. पृ. ८९४.

* **वृत्तिविषयः** एव शाब्दबोधे विषयः इति नियमः । **मणि**. पृ. १२२.

* **वृत्तिकारस्तु** ( उपवर्षाचार्यः ) अन्यथेमं ग्रन्थं वर्णयांचकार ' तस्य निमित्तपरीष्टिः ' इत्येवमादिम् । न परीक्षितव्यं निमित्तम् । प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि । तदन्तर्गतं च शास्त्रं अतस्तदपि न परीक्षितव्यम् । ( शङ्का-- ) **अत्रोच्यते** व्यभिचारात् परीक्षितव्यम् । शुक्तिका हि रजतवत् प्रकाशते यतः । तेन प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्च अनुमानादीन्यपि । तत्रापरीक्ष्य प्रवर्तमानः अर्थात् विहन्येत अनर्थं च आप्नुयात् कदाचित् । ( उत्तरम्- ) **नैतदेवम्** । यत् प्रत्यक्षं न तत् व्यभिचरति, यत् व्यभिचरति न तत् प्रत्यक्षम् ।

किं तर्हि प्रत्यक्षम् ? ' तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् ' । यद्विषयं ज्ञानं तेनैव संप्रयोगे इन्द्रियाणाम्, पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षम् । यत् अन्यविषयं ज्ञानं अन्यसंप्रयोगे भवति न तत् प्रत्यक्षम् ॥ कथं पुनरिदमवगम्यते, इदं तत्संप्रयोगे, इदं अन्यसंप्रयोगे इति ? । यत् न अन्यसंप्रयोगे तत् तत्संप्रयोगे, एतद्विपरीतं अन्यसंप्रयोगे इति । कथं ज्ञेयम् ? यत् शुक्तिकायामपि रजतं मन्यमानः ' रजतसंनिकृष्टं मे चक्षुः ' इति मन्यते । बाधकं हि यत्र ज्ञानमुत्पद्यते ' नैतदेवम्, मिथ्याज्ञानम् ' इति तत् अन्यसंप्रयोगे, विपरीतं तत्संप्रयोगे इति ॥ प्राक् बाधकज्ञानोत्पत्तेः कथमवगम्यते ? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः । ( **उत्तरम्-** ) यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्वा बाह्यो विषयः, ततो मिथ्या ज्ञानम् । अनुपहतेषु हि सम्यग् ज्ञानम् । इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः । असति तस्मिन् मिथ्या ज्ञानम् । तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः । दुष्टेषु हि ज्ञानं मिथ्या भवति ॥ कथमवगम्यते ?



दोषापगमे संप्रतिपत्तिदर्शनात् । कथं दुष्टादुष्टावगम इति चेत् । प्रयत्नेनान्विच्छन्तो न चेत् दोषमवगच्छेमहि प्रमाणाभावात् अदुष्टमिति मन्येमहि । तस्मात् यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एव असमीचीनः प्रत्ययो नान्य इति । **भा**. १।१।५।५ पृ. २५-२८.

**बृहती**— ' **वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयांचकार** ' इति व्याख्यानान्तरोपन्यासः कस्मै प्रयोजनाय ? यदि तावत् दूषणाभिप्रायः, तदयुक्तम्, सम्यगर्थाभिधानात् । उपरितनस्य सूत्रत्रयस्य अर्थान्तरप्रदर्शनार्थमिति चेत्, तत्रापि वृत्तिकारग्रहणमयुक्तम् । अर्थान्तरकथनेन वा विना किं न सिध्यति । **उच्यते** । द्वयमप्यस्ति, दूषणं अर्थान्तरकथनं च । किमत्र दूषितम् ? निमित्तपरीक्षणं न कर्तव्यं इत्येतत् तावदयुक्तम्, नञः अश्रुतत्वात्, अस्त्यर्थस्य नित्यप्राप्तेः । यदपि हेत्वभिधानं ' **प्रसिद्धानि प्रमाणानि** ' इति, तदप्ययुक्तम्, विप्रतिपत्तिदर्शनात् । स्वयं चोक्तं ' **ननु व्यभिचरति प्रत्यक्षं** ' इति । निमित्तपरीक्षणेन च अव्यभिचारिता उक्ता । सूत्रकारेण च तदेव प्रतिज्ञातं परीक्ष्यतया । कथमत्र नञोऽध्याहार उपपद्यते । वक्तव्यं च निरालम्बनतानिराकरणार्थम् । तच्च नोक्तं वृत्तिकारेण । तस्मात् दूषणम् । वक्तव्यं पुनः किमन्यदर्थान्तरम् ? **उच्यते** । पूर्वोक्तस्य सूत्रत्रयार्थस्य साधनभूतं अर्थान्तरं अनेनोक्तं प्रदर्शयितुम् । ( अस्यार्थः- यदेवेदं पूर्वसूत्रत्रयं अनेनैव पूर्वोक्तार्थसाधनभूतं अर्थान्तरमुक्तम् । न पुनः अर्थाक्षेपलभ्यं इति दर्शयितुं पूर्वोक्तसूत्रत्रयार्थत्वेनैव अर्थान्तरमुक्तं न स्वातन्त्र्येणेति) । ( किं पुनस्तत् ? यदर्थतो न लभ्यते तदाह- ) तथा च तत्सतोर्व्यत्ययः, लक्षणाभिधानं च सर्वप्रमाणानाम् ।

**ऋजु**- अनिमित्तपरे हि सत्संप्रयोगसूत्रे पूर्वव्याख्याने तत्सतोर्व्यत्ययो न लभ्यते । ततश्च अन्यसंप्रयोगेऽपि अन्यविषयविज्ञानप्रत्यक्षत्वात् निरालम्बनपक्षसिद्धेः पूर्वोक्तं सर्वमेव न सिध्येत् । लक्षणाभिधानं च सर्वप्रमाणानाम् । पूर्वोक्तव्याख्याने हि न लक्षणपरता, किंतु अनिमित्तपरता । अस्मिंस्तु व्याख्याने लक्षणपरत्वेन तत्संप्रयोगसूत्रस्य प्रदर्शनार्थतया सर्वप्रमाणलक्षणाभिधानं सिध्यति । सर्वप्रमाणलक्षणोपयोगस्तु अव्यभिचारप्रदर्शनेन निरालम्बनत्वनिरासः । पृ. ३८.

**बृहती**-- यत् पुनः प्रत्यक्षलक्षणस्यान्ते ' यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः ' इत्यवधारणम्, किमनेन अवधार्यते ? उच्यते । यस्येदं द्वयं नास्ति नासौ मिथ्या प्रत्ययः इत्यवधार्यते । कः पुनरसौ ? नामजात्यादियोगेन उत्पद्यते यः । ( नामयोगेन यथा- देवदत्त इति । जातियोगेन यथा- गौरयमिति । गुणयोगेन यथा- शुक्लोऽयमिति । क्रियायोगेन यथा- पचतीति । द्रव्ययोगेन यथा- दण्डीति ) । न चेदं द्वयमस्ति तस्य ( प्रत्ययस्य ) । तथा च परैः अर्थान्तरालम्बनता नेष्यते, अस्य निर्विकल्पकप्रमितविषयतैव इष्यते विकल्पमात्रमेवायं इति वदद्भिः । स एव च संवृतिः इत्युक्तम् । पृ. ३८-३९.

**ऋजु**- अर्थान्तरभूता व्यक्तितो ये जात्यादयः, ते विकल्पप्रत्ययस्य आलम्बनं इति परैः नेष्यते । किंतु निर्विकल्पकेन प्रत्ययेन प्रथमभाविना इन्द्रियजेन या व्यक्तिः प्रतीता सैव सविकल्पेन प्रत्ययेनापि आलम्ब्यते । तामेव च अवलम्बमानमपि जात्यादियोगितया विकल्पमात्रमेवेदम्, न बाह्यवस्त्ववच्छेदकं उत्पद्यते इति परैः उक्तम् । एवं च ब्रुवाणैः परैः मिथ्यात्वमभ्युपगतं इति गम्यते । स एव विकल्पप्रत्ययः संवृतिः इति च यस्मात् परैः उक्तं तस्मात् परैः मिथ्यात्वमिष्टम् । केन पुनः कारणेन विकल्पप्रत्ययः संवृतिरित्युच्यते ? संव्रियते अनेनेति । विकल्पप्रत्ययो हि स्वाकारेण जात्यात्मकेन पररूपं स्वलक्षणस्य आत्यन्तिकभेदं संवृणोति आच्छादयति । पृ. ३९.

**बृहती**--- ननु च अस्मिन्नपि राद्धान्ते निर्विकल्पकप्रत्ययप्रमितविषयतैव इष्यते सविकल्पकानां जात्यादिप्रत्ययानाम् । इयांस्तु विशेषः, पूर्वानुभूतार्थानुसंधानेन अस्मिन्नपि निर्विकल्पकप्रत्ययप्रमितविषयता नापैति । अनुसंधानप्रत्ययस्यापि नार्थान्तरानुसंधानेन विषयान्तरत्वं सविकल्पकस्य शक्यते वक्तुम् । तस्मात् अर्थान्तरविषयत्वात् नैवास्य मिथ्याशङ्का उपपद्यते । द्वयस्य चाभावः ।

तस्मात् तदर्थं इदमवधारणं मन्दतरफलमेव प्रतिभाति। पृ. ३९-४०.

**ऋजु**— परेषामपि सिद्धान्ते नैवास्य मिथ्याशङ्का उपजायते। यस्मात् निर्विकल्पकप्रत्ययप्रमितमेव स्वलक्षणं सविकल्पकानां विषय इष्यते। तल्लक्षणं च परमार्थतोऽस्त्येव। सदर्थविषयं तु ज्ञानं सत्यम्, न मिथ्या, यथा निर्विकल्पकज्ञानम्। इयांस्तु विशेषः, निर्विकल्पकेन सह पूर्वानुभूतं यत् स्वलक्षणं तस्य यत् अनुसंधानं अर्थान्तरघटनं योजनम्, तेन इदं उत्पद्यते सविकल्पकज्ञानम्। निर्विकल्पकं तु न पूर्वानुसंधानेन उत्पद्यते। अस्मिन्नपि सिद्धान्ते निर्विकल्पकप्रमितविषयता पुनः समानैव। अनुसंधानप्रत्ययस्यापि समानविषयत्वे सविकल्पकं मिथ्या, निर्विकल्पकं सत्यं इति न युक्तम्। द्वयस्य चाभावः। नहि लौकिकानां द्वयमिदमस्तीति। तस्मात् मिथ्यात्वशङ्काभावात् नास्ति पूर्वः पक्षः इति निराकरणमनुपयोगि। पृ. ४०.

**बृहती**--ननु च त्वयैवेदमुक्तं इयांस्तु विशेष इति। अनेन विशेषेण परैः इदमुक्तम्, अनुसंधीयमानोऽर्थः संहितार्थान्तरविषयत्वात् नैव अस्य एकप्रत्ययविषयोऽर्थः परिच्छेद्यतां अस्य प्रत्ययस्य प्रतिपद्यते। आलम्बनतां तु प्रतिपद्यते। पृ. ४०.

**ऋजु**-- ननु च त्वयैवेति पूर्वपक्षसमर्थनम्। अनेनैव विशेषेण जात्याद्यनुसंधानेनैव जायते इति परैरिदमुक्तं- निर्विकल्पकेन यत् स्वलक्षणं बाह्यार्थरूपं प्रतीयते तत् विकल्पप्रत्ययस्य परिच्छेद्यं न भवति, आलम्बनं तु भवतीति। एषोऽभिप्रायः- नहि बाह्यं वस्तु जात्यादिभिर्योजयितुं शक्यते, तस्य विकल्पैरसंस्पर्शात्। किंतु तदगृह्णन्तोऽपि विकल्पाः तद्ग्रहाभिमानिनो भासन्ते। तदभिमानानुरोधेन तदालम्बना इत्युच्यन्ते। परमार्थस्तु निरालम्बना एवेति। एवं च मिथ्यात्वमुक्तमेव परैः। पृ. ४०.

**बृहती**-- तस्मान्न परिच्छेदकत्वं अनुसंधानप्रत्ययस्य इच्छन्ति स्मृतिवत् इति वदन्तः। इष्यते चास्मिन् (मीमांसकानां) राद्धान्ते सविकल्पकस्यापि प्रमाणत्वम्। न च परेषामपि अनुसंधानप्रत्यये विकल्पमात्रवादिनाम्। द्वयं (बाध-कारणदोषरूपं) अस्तीति सिद्धम्। तस्मात् अस्य प्रमाणत्वमिच्छता कृतमिदमवधारणम् (भाष्ये)।

कथं पुनः अनुसंधानप्रत्ययं कल्पनां मन्यन्ते? (पूर्वपक्षी आह-) जातिजातिमतोरभेदात् अनुसंधानप्रत्यये भेदाभ्युपगमाच्च। अयं गौः इति लौकिकाः प्रतिपद्यन्ते नेदं गोत्ववत् द्रव्यमिति। ननु च भेदप्रत्ययेऽपि अभेदोपचारो दृष्टः 'कुन्तान् प्रवेशय' इति। सत्यं अभेदोपचारः। न पुनः 'अयं गौः' इत्यत्र उपचारबुद्धिर्लौकिकानाम्। तस्मात् उपचरितोऽयं प्रत्यय इति न शक्यते वक्तुम्। न च स्वलक्षणपर्यवसायी एवायं प्रत्ययः, अर्थान्तरानुसंधानात्। अतो मन्यामहे कल्पनैवेयमिति।

यदि अयं अन्यथाग्राही प्रत्ययः स्यात् कथं न विपर्येति? (विपर्ययो बाधकज्ञानम्)। उच्यते। यत्र हि द्रव्यं द्रव्यान्तरात्मना अवसीयते तत्र विपर्ययो भवति। न चेदं गोत्वादि द्रव्यान्तरं नीलपीतादिवद्विशेषेभ्यः, पृथक्त्वेन अग्रहणात्। यत एव हि विशेषाः सामान्यप्रत्ययेन अवलम्ब्यन्ते अत एव च प्रमाणविपर्ययाभ्यां अयं अन्यः विकल्पाख्यः प्रत्ययः इति विकल्पविदः।

गुणकल्पनाऽपि अनेनैव व्याख्याता, पृथक् अग्रहणादिति।

ननु च नाम्नः पृथगेव ग्रहणम्। न। तत्रापि 'अयं विष्णुमित्रः' इत्यभेदप्रत्ययात्। इयांस्तु विशेषः, जातिगुणकल्पनाभ्यां यत् एकत्राभिन्नयोर्भेदकल्पना, इतरत्र भिन्नयोरभेदकल्पना (अभिन्नयोर्जातिजातिमतोः भेदकल्पना, भिन्नयोः नामनामिनोः अभेदकल्पना)। तस्मात् उपाधिविशेषोऽयम्, न कल्पनाविशेषः।

ननु च कर्मकल्पनायां द्वयमप्येतत् न संभवति, भिन्नयोरेव क्रियाकारकयोः संबन्धोऽवगम्यते व्यपदिश्यते च। (उत्तरम्-) नैवम्, अत्रापि अभेदोपचार एवावगम्यते। व्यपदिश्यते च 'पचति देवदत्तः' इति सामानाधिकरण्यदर्शनात्। ननु च वैयधिकरण्यमपि दृश्यते 'ओदनं पचति' 'काष्ठैः पचति' 'पच्यते



देवदत्तेन' इति। किमिदं प्रलप्यते वैयधिकरण्यदर्शनादिति, जात्यादावपि वैयधिकरण्यं दृश्यते, 'गोर्भावो गोत्वं' 'पटस्य शुक्लत्वं' 'अस्येयं संज्ञा' इति। भिन्नाभिन्नकल्पनां प्रति अभिन्नस्यायं व्यपदेशः। न पुनर्भिन्नस्य च अर्थान्तरस्य अवगतिरस्ति। तस्मादियमपि च कल्पना देवदत्त इति। पृ. ४०-४४.

**ऋजु**-- यथा वैयधिकरण्यं दृश्यते तथा सामानाधिकरण्यमपि। न च एकस्य वस्तुनः भिन्नत्वं अभिन्नत्वं च संभवति। तस्मान्नास्त्येव भिन्नमभिन्नं वा वस्तु। परस्परं विरोधेन अनयोः प्रतीत्योः पराहतत्वात्। अविद्यमानवस्त्ववभासी च प्रत्ययः विकल्पमात्रमेव इति। यथा कर्मणि वैयधिकरण्यं दृश्यते तथा जातिगुणनामस्वपि। न च तानि भिन्नानि, अभेदावगमात्। अतः अविद्यमानमेव कदाचित् भिन्नतया कल्प्यते कदाचित् अभिन्नतया इति मन्तव्यम्। पृ. ४४.

**बृहती**— द्रव्येऽप्येवम् 'दण्डी अयं' इत्यभेदोपचारात्। तस्मात् पञ्चविधेयं कल्पना (नाम-जाति-गुण-क्रिया-द्रव्याणां)। नेयं प्रमाणं नाप्यप्रमाणम्। **(सिद्धान्तमुपक्रमते-)** उच्यते। भवति कल्पनाज्ञानं यदि प्रत्यक्षसमधिगम्यता ज्ञानस्य स्यात्। आनुमानिकत्वं तु ज्ञानस्य वक्ष्यति। ननु अप्रत्यक्षज्ञानपक्षे ज्ञानस्य आकारमात्रमालम्बनम्, अन्यथा ज्ञानस्योत्पत्तिर्नोपपद्यते। कोऽयमन्यथाभावः? अयमन्यथाभावः, शुक्तिका हि रजतवत् प्रकाशते। शुक्तिकालम्बनं हि तत् ज्ञानम्, न रजतालम्बनम्। कथमवगम्यते? शुक्तिकासंप्रयुक्ते चक्षुषि दर्शनात् अन्धस्यानुत्पादात्। नहि अन्धः शुक्तिकां रजतमिति व्यपदिशति। चक्षुष्मानेव हि शुक्तिकां रजतमिति मन्यते 'रजतसंनिकृष्टं मे चक्षुः' इति। अतः शुक्तिकालम्बनं च तत् ज्ञानम्, न रजतालम्बनम्। न च अप्रत्यक्षज्ञानपक्षे एतत् संभवति। अतः अविद्यमानाकारालम्बनमपि ज्ञानमस्ति इति प्रतिपत्तव्यम्। सेयं पञ्चविधा कल्पना।

ननु च अविद्यमानाकारालम्बनज्ञानपक्षे निरालम्बनतैव ज्ञानस्य प्राप्नोति। मैवम्। निरालम्बनपक्षे नहि अन्यस्य अन्येन व्यपदेश उपपद्यते। भवति चायं व्यपदेशः रजतं इति शुक्तिकायाः। निरालम्बनज्ञानपक्षे हि कस्य केन च व्यपदेशः, भिन्नत्वात् शुक्तिकारजतज्ञानयोः। पृ. ४८-४६.

**ऋजु**-- 'ननु च...प्राप्नोति'। अस्यार्थः- यदाकारावभासि यत् ज्ञानं तत् तदालम्बनमुच्यते। शुक्तिका च न रजताकारा। तस्मात् रजताकारस्य ज्ञानस्य न शुक्तिका आलम्बनम्। तस्मात् निरालम्बनमेवेदं आपद्यते इति चोद्यम्। 'मैवं' इति। अस्यार्थः- निरालम्बनत्वे हि रजतज्ञानस्य शुक्तिकायां 'रजतं' इति व्यपदेशो न स्यात्, भिन्नत्वात् शुक्तिकारजतज्ञानयोः। एकमत्र शुक्तिका आलम्बनम्, अपरं तु निरालम्बनम्। अस्ति चायं व्यपदेशः। तस्मात् एकमेवेदं ज्ञानं शुक्तिकामेव रजताकारेण आलम्बते। पृ. ४६-४७.

**बृहती**— ननु अर्थालम्बनपक्षेऽपि अन्याकारस्य विज्ञानस्य अन्याकारमालम्बनज्ञानं इति नोपपद्यते।

**ऋजु**-- आलम्बनस्य ज्ञानं आलम्बनज्ञानम्। आलम्बनमेव ज्ञायते न तु अनालम्बनं इत्यस्मिन्नपि पक्षे अन्याकारं आलम्बनं अन्याकारग्राहि च ज्ञानं इति नोपपद्यते। पृ. ४७.

**बृहती**-- इदमेव हि आलम्बनस्य आलम्बनत्वं यदुत अर्थाकारमेव ज्ञानमुत्पादयति इति। अन्यथा हि चक्षुरादिवत् अव्यापृतस्यापि ज्ञानोत्पत्तौ आलम्बनव्यपदेशो न स्यात्।

**ऋजु**-- इदमेव हि आलम्बनस्य आलम्बनत्वं यदुत आत्माकारमेव ज्ञानं जनयति। यदि पुनः कारकतामात्रमेव अर्थस्य स्यात् तदा चक्षुरादीनां ज्ञानोत्पत्तौ व्यापृतानामपि यथा आलम्बनभावो नास्ति, तथा अर्थस्यापि स्यात्। तस्मात् यत् आलम्बनमभिमतं तदाकारेण ज्ञानेनापि भवितव्यम्। अन्यथा आलम्बनत्वानुपपत्तेः इति। पृ. ४७.

**बृहती**-- केन चोक्तं आलम्बनस्य आकारनिरपेक्षैव इयं कल्पनेति।

**ऋजु**— केनेदमुक्तं आलम्बनीभूतस्य अर्थस्य आकारं अनपेक्ष्यैव इयं कल्पना उपेयते इति। किंतु

आलम्बनीभूतस्वलक्षणाकारग्राहिण्येवेयं इति अक्षरार्थः। अयमाशयः– शुक्तिकालम्बनमिदं ज्ञानमभिमतम्। शुक्तिकाकारमेव तावत् इदमुत्पद्यते। न पुनस्तदाकारं गृह्णाति। यदि परं तमेव अर्थान्तरमेव अर्थान्तरयोजनया गृह्णाति तेन तदाकारग्राहित्वात् तदालम्बनं तावत् अविरुद्धं इति। पृ. ४७.

**बृहती**–– कथं तर्हि कल्पना? अर्थान्तरानुसंधानतया (अर्थान्तरेण अनुसंधानं योजनं तद्भावात्)। किमिदं अर्थान्तरानुसंधानतया इति? इदमिदम्, यस्य लक्षणान्तरेण एकतापत्तिः स्वात्मनि च भेदाध्यासः। कथं तर्हि अविद्यमानजात्यादिविषया एव जात्यादिप्रत्ययाः? स्वलक्षणे हि अविद्यमानभेदाभेदाध्यासात् अविद्यमानविषया इत्युच्यन्ते। कोऽयमध्यासो नाम?। पृ. ४७–४८.

**ऋजु**–– पूर्वपक्षिणा हि विज्ञानं साकारं प्रत्यक्षं इत्यभ्युपगतम्। तत्र यद्यपि ज्ञानस्यैवाकारः तथापि स्वलक्षणासंस्पर्शात् स्वलक्षणभेदाभेदावभासो न घटते। तेन वरं ज्ञाने चार्थे च अविद्यमानस्य आकारस्य अध्यारोपोऽध्यासो युक्त इति। पृ. ४८.

**बृहती**–– विवेकाग्रहणात् स्वरूपमात्रग्रहणात् भेदाननुसंधानात् सामान्याध्यासः। अभिन्नस्य चार्थस्य अन्तरेण सादृश्यं सदृशाननुसंधानात् भेदाध्यासः। सदृशानवधारणं तु भेदाननुसंधानात्। सेयं पञ्चविधा कल्पनेति।

कया युक्त्या संवेद्यत्वालम्बनव्यतिरिक्तं रूपमस्य? आह, अर्थान्तरानुसंधानरूपितं तु। न चार्थान्तरं अर्थान्तरानुसंधितया आलम्बनमिति। अतः अर्थान्तरानुसंधानात् स्वलक्षणालम्बनमपि कल्पना इत्युच्यते। तस्मात् स्वसंवेद्यज्ञानपक्षे एव एतदेकालम्बनत्वेऽपि ज्ञानान्यत्वसंवेदनं उपपद्यते। अन्यथा हि आलम्बनमात्रावगतिरेव स्यात्, न स्वलक्षणसामान्यावगतिः। स्वलक्षणव्यतिरिक्तं च न सामान्यमस्ति इति प्रदर्शितं रूपान्तराग्रहणात् तदग्रहे तद्बुद्ध्यभावात् इति। अर्थान्तरस्य अनुसंधानाच्च (सर्वदैव विकल्पज्ञानं अर्थान्तराकारेण उत्पद्यते। तेन उत्पत्तिपक्षे सामान्यप्रतीतिः अनुत्पत्तौ स्वलक्षणमात्रावगम इति)। अनुसंधानं च ज्ञानभेदे उपपद्यते इति उपपन्नः सामान्यविशेषव्यवहारो लौकिकः। एवं च अनित्ये नित्यबुद्धिः, असुखे सुखबुद्धिः, अनात्मनि आत्मबुद्धिः इति उपपन्नाः संसारहेतवो विपरीतग्रहाः। तदिदमुक्तं 'प्राग्बाधकज्ञानोत्पत्तेः कथमिदमवगम्यते' इति (भाष्ये)। एकालम्बनाभिप्रायेण सामान्यविशेषज्ञानयोः। नहि अन्यसंप्रयुक्ते चक्षुषि अन्यालम्बनस्य ज्ञानस्य उत्पत्तिः संभवति, अन्धस्यानुत्पादात् इत्युक्तम्। (सिद्धान्ती आह–) अत एवेदमुच्यते, नान्याकारं आलम्बनं अन्याकारस्य ज्ञानस्य उत्पत्तिहेतुरिति। पृ. ४८–५०.

**ऋजु** – एषा च भाष्ययोजना। ननु प्रत्यक्षं व्यभिचरति। कल्पनाज्ञानं प्रत्यक्षम्। तथा अविद्यमानार्थान्तरानुसंधानात् व्यभिचरति। ननु कथं अविद्यमानमर्थान्तरं अनुसंधातुं शक्यते? स्यादेतदेवं यदि एकान्तेन इदमविद्यमानं स्यात्। स्वलक्षणे ह्येतदविद्यमानम्। ज्ञाने तु विद्यमानत्वात् शक्यते अनुसंधातुम्। ननु ज्ञानमप्रत्यक्षम्। मैवम्। शुक्तिका हि रजतवत् प्रकाशते। न च रजताकारः शुक्तिकायामस्ति। अतो ज्ञानस्यैवायमाकारः प्रथते। तच्च अप्रत्यक्षे ज्ञाने अनुपपन्नम्। न चेदं रजतज्ञानं स्मरणम्, पुरोऽवस्थितस्य तेनाकारेण व्यपदेशात्। अतः प्रत्यक्षमेवेदं ज्ञानम्। तच्च रजताकारावभासि इति। **अत्रोत्तरम्**। नेदं रजतज्ञानं प्रत्यक्षम्। यद्विषयं ज्ञानमुत्पद्यते तेनैव इन्द्रियसंप्रयोगे यत् ज्ञानं जायते तत् प्रत्यक्षम्। न च रजतेन इन्द्रियं संप्रयुक्तम्। तस्मान्नेदं प्रत्यक्षम्। स्मरणमेव। तच्च बहिः रजताकारसंभवात् बाह्यालम्बनमेव इति सिद्धं ज्ञानस्य अप्रत्यक्षत्वम्।

ननु कथमिदं ज्ञायते अतत्संप्रयोगे रजतमिदमिति। उच्यते। बाधकज्ञानोदये सति, तत्र च रजताभावे ख्यापिते अतत्संप्रयोगजत्वं ज्ञायते। यत्र तर्हि बाधकप्रत्यय एव न जायते तत्र न शक्यते अतत्संप्रयोगजत्वं वक्तुं यथा जात्यादिप्रत्यये। तस्मात् जात्यादिप्रत्ययः प्रत्यक्षः अविद्यमानजात्याद्याकारत्वेन व्यभिचरति इति। (अत एवेदमुच्यते इति सिद्धान्तबृहत्यास्तु–)



अयमर्थः। स्वलक्षणमात्रं आलम्बनं इन्द्रियसंप्रयुक्तम्। अन्याकारस्य स्वलक्षणं अन्याकारस्य ज्ञानस्य उत्पत्तिहेतुर्न भवति। यदि तथा स्यात् तदा इन्द्रियसंप्रयोगाभावात् तादृशेन अर्थेन इन्द्रियसंप्रयोगानपेक्षत्वे अन्धस्यापि स्यात्। न चासावस्ति। तस्मात् उभयाकारत्वात् ज्ञानस्य उभयाकारमेवालम्बनम्। इति। पृ. ४९–५०.

**बृहती**— कथं तर्हि विपरीतग्रहाः अनात्मनि आत्मादयः? **उच्यते**। विषयान्तरं सदृशमालम्ब्य अगृहीतविवेकं यत् ज्ञानमुत्पन्नं तत् सदृशविषयान्तरे स्मृतिहेतुतां प्रतिपद्यते स्मरामीति ज्ञानशून्यस्य। पृ. ५०–५१.

**ऋजु**–– उत्तरम्. उच्यते इत्यादि। विषयान्तरं रजतात् शुक्तिकां रजतसदृशीं आलम्ब्य इदं इति अगृहीतविशेषम्, रजतात् भेदावगमहेतवो ये शुक्तिकायां विशेषाः, तान् इन्द्रियदोषेण सतोऽपि अगृहीत्वा साधारणानेव शुक्तिकाया धर्मान् गृह्णतः यत् ज्ञानमुत्पन्नं तत् सदृशान्तरे स्मृतिज्ञानहेतुतां प्रतिपद्यते। दोषवशात् खण्डितशुक्तिके मनसि अनुभूतावमर्शाभावेन स्मरामीतिज्ञानशून्यस्य। तेन गृह्यमाणस्मर्यमाणयोः भेदो नावसीयते। विज्ञानद्वयं चैतत्, इदं इति प्रत्यक्षम्, रजतं इति स्मरणम्, अन्यथा रजतावगत्यसंभवात्। नहि तत् इन्द्रियजम्, तेन संप्रयोगाभावात्। स्मरणमेवेदम्। पृ. ५१.

**बृहती**–– उपपन्नानि तावत् शुक्तिकादिषु रजतादिज्ञानानि अनात्मादिषु (च)। स्वप्नादिषु कथम्? स्वप्नादिषु च तावत् पूर्वोक्तिभ्यो विशेषमभिधाय निरालम्बनवादेषु पुनरविशेषं वक्ष्यति। आत्मवादे च अनात्मादिषु। तस्मात् नार्थान्तरानुसंधानाध्यासनिमित्तं शुक्त्यादिज्ञानम्।

यत्तु रूपान्तराग्रहणात् तदग्रहे तद्बुद्ध्यभावात् इत्युक्तम्, तदसिद्धम्। अर्थान्तरानुसंधानज्ञानस्य हि स्वलक्षणज्ञानान्यत्वं इष्टम्। तच्च अप्रत्यक्षज्ञानवादिनः अर्थ एव प्राप्नोति। तस्मादसिद्धमिदं रूपान्तराग्रहणात् तदग्रहे तद्बुद्ध्यभावादिति। तस्मात् युक्तं अन्यसंप्रयुक्ते चक्षुषि अन्यविषयं ज्ञानं न प्रत्यक्षमिति। कथं तर्हि विपर्ययः? अग्रहणादेवेति वदामः। अग्रहणनिमित्तता च दर्शिता भाष्यकारेण 'यदि चक्षुरादिभिः उपहतं मनः' इति (पृ. २७ पं. ९)। कथमनेन अग्रहणनिमित्तता दर्शिता भवति? यत् अन्यविषयं ज्ञानं इत्यस्याः प्रतिज्ञाया हेतुत्वेन उपन्यासात्। युक्तं च दुष्टतायाः कार्याक्षमत्वम्, न पुनः कार्यान्तरसामर्थ्यम्। तस्मात् अग्रहणनिबन्धन एव विपर्ययः इति। अतः सिद्धम् 'यस्य च दुष्टं करणं यस्य च मिथ्येति प्रत्ययः स एव असमीचीनः प्रत्ययो नान्यः' इति। पृ. ५१–५३.

* **वृत्तिकारान्तरैः** प्राभाकरैश्च 'आम्नायस्य क्रियार्थत्वात्' (१।२।१।१) इति सूत्रं सकलवेदाप्रामाण्यपरतया व्याख्यातम्। तन्न युक्तम्। सु. पृ. ६.

* **वृत्रान्** शत्रून्। वि. ३।२।७.

* '**वृद्धं** तालव्यं आई भवति'। भा. ९।२।९।३२.

**वृद्धकुमारीवरन्यायः**। अयं महाभाष्ये 'न मु ने'। पा० ८।२।३ इति सूत्रव्याख्यानावसरे व्याख्यातः। तद्यथा– वृद्धकुमारी तपस्विनी इन्द्रेणोक्ता वरं वृणीष्वेति। सा वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति। न च तावदस्याः पतिर्भवति, कुतः पुत्राः? कुतो गावः? कुतो धान्यम्? तत्रानया एकेन वाक्येन पतिः, पुत्राः, गावः, धान्यं इति सर्वं संगृहीतं भवति। एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोऽपि संगृहीतो भवतीति। **केचित्तु**– यथाऽनया वृद्धकुमार्या एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवतीति तथा 'काशीमरणात् मुक्तिः' इति श्रुत्या यद्यत्साधनमन्तरेण मुक्त्यनुत्पत्तिस्तावत्सर्वं संगृहीतं भवतीति युक्तमस्य वृद्धकुमारीवरन्यायस्योदाहरणमिति वदन्ति। वृद्धकुमारी०, वृद्धकुमारीवाक्य०, वृद्धकुमारीवर० इति पर्याया इति बोध्यम्। **साहस्री**. २.

**वृद्धब्राह्मणवरन्यायः**। यथा–आसीत् कश्चित् जन्मान्धोऽत्यन्तदरिद्रोऽजातविवाहो वृद्धो ब्राह्मणः। स च नानाविधैर्दुःखैर्बलवत्पीडितस्तीव्रतपश्चरणेन परमेश्वरमाराधयामास। तस्य तपसा प्रीतः परमेश्वरः स्वाभीष्टमेकं

वरं याचस्वेति तं प्रेरयामास । ततः स ब्राह्मणो यदि चक्षुष्मत्त्वं याच्यते तर्हि दारिद्र्यपीडा स्यादेव, तथा भार्यायां याचितायामपि दारिद्र्यान्धत्वसंतत्यभावाः पुनर्दुःखं जनयेयुः, एवं धने याचितेऽप्यन्धत्वादि, इति किं याचनीयमिति चिन्तासमाकुलो भूयो विचार्येदं प्रार्थयत्– स्वपौत्रं राजसिंहासनस्थितमीक्षितुमिच्छामीति । अथ च तस्य बुद्धिकौशलतः परमप्रीतेन परमेश्वरेण वरप्रदानेनानुगृहीतो धनं चक्षुषी मनोज्ञां भार्यां संततिं च प्राप्यात्यन्तमानन्देति । तथा प्रकृतेऽपीति । **साहस्री. ३.**

* ' **वृद्धवया**: प्रत्युत्थेयः संमन्तव्यश्च ' इत्यस्य निमित्तावृत्तौ आवृत्तिः । ६।२।१०।३०. **सीको.** पृ. १६०० ' गुर्वनुगमनादीनां निमित्तावृत्तौ आवृत्तिः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्च ' इत्यादिस्मार्तकर्मसु उपनीतस्याधिकारः, नानुपनीतस्य । **भा.** ६।२।६।२१.

* **वृद्धव्यवहारश्च** ( अयं, यत् ) प्रमाणान्तरावगम्यं अर्थं वाक्येन प्रतिपादयतः कस्यचित्, कश्चिदन्यः प्रतिपद्यते । तत्प्रतिपत्त्या बालोऽपि जानाति ' अनेनैव तत् प्रतिपाद्यते ' इति । **बृहती.** पृ. २५५, * **वृद्धव्यवहारस्य** अनादिता । पृ. १३३. * वृद्धव्यवहारस्य अनादितायाः प्रतिपक्षः, पुरुषस्य ( शब्दार्थयोः–) संबन्धुः सद्भावः । **ऋजु.** पृ. १३४. * वृद्धव्यवहारस्य अनादित्वात् नात्र ( शब्दार्थसंबन्धस्य– ) कर्ता शक्यते कल्पयितुम् । **बृहती.** पृ. १४३. * **वृद्धव्यवहारे** एव शब्दानां स्वार्थे व्युत्पत्तिः । **ऋजु.** पृ. १६.

* **वृद्धव्यवहाराधीनं** शब्दसंबन्धव्युत्पत्तिमात्रमेव । **वा.** १।३।१।१ पृ. १६२.

* **वृद्धव्यवहारानादितयाऽपि** शब्दादर्थावगम उपपद्यते, तथापि साक्षात् संकेतकारणदर्शने न शक्यते अनादिता वक्तुं इति भवति संबन्धृपुरुषोपलम्भनं प्रतिपक्षभूतम् । तस्मात् कर्तुरुपलम्भो निराकरणीयः । **ऋजु.** पृ. १३४.

* **वृद्धव्यवहारगम्यत्वं** शब्दार्थस्य । **वा.** २।१। १०।३५.

☒ **वृद्धिमिष्टवतो मूलं विनष्टमिति न्यायः ।** अयमपि पूर्वविषये ( ' एकं संधित्सतोऽपरं प्रच्यवते ' ) प्रवर्तते । सर्वेषामीशत्वाङ्गीकारेऽपि तस्याऽसंगत्वेन घटादिवद्विनाशोत्पत्तिः, ब्रह्मादीशत्वबोधकानां वाक्यानां व्यवस्थाऽभावादप्रामाण्यापत्तिरिति । **साहस्री.** ८६.

* ' **वृधन्वती** अमावास्यायाम् ' । इदं वृधन्वतीयुगलं अमावास्यायां आज्यभागाङ्गम्, न तु मुख्ययागाङ्गम् । वृधन्वती ऋचौ–१ ' अग्निः प्रत्नेन मन्मना० ', २ ' सोम गीर्भिष्ट्वा वयं० ' इति । **वि.** ३।१।१३.

☒ **वृश्चिकीगर्भन्यायः** । ( यथा वृश्चिकीगर्भः वृश्चिकीं नाशयति तथा अज्ञानकार्यान्तःकरणवृत्त्यात्मकं ज्ञानमपि अज्ञानं नाशयति । ) । **साहस्री.** ३१७.

* **वृषण्वन्तः** नाम तृचाः द्वादशाहे पृष्ठ्यषडहे द्वितीयेऽहनि अनुरूप–पर्यासयोः तृचयोर्मध्ये बहिष्पवमाने भवन्ति । **वि.** ५।३।४.

* ' **वृषभमुपदधाति** ' इति वृषभशब्दः ' त्वामग्ने वृषभम् ' इतिमन्त्रोपधेयेष्टकापरः अग्निचयने । **संकर्ष.** २।१।२२. **सीको.** पृ. ४८ ' अग्निचयने वृषभमुपदधाति० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* '**वृषलैर्न** प्रवेष्टव्यं गृहेऽस्मिन्निति चोदिते । प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते ॥ ' इह बहुत्वं अविवक्षितम् । **वा.** ३।१।७।१४ पृ. ७१४.

* **वृष्टिकामः** ज्योतिष्टोमे उक्थ्यानां ब्रह्मसाम्नि सौभरे हीष् इति निधनं कुर्यात् । **भा.** २।२।१३।२८, * **वृष्टिकामस्य** वैद्युतात् आहृत्य अवदध्यात् चयने उख्यमग्निम् । १२।४।७।१७.

* **वृष्टिकामनायाः** याजमानता । **वि.** ३।८।६.

* **वृष्टिक्रंदनमन्त्रः** दीक्षितस्य 'उन्दतीर्बलं धत्त०' इति । निमित्तावान्तरभेदेऽपि न मन्त्रावृत्तिः । **वि.** ११।४।१८.

* **वृष्णिः** पशुः ऐन्द्रः । ( षोडशिनि आलभ्यः ) । **भा.** ३।६।७।१८.



☒ **वेण्याकाशन्यायः** । यथा— तीर्थात्मिका वेणी द्विधा– युक्तवेणी, मुक्तवेणीति भेदात् । तत्र प्रयागे युक्तवेणी, गङ्गया सह यमुनासरस्वत्योः संगमात् । पूर्वप्रयागे तु मुक्तवेणी, तत्र गङ्गया सह यमुनासरस्वत्योर्वियोगात् । उक्तं च केनचिद्वाङ्गकविना– ' सगरसंततिसंतरणेच्छया प्रचलिता जवतो हिमपर्वतात् । इह तु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवी ॥ ' इति । तत्र प्रयागे द्वयोन्यसंसर्गेणैकप्रवाहीभूते श्वेतश्यामरक्तवर्णे गङ्गायमुनासरस्वतीतीरे प्रतिबिम्बस्य तदवच्छिन्नस्याकाशस्य भेदलेशोऽपि नास्ति, तथैवमन्योन्यासक्तचित्तानां त्रिगुणाधिष्ठातृपरमेश्वराणां ब्रह्मविष्णुशिवानामन्योन्यसंसर्गेण भेदलेशोऽपि नास्तीत्यन्यत्र विस्तरः । **साहस्री.** १२७.

* वेण्याकाशन्यायः । अत्यन्ताभेदस्वीकारात् नहि प्रयागे अन्योन्यसंसर्गेण एकप्रवाहीभूते गङ्गायमुनासरस्वतीनीरे प्रतिबिम्बितस्य तदभिन्नस्य वा आकाशस्य भेदलेशोऽप्यस्ति । **न्यासः.**

* **वेतसावकान्यायः** । वेतसशाखयाऽवकाभिश्चाग्निविकर्षणं सकृदेव कार्यं न प्रतीष्टकं अग्निचयने । ९।४।८।२६–२८. ' हिरण्यशकलाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * यद्यपि च अष्टत्वस्य अष्टाकपालादेर्वा अविधेयत्वात् स्तुत्यनर्हत्वं तथापि तत्स्तुतिः **वेतसावकान्यायेन** ( ९।१।७ ) द्वादशत्वस्य द्वादशकपालस्य वा स्तुत्यर्थं न विरुध्यते । **कौ.**१।४।१२। २०.

* **वेदः** अपौरुषेयः कर्त्रस्मरणात् । **वैद्यनाथः** १।१।७।२५ पृ. ९९. * ' वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः । शब्दानां तत उद्धृत्य प्रयोगः संभविष्यति ॥ ' **वा.** १।३।८।२४ पृ. २६३, * वेदश्च प्रमाणं इति स्थितम् । १।२।१।१० पृ. १२५. * वेदत्रिभागः इत्युक्तं ' विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ' इत्यादौ । **बाल.** पृ. ४९. * वेदः त्रिविधः, विधिः अर्थवादः मन्त्रश्चेति । उद्भिद् बलभिद् विश्वजित् इत्यादीनां नामधेयानामाधिक्यमिति चेन्न, विधौ एव करणत्वेन तेषां अन्तर्भावात् । **वि.** १।४।१. * वेदस्त्रेधा, विधि–अर्थवाद- मन्त्रभेदात् । ' प्रविभज्य वेदं त्रेधा ' इति । **श्लोवा.** १।१।८।१५. * वेदः नाम दर्भमयं संमार्जनसाधनम् ' वेदं कृत्वा वेदिं करोति ' इति । **वि.** ११।३।४. * वेदः नाम शयानवत्सजान्वाद्याकृतिविशिष्टो दर्भमुष्टिविशेषः । **कु.** ११।३।४।५. * वेदः पञ्चविधः, विधि–मन्त्र–नामधेय–निषेध–अर्थवादात्मकः । तत्र **विधिः**– अप्राप्तार्थविधायकं वेदवाक्यं ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' इत्यादि । **मन्त्रः**– प्रयोगसमवेतार्थस्मारकं वेदवाक्यं ' इषे त्वा ' इत्यादि । **नामधेयं**– योगेन रूढ्या वा धात्वर्थपरिच्छेदतात्पर्यकं वैदिकं सुबन्तं उद्भिद्, अग्निहोत्रम्, आघारः इत्यादि । **निषेधः**– अनर्थहेतोः कर्मणः सकाशात् पुरुषस्य निवृत्तिकरं वेदवाक्यम् ' न कलञ्जं भक्षयेत् ' इत्यादि । **अर्थवादः**– विधेयस्तावकं निषेध्यनिन्दकं वा वेदवाक्यम् ' वायुर्वै क्षेपिष्ठा देवता ' 'सोऽरोदीत् ' इत्यादि । **मीन्या.** * वेदः पुनः सविशेषः प्रत्यक्षगम्यः, तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरपि स्मृतमुपलभ्य अन्येऽपि स्मरन्तः अन्येभ्यस्तथैव समर्पयन्ति इति अनादिता । **वा.** १।३।१।१ पृ. १६२. * वेदः पौरुषेयः न वेति संशये वेदः अपौरुषेयः न केनापि कृतः इति सिद्धान्तः । १।१।८।२७–३२. * वेदः प्रमाणं धर्मे । **भा.** १।१।२।२, * वेदः वत्सजानुमात्रः कर्तव्यः इति दर्शपूर्णमासयोर्विधिः पुरुषार्थः, न क्रत्वर्थः । ४।१।२।२ वर्णकं. २. * '**वेदो वा प्रायदर्शनात्** । ' ३।३।१।२. अत्र तृतीये वेदोपक्रमानुरोधेन उच्चैस्त्वादेः ऋग्वेदादिविहितकर्माङ्गमन्त्रमात्राङ्गत्वस्य स्थापयिष्यमाणत्वेन ... । **कौ.** २।१।१४।४२ । वेदवाक्यगतपदपौर्वापर्यस्य ' वेदो वा० ' इत्यत्र बलाबलहेतुत्वाभिधानम् । **सु.** पृ. १४५, 'वेदो वा०' इत्यत्र उपक्रमबलीयस्त्वं वक्ष्यते । पृ. ५२६, 'वेदो वा०' इत्यत्र उच्चैस्त्वोपांशुत्वयोः वेदधर्मत्वं वक्ष्यते । पृ ६७८. * 'वेदो वा प्रायदर्शनात् ।' ३।३।१।२॥ अर्थवादादेव वेदानां विधेयोच्चैस्त्वादिविषयत्वप्रतीतिसिद्धेः व्यवस्थामात्रार्थत्वेन ऋग्वेदाद्युक्तीनां अनुवादप्रायत्वात् अनुवादानां च लक्षणावृत्तिदर्शनात् विध्युद्देशस्थानामपि ऋगाद्युक्तीनां लक्षणया

वृत्तिरविरुद्धा इति सूत्रस्य व्याख्यान्तरम् । सु. पृ. ११७२. * 'वेदो वा प्रायदर्शनात् ।' इत्यधिकरणे असंजातविरोधित्वन्यायः उक्तः । मीन्या. * 'वेदो वा प्रायदर्शनात् ।' (३।३।१।२) इति उपक्रमोपसंहारवशेनैव वेदधर्मत्वावधारणात् इदमेव वाक्यविनियोगसूत्रम् (इति न व्याख्येयम्) । वा. ३।३।४।१' पृ. ८१७, * वेदः सकलः पठ्यते, नित्य–नैमित्तिक–काम्यानां कर्मणां यथोपपन्नकालत्वात् न ज्ञायते कतरत् कदा करिष्यते इति । तत्र कदाचित् यन्न पठितं तत्फलप्रार्थनानिमित्तं वा अस्योपजायते तत्र तदविद्वत्वात् अशक्नुवन् विहन्यते, तदानीं वा अधीयानस्य व्रतनियमवदध्ययनासंभवात् वैगुण्यप्रसङ्गः । ३।८।८।१८, * वेदः समस्तः पुरुषार्थ इति साध्यते 'तुल्यं च सांप्रदायिकं' इत्यनेन । नह्यात्मानुपकारिणं सन्तमेनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः । यद्यपि च केषांचिदज्ञानं भवेत् तथापि अस्मत्पूर्वातिक्रान्तानेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका । तस्मात् यथा यथा पुरुषार्थता भवति तथा तथा भङ्क्त्वाऽपि रूपं व्याख्यायते इति । (एकदेशिमतानुवादः) । १।२।१।७ पृ. ११३. * मन्त्राश्च ब्राह्मणं च वेदः । भा. २।१।८।३३. * 'सहाध्यायिभिरत्रातो वेदः कार्त्स्न्येन रक्ष्यते ।' (न व्याकरणेन) । वा. १।३।८।२४ पृ. २६२ * वेदाः अपौरुषेयाः, कर्तृस्मरणाभावात् (स्मृतकर्तृकत्वाभावात्) । वैद्यनाथः १।१।८।२९. * 'वेदमधीत्य' इतिवत् । अत्र यथा ल्यपा वेदाध्ययनादानन्तर्यं स्नानस्य ब्रूते, तथा यत्र प्रमाणान्तरेणावधृतः पदार्थः कर्तव्यः, अपरः अन्येन, तत्राथशब्दः आनन्तर्यं ब्रूते । टुप्. ५।१।१।१ पृ. १२८९–९०. * 'वेदमधीत्य स्नायात्' इति शास्त्रं अध्ययनसमावर्तनयोः पूर्वापरीभावसमानकर्तृकत्वे एव आचष्टे, न तु आनन्तर्यम् । वि. १।१।१. * 'वेदं कृत्वा वेदिं करोति' इतिवत् यथा अत्र वाक्यं श्रौतक्रमविधायकत्वं तथा 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इत्यत्रापि । भाट्ट. ४।४।१२. * 'न्यायेन संप्रदायाद्वा ये मीमांसकयाज्ञिकाः । वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यते ॥ शब्दशक्त्यनुसारेण वाक्यार्थं गमयन्ति ते । तत्र यः शक्त्युपारूढः स तैर्व्याख्यातुमिष्यते ॥ यस्तु शक्त्या परित्यक्तो न व्याचिख्यास्यते स तैः ॥' वा. ३।१।९।१२ पृ. ७०१.

𝌆 **वेदांश्चैके संनिकर्षं पुरुषाख्याः । १।१।८।२७ ॥**

एके केचित् वेदान् संनिकर्षं आचक्षते । संनिकृष्टकालाः कृतका वेदाः इदानींतनाः । यतः पुरुषाख्याः पुरुषेण हि समाख्यायन्ते वेदाः काठकं कालापकं पैप्पलादकं इति ।

**अनित्यदर्शनाच्च । २८ ॥**

वेदाः अर्वाचीनाः पौरुषेयाः इति पूर्वपक्षे द्वितीयहेतुप्रतिपादकं सूत्रम् । अनित्यानां जननमरणवतां केषांचित् पुरुषाणां वेदे दर्शनं विद्यते । ते पुरुषा वेदे उक्ताः 'बबरः प्रावाहणिरकामयत' इत्याद्याः । अर्थात् ते वेदांशाः तस्मात् पुरुषात् अर्वाक् उत्पन्ना इति ज्ञायते । तस्मात् अर्वाचीनाः पौरुषेया वेदाः ।

**उक्तं तु शब्दपूर्वत्वम् । २९ ॥**

वेदाः अर्वाचीनाः पुरुषकृताः इति पूर्वपक्षं सूत्राभ्यां प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । न अर्वाचीना वेदाः । यस्मात् अध्येतॄणां शब्दपूर्वत्वं उक्तमस्माभिः । (शब्दशब्देन अत्र शब्दजन्यमध्ययनं विवक्षितम् । सर्वेपुंसां अध्ययनं अध्ययनान्तरपूर्वकम् । सर्वे हि यथैव गुरुणा अधीतं तथैव अधिजिगांसन्ते । न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमः अध्येता वेदानामस्ति यः कर्ता स्यात् । तस्मात् कर्तृस्मरणाभावात् अपौरुषेया वेदाः । वैद्यनाथी) ।

**आख्याः प्रवचनात् । ३० ॥**

वेदाः पुरुषकर्तृकाः इति पूर्वपक्षे काठकतैत्तिरीयकादिसमाख्याः प्रमाणत्वेन उदाहृताः । तत्रोत्तरं सिद्धान्ती ब्रूते । वेदा अपौरुषेया एव । काठकादिसमाख्यास्तु प्रवचनात् स्युः । कठेन काचित् शाखा शिष्येभ्यो विशेषत आदिष्टा इति तस्य वेदभागस्य काठकमिति समाख्या रूढा । एवं तित्तिरिणा प्रोक्तं तैत्तिरीयकं इत्यादि । एवं च ता आख्याः प्रवचननिमित्ताः न



कर्तृत्वनिमित्ताः । 'वेदांश्चैके संनिकर्षं पुरुषाख्याः' १।१।८।२७ इति सूत्रानुसारात् अत्र सूत्रे आख्याशब्दो बहुवचनान्त एव स्यात् । भाष्ये तु एकवचनान्त एवानूदितः ।

**परं तु श्रुतिसामान्यमात्रम् । ३१ ॥**

सिद्धान्ती पूर्वपक्षयुक्तिं निरस्यति । अनित्यदर्शनात् इति यत् परं अन्यत् कारणमुक्तं तत् तु श्रुतिसामान्यमात्रम् । श्रुतेः शब्दस्यैव अस्य साम्यम्, न तु प्रवाहणस्यापत्यं प्रावाहणिः इत्यार्थकम् । प्रशब्दः प्रकर्षे सिद्धो वहतिश्च प्रापणे । न तु अस्य समुदायः कश्चित् सिद्धः । इकारस्तु यथैवापत्ये सिद्धः तथा क्रियायामपि कर्तरि । तस्मात् यः प्रवाहयति स प्रावाहणिः वायुः । बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थः तमेव एतौ शब्दौ वदिष्यतः ।

**कृते वा विनियोगः स्यात् कर्मणः संबन्धात् । ३२ ॥**

ननु 'गावो वा एतत् सत्रमासत' 'सर्पाः सत्रमासत' 'स आत्मनो वपामुदक्खिदत्' इत्यादिवेदवाक्यानां प्रमत्तगीतसदृशानां कथं प्रामाण्यं इति । तत्राह सिद्धान्ती । वाशब्दः शङ्कानिरासे । कृते इति भावे क्तः कर्मणि इत्यर्थः । सत्रादिरूपे कर्मणि प्रशंसाद्वारा 'गावो वा सत्रमासत' इत्यादीनां विनियोगः अन्वयः स्यात् । सत्रादेः कर्मणः प्रशंसासापेक्षस्य संनिधिपठितत्वरूपसंबन्धसत्त्वात् । तथा च सत्रकर्मप्रशंसार्थं तानि वाक्यानि न स्वार्थपराणि इति नोन्मत्तप्रलपितसादृश्यम् । तस्मात् अपौरुषेया वेदाः धर्मे प्रमाणम् । के.

* 'वेदेनापि च संस्कारात् प्रागेव च्छेदनादिकात् । तद्विधौ जातिशब्दत्वमाश्रितं लोकसंमतम् ॥' वा. १।४।७।१० पृ. ३४३, * वेदेनैव प्रकरणाप्रकरणाम्नानविवेकः कृतः । ३।४।८।२०. * ननु प्रतिपदपाठस्याशक्यत्वेऽपि '**वेदान्नो** वैदिकाः सिद्धा लोकाच्चेव हि लौकिकाः । अनर्थकं व्याकरणम्' इति न्यायेन लौकिकवैदिकप्रयोगसिद्धत्वात् वाचकतत्त्वनिरूपणस्य न व्याकरणापेक्षा इत्याशङ्क्याह । सु. पृ. ३१०. * वेदात् विदित्वा यथानुरूपं अनुष्ठातुं क्षमा वयम्, न तु वेदं पर्यनुयोक्तुम्, किमयं निष्प्रयोजनमभिदधाति, तद्वा अभिदधत् किमर्थं प्रयत्नेन धार्यते इति । वा. १।२।१।१ पृ. १०६, * वेदस्य अपौरुषेयत्वम् । ३।३।७।१४ पृ. ८२५. * वेदस्य आदिमत्तादोषः प्रसज्येत, स न युक्तः । भा. ९।१।४।९. * वेदस्य कार्ये अर्थे प्रामाण्यम् । बृहती. पृ. १६.

* **वेदस्य कार्ये एव प्रामाण्यम् ।** अत्र अपरे अपरिपक्वविद्यावलेपोद्रेकतिरस्कृतविवेकाः परिचोदयन्ति । कथं पुनः कार्यरूपो वेदार्थः ? यावता वेदान्तानां सिद्ध एवार्थः 'विज्ञानमानन्दं ब्रह्म' (बृउ. ३।९।२८) इति प्रतीयते ।

**स्यान्मतम् ।** अपरिपूर्णत्वात् तत्र योग्यविध्यध्याहारः क्रियते इति । **तन्न** तु, अपरिपूर्तेः कारणाभावात् ।

**अथोच्येत ।** वृद्धव्यवहारे एव शब्दानां स्वार्थे व्युत्पत्तिः । प्रवृत्तिनिवृत्त्यात्मकत्वाच्च व्यवहारस्य, कार्यावगमपूर्वकत्वाच्च प्रवृत्तिनिवृत्त्योः, कार्यान्वित एवार्थः सर्वशब्दाभिधेयः । न चेह कार्यमस्ति । तेन कार्यान्वयं विना अपरिपूर्णत्वात् कार्यमध्याह्रियते इति । तदेतत् स्वसमयपरिकल्पितम् । विनाऽपि व्यवहारेण सिद्धार्थेष्वपि वाक्येषु कार्यान्वयरहितेषु व्युत्पत्तिसंभवात् 'पुत्रस्ते जातः' इत्येवमादिषु ।

**ननु** अर्थविशेषविषयां प्रतीतिमनुमाय शब्दतद्भावभाविनीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते । न च व्यवहारं विना परबुद्धिरनुमातुं शक्यते । **उच्यते ।** हर्षादिनिबन्धनमुखप्रसादादिभिरपि लिङ्गैः शक्यानुमानैव परेषामपि बुद्धिः । मुखप्रसादादिः हर्षमनुमापयति । स च हर्षहेतुम् । प्रियार्थप्रतिपत्तिश्च हर्षहेतुः । सा च वाक्यनिबन्धना इति 'पुत्रस्ते जातः' इत्यनेन हर्षहेतुभूतार्थप्रतिपत्तिः कृता इति ज्ञायते । हर्षहेतुश्च पुरुषस्य पुत्रजन्मैव केवलमस्ति इत्यवगच्छन् विशिष्टार्थविषयां शब्दस्य शक्तिं अध्यवस्यति । आवापोद्धाराभ्यां च प्रतिपदं व्यवहारवत् व्युत्पत्तिः अत्रापि उपपद्यते इति निरवद्यम् । **अपि च** व्युत्पन्नेतरपदविभक्त्यर्थो वर्तमानापदेशेऽपि 'काष्ठैः पचति' इति

काष्ठपदार्थे व्युत्पद्यते कार्यान्वयरहिते एव । किंच व्यवहारेऽपि व्युत्पत्तौ यद्यपि अन्वितार्थतैव पदानाम्, तथापि न कार्यान्विताभिधायितया व्युत्पत्तिः । किंतु अर्थान्तराभिधायितयैव । यो हि विशेषान्विताभिधानमिच्छति, इच्छति असौ अर्थान्तरान्विताभिधानम् । तावता च प्रयोगप्रतिपत्त्युपपत्तौ न शक्यते विशेषान्विताभिधानकल्पना । तथा च लोके सिद्धार्थान्येव भूयिष्ठानि वाक्यानि दृश्यन्ते 'कुशलं ते ? कुशलम्' इत्येवमादीनि । किंच कार्यमपि तदुच्यते यत् अपेक्षितोपायम् । तेन सिद्धैव कर्मणां अपेक्षितोपायता कार्यपरेषु वाक्येषु गम्यते । अतः सिद्ध एव वेदार्थः ।

तदेतद् बालभाषितं बालेष्वेव आदरणीयतां लभते । नहि वृद्धव्यवहारमन्तरेण व्युत्पत्तिः संभवति । विशिष्टार्थविषया हि प्रतिपत्तिः अर्थविशेषाभिधानकल्पनानिमित्तम् । न च हर्षः हर्षहेतुविशेषानुमाने प्रभवति । न च पारिशेष्येण हेतुविशेषनिश्चयः । कालत्रयवर्तिव्यवहितविप्रकृष्टानां हर्षहेतूनां पारिशेष्यावधारणानुपपत्तेः । व्यवहारः पुनः विशिष्टार्थविषय एव प्रत्यक्षमुपलभ्यमानः तद्विषयामेव प्रतीतिं अनुमापयन् शब्दस्य विशिष्टार्थाभिधानकल्पनायां हेतुः व्युत्पत्तौ आदिमार्गभूतः कार्यान्विताभिधायकत्वमेव सर्वशब्दानामापादयति । अत एव 'काष्ठैः पचति' इति वर्तमानापदेशेऽपि या व्युत्पत्तिः साऽपि कार्यान्वितार्थान्तरसंबन्धानुगुण्यात् कार्यान्वयिन्येव ।

यच्चेदं अर्थान्तरान्वितमात्राभिधाने पदानि व्युत्पद्यन्ते इति, तदपि बालिशभाषितम् । सर्वेषु वृद्धव्यवहारवाक्येषु कार्यान्वितार्थप्रतीतेः नार्थान्तरमात्रान्विताभिधानकल्पना संभवति । यदि कार्यान्वयोऽपि क्वचित् व्यभिचरति तदा अर्थान्तरमात्रान्विताभिधानं कल्प्येत, न च तदस्ति ।

ननु च 'निधिमान् एष भूभागः', 'प्रतिरोधकवानयमध्वा' इति विनाऽपि कार्यान्वयं प्रवृत्तिनिवृत्तिकरवाक्यमुपलभ्यते । वाक्येन हि निधिमत्तायां बोधितायां तदुपादित्सोः प्रवृत्तिः । प्रतिरोधकवत्तायां च तज्जिहासोः निवृत्तिरिति । अत्र ब्रूमः । यत्र तावत् प्रवृत्तिनिवृत्ती विद्येते तत्र तत्कारणीभूता कार्यावगतिरस्ति । नहि तां विना ते भवतः । शब्दानन्तर्याच्च शब्देनैव सा अवगता इति कल्पयति पार्श्वस्थः । न च कार्यार्थः शब्दो न श्रूयते इत्येतावता शब्दस्य अकारणत्वम्, अध्याहारादिलभ्यस्यापि वाचकत्वाविरोधात् । योग्यताविशेषेण च अध्याहार्यविशेषावगमसिद्धेः । न च प्रमाणान्तरेणापि कार्यावगमो घटते इति शब्दस्य तत्र औदासीन्यं शक्यं कल्पयितुम् । शब्दश्रवणे प्रवृत्तिदर्शनात् आनन्तर्येण शब्दस्यैव तत्र कारणत्वावगमात् । प्रमाणान्तरेणापि तु असावर्थो लभ्यते इति कामं शब्दः अनुवादः स्यात्, न कारणम् । न च अनुवादकत्वं पुरुषवचसां दोषः । तेन साक्षात् श्रुत्या अध्याहारेण वा सर्वव्यवहारवाक्येषु कार्यान्वयाव्यभिचारात् तदन्वितार्थाभिधानम्, लिङादीनां कार्याभिधानमेव इति सिद्धम् । तेन सर्वपदानि तावत् कार्यान्वितमेव अर्थं आहुः । न च प्रतिपदं विषयाभावः, प्रणाड्याऽपि तादर्थ्योपपत्तेः । प्रणाडीसमाश्रयणे च परस्परपदार्थान्तरसंबन्धावगम एव प्रमाणम् । अन्यथा प्रतिपदं विषयभावे अनुबन्धभेदात् भिन्नेषु नियोगार्थेषु संभेदानां अरुणैकहायनीन्यायवैलक्षण्यात् । परस्परसंबन्धावगमश्च क्रिययैव स्यात् । एतच्च प्रतिपदाधिकरणे ( २।१।१ ) निपुणतरमुपपादयिष्यामः । लोके तु यः सिद्धार्थमात्रपरत्वेन प्रयोगः स लोकवचसां प्रमाणान्तरप्रतीतार्थपरत्वात् लाक्षणिको द्रष्टव्यः । कार्यान्वयो हि परस्परान्वयाव्यभिचारी इति लाक्षणिकोपपत्तिः । न च अपेक्षितोपायतैव कार्यता । कृतिसाध्यं कार्यम् । साधनमुपायः । साध्यत्वोपायत्वे च भिन्ने । किंतु क्लेशात्मकं कर्म अपेक्षितोपायतया कार्यं प्रतीयते इति कार्यता साधनतां न व्यभिचरति इति तादर्थ्यभ्रमो मन्दानाम् । तथा च सुखं स्वयमेव कार्यम् । एवं सर्वपदानां कार्यान्विताभिधायकत्वात् यदि वेदान्तेषु कार्यं योग्यं अध्याहारादिभिर्लभ्यते तदा कार्यार्थतैव वेदान्तानामपि । अथ न, ततः अनभिधायकत्वमेव, व्युत्पत्तिविरहात् । अतो विधिनिराकरणमपि वेदान्तेषु न क्षतिमावहति । तस्मात् सिद्धं कार्ये एव वेदस्य प्रामाण्यम् । **ऋजु. पृ. १६–१८.**



* वेदस्य नित्यत्वात् यथोच्चरितार्थान्वेषणमात्रे पुरुषाणां व्यापारः इति न कर्ता इव पर्यनुयुज्यते । **वा.** ३।१।७।१४ पृ. ७२३. * वेदस्य पदरूपत्वात् पदानां च नित्यवर्णरूपत्वेन नित्यत्वात् कारणसापेक्षत्वं नास्ति । **वि.** १।१।७. * वेदस्य मूलानपेक्षत्वात् प्रतिष्ठितं प्रामाण्यम् । **वैद्यनाथी.** १।१।२।२. * वेदस्य यथा वक्तृदोषरहितत्वात् प्रामाण्यम्, एवं लौकिकस्यापि पदस्य अनादित्वाविशेषात् । **वा.** ३।२।९।२५ पृ. ७८४. * वेदस्य वत्सजानुतादि पुरुषार्थमेव । **भा.** ४।१।२।२ वर्णकं २. * वेदस्य विधिप्रतिषेधात्मकत्वात् यावत् किंचित् श्रूयते तत्सर्वं तत्संबन्धित्वेन गम्यते । तत्र येन प्रकारेण विधिप्रतिषेधविषयं भवति तथा सर्वात्मना योजनीयम् । **वा.** ३।१।७।१३ पृ. ७०३, * वेदस्य समस्तेष्टिपश्वेकाहाहीनसत्रविषयत्वम् । ३।३।१।१ पृ. ८०४. * वेदस्य सर्वस्य अध्ययनविधिना अर्थवत्त्वावधारणे आनर्थक्यायोगः । **सु.** पृ. ७७४, * वेदस्य सर्वस्य अध्ययनविधिसामर्थ्यलक्षणेन हेतुना त्र्यंशत्वावधारणम् । पृ. ३९४, * वेदस्य सर्वस्यैव प्रयोजनवदर्थपर्यवसायित्वं अध्ययनविधिबलादेव अवसीयते । पृ. २१. * इतिहासे च विधौ सति, आदिमत्ता–दोषो वेदस्य प्रसज्येत । **भा.** ९।१।१५।४४, * एवं तावत् कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् ( प्रथमाध्यायस्य प्रथमद्वितीयपादाभ्याम् ) । १।३।१।१, * दृष्टो हि तस्य ( वेदस्य ) अर्थः कर्मावबोधनं नाम । न च तस्य अध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव तत्रापि 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' ४।३।१।१ इत्यर्थवादतां वक्ष्यति । १।१।१।१ पृ. ६. * धर्मे वेदस्य स्वतः प्रामाण्यम् । **बृ.** १।१।५।५. * बलवत्पौरुषेयत्वसाधक–प्रमाणान्तराभावविशिष्ट–कर्तृस्मरणाभाव एव ( वेदस्य ) पौरुषेयत्वाभावसाधकः इति नानैकान्तिकता । **भाट्ट.** ९।२।१. * 'सर्वे क्रतवः कथं ज्ञायेरन् पृथक् पृथक्' इति कृत्स्नस्य वेदस्य अध्ययनं श्रूयते । **भा.** ३।८।८।१८. * **वेदानां** त्रयाणामपि क्वचित् साधनांशे छन्दोन्तराणामवश्यंभावित्वम् । **वा.** ३।२।१८।४३. * वेदानां नित्यानामपि व्योमवत् परमात्माधिष्ठितत्वं उपपद्यते । **सु.** पृ. १००९. * **वेदेऽपि** एकवाक्यत्वबलादेव अर्थवादेषु गुणवादाश्रयणम् । **वाक्यार्थ.** पृ. २०. * वेदेऽपि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्ते इति न तावता वेदमूलत्वाभावः । **वा.** १।३।३।७ पृ २०६. * वेदेऽपि विवक्षाऽविवक्षे सर्वस्य जगतः चेतनाधिष्ठितत्वाभ्युपगमेन मुख्यवृत्त्यैव संभवतः । **सु.** पृ. १००८ । यथा पृथिव्यप्तेजोवाय्वाकाशाख्यमहाभूतारब्धदेहाधिष्ठितानामात्मनां चैतन्याख्यज्ञानवत्त्वात् तत्पूर्विका विवक्षा संभवति तथा ऋग्वेदादिदेहाधिष्ठितानामपि आत्मनां चैतन्याख्यज्ञानवत्त्वात् तत्पूर्विका विवक्षा संभवति । शब्दशक्त्यालोचनया च अन्यैः ज्ञातुं शक्यते । पृ. १००९. * वेदे कर्म शब्दलक्षणम् । लोके अर्थलक्षणम् । **भा.** ३।१।८।१७. * वेदे पुरुषानुप्रवेशः त्रेधा संभवति । पदपदार्थसंबन्धद्वारेण, वाक्यवाक्यार्थसंबन्धद्वारेण, ग्रन्थस्यैव भारतादिवत् पौरुषेयत्वाद्वा इति । न तु तत् त्रिविधमपि संभवति पदपदार्थसंबन्धस्य नित्यत्वात्, इतरत् उत्तरत्र वक्ष्यते । **वैद्यनाथः** १।१।५।५ पृ. २३–२४. * वेदे पौरुषेयत्वमापद्येत, अत्यन्तातीन्द्रियत्वात् यथाश्रुतात् ईषदप्यन्यथात्वे । **वा.** १।२।१।७ पृ. ११२. * वेदे प्राधान्येन विधिनिषेधौ भवतः । **मणि.** पृ. ९. * वेदे बाधकज्ञानाभावात् अर्थासंस्पर्शिताशङ्काऽपि नास्ति । **बृहती.** पृ. २०. * वेदे मन्त्रव्यतिरिक्तस्य शब्दस्य लिङ्गविनियोज्यत्वाभावः । **सु.** पृ. १२०९. * वेदे यावद्दर्शनं प्रामाण्यं अभ्युपगन्तव्यम् (छन्दसि), न दर्शनमतिक्रमितव्यम् । **भा.** ९।३।४।१४. * वेदे लिङादिरेव प्रवर्तकः, पुरुषाभावात् । **बाल.** पृ. ७८. * वेदे शब्दलक्षणः संव्यवहारः । **भा.** ३।१।८।१६. * वेदे हि प्रथममेव क्रियाकर्तृसंबन्धो निष्पन्नः । तस्मिन् सति समाख्या प्रवृत्ता । वयं तु तं संबन्धं प्रमाणान्तरेण अप्रतिपद्यमानाः समाख्यादर्शनेन प्रतिपद्यामहे । तेन ज्ञायते पूर्वं समाख्या पश्चात् संबन्ध इति । वस्तुतस्तु प्रथममेव संबन्धः । स चाप्रतीतोऽपि सत्ता-

मात्रेणैव समाख्यां प्रवर्तितवान् । **वा.** ३।३।६।१३. * वेदे हि शब्दादर्थमवगम्य वृद्धव्यवहारः, नान्यथा । **ऋजु.** पृ. २५५. * अधीते **वेदे** द्वयमापतति गुरुकुलाच्च समावर्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि । तत्र 'गुरुकुलात् मा समावर्तिष्ट' कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयं उपदेशः । **भा.** १।१।१।१ पृ. ५. * 'अनादिनिधनेऽप्येवं वेदे **वेदार्थगोचरे** । व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विवक्षाविवक्षयोः ॥' **वा.** ३।१।७।१३ पृ. ७०३, * ऋचो हि ता एव काश्चित् त्रिष्वपि वेदेषु पठ्यन्ते, तथा यजूंषि । ३।३।१।१. * पुरुषदोषकृतत्वात् शाब्दज्ञानभ्रान्तत्वस्य वेदे अनुपपत्तिः । **सु.** पृ. ६३२. * पुरुषार्थभूयस्त्वं च विध्यात्मके वेदे पुरुषप्रवर्तनसौकर्यादिष्यते । **वा.** २।२।१३।२८, * लोकप्रसिद्धिप्रतीक्षे वेदे यत्र एकदेशोऽपि जातिनिमित्तता लभ्यते न तत्र पुनः निमित्तान्तरशक्तिकल्पना संभवति (शब्दार्थयोः) । १।४।७।१० पृ. ३४३.

* **वेदाक्षरग्रहणानन्तरं** मीमांसा कर्तव्या न वा इति संशये धर्मज्ञानार्थं कर्तव्या इति सिद्धान्तः । **भा.** १।१।१।१.

* **वेदातिरिक्तस्य** शास्त्रस्य कूटस्थनित्यत्वाभावः । **सु.** पृ. १०१०.

* **वेदातिरिक्त–सकलविद्यास्थान–प्रतिपाद्यानां** पदार्थानां दृष्टादृष्टप्रयोजनभेदेन मूलविवेकः । **सु.** पृ. १२९.

* **वेदाधिकरणम्** । (१।१।८।२७–३२) । इदमेव वेदापौरुषेयत्वाधिकरणम् । वेदानां काठकादिसमाख्याबलेन **पौरुषेयत्वात्** पुरुषदोषानुप्रवेश इत्यव्यवहिते वेदाधिकरणे आशङ्कितम् । दृश्यादर्शनादिना कर्तुरभावनिश्चयात् समाख्यायाश्च प्रवचननिमित्ततयोपपत्तेः अपौरुषेयत्वं साधितम् । **सोम.** १।२।१. * वेदाधिकरणम् । 'वेदांश्चैके संनिकर्षं पुरुषाख्याः' इति षट्सूत्रेण वेदाधिकरणेन रघुवंशादिवत् पौरुषेयत्वं चोदनानामाशङ्क्य निरस्तम् । **बाल.** पृ. ७.

* **वेदाध्ययनं** अर्थावबोधपर्यन्तं इति स्थितम् (पूर्वतन्त्रे) । शाम्भा. ३।४।१।६ ब्रसू. । 'आचार्यकुलाद्वेदमधीत्य' (छान्दो० ८।१५।१) इत्यत्र अध्ययनमात्रस्य श्रवणात् अध्ययनमात्रवतः एव कर्मविधिः इति अध्यवस्यामः । **ननु** एवं सति अविद्यत्वात् अनधिकारः कर्मसु प्रसज्येत । **नैष दोषः** । न वयं अध्ययनप्रभवं कर्मावबोधनं अधिकारकारणं वारयामः । किं तर्हि ? औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यते इत्येतावत् प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारिणा अपेक्ष्यते एवमेतदपि द्रष्टव्यमिति । **शाम्भा.** ३।४।१।१२ ब्रसू. * वेदाध्ययनं इष्टजनकदृष्टार्थम्, अर्थवद्विषयकविहिताध्ययनत्वात्, अङ्गाध्ययनवत् । स्तोभाध्ययने व्यभिचारवारणाय अर्थवद्विषयकेति । विषमन्त्राध्ययने व्यभिचारवारणाय विहितेति । **मणि.** पृ. २. * **वेदाध्ययनात्** उत्तरकाले प्रयोगः श्रूयते । न प्रयोगश्रुतिगृहीतं वेदाध्ययनम् । कुतः ? अनारभ्य कर्माणि वेदाध्ययनं श्रूयते । तस्मात् 'स्वाध्यायोऽध्येतव्यः' इति । **भा.** ३।८।८।१८. * **वेदाध्ययनस्य** । 'दृष्टो हि तस्य (वेदाध्ययनस्य) अर्थः कर्मावबोधनं नाम' । **बृहती.** पृ. ९ । कस्मात् पुनः आचार्यकरणनिष्पत्तिरेव प्रथमोपनिपातिनी प्रयोजनं न भवति ? उच्यते । यत्कर्तृको हि यो विधिः तत्पुरुषयोग्येव अस्य प्रयोजनं इत्युत्सर्गः । यत्र पुनस्तन्न दृश्यते तत्र पुरुषान्तरगतमपि गृह्यते । दृश्यते चात्र पश्चाद्भाव्यपि कर्मावबोध इति तदेव प्रयोजनं न पुरुषान्तरगताऽध्यापनसिद्धिः । **ऋजु.** पृ. ९.

* **वेदाध्यापनेन** च आचार्यो भवति । **भा.** ६।१।७।३५.

* **वेदान्तरस्य** शाखान्तरताऽप्यस्ति । **सु.** पृ. ७५७.

* **वेदान्तरोत्पन्नं** वस्तु यत्र वेदान्तरेण विनियुज्यते तत्र किमुत्पत्तिवेदधर्मः कर्तव्यः उत विनियोगवेदधर्म इति । उत्पत्तिपूर्वकत्वाद्विनियोगस्य उत्पत्तिवेदधर्मः, इति प्राप्ते, विनियोगवेदधर्म इति गृह्यते ।



उत्पत्तेर्विनियोगार्थत्वात् । **वा.** ३।३।२।९ पृ. ८१४. * वेदान्तरोत्पन्नं वेदान्तरविहितेन बाध्यते यथा– आधाने सामवेदोत्पन्नं वारवन्तीयादि उच्चैष्ट्वेन प्राप्तं यजुर्वेदविहितत्वेन उपांशुत्वप्राप्त्या । **बाल.** पृ. १४०. * वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन बाध्यते, अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०.

* **वेदापौरुषेयत्वम्** । संप्रति वेदवाक्यानामपौरुषेयत्वं साध्यते । प्रमाणं चार्थापत्तिरनुमानं वा । अतीन्द्रियार्थप्रतिपादकत्वमपौरुषेयत्वं विना नोपपद्यते इत्यर्थापत्तिः । अनुमानं तु वेदवाक्यान्यपौरुषेयाणि अतीन्द्रियार्थप्रतिपादकत्वात्, यदित्थं न भवति तत्तथा न भवति, यथा भारतादि इति । न च सुरभि गगनकुसुममिति वचने अनैकान्तिकत्वम्, अपसिद्धान्तप्रसङ्गात्, प्रतिवादिनाऽपि तादृशस्य प्रतिपादकत्वानभ्युपगमात् । प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वपरपक्षासाधनत्वपरपक्षदूषणत्वाभावात् । अत्र च न स्वपक्षसाधनत्वम्, नाप्यसिद्धत्वाद्युद्भावनम् । न च योगीश्वरेन्द्रियविषयतया अन्यतरासिद्धत्वम्, अस्मदादीन्द्रियाभिप्रायेणातीन्द्रियार्थत्वम्, तद्व्यतिरिक्तस्यैन्द्रियत्वासिद्धेः । रूपादिनियतविषयं हीन्द्रियम्, तयोरपि तथाविधेन्द्रियेण नासिद्धत्वम् । न च मन्वादिष्वनैकान्तिकत्वम्, तेषां अतीन्द्रियार्थप्रतिपादकत्वाभावात् श्रुतिमूलत्वेन तदनुवादकत्वात् । अत एव परमाण्वादिप्रतिपादकं वाक्यं न प्रतिपादकम्, अनुमानसिद्धार्थानुवादकत्वात् । न च भागासिद्धता, अनुवादिषु वेदवाक्यस्यैव पक्षीकृतत्वात् । हुमादीनामर्थाभावेन न पदत्वं वाक्यत्वं च । न चानध्यवसितत्वम्, पक्षे एव वर्तमानत्वेऽपि केवलव्यतिरेकित्वात्, व्यतिरेकित्वे सपक्षाभावात् । न च गगनादिः सपक्षः, नित्यत्वापौरुषेयत्वयोर्भेदात्, उच्चारणपूर्वकोच्चारणं ह्यपौरुषेयत्वम्, न च भारताद्यद्यतनवाक्यस्यापौरुषेयत्वम्, साक्षाद्वा परंपरया वा तस्योच्चारणपूर्वकत्वाभावात् ।

न च वाक्यत्वादिति हेतुना कालात्ययापदिष्टत्वम्, तस्य सामान्यविषयत्वेन विलम्बितत्वात् । अस्य च वेदैकविषयत्वात् । न च व्यतिरेकित्वेन विलम्बः, अन्वयव्यतिरेकिण्यपि व्यतिरेकस्य विद्यमानत्वात् ।

नापि पौरुषेयत्वमपि साधयितुं शक्यम्, विकल्पासहत्वात् । किमस्मदादिपुरुषकृतत्वम्, आहोस्वित् विलक्षणकृतत्वम् ? अस्मदादिकृतत्वेऽपसिद्धान्तः, विलक्षणकृतत्वे दृष्टान्तः साध्यविकलः । न चोभयानुगमेन पुरुषमात्रकृतत्वं साध्यम्, उभयाभावात् । नाप्येतेनैवानुमानेन विलक्षणसिद्धेः अनुगतत्वसिद्धिः, इतरेतराश्रयत्वात्, विलक्षणपुरुषसिद्धौ तदनुगतपुरुषकृतत्वं साध्यम्, तत्सिद्धौ विलक्षणपुरुषसिद्धिरिति । न च ईश्वरानुमानेन विलक्षणसिद्धिः, तत्रापि विकल्पस्य समानत्वात्, अस्मदादिकर्तृकत्वे साध्ये अपसिद्धान्तः, विलक्षणकर्तृकत्वे साध्यविकलः, उभयानुगतकर्तृकत्वमात्रत्वे साध्ये अन्योन्याश्रयत्वमिति ।

**ननु** सर्वत्रादृष्टस्वलक्षणमनुमानमुच्छिद्येत, तत्राप्येवं विकल्पस्य संभवात् । उच्छिद्यतां काममिति वार्तिककारीयाः । न च प्राभाकराणां क्रियाशक्त्यादिष्वेवं विकल्पप्रसङ्गः । लोकक्लृप्तकारणजातीयस्वभावानतिक्रमेण कारणत्वाभ्युपगमात् । अतीन्द्रियस्य कारणत्वं न दृष्टमिति **चेन्न**, अदृष्टादीनां कारणत्वाभ्युपगमात् । अत्र तु कुलालादयः शरीरद्वारेण कर्तारः अदृष्टाधीनाश्च, अनित्येच्छाज्ञानादियुक्ताश्च, विलक्षणस्त्वशरीरोऽयेव कर्ता, नाप्यदृष्टाधीनः, नित्येच्छाज्ञानादियुक्तश्च, अतोऽत्यन्तापरिदृष्टस्वरूपत्वान्न विलक्षणस्य क्रियाशक्त्यादिसाम्यम् ।

किंच पौरुषेयत्वं नाम ? यदि वर्णोत्पादकत्वम्, तर्हि साध्यविकलता, नित्यत्वाल्लोके वेदे च वर्णानाम् । अथवा वाक्यक्रमोऽनुवादकत्वम्, तर्हि सिद्धसाधनत्वम्, अध्येतॄणामप्युक्तत्वात् । उच्चारणमेव हि पदादीनामुत्पादनम्, नान्यत् ।

अथ स्वतन्त्रपुरुषकृतत्वम्, तर्हि वेदभारतयोरन्यतरवाक्यस्य पौरुषेयत्वं न स्यात् । अथ स्वतन्त्रपुरुषपूर्वकत्वम् । किमिदं स्वातन्त्र्यं नाम ? अथ यदि प्रमाणान्तरेणार्थं ज्ञात्वा तत्प्रतिपादकवाक्यरचनम्, तर्हि अनाप्तवाक्यस्यापौरुषेयत्वं स्यात् । अथ प्रतीतिमात्रपूर्वकत्वम्, तर्हि विप्रलिप्सोर्वचनस्य न स्यात् । अथोच्चारणान्तर-

निरपेक्षत्वं पौरुषेयत्वं तर्हि पुनरपि भारताद्यद्यतनवाक्यस्य न स्यात् । अथ साक्षात्परम्परया वोच्चारणनिरपेक्षत्वम्, तर्हि वेदविषयोच्चारणस्य भवत्पक्षे उच्चारणान्तरपूर्वकत्वाभावात् प्रत्यक्षादिमूलत्वं वाच्यम् । एवं च सति वेदार्थविषये प्रत्यक्षाद्यभावात् कारणाभावे कार्याभावानुमानबाधात् बाधितविषयत्वम् । योगीश्वरज्ञानपूर्वकत्वस्य संभवान्न कारणाभाव इति चेन्न, तथाविधप्रमाणासिद्धेः । अथानेनैवानुमानेन तदपि सिध्यति इति चेन्न, इतरेतराश्रयप्रसङ्गात् । किंच पौरुषेयत्वानुमानस्य प्रवृत्तिरेव न सिध्यति । सिध्यति चेत् संदिग्धेभ्यो ह्यर्थेभ्यः प्रवर्तेत । न च वेदकर्तरि संदेहोऽस्ति, अनुपलब्धेरभावनिश्चयात्, शशमस्तके विषाणाभावनिश्चयवत् । अथायोग्यानुपलब्धित्वेन वेदकर्तर्यनुमानं प्रवर्तेत, तर्हि शशादिमस्तकं विषाणवत्, चतुष्पादात्मकत्वात्, गोमस्तकवत् इत्यप्यनुमानं स्यात् । अथ वेदकर्तुरनुमानसिद्धत्वेऽपि परमाणुवदुपलब्धियोग्यत्वं नास्ति, तर्हि शशमस्तकेऽप्यनुमानसिद्धं विषाणं परमाणुवदयोग्यं स्यात् । अथ विषाणजातीयस्य रूपवत्त्वमहत्त्वादिदर्शनाच्छशमस्तकेऽपि प्रत्यक्षत्वम्, तर्हि वाक्यकर्तुरप्यस्मदादेः प्रत्यक्षत्वयोग्यत्वात् वेदकर्तर्यपि प्रत्यक्षत्वमिति तुल्यचर्चः ।

एवं वाऽनुमानम्, अपौरुषेयो वेदः, पौरुषेयविवादास्पदत्वात्, यदित्थं न भवति न तत्तथा यथा भारतादि । न च प्रकरणसमत्वम्, पौरुषेयत्वसाधनदशायां सपक्षासद्भावेनाथमेव हेतुरनध्यवसित इति । न च वाक्यत्वादित्यादिना कालात्ययापदिष्टत्वम्, पूर्वोक्तदोषप्रसङ्गात् ।

**न च** वादिविप्रतिपन्नत्वेन संशयहेतुत्वम्, अनुमानसामग्रीत्वेन हेतुत्वात् । न च विप्रतिपत्तिमात्रेऽतिप्रसङ्गः, पौरुषेयापौरुषेयविवादास्पदत्वेनेति विशेषणात् । न साध्याश्याव्रृत्तिशङ्का, गगनादिषु विपक्षेष्वपौरुषेयत्वस्य व्यावृत्तत्वात् । न च नित्यत्वमात्रमपौरुषेयत्वमित्युक्तमेव । न चाप्रयोजकत्वशङ्का, केवलव्यतिरेकिलक्षणोपेतत्वे सोऽपि प्रयोजको भवतु । न चोभये प्रयोजकत्वे चान्यतरस्याप्रयोजकत्वम् । न चाप्रयोजकत्वस्य दूषणत्वमपि संमतम् ।

एवं वाऽनुमानम्, विवादाध्यासितं वेदाध्ययनम्, गुर्वध्ययनपूर्वकम्, वेदाध्ययनत्वात्, अधुनाऽध्ययनवदिति । भारतेऽप्येवं प्रसज्यते इति चेन्न । तत्र पौरुषेयत्वस्य भवतामपि सिद्धत्वादपसिद्धान्तप्रसङ्गात् । प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वाभावात् परपक्षदूषणत्वाभावाच्च ।

**ननु** किमस्मदध्ययनस्य गुर्वध्ययनपूर्वकत्वं साध्यते, तद्व्यतिरिक्तस्य वा ? प्रथमपक्षे सिद्धसाधनत्वम्, द्वितीये चाश्रयासिद्धत्वम्, अतो नात्र संप्रतिपन्नो धर्मो विद्यते । **नैवम्**, सिद्धस्यैवाध्ययनविशेषस्यास्मत्कर्तृकत्वेन विलक्षणकर्तृकत्वेन च विप्रतिपन्नस्य धर्मित्वमित्यदोषः । या च पौरुषेयत्वानुपपत्तिरुक्ता, सा च नैयायिकस्येश्वरसिद्धौ, बौद्धस्य सर्वज्ञत्वसिद्धौ, वेदान्तिनो ब्रह्मसिद्धौ च समैव, अन्यत्र परिकल्पनायास्तुल्यत्वात् । तदुक्तम्- 'सर्वज्ञकल्पनाद्यैस्तु वेदे या पौरुषेयता । तुल्यवत्कल्पिता येन तेनेदं संप्रधार्यताम् ॥' इति ।

**किंच** अपौरुषेयत्वानङ्गीकारे ईश्वरसिद्धिर्न स्यात् । तथाहि, न तावत् प्रत्यक्षेण गृह्यते, अयोग्यत्वात् । नाप्यनुमानेन, तस्य कर्तृमात्रविषयत्वात् । नापि पक्षधर्मतया विशेषसिद्धिः, लोकस्वभावानतिक्रमेण विशेषमात्रापेक्षत्वात्, पर्वतगताग्निविशेषवत् । अत्रापि दृष्टस्वभावानुगुणकर्तृविशेषस्य सिद्धिः पक्षधर्मतया, न तु दृष्टस्वभावविपरीतस्य । नाप्यागमेन कृतकेन, अन्योन्याश्रयप्रसङ्गात् । तद्वचनत्वे सिद्धे तदीयाम्नानम्, तदीयाम्नाने तस्य प्रामाण्यम्, तस्य प्रामाण्ये तत्सिद्धिरिति । न च परं नियोगमेकानभ्युपगमात् ।

**किंच** ईश्वरस्य वेदकरणात् प्रागप्रमाणकत्वप्रसङ्गः, अपौरुषेयत्वे सिद्धे स्वर्गादिसिद्धिवदुपपद्येतापि । तदुक्तं –'एवं चेश्वरे परोक्तमनुमानं निरस्तम्, नेश्वरो निरस्तः' इति । अतः सिद्धमपौरुषेयत्वं वेदस्य । **प्रभाकरविजयः** पृ. ६६–६९.



* **वेदापौरुषेयत्वाधिकरणम्** । १।१।८।२७–३२. **मीको.** पृ. ५३१ 'अपौरुषेयत्वाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वेदापौरुषेयत्वाधिकरणम्** । ( १।१।८ ) । ननु अस्तु पदानां पदपदार्थसंबन्धस्य च नित्यत्वम्, वाक्यार्थप्रमितेश्च वाक्यजन्यतया विधीनां प्रामाण्यम्, तथापि आनुपूर्वीरूपवेदानां नित्यत्वासंभवात् काठकादिसमाख्यया तत्कर्तृकत्वनिश्चयाच्च पौरुषेयत्वं संभवति । पुरुषे च दोषसंबन्धसंभावनया न प्रामाण्यं संभवति । तथाहि । वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान्, वाक्यत्वात्, भारतवत्, इत्यनुमानेन पौरुषेयत्वम् । न च सामान्यधर्मस्य प्रागभावप्रतियोगितानवच्छेदकत्वेन वेदत्वस्य अतथात्वात् असिद्धिः इति **वाच्यम्** । वेदत्वस्य अतादृशत्वेऽपि इदानींतनवेदत्वादीनां तदवच्छेदकतया नासिद्धिः । अन्यथा घटादीनां अपौरुषेयत्वप्रसङ्गः । **वस्तुतो** वेदत्वं प्रागभावप्रतियोगितावच्छेदकम्, कार्यवृत्तिधर्मत्वात्, तद्घटत्ववत्, इत्यनुमानेन वेदत्वस्यापि तथात्वात् । अतो वेदानां पौरुषेयत्वम् । एवं च काठककालापकादिसमाख्या, 'बबरः प्रावाहणिरकामयत' इत्याद्यनित्यसंयोगोऽपि उपपद्यते । तदुक्तं 'संनिकृष्टकाला वेदाः इदानींतनाः' इति ( शाबरं भाष्यं १।१।२७ सू. ) । तत्र च अस्मदादीनां कर्तृत्वासंभवात् व्यासादिवत् ईश्वर एव कर्ता । एवं च 'त्रयो वेदा अजायन्त, अग्नेः ऋग्वेदो वायोर्यजुर्वेदः आदित्यात् सामवेदः' इत्यादिदर्शनमुपपद्यते । अतो न स्वतः प्रामाण्यम् । इति **चेन्न** ।

उक्तानुमानस्य वेदत्वं न प्रागभावप्रतियोगितावच्छेदकं सामान्यधर्मत्वात् इत्यनुमानेन सत्प्रतिपक्षितत्वात् । प्रतियोगितावच्छेदकभेदाभावेन सकलघटप्रागभावैक्ये प्रतियोग्युत्पत्तिनाशत्वासंभवेन च नित्यत्वापत्तेः । इष्टापत्तौ तु उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः, प्रागभावनाशस्वीकारे घटानुत्पत्तिप्रसङ्गः । अवयवशः तन्नाशस्वीकारः निरवयवत्वादेव अयुक्तः । प्रतियोगिभेदेन अभावनानात्वकल्पने संसर्गाभावान्योन्याभावयोः ऐक्यप्रसङ्गः । अतो न सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वम् । प्रथमानुमानमपि वेदाः प्रागभावप्रतियोगितावच्छेदकधर्माभाववन्तः, अस्मर्यमाणकर्तृकत्वात्, आत्मवत्, इत्यन्वयिना, अस्मर्यमाणकर्तृकवाक्यत्वात् इति व्यतिरेकिणा च सत्प्रतिपक्षितम् । वेदशून्यकालाभावेन वेदप्रागभावासिद्धेश्च । तथाहि । पूर्वकालः न वेदशून्यः, कालत्वात्, वर्तमानकालवत्, पूर्वकालीनं वेदाध्ययनं गुर्वध्ययनपूर्वकम्, वेदाध्ययनत्वात्, इदानींतनवेदाध्ययनवत् । वेदा न पौरुषेयाः, अस्मर्यमाणकर्तृकत्वात्, इत्यनुमानेन अपौरुषेयत्वसिद्धेश्च । न च अस्मर्यमाणकर्तृककूपादौ व्यभिचारः, तत्रापि सामान्यतः कर्तृस्मरणात् । अतः पौरुषेयत्वासंभवात् अपौरुषेयत्वम् । एवं 'वाचा विरूपनित्यया' इति श्रुतिः 'स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥' इति स्मृतिश्च उपपद्यते । काठकादिसमाख्या तु श्रुतिस्मृतिविरोधात् प्रवचननिमित्तत्वेन उपपादनीया । 'अग्नेः ऋग्वेदः' इत्यादिश्रुतिरपि अग्निना ज्ञापितः इति व्याख्येया । अनित्यसंयोगोऽपि प्रवाहनित्यतामादाय उपपादनीयः । प्रवाहनित्यत्वं च सजातीयप्रागभावसमयव्यापसजातीयध्वंसकत्वरूपम् । यद्वा बहुक्षीरादिवाक्यवत् असत्यकथादिना विधेयस्तुतिपरत्वेन उपपादनीया । अतः अपौरुषेया वेदाः इति सिद्धं वेदप्रामाण्यम् । **मणि.** पृ. १७२–१७५.

* **वेदापौरुषेयत्ववादः** । अपिच पौरुषेयत्वे सति वेदानां सर्वज्ञप्रणीततया तदनुविधायिना तेभ्यः प्रतिपत्तिर्भवेदपि, न पुनरस्ति पौरुषेयता । ननु वाक्यमात्रं पुरुषाधीनवचनम् । तथाहि, दुर्भणत्वेन वर्णानुपूर्व्यभेदसंबन्धेन विशिष्टेन वा विषयाऽऽनयनादिकार्येण समानात्मानः पौरुषेया अपि पदक्रमाः तेषुतेषु बौद्धाद्यागमेषु अपि प्रतिपन्नपौरुषेयत्वेषु दृश्यन्ते । यच्च यस्माद्भिन्नस्वभावं न तत्ततो भिन्नहेतुकम्, यथैकस्मात् कलमाङ्कुरादभिन्नस्वभावं कलमाङ्कुरान्तरं तत्समानहेतुकम्, तथा लौकिकीभ्यः पदानुपूर्वीभ्योऽभिद्यमानस्वभावा वैदिकाः पदसंनिवेशा इति स्वभावहेतुः । भिन्नकरणत्वाद्धि स्वविरुद्धभिन्नस्वभावत्वव्याघातात् स्वभावविरुद्धोपलब्धात्

भिन्नस्वभावत्वं व्यावर्तमानं कारणाऽभेदेन व्याप्यते इति प्रतिबन्धसिद्धिः । **अत्रोच्यते** । किं वेदवाक्यानां पुरुषप्रणीतत्वमात्रं साध्यते, आहोस्वित् स्वतन्त्रपुरुषप्रणीतत्वम् ? इति । पूर्वस्मिन् सिद्धसाधनम् । न खलु वयमपि नित्यत्वेऽपि वर्णानामानुपूर्वीविशेषोपहितसंसीमपदं अभेदवाक्यानां अपौरुषेयतया आचक्ष्महे । तथाहि, वर्णानां नित्यतया विभुतया च देशतः कालतो वा न संभवत्यानुपूर्व्यं इत्यभिव्यक्त्याश्रयं तद्वक्तव्यम् । सा च पुरुषप्रयत्नयोनिरिति कथं तद्भेदोपहितमर्यादानां गवादिपदानां वेदवाक्यानां च पौरुषेयता ? इति । अथ स्वतन्त्रपुरुषप्रणीतत्वं मानिषादादिवाक्यवत् । प्राचेतसः खलु अत्रभवान् आदिकविः स्वतन्त्रः, तद्वत् वेदवाक्येष्वपि कश्चित् ईश्वरादिः इति सांप्रतम् । अनैकान्तिकत्वात् । स्वतन्त्रप्राचेतसपुरुषप्रणीतत्वाभावात् । स्यादेतत् । न स्वतन्त्रपुरुषप्रणीतत्वं वेदवाक्यानां साधयामः, अपि तु स्वतन्त्रपुरुषपूर्वकत्वम् । अस्ति च अस्मदादिपुरुषप्रणीतेष्वपि मानिषादादिपदसंनिवेशेषु पारंपर्येण पुराणस्य कवेः स्वातन्त्र्यं इति नानैकान्त इति । तदनुपपन्नम् । पुरुषप्रणीततामात्रेण कारणाभेदेन लौकिकात् पदसंनिवेशार्द्रादिकानां अभेदोपपत्तौ अप्रतीतस्य वेदेषु पुरुषस्वातन्त्र्यस्य अप्रयोजनकस्य कल्पनानुपपत्तेः । तस्मात् समानसंनिवेशत्वस्य पुरुषपारतन्त्र्येण आत्यन्तिके नास्ति कश्चित् विरोधः । येन तद्विपक्षादात्यन्तिकपारतन्त्र्याद् व्यावर्तमानं पुरुषस्वातन्त्र्याप्रयोजनकस्य कल्पनाऽनुपपत्तेः । तत्समानसंनिवेशे च पुरुषपारतन्त्र्येणात्यन्तिके नास्ति कश्चिद् विरोधः । येन तद्विपक्षादात्यन्तिकपारतन्त्र्याद् व्यावर्तमानं पुरुषं स्वातन्त्र्येण व्याप्येत । तेन यथा समानमैत्रीजन्मस्वपि मैत्रीतनयेष्वन्नपानविशेषोपयोगनिमित्ता श्यामता केषांचिदेव न सर्वेषामिति तत्तनयतया न श्यामतानुमानं एवं विलक्षणप्रयत्नस्थानाभिघातजन्मवाक्यनिष्पत्तेः तद्भेदाभेदानुविधायिभेदाभेदो युज्यते न पुनः पुरुषपारतन्त्र्ये तन्त्रीकर्तुमुत्सहते । सोऽयं संदिग्धव्यतिरेकतयाऽनैकान्तिको हेत्वाभासः ।

यस्तु दर्शनकथन्तासंबोधरहितो यथादर्शनपूजकः प्रमाणयेत् दृष्टानि हि भारतादिवाक्यानि स्वतन्त्रपुरुषप्रणीतानीति वेदवाक्यान्यपि वाक्यत्वात् तथाविधानीति, स वक्तव्यः, विवादाध्यासितं वेदाध्ययनं अध्ययनान्तरपूर्वकं वेदाध्ययनत्वात् अस्मदादिवेदाध्ययनवत् । नैवं भारतादिषु अस्यानुमानम् । तत्र दृढतरेण कृष्णद्वैपायनादिस्मरणेन अनुमानस्य बाधेन विषयत्वादनुत्पादात् । वेदे तु कर्तृस्मृतिद्रढिमाऽसंभवात् काठकादिसमाख्यातस्य प्रवचनमिति वचनोपपत्तेः अबाधितविषयस्य अनुमानस्याप्रत्यूहमुत्पत्तेः । न च भवदनुमानमस्य विषयबाधे प्रभवति । तस्य सामान्यतो दृष्टसंबन्धात् सामान्यशास्त्रस्येव विशेषशास्त्रात् दुर्बलत्वात् । तथाह । ‘ प्रसिद्धावयवं यत्स्याद्विशेषे वा प्रतिष्ठितम् । तत्साध्याङ्गकसामान्यदृष्टात्तु बलवत्तरम् ॥ ’ इति । स्यादेतत् । शब्दानामर्थप्रत्यायनस्य पुरुषसंकेताधीनजन्मत्वात् तत्संबन्धात् केनचित् लौकिकसंव्यवहारार्थं शब्दानामर्थैः संबन्धान् कृत्वा वेदः प्रणीतः । न चार्थप्रत्यायनं प्रति शब्दानां स्वाभाविकी शक्तिः संकेतेन व्यज्यते इति सांप्रतम् । यदि हि सत्यपि संकेते कश्चित् ध्वनिः कंचन अर्थं नावभासयेत् ततः कस्यचित् संकेताभिव्यक्तसामर्थ्यस्य स्वाभाविकमुपपद्येत वाचकत्वम्, न त्वेतदस्ति । संकेतमन्तरेण ध्वनेरर्थरूपस्याऽप्रतिपादकत्वात् । सति तु संकेते सर्वस्मादपि सर्वार्थप्रत्ययोत्पत्तिदर्शनात् । तदयुक्तम् । अन्तरेणापि संकेतमनादिवृद्धव्यवहारदर्शनात् अभिव्यक्तसामर्थ्येभ्यः शब्देभ्यः अर्थप्रतिपत्तेरुपपत्तेः । संबन्धकल्पनायामर्थापत्तिपरिक्षयात् । न च व्यवहारदर्शनमेव संकोच इति सांप्रतम् । न खल्वेतदनेन शब्देन अयमर्थः प्रत्येतव्य इत्येवमाकारम्, अपितु शब्दोच्चारणसमनन्तरप्रवृत्तिनिवृत्तिहर्षाद्याभासम् । तच्च स्वप्रवृत्त्यादिनिबन्धनार्थभेदविषयप्रत्ययानुमानद्वारेण शब्दस्य तत्र कारणतायां प्रमाणम् । न च व्युत्पद्यमानास्तदा संकेतं संकेतस्य कर्तारं वा प्रतियन्ति । न चेह संकेतं तस्य च कर्तारमन्तरेण कस्यचित् परिदृश्यमानस्याऽनुपपत्तिः । ततो नूनं स्वभावतः शब्द एवार्थभेदप्रत्ययस्य हेतुरित्यध्यवस्यति । न च गवादिशब्दानां अश्वादौ देवदत्तादि-



शब्दानां च तत्र तत्र संकेताधीनतया प्रवृत्तेः गोत्वादावपि गवादिशब्दाः संकेताऽऽयत्तप्रवृत्तयः इति शक्यानुमानम् । अनादिवृद्धव्यवहारपरंपराभिव्यक्तस्वाभाविकार्थप्रत्ययहेतुभावानां स्वार्थवृत्तेः संकेताभावेन सह संभवात् अविरोधात् । यथादर्शनपूजकं प्रति तु शक्यमेवं प्रत्यवस्थातुम् । विवादाध्यासिताः पुमांसो गवादिपदेभ्यो गोत्वादिषु संकेतानायत्तप्रतिपत्तयः, गवादिपदेभ्यो गोत्वादिप्रतिपत्तिमत्त्वात् अस्मदादिवदिति । विपञ्चितं चैतद्वृद्धैरिति दिङ्मात्रमत्र सूचितम्, क्षन्तव्यं च किंचित् उद्ग्रन्थाभिधानं सूरिभिः इत्युपरम्यते । **कणिका.** २३५–२३७.

* **वेदार्थः** कार्यरूपः ( गुरुमतम् ) । **वि.** १।१।२.

* **वेदार्थे** साकाङ्क्षे यत्कल्प्यते तद्वैदिकं नेतरत् ( इति अनुषङ्गाधिकरणे [ २।१।१६ ] वर्णितम् ) । **वा.** ३।३।७।१४ पृ. ८३०.

* **वेदार्थज्ञानं** मीमांसारूपवेदविचारमन्तरेण न संभवति । **वि.** १।१।१.

* **वेदार्थनिर्णये** तेषां ( अनुमानादीनां ) कारणत्वानिषेधात् तदर्थनिर्णयार्थं अनुमानोपन्यासः । **वा.** २।२।११।२५ पृ. ५८३.

* **वेदार्थप्रतिपत्तावपि** वृद्धव्यवहार एव निमित्तम् । एवं हि वृद्धव्यवहारे प्रतिपन्नं ‘ कार्यान्वितं स्वात्मानं पदार्थाः प्रतिपादयन्ति ’ इति । लोके वेदे चैक एव कार्यात्मको नियोगार्थः । तेन व्युत्पत्तेर्विषयनानात्वं नास्ति । अतो यावन्तः पदार्था एकस्मिन् कार्येऽन्वीयन्ते तावत्पदार्थप्रतिपादकः पदसमूह एकं वाक्यं इति कार्यैक्यनिबन्धनमेकवाक्यत्वं भविष्यति ( इति प्राभाकराः ) । **ऋजु.** १।१।७।२४ पृ. २६३.

* **वेदाविरुद्धस्यापि** शाक्यवचनस्य प्रामाण्यनिरासः । **भाट्ट.** १।३।३ वर्णकं २.

* ‘ शब्दब्रह्मेति यच्चेदं शास्त्रं **वेदाख्यमुच्यते** । तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ ’ **वा.** ३।१।७।१३ पृ. ७०३.

* **वेदोपक्रमाधिकरणम्** । ३।३।१।१–८. **मीको.** पृ. ११३५ ‘ उपक्रमाधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **वेदोपक्रमाधिकरणे** ( ३।३।१।१–८ ) ‘ उच्चैर्ऋचा क्रियते ’ इत्यत्र पाठार्थः करोतिः विधानार्थो वा इति संदिह्य उत्पादनार्थत्वात् करोतेः पाठस्य च शब्दाभिव्यञ्जकत्वेन उत्पादनत्वोपचारोपपत्तेः, विधाने अत्यन्ताप्रसिद्धवाचकशक्तिकल्पनाऽयोगात् पाठार्थः करोतिः इति पूर्वपक्षयित्वा पाठे वेदस्य करणत्वायोगात् ‘ ऋचा ’ इत्यादितृतीयाभङ्गापत्तेः, करोतेस्तु लक्षणया क्रियाप्रवृत्तिहेतुभूतविशेषापेक्षायां प्रयोगविधेः कल्प्यत्वेन वेदविशेषव्यपदेशायोगस्य उपपादितत्वात् ‘ कार्ये ज्ञाते अधिकारः स्यात् ’ इति चाधिकारज्ञानस्य प्रयोगविध्यधीनकार्यज्ञानपूर्वकत्वाभिधानेन अधिकारविधेः प्रयोगविधिपूर्वकत्वावसायात् सुतरां वेदविशेषव्यपदेशायोगावगतेः उत्पत्तिविनियोगविध्योः अन्यतरो विधिविशेषो विवक्षित इत्यवगतेः उत्पत्तिविधौ करोतिसामञ्जस्यात् ( करोतिशब्दसामञ्जस्यात् ) तस्यैव च प्राथम्यात् उत्पत्तिविधानार्थः करोतिः इति सिद्धान्तयितव्यम् । **सु.** पृ. ११८६–८७.

* **वेदोपक्रमाधिकरणन्यायेन** पूर्वस्यैव प्राबल्यम् । **सोम.** ६।५।१९. * वेदोपक्रमाधिकरणन्यायेन वेदलक्षणावत् निगदपदेऽपि यजुर्वेदलक्षणापत्तिः । **कौ.** २।१।१४।४२.

### ॠ वेदोपदेशात् पूर्ववद् वेदान्यत्वे यथोपदेशं स्युः । ३।७।२४।५०॥

अस्ति औद्गात्रे समाम्नातः श्येनः, आध्वर्यवे वाजपेयः । तत्र संदेहः किं श्येने उद्गातृभिरेव पदार्थाः कर्तव्याः, वाजपेयेऽध्वर्युभिः, उतोभयत्र नानाऋत्विग्भिः इति । इदानीं प्रसङ्गात् प्रकृतसमाख्ययोर्बाध्यबाधकभावो निरूप्यते । अत्रायं **पूर्वपक्षः**– श्येनस्तावदौद्गात्रवेदे समाम्नातत्वेन अस्य च ज्योतिष्टोमविकारत्वादतिदेशेन नानाकर्तृकाः पदार्थाः प्राप्ता इति । तेन यद्यपि साक्षादौद्गात्रप्रधानप्रायवचनेन साङ्गस्यैकस्य विधानात् तदन्तर्गताङ्गान्यपि विधीयन्ते इति तान्यप्यौद्गात्राणि । अतो ‘ गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोगः ’ इत्यनेन न्यायेन अङ्गमुद्गातैव कर्तेति । किञ्च प्रकृतवेदाङ्गेषु

सामाख्यानिकान्येव कर्त्रन्तराणि । तच्च समाख्यया विकृतिषु अध्वर्युणैव कर्तव्यमिति । एवं प्राप्ते, अभिधीयते ।

**तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ५१ ॥**

**अयमभिप्रायः**— भवेदेवं यदि प्रयोगवचनमतिदेशात् दुर्बलं न भवेत् । तथाहि, प्रयोगवचनं तावत् प्राप्तानुवाद्यर्थानुपसंहरति । विकृतौ प्राकृतपदार्थानामतिदेशतः प्राप्तिर्वक्तव्या । अतिदेशाच्च प्राकृतसामाख्यानिककर्तृसहिता एव प्रथमं पदार्थाः प्राप्ता इति । तेन कर्त्रन्तरापेक्षाभावात् प्रयोगवचनेन तथाभूतमेव गृह्यते । तत्र किमौद्गात्रसमाख्या करिष्यति ? न च वैकृतसमाख्यायाः प्रत्यक्षत्वात् प्रकृतप्राप्तसामाख्यानिककर्तृबाधेन निविशते इति **वाच्यम्**। यतः प्राकृती समाख्या क्लृप्तश्रुतिमूला, वैकृती तु कल्पनीयेति न बाधितुमर्हति । अत एव नात्र गुणमुख्यव्यतिक्रमन्यायविषयत्वम् । प्राकृतकर्तॄणां समाख्यानुमितश्रुतिविषयत्वेन बलवत्त्वात् । किञ्च, प्रधानस्य याजमानत्वेन समाख्यया कर्तृविनियोगाभावात् कुतस्तद्द्वारेणाङ्गेषु प्रधानकर्तृसंबन्धः ? गुणमुख्यव्यतिक्रमे तु ‘ उपांशु यजुषा क्रियते ’ इति प्रधानस्यापि यजुर्वेदविहितत्वेनोपांशुस्वरसंबन्धात् तद्द्वारेणाङ्गसंबन्धोऽपि । अतः प्राकृतकर्तृग्रहणेन नानाकर्तृक एव श्येनो वाजपेयश्चेति सिद्धम् । तेन यजुर्वेदे प्राकृतं यत्किञ्चिदप्याम्नायते, तत्रैव परं वैकृतसमाख्यानिबन्धनकर्ता, न त्वन्यत्रापीति । **प्रयोजनम्**— पक्षोक्तम् । **सूत्रं तु**— तद्ग्रहणात् प्राकृतसामाख्यानिककर्तृत्वात् अप्राकृतकर्तृग्रहणात् श्येनो वाजपेयश्च तेनैव स्वधर्मः स्यात् अधिकारसामर्थ्यात् । अव्यक्तश्च वैकृतसामाख्यानिककर्ता शेष अप्रकृते अङ्गैः इति । **तौता.**

**❀ वेदोपदेशात् पूर्ववद् वेदान्यत्वे यथोपदेशं स्युः । ३।७।२३।५० ॥**

वेदेन औद्गात्रवेदेन श्येनयागस्य उपदेशात्, आध्वर्यववेदेन च वाजपेयस्य उपदेशात्, औद्गात्रसमाख्यानात् श्येनस्य, आध्वर्यवसमाख्यानाच्च वाजपेयस्य, तत्रत्याः सर्वे पदार्थाः क्रमेण उद्गातृभिरेव अध्वर्युभिरेव च कर्तव्याः । वेदान्यत्वे, यद्यपि श्येनगतानां केषांचिदङ्गानां अन्यवेदोक्तत्वेन वेदान्यत्वे सत्यपि यथोपदेशं उपदेशकवेदानुसारेणैव पदार्थाः कर्तव्याः स्युः । पूर्ववत् । पूर्वाधिकरणे यथा आध्वर्यवसमाख्याताः पदार्थाः अध्वर्युभिः क्रियन्ते इत्युक्तं तद्वत् । एवं वाजपेयेऽपि । उपदेशमनतिक्रम्य यथोपदेशं इत्यव्ययीभावः ।

**तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ५१ ॥**

श्येनयागः औद्गात्रसमाख्येन वेदेन विहितत्वात् तस्य अङ्गानि प्रधानानि सर्वाणि उद्गातृभिरेव कर्तव्यानि, वाजपेयः आध्वर्यवसमाख्येन वेदेन विहितत्वात् अध्वर्युभिरेव कर्तव्यानि इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तयति । वा—शब्दः पूर्वपक्षं निराचष्टे । तद्ग्रहणात् प्राकृतानां ज्योतिष्टोमगतानां धर्माणां ग्रहणात् चोदकेन प्राप्तानां स्वीकरणात् श्येनः वाजपेयश्च स्वधर्मः स्वैर्धर्मैः चोदकप्राप्तैः संयुक्तः स्यात् । स्वधर्मशब्दस्य बहुव्रीहिसमस्तत्वेऽपि समासान्तविधेरनित्यत्वाभ्युपगमात् अनिच् अत्र नोत्पन्न इति ध्येयम् । **कुतूहले तु** अनिच्प्रत्ययान्तं ‘ स्वधर्म ’ इति नपुंसकमेव पदं स्वीकृतम् । अधिकारसामर्थ्यात् चोदकसामर्थ्यात् चोदकानुसारेणैव अङ्गैः सह कुर्यात् । किंवा अधिकारः प्रयोगविधिः तस्य चोदकप्रवृत्त्युत्तरकालमेव साङ्गप्रधानविधौ समर्थत्वात् । अतः प्रयोगविधिसामर्थ्यात् अङ्गैः श्येनादिं कुर्यात् ।

ननु एवं सति वाजपेयादीनां प्रधानविधिनिबन्धनाध्वर्यवादिसमाख्यायाः किं प्रयोजनं अत आह— अव्यक्तः शेषे इति । समाख्याकल्प्यः योऽयं कर्तृसंबन्धः सः अव्यक्तः अक्लृप्तः । सः शेषे चोदकप्राप्तपदार्थेभ्यः अन्यत्र भवति । तस्मात् चोदकात् प्राप्ता ये धर्माः प्रकृतौ यत्कर्तृका भवन्ति तत्कर्तृका एव श्येनादावपि स्युः । ये तु न चोदकैः प्राप्नुवन्ति किंतु औद्गात्रादिसमाख्ययैव प्राप्नुवन्ति ते उद्गात्रादिभिः कर्तव्याः तस्मात् श्येनादावपि प्रकृताविव नानाविधाः भिन्नवेदोक्तानां कर्तारः स्वस्वधर्मेषु व्यवतिष्ठन्ते । न तु श्येनः उद्गातृभिरेव, वाजपेयो वा अध्वर्युभिरेव कर्तव्यः । **के.**



* ‘ वेदोपदेशात् पूर्ववद् वेदान्यत्वे यथोपदेशं स्युः ॥ ’ ३।७।२३।५० ॥ सामवेदविहिते श्येने अङ्गानि उद्गातृभिः कार्याणि इति पूर्वपक्षः । **सु.** पृ. ११७८.

* **वेदतदर्थानां** अहोरात्रपौर्वापर्यवत् अनादित्वम् । **वा.** १।३।३।७ पृ. २०६.

* **वेदत्वं** मन्त्रत्वब्राह्मणत्वव्यापकजातिविशेषः इति **केचित्** । तदपि पौराणमन्त्रब्राह्मणत्वव्यापकपुराणत्वे अतिव्याप्तेर्न युक्तम् । शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वं इति **चिन्तामणिः** । अत्र लौकिकवाक्ये अतिव्याप्तिवारणाय सत्यन्तम् । घटादिवारणाय द्वितीयम् । स्मृतिपुराणादिवाक्येषु अतिव्याप्तिवारणाय शब्दाजन्येति । तादृशेश्वरीयज्ञानजन्यत्वात् वेदस्य लक्षणसमन्वयः ।

अपौरुषेयवाक्यत्वं वेदत्वम् । अपौरुषेयत्वं च पौरुषेयभिन्नत्वम् । **मणि.** पृ. ७.

* ‘ विधिविधेयं तर्कश्च वेदः ’ इति विधिशब्दोक्तस्य विधायकब्राह्मणभागस्य विधेयशब्दोक्तानां च मन्त्राणां तर्कशब्दोक्तोपनिषद्भागस्य च **वेदत्वस्मृतेः** । **सु.** पृ. ११६९.

* **वेदपाठपरीक्षा** । ‘ अनुयोगेषु वेदानां घटिकामार्गवृत्तिषु । ’ **वा.** १।३।६।११ पृ. २३२ । वेदकौशलजिज्ञासार्थं तत्तद्वेदभागचिह्नलेख्यानि घटिकायां ( कुम्भे ) निक्षिप्य तत्तद्वेदभागपरीक्षाकाले तान्याकृष्य आकृष्टलेख्यचिह्नितं पठन्ति अध्येतारः इति घटिकामार्गवर्तिनः अनुयोगाः । **सु.** पृ. २३१.

* **वेदप्रयोजनं** साध्यसाधनेतिकर्तव्यताभिधानम्, स्तुतिबुद्धिः, कर्माङ्गभूतैवंसंज्ञकप्रकाशनं इति । **वा.** १।४।१।१ पृ. ३२१.

* **वेदप्रामाण्यं** कारणदोषबाधकज्ञानरहितागृहीतग्राहित्वेन । **मणि.** पृ. १६७. * अध्ययनविधिसामर्थ्यात् सकलवेदप्रामाण्यं सिद्धम् । **सु.** पृ. ३९१.

* **वेदप्रामाण्यसिद्ध्यर्थं** औत्पत्तिकत्वं इष्यते स्वतन्त्रागमवादिभिः ( मीमांसकैः ) । **बृहती.** पृ. २५६.

* **वेदफलम्**— दृष्टो हि तस्यार्थः कर्मावबोधनं नाम । न च तस्याध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । **भा.** १।१।१।१ पृ ६.

* **वेदभागः** हि कश्चित् प्रत्यक्षः श्रूयते कश्चिदनुमानादिगम्यः । प्रत्यक्षश्रुतश्च आम्नात इत्युच्यते । **वा.** २।१।९।३४ पृ. ४३९. * **वेदभागाः** चत्वारः— विधिः अर्थवादः मन्त्रः नामधेयं चेति । **भा.** १।४।१।१.

* **वेदरक्षाहेतुः** । शिष्याचार्यसंबन्धो हि महान् वेदरक्षाहेतुः, व्याकरणानधीनस्यापि वेदक्रमस्य अध्ययनेनैव रक्ष्यमाणत्वात् । **वा.** १।३।८।२४ पृ. २६२.

* **वेदवचनस्य** मिथ्यात्वे न तु किंचन प्रमाणमस्ति । **भा.** १।१।२।२ पृ. १७.

* **वेदवाक्यं** धर्मप्रत्यायकम् । १।१।७।२४–२६. **मीको.** पृ. ३४४९ ‘ वाक्याधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * वेदवाक्यं **पौरुषेयम्**, वाक्यत्वात्, कालिदासादिवाक्यवत् इति पूर्वपक्षः । कालिदासादिग्रन्थेषु सर्गावसाने कर्तारः उपलभ्यन्ते ‘ इति कालिदासकृतौ रघुवंशे महाकाव्ये ’ इत्यादि । वेदे तु कर्ता नोपलभ्यते इति प्रतिकूलतर्कपराहतमनुमानं इति सिद्धान्तः । काठकादिसमाख्या तु संप्रदायप्रवर्तननिमित्ता । **वि.** १।१।८ . * **वेदवाक्यानि** अध्याये यज्ञोपवीतेनैव त्रैवर्णिकेनैव च प्रयोज्यानि, लौकिकानि अनध्यायेऽपि अनुपनीतेनापि चातुर्वर्ण्येनापि च प्रयोज्यानि । **सु.** पृ. ३३३. * वेदवाक्यानि मीमांसया व्याख्येयानि । **भा.** १।१।१।१ . * **वेदवाक्यानां** अर्थज्ञानार्थं ‘प्रयासो वेदवाक्येषु कार्यः, सूत्रेणानेन किम् । फलवत्त्वाऽफलत्वाभ्यामेभिः करणसंमतैः ॥ चोदनार्थं उपेतव्यो, नोभयं यत्नगौरवात् ॥ ’ **श्लोवा.** १।१।१।३८–३९. * वेदवाक्यानां एकवाक्यत्वादिप्रतिपादनोपयोगः अर्थवादाधिकरणे वार्तिके (**मीको.** पृ ६४५ )द्रष्टव्यः । * **वेदवाक्येषु** अभिप्रायान्तरं प्रमादो वा न कस्यचिदस्ति ।

न च वक्ता, योऽन्यथात्वं कथयेत् सर्वपुरुषाणाम् । वा. ३।१।७।१३ पृ. ६९९.

* **वेदवित्** । एकशाखाध्यायिनि वेदविच्छब्द-प्रयोगात् न शाखासमूहस्य वेदता । **सु. पृ.** ९८५.

* **वेदशक्तिः** । नहि अत्यन्तसंनिकर्ष एव एकं संबन्धकारणम् । यथायथा हि संनिकृष्टं न लभ्यते तथा-तथा विप्रकृष्टे वेदशक्तिः संचरति । **वा.** ३।३।४।११ पृ. ८१८.

* **वेदशब्दः** एकदेशेऽपि वर्तितुं शक्नोति, समुदाय-शब्दानां एकदेशेषु अभ्युपलब्धेः । **वा.** ३।३।१।१. * वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मकस्य काठकादि-ग्रन्थविशेषस्य वाचकः । ' वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ' इत्यादिव्यवहारात् । **पराक्रमः** २११. * **वेदशब्दस्य** ऋग्वेदादौ मन्त्रब्राह्मणसमूहो निमित्तम् । **सु. पृ.** ९०३.

* **वेदशब्दवाच्याः** मन्त्रब्राह्मणसमूहाः क्षेत्रज्ञा-धिष्ठिताः । **सु. पृ.** १००८.

* **'वेदसंयोगान्न प्रकरणेन बाध्येत ।'** ३।३।१।८॥ * वेदसंयोगात् ऋग्वेदादिविहितत्वलक्षणात् सर्वस्मिन् ज्योतिष्टोमाद्यतिरिक्तेऽपि क्रतौ उच्चैस्त्वादिनिवेशः प्राप्तः न प्रकरणेन बाधितुं शक्यः इति कृत्वा यत् प्रकरणं बाध्यते स न दोषः वाक्येन प्रकरणबाधस्य युक्तत्वात् इत्येवं सूत्रव्याख्या । ( 'बाधेत' इति पाठे तु ) वेदसंयोगात् सर्वस्मिन् निवेशे प्राप्तं न प्रकरणानुरोधेन उच्चैस्त्वा-दिधर्मो बाधेत इति द्वितीयान्तविपरिणतनिवेशोक्त्यङ्गी-कारेण ' धर्मः ' इत्यध्याहाराधिक्येन च सूत्रव्याख्या । **सु. पृ.** ११७४. * 'वेदसंयोगान्न प्रकरणेन बाध्येत ।' ( ३।३।१।८ ) इत्यनेन न्यायेन वाक्यबलीयस्त्वम् । **वा.** ३।३।४।१३ पृ. ९४२ । बाध्येत-बाधेत-बाध्येत इति **कौ**-पाठाः । बाध्येत बाधेत इति **वा**-पाठौ ।

* **वेदसामनामको** ग्रन्थः सामगानाम् , तत्र साम्नां योनिभूता ऋचः पठिताः । अयमेव ' छन्दो-ग्रन्थः ', ' योनिग्रन्थः ' इति चोच्यते । **वि.** ९।२।१ वर्णकं २.

* **वेदसूत्रविरोधे** तु सूत्रस्यैवान्यथाकरणम् । **रत्नाकरः.** १।१।१ श्लो. ४९. **वैद्यनाथः** १।१।१।१.

* **वेदान्तेषु** तावत् आत्मतत्त्वप्रतिपत्तिकर्तव्यता । **विवि. पृ.** २७० । आत्मा ज्ञातव्यः इति हि प्रतिपत्तिः आत्मनि विधीयते, तत्परत्वं च वेदान्तानाम् । **कणिका.** * वेदान्तेषु यदि योग्यं कार्यं अध्याहारादिभिर्लभ्यते तदा कार्यार्थतैव वेदान्तानामपि । अथ न, तदा अन-भिधायकत्वमेव, व्युत्पत्तिविरहात् । अतो विधिनिरा-करणमपि वेदान्तेषु न क्षतिमावहति । **ऋजु. पृ.** १८.

* **वेदान्तिनः** प्रपञ्चः अविद्योपाधिकः अपार-मार्थिकः अत एव सदसद्विलक्षणः इत्याहुः । तत्र । **मणि. पृ.** ४८. ( **वेदान्तिमतस्य प्रपञ्चमिथ्यात्व-विषयकस्य भाट्टचिन्तामणिकृतं खण्डनं ' सृष्टि-प्रलयौ ' इत्यत्र द्रष्टव्यम् । )**

* **वेदिः** अङ्गप्रधानार्था, न केवलं प्रधानार्था दर्शपूर्णमासयोः । ३।७।१।१-५. 'वेदिबर्हिर्धर्मन्यायः' इत्यत्र द्रष्टव्यम् । * वेदिः अमावास्यायां पूर्वेद्युरपकृष्य-माणा हविरभिवासनं नापकर्षति, प्रमाणाभावात् । वेदिविषये तु सामान्यावबोधस्य विशेषवचनेन बाधः । **वा.** ५।१।१६।२९. * वेदिः ऐष्टिकी ऐष्टिकहविःसाद-नार्थे पृथङ् न कार्या । ज्योतिष्टोमे महावेदिकरणोत्तरं महावेद्यैव प्रसङ्गसिद्धेः । ऐष्टिकहविःसादनं तु महावेद्या-मेव । **वि.** १२।१।३. * वेदिः ज्योतिष्टोमे अङ्गप्रधानार्था, न प्रधानमात्रार्था । ३।७।३।७,९. **मीको. पृ.** १७०० ' विकीर्णान्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वेदिः ज्योतिष्टौमिकी ' षट्त्रिंशत्प्रक्रमा प्राची, चतु-र्विंशतिरग्रेण, त्रिंशज्जघनेन, इयति शक्ष्यामहे ' इति उक्ता । एकपदो द्विपदो वा प्रक्रमः । प्राग्वंशस्य मध्य-शङ्कोः पुरस्तात् शङ्कुं निहत्य तत आरभ्य पूर्वस्यां दिशि प्रतता पृष्ठ्या तावत् षट्त्रिंशत्प्रक्रमा । अग्रेण पूर्वस्यां दिशि चतुर्विंशतिप्रक्रमा पृष्ठ्यायाः दक्षिणत उत्तरतश्च द्वादश द्वादश प्रक्रमाः इत्यर्थः । जघनेन त्रिंशत्प्रक्रमा । अर्थात् दक्षिणत उत्तरतश्च पञ्चदशपञ्च-दश प्रक्रमाः । इति महावेदिर्नाम । **सत्याश्रौ.** ७।४। ३८-४५, * वेदिः दर्शपूर्णमासयोः ' देवस्य



त्वा सवितुः प्रसवे इति खनति ' ' स्फ्येन वेदिं परिलिखन् परिगृह्णाति ' ' स्फ्येनोत्तमां त्वचमुद्धन्ति ' । **वि.** १०।१।१. * वेदिः दार्शपौर्णमासिकी हविषा-मासादनार्था, सौमिकी प्रचारार्था । **भा.** १२।१।३।८. * वेदिः नाम आहवनीयगार्हपत्यमध्यवर्तिनी चतुर-ङ्गुलखाता संस्कृता भूमिः । **वि.** १।३।४ । संमार्जन-खननोद्धननादिसंस्कारविशेषैः परिष्कृता भूमिः वेदिः । **कु.** १।३।४।५. * वेदिः पूर्वेद्युः अमावास्यायां उत्तरेद्युः प्रधानं इत्यङ्गप्रधानयोः कालभेदो वचनात् 'पूर्वेद्युरमावास्यायां वेदिं करोति ' । **भा.** ११।३।१।१. * वेदिः यूपैकादशिन्यां यूपोपराणां यावन्तस्तिर्यग्देशाः तावद्दाघैर्वर्धनीया । **संकर्ष.** १।४।२४. * वेदिः राज-सूये रत्निनां हविःषु मैत्राबार्हस्पत्ये तु ' स्वयंकृता वेदिर्भवति' तथा च नात्र खननादि । **वि.** १०।१।१. * वेदिः ' षट्त्रिंशत्प्रक्रमा प्राची ' इत्यादिवाक्यविहिता साङ्गसोमयागार्था इति ' तयुक्ते तु फलश्रुतिः० ' ३।७। ३।९ इत्यत्रोक्तम् । **सु. पृ.** ६३६. * वेदिः सौमिकी ' षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंश-ज्जघनेन ' । **वि.** ३।७।३. * ' स्वयंकृता वेदिर्भवति इति उद्धननखननपरिलेखनानि निवर्तन्ते मन्त्राश्च निवर्तन्ते । **भा.** १०।१।१।३. * 'त्रिधातु पञ्चधातु वा **वेदिं स्तृणाति** ' दर्शपूर्णमासयोः । **भा.** ३।८।१७। ३२, * वेदेः आहार्यपुरोपता पुरुषार्था न क्रत्वर्था दर्श-पूर्णमासयोः । ४।१।२।२ वर्णकं २. * वेदेः दार्शिक्याः सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या प्रसङ्गसिद्धिः । १२।१। ३।८-९. ' सौमिकवेदिन्यायः ' इत्यत्र अधिकरणं द्रष्ट-व्यम् । * वेदेः देशविशेषात्मकत्वात् देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात् सर्वार्थत्वम् । **वा.** ३।७।३।९. * वेदेः पूर्वं पठितस्यापि हविरभिवासना-न्तस्य, अमावास्यायां पूर्वेद्युर्वेद्या सह नापकर्षः । **भा.** ५।१।१६।२९. * वेदेः प्राकृतायाः प्राकृतवाजिनासाद-नानुवादात् विहितेनोत्तरेण बाधः सौमिकचातुर्मास्येषु । १०।३।३।१८-२२. **मीको. पृ.** १६९४ 'चातुर्मास्येषु सौमिकेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वेद्याः** वेदिधर्माणां च विधिः विनियोगसाधारण्यविधिः । **बाल पृ.** २०. * ' वेद्यां हवींष्यासादयति ' इति अङ्गहविषां प्रधानहविषा च वेद्यामासादनम् , न प्रधानहविर्भिः विशेष्यते । **टुप्.** ११।३।९।१७.

* **वेद्यतिक्रमणकरणमन्त्रोक्तं** फलं कर्मोपयोगित्वा-दार्ढ्यर्थं दर्शपूर्णमासयोः आचारकाले । **वि.** ३।८।१५.

* **वेद्याच्छादनं** स्तरणे प्रयोजनम् । **भा.** ११।४। १४।४८.

* **वेद्याद्यङ्गानां** प्रधानकालान्यकालकर्तव्यता । **वि.** ११।३।१.

* **वेद्यास्तरणे** प्रतिधातु मन्त्रावृत्तिः । ११।४।१४। ४४-४५.

* **वेद्युद्धननं** निशियज्ञे अमावास्यातन्त्रेण प्रसङ्ग-सिद्धम् । १२।२।५।१४-१८.

* **वेदिकरणं** अमावास्यायां पूर्वेद्युः श्रुतम् । दर्श-पूर्णमासप्रकरणे हविषामभिवासनादूर्ध्वं वेदिकरणमाम्ना-तम् । **भा.** १२।१।१८।३९. * वेदिकरणं पौर्णमास्यां हविरभिवासनोत्तरम् । **बाल. पृ.** १९. * **वेदि-करणस्य** ( ' वेदिं कृत्वा ' इत्यादौ ) वाक्यान्तरेण प्राप्त-त्वात् तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रविधानात् वाक्यादेव तदङ्गत्वम् । **भाट्ट.** ५।१।१.

**वेदिकरणन्यायः** । दर्शे वेद्याः पूर्वेद्युरपकर्षेऽपि हविरभिवासनान्तस्य नापकर्षः ॥

**तथाऽपूर्वम् । ५।१।१६।२९ ॥**

**भाष्यम्** -- दर्शपूर्णमासयोः वेदिः हविरभिवासनो-त्तरकाले समाम्नाता । सा अमावास्यायां प्रतिकृष्यते ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इति । सा तु अप-कृष्यमाणा ततः अर्वाचीनान् पदार्थान् अपकर्षति, न इति संशयः । उच्यते । संबन्धात् प्रतिकर्षति इति । एवं प्राप्ते, ब्रूमः । तथा अपूर्वम् । अप्रकृतिपूर्विकायां अमावास्यायां वेदिकरणं पूर्वेद्युराम्नातम् । उभयोरपि श्वोभूते हविरभिवासनम् । अभिवासनं कृत्वा अमा-वास्यायां वेदिः कर्तव्येति न श्रुत्यादीनामन्यतमं कारण-मस्ति । तस्मात् नाभिवासनान्ताः प्रतिकृष्टव्या इति । अभिवासने चापकृष्यमाणे हवींषि भस्मीभवेयुः ।

**टुप्**-- ( सिद्धान्तमाह- ) ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इति वेदिरपकृष्यमाणा हविरभिवासनं ( अर्वाचीनं) नापकर्षति । कुतः ? हविरभिवासनादुत्तरकालं ( वेदिकरणं ) दर्शपूर्णमासप्रकरणात् उभयोरपि ( दर्शपूर्णमासयोः ) सामान्येन प्राप्यमाणं विशेषवचनेन ( अपकृष्यमाणं ) वेदिमात्रमेव अपकृष्यते । सामान्यपाठः ( अमावास्यायां बाधितः ) पौर्णमास्यां कृतार्थः ( भवति ) । अग्न्यन्वाधानब्रह्मवरणादेः ( अपकर्षस्याभावात् ) सामान्यपाठ एव, वेदेस्तु उत्तरः ( सामान्यपाठादुत्तरकालः ) । तस्मात् सामान्यावबोधः (वेदिकरणस्य सामान्येन उभयोः पर्वणोः हविरभिवासनोत्तरकालत्वावबोधः ) विशेषेण ( अपकर्षवचनेन ) बाध्यते ।

**शा**— ' **सामान्येन क्रमोऽङ्गं स्यात् पाठतः प्रक्रियावशात् । विशेषतः श्रुतं वाक्यादमावास्ये क्रमान्तरम् ॥** '

**सोम**--- पाशुकानुयाजपौरोडाशिकदाक्षिणाग्निकहोमवत् प्रयोगभेदाभावेन पूर्ववैषम्यात् **संगतिः** । अभिवासनं पुरोडाशमभितः अग्नेर्निवासनम् ( साङ्गारभस्मस्थापनम् ) । **सूत्रार्थस्तु**— अप्रकृतिपूर्वककर्मपरेण अपूर्वशब्देन अक्लृप्तक्रमत्वं उपलक्षितम् । तादृशं वेदिकरणं प्रासङ्गिकं नापकर्षेत् इति ।

**वि**— ' पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके । न वा, ऽऽद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये ॥, अभिवासात् परा वेदिरिति तत्क्रमबोधतः । प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् ॥ '

**भाट्ट**— दर्शपूर्णमासयोः हविरभिवासनोत्तरं वेदिकरणमाम्नातम् । तस्य ' पूर्वेद्युः अमावास्यायां वेदिं करोति ' इति वचनेन अपकर्षः श्रुतः पूर्वभाविनोऽपि हविरभिवासनादीनपकर्षेत, एकप्रयोगविधिपरिगृहीतत्वेन पाठस्य क्रमकल्पकत्वात्, अमावास्यापदस्य कर्मपरत्वे लक्षणाप्रसङ्गेन कालपरत्वावसायात् , हविरभिवासनोत्तरभाविवेदिकरणविधेरेव पौर्णमास्यङ्गताबोधकत्ववत् दर्शाङ्गत्वबोधकत्वाच्च । न च कालद्वयविधाने वाक्यभेदः, सामर्थ्यात्, ' वेदं कृत्वा वेदिं करोति ' इति श्रुतवेदकरणानन्तर्यबलेनैव च पूर्वेद्युत्वस्य प्राप्तत्वेन अनुवादात् । प्रधानप्रत्यासत्तिलाभात् पौर्णमास्या अतीतत्वाच्च दार्शिकवेदिकरणे एवायं कालविधिः । अतश्च पौर्णमाससाधारण्येन पाठस्य क्रमकल्पकत्वावश्यम्भावात् । अत एव च यूपच्छेदनवैलक्षण्यात् तदन्तापकर्षे प्राप्ते, कालपरत्वेऽपि कालविधेः प्रयोगविधित्वेन दार्शिकवेदिकरणस्य तत्रैव प्रयोज्यत्वावगमात् तदवगमोत्तरं च क्रमापेक्षायां पाठस्य नियामकत्वासंभवात्, श्रौतक्रमान्तरसत्त्वाच्च न हविरभिवासनेन बद्धक्रमत्वम् । अतश्च पाठोऽपि परिशेषात् पौर्णमासविषयः एव । यदि तु खण्डपर्वणि चतुर्दश्यां प्रातरन्वाधानदिने वेदिकरणसिद्ध्यर्थं लक्षणामपि अङ्गीकृत्य अमावास्यापदेन कर्मैवोच्येत, तदा दार्शिकवेदिकरणस्य अयमेव विनियोगविधिरिति हविरभिवासनेन दार्शिकवेदिकरणस्य सुतरां न बद्धक्रमता । न चैवं पूर्वेद्युःकालविशिष्टवेदिकरणस्य दर्शाङ्गतया वाक्येन विनियोगात् प्रकरणेन पौर्णमासाङ्गत्वायोगः, वेदेः सर्वसाधारण्येन तत्करणस्यापि अङ्गतया अपेक्षासहकृतपौर्णमासप्रकरणेन गर्दभाभिधान्यामादानस्येव आक्षेपोपपत्तेः ।

अत एव वाक्येन श्रुत्या वोभयत्र न प्रकरणस्य अर्थाक्षेपस्य वा बाधः । तथो पूर्वेद्युःकालमन्त्ररूपगुणमात्रविधिफलतया क्रियाविधिफलकत्वाभावात् । अतो न प्रकृते तदन्तापकर्षः ।

**मण्डन**– ' वेदिरेवापकृष्यते । '

**शंकर**– ' अपूर्वे च स एवेष्टः । ' स एव अपकर्षः । २०.

* **वेदिकार्यं** हविरासादनम् । **वि.** ३।८।१७.

* **वेदिधर्माः** चितिसमुदायस्यैव, न तु तदाधारभूमेः । **संकर्ष.** २।१।२६. **मीको.** पृ. ३४ ' अग्निचयने चितिसमुदायस्यैव वेदिधर्माः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वेदिधर्माः बर्हिर्धर्माश्च दर्शपूर्णमासयोः अङ्गप्रधानोभयार्थाः, न तु केवलं प्रधानार्थाः । ३।८।१५।३१. **मीको.** पृ. २१८४ ' द्रव्यसंस्कारन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।



* **वेदिपरिस्तरणे** दर्शपूर्णमासयोः ' त्रिधातु पञ्चधातु वा वेदिं स्तृणाति ' । प्रतिधातुस्तरणं मन्त्रावृत्तिः । **वि.** ११।४।१५.

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनःप्रयोगात् । ११।४।१५।४९ ॥**

दर्शपूर्णमासयोः ' त्रिः प्रोक्षति ' इति वेदिप्रोक्षणं श्रुतम् । तत्र किं प्रतिप्रोक्षणं मन्त्रावृत्तिः उत सकृदेवेति विचारे पूर्वपक्षमाह । वेद्याः प्रोक्षणे ' वेदिरसि बर्हिषे त्वा स्वाहा ' इति मन्त्रस्य अभ्यासः आवृत्तिः स्यात् । प्रोक्षणरूपस्य कर्मणः पुनःप्रयोगात् ।

**एकस्य वा गुणविधिर्द्रव्यैकत्वात् तस्मात् सकृत् प्रयोगः स्यात् । ५० ॥**

सिद्धान्तमाह । एकस्य वा प्रोक्षणकर्मणः ' त्रिः ' इत्यनेन अभ्यासरूपस्य गुणस्य विधिः कृतः, न क्रियाभेदः । द्रव्यैकत्वात् वेदिरूपस्य द्रव्यस्य एकत्वात् । तस्मात् मन्त्रस्य सकृत् प्रयोगः स्यात् । **के.**

**वेदिप्रोक्षणन्यायः** । दर्शपूर्णमासयोः वेदिप्रोक्षणमन्त्रः सकृत् प्रयोज्यः ॥

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनःप्रयोगात् । ११।४।१५।४९ ॥**

**भाष्यम्**-— वेदिप्रोक्षणं श्रूयते ' त्रिः प्रोक्षति ' इति । तस्य मन्त्रः ' वेदिरसि बर्हिषे त्वा ' इति । तत्र चिन्त्यते किं प्रत्यावृत्ति मन्त्रः, अथवा सकृदेवेति । किं प्राप्तम् ? वेदिप्रोक्षणे मन्त्रस्याभ्यासः । कुतः ? कर्मणः पुनःप्रयोगात् । यस्मिन् कर्मप्रयोगे उक्तो मन्त्रः, तदर्थोऽसौ इति गृह्यते विशेषः । तस्मादावृत्तिः ।

**एकस्य वा गुणविधिर्द्रव्यैकत्वात् तस्मात् सकृत् प्रयोगः । ५० ॥**

**भाष्यम्** – सकृदेव प्रयोगः । कुतः ? द्रव्यैकत्वात् । एकं तत् वेदिद्रव्यं सकृदुक्तेन मन्त्रेण संस्कृतम् । तत्र भूयो मन्त्रकार्यं नास्ति । ननु कर्मद्वारेण मन्त्रो द्रव्यं संस्करोति । तच्च कर्म भिन्नम् । अत्रोच्यते । नैतद्भिन्नम् । आवृत्तिस्तस्य गुणः । क्रियाभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययो न क्रियाभेदे । तत् मन्त्रवदावृत्तिमच्च कर्तव्यम् । सकृदुक्तेन मन्त्रेण मन्त्रवत् कृतम् । आवृत्तिसंपादनार्था पुनःक्रिया । तस्मात् सकृत्प्रयोगः ।

**सोम**— यदि क्रियैक्येऽपि मन्त्रावृत्तिः, तदा तद्भेदे किं वक्तव्यं इत्युत्थानात् **संगतिः** ।

**वि**-- ' वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा ।, आद्यः स्यात् प्रोक्षणत्रित्वात्, संस्कार्यैकत्वतः सकृत् ॥ '

**भाट्ट**— तत्रैव ' वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति ' इत्यत्र तु न मन्त्रावृत्तिः, नहि अनेन मन्त्रे त्रित्वविधिः, त्रिरित्यस्य क्रियाभ्यावृत्तौ विहितसुच्प्रत्ययान्ततया प्रोक्षणाभ्यासगतत्रित्वप्रतिपादकतया मन्त्रगतत्रित्वप्रतिपादकत्वाभावात् । अत एव नात्र संख्यया ' तिस्र आहुतीर्जुहोति ' इतिवत् कर्मभेदः, येन ' आमनमस्यामनस्य ' इति मन्त्रवत् इहाप्यावृत्तिः प्रसज्येत । न च तत्रापि सकृत्पठितमन्त्रजन्यस्मृतेरविच्छेदात् अवघातमन्त्रन्यायेन आवृत्त्यनापत्तिः । ' मन्त्रान्तेन कर्मादिः संनिधाय्यः ' इति वचनेन विहितकर्मादेः मन्त्रान्तकालविधानात् वसाहोमवत् भेदप्रतीतेः । इदं च मन्त्रजन्यस्मृतेः कर्मानुष्ठाने प्रति कारणत्वस्य न्यायप्राप्तत्वमात्रेण नानुवादकम्, वैयर्थ्यापत्तेः, अपि तु एतादृशविषये मन्त्रावृत्तिविधानार्थम् । प्रकृते तु विहितस्य एकस्यैव प्रोक्षणकर्मणः त्रित्वरूपविशेषणानुरोधेन अर्थादावृत्तिसिद्धावपि विहितकर्मादेः सकृत्पठितमन्त्रान्तकालकत्वाविशेषात् मन्त्रजन्यस्मृत्यविच्छेदेन मन्त्रावृत्तौ प्रमाणाभावः ।

**मण्डन**— ' मन्त्रो वेद्युक्षणे सकृत् । ' १६.

**शंकर**— वेदेस्त्रिःप्रोक्षणे सकृत् । ' मन्त्रः । १६.

**वेदिबर्हिर्धर्मन्यायः** । वेदिबर्हिर्न्यायः ॥

**प्रकरणविशेषादसंयुक्तं प्रधानस्य । ३।७।१।१॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ, तत्र बर्हिर्बर्हिर्धर्माश्च, तथा वेदिर्वेदिधर्माश्च । तत्र संदेहः किं बर्हिरादयो बर्हिरादिधर्माश्च प्रधानस्य, उताङ्गप्रधानानामिति । किं तावत् प्राप्तम् ? प्रकरणविशेषादसंयुक्तं प्रधानस्य । प्रधानस्य एवंजातीयका धर्माः । कस्मात् ? प्रकरणविशेषात् । प्रधानानां हि प्रकरणम्, नाङ्गानाम् । प्रकरणेन चैषां संबन्धः । तस्मात् प्रधानस्य ।

**वा** -- समानासमानविधानाधिकारेणैव एतदपि प्रस्तूयते वाक्यप्रकरणविरोधाविरोधद्वारेण । दर्शपूर्णमासप्रकरणस्था वेदिः तद्धर्माश्च खननादयस्तथा बर्हिस्तद्धर्माश्च लवनादयः किमर्था इति । यद्यपि 'वेद्यां हवींषि' 'बर्हिषि हवींषि' 'बर्हिर्लुनाति' 'वेदिं खनति' इति चाविशेषितेन वाक्येन अङ्गप्रधानार्थत्वबुद्धिर्भवति । तथापि स्वातन्त्र्ये सति लौकिकेष्वपि गृहाच्छादनार्थेषु बर्हिःषु धर्मप्रसक्तौ आनर्थक्यादवश्यमपूर्वसाधनताकारितः संबन्धोऽभ्युपगन्तव्यः । सा चापूर्वसाधनता न वाक्यसामर्थ्येन प्रतीयते इति प्रकरणाल्लभ्या । ततश्च प्रधानमात्रस्य तत्प्रकरणमित्यनेन विशेषेण प्रधानस्यैव धर्माः गम्यन्ते । सत्यपि च प्रकरणस्याविशेषकत्वे ग्राहकत्वेनैव विशेषरूपेण विनियोजकत्वात् विशेषस्थापकत्वमित्युक्तम् । असंयुक्तमिति च सत्यपि वाक्येन हविर्बर्हिःसंयोगे प्रकरणविरोध्यर्थासंयोगाभिप्रायम् । शक्यौ हि हविर्बर्हिःशब्दौ प्रकरणेन समावेशयितुं नाहीनवदसंबद्धाविति मन्यते ।

## सर्वेषां वा, शेषत्वस्यातत्प्रयुक्तत्वात् । २ ॥

**भाष्यम्**-- सर्वेषां वा अङ्गप्रधानानामिमे धर्माः । नात्र शेषत्वं प्रकरणात् भवति । उपकारलक्षणं हि तत् । यत् यस्य उपकरोति, तत् तस्य शेषभूतम् । सर्वेषां चाङ्गप्रधानानामिमे धर्माः उपकुर्वन्ति । कथमवगम्यते ? वाक्यात् । 'वेद्यां हवींष्यासादयति' इति हविर्मात्रे वाक्यात् गम्यते । प्रधानहवींषि प्रकरणात् । वाक्यं च प्रकरणात् बलीयः । तस्मात् बर्हिषि हवींष्यासादयतीति । आह । यदि प्रकरणं वाक्येन बाध्यते, लोकेऽपि बर्हिषामिमे धर्मा उक्ता भवन्ति । तत्र को दोषः ? सर्वत्र धर्माः कर्तव्याः प्राप्नुवन्ति । उच्यते । प्रकरणात् दर्शपूर्णमासयोरुपकारका एवेति गम्यते । तस्मात् लौकिकेषु न कर्तव्याः । एवं चेदङ्गान्यपि न दर्शपूर्णमासशब्दकानि । तस्मात्तेष्वपि न प्राप्नुवन्ति । उच्यते । यद्यप्यङ्गानि न दर्शपूर्णमासशब्दकानि, दर्शपूर्णमासयोरुपकारकाणि । एषु क्रियमाणा धर्मा दर्शपूर्णमासयोरुपकरिष्यन्ति । तस्मात् अङ्गप्रधानेषु कर्तव्या इति ।

**वा**-- सर्वेषां वाक्यसंयोगाविशेषादित्युक्तमेव । यत्तु प्रकरणं विशेषेण विनियोजकमिति, तत्राह-- अतत्प्रयुक्तत्वात् । न प्रकरणमिह विशेषकं भवतीत्यर्थः । कथं पुनः स्थितं प्रकरणस्य विनियोजकत्वं निवर्तते, कथं वा तादर्थ्यलक्षणव्यतिरिक्तं च बहुदोषमुपकारलक्षणं शेषत्वं प्रतिज्ञायते । उच्यते । नैव प्रकरणस्यैवंजातीयकेषु विनियोजकत्वं स्थितम् । 'असंयुक्तं प्रकरणात्' इति ह्युक्तम् । यत्तु विरोधो नास्तीति । कथं नास्ति, यदा बर्हिषां प्राधान्यात् प्रत्येकं धर्मसंबन्धे सति अङ्गार्थत्वमपि ज्ञायमानं प्रकरणानुरोधेन व्यावर्त्यते । परस्तु येन कारणेन वाक्यस्यातिप्रसरे बाधिते निर्विरोधं प्रकरणमवगतवान् इदानीं तदुपन्यस्यति लौकिकेऽपि प्राप्नोति ततश्चाऽऽनर्थक्यमिति । तस्योत्तरमेतदेव वक्तव्यम् । स्वरसप्रवृत्तं वाक्यं यावत्येव विस्पष्टमानर्थक्यं तावन्मात्रादेव निवर्तताम् । न चाङ्गबर्हिषां लौकिकवदानर्थक्यम् । अतस्तत्र भविष्यति । न चातिप्रसज्यते इति । अनेनैव चाभिप्रायेण 'उपकारलक्षणं हि तत्' इति तादर्थ्यमेव फलेन व्यपदिष्टम् । यदर्थं हि कल्प्यमानं प्रयोजनवद्विज्ञातुमाकाङ्क्षितोपकारनिष्पत्त्या शक्यते तदर्थं कल्पनीयम् । यत्तु भाष्यकारेणातिप्रसङ्गनिवृत्त्यर्थं प्रकरणादित्युक्तं तदुत्तरपरिचोदनावतारप्रसङ्गाददतित्वरितोक्तमित्युपेक्षणीयं तावत् ।

## आरादपीति चेत् । ३ ॥

**भाष्यम्**-- पिण्डपितृयज्ञेऽपि बर्हिर्धर्मैः युज्येत । सोऽपि दाते बर्हिषि वर्तते । तस्य चापि बर्हिषाऽस्ति प्रयोजनम् । तदप्याराच्छिष्टधर्मवत् स्यात् ।

**वा**-- यदि ह्यानर्थक्यात् लौकिकाद्बर्हिषो धर्मनिवृत्तिस्ततो यत्र तदानर्थक्यं नास्ति कर्मान्तरार्थे बर्हिषि, तत्र प्रवृत्तिः प्राप्नोति । यदि तु कश्चित्तन्निवृत्त्यर्थो हेतुः सोऽङ्गेष्वप्यविशिष्टः । तत्र सौर्यादिष्वितरथाऽप्यतिदेशेन सन्त्येव धर्मा इत्युपदेशातिदेशप्राप्तिरहितत्वात्पिण्डपितृयज्ञ उदाहरणम् । । अपूर्वो ह्ययमनङ्गं चेति स्थास्यति । तेनात्यन्तानिष्टप्रसङ्ग इति ।



## न तद्वाक्यं हि तदर्थत्वात् । ४ ॥

**भाष्यम्**-- न तस्य बर्हिरेतैर्धर्मैः धर्मवत् । वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सह धर्माणाम् । तेन दर्शपूर्णमासयोरुपकारका धर्माः, यत् दर्शपूर्णमासार्थम्, तत्र प्राप्नुवन्ति, नान्यत्र । तस्मात् पिण्डपितृयज्ञबर्हिषो न भविष्यन्ति ।

**वा**-- भवेदेतद्यदीदं वाक्यं स्वतन्त्रं स्यात् । बर्हिर्वेदितद्धर्माणां तु यद्वाक्यं तद्दर्शपूर्णमासाभ्यां सहैकम् । तेन वाक्येन सहैकवाक्यतां गतमित्यर्थः । तेन यत्तदेकवाक्यान्तर्गतं बर्हिस्तस्यैवैतद्धर्मप्राप्तिः न भिन्नवाक्यगतस्य । न च पिण्डपितृयज्ञबर्हिर्दर्शपूर्णमासवाक्यान्तर्गतम् । अतो न संभन्त्स्यते इति । ननु यदि दर्शपूर्णमासाभ्यां सहैकवाक्यत्वमिष्यते ततस्तत्प्रकरणं मुक्त्वा नान्येन लभ्यते । तच्च प्रकरणं प्रधानमात्रस्येत्यङ्गानामसंबन्धः प्राप्नोति । नैषः दोषः । सर्वथा लवनखननादयस्तावन्न साक्षादङ्गेन प्रधानेन वा संबन्धुं शक्नुवन्ति । यत्र वेदिबर्हिषी तत्र गमिष्यन्ति । वेदिबर्हिषोरपि हविरासादनेन संबन्धः । तच्च दर्शपूर्णमासप्रयोगवचनगृहीतमासादनं संबध्यते । एवमङ्गहविरासादनमपि तत्रान्तर्गतम्, साङ्गस्य प्रधानस्यैकप्रयोगत्वात् । ननु च यथा प्रयाजादयः एकप्रयोगवचनगृहीतत्वेऽपि 'गुणानां च परार्थत्वात्' इत्येवं परस्पराङ्गत्वं न प्रतिपद्यन्ते तथा अङ्गहविःसंबन्धं बर्हिर्न प्रतिपद्यते । नैतदेवम् । यथैव हि प्रधानहविरासादनमङ्गतया संबध्यते तथा अङ्गहविरासादनमप्यङ्गाङ्गतया संभन्त्स्यते । यदि च यद्दर्शपूर्णमासार्थं हविस्तद्बर्हिष्यासादयतीत्येवं कल्प्येत ततस्तन्मात्रस्यैव स्यात् न त्वेवम् । अस्याऽऽनर्थक्यभयात्तु स्वरूपेऽतिक्रम्यमाणे किमेवमतिक्रमोऽस्तु यद्दर्शपूर्णमासार्थं उत यद्दर्शपूर्णमासोपकारीति । यदि तादर्थ्यं गृह्यते वाक्यस्यातिदूरं संकोचः क्रियेत । तदुपकारित्वग्रहणे तु बहुतरविषयत्वं भवति । यथा च तद्भवति तदनुग्रहीतव्यम् । अङ्गाङ्गमपि विनाऽपि तादर्थ्येन तदुपकारीति विज्ञायते । तावन्मात्रमेव च तद्द्वारं युक्तं न तादर्थ्यम् । अनुपकारिणि हि स्थितं नोपकरोति नातदर्थे । तथा च 'परार्थे त्वर्थसामान्यम्' इति वक्ष्यति, विनाऽपि तादर्थ्येनाभ्युदितेष्ट्यां दधिपयसोस्तदुपकारमात्रदर्शनात् प्रणीताधर्मप्राप्तिर्भवतीति । तस्मादेवं प्रकरणादेकवाक्यत्वं कल्प्यते यस्मिन्नक्रियमाणे दर्शपूर्णमासापूर्वं न सिध्यति तत्र तत्र कर्तव्या इति । अङ्गहविर्भिरपि च विगुणैः प्रधानापूर्वं न निष्पद्यते । तस्मात् प्रधानापूर्वप्रयुक्तानामेवाङ्गेष्वपि क्रिया युक्तेति ।

## लिङ्गदर्शनाच्च । ५ ॥

**भाष्यम्**-- लिङ्गं भवति । एवमाह 'स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इत्यभिघारणस्य आज्यभागार्थतां दर्शयति ।

**वा**-- यदि चैवंजातीयकमङ्गप्रधानार्थं ततः 'प्रयाजशेषेण हवींष्यभिघारयति' इत्येतदङ्गप्रधानार्थम् । तत्र च क्रमवाक्येष्वयं क्रमो न्यायप्राप्तः सिद्धवदुच्यमानो हेतुवन्निगदोऽर्थवत्त्वादुपपद्यते 'स वै ध्रुवामेवाग्रेऽभिघारयति' । कुतः ? 'ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति । यदि आज्यभागहविरप्यभिघारणीयं तत एवं वक्तव्यम् । अन्यथा हि ध्रुवायामुपांशुयाजार्थेन केवलमभिघारणं स्यात् । तत्र न च अग्रेऽभिघारणं स्यात् । न च 'ततो हि प्रथमावाज्यभागौ' इति हेतुः समर्थ्येत । तस्मात् सर्वार्थत्वमिति ।

**शा**-- समानासमानविधानप्रसङ्गात् वाक्यप्रकरणविरोधाविरोधविचारेण दर्शपूर्णमासयोः 'वेद्यां हवींष्यासादयति' 'वेदिं खनति' 'बर्हिषि हवींष्यासादयति' 'बर्हिर्लुनाति' इति श्रुता वेदिः बर्हिस्तद्धर्माः किं अङ्गप्रधानहविषां साधारणा उत प्रधानहविषामेव इति चिन्त्यते । तत्र वाक्यस्वातन्त्र्ये सति आनर्थक्यात् क्रत्वन्तरे च अतिप्रसङ्गात् अवश्यं प्रकरणेन एकवाक्यत्वं अपेक्षितव्यम्. प्रकरणं च प्रधानस्यैव इति प्रधानहविषामेव वेद्याद्यङ्गं न प्रयाजादिहविषामिति प्राप्ते, ब्रूमः । सत्यम्, प्रकृतैकवाक्यत्वं तत्तु अवच्छेदकतया न तु ग्राहकतया । वाक्यस्य अत्यन्तसंकोचप्रसङ्गात् । प्रधानगृहीता हि वेदिस्ततस्तदर्थेष्वेव हविःषु स्यात् । तत्र वाक्यस्य अत्यन्तसंकोचः स्यात्, तस्मान्नायं वाक्यार्थः प्रधानार्थहविरासादनद्वारेण प्रधानापूर्वं वेद्यां कुर्यादिति । किं तर्हि यत् दर्शपूर्णमासोपकारिहविः तत् वेद्यामेवेति ।

एवं हि नातिसंकोचः कृतः स्यात् । न चानर्थक्यम् । अङ्गहविरपि प्रधानस्योपकारकमेव इति तत्रापि वेदिः स्यात् । अथवा अस्तु प्रधानस्य ग्राहकत्वम्, द्वारं तु न तदर्थमेव हविः किंतु तदुपकारिहविर्मात्रम्, वाक्यसंकोचपरिहारात् । संभवति च उपकारिमात्रस्यापि द्वारत्वम्, अतः प्रधानप्रयुक्तानामपि वेदिबर्हिस्तद्धर्माणां प्रयाजाद्यपूर्वस्वरूपनिर्वृत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रयाजाद्यङ्गत्वं वेद्यादेः ।

**सोम**-- 'तुल्यः सर्वेषां पशुविधिः' इत्यधिकरणात्प्रागेव प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारसमाप्तेः अत्र वाक्यप्रकरणविरोधाविरोधचिन्ता न संगता ( इति आक्षेपात् संगतिः ) । **सूत्रार्थस्तु**- अङ्गार्थेन प्रधानार्थेन वा विशिष्य असंयुक्तं वेद्यादिकं प्रधानस्यैव स्यात् प्रकरणस्य प्रधानमात्रसंबन्धितया तत्कृतविशेषसद्भावात् इति ।

**वि**--'मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गताऽपि वा ।, तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥ मुख्याङ्गस्यापि वेद्यादेः प्रयाजादिषु चाङ्गता । मुख्यार्थत्वात्प्रयाजादेः स्वापूर्वव्यवधानतः ॥'

**भाट्ट**— दर्शपूर्णमासयोः वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किं अङ्गप्रधानसाधारणहविरासादनार्थाः, उत प्रधानाङ्गभूतहविरासादनमात्रार्था इति चिन्तायां 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इति वचनेन वेदिबर्हिरासादनस्य हविरुद्देशेन विधानादर्थात्तयोरपि हविरर्थत्वप्रतीतेः हविःस्वरूपे च आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकजिज्ञासायां अप्रतिबद्धफलवत्प्रधानाधिकाराख्यप्रकरणस्यैव तात्पर्यग्राहकत्वावसायात् तेन च अङ्गत्वसंबन्धस्यैव शाब्दस्य लक्षणाघटकतया आश्रयणात् प्रधानापूर्वाङ्गभूतहविरर्थत्वमेव । इति प्राप्ते, प्रकरणेन वाक्यसंकोचे प्रमाणाभावात् आनर्थक्यपरिहारार्थं यथा प्रधानप्रकरणेन तात्पर्यग्रहः, तथा दुर्बलेनापि अङ्गाधिकाराख्यतत्प्रकरणेनापि । अत एव अनारभ्याधीताङ्गानुष्ठानसादेश्यस्यापि तात्पर्यग्राहकत्वमुक्तम् । तेन सर्वार्था एव एते । अस्तु वा प्रधानप्रकरणेन तत् । तथापि नाङ्गत्वं संबन्धघटकम्, गौरवात्, अपितु उपकारकत्वमात्रं अभ्युदितेष्ट्यां दधिपयसोरिव । संबन्धमात्रं वा स्वर्गादिवत् 'अगन्म' इत्यत्र । अतश्च प्रधानापूर्वोपकारकहविरर्थत्वमात्रावगतेरङ्गतदङ्गहविषामपि अनारभ्याधीतानां प्राकरणिकानां वा प्रधानोपकारकत्वाविशेषात् सर्वार्थत्वम् ।

**मण्डन**--'बर्हिः सर्वहविःशेषः ।' सर्वेषां प्रधानानां तदङ्गानां च हविषां 'शेषः' अङ्गमिति ।

**शंकर**-- 'अङ्गाङ्गिनोर्बर्हिरादिः ।'

* 'ऐन्द्रवायवं गृह्णाति' इत्यत्र ग्रहणमात्रानुवादेन देवताविधाने **वेदिबर्हिर्न्यायेन** प्राकरणिकयत्किंचिद्द्रव्यग्रहणेऽपि तदापत्तेश्च ( वाक्यभेदापत्तेः ) । **कौ.** २।२।६।१९ पृ. २२९, * वेदिबर्हिर्न्यायः । यदि तु कथंचित् 'सोमं भक्षयति' इत्यनेन वेदिबर्हिर्न्यायेन अङ्गप्रधानसाधारणसोमोद्देशेन भक्षणविधिमङ्गीकृत्य अनुवषट्कारयागाङ्गभूतस्यापि सोमस्य भक्षणं उपदेशत एव प्राप्तमित्युच्यते तथापि ...... । ३।२।१६।३८ पृ. २९७. * सुब्रह्मण्यानिगदे, न चैवं न्यायादेवोहसिद्धौ 'आग्नेयी सुब्रह्मण्या' इति वचनवैयर्थ्यापत्तिः । प्रकृतौ सवनमुखीयवत् सवनीयहविषामपि इन्द्रदेवत्यत्वात् **वेदिबर्हिर्न्यायेन** सुब्रह्मण्या निगदस्य उभयार्थत्वप्रसक्तौ विकृतावपि तदर्थं भेदेनाभेदेन वा अनूहितसुब्रह्मण्यानिगदपाठप्रसक्तेः । **भाट्ट.** ९।१।१५.

* **वेदिभागः** लौकिक एव, अग्नीषोमीयपशौ यूपार्थं 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति विधीयते, ततो न वाक्यभेदः । **वि.** ३।७।६.

* **वेदिवत्** । यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वेदिमात्रापकर्षः अक्लृप्तक्रमत्वात् न पूर्वेषाम्, तथा अभिषेकस्यैवापकर्षः । अन्ये तु सकलप्राकृताङ्गोत्तरकाले कर्तव्या इति पूर्वः पक्षः । अभिषेकस्य प्रयाजादिवैलक्षण्यात् अपकर्षावस्थायां वेदिवत् अक्लृप्तक्रमः वेदेस्तु क्रमः पौर्णमास्यां क्लृप्तः । **टुप्**. ५।२।१०।२१.

* **वेदिविकर्षणं** अवकाभिः वेतसशाखया च सकृदेव न तु प्रतीष्टकं चयने । **भा.** ९।१।७।२६.



* **वेदिस्तरणे** प्रतिस्तरणं स्तरणमन्त्रस्य आवृत्तिः दर्शपूर्णमासयोः । निर्वापन्यायः । ११।४।१४।४७-४८. * वेदिस्तरणे मन्त्रः 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुया शयाना । दर्भैस्तृणीत हरितैः सुवर्णैर्निष्का इमे यजमानस्य ब्रध्ने ॥' इति । 'मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः' इत्यत्र तु 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः स्थानद्वयेऽपि कर्तव्यः । वि. ९।३।२, * वेदिस्तरणे संस्कृतं सर्वं बर्हिः उपक्षीणं भवति । अतः पवित्रं परिभोजनीयादर्भैः कर्तव्यम् । ३।८।१८.

* **वेदिस्तरणार्थं** बर्हिः । **भा.** १२।२।५।१८.

**वेदिस्तरणादेः पुरुषार्थत्वम् । गोदोहनं पुरुषार्थम् ॥**

**यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् । ४।१।२।२ वर्णकं २ ॥**

**भाष्यम्**-- एवं वा सूत्रं वर्ण्यते । दर्शपूर्णमासयोराम्नायते 'अनतिदृश्यं स्तृणाति, अनतिदृश्यमेवैनं प्रजया पशुभिः करोति' इति । तथा 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्' 'वत्सजानुं पशुकामस्य वेदिं कुर्यात्' 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्येवमादीनि । तत्र संशयः किमेवंजातीयकाः क्रत्वर्थाः, उत पुरुषार्था इति । किं प्राप्तम् ? क्रत्वर्था इति । कुतः ? प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं च । तदुक्तं 'द्रव्यगुणसंस्कारेषु बादरिः' इति । तस्मात् क्रत्वर्था इत्येवं प्राप्तम् । **एवं प्राप्ते, ब्रूमः ।** यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एवेति । प्रीतिस्तेभ्यो निर्वर्तते । तस्मादेते पुरुषार्था इति । ननु प्रत्यक्ष उपकारः क्रतोः दृश्यते इत्युक्तम् । **उच्यते** । सत्यं दृश्यते, न तु क्रतोरुपकाराय । यत एभ्यः संकीर्तितेभ्यः फलेभ्य एते श्रूयन्ते । न च य उपकरोति, स शेषः । यस्तु यदर्थः श्रूयते, स तस्य शेष इत्युक्तं 'शेषः परार्थत्वात्' इति ।

**टुप्**-- एवं वा । फलार्थवादत्वात् अनुदाहरणं अनतिदृश्यं इत्यादि । गोदोहनादीनि वाक्यात् पुरुषार्थानि, प्रत्यक्षेण क्रतूपकारकाणि दृश्यन्ते । तस्मात् समुच्चयेन पूर्वः पक्षः । सिद्धान्तस्तु अवधारणया । पुरुषार्थान्येव तादर्थ्यलक्षणेन शेषत्वेन । अस्माच्च ग्रन्थात् अनुमीयते बादरिमते पूर्वः पक्षस्तत्र इति ( ३।१।३।३ इत्यत्र ) ।

**सोम**-- गोदोहनादेः क्रत्वर्थत्वेऽपि क्रतुप्रयुक्त्यभावात् फलस्य पुरुषाभिलषितत्वेन फलप्रयुक्तेः शीघ्रतया फलप्रयुक्त्यैव क्रतूपकारसिद्ध्या क्रतोस्तत्प्रयुक्तौ उदासीनत्वात् । एवं च पूर्वोत्तरपक्षयोः फलप्रयुक्तमेव गोदोहनम्, न तु क्रतुप्रयुक्तम् । इति नातीवायं विचारोऽत्र संगतः ।

**वि**-- 'गोदोहनं द्व्यर्थं स्यान्न वा, भानाद् द्व्यर्थता ।, अन्यथाऽपि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥'

**भाट्ट**— यद्वा गोदोहनादीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात् क्रत्वङ्गत्वम् । इतरथा प्रणयनस्य चमसलोपेन अङ्गाभावात् वैगुण्यापत्त्या विगुणप्रणयनाश्रितात् गुणादपि फलानुपपत्तेः । अतः उपजीव्यत्वात् दुर्बलमपि प्रकरणं विनियोजकम् । अथवा षष्ठी संबन्धमात्रवाचिनी व्रीह्यादिन्यायेन सर्वकाम्यवाक्यप्राप्तपशुप्रयोजकप्रणयनजनकत्वसंबन्धेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधीयते । न तु साक्षात् । इति प्राप्ते, दुर्बलप्रकरणानुरोधेन परंपरासंबन्धाङ्गीकारे प्रमाणाभावात् व्रीह्यादिवत् नियमविधिलाघवाभावाच्च साक्षादेव उद्देश्यत्वं पशूनाम् । प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोपजीवनेन प्रणयनस्य तत्प्रयोगे अनङ्गचमसग्राहितया अनाशङ्क्यत्वात् पुरुषार्थत्वमेव तस्य, इति पशुप्रयुक्तमेव गोदोहनम्, इति स्वतन्त्रपशुकामनायामेव तत् कर्तव्यम् ।

**मण्डन**— 'गोदोहनं क्रतोर्नाङ्गम् ।' ३.

**शंकर**— 'काम्यो गुणो न क्रत्वर्थः ।' ४.

* **वेदिस्तरणयोग्यस्य** बर्हिष उपसादनं लवने प्रयोजनम् । **भा.** ११।४।१४।४४.

* **वेधाद्यधिकरणम्** । 'वेधाद्यर्थभेदात् ।' ( ३।३।१४।२५ ब्रसू. ) । ननु प्रातिशङ्कासद्भावतद-

भावाभ्यां विशेषकथने वेधाद्यधिकरणानारम्भशङ्कैव स्थिरीकृता स्यात् इति चेत्, उच्यते, शाखभेदात् न पौनरुक्त्यं इत्येव मुख्यः परिहारः । **परिमल.** ३।३।१४।२५ ब्रसू.

* **वैशब्दसंयोगात्** अस्य अनुवादसारूप्यं 'एतानि वै दश यज्ञायुधानि' इति । **वा** ३।१।५।११ पृ. ६७२.

* **वैकङ्कतः** यज्ञावचरः ( पात्रं ) न केवलं पवमानहविरङ्गं किन्तु वाक्येन दर्शपूर्णमासादिसर्वयज्ञेषु निविशते । **वि.** ३।१।१२. * **वैकङ्कती** ध्रुवा, अत्र फलश्रुतिरर्थवादः न फलप्रयुक्तता । ४।३।१।१–३. **मीको.** पृ. २४६९ 'पर्णमयीन्यायः' इत्यत्र द्रष्टव्यम् ।

* **वैकङ्कतपात्राणां** दर्शादिसर्वयज्ञेषु विनियोगः । ३।१।१२।२२. **मीको.** पृ. ३४९८ 'वारणाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैकर्तः**, वैकर्तनं पार्श्वस्थः प्रौढो मांसखण्डः । **ऐब्रा.** ३१।१।२ **सायणः**.

* **वैकल्पिकानि** सर्वाणि आदित एव अन्यतोऽवधार्य प्रयोग आरभ्यते । **वा.** ३।५।१८।४६. * **वैकल्पिकयोस्तु** एकनिमित्ताश्रयणात् इतरेतरबाधः । **टुप्.** ६।५।१९।५४. * **वैकल्पिकानां** ( कर्माङ्गानां ) आदित एव अङ्गीकरणात् आश्रितक्रमातिक्रमे प्रायश्चित्तविधिः उपपत्स्यते । **वा.** २।४।२।२३. * वैकल्पिकानां हि सर्वेषां युगपत्प्राप्तिः । यावदन्यतमाध्यवसायो न भवति तावत् तुल्यप्राप्तिः । अध्यवसाने कृते तदेवानुष्ठेयं इतरेषां निवृत्तिः । तदुक्तं 'निर्देशात्तु विकल्पे यत् प्रवृत्तम्' ( ६।३।१२।२८ ) इति । प्रवृत्ते च ततोऽन्यन्न भवति, अशक्तत्वात् । **टुप्.** १०।५।२।८.

☸ **वैकल्पिकन्यायः** । परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्वम् । वैकल्पिकद्रव्यस्य प्रतिनिधित्वं न ॥

**निर्देशात्तु विकल्पे यत्प्रवृत्तम् ।६।३।१२।२८॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र श्रूयते, 'खादिरे पशुं बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' इति । तत्र कदाचित् खदिरगुणके प्रयोगे आरब्धे खदिरो विनष्टः । तत्र संदेहः किं वैकल्पिकस्य उपादानम्, उत खदिरसदृशस्येति । किं प्राप्तम् ? वैकल्पिकस्येति । कुतः ? स हि श्रुतः । खदिरसदृशो न श्रूयते । तस्मात् वैकल्पिकस्योपादानमिति । **एवं प्राप्ते, ब्रूमः ।** विकल्पे यत्प्रवृत्तम्, तत्सदृशमुपादेयम् । यत् प्रवृत्तं यस्मिन् प्रयोगे, तत् निर्दिष्टम्, तत् अङ्गभूतम्, वैकल्पिकमनङ्गम् । आश्रितखदिरे प्रयोगे पलाशरौहितकावनङ्गभूतौ । तौ न शक्येते यदा खदिरस्तदैव कर्तुम् । अशक्यं चाश्रुतम् । तस्मात् आश्रितखदिरे प्रयोगे इतरौ नोपादेयौ, अनङ्गभूतत्वात् । खदिरस्य सदृशमन्वेषितव्यमिति ।

**अशब्दमिति चेत् ।२९॥**

**भाष्यम्**— इति चेत्पश्यसि, खदिरसदृशं उपादेयमिति । अशब्दमेव कृतं भवति । तस्मात् शब्दवत्त्वात् वैकल्पिकमुपादेयम् ।

**नानङ्गत्वात् ।३०॥**

**भाष्यम्**— नैतदेवम् । अनङ्गं तस्मिन् प्रयोगे वैकल्पिकम् । आश्रितखदिरो हि स प्रयोगो यो निर्दिष्टः, तस्य निर्देशात् इतरावश्रुतौ । ननु निर्देशाभावेऽङ्गभावविरोधः । तेन श्रुताविति । किमतः ? यद्येवम्, यदोपात्तस्याभावस्तदा श्रवणम् । नैतदेवम् । नैमित्तिकं हि तथा प्रतिज्ञायेत । सति वचने निमित्ते, असति खदिरे, इतरौ श्रुताविति । तत्र को दोषः ? स एवापेक्षितोऽनपेक्षितश्चेति विरोधो भवेत् । संस्काराश्च खदिरे कर्तव्याः । खदिरसदृशे तद्बुद्ध्या गृह्यमाणे श्रुतबुद्ध्या कृता भवन्ति । वैकल्पिकेन तु श्रुतेनासंबद्धाः । तस्मात् उपात्तसदृशो ग्राह्य इति ।

**शा**— वैकल्पिकेषु यावदेकं अनुपक्रान्तं तावदितरेषां प्राप्तिः, उपक्रान्ते तु तस्मिन् प्रयोगे तदेव अङ्गं इतरत् अनङ्गमेव, व्रीहिभिश्च संकल्प्य यवैः कुर्वाणः 'नानृतं वदेत्' इति क्रत्वङ्गभूतप्रतिषेधं अतिक्रामेत् । अतो व्रीहीणामेव अङ्गत्वात् तत्सदृशमेव उपादेयम् ।



**सोम**— इह न सदृशोपादानमिति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**- यत्प्रवृत्तं द्रव्यं तत्सदृशं उपादेयम्, तत्प्रयोगे प्रवृत्तस्य अङ्गत्वेन निर्देशादिति ।

**वि**— 'यवाः प्रतिनिधेयाः किं व्रीह्यर्थे तत्समा उत । मुख्यलाभादग्रिमोऽन्त्यो व्रीहिपक्षे यवा विधेः ॥'

**भाट्ट**— वैकल्पिकेषु 'खादिरे बध्नाति, पालाशे बध्नाति' इत्यादिषु एकेन प्रक्रान्ते प्रयोगे यदि तस्यापचारः, तदा वैकल्पिकान्तरमेवोपादेयं न तु पूर्वोपात्तसदृशं वैकल्पिकान्तरस्यापि उद्देश्यतावच्छेदकसामानाधिकरण्येन विहितस्य तस्मिन्नपि प्रयोगे अङ्गत्वस्वरूपयोग्यतया मुख्यत्वेन जातिव्यक्तिसर्वावयवानामेव साधनत्वसंभवे पूर्वोपात्तारम्भककतिपयावयवमात्रग्रहणे प्रमाणाभावात् । **इति प्राप्ते,** तस्मिन्नपि प्रयोगे इतरस्य अङ्गत्वेन तदभावकृतवैगुण्यापत्तेरवश्यं वैकल्पिकस्थले तत्तद्वाक्ययोः तत्तद्घटितप्रयोगमात्रविषयकत्वावसायात् तत्प्रयोगे इतरस्याङ्गत्वाभावेन पूर्वोपात्तसदृशमेवोपादेयम् । अत एवाग्नेयत्वादिव्याप्यधर्मावच्छिन्नं प्रत्येव व्रीह्यादेः कारणत्वमित्युक्तं **कौस्तुभे** । तत्रापि 'वैकल्पिकानामादितोऽवधारणम्' इत्यस्य प्रामाणिकत्वे संकल्पोत्तरमेव तदभावे तु एकोपादानोत्तरमेव तस्यापचार इति द्रष्टव्यम् ।

**मण्डन**— 'ग्राह्यो वैकल्पिको न तु ।' वैकल्पिकः मुख्यस्य विकल्पत्वेन विहितः पदार्थः 'तु न ग्राह्यः' प्रतिनिधित्वेन इति शेषः ।

**शंकर**— 'यवा न व्रीह्युपक्रमे ।'

* **वैकल्पिकबाधभेदाः** **मीको.** पृ. २९६० 'बाधभेदनिरूपणम्' इति बिन्दौ द्रष्टव्याः ।

* **वैकल्पिकमध्वशनघृताशनयोः** गवामयने पृष्ठ्यषडहान्तेऽनुष्ठानम् । १०।६।९।२७–२८. **मीको.** पृ. १५५२ 'गवामयने पृष्ठ्यषडहान्ते॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैकारिकाग्नेराधानिकसंस्काराभावः** । **वि.** १२।४।९, * वैकारिकाग्नेराहवनीयत्वाभावः । १२।४।८.

* **वैकृतं** अन्ते प्राकृतं पूर्वम्, यथा नक्षत्रेष्टौ नारिष्ठहोमाः पूर्वं उपहोमाः पश्चात् । उपहोमन्यायः । **भा.** ५।२।९।१७–२०, * वैकृतं तन्त्रं प्रकृतौ प्रसज्यते न तु प्राकृतं तन्त्रं विकृतौ ( यदा प्रकृतिः विकृत्या समानतन्त्रा ) । १२।२।१३।३३, * **वैकृतः** यो विध्यादिविध्यन्तापेक्षः सोऽपि वैदिकेन विध्यन्तेनानुमानात् बुद्धौ संनिहितेन एकवाक्यतां यास्यति । ८।१।२।२, * **वैकृतेन** कर्मणा अनारभ्यविधिः न संबध्यते । ३।६।१।८. * वैकृतेन प्राकृतं बाध्यते, प्राप्तबाधोऽत्र । **वा.** ३।३।७।१४ पृ. ८६०. * यत्र हि प्राकृतवैकृतयोर्युगपन्न संभवः तत्र **वैकृतेन** प्राकृतं बाध्यते । **भा.** १०।३।४।२४. * **वैकृतेभ्यः** पार्वणहोमयोर्निवृत्तिः । ९।२।१८।५०–५५. **मीको.** पृ. २५४७ 'पार्वणन्यायः' इत्यत्र द्रष्टव्यम् । * **वैकृतस्य** वाक्यस्य साकाङ्क्षत्वात् अतिदेशेन अनुषङ्गेण वा प्राकृतैरङ्गैः संबन्ध इति । **टुप्.** ९।१।१।१ पृ. १६३७. * **वैकृतीभ्य** एव देवताभ्यो निर्वापः अनिरुप्ते अपि अभ्युदये । ६।५।४।१६–१७. **मीको.** पृ. ५८१ 'अभ्युदितेष्टौ दर्शप्रवृत्त्युत्तरं॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वैकृतीषु** सर्वास्वेव चोदनासु प्राकृतं धर्मजातं अपेक्ष्यते वाक्यशेषत्वेन । **भा.** १०।१।१।१.

* **वैकृतापूर्वस्तोत्रसाधनत्वं** प्रगीताया एव ऋचः । ९।२।८।३०–३१.

* **वैखानसं** साम अङ्गिरसां द्विरात्रे पूर्वेद्युर्भवति । **भा.** १०।५।१३।५३.

* **वैखानससामविध्यर्थवादः** 'षोडश्युत्तरे' इति ( प्राप्तानुवादोऽन्यविध्यर्थः ) अङ्गिरसां द्विरात्रे । १०।५।१३।५३–५४ वर्णकं २. **मीको.** पृ. १८१ 'अङ्गिरसां द्विरात्रे॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैगुण्यस्य** समाधानार्थानि प्रायश्चित्तानि यथा– 'यदि ऋक्तो यज्ञ आर्तिमियात् ( विनाशमियात् ) भूः स्वाहेति गार्हपत्ये जुहुयात् । अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति । यदि सामतः स्वः स्वाहेति आहवनीये । यदि अविज्ञातो भूर्भुवः स्वः स्वाहेति आहवनीये एव' इति । **भा.** १२।३।५।१६.

* **वैगुण्यसमाधानार्थानां** प्रायश्चित्तानां विकल्पः । **वि.** १२।३।५.

* **वैतानिकं**--वितानो यज्ञः । वितान एव वैतानिकं विनयादित्वात् स्वार्थे ठक् । तमेव अधिकृत्य त्रयी प्रवर्तते । दर्शपूर्णमासात्रारभ्य विश्वसृजामयनपर्यन्तानां यज्ञानामेव प्रतिपादनात् । **सोम.** ७।८।१.

* **वैदिकं** कर्म द्विविधं क्रत्वर्थं पुरुषार्थं चेति । तन्त्ररत्ने तु लिप्सासूत्रे प्रथमवर्णके वैदिककर्मणां त्रैविध्यमुक्तं क्रत्वर्थं पुरुषार्थं अनुभयरूपं च । अध्ययनं आधानं च न क्रत्वर्थम्, न पुरुषार्थमिति । शास्त्रदीपिकायां तु तत्रैव 'यत् भावनाकथंभावपूरणार्थं विधीयते तत् क्रत्वर्थम्, अन्यत् करणं फलं च पुरुषार्थम्' इति ग्रन्थेन द्वैविध्यमेवोक्तम् । तत् गुरूणामपीष्टम् । तन्मतं हि तत्र तन्त्ररत्ने एवोक्तं 'अध्ययनस्य पुरुषार्थत्वमिष्टं' इति । त्रैविध्ये तु मूलं द्रव्यार्जनवर्णके एव (४।१।२ वर्णकं ३ भा.) 'न चाधानवत् भवितुमर्हति' इति भाष्यस्य (पृ. ११९७) व्याख्यापञ्चकोक्त्यर्थे वार्तिके 'यथा आधानं न क्रत्वर्थम्, न पुरुषार्थम्' इति सिद्धान्तवार्तिकम् । तत्तु तन्त्ररत्ने 'प्रत्यक्षेण द्रव्यार्जनस्य यथा पुरुषार्थता अवगम्यते नैवमाधानस्य' इत्यभिप्रायं व्याख्यातम् । अतो न वार्तिकं न (वाऽन्यत्) किंचित् त्रैविध्ये मूलमस्ति । द्वैविध्ये तु मूलं 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रमेव । अत्र हि द्वैविध्यमेव कर्मणामुक्तम्, न त्रैविध्यम् । भाष्यमपि एवमेव अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः इत्यादि । अन्यत्तु ग्रन्थव्याख्यात्रैविध्यदूषणादि च शास्त्रदीपिकाप्रकाशे अनुसंधेयम् । **बाल.** पृ. ८१. * वैदिकं लिङ्गं स्मृतेर्बलवत् । **वा.** ३।३।७।१४ पृ. ८४१. * वैदिकं सोमपानं ज्योतिष्टोमे तद्विकृतिषु च । **भा.** ३।४।१२।३२. * साकाङ्क्षे वेदार्थे यत् कल्प्यते तत् **वैदिकं** नेतरत् । **वा.** ३।३।७।१४ पृ. ८३०, * वैदिकः अश्वप्रतिग्रहः कर्माङ्गभूतदानाश्रयः । ३।४।१०।२८ पृ. ९५७. * वैदिकः शब्दः (प्रमाणं) उपदेश--अतिदेशभेदात् द्विविधः । **बाल.** पृ. ८. * वैदिकाः अर्थाः श्रुतिप्रमाणकाः । **भा.** ५।१।१।१, * वैदिकाश्च पदार्थाः उपनयनोत्तरकाले समाम्नाताः । स्मार्ताश्च वैदिका एव । ६।२।६।२२. * ये एव लौकिकाः शब्दास्ते एव वैदिकाः ते एवामीषामर्थाः इति (लोकवेदाधिकरणे) स्थितम् । **वा.** १।४।७।१० पृ. ३४३. * **वैदिकस्य** एव विध्यन्तस्य सौर्यादौ अतिदेशः । ७।४।२।२-१२. **मीको.** पृ. ३५६८ 'विध्यन्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैदिकस्य गुणविधेः विषयापेक्षायां वैदिकत्वसामान्येन बुद्धिस्थत्वात् वैदिकयोः एव आलम्भनिर्वापयोर्विषयत्वावगतिः । **सु.** पृ. ९२५. * वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमो न लौकिकः । यदा तु वेदः सर्वात्मना अन्विष्यमाणोऽपि त्यक्तव्यापारो दृश्यते तदा लौकिकमपि अनुजानाति । 'अदृष्टः प्रकृतावर्थः प्रयोगेऽन्विष्यते पुनः । पदे स्वस्मिन् अलब्धस्तु प्रार्थनीयः पदान्तरे ॥ स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः । वाक्यान्तरेऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे ॥' यदा तु तत्रापि न लभ्यते तदा लोके । लोकेऽपि चेन्नोपलभ्येत ततो नास्तीत्येवमवधार्य आकाङ्क्षाबुद्धिं भ्रान्तित्वेन परिकल्प्य निराकाङ्क्षीकर्तव्यम् । **वा.** २।१।१६।४८. * वैदिकस्य वैदिकमेव निमित्तं इति न्यायः । क्षामवत्यादौ व्यभिचारोऽस्य । **पराक्रमः** २२।२. * **वैदिकानां** पदानां स्वाध्याये एव उपनीतेनैव त्रैवर्णिकेनैव शुश्रूषासाधितगुरुसंप्रदायेनैव च ग्राह्यत्वं धर्मः । यदाकदाचित् येनकेनचित् यथाकथंचित् च ग्राह्यत्वं लौकिकानाम् । इति धर्मभेदः । **सु.** पृ. ३३४. * **वैदिके** अपि प्रतिग्रहे अप्रतिग्राह्यात् प्रतिगृह्णतः पापमस्ति । **भा.** ३।४।१०।२८. * वैदिके अर्थे अनुमानाप्रवृत्तिः । **सु.** पृ. ७८०, * वैदिके अर्थे शब्दव्यतिरिक्तप्रमाणाभावः । पृ. ११९३, ११९६, १२०२. * वैदिके कर्मणि अन्धबधिरमूकपङ्ग्वादीनां नाधिकारः । **वि.** ६।१।२. * वैदिके कर्मणि दंपत्योः सहाधिकारः । ६।१।४।१७-२१. * वैदिके कर्मणि देवानामृषीणां तिरश्चां वनस्पतीनां नाधिकारः किंतु ये कृत्स्नं कर्माभिनिर्वर्तयितुं शक्नुवन्ति तेषां मनुष्याणामेव । ६।१।२।४-५. * वैदिके कर्मणि वैदिको विध्यन्तः संनिकृष्टः न स्मार्तादिः । **वि.** ७।४।२. * वैदिके कर्मणि स्त्रिया अप्यधिकारः । ६।१।३।६-१६, १९-२१. * **वैदिकेषु** पदेषु छन्दोविषयतया विहितस्य प्रकृतिप्रत्यययोः लोपस्य आगमस्य वा वर्णविकारस्य वा सद्भावः, लौकिकेषु असद्भावः । **सु.** पृ. ३३३, * वैदिकेषु पदेषु नियतः स्वरः, लौकिकेषु अनियतः । पृ. ३३३. **वैदिकी** इतिकर्तव्यता उपसत्सु, गृहमेधीये च । **भा.** ७।८।२।३, * वैदिकी इतिकर्तव्यता दर्शपूर्णमासादिषु । ७।४।१।१. * वैदिकी लौकिकी चेति श्रुतार्थापत्तिः द्विविधा । **बाल.** पृ. ८, * वैदिकी लौकिकी चेति समाख्या द्विविधा । पृ. १२. * 'व्याकृता संप्रदायेन वाणी नित्यैव **वैदिकी** । अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः ॥' शिष्याचार्यसंबन्धेन स्वरवर्णमात्राक्रमैरविप्लुतरूपैः निरूपिताकारैरेव वैदिकी व्याकृता इति उच्यते । **वा.** १।३।८।२४ पृ. २५८. * **वैदिक्याः** एवेतिकर्तव्यतायाः अतिदेशः सौर्यचर्वादौ । ७।४।२।२-१२. **मीको.** पृ. ३५६८ 'विध्यन्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैदिकाश्वदानस्य** दोषश्रवणं जन्मान्तरविषयम्, दोषश्च जलोदरव्याधिरूपः । **वि.** ३।४।१४.

* **वैदिकाश्वप्रतिग्रहे** इष्टिकर्तव्यता । **वि.** ३।४।१८.

* **वैदिककर्मभेदनिरूपणं** बालग्रन्थगतं **मीको.** पृ. १३९७ 'कर्म द्विविधं' इति बिन्दौ **बालग्रन्थे** द्रष्टव्यम् ।

* **वैदिककर्मसमाप्तिः** संस्थाजपेन । **सु.** पृ. १५३९.

* **वैदिकत्वसामान्योपस्थितेन** अवैदिकं बाध्यते । यथा-- अश्वप्रतिग्रहेष्टेः निमित्तं वैदिकं दानं न लौकिकम् । **बाल.** पृ. १४४.

* **वैदिकपानव्यापदि** सौमेन्द्रचरुविधानम् । **भाट्ट.** ३।८।१६. **मीको.** पृ. ३४१७ 'वमनाधिकरणम्' द्रष्टव्यम् ।

* **वैदिकमन्त्रेणानुज्ञादानं** भक्षस्य ज्योतिष्टोमे । ३।५।१६।४२. **मीको.** पृ. १८३३ 'ज्योतिष्टोमे सोमभक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैदिकमन्त्रेणानुज्ञापनं** सोमभक्षस्य ज्योतिष्टोमे । ३।५।१५।४१. **मीको.** पृ. १७९३ 'ज्योतिष्टोमे एकपात्रे' इत्यत्र द्रष्टव्यम् ।

* **वैदिकवाक्यानां** प्रमाणान्तरनिरपेक्षत्वात् स्वातन्त्र्येण अर्थप्रत्यायकत्वम् । **ऋजु.** पृ. ३२.

* **वैदिकशब्दस्य** अतिभाराभावः । **वा.** ३।१।६।१२ पृ. ६८०.

**वैद्ये मित्रे निरन्तरा कथेति न्यायः । साहस्री.** ७५०.

* **वैद्यकसंहितायाम्** । न च कस्यांचित् वैद्यकसंहितायां लौकिकः अश्वप्रतिग्रहः (जलोदरस्य) निदानं श्रूयते नापि प्रत्यक्षानुमानादिभिर्गम्यते । **वा.** ३।४।१०।२१ पृ. ९६२.

* **वैद्युतस्य** अग्नेः अविन्धनत्वप्रसिद्धिः । **सु.** पृ. ५९.

* **वैभाषिकबौद्धमतम्** । ग्राह्यस्य ग्राहकात् भिन्नत्वेऽपि अतीतं ज्ञानमेव उत्तरज्ञानस्य ग्राह्यम्, नार्थः इति न ज्ञानभिन्नोऽर्थः प्रामाणिक इति वृत्तिग्रन्थे वैभाषिकमते ज्ञानानां सर्वेषामपि क्षणिकत्वाभ्युपगमः । **वैद्यनाथः** १।१।५।५ पृ. ३२.

* **वैमृधः** पुरुपशीर्षाद्युपधानस्येव अनित्यः । **संकर्ष.** १।२।७. * वैमृधः पौर्णमास्यङ्ग एव न दर्शपूर्णमासोभयाङ्गम् । ४।३।१३।३२-३५. 'वैमृधन्यायः' इत्यत्र द्रष्टव्यम् ।

**वैमृधो भिन्नतन्त्र एव न समानतन्त्रः ॥**

पौर्णमास्यङ्गभूतो वैमृधयागस्तया समानतन्त्र एव कार्यो न तत्पश्चात् । 'वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा' इति सांनाय्येन तुल्यवत् श्रुतेः । 'संस्थाप्य' इति क्त्वाश्रुतिरनुनिर्वपतीत्यनुशब्दः च अनुवषट्कारयागादाविव प्रधानयागोत्तरकालाभिप्रायेणाप्युपपद्यते । इति **प्राप्ते,** 'स वै पौर्णमासेन हविषेष्ट्वाऽनुनिर्वाप्यः' इति वचनान्तरे पौर्णमासेनेति तृतीयानिर्देशेन साङ्गप्रधानकरणकभावनानिर्देशेन प्रयोगोत्तरकालप्रतीतेः संस्थाशब्दस्यापि प्रयोगसमाप्तिपरत्वात्

‘ तत्र यच्छक्नुयात्तद्दद्यात् ’ इति दक्षिणाभेददर्शनाच्च भिन्नतन्त्र एव । तुल्यता त्विन्द्रवत्त्वमात्रेणाप्युपपद्यते । **संकर्ष.** १।२।५.

**वैमृधो यद्युपवन्धादनित्य एव ॥**

स वैमृधो निमित्तोपबन्धमात्रेण श्रुतत्वान्नित्यः । **इति प्राप्ते,** ‘ यद्यग्रे निरूप्य नानुनिर्वपेत् ’ इत्यादिना निन्दार्थवाददर्शनात् प्रारब्धस्य अपरित्यागवचनबलात् ‘ यद्येतानालभेत वायव्यस्यैव शिर उपदध्यात् ’ इति वचनात् पुरुषशीर्षाद्युपधानस्य इवानित्यः तत्प्रक्रमः । **संकर्ष.** १।२।६.

* वैमृधः यस्यां कस्यांचित् पौर्णमास्यामुपक्रम्य नोत्स्रष्टव्यः । **याज्ञिकास्तु** वैमृधः नित्य एव । ऐकतन्त्र्य-भिन्नतन्त्रत्वयोः परं विकल्पः । तत्र प्रथमपौर्णमास्यां यः पक्षो गृहीतः तमेव पक्षं यावज्जीवमवलम्बेतेत्याहुः । **संकर्ष.** १।२।७.

**वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य अनारभ्याधीतसाप्तदश्येन उपसंहारः ॥**

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणम-विकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम् । १०।८। ९।१७ ॥**

**भाष्यम्**-- अनारभ्य किंचिदाम्नायते ‘ सप्तदश सामिधेनीरनुब्रूयात् ’ इति । तत् प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तम् , कासुचित् विकृतिषु पुनः श्रूयते वैमृधे, अध्वरकल्पायाम् , पशौ, चातुर्मास्येषु, मित्रविन्दायाम् , त्रैधातव्यायाम् , आग्रयणेष्ट्यां इति । तासु विकृतिषु अस्य श्रवणं किमर्थमिति विचार्यते । किं प्राप्तम् ? अप्रकरणे यत् शास्त्रमाम्नातम् , विकृतिविशेषे पुनः अविकृतं श्रूयते, तत् प्राकृतमङ्गजातं प्रतिषेद्धुम् , वैमृधादिषु सप्तदश सामिधेनीरनुब्रूयात् इति, नान्यत् प्राकृतं कुर्यात् इति । न चैवं विज्ञायते वैमृधादिष्वेव साप्तदश्यं नान्यासु विकृतिषु इति । तासु तत् प्रत्यक्षेण वाक्येन श्रुतं न शक्यं बाधितुम् ।

**विकारे तु तदर्थं स्यात् । १८ ॥**

**भाष्यम्**-- यदि तु सामिधेनीनां विकारः कश्चित् श्रूयेत, ततो विकारार्थमाम्नातमिति गम्येत, न तु विकारः श्रूयते । तस्मात् प्राकृतप्रतिषेधार्थमेवेति ।

**वाक्यशेषो वा क्रतुनाऽग्रहणात् स्यादनारभ्य-विधानस्य । १९ ॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति । वाक्य-शेषोऽयं वैमृधादिषु अनारभ्यविधानस्य, सप्तदश सामिधेनीरनुब्रूयात् एतासु विकृतिषु इति । तेन अन्यासु विकृतिषु न स्यात् । **ननु** प्रत्यक्षश्रुतं अन्यासु विकृतिषु, तत्र शक्यं बाधितुमिति । **उच्यते** । सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत् क्रतुना गृह्यते । क्रतुसंबन्धाभावात् प्रयोगवचनोऽपि न गृह्णाति, सति वैमृधादि-संबन्धकरे वाक्ये । यदेतत् साप्तदश्यं अनारभ्योक्तं तत् वैमृधादीनां अङ्गं इति प्रत्यक्षं वाक्यम् । तस्मात् नान्या विकृतयः तत् गृह्णन्ति । अक्रतुग्रहणे च सति सामिधेनीनां साप्तदश्यं निष्फलत्वान्न क्रियेत । तस्मात् अनारभ्यविधेः वैमृधादिषु वाक्यशेषः । **आह, ननु** वाक्यभेदो भवति, सामिधेन्यः सप्तदश भवन्ति, ताश्च वैमृधादिषु इति । **उच्यते** । द्वे एते वाक्ये । पूर्वेण वाक्येन योऽर्थ उक्तः तस्यैव विशेषः परेण वाक्येन विधीयते इति वाक्यशेषः इत्युच्यते इति ।

शा-- **‘ क्लृप्तोपकाराः प्रकृतौ सामिधेन्यो यतस्ततः । ताभिरेव निराकाङ्क्षा नेच्छन्ति प्राकृतान्वयम् ॥ साप्तदश्यं त्वनारभ्यवादप्राप्त-मनूद्यते । सामिधेन्यस्तु चोद्यन्ते ताभिश्चापूर्वता स्फुटा ॥ भवेदेवमपूर्वत्वं सामधेनीविधिर्यदि । साप्तदश्यविधिस्त्वेष तस्मान्नापूर्वता भवेत् ॥ ’**

**सोम**-- अनारभ्याधीतस्य आहवनीयस्य पद-होमादिव्यतिरिक्तविषये संकोचेऽपि अनारभ्याधीतस्य आरभ्याधीतसाप्तदश्यमित्रविन्दादिविषये संकोचः इत्यु-त्थितेः **संगतिः । सूत्रार्थस्तु**-- अप्रकरणे यत् शास्त्रमाम्नातं विकृतिविशेषे पुनरधीतमविकृतं श्रूयते तत् आज्यभागश्रवणवत् चोदकपरिलोपार्थमिति ।



वि-- ‘ सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः । संहृतिर्वो, पकारस्य क्लृप्त्याऽऽद्योऽस्त्वाज्यभागवत् ॥ , सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे । पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम् ॥ ’

**भाट्ट**-- अनारभ्याधीतं साप्तदश्यं प्राकरणिकपाञ्च-दश्यावरोधात् प्रकृतौ निवेशमलभमानं विकृतौ निविशते इति स्थितम् । अतश्च तत् ‘ य इष्ट्या ’ इतिवाक्य-प्रमितसञ्चरकालत्ववत् सर्वविकृत्यर्थत्वमेव । ततश्च वैमृध-पशु-मित्रविन्दा-आग्रयणादिरूपविकृतिविशेषे ‘ सप्त-दश सामिधेनीरनुब्रूयात् ’ इति पुनःश्रवणं न तावत् उपसंहारार्थम् , सामान्यवाक्यवैयर्थ्यापत्तेः । न हि अत्र ‘ पुरोडाशं चतुर्धा करोति ’ इत्यादिवत् शाखान्तरत्वम् । **न च** एकशाखास्थत्वेऽपि अनारभ्याधीतेन सामिधेनी-संबन्धः, प्राकरणिकेन क्रतुसंबन्धः इति विषयभेदात् सार्थक्यं इति **वाच्यम् ।** उभयत्रापि सामिधेनीपदस्यैव उद्देश्यसमर्पकत्वेन तत्स्वरूपे आनर्थक्यप्रसक्तौ लक्षणया अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकमन्त्रत्वस्यैव उद्देश्य-तावच्छेदकतया विषयभेदाभावात् । अपूर्वसाधनत्वलक्षणा-तात्पर्यग्राहकं परं एकत्र प्रकरणम् , अपरत्र अव्यभि-चरितक्रतुसंबन्धः इत्येतावान् भेदः । न तु एतावता विषयभेदः । अतश्च उपसंहाररूपसाप्तदश्यपुनःश्रवणप्रयो-जनासंभवात् अनारभ्याधीतवाक्यप्राप्तानुवादमात्रं साप्त-दश्यपदं अङ्गीकृत्य सामिधेनीविधिरेव ‘ अप्सुमन्ता-वाज्यभागौ’ इतिवत् अङ्गीकर्तव्यः । अतश्च गृहमेधी-याज्यभागन्यायेन अपूर्वत्वं वैमृधादीनाम् । **इति प्राप्ते,** सामिधेनीविधिमात्रेण अपूर्वत्वाङ्गीकारे अग्नेः अपि अप्राप्त्यापत्तेः अपूर्वत्वायोगात् साप्तदश्यस्यैव क्रतु-विशेषजन्यापूर्वसाधनीभूतसामिधेन्युद्देशेन विधिः । तत्फलं च अनारभ्यवाक्यस्य स्वमात्रविषयत्वेन उपसंहारः । न च विषयभेदाभावात् सामान्यविधिवैयर्थ्यम् , उभयत्र अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकमन्त्रत्वस्यैव उद्देश्य-तावच्छेदकत्वेऽपि अपूर्वसाधनीभूतार्थत्वे अपूर्वा-र्थत्वस्यापि आर्थिकत्वात् तस्मिन् प्राकरणिकवाक्यस्य तात्पर्यम् , अनारभ्याधीतस्य तु तत्साधनीभूतार्थत्वे इति विषयभेदात् , प्राकरणिकवाक्येन एव उभयसिद्धेः । अनारभ्याधीतवाक्यवैयर्थ्यशङ्का तु ‘ अग्निहोत्रं जुहोति ’ इतिवत् अभ्युदयशिरस्कत्वकल्पनया परिहर्तव्या । **न च** प्राकरणिकसाप्तदश्यवाक्येन तात्पर्यग्रहात् अनारभ्य-वाक्येन सर्वविकृतिषु न अतिदेशप्राप्तपाञ्चदश्यस्य नित्यं बाधः अपि तु विकल्पेन । अतश्च पक्षप्राप्तसाप्तदश्य-नियमार्थं प्राकरणिकवाक्यं अर्थवत् इति एवं किं न स्यात् इति **वाच्यम् ।** उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य शब्दस्वभावसिद्धत्वेन विकल्पे तद्बाधा-पत्तेः । अतश्च अभ्युदयशिरस्कत्वमपि प्रकल्प्य उपसंहा-रार्थत्वमेव युक्तम् । अतश्च वैमृधाद्यतिरिक्तविकृतिषु साप्तदश्येन न पाञ्चदश्यबाधः ।

**मण्डन**-- ‘ साप्तदश्यं नियम्यते । ’ १०.

**शंकर**-- ‘ उपसंहारवर्णनम् । ’ १०.

* **वैमृधादिषु** सप्तस्वेव विकृतिषु सामिधेनीसाप्त-दश्यं नान्यासु विकृतिषु । **भा.** १०।८।९।१७.

**वैमृधारम्भः आधानानन्तरपौर्णमास्या-मेवेति न नियमः ॥**

यत् ‘ अग्रे निरूप्य ’ इत्यस्य पौर्णमासीप्रकरणे पाठादग्रशब्देनाधानाव्यवहितोत्तरपौर्णमास्येव ग्राह्या । **इति प्राप्ते,** ‘ अग्रेकृत्वा नेदानीं कुरुते ’ इत्यादावकरणपूर्व-कालमात्रप्रत्यायकस्य अग्रशब्दस्य पौर्णमासीविशेषपरत्वे लक्षणापत्तेः ‘ अग्रे निरूप्य ’ इतिवाक्यस्य प्रकरणा-द्बलीयस्त्वाद्यस्यां कस्यांचित् पौर्णमास्यामुपक्रम्य नोत्स्रष्ट-व्यम् । **याज्ञिकास्तु** वैमृधो नित्य एव । ऐकतन्त्र्य-भिन्नतन्त्रत्वयोः परं विकल्पः । एनयोर्मध्ये प्रथमपौर्ण-मास्यामिच्छया यः पक्षः परिगृहीतस्तमेव पक्षं याव-ज्जीवमवलम्बेतेत्याहुः । **संकर्ष.** १।२।७.

* **वैमृधेष्टिः** न पौर्णमास्यङ्गं ‘ संस्थाप्य पौर्ण-मासीमिन्द्राय वैमृधाय पुरोडाशमष्टाकपालं निर्वपति’ इति पौर्णमासीसमापनविधानात् । **वि.** १०।२।१२. * **वैमृ-धेष्टिः** पौर्णमास्यङ्गम् , न दर्शाङ्गं ‘ संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति ’ इत्युक्तत्वात्तु दर्शसाधारणाङ्गसमाप्त्यु-त्तरं वैमृधमिति विशेषः । **वि.** ४।३।१४ । पौर्णमास्य-नन्तरमेव सद्यः वैमृधं कर्तव्यं न तु कालान्तरे, अनु-निर्वपति इति अनुशब्दबलात् । **सोम.** ४।३।१८.

**वैमृधन्यायः** । वैमृधः पौर्णमास्यङ्गमेव न दर्शाङ्गम् ॥

**उभयार्थमिति चेत् । ४।३।१३।३२॥**

**भाष्यम्--** दर्शपूर्णमासयोरामनन्ति 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति । तत्र संदेहः किमुभयाङ्गं वैमृधः, कालार्थः पौर्णमासीसंयोगः, उत अङ्गप्रयोजनसंबन्धः इति । किं प्राप्तम्? एवं चेत् उभयार्थो वैमृधः । कुतः? प्रकरणे उभयोराम्नानसामर्थ्यात् । कालविधिसारूप्याच्च संस्थाप्येति ।

**न शब्दैकत्वात् । ३३ ॥**

**भाष्यम्--** एकः शब्दः, अनुनिर्वपतीति । एकस्मिन्नेव वाक्ये न द्वौ संबन्धौ शक्नोति विधातुम् । वैमृधस्य दर्शपूर्णमासाभ्यां पूर्णमासीकालेन च । एकार्थत्वात् हि एकं वाक्यं समधिगतम् ।

**प्रकरणादिति चेत् । ३४ ॥**

**भाष्यम्—** प्रकरणादिति यदुक्तम्, तत् परिहर्तव्यम् ।

**नोत्पत्तिसंयोगात् । ३५ ॥**

**भाष्यम्--** नैतदेवम्, एनदेव वैमृधस्योत्पत्तिवाक्यम् । तत् दर्शपूर्णमासाभ्यां वा प्रकरणात् एकवाक्यभावमियात् । प्रत्यक्षं वा पौर्णमास्या । तत्र प्रत्यक्षसंयोगः प्रकरणाद्बलवान् । प्रत्यक्षश्च पौर्णमास्या संयोगः, परोक्षः कालेन । तस्मात् पौर्णमास्यङ्गं वैमृधः इति ।

**टुप्--** 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इत्यनेन वैमृध एव पौर्णमास्यङ्गत्वेन विधीयते । नान्यद्वाक्यान्तरमस्ति दर्शपूर्णमासाङ्गत्वावगमकम् । येनानेन कालसंयोगः क्रियेत ।

**शा--** '**पौर्णमास्या हि संयुक्तो वाक्येनानेन वैमृधः । तस्य प्रकरणं नेष्टे तद्वयसंयुक्तगोचरम् ॥**'

**सोम—** पूर्ववैपरीत्येण प्रत्यवस्थानात् **संगतिः** । ननु पूर्वपक्षेऽपि पौर्णमास्यामेव वैमृधोऽनुष्ठेयः न तु दर्शे अपि, तथात्वे कालार्थसंयोगबाधापत्तेः । तत्र वचनात्पौर्णमास्यामनुष्ठितोऽपि प्रकरणाविशेषादुभयाङ्गमित्येतावन्मात्रम् । अत एव संशयप्रदर्शनावसरे ग्रन्थकारेण उक्तम् 'तस्मिन् काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गम्' इति । ततश्च पक्षद्वयेऽप्यनुष्ठानैकरूप्यात् किं **प्रयोजनं** चिन्तायाः, इति चेत् उच्यते— यत्र पौर्णमास्यतिपाते प्रायश्चित्तं कृत्वा केवलं दर्शोऽनुष्ठीयते तत्र दर्शाङ्गतया वैमृधः कार्यः पूर्वपक्षे, सिद्धान्ते तु न इति ।

**वि—** 'संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः ।, द्वयोरङ्गमुतैकस्य, द्वयोः स्यात्प्रक्रियावशात् ॥, उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात् । तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता ॥'

**भाट्ट--** दर्शपूर्णमासयोः 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति श्रुतो वैमृधोऽपि प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गम् । **न च** वाक्येन पौर्णमासीमात्राङ्गत्वावगमः, वाक्यस्थपौर्णमासीशब्दस्य ल्यप्प्रत्ययोपात्तकालप्रतियोगिसंस्थापदवाच्यसमाप्तिविशेषणत्वेनाङ्गिपरत्वाभावात् । तत्त्वे वा संस्थाप्येतिपदस्य साकाङ्क्षत्वापत्तेः । **न च** फलापेक्षायामन्यार्थमप्युपात्तस्योपस्थितत्वात् रात्रिसत्रप्रतिष्ठावत् तद्वाचकपदान्तरकल्पनया पौर्णमासीमात्रार्थत्वमिति **वाच्यम्**, प्रयाजादिवत् प्रकरणेनोभयार्थत्वक्लृप्तौ भ्रातृव्याभिभूतिवदेव पदान्तरकल्पनानुपपत्तेः । अतः स्वतन्त्रकालविधानात् पौर्णमास्युत्तरकालमेव तद्दिने क्रियमाणोऽयमुभयाङ्गमुभयप्रयुक्तः । **इति प्राप्ते**, प्रयाजेष्वक्लृप्तभ्रातृव्याभिभूतेः कल्पने गौरवाद्युक्तं विलम्बोपस्थितिकस्यापि क्लृप्तकृतूपकारस्यैव फलत्वम् । प्रकृते तु पौर्णमास्युपकारस्यापि क्लृप्तत्वाद्युक्तं स्ववाक्योपस्थितत्पदकल्पनया वाक्येनैव तन्मात्राङ्गत्वम् । अतश्चात्र पौर्णमासीप्रयोगसमाप्त्युत्तरकालविशिष्टं कर्मैव पौर्णमास्युद्देशेन विधीयते । **न** चैवं तस्यापि विकृतित्वादतिदेशेन 'य इष्टया' इत्यादिवचनेन वा अमावास्याकालत्वापत्तिः, अनुशब्देन पौर्णमास्यानन्तर्यस्यापि विधेयत्वेन तद्बाधात् । **न** चैवमनुनिर्वाप्ये देविकाहविर्वत् प्रधानमात्रोत्तरत्वस्यैवापत्तेः प्रयोगबहिर्भावानापत्तिः । 'संस्थाप्य' इत्यस्य वैयर्थ्यापत्तेः । 'यच्छक्नुयात्तद्द्यात्' इति दक्षिणाभेदाम्नानाच्च प्रयोगभेदस्य संकर्षे वक्ष्यमाणत्वात् । **उपयोगस्तु** परमापूर्वजननानुकूलायां फलानुकूलायामेव वा समुदायापूर्वनिष्ठायां योग्यतायां द्रष्टव्यः । **प्रयोजनं** पूर्वपक्षे अमावास्यायां तन्त्रमध्ये वैमृधः कार्य इति तन्त्रसारः । तन्न, स्वतन्त्रकालक्रमयोराम्नानात् । अतोऽमावास्याविकारेष्वनतिदेशः प्रयोजनम् । यदा तु पार्वणहोमवदस्यापि विकृतावतिदेशो नेष्यते तदा संकल्पे उभयोरुल्लेखः । **सिद्धान्ते** पौर्णमासस्यैवेति द्रष्टव्यम् ।

**मण्डन--** 'पौर्णमासस्य वैमृधः ।'

**शंकर--** 'वैमृधः पौर्णमास्यङ्गम् ।'

* नष्टस्याग्नेरुत्पादकाकाङ्क्षायां **वैमृधन्यायेन** पदान्तरकल्पनया अस्य अग्निहोत्रापेक्षितादृष्टरूपाग्न्युत्पादकत्वकल्पनया संनिपत्योपकारकत्वमेव । **भाट्ट.** ९।४।५, * पिण्डपितृयज्ञः दर्शाङ्गं 'तस्मात् पितृभ्यः पूर्वेद्युः करोति' इति वाक्ये दर्शेष्टिपूर्वेद्युःकालश्रवणात् वैमृधन्यायेन दर्शेष्टेरुपस्थितत्वम् । ४।४।८, * मध्वशनं वाक्यात् वैमृधन्यायेन षडहाङ्गं न तु अनुष्ठानसादेश्यात् त्रयस्त्रिंशाङ्गम् । १०।६।९, * वारुणीनिष्कासस्य वैमृधन्यायेन पदान्तरकल्पनया संस्कार्यत्वात् एकादशे वक्ष्यमाणं अर्थकर्मत्वं परं तुषांशे इत्युक्तम् । ७।३।४, * 'स्थाणौ स्थाण्वाहुतिं जुहोति' । सप्तम्या अधिकरणत्वेन स्थाणोर्गुणत्वे अपि प्रयोजनाकाङ्क्षायां वैमृधन्यायेन पदान्तरकल्पनया यूपोपयुक्तस्थाणुसंस्कारार्थत्वावगतिः । १०।१।६, * हारियोजनस्य (ग्रहस्य) वैमृधन्यायेन पदान्तरकल्पनया प्रहरणाङ्गत्वे न प्रमाणमस्ति । ४।३।१२.

* सौत्रामण्यां 'ऐन्द्रवारुणसावित्राः (पशु-) पुरोडाशा भवन्ति' पशुपदस्यापि स्ववाक्ये श्रुतत्वात् ('अग्नीषोमीयपशुपुरोडाशमनुनिर्वपति' इत्यत्र) न वपाभ्यासांशे **वैमृधन्यायाशङ्काऽपि । भाट्ट.** १०।१।९.

* **वैमृधयागः** पौर्णमास्या समानतन्त्र एव कार्यः, इति चेत्, न । 'पौर्णमासेन हविषेष्ट्वा अनुनिर्वपति' इति वचनान्तरे पौर्णमासेन इति तृतीयानिर्देशेन साङ्गप्रधानकरणभावनानिर्देशेन प्रयोगोत्तरकालप्रतीतेः संस्थासंबन्धस्यापि प्रयोगसमाप्तिपरत्वात् दक्षिणाभेदाच्च भिन्नतन्त्र एवेति सिद्धान्तः । **संकर्ष.** १।२।५.



* न चात्र (आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति) **वैमृधवत्** पदान्तरकल्पनाऽपि । अङ्गभूतकालविशेषणत्वेनैवाङ्गत्वोपपत्तेः । **भाट्ट.** ४।३।१२, * हविरार्तिन्यायेन निमित्तविशेषणतया अन्वितस्यापि षडहस्य उपस्थितत्वात् वैमृधवत् पदान्तरकल्पनया तदङ्गत्वमेव । १०।६।९.

* **वैयधिकरण्येन** शब्दानां संबन्धः षष्ठ्यन्तद्रव्यपदोच्चारणे (भवति) । **वा.** ३।१।६।१२ पृ. ६८५.

* **वैयाकरणाः** । औचित्यमपि वाक्यार्थावधारणोपायं संगिरन्ते शाब्दाः । **कणिका.** पृ. ४२२. * वैयाकरणाः । औत्पत्तिकवादिनः केचित् स्वमेव रूपं अध्यस्य शब्दः अर्थं प्रत्याययति इति प्रतिपन्नाः । युक्तिश्चोक्ता, स्वमेव रूपं शब्दस्य येयं अर्थपरिणतिः इति । **बृहती.** पृ. १०६ । वैयाकरणाः किल शब्द एव अर्थरूपेण अध्यस्तः शब्दादवगम्यते इति मन्यन्ते । योऽयमर्थाकारः स शब्दस्यैव रूपं यस्मात्, तस्मात् शब्दाध्यासरूपोऽर्थः । अर्थाकारस्य शब्दरूपत्वे च निर्देशतुल्यतैव हेतुः । इति । **ऋजु.** पृ. १०६. * वैयाकरणाः वचनस्य परिपूर्णार्थत्वौचित्ये वचनमध्याहरन्तो दृश्यन्ते शाब्दाः । **कणिका.** पृ. ३८३. * वैयाकरणाः (तु) शक्तिः बोधकत्वमेव । एवं लाक्षणिकाद्यर्थेऽपि शक्तिरेव । अत एव 'सर्वे सर्वार्थवाचकाः' इत्याहुः । **मणि.** पृ. ७४. * **वैयाकरणानां** गुणवचनशब्दः द्रव्यप्राधान्ये वर्तते, गुणमुक्त्वा गुणिनि वर्तमानत्वात् । नहि वैयाकरणानां वैशेषिकवत् गुणाः परिसंख्यायन्ते । किं तर्हि? अङ्गाङ्गिभावापेक्षया गुणगुणिव्यवहारः । **वा.** ३।१।६।१२ पृ. ६८५.

* **वैयाकरणपक्षे** जात्यभावात् अवयवातिरिक्तावयव्यभावाच्च । **सु.** पृ. १४२१.

* **वैयाकरणमतेन** धात्वर्थातिरिक्तभावनाऽभावाभ्युपगमः । **सु.** पृ. १४३२, **वैयाकरणमते** धात्वर्थातिरिक्तभावनाऽभावः । पृ. १४३३, * वैयाकरणमते कर्मणि, मीमांसकमते कर्मसंख्यायां तिङुत्पत्तिः । पृ. १४०७.

* **वैरहत्यं** महापापम् । **बाल.** पृ. ६०.

* **वैराजं** पृष्ठं मैत्रावरुणस्य विश्वजिति । **भा.** ७।३।३।८, * वैराजं ब्रह्मसाम विश्वजिति सर्वपृष्ठे । १०।६।५।१४. * वैराजं साम, षडहे चतुर्थेऽहनि पृष्ठनिष्पादकम् , विश्वजिति च सर्वशब्देन षडहात् प्राप्तम् । **वि.** ७।३।३. * '**वैराजस्य** स्तोत्राय आग्नेयो गृह्यते' इत्यत्र वैराजस्तोत्राख्यदेवताकयागविधिः आग्नेय इति नामधेयम् । इति **पूर्वपक्षः** । वैराजस्य स्तोत्राय इत्यस्य वैराजसंबन्धिस्तोत्राय इत्यर्थः किंवा वैराजे इति सप्तम्या कालवाद: वैराजकाले जायमानस्तोत्रार्थं इत्यर्थः इति सिद्धान्तः । **संकर्ष.** ३।३।६.

* **वैराजसामा** एकविंशः षोडशी ज्योतिष्टोमस्य संस्थाविशेषः । वैराजं च पृष्ठार्थमेव न सर्वार्थम् । **भा.** १०।६।६।१५–२१, * वैराजसामा षोडशी प्रकृतिलिङ्गेन सामशब्देन वैराजपृष्ठे इति गम्यते । ३।८।२२।४४. * **वैराजसाम्नः** षोडशिक्रतौ होतुः पृष्ठे निवेशो न कृत्स्नक्रतौ, 'षोडशी वैराजसामा' । १०।६।६।१५–२१.

* '**वैरिमरणकामो** यजेत' इति यत्र श्रुतं तत्र वैरिमरणरूपपरानिष्टचिन्तनादेव पापम् , अभिचारार्थकर्मणस्तामसधर्मत्वस्मरणात् वा पापम् । **भाट्ट.** ४।१।२ वर्णकं २.

* **वैरूपं** वैरूपसाम्नि उक्थ्ये पृष्ठार्थम् । न तस्य कृत्स्नक्रतुसंयोगः । १०।६।६।१५–२१. * वैरूपं साम, षडहे तृतीयेऽहनि पृष्ठनिष्पादकम् । विश्वजिति च सर्वशब्देन षडहात् प्राप्तम् । **वि.** ७।३।३. * वैरूपं होतुः पृष्ठं विश्वजिति । **भा.** ७।३।३।८, * वैरूपं होतुः पृष्ठं विश्वजिति सर्वपृष्ठे । १०।६।५।१४. * **वैरूपस्यैव** होतुः पृष्ठस्तोत्रार्थं निवेशः षाडहिकानां रथंतरादिसाम्नां मध्ये, विश्वजिति । १०।६।५।१३–१४. **मीको.** पृ. ३६९० 'विश्वजिति षाडहिकरथंतरादिसाम्नां॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैरूपादिसाम्नां** बहुव्रीहिपदनिर्दिष्टानां उक्थ्यादिक्रतौ होतुः पृष्ठे एव निवेशः, न तु कृत्स्ने क्रतौ । १०।६।६।१५–२१. **मीको.** पृ. १०८६ 'उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैरूपवैराजसाम्नोः** पृष्ठकार्ये निवेशः । **वि.** १०।६।६.

* **वैरूपसामा** उक्थ्यः इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठः इति गम्यते । **भा.** ३।८।२२।४४, * वैरूपसामा उक्थ्यः ज्योतिष्टोमस्य संस्थाविशेषः । वैरूपं च पृष्ठार्थमेव न तस्य कृत्स्नक्रतुसंयोगः । १०।६।६।१५–२१. * '**वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ।**' १०।६।६।१५ ॥ इत्यत्र सूत्रे, 'उक्थ्यो वैरूपसामा' 'एकविंशः षोडशी वैराजसामा' इत्यत्र सर्वप्राकृतसाम्नां निवृत्तिमाशङ्क्य पृष्ठ्यस्तुतावेव रथंतरादिमात्रं निवर्त्यते न सर्वाणि सामानि, सत्तामात्रेणैव वैरूपादेः क्रतुविशेषणत्वोपपत्तेः इति वक्ष्यते । **रत्नाकरः** १।१।८।८ श्लोवा.

**✠ वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् । १०।६।६।१५॥**

'उक्थ्यो वैरूपसामा' इति श्रूयते । सोऽयं वैरूपसामा उक्थ्यः एकसामा स्यात् । एकमेव वैरूपं साम यस्मिन् स एकमात्रसामा स्यात् । क्रतुसंयोगात् कृत्स्नेन क्रतुना वैरूपसामसंयोगस्य उक्तत्वात् । त्रिवृद्वत् यथा 'त्रिवृदग्निष्टोमः' इति कृत्स्ने क्रतौ एक एव त्रिवृत् स्तोमो भवति तद्वत् । इति पूर्वः पक्षः ।

**पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् । १६ ॥**

'उक्थ्यो वैरूपसामा' इति कृत्स्ने उक्थ्ये क्रतौ एकमेव वैरूपं साम इति पूर्वपक्षं वाशब्देन व्यावर्त्य सिद्धान्तमाह वैरूपसामा उक्थ्यः इति वैरूपं साम पृष्ठार्थे पृष्ठकार्ये स्यात् , न सर्वस्मिन् क्रतौ एकमेव वैरूपम् । प्रकृतिलिङ्गेन सामशब्देन संयोगात् वैरूपं साम यस्मिन् सोऽयं वैरूपसामा इति बहुव्रीहिः । तेनेतरेषु सामसु परिसामत्वेन सत्स्वपि पृष्ठकार्ये विद्यमानेन वरूपेण वैरूपसामता सिद्धा भवति । तस्मात् वैरूपसाम्नि उक्थ्ये पृष्ठकार्ये वैरूपं इति सिद्धान्तः ।



**त्रिवृद्वदिति चेत् । १७ ॥**

'त्रिवृदग्निष्टोमः' इत्यत्र यथा कृत्स्ने क्रतौ एक एव त्रिवृत् स्तोमो भवति न पञ्चदशादिरन्यः । तद्वत् उक्थ्यो वैरूपसामा इति कृत्स्ने उक्थ्ये एकमेव वैरूपं साम स्यात् नान्यत् इति उक्तं इति चेत् पूर्वपक्षी ब्रूयात् ।

**न प्रकृतावकृत्स्नसंयोगात् । १८ ॥**

'त्रिवृद्वदिति चेत्' (१७ सू.) इति शङ्कायामुत्तरमाह– नैतदेवम् । कृत्स्ने उक्थ्ये न एकमेव वैरूपं साम । प्रकृतौ दृष्टेन 'वैरूपसामा' इति सामशब्देन लिङ्गेन अकृत्स्नसंयोगात् अकृत्स्नसंयोगस्य गम्यमानत्वात् । नैवं त्रिवृति प्रकृतिलिङ्गेन केनचित् संयोगोऽस्ति येन अकृत्स्नता अवगम्येत । तस्मात् त्रिवृदग्निष्टोमदृष्टान्तो विषमः । तस्मात् उक्थ्ये वैरूपस्य न कृत्स्नसंयोगः । इति सिद्धान्तः ।

**विधित्वान्नेति चेत् । १९ ॥**

ननु भूनाम्नि क्रतौ 'तस्य ... धेनुर्दक्षिणा' इत्यस्य विधित्वात् , इत्यस्मात् विधेः धेनुः कृत्स्नक्रतुदक्षिणायाः कार्यं भवति एवं उक्थ्येऽपि, कृत्स्ने सामकार्ये वैरूपं स्यात् न केवलं पृष्ठकार्ये इति चेत् पूर्वपक्षी ब्रूयात् ।

**स्याद् विशये तन्न्यायत्वात् कर्माविभागात् । २० ॥**

'अथैष भूः... तस्य... धेनुर्दक्षिणा' इति धेनुदृष्टान्तं वैषम्येण निराकरोति । भुवि नाम क्रतौ धेनुः कृत्स्नायाः क्रतुदक्षिणायाः निवर्तयित्री स्यात् । धेनुः कृत्स्नां क्रतुदक्षिणां निवर्तयेन्न वा इति विशये संशये तन्न्यायत्वात् तस्याः दक्षिणायाः न्यायः रीतिः यस्यां धेन्वां सा तन्न्याया, तन्न्यायत्वात् स्यात् धेनुर्निवर्तिका । कर्माविभागात् दक्षिणायाः कर्मणः कार्यस्य ऋत्विगानतिरूपस्य कृत्स्नया वा दक्षिणया धेन्वा वा क्रियेत नास्ति तत्र विभागः वैषम्यम् । एवं तन्न्यायत्वात् कर्माविभागात् धेनुः कृत्स्नक्रतुदक्षिणाया निवर्तिका इति युक्तम् । उक्थ्ये वैरूपसाम्नि तु प्रकृतिलिङ्गसंयोगात् न कृत्स्नसामनिवर्तकत्वं इति दृष्टान्तवैषम्यम् । तस्मात् उक्थ्ये वैरूपं पृष्ठकार्ये एव इति सिद्धान्तः ।

**प्रकृतेश्चाविकारात् । २१ ॥**

उक्थ्ये वैरूपस्य साम्नः न कृत्स्नक्रतुसंयोगः प्रकृतेः अविकारात् । प्रकृतेः प्राकृतस्य चोदकस्य विकारो बाधो यथा न स्यात् । कृत्स्नक्रतुसंयोगे तु चोदकस्य बाधः स्यात् । तस्मात् उक्थ्ये पृष्ठकार्ये एव वैरूपं साम, परिसामकार्ये तु इतराणि सामानि इति सिद्धान्तः । **के.**

* **वैरूप्यलक्षणः** वाक्यभेदः । 'जाघन्या पत्नीः संयाजयन्ति' इत्यत्र यदि जाघन्युद्देशेन च कर्म विधीयते पत्न्यश्चास्य विधीयन्ते ततः अनेकार्थविधानात् वैरूप्यलक्षणो वाक्यभेदः स्यात् । **वा.** ३।३।१०।२१. * वैरूप्यलक्षणः वाक्यभेद. । भेदनिरूपणं **मीको.** पृ. ३४६९ 'वाक्यभेदः' इति बिन्दौ बालग्रन्थे द्रष्टव्यम् । **बाल.** पृ. १८०–१८२.

* **वैशद्यं** अन्योन्यासंलग्नत्वं चरौ । **सु.** पृ. १३२७.

* **वैशम्पायनः** सर्वशाखाध्यायी । **भा.** १।१।८।३०.

* **वैशसं** विरोधः । **सु.** पृ. १३४.

* **वैशेषिकाः** शक्त्यभाववादिनः । **सु.** पृ. ११४१.

* **वैशेषिकादयः** स्वशास्त्रेणापि अनधिगतेन (कर्मसु) अनधिकारं वदन्ति । (तत्तु न युक्तम्) । **वा.** ३।८।८।१८.

* **वैशेषिकवत्** वैयाकरणानां न गुणाः परिसंख्यायन्ते । किं तर्हि ? अङ्गाङ्गिभावापेक्षया गुणगुणिव्यवहारः । **वा.** ३।१।६।१२ पृ. ६८५.

**✠ वैशेष्यात्तु तद्वाद इति न्यायः ।** अयमपि मल्लग्रामादिरूपलौकिकव्यवहारमूलकत्वाल्लौकिकेषु गणनीय इति । **साहस्री.** ३३९.

* **वैश्यः** अपि प्रजापालनेन राजशब्दभाग् भवति । परंतु तत्र राजशब्दो गौणः । **वि.** २।३।२. * वैश्यः द्वादशसु प्रक्रमेषु अग्निमादधीत । **भा.** ६।१।७।२८, * 'वैश्यो वैश्यस्तोमेन यजेत' इति । वैश्यसंबन्धात् । एवं सात्तद्रव्यमपि वैश्यस्यैव । ६।६।७।३७, * 'वैश्यो वैश्वदेवः' इत्यत्र वैश्वदेवशब्दः अर्थवादः न गुणविधिः,

स्तुत्यर्थवाद: । १।४।१२।२३-२, * 'वैश्य: शरदि अग्निमादधीत' । ६।१।७।२६, ११।३।२।२, * 'वैश्यं शरदि उपनयीत' । ६।१।७।३३. * **वैश्यस्य** आमिक्षा व्रतं ज्योतिष्टोमे क्रत्वर्थम् । व्रताधिकरणम् । ४।३।४। ८-९. * वैश्यस्य आर्त्विज्यं प्रतिषिद्धम् । **भा.** ६।६। ३।१८. * वैश्यस्य इव ब्राह्मणस्यापि इष्टिपूर्वकत्व–सोमपूर्वकत्वयोराधाने विकल्प: । अग्नीषोमीयपुरोडाशस्य तु ब्राह्मणे सोमात् ऊर्ध्वमुत्कर्ष: । **वि.** ५।४।४, * वैश्यस्य उपनयनं आधानं च शरदि । २।३।३, * वैश्यस्य ऋणत्रयापाकरणं नित्यम् । ६।२।११. * वैश्यस्यैव न केवलं किंतु वर्णत्रयस्याप्यधिकार: सामिधेनीसाप्तदश्यविशिष्टासु विकृतिषु । ६।६।७। ३६-३९. **मीको.** पृ. २८३ 'अधिकार: अध्वरकल्पादिषु॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैश्यस्य ज्योतिष्टोमे न्यग्रोधफलचमस: सोमस्य स्थाने न तु सोमभक्षस्तस्य । फलचमसश्च सोमविकार: । फलचमसस्य होम: दर्भतरुणकेन कर्तव्य: । वि. ३।५।१९. * वैश्यस्य ज्योतिष्टोमे फले चमस: इज्याविकार: न भक्षविकार: । भक्षसंबन्धात्तु हविष्ट्वात् स्यादेव । फलचमसाधिकरणम् । ३।५।१९।४७-५१. * वैश्यस्य ज्योतिष्टोमे फलचमस:, न सोमचमस: । **भा.** ३।६। १३।३६. * वैश्यस्य द्रव्यार्जने कृष्यादिरेवोपाय: । उपायान्तरे तु प्रत्यवाय: । वि. ४।१।२ वर्णकं ४, * वैश्यस्य प्रकृतावपि सामिधेनीसाप्तदश्यम्, विकृतौ न सर्वेषामेव । ३।६।३. * वैश्यस्य रायोवाजीयं ब्रह्मसाम कुर्यात् । भा. ६।१।७।१८, * वैश्यस्य रायोवाजीयं ब्रह्मसाम कुर्यात् इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम् । ६।३।२।४, * वैश्यस्य रायोवाजीयं ब्रह्मसाम द्वादशाहे । ६।६।३।१७. * वैश्यस्य व्रतं आमिक्षा ज्योतिष्टोमे । १०।८।१।१, १२।१।१४।३०. * क्षत्रियवैश्ययो: मधुशीर्षोर्न प्रतिषेध: (माध्वी गौडी) । अत्रविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेध: । **वा.** १।३।३।७ पृ. २०९ । पैष्ट्या: वर्णत्रये निषेध: । सु. पृ. १२५. * राजन्यवैश्ययो: सांनाय्ये भक्षं प्रतिषेधन्, असोमपीथत्वं हेतुमाह । **भा.** १२।४।१५।४५. * **वैश्यानां** ऋत्विक्त्वं नास्ति किंतु ब्राह्मणानामेव । १२।४।१५।४२-४७. **मीको.** पृ. २८४ 'अधिकार: आर्त्विज्ये ब्राह्मणस्यैव' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैश्यानां ज्योतिष्टोमे फलचमसो विधीयते 'स यदि राजन्यं वा वैश्यं वा याजयेत्॰' इत्यादिना । **भा.** १२।४।१५।४४, * वैश्यानां नाराशंसो द्वितीय: प्रयाज: । ६।६।१।१. * वैश्यानां राजन्यानां च ब्राह्मणानामिव ह्यार्षेय-मनुवत्कल्पौ विकल्पितौ । **संकर्ष.** ३।४।५. * वैश्यानां सत्राधिकारो नास्ति । ६।६।३।१६-२३. **मीको.** पृ. ३०२ 'अधिकार: सत्रे ब्राह्मणानामेव' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्यक्षत्रिययोरपि** ऋणत्रयापाकरणं नित्यम् । ६।२।११।३२ वर्णकं २. 'सोमविद्याप्रजाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **वैश्यनिमित्तकसामिधेनी**साप्तदश्येन नित्यपाञ्चदश्यस्य बाध । **बाल.** पृ. १३२.

* **वैश्यब्राह्मणयो:** राजसूये नाधिकार:, राजन्यस्यैव स: । **भा.** ११।४।३।१०.

* **वैश्यराजन्ययो:** यजमानयो: फलचमस: होमभक्षयो: । ३।५।१९।४७-५१. **मीको.** पृ. २८९२ 'फलचमसाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्यसामिधेनी**साप्तदश्यस्य नैमित्तिकस्य काम्येन एकविंशतित्वेन बाध: । बाल. पृ. १३३.

* **वैश्यस्तोम:** ज्योतिष्टोमपूर्वक: । **भा.** १०।४। २२।४३. * **वैश्यस्तोमं** सत्यपि सामर्थ्ये विप्रराजन्यौ न कुरुत: । वा. ३।३।७।१४ पृ. ८४३. * **वैश्यस्तोमे** अविरुद्धानां बृहद्रथंतरधर्माणां कण्वरथंतरे समुच्चय: । ९।२।१६।४७. **मीको.** पृ. १३५१ 'कण्वरथंतरे अविरुद्धानां॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैश्यस्तोमे कण्वरथंतरं पृष्ठम् । **भा.** ९।२।१६।४८. वैश्यस्तोमे 'कण्वरथंतरं पृष्ठं भवति', तच्च प्राकृतयोर्बृहद्रथंतरयोरुभयो: स्थाने पतितम्, तत्र समुद्रध्यान–निमीलनादीनां अविरुद्धधर्माणां समुच्चय: । 'उच्चैर्गेयं' 'नोच्चैर्गेयं' इत्यादीनां तु विरुद्धधर्माणां विकल्प: । इति **भाष्यमतम्** । बृहद्धर्माणां सर्वेषां रथंतरधर्माणां च सर्वेषां विकल्प: एवेति **वार्तिककारमतम्** । वि. ९।२।१६. * वैश्यस्तोमे कण्वरथंतरस्य पृष्ठस्तोत्रसाधनतया विहितस्य 'पुनान: सोम धारया' इति स्वयोनौ एव गानम् (न रथंतरयोनौ बृहद्योनौ वा) । १०।४।२२।४४-४७. **मीको.** पृ. १३४९ 'कण्वरथंतरस्य वैश्यस्तोमे॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैश्यस्तोमे कण्वरथंतरस्य पृष्ठस्तोत्रसाधनतया विहितस्य स्वयोन्युत्तरयोर्गानं न तु रथंतरायुत्तरयो: । १०।४।२३।४८-४९. **मीको.** पृ. १३५१ 'कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।



* **वैश्वकर्मणे** साकमेधीयैककपाले वरुणप्रघासगतकायैककपालधर्माणां अतिदेश: । **भा.** ७।१।५।२३.

* **वैश्वकर्मणैककपालैन्द्राग्नयो:** साकमेधीययो: चातुर्मास्यवारुणप्राघासिककायैककपालैन्द्राग्नसंबन्धिसार्थवादविधिकाण्डस्यातिदेश: । **भा.** ७।१।४।२२.

* **वैश्वदेवं** पर्व 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति देशस्य नियमविधि: नानुवाद: । ४।२।९।२३ -२४.

* **वैश्वदेव:** ग्रहयजि: ज्योतिष्टोमे वर्तते । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये अङ्गदेवता अपि । **भा.** १२।१।१२।२६. * वैश्वदेवश्चरु: आग्रयणगत: दर्शपूर्णमासयोर्विकृति: । **भाट्ट.** १२।२।१४. * '**वैश्वदेवं** चरुं निर्वपेत् भ्रातृव्यवान् ...... यदधोऽवमृज्येत् यच्च स्फ्य आश्लिष्येत् तद् विष्णव उरुक्रमायावद्येत्' अत्र आवाहनकाले विष्णुरुरुक्रमो नावाहयितव्य: । सति तु निमित्ते तद्याग: एव कर्तव्य: । १०।१।१।१-३ वर्णकं ३. * 'वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा' इयं अवेष्टिषु तृतीया राजसूये । **भाट्ट.** ११।४।३. * **वैश्वदेवेन** पर्वणा गवां प्रभूतपयस्कत्वे वसन्तेऽपि यजेत । **संकर्ष.** ३।१।२३, * 'वैश्वदेवेन (चातुर्मास्येषु) पशुकामो यजेत यस्मिन्नृतौ प्रभूतं गोषु पय: स्यात्' । ३।१।२३. * 'प्राचीनप्रवणे **वैश्वदेवेन** यजेत', 'वसन्ते वैश्वदेवेन यजेत' चातुर्मास्येषु । **भा.** १।२। १।१. ११।२।३।१३. * **वैश्वदेवस्य** चरुस्तु ऐन्द्राग्न–अग्नीषोमीयविकृतित्वे अनियत: । **बाल.** पृ. १२०. * **वैश्वदेवे** आग्रयणे वैश्वदेविकतन्त्रनियमो नास्ति । १२।२।१५।३५-३७. **मीको.** पृ. ८५७ 'आग्रयणे ऐन्द्राग्नवैश्वदेवयो:' इत्यत्र अधिकरणं द्रष्टव्यम् । * वैश्वदेवे कर्मणि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र वाजिनं कर्मान्तरमेव न तु आमिक्षागुणके कर्मणि गुणविधि: । २।२। ५।२३-२४. * वैश्वदेवे त्रिंशत्संपत्तिराहुतीनाम् । 'नव प्रयाजा:, नवानुयाजा:, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति, आहुतीनां संपत्त्यै त्रिंशत्त्वाय' । **भा.** १२।१।८।४, * वैश्वदेवे द्यावापृथिव्य एककपाल: चातुर्मास्येषु । ७।१।४।२२. * वैश्वदेवे पर्वणि चातुर्मास्यगते वैश्वदेव्यामिक्षा पयस एव विकारो न दध्नो न चोभयो: । ८।२।४।१९-२३. * वैश्वदेवे पर्वणि (चातुर्मास्येषु) दध्यानयनस्य आमिक्षैव प्रयोजिका न वाजिनमपि । **वि.** ४।१।९. * वैश्वदेवे पर्वणि नोत्तरवेदिमुपवपन्ति । **भा.** ७।३। ८।२०. * वैश्वदेवे पर्वणि (चातुर्मास्येषु) वाजिननाशे आज्येन वाजिनयागस्य समापनम् । **भाट्ट.** ४।१।९. * वैश्वदेवे वरुणप्रघासेषु च एककपालब्राह्मणमाम्नातम्, तस्य च अर्थवादसहिताङ्गविधिकाण्डस्य साकमेधेषु अतिदेश: न तु अर्थवादमात्रस्य । **वि.** ७।१।४.

**वैश्वदेवे विकल्प इति चेत् । १।४।११। १३ ॥**

चातुर्मास्ये प्रथमे पर्वणि वैश्वदेवे संदेह:— 'वैश्वदेवेन यजेत' इति किं वैश्वदेवशब्दो गुणविधि:, कर्मनामधेयमिति । अत्र प्रभाकरेण संगतिलोभादिदं तदधिकरणमुपवर्णितम् । वैश्वदेवशब्दस्य न तावत् कर्मनामधेयत्वम्, विनैव मत्वर्थलक्षणया तद्धितान्तत्वेन गुणविधानेऽपि कर्मसामानाधिकरण्योपपत्ते: । नापि गुणविधानम्, प्रकृताग्न्यादीनामग्नीषोमीयसाप्तदेवतावरुद्धत्वेन देवतारूपगुणान्तरविधानासंभवात् । नापि विश्वदेवविशिष्टकर्मान्तरविधानम्, प्रकृतविश्वेदेवविशिष्टामिक्षायागप्रत्यभिज्ञानेन कर्मान्तरस्य बुद्धौ निवेशयितुमशक्यत्वात् । तस्मान्न गुणविधानम्, नापि कर्मनाम-

धेयत्वमित्यनध्यवसायादप्रामाण्यमिति पूर्वः पक्षः । **सिद्धान्तस्तु**– यथाभाष्यं नामधेयत्वेनैवेति । तदयुक्तम् । वक्ष्यमाणपूर्वपक्षन्यायेन गुणविधित्वेनैव अध्यवसायोपपत्तेः यत्किञ्चिदेतदिति यथावार्तिकमेवाधिकरणं प्रस्तूयते । नामधेयपञ्चकं सापवादं निरूप्य प्रसङ्गेनाधिकरणत्रये द्रव्यनामसु प्रवृत्तिनिमित्ते निर्णीते इदानीमेकदेशगतप्रवृत्तिनिमित्तेनापि प्रकृतानेककर्मनामधेयत्वं भवतीति प्रतिपादयितुं पुनरारम्भः । अत्रायं पूर्वपक्षिणोऽभिसंधिः । वैश्वदेवशब्देन हि देवताविशिष्टं द्रव्यं प्रतिपाद्यते । द्रव्यं च प्रकृतेषु यागेषु प्राप्तत्वान्न विधिविषयः । किन्तु लोहितोष्णीषन्यायेन विशेषणीभूताप्राप्तदेवताविषयोऽयं विधिः । न च देवताया द्रव्यविशेषणत्वम्, मत्वर्थलक्षणया ‘ साऽस्य देवता ’ इति ( पा. ४।२।२४ ) तद्धितस्यैव विशिष्टविषयत्वात् । अतो नात्र गुणविधौ मत्वर्थलक्षणादोषः । प्राप्ते कर्मणि देवतारूपैकगुणविधानात् न च वाक्यभेदोऽपि । एकस्मिन्नेव आमिक्षायागे विश्वदेवप्राप्तेः इतरेष्वप्राप्तत्वान्न तत्प्रख्यन्यायेन वैयर्थ्यम् । न च विश्वेदेवैः श्येनवत् कस्यचित्कर्मणः सादृश्यप्रतिपादकं वचनमस्ति, येन तद्व्यपदेशविषयत्वम् । न चात्र फलोपादानमस्ति, येन वाजपेयवद्द्वैरूप्यम् । अतो गुणविधित्वप्रतिपक्षसकलहेत्वभावात् गुणविधित्वमेव ।

किञ्च कर्मनामधेयत्वे कृत्स्नमेव वाक्यमनुवादकं सदनर्थमेव आपद्येत । न च ‘ प्राचीनप्रवणे वैश्वदेवेन यजेत ’ ‘ वसन्ते वैश्वदेवेन यजेत ’ इति प्रयोगवाक्यापेक्षितसमुदायीकरणमेव अनुवादप्रयोजनमिति वक्तव्यम् । एतद्वाक्यन्यायेन वैश्वदेवपदस्य प्रयोगवाक्येऽपि समुदायानुवादकत्वसंभवात् । न च नामधेयप्रवृत्तिनिमित्तमप्यस्ति । प्रत्येकं समुदाये च विश्वेदेवसंबन्धाप्राप्तेः । तदुक्तम्– ‘ **न समस्तानुवादस्य किञ्चिदस्ति प्रयोजनम् । विश्वे देवा न च प्राप्ताः प्रत्येकं संहतेषु च ॥** ’ इति (वा. १।४।१०।१३ पृ. ३४६) । अतो गत्यन्तराभावात् उत्पत्तिशिष्टगुणावरोधेऽपि ‘ आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ’ इति न्यायेन वा निष्कृष्टयागानुवादेन वा प्रकृतेष्वामिक्षायागव्यतिरिक्तेषु विश्वेदेवदेवतानां विधानमिति । अतो ‘ वैश्वदेवेन यजेत ’ इत्यत्र वैश्वदेवपदे विश्वेदेवविधानाश्रयणादग्न्यादिभिर्विश्वेदेवानां विकल्प इति । **एवं प्राप्तेऽभिधीयते ।**

**न प्रकरणात्प्रत्यक्षविधानेन न हि प्रकरणं द्रव्यस्य । १४ ॥**

**अयमभिप्रायः**––भवेदेवमुत्पत्तिशिष्टगुणावरोधेऽपि गुणविधानं यद्यगतिर्भवेत् । अस्ति तु तत्प्रख्यन्यायेन नामधेयत्वमेव गतिः । ननु ‘ वैश्वदेवेन यजेत ’ इति वैश्वदेवपदस्य प्रकृतसकलयागनामधेयत्वमपेक्षितम् । न चामिक्षायागव्यतिरिक्तेषु यागेषु वाक्यान्तरेण विश्वेदेवप्राप्तिरस्ति । तत्कथं तत्प्रख्यन्यायेनापि नामधेयत्वमुच्यते ! स्यादेवं यदि प्रकृतेषु सर्वकर्मसु मुख्यमेव वैश्वदेवपदं ब्रूमः । अपि तर्हि लाक्षणिकम् । लक्षणा चैकदेशद्वारेणापि छत्रिन्यायेन समुदाये नानुपपन्ना । न च एवं सति लक्षणादोषादेव गुणविधित्वमिति वाच्यम । उत्पत्तिशिष्टदेवताख्यगुणावरुद्धे कर्मणि विषमशिष्टाष्टदोषदुष्टविकल्पापादकस्य देवतान्तररूपगुणविधानस्य लोकप्रसिद्धच्छत्रिन्यायेन अनुवादगतलक्षणातोऽतिजघन्यत्वात् । तदुक्तम्– ‘ **गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपरः । विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥** ’ इति ( वा. १।४।१० पृ. ३४७ ) । न च सिद्धान्ते निष्प्रयोजनः सर्वानुवादः । ‘ प्राचीनप्रवणे वैश्वदेवेन यजेत ’ इति प्रयोगवाक्यापेक्षितसमुदायकरणेनैव प्रयोजनवत्त्वात् । न च एतद्वाक्यन्यायेनैव प्रयोगवाक्येऽपि वैश्वदेवपदस्य समुदायकरणसंभवाद्वैयर्थ्यमस्येति **वाच्यम** । देशसंबन्धपरस्य प्रयोगवाक्यस्य सति संभवे समुदायापादकत्वेनोभयपरत्वगौरवाश्रयणायोगात् ।

किञ्च, वैश्वदेववाक्यस्य असति समुदायकरणे देशसंबन्धकरणेन प्रयोजनवतः प्रयोगवाक्यस्य मुख्यवैश्वदेवपदानुरोधेनैकवचनानुरोधेन चैकस्यैव आमिक्षायागस्य देशविधानेनार्थवत्त्वात् न वैश्वदेवावैश्वदेवलक्षणार्थत्वे कारणमस्ति । अनुवादवाक्यस्य तु प्रयोजनान्तराभावात् समुदायकरणार्थं वैश्वदेवावैश्वदेवलक्षणार्थत्वं युक्तमेव ।



तस्मात् ‘ वैश्वदेवेन यजेत ’ इत्यत्र लक्षणया वैश्वदेवावैश्वदेवप्रकृतसकलयागनामधेयमेव वैश्वदेवपदमिति । **प्रयोजनम्**––पूर्वपक्षेऽग्न्यादिभिर्विश्वेदेवानां विकल्पः । सिद्धान्ते तु नियमेव अग्न्यादिदेवतावत्त्वमेवेति । **सूत्रं तु**– ‘न प्रकरणात्’ विश्वेदेवानां सर्वैः संबन्धः । प्रत्यक्षविधानेन अग्न्यादिभिः संबन्धात् । ‘ न हि प्रकरणं द्रव्यस्य ’ प्रत्यक्षविहितदेवतासंबन्धबाधने प्रकरणं न समर्थमित्यर्थः । **तौता.**

**वैश्वदेवे विकल्प इति चेत् । १।४।१०। १३ ॥**

चातुर्मास्येषु प्रथमपर्वणि श्रुतं ‘ वैश्वदेवेन यजेत ’ इति । प्रथमे पर्वणि तावत् ‘ आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम् ’ इत्यादिना अग्न्यादयः अष्टौ देवता उक्ताः । ‘ वैश्वदेवेन यजेत ’ इत्यनेन तु विश्वदेवलक्षणदेवतारूपो गुणो विधीयते इति वैश्वदेवे पर्वणि अग्न्यादिभिः विश्वेषां देवानां विकल्पः स्यात् इति चेत् पूर्वपक्षी ब्रूयात् ।

**न वा प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य । १४ ॥**

चातुर्मास्येषु प्रथमे पर्वणि विहिताभिः अग्न्यादिभिः देवताभिः ‘ वैश्वदेवेन यजेत ’ इति विहितानां विश्वेषां देवानां विकल्पः इति पूर्वपक्षिणा यदुक्तं तन्न । वाशब्दोऽपि पूर्वपक्षव्यावर्तनमेव द्योतयति । विश्वे देवाः प्रकरणात् स्युः, अग्न्यादयस्तु ‘ आग्नेयमष्टाकपालम् ’ इत्यादिना उत्पत्तिविधौ प्रत्यक्षविधानात् स्युः । प्रत्यक्षविधानं न प्रकरणात् बलवत् । तस्मान्न विकल्पः । द्रव्यस्य नहि प्रकरणं अपेक्ष्यते यदा द्रव्यस्य अष्टाकपालादेः अग्न्यादिसंबन्धो निर्धार्यते न तदा प्रकरणापेक्षा । अथवा यत् द्रव्यस्य प्रकरणं तत् न वैश्वदेववाक्येन आश्रितम् । किंच नहि प्रकरणं श्रुतस्य द्रव्यस्य अग्न्यादिरूपस्य बाधने समर्थम् । तस्मात् वैश्वदेवशब्दः कर्मनामधेयं न गुणविधायकम् ।

**मिथश्चानर्थसंबन्धः । १५ ॥**

चातुर्मास्येषु वैश्वदेवपर्वणि अग्न्यादयो देवता विहिताः । ‘ वैश्वदेवेन यजेत ’ इति वैश्वदेवशब्देन विश्वदेवरूपगुणविधिः विकल्पेन स्यात् इति गुणविधिपूर्वपक्षे दोषमाह । वैश्वदेवपर्वणि अष्टौ यागाः । तत्र वैश्वदेवी आमिक्षा उक्ता । पुनश्च यदि अग्न्यादीन् उद्दिश्य तत्स्थाने विश्वदेवदेवतारूपगुणविधिः स्यात् आमिक्षावाक्ये विश्वेषां देवानां उद्देश्यत्वं स्वीकार्यं वैश्वदेवेन इति तु तेषां विधेयत्वं इति एकस्यैव देवताविशेषस्य मिथः उद्देश्यत्वविधेयत्वाभ्यां संबन्धः अनर्थः अशक्यः स्यात् । तस्मान्न गुणविधिः ।

किंवा नामधेयगुणविधिरूपयोः अर्थयोः प्रयोजनयोः सकृदुच्चरितेन वैश्वदेवशब्देन सह उद्देश्यविधेयभावलक्षणः संबन्धो न युक्तः । तस्मात् कर्मनामधेयमेव न गुणविधिः ।

**परार्थत्वाद् गुणानाम् । १६ ॥**

चातुर्मास्येषु प्रथमे पर्वणि ‘ वैश्वदेवेन यजेत ’ इति श्रुतम् । वैश्वदेवशब्दोऽयं कर्मनामधेयम् । न विश्वदेवदेवतारूपगुणविधायकम् । अत्र पर्वणि अष्टौ यागा विहिताः । विश्वदेवरूपगुणविधिपक्षे तु एक एव यागः स्यात् एकदेवताकत्वात् । पुरोडाशादिद्रव्याणां भिन्नत्वेऽपि तेषां गुणानां सतां परार्थत्वात् यागार्थत्वात् यागभेदकत्वानुपपत्तेः । गुणावृत्त्या प्रधानावृत्तेरयुक्तत्वात् । एकयागत्वे च ‘त्रिंशदाहुतयो हूयन्ते’ इति नावकल्पेत । तस्मात् वैश्वदेवशब्दः कर्मनामधेयम्, न देवतारूपगुणविधायकः । ‘ मिथश्चानर्थसंबन्धः परार्थत्वाद् गुणानाम् ’ इत्येकं सूत्रम् । गुणानां द्रव्याणां परार्थत्वात् यागार्थत्वात् एकदेवताकत्वेन मिथः सह प्रदाने क्रियमाणे त्रिंशत्संख्याभावात् अनर्थसंबन्धः स्यात् इति तदर्थः । इति वार्तिकम् । **के.**

* अर्थवादानां अवयवार्थपरत्वाभावे ‘ वैश्वदेवे विकल्प इति चेत्० ’ इत्यधिकरणविरोधः । तत्र ‘यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् ’ इति निर्वचनमाश्रित्य वैश्वदेवशब्दस्य नामधेयत्वव्यवस्थापनम् । **कु.** १।२।१।१८.

* ‘ **वैश्वदेवी आमिक्षा वाजिभ्यो वाजिनम्** ’ इत्यत्र सप्तप्रकारं संनिकर्षविप्रकर्षाभिधानम् । १ आमिक्षायां सामान्यतः देवतान्वयाभिधानं न वाजिनस्य

इति प्रथमः प्रकारः । २ ददातिकल्पनाऽकल्पनरूपः द्वितीयः । ३ सामानाधिकरण्यवैयधिकरण्यलक्षणः तृतीयः । ४ श्रुतिलक्षणात्मकः चतुर्थः । ५ शब्दसंदेहलक्षणः पञ्चमः । ६ उत्पत्तिशिष्टत्व–उत्पन्नशिष्टत्वलक्षणः षष्ठः । ७ रूढियौगिकत्वलक्षणः सप्तमः । सु. पृ. ८३१–८३३. * 'वैश्वदेवी आमिक्षा वाजिभ्यो वाजिनम्' इत्यत्र द्रव्यदेवतालक्षणरूपभेदात् कर्मभेदः चातुर्मास्यवैश्वदेवपर्वणि । वि. २।२।९. * वैश्वदेवीं कृत्वा प्राजापत्यैः पशुभिश्चरन्ति वाजपेये । भा. ५।२।८।२, ११।२५।२४. * 'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः' इत्यस्य फलं इह जन्मन्येव, सति तु प्रतिबन्धे जन्मान्तरेऽपि । ४।३।११।२७–२८ वर्णकं २. **मीको.** पृ. १३२८ 'ऐहिकामुष्मिकत्वम्' इत्यत्र द्रष्टव्यम् ।

**वैश्वदेवाधिकरणम् ।** वैश्वदेवशब्दो यागविशेषनामधेयम् ॥

**वैश्वदेवे विकल्प इति चेत् । १।४।१०।१३॥**

**भाष्यम्—** चातुर्मास्येषु प्रथमे पर्वणि वैश्वदेवे संदेहः 'वैश्वदेवेन यजेत' इति किं वैश्वदेवशब्दो गुणविधिरुत कर्मनामधेयमिति । इति यदि संदेहो न संदेहः । वैश्वदेवे विकल्पः । गुणविधिर्वैश्वदेवशब्दः । गम्यते हि गुणविधानम् । विश्वे देवा विधीयन्ते आग्नेयादिषु यागेषु । तत्राग्न्यादीनां विश्वैर्देवैर्विकल्पः । एवं प्रसिद्धिरर्थवती भविष्यति ।

**वा—** तद्धितोपात्तत्वात् मत्वर्थस्य न लक्षणा । न चानेकार्थविधिः येन वाक्यं भिद्येत । न च समस्तेषु कर्मसु तत्प्रख्यानशास्त्रसद्भावः । न च यथाऽग्निहोत्रे समासोऽनभिव्यक्तस्तथा अत्र तद्धितः । सर्वत्र ह्येवंरूपा एव देवताविधयो भवन्ति । न च श्येनयागवद्विश्वैर्देवैः कस्यचिद्व्यपदेशः । न च फलपदाश्रवणाद्वाजपेयवद्वैरूप्यं यजेः, शक्यते हि केवलयज्यनुवादेन देवता विधातुमित्यारम्भः । सर्वत्र च नामचिन्तानुसारान्न बर्हिराज्यादिविचारेण व्यवधानम् । **अथवा** नामधेयान्यपि यौगिकानि निर्मन्थ्यादिष्वप्राप्तार्थत्वाद्विधिफलानि दृष्टानि वैश्वदेवशब्दोऽपि तथाऽस्त्वित्यनन्तरं संबन्धः । तत्र विकल्प इति गुणविधेः फलेन प्रतिज्ञानम् । एवं हि शङ्क्यते । यद्ययं गुणविधिर्न तर्हि कर्म विधीयते । न चापि दूरस्थमनुवदितुं शक्यते तत्र, प्रकृताग्नेयादिकर्मानुवादेनाशक्यं देवताविधानमुत्पत्तिवाक्यशिष्टदेवतान्तरावरोधादत आह —विकल्पस्ताभिः सह भविष्यति । न चात्रापि सूत्रकारभाष्यकाराभ्यामौत्पत्तिकबलीयस्त्वं क्वचित् दर्शितमिति तुल्यबलत्वं मन्यते । किंच '**न समस्तानुवादस्य किंचिदस्ति प्रयोजनम् । विश्वे देवा न च प्राप्ताः प्रत्येकं संहतेषु वा ॥**' यदि हि गुणं न विदध्यात्ततः समस्तमेव वाक्यमनर्थकं स्यात् । विश्वेदेवसंबन्धश्च न प्रकृतानां प्रत्येकमस्ति, न समुदाये येनानूद्येत । न च आमिक्षायागस्य केवलस्य यजिना ग्रहणम् । न च वैश्वदेवशब्दस्तद्धितपरत्वेनेष्यते । तस्मात् सप्तसु यागेषु गुणविधिः । तत्रैतत् स्यात् । एक एव शब्दः सप्तसु विधिरामिक्षायां चानुवाद इति विप्रतिषिध्येत । तन्न । '**प्रकृतत्वाविशेषेऽपि यत्र प्राप्तिर्न विद्यते । विधेस्तत्रोपसंहारान्न वैरूप्यं भविष्यति ॥**'

**न वा प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य । १४ ॥**

**भाष्यम्—** नैतदेवम् । प्रत्यक्षश्रुतिविहिता अग्न्यादयस्तेषां यागानाम्, विश्वेदेवा वाक्येन प्रकरणात्तेनैव नान्येनेति गम्यते । न चायं विषमशिष्टो विकल्पो भवितुमर्हति । न हि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम् । तस्मात् कर्मनामधेयम् ।

**वा—** अत्रोच्यते । नायं प्रकृतेषु गुणविधिरुपपद्यते । कथम् ? '**गुणान्तरावरुद्धत्वान्नावकाशो गुणोऽपरः । विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥**' अग्न्यादयो ह्युत्पत्तिवाक्ये तद्धितश्रुत्याऽष्टाकपालादीनां देवता, विश्वेदेवा वाक्येन । ननु अत्राप्यष्टाकपालादिसंबन्धाद्वाक्यमेव । न । तद्धितेन द्रव्यविशेषस्य कृते देवतासंबन्धे वाक्येन विशेषणविशेष्यभावमात्रकरणात् । वैश्वदेवशब्देऽपि तथेति चेत् । न । यागलक्षितद्रव्यसंबन्धकल्पनाविप्रकर्षात् । न तावद्वैश्वदेवेनेति प्रकृतमप्रकृतं वा द्रव्यं देवतासंबन्धि श्रूयते । तत्र यजेतेति



सामानाधिकरण्यादेवं तावद्विज्ञायते वैश्वदेवेन यागेनेति । ततश्चान्यथा यागसंबन्धानुपपत्त्या तत्साधनं द्रव्यं लक्षणया देवता स्कन्दति । वाक्येन च यागमात्रसंबन्धे सति प्रकरणादिदं कल्पनीयं तेनैवाऽऽग्नेयादिना यागेन वैश्वदेवेन यजेत नान्येनेति । न त्वग्न्यादिविधौ काचित् लक्षणापेक्षा प्रकरणापेक्षा चेति वैषम्यम् । 'नहि प्रकरणं द्रव्यस्य' इति । यदा द्रव्यस्याग्न्यादिसंबन्धो विधीयते न तदा प्रकरणापेक्षा इत्यर्थः । अथवा यद्द्रव्यस्य प्रकरणं न तद्वैश्वदेववाक्येन आश्रितम् । भाष्ये तु द्रव्यशब्दो वस्तुवाची । न हि श्रौतस्याग्न्यादिद्रव्यस्य देवताभूतस्य प्रकरणं बाधकम्, वैयधिकरण्यं वा, द्रव्यस्य यत्संबन्धित्वेन श्रुतमग्न्यादि तस्य प्रकरणं न बाधकमिति । प्रकृतयजिबुद्धेश्च न दूरस्थानुवादेन गुणविधिर्विशिष्टपूर्वकर्मविधानं वा । विप्रकीर्णयागैकीकरणाच्च समुदायानुवादोऽर्थवान् । न हि 'वसन्ते वैश्वदेवेन' 'प्राचीनप्रवणे वैश्वदेवेन' इत्यादि विधानं परस्परसहितानामष्टानां हविषां समुदायपदादृतेऽवकल्पते । तस्मादेकदेशस्थैरपि विश्वैर्देवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्वम् ।

**मिथश्चानर्थसंबन्धः । १५ ॥**

**भाष्यम्—** अथोच्येत वैश्वदेव इत्यनेन शब्देन प्रत्यक्षमग्न्यादिगुणविशिष्टो यागगणो लक्ष्यते । वैश्वदेवी हि तत्राऽऽमिक्षा समवैति । यदि वैश्वदेवशब्देन यागगणो लक्ष्यते न तर्हि विश्वेदेवा विधीयन्ते । कथं सकृदुच्चरितो वैश्वदेवशब्दो यागगणं लक्षयिष्यति विश्वांश्च देवान् विधास्यतीति नायं वैश्वदेवशब्दस्य विश्वैर्देवैर्मिथः संबन्धो घटते । तस्मात् कर्मनामधेयमेव न गुणविधिरिति ।

**वा — 'वैश्वदेवमुपादाय देवता नोपदिश्यते । सह विध्यनुवादौ हि नैकः शब्दः समश्नुते ॥'** अथ वा यदुक्तं निर्मन्थ्यादिवन्नामैव सद्गुणमपि विधास्यतीति । तत्र अभिधीयते । मिथश्च नामगुणविध्यर्थयोरसंबन्धः । निर्मन्थ्यस्तु गुणविधिरिति ।

**परार्थत्वाद् गुणानाम् । १६ ॥**

**भाष्यम्—** परार्थाश्च गुणाः । ते न शक्नुवन्ति प्रधानमावर्तयितुम् । तेन सकृद्यागः कर्तव्यो न गुणानुरोधेनाऽऽवर्तितुमर्हति । संप्रतिपन्नदेवतत्वाच्च न विरोधः । तत्रैकस्यां प्रधानाहुतौ त्रिंशदाहुतयो हूयन्ते इति त्रिंशत्संख्यासंपत्तिः आहवनीयाहुतीनां नावकल्पते । तस्मात् कर्मनामधेयमिति सिद्धम् ।

**वा—** पूर्वेणैकसूत्रमपि संभवति । मिथः सह प्रदाने क्रियमाणे त्रिंशत्संपत्त्यभावादनर्थसंबन्धः स्यात् । कुतः ? '**हविषो गुणभूतत्वान्न कर्मावृत्तिहेतुता । देवतैक्यात्सह त्यागो लाघवाद्धि प्रसज्यते ॥**' तेन सकृत् त्यागः कर्तव्य इति सत्यां सहप्रदानशक्तौ नाऽऽवृत्तिर्युक्ता । संप्रतिपन्नदेवतात्वाच्च सहप्रदानमविरुद्धं शक्यं कर्तुं ततश्च त्रिंशत्त्वविरोधः । त्रिंशत्पूरणं च केषांचिदेवम्, नव प्रयाजाः, नवानुयाजाः, द्वावाघारौ, द्वावाज्यभागौ, अष्टौ प्रधानाहुतय इति । अपरेषां तु स्विष्टकृद्वाजिनेज्याग्रहणादाघारौ न गणितौ । सर्वथा तु प्रधानाहुतिभेददर्शनसिद्धिः ।

**शा—** चातुर्मास्येषु प्रथमे पर्वणि अष्टौ यागाः श्रूयन्ते– 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्' इति । तत्संनिधौ इदमाम्नायते 'वैश्वदेवेन यजेत' इति । तत्र संशयः किं यजेतेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः विश्वेदेवा देवता विधीयन्ते किंवा तेषामेव नामधेयमिति । '**तत्र नामत्वपक्षे स्याद्वाक्यमेतदनर्थकम् । देवतातो विधेया स्यात् गत्यभावाद्विकल्प्यते ॥**' नामत्वपक्षे हि तस्य अविधेयत्वात् यागस्य च अरूपत्वेन अविधेयत्वात् समस्तवाक्यानर्थक्यप्रसङ्गः । तस्मात् गुणविधिः । ननु अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरं अनवकाशमिति चेत्, न विकल्पसंभवात् । न च अत्रापि सूत्रभाष्यकाराभ्यां उत्पत्तिशिष्टप्राबल्यं कथितमिति तुल्यबलतां मन्यते । ननु च गुणाधिकरणे बलाबलं वक्ष्यते तेन गतार्थमिति चेन्न, आनर्थक्याधिक्यात् ।

वक्ष्यति हि श्रुतिलिङ्गाधिकरणे ' दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकं भवति ततो विपरीतो बाधो भवति ' इति । तदिहाप्यविधीयमाने गुणे समस्तस्यैव वाक्यस्य आनर्थक्यप्रसङ्गात् देवतैव विधातव्या । सा च गत्यभावात् उत्पन्नशिष्टाऽपि उत्पत्तिशिष्टैरग्न्यादिभिर्विकल्पयिष्यते इति । स्यादेतदेवं यदि वाक्यानर्थक्यं स्यात् । तत्तु अनुवादत्वेऽपि समुदायीकरणेन अर्थवत् । नहि नानावाक्यचोदितानां आग्नेयादीनां एकशब्दोपादानात् ऋते समुदायभावापत्तिः एकसंज्ञासंबन्धो वा लभ्यते । सति तु अनुवादे तेनैवैकेन निमित्तेन एकप्रतीत्या रूढानां एकसमुदायत्वं एकनामधेयत्वं च लभ्यते । ततश्च प्राचीनप्रवणे ' वैश्वदेवेन यजेत ' इत्येवमादिषु वैश्वदेवनामकस्य आग्नेयादियागसमुदायस्य ग्रहणं सिद्धं भवति । इतरथा हि आमिक्षायागस्यैव वैश्वदेवत्वप्रत्यक्षप्रत्यभिज्ञानात् प्राचीनप्रवणादिसंबन्धः स्यात् । तस्मात् समुदायानुवादः । तत्र च यद्बहुत्वयोगेन एकदेशदेवतात्वेन वा विश्वेषां देवानां समवायात् तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः ।

**सोम**-पूर्वत्र यथा निर्मन्थ्यशब्दे उपसर्जनभूतमन्थनविधिः, एवं इहापि उपसर्जनविधिरिति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु** - वैश्वदेवशब्दे गुणविधानात् विकल्प इति चेदिति ।

**वि—** ' चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिके । वैश्वदेवेति शब्दोक्तो गुणः संघस्य नाम वा ॥, नामत्वे रूपराहित्यादविधिर्गुणता ततः । अग्न्यादिभिर्विकल्प्यन्ते विश्वेदेवास्तु सन्तु ॥ अनूद्याष्टौ यजेतेति तत्रैव नाम वर्णितम् । अविधित्वेऽप्यर्थवत्स्यान्नाम प्राक्प्रवणादिषु ॥ इज्यन्तेऽत्र यजन्ते वा विश्वेदेवा इतीदृशी । निरुक्तिर्न विकल्पः स्यादुत्पत्त्युत्पन्नशिष्टतः ॥ ( गुरुमतमाह- ) गुणनामत्वसंदेहादप्रमा चोदनेति चेत् । नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात् ॥ '

**भाट्ट—** चातुर्मास्येषु वैश्वदेवे प्रथमे पर्वणि आग्नेयादीनष्टौ यागान् विधाय ' वैश्वदेवेन यजेत ' इति श्रुतम् । तत्र वैश्वदेवशब्दः गुणविधिः कर्मनामधेयं वेति चिन्तायां नामधेयत्वे समस्तवाक्यस्य वैयर्थ्यप्रसङ्गात् अगत्या आग्नेयादिषु सन्तु देवताविधिः । आमिक्षायागे विश्वदेवदेवतायाः प्राप्तत्वात् देवताविशिष्टयागान्तरविधानं वा, गुणात् । एतस्मिन्नेव वा कर्मणि आमिक्षावाक्येन द्रव्यमात्रविधानम् । एवं च 'अष्टौ हवींषि' इति लिङ्गदर्शनस्याप्युपपत्तिः । इति **प्राप्ते**, नाग्नेयादिषु गुणविधिः उत्पत्तिशिष्टदेवतावरोधात् । नापि यागान्तरविधिः भेदबोधकप्रमाणानां नामत्वेनोपपत्तौ विधिगौरवापादकभेदबोधकत्वानुपपत्तेः । अत एव नामिक्षावाक्येऽपि द्रव्यमात्रविधानं ' आग्नेयमष्टाकपालं निर्वपेत् ' इत्याग्नेयादिवाक्यस्थस्य निर्वपेदित्यस्य विशिष्टविधायकस्य आमिक्षावाक्येऽनुषक्तस्य द्रव्यमात्रविधायकत्वे वैरूप्यापत्तेश्च । अतः आग्नेयादीनामष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः उत्पत्तिशिष्टदेवतावरोधसहकृततत्प्रख्यन्यायात् । प्रवृत्तिनिमित्तं च विश्वदेवदेवताजन्यामिक्षायागघटितसमुदायाश्रयत्वम् । वाक्यं च समुदायसिद्ध्यर्थं समुदायिनामनुवादकम् । तत्प्रयोजनं च अष्टानामपि यागानां ' वसन्ते वैश्वदेवेन यजेत ' इति वसन्तादिसंबन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसंबन्धसिद्धिः । इतरथा आमिक्षायागस्यैव विश्वदेवदेवताकत्वात् वसन्तादिसंबन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसंबन्धापत्तेः इतरेषामङ्गत्वापत्तिरिति **कौस्तुभे** स्पष्टम् ।

**मण्डन** — ' वैश्वदेवे तु नामता । '

**शंकर**— ' वैश्वदेवे च नामता । '

* वैश्वदेवाधिकरणं उत्पत्तिशिष्टबलीयस्त्वव्युत्पादनार्थम् । सु. पृ. ४७०, * वैश्वदेवाधिकरणम् । १।४।१०।१३-१६ । गुणविशिष्टस्यापि कर्मणो विहितस्य विशिष्टविध्यन्यथानुपपत्तिप्रसूतेन विधिना विशेष्यस्यापि विशेषणवत् विधानात्, शुद्धानुवादेनापि वाक्यान्तरस्थस्यापि गुणस्य स्ववाक्यस्थवत् बाधवीयस्त्वाविशेषाद्विकल्पेन विधानोपपत्तेः उत्पत्तिशिष्टेनापि सोमेन उत्पन्नशिष्टस्य खनित्रादेर्बाधायोगात् उद्भिदादिशब्दानां ज्योतिष्टोमे गुणविधित्वोपपत्तेः उत्पत्तिशिष्टबलीयस्त्वेन गुणविधित्वनिरासाय उत्पत्तिशिष्टबलीयस्त्वसिद्ध्यर्थं विशिष्टविधिव्युत्पादनं व्यर्थमित्याशङ्क्य अनुष्ठानायोग्यत्वेन शुद्धस्य विधातुमशक्यत्वात् ' अग्निहोत्रं जुहोति ' इत्यादावपि सामान्यतो द्रव्यदेवताविशिष्टस्यैव विधेयत्वाभ्युपगमात् विशिष्टविधौ स्ववाक्यश्रुतद्रव्यादिविशेषविशिष्टस्यैव प्राप्तत्वेन अनुवादापत्तेः तादृशेनैव च नैराकाङ्क्ष्ये स्ववाक्यश्रुतगुणविरोधिगुणान्तरविध्यनुपपत्तेः विशिष्टविधौ सति उत्पत्तिशिष्टेन उत्पन्नशिष्टस्य बाधसिद्धिः इति विशिष्टविधिव्युत्पादनप्रयोजनं उत्पत्तिशिष्टबलीयस्त्वं समर्थयितुं एतदधिकरणम् । तथापि उत्पत्तिशिष्टबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं सिध्यति, नान्यथा । पृ. ४७१. * वैश्वदेवाधिकरणम् । ' वैश्वदेवेन यजेत ' इति चातुर्मास्यगतवाक्ये यजिना सकृदुच्चारितेन तन्त्राभिधानशक्त्या आग्नेयादियागसमुदायस्यैवोपस्थितिमुखेन भवति वैश्वदेवपदं समुदायनामधेयम् । कु. १।४।११।१४. * **वैश्वदेवाधिकरणे** उत्पत्तिशिष्टेन उत्पन्नशिष्टस्य बाध उक्तः । सु. पृ. ४९२, ७९४. * वैश्वदेवाधिकरणे तत्प्रख्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षः । **कौ.** १।४।११।१३ पृ. २४४, * वैश्वदेवाधिकरणे वैश्वदेवपदस्य तत्प्रख्यन्यायसिद्धं नामधेयत्वं आक्षिप्य समाधीयते । १।४।५।५ पृ. २१८, * मत्वर्थलक्षणा-वाक्यभेद-तत्प्रख्य-तद्व्यपदेशाख्यैः चतुर्भिरेव प्रकारैः सर्वत्र नामधेयत्वमुन्नेयम्, न त्वेतेभ्यः अन्यः प्रकारोऽस्ति । विशिष्य चायमर्थो **वैश्वदेवाधिकरणे** निरूपयिष्यते । १।४।५।५ पृ. २१७, * वरं हि अदृष्टभेदानुबन्धिकर्मभेदकल्पनातः प्रकरणभेदानापादकं नामधेयत्वमेव इति वैश्वदेवाधिकरणे वक्ष्यते । १।४।३।३ पृ. १८४. * वैश्वदेवपदस्य नामत्वमङ्गीकृत्य गुणार्थताऽपि अस्ति नास्ति इति वैश्वदेवाधिकरणे चिन्ता । सु. पृ. ४५५.

* **वैश्वदेवादिनामधेयस्य** गुणाद्युपबन्धोपयोगेन अर्थवत्त्वात् अनुवादेऽपि उपपत्तिः । सु. पृ. ७१३.

* **वैश्वदेवग्रहपर्यन्ताः** शस्त्रवन्तः सोमाः, अवशिष्टास्तु ग्रहाः शस्त्ररहिताः वाजपेये । वि. १ ३।१५.

* **वैश्वदेवचरौ** शत्रुक्षयार्थे काम्ये चतुर्धाकरणकाले चरोः कियतश्चित् अधःपाते स्फ्यादिलेपे वा तेनाधःपातितेन लिप्तेन च वैष्णवयागं कुर्यात् । पातलेपाभावे तु न कुर्यात् । तथा चासौ वैष्णवयागो न नित्यः । तस्मात् देवतावाहनकाले विष्णोरावाहनं न कार्यम् । वि. १०।१।१ वर्णकं ३.

* **वैश्वदेवतन्त्रस्य** मध्ये वैष्णवो याग उत्पन्नः ' यदधोऽवपद्येत्, यच्च स्फ्य आश्लिष्येत्, तद् विष्णवे उरुक्रमायावद्येत् ' इति वचनात् । **भा.** १२।२।५।१४.

* **वैश्वदेवपदव्युत्पत्तिः** ( चातुर्मास्यप्रथमपर्वणि ) । आमिक्षायाः साक्षात् विश्वदेवदेवताकत्वं इतरेषां छत्रिन्यायेन । किंवा विश्वेषां देवानां अष्टसु कर्मसु कर्तृत्वात् वैश्वदेवत्वम् । उक्तं च- ' यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् ' इति । वि १।४।११.

* **वैश्वदेवपर्व** चातुर्मास्यगतं प्रथमं पर्व । वि. १।४।११. * वैश्वदेवपर्व सद्यस्कालं न व्यहकालम् । **भा.** ८।२।४।२३. * **वैश्वदेवपर्वणः** पशुकाम्यया अनुष्ठाने आपशुलाभात् तदेव पर्व पुनः पुनः कृत्वा पशुलाभे इतराणि पर्वाणि सकृत्कर्तव्यानि प्रधानत्वेनैव । न तु अङ्गत्वेन । वसन्ते एव सर्वाणि सकृद्वा कर्तव्यानि । **संकर्ष.** ३।१।२४. * **वैश्वदेवपर्वणि** अष्टौ यागाः प्रधानं 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालम् ' इति (तैसं. १।८।४ । वि. १।४।११, * वैश्वदेवपर्वणि ऋत्विजां नियमविधिः ' चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः ' अध्वर्युः, ब्रह्मा, होता, आग्नीध्र, प्रतिप्रस्थाता चेति । न तु अथापरस्या नित्यप्राप्तिः । ८।१।९. * वैश्वदेवपर्वणि चातुर्मास्यगते ' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इति देशविधानेन प्रधानानामनेकेषां साहित्यावगमात् तन्निर्वाहाय पदार्थानुसमयः । **सोम.** ५।२।८. * वैश्वदेवपर्वणि ' त्रिंशदाहुतयो हूयन्ते ' इति श्रुतम् । त्रिंशत्पूरणं च केषांचिदेवम्-नव प्रयाजाः, नवानुयाजाः, द्वावाघारौ, द्वावाज्यभागौ, अष्टौ प्रधानाहुतयः इति । अपरेषां तु स्विष्टकृद्वाजिनेज्याग्रहणात् आघारौ न गणितौ । सर्वथा तु प्रधानाहुतिभेददर्शनसिद्धिः । **वा.** १।४।१०।१६.

**वैश्वदेवपर्वणि ' प्राचीनप्रवणे यजेत ' इति विहारदेशस्योपदेशः ॥**

वैश्वदेवपर्वणि ' प्राचीनप्रवणे यजेत ' इत्यधिकरणत्वेन विधानात् ' पदे जुहोति ' इत्यनेनाहवनीयनिवृत्तिः । **इति प्राप्ते,** ' पर्वतान्ते यजेत ' इत्यादाविव देशवाचकत्वात् तस्य च वैश्वदेवेनेति तृतीयया साङ्गप्रधानप्रयोगान्वयप्रतीतेः पद्मवाक्य इव जुहोतेरनुपादानाच्च न होमाधिकरणता किंतु विहारदेशोपदेशः । अत एव ' यदेककपालमाहवनीये जुहोति यजमानमेव स्वर्गं लोकं गमयति ' इत्याहवनीयदर्शनं उपपन्नम् । **संकर्ष.** २।४।१३.

* वैश्वदेवपर्वणि ' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इति प्राचीनप्रवणस्य देशस्य नियमविधिः, न तु अर्थापत्त्या नित्यप्राप्तिः । वि. ४।२।९, * वैश्वदेवपर्वणि बर्हिः ' त्रेधा संनद्धं बर्हिर्भवति ' ( ' त्रेधा बर्हिः संनद्धं भवति ' **तैब्रा.** १।६।३ ) इति, इध्मः ' त्रेधा संनद्ध इध्मः ' इति, प्रयाजाः ' नव प्रयाजा इज्यन्ते ' इति । ७।१।३, * वैश्वदेवपर्वणि वाजिनासादनं उत्करे गुणविधिः न तु कर्मान्तरम् ' उत्करे वाजिनमासादयति ' । चातुर्मास्येषु सौमिकेषु । १०।३।३, * वैश्वदेवपर्वणि वाजिनयागः कर्मान्तरम् । ' तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम् ' इति आमिक्षा च वाजिनं च द्रव्ये तस्मिन्नेव कर्मणि समुच्चीयेते विकल्प्येते वा इति पूर्वपक्षः । द्रव्यदेवताभेदेन वाजिनयागः आमिक्षाहोमात् कर्मान्तरं इति सिद्धान्तः । २।२।९, * वैश्वदेवपर्वणि वाजिनयागः । तत्र ऐष्टिको विध्यन्तः सांनाय्यविकारत्वात् । न तु सोमविध्यन्तः । ८।२।१, * वैश्वदेवपर्वणि वाजिनयागः प्रतिपत्तिः इति पक्षान्तरम् । ८।२।१. * वैश्वदेवपर्वणि वाजिनेज्यादेवतानां वाजिनां आवाहनं कर्तव्यं इति पूर्वपक्षः । परप्रयुक्तद्रव्योपजीवित्वात् द्रव्यस्य चावाहनकाले जनिष्यमाणत्वात् नावाहनं इति सिद्धान्तः । **संकर्ष.** ४।४।८.

* **वैश्वदेवपर्वगतैककपालधर्माणां** आग्रयणगतद्यावापृथिव्यैककपाले अतिदेशः । ७।३।१०।२७ (भा. २६–२७ ). ' स्वरसामैककपालामिक्षाधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **वैश्वदेवपर्वगत-मैत्रावरुण्यामिक्षाधर्माणां** सर्वामिक्षासु अतिदेशः । ७।३।१०।२७ ( भा. २६–२७ ). ' स्वरसामैककपालामिक्षाधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **वैश्वदेवपर्वगतवाजिने** सांनाय्यविध्यन्तः । **भा.** ८।२।१।१–९.

* **वैश्वदेवशब्दः** वैश्यस्तुत्यर्थः ' वैश्यो वैश्वदेवः ' न गुणविधिः । **वि.** १।४।१४.

* **वैश्वदेव्यामिक्षा** सांनाय्यविकारः सोमादूर्ध्वं उत्कृष्यते, तत्प्रकृतेः सांनाय्यस्य ' नासोमयाजी संनयेत् ' इति सोमात् ऊर्ध्वं उत्कर्षात् । **वि.** ५।४।८. * **वैश्वदेव्यामिक्षायाः** चातुर्मास्यवैश्वदेवपर्वगतायाः विध्यन्तस्य मैत्रावरुण्यामामिक्षायां अतिदेशः । **भा.** ७।३।१०।२६–२७. * वैश्वदेव्यामिक्षायाः वैश्वदेवपर्वगतायाः ज्योतिष्टोमगतानुबन्ध्यास्थानीयमैत्रावरुण्यामिक्षा विकृतिः इति तद्धर्मातिदेशः । **शा.** ७।३।१०. * **वैश्वदेव्यामिक्षायां** सांनाय्यगतपयोधर्माणां अतिदेशः । ८।२।४।१९–२४. **मीको.** पृ. २२२ ' अतिदेशः वैश्वदेव्यामिक्षायां सांनाय्यपयोधर्माणाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्वदेविकं** तन्त्रं आग्रयणे न नियम्यते । १२।२।१५।३५–३७. **मीको.** पृ. ८५४ ' आग्रयणे ऐन्द्राग्नवैश्वदेवयो:० ' इत्यत्र द्रष्टव्यम् । * **वैश्वदेविकाः** केचिद्धर्माः वरुणप्रघासेषु विधीयन्ते, यथा– ' अग्निं मथ्नन्ति, प्रसुवो भवन्ति ' इति । चातुर्मास्येषु । **भा.** ७।१।३।१७.

* **वैश्वदेविकैककपालः** एककपालानां प्रकृतिः । **भा.** ७।१।५।२३.

* **वैश्वदेविकसार्थवादविधिकाण्डस्य** वरुणप्रघासगतपञ्चसंचरेषु अतिदेशः । ७।१।३।१७–२१. **मीको.** पृ. २१४ ' अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।



**वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य आवाहनस्य बाधः ॥**

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । १०।१।१।१ वर्णकं ३ ॥**

**भाष्यम्**—एवं वा– ' वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान्, तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेत्, इदमहममुं चामुं च व्यूहामीति । यं द्विष्यात्तं ध्यायेत् । यदधोऽवमृद्येत्, यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायावद्येत् ' इति । तत्र संशयः किं विष्णुरुरुक्रम आवाहयितव्यः, उत नेति । किं प्राप्तम् ? विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । आवाहयितव्यः । ननु स्फ्ये कदाचित् नाऽऽश्लिष्येदपि, न वाऽधोऽवमृद्येत । तत्र आवाहनं कृतमनर्थकं स्यात् । न च वचनबलादाश्लेषयितव्यं अवमर्दयितव्यं वा । न ह्युपादेयत्वेन आश्लिष्टमवमृदितं वा श्रूयते । न च विष्णोरुरुक्रमस्य यागोऽर्थकर्म । किं तर्हि ? आश्लेषणेनावमर्दनेन च लक्षितमनेन प्रकारेण आहवनीये प्रतिपाद्यते । तथाहि दृष्टमपनयने तस्य प्रयोजनं भवति स्फ्यादिसंशोधनम् । इतरथा हि यागाददृष्टं कल्प्येत । ननु यागाददृष्टमवश्यं कल्पनीयम् ! सत्यं कल्पनीयम् । द्रव्यप्रतिपादनद्वारं तत् । अत्रोच्यते । लुप्तार्थमपि कर्तव्यम् । यथा कृष्णले चरौ पाकः । अपिच कदाचिदाश्लिष्येत्, अधश्चावमृद्येत । तत्रान्तरिते आवाहने वैगुण्यमापद्येत । तत्राप्रमाद्यद्भिरावाहयितव्या देवता, यदि स्फ्य आश्लेक्ष्यते, अधश्चावमर्दिष्यते । न आवाहनमङ्गमन्तरा इष्यते । स्वकाले ह्यावाहनेन देवता स्मर्यमाणा साध्वी भवतीति, न स्वकालोत्तरकाले । तत्र ह्यर्थप्राप्तममन्त्रकं स्मरणम् । अथ स्फ्यो नोपश्लेक्ष्यते, न वाऽधोऽवमर्दिष्यते तदा कृतेऽप्यावाहने न किंचित् दुष्यति । नैवं मन्तव्यम् । यथा राजा, अमात्यो वा, ब्राह्मणो वा परिचरितुं निमन्त्रितः आहूतः अपरिचर्यमाणोऽवमानितमात्मानं मन्यमानोऽपचारिष्यति इत्याशङ्क्यते । एवं देवताऽपीति । न तत्र देवताऽऽहूयते । आहूता सती हविरुपयोक्ष्यते, तप्स्यति च । तृप्ता प्रसत्स्यति । प्रसन्ना सती फलेन संयोक्ष्यतीति । तदेतन्नवमे सिद्धम् । तस्मान्न दोष आवाहितायामनिज्यमानायाम् ।

**अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् । २ ॥**

**भाष्यम्**-- अपिवेति पक्षव्यावृत्तिः । एषोऽभिधानसंस्कारो निवर्तते । कुतः ? अभिधानसंस्कारो द्रव्यं वा सति प्रयोजने क्रियते, नान्यथा । तद्वर्णितम् । यदप्युक्तम्, कदाचित् श्लिष्येत, अवमृद्येत वा । तत्राऽऽवाहनं नान्तरेष्यते इति । नैष दोषः । अन्तरितमेतदनन्तरितेनैव तुल्यम् । यदा आवाहनस्य कालो न तदोरुक्रमयागस्य निमित्तमापतितम् । आपतिते हि निमित्ते तस्य प्रयोगो भविष्यति । न ह्यनाश्लिष्टम्, अनवमृदितं वा, तत्र प्रतिपादयितव्यम् । न चाऽऽरब्धे प्रयोगे कृतमुपकारकं भवति । तस्मात् विष्णुरुरुक्रमो नाऽऽवाहयितव्य इति ।

**तेषामप्रत्यक्षशिष्टत्वात् । ३ ॥**

**भाष्यम्**— इत्युपवर्णनापरिहार उक्तः ।

**शा**-- 'वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान्' 'उरुक्रमायावद्यति ' इति श्रूयते । तत्र संशयः, किं वैश्वदेविकदेवतावाहनकाले विष्णोरावाहनं कर्तव्यं नेति । तत्र चोदकप्राप्तेः कर्तव्यम् । **इति प्राप्ते, ब्रूमः ।** नैमित्तिकविधेर्निमित्तापेक्षत्वात् निमित्तस्य च स्फ्यश्लेषादेः अवश्यंभावाभावेन देवताऽऽवाहनकाले निश्चयासंभवात् अनिश्चितसद्भावं उरुक्रमयागविधानं न आवाहनं प्रयोक्तुं क्षमं अविहितं च आवाहनं कृतमपि निष्फलमेव, तस्मान्न कर्तव्यम् ।

**वि**— ' वैश्वदेवस्य तन्त्रे यः पक्षे विष्णुः स किं पुरा । आवाह्यो वा न वावाह्य आग्नेयाङ्गातिदेशनात् ॥ वैश्वदेवावाहनस्य काले स्फ्याश्लेषवर्जनात् । विष्णुयागस्य संदेहाद्विष्णोरावाहनं न हि ॥ '

**भाट्ट**--- एवं वा– ' वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान् । तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुं चामुं च व्यूहामीति । यं द्विष्यात्तं ध्यायेत्, यदधोऽवमृद्येत् यच्च स्फ्य आश्लिष्येत् तद्विष्णव उरुक्रमायावद्यति ' इति श्रुतम् । अत्र चतुर्थ-

वाक्ये तच्छब्दपरामृष्ट–द्विविधतत्तद्द्रव्यदेवतोभयविशिष्टस्य यागस्य प्रक्षेपांशे तत्तद्द्रव्यसंस्कारकस्यावभृथलिना लक्षणया वैश्वदेवयागाङ्गतया विधानम् । तत्र च कर्म समानाधिकरणस्य यच्छब्दस्य निमित्तत्वप्रतिपादकत्वाभावेऽपि यत्तच्छब्दाभ्यामेकवाक्यत्वप्रतीतेः 'यदधोऽवमृद्येत्' इत्यादिलिङा प्रयोजकत्वापरपर्यायहेतुत्वाभिधानात् तस्य शेषित्वेनासंभवे निमित्तत्वावसायात् तद्भेदे च वाक्यभेदावश्यकत्वादनुषङ्गेण निमित्तद्वयेऽप्येकं नैमित्तिकविधानम्, तेनान्यतरसंनिपाते अप्येतत् । उभयसंनिपाते तु तन्त्रेण कालैक्यात् ।

अत्र चाष्टमोक्तरीत्यैकदेवताकत्वात् सत्यपि शब्दद्वये आग्नेयविकारत्वात् तदीयधर्मप्राप्तौ वैश्वदेवतन्त्रमध्यपातेन प्रयाजादीनां प्रसङ्गसिद्धावपि आवाहनस्य वैश्वदेविकावाहनेनैतदीयदेवतास्मरणासंभवात् प्रसङ्गसिद्ध्यनुपपत्तेरवश्यकर्तव्यस्य तस्य किं वैश्वदेविकदेवतावाहनकाले तदनन्तरं करणं उत निमित्तसंपातानन्तरमेव कालं क्रमं च बाधित्वेति चिन्तायाम्, क्रमकालबाधे प्रमाणाभावात् निमित्तसंनिपातात् पूर्वमेव कार्यम् । न च स्थालीस्थचरुव्यूहने अधोवमर्दनादेः नियतत्वाभावात् निमित्तासंपाते यागाभावेनावाहितदेवतायाः कोपापत्तिः, नवमे विग्रहादिनिराकरणेन तदनापत्तेः । न चैवमप्यनुष्ठापकस्य निमित्तस्याभावात् तदानीमकरणम्, निमित्तस्य फलकामनावत् प्रधानमात्रानुष्ठापकतया तदङ्गानुष्ठापकत्वाभावात् । इतरथा विकृतौ प्राकृतस्य निमित्तस्य फलकामनाया वा अभावेन प्रयाजादीनां करणानापत्तेः । अङ्गिभूतस्य प्रधानस्यैवाङ्गप्रयोजकत्वसंभवे तत्प्रयोजकस्य फलकामनादेः प्रयोजकत्वकल्पने गौरवाच्च ।

न च तर्हि प्रधानस्यापि तदानीमभावादावाहनकरणानापत्तिः, प्रकृताविव भाविन एव तस्यावाहनानुष्ठापकत्वेन तदुपपत्तेः । न च निमित्तसंदेहेन तस्य भावित्वे नियामकाभावः, भावित्वसंदेहस्य प्रतिबन्धकवशेन प्रकृतावपि सत्त्वेन तत्संभावनाया एवावाहनानुष्ठापकत्वात् । इति प्राप्ते, सत्यपि प्रतिबन्धकादिना भावित्वसंदेहे स्वानुष्ठापकत्वप्रयुक्तप्रधानचिकीर्षाया एव प्रकृतावावाहनाद्यङ्गप्रयोजकत्वात् । इह च स्वानुष्ठापकस्य निमित्तस्यासत्त्वेन तत्प्रयुक्तप्रधानचिकीर्षाया असत्त्वान्न तदानीमावाहनानुष्ठानं निमित्तानन्तरं तु तत्करणं भवत्येव । न च क्रमकाल्योर्बाधः, पशुपुरोडाशीयाज्यभागादेरिव तद्बाधे बाधकाभावात् ।

वस्तुतस्तु–– कालो नैव केनचिद्विहितः । क्रमस्त्वाज्यभागदेवतावाहनानन्तर्यरूपो भवन्मतेऽपि बाध्य एव, वैश्वदेविकदेवतावाहनानन्तरं क्रियमाणत्वात् । तदानन्तर्यं तु नैवातिदेशेन प्राप्तम्, विकृतावेव मुख्यक्रमेण क्रमकल्पना तु तस्य निमित्तानन्तर्यरूपस्थानविरोधादशक्यैव । अतो नात्र कस्यचित्प्राप्तस्य बाधो न वाऽर्थलोपादीति ध्येयम् ।

**मण्डन––** 'नावाहनं कार्यमुरुक्रमस्य ।' उरुक्रमस्य विष्णोः आवाहनं प्रकृतिप्राप्तं न कार्यमित्यर्थः ।

**शंकर––** 'उरुक्रमस्तु नावाह्यः ।'

**ॾ वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् । ४।४।६।१२॥**

अग्निचयने संवत्सरमुख्याग्निधारणाभावे 'वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति वैश्वानरेष्टिरुक्ता । सा किं नित्या नैमित्तिकी वेति विचारे पूर्वपक्षमाह । चकारो दृष्टान्तार्थः । यथा दधिग्रहो नित्यः तथा वैश्वानरश्च यागो नित्यः स्यात् । नित्यैस्त्रिभिर्लोकैः समानसंख्यत्वात् । 'त्रीण्येतानि हवींषि भवन्ति, त्रय इमे लोकाः, एषां लोकानामारोहाय' इत्यर्थवादे वैश्वानरहविषां लोकत्रयसमानसंख्यत्वमुक्तम् । सामान्यं च नित्यत्वम् । तेन नित्यो वैश्वानरः ।

**पक्षे वोत्पन्नसंयोगात् । १३ ॥**

'वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति संवत्सरमुख्याग्निधारणाभावे उक्ता वैश्वानरेष्टिः नित्या इति सूत्रेण प्राप्तं पूर्वपक्षं वा–शब्देन निरस्य सिद्धान्तयति । वैश्वानरयागः पक्षे स्यात्, न नित्यः । उत्पन्नसंयोगात् उत्पन्नेन उख्यधारणाभावेन निमित्तेन दोषनिर्घातार्थं वैश्वानरस्य संयोगात् संबन्धस्योक्तत्वात् । लोकैः समानसंख्यत्वं तु त्रित्वेनैवोपपद्यते न नित्यत्वेन । तस्मात् नैमित्तिकः । के.



* 'वैश्वानरश्च नित्यः स्यात्०' इत्यधिकरणे (४।४।६।१२ 'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते, यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेद् वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति अग्नौ श्रुतम् । तत् संवत्सराभरणं अर्थवादमात्रं इति नित्यता इति पूर्वपक्षयित्वा कर्तृसमानाधिकरणो यच्छब्दो निमित्ततां संवत्सराभरणस्य प्रतिपादयति इति नैमित्तिको वैश्वानरयागः इति सिद्धान्तितम् । अतः अयं निमित्तविधिरर्थवादः । बाल. पृ. ५५. * वैश्वानरः द्वादशकपालः (चयने) संवत्सरं उख्याभरणनिमित्तकः एव न नित्यः । ४।४।६।१२–१३. * 'वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य', 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत्'। अनयोः प्रायश्चित्तयोः विकल्प एव, न तु समुच्चयः अन्योन्यनिरपेक्षत्वात् एकफलकत्वाच्च । वि. १२।३।५, * 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यन्तः जातेष्टिविधिः । अयं निमित्तजन्यदोषनाशेतरफलसंवलितपुरुषार्थाधिकारविधिः । बाल. पृ. १५. * 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति प्रकृत्य श्रूयते– 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति । इदं फलं इष्टिकर्तुः पितुरिति चेन्न, 'यस्मिन् जाते निर्वपति स पूतः' इति वाक्येन फलस्य पुत्रेणैव संबन्धात् । वि. ४।३।१७, सा चेष्टिः जातकर्मोत्तरं कर्तव्या, न तु जन्माव्यवहितोत्तरकाले जातकर्मणः प्राक्, बालस्य विपत्तिसंभवात् । ४।३।१८, तत्रापि आशौचादूर्ध्वमिष्टिः कर्तव्या । ४।३।१९. * 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति श्रूयते । तत्र यदष्टाकपालो भवति इत्यादि । तत्र किं अष्टत्वादयः गुणविधयः उत अर्थवादाः इति संदेहे अर्थवादा इति सिद्धान्तः । जातेष्टिन्यायः । १।४।११।१७–२२. * **वैश्वानरी** (जातेष्टिं) एकस्मिन् पुत्रे जाते निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति । **शा.** ९।१।१० वर्णकं २. * **वैश्वानर्यां** प्राकृतावदानधर्मस्य नातिदेशः । **संकर्ष.** २।२।१६. **मीको.** पृ. ६९३ 'अवदानं प्राकृतमेककपाले०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्वानराधिकरणम्** । 'जातेष्टिन्यायः' इति नामान्तरम् । १।४।११।१७–२२, **मीको.** पृ. १७६० 'जातेष्टिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वैश्वानराधिकरणे** आद्याधिकरणोक्त– (नामधेयप्रामाण्याधिकरणोक्त–१।४।१।१) उत्पत्तिशिष्टगुणविधिनामधेयत्वरूपप्रकारद्वयापवादात् प्रकरणसंगतिः । **कौ.** १।४।१२।१७ पृ. २५५, * वैश्वानराधिकरणे (पूर्वाधिकरणे) स्तुत्युपपादकत्वेन उक्तायाः **गौण्याः** वृत्तेः निमित्तासंभवमाशङ्क्य तत्र निमित्तप्रतिपादनद्वारा **गौणीवृत्तिलक्षणं** अनेन सूत्रेण (तत्सिद्धिसूत्रेण) अभिधीयते । १।४।१३।२३ **पृ. २६८.** * अष्टाकपालादिशब्दानामेकवाक्यगतत्वेन उत्पन्नयुत्पन्नशिष्टत्वविभागाभावात् गुणविधित्वमाशङ्क्य अष्टत्वादीनां परस्परविरोधित्वेन एकवाक्येन विधानायोगात् बलात् वाक्यभेदप्रसक्तेः उत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे अष्टत्वादिविध्ययोगात् अष्टाकपालादिशब्दैर्गुणवृत्त्या द्वादशकपालस्तुतिः इति **वैश्वानराधिकरणे** अभिहितम् । **सु.** पृ. ३९८.

* 'स्फ्येन वेदिमुद्धन्ति' 'कपालेषु श्रपयति' इत्यादिवाक्यजातं 'यज्ञायुधानि' इति प्राप्तत्वात् **वैश्वानराधिकरणन्यायेन** अवयुत्यानुवादः इति पूर्वपक्षः । **कु.** ३।१।५।१०–११.

* **वैश्वानराधिकरण( पूर्वाधिकरण- )व्युत्पादितगुणवृत्तेः** आक्षेपसमाधानार्थं तत्सिद्धिसूत्रम् । **कौ.** १।४।१३।२३ पृ. २६८.

* **वैश्वानरद्वादशकपालाधिकारे** अष्टत्वादयः उच्चार्यमाणाः स्वरूपेणानुपयुज्यमानाः शक्नुवन्ति अवयवत्वं गमयितुं स्तुत्या चोपयुज्यन्ते । **वा.** ३।७।१७।३५.

* **वैश्वानरपार्जन्यचतुर्होतृहोमानां** सकृदेव अनुष्ठानं चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तावपि । **संकर्ष.**

३।१।२१. **मीको.** पृ. १६९२ ‘ चातुर्मास्येषु पाञ्च-सांवत्सरिकावृत्तावपि० ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्वानरवाक्ये** द्वादशकपालेन उपक्रमोपसंहाराभ्यां अष्टत्वादयः एकवाक्यतामापद्यमानाः पृथग्विधित्वं न प्रतिपन्नाः । **वा.** २।२।४।१० पृ. ४९१.

* उपांशुयाजविषयकविष्ण्वादिवाक्ये **वैश्वानरवाक्यन्यायेन** उपक्रमोपसंहारैक्यात् एकवाक्यत्वावगमेन नात्र यागत्रयविधानं उपपत्तिमत् । **कौ.** २।२।४।१० पृ. १८५.

* **वैश्वानरेष्टिः** अग्निचयने संवत्सरं उख्यभरणाभावनिमित्तेन नैमित्तिकी न तु नित्या । **वि.** ४।४।६. * वैश्वानरेष्टिः आशौचापगमोत्तरं पौर्णमास्यां अमावास्यायां वा कर्तव्या, न तु जातकर्मानन्तरं अन्तर्दशाहमेव । **भा.** ४।३।१६।३८–३९ वर्णकं ३. * वैश्वानरेष्टिः दर्शस्य पूर्णमासस्य वा अकरणे प्रायश्चित्तम्, पाथिकृतीष्टिर्वा विकल्पेन । **वि.** १२।३।५, * वैश्वानरेष्टिः पत्नीसंयाजेषु आहुतौ कपाले पतितायां प्रायश्चित्तम् । तत्र च एकहायनी गौः द्वेष्याय दातव्या नर्त्विजे । तच्च दानमदृष्टार्थं नानत्यर्थम् । १०।२।१६. * वैश्वानरेष्टिः पुत्रमरणे न कार्या, पितरि फलसंस्कारश्च न भवति । **भाट्ट.** ४।३।१४, * वैश्वानरेष्टिः पूतत्वाद्यर्थवादिकफलार्था । सा च न कर्तृगतपूतत्वादिफलप्रयुक्ता किन्तु पुत्रगतपूतत्वादिफलप्रयुक्ता । अकरणे प्रत्यवायस्तु कर्तृनिष्ठ एव । संकल्पे च यथायथं फलनिर्देशः कर्तव्यः ( पुत्रगत-अर्थवादोक्तपूतत्वादिफलकामः अकरणे प्रत्यवायपरिहारकामश्च वैश्वानरेष्ट्या यक्ष्ये ) । ४।३।१४. * वैश्वानरेष्टिः ‘वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते’ ‘यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालः त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति, यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति ’ इति विहिता । अत्राष्टाकपालादिशब्दाः कर्मनामधेयानि, अर्थात् एतानि पञ्च कर्माणि भिन्नान्येवेति एकः पूर्वपक्षः । तत्तत्फलाय एकस्मिन्नेव कर्मणि तत्तत्पुरोडाशद्रव्यरूपगुणविधिः इति द्वितीयः पक्षः । द्वादशकपालः अंशी, अंशैः अष्टाकपालादिभिः स्तूयते इति सिद्धान्तः । अवयुत्य अनुवादः अष्टाकपालादेः । (अवयुत्य पृथक्कृत्य) । **वि.** १।४।१२. * वैश्वानरेष्टिः संवत्सरमुख्यधारणाभावे कार्या । ४।४।६।१२–१३. **मीको.** पृ. ५२ ‘ अग्निचयने संवत्सरमुख्यधारणाभावे वैश्वानरेष्टिः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **वैश्वानरेष्टौ** पत्नीसंयाजगतकपालाभिहोमनिमित्तवत्यां द्वेष्याय दानमदृष्टार्थम् । १०।२।१६।४७. **मीको.** पृ. २१०० ‘दार्शपौर्णमासिकपत्नीसंयाजगत० ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैश्वानरेष्टिफलं** पुत्रस्यैव साक्षात्, न पितुः । **भा.** ४।३।१६।३८–३९ । सा च इष्टिः जातकर्मोत्तरं कर्तव्या न सद्यः । **भा.** ४।३।१६।३८–३९ वर्णकं २ । तत्रापि दशाहोत्तरकालायां पौर्णमास्यां अमावास्यायां वा कर्तव्या । **भा.** ४।३।१६।३८–३९ वर्णकं ३.

* **वैश्वामित्रस्य** ( सत्रे ) हौत्रं नियम्यते ‘ विश्वामित्रो होता भवति ’ इति । **भा.**६।६।४।२६.

* **वैश्वामित्रतत्समानकल्पानामेव** सत्रे अधिकारः । ६।६।४।२८–२६. **मीको.** पृ. ३०४ ‘ अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वैषयिकं** अधिकरणत्वं विषयतासंबन्धावच्छिन्नम् । यथा ‘ घटे ज्ञानमस्ति, मोक्षे इच्छाऽस्ति ’ इति । **रहस्य.** पृ. १५२.

* **वैष्टुतं** स्तोत्रीयापरिगणनार्थानां औदुम्बरीणां प्रादेशमात्राणां कुशानां विष्टुतिशब्दवाच्यानां स्थापनार्थं वासः । **सु.** पृ. १६०.

* **वैष्णवं** अग्नीषोमीयं प्राजापत्यं वेति दर्शपूर्णमासयोरुपांशुयाजाज्यम् । **भा.** ५।४।६।२१, * वैष्णवं त्रिकपालम् । १०।५।१।१. * वैष्णवं प्राजापत्यं वा उपांशुयाजाज्यं ब्राह्मणेन सोमात् प्राक् कर्तव्यं अग्नीषोमीयं तु न कर्तव्यम्, परंतु उपांशुयाजाज्यस्य नोत्कर्षः ।



५।४।६।१९–२१. * ‘ **वैष्णवस्त्रिकपालः** ’ राजसूये प्रथमे त्रिसंयुक्ते तृतीयं हविः । **भा.** ११।४।१।२. * वैष्णवः पशुः उपसदामुपरिष्टात् कर्तव्यः परंतु न उपसदङ्गं सः । ४।४।३।५–६. * वैष्णवो यागः वैश्वदेवतन्त्रस्य मध्ये उत्पन्नः । **भा.** १२।२।५।१४, * **वैष्णवीमनूच्य** आच्छेष्यति । ११।२।७।२७, * वैष्णवीमनूच्य वाग् यन्तव्या । जपोऽयम् । १२।४।१।१, * ‘ **वैष्णव्या** हविर्धानं उपतिष्ठते ’ ज्योतिष्टोमे । तत्र वैष्णवी प्रकृतैव ग्राह्या न तु दाशतयीस्था । ३।२।८।२१–२४.

𑂝 **वैष्णवन्यायः** । अतिदेशो न राजसूयगतवैष्णवे आतिथ्येष्टिगतवैष्णवधर्माणाम् ॥

**गुणविधिस्तु न गृह्णीयात् समत्वात् । ७।३।६।१८॥**

**भाष्यम्**— आतिथ्ये श्रूयते ‘ वैष्णवो नवकपालो भवति ’ इति । तथा राजसूये पूर्वस्मिंस्त्रिसंयुक्ते ‘ वैष्णवस्त्रिकपालः ’ इति । तत्र विचारः, योऽयं त्रिसंयुक्ते ‘ वैष्णवस्त्रिकपालः ’ इति वैष्णवशब्दः, अयं आतिथ्यधर्माणां ग्राहको नेति । किं युक्तम् ? ग्राहक इति । कुतः ? विहितधर्मके कर्मणि दृष्टः शब्दः, अन्यस्मिन् अविहितधर्मके श्रूयमाणो धर्माणां ग्राहक इत्युक्तं ‘ उक्तं क्रियाभिधानं ’ इत्यत्र ( ७।३।१।१ ) । तत्र अयमपि विहितधर्मकः आतिथ्ये दृष्टः । इदानीं अविहितधर्मके त्रिसंयुक्ते दृश्यते । तस्मात् धर्माणां ग्राहक इति । **एवं प्राप्ते, ब्रूमः** । ‘ गुणविधिस्तु न गृह्णीयात् समत्वात् ’ गुणविधिरयं आतिथ्यस्य गुणं विष्णुदेवतासंयोगं विदधाति । स एष धर्मान् ग्रहीतुं न शक्नोति । कुतः ? समत्वात् । समो हि अयं आतिथ्ये त्रिसंयुक्ते च । यथा तत्र विष्णुदेवतां विदधाति, एवमत्रापि । श्रुत्यर्थासंभवाच्च लक्षणया धर्माणां ग्राहकः कल्प्यते । इह च प्रत्यक्षश्रुत्यर्थ एव संभवति देवताविधिः । तस्मान्नायं ग्राहक इति ।

**शा**— ‘ श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः । न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ ’

**सोम**— यथा अवभृथशब्दस्य अतिदेशकत्वं एवं वैष्णवशब्दस्य इत्युत्थानात् **संगतिः** । अत्र वैष्णवशब्दस्य अनतिदेशकत्वे सिद्धान्ते एकदेवताकत्वं औषधद्रव्यकत्वं चादाय आग्नेयधर्मः कर्तव्यः इति ग्रन्थकारस्याभिमतम् । अत एव अग्रिमाधिकरणे इष्टित्वेन दर्शपूर्णमासधर्मलाभात् इति वक्ष्यति । अन्ये तु सिद्धान्तेऽपि विष्णुदेवताकत्वं अवान्तरसामान्यमादाय आतिथ्याधर्मा एव कर्तव्याः । तथा च अस्मिन्नुदाहरणे पूर्वोत्तरपक्षयोः प्रयोजनसाम्यात् उदाहरणान्तरे प्रयोजनं इत्याहुः । **सूत्रार्थस्तु**– विष्ण्वादिदेवतालक्षणविधिस्तु धर्मान्न गृह्णीयात् उभयत्रापि देवतासंबन्धरूपप्रवृत्तिनिमित्तस्य तुल्यत्वात् ।

**वि** — ‘ वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः । धर्मातिदेशः स्यान्नो वा, विद्यतेऽत्राग्निहोत्रवत् ॥, श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः । न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ ’

**भाट्ट**— सोमे आतिथ्येष्टिः ‘ वैष्णवो नवकपालः ’ इत्यनेन वैशेषिकधर्मयुक्ता विहिता । राजसूये च ‘ वैष्णवस्त्रिकपालः ’ इति श्रुतम् । तत्र वैष्णवशब्दस्य न धर्मातिदेशकत्वम्, सत्यपि उत्पत्तिशिष्टगुणावरोधादिना उभयत्र कर्मविधित्वे वैष्णवशब्दस्य उभयत्रापि देवताविधायकत्वेन धर्मातिदेशकत्वानुपपत्तेः । न च अतिदेशेनैव देवतायाः प्राप्तिसंभवेन बह्वर्थलाभाय धर्मातिदेशकत्वाङ्गीकरणम्, गौणत्वे प्रमाणाभावात् । बह्वर्थलाभाय जघन्यवृत्त्यङ्गीकारे अतिप्रसङ्गात् ।

**मण्डन**— ‘ न वैष्णवोक्त्याऽपि गुणातिदेशः । ’

**शंकर**— ‘ वैष्णवादि न नामवत् । ’

* ‘ आग्नेयो वै ब्राह्मणः ’ ब्राह्मणस्तुतिरियम् ( १।४।१४।२४ ), तस्मान्न **वैष्णवन्यायेन** गुणविधिः किंतु धर्माणामतिदेशकः स्वरसामशब्दः । **वि.** ७।३।१०.

* **वैष्णवयागः** कश्चित् । वैश्वदेवचरौ शत्रुक्षयार्थे काम्ये चतुर्धाकरणकाले यदि चरोरंशः अधः पतेत् शम्यादौ लिम्पेद्वा तदा तेन अधःपतितेन लिप्तेन च द्रव्येण क्रियते वैष्णवयागः । लेपाद्यभावे चासौ न

क्रियते । तथा चायमनित्यः । अत एव देवतावाहनकाले विष्णोरावाहनं न कर्तव्यम् । वि. १०।१।१ वर्णक ३.

* 'वैसर्जनानि जुहोति'। इमे दर्विहोमाः । संकर्ष. ३।२।२०.

* वैसर्जनहोमेषु आज्यमेव, न सोमः ज्योतिष्टोमे । संकर्ष. ३।२।२०. मीको. पृ. १८३० 'ज्योतिष्टोमे वैसर्जनादिहोमेषु आज्यमेव, न सोमः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वैसर्जनहोमोत्तरं अग्नीषोमप्रणयनम्, तदुत्तरं पठितोऽपि यूपच्छेदः 'दीक्षासु यूपं छिनत्ति' इति विधानेन दीक्षाकाले अपकृष्यते । अग्नीषोमप्रणयनस्य तु नापकर्षः । वि. ५।१।१४.

**※ वैसर्जनहोमीयवासोन्यायः ॥**

**हेतुदर्शनाच्च १।३।२(३)।४॥**

**भाष्यम्**— अधिकरणान्तरं वा । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' 'यूपहस्तिनो दानमाचरन्ति' इति । तत् कर्तृसामान्यात् प्रमाणम् । इति प्राप्ते, अप्रमाणं स्मृतिः । अत्रान्यन्मूलम् । लोभादाचरितवन्तः केचित् । तत एषा स्मृतिः । उपपन्नतरं चैतत् । वैदिकवचन- ( ना ? )कल्पनात् ।

वा— अधिकरणान्तरं वेति । '**सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥**' अपरितोषस्तावत् प्रथमेनैव श्रुतिविरुद्धत्वहेतुना बलवता सिद्धे बाधे नान्वाचयहेतुः अतीव प्रयोजनवान् । अधिकरणान्तरे पुनः पूर्वोक्तहेतुनिरपेक्षः पर्याप्त एवैकः स्मृतिबाधनाय इति स्वतन्त्रत्वेन प्रदर्शनम् । विरोधेन च न व्याप्ताया: स्मृतेः अप्रमाणतद्व्याप्तौ नापवादान्तरोद्भवः । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति अग्नीषोमप्रणयनार्थे विसर्जनहोमकालसंबन्धियजमानाच्छादनं वासः अध्वर्युर्हरति इति मुक्तकर्मैवैतत् आवरणानुमितं स्मरणम् । एवं 'यूपहस्तिनो दानमाचरन्ति' इति । यूपपरिव्याणशाटकं यूपहस्तिशब्देन निर्दिश्य अध्वर्युहर्तव्यतया आचारानुमितयैव स्मृत्या प्रतिपादयन्ति । '**तत्रापि वेदमूलत्वकल्पना नोपपद्यते । कर्तृसामान्यतः प्राप्ता लोभसंभवपूर्वकात् ॥**' ऋत्विजो हि प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्माद्वयसमापनीयत्वनिबद्धसमाप्त्युत्तरकालभावि स्वाच्छन्द्यं च विदित्वा कार्यवत्ता- वेलायामेव स्वल्पगतधान्यविभागव्यापृतभृतकवत् स्वयं उत्पाद्योत्पाद्य तानितानि आदेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च यजमानः श्रद्धानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छति इति तैरेषा स्मृतिः प्रवर्तिता स्यात् इत्याशङ्कायां वेदमूलत्वं नानुमीयते, पूर्ववच्च लोभपूर्वकत्वकल्पनमेव उपपन्नं इति निर्णयात् संदेहनिवृत्तिः । इदं च भाष्यकारेण प्रदर्शयता तुल्यकारणत्वात् पूर्वत्रापि प्रदर्शितमेवेति योजयितव्यम् ।

शा— अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या मन्वादिषु अनुपलभ्यमानोऽपि वेदः कल्पितः, शाक्यादिषु इदं अत्यन्तविपरीतं अवैदिकं अप्रमाणं च तत् इत्येव शिष्टानां स्मरणम्, वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते । दृष्टानुसारिणी च कल्पना न तद्वैपरीत्येन । अतोऽत्र वेदकल्पना दवीयसीत्यप्रामाण्यमेव तेषामसन्मूलत्वात् इति सिद्धान्तः ।

सोम— विरोधलक्षणपूर्वाधिकरणसिद्धान्तहेतुभावेन पूर्वपक्षोत्थानात् संगतिः ।

वि— 'वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः । प्रमा न वा, श्रुत्यबाधात् प्रमा स्यादष्टकादिवत् ॥, दृष्टलोभैकमूलत्वसंभवे श्रुत्यकल्पनात् । सर्ववेष्टनवद् बाधहीनाऽप्येषा नहि प्रमा ॥' ज्योतिष्टोमे अग्नीषोमीयस्य पशोस्तन्त्रे प्रक्रान्ते वैसर्जनहोमो विहितः । तत्र यजमानं पत्नीं पुत्रान् भ्रात्रादींश्च अहतेन वाससा आच्छाद्य वाससोऽन्ते सुग्दण्डमुपनिबध्य अध्वर्युर्जुहोति ।

भाट्ट— तथा प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शनम्, तत्रापि न श्रुतिकल्पनं फलतहेतोरेव मूलतोपपत्तेरिति ।

मण्डन— 'न लोभमूलं स्मरणं प्रमाणम् ।'

शंकर—'हेतुदर्शनतोऽप्येवम् ।' (न प्रमाणत्वम् ) ।



* 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिः लोभमूलत्वान्न प्रमाणं इति भाष्यमतम् । ( अध्वर्युरेव गृह्णाति इति न नियमः इति तात्पर्यम् ) ( के. ) । वि. १।३।३.

* **वैहारिक:** अग्निश्रयने आहवनीयो न भवति । तत्र आहवनीयधर्माभावः । भा. १२।४।८।२६-२७,

* **वैहारिके** अग्नौ चयने आधानिकाः संस्काराः परिलुप्येरन् । १२।४।९।२८-२९.

**※ वौषट्-वषडादीनां ब्राह्मणादीनां व्यवस्थया प्रयोगः ॥**

'वौषडिति वषट् करोति' इति सामान्येन विधाय 'वषडित्येके, वौषडित्येके, षडित्येके, वौक्षड् इत्येके' इति कल्पान्तराणि विधाय 'वषडिति ब्राह्मणस्य वषट् कुर्याद्वौषडिति राजन्यस्य वौक्षडिति वैश्यस्य षडिति शूद्रस्य' इति निमित्तसंयोगेनाप्याम्नातम् । अत्र पञ्चानां तुल्यत्वाद्विकल्पः ब्राह्मणस्येत्यादयोऽवयुत्यानुवादा इति वृत्तिकृतां पक्षे प्राप्ते भाष्यकार आह । ब्राह्मणादिवाक्यानां वैयर्थ्यस्यायुक्तत्वात् बृहस्पतिसव-राजसूय-वैश्यस्तोमेषु क्रमेण त एव शब्दा नियताः नैमित्तिकैरन्येषां बाधात् । नित्यस्याविशिष्टानां वषट्काराणां चान्यत्र तुल्यवदेव विकल्प इति । **वस्तुतस्तु** एतत्पक्षेऽपि ब्राह्मणादिशब्दानां तत्तन्मात्राधिकारिककर्मविशेषलक्षणापत्तेः तत्कर्तृककर्मसामान्यसंबन्धस्यैव 'सप्तदश वैश्यस्य' इत्यादाविव प्रतीतस्य बाधापत्तिः । अतो नैमित्तिकविधिभिः सामान्यतो विहितानामुपसंहारः । अनुपसंहृतानां तु पक्षाणां गवेकर्मसु सर्वेषां विकल्पः । शूद्रशब्दस्तु त्रैवर्णिकातिरिक्ते लाक्षणिकः सन्निपातादिपरस्तान्त्रिककर्माभिप्रायो वा । संकर्ष. ४।३।२.

* **व्यक्तचोदनत्वं** द्रव्यदेवतावत्त्वम् । भा. ८।१।५।१२.

* **व्यक्तचोदनासामान्यात्** प्रयाजानुयाजाद्यारसामान्याच्च अग्नीषोमीये पशौ दार्शपौर्णमासिको विधयन्तः । भा. ८।१।५।१२.

* **व्यक्तिः** अपदार्थः । भा. ३।२।८।२१ पृ. ७७६. * व्यक्तिः द्रव्यं इति पर्याय एव । बाल. पृ. २१. * अन्या न व्यक्तिः अन्यच्च सामान्यम् । भा. ३।२।८।२१ पृ. ७७६. * का व्यक्तिरिति ? असाधारणविशेषा व्यक्तिः । भा. १।३।९।३० पृ. २९५-२९६ । केचिदाहुः-असाधारणा विशेषा एव व्यक्तिः, विशेषव्यतिरिक्तव्यक्त्यभावात् इति । 'तत्तु नैवं विशेषेभ्यो व्यक्तिरन्यैव हीष्यते । खण्डमुण्डादयः सर्वे विशेषत्वेन संमताः ॥ ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि । शाबलेयादिभेदोऽस्ति तदप्यत्यान्तरेष्वपि ॥' तस्मादसाधारणा विशेषा यस्यां सा व्यक्तिरित्येवं व्याख्येयम् । वा. * सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । यो ह्यर्थः सामान्यस्य विशेषाणां चाश्रयः, सा व्यक्तिः । व्यक्तिवचनश्च शब्दो न सामान्ये, न विशेषे वर्तते, तेषां तु आश्रयमेवाभिदधाति । भा. ३।१।९।३३ पृ. ३०३. * आकृतिवचनः शब्दः तत्सहचरितां व्यक्तिं लक्षयति । वा. १४। १२।२३ पृ. ३५४, * 'व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिताः' । यत्सामान्यं शब्दार्थभूतं तस्यानुष्ठेयत्वेनाविधेयत्वात् सर्वत्र व्यक्तय एव विधीयन्ते । २।२।२।२ पृ. ४७१. * व्यक्तेः अनित्याया अपि जात्या सह समवायलक्षणः संबन्धः अपौरुषेयः । ऋजु. पृ. १८८. * व्यक्तेः अशब्दार्थत्वम् । वा. २।२।२।२ पृ. ४७१. * व्यक्तेश्च आकृत्या विशेषाः परिच्छिद्यन्ते । भा. ६।३।११।२७. * व्यक्तीनां अनन्तत्वेन संबन्धानुपलब्धेः व्यभिचाराच्च अवाचकः शब्द इत्युक्तम् । वा. ३।१।६।१२ पृ. ६७४, * व्यक्तीनां आनन्त्यव्यभिचाराभ्यां अनभिधानमुक्तम् । ३।१।६।१२ पृ. ६७८.

* **व्यक्त्याकृत्योः** भेदाभेदौ- न च व्यक्त्याकृत्योः भिन्नकार्ययोः गुणप्रधाननानावस्थयोः समुदायोपगमनं युक्तम् । अनत्यन्तभेदाच्च भिन्नधर्मौ संबन्धसमुदायौ न युक्तौ । अनत्यन्तव्यतिरेकाच्च आकृतेरमूर्तत्वाच्चाश्रयदोषाप्रसङ्गः । सा हि प्रतीयते निष्कृष्टरूपा, क्रियायोगिनी तु व्यक्त्युपेता भवत्येवेति प्रोक्षणावेक्षणादि तु न कथंचिन्न संभवति । वा. १।३।९।३३ पृ. ३०४.

* ' व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते '। वा. १।३।९।१६ पृ. २४६.

**व्यक्तिन्यायः** । अयं न्यायः पूर्वोक्तन्यायस्य ( ' पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेन ' ) अपवादः । तथाहि, स्वीक्रियते हि जातिविशिष्टव्यक्तौ शब्दशक्तिमुपगच्छद्भिः तार्किकैरपि । ' गौरनित्या ' इत्यादौ पदार्थैकदेशस्यापि व्यक्तेः अनित्यत्वात् अन्वयः इति । **साहस्री**. २६६.

* अग्निष्टोमशब्दश्च जातिन्यायेन संस्थावचनोऽपि **व्यक्तिन्यायेन** ज्योतिष्टोममेव प्रचुरप्रयोगादभिधत्ते पार्थशब्द इवार्जुनम् । **भाट्ट**. २।३।१०. * तर्हि आकृत्यधिकरणन्यायेन सहैव मतुपा बहुव्रीहौ अपि संबन्धे एव शक्तिरस्तु ( अरुणया पिङ्गाक्ष्या ) । द्रव्यस्य तु व्यक्तिन्यायेन लक्षणया भानोपपत्तेः न शक्यता । **कौ**. ३।१।६।१२ पृ. १५८, * ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' । अत्र जीवनस्य दर्शादेश्च संबन्धस्तावत् लक्षणां विनाप्युपपद्यते । तस्य च विशेषापेक्षायां संबन्धान्तरासंभवात् यावच्छब्दस्य च तात्पर्यग्राहकस्य सत्त्वात् निमित्तपरत्वमेव व्यक्तिन्यायेन आश्रीयते । २।४।१।२ पृ. १०२.

* **व्यक्तिपदार्थपक्षः** केषांचित् । आकृतिपदार्थपक्षश्च सिद्धान्तः । **बाल**. पृ. ७३.

* **व्यक्तिविषयकप्रतिषेधभेदाः** **मीको**. पृ. २७३२ ' प्रतिषेधो द्विविधः ' इति बिन्दौ द्रष्टव्याः ।

**व्यञ्जकव्यङ्ग्यन्यायः** । यथा व्यञ्जकं आतपादि व्यङ्ग्यस्य घटादेराकारतामेति तथा । उक्तं च– ' व्यञ्जको वा यथालोको व्यङ्ग्यस्याकारतामियात् । सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ' इति । **साहस्री**. ३६७.

* **व्यतिक्रमः** बाधः, विरोधः, व्यभिचारः । **सु**. पृ. ११८५. * व्यतिक्रमः व्यूढद्वादशाहे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्रादिशब्दानामेव, नार्थानाम् । १०।५।२६।८८. **मीको**. पृ. २२०१ ' द्वादशाहे व्यूढे भक्ष० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' **व्यतिक्रमे यथाश्रुतीति चेत्** ' । ३।३।१।६॥ लिङ्गेन उच्चैस्त्वोपांशुत्वयोः ऋगादिशब्दरूपश्रुतिसंबन्धितयैव प्रयोज्यत्वात् वेदविहितपदार्थधर्मत्वपक्षे यजुर्वेदविहितत्वेन ऋचां ऋग्वेदात् व्यतिक्रमे यजुर्वेदविहितत्वेन उपांशुत्वप्राप्तावपि ऋग्वेदविहितत्वेन उच्चैस्त्वस्यापि अपरिहार्यत्वात् वेदाख्यश्रुतिविहितत्वनिमित्तस्य उपांशु उच्चैर्वा प्रयोगस्य पाक्षिकान्यथात्वापत्तेः जातधर्मतैव उचिता । **सु**. पृ. ११७३.

* **व्यतिरेकासिद्धिः** हेत्वाभासः । ' हेत्वाभासाः ' इति बिन्दौ द्रष्टव्यम् । **मणि**. पृ. ४१.

* **व्यतिषङ्गः** अभिषवकाले अंशुग्रहणरूपे माने क्रये इव प्राकृतैः पञ्चभिर्मन्त्रैः सह पृश्निग्रहमन्त्राणां दशानां प्राणग्रहमन्त्राणां च दशानाम् । तत्र प्रथमे माने प्रथमः प्राकृतो मन्त्रः दश पृश्निमन्त्राः । द्वितीये द्वितीयः प्राकृतो मन्त्रः दश प्राणग्रहाः । तृतीये पृश्नय एव । चतुर्थे प्राणा एव । पञ्चमे पृश्नय एव इति । **संकर्ष**. ३।३।१९.

* ' **व्यत्यस्तं** ऋतव्या उपदधाति ' इत्युपधाने व्यत्यासः श्रौतः क्रमः । **अग्निचयने** । **भा**. ५।१।४।७, * ' **व्यत्यस्तं षोडशिनं** शंसति ' इत्यतिरात्रे व्यत्यासः षोडशिशस्त्रशंसने श्रौतः क्रमः । ५।१।४।७.

**व्यपगतलेपालाबून्यायः** । यथा मृत्तिकालेपकृतमलाबूद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छति, तथा कर्मरहित आत्मा असङ्गत्वादूर्ध्वं गच्छतीत्यार्हताः । **साहस्री**. ७०४.

* **व्यपदेशाः** पृथक्त्वनिमित्ता भवन्ति । **भा**. २।१।१३।४५. * **व्यपदेशानां** पृथक्त्वनियतत्वात् , यथा चमसाध्वर्यवः । **वा**. ३।७।१०।२५.

**व्यपदेशिन्यायः** । एकस्मिन्नुभयारोपो व्यपदेशः । यथा– देवदत्तस्यैक एव पुत्रः स एव ज्येष्ठः स एव कनिष्ठः । किञ्च– निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो व्यपदेशः , सोऽस्यास्ति तेन तुल्यमित्यर्थः । **साहस्री**. ३२.

* **व्यभिचारः** । अन्यसंबन्धमात्रात्मकव्यभिचारानभ्युपगमात् , द्विधा हि एकः संबन्धी अनेकेन संबध्यते । कश्चित् संबन्ध्यन्तरं परित्यजन् , कश्चित् पूर्वा-



परित्यागेन । तत्र यः परित्यज्य अन्यत्रान्यत्र वर्तते स व्यभिचारात् अगमको भवति, यथा ऊर्ध्वत्वं स्थाणुपुरुषयोः । न च तत्रान्यसंबन्धः कारणं व्यभिचारस्य । यस्तु अन्यत्रापि वर्तमानः पूर्वावगतसंबन्ध्यपरित्यागेनैव वर्तते यथा शिंशपात्वं वृक्षत्वपार्थिवत्वद्रव्यत्वसत्त्वेषु । न तस्यानैकान्तिकत्वं सर्वेषु प्रत्यायनशक्त्यविघातात् । **वा**. ३।४।४।१३ पृ. ९१४.

* **व्यभिचारिणः** निश्चितबुद्धिहेतुता नास्ति । **सु**. पृ. १४०९.

**व्यभिचारिणीन्यायः** । यथा परपुरुषाऽऽसक्ता व्यभिचारिणी स्त्री निजगृहकर्मणि व्यग्राऽपि निजजारसङ्गजन्यकामाऽऽनन्दं स्वान्तेन प्रतिक्षणं ध्यायति, तथा धीरो लोके व्यवहरन्नपि अखण्डब्रह्मानन्दरसं हृदयाब्जे स्वादयतीति भावः । उक्तं च ' यथा व्यसनिनी नारी व्यग्राऽपि गृहकर्मणि । तदेवाऽऽस्वादयत्यन्तः परसङ्गरसायनम् ॥ एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः । तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ ' इति । **साहस्री**. ४५७.

* **व्यवधानम्** । असत्यां तु गतौ उपादेयस्यानेकस्यापि प्रधानेन संबन्धोऽवकल्पते व्यवहितेनापि, व्यवधानादर्थो बलीयान् इति । **भा**. ६।४।६।२३ पृ. १४४५, * **व्यवधानात्** लक्षणाऽपि ज्यायसी । प्रत्यक्षं हि लक्षणायाम् , परोक्षं व्यवधाने वाक्यम् । ' खलेवाली यूपो भवति ' इति । १०।२।३१।७०.

* **व्यवधारणकल्पनं** अश्वप्रतिग्रहेष्ट्यां अर्थवादप्रामाण्याधीनम् । **सु**. पृ. ६६. * **व्यवधारणकल्पना** यत्र अन्यथा अर्थः प्रतिभातः पौर्वापर्यालोचनेन व्यवधार्य अन्यथा कल्प्यते सा व्यवधारणकल्पना । तद्यथा– प्रतिगृह्णीयादिति श्रुतं प्रतिग्राहयेदिति कल्पयिष्यते । **वा**. २।१।८।३३. * व्यवधारणकल्पना । ' वाक्यान्यथात्वकरणं व्यवधारणकल्पना ' इति प्राञ्चः । यथा वेदोपक्रमे ( ३।३।१।१–८ ) ' उच्चैर्ऋचा क्रियते ' इत्यत्र उपसंहारे वेदविषयत्वकल्पनात् वाक्यपादाद्ये उक्ता । तथा अश्वप्रतिग्रहेष्ट्यधिकरणे ( ३।४।१०।२८–२९ ) दानविषयोपक्रमबलेन ' यावतोऽश्वान् प्रतिगृह्णीयात् ' इत्युपसंहारस्य प्रतिग्राहयेत् इति दानविषयत्वकल्पना उक्ता । **ननु** आद्ये व्यवधारणकल्पनोदाहरणे गुणकल्पनैवास्ति, द्वितीये प्रकृतिप्रत्ययान्यतरस्य अन्यथात्वात् विपरिणाम एव इति को भेदो व्यवधारणकल्पनायाः ( विपरिणामात् ) । यदपि तल्लक्षणं वाक्यान्यथात्वकरणं इति, तदपि वाक्यार्थस्य अन्यथात्वकरणेन , तच्च ' प्रतितिष्ठन्ति ' इति विपरिणामोदाहरणेऽपि अविशिष्टम् । यदि तु विपरिणामव्यावृत्त्यै वाक्येन एकवाक्यतापन्नेन उपक्रमेण अन्यथात्वं व्यवधारणकल्पनालक्षणम् , 'प्रतितिष्ठन्ति' इति विपरिणामे तु वर्तमानत्वबाधात् उपेयुः इति च अग्रिमफलापेक्षिविधेयैकवाक्यत्वादेव चान्यथात्वं न केनचित् उपक्रमेण इत्युच्यते, तदपि न । फलचमसवाक्ये हि ' यदि राजन्यं वा वैश्यं वा याजयेत् ' इत्युपक्रमात् तमस्मै भक्षं प्रयच्छेत् ' इत्युपसंहारे ' तेन यजेत ' इति कल्पनात् भाष्ये च ' सैषा व्यवधारणकल्पना ' इत्युक्तिः ( क्तेः ) निर्विवादा व्यवधारणकल्पना । वार्तिके तु तदधिकरणान्ते ( ३।८।१५।४७–५१ ) ' **एतेन** पूतीकानभिषुणुयात् इत्यादीनि व्याख्यातानि ' इत्युक्ते: ' यदि सोमं न विन्देत पूतीकानभिषुणुयात् ' इत्यस्यापि उदाहरणता उक्ता, तत्र यागोपक्रमाभावात् अव्याप्तिः स्यात् । उच्यते । ' यदि सोमं न विन्देत ' इत्युपक्रमादेव तत्रापि पूतीकानां यागसाधनता कल्प्यते । यागसाधनीभूतः सोमो यदि न लभ्येत इत्युक्ते हि इदमवगम्यते ' किंचिदत्र यागसाधनं विधित्सितं अग्रे अस्ति ' इति । अन्यथा सोमालाभोक्तिः अनर्थिकैव स्यादिति । **बाल**. पृ. २६–२७.

* **व्यवधारणकल्पनादोषः** अन्यथात्वकल्पने भवति । यथा– ' यावतोऽश्वान् प्रतिगृह्णीयात् ' इत्यत्र ' प्रतिग्राहयेत् ' इत्यर्थकरणम् । **बाल**. पृ. ४.

* **व्यवस्था** । अव्यवस्थितानां सामर्थ्येन व्यवस्था । **भाट्ट**. १।४।२०. * व्यवस्था रथंतरादिधर्माणां प्रकृतिवत् बृहद्रथंतरोभयसामके क्रतौ । ९।२।१७।४८–४९. **मीको**. पृ. २९७५ ' बृहद्रथंतरोभयसामके क्रतौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **व्यवस्थया** बृहद्रथंतर-

धर्माणां तत्तत्सामगानकाले ज्योतिष्टोमे अनुष्ठानम् । ९।२।१५।४५–४६. **मीको.** पृ. २९७७. ' बृहद्रथंतरधर्माणां व्यवस्थया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **( १ ) व्यवस्थाधिकरणम** । ३।१।४।७–१०. **मीको** . पृ. १८६५ ' तेषामर्थाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**( २ ) व्यवस्थाधिकरणम्** । शक्त्यनुसारेण पदार्थविनियोगव्यवस्था । १।४।१४।२५. 'शक्त्यधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **व्यवस्थाविधिभेदाः** उदाहरणानि च बाल. ग्रन्थस्थानि **मीको.** पृ. ३५४६ ' विधिः द्विविधः ' इति चिन्दौ बालग्रन्थे द्रष्टव्यानि ।

* **व्यवस्थितः** प्रतिषेधः सप्तधा– देशतः, कालतः, कर्तृतः, कर्मतः, निमित्ततः, संस्कार्यतः, फलतश्चेति । **बाल.** पृ. ३४.

* **व्यवस्थितत्वं** स्फ्यादीनां संबन्धानुसारेण दर्शपूर्णमासयोः । द्रव्याधिकरणम् । **वि.** ३।१।५.

* **व्यवस्थितविकल्पभेदाः** बालग्रन्थस्थाः **मीको.** पृ. ३५१२ ' विकल्पभेदाः निरूप्यन्ते ' इति चिन्दौ द्रष्टव्याः ।

* **व्यवहारः** अनादिः । ' अन्वेष्यो व्यवहारोऽयमनादिर्वेदवादिभिः । ' **श्लोवा. संबन्धाक्षेपपरिहारे** ११७. * व्यवहारः ऋणादानम् । शतस्य व्यवहरति । **मणि.** पृ. १२६. * प्रयोजनं तु नाम्नः सर्वत्र व्यवहारः एव । **वि.** १।४।२. * **व्यवहारस्य** प्रवृत्तिनिवृत्त्यात्मकत्वम् । **ऋजु.** पृ. १६.

* **व्यवहाराभावः** असति विशेषे । **भा.** १०।७।३।११.

* **व्यवहारार्थश्च** शब्दप्रयोगः । **भा.** ७।३।१४।३५.

* **व्यवहारार्थत्वं** संज्ञायाः । **भा.** ८।३।६।१८.

* **व्यवहारनित्यतान्यायः** । अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरंपरा अनादिः कल्प्येत ... । **वा.** १।३।८।२४ पृ. २५७.

* **व्यवहारमात्रादेव** हि बालानामवगतिर्दृष्टा । **बृहती.** पृ. १५५.

* एकेनापि **व्यवहितानां** अननुषङ्गान्न केनचिदेकवाक्यत्वमस्ति इति न ' दध्नेन्द्रियकामस्य ' इत्यत्र ' दध्ना जुहोति ' इत्येतदुपतिष्ठते । **वा.** २।२।११।२५ पृ. ५४१.

* **व्यवहितकल्पना** अध्याहारात् ज्यायसी । **भा.** ७।४।२।१०. * **व्यवहितकल्पनायां** पदव्यवधानं सूत्रे यथा– ' पदेन व्यवधानं तु लोके सन्नियमादिति ' । **श्लोवा.** १।१।१।५५ । **न्यायरत्नाकरः**– लौकिकवाक्यवत् वैदिकवाक्यमपि **पौरुषेयं** इत्युक्ते वैधर्म्यप्रदर्शनार्थं सूत्रं ' लोके सन्नियमात् प्रयोगसंनिकर्षः स्यात् ' ( १।१।७।२६ ) इति । अत्र लोके इत्यस्य पदस्य सन्नियमप्रयोगपदव्यवहितेन संनिकर्षपदेन संबन्धः । लोके चक्षुरादिसंनिकर्षात् अर्थस्य तद्विषयः शब्दप्रयोगः सन्नियमः उपपद्यते, न तु वेदे अतीन्द्रियत्वादर्थस्य इति ।

' **सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम्** । ' ५६ ॥ अश्वप्रतिग्रहेष्टिः लौकिके अश्वप्रतिग्रहे वैदिके वा इति संशये ' दोषात् त्विष्टिर्लौकिके स्यात् ' ( ३।४।१०।२८ ) इति पूर्वपक्षमुक्त्वा ' अर्थवादो वाऽनुपपातात् तस्माद्यज्ञे प्रतीयेत ' ( ३।४।१०।२९ ) इति सिद्धान्तितम् । ततः ' सौमेन्द्रं चरुं निर्वपेत् ' इति सोमपानव्यापदि विहितः चरुः लौकिके वैदिके वा इति संशये ' पानव्यापच्च तद्वत् ' ( ३।४।१२।३२) इति सूत्रम् । तत्र सूत्रत्रयव्यवहितः लौकिकपक्षः तद्वत् इति प्रत्यवमृश्यते इति ।

* **व्यवहितकल्पनाश्रयणं** वाक्यभेदात् वरम् । **वा.** ३।६।७।२२ पृ. १०४९.

**व्यवायान्नानुषज्जते । २।१।१७।४९ ॥**

' सं त वायुर्वातेन गच्छतां, सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा ' इति अग्नीषोमीये पशौ मन्त्रः । तत्र ' वायुर्वातेन गच्छताम् ' इत्येष भागः ' सं यज्ञपतिराशिषा इत्यनेन नानुषज्जते ' सं यजत्रैरङ्गानि ' इति बहुवचनान्तेन व्यवायात् व्यवधानात् । तस्मात् बहुवचनान्तस्य परस्य च तद्व्यवेतस्य लौकिको वाक्यशेषः कर्तव्यः । ' सं यजत्रैरङ्गानि गच्छन्ताम् ' ' सं यज्ञपतिराशिषा गच्छताम् ' इति । **के.**

**व्यवायान्नानुषज्येत । २।१।१८।४९ ॥**

' सं ते वायुर्वातेन गच्छताम्, सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा ' इति । संनिधिप्रत्युदाहरणसूत्रमिदम् । बुद्धिविपरिवृत्तिर्हि संनिधिरित्युक्तम् । अत्र तु ' सं ते वायुर्वातेन गच्छताम् ' इत्येकवचनान्तस्य आख्यातपदस्य ' सं यजत्रैरङ्गानि ' इत्यनेन बहुवचनान्तेनायोग्यतया अन्वयासंभवादवश्यं बहुवचनान्तं गच्छन्तामिति लौकिकपदं अध्याहर्तव्यम् । तेन विजातीयेन बुद्धिविच्छेदे सति बुद्धिविपरिवृत्तिरूपसंनिध्यभावात् आकाङ्क्षायोग्यतयोर्विद्यमानत्वेऽपि ' सं यज्ञपतिराशिषा ' इत्यत्र गच्छतामित्यस्य नानुषङ्गः । तदुक्तम्– ' **प्रत्युदाहरणत्वेन संनिधेरिदमुच्यते । असंबन्धातिरोधाने वैषम्यान्नानुषज्यते** ॥ ' इति ( वा. पृ. ४५९ ) । तेनात्र लौकिक एव शेषोऽध्याहर्तव्यः । **प्रयोजनं** पूर्वमेवोक्तम् ' **आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् । तदादिसाम्येन तु लौकिकानां न मन्त्ररूपप्रतिपत्तिसिद्धिः** ॥ ' इति । सूत्रं तु व्यक्तमेवेति । **तौता.**

* ' व्यवायान्नानुषज्यते । ' यत्र असंबन्धिपदव्यवधानं तत्र अनुषङ्गो नास्ति इति अनुषङ्गाधिकरणप्रत्युदाहरणमिदम् । वस्तुतस्तु प्रत्युदाहरणेऽपि प्रत्ययमात्रस्यैव व्यवायात् अनुषङ्गो निराकर्तव्यः । **कौ.** ४।१।१८।५०.

**व्यवायाधिकरणम्** । व्यवेताननुषङ्गाधिकरणम् । अग्नीषोमीये पशौ ' सं यज्ञपतिराशिषा ' इत्यत्र गच्छतां इति पूर्वस्य पदस्य व्यवायान्नानुषङ्गः ॥

**व्यवायान्नानुषज्जते । २।१।१७।४९ ॥**

**भाष्यम्**— ' सं ते वायुर्वातेन गच्छताम् , सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा ' इति । ' वायुर्वातेन गच्छतां ' इत्येष ' सं यजत्रैरङ्गानि ' इति बहुवचनान्तेन व्यवहितत्वात् , ' सं यज्ञपतिराशिषा इत्यत्र नानुषज्जते । एकेन साकाङ्क्षेण अव्यवेतो गच्छतां इति शेषः, ततो बहुवचनान्तेन ' सं यजत्रैरङ्गानि ' इत्येतेन संबन्धमुपेत्य व्यवेतत्वात् परेण न संबध्यते । गम्यते हि तदा विशेषः एकेन व्यवेत इति । गम्यमाने विशेषे न तत्र भावो वाक्यशेषस्य उपपद्यते । तस्मात् बहुवचनान्तस्य परस्य च तद्व्यवेतस्य लौकिको वाक्यशेषः कर्तव्य इति ।

**वा**— ' **प्रत्युदाहरणत्वेन संनिधेरेवमुच्यते । असंबन्धातिरोधाने वैषम्यान्नानुषज्यते** ॥ ' 'सं ते वायुर्वातेन गच्छताम् ' इत्यस्य साकाङ्क्षस्य अनन्तरत्वात् अवधारितः शेषो बहुवचनान्तेनायोग्येन असंबद्धः तुल्ययोगित्वाभावात् योग्येनापि यज्ञपतिना नानुषज्यते । अतश्च वैदिकशेषासंभवात् अस्ति लौकिकस्यावकाशः इत्युभयत्राध्याहारः कर्तव्यः । तत्र तु यद्यपि नोच्चार्यते गच्छतां इति, तथापि अवश्यमनुसंधातव्यः , अन्यथा अर्थापरिसमाप्तेः । तस्मात् नानुषङ्ग इति । **प्रयोजनं** तु अनुषङ्गे मन्त्रत्वात् प्रायश्चित्तम् । लौकिके चामन्त्रत्वमिति । आह च— ' **आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् । ऊहादिसाम्येन तु लौकिकानाममन्त्ररूपप्रतिपत्तिसिद्धिः** ॥ '

**शा**— ' **सर्वत्र तुल्ययोगित्वादनुषङ्गो हि वर्णितः । असंबन्धितिरोधाने व्यवधानान्न तुल्यता** ॥ '

**सोम**— अनुषङ्गापवादात् संगतिः ।

**वि**— ' गच्छतामितिशब्दस्यानुषङ्गोऽस्ति न वोपरि । सं यज्ञपतिरित्यत्र, योग्यत्वात् सोऽस्ति पूर्ववत् ॥ , तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि । नान्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते ॥ '

**भाट्ट**— यत्र तु असंबन्धिपदव्यवधानम् , यथा ' सं त वायुर्वातेन गच्छताम् , सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा ' इत्यत्र गच्छतामित्यस्य आशिषा इत्यत्र नानुषङ्गः । अङ्गानि इत्यत्र एकवचनान्तस्य अनन्वयेन बहुवचनान्तस्यैव गच्छन्तां इत्यस्य अध्याहारावश्यंभावात् । वस्तुतस्तु बहुवचनस्यैवाध्याहारेण गमिधातोः अनुषङ्ग एवेति एकवचनस्यैव अनुषङ्गप्रत्युदाहरणमिदम् ।

**मण्डन**— 'न स्याद् व्यवाये कथितोऽनुषङ्गः ।' १९.

**शंकर**-- 'व्यवाये स न संमतः' सः अनुषङ्गः ।

* **व्यस्ताः** प्रैषा आध्वर्यवाः । व्यस्तानि अनुवचनानि हौत्राणि । समस्तानि प्रैषानुवचनानि मैत्रावरुणानि । **वि.** ३।७।२१.

* **व्याकरणं** अत्यन्तकष्टम् । तस्य सुज्ञातत्वं पुनरीदृशम्, येन अद्यापि विवदन्ते (इत्युपहासः) । **वा.** १।३।८।२४ पृ. २५६, * व्याकरणं अनादि, किंचिद्ग्रन्थोपनिबद्ध–प्रकृतिप्रत्ययादिविभागद्वार–प्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावात् । १।३।८।२७ पृ. २७९, * व्याकरणं अर्थज्ञानोपायः । १।२।४।४१. * व्याकरणं वेदाङ्गं पौरुषेयमपि अविच्छिन्नपारंपर्येणानुवर्तनात् वेदमूलकत्वाच्च प्रमाणम् । वि. १।३।७, * व्याकरणं साधूनामेव प्रयोगे, गवादिशब्दानामेव साधुत्वे प्रमाणम् । १।३।९. * **व्याकरणानि** बहूनि । **वा.** १।३।८।२४ पृ. २५४, * **व्याकरणेन** प्रसिद्धार्थानामेव अविनष्टस्वरूपान्वाख्यानमात्रं क्रियते तत्र प्रासङ्गिकमेव कियदपि अर्थनिरूपणम् । १।३।५।१० पृ. २२८, * 'तस्मान्न लोकवेदाभ्यां कश्चिद् व्याकरणादृते । वाचकाननपभ्रष्टान् यथावज्ज्ञातुमर्हति ॥' १।३।८।२७ पृ. २७८, * 'यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम् । तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम् ॥' १।३।८।२७ पृ. २८२. * **व्याकरणस्य** अर्थान्वाख्यानार्थत्वाभावेन अर्थवत्त्वे प्रामाण्याभावः । सु. पृ. ७४९, * व्याकरणस्य पङ्क्तिपावनत्वापादकत्वाभिधानं प्रकृतिप्रत्ययान्वाख्यानरूपव्याकरणविषयम्, न तु स्वरवर्णमात्राकर्मविप्लुतिरूपवैदिकशब्दव्याकरणविषयम् । नापि उद्दिश्यमानोपादीयमान–गुणप्रधानादिरूपवचनव्यक्तिव्याकरणविषयम् । पृ. ३३०. * व्याकरणस्य पूर्वपूर्वव्याकरणं मूलम्, न निर्मूलम् । वि. १।३।९. * व्याकरणस्य वैदिकोहविज्ञानद्वारा वेदोपकारकत्वम् । **मणि.** पृ. ५. * व्याकरणस्य शब्दान्वाख्यानमात्रार्थत्वेन अर्थतात्पर्याभावः । **सु.** पृ. ३४३. * व्याकरणस्य साधुशब्दतत्त्वनिर्णयरूपो विषयः, तत्रास्य व्याकरणान्तैरेव संगतिः स्यान्न धर्मसूत्रैः । वा. १।३।८।२७ पृ. २८५, * शास्त्रशब्दो यदि तावद्रूढस्ततश्चतुर्दशसु तावत् विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धत्वात्तदन्तर्गतत्वाच्च **व्याकरणस्य** शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यते अनेन इति शास्त्रत्वं अन्वर्थमिष्यते तथापि व्याकरणेन साधुशब्दाः शिष्यन्ते तदनुगमोपायश्च वा प्रकृतिप्रत्ययादयः तदभियुक्तशिष्यजनो वा इति सर्वथा शास्त्रशब्दप्रवृत्तिरविहता । १।३।८।२७ पृ. २८५, * **व्याकरणे** अपि शब्दापशब्दविभागज्ञानं साक्षात् वृक्षादिविभागवत् प्रत्यक्षनिमित्तम् । साधुशब्दप्रयोगात् फलसिद्धिः, अपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । १।३।१।२ पृ. १६७. * व्याकरणे उपसर्जनत्वस्य गुणत्वप्रसिद्धिः । सु. पृ. १४२२, * व्याकरणे शब्दान्वाख्यानं लोकमूलं साध्वसाधुप्रयोगयोस्तु इष्टानिष्टहेतुत्वकथनं वेदमूलम् । पृ. १२९.

卐 **व्याकरणाधिकरणम् ।** व्याकरणसिद्धाः साधवः शब्दाः कर्मसु प्रयोज्याः ॥

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् । १।३।८।२४ ॥**

**भाष्यम्**— गौगावी गोणी गोपोतलिका इत्येवमादयः शब्दाः उदाहरणम् । गोशब्दो यथा सास्नादिमति प्रमाणम्, किं तथा गाव्यादयोऽप्युत नेति संदेहः । किमत्र एकः शब्दः अविच्छिन्नपारम्पर्यः अर्थाभिधायी, इतरे अपभ्रंशाः, उत सर्वेऽनादयः । सर्वे इति ब्रूमः । कुतः ? प्रत्ययात् । प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः । तस्मादितो वर्षशतेऽप्यस्यार्थस्य संबन्ध आसीदेव, ततः परेण, ततश्च परतरेणेत्यनादिता । कर्ता चास्य संबन्धस्य नास्तीति व्यवस्थितमेव । तस्मात् सर्वे साधवः सर्वैर्भाषितव्यम् । सर्वे हि साधयन्त्यर्थम् । यथा हस्तः करः पाणिरिति । अर्थाय ह्येते उच्चार्यन्ते नादृष्टाय, न ह्येषामुच्चारणे शास्त्रमस्ति । तस्मात् न व्यवतिष्ठेत कश्चिदेक एव साधुरितरे असाधव इति ।

**वा**— [पृ. २५२] एकस्मात् पदात् प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यव-



स्थितशास्त्रप्रयोगबलेन अव्यवस्थितलौकिकप्रयोगबाधात् यववराहादिशब्दानामर्थनिर्णयः प्रतिपादितः । एवं (यत्र) पुनरेकस्मिन् गवादावर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्रस्थसर्वशब्दप्रयोगाणां च लौकिकशब्दैरविरोधात् पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात् । तथाहि– '**लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते । अतो न लौकिकेष्वस्मात्साध्वसाधुत्वनिर्णयः ॥**' वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनात् बलाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात् । [पृ. २५३] '**लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता । वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥ ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् । संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥**' तेन भेरीशङ्खादिशब्दाः गकारककारादयः प्रत्येकं तद्वर्गा वाऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्योऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यपि एकविषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात् साधुत्वेनावधार्यन्ते । '**ततश्चावाचकत्वेन यदसाधुत्वमुच्यते । तस्य लोकविरुद्धत्वान्न ग्राह्यत्वं प्रतीयते ॥ अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता । वेदवाक्यैरनिर्दिष्टा न साऽस्त्यन्यप्रमाणिका ॥**'

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे । न वाऽननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियाऽपि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किंचित्प्रमाणत्वेन संभवति । साधुत्वासाधुत्वयोः अननुष्ठानात्मकत्वात् विधिप्रतिषेधाविषयत्वम् । अभिधाभावनाकरणभूतयोः विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न, प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः । '**यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति । विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥ अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः । न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ॥**' व्रीह्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वात् [पृ. २५४] विधिप्रतिषेधगोचरीभवन्ति न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते । न तावत् साध्वसाधुत्वे जातिगुणाद्यात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते यदालम्बनौ द्वावेव विधिप्रतिषेधावनुमीयेयातां 'साधुभिः भाषेत नासाधुभिः' इति । '**अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः । न त्ववान्तरसामान्ये केचिद्वर्गद्वयस्थिते ॥**' तेन यद्येकैका व्यक्तिर्विधीयेत प्रतिषिध्येत वा ततो यावत्पदं वाक्यान्यनुमिमानः त्रैलोक्यपूरणादप्यधिकानि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावतां कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम्, नित्यानुमेयश्रुतिमूलप्रतिषेधात् । न च वाचकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवतः सर्वेषां वाचकत्वात् । '**वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते । अवाचकनिषेधश्च नाप्राप्तेरवकल्पते ॥**' न ह्युदकं पिबेदग्निं न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुतिरुभयं वा संयोगपृथक्त्वात् कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनमात्रमेव सौकर्यादाश्रितम् । यदि ह्यपशब्दप्रतिषेधमूलं व्याकरणं ततः तेषां बहुत्वात् अव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तुं शक्यते इति 'पञ्च पञ्चनखा भक्ष्याः' इति स्मृतिन्यायेन अनुगतविपरीतभाषणप्रतिषेधोऽर्थापत्तिसिद्धः स्मर्यते । साधुविधिपक्षे तु ते एव स्मर्तव्याः । उभयपक्षे तु तदनुगमादेव इतरसिद्धेः प्रतिषेधविषयज्ञानोपपत्तिः । स एष व्याकरणस्य पक्षत्रयेऽपि एकानुगमनिबन्धनत्वात् कथंचित् संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावक्लृप्तिः । अनन्तवाक्यपाठासंभवात् इष्टासंभवदर्शनार्थमेव होलाकाधिकरणेऽभिहितम् 'न तस्याऽऽकृतिवचनता न्याय्या, न

व्यक्तिवचनता' इति। तस्मात् असंभवन्मूलत्वादपस्मृतिः। '**अथ प्राप्तश्च योऽर्थः स्यान्न स शास्त्रस्य गोचरः। सिद्धः शब्दप्रयोगश्च लोकादेवार्थलक्षणः॥**' अथ अर्थलक्षणत्वेऽपि शास्त्रेण धर्माय प्रयोगनियमात् प्रयोगोत्पत्तिशास्त्रत्वं स्यादिति। तदनुपपन्नम्। नियमविषयासंभवात्। '**यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते। नित्यप्राप्तप्रयोगस्तु न शब्दो नियमास्पदम्॥** [ पृ. २५५ ] **यस्याप्यत्यन्तमप्राप्तिस्ततोऽन्यो न नियम्यते। तव चात्यन्तमप्राप्तिर्गाव्यादेः प्राप्तता मम॥**' तेन पक्षद्वयेऽपि नियमानुपपत्तिः। कीदृशश्चात्र नियमः कल्प्येत। किं साधुभिरेव भाषितव्यमुत साधुभिर्भाषितव्यमेवेति। '**यदि साधुभिरेवेति नासाधोरप्रसङ्गतः। नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते॥**' यदि हि एकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुः ततः साधुनियमावकाशः स्यात्। त्वन्मते तु पुनः '**अत्यन्तावाचकत्वात्तु नैवासाधुः प्रसज्यते। यन्निवृत्तिफलः साधोर्नियमोऽत्रार्थवान् भवेत्॥**' अथ प्रमादाशक्तिकृतप्रसङ्गनिवृत्तिः नियमं प्रयुञ्जीत। तदसत्। '**न हि शास्त्रशतेनापि प्रमादाशक्तिकारितात्। निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते॥**' दृष्टोऽपशब्दानामर्थाभिधाने प्रयोग इति चेत्। उच्यते— '**अन्योऽप्यक्षिनिकोचादेः प्रयोगोऽर्थेषु दृश्यते। तन्निवृत्तिफलः कश्चिन्नियमो न च दृश्यते॥**' न च नियमानां प्रतिपक्षनिवृत्तिः प्रयोजनम्। परिसंख्याप्रयोजनत्वात्। न चायं परिसंख्याविषयो युज्यते। युगपत्प्राप्त्यभावात्। '**न वा दृष्टार्थतैवास्य प्रयोगस्योपपद्यते। न हि दृष्टनिराकाङ्क्षाददृष्टमपि गम्यते॥**' न हि तादृशेषु अदृष्टकल्पनायामर्थापत्तिः प्रभवति। परार्थत्वाच्च फलश्रुतेरर्थवादत्वम्। न चासति फले शक्यमपूर्वं कल्पयितुम्। '**न चेदं नियमापूर्वमाश्रितं क्वेति गम्यते। शब्दार्थश्रोतृतद्बुद्धिवक्त्रुच्चारणगोचरे॥**' शब्दस्य तावदत्यन्तपरार्थदृष्टार्थत्वात् नापूर्वेण कश्चिदुपकारः। सत्यपि चाभिधानकर्मत्वेन अर्थस्य प्राधान्ये दृष्टार्थेषु लोकव्यवहारेषु विनाऽप्यपूर्वेणाङ्गभावात् अपूर्वोपकारानुपयोगः। श्रोतुः पुनर्नियमविधिसंस्पर्शानन्तर्गतत्वादेव असंस्कार्यत्वम्। बुद्ध्योश्च क्षणिकत्वान्न कालान्तरावस्थाय्यपूर्वाधारत्वोपपत्तिः।

'**वक्ता तु भाषणे सर्वो गुणभूतो विधीयते।**
**न तस्य नियमापूर्वसंस्कार्यत्वनिरूपणम्॥**
**न प्रधानपदं चात्र विद्यते स्वर्गकामवत्।**
[ पृ. २५६ ] **न च षष्ठ्युक्तसंबन्धात्स्वामित्वेन प्रधानतः॥ यत्तु दिङ्नियमापूर्वं भोजनादिषु कल्पितम्। पुरुषार्थक्रियाद्वारं तदर्थं तत्प्रतीयते॥**' न चेहोच्चारणं उच्चारयित्रर्थं येन भोजनादिसमत्वं प्रतिपद्येत। स्वरूपेण पुनर्भङ्गित्वात् बुद्धिवदेवासंस्कारार्हम्। '**एवं चावेदमूलत्वान्न धर्मनियमार्थता। युक्ता शब्दस्मृतेर्वक्तुं न चास्याः शास्त्रता स्वयम्॥**' तदुक्तं 'प्रयोगशास्त्रमिति चेन्नासन्नियमात्' इति।

'**नहि व्याकरणादीनां वेदत्वेन स्वतन्त्रता। पुरुषाधीनवृत्तेश्च सापेक्षस्याप्रमाणता॥**' सर्वत्र हि पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति प्रत्ययस्तेन कर्त्रभिप्रायप्रकाशनमात्रोपयुक्तत्वात् व्याकरणान्नैव शब्दगतसाध्वसाधुविभागः प्रतीयते। '**न च स्मृत्यन्तरं किंचिद् दृष्टं तत्कार्यगोचरम्। दृढं श्रुत्यनुमानं स्याद्येनोपनयनादिवत्॥**' प्रायेण मनुगौतमवसिष्ठादिप्रणीताः समानेष्वर्थेषु धर्मसंहिताः वर्तन्ते। तेनाविगानात् ताभ्य एव श्रुतयः स्वनुमानाः। न च व्याकरणस्य ताभिः समानार्थत्वम्। '**परस्परेण चाऽऽचार्या विगीतवचनाः स्थिताः। सूत्रवार्तिकभाष्येषु किं तत्राध्यवसीयताम्॥ न तावत्सूत्रकारेण किंचिदुक्तं प्रयोजनम्। कथं चैतावति ग्रन्थे स्यात्प्रयोजनविस्मृतिः॥**' येष्वपि तद्ग्रन्थेषु विस्पष्टान्यादित एवाऽऽरभ्य प्रयोजनानि ज्ञायन्ते न चैषां श्रवणग्रहणधारणेषु महान् खेदस्तेष्वपि जिज्ञासूत्साहार्थं पूर्वं प्रयोजनान्येव निबध्यन्ते, 'धर्मं व्याख्यास्यामः', 'यज्ञं व्याख्यास्यामः' इत्येवमादिभिः। इह पुनः अत्यन्तकष्टं व्याकरणं प्रणयता सूत्रकारेण धर्मार्थकाममोक्षाणां न



कस्यचित्प्रयोजनत्वमाश्रितम्। न च सर्वप्रधाने वस्तुन्यनादरो युक्तः। सुज्ञातत्वं पुनरीदृशं येनाद्यापि विवदन्ते।

'**धर्मश्च फलसंबद्धं कर्म यागादि वर्ण्यते। न च व्याकरणे किंचित्तादृक्कर्मोपदिश्यते॥ धर्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोः। यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम्॥**' शास्त्रार्थो हि निरूपितरूपो भवति। इह च ज्ञानधर्मत्वमुपन्यस्य अधर्मप्रसङ्गभीतेन [ पृ. २५७ ] शास्त्रपूर्वप्रयोगेऽभ्युदय इति वार्तिककारेणोक्तम्। भाष्यकार आह— 'अथवा पुनरस्तु ज्ञाने धर्मः' इति। न चैवमनियमेन धर्मत्वावधारणं युक्तम्। '**संबद्धयोश्च धर्मत्वं यदैकस्यावधार्यते। तदेतरस्तदर्थत्वान्न धर्मत्वेन गम्यते॥**' तदिह यदि तावत् ज्ञानमेव धर्मत्वेनावधारितं ततो लोकप्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सत्यामप्युपकारनिर्वृत्तौ वाजिनादिवत्प्रयोजकत्वाभावः। शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात्। असत्यां प्रयोजनान्तराकाङ्क्षायां यद्यपि काचित्फले श्रुतिर्भवेत्साऽपि 'द्रव्यसंस्कारकर्म' ( ४।३।१।१ ) इत्यनेन न्यायेनार्थवादतया ज्ञायते। न हि समानाध्वनोः परस्मिन् फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायते इति वर्णितमेतत्। 'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति। किंच— '**आदिमत्त्वाच्च धर्मत्वं नैव ज्ञानप्रयोगयोः। न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः॥**' यन्नाम ज्ञानं नित्येन वेदेनैव क्रियते तत्र तत्पूर्वकप्रयोगविधानं फलायोपपद्यते। व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वात् मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते। '**न च व्याकरणं नित्यं कथंचिदवगम्यते। कर्तृस्मृतिदृढिम्ना हि नित्यपक्षनिराक्रिया॥**' अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरम्पराऽनादिः कल्प्येत तथापि 'उक्तं तु शब्दपूर्वत्वम्' ( १।१।८।२९ ) इत्यस्य न्यायस्य स्थितत्वात्। अनेकपुरुषकृतमपि सद्व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते। '**न च व्याकरणत्वाख्या जातिः काचिद्व्यवस्थिता। अनित्ये वाक्यसंघाते सा जातिः क्वावतिष्ठताम्॥**'

अथ 'लक्ष्यलक्षणे व्याकरणम्' इति सत्यपि लक्षणांशकृत्रिमत्वे लक्ष्यांशेन नित्येन नित्यो विधिरुपपत्स्यते इति। तदनुपपन्नम्। कुतः-- '**अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणादिना। नैकमालम्बनं किंचिद्विधेरस्तीत्युदाहृतम्॥**' ननु वेद एव व्याकरणनित्यत्वं दृश्यते। यथाऽऽह— 'तस्मादेषा व्याकृता वागुद्यते' इति। नैतदस्ति। '**व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी। अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः॥**' अव्याकृताया हि लौकिक्या वाचः शिष्याचार्यसंबन्धेन स्वरवर्णमात्राक्रमैरविप्लुतरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते। तस्याश्च मन्त्रब्राह्मणात्मिकायाः कर्मसु ज्ञाने प्रयोगे च धर्मोऽस्त्येव। यदपि च 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति' इति तदपि स्वाध्यायप्रशंसाशेषभूतमेव। 'अहरहः स्वाध्यायमधीयीत' इत्यत्र 'अप्येकामृचं यजुः साम वा' इत्येतदवश्यकर्तव्यतानियमार्थमुक्तम्। '**योऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः। तस्य शास्त्रान्वितः शब्द एकोऽपि स्वर्गकामधुक्॥**' शास्त्रान्वित इति च यथास्वाध्यायमनुगत इत्यर्थः। सम्यक्प्रयुक्त इति चोपनयनोपसदनगुरुशुश्रूषादर्भपवित्रपाणित्वादीतिकर्तव्यतोपपन्नत्वाश्रयणेनोक्तम्। यदपि च 'तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति, तत्संप्रदायागतवैदिकशब्दविनाशप्रतिषेधार्थमेव। वैदिकाच्चापेतत्वाल्लौकिकस्य अपशब्दत्वं संभवति। सुज्ञानं च। न च लौकिकादप्यपेतोऽपशब्दो नाम कश्चिदस्ति। गाव्यादीनामपि शब्दानां श्रोत्रग्राह्यत्वेन शब्दशब्दवाच्यत्वशब्दबुद्धिग्राह्यत्वशब्दत्वानुगमदर्शनात्। अथापि अवश्यं लौकिकादपि अपेतोऽपशब्द आश्रयणीयः। तथापि 'न म्लेच्छभाषां शिक्षेत' इत्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तरालकृष्णमृगसंचरणाद्युपलक्षितधर्माधिकृतार्यावर्तनिवासिव्यतिरिक्तबर्बरादिभाषागतस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वज्ञानात् तेन भाषणं प्रतिषिध्यते। युक्तं च तस्याशेषतदीयाचरणवत्परिहरणीयत्वं न त्वार्यावर्तनिवासिप्रयुक्तेषु गाव्यादिषु म्लेच्छति-

धात्वर्थानुगमः कश्चित्। येन तदनाचारितत्वेनापशब्दत्वदप-
शब्दत्वं निरूप्यते। यदपि च 'आहिताग्निरपशब्दं प्रयुज्य
प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्' इति। तदप्यनृत-
वाद्वैदिकशब्दविनाशम्लेच्छभाषाप्रयोगाश्रयमेव वेदितव्यं
न तु व्याकरणानुगतव्यतिरिक्तशब्दप्रयोगविषयम्। तथाहि

**'कथं नामेदृशात्कार्यात्सर्व एवाऽऽहिताग्नयः।**
**प्रवर्तेरन् कथं चान्यैर्न निन्द्येरन्नशिष्टवत् ॥'**

प्रायेण हि शिष्टानां धर्माचारप्रणिहितचेतसां कश्चिदेव
प्रमादात् अल्पोऽनाचारो भवति। गाव्यादिशब्दप्रयोगेषु
पुनर्न केषांचिदप्यनाचारबुद्धिः। न च कलञ्जादिभक्षण-
वत् [ पृ. २५९ ] विचिकित्सा गर्हा वा दृश्यते। न
चाऽऽहिताग्निसहस्रेऽप्येकस्त्वदभिमतसाधुशब्दैरेव व्यव-
हरमाणो दृश्यते। **'कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्य-
कारिणः। शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥'**
'समानमितरच्छ्येनेन' इत्यादितकारान्त-
प्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तम्,
'समानमितरं ज्योतिष्टोमेन' 'समानमितरं गवा
ऐकाहिकेन' इति। सूत्रकारेणाप्यभिहितम् 'अहीने
ब्रहिष्पवमानैः सदसि स्तुवीरन्' इति कर्त्रभिप्रायक्रिया-
फलवर्जितेऽप्यृत्विक्कर्तृके स्तवने 'यजन्ति याजकाः'
इतिवत् परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्याऽऽत्मनेपदं
प्रयुक्तम्। तथा आश्वलायनेन 'प्राश्य सित्वा प्रायश्चित्तं
जुहुयुः' इति समासेऽपि ल्यब्न प्रयुक्तः। 'आज्येना-
क्षिणी आज्य' इत्यसमासेऽपि प्रयुक्तः। तथा
शिक्षायां नारदेन 'प्रत्यूषे ब्रह्म चिन्तयेत्'
इति गाव्यादिशब्दतुल्य एव प्रयुक्तः। तथा मनुना-
ऽपि 'ज्ञातारः सन्ति मेत्युक्त्वा' इत्यत्र सन्ति
म इत्युक्त्वेति वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता
कृता। तथा मीमांसायामपि 'गव्यस्य च तदादिषु'
(८।१।११।१८) इति गोर्विकारावयवविषयसाधुप्रयोग-
योग्यः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः। तथा 'द्यावो-
स्तथेति चेत्' (१।३।५।१८) इति द्यावापृथिव्योरिति
वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम्। तथा गृह्यकारेण
मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यनिषये
जिघ्रादेशः प्रयुक्तः। कात्स्न्र्येऽपि व्याकरणस्य निरुक्त-
हीनलक्षणाः प्रयोगा ब्रुवो यद्वद्ब्राह्मणो व्रवणादिति।
संवत्सरं शशयाना इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मण-
शब्दनिर्वचने क्रियमाणे वचनशीलत्वनिमित्ततां दर्शयता
ब्रुवो वचिरिति वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम्।

**'अन्तो नास्त्यपशब्दानामितिहासपुराणयोः।**
**तथोभाभ्यादिरूपाणां हस्तिशिक्षादिकारिणाम् ॥'**

युगपदुभाभ्यां दन्ताभ्यां यः प्रहारः स उभाभ्य इति
सर्वैः पालकाप्यराजपुत्रादिभिर्व्याकरणानपेक्षमेव प्रयुक्तम्।

**'वेदेष्वपि प्रयोगास्ते भूयांसोऽध्येतृसंमताः।**
**सामान्यं छान्दसं वाऽपि येषां नास्त्येव लक्षणम् ॥'**

न हि ते सुप्तिङुपग्रहादिव्यत्ययेन नापि कतिपयाधिकार-
दृष्टेन 'बहुलं छन्दसि' इत्यनेन सिध्यन्ति। तद्यथा 'मध्यं
आपस्य तिष्ठति। नीचीनवारं वरुणः कवन्धम्' इति।
[ पृ. २६० ] न ह्यपामित्यस्य नित्यस्त्रीलिङ्गबहुवचन-
विषयव्यञ्जनान्तप्रातिपदिकपरषष्ठ्याऽन्वाख्यानादापस्ये-
त्येतद्रूपं लक्षणानुगतं दृश्यते। नापि द्वारशब्दस्य स्थाने
लाटभाषातोऽन्यत्र वारशब्दः संभवति। तेनानारभ्य
एवायं विपर्ययाप्यसंभवात्। **'शब्दानुगमरूपोऽर्थो
यत्र व्याकरणं कृतम्। येऽपि व्याकरणस्यैव परे
पारे प्रतिष्ठिताः ॥ सुतरां तेऽपि गाव्यादितुल्या-
नेव प्रयुञ्जते। सूत्रवार्तिकभाष्येषु दृश्यते चाप-
शब्दनम् ॥ अश्वारूढाः कथं चाश्वान् विस्मरेयुः
सचेतनाः ॥'** सूत्रे तावत् 'जनिकर्तुः प्रकृतिः' (पा.
१।४।३०) इत्यत्र हि द्वावपशब्दौ जनिशब्देन हि
'इक्श्तिपौ धातुनिर्देशे' इत्यनेन लक्षणेनान्वितो धातुरेव
निर्दिश्यते। न च तस्य कर्तुः प्रकृतेरपादानसंज्ञेष्यते।
जायमानस्य पुनरर्थस्य जनिशब्दो वाचकतया नैव
लक्षणेनानुगतः। तेनायं दरिद्र इवाश्वशब्दो जनिमात्र-
वाचित्वात्तदर्थं प्रत्यसाधुरेव विज्ञायते। तथा 'तृज
काभ्यां कर्तरि' (पा. २।२।१५) इति प्रतिषिद्धषष्ठी-
समासप्रयोगात् व्याकरणफलपरित्यागः। एवं 'तत्प्रयो-
जकः' (पा. १।४।५५) इति प्रतिषिद्ध एव
समासः। तथा वार्तिकेऽपि दम्भेर्हल्ग्रहणस्य जातिवाचक-
त्वात्सिद्धमिति। तथा 'आन्यभाव्यं तु कालशब्द-
व्यवायात्' इति। अत्र क्लेशेन समासं कल्प-



यित्वा ततः समाससंज्ञया गुणवचनसंज्ञायां बाधितायां
'गुणवचनब्राह्मणादिभ्यः' (पा. ५।१।१२४) इति
लक्षणेनासंसृष्ट एव ष्यञ् प्रयुक्तः। भाष्येऽप्यविरवि-
कन्यायेनेति द्वंद्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः
सुपः 'सुपो धातुप्रातिपदिकयोः' (पा. २।४।७१)
इति प्रत्यक्षोपदिष्टोऽपि लुङ्न कृतः। तथाऽन्यथा कृत्वा
चोदितमन्यथा कृत्वा परिहार इति। 'अन्यथैवं कथम्'
(पा. ६।४।२७) इत्यन्वाख्यातसाधुत्वोऽपि णमुल् न
प्रयुक्तः। न चैषां निपातनैः साधुत्वसिद्धिः। कुतः?

**'येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः।**
**अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः ॥**
**स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी।**
**प्रत्यक्षप्रतिषेधाच्च जनिकर्त्राद्यसाधुता ॥'**

प्रत्यक्ष-
स्मृतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचार-
भूतादवयवानुगमस्मृतिमनुमाय निपातनात्साधुत्वसिद्धिः।
न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मार्थत्वा-
भावाद्वा लक्षणानुगतिरनादरणीया। **'प्रदेशान्तरसिद्धेन
लक्षणेनानुगम्यते। देशान्तरस्थितः शब्दो लक्ष्य-
भूतोऽन्यशब्दवत् ॥'** [ पृ. २६१ ] तथा च 'कुतं
कस्मान्न भवति वृद्धिः' (म. भा.) इति। कोऽयं शब्द
इत्यादिषु लक्षणानुगमादरः सर्वत्राऽऽश्रितः। यदि च
लक्षणशब्देषु लक्षणं न प्रवर्तेत, ततः सर्वं व्याकरणमप-
शब्दैरेव निबद्धं स्यात्। अर्धवैशसदर्शनात्तु प्रमाणत्व-
हानिः। **अथोच्येत** यज्ञप्रयोगविषय एव साधुभाषण-
नियमो न सूत्रभाष्यव्याख्यानादिक्रियास्विति। तदसत्।
'स्वर्गे लोके कामधुक्' इति फलवत्त्वोपन्यासात्। सार-
स्वतीविधावाहिताग्निग्रहणार्थवत्त्वात्। इतरथा ह्याहिताग्नि-
रेव यज्ञेष्वधिक्रियत इति तद्गोचरेऽपशब्दप्रयोगे निष्प्रयो-
जनमेवाऽऽहिताग्निग्रहणं भवेत्। योऽपि च ज्योतिष्टोम-
प्रकरणे वाजसनेयिनां 'तस्माद्ब्राह्मणो न म्लेच्छेत्'
इति प्रतिषेधः कर्माङ्गत्वेन ज्ञायते सोऽपि गुरुसंप्रदाय-
क्रमागतमन्त्रप्रयोगविनाशविषय एव म्लेच्छभाषाप्रति-
षेधार्थो वेति पूर्ववदेव नेतव्यः। यदपि च 'केषां
शब्दानाम्' (म. भा. पस्प.) इति प्रश्नानन्तरं
'लौकिकानां वैदिकानां च' इति विवेककथनं तदपि
बहूनां तावत् प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति
स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रयसदृशमभिधीय-
मानं शोभते न च लौकिकमध्ये गौरश्वः पुरुषो हस्ती-
त्येवमादयः सर्वे वेदसाधारणा वेदादेव चोद्धृत्य लोकेन
प्रयुक्ता उदाहर्तुं न्याय्याः। य एव हि भाषायामित्येव
स्मर्यन्ते, न च कचिदपि वेदे दृष्टपूर्वा इत्येवं संभावयितुं
शक्यन्ते त एवोदाहर्तव्याः। वैदिकोदाहरणेष्वपि च
लोकप्रसिद्धा एव शमादय उदाहृताः। न च वाक्यो-
दाहरणेन लौकिकेभ्यो भिद्यन्ते। वाक्यानां व्याकरणे-
नानन्वाख्यानात्। अतः छान्दसान्येव कानिचित्
'गृभ्णामि' 'दत्त्वायाथ' इत्येवमादीनि उदाहर्तुं
योग्यानि न 'शं नो देवीः' इत्येवमादीनि। छान्द-
सोदाहरणं च कुतः 'सिद्धे' 'लोकतः' इत्यनेन प्रत्या-
सन्नेनैव व्याहन्येत। यदि च लौकिकानामन्वाख्यानं
क्रियेत, ततः सुतरां गाव्यादय एवान्वाख्येयास्तेषां व्यव-
स्थितं लौकिकत्वं वेदेष्वप्रयोगात् पुनरध्येतृभिर्वेदादेवो-
द्धृत्योद्धृत्य प्रयुक्ता इति शक्यं वक्तुम्। तथा च मनुना-
ऽप्युक्तम्। 'वेदशब्देभ्य एवादौ पृथक् संस्था
विनिर्ममे' इति। दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिके-
ऽप्यर्थे विवक्षिते तद्भाषासमानार्थान् सकलमन्त्रानप्युदा-
हरन्तः किमङ्ग पुनः पादान् पदानि वा। न चाऽऽश्रित-
प्रतिपदपाठानां वैदिकानां लक्षणेन कार्यम्। न चैषां
गुरुमुखादधीतो लक्षणमस्ति 'दृष्टानुविधित्वाच्छन्दस'
इति स्वयमेव लक्षणस्याऽऽम्नानाधीनत्वेन मन्दप्रयोजनत्व-
मुक्तम्। **'यथैव लोकसिद्धत्वात्कृष्यादेर्लक्षणं
वृथा। तथैव वेदसिद्धानां शब्दानां लक्षणं
वृथा ॥ रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम्।
न तदप्यन्यतः सिद्धेरल्पसिद्धेस्ततोऽपि वा ॥'**
[ पृ. २६२ ] शिष्याचार्यसंबन्धो हि महान् वेदरक्षाहेतुः
व्याकरणानधीनस्यापि वेदक्रमस्याध्ययनेनैव रक्ष्यमाण-
त्वात्। तद्विनाशेऽपि च विशिष्टतरदोषप्रसङ्गात्। उक्तं
च **'निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम्।
शतांशमात्रसिद्धौ तु तेन मन्दं प्रयोजनम् ॥
समाम्नायप्रसिद्धेऽपि सामवेदेऽस्ति लक्षणम्।
तद्युक्तं कृत्स्नसिद्धित्वात्कर्तव्यार्थेन चार्थवत् ॥'**

औच्छिक्ये हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणे नानुगतानि ततश्च समस्तसामरूपसिद्धेः निराकाङ्क्षत्वं भवति । ब्राह्मणविधिवशेन च, ऋगन्तरसंचारणायां प्रस्तावादिपञ्चधाविभागेन लक्षणोपयोगः । पदानुगममात्रनिवृत्तव्यापारेण तु व्याकरणेन विशिष्टपदरचनात्मकवाक्यसंघातरूपाणामसंभवत्कर्तव्यपदवाक्यानां मन्दमिव रक्षितव्यं दृश्यते ' लक्षयेद्यः समाम्नायात्पदवाक्यक्रमान् वहून् । स लक्षयेत्तरामल्पं प्रकृतिप्रत्ययक्रमम् ॥ ' किंच — ' यदि व्याकरणाद्रक्षां मन्वीरन्वेदवादिनः । वैयाकरणगेहेपु छिन्द्युस्ते वेदसंशयान् ॥ कक्षावलम्बिनं नित्यं को नाम करकं वहन् । तमनादृत्य शौचार्थमन्यतः कर्तुमर्हति ॥ लोके यस्य यदर्थत्वमाप्ता वा यत्र ये मताः । तेन तेभ्यश्च तद्वस्तु यथावदवगम्यते ॥ आयुर्वेदं चिकित्सासु प्रायेण विनियुज्यते । व्याधितत्त्वौषधज्ञानं वैद्येभ्यश्चोपलभ्यते ॥ ' न तु वेदाध्यायिनां कदाचिदप्यभियुक्ततरसहाध्यायिव्यतिरेकेण वेदवर्णपदवाक्याज्ञानसंदेहविपर्ययव्यावृत्तौ व्याकरणं वैयाकरणा वोपयुज्यन्ते । ' सहाध्यायिभिरेवातो वेदः कार्त्स्न्येन रक्ष्यते । स्वराक्षरविनष्टोऽपि द्वेपादन्यैर्न मृष्यते ॥ तस्मात्प्रीतैरुपाध्यायैर्द्विष्टैः कारुणिकादिभिः । न विनाशयितुं वेदो लभ्यते तेन रक्ष्यते ॥ ' तस्माद्वेदरक्षार्थं तावन्नाध्येयं व्याकरणम् । ' लोके तु सर्वभाषाभिरर्थो व्याकरणादृते । सिध्यन्ति व्यवहारेण काव्यादिष्वप्यसंशयम् ॥ '

[ पृ. २६३ ] यदि तु संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनाटकलक्षणप्राकृतव्याकरणद्विपदीरासकादिलक्षणन्यायेन संस्कृतकाव्योपयोगार्थं व्याकरणमाश्रीयेत, तथापि काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाद्यथेष्टभाषाभिः प्रबन्धकरणसंभवाच्छन्देपु न व्यवस्था स्यादित्युच्यते । ' काव्यशोभास्वपि त्वेतन्नैवातीवोपयुज्यते । वैयाकरणदोषाद्धि कष्टाञ्छब्दान् प्रयुञ्जते ॥ न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् । लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ॥ ' तेन लोकेऽपि न कदाचिद्व्याकरणेन शब्दरक्षा । ' ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् । ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभागवत् ॥ ' तथा च– ' मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः । प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥ विकारेऽथ निषिद्धोहाः कार्यापन्नेपु पञ्चधा । अर्थान्तरेऽष्वपूर्वार्थद्वारेणोहं व्रजन्ति नः ॥ एतावत्यन्यतो यस्य विना व्याकरणान्मतिः । जायेत स कथं तत्र पदं योग्यं न लप्स्यते ॥ वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः । शब्दानां तत उद्धृत्य प्रयोगः संभविष्यति ॥ अथवा योऽपि गाव्यादिर्लोकेनार्थे प्रयुज्यते । सोऽप्यर्थद्वारतः प्राप्तप्रयोगः केन वार्यते ॥ ' देवतापदानि तावत् ' विधिशब्दस्य मन्त्रत्वे भावः स्यात् ' ( १०।४।१२।२३ ) इत्येतेन न्यायेन सर्वानेव साध्वसाधुत्वसंमतान् पर्यायान् परित्यज्य विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते तेपु ह्यस्त्येव कर्माभिधानार्थमेव प्रयोगोत्पत्तिशास्त्रत्वम् । यानि तु द्रव्यतद्गुणादिपदानि संनिहितार्थपर्युपस्थापितसमस्तरूपाणि प्रयोगवचनगोचरमागच्छन्ति तेपु असंनिहितार्थपदनिवृत्तिन्यूनसाकाङ्क्षमन्त्रवाक्यनिराकाङ्क्षीकरणाय स्मृतेऽप्यर्थे प्रयुज्यमानेपु प्रयोगोत्पत्त्यशास्त्रत्वान्न व्यवस्था स्यादित्युच्यते । प्रकृतौ हि मन्त्राणां प्रयोगोत्पत्तिः शास्त्रवर्ती, विकृतौ पुनरर्थवशाद्भवन्ती न व्याकरणानुगतेष्वेवावतिष्ठते । व्याकरणस्यापि असंभाव्यमानमूलशास्त्रस्य कृतकाविधायकेष्टयुपसंख्या– [ पृ. २६४ ] नाद्यावापसूत्रप्रत्याख्यानानवस्थितप्रमाणत्वस्य यथारुचिविकल्पितप्रकृतिप्रत्ययपरिभाषादिदोषग्रस्तस्य निश्चितस्मर्यमाणपाणिन्यादिमतसापेक्षस्य नैवागादियज्ञगतशब्दप्रयोगनियमोत्पत्तिशास्त्रत्वमवकल्पते । ' तनोहे कर्मकर्माङ्गवाक्यार्थज्ञानकौशलैः । लोकवेदप्रयोगाच्च सिद्धे व्याकरणेन किम् ॥ ' अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैः टीकाकारैरप्युक्तम् ' अङ्गानि ज्ञातिनामान्युपमा चेन्द्रियाणि च । एतानि नोहं गच्छन्ति अध्रिगौ विषमं हि तत् ॥ आगमो यस्तु निर्दिष्टः प्रयोजनविवक्षया । कर्मणां नोच्यते तत्र किं वेदाध्ययनं फलम् ॥ '



सर्वस्य हि ह्यनुष्ठातव्यस्य आगमो मूलत्वेनाऽऽख्यायते न प्रयोजनत्वेन । ' अथैतेनैव युक्तं स्यादागमोक्तं प्रयोजनम् । तदप्यसदनाम्नानान्निष्कारणतयाऽपि च ॥ ' निष्कारणषडङ्गवेदाध्ययनोपन्यासेन हि सुतरां व्याकरणस्य निष्प्रयोजनत्वमुक्तम् । ' आगमो वेदवाक्याच्च नान्यः कश्चन विद्यते । कथं चाऽऽदिमतां सिध्येद्वेदेनानादिना विधिः ॥ '

तस्मात् ' स्वाध्यायोऽध्येतव्यः ' इत्येतत्केवलवेदाध्ययनविधानं शतपथादिषु दृष्टमुपपन्नं च नित्यार्थालम्बनत्वात् । व्याकरणाद्यङ्गाध्ययनविधानं पुनर्न कस्यांचिच्छाखायां श्रूयते । न चाऽऽदिमदर्थविषयं सदनादित्वाधीनं वेदत्वं प्रमाणत्वं वा लभते । ' न च वेदाङ्गभावोऽपि कश्चिद्व्याकरणं प्रति । तादर्थ्यावयवाभावाद् बुद्धादिवचनेष्विव ॥ श्रुतिलिङ्गादिभिस्तावत्तादर्थ्यं नास्य गम्यते । अकृत्रिमस्य वा कश्चित्कृत्रिमोऽवयवः कथम् ॥ ' तस्मादवयवविषयमेवैतदेवं वर्णयितव्यम् ? ' षडङ्गो वेद इत्युक्तं श्रुतिलिङ्गाद्यपेक्षया । तैः षड्भिः प्रविभक्तः सन् स हि कर्मविबोधनः ॥ '

ननु बाह्याङ्गानपेक्षत्वे वेदस्वरूपान्तर्गतश्रुत्याद्यपेक्षया विशेषणमनर्थकं प्रसज्यते । तथाहि ' संभवव्यभिचाराभ्यां स्याद्विशेषणसंभवः । श्रुत्याद्यव्यभिचारात्तु तैरङ्गैः किं विशेष्यते ॥ ' [ पृ. २६५ ] उच्यते— ' यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक् । ज्ञात्वाऽधीते स एवास्य विधेरर्थं करोति नः ॥ अधिगन्तव्य इत्येतदध्येय इति चोच्यते । तेन श्रुत्यादिमान् वेदो वेदितव्यो विधेरतः ॥ ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम् । श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः ॥ ' ततश्च मीमांसाद्वारा वेदार्थानुचिन्तनविधिरेवायमिति ज्ञायते न व्याकरणाध्ययनविधिः । ' वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः । भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः ॥ ' ' तद्दध्नो दधित्वम् ' इत्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्तव्याकरणादीनि तैः सह विधायको वेदोऽध्येतव्य इति स्मृत्यर्थो भवेत् । ' प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते । गृह्यमाणतदर्थत्वादङ्गत्वं तेषु वा स्थितम् ॥ '

यानि हि वेदव्यापारपराण्येव तेषु लिङ्गेन शक्यमङ्गत्वमध्यवसातुम् । ननु कतिपयस्पृष्टवेदवाक्योदाहरणच्छद्ममात्रेषु पाणिनिप्रभृतिप्रणीतेषु प्रातिशाख्यानीव प्रयोगशास्त्राणीति चेत् । न । तेषां पदस्वरूपेष्वेव व्यापारात् । पाणिनीयादिषु हि वेदस्वरूपवर्जितानि पदान्येव संस्कृत्य संस्कृत्योत्सृज्यन्ते । प्रातिशाख्यैः पुनर्वेदसंहिताध्ययनानुगतस्वरसंधिप्रयतिविवृतिपूर्वाङ्गपराङ्गाद्यनुसरणाद्वेदाङ्गत्वमाविष्कृतम् । ' पूर्वोक्तेनानुसंधानमागमस्य च नास्ति ते । आगमोऽध्ययनप्रायः प्राक्च शब्दानुशासनम् ॥ '

' ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः ' इति विहिते ज्ञाने धर्मः शास्त्रपूर्वप्रयोगेऽभ्युदय इति च व्याहताभिधानम् । यदपि च शब्दापशब्दज्ञानलाघवं प्रयोजनत्वेनोपदिष्टं तन्निराकृतप्रयोजनान्तरस्य लाघवमात्रमेवावशिष्यते इति सत्यमेवोक्तम् । ' यदि वा गौरवस्यैव लघुत्वमुपचर्यते । विपर्ययापदेशेन शूरे कातरशब्दवत् ॥ ' लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिरलौकिकसंज्ञापरिभाषानिबद्धप्रक्रियैरनवस्थितस्थापनाक्षेपसिद्धान्तविचारैः क्लेशेनान्तं गत्वा यथावस्थिता–[ पृ. २६६ ] नुवादमात्रमेव क्रियते, तत्रापि चोदाहरणव्यतिरिक्तेषु कस्यचिदेव लक्षणयोजनसामर्थ्यं दृश्यते । तेनात्यन्तगुरुः सन्नयमुपायस्तुत्यर्थमेव लघुरित्युपचरितः । यदपि केनचिदुक्तम्– ' तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ ' इति । तद्रूपरसगन्धस्पर्शेष्वपि वक्तव्यमासीत् । ' को हि प्रत्यक्षगम्येऽर्थे शास्त्रात्तत्त्वावधारणम् । शास्त्रलोकस्वभावज्ञ ईदृशं वक्तुमर्हति ॥ ' अत एव श्लोकस्योत्तरार्धं वक्तव्यम् । ' तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रियादृते ॥ ' इति । न ह्यत्र कश्चिद्विप्रतिपद्यते बधिरेष्वेवमदृष्टत्वात् । ' असंदेहश्च वेदार्थे यदप्युक्तं प्रयोजनम् । तदप्यसद्यतो नास्मात्पदवाक्यार्थनिर्णयौ ॥ '

यतः पदार्थसंदेहास्तावद्बहवो वृद्धव्यवहारादेव निवर्तन्ते । शेषाश्च निगमनिरुक्तकल्पसूत्रतर्काभियुक्तेभ्यः सर्वेषां अर्थप्रतिपादनपरत्वात् । व्याकरणेन पुनरतन्त्रीकृत्यार्थं पदस्वरूपमात्रे अन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम् । तथाहि '**धातुभ्यः कल्पिते नाम्नि क्रियायोगोऽनुगम्यते । न चाभिधानवेलायां तत्प्रतीतिर्मनागपि ॥**' 'गमेर्डोः' ( उणादिसू. २३५ ) इत्येतद्व्युत्पत्त्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत् । जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितो यत्र प्रसिद्धस्तत्रान्वाख्यातव्यः । तथा च '**कुशलोदारशब्दादेर्यावत्यनुगमस्थितः । न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते ॥ अश्वकर्णाजकर्णादौ समासानुगमे सति । अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत् ॥ एवं राजन्यशब्दादेरयतत्वाद्यनादरः । व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धितः ॥ तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम् । तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते ॥**' 'कलेर्ढक्' ( पा. ४।२।८ ) 'वामदेवाड्ड्यड्ड्यौ' ( पा. ४।२।९ ) इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिः वैयाकरणस्य [ पृ. २६७ ] भवति । वेदे तु 'ततो वसु वामं समभवत् तस्माद्वामदेव्यम्' 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इत्याद्यर्थव्युत्पत्तिदर्शनं व्याकरणानुसारिणीं प्रतिपत्तिं बाधते । तथा कल्पसूत्रकारैः 'कृष्णशं वासः कृष्णवलक्षे अजिने' इत्येवमादिषु कृष्णदशादिविवरणाश्रयणाद्व्याकरणशतेनाप्यनवगता अर्था वेदार्थवित्परम्परागप्राप्ता वेदवाक्यपौर्वापर्यावगतयूपादिशब्दार्थाश्च व्याख्यायन्ते । यथा चैवमादिषु व्याकरणानपेक्षाणामेव निःसंशयार्थप्रतिपत्तिस्तथा स्थूलपृषत्यादिशब्दार्थेष्वपि व्याख्यातृपरम्परैव निर्णयक्षमेति न व्याकरणमपेक्षितव्यम् । किंच '**वाक्यार्थेषु च संदेहा जायन्ते ये सहस्रशः । नैषां व्याकरणात्कश्चित्पूर्वपक्षोऽपि गम्यते ॥**'

यदि वेदार्थासंदेहप्रयोजनं व्याकरणं भवेत् ततः किमर्थवादाः स्वतन्त्राः कंचिदर्थं प्रतिपादयन्त्यथ विधिशेषभूताः । तथा किमूर्गवरोधनमौदुम्बरत्वस्य फलमुत प्रशंसार्थमुपात्तमिति । तथा हेतुर्विधिर्हेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविवक्षादिषु च संदेहानपनयेत् । अथैवमादिषु मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासस्ततः कल्पसूत्रकारवचनसिद्धकतिपयस्थूलपृषत्याद्यर्थनिर्णयप्रयोजनता सुतरां नाऽऽश्रयणीया । अपि च '**लक्षणोत्थेऽपि संदेहे व्याख्यानादेव निर्णयः ॥ वेदशब्देष्वपि व्याख्या नैव दण्डैर्निवार्यते ॥**' 'व्याख्यानतो विशेषप्रतिपत्तिः' ( महाभाष्ये प्रत्याहाराह्निके लण्सूत्रे ) इत्यनयैव परिभाषया न हि संदेहादलक्षणमितिवन्न हि संदेहादवेद इत्यपि शक्यं वक्तुम् । '**न चागृहीतशब्दार्थैः कैश्चिद्व्याकरणाश्रयात् । व्याख्यातुं शक्यते वेदो यतः स्यात्तेन निश्चयः ॥ यथैवावस्थितो वेदस्तथा व्याख्याऽपि सर्वदा । अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥ न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः । व्यवहाराद्बहिर्भूतात्स्वरान्नातोऽर्थनिश्चयः ॥**'

वृद्धव्यवहाराधीनं शब्दार्थावधारणं तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावात् न तत्कृतार्थविशेषव्यवस्था । '**यत्र त्वस्ति स्वरज्ञानं वेदवाक्येष्वविश्रुतम् । तत्र नैव पदार्थानामवधारणसंभवः ॥** [ पृ. २६८ ] **तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः । तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधाङ्गता ॥ तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते । सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥**'

व्याकरणानुगमोऽपि चास्य यदि नाम कथंचित्तत्प्रयोगार्थ एव भवेन्न तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ।

'**न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः । शब्दानुशासनं ह्येतद्दृष्टं नार्थानुशासनम् ॥**' तस्मात् असंदेहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाङ्गभूतस्वरविशेषप्रयोगोत्पत्तिशास्त्रम् । यान्यपि च 'इमानि भूयः शब्दानुशासनस्य प्रयोजनानि' इत्येवमुपन्यस्तानि तेषामपि कानिचित्प्रयोजनत्वयोग्यान्येव न संभवन्ति, कानिचित्प्रयोजनाभासानि, कानिचिदप्रमाणकानि । अपि च— '**अर्थवत्त्वं न चेज्ज्ञातं मुख्यैर्यस्य प्रयोजनैः । तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनी ॥**' तत्र यस्तावत्तेऽसुरा इत्याद्यसुरपुराकल्पार्थवादप्रक्रमेऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः स यथावस्थितस्तथोक्तं प्राक् । दुष्टः शब्दः इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः । दुष्टमन्त्रप्रयोगे त्विष्यत एव यजमानस्य प्रत्यवायः । 'यद्धोता जहाति वाग्घि तद्यजमानं जहाति' इत्येवमादिभिः सर्वर्त्विक्प्रयोज्यमन्त्रविनाशेषु यजमानगामिदोषदर्शनात् । तथा च 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रप्रयोगविनाशदोष एवोदाहृतः । यत्तु निरुक्ते 'यदधीतमविज्ञातं निगदेनैव शब्द्यते' ( अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदिति शेषः ) इत्युक्तम्, तदस्माभिः प्रथमसूत्रे एवार्थशब्दं व्याचक्षाणैः स्नानस्मृत्यतिक्रमकारणत्वेनोपवर्णितम् । 'अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति । ततश्चाव्याख्यातेन वेदेनार्थप्रकाशनाकरणात् 'न तज्ज्वलति कर्हिचित्' इति । **सत्यमेवैतत् ।** न तु व्याकरणस्य तत्रोपयोगः । कर्मप्रयोगोत्पत्तिप्रत्ययशास्त्रत्वात् । शब्दशास्त्रमेतदिति चेत्तच्चाप्यपूर्वोक्तेन निर्मूलत्वेन न व्यवस्था स्यात् तस्मात्कल्पसूत्रनिरुक्तमीमांसानामेव अधीतमन्त्रब्राह्मणार्थविज्ञानोपयोगक्षमत्वादेतत्प्रयोजनं युक्तम्, न तु व्याकरणस्य । 'यस्तु प्रयुङ्क्ते' ( 'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥' म. भा. ) इत्ये– [ पृ. २६९ ] तदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते । यथासमाम्नातादन्यथाकरणाच्च 'दुष्यति चापशब्दैः' इति । स्वाध्यायाध्ययनाध्यापनयजनयाजनगतवेदशब्दविनाशेऽपि 'यद्दत्तो यज्ञ आर्तिमियात्' इति । एतद्वचनादवगतदोषानुवादोऽपीत्यवगम्यते । 'वाग्योगवित्' इति च बहुलोकव्यवहारदर्शनाद्विदितपदपदार्थसंबन्धः पुमान्, ब्राह्मणवाक्येषु चोद्दिश्यमानोपादीयमानगुणप्रधानादिनिरूपणावधृतवचनव्यक्तिविशेषो मन्त्रेषु च अवगतचोदिताचोदितस्वार्थपरार्थप्रकाशनार्हत्वानर्हत्वविच्च वाग्योगविदित्युच्यते न वैयाकरणः । वैयाकरणस्यैवंविधप्रयोगोत्पत्त्यशास्त्रत्वात् । 'यद्प्यविद्वांसः' ( 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥' इति महाभाष्ये व्याकरणस्य स्त्रीसाम्यपरिहारप्रयोजनत्वकथनार्थमुपन्यस्तः श्लोकः ) इति, प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनम्, तत्प्लुतस्य त्रिमात्रस्य लोकप्रसिद्धत्वात् मन्वाद्युपदिष्टनामान्त्यप्रयोगसिद्धौ लब्धायां तत्प्रयोगोत्पत्त्यशास्त्रत्वम् । न च तावता मन्वादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादिविभागद्वारेण शब्दापशब्दविवेकज्ञानं तदुपयोगो वाऽऽश्रीयते । यच्च 'प्रयाजाः सविभक्तिकाः कर्तव्याः' इति तद्याज्ञिकोपदेशसिद्धत्वात् ब्राह्मणे च षडहविभक्तयः 'अग्निर्वृत्राणि जङ्घनत्' 'अग्निं वो वृत्रहन्तमम्' 'अग्निनाऽग्निः समिध्यते' इत्येवमादिविभक्तविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणं वैभक्तिकमात्रालोचनेनापि वा सविभक्तिकप्रयाजप्रयोगसिद्धेरशास्त्रं व्याकरणम् । 'यो वा इमां पदशः स्वरशो वाचं विदधाति स आर्त्विजीनो भवति' ( ऋसं. २।३।२२ ) इति सम्यग्वेदाध्याय्येवमभिधीयते । तथा 'चत्वारि वाक्परिमिता पदानि' इति यानि तावदोंकारमहाव्याहृत्यादिचतुष्टयबाहुल्यप्रयोजनानुसरणेन नैरुक्तैरप्यक्षरवर्णसाम्यान्निर्ब्रूयादिति वत्प्रपञ्चितानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमतमाश्रितं तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने 'तुरीयं वाचो मनुष्या वदन्ति' इत्यसंबद्धमेव स्यात् । चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात् । तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यसंगतो वर्ण्यते । 'चत्वारि वाक्परिमिता पदानि' इति यैर्वाक्यपदैर्गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्यभिधीयन्ते । तत्र यानि प्रतीकविधिप्राकृतवैकृतवाक्यसारूप्यदृष्टानुपपद्यमानादिप्रभवैरनुमानोपमानार्थापत्त्याख्यैस्त्रिभिर्गम्यन्ते, तानि तत्सिद्धत्वादेव नेङ्गयन्ति नोच्चारयन्ति । यस्तु भागस्तैरशक्यः प्रतिपादयितुं तं तुरीयं प्रत्यक्षसमधिगम्यमध्येतारो मनुष्या वदन्ति समा-

मनन्तीत्यर्थः । षट्प्रमाणीमध्याच्च प्रमाणद्वयं वाक्पद-
त्वादपोद्धृतम् । अभावस्तावदभावविषयत्वादेव वाक्पदं
न भवति । आगमस्य पुनर्वागात्मकत्वात्प्रमानवागा
श्रितस्य पदत्वाश्रयणमनुप- [ पृ. २७० ] पन्नम् ।
प्रत्यक्षपक्षनिक्षिप्तत्वात्पृथक्त्वेनानिर्देशः । चत्वारि
शृङ्गेत्यस्य ( ऋसं. ३।८।१० ) तु विपुवति होतुराज्ये
प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः । न चात्र
काचिद्व्याकरणापेक्षा । यत्तु चत्वारि पदजातानि शृङ्गाणी-
त्येवमादिसंख्यासामान्यमात्रेण कर्मविनियोगानपेक्षमर्था-
न्तरं वर्ण्यते, तद्व्याकरणकृतवाक्कौशलमात्रम् । तादृशं
च वैशेषिकादिष्वपि तदभियुक्तैः शक्यं योजयितुमित्य-
नादरणीयम् । 'उत त्वः पश्यन्' ( ऋसं. ८।२।
२३) इत्यपि लोकनिरुक्तकल्पसूत्रमीमांसाश्रयोत्पन्नपदार्थ-
वाक्यार्थज्ञानप्रशंसार्थ एव मन्त्रो विज्ञायमानो न
व्याकरणमाद्रियते । एवं 'सक्तुमिव तितउना' ( ऋसं.
८।२।२२) इत्येषोऽप्यविप्लुतस्वाध्यायाध्ययननिर्मलवेदा-
क्षरार्थज्ञानप्रशंसार्थं पूर्ववदेव वर्णनीयः । 'आहिताग्नि-
रपशब्दं प्रयुज्य' ( म. भा. पस्पशाह्निके ) इति,
व्याख्यातमेवैतत् । यदपि नामकरणे, घोषवदाद्यन्तरन्तस्थं
( अवृद्धं त्रिपुरुषानूकमनरिपतिष्ठितं तद्धि प्रतिष्ठिततमं
भवति इति शेषः । म. भा. पस्प. ) द्विचतुरादिवर्ण-
कृदन्तपरिग्रहतद्धितवर्जनवचनं, तत्कृत्तद्धितसंज्ञयोर्व्याकर-
णेऽपि पूर्वप्रसिद्धयोरेवोपादानाद्वर्णपरिमाणस्य च प्रत्यक्ष-
पूर्वकस्मृत्यधीनत्वात् घोषवत्त्वादीनां च शिक्षाप्रातिशाख्ये-
ष्वनुक्रमणात् सर्वैश्च श्रोत्रियैरक्लेशेन नामकरणात्
न व्याकरणं नाम प्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयम् ।
'सुदेवो असि वरुण' ( ऋसं. ६।५।७ ) इत्यत्र यद्यपि
तावत्सप्त विभक्तय एव सप्त सिन्धव इति व्याख्यायन्ते
तथापि तासां विभक्तिसंज्ञामात्रं व्याकरणेन क्रियते
प्रसिद्धमेव वा गृह्यते । यानि तु प्रयोगरूपाणि तानि
लोके वेदे च विभागशः प्रत्यक्षाण्येवेति न व्याकरणा-
पेक्षयैवमभिधीयन्ते । यदा पुनः सप्त सिन्धवो नद्य एव
यज्ञर्त्विग्यजमानप्रशंसापक्षे वा सप्त होत्रागता वाचः सप्त
सामस्वरगतास्तद्भक्तिगता वा परिगृह्यन्ते, तदैतिहासिक-
याज्ञिकगोचरापन्नत्वादविषय एव व्याकरणस्य ।

'संस्कृतानां च शब्दानां साधुत्वे परिकल्पिते ।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः ॥'
व्याकरणेन शब्देषु संस्क्रियमाणेषु न ज्ञायते किं वस्तु
संस्क्रियते को वा संस्कारः उत्पत्तिप्राप्तिविकारापूर्वसाधन-
सामर्थ्याधानानां क्रियते इति । 'न तावदस्ति शब्द-
त्ववर्णत्वव्यक्तिसंस्क्रिया । सर्वत्रातिप्रसङ्गेन न
व्यवस्था हि सिध्यति ॥ शब्दत्वे संस्कृते स्याद्धि
ध्वनीनामपि साधुता । वर्णत्वेऽप्येकवर्णानां
गाव्यादीनां च तुल्यता ॥' एतेन वर्णव्यक्तिसंस्कारः
प्रत्युक्तः । [ पृ. २७१ ] 'गवादिषु गकारादिर्यः
सकृत्संस्कृतः कचित् । गाव्यादिषु स एवेति
साधुरेव प्रसज्यते ॥ एवं प्रत्येकसंस्कारे न कस्य-
चिदसाधुता । समुदायस्तु नैवास्ति तेषामयुग-
पच्छ्रुतेः ॥' येषां तावद्वर्णव्यक्तयः प्रध्वंसिन्य एव तेषां
विनष्टानुत्पन्नानां संस्कारायोग्यत्वमेव । 'वर्तमानाऽपि
संस्कारक्षणं नैवावतिष्ठते । तावदेव विनश्येत्सा
यावत्संस्कर्तुमिष्यते ॥ न च तां संस्कृतां भूयः
कश्चन द्रक्ष्यति कचित् । सक्तूनामिव संस्कारो
होमेनैष प्रसज्यते ॥' यथैव होमसंस्कृतानां भस्म-
साद्भावात्सक्तूनां पुनर्दर्शनविनियोगासंभवाद्द्वितीया-
प्रतिपादितसंस्कार्यत्वपरिग्रहे सक्तवो होमस्तद्भावना-
विधिरिति सर्वेषां अनर्थकत्वं प्रसज्यते इति संस्काराना-
श्रयणम्, तथैव क्षणिकशब्दव्यक्तिसंस्कारपक्षे सर्वानर्थ-
कत्वप्रसङ्गः । ततश्च योऽप्ययमनियमोऽभिहितो यद्येवं
नियः शब्दोऽथापि कार्य उभयथाऽपि लक्षणं प्रवर्त्यमिति
स एवमेव न्यायनिरूपणभयमात्राविष्करणार्थः शिष्यव्या-
मोहनार्थो वेति न युक्तः परिग्रहीतुम् । 'अदूरविप्रकृष्टे
च वस्तुन्यनियमो भवेत् । शीतोष्णानियमं
ब्रूयात्को नु वह्नेः सचेतनः ॥ उत्पादश्चैव संस्कारः
कार्यपक्षे भवेदयम् । ततश्च सुतरां प्राप्ता प्रयोगो-
त्पत्त्यशास्त्रता ॥' व्याकरणप्रक्रियानुगृहीतेन वैया-
करणेनोत्पाद्यमानेषु साधुशब्देषु नित्यवेदमूलत्ववेदाङ्गत्व-
निराकरणं स्वयमेवाऽऽपादितम् । 'अथ व्याकरणो-
त्पन्नैः शब्दैर्वेदोऽपि निर्मितः । ततो व्याकरण-
स्यैव वेदस्याप्यप्रमाणता ॥ शब्दश्चोत्पाद्यमानत्वे



क्षणान्न स्यात्क्षणान्तरे । तादृशस्य च संस्कारो न
शक्यो नोपयुज्यते ॥ तस्मादनियमं मुक्त्वा नित्यः
संस्क्रियते यदि । विक्रियाख्योऽपि संस्कारस्ततो
नैवास्य संभवेत् ॥ विना व्याकरणाद्व्याप्तिः सिद्धा
श्रोत्रसमाश्रया । अदृष्टार्थस्तु संस्कारो विध्यभावान्न
गम्यते ॥ [ पृ. २७२ ] दृष्टार्थेषु च शब्देषु
नादृष्टेन प्रयोजनम् । न ह्रीष्टं भोजनार्थानां
व्रीहीणां प्रोक्षणात्फलम् ॥ कर्मप्रकरणाम्नाता न
च व्याकरणक्रिया । येनापूर्वप्रयुक्तानां शब्दानां
संस्कृतिर्भवेत् ॥ हन्त्यादिविधिवन्नापि संभवी
व्याक्रियाविधिः । पौरुषेयं कथं वस्तु विदध्या-
च्छाश्वतो विधिः ॥ तेनानारभ्यवादेऽपि विधि-
र्नैवास्ति तादृशः । अनारभ्य विधित्वे च न
कर्मार्थत्वसंभवः ॥ ऐकान्तिकं हि संस्कार्यं यत्क्रतौ
स्यात्स्रुवादिवत् । तद्द्वारेण क्रतुप्राप्तिर्न लोकव्य-
भिचारिणः ॥ लोकवेदगतत्वाच्च शब्दानां व्यभि-
चारिता । अतो न व्याक्रिया गच्छेत्तदुपस्थापितं
क्रतुम् ॥ आकाशेऽवस्थितः शब्दः संस्कर्तुं
शक्यते कथम् । नित्यत्वान्मूर्त्यभावाच्च व्योमा-
श्रितविभुत्ववत् ॥ वर्णसंस्कारमात्रं च यदि व्याक-
रणाद्भवेत् । प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयो-
जनम् ॥ समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति ।
प्रत्येकं च भवेद्यद्वदग्निधर्मः प्रतीष्टकम् ॥ न च
स्थलवदारम्भो वर्णैः शब्दस्य कस्यचित् । येन
तत्संस्कृतिः सिध्येत्स हि पूर्वं निराकृतः । स्फोट-
गोशब्दताङ्गत्वप्रभृतौ पदकल्पना । गकारादिपद-
व्याख्याद्वारेणैव निराकृता ॥ सर्ववर्णसमूहोऽपि
न संस्कार्यः कथंचन । न तस्यार्थप्रयुक्तत्वमस्ति
ह्यनभिधानतः ॥ अथ त्रिचतुरा वर्णाः संस्क्रि-
यन्ते पदे पदे । संख्यामात्रस्य साधुत्वं तच्च
स्यादितरेष्वपि ॥ संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो
न सेष्यते । ग्रहणोच्चारणस्थत्वाद्गाव्यादिषु च
संभवात् ॥ ग्रहणोच्चारणे एव संस्कार्ये यदि
मन्यसे । कर्मणः कर्मसाध्यत्वमुपरिष्टान्निषे-
त्स्यते ॥'

[ पृ. २७३ ] वक्ष्यति हि– 'कर्तृगुणे तु कर्मा-
समवायाद्वाक्यभेदः स्यात्' ( ३।१।१०।१९ ) इति ।
'ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद्भवेत् ।
वैद्योपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥ मनो वा
पुरुषो वाऽथ संस्कारास्पदमिष्यते । शब्दानु-
शासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥
शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते । शब्द-
स्याननुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥ स्फोटशब्दे
च संस्कारः सुतरां नोपपद्यते । असन्तौ तत्र हि
स्यातां प्रकृतिप्रत्ययावपि ॥ वाक्यस्फोटश्च यैरिष्टः
सर्वावयववर्जितः । नामाख्यातादि ( आदिशब्देन
निपातोपसर्गयोः परिग्रहः ) संस्कार्यं तेषां शश-
विषाणवत् ॥ अपोद्धारेण संस्कारो यद्यत्राभ्युप-
गम्यते । शृङ्गं शशादपोद्धृत्य किं न संस्क्रियते
मनाक् ॥ अन्यावयवसारूप्यादपोद्धारो यदी-
ष्यते । खरशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न
सः ॥ गवयादिषु नाङ्गानां सादृश्यं यन्निदर्शितम् ।
सत्यावयवसामान्यात्तदिहापीष्यते तथा ॥ वाक्या-
धिकरणे चैतद्विस्तरेण निराकृतम् । तेनापोद्धार-
संस्कारकल्पनाऽपि न युज्यते ॥ अन्वाचक्षीत
शास्त्रं चेच्छब्दानसदपोद्धृतान् । एतेनैवाप्रमाण-
त्वमस्य माहेन्द्रजालवत् ॥ अशिष्यत्वादशास्त्रत्व-
मेवं तावत्पदं प्रति । वाक्यानुशासनं नैव कृतं
व्याकरणेन च ॥ अर्थेन च प्रयुक्तानां शब्दानां
संस्क्रियोदिता । वाक्यमेवंविधं चेष्टं न पदान्यर्थ-
वर्जनात् ॥ ब्राह्मणार्थो यथा नास्ति कश्चि-
द्ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव
स्युरनर्थकाः ॥'

इति बहुप्रपञ्चमुक्त्वा केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं
निराकृत्य वाक्यान्वाख्यानार्थमेव व्याकरणमपि व्याख्यानं
युक्तमासीत् तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारवदेव
[पृ. २७४] पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां
व्याकरणस्य अप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् । 'अतो
विगानभूयिष्ठाद्विरुद्धान्मूलवर्जितात् । निष्फलाच्च
व्यवस्थानं शब्दानां नानुशासनात् ॥' ततश्च–

'स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु ।
शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥' तेन
सर्वैर्भाषितव्यं सर्वे साधव इति । अत्रानुमानप्रयोगाः—
'गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः ।
वृद्धैस्तत्र प्रयुक्तत्वाद्गौरुस्रेत्येवमादिवत् ॥ एवं
साधुत्वमेतेषां सर्वेषामर्थसाधनात् । श्रौत्रत्वा-
त्रापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥ अनादित्वं च
सर्वेषामवच्यनवधारणात् । वक्तुर्वक्तुः पुरो वृत्तेः
शक्यं वक्तुं गवादिवत् ॥ साधुभिर्भाषमाणानां
नादृष्टफलसंभवः । दृष्टार्थत्वाद्यथा धूमादग्नि
देशेऽवगच्छताम् ॥ अशास्त्रविहितत्वाच्च बुद्ध-
शब्दाभिधानवत् । शास्त्रं नावेदरूपत्वात्प्राकृत-
व्याक्रियादिवत् ॥ वेदमूलतयाऽप्यस्य प्रमाणत्वं
न कल्पते । अवेदविषयार्थत्वान्नाटकादिनिबन्ध-
वत् ॥ शास्त्राङ्गमपि नैवैतदतादर्थ्यात्कथादिवत् ।
अतादर्थ्यं विनाऽप्यस्माद्वेदेनार्थावबोधनात् ॥
न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्तनात् ।
यदीदृशमनङ्गं तद्दृष्टं नेत्रानुमानवत् ॥' यथा हि
चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तज्जनितार्थापत्ति-
प्रभवं चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञानस्याङ्गमेवं
लोकवेदसिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्य-
नङ्गम् । 'तस्मात्पर्यायशब्दत्वाद्गाव्यादेस्तरुवृक्षवत् ।
आचारेण प्रयोज्यत्वं न शास्त्रस्थैर्निवारितम् ॥'

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ।
२५ ॥

**भाष्यम्** — महता प्रयत्नेन शब्दमुच्चरन्ति— वायु-
र्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धान-
माहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दान-
भिव्यनक्ति । तत्र अपराध्येताप्युच्चारयिता । यथा शुष्के
पतिष्यामीति कर्दमे पतति, सकृदुपस्प्रक्ष्यामीति द्विरुप-
स्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुर्न
नियोगतोऽविच्छिन्नपारम्पर्या एवेति ।

वा— एवं प्राप्ते अभिधीयते— 'अनैकान्तिकता
तावदर्थापत्तेरिहोच्यते । अन्यथाऽप्युपपन्नत्वा-
त्प्रयोगार्थावबोधयोः ॥ वाचकत्वादृते यस्तु न
कथंचित्प्रयुज्यते । प्रयोगप्रत्ययायत्ता तत्र वाचकता
ध्रुवम् ॥ संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये ।
इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥'
दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादाति-
भाराद्धारैकदेशावतारणार्थं संशयोत्थापनामात्रमेव ताव-
दुक्तम् । अथवा— 'संसिद्धव्यवहारत्वादनादित्वं
यदाश्रितम् । अपराधप्रसङ्गेन तत्रैषा संशय-
क्रिया ॥' यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते
तादृगेव सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरम्परायां
सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य
आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधजस्य
शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वे-
षामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारित-
प्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते । अपर आह ।
अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यस्खलित-
प्रयत्नः शब्दमभिव्यनक्ति तस्य परम्परागतशब्दोच्चारण-
मात्रात्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्प-
त्तिरपि शब्दे संभाव्यते तदा तत्रापराधजरूपान्तरापत्ति-
प्रसङ्गान्न नियोगतः सर्वशब्दानां समानविधानत्वम् ।
अथवा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिस्तस्याम-
पराधः सुनिपुणानामप्यविकलकरणानां दृश्यते किमुता-
निपुणविगुणकरणानाम्— यश्च प्रयत्ननिष्पत्ताव-
पराधः कृतास्पदः । शब्दे स तदभिव्यक्त्यै प्रस-
ज्नकेन वार्यते ॥ अतश्चानपराधेन व्यज्यमानेषु
साधुता । सापराधेष्वसाधुत्वं व्यवस्थैवं च
तत्कृता ॥' लोकेऽपि च— 'अविनष्टे विनष्टे च
दृश्येते साध्वसाधुते । तथा सति च तद्द्वारा
सिद्धिः शब्दापशब्दयोः ॥ यद्वा सत्यत्वमेवेह
साधुत्वमभिधीयते । असत्यत्वमसाधुत्वं धर्माधर्मो-
पयोगवत् ॥ धर्माधर्मव्यवस्था हि सत्या-
नृतनिबन्धना । विहितप्रतिषिद्धत्वात्तयोश्चेष्टा
सशास्त्रता ॥ अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव
हि । शब्दानृतं च हातव्यमर्थानृतवदेव नः ॥ एवं
सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् । प्रयोगो-
त्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता ॥' अथवा यदु-



क्तम् 'साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गतः । न
धर्मनियमोऽस्तीति तत्रेदमभिधीयते ॥ अपराधस्य
भागित्वादुभयं सावकाशकम् । साधोरनियता
प्राप्तिरसाधोश्च प्रयोज्यता ॥' यदि हि साधुः
प्रयुज्यमानो न कश्चित् कदाचिदपि विनश्येत्ततस्तस्य
नित्यप्राप्तत्वात् निवर्त्यापशब्दाप्राप्तेश्च नियमशास्त्रमनर्थकं
भवेत् । यदा तु अपराधभागित्वे सति द्वयोरप्यनियता
प्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयव्याघातः ।
एक एवायं शब्दः पुरुषाशक्तिप्रमादकारणादिभेदात्तां
तां वर्णन्यूनातिरेकक्रमान्यत्वाद्यवस्थामनुपतंस्तेन तेन
अपभ्रंशरूपेण गृह्यमाणः तमेवार्थं प्रतिपादयतीति न
पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः । किंच,
'देवदत्तादिनामानि निःसंदिग्धानि यानि च ।
बालैस्तत्तादिरूपेण नाश्यन्ते तैश्च संशयः ॥'
तत्तादिशब्दादपि हि बालप्रयुक्तात् तदनुकारिकठोरबुद्धि-
प्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्ययमुपलभमानः कथमिव प्रयोग-
प्रत्ययदर्शकाभ्यामेव वाचकत्वमध्यवस्येत् । 'अप-
भ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने । तेऽपि
गाव्यादिरूपेण नाश्यन्ते व्यभिचारिताः ॥'
कतिपुचिदेव गाव्यादिषु चिरापभ्रष्टत्वाद्रूढ्याशङ्कया
साधुत्वभ्रान्तिर्भवेत् । ये तु संप्रत्येव जडप्रायज्ञानकरणै-
रभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः
प्रकृत्यनुसरणद्वारेण वा अर्थं प्रत्यापयन्त उपलभ्यन्ते,
तेष्वपि प्रयोगप्रत्ययदर्शनमस्तीत्यनैकान्तिकता । 'ततश्च
त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक् । अनैकान्ति
कतादोषान्न ह्यसौ साधनक्षमः ॥ अन्यथोच्चार्य-
माणश्च शब्दोऽपभ्रश्यते यथा । तथा हेतुरनै-
कान्ताद्धेत्वाभासत्वमृच्छति ॥ तस्माद्दृष्टप्रयोगे-
ऽपि पुनरस्ति विचारणा । वाचकोऽयं न वेत्येवं
सति वाऽन्येन निर्णयः ॥'

अन्यायश्चानेकशब्दत्वम् । २६ ॥

**भाष्यम्**— न चैष न्यायो यत्सदृशाः शब्दाः एक-
मर्थमभिनिविशमानाः, सर्वेऽविच्छिन्नपारम्पर्या एवेति ।
प्रत्ययमात्रदर्शनात् अभ्युपगम्यते. सादृश्यात्साधुशब्दे-
ऽप्यवगते प्रत्ययोऽवकल्प्यते । तस्मादमीषामेकोऽनादि-
रन्येऽपभ्रंशाः । हस्तः करः पाणिरित्येवमादिषु त्वभि-
युक्तोपदेशादनादिरमीषामर्थेन संबन्ध इति ।

वा— संशयापादनात्परपक्षे जितेऽपि स्वपक्षसिद्धि-
र्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्— 'अन्यायश्चानेकशब्दत्वम्'
इति । कथं पुनरिदमन्याय्यम् । तदुच्यते— 'वाच्य-
वाचकसामर्थ्यनियमो योऽभिधागतः । संबन्ध-
स्तदनेकत्वे स्वरूपात्सोऽपि हीयते ॥' एकात्म-
कयोरेव हि वाच्यवाचकयोः अन्योन्याक्षेपात्परस्परनियमः
संभवति अन्यतरस्यापि त्वनेकत्वे सति व्यभिचारात्
नियमहानिः । किंच— 'सामर्थ्यं सर्वभावानामर्था-
पत्त्याऽवगम्यते । एकसामर्थ्यसिद्धेऽर्थे नानेकं
तच्च लभ्यते ॥' अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथा-
नुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकत्रैव कल्पिता तद-
नुसार्यपभ्रंशेष्वपि चेदनुगम्यते को नाम तन्निरपेक्षवाच-
कशक्त्यन्तरकल्पनां लभेत । 'नाम च व्यवहारार्थ-
मर्थस्याभ्युपगम्यते । तत्रैकेनैव सिद्धेऽर्थे द्विती-
यादि च निष्फलम् ॥' किंच— 'विकल्पस्याष्ट-
दोषत्वं पुरस्तादेव वर्णितम् । स चेहानेकशब्दत्वे
निश्चयेन प्रसज्यते ॥ नामान्तरे श्रुते चार्थ-
स्तद्भिन्नोऽन्यः प्रतीयते । संज्ञा चोत्पत्तिसंयो-
गात्' इत्यत्रैतद्वदिष्यते ॥ या तु हस्तः करः
पाणिरित्यत्रानेकशब्दता । अनन्यगतिकत्वेन सा
दृढस्मरणेन च ॥ एकशक्त्यनुसारेण यावत्त्वस्ति
गतिः क्वचित् । उपमानानुमानाभ्यां तावत्सैवानु-
गम्यते ॥ तस्मात्स्वरूपसंबन्धशब्दार्थत्वनिरूपणे ।
एकैकनियमादेव गतिः स्यान्नान्यगोचरा ॥'
यथा च प्रकृतिसारूप्यद्वारेण अपभ्रंशाः प्राकृतीमेव
शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति तथा
'तदशक्तिश्चानुरूपत्वात्' (१।३।८।२८) इत्यत्र
वर्णयिष्यते । 'तेनानेकप्रयोगेऽपि कश्चिदेवार्थ-
संगतः । तदुपस्थापनेनान्ये बोधकास्तद-
शक्तिजाः ॥'

तत्र तत्त्वमभियोगविशेषात् स्यात् । २७ ॥

**भाष्यम्**— कथं पुनरत्र तत्त्वं शक्यं विज्ञातुम् ?
शक्यमित्याह । अर्थिनो ह्यभियुक्ता भवन्ति । दृश्यते

चाभियुक्तानां गुणयतां अविस्मरणमुपपन्नम् । प्रत्यक्षं चैतद् गुण्यमानं न भ्रश्यते इति । तस्मात् यमभियुक्ता उपदिशन्त्येष एव साधुरिति, साधुरित्यवगन्तव्यः ।

**वा**-- [ पृ. २७८ ] तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेत्, अत आह– 'तत्र तत्त्वमभियोगविशेषात्स्यात्' इति । कः पुनरभियोगः ? को वा तद्विशेषः ? कथं वा तेन वाचकत्वनिरूपणमिति । तदुच्यते–' **लक्षणश्रवणाभ्यासादभियोगः प्रवर्तते । तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥** ' प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकं अशेषलक्ष्यनिरूपणक्षमत्वेन अवधार्यते । ' **तस्मान्न लोकवेदाभ्यां कश्चिद्व्याकरणादृते । वाचकाननपभ्रष्टान् यथावज्ज्ञातुमर्हति ॥ तत्सामस्त्यापरिज्ञाने पारिशेष्यानिरूपणात् । अर्थापत्त्याऽपशब्दानां निश्चयो नोपपद्यते ॥ लक्षणानुगमाद्यांस्तु बहिरेव प्रयुञ्जते । नियतप्रतिपक्षत्वात्तेष्वर्थापत्तिसंभवः ॥** ' [ पृ. २७९ ] तेनोभयज्ञानस्य अपि व्याकरणमेवोपाय इति तद्गताभियोगविशेषाश्रयणम् । यत्तु प्रयोगोत्पत्तिशास्त्रत्वादिति लक्षणे तन्मूलासंभवादितरेतराश्रयत्वमुक्तं तल्लोकव्यवहारप्रसिद्धप्रतिपादकत्वमात्रेण अनिर्णीतपारमार्थिकवाचकत्वैरपि व्याकरणावयवभूतैः पदैः केषांचित्साधुत्वमन्वाख्याय पुनस्तैरप्यन्वाख्यापकशब्दसाधुत्वनिर्णयात्परिहरिष्यते । '**यदि वाचकतैवादौ न स्याद्व्याकरणादृते । न विज्ञायेत वा तत्र भवेदन्योन्यसंश्रयम् ॥ निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात् । विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥** ' तेन संकीर्णासंकीर्णवाचकज्ञानोपायत्वाल्लोकव्याकरणयोर्भिन्नविषयत्वेनापुनरुक्तता, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत् । न । अकृत्स्नविषयत्वात् । ' **केचिद्व्यवस्थिता एव साधवो लोकवेदयोः । सर्वशाखागतान् विद्यात्को वा साधारणानपि ॥** ' यथैव लौकिकप्रतिपदपाठस्याशक्यत्वं एवं वेदेऽपि सर्वशाखागतान् सकृदपि श्रोतुं अशक्तिः किमुत अध्येतुम् ? ' **प्रकृतिप्रत्ययानन्त्याद्यावन्तः पदराशयः । लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥** ' एतेन पुरुषार्थकत्वर्थादृष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि ह्येकान्तेन ' तस्मान्न ब्राह्मणेन म्लेच्छितवै ' ' एक शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति ' ' तस्मादेषा व्याकृता वागुद्यते ' ( तैसं. ६।४।७ ) इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितव्यमिति पौर्वापर्यव्यवस्था भवेत्तत एवं पर्यनुयोगः प्रसज्येतापि व्याकृतत्वाश्रयो वेदविधिर्वेदविध्याश्रयं च व्याकरणं कथमवकल्पिष्यते इति । यदा तु किंचिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावात् अन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यातप्रतिषेधवर्जनपरूकस्यापि अवगम्यमानवेदविधिमूलत्वात् अनादित्वे सति सर्वेषां वेदवेदियूपाहवनीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदाऽनवगतपूर्वापरविभागसंबन्धे [ पृ. २८० ] अत्यन्तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनम्, तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न किंचिदनुपपन्नम् । यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुताभावात् वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वात् गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधान्न भेर्यादिशब्दमातृकाक्षरपाटप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति । तत्राभिधीयते-- ' **संमुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः । गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥** ' लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति तावदेव लोकव्यवहारात् वाचकत्वज्ञानं जायते यावत् व्याकरणानुगतत्वं नाभ्युपगम्यते । यदा तु तयोर्मार्गभेदेन प्रतिपत्तिस्तदा ' तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' ( १।३।४।८ ) इत्युपन्यस्य ' शास्त्रस्था वा तन्निमित्तत्वात् ' इत्यनेनैवोत्तरेण व्याकरणाख्यशास्त्रगतप्रतिपत्तिबलीयस्त्वं तदभियुक्तपुरुषबलीयस्त्वं वा पूर्वमेव स्थापितम् । ' **तर्केणा-**



**वाचकत्वं च वदँल्लोकेन बाध्यते । स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत् ॥** ' यथैव तुल्यशिरःपाण्याद्याकारेष्वपि संकीर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृसंबन्धस्मरणादेव वर्णविवेकावधारणं भवति तथा साधुशब्दावधारणमपीति लोकविरोधाभावः । ' **यथा च तुल्यपाण्यादिरूपत्वाद्वर्णसंकरम् । वदतः स्मृतिबाधः स्यात्तथा वाचकसंकरम् ॥ आदितश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते । साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत् ॥** '

यो नाम स्मृतिप्रतिपादितोऽर्थः कर्मफलसंबन्धवदनियतकालत्वान्न ज्ञायते कदा भविष्यतीति सोऽत्यन्तं प्रत्यक्षाद्यविषयत्वात् केवलशास्त्रमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरणजनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि विचाराभ्यासजनितसंस्कारस्य रागाभ्यासजनितषड्जादिविभागविषयमिव साध्वसाधुशब्दरूपगोचरमुपजायते । ' **तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् । तस्य प्रत्यक्षबाधोऽपि वर्णसंकरबाधवत् ॥** ' तेन अपशब्दगतवाचकत्वापादनस्यैव समस्तप्रमाणविरोधः शक्यो वक्तुं न स्मर्यमाणशब्दसाधुत्वपक्षस्येति निरवद्यता । तेनादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाधनत्वकृतमपि [ पृ. २८१ ] साध्वसाधुत्वज्ञानमुपपत्स्यते । यस्तु आह– ' साधुत्वं नेन्द्रियग्राह्यम् ' इत्यादिश्लोकम् । तं प्रति एवं वक्तव्यम् । ' **साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते । शास्त्रस्य विषयोऽप्येष प्रयोगोऽप्यस्त्यसंकरः ॥** ' इति ।

ग्रस्तनिरस्ताम्बूकृतादिदोषवर्जितनियतह्रस्वादिकालाभिव्यङ्ग्ययथालक्षितक्रमग्राह्यवर्णानां स्मर्यमाणाविनष्टवाचकरूपविषयश्रोत्रज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् । तदुत्तरकालप्रवृत्तव्यवहारगतार्थप्रतिपत्तिसहितलक्षणगतप्रकृतिप्रत्ययलोपागमविकारादेशादिलिङ्गमप्यव्यभिचारि विद्यते । शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकयज्ञोपकारसिद्धिसाधनभावप्रतिपादनार्थस्यार्थानर्थकार्यस्वरूपज्ञानार्थस्य च अयमेवंविध एव अन्योऽपि विषयः । अविनष्टैः शब्दैर्भाषमाणस्य स्वर्गयज्ञोपकारौ भवतः । याज्ञे च कर्मण्यपशब्दैर्भाषमाणस्यानृतमिव वदतः प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः । यथोक्तं ' वाग्योगविद्दुष्यति चापशब्दैः ' इति । एतौ द्वावप्यर्थौ न शास्त्रादृतेऽन्येन प्रतिपादयितुं शक्येते इत्यतीव शास्त्रविषयः । द्वाभ्यामेव च विधिप्रतिषेधाभ्यामविनष्टैः शब्दैः स्वर्गयज्ञोपकारकामो भाषेत न विनष्टैरिति न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः । न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं न प्रमेयस्वरूपज्ञापनार्थेनेत्येतदीश्वराज्ञासिद्धम् । न हि ' अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा ' इत्यादि, ' चतुस्त्रिंशदाश्वीनानि सरस्वत्या विनशनप्लाक्षप्रश्रवणे ' इत्येवमादिवाक्यशेषाणां च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते । नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वबाधः । अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति काचित् परिभाषा तथाप्येवंविधाः साधुशब्दाः प्रत्येतव्या इतीदृशो विधिः संभवत्येव । यो वाक्यान्तरावगतादृष्टफलार्थी यद्यविनष्टैः शब्दैः भाषितुमिच्छेत् स चैतानेवंरूपानेतत्क्रममात्रांश्च वर्णान् उपाददीत नाधिकान्न न्यूनांश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति शास्त्रविषयत्वसिद्धिः । निःसंदिग्धवृद्धबालप्रयुक्तदेवदत्तदत्तादिशब्दोपमयाऽपि च सर्वशब्दानां विनष्टाविनष्टरूपैः अवश्यं भवितव्यमिति शक्यं विज्ञातुम् । एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विधलौकिकाविनष्टत्वोपमानं दर्शयितव्यम् । तथा लौकिकार्थप्रत्ययोत्थापितवाचकत्वार्थापत्तिलभ्यस्तावदेकः साधुत्वनिश्चयः । ततः संभवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितकेवलसाध्वन्वाख्यानस्यान्यथानुपपद्यमानत्वादपरयाऽप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम् । ' **अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते । लक्षणाभावमार्गेण तस्याभावोऽपि निश्चितः ॥** ' इति । [ पृ. २८२ ] ' **षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये । व्यापारोऽस्तीति को जल्पेत्साधुत्वं निष्प्रमाणकम् ॥ यद्यप्यनभियुक्तानां प्रयोगोऽस्ति ससंकरः । अभियुक्ता विवेक्ष्यन्ते तथाऽपि ब्राह्मणादिवत् ॥ यथा च पद्मरागादीन्काचस्फटिकमिश्रितान् । परीक्षका विजानन्ति साधुत्वमपरे**

तथा ॥ यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम् । तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम् ॥ '

पौरुषेयव्याकरणागमपरम्परायामपि च तदनुगतसाधुत्वानन्तरदर्शनात् पूर्वदृष्टविवेकज्ञानमात्रपरत्वाद्वा नान्धपरम्परावचनन्यायप्रसङ्गः । यावानिह अदृष्टार्थांशः स वैदिकविधिप्रतिषेधद्वयादेवोपपन्नः । तत्सिद्ध्यर्थाविनष्टशब्दरूपज्ञानं वेदशिष्टप्रयोगसंवादिव्याकरणान्वाख्यानपारम्पर्येण सद्यः फलत्वात् सुलभमिति न पुरुषकृतत्वनिमित्तदोषप्रसङ्गः । यत्तु दृष्टार्थत्वात् स्वसामर्थ्यप्राप्तत्वादेव ' अप्राप्ते शास्त्रमर्थवत् ' ( ६।२।४।१९ ) इति वाचकभाषणविधानमनुपपन्नमिति तत्राधिकरणेनैव उत्तरं दास्यते 'नियमार्था वा श्रुतिरुच्यते' ( ४।२।९।२४ ) इति । यत्तु अवाचकत्वेन अपशब्दानामप्रसङ्गाद्व्यावर्त्याभावे नियमानुपपत्तिरिति । तत्रोच्यते– ' नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते । नित्यतामात्रकारी तु नियमः किं न लभ्यते ॥ ' सति भाषितव्ये कदाचित् अविनष्टेन भाषेत कदाचित् प्रमादाशक्तिजापभ्रंशेनाप्यक्षिनिकोचनादिना वा शब्दरहितेनैव प्रगापयेत् । ' अत्र श्रेयोऽर्थिनोऽवश्यं साधुभाषा नियम्यते । नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति ॥ ' यद्यपि च नियमेऽन्यनिवृत्तिरवश्यं कल्पनीया तथाऽपि साधुशब्दस्मृतिव्यवहितानां कालरूढरूपभ्रान्तिवाचकत्वगृहीतानां च अपशब्दानां ( विप्रकर्षाभिधायिकालशब्दोक्तानामपशब्दानाम् , रूढपदपरामृष्टो योऽस्मर्यमाणावधिर्दीर्घकालप्रयोगो यश्च रूपशब्दोक्त–म्लेच्छभाषणविलक्षण– साधुशब्दसादृश्यात्मकः अर्थः, तदुभयात्मककारणजन्यया भ्रान्त्या आधुनिकैर्वाचकत्वेन गृहीतानामित्यर्थः ) संभवति प्रयोगप्रसङ्गे साधुनियमेन व्यावृत्तिः ।

अथवा नैवापशब्दानामपृथक्त्वे केचित् एकक्रियाविषयानेकद्रव्यगुणादिवदभिधायां प्राप्नुवन्ति ये साधुनियमेन व्यावर्त्येरन् । किंतु [ पृ. २८३ ] 'साधूनेव प्रयुञ्जाना नाशयेयुरयत्नतः । मा विनीनशदित्येवं नियमस्तान्नियच्छति ॥ ' तद्यथा ' यो विदग्धः स नैर्ऋतः ' इत्येवमादिदोषनिन्दापूर्वकम् ' अविदहता श्रपयितव्यः ' इति नियम्यते । तथा ' दुष्टः शब्दः स्वरतो वर्णतो वा ' इत्यादिना निन्दितत्वात् , ' तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ' इति प्रमादादिनिमित्तविनाशेन शब्दकार्यादर्थसाधनादपेतोऽयं म्लेच्छः, 'म्लेच्छ अव्यक्तायां वाचि ' ( पा. धा. २०५ ) इति स्मरणात् स न प्रयोक्तव्य इति प्रतिषेधः । ' तस्मादेषा व्याकृता वागुद्यते ' इति च विधिः अविनष्टप्रयोगनियमार्थः । ' ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये । परिहर्तुमशक्यत्वात् निषेधस्याप्यगोचराः ॥ ' उच्यते– ' प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च । एवमर्थो निषेधोऽयं नाऽऽद्रियेतान्यथा ह्यसौ ॥ अन्ये सुखमुखारूढा न क्लेशेन विवक्षवः । शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः ॥ अशक्तैर्नाशिताश्चान्ये दाक्षिण्याद्यनुवर्तनात् । जानन्तोऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत् ॥ अन्येऽपि प्राकृतालापैरशक्तैर्व्यवहर्तृभिः । सह व्यवहरन्तस्तानुपेत्यापि प्रयुञ्जते ॥ तत्कथं नाम यत्किंचित्स्यादपभ्रंशकारणम् । दूरात्परिहरेयुस्तदिति यत्नो नियम्यते ॥ '

यत्तु दृष्टार्थप्रत्यायननिराकाङ्क्षत्वात् अदृष्टार्थप्रयोगोत्पत्त्यशास्त्रत्वमिति । तत्रोच्यते– ' दृष्टे सत्यपि सर्वत्र नियमादृष्टमिष्यते । क्रत्वर्थं पुरुषार्थं च तत्संयोगपृथक्त्वतः ॥ ' ' एकस्य तूभयत्वे संयोगपृथक्त्वम् ' ( ४।३।३।५ ) तच्चेह प्रकरणानारभ्यवादाभ्यामवगतम् , तत्र 'क्रत्वर्थांशे परार्थत्वादर्थवादः फलश्रुतिः । पुरुषार्थे तु निर्देशात्फलमात्रेयदर्शनात् ॥' क्रत्वर्थं ह्यनिर्ज्ञातोपायत्वात् सर्वादृष्टोपसंग्रहक्षममिति नियमापूर्वमात्मसात्कुर्वत्पुरुषार्थांशे फलश्रुतिं अर्थवादी करोति । पुरुषार्थस्य नियमस्य त्ववश्यकल्पनीयप्रयोजनत्वादर्थप्रतिपत्तेश्चापभ्रंशेऽप्यक्षिनिकोचादिभ्यो वा सुतरां सिद्धत्वात् अनाकाङ्क्षितनियमापूर्वोप- [ पृ. २८४ ] जीवनसामर्थ्यं नास्तीत्यवश्यमर्थवादोपात्तमेव स्वर्गलोके कामधुगाद्येव फलत्वेनाऽऽश्रयणीयम् । यत्तु न ज्ञायते क्वेदं नियमापूर्वं आश्रितमिति, तत्र अभिधीयते—



'क्रत्वर्थं तावदङ्गेषु तदर्थेष्वेव संश्रितम् । अनङ्गत्वाभिधानार्थं स्यात्क्रत्वर्थं नराश्रितम् ॥ ' ' प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत् ' ( ३।४।५।१५ ) इति हि ज्योतिष्टोमप्रकरणगतब्राह्मणशब्दलक्षिततदपूर्वसाधनयजमानसंस्कारत्वात् साधुभाषणनियमापूर्वस्य ' याजमानास्तु तत्प्रधानत्वात्कर्मवत्' ( ३।८।२।४ ) इत्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तदाश्रितमेव विज्ञायते । पुरुषार्थवाक्येऽपि सम्यग्ज्ञातसुप्रयुक्तत्वाक्षिप्तज्ञातृप्रयोक्तृपर्युपस्थापनात् क्रियाफलयोश्च तद्गामित्वात् प्रधानयागाद्यपूर्ववदेव ज्ञातृप्रयोक्त्राश्रितं निष्पद्यते । ' तृतीयोक्तिक्रियागम्यगुणभावेऽपि वक्तरि । संस्कार्यत्वात्प्रधानत्वं स्यात्प्रयाजाज्यशेषवत् ॥ '

यथैव ' प्रयाजशेषेण हवींष्यभिघारयति ' इति सत्यपि शेषस्य तृतीयानिर्देशे कार्योपयोगित्वात् संस्कार्यत्वावधारणमेवं ब्राह्मणस्यापि इत्यदोषः । ' यदि वा ब्राह्मणेनेति तृतीया यागकारिणी । कामधुक्छन्दयोगाच्च बहिः प्राधान्यकल्पना ॥ नैव म्लेच्छनकारित्वात्तृतीयेयं प्रतीयते । कुर्वता यागमित्येवं ब्राह्मणेनेति योज्यते ॥ यागे यो गुणभावश्च संस्कारे सा प्रधानता । न ह्यारादुपकारित्वं संयुक्तस्योपयोगिना ॥' तच्चोपयोगित्वं प्रकरणतृतीयाविभक्तिश्रवणाभ्यामवगतं शेषस्वीकरणसमर्थं भवति । बाह्यपुरुषार्थत्वेऽपि कामधुक्छन्दस्य पुरुषोपभोग्यकाम्यमानार्थसाधनवचनत्वात्पुरुषप्राधान्यप्रतिपत्तिः। यद्यपि च साधुशब्दोच्चारणमुच्चारयित्रर्थं क्रत्वर्थं च न भवति तथापि तद्गतनियमप्रतिषेधयोरेव क्रत्वर्थपुरुषार्थत्वे भविष्यतः । न हि यदर्थं कर्मणि यौ नियमप्रतिषेधौ तावेव केवलौ तदर्थौ भवतः । तथा हि— 'स्रग्गुपायमांसभक्षादिपुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ क्रत्वर्थात्स्नानाद्दिराचेष्टा वीर्यसिद्धिर्विधानतः । भोजनाच्चाप्यतिथ्यर्थादपूर्वं दातृसंश्रितम् ॥ '

अतश्च परार्थोच्चारणाश्रितावपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां संनिहितपुरुषप्रधानौ विज्ञायेते । [ पृ. २८५ ] अतश्च वेदमूलत्वे सत्येवं प्रतिपादिते । प्रयोगोत्पत्त्यशास्त्रत्वं यदुक्तं तदसत्कृतम् ॥ यच्चास्य कृत्रिमत्वेन स्वतः शास्त्रत्वबाधनम् । तत्प्रसिद्धिविरुद्धं स्यादचन्द्रशशिवाक्यवत् ॥ ' शास्त्रशब्दो यदि तावद्रूढस्ततः चतुर्दशसु तावद्विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धस्तदन्तर्गतत्वाच्च व्याकरणस्य शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यते अनेन इति शास्त्रत्वमन्वर्थमिष्यते तथापि व्याकरणेन साधुशब्दाः शिष्यन्ते तदनुगमोपाया वा प्रकृतिप्रत्ययादयस्तदभियुक्तशिष्यजनो वेति सर्वथा शास्त्रशब्दप्रवृत्तिरविहता । 'प्रसिद्धमपि शास्त्रत्वं यस्तु तर्केण वारयेत् । वेदस्यापि स नित्यत्वाद्व्योमवद्वारयिष्यति ॥ ' यथैव हि व्याकरणादीनां कृत्रिमकाव्योपनिबन्धसाधर्म्याच्छास्त्रत्वं प्रतिषेद्धुमध्यवसीयते, तथा आकाशदिक्कालात्मनां परमाणुदृष्टान्तबलेन नित्यत्वाद्वेदस्याशास्त्रत्वमप्ययत्नेनैव क्रियेत । यो हि नागरिकभाषाभिज्ञतया ग्रामीणैर्मातापितरावपि शुक्रवचनैरभिदधीत ( शुक्रवचनं निष्ठुरवचनम् ) स केनान्येन वार्येत ।

' परत्राविनयं कुर्वन् पितृभ्यां वार्यते सुतः । तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥ तथा बहिरसंबद्धं वदन् वेदेन वार्यते । साङ्गेन तं पुनर्निघ्नन् केनान्येन निवार्यते ॥ क्रुद्धो यो नाम यं हन्ति स तस्याङ्गानि कृन्तति । कृत्ताङ्गस्य ततस्तस्य विनाशः कियता भवेत् ॥ तेन त्रयी द्विषन्पूर्वं वेदाङ्गान्येव लुम्पति । ततस्तेनैव मार्गेण मूलान्यन्यस्य कृन्तति ॥ श्रुतिस्मृतिप्रमाणत्वे हेतुपूर्वं निरूपिते । अङ्गानामप्रमाणत्वमशास्त्रत्वं च को वदेत् ॥ '

यत्त्वितरस्मृतीनां प्रायेण सारूप्याद्व्याकरणस्य तद्विलक्षणत्वात् तन्मध्यपातित्वमसंभाव्यमिति । तत्रोच्यते । सर्वधर्मसूत्राणां वर्णाश्रमधर्मोपदेशित्वाद्धर्माणां चैकरूपप्रायत्वात्परस्परसंवादित्वं युक्तम्, व्याकरणस्य त्वन्य एव साधुशब्दतत्त्वनिर्णयरूपो विषयस्तत्रास्य व्याकरणान्तरेणैव संगतिः स्यान्न धर्मसूत्रैः । स्मृतित्वं त्वङ्गानां धर्मसूत्राणां चाविशिष्टम् ।

[ पृ. २८६ ] '**अथापि स्मृतिशब्देन नाङ्गानामभिधेयता । तथाऽप्येषां न शास्त्रत्वप्रमाणत्वनिराक्रिया ॥ पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥**' इति हि तुल्यवत्प्रामाण्यस्मरणम्-- '**अपि वा कर्तृसामान्यादुक्तो ( १।३।१।२ ) न्यायश्च यः स्मृतेः । प्रमाणत्वे समानोऽसौ वेदाङ्गेष्वपि गम्यते ॥ प्रमाणषट्कमूलत्वं पूर्वं चैषां प्रदर्शितम् । दृष्टादृष्टफलत्वेन तस्मान्नास्त्यप्रमाणता ॥ एकस्य च यदा युक्त्या समूलत्वं निरूपितम् । पौरुषेयान्तरग्रन्थमूलताऽपि तदेष्यते ॥ असंभावितमूलं हि पौरुषेयं यदुच्यते । मूले तस्याप्रतिष्ठत्वं रूपे जात्यन्धवाक्यवत् ॥**'

इह तु समूलत्वादेकान्तरितप्रामाण्यसिद्धिः । यत्तु सूत्रवार्तिकभाष्यकाराणामन्योन्यविगीतवचनत्वादप्रमाणत्वमिति । तत्र अभिधीयते-- '**स्मृतीनामप्रमाणत्वं विगानं नैव कारणम् । श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते ॥ विगीतवाक्यमूलानां यदि स्यादविगीतता । तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्ययात् ॥**' मूलानुरूप्येण हि स्मृतीनां प्रमाणत्वं तदविगानेन- '**परस्परविगीतत्वमतस्तासां न दूषणम् । विगानाद्धि विकल्पः स्यान्नैकत्राप्यप्रमाणता ॥ धर्मसाधनतांशे च विगानं नैव विद्यते । अन्वाख्यानविगानं तु लक्ष्यभेदान्न दुष्यति ॥**' पुनरुक्तत्वादिना हि यत्सूत्रप्रत्याख्यानं तस्य च पुनः समाधानम् । '**तस्यावैदिकमूलत्वान्न किंचिदपि दुष्यति । ये चापीष्ट्युपसंख्याने ते च स्मृत्यन्तराश्रिते ॥ न चाधिकोपसंख्यानान्न्यूनस्यास्त्यप्रमाणता ॥**' तद्यथा । वाजसनेयिशाखायामाध्वर्यवं चरकशाखासु च बह्वित्येतावता नाल्पविषयमप्रमाणीकुर्वन्ति । तस्मादयमपि न दोषः । यस्तु सूत्रकारस्य प्रयोजनानभिधानोपालम्भः । [ पृ. २८७ ] '**स श्रुतिस्मृतिसिद्धत्वान्नोपालम्भत्वमर्हति । ग्रन्थान्ते च स्वसंवेद्यं सुज्ञानं तत्प्रयोजनम् ॥**' सत्यवचनं च सर्वश्रुतिस्मृतिषु स्वर्गसाधनत्वेन यागसाधनत्वेन च नियतम् । सत्यं च द्विविधं शब्दसत्यं अर्थसत्यं च । तत्र यथैव यथावस्थिताविप्लुतार्थवचनं श्रेयःसाधनमेवं यथावस्थितशब्दसत्यवचनमपि, यथा चार्थसत्यविपर्ययः प्रत्यवायायैवं विनियोगकालप्रयुक्तशब्दानृतवचनमपि । शब्दसाधुत्वज्ञानं च व्याकरणाभियोगविशेषादित्युक्तम् । '**तस्माद्विज्ञायमानत्वान्नोक्तं मूलकृता स्वयम् । शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥**'

न च व्याकरणप्रयोजनाभिप्रायं प्रति केचिद्विवदन्ते । स एव त्वभिप्रायः किं न्याय्यो नेत्यर्थान्तरमेतत् । '**धर्माय नियमं** ( लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ) **चाऽऽह वाक्यकारः प्रयोजनम् । वेदमूलस्तु तत्रैक एको व्याकरणाश्रयः ॥**' नियमद्वयप्रयुक्तं व्याकरणम् । साधुशब्दज्ञानात्तत्पूर्वप्रयोगाद्वा स्वर्गयज्ञोपकारसिद्धिरित्येतत्तावद्वेदमूलमनन्यप्रमाणकत्वात् । अतश्चायं तावद्वेदाख्येन शास्त्रेण धर्मनियमः । '**तथा व्याकरणाख्येन साधुरूपं नियम्यते । अविशेषेण सिद्धिः स्याद्विना व्याकरणस्मृतेः ॥**'

तेन वेदावगतसम्यग्ज्ञातसाधुशब्दप्रयोगात्मकधर्माङ्गत्वेन व्याकरणप्रक्रियेतिकर्तव्यतया नित्यवाचकशब्दरूपज्ञाननियमः क्रियते । यच्च कात्यायनेन ज्ञाने धर्म इति चेत्तथाऽधर्म इति तन्त्रेण प्रसङ्गेन वाऽपशब्दज्ञानादधर्मत्वापत्तिदोषमभिधाय शास्त्रपूर्वप्रयोगे अभ्युदय इति निःश्रेयससिद्ध्युपायेऽवधारिते यत्पुनः परावृत्य भाष्यकारेणोक्तम्, अथवा पुनरस्तु ज्ञाने धर्म इत्यभ्युपेत्यवादमात्रं तत्पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थं कृत्वाचिन्तान्यायेनोक्तम् । परमार्थतस्त्वन्यानर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात् फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते । यथा '**योऽश्वमेधेन यजते य उ चैनमेवं वेद**' इति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत् को जातुचिद्बहुद्रव्यव्ययायाससाध्यमश्वमेधं कुर्यात् । तद्विधानं चानर्थकमेव स्यात् । एवं शब्दज्ञानाच्चेद्धर्मः सिध्येत्को नामानेकताल्वादिव्यापारायासखेदमनुभवेत् । तस्मात्क्रतुवदेव ज्ञान- [ पृ. २८८ ] पूर्वप्रयोगस्यैव फलं कारणे कार्यवदुपचारात्तण्डुले देववर्षणवज्ज्ञाने ( '**देवो वर्षति तण्डुलान्**' इत्यत्र यथा तण्डुलशब्दः वृष्टौ उपचर्यते इति



दृष्टान्तार्थः ) धर्मवचनमापादिताधर्मपरिहाराभिधानशक्तिमात्रप्रदर्शनार्थमेवोपन्यस्तं न फलवत्त्वप्रतिपादनाय । '**द्रव्यसंस्कारकर्मसु परार्थत्वात्**' ( ४।३।१।१ ) इत्यनेन न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसंबन्धासंभवात् । '**सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥**'

आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थपुरुषार्थत्वेन ज्ञायते तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवात् । तथा '**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः**' तथा '**मन्तव्यो बोद्धव्यः**' तथा '**आत्मानमुपासीत**' इति कामवादलोकवादवचनविशेषैर्जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्तस्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदयनिःश्रेयसरूपफलसंबन्धः । '**स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति तरति शोकमात्मवित् तथा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते**' इत्यादिना नैराजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि । तथा '**स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते**' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम् । अप्रकरणगतत्वेन अनैकान्तिकक्रतुसंबन्धाच्च नाञ्जनत्वादिस्रुवावाक्यादिफलश्रुतिवत् अर्थवादत्वम् । '**न च ज्ञानविधानेन कर्मसंबन्धवारणम् ।**' प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थं अकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि । न च तेषां भिन्नप्रयोजनत्वाद्भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावाः संभवन्ति । शब्दज्ञानस्य त्वेकान्तेन प्रयोगाङ्गत्वात्पूर्वतरभावित्वाच्च न पृथक् फलसंबन्धसंभव इति ज्ञानपूर्वप्रयोगफलवत्त्वमेव निश्चीयते । यत्तु आदिमद्व्याकरणज्ञानतत्पूर्वकप्रयोगफलसंबन्धोऽनादिविधिमूलो नावकल्पते इति । तत्र यूपादिकरणवद्व्याकरणपरम्परानादित्वात् अनुपालम्भः । '**तस्मादेषा व्याकृता**' इति च व्याकरणव्यवहारनित्यत्वमुक्तम् । '**न चैषा संप्रदायेन व्याकृतेत्यभिधीयते । तत्र ह्युच्यत इत्येव व्याकृतेति तु निष्फलम् ॥**'

यदपि च मनुना पङ्क्तिपावनमध्ये वेदादेवोपलभ्योक्तम् । '**यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।**' ( **तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥** ) इति तेनापि पूर्वपक्षादुक्ताधीतवेदत्वयज्ञमीमांसनव्यतिरिक्तविषयेण सताऽवश्यमेतदेव व्याकरणज्ञानमाश्रयितव्यमिति तन्नित्यत्वसिद्धिः ।

**तदशक्तिश्चानुरूपत्वात् । २८ ॥**

**भाष्यम्**— अथ यदुक्तम्-अर्थोऽवगम्यते गाव्यादिभ्यः, अतः एषामप्यनादिरर्थेन संबन्ध इति । तदशक्तिरेषां गम्यते । गोशब्दमुच्चारयितुकामेन केनचिदशक्त्या गावीत्युच्चारितम् । अपरेण ज्ञातं सास्नादिमानस्य विवक्षितस्तदर्थं गौरित्युच्चारयितुकामो गावीत्युच्चारयति । ततः शिक्षित्वाऽपरेऽपि सास्नादिमति विवक्षिते गावीत्युच्चारयन्ति । तेन गाव्यादिभ्यः सास्नादिमानवगम्यते । अनुरूपो हि गाव्यादिर्गोशब्दस्य ।

**एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् । २९॥**

**भाष्यम्**— अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति । '**अश्मकैरागच्छामि**' इत्यश्मकशब्दैकदेशे उपलब्धे, अश्मकेभ्य इत्येव शब्दः स्मर्यते । ततः अश्मकेभ्यः इत्येषोऽर्थ उपलभ्यते इति । एवं गाव्यादिदर्शनाद्गोशब्दस्मरणं ततः सास्नादिमानवगम्यते ।

**शा**— स्मृत्याचारविरोधे स्मृतेः बलीयस्त्वम्, आचारेष्वपि अभियुक्ताचारस्य बलीयस्त्वं स्थितम् । इदानीं शब्दापशब्दविभागेऽपि किं व्याकरणस्मृतेः तदभियुक्तानामाचारस्य च इतरलोकव्यवहारात् बलीयस्त्वं संभवति नेति चिन्त्यते । तदिह एकस्मिन्नर्थे प्रयुज्यमानान् गो-गावी-गोण्यादिशब्दान् व्याकरणानुगताननुगतान् च उदाहृत्य चिन्तनीयं किं एते सर्वे एकस्मिन्नर्थे प्रयोक्तव्याः साधवः किंवा व्याकरणानुगता एव साधवः अन्ये तु असाधवः न प्रयोक्तव्या इति । तदर्थं च किं सर्वेऽपि अविच्छिन्नपारंपर्यप्रयोगजा उत केचिदशक्तिजा अपभ्रंशा इति । तदर्थं च किं व्याकरणं प्रमाणं अप्रमाणं वा इति चिन्तनीयम् । तत्सिद्धये किमस्य मूलं

संभवति नेति, मूलसंभवे प्रमाणभूतव्याकरणस्मृतिशास्त्रबलीयस्त्वेन तदभियुक्तपुरुषाचारबलेन च पृथग्जनाचारबाधात् गाव्यादीनामसाधुत्वम्, निर्मूलत्वे तु तदप्रमाण्यात् लौकिकप्रयोगाविशेषात् सर्वेषां साधुत्वेन प्रयोज्यता इति। तेन व्याकरणे प्रामाण्याप्रामाण्यमेवात्र चिन्तनीयम्। तत्र '**निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात्। पूर्वापरविरोधाच्च नास्य प्रामाण्यसंभवः॥ तस्मादनेन शब्दानां प्रयोगो न नियम्यते। तेनार्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया॥**' तस्मादप्रमाणं व्याकरणं सर्वैर्भाषितव्यमिति प्राप्ते, अभिधीयते- '**प्रयोगप्रत्ययौ तावद्वाचकत्वादृतेऽपि हि। युक्तावेकस्य चार्थस्य न्याय्या नानेकशब्दता॥ अभियुक्तस्मृतेश्चात्र स्याद्विशेषावधारणम्। स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे॥ प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानता। प्रयोगनियमे मूलं वेदस्तस्मात्प्रमाणता॥**'

**वि**-- 'गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन। नियमोऽस्त्यस्ति वा नास्ति व्याकृतेर्मूलवर्जनात्॥, साधूनेव प्रयुञ्जीत गवाद्या एव साधवः। इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः॥ अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्। अमात्वेऽदन्त्यनिर्णीतिरासोक्तव्याकृतेर्बलात्॥'

**भाट्ट**--- स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यमाक्षिप्यते। नियमद्वयार्थं हि तत्। 'साधूनेव प्रयुञ्जीत नासाधून्' इत्येकः। 'गवादय एव साधवः न गाव्यादयः' इत्यपरः। न च नियमद्वयस्य मूलं संभवति, प्रतिगवादिशब्दमनेकश्रुतिवाक्यपाठासंभवात्, साधुत्वस्य पूर्ववन्निर्वचनासंभवेन अनुगतैकश्रुतिकल्पनानुपपत्तेश्च। न हि साधुत्वं नाम अर्थप्रत्यायकत्वम्, अनादित्वे सति वाचकत्वं वा। गाव्यादिष्वपशब्देष्वपि सत्वात्, अपशब्दानां क्वचित् वाचकत्वाभावे गवादिषु गौणत्वस्याप्यसंभवाच्च। अतो वाचकत्वाविशेषात् न व्याकरणेन नियमः संभवति। इति प्राप्ते, प्रयोगप्रत्यययोः साधुशब्दापभ्रंशजानां गाव्यादिशब्दानां साधुशब्दोपस्थापनद्वारा उपपत्तेः न वाचकत्वकल्पनता, अनेकशक्तिकल्पनापत्तेः। इदानींतनानां च शक्तिभ्रमात्तौ प्रयोगप्रत्ययौ। न च घटकलशादिपदवद्विनिगमनाविरहः, पाणिन्यादिप्रणीतव्याकरणस्यैव नियामकत्वात्। न चामूलत्वम्, प्रयोगनियमे 'साधूनेव प्रयुञ्जीत' इत्येवंविधाया एकस्या एव श्रुतेर्मूलत्वात्। साधुत्वं चानादिवाचकत्वम्, अनपभ्रष्टत्वं वा, व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्या जातिर्वा, प्रमितवृत्त्या अर्थप्रत्यायकत्वं वेति **कौस्तुभे** एवातिक्षुण्णम्। तदभावश्चासाधुत्वम्। प्रत्यक्षैव च श्रुतिः 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इत्यादिर्मूलम्। अयं च निषेधः प्रकरणात् ज्योतिष्टोमाङ्गम्। यज्ञमात्रेऽपि च निषेधः, 'याज्ञे कर्मणि नियमोऽन्यत्रानियमः' इति महाभाष्यानुसारात्। साधुप्रयोगनियमात् परं फलोदय इत्यपि 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति वचनात्। अत्र हि प्रयोगाश्रितसाधुशब्दनियमः फलोद्देशेन विधीयते। रागप्राप्तस्यापि साधुप्रयोगस्य 'तस्मादियं व्याकृता वागुद्यते' इति वचनादाश्रयत्वसिद्धिरिति स्पष्ट **कौस्तुभे**। 'गवादय एव साधवः न गाव्यादयः' इति साधुस्वरूपनियमस्य तु अनादिप्रयोगपरम्परैव मूलम्। अतः प्रमाणं व्याकरणम् यत्तु- न्यायमूलकं स्फोटादि तत्रोच्यते श्रुतिविरुद्धं च, तन्न्यायश्रुतिविरोधे कामं भवत्वप्रमाणम्।

**मण्डन**--- 'अनादयो व्याकरणात् गवाद्याः।' व्याकरणात् व्याकरणशास्त्रोक्तनियमात्, गवाद्याः साधुशब्दाः, अनादयः अनादिप्रयोगसिद्धनियतस्वरूपा एव इति योजना।

**शंकर**-- 'प्रामाण्यं व्याकृतेः स्मृत्या।'

* **व्याकरणाधिकरणे** (१।३।८) अनेकशब्दत्वं एकशब्दत्वेन बाध्यते। **बाल.** पृ. १४०. * व्याकरणाधिकरणे च 'साधूनेव प्रयुञ्जीत नासाधून्' इत्यस्याः स्मृतेः वेदमूलत्वाभिधानेन अनादिवाचकाख्यसाधुशब्दप्रयोगस्य...धर्मप्रमोपयोगितया प्रामाण्यं संभवति। **कौ.** १।३।४।८ पृ. ५४. * व्याकरणाधिकरणे हि 'अन्यायश्चानेकशब्दत्वम्' इति गुणसूत्रे एकस्यार्थस्य अनेकशब्दत्वं निराकृतम्। **कु.** २।२।८।२२. * असंसारि-



-सगुणनिर्गुणात्मप्रतिपादिकानां तु उभयविधोपासनाविध्यपेक्षितत्वेन स्वार्थपराणामेव अभ्युदयनिःश्रेयसहेतुत्वं इति वार्तिके **व्याकरणाधिकरणे** उपपादयिष्यते। **कौ.** १।२।१।७ पृ. २९, * व्याकरणे च शब्दापशब्दविभागकथनं वृद्धव्यवहारमूलम्। साधुशब्दप्रयोगस्य क्रत्वर्थपुरुषार्थरूपत्वम्, असाधुशब्दप्रयोगस्य च क्रतुवैगुण्यापादकत्वं वेदमूलकम्, वैदिकपदरक्षोहादिकथनेन च वेदाङ्गता इति व्याकरणाधिकरणे वक्ष्यामः। १।३।१।२ पृ. १०.

* **व्याकरणानुगृहीतप्रयोगस्य** केवलप्रयोगापेक्षया बलवत्त्वम्। **सोम.** २।१।४ पृ. १०९.

* **व्याकरणादीनां** वेदार्थज्ञानोपयोगित्वात् वेदाङ्गत्वोपपत्तिः। **मणि.** पृ. २.

* **व्याकरणकर्तारः** पाणिनि-कात्यायन-पतञ्जलयः मन्वादिसमानाः प्रामाण्ये। **वि.** १।३।९.

* **व्याकरणदर्शने** वाक्यं प्रत्यस्तमितावयवविभागम्। न च तस्य स्वार्थेन सह वाच्यवाचकलक्षणः संबन्धः, किंतु तादात्म्यलक्षण एव, वाक्यमेव वाक्यार्थरूपतया विवर्तते शुक्तिकेव रजतस्वरूपतया। तत्र यद्यपि वेदवाक्यार्थो मानान्तरागम्यतया अगृहीतसंबन्धः, तथापि वेदवाक्यमेव अर्थरूपतया विवर्तिष्यते इत्यध्यारोपितप्रकृतिप्रत्ययपदगतौ अन्वयव्यतिरेकौ उपायमात्रं भवत इति। **ऋजु.** १।१।७।२४ पृ. २६६.

* **व्याकरणपरंपरा** अनादिः। **वा.** १।३।८।२७ पृ. २८८.

* **व्याकरणप्रामाण्यं** वेदोक्तं 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्' इत्याथर्वणिकाः (मुण्डकोपनिषद् १।१)। 'वाग्वै पराच्यव्याकृताऽवदत्, ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्विति, तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुद्यते' इति तैत्तिरीयकब्राह्मणम्। **वि.** १।३।९.

* **निगमनिरुक्तव्याकरणवशेन** धातुतोऽर्थः कल्पयितव्यः यथा 'सृण्येव जर्भरी' इत्यादौ। **भा.** १।२।४।४१.

* **व्याकरणशास्त्रव्यापारस्य** पदपूर्वकत्वम्। **सु.** पृ. २६०.

* **व्याकरणस्मृतेः** विषयः 'एकार्थप्रयुक्तानां कः साधुः कोऽपभ्रंशः' इति। **वा.** ३।८।४।१३ पृ. ९२२, * व्याकरणस्मृतेः शब्दापशब्दविभागमात्रविषयत्वम्। न च स्मृतेः कस्य किं योगनिमित्तत्वं इत्येष व्यापारः, तथापि तु साध्वसाधुत्वपरतयैव अन्वाख्यानात् निमित्तत्वमवगम्यते। २।३।२।३ पृ. ५८६.

* **व्याख्या**। 'तस्मात् विस्तरसंक्षेपावर्थमार्गावुभावपि। व्याख्यायामुपयोज्येते इति कश्चित् क्वचित् कृतः॥' **वा.** ३।१।१।१ पृ. ६५१.

☞ **व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति न्यायः।** अस्यार्थः-विशेषस्य अन्यतरार्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयः, हि यतः संदेहात् शास्त्र अलक्षणं अननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असंदिग्धानुष्ठानसिद्ध्यर्थमत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यते इति यावत्। अयं न्यायो महाभाष्ये प्राय उक्तः। परिभाषेन्दुशेखरे मुक्तबन्ध एव परिभाषारूपेणोक्तो नागेशैरित्यलमिति। **साहस्री.** ५८३.

* 'व्याख्यानतो विशेषप्रतिपत्तिः' इत्यनयैव परिभाषया 'नहि संदेहादलक्षणं' इतिवत् 'नहि संदेहादवेदः' इत्यपि वक्तुं शक्यम्। **वा.** १।३।८।२४ पृ. २६७. * व्याख्येयस्य निश्चितप्रामाण्यव्याख्यानानुसारेण अर्थनिर्णयो युक्तः, '**व्याख्यानतो विशेषप्रतिपत्तिः**' इति प्रसिद्धेः। **पराक्रमः** ६.

* **व्याघारणं** आज्येन ज्योतिष्टोमे तृतीयसवने एव। **संकर्ष.** ३।२।१७. **मीको.** पृ. १८०१ 'ज्योतिष्टोमे तृतीयसवने एव आज्येन व्याघारणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * व्याघारणं आज्येन सोमेन वा ज्योतिष्टोमे पूर्वयोः सवनयोः। **संकर्ष.** ३।२।१८.

**मीको.** पृ. १८१४ 'ज्योतिष्टोमे पूर्वयोः सवनयोः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * व्याघारणं सोमेन परिप्लुपात्रेण ज्योतिष्टोमे । **संकर्ष.** ३।२।१९. **मीको.** पृ. १८३१ 'ज्योतिष्टोमे सोमेन धिष्ण्यव्याघारणं परिप्लुपात्रेण' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**व्याघ्रचोरधनुर्न्यायः ।** अयं नम्रीभूय स्वकार्य-साधनकर्मणि प्रवर्तते । यथा व्याघ्रचोरधनूंषि नम्रीभूय स्वकार्यं साधयन्ति, तथा नीचजनस्य प्रकृतिर्भवतीति । **साहस्री.** ८०९.

**व्याघ्रीक्षीरन्यायः ।** यथा सुवर्णपात्रे एव व्याघ्रीक्षीरं तिष्ठति फलाय च भवति, तथा सद्गुरूपदेशो हि शमादिसाधनसंपन्ने सच्छिष्ये एव प्रतिष्ठां लभते । **साहस्री.** ३२०.

* **व्यादेशः** ( चतुर्धाकरणं ) कृष्णलचरौ नास्ति । १०।२।७।२२. **मीको.** पृ. १४७९ 'कृष्णलचरौ चतुर्धाकरणस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **व्यादेशाद् दानसंस्तुतिः ।** ३।४।१७।५१ ॥ या दक्षिणाख्यदानरूपतया विभागसंस्तुतिः परिक्रयार्थत्वे हेतुत्वेनोक्ता सा दक्षिणाया विभागेन देयत्वात् विभागरूपया विभज्य ब्रह्माद्यन्वयकथनात्मकव्यादेशरूपत्वेन 'इदं ब्रह्मणः' इत्यादिनिर्देशस्य तुल्यतया दक्षिणात्वेऽपि उपपन्ना इत्येवं पूर्वपक्षलिङ्गपरिहारार्थं सूत्रम् । **सु.** पृ. १५४५.

**व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायः ।** अन्यूनदेशकालवृत्तित्वं व्यापकत्वं अपरिच्छिन्नत्वं असीमत्वमिति यावत् । अनधिदेशकालनियमं व्याप्यमिति, व्याप्तुं योग्यमित्यर्थः । एवं च व्यापकाभावे व्याप्याभावो न्याय्य इति सिद्धम् । यथा आकाशाभावे शब्दाभावः । अयं यत्र आधाराधेयभावो नित्यस्तत्र प्रवर्तते । **साहस्री.** २६४.

**व्यापन्नं नाम आर्याणामभोज्यतां प्राप्तम ॥**
**व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत । ६।५।१६।४८॥**

**भाष्यम्**— 'व्यापन्नमप्सु प्रहरति' इति श्रूयते । किं व्यापन्नमित्युच्यते इति । तदभिधीयते । व्यापन्नं दूषितम्, येन कार्यं न क्रियते । किं तत् ? यत् अभोज्यं आर्याणां केशकीटावपन्नम्, अन्येन वा उपघातेन उपहतम्, तत् व्यापन्नमिति ।

**सोम**— शब्दार्थनिरूपणमात्रपरत्वेन पूर्वपक्षे नातीव यतितव्यमित्यर्थः । शब्दार्थनिरूपणमपि प्रायश्चित्तप्रसङ्गात् संगतमित्याशयः ।

**वि**— 'व्यापन्नमप्सु किं तत्स्यादनिश्चेयमहेतुतः । आर्याभोज्यं केशकीटदूषितं तत्प्रसिद्धितः ॥'

**भाट्ट**— 'व्यापन्नमप्सु परिहरति' इति वाक्ये श्रुतस्य व्यापन्नशब्दस्य यदार्याणामभोज्यं केशकीटावपन्नादि तदर्थः । तत्रैव तेषां प्रयोगादिति शिष्यहितार्थमुक्तम् ।

**मण्डन**— 'व्यापन्नं भोजनानर्हम् ।'

**शंकर**— 'व्यापन्नमार्याभोज्यं स्यात् ।'

**व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत् प्रतीयते । ६।५।१६।४८॥**

'व्यापन्नमप्सु प्रहरति' इति श्रूयते । यत् द्रव्यं यागीयं व्यापन्नं स्यात् तस्य अप्सु प्रहरणं गमनं उक्तम् । किं तत् व्यापन्नं नाम तदाह । व्यापन्नस्य अप्सु प्रहरणे गतौ उक्तायां यत् आर्याणां शिष्टानां अभोज्यं भवति भोक्तुं अयोग्यं केशकीटादियुक्तं भवति तत् व्यापन्नशब्देन प्रतीयेत । तत् व्यापन्नं नाम यत् केशकीटादियुक्तमन्नादि । प्रायश्चित्तप्रसङ्गादिदमुक्तम् । **के.**

* **व्यापारः** तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । **मणि.** पृ. १९. * व्यापारः । सर्वसाधनानां इष्टफलप्रवृत्तौ आन्तरालिकव्यापारावश्यम्भावः । **वा.** २।१।७।५ पृ. ३९५. * **व्यापारस्य** भवत्युक्तस्य अपुंव्यापारत्वेन पुंप्रयत्नापरपर्यायभावनावच्छेदकत्वायोगः । **सु.** पृ. ७४४. * **व्यापाराणां** अनेकप्रकारत्वम् । **वा.** ३।१।६।१२ पृ. ६९२.

* **व्यापारानाविष्टस्य** केवलस्य करणत्वानुपपत्तिः, कर्तृव्यापारव्याप्यत्वनियमात् । व्यापारेण व्यापारिणो नान्यथासिद्धिः । न हि उद्यमननिपातनयोरवान्तरयोः सत्त्वेऽपि कुठारस्य साधनत्वमपैति । **वि.** २।१।२, **भाट्ट.** १०।७।१.



* त्रिभिः प्रकारैर्भूतिर्भवति । **व्यापारतः** फलतो वचनतः इति । **भा.** १०।३।११।४५.

* **व्यापारसामान्यस्य** गुणैरुत्पत्तिः न हि शक्या । न च क्रियाविशेषमसाधयन् गुणः सामान्यस्य साधनत्वं भजते । **वा.** ३।६।१६।४३ पृ. १०६९.

* **व्याप्तिः ।** अथ केयं व्याप्तिः । अत्र गौडमैथिलसर्वस्वम् । साध्यवदन्यावृत्तित्वं व्याप्तिः । वह्निमन्महानसान्यह्रदावृत्तित्वात् धूमे लक्षणसमन्वयः । धूमवन्महानसान्यायोगोलकवृत्तित्वात् धूमवान् वह्नेः इत्यसद्धेतौ च नातिव्याप्तिः ।

अत्र साध्यतावच्छेदकसंबन्धेन साध्यवान् बोध्यः । तेन, समवायेन वह्निमद्वह्न्यवयवान्यमहानसवृत्तित्वेऽपि धूमस्य नाव्याप्तिः ।

साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । तेन यत्किंचिद्वह्निमदन्यवृत्तित्वेऽपि धूमस्य नाव्याप्तिः ।

वृत्तित्वाभावश्च वृत्तित्वत्वावच्छिन्नप्रतियोगिताकः । तेन धूमवदन्यजलावृत्तित्वेऽपि वह्नौ नातिव्याप्तिः ।

**न चैवं** ईदृशव्याप्तिज्ञानस्य केवलान्वयिनि असंभवात् कथमनुमितिरिति **वाच्यम् ।** इष्टापत्तेः । केवलान्वयिव्यतिरेकिहेत्वोः पञ्चरूपोपपन्नत्वाभावेन अनुमापकत्वाभावात् । एवं च केवलान्वयिव्यतिरेक्यनुमानमेव नेति ।

**यद्वा** हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । अत्र प्रसिद्धानुमाने घटाभावमादाय लक्षणसमन्वयः । व्यभिचारिणि अयोगोलकवृत्तिधूमाभावमादाय नातिव्याप्तिः । अत एव महानसीयवह्न्यभावं वह्निघटोभयाभावं वा आदाय नाव्याप्तिः । तत्र महानसीयवह्नित्वस्य वह्निघटोभयत्वस्य च प्रतियोगितावच्छेदकत्वेन, वह्नित्वस्य प्रतियोगितानवच्छेदकत्वात् ।

दण्डिमान् दण्डिसंयोगात् इत्यादौ रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वात् इत्यादौ च स्वाश्रयसंयुक्तत्वादिसंबन्धेन दण्डत्वादिकमेव साध्यतावच्छेदकम् । तस्य प्रतियोगितानवच्छेदकत्वात् नाव्याप्तिः । ( द्वितीयोदाहरणे जातेरेव साध्यतावच्छेदकत्वम् ) ।

हेत्वधिकरणं च हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकविशिष्टाधिकरणं बोध्यम् । तेन वह्निमान् धूमात् इत्यादौ समवायेन धूमावयववृत्त्यभावप्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य, द्रव्यं ( गुणकर्मान्यत्व– ) विशिष्टसत्त्वात् इत्यादौ च शुद्धसत्त्वाधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि द्रव्यत्वस्य, नाव्याप्तिः ।

अभावश्च हेत्वधिकरणावच्छेदेन प्रतियोग्यधिकरणः, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणश्च बोध्यः । तेन संयोगी द्रव्यत्वात्, कपिसंयोगी एतत्त्वात् इत्यादौ नाव्याप्तिः । न वा संयोगी सत्त्वात् विशिष्टसत्तावान् जातेः इत्यादौ अतिव्याप्तिः ।

प्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसंबन्धेन । तेन ज्ञानवान् सत्त्वात् इत्यादौ सत्ताधिकरणघटादेः विषयतया ज्ञानाधिकरणत्वेऽपि न क्षतिः ( अतिव्याप्तिः ) ।

**ननु** प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचिदनधिकरणत्वम्, तत्सामान्यस्य, यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम् । आद्ये कपिसंयोगी एतद्–वृक्षत्वात् इत्यत्र अव्याप्तिः । कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिरपि कपिसंयोगी भवति तदनधिकरणं च वृक्ष इति । द्वितीये प्रतियोग्यधिकरणाभावाप्रसिद्धिः । सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् ।

**न च** वह्निमान् धूमात् इत्यादौ घटाभावादेः स्वात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेः, तथापि साध्यतावच्छेदकसंबन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येव इति कथं प्रतियोग्यधिकरणाप्रसिद्धिरिति **वाच्यम् ।** घटाभावे यो वह्न्यभावः तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी, तदधिकरणं च पर्वतादिः इति क्रमेण प्रतियोग्यधिकरणस्याप्रसिद्धत्वात् ।

यदि तु घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावात् इत्यादौ अव्याप्तिः ।

तत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः । तेन संबन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्य इति । तृतीये तु कपिसंयोगाभाववान् आत्मत्वात् इत्यादौ अव्याप्तिः । आत्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगः तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वं तदवच्छिन्नानधिकरणत्वं च हेत्वधिकरणस्यात्मनः इति चेत् । **मैवम्** । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् ।

**ननु** कालो घटवान् कालपरिमाणात् इत्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः । हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसंबन्धेन कालिकविशेषणत्वेन प्रतियोग्यधिकरणत्वसत्त्वात् ।

**अत्र केचित्** । महाकालभेदविशिष्टघटाभावः तत्र प्रतियोगिव्यधिकरणः । महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् । महाकाले महाकालभेदाभावात् ।

**यद्वा** । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावः, तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं व्यापकसामानाधिकरण्यं च व्याप्तिः । अव्याप्यवृत्तिसाध्यकसद्धेतौ अव्याप्तिवारणाय अनधिकरणान्तं हेत्वधिकरणविशेषणम् ।

**यद्वा** । हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वावच्छिन्नवृत्तित्वं व्याप्तिः । अन्योन्याभावस्य व्याप्यवृत्तित्वात् । अत्र न प्रतियोगिव्यधिकरणत्वादिनिवेशः इति लाघवं इति **जीर्णाः** । तस्यापि अव्याप्यवृत्तित्वात् तथैव प्रतीतेः अस्त्येव तद्विवक्षा इति **नव्याः** ।

अत्र **आचार्याः** । व्यापकसामानाधिकरण्यं न व्याप्तिः । किंतु व्यापकसंबन्धमात्रम् । तेन अधश्छायादेः उपरि सवितरि, कृत्तिकोदयस्य रोहिण्युदये च हेतुत्वोपपत्तिः इत्याहुः ।

**न चैवं** व्यतिरेकव्याप्तौ कथं व्याप्तिपदप्रयोग इति **वाच्यम्** । अनुमितिकारणीभूतज्ञानविषयव्याप्तेः लक्ष्यतया व्यतिरेकव्याप्तौ व्याप्तिपदप्रयोगाभावेऽपि बाधकाभावात् । वस्तुतः व्यभिचारधीविरोधिधीविषयधर्मविशिष्टहेतुतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन हेतुता इति युक्तम् । तेन अनुमानत्रैविध्यमुपपन्नम् । पञ्चरूपत्वनियमस्तु अविवक्षितः इति । **मणि**. पृ. ३१-३४.

* अव्यभिचारो हि **व्याप्तिः** । अव्यभिचारश्च सकलदेशव्यापित्वे सति । **ऋजु**. पृ. ७३.

* **व्याप्तिग्रहे** हेतुः । व्याप्तिग्रहे व्यभिचाराग्रहः सहचारग्रहश्च हेतुः । भूयोदर्शनं तु न हेतुः । व्यभिचारास्मरणे सकृद्दर्शनेनापि व्याप्तिग्रहात् । भूयोदर्शनं तु क्वचित् व्यभिचारशङ्कानिवर्तकं क्वचित् तर्कः ।

व्याप्तिग्रहश्च सकलधूमे सामान्यलक्षणप्रत्यासत्त्या । तदनङ्गीकारे तु महानसीयधूमे धूमत्वप्रकारकव्याप्तिग्रहात् पर्वतीयधूमे धूमत्वप्रकारकव्याप्तिस्मरणोपपत्तिः । **मणि**. पृ. ३४.

* **व्याप्तिज्ञानानां** व्यभिचारज्ञानविरोधिज्ञानविषयत्वेन अनुगमः । **मणि**. पृ. ३०.

* व्याप्तिवादः । '**यत्र विप्रतिपद्यन्ते संबन्धे लिङ्गलिङ्गिनोः । स्वरूपतः प्रमाणाच्च तत्र निर्णय उच्यते** ॥' १ ॥ स्वरूपतस्तावत् कार्यकारणभावसंयोगसमवायैकार्थसमवायविरोधात् लैङ्गिकशब्दनिर्दिष्टानुमानकारणत्वेन **काणादाः** संगिरन्ते । 'अस्येदं कारणं कार्यसंबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकं' इति । अविनाभावं साधनस्य साध्यतदभावाभ्यामन्वयव्यतिरेकस्वरूपं तत्स्वभावतदुत्पत्तिनिबन्धनं **शाक्याः** मन्यन्ते । साध्येन साधनस्य व्याप्तिं **अन्ये** । नियमरूपं **मीमांसकाः** । प्रमाणतो विप्रतिपत्तिः । तत्स्वभावतदुत्पत्ती शाक्याः प्रमाणमाहुः । मानसप्रत्यक्षमन्ये । ऐन्द्रियकमेवान्ये । तदपि प्राथमिकमेवेति केचित् । अपरे भूयोदर्शनसहायं चरमं प्रत्यक्षं नियमप्रमाणं मन्यन्ते । अर्थापत्तिमन्ये । भूयांस्येव तद्दर्शनानि व्यभिचारादर्शन-



सहायानि आचार्याः । तत्र वैशेषिकपरिगृहीतकार्यकारणभावादिमात्राभ्युपगमे कृत्तिकारोहिण्युदयादीनां गम्यगमकभावो न स्यात् । कार्यकारणभावाद्यभावात् । न च संबन्धिग्रहणेन सर्वसंग्रहः । तस्य संयोगसमवायमात्रपरत्वात् । सर्वपरत्वे च कार्यकारणभावादीनामपि तत एव सिद्धेः पृथगभिधानानर्थक्यम् । अपि च एवं वह्नेरपि धूमानुमानं स्यात् , कार्यकारणत्वात् । वृक्षत्वेन शिंशपात्वस्यैकार्थसमवायात् । अथ अनियतत्वात् नायं प्रसङ्गः, तर्हि नियम एवानुमानाङ्गं न कार्यकारणभावादि । शाक्यपक्षेऽपि स्वभावकार्ययोरेवान्वयलाभेन हेतुत्वान्न कृत्तिकोदयादचिरोदितरोहिणीप्रतिपत्तिः सिध्येत् । रसाच्च रूपानुमानं प्रवृत्तिसामर्थ्यरूपोपादानसहकारिरसोपादानं रसादनुमीयते, प्रवृत्तिसामर्थ्याच्च रूपोपादानादुपादेयरूपानुमानमिति चेन्न । अकार्यत्वात् । यद्यपि कार्यात् कारणं सहकारिसहितमनुमीयते, कारणात्तु प्रवृत्तिसामर्थ्यादपि न कार्यं शक्यमनुमातुम्, अकार्यत्वादतत्स्वभावत्वाच्च । अथ कारणमपि अनुमापकम् , वह्नेरपि धूमानुमानप्रसङ्गः इत्युक्तम् । अपि चान्वयो नामानुगतिः, न च धूममूर्ध्वं गच्छन्तं भूमिष्ठो वह्निरनुगच्छति । शङ्कुच्छायां वा रविर्दिविष्ठो भूमिष्ठाम् । एतेन व्याप्तिः प्रत्युक्ता । न हि '**भूमिप्रतिष्ठितो वह्निर्धूमाग्रं व्योम्न्यवस्थितम् । व्याप्नोति नियमस्तस्मात् संबन्धो लिङ्गलिङ्गिनोः** ॥'२ ॥ यथोक्तम् 'नियमो नाम संबन्धः स्वमतेनोच्यतेऽधुना' इति । '**यो यथा नियतो येन यादृशेन यथाविधः । स तथा तादृशस्यैव तादृशोऽन्यत्र बोधकः** ॥' ३ ॥ यो भावो येन यादृशेन यावद्देशकालवर्तिना यथा येन प्रकारेण संयोगसमवायैकार्थसमवायकार्यकारणभावादिना केनापि संबन्धेन साक्षात् परम्परया वा नियतत्वेन दृष्टान्तधर्मिण्यवधारितः स तादृशो धर्म्यन्तरेऽप्युपलभ्यमानस्तादृशं तद्देशकालवर्तिनं तथाविधसंबन्धसंबन्धिनमनुमापयति । तद्यथा- धूमो नभोवृत्तिरूर्ध्वं गच्छन् नातिदूरवर्तिना वह्निना नियतः तथैव तं गमयति । नदीपूरस्तु अधुनातनः अधोदेशगतश्चातिदूरवर्तिनीं वृत्तां वृष्टिम् । उदयस्तु चन्द्रगतः समुद्रगतां तत्कालां वृद्धिम् । तस्यैव नभोमध्यस्थितिः तामेवार्धपञ्चदशनाडिकातिक्रान्ताम् । तादृश्यैव तया तस्या नियतत्वात् । एवमन्यत्राप्यूहनीयम् । नियम एव वार्तिके व्याप्तिशब्देनोच्यते । 'संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना । व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥' इत्यादिषु । केन पुनः प्रमाणेन अयं नियमोऽवगम्यते ? कार्यकारणभावाद्वा स्वभावाद्वेति **केचित्** । तदयुक्तम् । अकार्यकारणातदाकारात्मनां कृत्तिकारोहिण्युदयादीनां नियमाभावप्रसङ्गात् । अपिच, **पौर्वापर्यनियम एव** कार्यकारणभावः, कथं च नियम एव नियमे प्रमाणम्, आत्माश्रयदोषापत्तेः । अपिच, कार्यस्वभावयोरेव किं प्रमाणम् ? प्रत्यक्षेण तावत्साहित्यमात्रं गम्यते, न तत्कार्यता तत्स्वभावता वा । शतशोऽग्नौ धूमदर्शनादनग्नौ चादर्शनात् तत्कार्यता धूमस्यावसीयते इति चेन्न । स खलु यत्र दृश्यते तत्र तस्यास्तिता, यत्र न दृश्यते तत्र नास्तित्वं गम्यते । कार्यता तु कुतः । तस्मात्कार्यकारणभावस्यैवाप्रमाणकत्वान्न तन्निबन्धनं नियमावधारणमवकल्पते । तत्स्वभावता चाप्रामाणिकी एव । शिंशपा हि वृक्षात्मिका क्वचित् दृष्टाऽपि न तत्स्वाभाव्येन नियन्तुं शक्यते तन्मात्रानुबन्धित्वात् तत्स्वभावतायाः । न च शिंशपामात्रानुबन्धि वृक्षत्वमिति किञ्चित्प्रमाणमस्ति । सत्यपि सहोपलम्भे वृक्षत्वस्य व्यभिचारसंभवात् । न शिंशपात्वस्य क्वचिद् व्यभिचारो दृष्ट इति चेत् तथापि देशान्तरे कालान्तरे वा व्यभिचारसंभवात् संदेहानिवृत्तिः । तन्न स्वभावतो नियमसिद्धिः । केचित्तु मानसप्रत्यक्षं नियममाचक्षते । तदयुक्तम्, मनसो बहिरस्वातन्त्र्यात् । भूयोदर्शनसहायं बहिः प्रवर्त्स्यतीति चेन्न । देहाद्बहिर्भावात् । न खलु अक्षजत्वमात्रं प्रत्यक्षलक्षणम्, अनुमानादेरपि लिङ्गादिसहितमनोजन्यतया प्रत्यक्षता मा भूत् इन्द्रियार्थसंप्रयोगजं प्रत्यक्षं चतुर्विधश्च संप्रयोगः संयोगात् द्रव्यग्रहणं संयुक्तसमवायात् गुणकर्मसामान्यानाम् । संयुक्तसमवेतसमवायात् गुणत्वादीनाम् । तत्समवायात् गुणत्वादिगतसत्ताग्रहणम् । न चायं चतुर्विधोऽपि बाह्येन सह मनसः संभवति संप्रयोगः, तस्य देहाद्बहिर्भावात् । येऽपि विभु मनः

संगिरन्ते तेषां यद्यपि मनो द्रव्यं आकाशवत् व्यापकं
तथाऽपि कर्णच्छिद्रपरिच्छिन्नस्येव गगनस्य देहाव-
च्छिन्नस्यैवेन्द्रियभावं आतिष्ठन्ते मनसः, अतोऽसंभवी
बाह्येन संप्रयोगः । अन्यथा अनुमानादीनामपि मनः-
संयुक्तार्थविषयत्वात् प्रत्यक्षत्वप्रसङ्गः । यदि चतुर्विध
एव संप्रयोगः कथं तर्हि शब्दग्रहणम् ? न हि श्रोत्रस्य
आकाशदिगहंकाराणां अन्यतमात्मकस्य शब्दस्य च
निष्क्रियतया तयोः संभवति संयोगः, तस्य कर्मजत्वात् ।
उच्यते । संयोग एवानयोः संनिकर्षः । न चायं कर्म-
जन्यः, संयोगजसंयोगे व्यभिचारात् । नापि संयोगजन्यः,
कर्मजे व्यभिचारात् । तत् उभयानुगतं नैरन्तर्यमेव द्रव्य-
गतमस्य कारणम् । तच्च विभुनोरपि संभवति । भवतु वा
संयोगजसंयोगस्याप्रमाणकत्वाज्जनिमतः संयोगस्य कर्मज-
त्वम् , अव्यभिचारात् । तन्तुगत एव हि तुरीसंयोगः
तन्तौ पटभावं आपन्ने पटगतोऽपि भवति, न तु
संयोगान्तरबुद्धिः तत्रास्ति, तद्वज्जः संयोगो विभुनो-
र्भविष्यत्यनुमानात् । विभुनी मिथः संयुक्ते, द्रव्यत्वे
सति निरन्तरत्वात् , घटाकाशवत् इति । यदि तु
नैरन्तर्यमेव संयोगस्तथापि विभुनोऽपि युक्तः संयोगः ।
**ननु** द्रव्यधर्मः संयोगः, स कथं गुणभूतस्य शब्दस्य
स्यात् ? नायं गुणः, द्रव्याश्रयत्वे प्रमाणाभावात् । **ननु**
न कार्यमनाश्रितं संभवति, सत्यम् , न तु शब्दस्य
कार्यत्वं नित्यत्वात् । कश्चित्तु एकेन्द्रियग्राह्यतया रूपादि-
वच्छब्दं गुणमिच्छति । तस्यापि वायावनैकान्तिकत्वम् ।
स्पर्शविरहे सतीति विशेषणेऽपि गोत्वरूपत्वादिसामान्यैः
व्यभिचारः । तेषां नेत्रैकगोचराणामपि गुणत्वाभावात् ।
अपिच यच्छब्दाश्रयत्वेनाभिमतं व्योम, तत् प्रत्यक्षम-
प्रत्यक्षं वा स्यात् । प्रत्यक्षत्वे तेनैव लोचनैक-
गोचरेण द्रव्यभूतेन हेतोर्व्यभिचारः । अप्रत्यक्षत्वे सति
तस्य सप्रतिसाधनत्वम् । नहि अप्रत्यक्षगुणत्वं प्रत्यक्षस्य
शब्दस्य संभवति, शक्यते एव हि प्रयोक्तुं शब्दो न गुणः,
प्रत्यक्षद्रव्यगुणत्वरहितत्वे सति प्रत्यक्षत्वात् घटवदिति ।
तस्माद्युक्तमस्य द्रव्यत्वे संयोगात् ग्रहणमिति चतुर्विध
एव संनिकर्षः, इति बाह्येन मनसः संनिकर्षाभावात् न
मानसप्रत्यक्षविषयत्वं नियमस्य धूमादिवर्तिनः संभवति ।
तत्र प्रमाणान्तरमिदं भूयोदर्शनसहायमनोजन्यं लिङ्गादि-
सहितमनोजन्यज्ञानादिवत् प्रसज्येत । तच्चानिष्टं प्रमाण-
षट्काभिधायिनाम् । **कश्चित्तु** बहिरिन्द्रियविषयमेव
नियममिच्छति । स हि मन्यते वह्निधूमयोः संबन्धो
देशकालानवच्छिन्न एव प्रत्यक्षेणावगम्यते इति । **ननु**
संनिहितदेशकालविषयत्वात् प्रत्यक्षस्य तदवच्छिन्न एव
संयोगः । **नैवम् ।** इदन्ता हि संनिहितदेशकालाव-
च्छेदः, स च द्रव्ययोरेवावगम्यते न संयोगस्य, संयुक्ता-
विति हि प्रतीतिः, न पुनरयमनयोः संयोग इति ।
तस्माद्देशकालाभ्यां संयोगेन च द्रव्यमेवावच्छिद्यते न
तु संयोगस्य देशकालाववच्छेदकौ । तेन अनवच्छिन्नः
संबन्धो धूममात्रानुयायीति निश्चीयते, ततश्च धूमसत्त्वेव
देशकालान्तरादौ प्रमाणमपेक्षते । न त्वग्निसंयोगः, तस्य
पूर्वमेवावगतत्वात् । अग्नेस्तु धूमसंयुक्तस्यापि दृष्टस्य क्व-
चिद्व्यभिचारदर्शनात् आर्द्रेन्धनाद्युपाधिकृतोऽस्य धूम-
संयोगो न स्वाभाविकः, धूमस्य तु तादृशोपाध्यदर्शनात्
स्वाभाविकमग्निसंबन्धित्वं नियतं भवति । न हि स्वाभा-
विकं व्यभिचरतीति । **अत्र वदामः ।** संविदेवात्र ताव-
त्परिपन्थिनी । सा हि देशकालाभ्यां संयोगमेवाव-
च्छिन्दती जायते, संयुक्तावेतौ वह्निधूमौ संयुज्येते
संयोक्ष्येते इति संयोगस्यैव भावार्थस्य कालत्रयावच्छेदात् ।
सोऽयं स्वप्रयुक्त एव बाणो भवन्तं प्रहरति । कारकव्यापारो
हि कालत्रयावच्छेद्यो न कारकमिति । न चावश्यमिदं
शब्देनैव कालो निर्देष्टव्यः । लडादिभिः सुतरां निर्देश-
सिद्धेः । यदि च स्वतन्त्रस्यैव द्रव्यस्य कालसंयोगो न पर-
तन्त्राणां गुणकर्मणाम् , ततो लडादीनां कालविशेषे स्मृतानां
निर्विषयत्वं स्यात् । ते हि क्रियाया एव कालावच्छेदमुप-
दर्शयन्ति न द्रव्यस्य । सा चेदनवच्छेद्या कस्यैते कालसंबन्ध-
मभिदधीरन् । मा भूद् देशकालाभ्यामवच्छेदावगमः
संयोगस्य, तथापि स्वाभाविकत्वमप्रमाणमेव । नह्यव-
च्छेदानवगममात्रेण तदभावावधारणं सिध्यति, सतोऽ-
प्यनवगतिसंभवात् । अनिश्चिते चावच्छेदाभावे न
स्वाभाविकत्वं सिध्यति । सिद्धौ वा वर्तमानकालताऽपि
स्वाभाविकी धूमस्य स्यात् । यथा ह्यग्निसंयोगो
द्रव्यविशेषणमेवं कालोऽपि । ततश्च अग्निसंयोगवत्



स्वाभाविकमेतत्कालसंबन्धित्वमित्यापद्येत । तत्र यथाऽग्नि-
संयोगरहितस्य नावस्थानं एवमेतत्कालसंबन्धितामपहाय
धूमस्य स्थित्यभावात् प्रत्यक्षेणैव कालान्तरसंबन्धव्युदा-
सात् क्षणिकता भावस्यापादिता इति जितं सौगतैः ।
अथ अनवच्छिन्नोऽपि कालसंबन्धो न स्वाभाविक-
स्तथा अग्निसंयोगोऽपि स्यात् । अथ स्वाभाविकमपि
कालसंबन्धमपहाय धूमस्तिष्ठेत् अग्निसंयोगमप्यपहाय
संभवत्यवस्थानमिति न नियमावधारणम् । ननु प्रत्य-
भिज्ञया कालान्तरसंबन्धावगमात् पूर्वकालप्रहाणेनापि
सिध्यति धूमस्यावस्थानम् । अग्निसंयोगं तु अपहाय न
कदाचिद्धूमो दृश्यते इति कथमसौ तमन्तरेण स्यात् ।
किमिदानीं प्रत्यक्षगृहीतैव क्षणिकता पश्चात्प्रत्यभिज्ञया
बाध्यते । न ह्येवमभ्युपगमो भवताम् । अपि चैवमस्तु
नाम प्रत्यक्षावगतकालान्तरसंबन्धस्य पूर्वावगतक्षणिकत्व-
बाधः अनुमानेन तु कथमग्नेः प्रत्यक्षावगतक्षणिक-
भावस्य तद्बाधेन कालान्तरसंबन्धोऽवगम्यते । अपि
चैवं प्रत्यक्षावगततत्कालसंबन्धनियमविरुद्धस्यात्यन्तानव-
गतस्य कालान्तरसंबन्धस्य अनुमानेन ग्रहणे गृहीत-
ग्राहित्वमनुमानस्य दूरापास्तं स्यात् । अपिचानवच्छिन्न-
स्यापि कालसंबन्धस्य व्यभिचारदर्शनादग्निसंयोगोऽपि
व्यभिचरेन्न वेति संदिहानाः न सहस्रेणापि पुरुषा-
युषैस्तदन्तं प्रतिलभेरन् । यद्यपि दृश्यमानेषु देश-
कालादिषु प्रयत्नेनान्विष्टो व्यभिचारो न दृष्टस्तथापि
क्वचित् कदाचित्संभवति व्यभिचार इति शङ्कां को नाम
निवारयेत् । न च प्रत्यक्षं तन्निवारणे शक्तम् । तस्य
संनिहितदेशकालमात्रव्यापारात् । नानुमानम् , तस्य
नियमावधारणाधीनत्वात् । तदधीने तु नियमे परस्परा-
श्रयदोषापत्तेः । स्वाभाविकत्वादव्यभिचार इति चेन्न ।
स्वाभाविकत्वे एव प्रमाणाभावात् । अनौपाधिकत्वमेव
स्वाभाविकत्वं न चोपाध्यनवगतिमात्रेण तदभावसिद्धि-
रित्युक्तम् । अपिच स्वाभाविकं न व्यभिचरतीत्यत्र
किं प्रमाणम् ? न तावत्प्रत्यक्षं नानुमानं नान्यत्किञ्चित् ।
दृष्टश्चानौपाधिकस्यापि कालसंबन्धस्य व्यभिचारस्तथा
अग्निसंबन्धस्यापि स्यात् । अपि च अन्ययोरेवाग्नि-
धूमयोः दृष्टान्तधर्मिणि संबन्धोऽवगतः, अन्यश्चायं पर्वत-
वर्ती धूमः तस्याग्निसंबन्धोऽनवगत इति कथं लिङ्गं
स्यात् ? अथ सामान्यं लिङ्गम् , न, तस्य संबन्धानवग-
मात् । देशकालाभ्यां संबन्धेन जात्या च सर्वैः द्रव्यमेव
विशेष्यते, न तु संबन्धस्य जातेश्च परस्परान्वयः, जाते-
रपि संयोगवत् द्रव्यविशेषणत्वात् । अथ द्रव्यद्वारेण
अस्ति जात्योरपि संबन्धः, तथाप्यार्द्रेन्धनाद्युपाधिरिवाग्ने-
र्धूमसंबन्धः, तदभावे कालान्तरे तद्द्रव्याभावे तद्द्वारकः
संबन्धोऽपि न स्यात् । द्रव्यान्तरद्वारस्तु कालान्तरसंबन्धः
प्रागनवगत इति कथमनुमानाङ्गम् । न च विशेषपरि-
हारेण सामान्ययोः सकृद्दर्शनेन शक्यावगमः संबन्धः ।
किञ्च देशकालाभ्यामपि द्रव्यद्वारेण संयोगस्याप्यवच्छेद
इति नानवच्छिन्नत्वम् । यथा च जात्योर्द्रव्यद्वारकः
संबन्धः स्वाभाविको भवति, एवमग्निसंबन्धस्य तत्का-
लावच्छेदो द्रव्यद्वारकोऽपि स्वाभाविकः स्यादिति
तत्कालप्रहाणेन न कालान्तरे संबन्धस्तिष्ठेदित्यसंबन्ध एव
कालान्तरे अग्निधूमयोर्भवदुक्त्या नीत्या निश्चेतव्यः
स्यात् , न तु कालान्तरे अग्निसंबन्धशङ्काऽपि धूमस्य
स्यादित्यलमतिनिर्बन्धेन ।

**अपरं मतम्** । ज्ञातयोऽग्नौ धूमदर्शनादनग्नौ
चादर्शनान्नियतोऽयमग्निनेति प्रतीतिस्तावदुपजायते तिर-
श्चामपि । न चेयमप्रमाणम् , सर्वदा सर्वेषां संवादित्वेन
जायमानत्वात् । अतः प्रमाणमेवेदम् । तच्च षड्विधान्त-
र्भूतम् । तत्र नेदमनुमानं संभवति, तस्य नियमावधार-
णाधीनत्वात् । न च शाब्दम् , अशब्दजन्यत्वात् । नोप-
मानम् , असादृश्यविषयत्वात् । नार्थापत्तिः, नियममन्त-
रेणानवकल्पमानस्य कस्यचिददर्शनात् । अभावस्तु
भावरूपे नियमे दूरापास्त एव । **ननु** अयं विपक्षव्या-
वृत्तिरूपोऽभाव एव न व्यावृत्तिमात्रं नियमः, शश-
विषाणादेः सर्वविपक्षव्यावृत्तस्य सर्वार्थनियमप्रसङ्गात् ।
व्यावृत्तिरपि सर्वविपक्षेभ्यो दुर्लभैव, दृश्यादर्शना-
भावात् । पारिशेष्यात्प्रत्यक्षमेवेदम् । न च प्रथमदर्शने
अनवगमादप्रत्यक्षम् । रत्नतत्त्वस्येव भूयःपरिचय-
सचिवप्रत्यक्षविषयत्वोपपत्तेः । **ननु** वर्तमानविषयं
प्रत्यक्षम् , तत्कथमनेन देशकालान्तरसंबन्धात्मा नियमः
शक्यावगमः । उच्यते । न कालान्तरादि-

संबन्धो नियमः किन्तु स्वरूपं धूमादीनाम् । तच्च वर्तमानमिति युक्तं प्रत्यक्षग्राह्यत्वम् । न हि नियमं ग्रहीतुं देशान्तरादिसंबन्धो ग्रहीतव्यः कुड्यादीनामिव स्थिरं रूपम् । न हि तेषां कालान्तरसंबन्धः अप्रत्यक्ष इति तद्रूपमप्रत्यक्षं भवति । तथा सति नेदं रजतमिति पूर्वज्ञानबाधकत्वमुत्तरकाले न स्यात् विषयभेदात् । पूर्वकाले हि रजतज्ञानेन रजतं प्रसञ्जितम् । उत्तरकाले च तदभाव इति विषयभेदात् कथं बाधकत्वम् ? अतः स्थिरमेव रजतरूपं गृहीतमिति वक्तव्यम् । आह च– ‘रजतं गृह्यमाणं हि चिरस्थायीति गम्यते’ इति । तद्वन्नियमरूपं गृह्यते इति युक्तं प्रत्यक्षत्वम् । कीदृशं पुनरिदं रूपं धूमादीनाम् ? नियतोऽयमग्निनेति नियमः यदा यत्र धूमस्तदा तत्राग्निरित्यर्थः । तस्मादुपपन्नं प्रत्यक्षविषयो नियम इति । तत्रेदं वक्तव्यम् । किं प्रत्यक्षं सर्वं विद्यमानोपलम्भनं आहोस्वित् अविद्यमानोपलम्भनमपीति । न तावदविद्यमानोपलम्भनं प्रत्यक्षं नाम संभवति । तत्संप्रयोगजनितत्वेन विद्यमानोपलम्भनत्वस्य स्थितत्वात् । तथा च नियमविषयत्वासंभवः । तस्य सर्वदेशकालव्यापिरूपत्वात् । अयमेव हि धूमस्याग्निना नियमः यदखिलधूमदेशकालव्यापित्वमग्नेः । यथोक्तम्–
‘यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वाऽप्यधिकोऽपि वा ॥’
इति ।

यत्तु धूमस्वरूपनियम इत्युक्तम्, अस्त्वेतत् स्वरूपमपि तदग्निसंबन्धाव्यभिचारात्मकमेव । कश्चासावव्यभिचारः अन्यदतो (?) यावद्धूमदेशकालगाग्निसंबन्धसंभवात् । तथा च तस्मिन् प्रत्यक्षीक्रियमाणे देशान्तरादिसंबन्धः प्रत्यक्ष आपद्येत । तत्संबन्धातिरिक्तं तु पाण्डुरत्वादिवत् धूमगतं नियमाभिधानमपरोक्षं रूपमीक्षते इति संविद्विरुद्धम् । यदि चेदं रूपान्तरं पाण्डुरत्वादिवत् संबन्धातिरिक्तं स्यात्, तस्मिन् प्रत्यक्षगृहीतेऽपि सर्वधूमदेशकालव्यापित्वमग्नेर्गृहीतं न स्यात् । न ह्यन्यस्मिन् गृहीते अन्यद्गृहीतं भवति, अतिप्रसङ्गात् । अगृहीते च देशकालाव्यभिचारे कथमनुमानोदयः ? किञ्चेदं रूपान्तरमपि प्रत्यक्षेण गृह्यमाणं संनिहितदेशकालावच्छिन्नमेव गृह्यते इति न कालान्तरेण नियमः सिध्येत् । यदपि दर्शितं कुड्यादीनामिव स्थितं रूपमिति, तदपि निरूपणीयम् । किं तत्र स्थायित्वमेव गृह्यते इत्यभिप्रायः किंवा यद्वस्तुतः स्थास्नुरूपं तद्गृह्यते इति किंवा स्थितियोग्यता ? न तावत् पूर्वः कल्पः, स्थायिता ह्यनेककालावस्थानम्, सा कथं प्रत्यक्षेणैव गृह्यते, तस्य वर्तमानविषयत्वात् । यदि चेदं प्रत्यक्षेणैव गृह्यते ततः स्थायिताप्रसिद्धये प्रत्यभिज्ञादरो निरर्थकः स्यात् । द्वितीये तु कल्पे कुड्यरूपमेव तत् नान्यत्, एवमिहापि यद्वस्तुतो नियतं धूमस्वरूपमेव तत्प्रत्यक्षमित्येव सिध्येत् । न च तावता किंचित् प्रयोजनमस्ति, योग्यता तु सर्वभावानां अर्थापत्तिगम्येति प्रत्यक्षगम्यताऽनुपपत्तिः । यस्तु घटकुड्यादिषु दृष्टमात्रेषु स्थायित्वावगमो लौकिकानाम्, स तादृशां स्थायित्वस्य पूर्वमेवानुगमादानुमानिकः । स्पष्टं चास्यानुमानिकत्वं उक्तरूपत्वात् । तथाहि ईदृशीयमवगतिः यदि शस्त्रादिना नैतद्भिद्यते ततः कियन्तंचित् कालं स्थास्यतीति । एवं रजतादिष्वप्यानुमानिकमेव तद्रूपस्य स्थायित्वम् । अनेनैवाभिप्रायेणोक्तम्— ‘रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते ।’ एतदेव बाधकस्यापि तत्त्वम् । अनुमानेन ह्येतदवगतं रजतस्य सतो नाकस्मादतद्भावः संभवतीति अतद्रूपस्य वा तद्रूपतेति उभयोरपि कालयोरेकरूपमेवेदमिति स्थिते पूर्वमेवावगतं रजतरूपमुत्तरकालं व्याप्नोति उत्तरकालावगतश्चातद्भावः तत्पूर्वकालम् । तेन समानविषयतया पूर्वावगतस्य रजतरूपस्य भवत्युत्तरकालभुवा नेदं रजतमित्यनेन बाधः । यत्र त्वनुमानेन एकरूपत्वं न कालद्वयेऽपि वस्तुनोऽवगतं तत्र न भवत्येव बाधः । यथा बदरफले श्यामप्रत्ययस्य पाककालभुवा रक्तप्रत्ययेन । प्रत्यक्षेण तु स्थायित्वावगमे तत्रापि बाधः स्यात् । तस्मान्न प्रत्यक्षेण स्थायित्वं स्वध्यवसानम् । एवं नियमोऽपि सर्वदेशकालव्याप्तिरूपत्वान्न । ननु स्वाभाविकत्वं संबन्धस्य नियमः न तु कालान्तरसंबन्धः, तच्च वर्तमानमेवेति युक्तं यत् प्रत्यक्षेण गृह्यते । किं पुनरिदं स्वाभाविकत्वम् ? न तावत् सदातनत्वम्, कादाचित्कस्य तदयोगात् । अथ स्वरूपनिमित्तत्वम्, अग्नेरपि धूमसंबन्धे स्वरूपं निमित्तमिति



तस्यापि धूमसंबन्धो नियतः स्यात् । ननु आर्द्रेन्धनादिकृतः अस्य धूमसंबन्धः न स्वरूपनिमित्तः, सत्यम्, आर्द्रेन्धनादिनिमित्तं स्वरूपमपि निमित्तमेव । न ह्यसति संबन्धिस्वरूपे संबन्धो भवति । स्वरूपधर्मत्वमिति चेत्, स एव दोषः । अग्निस्वरूपस्यापि धर्म एव संयोगः । अथ स्वरूपैकनिमित्तकः संबन्धः स्वाभाविकः, वह्नेस्तु धूमसंबन्धे स्वरूपातिरिक्तोऽप्यार्द्रेन्धनादिः अस्त्येव हेतुः, धूमस्य वह्निसंबन्धे स्वरूपमेव निमित्तम्, न निमित्तान्तरमस्तीति मतम् । एवं तर्हि प्रत्यक्षगम्यं स्वाभाविकत्वम् । न हि तेन निमित्तान्तराभावः शक्यते प्रत्येतुम्, भावविषयत्वात्प्रत्यक्षस्य । दृश्यादर्शनात्तु निमित्तान्तरादभावः प्रतीयते इति प्रत्यक्षगम्यत्वानुपपत्तिः । अपि च धूमस्याग्निसंबन्धे न स्वरूपमेव निमित्तम्, अग्न्यादीनामपि निमित्तत्वात् । तस्मात् स्वरूपाव्यभिचार एव स्वाभाविकत्वम् । अव्यभिचारश्च सकलतद्देशकालव्याप्तिरिति प्रत्यक्षगम्यत्वानुपपत्तिः, तस्य वर्तमानविषयत्वात् । अपि च स्वाभाविकताऽपि वर्तमानस्यैव संनिहितस्य निश्चेतुं शक्यते, नातीतानागतव्यवहितविप्रकृष्टानां संबन्धानाम् । सन्ति हि बहवो वह्निधूमसंबन्धस्य व्यक्तयः, कथं तासां सर्वासां धूमस्वरूपमेव निमित्तमिति संयुक्तविषयेण प्रत्यक्षेण गम्यते । अथ संबन्धसामान्यस्य तन्निमित्तत्वम्, न, तस्य नित्यत्वेन निमित्ताभावात् । इदं च सकृद्दर्शनगम्यनियमपक्षेऽपि तुल्यमेव दूषणम् । तत्रापि हि संप्रयुक्तस्यैव हि संयोगस्य धूमाभावनिमित्तताऽवगम्यते, नातीतादीनाम् । स च कालान्तरे नष्ट इति प्रत्यक्षावगतस्य संयोगस्य रूपनिमित्तेन कालान्तरेऽनुमानम् । तस्मात् न कथञ्चित् प्रत्यक्षविषयत्वं नियमस्येति स्थितम् । अपरे त्वर्थापत्तिगम्यं नियमं मन्यन्ते । यदेतच्छतशोऽग्नौ धूमदर्शनमनग्नौ च क्वचिदप्यदर्शनम्, इदमसति धूमस्याग्निना नियमेऽनुपपन्नम् । अनियतो हि कदाचित् क्वचिदप्यग्निं विनोपलभ्येतेति । तदप्यनुपपन्नम् । अदर्शनं तावदभावादेवोपपन्नम् । न तु तावता सर्वत्र अनग्नौ नास्तीति शक्यमध्यवसातुम्, प्रमाणाभावात् । दर्शनमात्रमपि तत्र भावादेवोपपन्नम् । न तु तावन्मात्रेण सर्वत्राग्नावस्त्येव धूम इति स्वध्यवसानम् । तस्माद्वक्तव्यं नियमे प्रमाणम् । उच्यते । किमत्र वक्तव्यम् ? यतः–

**स्वयं वार्तिककारेण प्रमाणमुपदर्शितम् । भूयोदर्शनगम्या हि व्याप्तिरित्यभिधानतः ॥ ४ ॥**

अनृजवो हि पूर्वमार्गा महान्तं क्लेशमाश्रित्यानुभवानारूढा वैयात्यमात्रेणागतिकावगतिन्यायेनाश्रिताः । नियतो धूमोऽयं नूनमग्निनेत्यूहरूपस्य ज्ञानस्य संविद्विरुद्धप्रत्यक्षत्वाश्रयणादस्ति चायमृजुमार्गो भूयोदर्शनगम्यो नियम इति । किं पुनरिदं भूयोदर्शनं नाम प्रमाणम् ? नैकं किंचित् नियम्य वक्तुं शक्यते । किन्तु येनैव प्रत्यक्षादीनामन्यतमेन लिङ्गस्य भूयःसाहित्यं लिङ्गिना गम्यते तदेव विपक्षादर्शनसहायं नियमप्रमाणं संभवतीति । ननु भूयोभिर्दर्शनैस्तत्र तत्र साहित्यं गम्यते न तु सर्वत्र दर्शनानां सर्वेषां स्वविषयपर्यवसानात् अनन्तप्रत्यक्षगम्यो हि सर्वत्र सहभावः स जीवद्भिर्दुर्लभः । विपक्षादर्शनादपि प्रत्यासन्नेष्वेव विपक्षेषु परमभावो गम्यते, सर्वविपक्षव्यावृत्तिस्तु दुर्लभैव, दृश्यादर्शनाभावात् । अदर्शनमात्रेण चाभावासिद्धेः, तत्कथं नियमस्य सर्वदेशकालव्याप्तिरूपस्य भूयोदर्शनगम्यत्वम् ? एतच्च स्वयमेवाचार्येण शङ्कितम् । यदाह––
‘अन्वयो हि प्रतिव्याप्यं व्यापकस्य न दृश्यते ।
अनन्तेन हि लभ्येत स प्रत्यक्षादिजन्मना ॥’ इति ।
तथा— ‘नाभावेन विपक्षाद्धि हेतुभावः प्रतीयते ।’ इति च । सर्वविपक्षाभावो न लभ्यते इत्यर्थः । अत्र च समर्थनमुक्तम्– ‘तत्रास्यादृष्टिमात्रेण गमकः सहचारिणः’ इति । तत्रेति विपक्षे इत्यर्थः । एतदुक्तं भवति– मा नाम सर्वविपक्षाभावो लिङ्गस्य सैत्सीत्, अदर्शनं तु विपक्षेषु लिङ्गस्यास्त्येव, तावता च सहचारी दृष्टो धूमादिः सहचारिणोऽग्न्यादेर्गमको भवति । यत्तु सहचारित्वमपि सर्वत्र दुर्लभं द्रष्टुमित्युक्तं तत्राप्युत्तरमुक्तम्–
‘दुर्लभं सहचारित्वं सर्वत्रेति यदुच्यते । द्रष्टुं न नाम सर्वत्र द्वित्रयोर्दृश्यते ध्रुवम् ॥ साहित्ये मितदेशत्वात्प्रसिद्धे वह्निधूमयोः । व्यतिरेकस्य चाऽदृष्टेर्गमकत्वं प्रकल्पते ॥’ इति । अयमर्थः– मा नाम सर्वत्र सहचारित्वं दर्शि, द्वित्रयोस्तु प्रदेशयोरीषत्करं दर्शनम् ।

तावता त्वसति व्यभिचारदर्शने भवत्यनुमानम् । यदि हि सकलदेशकालव्याप्तिरूपो नियमोऽनुमानाङ्गमस्माभिरुपगम्येत ततः स्यादुपालम्भः । न त्वेवमस्माभिरुच्यते, किन्तु यत्र यत्र धूमादिकं दृष्टं तत्र तत्र सर्वत्र नियमेनाग्न्यादिसाहित्यमनग्नौ चादर्शनमित्येतावदेवानुमानोदये कारणम्, एतावदेव हि लौकिकानां धूमोऽग्निं गमयति । न तु सकलपक्षविपक्षान्वयव्यतिरेकावगतिमपेक्षते, येन दुर्लभं प्रमाणं स्यात् । तेन न सकलदेशकालापेक्षया नियमाभिधानमपि तर्हि दृश्यमानेषु देशकालेषु यो लिङ्गस्य लिङ्गिसाहित्यनियमः स एव नियम इत्युच्यते । तस्मात्तन्मात्रमेवानुमानाङ्गम् । तच्च भूयोभिरेव दर्शनैः सुगममिति नाप्रमाणं लिङ्गिसाहित्यनियमः । यथा आह– ' सहत्वदृष्टिमात्रेण गमकः सहचारिणः ' इति ।

कियद्भिः पुनः साहित्यदर्शनैरनुमानम् ? को नामैतत्संचष्टे यावद्भिर्दृश्यते तावद्भिरेव न तु संख्याय वक्तुं शक्यते । येऽपि भूयोदर्शनसहायप्रत्यक्षगम्यं नियममाहुः, येऽपि सकृद्दर्शनेऽपि गृहीतं नियमं उपाध्याशङ्कानिराकरणार्थमर्थयन्ते भूयोदर्शनं तेऽपि नैवं संचक्षते तथा वयमपीति न तद्विशेषः । किमिदानीं सकलधूमदेशकालव्यापित्वमग्नेः नावगन्तव्यमनुमित्सता ? सत्यम्, नावगन्तव्यम् । नन्वेवं सामान्यतोऽप्यज्ञातसंबन्धः पक्षैकदेशी कथमिव ज्ञातसंबन्धपदेन अभिधीयते । नानेन पक्षैकदेशिनोऽभिधानमपि तु दृष्टान्तैकदेशिनः । तदयं भाष्यार्थः– अन्यस्मिन्नेव महानसाद्येकदेशिनि धूमाग्न्येकदेशाभ्यां ज्ञातसंबन्धे सति तदेकदेशं धूमं अन्यत्र पर्वतादौ तस्मिन्नेव वा महानसे कालान्तरे दृष्ट्वाऽग्निरनुमीयते, लोके तथा दर्शनात् । तथा च ज्ञातसंबन्धपदेन ज्ञातुं निर्देश इत्युक्त्वा अथवा न प्रमातुः किन्तु प्रमेयस्य कस्यचित् निर्देशो न ज्ञातुरित्यर्थः । कस्य प्रमेयस्यैकदेशिन इत्यपेक्षायां दृष्टान्तैकदेशिन इत्युक्तम् । यथाहुः– ' एकदेश्येकदेशाभ्यां कश्चिज्ज्ञातसंगतिः । तत्तुल्योऽन्यः स वा ताभ्यां विभागेनानुमीयते ॥ ' इति । स वा ताभ्यामिति कालान्तराभिप्रायम् । एवं च वदन् ज्ञातसंबन्धपदेन एकदेश्यन्यपदार्थपक्षे दृष्टान्तैकदेशिनोऽभिधानमित्याह । भवतु नामैवं यथा दृष्टप्रदेशेषु साहित्यनियमादेवानुमानम् । यस्त्वयं यत्र यत्र धूमस्तत्र तत्राग्निरिति भूयोदर्शनतोऽवगमः, स कथम् ? न ह्यसौ नास्ति न चाप्रमाणम्, सर्वदा सर्वेषां दृढत्वेन जायमानत्वात् । तदयं कस्मिंश्चित्प्रमाणेऽन्तर्भवतीति वक्तव्यम् । उच्यते । आनुमानिकोऽयं अवगमो ज्ञातसंबन्धस्य उपजायमानत्वात् । परोक्षरूपत्वाच्च नैन्द्रियकः, साक्षात्कारित्वाभावात् संविद्विरोधाच्च । धूमस्य हि बहुषु देशकालेषु अग्निना साहित्यमुपलब्धवतो भवति अनुमानम् । अन्येऽप्यतीतानागतविप्रकृष्टाः सर्व एव धूमवन्तोऽग्निमन्तो धूमवत्त्वात् परिदृष्टमहानसादिवदिति । तेन यथालोकं प्रमाणसामग्र्यनुसरणात् धर्म्यन्तरगतसाहित्यनियमादेव धर्म्यन्तरेऽनुमानमित्यनवद्यम् । आह च– ' तेन धर्म्यन्तरेऽप्येषा यस्य येनैव यादृशी । देशे यावति काले वा व्याप्यता प्राङ्निरूपिता ॥ तस्य तावति तादृक् स्यात् दृष्टधर्म्यन्तरे पुनः । व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः ॥ ' इति । यादृशतादृशशब्दाभ्यां दृष्टान्तपरिदृष्टरूपात् न्यूनरूपस्य न लिङ्गत्वं नापि लिङ्गित्वमिति दर्शितम् । न हि विना धूमत्वं पाण्डुरत्वमात्रेण कपोतादिभ्यः अग्निं अनुमिमते लौकिकाः । नाप्युष्णवह्निनियतः तृणविकारो हिमे दृष्टः प्रत्यक्षावगतशैत्यविरोधात् औष्ण्यबाधे सति अनुष्णमेव वह्निमनुमापयति । यथालोकं च प्रमाणगतिः परीक्षकैरनुसरणीया, न तद्विरोधेन । तदनेन सर्वेषामप्रयोजकहेतूनामाभासत्वं दर्शितम् । दृष्टान्तपरिदृष्टरूपात् न्यूनरूपो हेतुरप्रयोजक इत्युच्यते । पक्षसपक्षसंबन्धभेदमात्रं तु सोढव्यम् । सर्वानुमानेषु तथा दर्शनात् । तदतिरिक्तं तु रूपवैकल्यमेवाङ्गीकर्तव्यम् । तेन निषिद्धत्वसहितस्य हिंसात्वस्य अधर्मत्वेन साहित्यमुपलब्धं ब्राह्मणहननादिष्विति विनाऽपि निषिद्धत्वेन हिंसात्वमात्रान्नाग्नीषोमीयहिंसायामधर्मत्वं अनुमातुं शक्यम् । निषिद्धत्वस्य विनाऽपि हिंसात्वेन गुर्वङ्गनागमनादावधर्मत्वसाहित्यं दृष्टमिति तदनुमापकम् । यथा अध्ययनादिकार्यवतः शिष्यस्याकृदुपाध्यायसाहित्यमवगतमिति न शिष्यमात्रेणाध्यापकानुमानम् । तथा देवदत्ततनयानां श्यामत्वसाहित्यं गर्भपरिणामसमयोपयुक्तशित-



पीतादिविशेषनिमित्तमिति तदभावे देवदत्ततनयत्वमात्रेण न तत्तनयान्तरस्य श्यामत्वानुमानम् । एतेन संनिवेशविशिष्टतया तनुतरुमहीरुहादीनां घटादिवत् उपलब्धिमत्कर्तृकत्वानुमानं प्रत्युक्तम् । तथाहि येषु हस्तादिव्यापारविशेषेण संनिवेशाः शक्यन्ते रचयितुं तेषामेव घटपटगृहादीनामुपलब्धिमत्कर्तृकत्वम्, तदभावे पारिणामिकानामङ्गदेहादीनां संनिवेशविशेषमात्रेण कथं तदनुमानं पाण्डुरमात्रादिव वह्न्यनुमानम् । तथा शरीरेन्द्रियादियुक्तबुद्धिमत्कर्तृकत्वेन साहित्यं संनिवेशविशिष्टानामुपलब्धं तच्च दृश्यादर्शनात् दूर्वाङ्कुरादिषु निषिद्धम् । तस्मिन् निषिद्धे बुद्धिमन्मात्रं शरीरादिरहितं नानुमातुं शक्यम् । तृणादिविकारादिव हिमे उष्णवह्न्यनुमानम् । न चैवं सर्वानुमानोच्छेदप्रसङ्गः, सर्वविशेषपरिहाणेन धूमत्वसामान्यस्य वह्नित्वसामान्येन साहित्यमवगतं पर्वते च तदविकलमेव दृष्टमिति युक्तं तत्र तदनुमानम् । सामान्यमेवानुमीयते न विशेषः, अननुगमभावात् । अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ प्रत्यक्षेणेवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमिति न सिद्धसाध्यता । सामान्यस्यापि चास्त्येव संयुक्तसमवायसंबन्धः पर्वतेन, इति युक्तं तत्र तस्यानुमानम् । ननु देशविशेषादपि पदार्थस्वरूपमन्यथा भवति, क्वचिद्धि वृश्चिकदंशादपि मरणं भवति, क्वचिन्न, तथा धूमस्यापि देशान्तरे अग्निव्यभिचारशङ्का भवेत् । सत्यमेषा भवति, सा तु तत्तद्देशादागतेभ्यः श्रुत्वा शक्यते निरसितुमिति सर्वमवदातम् । तेन यस्य यादृशस्य सामान्यस्य विशेषस्य वा येन यादृशेन सामान्येन विशेषेण वा यथादृष्टेषु देशकालेषु साहित्यं येन केनापि संबन्धेन नियतमुपलब्धम्, तदेव तादृशमेव देशान्तरकालान्तरादौ दृष्टं तस्य तादृशस्य साहित्यनियमादेव बोधकं भवति । दृष्टप्रदेशेषु भूयोभिरेव दर्शनैर्व्यभिचारादर्शनमात्रसहायैः साहित्यनियमः शक्यावगम इति सिद्धं नियमरूप एव लिङ्गस्य लिङ्गिना संबन्धः, स च भूयोदर्शनप्रमाणक इति । **' पार्थसारथिमिश्रेण वार्तिकोक्तानुसारतः । यथाप्रतीति निर्णीतो नियमः सप्रमाणकः ॥ ५ ॥** इति पार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां व्याप्तिवादः समाप्तः । रत्नमाला. पृ. ५६–७२.

* **व्याप्तिसमर्थनम्** । इदानीं सकृद्दर्शनगम्या व्याप्तिरिति प्रतिपाद्यते । संयुक्ताविमौ अग्निधूमाविति प्रतिपत्तिरस्तीति निर्विवादम् । अत्र च देशकालाभ्यां संयोगेन च विशिष्टावग्निधूमौ प्रतीयेते, गुणानां द्रव्यपरतन्त्रस्वभावत्वात् । तदुक्तम् ' गुणानां च परार्थत्वात् ' इति । तच्च शब्दानामेव पदार्थान्वयविषयमिति चेन्न, तस्यापि प्रत्यक्षमूलत्वात् । लोके तु येन प्रकारेण पदार्थानां परस्परान्वयः प्रत्यक्षादिभिर्निश्चितः, तथैव शब्दो ब्रवीति, इतरथा वेदवाक्येषु यथाश्रुतार्थपरित्यागेन लक्षणया गौण्या वा वृत्त्याऽन्यथावर्णनं क्रियमाणमयुक्तं स्यात् । अतोऽन्वयमात्रविषयो न्यायः न शाब्दविषयः । संयोगस्य च देशकालयोश्च द्रव्यविशेषणत्वेन प्रतीतौ स्थितायां संयुक्तावग्निधूमौ इदानीमग्निधूमाविव्यन्वयो भवति, न इदानीं अग्निधूमयोः संयोग इति, इतरथा संयोगस्य देशकालविशेषणत्वं किमिति नाश्रीयते ? ततश्च यावद्द्रव्यभावितया संयोगस्य प्रतीतत्वात् यत्र धूमः तत्राग्निसंयोग इत्यनौपाधिक एव धूमस्य अग्निसंबन्धः सकृद्दर्शने एव सिद्धः । संयोगस्य च देशकालावच्छेदे इदानीमग्निधूमयोः संयोग इत्यन्वयो भवति । ततश्च देशान्तरे कालान्तरे वा संयोगस्यागृहीतत्वात् भूयोदर्शनमपेक्षणीयम् । न च तथा अन्वय इत्युक्तम् ।

ननु संयुक्ताविमौ इति प्रतिपत्तौ एवं स्यात्, अयमनयोः संयोग इति प्रतिपत्तौ विपरीतं स्यात् । **नैवम्**, अस्तु तावत् अयमनयोः संयोग इत्यपि प्रतीतिः, तत्र न व्याप्तिग्रहणं अस्माभिः उच्यते, देशकालावच्छेदेन संयोगस्य ग्रहणात्, किन्तु संयुक्ताविमाविति हि प्रतिपत्तावेव अनौपाधिकत्वग्रहणम् । एतदेव अभिप्रेत्योक्तं प्रकरणपञ्चिकायाम् ' संयुक्ताविमाविति हि प्रतिपत्तिः, न पुनरयमनयोः संयोगः ' इति ।

ननु धूमव्यक्तिविशेषेण संयोगस्यान्वयात् व्यक्त्यन्तरस्य च व्याप्त्यनुपगमः । नैवम्, धूमजात्युपलक्षितस्य विशेषस्य अन्वयोपगमात् । व्यक्तिभेद

उपाधिरिति शङ्कायां व्यक्त्यन्तरेऽपि संयोगदर्शनेनैव शङ्कानिवृत्तिः ।

**ननु** धूमजातेरपि व्यक्तिमात्रेणैवान्वयः । **नैवम्**, यदि सामान्यमन्तरेणापि व्यक्तेर्ग्रहणमस्ति, तदा स्यात् सामान्यस्य गुणभावः । न च सामान्यमन्तरेण कदाचिदपि व्यक्तेः प्रतीतिः । न हि रूपशून्या काचिदपि रूपिबुद्धिरस्ति इत्युक्तत्वात् । अतो जातिविशिष्टस्यैव प्राधान्यात्, तेन संयोगस्यान्वयात् सर्वधूमवता सकृदेवाग्निसत्ता गृहीता भवति । तदुक्तम्, 'तथा च सति धूमसत्त्वैव देशान्तरे कालान्तरे वा प्रमाणमपेक्षते, न च तस्यां सत्यामग्निसंयोगः' इति । एवं गृहीतेऽप्यनौपाधिकत्वे यद्युपाधिशङ्का कस्यचित् स्यात्, तदा भूयोदर्शनादेव शङ्कानिरासमात्रं क्रियते, न व्याप्तिग्रहणम् ।

**ननु** उपाध्यदर्शनेऽपि शङ्कोदयादेव दर्शनमपि शङ्कितमेव स्यात्, एवं तर्हि अतिप्रसङ्गः, घटादिग्रहणेऽपि बाधकशङ्कया घटादिग्रहणस्यापि अनिश्चयप्रसङ्गः ।

**ननु** अग्निना संयोगस्य सकृद्दर्शनेऽन्वयात् सकृद्दर्शनेनाग्निना धूमानुमानं प्रसज्यते । **नैवम्**, सकृद्दर्शनेनैवाग्नेर्धूमसंयोगोऽप्यनौपाधिक इति प्राप्तम्, उत्तरकालं तु आर्द्रेन्धनाद्युपाधिदर्शनात् औपाधिकत्वनिश्चयः । न च उपाधिदर्शनात् औपाधिकत्वनिश्चये उपाध्यदर्शनेऽपि तत्प्रसङ्गः । अतः सकृद्दर्शनादेव व्याप्तिग्रहः । न च सकृद्दर्शनस्याशक्तौ भूयोदर्शनस्यापि शक्तिः, भूयोदर्शनानामपि प्रत्येकं सकृद्दर्शनत्वात् । न च दर्शनानां भूयस्त्वं ग्राहकम् । रत्नतत्त्वग्रहणे तथा दृष्टमिति चेत्, **नैवम्**, न तत्रापि भूयोदर्शनस्य ग्राहकत्वम्, किंतु विवेचकाकारग्रहणे प्रवृत्तः तस्य च अतिसौक्ष्म्यात् मनःसमवधानाद्यभावाच्च न तत्त्वं ग्रहीतुं प्रभवति, केवलं रत्नमात्रमेव गृह्णाति । एवं अनेकदर्शने जाते मनःसमवधानादिसामग्रीसंभवात् अर्थादेकदा तत्त्वं गृह्णाति । अतो न भूयोदर्शनस्य तत्त्वग्रहणे उपयोगः । भूयोदर्शनस्य कारणत्वाभ्युपगमे इन्द्रियसंबन्धादिवत् सर्वेषां भूयोदर्शननियमोऽपि स्यात् । न च तथा दृश्यते, एकः सकृद्दर्शनादेव तत्त्वं गृह्णाति, अपरस्तु शतदर्शनात् । अतो न भूयोदर्शनाद्रत्नतत्त्वग्रहणम् ।

यत्तूक्तं सकृद्दर्शनस्यासामर्थ्येऽप्येकस्य दर्शनजातीयस्यैव सामर्थ्यं संभवति, तथा एकस्य वृश्चिकदंशस्य मरणहेतुत्वं एकस्य खर्जूरस्य पिण्डत्वमित्यादि, तदप्ययुक्तम्, तत्रापि भ्रान्तिभेदेन देशभेदेन वा सामर्थ्यं कल्पनीयम्, न तु एकविधस्यैव शक्तिद्वयम् । अतः सकृद्दर्शनगम्या व्याप्तिरिति । **प्रवि. प्रकरणं** २० .

* **व्याप्यं** हि दृष्टं व्यापकं गमयति । **बृहती.** पृ. ७१.

* **व्याप्यत्वासिद्धिः** हेत्वाभासः । 'हेत्वाभासाः' इति बिन्दौ द्रष्टव्यम् । **मणि.** पृ. ४१.

* '**व्याप्यव्यापकभावो** हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥' **श्लोवा.** अनुमानं १२१–१२२.

* '**व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम् ।**' विधिबलेन कस्यचिद्व्याप्यमानस्येप्सितत्वे कल्प्यमाने 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्' इति न्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्यत्वम् । 'मैत्रावरुणाय दण्डम्' । **भाट्ट.** ४।२।६.

* '**व्याप्यमानगता** संख्या अविवक्षिता' । 'यजेत' इति या संख्या प्रतीयते सा गुणभावांशे न विवक्षिता इत्येतत् नानुक्ते न्याये स्यात् । उक्तश्च न्यायः 'व्याप्यमान०' इति । तद्विरोधादितरदपि अविवक्षितम् । ( पूर्वपक्षे इदम् ) । **टुप्.** ६।२।२।५.

* **व्यामुग्धः** । नहि व्यामुग्धान् अलं कुरुते पुरुषप्रयत्नः इति तेषामुपेक्षा कार्या । **ऋजु.** पृ. ९५.

* **व्यामोहः** अर्थशून्यत्वं मिथ्याप्रत्ययस्य हेतुः । **ऋजु.** पृ. ५५. * यस्य हि दर्शनस्य प्रमाणं नास्ति **व्यामोहः** ( भ्रमः ) सः, यथा शुक्तिकायां रजतदर्शनम् । **भा.** ३।८।१२।२४.

* **व्यासपादप्रणीता** शारीरकमीमांसा चतुर्लक्षणी भिन्नमेव शास्त्रम् । **संकर्ष.** ४।४।१० .

* **व्यासज्यवृत्ति** देवतात्वं अग्नीषोमयोः । **संकर्ष.** ४।४।६ . * व्यासज्यवृत्ति । 'नहि व्यासङ्गिविज्ञानमेकेन



व्यपदिश्यते । नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तदुच्यते ॥' **वा.** ३।१।१५।२७.

* **व्यासज्यवृत्तिधर्मप्रत्यक्षे** यावदाश्रयप्रत्यक्षस्य न हेतुत्वम् । **मणि.** पृ. १६.

**व्याहृति-हिंकार-दशहोतृ-सामिधेनीनां न्यायात् क्रमः ॥**

'सामिधेनीरनुवक्ष्यन् एता व्याहृतीः पुरस्ताद्दधाति' इत्यादिभिर्विहितानां दशहोतृ– व्याहृति– हिङ्कार– सामिधेनीनां क्रमनियामकाभावादनियतक्रमेणोच्येरन् । **इति प्राप्ते**, 'हिङ्कृत्य सामिधेनीरन्वाह' इति क्त्वाप्रत्ययेनाव्यवहितपूर्वकालकथनात् सामिधेनीभ्यः पूर्वो हिङ्कारः । अनुवक्ष्यन् पुरस्तादित्याभ्यामव्यवधानांशस्य अकथनात् हिङ्कारात्पूर्वं व्याहृतयः । दशहोतुरपि तथैव श्रवणेऽपि मन्त्रपाठक्रमाद्व्याहृतिभ्योऽपि पूर्वं निवेशः सर्वत्राव्यवधानस्याशक्यतयाऽल्पव्यवधानेनोपपत्तौ स्थूलव्यवधानस्यायुक्ततया प्रैषक्रमः सिध्यति । **संकर्ष.** ४।१।१.

* **व्युत्पत्तिः** । अर्थविशेषविषयां प्रतीतिमनुमाय शब्दतद्भावभाविनीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते । **ऋजु.** पृ १६. * व्युत्पत्तिश्च अर्थेन सह शब्दस्य, न विज्ञानेन कार्येण, तस्य आनन्त्यात् व्यभिचाराच्च । **कणिका.** पृ. २६८. * व्युत्पत्तिः । वृद्धव्यवहारे हि अनेन शब्देन अयमर्थः प्रतिपाद्यते इति शब्दार्थयोः वाच्यवाचकसंबन्धाध्यवसानमेव व्युत्पत्तिः इत्युच्यते । **ऋजु.** पृ. १५४.

* **व्युत्पत्तिप्रयोजकः** क्रियाकारकान्वय एव, न तु शेषशेषिभावः । तथापि शेषशेषिभावः अन्वये अन्तर्भवति । **वि.** ३।१।१.

* **व्युत्पन्नः** शब्दः प्रत्यायकः । व्युत्पन्नः गृहीतशक्तिकः । **वि.** ३।१।१.

* **व्युत्सेकः** क्षेपणम् । **के.** ( ७।३।४।१२ ). * व्युत्सेकः 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्' इत्यादिमन्त्रैः दर्शपूर्णमासयोः दिक्षु सर्वासु अपां प्रक्षेपः । **वि.** ७।३।४.

* **व्युद्धरणस्य** बाधः सौर्ये चरौ । १०।१।२०।६१. 'सौर्ये चरौ व्युद्धरणस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतत्वात् । १०।१।२०।६१॥**

पुरोडाशस्य कपालेभ्यो व्युद्धृत्य अन्तर्वेद्यां बर्हिषि आसादनं क्रियते । व्युद्धृत्य आसादनं च प्रकृतौ अश्रुतं न श्रुतम् । तच्च सौर्ये चरौ न कर्तव्यम् । इति **सिद्धान्तः । के.**

* **व्युष्टिः** नाम द्विरात्रः । तत्र उत्तरमहः अतिरात्रः । **कु.** १०।५।१०।४८.

* **व्यूढः** । अस्ति द्विविधो द्वादशाहः, व्यूढः समूढश्च । समूढस्तावत् ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रमिति । अथ व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाऽऽग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति । अत्र व्यूढे १।२।६।१०।११।१२ इति षट् ऐन्द्रवायवाग्राणि । ३।७।८ इति त्रीणि शुक्राग्राणि । ४।५।९ इति त्रीणि आग्रयणाग्राणि । **भा.** १०।५।२४।७९, १०।५।२६।८८ । सिद्धान्ते यत्र वचनं लिङ्गं च तत्र व्यूढः प्रवर्तते, अन्यत्र अविशेषेण समूढ इति । १०।५।२४।८२. * व्यूढो द्वादशाहः समूढस्य विकारः । १०।५।२४।७९–८२. **मीको.** पृ. २१८९ 'द्वादशाहो व्यूढः समूढस्य विकारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **व्यूढे** द्वादशाहे छन्दोव्यतिक्रमः पठ्यते 'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्– गायत्री त्रिष्टुभः, त्रिष्टुप् जगत्याः, जगती गायत्र्याः' इति । तत्र मन्त्रगतशब्दानां अर्थानां च व्यतिक्रमः इति **पूर्वपक्षः ।** नार्थानां व्यतिक्रमः, किंतु गायत्रीशब्दस्थाने जगतीशब्दः प्रयोक्तव्यः, त्रिष्टुप्शब्दस्थाने गायत्रीशब्दः, जगतीशब्द-

स्थाने च त्रिष्टुप्शब्दः इत्येवं शब्दव्यतिक्रम एव कर्तव्यः इति **सिद्धान्तः** । वि. १०।५।२६. * व्यूढे द्वादशाहे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमः नार्थानाम् । १०।५।२६।८८. **मीको.** पृ. २२०१ ' द्वादशाहे व्यूढे भक्षपवमान० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **व्रतं** इति कर्मनाम । **टुप्.** ६।२।५।२०. * व्रतं इति च मानसं कर्मोच्यते, ( प्रजापतिव्रतं ) इदमहं न न करिष्यामीति संकल्पः । **भा.** ६।२।५।२०. * ' व्रतं कृणुतेति वाचं विसृजति ' इति व्रतकरणवाग्विसर्गयोः कालार्थः संयोगः । ३।२।४।१०. **मीको.** पृ. ११०२ ' उत्थानवाग्विसर्गाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * व्रतं ज्योतिष्टोमे अपरात्रे न नित्यम् । ६।८।९।२९. **मीको.** पृ. १७८५ 'ज्योतिष्टोमे अपरात्रे व्रतं न नित्यम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * व्रतं नाम सत्यवदनब्रह्मचर्यादिसंकल्परूपम् । स्त्र्युपगमन–मांसप्रतिषेधः अपि । **भाट्ट.** १२।१।११. * व्रतं नियमो वा यः पङहे स मध्वशने भवति द्वादशाहे । **भा.** ९।२।१२।४०. * व्रतं निशियज्ञे अमावास्यातन्त्रेण प्रसङ्गसिद्धम् । १२।२।४।१४–१८. **मीको.** पृ. २३८५ ' निशीष्टिन्यायः ' इत्यत्र द्रष्टव्यम् । * व्रतं पयो ब्राह्मणस्य यवागू राजन्यस्य आमिक्षा वैश्यस्य ज्योतिष्टोमे । **भा** ४।३।४।८, ६।१।७।२८, १०।४।१।१, १२।१।१४।३०, * व्रतम् ( पयःपानं यवागूभक्षणं इत्यादि ) । पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम । ४।३।४।८, * व्रतं वृत्त्यर्थम् । १०।४।१।१, * **व्रतस्य** श्रपणं पत्न्याः दक्षिणेऽग्नौ आम्नातम् । यदा आमयदोषात् मांसं व्रतकार्ये उपादीयते तदा तत्र दक्षिणाग्नौ श्रपयितव्यम् । १२।२।१।७, * एवमेव हि **व्रतस्य** अङ्गभावो यत् कर्तारं समर्थं करोति । ६।१।७।३२. * **व्रतानां** अग्निचित्कर्तव्यानां क्रत्वन्ते अनुष्ठानम् । ५।३।१०।२६–२८. **मीको.** पृ. २९ ' अग्निचयने अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * व्रतानां दार्शिकानां नानुष्ठानं सोमे प्रायणीयादिषु । १२।१।११।२०–२३. **मीको.** पृ. १८१८ ' ज्योतिष्टोमे प्रायणीयादिषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * व्रतानां प्राजापत्यानां पुरुषार्थता । ४।१।३।३–६. **मीको.** पृ. २७०० ' प्रजापतिव्रताधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

व्रताधिकरणम् । ज्योतिष्टोमगतपयोव्रतादीनि क्रत्वर्थानि ॥

**द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् । ४।३।४।८॥**

**भाष्यम्**— ज्योतिष्टोमे समामनन्ति ' पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य ' इति । तत्र संदेहः किमयं पुरुषधर्म उत क्रतोरिति । प्रकरणं बाधित्वा वाक्येन विनियुक्तः पुरुषस्येति । एवं प्राप्ते, **ब्रूमः** । पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम । स क्रतुधर्मो भवितुमर्हति, प्रकरणानुग्रहाय । ननु वाक्यात् पुरुषधर्म इति । नेति ब्रूमः । तथा सति फलं कल्प्यम्, क्लृप्तमितरत्र । प्रयोगवचनेनोपसंहृतं हि तत्प्रधानस्य । तस्मात् क्रतुधर्मः ।

**टुप्**— उत्तरस्मिन्नधिकरणे पूर्वाधिकरणसिद्धान्तेन पूर्वः पक्षः ।

**पृथक्त्वाद् व्यवतिष्ठेत । ९ ॥**

**भाष्यम्**— अथ पुरुषसंयोगः किमर्थः ? व्यवस्थापनार्थं इति ब्रूमः । पयोव्रतं ज्योतिष्टोमस्य भवति । तत्तु ब्राह्मणकर्तृकस्यैव, नान्यकर्तृकस्येति । एवं सर्वत्र ।

**टुप्**— ब्राह्मणकर्तृकस्य ज्योतिष्टोमस्य पयोव्रतता । सत्यपि क्रत्वर्थत्वे पुरुषप्रधानत्वान्निर्देशस्य पुरुषद्वारेण क्रतावनुप्रवेशः । अतः अब्राह्मणकर्तृकस्य नास्ति पयोव्रतता ।

**शा**—' नियममन्तरेणापि पुरुषप्रीतिदर्शनात् ।
नियमस्य फलं कल्प्यम्, तच्च प्रकरणात् क्रतोः ॥'

**सोम**—पूर्ववत् ( दधित्वादिरादिवत् ) इह क्रत्वर्थसंयोगाभावात् न क्रत्वर्थता इति प्रत्यवस्थानात् **संगतिः** । ( क्रतुयुक्तपुरुषार्थं व्रतमिति सिद्धान्तः ) । **सूत्रार्थस्तु**– पयोव्रतं क्रियाऽर्थानां द्रव्याणां पुरुषाणां बलाधानार्थत्वात् संस्कारः इति क्रत्वर्थता स्यादिति ।



**वि**-- 'पयोव्रतं ब्राह्मणस्य पुंसे तत् क्रतवेऽथवा ।,
पुंयोगादग्रिमो, मैवं नैष्फल्यात् क्रतुशेषता ॥ '

**भाट्ट**-- सोमे पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य ' इति श्रुतम् । ज्योतिष्टोमापूर्वसाधनीभूतब्राह्मणादिरूपाधिकारिसंस्कारार्थत्वेन विहितं पयोव्रतादि तत्प्रयुक्तमित्यविवादमेव । अत्र च न बार्हद्गिरादिवत् ब्राह्मणस्य निमित्तत्वम्, दृष्टविधया तस्योद्देश्यत्वे संभवति निमित्तत्वकल्पने प्रमाणाभावात् । अत एव रागप्राप्तभक्षणद्वारैव पयोनियमात् यस्य रोगादिना अनशनप्रसक्तिः तस्य न पयःप्रयोजकतेति ध्येयम् ।

**मण्डन**— ' क्रत्वर्थं स्यात् पयोव्रतम् । '

**शंकर**-- ' पयोव्रतं तु क्रत्वर्थम् । '

* **व्रताधिकरणन्यायस्य** स्वरूपं ' कल्प्यात् क्लृप्तं बलीयः ' इति । ४।३।४।८–९.

* **व्रतोपायनं** सत्यवचन–ब्रह्मचर्यादिसंकल्परूपं दर्शपूर्णमासयोः औपवसथ्ये अहनि कर्तव्यम् । ज्योतिष्टोमे ऐष्टिकेषु तु सौमिकव्रतोपायनेन प्रसङ्गसिद्धत्वात् पृथङ् न कार्यम् । **वि.** १२।१।११.

* **व्रतोपायनमन्त्राः**– ' अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ', ' वायो व्रतपते० ', ' आदित्य व्रतपते० ', ' व्रतानां व्रतपते० ' इति । **वि.** १२।१।११.

* **व्रतग्रहणं** पूर्णमासे बर्हिःसंपादनकाले, दर्शे च वत्सापाकरणकाले कर्तव्यम् । ' बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' । **वि.** ६।४।१२, अयं व्रतकालो न केवलं संनयत एव किंतु असंनयतोऽपि । ' वत्सापाकरणोपलक्षिते काले ' इति तु दर्शे विशेषः । ६।४।१३.

* **व्रतनियमः** सांनाय्ये अप्रवृत्तस्यापि । ६।४। १३।४१–४३.

* **व्रतसमाप्तिः** उद्यापनेन । सु. पृ. १५२९.

* **व्रात्यपशोः** निमित्तत्वेनोच्यमानं पितुः पितामहस्य वा असोमपत्वं साहित्याविवक्षया सिद्धम् । **वा.** ३।१।६।१२ पृ. ६९६.

* **व्रीहयः** केचित् कृष्णाः, केचित् आशवो नाम ये अल्पकालेन फलन्ति, केचित् महाव्रीहयो नाम, केचित् आम्बाः नाम । राजसूये नानाव्रीजेष्टौ एते । **के.** (११।३।७।१५). * व्रीहयः तण्डुलनिर्वृत्तिं कुर्वन्ति । ततः पिष्टानि, तेभ्यः पुरोडाशाः, तेन यागः, यागादपूर्वम् । **टुप्.** ९।२।१५।४७. * व्रीहयः प्रधानयागपर्याप्ता लब्धाः, परंतु स्विष्टकृत्–इडाभक्षण–प्राशित्रभक्षणरूपशेषकर्मपर्याप्ताः न सन्ति, तथापि शेषकार्यलोपं कृत्वा प्रधानपर्याप्ताः व्रीहयो ग्राह्याः, न प्रतिनिधिः । **वि.** ६।३।२१. * व्रीहयो हि अनदनीयाः वाक्यान्तरशिष्टाश्च प्रकरणात् उत्पत्तिवाक्यशिष्टप्रकृतिद्रव्यापेक्षपुरोडाशावरुद्धयागानुवादेन विधीयमानाः न शक्नुवन्ति प्रकृतित्वप्रतिपत्तिमन्तरेण यागसाधनत्वं प्रतिपत्तुम् । **वा.** ३।४।१४।४१ पृ. ९८०. * तुल्या एते व्रीहयः ! य एव भक्तार्थास्त एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम । **भा.** ९।१।५।१९. * यत्र यागोपयुक्ता एव व्रीहयः नाधिकास्तत्र निर्वापस्याप्राप्तेः धात्वर्थो निर्वाप एव विधेयः । संख्यामुष्टयुभयविशिष्टनिर्वापविधानात् । **सोम.** ५।२।२. * ' व्रीहीन् अवहन्ति ' इत्यवघातः व्रीहीणामपूर्वसाधनत्वाकारमेवापेक्षते न स्वरूपमपि । एवं सति व्रीह्यभावे नीवाररूपप्रतिनिधावपि अवघातविषयत्वेन ऊहः सिध्यति । वि. ९।१।१ वर्णकं २. * ' व्रीहीनवहन्ति ' इति अवहननस्य नियमविधिः नानुवादः दर्शपूर्णमासयोः । **भा.** ४।२।११।२६. * ' व्रीहीनवहन्ति ' अयं नियमविधिः क्रियार्थः । **बाल.** पृ. २४, * ' व्रीहीनवहन्ति ' अयं प्रतिपत्तिरूपदृष्टार्थगुणकर्मविधिः । पृ. १३, * ' व्रीहीनवहन्ति ' इदं साक्षाद्विनियुक्तभाव्युपयोगद्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । पृ. ८२, * 'व्रीहीनवहन्ति' इयं कर्मणि द्वितीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । पृ. ४४. * ' व्रीहीन् प्रोक्षति ' इत्यत्र प्रोक्षणे व्रीहिस्वरूपं न प्रयोजकं किंतु अपूर्वमेव । तत्तु व्रीहिस्वरूपं गुणत्वेन चोद्यते । वि. ९।१।५. * ' व्रीहीन् प्रोक्षति ' इत्यत्र व्रीह्यर्थं प्रोक्षणं भवति ।

द्वितीयासंयोगात् ब्रीहयो भाव्याः । **टुप्.** ९।१।२।२. * 'ब्रीहीन् प्रोक्षति' अयं विनियोगविधिः क्रत्वर्थः । **बाल.** पृ. १३, * 'ब्रीहीन् प्रोक्षति'– इदं प्रोक्षणं साक्षाद्विनियुक्तभाव्युपयोगद्रव्यसंस्कारार्थं अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । पृ. ८३. * **ब्रीहिणा** यागः कर्तव्यः प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा, नात्र कश्चिद् विशेषः । प्रीत्यर्थमुपार्जितोऽपि ब्रीहिः ब्रीहिरेव, कर्मार्थमुपार्जितोऽपि ब्रीहिः ब्रीहिरेव । **भा.** ४।१।२।२ वर्णकं ३. * **'ब्रीहिभिः'** इति कारकविभक्तिः यवनिरपेक्षान् ( ब्रीहीन् ) प्रतिपादयति यागसाधनत्वेन, तथा 'यवैः' इति । **टुप्.** १०।८।८।१६.

ॠ **'ब्रीहिभिरिष्ट्वा ब्रीहिभिरेव यजेताऽऽयवेभ्यः' इति प्रकृतौ द्रव्यविधिः ॥**

'ब्रीहिभिरिष्ट्वा ब्रीहिभिरेव यजेताऽऽयवेभ्यः' इत्यनेन ब्रीहिकाल-यवकालान्तराले ब्रीह्यग्रयणाभ्यासो विधीयते । यजिशब्देन प्रकरणिन एवोपस्थितेः । इति **प्राप्ते,** अन्तरालकाले नित्याग्रयणयोः दर्शपूर्णमासयोर्द्रव्यनियमविधिपरत्वे संभवत्यत्यन्ताप्राप्ताभ्यासपरत्वमयुक्तम् । ब्रीहिभिरेव इत्येवकारेण यवनिरासप्रतीतेः । **संकर्ष.** ३।१।१५.

* **'ब्रीहिभिर्यजेत'** इति वचनात् न तावद् ब्रीहयः साक्षात् प्रदीयन्ते, अथ च प्रदेयद्रव्यप्रकृतित्वात् एवमुपदिश्यते । **वा.** ३।४।१४।४०. * 'ब्रीहिभिर्यजेत, यवैर्यजेत' । अत्र ब्रीहियवयोर्विकल्प एव न समुच्चयः । **वि.** १२।३।४. * ब्रीहिभिः शुक्लादिभिः सोमारौद्रादियागे श्रूयमाणैः प्राकृतयवानां बाधः । १०।७।१९। ६४–७१. 'सोमारौद्रादियागे श्रूयमाणैः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * साधनपक्षे ( यागस्य फलसाधनत्वपक्षे ) कामपदोच्चारणादृतेऽपि लभ्यते एव ( फलं ), यथा 'ब्रीहिभिः यजेत' इति । **टुप्.** ६।१।१।२. * **स्वर्गादेः** साधनत्वस्य 'ब्रीहिभिर्यजेत' इत्यादिवत् कामनासंयोगविरहेऽपि उपपत्तिः । **सोम.** ६।१।१. * **ब्रीहीणां** अपचारे नीवाराः प्रतिनिधेयाः । **भा.** ६।३।११।२७. * ब्रीहीणां अपूर्वसाधनत्वाकारो अवघाते विवक्ष्यते न ब्रीहिस्वरूपम् । **वि.** ९।१।१ वर्णकं २. * ब्रीहीणां धर्माः ब्रीहित्वेन परिच्छिन्नाः, ब्रीहिव्यक्तयो नीवारेषु सन्ति, तासामर्थे नीवारेषु क्रियन्ते । **भा.** ३।६।१४।३८. * ब्रीहीणां पुरोडाशप्रकृतितया यागाङ्गत्वम् । **मीन्या.** * ब्रीहीणां प्रतिनिधिर्नीवाराः । तेषु ब्रीहिष्विव अवघातादिविधयः साक्षात् प्रवर्तन्ते । **वि.** ३।६।१४. * 'ब्रीहीणां मेध' इति ब्रीहिमन्त्रस्य नीवाराणां ब्रीहिप्रतिनिधित्वे 'नीवाराणां मेध' इति ऊहो न कर्तव्यः । ९।३।९।२४–२७. **मीको.** पृ. ११२८ 'ऊहो न ब्रीहिमन्त्रस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । 'ब्रीहीणां मेध सुमनस्यमानः' इत्यत्र 'नीवाराणां मेध सुमनस्यमानः' इत्येवं ऊहः कर्तव्यः, इदं च नीवाराणामेव प्रकृतिद्रव्यत्वे । 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यादौ । **वि.** ९।३।१, * ब्रीहीणां यवा न प्रतिनिधिः, ब्रीहियवयोः विकल्पितत्वेन समकक्षत्वात् । ६।३।१२. * ब्रीहीणां यागापूर्वार्थत्वात् तदुत्पत्त्युपयोगिप्रोक्षणादिधर्मग्राहकत्वम् । **सु.** पृ. ५३. * **ब्रीहौ** द्रव्ये धर्माः श्रुताः ते तत्कार्यापन्नेषु नीवारेषु प्रतिनिधिभूतेषु प्राप्यन्ते, तत्कार्यापत्त्या । न चोदकेन । **भा.** ७।४।३।१६. * **ब्रीहिषु** जलवह्न्याद्युपघातेन सारविकलेष्वपि प्रोक्षणावघातादिविधयः प्रवर्तन्ते एव । **वि.** ३।६।१४. * ब्रीहिषु यागाङ्गत्वेनैव विहितेषु योग्यतया पुरोडाशप्रकृतित्वेन अविरोधोपपत्तौ विरोधापादकसाक्षाद्यागसाधनत्वाङ्गीकरणानौचित्यात् प्रकृतिता अवसीयते । **सु.** पृ. ७९५.

* **ब्रीह्यलाभेन** नीवारसंकल्पे कृते पुनर्ब्रीहिलाभे ब्रीहय एव ग्राह्याः । ६।३।१६।३५. **मीको.** पृ. ३१५७ 'मुख्यानुग्रहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **ब्रीह्यवघातः** गुणकर्म, ब्रीहयः संस्कार्याः । **वि.** २।१।४, * **ब्रीह्यवघातस्य** प्रधानं प्रयोजकं दर्शपूर्णमासयोः । ४।२।११.

* **ब्रीह्यवघातन्यायः ।** ११।४।१२।४५. **मीको.** पृ. ६८१ 'अवघातन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।



* **ब्रीह्याकृतिः**, यागस्य साधनं द्रव्यं परिच्छिन्दती अङ्गतां प्रतिपद्यते यथा, एवं तद्गता विशेषा दीर्घशूकत्वादयः तानपि परिच्छिनत्ति । **टुप्.** ६।३।११।२७.

* **ब्रीह्यादि ।** यथा हि ब्रीह्यादिप्रोक्षणादिभिः संबध्यमानं न च तावत् प्रकरणेन विशेष्यते, अथ च आनर्थक्यभयात् विप्रकृष्टफलकल्पनाप्रमाणाभावाच्च क्रतुसाधनत्वेन प्रयोजनवत्त्वाच्च प्रकृतं गृह्यते । **वा** ३।४।५।१५. * **ब्रीह्यादीनां** औत्पत्तिकेन विभागेन संव्यवहारेषु संख्या न संकीर्त्यते । निगदाभिप्राया मानाभिप्राया वा भवति । न हि भवति पञ्चभिः माषैः क्रीत इति । पञ्चभिः माषाणामाढकैः द्रोणैर्वा कुडवैर्वा खारीभिर्वा इति भवति । तत्र आढकादिभिरनुच्चार्यमाणैः साकाङ्क्षमेव वाक्यं अपरिपूर्णमप्रमाणमर्थस्य कस्यचित् । **भा.** १०।३।११।४५. * ब्रीह्यादीनां न तावत् कृषिमन्तरेणोत्पत्तिः । अथ च न सर्वपुरुषैस्तथैवाऽऽप्यन्ते, क्रयादिभिः अपि लभ्यमानत्वात् । **वा.** २।३।३।४ पृ. ५९१, * ब्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । ३।३। ७।१४ पृ. ८३३.

* **ब्रीह्यादिधर्माणां** प्राकृतब्रीह्यादिस्थानापन्नेषु नीवारादिषु ऊहेनानुष्ठानम् । ९।२।१२।४०.

* **ब्रीह्यादिप्रोक्षणादीनां** अपूर्वप्रयुक्तता । ९।१।५। ११–१९.

* **ब्रीह्यादिशब्दैश्च** स्वकर्मसाध्यमेवापूर्वं उपस्थाप्यते नान्यत् । **वा.** ३।१।४।१० पृ. ६७०.

* **ब्रीहिकार्यापन्नाः** नीवाराः कार्यापत्तितस्तद्धर्मान् लभन्ते । **भा.** ७।४।३।१८.

* **ब्रीहिधर्माः** प्रोक्षणादयो वाजपेये नीवारेषु भवन्ति । **भा.** ९।२।१२।४०. * **ब्रीहिधर्माणां** पुरोडाशद्रव्यकयागजन्यापूर्वं प्रयोजकम् । एवमन्यत्र । **वि.** ३।१।४.

* **ब्रीहिनीवाररूपद्रव्यभेदे** अपि दर्शपूर्णमासादिकर्म न भिद्यते । **वि.** ६।३।३.

* **ब्रीहिन्यायः ।** ३।१।४।७–१०. **मीको.** पृ. १८६५ 'तेषामर्थाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

ॠ **ब्रीहिबीजन्यायः ।** यथा ब्रीहिबीजस्य स्थूलस्तुषः स्पष्टः, तत आन्तरः सूक्ष्मस्तुषः फलीकरणनामा, ततोऽप्यान्तरो गर्भभूतस्तण्डुलः । तत्र च यथा विवेके क्रियमाणे सत्यपि तुषद्वयोपधाने तण्डुलादेवाङ्कुरोत्पत्तिरान्तरत्वात्, एवं रजस्तमसोर्गर्भात् सत्त्वादेव वियदाद्युत्पत्तिः । अत एव श्रेयस्कामैः सत्त्वावच्छिन्नः परमेश्वरो हरिरेवाराध्यो नान्यो देव इति वैष्णवैकदेशिनो वदन्तीति । **साहस्री.** १०१.

ॠ **ब्रीहिबीजन्यायः ।** अनेन न्यायेन केचित् शैवाः 'तमो वा इदमग्रे आसीत्' इति श्रुतिमनुसृत्य, एवं च यथा ब्रीहिस्तम्बे प्रथमं तुष एवाविर्भवति, ततस्तद्गर्भे प्रकृत्यापूरेण क्षीरं भवति, तदपि पुनः प्रकृत्यापूरेण घनतां गतस्तण्डुलाख्यः सारो भवति, तस्मिंश्च सिद्धे तद्बीजं दृढं सत् अङ्कुरोत्पादनक्षमं भवति । एवं शिवे प्रथमं तम एवाविर्भवति स, तच्च ईश्वरेणावरकत्वस्वभावादेकदेशे प्रच्यावितं ( वैषम्यात् ) प्रवृत्तिस्वभावत्वापत्त्या सत्त्वं स्यादेव, गुणसाम्यस्यविवक्षायां त्रिगुणः एकः पुरुषः, तत्पृथग्विवक्षायां तु त्रयः, तत्रापि तमोपाधिः शिव ईशः, रजोपाधिर्विधिः, सत्त्वोपाधिर्विष्णुः, तौ च कार्यौ गुणोपाधित्वात्, कारणोपाधेः शिवस्यानुगौ जीवौ स्तः, 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्यादिश्रुतेः । अत एव तौ न श्रेयस्कामोपासनार्हौ, किन्तु शिव एवेति वदन्तीति मतान्तरप्रदर्शनाय पुनरुक्तोऽयं न्याय इति । **साहस्री.** १०३.

* **ब्रीहिमयं** संकल्प्य न यवमयो दातव्यः । 'नानृतं वदेत्' इति निषेधात् । **वा.** ३।४।४।१३ पृ. ९४३.

* **ब्रीहियवौ** एककार्यार्थत्वात् विकल्प्येते । 'ब्रीहिभिर्यजेत' इति श्रुतम्, तैरिज्यते । 'यवैर्यजेत' इत्यपि, तैरपि इज्यते एव । एकस्मिन् प्रयोगे कार्याभावान्नोभाभ्यामिज्यते । अथ कस्मान्न मिश्रीयते ? नैतयुक्तम् । एकैकस्य निरपेक्षस्य साधकत्वं श्रुतम् । तत्

मिश्रीभावे बाध्येत । तस्मात् विकल्पः । **भा.** १२।३।४। १५, * व्रीहियवौ यागेषु निरपेक्षौ साधनम् । १२।४। ३।५. * व्रीहियवौ विधीयमानौ श्रुतिविहितेन आग्नेयाष्टाकपालेन न विरुध्येते, पुरोडाशापेक्षितप्रकृतिरूपत्वात् । न हि व्रीहीन् गृह्णन् अष्टाकपालं न करोति । तेनात्र न कर्मान्तरता । **वा.** २।२।६।१७ पृ. ५१३-१४. * **व्रीहियवयोः** नियमविधिगोचरत्वात् समुच्चयो न युक्तः । **सु.** पृ. १४०. * नहि समानकार्यत्वेन **व्रीहियवयोः** एकस्यानर्थक्यात् अर्थान्तरसाधकत्वं विज्ञायते । **वा.** २।२।१।२ पृ. ४६९. * 'समर्थः पदविधिः' ( पा० २।१।१ ) इति पदमात्रविधेः सामर्थ्यापेक्षत्वात् व्रीह्यादिप्रातिपदिकस्य च यवादिसापेक्षत्वेन व्याघातापत्तेः विभक्त्यन्वयायोगात् निरपेक्षाणामेव **व्रीहियवानां** तृतीयया करणत्वप्रतीतेः, प्रदेयप्रकृतित्वेन दृष्टार्थत्वात् एकविधानेन नैराकाङ्क्ष्यावगतेश्च समुच्चयो न युक्तः । **सु.** पृ. १४१.

* **व्रीहियवान्यतरनियमस्य** प्राकृतस्य चित्रेष्टौ तण्डुलेषु बाधः । **भा.** १०।२।३१।७०.

* **व्रीहियवादयः** प्रत्येकं तुल्यार्थाः विकल्पन्ते । वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः स्वेन स्वेन वाक्येन विनियुज्यन्ते । **वा.** २।२।६।१९ पृ. ५१८, * **व्रीहियवादिष्वपि** तावत् प्रत्यक्षश्रुतिविहितेषु यदि कश्चित् यावज्जीवमपि एकमेव पक्षमाश्रित्य व्यवहरेत् न स कदाचिदपि उपालम्भास्पदं गच्छेत् । १।३।२।३ पृ. १९३.

* **व्रीहियवन्यायः** ( व्रीहियवयोः एककार्यत्वात् एकस्मिन् कर्मणि विकल्पः ) । १२।३।४।१०-१५. **मीको.** पृ. ३५१० 'विकल्पाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * दधिशृतयोः प्रणीताधर्मप्राप्तिः सत्यपि अकर्मान्तरत्वे आग्नेयहविःश्रपणसाधनत्वस्य नैमित्तिकसहश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन ( ३।५।१९ ) स्थानापत्त्यैव न तु व्रीहियवन्यायेन । **भाट्ट.** ९।२।१३, * यत् एकादशकपालत्वद्वादशकपालत्वरूपभेदाख्यं परं भेदकारणमुक्तं तत् एकत्वेऽपि व्रीहियवन्यायेन विकल्पोपपत्तेः अविरुद्धम् । **कौ.** २।४।२।१३ पृ. ११९. * यद्यपि जर्तिलगवीधुकयोः विधिः स्यात् तथापि 'अनाहुतिः' इति निन्दया न स्वतन्त्रनिषेधोन्नयनम्, तत्फलस्य विकल्पस्य व्रीहियवन्यायेन पयोविधिबलेनैव सिद्धत्वात् । **भाट्ट.** १०।८।४.

* **व्रीहियवविकल्पः** सौमारौद्रे चरौ काम्ये न ग्राह्यः, किन्तूपदिष्टाः शुक्ला व्रीहय एव ग्राह्याः । **वि.** १०।७।१९.

* **व्रीहिशब्दः** जातिविशेषेण आकारविशेषेण चोपेतं द्रव्यमाचष्टे । **वि.** ३।६।१४.

* **व्रीहिस्वरूपप्रयुक्तं** न भवति प्रोक्षणं दर्शपूर्णमासयोः किंतु अपूर्वप्रयुक्तम् । ९।१।५।११-१९.

---



## श

* **शंयू** द्वौ दर्शपूर्णमासयोः । पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः । **वि.** १०।७।१३ । आश्वलायनेन वैकल्पिकः शंयुवाकः पत्नीसंयाजोत्तरमुक्त इति **तैब्रा.** १।५।९ इत्यत्र सायणभाष्यम् । 'शंयुवाको भवेन्न वा' ( आश्वश्रौ. १।१० ) ।

**शंयौ च सर्वपरिदानात् । ३।४।६।१७॥**

दर्शपूर्णमासयोः 'तच्छंयोरावृणीमहे०' इति मन्त्रः शंयुवाको नाम पठ्यते । शंयुवाकवाक्यशेषे च 'तस्मान्न ब्राह्मणायावगुरेत्, न हन्यात्, न लोहितं कुर्यात्' इति । सोऽयं अवगोरणप्रतिषेधः किं क्रतुधर्मः पुरुषधर्मो वा इति विचारे सिद्धान्तमाह । शंयौ शंयुवाक्ये अवगोरणादिप्रतिषेधः केवलपुरुषधर्मः न क्रतुयुक्तपुरुषधर्मः । सर्वपरिदानात् 'योऽपगुरातै शतेन यातयात्, यो निहन्यात् सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कद्य पांसून् संगृह्णात् तावत्संवत्सरान् पितृलोकं न प्रजानात्' इति यच्छब्दैः क्रतुतद्बहिर्भूतसाधारण्येन सर्वस्यैव पुरुषस्य परिदानात् उपादानात् परामर्शात् । तस्मात् अवगोरणादिनिषेधः पुरुषधर्मः इति **सिद्धान्तः ।**

**अत्र सुधा**— "पूर्वसूत्रस्थापकृष्येतेति शब्दानुषङ्गेण मण्डूकप्लुत्या च व्यवहितस्यापि कर्त्रधिकरणपूर्वपक्षसूत्रस्थाकर्मशब्दस्य ( ३।४।४।१२ ) अनुषङ्गेण शंयूपक्रमे वाक्ये यत् अकर्म निषेधनं तत् प्रकरणादपकृष्येत ( सर्वादानात् ) सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थाऽनपेक्षस्य पुंसो नरकपरिहारार्थं ब्राह्मणावगोरणादीनां दानात् खण्डनात् निषेधात् इति सूत्रव्याख्यार्थं 'एवं' इति भाष्यम् । इति । ... स्वयं च सर्वेभ्यः ऋत्विग्भ्यः अनृत्विग्भ्यो ब्राह्मणेभ्यः परिपालनाख्यवरदानात् इत्येवं सूत्रं व्याख्यातुमाह ।" इति ।

**अत्र भाष्यं तु** "एवं प्राप्ते, ब्रूमः, । शंयौ च प्रकरणादुत्कर्षः । कस्मात् ? सर्वपरिदानात् । सर्वावस्थस्य ब्राह्मणस्य अयं प्रतिषेध उक्तः । न दर्शपूर्णमासगतेनैव नावगोरणादि कर्तव्यं इति" इत्येव । **के.**

* **शंय्वधिकरणम्** । ३।४।६।१७. **मीको.** पृ. ६७७ 'अवगोरणन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * शंय्वधिकरणम् । अत्र निषेधफलार्थवादः निरूपितः 'तस्माद् ब्राह्मणाय नावगुरेत' इति निषेधे 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्' इति वर्षशतयातनारूपं फलं वाक्यशेषात् । **बाल.** पृ. ५३.

* **शंय्वन्तासु** पत्नीसंयाजाभावेऽपि 'अग्निं होत्रायावह' इति निगदो भवत्येव । **संकर्ष.** ४।२।११.

**शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । १०।७।१२।३८॥**

ज्योतिष्टोमे 'शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्ति' इति, 'इडान्ता आतिथ्या संतिष्ठते नानुयाजान् यजति' इति च श्रूयते । तत्र शंय्विडान्तत्वे प्रायणीयायां शंय्वन्तत्वे, आतिथ्यायां च इडान्तत्वे श्रूयमाणे प्रायणीयायां शंय्वन्ततायाः कृत्स्नसंस्थतायाश्च आतिथ्यायां इडान्ततायाः कृत्स्नसंस्थतायाश्च विकल्पः स्यात् । यदि प्रायणीया शंय्वन्तैव नित्या स्यात् आतिथ्या च इडान्तैव नित्या स्यात् तदा, परे तु शंयोः शंयुवाकात् परेषु इडायाः परेषु च अङ्गेषु मध्ये पत्नीनां पत्नीसंयाजानां अनुयाजानां च प्रतिषेधः श्रूयमाणः अनर्थकः स्यात्, प्राप्तेरेवाभावात् । तस्मात् विकल्पः । तत्र कृत्स्नसंस्थानपक्षे पत्नीसंयाजवर्जं उत्तरमङ्गजातं प्रायणीयायाम्, अनुयाजवर्जं उत्तरमङ्गजातं च आतिथ्यायां करिष्यते । तस्मात् विकल्प इति **पूर्वः पक्षः ।**

**नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् । ३९ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । न विकल्पः किंतु शंय्विडान्तत्वमेव । पत्नीसंयाजानुयाजप्रतिषेधस्तु नित्यानुवादः स्यात् । शंय्वन्तताविधानात् पत्नीसंयाजप्रतिषेधः सिद्ध एव तमेवानुवदति 'न पत्नीः संयाजयन्ति' इति । एवं इडान्तताविधानात् अनुयाजप्रतिषेधं सिद्धं अनुवदति 'नानुयाजान् यजति' इति ; एवं प्रतिषेधो नित्या-

नुवादः । कर्मणः शंयुवाकोत्तरकर्मणः इडोत्तरकर्मणश्च अशब्दत्वात् शब्देन अनुक्तत्वात् पत्नीसंयाजानुयाजानामपि अकरणं सिद्धमेव । अतो नित्यानुवादः । तस्मात् प्रायणीयायाः शंय्वन्तत्वं नित्यं आतिथ्यायाश्च इडान्तत्वं नित्यं इति **सिद्धान्तः । के.**

* 'शंय्विडान्तत्वे विकल्पः स्यात्०' (१०।७।१२।३८) इत्यधिकरणे 'न पत्नीः संयाजयन्ति' इति शंय्वन्तसंस्थाविधेः अर्थवादः पत्नीसंयाजाननुष्ठानलाघवेन तत्प्रशंसार्थः इति निर्णीतम् । **रसायनम्.** पृ. ८३.

* **शंयुवाक**ः कालभक्षः शेषकार्यम् । **वा.** ३।४।१४।३७.

* **शंयुवाककालभक्षः** चतुर्थः प्रकृतौ । **भा.** १०।२।३।१३.

* **शंयुवाककालीनः** भक्षः । तदर्थं उपहारः क्रियते । उपहारः समर्पणम् । **वि.** १०।२।४.

* **शंयुवाकमन्त्रः** 'तच्छंयोरावृणीमहे०' इति । तं होता पठति । **वि.** १०।७।१२.

* **शंसनं** नाम स्तोतव्यस्य स्तावकैर्गुणैः संबन्धकीर्तनं गानरहितम् । तदेव शस्त्रम् । **वि.** २।१।९, शंसनं होता करोति । ३।७।९.

* **शकटाभ्यां** हविर्धाननामकाभ्यां भिन्ने शकटे पशुपुरोडाशादीनां हविर्निर्वापो ज्योतिष्टोमे । १२।१।७।१४-१६. **मीको.** पृ. १७८६ 'ज्योतिष्टोमे इष्टयादौ०' इयत्र अधिकरणं द्रष्टव्यम् ।

* **शकटद्वयं** हविर्धाननामकं ज्योतिष्टोमे महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे स्थाप्यते । **वि.** १२।१।७.

* **शकुनिग्राहकस्य** शकुनिं जिघृक्षतः छद्मना गतिर्भवति । शनैः पदन्यासः, दृष्टिप्रणिधानम्, अशब्दकरणं च । कथमनववुद्धः शकुनिर्गृह्येतेति । (अयमेव शकुनिग्राहकगतिन्यायः) । शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासो न स तद्देशार्थः, अपितु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते । **भा.** ९।१।६।२२.

꣸ **शकुनिसूत्रन्यायः** । यथा पक्षी च सूत्रं च भिन्नं तथा जीवेश्वरौ भिन्नौ । **साहस्री.** ८१७.

* '**शकृत्** प्रविध्यति' इदं प्रधानपूर्वकालिकप्रतिपत्तिकर्म । (इदं ४।१।१२ इयत्र प्रतिपादितम्) । **वाल.** पृ. ८२, * 'शकृत् प्रविध्यति' इयं साक्षाद्विनियुक्तोपादानानुपपत्तिसिद्धप्रतिपाद्यविषया प्रतिपत्तिः । पृ. २४.

꣸ **शकृल्लोहिताधिकरणम्** । अग्नीषोमीये पशौ शकृल्लोहितनिरसनं प्रतिपत्तिः । शकृत् लोहितं च न पश्वालम्भप्रयोजकम् ॥

**पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् । ४।१।१२।२७ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते 'हृदयस्याग्रेऽवद्यति अथ जिह्वायाः' इत्येवमादि । तथा 'लोहितं निरस्यति' 'शकृत् संप्रविध्यति' 'स्थविमतो बर्हिरङ्क्त्वाऽपास्यति' इति । तत्र संदेहः, किं हृदयादिभिरवदानैः इज्या पशोः प्रयोक्त्री, उत शकृत्संप्रव्याधो लोहितनिरसनं च तदपि प्रयोजकं इति । किं प्राप्तम् ? 'एकनिष्पत्तेः सर्वं समं स्यात्' (४।१।९।२२) । उभयं प्रयोजकमिति । **एवं प्राप्ते, ब्रूमः ।** पशौ शकृल्लोहितयोः अप्रयोजकत्वम् । न हि तदर्थः पशोरालम्भः । 'शकृत् संप्रविध्यति', 'लोहितमपास्यति' इत्युच्यते, न पशोरन्यस्य वेति । पशुरग्नीषोमीयो वाक्येन 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । शकृल्लोहिते पशोः प्रकरणेन भवेताम्, प्रकरणं च वाक्येन बाध्यते । **ननु** एते शकृल्लोहिते प्रतिपाद्येते, तेन यागार्थस्य पशोः, नान्यस्येति निश्चयः । एवं चेत् अप्रयोजके शकृल्लोहिते इति । किं भवति प्रयोजनम् ? साम्ये सति शकृल्लोहिताभावे अन्यः पशुरालम्भनीयः, शकृल्लोहितयोरप्रयोजकत्वे लोपः ।

**शा**—सिद्धान्तश्लोकः— '**यागार्थः पशुरुत्पन्नो हविः प्रकृतिभावतः । हवींषि हृदयादीनि तैरेवातः प्रयुज्यते ॥**' शकृल्लोहितकर्म तु प्रतिपत्तिमात्रम् ।

**सोम**— कपालस्य पुरोडाशे श्रुतस्य तुषोपवापे विनियोगात् युक्तं पुरोडाशमात्रप्रयुक्तत्वम्, इह तु न हृदयादिमात्रप्रयुक्तत्वं तत्संबन्धेन श्रुतस्य अन्यत्र



विनियोगाभावात् इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**– पशौ विषये लोहितशकृतोरकर्मत्वमप्रयोजकत्वं तदर्थं पशवनालम्भादिति ।

**वि**— 'हृदादिः शकृदादिश्च पश्वालम्भप्रयोजकः । हृदादिरेव वा, ऽऽद्योऽस्तु प्रकृतत्वेन साम्यतः ॥, हविषो यागशेषत्वाद् हृदादेर्हविरात्मनः । प्रयोजकत्वं तस्यैव नेतरस्यातथात्वतः ॥'

**भाट्ट**— पशौ 'शकृत् संप्रविध्यति' 'लोहितं निरस्यति' इति श्रुतं निरसनं पश्वालम्भनस्य शकृल्लोहितस्यैव वा प्रयोजकम् । नहि इयं तस्य प्रतिपत्तिः । हृदयादीनामेव हविष्ट्वेन तस्यानुपयुक्तत्वात् अपूर्वसाधनत्वाभावाच्च । अतश्च अर्थकर्मैवेदं शकृल्लोहितस्य तावत् प्रयोजकम् । पश्वालम्भोऽपि च विशसनवाक्ये श्रुतः प्रयोजनाकाङ्क्षः सन् हृदयादेरिव लोहितादेरपि पशुप्रकृतिकत्वमाक्षिपति । नहि हृदयादेः तदुत्पत्तिवाक्याधीनम्, तस्य तदभावे हविष्ट्वेनैव तद्विधायकत्वात् । अतः तत्रत्यं पशुपदमपि देवतासंबन्धसिद्ध्यर्थं वस्तुतः अनुवाद एव । **अस्तु वा** उत्पत्तिवाक्यावगतं पशोः यागसाधनत्वं विशसनवाक्यानुरोधात् हवीरूपहृदयादिप्रकृतित्वरूपमेव इति विशसनवाक्यस्यापि तत्परत्वमेव । तथापि निरसनस्य अर्थकर्मत्वात् जाघनीवत् लौकिकशकृल्लोहितप्रयोजकत्वे न किंचित् बाधकम् । **इति प्राप्ते,** द्वितीयया निरसनस्य प्रतिपत्तित्वावगमात् न लोहितादिप्रयोजकत्वम्, अपि तु उपयुक्तत्वाभावेऽपि च अनुनिष्पन्नत्वेन प्रतिपत्तिसापेक्षत्वात्, परंपरया अपूर्वसंबन्धस्य सत्त्वेन च आनर्थक्याभावात् प्रतिपत्तिकर्मत्वोपपत्तेः । **प्रयोजनं** पशुलोहिताद्यभावनाशयोः तल्लोपः । प्रायश्चित्तं परं तल्लोपनिमित्तं भवत्येव । सोमेश्वरलिखितरक्षोभागसत्त्वे तु त्यागांशस्य आज्येन येन केनचित् वा द्रव्येण समापनं भवत्येवेति द्रष्टव्यम् ।

**मण्डन**— 'नाक्षिप्तः शकृता पशुः ।' १८.

**शंकर**— 'शकृल्लोहितकर्म च ।' (अप्रयोजकम्) । १५.

* **शकृत्संप्रवेधः** शेषप्रतिपत्तिरेव न तु पश्वालम्भस्य प्रयोजकम् । (आलब्धस्य पशोः गुदकाण्डस्थं शकृत् निष्कास्य भूमौ त्यागः निखननं वा शकृत्संप्रवेधो नाम ।) **वि.** ४।१।१२.

* **शक्ति** अव्यवधानेन शब्दजन्यप्रतीत्यनुकूला वृत्तिः । अव्यवहितत्वं च अर्थान्तरप्रतीत्यद्वारकत्वम् । इदं च लक्षणावारणाय तादृशचेष्टावारणाय चावशिष्टम् । सा च 'अस्मात् पदात् अयमर्थो बोद्धव्यः' इत्याकारिका ईश्वरेच्छा इति **न्यायविदः ।** पदार्थान्तरं इति **मीमांसकाः ।** अस्या एव संकेत इति व्यवहारः । साक्षाच्छब्दजन्यार्थप्रमितिसहकारिज्ञानविषयत्वं वा । **वैयाकरणास्तु** बोधकत्वमेव शक्तिः । एवं लाक्षणिकार्थेऽपि शक्तिरेव । अत एव 'सर्वे सर्वार्थवाचकाः' इत्याहुः । **मणि.** पृ. ७३-७४, * शक्तिः गोत्वादाविव अन्वयेऽपि इति **वेदान्तिनः ।** पृ. ८२, * शक्तिस्त्रिधा सहजा आधेया पदशक्तिश्चेति । पृ. २२. * शक्तिः पदस्य वाक्यस्य वा क इति विचारः 'वाक्यार्थे शक्तिः लक्षणा वा' इति **बिन्दौ** पृ. ३८६४ इत्यत्र द्रष्टव्यः । * शक्तिः । पदानामेव (न वाक्यस्य) कार्यान्विते अनुभाविका शक्तिः । **स्मारिका च जातिगुणादौ ।** अनुभावकशक्तिग्रहे च स्मारकशक्तिग्रहस्य हेतुता । तेन उपपत्तेः पदानां वाक्यार्थे न शक्तिः । पदानां अन्वये अपि शक्तिः । इति **गुरवः ।** **मणि** पृ. १७२, * शक्तिः । पदेषु स्मारिका अनुभाविका चेति शक्तिद्वयम् । तत्र स्मारिका जातौ । अनुभाविका कार्यान्विते । इति **प्राभाकराः ।** पृ. ८९. * शक्तिः विनियोगयोग्यत्वम् । **सु.** पृ. १२११. * शक्तिः । संस्कारभेदात् शक्त्युद्बोधः । तदनुरोधिनी भिन्ना च शक्तिः एकमपि विषयं भेदेन समर्पयन्ती स्वभेदाग्रहणात् अनेकग्रहणभ्रमं उत्पादयति । **बृहती.** पृ. २२९. * शक्तिः समासेषु अङ्गीकार्या इति **वैयाकरणाः । मणि.** पृ. १४६--१४७, लक्षणा इति **नैयायिकाः ।** १४८-१४९. 'समासवादः' **इति बिन्दौ** द्रष्टव्यम् ।

* 'शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः । तेन नाना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥' **वा.**

२।१।१।१ पृ. ३७८, * अन्यत्र गतया शक्त्या अन्यस्य अविनियोगः । ३।३।७।१४ पृ. ८२५, * शक्तेस्तु शक्त्यन्तरं नास्त्येव । १।४।१।२ पृ. ३२४. * शक्तेः प्रमाणान्तरविषयत्वात् विधिरूपानुगताया अपि न शास्त्रार्थता । विवि. पृ. ४३१. * शक्तेः शब्दाश्रितत्वात् तद्भेदे शक्तिभेदौचित्यम् । सु. पृ. २६०. * 'देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः । **शक्तीनां** कारणस्थानां स्वकार्यनियमं प्रति ॥ २५३ ॥ शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः । प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥' २५४ ॥ **श्लोवा.** शून्यवादे. * विलक्षणकार्यान्यथाऽनुपपत्त्या स्वतो विलक्षणानामेव शक्तीनां कल्पना । सु. पृ. १४३१. * सर्वशक्तीनां अर्थापत्तिरेवैकं प्रमाणम् । वा. ३।४।४।१३ पृ. ९३२. * **शक्तौ** । सहजशक्तौ आधेयशक्तौ च अर्थापत्तिर्मानम् । तथाहि, बीजत्वावच्छेदेन अङ्कुरजनकत्वे गृहीते मूषिकाऽऽघ्रातेषु तददर्शनेन कारणत्वसंदेहे मूषिकाऽऽघ्राणनाश्या व्रीहिनिष्ठा कारणशक्तिः कल्प्यते । एवं यागजन्यं स्वर्गजनकमपूर्वं कल्प्यते । इति जीर्णाः । **मणि.** पृ. ६१.

**शक्त्यधिकरणम्** । शक्त्यनुसारेण कर्मसु पदार्थविनियोगव्यवस्था ॥

**अर्थाद्वा कल्पनैकदेशत्वात् । १।४।१४।२५ ॥**

**भाष्यम्**-- 'स्रुवेण अवद्यति, स्वधितिना अवद्यति, हस्तेन अवद्यति' इति श्रूयते । तत्र संदेहः, किं स्रुवेण अवदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च, उत सर्वेषां अर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेन इति । अविशेषाभिधानात् अव्यवस्थेति । एवं **प्राप्ते, ब्रूमः** । अर्थाद्वा कल्पना,-सामर्थ्यात् कल्पनेति । स्रुवेण अवद्येत् यथा शक्नुयात् । तथा यस्य शक्नुयात् तस्य चेति । आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी । एवं चेत् यथाशक्ति व्यवस्था भवितुमर्हति । तथा, 'अञ्जलिना सक्तुन् प्रदाव्ये (दाव्याग्नौ) जुहोति' इति । द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशः अर्थात् कर्तव्यः । तथाहि शक्यते होमो निर्वर्तयितुम् । तद् यथा, कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्ते इत्यर्थात् कल्प्यते, कटे समासीनः कांस्यपात्र्यां ओदनं निधाय भुङ्क्ते इति ।

वा-- '**अथ यत्रेति संदिग्धे वाक्यशेषो न विद्यते । तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः ॥**' देवताप्रसादाभयप्रार्थनादौ संहतहस्तसंयोगमात्रमञ्जलिः, 'नाञ्जलिना वारि पिबेत्' इत्यादौ व्याकोशः । सक्तुहोमचोदनायां शब्दात् संदेहे सत्यसति च आकोशस्य वाक्यशेषे अन्यथानुपपत्तेरेव आकोशाश्रयणम् । **ननु** अनेनैव न्यायेन यथा शक्नुयादिति वाक्यशेषात् अन्धादीनां आज्यावेक्षणादिरहितः कर्माधिकारः स्यात् ! न, असंदेहात्, संदिग्धनिर्णयार्थात् तु एवं कल्पना भवति । न च अधिकारे संदेहः, समस्तधर्मोपेतं यथा शक्नुयात् तथा कुर्यादिति वाक्यशेषात् । सन्ति च तादृशस्य कर्तारः चक्षुष्मदादयः इति न प्रयोगचोदनान्यथानुपपत्तिः । यत्र तु यावज्जीवचोदनादावेवं भविष्यति तत्र शक्तिकृताङ्गत्यागेऽपि सत्यवैगुण्यं प्रधानस्य चोदितमित्याश्रयिष्यामहे एव । तस्मात् यावदेव लब्धात्मको विधिस्तावत् यत् कल्पते तद्वैदिकम्, सिद्धे तु तत्कल्पनं पौरुषेयत्वात् अप्रमाणं सामर्थ्याधीनत्वाद्वाक्यशेषसिद्धेः । आह च- '**यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रभागास्तु समामनेयुः ॥ इति कृतबहुमार्गं मन्त्रविध्यर्थवादैः स्मृतिपरिखमुदारं वेदशालोपगूढम् । अनभिभवसमर्थं धर्मदुर्गं प्रविश्य प्रविभजति समस्तामर्थचिन्तामिदानीम् ॥**"

शा-- विधेः इदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते । अशक्यार्थविध्यसंभवात् अवश्यं विधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्तव्यं तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति '**द्रवादिषु स्रुवादीनां, व्याकोशस्य च सक्तुषु । अर्थापत्तिवशात्तस्मात् व्यवस्थैवेत्यवस्थितम् ॥**'



**सोम**-- पूर्ववैषम्येण प्रत्यवस्थानात् **संगति**र्बोध्या । **सूत्रार्थस्तु**- सामर्थ्याद्विधेः व्यवस्थितार्थत्वकल्पना स्यात् सामर्थ्यकल्पितशब्दस्य विधिवाक्यैकदेशत्वादिति ।

वि-- 'स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी ।, आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः ॥, व्यवस्थापकराहित्यात् स्रुवाद्या अव्यवस्थिताः । व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः ॥'

**भाट्ट**- 'स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति' इत्यादौ विधेः अवदेयद्रव्यविषये संदिग्धस्य सामर्थ्यात् निर्णयः- स्रुवेण द्रवद्रव्यमेव आज्यादि, स्वधितिना मांसादि, हस्तेन संहतं पुरोडाशादि । अतश्च सामर्थ्यसहकृताऽवद्यतिपदेनैव लक्षणया द्रवद्रव्याद्यवदानस्योद्देश्यत्वात् तदनुवादेन स्रुवादिविधौ न किञ्चित् बाधकम् । एवं 'अञ्जलिना सक्तून् जुहोति' इत्यादावपि न संपुटाकारोऽञ्जलिः अपि तु व्याकोशाकार एव । तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाणि अष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि । अतः परं भेदादिना तत्स्वरूपं निरूप्यते ।

**मण्डन**-- 'अनुष्ठानावसायोऽर्थात् ।' अनुष्ठानस्य कर्तव्यस्य अवसायः निश्चयः अर्थात् तत्तद्वस्तुयोग्यताद्वारा भवतीति शेषः ।

**शंकर**-- 'सामर्थ्याच्च स्रुवादौ सः ।' (सः नाम निर्णयः इत्यर्थः) ।

* **शक्त्यभावः** । यत्र तु अन्यविषयैव शक्त्या अकल्पितया अन्यत्रापि तौ (प्रतीतिप्रयोगौ) सिध्यतः, तत्र अनुपलब्ध्या शक्त्यभावः प्रतीयते । यथा आकृतिशब्दानां व्यक्तौ, सिंहादिशब्दानां च माणवकादौ । वा. ३।४।४।१३ पृ. ९१३.

* **शक्त्यभाववादिनो** वैशेषिकाः । सु. पृ. १४४१.

* **अज्ञातशक्तिकस्य** ज्ञापकत्वायोगः । सु. पृ. १२१०.

* **शक्तिग्रहः** । अप्रसिद्धसंबन्धा बालाः कथं वृद्धेभ्यः प्रतिपद्यन्ते इति ? नास्ति दृष्टेऽनुपपन्नं नाम । दृष्टा बाला वृद्धेभ्यः प्रतिपद्यमानाः । भा. १।१।५।५ पृ. ५८ । प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानम् । वा. १।३।९।३३ पृ. ३१६. * शक्तिग्रहश्च व्याकरणादिना । तदुक्तम्-- 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च । वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥' इति । अनुमानोपमानशब्दाः एव शक्तिग्राहकाः । व्यवहारप्रसिद्धिसामानाधिकरण्यविवरणानां अनुमानान्तर्भावः । व्याकरणवाक्यशेषकोशानां शब्दान्तर्भाव इति **नव्याः** । **व्याकरणात्** तृतीयादेः करणत्वकर्तृत्वादौ शक्तिग्रहः । **उपमानेन** उपमितिरूपः शक्तिग्रहः । **कोशो** वैजयन्त्यादिः । **आप्तवाक्यं** 'घटो घटपदवाच्यः' इत्यादि । अत्र च आप्तवाक्यत्वेन न शक्तिग्रहहेतुता, किंतु वाक्यत्वेन लाघवात् । एवं च 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥' इत्यादिवाक्येन शक्तिग्रहः । **व्यवहारः** प्रयोज्यवृद्धप्रयोजकवृद्धव्यवहारः । तथाहि, प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिं उपलभमानो बालः प्रयोज्यवृद्धस्य तज्ज्ञानम्, ज्ञाने च शब्दस्यैव हेतुताम्, तदन्यथाऽनुपपत्त्या च शक्तिं परिकल्पयन् आवापोद्वापाभ्यां तत्तत्पदस्य तत्तदर्थे शक्तिमवधारयति । तदनन्तरं व्याकरणोपमानकोशाप्तवाक्यविवरणवाक्यशेषप्रसिद्धपदसामानाधिकरण्यैः यथायोगं शक्तिमवधारयति इति दिक् । **मणि.** पृ. ७४-७५, * शक्तिग्रहः व्यवहारेणैव इति **प्राभाकराः** । पृ. ८२.

* **शक्तिजन्यबोधद्वारा** अनेन मन्त्रेण 'आग्नेयोत्पत्त्यपूर्वीयदेवतां संस्कुर्यात्' इति लिङ्गकल्प्यश्रुतिं कल्पयित्वा ऊहसिद्धिः । **भाट्ट.** ९।१।२ पृ. ४९.

* **शक्तिभेदः** प्रतिपदम् । सु. पृ. १२१०.

* **शक्तिमद्द्रव्यकारकपक्षेऽपि** अवश्यं निष्कृष्य शक्तिमात्रं सुप्तिङ्भ्यां अभिधेयमेष्टव्यम् । वा. ३।४।४।१३ पृ. ९३४.

* **शक्तिमात्रस्य** कारकत्वे सामानाधिकरण्यायोगः । सु. पृ. १४४०.

* **शक्तिरहितस्य** व्यापारायोगः । सु. पृ. १४४०.

* **शक्तिरूपः** एव च क्रियाकारकयोः संबन्धः इति करणविभक्त्यन्तर्गतत्वम् । **वा.** २।२।११।२६ पृ. ५५१.

* **शक्तिवादः ।** एतेन बीजादिषु अङ्कुरजननशक्तिकल्पना व्याख्याता । किं पुनः शक्तिकल्पनां विना नोपपद्यते । बीजादिषु सत्सु अङ्कुराद्युत्पत्तिदर्शनात् असत्सु चादर्शनात् बीजादीनां अङ्कुरादिकारणत्वं अवगम्यते । सत्स्वपि च बीजेषु मूषिकाघ्रातेषु अङ्कुरानुत्पत्तेः अकारणत्वं प्रतिभासते । सोऽयं कारणत्वाकारणत्वयोः विरोधः शक्तिकल्पनया समाधीयते । नूनं अस्ति अतीन्द्रियमपि रूपं यद्भावात् कदाचिदङ्कुरोत्पत्तिः, यस्य च मूषिकाऽऽघ्राणेन नाशात् कदाचित् अनुत्पत्तिः इति कल्प्यते । ( ननु ) घ्राणाभावोऽपि अङ्कुरस्य कारणम्, घ्राणे च सति तदभावादेव अनुत्पत्त्युपपत्तेः अलं शक्तिकल्पनया इति चेन्न । घ्राणक्रियायाः क्षणिकत्वात् उत्तरकाले तदभावे सत्यपि अङ्कुरानुत्पत्तेः । प्रागभावः कारणं न प्रध्वंसाभावः इति चेन्न । अभावत्वाविशेषात् । नहि प्रागभावप्रध्वंसाभावयोः प्रागूर्ध्वकालभेदं मुक्त्वा किंचिदपि रूपवैलक्षण्यमस्ति । न च अविलक्षणे कारणे कार्यवैलक्षण्यं संभवति । प्रागभावस्य प्रध्वंसाभावात् विलक्षणमस्ति रूपं इति चेत्, कल्प्यमेवं सति किंचित्, तच्च अभावे कल्प्यतां बीजस्वरूपे वा इति बीजस्य साक्षादङ्कुरकारणत्वात् तत्रैव कल्पयितुं युक्तम् । एवं यागादेः अपूर्वस्वर्गादिसाधनशक्तिकल्पनं ऊहनीयम् । कथं पुनः शक्तिमति यागे विनष्टे निराधारा शक्तिरवतिष्ठते ? न निराधारा भविष्यति, आत्माधारत्वात् । कथमन्यशक्तिरन्यत्र स्यात् ? तथाऽवगमात् । नावश्यं स्वाश्रयैव शक्तिरिति नियमोऽस्ति । सा हि कार्यतः कल्प्यमाना यत्रैव कार्याय कल्पते तत्रैव कल्प्या । सा चेयं अपूर्वाख्यशक्तिः यागाश्रया सती यागविनाशान्न स्वर्गनिष्पत्तये पर्याप्नुयात् इत्यात्माश्रया कल्प्यते । यथा आह ' शक्तिः कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते । तत्रैव साऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा ॥ ' इति कथमात्माश्रया सती यागशक्तिरिति व्यपदिश्यते ? तस्य हि फलसाधनत्वमुपपादयितुं सा कल्प्यते तावता तच्छक्तित्वम् । लोकेऽपि प्रसिद्धमेतत् तैलपानसामर्थ्यात् चिरवृत्तेऽपि तस्मिन् बलपुष्ट्यादिकं अद्य मे जातं इति लौकिका व्यवहरन्ति । तस्मादनवद्यम् । **शा.** १।१।५ पृ. ८०.

* शक्तिवादः । **ननु एवं** ( अनुमानेन ईश्वरस्य असिद्धिवत् ) ' वह्निः दाहानुकूलादृष्टातीन्द्रियधर्मसमवायी, दाहजनकत्वात् अदृष्टवत् आत्मवत् ' इत्यनुमानस्य अनुकूलतर्काभावेन अप्रयोजकत्वात् उत्तेजकाभावविशिष्ट–मण्यादिप्रतिबन्धकाभावस्यैव दाहजनकतया मण्यादिसमवधाननाश्यतयाऽपि शक्तिकल्पनस्य अनुपपत्तेः तद्बोधकवेदाभावाच्च शक्तिरपि न सिध्येत् । इति **चेन्न ।** तृणारणिमणीनां व्यभिचारेण वह्नित्वावच्छिन्नजनकत्वग्रहानुपपत्त्या कार्यनिष्ठवैजात्यकल्पनापूर्वकहेतुहेतुमद्भावग्रहकल्पनं अपेक्ष्य तृणादिनिष्ठजनकतावच्छेदकसहजशक्त्यङ्गीकारेण एकहेतुहेतुमद्भावकल्पनालाघवतर्कसहकृततृणादिपक्षकवह्निजनकत्वहेतुकतादृशधर्मानुमानस्य तत्र मानत्वात् । एवं वैकल्पिकव्रीहियवयोरपि हेतुताग्रहे लाघवं व्यभिचारवारणं च ।

**न च** प्रदेयप्रकृतित्वेन उभयोर्हेतुत्वात् जनकतावच्छेदकशक्त्यभावेऽपि न व्यभिचार इति **वाच्यम् ।** व्रीहिनिष्ठकारणताग्रहे प्रदेयप्रकृतित्वग्रहः तद्ग्रहे च तद्ग्रहः इत्यन्योन्याश्रयात् ।

**नापि** आश्रयत्वसंबन्धेन जातिस्वीकारेण कार्यतावच्छेदकत्वकल्पनेन व्यभिचारपरिहारः । तादृशजातौ मानाभावात् । व्रीहिजन्यतावच्छेदकतयैव तत्कल्पने विकल्पो दत्तजलाञ्जलिः स्यात् । शक्तेश्च प्रत्येकं पर्याप्ततया न समुच्चयापत्तिः । अन्यथा अन्यतराभावविशिष्टान्यतरस्य उभयाभावविशिष्टव्रीह्यादेर्वा हेतुत्वकल्पने गौरवापत्तिः व्यभिचारश्च । अतो जनकतावच्छेदकतया सहजशक्तिस्तावत् आवश्यकी ।

एवं आधेयशक्तिरपि प्रोक्षणादिजन्या व्रीहिनिष्ठा । अन्यथा प्रोक्षणादिजन्यापूर्वस्य आत्मनिष्ठतया व्रीहीणां प्रोक्षणकर्मत्वानुपपत्तिः । अदृष्टवदात्मसंयोगेन अदृष्टवत्तया कर्मत्वोपपत्तौ घटादीनामपि तत्कर्मत्वापत्तिः । तेन व्रीहिजन्यापूर्वजनिका आधेयशक्तिरपि आवश्यकी ।



तयोश्च अयमेव भेदो यत् सहजशक्तिः जनकतावच्छेदिका, आधेयशक्तिः जनिका जन्या चेति ।

**न च** प्रोक्षणजन्यशक्तिमद्व्रीहित्वेन अपूर्वजनकतया हेतुतावच्छेदकत्वं संभवति । तादृशशक्तिमद्यवजन्यतदपूर्वे व्यभिचारात् । शक्तिव्रीहित्वयोः विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पने, तथा यवत्वेऽपि इति तच्चतुष्ककल्पने अतिगौरवापत्तिः ।

एवं सर्पविषमन्त्रोच्चारणजन्यपरशरीरनिष्ठा आधेया शक्तिः जीवनजनिका विषबाधापहारजनिका वा । प्रतिष्ठादिजन्या च पाषाणनिष्ठा पूजाहेतुः चाण्डालादिस्पर्शनाश्याऽपि आवश्यकीति ।

पदशक्तिस्तु उभयप्रसिद्धा । तच्छाब्दबोधजनकपदत्वहेतुकानुमानगम्या, वृद्धैः तत्र प्रयुज्यमानत्वहेतुकानुमानगम्या वा । परंतु सा ईश्वरेच्छारूपा अतिरिक्ता वा इत्यनयोर्विवादः । तत्र ईश्वरेच्छावत् ईश्वरसंयोगस्य गुणरूपपदे असंभवात् तत्तत्स्वरूपाणां संबन्धत्वकल्पनमपेक्ष्य एकसमवायस्य उचितत्वात् पदानामर्थानां अनित्यत्वेऽपि नानुपपत्तिः । वस्तुतस्तु पदानां नित्यत्वात् जात्यादिरूपाणामर्थानां च तथात्वात् शक्तिरपि नित्या इति तत्संबन्धस्य सुतरां नित्यता इति नानुपपत्तिलेश इति दिक् । **मणि.** पृ. ४३–४४.

* ' **शक्यादन्येन** रूपेण भाने भवति लक्षणा ' इति नियमः अप्रयोजकः । **मणि.** पृ १११. * नहि अग्निहोत्रादिपदं शक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपरम्, अपितु लक्षणयैव, ' **शक्यादन्येन** रूपेण ज्ञाते भवति लक्षणा ' इति न्यायात् । **भाट्ट.** ९।३।१.

* **शक्यार्थान्वयानुपपत्तिः** लक्षणाबीजम्, न तु तात्पर्यानुपपत्तिः । वेदे तदसंभवात् । **मणि.** पृ. ७६.

* **शक्रध्वजोत्सवः** सदाचारः । **वा.** १।३।३।७ पृ. २०५ । शक्रध्वजमहः– शक्रध्वजोत्सवः शक्रध्वजमहायात्रा । **सु.** पृ. १८७.

* शक्वरी पादेषु अक्षराणि ८।८।८।८।८।८।८ । उदा० ' प्रो ष्वस्मै पुरोरथं ' (ऋसं. १०।१३३।१ ) ।

* शङ्का मन्दाऽपि निराकार्या । **सु.** पृ. १४८६.

**शङ्काभिः सर्वमाक्रान्तमिति न्यायः ।** स्फुटः । सर्वत्र निश्चयाभावविवक्षायामस्य प्रवृत्तिः । **साहस्री.** ४१२.

**शङ्कूत्खातदंष्ट्रोरगन्यायः** । यथा उत्पाटितदन्तपङ्क्तिर्नागो नापकारक्षमो भवति, तथा नाशितस्वसहायकशत्रुरपि नहि शक्नोत्यपकर्तुमिति । **साहस्री.** २८८.

* **शङ्खापाये** इव शङ्खवेला । शङ्खापायेऽपि शङ्खवेला न अपैति । **रत्न.** ५।१।१८।३५.

* **शङ्खन्यायः ।** शङ्खन्यायेन उपलक्षकस्य अग्नीषोमीयपुरोडाशस्यैवाभावेऽपि उपलक्ष्ये काले यागोऽस्ति । यथा– ' शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यम् ' इत्युक्ते कस्मिंश्चित् दिने तं शङ्खं धमतः पुरुषस्याभावेनोपलक्षकस्य ध्वनेरभावेऽपि उपलक्षिते तस्मिन् काले सेवकाः समागच्छन्ति, तथा अत्रापि द्रष्टव्यम् । **वि.** १०।८।१९.

**शङ्खवेलान्यायः ।** यथा वेलाविशेषे शङ्खध्वनिविशेषो यत्र नियमितस्तत्र शङ्खध्वनिना वेलाविशेषज्ञानं जायते, तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः । **साहस्री.** ५०५.

* **शङ्खलिखितोक्तं** धर्मसूत्रं वाजसनेयिभिः परिगृहीतम् । **वा.** १।३।७।१५.

* **शच्याः** पतिभक्तिनिमित्तपुण्यातिशयजनितनहुषनिराकरणावाप्तप्रभावलाभः ख्यात एव । **वा.** १।३।३।७ पृ. २०८.

* ' **शतं** अपि अन्धानां न पश्यति ' इति न्यायात् बहुत्वादपि न प्राबल्यम् । **अद्वैत.** २।४।३७६–३७७ । प्रत्यक्षादेः ( ब्रह्मणि ) अप्रमाणत्वेन तत्संवादस्य प्राबल्याप्रयोजकत्वात्, ' शतमपि अन्धानां ' इति न्यायात् । २।२३ ( २४ ) । २२–२३. * 'शतं आभ्यां दीयतां ' इत्युक्ते समर्पणवेलायां ' पञ्चाशत्संख्यावच्छिन्नमर्पयति ' इति न्यायः । तेन ' **अष्टौ उपभृति** ' इत्युक्ते होमकाले चतुर्गृहीतमेवोपयुज्यते । **वा.** ४।१।१७।४८ पृ. १२२३. * ' शतं देवदत्तयज्ञदत्तयोः विभज्यतां ' इत्युक्ते देवदत्ते पञ्चाशत्, यज्ञदत्ते च पञ्चाशत्

विधीयन्ते । वि. १०।३।४. * 'शतस्य दीव्यति' इत्यं करणे षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४५.

🕮 **शते पञ्चाशदिति न्यायः** । यथा व्यापकशतसंख्यायां व्याप्यपञ्चाशत्संख्या निविष्टा, एवं यत्र व्यापके व्याप्यस्य निवेशस्तत्रास्य प्रवृत्तिः । **साहस्री.** ४८९.

* **शतातृण्णा** शतछिद्रा कुम्भी 'शतातृण्णाया-मवनयेत्' इत्यत्र । **वि.** ३।५।३.

* '**शतायुः** पुरुषः' इति सत्यपि वचने, अधिकं जीवनं दृश्यते एवेति । अत्रोच्यते- नायमेकान्तः । कदाचित् यां च यावतीं च शरीरस्थिरतामुत्पादयेयुः ( रसायनानि ), न द्राक् इष्टकालं ( सहस्रसंवत्सरम् ) । **भा.** ६।७।१३।३४, * 'शतायुर्वै पुरुषः' इत्यनुवादः । अत्रोच्यते- शतानि आयुरस्य इति विग्रहीष्यामः । नैवं संख्याशब्दाना समास इष्यते । न च गमकानि भवन्ति । द्विवचनबहुवचनान्तानां असमासः इति चाभियुक्त-वचनात् । ६।७।१३।३३.

* '**शतकृष्णलं** आयुष्कामः' इत्यत्र कृष्णलेषु उपस्तरणं अभिघारणं च न कर्तव्यम्, लुक्संसक्ति-निवारणलक्षणद्वारलोपात् । वि. १०।२।२, * 'शत-कृष्णलमायुष्काम' इत्यत्र 'घृते श्रपयति' इति श्रुतोऽपि पाको न कर्तव्यः इति **पूर्वपक्षः** । अदृष्टार्थं कर्तव्य इति **सिद्धान्तः** । किंवा श्रपणं औष्ण्योत्पादनं इति यदा मतं तदा तत् कर्तव्यमेव । १०।२।१, * काम्येष्टिकाण्डे 'प्राजापत्यं घृते चरुं निर्वपेत् शत-कृष्णलमायुष्कामः' इति पठ्यते । तत्र कृष्णलेषु अवघातो न कर्तव्योऽसंभवात् । 'घृते श्रपयति' इति विधानात् पाकस्तु कर्तव्यः । १०।१।१ वर्णकं २.

* **शतकृष्णलचरौ** अभिघारणस्य लोपः ( बाधः ) । **भा** १०।२।२।३-१२, * शतकृष्णलचरौ पाकस्य अनुष्ठानम् । १०।२।१।१-२, * शतकृष्णलचरौ प्राजापत्ये औषधस्य विध्यन्तः । ८।१।१८।३५-३९.

🕮 **शतपत्रपत्रभेदन्यायः** । यथा- सूच्या शतपत्र-पत्रभेदने कालयौगपद्यप्रतीतेर्भ्रमः, तथाहि- प्रथमक्षणे सूचीक्रियया तस्याः पत्रेण संयोगः, द्वितीये पत्रावयवयोः, तृतीये तयोर्विभागः, तुरीये आरम्भसंयोग-नाशः, पञ्चमे पत्रनाशः, इत्येवं शतपत्रभेदने बहुक्षणविलम्बस्य युक्तिसिद्धत्वात् । तथा दीर्घशष्कुल्यादिभक्षणादौ रसनादिज्ञानानां यौगपद्यप्रतीतेर्भ्रम इति । एवं क्रमेण जायमानायां क्रियायां यौगपद्यभ्रमो यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरिति । **साहस्री.** ४९०.

* '**शताग्निष्टोमं** भवति' इत्युक्ते द्वादशाहिकानामह्नां उक्थ्यावलोपः क्रियते । भा. ८।३।६।१२ । अग्निष्टोमशब्दस्य क्रत्वन्तरे कस्मिंश्चिन्निवेशो नास्ति । अयं हि केवलाग्निष्टोमान्ततां ब्रूते । न चोक्थ्यलोप-मन्तरेण द्वादशाहिकानामह्ना अग्निष्टोमान्तता भवति इत्यवश्यकार्य उक्थ्यलोपः । ८।३।६।२० । अशास्त्र-लक्षणानि चोक्थ्यस्तोत्राणि शताग्निष्टोमे । तानि शास्त्र-लक्षणया अग्निष्टोमान्ततया बाध्यन्ते । ८।३।६।२१. * **शताग्निष्टोमे** ज्योतिष्टोमाग्निष्टोमात् स्तोत्रोपचयः । ८।३।५।१०-११.

* **शताग्निष्टोमादिसंस्थागणेषु** द्वादशाहधर्माणा-मतिदेशः परंतु अग्निष्टोमसंस्थता । **भा.** ८।३।४।८-९.

* **शतातिरात्रः** संस्थागणः, येन स्तोत्रेणातिरात्रस्य समाप्तिर्भवति तेन प्रत्यहमनुष्ठीयमानेन समाप्यमानस्यातिरात्रयागस्य शतकृत्वोऽभ्यासेन जायमानो गणः । तत्र च द्वादशाहगतदशाहस्य विध्यन्तः संघत्वलिङ्गात् । दशाहस्य आवृत्तौ द्वौ अग्निष्टोमौ इति विंशतिसंख्याकेषु अग्निष्टोमेषु स्तोत्रवृद्ध्याऽतिरात्रत्वं संपादनीयम् । स्तोत्राणि तु तत्र ज्योतिष्टोमादेव ग्राह्याणि न द्वादशाहात् । वि. ८।३।५. * **शतातिरात्रे** ज्योतिष्टोमिकातिरात्रात् स्तोत्राणामुपचयः । **भा.** ८।३।५।१०-११, * शतातिरात्रे रात्रिपर्यायोपचयः ज्योतिष्टोमिकादतिरात्रात् । ८।३।५।१०-११, * शतातिरात्रे संस्थागणे द्वादशाहिकानां अभ्यासः, न तु अतिरात्राणामेव । ८।३।४।८-९.

* **शतृप्रत्ययः** क्रियान्तरलक्षणभूतकर्तृवाची । अत एव 'अभिचरन् यजेत' इत्यनेन यागस्याभिचारार्थता सिध्यति । **सु.** पृ. १०९३. * **शतृप्रत्ययेन** णमुलादिवत् निमित्तत्वाभिधानम् । **भाट्ट.** ४।१।३.



* '**शतोक्थ्यं** भवति' । अत्र शतोक्थ्यं नाम कर्मान्तरम् । तत्र च न केवलं उक्थ्यस्य प्रसिद्धस्य शतवारं आवृत्तिः, द्वादशाहात् तु तत्र विध्यन्तो ग्राह्यः । **भा.** ८।३।४।८-९. * 'शतोक्थ्यं भवति' इत्यत्र द्वादशाहिको दशरात्रः दशकृत्वः प्रवर्तते । तस्मिंश्च दशरात्रे अभितो द्वौ अग्निष्टोमौ । तत्र शतोक्थ्ये प्रतिदशकं द्वौ द्वौ अग्निष्टोमौ उक्थ्यसंस्थया वर्धयितव्यौ । **शा.** ८।३।५ । **सोम**-- दशरात्रे अभितो द्वावग्निष्टोमौ मध्ये अष्टौ उक्थ्याः । केषांचित् सप्त उक्थ्याः । तृतीयः षोडशी । तत्र प्रतिदशकं द्वौ द्वौ अग्निष्टोमौ । तथा च विंशतिरग्निष्टोमाः । ते उक्थ्य-संस्थया वर्धयितव्याः । अग्निष्टोमस्तोत्ररूपयज्ञायज्ञीयान-न्तरं उक्थ्याख्यस्तोत्रत्रययुक्ताः कार्या इति यावत् । सप्तोक्थ्याः एकः षोडशी इति पक्षे च षोडशिनः उक्थ्य-संस्थोपचये कर्तव्येऽपि द्वादशाहस्थस्यैव षोडशिस्तोत्र-रहितस्य प्रवृत्तिः । न तु ज्योतिष्टोमिकस्य । * **शतोक्थ्यः** संस्थागणः । दशरात्रः दशकृत्वोऽभ्यस्यमानः प्रत्यहं उक्थ्यस्तोत्रैः समाप्यमानः शतोक्थ्यः । तत्र द्वादशाह-गतदशाहस्य विध्यन्तः संघत्वलिङ्गात् । दशाहे चावृत्तौ अग्निष्टोमौ, इति विंशतिसंख्याकाग्निष्टोमेषु स्तोत्रविवृद्ध्या उक्थ्यत्वं संपादनीयम् । स्तोत्राणि तु तत्र ज्योतिष्टोमादेव ग्राह्याणि, न द्वादशाहात् । वि. ८।३।४-५. * **शतोक्थ्ये** अग्निष्टोमशस्त्रात् परस्तात् उक्थ्यस्तोत्र विवृद्धिः कर्तव्या, सा साक्षात् एकाहाज्ज्योतिष्टोमादेव ग्राह्या न तु परंपरया द्वादशाहात् । **भा.** ८।३।५। १०-१२.

* **शतोक्थ्यादौ** ज्योतिष्टोमिकोक्थ्यादिस्तोत्राणामतिदेशः । ८।३।५।१०-११. **मीको.** पृ. २२५ 'अतिदेशः शतोक्थ्यादौ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शतोक्थ्यादिसंस्थागणेषु** द्वादशाहिकधर्माणामतिदेशः । ८।३।४।८-९. **मीको.** पृ. २२३ 'अतिदेशः शतोक्थ्यादिसंस्थागणेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शत्रुनाशकामः** 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' । भा. ३।२।७।२० पृ. ७७१.

* शब्दः अपि प्रमाणम्, न पञ्चैव प्रमाणानि । येन येन हि प्रमीयते तत्तत्प्रमाणम्, शब्देनापि प्रमीयते । भा. १।१।५।५ ( वृत्तिकारग्रन्थे ) पृ. ५९. * शब्दः अ-वर्णात्मकः ( न वर्णात्मकः ) अभ्युपेयः । तस्य चार्थतादात्म्यमविरुद्धम् । तेन संश्लेषलक्षणः संबन्धः अभ्युपगम्यताम् ( इति वैयाकरणाः ) । **ऋजु.** पृ. ११०. * शब्दः आकृतिप्रत्ययस्य निमित्तम्, आकृतिप्रत्ययो व्यक्तिप्रत्ययस्येति । ( तस्मात् ) शब्दः आकृतिवचनः इत्येतज्ज्यायः । **भा.** १।३।९।३३ पृ. ३१७। 'गौः' 'अश्वः' इत्येवमादयः शब्दाः आकृतेरभिधायका इति सिद्धम् । १।३।९।३५, * शब्दः एकार्थ एव । योऽस्य प्रथममुच्चरितस्य अर्थः, शतकृत्वोऽपि उच्चरितस्य स एवार्थो भविष्यति नान्यः । २।३।१४। २८. * शब्दः एव देवतारूपो ध्यातव्यः । **संकर्ष.** ४।३।७. * शब्दः केवलगुणवचनः सन् द्रव्यं अभिधातुं नहि शक्नोति । **भा.** ३।१।६।१२ पृ. ६८६, * शब्दश्च बलवान्, न वाक्यम् । शब्दात् पत्नीसंयाजानां विधानम्, वाक्येन जाघन्याः । इति पूर्वपक्षे । ३।३।१०।२०, * शब्दश्च साक्षात् फलमाहेति वक्ष्यामः । ६।३।२।९. * शब्दः जात्यादिविशिष्टं द्रव्यमभिदधन् न विशेषणमनभिधाय विशिष्टे वर्तते । **वा.** ३।१।७।१४ पृ. ७१४. * शब्दः तावत् अदृष्टया शक्त्या अर्थमभिधत्ते स एव न्याय्यः । **टुप्.** १०। ३।१४।५६. * शब्दः । 'त्रिगुणः, पौद्गलो वाऽथमाकाशस्याथवा गुणः । वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः । ३१९ ॥ पदवाक्यात्मकः स्फोटः ।३२०॥ **श्लोवा.** १।१।६. ( **रत्नाकरः**— सत्त्वरजस्तमःस्वभावः सांख्यानाम्, आर्हतानां पुद्गलारब्धः, काणादानामाकाशगुणो नादात्मा, शिक्षाकारस्य वायुरूपोऽर्थवाचकः, स्फोटश्च द्विविधो वैयाकरणाभिमतः ) । * शब्दः त्रैकाल्यवस्तुविषयः । **कणिका.** पृ. ३७५. * शब्दः द्रव्यं इति **मीमांसकाः** । 'नास्य सामद्रव्येण सह संबन्धो वेदितव्यः' । **भा.** ३।३।१।४. * शब्दो द्रव्यं इति **मीमांसकाः** । ननु बाह्येन्द्रियग्राह्यतया शब्दे गुणत्वमिति चेत् । न । वायौ रूप-

त्वादिसामान्ये च व्यभिचारात् । प्रत्यक्षद्रव्यगुणत्वाभावविशिष्टप्रत्यक्षेण गुणत्वाभावानुमानाच्च । तत्रापि कर्मवेगवत्त्वेन द्रव्यत्वानुमानम् । **मणि.** पृ. २० . * शब्दो द्रव्यम् । द्रव्येषु पृष्ठशब्दः स्यात्, ऋग्द्रव्येषु ऋचां वाचकः । **भा.** ७।३।१४।३६ . * शब्दः ( प्रमाणं ) द्विविधः लौकिकः वैदिकश्चेति । वैदिकोऽपि द्विविधः उपदेशातिदेशभेदात् । **बाल.** पृ. ८ . * शब्दो द्विविधः वर्णो ध्वनिश्च । द्वयोरनुगतं शब्दत्वम् । वर्णत्वं ध्वनित्वं च तदवान्तरसामान्ये । वर्णविशेषा गकारपकारादयः, ध्वनिविशेषाः शङ्खघोषादयः । ध्वन्यात्मकश्च शब्दो वायुगुणः । स एव च वर्णात्मकानां गकारादीनामभिव्यञ्जकः प्रभारूपमिव भावान्तराणाम् । स च वायौ कर्णविवरं प्राप्ते संयुक्तसमवायेन श्रोत्रं संस्कृत्य तेन गृह्यमाणः कदाचित् वर्णरहितः केवलो गृह्यते शङ्खघोषादिषु । कदाचित् वर्णानभिव्यञ्जन् तदुपश्लिष्टः प्रतीयते, प्रभारूपवत् । अस्ति हि वर्णोच्चारणे ध्वन्युपलब्धिः । दूरादिभिन्नेषु वर्णरहितध्वन्युपलम्भदर्शनात् । **रत्नाकरः** स्फोटवादे श्लो. ३८ . * शब्दः (धेनुशब्दः) धानवयोवचनः तदेकवाक्यगतेनैव द्रव्येण संबध्यते । यथा ‘ अवी द्वे धेनू ददाति ’ । ‘ तस्य पुरुषी धेनुर्दक्षिणा ’ । तथा ‘ अजर्षभस्याजिनमवस्तृणाति ’ इति । **भा.** १०।२।२९।६८, * शब्दः न वर्धते निरवयवत्वात् । नादस्यैषा वृद्धिर्न शब्दस्य । १।१।६।१७. * शब्दः न वायवीयसंयोगविभागाभिव्यङ्ग्यः, किन्तु तज्जन्य एवासौ प्रादेशिकश्च इति मतम्, अभिव्यङ्ग्य एव नित्यः शब्दः इति **मीमांसकमतम् । वैद्यनाथः**. १।१।६।१३. * शब्दो नहि क्रिया । किं तर्हि ? द्रव्यं गुणो वा स्यात् ( एतच्च अनास्थया अभिहितं इति शेयम् ) । **बृहती.** पृ. २४२, * ‘ शब्दो नित्यः ’ इति श्रद्धयैव प्रतिपत्तव्यम्, शब्दात्मकत्वाद्वेदस्य वेदनिन्दा मा भूदिति । तस्मात् अनिदंप्रथमतैवात्र शरणम्, न पुनः शब्दनित्यतापूर्वकं अनपेक्षत्वं शक्यते युक्तितो वक्तुम् । ( इति पूर्वपक्षी ) । पृ. २०७. * शब्दो नित्यः ध्वनिभिन्नत्वे सति श्रावणत्वात् शब्दत्ववत् । **मणि.** पृ. १७०, * शब्दो नित्यः व्यापकश्च । पृ. १६८.

* शब्दः निरवयवः । अवयवभेदानवगमात् निरवयवस्य च महत्त्वानुपपत्तिः । **भा.** १।१।६।१७. * शब्दः प्रमाणम् । **मणि.** पृ. १३.

* शब्दः प्रमाणम् । ‘ शाब्दं ( शास्त्रं — इति भाष्ये ) शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानं ’ इति भाष्यम् ( भा. पृ. ३७ ) । शब्दज्ञानजन्यं असंनिकृष्टार्थविषयकं यथार्थज्ञानं शाब्दप्रमा, तत्करणीभूतशब्दः प्रमाणमित्यर्थः । शब्दानुव्यवसाये अतिव्याप्तिवारणाय द्वितीयम् । अनुमित्यादौ अतिव्याप्तिवारणाय आद्यम् । एवं वाक्यश्रवणानन्तरं पदोपस्थितपदार्थानां संसर्गविषयिणी प्रमितिः प्रत्यक्षादिविलक्षणा जायते, तत्करणं शब्दः तज्ज्ञानं वा प्रमाणान्तरम् ।

जन्यपद— धीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वे सति पदविषयकत्वाव्यभिचारिजातिशून्यधीः शब्दप्रमा । तत्करणं शब्दः प्रमाणं इति **जानकीनाथः ।** प्रत्यक्षानुमितिस्मृतीनां वारणाय सत्यन्तम् । असंभववारणाय अनुभवत्वाव्यापकेति जातिविशेषणम् । उपमितिवारणाय शून्यान्तम् । घटादिवारणाय धीपदम् ।

स्वकरणकशाब्दधीप्रकारप्रकारकप्रमाजन्यः शब्दः प्रमाणशब्दः इति **मणिकृत् ।**

वाक्यं च एकार्थकपदसमूहः । एकार्थत्वं च अनेकमुख्यविशेष्यराहित्यम्, न तु एकाख्यातवत्त्वम् । तेन आख्यातभेदेऽपि यत्र एकाख्यातार्थे अन्याख्यातार्थः प्रकारः यथा ‘ पश्य मृगो धावति ’ इत्यादौ, तत्र एकवाक्यत्वम् ।

ननु इदं पदोपस्थितपदार्थानां संसर्गावगाहिमानसप्रत्यक्षमस्त्विति चेत्, न, तत्र मनःसंनिकर्षाभावात् । उपनीतभानेऽपि ज्ञातस्यैव विषयतयाऽज्ञातसंबन्धस्योपनीतभानासंभवाच्च ।

**किंच** शाब्दसामग्री चाक्षुषादिप्रतिबन्धिका । मानसे तु चाक्षुषादिसामग्री प्रतिबन्धिका इति सर्वसंमतम् । एवं च शाब्दत्वस्य मानसत्वव्याप्यताङ्गीकारे भिन्नविषयकचाक्षुषसामग्रीकाले शाब्दबोधो न स्यात् । तत्र चाक्षुषसामग्रीमानसयोः प्रतिबध्यप्रतिबन्धकभावेषु अनन्तेषु शाब्दान्यत्वप्रवेशे गौरवं स्यात् ।



**वैशेषिकास्तु** शब्दः अनुमानान्तर्गतः । ‘ घटमानय ’ इत्यादिपदानि तात्पर्यविषयभूतपदार्थनिरूपिततात्पर्यविषयसंसर्गप्रमापूर्वकाणि, परस्परान्वयतात्पर्यकत्वे सति योग्यत्वात्, पदान्तरवत् । आकाङ्क्षाऽऽसत्त्योस्तु तात्पर्यज्ञानार्थमेव अपेक्षा । यद्वा, पदैः उपस्थितेषु घटादिपदार्थेषु कर्मत्वं आधेयतासंसर्गेण घटवत्, तेन संसर्गेण घटे बाधाभावरूपयोग्यतावत्त्वात् । एते पदार्थाः मिथस्तात्पर्यविषयसंसर्गवन्तः आकाङ्क्षादिमत्पदस्मारितत्वात् । इदं वाक्यं संसृष्टार्थज्ञापकं आप्तवाक्यत्वात् । इत्याद्यनुमानमुद्रयैव शब्दस्य अर्थप्रत्यायकत्वसंभवेन पृथक्प्रामाण्यकल्पना अयुक्ता । **न च** एतादृशसंसर्गज्ञानात् कथं प्रवृत्तिः, इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानस्य प्रवृत्तिहेतुत्वात्, उक्तस्य तथाविधत्वाभावात् इति **वाच्यम् ।** इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानस्यैव प्रवृत्तिहेतुत्वात्, इष्टतावच्छेदकसंसर्गप्रकारकस्यापि वैशिष्ट्यावगाहिज्ञानत्वात्, ‘ अस्मिन् गृहे सुवर्णसर्पसंबन्धोऽस्ति ’ इति ज्ञानादपि प्रवृत्तिनिवृत्त्यनुभवाच्च, अर्थपक्षकानुमाने दोषाभावाच्च **इत्याहुः ।**

**अत्र केचित् ।** पदपक्षकानुमानस्य संसर्गप्रकारकत्वनियमात् रजतत्वप्रकारकज्ञानार्थं शब्दप्रामाण्याङ्गीकार आवश्यकः । नहि ‘ रजतवद्भूतलं ’ इति शब्दश्रवणोत्तरं संसर्गप्रकारकमेव ज्ञानं जायते इति नियमः । रजतादिप्रकारकानुभवस्यापि सत्त्वात् । अर्थपक्षकानुमाने च योग्यताया हेतुतया लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतासंशये अनुमानानुपपत्त्या प्रवृत्त्याद्यनुपपत्तिः । शाब्दबोधे तु संशयसाधारणयोग्यताज्ञानस्य हेतुत्वात् नानुपपत्तिः **इत्याहुः ।**

वस्तुतो वक्तुः प्रतारकत्वादिशङ्कायां शाब्दबोधवारणाय योग्यतानिश्चयस्यैव शाब्दबोधे हेतुता इति नोभयोः पक्षयोर्विशेषः ।

**पक्षधरास्तु** ‘ घटमानय ’ ‘ घटः कर्मत्वं आनयनं ’ इत्यादिस्वरूपयोग्यतदयोग्ययोः विशेषो न स्यात्, अनुमानस्य उभयत्र संभवात् । अतो व्याप्त्यादिज्ञानसापेक्षत्वतदनपेक्षत्वकृतबोधविलम्बाविलम्बाभ्यां विभक्त्यादिसमभिव्याहृतशब्दस्य मानान्तरत्वम् ।

किंच एकपदार्थप्रकारकापरपदार्थविशेष्यकभानं शब्दादेव, नानुमानात् । ‘ अयं पदार्थः अपरपदार्थवान् ’ इत्यनुमानेऽपि विपरीतक्रियाकर्मभावमादाय अर्थान्तरत्वापत्तेः । ‘ तात्पर्यविषयसंसर्गवान् ’ इत्यनुमाने तु संसर्गस्य प्रकारतापत्तिः ।

न च तादृशज्ञानस्य मानसत्वम्, शब्दातिरिक्तस्य मनःसहकारिणः अभावात् ।

किंच ‘ ओदनं पचति ’ ‘ ओदनः पच्यते ’ इत्यत्र पाकौदनयोः विशेष्यत्वनियमः शब्दप्रामाण्यं विना अनुपपन्नः । तस्मात् शब्दः **प्रमाणमित्याहुः ।**

एवं ‘ शाब्दयामि ’ इत्यनुभवोऽपि संगच्छते ।

**न च** अनुमितिप्रमातः शाब्दप्रमाया भेदे यत्र एकस्मिन् विषये अनुमितिसामग्री शाब्दसामग्री च, तत्रानुमितिवारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवं इति **वाच्यम् ।** फलमुखत्वेन अदोषत्वात् ।

किंच शाब्दप्रमाया अनुमितित्वे सिद्धिसत्त्वे शाब्दबोधो न स्यात् । शाब्दान्यानुमितित्वस्य सिद्धिप्रतिबध्यतावच्छेदकत्वकल्पने गौरवम् ।

किंच अनुमितिशाब्दसामग्रीसत्त्वे सिद्ध्यभावदशायां अनुमितिकारणीभूतस्य सिद्ध्यभावस्य सत्त्वेन तत्र शाब्दानुमित्युभयापत्तिः । तद्वारणाय शाब्दान्यानुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वं वाच्यम् । तत्र शाब्दान्यत्वनिवेशे गौरवं इति दिक् ।

तत् सिद्धं शब्दस्य विजातीयप्रमितिजनकतया प्रामाण्यम् । **मणि.** पृ. ६२-६५.

* शब्दः प्रमाणम् । ‘ शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम् । ’ ( **भाष्यं** १।१।५।५ पृ. ३७) । शास्त्रशब्देनात्र पङ्कजादिपदवत् योगरूढ्या धर्माधर्मोपदेशीनि चतुर्दश अष्टादश वा विद्यास्थानानि उच्यन्ते । चोदनात्मकशब्दविज्ञानात् प्रमाणान्तरागम्यधर्माधर्मविषयकज्ञानजनकं शास्त्रम् । अतश्च प्रकृतलक्षणस्य न वेदानुपयोगित्वम्, न वा लौकिकवाक्येषु अतिव्यापकत्वं इति विशेयम् । **वैद्यनाथः**. पृ. ३७.

**बृहती** — 'शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम्' ( भाष्यं )। किमिदं शब्दविज्ञानात् इति ? किं शब्दात् विज्ञानं शब्दविज्ञानम्, शब्दे एव वा विज्ञानं शब्दविज्ञानम् ? यदि तावत् शब्दे विज्ञानम्, शब्दालम्बनमित्यर्थः, तदयुक्तम्। न तस्मात् शासनमवगम्यते। शासनाद्धि शास्त्रम्। अथ शब्दात् यत् अर्थे विज्ञानमुत्पद्यते तत् शब्दविज्ञानम्, तत्र विशेषावगतौ कारणं वक्तव्यम्। तदुक्तं च शास्त्रमिति। शास्त्रं हि शासनात्। तच्च अर्थविषये एव विज्ञाने उपपद्यते, न शब्दविषये। द्वितीयेऽपि पक्षे तन्निमित्ततया उपपत्तेः सिद्धं शास्त्रलक्षणम्।

ननु च शब्दाभासमपि दृष्टं 'एष वन्ध्यासुतो याति' इत्येवमादि। तदपि शब्दादेवावगम्यते। नहि घ्राणादितुल्यं किंचित् कारणान्तरमत्रोपलभामहे। परिहृतमेतत् 'तच्चेत् प्रत्याययितात्' इति ( भाष्येण पृ. १५।१ ) लक्षणाभिधानेन च अयमेव व्यभिचारो निरस्तः। पृ. ८१–८२.

* शब्दः यत् वस्तुतः प्रमाणान्तरप्रतीतं तदाह न तु प्रमाणान्तरप्रतीतमेवाह। यस्मात् स्वार्थे एव स्वाभाविकी शब्दस्य शक्तिः। तेन अनपेक्षार्थमात्रप्रत्यायकत्वात् असत्यपि प्रमाणान्तरे शब्दः एव कार्येऽर्थे प्रमाणम्। **ऋजु.** पृ. ३४. * शब्दः यदि प्रत्यायकः, प्रथमश्रुतः किं न प्रत्याययति। उच्यते। यावत्कृत्वः श्रुतेन इयं संज्ञा, अयं संज्ञी इत्यवधारितं भवति, तावत्कृत्वः श्रुतादर्थावगम इति। **भा.** १।१।५।५ पृ. ४४, * शब्दः वायुजन्यः। शिक्षाकारा आहुः— वायुरापद्यते शब्दतामिति। नैतदेवम्। १।१।६।२२. * शब्दः। 'संयोगात् विभागात् शब्दाच्च शब्दनिष्पत्तिः' इति वैशेषिकसूत्रम्। ( वै. सू. २।२।३१ ) अत्र चेयं तेषां प्रक्रिया— आद्यः शब्दः संयोगादुत्पद्यते, यथा भेरीदण्डसंयोगानुगृहीतात् भेरीगगनसंयोगात् आकाशे शब्दः उपजायते। स उपजातः शब्दान्तरमारभते, सोऽप्यपरं इति वीचीनिचयसंचरणक्रमेण कर्णशष्कुलीमध्याकाशदेशे धर्माधर्मोपगृहीते श्रोत्रभावमापन्ने समुपजातः समवायलक्षणेन संनिकर्षेण गृह्यते। एवं विभागादाद्यः शब्द उपजायते, यथा वंशदलविभागानुगृहीतात् वंशदलाकाशविभागात् आकाशे शब्द उपजायते, सोऽप्यपरमारभते, सोऽप्यपरं इति पूर्ववद्योज्यम्। अत्र चाद्यः शब्दः कार्यविरोधी, अन्त्यः कारणविरोधी, मध्ये भवास्तु कार्यकारणोभयविरोधिनः इति ज्ञेयम्। **ऋजु.** पृ. २२१. * शब्दः। सत्यपि एकविषयानेकशब्दत्वे अर्थसाधनत्वात् साधुत्वेन अवधार्यन्ते ( हस्तकरपाण्यादिशब्दवत् )। **सु.** पृ. २६०. * शब्दः। साधु– असाधुशब्दविषये '**यदा** तु किंचिद्ग्रन्थोपनिबद्धप्रकृति–प्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावात् अन्वाख्यान–अन्वाख्येय– अन्वाख्यातविधि–प्रयोग–अन्वाख्यातप्रतिषेध–वर्जनषट्कस्यापि अवगम्यमानवेदविधिमूलत्वात् अनादित्वे सति सर्वेषां वेद–वेदि–यूप–आहवनीय–अध्वर्यु–गोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदा अनवगतपूर्वापरविभागसंबन्धे अत्यन्तादृष्टार्थत्वमेव, केवलं शास्त्रप्रत्ययाधीनम्, **तदा** सर्वकालव्याक्रियमाण–विद्यमानशब्दनियमविधेः न किंचिदनुपपन्नम्। **वा.** १।३।८।२७ पृ. २७९। **सुधा**– अन्वाख्यानं प्रकृत्यादिविभागेन आख्यानम्। अन्वाख्येयाः साधुशब्दाः अन्वाख्यातानां विधिः 'व्याकृता वागुद्यते' इत्यादिः। प्रयोगो व्यवहारकालः। इति चतुष्टयं साधुशब्दविषयम्। 'ब्राह्मणेन न म्लेच्छितवै' इति अनन्वाख्यातानां प्रतिषेधः, व्यवहारकाले वर्जनं च इति असाधुविषयं द्वयम्। इतिषट्कस्यापि अनादित्वे सति सर्वेषां अन्वाख्यानादीनां सर्वदा अनवगतपूर्वापरविभागसंबन्धे सति यदा अत्यन्तादृष्टार्थमात्रं एषां शास्त्रीयप्रत्ययाधीनम्, न स्वरूपम्, तदा सर्वकालव्याक्रियमाणत्वेन विद्यमानस्य शब्दस्य यो नियमविधिः तस्य ( किमु वक्तव्यम् )। पृ. ३११–१२. * शब्दः सापेक्षवृत्तिः संबन्धिशब्दात् बलीयान्। **शा.** ९।२।५ वर्णकं १. * शब्दः स्फोटरूपो नित्यः इति **वैयाकरणाः**। वर्णरूप एव शब्दः स चानित्यः इति **नैयायिकाः**। वर्णरूप एव शब्दः स च नित्यः इति **मीमांसकाः**। **वि.** १।१।६. * अनेकस्यापि एकः शब्दः भवति वाचकः। तद्यथा, माता इति मातरमपि



वदति, मातारमपि। माता च परमं दैवतम्, समा च पुत्रेषु इत्येतैरुपनिबध्यमानो जननीवचनोऽवगम्यते। माता समः, क्षिप्रश्च इत्येभिरपि अनुबध्यमानः धान्यस्य मातुर्वाचकः। **भा.** १०।१।७।४, * अप्रथमान्तः शब्दः न कथंचिदपि अव्यतिरिक्ते प्रातिपदिकार्थे भवितुमर्हति। ३।१।६।१२ पृ. ६८७, * अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति यावद्वेगमभिप्रतिष्ठन्ते। ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु। १।१।६।१३ पृ. ७९–८०, * अल्पशोऽपि प्रयुज्यमानः ( शब्दः ) नासति सामर्थ्ये प्रत्याययेत्। अतः सोऽपि शब्दात् प्रतीयते इति मुख्य एव। ३।२।१।१ पृ. ७४८. * एकश्चायं शब्दः एकविषयश्च, आकाशविषयत्वात्। ग्राहकं चास्य आकाशमेव ( श्रोत्रम् )। **बृहती.** पृ. २००. * एकः शब्दः उपदेशकः प्रयोगस्य, दर्शपूर्णमासयोः सांमदादीनां च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तेन च फलसंबन्धः कृतः ( अतः साङ्गस्यैव प्रधानस्य फलसंबन्धः स्वीक्रियते )। **भा.** ११।१।३।१४. * 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः। तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना॥' ये एव लौकिकाः शब्दास्ते एव वैदिकाः ते एवामीषामर्था इति स्थितत्वात् लोकप्रसिद्धिप्रतीक्षे वेदे यत्र एकदेशेऽपि जातिनिमित्तता लभ्यते न तत्र पुनः निमित्तान्तरशक्तिकल्पना संभवति। **वा.** १।४।७।१०. * गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति **भगवानुपवर्षः** ( पृ. ४५ )। तस्मात् गौरिति गकारादिविसर्जनीयान्तं पदं अक्षराण्येव। तस्मादक्षराण्येव पदम् ( न स्फोटः )। **भा.** १।१।५।५ पृ. ४८, * न चैकः शब्दोऽनेकार्थो युक्तः। १२।१।१।८, * न च सकृदुच्चरितः शब्दः शक्नोत्यर्थद्वयं विधातुम्। १२।१।१।८, * न हि अनभिधाय मुख्यम्, गौणमभिवदति शब्दः। ३।२।१।१ पृ. ७५०, * नहि शब्दः शब्दे समनैति, पृथगेवावतिष्ठत। ७।२।१।२. * यस्तु कथमपि अनिगष्ट एव शब्दः तेषामपि ( म्लेच्छानामपि ) प्रयोगविषयमापन्नः तस्य चार्यवदेव अनादिवृद्धव्यवहारपरंपरया अर्थं जानन्ति। तत् किं तेषां निराकर्तुं शक्यते ? ( न शक्यते )। **वा.** १।३।५।१० पृ. २२८. * यः शब्दः श्रौतेनार्थेन वाक्यार्थे नोपयुज्यते स लाक्षणिकार्थपर्यन्तं तात्पर्यवृत्त्या याति। **सु.** पृ. १३८५. * 'यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते। शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते॥' **वा.** १।३।४।८ पृ. २१६. * यदा शब्दः केवलगुणवचनतायां प्रवर्तमानः नान्येन संबन्धं लभते, तदा अनुपदेशकत्वादानर्थक्यं मा भूत् इति द्रव्यपरतां आपद्यते। **भा.** ३।१।६।१२ पृ. ६८६. * 'वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया।' **श्लोवा.** अनुमानं ११०. * विस्पष्टे हि परशब्दसामानाधिकरण्ये सति, अनन्यथासंभवे च जघन्यवृत्तिः शब्दो भवति। **वा.** २।२।२।१७ पृ ५१२. * व्युत्पन्नो हि शब्द प्रत्यायकः। ( व्युत्पन्नः गृहीतशक्तिकः )। **वि.** ३।१।१. * संमूर्च्छितानेकार्थसंनिधाने हि शब्दः प्रयुक्तः कियन्त्यप्यर्थजातं प्रत्ययं करोति। तेन च अविविक्ताभिधेयगम्यमानांशेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः। **वा.** १।३।९।३० पृ. २९०, * सर्वो हि शब्दः अर्थप्रत्ययनार्थं प्रयुज्यते। अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते। १।३।४।९ पृ. २१९. * **शब्दाः** एकदेशेऽपि जातिनिमित्ता दृष्टाः सर्वत्र जातिनिमित्ता भवितुं अर्हन्ति। **भा.** १।४।७।१०, * शब्दाः केचित् कर्मशब्दाः ( सन्तो ) न भावार्थाः यथा श्येनैकत्रिकादयः। केचित् भावार्थाः ( सन्तो ) न कर्मशब्दाः, यथा – भवनं भावो भूतिरिति। २।१।१।१. * शब्दाः तावत् द्विप्रकाराः। केचित् वाच्यं स्वप्रधानमाहुः, नोपसर्जनत्वेन। यथा वृक्षौ इति। वृक्षशब्दः स्वार्थप्रधान उच्चार्यते। केचित् वाच्यमर्थं अन्यत्रोपसर्जनीभूतं ब्रुवते, न स्वप्रधानभूतम्। यथा अत्रैव वृक्षौ इति द्विवचनं प्रातिपदिकोपसर्जन आत्मानं ब्रवीति। न द्विवचनार्थमेव जहाति। **टुप्.** १०।३।१४।५६ * शब्दाः नाम– आख्यात–उपसर्ग–निपाता इति चतुर्विधाः। पुनश्च जाति–गुण–क्रिया–

द्रव्य- यदृच्छा-सर्वनामानि इति विशेषः । वा. १।३।९।३० पृ. २८९ । तत्र निपातोपसर्गाणां स्वतन्त्रार्थाभिधायकत्वाभावः । गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानां अन्तर्भावार्थम् । १।३।९।३३ पृ. ३०५. * शब्दाः ये एव लौकिकाः ते एव वैदिकाः उतान्ये । यदा ते एव, तदाऽपि किं ते एव तेषामर्था ये लोके, उतान्ये इति संशये ते एव शब्दाः अर्थाश्चेति सिद्धान्तः । भा. १।३।९।३० (उत्सूत्रमिदमधिकरणम्) . * शब्दाः ये तु जातिगुणवचनाः भूत्वा द्रव्यं प्रत्याययन्ति तेषां अभिधेयलक्ष्यमाणवस्तुनोर्विवेकाभावात् प्रतीतौ अपि अविवेकः स्थित एव । स कथंचित् अन्वयव्यतिरेकाभ्यां निपुणैः परीक्षकैरपनीयते इति । लोकस्य तु मुख्यबुद्धिरेव । न च परीक्षकाणां अनभिधेयत्वं वदतां लोकविरोधः । प्रतीतमात्रव्यवहारी हि लोकः अभिधानलक्षणाविवेकमकुर्वन् उदासीनावस्थः .सामान्यविशेषबाधादिसिद्धयर्थं परीक्षकैः विवेकं क्रियमाणं न नानुमन्यते । तस्मात् अविरोधः । वा. ३।१।६।१२ पृ. ६८३. * शब्दाः ये नैमित्तिकाः ते निमित्तमुपलभ्य प्रयुज्यन्ते यथा दण्डी छत्री इति । भा. ७।३।११।२९. * शब्दाः रूढाः यौगिकाः योगरूढाश्च । बर्हिरादिशब्दा रूढाः, प्रोक्षण्यादिशब्दा यौगिकाः, निर्मन्थ्यादिशब्दाः योगरूढाः । वि. १।४।१०, * शब्दाः सर्वे श्रोत्रविषयाः । बृहती पृ. २०२. * गौः गावी गोणी गोपोतलिका, हस्तः करः पाणिः इत्यादयः शब्दाः । अर्थाय ह्येते उच्चार्यन्ते नादृष्टाय । न ह्येषामुच्चारणे शास्त्रमस्ति । ( पूर्वपक्षे इदम् ) । भा. १।३।८।२४, * सर्वे हि आकृतिवचनाः शब्दाः । ६।३।११।२७, * 'शब्दं कुरु, मा कार्षीः' ( इत्यस्य ) शब्दप्रयोगं कुरु, शब्दप्रयोगं मा कार्षीः इत्यर्थो भविष्यति ( यतः शब्दो नित्यः ) । १।१।६।१४, * अकृतकार्यसंबन्धं समाचक्षाणं शब्दं उपलभ्य भवति संबन्धे तस्मिन् संप्रत्ययः । ३।३।६।१३, * महता प्रयत्नेन शब्दमुच्चरन्ति- वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दान् अभिव्यनक्ति । १।३।८।२५.

* **शब्देन** आकृतिर्बोध्यते । क्रिया लक्षणया । टुप्. ७।३।११।२९. * शब्देन एकेन दर्शपूर्णमासयोः प्रधानानि फलं प्रति उपदिष्टानि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । अतस्तेषां फले संभूयकारित्वम् । भा. ११।१।१०।५६. * शब्देन कार्यापत्तिः यथा— 'परिधौ पशुं नियुञ्जीत' इति । अत्र शब्देनैव यूपकार्यापत्तिः परिधौ । बाल. पृ. १३०. * '...... शब्देन या मतिः । तस्याः स्वतः प्रमाणत्वं, न चेत् स्याद् दोषदर्शनम् ॥' श्लोवा. शब्दपरिच्छेदः ५३. * शब्देन शब्दाभासो बाध्यते । बाल. पृ. १३१. * नहि येन ( शब्देन ) विना अर्थात्मलाभो नास्ति तत्तदभिधातव्यम् । किं तर्हि ? यावता विना विशिष्टबुद्धिर्नोत्पद्यते गोभिश्चाप्रतीताभिः तद्वति बुद्धिर्नोत्पद्यते न संबन्धेनापि । वा. ३।१।६।१२ पृ. ६७६, * 'सर्वत्रेन्द्रियलिङ्गाभ्यां भेदः स्तोकोऽवगम्यते । शब्देन तु सुसूक्ष्मोऽपि वस्तुभागो विभज्यते ॥ पदात् प्रभृति चैवं या प्रज्ञा ज्ञातुर्विजृम्भते ! पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥' १।३।९।३० पृ. २९४. * **शब्दाभ्यां** द्वाभ्यां एकोऽर्थ उच्यते । आग्नेयवत् । आवाहने 'अग्निमग्न आवह' इति य एव संबोध्यते, स एवोच्यते 'आत्मानमावह' इति । यथा वा 'एष दण्डः, दण्डेन प्रहर' इति द्वाभ्यां एक एव दण्ड उच्यते । एवमिहापि । भा. १०।७।९।२५. * **शब्दैः** । न च आहिताग्निसहस्रेऽपि एकः त्वदभिमतसाधुशब्दैरेव व्यवहरमाणो दृश्यते । वा. १।३।८।२४ पृ. २५९. * **शब्दात्** अपि निर्विकल्पकप्रत्ययोत्पत्तिः अङ्गीक्रियते ( इति पक्षान्तरम् ) । शब्दात् सविकल्पकप्रत्ययोत्पत्तिः भवति इति बहवः । कौ. २।२।२।२ पृ. १५१. * शब्दात् वर्णात्मकात् अर्थप्रतिपत्तिप्रक्रिया । श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः । ते च ( वर्णाः ) श्रोत्रग्रहणाः । यद्येवं अर्थप्रत्ययो नोपपद्यते । कथम् ? एकैकाक्षरविज्ञाने अर्थो नोपलभ्यते । न च अक्षरव्यतिरिक्तः अन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकारो ( गौः इत्यत्र ) न तदा औकारविसर्जनीयौ । यदा औकारविसर्जनीयौ



न तदा गकारः । अतो गकारादिव्यतिरिक्तः अन्यो गोशब्दः अस्ति ( स्फोटाख्यः ) यतः अर्थप्रतिपत्तिः स्यात् । अन्तर्हिते शब्दे स्मरणात् अर्थप्रतिपत्तिश्चेन्न, स्मृतेरपि क्षणिकत्वात् अक्षरैस्तुल्यता । ( अत्रोच्यते ) पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इत्यदोषः । भा. १।१।५।५ पृ. ४५–४६. * सर्वत्रैव तावत् शब्दात् उच्चरितात् अनेकोऽर्थो गम्यते । न च तावता सर्व एवाभिधेयो भवति । तद्भावभावित्वान्यथानुपपत्त्यधीनत्वाद् वाचकशक्तिकल्पनायाः । वा. ३।४।४।१३ पृ. ९१३. * **शब्दस्य** अनेकार्थत्वमन्यायः । 'अन्यायश्चानेकार्थत्वम्' इति उक्तम् । भा. ३।२।१।१ पृ. ७४८. * शब्दस्यापि गकारादिभेदः पारमार्थिको नैव कस्यचिदनिष्टः । वा. २।२।१।१ पृ. ४६५. * शब्दस्य अपौरुषेयस्य यद्यपि अचेतनत्वात् आज्ञादिव्यापारो न संभवति, तथापि योऽस्य व्यापारः संभवति, सैव प्रवर्तना । अंशत्रयविशिष्टभावनाप्रतिपादनमेवास्य व्यापारः । तत्र भाव्यांशे पुरुषार्थ उपनीयते । यागश्च साधनम् । शा. ६।१।१. * शब्दस्य अप्रयोगो न अर्थाभावे हेतुः । सत्यप्यर्थे तदवसराभावात् न प्रयुज्यते शब्दः । भा. ५।३।११।३०. * शब्दस्य अभिधातृत्वादन्यादृशं बोधकत्वं न च भवति । वा. ३।४।४।१३ पृ. ९३२, * शब्दस्यार्थः । यस्माद्धि यः प्रतीयते स तस्यार्थः । बृहती. पृ १०३. * शब्दस्यार्थेन संबन्धः न पुरुषकृतः । भा. १।१।८।२७. * शब्दस्य अर्थेन संबन्धः न प्रमाणान्तरापेक्षः । कस्तर्हि ? औत्पत्तिकः औत्पत्तिकमेवाभिधानम् । लोकेऽपि । बृहती. पृ. १०२ * शब्दस्य अर्थान्तरभूता ध्वनयः द्रुतादिबुद्धिं अपारमार्थिकीं कुर्वन्ति । वा. २।२।१।१ पृ. ४६५ * शब्दस्य अर्थावगतिहेतुत्वं अन्वयव्यतिरेकसमधिगम्यम् । बृहती. पृ. २४० । आकृत्यन्वये व्यक्त्यन्तरेऽपि शब्दप्रयोगात् तदाकृतिव्यतिरेके न अन्याकृतिके अप्रयोगात् आकृतिवचनः शब्दः इत्यवगम्यते । अतः अन्वयव्यतिरेकसमधिगम्यं अर्थावगतिहेतुत्वं शब्दस्य । ऋजु. पृ. २४०. * शब्दस्य अर्थप्राप्ताः कर्मादयः ( कर्मकरणादि ) नाभिधेयभूताः । एकत्वादयस्तु नार्थात् प्राप्नुवन्ति तेन ते शब्दार्थभूताः । भा. ३।४।४।१३ पृ. ९२७. * शब्दस्य एकार्थस्य सकृदुच्चरितस्य अनेकार्थत्वायोगात् अनेकार्थतायां उच्चारणावृत्तिः स्यात् । सु. पृ. ८४९. * शब्दस्य कारणाभावेन कारणदोषाभावात् नास्त्यप्रामाण्यप्रसङ्गः । वि. १।१।६. * शब्दस्य कालान्तरावस्थायितया सिद्धं सदकारणत्वम् । बृहती. पृ. २३६. * शब्दस्य जातिवाचकता वा व्यक्तिवाचकता वेति विचारस्य फलम् । '**बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः । २५ ॥ प्रत्ययात् सहसा जाता श्रौतलाक्षणिकात्मकात् । न लोकः कारणाभावान्निर्धारयितुमिच्छति ।२६॥** (कारणाभावात् प्रयोजनाभावात् लोको निष्कर्षं न निर्धारयति । ) **बलाबलादिसिद्धयर्थं वाक्यज्ञास्तु विविञ्चते । कक्षान्तरितसामान्यविशेषेषु हि दुर्बलः ॥ २७ ॥ सामान्यवचनः शब्दो जायते लक्षणाबलात् ।**' (परं सामान्यं वस्तुत्वम् । द्रव्यत्व–पृथिवीत्व–प्राणित्व–गोत्व–पशुत्वादीनि अपरसामान्यानि । तत्र द्रव्यत्वं वस्तुत्वापेक्षया विशेषः, पृथिवीत्वाद्यपेक्षया च सामान्यम् । एवं पृथिवीत्वं द्रव्यत्वापेक्षया विशेषः घटत्वाद्यपेक्षया च सामान्यम् । एवमन्यत्र ज्ञेयम् । तत्र यस्य सामान्यस्य यः शब्दो वाचकः, स तद्विशेषे स्वाभिधेयसामान्यस्य विशेषे स्वाभिधेयसामान्यरूपकक्षान्तरिते लक्षणया वर्तमानो दुर्बलो भवति । वाच्यगम्यमानांशाऽविवेके तु नेदं बलाबलं सिध्येत् । ) '**तेनावश्यं विवेक्तव्यं शब्देन कियदुच्यते । २८ ॥ कियद्वा नित्यसंबन्धादभिधेयेन लक्ष्यते ।**' अतो विवेक्तव्यं किमभिधेयं किंच अभिधेयसंबन्धात् लक्ष्यते इति । '**तत्र प्रयोगबाहुल्यात् तत्प्रयोगेष्वसत्स्वपि ।२९ ॥ प्रयोगात् परसामान्ये सति चाप्यप्रयोगतः । सास्नाद्येकार्थसंबन्धिगोत्वमात्रस्य वाचकः । ३० ॥ गोशब्द इति विज्ञानमन्वयव्यतिरेकजम् ।**' ( तत्र विवेकोपायं अन्वयव्यतिरेकौ आह– तत्रेति द्वयेन । तत्र गोत्वे भूयः प्रयोगात्, तद्विशेषेषु शाबलेयादिषु असत्स्वपि बाहुलेयादिषु प्रयोगात्, गोत्वान्वये गोशब्दस्यान्वयात् परसामान्ये द्रव्यत्वादौ सत्यपि

गोत्वाभावे अश्वादौ अप्रयोगात् गोत्वव्यतिरेके गोशब्दस्य व्यतिरेकात् तदेव तस्य वाच्यमिति ) । **श्लोवा. संबन्धाक्षेपवादे** २५-३०. * शब्दस्य देशभेदाभावात्, श्रोत्रस्थ एव सर्वः शब्दो गृह्यते नाभिव्यञ्जकदेशस्थः । श्रोत्रस्य प्राप्यकारित्वात् । **ऋजु.** पृ. २३१. * शब्दस्य द्रव्यत्वोपपत्तेः वैदिकशब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावः । **रहस्य.** पृ. १५. * शब्दस्य धर्मोऽयं क्रमः । अर्थं प्रति शब्दो गुणभूतः । तस्मात् वाक्ये एव शब्दस्य योऽर्थः स ग्रहीतव्यः । क्रमस्तु शब्दधर्मत्वादुपेक्ष्यः । **टुप्.** १०।२।३१।७०. * शब्दस्य पुनःपुनः ज्ञाप्यमानता गम्यते, नोत्पद्यमानता । **बृहती.** पृ. २४३. * शब्दस्य प्रकृतगामित्वं न्याय्यम् । **भा.** १२।१।१।४. * शब्दस्य प्रवर्तकत्वं विज्ञानोत्पादकत्वमेव न तु औदासीन्यप्रच्यावकत्वम् । **सु.** पृ. ५७, * शब्दस्य मीमांसकमते द्रव्यत्वं वैयाकरणमते आकाशाश्रयत्वेन गुणत्वम् । पृ. १४४३. * शब्दस्य मुख्यस्य मुक्तसंशयस्य वर्णक्रममात्राग्रहणसंस्कारस्मृतिसंबन्धानुभवादि अपेक्षितं अर्थप्रत्यायने । **वा.** ३।२।१।१ पृ. ७४७. * शब्दस्य मुख्यार्थे साक्षात् व्यापारः । गौणलाक्षणिकयोस्तु अभिधेयसादृश्याविनाभावद्वारा । **सु.** पृ. २६५. * शब्दस्य मुख्यत्वगौणत्वयोः श्रोतृगतप्रसिद्धिभेदमूलं वक्तृगतं बह्वल्पप्रतियोगित्वं ( इति चेन्न इति पूर्वपक्षी ) । **वा.** ३।२।१।१ पृ. ७४८, * शब्दस्य मुख्यपरता उत गौणपरताऽपि इति युक्तो विचारः । तत्र मुख्यपरतैव युक्ता । **भा.** ३।२।१।१ पृ. ७४९. * शब्दस्य यत्र वाचकशक्तिः कल्प्यते स नाम अर्थोऽभिधीयते । **वा.** ३।४।४।१३ पृ. ९१३. * शब्दस्य वर्णात्मकस्य आकाशवत् व्यापकत्वेन द्रव्यत्वाङ्गीकारः । **मणि.** पृ. १७०. * शब्दस्य विभुत्वं शब्दाधिकरणे, अनवयवत्वं च स्फोटे प्रतिपादितम् । **रत्नाकरः** वनवादे ३१. * शब्दस्य वैदिकस्य मन्त्रव्यतिरिक्तस्य लिङ्गविनियोज्यत्वाभावः । **सु.** पृ. १२०९, * शब्दस्य साधुता श्रेयोरूपादृष्टसाधनत्वनिबन्धना, असाधुता च प्रत्यवायरूपादृष्टसाधनत्वनिबन्धना । पृ. २६२. * नाप्यनधिगतार्थबोधनं मुक्त्वा अन्यः शब्दस्य व्यापारोऽस्तीत्युक्तमेव । **वा.** १।२।१।१. * नहि एकस्य शब्दस्य अनेकार्थता सत्यां गतौ न्याय्या । **भा.** ८।३।६।२२, * नहि शब्दस्यार्थः समीपगतेन कृतप्रयोजनेन एकदेशे अवस्थापयितव्यो भवति । ५।३।१४।४०. * वयं तु सप्रत्यभिज्ञानात् प्रत्यक्षात् शब्दस्य एकतां प्रतिपद्यमानाः उत्पत्तिमनिच्छन्तः श्रोत्रसंस्कारं अभिव्यञ्जक-सामान्यानुमानप्रसक्त-सकलोपलम्भबाधेन नियतशब्दविषयं कल्पयामः । **ऋजु.** पृ. २१२. * सर्वस्यैव हि शब्दस्य स्वार्थातिलङ्घने विरोधः कारणम् । स च प्रतियोगिनि दृष्टे विरोधो विज्ञायते । **वा.** ३।३।१।२ पृ. ८०६. * **शब्दयोरेव** विशेषणविशेष्यत्वम् । आमिक्षापदेन तद्धितोक्तद्रव्यविशेषसमर्पणनिमित्तं विशेषणविशेष्यत्वं अतः अर्थभेदसमर्पणायोगात् भिन्नार्थत्वानुपपत्तेः नार्थयोः विशेषणविशेष्यत्वं किंतु शब्दयोरेव । **सु.** पृ. ८२५. * **शब्दानां** अर्थतन्त्रत्वम् । **वा.** २।१।१५।४७ पृ. ४५२. * शब्दानां एकमर्थमभिनिविशमानानां एकोऽनादिः अपरेऽपभ्रंशाः । हस्तः करः पाणिः इत्येवमादिषु तु अभियुक्तोपदेशादनादित्वम् । **भा.** १।३।८।२६, * शब्दानां कार्ये अर्थविधानम् । ७।२।१।२. * शब्दानां कूटस्थनित्यत्वेऽपि संबन्धज्ञानस्य शब्दप्रवृत्तौ निमित्तत्वात् संबन्धज्ञानस्य च कादाचित्कत्वात् नैमित्तिकत्वाविरोधः । प्रवाहनित्यत्वे अपि न नैमित्तिकत्वाविरोधः । **सु.** पृ. १२०१. * शब्दानां वाचकशक्तिः प्रतिनियतार्थविषया अर्थापत्त्या गम्यते । **वा.** १।३।९।३० पृ. २९७, * शब्दानां शक्तयः सर्वत्र कार्यदर्शनात् कल्प्यन्ते । १।२।४।३१-१ पृ. १४३, * शब्दानां सत्यपि फलानुमेये दृश्यमानार्थप्रत्यायनसामर्थ्ये, सत्यपि च अस्माकमपि अदृष्टशक्तिकल्पनागौरवतुल्यत्वे, अभिधेयमात्रप्रत्ययेन निवृत्तव्यापारे शब्दे अर्थप्रत्यये चाकृतार्थे सति कल्प्यमानत्वात् अर्थशक्तिः प्रमाणवती न शब्दशक्तिः । तेनादृष्टकल्पनातुल्यत्वेन पक्षयोस्तुल्यबलत्वम् । ३।१।६।१२ पृ. ६८४. * शब्दानां साधूनामेव अदृष्टसाधनत्वम्, अदृष्टसाधनत्वमेव वा साधुत्वं इत्युभयथाऽपि व्यवस्था वेदाधीना । **सु.** पृ. २६२. * शब्दानां साधुताऽसाधुते । ' यश्च प्रयत्ननिष्पत्तावपराधः कृतास्पदः । शब्दे स तदभिव्यङ्ग्ये प्रसजन् केन वार्यते ॥ अतश्चानपराधेन व्यज्यमानेषु साधुता । सापराधेष्वसाधुत्वं व्यवस्थैव च तत्कृता ॥ ' **वा.** १।३।८।२५ पृ. २७५. * शब्दानां साधुत्वं अर्थप्रत्यायनाङ्गत्वम्, तच्च वाचकवृत्त्या लक्षणावृत्त्या गौणीवृत्त्या चेति त्रिविधम् । **सु.** पृ. ३०६. * शब्दानां साधुत्वासाधुत्वविचारः । न तावत् शब्दत्वातिरिक्ता सर्वसाधुशब्दानुयायिनी असाधुभ्यो व्यावृत्ता विलक्षणा एकाकारप्रत्ययवेद्या साधुत्वजातिः असाधुत्वजातिर्वाऽसाधुशब्दानुगता साधुभ्यो व्यावृत्ता उपलभ्यते । न वा अन्योऽपि कश्चिद्धर्मः साध्वसाधुशब्दाभिधेयः संभवति । तथाहि, न तावत् शब्दव्यतिरिक्तस्य इन्द्रियलिङ्गादेः शब्दस्यापि वा वक्तृज्ञानविवक्षाविषयप्रत्यायकत्वं साधुत्वं कस्यचिदिष्टम् । न च शब्दस्य अर्थप्रत्यायकत्वं साधुत्वम्, गाव्यादिशब्देष्वपि आपत्तेः । न च शब्दस्य शक्यार्थप्रतिपादकत्वं साधुत्वम्, गङ्गायां घोषः, अग्निर्माणवकः इत्यादौ गङ्गाग्निशब्दयोः तीरमाणवकादिषु शक्त्यभावेऽपि तत्र साधुत्वप्रसिद्धेः । अर्थान्तरविषयशक्त्या अर्थान्तरविषय-साधुत्वाभ्युपगमे गोणीशब्दस्यापि आवपनविषयकशक्तिसद्भावात् सास्नादिमति साधुत्वापत्तिः, देवदत्तादिशब्दानां च संस्कृतेनार्थप्रतिपादनम् । न च शब्दस्य अर्थप्रत्यायकत्वं साधुत्वम्, गाव्यादिशब्देष्वपि आपत्तेः । न च शब्दस्य शक्त्या अर्थप्रतिपादकानां शक्त्यभावात् असाधुत्वापत्तिः । स्नुषादिशब्दानां पुत्रभार्यादिवाचितया पुत्राद्यनभिधाय तद्विशिष्टभार्याद्यनभिधानाशक्तेः पुत्रादावपि शक्तिसद्भावात् साधुत्वापत्तिः । अर्थविषयानादिप्रयोगत्वे तु साधुत्वलक्षणे गाव्यादिशब्दानामपि सास्नादिमदर्थविषयकप्रयोगावध्यस्मरणेन अनादित्वावगमात् साधुत्वमशक्यं निराकर्तुम् । स्वाभाविकार्थपरत्वमपि प्रतीतिप्रयोगाविशेषात् गवादिशब्दवत् गाव्यादिशब्देष्वपि तुल्यम् । तस्मात् साधुत्वं असाधुत्वं च न निरूपयितुं शक्यम् । इति पूर्वपक्षः । **सु.** पृ. २६३-२६४. * शब्दानां सामान्यवाचिता आकृत्यधिकरणसिद्धा । **वा.** १।४।१२।२३-१ पृ. ३५६. * शब्दानां स्वार्थे व्युत्पत्तिः वृद्धव्यवहारे एव । **ऋजु.** पृ. १६.



* द्विप्रकारो हि नाम **शब्दानां** संबन्धः, सामानाधिकरण्येन वैयधिकरण्येन वा । तत्र यदोभाभ्यां उभयार्थोपादानं तदा सामानाधिकरण्यं भवति । षष्ठ्यन्तद्रव्यपदोच्चारणे तु वैयधिकरण्येन संबन्धः । **वा.** ३।१।६।१२ पृ. ६८५. * सर्वेषामेव शब्दानां अर्थज्ञाने लौकिकः प्रयोगोऽभ्युपायः । **भा.** ६।१।१।१ पृ. १३४७. * **शब्दे** च कार्यस्यासंभवात् अर्थे कार्यं विज्ञायते । **वा.** १।२।४।३१ पृ. १४५. * शब्दे द्रुतत्वादिकस्य भ्रान्तिरित्थं " द्रुतादिकं अपि ध्वनिषु श्रोत्रं प्राप्यैव क्षिप्रमन्यतः प्रयातेषु तत्संयोगसंस्कारस्य श्रोत्रे अल्पकालमवस्थानात् शब्दोऽपि क्षण एव आविर्भूय तिरोभवन् द्रुत इति गृह्यते । तथा मध्यमो विलम्बित इति युक्तो व्यञ्जकधर्माणां द्रुतादीनां व्यङ्ग्ये शब्दे भ्रान्त्या समारोपः" । **रत्नाकरः** स्फोटवादे श्लो. ४०. * शब्दे प्रत्यभिज्ञाप्रमेयत्वान्नित्यताऽवस्थिता । **बृहती.** पृ. २५४. * शब्दे । भूतं निमित्तमालोच्य शब्दे प्रयुज्यमाने राजपुरुष इत्यत्र उपकारांशकृतं शेषत्वमेव विवक्षितं इति गम्यते । **वा.** ३।४।४।१२ पृ. ९०५. * शब्दे महत्त्वादिकं यथा– " वैशेषिको गकारादिषु व्यक्तिजातिभेदमिच्छति तथापि शब्देषु महत्त्वाल्पत्वयोर्गुणतां नाभ्युपैति, निर्गुणत्वाद् गुणानां शब्दस्य च गुणत्वात् । अतो यथा तस्य अविद्यमानमेव शब्दे महत्त्वादिकं ध्वनिसंस्कारानुसारिण्या बुद्ध्या गृह्यते तथा द्रुतत्वादिकमपि भ्रान्त्या शब्दे समारोपितम् । **रत्नाकरः** स्फोटवादे श्लो. ४०. * शब्दे सापेक्षेऽपि ' देवदत्त गामभ्याज ' इत्यादौ अधिकारदर्शनात् अनपेक्षत्वं नाधिकारे हेतुः । **रत्न.** ६।१।१।१. * **गोशब्दे** उच्चरिते सर्वगवीषु युगपत्प्रत्ययो भवति । अतः आकृतिवचनोऽयम् । **भा.** १।१।६।१९, * यथा आकृतिवचने शब्दे द्विवचने द्रव्यभेदोऽवगम्यते, एकवचने द्रव्यैकत्वम् । ३।८।४।१३ पृ. ९३५. * **शब्देषु** । संबन्धिशब्देषु संबन्ध्यन्तरापेक्षां विना शब्दप्रवृत्त्यसंभवात् शब्दप्रवृत्तिनिमित्तत्वेन संबन्ध्यन्तरापेक्षा संभवति । **सु.** पृ. २५२.

* **शब्दाधिकरणम्** । १।१।६।६-२३. ' शब्दनित्यत्वाधिकरणम् ' इत्यत्र द्रष्टव्यम् । * शब्दाधि-

करणम् । 'कर्मैके तत्र दर्शनात्' (१।१।६।६-२३) इत्यधिकरणे वेदप्रामाण्यसिद्ध्यर्थं औत्पत्तिकसूत्र एव औत्पत्तिकत्वरूपनित्यत्वस्य शब्दार्थरूपोभय-विशेषण-विशिष्टे संबन्धेऽन्वयात् विशेषणीभूतशब्दनित्यत्वमपि अर्थात् प्रतिज्ञातमेव आक्षिप्य समाधीयते । तदिदं अष्टादशसूत्रकमधिकरणम् । बाल. पृ. ७.

* **शब्दाध्याहारसमर्थनं मीको.** पृ. ६६२ 'अर्थाध्याहारपक्षखण्डनं' इति बिन्दौ शा-ग्रन्थे द्रष्टव्यम्।

* **शब्दानुरोधेन** हि 'व्यामोहादाचारः' इति कल्पयितुं न्याय्यम् । **भा.** १०।१।१०।३७.

* **शब्दान्तरं** धर्मभेदे प्रमाणम् । **मणि.** पृ. १३. * शब्दान्तरं धात्वन्तररूपं भावनानुरञ्जकव्यापाररूपेण स्वार्थं वदत् स्वार्थानुरक्ताया भावनायाः धात्वर्थान्तरानुरक्तभावनातः स्पष्टं भेदं बोधयति । सु. पृ. ५४१, * **शब्दान्तरस्य** धात्वर्थभेदद्वारा भावनाभेदप्रमाणत्वम् । पृ. ७०४, * शब्दान्तरस्य संज्ञायाः सकाशाद्वैलक्षण्यम् । धात्वर्थविषयत्वेन संज्ञायाः तन्मात्रभेदकत्वात्, शब्दान्तरस्य तु धात्वर्थवाचित्वेऽपि धात्वर्थस्य स्पष्टभेदत्वेन अभेदाशङ्कायोगात् विशेषणशब्दानां च विशेष्यपरत्वेन धात्वर्थमात्रे धातोरपर्यवसानात् धात्वर्थभेदद्वारा भावनाभेदकत्वात् वैलक्षण्यम् । पृ. ७१०.

**शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । २।२।१।१ ॥**

शब्दान्तरात् कर्मभेदः अत्र प्रतिपाद्यते । 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इति यजति-जुहोति-ददातयः किं संहत्य अपूर्वं साधयन्ति वियुज्य वा इति विचारे सिद्धान्तमाह । शब्दान्तरे शब्दभेदे सति कर्मभेदः कर्मणो भेदः प्रत्येतव्यः । कृतानुबन्धत्वात् कृतः अनुबन्धः धात्वर्थेन अवच्छेदः यस्य तत् कर्म भावनारूपं कृतानुबन्धम् । कृतानुबन्धत्वात् अवच्छेदकीभूतधात्वर्थभेदात् । अवच्छेदकभेदात् भावनाभेदः, भावनाभेदाच्च कर्मभेदः । शब्दान्तरत्वमत्र भावनाऽवच्छेदकधातुभेद एव । **के.**

**शब्दान्तराधिकरणम् ॥**

**शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । २।२।१।१॥**

**भाष्यम्**-- अस्ति ज्योतिष्टोमः, तत्र श्रूयते 'सोमेन यजेत, दाक्षिणानि जुहोति, हिरण्यमात्रेयाय ददाति' इति । यजति-ददाति- जुहोतयस्ते किं संहत्य कार्यं कुर्वन्ति, उत वियुत्येति संशयः । साधकाः संहत्यापि साधयन्तो दृश्यन्ते वियुत्यापि । संहत्य तावत्, त्रयो ग्रावाण एकामुखां धारयन्तो दृश्यन्ते, नागदन्तकास्तु वियुत्यापि । एकैकस्मिन् हि शक्यते शिक्यमवलम्बयितुम् । अतो यजति-ददाति-जुहोतयः संहत्य साधयेयुर्वियुत्य वेति जायते संशयः ।

किं तावत् प्राप्तम्, संहत्येति । कुतः ? अदृष्टार्थानामुपकारकल्पना अल्पीयसी न्याय्येति । कथम् ? '**अदृष्टो योऽश्रुतो वाऽर्थः स नास्तीत्यवगम्यते । तस्मिन्नसति दृष्टश्चेत् श्रुतो वा न विरुध्यते ॥ विरुध्यमाने कल्प्यः स्याज्ज्ञायते तेन सोऽर्थवान् । विशेषश्चेन्न गम्येत, ततो नैकोऽपि कल्प्यते ॥**' गम्यते च विशेषः, बहुभ्य एकमपूर्वमिति । तस्मात् समुदायश्चिकीर्षितः । ततो ह्यदृष्टे कल्प्यमानेऽवयवानां समुदायं प्रत्यर्थवत्त्वात् एकमपूर्वं समुदायात् कल्पितं भविष्यति । न च अशाब्दः समुदायः । अवयवशब्दैरेव समुदायस्योक्तत्वात् । तस्मात् समुदायश्चिकीर्षितः । **अथवा** यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति, उत्तरो भावयेदिति । तथा ददातीति पूर्वो भागो ददात्यर्थम्, उत्तरस्तमेव भावयेदित्यनुवदति । एवं जुहोतीति पूर्वो भागो जुहोत्यर्थम्, उत्तरस्तमेवानुवदति । तेन एकस्यां भावनायां त्रयो यजत्यादय उपाया विधीयन्ते श्रुत्या । तस्मादेतैर्यागदानहोमैर्विशिष्टापूर्वस्य भावना प्रतीयते । अत उच्यते-संहत्यैकमपूर्वं साधयन्तीति । **यद्वा** यजतिशब्देन विहितं दानं दानहोमशब्देनानूद्यते गुणसंबन्धार्थम् । तस्मादेकपूर्वमिति प्राप्तम् । **एवं प्राप्ते, ब्रूमः** । प्रतिशब्दं अपूर्वभेद इति । शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । यजेतेत्यनेन केवलस्य यागस्य कर्तव्यतोच्यते,



न तु जुहोतिशब्दाभिहितस्य, ददातिशब्दाभिहितस्य वा । शब्दान्तरत्वात् । प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्तासंबन्धो गम्यते, श्रुत्याऽवयवस्य यजेतेति । संनिहितयोरपि वाक्येन दानहोमयोः । श्रुत्या यागस्यैव सत्तासंबन्धो ( भावनासंबन्धः ) गम्यते न दानहोमयोः । श्रुतिश्च वाक्यात् बलीयसी । तस्मान्न समुदायः शाब्दः । कल्प्यमानो हि प्रयोगवचनेनैकवाक्यतां नीत्वा कल्प्येत । शब्दान्तरं च यजतेर्ददातिः । तत्र यद्यपि परो भागो भावनावचनः सर्वेषु समानस्तथाऽप्येकैकस्य पूर्वोऽवयवोऽन्यः, अन्यश्च तेन समुदायः शब्दान्तरमन्यस्मात् समुदायात् । तत्र अर्थान्तरं व्यक्तम् । दद्यादिति दानेन साधयेदिति केवलमेव दानं करणं भावनायाः प्रतीयते, न यागहोमौ सहायावपेक्षते । तथा जुहोतीति होमसाधनां भावनामाह, न दानयागावपेक्षते । तत्रैतावच्छब्देनावगतम्, दानेन केवलेन सिध्यतीति । जुहोतीत्यपि होमेन केवलेन सिध्यतीति, न तु दानेन केवलेन सिध्यतीति विज्ञानं निवर्तते । ददातिर्हि स्वेन कारकग्रामेण कृतानुबन्धो न यागं होमं वाऽनुबन्धमपेक्षते । तस्माद्भिन्नानि वाक्यानि, प्रतिशब्दमपूर्वभेद इति । न च दानस्य यजतिर्जुहोतिर्वाऽनुवादः, यागहोमयोरविवक्षाप्रसङ्गात् । न च दानमितरयोरनुवादः । परस्वत्वार्थत्वात् ददातेरितरयोश्च त्यागार्थत्वात्। **प्रयोजनम्**- पूर्वपक्षे समुदायादपूर्वम्, सिद्धान्ते तु यागस्य फलवत्त्वादितरयोर्गुणभावः ।

**शा**— '**उपोद्घातप्रसक्तानुप्रसक्तादौ गतेऽधुना । शब्दान्तरादिभिर्भेदो लक्षणार्थोऽभिधीयते ॥**' तत्र शब्दान्तरं तावत् स्पष्टत्वात् प्रथममुदाहियते । एकानेकाख्यातप्रत्ययसंबद्धाः सर्वे धातवो यजति ददाति जुहोति निर्वपति गृह्णाति स्तृणाति शंसति स्तौति इत्येवमादयः उदाहरणम् । भाष्यकारेण तु स्वत्वपरित्यागांशेन यजत्यादित्रयं प्रत्यासन्नार्थत्वात् सुतरामभिन्नमाभासते इत्युदाहृतम् । तत्र पूर्वपक्षत्रैविध्यदर्शनात् संशयोपन्यासोऽपि तदनुगुणः प्रतिभाति । तद्यथा तिस्रो भावनाः किमेकमपूर्वं कुर्वन्ति उत त्रीणीति, तथा त्रयो धात्वर्थाः किमेकां भावनां विशिंषन्ति उत तिस्रः, तथा त्रयो धातवः किमेकं धात्वर्थं वदन्ति उत त्रीनिति । कार्यशब्दश्चापूर्वभावनाधात्वर्थेषु उपकार्यत्वाविशेषेण प्रयुज्यते । भावनाधात्वर्थधातवो ह्येषामुत्पादनेन विशेषणेन प्रतिपादनेनोपकारकत्वात् साधनत्वेनाभिधीयन्ते । कुतः संशयः ? '**साधकत्वं द्विधा दृष्टं प्रत्येकसमुदाययोः । वस्तुलक्षण एवातस्तदृष्टेः संशयोद्भवः ॥**'

अथवा पारमार्थिकोऽत्रायमेकः संशयः, किं धात्वर्थत्रयानुरक्तैका भावना, अथवा प्रतिधात्वर्थं भावनाभेद इति । भावनैव धात्वर्थानुरक्ता कर्मशब्देनोच्यते । तस्या एव शब्दान्तरादि भेदकं भविष्यति, अपूर्वस्यानभिधेयत्वात् कर्मभेदानुनिष्पाद्येव तदिति न पृथग्विचारमर्हति । प्रासङ्गिकस्तु धात्वर्थैकत्वोपन्यासः कथमप्यसार्वत्रिकः सन् यज्यादिषु भविष्यतीति नातीव तन्त्रीकर्तव्यः । ततश्च एतदपि संशयकारणं पूर्वपक्षवादिनः प्रतिभाति किं धात्वर्थान्प्रत्युपादीयमाना भावना प्रत्येकं समाप्यते, अथवा ते तां प्रत्युपादीयमानाः संहत्य विशिंषन्तीति । किं तावत्प्राप्तम् ? संहत्येति । तत्र 'समुदायश्चिकीर्षितः । समुदायात् एकमपूर्वं न वाऽशाब्दः समुदायः' इत्यादिषु पुनः पुनः समुदायशब्दोच्चारणादपूर्वैकत्वाभिधानाच्च तिसृभ्यो भावनाभ्य एकमपूर्वमिति पूर्वः पक्षः । इयं चोपपत्तिः । '**अदृष्टं प्रथमं तावन्नास्तीत्येवं प्रतीयते । तथैव निश्चयश्चात्र दृष्टं चेन्न विरुध्यते ॥ दृष्टश्रुतविरोधे तु सत्यदृष्टं प्रकल्प्यते । एकेन चाविरोधित्वे सिद्धे नानेककल्पना ॥**' तदेवाऽऽह- 'विरुध्यमाने कल्प्यः स्याज्ज्ञायते तेन सोऽर्थवान् ।' दृष्टः श्रुतो वा भवतीति । तत्राप्येकानेकार्थकल्पनयोर्विशेषश्चेत् गुरुलाघवं प्रति न गम्येत ततोऽनेकोऽपि कल्प्येत, गम्यते चासौ । तस्मात् समुदायादेकमपूर्वम् । तत्रैतत् स्यात्, केन भावनासमुदायश्चोदितो यस्मात् एकमपूर्वं स्यादित्यत आह- 'न चाशाब्दः समुदायोऽवयवशब्दैरेव चोदितत्वात् । अथ वेति' -धात्वर्थत्रयानुरक्तैकभावनापक्षपरिग्रहः । तस्याप्युपपत्तिः । '**प्रत्ययार्थप्रधानत्वात्प्रतिधातु न भिद्यते । तत्रोपादीयमानत्वाद्धात्वर्थाः संहताः पुनः ॥**' यदि हि धात्वर्थानां प्राधान्यं भवे-

ततो भावना तान् प्रत्युपादीयमाना प्रतिप्रधानं भिद्येत । भावप्रधानत्वाच्चाऽऽख्यातस्य प्रकृतिप्रत्यययोश्च प्रत्ययार्थशेषत्वादरुणैकहायन्यादिवद्यागादिभिः संहत्यैका भावना विशेष्यते । यद्यपि प्रधानानां गुणानुरोधेनाऽऽवृत्तिरयुक्ता तथाऽपि केवलप्रकृतिप्रत्ययप्रयोगासंभवादवश्यं तावद्धातुसंबन्धार्थं प्रत्ययः पुनरावर्तयितव्यः । यदि तु केवलः प्रत्ययः क्रीणातिवत् श्रूयेत, ततः सकृदुच्चरित एवारुणादिभिरिव धातुभिः संबध्येत, अपदत्वान्न स्वतन्त्रः श्रूयते इत्यावर्तते । दृष्टा च विशेषणसंबन्धार्थमावृत्तिः 'आयुर्यज्ञेन कल्पताम्' 'दध्ना जुहोति' 'पयसा जुहोति' 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्येवमादिषु । तथाऽनुष्ठानावृत्तिरपि ज्योतिष्टोमस्यानेकद्रव्यदेवतासंयोगसंपादनार्था दृश्यते । तस्मादर्थैकत्ववशेन सर्वमिदं यजतिददातिजुहोतिविधानात्मकमेकं वाक्यं एकं कर्म एकं चापूर्वमिति । अयमेव चात्र पूर्वः पक्षः साधुर्न पूर्वोक्तो भावनासमुदायासंभवात् । कुतः ?

**'प्रसिद्धे भावनाभेदे भाव्यभेदो नियोगतः । न चाऽऽसां समुदायत्वमैकशब्द्याद्विनेष्यते ॥'**

यदि हि भावनाभेदं पूर्ववाद्यभ्युपगच्छत्येव ततः सा भावयितव्या पूर्वभेदादृते नैव भिद्यते इति तद्भेदेऽपि सिद्धे किमनेन कृतं स्यात् । अपि च समुदायत्वापादनमेकशब्दसंयोगात्समुदायानुवादरूपेण वा भवति यथा 'य एवं विद्वान्पौर्णमासीं यजते' इति, फलादिसंबन्धेन वा यथा 'राजसूयेन स्वाराज्यकामः' इति । न त्विहैकमपि पश्यामो येन समुदायत्वमध्यवस्येम । ननु ज्योतिष्टोमेनेत्येष समुदायवचनो भविष्यति । न, तस्य यजिसामानाधिकरण्येन तन्मात्रवचनत्वात् । तस्मात् नैष पक्षः । एवं तु भाष्यग्रन्थो नेतव्यः । किं तावत्प्राप्तं धातुत्रयानुरक्तमिन्द्रायुधमिवैकं कर्मेति ( यथेन्द्रायुधं लोहितशुक्लकृष्णैस्त्रिभिर्धातुभिः संहत्यानुरज्यते तथेति दृष्टान्तार्थः )। तत्सिद्धयर्था त्वियमुपपत्तिः । एवमल्पादृष्टकल्पना भविष्यतीति । कर्मभेदे हि बह्वदृष्टकल्पना निष्प्रमाणिकाऽभ्युपगन्तव्या । 'तस्मात् समुदायश्चिकीर्षितः' इत्याद्येकस्यैव कर्मणोऽवयवाभिप्रायेणोक्तम् । अतः 'यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति, उत्तरो भावयेत्' इत्यादि निगमनम् । अथवेति प्रमादलिखितमिति मन्यन्ते । शक्यं त्वेतत् समर्थयितुम्, द्वे ह्येते पूर्वपक्षोपपत्ती भाष्यकारेण उपन्यस्ते । तत्र अनेकादृष्टकल्पनादोषं पूर्वं उपन्यस्य अथवेत्युपपत्त्यन्तरमाह । एतदुक्तं भवति । किमेकादृष्टकल्पनोपपत्त्या अथवा शब्देनैवैकां भावनां प्रतिपादयामः । पूर्वार्धभेदेऽपि प्रत्ययैकत्वेनाभिन्नार्थप्रतीतेस्तद्दर्शयति । तथा ददातीति पूर्वो ददात्यर्थमुत्तरस्तमेव भावयेदिति । एवं प्रतिभाति तमेव धात्वर्थं भावयेदिति । तत्तु अयुक्तम् । सर्वत्र धात्वर्थभाव्यत्वप्रतिषेधात् । न चैतत्पूर्वपक्षवादिनोऽपि क्वचिदुपयुज्यते । तथा अनुवदतीति न शक्यं वदितुम् । तस्मादेवं वाच्यं पूर्वो ददात्यर्थः उत्तरः पुनर्यो यजतेः परेणांशेनोक्तस्तमेव भावयेदित्येवं धात्वर्थान्तरसंबन्धार्थमनुवदतीति । एवं जुहोतीत्यत्रापि । तथा च यजेनेत्यत्रैवं नाभिहितम्, न हि तत्र पूर्वतरप्राप्ता भावनाऽस्ति याऽनूद्येत । यदि धात्वर्थभाव्यत्वमभिधीयेत तदविशिष्टं तत्रापीति । न तद्वर्जमुत्तरयोरेव ब्रूयादतो भावनैकत्वप्रतिज्ञानाभिप्रायमेतत् तस्मादेका भावनाऽपूर्वं च । यद्वा 'यजतिशब्देन विहितम्' इति धात्वर्थैकत्वं वदति स्वत्वत्यागांशसमत्वात् । अथापि लक्षणया ददाति जुहोति यजेतेत्यस्यानुवादस्तथाऽपि कर्मान्तरनिमित्तादृष्टकल्पनातः सैव ज्यायसीत्याश्रीयते । न वाऽनुवादे लक्षणा दोषः । गुणविध्यर्थस्त्वनुवादः । एकत्राऽऽत्रेयः संप्रदानं हिरण्यं च प्रदेयं विधीयते । इतरत्र दाक्षिणानि विधीयन्ते । ननु नामधेयत्वान्नवार्थं गुणविधिः । कर्मविधानपक्षे ह्येतस्य नामधेयत्वम् । अनुवादे तु वाक्यानर्थक्यप्रसङ्गादेकान्तेन गुणविधिरभ्युपगन्तव्यः । तदा च यजतिददातिजुहोतय इति धात्वभिप्रायकम् । एकं कार्यमेकं धात्वर्थं तदेतरत्तदर्थमिति वा न्यायेनैकमपूर्वं गमयन्तीत्यर्थः । तस्मान्न कर्मभेद इति । अत्रोच्यते । **'धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम् । उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते ॥'** यद्यप्येको भावनावचनस्तदर्थस्य च प्राधान्यम्, तथाऽप्यनुरञ्जकधात्वर्थभेदाद्भावनान्तरं प्रत्येतव्यम् । न ह्येकस्यास्त्रयो धात्वर्थाः संनिपतितुं समर्थाः । न च समुच्चयं प्रतिपद्यन्ते करणांशावरोधित्वेन



तुल्यार्थत्वादन्योन्यनिरपेक्षभिन्नशब्दोपादानाच्च । न ह्येको धातुस्त्रीन् धात्वर्थानुपादत्ते । न चैकस्मिन् पदे धातुत्रयं परस्परापेक्षं प्रत्ययं प्रत्युपादीयमानं संभवति 'धातोः' (पा. ३।१।९१) इति प्रत्ययोत्पत्तौ विवक्षितैकत्वसंख्यत्वात् । न चैतत्पदत्रयमेकवाक्यतां गच्छति । विभज्यमानसाकाङ्क्षत्वैकार्थत्वयोरभावात् । न वैकापूर्वकल्पनात एकवाक्यताऽऽपद्यते । 'समेषु वाक्यभेदः स्यात्' (२।१।१५।४७) इत्यत्र प्रत्याख्यातत्वात् । न चापूर्वभेदाभेदपूर्वकौ कर्मभेदाभेदौ । विपरीताभ्युपगमात् । यदि च केवलैव भावना केनचिदुपादीयेत ततोऽरुणादिभिरिवैकवाक्यगतैः दध्यादिवद्वा भिन्नवाक्यगतैरेकैवानूद्यानूद्य युगपद्वा विशिष्टविधानन्यायेन यागदानहोमैरनुरज्येत, न त्वस्याः पृथगुत्पत्तिरस्तीत्यवश्यं ददात्यादीनामेकेन समस्तैर्वोत्पादयितव्या । तत्र यदि तावत्समस्तैरुत्पाद्यते, तत उत्पन्नायाः पुनरुत्पत्त्यसंभवात्सिद्धं कर्मान्तरत्वम् । अथैकेन तावदुत्पाद्येत, तत्रापि विनिगमनायां हेतोरभावाद्विशेषो न ज्ञायते । येन केनचिदुत्पत्तिरप्येतस्याः प्रतीयते ततस्तद्व्यतिरिक्तेन धातुना नानुरज्यते । येनैव ह्येकेन धातुना कृतानुबन्धा भावनोत्पन्ना तस्यैव श्रौतत्वेन बलीयस्त्वान्न पदान्तरस्थैर्धात्वर्थैः सह विकल्पः संभवतीति ततः प्रच्युतैस्तैः स्वपदप्रतिपादितमवश्यं भावनान्तरमनुरञ्जनीयम् । एवमेकैकत्र स्वपदोपात्तधात्वर्थानुरञ्जनमौत्पत्तिकं श्रौतं च, धात्वर्थान्तरानुरञ्जनमुत्पन्नभावि वाक्यप्रकरणलभ्यं च । ददातिर्हि यजत्युपनिबद्धां भावनां निषेधन् स्ववाक्यानुच्चरितां पदान्तरानुवर्तिनीं प्रकरणाद्वाक्याच्च प्राप्नुयादेवं यजतिरपि तत्र तत्रेति योज्यम् । ननु च ददातिपदेऽप्यसौ पुनः श्रूयमाणा सैवेति प्रत्यभिज्ञायते इति न वक्तव्यं वाक्यप्रकरणाभ्यां ददातिसंबन्धो भवतीति । सत्यं भावनामात्रसंबन्धः श्रुत्यैव प्रतीयते । यागानुरक्तभावनासंबन्धे तु न श्रुतिव्यापारो युज्यते । ननु चैकत्वादेवास्या एवं भेदव्यवहारो न युक्तः । केन वा कर्मभेदपक्षेऽपि सामान्यैकत्वं नाभ्युपगम्यते । नन्वत्र व्यक्तिनानात्वेऽपि नास्ति प्रमाणम् । कथं नास्ति ? यदा भिन्नधात्वर्थसंनिधानादसौ नानात्वेन प्रतिशब्दमुपलभ्यते । ननु च शब्दवदेव परोपाधिको भेदप्रत्ययो न पारमार्थिको भावनाभेदः स्यात् । नैतदेवम्, शब्दस्यापि गकारादिभेदः पारमार्थिको नैव कस्यचिदनिष्टस्तद्वदिहापि यागादिभेदे सिद्धे शब्दस्थानीयमनुष्ठानसामान्यं निरूप्यते । न च यथा शब्दस्य अर्थान्तरभूता ध्वनयः द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्त्येवमत्र यागादयोऽदूरव्यतिरिक्ताः । तस्मादस्ति भेद इति । आह च– **'यथा रक्तोपधानेन निरुद्धे स्फटिके सति । कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम् ॥ तथैकधातुसंबद्धभावनाचोदने सति । भावनान्तरगामिन्यः स्युर्धात्वन्तरचोदनाः ॥'** यस्मात्प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचाराच्च नित्यविवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्यासेषु प्रतिपत्तृषु प्रत्ययांशः संनिपतन् कृतानुबन्धमेव स्वार्थं वदति । तस्मान्न कदाचित्प्रत्ययार्थः शुद्धो लभ्यते । यथोक्तं 'प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याद्येति । प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्तासंबन्धः' इति । एकापूर्वकल्पनया हि समुदायानुरक्तभावनाकल्पनमाश्रितं फलसंबन्धनिमित्ता वाऽपूर्वकल्पना । प्रयोगवाक्यशेषभावेन वोत्पत्तिवाक्यानां फलसंबन्धो भवति न स्वरूपैः । अवधृतस्वरूपाणि च कर्माणि प्रयोगवाक्येन गृह्यन्ते इत्यवगते भेदे न शक्यान्येकीकर्तुम् । न च ददातिजुहोत्योः प्रयोगवाक्यशेषभावं पश्यामः, 'यजेत स्वर्गकामः' इति केवलयागश्रवणात् । न च तेन दानहोमौ लभ्येते । स्वार्थत्यागप्रसङ्गादुभयाश्रयणे वा युगपद्वृत्तिलक्षणापत्तिर्दोषः । तस्मान्न समुदायकल्पनाऽस्ति । अतश्च धात्वन्यत्वेन पदान्तरत्वात्केवलविशिष्टता गम्यते । न च ज्ञानान्तरेण निवर्तते । न च धात्वर्थैकत्वम् । आसेचनपरस्वत्वापादनाभ्यधिकत्वात् । न च त्यागमात्रलक्षणा, स्वार्थवृत्तित्वेनापि वाक्यसमवायोपपत्तेः । न च दाक्षिणानि नाम गुणः कश्चित्प्रसिद्ध इति सामानाधिकरण्यान्नामधेयत्वमेव युक्तम् । अतश्च वाक्यानर्थक्यं मा भूदिति होमो विधीयते । ददातिना तु यागमनूद्य गुणे विधीयमाने हिरण्यात्रेयसंबन्धे वाक्यभेदप्रसङ्गाद्गुणादपि भेदः संभवतीत्यत्रैकगुणो निर्गुणो वाऽन्यो ददातिरुदाहर्तव्यः ।

**शा**-- ( अस्मिन् अधिकरणे ) शब्दान्तरात् कर्मभेदः अभिधीयते । इह एकप्रकरणगतानि अपर्यायधातुनिष्पन्नानि आख्यातानि–' यजति ' ' ददाति ' 'जुहोति' इत्यादीनि उदाहरणम् । तत्र हि सत्यपि प्रत्ययांशस्य एकत्वे धातुभेदात् आख्यातपदानि मिथः शब्दान्तराणि भवन्ति । तत्र संशयः- किं एका एव भावना नानाधात्वर्थानुरक्ता विधीयते उत प्रतिधात्वर्थं भावनाभेद इति । अनेकापूर्वकल्पनाभिया एका एव भावना इति पूर्वपक्षः । सिद्धान्तस्तु– **' प्रत्ययांशः समानोऽपि प्रतिधातुप्रयोगतः । तत्तदर्थानुसारेण भावनाभेदमावहेत् ॥ निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि । ततः सर्वविशिष्टा स्यात् द्वन्द्वोत्पन्नसुबर्थवत् ॥ यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः । श्रूयेत क्रयवत्सर्वैर्विशिष्येत स धातुभिः ॥ '**

**सोम**-- **सूत्रार्थस्तु**- शब्दान्तरे पर्यायधातुभेदे कर्मभेदः भावनाभेदः धात्वर्थेन भावनाया अनुबन्धस्य अवच्छेदस्य कृतत्वादिति ।

**वि**-- ' ददाति यजतीत्यादौ भावनैक्यमतान्यता । , आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजकः ॥ धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः । उत्पत्त्येकानुरक्तत्वाद्भिद्यन्ते भावना मिथः ॥ नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत् । धातुभेदात् शास्त्रभेदे नियोगो भिद्यते बलात् ॥ '

**भाट्ट**— भावनाभेदफलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तराद्भेदोऽभिधीयते । ज्योतिष्टोमादिप्रकरणस्थानां ' सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोति ' इत्यादीनां विभिन्नधात्वर्थानां भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्यनेन स्वर्गकर्मकभावनामात्रे लाघवाद्विहिते तदनुवादेन सोमादिवाक्यैः सोमादिविशिष्टयागादिविधानात् । सर्वेषां चोत्पन्नशिष्टत्वेन गुणन्यायाभावात् न भावनाभेदः । न चानेकधात्वर्थानामेकजातीययत्नजन्यत्वासंभवः, बाधकाभावात् । न च प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात् प्रत्ययानां फलवाक्यस्थेनाख्यातेन धात्वर्थानवच्छिन्न–शुद्धभावनाविधानानुपपत्तिः, आख्यातेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात् । अत एव गुणफलसंबन्धस्थले धात्वर्थानुवादेनापि भावनामात्रविधानम् । अत एव च फलवाक्ये यजिः प्रकृतसर्वधात्वर्थोपलक्षणः ज्योतिष्टोमपदं च छत्रिन्यायेन सर्वनामधेयम् । **इति प्राप्ते**, कार्यमात्रवृत्तिधर्मस्य विजातीययागत्वादेः कंचित्प्रति कार्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य यत्नस्यैव वैजात्यपरिकल्पनया विजातीययत्नत्वेनैव कारणत्वम् । अतश्च प्रतिधात्वर्थवैजात्यात् भावनावैजात्यसिद्धिः । विभिन्नधात्वर्थमेव च शब्दान्तरत्वम् । अत एव ' तिस्र आहुतीर्जुहोति ' इत्यत्र संख्यया होमभेदे सिद्धे शब्दान्तरादेव उक्तविधाद्भावनाभेदः न तु मूलोक्तादिति ध्येयम् । किञ्च प्राप्तभावनानुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्तेः तत्तद्गुणधात्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्येऽङ्गीकर्तव्यम् । तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसंबन्धः अन्येषां तु तदङ्गत्वम् । न च स्वर्गवाक्ये एव यागभावनोत्पत्तिपूर्वकः फलसंबन्धः सोमवाक्येन तु सोममात्रविधानमिति वाच्यम् । स्वर्गवाक्ये राजसूयन्यायेन इष्टिपशुयागानामेव फलसंबन्धापत्तौ यागान्तरविधाने प्रमाणाभावात् । ततश्च पश्वाद्यवरुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविध्यवश्यंभावः । प्रयोजनं सोमयागमात्रप्राधान्यम् ।

**मण्डन**— ' शब्दान्तरे विधियुते खलु कर्मभेदः ।'

**शंकर**— ' भिन्नं शब्दान्तरात्कर्म । '

* शब्दान्तराधिकरणम् । अत्र भावनाभेदः शब्दान्तरादिप्रमाणैः प्रतिपाद्यते । तत्रापि शब्दान्तरस्य प्रमाणान्तरसिद्धधात्वर्थभेदोपजीवित्वेन भावनाभेदमात्रे व्यापारात् सूचीकटाहन्यायेन प्रथमं तस्यैव भेदकता निरूप्यते । अतः सिद्धं अपर्यायधातुभेदरूपशब्दान्तरात् कार्यतावच्छेदकभेदेन कार्यभेदावगतौ कारणीभूताया भावनाया वैजात्यम् । प्रयोजनम् सिद्धान्ते सोमयागस्यैव प्राधान्यम्, अन्येषां तु तदङ्गत्वात् न विकल्पः । **कौ.**



२।२।१।१. * **शब्दान्तराधिकरणे** यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति, उत्तरो भागो भावयेदिति भाष्यम् । अत्र परो भागो भावनावचनः इति स्पष्टम् । **सु.** पृ. ५६६.

* न चैवं ' यजति, ददाति ' इत्यत्र यागान्विताया अपि भावनायाः निष्कृष्य स्वरूपेणाभिधाने सति तत्र दानान्वयसंभवात्, ' एकधात्वर्थान्वितभावनायां न धात्वर्थान्तरान्वयसंभवः ' इति–**शब्दान्तराधिकरणोक्तविरोधः** स्यादिति वाच्यम् । पूर्वपक्षे सिद्धान्तिशङ्केयम् । **कु.** २।२।१।२३.

* ' समिधो यजति ' ' तनूनपातं यजति ... ' इत्यत्र यागभेदे अर्थान्तरपर–धातूच्चारणभेदात् **शब्दान्तराधिकरणन्यायेनैव** भावनाभेदसिद्धिः । **कौ.** २।२।२।२.

* यो यावद्धर्मयुक्तमनुष्ठातुं शक्नोति तेन तावद्धर्मयुक्तं कर्म अनुष्ठेयं इति शक्त्या व्यवस्थायां अप्रमाण्याभावात् न्यायप्राप्तत्वेन काम्येऽपि यथाशक्त्युपबन्धो न दोषः । अन्यथा **शब्दान्तराधिकरणपूर्वपक्षादौ** का गतिः । **सोम.** ७।१।१.

* तस्या एव च ( भावनायाः ) शब्दान्तरं भेदकं भविष्यति अपूर्वस्यानभिधेयत्वात् कर्मभेदानुनिष्पाद्यमेव च तत् ( अपूर्वं ) इति न पृथक् विचारमर्हति इति **शब्दान्तराधिकरणवार्तिके** अपूर्वभेदस्य लक्षणार्थत्वनिषेधात् । **सु.** पृ. ८७३–८७४.

* **शब्दान्तराभ्यासनामधेयगुणप्रकरणानि** उत्पत्तिपरतां विधेर्बोधयन्ति ( प्रथमाबहुवचनमेतत् ) उत्पन्नस्य च उत्पत्त्यन्तराभावात्, वाक्यान्तरविहितात् कर्मणः स्ववाक्यविषयस्य भेदं बोधयन्ति । **शा.** २।१।१.

* **शब्दान्तरादिभिः** हेतुभिः प्रधानानां भेद उक्तः ( अपूर्वाणाम् ) । **भा.** ७।१।१।१.

* ' ऐन्द्रवायवं ' इत्यत्र तद्धितार्थद्रव्यभेदस्तावत् प्रकृत्यर्थदेवताभेदात् **शब्दान्तरन्यायेन** गुणन्यायेन वा सुप्रसिद्ध एव । **कौ.** २।२।६।१९ पृ. २२७. * ननु शब्दान्तरवत् संज्ञाया भावनावच्छेदकत्वरूपेण धात्वर्थवाचित्वाभावात् शब्दान्तरन्यायेन भावनाभेदकत्वायोगः । **सु.** पृ. ८२०.

* **शब्दापचारे** न प्रतिनिधिः ( शब्दो मन्त्रः ) । ६।३।५।१८–१९. **मीको.** पृ. २१३० ' देवताऽग्निशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न ग्राह्यः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* व्याकरणस्मृतेः **शब्दापशब्दविभागमात्रविषयत्वम्** । **वा.** २।३।२।३ पृ. ५८६ .

* **शब्दाभेदे** ( वैदिकलौकिकशब्दाभेदे ) ( अध्यायानध्यायादि ) धर्मव्यवस्थावैयर्थ्यापत्तेः तत्साफल्याय शब्दभेदः कल्प्यते । तद्भेदे च **औत्सर्गिकः** अर्थभेदः ' संज्ञा चोत्पत्तिसंयोगात् ' ( २।२।८।२२ ) इत्यनेन सेत्स्यति । **सु.** पृ. ३३३ .

* **शब्दार्थः** आकृतिः व्यक्तिर्वा इति संदेहे आकृतिरिति सिद्धान्तः । १।३।९।३०–३५.

* **' शब्दार्थश्च तथा लोके । '** ११।१।४।२३ ॥ लोकेऽपि तथैव शब्दार्थो भवति । 'काष्ठान्याहर' इत्युक्तः सकृदाहरति, न पुनः पुनः । इति पूर्वपक्षः । **भा.** ११।१।४।२३. **' लोके कर्मार्थलक्षणम् । '** ११।१।४।२६ ॥ यच्च लोकवत् इति । लोके कर्म अर्थप्रधानम् । कार्यवशात् सकृदपि उक्तः असकृदाहरति, असकृदपि उक्तः सकृदाहरति, नाहरति वा । **भा.** ११।१।४।२६. * शब्दार्थः प्रयोगमात्रेणैव भवति । **टुप्.** १०।१।१०।३४. * शब्दार्थः यद्याकृतिर्भवेत् न तत्र द्रव्याश्रयवचनः शब्दो भवेत् । ' षड् देया द्वादश देयाः० ' इति । न ह्याकृतिः षडादिभिः संख्याभिर्युज्यते । इति व्यक्तिवादी ( पूर्वपक्षे इदम् ) । **भा.** १।३।९।३१ . * ' अविप्लुतश्च **शब्दार्थो** यो वेदेषूपलभ्यते । तत्रत्यनिर्णयात् तस्माल्लोके भवति निर्णयः ॥' **वा.** १।३।४।९ पृ. २१८. * न आचार्यवचनात् सूत्रकारवचनात् वा शब्दार्थो भवति । प्रत्ययात् असौ गम्यते । ... अपि च नैव कर्ता प्रत्ययार्थः , कर्म वा इत्याचार्या आहुः । **भा.** ३।४।४।१३ पृ. ९२३, * न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते । यत् कारणं स्वार्थे एव वर्तमानोऽर्थान्तरं लक्षयति, स्वार्थं जहत् नैव लक्षयेत् ।

८।३।६।२४, * यश्च प्रतीयते ( शब्दात् ) स शब्दार्थः। ४।१।५।१३, * यः शास्त्रस्थानां ( प्रयोगविषयः ) स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । १।३।४।९. * यावानेव हि अनन्यलभ्यः अर्थः शब्दात् गम्यते स सर्वः शब्दार्थः । वा. २।१।१।१ पृ. ३७५, * लक्षणं चैतावत् योऽर्थान्न गम्यते स शब्दार्थ इति । ३।४।४।१३ पृ. ९१३. * **शब्दार्थस्य** अन्वयव्यतिरेकाभ्यां हि विभागोऽवगम्यते । **भा.** ३।२।१।१ पृ. ७४७. * शब्दार्थस्य वृद्धव्यवहारगम्यत्वम् । वा. २।१।१०।३५, * शब्दार्थयोः अनादित्वेऽपि निमित्तनैमित्तिकभावः अविरुद्धः । ३।३।६।१३. * शब्दार्थयोः ऐक्यं लोकवेदयोः । १।३। ९।३०–३५. * शब्दार्थयोः नित्ययोरेव नित्य एव संबन्धः शास्त्रतः प्रतीयते। वा. ३।७।१९।४०. * शब्दार्थयोः यदि संश्लेषलक्षणं संबन्धमभिप्रेत्योच्यते ( तदा ) क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम् । कार्यकारण–निमित्तनैमित्तिक– आश्रयाश्रयिभावादयः तु संबन्धाः शब्दस्यानुपपन्ना एवेति । उच्यते । यो ह्यत्र व्यपदेश्यः संबन्धः तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षण इति । (वृत्तिग्रन्थः) । **भा.** १।१।५।५ पृ. ४३, * शब्दार्थयोः संबन्धोऽपि नित्यः । १।१।५।५, * शब्दार्थयोः संबन्धः । ननु शब्दलक्षणोऽपि शब्दार्थयोः संबन्धः कृत्रिमः भवति । यथा देवदत्तो यज्ञदत्त इति । भवति कश्चित् यत्र संबन्धस्य विधायकं वाक्यं भवति । ३।२।२।४, * शब्दार्थयोः संबन्धः । नहि शास्त्रहेतुकः शब्दार्थयोः संबन्धो भवति, नित्योऽसौ लोकतोऽवगम्यते इत्युक्तं 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति । ३।२।२।४, * शब्दार्थयोः संबन्धः संज्ञासंज्ञिलक्षणः । १।१।५।५ पृ. ४३. * **शब्दार्थानां** लोकवेदगतानामनन्यत्वम् । १।३।९।३०–३५. * अनभियोगश्च **शब्दार्थेषु** अशिष्टानां अभियोगश्चेतरेषाम् । **भा.** १।३।५।१०.

* **शब्दार्थाधिगमे** च अभियुक्तोपदेशः प्रमाणम् । **भा.** ८।२।५।२४.

* **शब्दार्थावगमे** लोकः प्रमाणम् । **भा.** ९।३। ४।१३.

* **शब्दार्थावधारणे** हि अयमभ्युपायः, यत् प्रसिद्धसामानाधिकरण्यं नाम । **वा.** १।४।१।२ पृ. ३२५.

* **शब्दार्थोपायेषु** अभियुक्तानां आर्यावर्तनिवासिनां अभिव्याहरतां कर्माणि चानुतिष्ठतां अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । **भा.** २।३।२।३ पृ. ५८१.

* **शब्दार्थज्ञानस्य** वृद्धव्यवहारात् औत्पत्तिकत्वमुक्तम् । **बृहती.** पृ. २५५ । शब्दात् यदर्थज्ञानं तदौत्पत्तिकं पुरुषप्रयत्नानपेक्षं असामयिकं वृद्धव्यवहारादेव शब्दस्य वाचकशक्तिपरिज्ञानेन समयनिरपेक्षेण तदुत्पत्तेः इत्युक्तम् । **ऋजु.** पृ. २५५.

* अनेकशब्दार्थत्वं एकशब्दार्थत्वेन बाध्यते । ( अयं अप्राप्तबाधः ) । **वा.** ३।३।७।१४ पृ. ८६०.

* **शब्दार्थपरिच्छेदे** लौकिकः प्रयोगो हेतुः न वैदिकः । **भा.** २।१।४।१२.

* **शब्दार्थसंबन्धः** न ह्यनित्यः । **वा.** ३।४।४।१३ पृ. ९२९. * शब्दार्थसंबन्धः नित्यः ' औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः ' । ( सूत्रांशः १।१।५।५ ) । औत्पत्तिक इति नित्यं ब्रूमः । अवियुक्तः शब्दार्थयोर्भावः संबन्धः, नोत्पन्नयोः पश्चात् संबन्धः । औत्पत्तिकः शब्दस्यार्थेन संबन्धः । **भा.** १।१।५।५. * शब्दार्थसंबन्धः लोकप्रयोगाधीनः । **कणिका.** पृ. ३५६, * शब्दार्थसंबन्धः वृद्धव्यवहारगम्यः । पृ. २८०. * 'न हि **शब्दार्थसंबन्धः** प्रसिद्धः शास्त्रहेतुकः ।' **वा.** ३।२। २।४, * ' नित्याः **शब्दार्थसंबन्धाः** यथावस्थितगामिनः । नाऽऽश्रयन्त्यश्रुतं हेतुं स्वच्छन्दपरिकल्पितम् ॥ ' २।३।२।३ पृ. ५८२. * **शब्दार्थसंबन्धस्य** लोकव्यवहारगम्यत्वात् । कार्ये चार्थे कर्मशब्दं लौकिकाः प्रयुञ्जते । **बृहती.** पृ. २७.

* **शब्दार्थसंबन्धनित्यत्ववादः** । (पूर्वपक्षस्तत्र–) **भा**–– यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि शब्दस्यार्थेन संबन्धः । कुतः ? स्वभावतो हि असंबन्धा-



वेतौ शब्दार्थौ । मुखे हि शब्दमुपलभामहे भूमौ अर्थम् । शब्दोऽयं न तु अर्थः, अर्थोऽयं न शब्दः इति च व्यपदिशन्ति । रूपभेदोऽपि भवति, गौः इतीमं शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थं अवबुध्यन्ते इति । पृथग्भूतयोश्च यः संबन्धः स कृतको दृष्टः, यथा रज्जुघटयोरिति । १।१।५।५ पृ. ४५ पं. १–६.

**श्लोवा**–– **'पुरुषाधीनविज्ञानः** ( संबन्धः ) **तेभ्यः प्रागनिरूपितः । यः संज्ञासंज्ञिसंबन्धः स चेदृश्चेद् ध्रुवं कृतः ॥ ४५ ॥** ( संबन्धाक्षेपवादे ) **भिन्नदेशाद्यधिष्ठानाद् यथा रज्जुघटादिषु । समं नास्त्यनयोः किंचित् तेनासंगतता स्वतः ॥' ४६॥**

**बृहती** — ' यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि ' ( भा. पृ. ४५ ) इति कोऽभिप्रायश्चोदकस्य ? यदि तावत् ' कृतकः कार्यः, न सामयिकः ' इत्यभिप्रायः, ततः सिद्धं साध्यते । पुरुषान्तरप्रत्ययान्तरानपेक्षता हि शाब्दं प्रमाणं इति वदतोऽभिप्रेता, चक्षुरादीनामिव रूपग्रहणे । न पुनः उत्पत्तिमत्ताऽपि नेष्यते । उत्पद्यते एव हि संबन्धः, क्रियागर्भत्वात् तस्य । क्रियायाश्च उत्पत्तिमत्त्वात् तदनुवर्ती संबन्धोऽपि उत्पत्तिमानेव । **अथ** ' कृतकः रज्जुघटयोरिव पुरुषप्रयत्नजन्यः ' इत्यभिप्रायः, **तदयुक्तम्** । चक्षुरादेः आलोकाभावे कदाचित् कार्यमकुर्वतः तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रयत्नान्तरानपेक्षत्वात् संबन्धस्य तथा शब्दस्यापि संबन्धः स्यात् इति । तस्मात् असमर्थमिव सिद्धान्तलङ्घने भाष्यं प्रतिभाति ' कृतकस्तर्हि ' इति ।

**नेदमसमर्थम्** । अयमस्याभिप्रायः– नेदमुद्योतादितुल्यं ( द्वितीयादिश्रवणं ) उद्योतस्यापि अनुग्राहकत्वं कार्यसमधिगम्यमेव, अनवगतिपूर्वकत्वात् अवगतेश्चक्षुरादीनाम् । [ अत्रत्यो ग्रन्थस्त्रुटितः स व्याख्यानतोऽनुगेयः । ] शब्देन सामयिकत्वं कृतकता वोक्ता । ( **ऋजु**– यस्मात् व्यवहारे अयमस्यार्थ इत्यवगम्य ततः शब्दादर्थं प्रतिपद्यते तस्मात् संबन्धान्तरपूर्विकैव अर्थावगतिः इति सिद्धा सापेक्षता । तदिदं कृतकशब्देन सामयिकत्वं कृतकता वोक्ता । यदा अयमर्थः प्रतिपादयितुमभिप्रेतः तदा मया अयं शब्दः प्रयोज्यः इति योऽयं प्रयोगनियमः स समयः । तेन निर्वृत्तः सामयिकः शब्दार्थयोः संबन्धः । तस्मिंश्च पक्षे शब्दप्रयोगात् अर्थप्रतिपादनाभिप्रायं प्रतीत्य तत्पुरःसरमर्थज्ञानम्, अस्य शब्दस्य अयमर्थः इति यावत् । पुरुषस्य संकेतः, तेन संबन्धः कृतकोऽभिप्रेतः । तस्मिंस्तु पक्षे शब्दादेवार्थज्ञानम् । पक्षद्वये चास्मिन् पुरुषप्रयत्नापेक्षत्वात् संबन्धस्य तत्पुरःसरत्वाच्च वेदादर्थावगतेः पौरुषेयत्वमेव वेदानाम् । पुरुषाश्च प्रमाणान्तरेण अर्थमवगम्य अवगमयन्ति इति सापेक्षता । ततश्च अप्रामाण्यं चोदनाया इति स्थितोऽयमाक्षेपः ) । **बृहती.** पृ. १०८–१०९.

( पूर्वोक्तं आक्षेपं शब्दार्थनिरूपणग्रन्थेन व्यवहितत्वात् **अनुवदति भाष्यकारः**– ) अथ संबन्धः कः इति । यत् शब्दे विज्ञाते अर्थो विज्ञायते स तु कृतकः इति पूर्वमुपपादितम् । तस्मात् मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह संबन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति । तदिदानीमुच्यते ( उत्तरम् – ) **अपौरुषेयत्वात्** संबन्धस्य सिद्धमिति । कथं पुनरिदमवगम्यते अपौरुषेय एष संबन्ध इति ? पुरुषस्य संबन्धुरभावात् । कथं संबन्धा ( –द्धृ ) नास्ति ? प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम् । ननु चिरवृत्तत्वात् प्रत्यक्षस्य अविषयो भवेदिदानीन्तनानाम् । नहि चिरवृत्तः सन् न स्मर्येत । न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । **स्यादेतत्**, संबन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणं अनाद्रियमाणा विस्मरेयुरिति । **तन्न** । यदि हि पुरुषः कृत्वा संबन्धं व्यवहारयेत्, व्यवहारकाले अवश्यं स्मर्तव्यो भवति । संप्रतिपत्तौ हि कर्तृव्यवहर्त्रोः अर्थः सिध्यति, न विप्रतिपत्तौ । नहि वृद्धिशब्देन अपाणिनेर्व्यवहारतः आदैचः प्रतीयेरन्, पाणिनिकृतिं अननुमन्यमानस्य वा । तथा मकारेण अपिङ्गलस्य न सर्वगुरुः त्रिकः प्रतीयेत, पिङ्गलकृतिं अननुमन्यमानस्य वा । तेन कर्तृव्यवहर्तारौ संप्रतिपद्येते । तेन वेदे व्यवहरद्भिः अवश्यं स्मरणीयः संबन्धस्य कर्ता स्यात्, व्यवहारस्य च । नहि विस्मृते ' वृद्धि-

रादैच्' (पा. १।१।१) इत्यस्य सूत्रस्य कर्तरि, 'वृद्धिर्यस्याचामादिः' (पा. १।१।७३) इति किंचित् प्रतीयेत। तस्मात् कारणात् अवगच्छामो न कृत्वा संबन्धं व्यवहारार्थं केनचित् वेदाः प्रणीता इति। यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण संबन्धारं प्रतिपद्येमहि। यथा विद्यमानस्यापि अनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे। तस्मात् अपौरुषेयः शब्दस्य अर्थेन संबन्ध इति।

**ननु** अर्थापत्त्या संबन्धारं प्रतिपद्येमहि। नहि अकृतसंबन्धात् शब्दात् अर्थं प्रतिपद्यमानान् उपलभामहे। प्रतिपद्येरंश्चेत् प्रथमश्रवणेऽपि प्रतिपद्येरन्। तदनुपलम्भनात् अवश्यं भवितव्यं संबन्धा इति चेत्। न। सिद्धवदुपदेशात्। यदि संबन्धुरभावात् नियोगतो नार्था उपलभ्येरन्, ततः अर्थापत्त्या संबन्धारमवगच्छामः। अस्ति तु अन्यः प्रकारः। वृद्धानां स्वार्थेन संव्यवहरमाणानां उपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते। तेऽपि वृद्धा यदा बाला आसन्, तदा अन्येभ्यो वृद्धेभ्यः, तेऽप्यन्येभ्यः इति नास्त्यादिः इत्येवं वा भवेत्। **अथवा** न कश्चिदेकोऽपि शब्दस्यार्थेन संबन्ध आसीत्, अथ केनचित् संबन्धाः प्रवर्तिता इति। अत्र वृद्धव्यवहारे सति नार्थादापद्येत संबन्धस्य कर्ता। **अपिच** व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति, कल्पयन्ति इतरे संबन्धारम्, न च प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी। तस्मात् संबन्धुरभावः।

(सूत्रपदानि योजयति–) अव्यतिरेकश्च। यथा अस्मिन् देशे सास्नादिमति गोशब्दः, एवं सर्वेषु दुर्गमेष्वपि। बहवः संबन्धारः कथं संगंस्यन्ते? एको न शक्नुयात्। अतो नास्ति संबन्धस्य कर्ता। **अपर आह**– अव्यतिरेकश्च। न हि संबन्धव्यतिरिक्तः कश्चित् कालोऽस्ति, यस्मिन् न कश्चिदपि शब्दः केनचिदर्थेन संबद्ध आसीत्। कथम्? संबन्धक्रियैव हि नोपपद्यते। अवश्यमनेन संबन्धं कुर्वता केनचित् शब्देन कर्तव्यः। येन क्रियेत तस्य केन कृतः? अथ अन्येन केनचित् कृतः, तस्य केनेति तस्य केनेति नैवावतिष्ठते। तस्मादवश्यं अनेन संबन्धं कुर्वता अकृतसंबन्धाः केचन शब्दाः वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः। अस्ति चेत् व्यवहारसिद्धिः, न नियोगतः संबन्धा भवितव्यं इत्यर्थापत्तिरपि नास्ति। **स्यादेतत्**, अप्रसिद्धसंबन्धा बालाः कथं वृद्धेभ्यः प्रतिपद्यन्ते इति। नास्ति दृष्टेऽनुपपन्नं नाम। दृष्टा बाला वृद्धेभ्यः प्रतिपद्यमानाः। न च प्रतिपन्नाः संबन्धाः संबन्धस्य कर्तुः। तस्माद्वैषम्यम्।

**अर्थेऽनुपलब्धे**। अनुपलब्धे च देवदत्तादावर्थे अनर्थकं संज्ञाकरणमशक्यं च। विशेषान् प्रतिपत्तुं हि संज्ञाः क्रियन्ते विशेषांश्चोदिश्य। तद् विशेषेषु अज्ञायमानेषु उभयमपि अनवक्लृतम्। तस्मात् अपौरुषेयः शब्दस्य अर्थेन संबन्धः। अतश्च तत् प्रमाणं अनपेक्षत्वात्। न चैवं सति पुरुषान्तरं प्रत्ययान्तरं चापेक्ष्यते। तस्मात् चोदनालक्षण एव धर्मो नान्यलक्षणः। बादरायणग्रहणमुक्तम्। भा. १।१।५।५ पृ. ५२–५८.

**बृहती**— 'अथ संबन्धः कः? यत् शब्दे विज्ञातेऽर्थो विज्ञायते' इति कः पुनरयं संबन्धः पृष्टश्च उपन्यस्तश्च? पूर्वोक्त एवेति वदामः। **ननु** चासौ संज्ञासंज्ञिलक्षणः संबन्धः, तस्मादन्य एवायं संबन्ध इति मन्यते। **तदयुक्तम्**। तत्रापि प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः संबन्ध इति स एवायं ज्ञाप्यज्ञापकलक्षणः संबन्धः उक्तः।

**ननु** च प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः संबन्ध इति वदता प्रत्याय्यस्य प्रत्यायकस्य इति षष्ठ्यभिधानेन संबन्ध्यन्तरमुक्तं भवति। **मैवम्**। तदेवेदं प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणं इति षष्ठ्या प्रतिपादितम्। कुत एतत्? **ननु** व्यतिरेकं षष्ठी प्रतिपादयति। अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः। प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणसंबन्धस्य अभिधाने निमित्तम्। अन्यथा प्रत्याय्यप्रत्यायकोपन्यासोऽनर्थकः। तमेकं न व्यपदिशति भवान् यः संज्ञासंज्ञिलक्षणः संबन्धः इति वक्तव्यम्। 'अत एव कृतक इति पूर्वमुपपादितं' इत्यनेन ग्रन्थेन पूर्वोक्तस्यायमुपन्यासः इति प्रकटयति।



किं पुनः कारणं पुनः प्रश्नोपन्यासयोः? इदमत्र कारणम्, विवर्ताक्षेपे हि (विवर्तवादिनि वैयाकरणे कृते आक्षेपे) युतसिद्धयोः अनपेक्षत्वं न शक्यते वक्तुं इति मन्वानस्य प्रश्नः। शक्यते हि वृद्धव्यवहारस्य अनादितया अनपेक्षता वक्तुं इति तस्यैवोपन्यासः। स तु कृतक इति पूर्वोपवर्णितेनैवाभिप्रायेणोक्तम्। 'तस्मान्मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह संबन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीताः' इति सापेक्षत्वं उपसंहृतम् (विवर्तवादिना)। तदिदानीमुच्यते, 'अपौरुषेयत्वात् संबन्धस्य सिद्धं' इति वृद्धव्यवहारस्य अनादितोपन्यासः।

किमिदं तर्हि प्रश्नोत्तरम्? कथमिति पृष्टे, पुरुषस्य संबन्धुरभावात् इत्युत्तरमयुक्तम्। अनादिताप्रतिपक्षनिरासायेदमुच्यते। कथं पुनरिदं प्रतिपक्षतया आशङ्क्यते? बाढमाशङ्क्यते। अनादिना अपि वृद्धव्यवहारेण शब्दार्थावगमसिद्धौ यत्र कर्ता उपलभ्यते तत्र आदिमत्त्वैव बलात् प्राप्नोति 'वृद्धिरादैच्' इतिवत्। (**ऋजु**– यद्यपि वृद्धव्यवहारानादितयाऽपि शब्दात् अर्थावगम उपपद्यते, तथापि साक्षात् संकेतकारणदर्शने न शक्यते अनादिता वक्तुं इति भवति संबन्धृपुरुषोपलम्भने प्रतिपक्षभूतम्) तस्मात् कर्तुरुपलम्भो निराकरणीयः।

'कथं पुनः संबन्धा नास्ति' इत्यस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते 'प्रत्यक्षस्य प्रमाणस्याभावात् तत्पूर्वकत्वाच्चेतरेषां' इति? कथं नोपपद्यते? अनुमानादेरपि प्रमाणत्वाभ्युपगमात्। (**ऋजु**– तेन प्रत्यक्षमात्रनिराकरणं न संबन्धुर्नास्तितामावहति)। तत्पूर्वकत्वं चायुक्तं (शब्दस्य) सापेक्षत्वप्रसङ्गात्। क्रियादिषु चाननुमेयतापत्तेः। सापेक्षत्वे च शब्दस्य औत्पत्तिकत्वप्रयासोऽनर्थक एव। तदिदमापतितं 'घोटारूढस्य विस्मृतो घोटः' इति। (**ऋजु**– यत् लोके शून्यमनःकथासु श्रूयते– घोटारूढस्य भवतो विस्मृतो घोट इति। विस्मृतः चित्तादपक्रान्तः। स्मरतेः कर्मकर्तृविषयस्य इदं रूपम्)। अभिप्रायानभिज्ञस्यैव एतच्चोद्यम्। केवलानुमानागमप्रमेयता तावन्न संभवति अनादौ वृद्धव्यवहारे प्रत्यर्थिनि। (**ऋजु**– तौ तावदनुमानागमौ केवलप्रत्यक्षव्यापारनिरपेक्षौ। तद्गम्यता तावत् संबन्धुर्न भवति। यस्मात् कार्यतः कारणानुमानं केवलानुमानम्। शब्दाच्च अर्थप्रतीतिः कार्यभूता। सा च नैकान्तेन संबन्धान्तरमेव अनुमापयितुमलम्, वृद्धव्यवहारानादितयाऽपि उपपत्तेः। तथा आगमोऽपि स्वतन्त्रस्तावत् न संबन्धृसत्त्वे प्रमाणम्, कार्यैकविषयत्वात्। यदि परं प्रत्यक्षानुमानपूर्वको वक्तव्यः, तत्रानुमानपूर्वकोऽपि अनादिवृद्धव्यवहारप्रतिपक्षसंभवेन केवलानुमानाभावात् प्रत्यक्षानपेक्षो न संभवति इति)। तस्मात् प्रत्यक्षं तत्पूर्वकं चागमानुमानं निरसनीयमिति। तस्मादुपपन्नमुत्तरम्। बहुवचनमिदानीं किमर्थं 'तत्पूर्वकत्वाच्चेतरेषां' इति? इतरयोरिति वक्तव्यम्। (उत्तरम्-) द्वयोराशङ्कनीयतया उपन्यासात्। असंभवस्तु सर्वेषामेव इत्युपपन्नं बहुवचनम्।

**ननु** चिरवृत्तत्वादिति असिद्धतामाह। कथमसिद्धता? पूर्वजानां प्रत्यक्षविषयतोपपत्तेः। न हि चिरवृत्तः सन् न स्मर्येत इति न पूर्वजानामपि प्रत्यक्षमत्र संभवतीत्यभिप्रायः। यदि स्यात् पाणिनिवत् स्मर्येत। न च हिमवदादिकूपारामादिवत् अस्मरणं भवितुमर्हति। तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः। 'न च पुरुषवियोगः शब्दानामस्ति' इति किमभिप्रेतम्? कृतकपक्षे हि तत्प्रामाण्यात् प्रामाण्यं स्यात्, न निष्प्रयोजनतया विच्छेदः स्मरणस्योपपद्यते इत्यभिप्रायः। (**ऋजु**– यदि संबन्धा पुरुषः प्रत्यक्षसमधिगम्यः स्यात् तदा तत्संकेतृसंप्रतिपत्त्यर्थः प्रतिपत्तव्यः। नहि संकेतृविप्रतिपत्तौ व्यवहारः स्यात् आर्यद्रमिलयोरिव कलिशब्दे। तेन संकेतृसंप्रतिपत्त्यर्थं पुरुषः स्मर्तव्यः स्यात्)। तच्च पाणिनिपिङ्गलोपन्यासेन प्रकटितम्।

'यद्यपि च ... प्रतिपद्यामहे' (भाष्यं) इति किंविषयमिदं विस्मरणमुपन्यस्तम्? यदि तावत् साध्यविषयम्, तदेदमेव प्रमाणं यदुत विस्मरणोपपत्तिः। उक्तं च (स्मृत्यधिकरणे) 'विस्मरणमुपपद्यते' इति। तथा न (च) प्रमाणमन्तरेण संबन्धारं प्रतिपद्येमहि इति अहेतुः।

यदप्युच्यते– ' यथा विद्यमानस्यापि अनुपलम्भनं भवति इति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे ' इति, तदप्ययुक्तम् । यदि विद्यमानस्यैव अनुपलब्धिः, केन वा शक्यते वक्तुं शशविषाणं नास्तीति ।

अथायमभिप्रायः । ' यद्यपि अन्यत्र विस्मरणोपपत्तिर्दृष्टा, नैतावता अन्यत्रापि विस्मरणोपपत्तिः शक्यते वक्तुं ' इति, असदभिप्रायोऽयम् । बाढं अन्यत्र दृष्टं अन्यत्र भवतीत्युच्यते । अयमेव हि सामान्यतो दृष्टस्य विषयः ।

अत्राभिधीयते । नैवेयं प्रमाणतयोपन्यस्यते विस्मृतिः अनुपलब्धिर्वा । किंतु उपलब्धस्यार्थस्य कारणदोषनिराकरणाय इदमुपन्यस्यते । इह पुनर्भवता अनुपलब्धावेव इदमुपन्यस्तं इति असंबद्धमित्युक्तम् । ( ऋजु-- अनुपलब्धावेव सर्वैः प्रमाणैरपि अनुपलब्धावेव संबन्धुः इदं विस्मरणं उपन्यस्तं इति असंबद्धं कारणदोषनिराकरणेनापि न संबध्यते इत्युक्तम् ) । यथा घटादेरुपलब्धस्य अनुपलब्धिरस्ति इति नैतावता शशविषाणस्य अस्तित्वं शक्यते वक्तुम् । उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते । अनुपलब्धेः पुनः अनुपलब्धेरेवानुपलब्धिः ( न तत्र कारणान्तरकल्पना ) । तस्मात् सूक्तमिदम् ।

' **ननु** अर्थापत्त्या ' इति किमियं प्रमाणसंज्ञा उपन्यस्ता ? ( एकदेशी आह– ) ओमित्युच्यते । ( राद्धान्ती दूषयति– ) किं पुनरत्र नोपपद्यते इति अनया ( बुद्ध्या ) परिगृह्यते ? ( एकदेशी आह– ) ननु च संबन्धस्य कर्ता । ( राद्धान्ती– ) कथं पुनरसौ नोपपद्यते ( इत्येवं परिगृह्यते । एकदेशी– ) प्रथमश्रवणे अर्थानवगतेः । ( राद्धान्ती– ) यदि प्रथमश्रवणे अर्थं न प्रतिपद्यते किमायातं संबन्धस्य कर्तुः ? ( न तस्यानुपपत्तिः काचित् अस्ति । ) ( एकदेशी– ) एवं तर्हि ( प्रसिद्धार्थापत्त्युदाहरणेऽपि ) यदि गृहे देवदत्तो नोपलभ्यते, किमायातं बहिर्भावस्य ? (तत्रापि गम्यस्य बहिर्भावस्य अनुपपद्यमानता नास्ति)। ( सिद्धान्ती– ) न ब्रूमो बहिर्भावो नोपपद्यते इति । किं तर्हि ? विद्यमानता नोपपद्यते इत्युक्तम् ( अर्थापत्तिलक्षणे ) । सैवेयं बहिरस्तीति संवित् ( तस्मात् तत्र अनुपपद्यमानमेव प्रतीयते ) । इह पुनः प्रथमश्रवणे अर्थानवगतेः संबन्धस्य कर्त्रा कः संबन्धो दृष्टः ( इति नानुपपत्तिः आयाति ) ।

अथेदं मनसि वर्तते, न प्रथमश्रवणात् प्रतिपद्यते, प्रतिपद्यते च द्वितीयादिश्रवणात् । तस्मात् शब्दादन्यत् कारणान्तरं मृग्यमिति । ( दूषयति– ) कार्यतस्तर्हि कारणानुमानमुक्तम् । ( एकदेशी– ) कथं तर्हि अर्थापत्त्येति ( भाष्यं युज्यते ? ) । ( सिद्धान्ती– ) अर्थात् अनुमानात् आपत्तिरित्यर्थः । कस्मात् ? अर्थात् कार्यात् ( अर्थावगतिलक्षणात् ) इत्युक्तम् ( संबन्धाक्षेपे ) ।

**ननु** च अनुमानमपि नोपपद्यते, प्रथमश्रवणादप्रतीतेः अनैकान्त्यात् । वेदवाक्यादेव प्रथमश्रुतादर्थावगतेः । ( एकदेशी– ) ननु पदगतेयं चिन्ता ( तेन पदाभिप्रायेण इदमुच्यते ' प्रथमश्रवणे अर्थानवगमादिति । न च किंचन पदं प्रथमश्रवणे अर्थमवगमयति, इति नास्ति भागासिद्धता ) । ( सिद्धान्ती– ) किमिदं पदं नाम ? ( यद्विषया चिन्ता भवता क्रियते ) ( एकदेशी– ) प्रसिद्धा गवादयः ' देवदत्त गामभ्याज ' इत्येवमादिषु वाक्येषु । ( सिद्धान्ती– ) किं कार्यान्यतया प्रसिद्धाः , उत वाक्यार्थावगतिरेव कार्यम् ? ( न पदानां वाक्यार्थावगतेरन्यत् कार्यमस्ति । यावत् सा वाक्यार्थावगतिः, सा प्रथमश्रवणेऽपि भवति । वाक्याद्धि सा भवति । नैकस्मात् पदात् । न च वाक्यस्य द्वितीयश्रवणापेक्षा ) । ( एकदेशी– ) बाढं कार्यान्यतया प्रसिद्धाः ( आवापोद्धाराभ्यां हि पदानां पदार्थमात्रावगमः एव कार्यतया अवसितः ) । ( पृच्छति– ) कस्मिन् ( प्रसिद्धाः ) ? ( एकदेशी– ) व्यवहारे, येन वृद्धा व्यवहरन्ति ( व्यवह्रियते अनेनेति व्युत्पत्त्या वाक्यमेव व्यवहारः ) । केन वृद्धा व्यवहरन्ति ? ( उत्तरं– ) देवदत्त गामभ्याज शुक्लां इत्येवमादिना । ( सिद्धान्ती– ) एवं तर्हि वाक्येनार्थे व्यवहारः । न हि व्यवहाराप्रसिद्धोऽर्थः कार्यान्तरतया शक्यते वक्तुम् । ( एकदेशी ग्रन्थविरोधमाह– ) कथं तर्हि 'अथ गौः इत्यस्य शब्दस्य कोऽर्थः', 'सास्नादिविशिष्टा आकृतिः ' इति चोत्तरं असति कार्यान्यत्वे ? ( सिद्धान्ती– ) कथं वा वृद्धव्यवहारेण अस्य ( संबन्धस्य ) औत्पत्तिकत्वाभिधानम् ? ( यथा अयं ग्रन्थः मन्मते न घटते इति मन्यसे, तथा त्वन्मतेऽपि वृद्धव्यवहारेण अस्य संबन्धस्य औत्पत्तिकताभिधानं न घटते । वृद्धव्यवहारे हि निरूप्यमाणे वाक्यार्थावगतिरेव कार्यतयाऽवभाति, न पदार्थावगतिः) । तस्मात् प्रतिज्ञासाधनयोः यथैकवाक्यता भवति तथा अयं ग्रन्थो वर्णनीयः । स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेण वर्ण्यते इत्युपरम्यते । कस्तर्हि अनैकान्तिकपरिहारः ? निमित्ताभिप्रायेणोच्यते । अप्रतिपन्ननिमित्तः प्रथमश्रुतान्न प्रतिपद्यते । तस्मात् शब्दात् निमित्तान्तरमस्तीत्यभिप्रायः । ( ऋजु– निमित्तं वाक्यार्थप्रतिपादने पदार्थात्मकमभिप्रेत्य उच्यते– प्रथमश्रुतः किं न प्रत्याययतीति । प्रथमश्रुतं पदं निमित्तभूतं पदार्थं न प्रतिपादयति । अप्रतिपन्ननिमित्तश्च प्रथमश्रुतात् पदात् वाक्यार्थमपि न प्रतिपद्यते इति सिद्धं वेदेऽपि प्रथमश्रुतस्य अप्रतिपादकत्वम् ) । कः पुनः वाचकनिमित्तयोर्भेदः ? इदमर्थमेव हि तद्भूताधिकरणं आरभ्यते इत्यलमतिप्रपञ्चेन । ( ऋजु– निमित्तपक्षे पदानि स्वार्थेष्वपि तेषु व्याप्रियमाणानि वाक्यार्थप्रतिपत्तिं उपजनयन्ति, न पुनः प्रत्यस्तमितपदविभागं अनवयवमेव वाक्यार्थं वदन्तीति । एवं च कथ्यमाने कथित एव वाचकनिमित्तयोर्भेदः ) ।

' न सिद्धवदुपदेशात् ' ( भाष्यं पृ. ५५–५६ ) इति । ( ऋजु– औत्पत्तिकसूत्रस्थं ' उपदेशः इति प्रथमान्तं पञ्चम्यन्ततया विपरिणमय्य सिद्धवत् इति चाध्याहृत्य भाष्यकारेण इदमुक्तम् । अस्यार्थः– सिद्धवदिदं संबन्धस्य अपौरुषेयत्वं सिद्धमित्यर्थः । उपदेशात् वृद्धोपदेशात् । तेन संबन्धृकल्पनानुपपत्तिः) । किमिदं सिद्धवदुपदेशादिति ? इदमिदम् । नात्र कर्ता शक्यते कल्पयितुं वृद्धव्यवहारस्यानादित्वात् । अतः औत्पत्तिकः संबन्ध इति सिद्धम् । पृ. १३१–१४३. [ पृ. १५३ ] " किमिदं अन्यथैव प्रक्रान्तमन्यथैवोपसंहृतम् ? शब्दादेवार्थावगतिरिति प्रक्रान्तम् , वृद्धव्यवहारादित्युपसंहृतम् । तदिदं अन्यत्राहितं अन्यत्रैव निपतितम् । वृद्धव्यवहारात् अर्थे अवगम्यमाने नैव शब्दादवगतोऽर्थो भवति हस्तसंज्ञादिभ्य इव । हस्तसंज्ञादयोऽपि वृद्धव्यवहारप्रसिद्धा एव, नार्थेन संबद्धा इति । व्युत्पत्तिरेव हि अर्थावबोधकरणं न हस्तसंज्ञादयः । व्युत्पत्त्युपाधयो हि ते । तस्मादुपाधिः शब्दो नार्थावगतेः कारणम् । कशाङ्कुशप्रतोदाद्यभिघातवत् । अत एव च शब्दस्वभावज्ञैः ( वैयाकरणैः ) उक्तं ' विवर्त एव च भेदवादिभिः आश्रयणीयः ' इति ।" **अत्राभिधीयते** । किमनेन विवर्तपक्षपातेन, प्रत्युक्तोऽयम्, एकत्वानुपलब्धेः ( शब्दार्थयोः एकत्वस्यानुपलब्धेः ) । यद्येवम्, प्रत्युक्तं तर्हि वेदस्य प्रामाण्यम् । अत्रोच्यते । वृद्धव्यवहारव्युत्पत्त्या अवगम्यमानेऽर्थे शब्दादन्यत् कारणं किं वा मन्यते भवान् ? ननु च व्युत्पत्तिमेव कारणतया मन्यामहे । **मैवम्** । शब्दस्य अर्थसंबन्धविषया हि व्युत्पत्तिः, न व्युत्पत्तेः शब्दार्थावगतिः । व्युत्पत्तिरेव हि आदिमती, न पुनः शब्दार्थयोः संबन्धः, तस्य विषयत्वात् । तस्मात् ' न सिद्धवदुपदेशात् ' इति सम्यगभिहितम् ।

**ननु** कार्येऽपि संबन्धे वृद्धव्यवहारव्युत्पत्तिः बालानां अनुगुणैव । कथमियं प्रतिपक्षतया शङ्क्यते ? **सत्यम्**, प्रमाणान्तरपरिज्ञेये हि कार्यत्वे व्युत्पत्तिः व्याकरणादिव्युत्पत्तिरिव, न विरोधः, अथ च कृतकः कस्य पुनर्निरुणद्धि कल्पनाम् । न चात्र प्रमाणान्तरमस्तीत्युक्तम् । ( ऋजु– यत्र प्रमाणान्तरेण कार्य एव संबन्धोऽवगतः तत्र भवतु कार्यता । यत्र पुनः प्रमाणान्तरं कार्यत्वे नास्ति, तत्र कार्यत्वं कल्पयितव्यम् । तच्च अर्थप्रतीतिलक्षणात् कार्यात् । तच्चेत् कार्यं वृद्धव्यवहारव्युत्पत्तेरेव प्रत्यक्षभूतायाः उपपन्नम्, तर्हि न शक्यते कार्यतानुमानम् । नहि प्रत्यक्षदृष्टे कारणान्तरे सति सर्वत्र तदेव कारणमनुमातुं शक्यते । तेन अर्थप्रतिपत्तिकार्यबलेन तावन्न शक्यते संबन्धस्य अपौरुषेयता वक्तुम् । यत्र पुनः साक्षादेव दृश्यते, तत्र तथैवाङ्गीक्रियते । न चात्र प्रमाणान्तरमस्तीत्युक्तम् ) ।

किंच कार्ये हि संबन्धे कर्तुर्दुर्गमेषु देशेषु संबन्धकरणे न किंचित् प्रयोजनमस्तीति । संव्यवहारार्थं हि संबन्धकरणम् । न दुर्गमस्थैर्व्यवहारोपपत्तिः । ( ऋजु– यदि

एक एव पुरुषः शब्दानामर्थैः सह संबन्धं कृत्वा वेदान् प्रणयेत् तदा तेन वेदव्यवहारिष्वेव संकेतः कार्यः, न दुर्गमदेशव्यवस्थितेषु म्लेच्छादिषु, तेषां वेदव्यवहाराभावात् । दृश्यते च म्लेच्छादिदेशेष्वपि सास्नादिमति गोशब्दप्रयोगः । न चेदमुपपन्नं वेदकारादन्य एव संबन्धकारः इति । संबन्धकरणस्य निष्प्रयोजनत्वात् । व्यवहर्तुं हि पाणिनिपिङ्गलादयः संकेतं कुर्वन्ति । तस्मान्न कश्चिद्दोषः । अनेन 'अन्यतिरेकश्च' इत्यस्य प्रथमा व्याख्या दर्शिता । [भाष्ये पृ. ५६ पं १० आरभ्य] द्वितीयां वर्णयति–) । किंच कार्यः संबन्धः संबन्धिशब्दादृते नोपपद्यते । यदि कार्यार्थः संबन्धोऽभ्युपगम्यते कृतं कार्येण । (ऋजु– 'अनेन शब्देन अयमर्थोऽत्र प्रतिपादयितव्यः' इतीत्थं संबन्धः कर्तव्यः । न च तत् शक्यते कर्तुम् । यदि वृद्धव्यवहारे एव व्युत्पन्नाः केचन शब्दाः व्युत्पाद्यानां अङ्गीक्रियन्ते, ते हि पूर्वशब्देन व्युत्पन्नानां संबन्धकरणवाक्यार्थमपि बोद्धुमलम् । यदि वृद्धव्यवहारप्रसिद्धाः केचन व्युत्पाद्यानामङ्गीक्रियन्ते तदा किमपरं संबन्धकरणेन ? वृद्धव्यवहार एव व्युत्पत्त्युपायोऽस्तु ) ।

ननु च व्युत्पत्तिरपि कार्यतामपेक्षते एव । कथम् ? अयमत्र वाचक इत्येवं अविज्ञातार्थस्य न शब्दादर्थावगतिरुपपद्यते । नहि दृष्टेऽनुपपन्नं नाम । व्यवहारमात्रादेव हि बालानामवगतिः दृष्टा । तस्मात् प्रत्यक्षदृष्टे ( शब्दार्थावगतिकारणे ) एवं उपपद्यमानेऽर्थे न कर्तुः कल्पना उपपद्यते ।

( अर्थेऽनुपलब्धे इत्यस्यार्थं व्याचष्टे– ) इदमपरं व्यवहारानौपयिकम् । कृते हि संबन्धे अदृश्यमानस्यार्थस्य देवतादेः संबन्धकरणम् । अशक्तिस्तु उपवर्णितैव ( भाष्ये ) । तस्मात् औत्पत्तिकत्वात् सिद्धमनपेक्षत्वम् । पृ. १५३–१५६.

* **शब्दार्थसंबन्धनित्यत्वसिद्ध्यर्थं** नित्यस्यैव शब्दप्रवृत्तिनिमित्तस्य अपेक्षा । सु. पृ. १०३.

* **शब्दार्थसंबन्धवादः । भाष्यम्—** स्यादेतदेवम् । नैव शब्दस्य अर्थेन संबन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वेति । कथम् ? स्याचेदर्थेन संबन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्, यदि संश्लेषलक्षणं संबन्धमभिप्रेत्य उच्यते । कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावादयस्तु संबन्धाः शब्दस्य अनुपपन्ना एवेति । उच्यते । यो ह्यत्र व्यपदेश्यः संबन्धः तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षण इति ।

आह, यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति ? उच्यते सर्वत्र नो दर्शनं ( लोकव्यवहारः ) प्रमाणम् । प्रत्यायक इति हि प्रत्ययं दृष्ट्वा अवगच्छामः, न प्रथमश्रुत इति । प्रथमश्रवणे प्रत्ययमदृष्ट्वा यावत्कृत्वः श्रुतेन इयं संज्ञा अयं संज्ञी इत्यवधारितं भवति तावत्कृत्वः श्रुतात् अर्थावगम इति । यथा चक्षुः द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशयति इति अद्रष्टृ न भवति । ( शक्तिज्ञानस्य सहकारित्वमाश्रयणीयमिति ) । १।१।५।५ पृ. ४३–४४.

श्लोवा-- "**अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् । १२ ॥ शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम् ।**' वाच्यत्वं वाचकत्वं च दर्शयति– अभिधानेति । अर्थप्रतिपत्तिफलः शब्दव्यापारः अभिधानक्रिया, तच्च शब्दज्ञानमेव । प्रतिपत्त्याख्यक्रियाफलभागितया यत् अर्थस्य कर्मत्वं तत् वाच्यत्वम्, शब्दस्य च विवक्षावशेन यत् कर्तृत्वं करणत्वं वा तत् वाचकत्वम् ।

'**प्रतिपत्तावुपादानात् साहित्ये च विवक्षिते । १३ ॥ नियम्यते यदेकस्यां ( क्रियायां ), संबन्धः सोऽर्थशब्दयोः ।**' उद्देश्याः अन्योन्यमनपेक्ष्य क्रियां वशीकुर्वन्तः युक्तं यत् न मिथः संबध्यन्ते । उपादेयानां तु क्रियया वशीकृत्य संहन्यमानानां तद्द्वारेण अस्ति परस्परनियमः संबन्धः । तथा उद्देश्योपादेययोरपि अस्ति साहित्यम् । उद्देश्यं हि क्रियामाकर्षति, सा च स्वांशभूतमुपादेयं गृहीत्वैव स्वप्रधानं याति । तदिह अर्थः प्रधानभूतः स्वप्रतिपत्तिसिद्धये अभिधाव्यापारमुपादत्ते । स च स्वांशभूतं शब्दम्, इत्यस्ति शब्दार्थयोः एकक्रियानियमात् संबन्धः ।

'**तत्र यद्यप्यसंबन्धः कारकाणां परस्परम् । १४ ॥ तथापि यत्क्रिया तस्यामुपकार्योपकारिता ।**



**स क्रियासंगतेः पश्चात् संबन्धः कीर्त्यते तयोः । १५ ॥ न चात्राप्यविनाभाव उपयोगीति साधितम् ।**' ननु अस्तु एकस्यां क्रियायां नियमः, तथापि कारकाणां परस्परासंबद्धानां क्रिययैव संबन्धात् कथं शब्दार्थयोः संबन्धः, अत आह– **तत्रेति** । अर्थस्य व्यवहारोपयोगिनः प्रतिपत्त्याख्यं संस्कारं कुर्वन् शब्दः उपकारको भवति अर्थश्चोपकार्यः इत्यस्ति अभिधानक्रियाद्वारकः शब्दार्थयोः उपकार्योपकारकलक्षणः वाच्यवाचकभावः नियमादिपर्यायः संबन्धः । ननु एवं नियमजन्यत्वात् अनुमानमेव शाब्दं स्यात् अत आह– **नचेति** । प्रतीत्युत्तरकालोऽयं नियमः न प्रतीत्युपयोगी इत्युक्तमिति ।

'**संज्ञेति गमकत्वं चेन्न तदङ्गमियं भवेत् । १६ ॥ गमयन्तीं श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः । न चैषा गमयत्यर्थं संबन्धेऽनवधारिते ॥ १७ ॥ तस्माद् गमकता पश्चाद् धूमादेरिव जायते । साऽनङ्गं तद्वदेव स्यात्, नेयं धूमादिभिः समा ।' १८ ॥** ( इयं, एषा, इयं, इति शब्दैः संज्ञा निर्दिष्टा ) चोदयति– संज्ञा इति सपादद्वयेन । गमकत्वमेव हि संज्ञात्वम्, तच्च अवगत्युत्तरकालभावित्वात् नावगत्यङ्गम् । अतः संबन्धान्तरं वक्तव्यम् । नहि असति संबन्धे संज्ञा संज्ञिनं गमयति । गमकता तु पश्चादुपजायमाना धूमादिलिङ्गस्येव वाचकत्वस्यापि अनङ्गमेवेत्यर्थः । परिहरति– नेयमिति ।

'**निरूपितेऽविनाभावे तत्र तत्कारिता ह्यसौ । गमकत्वेन, पूर्वं च तत्र नोत्पद्यते मतिः । १९ ॥ इह वाचकतायाः प्राङ्नाविनाभाविता मतिः । यदैव चेह संबन्धं वृद्धेभ्यः प्रतिपद्यते । २० ॥ तदैव गमकोऽस्यायमिति, नान्यस्वरूपतः ।**' नेयं समा इत्युक्तं वैधर्म्यं दर्शयति–निरूपिते इत्यादिना । धूमादौ देशकालादिद्वारा संबन्धनियमे अवगते तत्संबन्धेनैव गमकता, न तु सैव प्रथमं गृह्यते । शब्दस्य ( संज्ञायाः ) तु प्रथमं गमकत्वं वृद्धेभ्यो गृह्यते, न संबन्धान्तरम्, तद्ग्रहणादेव च गमकता भवति । न चात्माश्रयता, पूर्वपूर्ववृद्धेषु गमकत्वग्रहणात् उत्तरोत्तरेषां गमकतोपपत्तेरिति ।

'**कथयन्ति कचित्तावद् बोद्धव्योऽस्मादयं त्विति । २१ ॥ कचिद् वाचक इत्येवं वाच्योऽयमिति चोच्यते । कचिदुच्चरिताच्छब्दाद् दृष्ट्वाऽर्थविषयां क्रियाम् । २२ ॥ केषांचित् तत्र बोद्धृत्वमनुमानात् प्रतीयते । एतेनास्माद्यतः शब्दादर्थोऽयमवधारितः । २३ ॥ तेन नूनमिमौ सिद्धौ लोके वाचकशक्तिकौ ।**' अस्मात् पदात् अयमर्थो बोद्धव्यः इति एका रीतिः । अयं शब्दो वाचकः अयमर्थस्तस्य वाच्यः इति द्वितीया । उच्चरिताच्छब्दात् अर्थविषयां ज्ञानक्रियां दृष्ट्वा केषांचिच्छब्दानां तत्रार्थे बोद्धृत्वं बोधकत्वं अनुमानात् ज्ञायते । अनुमानं च दर्शितं श्लोकेन । शक्तिकः शक्यः वाच्यः इत्यर्थः । एवं वृद्धेभ्यः त्रेधा प्रतिपत्तिर्दर्शिता ।

'**इत्थं वाचकता सिद्धा संकीर्णाऽपि ततः परम् । २४ ॥ अन्वयव्यतिरेकाभ्यां निष्कृष्टेऽर्थे नियम्यते ।' २५ ॥** इत्थं शब्दस्य जातिव्यक्तिसंकीर्णा वाचकता सिद्धा । निष्कृष्टे तु अर्थे जातिमात्ररूपे पश्चात् नियम्यते ।

'**तस्माद्गमकतैवादावभिधायकता पुनः । ३१॥ तन्निमित्तेति संबन्धः संज्ञासंज्ञित्वलक्षणः ।**' गमकत्वे गृहीते पश्चात् तन्मात्रेणैव असत्यपि संबन्धान्तरे शब्दादर्थं प्रतिपद्यमानो लिङ्गेन्द्रियविलक्षणं अभिधायकत्वरूपं गमकत्वं संज्ञाऽपरपर्यायं अध्यवस्यति इति संज्ञासंज्ञित्वमेव संबन्धः ।

'**संबन्धनियमोऽयं तु याऽविनाभावितोच्यते ।' ३२ ॥** गमकत्वस्यैव संबन्धस्य संकीर्णरूपेण अवगतस्य विषयनियमः अन्वयव्यतिरेकाभ्यां अवगम्यते 'अस्यायं गमकः अस्यायं' इति, अतः स एव संबन्धः ।

'आह यदि प्रत्यायकः शब्दः' इत्यादिभाष्यार्थमाह-- ( भा. पृ. ४४ ) '**संबन्धग्रहणात् पूर्वं यस्मान्न गमयत्यतः । गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथा ॥' ३३ ॥** परिहारभाष्यार्थमाह–

**'यथैव गमकः शब्दो व्यवहारात् प्रतीयते । तथैव शक्तिविज्ञानं तस्योपायोऽवगम्यते । ३४ ॥ स्वरूपग्रहणं चास्य यथा व्याप्रियते फले । तथा संबन्धविज्ञानं नाशक्तिस्तत्कृता भवेत् । ३५ ॥ यत् साधकतमत्वेन कस्यचित् किंचिदुच्यते । तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी । '** ३६ ॥ न केवलं शब्दस्य, किंतु अन्यस्यापि करणस्य अनुग्राहकापेक्षा नाशक्तिमापादयति ।

**'नहि तत् करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ।'** ३७ ॥ संबन्धज्ञानसापेक्षत्वेऽपि शब्दस्य अर्थबोधकत्वे करणत्वं न विहन्यते ।

तथैवेहापि संबन्धज्ञानमङ्गमापादयति ।

**'नहि तत् करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता । ३७ ॥ तथैवेहापि संबन्धज्ञानमङ्गं प्रसिद्धितः । गौरवात् करणत्वेन मतं चेत् केन वार्यते । ४२ ॥'** संबन्धज्ञानसापेक्षत्वेऽपि शब्दस्य अर्थवाचकत्वे करणत्वं न विहन्यते । अथ संबन्धस्यैव करणत्वं मतं चेत् न निवारयामः ।

'यथा चक्षुः' इत्यादिभाष्यार्थमाह ( भा. पृ. ४४ ) **'यथा चक्षुरितीदं तु व्यभिचारित्वमुच्यते । देवदत्तेऽपि चाव्यक्तां शक्तिमिच्छन्ति युक्तितः । ४३ ॥ प्रकाशेऽवस्थिते बाह्ये नान्वे रूपं प्रतीयते । फलानन्तर्यतश्चापि चक्षुः करणमिष्यते । '** ४४ ॥ श्लोवा. संबन्धाक्षेपवादे.

**बृहती**— **ननु** सर्वं एवायं तत्र ( औत्पत्तिकसूत्रे ) **अर्थो** विवृतः, पुनरनूदितः । **सत्यम्** , विशेषाभिधानाय । कः पुनरत्र विशेषोऽभिधीयते ? **'ननु च संबन्ध एव नास्ति'** इति पूर्वोक्तमाक्षिप्य पुनः समाधिः । **ननु** वाक्यार्थोऽयमाश्रितः विद्यमानोपलम्भनत्वादिति, पदविषयं तु औत्पत्तिकत्वं मन्यन्ते मीमांसकाः । ( उत्तरम्- ) किमनया अनुपासितगुरुकथया विकल्पितया ? यस्माद्धि यः प्रतीयते स तस्यार्थः । न च केवलात् पदात् वृद्धव्यवहारे कस्यचिदर्थस्य अवगतिः दृष्टा । अनवगम्यमानस्य चार्थस्य केनचित् संबन्धः इति दुर्वचं वचः । ( ऋजु- अनेन ग्रन्थेन वाक्यविषयः आक्षेपः, औत्पत्तिकत्वमपि वाक्यविषयमेव इति परिहारः । यस्मान्न केवलं पदं क्वचित् अर्थप्रतीतिं जनयति, वृद्धव्यवहारे तथा व्युत्पत्तिविरहात्, अन्वितस्वार्थाभिधानतयैव व्युत्पत्तेः । अर्थान्तरापेक्षत्वाच्च अन्वयस्य, पदान्तरादृते तदनवगतेः । पदान्तरापेक्षत्वे च सिद्धं वाक्यस्यैव प्रतिपादकत्वं न केवलस्य पदस्य ) ।

कथं तर्हि प्रसिद्धिरियम् । ( पदविषयमौत्पत्तिकत्वमिति ) । अनुपासितगुरुत्वादित्युक्तम् । तस्मादौत्पत्तिको वाक्यार्थयोः संबन्धः ।

**स्यादेतत् इति** ( भा. पृ. ४३ ) । यदि नित्यः संबन्धः स्यादित्यर्थः । इदं किमिति न स्यात् चोदनालक्षणोऽर्थो धर्म इति । (ऋजु- स्यादेतत् इति भाष्यस्य यदि नित्यः संबन्धः स्यात् स्यादेतत् इत्येषोऽर्थः इति । पुनरिदानीं स्यादेतत् इति भाष्यं अक्षरतो व्याचष्टे— इदं उपसंहारभाष्योक्तं 'तस्माच्चोदनालक्षणोऽर्थो धर्मः' इति इदं किमिति न स्यात् । यावता स्यादेतदेवं चोदनालक्षणोऽर्थो धर्म इति । एतच्छन्देन च स्यादेतत् इति भाष्योक्तेन पूर्वप्रकृतं चोदनालक्षणो धर्म इत्येतत् प्रत्यवमृश्यते इत्यर्थः ) ।

स्याच्चेदर्थेन संबन्धः इति अस्य अभावहेतुं क्षुरमोदकशब्दोच्चारणग्रन्थेन ब्रुवन् संबन्धस्य अभ्युपगमं दर्शयति संश्लेषसंबन्धमभिप्रेत्येति ।

केनायं अभ्युपगतः संबन्धः, येन निराकरणीयतया उपन्यस्यते । ( स एवाह- ) ननु च शब्दस्वातन्त्र्यवादिभिः ( मीमांसकैः ) शब्दात् अयमर्थोऽवगम्यते इति अयमेव (वाच्यवाचकभावः) अभ्युपगतः संबन्धः । अनभ्युपगतस्य निराकरणं अन्धपदम् ( अपर्यालोचनापूर्वकं इत्यर्थः ) । ( उत्तरम्- ) इदमेवात्र निराक्रियते- यदुत शब्दादर्थोऽवगम्यते इति । कथं पुनः संश्लेषसंबन्धनिराकरणेन एतन्निराकृतं भवति ? भवति । शब्दादर्थज्ञानं हि कार्यं केनचित् कारणेन । शब्दादर्थज्ञानं च न शब्दादेव इति शक्यते वक्तुं चक्षुरादीनामिव, प्रथमश्रवणादप्रतीतेः । ( स एवाह- ) एवं तर्हि धूमा-



दीनां अग्न्याद्यर्थावगताविव न स्वरूपमेव कारणम् । किं तर्हि ? सहावस्थानादिलक्षणः संबन्धः । स चायं शब्दे न कश्चिदुपलभ्यते प्रागर्थावगमात् । तस्मात् ( कारणभूत- )संबन्धान्तरनिराकरणेन वाच्यवाचकता निराकृता भवति ।

यदि एवं ( कारणतया निराकरणं संश्लेषस्य ) सर्व एव ( संबन्धाः ) निराकरणीयाः । किमिदमुच्यते यौनादयो नैव संभवन्ति इति संश्लेषस्यैव सहेतुकं निराकरणम् । **अथायमभिप्रायः**— यौनादयो नोपलभ्यन्ते तेन अनाशङ्कनीयत्वात् न निराक्रियन्ते इति । संश्लेषो वा किमुपलभ्यते ? तथा च 'क्षुरमोदकशब्दोच्चारणे' इत्यनुपलब्धिरेव उपन्यस्ता । तस्मान्न विद्मः केन विशेषेण इदं निराकरणीयतया उपन्यस्तमिति ।

**अथायमभिप्रायः**— संश्लिष्टस्यैवार्थस्य गम्यता गमकत्वं चेति ( गमकत्वं शब्दस्य, गम्यत्वं चार्थस्य ) । तदयुक्तम् । कार्यकारणयोः असंश्लिष्टयोरपि गम्यगमकत्वदर्शनात् । तस्मान्नैकान्तेन संश्लेष एव कारणम् । अपि तु कार्यकारणभावादयोऽपि । कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत्, ( सर्वत्र संश्लेषो व्यापकः । कार्यकारणयोरपि समवायिकारणभूततन्तुपटयोः असमवायिकारणात्मकतन्तुसंयोगपटयोश्च संश्लेषदर्शनात् ) नैतत् निमित्ते संभवति । ( नैतत् संश्लिष्टत्वं निमित्ते कुविन्दादौ संभवति । न च कुविन्दादयः न कारणम्, तद्भावभावाविशेषात् ) गम्यमानमेव गम्यं च (कार्यदर्शनात्) । तस्मादिदं अन्धपदमिव प्रतिभाति । उच्यते । अत्र हि औत्पत्तिकवादिनः केचित् ( वैयाकरणाः ) स्वमेव रूपं अध्यस्य शब्दः अर्थं प्रत्याययति इति प्रतिपन्नाः । ( शब्द एव अर्थरूपेण अध्यस्तः शब्दादवगम्यते इति मन्यन्ते ) । युक्तिश्चोक्ता, स्वमेव रूपं शब्दस्य येयं अर्थपरिणतिः इति । ( योऽयमर्थाकारः स शब्दस्यैव रूपम्, तस्मात् शब्दाध्यासरूपः अर्थः ) । अतः तन्निराणाय इदमुक्तम् । तस्मिन् पक्षे संश्लेष एव ( तादात्म्यरूपः ) शब्दार्थयोः संबन्धः । सोऽयं कार्यानुपलब्ध्या न घटते इति 'क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्' ( भा. पृ. ४३।२ ) इत्युक्तम् । कथं तर्हि 'गौरयं' इति तुल्यो निर्देशः शब्दार्थयोः ? अस्यायं निर्देशः । स तु नाध्यासकृतः इति आकृतिग्रन्थे वक्ष्यामः । यौनादयस्तु संबन्धाः शब्दस्य अनुपपन्ना एव इत्यनभ्युपगमं दर्शयति ।

'योऽत्र व्यपदेश्यः ... ... संज्ञासंज्ञिलक्षणः संबन्धः' ( भा. पृ. ४३।५-६ ) इत्यनेन औत्पत्तिकत्वं पुनरुपोद्बलयति ( सिद्धान्ती ) ।

'आह यदि.....प्रत्याययति' (भा. पृ. ४४।१) स्वतो हि सर्वभावानां प्रवृत्तिः चक्षुरादीनामिव रूपग्रहणे । तस्मात् सापेक्षत्वं शब्दस्य अर्थप्रतिपत्तौ अस्ति इति **'प्रथमश्रुतः किं न प्रत्याययति'** इत्युक्तम् । **'सर्वत्र नो दर्शनं प्रमाणम्'** इति ( भा. ) । स्वाभाविकानां स्वभावत एव कार्यकारिणां सापेक्षत्वं अनपेक्षत्वं च दर्शनादेवावगम्यते । दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतौ आलोकसापेक्षत्वम्, दहने च अनपेक्षत्वं अग्न्यादेः । तदिदमुक्तं 'सर्वत्र नो दर्शनं प्रमाणम्' इति । दृष्टं हि कार्यं पुरुषप्रयत्नानपेक्षं पुरुषानुपलब्धेः । सापेक्षं च प्रथमप्रयोगादनवगतेः प्रयोगान्तरे चावगमात् । **बृहती.**, ऋजु. पृ. १०२-१०८.

* **शब्दोक्ते** असति अर्थात् क्रिया ( अर्थक्रिया ) भवति । **भा.** १२।१।४।११.

* **शब्दोत्पत्तिपक्षे** एवैतत् संनिकृष्टविप्रकृष्टानां क्रमेणोपलम्भनमुपपद्यते, न पुनरभिव्यक्तिपक्षेऽपि । यस्मादुत्पत्तिपक्षे एव संयोगविभागा वायवेगं शब्दलक्षणं कार्यमारभन्ते, तेन क्रमेण उत्पद्यमानः शब्दः क्रमेणोपलभ्यते । ( इति नैयायिकाः ) । ऋजु. पृ. २१९.

* **शब्दोपात्तत्वं** अन्विताभिधाने न प्रयोजकं किंतु आकाङ्क्षायोग्यतासंनिधानानि प्रयोजकानि । **सोम.** ५।१।१ वर्णकं ३.

* **शब्दैकगम्यौ** धर्माधर्मौ । वि. १०।१।१०.

* **शब्दैकसमधिगम्योऽ**र्थो न न्यायस्य विषयः । सु. पृ. १६४.

* **शब्दचोदकात्** अर्थचोदको बलवान् । **टुप्.** ९।३।१।१. मीको. पृ. १७१४ 'चोदकः द्विविधः' इति बिन्दौ द्रष्टव्यम् ।

* **शब्दज्ञानम्**- लौकिकशब्दज्ञानं तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात् । लौकिके शब्दे तज्जन्यज्ञाने च प्रामाण्यव्यवहारस्तु तद्वति तत्प्रकारकत्वांशमादाय गौणः । कु. १।१।५।५.

* **शब्दतत्त्वं** एवेदं अर्थरूपतया विपरिवर्तते इत्युक्तं शब्दविद्भिः । बृहती. पृ. १११.

* शब्दनित्यत्वम् (न्यायशुद्धिः) । **' अपौरुषेये संबन्धे शब्दः प्रामाण्यमृच्छति । स च नित्यत्वसिद्धौ स्यादिति तत् प्रतिपाद्यते ॥ '** यद्युच्चरितमात्रविनाशी शब्दो भवेत् तदा तस्य वृद्धव्यवहारेण स्वाभाविकी स्वार्थाभिधानशक्तिरवसातुमशक्या । भूयो भूयः प्रयोगदर्शने हि तत्तदस्वार्थपरिहारेण निष्कृष्य स्वार्थाभिधानसामर्थ्यमवधार्यते । न चोच्चरितमात्रापवर्गिणः शब्दस्य पुनः पुनः प्रयोगदर्शनमुपपद्यते । स्वार्थाभिधानसामर्थ्यानवधारणे च प्रथमश्रुत इव शब्दो नार्थमवधारयितुमलम् । अर्थं चानवबोधयतः प्रामाण्यमयुक्तमिति शब्दस्य प्रामाण्यमिच्छता युक्तमभिधानस्य नित्यत्वस्थापनमिति सप्रयोजनम् । **ननु** क्षणिकत्वे वर्णानां तत्तद्गवादिविषयवृद्धव्यवहारपूर्वकमेव संबन्धाध्यवसानमुपपद्यते किं नित्यत्वस्थापनयत्नेन । **उच्यते** । प्रत्युच्चारणं भिन्नेष्वपि वर्णेषु गत्वादिकं कल्पयितुं शक्यते भेदाग्रहेणापि शुक्तिकारजतवदभेदप्रत्ययाभिमानोपपत्तेः । यत्र हि भेदमध्यवस्यत एवाभेदज्ञानं तत्र अन्यथानुपपत्त्या सामान्याश्रयणं घटते । न चानित्यत्ववादिनो वर्णेषु प्रत्युच्चारणं साक्षाद्भेदाध्यवसानं संमतम् । **ननु** च युक्तं शुक्तिकारजतादिषु भेदाग्रहणादभेदव्यवहार इति सामान्यासंभवो नेदं रजतमिति बाधकप्रत्ययोदयात् । इह तु [पृ. १६२] सामान्योपपत्तेर्भ्रान्तिकल्पना निष्प्रमाणिकैव नायं गकार इति बाधकाभावात् । **उच्यते** । न बाधकमात्रायत्तैव भ्रान्तिकल्पना किंतु कारणदोषायत्तापि । दृष्टं चातिसादृश्याद्भेदाग्रहणाद् भ्रान्तित्वमिति साक्षादनुपजातेऽपि बाधके युक्तमेव भ्रमावधारणम् । अतो न गत्वादिस्तत्र संभवति । **' अभिव्यञ्जकवैधर्म्यादभिव्यक्तेरसंभवे । प्रयत्नानन्तरं दृष्टेरभिधानं प्रयत्नजम् ॥ '** पुरुषप्रयत्नानन्तरं हि श्रवणं शब्दस्य द्वेधाऽवकल्पते । प्रागजातत्वादनुपलब्धः प्रयत्नेन जनित उपलभ्यतामापद्यते । अनभिव्यक्तत्वाद्वाऽभिव्यज्यते इति । तत्र न तावत् प्रयत्नस्य शब्दं प्रत्यभिव्यञ्जकत्वं संभवति । आवरणापायेन वा किंचिदभिव्यज्यते संनिधापनेन वा । न च शब्दस्यावरणमुपपद्यते । इन्द्रियसंबन्धप्रतिबन्धेन ह्यावरणं कुड्यादिना घटादेरुपलब्धम् । न च शब्दस्येन्द्रियसंबन्धः प्रतिबन्धुं शक्यते, नित्यत्वात् । उत्पत्तिनिरोधो हि प्रतिबन्धः । न चासौ नित्यस्योपपद्यते । आकाशो हि श्रोत्रेन्द्रियं शब्दवत्त्वात् । शब्दोपलम्भकतया च शब्दवत्त्वं चक्षुर्वत् । यथा चक्षू रूपोपलम्भकं रूपवत् । तथा श्रोत्रमपि शब्दवत् । आकाशश्च शब्दवान् इति स एव श्रोत्रं तद्गुणश्च शब्दस्तस्मिन् नित्यसमवेत इति न तस्यावरणसंभवः । अतस्तदपनयेन नाभिव्यक्तिः । अत एव संनिधानस्यासंभवो नित्यसंनिधानादभिव्यङ्ग्यस्य । **किंच** । अभिव्यञ्जकाः समानदेशस्थानेकेन्द्रियग्राह्याः स्वैश्च युगपदेव अभिव्यञ्जयन्ति रूपादीनिव प्रदीपादयः । रूपं परिमाणं संख्येति सर्वं सकृदेव प्रदीपादिभिर्व्यज्यते । अतः सर्वशब्दोपलम्भो [पृ. १६३] दुर्निवार एव । **किंच** । आकाशविशेषगुणत्वाच्छब्दस्य स्रुघ्नस्थेनाभिव्यक्तः पाटलिपुत्रस्थेनाप्युपलभ्येत । सर्वदा चोपलम्भोपरमो न स्यात् । **अथ** श्रोत्रेन्द्रियसंस्कार एव शब्दस्याभिव्यक्तिरिष्यते । **न** । सोऽपि खल्विन्द्रियस्य संस्कारो न तावदुन्मीलनवदावरणापगमः । पूर्ववदावरणासंभवात् । नहि आलोकेनेवाप्यायनं चाक्षुषस्य रश्मेः कोष्ठ्यानां वायूनामाकाशस्यावयवसंभेदासंभवात् । **'सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत् । '** यथा घटायोन्मीलितं चक्षुः पटमपि दर्शयति । तस्मादभिव्यञ्जकत्वेऽनुपपन्ने यदि प्रयत्नः कारकोऽपि न स्यात् तदा तदपेक्षोपलब्धिर्न संभवेत् । तेनेदमित्थमनुमानं प्रयोक्तव्यम् । शब्दः पुरुषप्रयत्नोत्पाद्यः । तदभिव्यङ्ग्यत्वे सति तदनन्तरोपलब्धेः । यो यो यदभिव्यङ्ग्यस्तदनन्तरोपलभ्यः स तस्योत्पाद्यः । यथा घटः कपालव्यापारस्येति । केन पुनः प्रकारेण प्रयत्नेन शब्द उत्पाद्यते ? तत्र **केचिदाहुः** । पुरुषप्रयत्नात् ईरितैर्वाय्ववयवैः स्थानविशेषाऽऽघातसंस्कारसंस्कृतैः सर्वतोदिक्कैः संयोगाऽऽ-



ख्यासमवायिकारणानुगृहीतैश्च स्वसमवेतः शब्द आरभ्यते । वायोश्च गतिमत्त्वात् तदारब्धः शब्दोऽपि गतिमान् कर्णशष्कुलीमण्डलावच्छिन्नेन नभसा श्रोत्रभावमापन्नेन संयुक्तः सन्नुपलभ्यते । वेगाख्यसंस्कारनिबन्धना च वायोर्गतिरिति तदपगमे गतिविच्छेदात् दूरे यत् श्रोत्रं तत्राप्रत्यासन्नत्वाच्छब्दो न श्रूयते । न चैतदुपपद्यते । वायवीयश्चेच्छब्दो भवेत् स्पर्शनेन बधिरैरुपलभ्येत । **स्यान्मतम्** । अन्तर्भूतत्वात् स्पर्शनेनानुपलब्धिरिति । **तन्न** । प्रत्यक्षोपलब्धावर्हात् । न हि असौ अभिभूतजरच्छ्रोत्रेण नोपलभ्यते । [ पृ. १६४ ] न च वाच्यं न स्पर्शनेन्द्रियग्राह्यो वायुरिति तदनुविधानेन तदवगतेः । **अथ मतम्** । स्पर्शमात्रं स्पर्शनेन्द्रियेणोपलभ्यते न वायुद्रव्यमिति । **तन्न** । स्पर्शव्यभिचारेऽपि द्रव्यस्य प्रत्यभिज्ञानात् । **अन्ये त्वाहुः** । संयोगाद्विभागाद्वा आद्यः शब्दो निष्पद्यते । यथा ताल्वादिवायुसंयोगानुगृहीताद्वाय्वाकाशसंयोगादाकाशे शब्दः संजायते तथा ताल्वादिवायुविभागोपकृतात् वाय्वाकाशविभागात् आकाश एव शब्दः । स च शब्दः शब्दान्तरमारभते तदपि शब्दान्तरमिति कर्णशष्कुलीमण्डलावच्छिन्ने नभसि श्रोत्रभावमापन्ने निष्पन्नः शब्दः श्रूयते इति ।

**' नानाभावे प्रयत्नस्य नानाभावोपलम्भनात् । वैलक्षण्ये च शब्दस्य वैलक्षण्येन कार्यता ॥ '** किंच । अभिव्यङ्ग्यश्चेत् प्रयत्नेन शब्दो न प्रतियत्नं भेदेनोपलभ्येत । न खल्वभिव्यञ्जकप्रदीपभेदेऽपि नानाभावेन भावानामुपलम्भः । कारकहेतुस्तु कार्यतो हेतुरिति सुप्रभेदः । अतः शब्दस्य प्रयत्नो जनयितेति निश्चीयते । अथ कारकवैलक्षण्यानुविधायिनी कार्यवैलक्षण्यसिद्धिरविहिता । वैलक्षण्येऽपि चाभिव्यञ्जकस्याभिव्यङ्ग्यवैलक्षण्यं न संभवति । शब्दस्तु प्रयत्नस्य मृदुत्वे बलवत्त्वे च मृदुर्बलवांश्चोपलभ्यमानस्तत्कार्यतां न जहातीति । **' शब्दे तत्प्रत्यये स्पष्टे नानाव्यञ्जनकल्पनात् । उपलब्धिव्यवस्थानमुपपन्नं भविष्यति ॥ '** यदि शक्यागः शब्दस्य स्पष्टप्रत्यभिज्ञानमुपदर्शयितुं तदा प्रयत्नस्य कारकत्वे निषिद्धे अभिव्यञ्जकत्वे च स्थिते उपलब्धिव्यवस्थानं व्यञ्जकबहुत्वेन वर्णयिष्यामः । श्रोत्रमेव [ पृ. १६५ ] संस्क्रियते तत्संस्कारकताऽभिव्यञ्जकता । कोष्ठ्यो हि वायुः प्रयत्नवदात्मसंयोगादुत्पद्यते । स नाभेरुद्गच्छन् उरःप्रभृतिष्वष्टसु स्थानेष्वभिघातेन संस्कृतो यावद्वेगमभिप्रतिष्ठमानः श्रोत्रमनुप्राप्तः शब्दोपलम्भानुगुणसंस्कारमारभते । तत्संयोग एव श्रोत्रसंस्कारः । वेगवत्त्वाच्च वायोः कर्मोत्पत्तौ श्रोत्रविभागात् संयोगोपरमे शब्दस्यानन्तरमुपलम्भविच्छेदः । प्रयत्नभेदाच्च वायुकर्मभेदादुरःप्रभृतिस्थानसंयोगान्यत्वाद् व्यवस्थया शब्दश्रवणम् । शब्दोत्पत्तिवाद्यपि उत्पादकभेदमनुमन्यते एव । अन्यथा कार्यभेदासंभवात् । यत्तूपवर्णितं यथोन्मीलितसंस्कृतं चक्षुः न समानदेशस्थानुपलम्भयान् व्यवस्थया उपलम्भयतीति । **तदयुक्तम्** । तत्रैकत्वादभिव्यञ्जकस्य । एकमेव ह्युन्मीलनं सर्वोपलम्भानुगुणनेत्रसंस्कारारम्भकमिति न तत उपलब्धिर्व्यवतिष्ठताम् । इह त्वेकत्वं संस्काराणामसिद्धम् । **ननु** अभिव्यङ्ग्यस्यैकेन्द्रियग्राह्यत्वेऽभिव्यञ्जकस्यैकतैव प्राप्नोति । ये समानेन्द्रियग्राह्यास्तेषामेक एवाभिव्यञ्जकः । यथाऽऽलोको घटादीनाम् । एकत्वे चाभिव्यञ्जकस्योपलब्धिव्यवस्था नोपपद्यते । अतोऽभिव्यञ्जकत्वासंभवे कारकत्वे व्यवस्थिते भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञेति न्याय्या कल्पना । **अत्रोच्यते** । एकेन्द्रियग्राह्यताऽपि भवेदभिव्यञ्जकभेदोऽपि भवेदिति किमनुपपन्नम् । स्वाभाविकी हि यस्य संबन्धव्याप्तिस्तस्य लिङ्गत्वमाशङ्क्य मानाशेषोपाधिपरिहारेण स्वारसिकसंबन्धव्याप्तिनिश्चयः । इह तु न शक्यते निर्णेतुं किमेकेन्द्रियग्राह्यतया घटादीनां तद्गतरूपादीनां चैकोऽभिव्यञ्जकः उत रूपिद्रव्यत्वात् तत्समवायित्वाच्चेति । अतोऽनवधारितसंबन्धव्याप्तिकमेकेन्द्रियग्राह्यत्वं नाभिव्यञ्जकैक्यानुमानसमर्थम् । अतोऽभिव्यञ्जकत्वेऽपि [पृ. १६६] प्रयत्नस्योपलब्धिव्यवस्थोपपत्तिः । न तु स्थिरवाय्वपनय एव संस्कारः । अपनीते च तस्मिन् सर्वशब्दोपलब्धिर्दुर्निवारा । **उच्यते** । नावरणापनयनं तस्याभिव्यञ्जकत्वम्, वायुना शब्दावरणासंभवात् । किन्तु अदृष्टेन रूपेण । एवं चापनेतृकोष्ठ्यवायुभेदात् स्थिरवायुविभागलक्षणयोः वेगविनाशार्थम् । स्पर्शवद्द्रव्यसंयोगाद्धि वेगविनाशोऽन्यत्र प्रतीत इतीहापि तदर्थमेव स्थिरवायुकीर्तनं भाष्ये ।

ननु चैकत्वात् आकाशस्य तस्य च श्रोत्रत्वात् तत्संस्कारे सर्वपुरुषेन्द्रियसंस्कारात् सर्वेऽपि शब्दं उपलभेरन् । नैष दोषः, धर्माधर्मोपरञ्जितकर्णशष्कुलीभेदात् । शष्कुलीसंस्कारो हि श्रोत्रसंस्कारः भिन्नाश्च प्रतिपुरुषं शष्कुल्य इत्यसंस्कृतशष्कुलीको न शब्दमुपलभते । अनुवातं च दूरादेव शब्दमुपलभते । बाह्यवायुनोदनानुगृहीतस्य कोष्ठ्यवायुवेगस्य दूरगमनहेतुत्वात् । शब्दाच्छब्दान्तरारम्भपक्षे तु नानुवातस्य कश्चिदुपयोगः । **‘अभिव्यञ्जकनानात्वाच्छब्दो नानेव लक्ष्यते । नेत्रवृत्तिविभेदेन चन्द्रस्तैमिरिकैरिव ॥’** स्पष्टे तद्ग्रहे नानाभावोपलम्भः शब्दे तावदसिद्ध एव । किन्तु परस्परनिरपेक्षैः अभिव्यञ्जकैः कोष्ठ्यवायुभिर्नानावक्तृसमुत्थैर्नानाभूतैर्भिन्नं श्रोत्रसंस्कारमारभमाणैर्नानाभूतशब्दबुद्धिं जनयद्भिर्नानेव शब्दो बुध्यते । चन्द्र इव तिमिरविभिन्नाभिर्नेत्रवृत्तिभिः । **‘नानादेशोपलम्भे हि सर्वेषां भ्रान्तिसंमतिः । कर्णच्छिद्रगतस्यैव शब्दस्य श्रवणं यतः ॥’** यदुच्यते कार्यत्वे शब्दस्य कारणदेशभेदान्नानादेशो [पृ. १६७] गगन इति । तदयुक्तम् । यद्यपि कृतकः शब्दस्तथापि संनिकृष्टविप्रकृष्टयोर्युगपच्छब्दोपलम्भनप्रसङ्गेन प्रतिवातानुवातयोश्चाविशेषाऽऽपत्तेर्नेन्द्रियं प्राप्तस्योपलम्भकम् । प्राप्तावपि नेन्द्रियं शब्ददेशमुपसर्पति प्रत्यक्षत्वात् श्रोत्रदेशे कर्णशष्कुल्याः प्रतिवातानुवातयोश्च तुल्योपलम्भाऽऽपत्तेः । शब्दे तु श्रोत्रपथं प्राप्ते उपलभ्यमाने देशभेदः प्रतीयते । अतो भ्रान्तिरेषा नानादेशेषु शब्द उपलभ्यते इति ।

किंनिबन्धना भ्रान्तिः ? अभिव्यञ्जकदेशनिबन्धनेति ब्रूमः । ताल्वादिस्थानाऽऽघातसापेक्षो हि कोष्ठ्यो वायुरभिव्यनक्ति । अतो वक्तृदेशोऽपि भवत्यभिव्यञ्जकदेशः । तेन शब्दं शृण्वतस्तदभिव्यञ्जकदेशोऽपि न तदविनाभावोपकल्पितो बुद्धिस्थो भवति । शब्दाभिव्यक्तिविशेषेण च दूरासन्नत्वे तस्य कल्प्येते । प्रत्यक्षोपलभ्यमानवक्तृविषये च शब्दश्रुतिविशेषे दिग्विशेषो नियतमवधारितः । अतो दिग्विशेषकल्पनाऽपि । यस्तु न तथा विवेक्तुं अलं तस्याभिव्यञ्जकदेशं प्रति व्यामोहो दृश्यते एव । एवं चेन्द्रियाणां स्वानुभवासमर्थत्वात् श्रोत्रगतशब्दोपलम्भे तद्देशाग्रहणात् तदुच्चारणप्रदेशस्य प्रतीयमानत्वात् अतद्गतत्वात् प्रतिपत्तेश्च तत्तद्देशगतशब्दव्यवहारं प्रवर्तयतीति घटते एवेयं भ्रान्तिः । **‘वैलक्षण्यं स्वभावेन वर्णानां न च संमतम् । नादाल्पत्वमहत्त्वाभ्यां तथात्वभ्रान्तिसंभवात् ॥’** स्पष्टे तद्ग्रहे प्रयत्नस्तावद्वर्णानां जनको नेति स्थिते तदनन्तरोपलम्भनियमं वाऽभिव्यञ्जकत्वेन निर्णीतेऽभिव्यञ्जकवृद्धिह्रासयोश्चाभिव्यङ्ग्यवृद्धिह्रासहेतुत्वाभावान्न शब्दो वर्धते [पृ. १६८] ह्रसते वा किन्तु बलवति प्रयत्ने महान् वायुरुदयते तस्य च भूयोंऽशाः कर्णशष्कुलीमण्डलस्य नेमिभागैर्बहुभिः संबध्यन्ते, ततश्चाभिव्यञ्जकसंयोगबहुत्वाद्युगपदुपलम्भबहुत्वात् तेषां च विच्छेदाग्रहणात् महानिव शब्दोऽवभाति तरूणामन्तरालाग्रहणादिव महद्वनम् । यदा ते वाय्ववयवाः सहसा विलम्बेन वा संयुज्यन्ते तदोपलम्भो द्रुतो विलम्बितो वा यदा त्वेषामुच्चारणे ताल्वादीनां संवृतत्वं भवति वा तदनुरोधेन वर्णोपलब्धिरपि मात्राकालैव भवतीति ह्रस्ववर्णव्यवहारसिद्धिः । यदा पुनर्विवृतत्वं वा ताल्वादीनामेव संपद्यते तदा वर्णप्रतीतेरपि मात्राकालवृद्ध्या दीर्घादिव्यवहारसिद्धिः । वृद्धव्यवहारे तदनुरोधेनाप्यर्थाभिधानदर्शनात् तथैव प्रतिपादकत्वमप्याश्रीयते । न चैवमभिधानस्यानित्यत्वदोषः, तदुपाधिविशिष्टस्य वाचकस्य नित्यत्वात् । अतो वर्णानुपूर्व्यनित्यत्वे न कश्चिद्दोषः । आनुपूर्वीविशेषभाजां वर्णानां वाचकभूतानां नित्यत्वात् । न च शब्दस्याभिव्यक्तिरिति कथं तद्ग्रहणसंभवः । उपलब्धे हि घटादिभावे तद्दर्शनेन पूर्वानुभवाहितसंस्कारप्रबोधेन स एव अयमिति प्रत्यभिज्ञोदीयते । शब्दे पुनरुच्चरिततिरोहिते पुनरुत्तरकाले कथं प्रत्यभिज्ञोदय इति ? तत्राऽऽह– **‘नावश्यं तद्ग्रहेणैव तत्संस्कारप्रबोधनम् । तेन हेत्वन्तरोद्बुद्धात् संस्कारात् तद्ग्रहोदयः ॥’** यदि ह्ययं नियमस्तदुपलम्भ एव तत्संस्कारोद्बोधहेतुरिति यतो नोपपद्यते शब्दे प्रत्यभिज्ञा । संस्कारास्त्वनियतोद्बोधहेतव इति कारणान्तरवशेनोद्बुद्धात् संस्कारात् प्रथमसमागमसमये एव शब्दे प्रत्यभिज्ञा भविष्यति । ननु स एवायं गकारः [पृ. १६९]



इति प्रसिद्धस्तद्ग्रहः । न पुनर्भेदाग्रहणमिति । कथमेष निर्णयः ? दृष्टो हि शुक्तिकायां भेदाग्रहणात् तदेवेदं रजतमिति प्रत्यय इति तत्राह– **‘यदा भेदे प्रमा नास्ति शुक्तिकारजतादिवत् । तदा प्रतीतिसंसिद्धस्तद्ग्रहः केन वार्यते ॥’** स्पष्टे हि शुक्तिकारजतयोर्भेदावसायिनि प्रमाणे सादृश्याद्भेदानवबोधात् अभेदप्रतीतिरिति कल्प्यते । शब्दे तु प्रत्यक्षसिद्धः प्रत्युच्चारणं भेदः कथं न सिद्धः । ननु महत्त्वाल्पत्वाभ्यां विभिन्नो वर्ण उपलभ्यते । नैतदेवम् । महत्त्वाल्पत्वे प्रतीयतोऽपि वर्णप्रतीते महत्त्वाल्पत्वे एव भिन्ने अवभातो न वर्णाः ! न वा अनुमानेनापि भेदोऽवगन्तुं शक्यते इति प्रागेव निवेदितम् । अतो भेदे प्रमाणाभावादभिन्न एवायं भिन्नावभास इति साक्षात्प्रतीतिबलेनैवावस्थापितम् । ननु च तद्ग्रहबलेनैवानुमानं निरस्तम्, निरस्ते चानुमाने तद्ग्रह इतीतरेतराश्रयम् । तत्राह– **‘अनुमाननिरासेन तद्ग्रहत्वं न साध्यते । स्वयं प्रतीतिसिद्धत्वाद् भ्रान्तिशङ्का निवार्यते ॥’** भेदाग्रहनिबन्धनेयं भ्रान्तिरिति शङ्का केवलानुमाननिरासेनापनीयते प्रतीतिबलसिद्धस्तु तद्ग्रहो न कारणान्तरमपेक्षते इति कथमितरेतराश्रयता । ननु किमिति तद्ग्रहबलात् ज्वालायामपि भेदानुमानं न निराक्रियते इत्यत आह– **‘ज्वालाभेदं विना भासो विततिर्नोपपद्यते । भेदाज्ञानेन सादृश्यात् प्रत्यभिज्ञा तु युज्यते ॥’** अवयविनी ज्वाला । सर्वश्चावयवी स्वावयवसंयोगजातः [पृ. १७०] तद्विनाशेन विनश्यति । तन्तुव्यतिषङ्गजनितो हि पटः तन्तुविभागे विनाशी दृश्यते । प्रभा च गृहोदरादिवर्तिनी तैजसं रूपम् । न च द्रव्याश्रिता रूपादयो द्रव्यं विरहय्य वर्तन्ते । तेन तैजसाः परमाणवो नियतमभिभूतत्वात् अनुपलभ्यमाना अपि प्रत्यक्षतो यावत्प्रभावितति संनिधीयन्त इत्यङ्गीकरणीयम् । तेषु च देशान्तरमनुप्राप्तेषु एतदाश्रयणीयम् । एतेषां संयोगा विघटन्ते इति । विघटितेषु तेषु तदारब्धे द्रव्येऽपि नाशमुपेयुषि ज्वाला ज्वालान्तरमन्तरेण नोपपद्यते । भेदाग्रहणनिबन्धना तु प्रत्यभिज्ञा भ्रान्तिः शुक्तिरजतादिषु दृष्टत्वादुपपन्ना । **‘विना तु शब्दभेदेन न किंचिन्नोपपद्यते । उक्तेन नीतिमार्गेण तद्ग्रहोऽतोऽत्र संमतः ॥’** प्रत्युच्चारणं भेदव्यतिरेकेणापि प्रयत्नानन्तरोपलभ्यत्वादिकं तथोपपद्यते तथोक्तमेव इत्यप्रतिपक्षा प्रत्यभिज्ञा । **‘सदसत्कारणत्वेन तस्माच्छब्दस्य नित्यता । एतदेव हि नित्यत्वं व्योमादिष्वपि संमतम् ॥’** शब्दस्य प्रयत्न एव कारणतया संभावितः । स च प्रत्यभिज्ञाबलेन द्वितीयादिदर्शनेष्वभिव्यञ्जकतामापादितः इति प्रथमदर्शनेऽपि असावभिव्यञ्जक एव । अतः कारणरहितत्वेन सत्त्वान्नित्यः शब्दो गगनादेरिव, नास्याऽनित्यतेति । **‘एषा शालिकनाथेन शब्दनित्यत्वसाधनी । प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः परीक्षिता ॥’** प्र. पञ्जिका. पृ. १६१–१७०.

**शब्दनित्यत्वाधिकरणम्** । शब्दाधिकरणम् ॥

**कर्मैके तत्र दर्शनात् । १।१।६।६ ॥**

**भाष्यम्**— उक्तं नित्यः शब्दार्थयोः संबन्ध इति । तदनुपपन्नम्, शब्दस्यानित्यत्वात् । विनष्टः शब्दः; पुनरस्य क्रियमाणस्यार्थेन अकृतकः संबन्धो नोपपद्यते । न हि प्रथमश्रुतात् शब्दात् कश्चिदर्थं प्रत्येति । कथं पुनरनित्यः शब्दः ? प्रयत्नादुत्तरकालं दृश्यते यतः । अतः प्रयत्नानन्तर्यात्तेन क्रियत इति गम्यते । ननु अभिव्यञ्ज्यास एनम् । नेति ब्रूमः । नह्यस्य प्रागभिव्यञ्जनात् सद्भावे किञ्चन प्रमाणमस्ति, संश्चाभिव्यज्यते नासन् ।

**बृहती**— ‘उक्तं नित्यः शब्दार्थयोः संबन्धः इति, तदनुपपन्नम्’ इति (भाष्यम्) । केयमनुपपत्तिः ? इयमेव अनुपपत्तिः, अनित्ये शब्दे नित्यः शब्दार्थयोः संबन्धो नोपपद्यते इति । कथं तर्हि समवाये ? (ऋजु– अनित्याया अपि व्यक्तेर्जात्या सह समवायलक्षणः संबन्धः अपौरुषेयः । तथा क्रियायाः कारकैः सह, अवयवैः सह अवयविनाम्, गुणिभिः सह गुणानामिति । अत्रोत्तरम्– ) युतसिद्धयोः अनुपपत्तिः । (ऋजु– पृथक् सिद्धयोः संबन्धिनोः संबन्धस्य अपौरुषेयत्वानुपपत्तिः । अयुतसिद्धयश्चैते व्यक्त्यादयः । का पुनः युतसिद्धिः ? पृथगाश्रयाश्रयित्वं पृथग्गतिमत्त्वं च । नार्था

हि शब्देष्वाश्रिताः, नाप्यर्थेषु शब्दाः, अतस्ते पृथगाश्रयाश्रिताः पृथग्गतिमन्तश्च । ननु च भवतु अनित्यः शब्दः तथापि संबन्धस्यापौरुषेयत्वमुपपद्यते, शब्दत्वस्यैव विशेषनिविष्टस्य वाचकत्वं अस्तु, तेन नित्यत्वात् वाचकस्य उपपन्नमेवापौरुषेयत्वम् । तत्राह– ) शब्दत्वं च निरस्तं ( स्फोटनिराकरणपर्वणि ) । ननु च गत्वादि अन्यदनिरस्तमस्ति ( तेन गत्वादीन्येव वाचकानि भवन्तु, उपपन्नानि च गत्वादीनि, अनित्यत्वे गव्यक्तीनां प्रत्युच्चारणं भिन्नानामैक्यप्रतीतेर्गोत्वादिवत् ) न तत् ( यदिदमुक्तं तन्न । कुतः – ) गस्य विशेषानुपलब्धेः । ( तत्र हि सामान्यमङ्गीक्रियते यत्र हि भेदग्रहणानुबन्धं अभेदग्रहणं यथा गवादिषु । यत्र पुनः भेदग्रहो नास्ति, तत्र भेदाग्रहणनिबन्धनः अभेदावसायव्यपदेशः शुक्तिरजतवत् इति न सामान्यकल्पनोपपत्तिः । यदि गस्य विशेषानुपलब्धिः ) कथं तर्हि शुकसारिकामनुष्येषु ( भेदप्रतीतिः ? यत एव शुकादिभेदेन भेदप्रतीतिः – ) अत एव स्वतो विशेषो नोपलभ्यते । शुकसारिकामनुष्या एव हि तत्र विशेषतामापद्यन्ते । तथा च लौकिकाः ‘ शुकोऽयं पठति ’, ‘ मनुष्योऽयं पठति ’ इति विशेषानभिदधति, न पुनः ‘अमुं गविशेषम्, अमुं गविशेषम्’ इति । तस्मान्न नित्यता सिध्यति संबन्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम् । तदिदमाक्षेपपूर्वकमुच्यते ‘ कर्मैके तत्र दर्शनात् ’ इति ।

ननु चैवं सति कृतकोऽपि संबन्धो नोपपद्यते । ( समाधित्सुः पृच्छति– ) ततः किम् ? ( आक्षेप्ता – ) लौकिकव्यवहारोच्छेदः । ( समाधाता– ) पुनस्ततः किम् ? ( आक्षेप्ता– ) अनित्यत्वप्रतिज्ञा नोपपद्यते । लौकिकव्यवहारविरोधात् बलात् नित्यता प्राप्नोति । ( समाधात्रेकदेशी– ) लौकिकव्यवहारविरोधात् अनित्यता मा भूत्, नित्यताऽऽपत्तेः किमायातम् ? ( आक्षेप्ता– ) इदमायातम्, लौकिकव्यवहारानुपपत्तिरेव । (समाधाता–) सत्यमेवं यदि प्रत्यस्तमितं समयेन ( भावे निष्ठा । समयो लोकव्यवहारहेतुरस्तीत्यर्थः । किंविषयः पुनः समयो व्यवहारहेतुः ? न तावत् शब्दविषयः तस्य भङ्गुरस्य समयव्यवहारानुवृत्त्ययोगात् । तत्राह– ) नहि अविषयः समयस्य अस्ति, सर्वानुपपत्त्यार्तिहरोऽयं समयः । ( अस्यार्थः– योऽयं प्रत्युच्चारणं भिन्नेष्वपि वर्णेषु भेदाग्रहनिबन्धनः अभेदभ्रमः, तद्विषयः समयः । न च व्यवहारविसंवादः, अभिप्रायाविसंवादात् । प्रमाणान्तरेण हि अर्थं प्रतीत्य तत्प्रतिपादनाभिप्रायेण पुरुषाः भ्रान्त्यारूढैकत्वान् शब्दान् समयकरणकालभाविताभिमानेन प्रयुञ्जते । प्रतिपत्ताऽपि तेनैवाभिमानेन तदभिप्रायान्तर्भावमुखेन अर्थं प्रतिपद्यते, इत्यभिप्रायाव्यभिचारेणार्थसिद्धिः, ततश्च व्यवहार इति । वैदिकस्तु व्यवहारः शब्दैकनिबन्धनः इति न समयस्तत्र हेतुः । तदाह– ) तस्मात् शब्दप्रमाणकानां न व्यवहारदर्शनमात्रेण प्रामाण्यं सिध्यति । तस्मात् नित्यत्वे यत्नः कर्तव्योऽभिधानस्य । स चायमारब्धः । ( ननु क्षणिकत्वेऽपि शब्दस्य पुरुषानपेक्षमेव अर्थेषु प्रामाण्यं किमिति न भवति ? यथा अनित्यानामपि चक्षुरादीनां स्वतःप्रामाण्यमित्यत्राह– ) वृद्धव्यवहारपूर्वकत्वात् संबन्धज्ञानस्य संबन्धज्ञानपूर्वकत्वाच्चार्थावगतेः । न च क्षणिकत्वेऽपि चक्षुरादीनामिव प्रामाण्यसिद्धिः, प्रथमश्रवणानवगमात् ।

‘ कर्मैके तत्र दर्शनात् ’ इति कृतकत्वं शब्दस्योच्यते । किमिदं कृतकत्वम् ? ( यदि सर्वशब्दानधिकृत्य कृतकत्वं कृत्रिमत्वमुच्यते, तदा प्रयत्नान्तरदर्शनादिति भागासिद्धो हेतुः, समुद्रघोषादिष्वभावात् । पक्षश्च प्रमाणान्तरविरुद्धः । अथ अभिधानात्मकानेव पक्षीकृत्य प्रयत्नजत्वं साध्यते, तदा अनभिधायकानां कृतकता न साधिता स्यात् इति । उत्तरं– ) पुरुषप्रयत्नेनोत्पत्तिः ( कृतकत्वमुच्यते ) ।

ननु अप्रयत्नपूर्विकाऽपि शब्दस्योत्पत्तिर्दृष्टा यथा छलच्छलादेः ( जलशब्दे ) । नायं दोषः, अभिधानाधिकारात् । न चेदमभिधानं अप्रयत्नपूर्वकं दृश्यते । अतः क्रियानन्तरोपलब्धेः तयैवोत्पद्यते इति मन्यामहे । कथं तर्हि मूलोदकादिषु ? ( अत्र समाधिः– ) अन्यतोऽस्तित्वावगतेः । शब्दे पुनः प्रयत्नानन्तरैवोपलब्धिः । तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जकः इति शक्यते वक्तुम् । ननु इदमस्ति प्रयत्नात् ( शब्दस्य ) पूर्व-



मस्तित्वे प्रमाणम् । [ पृच्छति– ] किमिदमस्ति ( तत् प्रमाणम्, प्रदर्श्यताम् । तदाह– ) सप्रत्यभिज्ञं प्रत्यक्षं [ प्रमाणम् ] । ( समर्थयिता आह– ) कथमत्र प्रत्यभिज्ञानम् ? ( उत्तरं– ) अन्यत्वानवगमात् ( अन्यत्वावगमपूर्वकं हि यत्राभेदज्ञानम्, तत्र प्रत्यभिज्ञा भवति । अन्यत्वानवगमे तु भेदाग्रहणनिबन्धन एव एकावसायभ्रमः । आक्षेपकः– ) अनित्यत्ववादिनो वा किमन्यत्वेनावगतिरस्ति ? ( समर्थकः– ) किमिति नास्ति ( अन्यत्वेनावगतिः ) प्रध्वस्तोत्पन्नयोः ( प्रध्वस्तस्य उत्पन्नस्य च व्यक्तं अन्यत्वम् ) । ( आक्षेपकः– ) विशेषाग्रहणात् । ( अन्यत्वं नावगम्यते इति । समर्थकः– ) किं विशेषाग्रहणनिबन्धनैव प्रत्यभिज्ञा ? ( आक्षेपकः – ) किं वा मन्यते भवान् ? ( एवमेवेत्यर्थः । समर्थकः– ) कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति । ( आक्षेपकः– ) स्वरूपग्रहणे सतीदमुच्यते, आनुमानिकं च कर्म इत्युक्तम् । ( समर्थकः– ) का वार्ता ज्वालादिषु ? ( ज्वालादीनां तु स्वरूपं प्रत्यक्षेण गृह्यते, भेदश्च नावगम्यते, तेन तत्रापि तर्हि भवतः प्रत्यभिज्ञाऽभिप्रेता ? समर्थक एव आक्षेपकस्याशयमाशङ्कते– ) नित्यत्वे ज्वालादीनां अनुमानविरोध इति चेत् । ( दूषयति– ) तुल्यमभिधानेऽपि अस्थानादेः । ( उपसंहरति– ) तस्मात् विशेषाग्रहणेऽपि अन्यता, अन्यत्वे च सिद्धा प्रयत्नानन्तरोपलब्धेः प्रयत्नेनोत्पत्तिः ।

**अस्थानात् । ७ ॥**

**भाष्यम्**— नो खल्वपि उच्चरितं मुहूर्तमपि उपलभामहे, अतो विनष्टः ( शब्दः ) इत्यवगच्छामः । न च सन्नोपलभ्यते, अनुपलम्भकारणानां व्यवधानादीनामभावेऽपि अनुपलम्भनात् । न चासौ विषयमप्राप्तः, आकाशविषयत्वात्, कर्णच्छिद्रेऽपि अनुपलम्भनात् ।

**बृहती**— ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया नैव व्यवहारानुपपत्तिः ( घटादीनां कारकाणाम् । ज्ञापकस्यापि–– ) उत्पन्नस्यापि चक्षुरादेः स्वाभाविकं ( पुरुषप्रयत्नानपेक्षं ) रूपग्रहणसामर्थ्यं नैव विहन्यते । ( तथा शब्दस्यापि ज्ञापकत्वमस्तु ) सत्यं ( एतद्घटादिषु ) नैतच्छब्दे, अस्थानात् ( उत्पत्तिमात्रविनष्टत्वात् ) ।

**ननु** चक्षुषः अस्थानत्वेऽपि रूपग्रहणशक्तिः नैव विहन्यते, तद्वच्छब्देऽपि इति चेत्, (उत्तरं–) प्रत्युक्तं प्रथमश्रवणानवगतेः ( संबन्धग्रहणसापेक्षस्य प्रत्यायकत्वम्, न च तत् क्षणिकस्य भवति ) तस्मात् अस्थानात् इत्ययं हेतुः औत्पत्तिकत्वविघाती संबन्धस्य । यदि कालान्तरावस्थायिता स्यात्, स्यादपि व्यवहारात् शब्दादर्थावगतिः । अस्थायित्वे पुनः समय एव शरणं भवितुमर्हति इत्युक्तं ‘ अस्थानात् ’ इति ।

**करोतिशब्दात् । ८ ॥**

**भाष्यम्**— अपि च ‘ शब्दं कुरु ’ ‘ मा शब्दं कार्षीः ’ इति व्यवहर्तारः प्रयुञ्जते । न ते नूनमवगच्छन्ति ‘ स एवायं शब्दः ’ इति ।

**बृहती**— लौकिकमप्यभिधानं अमुमेव न्यायमनुवर्तते । का अत्र न्यायानुवृत्तिः ? मुख्यार्थता करोतेः ‘ शब्दं कुरु ’ ‘ शब्दं मा कार्षीः ’ ‘ शब्दकारी अयं माणवकः ’ इति ( अभूतप्रादुर्भावनं करोत्यर्थः । स मुख्यो भवत्यनित्यत्वपक्षे ) ।

**सत्त्वान्तरे च यौगपद्यात् । ९ ॥**

**भाष्यम्**–– नानादेशेषु च युगपत् शब्दमुपलभामहे । तदेकस्य नित्यस्यानुपपन्नमिति । असति विशेषे नित्यस्य नानेकत्वम् । कार्याणां तु बहूनां नानादेशेषु क्रियमाणानां उपपद्यते अनेकदेशसंबन्धः । तस्मादप्यनित्यः ।

**बृहती**– केयमनुपपत्तिः ( भाष्योक्ता ) ? (उत्तरं–) इयमनुपपत्तिः, युगपदेकस्य ( देवदत्तादेः ) अनेकत्रोपलब्धिर्न दृष्टा । ततः किम् ? इदं ततो भवति, अन्यत्वम् ( एकस्मात् व्यावृत्ता युगपदनेकत्रोपलब्धिः अन्यत्वं साधयति ) । ननु च साधितमन्यत्वम् ( अतः पुनरुक्तिः ) । सत्यं साधितम्, हेतुप्रचयस्तु प्रदर्श्यते । को लाभः ? न खलु कश्चित् । न चेत् कश्चित्, हेतुप्रचयेन किम् ? सत्यं यथा भवानाह । किंतु अयमेवार्थो राद्धान्तमाक्षिपति । ( अनिराकृतोऽयमर्थः सिद्धान्तमाक्षिपतीति कस्यचित् भ्रान्तिः स्यात् ) तस्मात् तद्भ्रमप्रतिषेधार्थोऽय-

मारम्भः। नह्यनुपन्यस्तस्य भ्रान्तिता शक्यते वक्तुम्। अप्रदर्शिते च भ्रान्तित्वे अपुनरुक्तोऽयं भवति कस्यचिन्मन्दधियः। सर्वार्थं चेदं शास्त्रं 'मन्दविषेणापि' इति दर्शितं भाष्यकारेण।

'असति विशेषे नित्यस्य नानेकत्वं' इति (भाष्यम्। आक्षिपति–) किमिदं असति विशेषे नित्यस्य नानेकत्वं इति, 'असति विशेषे नानात्वं नास्ति' इति शक्यते वक्तुं नित्यस्यानित्यस्य वा। नित्यग्रहणं न विद्मः। यदि अनित्यस्य असत्यपि विशेषे नानात्वं स्यात् युक्तं वक्तुं 'नित्यस्य' इति। तस्मात् वर्णनीयोऽयं ग्रन्थः। (उत्तरं–) वर्ण्यते तर्हि। गवादेरेकस्य अनेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतः। तस्मात् 'सत्त्वान्तरे च यौगपद्यात्' इत्यस्य अनेनान्यथासिद्धिराशङ्किता। तस्येदमुत्तरं 'असति विशेषे' इति। (पुनराक्षिपति–) किं गवादेर्विशेषो विद्यते? तदपि हि एकमविशिष्टम्। नहि अन्यच्छाबलेये, अन्यच्च बाहुलेये। (हेतुसमर्थनवादिना हि त्वया एवमुच्यते, यदिदं नित्यत्वेन एकस्यानेकत्र दर्शनम्, तद्विशेषे सति गवादेः, न च शब्दस्य विशेषोऽस्ति, तस्मान्न नित्यत्वेन इदमनेकत्र दर्शनम्, किंतु तत्रतत्रोत्पन्नत्वेनैवेति। एवं च वदतस्तव अयमभिप्रायो लक्ष्यते 'गवादेर्विशेषो विद्यते' इति। स चायमभिप्रायस्ते अनुपपन्नः, गवादेरपि विशेषाभावात्)। अथायमभिप्रायः (ते)– 'असति आश्रयविशेषे' (गोत्वस्यापि विशेषो नास्ति। सति तु आश्रयविशेषे गोत्वस्यापि विशेष इति। अयमपि तव अभिप्रायोऽयुक्त एव। यतः–) तत्रापि आश्रयस्यैवान्यत्वम्, किं आयातमाश्रयिणः? (नहि आश्रयभेदेन आश्रयी भिद्यते, अन्यत्वात्तयोः) तस्मात् नित्यस्यापि एकस्य अनेकत्र युगपदुपलब्धिर्दृष्टा। अतो (नित्यत्वेनापि एकस्यानेकत्रोपलब्धिसिद्धेः) नान्यत्वे युगपद्दर्शनं हेतुः। अथेदं मतम्, नैव गवादेर्युगपद्दर्शनमनेकत्र, भेदा एव हि तत्र अनेकदेशतया गृह्यन्ते, न गोत्वम्, इति (अनेन समर्थनवादिनोऽभिप्रायान्तरमाशङ्क्ते पूर्वपक्षाक्षेपवादी। दूषयति––) कथं तर्हि सर्वेषु 'गौः गौः' इति बुद्धिः? (समर्थनवादी आह–) अत एव (सर्वत्र गौर्गौरिति बुद्धेरेव) अनेकदेशत्वं गोत्वस्य नास्ति। अन्यथा हि (यदि व्यक्तिर्गोत्वस्य देशत्वेन प्रतीयेत) 'इह गोत्वं, इह गोत्वं' इति (प्रतीतिः) स्यात्। (आक्षिपति–) कथं तर्हि इहप्रत्ययात् समवायः? ('इहप्रत्ययात् समवायः' इति योऽयं पदार्थविदामुद्गारः स कथम्? उत्तरं–) एकद्रव्यपदार्थाभिप्रायं तत्, न व्यक्त्यभिप्रायम् (एकद्रव्यश्चासौ पदार्थश्चेति। एकद्रव्यपदार्थशब्देन कर्मपदार्थ उच्यते। कर्मपदार्थ एव एकद्रव्यः, एकद्रव्यमाश्रयभूतं तस्य एव, न द्रव्यपदार्थस्य गुणपदार्थस्य वा) तस्मात् (अन्यथासिद्ध्यभावात्) हेतुरन्यत्वे युगपद्दर्शनम्। 'असति विशेषे' इति च युक्तं (भाष्यं अन्यथासिद्धिपरिहारार्थम्)। ननु च अनित्यस्यापि असति विशेषे नैवान्यत्वम् (अतः किमर्थं 'नित्यस्य' इति। उत्तरं–) बाढं (असत्यपि विशेषे अनेकत्वमनित्यस्य) अस्ति ज्वालादिषु, कार्यत्वाच्चाविरोधः। नित्यस्य तु अकार्यत्वात् अनेकत्वविरोधः इति युक्तो हेतुः ('सत्त्वान्तरे च यौगपद्यात्' इति)।

**प्रकृतिविकृत्योश्च। १०॥**

**भाष्यम्**— अपि च 'दध्यत्र' इत्यत्र 'इकारः प्रकृतिः, यकारो विकृतिः' इत्युपदिशन्ति। यद् विक्रियते तत् अनित्यम्। इकारसादृश्यं च यकारस्योपलभ्यते। तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते।

**बृहती**— प्रकृतिविकारभावं च शब्दस्य शब्दज्ञाः स्मरन्ति। न चायं नित्यस्योपपद्यते। तस्मात् स्मृतिरपि (व्याकरणं) पूर्वोक्तहेत्वनुगुणैव। सादृश्यमपि अनुगुणमुपलभामहे इत्युपपन्नं कार्यत्वम्।

**वृद्धिश्च कर्तृभूम्नाऽस्य। ११॥**

**भाष्यम्**— अपि च बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते। स यद्यभिव्यज्यते, बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत। अतो मन्यामहे, नूनमस्य एकैकेन कश्चिदवयवः क्रियते, यत्प्रचयादयं महानुपलभ्यते।



**बृहती**— कारणवृद्ध्यनुगमाच्च कार्यत्वं मन्यामहे ज्वालादीनामिव। तस्मात् अनुपलभ्यमानावयवस्यापि अवयववृद्धिरनुमीयते, ज्वालैवात्र निदर्शनम्।

**समं तु तत्र दर्शनम्। १२॥**

**भाष्यम्**— तुशब्दात् पक्षो विपरिवर्तते। यदुक्तं प्रयत्नात् उत्तरकाले दर्शनात् कृतकोऽयमिति। यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यते इति भविष्यति। यदि प्रागुच्चारणात् अनभिव्यक्तः प्रयत्नेनाभिव्यज्यते। तस्मादुभयोः पक्षयोः सममेतत्।

**बृहती**––किमिदं समं दर्शनम्? इदं तु तत् समं दर्शनम्, कार्ये चाकार्ये च तुल्यो हेतुरिति। कथं तुल्यता? सांन्यासिकतया (सम्यक् न्यस्तं संन्यस्तम्, तत्र भवं सांन्यासिकम्। मूलधनमिव हस्ते स्थापितम्)। किमत्र संन्यस्तम्? इदमत्र संन्यस्तम्, यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यतां वक्ष्याम इति (यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य स्यात्, तदा प्रयत्नानन्तरदर्शनं प्रयत्नस्य अभिव्यञ्जकतया भविष्यति, अथ सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य न स्यात्, तदा प्रयत्नः शब्दस्य कारक एवेति)। ननूक्तं तत् (सप्रत्यभिज्ञं प्रत्यक्षम्)। परिहृतं च ज्वालादिष्विव अनुमाने प्रत्यर्थिनि न शक्यते एकतां वक्तुमिति। सत्यम्। यदि भेदग्रहणनिबन्धनैव प्रत्यभिज्ञा उच्येत, तद्ग्रहणनिबन्धना सा इति प्रतिपादयिष्यामः (प्रतिपादयिष्यते)। तस्मात् उपपन्नं 'समं तु तत्र दर्शनम्' इति।

**सतः परमदर्शनं विषयानागमात्। १३॥**

**भाष्यम्**— यत् अपरं कारणमुक्तमुच्चरितप्रध्वस्त इति। अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं ततो नित्यप्रत्ययसामर्थ्यात्कदाचिदुपलम्भं कदाचिदनुपलम्भं दृष्ट्वा किंचिदुपलम्भस्य निमित्तं कल्पयिष्यामः। तच्च संयोगविभागसद्भावे सति भवतीति संयोगविभागावेवाभिव्यञ्जकाविति वक्ष्यामः। उपरतयोः संयोगविभागयोः श्रूयते इति चेत्। नैतदेवम्। न नूनमुपरमन्ति संयोगविभागाः। यतः उपलभ्यते शब्द इति। न हि ते प्रत्यक्षाः इति। यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति न कुर्वन्ति, आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात् य एवायमत्र श्रोत्राकाशः स एव देशान्तरेष्वपीति स्रुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत।

यस्य पुनः कुर्वन्ति तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति। यथा तन्तवस्तन्तुष्वेव पटम्। तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, स्रुघ्नस्थत्वात्तेषाम्। यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः। दूरे सत्याः कर्णशष्कुल्या अनुपकारकाः संयोगविभागास्तेन दूरे यच्छ्रोत्रं तेन नोपलभ्यत इति। नैतदेवम्। अप्राप्ताश्चेत्संयोगविभागाः श्रोत्रस्योपकुर्युः संनिकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम्। न च युगपदुपलभेते। तस्मात् नाप्राप्ता उपकुर्वन्ति। न चेदुपकुर्वन्ति तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागाविति। नैतदेवम्। अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्ति। यावद्वेगमभिप्रतिष्ठन्ते। ते च वायोरप्रत्यक्षत्वात्संयोगविभागा नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्द उपलभ्यते, नोपरतेषु। अतो न दोषः। अत एव चानुवातं दूरादुपलभ्यते शब्दः।

**बृहती**––'सतः परमदर्शनं विषयानागमात्' इति तद्वत् अनैकान्तिकमदर्शनमपि इत्युक्तम्। ननु एतन्नोपपद्यते (सतः अदर्शनम्)। नित्यस्यादर्शने को हेतुः? यदि परं विषयानागमः (सोऽपि अनुपपन्नः। समर्थयते–) अस्तु तर्हि! (आक्षिपति–) स एवात्र दुर्भणः। किमिति (दुर्भणः? हेतुमाह–) नित्यपक्षे हि अभिव्यङ्ग्यत्वं शब्दस्य। एकश्च अयं शब्दः एकविषयश्च आकाशविषयत्वात्। ग्राहकं चास्य आकाशमेव (इति) केयं विषयानागतिः? तस्मात् ध्वस्तस्यैवानुपलब्धिर्न्याय्या। केन वोक्तं न न्याय्येति, तद्ग्रहणे तु सति सर्वस्यैवास्य अन्याय्यता न्याय्या, अत एवोक्तं 'यदि शक्ष्यामः' इति (भाष्ये)। ननु तद्ग्रहणे अपि नात्र आवरणादिकल्पना आत्मानं लभते। किमिति? पूर्वक्लृप्तविरोधात्। किं क्लृप्तम्? आकाश-

मिन्द्रियम्, तच्चैकम् । तस्मात् संयोगविभागयोरभिव्यञ्जकत्वे सत्यपि सर्वशब्दानां सर्वैश्च उपलब्धिः प्राप्नोति ( सर्वे हि शब्दाः समानदेशाः, तत्रैकाभिव्यक्तौ सर्वाभिव्यक्तिः स्यात् घटादिवत् । चोदयति– ) युक्तं तावत् सर्वैर्ग्रहणम् । सर्वशब्दानां तु न युक्तम्, कारणवत् अभिव्यञ्जकान्यत्वात् । ( यथा कारणानां भिन्नत्वात् कश्चित् शब्दः केनचित् क्रियते, तथा कश्चित् शब्दः केनचिदभिव्यज्यते ) । सर्वैश्चोपलब्धिः कार्यपक्षेऽपि तुल्यैव । ( सर्वेन्द्रियवर्तिन एव शब्दस्योत्पत्तेः ) यश्च उभयोः ( समो ) दोषः, न तमेकश्चोद्यो भवति इति । परिहृतं इदं दूषणम्, कारकाभिव्यञ्जकयोः विशेषाभिधानेन विना नैव चोद्येरन् नित्यत्ववादिनः । ( पूर्वपक्षी– ) अयमस्ति विशेषः । अभिव्यक्तिः शब्दस्य, इन्द्रियस्य वा स्यात् ? तत्र शब्दाभिव्यक्तौ तावत् एकविषयत्वात् सर्वशब्दानां घटादीनामिव एकविषयाणां नाभिव्यक्तिः क्रमेण शक्यते वक्तुम्, अदृष्टत्वात् प्रसिद्धानामभिव्यञ्जकानां प्रदीपादीनाम् । कारणानां तु कार्यदर्शनात् शक्यमनुमानं शक्तेः । ननु अभिव्यञ्जकानामपि अभिव्यक्तिदर्शनादेव अनुमानं युक्तं शक्तेः । ( यथा कार्यविशेषदर्शनात् कारणानां विशिष्टविषयशक्त्यनुमानम्, तथाऽभिव्यञ्जकानामपि विशिष्टशब्दाभिव्यक्तिदर्शनात् भवत्येव विशिष्टशक्त्यनुमानम् । पूर्वपक्षी– ) न कार्यपक्षे प्रतिपक्षतया संभवति । ( पृच्छति– ) को वा विशेषः ? ( कार्यत्वाभिव्यक्तिपक्षयोः । विशेषमाह– ) प्रसिद्धेषु कारणेषु दर्शनात्, अभिव्यञ्जकेषु चादर्शनात् दृष्टानुगुणं चानुमानम्, (न्याय्यं) न दृष्टविरोधि । ननु च एकविषयत्वे विरोधः, विषयान्तरे तु विरोधकथा विरुद्धैव । सत्यम । विषयान्तरतैवात्र दुर्वचा । न दुर्वचा, श्रोत्रमाकाशमित्यभ्युपगमात् । अभिन्नं चाकाशम्, सर्वशब्दाश्च श्रोत्रविषयाः, तस्मादेकविषयत्वम्, विषयैक्याच्च दृष्टविरोधः । किमिदं प्रलप्यते, तदिदमापतितं ' कर्णे स्पृष्टः कटिं चालयति ' इति, अभिव्यक्तेर्विषयो निरूप्यते, न पुनः शब्दस्य, अन्यश्चायं प्रदीपादिविषयाद्विषयः ( तेन प्रदीपादिभिः सर्वमभिव्यज्यते, संयोगविभागैस्तु कश्चिदेव शब्द इति ) । तस्मात् प्रदीपादिविरोधात् शब्दे अभिव्यञ्जकानुमानविरोधो न शक्यते वक्तुमित्युक्तम् । ( शब्दे यदभिव्यञ्जकानुमानम्, न तस्य दृष्टविरोधः शक्यते वक्तुम् ) । तस्मात् तद्ग्रहणनिबन्धनं अनुमानं दुर्निवारम् । अतः अदर्शनमिदानीं अनैकान्तिकमित्युक्तम् । (नासत्त्वेनैवादर्शनं किंतु अनभिव्यक्तावपि घटते एवेति । पूर्वपक्षी– ) ननु च श्रोत्रविषयेयमभिव्यक्तिर्न शब्दविषया । 'अभिव्यक्तं हि श्रोत्रं शब्दं गृह्णाति' इत्येतावदभिव्यञ्जके शक्यमनुमानम्, न पुनः 'अमुं शब्दं, अमुं न ' इत्यसंस्पर्शादभिव्यञ्जकानाम् । अयमेव च राद्धान्तः ( भवतां मीमांसकानां यदुत ' श्रोत्रसंस्कारः ' इति ) । स चायमनुमानविरोधीत्युक्तम् । सत्यम् । प्रसिद्धानुमानबाधनमयुक्तम्, ( परंतु ) प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव । सप्रत्यभिज्ञं च प्रत्यक्षं आत्मनि सामान्यादिषु च स्थितम्, उभयोरबाध्यत्वे सति कस्यचिद्धर्म्यासिद्धेः एकस्य बाधनम् । अनुमानात् प्रत्यक्षं बलीयः इति नैयायिकाः ( तेन प्रत्यभिज्ञाबलेन अभिव्यञ्जकवैधर्म्यानुमानं बाध्यते ) ।

ननु च प्रत्यक्षं भ्रमभाक्, ( इतर आह– ) अनुमानेऽपि भ्रान्तिरविशिष्टा । (ननु वादी–) न ब्रूमः अनुमानेऽपि भ्रान्तिर्नास्तीति, किंतु अत्र भेदाग्रहणात् तद्बुद्धिरतस्मिन्नपि भवति, संभावितभ्रममिति प्रत्यक्षमेव दुर्बलं मन्यामहे । अनयैव प्रकटिताप्रकटितभ्रमकारणतया उक्तं न्यायविद्भिः ' भवति वै प्रत्यक्षादपि अनुमानं बलीयः ' इति । ( पृच्छति– ) किं निर्ज्ञातकारणदुष्टतैव अत्रोपन्यस्ता ( निर्ज्ञाता चासौ कारणदुष्टता चेति ? ननु वादी– ) किं जातं यत्रुपन्यस्ता ? ( इतर आह– ) ननु च विपर्ययाभावात् नैवास्तितया उपन्यसितुं शक्यते ( नहि साक्षात् भेदज्ञानं शब्दे विद्यते, येन विपर्ययो भवेत् । पूर्वपक्षी– ) किं विपर्यय एव मिथ्यात्वे हेतुः ? कारणदोषोऽपि असमीचीनहेतुतया उपन्यस्त एव ( तेन विपर्ययाभावेऽपि कारणदोषात् मिथ्यात्वं भवति ) । ( इतर आह– ) ननु च कारणदोषः प्रयत्नेनोपलभ्यमानतया उक्तः । ( पूर्वपक्षी- ) कोऽयं प्रयत्नो नाम, योऽसौ अत्र नास्तीत्युच्यते ? ( इतर



आह– ) अयमेवासौ प्रयत्नः, अन्यत्र विपर्ययात् कारणदोषं विज्ञाय तद्भावभावितयैव एतत्कृतोऽयं विपर्ययः इति, तमन्यत्र विजानाति, ज्ञाते च तस्मिन् असत्यपि विपर्यये ' भ्रान्तमिदं ' इत्यध्यवस्यति, ( स एवाह– ) किमत्र एवंभूतमस्ति ? ( बाधकप्रत्यये जाते, मिथ्याभावेऽवगते, किं निबन्धनमिदं मिथ्यात्वं इति जिज्ञासमानः कारणदोषतद्भावभावितया तस्यैव तत्र कारणतां निश्चिनोति । निश्चिते च तस्मिन् यत्रापि बाधकप्रत्ययो नास्ति तत्रापि मिथ्यात्वहेतुकारणदोषज्ञानेन मिथ्यात्वमध्यवस्यति । तदेवंविधं किमत्र अस्ति ? यावता नास्त्येव, बाधकस्य कदाचिदप्यदर्शनात् इति । पूर्वपक्षी– ) बाढमस्ति भेदाग्रहणम् । भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः । एवमत्रापि ( शब्देऽपि ) भेदाग्रहणनिबन्धन एव ज्वालादिष्विव तद्भ्रमः । तस्मात् सुष्ठूक्तं शब्दे एव तद्ग्रहणं भ्रान्तिरिति ( पूर्वपक्षी एवाह– ) यस्य तावत् विपरीताकारमर्थे ज्ञानमुत्पद्यते कदाचित्, तस्य युक्तं वक्तुं ' विपर्ययाभावात् नायं भ्रमः ' इति । यस्य पुनः अग्रहणनिबन्धन एव विपर्ययः, तस्य पुनः का शक्तिर्वक्तुं अनुमानविरोधे सति ज्वालादिवैधर्म्यम् ? ननु चाग्रहणमपि पुनर्ग्रहणादवसीयते । न चात्र कस्यांचिदवस्थायां भेदस्य ग्रहणमस्ति सौगन्धिकस्फटिकयोरिव । ( उपरागोपधानेन स्फटिकः पद्मरागविशेषात् सौगन्धिकात् भेदेन न गृह्यते, उपरागापगमे तु गृह्यते, तथेह नास्ति । तस्मात् कथं भेदाग्रहणमेतदिति कल्प्यते ? पूर्वपक्षी– ) ज्वालादिषु कथम् ? ( तत्रापि भेदग्रहः प्रत्यक्षेण नास्ति । इतर आह– ) अनुमानात् भेदावगतिरिति चेत्, (पूर्वपक्षी–) तत्तुल्यमत्रापि ( अनुमानानाम् ) । तस्मात् शब्दविषयं सप्रत्यभिज्ञं प्रत्यक्षं आशापाशमात्रं मीमांसकानाम् । यदप्युक्तमन्यैः, ' तुल्येऽपि संस्कार्ये संस्कारभेदात् कार्यान्यत्वमुपलभ्यते इति यथा मण्डूकवसया अक्ताक्षा वंशानुरगानिव पश्यन्ति ' इति, तदिदमाकाशविजृम्भितम् । संस्कारो हि नाम स भवति, यः स्वकार्ये शक्तिमुपजनयति । न चैतदिन्द्रियस्य कार्यम्, यदिदमयथार्थग्रहणम्, अग्रहणनिबन्धनमेव तदिति प्रतिपादितम् ( न मण्डूकवसाञ्जनं नेत्रसंस्कारः, किंतु शक्तिप्रतिबन्धकमेव । अत एव वंशाकारस्याप्रतीतिः, उरगाकारस्य स्मरणमिति स्मृतिप्रमोषे दर्शितम् ) । तस्मादभेदेऽपि संस्कार्यस्य संस्कारान्यत्वेन कार्यान्यत्वं ज्ञापके न विद्यते इत्यन्यत् किंचिदुपदर्शनीयम् । यच्च खड्गदर्पणादिषु अन्यथाऽभिव्यज्यते मुखमिति, किमुक्तं भवति ? (दूषयति–) ग्राह्येऽयमुपरागो दृष्टः, युक्तश्च ( अयमुपरागः ), अभिव्यञ्जकस्यापि विषयापत्तेः ( विषयत्वात् ) । इह पुनः श्रोत्रमग्राह्यम्, संयोगविभागावपि । अत इदमपि आकाशविजृम्भितमेव । तस्मात् ' शब्दो नित्यः ' इति श्रद्धयैव प्रतिपत्तव्यम्, शब्दात्मकत्वाद्वेदस्य वेदनिन्दा मा भूदिति । पठितं च धर्मशास्त्रकारैः ' स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ' इति । (यत एव शब्दस्य नित्यता वक्तुं न शक्यते– ) तस्मादनिदंप्रथमतैवात्र शरणम्, न पुनः शब्दनित्यतापूर्वकमनपेक्षत्वं शक्यते युक्तितो वक्तुम् । कल्प्यतां ( ण्यन्तात् णिच् । लोकः कल्पयन् त्वया वेदव्यवहारसमर्थनवादिना प्रयुज्यतां इति ) रागादिविनिर्मुक्तमप्रतिहतज्ञानं करुणाऽऽविष्टचेतसं भगवन्तं कंचन मुनिवरम्, आश्रीयतां वा सुरगुरोर्दर्शनम् । व्यवहारमात्रमेवेदं वेदवाभिहितं पश्यामः । प्राज्ञैर्लोकयात्रासिद्ध्यर्थं सुप्रतिबन्धनं ( सुप्रयुक्तं ) अनुपाल्यमानमिति । इदमेव ( सुरगुरोः वचनं ) युक्तं मन्यामहे, नहि दृष्टे संभवति अदृष्टकल्पना न्याय्या । दृष्टश्चायमर्थः यत् ' प्राज्ञैः ऋजव उपजीव्यन्ते ' इति । तथा च सिद्धमागमवादिनामपि हेतुदर्शनादप्रामाण्यं ' यूपहस्तिनो दानमाचरन्ति ' इत्येवमादिषु । कर्तव्यो वा सप्रत्यभिज्ञस्य प्रत्यक्षस्य शब्दो विषय इति यत्नः । ( समाधाता– ) कथं पुनर्ज्वालादेरिवानुमानात् शक्यते अन्यत्वमवगन्तुम् । ( आक्षेप्ता– ) ननु चानुमानादित्युक्तम् । ( समाधाता– ) किं तदनुमानम् ? अनभिव्यञ्जकवैधर्म्यम् । ( आक्षेप्ता– ) ननु अभिव्यञ्जकानामनेकविषया शक्तिर्दृष्टा ( ये अभिव्यञ्जकास्तेषामनेकविषया शक्तिः यथा दीपस्य, अभिव्यञ्जकौ च संयोगविभागौ भवतः इति । समाधाता– ) ननु चेदमभिव्यञ्जकविषयमनुमानम्, कथमन्यविषयमनुमानं अन्य-

विपर्ययस्यावच्छित्तौ हेतुः ? श्रोत्रस्य हि अभिव्यञ्जकसंस्कारं निरुणद्धि, न पुनः शब्दस्यान्यत्वमवगमयति । ( आक्षेप्ता– ) ननु चोक्तम्, न चेत् संयोगविभागाः श्रोत्रस्य शब्दग्रहणसमर्थं संस्कारमापादयन्ति, शब्दस्योत्पादकाः प्राप्नुयुः ( भवेयुः ), उत्पत्तौ चान्यत्वमिति । ( समाधाता– ) कथमन्यप्रतिषेधः अन्यस्योत्पत्तिमवगमयति ? ( आक्षेप्ता– ) अन्यथा व्यापारानुपपत्तेः । ( एकदेशी– ) न चेत् संस्कारकाः संस्कुर्युः, किमन्यत् अतः शब्दोत्पत्तेः ( कुर्युः ) ? ( समाधाता– ) किं यस्य संस्कारकता नोपपद्यते, तेनोत्पादकः भवितव्यम् ? ( आक्षेप्ता– ) न चेदुत्पादः, निर्व्यापार एव स्यात्, अन्यार्थता च संयोगविभागयोरुपलब्धा । ( स च संस्कारकत्वे प्रतिषिद्धे शब्दोत्पत्तिविषय एव । समाधाता– ) सत्यम्, यदर्थाः तत्र भवन्तु उत्पादकाः संस्कारका वा (न पुनः शब्दे, तदर्थत्वाभावात् । किमर्थता तर्हि संयोगविभागयोः, तत्राह– ) परप्रतिपत्त्यर्थता च सिद्धा । ( परः शब्दं प्रतिपद्यतां इति ) तत् तयोः ( उत्पादकत्व–संस्कारकत्वयोः ) यदिष्टं तत् परिकल्प्यताम्, विषयान्तरे ( शब्दे ) पुनः संबन्धाभावात् किमास्पदं कल्पनायाः ? ( समाधाता– ) तस्मादन्यत्वे हेतुतां संयोगविभागयोः कथमिव नैयायिका मन्यन्ते ? ( आक्षेप्ता– ) एवं मन्यन्ते, न चेत् श्रोत्रे कार्यमस्ति, शब्दे कार्यं प्रतिपद्यामहे । (समाधाता–) किं कार्यतस्तादर्थ्यम् ? ( येनैवं ब्रवीषि ? आक्षेप्ता– ) ओम् इत्युच्यते । ( समाधाता– ) सिद्धं तर्हि कार्यं श्रोत्रे, न संयोगविभागाः शब्दार्था इति मन्यन्ते शब्दविदः । ( आक्षेप्ता– ) ननु च कार्यदर्शनात् न युक्तं वक्तुं शब्दविदाम् । ( समाधाता– ) कार्यदर्शनमेव नास्तीति ब्रुवते, शब्दे तदग्रहणात् । ( ' शब्दे कार्यं विज्ञायते ' इत्येतदेव नास्ति इति ब्रुवते शब्दविदः । आक्षेप्ता– यदि शब्दस्योत्पत्तिं न कुर्वन्ति– ) किं तर्हि कुर्वन्ति संयोगविभागाः ? ( समाधाता– ) श्रोत्रसंस्कारमिति ब्रूमः । (आक्षेप्ता–) ननु च अन्यैः संस्कारैः वैलक्षण्यमत्र नोपपद्यते इत्युक्तम् । ( समाधाता– ) अनुमानात् कार्याभावं मन्यते भवान्, वयं तु प्रत्यक्षादुत्पत्तिं नेच्छामः, प्रत्यक्षानुमानयोश्च प्रत्यक्षं बलीय इति सिद्धम् । ( श्रोत्रे कार्यं न भवति इत्यभिव्यञ्जकसामान्यानुमानात् भवान् मन्यते, श्रोत्रे च कार्याभावमनुमानेनावगम्य शब्दे तद्ग्रहणबाधनीमुत्पत्तिं कल्पयति । वयं तु सप्रत्यभिज्ञानात् प्रत्यक्षात् शब्दस्यैकतां प्रतिपद्यमाना उत्पत्तिमनिच्छन्तः श्रोत्रसंस्कारं अभिव्यञ्जकसामान्यानुमानप्रसक्तसकलोपलम्भबाधेन नियतशब्दविषयं कल्पयामः । एवं च त्वदीयं शब्दोत्पत्त्यनुमानं अनुमानान्तरपूर्वकम्, अस्मदीयं तु प्रत्यक्षपूर्वकं नियतशब्दविषयश्रोत्राभिव्यक्तिकल्पनं प्रत्यक्षानुमानयोश्च शीघ्रप्रवृत्ततया प्रत्यक्षं बलीय इति सकलवादिनां सिद्धम् । अनुमाने तु संबन्धव्याप्तिग्रहणस्मरणपक्षधर्मताऽध्यवसानलक्षणा सामग्री बहुतरविलम्बसंपादनीया, प्रत्यक्षे तु नार्थान्तरपरिग्रहसव्यपेक्षा काचिदस्ति इति शीघ्रतरप्रवृत्तानुमानवशेनैव वस्तुनिर्णयः इति युक्तं तद्ग्रहणे सति नियतविषयाभिव्यक्तिजनकत्वं संयोगविभागयोः । आक्षेप्ता– ) ननु चाग्रहणं भ्रमहेतुरित्युक्तं ज्वालादीनामिव ( यदि तद्ग्रहणमेवेदं सिद्धं स्यात्, तदा तद्बलभावि अनुमानं बलीयो भवेत्, यावता यथा ज्वालादिषु भिन्नेष्वपि भेदाग्रहणमात्रात् तद्ग्रहणं भ्रमः, तथाऽयमपि तद्ग्रहणभ्रम एवेति कथमेतत्पूर्वकमनुमानं बलीय इति । समाधाता– ) इह तु अग्रहणमेवासिद्धम् । ( नात्र भेदाग्रहणमेतदिति निश्चितम् । आक्षेप्ता साम्यापादनाभिप्रायेणाह– ) तत्र कथम् ? (ज्वालादिषु कथमग्रहणसिद्धिः ? समाधाता–) कार्यानुमानात् ( प्रभावितितिलक्षणात् कार्यात् ज्वालादिषु भेदानुमानात् भेदाग्रहणं सिद्धम् ) । इह पुनस्तत् ( कार्यं भेदानमानहेतुभूतं ) अद्यापि न सिध्यति, न चासिद्धं सिद्धौ ( शब्दे भेदाग्रहणसिद्धौ ) पर्याप्तम् । प्रत्यक्षं चानपक्षत्वात् सिद्धम् । ( आक्षेप्ता– ) अनुमाने वा काऽपेक्षा ? ( न काचिदित्यर्थः । समाधाता– ) इयमेवापेक्षा, सिद्धेऽनुमाने कार्यम्, कार्ये च सत्यनुमानमिति । न पुनरेवं प्रत्यक्षं तद्ग्रहणापेक्षम्, प्रत्यक्षादेव हि तद्ग्रहणम् । किंच संयोगविभागौ श्रोत्रार्थतयाऽन्यतः प्रसिद्धौ । कुतोऽन्यतः ? उक्तं ' दर्शनस्य



परार्थत्वात् ' ( १।१।१८ ) इति लोकतः ( दर्शनस्योच्चारणस्य श्रोतृगतशब्दप्रतिपत्त्यर्थत्वात् श्रोतर्येव कार्यं न्याय्यं तत्र श्रोतरि कार्यासंभवात् श्रोत्रे कार्यं युक्तम् ) । तस्मात् तादर्थ्ये सति यथा संभवति तथा कार्यं कल्पनीयम् ( तत्र श्रोतर्यसंभवात् श्रोत्रे एव युक्तम् ) । न कार्यतस्तात्पर्यम्, अन्यतोऽनवगमादित्युक्तम् ( अन्यतः कार्यस्य शब्दवर्तिनोऽनवगमात् इत्युक्तं ' शब्दे तद्ग्रहणात् ' इति ) । तस्मान्नात्र ज्वालादीनामिव प्रमाणमस्ति । तस्मात् ' सतः परमदर्शनम् ' इति युक्तमनैकान्तिकत्वम् । ( आक्षेप्ता– यदि श्रोत्रे कार्यम् ) कथं तर्हि एकविषयैवाभिव्यक्तिः शक्यते वक्तुम् ? ( समाधत्ते–) कार्यदर्शनात् युक्ता अदृष्टस्य कल्पना ( प्रतिनियततत्तच्छब्दाभिव्यक्तिलक्षणकार्यदर्शनात् युक्तमन्यत्र अदृष्टस्य प्रतिनियतोपलम्भनसामर्थ्यस्य कल्पनम् ) । अतो दृष्टस्य तद्ग्रहणस्य नापह्नवो न्याय्यः । कार्यान्तरदर्शनात्तु कारणान्यत्वकल्पना न्याय्यैव ।

' उपरतयोः संयोगविभागयोः ' इति ( भाष्यम् ) । कौ तौ संयोगविभागौ अभिप्रेतौ ? ( उत्तरं– ) ताल्वादीनामिति ब्रूमः । कुत एतत् ? ( उत्तरं–भाष्ये– ) उपरतयोरिति श्रवणात्, वायवीयानामुत्पत्तिः उपरतिश्च अनुमेया । ( पृच्छति– ) ' न नूनं उपरमन्ति ' इति ( भाष्यस्य ) कोऽभिप्रायः ? ( उत्तरं– ) वायवीयान् संयोगविभागान् मनसि कृत्वा कार्यसमधिगम्यत्वात् इदमुत्तरं ' नहि ते प्रत्यक्षाः ' इति ( भाष्येण ) स्पष्टीकृतम् । ( ताल्वादीनां तु संयोगविभागौ प्रत्यक्षावेव इति तदभिप्रायेण ' नहि ते संयोगविभागाः प्रत्यक्षाः' इति वचनं नैव घटते । अतो वायवीयाभिप्रायेणैव परिहारः । आक्षिपति– ) यद्येवं इदानीमुत्तरग्रन्थो नोपपद्यते 'आकाशविषयत्वात्तस्य एकत्वाच्चाकाशस्य' इति । कथं नोपपद्यते ? (उत्तरं–) वायवीयानामभिव्यञ्जकत्वे कार्यपक्षे इव 'यत्र ते तत्रैवोपलब्ध्या भवितव्यम् ' इत्येवं नोपपद्यते । अथ अयमभिप्रायः (समाधातुः) अभिव्यक्तिपक्षे नैव वाय्वाश्रिताः शब्दा भवन्ति । किं तर्हि ? आकाशस्था एव । येषां पुनः क्रियन्ते, तेषां वायवीयाः संयोगविभागा असमवायिकारणतां प्रतिपद्यन्ते, तदेव ( वायुद्रव्यं ) समवायिकारणं भवति । यत्रैव ( समवायि– ) कारणं तत्रैव कार्योपलब्धिरिति युक्तम् । ( समाधातुरभिप्रायं दूषयति– ) एवमपि निर्ज्ञाते वायवीयसंयोगविभागयोरभिव्यक्तिकारणत्वे यत्रैवाभिव्यञ्जकं तत्रैवाभिव्यक्तिः यथा यत्रैव कारणं तत्रैव कार्यम् । ( आक्षेप्तैव समाधातुरन्यामाशङ्कामुपक्षिपति– ) अथैतन्मन्यसे, कार्ये एवैतद्युक्तं (कारणदेशोपलभ्यत्वं) नाभिव्यक्तौ इति । ( उपक्षिप्तं दूषयति– ) तदयुक्तम् । अभिव्यक्तिरपि कार्यमेव, अभिव्यङ्ग्यं तु पूर्वोत्पन्नम्, अतो यद्देशा अभिव्यक्तिः, तत्रैवोपलब्धिरिति तुल्यं उभयोरपि पक्षयोः । तस्मात् व्याख्येयोऽयं ( भाष्य– ) ग्रन्थः । ( समाधत्ते– ) अविशेषज्ञो देवानांप्रियः, कार्यं हि कारणदेशं भवति, अकार्यं पुनर्न परापेक्षदेशम् । तस्मात् अभिव्यक्तिर्भवतु अभिव्यञ्जकदेशा, अभिव्यङ्ग्यं तु किमिति तद्देशम् ? अतज्जन्यत्वात् अभिव्यङ्ग्यस्य । तद्देशस्य ( च ) अभिव्यङ्ग्यत्वाभिमतशब्ददेशस्य चैकत्वात् आकाशस्य सर्वैर्ग्रहणं प्राप्नोति अज्ञातेष्वपि वायवीयसंयोगविभागेषु, सर्वश्रोत्रेषु एकमाकाशं यतः । ( आक्षेपं परिहरति– ) सत्यं यथा भवानाह, यदि शब्दस्याभिव्यञ्जकाः संयोगविभागाः स्युः । श्रोत्रस्य तु अभिव्यञ्जकाः, श्रोत्रस्य च श्रोतृदेशतैव । ननु चाकाशमेव श्रोत्रम्, तच्चान्यत्रापि इति तुल्यं शब्दाभिव्यक्त्या । उच्यते । सत्यं सर्वत्राकाशमेकम् । किंतु तस्य श्रोत्रभावः श्रोतृदेश एव, कर्तृभिः संबन्धेन करणत्वात्, कर्तुः भोगायतनवशेन शरीरदेशे एव कर्तृत्वात् न तुल्यता ( शब्दाभिव्यक्त्या ) । तस्मात् उत्पत्ताविव अभिव्यक्तावपि न सर्वैरुपलब्धिः । (भाष्यमनुवदति–) 'नैतदेवम्, अप्राप्ताश्चेदुपकुर्वन्ति संनिकृष्टविप्रकृष्टदेशस्थितौ युगपत् शब्दमुपलभेयाताम् ' इति । ( भाष्यमाक्षिपति– ) ननु श्रोत्रसंस्कारपक्षे ' दूरस्थितं श्रोत्रं न संस्क्रियते ' इति वदता प्राप्तैरेव संस्कारः इत्युक्तम् । असत्यां च प्राप्तौ दूरसंनिकृष्टव्यपदेश एव न घटते, ( इति ) किमिदं 'अप्राप्ताश्चेदुपकुर्वन्ति ' इति ( उक्तं भाष्ये ? ), अप्राप्ताशङ्कैव नास्ति ' दूरे सत्याः ' इत्यभिधानात् । तस्मान्न विद्मः कथमिदं भाष्यं आयातम् ? ( समाधत्ते– ) एवमिदमा-

निव अवयववानिव च भ्रान्तिरुपपद्यते । ( बहवो वायवः समानस्थानकरणप्रेरिताः परस्परनिरपेक्षाः युगपदेव कृत्स्नां कर्णशष्कुलीमण्डलस्य नेमिं प्राप्नुवन्तो निरन्तराः श्रोत्रदेशमेव शब्दं निरन्तरं ग्राहयन्तो महान्तमिव शब्दं प्रतिपादयन्ति इति )। संस्कारानुरोधात् शक्तेरुद्बोध इत्युक्तम् । तस्मादयमपि संस्कारभेदाग्रहणनिबन्धन एव भ्रमः । अतः स्थिते सप्रत्यभिज्ञप्रत्यक्षे पूर्वोक्तमनैकान्तिकीकृतं अनित्यत्वे हेतुजातम् ( प्रत्यभिज्ञाशब्देनात्र ज्ञानधर्मः पूर्वानुभवभावनाऽवमर्शेन ' स एवायं ' इति वस्तुग्राहकत्वमुक्तम् , न ज्ञानमेव )।

**न्यायरत्नाकरः**— भवतु वर्णत्ववत् ध्वनित्वं नाम शब्दत्वावान्तरभेदः , तद्भेदाश्च गकारादिवत् पारमार्थिकाः सन्तु, तेषां तु श्रौतत्वात् तत्संपर्कवशादेव वर्णेषु सानुनासिकनिरनुनासिकोदात्तानुदात्तादिभेदावभासोऽपि सुकरोऽस्तु, न कश्चिद्दोषः सर्वथा शब्दानित्यत्वपक्षे । तयोऽयं कार्यभेदः क्वचित् वर्णोपलब्धिः , क्वचिच्च नादमात्रोपलब्धिः , तद्बलेन ध्वनीनां शक्तिभेदकल्पने केचित् वर्णान् व्यञ्जयन्ति, केचित् नेति, ध्वनयस्तु वायवो वा शब्दजातिभदो वा नात्राभिनिवेशः । शब्दपक्षे च तस्यामूर्तस्य वृद्ध्यसंभवात् नादवृद्धिसूत्रेण नादशब्देन नादगुणका वायवो लक्ष्यन्ते । **श्लोकः २२८.**

**नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् । १८ ॥**

**भाष्यम्**— नित्यः शब्दो भवितुमर्हति । कुतः ? दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणं तत्परार्थं परमर्थं प्रत्याययितुम् । उच्चरितमात्रे हि विनष्टे शब्दे न चान्योन्यानर्थं प्रत्याययितुं शक्नुयात् । अतो न परार्थमुच्चार्येत । अथ न विनष्टस्ततो बहुशः उपलब्धत्वादर्थावगम इति युक्तम् । अर्थवत्सादृश्यादर्थावगम इति चेत् । न कश्चिदर्थवान् सर्वेषां नवत्वात् । कस्यचित् पूर्वस्य कृत्रिमसंबन्धो भविष्यतीति चेत् । तदुक्तं सदृश इति चावगते व्यामोहात् प्रत्ययो व्यावर्तेत शालाशब्दान्मालाप्रत्यय इव । यथा गावीशब्दात्सास्नादिमति प्रत्ययस्यानिवृत्तिस्तद्वद्भविष्यतीति चेत् । न हि गोशब्दं तत्रोच्चारयितुमिच्छा । नेहान्यशब्दोच्चिचारयिषा । न चैकेनोच्चारणयत्नेन संव्यवहारश्चार्थसंबन्धश्च शक्यते कर्तुम् । तस्माद्दर्शनस्य परार्थत्वान्नित्यः शब्दः ।

**बृहती**— इदानीं सप्रत्यभिज्ञप्रत्यक्षस्य शब्दविषयतोच्यते ' नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ' इति । ( आक्षिपति— ) ' दर्शनस्य परार्थत्वादिति ' कस्यायं हेतुः ? ( उत्तरं— ) नित्यतायाः शब्दस्य । ( आक्षेप्ता— ) ननु चायमपक्षधर्मः ( सिषाधयिषितधर्मो हि धर्मी पक्षशब्देनोच्यते । अत्र च शब्दस्य नित्यतालक्षणो धर्मः साधयितुमिष्टः इति शब्दः पक्षः , न च तस्य परार्थत्वं धर्मः । किं तर्हि दर्शनस्य )। अपक्षधर्मस्य चास्य हेतुत्वं नास्ति इति नैयायिकाः ( न्यायविदो मन्यन्ते । समाधाता— ) अश्रुतशास्त्रा हि ते ( न तैर्मीमांसाशास्त्रं श्रुतम् )। दर्शनमेवात्र ( सूत्रे ) परार्थतयोपन्यस्यते । तत्र ( दर्शनं ) निर्विषयं नास्ति, इति शब्दोऽत्र विषयतयोपन्यस्यते । ( पृच्छति— ) ततः किम् ? ( उत्तरम्— ) इदं ततः परार्थदर्शनसंबन्धिता हेतुः ( इति भवति )। एतदुक्तं भवति ' परार्थं दर्शनं यस्य ' ( शब्दस्य इति । पृच्छति— ) तस्य किम् ? (उत्तरम्— ) नित्यता । ( पृच्छति— ) कस्य यथा ? ( उत्तरं— ) सर्वस्येति ब्रूमो धूमादेः । ( तेनेत्थमिदं साधनं प्रयोक्तव्यम् , शब्दो धर्मी, नित्य इति साध्यो धर्मः, परार्थदर्शनसंबन्धित्वात् , यो यः परार्थदर्शनसंबन्धी स स नित्यः यथा धूमादिः , इति । हेत्वसिद्धिमाशङ्कते— ) ननु च स्वप्रतिपत्त्यर्थमपि दर्शनं धूमादेः ( तेन परार्थत्वमसिद्धमिति । परिहरति— ) भवतु ( स्वप्रतिपत्त्यर्थता ), परप्रतिपत्त्यर्थताऽपि ( अस्ति, तेन नासिद्धिर्हेतोः । ननु च परार्थता नास्त्येव मीमांसकमते, तत्राह— ) अनिराकरणीयं चैतत् अविरोधात् , शब्देऽपि विद्यमानत्वात् ( परार्थतायाः । ननु च नित्यत्वे साध्ये न धूमादेर्दृष्टान्तता, तेषामनित्यत्वात् इति । तत्राह— ) कालान्तरावस्थायित्वं च नित्यशब्देनोच्यते, न सदकारणत्वम् । ननु च सन् अकारणश्च शब्द इष्यते ( मीमांसकैः , परिहरति— ) बाढं इष्यते, स तु परार्थमात्रतयैव दर्शनस्य सिध्यति । ( चोदयति— यदि तावत् सदकारणता शब्दस्य— ) किमिति तर्हि विशेष उच्यते ?



(कालान्तरावस्थायितैव साध्यते इति । परिहरति— ) कथं नाम अनित्यस्यापि धूमादेर्दृष्टान्तता स्यात् (इति कालान्तरावस्थायितैव साध्या, न तु सदकारणतारूपा नित्यता) ननु च अस्यापि (शब्दस्य) अनित्यता प्राप्नोति, प्रसिद्धे ( धूमादौ ) दर्शनात् ( यथाभूतो हि दृष्टान्ते धर्मो दृष्टस्तथाभूतेनैव दार्ष्टान्तिकेऽपि भवितव्यम् , तेन धूमवदनित्यता शब्दस्य प्राप्नोति । परिहरति— )अत एव कालान्तरावस्थायित्वमात्रं साध्यतयोच्यते । कालान्तरावस्थायितया च सिद्धं शब्दस्य सदकारणत्वम् । दर्शनमेव ( उच्चारणमेव ) हि तस्य कारणतया शङ्कितं परैः , तच्च परार्थतया अकारणतां गतम् ( तच्च कालान्तरावस्थायित्वे सिद्धे द्वितीयश्रवणे परप्रतिपत्त्यर्थतया शब्दं प्रति अकारणतां गतम् , किंतु अभिव्यञ्जकमेव, ततश्च प्रथमश्रवणेऽपि तदभिव्यञ्जकमेवेति सिद्धमकारणत्वम् )। तस्मात् परार्थदर्शनसंबन्धितामात्रस्य हेतुत्वे शब्दस्य सदकारणत्वं सिद्धम् ।

ननु च तत्तुल्योपादानमभेदमुपादाय सिध्यति पारार्थ्यं दर्शनस्य ( उच्चारितमात्रे हि विनष्टे शब्दे परार्थमुच्चारणं न घटते, संकेतितस्य शब्दस्य पुनर्व्यवहारकाले असत्त्वात् , असंकेतितस्य चाप्रतिपादकत्वात् । यदा पुनः संकेतिते शब्दे विनष्टेऽपि तत्तुल्योऽपरो यः शब्दः उत्पद्यते तत्सादृश्येन व्यामूढा अभेदमुपादाय अर्थं प्रतिपद्यन्ते इति घटते, तदा तद्दर्शनस्य परार्थताऽपि सिध्यति इति नैकान्तेन कालान्तरावस्थायितां शक्नोति गमयितुं इति । परिहरति— ) सत्यं सिध्यति, किंतु नेत्थंभूतत्वे प्रमाणमस्ति । ( प्रातिभासिकबाधाभावमाह— ) न कस्यचिदपि आसंसारं जन्तोः 'पूर्वोक्तसदृशमुच्चारयामि' ( इत्युच्चारयितुः ) ' तत्सदृश एवायं ' ( इति श्रोतुर्वा ) विज्ञानोत्पादो दृष्टः । ( अनेन ' कस्यचित् कृत्रिमो भविष्यति संबन्ध इति चेत् तदुक्तम् ' इति भाष्यं ( पृ. ८५ ) व्याख्यातम् । भाष्ये चोक्तशब्देन ' यस्य च दुष्टं करणम् , यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः ' ( पृ. २८ ) इत्युक्तम् । तेन कृत्रिमसंबन्धशब्दाभेदभ्रमेणार्थप्रत्ययो न भवतीत्युक्तं भवति । यत एवायं अभ्रान्तस्तत्प्रत्ययः— ) अत एव चाविपरीतं प्रतिपद्यन्ते, अन्यथा ( भ्रान्तत्वे ) मालाशब्दप्रत्ययस्यैव शालाशब्दसंवेदनात् विपर्ययः स्यात् ।

ननु च न सादृश्येऽपि ( शब्दयोरवगते अर्थप्रत्ययस्य— ) विपर्ययो दृश्यते यथा गोगावीशब्दयोः । ( परिहरति— ) तदेकत्वग्राहिणां तु न दृश्यते विपर्ययः, न सादृश्यग्राहिणाम् । ( ये गावीशब्दमेवैकं वाचकं मन्वानाः प्रयुञ्जते शब्दम् , अर्थं च प्रतिपद्यन्ते, तेषां नास्ति विपर्ययः । ये पुनः गोशब्दसादृश्येन भ्रान्ताः तेषां विपर्ययो भवत्येव ) तत्त्वविदां तु अनुत्पत्तिरेव ( गाव्यादिशब्देभ्यो गोप्रत्ययस्य ) । किमिदं तत्त्वविदामिति ? ' गोशब्दस्य गाव्यादयोऽपभ्रंशाः ' इत्येवंविदः तत्त्वविदः । तेषां नैव गाव्यादिभ्योऽपि अर्थज्ञानमुत्पद्यते, गोशब्दादेवार्थं प्रतिपद्यन्ते इत्युक्तं व्याख्यातृभिः । न च अनादितया संसारस्य आदिशब्दता कस्यचित् कल्पयितुं शक्ते, यत्सदृशोपादानात् संव्यहारसिद्धिः । तस्मात् सप्रत्यभिज्ञप्रत्यक्षमूलोऽयं व्यवहार इति स्थितम् । ( व्यवहारदर्शनेन प्रत्यभिज्ञैव लोकानामस्तीति साधितम् । चोदकः— ) अन्यदेव च साधितम् , अन्यच्चोपसंहृतम् । कालान्तरावस्थितिः साधिता, सप्रत्यभिज्ञं प्रत्यक्षमुपसंहृतम् । अन्यदेवोपन्यस्तं अन्यच्च उपनिपतितम् । ( समाधाता— ) तदेवेदम् । प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति । " कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षगम्या इत्युक्तम् " [ अवतरणचिह्नितो ग्रन्थः ऋजुविमलायां नास्ति । अत एव ' कालान्तरावस्थायिताया एव सिद्धये या प्रत्यभिज्ञा साधिता, सैवोपसंहृता इति नास्ति विरोधः ' इति पूर्वग्रन्थाशय उक्तः । **के.** ] (पृच्छति—) यदि प्रत्यभिज्ञयैव कालान्तरावस्थायित्वं साध्यते, किमिति तर्हि परार्थदर्शनसंबन्धिता हेतुरित्युक्तम् ? ( उत्तरं— ) यत एव प्रत्यभिज्ञयैव कालान्तरावस्थायिता, अत एव परार्थदर्शनसंबन्धिता हेतुरित्युक्तम् । प्रत्यभिज्ञैव हि अभिन्नार्थदर्शनमित्युच्यते, न पुनरन्यत् । स्वरूपस्य दर्शनान्तरसिद्धत्वात् तत्पूर्वकत्वाच्च प्रत्यभिज्ञायाः । न च स्वार्थपरार्थतामेको यत्नः प्रतिपत्तुं क्षमः । ( प्रथमे तावदुच्चारणे शब्दस्वरूपम् , तेनैव प्रथमेन

(एकदेशी–) किं तर्हीदं नानात्वमग्राह्यमेव, दृश्यते तु सर्वार्थेषु। बुद्धिरूपता च अग्राह्यत्वात् बुद्धेः प्रत्युक्ता। (आक्षेप्ता–) उच्यते, यद् यस्य ग्राह्यम्, गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम्। (एकदेशी–) एवं तर्हि श्रोत्रस्यैव दुष्टता (यदि नानात्वं श्रोत्रग्राह्यं कार्यपक्षे, एवं तर्हि नियमपक्षेऽपि श्रोत्रस्यैव दुष्टता कल्पनीया)। (आक्षेप्ता–) दुष्टे च शब्दग्रहणं न प्राप्नोति (कार्यशक्तिविघातकत्वात् दुष्टतायाः)। असति च शब्दग्रहणे शब्दान्तरावमर्शः कुतः? तस्मादवमर्शे (अवमृश्यते येन तस्मिन्) दुष्टता कल्पनीया, न पुनः शब्दग्रहणे (श्रोत्रेन्द्रिये। एकदेशी–) मनसः तर्हि दुष्टत्वम् (तेन शब्दोऽपि गृह्यते, श्रोत्रस्यादुष्टत्वात् मनसश्च दुष्टत्वात् एकत्वानवमर्शाच्च नानात्वावमर्शो भवति। आक्षेप्ता–) ननु च मनसोऽपि नैव दुष्टत्वं शक्यते वक्तुं श्रोत्रग्रहणे (श्रोत्रग्राह्ये शब्दे) यथार्थग्रहणात्। नहि अगृहीतसम्यगर्थस्य तदर्थावमर्शो घटते (नहि अगृहीतविषयोऽवमर्शोऽस्तीत्यर्थः)। तस्मात् देवा एनां भ्रान्तिं कल्पयिष्यन्ति, अविपर्ययात् दुष्टकारणताऽनवधृतेश्च (कार्यत्वपक्षे तु नानात्वबुद्धिर्न भ्रान्तिरिति युक्तं कार्यत्वमेव)। अभ्रान्ते च (ज्ञाने) भ्रान्त्यभिधानं भ्रमादपि पापीयः। तस्मात् भ्रमकारणमत्र वक्तव्यं भ्रान्तिज्ञैः। (परमसमाधाता–) इदमभिधीयते। उक्तं भवतैव 'नागृहीतग्राह्येन्द्रियेण मनसा गृह्यते' इति, इन्द्रियेण च तद्ग्रहणात् (स एवायमिति ग्रहणात्) अनेकत्वं नास्तीति प्रत्यक्षेणावसितम्। मनसाऽपि अनेकत्वग्रहणं नैवोपपद्यते। (आक्षेप्ता–) किं आलम्बनमस्याः, किं चेन्द्रियमनेकत्वावगतेः। (समाधाता–) इदमिन्द्रियं इदं चालम्बनम्, नानादेशस्था हि ध्वनयो युगपदागच्छन्तः इतरेतरनिरपेक्षा एव युगपत् संस्कारानारभन्ते श्रोत्रस्य, तत्संस्कारानुरोधाच्च एकमपि शब्दं अनेकमिव गृह्णाति। एकैकसंस्कारोपजननाच्छक्तेः नायनशक्तिरिव अङ्गुलिभिन्ना एकमपि भिन्नमिव गृह्णाति। तस्मात् शक्तिभेदाग्रहणनिबन्धनोऽयं भ्रमः। अनेन सान्तरालग्रहणं प्रत्युक्तम् (साऽपि भ्रान्तिरित्यर्थः। चोदयति–) कथं पुनरनेन सान्तरालग्रहणं प्रत्युच्यते? युक्तं तावत् संस्कारभेदात् शक्त्युद्बोधः, तदनुरोधिनी भिन्ना च शक्तिः एकमपि विषयं भेदेन समर्पयन्ती स्वभेदाग्रहणात् अनेकग्रहणभ्रममुत्पादयतीति। (परंतु–) अन्तरालग्रहणे को हेतुः? तस्मात् कारणान्तरं ब्रूहि। (परिहरति–), नोच्यते (कारणान्तरम्), इदमेव हि कारणम्। (चोदयति–) कथमिदं कारणम्? (उत्तरं–) नानादेशोत्था ध्वनयो भेदेन संस्कारमारभमाणा आमूलं शक्तेरुद्बोधं जनयन्ति, अतः श्रोत्राकाशस्थितोऽपि शब्दः अनुग्राहकानुरोधात् तत्तद्देशस्थ इव गृह्यते। (परमार्थतः श्रोत्राकाशस्थित एव शब्दो गृह्यते, बाह्येन्द्रियत्वेन श्रोत्रस्य प्राप्यकारित्वात्। तेन अभिव्यञ्जकवशादेव भ्रान्तिरिति मन्तव्यम्। एषा चात्र दर्शनस्थितिः— शब्दः स्वदेशरहितः श्रोत्रेण गृह्यते, तस्य श्रोत्रदेशत्वात्, इन्द्रियाणां स्वानुभवासमर्थत्वात्। श्रोत्रं तु यद्यपि देशं स्वातन्त्र्येण न गृह्णाति, तथापि शब्दं गृह्णदेव शब्दाभिव्यञ्जकमूलदेशमपि गृह्णातीत्यनुभवबलेन कल्प्यते। तत्र शब्दस्य देशरहितस्य देशमपेक्षमाणस्य तेन देशेन सह असंबन्धमगृह्णतः तद्देशसंबन्धग्रहणव्यवहारो भवतीति)।

ननु चान्त्य एव संयोगविभागः संस्करोति। (परिहरति–) केयं मन्दता भवतः? अननुगृहीतपूर्वसंयोगविभागः अन्त्यः संस्करोति इति नोपपद्यते। (अननुगृहीतः पूर्वः संयोगविभागो येन सः। अनुगृहीतः पृष्ठवर्तितया सहायत्वेन गृहीत उच्यते। एतदुक्तं भवति—पूर्वान् संयोगविभागानङ्गीकृत्य अन्त्योऽभिव्यनक्तीति। कौष्ठ्यो वायुः उरःप्रभृतिष्वष्टसु स्थानेषु संयोगविभागौ जनयन् क्रमेण श्रोत्रदेशं प्रत्यासीदन् अपेक्षितपूर्वसंयोगविभागः श्रोत्रं संस्करोति, अन्यथा विशेषशब्दाभिव्यक्त्यभावप्रसङ्गात्, स्थानविशेषाभिघातवशेन हि वर्णविशेषोपलब्ध्यनुगुणसंस्कारोदयो नान्यथेति)। तदनुग्राहकवशात् उत्पत्तिरिव कार्यम् (यदि तदनुग्राहकवशादुत्पत्तिः, तदा कार्यमेव परं तदनुग्राहकवशादस्तु। यत एव स्थानाभिघातापेक्षा–) अत एव च पूर्ववेगानुवर्त्युपरमः संस्काराणाम् (पूर्वो यो वेगः तदनुवर्त्युपरमः संस्काराणां संस्क्रियते यैः



श्रोत्रं तेषाम्, वायूनाम्)। तस्मात् आत्मोदयानुरूपमुपजनयन्तः (संयोगविभागाः) तथातथा तमवगमयन्ति (भिन्नमिव देशान्तरवर्तिनमिव चार्थमवगमयन्ति)।

'कामं देशा एव भिन्नाः स्युः' इति (भाष्यं) किमर्थोऽयमुपन्यासः, प्राप्नोति (युक्तो भवति) यदि श्रवणेन्द्रियं संयोगविभागदेशमागच्छेत्, न चैतदस्ति भाष्ये एव प्रत्युक्तत्वात्। (समाधत्ते– यत एव परमार्थतो देशभेदो नास्ति–) अत एव 'कामं' इत्युक्तम्। सत्त्वान्तरपक्षेऽपि तावत् भेदो न प्राप्नोति इत्यभिप्रायः। ननु एकस्य अनेकत्रोपलब्धिः। (एकस्य पुरुषस्यानेकत्रोपलब्धिः पूर्वपक्षे उक्ता, अत्र पुनरादित्ये अनेकेषां पुरुषाणामनेकत्रोपलब्धिः तस्मादादित्यदृष्टान्तो न तुल्य इति। परिहरति–) मूर्खप्रलपितमेतत्, एकस्यानेकत्रोपलब्धिः परिचोदिता परिहृता (एकेन वा पुरुषेण बहुभिर्वा पुरुषैः इति नायं भेदो विवक्षितः, कथमेकस्यानेकत्रोपलब्धिरिति चोदितम्, तच्चादित्यदर्शनेन समर्थितं इति नानुपपन्नं किंचिदित्यर्थः)।

**शब्दान्तरमविकारः ॥ १६ ॥**

**भाष्यम्**— न च 'दध्यत्र' इत्यत्र प्रकृतिविकारभावः, शब्दान्तरमिकाराद्यकारः। नहि यकारं प्रयुञ्जाना इकारमुपाददते, यथा कटं चिकीर्षन्तो वीरणानि। न च सादृश्यमात्रं दृष्ट्वा प्रकृतिर्विकृतिर्वोच्यते, नहि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते। तस्मादयमप्यदोषः।

**बृहती**—'शब्दान्तरमविकारः'। नैवेह 'इको यणचि' इति प्रकृतिविकारभाव उपदिश्यते। नहि लोके यकारं प्रयुयुक्षमाणा इकारं उपाददते। लोकसिद्धस्य चादेशा भवन्ति। तस्मादयमर्थं आदेशिकः अचि परतः इकारस्य स्थाने (प्रसङ्गे) यकारः (प्रयोक्तव्य इति)। सादृश्यं तु प्रकृतिविकारभावेऽनैकान्तिकं दधिपिटककुन्दपिटकयोरदर्शनात् (प्रकृतिविकारभावस्य) इत्युक्तम् (भाष्ये), अतः सिद्धं शब्दान्तरत्वम् (इकारात् यकारस्य)।

**श्लोवा**— **'वर्णान्तरविकारत्वादिति योक्ता विनाशिता ॥ २०१ ॥ उक्ते च हेतुसिद्ध्यर्थं सादृश्यस्मरणे पुनः। तत्र स्मृतेरसिद्धत्वं नह्येवं पाणिनेर्वचः ॥ २०२ ॥ इकारपरिणामेन यकारः क्रियतामिति। सिद्धे शब्दार्थसंबन्धे तच्छास्त्रं हि प्रवर्तते ॥ २०३ ॥ प्रयोगनियमार्थाय न चैवं सिद्धता भवेत्। भिन्नप्रसिद्धयोस्तेन दधि दध्येति शब्दयोः ॥ २०४ ॥ आचक्षाणेन साधुत्वं दधीत्यौत्सर्गिकः कृतः। अन्वाख्यातुं स्वरूपेण दध्यशब्दं च वेदितुम् ॥ २०५ ॥ स्वशास्त्रे लघुबोधार्थमेकत्वमिव दर्शितम्। तत्राचि परतः सिद्धं दध्यशब्दं निवर्तयन् ॥ २०६ ॥ दधीति शास्त्रतः प्राप्तः सोऽयं तेनैव वार्यते। इक्प्रयोगप्रसङ्गे तु यण् साधुरिति गम्यते ॥ २०७ ॥ परमार्थस्तु नैवास्मिन् विकारोऽभूत् कदाचन। केवलं यत्तु सादृश्यं तदनैकान्तिकीकृतम् ॥ २०८ ॥ कुन्दे दध्यविकारेऽपि तत्सादृश्यं हि दृश्यते। नास्ति सर्वात्मना तच्चेत् शब्देऽपि स्थानमात्रकम् ॥ २०९ ॥ तेनैतयोरसिद्धत्वान्मूलहेतोरसिद्धता।' २१० ॥**

**नादवृद्धिः परा ॥ १७ ॥**

[अत्र 'नादवृद्धिपरा' इति न्यायरत्नाकराद्यनुसारि पाठान्तरम्।]

**भाष्यम्**— यच्चैतत् बहुभिर्भेरीमाधमद्भिः शब्दमुच्चारयद्भिर्महान् शब्दः (क्रियमाण इव) उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते। नैवम्। निरवयवो हि शब्दः, अवयवभेदानवगमात् निरवयवत्वाच्च महत्त्वानुपपत्तिः। अतो न वर्धते शब्दः। मृदुरेकेन बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैः नैरन्तर्येणानेकशो ग्रहणात् महानिव अवयववानिवोपलभ्यते। संयोगविभागाः नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः। तेन नादस्यैषा परा (वृद्धिर्न शब्दस्येति)।

**बृहती**— 'नादवृद्धिः परा' तुल्यं भेदपरिहारेण। (नादवृद्ध्या महत्त्वं वर्णानाम्) यथैव हि तत्र (भेदपरिहारे) भिन्नाः (नादाः शब्दं–) भिन्नमिवावगमयन्ति, एवमत्रापि प्रचिताः (महान्तः) प्रचितमिव विभागस्थिताः (सावयवाः) विभक्तमिव। अतो महा-

निव अवयववानिव च भ्रान्तिरुपपद्यते। ( बहवो वायवः समानस्थानकरणप्रेरिताः परस्परनिरपेक्षाः युगपदेव कृत्स्नां कर्णशष्कुलीमण्डलस्य नेमिं प्राप्नुवन्तो निरन्तराः श्रोत्रदेशमेव शब्दं निरन्तरं ग्राहयन्तो महान्तमिव शब्दं प्रतिपादयन्ति इति )। संस्कारानुरोधात् शक्तेरुद्बोध इत्युक्तम्। तस्मादयमपि संस्कारभेदाग्रहणनिबन्धन एव भ्रमः। अतः स्थिते सप्रत्यभिज्ञप्रत्यक्षे पूर्वोक्तमनैकान्तिकीकृतं अनित्यत्वे हेतुजातम् ( प्रत्यभिज्ञाशब्देनात्र ज्ञानधर्मः पूर्वानुभवभावनाऽवमर्शेन 'स एवायं' इति वस्तुग्राहकत्वमुक्तम्, न ज्ञानमेव )।

**न्यायरत्नाकरः**— भवतु वर्णत्ववत् ध्वनित्वं नाम शब्दत्वावान्तरभेदः, तद्भेदाश्च गकारादिवत् पारमार्थिकाः सन्तु, तेषां तु श्रौतत्वात् तत्संपर्कवशादेव वर्णेषु सानुनासिकनिरनुनासिकोदात्तानुदात्तादिभेदावभासोऽपि सुकरोऽस्तु, न कश्चिद्दोषः सर्वथा शब्दानित्यत्वपक्षे। तद्योऽयं कार्यभेदः क्वचित् वर्णोपलब्धिः, क्वचिच्च नादमात्रोपलब्धिः, तद्बलेन ध्वनीनां शक्तिभेदकल्पने केचित् वर्णान् व्यञ्जयन्ति, केचित् नेति, ध्वनयस्तु वायवो वा शब्दजातिभदो वा नात्राभिनिवेशः। शब्दपक्षे च तस्यामूर्तस्य वृद्ध्यसंभवात् नादवृद्धिसूत्रेण नादशब्देन नादगुणका वायवो लक्ष्यन्ते। **श्लोकः २२८.**

### नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्। १८ ॥

**भाष्यम्**— नित्यः शब्दो भवितुमर्हति। कुतः ? दर्शनस्य परार्थत्वात्। दर्शनमुच्चारणं तत्परार्थं परमर्थं प्रत्याययितुम्। उच्चरितमात्रे हि विनष्टे शब्दे न चान्योन्यानर्थं प्रत्याययितुं शक्नुयात्। अतो न परार्थमुच्चार्येत। अथ न विनष्टस्ततो बहुशः उपलब्धत्वादर्थावगम इति युक्तम्। अर्थवत्सादृश्यादर्थावगम इति चेत्। न कश्चिदर्थवान् सर्वेषां नवत्वात्। कस्यचित् पूर्वस्य कृत्रिमसंबन्धो भविष्यतीति चेत्। तदुक्तं सदृश इति चावगते व्यामोहात् प्रत्ययो व्यावर्तेत शालाशब्दान्मालाप्रत्यय इव। यथा गावीशब्दात्सास्नादिमति प्रत्ययस्यानिवृत्तिस्तद्वद्भविष्यतीति चेत्। न हि गोशब्दं तत्रोच्चारयितुमिच्छा। नेहान्यशब्दोच्चिचारयिषा। न चैकेनोच्चारणयत्नेन संव्यवहारश्चार्थसंबन्धश्च शक्यते कर्तुम्। तस्माद्दर्शनस्य परार्थत्वान्नित्यः शब्दः।

**बृहती**— इदानीं सप्रत्यभिज्ञप्रत्यक्षस्य शब्दविषयतोच्यते 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' इति। ( आक्षिपति– ) 'दर्शनस्य परार्थत्वादिति' कस्यायं हेतुः ? ( उत्तरं– ) नित्यतायाः शब्दस्य। ( आक्षेप्ता– ) ननु चायमपक्षधर्मः ( सिषाधयिषितधर्मो हि धर्मी पक्षशब्देनोच्यते। अत्र च शब्दस्य नित्यतालक्षणो धर्मः साधयितुमिष्टः इति शब्दः पक्षः, न च तस्य परार्थत्वं धर्मः। किं तर्हि दर्शनस्य )। अपक्षधर्मस्य चास्य हेतुत्वं नास्ति इति नैयायिकाः ( न्यायविदो मन्यन्ते। समाधाता– ) अश्रुतशास्त्रा हि ते ( न तैर्मीमांसाशास्त्रं श्रुतम् )। दर्शनमेवात्र ( सूत्रे ) परार्थतयोपन्यस्यते। तत्र ( दर्शनं ) निर्विषयं नास्ति, इति शब्दोऽत्र विषयतयोपन्यस्यते। ( पृच्छति– ) ततः किम् ? ( उत्तरम्– ) इदं ततः परार्थदर्शनसंबन्धिता हेतुः ( इति भवति )। एतदुक्तं भवति 'परार्थं दर्शनं यस्य' ( शब्दस्य इति। पृच्छति– ) तस्य किम् ? (उत्तरम्– ) नित्यता। ( पृच्छति– ) कस्य यथा ? ( उत्तरं– ) सर्वस्येति ब्रूमो धूमादेः। ( तेनेत्थमिदं साधनं प्रयोक्तव्यम्, शब्दो धर्मी, नित्य इति साध्यो धर्मः, परार्थदर्शनसंबन्धित्वात्, यो यः परार्थदर्शनसंबन्धी स स नित्यः यथा धूमादिः, इति। हेत्वसिद्धिमाशङ्कते– ) ननु च स्वप्रतिपत्त्यर्थमपि दर्शनं धूमादेः ( तेन परार्थत्वमसिद्धमिति। परिहरति– ) भवतु ( स्वप्रतिपत्त्यर्थता ), परप्रतिपत्त्यर्थताऽपि ( अस्ति, तेन नासिद्धिर्हेतोः। ननु च परार्थता नास्त्येव मीमांसकमते, तत्राह– ) अनिराकरणीयं चैतत् अविरोधात्, शब्देऽपि विद्यमानत्वात् ( परार्थतायाः। ननु च नित्यत्वे साध्ये न धूमादेर्दृष्टान्तता, तेषामनित्यत्वात् इति। तत्राह– ) कालान्तरावस्थायित्वं च नित्यशब्देनोच्यते, न सदकारणत्वम्। ननु च सन् अकारणश्च शब्द इष्यते ( मीमांसकैः, परिहरति– ) बाढं इष्यते, स तु परार्थमात्रतयैव दर्शनस्य सिध्यति। ( चोदयति– यदि तावत् सदकारणता शब्दस्य– ) किमिति तर्हि विशेष उच्यते ?



(कालान्तरावस्थायितैव साध्यते इति। परिहरति– ) कथं नाम अनित्यस्यापि धूमादेर्दृष्टान्तता स्यात् (इति कालान्तरावस्थायितैव साध्या, न तु सदकारणतारूपा नित्यता) ननु च अस्यापि (शब्दस्य) अनित्यता प्राप्नोति, प्रसिद्धे ( धूमादौ ) दर्शनात् ( यथाभूतो हि दृष्टान्ते धर्मो दृष्टस्तथाभूतेनैव दार्ष्टान्तिकेऽपि भवितव्यम्, तेन धूमवदनित्यता शब्दस्य प्राप्नोति। परिहरति– )अत एव कालान्तरावस्थायित्वमात्रं साध्यतयोच्यते। कालान्तरावस्थायितया च सिद्धं शब्दस्य सदकारणत्वम्। दर्शनमेव ( उच्चारणमेव ) हि तस्य कारणतया शङ्कितं परैः, तच्च परार्थतया अकारणतां गतम् ( तच्च कालान्तरावस्थायित्वे सिद्धे द्वितीयश्रवणे परप्रतिपत्त्यर्थतया शब्दं प्रति अकारणतां गतम्, किंतु अभिव्यञ्जकमेव, ततश्च प्रथमश्रवणेऽपि तदभिव्यञ्जकमेवेति सिद्धमकारणत्वम् )। तस्मात् परार्थदर्शनसंबन्धितामात्रस्य हेतुत्वे शब्दस्य सदकारणत्वं सिद्धम्।

ननु च तत्तुल्योपादानमभेदमुपादाय सिध्यति पारार्थ्यं दर्शनस्य ( उच्चारितमात्रे हि विनष्टे शब्दे परार्थमुच्चारणं न घटते, संकेतितस्य शब्दस्य पुनर्व्यवहारकाले असत्त्वात्, असंकेतितस्य चाप्रतिपादकत्वात्। यदा पुनः संकेतिते शब्दे विनष्टेऽपि तत्तुल्योऽपरो यः शब्दः उत्पद्यते तत्सादृश्येन व्यामूढा अभेदमुपादाय अर्थं प्रतिपद्यन्ते इति घटते, तदा तद्दर्शनस्य परार्थताऽपि सिध्यति इति नैकान्तेन कालान्तरावस्थायितां शक्नोति गमयितुं इति। परिहरति– ) सत्यं सिध्यति, किंतु नेत्थंभूतत्वे प्रमाणमस्ति। ( प्रातिभासिकबाधाभावमाह– ) न कस्यचिदपि आसंसारं जन्तोः 'पूर्वोक्तसदृशमुच्चारयामि' ( इत्युच्चारयितुः ) 'तत्सदृश एवायं' ( इति श्रोतुर्वा ) विज्ञानोत्पादो दृष्टः। ( अनेन 'कस्यचित् कृत्रिमो भविष्यति संबन्ध इति चेत् तदुक्तम्' इति भाष्यं ( पृ. ८५ ) व्याख्यातम्। भाष्ये चोक्तशब्देन 'यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः' ( पृ. २८ ) इत्युक्तम्। तेन कृत्रिमसंबन्धशब्दाभेदभ्रमेणार्थप्रत्ययो न भवतीत्युक्तं भवति। यत एवायं अभ्रान्तस्तत्प्रत्ययः– ) अत एव चाविपरीतं प्रतिपद्यन्ते, अन्यथा ( भ्रान्तत्वे ) मालाशब्दप्रत्ययस्यैव शालाशब्दसंवेदनात् विपर्ययः स्यात्।

ननु च न सादृश्येऽपि ( शब्दयोरवगते अर्थप्रत्ययस्य– ) विपर्ययो दृश्यते यथा गोगावीशब्दयोः। ( परिहरति– ) तदेकत्वग्राहिणां तु न दृश्यते विपर्ययः, न सादृश्यग्राहिणाम्। ( ये गावीशब्दमेवैकं वाचकं मन्वानाः प्रयुञ्जते शब्दम्, अर्थं च प्रतिपद्यन्ते, तेषां नास्ति विपर्ययः। ये पुनः गोशब्दसादृश्येन भ्रान्ताः तेषां विपर्ययो भवत्येव ) तत्त्वविदां तु अनुत्पत्तिरेव ( गाव्यादिशब्देभ्यो गोप्रत्ययस्य )। किमिदं तत्त्वविदामिति ? 'गोशब्दस्य गाव्यादयोऽपभ्रंशाः' इत्येवंविदः तत्त्वविदः। तेषां नैव गाव्यादिभ्योऽपि अर्थज्ञानमुत्पद्यते, गोशब्दादेवार्थं प्रतिपद्यन्ते इत्युक्तं व्याख्यातृभिः। न च अनादितया संसारस्य आदिशब्दता कस्यचित् कल्पयितुं शक्ते, यत्सदृशोपादानात् संव्यहारसिद्धिः। तस्मात् सप्रत्यभिज्ञप्रत्यक्षमूलोऽयं व्यवहार इति स्थितम्। ( व्यवहारदर्शनेन प्रत्यभिज्ञैव लोकानामस्तीति साधितम्। चोदकः– ) अन्यदेव च साधितम्, अन्यच्चोपसंहृतम्। कालान्तरावस्थितिः साधिता, सप्रत्यभिज्ञं प्रत्यक्षमुपसंहृतम्। अन्यदेवोपन्यस्तं अन्यच्च उपनिपतितम्। ( समाधाता– ) तदेवेदम्। प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति। "कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षगम्या इत्युक्तम्" [ अवतरणचिह्नितो ग्रन्थः ऋजुविमलायां नास्ति। अत एव 'कालान्तरावस्थायिताया एव सिद्धये या प्रत्यभिज्ञा साधिता, सैवोपसंहृता इति नास्ति विरोधः' इति पूर्वग्रन्थाशय उक्तः। के. ] (पृच्छति–) यदि प्रत्यभिज्ञयैव कालान्तरावस्थायित्वं साध्यते, किमिति तर्हि परार्थदर्शनसंबन्धिता हेतुरित्युक्तम् ? ( उत्तरं– ) यत एव प्रत्यभिज्ञयैव कालान्तरावस्थायिता, अत एव परार्थदर्शनसंबन्धिता हेतुरित्युक्तम्। प्रत्यभिज्ञैव हि अभिन्नार्थदर्शनमित्युच्यते, न पुनरन्यत्। स्वरूपस्य दर्शनान्तरसिद्धत्वात् तत्पूर्वकत्वाच्च प्रत्यभिज्ञायाः। न च स्वार्थपरार्थतामेको यत्नः प्रतिपत्तुं क्षमः। ( प्रथमे तावदुच्चारणे शब्दस्वरूपम्, तेनैव प्रथमेन

दर्शनान्तरेण सिद्धं जनितमिति वक्तव्यम् । तत्पूर्विका च द्वितीयोच्चारणे प्रत्यभिज्ञा, तस्यां च सत्यामुत्पादितस्य शब्दरूपस्य पुनरुत्पादनं न संभवति इति प्रयत्नस्य शब्दाभिव्यञ्जकतया परार्थत्वम् । एवं च निश्चित-पारार्थ्यः प्रयत्नो न प्रथमश्रवणे स्वार्थः शब्दस्वरूप-निष्पत्त्यर्थो भवितुमर्हति, अपितु द्वितीयश्रवणवत् अभिव्यञ्जक एवेति सिद्धं प्रत्यभिज्ञयैव उच्चारणस्य पारार्थ्यम् ) ।

**सर्वत्र यौगपद्यात् । १९ ॥**

**भाष्यम्**— गोशब्दे उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति, अतः आकृतिवचनोऽयम् । न च आकृत्या शब्दस्य संबन्धः शक्यते कर्तुम् । निर्दिश्य हि आकृतिं कर्ता संबध्नीयात् । गोपिण्डे च बहूनामाकृतीनां सद्भावात् शब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति, नित्ये तु सति गोशब्दे बहुकृत्वः उच्चरितः श्रुतपूर्वश्च अन्यासु गोव्यक्तिषु अन्वयव्यतिरेकाभ्यां आकृतिवचनमवगमयिष्यति । तस्मादपि नित्यः ।

**बृहती**— 'सर्वत्र यौगपद्यात्' इति । अनेन अन्वयव्यतिरेकसमधिगम्यं अर्थावगतिहेतुत्वं दर्शयति शब्दस्य ( आकृत्यन्वये व्यक्त्यन्तरेऽपि शब्दप्रयोगात् तदाकृतिव्यतिरेके चान्याकृतिके अप्रयोगात् आकृतिवचनः शब्द इत्यवगम्यते, अतोऽन्वयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वं शब्दस्य । प्रश्नः— ) किमतो यद्येवम् ? ( उत्तरं— ) कालान्तरावस्थायिता सिध्यति । नहि कालान्तरानवस्थायिनः अन्वयव्यतिरेकनिश्चयः । अतः कालान्तरावस्थायिता सिध्यति । कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षसमधिगम्या इत्युक्तम् । ( अतोऽनेनापि प्रकारेण शब्दे सप्रत्यभिज्ञं प्रत्यक्षमस्तीति साध्यते । प्रश्नः— ) कथं पुनः अन्वयव्यतिरेकसमधिगम्यस्यार्थावगतिहेतुत्वम् ? ( उत्तरं— ) आकृतेः पदार्थत्वात् । न चैकप्रयोगावगम्या आकृतेः पदार्थता, स्वातन्त्र्येणाग्रहणात् द्रव्याश्रितानाम् । ( स्वातन्त्र्येण— ) अगृहीतानां च पृथङ्निर्देशायोग्यत्वात् । तस्मात् व्यवहारसमधिगम्यैव आकृतिपदार्थता, न निर्देशसमधिगम्या । व्यवहारश्चान्वयव्यतिरेकसमधिगम्यः इति सिद्धा प्रत्यभिज्ञा । ( ऋजुविमलायां तु इत्थमत्र पङ्क्तिः— 'व्यवहारश्चान्वयव्यतिरेकजः इत्यन्वयव्यतिरेकक्षमतया कालान्तरावस्थितिनिश्चयात्, प्रत्यभिज्ञया च विना कालान्तरावस्थित्यनिश्चयात् सिद्धा प्रत्यभिज्ञा' इति । तेन बृहतीपाठोऽन्यथा कियांश्चित् भाति । के. )

**श्लोकवार्तिके** अत्र 'संबन्धनित्यतायाः किं शब्दाधिकरणेऽभिधा । तादर्थ्यात् शब्दचिन्तायाः' इत्येकं मतमुक्त्वा 'यद्वा संबन्धनित्यत्वद्वारेयं शब्दनित्यता । साध्यते' इति च मतान्तरमुक्त्वा 'यद्वा संबन्धनित्यत्वं सूत्रेऽस्मिन्नेव वर्ण्यते । शब्दनित्यत्वमात्रेऽपि भाष्यं ह्येतस्य युज्यते ॥' ( **श्लोवा.** शब्दनित्यत्वाधिकरणे ३६२ ) इति स्वमतमुक्तम् । **के.**

**संख्याऽभावात् । २० ॥**

**भाष्यम्**— अष्टकृत्वो गोशब्द उच्चरित इति वदन्ति नाष्टौ गोशब्दा इति । किमतो यद्येवम् । अनेन वचनेनावगम्यते प्रत्यभिजानन्तीति । वयं तावत् प्रत्यभिजानीमो न नः करणदौर्बल्यम् । एवमन्येऽपि प्रत्यभिजानन्ति । स एवायमिति, प्रत्यभिजानानाः प्रत्यभिजानन्ति चेद्व्यमिवान्येऽपि नान्य इति वक्तुमर्हन्ति । अथ मतम्, अन्यत्वे सति सादृश्येन व्यामूढाः सः इति वक्ष्यन्ति । तन्न । न हि ते सदृशः इति प्रतियन्ति, किं तर्हि स एवायमिति । विदिते च स्फुटेऽन्यत्वे व्यामोह इति गम्यते । न चायमन्य इति प्रत्यक्षमन्यद्वा प्रमाणमस्ति । स्यादेतत् । बुद्धिकर्मणी अपि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः । नैष दोषः । न हि ते प्रत्यक्षे । अथ प्रत्यक्षे नित्ये एव । ह्यस्तनस्य शब्दस्य विनाशादन्योऽद्यतन इति चेत् । नैष विनष्टः । यतः एनं पुनरुपलभामहे । न हि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति । परिकल्पयन्तो द्वितीयसंदर्शने मातरि जायायां पितरि वा नाऽऽश्वस्युः । न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य नष्ट इत्येव कल्पयन्ति । अप्रमाणतायां विदितायां नास्तीत्यवगच्छामः । न हि प्रमाणे प्रत्यक्षे सति अप्रमाणता स्यात् । अस्तीति पुनरव्यामोहेनावगम्यमाने न क्वचिदप्यभावः । न चासिद्धेऽभावे व्यामोहः । न च सिद्धो भावः । तस्मात् असति व्यामोहे नाभावः । तदेतदानुपूर्व्या सिद्धम् । तस्मात् पुरस्तादनुच्चारितमनुपलभमाना अपि न विनष्ट इत्यवगन्तुमर्हन्ति । यथा गृहात् निर्गताः सर्वगृहजनमपश्यन्तः पुनः प्रविश्य उपलभमाना अपि न प्राक्प्रवेशाद्विनष्ट इत्यवगच्छन्ति । तद्वदेनमपि नान्य इति वक्तुमर्हन्ति । येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति, तेऽपि न शक्नुवन्ति शब्दस्य वदितुम् । अन्ते हि क्षयदर्शनात्ते मन्यन्ते । न च शब्दस्यान्तः, न च क्षयो लक्ष्यते । स इति प्रत्यक्षः प्रत्ययः, सदृश इत्यानुमानिकः । न च प्रत्यक्षविरुद्धमनुमानमुदेति स्वकार्यं वा साधयति । तस्मान्नित्यः ।

**बृहती**-- 'संख्याऽभावात्' ( इत्यनेनापि सूत्रेण ) तदेवेदं सप्रत्यभिज्ञं प्रत्यक्षं पुनरुपन्यस्यते हेतुप्रचयदर्शनार्थम् । ( चोदयति— ) हेतुप्रचये पुनः कोऽर्थोऽभ्यधिकः सिध्यति, हेत्वन्तरनिरपेक्षत्वात् हेतूनां स्वार्थसिद्धौ ? ( उत्तरं— ) न खलु कश्चित् । ( चोदयति— ) अनर्थकस्तर्हि प्रचयोपन्यासः । (परिहरति— ) न च अनर्थकः, प्रचये सति दार्ढ्यमाहार्यधियामपि ( संस्कार्यधियामपि ) भवति । तदर्थश्चायं प्रयासः, न कृतधियाम् । तस्मात् ( मन्दबुद्धिप्रबोधनं ) अस्ति प्रयोजनम् । कथं पुनरसौ कृत्वसुच् ( अष्टकृत्वो गोशब्द उच्चरितः इति भाष्ये ) प्रत्यभिज्ञायां हेतुः ? ( उत्तरं— ) एकस्यावृत्तौ दर्शनात् । ( आक्षिपति— ) सत्यमेकस्य, स तु क्रियायाः 'क्रियाभ्यावृत्तिगणने' इत्यादेशात् ( पाणिनेरुपदेशात् ) ; नहि शब्दः क्रिया, किं तर्हि ? द्रव्यं गुणो वा स्यात् । तदिदमन्यदीयमन्यस्योच्यमानं मातुलधनकथनन्यायमावहति । ( समाधत्ते— ) अत्रोच्यते— वस्तुस्वभावानभिज्ञो भवान् । ( पृच्छति— ) काऽत्रानभिज्ञता ? [ ऋजुविमलायां नेयं पङ्क्तिः, किंतु 'ननु किं वस्तुस्वभावेन ज्ञातेन इत्यत्राह' इत्यवतारिता उत्तरा पङ्क्तिः । ] ( उत्तरं— ) वस्तुस्वभावापेक्षिणो हि आदेशा भवन्ति ( तेन वस्तुस्वभावं ज्ञात्वा तेषामर्थो वर्णनीयः ) । अनुमानगम्या च क्रिया । ततः किम् ? (आह—) न चानुमानगम्यस्य स्वरूपमुपलभ्यते इत्युक्तम् । अनुपलब्धस्वलक्षणस्य ( च कर्मणः ) केनावृत्तिः शक्यतेऽवगन्तुम् ? ननु च येनैवास्ति कार्यतः, आवृत्तिरपि ततो भवतु ( येनैव कार्यहेतुकानुमानेन प्रमाणेन कर्मणोऽस्तित्वं गम्यते, तेनैव आवृत्तिरपि ग्रहीष्यते इत्यर्थः ) । मैवम् । कार्यावृत्तौ आवृत्तिः शक्यतेऽवगन्तुम्, न कार्यतः । कार्यस्य तु कार्यतया आवृत्तिर्दुर्लभा । कार्यान्तरतैव तत्र स्यात् ( आवर्तमानं हि कार्यं कार्यान्तरमेव स्यात्, न पुनस्तदेव, कृतक्रियमाणयोर्भेदात् । तस्मात् कार्यपक्षे कृत्वसुजनुपपत्तिः ) । ज्ञाप्ये पुनरिदं (क्रियाभ्यावृत्तिगणनं) संभवति । ज्ञाप्यश्च शब्द उच्चारणस्येत्युक्तम् । तस्मात् ( कृत्वसुच्प्रयोगात् ) पुनः पुनः ( प्रयोग— ) ज्ञाप्यमानता शब्दस्य गम्यते, नोत्पद्यमानता । अतो भङ्गित्वेऽपि कर्मणः कार्यैक्यात् ( ज्ञाप्यैक्यात् ) आवृत्तिरित्युच्यते, न स्वतः कार्यस्वाभाव्यात् ( कर्मणः ) । कृतस्य करणं नास्तीति कृतिनः ( पण्डिताः ) । तस्मादेवंविषय एवायं कृत्वसुच् । कार्यैक्यं च प्रत्यभिज्ञानादित्युक्तम् । तस्मात् युक्तः कृत्वसुजर्थस्य हेतुतोपन्यासस्तद्ग्रहणे ( प्रत्यभिज्ञायाम् ) ।

"अन्यत्वेऽपि सति सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्ति" इति ( भाष्ये ) किमिदमुपन्यस्तम् ? ( समाधत्ते— ) इदमेवोपन्यस्तम् ( नात्र किंचित् तिरोहितमित्यर्थः ) । ( आक्षेता— ) न ब्रूमो नोपन्यस्तमिति, किमनेन निराकृतं प्रत्यभिज्ञाया इति न विद्मः । ( समाधाता— ) इदमनेन निराक्रियते, भेदग्रहणनिबन्धनेयं 'सः' इति बुद्धिः, भेदस्य चाग्रहणं अतिसादृश्यात् अजाविकानां ज्वालादीनां च दृष्टम्, अग्रहणे च भेदस्य नान्यत्वं व्यपदेष्टुं शक्यते । अन्यत्वाव्यपदेशे च किमन्यदवशिष्यते 'स एव' इति व्यपदेशात् । ( आक्षेता आह । तस्मात्— ) विवेकाग्रहणमेवात्रापराध्यते (भ्रान्तौ) मणिमुक्तादिष्विव विवेकशून्यानाम् (रत्नपरीक्षायामकृतपरिश्रमाणाम् ) । तस्मात् विवेके यत्न आस्थीयताम् । ( यतः ) 'अविवेकः परमापदां पदम्' आपत्सु जातोद्वेगानां विवेक एवैकः शरणं परम् । ( समा-

दधाति– ) सत्यं यथा भवानाह ( अविवेकनिबन्धन एव भ्रान्तिव्यवहार इति )। किंतु अत्र विवेकाग्रहणे ज्वालादीनामिव हेतुर्नास्ति इति 'अस्थानात्' इत्यस्मिन् सूत्रे लिखितं विस्तरेण। ( पूर्वपक्षस्य परिहारपर्यन्तत्वात् 'सतः परमदर्शनं' ( १३ ) इत्यनेन सह 'अस्थानात्' ( ७ ) इत्यस्यैकसूत्रत्वात् 'सतः परमदर्शनं' इत्यत्रोक्तमेव 'अस्थानात्' इत्यत्रोक्तमित्याह )।

'स्यादेतत् बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः' इति (भाष्यम्) (आक्षिपति–) किमिदं कूश्माण्डपतनम् ? उत्तरेणापि ( भाष्येण ) कूश्माण्डतैव प्रदर्शिता 'अथ प्रत्यक्षे नित्ये एव' इति। प्रत्यभिज्ञा हि कालान्तरावस्थायित्वे हेतुरुक्तः। यदि कर्मण्यपि साऽस्ति, कोऽयमुपालम्भः ? अथायमभिप्रायः– अभ्युपगमहानं प्राप्नोति इति ( कर्मविषये उपालम्भः। दूषयति– ) सत्यम्, अनित्यत्वमभ्युपगतमस्माभिः (कर्मणः), आनुमानिकत्वमपि ( अभ्युपगतम् )। न चानुमानिके अर्थे प्रत्यभिज्ञा भवति (स्वरूपाग्रहणात्)। स्वरूपग्रहणे (प्रत्यभिज्ञालक्षणकालान्तरावस्थायित्व–) हेत्वभावात् असंबद्धोऽयमुपालम्भः। यदि अस्मदभ्युपगमज्ञानमस्ति, सर्वाकारमस्तु, किमिदमर्धजरतीयम् ( यदि 'कर्म कालान्तरानवस्थायि' इति मीमांसकमतं ज्ञायते, तदा 'न प्रत्यभिज्ञायते' इत्यपि ज्ञायेतेत्यर्थः। उत्तरमपि 'नहि ते प्रत्यक्षे' इति (भाष्यस्थं) असंबद्धमेव। प्रत्यभिज्ञा हि निराकरणीया, न पुनः प्रत्यक्षता। अथ प्रत्यक्षतानिराकरणेन प्रत्यभिज्ञैव निराक्रियते इति, तन्न। अप्रत्यक्षेऽपि प्रत्यभिज्ञासंभवात्। 'अथ प्रत्यक्षे, नित्ये एव' इति चानुपपन्नम्, प्रत्यक्षेऽपि कस्मिंश्चित् प्रत्यभिज्ञाऽनुत्पादे कालान्तरावस्थितिनिश्चयाभावादिति। निराकरोति– ) उच्यते। यदि एककार्यत्वात् कर्माभ्यासं कृत्वगुजाचष्टे कारणान्यताऽपि न सिध्यति। नहि अन्यत्वावगतौ अभ्यासावगतिः। ( तस्मादभ्यासावगतिमिच्छता त्वया कर्मापि नानाभूतं नावगम्यते इत्यङ्गीकरणीयम् )। गम्यमानैकत्वाच्च ( गम्यमानस्य एकत्वाच्च ) तद्बुद्धेरपि नानात्वमनवगम्यमेव। तदिदमुक्तं ( आक्षेपभाष्येण ) 'बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः' इति ( एतेन चोद्यभाष्यं तावत् समर्थितम्। उत्तरभाष्यमपि समर्थयमान आह– ) स्यातां नित्ये, यदि ते प्रत्यक्षे। नहि अप्रत्यक्षेऽर्थे प्रत्यभिज्ञा प्राप्नोति ( स्वरूपाग्रहणात् )। ( शङ्कते– ) ननु च भेदाग्रहणं प्रत्यभिज्ञा। सा च बुद्धिकर्मणोरपि अस्तीत्युक्तम्, कार्यगम्यत्वादनुमेयानाम्। ( परिहरति– ) सत्यम्, यदि भेदाग्रहणं प्रत्यभिज्ञा, तदग्रहणं तु प्रत्यभिज्ञा ( सा च कर्मणि नास्ति ) 'कार्यं हि कारणमस्ति' इत्येतावति ज्ञानमुत्पादयति, न पुनस्तद्वा अन्यद्वेति। प्रत्यभिज्ञा तु 'तदेवेदं' इति प्रसिद्धा लोके ( अतो बुद्धिकर्मणोः कार्यैकगम्ययोः प्रत्यभिज्ञा नास्ति )।

( भाष्यमनूद्य आक्षिपति– ) 'ह्यस्तनस्य शब्दस्य विनाशात् अन्योऽद्यतन इति चेत्' इति। किमत्रानुक्तमुक्तं भाष्यकारेण ? ( आक्षेपैवाह– ) ननु सत्यां प्रत्यभिज्ञायामनुपलम्भे कारणान्तरं कल्पनीयमित्युक्तम्। कल्पिताश्च स्तिमिता वायवः ( श्रोत्रपिधायका अनुपलम्भहेतवः)। तदपगमे चोपलब्धिरिति ( कल्पितम्)। संयोगविभागाः ( च वायवीयाः, तेषां– ) अपगमहेतवः ( इति च कल्पितम् )। किमन्यदवशिष्यते ? ( उपलब्धस्य शब्दस्य, मध्ये पुनरनुपलब्धस्य प्रत्यभिज्ञायमानस्य मध्यकालेऽपि नाशो नाश्रयणीयः कारणान्तरवशादनुपलब्धिसंभवात्। यदि समग्रे एवोपलम्भकारणे पुनरनुपलम्भः स्यात्, तदा विनाशः कल्प्येत। न च शब्दस्योपलम्भकारणं समग्रमस्ति। स्तिमितवाय्वपनयस्यापि तदुपलम्भकारणत्वात्। एतच्च प्रत्यभिज्ञाबलेन कल्प्यते। तदेतच्च 'सतः परमदर्शनम्' इत्यत्रोक्तम्। अतः किमपरमनिराकृतम्, यन्निराकरणाय पुनरिदं भाष्यकारेणोच्यते। समाधत्ते– ) इदमवशिष्यते, उपलब्धं हि अनुपलभ्यमानं 'नास्ति' इत्यस्य ज्ञानस्य गोचरतामापद्यते। नहि अत्यन्तानुपलभ्यमानं 'नास्ति' इति ज्ञानमास्कन्दति। ( तत्र– ) यदि उपलब्धमपि न गोचरीभवति। ( तत्– ) अनास्पदमेवेदं ( निर्विषयमेवेदं– नास्तीति ज्ञानं ) अभ्युपगतं भवति। अभ्युप-



गतं चैतत् ( भाष्ये ) 'नास्तीत्यस्यासंनिकृष्टस्य' इति। तस्मादभावो निर्विषयः अनेन वा विषयेण ( उपलब्धानुपलम्भेन ) विषयी वक्तव्यः। तस्मात् ( शब्दः उपलब्धो मध्ये पुनरनुपलभ्यमानो नास्तीत्यभ्युपगमनीयः, ततश्च विनष्टः, विनष्टे च ) शब्दे ज्वालादिष्विव आपतिता प्रत्यभिज्ञा ( भेदाग्रहणमात्ररूपा, न पुनः परमार्थतस्तद्ग्रहणरूपेति। एवं चोद्यभाष्यं समर्थ्य चोद्यं परिहरति– ) अहो बत अनुपलब्धौ अविवेकोऽयम्। यथैवात्यन्तानुपलब्धविषयानुपलब्धिः 'नास्ति' इत्यस्य ज्ञानस्योत्पत्तौ नेष्टे ( विषयतां न याति ), तथा तद्ग्रहणविषयेऽपि अर्थे ( प्रत्यभिज्ञायमानेऽर्थे )। तस्मादनुपलब्धिमात्रमेवेदम्, यदन्तरा शब्दे ( न पुनर्नास्तित्वरूपेयमनुपलब्धिः )। तथा च लौकिकाः जायादिषु नानुपलब्धिमात्रेण नास्तीत्यवगच्छन्ति, पुनर्दर्शने विश्वासदर्शनात्। तस्मात् सप्रत्यभिज्ञप्रत्यक्षसव्यपेक्षोऽयं प्रमाणाभावस्तत्र वक्तव्यः। कुतः ? सापेक्षत्वादभावस्य निरपेक्षत्वाच्च प्रत्यक्षस्य। तदेतत् 'आनुपूर्व्यां सिद्धम्' इत्यनेनोक्तं ( भाष्येण )। यदप्यत्रानुमानं सर्वभावविषयमुक्तं ( बौद्धैः ) नास्तिताऽवगतौ, तदप्यत्र ( शब्दे ) न संभवति ( यतः ) 'अन्ते क्षयदर्शनात्' इति हि तत्र ( अनुमाने ) हेतुः। न च शब्दे अन्ते क्षयोऽस्ति। अतो न तेनापि ( अनुमानेन ) बाध्यते इयं प्रत्यभिज्ञा, घटादिषु कदाचित् ( प्रत्यभिज्ञानमिदमनुमानं ) आकम्पयति इत्यपि ( संभाव्यते, तेषां क्षयदर्शनात्। न पुनस्तेष्वपि प्रत्यभिज्ञा शक्यते आकम्पयितुमित्यनन्तरमेव वक्ष्यामः )।

**अनपेक्षत्वात्। २१ ॥**

**भाष्यम्**— येषामनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्ष्यते, तेषामपि केषांचिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते। यथाऽभिनवं पटं दृष्ट्वा। न चैनं क्रियमाणमुपलब्धवान्। अथवाऽनित्यत्वमवगच्छति रूपमेव दृष्ट्वा। तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनङ्क्ष्यतीत्यवगच्छति। नैवं शब्दस्य किंचित्कारणमवगम्यते यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते।

**बृहती**— 'अनपेक्षत्वात्' इति। सत्यामपि प्रत्यभिज्ञायां कदाचिदसमवायिकारणोपलब्धेः अनित्यता आशङ्क्येत घटादीनामिव, तदप्यत्र दर्शनाभावान्नास्ति इति स्थिता प्रत्यभिज्ञा, तत्प्रमेयतया च नित्यत्वं शब्दस्य।

**श्लोवा**— '**एवं स्थितस्य शब्दस्य श्रुतिकालात् क्षणान्तरे** ( श्रवणकालात् क्षणान्तरे स्थितस्य शब्दस्य )। **संभाव्यते विनाशित्वं न भूयोऽन्येन हेतुना।** ( भूयः अन्येन हेतुना विनाशित्वं न संभाव्यते ) ४४२ ॥ **यथा शस्त्रादिभिर्भेदाज्जरया वा पटादयः। नङ्क्ष्यन्तीत्यवगम्यन्ते नैवं शब्देऽस्ति कारणम्। ४४३ ॥**

**प्रख्याभावाच्च योगस्य। २२ ॥**

**भाष्यम्**— इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। ननु वायुकारणकः स्यादिति वायुरुद्गतः संयोगविभागैः शब्दो भवतीति। तथा च शिक्षाकारा आहुः– वायुरापद्यते शब्दतामिति। नैतदेवम्। वायवीयश्चेच्छब्दो भवेत् वायोः संनिवेशविशेषः स्यात्। न च वायवीयानवयवान् शब्दे सतः प्रत्यभिजानीमो यथा पटस्य तन्तुमयान्। न चैवं भवति। स्याच्चेदेवं स्पर्शनेनोपलभेमहि। न च वायवीयानवयवान् शब्दगतान् स्पृशामः। तस्मान्न वायुकारणकः। अतो नित्यः।

**बृहती**— 'प्रख्याभावात्०' इति अनपेक्षताया असिद्धयाशङ्कां निराकरोति। सेयमाशङ्कोपन्यस्यते, 'वायुरुद्गतः संयोगविभागैः शब्दीभवति' इति ( भाष्येण )। तथा च शिक्षाक्षराण्यनुगुणानि दृश्यन्ते 'वायुरापद्यते शब्दताम्' इति। तदिदं निराक्रियते। यदि वायवीयः शब्दः स्यात् वायोरवयवसंनिवेशविशेषः स्यात्, न च वायवीयान् संनिवेशविशेषान् शब्दे उपलभामहे। ननु न चाक्षुषो वायुः। ( उत्तरं– ) स्पर्शनमप्युपलम्भकमेव, तेनोपलब्धाः स्युः, न चोपलभामहे, तस्मादप्रतिपक्षा प्रत्यभिज्ञा। कथं तर्हि शिक्षाक्षराणि ? तदायत्तत्वात् शब्दोपलब्धेस्तदुपचारः (वायवीयोपचारः)।

**श्लोवा**— '**शब्दो यथा पौद्गलिको निषिद्धः स्याद्वायवीयस्य स एव मार्गः। तस्मादनिर्धारितहेतुमार्गः सर्वत्र साक्षाद्भवतीति नित्यः ॥**'

(यतोऽस्य हेतुर्नास्ति उच्चारणस्याभिव्यञ्जकत्वात्, यतश्च भागा न सन्ति, यतश्च सर्वदेशे साक्षाद्भावात् अपरोक्षाभावात् सर्वगतः, तस्माद् व्योमादिवन्नित्यः) । ४४४ ॥

**लिङ्गदर्शनाच्च । २३ ॥**

**भाष्यम्**–– लिङ्गं चैवं भवति 'वाचा विरूपनित्यया' इति । अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति । तस्मात् नित्यः शब्दः । (विरूपा च सा नित्या चेति विग्रहः । रूपयतीति रूपं कर्ता । विगतं रूपं यस्या इति कर्तृरहितेत्यर्थः, अत एव नित्या वाक् । इयं च श्रुतिः अग्निस्तुतिपरा सती वाचो नित्यत्वं द्योतयतीति लिङ्गं भवति) ।

**बृहती**–– तथा च वेदाक्षराण्यस्मिन् पक्षे अनुगुणतराणि दृश्यन्ते 'वाचा विरूपनित्यया' इति । कोऽत्रातिशयः ? नित्यताऽभिधानं श्रुत्या । ('वायुरापद्यते शब्दताम्' इति, न तु श्रुत्या अनित्यतोच्यते) तस्मात् प्रत्यभिज्ञाप्रमेयत्वात् नित्यताऽवस्थिता शब्दे ।

**शा**—— शब्दस्यार्थप्रत्यायकत्वं स्वाभाविकमिति यदुक्तं तदाक्षिप्यते शब्दस्यानित्यत्वात् । नह्यभिनवस्य शब्दस्य वृद्धव्यवहारपरम्परया स्वाभाविकं प्रत्यायकत्वं शक्यते ग्रहीतुम्, अगृहीतमपि चेत् स्वभावतश्चक्षुरादिवत्प्रत्याययेत् प्रथमश्रवणेऽपि प्रत्याययेत्, तस्मादनित्यत्वे शब्दस्य देवदत्तादिशब्दवत्पुरुषकृतमेव प्रत्यायकत्वमापद्यते । कथं पुनरनित्यत्वं शब्दस्य ? प्रयत्नानभिव्यङ्ग्यत्वे सति तदनन्तरमुपलब्धेः घटादिवत्तज्जन्यत्वमध्यवसीयते । अन्यथा किमिति तदनन्तरमेवोपलभ्यते न पूर्वम्, उपलब्धस्य च द्रागेव तिरोभावाद्विनाशित्वमध्यवसीयते । न चासिद्धमनभिव्यङ्ग्यत्वम्, अभिव्यक्त्ययोगात् । सा हि प्रतिबन्धकनिरासेन वा संस्कारविशेषाधानेन वा । न तावत् प्रतिबन्धनिरासः– प्रतिबन्धकानुपलब्धेः । स्तिमिता वायवः श्रोत्रमाच्छाद्यावस्थिताः शब्दोपलब्धिं प्रतिबध्नन्ति, तेषु प्रयत्नोत्थापितैः कौष्ठ्यैः वायुभिरुत्सारितेषूपलभ्यते शब्द इति चेत्, एवं तर्हि सर्वे शब्दाः सर्वगतत्वात् श्रोत्रं प्राप्यावस्थिताः प्रतिबन्धकेषूत्सारितेषु युगपत् श्रूयेरन् । अथ संस्काराधानम्, तत्रापि त्रैविध्यं– शब्दस्य वा संस्कारमादध्युः कौष्ठ्या वायवः, श्रोत्रस्य वा उभयोर्वा । शब्दस्य चेत् तस्यैकत्वात् सर्वगतत्वादनवयवत्वेनावयवसंस्कारायोगात् सुघ्नस्थैर्वायुभिः संस्कृतः शब्दः पाटलिपुत्रेऽप्युपलभ्येत, तदिदमुक्तं 'तत्र सर्वैः प्रतीयेत' इत्यादिना । श्रोत्रसंस्कारपक्षेऽप्ययमेव दोषः । यदि काणादकापिलवैदिकमतेन आकाशमहंकारो दिग्वा श्रोत्रं तस्यैकत्वात् सर्वगतत्वादनवयवत्वाच्च सर्वपुंसामेकमेव श्रोत्रं स्यात्तच्चैकदेशस्थैरपि ध्वनिभिः संस्कृतमिति कः सर्वेषां शब्दोपलब्धिं वारयेत् । तदिदम्– 'आकाशश्रोत्रपक्षे च' इत्यादिना 'श्रोत्रादेरियमेव दिक्' इत्यन्तेन दर्शितम् । अस्मिंश्च पक्षे श्रोत्रस्य सर्वशब्दसाधारणत्वादेकशब्दोपलब्ध्यर्थमपि संस्कृतं श्रोत्रं प्रसङ्गात् सर्वान् शब्दान् घटार्थोन्मीलितमिव नेत्रं समानदेशस्थान् पटादीनवबोधयेत् । तदिदम्––– 'सकृच्च संस्कृतं श्रोत्रम्' इत्यादिना दर्शितम् । अयं च दोषः पूर्वोपक्षिप्तेऽपि शब्दसंस्कारपक्षे दर्शयितव्यः । सर्वे हि शब्दाः श्रोत्रदेशे अवस्थितास्तत्रैकस्मिन् संस्क्रियमाणे बलादन्येषामपि संस्कारः स्यादेव । नहि समानदेशानां समानेन्द्रियग्राह्याणां कस्यचित् संस्कारः कस्यचिच्च असंस्कारः इति व्यवस्था संभवति घटादावदर्शनात्, तदिदमुक्तम्– 'एतदेव प्रसंक्तव्यम्' इत्यादिना । उभयसंस्कारपक्षे तूभयेऽपि दोषाः समुच्चित्य दर्शयितव्याः, तस्मात् न प्रयत्नाभिव्यङ्ग्यः शब्दः । तज्जन्यस्तु असौ प्रादेशिकश्च, श्रोत्रं च कर्णशष्कुल्येव, तथा सति हि कैश्चिदेव कश्चिदेव शब्दः श्रूयत इत्युपपद्यते, अन्यथा श्रोत्रव्यवस्था शब्दव्यवस्था चोभयमपि न स्यात् । किंच नानादेशस्थैश्च वक्तृभिरुच्चारितः शब्दो युगपन्नानादेशेषूपलभ्यते 'तदेकस्य नित्यस्यानुपपन्नं' इति भाष्यम् । तत्र नित्यस्यानुपपन्नमिति प्रतिज्ञा, एकस्येति हेतुः, नित्यो ह्यसावेकः स्यात् एकस्यानुपपन्नं नानादेशेषु उपलम्भनमिति । **ननु** नावश्यत्वं नित्यत्वे सति एकत्वं भवति, अनेकान्येव हि गकारादीनि नित्यानि भवन्त्वित्यत आह—— 'असति विशेषे नित्यस्य नानेकत्वम्' (शा. भा.) इति । एतदुक्तं भवति—— प्रत्यभिज्ञाख्यविशेषप्रत्ययबलेन ह्यस्तनाद्यतनगकारयोरेकत्वावगमात्



नित्यत्वमाश्रीयते । अस्ति चासावविशेषप्रत्ययो युगपन्नानावक्तृभिः उच्चारितेऽपि गकारे, नहि तत्रापि प्रत्ययविशेषोऽस्ति, असति च विशेषे नित्यस्य नानेकत्वं संभवति । अनेकत्वे हि प्रत्यभिज्ञाया अप्रामाण्यमस्माकमिव भवतोऽपि स्यात् तदप्रामाण्ये च नित्यत्वानुपपत्तिः, तस्मात् नित्यत्वे सत्येकत्वमङ्गीकर्तव्यम्, एकस्य चानुपपन्नं नानादेशोपलम्भनमिति । वार्तिके अपि— 'यौगपद्योपलम्भाद्वा भेदो भेदाच्च कार्यता' इति द्वयमुपक्षिप्य यथायौगपद्योपलम्भाद्भेदो भवति तथा दर्शितम्–– 'अविभुत्वे हि युगपत्' इत्यादिना 'स्फुटेऽन्यत्वेऽवकल्पते' इत्यन्तेन । यथा च भेदात्कार्यता भवति नाकार्यस्य नित्यस्य भेदोऽवकल्पते तथा दर्शितम्–– 'नित्यत्वे त्वेकबुद्धिः स्यात्' इति । नहि नित्यत्ववादिना प्रत्यभिज्ञाया भ्रान्तित्वमिष्यते । तथा च वक्ष्यते–– 'अपि चैकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः स्युः न तु शब्दः' इति । नहि तदप्रामाण्ये नित्यत्वं सिध्यति प्रमाणान्तराभावात्, अतो नित्यत्वे सत्येकत्वं स्यात्तच्च नानादेशोपलम्भेन विरुध्यते इति । ततश्च यौगपद्योपलम्भात् भेदः, भेदे च प्रत्यभिज्ञाया अप्रामाण्यम्, तदप्रामाण्ये च नित्यत्वाभावात्कार्यत्वम्, तदेतत् आनुपूर्व्यं स्वतन्त्रसिद्धम् । दृष्टे चानित्यत्वे दीपवत्सादृश्यात् प्रत्यभिज्ञा भवति, तस्मादनित्यः शब्दः । **इति प्राप्ते, अभिधीयते**– 'प्रयत्नानन्तरं दृष्टेनैकान्त्यात्कार्यता ध्वनेः । तदभिव्यङ्ग्यपक्षेऽपि युज्यते तत्र दर्शनम् ॥' यत्तु कथमभिव्यङ्ग्यत्वमिति, श्रोत्रसंस्कारेण इति ब्रूमः । यत्तु आकाशस्य अहंकारस्य वा श्रोत्रत्वे तत्संस्कारत्वे च सर्वत्र पुंसामुपलब्धिः स्यादित्युक्तम्, तत्र ब्रूमः– यदि तयोः श्रोत्रत्वम्, भवेदयं दोषः । तत्कर्णशष्कुली भवतु श्रोत्रम्, सा च प्रतिपुरुषं भिन्नेति नातिप्रसङ्गः । यद्यपि चाकाशमेव श्रोत्रं तत्तु न साक्षात् संस्क्रियते किंत्वधिष्ठानद्वारेण, ततश्च यद्यपि श्रोत्रं सर्वेषामेकं तथाप्यधिष्ठानानां भिन्नत्वात् संस्कारव्यवस्थया श्रवणस्य व्यवस्था भविष्यति । नन्वेकत्वे सतीन्द्रियस्य यद्यपि अधिष्ठानानि भिन्नानि तथापि एकेनाप्यधिष्ठानेन संस्कृतेन इन्द्रियस्य संस्कृतत्वात् सर्वपुंसां इन्द्रियं संस्कृतमिति सर्वेषामुपलब्धिः स्यादेव । तदुक्तं– 'नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् । बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ॥' इति । सर्वदेहवर्तिनां पुंसामित्यर्थः । अत्रोत्तरम्— 'पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते । तेन प्रधानवैदेश्याद्विगुणा सा तु संस्कृतिः ॥' इति । अयमर्थः– स्वशरीरे एव भोगायतने सर्वपुंसामपि ज्ञानमुत्पद्यते नान्यत्र, शब्दज्ञानाङ्गं चायमधिष्ठानसंस्कारः प्रधानसमानदेशत्वं चाङ्गानां गुणस्तेन देहान्तरवर्तिनः पुरुषस्य यत् स्वदेहे निष्पादयितव्यं विज्ञानम्, तस्य तद्देहगत एव संस्कारो निष्पादको भवति न देहान्तरगतः । स हि तत्प्रधानभूतेन ज्ञानेन विदेशत्वाद्विगुणः । **ननु** संस्कार्यस्यैकत्वात्तद्द्वारत्वाच्च संस्काराङ्गभावस्य देशभेदोऽकिंचित्कर एव, यथा बर्हिरेकत्वात्तत्संस्काराणामातिथ्याकालानामप्युपसदग्नीषोमीयाङ्गत्वं न विहन्यते तद्वदत्रापि स्यात् । न । अदर्शनात् । नह्येकस्मिन्नधिष्ठाने सर्वेषां ज्ञानमुपलभ्यते, अतः साधारणमपीन्द्रियं विज्ञानसमानदेशसंस्कारसचिवमेव ज्ञानमुत्पादयति नान्यथेति दर्शनबलादध्यवसीयते ततो नातिप्रसङ्गः । नचावश्यमेकमेवेन्द्रियं– यद्यप्याकाशमेकमनवयवं च तथापि तस्य प्रादेशिकैर्घटादिभिर्ये संयोगास्तेऽपि प्रादेशिकास्ततश्च कर्णशष्कुलीसंयोगानां प्रतिपुरुषं भिन्नत्वात्तदवच्छिन्नस्य चाकाशस्य श्रोत्रत्वात्सत्यपि स्वरूपैकत्वेऽवच्छिन्नरूपाणां श्रोत्राणां भेदाद्व्यवस्थासिद्धिः । एवमहंकारभागे दिग्भागे वा श्रोत्रे द्रष्टव्यम् । यत्तु 'सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत्' इत्युक्तम्, तत्रोच्यते– ध्वनयो हि ताल्वादिस्थानविशेषसंपर्काद्विजातीया विलक्षणसामर्थ्यात् निष्पद्यन्ते, ततश्च कश्चिदेव ध्वनिः कस्यचिच्छब्दस्य अनुगुणं संस्कारमाधत्ते न सर्वसाधारणमित्युपलब्धिव्यवस्था कल्प्यते, शब्दसंस्कारपक्षेऽपि कश्चिदेव ध्वनिः कंचिच्छब्दं संस्करोति न सर्वः सर्वमिति युक्ततरैव व्यवस्था । दृष्टा च समानेन्द्रियग्राह्याणामप्यभिव्यञ्जकव्यवस्था । 'सावित्रं हि तेजो घटादीनामेव अभिव्यञ्जकं न नक्षत्राणाम्, निम्बत्वक् चन्दनगन्धस्यैवाभिव्यञ्जिका न गन्धान्तराणाम्, तस्माददोषः । न च शब्दसंस्कारे सर्वपुंसां उपलब्धिप्रसङ्गः, ध्वनीनां प्रादेशिकत्वात्तद्देशे शब्दः संस्क्रियते न सर्वत्र,

अतः संस्कृतेन शब्देन यस्येन्द्रियं संनिकृष्टं स एव शृणोति नान्य इत्युपपन्नम् ।

'युगपद्देशभेदश्च स्यादेकस्यापि सूर्यवत् । ये विन्ध्यनिलया ये च कामरूपे व्यवस्थिताः ॥ प्राग्भागे ह्यात्मनः सर्वैरुद्यन्भास्वान्निरीक्ष्यते । प्रत्यग्भागे तथाऽस्तं यन्मध्याह्ने चोपरि स्थितः ॥ भिन्नाश्च तेषां प्राग्भागास्तथा प्रत्यक् तथोपरि । तेष्वस्य दृश्यमानस्य विस्पष्टा भिन्नदेशता ॥' तथा यस्मिन् यावद्दूरे देशे कैश्चित् सूर्योदयो दृश्यते तद्देशवर्तिनोऽन्येऽपि ततः परस्तात्तावति पश्यन्ति ततोऽप्यस्ति भेदाभेदः । न च सूर्यनानात्वमाशङ्कनीयम्, न हि केचित् भिन्नं सूर्यं पश्यन्ति । किं पुनरेकदेशस्थस्यैव सवितुर्नानादेशोपलम्भे कारणम् ? उच्यते— अतिदूरवर्तिनोऽस्य यथावद्देशं अजानन्तः स्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते । विस्पष्टं चैतत् । तथाहि— यः अपराह्ने यस्मिन् यावद्दूरे देशे सूर्यं पश्यति— 'अस्मिन् क्षेत्रेऽस्मिन् पर्वते सूर्यः' इति, स सवितारमीक्षमाण एव तद्देशे गतस्ततः परस्तात्तथैव तं पश्यति तेनावगम्यते सर्वेषां देशानामग्रतः स्थितोऽसौ संनिहितवदवभासते इति । ये चादित्यापेक्षया स्तोकदेशाः पर्वतास्तेऽपि द्वियोजनस्थितानां त्रियोजनस्थितानां च पुरुषाणां तुल्यवदवभासन्ते, तस्मादेकत्वेऽपि संभवति नानादेशोपलम्भः । तथा एकमेव मुखं भिन्नेषु आदर्शेषु युगपत् दृश्यते । ननु प्रतिबिम्बं नामार्थान्तरं तत्र दृश्यते । न । तस्याभावादनुपलम्भाच्च, नहि मूर्तमध्ये मूर्तान्तरं संभवति । किंच शरावस्थमुदकं भूमेरुपरि नाभिदघ्ने धारयित्वा तस्योपरिष्टादरत्निदघ्ने स्वमुखं कुर्वन्नुदकस्याधस्तादरत्निमात्रे मुखप्रतिबिम्बं पश्यति, तस्मिंश्च देशे पार्श्वस्थाः पुरुषा न कंचिदपि पश्यन्ति, तेन दृश्यादर्शननिरस्तः प्रतिबिम्बाख्योऽर्थो न शक्योऽभ्युपगन्तुम् । तस्मादादर्शतेजसा जलेन च प्रतिहतं नायनं तेजः परावृत्य गृह्णातीति युक्तम् । तस्मादनैकान्तिको नानादेशोपलम्भो न नानात्वं शब्दस्य साधयति । ननु सवितुः सांनिध्याध्यासाद्युक्ता नानादेशावगतिः, शब्दे तु कथम् ? सर्वगतत्वात्, सर्वगतो हि शब्दो भिन्नदेशैः ध्वनिभिः स्वे स्वे देशेऽभिव्यज्यमानो भिन्नदेशोऽवभासते, ध्वनयो हि श्रोत्रदेशमागत्यापि शब्दं व्यञ्जयन्तः स्वोत्पत्तिदेशमिव शब्दं भासयन्तीति दर्शनबलादभ्युपगम्यते । ननु प्राप्यकारि श्रोत्रम्, न च ध्वन्युत्पत्तिदेशः श्रोत्रेण प्राप्यते इति कथं तस्य श्रोत्रेण ग्रहणम् ? तदग्रहे च कथं तद्विशिष्टशब्दग्रहः ? उच्यते— नायं श्रोत्रतस्तद्विशिष्टशब्दप्रत्ययः, किंतु श्रोत्रं हि स्वदेशस्थितं शब्दं बोधयदपि न देशविशिष्टं बोधयति किंतु स्वरूपमात्रेण, यतस्तु दिश आगता ध्वनयस्तया विशिष्टं शब्दं बोधयन्ति, सा हि दिक् श्रोत्रप्राप्ता शक्यते श्रोत्रेण ग्रहीतुम्, यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वं तथापि रावे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते इति दृष्टत्वादङ्गीक्रियते कालवत् । यथाहि कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते तद्वत् । ततश्चास्यां दिशि शब्द इति विशिष्टग्रहणं तावत्सिद्धम् ।

ध्वनयश्च क्रमेण मन्दीभवन्तः प्रत्यासन्नाद्दूराद्दूरतराच्च देशादागतास्तीव्रं मन्दं मन्दतरं च शब्दं बोधयन्ति । बोधविशेषाच्च ध्वन्युत्पत्तिदेशः प्रत्यासन्नदूरादिरूपेणानुमानात् हृदयदेशमागच्छति तत्र यः शब्दस्य परमार्थदेशः श्रोत्रदेशस्तस्याग्रहणात् दिग्विशिष्टस्य शब्दस्वरूपस्य ध्वन्युत्पत्तिदेशस्य च ग्रहणात् तयोः संसर्गभ्रमादेवंविधः प्रत्ययो भवति, प्राच्यां दिश्येतावदन्तराले शब्द इति, तस्मादभिव्यञ्जकदेशभेदादुपपन्नं नित्यस्यापि नानादेशोपलम्भनमित्यदोषः । ननु अयं दोषः, यदसति बाधके भ्रान्तित्वम्, प्रत्यभिज्ञायां वा कः पक्षपातो येन सा भ्रान्तिर्न स्यात् । अयमस्ति पक्षपातः, नह्यसंभवति तद्भ्रान्तित्वे भ्रान्तित्वमङ्गीकर्तुं युक्तम्, नानादेशोपलब्धेस्त्वपरिहार्यं भ्रान्तित्वम् । अनित्यत्वपक्षेऽपि श्रोत्रगत एव परमार्थतो गृह्यते श्रोत्रस्य प्राप्यकारित्वात्, न च वक्तृमुखगतो येन तद्देशग्रहणस्याभ्रान्तित्वं स्यात् ।

यदपि सौगतोऽप्यप्राप्यकारित्वमेवाङ्गीकुर्वन्नभ्रान्तित्वं समर्थयते, तदयुक्तम् । अप्राप्यकारित्वे हि संनिकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयाताम्, तयोस्तु क्रमेणोपलब्धिर्न कथंचिदप्यप्राप्यकारित्वे समर्थयितुं शक्या । किंच क्षणिको वा शब्दः स्यात् स्थायी वा ? यदि क्षणिक-



स्ततः प्रत्यासन्नैर्गृहीतमात्रो नष्टः कथं विप्रकृष्टैः पश्चात् ग्रहीतुं क्षमः । स्थायित्वं तु सौगतानामनभिमतमेव । स्थायित्वे च प्रत्यासन्नानां शब्दश्रवणं चिरकालमनुवर्तेत । तस्मादप्राप्यकारित्वासंभवादवर्जनीयं नानादेशोपलब्धेर्भ्रान्तित्वम् । अस्मत्पक्षे तु ध्वनीनां क्रमेणासन्नदूरगमनात् गत्वरत्वेन चैकस्मिन् श्रोत्रे चिरमनवस्थानादुपपन्ना क्रमेणोपलब्धिश्चिरकालाननुवृत्तिश्च, तस्मान्नैकान्ततस्तावदनित्यत्वम् । अर्थप्रतिपत्त्यनुपपत्त्या तु नियतत्वमेव युक्तम्, नहि प्रत्युच्चारणमन्यस्यान्यस्य क्रियमाणस्यार्थप्रत्यायकत्वं संभवति, संबन्धग्रहणासंभवादगृहीतसंबन्धस्य चाप्रत्यायकत्वात् । न चान्यस्मिन् गृहीतसंबन्धेऽन्यस्य प्रत्यायकत्वं संभवति । नहि गोशब्दे गृहीतसंबन्धेऽश्वशब्दः प्रत्याययति । सत्यम्, असदृशो हि न प्रत्याययति, यस्त्वन्योऽपि गृहीतसंबन्धेन अर्थवता शब्देन सदृशः शब्दः स प्रत्याययतीति चेत्, न । तदसंभवात् । नहि कश्चिदपि मुख्योऽर्थवान् संभवति, सर्वेषां तुल्यत्वेन संबन्धग्रहणात्, नहि द्विस्त्रिर्वाऽनुपलब्धस्य संबन्धग्रहणं संभवति, अन्वयव्यतिरेकाभावात् ।

अथ व्युत्पत्तिसमये सदृशेषु शब्देषु द्वित्रैरुपलब्धेषु पश्चात् श्रूयमाणः संबन्धग्रहणं लब्ध्वाऽर्थवान् भवति, तदुत्तरकालास्तत्सादृश्यात् प्रत्याययन्तीत्युच्यते । तदयुक्तम्- य एवोपलब्धशब्दान्तरेण पश्चात् श्रूयमाणोऽर्थवान्निरूप्यते स एवाश्रुतशब्दान्तराणां पुरुषाणां प्रथमश्रुतोऽनर्थक इति विरोधापत्तेः । तदुक्तं 'अप्रतीतान्यशब्दानां तत्कालेऽसावनर्थकः । स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः ॥' इति । अथार्थवानेवायम्, अप्रतीतान्यशब्दास्त्वन्वयव्यतिरेकवैकल्यादर्थवत्त्वं न जानन्तीत्युच्यते । तथा सति तदुत्तरकालानामपि शब्दानामेवमर्थवत्त्वसंभवात्किमिति सादृश्येन प्रत्यायकत्वम् । तदुक्तम् 'अथास्य विद्यमानोऽपि' इत्यादिना । अथोत्तरकालस्य शब्दस्य कांश्चिदगृहीतसंबन्धान् प्रत्यप्रत्यायकत्वादानर्थक्यमेवाश्रीयते, ततो योऽसावर्थवत्त्वेन अभिमतः शब्दो यत्सादृश्यादुत्तरेषां प्रत्यायकत्वं सोऽपि केषांचिदप्रत्यायक इत्यनर्थक एवेति सर्वेषामानर्थक्यं स्यात् । तदुक्तम् 'अनर्थकत्वमस्य स्यात्' इत्यादिना । किंच व्युत्पत्तिकालवर्ती शब्दोऽर्थवान् । उत्तरे तु व्यवहारकालवर्तिनस्तत्सादृश्यात्प्रत्याययन्तीति ब्रुवाणस्य विरुद्धमापद्यते, य एव हि केषांचित् व्युत्पत्तिकालवर्ती स एवान्येषां व्यवहारानुपातीत्येकस्यैवार्थवत्त्वं मुख्यं तत्सादृश्याद्गौणमिति विरोधः । तदुक्तम् 'अर्थवत्सदृशत्वेन' इति । तस्मान्न सादृश्येन प्रत्यायकत्वं इत्येकत्वमेव शब्दस्याश्रयितव्यम् । अथ गत्वादिसामान्यमेकं आश्रित्य वाचकत्वं समर्थ्येत, तन्न । तदभावात्, व्यक्तिभेदे हि सामान्यमात्मानं लभते नान्यथा ।

कश्चित्पुनराह— सत्यपि व्यक्तिभेदे निष्प्रमाणकमेव सामान्यम्, यत्र हि भेदावगतौ सत्यामेवाभेदावगतिस्तत्र सामान्यम्, इह तु सन्नपि व्यक्तिभेदो नावगम्यते, अतोऽत्र विवेकाग्रहणादेव प्रत्यभिज्ञा भ्रान्तिरूपा नालं सामान्यं साधयितुमिति । तत्त्वयुक्तम् । सति हि व्यक्तिभेदे कथमन्तरेण सामान्यं प्रत्यभिज्ञा स्यात् । विवेकाग्रहणादिति चेत्, कोऽयं विवेकाग्रहो नाम, ह्यस्तनाद्गकारादद्यतनस्य गकारस्य यद्व्यावृत्तं रूपं तन्न गृह्यते इत्यर्थः । किं तर्हि गृह्यते ? अद्योच्चरितेऽपि गकारेऽवश्यं किंचिद्रूपं गृह्यते । व्यावृत्तं चेन्न गृह्यते, व्यक्तमनुवृत्तग्रहणम् । अनुवृत्तं च सामान्यमित्युच्यते । तस्मात्सिध्यति सामान्यम् । नच सादृश्यादेव प्रत्यभिज्ञासिद्धेरलं सामान्येनेति वक्तव्यम्, अवयवसामान्ययोगात्मकत्वात् सादृश्यस्य वर्णानां चानवयवत्वात् । ननु संबन्धिसामान्यमात्रं सादृश्यम्, अतोऽनवयवानामपि ताल्वादिस्थानसामान्यं सादृश्यं भविष्यति । न । अश्रावणत्वात्, श्रवणजन्या हीयं प्रत्यभिज्ञा, तदस्याः श्रवणग्राह्यमेवालम्बनं वक्तव्यम्, नच ताल्वादिसामान्यं श्रावणम्, अतो गत्वादिसामान्यनिबन्धनेयं प्रत्यभिज्ञा सिध्यति । एवं सति व्यक्तिभेदे सामान्यं तदभावात्तु नास्ति सामान्यमेव वक्तव्यम्, अतः सिद्धं प्रत्यभिज्ञया शब्दस्य नित्यत्वम् ।

किं पुनरिदं प्रत्यभिज्ञाख्यं प्रमाणम् ? प्रत्यक्षमिति ब्रूमः । पूर्वानुभवजनितसंस्कारसध्रीचीनेन्द्रियजन्यत्वात् ग्रहणस्मरणरूपमिदमेकं ज्ञानम्, तत्र पूर्वानुभूतोऽशः स्मर्यते, स्मर्यमाणेन तु तेन सहैकत्वविशिष्टं वर्तमानं रूपं प्रत्यभिज्ञया प्रत्यक्षेण गृह्यते इति वेदितव्यम्, तस्मान्नित्यः

शब्दः । प्रदीपे तु प्रभामण्डलस्यावयवविश्लेषमन्तरेण अत्यन्तानुपपत्तेर्विश्लिष्टावयवस्य चावयविनः अवश्यंभावी विनाशः, विनष्टे च पूर्वस्मिन् प्रदीपे पश्चात्तनमवश्यं प्रदीपान्तरमेव भवति, दृढे च भेदे प्रत्यभिज्ञा सादृश्यनिमित्तेति कल्प्यते । शब्दे तु न किंचिद्भेदे प्रमाणमस्तीति विशेषः ।

तस्य शब्दस्य ह्यन्तेऽपि विनाशो नास्ति यतः सूक्ष्मविनाशकल्पना स्यात्, तस्मान्नित्यः शब्दः । प्रयोगश्च भवति— नित्यः शब्दः श्रावणत्वात् शब्दत्ववत् । नच शब्दत्वं नास्तीति भ्रमितव्यं प्रत्यभिज्ञानात्, अरण्ये हि गच्छन्तोऽश्रुतपूर्वं शब्दविशेषं श्रुत्वा प्राणिनः कस्यायं शब्द इति संदिहते, नच सामान्यदर्शनमन्तरेण विशेषसंशयो घटते । तथाऽवान्तरजातिरपि वर्गतृतीयगकारादिष्वनुवृत्ता ककारादिभ्यो व्यावृत्ता कदाचिदस्ति । तथा वर्गप्रथमेषु द्वितीयेषु चतुर्थेषु पञ्चमेषु च यथास्वमनुवृत्ताः सन्ति जातयः । कथमवगम्यते ? प्रत्यभिज्ञानादेव । तथाहि— कियत्यपि दूरदेशं दकारमुच्चरितं श्रुतवतां गकारादिषु संशयो भवति न चायं संशयो दत्वनिबन्धनो गकारादिष्वभावात्, अतोऽस्ति तृतीयादिष्वनुवृत्तमन्येभ्यो व्यावृत्तं रूपं यदुपलम्भादेष संशयः । तथा घकारोच्चारणे भकारादिषु संशयः, नान्येषु । तेन चतुर्थेष्वप्यस्ति सामान्यम्, एवं प्रथमेषु द्वितीयेषु पञ्चमेषु च यथास्वं सामान्यानि तैरेव दृष्टान्तैः । शब्दस्य तु श्रावणत्वहेतुना नित्यत्वानुमानम् । ननु शङ्खादिनादानामनित्यत्वेऽपि श्रावणत्वादनैकान्तिको हेतुः । न । तेषामपि प्रत्यभिज्ञया नित्यत्वात् । यदि तेषु प्रत्यभिज्ञा नास्ति, ततो 'ध्वन्यन्यत्वे सति' इति विशेषणादव्यभिचारः । यदा चानित्यत्वं ध्वनीनां, तदा कार्यस्यानाश्रितस्यानुपपत्तेराश्रयभूतेन केनचिद्द्रव्येण भवितव्यम्, तस्य चानेकत्वे प्रमाणाभावादेकत्वे द्रव्यस्यैकद्रव्याश्रितस्याभावात् द्रव्यान्यत्वे शब्दस्य संयोगविभागयोरनपेक्षकारणत्वाभावादकर्मत्वे सति पारिशेष्यात् गुणत्वमेव ध्वनीनां भवति । तत्र पार्थिवभेर्यादिगुणत्वे तरङ्गाद्याप्यद्रव्यगुणत्वे वा श्रवणप्राप्त्यसंभवान्न तद्ग्राह्यत्वं सिध्येत्, तस्मान्न पृथिव्यादिगुणत्वम् । वायुगुणत्वं तु युक्तम् । मुखशङ्खादिसंयोगाद्भेरीदण्डसंयोगादन्यतो वा निष्पद्यमाना वायवस्तच्छब्दविशेषगुणका निष्पन्नाः सर्वासु दिक्षु प्रविशमानाः श्रोत्रेण संयुज्यन्ते, ततश्च संयुक्तसमवायात् तद्गतः शब्दः श्रोत्रेण गृह्यते । यस्मादेव वायुगुणः शब्दस्तस्माद्यत्कैश्चिदुच्यते, 'शब्दलिङ्गमाकाशं' इति तन्निरस्तम् । वर्णानां तु नित्यानां द्रव्यत्वमेवाङ्गीक्रियते । नन्वेषामपि शब्दत्वात् ध्वनिवद्गुणत्वानुमानमिति चेत् । न । वर्णा न गुणाः ध्वन्यन्यत्वे सति श्रावणत्वाच्छब्दत्ववत् दिग्वत् कालवच्चेति प्रतिसाधनसद्भावात् । यथा च दिक्कालयोः श्रावणत्वं तथा प्रागेवोक्तम् । यत्तु स्पर्शविरहित्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपादिवच्छब्दस्य गुणत्वमिष्यते, तस्यापि यथोक्तमेव प्रतिसाधनमित्यास्तां तावत् । तस्मात् ह्यस्तनाद्यतनयोः प्रत्यभिज्ञानाद्वर्णानां न तावत्प्रत्युच्चारणमन्यत्वम् । एवं चोच्चारणं शब्दस्य न कारणं किंत्वभिव्यञ्जकमिति सिद्धम् । न चोच्चारणादन्यत्कारणं संभवतीत्यकार्यत्वम्, अत एवाविनाशान्नित्यत्वसिद्धिः । इदमेव हि नित्यत्वं यत्स्वरूपसद्भावे सत्युत्पत्तिविनाशरहितत्वम् ।

**सिद्धान्तचन्द्रिका**-- '**भाष्यवार्तिकयोर्दृष्टमुपयुक्तं स्वदर्शने । ग्रन्थकारेण च त्यक्तं प्रमेयं लिख्यते मया ॥**' नन्वस्तु नामैवं नित्यत्वं तथापि आनुपूर्व्यनित्यत्वादनित्यत्वमापन्नम्, पदं हि वाचकमिष्टं तच्च क्रमाधीनम्, विशकलितानां वर्णानामवाचकत्वात् क्रमश्चानित्यः । तथाहि देशतः कालतो वा क्रमो भवति । न च वर्णानां सर्वगतानां नित्यानां च स्वतः क्रमः संभवति । ध्वनयो हि क्रमवर्तिनः क्रमेण शब्दानभिव्यञ्जयन्तः स्वीयं क्रमं वर्णेष्वपि दर्शयन्ति, क्रमरचना च पुरुषाधीना यथाविवक्षं तदुपपत्तेः । अतः पुरुषपारतन्त्र्यात् अप्रामाण्यापत्तिः । अतो निष्फलमेव वर्णानां नित्यत्वप्रतिपादनम् । नहि तन्नित्यत्वे वाचकस्य पदस्य नित्यत्वं सिध्यति । नहि परमाणूनां नित्यत्वादारब्धे घटादौ नित्यत्वं दृष्टम् । यथाहुः-- 'वर्णाः सर्वगतत्वाद्धि न स्वतः क्रमवृत्तयः । अनित्यध्वनिकार्यत्वात्क्रमस्यातो विनाशिता ॥ पुरुषाधीनता चास्य तद्विवक्षावशाद्भवेत् । वर्णानां नित्यता तेन निष्फला परमाणुवत् ॥' किंच क्रमं विना वर्णानां प्रतिपादकत्वासंभवात्क्रमस्य च वाचकत्वात् पदत्वं न क्रमविशिष्टानां वर्णानां तस्य चानित्यत्वाद्वाचकानित्यत्वमिति । अत्रोच्यते— न तावत् क्रमस्य पदत्वप्रसक्तिः । वस्त्वन्तराधारस्य स्वतन्त्रस्य क्रमस्यादर्शनात् । अतोऽत्र गुणप्रधानभाव एव विचारणीयः किं क्रमविशिष्टा वर्णा एव वाचकाः उत वर्णाश्रितः क्रम इति । एवं च सति क्रमवतां वर्णानामेव वाचकत्वं प्राधान्यात् न क्रमस्य । सर्वपदार्थाङ्गत्वेन तस्यावगमात् । न ह्यसौ स्वतन्त्र एव वस्त्वन्तरत्वेन क्वचिद्व्यवह्रियते । अत एव क्रमविशिष्टा वर्णा एवास्माकं प्रतिपादकाः न क्रममात्रम् । नन्वस्तु नामैवं तथापि क्रमस्य पुरुषार्थत्वात् तद्विशिष्टवाचकस्यापि पौरुषेयत्वमापत्स्यते, तन्न । अत्राहुः-- 'न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् । वक्ता न हि क्रमं कंचित्स्वातन्त्र्येण प्रपद्यते ॥ यथैवास्य परैरुक्तस्तथैवैनं विवक्षति । परोऽप्येवमतश्चास्य संबन्धवदनादिता ॥ तेनैवं व्यवहारात्स्यादकौटस्थ्येऽपि नित्यता । यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ॥' इति । ननु वर्णानामपि व्यवहारादेवानिदंप्रथमत्वरूपनित्यत्वमस्तु किं कूटस्थनित्यतयेति चेत् । नैवम् । वर्णानामनित्यत्वे व्यवहारस्यैवानुपपत्तेः । तथाहि वर्णेषु नित्येषु सत्सु तानेवादाय प्रयोगविशेषेण शक्यते क्रमविशेषो निष्पादयितुं परमाणुभिरिव घटादीनि । वर्णाभावे तु किंमूला रचना स्यात् । न हि निरुपादानं कार्यरचनं संभवति । न च नित्यविभूनां क्रमानुपपत्तिरिति वाच्यम् । ध्वनिवशात्तदुपपत्तेः । ताल्वादिसंयोगविभागक्रमवशेन तत्प्रेरितानां ध्वनीनामपि क्रमो भवति । ताल्वादयो ध्वनयश्च जात्या नित्याः । तेन गकारौकारविसर्जनीयानां क्रममिच्छन् तदभिव्यञ्जकानां ध्वनिजातीयानां तदनुरूपेण क्रमेण प्रेरणं चिकीर्षन् ताल्वादिसजातीयानां स्थानानां संयोगविभागौ क्रमेणारभत इति तद्वशेन व्यापकानामपि वर्णानां क्रमग्रह इति । केचित्तु क्रमस्य कूटस्थत्वमेवाहुः । तथाहि— पौर्वापर्यं क्रमः, चिरक्षिप्रात्मकं च दीर्घादिरूपम्, पूर्वापरचिरक्षिप्रप्रत्ययाश्च कालालम्बनास्तेन ध्वनिभिः वर्णेषु पूर्वापरभागेन व्यज्यमानः काल एव क्रम इति । ननु काल एव चेत् क्रमः स त्वेको विभुर्नित्यश्च कथं पूर्वापरेण रूपेण विभक्तो भासते । उच्यते— यथा वर्णो नित्यः सर्वगतोऽपि दीर्घादिरूपेण विभक्तो भासते ध्वन्युपाधिवशात्, तथा कालोऽपि स्वयमभिन्नोऽपि आदित्यगतिक्रियोपाधिवशात् भिन्नो भासते, उपाधयश्च विनष्टवर्तमानानागताः सूर्यादिक्रिया इति तद्वशेन कालेऽपि अतीतादिविभागः । क्षिप्रत्वं चाल्पक्रियावच्छेदात्, बहुक्रियावच्छेदात् चिरत्वमिति क्रमस्य नित्यत्वे पदस्यापि नित्यत्वं सिद्धम् । यथाहुः-- 'तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः । तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ॥' ननु ध्वनिधर्माः क्रमादयः कथं वर्णानामर्थं प्रत्यायकतामङ्गं भवन्ति । अत्राहुः— 'परधर्मेऽपि चाङ्गत्वयुक्तमश्वगजादिवत् ।' किं पुनः क्रमादीनां व्यवहारनित्यत्वे प्रमाणम् ? अर्थापत्तिरेवेति ब्रूमः । पूर्वोक्ताद्यर्थापत्तिर्वाचकरूपस्यैव नित्यत्वं कल्पयति न वर्णस्वरूपमात्रस्येति । इति शब्दाधिकरणम् ।

**वि**— 'ध्वन्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः ।, अनित्यो वर्णरूपत्वाद् वर्णे जन्मोपलम्भनात् ।।, अबाधितप्रत्यभिज्ञाबलाद् वर्णस्य नित्यता । उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥' तस्मान्नित्ये शब्दे कारणदोषाभावान्नास्ति अप्रामाण्यम् ।

**भाट्ट**-- शब्दस्य नित्यत्वे तद्गतः प्रत्यायकत्वात्मा संबन्धोऽनादिः स्यात् । तदेव न संभवति, ताल्वादिव्यापारपूर्वापरकालयोः गकारादेरश्रवणेनोत्पादविनाशयोरङ्गीकर्तव्यत्वात् 'स एवायं गकारः' इति प्रत्यभिज्ञायाः सादृश्यविषयकत्वेन गौणत्वात् । न च ताल्वादिव्यापारस्य अभिव्यञ्जकत्वमात्रं संभवति । तच्च श्रोत्रशब्दान्यतरनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन, तद्ग्रहणप्रतिबन्धकदोषनिरासेन वा स्यात् । उभयथाऽपि दिगादिरूपश्रोत्रस्य नित्यव्यापकशब्दस्य वा संस्कृतत्वात् सर्वग्रहणापत्तिः । किंच, नित्यत्वपक्षे गकारादिव्यक्तेरेकत्वान्नानादेशोच्चारणेन देशभेदो नोपलभ्येत । तेन प्रतिदेशं भिन्ना एव शब्दा अनित्याश्च । इति प्राप्ते, व्यक्तिबाहुल्यस्य तत्तत्प्रागभावध्वंसानां च कल्पने अतिगौरवापत्त्या उक्तप्रत्यभिज्ञायाः गौणत्वायोगेनावच्छेदक-

कर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारेण अभिव्यक्तेरपि निर्दोषतया गकारादिव्यक्तय: एकैका नित्या विभ्व्यश्च। उत्पादविनाशप्रतीतिस्तु ध्वनिविषया। एकस्यैव नानादेशोपलम्भ: आदित्यस्येवाविरुद्ध:। तस्मान्नित्य: शब्दो वर्णात्मक:। ध्वन्यात्मकोऽपि रथन्तरादिरूपो नित्य एव। अत एव 'सेयं गुर्जरी' इति प्रत्यभिज्ञाऽपि न गौणीत्यन्यत्र विस्तर:।

**मण्डन**—'वाच्यवाचकसंबन्धनित्यता या प्रसाधिता। शब्दनित्यतया सा स्यात् तेन तन्नित्यतोच्यते॥'

**शंकर**—'शब्दाधिकरणं चाथ।' २३.

* **शब्दनित्यत्वाधिकरणम्।** **ननु** कथं पदार्थसंबन्धस्य नित्यत्वम्। वर्णानां अनित्यत्वेन पदानामपि अनित्यत्वात्। तथाहि, वर्णा अनित्या: प्रयत्नानभिव्यङ्ग्यत्वे सति प्रयत्नोत्तरं उपलभ्यमानत्वात् घटादिवत्, इत्यनुमानेन अनित्यत्वम्। **न च** 'स एवायं गकार:' इति प्रत्यक्षरूपप्रत्यभिज्ञाबलेन अभिव्यङ्ग्यत्वकल्पनं इति **वाच्यम्।** 'उत्पन्नो गकार:, विनष्टो गकार:' इति प्रतीत्या प्रत्यभिज्ञाया एव जातिविषयत्वस्य कल्पनात्। अत एव कदाचित् तज्जातीयोऽयं इति प्रत्यभिज्ञा उपपद्यते। अन्यथा एकव्यक्तिकत्वेन तज्जातेरभावात् तादृशप्रत्यभिज्ञाऽनुपपत्ति:। स्वरूपेण जात्युपस्थितौ 'सोऽयं' इति प्रत्यभिज्ञा, जातित्वेन जात्युपस्थितौ 'तज्जातीयोऽयं' इति प्रत्यभिज्ञा इति विशेष:। **किंच,** जात्यतिरिक्तस्य एकस्य मूर्तस्य युगपत् नानादेशोपलम्भो नास्तीत्यनुभव:। एवं च वर्णानां युगपन्नानादेशोपलम्भात् भेदसिद्धि:। तस्मात् प्रत्यभिज्ञाबाधेन अनित्यत्वसिद्धि:। **इति चेत्, न।** अनभिव्यङ्ग्यत्वस्य असिद्धतया हेतोरसिद्धे:। प्रयत्नाभिव्यङ्ग्यस्यैव अङ्गीकारात्। **न च** श्रोत्रनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन तन्निष्ठग्रहणप्रतिबन्धकदोषनिराकरणेन च अभिव्यञ्जकत्वे श्रोत्रस्य आकाश–अहंकार–दिगन्यतमरूपस्य, नित्यव्यापकशब्दस्य वा संस्कृतत्वात् सर्वग्रहणापत्ति: इति **वाच्यम्।** अवच्छेदककर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारात्। उत्पत्त्यादिप्रतीते: अभिव्यञ्जकध्वनिस्वरादिविषयत्वेन प्रत्यभिज्ञाया: जातिविषयकत्वायोगाच्च। **न च** अनेकोत्पादादिप्रत्ययानां विषयभेदकल्पनमपेक्ष्य एकस्या: प्रत्यभिज्ञाया: एव विषयभेदकल्पनमुचितं इति **वाच्यम्।** उत्पादविनाशप्रत्ययवत् भेदाभेदप्रत्ययस्यापि नानात्वात्। भेदस्य अन्योन्याभावव्यावर्तकधर्मादिरूपतया नानात्वेन तदभावप्रत्ययस्यापि नानात्वात्। ध्वनीनां भेदस्य उभयसिद्धत्वेन गकारादिव्यक्तिकल्पनाधिक्याच्च। **केचित्तु** उत्पादविनाशप्रत्यययो: भ्रान्तित्वकल्पने व्यञ्जकध्वनिनिष्ठयो: तयो: परंपरासंबन्धेन वर्णनिष्ठत्वेन भानमभ्युपेयम्। तथा च परंपराघटकवायोरपि विषयतापत्त्या गौरवम्। प्रत्यभिज्ञाया: गत्वगकारभेदविषयिण्या: जातिविषयत्वकल्पनेऽपि नातिरिक्तविषयताकल्पनं इति लाघव**माहु:।**

तदपि गकारादिव्यक्तितत्प्रागभावध्वंसकल्पनागौरवेण निरस्तम्।

**चिन्तामणिस्तु** (गङ्गेश:) तारत्वमन्द्रत्वविरुद्धधर्माध्यासेन प्रत्यभिज्ञाया: न प्रामाण्यं संभवति इति जातिविषयत्वं तस्या:। तथाहि। सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकतया तत्प्रतिबध्यतावच्छेदकतया वा गत्वादिव्याप्यनानातारत्वमन्द्रत्वादिजातिसिद्धौ पूर्वगकारापेक्षया उत्तरगकारो मन्द्र इत्यनुभव: पूर्वापरगकारयो: ऐक्ये न संभवति। अत: अस्ति गकारयो: भेद:। एवं गकारनिष्ठशुकपुरुषजन्यतावच्छेदकवैजात्यभेदेन अपि तद्भेद:। अन्यथा तच्छ्रवणे शुकाद्यनुमितिर्न स्यात्। अत: प्रत्यभिज्ञाया एव जातिविषयकत्वकल्पनं **इत्याह।**

तदपि 'मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' इत्यक्षरशिक्षायां मन्द्रत्वादिधर्मस्य स्वरनिष्ठत्वोक्ते: अकिंचित्करम्।

**अन्ये तु** वर्ण: अनित्य:। स्वाधिकरणनिष्ठाधेयतानिरूपकत्वसंबन्धावच्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावप्रतियोगिगुणत्वात्। संयोगसंबन्धावच्छिन्नप्रतियोगिताकगगनपरिमाणाभावप्रतियोगिनि व्यभिचारवारणाय आधेयतानिरूपकत्वसंबन्धावच्छिन्नेति। उभयाभावप्रतियोगिनि तत्रैव व्यभिचारवारणाय व्यासज्येति। ईश्वरज्ञानस्य नाव्याप्यवृत्तित्वम्। संयोगाभावस्य न गुणत्वमिति संयोगदृष्टान्तेन अनित्यत्व**माहु:।**



तदपि गुणत्वाभावेन हेत्वसिद्धया प्रत्युक्तम्। वर्णात्मकशब्दस्य आकाशवत् व्यापकत्वेन द्रव्यत्वाङ्गीकारात्। सामान्यवत्त्वे सति मनोभिन्नेन्द्रियजन्य–लौकिकप्रत्यक्षविषयत्वात् इति हेतुस्तु आकाशकालदिशां षडिन्द्रियजन्यप्रत्यक्षविषयत्वेन अनैकान्तिक:। इष्यते हि विशेषगुणसंबन्धित्वेन आत्मन इव बाह्यविषयसंबन्धित्वेन कालादिप्रत्यक्षम्। 'इदानीं घटो ज्ञात:, घटाकाशे ध्वनिरुत्पन्न:' इत्याद्यनुभवात्। अतो नानित्यत्वम्।

**यत्तु** वर्णानां नित्यत्वे युगपत् नानादेशोपलम्भो न स्यात् इत्युक्तम्, **तन्न,** आदित्योपलम्भवत् तदुपपत्ते:। एकस्यैवादित्यस्य दूरस्थतया सर्व: स्वसांमुख्येन ग्रहणम्। एवं व्यापकवर्णानामपि तत्तद्ध्वनिभि: तत्तद्देशाभिव्यक्तानां स्वसामीप्योन्मुखादिक्रमेण च ग्रहणमुपपन्नम्। तस्मान्नित्य: शब्द:।

अनुमानं च– शब्दो नित्य:, ध्वनिभिन्नत्वे सति श्रावणत्वात्, शब्दत्ववत्। अनेनैवानुमानेन वर्णानां द्रव्यत्वसिद्धि:। **न चैवं** 'सैवेयं गुर्जरी' इति प्रत्यभिज्ञानात् ध्वनीनामपि नित्यत्वं स्यात् इति **वाच्यम्।** रथन्तरादिगीतीनां नित्यताङ्गीकारेण इष्टापत्ते:। वर्णाभिव्यञ्जकध्वनीनामेव अनित्यत्वाङ्गीकारात्। गुर्जर्यादीनां तु वर्णाभावेऽपि प्रतीयमानानां रथंतरादिवत् न गीतिरूपता। अतस्तेषामपि न बाधकम्। **मणि.** पृ. १६८–१७०.

* **शब्दपरिच्छेद:।** शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे बुद्धि:। शब्दविज्ञानापेक्षादात्मन: संनिकर्षाद्यदृष्टार्थविषयं ज्ञानं तच्छास्त्रं नाम प्रमाणम्। क: शब्दोऽभिमत: ? वर्णा:। तेषामेव श्रोत्रग्राह्यत्वात्। श्रोत्रग्राह्ये हि वस्तुनि शब्दपदं वर्तते। न च सत्त्वशब्दत्वयोरतिप्रसङ्ग:। सत्तादिसामान्याभावात्। अनुवृत्ताकारावभासिनी हि बुद्धि: सामान्यसिद्धौ निबन्धनम्। न च द्रव्यगुणादिष्वनुवृत्ताकारं परामृशन्ती बुद्धिरुदेति यतो महासामान्यं सत्ताख्यं सिध्येत्। नापि ककारखकारादिष्वेक आकारोऽवभासते, यत: शब्दत्वमभ्युपगच्छेत। सदादिप्रतीतिस्त्वौपाधिकी। प्रमाणग्रहणयोग्यतौपाधिक: सच्छब्द:। श्रोत्रग्राह्यतौपाधिकश्च शब्दशब्द:।

**ननु** वर्णातिरिक्त पदमपि श्रोत्रमेव। तथाहि, नदीदीनेत्यादिषु वर्णाभेदेऽपि पदान्यत्वं प्रतीयते। न च वाच्यं वर्णा एव पदम्। नदीदीनेत्यादि तु क्रमभेदेन पदभेदबुद्धिरिति। वर्णानामक्रमिकत्वात्। देशनिबन्धनो वा क्रमो भवेत् कालनिबन्धनो वा। उभयविधोऽपि न वर्णेष्वास्पदं लभते। तेषां सर्वगत्वान्नित्यत्वाच्च बुद्धिस्तु तेषां क्रमवती। तदनुरोधेन वर्णा अपि क्रमवन्त इति प्रत्येकं श्रवणेष्ववभासन्ते। एकक्षणवर्तिन्यां तु पदबुद्धावेकस्यां बुद्धिनिबन्धनोऽपि क्रमो नोपपद्यते इति कुतस्तद्भेदेनापि भेदप्रतिभासोपपत्ति:। **किंच** वर्णा बहव: एकविषया च पदबुद्धिरिति वर्णेभ्यो भिन्नं पदम्। यदि च वर्णेभ्यो भिन्नं पदं नावभासते ततस्तेभ्योऽर्थप्रत्यय एव नोपपद्यते। एकैकवर्णप्रतीतौ तावदर्थस्य नावगम:। **न च** सकलवर्णोपलम्भो युगपत्संभवति, वर्णानां क्रमोच्चारणात्। उच्चारणानुसारित्वाच्चोपलब्धे:। वर्णानां च वाचकत्वे क्रमभेदे वक्तृभेदे चार्थप्रत्यय: स्यात्। तस्माद्वर्णेभ्योऽसंभवन्नर्थप्रत्ययस्तदतिरेकिस्वनिमित्तपदप्रतीतिं प्रसाधयति।

**उच्यते।** नदीदीनेत्यत्रापि वर्णातिरिक्तवस्त्वन्तरावभासो नास्ति। नकारादय एव हि प्रतीयन्ते। बुद्धिभेदस्तु क्रमभेदनिबन्धन:। न चेयमेका बुद्धिर्यतो वर्णानां बुद्धिनिबन्धनोऽपि क्रमो न स्यात्। भिन्नवर्णविषया भिन्ना एव हि बुद्धयो निरन्तरतयैकतामिवापद्यन्ते। **तथाहि।** श्रवणेन्द्रियनिबन्धनास्तावद्वर्णोच्चारणानुबन्धिन्यो बुद्धय: उच्चारणभेदेन उत्पद्यन्ते। एवं स्मृतिरपि प्रत्येकवर्णोपलम्भप्रतिभावित–भावनावशेन भवन्ती न सर्वविषयैकाऽवकल्पते, भावनानां भेदात्। एकपदबुद्धिस्तु एकार्थप्रतिपत्त्युपायत्वनिबन्धना अर्थप्रतिपत्तिश्चाप्रत्यक्षं तावन्निमित्तं न शक्नोति कल्पयितुम्। तस्य निमित्तत्वानुपपत्ते:। न तस्य सत्तामात्रेण निमित्तता। सर्वदाऽर्थप्रत्ययापत्ते:। प्रत्यक्षं भिन्नपदावभासि न भवतीत्युक्तमेव, तेन वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतिपत्त्युपपत्तये कश्चिद्विशेष आश्रयितुं युक्त:। सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य। उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात्पूर्वपूर्ववर्णोपलम्भजन्य: संस्कार एवा-

श्रीयते । स च स्मृतिहेतोः संस्काराद्भिन्न एव । स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलं नार्थान्तरं इत्यर्थविषया ततः प्रतीतिरनुपपन्नेति, तदतिरेकिणः संस्कारस्याश्रयणम् । तस्य च कार्यकल्प्यत्वाद्यथाभावे प्रतीतिदर्शनं तथाभाव एवोत्पत्तिरनुमीयते, तेन क्रमविपर्यये व्यक्तिभेदे व्यवधाने च कार्यादर्शनात्तत्र संस्कारस्यानुदयादर्थप्रत्ययाभावः । यस्य यस्य चार्थस्य प्रतीतौ यस्य यस्य वर्णस्य निमित्तभावस्तस्य तस्य तदर्थप्रतिपत्त्यनुगुणसंस्कारार्थकत्वं स्वाभाविकम् । सहायविरहात्तु कार्यानुदयः सहाप्तेश्च कार्योत्पत्तिरिति तेभ्य एवार्थप्रत्ययः । तस्मान्न प्रत्यक्षतो नाप्यनुमानतो वा वर्णव्यतिरिक्तपदोपपत्तिरिति वर्णात्मकमेव पदम् ।

कः पुनरर्थः ? अभिधेयः । अभिधेय एव कः ? येन सह शब्दस्य अपौरुषेयः संबन्धः । अथ कः संबन्धः ? प्रत्याय्यप्रत्यायकभावः । न तर्ह्यपौरुषेयः सबन्धः । स्वभावतः शब्दस्याप्रत्यायकत्वात् । यदि हि स्वभावत एव शब्दोऽर्थं प्रत्याययेत्ततः प्रथमश्रुतः किं न प्रत्याययेत्ततोऽवगच्छामोऽपेक्षते किंचिच्छब्द इति । देवदत्तादिपदेषु च पुरुषसंकेतायत्ता अर्थप्रतीतिर्दृष्टेति गवादिष्वपि तदपेक्षैवाश्रीयते । तदपेक्षा चेदर्थावगतिर्न तर्ह्यपौरुषेयं शब्दस्य प्रत्यायकत्वम् ।

**उच्यते** । यद्यपि प्रथमश्रुतात् शब्दादर्थं नावबुध्यन्ते तथापि स्वाभाविकमेव शब्दस्यार्थप्रत्यायकत्वं पुनः संकेतापेक्षम् । **तथाहि** । वृद्धयोर्व्यवहरतोरेकस्य वाक्यं श्रुत्वा परस्य प्रवर्तमानस्य प्रवृत्त्या बुद्धिमनुमापयति । तस्याश्च शब्दश्रवणानन्तरभावित्वात् शब्दस्य हेतुतां तावदवधारयति । किन्तु तेषां पार्श्ववर्तिनां व्युत्पित्सूनां ततः शब्दात् स्वयमर्थमप्रतीयतां पुनरेषां विचिकित्सोदयते यदि प्रत्यायकः शब्दस्ततोऽस्मानपि किमिति नार्थं प्रतिपादयति । अथाप्रत्यायक एव ततो वृद्धमपि कथमवबोधयति । तेषामेव विचिकित्सतां पुनरेषा कल्पना प्रसरति । नूनमस्ति कश्चिदस्य वृद्धस्य विशेषो यतोऽर्थमवबुध्यते । कोऽसौ विशेष इति निर्णीयताम् । पुनः शब्दश्रवणे वृद्धव्यवहारावगतार्थप्रत्यायकत्वमात्रेण स्वयमर्थावगमदर्शनात् अर्थप्रत्यायकत्वावगम एव विशेष इति निर्धारणा जायते । न पुनः संकेतप्रतीतिर्वृद्धस्य विशेष इति कल्पना शक्या, संकेतस्यैव तदानीमप्रतीतेः । व्युत्पन्नेतरशब्दार्थो हि संकेतवाक्यादर्थमवबुध्यमानः संकेतं प्रतिपद्यते नान्यथा । **ननु** उत्तरकालं संकेतदर्शनात् किमिति संकेतभूतमेव प्रत्यायकत्वं नाश्रीयते । न, शब्दस्वभावत एवार्थप्रतीतिरूपकार्यसिद्धेः । यदि हि शब्दमात्रादर्थप्रतीतिर्न संपद्यते ततः संकेतोऽपि तत्कालमिति कल्प्यते नान्यथा उपपद्यते तु शब्दमात्रादेवार्थावगतिः प्राच्येन मार्गेण । **नन्वेवं** सति देवदत्तादिष्वपि कथं संकेतस्य कारणत्वम् । **उच्यते** । प्रत्यक्षपरिदृष्टस्तत्र संकेतो न तु कल्पयितव्यः । तेन देवदत्तादिषु तस्यैवार्थप्रतीतिकरणत्वम् । गवादिषु तु केवलकार्यदर्शनकल्पनीयो नावकाशं लभते इत्यपौरुषेय एतेषामर्थेन प्रत्याय्यप्रत्यायकलक्षणः संबन्ध इति सिद्धम् ।

असंनिकृष्ट इति किमिदम् ? प्रमाणान्तरेणाप्रतीत इति । यद्येवं कथमसौ शब्दैरवबोध्यते ? उक्तं वृद्धव्यवहारावगतसंबन्धः शब्दोऽवबोधक इति । **यश्चार्थो** न प्रमाणान्तरेणावगम्यते कथं तद्विषयो वृद्धव्यवहारः अवसीयते । कथंतरां च तद्विषया प्रतीतिरनुमीयते । कथंतरां च वाचकशक्तिः शब्दस्य कल्प्यते इति । वाक्यार्थमातृकायामभ्यासो विधीयतामित्यत्रोत्तरम् ।

स पुनरसंनिकृष्टोऽर्थो नियोगार्थ एव । नियोगो हि प्रमाणान्तरानवगतमपूर्वमर्थमवबोधयतीति वाक्यार्थमातृकायामुक्तम् । न च नियोग एवैकस्तस्यावबोधकः, विषयव्यतिरेकेण तदप्रतीतेः पदान्तराणामपि तदन्वयिस्वार्थपरतयैव व्युत्पत्तेस्तेन वाक्येनैव नियोगार्थः प्रतीयते । तत्र लिङादिप्रत्ययो नियोगार्थशरीरमेवाभिदधाति प्रकृतिस्तद्विषयम् । पदान्तराणि च विषयविशेषणं नामधेयं नियोज्यं चाभिदधतीति नियोगार्थप्रतीतौ व्याप्रियन्ते । संनिपत्योपकारकाङ्गवाक्यानि च यद्यपि नियोगान्तरशून्यानि तथापि प्रधाननियोगान्वितस्वार्थाभिधायकतया तन्नियोगप्रतिपत्तावेव पदान्तरवद्वर्तन्ते । विनियुक्तमन्त्रसमाम्नायोऽपि द्रव्यभूतं नियोगजातं



नियोगाङ्गतया समर्पयंस्तद्विशिष्टनियोगावगतावेव उपक्षीयते, नियोगाङ्गता तु योग्यतया प्रयोगकाले नैयोगिककर्मतत्साधनस्मारणेन मन्त्रजातस्य । अनुवादा अपि विधेयस्तुतिमुत्पादयन्तः स्तुतिविषयनियोगप्रतिपत्तिपरा एवेति कृत्स्न एव वेदोऽवबोधेऽपूर्वे कार्यात्मनि प्रमाणम् । अत एव को वेदार्थ इति जिज्ञासमानेभ्यश्चोदनासूत्रेण **कार्यात्मा वेदार्थ** इत्युक्तम् ।

**ननु** सिद्धोऽपि ब्रह्मात्मको वेदान्तानामर्थः प्रतीयते । **उच्यते** । व्युत्पत्त्यपेक्षः शब्दोऽर्थमवबोधयति । व्युत्पत्तिश्च वृद्धव्यवहारे । व्यवहारश्च कार्यप्रतीतिनिबन्धनः । कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः । तत्रापि कश्चिच्छब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते कश्चिच्च कार्यान्वितस्वार्थपरतया ।

**ननु** विनापि व्यवहारं सिद्धार्थप्रतिपत्तिपरादपि लौकिकवचनात्संभवत्येव व्युत्पत्तिः । यथा 'पुत्रस्ते जातः' इति । अत्र हि मुखप्रसादादिभिर्लिङ्गैः लोकैः श्रोतुर्हर्षोत्पत्तिरनुमीयते । हर्षोत्पत्तिश्च हर्षहेतुमन्तरेण न संभवति प्रियार्थप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतं तेन पुत्रस्ते जात इति वाक्येन प्रियोऽर्थो बोधित इति कल्प्यते । पुत्रजन्मास्य प्रियमुत्पन्नमिति प्रमाणान्तरावगतमिति तदभिधायकत्वमेव कल्प्यते । प्रतिपदमावापोद्धाराभ्यां व्यवहार इव स्वार्थविशेषसंबन्धाध्यवसायः । तथा व्युत्पन्नेतरपदविभक्त्यर्थाः काष्ठैः पचतीति वर्तमानोपदेशेऽपि यत्पाके कारणं तत्काष्ठशब्देन प्रतिपाद्यते इत्यवगम्य प्रत्यक्षेण काष्ठानां कारणभावमवगच्छन्तः काष्ठशब्दे व्युत्पद्यन्ते । किंच अस्य शब्दस्यायमर्थ इत्यपि व्युत्पत्तिर्दृश्यते । न तत्र शक्यते वक्तुं कार्यान्वय्येव शब्दस्यार्थ इति । अपि च येन नामाकार्याभिधायित्वं तावता च कार्यान्विताभिधानस्याप्युपपत्तेर्न शक्यते विशेषान्विताभिधानशक्तिः कल्पयितुम् । लोके च सिद्धार्थान्येव प्रायशो वाक्यानि प्रश्नोत्तराणि दृश्यन्ते । कुशलं ते कुशलं ममेत्यादीनि ।

**अत्रोच्यते** । सर्वपुरुषाणां तावद्वृद्धव्यवहार एव प्रथमं व्युत्पत्तिरङ्गीकरणीया । न खलु व्यवहारमन्तरेण सिद्धान्वाख्याने व्युत्पत्तिरवकल्प्यते । यद्यपि मुखप्रसादादिभिर्हर्षोत्पत्तिरनुमीयते, हर्षोत्पत्त्या च हर्षहेत्ववगमस्तन्निमित्तता च शब्दस्य तथापि 'पुत्रस्ते जातः.' इति वाक्यस्य पुत्रजन्माख्यहर्षहेतुप्रतिपादकता हर्षहेतूनामानन्त्यात् दुरनुमाना । न च पारिशेष्येण तत्प्रतिपादकत्वाध्यवसायः । भूतभविष्यद्वर्तमानानां संनिहितव्यवहितानां पारिशेष्यावधारणाया अत्यन्तदुष्करत्वात् । व्यवहारः पुनः प्रत्यक्षविशिष्टार्थविषय उपलभ्यमानस्तद्बुद्ध्यनुसारेण तद्गतामेव शब्दस्य वाचकतामनायासेनापादयन् व्युत्पत्तावुपायतां गन्तुमलम् । व्यवहारश्चेद् व्युत्पत्त्युपायः, कः कार्यान्विताभिधानं शब्दानामपहरेत् । न हि कार्यावगमं विना व्यवहारोऽवकल्पते इत्युक्तं **वाक्यार्थमातृकायाम्** । एवं लोके यः सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति । कार्यान्वयो हि परस्परपदार्थान्वयव्यभिचारीत्यविवक्षित्वा कार्यान्वयं परस्परपदार्थान्वयविवक्षयाऽपि लोकाः शब्दं प्रयुञ्जते । विवक्षावलेन च लक्षणया तत्परताऽपि तत्र निर्वहति । वेदे तु लक्षणानिबन्धनं किञ्चित् नास्तीति स्वाभाविककार्यपरत्वं नापहर्तुं शक्यते । एवं सिद्धपरेऽपि वाक्ये या व्युत्पत्तिः साऽपि कार्यपरतां न विहन्ति । सर्वपदानामेव हि स्वाभाविकी वृद्धव्यवहारसिद्धा कार्यपरता, लाक्षणिकी च सिद्धपरतेति । सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्येनार्थान्तरमात्रान्विताभिधानं शक्याश्रयणम् । अतश्च वेदान्तानामपि आत्मा ज्ञातव्यः इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । अथ सिद्धार्थप्रतिपत्तिपरत्वेन व्युत्पत्तेरभावात् वृद्धव्यवहारावगतायाः पदानां अन्विताभिधायिताया एवानुत्पत्तेः, कार्यपरत्वे च प्रमाणान्तरावगतात्मस्वरूपानुवादेनैव वर्णनं कर्तव्यम् । अपिच सिद्धार्थपरत्वेऽपि शब्दस्य न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्पते । तत्र हि ब्रह्मस्वरूपानुवादेनानन्दादिरूपविधिराश्रेयः । ब्रह्मस्वरूपं च प्रमाणान्तरसिद्धमेवाश्रयणीयम् । ब्रह्मशब्दस्य च लोके प्रमाणान्तरसिद्धात्मवाचित्वेन सिद्धेः वेदेऽपि स एवार्थः । तथा च सति नित्यप्रकाशपरमानन्दरूपविधिः सकलप्रतिपत्तिविरुद्धः । सर्वप्रतिपत्तिषु

हि प्रमाणस्मृतिभूतास्वात्मा प्रकाशते । न च तत्र परमानन्दः संवेद्यते । न च सांसारिकदुःखाभिभूतत्वात्तस्याप्रकाशः, अभिभवानुपपत्तेः । अवच्छिन्नं हि दुःखमनवच्छिन्नश्चानन्द इति नाल्पीयसा महतोऽभिभवः संभवति । स्वप्रकाशस्य च अभिभवावरणानभिव्यक्तीनामसंभव एव । अभिन्नात्मतत्त्वप्रतिपादनमपि प्रमाणान्तरविरुद्धमेवेत्युक्तं **तत्त्वालोके** । सकलविकारशून्यता अपि विज्ञानादिविकारोत्पत्तेः प्रमाणान्तरविरुद्धैवेति परस्परान्वयायोग्यतया नानन्दादिपरत्वम् । अजरामरत्वयोस्तु प्रमाणान्तरप्रसिद्धेरेवानुवादत्वादप्रामाण्यमिति ।

**नन्वशास्त्रमपि** शाब्दमस्ति लौकिकम् । तत्किमिति न लक्षितम् । **उच्यते** । न शास्त्रव्यतिरिक्तं शाब्दमस्ति, शब्दाद्धि यद्विज्ञानमसंनिकृष्टे तच्छास्त्रं स्यात् । न च वेदव्यतिरेकेण तत्संभवति । लौकिकं हि वाक्यं नार्थे स्वयं निश्चयमापादयति, लौकिकवचसामनृतभूयिष्ठत्वादर्थव्यभिचारस्य शङ्कितत्वात् ।

**नन्वेवमपि** वैदिकमपि वचो नार्थनिश्चायकं स्यात् शब्दोत्थापितस्य अर्थज्ञानस्य लोकेऽर्थव्यभिचारित्वात् । अथोच्येत वैदिकाद्वचनात् स्वतस्तावन्निश्चयो जायते । पश्चात्तनस्तु संशयस्तद्विरोधादात्मानं न लभते । यथा स्थाणौ समीपवर्तिनि स्थाणुरूपतया निश्चिते न पुनरूर्ध्वता स्थाणुपुरुषसंशयं प्रसूते । उपलब्धौ ह्यव्यवस्थितायां संदेहो जायते । यदा च निश्चितोऽर्थस्तदोपलब्धिर्व्यवस्थितेति संशयो न युक्तः । न चाव्यभिचारनिश्चयपूर्वकं शब्दस्य निश्चायकत्वं येन व्यभिचारे निश्चयो न स्यात् । किन्तु स्वभावत इन्द्रियवच्छब्दो निश्चयहेतुरिति । **तन्न** । शब्दजनितं निश्चयमेवोभयथा दृष्ट्वा यः संशयः स निश्चयेनैव न शक्यते निरोद्धुम् । वाक्यहेत्वन्तरो हि संशयो निश्चयेन विरुध्यते । यः पुनस्तत्प्रभव एव नासौ तेन निरुध्यते ।

**उच्यते** । युक्तस्तावत् लौकिके वचसि संदेहः । पुरुषा हि प्रायेणानन्वितान्येव पदानि आशयदोषेण वा भ्रमेण वा प्रमादेन वा अशक्त्या वा प्रयुञ्जाना दृश्यन्ते । ततश्च यद्यपि तदुक्तानां पदानामन्विताभिधानसामर्थ्यमस्ति तथाप्यनन्वितार्थत्वशङ्कया नान्वयो निश्चीयते । कथं तर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः ? **उच्यते** । अर्थसंशयेनापि लोको व्यवहरति । संदिग्धायामपि वृष्टौ वृष्ट्यायत्तफले कर्मणि प्रवर्तते । अथवा अस्त्येव निश्चयोपायः । यो हि पुरुषो एवमवधारितो नायमशक्तो न प्रमादी संभवदेतदर्थविषयप्रमाणः सकलाशयदोषरहितश्च नायमविज्ञायार्थमन्वितार्थानि प्रयुङ्क्ते इति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानं तावदनुमीयते । अन्वयज्ञानाच्चान्वयोऽप्यनुमीयते । ज्ञानं हि ज्ञेयाविनाभावि ज्ञेयानुमाने भवत्येव लिङ्गम् । तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते । ततोऽर्थं निश्चित्य व्यवहारः प्रवर्तते । एवं च निश्चितेऽन्वये निवृत्तानन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते । किन्तु तस्यां दशायामनुवादकतैव । अत एव लौकिके वचने न शाब्दं प्रमाणम् । अभिप्राये शब्दो लिङ्गम् । अभिप्रायोऽप्यर्थे लिङ्गम् । शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यनुवादकत्वान्न प्रमाणम् । **ननु** अशक्तप्रमादिभ्रान्तदुष्टाशयप्रयुक्तानां पदानां अनन्वितार्थत्वदर्शनाद्या पुरुषान्तरवचनेष्वनन्वितार्थत्वाशङ्का जायते तन्निवृत्तिमात्र एव पुरुषस्य वक्तुः शक्तत्वाप्रमादित्वाऽभ्रान्तत्वशुद्धाशयत्वज्ञानं व्याप्रियताम् । अर्थनिश्चयस्तु वाक्यादेवापास्तसंदेहादस्तु । मा भूत् वक्तृज्ञानादनुमितादर्थनिश्चये जाते वाक्यस्यानुवादकत्वमिति । **उच्यते** । अभ्रान्तत्वं नाम पुरुषस्य यथार्थज्ञानयोगित्वम् । आशयदोषविरहश्च यथाविदितार्थविवक्षायोगः । शक्तत्वं च यथाविवक्षितपदप्रयोगसमर्थत्वम् । शक्तस्यापि यथाविवक्षिताविक्षेपश्चाप्रमादो यस्यैतच्चतुष्टयमस्ति स प्रत्ययितः । तस्यैतदत्रगतम् । सम्यग्ज्ञाननियतोऽस्य वाक्यप्रयोग इति । तेन तदीयवाक्यश्रवणे तद्गतसम्यग्ज्ञाननिश्चयो जायते एव । समीचीनं चेदं ज्ञानमुत्पद्यते यदर्थाविसंवादि यस्य यथाप्रतीयमानोऽर्थोऽस्ति तेन समीचीनज्ञाननिश्चयोऽन्तर्भावितार्थनिश्चय एवेति न संशयनिवारणमात्रे पुरुषविशेषविज्ञानं व्याप्रियते किंत्वर्थनिश्चय एवेति निश्चितेऽर्थे निवृत्ते च संशये वाक्यार्थनिश्चयं कुर्वदप्यनुवादकत्वान्न प्रमाणम् ।



**ननु** तर्हि वक्तृज्ञानस्यान्यतोऽनवगतस्य अवगमकं पौरुषेयं वाक्यं तत्रैव शाब्दं प्रमाणमस्तु । **न**, तत्रानुमानत्वात् । वक्तृज्ञाने हि निश्चितसंबन्धं प्रत्ययितवचनम् । वक्ता तु धर्मी । ज्ञानविशेषयोगिवाक्यप्रयोगिते तस्यैकदेशाविति । अत एव च भगवान् काश्यपो वेदान् पौरुषेयान् मन्यमानः शब्दमनुमानेऽन्तर्भूतमुवाच तस्येदं कारणं कार्यमिति लैङ्गिकमुक्त्वा एतेनैव शाब्दमप्युक्तमिति । वक्तृज्ञानं हि कारणं वाक्यं च कार्यम् । अत एवान्येनाप्युक्तम् । वक्तुरभिप्रायं तु सूचयेयुरिति । स एव तथा प्रतिपाद्यमानतया आश्रय इति । **ननु** यदि वाक्याद्वक्तृज्ञानानुमानं वक्तृज्ञानाच्चार्थानुमानं तर्ह्यनवगतेऽर्थे कथं ज्ञानविशेषोऽनुमातुं शक्यः । अर्थेनैव निराकारस्य ज्ञानस्य विशेषो न चानिर्ज्ञातोऽर्थो ज्ञाने विशेषमापादयति । **उच्यते** । अनवगतेऽप्यर्थे ज्ञानविशेषोऽनुमातुं शक्यत एव । यादृशार्थप्रतिपादनयोग्यानि पदानि प्रयुक्तानि तादृशार्थविषयं ज्ञानमनुमीयते । **नन्वेवं** वेदस्य प्रामाण्यमपास्तम् । व्युत्पत्त्यपेक्षो हि वेदे शब्दात् अर्थावगमो वृद्धव्यवहारे च व्युत्पत्तिः । वृद्धवाक्यानि चेल्लिङ्गभूतानि न तर्हि स्वार्थे प्रमाणतया व्युत्पन्नानि । **उच्यते** । यावद्धि पदानां अर्थविशेषवाचकत्वं नाश्रीयते तावत् वक्तृज्ञानविशेषोऽपि नानुमीयते । विशिष्टात् हि वाक्यात् विशिष्टं ज्ञानं अनुमातव्यम् । न च अर्थविशेषप्रतिपादकत्वात् अन्यो वाक्यस्य विशेषोऽस्ति इत्याश्रयणीयं अर्थविशेषप्रतिपादनसामर्थ्यमेतेषाम् । अर्थप्रतिपादनसामर्थ्यावधारणमेव च व्युत्पत्तिस्तावतैवार्थप्रतीतिः । अनुवादकत्वेऽपि च शब्दानामस्त्येव प्रतिपादकत्वम् । वेदे च व्युत्पत्तिवशेनार्थप्रतिपत्तौ जातायां प्रामाण्यमुपपद्यते एव । **ननु** वेदेऽपि शङ्कया भवितव्यमित्युक्तम् । सत्यमुक्तम्, अयुक्तं तत् । न तावदन्वयनिश्चयानुपपत्तिः वेदे संभवति । अशक्त्यादिकर्तृदोषवशेन ह्यनन्वितार्थपदप्रयोगो लोके दृष्टः । न च वेदे कर्ता पुरुषोऽस्ति । तेन तदाश्रितास्तावद्दोषा अनन्वितार्थपदवचने हेतवो वेदे शङ्कामपि नावतारयन्तीत्यर्थनिश्चयस्तावज्जायते । **न च** पौरुषेयवाक्यजन्यनिश्चयस्य व्यभिचारात् वैदिकेऽपि निश्चये व्यभिचारशङ्का उचिता, शङ्काया दर्शनमूलत्वात् । यथाभूते हि यद् दृष्टं तत् तथाभूते एव पुनः शङ्कामवतारयति । अपि च लौकिकस्यापि तत्र व्यभिचारो नास्ति । प्रत्ययितवचनाद्ध्यप्रत्ययितवचनमपि भेदेन न पतिपद्यमानः प्रत्ययितवचने दृष्टज्ञानपूर्वकत्वं स्मरन् तच्च स्मरणं ग्रहणाद्विवेकेनानवबुद्ध्यमानो ग्रहणव्यवहारं प्रवर्तयति । तत्र न कश्चिद्विचारः ।

**ननु** च पदसंघातात्मकतया वेदा अपि पौरुषेया एव । पदसंघाता हि पौरुषेया एव दृश्यन्ते, भारतादिवत् । तथा च काठकादिसमाख्याऽपि वेदे प्रवर्तते । न चेयं प्रवचननिमित्ता समाख्येति कल्पयितुं युक्तम् । साधारणत्वात् प्रवचनस्य । बहवो हि प्रब्रूयुः । कर्ता पुनः असाधारणो भवति । कृतस्य करणायोगात् । असाधारण्येन व्यपदेशा भवन्ति । यथा वैयासिकी भारतसंहितेति । अतः पौरुषेयत्वेन वेदानां तदर्थस्य प्रमाणान्तरविषयत्वात्तद्विषये वक्तुः प्रमाणाभावादनन्वितार्थत्वाशङ्का तत्पदेषु भवन्ती केन वार्यते ।

**उच्यते** । पुरुषकृतत्वं तावद्वेदानां साक्षाद्भारतादिवन्न स्मर्यते । समाख्या तु पौरुषेयी प्रमाणान्तरानुसारिणी न शक्नोति स्वयमर्थव्यवस्थां कर्तुम् । यदि विचारयन्तः कृतकतामेव निर्णेष्यामस्ततः करणनिबन्धना समाख्या भविष्यति । अथ तु यत्नेनान्विष्यन्तोऽपि पौरुषेयतां नोपलप्स्यामहे ततः प्रवचननिबन्धनेति वक्ष्यामः । तदपि ह्यसाधारणं स्यात् । प्रकृष्टं हि वचनं कस्यचिदेव कुत्रचिदेव तावत्संघातात्मकत्वं न पौरुषेयतामनुमापयितुं अलम् । वेदार्थविषयवाक्यविरचनासामर्थ्यानुपपत्तेः । परस्परसंहतार्थतया तावद्वेदा उन्मत्तप्रणीता इति न शक्यते वक्तुम् । उन्मत्तप्रणीतस्य चेयतो ग्रन्थराशेः प्रथममध्ययनं कथं प्रवर्तते । के हि सचेतसः उन्मत्तोक्तमेतावन्तं ग्रन्थराशिं महता क्लेशेनाधीयीरन् धारयेयुरध्यापयेयुश्च । **न च** बुद्धादिग्रन्थवत् बुद्धिपूर्वकारिणा प्रोत्साहिता महत्यप्यायासे प्रवर्तेरन्, नातो बुद्धिपूर्वकारिप्रणीता वेदा इति वाच्यम् । न हि बुद्धिपूर्वकारी वेदान् रचयितुमलम् । तदर्थस्य बुद्धा-

वारोपयितुमशक्यत्वात् । प्रमाणान्तराविषयो हि अपूर्वात्मा वेदार्थः स प्राग्वेदवचनेभ्यो बुद्धिस्थतामापादयितुमशक्यः । ननु बुद्धादिवचनान्यप्येवमेव अपौरुषेयाणि स्युः । न । तेषां साध्यसाधनभावमात्रपरत्वात् । साध्यसाधनभावस्य कल्पयित्वाऽपि बुद्धावारोपयितुं शक्यत्वात् । ज्योतिष्टोमादिषु दृष्टं स्वर्गसाधनत्वं चत्यवन्दनादावारोपयितुं शक्यते । अपूर्वे त्वपूर्वत्वादेवारोपेणापि नावतरति । अथ कथं तुल्येऽपि लिङादिप्रयोगे बुद्धादिवचनानि साध्यसाधनभावमात्रपराणि न वेदवाक्यानि । उच्यते । बुद्धादिवचनानि तावत् साक्षात् दृष्टकर्तृपुरुषाणि । तेन यदेव पुरुषाः प्रमाणान्तरेण बुद्धिस्थीकर्तुमीशते तद्विवक्षाप्रयुक्तान्येवेति निश्चीयते । पुरुषाश्च नापूर्वं बुद्धौ निवेशयितुमलम् । साध्यसाधनभावं त्वन्यत्र दृष्टं बुद्धिस्थीकृत्य विरचयितुं क्षमन्ते । वेदेषु तु साक्षात्कर्ता नोपलब्धः । तेन स्वमहिमानुसारेण तावदर्थो बोद्धव्यः । स चापूर्वात्मकः प्रतीयते । प्रतीते च तस्मिन् शक्तता तद्विषयवाक्यरचने बुद्धिपूर्वकारिणामिति पौरुषेयत्वं नानुमीयते । ये एव हि पदसंघाताः पौरुषेयैर्विचारयितुं शक्यन्ते तत्रैव पौरुषेयत्वं दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमानं न क्रमते । न च पौरुषेयत्वं विना पदसंघातात्मकतैव नोपपद्यते । उच्चारणवशेन हि पदानि संहततामापद्यन्ते । तच्चोच्चारणान्तरपूर्वकं वा स्यात् स्वबुद्धिप्रभवं वा, दृश्यते ह्यन्येनापि प्रयुक्तमन्येनाधीयमानं भारतादिवत् यथाऽद्यतनाः पुरुषा भारतादिकमुच्चारणान्तरमधीयते तथा वेदानपि सर्वपुरुषा एवेति किमनुपपन्नम् । अतः सिद्धमपौरुषेया इति । अपौरुषेयाश्चेन्नास्ति प्रमाणान्तरापेक्षा प्रत्यक्षवत् । अतः प्रमाणमनपेक्षत्वादित्युक्तम् ।

**ननु** 'चित्रया यजेत पशुकामः' इत्यादिचोदनाः पश्वादिफलानुबद्धस्वार्थं बोधयन्ति । न च कर्मानन्तरं फलमुपलभ्यते । न च कालान्तरे फलं भविष्यतीति शक्यम् । कर्माभावात् । अतः प्रमाणान्तरबाधादप्रमाणं शास्त्रम् ।

उच्यते । न तावच्छास्त्रेणानन्तरभावितया फलं श्राव्यते येनानन्तरफलादर्शनेन बाधः स्यात् । न च कालान्तरे कर्माभावात् फलोत्पादासंभवः । कालान्तरावस्थायिनोऽपूर्वादेव फलोत्पत्त्यवगमात् । न च कालान्तरे प्रतिग्रहादिकारणान्तरदर्शनमपूर्वस्य फलसाधनतां बाधते । कामं प्रमाणद्वयसमर्पितं उभयं फलसाधनमस्तु । शास्त्रेण अपूर्वं फलसाधनमवबोधितम् । प्रत्यक्षादिभिः प्रतिग्रहादिकमिति । न च कालान्तरभाविनि फले कर्तुर्भोक्तृत्वमनुपपन्नम् । नित्यत्वात् । बुद्धीन्द्रियशरीरेभ्यो हि भिन्नः पुरुषः कर्मणां कर्ता स च नित्यतया कालान्तरभावीन्यपि फलानि भोक्तुमलमिति न प्रमाणान्तरबाधादपि शास्त्रस्य प्रामाण्यमाक्षेप्तुं शक्यम् ।

अत्रापि शिष्टिः शास्त्रमिति ज्ञानं शास्त्रम् । शिष्यते अनेनेति तु शब्दः, स च द्विविधः प्रत्यक्षोऽनुमेयश्च । किं पुनः शब्दानुमाने लिङ्गम् ? 'अष्टकाः कर्तव्याः' इति वचनम् । कथम् ? इयं तावत्स्मृतिस्त्रैवर्णिकैरवाविगानेन परिगृहीता । न च निर्मूलायाः परिग्रह उपपद्यते । मूलं च न प्रत्यक्षादि संभवति । तस्य कार्यत्वविषयत्वाभावात् । स्मृतौ चापूर्वकार्यावगमात् शास्त्रं संभवति मूलम् । ननु च तदपि मूलं नावकल्पते । प्रयत्नेनापि आलोच्यमानस्य अनुपलम्भात् ! न चानुपलब्धः शब्दोऽर्थमवबोधयति । न च अर्थमनवगमयन्मूलं भवितुमर्हति । उच्यते । सत्यम् । वयमिव मन्वादयोऽपि तच्छास्त्रं प्रत्यक्षं नोपलभन्ते । अनुमानं तु तेषामप्यस्माकमिव संभवति । स्मृत्यन्तरं हि महाजनपरिगृहीतं दृष्ट्वा तेऽपि तत्कर्तुः स्मृत्यन्तरानुमितं शास्त्रं मूलभूतमनुमातुं शक्नुवन्ति, एवमनादित्वात्स्मृतिपरम्पराया लिङ्गभूतायाः संभवात् नानुमानविघातः । शब्दार्थसंबन्धवत् । यथाहि वृद्धव्यवहारदर्शनेन प्रयोज्यवृद्धस्यार्थप्रतिपत्तिं प्रकल्प्य तस्याश्च शब्दश्रवणानन्तरभावित्वेन शब्दस्य तत्कारणतां प्रतीत्य कथं पुनर्ममाप्रतिपादकः शब्दः अस्य अर्थप्रतिपादक इति च वितर्क्य पुनः स्वयं ततः शब्दादर्थमवगम्य प्रतिपादकत्वेनावगतः शब्दोऽर्थमवबोधयतीति निश्चित्य वृद्धस्यार्थप्रतिपत्तिसामर्थ्यं कल्पयित्वा स कथमनेन वृद्धेनार्थप्रतिपादकतया शब्दोऽवधारित इति विचिन्त्य नूनमस्यापि वृद्धव्यवहारान्तरदर्शनमेव व्युत्पत्त्युपायभूतं ममेव वृद्धा-



न्तरस्यापि अपरवृद्धव्यवहारान्तरदर्शनमेवेत्यनादिवृद्धव्यवहाररूपलिङ्गपरम्परां परिकल्प्य लोको व्युत्पद्यते । तथा स्मृतिपरम्परामनादिमेव कल्पयित्वा शास्त्रानुमानमपि कुर्वन्ति । न चानुमितस्य शास्त्रस्यार्थप्रतिपादकत्वमनुपपन्नम् । लिप्यनुमितिवत् । सर्वदा च तस्याश्रवणमनाम्नातत्वात् । अनाम्नानमेव कस्मादिति चेत् । आचार्यैरनाम्नातत्वात् । तदपि कथमिति चेत् । आचार्यान्तरैरनाम्नातत्वादिति न दोषः । न च तस्याशब्दत्वम् । वर्णात्मकत्वात् । प्रत्येकं च वर्णानां श्रोत्रेन्द्रियग्राह्यत्वात् । वेदत्वं च तस्याप्यपौरुषेयं वाक्यरूपत्वात् तन्मात्रवर्तित्वाच्च वेदशब्दस्य । तस्मादनुमेयमपि शास्त्रमस्ति ।

प्रत्यक्षमपि शास्त्रं किंचिदध्याहारापेक्षं पिण्डपितृयज्ञादिशास्त्रं वैदिकशास्त्रं च । पिण्डपितृयज्ञादौ हि नियोज्यपदाश्रवणादपरिपूर्णं वाक्यम् । ननु पदानामन्विताभिधायित्वेन व्युत्पत्तेर्भवत्वेकपदप्रयोगेऽन्वितार्थान्तरापेक्षत्वात् अन्विताभिधानस्य तदसिद्धावपरिपूर्णता । अनेकपदप्रयोगे तु अन्विताभिधानस्य सिद्धत्वात् किंनिबन्धनमपरिपूर्णत्वम् । उच्यते । अत्राप्यभिहितार्थस्यानुपपत्त्या भवत्येवापरिपूर्णता । अत्रापि लिङादिभिरपूर्वं कार्यरूपमभिधीयते । न चानुष्ठानमन्तरेण कार्यरूपता निर्वहति, न च कर्तारमन्तरेणानुष्ठानोपपत्तिः । न च अधिकारं अप्रतीत्य कर्मणि कर्तृतां प्रतिपद्यन्ते । कर्मणि चाधिकारो नियोगे नियोज्यस्य अवकल्पते । यो हि ममेदं कार्यमिति प्रतिपद्यते स स्वकीयकार्यसाधनं कर्म स्वार्थतया प्रतिपद्यमानः अधिकारी स्यादिति नियोज्याश्रवणेऽपि कार्यत्वानिर्वाहादुपपन्नमपरिपूर्णत्वम् । अतो लोके अपरिपूर्णवाक्यपरिपूरकतया अवधारितोऽध्याहारो वेदेऽपि आश्रीयते । कः पुनरयमध्याहारो नाम ? अधिकत्वस्य बुद्धौ निवेशनम् । बुद्धौ संनिहिते श्रूयमाणः शब्दः स्वार्थमन्वितमभिधत्ते । तस्य तु विशेषावगतौ योग्यत्वं लाघवं च कारणम् । तथाहि । यद्यपि जीवनमन्तरङ्गं नित्यं च तथापि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं कल्पनीयं काम्ये त्वधिकारिविशेषणे तदर्थितयैव प्रधाने प्रवृत्तेर्विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या । यद्यपि चोपात्तदुरितक्षयोऽपि पुरुषैरिष्यते तथापि तस्योपात्तदुरितसत्तासापेक्षत्वाद्गौरवम् । तस्मात्सकलपुरुषाभिलषणीयं सकलदुःखसंभेदरहितं सुखं स्वर्गपदाभिधेयं नियोज्यविशेषणं कल्प्यते । कथं पुनः तादृशसुखवाचकता स्वर्गशब्दस्याऽवसीयते ? उच्यते । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादिसमाम्नायं सकलदुःखसंभेदरहिताभिलाषोपनीतदीर्घतरसुखसाधनत्वेनार्थवादैः स्तूयमानं कर्म दृश्यते । स्वर्गशब्दोऽपि लोके कस्मिंश्चिदर्थे श्रौत्या वृत्त्या प्रयुज्यमानो दृश्यते । योऽप्यस्य चन्दनादौ प्रयोगः सोऽपि प्रीत्यपगमे तत्रैवाप्रयोगात् प्रीतिसाधनवाचकत्वकल्पनेऽपि प्रीतेरपि वाच्यत्वाश्रवणात् प्रीतिमात्रवाचकस्य तत्साधने लक्षणया अपि प्रयोगोपपत्तेर्लाक्षणिक एव । तत्र यदि विध्युद्देशगतः स्वर्गशब्दः तथा सुखे वर्तते ततोऽर्थवादानां मुख्यैव वृत्तिः स्तुतावपि स्यादिति तादृशसुखवाचकता स्वर्गपदस्याश्रीयते, चन्दनादिष्वपि यो लाक्षणिकः प्रयोगः, सोऽपि प्रशंसार्थः सुतरां ततः तद्विधसुखसाधनत्वापादने नैवोपपद्यते । तथा च यावत्तावत्सुखसाधने स्वर्गशब्दं न प्रयुञ्जते किन्तु सातिशयप्रीतिजनके । स्वर्गपदाभिधेयसुखसंभवे चोक्तेन न्यायेनाम्नाय एव प्रमाणं तदन्यथानुपपत्त्या च तदुपभोगयोग्यदेहदेशसद्भावोऽपि नानुपपन्नः । सामान्यतोदृष्टानुमानं तु न नियोज्यकल्पनायां प्रमाणम् । अध्यापनादौ व्यभिचारदर्शनात् । विध्यन्तरप्रयुक्त्या चानुष्ठानलाभादपरिपूर्णताऽपि नास्ति, विकृतिषु करणोपकारजनकपदार्थवर्गाणामनाम्नानात् तद्व्यतिरेकेणोपकारासंभवात् तदभावे करणस्य कार्यसाधनासमर्थत्वात् कार्यस्य कार्यत्वानिर्वाहादपरिपूर्णत्वे सति परिपूरणार्थमध्याहारः कर्तव्यः । तच्च तावत्स्वतन्त्रपदार्थाध्याहारो नोपपद्यते, विशेषावगमे कारणाभावात् । करणोपकाराध्याहारेऽपि प्रकृतिवदपरिक्लृप्ताध्याहारे पुनरपि पदार्थानां अभावे निर्वाहासंभवात् प्रकृतोपकाराध्याहारः कर्तव्यः । तत्रापि प्रकृतीनां बहुत्वात् चोदनालिङ्गसामान्यात् या बुद्धौ संनिधीयते तदीयोपकाराध्याहारो युक्तः । तदध्याहारे तथैवापरिपूर्तेः पदार्थाकाङ्क्षायां तदुपकारोपस्थापितैः

पदार्थैरन्विताभिधानम् । यद्यपि चासावुपकारः प्रकृतौ तत्पदार्थजन्यतया निर्ज्ञातः तथाप्यपूर्वप्रयुक्तत्वात् पदार्थानां प्राकृतापूर्वसंबन्धस्यैव सतस्तस्योपकारस्य ते पदार्था जनका नापूर्वान्तरसंबन्धस्येति संप्रति वैकृतापूर्वं संबन्धमुपगतः करणोपकारो न तत्पदार्थजन्यतया अवसीयते इत्यस्ति तज्जनकपदार्थापेक्षेति पूर्वप्रतीतसंबन्धेनोपकारेणोपस्थापितैः पदार्थैरन्वितो विध्यर्थः स्वशब्देन अभिधीयते । उपमानं तु प्राकृतोपकारपदार्थसंबन्धे न प्रमाणम् । सादृश्यमात्रविषयत्वात् । अतोऽध्याहारापेक्षमपि प्रत्यक्षं शास्त्रम् ।

तथा प्रत्यक्षमपि शास्त्रं वचनव्यक्त्यवधारणाय लोकप्रसिद्धन्यायापेक्षम् । यावद्धि लोकप्रसिद्धन्यायानुसारेण वचनव्यक्त्यवधारणं न क्रियते न तावत् समीचीनार्थबोधोत्पादनक्षमं शास्त्रम् । तथाहि, ' उद्भिदा यजेत पशुकामः ' इति किं गुणविधिः उत नामधेयमिति संदेहे न्यायाभासापादित–गुणविधिनिराकरणं सम्यङ्न्यायानुसारेण कृत्वा नामधेयाध्यवसानेन व्यक्तिनिर्धारणं यावन्न क्रियते तावत्समीचीनवाक्यार्थबोधो नास्तीत्यनेन मार्गेण न्यायापेक्षं शास्त्रम् । अत एव इतिकर्तव्यताभूता वेदस्य स्वार्थमवबोधयतो मीमांसा । तथा चाहुः– ' धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ।। ' इति । कियत्पुनः पदजातमेकं शास्त्रम् । न च शक्यं वक्तुं यावतां पदानामेकार्थत्वं तावदेकं शास्त्रम् । अर्थभेदे तु शास्त्रभेदो मन्त्रवत् । यथा मन्त्रेषु यावता पदजातेनैकोऽर्थः प्रतीयते तावदेकं वाक्यमित्यवगम्यते तथा शास्त्रमपीति । युक्तं मन्त्रेषु प्रमाणान्तरप्रमितार्थेषु । तत्र हि तत्त्वमन्यथात्वं वाऽर्थस्यावधारयितुं शक्यते । शास्त्रे तु प्रमाणान्तराऽप्रतीतार्थावबोधकं तदर्थस्य तत्त्वमन्यथात्वं वा शक्यते नान्यतोऽवसातुम् । उच्यते । शब्दानामर्थावच्छेदेनैव सर्वत्रैकतोपपत्तेः । पदताऽपि वर्णानामर्थावच्छेदेनैव । स त्वर्थोऽवच्छेदकः शास्त्रस्य शास्त्रादेवावगम्यते । कः पुनरसौ ? विषयः । साध्यं च । कः पुनर्विषयो नाम ? उच्यते । कार्यमेव हि विध्यर्थः कार्यं च कृतिसाध्यम् । कृतिश्च प्रयत्नः । स च सर्व एव भावार्थसंबन्धः । तेन कार्यं प्रतीयमानं कृतिविशिष्टं प्रतीयते । नान्यथा । कृतिरपि भावार्थेन विशिष्यते । तेन भावार्थः कृतिं विशिंषन् कार्यं विशिनष्टीति विषय उच्यते । यो हि येन विशिष्यते स तस्य विषयः । अतश्च यावति पदसंघ एको विषयस्तावत्येको नियोगार्थः, तदैक्याच्चैकं शास्त्रम् । तत्र नियोगाभेदस्यापि विषयाभेदोन्नेयत्वाद् विषयाभेदादेव शास्त्रमेकं व्यवस्थाप्यते तद्भेदाच्च भिन्नम् । पञ्चधा च विषयभेदोऽवसीयते । तत्र यजति जुहोति ददातीत्यभिधानभेदाद्यागादीनां भेदोऽवगम्यते । देवतोद्देशेन द्रव्यत्यागो यागः । का पुनर्देवता ? कश्चोद्देशः ? कश्च त्यागः ? उच्यते । स्तोत्रं शस्त्रं यद्गुणवचनं यदुद्देशेन च हविषां त्यागश्चोद्यते सा देवता । तत्रैव याज्ञिकवृद्धानां देवताशब्दप्रयोगात् । यत्र ह्याग्नेयादिदेशनार्थानुष्ठाने प्रवृत्तोऽग्निमुद्दिश्य हविस्त्यजति तत्रैवमाहुरिन्द्र देवतेति । उद्देशश्च चतुर्थ्यन्ततद्वाचकशब्दप्रयोगः । त्यागश्च संबन्धिनि स्वे औदासीन्यसंकल्पः । स चानभिसंहितपरस्वत्वापत्तिफलको यागः । देशविशेषगतद्रव्यप्रक्षेपोपाधिकश्च स एव होमः । अभिसंहितपरस्वत्वापत्तिफलं च दानमिति । अभिधानभेदाद्यजत्याद्यनुबन्धभेदावगमः । तथा विध्युच्चारणात् असत्यप्यभिधानभेदे भावार्थभेदोऽवगम्यते । असंनिकृष्टार्थावबोधनस्वरसं हि सर्वमेव विध्याम्नानम् । तदर्थबोधेन एवमवसीयते नूनं भिन्ना इमे धात्वर्था इति । तद्भेदे विषयभेदाद्विषयिणो भेदोपपत्तेरसंनिकृष्टावबोधस्वभावता विध्याम्नानस्य निर्वहति । नन्वेवं तर्हि पुरुषः स्वेच्छया पुनर्विधिमामनति तदापि तर्हि विषयभेदः स्यात् । न । स्वतन्त्रस्याद्युच्चारणस्य । यद्धि न पूर्वोच्चारणदर्शनपूर्वकमुच्चारणं तदपौरुषेयं स्वातन्त्र्येण परिच्छेदकम् । यत्पुनरस्वतन्त्रं तत्पौरुषेयं प्रमाणान्तरोपात्तार्थावबोधकम् । न च तत्र भेदे प्रमाणमस्तीति न भेदो विषयस्य । शाखान्तर्गतस्तर्हि विध्याम्नानाभ्यासो भेदकः स्यात् । नेत्युच्यते । अभ्यासाभावात् । यत्र ह्येक एव वक्ता पुनःपुनस्तमेव अर्थमुच्चारयति तत्राभ्यासो व्यपदिश्यते । शाखान्तरगतं विधिं पुरुषान्तरं पठतीति नाभ्यासः शक्यते वक्तुम् ।



एवमपि पुरुषान्तराम्नानमेव कस्माद्भिन्नमर्थं न प्रतिपादयति । उच्यते । एकार्थप्रतिपादकत्वेऽपि तदाम्नानस्यासंनिकृष्टार्थत्वोपपत्तेः । तस्य हि पुरुषस्य सोऽप्यर्थोऽसंनिकृष्ट एव यद्यपि पुरुषान्तरेण प्रतीतः । एकत्वं तु कथम् ? विषयैक्यात् । तदैक्यं चाभिधानैक्यात् । तथा साध्यमपि तत्रैकमेव । यद्येवं तर्हि ' य एवं विद्वान् पौर्णमासीं यजते ' इत्यत्रापि तद्भेदः स्यात् । न । अभ्यासकल्पस्य भेदस्यानिर्वाहात् । रूपभेदेन हि भेदो निर्वहति यागस्य हि द्रव्यदेवते रूपम् । ताभ्यां हि स रूप्यते । नर्ते हि ताभ्यां स भवतीति । यद्यप्यत्र द्रव्यमविहितमपि यत्किंचिदुपादाय क्रिया सिध्यति, यद्यपि चावाचनिकमपि औवमाज्यं द्रव्यं गम्यते तथापि देवता नाविहिता भवतीति विधानमन्तरेण तद्लाभः । न च यजिरेव तदन्वितस्वार्थमाचक्षाणो देवतां विधातुमलम् । विशेषावगमे कारणाभावात् । नापि ' वार्त्रघ्नी अमावास्यायामनूच्येते ' इति मन्त्रविधानात् मान्त्रवर्णिकदेवताश्रयणं संभवति । मन्त्रविधेरभावात् । आज्यभागयोर्ह्ययं विधिद्विवचनानुरोधादिति स्थितम् । तस्मादनुवादमन्तरेण रूपालाभादनुवादोऽयमिति नाभ्यासात् कर्मभेदः । नन्वेवं तर्हि प्रकृतसर्वरूपवद्यागानुवादः किमिति न स्यात् । ततश्चानूदितानां ' दर्शपूर्णमासाभ्यां यजेत ' इत्यधिकारसंबन्धात् राजसूयवत् सर्वयजीनां प्राधान्यं स्यादङ्गत्वमाघारादीनां न सिध्येत् । उच्यते । सर्वानुवादाश्रयणे दर्शपूर्णमासाभ्यामिति द्विवचनं नोपपद्यते । सर्वसमुदायानुवादद्वयेन सर्वेषामेव दर्शशब्दवाच्यता पूर्णमासशब्दवाच्यता चावगम्यते । ततश्च दर्शाश्च पूर्णमासाश्चेति कर्मधारयोऽयं समासः । तत्र यजीनां विशेष्याणां बहुत्वात् बहुवचनं स्यान्न द्विवचनम् । अतस्तदनुरोधेन केषांचिदेव तावत् ' य एवं विद्वान् पौर्णमासीं यजते ' इत्यनुवादो न सर्वेषाम् । तथा ' य एवं विद्वानमावास्यां यजते ' इति केषांचिदेवानुवादः । तेनानुवादद्वयेन समुदायद्वयापत्तेर्द्विवचनान्तोपपदवशेन तेषामेवाधिकारसंबन्धः । तत्र केषां पूर्णमासीयुक्तोऽनुवादः केषां चामावास्यायुक्त इत्यपेक्षायां कालनिमित्तोपपदानुसारेण उत्पत्तिकालयोगिनामेवानुवादः इति निश्चयो जायते । अन्यथा विशेषाग्रहणादिति न सर्वानुवादो न सर्वेषां प्राधान्यमिति । तथा गुणान्तरयोगादप्यनुबन्धभेदोऽवगम्यते । उत्पत्तौ यत्कालानुबद्धं यत्कर्म प्रतीयते ततोऽन्येन कारकेण अनुबद्धं तन्न शक्यते अवगन्तुमित्यनुबन्धभेदादवगमः । तथा संज्ञान्तरादपि अनुबन्धभेदोऽवगम्यते । अन्याय्यं ह्येकस्यार्थस्यानेकशब्दत्वमिति भेदस्तावत् औत्सर्गिकः । यत्र तु बलीयसा प्रमाणेनानेकशब्दत्वमपि गम्यते भवति तत्रैक्यम् । तथा विधानान्तरादपि कर्मान्यत्वावगमः । विधानान्तरं च संनिहिते कर्मण्यनेकगुणसंयुक्तकर्मग्रहणात् । तत्र हि गुणविधिस्तावन्न संभवत्यनेकगुणश्रवणादनेकगुणविधाने वाक्यभेदप्रसङ्गात् । गुणविशिष्टकर्मविधौ तु तस्यैवैकस्य विधानात् एकवाक्यत्वनिर्वाहात् कर्मैव विधेयम् । विधीयते चेत्ततः प्रकृतादन्यत्वम् । तथाऽसंनिधानादप्यप्रत्यभिज्ञानात् कर्मविधानावगमाद्भेदावगमः । प्रकरणान्तरमपि कर्मणः प्रक्रियान्तरं विधानान्तरमेव । संख्या तु भावार्थमात्रभेदे प्रभवति न विषयभेदे । यथा ' सप्तदश प्राजापत्यान् ' इति प्राजापत्यप्रातिपदिकोपात्तानां द्रव्यदेवतासंबन्धानां नियोगविषयत्वम् । ते च सकृदेवाभिहिताः सकृदेव संबध्यन्ते ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इतिवदिति न भेदेन विषयभावं भजन्ते । साध्यभेदादपि शास्त्रभेदोऽवसीयते । यथा ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति च । नहि यावज्जीवचोदना कामाधिकारे कालविधानार्था । लक्षणाप्रसङ्गात् । यावज्जीवनलक्षितो हि काले विधेयः । किंच जीवनकाल एव नियोगस्य प्राप्तत्वात् यावदर्थसंबन्धेन विधेयत्वम् । तावांश्च कालो नानभ्यस्तेन प्रयोगेण शक्यते व्याप्तुमिति यजेतेत्यपि यागमभ्यसेदिति वर्णयितव्यम् । ततश्चाभ्यासलक्षणाऽप्यपरेति जीवतोऽधिकारान्तरमेतदाश्रयणीयम् । जीवने ह्यधिकारिविशेषणे सति जीवतो अवश्यं यागेन भवितव्यमिति सिद्धा यागेन जीवनव्याप्तिरभिधीयते यावज्जीवमिति । ततश्च नियोज्यभेदान्नियोगस्यापि भेदः अवश्यंभावि । तद्भेदाच्च शास्त्रभेद एव । नियोज्यो हि स्वसंबन्धितया ममेदं कार्यमिति

नियोगमवबुध्यते, तेन स्वकृतिसाध्यमपूर्वं प्रतिपद्यते। कृतिभेदेन च कार्यस्यापि भेदः। तेन नियोज्यः कृतिं भिन्दन् कार्यमपि भिनत्ति। अतो नियोगभेदस्यापि शास्त्रभेदहेतोर्नियोज्यभेदोन्नेयत्वात् तत्तद्भेदेनैव शास्त्रभेदो व्यपदिश्यते। नियोज्यभेदेनावश्यं साध्यभूतस्यैश्वर्यलक्षणस्याधिकारस्य भेद इति साध्यभेदोपलक्षणीयोऽयं शास्त्रभेदः। साध्यभेदेन चानुबन्धभेदभिन्नानामप्यङ्गप्रधानोत्पत्तिशास्त्राणां अधिकारशास्त्रावस्थायां भेदः। एकस्याधिकारिनियोगस्य तावतां प्रतिपाद्यत्वादिति।

एतच्च शास्त्राख्यं प्रमाणमनुमानतः स्पष्टभेदमेव। न ह्यत्र गम्येन अर्थेन गमकशब्दस्य संबन्धनियमोऽवगतो नापि गम्यस्यार्थस्य किंचित् प्रत्येकदेशत्वं नापि च गमकस्येति सामग्रीभेदादनुमानाऽऽशङ्काऽपि नास्ति। किं पुनरत्र निवर्तितम्? उच्यते। अर्थग्रहणेनाभिधेयवचनेन लौकिकवक्तुरभिप्रायज्ञानं अशास्त्रम्। असंनिकृष्टग्रहणेन पौरुषेयवाक्याभिधेयस्यार्थस्य वक्त्रभिप्रायनिश्चयपुरःसरं यद्विज्ञानं तन्न शास्त्रमिति दर्शितम्। तथा वेदेऽप्यर्थवादानां न स्वतन्त्राणां शास्त्रत्वं किन्त्वर्थवादतया विध्यर्थवादतया विध्यन्तरानुप्रवेशेनेति। शब्दग्रहणेनैवार्थस्याशास्त्रत्वमुक्तम्। यथा प्रकृतौ 'वाससि मिनोति वाससा चोपावहरति' इति यस्मिन्नेव वाससि सोमो मीयते तेनैव तेनैव वाससोपावह्रियते इति। एकत्वात्कर्मणोऽचोदितमपि तदर्थात्संपन्नम्। अहर्गणे तु पृथक्त्वात् सोमस्य एकस्मिन्नपि वाससि नानाभूतस्यापि प्रमातुं शक्यत्वात्। उपावहरणं तु पुटीकृत्य वाससा नयनं तदेकेन न शक्यमिति मानवाससोऽन्यत्तदर्थमुपादीयते। एकत्वं तु वाससः प्रकृतौ आर्थं न शास्त्रार्थं इति न चोदकेन व्याप्यते इति तत्र वासस एकत्वज्ञानं न शास्त्रमिति। विज्ञानादिति न्यायाभासाद्वाक्यस्य वचनव्यक्तिमवधार्य यत्तदर्थज्ञानं तन्न शास्त्रमिति प्रकटितम्। नहि तच्छब्दविज्ञानाद्यादृशं तत्सम्यङ्न्यायावधार्यवचनव्यक्तिकं शास्त्रं तादृशमविज्ञाय तद्ज्ञानमिति न शास्त्रम्।

इति **प्रमाणपारायणे** शब्दपरिच्छेदः॥ **प्र. पञ्चिका. पृ. ८७-११०.**

*** शब्दपरिच्छेदः।** 'शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानं' इति (भाष्यम्)। विज्ञातात् शब्दात् पदार्थाभिधानद्वारेण यत् वाक्यार्थविज्ञानं तत् शाब्दं नाम प्रमाणम्। तत् लोकसिद्धत्वात् न परीक्षितव्यम्। तच्च द्विविधम्, पौरुषेयं अपौरुषेयं चेति। तत्र पौरुषेयं आप्तवाक्यम्। अपौरुषेयं च वेदवाक्यम्। उभयमपि अनाप्तप्रणीतत्वदोषविरहात् स्वतश्च शब्दस्य अदुष्टत्वात् प्रमाणम्। तच्च पुनर्द्विविधम्, सिद्धार्थं विधायकं चेति। विधायकमपि द्विविधम्, उपदेशकं अतिदेशकं चेति। 'इत्थमिदं कर्तव्यम्' इत्युपदेशः। यथा लोके 'दधिघृतसूपशाल्यादिभिर्देवदत्तो भोजयितव्यः' इति। वेदे अपि 'प्रयाजावघातादिप्रकारेण दर्शपूर्णमासाभ्यां स्वर्गं कुर्यात्' इति। 'तद्वदिदं कर्तव्यम्' इत्यतिदेशः। यथा लोके 'देवदत्तवत् यज्ञदत्तो भोजयितव्यः' इति। वेदेऽपि 'सौर्येण कुर्यात् यथा आग्नेयेन' इति। शब्दान्तरादिभिः श्रुतिलिङ्गादिभिः श्रुत्यर्थादिभिश्च विचित्रोऽयमुपदेशः भेद-विनियोग-क्रमान् अवबोधयति। वचन-नामधेय-चोदना-लिङ्गैश्चातिदेशः, अन्यत्र विहितस्य नानापदार्थविशिष्टस्य प्रकारस्य तत्प्रतिपादकस्य वा शास्त्रस्य विध्यन्तापरनामधेयस्य अन्येन संबन्धं विकारं बाधं वा बोधयति इत्यूहनीयम्। असंनिकृष्टग्रहणं च पूर्ववत् तादूप्य-तद्विपर्ययपरिच्छेदनिरासार्थम्। एकदेशिनां तु (प्राभाकराणां) तत् अनर्थकमेव स्यात्। विपरीतपरिच्छिन्ने तावत् नास्त्येव शब्दात् ज्ञानम्। यदि स्यात् पुरुषदोषाणां शब्दे संक्रान्त्यनभ्युपगमात् स्वाभाविकमेव शब्दस्य अप्रामाण्यं स्यात् इति वेदाप्रामाण्यं स्यात्। यदि परं तद्रूपपरिच्छिन्नविषयस्य अनुवादस्य निरासः स्यात्, तच्चायुक्तम्। तस्यापि शास्त्रत्वात्। नहि तस्यापि अप्रामाण्यम्, अनुभूतित्वात्। प्रत्यक्षाद्यन्तर्भावाभावाच्च शास्त्रत्वमेव इत्यास्तां तावत्।

इदं च शाब्दं 'अस्येदं कारणं कार्यं संबन्धि एकार्थसमवायि विरोधि चेति लैङ्गिकं' ('अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकं' इति पाठः वैशे. सूत्रपाठे ९।२।१) इत्युमानलक्षणं अभि-



धाय 'एतेनैव शाब्दं व्याख्यातम्' (एवकारो नास्ति वैशे. सूत्रपाठे ९।२।३) इति वदन्तः काश्यपीयाः, 'प्रत्यक्षमनुमानं च द्वे एव प्रमाणे' इति ब्रुवाणाः सौगताश्च अनुमानादभिन्नं इति मन्यन्ते। तत्र यत्तावत् पदार्थज्ञानं तत् अवगतार्थविषयत्वात् प्रमाणमेव न भवति इति किं तस्य भेदाभेदपरीक्षया। यत्तु वाक्यार्थज्ञानं तत् अगृहीतसंबन्धैरेव पदार्थैः उपजायमानं नानुमानशङ्कामर्हति। नहि सर्वैः वाक्यार्थविशेषैः संबन्धग्रहणमस्ति। न च संभवति अनन्तैः संबन्धग्रहणम्। अत्यन्तापूर्वोऽपि वाक्यार्थविशेषः पदार्थैरवगम्यते दूरदेशवार्तासु इति सर्वजनीनमेतत्।

यत्तु आप्तवाक्यत्वात् अविसंवादानुमानं तत् वाक्यार्थावगमोत्तरकालत्वात् न तस्य अनुमानत्वमापादयति। वाक्यश्रवणानन्तरमेव हि आप्तानाप्तज्ञानानपेक्षैरेव पदार्थैः वाक्यार्थोऽवगम्यते। अत्यन्तादृष्टपुरुषप्रणीतेऽपि वाक्ये अवगते तु वाक्यार्थे सत्यासत्यत्वसंशये प्रणेतुः आप्तत्वावगमे सति सत्यत्वं अनुमीयमानं न वाक्यार्थावगतेः आप्तत्वावधारणानपेक्षजन्मनः अनुमानत्वं आपादयति। तस्मात् प्रमाणान्तरमेव लोके शाब्दं इत्यपौरुषेयस्यापि वेदस्य सिद्धं प्रामाण्यम्। एकदेशिनां तु लोकवचसामनुमानत्वमङ्गीकुर्वतां यथा वेदप्रामाण्यं न सिध्यति तथोक्तम्। **शा. १।१।५ पृ. ७२-७३.**

*** शब्दपृथक्त्वाच्च।** २।१।५।२५॥ द्वादशशब्देन स्तोत्राणां शस्त्राणां च पृथक्त्वेन अभिधानात् इत्येवं तृतीयासमासत्वेन सूत्रव्याख्या। शब्देन कृतात् पृथक्त्वात् इति च तत्कृतार्थतृतीयासमासः। **सु. पृ. ६६३.**

*** शब्दप्रमाणं** 'पदार्थास्तत्स्मृतिर्वा स्यात्' इति। **शा. १।२।१ पृ. ८।** पदोपस्थापितपदार्था वा पदजन्यपदार्थज्ञानं वा शब्दप्रमाणमित्यर्थः। **सोम. १।२।१ पृ. ८.**

*** शब्दप्रमाणकाश्च** वयं ईदृशेष्वर्थेषु। **भा. ६।२।२।६,** * शब्दप्रमाणकाः वयम्। १०।५।२१।७३, * शब्दप्रमाणका वयम्। यच्छब्द आह तत् अस्माकं प्रमाणम्। ३।२।१४।३६. * शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह नापशब्दज्ञाने अधर्मम्। यच्च पुनः अशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति, नाभ्युदयाय। तद्यथा— 'हिक्कित-हसित-कण्डूयितानि नैव तद्दोषाय भवन्ति नाभ्युदयाय' (व्या. महाभाष्यं पस्पशायाम्)। **सु. पृ. ३२५.** * न **शब्दप्रमाणकानां** अन्तरेण शब्दं अवगतिर्न्याय्या। **भा. ६।१।१।३.**

* **शब्दप्रयोगः** निरालम्बनो न युक्तः। **सु. पृ. १०.**
* शब्दप्रयोगः व्यवहारार्थः। **भा. ७।३।१४।३५.**

* **शब्दप्रयोगरूपस्य** आचारस्य आर्यम्लेच्छयोस्तुल्यत्वम्। **सु. पृ. ९०९.**

* **शब्दप्रवृत्तिः** सर्वैव असंभवाद्विप्रकर्षं प्रतिपद्यते, नास्मदिच्छामात्रेण। **वा. ३।१।७।१४ पृ. ७२२,** * **शब्दप्रवृत्तेर्नित्याया** एव नित्यः संबन्धो निमित्तं इति सर्वयौगिकानामेवमन्वाख्यानम्। ३।३।६।१३.

* **शब्दप्रवृत्तिनिमित्तम्।** न च एकस्मिन् निमित्ते सिद्धे निमित्तान्तरं कल्पयितुं शक्यम्। विनापि तत्कल्पनेन प्रयोगोपपत्तेः। यत्तु धर्मशास्त्रातिक्रमेण क्रियते न तस्य निमित्तत्वं स्यात्। **वा. २।३।२।३ पृ. ५८२.**

* **शब्दबुद्धिकर्मणां** अनावृत्तानां विरम्य व्यापारानुपपत्तिः। **कणिका. पृ. २२.** * 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति न्यायेन एक एव चोदकस्य व्यापारः। **वि. १०।७।९.**

* '**शब्दब्रह्मेति** यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥' **वा. ३।१।७।१३ पृ. ७०३.**

* '**शब्दब्रह्मात्मनोऽप्येवं** सर्ववेदानुसारिणः। विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः॥' **वा. ३।१।७।१३ पृ. ७०३.**

* **शब्दब्रह्मवादिनः** 'अनादिनिधनं ब्रह्म शब्दतत्त्वं व्यवस्थितम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥' (वाक्यपदीयं) इति वदन्ति। **सु. पृ. १०११,** * **शब्दब्रह्मवादिनामपि** मते चेतनाचेतनयोर्ब्रह्मशब्दयोः तादात्म्यानुपपत्तेः शब्दो ब्रह्माधिष्ठानं इति,

शब्दात्मकानामपि वेदानां देहता ब्रह्माख्यस्य च परमात्मनः देहाधिष्ठातृता इत्येव । पृ. १०१०.

* **शब्दभेदात्** भावनाभेदः, तेन कर्मभेदः । यजेत, ददाति, जुहोति । **वि.** २।२।१.

* **शब्दमात्रस्य** देवतात्वं निरस्तम् । **मीको.** पृ. २१४० 'देवतात्वं शब्दमात्रस्य निरस्तम्' इति बिन्दौ द्रष्टव्यम् । **के.**

* **शब्दरूपा** देवता । **संकर्ष.** १।३।१६.

* **शब्दलक्षणं** कर्म वेदे, लोके चार्थलक्षणम् । **भा.** ३।१।८।१७, * **शब्दलक्षणः** धर्म इत्युक्तम् । चोदनालक्षणोऽर्थो धर्म इति । १।३।१।१, * **शब्दलक्षणे** कर्मणि शब्दाभिहितं गम्यते न लोकाभिप्रायः । १०।५।१६।५७, * शब्दलक्षणे च कर्मणि शब्दो नः प्रमाणम् । १०।५।११।४४, * शब्दलक्षणे च हि कर्मणि यत् शब्द आह तदस्माकं प्रमाणम् । ३।१।७।१३ पृ. ७०३, * शब्दलक्षणे न गुणदोषौ शक्येते अवगन्तुम् । १०।८।१।३.

* '**शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथाऽन्येषाम्** ॥' (४।१।५।१५)। ग्रहश्च एकत्वं च उभयमपि कारकीभूतं विभक्तिश्रुत्यैव भावनायां प्रक्षिप्यते इति विधीयते । तत्तु विशिष्टविधानात् । वक्ष्यति हि 'शब्दवत्तूप०' इति । **वा.** ३।१।७।१३ पृ. ७०४.

* **शब्दवृत्तयः** सर्वा अजहत्स्वार्थाः, पूर्वशक्त्यनुसारसंभवे शक्त्यन्तरत्वकल्पने प्रमाणाभावात् । **वा.** १।४।१२।२३-१ । न जहाति शब्दः स्वं अर्थं यासु वृत्तिषु ताः । **सु.** पृ. ४९८.

* '**शब्दवृत्तिनिमित्ते** हि भावप्रत्यय इष्यते ।' **वा.** ३।१।६।१२ पृ. ६७३.

* **शब्दव्यतिरिक्तं** भावनायाः प्रत्यायकं न पश्यामः । **वा.** ३।४।४।१३ पृ. ९१३.

* **शब्दव्यापारस्यापि** भाव्यनिष्ठप्रयोजकव्यापारत्वलक्षणयोगात् अविरुद्धं भावनात्वम् । **सु.** पृ. ५७८,

* शब्दव्यापारस्य अर्थापत्तिरूपविशिष्टव्यापारकल्प्यत्वम् । पृ. १४०१.

* **शब्दशक्तिः** फलावगम्या । **वा.** ३।४।४।१३ पृ. ९१४. * शब्दशक्तिः स्वार्थे औत्पत्तिकी । **बृहती.** पृ. ३५. * **शब्दशक्त्या** स्थितया पुंसां व्यवहारः, न तद्वशेन शक्त्यन्तरोपजनः । **वा.** १।४।१२।१ पृ. ३५८.

* **शब्दशक्तिज्ञानं** प्रयोगप्रतीत्यधीनम् । **वा.** १।३।९।३३ पृ. ३१६.

* **शब्दसंबन्धे विशेषः** । 'प्रयोजनाय हि उच्चार्यमाणः शब्दो येनार्थः तस्मै तावत् प्रयोजनायावकल्प्यते । संनिहितश्च बुद्धौ भवति । तेन बुद्धौ संनिहितेन शक्यते साकाङ्क्षः शब्दः संबन्धयितुमिति । नैतदेवम् । यो हि असंबध्यमानोऽनर्थको भवति, स संबध्यते नान्यः । **भा.** ३।१।६।१२ पृ. ६९०.

* **शब्दसंबन्धव्युत्पत्तिमात्रमेव** चेह वृद्धव्यवहाराधीनम् । **वा.** १।३।१।१ पृ. १६२.

* **शब्दसाधुत्वज्ञानं** च व्याकरणाभियोगविशेषादिति । **वा.** १।३।८।२७ पृ. २८७.

* **शब्दसाधुत्वनिश्चयः** । लौकिकार्थप्रत्ययोत्थापितवाचकत्वार्थापत्तिलभ्यः तावदेकः **साधुत्वनिश्चयः** । ततः संभवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितकेवलसाध्वन्वाख्यानस्य अन्यथानुपपद्यमानत्वात् अपरयाऽप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम् । **वा.** १।३।८।२७ पृ. २८१, 'नहि वाच्यमविज्ञाय साधुत्वमवधार्यते' । १।३।९।३३ पृ. ३०७.

* **शब्दसामर्थ्यं** अर्थसामर्थ्यं च इति लिङ्गं द्विविधम् । शब्दसामर्थ्यमपि द्विविधम्- मन्त्रस्य कर्मसमवेतार्थप्रकाशनसामर्थ्यं एकवाक्यतोपगमनसामर्थ्यं चेति । **बाल.** पृ. ९.

* **शब्दस्वभावज्ञैरुक्त** विवर्त एव च वेदवादिभिराश्रयणीय इति (वैयाकरणैः) । **बृहती.** पृ. १५३.

* उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः **शब्दस्वभावसिद्धः** । **भाट्ट.** १०।८।९.



* **शब्दस्वातन्त्र्यवादिनो** मीमांसकाः । **ऋजु.** पृ. १०४.

* **शब्दभावना** । अर्थात्मिकायां भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः, सा द्वितीया शब्दधर्मः अभिधात्मिका भावना विधिरित्युच्यते । 'अभिधां भावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥' **वा.** २।१।१।१ पृ. ३७८. * शब्दभावना इति शब्दव्यापारत्वादुच्यते । **मणि.** पृ. ९०. * शब्दभावना लिङ्-लेट्-लोट्-तव्य-प्रत्ययमात्रगता लिङादिभिर्गम्यते । **वि.** २।१।१ वर्णकं २. * शब्दभावना विज्ञानोत्पादे यः शब्दस्य व्यापारः स एव शब्दभावनाशब्देन उच्यते । एवंविधविज्ञानोत्पादकत्वमेव शब्दस्य प्रवर्तकत्वं न तु औदासीन्यप्रच्यावकत्वम् । **सु.** पृ. ५७. * शब्दभावना । विधिः, प्रेरणा, नियोगः इत्येकार्थाः । सैव च शब्दभावना इत्यपि उच्यते । लिङादिरूपशब्दधर्मत्वात् । तदुक्तं भावार्थाधिकरणे- 'अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥' (**वा.** पृ. ३७८) इति.।

अभिधीयते अनेन इति अभिधा लिङादिः शब्दः । तद्धर्मः अभिधाभावना शब्दभावना इति यावत् । सा च सामान्यतो विशेषतश्चैवं साध्या । स्वतन्त्रपुरुषप्रवृत्तिर्द्विधा लोके दृश्यते । क्वचित् स्वेच्छार्थं सुखार्थं प्रवर्तते । क्वचित् अन्यप्रेरितः आचार्यप्रेरितोऽहं गामानयामि न स्वेच्छया इति व्यवहारात् । यद्यपि आचार्यादिरपि अनिच्छन्तं न शक्नोति प्रवर्तयितुं तथापि स्वारसिकेच्छारहितमपि शिष्यादिकं स्वप्रवर्तनाबलेन इच्छामुत्पाद्य प्रवर्तयति इति द्वैविध्योपपत्तिः । तत्र शब्दश्रवणानन्तरभाविन्यां प्रवृत्तौ आचार्यादेः स्वप्रवर्तनाज्ञानजननेन प्रवर्तकत्वं अवसीयते । का पुनः प्रवर्तना ? प्रवृत्तिहेतुभूतः प्रवर्तयितुः धर्मः । प्रवर्तयितृधर्मत्वाभावे यज्ञदत्त एव मां प्रवर्तयति न देवदत्तः इति व्यवस्थाऽनुपपत्तेः । प्रवृत्तिहेतुज्ञापकत्वेन तु व्यवस्थोक्तौ देवदत्तस्त्वां प्रवर्तयति इति प्रवर्तनाज्ञापनात् यज्ञदत्तस्यापि प्रवर्तकतापत्तिः ।

तथा लौकिकलिङोऽपि गुर्वादिगताज्ञादिज्ञापकस्य प्रवर्तकत्वोपपत्तिः । लोके च आचार्यादेः प्रवर्तयितुर्धर्मः अहमेनं प्रवर्तयामि इति प्रवर्तयितुः मानसप्रत्यक्षवेद्यः प्रैषादिरूपः नापह्नोतुं शक्यते । वेदे तु पुरुषाभावेन लिङादेरेव प्रवर्तकत्वात् तद्धर्मः अङ्गीकार्यः । स एव विधिः । तत्र उत्तमप्रवर्तनं अध्येषणम् । समस्य आमन्त्रणम् । नीचस्य निमन्त्रणं आज्ञाख्यम् ।

एषु च लिङादेः अनुशासनाच्छक्तिग्रहः । तत्र नानार्थत्वपरिहाराय प्रवर्तनारूपं अनुस्यूतं चतुर्ष्वपि यत् चतुष्टयानुगतं एकं प्रवर्तनात्वं शक्यतावच्छेदकम् । ईप्सितानीप्सितकर्मणोरिव साध्यत्वं द्वितीयाया मिश्रमते । अत एव हरदत्तः '**अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया** ॥' इत्याशङ्क्याह '**न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा । विध्यादीनामुपादानं चतुर्णामादितः कृतम्** ॥' इति । अत्र लौकिकनिमन्त्रणादिभ्यः अन्योऽपि अलौकिको भेदोऽस्ति न्यायसिद्धः इति न्यायसूचनं न्यायव्युत्पादनम् । वाच्यतावच्छेदकस्य प्रवर्तनात्वस्य आश्रया इयत्यो व्यक्तयः, न लौकिक्य एव इति सूचनं प्रपञ्चः ।

ननु लोडर्थप्रैषातिसर्गयोरपि प्रवर्तनात्वात् कथं चतुरुक्तिः । मैवम् । कामचारानुज्ञारूपस्य अतिसर्गस्य कामचारकरणात्मकामन्त्रणरूपत्वात् । प्रवर्तनासामान्यस्य एव च प्राप्तविषयत्वविशेषितत्वस्य प्रैषत्वात् । तदुक्तम्- '**प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते** ॥' (**वा.** पृ. ३८२) इति । 'स्वाध्यायोऽध्येतव्यः' इत्यादौ प्रैषान्तःपातिविशेष्यभूतप्रवर्तनामात्रं लक्ष्यम् । अप्राप्तप्रवर्तनं च विधिः इति विधातृता इत्युत्तरार्धार्थः ।

अथ प्रवर्तनालक्षणे पूर्वोक्ते (प्रवृत्तिहेतुभूतः प्रवर्तयितुर्धर्मः) पदकृत्यम् । तत्र आद्यविशेषणेन प्रवर्तयितृकृतयागादेर्निरासः । धर्मशब्देन च समवेतत्ववाचिना प्रवर्तयितृसंबन्धिनामपि तदसमवेतानां प्रवर्त्यलिङ्शब्दतदुच्चारणानां निरासः । सर्वस्यापि लक्षणस्य फले अतिव्याप्तिः तस्य प्रवृत्तिं प्रति हेतुत्वात्, प्रवर्तयितृगुर्वादि-

धर्मत्वाच्च । अतः परसमवेतप्रवृत्तिहेतुत्वं अत्र विवक्षितम्, फलं तु प्रवर्तयितुरेव प्रवृत्तेर्हेतुः न परसमवेतप्रवृत्तेः इति नोक्तातिव्याप्तिः ।

**महामुद्गलभट्टास्तु** आहुः । धर्मशब्देन अपूर्वनिरासः । प्रवर्तयितृशब्देन इष्टतत्साधनत्वयोः । आद्यविशेषणेन निष्ठीवनादीनामिति । **तन्न** । धर्मशब्देन अपूर्वनिरासायोगात् । अपूर्वं हि प्रवर्त्यगतं प्रवर्तयितृगतं वा, आद्ये प्रवर्तयितुः इति षष्ठ्या प्रवर्तयितृसंबन्धित्वोक्तेः प्रवर्त्यगतस्य चापूर्वस्य प्रवर्तयितृसंबन्धाप्रसिद्धेः तद्गतातिव्याप्तेः प्रवर्तयितुरिति षष्ठ्यन्तेनैव निरासात् । द्वितीये प्रवर्तयितृगतस्य अपूर्वस्य प्रवर्त्यप्रवृत्तिं प्रति हेतुत्वाभावेन तद्गतातिव्याप्तेः प्रवृत्तिहेतुः इत्यनेनैव निरासात् इति । तदिदं भट्टसोमेश्वरमतं तदभिधाव्यापारस्यैव विधिरूपभावनात्वे बाधकाभावात् निर्मूलम् । तदेतन्मतं मिश्रैः **षष्ठाद्ये शास्त्रदीपिकायामुक्तम्** । अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः । अस्य प्रवर्तकस्य अर्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वमिति ।

**यत्तु** '**अस्तु तर्ह्यभिधानाख्यो व्यापारोऽस्य प्रवर्तकः । तस्य ह्यर्थप्रतीत्याख्यकार्यक्लृप्तस्य केवलम् । कल्प्यं प्रवृत्तिहेतुत्वं लिङ्वाच्यस्येति लाघवम्** ॥' इत्याशङ्क्य '**शब्दान्तरगताऽप्यस्मिन्नभिधा स्यात् प्रवर्तिका । पक्षेऽर्थतो विशेषश्चेत् स एव स्यात् प्रवर्तकः** ॥' इति दोषद्वयमुक्त्वा '**न चास्या अभिधेयत्वाद्विशेषः कार्यतो गतः । न युक्तं ह्यभिधेयत्वं सर्वासां वा प्रसज्यते** ॥' इत्यनेन पूर्वदोषद्वयोद्धारपूर्वकं अन्यदोषद्वयमुक्त्वा तदुद्धारः । '**अथ प्रवर्तनात्वेन कार्यादनवबोधतः । तद्रूपेणाभिधेयत्वं तच्चान्यासु न विद्यते** ॥' इत्याशङ्क्य '**तन्नास्या ह्यभिधानात् प्राक् चेत् प्रवर्तकरूपता । स्याद् व्यर्थमभिधेयत्वं नास्ति चेत् स्यादसत्यता** ॥' इति विकल्प्य दूषणद्वयमुक्तम् । तदेतत् लिङः प्रवर्तकत्वं विहाय तदभिधायाः प्रवर्तकत्वे युज्यते । अभिधानं विनाऽपि हि प्रवर्तकस्वभावस्य लोके आचार्यादेः वेदे च लिङादेः व्यर्थमेव अभिधेयत्वम् । न तु इदं दूषणं लिङः प्रवर्तकत्वे अभिधायाश्च प्रवर्तनात्वे प्रसज्यते । यथा हि अभिधार्थबोधाख्यकार्यात् बुद्धोऽपि न प्रवृत्तिहेतुः एवं त्वदभ्युपेतोऽपि व्यापारोऽग्निहोत्रादौ प्रवृत्तिं दृष्ट्वा आप्तवाक्याद्वा अस्ति कश्चित् लिङः अत्र प्रवृत्तिहेतुर्व्यापारः इति सामान्यतोऽवगतोऽपि न प्रवृत्तिहेतुः । अतः त्वया अपि असौ प्रवर्तनात्वेन शब्देन तत्रापि लिङैव अभिहितः सन् स्वस्य प्रवर्तनात्वनिर्वाहाय स्वविषयस्य इष्टसाधनताऽऽक्षेपमुखेन इच्छां जनयन् प्रवृत्तौ हेतुः वाक्यार्थज्ञाने इव पदाभिहिते एव पदार्थे इत्यवश्यमभ्युपेयम् । तच्च एतन्ममापि तुल्यं इति न सोमेश्वरोक्तदूषणावकाशः कश्चित् । तस्मात् वेदे लिङादिरेव प्रवर्तकः । तदभिधैव च प्रवर्तनाविशेषः प्रेरणा विधिः इति वोच्यते । इति **विध्याख्यशब्दभावनानिरूपणम्** । ( अथ प्रतिषेधाख्यशब्दभावनानिरूपणं **मीको.** पृ. २७३९ इत्यत्र द्रष्टव्यम् ) । **बाल.** पृ. ७५-७८.

* **शब्दभावनायाः** अंशत्रयमाहुः । 'लिङोऽभिधा सैव च शब्दभावना, भाव्या न तस्याः पुरुषप्रवृत्तिः । संबन्धबोधः करणं, तदीयप्ररोचनं चाङ्गतयोपयुज्यते ॥' अस्यार्थः— लिङः अभिधानामकस्ववृत्तिः स्वशक्तिः अवश्यं वाच्या । न च तत्र मानाभावः, व्यापारभिन्नस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारैवेति व्याप्तेः । चक्रभ्रमिजनकत्वस्य दण्डादौ स्वनिष्ठस्पन्दादिद्वारैव दृष्टत्वात् । तथा च लिङ्पदेनापि प्रवृत्त्यनुकूलेन स्वनिष्ठव्यापारो अवश्यं जननीयः इति स एव अभिधात्मकः । व्यापारस्य व्यापारापेक्षायां अनवस्था स्यात् इति व्यापारभिन्नस्येति । व्यापारिणः स्वनिष्ठव्यापारार्जनेऽपि व्यापारापेक्षायां अनवस्थापत्तेः परनिष्ठेति । शब्दे ज्ञानद्वारा प्रवृत्तिहेतुत्वात् सिद्धसाधनं स्यात् इति शब्दनिष्ठाभिधासिद्ध्यर्थं स्वनिष्ठेति । किमित्याकाङ्क्षायां भाव्यमाह, भाव्या चेति । अर्थभावनैव शब्दभावनाभाव्या इत्यर्थः । केन इत्याकाङ्क्षायां करणमाह संबन्धबोध इति । अगृहीतलिङ्गशक्तिकस्य अप्रवृत्त्या संकेतग्रहस्य तत्सहकारित्वमित्याशयः ।



संकेतश्च तद्वाक्यघटकपदानां तत्तदर्थे, लिङश्च प्रवर्तनात्वादिविशिष्टे बोध्यः । **मणि.** पृ. ९१. * शब्दभावनायाः भाव्यं आर्थीभावना । विधायको लिङादिः करणम् । अर्थवादसंपादिता स्तुतिः इतिकर्तव्यता । सेयं शब्दभावना लिङादिभिः गम्यते । **वि.** २।१।१ वर्णकं २.

* **शब्दभावनेतिकर्तव्यतानिरूपणम्** । सेयं द्वयी अपि ( विधिप्रतिषेधरूपा ) शब्दभावना प्राशस्त्याप्राशस्त्यज्ञानानुगृहीतैव स्वफलभूतां प्रवृत्तिं निवृत्तिं च जनयति इति तदितिकर्तव्यतात्वेन अपेक्षते, गृह्णाति च अर्थवादैः स्वाम्नानार्थवत्त्वाय लक्षितम् । तस्याश्च इतिकर्तव्यतापेक्षा तदन्वयश्च अर्थभावनावत् विध्यन्वयात् कर्तव्यत्वेन प्रतीतौ तत एव च भाव्यकरणयोः आकाङ्क्षापूर्वमन्वये स्यात् नान्यथा । न च शब्दभावना ज्योतिष्टोमादिप्रातिस्विकविधिवाक्येषु स्वरूपतः सत्यपि कर्तव्यत्वेन प्रतीयते, किंतु अर्थभावनैव । अतः अध्ययनविधौ सा विधीयमानत्वात् कर्तव्यत्वेन प्रतीयते । तदुक्तं वार्तिके 'सा ह्यत्र प्रवर्तते' इति । व्याख्यातं चाभियुक्तः 'अध्ययनविधिवशात् कार्यत्वेन प्रतीयते' इति ।

**ननु** तत्रापि आख्यातप्रत्ययोक्तार्थभावनैव अध्ययनकरणिका विधीयते न तु प्रेरणा, तस्या आख्यातवाच्यत्वाभावात्, लिङा च विधिद्वयानुक्तेः । **अत्रोच्यते** । न तावत् सक्तुहोमवत् द्वितीयाभङ्गोऽत्र 'पुरोहितं वृणीते' इतिवत्तु द्वितीयाऽवधृतप्रधानभावं स्वाध्यायं प्रति गुणभूताध्ययनभावना अवगता । ततः संस्कार्यत्वानुपपत्त्या अयमेव विधिः शक्त्यनुसारेण स्वाध्यायं संभविनि दृष्टे विनियुज्य पर्यवस्यति इति तृतीये उक्तम् । तत्र विध्यंशे तावत् पुरुषप्रवृत्तिरेव दृष्टम् । तत्र च शब्दानां करणत्वं वा कर्तृत्वं वा निरूप्यते इति वार्तिकात् लोके उभयविवक्षासंभवेऽपि वेदे प्रवर्तयितृपुरुषाभावेन कर्तृव्यापारव्याप्यत्वनियतकरणत्वासंभवात् स्वातन्त्र्याच्च कर्तृत्वेनैव स्वाध्यायो विनियुज्यते । अन्तरङ्गं च कर्तृकारकं क्रियायाः । अत एव आख्याताभिहिता संख्या अनभिहितेऽपि कर्तर्येव अन्वेति इत्युत्सर्गः इत्युक्तं कर्त्रधिकरणे । एवं कर्तृतया स्वाध्याये विनियुक्ते अर्थवादादेः गुणत्वात् विधायकस्य च प्राधान्यात् प्रातिस्विकवाक्यस्थाः लिङः कर्तृत्वेन विनियुज्यन्ते, अध्ययनेन उपात्ताः लिङः भावयेयुरिति । ततः 'किं' इत्यपेक्षिते सामर्थ्यादेव पुरुषप्रवृत्तिं इति भावयेयुः इतिवत् अध्याहृत्य संबध्यते । श्रुतार्थापत्तिमूलकश्चायं अध्याहारः 'इषे त्वा छिनद्मि' इत्यादिवत् । तदुक्तं अर्थवादाधिकरणवार्तिके 'ततः किमित्यपेक्षिते सामर्थ्यादेव पुरुषप्रवर्तनं इति संबध्यते' इति । तेन इदं श्रुतानुमितैकदेशनिष्पन्नं महावाक्यं भवति 'अध्ययनसंस्कृताः स्वाध्यायपदोपात्ताः लिङः पुरुषप्रवृत्तिं भावयेयुः' इति । अयमेव च वाक्यार्थः पारमार्थिकः, अन्यथा शब्दभावनायाः कार्यत्वानवगमात् तदितिकर्तव्यताभूतप्राशस्त्यलक्षणया अर्थवादप्रामाण्यं न सिध्येत् ।

**ननु** अर्थवादाधिकरणे एव आद्यसूत्रे च आचार्यैः 'कर्मसु अर्थज्ञानस्य लैङ्गिकविनियोगात् तदर्थः अध्ययनविधिः अधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेत् इति' इत्युक्तम् । तद्विरुद्धा कर्तृत्वोक्तिः प्रवृत्तिफलत्वोक्तिश्च । सत्यमुक्तम् । न तु विरोधः । शब्दभावनायां हि लिङादीनां कर्तृत्वे सति अर्थात् फलवदर्थावबोधे करणत्वं फलितं भवति इति प्रवृत्तिकर्तृत्वमेव अर्थावबोधकरणत्वेन फलितं व्याख्यातं इत्यविरोधः । प्रवृत्तिफलत्वं तु फलवदर्थावबोधद्वारा इति न भाव्यद्वयविरोधः । लिङो हि प्रवृत्तिरूपस्य वाक्यार्थस्य इष्टसाधनतया बोधं कृत्वा प्रवृत्तिं जनयन्ति नान्यथेति ।

**ननु** एवमपि चेतनप्रवर्तनात्मा विधिः कथं अचेतनान् लिङः नियुञ्जीत इति चेत्, **सत्यम्** । उपायासत्यत्वेऽपि उपेयसत्यत्वात् । यथा वर्णलोपागमविकाराद्यसत्यत्वेऽपि तेन सत्यमेव साधुत्वं ज्ञाप्यते शिष्टपरिग्रहात् व्याकरणप्रामाण्यात् । एवमिहापि अध्येता तावत् 'लिङ् मां प्रवर्तयति' इति लिङ्व्यापारभूतशब्दभावनाकर्तव्यतां बुध्यते तद्गतचैतन्यस्य लिङि आरोपात् नियोज्यत्वमसत्यमेव । तेन उपायेन शब्दभावनाकर्तव्यत्वं सत्यं ज्ञाप्यते अर्थवादप्रामाण्यात् । तथा हि अकर्तव्यत्वे तदितिकर्तव्यताभूतप्राशस्त्यानपेक्षणात् तल्लक्षणया अर्थवादप्रामाण्यं न स्यादिति । एवं कर्तव्यत्वेन अवगतायाः

शब्दभावनायाः करणं शक्त्यालोचनयैव विधिज्ञानमेव । 'अथ केन ? इत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेन इति संबध्यते' इति वार्तिकात् । युक्तं चैतत् । यागो हि स्वरूपतो भावनया साध्यः सन् तस्यां फलोपहितायां करणं भवति । एवं विधिज्ञानमपि स्वरूपेण विधिना विषयेण साध्यं सत् तत्रैव शब्दभावनायां प्रवृत्तिरूपफलोपहितायां करणं भवति । केचित् संबन्धस्मरणमेव करणं विधिज्ञानं तु तद्व्यापारः करणत्वनिर्वाहकः यागस्येव अपूर्वं इत्याहुः । '**लिङोऽभिधा सैव च शब्दभावना, भाव्यं च तस्याः पुरुषप्रवृत्तिः । संबन्धबोधः करणं तदीयं, प्ररोचना चाङ्गतयोपयुज्यते ॥**' इति । अत्र प्ररोच्यतेऽनया इति प्ररोचना प्राशस्त्यज्ञानम् । तच्च अङ्गं फलोपकारि प्रयाजादिवत् । तज्जन्यं तु प्ररोचनं प्रवृत्तिप्रतिबन्धकालस्य भङ्ग उपकारः अङ्गत्वनिर्वाहकः प्रयाजादिजन्यापूर्ववत् प्रयाजद्रव्यदेवतवच्च अत्रार्थवाद इति ज्ञेयम् । **इति शब्दभावनेतिकर्तव्यतानिरूपणम् । बाल.** पृ. ७९–८१.

* विधिनिष्ठा शक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता प्रवर्तना इति **शब्दभावनाबोधः । मणि.** पृ ९३.

* **शब्दभावनाभाव्या** अर्थभावनैव । **मणि.** पृ. ९१.

* '**शमो** दमस्तपः शौचं सत्यमार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म प्रचक्षते ॥' ( भग. गी. १८।४२ ) । ब्राह्मणत्वप्रतिपादने द्योतकत्वमात्रं तपःप्रभृतीनां न तु ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वम् । द्योतकत्वमात्रं स्मृत्या प्रतिपाद्यते न तु तपआदीनां समुदायो ब्राह्मण्यं इति । **सु.** पृ. १४.

* **शमिता** अध्वर्युरेव । ३।७।१३।२८–२९.

**शमिता अध्वर्युगणस्थ एव ॥**

'दैव्याः शमितारः' इत्यारभ्य 'शमितारो यदत्र सुकृतं कृणवत' इत्यन्तं यावन्तः पदार्थाः कर्तव्यत्वेन कीर्तितास्ते सर्वे शमनक्रियान्तर्भूता एव । तद्बहिर्भूता अपि सामर्थ्यलब्धास्तद्गतमक्षिकानिवारणादयोऽपि तथा । तान् एतान् श्रौतान् आर्थांश्च पदार्थानेकः सह गन्तृभ्योऽन्यः शमितैव कुर्यात् । उद्गीथभक्तिगानमुद्गातैव । **इति प्राप्ते,** श्रौतानेव स कुर्यात् । आध्वर्यवसमाख्याते वेदे समाम्नातानामध्वर्योरेव कर्तृत्वावश्यंभावात् । आर्थेषु तु अनियमः । 'न च पराङावर्ततेऽध्वर्युः' इति वचनविरोधः । तस्य प्रथमाध्वर्युपरत्वात् । इतरमन्यस्तेषामिति न्यायेन अध्वर्युगणस्थान्यतमस्य शमितृत्वेऽपि समाख्योपपत्तेः । **संकर्ष.** १।१।१४.

**शमिता ऋत्विगेव न भिन्नः ॥**

ते सह गन्तारो ये केचन भवेयुः । 'दैव्याः शमितार आरभध्वमुत मनुष्याः' इति मन्त्रे तु ऋत्विग्भूतदेवप्राये पाठेनोपसंहारात् । **इति प्राप्ते,** ऋत्विज एव स्युः । तेषामुल्मुकनयनादिविहितकर्मार्थे गमनस्य क्लृप्तत्वात् । कर्मासंबद्धेषु तत्कल्पने मानाभावात् । **संकर्ष.** १।१।१३.

* शमिता ऋत्विग्भ्यो न भिन्नः पशौ । ३।७।१३। २८–२९. **मीको.** पृ. २४८७ 'पशौ अग्नीषोमीये शमिता ऋत्विग्भ्यो न भिन्नः' इत्यत्र अधिकरणं द्रष्टव्यम् । * शमिता ऋत्विक्ष्वेव कश्चित् इति स्थितम् । **अत्र ब्रूमः ।** वाजसनेयशाखायां 'शमिता पशुं नयति, तं प्रतिप्रस्थाता अन्वारभते, तमध्वर्युः, तं यजमानः । उल्मुकमादाय आग्नीध्रः पुरस्ताद् गच्छति' । 'अजैदग्निः' इति मैत्रावरुणः प्रेष्यति, 'दैव्याः शमितारः' इत्यध्रिगुं होताऽन्वाह, 'ब्रह्मा दक्षिणत आस्ते' इति युगपत् कर्माणि अवगतानि । अतः एतेभ्यो भिन्नः शमिता इति निर्विवादम् । **न च** तदानीं नेष्टा उन्नेता वा अध्वर्युपुरुषः शमिता भविष्यतीति **वाच्यम्** । 'पशुबन्धस्य षड् ऋत्विजः' इति विरोधात् । यत्र शाखायां प्रतिप्रस्थातुरन्वारम्भो न विहितः तत्रापि 'प्रमुञ्चमाना इति नीयमाने पशौ जुहोति' इति प्रतिप्रस्थातुः विधानमस्त्येव । तैत्तिरीयशाखायां 'यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि पशुश्रपणं हरेत्' इति प्राजहितगार्हपत्यात् पशुश्रपणार्थं अग्न्युद्धरणं आम्नातं तदपि प्रतिप्रस्थातृकर्तृकमेव, अध्वर्योः अन्वारम्भे व्यापृतत्वात् । तस्मात् ऋत्विग्भ्यः अन्य एव शमिता । एवं च 'क्लोमानं वैकर्तस्य शमितुर्दद्यात् तं स ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यात्' इति भाष्योदाहृतश्रुतौ अब्राह्मण-



पदं शमितृविषयकमेव समञ्जसं भवति । 'नाब्राह्मणः सांनाय्यं प्राश्नीयात्' इति सांनाय्यविकारपशुभक्षणस्य अब्राह्मणशमितृविषये प्रतिषिद्धतया अब्राह्मणः शमिता क्लोमानं स्वं भागं न भक्षयेत् किंतु ब्राह्मणाय दद्यात् इत्यर्थस्य स्वरसतः प्रतीतेः ( अयमंशश्चिन्त्यः । **के.** ) । अब्राह्मणशब्दस्य समानवाक्यस्थाव्यवहितप्रथमान्ततच्छब्दोपात्तशमितृपरत्वे संभवति व्यवहितपूर्ववाक्योपात्तयजमानपरताया अनुदितत्वाच्च ।

अधिकरणं तु विशसितृपरं नेयम् । शमिता हि द्वेधा संज्ञपयिता विशसिता च । तत्र संज्ञपने श्रूयमाणः शमिता ऋत्विग्भ्यः अन्य एव चातुर्वर्ण्यान्तर्गतः कश्चित् । विशसनं तु समाख्यावशात् आध्वर्यवम् । अत एव कलिवर्ज्यप्रकरणे 'शामित्रं चैव विप्राणां' इति आदित्यपुराणवचनमुपपद्यते । ततश्च पूर्वयुगेषु चतुर्णां वर्णानां अन्यतमः शमिता । कलौ तु शूद्र एव शमिता । **कु.** ३।७।१३।२९.

**शमिता एक एव ॥**

चमसाध्वर्यूणामिव पृथग्वरणाभावात् शमितृपदेन यौगिकवृत्त्या वृतावृतसाधारणो यः कश्चिदभिधीयते इति स्थितं तृतीये । ते च शमितारो बहवः कार्याः । 'शमितारो नयन्ति' इति विधौ 'शमितार उपेतन' इत्यादिमन्त्रेष्वपि बहुवचनदर्शनात् । **इति प्राप्ते,** शमितुरेकत्वेऽपि अन्येषामपि पशुना सह शामित्रदेशगमनदर्शनात् शमितृसाहित्यमात्रेण सर्वेषां शमितार इति निर्देशः । विनिषद्योद्गातारः इत्यनुद्गातृसाहित्येन प्रयोगदर्शनात् । **संकर्ष.** १।१।१२.

**शमिता च शब्दभेदात् । ३।७।१३।२८ ॥**

ज्योतिष्टोमे अग्नीषोमीयादिपशुयागे 'शमितारमुपनयीत' इति शमिता उक्तः । शमनं पशुशरीरस्थस्य तेजसः नाशनं पशुमारणं इत्यर्थः । शमनकर्ता च शमिता । स किं पूर्वोक्तेभ्यः षोडशभ्य ऋत्विग्भ्यः, दशभ्यश्च चमसाध्वर्युभ्यो भिन्न एव तद्गत एव वा कश्चित् इति विचारे पूर्वपक्षसूत्रमिदम् । च–शब्दः भिन्नत्वस्य साध्यस्य व्यपदेशाख्यस्य हेत्वन्तरस्य च अनुकर्षणार्थः । शमिता च भिन्नः स्यात्, शब्दभेदात् । अध्वर्युहोत्रादिशब्देभ्यः भिन्न एवायं भिन्नार्थकश्च शमिता इति शब्दः । किंच 'क्लोमा च अर्धं वैकर्तनं च शमितुः, तद् ब्राह्मणाय दद्यात् यदि अब्राह्मणः स्यात्' इति शमितुः अब्राह्मणत्वं व्यपदिष्टम् । तादृशात् व्यपदेशाच्च शमिता भिन्न एव । वैकर्तनं पार्श्वस्थः प्रौढो मांसखण्डः ।

**प्रकरणाद् वोत्पत्त्यसंयोगात् । २९ ॥**

अग्नीषोमीयादिपशौ शमिता नाम ऋत्विग्भ्यः चमसाध्वर्युभ्यश्च भिन्न एवेति पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति सूत्रम् । वा–शब्दः पूर्वपक्षव्यावृत्त्यर्थः । शमिता ऋत्विग्भ्यो नान्यः । कुतः ? उत्पत्त्यसंयोगात् । उत्पत्तिवाक्ये (वरणवाक्ये) शमितुः संयोगस्य संबन्धस्य अभावात् । उत्पत्तिवाक्ये शमितुः अनुक्तेः इत्यर्थः । यत्तु पूर्वपक्षे 'क्लोमा च अर्धं वैकर्तनं च शमितुः, तद् ब्राह्मणाय दद्यात् यदि अब्राह्मणः स्यात्' इति शमितुः अब्राह्मणत्वव्यपदेश उक्तः तत्रापि उत्पत्त्यसंयोगात् इत्येवोत्तरम् । अत्र उत्पत्तिशब्दः कर्मव्युत्पन्नो ग्राह्यः । उत्पत्तिः 'क्लोमा च' इत्यादिवाक्ये उत्पन्नः इत्यर्थः । तया उत्पत्त्या उत्पन्नेन शमित्रा तद्वाक्यस्थस्य अब्राह्मणशब्दस्य संयोगाभावात् । अब्राह्मणशब्दः न शमितारं व्यपदिशति । कथं उत्पत्त्यसंयोगः इति चेत् तत्राह प्रकरणात् इति । अध्वर्योः प्रकरणात् अध्वर्युर्वा तत्पुरुषो वा प्रतिप्रस्थात्रादिः कश्चित् शमिता इति ज्ञातुं शक्यत्वात् उत्पत्त्यसंयोगः । एवं प्रकरणात् उत्पत्त्यसंयोगः । उत्पत्त्यसंयोगाच्च शमिता न अब्राह्मणः । ततश्च ऋत्विक्ष्वेव कश्चित् शमिता इति सिद्धान्तः ।

प्रकरणं प्रक्रिया प्रकृतिप्रत्ययव्युत्पादनम्, शमयति पशुं संज्ञपयति इति शमिता इति । ततोऽपि ऋत्विगेव कश्चित् । **ननु** 'स ब्राह्मणाय दद्यात् । यदि अब्राह्मणः स्यात्' इति शमितुः अब्राह्मणत्वोक्तेः कथं शमिता ऋत्विक्षु संभवति इति चेत् तत्राह प्रकरणात् इति । अब्राह्मणपदं न शमितृपरं किंतु यजमानपरम्, दद्यात् इति यजमानस्य प्रकरणात् प्रक्रान्तत्वात् । यदि यजमानः अब्राह्मणः क्षत्रियो वा वैश्यो वा स्यात् तदा शमितुः पशुभागः ब्राह्मणाय यजमानो दद्यात् इत्यर्थः । तथा च ऋत्विगेव कश्चित् शमिता । **के.**

* 'शमिता च शब्दभेदात्' ( ३।७।१३।२८ ) इत्यधिकरणे वार्तिककृतोक्तम्– अत एव आर्त्विज्यं निन्दन्ति– इति । तथापि विशेषनिषेधो दोषविशेषार्थत्वेन अर्थवानेवेति ।। **बाल. पृ. ५७.** * शमिता द्वेधा, संज्ञपयिता विशसिता चेति । तत्र संज्ञपयिता ऋत्विग्भ्योऽन्यः । विशसिता तु अध्वर्युगणान्तर्गतः कश्चित् । **कु. ३।७।१३।२९.** * शमिता वृतावृतसाधारणः यः कश्चित् इति स्थितं तृतीये । **संकर्ष. १।१।१२.** * शमिता । शमयति इति शमिता । योगिक एष शब्दः । **भा. ३।७।१३।२९.** * **शमितारः** नापूर्वाः किंतु प्रतिप्रस्थात्रादय एव शमितारः । संज्ञाभेदस्तु पशुसंज्ञपनयोगात् । **वि. ३।७।१३.** * **शमित्रा** सह शामित्रशालायां गन्तारः इतरे ऋत्विज एवेति केचित् न तु तद्भिन्ना ये केचित् । **संकर्ष. १।१।१३.**

* **शमीधान्यभक्षणस्य** न निषेधः, आग्रयणाऽकरणेऽपि । **संकर्ष. ३।१।१२. मीको. पृ. ८५६** 'आग्रयणाकरणेऽपि मुद्गादिशमीधान्यानां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शमीमय्यः** हिरण्मय्यो वा स्रुचः संमार्ष्टव्याः वरुणप्रघासेषु सिद्धान्ते । पूर्वपक्षे तु नानावृक्षस्रुच उत्पादयितव्याः संमार्गार्थत्वेन । **भा. २।१।४।१२.**

* **शम्या यज्ञायुधम्** । 'यज्ञायुधानि संभरन्ति' 'शम्यया दृषदमुपदधाति' । **वि. ३।१।५.**

* **शयानत्वं** परिधिधर्मः । **वि. १२।२।११.**

* **शराः** बर्हिःशब्दलक्षिते तत्कार्ये विहिताः तत्कार्यपृष्ठभावेन प्राप्स्यमानं बर्हिः बाधन्ते । 'शरमयं बर्हिर्भवति' । **भाट्ट. १०।४।१.** * **शरैरपि** कुशाः प्राप्ता एव बाध्यन्ते इत्युक्तं बलाबलाधिकरणे ( ३।३।७ ) । **वा. ३।६।१।८.** * शरैः कुशानां अगत्या बाधः । **सु. पृ. ८८३.**

* **शरादिवत्** । मुख्यक्रमस्य औपदेशिकप्रयोगविध्युन्नीतत्वेन औपदेशिकत्वात् सत्यपि अतिदेशोत्तरकालकत्वे शरादिवत् बाधोपपत्तेः मुख्यक्रमस्य बलवत्त्वं इति चेन्न । प्रयोगविधेः औपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तेः । **भाट्ट. ५।१।१०.**

* **शरेषीका** शरस्य दर्भविशेषस्य इषीका पुष्पगुच्छादधोभागे वर्तमानः काण्डः शरेषीका । तया अञ्जनं कुर्वन्ति । **के.**

**शरन्यायः** । शरकुशन्यायः । सोमारौद्रेयागे उपदिष्टैः शरैः आतिदेशिकानां कुशानां बाधः ॥

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।१।१ वर्णकं २ ॥**

**भाष्यम्**— एवं वा । इदमाम्नायते 'सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्' इति । तत्रेदं श्रूयते 'शरमयं बर्हिर्भवति' इति । तत्र संशयः किं कौशं निवर्तते, नेति । किं प्राप्तम् ? उभयस्य प्रमाणावगतत्वात् समुच्चयः ।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् । २ ॥**

**भाष्यम्**— एवं प्राप्ते, ब्रूमः । चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेतेति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः । तस्मात् प्राकृतस्य निवृत्तिरिति । ( विस्तरादिसर्वग्रन्थेषु अनेन द्वितीयेन सूत्रेण द्वितीयमधिकरणमेव स्वीकृतम् । भाष्यीयं तृतीयं वर्णकं तु द्वितीयाधिकरणीयं द्वितीयं वर्णकं इति स्वीकृतम् ) ।

**शा**— उभयोः कुशशरयोः प्रमाणावगतत्वात् समुच्चयः, प्रकृतकार्यत्वाच्च निवृत्तिः ( कुशानाम् ) इति ।

**सोम**-- पूर्वाधिकरणोक्त–शरवैषम्यसाधनार्थत्वात् संगतिः । 'नित्यं वृद्धशरादिभ्यः' (पा० ४।३।१४) इति विकारार्थे शरशब्दात् मयटः प्रतिपदोक्तत्वेन प्राबल्यात् विकारार्थ एवायं मयट् । ततश्च बर्हिषो द्रव्यस्य कुशविकारत्वासंभवात् तेन तत्कार्यं स्तरणं लक्षयित्वा तत्र विधानात् प्रत्यक्षवचनेन कार्यापत्त्या युक्तो बाधः ( शरैः कुशानाम् ) ।

**वि**-- 'समुच्चेयं शरमयं कौशेनोतास्य बाधकम् ।, प्राचुर्यस्य विवेराद्यो, मैवं प्रतिपदोक्तितः ॥' २.

**भाट्ट**-- 'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति विहितेष्टौ 'शरमयं बर्हिः' इति



श्रुताः शरास्तु प्राकृतबर्हिर्बाधका एव । न च पाषाणमयी भूमिरितिवत् मयटा बहुशरसंयोगमात्रविधानात् कुशबाधानापत्तिः, अदृष्टार्थत्वप्रसङ्गेन शराणामेव बर्हिःकार्योद्देशेन विधानात् । न च तथापि बर्हिःकार्यस्य स्तरणस्य शरविकारताऽनुपपत्तेः विकारार्थमयडनुवादानुपपत्तिः । वस्तुतः संस्कारविशिष्टस्य द्रव्यस्य प्रकृतौ कुशप्रकृतिकस्य विकृतौ शरप्रकृतिकत्वेन 'खादिरो यूपो भवति' इतिवत् विकारार्थमयडनुवादोपपत्तेः । शाब्दबोधे तु जघन्ये बर्हिःशब्दे स्तरणादितत्कार्यलक्षणया तदुद्देशेन शरमात्रविधानात् युक्तः एव कुशबाधः । न च तथापि चोदकेन कार्यस्य स्वजनकपदार्थविशिष्टस्यैव पूर्वं प्राप्ततया पश्चाद्वैयर्थ्यभिया अन्यतराकाङ्क्षया अन्वीयमानानां शराणां कुशाविरोधेनैव अन्वयात् कुशाभावे प्रतिनिधित्वेनैव अन्वयोपपत्तेर्न कुशबाधकत्वमिति **वाच्यम्** । आकाङ्क्षाक्रमेण कार्योपस्थित्यनन्तरं तज्जनकपदार्थापेक्षायामेव शरविधिप्रवृत्त्यङ्गीकारात् शरैरेव तदाकाङ्क्षाशान्तौ तत्कार्ये कुशवैशिष्ट्याकल्पनेन कुशानामतिदेशेन वस्तुतः प्राप्त्यभावात् । अत एव तार्किकीं प्राप्तिमादायैवायं प्राप्तबाधः । शराणां च विकृत्याकाङ्क्षायामनिवृत्तायामेव ग्रहणम् । अस्तु वा कार्याणामेव प्रथममतिदेशेन जनकापेक्षायां पदार्थानां पृथगतिदेशः, ततश्च अतिदेशप्रापितकार्योद्देशेन शरविधेर्न कुशांशे अतिदेशकल्पनेति । निरूपितरूपाणामेव च पदार्थानां पृथगतिदेशान्नोहबाधानुपपत्तिः । अतस्तस्य युक्तो बाधः इति प्रत्युदाहरणमात्रमिदम् । २.

**मण्डन**-- 'कुशानां बाधकाः शराः ।' २.

**शंकर**-- 'बाध्यास्त्विह शरैः कुशाः ।' २.

* शरन्यायः नक्षत्रेष्टौ उपदिष्टैः उपहोमैः नारिष्ठहोमानां अतिदिष्टानां शरवत् बाधः । **इति प्राप्ते**, अतिदेशेन कार्यपृष्ठभावेन नारिष्ठानामपि प्राप्त्युपपत्तौ शरन्यायवैलक्षण्येन समानस्थानकत्वमात्रस्य अप्रयोजकत्वात् । शराः हि बर्हिः-शब्दलक्षिते तत्कार्ये विहिताः युक्तं यत् तत्कार्यपृष्ठभावेन प्राप्स्यमानं बर्हिर्बाधन्ते इति । **भाट्ट. १०।४।१.**

* प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात् **शरन्यायानुपपत्तिः** । **भाट्ट. ५।१।१०.**

**शरपुरुषीय इति न्यायः** । काकतालीयवदयमिति । यथा– शरश्च क्षिप्तः प्राकाराच्च पुरुष उत्थितः स तेन हतस्तत्तुल्यं शरपुरुषीयमिति । **साहस्री. ६७९.**

* **'शरमयं बर्हिः'** इति शराः कुशान् निवर्तयन्ति श्येने । **भा. १०।४।१।१,** * 'शरमयं बर्हिर्भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन । १२।३।२।८. * शरमयं बर्हिरिति वचनम् । यत्र पाश्चात्त्यमपि प्रमाणं क्लृप्तं संभवति यथा 'शरमयं बर्हिः' इति वचनम्, न तत्र दौर्बल्यम् । कल्प्यत्वे परं दौर्बल्यम् । **रत्न. ५।१।१०।१८.**

* **शरवत्** । यथा 'शरमयं बर्हिः' इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते । **भा. १०।७।३।११, १०।७।१६।५१.** * शरवत् । 'शरमयं बर्हिः' इति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते । अध्वरकल्पायां तु प्रयोगवचनाश्रयः क्रमः कल्प्यः । तस्मात् आतिदेशिकः क्रम एवेति बार्हस्पत्यचरुनिर्वापः पूर्वं ततः सारस्वताज्यधर्माः । **भा. ५।१।१०।१७–१८** । बर्हिःकार्ये शरविधानार्थं तत्कार्यप्राप्तये चोदकस्य उपजीव्यत्वेऽपि कुशप्राप्तेरनपेक्ष्यत्वात् चोदकप्राप्तकुशबाधः । **सोम.**

* **शरशब्दस्यापि** कुशेषु प्रयोगो दृश्यते 'शरवणमेवेदं कुशवनम्' इति । **भा. ८।३।६।३३,** स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ– 'शरवणमेवेदं कुशवनम्' इति । स्वार्थे वर्तमानः सादृश्यं गमयति, स्वार्थं जहत् कथं गमयेत् । तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेषु । ८।३।६।३४.

* **'शरदि वैश्यः'** अग्निमादधीत । **भा. ११।३।२।२,** * 'शरदि वैश्यम्' उपनयीत । ६।१।७।३३.

* **शरावः** । 'पञ्चशरावमोदनं निर्वपेत्' इत्यादौ शरावादिशब्दस्य तत्परिमिते प्रयोगदर्शनम् । **सु. पृ. ९२६ .**

* **शरीरं** आतिवाहिकं नाम पूर्वोत्तरदेहयोरन्तराले ज्ञानसंतानसंधारणार्थं कल्प्यते, तदपि विन्ध्यवासिना निराकृतम् ! 'अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना । तदस्तित्वे प्रमाणं हि न किंचिदवगम्यते ॥'

श्लोवा. आत्मवादे ६२. * शरीरं चतुर्विधं जरायुजं अण्डजं उद्भिज्जं स्वेदजं चेति। **मणि.** पृ. ४६.

* **शरीरग्रहणस्य** तु नादृष्टादृते किंचित् कारणमस्ति। तस्मात् विशिष्टेन्द्रियशरीरादि फलं पशुसंबन्धसमर्थं पशुफलात् कर्मणो भवतीत्येवं बोद्धव्यम्। **भा.** ४।३।११।२७ वर्णकं २.

* **शरीरसंनिवेशः** सामुद्रिकविषयः। **सु.** पृ. १३०.

* **शर्कराः** ( अग्निचयने ) घृतेनाक्तव्याः न तैलादिना। **वि.** १।४।१९.

**शर्करोन्मज्जनीयन्यायः**। यथा– शर्करा च क्षिप्ता पुरुषस्योन्मज्जनम्, तत्तुल्यं शर्करोन्मज्जनीयमिति। **साहस्री.** ६८०.

* **शलाशब्दस्य** अध्रिगुप्रैषगतस्य कात्स्न्येनोद्धरणस्य प्रकाशकत्वम्। ९।४।५।२५–२७. **मीको.** पृ. ३४१ 'अध्रिगुप्रैषगताः श्येनशलादिशब्दाः०' इत्यत्र अधिकरणं द्रष्टव्यम्।

**शल्यकवानाखुन्यायः**। अयं शान्तिपर्वणि अ० ८८ श्लो० ६ टीकायाम्। 'यथा शल्यकवानाखुः पदं धूनयते सदा। अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत्॥' इति। शल्यकवाँस्तीक्ष्णतुण्डः आखुविशेषः। स हि निद्रितस्य मनुष्यस्य पादतलस्थं मांसमतीक्ष्णेनैवोपायेन भक्षयति। शयानस्तु ईषद्वेदनया पदं किंचिद्धूनयते कम्पयते, न तु तीव्रवेदनया प्रबुध्यन् आखुं निवारयति। तद्वत् राष्ट्रं समापिबेदित्युक्तम्। **साहस्री.** ७६२.

**शवोद्वर्तनन्यायः**। यत्र क्रिया निष्फला, तत्र अस्य न्यायस्य प्रवृत्तिः। **साहस्री.** २९९.

* **शवशिरसां** स्पर्शनं स्मृतिप्रतिषिद्धम्। **भा.** ६।६।१।२.

* **शवतिः** गतिकर्मा कम्बोजेष्वेव दृष्टः, विकारापन्नं आर्याः प्रयुञ्जते शवं इति मृतशरीराभिधानात् इत्यादि। बहव एव हि धातवो नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते। तस्मात् समा इयं अभिधाने विप्रतिपत्तिः स्यात्। **वा.** १।३।४।८ पृ. २१७। अत्र **निरुक्तम्**– 'अथापि प्रकृतय एव एकेषु भाष्यन्ते विकृतय एकेषु, शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ... विकारमस्य आर्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु।' २।२। कम्बोजेषु म्लेच्छेषु इति दुर्गाचार्यः।

अत्र **पातञ्जलं महाभाष्यं** पस्पशायाम्– 'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकारे एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु ( गतिकर्मा इत्यनुषङ्गः। **प्रदीपः**), गमिमेव तु आर्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु' इति।

* **शशविषाणं** नास्ति इति कथमुच्यते? पूर्वेणैवाभावेऽवगते नास्तिशब्दोऽनुवादक इति **केचित्**। **अथवा** सामान्येन प्रागभावादिषु नास्तिशब्दः प्रवर्तमानः शशविषाणशब्देन विशेष्यते, न शशविषाणम् अव्यभिचारात् तेनेत्यदोषः। **अथवा** येन अवयवार्थौ गृहीतौ समासाच्च राजपुरुषादिवत् सामान्यतो दृष्टेन षष्ठ्यर्थस्मृतिः प्रसक्ता, न च कदाचित् शशः शृङ्गरहितत्वेन अवधारितपूर्वः तस्य एतत्संसर्गानुसंधानं वार्यते। **अथवा** विनैव समासेन शशं अधिकरणत्वेन निर्दिश्य विषाणं च गवादिगतं विनैव अध्यारोपेण अनयोः संबन्धो नास्तीति कथिते तेनैव अनुभूतसंबन्धस्य शशविषाणशब्दः तमेवाभावं गमयिष्यति। **अथवा** शशमूर्धवर्तिनां पृथिव्यवयवानां उपर्युपरि चीयमानानां दृढदीर्घसंनिवेशरूपेण परिणतानां नीचैर्वृत्ताकारेण यत् अवस्थानं सोऽस्य वाक्यस्य अध्यासमन्तरेण उक्तविषयः संभवति इत्यविरोधः। तथा च आह– 'यां निषेधाः क्रियामाहुर्न यातीत्येवमादयः। तिष्ठतीत्यादिभिः सैव वस्तुरूपा प्रतीयते॥' तेन लब्धमुख्यार्थानां शशविषाणादीनां अन्यत्रापि प्रसिद्ध्यन्यथास्थायिनि अर्थे सिद्धो गौणप्रयोगः। **वा.** १।४।१२।२३–१ पृ. ३५९–३६०.

**शशविषाणन्यायः**। अयमपि अत्यन्ताभावविवक्षायामवतरति। तस्मात् ईश्वरो हि शशविषाणायत



इति चेत्तदेतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोतीति सर्वदर्शनसंग्रहे अक्षपादीये। **साहस्री.** ७१८.

* **शशाङ्कस्य** रोहिणी। **वा.** ३।४।१।९.

**'शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते। प्रमदा पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥' इति न्यायः। साहस्री.** ९५३.

* **शस्–प्रत्ययः** स्वार्थिकः। 'सर्वस्य द्वे' ( पा. ८।१।१ ) इति सूत्रे एकैकशः इति भाष्योदाहरणेन स्वार्थिकशसो ज्ञापितत्वात्। उक्तं च धातुवृत्तौ– 'एकैकशः पितृसंयुक्तानि इत्यत्र शसः, 'प्रायशः' इत्यादिवत् अत्यन्तस्वार्थिकत्वात् वीप्सायामनभिधानात् द्विर्वचनम्' इति। **सोम.** १।२।१ पृ. ३.

* **शस्त्रं** अर्थकर्म न संस्कारः 'शंसति' इति कर्तव्यताप्रतीतेः। **वि.** १०।४।२२. * शस्त्रं प्रधानकर्म न गुणकर्म। २।१।५।१३–२९. * शस्त्रं ( शंसनं ) स्तुतिरेव अप्रगीतमन्त्रसाध्या। गुणगुणिसंबन्धकीर्तनं च स्तुतिः। **वा.** २।१।५।१३ पृ. ४१६.

* **स्तोत्रशस्त्रे** यागस्याङ्गभूते ग्रहग्रहणनिमित्ते। **भा.** १०।५।१२।५०.

* **शस्त्रवत्**। यथा स्तोत्रशस्त्र स्तौति शंसति इति कर्तव्यतावगमात् प्रधानकर्मणी। **भा.** १०।४।२०।३९. * **शस्त्रवन्तः** सोमाः वैश्वदेवग्रहपर्यन्ताः। अवशिष्टास्तु शस्त्ररहिताः। **वि.** ११।३।१५. * **शस्त्रवतां** सोमानामुपरिष्टात् प्रचारः प्राजापत्यपशूनां वाजपेये इति एकः पूर्वपक्षः। अथ कतमोऽसौ कालः? तार्तीयसवनिकस्य वैश्वदेवस्य यदूर्ध्वम्। **भा.** ११।३।१५।४९.

* **शस्त्रस्तोत्रमन्त्राणां** प्राकृतानामेव अग्निष्टुति अविकारेण प्रयोगः। १०।४।२४।५०. **मीको.** पृ. ६५ 'अग्निष्टुति स्तोत्रशस्त्रमन्त्राणां०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **शस्त्रस्तोत्रवान्** षोडशिग्रहः। १०।५।१२। ४९–५२.

* **शाक–(प्राचीन–) पक्वौषधीनां** भक्षणं यथाकामम्। **संकर्ष.** ३।१।११. **मीको.** पृ. ८५६ 'आग्रयणाकरणेऽपि शाकप्राचीनौषधीनां०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **शाक्याः**। 'कस्यचित् जायते तुष्टिरशुभेऽपि हि कर्मणि। शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे॥ पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः। तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः॥' **वा.** १।३। ३।७ पृ. २०४.

* **शाक्या(क्त्या)नामयनं** षट्त्रिंशत्सु संवत्सरेषु अनुष्ठेयम्, तत्र 'संस्थितेऽहनि गृहपतिर्मृगयां याति, स यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति'। अत्र तरस–( मांस– )–मयत्वं सवनीयपुरोडाशेष्वेव, न सर्वपुरोडाशेषु। **वि.** ३।८।२३. * **शाक्यानामयने** 'तरसपुरोडाशमन्नसंरोधात्' इति छान्दोग्यसूत्रकृता अन्नमिश्रणेन मांसस्य पुरोडाशनिष्पादने सामर्थ्यमुक्तम्। तद्विषयमेव च धान्यशब्दोहानूहचिन्ता ( धान्याधिकरणे ९।१।१२। ३८–३९ वर्णकं २ )। **सु.** पृ. ६३८–३९. * शाक्या– ( क्त्या– ) नामयने षट्त्रिंशत्संवत्सरे सत्रे पेषणमन्त्रे 'धान्यमसि' इत्यत्र 'मांसमसि' ( वस्तुतस्तु 'तरसमसि' ) इत्यूहः कर्तव्यः। **भा.** ९।१। १२।३८–३९ वर्णकं २, * शाक्या–(क्त्या–)नामयने षट्त्रिंशत्संवत्सरसाध्ये सवनीया एव पुरोडाशा मांसमया न सर्वे। मांसाधिकरणम्। ३।८।२२।४२–४४.

* **शाक्यानामयनाधिकरणम्**। ३।८।२२। ४३–४४. **मीको.** पृ. ३१३६ 'मांसाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **शाक्यादयः**। 'यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः। नित्य एवाऽऽगमोऽस्माकमित्याहुः शून्यचेतनम्॥' **वा.** १।३।६।१२ पृ. २३५, * शाक्यादयः। 'स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः। कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति॥' तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात् तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमपि अहिंसादि श्वदृतिनिक्षिप्तक्षीरवत् अनुपयोगि अविश्रम्भणीयं च।१।३। ३।७ पृ. २०३. * **शाक्यादेः** आत्मविरुद्धाचरितृ-

त्वेन लोकहितैषित्वस्य दूरनिरस्तत्वात् तदुपदेशस्य प्रमाणमूलत्वानुमानं न युक्तम् । सु. पृ. १७२.

*** शाक्यादिग्रन्थानामप्रामाण्यम् । ( विरोधाधिकरणस्य द्वितीयं वर्णकमिदम् )** यान्येतानि त्रयीविद्भिः न परिगृहीतानि किंचित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रह-लाभ-पूजा-ख्यातिप्रयोजनपराणि त्रयीविपरीतासंबद्ध- दृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्य-योग-पाञ्चरात्र-पाशुपत-शाक्यग्रन्थपरिगृहीत-धर्म-अधर्म-निबन्धनानि विषचिकित्सा-वशीकरण-उच्चाटन-उन्मादनादिसमर्थ-कतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेन अहिंसा-सत्यवचन-दम-दान-दयादिश्रुतिस्मृति-संवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यतराणि म्लेच्छाचार-मिश्रकभोजनाचरणनिबन्धनानि तेषामेवैतत् श्रुतिविरोधहेतुदर्शनाभ्यां ( ३-४ सूत्राभ्यां ) अनपेक्षणीयत्वं प्रतिपाद्यते । न चैतत् कचित् अधिकरणान्तरे निरूपितम् । न चावक्तव्यमेव गाव्यादिशब्दवाचकत्वबुद्धिवत् अतिप्रसिद्धत्वात् । '**यदि ह्यनादरेणषां न कल्प्येताप्रमाणता । अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः ॥ शोभा-सौकर्यहेतूक्तिकलिकालवशेन वा । यज्ञोक्तपशुहिंसादि- त्यागभ्रान्तिमवाप्नुयुः ॥**' ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वं आश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रतिपद्येरन् । '**तेन यद्यपि लभ्येत स्मृतिः काचिद् विरोधिनी । मन्वाद्युक्ता तथाप्यस्मिन्नेतदेवोपयुज्यते ॥ त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः । अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते ॥ महाजनगृहीतत्वं पित्राद्यनुगमादि च । तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥**' तत्र श्रद्धामात्रमेव एकं व्यवस्थानिमित्तं सर्वेषां स्वपितृपितामहादिचरितानुयायित्वात् । यैश्च मानवादिस्मृतीनामपि उत्सन्नवेदशाखामूलत्वं अभ्युपगतं तान् प्रति सुतरां शाक्यादिभिरपि शक्यं तन्मूलत्वमेव वक्तुम् । को हि शक्नुयात् उत्सन्नानां वाक्यविषयेयत्तानियमं कर्तुम् । ततश्च यावत् किंचित् कियन्तमपि कालं कैश्चित् आह्रियमाणं प्रसिद्धिं गतं तत् प्रत्यक्षशाखाविसंवादेऽपि उत्सन्नशाखामूलत्वावस्थानं अनुभवतुल्यकक्षतया प्रतिभायात् । अत आह– ' विरोधे त्वनपेक्ष्यं स्यात् ' इति ( ' हेतुदर्शनाच्च ' इति च ) । पारतन्त्र्यं तावदेषां स्मर्यमाणपुरुषविशेषप्रणीतत्वात् तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादराच्च पार्श्वस्थैरपि ज्ञायते । वेदमूलत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्वेषिदुष्टपुत्रवत् नाभ्युपगच्छन्ति । अन्यच्च स्मृतिवाक्यं एकमेकेन श्रुतिवचनेन विरुध्येत । शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यः चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानि इति न वेदमूलत्वेन संभाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्मं अविप्लुतमुपदेक्ष्यति इति कः समाश्वासः । उक्तं च; '**परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् । आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात् कथं हितः ॥**' इति । बुद्धादेः पुनः अयमेव व्यतिक्रमः अलंकारबुद्धौ स्थितः । येन एवमाह– '**कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां तु लोकः ।**' इति । स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैः ब्राह्मणैः अननुशिष्टं धर्मं बाह्यजनाननुशासत् धर्मपीडामपि आत्मनोऽङ्गीकृत्य परानुग्रहं कृतवान् इत्येवंविधैरेव गुणैः स्तूयते, तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते । '**तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् । ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥**' नहि एषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति । '**न च शाखान्तरोच्छेदः कदाचिदपि विद्यते । प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ॥**' न हि यथा उपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः, एवं चैत्यकरण-तद्वन्दनशूद्रसंप्रदानकदानादीनां संवादः संभवति । मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् । '**लोभादिकारणं चात्र बह्वेवान्यत् प्रतीयते । यस्मिन् संनिहिते दृष्टे नास्ति मूलान्तरानुमा ॥ शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् । हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥ न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् । हेतवश्चाभिधीयन्ते ये धर्मे दूरतः स्थिताः ॥ एत एव च ते, येषां वाङ्मात्रेणापि नार्चनम् । पाखण्डिनो विकर्मस्था हैतुकाश्चैत एव हि ( मनुनोक्ताः ) ॥**' एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः । '**या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः ॥**' इति । तस्माद्धर्मं प्रति त्रयीबाह्यं एवंजातीयकं प्रामाण्येन अनपेक्ष्यं स्यात् इति सिद्धम् । वा. १।३।२।४ पृ. १९४-१९६.

शा— यान्येतानि त्रयीविद्भिर्न गृहीतानि शाक्यादिभिः ( आदिशब्देन वार्तिकोक्तपाशुपतपाञ्चरात्रादिसंग्रहः –**सोम.** ) निर्मितानि धर्मशास्त्राभासानि, तेषामनेन अप्रामाण्यं पूर्वोक्तसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेन उच्यते । तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम् । मन्वादिवत् वेदमूलत्वेन प्रामाण्यं इह निराक्रियते । तेषां हि असत्यपि प्रसिद्धवैदिकैरग्निहोत्रादिभिः कर्तृसामान्ये भिन्नप्रस्थाना वेदा मूलं भविष्यति । यथैव आथर्वणस्य त्रयीभिन्नप्रस्थानरूपता, तथा चतुर्भ्योऽपि वेदेभ्यः भिन्नरूपा वेदाः संभवेयुः । ते च इदानीं प्रलीनाः । मन्वादीनामपि हि केचित् प्रलीनशाखामूलतां अनुमन्यन्ते, तद्वदत्रापि भविष्यति । इत्थं च संभवति प्रामाण्ये नाप्रामाण्यं युक्तं इति भवति केषांचित् आशङ्का । सा च मन्दविषन्यायेन निराकर्तव्यैव इत्येवमर्थं इदमधिकरणम् । **सिद्धान्तस्तु–** अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या मन्त्रा( ? न्वा)दिषु अनुपलभ्यमानोऽपि वेदः कल्पितः । शाक्यादिषु इदमत्यन्तविपरीतं अवैदिकमप्रमाणं च तत् इत्येव शिष्टानां स्मरणम् । वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते । दृष्टानुसारिणी च कल्पना, न तद्वैपरीत्येन । अतोऽत्र वेदकल्पना दवीयसी इति अप्रामाण्यमेव तेषां असन्मूलत्वादिति । १।३।३ पृ. २७.

भाट्ट— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेः वेददर्शनसंभवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं तन्मूलभूतवेदश्च इदानीं प्रलीनः । इति प्राप्ते, शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणोक्तमुख्यहेतोः अभावात्, प्रत्युत अप्रमाणत्वेनैव तेषां स्मरणात् वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकारात् वेदमूलकत्वकल्पनाऽनुपपत्तेः अप्रामाण्यम् । १।३।२.

शंकर— ' शाक्यादेश्चाथ वर्णकम् । ' ( वार्तिके रचितं खण्डनपरम् ) ।

* शाक्यादिशास्त्रखण्डनम् । कल्पसूत्राधिकरणस्य द्वितीयं वर्णकम् ।- '**शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते । धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ॥ येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते । न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥ बोधकत्वात् प्रमाणत्वं स्वतस्तस्यापि लभ्यते । न च संदिह्यते बुद्धिर्न विपर्ययते कचित् ॥ अकर्तृकतया नापि कर्तृदोषेण दुष्यति । वेदवद् बुद्धवाक्यादिकर्तृस्मरणवर्जनात् ॥ बुद्धवाक्यसमाख्याऽपि प्रवक्तृत्वनिबन्धना । तद्द्रष्टृत्वनिमित्ता वा काठकाङ्गिरसादिवत् ॥ यावदेत्रोदितं किंचिद् वेदप्रामाण्यसिद्धये । तत्सर्वं बुद्धवाक्यानामतिदेशेन गम्यते ॥ तेन प्रयोगशास्त्रत्वं यथा वेदस्य संमतम् । तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥**' इति ( १।३।११ ) । '**एवं प्राप्ते वदामोऽत्र तत्राऽसन्नियमादिति । असन्निबन्धनं ह्येतत् पूर्वोक्तं सर्वमीक्ष्यते ॥ इहैका परमार्थेन बुद्धिरर्थेषु जायते । अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ॥ परेण सह केषांचिद् वाकोवाक्यानि जल्पताम् । उक्तयः प्रातिभासिक्यो जायन्ते परवाक्यतः ॥ स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् । छायां तथापि रक्षन्तो जल्पन्ति प्रतिशब्दकैः ॥**'

यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः । नित्य
एवागमोऽस्माकमित्याहुः शून्यचेतनम् ॥ प्रद्वेषाद्
वेदपूर्वत्वमनिच्छन्तः कथंचन । तन्मात्रेऽपि च
भूयिष्ठामिच्छन्तः सत्यवादिताम् ॥ भूयसां वेद-
बाह्यत्वाद् बुद्धादिवचसाममी । अहिंसाद्यप्यत-
त्पूर्वमित्याहुस्तर्कमानिनः ॥ ततश्च पौरुषेयत्वाद-
प्रामाण्यमतीन्द्रिये । प्रागुक्तैर्वेदनित्यत्ववागाभासै-
र्विमोह्यते ॥ ’

यादृशतादृशमीमांसकैरपि अतीन्द्रियविषयपुरुषवचन-
प्रामाण्यनिराकरणात् अपौरुषेयत्वाध्यवसायनिराकृत-
कारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुम-
शक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्य-
सदृशैः स्ववाक्यैः व्यवलिख्यमानहृदयाः सन्तोऽपि
प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्खवरगोत्र-
प्रश्नोत्तरवत्-- ‘ यदेव भवतां गोत्रं तदस्माकम-
पीतिवत् । आहुः स्वागमनित्यत्वं परवाक्यानु-
कारिणः ॥ अस्मदीयमिदं वाक्यं भवतामिति
चोदिताः । जल्पन्त्यस्माकमेवैतत् श्रुत्वा मीमां-
सकैर्हृतम् ॥ त्यक्तलज्जं ब्रुवाणो हि वाचो-
युक्तिमनर्थिकाम् । कुर्वन् परातिसंधानमश्रान्तः
कोऽवसीदति ॥ तत्र शाक्यैः प्रसिद्धाऽपि
सर्वक्षणिकवादिता । त्यज्यते वेदसिद्धान्तात्
जल्पद्भिर्नित्यमागमम् ॥ धर्मस्तेनोपदिष्टोऽयम-
नित्यं सर्वसंस्कृतम् । क्षणिकाः, सर्वसंस्कारा
अस्थिराणां कुतः क्रिया ॥ बुद्धिबोध्यं त्रयादन्यत्
संस्कृते( तं ) क्षणिकं च तत् ॥ ’ तथा शब्देऽपि
बुद्धेर्नियमात् नाभिव्यक्तिर्द्वेधाऽपि दोषात् इत्येवमादिभिः
सर्वदा पदार्थसंबन्धानित्यत्वप्रतिपादनात् तद्विपरीतमागम
नित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् ।
तथाहि– ‘ यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् ।
पटं कर्तुं समीहेत स हन्याद् व्योम मुष्टिभिः ॥
यावदागमनित्यत्ववेश्मदारूपकल्पिते । हेत्वाभा-
साग्निनिर्दग्धे तस्मिंस्तद्वेश्म दुष्करम् ॥’ ( आगम-
नित्यत्ववेश्मार्थं यावत् पदनित्यत्वादिदारूपकल्पिते
तस्मिन् शाक्योक्तैर्हेत्वाभासाग्निनिर्दग्धे तदागमनित्यत्व-
रूपं वेश्म दुष्करं इत्यर्थः । सु. पृ. २३५ ) । व्यवहार-
नित्यताशब्दश्च क्रियानित्यत्वपर्यायः तद्यस्य शब्दार्थ-
संबन्धानामनित्यत्वं तस्य तदाश्रयव्यवहारनित्यत्वं किमा-
धारं भविष्यति इत्यतिदुःसंपादम् ।

‘ न च शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम् ।
नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥ शब्दा-
दिषु विनश्यत्सु व्यवहारः क्व वर्तताम् । स्थितैषां
धर्मतेत्येतदर्थशून्यमतो वचः ॥ एषेत्यपि न निर्देष्टुं
शक्या क्षणविनाशिनी । किमुत स्थितया साकं
एषेत्यस्यैकवाक्यता ॥ ’ तेन अनित्यशब्दवादिनां
आगमनित्यत्वानुपपत्तेः अतीन्द्रियविषयस्य च वाक्यस्य
प्रयोगशास्त्रत्वाभावात् ‘ नासन्नियमात् ’ इत्युच्यते ।

‘ असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः ।
असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते ॥ ’
मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते ।
‘ ममवि हि भिक्खवे कम्मवच्च इसी सवे । तथा
उक्खित्ते लोडम्मि उव्वे अत्थि कारणम् । पडणे
णत्थि कारणम् । अणुम्भवे कारणम् । इमे सक्कडा
धम्मा संभवन्ति सकारणा, अकारणा विणस्सन्ति ।
अणुप्पत्तिकारणम् ’ इत्येवमादयः ( मम अपि हि
भिक्षवः कर्म वर्तते एव सर्वम् । तथा उत्क्षिप्ते
लोष्टे ऊर्ध्वं अस्ति कारणम् । पतने नास्ति कारणम् ।
अनुद्भवे कारणं नास्तीत्यनुषङ्गः । इमे संस्कृता धर्माः
संभवन्ति सकारणाः, अकारणा विनश्यन्ति । अनु-
त्पत्तिकारणं- इति संस्कृतम् ) । ‘ ततश्चासत्यशब्देषु
कुतस्तेष्वर्थसत्यता । दृष्टापभ्रष्टरूपेषु कथं वा
स्यादनादिता ॥ ’ शाक्यादिग्रन्थेषु यदपि किंचित्
साधुशब्दाभिप्रायेण अविनष्टबुद्ध्या प्रयुक्तं तत्रापि
प्रज्ञप्तिविज्ञप्तिपर्यस्यतातिष्ठतादिप्रायप्रयोगात् किंचिदेव
अविलुप्तं लभ्यते । किमुत यानि प्रसिद्धापभ्रष्टदेश-
भाषाभ्योऽपि अपभ्रष्टतराणि भिक्खवे इत्येवमादीनि ।
द्वितीयाबहुवचनस्थाने हि एकारान्तं प्राकृतं पदं दृष्टम्,
न प्रथमाबहुवचने संबोधनेऽपि । संस्कृतशब्दस्थाने च
ककारद्वयसंयोगः अनुस्वारलोपः ऋवर्णाकारापत्तिमात्रमेव
प्राकृतापभ्रंशेषु दृष्टम्, न डकारापत्तिरपि । सोऽयं



संस्कृता धर्माः इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धोऽपि
विनाशः कृतः इति असाधुशब्दनिबन्धनत्वात् इत्य-
न्तेन हेतुना वेदत्वाकृतकशास्त्रान्तरशङ्कानिवृत्तिः ।
यावांश्च अकृतकः अविनष्टः शब्दराशिः तस्य व्याकरण-
मेवैकं उपलक्षणम्, तदुपलक्षितरूपाणि च ‘ वेदे यथोप-
लभ्यन्ते नैवं शाक्यादिभाषिते । प्रयोगनियमा-
भावादतोऽप्यस्य न शास्त्रता ॥ ’

असन्नियमात् व्याकरणोक्तनियमाभावात् इत्यर्थः ।
क्षणिकत्व–निराकृतनित्यत्व-सिद्धानित्यत्वात्यन्ताविद्यमान-
ग्रन्थनियमाभ्युपगमाभिप्रायेण वा असन्नियमात् इत्युक्तम्
( क्षणिकत्वेन निराकृतेन नित्यत्वेन सिद्धं अनित्यत्वं
यस्य ग्रन्थस्य ) । असतां वा क्षणभङ्गशून्यवादानात्म-
कत्वादीनां असद्धेतुभिर्वा प्रतिपादननियमात् तदेक-
कर्तृकधर्मवचनानामपि अप्रामाण्यम् । ‘ कर्तृस्मरण-
दार्ढ्याच्च नैषामकृतता मता । तेनाकृतकगम्येऽर्थे
स्वातन्त्र्यान्न प्रमाणता ॥ ’ वा. १।३।६।१२ पृ.
२३४–२३९.

* शाकरं अच्छावाकस्य साम पृष्ठं विश्वजिति ।
भा. ७।३।३।८, * शाकरं मैत्रावरुणसाम विश्वजिति
सर्वपृष्ठे । १०।६।५।१४. * शाकरं साम । षडहे
पञ्चमेऽहनि पृष्ठं शाकरसामनिष्पाद्यम् । विश्वजिति चेदं
षडहात् प्राप्तम् । वि. ७।३।३.

* शाखा छेदनादिप्रयोजिका, नोपवेषः । ४।२।
३।८–९. मीको. पृ. ११७४ ‘ उपवेषाधिकरणम् ’
इत्यत्र अधिकरणं द्रष्टव्यम् । * शाखा प्रहरतिना
संबध्यमानाऽपि न यागसाधिका । टुप्. ४।२।४।११.
* शाखा वत्सापाकरणार्था विहिता । भा. ६।४।१४।
४४, * शाखा सांनाय्यार्था । तामनुनिष्पद्यते उप-
वेषः । ११।३।१३।३८. * शाखाः काठकाद्याः
शाखाव्यपदेश्याः प्रसिध्यन्ति विधिस्कन्धरूपस्य वेदाख्य-
वृक्षस्य कतिपयाङ्गाख्यपुष्पफलान्वयात् । यथा एकस्य
वृक्षस्य एकमूलः सर्वशाखाधारभूतः स्कन्धः तथा एक-
स्यैव कर्माख्यमूलोत्पत्तिविध्याख्यस्कन्धरूपत्वात् वृक्ष-
त्वोपचारः । यथा वृक्षस्य पुष्पफलानि न एकैकस्यां
शाखायां समस्तानि सन्ति तथा वेदशाखायामपि
एकैकस्यां ऋग्वेदादिप्रतिपाद्यहौत्रादिसमस्ताङ्गाख्यपुष्प-
फलासत्त्वात् शाखात्वोपचारः । सु. पृ. ९९१–९९२.
* शाखाः ( वेदस्य ) । शाखा इव हीमाः शाखाः ।
तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य
वेदस्य शाखाः । किं शाखासारूप्यम् ? यथा नाना
अवस्थानम् । न चैकैकस्यां कृत्स्नं पुष्पं फलं संनि-
हितम् । एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं
संनिहितम् । भा. २।४।२।१८, * शाखामधिकृत्य
‘ प्राचीमाहरति ’ इति शाखावादोऽयं न तु दिग्वादः ।
याज्ञिकास्तु दिग्वादमाहुः । ४।२।२।७. * “ शाखया
वत्सानपाकरोति, यत् पलाशशाखया वत्सानपाकरोति ”
दर्शस्य औपवसथ्येऽहनि प्रातः । वि. ४।२।२-३,
* शाखायाः प्रहरणं नाम आहवनीये त्यागः । ४।२।४.
* शाखायाः प्रहरणं प्रतिपत्तिः । भा. ६।४।१४।४४.
* शाखानाम् । नानादेशपठ्यमानानां शाखानां प्रमा-
दिभिः पुरुषैः तद्देशागमनात् श्रोतुमशक्तेः तद्गतश्रुत्यनु-
पलब्धिसंभवः । एकशाखागतानामपि श्रुतीनां नाना-
प्रकरणस्थानां तत्तत्कर्तृधर्मत्वबाधेन पुरुषधर्मत्वस्य प्रमा-
दिभिः निर्णेतुमशक्तेः स्मृतिमूलत्वनिरूपणानुपलब्धि-
संभवः । सु. पृ. १२३. * शाखायां एकस्यां ब्राह्मणा-
नेकत्वेऽपि तदेकं कर्म । यथा उद्गातॄणां पञ्चविंशषड्विंश-
ब्राह्मणयोः ज्योतिष्टोमद्वादशाहौ । वा. २।४।२।९ पृ.
६३५.

⌛ शाखायां तत्प्रधानत्वात् । ४।२।२।७ ॥

अग्रिमसूत्रैकदेशोऽयं सन् पृथक् आवर्त्य अधि-
करणान्तरपरत्वेन भाष्ये व्याख्यातः । वस्तुतस्तु अष्टम-
सूत्रस्थमेव पृथक्कृत्य प्रथमवर्णत्वेन व्याख्यातं इति
निश्चयो भवति । सिद्धान्तसूत्रमिदम् । दर्शपूर्णमासयोः
वत्सापाकरणाद्यर्थां पलाशादिशाखां अधिकृत्य श्रूयते
‘ प्राचीमाहरति ’ ‘ उदीचीमाहरति ’ ‘ प्रागुदीची-
माहरति ’ इति । अत्र प्राच्यादिशब्दः दिशि वर्तते
इति चेन्न । किंतु प्राच्यादिशब्दः किंचिद्दिक्स्थवृक्षस्य
प्राच्यादिदिशि विरूढायां शाखायां प्रयुक्तः । तत्प्रधा-
नत्वात् शाखाप्रकरणबलेन शाखाप्रधानत्वात् प्राच्यादि-
शब्दस्य । तस्मात् शाखावादोऽयम्, न तु दिग्वादः । के.

**शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत् । ४।२।३।८ ॥**

दर्शपूर्णमासयोः 'मूलतः शाखां परिवास्य उपवेषं करोति' इति श्रूयते । मूलतः मूलात् परिवास्य छित्त्वा । अत्र छेदनस्य प्रयोजकं शाखा उपवेषश्च उभयम्, उत शाखैव प्रयोजिका उपवेषस्तु तदनुनिष्पादी इति विचारे सिद्धान्तसूत्रम् । परिवास्य इति शाखायां अन्वेति । तत्प्रधानत्वात्, शाखां इति द्वितीयाश्रुत्या शाखायाः प्राधान्यबोधनेन परिवासनस्य शाखाप्रधानत्वात् । उपवेषेण तु परिवासनस्य विभागः स्यात् अन्वयो नं स्यात्, तस्य करोतिना अन्वयात् । तत् एतत् शाखोपवेषयोः वैषम्यं भवति परिवासने अन्वयानन्वयकृतम् । तस्मात् छेदनापरपर्यायस्य परिवासनस्य शाखा प्रयोजिका, उपवेषस्तु अनुनिष्पन्नः इति सिद्धान्तः ।

**श्रुत्यपायाच्च । ९ ॥**

दर्शपूर्णमासयोः 'मूलतः शाखां परिवास्य उपवेषं करोति' इति श्रुतम् । मूलतः मूलात् प्राग्देशभागे । परिवास्य छित्त्वा । अत्र परिवासनेन शाखाया एवान्वयः न उपवेषस्य इत्युक्तं सिद्धान्तिना पूर्वसूत्रे । तत्र शङ्का, ननु मूलस्यापि शाखावयवत्वात् शाखाया इव प्राधान्यमस्ति इति मूलतः परिवास्य इति अन्वयः स्यात् इति चेन्न, श्रुत्यपायात् । श्रुतेः अवयविन्यां शाखायां शक्तस्य शाखापदस्य अवयवात् मूलात् अपायो भवति । अवयविशब्दः अवयवे न शक्त्या प्रवर्तते । ततश्च मूलं शाखाशब्देन ग्रहीतुं न शक्यते, नापि तस्य परिवासनेनान्वयः । तस्मात् शाखैव परिवासनस्य प्रयोजिका नोपवेषः । उपवेषस्तु तदनुनिष्पन्नः । के.

* शाखासु पौर्वापर्यं नास्ति । न च तत्र पौर्वापर्यमस्ति येन ज्ञायेत अनया शाखया प्रथमं विहिते शाखान्तरीये पुनः श्रुतिर्भूत्वा भेत्स्यतीति । आह च 'शाखानां युगपद् वृत्तेर्न पुनः श्रुतिकल्पना । नहि तत्रैकशाखावत् क्रमेणाध्ययनं स्थितम् ॥' वा. २।४।२।१६ पृ. ६३८.

* शाखाध्ययनम् । स्वशाखात्यागेन परशाखाध्ययनानुपपत्तेः स्वशाखाध्ययनपूर्वकं मेधावितया शाखान्तराध्ययनं युक्तम् । सु. पृ. ९९०.

* शाखान्तराणि (वेदस्य)। 'एकस्य वेदवृक्षस्य किंचित्कर्मफलाश्रयात् । एवं शाखाः प्रसिध्यन्ति बहुशाखैकवृक्षवत् ॥' यदि प्रतिशाखं कर्मभेदः स्यात् तत एकमूलाभावात् आदित एवाऽऽरभ्य भिद्यमानत्वात् समस्तकर्माख्यपुष्पफलान्तरत्वात् वृक्षान्तरवत् वेदान्तराण्येवोच्येरन् । न शाखान्तराणि । एककर्ममूलविधिस्कन्धरूपत्वे सति इतिकर्तव्यतायाः क्वचित् किंचिदधिकं इत्यालोच्य सारूप्यादुपपन्नः शाखान्तरभेदव्यपदेशः । वा. २।४।२।१८ पृ. ६३९. * शाखान्तराणि काठकं कालापकं पैप्पलादकं तैत्तिरीयकं ताण्डकं इत्येवमादीनि । भा. २।४।२।८, मैत्रायणीयकम् । २।४।२।२०. * शाखान्तराणां पुरुषान्तरं प्रति प्रतिपादनेन अर्थवत्त्वम् । वा. २।२।३।३ पृ. ४७५. * शाखान्तरेऽपि हि एकं शास्त्रं इच्छन्ति मीमांसकाः । ऋजु. पृ. २७१.

**शाखान्तराधिकरणम् । शाखाभेदेऽपि न कर्मभेदः ॥**

**नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् । २।४।२।८ ॥**

**भाष्यम्**— इह शाखान्तराणि उदाहरणं काठकं कालापकं पैप्पलादकं इत्येवमादीनि । तत्र संदेहः किमेकस्यां शाखायां यत् कर्म अग्निहोत्रादि श्रूयते, तत् शाखान्तरे पुनः श्रूयमाणं भिद्येत तस्मादुत न भिद्येत ? भिद्येतेति पश्यामः । कुतः ? नामभेदात् । एकं काठकं नाम, अन्यत्कालापकं नाम । एवं नामभेदाद्भेदः । ननु ग्रन्थनामैतत् । सत्यम् । कर्मणामपीति ब्रूमः । कर्मभिरप्येवमादीनां सामानाधिकरण्यमेकविभक्तित्वं चेति । रूपभेदाच्च । एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति, एकस्यां द्वादशकपालम् । एवं भिन्नरूपं कथमिव न कर्मान्तरं भविष्यति । धर्मविशेषाच्च । कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ



भोजनमाचरन्ति, अपरे शाखिनो नाऽऽचरन्ति । तथा, अग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भानाहरन्ति अपरे न । अश्वमेधमधीयानाः केचिदश्वस्य घासमाहरन्ति, अपरे न । परेऽन्यं धर्ममाचरन्ति । अश्वघासादेरेकेषामुपकारं आकाङ्क्षति अश्वमेधादिः, एकेषां न आकाङ्क्षति । स एवैकः कथं नाऽऽकाङ्क्षेत, कथं वाऽन्यदाकाङ्क्षितुमर्हति । अतो गम्यते अन्यदिति । पुनरुक्तिप्रसङ्गाच्च । यदि सर्वशाखाप्रत्ययं एकं कर्म, एकस्यां शाखायां विहितस्य कर्मणः शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात् । न तु भेदपक्षे एष दोषोऽस्ति । तस्मादपि कर्मभेदः । निन्दावचनाच्च । 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्, दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्' इति केचिच्छाखिनोऽनुदितहोमं निन्दन्ति । अपरे पुनरुदितहोमं निन्दन्ति । यथा अतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद् यदुदिते जुह्वति' इति सर्वशाखाप्रत्यये विरुद्धम्, न तु कर्मभेदे । तस्मादपि भेद इति । अशक्तेश्च । न शक्नुयुः खल्वपि सर्वशाखाप्रत्ययमुपसंहर्तुम् । तत्रानारभ्योऽर्थो विधीयते इति प्रतिज्ञातं भवेत् । शक्यं तु कर्मभेदे । अतः कर्मभेदः इति । समाप्तिवचनाच्च । असमाप्तेऽपि समाप्तेर्वचनं भवति । केचिदाहुः, अत्र अस्माकमग्निः परिसमाप्यते इति । अपरे अन्यपरिसमाप्तिं व्यपदिशन्ति । तदेककर्मत्वे नोपपद्यते । न हि तदेव तत्र परिसमाप्येत, अन्यत्र न । भेदे तु युक्तम् । तस्माद्भेदः इति । प्रायश्चित्तविधानाच्च । केचिदनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, केचिदुदितहोमव्यतिक्रमे, व्यृद्धे च प्रायश्चित्तम् । न च कर्मैकत्वे उभयथा व्यृद्धिः संभवति । कर्मभेदे तु यदनुदिते होमकर्म, तदुदिते व्यृद्धमितरदप्यनुदिते । तस्मादपि भेदः । अन्यार्थदर्शनाच्च । इदं श्रूयते— 'यदि पुरा दिदीक्षाणाः स्युर्यदि वैषां गृहपतिर्गृहपतेर्वाऽनुसत्रिण इति, त एनमेव बृहत्सामानं क्रतुमुपेयुरुपेतं ह्येषां रथंतरम् । अथ यद्यदिदीक्षाणाः' इति इष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः । एककर्मत्वे नावकल्पते । कथम् ? ताण्ड्यके श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव तज्जायेत प्र वा मीयते' इति । तत् सर्वत्र स्यात् । तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अथापरं लिङ्गदर्शनम् । 'यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं पापीयान् स्यात् । अथ यदि वेदिसंमित्या मिनोति' इति पक्षसंमाने प्रतिषिद्धे वेदिसंमानस्य दर्शनं भवति । तत्तु कर्मभेदे उपपद्यते । पाक्षिकस्य वेदिसंमानस्य दर्शनमेककर्मत्वे नोपपद्यते । कथम् ? एके हि समामनन्ति 'रथाक्षमात्राणि यूपान्तरालानि भवन्ति' इति । तत्सर्वत्र स्यात् । तत्र च नो पक्षसंमानं नो वेदिसंमानं स्यात् । वेदिसंमानदर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अपरं च लिङ्गदर्शनम् । केषांचिज्ज्योतिष्टोमे श्रूयते 'द्वे संस्तुतानां विराजमतिरिच्येते' इति । परेषां तिस्रः संस्तुतानां विराजमतिरिच्यन्ते इति । एककर्मत्वे विरोधः । नानाकर्मत्वे कस्मिंश्चिज्ज्योतिष्टोमे द्वे, कस्मिंश्चित्तिस्रः । तस्मात् कर्मभेद इति । अपि च सारस्वते श्रूयते 'ये पुरोडाशिनस्ते उपवसन्ति । ये सांनाय्यिनस्ते वत्सान् वारयन्ति' । सांनाय्यिन इष्टप्रथमयज्ञाः । पुरोडाशिनो विपरीताः । उभयेषां सारस्वते दर्शनमवकल्पते कर्मभेदे । एककर्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात् । तत्र दर्शनं नोपपद्यते । अपि च श्रूयते 'उपहव्योऽनिरुक्तोऽग्निष्टोमो यज्ञः, रथंतरसामाऽश्वः श्यावो दक्षिणा । परेषां श्रूयते । उपहव्योऽनिरुक्त उक्थ्यो यज्ञो बृहत्सामाऽश्वः श्वेतो रुक्मललाटो दक्षिणा' इति । कर्मैकत्वे रथंतरवचनं बृहद्वचनं चानर्थकम् । शाखाद्वयप्रत्ययत्वात् । बृहत्सामा रथंतरसामा वा स्यात् । स चायं प्रकृतित एवंलक्षणकः प्राप्तः । नानाकर्मत्वे तु अन्यो बृहत्सामाऽन्यो रथंतरसामेति युक्तं भवति । तस्माच्छाखान्तरे कर्मभेदो भवितुमर्हति ।

**वा**— उक्तभेदकारणषट्कव्यतिरिक्तकारणनिराकरणार्थमिदमारभ्यते । तत्रैव कानिचित्केनचित्प्रकारान्तरेणाऽऽशङ्क्य प्रतिषिध्यन्ते । तत्तु प्रत्युदाहरणं प्रविविक्षन्तो

योजयिष्यामः । कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते ? केचिदाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति । न त्वेतद्युक्तम् । कुतः ? '**शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते । किंचिद् गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥**' यत्र हि कर्म निराकाङ्क्षमाम्नायते तत्र तद्भेदप्रतिपत्तिक्षमं भवति । यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीयन्ते इति भेदाशङ्कां सहन्ते न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयते । न च तावताऽस्य नैराकाङ्क्ष्यं भवति । दृष्टार्थानामेव द्रव्यदेवतातत्संस्काराणामभावात् । यत्तु तत्र द्रव्यदेवतायुक्तमाम्नायते तस्याऽऽध्वर्यवे गुणमात्रविधानात् साकाङ्क्षत्वम् । तथा च वक्ष्यति 'भूयस्त्वेनोभयश्रुति' ( अ. ३ पा. ३ अ. ३ सू. १० ) इति । तस्मात् शाखान्तराण्येवोदाहरणम् ! तत्र च नामभेदस्तावत्कारणं दृश्यते । तद्यथा– काठकेऽग्निहोत्रे तैत्तिरीयेऽग्निहोत्रे इदं पठ्यते इत्यादि । तथा रूपभेदे एकादशकपालत्वादि । वैश्वानरद्वादशाष्टत्वादिवदामिक्षावाजिनवच्च न द्वादशत्वैकादशत्वयोरितरेतरसंक्रान्तिरुपपद्यते इति गुण एव भेत्ता । कारीर्यग्न्यश्वमेधेष्वपि भूमिभोजनोदकुम्भाश्वघासा गुणा एव सन्त इतिकर्तव्यतास्थानीयत्वेन बाह्यतरत्वात् पूर्वस्मात् भेदेनोपात्ताः । 'परेऽन्यं धर्ममाचरन्ति' इति विरोधिगुणान्तरप्रदर्शनार्थम् । 'अश्वघासादेः' इति पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह संबध्यते । पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाप्यश्वघासादेर्निष्पन्नमुपकारमाकाङ्क्षत्यश्वमेधादिरिति । पुनरुक्तत्वेन पुनःश्रुतिर्भेदिकोक्ता । निन्दायामपि उदितानुदितकालसंयोगभेदात् गुण एव भेदकः । उदितहोमवादिनो ह्यनुदितहोमं निन्दन्ति अनृतवादित्वेन । 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति ह्यनुदिते सूर्येऽभिधीयमानमनृतं जायते । तस्मादुदितहोमः कर्तव्यः इति । इतरे पुनराहुः, यः पूजां पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते स साधुः । यस्त्वतिक्रान्तं व्याहृत्य पूजयति नासौ सम्यक्पूजकः । तस्मात् अनुदितहोम एव कर्तव्य इति । तत्रैकत्वे विप्रतिषिद्धधर्मसमवायप्रसङ्गः । नानात्वे तु न कश्चिद्विरोधः । अशक्तिद्वारेणापि गुण एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराशक्तेरपूर्वसंयोगः । समाप्तिभेदोऽपि गुण एव । निन्दया गतार्थोऽपि सन् प्रायश्चित्तभेदः पुनरुपन्यस्यते । कदाचिदत्र वैकल्पिकत्वपरिहारं ब्रूयात्तत्त्वभ्युपेत्योच्यते । वैकल्पिकेषु ह्युभयथाऽप्यवैगुण्यं भवति । अत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते । न च तत्कर्मैकत्वे घटते । तस्मादपि भेदः । परिहारसूत्रवशेन पञ्चान्यार्थदर्शनान्युच्यन्ते । यदि पुरा दीक्षितवन्तस्ततो बृहत्सामानमतिरात्रमुपेयुः । पूर्वदीक्षायां रथंतरस्य प्रयुक्तत्वात् । अथ न दीक्षितवन्तस्ततो रथंतरसामानमेवोपेयुरिति । द्वादशाहेऽनिष्टप्रथमयज्ञत्वं कर्मभेदे भवति । ताण्डकवचनेन ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति एतच्छाखागतस्यानियमात् । एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां दर्शनं न स्यात् । तथा यूपैकादशिन्यां पक्षवेदिसंमानयोरर्थप्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्योतयति । वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुटविधाने सति स्तुत्या । तस्मान्नूनं शाखान्तरीयो रथाक्षमात्रान्तरालविधिरेषां नास्ति । ततश्च कर्मभेद इति । द्वे स्तोत्रीये विराजं दशकमतिरिच्येते इति तिस्रोऽतिरिच्यन्ते इति च ज्योतिष्टोमातिरात्रैकत्वे सति उपपन्नम् । भेदे तु यथाविधि भवतीत्यविरोधः । पुरोडाशिसांनाय्यिदर्शनं दीक्षितादीक्षितसंदर्शनेनैव गतं परिहारप्रकारान्तरत्वादुदाहृतम् । किञ्च '**पृष्ठद्वयविकल्पः स्याच्छाखान्तरविधानतः । स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत् ॥**' उपहव्यभेदे तु नियमार्थायां पुनःश्रुतावर्थवत्ता । तस्मादपि कर्मभेदः ।

**एकं वा संयोगरूपचोदनाख्याविशेषात् ।९॥**

**भाष्यम्**— न चैतदस्ति, यदुक्तम् 'शाखान्तरेषु कर्मभेदः' इति । सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म । अर्थसंयोगस्याविशेषात् । तदेव प्रयोजनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः । रूपमप्यस्य तदेव द्रव्यदेवतम् । पुरुषप्रयत्नश्च तादृश एव चोद्यते । नामधेयं चाविशिष्टम् । तेन तदेव कर्म सर्वशाखादिष्विति प्रत्ययः ।

**वा**— '**सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखास्वपगच्छति ॥**' सर्वब्राह्मणप्रत्ययमिति— एकस्यामपि शाखायां ब्राह्मणानेकत्वेऽपि तदेकं कर्मेत्यभिप्रायः । तद्यथा उद्गातॄणां पञ्चविंशषड्विंशब्राह्मणयोर्ज्योतिष्टोमद्वादशाहौ । संयोग इति– प्राधान्यात् फलसंयोगग्रहणम् । रूपमिति– प्रत्यासत्तेर्द्रव्यदेवतम् । चोदनेति– सर्वधात्वर्थभावनाविषयो विधिः । ज्योतिष्टोमादि नामधेयं च सर्वशाखास्वविशिष्टं दृश्यते । तस्मादियतः प्रत्यभिज्ञानकारणकलापादभेदसिद्धिः । न चान्यः कश्चिद्भेदहेतुरस्ति । प्रकरणान्तरवच्छाखान्तरेषु परस्परासंनिधानमिति चेन्न । तेनैवेतराग्रहणात् । येन हि प्रदेशान्तरे किंचित्कर्म गृहीतं भवति स एव तत्सदृशमन्यत्रोपलभमानः शक्नोति ततोऽन्यदेतदित्यध्यवसातुम् । एकशाखाविषये च सर्वशाखाध्ययनादेवं भवति । शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधादपूर्ववदुच्यमानेषु न भेदबुद्धिर्जायते । यस्तर्हि द्वे शाखे पठति तस्य प्रकरणान्तरन्यायेन भवितव्यमेकशाखागतेषु च ब्राह्मणान्तरेषु । नैष दोषः । शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ? '**स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते । एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥**' यथैव आकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्वमेकैकस्यां शाखायाम् । अतश्च 'स्वाध्यायोऽध्येतव्यः' इति कर्मावबोधनं प्रत्युपादीयमानत्वाद्विवक्षितैकसंख्यैका शाखा अध्येतव्या । नन्वेवं वेदान्तरस्याप्यध्ययनं न प्रसज्यते । न । वचनान्तरेण प्रतिप्रसवात् 'अनया त्रय्या विद्यया' इति । तथा 'वेदानधीत्य वेदौ वा' इति मानवम् । साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयोऽवगम्यते । शाखान्तरेषु त्वन्योन्यनिरपेक्षस्वतन्त्रज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वनिमित्तो विकल्पः । साकाङ्क्षत्वादेव चैकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम् । नन्वेककर्मत्वाद्विकल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत् । न । प्रत्यभिज्ञानमात्रेणैकत्वे विज्ञाते संख्यावशेन विकल्पसिद्धेः । अतश्च यो नामातिमेधावित्वादेकवेदगतानि शाखान्तराण्यपि अधीते स समृद्धः सन् व्रीहियवैरपि मिश्रैर्यजेत । तस्मादेकं कर्मेति ।

**न नाम्ना स्यादचोदनाऽभिधानत्वात् । १०॥**

**भाष्यम्**— यदुक्तं नामभेद इति । परिहृतं तद् ग्रन्थनामत इति । अथ यदुक्तं कर्मणोऽपि नामसामानाधिकरण्यदर्शनादिति । नैष दोषः । ग्रन्थसंयोगात् कर्म काठकादि, न कर्मसंयोगात् ग्रन्थः काठकः । कथं गम्यते ? यत्कर्म काठकादिसंयुक्तं तत्काठकादिशब्देन उच्यते । किमतोऽपि यद्ग्रन्थसंयोगात्काठकं कालापकं कर्मोच्यते । एकत्वेऽपि काठकग्रन्थसंयोगात् काठकं कालापकग्रन्थसंयोगात्तु कालापकं भविष्यति ।

**वा**— यद्यपि तावत्काठकादिकं नामधेयं स्यात्तथाप्युत्पत्तिसंयोगाभावान्नैव भिन्द्यात् । इदं तु नैव कर्मनामधेयम् । 'अन्यायो ह्यनेकार्थत्वम्' इत्यनेन न्यायेन ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगोपपत्तेः । कथं पुनरवगम्यते ग्रन्थनामैतत्कर्मण्युपचर्यते न पुनर्विपर्यये इति । तदुच्यते '**शाखया ह्येकया योगाद्बहुकर्मावबोधनम् । युज्यते कर्मनानात्वान्नैकशाखोपलक्षणम् ॥**' काठकादिशब्दो हि परस्परासंबद्धेषु बहुषु कर्मसु प्रयुज्यते । स यदि कर्मनाम स्यात्कर्मान्तरे न प्रयुज्येत । न हि तत्र लक्षणा उपपद्यते । संबन्धाभावात् । सर्वाभिधानं तु व्यक्तिवद् दुरुपपादम् । तस्माच्छाखयैव कर्माणि लक्ष्यन्ते न कर्मभिः शाखाः । ततश्च संज्ञया कामं शाखा एव भिद्यन्तां न कर्माणि । संबन्धाभावात् । तस्मात्तान्येवाग्निहोत्रादीनि संबन्धिभेदादन्यथाऽन्यथा च व्यपदिश्यन्ते ।

**सर्वेषां चैककर्म्यं स्यात् । ११ ॥**

**भाष्यम्**— यदि शब्दभेदाद्भेदो भवेत्, शब्दैक्यात्तर्हि कर्मैक्यं भवेत् । तत्र काठकशब्दाभिधानादैक्यं भवेत् । अग्निहोत्रस्य दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च तच्छब्दत्वात् । न चैतदेवम् । तस्मादप्यभेदः ।

**वा**—प्रायेण हेतुविपर्यये कार्यविपर्ययो दृश्यते इति काठकादिसंज्ञैकत्वादेकशाखाधीताग्निहोत्रादेः एकत्वप्रसङ्गः । साध्यव्यभिचारित्वादियं अर्थापत्तिसमा नाम

जातिः पूर्वपक्षहेतोरसिद्धत्वोपालम्भप्रदर्शनार्थमेवाभिहिता। सर्वत्र च दुष्टे पूर्वपक्षे जातीनामुत्तरत्वं केषांचिदिष्टम्।

**कृतकं चाभिधानम्। १२॥**

**भाष्यम्—** इदानींतनं चैतदभिधानं भवेत्। अस्य न पूर्वमासीत्। यतः प्रभृति कठस्य प्रकृष्टं वचनं ततः प्रभृति प्रवृत्तम्। पूर्वं नाऽऽसीद्भेद इदानीं भेद इति विरुद्धम्।

**वा—** '**कृत्रिमं काठकाद्युक्तमाख्याप्रवचनादिति। न वाऽनादीनि भिद्यन्ते कर्माण्यादिमता सता॥**' यद्यपि काठकादेर्जातेर्नित्यत्वात् नित्यैवाऽऽख्या तथाऽपि प्रवचननिमित्तेयं स्मर्यते न च कर्माणि प्रोच्यन्ते। शब्दविषयत्वात् प्रवचनस्य। तस्मादपि न संज्ञया कर्मभेद इति।

**एकत्वेऽपि परम्। १३॥**

**भाष्यम्—** एककर्मत्वेऽपि रूपभेदो भवति वचनात्। न च वाचनिके रूपभेदेऽसत्यामपि भेदबुद्धौ कर्मणो भेदोऽध्यवसीयेत।

**वा—** न च कपालसंख्याभेदाद्भेदः। तत्संबन्धिद्वारभेदानभ्युपगमात्। तस्मादेकस्मिन्नेव कर्मणि साधनविकल्पो भविष्यति। ननु चोत्पत्तिवाक्यशिष्टत्वाद्विकल्पो नास्तीत्युक्तम्। नैष दोषः। उभयोरुत्पत्तिवाक्यशिष्टत्वाविशेषेण तुल्यबलत्वात्। कथं पुनरनेकवाक्योत्पादितस्य एकत्वं विज्ञायते इति। तस्य उत्तरसूत्रे परिहारं वक्ष्यामः।

**विद्यायां धर्मशास्त्रम्। १४॥**

**भाष्यम्—** अथ यो धर्मविशेष उक्तो विद्याग्रहणार्थः स न कर्मण उपकारकः। कथं गम्यते? श्रुत्यादीनामभावाद्विद्यासंयोगाच्च न कर्मप्रयुक्त इति।

**आग्नेयवत् पुनर्वचनम्। १५॥**

**भाष्यम्—** अथ यदुक्तं– यथाऽमावास्यायामाग्नेयस्य पुनरुक्तदोषान्मध्यमः पक्षो निरस्तः, एवमयमपि तस्मादेव दोषात्कर्मैकत्वपक्षो निरसितव्यः इति। एतत्परिहर्तव्यमित्याभाषान्तं सूत्रम्।

**वा—** अनुभाषणसूत्रमेतत्। अथवा पुनरुक्तत्वपरिहारार्थमेवैतत्। पुनःश्रुतेरर्थवादगुणार्थत्वेन अन्यार्थत्वात्।

**अद्विर्वचनं वा श्रुतिसंयोगाविशेषात्।१६॥**

**भाष्यम्—** नैव खल्वेतत् द्विर्वचनम्। स एवायमर्थः पुनः श्रावितोऽग्निहोत्रादिर्बहुकृत्वो बहुभिस्तु पुरुषैः। न चैकोऽर्थो बहुभिरुच्यमानः पुनरुक्तो भवति। यदि भवेत्, एकस्मिन्नेव वेदे बहुभिरुच्यमाने भवेत्। तस्मान्न बहुकर्मसमवायोऽयम्। एकमेवेदं कर्मेति।

**वा—** द्वितीयव्याख्याने परिहारान्तरनिवृत्त्यर्थो वाशब्दः। तत्रान्यार्था पुनःश्रुतिर्भवति यत्र तावन्मात्रमेव श्रूयते। यत्र चैकवाक्यगतं विधेयान्तरं विद्यते। न त्विह तदेकमपि। समस्तेतिकर्तव्यतोपेतप्रधानपुनःश्रुतिश्रवणात्। एतमेव श्रुतिसंयोगाविशेषं मन्यते। न चैषा पुनःश्रुतिः। कुतः? '**एकशाखानिबद्धानां ज्ञायते हि पुनः श्रुतिः। कठादिचरणानां तु प्रतिशाखं सकृच्छ्रुतिः॥**' पूर्वोक्तेन शाखाध्ययनविकल्पेन येन काठकमग्निहोत्रं श्रुतं नासौ कदाचित्तैत्तिरीयकं शृणोति। शृण्वन्नपि वा स्वशाखयैव प्रतिपन्नत्वात् तैत्तिरीयकप्रतिपत्त्यर्थमेवैतदिति कल्पयित्वा न पुनःश्रुतिं मन्यते। एवमितरोऽपीतरदिति सर्व एवैकश्रुतिसंयोगाविशेषादग्निहोत्रादि प्रतिपद्यन्ते। न च तत्र पौर्वापर्यमस्ति येन ज्ञायेतानया शाखया प्रथमं विहिते शाखान्तरीये पुनःश्रुतिर्भूत्वा भेत्स्यतीति। आह च '**शाखानां युगपद्वृत्तेर्न पुनः श्रुतिकल्पना। न हि तत्रैकशाखावत्क्रमेणाध्ययनं स्थितम्॥**' तस्माद्यथैकशाखाकर्म देशान्तरपुरुषान्तरादिषु पुनः श्रूयमाणमपि प्रतिपाद्यभेदान्न पुनरुक्तं भवत्येवं शाखान्तरेष्विति।

ननु चैकयाऽपि शाखया समस्तपुरुषप्रतिपादने सति, अनर्थकमेव शाखान्तरम्। नानर्थकम्। न हि कश्चिद् द्वे शाखे अधीते। न च पुरुषान्तरगतं तत्प्रतिपादनेनार्थवदन्यान् प्रत्यनर्थकं भवति। यस्तु तेऽपि किल शाखिनस्तामेवाधीत्य प्रतिपत्स्यन्ते इत्यभिप्रायः स नित्यत्वात् वेदस्य तदध्ययनाध्यापनसंबन्धानादित्वात्



अनुपपन्नः। किंच– '**संप्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्। शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥**' तस्मात्परकीयशाखाध्ययने अप्यस्त्येव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययनमेव। न च वेदः पुनरुक्तादिदोषद्वारं पर्यनुयोगमर्हति।

**वाक्यासमवायात्। १७॥**

**वा—** अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टम् 'वाक्यासमवायात्' इति। तदेवं व्याख्येयम्। नैकस्मिन्पुरुषे शाखान्तरवाक्यं समवैति।

**अर्थासंनिधेश्च। १८॥**

**भाष्यम्—** अर्थासंनिधेश्च शाखाशब्द उपपन्नो भविष्यति। शाखा इव हीमाः शाखाः। तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य वेदस्य शाखाः। किं शाखासारूप्यम्? यथा नानावस्थानम्। न चैकैकस्यां कृत्स्नं पुष्पं फलं संनिहितम्। एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं संनिहितमित्यर्थासंनिधेः शाखाशब्दोपपत्तिः। तस्मादप्येकं कर्मेति।

**वा—** '**एकस्य वेदवृक्षस्य किंचित्कर्मफलाश्रयात्। एवं शाखाः प्रसिध्यन्ति बहुशाखैकवृक्षवत्॥**' यदि प्रतिशाखं कर्मभेदः स्यात्तत एकमूलाभावादादित एवाऽऽरभ्य भिद्यमानत्वात् समस्तकर्माख्यपुष्पफलान्तरत्वात् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन्। न शाखान्तराणि। एककर्ममूलविधिस्कन्धरूपत्वे सतीतिकर्तव्यतायाः क्वचित्किंचिदधिकमित्यालोच्य सारूप्यादुपपन्नः शाखान्तरभेदव्यपदेशः। अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम्। तत्र नाम पुनरुक्तता भवति यत्र पूर्वोक्तोऽर्थस्तस्यैव पुंसः संनिहितो भवति। न त्विह शाखान्तरगतस्य संनिधानमित्यपुनरुक्तता।

**न चैकं प्रति शिष्यते। १९॥**

**भाष्यम्—** न च यत्काठकेऽग्निहोत्रं तत्काठकमेवैकं पुरुषं प्रति विधीयते। तैत्तिरीयस्यापि तद्विहितमेव। पुरुषविशेषवचनाभावात्। यच्च अग्निहोत्रस्य किंचिदङ्गं विधीयते, सर्वावस्थस्य तदग्निहोत्रस्य। यच्च काठकस्याग्निहोत्रस्य तच्च तैत्तिरीयकस्येति। विशेषवचनाभावात्। तस्मात्सर्वशाखाभिरेकं समासं कर्मोच्यते इति।

**वा—** अभ्युपेत्यवादोऽयम्। सत्यपि कर्मभेदे ये तावद्वाक्यसंयुक्ताः शेषास्तेऽग्निहोत्रादिमात्रोद्देशेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्ते इत्यवश्योपादातव्या इति नैव शाखामात्रपरितोषव्यवस्था लभ्यते। न च सूत्रकाराणामपि कश्चित् स्वशाखोपसंहारमात्रेणावस्थितो येन प्रतिशाखं कर्मव्यवस्था समर्थ्येत। प्रधानान्यपि प्राधान्येन यजमाननियमं प्रति, अप्रभवन्तीभिः समाख्याभिरार्थिमात्रमुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकं पुरुषमुपतिष्ठन्ते। तत्रैकफलत्वादसमुच्चये येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यप्रसङ्गः। अथ तेषां विकल्पेनार्थवत्त्वम्, तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपद्यमानानामनाकुलतरं परिकल्पितमित्यपुनरुक्तता।

**समाप्तिवच्च संप्रेक्षा। २०॥**

**भाष्यम्—** अत्र अस्माकमग्निः परिसमाप्यते इत्युत्प्रेक्षितारो भवन्ति। अन्वारोहेषु मैत्रायणीयानामग्निः परिसमाप्यते, अस्माकं तेषु न परिसमाप्यते इति। यद्यन्यदेव मैत्रायणीयानामन्यच्च तेषाम्, कथं ते ब्रूयुरेष्वस्माकं न परिसमाप्यते इति। एकत्वमुपपन्नम्, तेषामपि हि ते सन्ति।

**वा—** असमाप्तिवदिति वा छेदः। कर्मभेदपक्षे हि हि यावदेव येषां समाम्नानं तावदेव तेषां समाप्यते इति न ब्रूयुरत्रास्माकं न समाप्यते इति। अन्वारोहो नाम स्थलारोहणमन्त्राः। तेषु मैत्रायणीयानां समाप्यते न अस्माकमित्यभिधानादध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते।

**एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि। २१॥**

**भाष्यम्—** न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि? निन्दितादितरत्प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते, किं त्वितरस्य विधिः। तत्र एकस्मिन् अग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते। अतो न कश्चिद्विरोधः।

तथा, असमर्थानामेकस्मिन्नपि वेदे विहितकृत्स्नमङ्गजातमुपसंहर्तुमशक्तिः । समर्थानां तु सर्वशाखाभ्योऽप्यागमितमधिकं विधिमुपसंहर्तुं शक्तिरस्तीति तेनैककर्मत्वेऽपि न विरुद्धमिति । तथैकस्मिन्नपि कर्मणि किंचिद्वस्तु समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते । यथा आध्वर्यवे समाप्ते ज्योतिष्टोमस्य, समाप्तो ज्योतिष्टोम इति भवति ।

वा-- अन्योन्यनिन्दयेतरेतरविधाने तुल्यार्थयोरुदितानुदितत्वयोः कर्मणि विकल्पो भविष्यति । त्वत्पक्षेऽपि चासौ कर्मणोः फलं प्रत्यविशिष्टः । तथा शक्त्यशक्ती सर्वपुरुषाणामव्यवस्थिते । सर्वशाखासु अधिकविधावेकशाखायां न स्तोकान्तरत्वादविशिष्टे । केचिच्चात्र लाघवार्थिनः एवं वर्णयन्ति । य एव किल वाक्यसंयुक्ताः शाखान्तरविधयस्त एव संकीर्यन्ते ये तु प्राकरणिकास्तेषां व्यवस्थैवेति । कुतः ? ' एककर्मगताः पुंसां विकल्पन्ते विधायकाः । तत्समीपसमाम्नातं ग्राह्यं प्रकरणस्य च ॥ ' शाखान्तरेषु विकल्पमानेषु यथैव प्रधानं विधीयतेऽर्थिनस्तदीयः कथंभावस्तामेव व्याप्नोति न शाखान्तराणि । अतश्चान्यगताः गुणाः कथंभावेन नापेक्षिताः प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्तीति नानुष्ठेयाः । ततश्च वाक्यसंयुक्तानामल्पत्वाद्विधीयमानानामप्युपसंहरणशक्तिरिति । न त्वेतद्युक्तमिव । तथा हि ' शाखान्तरगतस्यापि यदङ्गं कर्मणः स्थितम् । तस्यान्यत्रापि तादर्थ्यं प्राप्तं केन निवार्यते ॥ ' प्रतिवेदमपि च प्रकरणं पुरुषस्य धर्मानुपदिशति । न च तद्वेदान्तरस्थं प्रत्यप्रमाणम्, तथा शाखान्तरेऽपि द्रष्टव्यम् । कर्मधर्माश्चैते विज्ञायन्ते । तच्च कर्म शाखान्तरेष्वपि तदेवेत्यङ्गत्वाविशेषः । यद्यपि प्रकरणरूपमन्यत्तथापि शाखान्तरस्थेनानेन एतेऽपि धर्मा गृहीता इत्यवधारणान्न स्वप्रकरणगृहीतेभ्यो विशिष्यन्ते सर्वासु अपि च शाखासु अधिकविधयो न कथंचिच्छाखया परिमिता भवन्तीत्यल्प एवाऽऽयास इति नाशक्तिः । समाप्तिश्च अधीतापेक्षयोपपन्नत्वात् न भेदं कल्पयति ।

**प्रायश्चित्तं निमित्तेन । २२ ॥**

**भाष्यम्**-- यदुक्तम्- उदितहोमस्यापि प्रायश्चित्ताम्नानात् व्यृद्धता गम्यते, अनुदितहोमस्यापि । तदेकत्वे विरुध्यते । अविरुद्धं नानात्वे इति । तत्परिहर्तव्यम् । आभाषान्तं सूत्रम् ।

**वा**-- अनुभाषणसूत्रं सामान्यपरिहारसूत्रं वा ।

**प्रक्रमाद्वा नियोगेन । २३ ॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति । नैष दोषः ' उदिते होष्यामि ' इति प्रक्रान्तेऽन्यथा क्रियमाणे भवति दोषः । तत्र प्रायश्चित्तस्य विषयो भविष्यति इति कर्मैकत्वेऽपि न दोषः ।

**वा**— वैकल्पिकानामादित एवाङ्गीकरणादाश्रितक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते ।

**समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयते । २४॥**

**भाष्यम्**— पूर्ववति समाप्तिवचनं भवति । यत् प्रारब्धं तत्परिसमाप्यते । तत्रास्माकं परिसमाप्तोऽग्निरिति योऽस्माभिर्ज्ञायते, परिसमाप्यते । प्रारब्धश्चेत्यभिप्रायः ।

**वा**-- एकत्वेऽपि समाप्तिर्लिङ्गत्वेनोक्ता । ' समाप्तिवच्च संप्रेक्षा ' इति समाप्तिवचनं नानात्वेऽपि । तत्र न्यायानुसारित्वात् एकत्वस्यैव साधिका । तद्वचनस्येयमुपपत्तिः पूर्ववत्त्वादिति, आरम्भापेक्षत्वात् । अथवा शब्दप्रयोगस्य प्रसिद्धिपूर्वकत्वात् यादृशीं वयं समाप्तिं पश्यामस्तादृश्यामयं प्रयुक्त इति निश्चिनुमः । स च वस्तुन्यसमाप्तेऽपि तच्छाखाविज्ञेयपदार्थसमाप्तौ प्रयुक्त इति दृश्यते । तस्मादविरोधः ।

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना, तस्माद् द्वादशाहस्याऽऽहारव्यपदेशः स्यात् । २५ ॥**

**भाष्यम्**-- यदुक्तं ' यदि पुरा दिदीक्षाणाः ' इति द्वादशाहे, इष्टप्रथमयज्ञानामनिष्टप्रथमयज्ञानां च दर्शनं कर्मभेदे उपपद्यते, न सर्वशाखाप्रत्ययैककर्मणीति । नैष दोषः । यदि दिदीक्षाणा द्वादशाहेन, अदिदीक्षाणा द्वादशाहेनेत्येवं तत् । न हि सामवेदे ज्योतिष्टोमस्य विधानम् । किमतोऽपि । यत्र विहितस्तत्रानूद्यते । तेन कर्मभेदेऽपि सर्वज्योतिष्टोमानामेष



धर्मः प्राथम्यं नाम । अतो नानाकर्मपक्षेऽप्यवश्यं द्वादशाहस्याऽऽहारव्यपदेशः कल्पनीयः । तस्माददोषः ।

**वा**-- अदीक्षितदर्शनं द्वादशाहे तवाप्यनुपपन्नम् । ताण्डके सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् । न हि तत्रापरस्यापि ज्योतिष्टोमस्योत्पत्तिरस्ति यस्य नियमः स्यात् । अत आध्वर्यवाणामेव नियमे, उभयपक्षे समे च दोषे सति उभाभ्यामेषोऽर्थो वर्णनीयः, यदि द्वादशाहेन पुरा दिदीक्षाणा अदिदीक्षाणा वेति । तस्मादविशिष्टमेतत् ।

**द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् । २६॥**

**भाष्यम्**-- द्रव्ये चाग्नौ अचोदितत्वादेकादशिन्याः संमानपरिमाणं प्रति नैषा व्यवस्था स्यात् । नैवाग्नावेकादशिनी चोद्यते । कुतः पक्षसंमानं वेदिसंमानं वा स्यात् । द्वयमप्येतत्परार्थं कीर्त्यते, पश्वेकादशिनी विधानार्थम् । यदि पक्षसंमिता स्यादयं दोषः स्यात् । वेदिसंमाने न दोषो भवेत् । क एतत्संकटमध्यवसातुमर्हति । एकस्मिन् यूपे एकादश पशवो नियोक्तव्या इति । वाचस्तोमादिषु तु यूपैकादशिन्यामस्य नित्यानुवादत्वाद्रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति । नित्यानुवादत्वाच्चासत्यपि पक्षसंमाने वेदिसंमाने वैकादशिनीविधानार्थं वचनमुपपद्यत एवेति न दोषः ।

**वा**-- अथ यदुक्तं एकादशिन्यां पक्षवेदिसंमानदर्शनं न स्यादिति । तत्र ब्रूमः । ' **अन्यथाऽपि तु नैवास्ति पक्षवेद्यादिमानता । एकादशिन्यभावेन स्तूयते त्वेकयूपता ॥** ' ' एकयूपे एकादश पशवः ' इत्यस्य विधेः शेषोऽयं यत्पक्षसंमितामित्यादि । एकादशिन्यां हि सत्यामन्यतरसंमानाश्रयणात् क्लेशो भवेत् । तस्मात् एकयूप एव वरमिति । पक्षसंमानं तावदत्यन्ताप्राप्तमेवेति नित्यानुवादः । वेदिसंमानोपदेशोऽपि प्रशंसारूपेण एकयूपप्रशस्ततरत्वज्ञापनार्थः । रथाक्षमात्रान्तरालता च यत्रैकादशिनी विहिता तत्र भविष्यतीत्यविरोधः । इह तु वेदिसंमानस्य प्रशंसया विधेयत्वप्रतीतेरशक्यमन्यस्तुत्यर्थत्वं कल्पयितुम् । अतः पक्षसंमानस्याप्राप्तस्यैव वेदिसंमानस्तुत्यर्थो नित्यानुवाद इति समर्थयितव्यम् । प्राकरणिकत्वाच्चास्यैवाग्नौ बलीयस्त्वमित्यनारभ्याधीतो रथाक्षमात्रान्तरालविधिः तद्विनिर्मुक्ता विकृतीर्गमिष्यति । सूत्रमप्येवं नेयम् । यदि हि द्रव्ये ( चयने ) वेदिसंमानं न चोद्येत ततोऽर्थाना--पक्षसंमानादिविधीनां ( विधेयानामित्यर्थः ) अव्यवस्था स्यात् । सा च रथान्तरालत्वेन बाध्येत, न त्वेवमस्तीत्यविरोधः ।

**विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् । २७ ॥**

**भाष्यम्**-- ' अतिरात्रे गृह्णाति षोडशिनम् ' इति विहितः षोडशी ' नातिरात्रे गृह्णाति षोडशिनम् ' इति प्रतिषिद्धः । तेन पक्षे द्वयोः स्तोत्रीययोरतिरेकः, पक्षे तिसृणाम् । तस्माददोषः । कथं पुनरयं द्वयोस्तिसृणां वाऽतिरेकः । त्रिवृद्बहिष्पवमानम्, तत्तावन्नवकम् । पञ्चदशान्याज्यानि, तानि तावच्चत्वारि, तेन सा षष्टिः । पञ्चदशो माध्यंदिनः पवमानः । तया पञ्चदशसंख्यया सह पूर्वया च नवसंख्यया चतुरशीतिः । सप्तदशानि पृष्ठानि चत्वारि, सप्तदश आर्भवः पवमानः, पञ्चसप्तदशकानि तानीति पञ्चाशीतिः । पूर्वया चतुरशीत्या सहैकोनसप्ततिशतम् । एकविंशं यज्ञायज्ञियम्, तयैकविंशत्या सह, तस्य नवतिशतं स्तोत्रीया इति ब्राह्मणवादः । अग्निष्टोममात्रमभिप्रेत्योच्यते, सा विराट् संपूर्णा । विराडिति दशकाख्या । त्रय एकविंशका उक्थ्यपर्यायाः, सा त्रिषष्टिः । एकविंशः षोडशी । तयैकविंशत्या सह चतुरशीतिः । पञ्चदशका रात्रिपर्यायास्त्रयः । तत्रैकैकपर्यायश्चतुःस्तोत्रः । तदशीतिशतं संपूर्णा विराट् । त्रिवृद्रथंतरं पञ्चसाम, तन्नवकम् । ततश्चतुरशीतेरेकं नवकमागच्छति । तथा तिस्रः संस्तुतानां विराजमतिरिच्यन्ते । यदा षोडशी न गृह्यते तदा, एकविंशत्या विना द्वे संस्तुतानां विराजमतिरिच्येते । एवमेककर्मत्वेऽपि लिङ्गमुपपद्यते ।

**वा**-- वैकल्पिके षोडशिन्यगृह्यमाणे द्वयोरतिरेकः । क्रियमाणे त्वेकविंशतिप्रचयादृग्द्वयादेकातिरेकेण तिस्रो भवन्ति । तस्मादविरोधः ।

**सारस्वते विप्रतिषेधाद्यदेति स्यात् । २८ ॥**

**भाष्यम्**— यदुक्तं ' पुरोडाशिनां सांनाय्यिनां च सारस्वते दर्शनं भवति ' इति । ज्योतिष्टोमपूर्वकत्वात्सर्व-

कर्मणां विप्रतिषिद्धमेतदिति । तेन यदा सांनाय्यिन ( यदा सांनाय्यिन इति । अयमाशयः— मित्रावरुणयोरयनाख्ये सारस्वतसत्रे ‘ यथाऽमावास्यायामतिरात्रः स्यात्तथा दीक्षेरन् । तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेव वत्सानपाकुर्युः । तं पक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः । पौर्णमासेनोत्तरं व्रजित्वाऽमावास्यायामायुषमुपेयुः । एवमावर्तयन्तो व्रजेयुः ’ इत्यनेन वाक्येन प्रतिमासमेकैकस्मिन्पक्षे पौर्णमास्यमावास्याख्यकर्मविधानात्पुरोडाशिशब्दः पौर्णमास्याख्यकर्मोपयोगिपक्षोपलक्षणार्थः । सांनाय्यिशब्दश्चामावास्याख्यकर्मोपयोगिपक्षोपलक्षणार्थ इत्येवं पक्षद्वयेऽपि वक्तव्यमिति । ) इति कल्प्यते ।

**वा—** सारस्वते हि द्वादशाहन्यायेनैवोभयोः पक्षयोर्ज्योतिष्टोमपूर्वकत्वादवश्यमेवं वक्तव्यम् । यदा पुरोडाशिनः पौर्णमासीपक्षे तदोपवसन्ति, यदा सांनाय्यिनोऽमावास्यापक्षे तदा वत्सानपाकुर्वन्तीति । भवति हि कालभेदादपि कर्तृभेदोपचारस्तस्माद्प्यदोषः ।

**उपहव्ये प्रतिप्रसवः । २९ ॥**

**भाष्यम्—** अथ यदुक्तम्, उपहव्ये बृहद्रथंतरविधानं प्रकृतिप्राप्तमेव । एककर्मत्वे प्रतिप्रसवतयाऽप्यसंभवाद्विधीयमानमनर्थकं स्यादिति । तत्परिहर्तव्यम् । आभाषान्तं सूत्रम् ।

**वा—** अनुभाषणं सामान्यपरिहारो वा ।

**गुणार्थो वा पुनःश्रुतिः । ३० ॥**

**भाष्यम्—** यदा रथंतरसामा तदा, अश्वः श्वेतो दक्षिणा, यदा बृहत्सामा तदा रुक्मललाट इति ।

**वा—** संस्थाव्यवस्थार्था वा बृहद्रथंतरयोः पुनःश्रुतिर्भविष्यति ।

**प्रत्ययं चापि दर्शयति । ३१ ॥**

**भाष्यम्—** यदा न सर्वशाखाप्रत्ययमेकं कर्मेति, कथमेकस्यां शाखायां समाम्नायते अन्यस्यां गुणो विधीयते । यथा मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते । अथ च गुणाः श्रूयन्ते—‘ऋतवो वै प्रयाजाः समानीय होतव्याः ’ इति । तथा येषां शाखिनाम्, कुटरुरसि, इत्यश्मादानमन्त्रो नाऽऽम्नातस्तेषामपि हि दृश्यते— ‘ कुक्कुटोऽसीत्यश्मानमुपादत्ते, कुटरुरसीति वा ’ इति । तस्मादेकं कर्मेति प्रतीमः ।

**वा—** शाखान्तरविहितप्रयाजानुवादेन सह होमं वदन् अन्यशाखाधीतं च ‘ कुटरुरसि ’ इति मन्त्रमश्मादाने विदधत्सर्वशाखाप्रत्ययत्वं दर्शयति ।

**अपिवा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत । ३२ ॥**

**भाष्यम्—** यो ह्यन्यशाखावस्थितान् विधीनुपसंहरति, स स्वशाखाविहितं क्रममुपरुणद्धीति । तेन शाखान्तरेषु कर्मभेद इति ।

**वा—** प्रतिशाखं वा विधिपृथक्त्वं व्यवतिष्ठेत । तथा सति हि क्रमभेदं न यास्यन्ति स्वशाखाविहिताः क्रियाः । परिमाणं च तद्वति नान्यत्वं प्रतिपत्स्यते ।

**विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् । ३३ ॥**

**भाष्यम्—** उच्यते । नैष शाखान्तरविहितानामैककर्म्ये सति विरोधिनां संयोगः । न हि क्रमो वाक्येन विरुध्यते । दुर्बलो हि क्रमः । बलवद्वाक्यम् । वाक्येन च शाखान्तरीयाणामुपसंहारः । तस्मात् सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म चोद्यते इति सिद्धं भवति ।

**वा—** यत्र स्मार्ताः पदार्था न क्रमकालपरिमाणानुरोधेन बाधितास्तत्र श्रौता बाधिष्यन्ते इति कुत एतत् । तेनैव ( शिष्टाकोपाधिकरणेनैव ) गतत्वादवाच्यमिति चेन्न । सूत्रकारस्यात्रैव प्रथमाभिधानात् तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता । शेषं त्विह सिद्धमसूत्रितमित्यपुनरुक्तत्वम् । ‘ **तस्मात्तदेवेति मते न कर्म भिन्नं कथंचित्प्रतिशाखमिष्टम् । न कारणं सप्रममस्ति चान्यदतो यथोक्तैव तु भेदसिद्धिः ॥** ’

**शा—** शाखान्तरेषु किं अग्निहोत्रादि कर्म भिद्यते किंवा सर्वशाखासु एकमेवेति विचारः । तत्र अविशेषेण पुनःश्रुतिलक्षणात् अभ्यासात् द्रव्यलक्षणाच्च प्रकरणान्तरात् भेदः, तथा गुणादपि क्वचित् ‘ ऐन्द्राग्नमेकादशकपालं निर्वपेत् ’ इति श्रुतं क्वचित् द्वादशकपालमिति । तत्र अवश्यमन्यतरेण कर्म उत्पादयितव्यम्,



येन च उत्पादितं तद्गतो गुणः उत्पत्तिशिष्ट इति, इतरस्तत्र निवेशमलभमानो वाजिनवत् कर्मान्तरं कल्पयति । इति प्राप्ते, ब्रूमः । ‘ **विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत् । तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिध्यति ॥** ’ पुनःश्रुत्या हि कर्म विधेयं इत्येतावत् सिध्यति, विधिवशात्तु भेदो विहितस्य विधानायोगात्, एवमसंनिधावपि विपरिवृत्त्यभावात् कर्मविधानम्, विधानाच्च भेदः तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिध्येत् न त्वत्र विधिवशाद्भेदसिद्धिः, विहितस्यापि पुरुषान्तरं प्रति विधिसंभवात् । यथा खलु एकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेव अपरस्यापि विधत्ते न कर्मान्तरं एवं अत्रापि अध्येतृभेदात् तान् प्रति सर्वाण्येव वाक्यानि एकमेव कर्म विदधति न कर्मान्तरम् । एवमेकादशद्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वान्न बलाबलम्, तस्मादभेदः ।

**सोम—** अधीयते इति अध्यायः, स्वश्चासौ अध्यायश्च स्वाध्यायः । स्वत्वं च पितृपितामहादिपरंपरागतत्वम् । ततश्च ‘ स्वाध्यायोऽध्येतव्यः ’ इति स्वकीयशाखाध्ययनमात्रमेव विधीयते स्वाध्यायस्य अध्ययनसंस्कार्यस्यापि अर्थज्ञानं प्रति उपादेयत्वेन तत्र स्वत्वस्य एकत्वस्य च विवक्षितत्वादेव चैकैकस्य पुरुषस्य एकशाखाध्यायित्वात् तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान् प्रति अज्ञातज्ञापकत्वेन अर्थवत्त्वात् एकस्यैव पुनःश्रुतिः अविशेषात् अनर्थकं हि स्यादिति न्यायाप्रवृत्त्या न भेद इत्यर्थः । न चैवं वेदान्तराध्ययनमपि न स्यादिति वाच्यम् । ‘ वेदानधीत्य ’ इत्यादिशास्त्रेण वेदेषु समुच्चयावगमात् ।

**चि—** ‘ शाखाभेदात्कर्मभेदो न वा कर्माऽत्र भिद्यते । दृष्टं काठकनामादि बहु भेदस्य कारणम् ॥ ग्रन्थद्वारादिना ह्येते युज्यन्ते भेदहेतवः । रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥ ’

**भाट्ट—** अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगतेरुत्पन्नस्योत्पत्त्ययोगात् कर्मान्तरत्वसिद्धिः । प्रकृते तूक्तप्रमाणैरुत्पत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणः सर्वत्रोत्पत्तिसंभवात् न कर्मभेदः । न हि सर्वशाखाः सर्वपुरुषैरध्येयाः, स्वाध्यायविधौ ‘ अध्वर्युं वृणीते ’ इतिवत् स्वीयत्वैकत्वयोर्विवक्षितत्वेन अनेकशाखाध्ययनानुपपत्तेः । न चैवं वेदान्तरस्थशाखाध्ययनस्याप्यनापत्तिः । ‘ वेदानधीत्य ’ इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिरपरत्र गुणार्थं श्रवणमित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अत एवैकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः । स च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम् । यत्तु ‘ बह्वल्पं वा स्वगृह्योक्तम् ’ इत्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवे अनुकल्पविधानार्थमिति **कौस्तुभे** द्रष्टव्यम् ।

तदेवं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः निरूपितः कर्मणां भेदः । अतः परं तेषां विनियोगो निरूपयिष्यते ।

**मण्डन—** ‘ मुनिरपि बहुशाखं कर्म चैकं जगाद । ’

**शंकर—** ‘ शाखाभेदे न कर्मभित् । ’

* **शाखान्तराधिकरणे** ( २।४।२।८–३३ ) तत्तच्छाखाध्यायिनं प्रति स्वस्वशाखाध्ययनप्राथम्येन अज्ञातज्ञापकत्वं समर्थितम् । **रसायनम्** पृ. ३७. * शाखान्तराधिकरणे स्वशाखाविहिताङ्गमात्रोपसंहारः पूर्वपक्षप्रयोजनम्, सर्वशाखाविहिताङ्गोपसंहारश्च सिद्धान्तप्रयोजनम् । **सु.** पृ. ९९२, * ‘ प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् ’ इत्यनुदितहोमनिन्दात्वेन भासमानमपि तस्मात् ‘ उदिते होतव्यं ’ इति विध्येकवाक्यत्वात् स्तुतिरेव इति **शाखान्तराधिकरणे** भाष्यकारो वक्ष्यति । पृ. ३८. * यथैव वैदिकत्वाविशेषेऽपि शीघ्रप्रवृत्तश्रौताङ्गमात्रेण प्रयोगविधिसंपत्तिमापाद्य क्रमाद्यकल्पनम्, क्रत्वपूर्वस्य अनिर्ज्ञातोपायपरिमाणत्वेन श्रौताङ्गमात्रेण नैराकाङ्क्ष्यायोगात् । किन्तु समाख्यादि-

दुर्बलप्रमाणक – अनारभ्याधीतशाखान्तरविहितयावदङ्गकलापसंबन्धोत्तरं प्रयोगविधिसंपत्त्यङ्गीकारेणैव तत् इति शाखान्तराधिकरणे वक्ष्यते । कौ. १।३।३।७. * शाखान्तरीययोः उदितानुदितहोमयोः ऐन्द्राग्नैकादशकपालद्वादशकपालयोः समविकल्पः सर्वान् प्रति इति शाखान्तराधिकरणे वार्तिकम्, न स्वमतं किंतु परमतम् । बाल. पृ. ९१. * स्पष्टस्यापि सामान्यवचनस्य यत्र नानर्थक्यं तत्र विशेषोपसंहाराभ्युपगमात् न दोषः । प्रकृते च सामान्यवचनस्य शाखान्तरीयत्वात् नानर्थक्यम् । अन्यथा नानाशाखागताग्निहोत्रादिविधिवाक्येषु का गतिः । यथा चैतत्तथा शाखान्तराधिकरणे ‘ अद्विर्वचनं वा० ’ इत्यादिपञ्चसूत्रीव्याख्यानावसरे भाष्यवार्तिकयोः प्रपञ्चितं स्पष्टीकृतं चास्माभिः । कु. ३।१।१५।२७.

* **शाखान्तराधिकरणनिष्कर्षनिरूपणम्** । शाखान्तराधिकरणवार्तिके उदितानुदितहोमयोः तथा ऐन्द्राग्नैकादशकपाल–द्वादशकपालयोः शाखान्तरीययोः समविकल्पः सर्वान् प्रति इत्युक्तम् ( २।४।२ ) । तत्परमतं न स्वमतम्, श्रुतिलिङ्गाधिकरणे अनेकविधबाधनिरूपणे स्वयमेव वार्तिककृता परशाखाविहितं स्वशाखाविहितेन बाध्यते इत्युक्तम् । युक्तं चैतत् । स्वशाखाविहितज्ञानस्य स्वाध्यायाध्ययनजनितस्य कर्माङ्गत्वात् तत्संभवे इतरस्यानाक्षेपात् । स्वशाखाविहितविरुद्धवैकल्पिकानुष्ठानेनापि च साद्गुण्यसंभवात् । स्वशाखाऽविहितविरुद्धवैकल्पिकस्य तु ज्ञानं शाखान्तराध्ययनजनितमपि कर्मणा साद्गुण्याय आक्षिप्यते एव । एतन्न्यायमूलकमेवेदं भविष्यत्पुराणवचनं ‘यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ॥ ’ इति । बाल. पृ. ९१.

* **शाखान्तराधिकरणन्यायेन** गृह्यगतपार्वणस्थालीपाकाद्यभेदेऽपि पूर्वपक्षे तदङ्गेषु विधिपाठव्यवस्थया व्यवस्थितमूलत्वकल्पनस्य पुरुषार्थेष्विव अवर्जनीयत्वात् न्यायसुधोक्तमयुक्तम् । कौ. १।३।७।१५. * ( ‘ अग्निगुभ्रैषे मेघपतिभ्यां मेघपतये ’ इत्यत्र ) न तावदत्र शाखाभेदेन मन्त्रभेदः एकदेशवैलक्षण्येऽपि **शाखान्तराधिकरणन्यायेन** प्रत्यभिज्ञाबलेन तदेकत्वावगतेः । भाट्ट. ९।३।१२.

* **शाखान्तराधिकरणसमाप्तौ** ‘ अपिवा क्रमसंयोगात् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ’ ( २।४।२।३२ ) इति सूत्रेण क्रमकालपरिमाणविरोधात् शाखान्तरीयपदार्थानुपसंहारमाशङ्क्य ‘ विरोधेनार्थसंयोगादैकधर्म्ये तत्संयोगाद् विधीनां सर्वप्रत्ययः ’ ( ‘विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगात् विधीनां सर्वकर्मप्रत्ययः स्यात्’ इति भा–पाटः) इति सूत्रेण पदार्थानां क्रमादिबाधकत्वं वक्ष्यते । सु. पृ. १७४.

* **शाखान्तराधिकरणसिद्ध**सर्वाङ्गोपसंहारानुकल्पविधिः ‘ बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥’ इति । अत्र गृह्यसूत्रस्य स्वशब्देन विशेषणात् पारंपर्यागत–एकगृह्यसूत्राध्ययन–नियमप्रतीतेः । कौ. १।३।६।१२.

* **शाखान्तराध्ययनं** तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ? ‘ स्वाध्यायग्रहणे नैका शाखा हि परिगृह्यते ’ यथैव आकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्वं एकैकस्यां शाखायाम् । अतश्च ‘ स्वाध्यायोऽध्येतव्यः ’ इति कर्मावबोधनं प्रति उपादीयमानत्वात् विवक्षितैकसंख्यैका शाखाऽध्येतव्या । ननु एवं वेदान्तरस्यापि अध्ययनं न प्रसज्यते । न । वचनान्तरेण प्रतिप्रसवात् । ‘ अनया त्रय्या विद्यया ’ इति । तथा ‘ वेदानधीत्य वेदौ वा ’ इति मानवम् । साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयः अवगम्यते । साकाङ्क्षत्वादेव च एकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम् । वा. २।४।२।९ । न हि कश्चित् द्वे शाखे अधीते । ‘ संप्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम् । शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे ॥ ’ इति यथावस्थितशाखाध्ययनमेव । २।४।२।१६ । ( अत्र सूत्रं ) ‘ वाक्यासमवायात् ’ । नैकस्मिन् पुरुषे शाखान्तरवाक्यं समवैति । २।४।२।१७.

* **शाखान्तरोच्छेदः** । ‘ न च शाखान्तरोच्छेदः कदाचिदपि विद्यते । प्रागुक्ताद् वेदनित्यत्वात् न चैषां दृष्टमूलता ॥ ’ वा. १।३।२।४ पृ. १९५.



* ‘ कल्पादावनुवादत्वमापन्नं परिशेषतः । न च **शाखान्तरन्याय**( २।४।२ )स्तुल्याध्येतृकतावशात् ॥ ’ वा. १।३।६।१३ पृ. २४१. * **शाखान्तरन्यायेन** ( २।४।२।८–३३ ) एक एव विश्वजित् वाक्यद्वयेन विधीयते इति न आगूरणविश्वजितः अस्य ( साभ्युत्थानविश्वजितः ) भेदः । भाट्ट. ६।५।७. * शाखान्तरन्यायेन पार्वणस्थालीपाकादीनां अभेदावगमात् सर्वविषयत्वप्रतीतिः । कौ. १।३।७।१५, * अध्ययनस्य उपनयनादीनां च शाखान्तरन्यायेनैव अभेदावगमात् तदङ्गानामपि सर्वपुरुषसाधारण्योपपत्तिः । १।३।७।१५, * उपनयनादीनां तदङ्गानां च शाखास्वरूपे आनर्थक्येन अध्ययने एव अविघ्ननिर्वृत्त्यर्थत्वेन उपयोगस्य द्वादशे वक्ष्यमाणत्वात् तस्य (अध्ययनविधेः) शाखान्तरन्यायेन एकत्वावगमेन भेदेनाङ्गग्राहित्वायोगः । १।३।७।१५.

* वारुणेष्टौ— नामादीनामुपस्थापकानां अभावेन **शाखान्तरन्यायाभावश्च** मैत्रायणीयशाखायाम् । भाट्ट. ३।४।१५.

* ‘बह्वल्पं वा स्वगृह्योक्तं’ इत्यस्य **शाखान्तरन्यायसिद्धसर्वाङ्गोपसंहाराशक्तौ** अनुकल्पत्वेन स्वगृह्योक्तमात्रानुष्ठानबोधकत्वम् । कौ. १।३।७।१५.

* **शाखान्तरीयस्यापि** उपसंहारेण एकवाक्यतोपपत्तौ वाक्यभेदविकल्पयोरन्याय्यत्वम् । संकर्ष. २।४।२९.

* **शाखार्थमेव** छेदनं वाक्यात्, न उपवेषार्थम् । वा. ४।२।३।८.

* **शाखाहरणं** गवां प्रस्थापनं गवां प्रस्नावनं इत्येवमादयः सांनाय्यधर्माः । भा. ३।१।४।७, * शाखाहरणं दोहधर्मः । ३।६।८।२८. * शाखाहरणं नास्ति सांनाय्यरहितस्य । वि. ६।४।१४.

* **शाखाहरणादयः** दध्नो धर्माः पूर्वं पठिताः, पश्चादाग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतः पाठः । तत्र मुख्यक्रमेणाग्नेयस्य प्रथममभिघारणं पश्चाद्दध्नः । भाट्ट. ५।१।७. * शाखाऽऽहरणादयो धर्माः दोहद्वयार्था एव, न केवलं सायंदोहार्थाः । ३।६।८।२८–२९. मीको. पृ. २०२३ ‘ दर्शे शाखाऽऽहरणादयो धर्माः० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **शाखाहरणादेः** उभयदोहसंयुक्तस्य वचनात् पूर्वेद्युः करणं न दध्यर्थत्वात् । वा. ३।६।८।२९.

**शाखाचन्द्रन्यायः** । यथा शुक्लद्वितीयाचन्द्रं दिदर्शयिषुरासः आदौ दिगन्तर्गतनक्षत्रादिभ्यो दृष्टिं वारयितुं ‘ शाखायां चन्द्रः ’ इत्यधिकरणत्वेन संबन्धविशेषेणादौ शाखायामुपलक्षणमुपादत्ते, ततश्च दिगन्तरव्यावृत्तचक्षुषश्चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोधयतीत्येवं हि बाध्यधीः सुखेन चन्द्रं पश्यतीति । तथा ‘ ब्रह्मविदाप्नोति परम् ’ इत्यादिश्रुतिषु ब्रह्मशब्दस्यानेकत्र दर्शनात् मुमुक्षुभिर्ज्ञेयं ब्रह्म, तच्च किमिति जिज्ञासायां जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्वं न संभवति, तेषां स्रष्टृत्वासंभवात्, तेभ्यो व्यावृत्तबुद्धेः प्रधानादिषु ब्रह्मत्वभ्रममपनेतुं स्वरूपलक्षणमुपन्यस्यते इति । **साहस्री.** ४९.

* **शाखाच्छेदे** करणमन्त्रः ‘ इषे त्वा ’ इति । वि. १२।३।१०.

* **शाखाच्छेदनस्य** उपवेषो न प्रयोजकः शाखामनुनिष्पादी हि सः । दर्शपूर्णमासयोः । ४।२।३।८–९. * शाखाच्छेदनस्य वत्सापाकरणमेव प्रयोजकं न तु प्रस्तरेण सह प्रहरणं प्रयोजकम् । वि. ५।१।१ (प्रस्तावे).

* **शाखाच्छेदनाहरणपरिवासनानि** अग्रार्थं न तु मूलार्थं दर्शपूर्णमासयोः । ४।२।३।८–९. * **शाखाच्छेदन–आहरण–परिवासनादीनां** अग्रं मूलं चेत्युभयं प्रयोजकम् । शाखाशब्दः अग्रमूलोभयवाची । परिवासनस्यैव वा अग्रं मूलमित्युभयं उपवेषश्च प्रयोजकः इति **पूर्वपक्षः** । शाखाशब्दः अग्रमात्रवाची । परिवासनं शाखासंस्कारः । न तु अग्रमूलोभयसंस्कारः । उपवेषः परिवासनानुनिष्पन्नः । मूलं छेदनादीनां न प्रयोजकं इति **सिद्धान्तः** दर्शपूर्णमासयोः । भाट्ट. ४।२।३.

* **शाखाप्रहरणं** दर्शे प्रस्तरप्रहरणकाले । ६।४।१४।४४–४८. मीको. पृ. २०२४ ‘ दर्शे शाखाप्रहरणं प्रस्तरप्रहरणकाले ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शाखा-

प्रहरणं प्रतिपत्तिः । शाखायाः प्रहरणं नाम आहवनीये त्यागः । वि. ४।२।४.

## शाखाप्रहरणाधिकरणम् । दर्शे शाखायाः अग्नौ प्रहरणं प्रतिपत्तिकर्म ॥

**हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणां चार्थशेषत्वात् । ४।२।४।१०॥**

**भाष्यम्**-- दर्शपूर्णमासयोरामनन्ति 'सह शाखया प्रस्तरं प्रहरति' इति । तत्र संदेहः किं शाखाप्रहरणं प्रतिपत्तिकर्म, उत अर्थकर्मेति । किं प्राप्तम् ? हरणे तु जुहोतिः स्यात्, अर्थकर्मेत्यर्थः । कुतः ? योगसामान्यात् । योगोऽस्याः समानः प्रस्तरेण 'सह शाखया प्रस्तरं प्रहरति' इति । सहयोगे यत्र तृतीया तस्य गुणभावः, यत्र द्वितीया तस्य प्राधान्यम् । प्रस्तरे च विस्पष्टो यजिः । शाखाऽपि तस्मिन्नेव यजौ प्रस्तरस्य विशेषणम्, समानयोगित्वात् । आह, ननु तत्रतत्र गुणभूता शाखा, तस्याः प्रतिपत्तिर्न्याय्या, इतरथा अनेकगुणभावः प्रसज्येतेति ! उच्यते । द्रव्याणां चार्थशेषत्वात् । उत्पत्त्या चिकीर्षितस्य शेषभूतान्येव द्रव्याणि उपदिश्यन्ते भूतं भव्यायोपदिश्यते इति । तस्मात् अनेकगुणतैव द्रव्याणां न्याय्येति ।

**टुप्**-- त्रिप्रकारः सहभावः । एकस्तावत् उभावपि प्रधानभूतौ ( यथा देवदत्तो यज्ञदत्तेन सह पूजयितव्यः इति )। अपरः द्वावपि गुणभूतौ ( यथा देवदत्तेन सह शिबिकां वहति इति ) । अन्यः ( प्रकारः ) एकः प्रधानभूतः इतरो गुणभूत इति ( यथा ऋत्विग्भिः सह यजमानः क्रतुं करोति इति तथा इहापि सहभावे सत्यपि प्रस्तरस्य प्राधान्यं शाखायाश्च गुणत्वं नानुपपन्नम् )। 'सूक्तवाकेन प्रस्तरं प्रहरति' इति सूक्तवाको न प्रस्तरं प्रकाशयति, नापि प्रहरणक्रियाम् । तृतीयानिर्देशाच्च अवश्यमुच्चारयितव्यो मन्त्रः ( क्रियायाः तत्संबन्धिनो वा ) प्रकाशकत्वेनोपकरोति । तस्मात् यदनेन प्रकाश्यते तत् क्रियया संबध्यते, तेन च आयुरादीनि फलानि प्रकाश्यन्ते, इष्टाश्च देवताः । अतः आयुरादीनि फलानि एतस्याः क्रियायाः, अग्न्यादयश्च देवताः । न च द्रव्योद्देशमन्तरेण देवता भवन्ति, न च आयुरादीनि यागमन्तरेण फलानि भवन्ति ( इति न प्रहरणमात्रस्य संस्कारकर्मणः फलसंबन्धो युक्तः । यस्मान्न द्रव्योद्देशमन्तरेण देवताऽन्वयः ) तस्मात् प्रस्तरः प्रतिपाद्यमानोऽपि द्रव्यतां प्रतिपद्यते । ( यस्मात् अग्न्यादयो देवताः, प्रस्तरश्च द्रव्यम्, आयुरादीनि च फलानि ) तस्मात् द्रव्यदेवतासंबन्धेन यजिधातुः अनुमीयते, फलवान् हरतिस्तु श्रुतोऽपि अविवक्षितः निर्वपतिवत् (सौर्यं चरुं निर्वपेत् इत्यादाविव) ।

( अयं प्रहरतिः यजिः इति सिद्धे पूर्वपक्षमाह- ) इह ( यागे सहभावः शाखाप्रस्तरयोः श्रूयते, ततश्च ) सहभावे श्रुते यत् तृतीयानिर्दिष्टम् ( शाखाद्रव्यम् ), तत् साधकतमत्वेनैव संबध्यते, प्रमाणान्तरेण प्राधान्यानवगमात् । यस्य हि प्रमाणान्तरेण ( यागं प्रति ) प्राधान्यमवगतम्, तत् (तृतीयोपात्तमपि ) क्रियां निर्वर्तयत् आत्मार्थमेव निर्वर्तयति ( इति शक्यं वक्तुम् । ननु सहभावात् द्वयोस्तुल्यत्वावगमात् कथमेकस्य प्राधान्यम्, इतरस्य तु गुणत्वम् ? अत आह- ) क्रियानिर्वृत्तौ च सहभाव उपपद्यते । यदि तृतीया न श्रूयेत ( किन्तु विभक्त्यन्तरम् 'प्रस्तरेण सह शाखां प्रहरति' इति ), ततः यागं निष्पादयन्ती अपि ( शाखा ) प्रतिपत्त्यर्था स्यात् प्रस्तरवत् ( प्रस्तरस्य हि द्वितीयासंयोगात् यागांशे गुणभूतस्यापि प्रहरणांशं प्रति प्राधान्यमस्ति तद्वत् ) । अत आह ( भाष्यकारः ) 'सहयोगे यत्र तृतीया, तस्य गुणभावः, यत्र द्वितीया, तस्य प्राधान्यम्' इति । कृतार्था सती ( शाखा ) प्रतिपाद्यते इति चेत्, तन्न । ( न खलु एकस्य अनेकगुणभावः उचित इति । कुतः ? ) दर्शपूर्णमासयोः ( उभयोः ) प्रकरणे श्रवणात् (उभयाङ्गमिदम् 'सह शाखया प्रस्तरं प्रहरति' इति । ततः किम् ? अत आह- ) पौर्णमास्यां न प्रतिपत्तिः ( शाखायाः तत्र अकृतार्थत्वात् ) प्रस्तरस्तु उभयत्रापि अकृतार्थः ( तेन तस्य प्रतिपत्तिः । एतच्च अतिशयार्थमुक्तम्, कृतार्थाया अपि तृतीयाबलेन गुणभाव उपपादित एव)। तस्मात् यत्र तृतीया ( शाखायाम् ), सा अत्यन्तसाधनभूता । न च एकत्र ( अमावास्यायाम् ) प्रधानभूता, अपरत्र ( पौर्णमास्याम् ) गुणभूता, ( इति ) विवक्षाभेदात् ( वैरूप्यापत्तेः ) । तस्मात् गुणभूतैव शाखा ।

**प्रतिपत्तिर्वा, शब्दस्य तत्प्रधानत्वात् । ११ ॥**

**भाष्यम्**-- प्रतिपत्तिर्वा शाखाप्रहरणम् । शब्दस्य तत्प्रधानत्वात् । शब्दोऽत्र शाखाप्रधानः । कथम् ? द्वितीयाश्रवणात् । ननु अन्यत्रैव सा द्वितीया प्रस्तरे, न शाखायाम् । उच्यते । प्रस्तरे द्वितीयाऽर्थः शाखायामपि । कथम् ? तुल्ययोगात्, सह शाखया । एवं प्रस्तरः प्रहृतो भवति, यदि शाखाऽपि प्रह्रियते । तेन तुल्ययोगे सहशब्दोऽयम् । यदि प्रस्तरः प्रहरणे प्रधानम्, शाखाऽपि प्रस्तरविशेषणम्, न तर्हि तुल्ययोगः । तस्माद्यः प्रस्तरे द्वितीयाऽर्थः, स शाखायामपि । अतः शाखा प्रधानम् । अपि च तत्रतत्र शाखा गुणभूता । तस्यामन्यत्र उपदिश्यमानायां अनेकगुणभावः स्यात् । तत्र को दोषः ? दृष्टं कार्यं हित्वा अदृष्टं कल्प्येत । कृतप्रयोजनायाः शाखाया अपनयनेन वेदिविवेचनात् सुखप्रचारो दृष्टं कार्यम्, न तु प्रहरणे किञ्चित् सूक्ष्ममपि दृष्टमस्ति । तस्मात् प्रतिपत्तिर्न्याय्या । आह । ननु तृतीयाश्रवणात् परार्थेन शाखोच्चारणेन भवितुं न्याय्यम् । उच्यते । भवेदेतत् न्याय्यम्, यदि निर्ज्ञातकाला शाखा स्यात् । ततः प्रस्तरस्य कालपरिच्छेदाय कीर्त्यमाना परार्था उच्चार्येत । इह पुनः एतद्विपरीतम् । निर्ज्ञातकालः प्रस्तरः अनिर्ज्ञातकाला शाखा । तस्मात् सत्यपि तृतीयाश्रवणे प्रस्तर एव शाखायाः कालं परिच्छेत्स्यति । यथा द्वितीयानिर्दिष्टा, तथा शाखा द्रष्टव्या । यथा तृतीयानिर्दिष्टः तथा प्रस्तरः । सामर्थ्यं हि बलवत्तरमिति ।

**टुप्**-- प्रहरतौ यदि उभावपि तुल्यौ ततः सहभाव उपपद्यते । प्रस्तरस्य च ( तत्र ) प्रतिपत्तिः, ( अतः ) शाखाया अपि ( प्रतिपत्तिः ) । तत्र अनियतकाले प्रहरणे प्राप्ते 'सह प्रहरति' इति विधीयते । एवम् ( प्रतिपत्तेः ) अपेक्षितत्वात् नादृष्टकल्पना ( कृता भवति ) । अतः अविवक्षिता तृतीया, तस्मादनया द्वितीया लक्ष्यते । ( प्रस्तरमिति- ) द्वितीयाऽपि तृतीयालक्षणार्थैव । (कुतः इत्यत आह-) प्रह्रियमाणयोश्च यत् निर्ज्ञातकालम्, तत् इतरस्य ( अनिर्ज्ञातकालस्य ) कालं प्रयच्छत् वस्तुतो गुणभूतम्, क्रियायास्तुल्यत्वात् । प्रस्तरश्चात्र निर्ज्ञातकालः । ( एवं प्रतिपत्तित्वसाधने पर्यवसिते शाखा प्रस्तरवत् यागे गुणभूता उत नेति जिज्ञासायामाह- ) अनयोश्च प्रहरणे एव साहित्यम्, नानुमिते यागे, शाखायाः तत्राश्रवणात् । प्रत्यक्षेण प्रदीयमानेऽपि ( शाखायाः प्रदाने क्रियमाणेऽपि ) यथा मैत्रावरुणग्रहे ( 'पयसा मैत्रावरुणं श्रीणाति' इति विहिते संस्कारे मिश्रीभूतम् ) पयः प्रत्यक्षेण हूयमानमपि न यागसाधनम्, एवं शाखा प्रहरतिना संबध्यमानाऽपि न यागस्य साधिका इति सिद्धम् ।

**अर्थेऽपीति चेत् । १२ ॥**

**भाष्यम्**-- आह । ननु गुणभावेऽपि द्वितीया भवति । यथा सक्तुमारुतैककपालेषु ।

**न, तस्यानधिकारादर्थस्य च कृतत्वात् ।१३॥**

**भाष्यम्**-- नैतत् सक्त्वादिभिस्तुल्यम् । तस्य सक्त्वादेः अन्यत्रानधिकारात् । इह च शाखया अन्यस्यार्थस्य कृतत्वात् वत्सापाकरणादेः । आह । ननु पुनरुक्तमेतत्- सक्त्वादीनां प्रदर्शनं समाधिश्चेति । उच्यते । न पुनरुक्तता महान् दोषः । बहुकृत्वोऽपि पथ्यं वदितव्यं भवति । ग्रन्थगौरवभयेन पुनरुक्तं नेच्छन्ति । अर्थाग्रहणाद्धि भवेत् तत् पुनः पुनरभिधीयमानं बहु मन्यन्ते एव । किं चिन्तायाः प्रयोजनम् ? यदि अर्थकर्म, पौर्णमास्यामपि शाखा उत्पाद्या, अथ प्रतिपत्तिर्नोत्पादयितव्येति ।

**शा**-- '**तत्र प्रस्तरतुल्यत्वात् शाखा यागस्य साधनम् । निर्वापवच्च हरणं यागस्यैवोपलक्षणम् ॥**' तस्मात् शाखाप्रहरणं होमः अर्थकर्म द्रव्यकर्मसंयोगन्यायात् ( ६।१।१ )। इति प्राप्ते, अभिधीयते । '**यागे यदि सहत्वं स्यात् स्यादेवं हरतौ तु तत् । तत्र च प्रतिपाद्यत्वात् प्रस्तरस्य तथैव सा ॥**' तस्मात् हरतावेव साहित्यं न यागे ।

**सोम**— पौर्णमास्यादिषु शाखा नाहर्तव्या इत्युक्तम्। कपालोपधानार्थं तदनाहरणेऽपि प्रस्तरप्रहरणार्थं तदाहरणावश्यम्भावात्। इति पूर्वाधिकरणप्रयोजनाक्षेपात् **संगतिः। सूत्रार्थस्तु**- प्रहरणेऽपि होम एव स्यात् सहशब्देन जुहोतिसाधनप्रस्तरेण यागसाम्यावगमात् द्रव्याणामर्थक्रियां प्रति द्रव्यकर्मसंयोगन्यायेन शेषत्वाच्चेति।

**वि**— 'प्रस्तरं शाखया सार्धं प्रहरेत् प्रहृतिस्त्वियम्। शाखाया अर्थकर्मत्वं प्रतिपत्तिरुतोचिता ॥, विहितः प्रस्तरे यागः शाखायाः साहचर्यतः। तथात्वादर्थकर्मत्वे हृतिः शाखां प्रयोजयेत् ॥, हरतिर्यागवाची नो प्रतिपत्तिस्ततो भवेत्। पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत् ॥'

**भाट्ट**— अत्रैव 'सूक्तवाकेन प्रस्तरं प्रहरति' इति 'सह शाखया प्रस्तरं प्रहरति' इति च श्रुतम्। तत्र आद्यवाक्ये तावत् मान्त्रवर्णिकदेवतासंबन्धात् होमविधिरित्युक्तम्। न तु द्वितीयवाक्यविहितप्रहरणानुवादेन प्रस्तरमुद्दिश्य सूक्तवाकविधिरिति तन्त्रसारोक्तं युक्तम्, यागस्यापि विधौ वाक्यभेदापत्तेः, यागविधायकवाक्यान्तरकल्पने गौरवाच्च। अतश्च द्वितीयवाक्ये प्रहरतिना होममनूद्य शाखासाहित्यमात्रविधिः, सहशब्दस्य निपातत्वेन परस्परान्वयव्युत्पत्तेश्च न शाखासाहित्यं चेति विधेयानेकता। अतश्च यथैव होमे प्रस्तरो गुणभूतः एवं शाखाऽपि। तत्र तु एतावान् विशेषः, प्रस्तरस्य द्वितीयया प्रक्षेपांशं प्रति प्रतिपाद्यत्वावगमात् त्यागांशः तस्याक्षेपकः इत्युक्तम्। शाखायास्तु वत्सापाकरणादाविव गुणत्वस्यैवावगतेः प्रस्तरहोमः प्रयोजकः एवेति पौर्णमास्यामपि तदर्थं शाखोत्पादनीया। इति प्राप्ते, आद्यवाक्ये सूक्तवाकान्वयानुरोधेन प्रहरतिना होमलक्षणायामपि द्वितीयवाक्ये प्रहरतिना तल्लक्षणायां प्रमाणाभावात् प्रहरणस्यैव शाखासाहित्यसंबन्धमात्रं क्रियते। अतश्च यथैव प्रहरणं प्रति प्रस्तरस्य कृतार्थस्य संस्कार्यत्वम्, तथा शाखायाः, कृतार्थत्वाविशेषात्। न च तृतीयया तस्याः करणत्वावगतिः, सहशब्दयोगेन तस्याः करणत्वानभिधायकत्वात्। न चैवं शाखां प्रहरतीत्येव वक्तव्यत्वापत्तेः प्रस्तरादिपदवैयर्थ्यम्, प्रस्तरप्रहरणकालीनैतत्प्रहरणसिद्ध्यर्थत्वात्। अत एव प्रस्तरप्रहरणकालविशिष्टप्रहरणान्तरस्यैव शाखोद्देशेनात्र विवक्षितत्वया विधानम्, न तु प्रस्तरप्रहरणव्यक्तेरेव शाखोद्देशेन विनियोगः, तथात्वे यथाशक्तिप्रयोगादौ प्रस्तराभावेऽपि शाखाप्रहरणानापत्तेः। अतश्च प्रतिपत्तित्वात् प्रहरणमपि न शाखायाः प्रयोजकम्। तेन पौर्णमास्यां न शाखोत्पादनम्। यथा तु प्रस्तरप्रहरणव्यक्तावेव शाखाया न गुणत्वं तथा षष्ठे वक्ष्यते।

**मण्डन**— 'शाखाप्रहारः प्रतिपत्तिकर्म।'

**शंकर**— 'हरतौ प्रतिपाद्या सा।' हरतौ अग्नौ प्रक्षेपे। सा शाखा। ०

* **शाखाभेदेन** आम्नातौ एकवचनान्त-बहुवचनान्तपाशमन्त्रौ ज्योतिष्टोमे अग्नीषोमीय एव विकल्पेन पठनीयौ, न तु बहुवचनस्य पशुगणे उत्कर्षः। वि. ९।३।५. * शाखाभेदेन समाम्नातानां गीत्युपायानां विश्लेषादीनां विकल्पः। ९।२।७।२९. **मीको.** पृ. १५६८ 'गीत्युपायानां विश्लेषादीनां०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **शाखाभेदेऽपि** न अग्निहोत्रभेदः। एवं कर्मान्तरेषु। २।४।२।८-३३. **मीको.** पृ. ३८९२ 'शाखान्तराधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **शाखामानगुरुस्पर्शानुष्ठानं** अस्थियज्ञे न कार्यमिति सिद्धान्तः। कृत्वाचिन्ता इयम्। **भा.** १०।२।१९।५०.

**ॐ शाखावादः**। दर्शे 'प्राचीमाहरेत्' इति पलाशवृक्षस्य प्राग्गता शाखा लक्ष्यते ॥

**शाखायां तत्प्रधानत्वात्। ४।२।२।७ ॥**

('शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत्' इत्यग्रिमसूत्रस्यैव प्रथमभागं पृथक् कृत्वैव प्रथमवर्णकात्मकमिदमधिकरणमिति ज्ञेयम्। तथा सोमनाथी- 'इदं न पृथक् सूत्रम्, किंतु अग्रिमसूत्रावयव एव अधिकरणान्तरत्वेन भाष्ये व्याख्यातः इत्याहुः' इति)।

**भाष्यम्**-- दर्शपूर्णमासयोः श्रूयते शाखामधिकृत्य 'प्राचीमाहरेत्, उदीचीमाहरेत्, प्रागुदीचीमाहरेत्'



इति (प्राच्याः उदीच्याश्च दिशोर्यदन्तरालं सा प्रागुदीची। ऐशानीत्यर्थः)। तत्र संदेहः किमयं दिग्वादः, उत शाखावाद इति। दिग्वाद इति प्राप्तम्। तथा श्रुतिशब्दः, शाखावादे लक्षणेति। तस्मात् दिग्वाद इति। **एवं प्राप्ते, ब्रूमः।** शाखावाद इति। कुतः? यदि तावदयमर्थः 'प्राची दिक् आहर्तव्या' इति, ततः अशक्यः अर्थः। अथ प्राचीं दिशं प्रति आहरणीयेति, ततः का आहर्तव्येति, वाक्ये शाखाशब्दस्य अभावात् अनुपपन्नोऽयं संबन्धः। अथ प्रकृता शाखेति, ततः प्राचीशब्देन तस्या एवाभिसंबन्धो न्याय्यः। कुतः? प्रत्यक्षा हि प्राचीशब्देन हरतेः एकवाक्यता प्रकरणात् शाखाशब्देन भवेत्। उभयथा अत्र प्राचीशब्दो लक्षणया प्रकृतां वा शाखां लक्षयेत्, दिशो वा अनीप्सितत्वात् विहारदेशं ईप्सिततमं युक्तम्। अपिच प्राची इति संबन्धिशब्दोऽयम्। संबन्धिशब्दाश्च सर्वे सापेक्षाः, विना पदान्तरेण न परिपूर्णमर्थं अभिवदन्ति। सामान्यपदार्थसंबन्धे च संव्यवहारानुपपत्तिः, सर्वस्यैव देशस्य कुतश्चित् प्राग्भावात्। तथा शाखाशब्दोऽपि संबन्धिशब्दः 'वृक्षस्य' इत्येतदपेक्षते। यदा 'वृक्षस्य' इत्येतदपेक्षते, तदा वृक्षस्य शाखा प्राची उदीची प्रागुदीची वा इति भवति संबन्धः, तथा च संव्यवहारः अवकल्पते। यत्तु शाखावादे लक्षणेति, उच्यते। भवति लक्षणयाऽपि शब्दार्थः। तस्मात् शाखावाद इति।

**टुप्**-- प्राची तावत् दिगाहर्तुमशक्या। अशक्यत्वात् प्राचीं दिशं प्रति आहरतीति, तथापि वाक्ये आह्रियमाणस्याश्रवणात् साकाङ्क्षं वाक्यम्। प्रतिशब्दश्च अश्रुतः अध्याहर्तव्यः। अथोच्येत प्राग्देशे आहरतीति, द्वितीयास्थाने सप्तमी (कल्प्यते), एवं अश्रुतो देशः अनीप्सितश्च (परिगृहीतः स्यात्)। आहर्तव्यस्य चानिर्देशात् साकाङ्क्षत्वम् (तदवस्थमेव)। तस्मात् इयमपि (देशवाद-) कल्पना दुःश्लिष्टा। किंच प्राक्शब्दोऽयं संबन्धिशब्दत्वात् अवधिमपेक्षते कस्य प्राचीमिति। न चावधिर्निर्दिश्यते। तस्मात् प्राचीं इत्यनेन यत् ईप्सितं तदुच्यते (द्वितीयासंयोगात्)। तच्च (प्राचीपदं) आहरतेः कर्म पूर्वप्रकृतां शाखां शक्नोति वदितुम् (लक्षयितुम्)। तस्मात् 'प्राचीं शाखामाहरति' (इति वाक्यार्थः)। कस्य वृक्षस्य इति अवधिमात्रमपेक्षणीयम्, न किंचिदन्यत्। तस्मात् शाखावादः। (भाष्यं व्याचष्टे-) 'प्रकृतां वा शाखां लक्षयेत्, दिशो वा अनीप्सितत्वात् विहारदेशं ईप्सिततमं युक्तम्' (इति भाष्ये) दिशो वा अनीप्सितत्वात् इत्ययं हेतुः। यस्मात् दिगनीप्सिता, तस्मात् विहारदेशं वा लक्षयेत् शाखां वा। (तत्र च शाखालक्षणैव ज्यायसी)।

**शा**— '**श्रुत्या दिग्वचनः शब्दः शाखायां लक्षणा भवेत्। आहर्तव्याभिधानात्तु शाखावादत्वनिश्चयः ॥**'

**सोम**— यूपशब्दवत् प्राचीशब्दस्यापि न लक्षणा इति प्रत्यवस्थानात् **संगतिः। सूत्रार्थस्तु**—प्राचीशब्दः शाखायां स्यात् तत्प्रधानत्वात् तस्याः प्रकृतत्वेन प्राचीशब्दस्य तत्प्रधानत्वात् इति।

**वि**— 'प्राचीमाहरतीत्यत्र दिक् शाखा वाऽस्तु, दिक्श्रुतेः।, आहार्यत्वं दिशो नास्ति शाखा तेनोपलक्ष्यते ॥'

**भाट्ट**-- दर्शपूर्णमासयोः शाखामधिकृत्य 'प्राचीमाहरति' इति श्रुतम्। तत्र प्राचीशब्दस्तावत् दिग्विशेषवाची 'प्राचीमुदेति सविता' इति प्रयोगात्। देशवाची वा, न तु तद्देशस्थशाखावाची। अतश्चोपक्रमस्थप्रातिपदिके लक्षणापेक्षया वरं द्वितीयैव सप्तम्यर्थे व्याख्यातुं युक्ता। प्रतिशब्दाध्याहारो वा। कर्मापेक्षायां न प्रकृतत्वादेव शाखा तत्त्वेन संबध्यते। प्राग्देशस्य च पूर्वोत्तरावध्यपेक्षायां प्रत्यक्षोपस्थितत्वात् सामर्थ्याच्च वनविहारदेशौ तत्त्वेन संबध्येते। तेन वनात् विहारोपलक्षितप्राचीं प्रति शाखामाहरतीति वाक्यार्थः। न तु वृक्षस्य प्राचीं शाखामिति। तथात्वे छिनत्तीति स्यात्, न तु आहरति। इति प्राप्ते, प्रधानभूतविभक्तौ लक्षणायाः प्रतिशब्दाध्याहारस्य वा कर्माध्याहारपूर्वोत्तरावध्यध्याहारसहकृतस्य कल्पनाऽपेक्षया एकस्मिन् प्रातिपदिके एव प्रकृतशाखालक्षणया वाक्यार्थोपपत्तेः, प्राकृतस्य च वृक्षावयवविशेषत्वरूपशाखात्वेनैव उपस्थितवृक्षावधिक-

तयाऽपि उपपत्तेः शाखावाद एवायम्। तेन वृक्षस्य प्राग्देशभवां प्राचीं शाखां छित्त्वा आहरतीत्यर्थः। प्रयोजनानुरोधात्तु विहारदेशं प्रतीति लभ्यते। शाखायां प्राग्देशभवत्वमात्रविधानफलकत्वाच्च लाघवम्। तव तु शाखाहरणोद्देशेनैव प्राग्देशभवविहारावधिकत्वविधाने गौरवम्। **याज्ञिकास्तु** दिग्वादमेव वदन्ति।

**मण्डन**— 'प्राचीतिशब्दो वदतीह शाखाम्।'

**शंकर**— 'प्राची शाखा न दिग्वादः।'

* शाखावादः। 'दिग्वादः शाखावादः' इति बिन्दौ अपि (पृ. २१०१) द्रष्टव्यम्।

* **शाखावैलक्षण्यमात्रेण** कर्मवैलक्षण्यायोगात् अभेद एवावसीयते न भेदः। **सु. पृ. ९८६.**

* **शानचा** कर्ता अभिधीयते दीक्षिष्यमाण इति। लटा भविष्यत्कालः। **टुप्. १२।१।१२।२४.**

* **शान्तिकर्मणि** वेतालोदयः। **रसायनम्. २०८, विवेक. २१०.**

* **शान्तिकाध्यायः** 'शं न इन्द्राग्नी' (ऋसं. ५।३।२८), 'अग्नोध्यग्निः' (ऋसं. ५।१।१) इति च। **उत्सर्गमयूखः पृ. ९ (घारपुरे).**

* **शापानुग्रहसमर्थाः** महर्षयः श्रूयन्ते। **वा. १।३।३।७ पृ. २०८.**

* **शाब्दं** एव अङ्गत्वेन अतिदेशार्हम्, न त्वार्थिकम्। चतुर्होतृ-पञ्चहोतृमन्त्रयोः हविषां स्पर्शने (दर्शपूर्णमासयोः) कालभेदेन व्यवस्था आर्थिकी, न शाब्दी। **वि. ८।१।१५.** * शाब्दं प्रमाणं कार्यैकविषयम्। **ऋजु. पृ. ७३.** * **'शाब्दः शाब्देन अन्वेति'**। श्रुतवाक्यप्रतीयमानार्थान्यथानुपपत्तिप्रतिसंधानेन तदुपपत्तये आकाङ्क्षितस्यार्थान्तरस्य तद्बोधकेन वाक्येनैव समर्पणस्य युक्तत्वात् 'शाब्दः शाब्देन अन्वेति' इति न्यायात्। **वैद्यनाथी. १।१।५ पृ. ३८.** * **शाब्दे** व्यवहारे अशाब्दस्यार्थस्य अन्वयायोगः। **सु. पृ. ११९३,** * शाब्दे व्यवहारे शाब्दस्यैव प्राधान्यस्य विवक्षितत्वात् संबन्धस्यैव विभक्त्या उक्तत्वेन प्रत्ययार्थतया शब्दतः प्राधान्यात् फलहेतुता युक्ता ('दध्नेन्द्रियकामस्य' इत्यत्र)। पृ. ८५१, * शाब्दे व्यवहारे श्रौते वाक्यीये वा प्रतीत्याख्यसंनिधिवत् योग्यत्वापेक्षयोरपि अन्वयाख्यग्रहणकारणत्वात् न प्रतीतिमात्रेण करणादीनां ग्रहणापत्तिः। पृ. १४०२. * **शाब्दी** परिसंख्या निषेधरूपैव इति भट्टसोमेश्वरः। एवकारेण शाब्दी परिसंख्या इति मिश्राः यथा 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति। **बाल. पृ. २४.** * शाब्दी भावना पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः। सा च लिङाद्यर्थः। **मीन्या.** * शाब्दी भावना। प्रवर्तना- प्रेरणा- विधि- अपरपर्यायभूता भावना नञ्रहितवाक्ये लिङाद्यर्थः। सैव च शब्दनिष्ठत्वात् वेदे शाब्दी भावना इत्युच्यते। तस्याश्च शब्दभावनायाः अर्थभावनावदेव अंशत्रयं इति व्यवहरन्ति। तत्र प्रवृत्तिनिवृत्त्योः यथाक्रमं विधिनिषेधप्रयोज्यत्वात् पुरुषार्थानुबन्धित्वाच्च भाव्यत्वम्। लिङादिजन्यविधिनिषेधज्ञानं च भाव्यप्रयोजकत्वात् करणम्। अस्य च करणत्वेन व्यवहारमात्रं न तु तस्य शाब्दबोधे करणत्वेन अन्वयः अशाब्दत्वात्। एवं प्राशस्त्याप्राशस्त्यज्ञानं यथाक्रमं विधिनिषेधयोः इतिकर्तव्यता। तदपि वस्तुत एव, न तु शाब्दबोधे अन्वयः अशाब्दत्वादेव। ते च प्राशस्त्याप्राशस्त्ये तत्तद्विधिनिषेधसंनिधिपठितार्थवादैः लक्षणया प्रतिपाद्येते। **रहस्य. पृ. १९–२०.**

लिङादिवाच्या शाब्दी भावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनताद्याक्षेपमुखेन मुख्यविशेष्यभूतायां आख्यातार्थकृतौ अन्वेति। **रहस्य. पृ. २५.** * शाब्दी भावना प्रेरणापरपर्यायः पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः। धात्वर्थावगतसमीहितसाधनत्वं इत्यन्ये। समीहितसाधनतैव विध्यर्थः। **मीन्या.** * शाब्दी भावना शब्दनिष्ठा न पुरुषनिष्ठा। वेदस्यापौरुषेयत्वेन पुरुषाभावात्। **मीन्या.**

§ **शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायः। साहस्री. २३७.**

* **शाब्दज्ञानभ्रान्तत्वस्य** पुरुषदोषकृतत्वम्। **सु. पृ. ६३२.**



* **शाब्दत्वं** न शब्दवृत्तिविषयत्वं किंतु शब्दजन्यप्रतीतिविषयत्वम्। तेन वृत्त्यविषयस्यापि अन्वयस्य शाब्दत्वोपपत्तिः इति नैयायिकाः। **मणि. पृ. ८२.**

* **शाब्दबोधः** ज्ञानकरणकः। **मणि. पृ. १९,** * **शाब्दबोधस्य** कल्पनं फलानुरोधात्। पृ. १६३, * **शाब्दबोधे** ज्ञानस्य अवान्तरवाक्यार्थज्ञानत्वेन हेतुत्वम्। पृ. ३०, * शाब्दबोधे धात्वर्थव्यापारस्य मुख्यविशेष्यत्वम्, सर्वकारकाणां फलस्य वर्तमानत्वादिकालस्य च व्यापारविशेषणत्वम्। एकत्वादिसंख्यायाश्च कर्तृकर्मणोः, कर्मणश्च फले अन्वयः। एवं च 'तण्डुलान् पचति' इति कर्त्राख्याते तण्डुलनिष्ठविक्लित्तिजनकः एकाश्रयको व्यापारः इति बोधः। 'तण्डुलः पच्यते' इति कर्माख्याते तु एकाश्रयफलजनको व्यापारः इति बोधः। इति वैयाकरणाः। पृ. १०५, * शाब्दबोधे पदार्थोपस्थितिमात्रं न हेतुः। पचतीत्यादौ प्रत्यक्षदृष्टकलापादेरपि (कपालादेरपि ?) शाब्दबोधापत्तेः। नापि पदजन्यपदार्थोपस्थितिः, पदोपस्थितस्वाश्रयाकाशादेरपि शाब्दबोधापत्तेः। अतो वृत्त्या पदजन्यपदार्थोपस्थितिर्हेतुः।

अन्ये तु न पदजन्यपदार्थोपस्थितिर्हेतुः, किंतु पदार्थोपस्थितिमात्रम्। आकाशादेः शाब्दबोधस्य आकाङ्क्षायोग्यत्वाभावेनैव वारणात्।

न च तथापि प्रत्यक्षगम्यकलापादेरपि पचतीत्यादौ शाब्दबोधापत्तिः। तात्पर्याभावात्। तत्सत्त्वे शाब्दबोधस्य इष्टत्वात्।

न चैवं 'घटः कर्मत्वं' इत्यादिपदजन्यपदार्थोपस्थितौ शाब्दबोधापत्तिः। तादृशसमभिव्याहारविशिष्टपदजन्यपदार्थोपस्थितेरेव हेतुत्वाङ्गीकारात्। अत एव वाचकपदानुपस्थितस्यापि क्रमस्य विधानमुपपद्यते इत्याहुः।

ननु अस्तु शाब्दबोधे आकाङ्क्षादिज्ञानानां कारणता, तथापि युगपत् तावत्पदज्ञानानां तावत्पदार्थस्मृतीनां च असंभवात् कथं वाक्यार्थबोध इति चेत्। न। क्रमोच्चारितपदजन्यपदार्थक्रमिकोपस्थित्यनन्तरं सर्वेषां पदानां समूहालम्बनरूपमानसोपस्थितिः, ततः समूहालम्बनरूपतत्पदार्थोपस्थितौ तदन्वयबोधोपपत्तेः।

न च पदसमूहालम्बनं विना अर्थोपस्थितिरेव कल्प्यतां इति **वाच्यम्**। तस्याः पदजन्यत्वाभावेन क्लृप्तकार्यकारणभावबाधापत्तेः। अतः पदसमूहालम्बनं आवश्यकम्।

वस्तुतस्तु जन्यत्वापेक्षया अनन्यथासिद्धत्वस्य अप्रवेशेन प्रयोज्यत्वस्य लघुतया पदजन्यपदार्थोपस्थितेः न हेतुत्वम्, किन्तु पदप्रयोज्यपदार्थोपस्थितेरेव। तथा सति पदसमूहालम्बनं नावश्यकं इति युक्तम्।

पदार्थानां च खलेकपोतन्यायेन अन्वयबोधः। तदुक्तं 'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत् पतन्ति। तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति॥' इति।

क्वचित्तु राजपुरप्रवेशन्यायेन अन्वयबोधः। यत्र खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधः, यत्र वा 'दण्डी कुण्डली छत्री चैत्रः' इत्यादौ विशिष्टस्य वैशिष्ट्यबोधे तात्पर्यं तत्र। तदुक्तं 'यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते। तेनतेनान्वितः स्वार्थः पदैरेवावगम्यते॥' इति **संप्रदायः**।

खण्डवाक्यार्थबोधोत्तरं चरमपदस्मृतिः, ततः तत्पदार्थस्मृतिः, तत्र अर्थस्मृतिकाले खण्डवाक्यार्थबोधनाशात् चरमपदस्मृतिरेव तावत्पदविषयिणी, ततः चरमार्थस्मृतिः तावदर्थविषयिणी, ततः अन्वयबोधः इति **नव्याः**।

**ननु** पदजन्यपदार्थोपस्थितिः शाब्दबोधहेतुः। अन्यथा पचतीत्यादितः प्रत्यक्षदृष्टकलापादेरपि अन्वयबोधापत्तेः इत्युक्तम्। एवं सति 'द्वारं' इत्यादौ शाब्दबोधो न स्यात्। क्रियावाचकपदाभावात् इति चेत्। **न**, अनुषङ्गाध्याहारादिना अन्वयबोधात्।

**गुरवस्तु** तद्विषयकशाब्दे पदजन्यतदुपस्थितेर्न हेतुत्वम्, किंतु तत्तदन्वयबोधे पदजन्यतत्तदन्वयप्रतियोग्युपस्थितित्वेन हेतुत्वम्। 'विश्वजिता यजेत' इत्यादौ तु अर्थाध्याहारेणैव अन्वयबोधः **इत्याहुः**। तेषामयमाशयः। कार्यवाचकपदासमभिव्याहृतवाक्यानां मूकत्वात् शाब्दबोधमात्रे कार्यवाचकपदज्ञानं अर्थोपस्थितिश्च हेतुः। आकाङ्क्षाऽभावात् नोपस्थितस्य आकाशादे-

बोधः । उपस्थितकलापादेः आकाङ्क्षायां बोधस्तु इष्ट एव । एवं च तत्तच्छाब्दबोधे तत्तत्पदार्थोपस्थितित्वेन हेतुता इति लाघवम् । **मतान्तरे तु** तत्तत्पदज्ञानस्य तत्तत्पदजन्योपस्थितेश्च हेतुत्वकल्पने हेतुहेतुमद्भाव-कल्पना गौरवं इति । **मणि.** पृ. ६९–७०. * शाब्द-बोधे योग्यताज्ञानकरणत्वनिरासपूर्वकं अयोग्यतानिश्चयस्य प्रतिबन्धकत्वव्यवस्थापनम् । **भाट्ट.** ३।१।६.

* **शाब्दबोधक्रमः ।** प्रवृत्तिजनकशाब्दबोध-क्रमस्तु ‘ नियोज्यस्वर्गकामीयं यागविषयकं स्वर्ग-साधनं स्थायि कार्यं मम ’ इति **प्रथमो बोधः ।** स्वर्ग-कामे नियोज्यत्वं संसर्गतया प्रकारतया वा भासते ।

‘ नियोज्यस्वर्गकामीयो यागः कार्यः ’ इति **द्वितीयः ।** अन्यथा अतीन्द्रियस्य अफलस्य स्वतन्त्रकृत्यसाध्यतया यागकृतिसाध्यस्य यागे कार्यत्वान्वयबोधं विना अनु-पपत्तेः ।

नियोज्यस्वर्गकामः स्वनियोज्यस्वर्गसाधनत्वेन ज्ञाय-मानकार्यो यागानुकूलकृतिमान् इति व्यापारवान् इति वा **तृतीयः ।** अन्यथा पूर्वप्रतीतकृतेः आश्रयान्वयं विना अनुपपत्तेः, आख्यातवाच्यव्यापारसामान्यस्य कर्तृसाकाङ्क्षत्वात् प्रथमान्तपदोपस्थाप्ये अन्वयबोध-नियमाच्च तदन्वयं विना अनुपपत्तेर्वा ।

स्वर्गकामो यागजन्यफलभाक् इति **चतुर्थो बोधः ।** अन्यथा अनधिकारिणः कर्तृत्वानुपपत्तेः ।

मत्कृतिसाध्यो यागः, अहं च कर्ता अधिकारी च इति **पञ्चमः** इति केचित् ।

**विवरणकारस्तु** अत्र बोधत्रयमेव आवश्यकम्, तावतैव प्रवृत्तिसिद्धेरित्याह ।

**निबन्धकारस्तु** आद्यबोधद्वयोत्तरं ‘ अहं स्वर्ग-कामः कर्ता भोक्ता च ’ इति बोधात् प्रवृत्तिमाह । **मणि.** पृ. ८८.

* **शाब्दबोधप्रकारः** न्यायमते । आख्यातार्थो यत्नः । प्रथमान्तपदोपस्थाप्यस्यैव मुख्यविशेष्यत्वम् । कर्त्राख्याते फलं व्यापारे विशेषणम्, कर्माख्यातेऽपि व्यापारः फले, जन्यत्वादि च संसर्गः । यत्नश्च प्रत्य-यार्थः । तेन तण्डुलनिष्ठविक्लित्तिजनकयत्नवान् देवदत्तः इति कर्त्राख्याते । देवदत्तनिष्ठकृतिजन्यव्यापारजन्यफल-शाली तण्डुलः इति कर्माख्याते बोधः । फलमात्मने-पदार्थः । निष्ठत्वं कृतिश्च द्वितीयातृतीयाद्यर्थः संसर्गो वा । तेन स्मृतिरपि उपपन्ना । इति । **मणि.** पृ. १०७.

* **शाब्दबोधहेतुः** न योग्यताज्ञानं अपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम् । **भाट्ट.** ३।१।६ पृ. १९०.

* **शाब्दभावनायां** साध्यं आर्थी भावना, साधनं —लिङादिज्ञानम्, इतिकर्तव्यताप्राशस्त्यज्ञानम् । लिङादि-ज्ञानस्य करणत्वं च भावनाभाव्यनिर्वर्तकत्वेन । **मीन्या.**

* **शाब्दसामग्री** चाक्षुषादिप्रतिबन्धिका इति सर्व-संमतम् । **मणि.** पृ. ६३.

* **शामित्रं** आध्वर्यवे समाम्नानात् अध्वर्युणा कर्तव्यम् । **भा.** ३।७।१३।२९. * ‘ शामित्रं चैव विप्राणां ’ अयं क्रत्वर्थमात्रविषयकः स्मृतिकल्प्यः प्रतिषेधः । **बाल.** पृ. ३१. * **शामित्रोऽग्निस्तन्त्रं** प्राजापत्यपशूनां सवनीयपशूनां च ( वाजपेये ) । **संकर्ष.** १।१।९. **मीको.** पृ. २४४८ ‘ प्राजापत्यपशूनां० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **शामित्राः** अग्नयः सोमे पशुभेदात् त्रयः । **संकर्ष.** २।४।७, ३।२।१६. * **शामित्रस्य** न कथंचित् अब्राह्मणविषयत्वं विज्ञायते । हिंसात्वात् ब्राह्मणो नेच्छेत् इति चेत् तुल्यमेतदब्राह्मण-स्यापि । स हि मन्दप्रतीकारः सुतरां प्रत्यवैति । तेन यथैव शूद्रादिः कथंचित् अनिच्छन्नपि कार्यते तथैव यो दानादिवशीकृतः करिष्यति सोऽनुष्ठास्यति । **वा.** ३।७।१३।२९. * **शामित्रेऽग्नौ** अग्नीषोमीयादिपशुः श्रप्यते । **वि.** १२।१।५.

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् । १२।१।५।१२ ॥**

अग्निष्टोमे पशुपुरोडाशः शामित्रे अग्नौ न श्रपयितव्यः स्यात् किंतु शालामुखीये गार्हपत्ये । इतरस्य गार्हपत्यस्य शामित्रात् पशुश्रपणात् प्राक् प्रयुक्तत्वात् । तस्मात् शालामुखीये पुरोडाशश्रपणं इति सिद्धान्तः । **के.**

* शामित्रे मांसपाकः नाहवनीयादौ । **भा.** १२।२।१।२.



* **शामित्राग्नौ** पशुपुरोडाशश्रपणाननुष्ठानं किंतु शालामुखीये ( ज्योतिष्टोमे ) । १२।१।५।१२. **मीको.** पृ. १०१ ‘ अग्नीषोमीयपशुपुरोडाशश्रपणं० ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

**शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जन इति न्यायः ।** स्पष्टार्थः । अयं न्यायः कविकालिदासोक्ति-रूपः । **साहस्री.** ७७१.

* ‘ **शारीरो** निग्रहो यत्र तत्र प्रत्येकभिन्नता । हिरण्यादानदण्डस्तु समुदाये समाप्यते ॥ ’ **वा.** ३।१।६।१२ पृ. ६९७.

* **शारीरकमीमांसा** व्यासपादप्रणीता चतुर्लक्षणी भिन्नमेव शास्त्रम् । **संकर्ष.** ४।४।१०.

* **शालाशब्दो** गृहवचनः, तत्र न शालाशब्द-सामान्यात् मालाशब्दादयोऽपि गृहवचना भवन्ति । **भा.** २।२।८।२२ पृ. ५३०.

* **शालामुखीयः** अग्निः औत्तरवेदिकप्रणयनोत्तरं गार्हपत्यः संपद्यते । **संकर्ष.** ३।२।१२. **मीको.** पृ. १७९८ ‘ ज्योतिष्टोमे औत्तरवेदिकप्रणयनोत्तरं० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शालामुखीयोऽग्निः निरूढादिपशुष्वपि भवति । **संकर्ष.** ३।२।२२. **मीको.** पृ. २३७१ ‘ निरूढादिष्वपि शालामुखीयो भवति ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शालामुखीयः अग्निः प्राचीनवंशे यः पूर्वमाहवनीयः स एव अग्निप्रणयनोत्तरं गार्हपत्यः संपद्यते । स एव शालायाः मुखे भवः शाला-मुखीयो नाम । **वि.** १२।१।६, * शालामुखीयः अग्निः प्राचीनवंशशालायां पूर्वभागे वर्तमानः आहवनीय एव । अयं च महावेदिनिष्पत्त्यनन्तरं गार्हपत्यः संजायते । १२।१।५. * शालामुखीयः पशौ वरुणप्रघासेषु चास्ति । **संकर्ष.** ३।२।२८. **मीको.** पृ. २४९३ ‘ पशौ वरुण-प्रघासेषु च शालामुखीयोऽस्ति ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **शालामुखीयादेव** आग्नीध्रप्रणयनं ज्योति-ष्टोमे । **संकर्ष.** ३।२।१४. **मीको.** पृ. १८३० ‘ ज्योतिष्टोमे शालामुखीयादेव आग्नीध्रप्रणयनम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **शालामुखीयस्य** एकदेश एव औत्तरवेदिकोऽग्निः, न तु कृत्स्नः । **संकर्ष.** ३।२।११. **मीको.** पृ. १९ ‘ अग्निः औत्तरवेदिकः० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शालामुखीयस्यैव समारोपः सोमापवर्गे । **संकर्ष.** ३।२।२९. ‘ सोमापवर्गे शाला-मुखीयस्यैव समारोपः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **शालामुखीये** अग्नीषोमीयपशुपुरोडाशश्रपणम्, न तु शामित्रे । १२।१।५।१२. **मीको.** पृ. १०१ ‘ अग्नीषोमीयपशुपुरोडाशश्रपणं० ’ इत्यत्र अधिकरणं द्रष्ट-व्यम् । * शालामुखीये एव गार्हपत्यकर्माणि ज्योतिष्टोमे । **संकर्ष.** ३।२।१३. **मीको.** पृ. १७९८ ‘ ज्योति-ष्टोमे गार्हपत्यकर्माणि शालामुखीये एव ’ इत्यत्र अधि-करणं द्रष्टव्यम् । * शालामुखीये एव पशौ पुरोडाशस्य श्रपणम् । **संकर्ष.** ३।२।२६. **मीको.** पृ. २४९२ ‘ पशौ पुरोडाशस्य शालामुखीये एव श्रपणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शालामुखीये मासाग्निहोत्र-श्रपणं न कार्यं किंतु प्राजहिते कार्यं कौण्डपायिनामयने । १२।१।६।१३.

* **शालामुखीयादीनां** अग्नीनां सोमोत्तरं नित्यं धारणीयत्वात् सोमान्ते ते समारोपणीया इति पूर्वपक्षः । तेषां सोममात्रार्थत्वात् सोमान्ते न समारोपणीयाः । प्राजहितस्यैव तु समारोपः इति सिद्धान्तः । अजस्रपक्षे तु शालामुखीयस्यापि समारोपः । गतश्रियामेवमेव । शाखाभेदेन नित्यमाहवनीयधारणेऽप्येवम् । **संकर्ष.** ३।२।२९–३०.

* **शालामुखीयवत्** आहवनीयस्यापि समारोपः गतश्रिय सोमापवर्गे । **संकर्ष.** ३।२।३०. ‘ सोमाप-वर्गे गतश्रियः० ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शाल्यर्थं** कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च । **भा.** ३।१।६।१२ पृ. ६८९.

**शालिसमृद्धौ कोद्रवाऽशनमिति इति न्यायः ।** यथा– शालिरुत्तमधान्यविशेषः, कोद्रव इत्य-धमधान्यविशेषः । उत्तमवस्तुसद्भावे यत्र अधमवस्तु-सेवनं तत्रास्य प्रवृत्तिरिति । **साहस्री.** १४४.

* **शासः**– असिः । “ दश प्रयाजानिष्ट्वाऽऽह ‘ शासमाहर ’ इति । असिं वै ‘ शास ’ इत्याचक्षते ” इति हि ब्राह्मणम् । **वि.** ९।४।५.

* **शास्त्रं** अप्राप्तप्रापणम् । कणिका. पृ. ४३१. * शास्त्रं च अनतिशङ्क्यं पितृमातृवचनादपि प्रमाणतरम् । स्वयं हि तेन प्रत्येति । इन्द्रियस्थानीयं हि तत् । भा. ४।१।३।३. * शास्त्रं न्यायनिष्ठम् । सु. पृ. ७८८. * शास्त्रं फलभूयस्त्वाय साङ्गप्रधानस्यावृत्तिं विदधाति नाङ्गमात्रस्य । वि. ११।१।७, * शास्त्रं लोकात् प्रबलम्, तेन त्रिवृच्छब्दस्य ऋङ्नवकं इत्यर्थः, न तु त्रैगुण्यं इति । १।३।५ वर्णकं ३, * शास्त्रं लोकात् प्रबलं यत् निर्णायकम्, न तु सांशयिकम्, सांशयिकस्थले तु लोकः प्रमाणम् । १।३।५ वर्णकं ३. * शास्त्रं विचारहेतुसूत्रसमुदायात्मकम् । मणि. पृ. १. * शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम् । भा १।१।५।५ पृ. ३७ । चोदनात्मकशब्दविज्ञानात् प्रमाणान्तरागम्यधर्माधर्मविषयकज्ञानजनकं शास्त्रम् । अत्र शास्त्रशब्देन योगरूढ्या धर्माधर्मोपदेशीनि चतुर्दश अष्टादश वा विद्यास्थानानि उच्यन्ते । वैद्यनाथी. १।१।५।५ पृ. ३७. * 'शास्त्रं स्यान्न प्रकल्पकम्' किंतु बोधमेव । ६।२।४।१९ सूत्रांशः. * कृतकरं शास्त्रं अनर्थकं स्यात् । भा. १०।७।९।२६,३१. * 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ ४ ॥ स्वरूपकथनं यत्तु कस्यचित् तत्र दृश्यते । तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥ ५ ॥ श्लोवा. शब्दपरिच्छेदः. * बादरिः सर्वाधिकारं शास्त्रं मन्यते ( शूद्रादीनामपीत्यर्थः ) । भा. ६।१।७।२७, * मनुष्याधिकारं शास्त्रं समधिगतम् । ६।७।१३।३२. * लोके अनुपपन्नार्थमेव किंचित् दृष्ट्वा शास्त्रं तन्नियमाय प्रवृत्तम् । बृहती. पृ. १२३ । यान्येव दश दाडिमानि तान्येव षट् अपूपा इत्यर्थः । ऋजु. पृ. १२२. * 'लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते । अतो न लौकिकेष्वस्यासात्साध्वसाधुत्वनिर्णयः ॥' वा. १।३।८।२४ पृ. २५२. * शासनाद्धि शास्त्रम् । बृहती. पृ. ८१ । यतश्च शासनमवगम्यते तच्छास्त्रम्, शासनात् शास्त्रं इति लौकिकव्युत्पत्तेः । ऋजु. पृ. ८१. * श्रेयोऽभिधायकः पदसमूहः शास्त्रं इति वृद्धाः । (के.) * '**शास्त्राणि** चेत् प्रमाणं स्युर्गतास्ते परमां गतिम्' । अनाशङ्किते शङ्कितवचनमिदम् । भा. १०।८।१४।४२. * 'तस्माद्यान्येव **शास्त्राणि** वेदमूलानतिक्रमात् । अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥ यथैवान्याय-विज्ञाताद्वेदाल्लेख्यादिपूर्वकात् । शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम् ॥ तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् । संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः । कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥' वा. १।३।३।७ पृ. २०३, * 'सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह । एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥' ३।८।४।१३ पृ. ९२२, * **शास्त्रेण** एकरूपेण भवितव्यम् । ६।४।१।२, * शास्त्रेण लक्षणासु अन्वाख्यानं न क्रियते । ३।१।६।१२ पृ. ६८१. * **शास्त्रस्य** अनतिशङ्क्यत्वात् । ४।१।३।३. ( **सूत्रांशः** ) * 'अन्य एवैकदेशेन **शास्त्रस्यार्थः** प्रतीयते । अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥' ( वृद्धश्लोकोऽयम् ) । ( वा. पृ. ९२३ ) समस्तां शास्त्रावयवोपसंहृतिं विना तात्पर्यानवधारणात् अनवधारिततात्पर्यस्य च शब्दस्य प्रामाण्याहेशेयपरिच्छेदकाविज्ञानानुत्पादकत्वात् अपरिपूर्णेन शास्त्रैकदेशेन अतात्त्विकोऽर्थः प्रतीयेत, समस्तावयवोपसंहृतौ सत्यां परिपूर्णेन शास्त्रेण तात्त्विकः । सु. पृ. १४१९. * एकस्यैव शास्त्रस्य किंचित् प्रति सद्भावः किंचित्प्रति असत्त्वं इति नहि युज्यते । वा. ३।३।७।१४ पृ. ८६०, * **शास्त्रे** तु सर्वत्र प्रत्ययार्थो भावना इति व्यवहारः । २।१।१।१ पृ. ३८०, * न सामान्यतो दृष्टेन शास्त्रे व्यवहारः । ६।२।६।२२, * नहि अन्यशास्त्रे सति उपायमात्रत्वेन उपात्तानां एकान्तेन पारमार्थिकत्वं इति वक्ष्यते । १।२।१।१ पृ. ११५.

* **शास्त्रातिदेशस्य** दशमाद्ये निषेधः । सु. पृ. ६३४. * **शास्त्रातिदेशे** सति ऊहाभावः । शास्त्रातिदेशे सौर्ये पेषणं प्राप्तम् । तद्यपि प्रकृतौ दृष्टार्थम्, तथापि शास्त्रस्यातिदिष्टत्वात् अदृष्ट उपकारः कल्पनीयः पेषणस्य, प्रयाजादीनामिव । एवमेव 'अग्नये जुष्टं निर्वपामि' इति । टुप्. ९।१।१।१ पृ. १६३५,



* **शास्त्रातिदेशपक्षः** पदार्थातिदेशपक्षश्च ( इति पक्षद्वयम् ) । वा. ३।६।१।८.

* **शास्त्रान्तरं** हि अनन्यगति दृष्ट्वा मृगतृष्णादिवदेव सामान्यापह्नतबुद्धेर्मम इयं भ्रान्तिः पूर्वे एतद्विषयपरिकल्पनया जाता इत्यध्यवस्यति ( यत्र प्राप्तस्तत्र ) । वा. ३।३।७।१४ पृ. ८६१.

* **शास्त्रार्थः** । न चानुमानेन शक्यः शास्त्रार्थोऽनुष्ठातुम् । टुप्. ६।१।११।४३. * शास्त्रार्थो हि निरूपितरूपो भवति ( एकरूपः निश्चितः ) । वा. १।३।८।२४ पृ. २५६, * 'स्तोकेनाप्यन्यथात्वेन **शास्त्रार्थो** निष्फलो भवेत् ।' १।३।४।९ पृ. २१७. * **शास्त्रार्थेन** च व्यवस्थितेन भवितव्यम् । भा. १०।१।४।६.

* **शास्त्रोक्ते** च सामिकृते त्यक्ते अत्यन्तं शिष्टा गर्हन्ते, देवताश्रये च । भा. ६।२।४।१८.

* **शास्त्रैकसमधिगम्येऽर्थे** कल्पना न प्रवर्तते । सोम. ७।४।१.

* **शास्त्रकाराः** हि नैसर्गिकवैनयिकबुद्ध्यतिशयसंपन्ना लौकिकाः । कणिका. पृ. २३९. * **शास्त्रकारस्यापि** न्यायविरुद्धत्वेऽप्रमाणत्वमिष्टमेव इत्याशयेनाह– 'न शास्त्रकारवचनमपि अलं इममर्थमुपपादयितुम्' ( भाष्यपङ्क्तिरियम् ) । वैद्यनाथी. १।१।५।५. * **शास्त्रकाराणां** श्रुतीनां च अयमारम्भः परप्रत्ययार्थः । बृहती. पृ. १८०.

* **शास्त्रकृते** देवताव्यापारे उपक्रम्यापरिसमाप्यमाने शिष्टविगर्हणं भवति । भा. ६।२।४।१६.

* **शास्त्रचिन्तकाः** खलु एवं विवेचयन्ति, न तु प्रतिपत्तारः । ते तु दृश्यविकल्पौ अर्थौ एकीकृत्य बाह्यमेव अनुमन्यमानाः प्रवर्तन्ते । इति धर्मकीर्तिः । ऋजु. पृ. ४१.

* **शास्त्रप्रवृत्तिः** । पुरुषार्था च सर्वशास्त्रप्रवृत्तिः । वा. ३।६।३।१० पृ. १०३७.

* **शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणम्** । ( वि. १।३।८ ) 'आर्यम्लेच्छाधिकरणम्' एवेदम् ।

* **शास्त्रप्राप्तस्य** शास्त्रेण निषेधे विकल्पः स्यात्, समबलत्वात् । मीन्या.

**शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् । ३।७।८।१८॥**

पूर्वपक्षसूत्रम् । दर्शपूर्णमासादिकं कर्म साङ्गप्रधानं सर्वं यजमानेनैव स्वयं कर्तव्यम्, उत हविस्त्यागदक्षिणादानात्मकद्रव्योत्सर्गमात्रं यजमानेन कर्तव्यं अन्यत्तु यजमानेन अन्येन वा कर्तव्यम्, अथवा द्रव्योत्सर्गमात्रं यजमानेन कर्तव्यं अन्यत्तु सर्वं अन्यैरेव ऋत्विग्भिः कारयितव्यं इति विचारे प्रथमं पूर्वपक्षमाह सूत्रम् । शास्त्रफलं 'स्वर्गकामो यजेत' इत्यादिशास्त्रेण अवगम्यमानं फलं प्रयोक्तरि साङ्गं कर्म कुर्वाणे भवति । तल्लक्षणत्वात् शास्त्रलक्षणत्वात् फलस्य साङ्गप्रधानप्रयोगबोधकशास्त्रगम्यत्वात् । तस्मात् हेतोः स्वयं यजमान एव साङ्गप्रधानस्य प्रयोगे कर्ता स्यात् । दक्षिणादानादिविधिस्तु अदृष्टार्थः 'आत्रेयाय हिरण्यं ददाति' इतिवत् ।

अत्र सुधा— प्रधानभूतेऽपि आधानादौ अन्यकर्तृकत्वाभ्युपगमात् अङ्गभूतेष्वपि च प्रयाजादिषु यजमानकर्तृकत्वाभ्युपगमात् प्रभौ स्वामिन्येव धीयते सम्बैति इति अवयवव्युत्पत्त्या प्रधानोक्त्या अनन्यसाध्यव्यापारोक्तेः सर्वस्मिन् प्रयोगे स्वयमेव कर्ता स्यात् इति 'स्वयं प्रयोगे स्यात्' इत्यस्यार्थः प्रतिज्ञा । शास्त्रीयकर्मसाध्यं यत् फलं तत् स्वयं अनुष्ठातरि एव यस्माद्भवति इति 'शास्त्रफलं प्रयोक्तरि तस्मात्' इत्यस्यार्थो हेतुः । शास्त्रप्रमाणकत्वात् फलस्य शास्त्राच्च कर्तृगामित्वनियमावगतेः इति तल्लक्षणत्वात् इत्यस्यार्थः । इति ।

**उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात् । १९ ॥**

साङ्गप्रधानात्मके दर्शपूर्णमासादौ कर्मणि हविस्त्यागो दक्षिणादानं चेति द्रव्योत्सर्गरूपं मुख्यं कर्म यजमानेनैव कर्तव्यम्, इतरत्तु तत्रत्यं कर्म यजमानेन वा अन्येन ऋत्विजा वा कर्तव्यं इति द्वितीयपूर्वपक्षोपन्यासार्थं सूत्रम् । तु–शब्दः यजमानेनैव सर्वं कर्तव्यं इति प्रथमपूर्वपक्षस्य व्यावृत्त्यर्थः । अस्तु नाम साङ्गप्रधानप्रयोक्तुः फलं तथापि अङ्गानां ऋत्विक्कर्तृकत्वेऽपि यजमानस्य फलं न विरुध्यते । कुतः ? उत्सर्गे प्रधान-

त्वात् उत्सर्गरूपे प्रधाने अङ्गे वा, प्रभौ यजमाने एव धीयमानत्वाख्यात् प्रधानत्वात्, स्वयमेव यजमानः कर्ता स्यात्। द्रव्योत्सर्गरूपं प्रधानं यजमान एव स्वयं कुर्यात् इत्यर्थः। शेषकारी द्रव्योत्सर्गादन्यस्य सर्वस्य कर्ता तु प्रधानस्य कर्तुः तस्मात् यजमानात् अन्यः ऋत्विक् कर्ता स्यात्, स्वयं यजमानो वा कर्ता स्यात्। अथवा, प्रधानस्य यः शेषः, तत्कारी तस्माद्यजमानात् अन्यः कर्ता स्यात् स्वयं यजमानो वा स्यात् इत्यन्वयः।

सूत्रगोलार्थस्तु सुधायाम्— आत्मनेपदसामानाधिकरण्याभ्यां प्रधानार्थे फलार्थिकर्तृकत्वनियमात् कर्त्रन्तरनिवृत्त्या फलार्थिना स्वयंकर्तृत्वावगमात् पुरोडाशादिद्रव्योत्सर्गात्मके प्रधाने स्वयं अक्रियमाणे अन्यकर्तृकत्वायोगात् परिक्रये वरणे च स्वयं क्रियमाणेऽपि अतत्कारिणा कृतस्यापि अकृतसमत्वापत्तेः प्रधानं स्वयं करोति, प्रधाने तु स्वयंकृते अङ्गानि परिक्रयवरणाभ्यां अन्येन कारयन् यजमानः कर्तृत्वान्न व्याहन्यते इति वर्णितः। किंच— आत्मनेपदेन कर्तुरेव फलं इति नियमात् अकर्तृफलार्थे च कर्तुर्नियमाभावेऽपि अकरणे फलाभावापत्तेः आत्मनेपदस्य प्रयोक्तृव्यापारवाचित्वाभावेन स्वयंकर्तरि एव फलनियामकत्वात् साङ्गप्रधानभावनायाश्च फलसाधनत्वात् सर्वत्र स्वयंकर्तृनियमापत्तिशङ्कानिरासार्थत्वेन अङ्गप्रधानविशिष्टभावनायाः फलसाधनत्वेऽपि परिस्पन्दरूपेषु धात्वर्थेषु आत्मनः साक्षात् कर्तृत्वायोगेन अवश्यं शरीरेन्द्रियद्वारा कर्तृत्वस्य आश्रयणीयत्वात् भावनाधात्वोः कर्त्रैक्यनियमानुपपत्तेः, अन्यकर्तृकेणापि धात्वर्थेन करणतया भावनावच्छेदोपपत्तेः धात्वर्थानवच्छिन्नभावनानुष्ठानायोगोपालम्भानापत्तेः, षट्कर्षककर्तृककृषिधात्वर्थावच्छिन्नायाश्च भावनायाः 'षड्भिर्हलैः कृषति' इत्येककर्तृकत्वप्रयोगात् कर्त्रैक्यनियमाभावावगतेः, करणेतिकर्तव्यतात्वेन च अङ्गप्रधानानां फलभावनाविशेषणतया तस्यामवस्थायां साध्यत्वाभावेन कर्त्रनपेक्षत्वात्, स्वरूपमात्रे फलभावनया फलार्थिनः कर्तृत्वाक्षेपावगतेः आत्मनेपदेन तन्मात्रे स्वयंकर्तुः फलनियमात्, तद्विशेषणेषु अङ्गप्रधानेषु तद्वशात् स्वयंकर्तृत्वनियमापत्तेः आत्मोपात्तशरीरेन्द्रियव्यापाराणां यजमाने फलसाधनत्वनियमोपपत्तेः उत्सर्गरूपेषु अङ्गप्रधानेषु अन्येन कर्तुमशक्यत्वात् स्वयंकर्तृत्वनियमेऽपि, अङ्गेर्धातोर्गत्यर्थत्वात् 'अङ्गति' स्वामिनं त्यक्त्वा अन्यत्रापि गच्छति समवैति इति व्युत्पत्त्या अन्येनापि कर्तुं शक्यस्य अङ्गत्वोक्त्या विवक्षितत्वात् फलार्थिनः स्वामिनः परिक्रयोपात्तऋत्विग्द्वारा फलभावनाविशेषणभूताङ्गप्रधानव्यापारकरणस्य आत्मनेपदाविरुद्धत्वात्, अन्येन कर्तुमशक्येषु सामर्थ्यात् स्वयंकर्तृत्वनियमेऽपि अन्येन कर्तुं शक्येषु अनियमः– इत्युक्तं (सुधायाम्)।

**अन्यो वा स्यात् परिक्रयाम्नानाद् विप्रतिषेधात् प्रत्यगात्मनि। २०॥**

सिद्धान्तसूत्रम्। परिक्रयादन्यस्य कर्मणः कर्ता अन्यः यजमानात् भिन्नः स्यात् दर्शपूर्णमासादौ। वा-शब्दः पूर्वपक्षव्यावृत्त्यर्थः। परिक्रयस्य आम्नानात्। अत एव ऋत्विजां परिक्रय आम्नायते। प्रत्यगात्मनि स्वस्मिन्, परिक्रयस्य विप्रतिषेधात्। न हि स्वस्य स्वयं परिक्रयः कर्तुं शक्यते। तस्मात् परिक्रयः, याजमानं च यजमानेन कर्तव्यम्। इतरत् सर्वं ऋत्विग्भिः। **के.**

* 'शास्त्रफलं प्रयोक्तरि०' (३।७।८।१८) इत्यत्र कामिनः स्वयंफलसाधनावच्छिन्नभावनाकारित्वमुक्तम्। **सु.** ३।८।५।१३ पृ. ६०. * 'शास्त्रफलं प्रयोक्तरि०' इत्यत्र समधिगतं यः कार्त्स्न्येन विधिमुपसंहर्तुं समर्थः स एवाधिक्रियते इति। **भा.** ६।७।१३।३६. * 'शास्त्रफलं प्रयोक्तरि०' प्रयोक्तृफलसाधनतालक्षणत्वात् शास्त्रस्य। **विवि.** पृ. ३७६. * अन्यस्य स्वर्गं कामयमानोऽपि अन्यो यजेत, तत्र पूर्वोक्तो न्यायः प्रत्युद्धृतो भवति '**शास्त्रफलं प्रयोक्तरि०**' इति। **भा.** ६।२।२।७. * ततः (३।६।७।१८ इत्यतः परं) चतुर्णां (श्रुतिलिङ्गवाक्यप्रकरणानां) क्रमेण सह पुनः सैव चिन्ता (विरोधाविरोधचिन्ता) यावत् 'शास्त्रफलं०' इति। **वा.** ३।१।१।१ पृ. ६५३. * यागसंकल्पमात्रेण सर्वो यागो यजमानकर्तृक एव। तत्सिद्ध्यर्थमेव ऋत्विजः कुर्वन्ति इति न 'शास्त्रफलं प्रयोक्तरि' इति न्यायविरोधः, संकल्पेनैव प्रयोक्तृत्वात्। **सत्या. श्रौ.** १।१।१ वैजयन्ती.



* सहस्रसंवत्सरे सत्रे– 'शास्त्रफलं प्रयोक्तरि०' इति न्यायस्य विना वचनं अपवादे प्रमाणाभावात् समस्तकर्मानुष्ठानाभावे विकलानुष्ठायिनां फलानुत्पत्तिप्रसङ्गात् सत्रारम्भादेव सहस्रायुष्यं मनुष्याणां जायते इति वा कल्प्यम्। (इति पूर्वपक्षः)। **भाट्ट.** ६।७।१२. * सेतिकर्तव्यताकप्रयोगेऽवगते 'करिष्यामि' इति बुद्धौ सत्यां किं ससहायः असहायो वा इत्यस्यामवस्थायां 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्०' इत्यधिकरणन्यायेन तत्प्रयोगे यजमानस्यैव कर्तृत्वे प्राप्ते अध्वर्य्वादयोऽपि कर्तारो विधीयन्ते। **कु.** ३।१।१०।१९. * सौमेन्द्रं कर्म वमनोपस्थापितकर्माङ्गतामनुभवदेव सोमवामिनः उपकरोति, यजमानस्यैव च तथोपकर्तुं शक्नोति नर्त्विजम्, ततश्च यजमानार्थत्वेन सौमेन्द्रस्य कर्मणः 'शास्त्रफलं प्रयोक्तरि' इत्यनेन न्यायेन यजमानकर्तृकत्वात् तस्य च वमनसमानकर्तृकत्वनिर्देशात् यजमानवमने एव सौमेन्द्रं कर्म। **सु.** पृ. १५१३.

**शास्त्रफलाधिकरणम्।** अग्निहोत्रादिकर्मसु उत्सर्गं स्वयं कुर्यात् शेषमन्येन कारयेत्॥

**शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्। ३।७।८।१८॥**

**भाष्यम्**— इह कर्माण्युदाहरणम्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्र संदेहः, किमेतानि कर्माणि स्वयमनुष्ठातव्यानि उत उत्सर्गमात्रं स्वयं कुर्यात्, शेषमन्यः स्वयं वा उत शेषमन्य एवेति। किं प्राप्तम्? स्वयं प्रयोगे स्यात्। कुतः? यतः स्वयं प्रयुञ्जानस्य फलं भवति। कथमवगम्यते? तल्लक्षणत्वात्। शब्दः अस्यार्थस्य लक्षणम्, स्वयं प्रयुञ्जानस्य फलं भवतीति। कतमः स शब्दः? 'स्वर्गकामो यजेत' इति। यः स्वर्गं कामयते स एवोच्यते, यागे कर्ता भवन् फलं साधयेत् इति। साङ्गे च कर्ता भवन् फलं प्राप्नोति। तस्मात् स्वयं प्रयोगे स्यात्।

**वा**— अतः परं समाख्यायाः सर्वैः सह विरोधाविरोधचिन्ता वर्तिष्यते। हौत्रं इत्यादयः कथं विनियोजिका इति। तत्र प्रथमं तावत् उपोद्घातः क्रियते। यदि होत्रादयो नानाभूता विद्यन्ते ततः क्व ते विनियुज्यन्तां इति विचारो भवति। यदि तु सर्वमेव कर्म यजमानेन कर्तव्यं न कर्त्रन्तराणामवकाशोऽस्ति, ततः तत्समाख्योपस्थापितो विरोधाविरोधविचारो नैव प्रस्तोतव्य इति। तत्र दर्शपूर्णमासादीनि फलदक्षिणावन्ति कर्माणि उदाहरणम्। तेषु विचारः। किं यजमानेनैव सर्वं प्रयोक्तव्यं उत प्रधानमात्रे यजमाननियमः, किंवा प्रधानेष्वेव यजमानः अन्यत्र अन्ये एव। किं प्राप्तम्? सर्वं यजमानेनैव कर्तव्यमिति। कुतः? प्रयोगवचनस्थं हि आत्मनेपदं साङ्गायां भावनायां फलार्थिनं कर्तृत्वेन प्रयुङ्क्ते। स यत्रैव कर्ता न स्यात् तत्कृतमेवोपकारं न प्राप्नुयात्। तस्मात् स्वयं कुर्यादिति। फलस्य चोत्पद्यमानस्य उत्पादयितृत्वेन प्रयोक्ता यजमान एवोच्यते। होत्रादिसमाख्या च तस्यैव तत्तत् कुर्वाणस्य 'एकस्य कर्मभेदात्' (३।७।९।२३) इत्यनेन न्यायेन भविष्यति इति मन्यते।

**उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात्। १९॥**

**भाष्यम्**— उत्सर्गे प्राधान्यमस्ति। कथम्? यः उत्सर्गं करोति तेन सर्वं कृतं भवति। कथम्? परिक्रयः उत्सर्गः। तेन आनताः सर्वं कुर्वन्ति। तस्मात् यः परिक्रयं करोति, तेन स्वयमेव सर्वं कृतं भवति। तस्मात् उत्सर्गमात्रं स्वयं कुर्यात् शेषमन्यः स्वयं वा।

**वा**— प्रधानमात्रवाचिनो धातोः परेण प्रत्ययेन तन्मात्रस्यैव फलार्थिकर्तृकत्वं नियम्यते। शेषाणां तु निर्वृत्तिमात्रं प्रतीयते न कर्तृविशेषः। तस्मात् तत्र अनियमः। ननु च प्रधानसमानकर्तृकत्वादेव अङ्गानामपि स एव कर्ता सेत्स्यति। न। तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्रहात्। द्रव्योत्सर्गे हि अन्येन क्रियमाणे न किंचित् यजमानेन कृतं स्यादिति तं करोति। तत्र कृते परिक्रयादिना कारयन् न कर्तृत्वात् प्रच्यवते। केचित्तु सुतरां आत्मनेपदेन प्रयोजकत्वमेव अभिधीयते इति समर्थयन्ते। कर्त्रभिप्रायक्रियाफलविहितस्य हि आत्मनेपदस्य णिजर्थ एव प्रेरणादिरूपेण संविधानात्मको वाच्यः।

तथा च यजन्ति याजकाः इति प्रयोज्यव्यापारे परस्मैपदम् । यजते यजमानः इति प्रयोजकव्यापारे आत्मनेपदं दृश्यते । न तु एतद्युक्तम् । एवं हि सति प्रधानमपि यथाकथंचित् अन्यैरेव कारयितव्यं भवेत् । यदेव हि स्वयंकर्तृकं जातं तस्यैव फलं न प्राप्नुयात् । न च यत् ऋत्विजः कुर्वन्ति तस्य क्रत्वर्थत्वात् यजमानगामि फलं युज्यते । कामं तु प्रधानकारिणो यजमानस्य यथाकथंचिदनुग्रहेण प्रयोजकत्वात् ऋत्विग्व्यापारवचनं परस्मैपदं णिजर्थे वर्तेत, नात्मनेपदम् । तस्मात् पूर्वेणैव व्याख्यानेन प्रधानादन्यस्य स्वयमन्यो वा कर्ता स्यादिति । तत्रापि तु प्रत्ययप्रतिपादिता भावना प्रत्यासन्नतया फलार्थिकर्तृत्वेन गम्यमाना कथं करणांशमात्र एव उपसंह्रियते इति वक्तव्यम् । तेन एवं व्याख्येयम्, नात्मनेपदेन फलार्थिकर्तृत्वं चोद्यते । किं तर्हि ? भावनाक्षिप्तकर्तृत्वस्य स्वतः फलसंबन्धित्वम् । अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम् । न तु फलार्थिनः अन्येन व्यापारकरणं विरुध्यते । तावता च सिद्धः अङ्गेषु अनियम इति ।

**अन्यो वा स्यात् परिक्रयाम्नानात् विप्रतिषेधात् प्रत्यगात्मनि । २० ॥**

**भाष्यम्**-- शेषस्यान्य एव स्यात् कर्ता । कुतः ? परिक्रयस्य आम्नातत्वात् । पुरुषानतिप्रकारेषु बहुषु प्राप्तेषु परिक्रयो नियतः । तस्मात् परिक्रयेण आनतैः सर्वे पदार्थाः कर्तव्या इति । विप्रतिषिद्धश्च आत्मनि परिक्रयः । यदि स्वयं कुर्यात् अपरिक्रीतेन कृतं स्यात् । तत्र परिक्रयाम्नानानर्थक्यम् । अदृष्टार्थो वा प्रतिज्ञायेत । तस्मादन्यैः परिक्रीतैः शेषाः पदार्थाः कर्तव्या इति । उत्सर्गे तु स्वयं कुर्वता सर्वं स्वयं कृतं भवति ?

**वा**— अन्वाहार्यद्वादशशतादिदानं कर्मसंयुक्तेभ्योऽभिधानात् परिक्रयार्थं वा कर्मसंयोगात् ' ( १०।२।८।२३ ) इति दशमे वक्ष्यति । स्वभावतश्च परिक्रयः परत्र क्रियते नात्मनि, विरोधात् । तत्र यदि कदाचित् स्वयमेव अङ्गानि यजमानः कुर्यात् ततः परिक्रयासंभवात् परिक्रयो न क्रियेत । तत्रास्य नित्यवदाम्नानं विरुध्येत । तस्मात् तन्नित्यतां कर्तुं अवश्यं परिक्रयार्हाणि कर्मान्तराणि उपादातव्यानि । अतश्च क्वचित् स्वयंकरणात् क्वचित् संनिधानात् यजमानस्य कर्तृत्वम् । आत्मनेपदस्यापि परिक्रयवतीं भावनां आश्रितस्य ईदृशेनैव कर्तृत्वेन फलोपयोगः समानकर्तृकः इत्यर्थो न विरोत्स्यते ।

**शा**— '**प्रासङ्गिकी कथा वृत्ता, समाख्यायास्ततः परम् । विचिचारयिषुः पूर्वैर्विरुद्धत्वाविरुद्धते ॥ तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु । नानाकर्तृसमावेशं वक्तुमारभतेऽधुना ॥** '

**सोम**— 'तुल्यः सर्वेषां पशुविधिः' (३।६।७।१८) इत्यारभ्य अधिकरणचतुष्टयेन स्थानस्य पूर्वैः सह विरोधाविरोधविचारे तत्प्रसङ्गात् ' आराच्छिष्टं ' ( ३।६।११।३२) इत्यारभ्य या प्रासङ्गिकी कथा प्रसक्ता, तत्समाप्तौ क्रमप्राप्तं समाख्यायाः पूर्वैः सह विरोधाविरोधविचारं 'ते सर्वार्थाः प्रयुक्तत्वात्' (३।७।१९।३९) इत्यादिना चिकीर्षुः तदुपोद्घातं आरभते । कर्तृनानात्वे सति समाख्यया होत्रादीनां व्यवस्थाविचारो घटते नान्यथा इति उपोद्घातत्वं बोध्यम् ।

**वि**— ' यजमानेन कर्तव्यं निखिलं त्याग एव वा ।, कर्तृगामिफलश्रुत्या युज्यते सर्वकर्तृता ॥ प्रयोजकेऽपि कर्तृत्वमस्ति नो चेत् क्रयो वृथा । कार्यं तेन त्यागमात्रमृत्विजोऽन्यत्र कर्तृता ॥ '

**भाट्ट**-- तदेवं पूर्वैः सह प्रकरणस्थानयोः विरोधाविरोधविचारे समाप्ते अधुना समाख्यायाः तं कर्तुं प्रथमं तावत् स्वाम्यतिरिक्तकर्तृसद्भावः प्रतिपाद्यते । अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिषु दक्षिणायुक्तेषु कर्मसु यद्यपि तावत् ' स्वर्गकामो यजेत ' इति सामानाधिकरण्यात् साङ्गाया अपि यागादिकरणिकाया भावनायाः स्वर्गकामकर्तृकत्वं प्रतीयते, तथापि कर्तृत्वस्य ' स्वतन्त्रः कर्ता ' ( पा. १।४।५४ ) ' तत्प्रयोजको हेतुश्च ' ( पा. १।४।५५ ) इति सूत्रद्वयानुरोधात् ' षड्भिर्हलैः कर्षति ' इति प्रयोगाच्च साक्षात्प्रयोजकसाधारण्येनैव अवगतेः असति प्रमाणान्तरे प्रयोजककर्तृत्वायोगेऽपि प्रकृते दक्षिणाम्नानादिना प्रयोजककर्तृत्वस्यापि अवगतेः साम्यतिरिक्तस्यापि कर्तृत्वम् । कर्मकरानतिसाधनवचनो हि दक्षिणाशब्दः नासत्सु कर्मान्तरेषूपपद्यते । नहि अत्रास्ति किंचित् बलवद्बाधकम् । येन ' यदि पत्नीः संयाजयन् कपालमभि जुहुयात् वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात् ' इत्यत्र द्वेष्यस्य ऋत्विक्त्वप्रतिषेधादेव अदृष्टार्थत्वं दक्षिणायाः कल्प्येत । सामानाधिकरण्यस्य प्रयोजककर्तृत्वेनापि उपपत्तेः । आत्मनेपदस्यापि साक्षात् प्रयोजकसाधारण्येनापि अकर्तरि फलप्रतिषेधकत्वेनैव उपपत्तौ न फल्यतिरिक्तस्य कर्तृत्वप्रतिषेधकत्वम् । अत एव ' यजन्ति याजकाः ' इति परस्मैपदप्रयोगः । तेन कस्यापि बाधकस्य अभावात् न दक्षिणादानस्य अदृष्टार्थत्वकल्पना । अतस्तद्बलात् ' दर्शपूर्णमासयोश्चत्वार ऋत्विजः ' इति वचनात् होत्रादिसमाख्यावरणाद्याम्नानबलाच्च स्वाम्यतिरिक्ता अपि कर्तारः । न च स्वामिनोऽशक्तौ दक्षिणादिना अन्योपादानम्, दक्षिणादेः नित्यवदाम्नानविरोधात् । अतः परकीयस्वत्वस्य परेण उत्स्रष्टुमशक्यत्वात् उत्सर्गमात्रं स्वामिना कार्यम् । अन्यत्तु विशेषतः प्रमाणाभावे अन्येनैव इति सिद्धम् ।

**मण्डन**-- ' स्वामीत्युक्त्यैव नान्यकृत् । '

**शंकर**-- ' दक्षिणावत्सु ( कर्मसु ) चर्त्विजः । ' ( कर्तारः ) ।

* **शास्त्रलक्षणः** हि देवतासंबन्धः । **वा.** ३।२।१२।३२.

* '**शास्त्रस्था** प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् । धर्मस्य तन्निमित्तत्वात् ससाधनफलात्मनः ॥' वा. १।३।४।९ पृ. २२३, * शास्त्रस्था लक्षणा लौकिकलक्षणायाः बलवती । ३।३।१।३ . * '**शास्त्रस्था वा तन्निमित्तत्वात्** ।' ( १।३।४।९ ) । अर्थः— ' वा 'शब्दः एवार्थः पूर्वपक्षव्यावृत्तौ । शास्त्रस्था शास्त्रानुसारिणी एव विप्रतिपत्तिः विशिष्टा प्रतिपत्तिः ( पूर्वसूत्रादनुवृत्तं पदं ) दीर्घशूकाद्यभिधायकता ( नीवारादिशब्दस्य ) बलीयसी । कुतः ? तन्निमित्तत्वात् शास्त्रस्य तन्निश्चायकत्वात् । कु १।३।५।८ . * ' शास्त्रस्था वा तन्निमित्तत्वात् ' ( १।३।४।९ ) इत्यधिकरणे ' यदा वा अन्या ओषधयो म्लायन्ते० ' इति संदिग्धार्थशक्तिग्राहकोऽर्थवादः ' यवमतीभिरद्भिरौदुम्बरीं प्रोक्षति ' इतिविधेः वाक्यशेषः इत्युक्तम् । बाल. पृ. ५७–५८ . * ' शास्त्रस्था वा तन्निमित्तत्वात् ' ( १।३।४।९ ) इत्यनेन व्याकरणाख्यशास्त्रगतप्रतिपत्तिबलीयस्त्वं तदभियुक्तपुरुषबलीयस्त्वं वा स्थापितम् । **वा.** १।३।८।२७ पृ. २८० । ' शास्त्रस्था वा तन्निमित्तत्वात् ' इति सिद्धान्तसूत्रं स्वयं तावत् अवतारणपूर्वकं व्याचष्टे– वाशब्देन ( लौकिकशास्त्रस्थयोः प्रतिपत्त्योः– ) साम्यं निराकृत्य पूर्वसूत्रगत- 'स्यात्' शब्दानुषङ्गेण शास्त्रस्था स्यात् इत्युक्तम् । शास्त्रानुसारावगतशब्दार्थगतगुणयोगनिमित्तत्वेनापि अर्थान्तरप्रतीत्युपपत्तेः नोभयत्र शक्तिः कल्प्या इत्येवमर्थत्वेन ' तन्निमित्तत्वात् ' इति सूत्रावयवो व्याख्यातः । **सु.** पृ. २०९. * सार्वलौकिकादपि प्रयोगात् ' **शास्त्रस्था** वा तन्निमित्तत्वात् ' इत्यनेनैव राजशब्दस्य क्षत्रियवचनत्वम् । **वा.** २।३।२।३ पृ. ५८६.

* **शास्त्रस्थप्रयोगबलेन** लौकिकप्रयोगबाधः यववराहाधिकरणे उक्तः । व्यवस्थितशास्त्रस्थप्रयोगबलेन अव्यवस्थितलौकिकप्रयोगबाधः । **सु.** पृ. २५९

* **शास्त्रस्थसर्वशब्दप्रयोगाणां** लौकिकशब्दैः अविरोधः । **वा.** १।३।८।२४ पृ. २५२ .

* **शास्त्रहेतुकः** शब्दार्थयोः संबन्धो नहि भवति । नित्योऽसौ लोकतोऽवगम्यते इत्युक्तं ' औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः ' इति ( १।१।५।५ ) । **भा.** ३।२।२।४.

* **शास्त्रीयः** नित्यः प्राप्तबाधः पञ्चदशधा– १ नित्यं नैमित्तिकेन, २ क्रत्वर्थं पुरुषार्थेन, ३ पूर्वं परेण, ४ प्राकृतं अर्थलोपेन, ५ प्राकृतं पर्युदासेन, ६ प्राकृतं प्रत्याम्नानेन आरभ्याधीतेन, ७ प्राकृतं प्रत्याम्नानेन अनारभ्याधीतेन, ८ सामान्यविहितं विशेषविहितेन विधेयभेदे विधेयैक्ये च वाक्यभेदे, ९ सामान्यविहितं विशेषविहितेन वाक्यैक्ये, १० निष्प्रयोजनं सप्रयोजनेन, ११ अल्पं भूयसा, १२ सावकाशं निरवकाशेन, १३ अङ्गं प्रधानेन, १४ अङ्गधर्मः प्रधानधर्मेण, १५ उपादेयमनुपादेयेन । **बाल.** पृ. १३२.

* शास्त्रीयशब्दार्थावबोधे . शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वात् अविच्छिन्नपारंपर्यागतत्वाच्च । वि. १।३।५.

* शिंशपाशब्दः न तावत् वृक्षत्व-पार्थिवत्व-द्रव्यत्व-सत्ता-प्रमेयत्व-ज्ञेयत्वानां अभिधायकः, अथ च तद्विशेषमेव शिंशपां अभिधत्ते। तेनास्य सामान्यमनभिधाय विशेषाभिधानशक्तिर्न विरुध्यते । वा. ३।४।४।१३ पृ. ९४०.

* शिक्ये षड्ग्रामे द्वादशोग्रामे वा अभिसहितां उखामवस्थाप्य, शिक्यं स्वकण्ठे संवत्सरं बिभृयात् ततः चयनं कर्तव्यम् । वि. ४।४।६.

* शिक्षा वेदाङ्गम् । पौरुषेयत्वेऽपि अविच्छिन्नपारंपर्येणानुवर्तनात् वेदमूलकत्वाच्च । वि. १।३।७. * शिक्षा साधारणी विशेषविषया चेति द्विविधा । पाणिनीया साधारणी, कात्यायनादिप्रणीता विशेषविषया । सु. पृ. १८३. * शिक्षायाः ( अङ्गस्य ) स्वरादिनिश्चयद्वारा वेदोपकारकत्वम् । मणि. पृ. ५. * शिक्षायां ( वेदाङ्गे ) वर्णादिस्वरूपकथनम् । सु. पृ. १२९.

* शिक्षाकाराः आहुः 'वायुरापद्यते शब्दम्' इति । नैतदेवम् । भा. १।१।६।२२.

* शिखाकर्म कर्तव्यं इत्यादिस्मृतिः धर्मे प्रमाणम् । स्मृत्यधिकरणम् । १।३।१।१-२. * शिखाकर्म गोत्रचिह्नम् । भा. १।३।१।२ । कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थं अवश्यं स्मर्तव्यं गोत्रम् । वा.

* शिखाकल्पः व्यवतिष्ठते, केचित् त्रिशिखाः, केचित् पञ्चशिखाः इति । भा. १।३।७।१५.

* शिखाकल्पव्यवस्थायां गोत्रव्यवस्थया दर्शनं स्पष्टम् । भा. १।३।७।१७.

* शितिपृष्ठः बार्हस्पत्यः ऐकादशिनेषु पञ्चमः पशुः अश्वमेधे ज्योतिष्टोमे च । वि. ८।१।७.

* शिनीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मणः इति । यश्च यत् करोति स तेन आख्यायते यथा लावकः पावकः इति । भा. ८।४।२।२.

* 'शिनीनां दार्विहोमिको ब्राह्मणः' इति स्मार्तहोमे, 'दर्विहोमं कुर्यात्' इति वैदिके च प्रयोगात्, 'दर्विहोमः' इति श्रौतस्मार्तयोरुभयोः कर्मविशेषयोरपि नामधेयम् । ८।४।२।२-३.

* शिवीनां ( शिनीनां इति भाष्ये पाठः ) पाकयज्ञः इति स्मार्ते एव दर्विहोमे व्यवहारः । संकर्ष. २।४।११.

※ **शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं तु प्रयच्छति शाकटिक इति न्यायः।** अयं न्यायः सर्वदर्शनसंग्रहे पूर्णप्रज्ञमते अभिहितः । तथाहि- ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते, नासत्त्वमिति चेत् तदेतत्सोऽयं शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं प्रयच्छतीति शाकटिकवृत्तान्तमनुहरेत् मिथ्यात्वासत्त्वयोः पर्यायत्वात् इत्यलमतिप्रसङ्गेन । शाकटिकः शकटेन गमनकर्ता इति यावत् । साहस्री. ६८१.

※ **शिरोवेष्टनेन नासिकास्पर्शनन्यायः।** ऋजुना मार्गेण सिध्यतोऽर्थस्य वक्रेण साधनं व्यर्थम् । के.

* शिल्पः वैश्वदेवः ऐकादशिनेषु षष्ठः पशुः अश्वमेधे ज्योतिष्टोमे च । वि. ८।१।७.

* शिल्पोपजीवित्वं त्रैवर्णिकस्य प्रतिषिद्धम् । भा. ६।१।१२।४६.

* शिष्टाः इदानींतनाः मन्वादिवत् देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात् कर्तुं न शक्नुवन्ति । वि. १।३।५ वर्णकं २. * शिष्टाः न खलु अन्यार्थं कल्पितं अन्यस्मै उपकल्पयन्ति । कणिका. पृ. ४०५. * शिष्टाः ( आरब्धमसमापयन्तं ) न स्वाच्छन्द्येन विगर्हन्ते । अशिष्टा एव ते स्युः, यदि विगर्हयेयुर्विना शास्त्रेण । ततः शिष्टाचारात् स्मृतिः, स्मृतेः श्रुतिः (अनुमीयते इति ज्ञेयम्)। वा. ६।२।३।१५. * शिष्टाः। यः शास्त्रस्थानां ( प्रयोगविषयः ) स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टाः निमित्तं श्रुतिस्मृत्यवधारणे । भा. १।३।४।९. * शिष्टाः । वेदविहितधर्मानुष्ठानकर्त्वं शिष्टत्वम्, 'प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशाः' इति वार्तिकात् निष्पन्नं भवति । के.



( वा. १।३।३।७ पृ. २०६ ). * अनन्तरमेवैनं **शिष्टाः** वर्जयेयुः पतितः कर्मफलेभ्यः इति वदन्तः । महाँश्चैव दोषो यच्छिष्टा वर्जयन्ति । तस्मात् नियोगतः कलञ्जादि न भक्षयितव्यमिति । भा. ६।२।५।२०. * न नाम उपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः, सर्वकालं तु शिष्टव्यवहारशास्त्रयोः अवियोगात् व्यवहारादेव अपोद्धृत्य केचित् स्वर्गादिसाधनत्वेन नियम्यमानाः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते । तेषां च आर्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणं वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवत् उपात्तमिति शक्यमनुमातुम् । वा. १।३।३।७ पृ. २०६. * शास्त्रोक्ते च सामिकृते त्यक्ते अत्यन्तं शिष्टा गर्हन्ते, देवताश्रये च । भा. ६।२।४।१८. * **शिष्टानां** अभियोगः शब्दार्थेषु । अनभियोगश्च शब्दार्थेषु अशिष्टानां अभियोगश्चेतरेषाम् । १।३।५।१०. * प्रायेण हि **शिष्टानां** धर्माचारप्रणिहितचेतसां कश्चिदेव प्रमादात् अल्पः अनाचारो भवति । वा. १।३।८।२४ पृ. २५८.

※ **शिष्टाकोपेऽविरुद्धमिति चेत् ।१।३।३।५॥** 'वेदं कृत्वा वेदिं करोति' इति शिष्टानां श्रुतिविहितानां वेदवेदिकरणादिरूपाणां पदार्थानां 'क्षुते आचामेत्' इत्यादिस्मृत्या अकोपे आबाधे सति स्मृतिवचनमपि अविरुद्धं प्रमाणमेव वेदकरणाद्यनन्तरं कदाचित् क्षुतादिनिमित्तसंपाते आचमनादिकं स्मृतिविहितमपि कर्तव्यमेव । इति चेत् सिद्धान्ती ब्रूयात् ।

**न, शास्त्रपरिमाणत्वात् । ६ ॥**

वेदवेदिकरणमध्ये क्षुते जाते स्मृतिविहितमाचमनं कर्तव्यं स्मृतेः प्रमाणत्वात् इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । श्रौतपदार्थमध्ये स्मार्तपदार्थो न कर्तव्यः । शास्त्रपरिमाणत्वात् श्रुतिविहितपदार्थानाम् । शास्त्रेण 'वेदं कृत्वा वेदिं करोति' इति शास्त्रेण क्रमबोधकश्रुत्यादिना अवगतं यत् परिमाणं कालादिपरिच्छेदः अव्यवधानादिरूपः तद्वत्त्वात् । तथा च श्रुतिप्रमितक्रमबाधप्रसङ्गेन 'क्षुते आचामेत्' इत्यादि स्मृतिवाक्यं अप्रमाणम् । शास्त्रेण परिमीयते अवगम्यते इति शास्त्रपरिमाणम् । कर्मणि ल्युट् । स्मार्ताचमनादिविरुद्धानां क्रमकालपरिमाणानां शास्त्रपरिमाणत्वात् श्रुत्यवगतत्वात् इति वा समासार्थः । शास्त्रावगतं प्रयोगविध्यवगतं परिमाणं संख्याविशेषः यस्य अनुष्ठेयपदार्थसंघातस्य तादृशत्वात् । प्रयोगविधिना अस्मिन् कर्मणि इयन्तः पदार्थाः कर्तव्याः इति नियमितत्वात् मध्ये स्मार्तस्याधिकस्य पदार्थस्यानुष्ठाने शास्त्रविरोधः स्यात् इति वा तात्पर्यम् ।

**अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् । ७ ॥**

अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् इत्येव वा सूत्रम्, वार्तिकोक्त्या 'अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् तेष्वदर्शनाद्विरोधस्य' इति वा सूत्रम् । आचान्तेन कर्तव्यम्, यज्ञोपवीतिना कर्तव्यं इत्यादयः शिष्टाचाराः धर्मत्वेन न कर्तव्या इति पूर्वपक्षे सिद्धान्तसूत्रमिदम् । अपिवा इति पूर्वपक्षव्यावृत्तिः । न कर्तव्यानि इति न किंतु कर्तव्यान्येव । कारणाग्रहणे अकर्तव्यताकारणस्य कस्यचित् दृष्टस्य प्रमाणस्य अग्रहणे ग्रहणाभावे ज्ञानाभावे सति यानि शिष्टैः प्रयुक्तानि अनुष्ठीयमानानि भवन्ति, तानि धर्मत्वेनैव प्रतीयेरन् ज्ञायेरन् । तेषु वेदविरोधस्य अदर्शनात् । वेदाविरोधे च शिष्टाचारोऽपि प्रमाणं इत्यर्थः । वार्तिककारैश्च सूत्रार्थः उक्त एव । यथा 'दृष्टकारणहीनानि यानि कर्माणि साधुभिः । प्रयुक्तानि, प्रतीयेरन् धर्मत्वेनेह तान्यपि ॥' 'धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् । वैदिकैः कर्तृसामान्यात् तेषां धर्मत्वमिष्यते ॥' इति ।

विरोधकारणस्य अनुष्ठानबाधस्य अग्रहणे अदर्शने सति शिष्टैः प्रयुक्तानि आचमनादीनि श्रौतक्रमाद्यविरुद्धत्वेन प्रतीयेरन् । ततश्च क्रमकालपरिमाणानां श्रौतस्मार्तसकलपदार्थप्रवृत्त्युत्तरकालप्रवृत्तिकत्वात् न विरोधः । अविरोधाच्च कर्ममध्ये क्षुतादिनिमित्ते आचमनादिस्मरणं प्रमाणं इति सिद्धान्तः । के.

* 'शिष्टाकोपे०' ( १।३।३।५ ) । 'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदाऽपि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥' वा. ३।३।७।१४ पृ. ८४१.

🙞 शिष्टाकोपाधिकरणम् । प्रमेयबलाबलन्यायः । पदार्थप्राबल्याधिकरणम् । विहितस्य अबाधे स्मृतिः प्रमाणम् ॥

**शिष्टाकोपेऽविरुद्धमिति चेत् । १।३।३।५ ॥**

**भाष्यम्**— ‘ आचान्तेन कर्तव्यम् ’ ‘ यज्ञोपवीतिना कर्तव्यम् ’ ‘ दक्षिणाचारेण कर्तव्यम् ’ इत्येवंलक्षणान्युदाहरणानि । किमेतानि श्रुतिविरुद्धानि न कर्तव्यानि, उत अविरुद्धानि कार्याणि इति चेत्पश्यसि तैरप्यनुष्ठीयमानैर्वैदिकं किञ्चित् न कुप्यति । तस्मादविरुद्धानीति ।

वा-- शिष्टाकोपे एवं तावत् पुरुषार्थस्मृतीनामविरोधे विरोधे च प्रमाणत्वाप्रमाणत्वे निरूपिते । संप्रति तु क्रत्वर्थानां यज्ञोपवीतोदकाचमनदक्षिणहस्ताचरणस्मृतीनां बहुश्रुत्यर्थमध्यपातिनीनां विरोधाविरोधमात्रमेव विचार्यते । तन्निर्णये तु कृते पूर्वाधिकरणाभ्यां प्रमाणत्वाप्रमाणत्वसिद्धिः । **‘ कथं पुनर्विरुद्धत्वं कथं वा न विरुद्धता । श्रुत्यर्थविगुणत्वेन तदभावेन चेष्यते ॥ ’** यदि यज्ञोपवीतादीनि क्रतुमनुप्रवेश्यमानानि चोदकप्रयोगवचनाभ्यां न परिगृह्यन्ते निराक्रियन्ते वा, ततो विरोधः । यदि पुनरानुगुण्यात् प्रकरणादिपठितवत् स्मृत्यनुमितवाक्यसंयोगेन क्रतुमनुप्रविशन्ति, न च पूर्वगृहीतं किंचिद्बाधन्ते, ततो न विरुद्धानीति । अन्यत्तु दर्शनम् । सत्यपि विरोधे प्रमाणप्रमेयबलाबलविसंवादात् संदेहः । तथाहि **‘ श्रुतिस्मृत्योर्विरुद्धत्वे ज्ञातमेव बलाबलम् । धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः ॥ ’** वक्ष्यति हि ‘अङ्गगुणविरोधे च तादर्थ्यात् इति ’ ( १२।२।९।२५ ) । न चेह स्मार्तः कस्यचिदपि श्रौतस्य पदार्थस्य बाध आशङ्क्यते, क्रमकालपरिमाणानि तु समस्तपदार्थधर्मत्वेन निश्चितानि । तत्र यदि प्रमाणबलाबलं बलीयः, ततो बलवच्छ्रुतिप्रमेयत्वात् दुर्बलस्वभावैरपि क्रमादिभिराचमनादीनां बाधः, प्रमेयबलाबलबलीयस्त्वे तु पदार्थधर्मेभ्यः क्रमादिभ्यः पदार्थत्वेन आचमनादयो बलीयांसः, इति सत्यपि स्मृत्याख्यप्रमाणे दुर्बलत्वे बलवदाश्रयानपि स्वरूपेण दुर्बलान् क्रमादीनेव बाधिष्यन्ते । **‘ किं युक्तमविरुद्धत्वं क्रत्वर्थाङ्गस्मृतेरपि । न तदर्थक्रियायां हि श्रुतं किंचन हीयते ॥ ’** यथैव विज्ञातबलाबलैरपि श्रुत्यादिभिः समाख्यापर्यन्तैर्यावन्तः शेषाः प्रमीयन्ते ते सर्वे शेषिकथंभावेन प्रार्थिता इत्थंभावेन सह अनारभ्यवादाधीतैर्गृह्यन्ते । **‘ स्मृत्या तथैव संतुष्ट्या शिष्टाचारेण चार्पिताः । गृह्यन्ते भावनाभाव्यैरपूर्वैः साधनांशवत् ॥ ’** कथंभावापेक्षितापूर्वोपकारस्य अज्ञातपरिमाणाङ्गसाध्यत्वात् यावत्किंचित् येन केनचिदपि प्रमाणेन प्राप्नोति, तत्सर्वमङ्गं भवति । तस्मात् आचमनादीन्यपि यज्ञप्रयोगाङ्गानि ।

**न शास्त्रपरिमाणत्वात् । ६ ॥**

**भाष्यम्**— नैतदेवम् । शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन् । कथम् ? ‘ वेदं कृत्वा वेदिं कुर्वीत ’ इतीमां श्रुतिमुपरुन्ध्यात् अन्तरा वेदं वेदिं चानुष्ठीयमानमाचमनादि । दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित् प्रधानं स्वकालमतिक्रामेत् । उभाभ्यां हस्ताभ्यामनुतिष्ठन् प्रधानकालं संभावयिष्यति ।

वा-- इत्युपन्यस्तेऽभिधीयते । **‘ न शास्त्रपरिमाणत्वात्** ( शास्त्रं परिमाणं येषां तादृशत्वात् ) **पदार्थोऽभ्यधिको भवेत् । शास्त्रितं परिमाणं हि कोऽतिक्रमितुमर्हति ॥ शास्त्रेण हि पदार्थानां परिमाणं त्रिधा गतम् । क्रमेयत्ताशुनिर्माणरूपं तदिह बाध्यते ॥ द्वाभ्यां श्रुत्यादिषट्काभ्यां कालेयत्ताक्रमान् स्थितान् । पदार्थाः प्रविशन्तो हि बाधेरन् स्मार्तलौकिकाः ॥ ’** सर्वे हि पदार्थाः प्रधानकालात् न विप्रकृष्टव्याः, इति प्रयोगवचनेन प्रतिपादितम् । तत्र स्मार्तशिष्टलोकाचारप्रमाणकपदार्थानुष्ठानविक्षेपात् दक्षिणैकहस्ताधीनविलम्बितानुष्ठानाच्च प्रधानप्रत्यासत्तिबाधप्रसङ्गः । समस्तप्रयोगकालाश्च पूर्वाह्णमध्यंदिनादयोऽतिक्रम्येरन् । क्रमश्च यः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिवत्क्रमैरवगतः , स च वैदिकपदार्थारूढतया विज्ञाताश्रयप्रमाणपरिमाणः सन् अन्यथात्वं क्षुतादिनिमित्ताचमनव्यवधानात् प्रतिपाद्येत । एवमायासस्रस्तोपवीतपुनःकरणव्यवधानेऽपि योजनीयम् । **‘यो ह्यसावन्तः स्मार्तः पदार्थः क्रियते तदा । तस्य क्रमप्रमाणं हि न श्रुत्याद्यवगम्यते ॥ ’** उक्तपरिमाणस्य क्रमस्य नान्यदपि किंचित् प्रमाणमवकल्पते । तथा श्रुत्याद्यवगत-प्रचयशिष्टपदार्थपरिमाणं अवश्यमध्वर्य्वादिभिः अविस्मृतसमस्तपदार्थनिर्माणाय अवधारणीयम् । ततश्च प्रथमापरिकल्पित-पश्चादागत-स्मार्तपदार्थानुष्ठाने पूर्वावधारणभ्रंशात् समस्तकृताकृतानिरूपणात् अनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावात् अपूर्वदौर्बल्येन न्यूनफललाभप्रसङ्गः । **‘ तस्मातिशयवत् सर्वं सार्थवादाद्विवेर्गतम् । न्यूनत्वाक्षमयाऽवश्यं विरुद्धां बाधते स्मृतिम् ॥ ’** परिमितश्रुत्याद्युपदेशातिदेशात्मकाङ्गशास्त्रपरिमाणत्वाद्वा न तद्व्यतिरिक्ताङ्गशास्त्रावकाशः । सहकर्तव्यावगतेषु च पदार्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्रकर्षो भवति, तावन्मात्रमेव प्रयोगवचनोऽनुमन्यते । शक्तस्तु क्षणमात्रमपि यदि विक्षेपं कुर्यात् तदस्य प्रयोगवचनविधिर्न सहेत । तस्मात् त्रिविधस्यापि शास्त्रपरिमाणस्य अन्यथाकरणान्नाचमनाद्यविरुद्धमिति ।

**अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् । ७ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः । अगृह्यमाणकारणा एवंजातीयकाः प्रमाणम् । ननु क्रमकालौ विरुन्धन्ति । विरुन्धन्तु, नैष दोषः । आचमनं पदार्थः, पदार्थानां च गुणः क्रमः । न च गुणानुरोधेन पदार्थो न कर्तव्यो भवति । अपिच प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति । यदा पदार्थः प्राप्नोति, तदा क्रम एव नास्ति, केन सह विरोधो भविष्यतीति । तथा यदि दक्षिणेन नाऽऽचर्यते कालो मा विरोधीदिति, तत्र कालानुरोधेन पदार्थो नाऽन्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । अतो न कालानुरोधेन व्यथयितव्यः पदार्थः । अपि च शौचं दक्षिणाचारता यज्ञोपवीतित्वं चैवंजातीयका अर्था व्यवधातारो न भवन्ति, सर्वपदार्थानां शेषभूतत्वात् । तस्मादाचमनादीनां प्रामाण्यम् ।

वा—तदुच्यते । तेष्वदर्शनाद्विरोधस्येति वा समाप्तिः ( उत्तरसूत्रांशमपकृष्य ) । अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेरनुपयुज्यमानत्वात् , इह च प्रक्रान्तविरोधाभावस्यावश्यवचनीयत्वात् । उपयोगसद्भावेऽपि च काकाक्षिवदनुषङ्गेण तन्त्रेण चोभयसंबन्धात् । **‘अपिवा कारणं दृष्टं यस्मादेषु न गृह्यते । तस्मान्नाऽऽचमनादीनां क्रतुश्रुतिविरुद्धता ॥ ’** विरोधत्याजितश्रुतिविरुद्धता । विरोधत्याजितश्रुतिमूलस्य हि स्मरणस्य यस्य मूलान्तरमिदं नामेत्येवं संभवदुत्प्रेक्षामात्रेणोपप्लवते, तत्र अल्पेनैव प्रयासेन निराशङ्कमप्रमाणत्वं निश्चीयते । **‘ यत्र तूत्प्रेक्षयाऽप्यन्यत् कारणं नावलम्ब्यते । अत्यन्तानन्यमूलत्वाच्छ्रुतितस्तत्प्रमाणता ॥ ’** न वाऽऽचमनादिस्मृतेः कामक्रोधलोभद्वेषमानलज्जादिकारणं किंचित् संभाव्यते, यन्मूलत्वेन श्रुतिमूलत्वमपह्नूयेत । **‘अनन्यमूलिकायां च श्रुतौ मूलेऽवधारिते । विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते ॥ इयत्ताक्रमकालाश्च श्रौतत्वाद् बलवत्तराः । पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः ॥ ’** ननु पूर्वभावित्वात्प्रमाणबलाबलमेव प्रमेयबलाबलाज्ज्यायस्त्वेन प्रतिभाति । उच्यते । **‘ नैव तावत् श्रुतिस्मृत्योः स्वरूपेण विरुद्ध । बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ॥ ’** प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिः भवति । **‘ तद्यस्यामेव वेलायां विरोधो दृश्यते तयोः । प्रमेययोः स्वरूपस्थं तस्मादेव बलाबलम् ॥ येषां पदार्थधर्मत्वाद्दौर्बल्यं पूर्वनिश्चितम् । न तेषां श्रुत्यवष्टम्भात् तत् पश्चादपगच्छति ॥ पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम् । न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥ नित्यमेवाप्रमाणं यत्तदेवं बाधमर्हति । आपेक्षिकाप्रमाणं तु स्यात् प्रमाणमपेक्षया ॥ न च प्रमेयदौर्बल्यबलीयस्त्वनिबन्धनम् ।** ( हि शब्दार्थे च-शब्दः ) **प्राप्तं स्मृतिप्रमाणत्वं प्रमाणस्थेन बाध्यते ॥ न च प्रमेयदौर्बल्ये सत्यपि श्रुतिबाधनम् ।** ( अबाधे कारणमाह- ) **तावता मन्दतेजस्त्वात् स्मृतिस्तां नैव बाधते ॥ एतदेव श्रुतेः पार्श्वाद्बहु यत्र स्मृतिर्वृथा । महास्मृत्याऽपि या काचिन्न शक्या बाधितुं श्रुतिः ॥** ( अपिचेत्यादिभाष्यं

व्याचष्टे–) **युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्ययोः । इह तु द्वयमप्येतन्नास्ति तेनाविरुद्धता ॥ कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते । सुजघन्यप्रमाणोऽपि पदार्थः पूर्वमश्नुते ॥** ( क्रमविरोधनिरासभाष्यं व्याचष्टे– ) **प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्षते । यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुध्यते ॥** ( इयत्ताविरोधं स्वयं परिहरति– ) **परिमाणमपि त्वार्थमविस्मरणसिद्धये । स्वयमालोच्यते प्राज्ञैः स्मार्तैः सह तदिष्यते ॥** ' न केनचित्प्रमाणेन पदार्थेयत्ता परिच्छिद्यते । तत्र यदि तेन विना अन्ये समस्तपदार्थस्मृतिहेतवो न स्युः, तत एतदप्येकं कारणमिति परिमाणमपि स्थाप्येत । तस्यामपि त्ववस्थायां यथा श्रौतमात्रपरिमाणं असमाप्य समाख्यापर्यन्तप्रापितपदार्थगतपरिमाणावधारणमाश्रीयते, तथा स्मृत्याचारपर्यन्तावगत-परिमाणमाश्रयिष्यते इति निर्दोषम् । ( कालविरोधपरिहारभाष्यं व्याचष्टे– ) **' कालोऽपि च प्रयोगाङ्गं सर्वान्ते सोऽपि गृह्यते । स्मार्तैः सह ससाहित्यमाशुत्वं वा प्रपत्स्यते ॥ कालो ह्ययं प्रधानस्य सर्वाङ्गसहितस्य यः । अङ्गैरविप्रकृष्टत्वमीदृशस्यै चोद्यते ॥'** तस्मात् यत्किंचनप्रमाणकसर्वपदार्थप्राप्त्युत्तरकालापेक्षितसंबन्धः कालोऽपि नैव सर्वोपसंहारविरोधी । ( विरोधनिरासे तेषु इति सूत्रावयवं द्वेधा योजयति– इतीति– ) तेषु क्रमकालपरिमाणेष्वदर्शनात् विरोधस्येत्युच्यते । यद्वा तेष्वाचमनादिषु क्रियमाणेष्वदर्शनाद्विरोधस्येति सूत्रार्थयोजना । ( अपि च शौचं इत्यादि भाष्यं व्याचष्टे– ) अपि च, **' शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता । सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम् ॥ '** अतदङ्गेन हि तुल्यकक्षेण व्यवधानं भवति न सर्वपदार्थेन । **' वेदं कृत्वा यदा वेदिमकृत्वाऽऽचामति क्षुते । वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥ वेदिरेव ह्यनाचम्य कुर्वतो विगुणी भवेत् । तामेव सगुणां कर्तुं शुद्ध्या न व्यवधास्यते ॥ '** इममेवार्थमभिप्रेत्य भाष्यकारेणोक्तं ' न चैवंजातीयका अर्थाः पदार्थानां व्यवधातारो भवन्ति ' इति । इतरथा ह्यङ्गप्रधानार्थत्वे अनाश्रीयमाणे शून्यहृदयवचनमेवैतत् स्यात् । ( उपसंहारभाष्यं सिद्धान्ताभिप्रायेण व्याचष्टे– ) **' तस्मादाचमनादीनां क्रतुभिः संग्रहे सति । पश्चात् प्राप्तक्रमेयत्ताकालशास्त्राविरोधिता ॥ '**

( एवं यथाभाष्यमधिकरणं व्याख्याय उदाहरणानि दूषयति– ) न तु इदं यज्ञोपवीतमुदाहर्तव्यं दर्शपूर्णमासादिषु ' उपव्ययते देवलक्ष्ममेव तत्कुरुते ' इति क्रत्वङ्गप्रत्यक्षविधानात् । तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसंबन्धः, अध्यापनाध्ययनसंबन्धश्च श्रूयते ' प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान् पराभावयन् । प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो, यद्वै किं च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा, यज्ञस्य प्रसृत्यै ' इति । तथा आचमनविधिरपि ' दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्य उपस्थं कृत्वा प्राङ्मुख उपविश्य स्वाध्यायमधीयीत ' इति यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते, तथपि वेदोच्चारणसंबन्धात् तदङ्गत्वेनापि तावत् ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात् तदङ्गं भवति । तथा च ' न सोमेनोच्छिष्टा भवन्ति ' इति प्राप्ताचमनप्रतिषेधार्थमेवावधार्यते । दक्षिणाचारत्वं तु– **' यत्राऽऽहृत्य विधानेन स्यात् सव्याञ्जलिचोदना । तस्मादेव निवर्तेत नान्यत्राऽऽशङ्क्यतेऽपि तत् ॥ '** ' यथा वै दक्षिणः पाणिरेवं देवयजनम् ' इति प्रागुदक्प्रवणविधिपरे वाक्ये देवयजनवत् यज्ञाङ्गत्वौचित्यादुपमानमवकल्पते । तेन नात्रैकमपि विरोधबाधशङ्कायोग्यमित्यनुदाहरणानि । तस्मान्नैवैतदधिकरणान्तरम् ।

( वेदाविरुद्धशाक्यादिवचसामप्रामाण्यनिरूपणम् । ) सूत्राणि तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैव व्याख्यातव्यानि । यत्तर्हि वेदविहितं न बाधते, शिष्टान् वा वेदविदो न कोपयति विहारारामामण्डलकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि, तत् बुद्धादिभाषितं प्रमाणेनाविरुद्धमिति चेत् । न । शास्त्रपरिमाणत्वात् । परिमितान्येव हि चतुर्दशाष्टादश वा विद्या-



स्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा । **' प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् । यदन्यत् क्रियते तस्य धर्मं प्रत्यप्रमाणता ॥ '** तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वा उच्चार्य मानवादिप्रायश्चित्तं दद्यात् ( सः ) न कश्चिदपि धर्मार्थे प्रतिपद्येत । **' वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता । नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥ तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः । वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥ '** तथा च ' मनोर्ऋचः सामिधेन्यो भवन्ति ' इत्यस्य विधेर्वाक्यशेषे श्रूयते ' मनुर्वै यत् किंचिदवदत् तद्भेषजं भेषजतायै ' इति । प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् । **' न चैतच्छ्रुतिसामान्यमात्रं नित्येऽपि संभवात् । यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा ॥ प्रतिमन्वन्तरं चैवं स्मृतिरन्या विधीयते । स्थिताश्च मनवो नित्यं कल्पेकल्पे चतुर्दश ॥ तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः । तदुक्तिज्ञापनाद् वेदो नानित्योऽतो भविष्यति ॥ प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः । आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥ '** उक्तं च, **' यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भाति युगादिषु ॥ '** इति । **' इतिहासपुराणं च कृत्रिमत्वेन निश्चिते । तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन संमतम् ॥ '** एवं ह्युपनिषत्सु उक्तम्– ' ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चमम् ' इति । तेन प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते, तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन संमतानि । तथा च ऋग्वेदादिविहितयज्ञाङ्गभ्रेषप्रायश्चित्तविशेषानभिधाय ' यद्यविज्ञाते ' इति प्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते । अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वात् अविज्ञातमूलत्वेन अनभिधेयमेव स्यात् । यदि च स्मर्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातवेदविशेषपूर्वकत्वेनापि स्थितानां प्रामाण्यं नाऽऽश्रीयेत, तथा सति नैवाविज्ञातमूलं किंचिद्यज्ञे क्रियते इति तद्विनष्टप्रायश्चित्तविधिः नैवोपपद्येत । **' तस्माद् यान्येव शास्त्राणि वेदमूलानतिक्रमात् । अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥ यथैवान्यायविज्ञाताद् वेदाल्लेख्यादिपूर्वकात् । शूद्रेणाधिगताद्वाऽपि धर्मज्ञानं न संमतम् ॥ तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् । संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः । कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥ यथा कृतककर्पूरसुवर्णादिषु दीयते । यद्बीजं तदपि व्यक्तमग्राह्यत्वात् प्रतीयते ॥ '** तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात् तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमपि अहिंसादि श्वदृतिनिक्षिप्तक्षीरवत् अनुपयोगि अविश्रम्भणीयं च तन्मात्रोपलब्धं भवति इत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते तावदग्राह्यं भवति । **' यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते । तदा तेनैव सिद्धत्वादितरत् स्यादनर्थकम् ॥ '** तस्माद्यावत् परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तत् धर्मप्रमाणत्वेन नापेक्षितव्यमिति ।

**( सदाचारप्रामाण्यनिरूपणम् । )** यत्त्वेतत् ' अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ' इति सूत्रम् । अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्ध्यर्थं विचार्यते । तद्विपरीतसंकीर्णव्यवहारिषु शिष्टेषु अपथ्यकारिवैद्यातुरवत् अविस्रम्भणीयचरितत्वात् संभाव्यमानवेदमूलत्वाच्च धर्मसंशयं दर्शयित्वा ' धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यम् ' इति पूर्वः पक्षः, क्वचिच्च ' विरोधे त्वनपेक्ष्यम् ' इत्येतन्न्यायानुसारेण । सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनाम्, बहूनामद्यतनानां च । प्रजापतेस्तावत् ' प्रजापतिरुषसमभ्यैत् स्वां दुहि-

तरम् ’ इत्यगम्यागमनरूपादधर्माचरणात् धर्मव्यतिक्रमः । इन्द्रस्यापि । तत्पदस्थस्य च नहुषस्य परदाराभियोगात् धर्मव्यतिक्रमः । तथा वसिष्ठस्य पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम् । विश्वामित्रस्य चाण्डालयाजनम् । वसिष्ठवत् पुरूरवसः प्रयोगः । कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेषु अपत्योत्पादनप्रसङ्गः । भीष्मस्य च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम्, अपत्नीकस्य च रामवत् क्रतुप्रयोगः । तथा अन्धस्य धृतराष्ट्रस्येज्या पाण्डुवर्जितैर्धनैः इत्यनधिकृतक्रिया । तथा युधिष्ठिरस्य कनीयोर्जितभ्रातृजायापरिणयनं आचार्यब्राह्मणवधार्थमनृतभाषणं च । वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्, ‘ उभौ मध्वासवक्षीबौ ’ इति सुरापानाचरणम् । अद्यत्वेऽपि अहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्याऽपत्यमित्रसहभोजनादि उदीच्यानाम् । मातुलदुहितृद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीनि उभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि तु अनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः ।

किंच ‘ **के शिष्टा ये सदाचाराः, सदाचाराश्च तत्कृताः । इतीतरेतराधीननिर्णयत्वादनिर्णयः ॥** ’ ननु, ‘ **सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम् । आत्मतुष्टिः स्मृताऽन्या तैर्धर्मे सा चानवस्थिता ॥**’ यथाभ्यासं हि आशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति । तथा हि, ‘ **कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि । शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे ॥** ’ तथा हि, ‘ **पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः । तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः ॥** ’ तथा, ‘ **शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः । स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥ अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते॥**’ ततश्च अनवस्थितत्वात् यथैव ‘आत्मनस्तुष्टिरेव च ’ इत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यम् । एवं ‘ आचारश्चैव साधूनां ’ इत्येतदपीति । ‘ **स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम् । वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः ॥** ’ स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय । अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः । ‘ **न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते । यदि च स्यात्परोक्षाऽपि स्मर्येतैव ह्यसौ ध्रुवम् ॥** ’ तस्मान्निर्मूलत्वादनपेक्षाणि शिष्टाचरणानि ।

इति प्राप्तेऽभिधीयते । ‘**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्** ’ इति । ‘ **दृष्टकारणहीनानि यानि कर्माणि साधुभिः । प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह, तान्यपि ॥ शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते । अर्थार्थं वा, न तेष्वस्ति शिष्टानामेव धर्मधीः ॥ धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् । वैदिकैः कर्तृसामान्यात् तेषां धर्मत्वमिष्यते ॥ प्रदानानि जपो होमो मातृयज्ञादयस्तथा । शक्रध्वजमहो यात्रा देवतायतनेषु च ॥** ( महः उत्सवः ) । **कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः । प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥**’ (प्रदीपानां कार्तिकशुक्लप्रतिपदि दानम् । मोदकादीनां दानं भक्षणं च ) अनग्निपक्वमाघसप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां ( अनग्निपक्वस्य भक्षणस्य नियमः । माघस्य सप्तम्यां पौर्णमास्यां च अनुष्ठेयं कर्म । फाल्गुनपौर्णमास्यनन्तरप्रतिपदि वसन्तोत्सवश्च लक्ष्यते ) नियमक्रियाप्रमाणं न शास्त्रादृते किंचिदस्ति । स्मृतिकाराश्च ‘ आचारश्चैव साधूनां ’ ‘ देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणं ’ इति वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यते । तथा अनध्यायाधिकारः, ऊर्ध्वं भोजनादुत्सवः, इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते ‘ प्रेङ्खमारुह्य होता शंसति ’ इत्येतद्वाक्यशेषे श्रूयते ‘ यदा वै प्रजा महआविशन्ति प्रेङ्खं तर्ह्यारोहन्ति ’ इति महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता । यत्तु ‘ परिमितशास्त्रप्रमेयत्वाद्धर्माधर्मयोः, इह च तदसंभवात् ’ इत्युक्तम्, तत् वेदमूलत्वानुमानात्पूर्ववदेव ( भ्रान्तेरनुभवात्० वा. पृ. १६३ इति रीत्या ) प्रत्याख्येयम् । न च स्मृतिर्निर्मूला विस्तरवचनानामपि प्रपाठकमात्रेण उपसंहारात् किमुत संक्षेपवचनस्य । शक्यं च स्मृत्यनुरूपमेव वेदवचनमनुमातुम् । तथा हि, ‘ **शिष्टैराचर्यमाणानां सतां गोदोहनादिवत् । फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥** ’ नहि तदेवैकं शास्त्रप्रमाणकम्, तस्य स्वरूपमपि तत एवावगन्तव्यम् । अनेकाकारस्य हि प्रमेयस्य कश्चिदेवाऽऽकारः केनचित् प्रमाणेन प्रमीयते । तत्र प्रत्यक्षाद्यवगतेऽप्याचारस्वरूपे दधिगोदोहनादिवत् फलसंबन्धः शास्त्रेणावगम्यते । यागादिष्वपि च नैव स्वरूपज्ञानेन शास्त्रमपेक्षितम्, फलसंबन्धमात्रस्यैव अतीन्द्रियत्वेन तदपेक्षितत्वात् । अतो न नाम उपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः, सर्वकालं तु शिष्टव्यवहारशास्त्रयोरवियोगात् व्यवहारादेवापोद्धृत्य केचित् स्वर्गादिसाधनत्वेन नियम्यमानाः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते । तेषां च आर्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणं वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवत् उपात्तमिति शक्यमनुमातुम् । ( सरस्वत्या विनशनं तिरोभावः । सारस्वतसत्रारम्भदेशोपलक्षणमिदम् । प्लक्षात् प्रस्रवणं सारस्वतसत्रादुत्थानदेशोपलक्षणमिदम् ) । ‘ **ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा । शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ॥ नैव तेषां सदाचारनिमित्ता शिष्टता मता । साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः ॥** ’ प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत् परंपराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति, तदपि स्वर्ग्यत्वात् धर्मरूपमेव । ‘ **तद्यथा शुश्रुवान् विद्वाननूचानश्च वैदिकः । पुनस्तल्लक्षितो वेदे तेनैवाध्ययनादिषु ॥**’ तेनाहोरात्रपौर्वापर्यवत् अनादित्वात् वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः । स्मृतिरप्याचारं वेदवचनं वोपलभ्य



अभ्यनुज्ञानायैव प्रवृत्ता इत्यदोषः । ‘ **यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम् । प्रत्यक्षवेदमूलेऽपि तद्दृष्टेस्तदकारणम् ॥** ’ वेदेऽपि हि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्ते इति न तावता वेदमूलत्वाभावः । यानि तु म्लेच्छादिसमानानि नियतानियतक्रियान्तराणि अर्थसुखसाधनकृषिसेवावाणिज्यादिनि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि, तेषु नैव कस्यचित् धर्मत्वाशङ्काऽस्ति इति न तत्सामान्यतोदृष्टेन इतरनिराक्रियोपपत्तिः, केषांचिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः । किंतु, ‘ **देवब्राह्मणपूजादि यत्तेषामपि किंच न । तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥ लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते । कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि संगतः ॥ तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते । स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥ एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् । आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥** ’ तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीत्याश्रित्योच्यते ‘ यदेव किंचनानूचानोऽभ्यूहति, आर्षं तद्भवति ’ इति । वैदिकवासनाजनितत्वाद्वेद एव एव स भवति । तथाहि, ‘ **यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ । यज्जायते तन्मयमेव तत् स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥ एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् । सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥** ’ इति ( शाकुन्तले कालिदासेन ) । बहुदिनाभ्यस्तधर्मव्यासात्मनो हि न कथंचिद्धर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते । ‘**यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता । पुण्यकृद्ध्यानवत् तस्मादाचारेष्वपि सा तथा ॥ यथा वा वरदानादौ देवताराधनोद्भवे । ‘यद्वक्ष्यसि स मन्त्रस्ते विषघ्न ’ इति मन्त्रिते । लोकः स्मरति तं मन्त्रं विषापहरणादिषु ॥ यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम् । दन्तै-**

**गृह्णाति तामाहुः समस्तविषहारिणीम् ॥ यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत् । तत्संपर्कपवित्रत्वात् सेव्यते पुण्यकारणम् ॥ तथाऽऽचारात्मतुष्टयादि धर्म्यं धर्ममयात्मनाम् । वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ॥** ' इति ।

यत्तु 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्' 'अहल्यायां मैत्रेय्यामिन्द्रो जार आसीत्' इत्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति । तत्रोच्यते । '**श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति । मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा । यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति ॥** ' प्रजापतिस्तावत् प्रजापालनाधिकारादादित्य एवोच्यते । स चारुणोदयवेलायामुषसं उद्यन् अभ्यैत्, सा तदागमनादेवोपजायते इति तद्दुहितृत्वेन व्यपदिश्यते, तस्यां चारुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः । एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैव अहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेनैवोदितेन इत्यादित्य एवाहल्याजार इत्युच्यते, न तु परस्त्रीव्यभिचारात् । नहुषेण पुनः परस्त्रीप्रार्थननिमित्तानन्तरकालाजगरत्वप्राप्त्यैव आत्मनो दुराचारत्वं प्रख्यापितम् । शच्याश्च पतिभक्तिनिमित्तपुण्यातिशयजनिततन्निराकरणावाप्तप्रभावलाभः ख्यात एव । '**वसिष्ठस्यापि यत्पुत्रशोकव्यामोहचेष्टितम् । तस्याप्यन्यनिमित्तत्वान्नैव धर्मत्वसंशयः ॥** ' यो हि सदाचारः पुण्यबुद्ध्या क्रियते, स धर्मादर्शत्वं प्रतिपद्येत । यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते, स यथाविधिप्रतिषेधं वर्तिष्यते । तेन विश्वामित्रस्यापि यद्रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितं तत् 'सर्वं बलवतः पथ्यं' इत्यनेन न्यायेन, महान्ति च तपांसि कृत्वा तानि क्षयं नयतः उत्तरकाले वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि । मन्दतपसां गजैरिव महावटकाष्ठादिभक्षणं आत्मविनाशायैव स्यात् । **द्वैपायनस्यापि,** 'गुरुनियोगादपतिरपत्यलिप्सुर्देवराद्गुरुप्रेरिताद्दतुमतीयात्' इत्येवमागमात् मातृसंबन्धभ्रातृजायापुत्रजननं ( मातृसंबन्धेन मातृद्वारा यो भ्राता विचित्रवीर्यः, तज्जायायां इत्यर्थः ) प्राक्कृतपश्चात्करिष्यमाणतपोबलेन नातिदुष्करम् । अन्योऽपि यस्तादृक्तपोबलो निर्वहेत्, स कुर्यादेव । **रामभीष्मयोस्तु स्नेहपितृभक्तिवशात्** । विद्यमानधर्ममात्रार्थदारयोरेवं साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोः यागसिद्धिः, हिरण्मयसीताकरणं च लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम् । **भीष्मश्च '** **भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥** ' इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रनृणत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीदित्यर्थापत्त्या अनुक्तमपि गम्यते । '**यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान् । शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्यसौ कथम् ॥** ' धृतराष्ट्रोऽपि व्यासानुग्रहात् आश्चर्यपर्वणि पुत्रदर्शनवत् ऋतुकालेऽपि दृष्टवानेव । शापानुग्रहसमर्था महर्षयः श्रूयन्ते । तद्यथैव तद्वचनादसौ अन्धो जातो विज्ञायते, तथा यज्ञानुष्ठानवचनात्तावति काले दृष्टवानित्यर्थापत्त्या सुज्ञानम् । यद्वा 'यज देवपूजासंगतिकरणदानेषु' इति दानार्थ एवायं यजिर्भविष्यति ऋतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते, तत्कारणात् ऋतुक्रियोपचारः । '**या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता । साऽपि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता ॥ यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता । सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति ॥** ' अत एव चोक्तम्– '**इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषः । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गतेगतेऽहनि ॥** ' इति । न हि मानुषीष्वेवमुपपद्यते । तेनातीतमानुषमित्युक्तम् । अत एव वासुदेवेन कर्ण उक्तः 'षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति' इति । इतरथा हि कथं प्रमाणभूतः सन् एवं वदेत् । अथवा बह्व्य एव ताः सदृशरूपा द्रौपद्यः एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते । '**यद्वा नार्यर्जुनस्यैव केवलस्य**



**भविष्यति । साधारणा प्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता ॥** ' यथा युधिष्ठिरोपदेशात् सभामध्यमानीयमाना सहसैव रजस्वलावेषं सपुत्रकस्य धृतराष्ट्रस्य अयश उत्पादयितुमात्मानं प्रख्यापयितुं द्रौपदी कृतवती, **तथैव** केवलार्जुनभार्याया एव सत्याः श्रीत्वं च जनेनाविदितं परस्परं संघाताविशयं च भेदप्रयोगानवकाशार्थं दर्शयितुं साधारण्यप्रख्यापनमित्येवमादिविकल्पैः सुपरिहरत्वात् रागलोभकृतव्यवहारस्य च शिष्टैरेव धर्मत्वेनापरिग्रहस्योक्तत्वादनुपालम्भः । तथा च द्रोणवधाङ्गभूतानृतवादे 'प्रायश्चित्तं कामकृतेऽप्येके' इत्येवमन्तेऽप्यश्वमेधः प्रायश्चित्तत्वेन कृत एवेति न तस्य सदाचारत्वाभ्युपगमः ।

यत्तु **वासुदेवार्जुनयोर्**मद्यपानमातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्तम्, तत्र अन्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः । '**सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥** ' इति । मधुसीध्वोस्तु क्षत्रियवैश्ययोर्नैव प्रतिषेधः, केवलब्राह्मणविषयत्वात् 'मद्यं नित्यं ब्राह्मणस्य' इति वचनात् । यदप्येतत् '**गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥** ' इति, एतदपि ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात् प्रवचनाश्रयणेन ब्रूञ्वदत्योरेकार्थत्वात् 'प्रब्रूयाद्ब्राह्मणस्त्वेषां' इति नियमात् यस्यैव प्रवचनम्, स एव तच्छीलस्तद्धर्मस्तत्साधुकारी वा भवति, तस्माद्ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाङ्गनिन्दार्थवादेऽभिहितम् । '**अकार्यमन्यत् कुर्याद्धि ब्राह्मणो मदमोहितः ॥** ' इति । तस्मादेतदुक्तं भवति 'यथैवैका अन्नसुरा त्रयाणामप्यपेया, तथा सर्वा ब्रह्मवादिभिरपेया' इति । इतरथा यथैवैकेति च, ब्रह्मवादिभिरिति च उभयमप्यनर्थकमेव स्यात्, श्लोकान्तरनिर्देशेनैव वर्णत्रयसंबन्धलाभात् । तेन उभौ मध्वासवक्षीबावित्यविरुद्धम् । तथा चान्यार्थदर्शनमभ्यनुज्ञानवचनम् 'यन्माल्यमासीत्तत्पश्चात्पर्यौहत, सुरा वै माल्यं, ततो राजन्यमसृजत, तस्माज्ज्यायांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चाऽऽसते, पाप्मा वै माल्यं, तस्माद् ब्राह्मणः सुरां न पिबेत् पाप्मना न संसृज्या इति, तदेतदेतत् क्षत्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्ति य एवं विद्वान्सुरां पिबति' इति । मधुसीधुविवक्षयैतत् । यत्तु मातुलदुहितृपरिणयनं तयोः तत् मातृष्वस्रीयादिसंबन्धव्यवधानेऽपि भ्रात्रादिव्यवहारादविरुद्धम् । यद्यपि वासुदेवस्वसेति सुभद्रा ख्याता, तथाऽप्युत्पत्तौ बलदेववासुदेवयोरेकानंशायाश्च निजत्वान्वाख्यानात् मातृष्वस्रीया सुभद्रा, तस्य मातृपितृष्वस्रीया दुहिता वेति परिणयनाभ्यनुज्ञानाद्विज्ञायते । '**वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते । न तु व्यवेतसंबन्धप्रभवे तद्विरुद्धता ॥** ' येन ह्यन्यत्रैवमुक्तम् '**मम वर्त्मानुवर्तेरन् मनुष्याः पार्थ सर्वशः ।**' '**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनु वर्तते ॥** ' इति, स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्तयिष्यति । एतेन **रुक्मिणी**परिणयनं व्याख्यातम् । यत्तु अद्यतनानामाहिच्छत्रकमाथुरब्राह्मणीनां सुरापानादि, दाक्षिणात्यानां मातुलदुहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम् । तत्र केचित्तावदाहुः । स्मृत्याचारयोः इतरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वात् विहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणाददोष इति । तत्तु वक्ष्यमाणबलाबलविभागादयुक्तम् । अन्ये त्वेवमाहुः– '**सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया । आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः ॥** ' तथा मनुनाऽप्युक्तम्– '**येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥** ' येषां तु यः पित्रादिभिरेवार्थो नाऽऽचरितः स्मृत्यन्तरप्रतिषिद्धश्च, ते तं परिहरन्त्येव । अपरिहरन्तो वा स्वजनादिभिः परिह्रियन्ते । ननु च गौतमेनाऽऽम्नायविरुद्धानामाचाराणामप्रामाण्यमुक्तम् । ( परिहारवादी शङ्कते– ) आह, '**यदि वेदविरोधः स्यादिष्येतैवाप्रमाणता । स्मृतिराम्नायशब्देन न तु वेदवदुच्यते ॥** ' ( निराकरोति– ) न त्वेतदपि युक्तं स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात् ।

स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तम्
‘आम्नायः स्मृतिधारकः’ इति । ग्रन्थकारगतायाः
स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधार-
णार्थत्वेनोक्तः । (स्वमतमुपसंहरति–) ततश्च मन्वादि-
वाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम् ।
आपस्तम्बवचनं तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदा-
हरणान्येव प्रयच्छता निराकृतम् । स्पष्टकामादिहेत्वन्तर-
दर्शनान्न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुति-
मूलत्वोपपत्तिः । (शङ्कते–) आह । केन वा ब्राह्म-
णीनां सुरापानं प्रतिषिद्धम् ? (परिहरति–) उच्यते–
‘तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां
पिबेत् ।’ इत्यनेन (आशङ्किता स्वाभिप्रायमाह–)
‘ननु पुंलिङ्गनिर्देशान् स्त्रीणां न प्रतिषिध्यते ।
सुरापानमतो नात्र स्मृत्याचारविरुद्धता ॥’
(पार्श्वस्थ आह–) उच्यते– ‘हननप्रतिषेधेऽपि
भवेत् पुंस्त्वं विवक्षितम् । तथा पुंस्त्ववदेकत्व-
विवक्षाऽपि प्रसज्यते ॥ अहत्वा कंचिदेवैकं ततश्च
स्यात् कृतार्थता । एकेन च सुरापाने वर्जिते
पूर्ववद्भवेत् ॥ (आशङ्कितादोषं परिहरति–)
आह यत्तावदेकत्वविवक्षागतमुच्यते । प्रत्येक-
व्यक्तिसंबन्धाज्जातेर्वा तन्न दुष्यति ॥’ (एतदेव
विवृणोति–) एकैकस्या एव हि ब्राह्मणव्यक्तेर्यथाप्रसक्त-
वधपानयोः प्रतिषेधात् विवक्ष्यमाणमपि तावदनूद्यमान-
त्वात् अन्नक्रियाविशेषणं वा संभवति, किमुत यदा
जातिगतैकत्वानुवाद एवायं विज्ञायते । (प्रथममति-
प्रसङ्गं परिहरति–) आह । हननप्रतिषेधे कर्मभूतस्य
ब्राह्मणस्योद्दिश्यमानत्वात्, सुरापाने च कर्तृत्वेनोपादीय-
मानत्वात् स्वर्गकामौदुम्बरीसंमानार्थयजमानवत् तुल्य-
विवक्षाविवक्षयोरप्रसङ्गादुदाहरणवैषम्यम् । (वधनिषेधे
ब्राह्मणस्य उद्देश्यत्वेनाविवक्षितलिङ्गत्वं प्रकटयति–)
तथाहि– ‘यो ब्राह्मण इति ह्युक्ते हननप्रति-
षेधतः । ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधी-
यते ॥’ (श्लोकं व्याचष्टे–) प्रतिषेधविधिपरो हि विधा-
यकः शुद्धवधप्रतिषेधासंभवात् ब्राह्मणजातिमात्रविशिष्ट-
वधप्रतिषेधं विधाय निवृत्तव्यापारो यदि लिङ्गमपरं
ब्राह्मणे, वधे प्रतिषेधं वा विदध्यात् ततः प्रत्यया-
वृत्तिलक्षणवाक्यभेदप्रसङ्गः । (एवं तावत् नञुप-
हितस्य लिङो निषेधकत्वे प्रवर्तनाप्रतीत्यभावेन तदाक्षिप्त-
साध्याभावात् ब्राह्मणस्यानुपयोगित्वेन असंस्कार्यत्वात्
अनुपादेयपञ्चकव्यतिरेकेण वास्तविकोद्देश्यत्वाभावेऽपि
शब्दवृत्तेः नोद्देश्यत्वादविवक्षितलिङ्गता उक्ता । यदा तु
नञ्मात्रेण निषेधसिद्धेः द्वेषाद्यर्थप्राप्तप्रवर्तनाऽनुवादा-
र्थत्वं लिङः अङ्गीक्रियते, तदा प्रवर्तनाऽऽक्षिप्त-
वैरनिर्यातनादिसाध्यसिद्ध्युपयोगिहननसंस्कार्यत्वोपपत्तेः
वस्तुतोऽपि उद्देश्यत्वात् सुतरां लिङ्गविवक्षा इत्याह– )
येषां तु विधिप्रतिषेधौ नाम अत्यन्तभिन्नौ वेदवाक्यार्थौ
(द्वावेव), तेषां (तेषां मते श्रूयमाणमपि लिङ्गं प्रतिषेधं
प्रति अनुपयुज्यमानत्वात् तेनापरिगृहीतत्वात् अविव-
क्षितं इत्यन्वयः) प्रत्ययसंबन्धानुगृहीतशक्तिरभावमात्रा-
भिधानादभ्यधिकलब्धव्यापारो नञ् विध्यर्थमपि द्वेषा-
द्यर्थप्राप्तं पूर्वोक्तन्यायविवक्षितब्राह्मणविशिष्टहननाविशिष्टं
चानूदितं प्रतिषिध्य चरितार्थः, न लिङ्गमपरं ब्राह्मण-
वधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुम्, इति श्रूय-
माणमपि लिङ्गं प्रतिषेधं प्रति अनुपयुज्यमानत्वादविवक्षितं
भवति । एषा ह्यत्र वचनव्यक्तिः, ‘यत् क्रोधादिवशेन
ब्राह्मणं हन्यात्, ब्राह्मणो वा हन्तव्यः’ तन्नेति । विध्ये-
कत्वपक्षे पुनरीदृशी वाक्ययोजना ‘यद् ब्राह्मणहननं तन्न
कुर्यादिति, यो वा ब्राह्मणस्तं न हन्यात्’ इति ब्राह्मण-
विशिष्टहननप्रतिषेधविधिः शुद्धोद्दिष्टब्राह्मणविषयवधप्रति-
षेधविधिर्वेति । ‘सर्वथा ब्राह्मणोद्देशान्नेह मुच्या-
महे वयम् । न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये
विवक्षितुम् ॥’ ‘ब्राह्मणः सुरां न पिबेत्’, ‘न पेया
ब्रह्मवादिभिः’ इति निमित्त–देश–काल–फल–संस्का-
र्यानुपादेयपञ्चकव्यतिरेकात् एकत्र आख्यातप्रत्ययोपात्त-
गुणीभूतोपादीयमानसंख्यापरिच्छेद्यत्वयोग्यसाधनांशविशे-
षणत्वेन उपादानात्, इतरस्य च तृतीयाविभक्तिश्रुति-
वचनं विवक्षितलिङ्गस्यैव प्रतिषेधकं इति दर्शयितव्यम् ।
(एवं पार्श्वस्थप्रतिपादितप्रसङ्गद्वयं परिहृत्य ब्राह्मणानां
सुरापानप्रतिषेधाभावशङ्कामुपसंहरति–) ‘अतश्चा-
प्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते । सुरापान-



मंहिच्छन्नब्राह्मण्यस्तेन कुर्वते ॥’ (सुरापाने
ब्राह्मणस्य अनुद्देश्यत्वेऽपि उपादेयत्वात् विशेषण-
विवक्षा इति परिहरति–) ‘नैतदेवमिहाप्येतत् पुंस्त्वं
नैव विवक्ष्यते । ब्राह्मणस्यानुवाद्यत्वात् तद्वध-
प्रतिषेधवत् ॥ नोपादेयत्वमेवैकं कारणत्वेन
संमतम् । विशेषणविवक्षायाः, कारणं हि महद्-
विधिः ॥ अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते ।
तत्रानाकाङ्क्षितं नान्यद्विधेयेभ्यो विधीयते ॥’
(शङ्कते–) यदि हि ब्राह्मणः सुरां पिबेदित्ययमवान्तर-
वाक्यार्थः प्राक्प्रतिषेधसंबन्धात् विधिबुद्धिमवस्थापयेत्
ततो गुणत्वोपादेयत्वविधिसमवायान्न ब्राह्मणपदे किंचिद-
विवक्षितं नाम स्यात् । (दूषयति–) ‘यतस्तु राग-
मोहादेः सुरापानं प्रसज्यते । ब्राह्मणादेरतस्तस्मिन्न
कश्चिद्विधिसंभवः ॥ प्रतिषेधोपसंहारिमहावाक्य-
तिरस्कृता । नावान्तरविधेः शक्तिः प्रादुरस्ति कथं-
चन ॥’ तेनेहापि ‘यत् सुरां ब्राह्मणः पिबेत्तन्न’ इति वा
वचनं व्यज्यते, ‘यो ब्राह्मणः स न सुरां पिबेत्’ इति
वा सुराविशिष्टपानप्रतिषेधेन, प्रतिषेधविधिना वा प्रत्य-
वायव्यावृत्त्या ब्राह्मणोऽनुगृह्यते इति नास्य पानं प्रतिषेधं
वा प्रति विधेयत्वोपपत्तिः । ‘लोके चैतद्यथाप्राप्तं
पानं स्त्रीपुंसकर्तृकम् । प्रतिषेधपरे वाक्ये तद्-
वस्थमनूद्यते ॥’ न च यो ब्राह्मणः पिबेदित्यनूदितं
स च पुमानिति विधिव्यापाराद्विना लिङ्गविवक्षाऽव-
कल्पते । ‘न चास्य लिङ्गसंबन्धः केवलः सन्
विधीयते । न पानप्रतिषेधाद्धि विधिरन्यत्र
गच्छति ॥’ (उपसंहरति–) ततश्चोभयत्रापि अविव-
क्षितलिङ्गसंख्यत्वं सिद्धम् ।

(पूर्वोक्तशङ्काशेषमाह–) नन्वेवं सति ब्राह्मणस्त्री-
वधेऽपि पुंब्राह्मणवधवद्ब्रह्महत्याऽस्तीति यदात्रेय्यामेव
केवलायां भ्रूणहत्याप्रायश्चित्तविधानं तन्नोपपद्यते । (परि-
हरति–) उच्यते (?) ‘ब्राह्मणस्त्रीवधे को वा
ब्रह्महत्यां निषेधति । प्रायश्चित्तान्तरं तस्याः
स्त्रीत्वमात्रनिबन्धनम् ॥’ न च प्रायश्चित्ताल्पत्वेन
निमित्तस्य ब्रह्महत्यात्वमपनीयते, पुंवधेऽपि लघुतरप्राय-
श्चित्तविधिदर्शनेन ब्रह्महत्यादोषाभावप्रसङ्गात् (उप-
संहरति–) तस्मान्न वाचनिकप्रायश्चित्ताल्पत्वेन ब्राह्मणी-
वधप्रतिषेध एव नास्ति इत्याशङ्कितव्यम् । सुरापाने
पुनः प्रायश्चित्तविशेषोऽपि न कश्चिदाम्नातः, इति
दूरादपाकृतत्वात् अस्त्येवास्य स्मृत्या सह विरोधः ।
याऽपि च आपस्तम्बस्मृतिवचनात्तुल्यबलत्वाशङ्का भवेत्
साऽपि ‘तस्माद्ब्राह्मणः सुरां न पिबति’ इत्येतेन
प्रत्यक्षश्रुतिविधिना निराकृता, इति नैवंविधाचारप्रामाण्य-
माशङ्कितव्यम् । (आचाराधिकरणम् । एवं उत्सूत्रं
पूर्वपक्षं कृत्वा सदाचारप्रामाण्यप्रतिपादनपरतया ‘अपिवा’
इति सूत्रं व्याख्याय इदानीं सत्रारूढं पूर्वपक्षं कर्तुं ‘न
शास्त्रपरिमाणत्वात्’ (६) इति पूर्वाधिकरणसिद्धान्तसूत्रं
आचाराधिकरणपूर्वपक्षेऽपि आवृत्त्या योजयितुमुपक्रमते
–अथवेति) अथवा सदाचारप्रमाणत्वप्रतिपादनार्थं
सूत्रद्वयेनापि एतदेकमधिकरणं व्याख्यातव्यम् ।

**न शास्त्रपरिमाणत्वात् । ६ ॥**

इह यावन्ति कृष्णमृगसंचरणोपलक्षितार्यावर्तनिवासि-
चातुर्वर्ण्याचरणानि, तानि उदाहृत्य चिन्त्यते । ‘धर्म-
बुद्ध्या यदार्याणां चरित्रमुपलभ्यते । किं तथैव
प्रमाणं तदथ वा निष्प्रमाणकम् ॥’ इति (संशयः) ।
कुतः संशयः ? उच्यते, ‘स्मृतिवत्कर्तृसामान्यात्
प्रमाणत्वेन गम्यते । अनिबन्धनतायास्तु भवे-
दप्यप्रमाणकम् ॥’ ननु च स्मृतिकारैरेव एतत्प्रामाण्य-
मभ्युपगतम्, ‘तद्विदां च स्मृतिशीले’ ‘आचारश्चैव
साधूनाम्’ ‘यस्मिन् देशे य आचारः स सदाचार
उच्यते’ (इति) । अतश्च तत्प्रामाण्यादेव सिद्धम् ।
(अष्टकादिस्मृतीनां मूलश्रुत्यदर्शनेऽपि तदभावे हेत्व-
दर्शनात् अविरुद्धं श्रुत्यनुमानम् । आचारप्रामाण्यस्मृतौ
तु मूलश्रुत्यभावसाधनस्य हेतोः आचारमूलत्वलक्षणस्य
स्मृत्यन्तरेभ्यः अतिरिक्तत्वात् स्मृत्यन्तरन्यायेन आचार-
प्रामाण्यस्मृतिप्रामाण्यसिद्धेः न स्मृतिबलात् आचार-
प्रामाण्यसिद्धिः, इति परिहरति–) न । मूलाभावा-
हेतु– (मूलाभावहेतु–इति युक्तम्) दर्शनातिरेकात् ।
(एतदेव विवृणोति–) शाखान्तरगतवेदवाक्यदर्शन-
मूलानि हि स्मरणोपनिबन्धनानि प्रमाणत्वेनाधिगतानि,
ननु (न तु) सदाचारदर्शनात् तन्मूलमात्रप्रवृत्त-

स्मरणानां मूलान्तरानुमानसंभवः । ‘ यथैव च वयं तेषां द्रष्टारः केवलं, तथा । स्मृतिकारास्ततो नैषां गम्यते मूलदर्शनम् ॥ ’ यदि हि तैर्मूलान्यश्रोष्यन्त, ततो यथैवान्यानि निबद्धानि, तथैव एतान्यपि निबद्धान्येव अभविष्यन् । यतस्तु स्वयं उपलब्धानुरूपमनिबध्य परप्रत्ययेनैव सदाचाराः प्रमाणमित्याहुः, अतो न दृष्टमूलत्वेन अध्यवसातुं शक्यम् । ( अतः, न्यायमूलत्वात् स्मृतेः, न्यायसाध्वसाधुतैव विचार्या इत्याह– ) इति विचार्यते । ( संदेहमुपपाद्य पूर्वपक्षसूत्रगतनञर्थव्याख्यानार्थं सिद्धान्तेन उपक्रमते– ) तत्र पूर्वाधिकरणद्वयबलेनैव प्रामाण्यं प्रतिज्ञायते ( उपक्रम्यते इत्यर्थः ) कर्तृसामान्यात् विधिस्मृतिविरोधरहितत्वाच्च । ‘ नहि केचित् सदाचाराः श्रौतस्मार्तविरोधिनः । अतस्तत्तुल्यकारित्वात् प्रामाण्येनावधारिताः ॥ ’ ( घञन्तात् करोतेः कारशब्दं व्यापारवचनं व्युत्पाद्य सोऽस्यास्ति इति मत्वर्थीयेनिप्रत्ययान्तस्य कारिशब्दस्य कर्तृवचनत्वात् श्रौतस्मार्तैः तुल्याः कर्तारः एषां इति विग्रहः कार्यः । ) ‘ स्मृतिकाराभ्यनुज्ञानं महदन्यच्च कारणम् । तेषामज्ञातमूलानां नह्यनुज्ञोपपद्यते ॥ ’ इति ।

( उपक्रान्तसिद्धान्तनिराकरणार्थत्वेन पूर्वपक्षसूत्रमवतार्य व्याख्यातुं अध्याहारेण पूरयति– ) तदपाकुर्वन्नाह– ‘ न शास्त्रपरिमाणत्वाद् धर्माधर्मस्थितेरमी । शिष्टाचाराः प्रमाणत्वं लभन्ते शब्दवर्जिताः ॥ ’ शास्त्रपरिमेयत्वं तावत् परिमाणशब्दवाच्यं धर्माधर्मयोरवस्थितम् । ( अन्यथा व्याचष्टे– ) परिमितानि च शास्त्राणि वेदोपवेदादीनि । न च तेषां मध्ये सदाचारशास्त्रं किंचिदस्ति । न च सदाचारः स्वयमेव शास्त्रं नापि तद्दर्शनमनुष्ठानं वा, अत्यन्तपरायत्तत्वात्प्रमेयत्वाच्च । स्मृतेस्तु एतद्विषयाया निर्मूलत्वमुक्तमेव । ( तृतीयप्रकारेण व्याख्यातुं विकल्प्य दूषयति– ) ‘ किं च मूलं भवेदेकमनेकमिति चिन्तिते । नैव द्विविधमित्येतदनुमातुं हि शक्यते ॥ ’ न तावद्देशजातिकुलभेदात् भिन्नानामपरिमितस्वरूपाणामेकश्रुतिमूलत्वम् । ‘ न हीदृशी श्रुतिर्यैतान् सर्वाचारान् ग्रहीष्यति । शब्दाभिधेययोस्तेषां व्यक्त्याकृत्योरसंभवात् ॥ ’ यावदाचारं हि ( हिशब्दः तुशब्दार्थे ) वेदवाक्यानि कल्पयतां वेद एवैकः कल्पयितव्यः । एकस्य तु वाक्यस्य नैव कस्यचिदपरिमिताचारविधायित्वमवकल्पते, यत आचाराः प्रवर्तेरन् । न च धर्मसूत्रकारैस्तदेव दृष्ट्वा आचारप्रामाण्यमुपनिबद्धम् , शेषधर्मस्मृतिवाक्यतुल्यनिबन्धनप्रसङ्गात् । न चाऽऽचारदर्शनोत्तरकालप्रवृत्ता स्मृतिः तेषां मूलं भवति, मूलमूलिबलाबलविपर्ययप्रसङ्गात् । ( तृतीयप्रकारेण सूत्रं व्याचष्टे– ) ‘ अतः परिमितं शास्त्रमनुमातुं यतोऽर्हति । नाऽऽचाराणां च तन्मूलं बहूनामित्यमूलता ॥ न च स्मृतिसरूपाऽपि श्रुतिरत्रानुमीयते । आचाराणामतत्पूर्वप्रसङ्गात् सविपर्ययात् ॥ ’ शिष्टाचारः प्रमाणमिति हि श्रुतावनुमीयमानायां आचारः प्रथमं सिद्धो भवेत् तत्पूर्विका श्रुतिः । ‘ न त्वाचारस्य सा मूलमिति निर्मूलता पुनः । ’ ( चतुर्थं व्याख्याप्रकारमाह– ) शास्त्रपरिमाणत्वादिति वा परिमिते ह्यर्थे शास्त्रं प्रवर्तेत । अपरिमितत्वादाचाराणां उच्छास्त्रत्वमिति । ( पञ्चमं व्याख्याप्रकारमाह– ) परिमितार्थविषयत्वाद्वा शास्त्रस्य ‘ अप्राप्ते शास्त्रमर्थवत् ’ (६।२।४।१९) इति । ‘ दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता । तस्मादर्थसुखाङ्गत्वान्नाऽऽचारेष्वस्ति धर्मता ॥ वैश्यानां सेवकानां वा वैद्यानां नगरेषु वा । चरित्राणां यथा चार्थसुखाङ्गत्वं तथाऽस्त्विह ॥ ’ ( पूर्वपक्षमुपसंहरति– ) ‘ तस्मात् श्रुतिस्मृती एव प्रमाणे धर्मगोचरे । शीलाचारात्मतुष्टीनां गोष्ठीहास्यादितुल्यता ॥ ’ (सिद्धान्तोपक्रममपि सूत्रारूढं कर्तुमुपक्रमते–) यद्वा सूत्रत्रयेणापि (५–६–७) एतदेवाधिकरणं व्याख्यातव्यम् । ( अधिकरणं रचयति– ) इह आर्यावर्तनिवासिशिष्टाचारानेवोदाहृत्य पूर्ववत् प्रामाण्याप्रामाण्यसंदेहे शिष्टाकोपेऽविरुद्धमिति सिद्धान्तस्तावदुपक्रम्यते । तथाहि, ‘ शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते । तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥ यदि



शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता । तदकोपात्तु नाऽऽचारप्रमाणत्वं विरुध्यते ॥ ’

शा— ‘ आचान्तेन कर्तव्यम् ’ इत्येवमादीनि क्रत्वङ्गस्मरणानि उदाहरणम् । किं प्रमाणमप्रमाणं वेति विचारः । तदर्थं च प्रत्यक्षश्रुत्या विरुध्यन्ते न वेति । तदर्थमपि एभिः क्रतुमध्ये अनुष्ठीयमानैः कस्यचित् श्रुत्यर्थस्य क्रमादेर्भवति बाधो न वेति ।’अथवा अभ्युपेत्यैव विरोधं प्रमाणमप्रमाणं वेति विचारः । तदर्थं च प्रमाणप्रमेयबलाबलविसंवादे किं ज्यायः इति चिन्त्यते । तत्र पूर्वः पक्षः ‘ श्रुत्युक्तानां क्रमादीनां स्मार्तैराचमनादिभिः । व्याकोपः स्यादतस्तावद् विस्पष्टैव विरोधिता ॥ ततः श्रुतिबलीयस्त्वात् स्मृतेः स्यादप्रमाणता । ( द्वितीयपूर्वपक्षं संगृह्णाति– ) पूर्वभाविप्रमाणस्थं प्रमेयस्थाद्बलाबलात् ॥ ज्यायस् , तेनैव निर्णीते न पश्चादितरादरः । नैराकाङ्क्ष्यात् प्रमातॄणामतः स्मृत्यर्थबाधनम् ॥ ’ तस्मात् आचमनादिस्मृतीनामप्रामाण्यम् । सिद्धान्तस्तु– ‘ पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरविरोधिता । ( द्वितीयसिद्धान्तं संगृह्णाति– ) विरोधेऽपि च दौर्बल्यं ( क्रमादेः ) पदार्थेभ्यो गुणत्वतः ॥ ’ तस्मात् आचमनादिस्मृतीनामबाधात् प्रामाण्यमिति ।

( एवं यथाभाष्यमधिकरणमुपवर्ण्य अत्र आचार्योक्तं भङ्गमाह–) न तु इदमेवाधिकरणम् , पूर्वपक्षस्यातिमन्दत्वात् , यज्ञोपवीतादेश्च प्रत्यक्षश्रुतिविहितत्वेन अनुदाहरणत्वात् । तस्मात् यत् पूर्वं शाक्यादिशास्त्राभासानामप्रामाण्यमुक्तं तत्रैव चोद्योत्तरत्वेन आद्यं सूत्रद्वयं ( ५–६ ) व्याख्येयम् । यत्तु तृतीयं सूत्रं ‘ अपिवा कारणाग्रहणे० ’ इति तत् सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम् । अत्र अनिबन्धनाः सदाचाराः वसन्तोत्सवादिविषया उदाहरणम् । प्रमाणमप्रमाणं वेति संदेहः । तदर्थं च श्रुतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम् । तत्र स्मृत्यधिकरणे ( १।३।१ ) कर्तृसामान्यात् आचाराणामपि स्मृतिवत् प्रतिपादितमपि प्रामाण्यं निर्निबन्धनतया व्यतिक्रमसाहससंकराच्च आक्षिप्य समाधीयते । सिद्धान्तस्तु– धर्मबुद्ध्या वैदिकैरनुष्ठानं असति वैदिकत्वे अनुपपन्नम् । व्यतिक्रमसाहसदर्शनं तु रागद्वेषादिनिबन्धनत्वात् न धर्मबुद्धिनिबन्धनम् । धर्मबुद्धिनिबन्धनस्य च आचरितस्य अगृह्यमाणकारणत्वात् श्रुतिस्मृतिविरोधादर्शनाच्च धर्मलिङ्गत्वाव्यभिचारः । मन्वादिभिस्तु लाघविकैः यदि नाम स्वरूपेणानिबध्यसामान्यात्मना शिष्टाचारः प्रमाणं इत्युक्तम् । नैतावता कश्चिद्दोषः । तस्मात् स्मृतिवत् आचाराणामपि धर्मे प्रामाण्यं सिद्धम् । १।३।४.

सोम— विरोध एव क्वास्ति क्व नास्ति इति विरोधाधिकरणविषयव्याप्त्यर्थत्वात् अस्य तेन संगतिर्बोध्या । हेतुदर्शनाधिकरणस्य तु समनन्तरस्यापि विरोधाधिकरणभक्तत्वात् न तेन पृथक् संगत्यपेक्षा । ‘ अथवा ’ इति पक्षे तु विरोधाधिकरणेन आपवादिकी संगतिः । सदाचारप्रामाण्याधिकरणे तु शाक्यादिस्मृतिवत् आचारस्यापि अप्रामाण्यं इत्युत्थितेः संगतिः ।

वि— ‘ आचान्तेनेत्यमा मा वा स्मृतिरेषा, न मा भवेत् । वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः ॥ , आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः । धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता ॥ ’ इति । ( अथ वार्तिककृतं शाक्यादिस्मृत्यप्रामाण्याधिकरणं तु ) ‘ शाक्योक्ताहिंसनं धर्मो न वा, धर्मः श्रुतत्वतः । , न धर्मो नहि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम् ॥ ’ ( अथ सदाचारप्रामाण्याधिकरणं तु ) ‘ सदाचारोऽप्रमा मा वा, निर्मूलत्वादमानता । , अष्टकादेरिवैतस्य समूलत्वात् प्रमाणता ॥ ’ इति । १।३।४.

भाट्ट— स्मार्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात् क्रमादीनामेव प्राबल्यात् तद्विषयस्मृतीनामप्रामाण्यम् । न हि ‘ क्षुते आचामेत् ’ इति विहितस्य स्मार्ताचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने ‘ वेदं कृत्वा वेदिं करोति ’ इति श्रुतिविहितः क्रमः अनुष्ठातुं शक्यते । स्मार्तपदार्थानां च बहुत्वात् पूर्वाह्णादिकालः प्रयोगसिद्ध्यवगतं च परिमाणं न

शक्यते अनुग्रहीतुम्। न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्यः आचमनादिभ्यः दौर्बल्यम्। प्रमाणपूर्वकत्वात् प्रमेयावगमस्य प्रथमावगतप्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यात्। इति प्राप्ते, पदार्थप्राप्त्यपेक्षत्वात् क्रमादेः औत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वात् न तावत् पदार्थविरोधित्वम्। परिमाणं तु न कस्यचिच्छास्त्रस्यार्थ इति न तस्य श्रौतत्वम्। विरोधेऽप्याचमनादीनां पदार्थत्वात् प्राबल्यमेव। प्रमाणानां हि न स्वरूपतो विरोधः। अपि तु प्रमेयविरोधनिबन्धनः। तद्यदैव प्रमेयविरोध आलोच्यते, तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे, न प्रमाणबलाबलस्य नियामकमिति प्रमाणमेव तत्स्मृतिः।

यद्वा यच्छाक्यग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रामाण्यम्। इति प्राप्ते, 'स्वाध्यायोऽध्येतव्यः' 'वेदोऽखिलो धर्ममूलम्' 'तद्विदां च स्मृतिशीले' 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥' इत्यादिवचनैर्नियतप्रमाणप्रतिपाद्यानामेव धर्मत्वप्रतीतेः, अन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति।

(अपि वा कारणा०) अनिबद्धानां वसन्तोत्सवाद्याचाराणां प्रामाण्यमप्रामाण्यं वेति संदेहे एतेषां वेदमूलकत्वे अष्टकादिवत् मन्वादिभिर्निबन्धनापत्तेः सामान्यतः 'तद्विदां च स्मृतिशीले' इत्यादिना निबन्धनेऽपि विशेषतः अनिबन्धनेन तेषां श्रुतिदर्शनाभावादप्रामाण्यम्। इति प्राप्ते, धर्मबुद्ध्या वैदिकैरनुष्ठीयमानत्वात् स्मृतिवदेव वैदिकत्वम्। विशेषतः अनिबन्धनं तु गौरवभीत्या न दोष इति। व्यतिक्रमसाहसदर्शनं तु धर्मबुद्ध्या वैदिकैरननुष्ठीयमानत्वान्न वैदिकम्। न चैतावता सर्वस्याप्यवैदिकत्वम्। अतः आचाराणामपि धर्माधर्मयोः प्रामाण्यमिति।

**मण्डन**— 'शिष्टक्रमस्याचमनान्न कोपः।'

**शंकर** — 'शिष्टाकोपेऽप्रमाणत्वम्।' ५. 'शिष्टाचारप्रमाणता।' ६.

* **शिष्टाकोपाधिकरणेन** वार्तिककारमते प्रमेयबलाबलस्य (प्रमाणबलाबलात्) बलवत्त्वनिरूपणम्। **कौ.** १।३।५।१०. * **शिष्टाकोपाधिकरणे** आचमनादयः स्मार्तपदार्थाः श्रौतक्रमकालपरिमाणैर्न बाध्यन्ते इति व्यवस्थापितम्। अत्रैव च (२।४।२।३३) स विचारः सूत्रकृता कण्ठरवेण कृतः इति शिष्टाकोपाधिकरणं विषयान्तरे एव योजितं वार्तिके। **कु.** २।४।२।३३. * शिष्टाकोपाधिकरणे क्रत्वङ्गपदार्थविषयाचाराणां क्रमाद्यविरोधात् विरोधेऽपि वा प्रमेयबलीयस्त्वात् अनपवादः अभिहितः। **सु.** पृ. २०७, * शिष्टाकोपाधिकरणे तु 'यज्ञोपवीत्येवाधीयीत, अध्यापयेत्, यजेत, याजयेद्वा' इत्यनेनैव ब्रह्मसूत्रस्य श्रौतत्वसिद्धावपि अभ्युच्चयायैतदुदाहृतम्। पृ. १३५६. * अष्टकास्वर्गयोः साध्यसाधनभावे स्मृत्यन्तरमूलकत्वं **शिष्टाकोपाधिकरणे** निराकरिष्यते। **कौ.** १।३।१।१ पृ. २.

* ऐककर्म्ये सति सर्वशाखास्थानां विधिपदोक्तानां विधेयानामङ्गानां तेनैकेन कर्मणा संयोगावगतेः विरोधिनां क्रमकालपरिमाणानां **शिष्टाकोपाधिकरणोक्तरीत्या** संयोगाभावात् सर्वशाखास्थानां अङ्गानां एककर्माङ्गत्वप्रत्ययः। **कौ.** २।४।२।३३.

* पील्वधिकरण– (१।३।४।८–९) व्युत्पादितम्लेच्छप्रसिद्धिगतम्लेच्छरूप–आश्रयदौर्बल्यन्यायः **शिष्टाकोपाधिकरणन्यायात्** पराहतोऽपि पुनरुज्जीवितो भवति। **कौ.** १।३।५।१० पूर्वपक्षे.

* **शिष्टोक्तो** धर्मः। बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां न उन्मार्गेण प्रतिभानं संभवति इत्याश्रित्य उच्यते 'यदेव किंचन अनूचानोऽभ्यूहति आर्षं तद्भवति' इति। वैदिकवासनाजनितत्वात् वेद एव स भवति। **वा.** १।३।३।७ पृ. २०७.

* **शिष्टगर्हा**। ननु शिष्टगर्हया समापनमुक्तं पूर्वत्र (६।२।३)। शिष्टाश्च गृहेष्वसमाप्तेष्वपि न गर्हन्ते। तत्कथमिह समापनम्? सत्यमिह शिष्टगर्हा नास्ति, तथापि पूर्वाधिकरणविषये शिष्टगर्हा न स्वयं प्रमाणं किन्तु वेदानुमानद्वारा। **सोम.** ६।२।४.



**शिष्टगर्हाधिकरणम्।** काम्यं कर्म आरब्धं सत् समापनीयमेव॥

**प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानियम्यत्वात्। ६।२।३।१४॥**

**भाष्यम्**— 'प्रजाकामो यजेत' 'ग्रामकामो यजेत' इत्येवमादि कर्म समाम्नायते। तत्र संदेहः, किं प्रक्रान्तं नियोगतः समापनीयं उतेच्छया कार्यं हेयं वेति। किं प्राप्तम्? नियोगतः परिसमापयितव्यमिति। कुतः? एवं हि श्रूयते इदंकामो यजेतेति। एवं तस्याऽऽख्यातस्यार्थमुपदिशन्ति। उपक्रमप्रभृत्यपवर्गपर्यन्तमाहेति। उपक्रमादारभ्य यावत्परिसमाप्तिरित्येतावान् व्यापारविशेषस्तस्यार्थः, न यथा पाकस्त्याग इति। तत्र हि पाकसत्तामात्रं निर्दिश्यते, नाऽऽरभ्य परिसमापयितव्यमिति। एवं चाऽऽख्यातार्थं लौकिका अपि प्रतिपद्यन्ते। तत्र नाऽऽरम्भे पुरुषप्रयत्नश्चोद्यते इति गम्यते। यतश्चोदितं न नियोगतः आरभन्ते; नियोगतः पुनः परिसमापयन्ति। तेन नोभे आरम्भपरिसमाप्ती शब्दार्थः। किं तर्हि? परिसमाप्तिः शब्दार्थः। परिसमाप्त्यामर्थप्राप्तत्वादारम्भस्य। तस्मात्परिसमाप्तिः शब्दार्थ इति गम्यते। सा चेच्छब्दार्थः, सा कर्तव्यतया चोद्यते। आरम्भे नास्ति कर्तव्यतावचनम्। तेन न नियोगत आरम्भः। नियोगतस्तु परिसमाप्तिः। तेनोपक्रान्ते कर्मणि यदि वीयात्फलेच्छा, अवाप्नोति वा फलम्, तस्यामप्यवस्थायां कर्तव्यमेवोपक्रान्तस्य परिसमापनम्। कर्तव्यमिति चोद्यते यदिष्टफलम्। नन्वर्थिनो योऽर्थः, सोऽत्र कर्तव्यतयोच्यते। नैतदेवम्। वाक्यार्थो हि स भवति। यागस्य तु कर्तव्यता श्रुत्या गम्यते। तस्मात् ग्रामादिकामेन याग आरब्धः परिसमापनीयः। ग्रामादिकामनावचनं निमित्तत्वेन तदा भवति। निमित्ते चोत्पन्ने यत्कर्तव्यमित्युच्यते तद्विनष्टेऽपि निमित्ते कर्तव्यमेव। उपक्रान्तस्य समापनं कर्तव्यमिति चोद्यते। तद्विनष्टेऽपि निमित्ते कर्तव्यम्। नहि तद्विनष्टमनुत्पन्नं भवति। उत्पत्तिश्च निमित्तम्, न भावः। तस्माद्वीतायामपि फलेच्छायामुपक्रान्तं परिसमापयितव्यम्। क्रियाया हि निमित्तमारम्भः। सोऽपि परिसमाप्तेरिति।

**टुप्**— विगतायामपि फलेच्छायां समापनीयमेव कर्म। कुतः? आरम्भो निमित्तं कामश्च। तत्र यथा कामेऽनुष्ठातव्यम्, तथाऽपगते कामे आरम्भस्य विद्यमानत्वान्नैमित्तिकी समाप्तिः कर्तव्या। सा फले विध्रीयते। यद्यारम्भो विधीयेत, ततः समाप्तिरविहितत्वान्नावश्यं कर्तव्या। समाप्तौ विधीयमानायामर्थाक्षिप्तत्वादारम्भमध्यौ लभ्येते। तस्मात् समाप्तिः शास्त्रचोदितत्वात् वीतायामपि फलेच्छायां कार्या।

**फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते। १५॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। अनियमो वा। कस्मात्? फलार्थित्वात्। फलार्थिनः फलं चिकीर्षमाणस्योपायोऽयं विधीयते, न कर्तव्यता। सा हि विधीयमाना फलस्य वा यागस्य वा स्यात्। फलस्य न तावद्वक्तव्या। नहि यो यत् कामयते तस्य तत्कर्तव्यतोपदेष्टव्या। वेदैवासौ मयैतत्कर्तव्यमिति। उपायं तु न वेद, तमाकाङ्क्षते। इदमुपदिश्यते, याग उपाय इति, यागेन क्रियते इति। न च यागस्य कर्तव्यता। प्रत्यक्षविरोधात्। प्रत्यक्षस्तु क्लेशो यागः। यदि यागेनान्यस्य कर्तव्यता, तदा न विरोधः। यागकर्तव्यतायां फलं कल्प्यम्। न च कल्प्यमानस्य प्रमाणमस्ति। कर्तव्योपदेशश्च शक्यादिष्वर्थेषु भवति। तस्मान्न यागः कर्तव्यः। फलकामस्य यदिष्टं तत्कर्तव्यमनूद्य यथाप्राप्तं यागस्य साधनता विधीयते। तेन नावश्यं समापनीयं भवति। यथा अनुपक्रान्तं नावश्योपक्रमितव्यम्, एवमुपक्रान्तं नावश्यं समापयितव्यम्। यत्तु वाक्यार्थः श्रुत्या बाध्यते इति। यत्र श्रुत्यर्थो न संभवति, तत्र वाक्यार्थो गृह्यते इत्युक्तमेव। तस्मादनियमः।

**टुप्**— फलमात्मन इच्छतो याग उपायो विधीयते। वीतायामपि नासौ अभ्युपायो भवति। अभ्युपेयाभावात् कथमसौ क्रियते। न वाऽऽरम्भो निमित्तम्। यद्वृत्तसप्तम्योरभावात्। न च केनचिच्छब्देनारम्भो निर्दिश्यते। 'कर्तव्योपदेशश्च शक्येष्वर्थेषु भवति' इति यागः शक्यः कर्तुमित्यस्मिन्नर्थे कर्तव्यतावचनस्य कल्पना शक्या कर्तुम्। न तु त्वदीयो यागः कर्तव्य इति।

नियमो वा तन्निमित्तत्वात् कर्तुस्तत् कारणं स्यात् । १६ ॥

**भाष्यम्**— आरम्भो हि निमित्तं समाप्तेः । कथम् ? तत् कर्तुः कारणं स्यात् । किं कारणम् ? सत्यसंकल्पता । यो ह्यारब्धमेवंजातीयकं न समापयति, तं शिष्टा विगर्हन्ते, 'प्राक्रमिकोऽयम्, असंव्यवहार्यः' इति । शिष्टविगर्हणा च दोषः । तस्मादारभ्य समापयितव्यम् । आह, शिष्टाः पुनः किमर्थं विगर्हन्ते इति । उच्यते । विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति ।

**टुप्**— न स्वाच्छन्द्येन विगर्हन्ते । अशिष्टा एव ते स्युः, यदि विगर्हयेयुर्विना शास्त्रेण । ततः शिष्टाचारात्स्मृतिः, स्मृतेः श्रुतिः । तैत्तिरीयाणां चानन्यपरं वचनमस्ति ('देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यते' 'यदि वर्षेत्तावत्येव होतव्यम्' इत्यादि)। आरभ्य यजेतैवेति सिद्धम् ।

**शा**— काम्यं कर्म कामार्थेन प्रक्रान्तं वीतायां फलेच्छायां अवाप्ते वा फले किं नियोगतः समापनीयम्, नेति चिन्त्यते । '**तत्राभीप्सितसिद्ध्यर्थ साधनेषु प्रवर्तते । सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्तते ॥**' शिष्टविगर्हणं तु अनृतवादभ्रान्तिनिमित्तम् । तस्मात् असमापनीयम् । इति प्राप्ते, ब्रूमः । '**नहि संभावनामात्राद् भ्रान्तिः कल्पयितुं क्षमा । सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात् ॥ तथा च निन्दावचनं प्रायश्चित्तं च श्रूयते । तस्मात् क्रतुमुपक्रान्तं नियोगेन समापयेत् ॥**'

**सोम**—पूर्वत्र क्रिया फलोपायत्वेन कामिनो विधीयते इत्युक्तम् । तर्हि सिद्धे फले तदिच्छाविच्छेदे वा फलोपायानपेक्षणात् न क्रियाऽनुष्ठानं इति प्रत्यवस्थानात् **संगतिः** । निष्फलस्य कर्मणः अनुष्ठानासंभवात् वीतायां च स्वर्गादिफलेच्छायां तत्फलासंभवात् नित्यकर्मवत् पापक्षय एवात्रापि फलम् । स्पष्टं चेदं उत्पत्त्यधिकरणे टुप्टीकातन्त्ररत्नयोः । **सूत्रार्थस्तु**— प्रक्रमात् समाप्तिर्नियम्येत आरम्भस्य क्रियानिमित्तत्वात् क्रियायाश्च समाप्तिपर्यन्तत्वात् इति ।

**वि**— 'असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते । , आद्यः प्रयोजनाभावा, दन्त्यो निन्दादिसंश्रवात् ॥'

**भाट्ट**— काम्यं कर्म कामनायां प्रक्रान्तम्, वीतायां फलेच्छायामवाप्ते वा फले प्रयोजकाभावात् न समापनीयम् । इति प्राप्ते, सत्यं नास्ति फलरूपं प्रयोजकम्, तस्येच्छाविषयत्वेन प्रयोजकत्वात् । तथापि प्रारम्भः एव प्रयोगसमाप्तेर्निमित्तम् । न च तत्र प्रमाणाभावः । शिष्टविगर्हणस्यैव प्रमाणत्वात् । शिष्टा हि प्रारब्धापरिसमापने 'प्राक्रमिकोऽयम्' इति विगर्हन्ते । तेन शिष्टाचारमूलभूतश्रुतौ प्रारम्भे निमित्ते प्रयोगसमाप्तेर्नैमित्तिकत्वेन विधानात्तस्या आवश्यकत्वम् । न च वस्तुतः शास्त्रेण कामनाया एव प्रयोजकत्वावगमादाचारस्यास्य भ्रान्तिमूलकत्वमिति वाच्यम् । सर्वेषां शिष्टानां भ्रान्तिकल्पने प्रमाणाभावात्, 'देवताभ्यो वा एष आवृश्च्यते, यो यक्ष्ये इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत' इति प्रत्यक्षश्रुत्यैवाकरणे निन्दाप्रायश्चित्तयोर्विधानात्, प्रारम्भे निमित्ते प्रयोगसमाप्तेरावश्यकत्वावगमाच्च । अतः प्रयोजकान्तराभावेऽपि निमित्तवशात् समापनीयमेव । समापिते च तस्मिन् कारणसत्त्वात् फलमपि भवत्येव । एकफलप्राप्तावपि फलान्तरोपपत्तेः । न च कामनारूपाङ्गाभावाद्वैगुण्याशङ्का । तस्याः प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वमात्रत्वेनाङ्गत्वे प्रमाणाभावात् प्रवृत्तिपूर्वक्षणे तस्याः सत्त्वाच्च । अन्यथा समापनोत्तरमिच्छाऽपगमेऽपि फलानुत्पत्तिप्रसङ्गात् ।

**मण्डन**— 'अवश्यमारब्धसमापनं स्यात् ।'

**शंकर**— 'प्रारब्धस्य समापनम् ।'

* शास्त्रकृते देवताव्यापारे उपक्रम्यापरिसमाप्यमाने **शिष्टविगर्हणम्** । **भा.** ६।२।४।१६.

* **शिष्टाचारः** धर्मे प्रमाणम् । **मणि.** पृ. १३. * शिष्टाचारः प्रमाणं प्रत्यक्षानवगतेऽर्थे । **भा.** १।३।५।१०. * शिष्टाचारः मातुलकन्याविवाहादौ न प्रमाणम् । वि. १।३।५ वर्णकं २, * शिष्टाचारः वेदमूलकत्वात् प्रमाणम् । १।३।४ वर्णकं ३. * शिष्टाचारः । 'शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यत्र विरुध्यते । तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥' **वा.** १।३।३।७ पृ. २१६. * **शिष्टाचारेण** स्मृतिरेवानुमातुं शक्यते न तु श्रुतिः । वि. १।३।५ वर्णकं. २. * **शिष्टाचारात्** स्मृतिः, स्मृतेः श्रुतिः (अनुमीयते इति शेषः)। **टुप्**. ६।२।३।१५. * **शिष्टाचारस्य** प्रामाण्यमुक्तम्, नाशिष्टस्मृतेः । **भा.** १।३।५।१०. * **शिष्टाचाराणां** वसन्तोत्सवादीनां प्रामाण्यम् । **भाट्ट.** १।३।३ वर्णकं ३.

**शिष्ट्वा तु प्रतिषेधः स्यात् । १०।८।३।६॥**

प्रथमेऽधिकरणे नञः पर्युदासार्थकत्वमुक्तम्, द्वितीये अर्थवादार्थता उक्ता, अत्र प्रतिषेधार्थतामाह । तुशब्दः पूर्ववैलक्षण्यार्थः । यत्र कंचिदर्थं शिष्ट्वा विधाय पुनः नञा प्रतिषिध्यते तत्र नञर्थः प्रतिषेधः स्यात् । यथा 'अतिरात्रे षोडशिनं गृह्णाति' इति विधाय 'नातिरात्रे षोडशिनं गृह्णाति' इति । **के.**

* **शिष्याणाम्** । योऽपि प्रधानभूतः सोऽपि कदाचित्परार्थे वर्तते, यथा उपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्तते । **भा.** ३।१।२।२.

* **शिष्यप्रज्ञासंस्कारे** सूत्रकारादीनां प्रवर्तमानानां येनैव तदनुगुणं यत् कृतम्, तदेव ग्रहीतव्यं नासद्ग्रहः कर्तव्यः । **वा.** २।३।६।१६.

**शीतकिरणकरावलम्बनन्यायः** । अयं स्वशक्तिबहिर्भूतवस्तुग्रहणार्थसाहसकरणेऽवतरतीति स्पष्टः शङ्करजये । **साहस्री.** ८८९.

**शीतलाप्रस्तरन्यायः** । यथा शीतलाप्रस्तरः पूज्यते तोल्यतेऽपि जनैः एवंविधविषयविवक्षायां प्रवर्ततेऽयमिति । **साहस्री.** ९३०.

* **शीभं** स्वच्छन्दम् । **बाल.** पृ. ६१.

**शीर्षे सर्पो देशान्तरे वैद्य इति न्यायः** । उक्तं च –. 'उपरि घनं घनरटितं दूरे दयिता किमेतदापतितम् । हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥' इति । **साहस्री.** ६८२.

**शीलं हि विदुषां धनमिति न्यायः** । **साहस्री.** ९४६.

* 'तस्मात् श्रुतिस्मृती एव प्रमाणे धर्मगोचरे । **शीलाचारात्मतुष्टीनां** गोष्ठीहास्यादितुल्यता ॥' **वा.** १।३।३।७ पृ. २१५.

**शुकनलिकान्यायः** । अयं (महाभारते उद्योगपर्वणि ९६ अ. 'काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा । संतानं नर्तकं घोरमास्यमोदकमष्टमम् ॥' इति ४२ श्लोकटीकायामभिहितः । तथाहि, काकुदीकमित्यादयोऽष्टौ अस्त्रजातयः । येनाऽस्त्रेणाभिभूता रथगजादीनां कुक्षावेव शेरते, तत्काकुदीकं प्रस्वापकं नाम । येन शुकनलिकान्यायेन अभयेऽपि भयदर्शिनो हयरथादिपादेषु गाढं श्लिष्यन्ति तच्छुकं मोहनं नामेत्यादि । **साहस्री.** ७४७.

* 'शुक्तं न भक्षयेत्' अयं गुणप्रतिषेधः पुरुषार्थः । शुक्तं कालपरिवासजाम्लो रसः । **बाल.** पृ. ३१. * शुक्तं निष्ठुरं भाषणम् । **सु.** पृ. ३२२.

* **शुक्रः** ग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते । **वि.** २।३।१, * शुक्रः ग्रहः महाव्रते 'शुक्रं गृह्णाति' इति । १०।४।३. * 'शुक्रं यजमानोऽन्वारभते' अत्र यथा यजमानस्योपादीयमानता तेन लिङ्गमविवक्षितं तथा 'स्वर्गकामः' इत्यादौ कामानामुपादीयमानता नास्ति । **रत्न.** ६।२।६।२४ वर्णकं २.

* **शुक्राग्राणि** अहानि व्यूढे द्वादशाहे । **भा.** १०।५।२६।८८, * शुक्राग्रः तृतीयः स्वरसामा । १०।५।२५।८५, * 'शुक्राग्रो विषुवान्' इति तु कामाय भविष्यति । जगत्सामत्वात् तु आग्रयणाग्रत्वं नित्यम् । १०।५।१५।५८, * **शुक्राग्रान् गृह्णीयात्** अभिचरतः ज्योतिष्टोमे । १०।५।१९।६७, * शुक्राग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा सोमः स्यात् ज्योतिष्टोमे । १०।५।१५।५८.

* **शुक्राग्रत्वं** ज्योतिष्टोमे पृष्ठस्तोत्रे बृहत्सामत्वे सति कर्तव्यम् । वि. २।३।१, १०।५।१५. * शुक्राग्रत्वं द्वादशाहे त्र्यनीकायां द्वितीयाद्यहःसु (३, ६, ९) पुनः श्रुतं समानविध्यर्थमेव । १०।५।२३।७७–७८. * शुक्राग्रत्वं धाराग्रहेषु द्वादशाहे व्यूढे, तृतीये सप्त-

माष्टमयोश्चेति अहस्त्रये, समूढे च तृतीये षष्ठे नवमे च इत्यहस्त्रये । वि. १०।५।२३–२४. * **शुक्राग्रत्वं** बृहन्निमित्तकं ज्योतिष्टोमे । वि. १०।५।२३ । गर्गत्रिरात्रे च द्वितीये अहनि अनैमित्तिकमेव । भाट्ट. १०।५।२३.

* **शुक्रान्वारम्भादौ** नियोगतो गृहपतिकर्तृकत्वं सत्रे । १२।४।१३।३४. 'सत्रे शुक्रान्वारम्भादौ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शुक्रान्वारम्भणं** अस्थियज्ञे कर्तव्यं क्रत्वर्थत्वात् । १०।२।१९।५१.

* **शुक्रान्वारम्भणादीनां** एकतमयजमानकर्तृकत्वं सत्रे । १२।४।११।३२. 'सत्राहीनयोः शुक्रान्वारम्भादीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शुक्रादिकाम्यग्रहापकर्षेऽपि** तत्सादनापकर्षो नास्ति इति पक्षः । सादनस्याप्यपकर्षः इति सिद्धान्तः । सादनापकर्षेऽपि प्रदानस्य नापकर्षः । वि. १०।५।२१–२२.

* **शुक्रादिग्रहस्य** काम्याया अग्रताया विधौ ऐन्द्रवायवादिग्रहापेक्षया पूर्वं प्रतिकर्षः, न तु उपांशोः प्राक् । १०।५।२०।७०–७२. **मीको.** पृ. १३९ 'अग्रतायाः काम्याया विधौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * शुक्रादिग्रहस्य काम्याग्रताविधौ सर्वादितः प्रतिकर्षः । १०।५।१९।६७–६९. **मीको.** पृ. १४४४ 'काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शुक्रग्रहेण** ऐन्द्रवायवादिग्रहाणां समुच्चयः महाव्रते । १०।४।२।३–५. **मीको.** पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **शुक्रग्रहस्य** यजमानस्पर्शः अस्थियज्ञे मृताधिकारपक्षेऽपि न लुप्यते (कृत्वाचिन्ता)। वि. १०।२।१९.

* **शुक्रग्रहान्वारम्भः** सत्रे यजमानेनैकेनैव कार्यः न सर्वैः, नायं यजमानसंस्कारः। अहीनेऽप्येवम् । वि. १२।४।११.

* **शुक्रामन्थिग्रहप्रचारे** सवनमुखीयाः (अच्छावाकवर्जं नव) चमसाः ध्रुवचमसाः ऐन्द्रास्ते भवन्ति । भा. ३।२।११।२९.

* **'शुक्लानां चरुम्'** इत्यत्र शुक्लत्वस्य नियमविधिः द्रव्यद्वारा क्रियार्थत्वात् । भा. ४।२।१०।२५, * 'सौमारौद्रं घृते चरुं निर्वपेत् **शुक्लानां** व्रीहीणां ब्रह्मवर्चसकामः' । १०।७।१९।६४, * सौर्यं चरुं निर्वपेत् शुक्लानां व्रीहीणाम् । १०।७।१९।६४.

* **शुक्लारुणादिशब्दाः** ते कदाचिदेव षष्ठ्यन्तद्रव्यपदसंनिधानात् भावप्रत्ययरहिता गुणेषु वर्तन्ते । 'पटस्य शुक्लः' इति । नित्यं (तु) गुणोपसर्जनद्रव्यवचनाः । तथा चान्तरेणापि मत्वर्थीयं द्रव्यसामानाधिकरण्यं प्रतिपद्यन्ते यथा 'शुक्लः पटः' 'अरुणो घटः' इति । वा. ३।१।६।१२ पृ. ६८१.

* यथा भवतः समाने गुणशब्दत्वे **शुक्लादीनां** गुणोपसर्जनद्रव्यवचनत्वं न रूपादीनां एवं मम लक्षणा ; वा. ३।१।६।१२ पृ. ६८३.

* **शुक्लादिगुणो** यथा द्रव्येण विना न भवति इति अविनाभावात् द्रव्यं लक्षयति, नैवं 'क्षौमे वसानौ' इत्यत्र (आधाने) क्षौमं स्वतःसिद्धत्वात् मलिनत्वं न लक्षयति कार्पासादावपि सत्त्वात् व्यभिचारित्वाच्च । टुप्. ६।१।५।२२–२३.

* **शुक्लादिगुणविशिष्टव्रीहिभिः** सोमारौद्रादियागे श्रूयमाणैः प्राकृतयवानां बाधः । १०।७।१९।६४–७१. 'सोमारौद्रादियागे श्रूयमाणैः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शुक्लादिशब्दाः** उपसर्जनीभूतमर्थं वदन्ति न रूपादिशब्दा इति लिङ्गसंख्यासंबन्धासंकरः । वा. ३।१।६।१२ पृ. ६८५.

* **शुक्लत्वादिशब्दाश्च** भावप्रत्ययनिष्कृष्टविशेष्यभूतगुणवचनत्वात् गन्धवदेव नित्यं वैयधिकरण्येन संबध्यन्ते । वा. ३।१।६।१२ पृ. ६८४.

* **'शुचिना कर्म कर्तव्यम्'** इति कर्माङ्गतया शौचं विहितम् । सु. पृ. १३९४.



* **शुचिदेवताके** हविषि आग्नेयपुरोडाशधर्माणामतिदेशः । वि. ८।३।१.

* **शुचिदेवत्ये** आग्नेयस्य विध्यन्तः हविर्गणे । ८।३।१।१–२.

‡ **शुद्धोदलवणन्यायः** । उक्तं च महोपनिषदि– 'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा ॥ चोरापहार्यौ च यथा यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥' **साहस्री.** ८१९.

* **शुद्धक्रतुधर्मत्वं** नाम प्रतिषेधस्य, क्रतुगतवैगुण्यापादकक्रियाविषयत्वम् । भाट्ट. ३।४।८.

* **शुद्धत्वम्** । 'पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा ।' वा. १।३।२।४ पृ. १८९.

* **शुनःकर्णो** नाम अग्निष्टोमः । सर्वस्वारे द्रष्टव्यम् । तत्र यजमानमरणेऽपि कर्म समापयितव्यम् । भा. १०।२।२३।५७.

* **शुनकानां** नाराशंसो द्वितीयः प्रयाजः । भा. ६।६।१।१.

* **शुनकगोत्रीयाणां** नाराशंसो द्वितीयः प्रयाजः । वि. ६।६।१, वा. १।३।७।१७.

* **शुनकभृगुवसिष्ठानां** सत्राधिकारो नास्ति, विश्वामित्रसमानकल्पत्वाभावात् । वि. ६।६।४.

* **शुनासीरीयं** नाम चातुर्मास्येषु चतुर्थं पर्व । वि. ७।१।३ । तत्र 'एतद्ब्राह्मणान्येव पञ्च हवींषि' (तैब्रा. १।७।१) वैश्वदेवपर्वणि यानि आदितः पञ्च हवींषि तान्येव शुनासीरीयेऽपि आदितः पञ्च हवींषि– १ 'आग्नेयमष्टाकपालं निर्वपति, २ सौम्यं चरुम्, ३ सावित्रं द्वादशकपालम्, ४ सारस्वतं चरुम्, ५ पौष्णं चरुम्' (तैसं. १।८।२) इति । तदुत्तरं विशेषः – 'ऐन्द्राग्नं द्वादशकपालम्, वैश्वदेवं चरुम्, इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्, वायव्यं पयः, सौर्यमेककपालम्, द्वादशगवं सीरं दक्षिणा' (तैसं. १।८।७) इत्येकः कल्पः । कल्पान्तरं तु वैश्वदेवपर्वगतानि तान्येव पञ्च । तदुत्तरं च त्रीण्येव हवींषि न पूर्वकल्पवत् पञ्च । तानि च त्रीणि 'अग्नेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति ।... वायव्यं पयो भवति । ... सौर्यं एककपालो भवति' इति (तैब्रा. १।७।१) इति सायणभाष्यं (तैसं. १।८।७)। * **शुनासीरीये** पर्वणि नोत्तरवेदिमुपवपन्ति । भा. ७।३।८।२०.

* **'शुन्धध्वं दैव्याय कर्मणे'** इति मन्त्रः सांनाय्यपात्रशोधने विनियुज्यते, संनिधिपाठात् । वि. ३।३।५.

* **शुष्केष्टिः** । साङ्गप्रधानप्रयोगप्रक्रमे वैकल्पिकाङ्गानवधारणात् कस्यचित् प्रयोगस्य निरूपितैकरूपस्य उपक्रमपूर्वसमाप्त्यसिद्धेः 'इदं कुर्यामिदं वा' इति च प्रयोगमध्ये दोलायमानमतेः कालविक्षेपात् प्रयोगनैपुण्यासिद्धेः प्रयोगप्राशुभावार्थं शुष्केष्टिः क्रियते । सु. पृ. ८९६.

* **शुष्केष्टिन्यायः** । उपाध्यायाः दर्शेष्ट्यादि शिक्षयन्तः प्रत्यक्षाग्निहविरादिवर्जं इष्टिप्रयोगं छात्रान् शिक्षयन्ति सा पद्धतिः । हविरग्निराहित्यं शुष्कत्वम् । वि. ९।२।२.

* **शुष्केष्टिवत्** । तद्यथा, छात्रः शुष्केष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्मा भविताऽस्मीति । भा. ९।२।२।१३.

‡ **शूकरवाटिकान्यायः** । यथा शूकरः पुष्पितां पुष्पवाटिकां प्रविश्य तत्रत्यविचित्राणि सुरभीणि तरुफलपुष्पाणि परित्यज्य विष्ठामेव चिनुते, तथैव खलः सतां गुणसमुदायमुपेक्ष्य केवलच्छिद्रमन्वेषयतीति संक्षेपः । **साहस्री.** ५१८.

* **शूद्रः** । असौ तस्मै त्रैवर्णिकायोपनतः 'इमं शुश्रूषमाणो धर्मेण संभन्त्स्ये' इति । सोऽन्यस्मै दीयमानो नेच्छेदपि । न चानिच्छतस्तस्य स प्रभवति । न च बलात् स्वीकर्तव्यः । यस्त्वन्यायेन स्वीकुर्यात् स दद्यादपि । धर्मोपनतमात्रेण तु न शक्यो दातुम् । भा. ६।७।५।६.

‡ **शूद्रश्च धर्मशास्त्रत्वात् । ६।७।५।६॥**

विश्वजिति अध्वरे यथा अविद्यमानं न देयं तथा धर्मार्थमुपनतः शूद्रोऽपि न देयः इति चशब्दार्थः । 'इमं द्विजं शुश्रूषमाणो धर्मेण संभन्त्स्ये' इति हेतुना उपनतः शूद्रः विश्वजिति न देयः । धर्मशास्त्रत्वात्

धर्मशासनेन निमित्तेन उपनतत्वात् । गर्भदासस्तु देयः । के.

* शूद्रः चतुर्थवर्णः । सु. पृ. १७२. * शूद्रः धर्मार्थसेवकः सन् विश्वजिति न देयः । ६।७।५।६. मीको. पृ. ३६८८ ‘ विश्वजिति धर्मार्थसेवकः शूद्रो न देयः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * शूद्रो हि असमर्थत्वात् प्रतिषिद्धः आधाने । भा. ६।१।१२।४५. * यः शूद्रः विहितं स्वधर्ममवगन्तुं सेवते तस्मिन् विप्रादेः स्वत्वं नास्ति, इति सर्वस्वदाने तादृशः शूद्रो दातुं न शक्यते । वि. ६।७।५. * वेदाभावादसमर्थः शूद्रो यष्टुम् । भा. ६।१।७।३३. * शूद्राः द्विविधाः गर्भदासास्तद्भिन्नाश्चेति । तत्र गर्भदासाः ब्राह्मणादीनां स्वम् , तेषां दानादि कर्तुं शक्यते । वि. ६।७।५. * ‘ शूद्रेणाधिगतात् ( वेदात् ) वाऽपि धर्मज्ञानं न संमतम् । तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ! संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ ’ वा. १।३।३।७ पृ. २०३. * ‘ शूद्रेण नाध्येतव्यम् ’ इति प्रतिषिद्धमस्याध्ययनम् । भा. ६।१।७।३७, * शूद्रात् अन्यस्माद्वा पापकर्मणः कृतः प्रतिग्रहः दोषाय ( भवति ) । ३।४।१०।२८. * शूद्रस्य अध्ययनं नास्ति किंतु त्रैवर्णिकानामेव । वि. ६।१।७. * शूद्रस्य अध्ययनविधिसिद्धज्ञानाभावात् आधानसिद्धाग्न्यभावाच्च न यागादौ अधिकारः । मीन्या. * शूद्रस्यापि विशेषाधिकाररहितेषु सर्वेषु वैदिककर्मसु अधिकार इति बादरिमतम् ( परंतु नासौ सिद्धान्तः ) । भा. ६।१।७।२७, * शूद्रस्य आधाने श्रुतिर्नास्ति इति अनग्निः शूद्रः असमर्थः अग्निहोत्रादि निर्वर्तयितुम् । ६।१।७।२६. * शूद्रस्य द्रव्यार्जने सेवादिकमेव उपायः । उपायान्तरात् तु प्रत्यवायः । वि. ४।१।२ वर्णकं ४. * शूद्रस्य न श्रुतं वेदाध्ययनं अतः अवेदत्वात् असमर्थः शूद्रः ( वैदिके कर्मणि ) । भा. ६।१।७।३५. * शूद्रस्य वैदिके कर्मणि नाधिकारः । ६।१।७।२५-३८. मीको. पृ. ५०४ ‘ अपशूद्राधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * मस्तु शूद्रस्य ( व्रतम् ) । भा. ६।१।७।३१.

* शूद्रादिः कथंचित् अनिच्छन् कार्यते ( शमिता इति शेषः ) । वा. ३।७।१३।२९, * शूद्रादिभ्यः लौकिकेऽपि उपादाने, दुष्यत्यपि प्रतिग्रहीतरि, दातुः तद्द्वारेण अदुष्टत्वम् । ३।४।१०।२८ पृ. ९५९. * शूद्रादेः उपनीतकर्तृकाध्ययनजन्यार्थज्ञानरूपाङ्गसंपादनासमर्थस्य क्रतुषु नाधिकारः । मणि. पृ. ४. * शूद्रादीनां उपनयनाभावात् विवाहावधि अभ्युत्थानादीनामाचाराणां अधिकारः, तस्य तत्स्थानत्वेन विधानात् । भाट्ट.६।२।६. * शूद्रादीनां ‘ श्रावयेत् चतुरो वर्णान् ’ इति पुराणश्रवणविधिना तज्जन्यार्थज्ञानसत्त्वात् मुक्तिसिद्धेः । मणि. पृ. ५८.

* ‘ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ’ ( दर्भैः ) । अयं प्रकृतौ विकृतौ उभयभिन्ने च कर्मणि समानविधानः निषेधः । बाल. पृ. ३५.

* यत्तु धर्मशास्त्रातिक्रमेण क्रियते न तस्य निमित्तत्वम् । यथा शूद्रकृतस्य आधानस्य न आहवनीयादिप्रयोगनिमित्तत्वम् । वा. २।३।२।३ पृ. ५८२.

* शूद्रसमीपे नाध्येतव्यम् । ‘ पद्यु वा एतत् श्मशानं यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येयम् ’ इति । भा. ६।१।७।३८.

* शून्यवादः । अर्थज्ञानयोः आकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नं अर्थरूपं नाम न किंचिदस्ति इति पश्यामः इति । क्षणिका च बुद्धिः उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरं प्रदीपवत् इति । तन्न । भा. ( वृत्तिग्रन्थः ) १।१।५।५ पृ. ३१. * शून्यवादः । एवं परोक्तानुमाने प्रत्यक्षविरोधेन निराकृते अधुना प्रत्यक्षस्य बहिःप्रवृत्तौ सामर्थ्यमेव नास्ति इत्येवं पूर्वोक्ताक्षेपेण स एव शून्यवादी पुनः प्रत्यवतिष्ठते । तन्निरासार्थः उत्तरो ग्रन्थः । वैद्यनाथः पृ. ३०-३१.

‘ एवमुक्तेऽनुमानस्य ज्ञानमाश्रित्य दूषणे । ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥ ’ श्लोवा. १ । प्रत्यक्षादिज्ञानविरोधेन हि प्राक् अनुमानं निरस्तम् । तस्य च बहिः प्रवर्तितुमशक्तेः न तद्विरोधोऽनुमानस्य



संभवति इति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थानं इति । ( शून्यवादे ) रत्नाकरः.

भाष्यम्— शून्यस्तु कथम् । ( इदं नीलं इत्यादिरूपेण बहिरवभासमानस्य कथं ज्ञानाकारत्वं इति शून्यवादिनं पृच्छति ) । अर्थज्ञानयोः आकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतः तद्भिन्नं अर्थरूपं नाम न किञ्चिदस्ति इति पश्यामः ।

स्यादेतदेवं यदि अर्थाकारा बुद्धिः स्यात् । निराकारा तु नो बुद्धिः, आकारवान् बाह्योऽर्थः । स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षबुद्धिः, न बुद्ध्यन्तरविषया । क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यते इति । ( शून्यवादी आह- ) उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति च अर्थान्तरं प्रदीपवदिति यदुच्यते, ( सिद्धान्ती आह- ) तन्न । न हि अज्ञातेऽर्थे कश्चित् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति ( ज्ञाततालिङ्गकानुमानात् ) । तत्र यौगपद्यं अनुपपन्नम् ( अर्थ-ज्ञानयोः ग्रहणयौगपद्यम् ) । ( शून्यवादी आह- ) ननु उत्पन्नायामेव बुद्धौ ज्ञातोऽर्थः इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चात् ज्ञातोऽर्थः । ( सिद्धान्ती स्वाशयमाह- ) सत्यम् , पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतत् यत् ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते । न च अर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः, अव्यपदेश्यं च न प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः ।

अपि च कामं एकरूपत्वे बुद्धेरेवाभावः, नार्थस्य प्रत्यक्षस्य सतः । न च ऐकरूप्यम् , अनाकारामेव हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मात् अर्थालम्बनः प्रत्ययः ।

अपि च नियतनिमित्तः तन्तुष्वेव उपादीयमानेषु पटप्रत्ययः । इतरथा तन्त्वादानेऽपि कदाचित् घटबुद्धिः अविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् । पृ. ३१-३५.

एवं प्रत्यक्षपरीक्षणे क्रियमाणे तस्य बहिःप्रवृत्तौ सामर्थ्यस्य सत्त्वात् तादृशबहिर्विषयविषयकप्रत्यक्षविरुद्धस्य बौद्धाभिमतस्य निरालम्बनत्वानुमानस्यैव अनुपपत्तेः यत्र प्रत्यये दुष्टं करणम् , उत्तरकाले बाधकप्रत्ययो वा, तादृशप्रत्ययस्य असमीचीनत्वेऽपि यत्र तदुभयं नास्ति तादृशः समीचीनः प्रत्यक्षात्मकः प्रत्ययो न व्यभिचरत्येव इति न परीक्षितव्यमेव प्रत्यक्षम् । वैद्यनाथः पृ. ३५.

बृहती-- ननु च ‘ शून्यस्तु ’ इति सैव निरालम्बनता उपन्यस्ता प्रत्ययस्य अर्थशून्यतां वदता । निरस्ता च सा शुक्तिकारजतज्ञानतुल्यताभिधानेन । ( उत्तरम्- ) स एवायं निरासः पुनराक्षिप्यते । कया युक्त्या ? संवेद्यविषयत्वात् संविदः । सा च आत्मनो वा ( धर्मः ), बुद्धेर्वा ( मनसः ), ज्ञाने एव वा ( अवस्थितो धर्मः ) । स एवास्या विषयो युक्तः । तस्मात् सा संवित् । एवं च स एव संवेद्यः इति प्राप्नोति । तस्मात् न विषयान्तरं संवेदयितुं क्षमः ( आश्रयात् ) । शब्दस्पर्शरूपरसगन्धात्मकता विज्ञानस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या । किं ‘ अर्थज्ञानयोराकारभेदं नोपलभामहे ’ इति ज्ञानशब्दः प्रदर्शनार्थ एवाभिप्रेतः ? न । संविदाधारे हि संवेद्ये ज्ञानमेवावशिष्यते, बुद्ध्यात्मनोः शब्दादितुल्यत्वात् । ज्ञानाविनाभूता च संवित् । सुषुप्त्यवस्थायां संविदः आत्मनि बुद्धौ चादर्शनात् । ज्ञानोपसंहृतिर्हि स्वापः । तदिदमालोच्योक्तम् ‘ अर्थज्ञानयोराकारभेदं नोपलभामहे ’ इति ।

क्व पुनरिदं दृष्टं विषय एव संविदा संवेद्यते इति । संवेद्यतयैव हि संवेद्यतां अवगच्छामः, न विषयतया । ( उत्तरम्-- ) केन चोक्तं न संवेद्यतया संवेद्यता अवगम्यते इति । किन्तु संविदः प्रत्यक्षत्वात् तस्याश्च ज्ञानात्मकत्वात् शब्दादिरूपता तस्यैवेति मन्यामहे । को हि नाम द्वयोः प्रत्यक्षतामवकल्पयति संविदः शब्दादेश्च । तस्मात् संविद्रूपमेव इदं शब्दादिजातं इति स्थितिः । न बाह्यं किंचन अस्तीति ।

ननु च अयथार्था संवित् प्राप्नोति । शब्दाद्याकारत्वे

हि संविदो ग्राह्यग्राहकसंवेदनं नोपपद्यते । तस्मात् कल्पना सा इति कल्पनीयम् । न च सर्वलोकावगम्योऽर्थः कल्पना इति युक्तम् । न च अर्थान्तरानुसंधानानुविद्धं क्वचित् कल्पनाशब्दामिलपनीयं लोके दृष्टम् । तस्माद्वरं उभयोः प्रत्यक्षता, न पुनरवगतेरपलापः । संविदेव हि तदा हीयेत, कस्येयं शब्दादिरूपता । (अत्र समाधिः–) युक्तं यदि ग्राह्यग्राहकसंवेदनं आकारान्तरेण स्यात् । न च आकारान्तरमुपलभामहे, नीलाद्याकारमेव हि उभयं प्रतिभाति । एकाकारं च उभयप्रतिभानम्, किमन्यदतः प्रतिभानात् ? तदिदमुक्तम् 'अर्थज्ञानयोराकारमेदं नोपलभामहे' इति । 'प्रत्यक्षा च नो बुद्धिः' इति एतदुक्तं भवति, प्रत्यक्षा च नः संवित् इति । प्रत्यक्षश्चायं नीलाद्याकारः । अतस्तदाकारेयं संवित् उभयथा प्रतिभाति । तस्मात् अर्थशून्या इयं संवित् इति सिद्धम् । अतः तत्संप्रयोगात् तत्संप्रत्ययः इति प्रलापोऽयम् । किंनिमित्तं पुनः उभयथा प्रतिभानम् ? आकारमेदं नोपलभामहे इति प्रत्युक्तम् । प्रतिभानकारणं तु प्रतिभानदर्शनादेव अस्तीत्यवगन्तव्यम् । सा चेयं वासना अनादिकालीना इत्युक्तं शून्यवादिभिः ।

(ऋजु. पृ. ६०)— अत्रायं पूर्वपक्षसंक्षेपः । संवित् तावत् प्रत्यक्षा । अत्र यदि ज्ञानं अपरं अर्थश्चापरः अभ्युपगम्येत, तदा अत्र त्रयाणां आकाराः त्रयो भवेयुः । एकश्चायमाकारो नीलादिः प्रथते । स चेदर्थस्य ज्ञानस्य वा आश्रीयेत, तदा निराकारा संवित् अप्रत्यक्षा स्यात् । तदप्रत्यक्षत्वे च अर्थो ज्ञानं च द्वयं असंवेद्यमापद्येत । संविदि चेदयमाकारो निवेशितः, अपह्नुते तर्हि भवेतां अर्थज्ञाने । तयोराकारविरहे संवेद्यत्वानुपपत्तेः । असंवेद्यस्य च दुरभ्युपगमा सत्ता इति । )

( सिद्धान्तमुपक्रमते– ) उच्यते । उभयत्र प्रतिभानं नीलपीतादौ असिद्धम्, ग्राह्यतयैव तत् प्रतिभाति, न ग्राहकतया । किंतु ग्राहकम्, ग्राहकं इत्येव मनुते, न नीलं पीतमिति वा । तदिदमुक्तम् 'स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते' इति । 'अर्थविषया हि प्रत्यक्षा बुद्धिः न बुद्धिविषया' इति ग्राह्यतयैव रूपप्रतिभानं दर्शयति ग्राहकप्रतिभानं तु न रूपविषयम्, किं तर्हि ? ज्ञानविषयम् ।

ननु च रूपान्तरमेव नोपपद्यते इत्युक्तम् । कथमत्र विषयान्तरोपन्यासः । नहि प्रत्यक्षवादिन एष दोषः । आनुमानिकज्ञानवादिनस्तु नायं पर्यनुयोगः । नापि अनुमानात् रूपग्रहणम् । सन्मात्रग्राहि अनुमानं भवति ।

ननु च संवित् प्रत्यक्षा इत्युक्तम् । अन्या च संवित्, अन्यत् संवेद्यम् ( इति भवान् मन्यते ) । द्वयोरपि प्रत्यक्षत्वे रूपद्वयोपलब्ध्या भवितव्यम् । न चासावस्ति । तस्मात् स एवायं विषयापलापो न्याय्यतां प्रतिपद्यते । ( उच्यते– ) अविवेकोऽयमायुष्मतः । नहि फले रूपान्तरता इष्यते । रूपान्तरसंवित्तौ हि फलद्वयापत्तिः । एकसंवेद्यविषयैव हि एका संवित् । न सा वेद्यद्वयविषया । किं असंवेद्यैव संवित् ? न ब्रूमो न संवेद्या संविदिति । संवित्तयैव हि संवित् संवेद्या, न संवेद्यतया । केयं वाचोयुक्तिः, 'संवेद्या, न संवेद्या' इति । इयमियं वाचोयुक्तिः, नास्याः कर्मभावो विद्यते इत्यर्थः । कर्म च संवेद्यामिधेयम्, न संवित् । तस्मात् न पृथक् संवेद्यतया ग्रहीतुं शक्यते । न च असंवेद्यैव संवित्, तन्मूलत्वात् सर्वभावानां संवेद्यभावस्य । किं तर्हि अत्रानुमानिकम् ? फलमेव हि प्रमाणं इति प्रमाणविदो मन्यन्ते । किमिति मन्यन्ते, न पुनः फलमेवेति स्थितोऽभिप्रायः ? ( उत्तरम्– ) एवं हि लौकिको व्यवहारः । किमिदं लौकिको व्यवहार इति ? आकारद्वयं हि लौकिकाः प्रतिपद्यन्ते इत्यर्थः । सिद्धं तर्हि अर्थद्वयं विज्ञानस्य असंवेद्यत्वात्, अर्थस्य च संवेद्यत्वात् ।

किमसंवेद्यमेव विज्ञानम् ? बाढमसंवेद्यम्, न तु अप्रमेयम् । कः पुनः प्रमेयसंवेद्ययोर्विशेषः ? यत्र हि विषयस्य स्वरूपं परिच्छिद्यते तत् संवेद्यमित्युच्यते । अतः संवेदनं प्रत्यक्षं इति प्रमाणविदः । असंवेदना च प्रमितिज्ञाने आकारान्तराग्रहणात् ( स्वरूपान्तराग्रहणात् ज्ञानं अप्रत्यक्षम्, अनुमेयत्वाच्च प्रमेयम् ) । तस्मात् ( स्वरूपाग्रहणात् ) ज्ञानं प्रत्यक्षं इति अयुक्तम् । क्षणिकत्वाच्चास्य ( स्वरसभङ्गुरत्वात् ) प्रत्यक्षता न संभवति



प्रमाणफलयोरसांप्रतत्वात् । तदिदमाह– 'क्षणिका हि सा, न बुद्ध्यन्तरकालं अवस्थास्यते' इति ।

अथायममिप्रायः, स्वयं प्रमाणरूपत्वात् न प्रमाणान्तरमपेक्षते ज्ञानं इति । तदुक्तम् 'उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येत' इति । सत्यम्, प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ ( अर्थपरिच्छेदे । किंतु स्वरूपपरिच्छेदे प्रमाणमपि प्रमाणान्तरमपेक्षते एव ) । न च वयं प्रमाणतयैव विजानीमः, तद्धेतुत्वात् विज्ञानस्य ( प्रतिपत्तिहेतुत्वात् ) । न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि वदामः । किंतु तदवस्था तावदस्ति इति अनुमानस्य विषयः । नहि असत्यामवस्थायां अवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् । तदिदमुक्तम् 'नहि अज्ञातेऽर्थे कश्चित् बुद्धिमुपलभते, ज्ञाते चानुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम्' इति । ननु च ज्ञातमिति प्रमेयमनुस्मरन्ति प्रमाणविदः । सत्यम्, ज्ञातं स्मरन्ति, न तु ज्ञातमिति (ज्ञातं प्रमेयं स्वरूपेण स्मरन्ति, न पुनर्ज्ञानविशिष्टम्) । तदुक्तम् 'सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते' इति । ननु चेदं लोकविरुद्धम्, ज्ञातो ह्यर्थ इति ( स्मरणं ) व्यपदिशन्ति, न घटोऽयमिति । सत्यं विरुद्धं यदि सर्वदैव व्यपदेशः स्यात् । 'भवति हि कदाचित् एतत्, यत् ज्ञातोऽर्थः सन् अज्ञात इत्युच्यते ( यदि प्रत्यक्षं ज्ञानं स्यात् तदा सर्वदैव ज्ञातत्वात् ज्ञानस्य ज्ञात इत्येव व्यपदेशः स्यात् । आनुमानिकत्वे तु ज्ञानस्य कदाचित् लिङ्गाननुसंधानात् तदज्ञात्वा भवेत् अव्यपदेशः । कदाचित् लिङ्गानुसंधानात् ज्ञानं ज्ञात्वा भवेत् व्यपदेशः इत्युपपन्नम् ) । यत्र हि ज्ञात इति स्मृतिः सा प्रमाणद्वयव्यापारजा । तस्मात् विवेकशून्यमिदं वचः 'स्मृतेरुत्तरकालं च' इति ( दिङ्नागस्य वचः 'स्मृतेरुत्तरकालं च न ह्यसावविभावितः' इति ) ।

किंच उभयोः ( अर्थज्ञानयोः ) प्रत्यक्षत्वे अर्थेन ज्ञानस्य व्यपदेशो नोपपद्यते रूपस्पर्शयोरिव । न च अर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षम् । अर्थविषयं हि तत् । अतः सिद्धं आनुमानिकत्वं बुद्धेः फलतः । यश्चासौ अविवेकः फलप्रमेययोः प्रमाणान्तराभावात् अतद्विषयो युक्तः । अतः प्रमाणापलाप एव न्याय्यो न प्रमेयापलापः । 'अतः काममेकरूपत्वे बुद्धेरेवाभावो न तु अर्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यम् । निराकारामेव हि बुद्धिमनुमिमीमहे, साकारं च अर्थं प्रत्यक्षमवगच्छामः । तस्मात् अर्थालम्बनः प्रत्ययः' ।

किं पुनः कारणम्, तुल्ये फलापलापे प्रमाणस्यैवापलापः, न तु अर्थस्य प्रमेयस्य, उभयोः फलायत्तत्वात् । मैवम् । उत्पत्तौ हि उभयोः फलायत्तता, न पुनः प्रमितौ । (प्रमाणप्रमेययोः करणकर्मकारकयोः फलोत्पत्तिनिबन्धना कारकत्वोत्पत्तिः । प्रमितिस्तु प्रमेयस्य प्रत्यक्षतः फलनिरपेक्षा । प्रमाणस्य च आनुमानिकत्वात् फलायत्तैवेति ) । कस्योत्पत्तौ ? ज्ञापके हि फले, प्रमेयमेव ज्ञेयं नोत्पाद्यम् । प्रमाणायत्ता च प्रमितिः इति उत्पत्तौ इत्यसंबद्धम् । ( उच्यते– ) प्रमितौ हि क्रियाकारकत्वमङ्गीकृत्य उत्पत्तिरुक्ता, नावगम्यमानताम् । ज्ञाने तु अवगम्यमानताऽपि फलायत्तैवेति युक्तम् ।

किंच ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावः, न ज्ञानस्य ज्ञानान्तरेण । अतः तन्तुज्ञानोत्पादेऽपि पटज्ञानोत्पादो नोपपद्यते । 'दृष्टश्च नियतनिमित्तः तन्तुष्वेव उपादीयमानेषु पटप्रत्ययः । इतरथा हि तन्तूपादानेऽपि कदाचित् घटबुद्धिः अविकलेन्द्रियस्य स्यात्' । तस्मान्न वासनानिबन्धनमेवेदं ज्ञानजालम् । किं तर्हि ? अर्थनिबन्धनं इति स्थितम् । अत उपपन्नं प्रमाणलक्षणाभिधानम् ( बहिरर्थस्य सद्भावात् इन्द्रियार्थसंनिकर्षस्य संभवात् प्रत्यक्षस्य प्रमाणस्य लक्षणमिति ) । बृहती. पृ. ५७–६९.

* शून्यवादे संविद्गताः नीलाद्याकाराः सन्ति । बाल. पृ. ६.

* शून्यवाददूषणमपि औपत्तिकसूत्रे एव भाष्ये उक्तम् । बाल. पृ. ६.

* शून्यवादी नामरूपप्रपञ्चस्य असद्भावं प्रतिजानीते । तस्य प्रत्यक्षविरोधः । रत्नाकरः श्लोवा. ५९ अनुमानपरिच्छेदे पृ. ३६५. * शून्यवादी ( विज्ञान-

मात्रवादी योगाचारः )। शून्यवादी तु न ज्ञानातिरिक्तो बाह्यो विषयोऽस्ति । ज्ञानस्यैवाकारो विषयो ज्ञानस्वरूपात्मक एव, स्वप्नज्ञानवत् । तेन सविकल्पकं न प्रमा । तथाहि, नीलादेः किं ज्ञानविषयत्वम् ? न तावत् पदार्थत्वं सत्तावत्त्वं वा, नीलज्ञाने पीतादेरपि विषयत्वप्रसङ्गात् । न वा ज्ञानहेतुत्वम्, इन्द्रियादेरपि तत्त्वप्रसङ्गात् । नापि ज्ञानजनकसंनिकर्षाश्रयत्वम्, रूपज्ञाने स्पर्शस्य विषयत्वापत्तेः । नापि सादृश्यविशिष्टहेतुत्वम्, विशेषणज्ञानस्य ज्ञानत्वेन सादृश्यात् हेतुत्वाच्च विशिष्टज्ञाने विषयत्वप्रसङ्गात् ।

न च अत्यन्तसादृश्यं विवक्षितम्, तच्च न ज्ञानत्वेन, तस्य साधारणत्वात् । किंतु एकज्ञानविषयत्वेन । तच्च त्रिपुटीप्रत्यक्षाङ्गीकारेण ज्ञाननीलयोः एकज्ञानविषयत्वात् हेतुत्वाच्च उपपन्नं विषयत्वं इति वाच्यम् । धारावाहिकज्ञानेषु पूर्वज्ञानस्य सादृश्येन उत्तरज्ञाने विषयत्वापत्तेः । ज्ञानस्य स्वस्मिन् स्वस्य हेतुत्वासंभवेन विषयत्वानुपपत्तेश्च ।

न च ज्ञाने नीलाद्याकारतासमर्पकत्वे सति हेतुत्वम्, तच्च जपाकुसुमस्येव संनिधिना इति वाच्यम् । विषयस्य नीलाद्याकारतासमर्पकत्वे मानाभावात् ।

ज्ञानवैचित्र्यं मानं इति चेत्, न, अर्थं विनाऽपि स्वप्नज्ञानवैचित्र्यदर्शनात् ।

नापि ज्ञानजन्योपादानहानादिव्यवहारवत्त्वम् ( ज्ञानविषयत्वं), घटज्ञाने घटद्व्यणुकानां विषयत्वापत्तेः, सुखादीनां स्वज्ञानाविषयत्वापत्तेश्च । न च सुखादिषु 'सुखी' इत्यादिशब्दप्रयोगो व्यवहार इति वाच्यम् । शब्दप्रयोगस्य ज्ञानविषयनिरूपकत्वाभावात् । ज्ञानविषयनिरूपणपूर्वकत्वेन शब्दप्रयोगस्य, तेन विषयनिरूपणे इतरेतराश्रयापत्तिः ।

नापि ज्ञानजन्यज्ञाततावत्त्वं तत्, भूतभविष्यतोः तदसंभवात्, तत्र मानाभावाच्च ।

अतो ज्ञानात्मकमेव तत् ( विषयत्वम् )।

किंच विषयो ज्ञानात्मकः, ज्ञानेन सह उपलभ्यमानत्वात्, ज्ञानत्ववत् । सहानुपलभ्यमानयोर्घटपटयोः भेददर्शनं अनुकूलतर्कः ।

न च 'घटोऽयं' इति ज्ञानस्य ज्ञानाविषयत्वेन असिद्धः सहोपलम्भः इति वाच्यम् । उत्तरकालं 'ज्ञातो घटः' इति ज्ञानघटयोः स्मरणदर्शनेन पूर्वानुभवस्य आवश्यकतया 'घटोऽयम्' इति ज्ञानस्य ज्ञानविषयकत्वकल्पनात् ।

स्वप्नादिज्ञानानां साकारत्वमिव सर्वेषां साकारत्वेन ज्ञानातिरिक्तविषयाभावः इति स्वमतं परिष्करोति । ( वस्तुतो नेदं मतं शून्यवादिनः । किंतु विज्ञानमात्रवादिनः योगाचारः )।

तच्चिन्त्यम् । नीलादेर्ज्ञानात्मकत्वे ज्ञानस्य स्वविषयाकारत्वे मानाभावात् । उक्तानुमानस्य अप्रयोजकत्वात् । समूहालम्बने सहोपलभ्यमानयोर्घटपटयोः अभेदाभावेन व्यभिचाराच्च ।

किंच न ज्ञानात्मको विषयः । ज्ञानाभावविषयके ज्ञाने ज्ञानाभावस्य ज्ञानात्मकत्वासंभवात्, 'तदेवेदं' इति स्थायित्वविषयके ज्ञाने स्थायित्वस्य क्षणिकज्ञानात्मकत्वासंभवात्, 'इदं नानाकारं' इति चित्रबुद्धौ अनेकाकारस्य एकस्मिन् असंभवाच्च ।

किंच विषयस्य ज्ञानात्मकत्वे ज्ञानात्मकत्वज्ञानस्य अपरोक्षत्वनियमेन अनुमितिविषयवह्न्यादेः परोक्षत्वानुपपत्तिः ।

किंच अतीतकालसंबन्धानुमानविषयस्य अतीतकालसंबन्धस्य वर्तमानज्ञानात्मकत्वानुपपत्तिः ।

न च तत्रातीतं ज्ञानमेव विषय इति वाच्यम् । अतीतत्वस्य ज्ञानाकारत्वासंभवात् ।

अतः अवश्यं ज्ञानभिन्नो विषयो वाच्यः । तन्निष्ठविषयत्वं ज्ञानजन्यफलभागित्वं नित्यमतिरिक्तं वा इत्युक्तं प्राक् ।

न च स्वप्नदृष्टान्तो युज्यते, तस्यापि बाह्यविषयत्वात् ।

तेन अनुभूयमानानां बाह्यार्थानां अपलापासंभवात् तद्विषयकज्ञाने न मिथ्यात्वम् । किंतु दुष्टकारणजन्यं बाधितम् । **मणि.** पृ. २४–२६.



**शूरा हि प्रणतिप्रिया इति न्यायः** । स्पष्टः । **साहस्री.** ९८२.

* **शूर्पं** क्वचित् होमसाधनं ( यथा विवाहे लाजहोमे ) 'शूर्पेण विविनक्ति' इति च । **वि.** १।२।३, * शूर्पं यज्ञायुधम् । 'यज्ञायुधानि संभरति' 'शूर्पेण विविनक्ति' इति । ३।१।५. * शूर्पं राजसूये नानाबीजेष्टौ तन्त्रेणैकम् । **टुप्.** ५।२।७।१३. * 'शूर्पेण जुहोति' अत्र न शूर्पप्रयुक्तो होमः किंत्वपूर्वप्रयुक्तः चातुर्मास्यवरुणप्रघासेषु । **भा.** ९।१।५।११–१९. * 'शूर्पेण जुहोति, तेन हि अन्नं क्रियते' इत्यादेः हेतुवन्निगदानां किं स्तुतिः कार्यं उत हेतुः इति संदेहे स्तुतिरेव कार्यं इति सिद्धान्तः । हेतुवन्निगदाधिकरणम् । १।२।३। २६–३०. * 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' एतादृशा अर्थवादा अपि स्तावका एवेति धर्मे प्रमाणम् । **वि.** १।२।३.

* **शूर्पाधिकरणम्** । १।२।३।२६–३०. 'हेतुवन्निगदाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**शूर्पन्यायः** । यथा शूर्पो हि बुसादि त्यक्त्वा शुद्धमन्नमवशोषयति, तथा शिष्यो हि गुरूणां गुणानेव गृह्णाति, न तु दोषान् । **साहस्री.** ३२१. * शूर्पन्यायः । यः सतां गुणानेव गृह्णाति स एव शिष्यत्वेन स्वीकार्यः । शूर्पं हि बुसादि त्यक्त्वा शुद्धमेव धान्यमवशेषयति । **संग्रहः.**

* **शूलस्तन्त्रं** अग्नीषोमीयादिपशुत्रयार्थः ! **संकर्ष.** २।२।१. **मीको.** पृ. १११ 'अग्नीषोमीयादिपशुत्रयार्थः शूलस्तन्त्रम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **शूलस्य** तन्त्रं ऐकादशिनेषु पशुषु सजातीयेषु । ११।४।९। ३४–३९. **मीको.** पृ. १३०६ 'ऐकादशिनेषु पशुषु॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शूल–कुम्भी**–वपाश्रपणीनां तन्त्रं न नानाजातीयेषु पशुषु पाकवैषम्यात् । ११।४।१०।४०–४१. **मीको.** पृ. १९३९ 'तन्त्रं न कुम्भीशूलवपाश्रपणीनां॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * शूल–कुम्भी–वपाश्रपणीनां तन्त्रं वाजपेयगतप्राजापत्यपश्वङ्गादिश्रपणार्थम् । ११।४।८।३३. **मीको.** पृ. १९३५ 'तन्त्रं कुम्भीशूलवपाश्रपणीनां॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शृङ्गग्राहिका** । इरापदस्य दध्यादिवल्लोकप्रसिद्धस्वभावस्य उत्पत्तिविध्यनपेक्षतया गानविनियोगपरत्वस्यैव युक्तत्वात् । अस्तु वा उत्पत्त्यपेक्षा तथापि शृङ्गग्राहिकया विनियोगबलादेव उत्पत्तेरपि सिद्धेः । **सोम.** ९।१।१६ .

**शृङ्गग्राहिकान्यायः** । शृगस्य ग्रहणं यस्यां क्रियायां सा शृङ्गग्राहिका । यत्रैकाङ्गलक्षणेनैवाङ्गी लक्ष्यते, तत्रायं प्रवर्तते । यथा– गोव्रजे का मदीया गौरिति गोपः पृष्टः, शृङ्गं गृहीत्वा गां प्रदर्शयति, इयं ते गौरिति । यथा च महाभारते (उद्योगपर्व ४५ अ॰ ९ श्लो॰ टी॰ ) दमविरोधिन एव प्रातिकूल्यादयो मददोषत्वेन सूचिता अपि शृङ्गग्राहिकया प्रकर्षेण विधिमुखेन न प्रोक्ता इत्यर्थं इत्युक्तम् । **साहस्री.** ७४८.

* **शृतम्** । धर्माधिकं पयः शृतमित्युच्यते । श्रपणेन च सहचरिता धर्माः यस्मिन् वत्सापाकरणादयः विद्यन्ते तदिदं शृतसहचरितधर्मकं पयः । **टुप्.** ६।५।१।९. * 'शृते चरुं' इति चन्द्राभ्युदितेष्टौ । तत्र शृते पयसि इज्यार्थाः पयोधर्माः कर्तव्याः । **भा.** ९।४।१०। ४१–४२, * 'शृते चरुं' इति पशुकामेष्टौ । तत्र पयसि प्रदेयधर्मा न भवेयुः । ९।४।११।४३–४४, * शृते चरुं दधंश्चरुं इति प्रदानार्थे दधिशृते प्रणीताकार्यं कुर्वाते इति धर्मयुज्येते । १०।१।९।३०, * शृते दधनि च प्रदानधर्माननुष्ठानं पशुकामेष्टौ । ९।४।११।४३–४४, * शृते दधनि च प्रदानधर्मानुष्ठानमभ्युदितेष्टौ । ९।४।१०।४१–४२, * शृते प्रणीताधर्माः कर्तव्या अभ्युदयेष्टौ ९।२।१४।४४–४५.

**शेषोऽप्रकरणेऽविशेषात् सर्वकर्मणाम्** । ३।४।९।२५॥

'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्, राष्ट्रभृतो जुहोति, अभ्यातानान् जुहोति' इति कर्मसंयुक्ता होमाः श्रुताः । ते किं सर्वकर्मणां कृष्यादीनामपि शेषभूता उत वैदिकानां अग्निहोत्रादीनां इति विचारे पूर्वपक्ष-

माह । अप्रकरणे विहितः अनारभ्य विहितः जयादिहोमविशेषः सर्वकर्मणां वैदिकानां लौकिकानां चेति सर्वेषां कर्मणां शेषः स्यात् । अविशेषात् । एतादृशे एव कर्मणि इति विशेषानभिधानात् । इति **पूर्वः पक्षः ।**

**होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ।२६॥**

जयाः, राष्ट्रभृतः, अभ्यातानाः इति होमाः वैदिकलौकिकसर्वकर्मशेषभूता इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निवारयन् सिद्धान्तमाह । होमाः 'चित्तं च स्वाहा' इत्यादयः त्रयोदश जयाः नाम, 'ऋताषाडृतधामा गन्धर्वः' इत्यादयः द्वाविंशतिः राष्ट्रभृतः नाम, 'अग्निर्भूतानामधिपतिः स माऽवतु' इत्यादयः अष्टादश अभ्यातानाः नाम वैदिकेष्वेव कर्मसु व्यवतिष्ठेरन् । आहवनीयसंयोगात् । आहवनीयाधिकरणकत्वस्य 'यदाहवनीये जुहोति' इत्यनेन प्राप्तत्वात् । आहवनीयस्य च वैदिकेष्वेव सत्वात् । तस्मात् जयादिहोमा वैदिकेष्वेव कर्मसु इति सिद्धान्तः ।

**शेषश्च समाख्यानात् । २७ ॥**

जयाः, राष्ट्रभृतः, अभ्यातानाश्च नाम होमाः वैदिककर्मणामेव शेषः आध्वर्यवं इति समाख्यानात् । आध्वर्यवं इति समाख्याते वेदे जयादयः समाम्नाताः सन्तः अध्वर्युणा करिष्यन्ते । तस्मात् जयादयो होमाः वैदिककर्मणां शेषः इति **सिद्धान्तः । के.**

* शेषः कर्ता यागस्य । ( यागः प्रधानम्, कर्ता अङ्गमित्यर्थः ) । **भाट्ट.** ३।१।२, * शेषः कालो यागस्य । ३।१।२.

**शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात् । ३।१।१५।२६॥**

'आग्नेयं चतुर्धा करोति' इति दर्शपूर्णमासयोः श्रूयते । इदं चतुर्धाकरणं अग्नीषोमीयस्य ऐन्द्राग्नस्य आग्नेयस्य चेति सर्वेषां स्यात् इति **पूर्वपक्षमाह ।** गुणसंयुक्तः उद्देश्यविशेषणपरेण आग्नेयादिपदेन गुणेन संयुक्तः शेषः शेषप्रतिपत्तिरूपं चतुर्धाकरणं साधारणः आग्नेयाग्नीषोमीयैन्द्राग्नपुरोडाशसाधारणः प्रतीयेत । तेषां उद्देश्यविशेषणानां आग्नेयादीनां मिथः परस्परं असंबन्धात् अनन्वयात् । चतुर्धाकरणस्य उद्देश्याकाङ्क्षायां तद्धितेन आग्नेयशब्दगतेन हविष उपस्थितौ प्रकरणेन प्रकृतहविर्मात्रस्यैव उद्देश्यत्वोपपत्तेः आग्नेयत्वस्य उद्देश्यतावच्छेदकत्वस्याविवक्षणात् । तस्मात् सर्वेषां चतुर्धाकरणम् ।

**व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः । २७ ॥**

चतुर्धाकरणं सर्वेषां पुरोडाशानां इति पूर्वपक्षं वाशब्दो व्यावर्तयति । आग्नेयशब्दः अग्नीषोमीयैन्द्राग्नसाधारणो न भवति । अतः व्यवस्था केवलाग्निदेवत्ये पुरोडाशे तस्य व्यवस्था असाधारण्यम् । अर्थसंयोगात् अर्थस्य अग्निपर्याप्तदेवतात्वकत्वरूपस्य संयोगात् तद्धितश्रुत्या प्रतिपादनात् । लिङ्गस्य अपूर्वसाधनीभूताग्निपर्याप्तदेवतात्वकत्वरूपस्य उद्देश्यविशेषणस्य अशक्यपरित्यागस्य अर्थेन आग्नेयेनैव संबन्धात् अग्नीषोमीयादिना असंबन्धात् । 'आग्नेयस्य मस्तकं विरुज्य प्राशित्रमवद्यति' इति पूर्वपक्षीयदृष्टान्ते तु गुणश्रुतिः गुणस्य आग्नेयत्वरूपस्य विशेषणस्य श्रुतिः लक्षणार्था मस्तकविशेषणार्था, न तु अवदानविशेषणार्था । आग्नेयस्य मस्तकं इत्यन्वयः । अन्यस्य मस्तकादन्यस्माद्वेति । तस्मात् चतुर्धाकरणं आग्नेयस्यैव पुरोडाशस्य न तु अग्नीषोमीयादेः इति **सिद्धातः । के.**

* शेषः तृतीयाध्यायस्य द्वितीयतृतीयाभ्यां अधिकरणाभ्यां ( ३।१।२-३ ) उक्तः सहेतुः सविषयश्च । इदानीं 'कथं च विनियुज्यन्ते' इत्ययमंशो विचार्यते । तत्र त्रिषु अधिकरणेषु क्रमेण संस्कार-द्रव्य-गुणानां विनियोगः कथ्यते । तत्रापि किल प्रथमे ( ४ ) लिङ्गेन, द्वितीये ( ५ ) वाक्येन, तृतीये ( ६ ) श्रुत्या विनियोग इति केचित् । तत्तु आचार्या नेच्छन्ति । यद्यपि अत्र विचित्रप्रमाणव्यापारपरामर्शः तथापि श्रुतिविनियोग एवात्र ( प्रथमे ) पादे, लिङ्गादिविनियोगस्तु द्वितीयपादात् प्रभृति भविष्यतीत्युक्तम् । **वा.** ३।१।४।७. * शेषः दर्शपूर्णमासयोरनृतवदननिषेधः । **वि.** ३।४।८, * शेषः दर्शपूर्णमासयोः जञ्जभ्यमानधर्माः । ३।४।९.



**शेषः परार्थत्वात् । ३।१।२।२ ॥**

अत्र सूत्रे शेषलक्षणं अर्थात् श्रुत्या च शेषपदशक्यतावच्छेदकमुच्यते । परार्थत्वात् शेषः । परार्थत्वं शेषपदशक्यतावच्छेदकम् । तदेव च शेषलक्षणम् । परः अन्यः अर्थः प्रवृत्त्युद्देश्यः यस्य इति बहुव्रीहिः । **के.**

* 'शेषः परार्थत्वात्' । ( ३।१।२।२ ) इत्यत्र प्रमाणं विना पारार्थ्यस्य वक्तुमशक्यत्वात् श्रुत्यादिकमपि प्रमाणमुपक्षिप्तम् । तत्र च श्रुतिवाक्ययोः लिङ्गस्य च तद्भूताधिकरणे ( १-१-७ ) सामर्थ्याधिकरणे च ( १-४-१५ ) स्वरूपेण विनियोजकत्वस्य उक्तत्वात् अङ्गाङ्गितयोः अवच्छेदकमात्रं निरूपितम् । **कौ.** ३।३।४।११ पृ. ३२९. * शेषः फलं पुरुषस्य । **भाट्ट.** ३।१।२. * शेषः वैदिककर्मणामनारभ्यश्रुता जयादिहोमा राष्ट्रभृद्धोमाश्च । **वि.** ३।४।१३. * तद्भावभावित्वेन तावत् यो येन विना न भवति स तस्य शेषः । तद्यथा– अङ्कुरः तोयादिभिर्विना न भवति, घटश्च मृत्पिण्डदण्डचक्रादिभिः इति तयोस्तानि शेषत्वेन ज्ञायन्ते इति केचित् । तन्न, व्यभिचारात् । 'स्वामिना च विना दासा न भवन्ति कदाचन । तथा गृहादयस्तेषां, शेषः स्वामी च नेष्यते ॥' **वा.** ३।१।२।२ पृ. ६५४. * न च य उपकरोति स शेषः । यस्तु यदर्थः श्रूयते स शेषः इत्युक्तं 'शेषः परार्थत्वात्' इति ( ३।१।२।२ ) । **भा.** ४।१।१।१ वर्णकं २. * नहि शेषमाश्रितः शेषः । किं तर्हि ? उपकारिणमाश्रितः उपकरोति, इति सर्वत्र स्थापयिष्यामः । शेषत्वं तु श्रुत्यादिप्रमाणकमेव भविष्यति । **वा.** ३।१।७।१४ पृ. ७१६, * 'प्रयोज्यो यस्य यस्तस्य स शेष इति निश्चयः' । इति केचित्, तदपि न, 'लक्ष्यलक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि ॥' ३।१।२।२ पृ. ६५५. * यः परस्योपकारे वर्तते स शेष इत्युच्यते । तद्यथा – ये परार्थास्ते वक्तारो भवन्ति शेषभूता वयमिह इति । ननु योऽपि प्रधानभूतः सोऽपि कदाचित् परार्थे वर्तते, यथा उपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्तते । सत्यं वर्तते । यस्तु अत्यन्तं परार्थः तं वयं शेष इति ब्रूमः । यथा, गर्भदासः कर्मार्थे एव स्वामिनोऽनड्वांश्च क्रीयते वक्ष्यतीत्येव । ननु गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात् । नेति ब्रूमः । आत्मन एवासौ संविदधानो गुणभावं गच्छति । नान्तरीयकत्वात् गर्भदासस्योपकरोति अनडुहो वा । यस्तु अत्यन्तं परार्थः तं वयं शेष इति ब्रूमः । **भा.** ३।१।२।२ पृ. ६५८-६५९. * यो यस्योपकरोति स तस्य शेषः । उपकारलक्षणं हि शेषत्वं इति अपरे । तदपि न घटते 'एवं सति प्रधानानामङ्गानां च परस्परम् । अङ्गाङ्गानां च सर्वेषां संकीर्येतैव शेषता ॥' **वा.** ३।१।२।२ पृ. ६५६. * 'शेषं स्विष्टकृते समवद्यति' इत्यनेन दर्शपूर्णमासयोः संस्कारसंबन्धो विधीयते न कर्मान्तरम् । **वि.** २।३।१३. * 'शेषादव( द्व्यव )दाननाशे स्यात् तदर्थत्वात्' ( ६।४।१।१ ) इतिपूर्वपक्षसूत्रे द्व्यवदानावशिष्टात् द्व्यवदानान्तरावदानं वक्ष्यते । **सु.** पृ. १५३३.

**शेषाद् द्व्यवदाननाशे स्यात् तदर्थत्वात् । ६।४।१।१॥**

दर्शपूर्णमासादौ होमार्थे गृहीतस्य द्व्यवदानस्य नाशे सति शेषात् पुरोडाशात् पुनरवदेयं स्यात् । तदर्थत्वात् पुरोडाशस्य सर्वस्य अग्न्यादिदेवतार्थत्वात् । तस्मात् शेषादवदातव्यं इति पूर्वः पक्षः ।

**निर्देशाद्वाऽन्यदागमयेत् । २ ॥**

दर्शपूर्णमासाक्षे गृहीतस्य द्व्यवदानस्य नाशे पुनः शेषादवदेयं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । शेषान्नावदेयम् । किंतु गृहीतस्य द्व्यवदानस्य नाशे अन्यत् हविः आगमयेत् निर्वापमारभ्य हविः पुनः कर्तव्यम् । निर्देशात् 'मध्यात् पूर्वार्धादवदेयं' इति कृत्स्नस्य यन्मध्यं पूर्वार्धं च तच्चोदितम् । अवशिष्टस्य तु तन्नोपपद्यते । तस्मात् हविः पुनः कर्तव्यम् । अथवा 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वा अपहरेयुर्वा, आज्येन ता देवताः परिसंख्याय यजेरन्' इति निर्देशात् हविषो नाशे आज्यं प्राप्तम् । तत् अन्यत् आज्यं आगमयेत् गृह्णीयात् । इति द्व्यवदाननाशे आज्येन होमः । अयं पक्षः भाष्ये उक्तः । के.

* शेषस्यापि वचनादनेकत्र गुणभावो भवति, यथा प्रस्तरस्य । एवं जाघन्याः । भा. १२।४।६।१६, शेषस्य अर्थान्तरगमनं प्रतिपत्तिः । तच्च सामवायिकमङ्गं भवति । तच्च प्रधानेन दृष्टसंबन्धम् । ११।२।१६।६७. * शेषस्य तादर्थ्यप्रतिपादनरूपेण विनियोजकानि श्रुत्यादीनि इति तद्विवेकार्थं लक्षणमारब्धव्यम् । वा. ३।१।२।२ पृ. ६५८. * शेषस्य तृतीयानिर्दिष्टस्यापि भूतोपयोगित्वात् हविःषु क्षारणेन प्रतिपत्तिरूपः संस्कारः शेषधारणार्थपात्रान्तराप्रयोजकत्वाय चतुर्थे वक्ष्यते । सु. पृ. ३२१. * शेषस्य तृतीयानिर्देशे सत्यपि कार्योपयोगित्वात् संस्कार्यत्वावधारणं, 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र । वा. १।३।८।२७ पृ. २८४, * शेषाणां बाधाभ्युच्चयानुनिष्पादिनी इयत्तायाश्चिन्ता दशमेऽध्याये । ७।१।१।१.

**शेषे ब्राह्मणशब्दः । २।१।८।३३ ॥**

अथ ब्राह्मणलक्षणमुच्यते । मन्त्रब्राह्मणयोर्वेदनामधेयम् । तत्र मन्त्रलक्षणे उक्ते शेषे मन्त्रभिन्ने वेदवाक्ये ब्राह्मणं इति शब्दो विज्ञेयः, परिशेषात् । मन्त्रभिन्नवेदवाक्यत्वं ब्राह्मणत्वम् । के.

**शेषे यजुःशब्दः । २।१।१२।३७ ॥**

यजुर्मन्त्रलक्षणमुच्यते । शेषे ऋक्सामभिन्ने मन्त्रे यजुः इति शब्दो ज्ञेयः । या न ऋक् न साम अथ च मन्त्रो भवति तत् यजुः नाम । तथा च ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम् । 'युञ्जते मन उत युञ्जते' 'इमामगृभ्णन्' इत्यादौ 'यजुरेव वदेत्' 'यजुष्कृत्यै' इत्यादिः यजुःशब्देन व्यवहारस्तु यजुर्वेदपठितत्वेन लक्षणया ज्ञेयः । के.

* **शेषानुसारेण** शेषिणो नापकर्षः । ग्रहसादनस्यापकर्षानुसारेण प्रदानस्य नापकर्षः । वि. १०।५।२२. * शेषानुसारेण शेषिसंकोचो न युक्तः । पराक्रमः ४३।१.

* **शेषकर्मानुष्ठानं** प्रथमोपस्थितेन दर्शपूर्णमासयोः । कृत्वाचिन्ता । ३।४।१६।४६–४७. मीको. पृ. २७५१ 'प्रथमोपस्थितन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शेषकार्यं** तन्त्रेण सर्वपृष्ठेष्टौ । ३।२।४।१६–१७. 'सर्वपृष्ठेष्टिः' इत्यत्र अधिकरणं द्रष्टव्यम् । * शेषकार्यं न भवति उपांशुयाजाद्यर्थहविर्भ्यः दर्शपूर्णमासयोः । भा. ३।५।१।१–१२. * शेषकार्याणि ऐडप्राशित्रसौविष्टकृतादीनि किं हविषो हविषः कर्तव्यानि उत एकस्माद् हविषः एव इति संशये सर्वेभ्य इति सिद्धान्तः । दर्शपूर्णमासयोः । भा. ३।४।१५।४२–४५. * शेषकार्याणि प्रधानद्रव्यशेषे सति क्रियन्ते । वा. ३।५।१।५. * शेषकार्याणि यदि न शक्यानि, नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः । भा. ६।३।२०।४१, * शेषकार्याणि स्विष्टकृदादीनि यदा एकस्मात् क्रियेरन् तदा किं यतः कुतश्चित् उत प्रथमात् । यतः कुतश्चित् इति पूर्वः पक्षः । मुख्यात् ( प्रथमात् ) इति सिद्धान्तः । दर्शपूर्णमासयोः । कृत्वाचिन्तेयम् । ३।४।१६।४६–४७. * शेषकार्याणि स्विष्टकृत्–इडा– प्राशित्र– शंयुवाककालभक्ष– चतुर्धाकरणानि । वा. ३।४।१४।३७, * कृतार्थप्रतिपत्तयश्च **शेषकार्याणि** न स्वयमेव अकृतप्रयोजनमपि द्रव्यं प्रयुञ्जते । ३।५।१।६. * शेषकार्याणां स्विष्टकृच्छ्रवणं निवर्तकं चातुर्मास्येषु गृहमेधीये । आज्यभागपुनःश्रवणस्य परिसंख्यार्थत्वपक्षे इदम् । कृत्वाचिन्ता । भा. १०।७।११।३५–३७.

* **शेषकार्यानुष्ठानं** नास्ति साकंप्रस्थायीये । भा. ३।५।२।११, * शेषकार्यानुष्ठानं नास्ति सौत्रामण्याम् । ३।५।३।१४–१५. * शेषकार्यानुष्ठानं सर्वेभ्यो हविर्भ्यः । ३।४।१५।४२–४५. 'स्विष्टकृदधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शेषकार्यार्थे** अवत्तद्रव्यनाशे शेषकार्यलोपः । ६।४।२।३. मीको. पृ. २०७३ 'दर्शपूर्णमासादौ स्विष्टकृदादि०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शेषत्वम्** । उपकारलक्षणं हि तत् । यत्परस्योपकरोति, तत्तस्य शेषभूतम् । भा. ३।७।१।२. * 'शेषत्वं केचिदिच्छन्ति ह्यविनाभावलक्षणम् । प्रयोज्यलक्षणं त्वन्ये, तदाधिक्येन चापरे ॥ अन्ये त्वन्ततया तस्य विध्यन्तत्वपरिग्रहात् । उपकारेण शेषत्वं बहुभिश्चैव लक्षितम् ॥' वा. ३।१।२।२ पृ. ६५४. * शेषत्वं द्रव्य–गुण–संस्काराणामेव न तु फल–पुरुष–कर्मणां इति **बादरिमतम्**, कर्म–फल–पुरुषा अपि शेषः इति **जैमिनिमतम्** । तत्र कर्म फलशेषः, फलं पुरुषशेषः, पुरुषश्च कर्मशेषः । वि. ३।१।३. * शेषत्वं द्रव्यगुणसंस्कारेषु एव न यागफलपुरुषेषु इति **बादरिः** । भा. ३।१।३।३, कर्माण्यपि फलं प्रति शेष इति **जैमिनिः** । ३।१।३।४, फलं अपि पुरुषं प्रति शेषः । यः स्वर्गो मे भवेदित्येवं कामयते तस्य यागः । ३।१।३।५, पुरुषोऽपि कर्म प्रति औदुम्बरीसंमानादिषु शेषः । अत्र भगवान् वृत्तिकारः परिनिश्चिकाय द्रव्यगुणसंस्कारेष्वेव नियतो यजिं प्रति शेषभावः, आपेक्षिक इतरेषाम् । यागस्य द्रव्यं प्रति प्रधानभावः, फलं प्रति गुणभावः । फलस्य यागं प्रति प्राधान्यम्, पुरुषं प्रति गुणता । पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसंमानादि प्रति गुणत्वं इति । ३।१।३।६. * शेषत्वं यागस्य स्वर्गनिरूपितम् । भाट्ट. ३।१।३. * न चोपकारलक्षणं **शेषत्वम्** । किं तर्हि ? चोदनालक्षणं तत् । टुप्. ९।१।४।९. * परार्थत्वलक्षणमेव शेषत्वं निर्दोषम् । वा. ३।१।२।२ पृ. ६५८, * विध्यादिविहितप्रधानकथंभावाकाङ्क्षापूरणसमर्थविध्यन्तविहितत्वलक्षणमेव शेषत्वं इत्यन्ये । तन्न 'उपक्रमोपसंहारमध्याम्नातेषु शेषताम् । विचित्रमुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥' ३।१।२।२ पृ. ६५५, * सर्वत्रैव फलवत्प्रधानविधेः अङ्गविधयः अङ्गानि प्रधानेभ्योऽतिरिच्यन्ते इति एतदेव अतिरेकलक्षणं शेषत्वं युक्तं इति केचित् । तन्न । ३।१।२।२ पृ. ६५५.

**शेषत्वनिर्वचनम् ॥**

**शेषः परार्थत्वात् । ३।१।२।२ ॥**

**भाष्यम्**— इह सूत्रे शेषस्य लक्षणम्, येन च हेतुना शेष इत्युच्यते, तदुभयमाख्यायते । यः परस्योपकारे वर्तते स शेष इत्युच्यते । तद्यथा, ये परार्थास्ते वक्तारो भवन्ति शेषभूता वयमिहेति । ननु योऽपि प्रधानभूतः सोऽपि कदाचित्परार्थे वर्तते, यथोपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्तते । सत्यं वर्तते । यस्त्वत्यन्तं परार्थस्तं वयं शेष इति ब्रूमः । यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽनड्वांश्च क्रीयते वक्ष्यतीत्येव । ननु गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात् । नेति ब्रूमः । आत्मन एवासौ संविदधानो गुणभावं गच्छति । नान्तरीयकत्वाद्गर्भदासस्योपकरोति, अनडुहो वा । यस्त्वत्यन्तं परार्थस्तं वयं शेष इति ब्रूमः । अथ तत्र किं वृत्तम्, 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत' ( २।१।३।८ ) इति । तत्रापूर्वार्थता व्यावर्तिता दृष्टप्रयोजनानामाख्यातानाम् । इह तु सर्वेषामेव शेषाणां लक्षणमुच्यते ।

**वा**— किंच । '**शेषलक्षणमात्रोक्तावर्थात्स्याच्छेषिलक्षणम् । अतः शेषः परार्थत्वादित्युक्तं शेषलक्षणम् ॥**' शेषशब्दस्यानेकाधिकाद्यर्थवचनत्वादिहाङ्गगुणधर्मादिपर्यायवाचित्वपरिग्रहार्थं हेतुविशेषाभिधानं परार्थत्वादिति । '**यच्चान्यदविनाभावप्रयोज्यत्वादिकारणम् । तच्च सर्वं निराकर्तुं पारार्थ्यमिह गृह्यते ॥**' द्वावपि चार्थौ श्रुत्यर्थापत्तिभ्यामुपात्ताविति चोदनालक्षणसूत्रवद्वाक्यभेददोषं परिहृत्य व्याख्येयम् । तथाहि, '**न शेषोऽन्यः परार्थत्वान्न च हेत्वन्तरेण सः । अन्योन्यनियमेनैवं पक्षहेत्वोः परिग्रहः ॥**' ( पक्षहेत्वोः परिग्रह इति– अत्रायमनुमानप्रयोगः । प्रयाजादिः शेषपदवाच्यः । परार्थत्वात् । यन्नैवं तन्नैवं यथा घटादिः । यद्यप्यत्र शेषपदवाच्यतावच्छेदकं परार्थत्वमेव पक्षतावच्छेदकमिति हेतुव्यापकसाध्यसमानाधिकरणो हेतुरिति व्याप्तिग्रहकाल एव हेतौ साध्याधिकरणवृत्तित्वे भासमाने समानसंवित्संवेद्यतया हेत्वधिकरणवृत्तित्वस्यापि साध्ये भानात् साध्यसिद्धिरनुमितिप्रतिबन्धिका संभाव्यते तथाऽपि साध्याभाववदवृत्तित्वरूपसाध्यसामानाधिकरण्याघटितव्याप्तिज्ञानस्यैव हेतुत्वाङ्गीकारात् । अथवा व्यतिरेक्यनुमानत्वादस्य साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानस्यैवानुमितिहेतुत्वाङ्गीकारात्पक्षतावच्छेदकहेत्वोरैक्येऽपि न काचित्क्षतिरिति दिक् ) इति । इह च '**शेषत्वं केचिदिच्छन्ति ह्यविनाभावलक्षणम् । प्रयोज्यलक्षणं त्वन्ये तदाधिक्येन चापरे ॥ अन्ये त्वन्ततया तस्य विध्यन्तत्वपरिग्रहात् । उपकारेण शेषत्वं बहुभिश्चैव**

लक्षितम् ॥ ' तद्भावभावित्वेन तावद्यो येन विना न
भवति स तस्य शेषः। तद्यथा, अङ्कुरस्तोयादि-
भिर्विना न भवति। घटश्च मृत्पिण्डदण्डचक्रादिभिरिति
तयोस्तानि शेषत्वेन ज्ञायन्ते। तत्रोच्यते। ' अयुक्तमेवं
शेषत्वमविना भावलक्षणम् । व्यभिचारात्तथाह्यी-
दृमशेषेष्वपि दृश्यते ॥ सर्वदा ह्यविनाभूता
रूपस्पर्शादयः क्षितौ । न चैषां तुल्यकल्पत्वाद्भव-
त्यन्योन्यशेषता ॥ स्वामिना च विना दासा न
भवन्ति कदाचन । तथा गृहादयस्तेषां शेषः स्वामी
च नेष्यते ॥ प्रधानानां प्रधानैश्च विनाभावो न
दृश्यते। तत्र स्याच्छेषशेषित्वं तेषामपि परस्परम् ॥
एवमङ्गप्रधानानामङ्गानां च परस्परम् । प्रसज्ये-
तैव शेषत्वमविनाभावलक्षणम् ॥ एतेनाध्ययना-
धानकृषिद्रव्यार्जनादिषु । वाच्यं प्रसङ्गिशेषित्वं
तैर्विना क्रत्वसंभवात् ॥ तस्मात्सत्यविनाभावे विना-
भावेऽपि वा क्वचित् । प्रयोज्यो यस्य यस्तस्य स
शेष इति निश्चयः ॥' न च स्वामी दासेन रूपस्पर्शा-
दिभिर्वा यथोदाहृतैरन्योन्यं प्रयुज्यते । येनातिप्रसङ्गः
स्यात्। न त्वेतदपि शेषत्वलक्षणं घटते। कुतः ? 'लक्ष्य-
लक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि । पुरोडाश-
कपालं हि न च तावत्प्रयुज्यते ॥ सिद्धेस्तुषोप-
वापेन शेषस्तत्तस्य चेष्यते। तथा होमाः प्रयुज्यन्ते
भेदनस्कन्दनादिभिः ॥ निमित्तैर्न च तेष्वेषां
होमानां शेषता मता। तस्माद्यो विहिते यस्मि-
न्नधिकोऽन्यो विधीयते ॥ तस्य तं प्रति शेषत्व-
मतिरेकेण लक्ष्यते ॥ ' सर्वत्रैव फलवत्प्रधानविधेरङ्ग-
विषयोऽङ्गानि प्रधानेभ्योऽतिरिच्यन्ते इत्येतदेवातिरेक-
लक्षणं शेषत्वं युक्तमित्युक्तेऽभिधीयते। 'व्यभिचार्यति-
रेकोऽपि प्रधानेष्वपि दर्शनात्। तान्यपि ह्यति-
रिच्यन्ते शेषेभ्योऽधिकशेषवत् ॥ अन्ये विध्या-
दिनिर्दिष्टप्रधानेभ्यः परान् विधीन् । दृष्ट्वाऽङ्गा-
न्यध्यवस्यन्ति विध्यन्तत्वपरिग्रहात् ॥ विध्यन्तो
वा प्रवर्तेत विकृतौ प्रकृताविव । विध्यन्तविहितां-
स्तत्र शेषान्वक्ष्यति जैमिनिः ॥ ' तस्माद्विध्यादि-
विहितप्रधानकथंभावाकाङ्क्षापूरणसमर्थविध्यन्तविहितत्व-
लक्षणमेव शेषत्वं सूत्रकाराभिप्रेतमित्युक्तेऽभिधीयते ।
'उपक्रमोपसंहारमध्याम्नातेषु शेषताम् । विचित्रा-
मुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥ '

यदि हि नियोगतो वाक्यप्रकरणान्तेष्वेव व्यवस्थिताः
शेषविधयः समाम्नायेरंस्तत एतदव्यभिचाराल्लक्षणमाश्री-
येत। न त्वेवमाम्नायन्ते । त्रिष्वप्यादिमध्यावसानेषु
समाम्नानात्। ' प्रधानादौ विधीयन्ते ये शाखाच्छे-
दनादयः । विध्यादिविहितत्वात्ते नाऽऽप्नुयुर्दर्श-
शेषताम् ॥ कर्मणा सह चोद्यन्ते ये हविर्देवता-
दयः । शेषास्तेऽपि न युज्येरंस्तदन्ताम्नानवर्ज-
नात् ॥ '

अङ्गविध्युपक्रमेषु तावद्वाक्यप्रकरणेषु तद्गतकिंभावा-
काङ्क्षितप्रयोजनकल्पनावेलायां कथंभावाकाङ्क्षायुक्त-
प्रधानविधिदर्शनात्तदपेक्षितोपकारसिद्ध्यर्थत्वेन तेषामव-
धार्यमाणानां विध्यादिगतानामपि शेषत्वमस्तीति न
विध्यन्तविधानमेवैकं शेषलक्षणत्वेनावकल्पते । ' शेषं
तस्यैव तं विद्यादुपकारेण लक्षितम् । भवत्येवं च
होमादेर्भिन्नादि प्रत्यशेषता ॥ न हि भिन्नोपकारार्थः
स तद्ध्येवोपकारकम् । वेदे च नान्यदङ्गत्वकारणं
दृश्यते क्वचित् ॥ ' न ह्यनुपकुर्वत्किंचिदप्यङ्गं कस्य-
चिद्भवेत् । तस्मादुपपन्नमिदं लक्षणमिति । तथा चोप-
रिष्टादपि तत्र तत्र प्रदेशे भाष्यकारो वक्ष्यति—' यो
यस्योपकरोति स तस्य शेषः । उपकारलक्षणं हि शेष-
त्वम् ' इत्येवमादि । 'तादर्थ्यमपि नैवान्यदुपकारा-
त्प्रतीयते । तेनोपकार एवैको विज्ञेयं शेषलक्ष-
णम् ॥ ' न त्वेतदपि घटते । कुतः ? ' एवं सति
प्रधानानामङ्गानां च परस्परम् । अङ्गाङ्गानां च
सर्वेषां संकीर्येतैव शेषता ॥ '

यथैव ह्यङ्गानि प्रधानानामुपकुर्वन्ति तथैवानुष्ठापने-
नोपकारप्रतिग्रहणाच्च प्रधानान्यपि अङ्गानामुपकुर्वन्त्येव ।
कुतः ? ' प्रधानैरप्रयुक्तानि कुर्यान्नाङ्गानि कश्चन ।
उपकार्यैर्विना तानि नोपकर्तुं च शक्नुयुः ॥ प्रधा-
नान्यप्यतोऽङ्गानामङ्गानि स्युरनुग्रहात् । स्याद-
न्योन्योपकाराच्च तेषामन्योन्यशेषता ॥ नैकेनापि



प्रधानेन विनाऽन्यैः साध्यते फलम् । तेनैतान्युप-
कुर्वन्ति फलसिद्धौ परस्परम् ॥ तस्मात्परस्पराङ्ग-
त्वमुपकारात्प्रसज्यते । नायमङ्गकृतादेषामुपकारा-
द्विलक्षणः ॥ ' एवमङ्गानामपि अन्योन्यापादनं दर्श-
यितव्यम् । ततश्चैकप्रधानविकारेष्वेकाङ्गगमनेऽपि समस्त-
साङ्गप्रधानगमनादनियमः प्राप्नोति । ' तथा द्रव्या-
र्जनाधानस्वाध्यायाध्ययनादिषु । सर्वकर्माङ्गता-
प्राप्तिः कार्यैः सर्वोपकारिषु ॥ ' न हि तदनुग्रहरहितं
किंचित्सिध्यति । ततश्च अर्थिमात्रविषयकामश्रुतिपरि-
ग्रहात् ' वसन्ते ब्राह्मणम् ' इत्यादीनां निमित्तार्थत्वा-
च्छूद्राधिकारादिदोषप्रसङ्गः । ' ज्ञातं च लक्षणं सर्वं
लक्ष्यं लक्षयितुं क्षमम् । तत्र दृष्टोपकाराणां
तत्कृता शेषता भवेत् ॥ अदृष्टार्थे तु संस्कारे पर्य-
ग्निकरणादिके । प्रयाजादिष्वपूर्वांशैस्तथाऽऽरादु-
पकारिषु ॥ ' अनवगतशेषत्वावस्थेषूपकारादर्शनात्तद-
धीनावधारणं शेषत्वं न स्यात् । कल्पित उपकारे भवि-
ष्यतीति चेत् । न । प्रागङ्गत्वादुपकारकल्पनाप्रमाणा-
भावात् । यो हि यस्य फलस्य फलवतो वा शेषत्वेना-
वधारितो भवति स कथं तस्योपकरिष्यतीत्यपेक्षिते सति
दृष्टमुपकारमपश्यद्भिस्तस्माददृष्टः परिकल्प्यते । यावत्तु
शेषत्वमेव नावगम्यते तावत्केन प्रमाणेन अदृष्टकल्पना
स्यात् । ततश्चेतरेतराश्रयः प्रसज्यते । तथाहि । ' उप-
कारेण शेषत्वं शेषत्वाच्चोपकारिता । स्वातन्त्र्येण
प्रसिद्धं हि न ह्यन्यतरदेतयोः ॥ ' दृष्टार्थानामपि
चावहन्त्यादीनां नियमान्न कश्चिदुपकारो दृश्यते इति
न नियोगतोऽङ्गत्वं स्यात् । न च प्रासङ्गिकत्वाच्छास्त्रेणो-
पकारः प्रतिपाद्यते इति । प्रत्यक्षादिभिरेवोपकारं गृहीत्वा
शेषत्वं गम्येत । ततश्च श्रुत्यादिप्रमाणकं शेषलक्षणं
नैवानेनाऽऽश्रीयेत । तथा प्रासङ्गिकानि अन्यप्रयोजना-
न्यङ्गानि अन्यार्थान्यपि अन्यस्योपकारीणीति तन्त्रिप्रयो-
जकवदितरस्यापि शेषत्वं गच्छेयुः । तत्र ' प्रासङ्गिकं
च नोत्कर्षेत् ' (५।१।१५।२८) 'प्रासङ्गिके प्रायश्चित्तं
न विद्यते ' ( ९।४।७।२८ ) 'न वाऽपात्रत्वादपात्रत्वं
त्वेकदेशत्वात् ' ( ४।१।१४।३४ ) ' अपि वा शेष-
भाजां स्यात् ' ( ६।४।२।३ ) इत्यादिन्यायविरोधः ।
एवमेतस्मिन्नपि पक्षे सर्वं तन्त्रं विघटते । तस्मादुच्यते
' शेषः परार्थत्वात् ' इति ।

' उपकारमलब्ध्वैव यो यदर्थोऽवगम्यते ।
तादर्थ्यलभ्यशेषत्वः स तस्योपकरिष्यति ॥ '
आह— किं तादर्थ्योपकारयोर्भेदोऽप्यस्ति ? बाढमस्ति ।
कुतः ? ' अपकुर्वन्नपीष्टो हि तदर्थव्यपदेशभाक् ।
उपकुर्वन्नपि त्वन्यस्तदर्थ इति नोच्यते ॥ ' उद्देश-
मात्रेण तावत्तादर्थ्यप्रसिद्धिः । सा चोपकारापकारयो-
स्तुल्या । तद्यथा— मशकार्थो धूम इत्यपकारिण्यपि
प्रयुज्यते । तथोपकुर्वन्नपि प्रसङ्ग्यप्रयोजकयोर्न तादर्थ्येन
व्यपदिश्यते । न हि कश्चिदपि शालिकुल्यास्थमुदकं
पिबन्मदर्थमेताः प्रणीता इत्यध्यवस्यति । तस्मादन्यत्ता-
दर्थ्यमन्यश्चोपकार इति विज्ञायते । नन्वेवं सत्यपकार-
कोऽपि शेषः प्राप्नोति । लोके तावत्प्राप्नोतु नाम । वेदे
पुनरनपेक्षितत्वान्न भविष्यतीति । यो हि तादर्थ्येनाव-
धारितः स किमुपकरिष्यति, अथापकरिष्यतीति संदिग्धे
शेषिभिरपकारो नापेक्षित इति तं परित्यज्यापेक्षासाम-
र्थ्यादुपकारः कल्प्यते । ननु चोपकारनिरपेक्षं नैव तादर्थ्यं
शक्यं कल्पयितुम् । कुतः ? ' आकाङ्क्षति प्रधानं
हि न यावदुपकारकम् । तावत्सामीप्ययुक्तोऽपि
नाङ्गमित्यवधार्यते ॥ ' न हि प्रयाजादयः सामीप्य-
मात्रेणैवोपकारनिरपेक्षास्तादर्थ्यं प्रतिपद्यन्ते । तस्मादुप-
कारपूर्वकमेव तादर्थ्यमिति स एव शेषत्वकारणं प्राप्नोति ।
नैष दोषः । 'श्रुत्या तावत्तदर्थत्वं क्वचित्पूर्वं प्रती-
यते । अन्यत्राप्युपकारित्वादपेक्षामात्रपूर्वकम् ॥'
'दशापवित्रेण (वस्त्रखण्डेनेत्यर्थः) ग्रहं संमार्ष्टि ' 'व्रीहीन्
प्रोक्षति ' इत्यादिषु तावत् श्रुत्यैव तादर्थ्येऽभिहिते
अङ्गत्वमवधार्य उपकारः कल्प्यते । यत्रापि तु प्रयाजादौ
तादर्थ्याभिधानाभावादुपकारपूर्वकत्वं लक्ष्यते तत्रापि
अपेक्षामात्रमेव तस्य, प्रथमं न निष्पत्तिः । न
ह्यनवगताङ्गत्वेषु प्रयाजादिषूपकारदर्शनं कल्पनं चास्ती-
त्युक्तम् । अतो दर्शपूर्णमासयोरुपकारमपेक्षमाणयोः
प्रयाजादिषु चोपकार्यमपेक्षमाणेष्वनिष्पन्नावस्थ एवोप-
कारे प्रकरणात्तादर्थ्यं तावत्प्रतीयते । तदन्यथानुपपत्ति-
मात्रेणोपकारकल्पना । तेनोपकारापेक्षामात्रमिह तादर्थ्य-

प्रमाणानुमाने व्याप्रियते । नोपकारादेव शेषत्वं तादर्थ्यं वेत्यनवद्यम् । एवं च सति श्रुत्यादीन्येव तादर्थ्यप्रतिपादनरूपेण शेषस्य विनियोजकानीति तद्विवेकार्थं लक्षणमारब्धव्यम् । सत्यपि चाङ्गप्रधानादीनामुपकारसंकरेऽतादर्थ्यादसंकरस्थितिसिद्धिः । तस्मात् परार्थत्वलक्षणमेव शेषत्वं निर्दोषम् । 'यः परस्योपकारे वर्तते' इति – पारार्थ्यमेवोपकारेण फलेनाभिधीयते इत्यवगन्तव्यम्, न त्वत्रैव लक्षणोक्तिभ्रान्तिः कर्तव्या । तथा च स्फुटी करोति 'ये परार्थास्ते वक्तारो भवन्ति' इति । परः पुनरुपकारलक्षणभ्रान्त्या वदति– 'यथोपाध्यायः शिष्याणाम्' इति । 'सत्यं वर्तते' इति– तादर्थ्योपकारव्यतिकरदर्शनादिहालक्षितं शेषत्वमित्युपेक्ष्यैतदुदाहरणं ऐकान्तिकपारार्थ्ययुक्तमुदाहरति – 'तद्यथा गर्भदासः' इति । स ह्युत्पत्त्यैव स्वाम्यर्थेन प्रसिद्धः । अनड्वांश्च वहनार्थतया । न तु स्वामी तादर्थ्येनावगम्यते इति विवेकः । परस्तु तत्राप्युपकारकत्वादस्त्येव कश्चित्तादर्थ्यलेश इति प्रत्यवतिष्ठते– 'ननु गर्भदासस्यापि' इति । सिद्धान्तवादी त्वाह – 'आत्मन एवासौ संविदधानः' इति । उद्देशेन ( इदमत्राऽऽकूतम् । निरूपकतासंबन्धे यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितं यत्, तत्त्वं तदङ्गत्वमिति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन दर्शपूर्णमासयोः स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वाल्लक्षणसंगतिः । अत्र च लक्षणे कृतिकारकत्वं कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वम् । विहितत्वं च स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसंबन्धेन विधिविशिष्टत्वम् । अतः करणत्वादीनामेव कृत्यन्वितत्वात् भावनाया एव च विधिविषयत्वान्नाव्याप्त्यादिशङ्कावकाश इति दिक् । ) हि तादर्थ्यं विविच्यते । न च स्वामिनो गर्भदासाद्युद्देशेन तदुपकाराय प्रवृत्तिः । किं तर्हि, स्वार्थसिद्धिप्रयुक्ता, नान्तरीयकतत्संविधानादशेषत्वम् । 'यैस्तु द्रव्यं चिकीर्ष्यते' इति—पुनरुक्तशङ्कयोपन्यासः । ननु च तदध्यायोक्तेनैव लक्षणेन गतार्थत्वान्नात्र वक्तव्यमत आह– 'तत्रापूर्वार्थता व्यावर्तिता' इति । तत्र केचिदेवं व्याचक्षते । तत्र दृष्टार्थानामवहन्त्यादीनां शेषत्वमुक्तम् । इह तु सर्वेषामेव दृष्टार्थानामदृष्टार्थानां च द्रव्यविषयाणां कर्मविषयाणां च शेषाणां लक्षणमुच्यत इति । एवं तु सति एतस्यापुनरुक्तता स्यात् । तत्पुनरेतेन गतार्थमित्यपह्नुतमेव । तस्मादेवं वर्णयितव्यम्– 'अथ तत्र किं वृत्तं यैस्तु द्रव्यं चिकीर्ष्यते' इति । तदभिधीयते । '**हन्त्यादावपि शेषत्वमेतस्मादेव लक्षणात् । दृष्टार्थत्वादपूर्वं तु ततो नेति पुरोदितम् ॥**'

सर्वविषयव्यापि शेषत्वमिह लभ्यमेव तत्र नीतमपूर्वभेदनिराकरणार्थम् । अथवा पूर्वोक्तं गुणप्रधानभावलक्षणमनपेक्ष्यापूर्ववत्संप्रति कारणान्तरनिरासेन परार्थत्वलक्षणे शेषत्वेऽभिहिते 'यैस्तु द्रव्यं चिकीर्ष्यते' इत्यनेनोपकारलक्षणाभ्युपगमाद्विरोधमाशङ्क्य परिहरति । तत्रापूर्वभेदकल्पनानिवृत्त्यर्थमुपकारदर्शनमुक्तं न शेषलक्षणत्वेन । अत्र पुनः सर्वशेषाणां पारमार्थिकं लक्षणमेवोच्यत इति भिन्नविषयत्वादविरोध इति ।

**शा**— '**तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणम् । परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते ॥**' कथं तर्हि श्रुत्यादिलक्षणं शेषत्वम् ? नहि 'सोमेन यजेत' इति तृतीयया परोद्देशप्रवृत्तत्वं सोमस्य उच्यते, करणमात्राभिधानात् । उच्यते । न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः । किं तर्हि, विधिसहिताः पारार्थ्यं बोधयन्तीति । विधिरपि न अभिधानेन पारार्थ्यं गमयति किन्तु अर्थापत्त्या । स हि चेतनप्रवर्तनात्मा । न च अनुद्दिष्टफले व्यापारे चेतनः प्रवर्तयितुं शक्यते इति अर्थात् विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्तता गम्यते । फलार्थश्च व्यापारः फलवदेव पुरुषस्य अभिलषितः इति तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिः सिद्धा भवति । तस्मात् युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षण शेषत्वमिति ।

**वि**-- '**स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात् । पारार्थ्यं शेषताहेतू रूपं तेनोपलक्षितम् ॥**'

**भाट्ट**-- इह आद्यं प्रकारद्वयं निरूप्यते । यदेव हि अङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं नान्यत् ।



तत्र अङ्गत्वं नाम पारार्थ्यम् । तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत् तत्त्वं तदङ्गत्वम् । स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां यागस्य कारकत्वेन विध्यन्वयात् यागे लक्षणसमन्वयः । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयात् प्रयाजादावपि सः । द्रव्यगुणकर्तृकालदेशादौ च यागाद्युद्देश्यकयागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वात् यागाङ्गत्वाविघातः । षष्ठीस्थले च संबन्धसामान्याभिधानेऽपि कारकत्वे एव पर्यवस्थानात् न अव्याप्तिः । निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावात् न अङ्गत्वापत्तिः, निमित्तस्य अनुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एव उद्देश्यताया विवक्षितत्वात् । उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदं तदतिरिक्तपरम् । कृष्यादेरपि यागकृतिकारकत्वात् अङ्गत्वप्रसक्तौ विधेयत्वान्तम् । यथा च अस्य न क्वाप्यव्याप्त्यतिव्याप्ती तथा कौस्तुभे विस्तरः । एवं च यत्रेदं न लक्षणं यथा यागादेः भावनादिकं प्रति, तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे । यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं कारकत्वमात्राभिधायित्वात्तृतीयादेः, तथाऽपि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिः आख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात् । विधिर्हि विशिष्टभावनां विदधत् अर्थात् विशेषणान्यपि विधत्ते इति सर्वेषां उद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः । अत एव अङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात् तेषां अङ्गत्वप्रामाण्यव्यवहारः ।

**मण्डन**— 'यो यदर्थः स तच्छेषः ।'

**शंकर**— 'पारार्थ्यं शेषलक्षणम् ।'

* शेषत्वलक्षणं पारार्थ्यम् । तच्च परोद्देशप्रवृत्तिः इति । परोद्देशप्रवृत्तिविषयत्वं इति वा । वैधेष्टसाधनत्वं इति न्यायरत्नमालायाम् । बाल. पृ. ९१.

* **शेषधारणम्** । प्रयाजशेषधारणं तत्पात्रं च न कर्तव्ये वाजपेये प्राजापत्यपशुषु अभिघारणार्थम् । वि. ४।१।१४.

* **शेषप्रतिपत्त्यर्थाः** इडाऽऽदिभक्षाः । १०।२।९। ३०–३४. मीको. पृ. १०२९ 'इडाऽऽदिभक्षाः शेषप्रतिपत्त्यर्थाः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **शेषभक्षः** ऐडादिः ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिकः चोदकप्राप्तः कर्तव्यः संस्कारार्थत्वात् । **भा.** १२।१।१५।३१. * **शेषभक्षः** द्विः कार्यः ज्योतिष्टोमे ऐन्द्रवायवग्रहे । वि. ३।५।५, * **शेषभक्षः** सोमस्यास्ति ज्योतिष्टोमे । ३।५।६, * **शेषभक्षः** सोमस्य चमसिनां समाख्यया ज्योतिष्टोमे । ३।५।७. * **शेषभक्षाः** अन्वाहार्येण कर्मार्थमानतानां निर्वृत्ते भूयिष्ठे कर्मणि, एते विधीयन्ते । नैते परिक्रयार्थाः । न चालमानमनाय । संस्कारार्था एते । भा. १२।१।१७।३४,

**शेषभक्षाश्च तद्वत् । १०।२।९।३० ॥**

दर्शपूर्णमासयोः इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः शेषभक्षाः सन्ति, ज्योतिष्टोमे च वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च सोमशेषभक्षाः । ते शेषभक्षाः सर्वे तद्वत् दक्षिणावत् परिक्रयार्थाः स्युः इति पूर्वः पक्षः । चकारः दक्षिणादृष्टान्तार्थ एव ।

**संस्कारो वा द्रव्यस्य परार्थत्वात् । ३१ ॥**

वाशब्दः परिक्रयार्थत्वपक्षं व्यावर्तयति । यज्ञे शेषभक्षाः द्रव्यस्य संस्कारः स्यात् । द्रव्यस्य परार्थत्वात् यज्ञार्थत्वात् । हुतद्रव्यस्य शेषो भक्षार्थो भवति । स च द्रव्यस्य प्रतिपत्तिरूपसंस्कारार्थः न ऋत्विक्परिक्रयार्थः इति सिद्धान्तः ।

**शेषे च समत्वात् । ३२ ॥**

हुतस्य द्रव्यस्य च शेषे यजमानस्य ऋत्विजां च समत्वात् । यत् शेषद्रव्यं तदपि देवतायै संकल्पितं यजमानेन, इति न स्वयमुपयोक्तव्यम् । तत्र न ऋत्विजः ईशते नो खल्वपि यजमानः । तस्मान्न परिक्रयार्थं शेषभक्षणम् । किंतु प्रतिपत्तिसंस्कारार्थं इति सिद्धान्तः ।

**स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् । ३३ ॥**

स्वामिनि च यजमाने शेषभक्षाणां दर्शनात् तस्सामान्यात् स्वामिसमानत्वात् भक्षविषये इतरेषां यजमानादन्येषां ऋत्विजां तथात्वं परिक्रयाभावः । यजमानस्य तावत् शेषभक्षेण निःसंशयं परिक्रयो नास्ति । ऋत्विजामपि तद्वत् नास्ति शेषभक्षेण परिक्रयः । तस्मात् शेषभक्षाः प्रतिपत्तिसंस्कारार्था न परिक्रयार्था इति सिद्धान्तः ।

**तथा चान्यार्थदर्शनम् । ३४ ॥**

कुण्डपायिनामयने नाम सत्रे 'अत्सरुकैश्चमसैः सोमान् भक्षयन्ति' इति श्रुतम् । त्सरुः मुष्टिः । त्सरुरहितैश्चमसैः इति भक्षे प्राप्ते विशेष उक्तः । एवं सत्रे भक्षणं दृश्यते, सत्रे च परिक्रयो नास्ति । अनेन अन्यार्थदर्शनेन सत्रे तावत् शेषभक्षाः न परिक्रयार्था इति निश्चितम् । तत्सामान्यात् दर्शपूर्णमासादावपि शेषभक्षा न परिक्रयार्थाः किंतु प्रतिपत्तिसंस्कारार्था इति **सिद्धान्तः । के.**

* **शेषभक्षाः** ज्योतिष्टोमे ऐष्टिकेषु कर्मसु न परिक्रयार्थाः । संस्कारार्थं ते कर्तव्याः । भा. १२।१।१७। ३३-३४, * **शेषभक्षाः** ज्योतिष्टोमे वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च । ते न परिक्रयार्थाः किन्तु संस्कारार्थाः । १०।२।९।२९-३३.

**⸙ शेषभक्षास्तथेति चेत् । १२।१।१५।३१ ॥**

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः चोदकप्राप्ता अपि सौमिकेन व्रतेन निवर्त्येरन् तथा आरण्याशनवत् (१२।१।१४।३०) इति चेत् पूर्वपक्षी ब्रूयात् ।

**नान्यार्थत्वात् । ३२ ॥**

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः सौमिकेन व्रतेन निवर्त्यन्ते इति चेत्, न । अन्यार्थत्वात् इडादिः शेषभक्षो न वृत्त्यर्थः किंतु अन्यार्थः संस्कारार्थः उपयुक्तसंस्कारार्थत्वात् द्वितीयानिर्देशाच्च । तस्मात् ऐडादयः शेषभक्षाः कर्तव्याः इति सिद्धान्तः । **के.**

* शेषभक्षस्तथेति चेत् । १२।१।१५।३१ ॥ नान्यार्थत्वात् । ३२ ॥ सायमारण्याशनवत् इडादिशेषोऽपि ज्योतिष्टोमाङ्गभूतेषु दर्शपूर्णमासविकारेषु अतिदेशप्राप्तः 'पयो व्रतं ब्राह्मणस्य' इति प्रत्यक्षविहितेन व्रतेन निवर्त्यते इति पूर्वपक्षयित्वा शेषभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वेन क्रतुयुक्तपुरुषसंस्कारार्थात् व्रतात् अन्यार्थत्वात् न शेषभक्षो व्रतेन निवर्त्यते इति सिद्धान्तितम् । सु. पृ. १५४५.

**⸙ शेषभक्षास्तथेति चेत् । १२।१।१७।३४ ॥**

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः सौमिकदक्षिणया निवर्त्येरन्, तथा अन्वाहार्यवत् इति चेत् पूर्वपक्षी ब्रूयात् । परिक्रयार्थाशङ्कया इदमुक्तम् ।

**न कर्मसंयोगात् । ३५ ॥**

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः सौमिकया दक्षिणया निवर्त्येरन् इति चेत्, न । नैते परिक्रयार्थाः । नालमेते आनमनाय । अन्वाहार्येण कर्मार्थमानतानां निर्वृत्ते भूयिष्ठे कर्मणि एते विधीयन्ते, कर्मसंयोगात् संस्कारकर्मसंयोगार्थास्तु एते । अतः संस्कारार्थं भक्षाः कर्तव्या एवेति सिद्धान्तः । **के.**

* शेषभक्षाः दर्शपूर्णमासयोः, न परिक्रयार्थाः किंतु संस्कारार्थाः । भा. १०।२।९।२९-३३. * शेषभक्षाः सर्वे कृष्णलचरौ पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः । १०।२।५।१९-२०. मीको. पृ. १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **शेषभक्षाणां** सोमाङ्गेष्टिषु सौमिकदक्षिणया प्रसङ्गसिद्धिर्नास्ति । १२।१।१७।३४-३५.

* **शेषभक्षणे** ऋत्विङ्नियमः । ६।४।३।४-९.

* **शेषभक्षणार्थं** चतुर्धाकरणम् । भा. १२।४। १५।४६.

* शेषलक्षणम् । 'शेषः परार्थत्वात्' (३।१। २।२) । ननु परोद्देशप्रवृत्तिश्चेत् पारार्थ्यं ततो नासौ कर्तृव्यतिरिक्तेषु शेषेष्वस्ति । अथ परोद्देश्यकप्रवृत्तिविषयत्वं तत् ततो द्रव्यादौ यागादौ फले च क्रमेण यागफलपुरुषोद्देश्यकप्रवृत्तिविषयत्वसत्त्वेऽपि न पुरुषे यागोद्देश्यकप्रवृत्तिविषयत्वमस्ति, किंतु तादृशप्रवृत्त्यधिकरणतैव । उभयमपि वाऽर्थभावनाख्यप्रवृत्तौ नास्ति । यत्तु न्यायरत्नमालायामुक्तम् 'कर्तुः समीहितं येन सिध्यत्यङ्गं तदुच्यते । इत्यनेन वैधेष्टसाधनत्वमेव शेषलक्षणमुक्तम्, तदपि फले अव्याप्तम् । नहि तस्येष्टसाधनता विधिना



बोध्यते इति । उच्यते । प्रवृत्तिः प्रवर्तना, परं चेष्टम् । तदुद्देशेनैव वैधी या प्रवर्तना, लौकिक्याः इष्टोद्देश्यकत्वनियमाभावात्, सा प्रयोजिका सती पारार्थ्यम् । प्रयोजकत्वं च कारणतत्कारणाद्यनुगतम् । वैधप्रवर्तनैव च साक्षात् प्रवृत्तेः कारणम्, तद्द्वारा फलस्य । पुरुषस्यापि कर्तृत्वं प्रवृत्तिद्वारा प्रवर्तनयैव जन्यते, एवं करणत्वेन व्रीह्यादि कारकान्तरं चेति । यद्वा परोद्देश्यकप्रवृत्तिमत्त्वैव अत्र विवक्षिता । तद्वत्तानियामकश्च संबन्धः पुरुषे अधिकरणताख्यः, द्रव्ययागफलेषु तु विषयताख्यः, नान्यः, द्वयोरेव लोके तद्वत्तानियामकत्वात् । न चैवं फलोद्देश्यकयागविषयकक्रत्वधिकरणत्वात् पुरुषस्य फलं प्रति अङ्गत्वापत्तिः, इष्टापत्तेः । सप्तमनवमाध्याययोर्हि सर्वस्य अपूर्वैदमर्थ्ये न यागस्वरूपमात्रे अङ्गत्वं इत्युक्तम् । तेन यथा अवघातप्रोक्षणादेः व्रीहिलक्षिते अपूर्वसाधनरूपे विशिष्टे विनियोगात् विशेषणे अपूर्वेऽपि अङ्गत्वम्, एवमिहापीति । एतत्सर्वमभिप्रेत्य 'परोद्देश्यप्रवृत्तिः' इत्येवोक्तम्, न तद्विषयता तदधिकरणता वेति । तदिदमपि प्रवृत्तावेव अव्याप्तं इत्युपेक्ष्यम् । तस्मात् आद्यैव विवक्षा युक्तेति । यदि तु न्यायरत्नमालागतमेव लक्षणं समर्थनीयम्, तदा एवं वाच्यम् । यदुक्तं वैधेष्टसाधनत्वं फले अव्याप्तम्, नहि तस्येष्टसाधनता विधिना बोध्यते इति, तन्न, तस्यापि कर्तृगतभोगरूपेष्टसाधनत्वस्य वैधत्वात् । स्वर्गादिभोगोऽपि हि पुंसां स्वर्गादिविदिष्ट एव ।

ननु एवमपि पुत्रेष्ट्यादिफले पुत्रादौ अव्याप्तिरेव, न हि तस्य इष्टसाधनत्वं वैधमिति चेन्न, इष्टसाधनत्वसामान्यस्य अवैधत्वेऽपि पुत्रेष्टेः कश्चिदिष्टसाधनता विधिगम्या इति स्वर्गकामाधिकरणे उक्तम् (६।१।१) । एवं च सति पुत्रेष्टेः कश्चिदिष्टसाधनतां बोधयता विधिना तस्याः पुत्ररूपस्येष्टस्य कर्त्रर्थतां विना अनुपपत्तेः पुरुषस्यापीष्टस्य कश्चिदिष्टतद्भोगसाधनतारूपा कर्त्रर्थता बोध्यते इति पुत्ररूपस्य फलस्य विशेषतः इष्टसाधनता विधिगम्यैव इति नाव्याप्तिरिति । इति शेषलक्षणम् । बाल. पृ. ९१-९३.

* **शेषलक्षणेन** कान्यस्य साधनानि कानि साधनाभासानि किंपरश्चेति व्याख्यातम् । भा. १।१।१।१ पृ. ९.

**⸙ शेषलक्षणप्रतिज्ञा ॥**

**अथातः शेषलक्षणम् । ३।१।१।१॥**

**भाष्यम्**— नानाकर्मलक्षणं वृत्तम् । अनन्तरं शेषलक्षणं वर्तयिष्यामः । कः शेषः, केन हेतुना शेषः, कथं च विनियुज्यते इति । श्रुत्यादीनि च विनियोगे कारणानीति वक्ष्यते । तेषां च बलवदबलवत्ता । एतत्तात्पर्येणान्यदप्युपोद्घातादिना ।

**वा**— '**द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् । तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥**' तथा च प्रथमसूत्रोपात्तप्रतिज्ञापिण्डव्याख्याप्रदेशप्रदर्शने धर्मप्रमाणस्वरूपविषयलक्षणद्वयार्थे चोदनालक्षणसूत्रेणैकेनैव सूत्रितं वर्णयित्वा कानि अस्य साधनानि —अङ्गानि कानि च साधनाभासानि— अनङ्गानीति फलार्थत्वातदर्थत्वाभ्यां क पुरुषः प्रधानं धर्मस्य क वा पुरुषो गुणभूत इत्यादि यावत्किंचन मीमांसितव्यं तत्सर्वं शेषलक्षणेनैव व्याख्यातम् । शेषैः समस्तैरेव लक्षणैरित्यर्थः । इह लक्षणानां बहुत्वेऽपि यदेकवचनं कृतं तल्लक्षणत्वसामान्यसंख्यामात्रविवक्षया । '**यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणम् । तदङ्गत्वस्य वाच्यत्वादादौ तन्मात्रगोचरम् ॥**' बहुष्वपि हि लक्षणार्थेषु विवक्षितेषु क्रमवशादेकस्तावदङ्गत्वरूपः शेष एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते । समासश्च द्वेधा विगृह्य द्वयोर्वाक्यार्थयोः प्रदर्शनीयः । शेषं च तल्लक्षणं च, शेषस्य वाऽर्थस्य लक्षणमिति । षष्ठीसमासमात्राश्रयणेन वा यथाव्याख्यायमानार्थम् । '**अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम् । तद्विशेषप्रपञ्चत्वात्तत्रान्यान्तर्गतिरिति स्थितेः ॥**' सर्वेषां हि लक्षणान्तरार्थानां प्रयोज्यप्रयोज्यप्रयोजकाप्रयोजकषड्विधक्रमनियमफलवत्कर्मविषयकर्त्रधिकाररूपाणां तावदङ्गारमकशेषविशेषप्रकारत्वात् लक्षणान्तरगोचराणामपि शेषलक्षणान्तर्गतत्वावधारणस्थितिः । तथाहि— '**प्रयोजकाः प्रयोक्तारः शेषाणामेव शेषिणः । क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः ॥**' एकफलसाधनानामर्थानां ह्येकफलवदुपकारोपनिबद्धानां वैकप्रयोगवचनचोदितानां यौगपद्यानुष्ठानाशक्तेः सामर्थ्ये-

नाङ्गभूतः क्रम आपद्यमानः श्रुत्यर्थपठनस्थानमुख्य-
प्रावृत्तिकक्रमाख्यप्रमाणषट्कवशेन व्यवस्थाप्यते ।
'अधिकारोऽपि यज्ञेषु कर्तुः शेषस्य चिन्त्यते ।
भाव्यानां भावकः कर्ता द्रव्यं को नाम कर्मणाम् ॥
तथा चास्य विशेषेण सूत्रबद्धैव शेषता । पुरुषश्च
पुनः शेषः कर्मार्थत्वेन चोदनात् ॥' वक्ष्यति हि
'पुरुषश्च कर्मार्थत्वात्' इति जैमिनिः । 'तथाऽनाम्ना-
तशेषाणां शेषिणां सप्तमादिभिः । शेषसद्भाव-
तद्रूपपरिमाणादिनिर्णयः ॥' तत्र तु-- 'सप्तमे-
नातिदेशेन शेषाः सन्तीति साधिते । ततोऽष्टमे
नये यस्य यतश्चेति निरूपणा ॥ नवमेऽर्थप्रधान-
त्वात्तदधीनाऽन्यरूपता । इयत्ता दशमे शेषबाधा-
भ्युच्चयचिन्तया ॥ प्रयोगपरिमाणं च तत्तन्त्रावाप-
लक्षणम् । एतदेव प्रसङ्गेन परार्थाङ्गोपजीवनात् ॥
अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना । प्रसङ्गे
तदभावे च स्याद्भूयिष्ठप्रकल्पना ॥ अथवा-
ऽस्त्विदमेवैकं तृतीयं शेषलक्षणम् । तदेव सूचितं
वक्तुमथातः शेषलक्षणम् ॥ अन्यानि पृथगारम्भै-
र्लक्षणानि करिष्यति । इदं सपरिवाराणां शेषाणा-
मेव लक्षणम् ॥' तत्र अथशब्दः आनन्तर्यपूर्वप्रकृता-
पेक्षाधिकाराणामेकं सर्वान् वा विवक्षित्वा प्रयुज्यते ।
प्रागुक्तभेदलक्षणानन्तरोक्तत्वात्पूर्वप्रकृतमपेक्ष्य शेषलक्षण-
मारभ्यते । कुत इति हेत्वपेक्षायामत इति हेतुव्यपदेशः ।
'यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणम् ।
विज्ञातुमत एतस्य तदनन्तरमुच्यते ॥ भिन्नानां हि
पदार्थानां शेषशेषित्वसंभवः । एकत्वे नापदिश्येत
कः शेषः कस्य शेषिणः ॥ भेदानन्तरवक्तव्यं शेष-
लक्षणमेव च । प्रयोजकक्रमादीनां शेषत्वाधीनचि-
न्तनात् ॥ अयमेव च संबन्धः संमतोऽध्याययो-
र्द्वयोः । अस्मिन् हि सति सूत्रोक्ते नान्यो भाष्यकृतो-
दितः ॥ पूर्वयोर्नास्ति संबन्धः सूत्रोक्तोऽध्याययो-
र्द्वयोः । प्रथमेऽध्याय इत्यादिभाष्येणातोऽभ्यधायि
सः ॥' अर्थद्वारो ह्यध्यायादिसंबन्धो न ग्रन्थस्वरूपा-
श्रय इति संक्षेपोक्तिपिण्डीकृतवृत्तवर्तिष्यमाणाध्यायार्थ-
प्रदर्शनपूर्वं भाष्यकारेणैव संबन्धः पूर्वाध्याययोरभिहितः ।
इह तु सूत्रकारेणैवाथातःशब्दाभ्यामुपनिबद्ध इति स एव
व्याख्यातः– 'नानाकर्मलक्षणं वृत्तम्' इति च । 'प्रधान-
मात्रमेवोक्तं नोपोद्घातादिविस्तरः । नानाकर्मत्व-
मात्रं हि शेषलक्षणसिद्धिकृत् ॥' प्रथमाध्यायप्रति-
पादितो हि प्रमाणविवेकविध्यर्थवादमन्त्रस्मृतिगुणविधि-
नामधेयवाक्यशेषार्थकृतसंदिग्धविनिर्णयप्रविभागः प्रत्येकं
भेदादिलक्षणेषु भेदेनोपयोक्ष्यते इति प्रपञ्चेनानुभाषितः ।
तथा चाभ्यासाधिकरणे स्थितवेदप्रमाणलक्षणबलेनोक्तम्
'अविशेषादनर्थकं हि स्यात्' इति । विधेयान्तररहित-
श्चानन्यपरो विधिः कर्मस्वरूपमेव विदधत्पूर्वविहिताद-
वश्यमेव कर्मान्तरं करोतीति विधित्वनिर्णयफलोपजीव-
नम् । 'तथाऽर्थवादविज्ञानाद्विष्ण्वादिगुणकास्त्रयः ।
यागा न कल्पितास्तेषां विधिशक्तेरसंभवात् ॥'
जामित्वाजामित्वोपक्रमोपसंहारमध्यपातिनो हि 'विष्णु-
रुपांशु यष्टव्योऽजामित्वाय' इत्येवमादयोऽन्तरालसंबन्ध-
विध्येकवाक्यत्वेनार्थवादत्वात् पृथग्विधित्वमलभमानाः न
देवताविशिष्टकर्मत्रयविधानार्था विज्ञायन्ते । 'मन्त्राणा-
मपि यत्कार्यं विहितार्थप्रकाशनम् । तेन गोदान-
गोयागौ नाभ्यासाद्भेदमागतौ ॥' यच्छन्दामन्त्रणो-
त्तमपुरुषाद्युपहतविधिशक्तयो हि मन्त्रा धर्मसाधनत्वे-
नोच्यमाना 'देवांश्च याभिर्यजते ददाति च' इत्येवमा-
दिभिराख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं
कल्पयन्ति । 'तथा शब्दार्थसंबन्धस्मृतितत्त्वावधार-
णात् । प्रक्षेपाधिकतामात्राद्यागाद्धोमस्य भिन्नता ॥
तथा न भिद्यते कर्म काठकादिसमाख्यया ।
ग्रन्थनामस्मृतेर्लोके निमित्तस्मरणादपि ॥ कृतकं
चाभिधानं यदन्यैरादिमदुच्यते । निमित्तप्रभव-
त्वेन सूत्रकारस्य तन्मतम् ॥ कठेन प्रोक्तमित्येवं
तेन प्रोक्तमिति स्मृतेः । ग्रन्थश्च प्रोच्यते नार्थः
स ह्यनुष्ठीयते नरैः ॥ तेनानुष्ठितमित्येवं यदि
नाम स्मृतिर्भवेत् । कर्म काठकमुच्येत कठे-
नानुष्ठितं हि यत् ॥ कठेनाध्यापितं प्रोक्तमित्यर्थे
तद्धितो यतः । स्मर्यते ग्रन्थनामातस्तस्याध्यापन-
संभवात् ॥ गुणश्चापूर्वसंयोगे नामधेयं च
भेदकम् । भेदोपयोगिना तेन गुणनामत्व-



बोधयोः ॥ प्राजापत्येषु यागानामेकानेकत्वसंशये ।
कृतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः ॥
पशुसप्तदशत्वस्य न यागैयत्तया विना । सिद्धि-
रस्तीति चार्थेन सिद्धः संदिग्धनिर्णयः ॥ एव-
मत्र प्रपञ्चेन पूर्वाध्यायार्थवर्णनम् । उत्तरा-
ध्यायसिद्ध्यर्थमनुक्रान्तमशेषतः ॥ शेषत्वे कर्म-
भेदात्तु नाधिकार्थोपयोगिता । तस्मात्स एव वृत्तो-
ऽत्र संक्षेपेणोपसंहृतः ॥ ग्राह्यं न त्वेतदेकान्ता-
त्संक्षेपोक्तिप्रयोजनम् । यतः पूर्ववदेवेह प्रपञ्चोऽ-
प्युपयोक्ष्यते ॥ उपोद्घातोदितेनैव शेषत्वमभिधा-
स्यति । भावार्थफलवत्त्वेन कर्मणामपि जैमिनिः ॥
तथा चापूर्वभेदेन कर्मभेदानुसारिणा । आज्यौ-
षधादिधर्माणां व्यवस्थां साधयिष्यति ॥' तथा च
'प्रसक्तानुप्रसक्तोक्तमृग्यजुःसामलक्षणम् । श्रुते-
र्जाताधिकारः स्यादित्यस्मिन्नुपयोक्ष्यते ॥ तस्मा-
द्विस्तरसंक्षेपावर्थमार्गावुभावपि । व्याख्यायामुप-
युज्येते इति कश्चित्क्वचित्कृतः ॥ एवमर्थद्वये ताव-
दथशब्दस्य वर्णितम् । संबन्धोऽध्याययोरुक्तो
यद्वाऽर्थात्सिद्ध एव सः ॥ ततश्चापुनरुक्तत्वाद्वक्ष्य-
माणार्थगोचरा । अधिकारार्थता वक्तुमथशब्दस्य
शक्यते ॥'

प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाण-
व्याख्येयत्वेनानुपन्यासादन्तरानुष्ठेयत्वमात्रमेवोपदेष्टव्यमि-
त्यधिकारार्थत्वं नोक्तम् । यदपि तदुपसर्जनत्वेन धर्मज्ञान-
मुपात्तं तदप्यर्थव्याख्यानकरणात् स्वयमेव शिष्याणां
भवतीति न सूत्रकारभाष्यकारव्याख्यातृवचनोपात्ताधि-
कारकर्मत्वेनावधारितम् । 'वक्तृवाक्यगतं यत्तु
स्यात्किंचिदधिकारभाक् । न जिज्ञासापदं तस्य
श्रोतुः स्वार्थनिरूपकम् ॥ इह त्वध्यायरूपं वा
तदर्थात्मकमेव वा । व्याख्यायामधिकर्तुं हि
शक्यते शेषलक्षणम् ॥'

अतः परं शेषलक्षणमधिकृतं तदादरेण श्रोतव्यम् ।
यतोऽध्यायान्तरावकाशोऽद्यापि नास्तीति । अतः शेष-
लक्षणमधिकृतं वेदितव्यमिति शक्यं वक्तुम् । 'शेषस्यै-
वाधिकारोऽत्र युक्तो नान्यस्य कस्यचित् । शेषधी-
सिद्ध्यपेक्षत्वादन्यलक्षणवाग्धियाम् ॥' सप्तमादि-
षट्कस्तावदुपदेशपूर्वकातिदेशविषयत्वादुपदेशविचारार्थ-
प्रथमषट्कसमाप्तिं प्रतीक्षते । तथाऽधिकारोऽपि यथोप-
दिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यत इति क्रमनियम-
पर्यन्तोपदेशज्ञानोत्तरकालमारप्स्यते । तथाहि 'भारो यो
येन वोढव्यः स प्रागातोलितो यदा । तदा कस्तस्य
वोढेति शक्यं कर्तृनिरूपणम् ॥ प्रयोजकवशौ
चेष्टौ मुख्यप्रावृत्तिकक्रमौ । चतुर्थलक्षणादूर्ध्वं
क्रमतश्चिन्तयिष्यते ॥ प्रयोजकोऽपि शेषाणां शेष्य-
न्यस्त्वप्रयोजकः । करिष्यते परा तस्मात्तश्चिन्ता
शेषलक्षणात् ॥ तेनात्रैवेदमारभ्यमिति सिद्धेऽभि-
धीयते । प्रकारैर्बहुभिश्चेदं कर्तव्यं शेषलक्षणम् ॥
स्वरूपहेतुसंबन्धतत्प्रमाणबलाबलैः । ननु ज्ञेया यथा
शेषाः शेषिणोऽपि तथैव नः । नैकस्मिन्नप्यविज्ञाते
व्यवहारो हि सिध्यति ॥' उच्यते-- 'ज्ञातव्या
उभये सत्यं सूत्रणीया न तूभये । अर्थापत्त्या हि
सिध्यन्ति द्वितीया एकलक्षणात् ॥ तत्र सूत्राणि
शेषाणां किं कार्याण्युत शेषिणाम् । फलप्रयास-
तुल्यत्वात्प्रसज्येत यथारुचि ॥ प्राधान्याच्छेषिणां
साक्षाद्युक्तं वा शेषिलक्षणम् । न तु तत्क्रियते तत्र
कर्तव्यं हि द्वयं भवेत् ॥ शेषोऽस्यास्तीति मत्वर्था-
देवं शेषी निरूप्यते । न स शेषमविज्ञाय ज्ञातुं
शक्येत केनचित् ॥ तेनोपसर्जनस्यापि शेषस्यैवेह
लक्षणम् । क्रियते शेषिणस्त्वर्थात्तज्ज्ञानेनैव
सेत्स्यति ॥ श्रुत्यादिभिः प्रमाणैश्च शेषत्वस्यैव
निर्णयः । शेषी तद्विषयत्वेन लक्ष्यते नान्तरी-
यकः ॥ श्रुत्यादिसमवाये च वक्ष्यते यद्बला-
बलम् । तच्छेषिण्यविरुद्धत्वाच्छेषगोचरमेव नः ॥'
तस्माच्छेषलक्षणमेव समस्ततद्गतप्रकारविशिष्टं वक्तुमिदं
प्रतिज्ञातम् 'अथातः शेषलक्षणम्' इति । तत्र 'कः शेषः'
इति–स्वरूपाभिधानप्रतिज्ञा । 'केन हेतुना' इति–येनासौ
शेष इत्युच्यते । तस्य च कारकहेतोस्तद्धर्मस्यैव लक्षणं
वक्ष्यत इति प्रतिज्ञायते । तथा विनियोगप्रकारज्ञानं क्व
शेषिणि कः शेषः कतमेन प्रमाणेन कतमत्प्रमाणान्तरं
बाधित्वा विना बाधेन वा विनियुज्यते । तथा विनियोज-

कश्रुत्यादिषट्कस्वरूपज्ञानं तेषां बलाबलज्ञानं च । तत्र प्रथमे पादे तावत् श्रुतिविनियोगः किंचिच्च प्रासङ्गिकम् । द्वितीयपादादौ लिङ्गविनियोगः । तृतीयपादादौ तदेव प्रमाणद्वयमुपन्यस्योपक्रमोपसंहाराद्यैरेकवाक्यत्वेन सिद्धान्तस्थापनाद्विनाऽपि वाक्यग्रहणेन ' प्रायदर्शनात् ' इति वाक्यविनियोगमुक्त्वा प्रकरणक्रमसमाख्याभिः विनियोगः सूत्रोपनिबद्ध एव वक्ष्यते । ततो बलाबलाधिकरणम् । ततः परं च श्रुतिलिङ्गवाक्यानां प्रकरणेन सह विरोधाविरोधचिन्ता तावद्यावत् ' तुल्यः सर्वेषां पशुविधिः ' इति । ततश्चतुर्णां क्रमेण सह पुनः सैव चिन्ता यावत् ' शास्त्रफलं प्रयोक्तरि ' इति । तत उपोद्घातपूर्वकं पञ्चभिः सह समाख्याया विरोधाविरोधविषयविचारेणाध्यायपरिसमाप्तिः । एतत्तात्पर्येणान्यदुपोद्घातप्रसक्तानुप्रसक्तेरिति वक्ष्यमाणमनुसंकीर्त्यते । प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते । सर्वं चैतच्छेषलक्षणप्रतिज्ञयैव पिण्डीकृतं प्रतिज्ञातमिति न भेदेन सूत्रितम् ।

शा— बहुप्रकारं चेदं शेषलक्षणं वक्ष्यते, कः शेष इति तत्स्वरूपम्, केन हेतुना शेष इति शेषशब्दप्रवृत्तिनिमित्तम्, कथं विनियुज्यते इति विनियोगप्रकारः । श्रुत्यादीनि विनियोगे शेषस्य शेषिणा सहान्वयबोधने कारणानि प्रमाणानि । तेषां च विरोधे बलाबलम्, विरोधश्च क्वास्ति क्व च नास्ति तदेतत्सर्वमभिसंधाय शेषलक्षणं वक्ष्यामः इति सूत्रितम् । तदनेन सूत्रेण श्रोतृबुद्धिसमाधित्सया वक्ष्यमाणार्थप्रदर्शनमात्रं कृतम् ।

वि— ' द्वितीये कर्मणां भेदे सिद्धे मिश्रक्रियास्वयम् । बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते ॥ अशाब्दी शेषता शाब्दी वा न शाब्यप्रतीतितः । क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसंभवात् ॥ गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ । व्युत्पत्तिसंभवात्तत्र शाब्दता स्यात्क्रियादिवत् ॥ '

भाट्ट— तदेवं षट्प्रमाणके कर्मभेदे निरूपिते संप्रति शेषिनिरूपितं शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां हि तत् संभवति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता, तथापि अङ्गत्वसामानाधिकरण्येन हेतुतामादायैव संगत्युपपत्तावच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चिद्विरोधः । अंश एव हेतुत्वम्, अंशान्तरे तु तत्प्रसङ्गात्निरूपणमित्यपि बोध्यम् । अङ्गत्वमेव वाऽध्यायार्थोऽङ्गित्वं त्वर्थात् । तदपि च श्रुत्यादिषट्प्रमाणकम्, अतिदेशप्रमाणकस्येहाविचार्यत्वात् । तच्चानेकप्रकारकं विचार्यते । अङ्गत्वलक्षणं शेषपदशक्यत्वावच्छेदकम्, अङ्गाङ्गितयोरवच्छेदकम्, श्रुत्यादीनि च षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधश्च क्वास्ति नास्तीत्यादि ।

मण्डन— ( प्रथमं प्रतिज्ञाधिकरणं अनुक्रमणिकायां नवोक्तं ग्रन्थकृता । तत्र कारणं स्पष्टम् । अत्राधिकरणस्वरूपं नास्ति । द्वितीयतृतीयाध्याययोः पौर्वापर्यसंबन्धनिरूपकमेवेदमाद्यं सूत्रमिति सर्वसंमतम् । )

शंकर— ' तृतीयार्थप्रतिज्ञाऽर्थः । '

* शेषलक्ष्याधिकरणम् । ३।१।३।३–६ ॥ इदमेव बादर्यधिकरणम् । मीको. पृ. २९५२ ' बादर्यधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * शेषलक्ष्याधिकरणम् । न च षष्ठाद्याधिकरणेन अस्य पौनरुक्त्यम् । तदधिकरणसिद्धेष्टसाधनत्वं अङ्गीकृत्य इह यागादेः लक्ष्यत्वमात्रनिरूपणात् । कौ. ३।१।३।३.

* शेषविनियोगः यथासंयोगं ( ३।१।४–६ ) अधिकरणत्रये स्थितः । वा. ३।१।७।१३ पृ. ६९९.

* शेषविषयः द्विप्रकार एव नैयमिकः आपेक्षिकश्चेति ( तत्र द्रव्यगुणसंस्काराः नियोगतो गुणभूता एव । यागफलपुरुषास्तु आपेक्षिकाः ) । वा. ३।१।३।६ पृ. ६६४.

* शेषशेषित्वात् ऋते प्रयोजकाप्रयोजकत्वं नास्ति । वा. ७।१।१।१ पृ. १५२४.

* शेषशेषिभावः अन्वये अन्तर्भवति । न हि गुणप्रधानभावमन्तरेण अन्वयः संभवति । वि. ३।१।१, * शेषशेषिभावः अपि क्रियाकारकतदन्वयवत् शाब्द एव । ३।१।१. * शेषशेषिभावः, भेदो यावन्नावधृतः तावन्नास्ति ( अतो द्वितीयानन्तरं तृतीयोऽध्यायः ) । वा. ७।१।२।१.



* शेषशेषिसंबन्धं सप्तमी नहि वदति । वा. ३।३।७।१४ पृ. ८१९.

* शेषषष्ठी विनियोक्त्री द्विविधा गुणत्वे प्राधान्ये च । बाल. पृ. ४५.

* शेष्याकाङ्क्षया क्वचिदनुषङ्गः, यथा ' या ते अग्ने रजाशया, या ते हराशया' इत्यादौ ' तनूर्वर्षिष्ठाः ' इत्यादेः । वि. २।१।१७.

* शेषिनिरूपितं शेषत्वं तृतीयेऽध्याये सिद्धम् । भाट्ट. ४।१।१.

* शैघ्र्यमान्द्यकृततदनुप्रवेशाननुप्रवेशन्यायः । अधिकारानुप्रवेशोपयोग्यर्थप्रतीति–शैघ्र्यमान्द्य०न्यायः संमतः । रसायनम्. २५.

꣸ शैलूषीन्यायः । यथा शैलूषी नटी क्रमेण विविधरूपाणि धत्ते, तथा अर्थालंकारेषु एकोपमैव नाना प्रतीपाद्यलंकाररूपाणि धत्ते । उक्तं च– ' उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदात् । प्रीणयति काव्यरङ्गे नर्तयति तद्विदां चेतः ॥ ' इति । साहस्री. ३६९.

* शोणः इति वर्णवचनोऽश्वजातिगतं वर्णं वदति, नान्यम् । भा. ६।८।१०।४०, * ' शोणमानय ' इति ( उक्ते ) रक्तगुणसंबद्धोऽश्वः शब्देनैव आनयतौ विधीयते इति न वाक्यभेदो भवति ( अत्र वार्तिकम्– प्रमाणान्तरप्राप्तेऽपि आनयतौ रक्तोऽश्वश्चोद्यमानो न रक्ताश्वशब्दाभ्यामिव अभिहितो वाक्यभेदं जनयति ) । २।२।१२।२७ पृ. ५५८.

* शोणादिन्यायः । ' शोणेऽपि नैव वाजित्वमनुक्त्वा तद्गतेऽभिधा । अश्वत्वं नैव शोणस्य विशेषणतयेष्यते । गुणजात्यन्तरं त्वेतद्दैवात् तत्संगतिं गतम् ॥ ' तस्माज्जात्यन्तराण्येव शोणत्वकर्कत्वगौरत्वादीनि ( शुक्लत्वावान्तरजातिः कर्कत्वम् ) अश्वमनुष्यादिसंबन्धीनि अभिधीयमानानि तेष्वपि प्रत्ययमादधति, यथा गोत्वं सास्नादिमत्सु इति न वाच्यत्वमाशङ्क्यम् । ( अयं शोणादिन्यायः ) । वा. ३।४।४।१३ पृ. ९१९–९२०. * तिङो विशिष्टवाचितायां शोणादिशब्दानां दृष्टान्तत्वे निरस्ते कुमारादिशब्दानां दृष्टान्तत्वाशङ्कानिरासार्थं शोणादिन्यायं तेष्वतिदिशति । एतेनैवेति । सु. पृ. १४१०–११, * चेतनेषु तर्हि प्रतिप्राणिजातिविलक्षणस्य लिङ्गस्य प्रत्यक्षेण प्रतीतेः शोणादिन्यायेन मनुष्यादिशब्दस्य मनुष्यत्वाद्येकार्थसमवायि–स्त्रीलिङ्गावान्तरजातिवाचित्वं ब्राह्मण्यादिशब्दानां च ब्राह्मणत्वाद्येकार्थसमवायिस्त्रीलिङ्गावान्तरजातिवाचित्वं अभ्युपगम्य मनुष्यत्वादिजातीनां लिङ्गविशेषादेव प्रतीतिसिद्धेः । पृ. १४१२.

* शोणत्वं अश्वत्वैकार्थसमवायिरक्तावान्तरसामान्यम् । सु. पृ. ३४२. * शोणत्वं नाम रक्तावान्तरजातिः । वा. ३।४।४।१३ पृ. ९१९, सु. पृ. ८८६.

* शोणशब्दः अन्येनानुपात्तेऽपि अश्वे तद्गतं गुणं वदन् आत्मनैव अश्वत्वमपि गमयति । वा. ३।४।४।१३ पृ. ९१८.

* शोभनस्य गुरुकुलम् । अयुक्तोऽयं समासः । संबन्धिशब्दानां प्रतिसंबन्धिव्यतिरिक्तार्थान्तरापेक्षायां भवत्येव सामर्थ्यविघातः । रत्नाकरः पृ. ३४७.

* शौचं दक्षिणाचारता, यज्ञोपवीतित्वं च एवंजातीयका अर्था व्यवधातारो न भवन्ति, सर्वपदार्थानां शेषभूतत्वात् । भा. १।३।३।७ पृ. २००.

* शौनःशेपाख्यानं अयागरूपं राजसूयस्याङ्गम्, नैतत् प्रधानम् । अस्याभिषेचनीययागेऽपकर्षेणानुष्ठानेऽपि महाप्रकरणात् राजसूयाङ्गत्वमेव न तु अभिषेचनीयाङ्गत्वम् । वि. ४।४।१–२.

* शौनःशेपाख्यानादि अभिषेचनीयसंनिधौ आम्नातम् । तच्च प्रकरणेन सर्वराजसूयाङ्गं न तु क्रमेण अभिषेचनीयमात्रस्य राजसूये । भा. ३।३।७।१४ पृ. ८५४.

꣸ श्मशानवैराग्यन्यायः । अयमपि महाभारते अश्व० प० अ० १ श्लो० १३ टीकायामुक्तः । तत्रेत्थम्– द्वितीये ' यो माम् ' इति श्लोके प्रहरणे मनसि श्मशानवैराग्यन्यायेन जितो मया काम इति निश्चित्य प्रयतते संन्यासादिकं करोति, तस्य मनस्येव पुनरहं प्रादुर्भवामि । अन्यत्रापि– ' श्मशानान्ते पुराणान्ते मैथुनान्ते च या मतिः । सा मतिः सर्वदा काले नरो नारायणो भवेत् ॥ ' इति । साहस्री. ७६४.

* श्यामो दक्षिणा राजसूये द्वितीये त्रिसंयुक्ते । **भा.** ११।४।१।२.

**श्यामरक्तन्यायः** । यथा घटपटादौ श्यामगुणनाशे रक्तगुणोत्पत्तिरेवं यत्र पूर्वगुणनाशेऽपरगुणसमावेशस्तत्रास्य प्रवृत्तिरिति । **साहस्री.** ५०६.

* '**श्यामाकं** चरुं सोमाय वनस्पतये' नानाबीजेष्टौ द्वितीयं हविः । **भा.** ११।३।७।१५, * 'अग्नीषोमीयमेकादशकपालं निर्वपेत् **श्यामाकं** ब्रह्मवर्चसकामः' । १०।७।१७।५८.

* **श्यामाकाग्रयणे** भक्षमन्त्रः 'अग्निः प्रथमः०' इति । **संकर्ष.** ३।१।९.

* **श्यामाकचरुः** सौमेन्द्रः वैदिकपानव्यापदि प्रायश्चित्तम् । वि. ३।४।१६.

**श्यालशुनकन्यायः** । यथेत्थं लौकिकी गाथा–कश्चित्कुतर्की स्वसद्मस्थे शुनि श्यालनामकसंकेतं कृत्वा स्वस्त्रीकोपोत्पादनाय तं गालीर्ददौ, सा च तं भ्रातरं मत्वाऽतिकोपपरीतात्मतयाऽतिदुःखिता बभूव । तथा च यथा शुनि भ्रातृताभ्रान्तिमत्याः भार्यायाः कोपनाय भर्त्रा श्वनिन्दा क्रियते, तथाऽत्यन्ताभिन्नेऽपि तत्तद्विग्रहावच्छिन्ने परात्मनि भेदभ्रमवतां कोपोत्पादनाय शास्त्रेण तदिष्टविग्रहावच्छिन्ने परात्मनि भेदभ्रमवतां निन्दाव्याजेनाऽन्यविग्रहावच्छिन्ने स्तुतिः क्रियते, अथ वा कार्यब्रह्मणि विराडादौ विष्ण्वादिनामसंकेतं कृत्वा शास्त्रेण तन्न्यूनताद्युक्त्या शिवादिस्तुतिः क्रियते इति भावः । **साहस्री.** १३६.

* श्यावः अश्वः दक्षिणा उपहव्याख्ये एकाहे । स च ब्रह्मणे देयः । वि. १०।३।१८.

**श्यावाश्वाधिकरणम्** । उपहव्ये उक्थ्ये च औपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः ॥

**धेनुवच्चाश्वदक्षिणा सब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य । १०।३।१८।६५ ॥**

भाष्यम्— अस्त्युपहव्यः, 'उपहव्योऽनिरुक्तः, तेनाभिशस्यमानं याजयेत्, अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथंतरसामा, अश्वः श्वेतो दक्षिणा' । 'उपहव्योऽनिरुक्तः, तेनाभिशस्यमानं याजयेत्, उक्थ्यो यज्ञः सप्तदशस्तोमो बृहत्पृष्ठः, अश्वः श्यावो रुक्मललाटो दक्षिणा' । तत्र श्रूयते 'स ह्यनिरुक्तः, स ब्रह्मणे देयः' इति । तत्र संदेहः किमश्वो ब्रह्मभागस्य निवर्तकः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्येति । किं प्राप्तम् ? ब्रह्मभागस्य निवर्तकः इति । कुतः ? कर्तृसंबन्धात्, अवयवार्थत्वात्, विभक्तप्रकृतित्वाच्च गुणेदन्ताविकारः स्यात् । स्रग्वत् । यथा 'स्रजमुद्गात्रे ददाति' इत्युद्गातृभागस्य निवर्तिका स्रक्, न कृत्स्नस्य क्रतुदाक्षिण्यस्य, एवमिहापीति । **एवं प्राप्ते, ब्रूमः** । धेनुवदश्वदक्षिणा स्यात् । कृत्स्नस्य निवर्तिकेति । कुतः ? दक्षिणाशब्दसंबन्धात् । 'अश्वः श्यावो रुक्मललाटो दक्षिणा' इति प्रत्यक्षश्रुतेनाश्वेन आनमनं कर्तव्यम् । एवं चेत्, आनुमानिकं निवर्तितुमर्हति । ननु कर्तृसंबन्धोऽस्य श्रूयते 'स ह्यनिरुक्तः, स ब्रह्मणे देयः' इति । उच्यते । एकेन वाक्येन देशकप्राप्तानां निवृत्तिः । द्वितीयेन वाक्येन निवृत्तौ सत्यां पुरुषापनयः क्रियते । यथा हिरण्यस्य, सर्वं ब्रह्मणे परिहरतीति । तस्मात् कृत्स्नस्य निवर्तकोऽश्वः इति ।

टुप्— द्वितीयमधिकरणं ( प्रकृतस्य ) कृत्स्नस्य, तृतीयमपि कृत्स्नस्यैव, लिङ्गाशङ्कानिवृत्त्यर्थमारभ्यते । चतुर्थमपि तत्कृत्स्ने विकारः, तदन्ताविकारोऽध्वर्युभागे नियमार्थः ।

**एके तु कर्तृसंयोगात् स्रग्वत् तस्य लिङ्गविशेषेण । ६६ ॥**

भाष्यम्— अथ यदुक्तम्, एके अर्था निवर्तन्ते, कर्तृसंयोगात् लिङ्गविशेषेण स्रग्वदिति । तत्परिहर्तव्यम् ।

**अपिवा तदधिकारात् हिरण्यवदविकारः स्यात् । ६७ ॥**

भाष्यम्— अपिवेति पक्षव्यावृत्तिः । तदधिकारात्, दक्षिणाऽधिकारात् । दक्षिणाशब्देन दक्षिणामधिकृत्याश्वसंबन्धः कृतः । तस्मात् कृत्स्नदक्षिणाविकारोऽश्वः । अतो हिरण्यवदेव भवति, न स्रग्वत् ।

शा-- उपहव्ये 'अश्वः श्यावो दक्षिणा, स ह्यनिरुक्तः, स ब्रह्मणे देयः' इति श्रूयते । स चाश्वः क्रतौ भृतित्वेन विहितः सर्वैर्त्विजां दातव्यः प्राप्तः सन् उत्तरेण



वाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयते । तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेण आनतिः कर्तव्या इति कृत्स्नक्रतुदक्षिणानिवृत्तिः ।

**सोम**— श्यावः कपिशवर्णः 'श्यावः स्यात् कपिशः' इत्यमरकोशात् । स श्याववर्णः अश्वः अनिरुक्तः, श्यावस्य वर्णसमाहाररूपत्वेन विशिष्य नीलादिशब्दैः निर्वक्तुमशक्यत्वात्, उपहव्यस्य अस्पष्टमन्त्रगानयुक्तत्वेन अनिरुक्तत्वात् औचित्येन श्यावस्य दक्षिणात्वं युक्तं इति श्रुत्यर्थः । पूर्वोक्तप्राकाशवत् श्यावाश्वेन न कृत्स्ननिवृत्तिः इत्युत्थानात् **संगतिः** । **सूत्रार्थस्तु**–अश्वदक्षिणा धेनुवत् सर्वदाक्षिण्यनिवर्तिका स्यात् । 'स ब्रह्मणे' इति वाक्येन तु तस्य पुरुषान्तरेभ्योऽपनयः, यथा हिरण्यस्य कृष्णलाख्यस्य 'सर्वं ब्रह्मणे परिहरति' इति तद्वत् इति ।

**वि**-- 'श्यावाश्वो ब्रह्मभागस्य बाधको निखिलस्य वा ।, आद्यः प्राकाशव, न्मैवं धेनुवत् सोऽपि नान्यगः ॥'

**भाट्ट**— 'उपहव्योऽनिरुक्तः' इत्यनेन उपहव्यसंज्ञकमेकाहं विधाय 'अश्वः श्यावो दक्षिणा, स ह्यनिरुक्तः, स ब्रह्मणे देयः' इति श्रुतम् । अत्र दक्षिणावाक्यं ब्रह्मवाक्यात् तावद्भिन्नमेव, द्वयोः प्रथमान्ततच्छब्दयोः एकदेयपदान्वयानुपपत्तेः, 'अनिरुक्तः' इत्यर्थवादेन व्यवधानाच्च । तत्र दक्षिणावाक्ये तावत् पूर्ववदेव दानान्तरम्, प्राकृतदानमेव वा पूर्वप्रवृत्त्यङ्गीकारेण गुणद्वयविशिष्टं विधीयते, इतरथा वाक्यभेदापत्तेः । अत एव प्राकृतसर्वद्रव्यनिवृत्तिरपि । उत्तरवाक्ये तु तस्य ब्रह्मानत्युद्देशेन विधानमित्यविवादम् । दक्षिणावाक्ये परं प्राकृतब्रह्मसंप्रदानकदानाभ्यासे अश्वविधिः, उत प्राकृतदाने इति चिन्तायाम्, यद्यपि पूर्ववाक्ये अविशेषेण दक्षिणामात्रश्रवणात् प्रकृतक्रतुसंबन्धिसर्वर्त्विगानतिसाधनदाने एवाश्वविधिरिति प्रतीयते, तथापि उत्तरवाक्ये तस्य ब्रह्मसंबन्धावश्यंभावात् सर्वर्त्विगानतिजननानुपपत्तेः, ब्रह्मानतिसाधनप्राकृतदानाभ्यासे एवाश्वविधिप्रतीतेः, न कृत्स्नदाक्षिण्यस्य निवृत्तिः, अपि तु ब्रह्मभागस्यैव । न चैवं दक्षिणाशब्दस्य ऋत्विक्संबन्ध्यानतिसमुदायवाचिनो ब्रह्मानतिरूपावयवे लक्षणाऽऽपत्तिः, दक्षिणाशब्दस्याऽऽनतिमात्रवाचित्वेन समुदायवाचित्वे प्रमाणाभावात् । अतो विशेषरूपोत्तरवाक्येन सामान्यवाक्यस्यास्य उपसंहारात् ब्रह्मभागमात्रस्यैव प्राकृतस्य निवृत्तिः । **इति प्राप्ते**, ब्रह्मभागमात्रनिवृत्तौ 'प्राकाशावध्वर्यवे ददाति' इतिवत् अश्वः श्यावो ब्रह्मणे देयः, इत्येतावतैव सिद्धेर्वाक्यद्वयकरणेन दक्षिणापदतच्छब्दयोः वैयर्थ्यप्रसङ्गात् अवश्यं प्राकृतदानस्यैव पूर्वप्रवृत्त्यङ्गीकारेणाश्वविशिष्टस्य विधिः । अत एवात्र प्राकृतदानकार्ये दानान्तरविधिपक्षो नैव संभवी, तत्कार्यस्य ऋत्विगन्तरानतेरश्वेनासंभवात् । अतश्च प्रकृतक्रतुसंबन्धिविजातीयदाने एवाश्वविधानात् सर्वस्यैव प्राकृतदाक्षिण्यस्य धेनुवन्निवृत्तिः । तस्य च तद्वदेव सर्वर्त्विग्भ्यो दाने प्रसक्ते उत्तरवाक्येन ब्रह्मसंबन्धावगमात् पुरुषान्तरेभ्योऽपनयः । एवं च तेषामुपायान्तरेणानतिः संपाद्या ।

**मण्डन**— 'अश्वः स्यात् समस्तनिवर्तनाय ।'

**शंकर**— 'श्यावाश्वे कृत्स्नबाधः स्यात् ।'

* **श्यावाश्वं** साम आर्भवे पूर्वा अनुष्टुप् 'पुरोजिती वो०' उत्तरे द्वे गायत्र्यौ 'यो धारया पावकया०' 'तं दुरोषमभी०' । अनुष्टुप्कारं प्रग्रथनेन आनुष्टुभे तृचे भवति । **भा.** ९।२।६।२५ वर्णकं ३.

* **श्यावाश्वान्धीगवसाम्नोर्गानं** अनुष्टुभो गायत्र्योश्च प्रग्रथनेन संपादिते आनुष्टुभे तृचे ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं ३. **मीको.** पृ. १७८३ 'ज्योतिष्टोमे अनुष्टुभो०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **श्येनः** इत्यादिशब्दाः कर्मनामधेयम् । १।४।४।५. **मीको.** पृ. १९०७ 'तद्व्यपदेशन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * श्येनः इषुश्च एकाहौ आभिचारिकौ । **भा.** ७।१।२।१३, * श्येनः एकाहः आभिचारिकः ज्योतिष्टोमिकोऽत्र विध्यन्तः श्येनोऽपि ज्योतिष्टोमपूर्वकः । ७।१।२।१३. * श्येनः वज्रः इषुः इत्येवमादिः निषिद्धफलः अनर्थः । **ऋजु.** पृ. २९. * श्येनः विधिगम्योऽपि अनर्थफलत्वेन अनर्थरूपः । यद्यपि श्येनस्य शत्रुवधः फलं न तु नरकः तथापि वधस्य नरकहेतुत्वात् वधद्वारा श्येनः अनर्थः । वि. १।१।२, * श्येनः ।

'श्येनेनाभिचरन् यजेत'। अत्र श्येनशब्दः नित्यस्य सोमस्य स्थाने पक्षिद्रव्यरूपं गुणं विदधाति इति पक्षः। कस्यचित् अभिचारकर्मणो नामधेयमिदं 'यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते यमभिचरति श्येनेन' इति उपमानोपमेयभावः श्येनेन पक्षिणा साकं कर्मणः। उपमानोपमेययोश्च मेदो भवति। इति कर्मनामधेयमेवैतत् न पक्षिविधायकम्। १।४।५, * श्येनः सोमयागविकारः। ३।८।२१. * 'श्येनमस्य वक्षः कृणुतात्' इति मन्त्रः सादृश्यविधिसरूपः। बाल. पृ. ६५. * श्येनांश्च अष्टम्यां (उपवसतः पश्यामः)। भा. ६।१।२।४, * 'श्येनेन अभिचरन् यजेत' इति श्येनशब्दः गुणविधिः उत कर्मनामधेयं इति संदेहे कर्मनामधेयं इति सिद्धान्तः। १।४।४।५. * श्येनेन अवश्यं विषदानाद्युत्पत्तिः, तेन वैरिमरणम्, न तु श्येनेनैव साक्षात्। भाट्ट. ४।१।२ वर्णकं २. * 'श्येनेन यजेत' इत्यव्यक्तचोदिते दीक्षणीयादीनि सोमाङ्गानि दर्शयति 'दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायाम्' इति। भा. ८।१।९। १६, * श्येनस्य वैशेषिकाः लोहितोष्णीषादयो धर्माः इषौ अतिदिश्यन्ते। ७।१।२।१४, * श्येनस्य साक्षादाज्यसंबन्धो न चास्ति, श्येनाङ्गानां तु विद्यते। तच्चाज्यं दृतिनवनीतम्। ३।८।२०।३६. * श्येनस्य सामवेदविहितस्यापि कर्तारः सर्वे ऋत्विजः नोद्गातैव। वि. ३।७।२३, * श्येने अङ्गभूतेष्टिषु चोदकप्राप्ताज्ये दृतिनवनीतत्वं गुणो विधीयते। दृतिनवनीतं दृतौ चर्मपात्रे चिरं संपादितं नवनीतं यस्याऽऽज्यस्य प्रकृतिद्रव्यं तदाज्यम्। ३।८।२१. * श्येने उपदिष्टैर्लोहितोष्णीषत्वादिभिः आतिदेशिकस्योपवीतस्य न बाधः किंतु समुच्चयः। भा. १०।४।१।१-२, * श्येने त्रयाणामपि पशूनां सवनीयस्थाने एवालम्भः 'सह पशूनालभते' इति वचनात्। ३।८।२१।३९. * श्येने दृतिनवनीतं सर्वेषामेवाङ्गानाम्, न सुत्याकालीनानामेव। ३।८।२१। ४०-४२. मीको. पृ. २११४ 'दृतिनवनीतं श्येने०' इत्यत्र अधिकरणं द्रष्टव्यम्। * श्येने दृतिनवनीतमाज्यम्, तच्च श्येनाङ्गानां न प्रधानस्य।३।८। २०।३७-३९. मीको. पृ. २११५ 'दृतिनवनीताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * श्येने धर्मत्वापत्तिरिष्टा, प्राणवियोगरूपहिंसायाः श्येनफलत्वेन श्येने हिंसात्वाभावात्। यदि च प्राणवियोगानुकूलव्यापारस्य हिंसात्वमुपेयते तदाऽपि अदृष्टाद्वारकव्यापारस्य हिंसात्वात् श्येने तदभावः सुवचः। अस्तु वा हिंसात्वं तथापि अग्नीषोमीयहिंसावत् विधेयतया निषेधाप्रवृत्तेर्धर्मत्वोपपत्तिः। मणि. पृ. ८. * श्येने निवीतोपवीतयोर्वासोभ्यां समुच्चयः कृत्वाचिन्ता वा। वि. १०।४।१. * श्येने प्रधानस्य सोमद्रव्यकत्वम्। भा. ३।८। २०।३६. * श्येने प्राकृताङ्गेषु उद्गातुः कर्तृत्वं नानर्त्विक्कर्तृकत्वेन बाध्यते। बाल. पृ. १४१. * श्येने 'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति'। अत्र निवीतेन प्राकृतमुपवीतं बाध्यते इति पक्षः। प्राकृतवैकृतयोः समुच्चयः इति सिद्धान्तः। समुच्चयश्च वासोद्वयेन संपाद्यः। कृत्वाचिन्ता वा। तथा च पूर्वपक्ष एव सिद्धान्तः। वि. १०।४।१. * श्येने लोहितोष्णीषादिकं सर्वेषामृत्विजां न तु उद्गातॄणामेव। ३।८।४।१२. मीको. पृ. ३३८९ 'लोहितोष्णीषाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * श्येने 'शरमयं बर्हिः भवति' इति शराः कुशान् निवर्तयन्ति। भा. १०।४।१।१. * श्येने श्रूयते 'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति। १०।४।१।१॥ भाष्यम्— अस्ति प्रकृतौ 'निवीतं मनुष्याणां, प्राचीनावीतं पितॄणां, उपवीतं देवानां, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः, किमुपवीतस्य निवृत्तिः उत अनिवृत्तिः समुच्चय इति। किं प्राप्तम्? तस्य निवृत्तिरिति प्रत्यक्षश्रुतं निवीतं चोदकप्राप्तस्यानुमानिकस्य निवर्तकम्। अपि च प्रकृतिलिङ्गसंयोगो भवति 'निवीताः प्रचरन्ति' इति। एवं प्राप्ते, ब्रूमः। अनिवृत्तिः समुच्चय इति। नास्ति प्रकृतिलिङ्गसंयोगोऽत्र। उपवीतमदृष्टार्थे, कथं तस्य कार्ये निवीतं वर्तत इति गम्यते। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः। अत एवंजातीयकं कर्मसंस्कारं विकृतौ अधिकं स्यादिति।



टुप्— 'निवीता ऋत्विजः' इत्येतदनुदाहरणम्। कथम्? ज्योतिष्टोमे उपवीताभावात्। न प्रत्यक्षेण, न चोदकेन ज्योतिष्टोमे उपवीतम्। तत्प्रकृतिकश्च श्येनः न दर्शपूर्णमासप्रकृतिकः। 'आनर्थक्यात्तदङ्गेषु' (३।१। ९।१८) इति न्यायोऽत्र नास्ति। प्रधाने हि असंभवन् अङ्गेषु अर्थात् क्रियते। संभवति चात्र प्रधाने एव निवीतम्। तस्मात् भिन्नविषयत्वात् निवीतोपवीतयोर्व्यवस्था।

वि— न च निवीतोपवीतयोर्विरोधः शङ्कनीयः, वासोभ्यां तदुभयोपपत्तेः। तस्मात् समुच्चयः। कृत्वा चिन्ता वा अस्तु।

भाट्ट— यत्तु अत्र भाष्यकारेण श्येने 'निवीता ऋत्विजः प्रचरन्ति' इत्याम्नातेन प्रयोगाङ्गभूतकर्तृसंस्कारकेण निवीतेन अतिदेशप्राप्तस्य सर्वकर्मार्थत्वेन विहितस्य चोपवीतस्य बाधमाशङ्क्य अदृष्टार्थत्वात् समुच्चय इति सिद्धान्तितम्, तत् अस्यादृष्टार्थत्वे श्राद्धादावपि प्राचीनावीतेन सह उपवीतस्य समुच्चयापत्तेः यावज्जीवैकत्रिसूत्र – नवतन्तुक – यज्ञोपवीतधारणाश्रितप्रकारविशेषस्य उपवीतत्वनिवीतत्वादेः तत्तत्कर्माङ्गतया विहितस्य समुच्चयासंभवादुपेक्षितम्।

* श्येने 'सह पशूनालभते'। तच्च साहित्यं सुत्याकालीनेष्वेव सवनीयपशुषु अवस्थितम्। वि. ३।८।२५. * श्येने। साद्यस्क्रे सर्वं अग्नीषोमप्रणयनादि सौत्येऽहन्येव क्रियते। तद्वाचनिकातिदेशाच्च श्येनेऽपि। भाट्ट. ५।१।६. * श्येने सौमिको विध्यन्तः अव्यक्तचोदनत्वात्। भा. ८।१।९।१६.

* श्येनाग्न्याधानयोः संबन्धो नास्ति। अग्नीनामाधानम्, अग्नयश्च श्येनस्य। भा. ३।८।२०।३८.

* श्येनाङ्गानां नवनीताज्यता। वि. ३।८।२१, * श्येनाङ्गेषु यत् दृतिनवनीतमाज्यं तत्र केवलं सुत्याकालीनपशुपुरोडाशादिषु किंतु दीक्षणीयादिषु सर्वत्रैव ज्ञातव्यम्। ३।८।२२.

**श्येनाधिकरणन्यायः। साहस्री. ८४७.**

* श्येनाकृतिः अग्निचयने काम्यैव। संकर्ष. २।१।४०. मीको. पृ. ४८ 'अग्निचयने श्येनाकृतिः काम्यैव' इत्यत्र अधिकरणं द्रष्टव्यम्।

* श्येनादौ आतिदेशिकनानाऋत्विक्कृत्वादिवदेव आतिदेशिकपाठक्रमप्रापितक्रमस्यैव बलीयस्त्वम्। भाट्ट. ५।१।१०. * श्येनादौ उपदिष्टेन निवीतेन अतिदिष्टस्य उपवीतस्य समुच्चयः। १०।४।१।१-२. मीको. पृ. २३२७ 'नारिष्ठहोमादीनां आतिदेशिकानां०' इत्यत्र अधिकरणं द्रष्टव्यम्। * श्येनादौ औद्गात्रादिसमाख्याप्राप्तस्य कर्तुः प्राकृताङ्गव्यतिरिक्तापूर्वाङ्गविषयत्वम्। सु. पृ. ११८१. * श्येनादौ प्राकृताङ्गेषु नानाकर्तृकत्वम्। ३।७।२३।५०-५१. * श्येनादयः कर्तव्या इति विधिना नैव प्रतिपाद्यन्ते, फलार्थितयैव प्रवृत्तेः। यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः। ऋजु. पृ. २९.

* श्येनाद्यभिचारकर्मणः अनर्थफलकत्वेन अनर्थरूपत्वान्न धर्मत्वम्। वि. १।१।२.

* श्येनादिप्रकरणे धर्मोपदेशाभावात् अतिदेशेन धर्मप्राप्तिः। वि. ७।१।१.

* श्येनादिशब्दानां यागनामधेयता। वि. १।४।५.

**श्येनकपोतीयन्यायः।** यथा कपोतोऽतर्कितागतेन श्येनेन गृहीतस्तथा काकतालीयवत् ज्ञेयमिति। साहस्री. ६८८.

* 'श्येनचितं चिन्वीत स्वर्गकामः' अयं गुणकल्पनया पुरुषार्थः विधिः। बाल. पृ. २७. * 'श्येनचितं चिन्वीत स्वर्गकामः' इति फलार्था चितिक्रिया। संकर्ष. २।१।५.

* श्येनधर्माणां इषौ यागे अतिदेशः। ७।१।२। १३-१६. मीको. पृ. १९६ 'अतिदेशः इषौ श्येनीयविशेषधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* श्येनधर्मजातं इषौ नाम यागे अतिदिश्यते 'समानमितरच्छयेनेन' इति। वि. ७।१।२.

* श्येनन्यायः (१।४।४।५)। ज्योतिष्टोमे तत्तद्विनियोगविध्यनुसारेण नानावेदस्वरे प्राप्ते दर्शपूर्णमासप्राकृताङ्गविषये श्येनन्यायेन प्राकृतेन स्वरेण तस्य बाधः। कौ. ३।३।२।९ पृ. ३२४.

* श्येनफलस्य अभिचारस्य रागप्राप्तत्वात् 'न हिंस्यात्' इति निषेधविषयत्वम् । भाट्ट. ४।१।२ वर्णकं २.

* श्येनयागः न धर्मः । यदि कामाधिकारेऽपि नियोगो यागस्य कर्तव्यतां वदेत्, स च यागः फलसाधनभूतः अकर्तव्ये फले न कर्तव्यः स्यात्, इति फलस्यापि अर्थात् नियोग एव कर्तव्यतां वदेत्, ततश्च फलेऽपि विध्याक्षिप्ता औपादानिकी प्रवृत्तिः इति श्येनफलं हिंसा 'न हिंस्यात्' इत्यनेन प्रतिषेद्धुं न शक्यते, प्रतिषेधस्य पुरुषार्थत्वात् । औपादानिकप्रवृत्तिनिषेधे च क्रत्वर्थप्रसक्तेः 'नानृतं वदेत्' इतिवत् । तथा अप्रतिषिद्धपुरुषाभिलषितशत्रुक्षयफलत्वात् श्येनादिनियोगो नानर्थः स्यात् । स हि नियोगः अनर्थः, यः प्रतिषिद्धफलः । न च कामाधिकारे नियोगो यागस्य कर्तव्यतां वदति, फलत एव कर्तव्यतासिद्धेः । यद्यपि नियोगः कर्तव्यतया प्रतीयते तत्साधनतया च यागः, तथापि कामाधिकारेषु काम्यमानफलसिद्धिपर्यन्तत्वात् शास्त्रस्य न नियोग एव स्वसिद्ध्यर्थं पुरुषं प्रयुङ्क्ते । रागाक्षिप्तप्रवृत्तित्वात् पुरुषाणां फलत एव प्रवृत्तिसिद्धेः । तथा च यागे फले च प्रवृत्तिः नौपादानिकी इति तत्प्रतिषेधो न क्रत्वर्थः स्यात् इति श्येनफलस्यापि प्रतिषेधो नानुपपन्नः इति निषिद्धफलत्वात् अनर्थः श्येनादिनियोगः चोदनालक्षणः न धर्मः इति न किंचिदनुपपन्नम् । ऋजु. पृ. २९. * श्येनयागस्य सामवेदविहितत्वेऽपि न केवलमुद्गातृकर्तृकत्वं किंतु ज्योतिष्टोमवत् नाना ऋत्विजः कर्तारः । वि. ३।७।२३. * श्येनयागे दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायाम् । भा. ८।१।९।१६.

* श्येनवाक्ये श्येनशब्दस्य यागनामत्वाय ज्योतिष्टोमनाम्न इव प्रवृत्तिनिमित्तापेक्षानुरोधेनैव वाक्यशेषोपदर्शितसादृश्यावलम्बनेन गौणत्वाङ्गीकारः । पराक्रमः. ४४।१.

* श्येनवाजपेययोः अध्वर्य्वादिसर्वगणकर्तृकत्वम् । सू. ३।७।२३।५१–५२.

**✠ श्येनवाजपेययोः प्राकृताङ्गेषु नानाकर्तृकत्वम् ॥**

**वेदोपदेशात् पूर्ववद् वेदान्यत्वे यथोपदेशं स्युः ।३।७।२३।५०॥**

**भाष्यम्**— अस्ति औद्गात्रे समाख्यातः श्येनः, आध्वर्यवे वाजपेयः । तत्र संदेहः, किं श्येने उद्गातृभिरेव पदार्थाः कर्तव्याः, वाजपेये अध्वर्युभिः, उत उभयत्र नानर्त्विग्भिरिति । किं प्राप्तम् ? वेदोपदेशात् । समाख्यानादित्यर्थः । पूर्ववत् । यथा, आध्वर्यवमिति समाख्यानात्पदार्थानध्वर्युः करोति, एवमेव वेदान्यत्वे यथोपदेशं स्युः । यो येन समाख्याते वेदे उपदिष्टस्तस्य पदार्थास्तेनैव कर्तव्याः । साङ्गः स तत्रोपदिश्यते । तस्मात् श्येने उद्गातृभिर्वाजपेये चाध्वर्युभिः पदार्थाः कर्तव्या इति ।

वा— 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' ( ३।३।२।९ ) इत्यत्र व्याख्यातं यथाऽङ्गानि प्रधानवेदव्यपदेशं लभन्ते इति । तस्मात् श्येने सर्वे पदार्थाश्चोदकप्राप्ता उद्गातृभिः कर्तव्या इति ।

**तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ५१ ॥**

**भाष्यम्**— तद्ग्रहणात् प्राकृतधर्मग्रहणाद्वा, स्वधर्मः स्वैर्धर्मैश्चोदकप्राप्तैः संयुक्तः स्यात् । चोदकसामर्थ्यात् सहाङ्गैः कुर्यादिति श्रूयते । तानि चाङ्गानि ज्योतिष्टोमे सन्त्यपेक्ष्यन्ते । तत्र ज्योतिष्टोमे नानर्त्विजः तैरस्य सहैकवाक्यता । ननु प्रत्यक्षा समाख्या, चोदक आनुमानिकः । उच्यते । सत्यं प्रत्यक्षा समाख्या । लौकिकी तु सा । तत्रानुमाय वैदिकं शब्दं तेनैकवाक्यता स्यात् । चोदके पुनर्विप्रकृष्टाधीतया प्रत्यक्षयेतिकर्तव्यतया सहैकवाक्यता । तस्मात् चोदको बलवत्तरः ।

यत्तूक्तं समाख्यानादिति । तत्रोच्यते । अव्यक्तः शेषे, समाख्यातो भविष्यति । यः पदार्थो न चोदकेन प्राप्नोति, तत्र समाख्यया नियमो भविष्यति । यथा, श्येने कण्टकैर्वितुदन्तीति, उद्गातारो वितोत्स्यन्ति, वाजपेये चोषं पुटैरर्पयन्तीत्यध्वर्यवोऽर्पयिष्यन्ति ।



वा— उक्तम् ( ३।३।२।९ इत्यत्र ), वक्ष्यते ( ५।१।१०।१८ इत्यत्र ) चैतद्यथा जघन्यकालत्वात् प्रयोगवचनश्चोदकात् दुर्बल इति । प्रयोगवचनाश्रया च प्रधानसमाख्या, सा सत्यपि प्रत्यक्षत्वे दुर्बला । यावच्चातिदेशेन नाङ्गानि प्राप्यन्ते तावत्कस्य कर्तारं नियच्छति । यदा तु प्राप्तानि भवन्ति तदैषां क्लृप्तकर्तृसंबन्धान्न कदाचिदपेक्षेति किं समाख्या करिष्यति । न चात्र प्राप्तबाधो भवति, श्रुतिकल्पनेन समाख्याया विप्रकृष्टत्वात् । उक्तं ह्येतद्यथा क्लृप्तमूलानां प्रमाणानां प्राप्तबाधो भवति न कल्प्यमूलानामिति । तस्मात् प्राप्तकृतग्रहणेन तदधिकारसामर्थ्यात् ज्योतिष्टोमवदेव नानाकर्तृकः स्यात् । यद्यपि च प्रकृतावपि समाख्ययैव नानाकर्तारस्तथापि क्लृप्तसंबन्धत्वादिह श्रुतितुल्यता । यत्त्वप्राकृतं किंचिदाम्नायते तस्य प्रधानसमाख्यातः कर्ता भविष्यतीति दर्शयन्नाह—'अव्यक्तः शेषे' इति । अक्लृप्तावस्थत्वादव्यक्तोऽयं कर्तृसंबन्धः क्लृप्तादन्यत्र भवितुमर्हति । न त्वस्य विषयः सम्यग्दृश्यते । कण्टकवितोदनादीनि यद्वा प्रधानसमाख्याते वेदे पठ्यन्ते, वेदान्तरे वा । यदि तावत्तत्रैव ततः समाख्ययैव तेषां कर्तृसंबन्धो न प्रधानद्वारेण । अथ तु वेदान्तरे पठ्यन्ते ततः प्रत्यक्षत्वे सत्यपि तयैव विशेषसमाख्यया बलीयस्या भवितव्यम् । अथात्रापि 'गुणमुख्यव्यतिक्रमन्यायः' ( ३।३।२ ) आश्रीयते ततः स्तोत्रशस्त्रादीनां ज्योतिष्टोमस्य आध्वर्यवसमाख्यानादध्वर्युकर्तृकत्वप्रसङ्गः । न चात्र 'मन्द्रं प्रातःसवने' इत्यादिवत्समाधानमस्ति । तस्मान्न प्रधानेनाङ्गेषु स्वसमाख्या बाध्यते । सा त्वौत्पत्तिकेन कर्तृसंबन्धेन विनियुक्तार्था सती प्रधानेन गृह्यते । न चाङ्गानां प्रधानद्वारेणाऽऽध्वर्यवादिसमाख्या युज्यते । न हि प्रधानान्याध्वर्यवादिसमाख्याभिर्युज्यन्ते, गुणभूतेषु कर्तृव्यापारात् । या च प्रधानेषु न व्यापृता सा तद्द्वारेणाङ्गेष्ववतरिष्यतीति कुत एतत् । ऋग्वेदादिसमाख्या प्रधानेष्वङ्गेषु चाविरुद्धा । तेन क्रियत इति च तत्र व्यपदेशः । स च प्रधानप्रयोगवचनेन विधेयत्वादङ्गेषु युज्यते । पाठकृता चाऽऽध्वर्यवादिसमाख्या । सा यथापाठमेव भवितुमर्हति । न चात्र गुणमुख्यव्यतिक्रमन्यायेनानभ्युपगतेन किंचिद्दुष्यति । कण्टकवितोदनादयश्च प्रधानवेदसमानोत्पत्तय एव द्रष्टव्याः । तदात्मना च शक्यम् 'अव्यक्तः शेषः' इति वक्तुम्, नावश्यं प्रधानादेवावतरन्ती समाख्याऽनुगृह्यते । साक्षादनुग्रहेऽप्यननुग्रहेऽपि वाऽन्याङ्गेषु कृतार्थत्वेनाविरोधात्तेन प्राकृताङ्गव्यतिरिक्तेषु समाख्या विनियोक्त्रीति सिद्धम् ।

शा— औद्गात्रे समाख्यातः श्येनः, वाजपेयश्च आध्वर्यवे । द्वावपि ज्योतिष्टोमविकारौ । तत्र किं प्रधानवेदसमाख्यातः उद्गाता अध्वर्युश्च इतरत्रेतरत्र च सर्वपदार्थानतिदिष्टान् कुर्यात् उत प्रकृतिवन्नाना कर्तार इति । तत्र प्रधानविधिविधेयत्वादङ्गानां तत्समाख्यालाभात् तस्याश्च उपदेशरूपत्वेन अतिदेशाद्बलीयस्त्वात् तत्समाख्यात एक एव कर्ता सर्वं कुर्यात्, प्रकृतौ तु प्रत्यक्षवचनैरेव नानर्त्विग्विधानात् सत्यामपि प्रधानद्वारेण आध्वर्यवसमाख्यायां नानैव कर्तारः, इह तु चोदकदौर्बल्यात् तद्बाधेन समाख्याप्राप्त एव कर्ता स्यात् । 'अत्रोच्यते भवेदेवं चोदको यदि दुर्बलः । स तु प्रथमभावित्वात्समाख्यां बाधते बलात् ॥ अङ्गानां हि समाख्यानं प्रयोगवचनाश्रयम् । चोदकप्राप्त्यपेक्षस्तु प्रयोगविधिसंग्रहः ॥' प्राकृतानामङ्गानां वैकृतप्रयोगविधिसंस्पर्शोत्तरकालं तत्समाख्या भवेत्, तत्संस्पर्शश्च चोदकप्रापितानां स्यात्, तेन च ते प्राप्यमाणाः सकर्तृका एव प्राप्यन्ते इति कर्त्रपेक्षाभावात् अपेक्षानिबन्धनश्रुतिकल्पनासमाख्यानकर्त्रन्तरमलं कल्पयितुम् । न चात्र 'शरमयं बर्हिः' इतिवत् प्राप्तबाधः, कल्प्यत्वात् समाख्याविनियोगस्य, कल्पनायाश्च अपेक्षाधीनायाः तदभावेऽनुदयात् । अपि च पाठनिमित्ता आध्वर्यवादिसमाख्या न विधिनिमित्ता । न च औद्गात्रे पदार्थानां पाठः । '**तेन नास्ति समाख्यैषां विद्यमानाऽपि दुर्बला । श्येनादौ तेन नानैव कर्तारः प्रकृताविव ॥**'

**सोम**— चमसहोमस्य समाख्यया अध्वर्युकर्तृवत् इहापि समाख्यया कर्तुः परिग्रह इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— वेदस्योपदेशादौद्गात्रादिसमा-

ख्यानात् प्रधानवेदस्य अन्यत्वे सति यथासमाख्यं पदार्थानां कर्तारः स्युरिति ।

वि— ' श्येन उद्गातृवेदोक्तो वाजपेयो यजुष्यमू । उद्गात्राऽध्वर्युणा कार्यों यथाप्रकृति वाऽग्रिमः ॥ आख्याविशेषादाख्यायाः पूर्वभावी हि चोदकः । प्रकृताविव कर्तारस्तत्तद्धर्मे व्यवस्थिताः ॥ '

भाट्ट— औद्गात्रे सामवेदे श्येनः श्रुतः ज्योतिष्टोमधर्मवान् । तत्र प्राकृताङ्गेष्वतिदेशेन नाना ऋत्विजः प्राप्ताः औपदेशिकया औद्गात्रसमाख्यया बाध्यन्ते इति तेषु उद्गाता एव कर्ता । समाख्या हि कर्तृप्रापिका । कर्ता च प्रयोगाङ्गम् । प्रयोगश्च प्रयोगविधिना साङ्गस्य एको विधीयते इति समाख्यया अङ्गेष्वपि कर्तृविधिरुपदेशेन । अतश्च यथैव ' अप्स्ववभृथेन चरन्ति ' इत्यत्र अपां देशत्वात् साङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु प्रयाजादिषु अग्निबाधकत्वं तथा प्रकृतेऽपि । न च समाख्यायाः प्रधानमात्रे श्रुताया अपि अङ्गविषयकत्वस्य कल्पनीयत्वेन प्रयोगविध्याश्रितत्वात् तस्य अतिदेशप्रापिताङ्गविषयत्वेन तदपेक्षत्वात् उपजीव्यचोदकप्रापित- नानाकर्तृकत्व- बाधानुपपत्तिरिति वाच्यम् , सत्यपि तृतीयाश्रवणे अपामपि अङ्गविषयत्वस्य कल्पनीयत्वेनोक्तविधया अग्निबाधकत्वानापत्तेः । न हि तृतीयायाः साङ्गवृत्तिकरणत्वे शक्तिः , अपि तु प्रधानकरणत्वे एव, तत्तु अङ्गवैशिष्ट्यं विना अनुपपन्नमिति अङ्गविषयत्वं कल्प्यमेव । अतश्च शरादौ वल्सोपदेशस्थल इव कल्प्योपदेशस्यापि अतिदेशबाधकत्वं वाच्यम् । अत एव यत्र प्रकृतावेव स्तोत्रशस्त्रादौ वेदान्तरीये विशेषसमाख्यारूपेण उपदेशेनैव कर्त्रन्तरप्राप्तिः तत्र अङ्गविषये कल्प्यायाः प्रधानसमाख्यायाः बाध इष्ट एव । वर्णितं ह्येतत् गुणमुख्यव्यतिक्रमाधिकरणे ( ३।३।२ ) । प्रकृते तु आतिदेशिकत्वात् प्रधानसमाख्याया एव प्राबल्यम् । इति प्राप्ते,

इहापि प्रयोगविध्याश्रितायास्तस्या अङ्गविषये कल्प्यत्वेन उपजीव्यातिदेशापेक्षत्वात् तेन च कर्तृविशिष्टानामेव च प्राप्तत्वेन कर्त्रपेक्षाभावात् समाख्याया आकाङ्क्षाविरहे श्रुत्यकल्पकत्वात्, कल्पकत्वेऽपि वा प्राकृताङ्गविषयत्वाभावात् न प्राकृतकर्तृबाधकत्वम् । न च एवमप्स्वपि तथात्वापत्तिः, अबूविधेः प्रत्यक्षत्वात् तासां च धात्वर्थान्वयस्य अव्युत्पन्नत्वात् तृतीयया अवभृथकरणकभावनायामन्वयावगतेः देशत्वेन च भावनोत्पत्त्यन्वयित्वाभावेन तत्प्रयोगान्वयित्वात्, प्रयोगस्य च अङ्गप्रधानसाधारणत्वात् भावनान्वयद्वारा पाश्चात्यतद्विशेषणान्वये अविशेषेण उभयान्वयतात्पर्यावगत्या उपदेशेनैव प्रधान इव अङ्गेष्वपि अग्निबाधात् । अत एव यत्र तृतीयाश्रवणाभावः यथा ' यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः ' इत्यादौ तत्र प्रधानकर्मकभावनायामेवान्वयात् तस्यां च अङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम् । प्रकृते तु समाख्यायाः प्रधानमात्रविषयत्वात् तस्य च स्वामिकर्तृकत्वेनार्थकर्तृकत्वानुपपत्तेः स्वनिर्विषयत्वान्यथानुपपत्त्या कथंचित् आनर्थक्यतदङ्गन्यायेन ( ३।१।९ ) अङ्गमात्रविषयत्वकल्पनेऽपि क्लप्तकर्तृकाङ्गविषयत्वकल्पने प्रमाणाभावात् कण्टकवितोदनाद्यौपदेशिकाङ्गविषयत्वमेव कल्प्यते । वस्तुतस्तु तेषामपि विशिष्य स्वसमाख्ययैव कर्तृप्राप्तेर्न प्रधानसमाख्याविषयत्वम्, अपि तु यानि वेदत्रयाविहितानि स्मृत्यनुमितवेदविहितानि अङ्गानि तद्विषयैव सा इति ध्येयम् । अतः प्राकृताङ्गेषु नानैव कर्तारः । किञ्च समाख्यायाः पाठमात्रनिबन्धनत्वेन ' उच्चैर्ऋचा ' इत्यादिवत् विधाननिबन्धनत्वाभावात् प्राकृतानां च सामवेदेऽपठितत्वादपि तद्विषयत्वाभावः ।

मण्डन— ' श्येने सर्वर्त्विजां कर्म । '

शंकर— ' समाख्या चोदकावरा । '

* श्येनविनियोगः भवति चोदनालक्षणः । तद्विषयत्वात् प्रमेयत्वात् श्येनविधेः । श्येनयागश्च प्रतिषिद्धाभिचारफलत्वादनर्थकः इति सिद्धं प्रत्युदाहरणम् । ऋजु. पृ. ३२.

* श्येनशब्दः अग्निगुप्रैषस्थः कार्त्स्न्यवचनः न तु पक्षिवचनः । भा. ९।४।५।२५–२७.

* श्येन-शलाऽऽदिशब्दाः अग्निगुप्रैषगताः कृत्स्नोद्धरणप्रकाशकाः । ९।४।५।२५–२७. मीको.



पृ. ३४१ ' अग्निगुप्रैषगताः श्येनशलादिशब्दाः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**श्येन-शला-कश्यप-कवष-स्रेकपर्णष्वाकृतिवचनं प्रसिद्धसंनिधानात् ।९।४।५।२५॥**

अग्निगुप्रैषे 'श्येनमस्य वक्षः कृणुतात् , शला दोषणी, कश्यपेवांसौ, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता ' इति । अत्रत्येषु श्येनादिशब्देषु आकृतिवचनं स्यात् । एभिः शब्दैः सा सा आकृतिरुक्ता, प्रसिद्धसंनिधानात् । प्रसिद्धा एषां शब्दानां अर्थाः । तस्मात् आकृतिर्बोध्येत । यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इति सिंहाकाराः इत्यर्थः, तद्वत् । वक्षः श्येनाकारं कर्तव्यम्, दोषणी प्रकोष्ठौ शला शलाकाकारौ, अंसा अंसौ कश्यपा कच्छपाकारौ, ऊरू कवषा कपाटाकारौ, स्रेकपर्णा करवीरपत्राकारौ अष्ठीवन्ता जानुसहिते जङ्घे इत्यर्थः । इति पूर्वः पक्षः ।

**कार्त्स्न्यं वा स्यात् तथा भावात् । २६ ॥**

अग्निगुप्रैषे ' श्येनमस्य वक्षः कृणुतात्, शला दोषणी, कश्यपेवांसा, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता' इति पठितम् । तत्र श्येनः, शला शलाके, कश्यपः कच्छपः, कवषा कवषौ कपाटौ, स्रेकपर्णा स्रेकपर्णौ करवीरपत्रे इत्येते शब्दाः तत्तदाकारं बोधयन्ति इति पूर्वः पक्षः । तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । श्येनादिशब्दाः आकारं न बोधयन्ति किंतु कार्त्स्न्यं कृत्स्नतां बोधयन्ति । श्येनं अस्य वक्षः कृणुतात् अस्य पशोः वक्षः कृत्स्नं उद्धर इत्यर्थः । एवं सति तथा वक्षआदयः पदार्थाः स्वतो यदाकृतिका भवन्ति तदाकृतिका एव उद्धृता भवेयुः । आकृतिवचनतायां तु वक्षआदीनां विकृतता स्यात्, तथा च चोदनोपरोधः । तस्मात् कृत्स्नवचनता श्येनादिशब्दानां इति सिद्धान्तः ।

( ननु श्येनाकारं यत् वक्षः, शलाकाकारे ये दोषणी तत् उद्धरत इति रीत्या अर्थकरणे को दोषः ? । के. )

**अग्निगोश्च तदर्थत्वात् । २७ ॥**

तत्रैव हेत्वन्तरमाह । अग्निगोः अग्निगुमन्त्रस्य तदर्थत्वात् कृत्स्नाङ्गोद्धरणार्थत्वात् । अत एव अन्ते ' गात्रं गात्रमस्यानूनं कृणुतात् ' अस्य पशोः उद्धरणीयानि सर्वाणि अङ्गानि न्यूनानि न कर्तव्यानि इत्युक्तम् । तस्मात् श्येनादिशब्दाः वक्षआदीनां कार्त्स्न्यं बोधयन्ति इति **सिद्धान्तः** । के.

* 'श्येनशलाकश्यप०' ( ९।४।५।२५ ) इत्यधिकरणे वक्षसः कर्तनादिना श्येनसादृश्यं कर्तव्यं इति ' श्येनमस्य वक्षः कृणुतात् ' अनेन मन्त्रेण अन्यथाऽनुपपत्त्या कल्पितो विधिर्विधत्ते इति पूर्वपक्षं कृत्वा अदृष्टार्थताप्रसङ्गात् कर्तने च वक्षसो वैकल्यात् हविर्विनाशापत्तेः साकल्यमेवात्र प्रकाश्यं दृष्टार्थत्वात् इति सिद्धान्तितम् । बाल. पृ. ६५.

**श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात् । १२।१।६।१३ ॥**

कुण्डपायिनामयने अग्निहोत्रस्य अग्निहोत्रद्रव्यस्य श्रपणं च शालामुखीये नवीने गार्हपत्ये न स्यात् किंतु प्राचीने गार्हपत्ये प्राजहिते स्यात् । तस्य प्राक् विद्यमानत्वात् । **सिद्धान्तसूत्रम्** । के.

* श्रपणं पशुपुरोडाशस्य ज्योतिष्टोमे शामित्रेऽग्नौ न कर्तव्यं किंतु शालामुखीये । १२।१।५।१२. * श्रपणं पाकः कृष्णलेषु अदृष्टार्थं कर्तव्यः । श्रपणं यदि औष्ण्योत्पादनं तदा तु कर्तव्यमेव । वि. १०।२।१. * श्रपणं मासाग्निहोत्रस्य कौण्डपायिनामयने प्राजहिते कार्यं न शालामुखीये । १२।१।६।१३. मीको. पृ. १४६३ ' कुण्डपायिनामयने प्राजहितेऽग्नौ० ' इत्यत्र द्रष्टव्यम् । * श्रपणं हविषो गार्हपत्ये क्रियते । ( ' गार्हपत्ये हवींषि श्रपयन्ति ' इति ) । वि. १२।२।१, * श्रपणेन कपालं प्रयुज्यते । न च प्रयुक्तस्य पुनः तुषोपवापेन प्रयुक्तिः संभवति । ४।१।११.

* श्रपणार्थं अङ्गादीनां कुम्भीशूलवपाश्रपणीनां तन्त्रं प्राजापत्यपशुषु वाजपेये । भा. ११।४।८।३०.

* श्रपणादौ भूयोऽश्वप्रतिग्रहे काण्डानुसमयः, अल्पाश्वप्रतिग्रहे पदार्थानुसमयः, निर्वापादौ तु उभयत्रापि पदार्थानुसमय एव । सोम. ५।२।१.

* श्रपणक्रिया आद्यपरिस्पन्दप्रभृतिपकत्वाख्यफलसिद्धिपर्यन्तक्रियाक्षणप्रचयात्मिका । सु. पृ. १३६१.

* श्रयणानि, दृष्टोपकाराभावात् अदृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते । भा. ९।४।१२।४७.

**श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् । ९।४।१२।४५॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं, धानाभिर्हारियोजनं, हिरण्येन शुक्रं, आज्येन पात्नीवतम्' इति श्रूयते । पयः-सक्तु-धानादीनां यानि सोमे श्रयणानि तेषां अपूर्वत्वात् प्रमाणान्तरेण अप्राप्तत्वात् प्रदानार्थे प्रदानरूपे अर्थे विधानं स्यात् । प्रदेयत्वाच्च प्रदानधर्माः कर्तव्याः । तस्मात् श्रयणविषये पयसि वत्सापाकरणादयः कर्तव्याः इति पूर्वपक्षः ।

**गुणो वा श्रयणार्थत्वात् । ४६ ॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' इत्युक्ते पयसि प्रदेयधर्माः कर्तव्याः प्रदानार्थत्वात् इति पूर्वपक्षं वाशब्दो व्यावर्तयति । नैतत् पयः प्रदेयं द्रव्यं किंतु श्रयणार्थं मिश्रणार्थम् । श्रयणार्थत्वात् सोमस्य गुणः पयः । तस्मात् अस्मिन् पयसि प्रदानधर्मा न कर्तव्याः ।

**अनिर्देशाच्च । ४७ ॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' इत्युक्ते पयसि प्रदेयधर्मा न कर्तव्या इति सिद्धान्ते हेत्वन्तरमाह । पयसः सोमे मिश्रणे सोमसंस्कारो भवति । पयः श्रयणे गुणभूतम् । तस्य देवतासंबन्धेन अनिर्देशात् निर्देशाभावात् । तत् श्रयणे निर्दिष्टम् । तस्मात् तत् पयः प्रदेयधर्मैर्न संबध्यते ।

**श्रुतेश्च तत्प्रधानत्वात् । ४८ ॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' अत्र मैत्रावरुणं इति द्वितीयाश्रुतिः तत्प्रधाना मैत्रावरुणग्रहस्थसोमप्रधाना । पयसा श्रयणेन सोम एव ईप्स्यते । पयः सोमार्थम् । सोमः प्रधानम् । तस्मात् तस्मिन् पयसि प्रदानधर्मा वत्सापाकरणादयो न कर्तव्या इति सिद्धान्तः ।

**अर्थवादश्च तदर्थत्वात् । ४९ ॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' इत्युक्ते पयसि प्रदानधर्मा न कर्तव्याः इति सिद्धान्ते हेत्वन्तरमाह । 'स मित्रोऽब्रवीत् पयसैव मे सोमं श्रीणन्' इत्यर्थवादः श्रयणस्य तदर्थत्वात् । ल्यब्लोपे पञ्चमी । तदर्थत्वं सोमार्थत्वं अभिप्रेत्य भवति । 'पयो मे दद्युः' इति नोक्तं मित्रेण किंतु सोमं पयसा संस्कुर्युरिति । तस्मात् सोमार्थे श्रयणम् । ततश्च पयसि प्रदानधर्मा नानुष्ठातव्याः ।

**संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात् । ५० ॥**

अग्निष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' इत्युक्ते पयसि प्रदानधर्मा न कर्तव्या इति सिद्धान्ते हेत्वन्तरमाह । संस्कारं प्रति सोमसंस्कारप्रकरणे 'पयसा मैत्रावरुणं श्रीणाति' इत्यस्य वचनस्य भावात् विद्यमानत्वात् पयसा श्रयणं सोमस्य संस्कार इति गम्यते । तस्मादपि हेतोः पूर्वेभ्यश्च हेतुभ्यः पयः सोमं अप्रधानं गुणभूतं स्यात् । तस्मात् तस्मिन् पयसि प्रदानधर्मा न कर्तव्याः वत्सापाकरणादयः । इति सिद्धान्तः । के.

* श्रयणानां 'पयसा मैत्रावरुणं श्रीणाति' इत्यादीनां प्रदेयधर्मा न भवन्ति । भा. ९।४।१२।४५-५०.

* श्रवणेन एकेन सकृत् कृतायां बुद्धौ द्वितीयं गुणार्थं श्रवणं भवति । भा. ३।३।३।१०.

* श्राद्धम् । 'यथैवाश्राद्धभोजित्वं यथा वाऽमांसभक्षणम् । श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ॥ श्राद्धमन्तर्दशाहं हि नियोगेन निषिध्यते । एकोद्दिष्टं सदैकेषां न तु पित्र्यं कदाचन ॥' तत्र अश्राद्धभोजित्वनियमः स्वर्गायेति विज्ञायते । ( सदा सपिण्डीकरणात् प्रागूर्ध्वं च । पित्र्यं पार्वणश्राद्धम् ) । वा. १।३।२।४ पृ. १९१.

* श्राद्धव्रतादौ मैथुननिषेधः अयं पुरुषार्थमात्रविषयकः क्रत्वर्थः स्मार्तादिप्रतिषेधः । बाल. पृ. ३१.

**'श्रियं हि सततोत्साही दुर्बलोऽपि समश्नुते' इति न्यायः ।** इति भारविः । साहस्री. ९६६.

* श्रीसूक्तं 'हिरण्यवर्णां हरिणीम्' इत्यादि पञ्चदशर्चम् । उत्सर्गमयूखः ( घारपुरे ) पृ. ९.



* श्रुताः अपि अनुपकारकत्वान्न कर्तव्याः सर्वे धर्माः, ये अर्थवन्तः ते एव कर्तव्याः । भा. ३।१।४।७, * श्रुतेन (द्रव्येण) सह प्रतिनिधेर्न प्रकृतिविकारभावः । ३।६।१४।३७-३८, * यावानेव श्रुतस्य उत्सर्गे दोषः तावान् अश्रुतकल्पनायाम् । १०।२।२६।६२, * श्रुते द्रव्ये अपचरति प्रतिनिधिर्भवति । ३।६।१४।३७.

* श्रुते विशेषे सति आक्षेपानवतारः । पराक्रमः. ४२।१. * श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानम् । वि. ३।६।१५.

**श्रुतानुमितयोः श्रुतसंबन्धो बलीयानिति न्यायः ।** श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः, प्रकरणादितः श्रुतेः बलवत्त्वादिति भावः । साहस्री. ५४५.

* श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वम् । 'सदृशन्यायः' ६।३।११।२७ इत्यत्र अधिकरणं द्रष्टव्यम् । * श्रुतद्रव्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनम् । ६।३।४।१३-१७. मीको. पृ. २७१८ 'प्रतिनिधिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनम्, प्रतिनिधौ पशुनियोजनोत्तरम् । वि. ६।३।१८.

* श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वं प्रतिनिध्यपचारे न तु प्रतिनिधेः प्रतिनिधिः । ६।३।१४।३२.

* श्रुतप्रतिनिध्यपचारेऽपि मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वम्, न तु प्रतिनिधिसदृशस्य । ६।३।१५। ३३-३४.

* 'तस्माच्च श्रुतमात्रत्वं विधिग्रहणकारणम् ।' ( विधिना ग्रहणस्य ) । वा. ३।१।७।१४ पृ. ७०९.

**श्रुतयौगिकलाभे सत्यनन्वितरूढार्थस्त्याज्य इति न्यायः ।** अयं हि विशेषविषयतया पूर्वन्यायस्य बाधको दृश्यते । मण्डपं भोजयतीत्यत्र मण्डं पिबतीति यौगिकार्थलाभे अनन्वितगृहरूपरूढार्थत्यागः इति । साहस्री. २१४.

* श्रुतसामिधेनीसादृश्यासु विकृतिषु वर्णत्रयाधिकारः । ६।६।७।३६-३९.

* श्रुतहानिः अश्रुतपरिकल्पना दोषः । य एव श्रुतस्योत्सर्गे दोषः स एवाश्रुतपरिकल्पनायाम् । भा. ३।४।१७।४८, १०।७।१२।३९। यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतपरिकल्पनायाम् । ३।३।७।१४ पृ. ८४६, ३।४।१७।५०, १०।५।६।१५,१६.

* श्रुतार्थापत्तिः 'अर्थापत्तिः दृष्टः श्रुतो वा' इति बिन्दौ ( मीको. पृ. ६६३ ) शा. ग्रन्थे द्रष्टव्या । * श्रुतार्थापत्तिः कदाचिदपि तिरश्चां नास्ति, शब्दव्युत्पत्तिनिबन्धनत्वात् तस्याः । ऋजु. पृ. ८९. * श्रुतार्थापत्तिः द्विविधा लौकिकी वैदिकी चेति । बाल. पृ. ८. * श्रुतार्थापत्तिः प्रमाणम् । 'स्वर्गकामो यजेत' अत्र स्वर्गयागयोः साध्यसाधनभावः श्रुतः अपूर्वकल्पनां विना न सिध्यति इत्यस्ति अपूर्वं इति श्रुतार्थापत्त्या सिध्यति । ( के. )

* श्रुतिः अनुत्पन्नं निर्वर्तयितुं न शक्नोति । (अर्थात् उत्पत्तिः अपेक्षितव्या) । टुप्. ९।१।१७।५१. * श्रुतिः अभिधात्री पञ्चविधा- धातु-प्रातिपदिक-प्रत्यय-उपसर्ग-निपातभेदात् । बाल. पृ.४१. * श्रुतिः । 'अभिधात्री श्रुतिः काचिद् विनियोक्त्र्यपरा तथा । विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः ॥' प्रकृतिप्रत्ययश्रुत्योः स्वस्वार्थाभिधातृत्वम् । पदस्य कारकविभक्तीनां च विनियोजकत्वम् । लिङ्-लोट्-तव्य-पञ्चमलकाराणां तु विधिसामर्थ्यम् । वा. ३।१।७।१३ पृ. ७००. * श्रुतिः अवघातादिविनियोगविशेषकारणत्वेन 'एकत्वयुक्तमेकस्य श्रुतिसंयोगात्' ( ३।१।७।१३ ) इति ग्रहाधिकरणपूर्वपक्षसूत्रे उक्ता । सु. पृ. ११९१. * श्रुतिः । असंदिग्धश्रुतिः संदिग्धश्रुतेर्बलीयसी । यथा- अक्तश्रुतेः घृतश्रुतिर्बलीयसी । वा. ३।३।७।१४ पृ. ८४०. * श्रुतिः आचारात् बलीयसी । कणिका. पृ. ४०५. * श्रुतिः आनुमानिकी, प्रत्यक्षादपि लिङ्गात् बलीयसी । वा. ३।३।७।१४ पृ. ८४१, * श्रुतिरेव हि अत्र ( श्रुतिलिङ्गादिषु ) एकं प्रमाणम्, इतरेषां तु स्मृतिवत् श्रुत्यनुमानद्वारं प्रामाण्यम् । सा तु ग्रहणोपायषट्कानुरोधेन षोढाऽवतिष्ठते । ३।३।७।१४

पृ. ८३०. * श्रुतिः 'ऐन्द्या गार्हपत्यं' इति द्वितीया विभक्तिः। विनियोगकारणमुक्तम्। भा. ३।३।४।११. * श्रुतिः क्रमात् बलवती। वा. ३।३।७।१४ पृ. ८३६. * श्रुतिः (क्रमबोधकप्रमाणान्यतमा) क्रमे प्रमाणम्। बाल. पृ. ८. * श्रुतिः क्रमबोधकं प्रमाणम्। मणि. पृ. १३. * श्रुतिः क्वचित् (आनर्थक्यप्रतिघातस्थले) प्रकरणेन बाध्यते। बाल. पृ. १४५. * श्रुतिश्च चोदकात् बलीयसी। लक्षणेन उपाकर्तव्यं इति प्रत्यक्षा श्रुतिः। अभिधानेन उपाकर्तव्यं इति चोदकः। भा. १०।४।१।२ वर्णकं २, * श्रुतिश्च लिङ्गवाक्ययोः बाधिका समधिगतैव। १०।६।२।३. * श्रुतिः चतुर्विधा– विधिः प्रतिषेधः अभिधात्री विनियोक्त्री चेति। बाल. पृ. ९. * श्रुतिः त्रिविधा, विधात्री अभिधात्री विनियोक्त्री चेति। मीन्या. * श्रुतिः धर्माङ्गताबोधकं (षण्णामन्यतमं) प्रमाणम्। मणि. पृ. १३. * श्रुतिः (क्रमप्रमाणं) नाम वृत्त्या क्रमबोधकः क्लृप्तः शब्दः। स च अथशब्दादिः। भाट्ट. ५।१।१ पृ. १५४. * श्रुतिः निरपेक्षो रवः। यच्छब्दज्ञानं अन्यव्यवधानमनपेक्ष्य यदर्थज्ञानं जनयति स तस्मिन्नर्थे श्रुतिः। मीन्या. * श्रुतिः प्रकरणात् प्रबला। 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति विहितानुवचनस्य प्राकरणिकं दर्शाद्यङ्गत्वं (सामिधेनीनां) प्रतिष्ठाकामस्येति षष्ठीश्रुत्या बोधितेन प्रतिष्ठार्थत्वेन बाध्यते। 'युवं हि स्थः स्वर्पती' इति 'द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति श्रुतिप्रतिपन्नकुलायाद्यङ्गत्वेन प्रकरणप्राप्तं ज्योतिष्टोमाङ्गत्वं बाध्यते। मीन्या. भाट्टालंकारः. पृ. १५३. * श्रुतिः प्रकरणात् बलीयसी (बलवती)। भा. २।२।२।२, २।४।१।२, ३।३।९।१७–१९, ३।४।४।१२, वा. ३।३।७।१४ पृ. ८३५, ३।३।९।१९, सु. पृ. १२९६, वि. ३।१।४. * श्रुतिः। प्रत्यक्षगृहीतानि यान्यक्षराणि विनियुञ्जते सा श्रोत्रवृत्तित्वात् श्रुतिरित्युच्यते। यत्र तु अनियोजकानि अक्षराणि प्रत्यक्षेण गृहीत्वा विनियोजकानि अर्थापत्त्या कल्प्यन्ते तत्र लिङ्गादीनि भवन्ति। वा. ३।३।७।१४ पृ. ८३०. * श्रुतिः। प्रत्ययश्रुतिबलेन पदश्रुतिबाधः (बाध्यते)। सु. १।२।३।३० पृ. ९२. * श्रुतिः। यदर्थस्याभिधानं शब्दस्य श्रवणादेव अवगम्यते स श्रुत्या अवगम्यते। श्रवणं श्रुतिः। भा. ३।३।७।१४ पृ. ८२५. * श्रुतिः लक्षणाया बलीयसी (गरीयसी, ज्यायसी)। भा. १।२।२।१९, ३।३।१२।३३, ३।६।३।१०, ४।१।१७।४८, ४।३।१०।२६, ४।४।८।१९, ९।१।९।३३, ९।३।२।३, टुप्. ७।३।११।२९, १०।१।१।२. * श्रुतिः लिङ्गेन न बाधितव्या। भा. ७।३।१४।३६. * श्रुतिः लिङ्गात् प्रबला। 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति ऐन्द्री ऋक् 'कदाचन स्तरीरसि' इति श्रुत्या गार्हपत्योपस्थानाङ्गं न तु इन्द्रोपस्थानाङ्गं लिङ्गात्। मीन्या. * श्रुतिः लिङ्गात् प्रबला। लिङ्गस्य सामर्थ्यनिरूपण–श्रुतिकल्पनाव्यापाराभ्यां स्वाभिधेयप्रतिपादन–विनियोगयोर्मध्ये व्यवधानात्। प्रत्यक्षश्रुतेश्च तदभावात्। वि. ३।३।७. * श्रुतिः लिङ्गात् बलीयसी। भा. ३।३।७।१४ पृ. ८२३. * श्रुतिः लिङ्गानुमिता आकाङ्क्षावशेन क्रियाप्रकाशनमात्रविनियोगायैव ज्ञायते (न फलाय)। वा. १।२।४।३५. * श्रुतिः वाक्यात् प्रबला। आरुण्यस्य वाक्यात् एकहायन्यङ्गत्वं सिध्यत् श्रौतेन क्रयाङ्गत्वेन बाध्यते। 'अरुणया एकहायन्या सोमं क्रीणाति'। मीन्या. भाट्टालंकारः. पृ. १५२. * श्रुतिः वाक्यात् बलीयसी (बलवती)। भा. २।२।१।१ पृ. ४६६, २।२।११।२५ पृ. ५४५, २।३।३।४ पृ. ५९३, ३।१।६।१२ पृ. ६८६, ६८८, ३।१।७।१५ पृ. ७२४ (वाक्यात् श्रुतिः०), ३।१।८।१६, ४।१।५।११ (वाक्यात् श्रुतिः०), ४।२।८।२२, ५।१।१।१ वर्णकं ३ पृ. १२८९, ६।१।१।१ पृ. १३४९, ६।१।५।२२ पृ. १३६४, ६।१।१२।४९, ९।२।५।२३ वर्णकं २, १०।२।८।२२, १०।२।२८।६५ (वाक्यात् श्रुतिः०), १०।३।१४।५७, १०।४।१।१, १०।४।२।३ पृ. १९१४, १०।५।१८।६६, १०।७।१९।६५, वा. ३।३।७।१४ पृ. ८३५, ६।१।१।१ पृ. १३४५. * श्रुतिः। विधायिका हि श्रुतिः अन्यानाक्षिप्ता धात्वर्थभावनयोरेव संनिरुद्धा तत्रैवाप्राप्तविषयस्वभावं विधित्वं प्रसुवाना पञ्चम–स्थानाख्यप्रमाणकृतां प्राप्तबुद्धिं (समिधो यजति तनूनपातं यजति–) उपमृद्य विधेयत्वक्षमं कर्मान्तरं कल्पयति। स चेद्विधिः श्रुतिमनुरुध्येत कर्मान्तरमध्यवस्यति अथ संनिधिं ततो न कर्मान्तरत्वम्। वा. २।२।२।२ पृ. ४७०, * श्रुतिः विधि–विनियोग–अभिधानात्मिका। ३।३।४।११. * श्रुतिः विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। वि. ३।३।७. * श्रुतिः समाख्याया बलवती। वा. ३।३।७।१४ पृ. ८३६. * श्रुतिः समाख्यानात् प्रबला। दर्शपूर्णमासप्रकरणे प्रथमपठितस्य क्रियाविशेषशून्यत्वेन अस्पष्टलिङ्गतया स्वतन्त्रक्रमप्रकरणानिर्णीतविनियोगस्य मन्त्रस्य तत्सहकृतसमाख्याबलेन दार्शिकप्रथमपुरोडाशयागाङ्गत्वं प्राप्नुवत् सांनाय्याङ्गशाखार्थत्वं बोधयन्त्या 'इषे त्वेति शाखां छिनत्ति' इति श्रुत्या बाध्यते। मीन्या. भाट्टालंकारः. पृ. १५४–१५५. * श्रुतिः समानाभिधानरूपा। तथा 'पशुना यजेत' इत्यत्र एकत्वपुंस्त्वयोः कारकाङ्गत्वम्, 'यजेत' इत्यत्र संख्याया भावनाङ्गत्वम्, तच्च कर्तृपरिच्छेदद्वारा। मीन्या. * श्रुतिः स्थानात् प्रबला। दर्भमयीत्वादिविशिष्टरशनायाः क्रमेण अग्नीषोमीयाङ्गत्वम्, पशुत्रयसाधारणयूपार्थत्वं बोधयन्त्या 'रशनया यूपं परिव्ययति' इति श्रुत्या बाध्यते। मीन्या. भाट्टालंकारः. * श्रुतिः स्मृतितो बलीयसी। भा. १२।३।७।१९, * अयमस्यापूर्वस्य शेषः अयमस्य इत्यत्र श्रुतिः एव प्रमाणं क्रमते, न प्रत्यक्षादीनामन्यतमम्। ७।१।१।१. * त्रिविधा श्रुतिः –– विधि–उक्ति–विनियोगाख्या। उक्तिः अभिधानम्। वा. ३।३।७।१४ पृ. ८२४. * श्रुतयः अपि परस्परविरुद्धा दृश्यन्ते (न च तासामप्रामाण्यम्)। उदितानुदिताग्निहोत्रहोमविधिवत् अतिरात्रगतषोडशिग्रहणवच्च सहस्रशः श्रुतयोऽपि असंभवद्युगपदनुष्ठानार्थतया परस्परविरुद्धा दृश्यन्ते। ...तावतैव सर्वशाखाप्रत्ययकर्मव्यवहारिणां स्वयमश्रुतानधीतत्वमात्रेण दृढस्मरणोपस्थापितपुरुषान्तरस्थश्रुतिनिराकरणं न शोभते। सर्वश्रुतीनां सर्वपुरुषान् प्रति प्रामाण्यात्। वा. १।३।२।३ पृ. १७०, * श्रुतयः प्रकरणादिप्राप्तार्थानुवादेन गुणानां विधात्र्य इष्टाः। ३।५।१०।३१, * श्रुतिं अकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यं नास्ति। १।२।४।३४ पृ. १५१. * श्रुतिं न च वाक्यमपबाधितुमर्हति। भा. २।२।११।२६ पृ. ५४७, * श्रुत्या अर्थेन च क्रमेण पाठक्रमो बाध्यते। ५।४।१।१. * श्रुत्या असंदिग्धया, श्रुतिः संदिग्धा बाध्यते। यथा– आमिक्षायागे वैश्वदेवी इत्यसंदिग्धतद्धितश्रुत्या वाजिभ्य इति पञ्चमीत्वेन संदिग्धायाः श्रुतेर्बाधः गुणाधिकरणे उक्तः। बाल. पृ. १३५. * श्रुत्या आचारो बाध्यते। यथा अपशब्दप्रयोगरूप आचारः 'तस्माद् ब्राह्मणेन न म्लेच्छितवै' इति निषेधरूपश्रुत्या। बाल. पृ. १३८. * श्रुत्या क्रमः सत्रे दीक्षायां ऋत्विजाम्। भा. ५।१।१।१, * श्रुत्या क्रमस्यैव विधानं न पदार्थानाम्। यथा सत्रे दीक्षाक्रमः। ५।१।१।१ वर्णकं ३. * श्रुत्या क्रियामात्रसंबन्धे कृते वाक्येन विशेषसंबन्धः 'अरुणया क्रीणाति' इत्यत्र। वा. ३।३।४।११ पृ. ८१७. * श्रुत्या क्वचित् देवानां देवतात्वम्। तद्धितनिर्देशे ('वैश्वदेवी आमिक्षा' इत्यत्र) श्रुत्या (सिध्यतीति शेषः)। भा. २।२।९।२३. * श्रुत्या (अभिधया) गौणी बाध्यते। यथा बर्हिर्मन्त्रप्रकाश्यं गौणं कुशसदृशं उलपादि मुख्यकुशरूपार्थेन। बाल. पृ. १४१. * श्रुत्या परस्मैपदरूपया वाक्यस्य बाधः 'यः कामयेत वर्षुकः पर्जन्यः स्यात् इति स नीचैः सदो मिनुयात्' अत्र वृष्टिकामनाया यजमानगतत्वम्, सदोनिर्माणं तु आर्त्विज्यम्, वर्षणस्य ऋत्विग्गतत्वं वाक्येन प्राप्नोति तत् बाध्यते। वि. ३।८।६, * श्रुत्या पाठक्रमस्य बाधः। एकत्रिकस्य यागस्य माध्यंदिने पवमाने त्रयाणां तृचानां आद्यास्तिस्रः ऋचो ग्राह्याः, किंवा प्रथमतृचस्थाः क्रमपठितास्तिस्रः, इति संशये, 'त्रिच्छन्दा आवापः' इति प्रबलया त्रिच्छन्दस्त्वश्रुत्या दुर्बलं पाठक्रमं बाधित्वा प्रथमपक्षो ग्राह्यः इति पूर्वपक्षः। १०।५।२. * श्रुत्या प्रकरणस्य बाधः। अहीनश्रुत्या ज्योतिष्टोमप्रकरणं बाधित्वा द्वादशोपसत्ता अहीनस्यैवेति निश्चीयते। न ज्योतिष्टोमस्य। वा. ३।३।८।१५–१६, * श्रुत्या प्रत्यक्षया विरुद्धा स्मृतिः न प्रमाणम्। १।३।२।३–४. * श्रुत्या (अभिधया) लक्षणा बाध्यते।

यथा उद्भिदादौ नामत्वे श्रुत्या यजिसामानाधिकरण्यात् गुणविधौ प्रसक्ता मत्वर्थलक्षणा । बाल. पृ. १४१. * श्रुत्या लक्षणा बाध्येत । भा. १०।८।८।१६ पृ. २०७३, * श्रुत्या वाक्यं बाध्यते । ४।१।५।१४. * श्रुत्या श्रुतिः ( प्रबलया दुर्बला ) बाध्यते । यथा— ' तथा पश्वङ्गमेकत्वं पद्श्रुत्या प्रतीयते । समानप्रत्यय-श्रुत्या बलीयस्या क्रियाङ्गता ॥ ' इति । बाल. पृ. १३४–१३५. * श्रुत्या संनिधेर्बाधः । ' समिधो यजति... तनूनपातं यजति ' अत्र यजतिपदे विधित्वं श्रौतं अनुवादत्वं तु संनिधिना, संनिधिश्च श्रुतेर्दुर्बलः । वि. २।२।२. * श्रुत्या स्मृतिः बाध्यते, अप्रासन्नाधः । वा. ३।३।७।१४ पृ. ८६०. * श्रुत्या स्मृतिर्बाध्यते । यथा– ' औदुम्बरीं स्पृष्ट्वोद्गायेत् ' इति श्रुत्या, ' औदुम्बरी सर्वा वेष्टयितव्या ' इति स्मृतिर्बाध्यते । बाल. पृ. १३८. * अस्मिन्नधिकरणे ( ९।१।५।११–१९ ) लिङ्गवाक्य-संयुक्ता नैवोदाहरणम्, निराकृतत्वात् । श्रुत्या तु येषां तादर्थ्ये त इहोदाहरणम् । तान् श्रुत्या तदर्थान् मन्य-मानः पूर्वपक्षं करोति । टुप् . ९।१।५।११. * न च श्रुत्या अन्येन संबध्यमानं वाक्येन आच्छिद्य अन्येन संबन्धमर्हति । भा. ३।१।८।१४ पृ. ७२४. * न हि श्रुत्या उपयुक्तानां लक्षणया उपयोगान्तरं युज्यते । वा. ३।३।९।१८, * शूर्पेण ( 'शूर्पेण जुहोति' ) इति तावत् करणविभक्तिश्रुत्या एव अवरुद्धो होमो नानुमानिकैः दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान् प्रतिपद्यते । १।२।३।२७, * सर्वत्र हि परिसंख्याशब्दात् एवकाराद्वा विना न श्रुत्या परिसंख्या नियमो वा उच्यते । विधिरेव तु एवंजातीयकस्य फलेन एवं व्यपदेशः । १।२।४।३४. * श्रुतिभ्यां द्विशब्द–बहुशब्दरूपाभ्यां ' युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः ' इति ज्योतिष्टोमप्रकरणं बाधित्वा यथोक्तप्रतिपदोः कुलाययज्ञे सत्रे चोत्कर्षः कर्तव्यः । वि. ३।३।१४. * 'श्रुतेः कर्मा-न्तरज्ञानं संनिधेरेककर्मता । तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता ॥ ' इति न्यायः । श्रुतिकृतस्य हीषादिमात्र-प्रत्ययस्य प्रत्यभिज्ञारूपेण संनिधिना 'श्रुतेः क०मेकता ' इति न्यायेन बाधायोगात् हेत्वन्तराभावाच्च न प्रकृत-नियमः स भवति इति वैधर्म्योक्त्या परिहरति । सु. पृ. ८८१.

☒ श्रुतेर्जाताधिकारः स्यात् । ३।३।१।१॥

ज्योतिष्टोमे ' प्रजापतिरकामयत प्रजाः सृजेयेति, स तपोऽतप्यत, तस्मात् तेपानात् त्रयो देवा अजायन्त अग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यः ( तपः कुर्वद्भ्यः ) त्रयो वेदा अजायन्त, अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः ' इत्युपक्रम्य ' उच्चै-र्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना, उच्चै-र्निगदेन ' इत्याम्नाते वाक्ये जाताधिकारः जातस्य जातेः ऋक्त्वादेरेव अधिकारः उद्देश्यतया परिग्रहः स्यात् । श्रुतेः ऋगादिपदानां ऋक्त्वादिजातावेव शक्त-त्वात् । इति रङ्गाचार्याः । जातानां ऋगादिमन्त्रगत-जातिविशेषाणां ऋक्त्वादीनां अधिकारः शेषित्वविशेषा-परपर्यायं प्राधान्यं तात्पर्यविषयत्वं स्यात् श्रुतेः ऋगादि-शब्दानामेव श्रवणात् इति कुतूहलम् । जाते ऋक्त्वा-दिजातौ अधिकारः स्यात् उच्चैस्त्वादिधर्माः ऋक्त्वादि-जात्यवच्छिन्नाः इत्यर्थः श्रुतेः ऋगादिशब्दानां ऋक्त्वा-दिजातौ शक्तत्वात् इति सुबोधिनी । ऋगादिशब्दस्य श्रुतिवृत्तत्वलाभाय ऋगादिजातस्यैव उद्देश्यत्वेन अधि-कारः स्यात् इति तु कौस्तुभः ।

वेदो वा प्रायदर्शनात् । २ ॥

' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' इति ऋगादिशब्दाः ऋक्त्वादिजातिपरा न वेदपरा इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तमाह । वाशब्दः पूर्वपक्षं व्यावर्तयति । वेदो वा तत्तद्वेदः एव ऋगादि-शब्दवाच्यः स्यात् । प्रायदर्शनात् वेदप्राये वाक्ये वेदोपक्रमे ऋगादिशब्दानां पाठस्य दर्शनात् इति भाष्यम् । उद्देश्यताघटकप्राये वाक्योपक्रमे वेदशब्द-दर्शनात् इति कौस्तुभः । वेदः विध्युद्देशः मन्त्रब्राह्मण-समुदायरूपवेदधर्मः, प्राये वाक्योपक्रमे वेदशब्ददर्श-नात् । इति सुबोधिनी । वेद इति सामान्याभिप्राय-मेकवचनम् । उच्चैस्त्वादिविधिषु ऋगादिशब्दैः वेदा एव लक्षणया विवक्षिताः न तु ऋगादिमन्त्राः । प्रायदर्शनात्



प्रपूर्वात् इण्धातोः भावे घञि प्रायशब्दः उपसर्गवशात् उपक्रमवाची । दृशिश्च श्रवणे । उपक्रमे वेदशब्दश्रव-णात् इत्यर्थः । इति कुतूहलम् ।

लिङ्गाच्च । ३ ॥

' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' इति ऋगादयः शब्दाः वेदमभिवदितुं शक्नुवन्ति इत्य-स्मिन्नर्थे लिङ्गमपि भवति । ' ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यैस्त्रिभिरेति सूर्यः ॥ ' इत्यत्र द्वौ वेदौ ऋक्शब्दं च संकीर्त्य त्रिषु पादेषु, चतुर्थे पादे उप-संहरति बहुवचनेन ' वेदैरशून्यैस्त्रिभिरेति सूर्यः ' इति ऋक्शब्दं वेदवचनं दर्शयति । तस्मात् ' उच्चैर्ऋचा ' इति ऋगादिशब्दाः वेदाधिकारा इति ।

धर्मोपदेशाच्च नहि द्रव्येण संबन्धः । ४ ॥

' उच्चैः साम्ना ' इति साम्नः धर्मोपदेशात् ' उच्चैर्ऋचा, उपांशु यजुषा ' इति ऋगादिशब्दोऽपि वेदपर एव । जाताधिकारे तु ऋच उच्चैस्त्वेन साम्न उच्चैस्त्वं सिद्धम् । नहि अस्य उच्चैस्त्वस्य द्रव्येण साम्ना संबन्धः साक्षादस्ति । तस्मात् 'उच्चैर्ऋचा, उपांशु यजुषा, उच्चैः साम्ना ' इति ऋगादिशब्दाः वेदाधिकाराः ।

त्रयीविद्याऽऽख्या च तद्विदि । ५ ॥

तद्विदि तान् त्रीन् वेदान् वेत्ति इति तद्वित् तस्मिन् सकलवेदत्रयविदि त्रयीविद्यः इति आख्या त्रयीविद्याख्या प्रसिद्धा लोके । तस्मात् ' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' इति ऋगादिशब्दाः वेदाधिकारा इति । त्रयी वेदत्रयी विद्या यस्य सः त्रयीविद्यः ।

व्यतिक्रमे यथाश्रुति इति चेत् । ६ ॥

ऋगादिमन्त्राणां व्यतिक्रमे स्ववेदातिक्रमे वेदान्तर-विहितकर्माङ्गत्वे सति यथाश्रुति ऋक्त्वयजुष्ट्वश्रवणा-नतिक्रमेण उच्चैस्त्वं उपांशुत्वं च भवति । तच्च ऋगादि-शब्दानां मन्त्रपरत्वे उपपद्येत न वेदपरत्वे । तस्मात् ऋगादिशब्दाः मन्त्रपरा न वेदपराः इति चेत् पूर्वपक्षी ब्रूयात् । आभाषान्तं सूत्रम् ।

न सर्वस्मिन्निवेशात् । ७ ॥

ऋगादिमन्त्राणां यजुर्वेदविहितकर्माङ्गत्वे उपांशुत्वं ऋक्सामवेदविहितकर्माङ्गत्वे तु उच्चैस्त्वं इति वैरूप्यं प्रसज्येत, तस्मात् ऋगादिशब्दानां न वेदपरत्वं इति पूर्वपक्षिणः शङ्कां निरस्यति सिद्धान्ती । न वैरूप्यं प्रसज्यते । सर्वस्मिन् तत्तद्वेदविहिते कर्मणि अङ्गभूतानां व्यतिक्रान्तानामपि ऋगादिमन्त्राणां विधिबलादेव स्वरा-न्तरस्य निवेशात् । तस्मान्न दोषः वचनबलात् ।

वेदसंयोगान्न प्रकरणेन बाध्येत । ८ ॥

ऋगादिमन्त्राणां वेदवाचिपदसमवधानरूपात् वाक्यात् तत्तद्वेदविहिते सर्वस्मिन् क्रतौ स्वरनिवेशः प्राप्तः प्रकर-णेन ज्योतिष्टोमप्रकरणेन न बाध्यते वाक्यस्य प्रकरणात् बलीयस्त्वात् । बाधेत इति पाठे तु स्वरनिवेशं प्राप्तं उच्चैष्ट्वादिधर्मः प्रकरणेन प्रकरणानुरोधेन न बाधेत इत्यर्थः । तस्मात् ' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना' इति ऋगादिशब्दाः वेदोपक्रमात् वेदपराः इति सिद्धान्तः । के.

* ' श्रुतेर्जाताधिकारः स्यात् ' । ३।३।१।१ ॥ उपक्रमस्थाया वेदश्रुतेः लक्षणया जातविषयता युक्ता न तु ऋगादिशब्देन वेदानां लक्षणयाऽपि अधिकारः विषयी-कारः संभवति इति आवृत्त्या सूत्रव्याख्या । सु. पृ. ११६८, उच्चैस्त्वादीनां ऋगादिमन्त्ररूपशब्दाख्यजाति-धर्मत्वात् वेदविषयत्वपक्षे अनेकवेदविहितानां ऋगादीनां उच्चैस्त्वोपांशुत्वरूपविरुद्धधर्मद्वयप्राप्तौ अष्टदोषविकल्पा-पत्तेः जातविषयतैव युक्ता इत्येवं आवृत्त्या अन्यथा सूत्र-व्याख्या । पृ. ११६९, उच्चैस्त्वादिविधानस्य ज्योति-ष्टोमप्रकरणे श्रुतेः वेदविषयत्वे च प्रकरणेन वशीकारा-योगात् प्रकरणबाधापत्तेः जातविषयता एव युक्ता इत्येवं अन्यथा सूत्रव्याख्या । पृ. ११६९. * ' श्रुतेर्जाता-धिकारः स्यात् ' ( ३।३।१।१ ) । ' प्रसक्तानुप्रसक्तोक्त-मृग्यजुःसामलक्षणम् । श्रुतेर्जाताधिकारः स्यादित्य-स्मिन्नुपयोक्ष्यते ॥ ' वा. ३।१।१।१ पृ. ६५०-६५१, * यत्तु अर्थवादस्य विधिशक्तिर्नास्ति तावन्मात्रं विधा-यकात् गृह्यते एव, न तु तावता सर्वमेव तद्गतं विव-क्ष्यतेऽनपेक्षितत्वात् । तदेतत् 'श्रुतेर्जाताधिकारः स्यात्'

इत्यत्र प्रपञ्चितम् । ३।४।११।३१ पृ. ९६७. * श्रुतेः द्रव्यान्वये व्यापाराभावः । सु. पृ. ११९२. * श्रुतेः लिङ्गविनियोगाभ्यनुज्ञामन्तरेण अग्निसेकादिवत् असामर्थ्यम् । वा. ३।२।५।१२ पृ. ७६१. * श्रुतेः सामान्यमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वम् । सु. पृ. ११९२. * 'न श्रुतेर्विनियोक्तृत्वं लिङ्गाधीनं प्रतीयते । विज्ञाते विनियोगे तु तद्वशात् शक्तिनिर्णयः ॥' विनियोगोत्तरकालं हि कथमेतत् साधयिष्यति इत्यपेक्षिते यथा शक्नोति इत्यवधारणा भवति । वा. ३।३।७।१४ पृ. ८३०-८३१, * 'न हि प्रमादपाठत्वं शक्यं कल्पयितुं श्रुतेः' ।१।३।२।३ पृ.१८३, * 'श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते।' १।३।८।२७ पृ. २८६. * श्रुतीनां प्रवृत्तिः परप्रतिपत्त्यर्था, न हि केनचित् आत्मार्थं शास्त्रं प्रणीयते । ऋजु. पृ. १८०. * श्रुत्योः पौर्वापर्यविरुद्धयोः उत्तरश्रुतिः पूर्वश्रुतेः बलीयसी, यथा अपच्छेदोदाहरणे । वा. ३।३।७।१४ पृ. ८४०. * श्रुत्योर्विरोधे कारकश्रुतिः तद्धितश्रुतेः प्रबला । ( 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इत्यत्र- ) उपक्रमस्थत्वात् तद्धितश्रुतेरेव ( कारकश्रुत्यपेक्षया ) प्राबल्यं इति प्राप्ते, प्राधान्येन प्रकाश्यत्वस्य तद्धितार्थत्वेऽपि प्राधान्यस्य विशेष्यतया तद्धितादनुपस्थितेः न तस्य वस्तुतो मुख्यश्रुतित्वलक्षणाक्रान्तत्वम् । प्राधान्यमपि च नाङ्गत्वघटकीभूतेप्सितत्वाख्यं तदर्थः, अपि तु भावनावत् शाब्दबोधे विशेष्यत्वमात्रम् । अतश्च उक्तप्राधान्येन ईप्सितत्वाख्यं तत् लक्षयित्वा विनियोगः तद्धितश्रुत्या बोध्येत इति कारकश्रुतितो दौर्बल्यम् । अन्यानि च दौर्बल्यकारणानि ऐन्द्र्यधिकरणे एव निरूपितानि ( निरूपितप्रायाणि स्पष्टमनुक्तत्वात् ) । तत् सिद्धं श्रुत्योर्विरोधे कारकश्रुतेर्बलीयस्त्वम् ।

कारकश्रुत्योरपि विरोधे 'आग्नेयं चतुर्धा करोति' 'पुरोडाशं चतुर्धा करोति' इत्यादौ बलाबलं सामान्यविशेषभावादिना द्रष्टव्यम् ।

तथा शेषानेकत्वे विजातीयश्रुत्योर्विरोधे 'सोमेन यजेत' इत्यादौ पदश्रुत्यपक्षेया कारकश्रुतेरुपजीवकत्वेन दौर्बल्यं भावार्थाधिकरणे व्याख्यातम् ।

समानजातीयश्रुत्योर्विरोधे एकस्मिन्नेव पदहोमे सप्तमीश्रुत्या पदेन आहवनीयस्य बाधः । तदेवं श्रुत्योर्विरोधे बलाबलं वर्णितम् । कौ. ३।३।७।१४ पृ. ३५०-३५१, * विजातीयश्रुत्योर्विरोधे शेषानेकत्वे 'सोमेन यजेत' इत्यादौ पदश्रुत्यपेक्षया कारकश्रुतेरुपजीवकत्वेन दौर्बल्यम् । ३।३।७।१४.

* श्रुत्यनुमानस्य शिष्टत्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलक्ष्यत्वम् । वा. १।३।१।२.

* श्रुत्यनुरोधेन कर्मणि मन्त्राणां अनध्यायेऽपि प्रयोगः प्राप्नोति । अनध्यायस्मृत्यनुरोधेन अप्रयोगः । श्रुतिश्च स्मृतितो बलीयसी । भा. १२।३।७।१९.

* स्मृत्यनुमितश्रुत्यपेक्षया वैदिकं अन्यार्थदर्शनरूपमनन्यथासिद्धं लिङ्गं प्रबलम् । कौ. ३।३।७।१४ पृ. ३६७.

* श्रुत्यभावे लक्षणयाऽपि व्यवहारो भवति । यथा 'अग्नौ तिष्ठति, अवटे तिष्ठति' इति । भा. ६।६।२।१५.

* श्रुत्यर्थाभ्यां किं तुल्यबलः पाठः उत दुर्बलः इति चिन्तायां दुर्बलः इति सिद्धान्तः । भा. ५।४।१।१, * श्रुत्यर्थे असति लक्षणार्थो ग्राह्यः । ७।३।२।५, * श्रुत्यर्थे सति वाक्यार्थो नावकल्प्यते । २।२।५।१६, * श्रुत्यर्थे संभवति न वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात् । यागं श्रुत्या विदधाति फलं वाक्येन विदध्यात् । ११।१।१।३.

* श्रुत्यर्थासंभवाच्च लक्षणया धर्माणां ग्राहकः कल्प्यते (अग्निहोत्रादिशब्दो यथा) । भा. ७।३।६।१७.

* श्रुत्यर्थक्रमौ पाठक्रमात् बलवन्तौ । ५।४।१।१. मीको. पृ. १५०७ 'क्रमकोपाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* श्रुत्यर्थपाठकाण्डानां चोदकाश्रितत्वात् बलीयस्त्वम्, मुख्यप्रवृत्तिक्रमौ प्रयोगवचनाश्रितत्वाद्दुर्बलौ । टुप्. ५।१।१०।१८.

* श्रुत्यर्थपाठक्रमाः उपदेशविषया एव ( न ते चिन्तनीयाः ) । प्रवृत्तिकाण्डमुख्यक्रमास्तु अतिदेशविषया अपि प्रधानभूताः पदार्थाः । कर्ता गुणभूतः । तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव । अतः तेऽपि न चिन्तनीयाः । क्रमनियमस्तु चिन्त्यते । टुप्. ५।१।१।१.



* श्रुत्यर्थविप्रकर्षात् श्रुतिलिङ्गादिषु परं परं बाध्यते । वा. ३।३।७।१४ पृ. ८३०.

* श्रुत्यवगतं हि श्रवणादवगतम्, पदान्तरसंबन्धं वाक्यादवगतम् । श्रुतिश्च वाक्याद् बलीयसी । भा. ६।१।५।२२.

* श्रुत्यसंभवे च लक्षणापरिग्रहः । वा. १।२।२।२०. * श्रुत्यसंभवे वाक्यं क्रमते न संभवन्त्यां श्रुतौ । भा. ३।१।७।१४ पृ. ७१४.

* श्रुत्यादीनि एव तादर्थ्यप्रतिपादनद्वारेण शेषस्य विनियोजकानि इति तद्विवेकार्थं लक्षणमारब्धव्यम् । वा. ३।१।२।२ पृ. ६५८. * श्रुत्यादीनि त्रीण्येव तादर्थ्यबोधाख्ये विनियोगे कारणानि ( पूर्वपक्षे ) । सु. पृ. ११९३. * श्रुत्यादयः अतिदेशप्राप्ताः प्रत्यक्षैः श्रुत्यादिभिः विकृतिषु बाध्यन्ते । वा. ३।३।७।१४ पृ. ८४१. * श्रुत्यादयः स्वसामर्थ्यात् संबन्धं प्रतिपादयन्तो विधिप्रतिपादितं पारार्थ्यं विशेषे व्यवस्थापयन्तः पारार्थ्यं प्रति प्रमाणमुच्यन्ते । कणिका. पृ. ३८४. * श्रुत्यादिभिः आनुमानिकैः आनुमानिकानां श्रुत्यादीनां बाधः । यथा पशौ अनुमेयैः प्रयाजादिविनियोजकैः श्रुत्यादिभिः पशुपुरोडाशे तद्विनियोजकानां आनुमानिकानां श्रुत्यादीनाम् । बाल. पृ. १४६, * श्रुत्यादिभिः प्रत्यक्षैः आनुमानिकानां श्रुत्यादीनां बाधः । यथा श्येनादौ 'शरमयं बर्हिः' इति प्रत्यक्षश्रुत्या 'बर्हिषि हवींष्यासादयति' इत्यानुमानिकश्रुतेः । पृ. १४६. * 'श्रुत्यादिभिः प्रमाणैश्च शेषत्वस्यैव निर्णयः । शेषी तद्विषयत्वेन लक्ष्यते नान्तरीयकः ॥' ( यद्विना यदनुपपन्नं तत् तस्य नान्तरीयकम् ) । वा. ३।१।१।१ पृ. ६५२. * श्रुत्यादिभिर्लिङ्गादीनां बाधयोग्यता । वि. ३।३।१२. * श्रुत्यादीनां आनुमानिकानां लिङ्गादिभिः प्रत्यक्षैः बाधः । बाल. पृ. १४६. * श्रुत्यादीनां पूर्वं पूर्वं उत्तरोत्तरनिरपेक्षं प्रवर्तमानं बलवद् भवति, परपरं तु पूर्वपूर्वाधीनप्रामाण्यं न शक्नोति तस्यैव बाधं कर्तुम् । न हि श्रुतिमननुमाय लिङ्गादेः प्रामाण्यमध्यवसीयते । वा. ३।३।७।१४ पृ. ८३०, * श्रुत्यादीनां बलाबलम्- 'निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च । एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥ एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः । उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥ विरोधिनोस्तदैको हि तत् फलं प्राप्नुयात्तयोः । प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा ॥ तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा । तथापि युगपद्भावे जघन्यस्य निराक्रिया ॥' ( एवं श्रुतिलिङ्गादिषु विनियोगे भवति ) । ३।३।७।१४ पृ. ८३४, * श्रुत्यादीनां षण्णामपि इदानीं बलाबलं विचार्यते । ३।३।७।१४ पृ. ८२२, * श्रुत्यादीनां सर्वेषामेव आनर्थक्यप्रतिहतानां दुर्बलैरपि बाध्यत्वमिष्यते । तद्यथा- व्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । पृ. ३।३।७।१४ पृ. ८३३, * श्रुत्यादिषु अप्राप्तबाधः । ३।३।७।१४ पृ. ८६१.

* श्रुत्यादिकं आनुमानिकं प्रत्यक्षेण लिङ्गादिना बाध्यते । वा. ३।३।७।१४ पृ. ८४१.

* श्रुत्यादित्रयस्य प्रकरणेन सह विरोधाविरोधविचारः । वा. ३।४।१।१, ३।४।४।१२.

* श्रुत्यादिपेटिका । ३।३।७।१४.

* श्रुत्यादिप्रमाणकमेव शेषत्वं भविष्यति । वा. ३।१।७।१४ पृ. ७१६.

* श्रुत्यादिप्रमाणषट्कविचारः । तत्र प्रकरणविचारो विस्तरेण । तत्रैव संदंशसप्तकनिरूपणम् ॥ श्रुतिरपि चतुर्विधा- विधिः, प्रतिषेधः, अभिधात्री, विनियोक्त्री च । लिङ्गं द्विविधम्- शब्दसामर्थ्यं अर्थसामर्थ्यं च । शब्दसामर्थ्यमपि द्विविधम्- मन्त्रस्य कर्मसमवेतार्थप्रकाशनसामर्थ्यं एकवाक्यतोपगमनसामर्थ्यं च । तत्रोत्तरं लिङ्गवाक्यविरोधाधिकरणे ( ३।३।७।१४ भा. पृ. ८४७ ) भाष्यकृता व्यवहृतम्, पूर्वलिङ्गबाध्यता च तस्योक्ता, "ननु 'स्योनं ते' इत्यस्य यथैव उपस्तरणा-

मिधानसामर्थ्यं एवमुत्तरेण एकवाक्यतामुपगन्तुं सामर्थ्यम्। सामर्थ्यं च लिङ्गमित्युच्यते। तस्मात् भिद्यमाने वाक्ये लिङ्गमेव बाधितं भवति इति। सत्यमेवम्। एतदपि लिङ्गम्। लिङ्गमपि खलु एतदेवंलक्षणकं विप्रकृष्टार्थकमेव भवति। लिङ्गादेकवाक्यता, तस्मादभिधानसामर्थ्यम्। ततः श्रुत्यर्थः। इति विप्रकृष्टार्थता " इति ग्रन्थेन ( भा. पृ. ८५० )।

वाक्यमपि द्विविधम्– महावाक्यमवान्तरवाक्यं चेति। तदुक्तं 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥' इति ( वा. ३।४।१३।२४ पृ. ३६६ )। तत्राद्यं प्रयोगविधिरूपं नित्यानुमेयमेव कल्पिताङ्गवाक्यैकवाक्यताको हि प्रधानविधिरेव प्रयोगविधिरिति। द्वितीयं 'समिधो यजति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि। अवान्तरवाक्यमपि द्विविधं विधिर्मन्त्रश्च। अर्थवादस्तु तात्पर्याभावेऽपि स्तुतिलक्षकवाक्यार्थप्रतिपादकत्वमात्रेण पृथक् व्यपदिश्यते।

प्रकरणमपि द्विविधम्– महाप्रकरणं अवान्तरप्रकरणं च। तत्राद्यं प्रधानस्य, द्वितीयं प्रधानस्याङ्गस्य वा। तथा आद्यं प्रकृतेर्विकृतेश्च, एवं द्वितीयमपि। तत्र प्रकृतेः असंदंशोद्भूतिकम्, यथा दर्शपूर्णमासादेः। विकृतेर्महाप्रकरणं तु संदंशेनापि भवति, असंदंशेनापि। तत्राद्यं यथा– राजसूये 'राजसूयाय ह्येनामुत्पुनाति ... राजसूयेनेजानः सर्वमायुरेति' इति संदंशेनोद्भूतं क्रमप्रकरणबलाबलाधिकरणे शास्त्रदीपिकायामुक्तम् (पृ. २४६)। असंदंशेऽपि विकृतेर्महाप्रकरणं यथा– यत्र विकृतौ प्राकृतक्रियानुवादेन किंचित् विहितं तत् तत्प्रकरणेन गृह्यते यथा 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति। अहीनात्मकद्वादशाहे च द्वादश दीक्षाः द्वादशोपसदः इति द्वादशत्वं च। तदुक्तं श्रुतिलिङ्गाधिकरणे 'इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम्। द्वादशत्वविधिस्तेन कथंभावेन गृह्यते॥' इति ( वा. पृ. ८३६ )। अत्र च क्रियामुद्दिश्य इत्युक्तेर्विकृतौ द्रव्योद्देशेन जात्यादिविधौ 'औदुम्बरो यूपो भवति' इत्यादौ न प्रकरणग्राह्यता इत्युक्तम्। अत एवोक्तं चित्राधिकरणेऽपि 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात्। गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः॥' इति ( वा. १।४।२।३ पृ. ३३१ )। न च औदुम्बरवाक्ये यूपलक्षितनियोजनसंबन्धो वाक्यीयः इति वाच्यम्, आनर्थक्यपरिहारस्य संनिधिनैव सिद्धेः। यूपपरिच्छेदिकायाश्च औदुम्बरजातेः आर्थापत्तिकनियोजनान्वयात्। अन्यथा अवघातादेरपि व्रीहिलक्षितयागान्वयस्य वाक्यीयत्वापत्तेः। यत्र तु प्रमाणान्तरात् क्रियान्वयालाभः तत्रैव लक्षितक्रियान्वयं यावत् विधिरायास्यते पर्णमय्यादिवाक्ये इति। एवं च वक्ष्यमाणेषु वार्तिकादिग्रन्थेषु यत् प्राकृताङ्गानुवादेन विधीयते इत्यादिषु अङ्गशब्दः क्रियापर एव इति ध्येयमिति।

संदंशेन च विकृतेर्महाप्रकरणं राजसूये इव न केवलं वाचनिकं विकृत्यङ्गं संदंशेनैव भवति, किंतु संदंशस्यानेकविधत्वात् अनेकविधम्। तथाहि [ १ ] प्राकृताङ्गानुवादेन विहिताभ्यां संदष्टं यदसंयुक्तमपि विकृतौ श्रुतम्, तदपि प्रकरणेन गृह्यते, प्राकृताङ्गानुवादेन विहितयोः पूर्वपश्चात्तनयोः प्रकरणग्रहणोक्तेः मध्ये च तद्विच्छेदकहेत्वभावात्। [ २ ] तथा विकृतेः पूर्वं असंयुक्तं किंचिद्विहितम्, ततः पूर्वं तु प्राकृताङ्गानुवादेन यत् विहितं ततः असंयुक्तं यत्, तत् विकृतिप्रकरणेन गृह्यते। [ ३ ] तथा विकृतेरनन्तरं असंयुक्तं किंचिद्विधाय प्राकृताङ्गानुवादेन कस्मिंश्चिद्विहिते तत् पूर्वमसंयुक्तं प्रकरणेन गृह्यते। तदिदं भेदत्रयं बलाबलाधिकरणवार्तिके उक्तं 'यस्यां तु विकृतौ प्राकृतं किंचिदङ्गं संकीर्त्य तस्य पुरस्तात् परस्ताद्वा वैकृतमङ्गं आम्नायते, तत्र कथंभावगृहीताङ्गमध्यवर्तित्वात् प्रकरणपाठो विज्ञास्यते' इति ( ३।३।७।१४ पृ. ८५२ )। तदेतद्वार्तिकं **सोमेश्वरेण** अनन्तरभेदत्रयपरत्वेन योजितम्।

तथा विकृतेः पूर्वमसंयुक्तं किंचिद्विहितं पूर्वं ततः विकृत्यनुवादेन यदि विहितम्, ततः असंयुक्तं यत्, तत् विकृतिप्रकरणेन गृह्यते। तथा विकृतेरनन्तरं असंयुक्तं किंचिद्विधाय विकृत्यनुवादेन कस्मिंश्चिद्विहिते तत् पूर्वमसंयुक्तं प्रकरणेन गृह्यते। तदिदं भेदद्वयं विकृत्यनुवादेन विहितस्य प्रकरणग्राह्यतोक्त्यैव अर्थादुक्तं भवति। अस्य च भेदद्वयस्य, पूर्वोक्तस्य च भेदत्रयस्य उदाहरणानि मृग्याणि

तथा सांग्रहणीं विधाय तदङ्गप्राकृतपरिधिपरिधाने 'ध्रुवोऽसि' इत्यादींश्च त्रीन् मन्त्रान् वैकृतान् विधाय 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यामनहोमा असंयुक्ता विहिताः। ततः तेषां 'यत् प्रयाजानां पुरस्ताज्जुहुयात् बहिरात्मानं सजातानां दध्यात्, यदनुयाजानां परस्तात्, स्वर्गं लोकमक्रामेत्, मध्ये जुहोति मध्यत एव सजातानामात्मन् धत्ते' इति प्रयाजानुयाजैः सह क्रमो विहितः। तेन प्राकृताङ्गसंबन्धित्वेन विधानात् सांग्रहणीप्रकरणानुवृत्तेः आमनहोमाः प्रकरणेन गृह्यन्ते। तदेतत् चतुर्थतन्त्रसारे 'फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात्' इत्यधिकरणे उक्तं (४।४।४।७)। 'माहेन्द्रस्तोत्रं प्रति अभिषिच्यते इत्यत्र तु अभिषेकादेः अभिषेचनीयप्राकृताङ्गसंबन्धित्वेन विधानेऽपि न तेन प्रकरणमनुवर्त्य तन्मध्यविहितमभिषेकादि गृह्यते इति संभवति, तन्मध्ये अभिषेकादिविध्यभावात्' इति तत्पूर्वाधिकरणे अभिहितमिति। अत एव **मिश्रा** अपि **न्यायरत्नमालायां** आमनहोमानां प्रकरणग्राह्यतामाहुः 'विकृतिष्वपि यत् प्राकृताङ्गमध्ये पठितं यथा आमनहोमादि, तस्य प्रकरणेन ग्रहणम्' इति ग्रन्थेन। ( लिङ्गवाक्यप्रकरणस्थानसमाख्यानां विचारः इति बिन्दौ **मीको**. पृ. ३३६२ द्रष्टव्यम् )। **भट्टसोमेश्वरस्तु** बलाबलाधिकरणे "क्रमत्वे सत्यपि सांग्रहण्यादेः 'तिस्र आहुतीर्जुहोति' इत्यादिभिः एकवाक्यत्वोपपत्तेः" इति ग्रन्थेन क्रमादेव आमनहोमानां अङ्गतामाह। तदपि शब्दादभ्युपेत्यवादमात्रं इति ज्ञेयम्। यदपि मिश्रैः **शास्त्रदीपिकायां** चतुर्थे 'फलवद्वोक्तहेतुत्वात्' इत्यत्र संनिधिग्राह्यत्वमुक्तं तदपि अभ्युपेत्यवादमात्रम्। अत एव **तन्त्ररत्ने** प्रकरणग्राह्यतामुक्त्वा संनिधिनाऽपि तदधिकरणसिद्धिरुक्ता। तदेवं यत्र प्राकृताङ्गानुवादेन द्वादशोपसत्त्ववत् विधिः, उक्तरूपः सप्तविधः संदंशो वा, तत्रैव विकृतौ प्रकरणं विनियोजकम्, अन्यत्र संनिधिरेवेति सिद्धम्।

एवं प्रधानस्य महाप्रकरणं प्रकृतेः असंदंशोद्भूतिकम्, विकृतेस्तु संदंशोद्भूतिकमपि निरूपितम्। अवान्तरप्रकरणं तु संदंशोद्भूतिकमेव, तच्च प्रकृतेर्नास्त्येव। प्रकृत्यङ्गस्य तु प्रयाजानां अभिक्रमाधिकरणे उक्तम् ( ३।१।१०।१९–२० )। विकृतेस्तु अवान्तरप्रकरणं संदंशोभूद्तिकं सप्तमे प्रणयनाधिकरणे ( ७।३।८।२०–२२ ) वरुणप्रघासानामुक्तम्। तत्र हि 'उपाश्रा वपन्ति' इति वरुणप्रघासावान्तरप्रकरणाधीतमपि 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासैकवाक्यताबलादेव अवान्तरप्रकरणं बाधित्वा चातुर्मास्यानामेव अत्रेति वादः, इत्युक्तम्।

क्रमोऽपि द्विविधः पाठसादेश्यं अनुष्ठानसादेश्यं च। पाठसादेश्यमपि द्विविधं यथासंख्यपाठः संनिधिपाठश्च। समाख्याऽपि द्विविधा लौकिकी वैदिकी च। पुनरपि समाख्या द्विविधा सामान्यसमाख्या विशेषसमाख्या च। बाल. पृ. ९–१२.

* **श्रुत्यादिविरोधाविरोधविचारः** प्रकृताविव विकृतिष्वपि द्रष्टव्यः। वा. ३।८।१५।३०.

* **श्रुत्युपादाने** अदृष्टं कल्पयितव्यं इति लक्षणाशब्दः परिकल्प्यते। यथा काशिकेषु शालयो ( शालितण्डुलाः ) भुज्यन्ते, गावः ( गोपयः ) पीयन्ते इति। भा. ९।१।१२।३९.

* **श्रुतिकल्पना**। अन्धपरंपरान्यायापत्त्या स्मरणेन नित्यानुमेयश्रुतिकल्पनस्य निराकरिष्यमाणत्वात् ...। सु. पृ. ११८.

* **श्रुतिक्रमः**। प्रातिस्विकविधिविहितः क्रमः श्रुतिक्रमः। अर्थादिक्रमस्तु प्रातिस्विकविध्यभावात् केवलप्रयोगविधिविधेयः। **सोम**. ५।१।१ वर्णकं ३, * यत्र क्रमः तद्विशिष्टपदार्थान्तरं वा विधीयते तत्र श्रुतिक्रमः, न तु यत्र क्रमाभिधायकः शब्दः तत्र श्रुतिक्रमः। ५।१।१ वर्णकं ३. * वर्णाः श्रोत्रेण गृह्यमाणाः यं क्रमं प्रतिपादयन्ति स एव विधीयमानत्वात् श्रुतिक्रमोऽभिधीयते। टुप्. ५।१।१।१. * **श्रुतिक्रमयोर्विरोधे** – 'उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात्। अग्नीषोमीयशेषाः स्युः श्रुत्या यूपाङ्गतां गताः॥

एतद्यूपपरिव्याणशेषो हि रशना श्रुता । सह धर्मने सा याति क्रमेण पशुशेषताम् ॥' वा. ३।३।७।१४ पृ. ८३६ । केचित्तु– 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य ' इति द्वादशत्वस्य अक्रियात्वात् अनितिकर्तव्यतात्मकत्वे सति कथंभावरूपप्रकरणग्राह्यत्वानुपपत्तेः संनिधिमात्रेण प्रकरणकल्पनापूर्वकसंबन्धाध्यवसानात् श्रुतिस्थानविरोधोदाहरणत्वं युक्तमिति । तन्न । ३।३। ७।१४ पृ. ८३५-८३६ । **शेष्यनेकत्वे इदम्** । **शेषानेकत्वे तु** 'पशुकामप्रयोगे च क्रमेण चमसाङ्गता । श्रौताद् गोदोहनात् तत्र चमसस्य निराक्रिया ॥' इति । पृ ८३८.

* **श्रुतिनिरूपणम्** । अथ केयं श्रुतिर्नाम ? न तावत् शक्तशब्दमात्रम्, अङ्गत्वप्रमाणविभाजकोपाधिभूतश्रुतित्वस्य उक्तप्रमाणत्वव्याप्यत्वावश्यकत्वात्, निरुक्तशब्दत्वरूपश्रुतित्वस्य च तद्व्याप्यत्वासंभवात् । नहि शब्दमात्रं अङ्गत्वे प्रमाणम्, घटशब्दादेरतथात्वात् । न च वेदस्थघटादिशब्दस्य उद्देश्यविधेयान्यतरबोधकत्वेन अङ्गत्वे प्रमाणत्वात् लोकवेदाधिकरणन्यायेन ( १।३।९ ) तदभेदादेव लौकिकघटादिशब्दानामपि तत्त्वोपपत्तेः, श्रुतित्वस्य तत्साधारण्येऽपि क्षतिविरह इति **वाच्यम्** । तथापि शब्दमात्रस्य वेदघटकत्वे प्रमाणाभावेन वेदाघटकलौकिकशब्दे विध्यघटकार्थवादादिशब्दे च अङ्गत्वप्रमाणत्वासंभवात् उक्तश्रुतित्वसत्त्वेन तदव्याप्यत्वात्, गौणलाक्षणिकयोरपि शक्तत्वेन अतिप्रसङ्गाच्च । नहि तयोः श्रुतित्वमिष्टम् । तथात्वे 'सक्तून् जुहोति' इत्यादौ सक्तूनां श्रौताङ्गत्वव्यवहारापत्तेः । किंच श्रुतित्वस्य प्रातिपदिकादिसाधारण्ये 'धेनुर्दक्षिणा' इत्यादिवाक्यीयविनियोगस्थले श्रौताङ्गत्वव्यवहारापत्तिः ।

**नापि** गौणलाक्षणिकत्वाभाववद्विभक्तित्वम् । 'सक्तून् जुहोति' इत्यादौ गौण्या लक्षणया वा करणत्वादिपरद्वितीयायाः श्रुतित्वाभावात् अभाववदन्तम् । प्रातिपदिकादिषु श्रुतित्वव्यवहाराभावात् विभक्तित्वोपादानम् । 'निरपेक्षो रवः श्रुतिः' इति प्राचीनप्रवादोऽपि एतदर्थतात्पर्यग्राहकः एव । इति **वाच्यम्** । ( नापि वाच्यमित्यन्वयः ) । संबन्धार्थकषष्ठ्यादौ अतिव्याप्तेः । 'व्रीहीन् प्रोक्षति' इति वाक्ये व्रीह्यादिपदोत्तरद्वितीयायाः अपि संमार्गाधिकरणपूर्वपक्षे लाक्षणिकत्वेन अव्याप्त्यापत्तेश्च ।

**इति चेत्, अत्र नव्याः** । अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः श्रुतिः । स च 'व्रीहीनवहन्ति' 'व्रीहिभिर्यजेत' इत्यादौ द्वितीयातृतीयादिः । 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यत्र कर्मत्वविशिष्टवाचकक्तप्रत्यये अतिव्याप्तेः **प्राधान्येनेति** । इत्याहुः ( नव्याः । स्वयं परिष्करोति–) अत्र कृतिकारकत्वं कृत्यन्वितकर्तृत्वाद्यन्यतमम्, न तु कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वम्, तृतीयादेः तदवाचकत्वेन अव्याप्त्यापत्तेः । असंभवस्तु नास्ति, कर्मत्वरूपोद्देश्यतावाचकद्वितीयायां लक्षणसत्त्वात् । अङ्गत्वैकदेशोक्तान्यतरबोधकत्वात् द्वितीयादेः अङ्गत्वप्रमाणत्वं इति फलयितुं अङ्गत्वघटकीभूतेति, न तु अङ्गत्वघटकत्वस्य लक्षणघटकत्वम्, वैयर्थ्यात् । अत्र अङ्गत्वलक्षणे कर्मत्वरूपोद्देश्यतायाः, तदितरकर्तृत्वाद्यन्यतमस्य च स्वातन्त्र्येण निवेशात् श्रुतिलक्षणे तयोरन्यतरत्वेन निवेशः । **वस्तुतस्तु**, उद्देश्यतात्वावच्छिन्नप्रतियोगिताकभेदकर्तृत्वादिप्रत्येकभेदघटितकर्तृत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वान्यतमत्वावच्छिन्नप्रतियोगिताकभेदघटितान्यतरत्वापेक्षया कर्तृत्वत्वाद्यवच्छिन्नप्रत्येकभेदघटितकर्मत्वसाधारणान्यतमत्वस्य लघुत्वात् कर्तृत्वकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणान्यतमत्वस्य प्राधान्येन वाचकः शब्दः श्रुतिः इत्येव एतल्लक्षणनिष्कर्षः । उक्तान्यतमवाचकत्वं च उक्तान्यतमनिष्ठसंबन्धत्वानवच्छिन्नशक्तिनिरूपकत्वम् । अतः संबन्धत्वेन उक्तान्यतमनिष्ठशक्तिनिरूपिकायामपि षष्ठ्यां नातिव्याप्तिः । न च 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्र षष्ठीश्रुत्या गोदोहनस्य पश्वङ्गत्वं इति व्यवहारात् षष्ठ्याः श्रुतित्वे इष्टापत्तिः इति **वाच्यम्** । तथात्वे 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र सप्तदशारत्नित्वस्य श्रौतविनियोगलिप्सया वाजपेयाङ्गत्वापत्तौ वाक्यीययूपाङ्गत्वसिद्धान्तानुपपत्तेः ।



अथ ( इति चेत् इति दूरतोऽन्वयः ) तत्र श्रौतविनियोगसंभवेऽपि यूपपदानर्थक्यभिया तदनङ्गीकारः । तदधिकरणे हि ( आनर्थक्यतदङ्गाधिकरणे ) वाजपेयस्य यूपस्य वा उद्देश्यत्वं इति संदिह्य ( पूर्वपक्षयित्वा, सिद्धान्तितं इत्यन्वयः ) यूपस्योद्देश्यतायां बहुव्रीहेः उद्देश्यसमर्पकत्वे एकप्रसरताभङ्गः । यूपपदस्य तत्त्वे तु यूपोद्देशेन सप्तदशारत्नित्वविधौ समासार्थमुख्यविशेष्यभूतसंबन्धिनः अनन्वयात् समासभङ्गापत्तिः । सप्तदशारत्नित्वविशिष्टद्रव्यस्य अभेदसंबन्धेनैव विधिस्तु विशेष्यांशस्य अतिदेशेन प्राप्तत्वादसंभवी । अतः षष्ठीश्रुत्या सप्तदशारत्नित्वविशिष्टद्रव्यस्य वाजपेयोद्देशेन विधिः । तथा सति अव्यवहितान्वयः प्रकरणानुग्रहश्च संभवति । उक्तद्रव्यस्य वाजपेयासाधारणषोडशिपात्ररूपतया खादिरत्वसादृश्येन गौण्या यूपपदमनुवादः । इति पूर्वपक्षयित्वा यूपपदीयस्वार्थत्यागापत्तिभिया न वाजपेयस्योद्देश्यत्वम् । यूपस्योद्देश्यतायां तु वाजपेयपदस्य यूपनिष्ठवाजपेयसंबन्धरूपस्वार्थानुवादकत्वात् न स्वार्थपरित्यागः । अतः अतिदेशतः पूर्वप्रवृत्त्या यूपोद्देशेन अभेदसंबन्धेन सप्तदशारत्निद्रव्यविधिः । प्राप्ताप्राप्तविवेकेन च विशेषणमात्रे विधेस्तात्पर्यम् । व्यवहितान्वयो गुणान्वयश्च पदानर्थक्यभिया स्वीक्रियमाणो न दोषमावहति । षष्ठीश्रुतिपरित्यागोऽपि अत एव । प्रकरणानुग्रहस्तु यूपस्योद्देश्यतायामपि यूपस्वरूपस्य तत्प्रयोज्यपरत्रपूर्वस्य च प्रकृतौ सप्तदशारत्नित्वं विनाऽपि जायमानत्वेन आनर्थक्यात् वाजपेयापूर्वसाधनत्वलक्षणाया आवश्यकत्वात् नानुपपन्नः । अतो यूपपदीयस्वार्थपरित्यागभिया न षष्ठीश्रुत्या वाजपेयस्योद्देश्यत्वं इति सिद्धान्तितम् । **वस्तुतस्तु** यूपोद्देशेन अभेदसंबन्धेन उक्तद्रव्यविधानस्य कारकाणां परस्परान्वयासंभवेन असंभवात् यूपपदे यूपकार्यलक्षणया तदुद्देशेन उक्तविशिष्टद्रव्यविधिर्वाच्यः । एवं च यूपपदस्य स्वार्थपरित्यागः सिद्धान्तेऽपि अविशिष्टः । अतः उक्तरीत्या सिद्धान्तानुपपत्तेः यूपपदवैयर्थ्यभियैव वाजपेयस्य उद्देश्यताऽनङ्गीकारः । यूपपदार्थस्योद्देश्यत्वे तु वाजपेयापूर्वसाधनत्वलक्षणातात्पर्यग्राहकतयैव वाजपेयपदस्य उपयोगात् न वैयर्थ्यम् । न च प्रकरणस्यैव तात्पर्यग्राहकत्वात् तस्य वैयर्थ्यम्, एकतात्पर्यग्राहकानुपस्थितिदशायां अपरतात्पर्यग्राहकस्य सार्थक्यसंभवात् 'युगपदुपस्थितावपि संभेदे नान्यतरवैयर्थ्यम्' इति **न्यायेन** तयोः परस्परवैयर्थ्यानापादकत्वात् । इदं तु **तत्त्वम्**— वाजपेयोद्देशेन सप्तदशारत्निद्रव्यविधेः असंभव एव, वाजपेयासाधारणपात्रस्य उपदेशत एव संभवेन ततः पूर्वं एतद्विधिप्रवृत्त्यसंभवात्, इतरथा वषट्कर्तुः समाख्यादिप्रमाणान्तरप्रमितभक्षस्यैव प्राथम्यविशिष्टस्य विधानेन एकप्रसरताभङ्गप्रसङ्गासंभवात् तद्भिया भक्षान्तरविधिसिद्धान्तानुपपत्तेः । अतस्तत्र उपदेशतः पूर्वं प्रवृत्त्यसंभव एव बीजम् । तच्च तुल्यं प्रकृतेऽपि । सप्तदशारत्नित्वस्य उक्तद्रव्यपरिच्छेदकतया विधिस्तु पूर्वोक्तदूषणग्रस्तः । अतो वाजपेयोद्देशेन उक्तद्रव्यविधेरसंभवेनैव षष्ठीश्रुतेः अविनियोजकत्वम् । पदानर्थक्यापत्तिमात्रेण षष्ठीश्रुतेः अविनियोजकत्वोदाहरणं तु अन्यत् मृग्यम् । सर्वथा षष्ठ्याः श्रुतित्वेऽपि सप्तदशारत्निवाक्ये तत्प्रमाणकविनियोगस्य उक्तप्रकारैरसंभवात् न तत्रत्यसिद्धान्तानुपपत्तिः तस्याः श्रुतित्वबाधिका । **इति चेत्** ( अथ इति चेत् ) । **सत्यम्**, तथापि 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रे श्रुतिपदस्य एवंविधश्रुतिवारणाय पदानर्थक्यापादकविनियोगप्रयोजकश्रुतिभिन्नश्रुतिपरतायां गौरवमेव षष्ठ्याः श्रुतित्वे बाधकं इति तद्वारणाय उक्तान्यतमवाचकत्वं अन्यतमनिष्ठसंबन्धत्वानवच्छिन्नशक्तिनिरूपकत्वरूपं निर्वाच्यं इति मद्बुद्धौ नव्यानामाशयः । अत एव नव्यनये 'द्वादशाहीनस्य' इति वाक्यप्रकरणविरोधोदाहरणम्, न श्रुतिप्रकरणविरोधोदाहरणम् । तथाहि, ज्योतिष्टोमे उपसदो विधाय 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति श्रुतम् । तत्र किं द्वादशत्वं प्रकृतावेव निविशते, उत द्वादशाहे इति संदिह्य, त्रित्वं तावत् उपसदुद्देशेन विधीयते, साह्नोद्देशेन विधौ उपसत्पदसामानाधिकरण्यानुपपत्तेः, साह्नपदाभिधेयज्योतिष्टोमस्य त्रिरावृत्त्यापत्तेश्च । उपसत्स्वरूपे आनर्थक्यप्रसक्तौ दीक्षणीयावाङ्नियमन्यायेन उपसदपूर्वसाधनत्वलक्षणायामपि वस्तुतः उपसदां प्रकरणेन

ज्योतिष्टोमाङ्गत्वात् तस्य चाह्ना समाप्यमानत्वात् साह्नस्य इति पदं उपसदां ज्योतिष्टोमसंबन्धानुवादः, न तु उद्देश्यविशेषणं वैयर्थ्यात् । अतश्च द्वादशत्वमपि तद्वदेव उपसदुद्देशेन विधीयमानं प्रकृतावेव निविशते, अहीनपदं तु 'न हीयते' इति व्युत्पत्त्या ज्योतिष्टोमानुवादकम्, विकृतित्वात् हि एनं अन्ये क्रतवो न जहति । 'तस्य समूहः' इत्यनुवृत्तिसहितया 'अह्नः खः क्रतौ' इति स्मृत्या अहःशब्दस्य क्रतुसमूहवाचिखप्रत्ययान्तत्वविधानात्, तस्य च ईनादेशविधानात् अहीनशब्दनिष्पत्तावपि अहःसाध्यक्रतुसमूहत्वस्य अहीनपदबोध्यताऽवच्छेदकस्य अभ्याससमूहात्मकज्योतिष्टोमे सत्त्वात् तदनुवादोपपत्तिः इति पूर्वपक्षयित्वा, उपसन्मात्रोद्देशेन द्वादशत्वविधौ संख्याद्वयस्य अष्टदोषदुष्टविकल्पापत्तेः, तदङ्गीकारे च संख्यान्तरसाधनत्वाभावानुवादकैवकारानुपपत्तेः साह्नाहीनपदवैयर्थ्यापत्तेश्च वैदिकप्रयोगात् अहीनपदबोध्याहःसाध्यक्रतुविशेषसमूहात्मकाहीनसंबन्ध्युपसदुद्देशेन द्वादशत्वविधिः इति प्राञ्चः सिद्धान्तयामासुः । नव्यास्तु, सुबर्थमात्रस्य भावनान्वयनियमेन षष्ठीस्थलेऽपि परस्परान्वया(य)व्युत्पत्तेः अहीनसंबन्ध्युपसदुद्देशेन द्वादशत्वविध्यनुपपत्तेः अहीनोद्देशेन द्वादशोपसत्त्वमेव अतिदेशतः पूर्वप्रवृत्त्या विधीयते 'तां चतुर्भिः' इतिवत् द्वादशत्वविधिरेव फलं इत्याहुः ।

वयं तु ब्रूमः । 'पञ्चदशान्याज्यानि' इत्यत्रेव द्वादशपदार्थोपसत्पदार्थयोः अन्वयस्याक्लृप्तत्वात् नव्योक्तस्य अहीनोद्देशेन द्वादशत्वविधेरपि असंभवः । 'तां चतुर्भिः' इत्यत्र तु अर्थप्राप्तेः पूर्वप्रवृत्त्या आदानभावनाया एव विधेयत्वात् तत्र चतुःपदार्थवैशिष्ट्यव्युत्पत्तेः समुच्चयफलकविशिष्टविधिसंभवः इति वैषम्यम् । अतः उपसदुद्देशेनैव द्वादशत्वविधिः । उपसत्स्वरूपे च आनर्थक्यप्रसक्तौ दीक्षणीयावाङ्नियमन्यायरूपतात्पर्यग्राहकस्य न्यायत्वेन दुर्बलत्वात् उपसज्जन्यापूर्वसाधनत्वलक्षणामुपेक्ष्य अहीनपदसमभिव्याहाररूप–वाक्यस्यैव तात्पर्यग्राहकत्वमुपेत्य अहीनापूर्वसाधनीभूतोपसल्लक्षणा अङ्गीक्रियते । यत्र तु दीक्षणीयावाङ्नियमन्यायेन समं वाक्यस्याविरोधो यथा त्रित्ववाक्ये साह्नपदसमभिव्याहाररूपवाक्यस्य, तत्र न तन्न्यायबाधः । तात्पर्यग्राहकयोरपि च बलाबलमुक्तं तत्रतत्र, यथा 'अभिक्रामं जुहोति' इत्यत्र होमोद्देशेन अभिक्रमणविधौ होमस्वरूपे आनर्थक्यप्रसक्तौ दर्शपूर्णमासीयमहाप्रकरणरूपतात्पर्यग्राहकबलात् प्रधानहोमापूर्वसाधनलक्षणा इति **पूर्वपक्षं विधाय** महाप्रकरणापेक्षया प्रबलप्रयाजीयावान्तरप्रकरणरूपतात्पर्यग्राहकबलात् प्रयाजहोमापूर्वसाधनत्वलक्षणा इति **सिद्धान्तितं** तृतीये ( भाट्ट. ३।१।१० )। यद्यपि दृष्टान्तदार्ष्टान्तिकगतजुहोत्युपसत्पदयोः अपूर्वाव्यभिचार एव अपूर्वसामान्यसाधनत्वलक्षणातात्पर्यग्राहकः, तथापि अपूर्वविशेषसाधनत्वलक्षणातात्पर्यग्राहकत्वेन वाङ्नियमन्यायादीनामुपन्यासः । **यद्वा** उपसदाश्रितद्वादशत्वस्य अहीनोद्देशेन विधिः, पूर्ववाक्ये उद्देश्यत्वेनोपस्थितत्वात् उपसदामेव आश्रयत्वम् । उपसत्पदावृत्त्यभावादपि एवमेव युक्तम् । सर्वथा षष्ठ्याः श्रुतित्वाभावात् इदं वाक्यप्रकरणविरोधोदाहरणम् । तदपि च द्वादशोपसत्त्वविधायकवाक्याभावं कृत्वाचिन्तया । वस्तुतस्तत्र तद्वाक्यसत्त्वात् तेन सत्रात्मकद्वादशाहे इव अहीनात्मकद्वादशाहेऽपि तत्प्राप्तिसंभवात् 'द्वादशाहीनस्य' इति त्रित्वविधेरेव अर्थवादः । महतो द्वादशाहस्य महती संख्या उचिता, ज्योतिष्टोमस्य तु स्वल्पत्वात् त्रित्वमेव प्रशस्तं इति स्तुतिः । **प्राचां मते** षष्ठ्याः श्रुतित्वव्यवहारस्तु गौणः । अत एव तेषामत्र श्रुतिप्रकरणविरोधोदाहरणत्वोपन्यासः । **वस्तुतस्तु** नव्योक्तं वाक्यप्रकरणविरोधोदाहरणत्वमपि अयुक्तम् । तथाहि, किं विनियोजकप्रकरणेन समं अत्र वाक्यस्य विरोधोऽभिप्रेतः, उत अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकप्रकरणेन ? विनियोजकताऽपि किं ज्योतिष्टोममहाप्रकरणस्य, उत उपसदवान्तरप्रकरणस्य ? नाद्यः, ज्योतिष्टोममहाप्रकरणस्य उपसद्गतद्वादशत्वग्राहकत्वायोगात्, ज्योतिष्टोमस्य द्वादशवारमावृत्त्यापत्तेश्च । न द्वितीयः, पूर्वापरवाचनिकाङ्गसंदंशरूपोपसदवान्तरप्रकरणे मानाभावात्, पक्षद्वयेऽपि सिद्धरूपत्वात् द्वादशत्वस्य प्रकरणग्राह्यत्वायोगाच्च, उपसत्पदसमभिव्याहाररूपवाक्यस्यैव त्रित्वांशे इव द्वादशत्वांशेऽपि विनिगमनाविरहेण विनियोजकत्वोपपत्तौ



प्रकरणस्य अविनियोजकत्वाच्च । दीक्षणीयावाङ्नियमन्यायेन उपसज्जन्यापूर्वसाधनत्वे लक्षणीये ज्योतिष्टोममहाप्रकरणस्य तात्पर्यग्राहकता तु न संभावितैव । उपसदवान्तरप्रकरणसत्त्वे तस्य तात्पर्यग्राहकताऽपि, उपसदामपूर्वाव्यभिचारस्यैव तात्पर्यग्राहकस्य सत्त्वात् निराकार्या । उद्देश्यस्य अपूर्वाव्यभिचारे हि प्रकरणस्य अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वं यथा 'व्रीहीनवहन्ति' इत्यादौ । अत एव आधानप्रकरणे 'वारणो यज्ञावचरः' इति यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षाद्यज्ञरूपे आधाने निवेशायोगात् आनर्थक्यतदङ्गन्यायेन आधानाङ्गपवमानेष्टिरूपयज्ञे एव निवेशः इत्याशङ्क्य पवमानेष्टीनां 'यदाहवनीये जुहोति' इति स्वप्रकरणस्थवाक्येन अग्न्यङ्गत्वात् आधानाङ्गत्वस्यैवाभावे क्व आनर्थक्यतदङ्गन्यायावकाशः इति **भाष्यकारमतेन** सिद्धान्तमभिधाय **वार्तिककारमते** तादृशवाक्यानङ्गीकारात् प्रकरणेन पवमानेष्टीनां आधानाङ्गत्वेऽपि यज्ञोद्देशेन वारणादिविधौ यज्ञस्य अपूर्वाव्यभिचारेण इह अपूर्वसाधनत्वावगमात् तदर्थं प्रकरणानुप्रवेशस्यैवाभावे वारणादीनां आधानाङ्गत्वे एव प्रमाणाभावात् न तदङ्गपवमानेष्टिषु अवतारः इति सकलयज्ञाङ्गत्वं नव्यैरेव सिद्धान्तितं तृतीये ( भाट्ट. ३।१।१२ )। अतो द्वादशत्वविनियोगविधौ प्रकरणव्यापाराभावात् नेदं श्रुतिप्रकरणविरोधोदाहरणम्, न वा वाक्यप्रकरणविरोधोदाहरणम्, अपि तु वाक्ययोः परस्परविरोधोदाहरणम् । पूर्वपक्षिमते वस्तुतः उपसदां ज्योतिष्टोमीयत्वात् ज्योतिष्टोमप्रकरणे द्वादशत्वस्य निवेशः, सिद्धान्ते न, इत्यतः प्रकरणविरोधोदाहरणत्वेन प्राचीनैर्नवीनैश्च व्यवह्रियते इति तत्त्वम् । वाक्यप्रकरणविरोधोदाहरणं तु तदवसरे प्रदर्शयिष्यामः । तत् सिद्धं षष्ठ्याः श्रुतित्वाभावात् तद्वारकविशेषणोपादानम् ( उक्तान्यतमनिष्ठसंबन्धत्वानवच्छिन्नशक्तिनिरूपकत्वं इति विशेषणम् )।

**इदं तु बोध्यम्** । कर्तृत्वकर्मत्वादिपदानां वाक्यत्वेनावाचकत्वात् तत्रातिव्याप्त्यसंभवेऽपि कर्तृत्वादिपरतदादिपदादौ अतिव्याप्तिर्दुर्वारा । **न च** कर्तृत्वत्वादीन्येव अन्यतमत्वेन अनुगमय्य तदन्यतमावच्छिन्नशक्तिनिरूपकत्वं लक्षणम्, तदादेस्तु बुद्धिविषयत्वावच्छिन्नतदन्यतमनिष्ठशक्तिनिरूपकत्वं इति न दोषः इति **वाच्यम्** । तदादितोऽपि विशेषरूपप्रकारकबोधानुरोधेन विशेषरूपावच्छिन्नशक्तिनिरूपकत्वस्यैव तत्राभ्युपगमात्, क्तप्रत्यये कर्मत्वत्वस्य शक्यताऽवच्छेदकताऽवच्छेदकत्वेन शक्यताऽवच्छेदकत्वाभावात् अतिव्याप्तिवारकप्राधान्येनेत्यस्य वैयर्थ्याच्च । सक्तून् इति द्वितीयायाः करणत्वलक्षणायामपि वस्तुतः तादृशान्यतमत्वावच्छिन्नशक्तिनिरूपकत्वानपायात् अतिप्रसङ्गश्च ।

अतोऽत्र **इदमाकलयामः**– स्वशक्यताऽवच्छेदककर्तृत्वत्वाद्यन्यतमावच्छिन्नतात्पर्यकप्रत्ययत्वं श्रुतित्वम् । 'व्रीहीन् प्रोक्षति' इत्यादिवाक्येषु द्वितीयादिश्रुतीनां स्वशक्यताऽवच्छेदक-कर्मत्वत्वाद्यवच्छिन्न–तात्पर्यकत्वस्य संमार्गाधिकरणादौ निर्णीतत्वात् लक्षणसमन्वयः । सक्तून् इति द्वितीयायास्तु स्वशक्यताऽवच्छेदककर्मत्वत्वाद्यवच्छिन्नतात्पर्यकत्वस्य सक्त्वधिकरणे निरस्तत्वात् नातिव्याप्तिः । अत्र स्वशक्यकर्तृत्वाद्यन्यतमतात्पर्यकत्वघटितस्य शेषषष्ठ्यां अतिव्याप्तेः अवच्छेदकानुधावनम् । तदादिवारणाय प्रत्ययत्वनिवेशः । कर्तृत्वत्वाद्यन्यतमावच्छिन्नतात्पर्यकविभक्तित्वस्य सक्तूनित्यादिकरणत्वादिपरद्वितीयादौ अतिव्याप्तिवारणाय स्वशक्यतावच्छेदकेति । अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यां' इत्यत्र क्तप्रत्ययस्य कर्मत्वविशिष्टे शक्तेः कर्मत्वत्वस्य शक्यताऽवच्छेदकतावच्छेदकत्वेन शक्यताऽवच्छेदकत्वाभावात् नातिव्याप्तिः । 'आग्नेयः' इत्यादिदेवतातद्धितस्य संग्राह्यत्वे कर्तृत्वाद्यन्यतममध्ये देवतात्वत्वमपि उपादेयम् । न च देवतात्वविशिष्टद्रव्यवाचकस्य तद्धितस्य देवतात्वस्य शक्यताऽवच्छेदकत्वात् देवतात्वत्वं न शक्यताऽवच्छेदकं इति वाच्यम् । आकृत्यधिकरणन्यायेन देवतात्वे एव तद्धितस्य शक्तेः, द्रव्ये लक्षणाङ्गीकारात् । न च 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादौ राजादिपदोत्तरप्रथमायाः साधुत्वार्थत्वेन कर्तृत्वाद्यन्यतमार्थत्वाभावात् अव्याप्तिः, 'अभिहितकारकवाचिनी प्रथमा' इति मते प्रथमायाः अपि आख्यातार्थकर्तृत्वाद्यर्थकत्वात् 'संभेदेनान्यतर-

वैयर्थ्यम्' इति न्यायात्, प्रथमायाः साधुत्वार्थमते श्रुतित्वाभावेऽपि क्षतिविरहात् 'राजा राजसूयेन यजेत' इत्यादौ राजाद्यङ्गत्वस्य वाक्यप्रमाणकत्वोपपत्तेः। न च राजपदोत्तरप्रथमायाः निरर्थकत्वेऽपि राजाङ्गत्वं कर्तृत्वाद्यर्थकाख्यातरूपश्रुतिप्रमाणकं इति शङ्क्यम्। आख्यातस्य कर्तृत्वादिशक्ततायाः कर्त्रधिकरणे निरस्तत्वेन श्रुतित्वाभावात्। कर्तृप्रथमाऽऽख्यातयोः असंग्राह्यत्वे श्रुतिलक्षणे कर्तृत्वत्वसाधारणान्यतमत्वनिवेशवैफल्यं इति तु न वाच्यम्, कर्तृतृतीयायाः संग्राह्यत्वात्। न च तथा (सति) तस्यान्यलभ्यत्वेन कर्तृत्वकर्मत्वादिघटकीभूतकृतिफलादिवृत्तिधर्माणामेव तत्तद्विभक्तिशक्यताऽवच्छेदकत्वात् कर्तृत्वत्वादेः शक्यताऽनवच्छेदकत्वात् असंभवः इति वाच्यम्। शक्यताऽवच्छेदकीभूततत्तद्धर्मवृत्त्यन्यतमत्वघटितलक्षणस्यैव विवक्षितत्वात्, कर्तृत्वस्य अखण्डोपाधिरूपत्वेन कर्तृत्वत्वादेरेव शक्यताऽवच्छेदकत्वात् उक्तलक्षणेऽपि अदोषाच्च। ननु 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यादौ मैत्रावरुणस्यैव भावनोद्देश्यस्य चतुर्थे ( भाट्ट. ४।२।६ ) स्थापितत्वात् दण्डस्य अनीप्सितकर्मत्वेनैव अन्वयावगतेः अनीप्सितकर्मत्वार्थकदण्डपदोत्तरद्वितीयायाः दण्डाङ्गत्वे अप्रमाणत्वेन श्रुतित्वाभावात् तत्र उक्तलक्षणातिव्याप्तिः। ईप्सितानीप्सितसाधारणकर्मत्वत्वावच्छिन्ने एव द्वितीयायाः शक्तेः, दण्डमिति द्वितीयायाः तदवच्छिन्नतात्पर्यकत्वाच्च। इति चेन्न। 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्' इति न्यायेन मैत्रावरुणस्य भाव्यत्वावगतौ दण्डस्यापि कर्मत्वेनान्वये भावनायाः एककर्मकत्वभङ्गापत्तेः दण्डपदोत्तरद्वितीयायाः करणत्वे लक्षणाऽङ्गीकारे कर्मत्वत्वावच्छिन्नतात्पर्यकत्वाभावात्। अत एव सर्वत्र अनीप्सितकर्मपदोत्तरद्वितीयायाः करणत्वे लक्षणा। सक्तून् इत्यत्र विनियोगभङ्गसिद्धान्तोऽपि। अत एव द्वितीयायाः करणत्वपरत्वपर्यवसानम्, अनीप्सितकर्मत्वपरत्वपर्यवसाने इष्टस्यापि भाव्यत्वेन वाक्यभेदापत्तेः। किंच द्वितीयायाः अनीप्सितकर्मत्वपरत्वे सक्तूनां होमाङ्गत्वे किं प्रमाणम्? न तावत् श्रुतिः, द्वितीयायाः होमाङ्गताप्रयोजककरणत्वशक्तत्वाभावात्। नापि वाक्यम्, उक्तकरणत्वलक्षकत्वाभावात्। नहि शक्त्या कर्मत्वत्वेन लक्षणया वा अनीप्सितकर्मत्वत्वेन अनीप्सितकर्मत्वोक्तिः सक्तूनां होमाङ्गत्वं गमयति। प्रमाणान्तरं तु होमाङ्गतायां असंभावितमेव। न च 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणापक्षे सोमनिष्ठकरणत्वस्य शक्त्या लक्षणया वा विभक्त्यनुक्तत्वेन श्रुतिवाक्ययोः सोमनिष्ठयागाङ्गतायां प्रमाणत्वासंभवेऽपि विशेषणविधिरूपकल्पितश्रुतेरेव प्रमाणत्वमुपेयते, एवमिहापि इति वाच्यम्। यजिपदसमभिव्याहाररूपतात्पर्यग्राहकबलेन सोमपदे सोमकरणके, करणतासंबन्धेन सोमवति वा लक्षणायाः यजिपदसमभिव्याहृतसोमपदरूपवाक्यस्यैव सोमनिष्ठयागाङ्गत्वे प्रमाणत्वात्, विशेषणविधेस्तु सोमकर्तव्यताबोधे एव व्यापारात्। अत एव अङ्गत्वघटकीभूतकर्तृत्वाद्यन्यतमावगतिः श्रुतवाक्यात्, विध्यन्वयावगतिस्तु विशेषणविधितः। विशेषणविधौ हि सोमकरणकभावनायां विध्यन्वये स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकताऽवच्छेदकत्वसंबन्धेन विधिविशिष्टत्वरूपविध्यन्वयित्वावगतिः। करणत्वांशे तु सोमस्वरूपांशे इव विशेषणविधिरनुवाद एव। प्रकृते तु सक्तूनां अनीप्सितकर्मत्वेनान्वये होमाङ्गताप्रयोजकसक्तुनिष्ठकरणतायाः श्रुतवाक्यादनवगतेः। अत एव करणतावाचकपदघटितविशेषणविधिकल्पनायामपि मानाभावात् तस्यापि होमाङ्गत्वे प्रमाणत्वाभावात् निष्प्रमाणकमेव सक्तूनां होमाङ्गत्वम्। श्रुतविधौ हि कर्तृत्वाद्यन्यतमस्य यस्यावगतिः, तद्वाचकपदघटितविशेषणविधिः कल्प्यते, यथा 'सोमेन यजेत' इत्यत्र तृतीयान्तपदघटितः, 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यत्र 'पदे जुहोति' इत्यत्र च सप्तम्यन्तपदघटितः, न तु सोमवाक्ये अधिकरणतावाचकपदघटितः, पदवाक्ये करणतावाचकपदघटितः। तथा सक्तुवाक्ये सक्तूनां अनीप्सितकर्मत्वावगतौ तद्वाचकपदघटितः एव विशेषणविधिः कल्प्येत, न तु करणतावाचकपदघटितः, इति न तत्प्रमाणकत्वमङ्गत्वस्य। अतो द्वितीयायाः करणत्वलक्षणया वाक्यप्रमाणकहोमाङ्गत्वे एव विनियोगभङ्गात् सिद्धान्तपर्यवसानं इत्यवगच्छामः। अतः अनीप्सितकर्मवाचकपदोत्तरद्वितीयायाः करणत्वपरत्वात् कर्मत्वत्वावच्छिन्नतात्पर्यकत्वाभावेन न श्रुतिलक्षणातिप्रसङ्गः। 'आचान्तेन कर्म कर्तव्यम्' 'व्रीहीन् प्रोक्षति' 'व्रीहिभिर्यजेत' 'विप्राय गां ददाति' 'उत्तरार्धात् स्विष्टकृते समवद्यति' 'यदाहवनीये जुहोति' इत्यादीनि क्रमेण कर्तृत्वादिवाचकश्रुत्युदाहरणानि। 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादौ षष्ठीश्रुत्या गोदोहनस्य पश्वङ्गत्वं इति षष्ठ्याः श्रुतित्वव्यवहारस्तु गौण इति ध्येयम्।

केचित्तु अङ्गत्वप्रमाणान्तर्भूता श्रुतिः त्रिविधा— विधात्री, अभिधात्री, विनियोक्त्री चेति। विधात्री लिङादिश्रुतिः, अभिधात्री व्रीह्यादिश्रुतिः। विनियोक्त्री त्रिविधा— विभक्तिरूपा, समानपदरूपा, समानाभिधानरूपा च। एतत्सकलसाधारणस्य 'निरपेक्षो रवः श्रुतिः' इति प्रवादस्य यच्छब्दज्ञानं अन्यव्यवधानमनपेक्ष्य यदर्थज्ञानं जनयति, सा तस्मिन्नर्थे श्रुतिरित्यर्थः। न च विनियोजकमानप्रस्तावे विधात्र्यभिधात्रीसाधारणलक्षणकथनं तन्निर्देशश्च असंगतौ इति शङ्क्यम्। विधिविनियोज्योपस्थापनेन विधिसहकारित्वस्य तयोरपि तुल्यत्वात्। शेषशेषित्वाभिमतयोः तत्तद्रूपेणानुपस्थितयोः संबन्धबोधो व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते, सा विनियोक्त्री। संबन्धश्च अङ्गत्वात्मना, साधनत्वत्वात्मना, संबन्धत्वात्मना वा प्रतीयताम्। न तद्विशेषो लक्षणे लक्ष्यते। तेन 'दीक्षिष्यमाणः' इत्यादौ लटः, तृतीयाषष्ठीपदश्रुतीनां च संग्रहः इत्याहुः। तदतीव मन्दम्। शक्तत्वरूपाभिधात्रीत्वस्य उक्तश्रुतित्वव्यापकतया तदवच्छिन्नविभाजकोपाधित्वानुपपत्तेः। न च समानपदश्रुतेः 'यजेत' इत्यादिरूपायाः यागभावनयोः संबन्धरूपार्थे श्रुतित्वेन तत्र शक्तत्वरूपाभिधात्रीत्वाभावात् न तस्य श्रुतित्वव्यापकत्वं इति वाच्यम्। तथापि श्रुतिविभाजकोपाध्यन्तरसमानाधिकरणत्वेन अभिधात्रीत्वस्य तद्विभाजकोपाधित्वासंभवात्, समानपदश्रुत्या शेषशेषिणोः संबन्धरूपार्थज्ञाने जननीये स्वघटकपदार्थज्ञानस्य अपेक्षणीयत्वेन त्वदुक्तश्रुतित्वस्य समानपदश्रुतौ अभावेन अभिधात्रीत्वस्य उक्तव्यापकत्वस्यापि सुवचत्वात्। अत एव श्रुतिलक्षणस्य समानपदश्रुतौ अव्याप्तेः तस्याः लक्ष्यत्वकथनमपि असंगतम्। न च पदार्थोपस्थित्यतिरिक्तव्यवधायकानपेक्षत्वं उक्तलक्षणघटकं इति नाव्याप्तिः इति वाच्यम्। 'उच्चैर्ऋचा क्रियते' इत्यादौ संसर्गमर्यादया भासमानशेषशेषिसंबन्धके वाक्ये अतिव्याप्तेः। किंच 'सक्तून्' इत्यत्र प्राथमिकद्वितीयाज्ञानेन करणत्वज्ञाने जननीये शक्योपस्थितिलक्षणाज्ञानादिरूप—व्यवधायकापेक्षणे अपि करणत्वम्, शक्यसंबन्धेन द्वितीयावत् इति ज्ञानेन करणत्वज्ञाने जननीये व्यवधायकान्तरानपेक्षणात् द्वितीयायाः करणत्वे श्रुतित्वापत्तिः, अनपेक्षान्तवैयर्थ्याच्च। यत् शक्त्या पदार्थज्ञानं जनयति, यत् यत्र शक्तं तत् तत्र श्रुतिः इत्यस्यैव सुवचत्वात्। अपि च श्रौताङ्गव्यवहारविषयीभूतश्रुतित्वस्य विधात्र्यभिधात्रीसाधारणे 'सक्तून् जुहोति' 'धेनुर्दक्षिणा' इत्यादौ वाक्यीयाङ्गत्वबोधेऽपि विधिविनियोज्योपस्थापनेन विधिप्रातिपदिकरूपविधात्र्यभिधात्र्योः सहकारितया अङ्गत्वप्रमाणताऽवच्छेदकं श्रुतित्वं विधिप्रातिपदिकादिव्यावृत्तमेव वाच्यम्। एवं विनियोक्त्रीलक्षणे समानाभिधानसमानपदश्रुतिसंग्रहाय स्वघटकपदार्थोपस्थितिभिन्नत्वं व्यवधाने विशेषणमावश्यकम्। तथा च संसर्गमर्यादया भासमानशेषशेषिसंबन्धके 'धेनुर्दक्षिणा' इत्यादिवाक्ये अतिव्याप्तिः। 'सक्तून् जुहोति' इत्यत्र करणत्वं द्वितीयालक्ष्यं इति द्वितीयाज्ञानेन व्यवधानमनपेक्ष्य करणत्वरूपसंबन्धबोधात् द्वितीयादेः विनियोजकश्रुतित्वापत्तिश्च इति न किंचिदेतत्। अतः समानाभिधानसमानपदश्रुत्यादिषु श्रुतित्वव्यवहारस्य गौणत्वमङ्गीकृत्य कारकविभक्त्यसाधारणं अस्मदुक्तलक्षणमेव उचितम्। इत्यलं पल्लवितेन। ( इति श्रुतिनिरूपणम् )। मुरारि. पृ. ११६२–११७१.

* श्रुतिनिरूपणम् ( श्रुतिलिङ्ग० )। 'तत्र श्रुतिस्त्रिधा भिन्ना विध्युक्तिविनियोगकृत्। विनियोक्त्री त्रिधा भिन्ना तुल्यशब्दादिभेदतः।' ५ ॥ तत्र विधात्री लिङाद्या। अभिधात्री व्रीह्यादिश्रुतिः। विनियोक्त्री त्रिधा एकाभिधानं एकं पदं विभक्तिरिति।

यस्य हि शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनि-
योगश्रुतिः । तद्यत्रानेकार्थाभिधानमेकेन शब्देन युगप-
द्भवति विभक्त्येव लिङ्गसंख्याकारकाणां तत्र तेषाम-
न्वितानामेवाभिधानं अनन्वितानामनेकेषामर्थानामेकेन
शब्देन युगपदभिधानस्यैकशेषमन्तरेणासंभवात् । अक्ष-
शब्देनेव विदेवनादीनाम् । अन्यथा ' गामानय ' इति
वत् यां कांचिद्व्यक्तिं 'अक्षमानय' इति नियुक्तो विदेव-
नादीनामन्यतममानयेन्न संदिहीत संदिग्धे च किंपरोऽयं
प्रयुक्त इति । तस्मात् अन्विताभिधानम् । तत्रापि प्रती-
तिबलेन कारकं प्रधानतो लिङ्गसंख्ये गुणतः । तथा
चोक्तं यदा कर्मादयो विभक्त्यर्थास्तदैकत्वादयो विशेषणा-
नीति । एतेन विभक्तिवाच्यायाः संख्याया विध्याक्षेपेण
कारकविशेषणत्वमभिदधाना निरस्ताः । अनन्वितानाम-
र्थाभिधाने प्रथममेकशब्दोपात्तेन प्रधानभूतेन च
कारकेणैव संख्या संबध्यते न प्रातिपदिकार्थेन
विप्रकृष्टेन गुणभूतेन च । प्रातिपदिकार्थान्वितैव साऽभि-
धीयते न कारकान्वितेति तु स्वसमयसंतमसतिरस्कृता-
र्थतत्त्वानां श्रद्धामात्रं न प्रामाणिकं प्रतीत्यविशेषात् ।
यथा ' पशुना ' इत्युक्ते पशुः करणं प्रतीयते तथैकं
करणमित्यपि प्रतीयते एव । न चैकमभिधानं अर्था-
न्तरान्वितमर्थान्तरमभिदधानं न दृष्टम् । लिङ्प्रत्ययस्य
कृत्यप्रत्ययस्य च कृत्यवच्छिन्नापूर्वाभिधानाभ्युपगमात् ।
कथं च विध्याक्षेपः ? तादर्थ्यादिति चेत् । न । प्रातिपदि-
कार्थं कारकं वा प्रति विशेषणभूतस्यैकत्वस्य तदव-
धीरणेन विध्यैदमर्थ्यासंभवात् । संभवे वा क्षेपिष्ठादीना-
मपि विध्यर्थत्वं स्यात् तदुपपत्तये च देवताभूतवायु-
विशेषणता कल्प्येतेति क्षेपिष्ठगुणविशिष्ट एव वायुर्देवता
स्यान्न वायुस्वरूपमित्यलमनेनालौकिकविवादेन । तदेवं
संख्यादेरेकशब्दोपादानलक्षणया श्रुत्या कारकान्वयः ।
प्रातिपदिकार्थस्य तु पदश्रुत्या । प्रकृतिप्रत्ययार्थयोर्हि
श्रवणादेव संबन्धः प्रतीयते न पदद्वयवदर्थपरामर्शमपे-
क्षते इति पदमपि श्रुतिपक्षे निक्षिप्यते तदेवमेककार-
कान्वितानां जातिलिङ्गसंख्यानां अरुणैकहायनीन्यायेन
परस्परनियम इति । विभक्तिस्तु संबन्धमेव साध्यत्वं
साधनत्वं वा प्रतिपादयन्ती विनियोगकारणम् । तत्र
द्वितीया साध्यत्वं प्रतिपादयति, तृतीयादयस्तु साधन-
त्वम् । तत्र ' व्रीहीनवहन्ति ' इति द्वितीया साध्यत्वेन
व्रीहीनभिदधाना अवघातस्य तेषु विनियोगकारणं भवति
कथं तर्हि सक्तुषु होमस्याविनियोगः । तेषामसमीहित-
त्वात् । **' समीहितं स्वशब्देन व्रीहयो न समी-
हिताः । अपूर्वसाधनत्वेन व्रीहयस्तु समीहिताः ।
६ ॥** सक्तवो हि द्वितीयया साध्यत्वेन प्राप्ता अपि
समीहितत्ववैधुर्यात् त्यज्यन्ते । न हि द्वितीया समीहि-
तत्वं प्रतिपादयति, अपि तु साध्यत्वमेव वदति तेन
सक्तूनां शेषित्वं न संभवतीति परिवृत्य होमभावना
भाव्यान्तरमपेक्षते, अवघाते तु नैवं परिवृत्तिकारणमस्ति ।
तथाहि । अवघातभावना भाव्यं समीहितमपेक्षमाणा
द्वितीयाप्रतिपादितसाध्यत्वान् व्रीहीन् भाव्यत्वेन स्वीकर्तु-
मभिप्रस्थिता स्वरूपेण तेषामसमीहितत्वाद्विलम्बते । तत्र
यदि कथंचिदपि तेषां समीहितत्वं सक्तुवन्न लभ्येत ततो
विपरिवृत्य भाव्यान्तरमपेक्षेत संभवति च तेषां प्रकृता-
पूर्वसाधनविशेषरूपेण समीहितत्वम् । तथाहि ' व्रीहि-
भिर्यजेत' इति यागसाधनत्वेन व्रीहयो विहिताः । न च
तेषां साक्षाद्यागसाधनत्वमुत्पत्तिशिष्टपुरोडाशावरोधादुप-
पत्तिमत् । तेन पुरोडाशप्रकृतित्वेन तेषां साधनत्वमिति
तेन रूपेण समीहिताः तथैव भाव्या भवन्ति । व्रीहि-
शब्दश्च तदुपलक्षणार्थः । एवं च यवेष्वप्यौपदेशिक एवा-
वघातः सिद्धो भवति तद्रूपस्य तेष्वप्यविशेषात् । तदेवं
प्रकरणसहितया श्रुत्या अवघातविनियोगस्तदधीनत्वाद-
पूर्वसाधनलक्षणायाः । तथाहि दर्शपूर्णमासप्रकरणे श्रुत-
स्यावघातस्य श्रुतिसंयुक्तव्रीहिमात्रेण प्रयोजनापर्यवसानात्
'व्रीहीनवहन्ति' इति वाक्यं साकाङ्क्षं प्रकृतेन दर्शपूर्ण-
मासवाक्येनैकवाक्यत्वं प्रतिपद्यते दर्शपूर्णमाससंबन्धिनो
व्रीहीनवहन्ति इति तत्संबन्धिनश्च प्रयोजनाविनाभूताः
स्वसाध्यं प्रयोजनमुपस्थापयन्ति । तस्मिंश्चोपस्थिते तदर्थ-
त्वमवघातस्य व्रीह्यर्थत्वापरित्यागेन संपादयितुं व्रीहि-
शब्दस्य तत्साधनलक्षणार्थता भवति । नन्वेवं सति
' बर्हिर्लुनाति ' इत्यस्यापि दर्शपूर्णमासवाक्येनैकवाक्य-
त्वात्तत्साधने बर्हिषि लवनस्य विनियोगादङ्गप्रधानार्थता
न सिध्येत् । न सम्यगवगतमस्मन्मतमायुष्मता । न



हि दर्शपूर्णमासाभ्यां व्रीहिबर्हिःप्रभृतयस्तादर्थ्येन विशे-
ष्यन्ते दर्शपूर्णमासार्थान् व्रीहीनिति किं तर्हि तत्संबन्ध-
मात्रेण तत्संबन्धित्वं चाङ्गानामपि उपकारकत्वाद्भवत्येव
तत्संबन्धिभिश्च यत्प्रयोजनं प्रधानापूर्वमन्यद्वा अपूर्वमु-
पस्थाप्यते तत्साधनरूपे व्रीहिबर्हिरादिशब्दैर्लक्षिते तत्र
विनियुज्यमानं लवनादि तस्य सर्वस्याङ्गं भवति । अत
एव स्थानादग्नीषोमीययागेन विशेषितेऽपि यूपे विनि-
युज्यमानानां रशनातद्धर्माणामग्नीषोमीयप्रधानतदङ्गापूर्व-
व्यतिरेकेण तद्यूपसाध्यसवनीययागाङ्गत्वमपि । ततश्च
तदीयद्वितीयपरिव्याणेऽपि रशना तद्धर्माश्चौपदेशिका
भवन्ति । यद्यङ्गाङ्गेष्वपि तद्धर्मा भवन्ति वैमृधाङ्गेष्वपि
तर्हि व्रीहितद्धर्मा उपदेशेनैव भवेयुः । न, तदभावात् ।
न हि वैमृधस्य व्रीहय उपदिष्टा भवन्ति यदा तु तत्र
चोदकेन प्राप्नुवन्ति तदा सहैवावघातेन प्राप्नुवन्तीति
द्विरुक्तत्वान्नोपदेशसंभवः । अत एव सवनीयस्य वैशे-
षिके द्वितीये एव परिव्याणे रशनादीनामुपदेशो नान्यत्र
द्विरुक्तिदोषादिति । तत्सिद्धं प्रकरणसनाथया श्रुत्या अव-
घातादीनां विनियोग इति । तदत्र प्रकरणवशेन श्रुतस्यैव
शब्दस्यार्थविशेषलक्षणपरत्वं कल्प्यते । प्रयाजादिषु तु
शब्दस्वरूपमेव विनियोजकं कल्प्यते इत्येतावान्विशेषः
प्रकरणाधीनत्वं तूभयत्राविशिष्टम् । यस्य तु क्रतुसंबन्धा-
व्यभिचारः स्रुवादेस्तत्संबन्धित्वेन विनियुज्यमानस्य
खादिरत्वादेस्तद्द्वारेण प्रयोजनाकाङ्क्षायां बुद्धावविपरि-
वर्तमानमपि पूर्वमपूर्वं तेनैवाव्यभिचारिणा लिङ्गेन हृद-
यमागच्छतीति विनाऽपि प्रकरणं तत्साधनरूपलक्षणया
विनियोगोपपत्तिः । यत्र द्वयं नास्ति तत्र साधनलक्षणं न
घटते इति प्रकरणसहिता श्रुतिरवघातविनियोगे कारणम् ।
स्यादेतत् द्वितीयया व्रीहीणां साध्यत्वमात्रमभिधीयते
अवघातसाध्यत्वं तु तत्पदसमभिव्याहारात्मकाद्वाक्यादेव
तत्कथं श्रुत्याऽवघातस्य व्रीह्यङ्गत्वमिति । सत्यं यथा
आह भवान् किंतु विनियोगः श्रुत्यैव । संबन्धो हि
विनियोगः । स च समीहितासमीहितयोः साध्यसाधन-
भावरूपः । तत्र द्वितीया व्रीहीणां समीहितानां साध्यत्वं
प्रतिपादयन्ती प्रतियोगिनः शेषत्वमाक्षिप्य तद्विशेषमात्रं
पदान्तरसमभिव्याहारात्मकाद्वाक्याल्लभते । तृतीयादिरपि
साधनत्वं प्रतिपाद्य प्रतियोगिनः शेषित्वमाक्षिप्य तद्विशे-
षमात्रार्थं वाक्यमपेक्षते तेनोभयत्रापि श्रुतिरेव विनियोग-
कारणमुच्यते । यत्र पुनः शेषिशेषयोः साध्यसाधनभावो
न श्रुतः पदद्वयसमभिव्याहारादेव शेषशेषित्वयोग्यत्व-
मालोच्य कल्प्यः यथा ' स्वर्गकामो यजेत ' इति तत्र
वाक्येनैव विनियोग इति । न हि तत्र स्वर्गकामस्य
यागस्य वा साध्यत्वं साधनत्वं वा केनचिदुपात्तं पदद्वय-
समभिव्याहारादेव तु संबन्धे कल्पयितव्ये असाधकं तु
तादर्थ्यादित्यनेन न्यायेन कामिनः प्राधान्यं यागस्य गुणत्वं
कल्प्यते । आह– **' स्वर्गकामस्य भूतस्य भाव्यत्वं
संभवेत्कथम् । भूतिकर्तुर्हि भाव्यत्वं भवनस्य न
भूतिषु । ' ७ ॥** भवनस्य ह्युत्पत्त्यपरनामधेयस्य कर्ता
भाव्यो भवति स्वर्गकामस्तूत्पन्नो नोत्पत्तुमर्हति इति
न भाव्यः स्यादिति तदुच्यते । **' भूतस्यापि स्वरूपेण
स्वर्गकामस्य भाव्यता । धर्मान्तरविशिष्टस्य क्रतु-
व्रीह्यादिवद्भवेत् । ' ८ ॥** स्वर्गकामस्य तावद्यागभावना
शेष इति वाक्यादवगम्यते शेषत्वं च द्वेधा भवति यदि
तावत्स्वरूपमेव समीहितस्य साधयति तद्गतं वा कं-
चिद्धर्मभेदं उभयथाऽपि च साध्यं शेषि भवति यथा
प्रयाजादिभावनायाः क्रतुः न हि प्रयाजादिभिः क्रतु-
स्वरूपमुत्पाद्यते तदुपकार एव तु साध्यते अथ च
क्रत्वर्थत्वेनैव प्रयाजादयः संबध्यन्ते इति वक्ष्यामः ।
यथा च व्रीहयो निष्पन्ना अप्यवघातस्य भाव्या भवन्ति
न हि स्वरूपेणैवोत्पाद्यं भाव्यमिति नियमः समस्ति ।
धर्मान्तरोपेतेनापि रूपेण भाव्यतोपपत्तेः । तत्र प्रथमं
भाव्यतामात्रात्मके शेषित्वेऽवधृतेऽपि कमुपकारं कृत्वा
अस्यायं शेषः किं स्वरूपोत्पत्तिं किं वोपकारान्तरमिति
विशेषापेक्षायां सामर्थ्येन विशेषः कल्प्यते । तत्र स्वर्ग-
कामस्य भूतस्य स्वरूपेण भाव्यत्वं न संभवतीति फल-
विशिष्टत्वेनैव रूपेण भाव्यत्वं भवति । अत एव फलपरं
स्वर्गकामपदं मीमांसकवरिष्ठा मन्यन्ते । यथा ' दण्डी
प्रैषानन्वाह ' इति दण्डविशिष्टेऽनुवचनाङ्गत्वेन चोद्यमाने
विशेष्यस्य पूर्वमेव क्लृप्तत्वाद्विशेषणभूतस्य दण्डस्यानु-
वचनाङ्गत्वप्रतिपादनपरं वचनं संभवति । तथा ' स्वर्ग-
कामो यजेत ' इति विधिनैव यागभावनायाः पुरुषार्थत्वे

प्राप्ते पुरुषस्य शेषित्वं न स्वरूपेण संभवतीति किंचित्फलमिच्छतस्तद्विशिष्टेन स्वरूपेण शेषित्वमिति सामर्थ्यादवगते फलविशेषमात्रे चानवगते स्वर्गकामस्य शेषित्वमुच्यमानं स्वर्गाख्यविशेषणपरमेव भवति तेन स्वर्गसाधनद्वारेण यागस्य पुरुषशेषत्वमिति। यथाऽऽहुः 'अपेक्षितत्वात् भाव्यस्य कामशब्दा हि तत्पराः। विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम्॥' इति। तदेतदेकादशाद्ये विस्पष्टमेव भगवता भाष्यकारेणोक्तम्।

ननु नैवात्र स्वर्गः फलं श्रूयते इत्यादिना फलस्य वाच्यकामावं चोदयित्वा अनेन स्वर्गकामशब्देनेत्युक्त्वा ननु पुरुषविशेषस्यायं वक्तेत्यादिना चोद्यपूर्वकं पुरुषपरत्वं कालपरत्वं च स्वयं निरस्य निमित्तपरत्वं चाख्यातोपात्तकर्तृसंख्याविवक्षाप्रतिपादनावसरे षष्ठे स्पष्टं सूत्रकारेणैव 'फलकामो निमित्तमिति चेन्न नित्यत्वात्' इति परिहृतमित्युक्त्वा परिशेषात्फलसंयोग एवायं इत्युपसंहृत्य कथं पुनरनेन शक्यते फलमभिधातुमिति पृष्ट्वा वचनव्यक्तिद्वयमुपन्यस्य 'मलिनः स्नायात्' इतिवत् शेषित्वेनान्वयं पुरुषस्य स्वर्गकामाय याग उपदिश्यते इति दर्शयित्वा तत्र च स्वर्गाख्योपकारविशेषप्रतिपत्तिपरत्वमेव संपत्स्यते इत्यन्ते अभिहितम्। अन्तरेणापि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते तस्माद्यागात् स्वर्गो भवति इत्येवमर्थं वचनमिति। तदेवं यत्र साध्यसाधनभावप्रतिपादकविभक्त्यभावस्तत्र वाक्येन विनियोगः। यत्र तु शेषिणि साध्यत्वप्रतिपादिका यथा व्रीहीनिति, शेषे च साधनत्वप्रतिपादिका विभक्तिर्यथा 'सोमेन यजेत' इति, तत्र श्रुतिविनियोगः। यत्राप्यन्यतरत्र संबन्धमात्रप्रतिपादिका षष्ठी यथा दध्नेन्द्रियकामस्येति शेषिणि यजमानस्य याज्येति शेषे तत्रापि योग्यत्वालोचनया सैव संबन्धविशेषे वर्तते इति श्रुतिविनियोगः। यत्रापि शेषिणि चतुर्थी मैत्रावरुणाय दण्डमिति तत्रापि संप्रदानस्य कर्मणा अभिप्रेयमाणस्य स्फुटमेव साध्यत्वश्रुतिरेव। तादर्थ्यचतुर्थ्यां तु स्फुटतर एव श्रुतिविनियोगः। यथा 'यः सोमवामी स्यात् तस्मा एतं सौमेन्द्रं श्यामाकं चरुं निर्वपेत् सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति च। यत्र तु श्रुतिविपर्ययः यथा 'पूर्वेद्युरमावास्यायां वेदिम्' इति शेषिणि सप्तमी 'सक्तून् जुहोति' इति शेषे द्वितीया तत्र लक्षणया साधनवाचिन्या साध्यत्वं तद्वाचिन्या च साधनत्वं प्रतिपाद्यम्। लक्षणा च सर्वत्र वाक्यनिमित्ता इति वाक्यविनियोग इति। एवं तावत् श्रुतिविनियोगः प्रपञ्चितः। आह, कथं पुनर्विनियोगश्रुतेस्त्रैविध्यमुक्तं पदस्य कारकविभक्तीनां च विनियोजकत्वमिति हि द्वैविध्यमेव दर्शयति। पदग्रहणं तुल्याभिधानश्रुतेरपि दर्शनार्थमित्यदोषः। तथा च— '**कारकेण गृहीतत्वादेकत्वादेः क्रियार्थता। कारके श्रुतिगम्यत्वाद्बाधते द्रव्यशेषताम्।**' ९॥ तथा— '**यथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते। समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता॥**' १०॥ इति। तत्र समानाभिधानश्रुतिं दर्शयति। तस्मात् त्रिविधा विनियोक्त्रीति सूक्तम्। रत्नमाला. पृ. १२३-१३०.

* **श्रुतिन्यायः**। याऽपि हि लौकिकी समाख्या, तस्यां श्रुतिन्यायेन मूलश्रुतिकल्पकत्वेऽपि न स्थानादिकल्पकत्वम्। वैदिक्यास्तु न तदपि। कौ. ३।३।६।१३.

* **श्रुतिप्रकरणयोर्विरोधः**। यदि 'अहीनः' इति अहर्गणनामधेयं ततः श्रुत्या संयुक्तत्वात् असंयुक्तग्रहणस्वभावेन प्रकरणेन अग्रहणम्, अस्ति हि तदानीं श्रुतिप्रकरणयोर्विरोधः। वा. ३।३।८।१९. * **श्रुतिप्रकरणयोर्विरोधे** प्रकरणात् एकविंशत्याद्यनुवचनानां दर्शपूर्णमासाङ्गत्वे प्राप्ते श्रुत्यैव प्रतिष्ठाकामादिषु पुरुषार्थावधारणात् प्रकरणबाधः। अनुवचनानां च क्रियारम्भकत्वात् इतिकर्तव्यतारूपत्वात् प्रकरणग्राह्यत्वेन तद्विरोधोदाहरणत्वम्। वा. ३।३।७।१४ पृ. ८३५। इदं शेष्यनेकत्वे। शेषानेकत्वे तु प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात् पञ्चदशसंख्यसामिधेन्यनुवचने अङ्गत्वेन प्राप्ते श्रुत्या एकविंशतिसंख्यानुवचनान्तराङ्गत्वावगमात् प्राकरणिकनित्यानुवचनबाधः। पृ. ८३८. * **श्रुतिप्रकरणयोर्विरोधे** शेष्यनेकत्वे एकविंशत्याद्यनुवचनानां प्रकरणाद् दर्शाद्यङ्गत्वप्रसक्तौ प्रतिष्ठाकामस्य इति गौण-



षष्ठीश्रुत्या पुरुषार्थत्वम्। शेषानेकत्वे तु प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात् पाञ्चदश्यानुवचने अङ्गत्वेन प्रसक्ते षष्ठीश्रुत्या एकविंशत्यनुवचनविधानम्। वार्तिककारोक्तमिदमुदाहरणम्। कौ. ३।३।७।१४ पृ. ३५४-३५५.

* **श्रुतिप्रकाराः** अष्टौ परदौर्बल्यवन्तः आघाराग्निहोत्राधिकरणे वार्तिककृता निराकृताः। सु. पृ. ४५९. * **श्रुतिप्रकारान्** अष्टौ परदौर्बल्यवतः केचिद्दर्शयन्ति— १ धात्वर्थविधानं यथा 'अग्निहोत्रं जुहोति'। २ सगुणं धात्वर्थविधानं (वा.) विशिष्टधात्वर्थविधिः, गुणविशिष्टधात्वर्थविधिः (सुधा.)। ३ किंचिदुद्दिश्य धात्वर्थविधानं (वा.) धात्वर्थस्य अन्यत्र विधिः, (सुधा.) यथा 'व्रीहीन् प्रोक्षति'। ४ विशिष्टविधानं (वा.) अन्यत्र विशिष्टधात्वर्थविधानम्, अन्योद्देशेन विशिष्टधात्वर्थविधानं (सुधा.) यथा 'दशापवित्रेण ग्रहं संमार्ष्टि'। ५ धात्वर्थोद्देशेन अन्यस्य विधानं (वा.) धात्वर्थे अन्यविधिः (सुधा.) यथा 'दध्ना जुहोति'। ६ धात्वर्थेन अन्ययोः संबन्धः (वा.) धात्वर्थे अन्यसंबन्धविधिः (सुधा.) यथा 'प्राकाशावध्वर्यवे ददाति' धात्वर्थे प्राकाशाध्वर्युसंबन्धो विधीयते। ७ धात्वर्थविशिष्टेन प्रत्ययेन अन्ययोः संबन्धः यथा 'वायव्यं श्वेतमालभेत'। ८ मुक्त्वा धात्वर्थं अन्ययोरेव संबन्धः यथा 'दध्नेन्द्रियकामस्य जुहुयात्'। वा. २।२।५।१६, सु. पृ. ७६७-७६८.

* **श्रुतिप्रत्ययो** बलीयान्। भा. १०।८।८।१६ पृ. २०७३.

* **श्रुतिप्रभवया** स्मृत्या लिङ्गादिप्रभवा अर्थवादप्रभवा च बाध्यते। अप्राप्तबाधः। वा. ३।३।७।१४ पृ. ८६०.

* **श्रुतिप्रमाणकाः** हि वैदिका अर्थाः। नैषामन्यत् प्रमाणमस्ति। भा. ५।१।१।१.

## श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात्। ६।३।४।१३॥

नित्येषु कर्मसु शिष्टाभावे शिष्टस्य विहितस्य द्रव्यस्य अलाभादिना अभावे सति अन्यस्य प्रतिनिधिभूतस्य द्रव्यस्य अनागमः आगमाभावः ग्रहणं न कर्तव्यम्। किंतु, तदन्तमेव कर्म उत्स्रष्टव्यम्। अशिष्टत्वात् अन्यस्य अविहितत्वात्। श्रुतिप्रमाणत्वात् मुख्यमेव द्रव्यं श्रुतिप्रमाणकं प्रतिनिधिस्तु न श्रुतिप्रमाणकः। तस्मात् मुख्याभावे कर्मोत्सर्गः इति पूर्वः पक्षः।

### क्वचिद्विधानाच्च। १४॥

नित्यकर्मणि मुख्यद्रव्यालाभेऽपि प्रतिनिधिर्न ग्राह्यः इति पूर्वपक्षे लिङ्गं हेत्वन्तरमाह। 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति क्वचित् प्रतिनिधेः विधानात् ज्ञायते यत्र न विधीयते न तत्र प्रतिनिधिः इति। हेत्वन्तरसमुच्चयार्थः चकारः।

### आगमो वा चोदनाऽर्थाविशेषात्। १५॥

अग्निहोत्रादिषु कर्मसु श्रुतद्रव्यापचारे प्रतिनिधिर्ग्राह्यो न वा इति विचारे न ग्राह्यः, श्रुतस्य द्रव्यस्य नाशे सति तदन्तः प्रयोग उत्स्रष्टव्यः इति पूर्वपक्षे सूत्राभ्यां प्राप्ते सिद्धान्तसूत्रमिदम्। वा-शब्दः पूर्वपक्षव्यावर्तनार्थः। प्रतिनिधिभूतस्य द्रव्यस्य आगमः कर्तव्यः। चोदनायाः अर्थस्य चोदनाविषयत्वस्य मुख्ये प्रतिनिधौ च अविशेषात् विशेषाभावात्। प्रतिनिधिग्रहणेऽपि यागचोदनया विरोधो नास्ति इति।

### नियमार्थः क्वचिद्विधिः। १६॥

नित्यं कर्म श्रुतद्रव्यापचारे प्रतिनिधिना कर्तव्यं इति सिद्धान्तः। तत्र 'क्वचिद्विधानाच्च' (६।३।४।१४) इति पूर्वपक्षशङ्कायाः निरासार्थं सूत्रमिदम्। 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति यः क्वचित् विधिः स नियमार्थः। सोमाभावे पूतीका एव ग्राह्या नान्यत् इति नियमार्थः स विधिः इति न तत् प्रतिनिध्यभावे लिङ्गम्।

### तन्नित्यं तच्चिकीर्षा हि। १७॥

श्रुतद्रव्यालाभे नित्ये कर्मणि प्रतिनिधिर्ग्राह्यः। सोमालाभे पूतीकविधानं पूतीकनियमार्थं इत्युक्तं सिद्धान्तिना। तत्र कथं नियमार्थता अवगम्यते ? इत्यत आह। हि यस्मात् तच्चिकीर्षा तस्य यागस्य चिकीर्षा नियता तस्मात् तत् पूतीकद्रव्यं सोमालाभे नित्यं

स्वीकार्यं इति पूतीकविधानं नियमार्थमिति । अथवा चिकीर्षा सादृश्यमित्यर्थः । हि यस्मात् तच्चिकीर्षा सोमसादृश्यं पूतीकेषु दृष्टं इति सोमाभावे तत्प्राप्तिरेव भवति, तथापि पूतीकद्रव्यस्य पुनर्विधानात् इतरत् सोमसदृशमपि किंचित् द्रव्यं त्यक्त्वा पूतीकद्रव्यमेव ग्राह्यम्, इति तत् पूतीकद्रव्यं नित्यम् । तस्मात् श्रुतद्रव्यापचारे प्रतिनिधिर्ग्राह्यः । इति सिद्धान्तः ।

वार्तिकच्छायया इदं सूत्रं न लक्ष्यते इति कुतूहलम् । के.

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाऽधिकारं भावः स्यात् । ७।१।१।१ ॥**

मुख्यानां अपूर्वाणां प्रधानानां भेदे शब्दान्तरादिभिः प्रमाणैः सिद्धे सति शेषाणां भावः विद्यमानता यथाधिकारं अधिकारं प्रकरणं अनतिक्रम्य स्यात् । ये यस्य अपूर्वस्य प्रकरणे विधीयन्ते ते तस्यैव भवेयुः । श्रुतिप्रमाणत्वात् । अयमस्य अपूर्वस्य शेषः, अयमस्य इत्यत्र श्रुतिरेव प्रमाणम् । तस्मात् यथाप्रकरणं शेषाणां व्यवस्था इति सिद्धान्तः ।

**उत्पत्त्यर्थाविभागाद् वा सत्त्ववदैकधर्म्यं स्यात् । २ ॥**

अङ्गानां यथाप्रकरणं व्यवस्था इति सिद्धान्ते सूत्रेणोक्ते वाशब्देन तं निरस्य पूर्वपक्षी आह । न यथाप्रकरणं व्यवस्था किंतु ऐकधर्म्यं स्यात् ऐन्द्राग्नादीनामपि प्रधानानां दर्शपूर्णमासप्रधानैः समानधर्मता स्यात् । सर्वे धर्माः सर्वार्थाः स्युः । उत्पत्त्यर्थाविभागात् । उत्पत्तिरिति यजिं ब्रूमः उत्पद्यते अनेन इति व्युत्पत्तेः । यागेन अपूर्वस्योत्पादनात् । अर्थ इति अपूर्वं ब्रूमः । उत्पत्तिश्च अर्थश्च उत्पत्त्यर्थौ । तयोः अविभागात् अविनाभावात् । यजौ श्रूयमाणा धर्माः यजिमत्सु सर्वेषु अपूर्वेषु स्युः । सत्त्ववत् । सत्त्वशब्देन लक्षणया सत्त्वधर्मो ग्राह्यः । सत्त्वधर्मवत् इत्येव वा पाठः । सत्त्वस्य गवादिप्राणिनः धर्मः पदा स्पर्शनाभावः तद्वत् । ' गौर्न पदा स्प्रष्टव्यः ' इति गोत्वसंबन्धेन श्रूयमाणो धर्मः गोत्वे असंभवन् गोत्वसंबद्धेषु पिण्डेषु विज्ञायते तद्वत् । तस्मात् सर्वे सर्वार्थाः इति पूर्वपक्षः ।

**चोदनाशेषभावाद् वा तद्भेदाद् व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् । ३ ॥**

सर्वे धर्माः सर्वार्थाः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् पुनः सिद्धान्तमाह । शेषाणां चोदनाशेषभावात् । चोद्यते इति चोदना भावना । भावनाशेषभूताश्च धर्माः । ते च धर्माः तद्भेदात् भावनाभेदात् यथाप्रकरणं व्यवतिष्ठेरन् व्यवस्थिताः स्युः । उत्पत्तेः यागस्य अपूर्वजनकस्य गुणभूतत्वात् धर्माणां यथाप्रकरणं व्यवतिष्ठेरन् । चोदनाशेषभावात् चोदनाभेदे धर्मव्यवस्था, उत्पत्तेर्गुणभूतत्वाच्च धर्मव्यवस्था । तस्मात् यथाप्रकरणं धर्मव्यवस्था ।

**सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत । ४ ॥**

पूर्वपक्षिणा सत्त्ववत् ( ७।१।१।२ ) इति उक्तं दृष्टान्तं वैषम्येण विघटयति सिद्धान्ती । सत्त्वे गोत्वाद्याकृतौ श्रूयमाणं ' गौर्न पदा स्प्रष्टव्यः ' इत्यादि धर्मजातं सार्वत्रिकं सर्वगोव्यक्तिगतं प्रतीयेत इति युक्तम् । लक्षणसंयोगात् सर्वासां व्यक्तीनां गोत्वरूपेण लक्षणेन संयोगात् संबन्धात् । प्रकृते तु न तथा । तस्मात् यथाप्रकरणं धर्मव्यवस्था ।

**अविभागात्तु नैवं स्यात् । ५ ॥**

प्रयाजादयो धर्मा यजिप्रयुक्ता इति प्रतिपादयति पूर्वपक्षी । तुशब्देन अपूर्वप्रयुक्तत्वं निवारयति । एवं न स्यात्, धर्माणां अपूर्वप्रयुक्तता न स्यात् । अविभागात् धर्माणां यागेन अविभागात् । केचिद्धर्मा द्रव्ये श्रूयन्ते केचिद्देवतायां केचिन्मन्त्रेषु । देवतामुद्दिश्य मन्त्रेण द्रव्यत्यागश्च यागः । तस्मात् यागेन अविभक्ता धर्माः । यागार्थत्वाच्च सर्वे धर्माः सर्वार्थाः ।

**द्व्यर्थत्वं च विप्रतिषिद्धम् । ६ ॥**

यदि सर्वे धर्माः सर्वार्थाः स्युः, तत एव सौर्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते । ' प्रयाजेप्रयाजे कृष्णलं जुहोति ' इति । अन्यथा प्रयाजाश्च त्रिधातव्याः प्रयाजेषु च कृष्णलहोमः । तथा च ' प्रयाजेप्रयाजे कृष्णलं जुहोति ' इति वाक्यं द्व्यर्थं स्यात् । द्व्यर्थत्वं च



विप्रतिषिद्धम् । तस्माद्यजिप्रयुक्ताः धर्माः सर्वे सर्वार्थाः इति पुनः पूर्वपक्षः ।

**उत्पत्तौ विध्यभावाद् वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात् । ७ ॥**

यजिप्रयुक्ता धर्मा इति पूर्वपक्षनिरासार्थो वाशब्दः । उत्पत्तौ विध्यभावात् यागे धर्माणां न विधिः । यद्यपि यागे श्रूयन्ते क्रियन्ते च तथापि तेषां चोदनायां अपूर्वे अपूर्वनिमित्ता प्रवृत्तिः स्यात् । अपूर्वार्था धर्माः । ततश्च अपूर्वार्थत्वात् कर्मभेदः कर्मणो धात्वर्थस्य भेदः स्यात् । तस्मात् प्रतिप्रकरणं धर्मव्यवस्था इति सिद्धान्तः ।

**यदि वाऽप्यभिधानवत् सामान्यात् सर्वधर्मः स्यात् । ८ ॥**

धर्माणां अपूर्वप्रयुक्तत्वेऽपि सर्वार्थता इति पूर्वपक्षी शङ्कते । यदि वा अपि यद्यपिवा अपूर्वं धर्माणां प्रयोजकं तथापि सर्वधर्मः स्यात् सस पदार्थः । अभिधानं तावत् एतेषां समानं अपूर्वमिति । अभिधानवत् धर्मेणापि अस्य समानेन भवितव्यम् । किंच अभिधानवत् वाहीक इति अभिधानवत् । यथा ' वाहीकोऽतिथिरागतः यवान्नमस्मै प्रक्रियताम् ' इत्युक्ते योयो वाहीकः तस्यतस्य यवान्नं क्रियते । एवमिहापि एकस्य अपूर्वस्य ये धर्माः श्रुताः ते सर्वापूर्वाणां भवितुमर्हन्ति । तस्मादपूर्वप्रयुक्तत्वेऽपि सर्वे धर्माः सर्वार्था इति पुनः पूर्वपक्षः ।

**अर्थस्य त्वविभक्तत्वात् तथा स्यादभिधानेषु, पूर्ववत्त्वात् प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्, विभागाच्छेषाणामप्रवृत्तिः स्यात् । ९ ॥**

प्रयाजादयो धर्माः प्रकृतिमात्रार्था इति सिद्धान्तः । प्रकृतिविकृतिसर्वार्था इति पूर्वः पक्षः । पूर्वपक्षिणा च सर्वार्थत्वे अभिधानवत् इति शब्देन वाहीकदृष्टान्तः उक्तः । तुशब्देन तस्य वैषम्यं सूचयन् सिद्धान्ती स्वपक्षं साधयति । अर्थस्य देशविशेषसंबन्धस्य सर्वेषु वाहीकेषु अविभक्तत्वात् अनुगतत्वात् अभिन्नत्वात् अभिधानेषु 'वाहीकाय यवान्नं क्रियताम्' इत्यादिशब्देषु तथा स्यात् यवान्नस्य सर्ववाहीकार्थता स्यात्, तथा स्यात् सर्वार्थता स्यात् । सर्वे हि वाहीकदेशस्थाः यवान्नमेव भुञ्जते । प्रयोगस्य यवान्नोपभोगस्य सर्वेषु पूर्ववत्त्वात् पूर्वसिद्धत्वात् । अर्थस्य अविभक्तत्वात् प्रयोगस्य च पूर्ववत्त्वात् अभिधानेषु तथा स्यात् । प्रकृते तु कर्मणः प्रयाजाद्यङ्गस्य शब्दभाव्यत्वात् श्रौतेनैव शब्देन विधेयत्वात् विभागात् अपूर्वाणां विभक्तत्वेन ज्ञानात् शेषाणां प्रकृतेरङ्गानां प्रयाजादीनां अन्यत्र विकृतिषु सौर्यादिषु अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् । तस्मान्न सर्वे धर्माः सर्वार्थाः । किंतु यथाप्रकरणं व्यवस्था ।

कुतूहले तु— अभिधानेषु वाहीकोऽयं इत्याद्युपदेशेषु अर्थस्य यवान्नप्रियत्वस्य अविभागात् साधारण्यात् तथा स्यात् वाहीकान्तरेऽपि यवान्नपरिवेषणं स्यात् । कुतः ? प्रयोगस्य वाहीकोऽयं इत्यादिप्रयोगस्य पूर्ववत्त्वात् यवान्नप्रियतावधारणपूर्वकत्वात् । कर्मणस्तु शब्दैकप्रमाणकत्वात् तद्विभागात् कर्मभेदात् अन्यत्रोपदिष्टानां शेषाणां अन्यत्र अप्रवृत्तिः स्यात् इति व्याख्यातम् ।

**स्मृतिरिति चेत् । १० ॥**

दर्शपूर्णमासादौ प्रयाजादयो धर्माः अपूर्वप्रयुक्ताः न यजिप्रयुक्ताः इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । अरुणपराशराणां नाम शाखिनां परिचरेषु नाम ग्रन्थेषु स्मृतिरूपं ब्राह्मणं भवति ' ये दर्शपूर्णमासयोर्धर्माः ते सर्वेष्टीनां अग्नीषोमीयस्य च ' इति । तेन प्रयाजादयो धर्माः सर्वे सर्वार्थाः इति सिध्यति । इति चेत् ।

**न पूर्ववत्त्वात् । ११ ॥**

' ये दर्शपूर्णमासयोर्धर्माः ते सर्वेष्टीनां अग्नीषोमीयस्य च ' इति अरुणपराशरशाखिनां स्मृत्या सर्वे धर्माः सर्वार्थाः इति पूर्वपक्षिणा यदुक्तं तत् न । पूर्ववत्त्वात् । विकृतयः प्रकृतिपूर्विकाः । सर्वेष्टीनां च अग्नीषोमीयस्य पशोश्च दर्शपूर्णमासौ प्रकृतिः । प्रकृतिधर्माश्च विकृतिषु चोदकेन प्राप्नुवन्ति । तथा च विकृतियागाः प्रकृतियागपूर्ववन्तः । चोदकन्यायसिद्धं च अरुणपराशराणां स्मृतौ प्रकृतिपूर्वकत्वं अनूदितम्, न तत्र अपूर्वं विधानम् । तस्मान्न सर्वे धर्माः सर्वार्थत्वेन विधीयन्ते ।

**अर्थस्य शब्दभाव्यत्वात् प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात् । १२ ॥**

प्रयाजादयो धर्माः किं अपूर्वप्रयुक्ताः दर्शपूर्णमासयोरेव विधीयन्ते अथवा सर्वे धर्माः सर्वार्थाः विकृतिष्वपि विधीयन्ते इति विचारे सर्वे सर्वार्थाः इति पूर्वपक्षं निरस्य अपूर्वप्रयुक्ताः यथाप्रकरणं व्यवस्था इति साधितं सिद्धान्तं निगमयति । अर्थस्य धर्मजातस्य शब्दभाव्यत्वात् शब्देन भाव्यत्वात् शब्दैकप्रमाणत्वात् प्रतिप्रकरणं च प्रकरणे प्रकरणे तत्तत्प्रकरणे निबन्धनात् व्यवस्था स्यात् ये धर्मा यस्मिन् प्रकरणे विहिताः ते तत्रैव स्युरित्यर्थः । ननु तर्हि सौर्यादौ प्रयाजादयो न स्युः इति चेत्, तत्राह– शब्दात् ‘ प्रकृतिवत् विकृतिः कर्तव्या ’ इति चोदकशब्दात् अन्यत्र सौर्यादावपि विकृतियागे भावः स्यात् विद्यमानता स्यात् अनुष्ठेयता स्यात् । किंच शब्दात् ‘ एतेषां राष्ट्रभृतो जुहोति’ ‘अभ्यातानान् जुहोति ’ इति विधानात् अन्यत्र विवाहादावपि भावः स्यात् । शब्दादेव अन्यत्र भावः स्यात् विना तु विशेषवचनं अन्यत्र भावो नैव स्यात् । के.

* श्रुतिप्राप्तानां नियमेन निवर्तयितुमशक्यत्वम् । वा. २।२।१३।२८ पृ. ५६४.

* श्रुतिप्राबल्याधिकरणम् । वि. १।३।२.

* श्रुतिबाधः लिङ्गेन क्वचित् । बाल. पृ. १४५.

* श्रुतिबाध्यैः लिङ्गादिभिः यानि बाध्यन्ते तानि श्रुत्या बाध्यन्तेतराम् । वा. ३।३।७।१४ पृ. ८२३.

* **श्रुतिभेदाः** अभिधीयन्ते । अभिधात्री श्रुतिः पञ्चविधा । धातुः, प्रातिपदिकम्, कृदादिः प्रत्ययः, उपसर्गः, निपातश्चेति ॥ धातुरपि द्विविधः ‘ भूवादयो धातवः ’ इति विहितधातुसंज्ञः ‘ सनाद्यन्ता धातवः ’ इति च ॥ प्रातिपदिकमपि द्विविधं ‘ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ’ इति कृतसंज्ञं ‘ कृत्तद्धितसमासाश्च ’ इति च ॥ प्रत्ययश्चतुर्विधः सुप्–तिङ्–कृत्–तद्धितभेदात् ॥ उपसर्गनिपातयोस्तु वाचकत्वं इत्येकः पक्षः । नञ्टीकायां नञो निवर्तनावाचित्वोक्तेः, पर्युदासे च नञो लक्षणोक्तेः मुख्याभावे च गाव्यादीनामिव लक्षणानुपपत्तेः । तयोर्द्योतकत्वं इत्यपरः पक्षः । आकृत्यधिकरणे ‘ यदर्थद्योतकौ तौ तु वाचकः स विचार्यते । ’ इत्युक्तेः । द्योतकत्वपक्षेऽपि द्योत्यस्य तदन्वयानुविधानात् तयोः वाचकत्वकल्पनैव इति न श्रुतित्वाविघातः पदस्येव प्रकृतिप्रत्ययार्थयोः अनन्वितयोरभिधानपक्षेऽपि विनियोजकश्रुतित्वाविघातः ॥ विनियोक्त्री श्रुतिस्तु अष्टधा–– १ विधिश्रुतिः, २ परस्मैपदश्रुतिः, ३ आत्मनेपदश्रुतिः, ४ सुबन्ततिङन्ताद्येकपदरूपा या उपश्लेषलक्षणा इति गीयते, ५ एकप्रत्ययरूपा, ६ कारकविभक्तिः, ७ उपपदविभक्तिषु तादर्थ्यचतुर्थी, ८ शेषषष्ठी चेति ॥ तत्र विधिश्रुतिर्यथा– ‘ यजेत ’ इत्यादौ सा स्वविषयीभूतां भावनां अपुरुषार्थरूपं यागमुपेक्ष्य पुरुषार्थरूपे स्वर्गादौ भाव्ये विनियुङ्क्ते ॥ परस्मैपदरूपा तु श्रुतिः तृतीये ‘ तथा कामोऽर्थसंयोगात्’ इत्यधिकरणे (३।८।५।१३–१४) सिद्धान्तसाधकतया उक्ता मिश्रैः । ‘ मिनुयात् ’ इति परस्मैपदश्रुत्या अध्वर्युव्यापारः परार्थः श्रूयते, तया श्रुत्या विरोधात् ‘ यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात् ’ इति तत्सामानाधिकरण्यं कामयतेर्बाध्यते इति ॥ आत्मनेपदश्रुतिर्यथा ‘ आदधीत ’ इत्यात्मनेपदश्रुत्या आधानसाध्याग्निसाध्यकर्मफलानां आधात्रर्थता भवति इत्युक्तं षष्ठे ‘ प्रयोगे पुरुषश्रुतेः ’ इत्यधिकरणे (६।२।२) तन्त्ररत्ने ‘ अन्यार्थे नाभिसंबन्धः ’ ( ९ सू. ) इति सूत्रे ‘ सौर्यादीनां तु आधानगतेन आत्मनेपदेन आधानकर्तुरेव फलं ’ इत्यादिना ॥ सुबन्तात्मकैकपदरूपा एकप्रत्ययरूपा च विनियोक्त्री क्रमेण बाध्यबाधकभावेन उक्ते यथा ‘तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥ ’ इति (वा. पृ. ८४०) ॥ तिङन्तात्मकैकपदरूपा विनियोक्त्री श्रुतिर्यथा ‘ यजेत ’ इत्यादिका श्रुतिर्भावनायां धात्वर्थस्य करणत्वं प्रतिपादयति ॥ एकप्रत्ययरूपा तु श्रुतिर्यथा ‘ पशुना ’ इति प्रागुक्ता सुब्रूपा, ‘ यजेत ’ इति तिङ्रूपा च ॥

कारकविभक्तिरूपा विनियोक्त्री श्रुतिर्निरूप्यते । ननु सुप्तिङ्प्रत्यययोः कारकविभक्तेश्च को भेदः येन सा पृथक् निरूप्यते ? उच्यते । सुबादिश्रुतिः स्वोक्तानामेव



अर्थानां अन्योन्यं विनियोक्त्री, कारकविभक्तिस्तु प्रातिपदिकार्थक्रिययोरस्वार्थयोरपि विनियोक्त्री इति भेदः । तत्र कारकविभक्तिः अनेकधा । तत्र ‘ कर्मणि द्वितीया ’ इत्यनुशिष्टा ‘ व्रीहीन् अवहन्ति ’ इत्यादिः कर्मणि द्वितीया ॥ ‘ तृतीया च होश्छन्दसि ’ इत्यनुशिष्टा ‘ यवाग्वा जुहोति ’ इत्यादिः कर्मणि तृतीया ॥ ‘ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ’ इत्यनुशिष्टा ‘ ग्रामाय याति ’ इत्यादिः कर्मणि चतुर्थी ॥ ‘ कर्तृकरणयोस्तृतीया ’ इत्युदिता ‘ सोमेन यजेत ’ ‘ ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ’ इत्यादिः करणे कर्तरि च तृतीया ॥ ‘ संज्ञोऽन्यतरस्यां कर्मणि ’ इत्युदिता ‘ पित्रा पितरं वा संजानीते ’ इत्यादिः कर्मणि तृतीया ॥ ‘ चतुर्थी संप्रदाने ’ इत्युक्त्वा ‘ मैत्रावरुणाय दण्डं प्रयच्छति ’ इत्यादिः संप्रदाने चतुर्थी ॥ ‘ क्रियार्थोपपदस्य च कर्मणि स्थानिनः’ इत्युक्ता ‘ फलेभ्यो याति ’ इत्यादिः कर्मणि चतुर्थी ॥ ‘ मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ’ इत्युक्ता कर्मणि चतुर्थी ॥ ‘ अपादाने पञ्चमी ’ इति विहिता ‘ अग्नेस्तृणान्यपचिनोति ’ इत्यादिः अपादाने पञ्चमी ॥ ‘ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ’ इति विहिता ‘ स्तोकेन स्तोकाद्वा मुक्तः ’ इत्यादिः करणे पञ्चमी ॥ ‘ दिवस्तदर्थस्य ’ इति चोदिता ‘ शतस्य दीव्यति० ’ इत्यादिः, ‘ विभाषोपसर्गे ’ इति च चोदिता ‘शतस्य प्रतिदीव्यति’ इत्यादिः, ‘प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ’ इति च विहिता ‘ अग्नये छागस्य हविषो वपाया मेदसः प्रेष्यानुब्रूहि ’ इत्यादिः, ‘ यजेश्च करणे ’ इति च विहिता ‘ आज्यस्य यजते ’ इत्यादिः करणे षष्ठी ॥ ‘ चतुर्थ्यर्थे बहुलं छन्दसि ’ इति चोदिता ‘ पुरुषमृगश्चन्द्रमसे गोधाकालकादार्वाघाटास्ते वनस्पतीनाम् ’ इत्यादिः संप्रदाने षष्ठी ॥ ‘ कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ’ इति चोदिता ‘ पञ्चकृत्वः द्विर्वा अह्नो भुङ्क्ते ’ इत्यादिः अधिकरणे षष्ठी ॥ ‘ कर्तृकर्मणोः कृति ’ इति चोदिता ‘कृष्णस्य कृतिः, जगतः कर्ता’ इत्यादिः कर्तरि कर्मणि च षष्ठी ॥ ‘ उभयप्राप्तौ कर्मणि ’ इति चोदिता ‘ चित्रमगोपेन गवां दोहः ’ इत्यादिः कर्मणि षष्ठी ॥ ‘ सप्तम्यधिकरणे च ’ इत्युपदिष्टा ‘ समे दर्शपूर्णमासाभ्यां यजेत ’ इत्यादिः अधिकरणे सप्तमी ॥ इति कारकविभक्तिरूपा श्रुतिः निरूपिता ॥

तादर्थ्यचतुर्थी यथा ‘ सर्वेभ्यो ज्योतिष्टोमः ’ ‘ सर्वेभ्यो दर्शपूर्णमासौ ’ इत्यादिः ॥

शेषषष्ठी द्विविधा गुणत्वे प्राधान्ये च । तत्राद्या यथा ‘ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ’ इत्यादिः ॥ प्राधान्ये षष्ठी यथा ‘ तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य ’ इत्यादिः ।

**भट्टसोमेश्वरमते** तु अन्या अपि विनियोक्त्र्यः श्रुतयः ॥ इतिकरणः ‘ इषे त्वेति शाखां छिनत्ति ’ इत्यादिः ॥ तथा धातुसंबन्धविहितो णमुल् ‘ अग्निकामं जुहोति ’ इत्यादिः ॥ तादृश एव क्त्वाप्रत्ययोऽपि । तत्रापि द्वयी गतिः, पूर्वस्योत्तराङ्गत्वम्, उत्तरस्य वा पूर्वाङ्गत्वम् । तत्र आद्योदाहरणं यथा ‘ मूलतः शाखां परिवास्य उपवेषं करोति ’ इति । उपवेषाख्याग्राङ्गं परिवासनम् । द्वितीयोदाहरणं यथा ‘ वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ’ इति ॥ एवं तदादेशो ल्यबपि ‘ तस्याधारमाघार्य ’ इत्यादिः ॥ एवं ‘ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ’ ‘ भाववचनाश्च ’ ‘ अण् कर्मणि च ’ इति विहितास्तुमुनादयः ॥ एवं ‘ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ’ इति विहितः कृत्वसुच् ॥ एवं ‘ द्वित्रिचतुर्भ्यः सुच् ’ इति सुच्प्रत्ययोऽपि ‘ वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति ’ इत्यादिः ॥ एवं लृट् ‘ आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः ’ इति । क्रियार्थायां क्रियायामुपपदे अनुशिष्टेन लृटा श्रुत्यैव आरम्भाङ्गत्वादिष्टेः ॥ **पार्थसारथिमते** तु इतिकरणादिसप्तसु वाक्यीयो विनियोगो न श्रौतः । तत्र इतिकरणस्य तावत् ‘ तथाऽऽह्वानमपीति चेत् ’ इत्यधिकरणे ( ३।२।३।५–९ ) सिद्धान्ते श्रुतित्वं निरस्तं **शास्त्रदीपिकायाम्** । क्त्वाप्रत्यये तु वाक्यीयमङ्गत्वमुक्तं चतुर्थे तन्त्ररत्ने ‘ तच्चाफलं सफलवाजपेयसमभिव्याहृतं वाक्यात् वाजपेयाङ्गं ’ इति । तथा चतुर्थे एव उपवेषाधिकरणे ( ४।२।३।८–९ )

उक्तं 'न च परिवास्येति क्त्वाप्रत्ययात् उपवेषकरणार्थं परिवासनम्, वाक्यसंयोगात् बलीयस्या द्वितीयया' इत्यादि ।

यत्तु 'धातुसंबन्धविहितश्च क्त्वाप्रत्ययो वाजपेयबृहस्पतिसवयोरेव संबन्धमाचष्टे' इति तत् परमतम्, क्रियान्वयस्य वाक्यार्थत्वोपपत्तौ वाच्यत्वायोगात् । 'धातुसंबन्धे प्रत्ययाः' इति तु साधुत्वान्वाख्यानमात्रार्थम् । क्रियान्तरसमभिव्याहारे एव णमुलादेः साधुता, यथा क्रियायोगे एव प्रादेरुपसर्गस्येति । अभिक्रमणाधिकरणवार्तिकेऽपि ( ३।१।१०।१९–२० ) 'अभिक्रमणं प्रकृतक्रियामात्राङ्गं होमाङ्गमेव वा' इति भाष्यकृन्मते संशयमुक्त्वा, संयुक्तश्रवणात् तमाक्षिप्य, तद्धेतुं वदता 'कर्मणोऽमूर्तत्वात् वाक्येन च संबन्धोपादानात्' इति वाक्यीयमङ्गत्वमुक्तम्, न श्रौतम् । तत्रत्यसिद्धान्तेऽपि 'सर्वथा तावत् अभिक्रामं इत्येतत् पदं न क्रियान्तरमन्तरेण निराकाङ्क्षी भवति' इत्येवोक्तम्, न क्रियासंबन्धं ब्रवीति इति । तथा यावज्जीवाधिकरणवार्तिके ( २।४।१ ) 'यावज्जीवपदाख्यातश्रुतिष्वृत्तत्वसंभवः । मत्पक्षे, भवतस्त्वत्र लक्षणावृत्तता भवेत् ॥' इति यावदव्ययजीवधातुश्रुतिभ्यामेव निमित्तत्वसिद्धान्त उपपादितः, न तु णमुल्श्रुत्या इति ॥ 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्येता अपि शब्दस्मृतयः 'धातुसंबन्धे प्रत्ययाः' इतिवदेव व्याख्येयाः ॥

'वेदिरसि बर्हिषे त्वा इति त्रिर्वेदिं प्रोक्षति' इति मन्त्रावृत्त्यनावृत्तिचिन्तार्थैकादशाधिकरणेऽपि ( ११।४।१५ ) 'क्रिया(–भ्या–)वृत्तौ हि सुच् विधीयते' इति ग्रन्थः ( शास्त्रदीपिका ) वाक्यीयक्रियान्वयाशय एव ॥

यत्तु नवमे ( ९।१।१० ) 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति आरम्भणीयाविधौ 'लृट्प्रत्ययोऽपि श्रुत्यैव तादर्थ्यस्याभिधायकः' इति सिद्धान्ते मिश्रैरुक्तम्, तत् परमतमेव । अत एव 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति लृट्श्रुतावेव पञ्चमे ( ५।३।११ ) मिश्रैः वाक्यीयो विनियोगः उक्तः 'निरपेक्षैव वाक्येन दीक्षार्थेष्टिर्विधीयते' इति । तन्त्ररत्नेऽपि 'परेणावेदनात्' इत्यधिकरणे पञ्चमे ( ५।३।११ ) उक्तं 'अग्नावैष्णवो वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थः' इति । 'सोमेन यक्ष्यमाणोऽग्निमादधीत' इत्यत्रापि वाक्यीयमेव आधानोत्तरकालस्य सोमाङ्गत्वं लृटः अश्रुतित्वादेव ।

यदप्यत्र तन्त्ररत्नं 'यक्ष्यमाणः' इति च 'दीक्षिष्यमाणः' इतिवत् क्रियार्थायां क्रियायामुपपदे लृट्प्रत्ययः सोमेन यष्टुं इत्यर्थे इति, तदपि क्रियान्तरयोगे एव लृटः साधुत्वोक्तिद्वारा वाक्यीयविनियोगोपपादनार्थमेव इति संक्षेपः ।

एवं 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायां' इतिविहितयोः तुमुन्ण्वुलोः यत्र प्रयोगः 'यष्टुं याति' 'याजको याति' इत्यादिः । एवं तदग्रिमसूत्रेण 'भाववचनाश्च' इत्यनेन क्रियायां क्रियायामुपपदे एव विहितानां घञादीनां यत्र प्रयोगः 'यागाय याति' 'भूतये याति' इत्यादिः । एवं तदुत्तरसूत्रेण 'अण् कर्मणि च' इत्यनेन क्रियार्थायां क्रियायामुपपदे एव विहितस्य अण्प्रत्ययस्य यत्र प्रयोगः 'गोदायो व्रजति' इत्यादिः, तत्र सर्वत्र वाक्यीय एवान्वयः न श्रौतः ॥ इति श्रुतिनिरूपणम् ॥ बाल. पृ. ४१–४७.

* श्रुतिमूलं हि कर्म इत्युक्तं 'चोदनालक्षणोऽर्थो धर्मः' इति । भा. २।३।५।१३, * श्रुतिमूलः अर्थः न श्रुत्यन्तरेण बाधितुं शक्यः । ३।३।७।१४ पृ. ८४५.

* श्रुतिमूलप्रमाणिका स्मृतिः सर्वा नित्यम् । वा. ३।४।४।१२ पृ. ९०८.

* श्रुतिरूपाणां पदकारकविभक्त्याख्यानां शब्दानां प्रकृतिप्रत्ययार्थान्वयरूपे क्रियान्वितकारकरूपे चार्थे व्यापारः । सु. पृ. ११९०.

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् । ५।१।१।१ ॥**

अनुष्ठाने पदार्थानां क्रमः किं यथाश्रुति स्वीकर्तव्यः उत अनियमेनेति विचारे अनियमः इति पूर्वः पक्षः । तत्र सिद्धान्तमाह । आनुपूर्व्यं अनुपूर्वता क्रम इति यावत् । श्रुतिः विधिः लक्षणं ज्ञापकं प्रमाणं यस्य तत् श्रुतिलक्षणम् । आनुपूर्व्यं श्रुतिलक्षणं ग्राह्यम् । तत्प्रमाणत्वात् श्रुतिप्रमाणकत्वात् वैदिकानामर्थानाम् । अनेन श्रौतः क्रम उक्तः । के.

* श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या (ज्यायसी) । भा. १।४।१।२, ४।१।९।२३, ४।१।१७।४६, ६।४।१२।३७, ७।३।५।१६, ९।१।६।२१, ९।४।२।२०, १०।६।२।३ पृ. १९८५. * श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । भा. २।२।१३।२८, ३।२।९।२५, ३।७।६।१३, ४।२।१४।३०, ४।३।१२।२९, ४।३।१४।३६, ४।३।१५।३७, ४।४।९।२२, ६।१।१३।५१, ६।२।५।२०, १०।४।१६।३३.

* श्रुतिलिङ्गे । ननु, 'विक्षेपो यावता लिङ्गे स्याच्छ्रुतेरनुमापके । लिङ्गानुमानभूतायां तावतैव श्रुतावपि ॥' सर्वथा हि अदृश्यमानानुमानेन प्रत्ययविप्रकर्षो भवति । तच्चोभयत्रापि समानम् । सत्यमेतावत्समानं न तु तद्बलाबलं प्रत्युपयुज्यते । कुतः ? 'विनियोगाभिधानस्य दूरत्वाद् दुर्बलत्वधीः । तच्च पूर्वानुमायां स्यान्नोत्तरत्र कथंचन ॥' लिङ्गे हि प्राग्भाविना श्रुत्यनुमानेन विना विनियोगाभिधानाभावात् दूरत्वं भवति । श्रुतौ पुनरवगते विनियोगाभिधाने यस्मादेतदेवं तस्मान्नूनं किमपि सामर्थ्यमस्ति इति पश्चात् प्रवर्तमानमनुमानं न विनियोगप्रत्ययविक्षेपं करोति । वा. ३।३।७।१४ पृ. ८३१. * श्रुतिलिङ्गयोर्विरोधे– एकस्मिन् शेषिणि शेषानेकत्वस्थले– एकस्मिन् शेषिणि गार्हपत्ये चयनाधेयतासंपत्त्यर्थं स्मरणापेक्षे, लिङ्गेन प्राप्नुवत्याः प्रकरणपठितासंयुक्ताग्नेय्याः श्रुतिप्राप्तया ऐन्द्या बाधः । कौ. ३।३।७।१४. * श्रुतिलिङ्गयोर्विरोधे शेषानेकत्वे 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इतिमन्त्रकरणकव्यापारविधानकृते लिङ्गात् कस्मिंश्चिदाग्नेये मन्त्रे शेषत्वेन प्राप्नुवति श्रुत्या ऐन्द्री विनियुज्यते इति । वा. ३।३।७।१४ पृ. ८३८. * श्रुतिलिङ्गयोर्विवेकः । 'एकत्रासति सामर्थ्ये मन्त्रः शेषोऽभिधीयते । अन्यत्रानुक्तशेषत्वं सामर्थ्ये संप्रतीयते ॥' अविद्यमानमेव ऐन्द्याः गार्हपत्याभिधानसामर्थ्यं अभिहितविनियोगविधानात् कल्पनीयम् । विनियोगस्तु प्रथममेव क्लृप्तः । इन्द्रं प्रति तु सामर्थ्यं क्लृप्तमालोच्य विनियोगोऽभिहितो विहितो वेत्येतत् कल्पनीयम् । वा. ३।३।७।१४ पृ. ८२६ । सुधा— श्रुतौ ज्ञानत्वरूपेण असत्येव सामर्थ्ये मन्त्रस्य अङ्गता उच्यते । लिङ्गे तु अनुक्ताङ्गत्वसामर्थ्यमात्रं प्रतीयते इति श्लोकार्थः । सु. पृ. १२१२. * श्रुतिलिङ्गयोः श्रुतिर्बलीयसी । कुतः ? अर्थविप्रकर्षात् । भा. ३।३।७।१४ पृ. ८४४.

* श्रुतिलिङ्गाधिकरणेनैव मन्त्रब्राह्मणयोर्विरोधे मन्त्रगौणत्वं सिद्धम् । सु. पृ. १०९०. * तदुक्तं श्रुतिलिङ्गाधिकरणे– 'इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम् । द्वादशत्वविधिस्तेन कथंभावेन गृह्यते ॥' बाल. पृ. ९.

* श्रुतिलिङ्गाधिकरणन्यायेन केवलस्य लिङ्गस्य दौर्बल्ये अपि तद्धितश्रुत्यानुकूल्यात् इन्द्राङ्गत्वोपपत्तिः ( ऐन्द्या गार्हपत्यं ) इति विशेषाशङ्कासत्त्वात् न तेन पौनरुक्त्यम् । कौ. ३।२।२।३ पृ. २३०.

* श्रुतिलिङ्गादयः शब्दप्रकाराः स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचित् । वा. २।१।२।५ पृ. ३९०. * श्रुतिलिङ्गादिभिः विनियुक्ताः पदार्थाः प्रयोगविधिना विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात् क्रमोऽपि प्रयोगविधिना विधीयते । सोम. ५।१।१ वर्णकं ३, * श्रुतिलिङ्गादिभिर्विनियोगः पदार्थमात्रस्य, पाञ्चमिकश्रुत्यर्थादिभिः विनियोगस्तु पदार्थविशेषणीभूतक्रमस्य । ५।१।१. * श्रुतिलिङ्गादीनां आनर्थक्याभावेऽपि उत्तरोत्तरेण अन्यथानुपपत्त्यादिसहकृतेन पूर्वस्य पूर्वस्य बाधो भवति । बाल. पृ. १४५. * श्रुतिलिङ्गादीनां मध्ये पूर्वपूर्वस्यानुमानिकत्वे उत्तरोत्तरस्य च प्रत्यक्षत्वे विपरीतं बलाबलम् । यथा वैदिकं अन्यार्थदर्शनरूपं अनन्यथासिद्धं लिङ्गं स्मृत्यनुमितश्रुत्यपेक्षया प्रबलम् । कौ. ३।३।७।१४ पृ. ३६७. * श्रुतिलिङ्गादीनां हि पूर्वपूर्वं शीघ्रतरं प्रवर्तते । वा. ३।३।७।१४ पृ. ८२९. * श्रुतिलिङ्गादौ उत्तरस्य पूर्वसापेक्षत्वात् पूर्वेण विरोधे सति उत्तरस्योत्पत्तिरेव नास्ति इति उत्पत्तिप्रतिबन्धरूप एव बाधः । अयमेवाप्राप्तबाधः । वि. ६।५।१९. * श्रुतिलिङ्गादिषु अननुमितश्रुतिबाधेन हि अप्राप्तबाधः स्थितः । ब्रा.

३।३।७।१४ पृ. ८५९, * श्रुतिलिङ्गादिषु– तस्मादर्थविप्रकर्षात्तु परंपरं ( पूर्वेणपूर्वेण ) बाध्यते इति सिद्धम् । आह च ( श्लोकपञ्चकेन ) "निःश्रेण्यारोहणप्राप्यं प्रासिमान्नोपपादि च । एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥ १ ॥ एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः । उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥ २ ॥ विरोधिनोस्तदैको हि तत् फलं प्राप्नुयात्तयोः । प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा ॥ ३ ॥ तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा । तथापि युगपद्भावे जघन्यस्य निराक्रिया ॥ ४ ॥ अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते । अन्यथा बलवद्ग्रस्तैः सर्वशक्तिक्षये सति ॥ ५ ॥ " तस्मान्नैतदालम्बनं युक्तं यत् क्वचित् उत्तरेषां प्रामाण्यमिष्टम् । तस्मात् बलवद्विरोधेऽपि तेन भवितव्यमिति ।

यत्तु प्रमाणाभासो बाध्यते न प्रमाणं इति, तत्र ब्रूमः । अयमपि प्रमाणाभास एव । कथम् ? ' नैवैतेषां प्रमाणत्वमासीदत्र कदाचन । अन्यत्र दृष्टमेतत्तु समारोपेण कल्पितम् ॥' नहि यत्र विषये बाधः तत्रैषां प्रमाणत्वम् । किं तर्हि ? प्रदेशान्तरे केवलानामुपलक्षितं सामान्यतोदृष्टरूपेण अत्रापि प्रतिभाति । तत्तु बलीयसा अपहृतविषयत्वात् सीदतीति पश्चात् भ्रान्तित्वेन अध्यवसीयते ।

अथवा यस्तत्रास्य व्यापार आसीत् तमिहापि प्रक्रमते एव । स तु जववताऽन्येन विषयेऽपहृते मूलच्छेदात् यदा तं न गच्छति तत् किं क्रियताम् । तेन मृगतृष्णादिवदेव अप्राप्य प्रमाणमेव बाध्यते । अनुत्पन्नमेव चेह श्रुत्यभावात् शेषज्ञानं बाध्यते आन्तरालिकज्ञानमिथ्यात्वकल्पनया इति नोत्पत्तिसामान्येन तुल्यबलत्वम् । अतश्च ज्ञानसंकरोच्छेदनादिरूपो बाधो नैवाशङ्कितव्यः । योऽपि च उत्पन्नबाधः तमपि फलवियोगात्मना उपपादयिष्यामः । ३।३।७।१४ पृ. ८३४–८३५, * श्रुतिलिङ्गादिषु– सर्वत्र हि परस्य पूर्वमननुमाय विनियोगानुपपत्तिः । पूर्वेण तु कृते विनियोगे परस्य नान्तरीयकं सद्भावमात्रकल्पनं इति प्रतिपत्तिः । आह, श्रुतेस्तावत् प्रत्यक्षत्वेन लिङ्गात् बलीयस्त्वं युक्तम् । अथ लिङ्गवाक्यादीनां अनुमीयमानश्रुतित्वात् अविशेषे सति किंकृतं बलाबलमिति ? तदुच्यते । ' एकद्वित्रिचतुष्पञ्चवस्त्वन्तरणकारितम् । श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते ॥ ' ३।३।७।१४ पृ. ८३१.

* **श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां** पूर्वं पूर्वं यत् कारणम्, तत् परं परं प्रति बलीयो भवति । नैतस्योत्पन्नस्य विमृश्यमानस्य बाधकं विज्ञानान्तरमस्ति, तस्मात्तेषां समवाये विरोधे परदौर्बल्यं अर्थविप्रकर्षादिति । भा. ३।३।७।१४ पृ. ८६२.

**श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । ३।३।७।१४ ॥**

श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्या चेति षण्णां विनियोगबोधकानां प्रमाणानां समवाये एकविषये विरोधे सति पारदौर्बल्यं ज्ञेयम् । दुर्बलस्य भावो दौर्बल्यं परस्य दौर्बल्यं परदौर्बल्यम्, तदेव पारदौर्बल्यम् । परस्य परस्य दुर्बलत्वं पूर्वस्य पूर्वस्य प्रबलत्वं इति ज्ञेयम् । अर्थविप्रकर्षात् । अर्थस्य विनियोगस्य विप्रकर्षात् व्यवहितत्वात् । लिङ्गं श्रुतिकल्पनां विना स्वार्थं विधातुं न शक्नोति इति लिङ्गविनियोगः श्रुतिकल्पनया व्यवहितः । वाक्यं च लिङ्गं श्रुतिं च कल्पयित्वा विनियोगमाह । प्रकरणं च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकं नान्यथा । स्थानं च प्रकरणं वाक्यं लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकम् । एवं समाख्या स्थानादिश्रुत्यन्तानि कल्पयित्वा विनियोजिका नान्यथा इति सा पञ्चभिर्व्यवहिता । अनेन व्यवधानेन हेतुना परस्य परस्य दुर्बलत्वं भवति ।

श्रुत्यादीनां लक्षणानि तद्विरोधोदाहरणानि अन्यत्र विस्तरेण उक्तानि इति नेह विस्तरः । **के.**

* **श्रुतिलिङ्गविरोधाधिकरणे** मन्त्रस्वरससामर्थ्यालोचनेन पूर्वपक्षः, ऐन्द्र्यधिकरणे तु तद्धितश्रुत्यालोचनयैव पूर्वपक्षः इत्यपौनरुक्त्यम् । सु. पृ. १०८६.

* **श्रुतिवचनं** स्मृतिवचनेन बाधितुं न युक्तम् । भा. ६।१।४।१७ पृ. १३६२.

* **श्रुतिवाक्यं** अनुदाहृत्यैव ' शाखान्तरे अस्ति ' इत्यभिधाने यस्मै यद्रोचते तत् सर्वं सिध्येत् । सु.



पृ. ७५५ । अनुदाहरणात् अस्फुटमेवमभिधाय नहि किंचिदसाध्यं स्यात् । वा. २।२।४।१० पृ. ४९५.

* **श्रुतिवाक्ययोर्विरोधे** श्रुतिर्बलीयसी । भा. २।१।१।४, २।२।१।१, २।२।९।२३.

* **श्रुतिविनियुक्तप्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वम्** । भा. ९।१।५।११–१९.

* **श्रुतिविरुद्धं** ( स्त्रीणां ) स्मार्तं विक्रयं नानुमन्यन्ते । भा. ६।१।३।१५, * **श्रुतिविरुद्धा** स्मृतिरप्रमाणम् । १।३।२।३ पृ. १८५.

* **श्रुतिविरुद्धस्मृतीनां** अप्रामाण्यम् । भा. १।३।२।३–४.

* ' नैव तावत् **श्रुतिस्मृत्योः** स्वरूपेण विरुद्धता । बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ॥ ' वा. १।३।३।७ पृ. १९९.

* **श्रुतिस्मृत्यवधारणे** शिष्टाः प्रमाणम् । भा. १।३।४।९.

* ' **श्रुतिस्मृतिविहितो** धर्मः तदलाभे शिष्टाचारः प्रमाणम् ' इति वसिष्ठस्मृतिः । सु. पृ. २१३.

* ' **श्रूयमाणस्य** वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ॥ ' ( वा. १।४।२।३ ) । विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ । आधिक्याभ्युपगमे तु आदिशब्दोक्तमानर्थक्यम् । अथवा न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणावाक्यभेदौ गौणत्वाध्याहारदोषौ इत्यर्थः । न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये तु आनर्थक्यम् । अन्यथात्वकल्पने विपरिणामव्यवहितकल्पना व्यवधारणकल्पना दोष इति वा योज्यम् । अनुमिते तु विवक्षितार्थाभिधानशक्तस्यैव अनुमानात् न कश्चिद्दोषः । सु. पृ. ४१७–४१८. * ' श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते त्वसौ ॥ ' चित्राधिकरणे इदं वार्तिकम् । इति वार्तिकोक्तन्यायेन ( १।४।२।३ ) अध्ययनविधौ स्वाध्यायं इति द्वितीयया गुणत्वमेव लक्ष्यते अन्यथा स्वाध्याये वाजपेयवाक्ये इव यागे गुणविधौ वैरूप्यापत्तेः इति भवदेवोक्तेः परिहारः । बाल. पृ. २.

**' श्रेयांसि बहुविघ्नानि भवन्ति महतामपि '** इति न्यायः । यत्र शुभे कर्मणि विघ्नबाहुल्यं भवेत् तत्रायमवतरतीति । साहस्री. ५३४.

* **श्रेयस्करभाष्यम्** । चोदनासूत्रस्थं ' एवं तर्हि श्रेयस्करो जिज्ञासितव्यः ' इत्यादि शाबरभाष्यम् । बाल. पृ. १. * श्रेयस्करभाष्यं नाम । तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करो जिज्ञासितव्यः किं धर्मजिज्ञासया । उच्यते, य एव श्रेयस्करः स एव धर्मशब्देनोच्यते इति । भा. १।१।२।२.

* **श्रेयःसाधनाक्षेपकत्वं** प्रवृत्तिविषयत्वस्य कथमिति चेत्, पश्य । प्रवर्तना तावत् प्रयत्नरूपभावनाविषया सर्वत्रावधार्यते । ' गामानय ' इत्युक्ते गवानयने प्रयतमानस्य कुतश्चित् कारणात् गवानयनासिद्धावपि ' मदाज्ञामयं कृतवान् ' इति आज्ञप्तुर्व्यवहारदर्शनात् ' इतोऽपसर ' इति चोक्ते स्वयमप्रयतमानस्य बलात् केनचिदपसारितस्य जातेऽपि अपसरणे ' नायं मदाज्ञां कृतवान् ' इति आज्ञप्तुः व्यवहारदर्शनात्, चेतनाप्रवर्तकत्वाच्च प्रवर्तनायाः, तस्य च प्रयत्नमन्तरेण अन्यत्र अप्रवृत्तेः प्रयत्नविषयत्वसिद्धिः । प्रयत्नश्च इच्छाकारणकत्वात् तां विना नोपपद्यते । सा च स्वरसतः पुरुषार्थे एव स्वर्गपुत्रपश्वादौ भवन्ती साधनमन्तरेण तदसिद्धेः तत्सिद्ध्यर्थं तत्साधने संक्रमेत् । तेन स्वयं अपुरुषार्थस्य यागादेः पुरुषार्थसाधनत्वं विना इच्छाविषयत्वानुपपत्तेः प्रवृत्तिविषयत्वासंभवेन तत्र लिङादेः प्रवर्तकत्वायोगात् तन्निर्वाहार्थं पुरुषार्थसाधनत्वाक्षेपकत्वसिद्धिः । सु. पृ. ३०–३१.

* **श्रेयःसाधनत्वाधिगमेऽपि** बहुव्ययायासदर्शनात् द्वेषोत्पत्तेः स्तुतिमन्तरेण अनिराकरणात् दुर्वारा स्तुत्याकाङ्क्षा । सु. पृ. ५०.

* **श्रोत्रं** आकाशं इत्यभ्युपगमः । बृहती. पृ. २०२, * श्रोत्रमाकाशम् । सत्यं सर्वत्र आकाशमेकम्, किंतु तस्य श्रोत्रभावः श्रोतृदेशे एव, कर्तृभिः संबन्धेन करणत्वात् । कर्तुः भोगायतनवशेन शरीरदेश एव कर्तृत्वात् ( इति ) न शब्दाभिव्यक्तितुल्यता । पृ. २१७. * श्रोत्रं आकाश–अहं-

क्षार-दिगन्यतमरूपम् । मणि. पृ. १६८. * श्रोत्रं आकाशात्मकम् ( इति काणादा मीमांसकाश्च ) । श्रोत्रं च कर्णशष्कुली एव । कर्णशष्कुल्यवच्छिन्नं आकाशमेव वा श्रोत्रम् । वैद्यनाथः १।१।६।१३. * श्रोत्रमिन्द्रियं शब्दमात्रग्राहकतया शब्दवत्त्वानुमानेन आकाशात्मकं इति अक्षपादीयाः । अभिगुप्रैषान्तर्गतदिशःश्रोत्रमितिलिङ्गात् दिगात्मकत्वं युक्तम् । मणि. पृ. १९. * श्रोत्रं बाह्येन्द्रियत्वेन प्राप्यकारि । ऋजु. पृ. २३०, * श्रोत्रं यद्यपि देशं स्वातन्त्र्येण न गृह्णाति तथापि शब्दं गृह्णदेव शब्दाभिव्यञ्जकमूलदेशमपि गृह्णाति इति अनुभवबलेन कल्प्यते । पृ. २३०, * श्रोत्रस्य अभिव्यक्तिर्न कार्यविशेषनिष्ठा किंतु स्वरूपमात्रेणैव । ततश्च संस्कृतं श्रोत्रं सर्वशब्दान् शृणुयादिति । अयमेव भवतां मीमांसकानां राद्धान्तः यदुत श्रोत्रसंस्कार इति । पृ. २०३. * न च शब्दादन्यत् श्रोत्रस्य ग्राह्यमस्ति । बृहती. पृ. २२५.

* श्रौतः क्रमः पाठक्रमाद्बलवान् । यथा 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इति श्रुत्या दशमस्यैव ग्रहणं न पाठेन तृतीयस्य । भा. ५।४।१।१, * श्रौतः पदार्थानुष्ठानक्रमः । यथा सत्रे दीक्षाक्रमः 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति । ५।१।१।१. * श्रौतेन अर्थादाक्षिप्यमाणं ( यथा ) निवर्त्यते तथा परोक्षवृत्त्याऽपि । वा. २।२।१३।२९.

## श्रौतक्रमाधिकरणम् ॥

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् । ५।१।१।१ ॥**

**भाष्यम्**— चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तम्, तन्न प्रस्मर्तव्यम् । इहेदानीं क्रमनियमलक्षणमुच्यते । तत् श्रुति-अर्थ-पाठ-प्रवृत्ति-काण्ड-मुख्यैः वक्ष्यते, श्रुत्यादीनां च बलाबलम् । आदितस्तु श्रुतिक्रमः चिन्त्यते । किं यथाश्रुति पदार्थानां क्रमः आस्थेयः उत अनियमेनेति । किं प्राप्तम् ? एकत्वात् कर्तुः, अनेकत्वाच्च पदार्थानां अवश्यंभाविनि क्रमे लाघवात् प्रयोगप्राशुभावाच्च अनियम इति । एवं प्राप्ते, ब्रूमः । श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् इति । श्रुतिः श्रवणं अक्षराणाम्, तत् निमित्तं यस्य क्रमस्य स साधुः क्रमः । श्रुतिप्रमाणका हि वैदिका अर्थाः । नैषामन्यत् प्रमाणमस्तीत्युक्तम् । किमिहोदाहरणम् ? सत्रे दीक्षाक्रमे 'ये यजमानास्त ऋत्विजः' इत्युक्त्वा तेषां दीक्षाक्रमं विधत्ते, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषितः' इति । अनियमेन क्रमः कर्तव्यो यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः एष एव क्रमः कर्तव्य इति । तत्राह अन्याय्यं श्रुतिवचनमिति । उच्यते । किमेष न साधुः ? न न साधुरिति ब्रूमः । न्याय्यं तर्हि । न ब्रूमो न साधुः क्रम इति । किं तर्हि ? उक्तस्य पुनर्वचनमन्याय्यमिति । उच्यते । साधोर्वचनं बहुशोऽपि उच्यमानं न्याय्यमेव । असाधोस्तु सकृदपि अन्याय्यम् । आह । सकृद्वचनेन ज्ञातस्य पुनर्वचने न प्रयोजनमस्ति इति । उच्यते । भवति अस्मरणमपि प्रयोजनं इत्युक्तम् । वृत्तिकारेण तत् कार्यमिति चेत्, सूत्रकारस्यापि अविशेषो वृत्तिकारेण ।

अथवा अर्थान्तरमेवेदम् । तत्र हि अन्य एव संशयो विचारो निर्णयश्च । श्रुतिप्रमाणको धर्मः अन्यप्रमाणक इति संशयः । प्रत्यक्षादीनां अधिगम्य निमित्तत्वात् न तत्प्रमाणकः, अतीन्द्रियत्वात् चोदनालक्षणः इति विचारः । चोदनालक्षण एवेति निर्णयः । इह तु सिद्धे तत्प्रामाण्ये व्यवहारः क्रमस्य साधुत्वावधारणम् ।

अथवा श्रुतिक्रमविचारोऽयम् । किं पदार्थाः कर्तव्याः इति विधानं किंवा क्रमो विधीयते इति । अनेकार्थविधानानुपपत्तेः क्रमः अनुवादः, दीक्षादीनां पदार्थानां विधिः । अवदानवाक्येष्विव पदार्थविधानं श्रुत्या, क्रमविधानं वाक्येन । तस्मान्न क्रमो विधीयते इति



पूर्वः पक्षः । ननु अवदानवाक्येषु क्रमो विधीयते । सत्यं विधीयते पाठेन, न श्रुत्या । 'य ऋत्विजस्ते यजमानाः' इति तु दीक्षायाः प्राप्तत्वात् क्रमविधानार्था श्रुतिरिति सिद्धान्तः । तस्मादपुनरुक्तमिति ।

**वा**— भाष्यकारेण चतुर्थे अध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तमित्युक्तम् । तदयुक्तम् । कुतः ? क्रत्वर्थपुरुषार्थजिज्ञासा हि सूत्रकारेण प्रतिज्ञाता । सैव उपसंहर्तव्या । उच्यते । प्रयोजकाप्रयोजकमपि प्रतिज्ञातम् 'अर्थे समवैषम्यम्' ( ४।१।८।२१ ) इत्यत्र । द्वयोरेकस्मिन्नपि उपसंह्रियमाणे इतरत् लक्ष्यते एव । अथवा प्रयोजकाप्रयोजकेत्येवोपसंहर्तव्यम् । यतः असाधारण्येन लक्षणभेदः । इतरथा द्वादशपादं ( तृतीयस्य अष्टौ चतुर्थस्य चत्वार इति ) एकं लक्षणं स्यात् । यावच्च (तन्त्ररत्नानुसारेण ) शेषी नावधार्यते न तावच्छेषभावः । नहि सामान्येन व्यवहारः । 'कर्माण्यपि जैमिनिः' ( ३।१।३।४ ) इत्यनेन कर्मणां फलशेषभाव उक्तः । अतः शेषत्वावगमेनैव अस्य पुरुषार्थतायाः सिद्धत्वात् पुरुषार्थजिज्ञासया अध्यायभेदो नोपपद्यते । तेन सा तेनैव गतत्वात् नाध्यायान्तरेण कार्या । 'असंयुक्तं प्रकरणात्' ( ३।३।४।११ ) इति चानेन क्रत्वर्थलक्षणमुक्तम् । श्रुत्यादिभिः यदसंयुक्तं फलवता च क्रतुना प्रकरणेन गृह्यते तत् क्रत्वर्थम् । प्रयोजकाप्रयोजकत्वं तु नोक्तम् । तदिहोच्यते । 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रं किंपरतया उपादीयते ? क्रत्वर्थपुरुषार्थयोर्हि अनन्तरं प्रयोजकाप्रयोजकौ, तयोर्लक्षणार्थम् । श्रुत्यर्थपाठक्रमा उपदेशविषया एव । प्रवृत्तिकाण्डमुख्यक्रमास्तु अतिदेशविषया अपि प्रधानभूताः पदार्थाः । कर्ता गुणभूतः । तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव । क्रमनियमस्तु चिन्त्यते ।

तत्र श्रुतिक्रमस्तावत् चिन्त्यते । तस्मिन् 'आश्विनो दशमो गृह्यते' इत्येतदपि उदाहरणं नोपन्यस्तम्, सुज्ञानत्वात् । दीक्षावाक्यं तु किंपरं इति चिन्त्यते । तदुदाहरणं व्याख्येयत्वेन । 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यध्वर्योः कर्तृत्वम्, दीक्षा, सा च यजमानार्था इति त्रितयमपि अविधेयम्, प्राप्तत्वात् । 'ये यजमानास्ते ऋत्विजः' इति यजमानत्वादेव ब्रह्मादीनामपि अविधेया दीक्षा । 'ततस्तं प्रतिप्रस्थाता' इति प्रतिप्रस्थातुर्विधानं इति चेत्, उच्यते । अध्वर्योः कर्मकर्तृत्वमापद्यते तत्र विरोधः । विरोधे च प्रधाने प्रवर्तते, अन्तरङ्गत्वात् प्रत्यक्षशिष्टत्वाच्च कर्मत्वस्य । तत्र कः कर्ता इति 'इतरमन्यस्तेषां यतो विशेषः स्यात्' ( ३।८।१०।२१ ) इति अध्वर्युसदृशः प्रतिनिधित्वेन प्रतिप्रस्थाता प्राप्तो न विधीयते । इतरेषु अध्वर्योरविरोधः । इतरेषु प्रतिप्रस्थातृविधिरिति चेत्, उच्यते । 'न पूतः पावयेत्' इति प्रतिषेधात् नाध्वर्योः कर्तृत्वम् । एवं सर्वत्र योज्यम् । तस्मात् सर्वस्य प्राप्तत्वात् पदार्थोच्चारणात् यः क्रमः प्रतीयते स एव विधीयते ।

ननु क्त्वा-ततःशब्दौ क्रमस्य विधातारौ । उच्यते । क्त्वाशब्दः पूर्वकालतां समानकर्तृकतामात्रं च वदति, नानन्तर्यम् । पूर्वं गृहपतेर्दीक्षा, उत्तरं ब्रह्मणः इत्येतावदाह । अन्तराले तु यदि पदार्थसहस्रमपि करोति, नास्ति पूर्वोत्तरबाधः । ततःशब्दोऽपि परभावमात्रमाह, नानन्तर्यम् । प्रयोगवचनश्च आनन्तर्यमाकाङ्क्षति न पौर्वापर्यम् । अतस्तदेव विधेयम् । तद्विधौ च पौर्वापर्यमनुवादः । तस्य च विधौ प्रयोगवचनेन अनाकाङ्क्षितत्वात् अदृष्टं कल्प्यम् । आनन्तर्यं पुनरपेक्षणीयम् । तस्मात् वर्णाः श्रोत्रेण गृह्यमाणा यं क्रमं प्रतिपादयन्ति स एव विधीयमानत्वात् श्रुतिक्रमोऽभिधीयते । अन्यस्य पदार्थान्तरस्य अविधानात् । यत्र आनुपूर्व्येण पदार्था विधीयन्ते स पाठक्रमः । यथा 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इति । ननु अथशब्देन श्रुत्यैव क्रमो विधीयते । उच्यते । हृदयाद्यवदानं विधीयते, अतः पाठक्रमादेव आनन्तर्यस्य सिद्धत्वात् अथशब्दः अनुवादः । आह, अथशब्दश्रवणात् आनन्तर्ये अवगते कस्मात् पाठक्रमो नानुवादः । उच्यते । वृत्तादनन्तरस्य प्रक्रियार्थोऽयम् । यावच्च पूर्वोत्तरपदार्थौ नावधृतौ तावन्नास्ति । तौ चेदवधृतौ, पाठादेव क्रमः सिध्यति । श्रुतिरपीयं सापेक्षत्वात् दुर्बला । तस्मात् एकोपयोगवचनपरिगृहीतानां पाठादेव सिद्धत्वात् अथशब्दः अनुवादः । यत्र तु प्रमाणान्तरेणा-

वधृतः कर्तव्यः पदार्थः, अपरोऽन्येन, तत्र अथशब्दः आनन्तर्यं ब्रवीति, यथा वेदमधीत्य इतिवत् ।

**शा**— द्वादशाहे सत्रभूते श्रूयते ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति । तदिदं किं दीक्षा विधीयते क्रमस्तु पाठतो लभ्यते, अथवा क्रम एव विधीयते श्रुतिक्रमोऽयमिति । तत्र ' **वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे । तस्माद्दीक्षाविधिः पाठाद् दीक्षाणां लभ्यते क्रमः ॥** ' उच्यते । ' **सर्वेषां यजमानत्वाद् दीक्षा प्राप्तैव चोदकात् । क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते ॥** '

**सोम**— प्रयोजनं– पाठक्रमत्वे पाठस्य श्रुतितो दुर्बलत्वात् यत्र एतादृशस्थले विपरीतक्रमबोधकश्रुतिरस्ति तत्र पाठक्रमस्य बाधः, श्रुतिक्रमत्वे तु तुल्यबलत्वात् विकल्प इति ।

**वि**—वर्णकं १– ' पदार्थानां क्रमो नैव नियतोऽथ नियम्यते ।, अमानत्वादनियति, नियतिर्वेदमानतः ॥'

वर्णकं २– ' न विधेयो विधेयो वा क्रमो, नैवाक्रियात्वतः ।, क्रियाविशेषणत्वेन द्रव्यवद्युज्यते विधिः ॥'

वर्णकं ३– ' दीक्षयित्वा गृहपतिं ब्रह्माणं दीक्षयेदिति । क्रमः पाठाद्विधेयो वा, पाठाद्दीक्षाविधिः श्रुतेः ॥, द्वादशाहस्य सत्रत्वात् सर्वेषां याजमान्यतः । चोदकेनैव दीक्षायाः प्राप्तेः क्रमविधिर्मतः ॥ '

**भाट्ट**— तदेवं अङ्गप्रधानसाधारण्येन प्रयोज्यवर्गे निरूपिते अधुना प्रयोगाश्रितः क्रमो निरूप्यते । एकादशे हि अङ्गानां प्रधानानां चैकेनैव प्रयोगविधिना विधानमिति वक्ष्यते । अतश्चैकविधिविधेयत्वेन सर्वसाहित्यस्य विवक्षितत्वादेकेन कर्त्रा युगपत्सर्वकरणाशक्तेरवश्यंभाविनि कस्मिंश्चित्क्रमे नियामकानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि षट् प्रमाणानि निरूपयिष्यन्ते । तत्र क्रमो नाम अव्यवहितोत्तरत्वरूपमानन्तर्यम् । तच्चैकप्रतियोगिकमेकवृत्ति । यथा ' वेदं कृत्वा वेदिं करोति ' इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणवृत्ति । अत्र च दर्शपूर्णमासोत्तरत्वस्यापि सोमाङ्गत्वात् तद्व्यावृत्त्यर्थमव्यवहितेति विशेषणम् । तत्र दर्शपूर्णमासपूर्वकालिकत्वमात्रं क्त्वाप्रत्ययार्थः । न त्वव्यवहितत्वांशोऽपि । न च सोमविधेस्तदपेक्षा, येन अव्यवधाने एव तत् पर्यवस्येत्, सोमविधेर्भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात् । अतः तत्रोत्तरकालत्वमेव विधेयम्, न क्रमः । क्रमश्च सर्वत्रोत्तरपदार्थाङ्गम्, तस्यैव ' क्वाहं कर्तव्यः ' इत्यपेक्षणात्, न तु पूर्वपदार्थाङ्गम् ' मदुत्तरं कः पदार्थः कर्तव्यः ' इत्यपेक्षायाः क्वचिदप्यनुदयात् । पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणम्, दर्शपूर्णमासादिरिव पूर्वकालतायाः । एतेन उभयपौर्वापर्यरूपोऽपि क्रमः पदार्थद्वयाङ्गमिति केषांचिदुक्तं अपास्तम्, प्रमाणाभावात् । अस्तु वा ' प्रथमभक्षः ' इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव क्रमपदार्थः । तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रम इति तु मूलोक्तः पक्षोऽशाब्दत्वात् विकृतौ क्वचिदेकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासंभवात्, व्युत्क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेरुपेक्षितः ।

अस्य च क्रमस्य प्रयोज्यनिष्ठत्वात् तन्निरूपणोत्तरमारम्भः । तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि । तेषां लक्षणानि तत्तन्निरूपणावसरे वक्ष्यन्ते । तत्र श्रौतः क्रमः प्रातिस्विकविधिना विधीयते, आर्थादिक्रमास्तु प्रयोगविधिनैवेति मूलानुयायिनः । वस्तुतस्तु श्रौतक्रमस्थले क्त्वादिनाऽवगतेरुत्पन्नस्य वाक्येन विनियोगः, क्रमान्तरे तु अर्थादिनोत्पन्नस्य प्रकरणादिकल्पितश्रुत्या विनियोगः । प्रयोगस्तु सर्वत्रैवाङ्गान्तरवत् प्रयोगविधिनैव । इदं च तत्रतत्र स्फुटीकरिष्यते । युज्यते च क्रमस्यापि द्रव्यगुणादिवत् पदार्थविशेषणत्वेन विधानम् ।

तदिह श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तः शब्दः । स च अथशब्दादिः । तत्र अथशब्दस्य आनन्तर्यवाचित्वं शक्त्यैव । क्त्वाप्रत्ययादीनां तु पूर्वकालादिवाचिनां अपेक्षानुरोधात् क्रमपरत्वं लक्षणया । अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम् । तत्र ' वषट्कर्तुः प्रथमभक्षः ' इत्यादौ क्रमविशिष्टभक्षविधानात् प्रथमपदोक्तक्रमस्य वाक्यात् भक्षाङ्गत्वम् । ' वेदं कृत्वा ' इत्यादौ तु वेदिकरणस्य वाक्यान्तरेण प्राप्तत्वात् तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रविधानात्



वाक्यादेव तदङ्गत्वम् । यत्र तु क्रमस्य पाठादिप्रमाणेन संभवत्प्राप्तिकता, धात्वर्थश्च संभवत्प्राप्तिकोऽपि भावार्थाधिकरणन्यायेन प्रयोजनान्तरार्थं विधीयते तत्र क्रमबोधिका श्रुतिरपि अनुवाद एव, न तु क्रमे प्रमाणम्, विशिष्टविधिगौरवापत्तेः । यथा ' ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन् ' ' हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः ' इत्यादौ । अत्र हि ग्रहणावदानादिरेव फलार्थं हृदयादिमात्रहविष्ट्वसिद्ध्यर्थं च विधीयते इति वक्ष्यते । यत्र तु धात्वर्थस्य क्लृप्तप्रमाणेन प्राप्त्यभावेऽपि कथंचित् संभवत्प्राप्तिकस्य पुनर्विधाने न किंचित् प्रयोजनम्, विधेयान्तरं च नान्यत् किंचित्, तत्र क्रम एव श्रुत्युक्तो विधीयते । यथा सत्रात्मके द्वादशाहे ' अध्वर्युर्गृहपतिं दीक्षयित्वा ...आचार्यप्रेषितः ' ( भा. वत् ) इति वाक्ये । अत्र हि न दीक्षायाः स्वरूपेण तत्तत्संस्कारकत्वेन वा विधिः, अतिदेशप्राप्तत्वात् । प्रकृतौ हि यजमानसंस्कारार्था दीक्षा अतिदेशेनैव सत्रे प्राप्यते । सत्रे च ' ये यजमानास्ते ऋत्विजः ' इति वचनेन ऋत्विक्कार्योद्देशेन यजमानविधानात् ब्रह्मादीनां यजमानत्वेनैव प्रतिप्रधानावृत्तिन्यायेन तत्र तत्तत्संस्कारकत्वप्राप्तेः । न च ऋत्विक्कार्ये यजमानविधानादेव वरणादिनिवृत्त्या ब्रह्मत्वाद्यप्राप्तिः, तद्विधानेन वरणादिनिवृत्तावपि ऋत्विक्त्वनिवृत्तौ प्रमाणाभावेन अध्यवसायमात्रेणैव ब्रह्मत्वादेः उपपादितत्वात् । न च तेन प्राप्स्यमानाया अपि दीक्षायाः अपूर्वत्वाद्यर्थं पुनः श्रवणम्, ब्रह्मादिप्राप्त्यर्थं अतिदेशस्यावश्यकतया निवारयितुमशक्यत्वात् । न च दीक्षासु अध्वर्युविधिः, अतिदेशादेव सिद्धेः । न च दीक्षान्तरे अध्वर्युनिवृत्त्या प्रतिप्रस्थात्रादिविधानम्, अध्वर्युदीक्षायामध्वर्योः ' चित्पतिस्त्वा पुनातु ' इति मन्त्रवर्णविरोधादेव अप्राप्तेः । न वा अध्वर्युकर्तृकत्वानुरोधेन ऊहेन मन्त्रप्रयोगः, कर्तुः साङ्गप्रधानाङ्गत्वेन चरमापेक्षितत्वेन च कर्त्रनुरोधेन त्वा-पदबाधायोगात् । अतो मन्त्रं अनूहितमेव प्रयुज्य अध्वर्युकर्तृकत्वबाधावश्यंभावे ' इतरमन्यस्तेषां यतो विशेषः स्यात् ' इति न्यायेन अध्वर्युपुरुषाणामाद्यः प्रतिप्रस्थातैव अध्वर्युदीक्षायां प्राप्नोति । ब्राह्मणाच्छंस्यादिदीक्षासु तु अध्वर्योः ' न पूतः पावयेत् ' इति वचनेन सत्रप्रकरणपठितेन दीक्षासु दीक्षाख्यसंस्काररहितपुरुषकर्तृविधायकेन पर्युदासात् प्रतिप्रस्थातृप्राप्तिः सुलभैव । एवं प्रतिप्रस्थात्रादिदीक्षासु नेष्टुः प्रतिप्रस्थात्रनन्तरस्य, नेष्ट्रादिदीक्षासु च उन्नेतुः नेष्ट्रनन्तरस्य प्राप्तिर्न्यायादेव, इति न विधेयान्तराशङ्का । अतः क्रम एव अत्राप्राप्तः तत्तद्दीक्षोद्देशेन विधीयते श्रौतक्त्वाप्रत्ययोक्तः ततःपदोक्तश्च । अत एव एतानि द्वादश वाक्यानि श्रौतक्रमविधायकानि । अधिस्वाद्युद्देश्यतावच्छेदकमङ्गीकृत्य षडेव वा । उन्नेतृदीक्षावाक्ये तु वैकल्पिकब्रह्मचारिविधानात् हृदयादिन्यायेन पाठादेव क्रमसिद्धेः ' ततः ' इत्यनुवादः । निपातत्वाच्च वा–शब्दस्य ब्रह्मचारिविशेषणत्वेऽपि न वाक्यभेदः । अभावपक्षे च ब्राह्मणानामेव आर्त्विज्यविधानात् ' ब्राह्मण ' इत्यनुवादः । ब्रह्मचारिणश्च आचार्याधीनत्वस्मृतेः आचार्यप्रेषित इत्यपि ।

यत्तु **मूले** विततिरूपक्रमपक्षमङ्गीकृत्य सर्वस्यापि अस्य एकवाक्यत्वमित्युक्तम् । तत् अशाब्दायाः विततेः विधेयत्वायोगात् अनेकदीक्षोद्देशेन विधाने च वाक्यभेदापत्तेः, उन्नेतृदीक्षायां कर्तृविधेरावश्यकत्वाच्च उपेक्षितम् । **वस्तुतस्तु** आनन्तर्यरूपक्रमपक्षेऽपि तत्तत्संस्कार्यविशिष्टदीक्षोद्देशेन क्रमविधाने वाक्यभेदापत्तेः संस्कार्यमात्रोद्देशेन विधौ च दीक्षानिष्ठत्वालाभात् उन्नेतृवाक्ये इव तदुद्देशेन कर्तृविधिः । इतरस्तु सर्वोऽपि पदसमुदायः औचित्येनैतत्तुल्यार्थोऽनुवादः । कर्तुः दीक्षानिष्ठत्वलाभस्तु अनुवादबलात् इरापदस्येव नानुपपन्नः । एवं च सर्वस्यापि एकवाक्यत्वलाभः । क्रमस्तु अनुवाद एव तादृशपाठादवधेयः । निषादस्थपत्यधिकरणन्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन पाठगम्यानेकवाक्यकल्पनस्य अदोषत्वात् । अन्यथा हृदयादिवाक्येष्वपि विशिष्टविध्यापत्तेः । न च पाठक्रमस्य श्रुतिक्रमस्य च कश्चिदनुष्ठाने विशेषः । अतो मूलोक्तश्रुतिक्रमोदाहरणं अनादरणीयं इति ध्येयम् ।

मण्डन— ( १ ) 'श्रुत्या क्रमः स्याद् ( २ ) दीक्षासु क्रमः श्रुत्या विधीयते ।'

शंकर— ( १ ) 'क्रमः श्रुत्या नियम्यते । ( २ ) क्रमो वैधः पाञ्चमिकः ( ३ ) सत्रे दीक्षाक्रमः श्रुतेः ।'

* श्रौतलिङ्गेन आचारः बाध्यते । यथा 'यदा वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवो-त्तिष्ठन्ति' इत्यर्थवादलिङ्गेन प्रियङ्गुषु यवशब्दप्रयोगरूप आचारो बाध्यते, इदं यववराहाधिकरणे ( १।३।५ ) उक्तम् । बाल. पृ. १३८, * श्रौतलिङ्गेन स्मृति-र्बाध्यते । यथा— मातुलकन्योद्वाहनिषेधस्मृतिः श्रौत-लिङ्गेन । लिङ्गानि तु १ 'गर्भे नु नौ जनिता०' २ 'आयाहीन्द्र पथि०' ३ वाजसनेयके 'समानदेवपुरुषा दत्ता चायश्च जायते उत तृतीये संगच्छामहै चतुर्थे संगच्छामहै' इति इदं श्रौतलिङ्गत्रयं सोमेश्वरेणोक्तम् । तदर्थः तद्विचारश्च शास्त्रदीपिकाप्रकाशे द्रष्टव्यौ । उदा-हरणं तु सूर्याख्याया नववध्वाः आशसन–विशसन–विकर्तनाख्यवस्त्रत्रयधारणविषयश्रौतमन्त्रलिङ्गेन 'सूर्या-विदे वधूवस्त्रं दद्यात्' इति स्मृतेः एकवस्त्रधार-णार्थायाः बाधः । पृ. १३८.

* श्लक्ष्णता पुरोडाशे जलेन क्रियते दर्शपूर्ण-मासयोः । 'सं ते तन्वा तनूः सृज्यतां इति त्रिः परि-मार्ष्टि' । भा. १०।१।१७।५५.

* श्लक्ष्णीकरणस्य सौर्ये चरौ बाधः । १०।१। १७।५८. 'सौर्ये चरौ प्रथनश्लक्ष्णीकरणयोर्बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* श्लोकमप्युदाहरन्ति— 'वितीर्य हि महज्जाल-मृषिः संक्षिप्य चाब्रवीत् । इष्टं हि विदुषां लोके समासव्यासधारणम् ॥' इति । भा. ८।१।२।२, * श्लोकेन ( नाम साम्ना ) पुरस्तात् सदसः स्तुवते महाव्रते । १०।४।८।१६.

* श्लोकादिसामभिः महाव्रते स्तोत्रान्तरसाधनी-भूतैः प्राकृतसाम्नां समुच्चयः । १०।४।८।१६–१७. मीको. पृ. ३१३४ 'महाव्रते स्तोत्रान्तरसाधनीभूतैः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

⌛ श्वः कर्तव्यमद्यैव कुर्वीत न्यायः । 'श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् । न हि मृत्युः प्रतीक्षेत कृतं वाऽप्यथ वाऽकृतम् ॥' इति । साहस्री. ३४५.

* शुनः चतुर्दश्यामुपवसतः पश्यामः । श्येनांश्चाष्ट-म्याम् । न चैषां व्याध्याशङ्का, नियतनिमित्तत्वात् । नानाऽऽहाराणामपि तस्मिन् काले दर्शनात् । समाना-हाराणामपि अन्यस्मिन् काले अदर्शनात् । भा. ६।१। २१४.

⌛ श्वपिशुनन्यायः । यथा श्वा तथा पिशुनः, यथा पिशुनस्तथा श्वेति विषयविवक्षायामयमवतरति । अयं पद्येनापि विवृतः । तथाहि– 'अस्थिरतया प्रकृत्या बालध्यासक्ततया च वक्रतया । ज्ञातिविरोधेन पुनः सदृशः सदृशः शुनः पिशुनः ॥' इति । साहस्री. ९७१.

⌛ श्वपुच्छोन्नामनन्यायः । स्पष्टार्थः । यत्र क्रिया निष्फला तत्रास्य प्रवृत्तिः । साहस्री. ३०३.

⌛ श्वशुष्कास्थिन्यायः । लौकिकगाथारूपोऽयम् । यथा श्वा कुक्कुरः शुष्कं नीरसमस्थि मुखे धृत्वा चर्वति । स्वमुखोद्भवरक्तस्रावं विना किञ्चिदपि तृप्ति-कारकं फलं न भवति तस्य । न जहाति स तदस्थि, तथा मूर्खोऽपि निष्फलं वस्तु गृहीत्वा फलाभावेऽपि न त्यजतीति विषयेऽस्य न्यायस्य संचारः इति । साहस्री. ८११.

⌛ श्वश्रूनिर्गच्छोक्तिन्यायः । यत्र परकृतनिषेधं निराकृत्य स्वयं निषेधति, तत्र अयं प्रवर्तते । यथा— भिक्षामटते बटवे भिक्षां प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय समागते तस्मिन् नास्ति भिक्षा निर्गच्छेति तथैव प्रत्याचष्टे, तथा प्रकृतेऽपि । साहस्री. २६७.

* 'श्वेतो धावति' इत्यत्र अर्थप्रकरणादिना गौरो निर्णेनेक्ति इत्येवं वाक्यार्थपरत्वावधारणे श्वेतः इत्येक-पदत्वं धावतेश्च निर्णेजनार्थता अवधार्यते । अस्मात् देशात् शीघ्रं गच्छति इत्येतद्वाक्यार्थपरत्वे 'श्वा इतः' इति पदद्वित्वं गत्यर्थत्वं च धावतेः निश्चीयते । एवं यथा जातिवाच्यत्वनिरूपणरूपेण व्यक्तिवाच्यत्वनिरूपणरूपेण



वा पदार्थानां वाक्यार्थप्रत्ययार्थता भवति तथा पदा-र्थानां जात्याख्यस्य व्यक्त्याख्यस्य वा रूपस्य निरूपणं कार्यम्, न शक्त्यनुरोधेन, कार्यावसेयत्वेन तस्याः ( शक्तेः ) तदानुगुण्येन कल्प्यत्वात् । ( इदं व्यक्तिपक्षे उक्तम् ) । सु. पृ. ३५५. * 'श्वेतो धावति' सारमेयः इतो द्रुतं गच्छति इति, श्वेतः पुरुषः वस्त्राणि शोध-यति इति च । रत्नाकरः शब्दपरिच्छेदः २९ श्लोकः.

* श्वेतगुणेन वायव्यपशौ उपदिष्टेन प्राकृताज-द्रव्यस्य न बाधः । १०।२।३०।७०. मीको. पृ. २१५४ 'द्रव्यस्य गुणेन न बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* श्वेतगुणस्य वायव्ये पशौ नियमविधिः 'वायव्यं श्वेतमालभेत' । वि. ४।२।१०.

* श्वेतशब्दः प्रत्यक्षोऽपि 'वायव्यं श्वेतमालभेत' इति छागमेव परिच्छिन्द्यात् नान्यं पशुमिति । भा. १०।२।३०।६९.

* श्वेतशुक्लकृष्णवर्णानां पशुव्रीहिषु नियमविधिः नानुवादः । भा. ४।२।१०।२५.

---

## ष

* 'षडुपसदः' इत्यादिनाऽपूर्वोपसत्कर्मविधानम् । वृ. १०।७।१४।४३–४६.

⌛ षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् । १०।३।४।२३॥

अग्निचयने 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयः षट् प्राकृत्यो दीक्षाहुतयः । आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः षट् वैकृत्यो दीक्षाहुतयः । एताः प्रकृत्य 'षड्भिर्दीक्षयति' इति श्रुतम् । तत्र षड्भिर्दीक्षयति इति श्रुते सति तासां प्राकृतीनां दीक्षाहुतीनां मन्त्रविकारः स्यात्, प्राकृतमन्त्राणां वैकृतमन्त्रैर्बाधः स्यात् । श्रुति-संयोगात् वैकृतानां प्रत्यक्षश्रुतिसंयोगात् । तस्मात् प्राकृतानां वैकृतैर्बाधः न समुच्चयः । इति पूर्वः पक्षः ।

अभ्यासात्तु प्रधानस्य । २४ ॥

अग्निचयने 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयः षट् प्राकृत्यो दीक्षाहुतयः । 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः षट् वैकृत्यो दीक्षाहुतयः । अत्र वैकृतैर्मन्त्रैः प्राकृतानां बाधः इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन व्यावर्तयन् सिद्धान्तमाह । नात्र प्राकृतानां बाधः किंतु प्राकृतवैकृतयोः समुच्चयः । प्रधानस्य अभ्यासात् समु-च्चयः । आवृत्तिश्च प्रधानस्य होमस्य श्रूयते 'द्वादश जुहोति' इति । तस्मात् वैकृताहुत्यनन्तरं प्राकृताहुति-षट्कस्य आवृत्तिः इति समुच्चयः ।

आवृत्त्या मन्त्रकर्म स्यात् । २५ ॥

'द्वादश जुहोति' इति वचनात् प्राकृतानां वैकृ-तानां मन्त्राणां समुच्चयः इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । वैकृतानां मन्त्राणां आवृत्त्या मन्त्रकर्म आहुतयः स्यात् । न प्राकृतानां समुच्चयः किंतु बाध एव । द्वादशत्वं तु वैकृतानां द्विरावृत्त्या सेत्स्यति इति ।

अपिवा प्रतिमन्त्रत्वात् प्राकृतानामहानं स्यादन्यायश्च कृतेऽभ्यासः । २६ ॥

वैकृतानामेव मन्त्राणां द्विरावृत्त्या द्वादशत्वं संपादनीयं न तु प्राकृतानां वैकृतानां च समुच्चयः इति पूर्वपक्षं सूत्रेण प्राप्तं अपिवाशब्देन निरस्यन् उत्तरमाह । प्रति-मन्त्रत्वात् प्राकृतीनां षण्णां वैकृतीनां च षण्णां इति द्वादशानां दीक्षाहुतीनां प्रत्येकं पृथक् मन्त्रो विद्यते । प्रति प्रत्येकं मन्त्रो यासां ताः प्रतिमन्त्राः । आहुतीनां प्रतिमन्त्रत्वात् प्राकृतानां मन्त्राणां अहानं स्यात् हानं बाधो न स्यात् । यथा वैकृता मन्त्रा गृह्यन्ते तथा प्राकृता अपि समुच्चयेन ग्राह्या एव । 'द्वादश जुहोति' इति आहुतीनां द्वादशत्वमुक्तम् । वैकृतीभिश्च षड्भिः दीक्षितत्वे कृते संपादिते, पुनः तासामेव द्वादशत्वसंपाद-नार्थं अभ्यासः अन्यायः नास्ति न्यायः यस्य सः अभ्यासः अन्यायः न्यायशून्यः । तस्मात् प्राकृतीभिर्द्वादशत्वं संपादनीयम् । एवं च वैकृतानां प्राकृतानां च मन्त्राणां समुच्चय एव ।

**पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् । २७ ॥**

'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयः षट् प्राकृता दीक्षाहुतिमन्त्राः । 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः षट् अग्निचयने वैकृता दीक्षाहुतिमन्त्राः । 'द्वादश जुहोति' इति च दीक्षाहुतीनां द्वादशत्वमुक्तम् । तस्मात् प्राकृतीनां वैकृतीनां समुच्चयः इति सिद्धान्ते युक्त्यन्तरमाह । 'षट् पूर्वान् जुहोति' 'षडुत्तरान् जुहोति' इति च तत्र पौर्वापर्यं पूर्वापरशब्दौ भवतः । न च वैकृतानां केवलानां अभ्यस्यमानानां पूर्वापरता उपपद्यते । पूर्वापरताया नैमित्तिकत्वात् पूर्वनिमित्तो हि उत्तरशब्दः उत्तरनिमित्तश्च पूर्वशब्दः । तस्मात् प्राकृतानां न बाधः ।

**तत्पृथक्त्वं च दर्शयति । २८ ॥**

सिद्धान्ते युक्त्यन्तरमाह । तत्पृथक्त्वं तासामाहुतीनां पृथक्त्वं दर्शयति 'उभयीर्जुहोति आग्निकीश्च आध्वरिकीश्च' इति । यदि उभयेषां मन्त्राणां समुच्चयः । ततस्तेषां आग्निकत्वात् आध्वरिकत्वाच्च भवत्येष निर्देशः । वैकृतानामेव आवृत्तौ तु सर्वा एव आग्निक्यो भवेयुः । तस्मात् समुच्चयः ।

**न चाविशेषाद् व्यपदेशः स्यात् । २९ ॥**

हेत्वन्तरमाह । 'अध्वरस्य पूर्वं अथाग्नेः, उपाग्नि ह्येतत् कर्म यदग्निकर्म' इति व्यपदेशो भवति । वैकृतीनामेव द्विरावृत्त्या द्वादशत्वसंपादने तु 'पूर्वमध्वरस्य, अथाग्नेः' इति अविशेषात् सर्वासामेव आग्निकत्वेन विशेषाभावात् अयं व्यपदेशो न च स्यात् । अस्ति तु व्यपदेशः । तस्मात् न वैकृतीनामेव द्विरावृत्तिः । किन्तु प्राकृतीनां वैकृतीनां च आहूतीनां समुच्चय इति **सिद्धान्तः । के.**

* 'षड्भिर्दीक्षयति' (१०।३।४) इत्यधिकरणे 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादिभिर्दीक्षार्थतयोपदिष्टैः षड्भिः मन्त्रैः अतिदिष्टानां 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादीनां षण्णां समुच्चयः उक्तः । **बाल.** पृ. १७७. * 'षड्भिर्हलैः कर्षति' इति संविधानं कुर्वन् विलेखनं अकुर्वन् अपि उच्यते, तत्समर्थमाचरतीति । भा. ३।४।११।३१ । 'षड्भिर्हलैः कृषति' इति विलेखनवचनः सन् कृषिः षड्हलोपादानसामर्थ्यात् विलेखितृविषयासंभवात् तत्प्रयोजकव्यापारे वर्तते । न हि हलषट्केन एकः कर्ता विलेखितुं शक्नोति । तेन षण्णामेव विलेखितॄणां यः संनिधानेन प्रयोजकः स तद्व्यापारेण कृषेरपि कर्ता भवतीत्येवमभिधीयते । **वा.** पृ. ९६८. * **षण्णां** तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' अयं प्रतिप्रसवभिन्नः अभ्यनुज्ञाविधिः । बाल. पृ. १५ । 'षण्णां तु ... प्रतिग्रहः' अयं अव्यावृत्तविषयः अभ्यनुज्ञाविधिः । पृ. १६.

**ॾ षट्कर्णो भिद्यते मन्त्रः इति न्यायः ।** मन्त्रः मन्त्रणाकार्यम् । षट्संख्याकाः कर्णा यस्मिन् तथाभूतः, तृतीयपुरुषश्रुत इत्यर्थः । भिद्यते प्रकाशं यातीति स्पष्टः । **साहस्री.** ६५४.

* 'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥' (मस्मृ. ४।९) इति उत्तरोत्तरस्य उत्कृष्टता उक्ता । **सु.** ३।७ पृ. २८. (एषां गृहस्थानां मध्ये कश्चित् गृहस्थो यो बहुपोष्यवर्गः स प्रकृतैः ऋतायाचितभैक्षकृषिवाणिज्यैः पञ्चभिः कुसीदेन च इत्येवं षड्भिः कर्मभिः षट्कर्मा भवति षड्भिरेतैर्जीवति । अन्यः त्रिभिः याजनाध्यापनप्रतिग्रहैः । अपरः द्वाभ्यां याजनाध्यापनाभ्याम् । उक्तत्रयापेक्षया चतुर्थः पुनः ब्रह्मसत्रेण अध्यापनेन जीवति । इति कुल्लूकः) ।

**ॾ षट्चितिः पूर्ववत्त्वात् । ४।४।७।१४ ॥**

'योऽग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते' इति श्रुतम् । तत्र किं योऽयं नित्योऽग्निः स एव षट्चितिकः उत एकचितिको नैमित्तिक इति विचारे अग्निः (चयनं) षट्चितिरेव नित्यः स्यात् । नित्य इति पदं पूर्वतरसूत्रादनुवर्तते । पूर्ववत्त्वात् । पूर्वो योऽग्निः पञ्चचितिकः तमनूद्यैव षष्ठ्याश्चितेर्विधानात् षष्ठ्याश्चितेः पूर्ववत्त्वं पूर्वपञ्चचितिकाग्निमत्त्वं वर्तत एवेति । षट् चितयो यस्य सोऽग्निः षट्चितिः । समासान्तविधेरनित्यत्वान्न



कप् । किंच षष्ठीशब्दः पूरणप्रत्ययान्तः । षण्णां पूरणी षष्ठी । तथा च पञ्चचितिपूर्वकत्वं षष्ठ्याश्चितेरावश्यकं इति षष्ठ्याः पूर्ववत्त्वम् । तस्मात् षट्चितिकोऽग्निः नित्यः इति **पूर्वः पक्षः ।**

**ताभिश्च तुल्यसंख्यानात् । १५ ॥**

अग्निः (चयनं) षट्चितिको नित्यः इति पूर्वपक्षे हेत्वन्तरपरं सूत्रम् । ताभिः पूर्वाभिः पञ्चभिश्चितिभिः षष्ठ्याश्चितेः तुल्यं संख्यानं गणना कृता दृश्यते । पञ्चवदेव षष्ठी निर्दिष्टा । तस्मात् षट्चितिकत्वं नित्यं मन्यामहे । गणनं च इत्थम्, 'इयं वाव प्रथमा चितिः, ओषधयः पुरीषम् । अन्तरिक्षं वाव द्वितीया चितिः, वयांसि पुरीषम् । असौ वाव तृतीया चितिः, नक्षत्राणि पुरीषम् । यज्ञो वाव चतुर्थी चितिः, दक्षिणा पुरीषम् । यजमानो वाव पञ्चमी चितिः, प्रजाः पुरीषम् । संवत्सरो वाव षष्ठी चितिः, ऋतवः पुरीषम्' इति । तुल्यानां च तुल्यवदनुक्रमणं भवति ।

**अर्थवादोपपत्तेश्च । १६ ॥**

पूर्वपक्षे हेत्वन्तरार्थं सूत्रम् 'षट् चितयो भवन्ति, षट् पुरीषाणि, तानि द्वादश, द्वादश मासाः संवत्सरः, संवत्सर एव प्रतितिष्ठति' इति अर्थवादो भवति । तस्य उपपत्तिः षट्चितिकत्वे एव नान्यथा । तस्मात् षट्चितिकत्वं नित्यम् ।

**एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन । १७ ॥**

अग्निः (चयनं) षट्चितिक एव नित्यः इति सूत्रत्रयेण पूर्वपक्षे प्राप्ते वाशब्देन तं निरस्य सिद्धान्तमाह । नैमित्तिकः अग्निः एकचितिः स्यात् । हि यस्मात् अपवृक्ते समाप्ते यागे ततः प्रतिष्ठाया अप्राप्तौ प्रतिष्ठाप्राप्तिरूपेण निमित्तेन षष्ठी चितिश्चोद्यते । तेन षट्चितिकत्वं संपादयितुमेव न शक्यते । षष्ठीशब्दश्च पञ्च चितीरपेक्ष्यावकल्पते । तस्मात् पञ्चचितिको नित्यः एकचितिकश्च नैमित्तिकः ।

**विप्रतिषेधात् ताभिः समानसंख्यत्वम् । १८ ॥**

'ताभिश्च तुल्यसंख्यानात्, अर्थवादोपपत्तेश्च' (४।४।७।१५–१६) इति पूर्वपक्षसूत्रद्वयस्य उत्तरं अनेन सूत्रेणोच्यते । षष्ठ्याश्चितेः नित्यत्वस्य 'योऽग्निं चित्वा' इत्युपक्रमगतयच्छब्देन निमित्तसमर्पकेण विप्रतिषेधात् नित्यत्वनैमित्तिकत्वयोः विरोधात् ताभिः पूर्वचितिभिः समानसंख्यत्वं तुल्यत्वेन षष्ठ्याः परिगणनं अतुल्यत्वेऽपि स्यात् । यथा 'देवा मनुष्याः पितरस्तेऽन्यत आसन्' इति अतुल्यानामपि तुल्यत्वेन परिगणनं कृतं तद्वत् । तस्मात् पञ्चचितिक एवाग्निर्नित्यः षष्ठचितिकश्च नैमित्तिक इति **सिद्धान्तः । के.**

* षड्जादिस्वरसमाहाररूपा गीतिः । **सु.** पृ. ८५५.

* **षट्त्रिंशद्रात्रे** षडहधर्मातिदेशः । ८।३।३।६–७. **मीको.** पृ. २२६ 'अतिदेशः षट्त्रिंशद्रात्रे षडहधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * षट्त्रिंशद्रात्रे श्रूयते 'षडहा भवन्ति ...... चत्वारो भवन्ति' इति षड्भिरहोभिः निष्पाद्यः कर्मविशेषः षडहशब्दवाच्यः । तादृशाश्च कर्मविशेषाश्चत्वारः । तथा च षट्त्रिंशद्रात्रे षडहनामकस्य कर्मविशेषस्य विध्यन्तोऽतिदेष्टव्यः षडहत्वलिङ्गात् न तु द्वादशाहस्य । **वि.** ८।३।३.

* **षट्त्रिंशत्संवत्सरं** शाक्त्यानामयनम् । **भा.** ९।१।१२।३९ वर्णकं २, * **षट्त्रिंशत्संवत्सरे** मांसमया एव पुरोडाशाः पर्यग्निकर्तव्याः सिद्धान्ते । पिष्टमयः पुरोडाश उत्पादयितव्यः पर्यग्निकरणार्थत्वेन पूर्वपक्षे । २।१।४।१२.

* 'षडशीतिरेषां वङ्क्रयः' इति समासवचनं अश्वमेधे अश्ववङ्क्रीवत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे अश्वतूपरगोमृगाणामर्थम् । **भा.** ९।४।२।१७–२१.

* **षडहाः** द्विविधाः अभिप्लवाः पृष्ठ्याश्चेति । **वि.** १०।६।११. * 'षडहा भवन्ति, चत्वारो भवन्ति' इति कर्मविशेषे (षट्त्रिंशद्रात्रे — भा.) षडहाभ्यासः, न तु द्वादशाहिकानां प्रवृत्तिः । **भा.** ८।३।३।६–७, * षडहस्य पृष्ठ्यस्य कर्मान्तरव्यवधानेनावृत्तौ मध्वशनादेरप्यावृत्तिर्गवामयने । १०।६।११।३१, * **षडहे** पृष्ठ्ये उपदिष्टेन मध्वशनेन आतिदेशिकपयोव्रतादीनां न बाधः किंतु समुच्चयः । १०।४।१।१–२, * षडहे पृष्ठ्ये गवामयनगते बृहद्रथंतरयोः प्रत्येकमेकैकस्यैवानुष्ठा-

नम् । १०।६।३।४–५. * षडहे प्रतिदिनमेकैकं पृष्ठं विहितम् । तानि च षट् पृष्ठानि । रथंतर–बृहत्–वैरूप–वैराज–शाक्कर–रैवतसामभिर्निष्पाद्यानि । वि. ७।३।३. * 'षडहे संस्थिते मध्वाशयेत् घृतं वा'। भा. ९।२।१२।४०.

* षडहान्ते मध्वशनघृताशनयोर्वैकल्पिकयोरनुष्ठानं गवामयने । भा. १०।६।९।२७–२८.

* षडहावृत्तौ सर्वषडहान्ते मध्वशनादेः सकृदेवानुष्ठानम् । भा. १०।६।१०।२९–३०. * षडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वशनम्, न प्रतिषडहान्ते । भा. १०।६।१०।२९–३० । गवामयने तु अभिप्लवषडहैर्व्यवधाने सति प्रतिमासं पृष्ठ्यषडहान्ते मध्वशनं कर्तव्यम् । १०।६।११।३१ । सत्रिणां ब्रह्मचारित्वेऽपि ब्रह्मचारिणां च मधुमांसनिषेधेऽपि यज्ञार्थत्वात् सत्रिभिर्मध्वशनं कर्तव्यम् । १०।६।१२।३२–३३.

* षडहगतपृष्ठानां विश्वजिति अतिदेशः । ७।३।३।७–१२. मीको. पृ. २२० 'अतिदेशः विश्वजिति षडहगतपृष्ठानाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* षडहगतरथंतरादिसाम्नां मध्ये, विश्वजिति होतुः पृष्ठस्तोत्रे वैरूपस्यैव निवेशः । भा. १०।६।५।१३–१४.

* षडहधर्मो व्रतं नियमो वा मध्वशने भवति द्वादशाहे । भा. ९।२।१२।४०, * षडहधर्माः स्तोत्रशस्त्रादयः षडहावृत्तौ आवर्तन्ते ते हि अहःसंबद्धाः । तेषामह्नामावृत्तिः इति स्तोत्रादीनामावृत्तिः इति युक्तम् । न हि ते अहःसु अवसानसंयोगेन चोद्यन्ते । १०।६।१०।३०. * षडहधर्माणां अतिदेशः षट्त्रिंशद्रात्रे । ८।३।३।६–७. मीको. पृ. २२६ 'अतिदेशः षट्त्रिंशद्रात्रे॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* षड्ढोतृमन्त्रः 'सूर्यं ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीं शरीरैः' इति । अत्र चक्षुः इत्यत्र चक्षुषी, प्राणः इत्यत्र प्राणं इति पाठभेदः सुधायाम् । सु. ३।७।५।१२ पृ. १०.

* षड्रात्रे चयनाग्निः कर्तुं शक्यते । वि. १०।८।११.

* षड्रात्रादिषु अहीनेषु एकस्तोमका आम्नाताः 'त्रिवृदग्निष्टोमो भवति' 'पञ्चदश उक्थो भवति' इत्यादयः । वि. ५।३।१५.

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्, गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धो विकारात्र समासः स्यादसंयोगाच्च सर्वाभिः । ९।४।१।१ ॥**

ज्योतिष्टोमान्तर्गते अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति पठ्यते । तच्च द्विपश्वादीन् पशुगणान् चोदकेन प्राप्तम् । तत्र किं षड्विंशतिशब्दः अभ्यसितव्यः, अविकारेण वा प्रयोक्तव्यः, किं वचनमात्रमूहितव्यम्, अथवा अस्यपदाभ्यासः उत समस्य वचनं (द्वापञ्चाशत् इति रीत्या) इति विचारे एकं पक्षमाह । पशुगणे द्विपशुके षड्विंशतिः इतिपदं अस्य इतिपदं च अभ्यासेन प्रयोक्तव्यम् । तत्प्रकृतित्वात् अग्नीषोमीयप्रकृतिकत्वात् । अग्नीषोमीयस्य च पशोः वङ्क्रयः षड्विंशतिः । द्विपशुके च पश्वोर्द्वित्वात् 'षड्विंशतिः षड्विंशतिरस्यास्य' इति अभ्यासं विना वङ्क्रीयत्ताप्रकाशनासंभवात् । गुणस्य प्रविभक्तत्वात् षड्विंशतिसंख्यात्मकगुणस्य प्रतिपशु वङ्क्रिद्वारा भिन्नत्वात् । अविकारे अभ्यासात्मके विकारे अकृते हि अकृते तु तासां वङ्क्रीणां अकार्त्स्न्येन असंपूर्णतया अभिसंबन्धः स्यात् कार्त्स्न्येन अभिसंबन्धो न स्यात् संपूर्णत्वेन अभिधानं न स्यात् । ननु तर्हि द्विपञ्चाशदनयोर्वङ्क्रयः इति समासो वक्तव्य इति चेन्नेत्याह– प्राकृतस्य षड्विंशतिपदस्य विकारात् सर्वथा विकारप्रसङ्गात् न समासः स्यात् । सर्वाभिः द्विपञ्चाशद्वङ्क्रीभिः असंयोगात् प्रतिपशु संयोगाभावाच्च न समासः । तस्मात् 'षड्विंशतिः षड्विंशतिरस्यास्य' इत्येव ऊहः द्विपशुके प्रयोगे कर्तव्यः इति प्रथमः पक्षः । वङ्क्रिः पर्शुः (बरगडी इति भाषायाम्) ।



**अभ्यासेऽपि तथेति चेत् । २ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति पठितम् । द्विपशुके यागे द्विपञ्चाशदनयोर्वङ्क्रयः इति समासे कृते यदि अप्राकृतत्वं दोषः तथा प्रथमपूर्वपक्षोक्ते 'षड्विंशतिः षड्विंशतिरस्यास्य वङ्क्रयः' इति अभ्यासे स्वीकृतेऽपि अप्राकृतत्वमेव प्रसज्येत । न हि प्रकृतौ समास इव अभ्यासोऽप्यस्ति । इति चेत् ।

**न गुणादर्थकृतत्वाच्च । ३ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य' इति भागस्य द्विपशुके प्रयोगे अभ्यासे स्वीकृतेऽपि अप्राकृतत्वं दोषः भवत्येव इति चेत्, न, गुणात् अभ्यासस्य गुणत्वात् 'द्विपञ्चाशदनयोः' इति समासपक्षे तु द्रव्यस्यैव शब्दस्य अप्राकृतत्वं स्यात् अभ्यासपक्षे तु गुणस्यैव अप्राकृतत्वम् । 'गुणे त्वन्याय्यकल्पना' इत्युक्तम् । अभ्यासश्च अर्थकृतः प्रतिपशु प्रविभक्तं गुणं वक्तुं अर्थात् कृतः समासे तु न तथा । तस्मात् अभ्यासपक्षे न दोषः चोदकानुग्रहश्च समासे च न चोदकानुग्रहः ।

**समासेऽपि तथेति चेत् । ४ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति पठितम् । द्विपशुके पशुगणे पदद्वयस्य अभ्यासः कर्तव्यः सर्ववङ्क्रिवचनार्थं चोदकानुग्रहश्च अभ्यासे 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति समासपक्षे तु दोषः इति यदुक्तं अभ्यासवादिना तत्र समासवादी आह । समासेऽपि तथा चोदकानुग्रहोऽस्ति कार्त्स्न्येन वङ्क्रीणामभिधानात् । यौगपद्येन वचनाच्च प्रयोगवचनानुग्रहः । तस्मात् समासपक्ष एव श्रेयान् इति चेत् ।

**नासंभवात् । ५ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इत्यत्र द्विपशुके प्रयोगे पदद्वयस्य अभ्यासः कर्तव्य इति अभ्यासवादी ब्रूते । 'द्विपञ्चाशदनयोः' इति समासः कर्तव्यः कार्त्स्न्येन वङ्क्रीणामभिधानात् प्रयोगवचनानुग्रहाच्चेति समासवादी उक्तवान् तत्र पुनः अभ्यासवादी आह । न समासपक्षो युक्तः, अभ्यासपक्षे चोदकानुग्रहो भवति । समासपक्षे तु चोदकानुग्रहस्य असंभवः । प्रयोगवचनं तु चोदकात् दुर्बलम् । तस्मादभ्यासपक्ष एव प्रबलचोदकानुग्रहात् युक्तः ।

**स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् । ६ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति श्रुतम् । द्विपशुके विकारे पदद्वयस्य अभ्यासः कर्तव्यः न समासः इति अभ्यासवादी स्वपक्षसाधिकां अपरां उपपत्तिमाह । प्रकृतौ अग्नीषोमीये स्वाभिः वङ्क्रीभिः पशुरुपलक्षितः, तथा इह द्विपशुकेऽपि उपलक्षयितव्यः । तच्च अभ्यासवचने शक्यते । समासवचने तु समुदायस्य संख्या उक्ता स्यात् न पशोः । प्रकृतौ एकपशौ षड्विंशतिवङ्क्रयः विशेषणत्वेन श्रूयन्ते अभ्यासपक्षे तदनुग्रहो भवति । समासपक्षे तु समुदायस्य विशेष्यत्वेन एकपशुप्राधान्यबाधः । तस्मात् अभ्यासपक्षः श्रेयान् ।

**वङ्क्रीणां तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमध्रिगोस्तदर्थत्वात् । ७ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति पठितम् । द्विपशुके पशुगणे 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति समासवचनं कर्तव्यं इति समासवादी अभ्यासवादिपक्षं तुशब्देन निरस्यन् समाससिद्धान्तमाह । वङ्क्रीणां प्रधानत्वात् समासेन अभिधानं स्यात् । षड्विंशतिः इति वङ्क्रयो गणिताः, न ताभिर्गणिताभिः पशुरुपलक्षितः । वङ्क्रीभिर्गणिताभिः दृष्टं प्रयोजनं समस्तानां वङ्क्रीणामुद्धरणम् । पशौ उपलक्ष्यमाणे तु न किंचित् दृष्टमभ्यधिकं भवति । एवं अध्रिगोः तदर्थत्वात् वङ्क्र्यर्थत्वात् वङ्क्रीणां प्राधान्यम् । प्रकृतौ वङ्क्रीणां इयत्ता उक्ता विकृतावपि इयत्तैव वक्तव्या कृत्स्नपार्श्वोद्धरणार्था । तस्मात् समस्य सर्वपशूनां वङ्क्रिसंख्यामेकीकृत्य वचनं कर्तव्यम् । पदाभ्यासो न कर्तव्यः ।

**तासां च कृत्स्नवचनात् । ८ ॥**

अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति वचनेन तासां वङ्क्रीणां कृत्स्नवचनात् । कृत्स्नानां वङ्क्रीणामिदं वचनं न पशूनाम् । अत एव 'अनुष्ठयोच्च्यावयतात्' इत्याह । ताः वङ्क्रयः अनुष्ठया प्रयत्नेन उद्धर्तव्याः इति तदर्थः । तस्मात् वङ्क्रीणां प्राधान्यम् । तस्मात् समासवचनम् ।

**अपित्वसंनिपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् । ९ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठ्या उच्च्यावयतात् ' इति वाक्ये वङ्क्रीणां प्राधान्यमुक्तम्, तेन तासां द्विपशुकादिविकृतौ समस्य वचनं कर्तव्यं इति सिद्धान्तिना समासवादिना उक्ते अभ्यासवादी पूर्वपक्षी पुनराह । अपितु इति शब्देन समस्यवचनपक्षनिरासः । न वङ्क्रीसंख्यासमासः कर्तव्यः अध्रिगुमन्त्रस्य असंनिपातित्वात् । नायं अध्रिगुमन्त्रः संनिपाती करणमन्त्रः । तस्मात् आम्नातेन यथापठितेनैव मन्त्रेण द्विपश्वादौ अभ्यस्तेन पशुवङ्क्रीणां अभिधानं स्यात् । पत्नीवत् यथा द्विबहुपत्नीके प्रयोगे संनहनमन्त्रे पत्नीशब्दः न विक्रियते तथा षड्विंशतिशब्दोऽपि न विक्रियेत इति ।

**विकारस्तु प्रदेशत्वाद् यजमानवत् । १० ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति पठितम् । तस्य करणमन्त्रत्वाभावात् द्विपशुकादिविकृतौ अभ्यासेन प्रयोक्तव्यं न समस्य वचनं कर्तव्यं इति अभ्यासवादिना उक्तं तुशब्देन निरस्यन् पुनः समासवादी सिद्धान्ती आह । विकार एव स्यात् समस्य वचनम् । प्रदेशत्वात् प्रदिश्यते अतिदिश्यते इति प्रदेशः कर्मणि घञ् । प्रकृताविव विकृतावपि वङ्क्रीयत्ताप्रकाशनार्थं शमितॄन् प्रति प्रैषमन्त्रोऽयम् । समस्तवङ्क्रीयत्ताप्रकाशनं च समासं विना नोपपद्यते तस्मात् समस्य वचनं कर्तव्यम् । प्रकृतिस्थफलार्थमेव अतिदिश्यमानत्वात् । यजमानवत् । यथा द्वियजमानके इन्द्राग्न्योः कुलायाख्ये क्रतौ बहुयजमानके सत्रे च ' आशास्तेऽयं यजमानः ' ' उपहूतोऽयं यजमानः ' इत्यादिषु होतुः निगदेषु यजमानशब्द ऊह्यते तद्वत् ।

**अपूर्वत्वात् तथा पत्न्याम् । ११ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति वङ्क्रीयत्ताप्रकाशनार्थो मन्त्रः । अभ्यसितव्यः इति अभ्यासवादी ' पत्नीवदाम्नातेनाभिधानं स्यात् ' ( ९।४।१।९ ) इत्याह । तत्र समासवादी सिद्धान्ती ब्रूते पत्न्यां तथा नोहः पत्नीशब्दस्य द्विबहुपत्नीकेऽपि प्रयोगे तदुक्तम् । अपूर्वत्वात् । ' पत्नीं संनह्य ' इति पत्नीमन्त्रस्य एकद्विबहुपत्नीकत्वेऽपि प्राकृते प्रयोगे विद्यमानत्वात् नोहः । पशुवङ्क्रीषु तु न तथा इति वैषम्यम् ।

**आम्नातस्त्वविकारात् संख्यासु सर्वगामित्वात् । १२ ॥**

अध्रिगुप्रैषगतः ' षड्विंशतिरस्य वङ्क्रयः ' इति मन्त्रः यथा आम्नातः तथैव अविकारात् विकारं अकृत्वैव द्विपशुकादिविकृतियागे प्रयोक्तव्यः । संख्यासु विकारः वचनोहस्तु सर्वगामित्वात् पशुद्वयादिसर्ववङ्क्रीयत्ताव्यापकत्वात् केवलं वचनं ' षड्विंशती अनयोर्वङ्क्रयः ' इतिरीत्या ऊहिष्यते । एवं संख्यासु विकारः कर्तव्यः । विकारशब्दः दशमसूत्रात् मण्डूकप्लुत्या अनुवर्तते । तस्मात् वचनोहः कर्तव्यः । इति तृतीयः पक्षः ।

**संख्या त्वेवं प्रधानं स्याद् वङ्क्रयः पुनः प्रधानम् । १३ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति मन्त्रे द्विपशुकादियागे ' षड्विंशती अनयोर्वङ्क्रयः ' इति रीत्या वचनमात्रोहः कर्तव्यः इति पक्ष उक्तः । तत्र समासवादी सिद्धान्ती आह । एवं तु वचनमात्रोहे कृते संख्या प्रधानं स्यात्, संख्याप्रधानो निर्देशः कृतः स्यात् षड्विंशतित्वगुणस्य प्राधान्येनोक्तत्वात् । तद्विशेषणत्वेन तु वङ्क्रीणामुच्चारणं भवेत् । वङ्क्रयः पुनः वङ्क्रयस्तु प्रधानमत्र । तासां हि कृत्स्नोद्धरणं कर्तव्यं ' ता अनुष्ठयोच्च्यावयतात् ' इति मन्त्रशेषात् । संख्याप्राधान्ये स्वीकृते तु न प्रकृतिवदभिधानं कृतं भवेत् । तत्र चोदको बाध्येत । तस्मात् ' द्विपञ्चाशदनयोर्वङ्क्रयः ' इतिरीत्या समस्य वचनमेव कर्तव्यम् ।

**अनाम्नातवचनमवचने नहि वङ्क्रीणां स्यान्निर्देशः । १४ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति मन्त्रे द्विपशुकादियागे ' षड्विंशती अनयोर्वङ्क्रयः ' इति वचनमात्रोहे यथाम्नात एव प्रयोगो भवति इति वचनमात्रोहवादिना उक्तं परंतु तत्पक्षे अनाम्नातवचनमपि भवति । यद्यपि प्रातिपदिकमात्रमाम्नातं तथापि वचनं अनाम्नातमेव पठितं स्यात् । तस्मात् आम्नातपाठाभिमानो व्यर्थ एव । अथ द्विवचनेन बहुवचनेन वा वङ्क्रीणामवचने सर्वासां वङ्क्रीणां निर्देशः नहि स्यात् इति तत्रापि दोष एव । तस्मात् समस्य वचनं कर्तव्यम् ।



**अभ्यासो वाऽविकारात् स्यात् । १५ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति मन्त्रे द्विपश्वादियागे ' षड्विंशती अनयोर्वङ्क्रयः ' इति वचनमात्रवादिमतं यथाम्नातवचनाभिमानपूर्वकं यदुक्तं तत्र समासवादिना वचनविपरिणामेऽपि अनाम्नातवचनापत्तिदोषः प्रदत्तः । तेन प्रसङ्गेन अभ्यासवादी पुनराह । 'षड्विंशतिः षड्विंशतिरस्यास्य वङ्क्रयः' इति अभ्यास एव कर्तव्यः न वचनोहः, न च समासवचनम् । वाशब्दः इतरपक्षव्यावृत्त्यर्थः । अविकारात् अत्र पक्षे न विकारः क्वापि भवति । आर्षः यथाम्नातपाठश्चानुग्रहीष्यते चोदकानुग्रहश्च भविष्यति । तस्मात् अविकारात् 'षड्विंशतिरस्यास्य वङ्क्रयः ' इति अस्यशब्दः अभ्यसिष्यते कृत्स्नाश्च वङ्क्रयः अभिहिता भविष्यन्ति । न चानाम्नातं किंचिदाम्नास्यते ।

**पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात् समासशब्दः स्यात् । १६ ॥**

अध्रिगुप्रैषे ' षड्विंशतिरस्य वङ्क्रयः ' इति मन्त्रः द्विपश्वादिविकृतौ ' षड्विंशतिरस्यास्य वङ्क्रयः ' इति अस्येतिपदमात्राभ्यासेन यथाम्नात एव प्रयोक्तव्यः इतिपक्षे एवं अस्येतिपदमात्रस्य अभ्यासेन प्रयोगे कृते पशुस्तु प्रधानं स्यात् न वङ्क्रयः । अभ्यासस्य तन्निमित्तत्वात् पशुनिमित्तकत्वात् । पशोः संख्यासंबन्धे अभिधित्सिते पशोः पशोः षड्विंशतिः षड्विंशतिर्वङ्क्रयो भवन्ति न कश्चित् पशुः अषड्विंशतिवङ्क्रिः इति पशुः प्राधान्येन निर्दिष्टः स्यात् । प्रकृतौ तु वङ्क्रीणामियत्ता वक्तव्या । विकृतावपि सैव चोदकेन अतिदिश्यते । ततश्च वङ्क्रय एव प्राधान्येन निर्देष्टव्याः । तेन नाभ्यासः । तस्मात् वङ्क्रीणां समासशब्दः समासस्य संकलनस्य वाचकः शब्दः स्यात् समस्य संकलय्य वचनं स्यात् । द्विपञ्चाशदनयोर्वङ्क्रयः इति द्विपशुके, अष्टसप्ततिरेषां वङ्क्रयः इति त्रिपशुके इत्यादि । न ' षड्विंशतिरस्य ' इति पदद्वयस्य अभ्यासः, न षड्विंशती अनयोः इति वचनमात्रोहः, नापि षड्विंशतिरस्यास्य इति अस्यपदमात्राभ्यासः । इति सिद्धान्तः । के.

* 'षड्विंशतिरस्य वङ्क्रयः ' इति गुणविधिरूपो मन्त्रः । बाल. पृ. ६४. * 'षड्विंशतिरित्येव ब्रूयात्' इति चतुस्त्रिंशद्व्यावृत्त्यर्थ एवकारः, न षड्विंशतिविधानार्थम् । टुप्. १०।७।२०।७३.

* षष्ठेऽध्याये ' अधिकारोऽपि यज्ञेषु कर्तुः शेषस्य चिन्त्यते ' । वा. ३।१।१।१ पृ. ६४८.

* षष्ठाधिकरणसिद्धान्तावयवसूत्रेण द्रव्यभेदस्य यागभेदासाधकतैव उपपादिता । सु. पृ. ८१२.

* षष्ठाध्यायस्य पूर्वैरध्यायैः अवसरः संगतिः । तदाह विधिविवेकः 'क्रमपर्यन्तात् परा ( अधिकारविशेषस्य ) निरूपणा ' इति । अत्र कणिका – ' एतेन ज्ञाप्यज्ञापकभावसंबन्धान्निरूप्यस्य अवसरलक्षणं संबन्धं येनाधिकारलक्षणस्य आचक्षते ते निरस्ता वेदितव्याः । पूर्वेषां अधिकारगोचरविचारद्वारेण ज्ञापकत्वात्, एतस्य ज्ञाप्यत्वात् ' इति । पृ. ३६९. * षष्ठाध्यायस्य षष्ठे पादे प्रधानयोः प्रकृतिविकृत्योः समानविधित्वं विचारितम् । कु. ३।७।१।१, * षष्ठाध्यायस्य सप्तमे पादे अङ्गप्रधानविषयं समानविधित्वं प्राधान्येन विचार्यते । ६।७।१।१.

* षष्ठाध्यायार्थः । ' अधिकारी, तस्य धर्माः प्रतिनिध्यर्थलोपने । दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः ॥ ' षष्ठाध्यायस्य प्रथमे पादे– कर्माधिकारः कर्तुरस्ति, अन्धादेर्नास्ति, स्त्रिया अस्ति, स च पत्या सह, इत्येवमादिना अधिकारी निरूपितः । द्वितीये– सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम्, दर्शपूर्णमासयोः कर्त्रैक्यनियमः, काम्यं कर्म समापनीयम्, इत्येवमादयोऽधिकारिधर्मा उक्ताः । तृतीये– द्रव्यस्य प्रतिनिधिरस्ति, देवादीनामग्न्यादीनां अधिकारिणश्च स नास्ति, इत्यादिनिरूपणम् । चतुर्थे– पदार्थलोपनं विचारितम्, ' अवत्तनाशे सति आज्येन यजेत्, इडाज्यस्य नाशे सति शेषान्न ग्राह्यम्' इत्यादिकम् । पञ्चमे– कालापराधेन

चन्द्रोदये सति अभ्युदयेष्टिः प्रायश्चित्तम्, ज्योतिष्टोमस्य एकादयो दीक्षाः, द्वादशाहस्य द्वादश दीक्षाः, इत्यादि निरूपितम्। षष्ठे– सत्राधिकारिणस्तुल्यकल्पा एव, सत्रं विप्रस्यैव, इत्येवमादिकं चिन्तितम्। सप्तमे– पित्रादिकं न देयम्, महाभूमिर्न देया, इत्येवमादिर्देयविचारः। अष्टमे– लौकिकाग्नौ उपनयनहोमः, स्थपतीष्टिस्तथैव, इत्येवमाद्यग्निविचारः कृतः। वि. प्रस्तावनाश्लोकः १८. * षष्ठाध्यायार्थः कोऽधिक्रियते इति। वा. ७।१।१।१.

* षष्ठाध्यायार्थनिरूपणम्। 'तदेवं पञ्चलक्षण्या कार्यवर्गे निरूपिते। कोऽनेनाधिक्रियेतेति षष्ठेऽध्याये निरूप्यते ॥११॥ निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम्। तस्यां निरूपितायां तु तदधीनाऽधिकारधीः ॥' १२ ॥ न ह्यनवगतेऽनुष्ठेये तच्छक्तिरवगन्तुं शक्या। तया चाधिकारनिरूपणमिति भवत्यनुष्ठेयप्रतिपादकस्याध्यायपञ्चकस्याधिकारविचारहेतुत्वम्। न चैकस्यैवाध्यायस्य हेतुत्वम्। तत्संघातस्याप्येककार्यप्रतिपादकस्य पूर्वषट्कस्येव उत्तरषट्कं प्रति तदुपपत्तेः। एकस्याप्यध्यायस्य नानानयसंघातात्मकस्य एककार्योपधानादेवैकत्वम्। तदध्यायपञ्चकस्यापि अनुष्ठेयप्रतिपादनादैक्यमापादितस्य अधिकारहेतुत्वमुपपन्नम्। तत्र प्रथमं तावदुपोद्घातत्वेनाधिकारसद्भावः प्रतिपाद्यते। सति हि तस्मिन् कस्यायमिति विचारः संभवति नान्यथेति। तत्र 'स्वर्गकामो यजेत' इति भावना भाव्याकाङ्क्षिणी समानपदोपादानलक्षणया श्रुत्योपनीतमनन्योपसर्जनं च धात्वर्थमेव पदान्तरोपनीतपुरुषविशेषणीभूतस्वर्गप्रहाणेन भाव्यत्वेन स्वीकरोति श्रुतेर्वाक्याद्बलीयस्त्वात् स्वर्गादिद्रव्येण यागं कुर्यादिति वाक्यार्थः। कामशब्दश्च कर्म कुर्वाणस्य तत्साधने तत्सिद्ध्यर्थं कामना भवत्येव इत्यनुवाद इति श्रुतिलिङ्गाभ्यां वाक्यबाधेन यागस्य प्रधानत्वान्न किंचिदनेन फलं साध्यते इति नास्त्येवाधिकार इत्युक्त्वा विधिश्रुतिबलेन सिद्धान्तः कथितः। विधिर्हि समानपदोपात्ताद्धात्वर्थाद्भावनायाः संनिकृष्टः प्रथममेव तामवरुध्य पुरुषार्थाय नयति प्रवर्तनात्मकत्वादपुरुषार्थफले च व्यापारे पुरुषस्य प्रवर्तयितुमशक्यत्वात् तेन प्रवर्तनात्मकविध्यन्वयादेव समीहितरूपे भाव्ये अपेक्षिते तद्विशेषमात्रं वाक्यादवगम्यते, तस्मिंश्चावगते समानपदोपात्तो धात्वर्थः प्रत्यासत्तेः करणतया स्वीक्रियते द्रव्यादि त्वितिकर्तव्यतया। आह– 'विधेर्भावनया योगः पूर्वं यद्यंशसंगतेः। पश्चात्संबध्यमानानां ततो न स्याद्विधेयता ॥ १३ ॥ अथ सर्वांशसंपूर्णा भावना विधिगोचरः। विधिहीना ततो न स्यात्पुरुषार्थफला क्रिया ॥' १४ ॥ यदि तावदंशत्रयान्वयात्प्रागेव केवला भावना विधीयते ततो विशिष्टभावनाविध्यधीनविधीनामंशानां पश्चात् भावनाऽन्वये सत्यपि केवलाया एव विधिसंस्पर्शान्न विधेयत्वं स्यात्। अथ तु नांशत्रयान्वयात्प्राक् भावनाया विध्यन्वयः, ततो विधिविधुरा सती धात्वर्थमेव प्रत्यासत्तेर्भाव्यमवलम्बते इति न पुरुषार्थस्य भाव्यत्वं सिध्येदिति। नैतदेवम्। 'विधिभावनयोः श्रुत्या संगतिः पूर्वमीयते। अयोग्यत्वात्तदा त्वेषा निर्वृतिं नैव विन्दति ॥ १५ ॥ संगतिप्रतिपत्तेश्च तदेवैवं प्रतीयते। यादृशैः परिपूर्णेयं भावना विधिसंगतिम् ॥ १६ ॥ लभेत तादृशैरंशैः पूरणीयेति तद्भवेत्। पुरुषार्थस्य भाव्यत्वमंशानां च विधेयता ॥' १७ ॥ प्रथमं तावदेकशब्दोपात्तयोः विधिभावनयोः श्रुत्या संबन्धोऽभिधीयते तस्यां त्ववस्थायां भावनायाः केवलाया अननुष्ठेयत्वात् प्रतीताऽपि संगतिर्नैव निष्पद्यते। अनिष्पन्नायामपि च तस्यां तत्प्रतिपत्त्या तदेवं पुरुषो निरूपयति अस्यास्तावद्विध्यन्वयेन भवितव्यम्। ततो यादृग्भिरंशैः संयुक्तेयं विध्यन्वयं भजते तादृग्भिः पूरयितव्या। न चापुरुषार्थफला तदन्वयमर्हति, तस्मात् पुरुषार्थफलेत्यध्यवसाय तद्विशेषमपेक्षमाणः समानपदस्थं धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य पदान्तरोक्तमपेक्षते। तत्र स्वर्गकामादिशब्देन तद्विशेषस्य प्रतिपत्तेस्तेन सह भावना संगच्छते, तदन्विता च करणापेक्षा सती प्रत्यासत्तिवशाद्भावार्थाधिकरणन्यायेन समानपदोपात्तं धात्वर्थं करणतया स्वीकरोति, ततः कथंभावापेक्षायां श्रुत्याद्यवगतान्यङ्गानीत्थंभावेन गृह्णाति ततः सर्वांशविशिष्टा भावना विधीयते। तदेवं प्रथममेव विध्यन्वयप्रतीतेः पुरुषार्थस्य भाव्यत्वं सिध्यति। प्रतीतस्यापि च विध्यन्वयस्यांशत्रय-



संबन्धोत्तरकालमेव निर्वृत्तेरंशानामपि विधेयत्वं सिध्यति। अतो न कश्चिद्दोष इति।

प्रकृतमनुसरामः। तदेवं विधिबलेन पुरुषार्थस्य भाव्यत्वेऽवधारिते तद्विशेषापेक्षायां कामसंबन्धावगतप्राधान्यस्य स्वर्गादेर्भाव्यत्वं पुरुषोपसर्जनस्यापि भवति न पूर्वपक्ष इव साधनत्वम्। न हि पूर्वपक्षेऽपि स्वर्गकामशब्दः पुरुषपरः किंतु स्वर्गाख्यस्य द्रव्यस्य क्रियासाधनत्वप्रतिपत्तिपरः। कथं पुनः पुरुषवचनशब्दस्य उभाभ्यामपि वादिप्रतिवादिभ्यां तत्परत्वमवधार्यते? उच्यते। पूर्वपक्षवादी तावदेवं मन्यते क्रियासामर्थ्यादेव तावत् गुणभूतः पुरुषः प्राप्तः तत्र स्वर्गकामशब्देन न कश्चित्पुरुषविशेषो राजशब्देनेव व्रीह्यादिशब्देनेव वा द्रव्यविशेषः समर्प्यते य एव हि स्वर्गकामः स एवास्वर्गकामोऽपि भवति। यदा तत्काम इति कालोपलक्षणत्वे वा स एव दोषः। तस्मान्न स्वर्गकामनाविशिष्टस्य पुरुषस्यात्र शेषत्वेनान्वयः। तत्र विशेष्यांशस्य प्राप्तत्वाद्विशेषणपरत्वं लोहितोष्णीषादिवद्भवति। तत्रापि स्वर्गकामनायाः शेषत्वेनोपदेशे अदृष्टार्थता स्यात्। न हि स्वर्गकामनायाः कर्मणि दृष्टोपकारः संभवति। गौरवं च स्वर्गविशिष्टस्य कामस्य अङ्गत्वोपदेशे विधेः स्यात्। स्वर्गस्य तु द्रव्यरूपस्य कर्मसाधनत्वेन दृष्टार्थत्वात्तन्मात्रस्य चाङ्गत्वविधाने लाघवात् द्रव्योपदेश एवायम्। कर्तृवचनस्त्वण्प्रत्ययः सह कामयतिनाऽनुवाद इति। सिद्धान्तस्तु विधिबलेनैव व्यापारस्य भावनायाः पुरुषार्थत्वमवगम्यते न ह्यस्वार्थे कर्मणि कश्चित्प्रेक्षावान् प्रवर्तते। तादर्थ्यं च तदपेक्षितोपकारसाधनत्वात्। तेन विधित एवापेक्षितोपकारसाधनद्वारेण पुरुषार्थत्वे भावनायाः समधिगते सत्युपकारविशेषापेक्षायां स्वर्गकामशब्देन पूर्वोक्तन्यायावधारितानुपपन्नपुरुषविशेषप्रतिपादकभावेन विशिष्टफलापेक्षिणः पुरुषस्य शेषित्वमभिधीयमानं विशेषणभूतस्वर्गाख्योपकारविशेषप्रतिपत्तिपरं भवति। तत एव स्वर्गकामशब्दः पक्षद्वयेऽपि न पुरुषपरः किंतु स्वर्गपरः। गुणप्रधानभावे तु विवादः। अत एवोक्तं किं स्वर्गो गुणतः कर्म प्रधानतः उत कर्म गुणतः स्वर्गः प्रधानत इति। किमिदानीं शेषित्वेन फलकामस्यान्वयः। बाढम्। कथं तर्हि 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादिषु राजादिशब्देन शेषप्रतिपादकेन कामशब्दस्य सामानाधिकरण्यम्। उच्यते। उभयोरपि कर्तृपरत्वात्। कर्तृत्वेन हि राज्ञ इव फलकामस्यान्वयः समस्त्येव। स त्वन्वयः कर्मणा पुरुषस्योपकारः कथं भवतीत्येवमर्थः 'मलिनेन स्नातव्यम्' 'क्षुधितेनाशितव्यम्' इतिवत्। यत्र हि तृतीयाश्रुत्या विस्पष्टेऽपि कर्तृत्वे अभिहिते शेषित्वमेव मलिनादेर्भवति तत्र स्वर्गकामादेः फलसमभिव्याहारकल्प्यकर्तृत्वस्य न भवतीति कुत एतत्। न खलु कर्तृत्वान्वयः शेषिभावस्य परिपन्थी सर्वकारकाणां शेषित्वसंभवः प्रयाजशेषादीनां प्रागेव दर्शितो यतः। यद्येवं कथं तर्हि द्वितीया शेषिविभक्तिः तृतीयादयस्तु शेषविभक्तय इति विशेषसिद्धिः। उच्यते। साध्यसाधनभावप्रतिपादनादुपपन्नो विशेषः। द्वितीया हि साध्यभावं प्रतिपादयति साध्यत्वं च शेषित्वप्रत्यासन्नम्। न ह्यसाध्यस्य शेषित्वं संभवति तेन तदभिधायिन्या द्वितीयया तदवगतिर्युक्तैव। तृतीयादयस्तु शेषभावप्रत्यासन्नसाधनत्वाभिधानात्तत्प्रमाणतयोच्यन्ते यत्र तु तत्प्रतिपादितसाधनभावस्यैव शेषित्वं भवति तत्र साध्यत्वमशब्दाभिहितमपि कल्पयितव्यमिति विशेषसिद्धिः। तेन कर्तृत्वान्वितयोः राजस्वाराज्यकामयोर्विधिबलेन स्वाराज्यकामस्य शेषित्वं राज्ञस्तु द्रव्यकर्मसंयोगन्यायेन साधनत्वानुगुण्यात्तच्छेषत्वमेव भवति। योऽपि कैश्चिन्नियोज्यत्वेनान्वयः फलकामस्येष्यते सोऽपि विविच्यमानः शेषित्वान्वय एव यथोक्तो भवति। इतरथा तु न कर्तृत्वान्वयाविशेषात्। तथाहि– 'नियोज्यो नाम यः कार्यमात्मीयत्वेन बुध्यते। तदीयत्वं च कार्यस्य तत्कृतिव्याप्यतात्मकम् ॥ २३ ॥ यत्कृत्या व्याप्यते यच्च ध्रुवं तत्कर्तृकं हि तत्। तत्कर्तृत्वनियोज्यत्वे शेषशेषित्वकारिते ॥' २४ ॥ स्वर्गकामस्य कर्तृत्वान्वयं पूर्वपक्षीकृत्य नियोज्यत्वेनान्वयः सिद्धान्तीक्रियते इति यस्य दर्शनं सोऽपि शेषशेषिभावव्यतिरेकेणान्वयस्य भेदं वक्तुं न क्षमते। तथाहि। यो ममेदं कार्यमिति बुध्यते स नियोज्यः ततश्च 'स्वर्गकामो यजेत' इत्यनेन

स्वर्गकामस्येदं कार्यमिति प्रतिपादयितव्यम् । स्वर्गकाम-
कृतिव्याप्यमित्यर्थः । तथा हि सत्यसौ 'ममेदं कार्यम्'
इति बुध्यते यच्च यस्य कृत्या व्याप्यते तत्तत्कर्तृकमेव
यथा भावार्थः । तस्मात् राजस्वाराज्यकामयोः कर्तृत्वेना-
न्वयात् स्वाराज्यकामस्य नियोज्यत्वं राज्ञस्तु कर्तृत्व-
मित्ययं विशेष एवं समर्थयितव्यः । कर्तृत्वेऽपि
स्वाराज्यकामस्य शेषित्वं कार्यं प्रति राज्ञस्तु शेषत्वमिति।
ननु बोद्धृत्वेन नियोज्यत्वं न शेषित्वेन किमिदानीं
कामशब्दः कामिनः कार्यं विषयावच्छिन्नं प्रति बोद्धृत्व-
मभिधत्ते स्वर्गकामबोद्धृकं यागावच्छिन्नं कार्यमिति । यद्येवं
बोद्धृत्वव्यतिरेकेण कामिनः कार्यान्वयाभावाद्यजेतेत्यनेन
योऽर्थोऽभिहितस्तमेव केवलं बुध्येत कार्यमेतदिति न तु
ममेदं कार्यमिति ममशब्दाभिधेयस्य संबन्धस्य नियोगेन
सहात्मनः कस्यचिदप्यभावात् । ततश्चानियोज्यत्वमेव ।
न हि यः कार्यमिति बुध्यते स नियोज्यः किंतु यो
ममेदं कार्यमिति बुध्यते । न च प्रवृत्तिः सिध्येत् । न
हि कार्यमित्येव कश्चित् प्रवर्तते अपि तर्हि ममेदं कार्य-
मिति । अनर्थकश्च नियोज्यप्रतिपादकः शब्दः स्यात्
अन्तरेणापि तच्छब्दमाख्यातार्थं व्युत्पन्नः स्वर्गकामो
बुध्यत एव । तत्र परिसंख्या स्यात् । स्वर्गकाम एव
व्युत्पन्नो बुध्येत नान्य इति सा चाशक्या परिसंख्याय-
मानेऽपि व्युत्पन्नानां बोधस्यानिवार्यत्वात् । पितृयज्ञादौ
च सर्वेषामेव व्युत्पन्नानां बोद्धृत्वलक्षणनियोज्यत्वसद्भावान्न
तदध्याहारः स्यात् । तस्मात् स्वर्गकामस्य ममेदं कार्य-
मिति एवंविधबोद्धृत्वलक्षणनियोज्यत्वमिच्छताऽवश्यम-
स्येदं कार्यमित्येवमेव वचनेन प्रतिपादयितव्यमिति वक्त-
व्यम् । तथा च कर्तृत्वेनैवान्वयप्रसङ्गः । यद्युच्येत सत्य-
मयमेवान्वयः तथाऽपि तु न कर्तृत्वनियोज्यत्वसंकरः
विषयभेदात्कर्तृत्वं हि भावार्थे नियोगे च नियोज्यत्व-
मिति । **'तदयुक्तं न भावार्थव्यतिरेकेण किंचन ।
कार्यं प्रसिद्धमद्यापि नियोज्यत्वे स्थिते हि तत् ॥'**
२५ ॥ एतदधिकरणसिद्ध एव हि नियोज्यान्वयः
क्रियातिरिक्तकार्याभिधानकल्पनाबीजम् । अतः प्राक्
न तत्सिद्धिरिति न विषयभेदादसंकरः शक्यतेऽभि-
धातुम् । लोके च तदभावात् 'देवदत्त गामानय'
इत्यादिषु संबोधनविभक्तिसद्भावेऽपि देवदत्तादीनां
नियोज्यत्वं न स्यात् । तस्मात् कार्यं प्रति शेषित्वमेव
नियोज्यत्वं च कर्तृत्वमित्येव वाच्यम् । यस्तु ब्रूते—
**'शेषशेषित्वभेदेन सत्यं कर्तृनियोज्यते । कृतिं
प्रति त्वसौ भेदः कार्ये तु गुणता द्वयोः ॥'**
२६ ॥ यद्यपि कर्तृत्वनियोज्यत्वयोः शेषशेषित्वभेदादेव
विशेषस्तथाऽपि न नियोगं प्रति नियोज्यस्य शेषिता,
तस्य सर्वप्रधानत्वात् । यथाऽऽह 'नियोगसिद्धौ सर्वं
तदनुगुणमिति केन नेष्यते' इति । किं तर्हि कृतिं प्रति
शेषित्वं नियोज्यत्वम् । तां च प्रति शेषत्वं कर्तृत्व-
मिति तेनात्मार्थकृतिव्याप्यं कार्यं बुध्यमानोऽपि नियोज्य
इत्युच्यते न तु कार्यमेवात्मार्थं तेन 'स्वर्गकामो यजेत'
इत्यस्य कोऽर्थः ? यागावच्छिन्नं स्वर्गकामार्थकृतिव्याप्यं
कार्यमित्यर्थः । तेन कार्यं प्रत्युभयोः कर्तृनियोज्ययोः
शेषत्वे सत्येव कृतिं प्रति शेषशेषिभावादसंकर इति ।
सोऽपि वृथैव क्लिश्यति, तथाहि — **'कृतिर्हि कार्य-
शेषत्वान्नान्यशेषत्वमश्नुते । कार्ये तच्छेषभूतेऽ-
स्यास्तद्द्वारेण भवेदिदम् ॥'** २७ ॥ न खलु
नियोगशेषभूता अभिधानत एवावगम्यमाना कृतिः
पुरुषशेषभावमनुभवितुमर्हति । अन्यार्थस्यान्यार्थताऽ-
नवकल्पनात् । यदि तु तत्कार्यं पुरुषशेषो भवेत् तत-
स्तद्द्वारेण कृतेरपि संस्काराणामिव कारकद्वारेणापूर्वशेषता
पुरुषशेषत्वं भवेन्नान्यथा । नन्वसत्यपि नियोगस्य पुरुष-
शेषत्वे फलस्य तच्छेषत्वात्तस्यापि तथैव कृत्या व्याप्य-
त्वात्तद्द्वारेण कृतेः पुरुषशेषता भविष्यतीति । का
वार्ता नैमित्तिकनिषेधाधिकारयोः । न हि तत्र फलान्तर-
मस्ति यद्द्वारेण कृतेः पुरुषशेषता भवेत् । अस्ति च
तत्रापि निमित्तवान्निषिध्यमानक्रियाप्रवृत्तश्च नियोज्यः
स कथमात्मार्थकृतिव्याप्यं कार्यं जानीयात् । तस्मात्
नियोगरूपस्यापि कार्यस्य पुरुषार्थत्वमवश्यमभ्युपेयम् ।
युक्तं चैतत् । न ह्यस्वार्थं कश्चिदपि ममेदं कार्यमित्यव-
गन्तुमर्हति । यदि नैवं फलस्यापि तर्हि न पुरुषार्थता
सिध्येत्, तस्यापि हि ममेदं कार्यमित्येतादृश्येवावगतिः ।
तस्मादकामेनापि कार्यमेव प्रति पुरुषस्य शेषित्वं
नियोज्यत्वं शेषत्वं च कर्तृत्वमित्येव विवेको भणितव्यः ।



एवं च संबोधनविभक्तिर्नियोज्ये प्रमाणमित्ययुक्तम् ।
'अग्नीदग्नीन् विहर' इत्यादिषु अग्नीदादीनां कृतिं कार्यं
वा प्रति शेषित्वाभावादशेषिणश्चानियोज्यत्वात् । आह—
**'विध्यर्थे कार्यरूपे स्याच्छेषित्वेन नियोज्यता ।
प्रवर्तनात्मकत्वे तु प्रवर्त्यस्य नियोज्यता ॥'**
२८ ॥ प्रवर्तनारसो ह्यहमिदं कुर्यामित्येवंविधान्तःसंकल्प-
मूलात्मा विधिरिति भवतां सिद्धान्तः । स च प्रवर्त्यं
भाव्यमिव भावना अपेक्षते प्रवर्त्यश्च नियोज्यः, तत्र
स्वर्गकामशब्दः किं भावनापेक्षितं भाव्यं समर्पयेत्
आहोस्विद्विध्यपेक्षितं नियोज्यं उभयपरत्वानुपपत्तेर्वैरू-
प्यापातादन्यतरेण अन्यतरसिद्धेः । न हि स्वर्गफले कर्म-
ण्यतदर्थी नियोज्यः संभवतीति फलेन नियोज्यसिद्धिः
स्वर्गकामस्य चान्यफले कर्मणि नियोज्यत्वायोगान्नि-
योज्यविशेषणफलसिद्धिः । तत्र स्वर्गकामशब्दस्य पुरुष-
वचनत्वान्नियोज्यपरतैव युक्तेति । उच्यते । **'विधेरपे-
क्षितः सत्यं नियोज्यो न त्वसौ तदा । अवधार-
यितुं शक्यः फलस्य त्वस्ति योग्यता ॥'** २९ ॥
यद्यपि फलवन्नियोज्योऽपेक्षितः तथाऽपि नासावनुष्ठेय-
वर्गावधारणात् प्रागवधारयितुं शक्यते । न हि फल-
काममात्रस्य नियोज्यत्वम् । कस्य तर्हि अनुष्ठानशक्ति-
युक्तस्य । सा चानुष्ठेयावगमाधीननिरूपणा । अङ्गप्रधान-
युक्तैव च क्रिया अनुष्ठेया तस्याश्च यथा विधिरंशत्रय-
संबन्धोत्तरकालमेव भवति न प्रथमं अयोग्यत्वात् तथा
नियोज्योऽपि । फलं तु प्रागेवांशान्तरसंबन्धात् अवगन्तुं
शक्यते इति तत्परमेवेदम् । अवगते च तस्मिन्नंशान्तरे
चावधारिते सर्वविशेषणविशिष्टायां भावनायां तत्फलकामं
तदनुष्ठानसमर्थं पुरुषं विदधद्विधिर्नियुङ्क्ते । आह च
'अङ्गप्रधानवत्यां च भावनायां युगपत्पुरुषनियोगः'
इति । किंच नियोज्यान्वयेऽपि न पुरुषपरत्वं काम-
शब्दस्य किंतु फलविशेषपरत्वमेव । तथा हि विधित
एवावगम्यते अस्ति हि कश्चिदिह व्यापारे नियोज्यः
स चासौ योग्यस्य व्यापारस्य शेषी न ह्यस्वार्थे व्यापारे
कश्चिन्नियोक्तुं शक्यते स एव शेषी योऽस्य भाव्यं
फलविशेषं भोक्तुमभिलषतीत्येवमवगते फलविशेषमात्रे
चानवगते तत्परत्वमेव स्वर्गकामशब्दस्य भवति । तत्र
किं नियोज्यत्वेन स्वार्थमभिदधत्तत्परः उत शेषित्वेन
इति चिन्तायामशक्यावगमनियोज्यपरित्यागेन शक्य-
प्रतिपत्तिशेषित्वप्रतिपादनमेव वरम् । न हि नियोज्य-
त्ववच्छेषित्वं शक्तिविशिष्टस्य अनुष्ठानोपयोगिनी हि
सा न शेषित्वोपयोगिनी, अनुष्ठातुरेव शेषित्वादशक्ताना-
मनधिकारो राजसूय इवाराज्ञः । न हि तत्र राजत्वम-
धिकारांशपाति तद्वच्छक्तेरप्यधिकाररूपशेषित्वाननुप्रवे-
शाच्छक्यते एवाङ्गनिरूपणस्य पुरस्तादेव शेषित्वं निरू-
पयितुमिति शेषित्वेनैव स्वर्गकामस्यान्वयः । स च
फलविशेषप्रतीतिपर इति तस्मात्स्वर्गादेः फलत्वेनान्वया-
त्तत्साधने कर्मणि पुरुषस्य सिद्धोऽधिकार इति तद्विशेष-
निरूपणमारब्धव्यम् । तत्र प्रधानवाक्येऽविशेषेण सर्वे-
षामधिकारावगमात् तदनुसारेण अङ्गानां विनियोगाद्यो
यच्छक्नोति कर्तुं स तत् कुर्यादिति । तद्यथा —
**'द्रवसंहतमांसानामवदानेऽवधारिते । स्रुवेणा-
वद्यतीत्येतत्सामर्थ्याद् द्रवगोचरम् ॥'** ३० ॥
तथा स्वर्गकामशब्देन सर्वेषामधिकारेऽवगते सत्यङ्ग-
विधयः समर्थगोचरा भवन्ति तस्मात्तिर्यगादीनामप्यधि-
कार इत्युक्तेऽभिधीयते । नित्यवदङ्गानामन्वयावगमात्
पाक्षिकत्वे तद्बाधप्रसङ्गात् अङ्गोपेतस्यैव फलसाधनत्वं
नान्यादृशस्य । ननु एकार्थत्वादङ्गानां व्रीहियववद्विकल्पे
सति येनकेनचिदङ्गेनापि युक्तं प्रधानं फलसाधनं स्यात् ।
मैवं वोचः । न ह्येकार्थत्वमात्रं विकल्पे हेतुः, किं तर्हि
निरपेक्षाणामेकोपकारसाधनत्वम्, न च समिदादीनामे-
कार्थत्वं परस्परनिरपेक्षैः समिदादिविधिभिः पृथगेवा-
वान्तरापूर्वाख्योपकारपरिकल्पनात् । यथाऽऽह भाष्य-
कारः "न च यत्समित्संबन्धेन क्रियते तत्तनूनपा-
त्संबन्धेन" इति । ननु च सर्वैरंशैरेक उपकारः
क्रियते इति दर्शनं तत्कथमुपकारभेदाभ्युपगमः ।
सत्यमेक उपकारः न तु तत्र नैरपेक्ष्यं यदि हि पूर्व-
प्रसिद्धमुपकारमुद्दिश्य तत्साधनत्वेन समिदादयो विधीये-
रँस्ततः सर्वेषां नैरपेक्ष्येण तत्साधनत्वावगमाद्विकल्पः
स्यात्, न त्वेतदस्ति, तादर्थ्यमात्रेण अङ्गेषु प्रधाना-
न्वितेषु पश्चादुपकारकल्पनादिति प्रागेवावेदितम् ।
तेनाष्टदोषदुष्टविकल्पपरिहारार्थं समुदिताङ्गविशिष्टप्रधान-

भावनाविधानात्सहैव सर्वेषामेकोपकारसाधनत्वेन आग्नेयादीनामिव फलसाधनत्वं समिदादीनामवगम्यते येन यत्रैकार्थ्यं न तत्र नैरपेक्ष्यं यत्र नैरपेक्ष्यं न तत्रैकार्थ्यमिति न विकल्पसंभव इति । व्रीहियवयोस्तु पुरोडाशप्रकृतित्वादेककार्ययोर्वाक्यद्वयेन निरपेक्षयोरवगमाद्युक्तो विकल्पः । तस्मात्साङ्गस्यैव फलसाधनत्वादनुष्ठानसमर्थस्यैवाधिकारः । यत्तु प्रधानवाक्ये सर्वेषामधिकारावगमात्तदनुरोधेनाङ्गानां समर्थविषयत्वमिति । तदयुक्तम्, विरोधाभावात् । न हि प्रधानवाक्येन सर्वेषामधिकारो निश्चितः, सामान्येन त्वसाववगम्यते तत्रासति विशेषप्रमाणे सर्वेषां स्यात् । अङ्गानुरोधात्तु विशेषावगमान्न सर्वेषामसौ भवति । यत्र तु प्रधानवाक्यविरोधे नैमित्तिकाधिकारे तत्र यथाशक्त्यङ्गोपसंहारो भवत्येवेति दर्शितं यथा शक्तिनिर्णये । तस्मात् तिर्यगादीनां शूद्राणामनाहिताग्नीनामसमाधेयाङ्गवैकल्यानां राजसूयादिषु च ब्राह्मणादीनामनधिकारः । अवदानं तु द्रवादीनां विशेषरूपेणैव तत्र विहितमिति न वस्तुवशेन संकोचनम् । तस्मात् '**यथाऽधिकारमङ्गानां विनियोगो न वर्ण्यते । यथाऽङ्गविनियोगं स्यादधिकारस्य वर्णनम् ॥**' ३१ ॥ रत्नमाला. पृ. १५६–१६८.

* **षष्ठान्त्यं** अधिकरणम् । 'पशुमालभेत' इति सामान्यपर्यवसितस्यापि विधेः 'छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रवर्णानुरोधेन संकोचो विधिमन्त्रयोरेकविषयत्वात् सामान्यस्य च कृत्स्नस्य छागेऽपि विभावेनाविरोधात् नियमसंभवे चानियमानुपपत्तेः षष्ठान्त्ये वक्ष्यते । सु. पृ. ५२५.

* **षष्ठाद्यन्यायः** । अयं न्यायः न्यायप्रकाशे उदाहृतः । तथाहि 'यजेत स्वर्गकामः' इत्यत्र आख्यातांशेन आर्थी भावना अभिधीयते 'भावयेत्' इति । सा च अंशत्रयमपेक्षते– १ किं भावयेत्, २ केन भावयेत्, ३ कथं भावयेदिति । तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतया अन्वेति 'स्वर्गं भावयेत्' इति । **साहस्री.** ८५०.

* **षष्ठाद्यसिद्धान्तन्यायः** । पशुकामशब्दस्य फलपरत्वेनावधारितस्य उपादानाङ्गत्वप्राप्त( ? )पशुकामानुवादकत्वायोगात् फलत्वेन पशून् कामयमानः पशुकामशब्देन वाच्यः षष्ठाद्यसिद्धान्तन्यायेन । सु. पृ. ४२१.

* **षष्ठी** अप्राणिनः पञ्चम्यर्थे, क्वचित् तृतीयार्थे, द्वितीयार्थे वा भवति । **भा.** ४।२।१।३. **मीको.** पृ. ५३८ 'अप्राणिनः षष्ठी' इति बिन्दौ द्रष्टव्यम् । *षष्ठी गुणसंबन्धविभक्तिः । **वा.** ३।१।६।१२ पृ. ६८७. * षष्ठी चितिः नाम एकचितिक एव प्रयोगः साग्निचित्यप्रयोगोत्तरभावी आर्थवादिकफलको नैमत्तिकः प्रयोगान्तरमेव न तु षट्चितिकः प्रयोगः । **भा.** ४।४।७।१४–१८. * षष्ठी ( मणिगता ) । 'ज्ञोऽविदर्थस्य करणे' ( पा० ६।३।५१ ) ज्ञानभिन्नार्थकजानातिसमभिव्याहारे करणत्वे षष्ठी । 'सर्पिषो जानीते' सर्पिषा उपायेन भक्षयति इत्यर्थः ॥ 'अधीगर्थदयेशां कर्मणि' ( पा० २।३।५२ ) स्मृत्यर्थकदयेशधातुसमभिव्याहारे कर्मत्वे षष्ठी । मातुः स्मरति, सुवर्णानां दयते, दिशामीष्टे ॥ 'कृञः प्रतियत्ने' ( पा० २।३।५३ ) सतो गुणान्तराधानं प्रतियत्नः । कर्पूरेण उदकस्य उपस्कुरुते ॥ 'रुजार्थानां भाववचनानामज्वरेः' ( पा० २।३।५४ ) पीडार्थकज्वरभिन्नधात्वर्थकर्तृवाचकपदसमभिव्याहारे । दुष्कर्मणो रोगस्य रुजा ॥ 'आशिषि नाथः' ( पा० २।३।५५) आशीरर्थकनाथधातुसमभिव्याहारे कर्मणि । राज्ञो नाथते ॥ 'जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम्' ( पा० २।३।५६ ) हिंसार्थकस्य जासधातोः, व्यस्तसमस्तनिप्रपूर्वकहन्धातोः, नाट-क्राथ-धात्वोश्च समभिव्याहारे कर्मत्वे । चौरस्य उज्जासते, चौरस्य निहन्ति प्रहन्ति प्रणिहन्ति, नाटयति, क्राथयति, पिनष्टि ॥ 'व्यवहृपणोः समर्थयोः' ( पा० २।३।५७ ) समानद्रव्यकव्यवहारपणार्थकयोः धात्वोः समभिव्याहारे करणे । शतस्य व्यवहरति, शतस्य पणते । व्यवहारः ऋणादानम् । पणो द्यूतम् ॥ 'दिवस्तदर्थस्य' ( पा०२।३।५८ ) व्यवहारपणार्थकदीव्यतेः समभिव्याहारे । शतस्य दीव्यति ॥ 'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने' ( पा० २।३।६१ ) प्रेष्यपद–ब्रूहिपद–सम-



भिव्याहृतहविर्वाचकपदे कर्मत्वे । मेदसः प्रेष्य, मेदसोऽनुब्रूहि । हविषः प्रेष्य, हविषोऽनुब्रूहि ॥ 'यजेश्च करणे' ( पा० २।३।६३ ) यजिसमभिव्याहृतहविर्वाचकपदे । सोमस्य यजति ॥ 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' ( पा० २।३।६४ ) सुच्कृत्वसुच्प्रत्ययान्तसंख्यावाचकपदसमभिव्याहृतक्रियापदसमभिव्याहृतकालवाचकपदे अधिकरणत्वे षष्ठी । द्विरह्नो भुङ्क्ते । द्विसंख्याकं अहरधिकरणकं भोजनं इत्यर्थः ॥ 'कर्तृकर्मणोः कृति' ( पा० २।३।६५ ) कृदन्तपदसमभिव्याहृतकर्तृकर्मवाचकयोः । कृष्णस्य कृतिः । भारतस्य श्रवणम् ॥ 'उभयप्राप्तौ कर्मणि' ( पा० २।३।६६ ) कृत्समभिव्याहृतयोः कर्तृकर्मणोः कर्मण्येव । गवां दोहः अगोपेन ॥ 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' ( पा० २।३।६९) लादेशयोः शतृशानचोः उप्रत्यय–उकप्रत्यय–अव्यय–निष्ठाप्रत्यय–खल्प्रत्यय–समानार्थप्रत्ययानां तृन्प्रत्याहारोक्तशानजादीनां समभिव्याहारे कर्तृकर्मणोः षष्ठी न । अरिं जिगीषन् जिगीषमाणः । पपिवान् सोमं पपिश्च । सोमं चिकीर्षुः । दैत्यान् घातुको हरिः । अरिं जित्वा । सोमं भक्षितवान् ॥ 'अकेनोर्भविष्यदाधमर्ण्ययोः' (पा० २।३।७०) भोजका ओदनं गच्छन्ति ॥ 'कृत्यानां कर्तरि वा' ( पा० २।३।७१ ) कृत्सयोगात् नित्यप्राप्तषष्ठ्याः कर्तरि विकल्पः । भवतः कर्तव्यम्, भवता कर्तव्यम् । इदं सूत्रं तृतीयाप्रतिप्रसवफलम् ॥ 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' ( पा० २।३।७२ ) तुलोपमाभिन्न–सदृशार्थक–पदसमभिव्याहारे उपमानत्वादिसंबन्धे उपमेयोत्तरप्राप्तषष्ठ्या तृतीयाविधिः । यथा मुखस्य तुल्यश्चन्द्रः मुखेन वा इति । अत्र तृतीयाया उपमानत्वादौ लक्षणा इति केचित् । आनुशासनिकी शक्तिः इत्यन्ये ॥ 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' ( पा० २।३।७३ ) आयुष्यादि–पदकरणकाशीरर्थक–लिङादिसमभिव्याहारे संबन्धप्राप्तषष्ठी चतुर्थी अपि कल्पते । देवदत्तस्य आयुष्यं देवदत्ताय आयुष्यं भूयात् इत्यादि ।

सर्वत्र षष्ठ्याः संबन्धमात्रवाचकतया संबन्धप्रकारको बोधः । कर्तृत्वकर्मत्वादिबोधस्तु लक्षणयैव अनुशासनवशात् । अन्यत्र लक्षणाऽपि नास्ति इति तत्त्वम् । **मणि.** पृ. १२६–१२८. * षष्ठी 'षष्ठी शेषे' ( पा० २।३।५० ) इति सूत्रेण विहिता न कारकविभक्तिः । शेषे उक्तकर्मत्वादिद्वितीयाद्यर्थभिन्ने संबन्धमात्रे षष्ठी इति सूत्रार्थः । एवं च संबन्धे षष्ठ्याः शक्तिः । संबन्धत्वं शक्यतावच्छेदकम् । 'चैत्रस्य धनं' इत्यादौ संबन्धप्रकारक एव बोधः । स्वत्वस्वामित्वविषयत्वसाध्यत्वजनकत्वादिविशेषे तु लक्षणा । एवं 'सर्पिषो जानीते' 'मातुः स्मरति' इत्यादौ संबन्धत्वप्रकारक एव बोधः । तात्पर्यग्रहाच्च विशेषबोधो लक्षणया मानसो वा इति **जीर्णाः** ।

**नव्यास्तु** षष्ठ्याः स्वत्वादौ शक्तिः । 'चैत्रस्य धनं' इत्यत्र निरूपितत्वस्वत्वादिप्रकारक एव बोधः । एवं 'चैत्रस्य न धनं' इत्यत्र 'चैत्रनिरूपितस्वत्वाभाववत् धनं' इति बोधः । स्वामित्वं वा षष्ठ्यर्थः । 'चैत्रनिष्ठस्वामित्वनिरूपकं धनं' इति बोधः । 'चैत्रस्य न धनं' इत्यादौ 'चैत्रनिष्ठस्वामित्वनिरूपकत्वाभाववत् धनं' इति बोधः । एवं 'घटस्याभावः' इत्यादौ प्रतियोगित्वादिकम्, 'घटप्रतियोगिकोऽभावः' इति बोधः । एवं स्वत्वादिविशेषे आनुशासनिकीं शक्तिमाहुः । **तन्न** । नानाशक्तिकल्पने गौरवात् । अनुशासनानां लाक्षणिकत्वेनापि उपपत्तेः । समभिव्याहारविशेषे लक्षणानियमार्थानि च अनुशासनानि । तेन अन्यत्र लक्षणयाऽपि न प्रयोगः । **मणि.** पृ. १२५.

**भाट्टरहस्यम्**– षष्ठ्यर्थोऽपि भावनायामेव अन्वेति । स च 'षष्ठी शेषे' ( पा० २।३।५० ) इति सूत्रानुशिष्टः । तथाहि, उक्तादन्यः शेषः । उक्तानि च पूर्वं कर्मत्वादीनि । तद्भिन्नाश्च सजातीयत्वात् स्वस्वामिभावादयः संबन्धाः । तेषु षष्ठी स्यात् इति सूत्रार्थः । तेषु च न प्रत्येकं शक्तिः अनेकशक्तिकल्पनापत्तेः । अपितु संबन्धत्वेन । संबन्धत्वं च संबद्धौ इतिप्रतीतिसाक्षिको धर्मविशेषः । एवं च शक्यतावच्छेदकस्य संबन्धत्वस्य कर्तृत्वकर्मत्वादिषु अपि सत्त्वात् तेषामपि संबन्धेन रूपेण षष्ठ्यर्थता अस्त्येव । अत एव 'सतां गतं' 'सर्पिषो जानीते' 'मातुः स्मरति' 'एधः दकस्य उपस्कुरुते'

'शंभोर्भजे चरणयोः' 'फलानां तृप्तः' इत्यादयः प्रयोगाः । अत एव उक्तशक्यतावच्छेदकातिरिक्त-शक्यतावच्छेदकावच्छिन्नसंबन्धा एव शेषपदार्थः । स च यथैव 'राज्ञः पुरुषः' इत्यादौ स्वस्वामिभावः, तथैव 'सतां गतं' इत्यादौ कर्तृत्वादिकमपि । संबन्धत्वं च सर्वत्र शक्यतावच्छेदकम् । अत एव कर्तृत्वत्वादिना तद्बोधे लक्षणा इति वक्ष्यते । न चैवं संबन्धेन रूपेण संबन्धानां शक्यत्वे 'एकशतं षष्ठ्यर्थाः' इति महा-भाष्यकारीयवचनानुपपत्तिः । पार्थशब्दस्य अर्जुन इव प्रचुरप्रयोगेण तत्संबन्धग्रहणे संभवति अन्यसंबन्धग्रहणस्य अन्याय्यत्वं इति सूचनार्थत्वात् । तदिह 'राज्ञः पुरुषः' इत्यत्र सेवकत्वं षष्ठ्यर्थः । तत्र निरूपकता-संसर्गेण राज्ञः अन्वयः । आधेयत्वसंसर्गेण च तस्य पुरुषे अन्वयः । 'सर्पिषो जानीते' इत्यत्र वक्ष्यमाणरीत्या संबन्धत्वेन करणत्वं षष्ठ्यर्थः । तस्य धात्वर्थे, इत्येवं तत्रतत्र योग्यतानुसारेण समभिव्याहृतमात्रे एवान्वयः इति नात्र कारकविभक्तिवत् क्रियान्वयः इति तार्किकाः **शाब्दिका मीमांसकाश्च ।**

वस्तुतस्तु योग्यताद्यनुसारेण साक्षात्परंपरासाधारण्येन लिङ्गानन्वयिपदजन्योपस्थितिः कारणं इत्येव कार्यकारण-भावेन अन्वयोपपत्तेः । इतरथा षष्ठीभिन्नसुबर्थस्थले एका व्युत्पत्तिः, षष्ठीस्थले चान्या, इति व्युत्पत्तिद्वय-कल्पनाऽऽपत्तेः । इष्यते च परैरपि 'स्थाल्यां तण्डुलं पचति' 'गृहे चैत्रः पचति' इत्यादौ सप्तम्यर्थस्य तण्डुलचैत्रद्वारकः क्रियान्वयः, न तु तण्डुलादावेव । ततश्च राज्ञः षष्ठ्यर्थे तस्य च पुरुषद्वारकः अस्त्यादि-क्रियायां इत्येव युक्तमुत्पश्यामः ।

एवं करणत्वादिकमपि यत्र संबन्धत्वेन षष्ठ्यर्थः, तत्र धात्वर्थद्वारकः । अत एव तत्प्रतिपादकं 'ज्ञोऽविदर्थस्य करणे' (पा० २।३।५१) इति सूत्रम् । अत्र भाष्य-व्याख्यानात् शेष इत्यनुवर्तते । तेन ज्ञानभिन्नार्थस्य जानातेर्धातोः करणे शेषत्वेन विवक्षिते षष्ठी स्यात् इति सूत्रार्थः । सर्पिषो जानीते, सर्पिषो ज्ञानम् । अत्र लक्षणया ज्ञानपूर्विका प्रवृत्तिर्धात्वर्थः । तस्यां यत्र सर्पिषः करणत्वमेव शेषत्वेन विवक्षितं तदा सर्पिष इति षष्ठी । करणत्वत्वेन करणत्वविवक्षायां तृतीयैव । ज्ञाना-र्थके तु विषयत्वार्थिका द्वितीया । तस्य संबन्धत्वेन बोधे तु षष्ठ्येव । न चैवम्, 'शेषे षष्ठी' इत्यनेनैव सिद्धेः पृथक्सूत्रवैयर्थ्यम्, षष्ठीपुनर्विधिः षष्ठ्येव, न तु लुक् इत्येवंपरः । तेन तद्व्याप्यः समासो निवर्तते । ततश्च संबन्धत्वेन उक्तधात्वर्थकरणत्वविवक्षायां न षष्ठी-समासः । एवं उत्तरेष्वपि सप्तसु सूत्रेषु षष्ठीपुनर्विधिः 'मातुः स्मरणं' इत्यादौ शेषषष्ठीसमासनिषेधार्थ एव । तत्र हि 'अधीगर्थदयेशां कर्मणि' (पा० २।३।५२) इति सूत्रात् एषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् मातुरध्येति, मातुः स्मरति, मातुः स्मरणम्, सर्पिषो दयते, सर्पिषो दयनम्, जगतामिष्टे, जगता-मीशनं इत्यादौ षष्ठी विहिता । अधीगर्थाः (अधि + इक्) स्मृत्यर्थाः । अत्र शेषत्वादेव षष्ठीप्राप्तौ पुनः षष्ठीविधिः षष्ठीसमासप्रतिषेधार्थः । न चैवं 'हरिस्मरणं' इतिप्रयोगानुपपत्तिः । तस्य कृद्योगे कर्मत्वेन कर्मत्व-बोधकषष्ठीसमासत्वेन उपपत्तेः । तत्फलं च कारकपूर्व-कत्वात् कृदुत्तरपदप्रकृतिस्वरः । शेषषष्ठीसमासत्वे अन्तोदात्तत्वापत्तेः । तथा च स्वरार्था इयमष्टसूत्री इति फलितम् ।

किंच यत्र 'मातुः स्मृतं' इत्यादौ 'न लोकाव्यय०' (पा० २।३।६९) इत्यनेन कर्मषष्ठी प्रतिषिद्धा तत्र शेषषष्ठ्या समासप्रसक्तौ तन्निषेधार्थं षष्ठीपुनर्विधिः ।

एवं 'कृञः प्रतियत्ने' (पा० २।३।५३) इति सूत्रात् गुणाधाने विद्यमानस्य करोतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् 'एधः दकस्योप-स्कुरुते' 'एधः दकस्योपस्करणं' इत्यत्र षष्ठी । प्रयोजनं पूर्ववत् ।

एवं 'रुजार्थानां भाववचनानामज्वरेः' (पा० २।३।५४) इति सूत्रात् रुजा व्याधिः, तदर्थानां भाव एव यत्र कर्ता तेषां ज्वरिवर्जितानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् 'चोरस्य रुजति रोगः' 'चोरस्य रोगस्य रुजा' इत्यादौ चोरे षष्ठी । अत्र रोगा-ख्यव्याधेरेव व्याध्यन्तरं प्रति कर्तृत्वात् भावकर्तृत्वम् ।



तस्य कर्मणि चोरे संबन्धत्वेन विवक्षिते कर्मत्वे षष्ठी । कर्मत्वत्वेन विवक्षिते तु तिङन्ते द्वितीयैव, कृदन्ते तु षष्ठीसमासोऽपि । संबन्धत्वेन विवक्षायां न षष्ठीसमास इत्यादि पूर्ववत् । अत्र 'अज्वरिसंताप्योरिति वाच्यम्' इति वार्तिकात् 'रोगस्य चौरज्वरः' 'चौरसंतापः' इत्यादौ समासो भवत्येव । भावकर्तृकत्वग्रहणाच्च 'नद्याः कूलरुजा' 'नदी कूलं रुजति' इत्यादिः प्रयोगः ।

एवं 'आशिषि नाथः' (पा० २।३।५५) इति सूत्रात् आशीरर्थकस्य नाथतेः कर्मणि शेषत्वेन विव-क्षिते षष्ठी स्यात् इत्यर्थकात् 'सर्पिषो नाथते' 'सर्पिषो नाथनं' इत्यादौ षष्ठी । 'सर्पिस्ते बहुलं भूयात् इत्याशास्ते' इत्यर्थः । आशीरर्थकत्वाभावे तु माणवकनाथनं इति समासः ।

एवं 'जासि–निप्रहण–नाट–क्राथ–पिषां हिंसायाम्' (पा० २।३।५६) इति सूत्रात् हिंसार्थानामेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् 'चौरस्य उज्जासनम्' । निप्राभ्यां उपसर्गाभ्यां समस्ताभ्यां व्यस्ताभ्यां वा युक्तः हनः निप्रहणः । 'चौरस्य निप्रह-णनम्, प्रणिहननं निहननं प्रहणनं वा' 'चौरस्य उन्नाटनं' 'चौरस्य क्राथनं' 'चौरस्य पेषणं' इत्यादौ षष्ठी । हिंसात्वाभावे तु धानापेषणं इति समासः पूर्ववत् ।

एवं 'व्यवहृपणोः समर्थयोः' (पा० २।३।५७) इति सूत्रात् एकार्थयोरनयोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् 'शतस्य व्यवहरणं' 'शतस्य पणनं' इत्यादौ षष्ठी । अत्र हि व्यवहृधातोः पणनापर-पर्यायं द्यूतमपि अर्थः । पणधातोश्च क्रयविक्रयव्यवहारो-ऽपि । अतः द्वयोस्तुल्यार्थकत्वम् । अर्थान्तरत्वे तु षष्ठीविध्यभावात् न समासप्रतिषेधः । शलाकाव्यवहारः गणना इत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः ।

एवं 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (पा० २।३।६४) इति सूत्रात् कृत्वोऽर्थानां शब्दानां प्रयोगे कालवाचिनि अधिकरणे शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् 'पञ्चकृत्वः अह्नो भुङ्क्ते' 'पञ्चकृत्वः अह्नो भोजनं' 'द्विरह्नो भोजनं' इत्यत्र षष्ठी । अत्र षट्सूत्र्या (५८–६३) विच्छिन्नमपि शेषग्रहणं व्याख्यानतो मण्डूकप्लुत्या अनुवर्तते । अधिकरणत्वत्वेन विवक्षायां तु 'द्विरहनि भुङ्क्ते' इति सप्तम्येव । तत् सिद्धं इयमष्टसूत्री (२।३।५१–५७,६४) शेषत्वविवक्षायां समासप्रतिषेधार्था इति ।

यानि तु 'षष्ठी हेतुप्रयोगे' (पा० २।३।२६) इत्यादीनि अनुशासनानि तानि लाक्षणिकानुशासनानि । तथाहि, 'षष्ठी हेतुप्रयोगे' इति सूत्रात् हेतुशब्द-प्रयोगे हेतुत्वेन हेतौ बोध्ये षष्ठी स्यात् इत्यर्थकात् 'अन्नस्य हेतोर्वसति' इत्यत्र षष्ठी । अत्र हेतुत्वत्वेन हेतुत्वं लक्षणया षष्ठ्यर्थः । हेतुशब्दप्रयोगः तात्पर्यग्राहकः । तदुत्तरषष्ठ्याः सामानाधिकरण्यसिद्ध्यर्थे स एवार्थः । अन्नहेतुकवासाश्रयत्वं इत्यादिः शाब्दबोधः । अत्र हेतु-शब्दप्रयोगाभावे तत्त्वेन हेतुत्वविवक्षायां पूर्वोक्तविषया तृतीयैव । शेषत्वेन हेतुत्वविवक्षायां तु हेतुशब्दप्रयोगा-भावेऽपि शक्त्यैव षष्ठ्यन्तः प्रयोगः ।

सर्वनाम्नस्तु हेतुशब्दप्रयोगे हेतुत्वत्वेन हेतुत्वविव-क्षायां षष्ठी वैकल्पिकी । 'सर्वनाम्नस्तृतीया च' (पा० २।३।२७) इति सूत्रात् केन हेतुना वसति, कस्य हेतो-र्वसति । तृतीया इत्युपलक्षणं 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वार्तिकात् । तेन को हेतुः वसति चैत्रः, कं हेतुं वसति, कस्मै हेतवे वसति, कस्मा-द्धेतोः वसति, कस्मिन् हेतौ वसति इत्यादयोऽपि प्रयोगाः साधवः । अत्र सर्वत्र हेतुत्वमेव विभक्त्यर्थः अनुशासन-बलात् । कीदृशहेतुकं वासाश्रयत्वं इत्यादिरेव च शाब्द-बोधः । वसति चैत्रः इत्यत्र को हेतुः, कं हेतुं उररीकृत्य वसति इत्यादियोग्यपदान्तराध्याहारेण व्याख्याने तु विभक्तीनां तत्तदर्थकत्वमेव इति ध्येयम् । एवं 'किं निमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्ताय' इत्यादि । किं कारणं वसति, केन कारणेन इत्यादि । निमित्तादिशब्दानां एकार्थकत्वेऽपि पृथगु-पादानं उपलक्षणार्थम्, तेन प्रयोजनादिपदप्रयोगेऽपि सर्वा विभक्तयो भवन्ति । असर्वनाम्नोऽपि हेत्वादिशब्द-प्रयोगे सर्वा विभक्तयः 'अन्नाद्धेतोः वसति, अन्नेन

कारणेन वसति’। वृत्तिकारेण ‘सर्वनाम्नस्तृतीया च’ (पा० २।३।२७) इति सूत्रे पठितस्यापि अस्य वार्तिकस्य ‘हेतौ’ (पा० २।३।२३) इति सूत्रे भाष्यकारेण पाठात्। प्रायग्रहणं असर्वनाम्नः प्रथमाद्वितीये न स्तः इत्येतदर्थकं तेन ‘अन्नं कारणं वसति’ इत्यप्रयोगः। (वसति इत्यत्र अन्नं कारणं इत्यध्याहारेण तु प्रयोगः स्यादेव। के.)।

एवं ‘षष्ठ्यतसर्थप्रत्ययेन’ (पा० २।३।३०) इति सूत्रात् अतसर्थप्रत्ययः अतसुच् – प्रत्ययादिः ‘दक्षिणोत्तराभ्यामतसुच्’ (पा० ५।३।२८) इत्यादिसूत्रविहितः। तेन योगे षष्ठी इत्यर्थकात् ‘ग्रामस्य दक्षिणतः, उत्तरतः, ग्रामस्योपरि, ग्रामस्योपरिष्टात्’ इत्यादौ षष्ठी। अत्र प्रतियोगित्वं षष्ठ्यर्थः (ग्रामप्रतियोगिकदक्षिणदिशि इति शाब्दबोधः। के.)। तत्त्वेन बोधार्थं पृथगनुशासनम्, न तु पञ्चम्यपवादार्थम्, ‘विन्ध्यात् दक्षिणतः’ इत्यादिप्रयोगस्य दृष्टत्वात्। अत एव ‘ततः पश्चात् स्रंसते’ इत्यादिः भाष्यप्रयोगः सामान्येन ज्ञापक इति केचित्। तन्न। ‘प्रकृतायाः पञ्चम्याः द्वितीयाषष्ठ्यौ बाधिके भविष्यतः’ इति ‘पृथग्विना०’ (पा० २।३।३२) इतिसूत्रभाष्यविरोधात्। अतः पञ्चम्यपवादार्थमपि एतदनुशासनं ‘विन्ध्यात्’ इत्यादिप्रयोगस्तु अपप्रयोगः। ज्ञापकं च पश्चाद्योगमात्रविषयम्। श्रुतस्यैव चात्र अतसुच्प्रत्ययस्य निमित्तता न तु लुप्तस्य, ‘प्राग् ग्रामात्’ इत्यादौ प्रत्ययलोपे षष्ठ्यभावस्य भाष्यकैयटसिद्धत्वात्।

एवं ‘एनपा द्वितीया’ (पा० २।३।३१) इति सूत्रात् एनबन्तेन योगे द्वितीया, योगविभागात् षष्ठी च इत्यर्थकात् ‘दक्षिणेन ग्रामं ग्रामस्य वा’ इत्यत्र षष्ठी। प्रतियोगित्वं विभक्तिद्वयार्थः। पञ्चम्यपवादः पूर्वलिखितभाष्यात्। अत एव ‘तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं’ इत्यादिः अपप्रयोगः। हरदत्तादयोऽप्येवम्।

एवं ‘दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्’ (पा० २।३।३४) इति सूत्रात् एतैर्योगे षष्ठी वा स्यात् पञ्चमी वा इत्यर्थकात् ‘दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा’ इत्यत्र पञ्चम्या सह वैकल्पिकी षष्ठी। अत्र प्रतियोगित्वमेव तदर्थः।

एवं ‘दिवस्तदर्थस्य’ (पा० २।३।५८) इति सूत्रात् ‘व्यवहृपणोः समर्थयोः’ इतिपूर्वसूत्रोक्तपरामर्शितच्छब्दबलेन द्यूताद्यर्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि कर्मत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् ‘शतस्य दीव्यति’ इत्यादौ षष्ठी। स्तुत्यादिरूपार्थान्तरपरत्वे तु ‘ब्राह्मणं दीव्यति’ इति द्वितीयैव। अत्र न शेषत्वेन कर्मत्वविवक्षा। अन्यथा दिवेः पूर्वसूत्रे एव पाठापत्तौ पृथक्सूत्रारम्भवैयर्थ्यात्। दिवेः उपसर्गयोगे तु विकल्पेन षष्ठी ‘विभाषोपसर्गे’ (पा० २।३।५९) इति सूत्रात्। ‘शतस्य शतं वा प्रतिदीव्यति’। इदं च लोके। ब्राह्मणे तु ‘द्वितीया ब्राह्मणे’ (पा० २।३।६०) इति सूत्रात् छन्दसि उपसर्गयोगाभावेऽपि द्वितीयैव ‘गामस्य तदहः सभायां दीव्येयुः’ इत्यादौ।

एवं ‘प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने’ (पा० २।३।६१) इति सूत्रात् देवतासंप्रदानेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणः हविर्विशेषस्य वाचकात् षष्ठी इत्यर्थकात् ‘अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि, प्रेष्य वा’ इत्यत्र कर्मत्वेन विवक्षिते षष्ठी। अत्र शेषग्रहणं न संबध्यते, प्रेष्य इति लोडन्तेन समासस्य अप्रसक्तत्वेन तन्निषेधार्थत्वानुपपत्तेः। ‘हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः’ इति वार्तिकात् प्रस्थितत्वेन विशेषणे द्वितीयैव। (अत्र ‘हविषोऽप्रस्थितस्य’ इति वार्तिकम्। हविषः अप्रस्थितस्येति वक्तव्यं इति भाष्यम्। यदा प्रस्थितत्वेन हविर्विशिष्यते तदा षष्ठी न भवतीत्यर्थः इति कैयटः। भाट्टरहस्यपठितं तु **मनोरमायां** वर्तते। के.) अत एव ‘इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य’ इति प्रयोगः। इदं च लोकवेदसाधारणम्, उत्तरत्र छन्दोग्रहणात्।

यत्तु ‘चतुर्थ्यर्थे बहुलं छन्दसि’ (पा० २।३।६२) इत्यनुशासनं ‘दार्वाघाटस्ते वनस्पतीनाम्’ इत्यादौ वनस्पतिभ्य इत्यर्थे षष्ठीविधायकं तत् व्यत्ययवचनादेव सिद्धेः प्रत्याख्यातम्। एवं ‘करणे यजः’ (पा०



२।३।६३) इति सूत्रमपि ‘छन्दसि बहुलं’ इत्यनुवृत्त्या घृतस्य घृतेन वा यजेत इत्यादौ षष्ठीविधायकं प्रत्याख्यातमेव (इदं असंगतत्वाच्चिन्त्यम्। के.)।

एवं ‘कर्तृकर्मणोः कृति’ (पा० २।३।६५) इति सूत्रात् कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् इत्यर्थकात् ‘कृष्णस्य कृतिः, जगतः कर्ता कृष्णः’ इत्यादौ षष्ठी। अत्र कर्तृत्वत्वेन कर्तृत्वम्, कर्मत्वत्वेन कर्मत्वं च लक्षणया षष्ठ्यर्थः न तु शेषत्वेन। व्याख्यानवशेन शेष इत्यस्य निवृत्तिप्रतीतेः। अत्रोभयत्र कर्तृत्वकर्मत्वयोः कृदुपात्तकृतावेव अन्वयः। ओदनस्य पक्ता इत्यादिवत्, न तु धात्वर्थे प्रधानक्रियायां वा। एतच्च अनुपदमेव स्पष्टीकरिष्यते। धातुस्तु साधुत्वार्थः। ओदनस्य पाकः इत्यादौ तु धात्वर्थस्य कृदर्थकृतावेव अन्वयः इत्यपि वक्ष्यते। न चैवमपि सूत्रे कृद्ग्रहणवैयर्थ्यं ‘न लोकाव्यय०’ इति वक्ष्यमाणसूत्रेण लादेशरूपतिङादियोगे षष्ठीनिषेधेन परिशेषादेव कृद्योगे षष्ठीविधिप्राप्तेः इति वाच्यम्। ‘कृतपूर्वी कटं’ इत्यादौ पूर्वी इति तद्धितयोगे षष्ठीव्यावृत्त्यर्थं तदुपपत्तेः। अत्र ‘कृतः पूर्वं कटोऽनेन’ इति कृतपूर्वी देवदत्तः ‘सपूर्वाच्च’ (पा० ५।२।८७) इति सूत्रेण सोपपदात् पूर्वशब्दात् कर्त्रर्थे इनिप्रत्ययविधानात्। अतस्तत्र षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणमर्थवत्।

ननु एवं न तत्र द्वितीयाऽपि निष्ठाप्रत्ययेन कर्मकारकस्य अभिहितत्वेन तस्याप्राप्तेः। अत एव अनभिहिताधिकारविहितषष्ठ्या अपि तत्र अप्रसक्तत्वेन न तद्व्यावृत्त्यर्थं कृद्ग्रहणं वैयर्थ्याच्च। किंच कृतादिशब्दस्य कटादिरूपविशेषणवत्त्वेन पूर्वशब्देन समासानुपपत्तिः। ‘सविशेषणानां वृत्तिर्नेष्यते’ इति निषेधात्। इति चेत्। अत्र **वैयाकरणनव्याः**। पूर्वं कृतशब्दः कर्मविशेषरूपकटान्वयं अप्रतिपद्यमान एव कर्मसामान्यवाचिक्तप्रत्ययान्ततया भावार्थकक्तप्रत्ययान्ततया वा व्युत्पादितः पूर्वपदेन समस्यते इति न तावत् समासानुपपत्तिः। पश्चाच्च ‘कटं कृतवान्’ इतिवत् ‘कटं कृतपूर्वी’ इत्यत्रापि द्वितीयान्तस्य कृञर्थे अन्वयः। क्तप्रत्ययेन तस्य अनभिधानाच्च द्वितीयोपपत्तिः इति। तन्न। तथात्वे राजपदस्यापि ऋद्धपदापेक्षस्य पुरुषपदेन समासे कृते पश्चादेव तस्मिन् ऋद्धपदान्वयापत्तेः क्तप्रत्ययस्य कर्मसामान्याभिधानमात्रेण कटानभिधानात् द्वितीयान्तत्वोपपादने ‘ओदनः पच्यतेतमां’ ‘गुरुर्धरित्री क्रियतेतरां त्वया’ इत्यादावपि द्वितीयान्तत्वापत्तेश्च। क्तप्रत्ययस्य भावार्थकत्वे कृञः अविवक्षितकर्मकतया पश्चादपि कर्मान्वयानुपपत्तेश्च। इतरथा ‘ओदनः पच्यते’ इति भावाख्याते द्वितीयापत्तेः (!)। अनयैव दिशा ‘ओदनं पाचकतमः’ ‘ओदनं पाकगृह्यं’ इत्यादिप्रयोगाणामपि आपत्तेश्च। सविशेषणत्वेन षष्ठ्यन्तप्रयोगस्यापि अनापत्तेश्च। अतः कटं इत्यस्य कथमपि न धात्वर्थान्वयः संभवी। एतेन कारकाणां धात्वर्थान्वयवादिनो नैयायिका अपि परास्ताः।

**अतोऽत्र एवं समाधेयम्**। न कटस्य कृञर्थे अन्वयः। धात्वर्थान्वयस्य कारकाणां अव्युत्पन्नत्वात्। नापि क्तार्थे प्रथमान्तत्वापत्तेः, असमर्थसमासापत्तेश्च। अपितु तद्धितार्थे एव। कर्तृत्वं हि अत्र तद्धितार्थः। अतश्च पाचकादिकृत्सु इव विशेषणत्वेन स्वातन्त्र्येण वा लक्षणया कृतिरपि तद्धितार्थः। तस्यां च लिङ्गानन्वयिन्यां विशेष्यवाचकपदोपस्थाप्यायां वा अन्वयः। व्युत्पत्त्यन्तराभावेन गौरवाभावात्। तद्वाचकपदे कर्मकारकस्य अनुक्तत्वेन प्रथमाया अप्रसक्तेः। विशेष्यवाचकपदोपस्थाप्यायां अन्वयाच्च ओदनस्य पाचक इतिवत् न समासभङ्गः। यत्र तु ‘ओदनः पच्यतेतरां’ इत्यादौ तद्धितेन अतिशयमात्राभिधानात् न कृतेः अभिधानं तत्र लकारार्थकृतावेव कारकान्वयात्, तेन च कर्मत्वस्य उक्तत्वेन न द्वितीयापत्तिः। पचतिकल्पं इत्यादिवच्च तरां इत्यस्य तात्पर्यग्राहकत्वाङ्गीकारात्, पचधातुनैव विशिष्टपाकलक्षणात्, तरां इत्यस्य निरर्थकत्वेन विशेषणसापेक्षस्यापि तेन सह वृत्त्युपपत्तिः। ‘अस्माकं गुरुकुलं’ इतिवत् वा नित्यसापेक्षत्वात् तदुपपत्तिः। एवं ओदनस्य पाचकतमः इत्यत्रापि द्रष्टव्यम्। (तरां तमः इत्यस्य निरर्थकत्वोक्तिस्तु चिन्त्याऽत्र। के.)। ‘कृतपूर्वी कटं’ इत्यादौ तु कर्तृत्वस्य इनिप्रत्ययेनैव उक्तेः तदुक्त-

कृतौ कटं इत्यस्य अन्वयात् द्वितीयोपपत्तिः। एवं 'व्याकरणं प्राज्ञः' इत्यत्रापि तद्धितेन स्वार्थविहितेन कृदर्थकृतेरपि उपादानेन तत्र अन्वयोपपत्तेः। अत एवोक्तं हरिणा 'ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्। अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः॥ क्रिया संबध्यते तद्वत् कृतपूर्व्यादिषु स्थिता॥' इति। अविग्रहा विशेष्यत्वेन अनुपस्थिताऽपि इत्यर्थः। गतादिस्था गतं इत्यादिकृत्पदस्था। धात्वर्थान्वयं आदाय तच्छाब्दबोधोपपादनं वैयाकरणनव्यानां असंगतमेव, कारकाणां धात्वर्थान्वयस्य क्वापि अव्युत्पन्नत्वात्।

**ननु** एवं 'ओदनस्य पाकः' 'कृष्णस्य कृतिः' इत्यादौ क्व कारकान्वयः। न तावत् धात्वर्थे पाके, तस्मिन् तवापि अव्युत्पन्नत्वात्। नापि घञर्थे, तस्य लिङ्गान्वयित्वात्। लिङ्गान्वयिन्यामपि अन्वये वस्तुपदाभिधेयायामपि अन्वयापत्तेः। इति चेत्। पक्त्वा इत्यादिवत् तत्रापि कारकान्वयार्थं घञैव कृतिविशिष्टपाकस्य स्वातन्त्र्येण, शक्तिलक्षणाभ्यां कृतिपाकयोर्वा अभिधानेन कृतौ कारकान्वयोपपत्तेः। पाकानुकूलकृतिसाध्यः पाकः इति च बोधः।

**केचित्तु** न घञा कृतेर्लक्षणा। तद्योगे षष्ठी च न कारकपरा अपितु शेषषष्ठ्येव। तस्या अपि अध्याहृतास्तिरूपप्रधानक्रियायामन्वयः परंपरासंबन्धेन इति न कश्चित् दोषः। एवं च 'कृष्णस्य कृतिः' इत्यत्रापि बोधाक्षत्यम्। न चैवं कृद्योगनिमित्तकषष्ठीविधिवैयर्थ्यम्, तस्य तृजादिकृद्विषयत्वेनापि उपपत्तेः इत्याहुः।

अतः सिद्धं कृद्योगे एव कर्तृकर्मणोः षष्ठी, न तु सार्थकतद्धितयोगे कारकवाचितद्धितयोगे वा, इत्येतदर्थकं कृद्ग्रहणमिति। अत एव कृतपूर्वी इत्यत्र सापेक्षत्वात् प्रत्ययार्थेन अन्वयं अङ्गीकृत्य 'कृतपूर्वी कटः' इत्यस्यापि आपत्तिरपास्ता। उक्ततद्धितयोगे कारकाणां कृतौ अनन्वयः इत्येवंविधज्ञापनप्रयोजनकत्वात् कृद्ग्रहणस्य। अतः सिद्धं तादृशतद्धितासमभिव्याहृतकृद्योगे एव षष्ठी, न तु तादृशतद्धितयोगेऽपि इति।

कर्तृत्वं स्वतन्त्रकर्तृत्वं प्रयोजककर्तृत्वं च इति उभयं विवक्षितम्। तेन 'राज्ञो याजकः' 'चैत्रस्य पचनी स्थाली' इत्यादौ उभयत्र षष्ठी। द्विकर्मके तु मुख्यकर्मणि षष्ठी नियता, द्वितीये गुणभूते तु अनियता। अत एव 'नेता अश्वस्य ग्रामं ग्रामस्य वा' इति उभयथापि प्रयोगः। इत्यन्यत्र विस्तरः।

अयं च षष्ठीविधिरनित्यः, 'तदर्हं' (पा० ५।१।११७) इति निर्देशात्। अत 'एव धाय्यै रामोदमुत्तमम्' इति भट्टिः इति केचित्।

एवं 'उभयप्राप्तौ कर्मणि' (पा० २।३।६६) इति सूत्रात् यस्मिन् कृति उभयोः प्राप्तिः तद्योगे कर्मण्येव षष्ठी स्यात् कर्तरि तु तृतीयैव इत्यर्थकात् 'आश्चर्यो गवां दोहः अगोपेन' इत्यादौ कर्तरि न षष्ठी। अत्र दोहः इत्ययं भावे कृत्। स च सकर्मकाकर्मकधातुसाधारणः, न तु लकारनिष्ठादिवत् अकर्मकधातुपर एव इति तत्र उभयप्राप्तिः। अतस्तत्र पूर्वोक्तप्रकारेणैव कृतिबोधोऽनुसंधेयः। शेषषष्ठीप्रकारस्तु 'कृष्णस्य कृतिः' इत्यादावेव इति ध्येयम्।

अथवा सर्वत्रैव घञन्ते धात्वर्थेनैव कर्माद्यन्वयः। न चैवं व्युत्पत्त्यन्तरकल्पनाभिया सर्वत्रैव तदापत्तिः। 'कृतपूर्वी कटं' इत्यादौ तत्र तदनन्वयस्य उपपादितत्वात्। न चैवं व्युत्पत्त्यन्तरकल्पना। सुबर्थधात्वर्थाद्यनेकसाधारण्येन लिङ्गानन्वयिभावनाविशेष्यतासंबन्धेन पदजन्योपस्थितेः हेतुत्वं इति एकयैव तत्सिद्धेः। तत् पदं च यथा आख्यातकृन्निपाततद्धितादि, तथा घञन्तो धातुरपि इति युक्तः तस्यामपि तत्र कर्माद्यन्वयः। अत्र हि भावनापदं फलप्रयोजककारकभिन्नव्यापारपरम्। नातो लडाद्यर्थे लिङाद्यर्थे वा विशेष्यत्वापत्तिः। स च आख्यातादौ कृत्यादिरूपा भावना, घञन्तादौ तु धात्वर्थ एव, उभयोः फलप्रयोजकत्वात्। 'कारकभिन्न'–इत्युपादानात् यत्र घञन्तभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वं विवरणसिद्धम्, तत्र धात्वर्थे कारकान्वयनिवारणम्। तत्र अनन्वये च 'पचत्योदनं' इत्यस्य 'पाकेन ओदनं करोति' इति विवरणे द्वितीयान्तौदनपदस्य करोत्यर्थान्वय एव बीजम्। करोत्यर्थस्य आख्यातार्थत्वेन स्थापितत्वात्। अत्रापि धात्वर्थान्वये 'ओदनं पचति' इत्यस्य 'ओदनस्य पाकं करोति'



इत्येव नियमेन विवरणापत्तिः। घञन्तस्थले च धात्वर्थस्य अकारकत्वात् लिङ्गानन्वयाच्च। सत्यपि घञा अभिहितस्य तस्य उभयरूपत्वे धात्वभिहिते तस्मिन् कारकान्वयो न विरुद्धः। धातुप्रत्ययाभ्यां पाकाभिन्नः पाकः इति बोधात्। अतश्च अनुभवानुरोधेन एकयैव व्युत्पत्त्या तत्र तत्र आख्याताद्यर्थे धात्वर्थे वा व्यवस्थया कारकान्वयोपपत्तेः 'आश्चर्यो गवां दोहः अगोपेन' इत्यत्रापि धात्वर्थे कारकान्वयः निराबाधः।

वस्तुतस्तु लिङ्गानन्वयित्वं न कारणतावच्छेदककोटिप्रविष्टं अपितु प्रत्ययजन्योपस्थितित्वम्। अतश्च घञर्थकृतावेव अन्वयः वस्तुपदाभिधेयायां च अनन्वयः कारकाणां इति न कोऽपि विरोधः।

अयं च उभयप्राप्तौ कर्तरि षष्ठ्या निषेधः अकप्रत्यय–अकारप्रत्ययरूपयोः स्त्रीप्रत्यययोः योगे न भवति 'अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम्' इति वचनात् (पा० २।३।६६ सूत्रे वार्तिकम्)। भेदिका बिभित्सा वा रुद्रस्य जगतः। भेदिका भेदनम्। भावे अकः। बिभित्सा इत्यत्र भावे अकारः। 'याप्सुटा सुटो बाधा न' इति काशिका। तस्यां सुटा इति करणत्वे तृतीया। उक्तविधप्रत्ययभिन्नकृति उभयप्राप्तौ तु विकल्पः कर्तरि 'शेषे विभाषा' इति वचनात् (पा० २।३।६६ इत्यत्रैव भाष्ये)। शोभना व्याकरणस्य कृतिः पाणिनेः पाणिनिना वा। स्त्रीप्रत्ययविषयमेवेदम्। केचित् अविशेषेण विकल्पमिच्छन्ति। शब्दानामनुशासनं आचार्यस्य आचार्येण वा। तन्मते 'आश्चर्यो गवां दोहः अगोपेन अगोपस्य वा' इत्यपि भवतीति ध्येयम्।

एवं 'क्तस्य च वर्तमाने' (पा० २।३।६७) इति सूत्रात् वर्तमानार्थकक्तस्य योगे षष्ठी स्यात् इत्यर्थकात् 'राज्ञां मतो बुद्धः पूजितो वा' इत्यत्र षष्ठी। अत्र 'मतिबुद्धिपूजार्थेभ्यश्च' (पा० ३।२।१८८) इत्यनेन वर्तमाने क्तः। तद्योगात् राज्ञां इति कर्तरि षष्ठी, कर्मणः क्तप्रत्ययेन अभिहितत्वात्। 'राज्ञो मतं' इत्येवं नपुंसके भावेऽपि च अनेनैव सूत्रेण षष्ठी। न च 'कर्तृकर्मणोः कृति' इत्यनेन गतार्थत्वम्। 'न लोकाव्ययनिष्ठा०' इति वक्ष्यमाणवचनेन निष्ठाविषये पर्युदस्तायाः निष्ठाविशेषप्रतिप्रसवार्थत्वात्। न चैवं 'पूजितो यः सुरासुरैः' इति तृतीयानापत्तिः। तत्रत्य–क्तप्रत्ययस्य भूतार्थकत्वेन उपपत्तेः। न हि मतिबुद्धिपूजार्थेभ्यः वर्तमाने एव क्तः। अतीतार्थे धात्वर्थे उक्तधातूनां क्तान्तानां लोके प्रयोगदर्शनेन तद्वचनस्य भूतार्थकक्तबाधकत्वायोगात्। न चैवं वर्तमानार्थक–मत्यादिधातूत्तर–क्तप्रत्ययभिन्न–क्तप्रत्यययोगे 'छात्रस्य हसितं' इत्यादौ षष्ठ्यनापत्तिः। तस्याः शेषषष्ठीत्वेन उपपत्तेः। अत एव कर्तृत्वत्वेन कर्तृत्वविवक्षायां तृतीयैव।

भूतार्थक–क्तप्रत्ययस्यापि अधिकरणवाचित्वे पूर्ववत् षष्ठीप्रतिप्रसवः 'अधिकरणवाचिनश्च' (पा० २।३।६८) इति सूत्रात्। तत्रापि अकर्मकेभ्यः कर्तर्येव षष्ठी 'इदमेषां शयितं' इति। शयितं शयनाधिकरणम्। क्तप्रत्ययेन उक्तत्वात् इदं इति प्रथमा। सकर्मकेभ्यस्तु अधिकरणे क्तप्रत्यये कृते कर्तृकर्मणोः द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्। 'इदमेषां भुक्तमोदनस्य'। भुक्तं भोजनस्थानम्। न तु कर्मण्येव 'उभयप्राप्तौ कर्मणि' इत्यस्य 'कर्तृकर्मणोः कृति' इत्येतदुत्तरपाठेन तत्सूत्रविहितषष्ठ्या एव तेन नियमात्।

तदेवं कृद्योगे सर्वत्र 'कर्तृकर्मणोः कृति' इत्यनेन षष्ठीप्राप्तौ 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा० २।३।६९) इति सूत्रेण तत्पर्युदासः। लः तदादेशाः। ते च कृत्संज्ञकाः शतृशानजादय एव इह गृह्यन्ते, तिङः कृद्ग्रहणेनैव निवृत्तत्वात्। तेन ओदनं पचन् पचमानः इत्यादौ न षष्ठी अपितु द्वितीयैव। अत्र च लकारग्रहणेन तत्कार्यापन्नानामपि ग्रहणम्। तेन कि–किनोः लादेशत्वाभावेऽपि लिट्कार्यापन्नत्वात् विशेषातिदेशे च सामान्यातिदेशस्य आवश्यकत्वात् तयोरपि ग्रहणम्। अत एव च 'बभ्रिर्वज्रम्' इत्यादिप्रयोगा अपि संगच्छन्ते। उ, 'कटं चिकीर्षुः' 'कन्यामलंकरिष्णुः'। उक, 'दैत्यान् घातुकः'। 'कमेर्भाषायामनिषेधः' ('०मप्रतिषेधः' इति वार्तिकपाठः न लोकेति सूत्रे। के.) इति वचनात्तु 'लक्ष्म्याः कामुको हरिः' इत्यत्र षष्ठी। अव्ययम्– कटं कृत्वा। 'तोसुन्कसुनोरप्रतिषेधः' (न लोक० इत्यत्रैव वार्ति-

कम् ) इति वचनाच्च ' पुरा वत्सानामपाकर्तोः ' ' पुरा क्रूरस्य विसृपो विरप्शिन् ' इत्यादौ षष्ठी । निष्ठा, ' ओदनं भुक्तवान्, चैत्रेण कृतम् ' । खलर्थः, ' सुकरः प्रपञ्चो हरिणा ' । तृन् इति प्रत्याहारः । स च शतृशानचौ इति तृशब्दादारभ्य आ तृनो नकारात् ( पा० ३।२।१२४–१३५ ) तेन शानन्प्रभृतीनामपि ग्रहणम् । ( शानच् शानन् चानश् शतृ तृन् ) । शानन्, ' सोमं पवमानः ' । चानश्, ' आत्मानं मण्डयमानः ' । शतृ, ' वेदमधीयन् ' । तृन्, ' लोकान् कर्ता ' । द्विषधातूत्तरशतृयोगे तु विकल्पेन षष्ठी । ' द्विषः शतुर्वा ' ( न लोक० इत्यत्र वार्तिकम् ) इति वचनात् । ' मुरस्य मुरं वा द्विषन् ' । सर्वश्चायं कारकषष्ठ्याः पर्युदासो न तु शेषषष्ठ्याः । आनन्तर्येण तदेकवाक्यताया एव न्याय्यत्वात् । अत एव ' ब्राह्मणस्य कुर्वन्, नरकस्य जिष्णुः, छात्रस्य हसितम् ' इत्यादिप्रयोगा अपि संगच्छन्ते ।

एवं ' अकेनोर्भविष्यदाधमर्ण्ययोः ' ( पा० २।३।७० ) इति सूत्रात् भविष्यति–अकस्य भविष्यदाधमर्ण्यार्थ–इनश्च योगे षष्ठी न स्यात् इत्यर्थकात् ' एधानाहरको व्रजति, व्रजं गामी, शतं दायी ' इत्यादौ द्वितीयैव न षष्ठी । अत्र भविष्यत्कालविहित–अकस्यैव ग्रहणात् न कालसामान्यविहित–अके ' ओदनस्य पाचकः ' इत्यादौ द्वितीया । अत्र च व्याख्यानवशात् न यथासंख्यं अन्वयः । अपितु अकस्य भविष्यत्येव, इनस्तु उभयोः । तेन गामी इति भविष्यति इनिः, दायी इत्ययं आधमर्ण्ये णिनिः ।

एवं ' कृत्यानां कर्तरि वा ' ( पा० २।३।७१ ) इति सूत्रे भाष्यकारेण योगविभागकरणात् कृत्यानां इत्यस्य भिन्नसूत्रत्वप्रतीतेः तत्र च उभयप्राप्तौ न इति पूर्वसूत्रस्थपदद्वयानुकर्षणात् उभयोः कर्तृकर्मणोः अनभिधानप्रयुक्तषष्ठीप्रसक्तौ ' कृत्यानां योगे षष्ठी न ' इत्यर्थकात् ' नेतव्या व्रजं गावः कृष्णेन ' इत्यत्र न षष्ठी, अपितु द्वितीया तृतीया च । अत्र हि नयतेर्द्विकर्मकत्वात् मुख्यकर्मणः कृत्येन अभिधानात् गोषु प्रथमा । अमुख्यकर्मणो व्रजस्य तु अनभिधानात् तत्र द्वितीया । यत्र तु कर्तृकर्मणोर्मध्ये अन्यतरस्य कृत्प्रत्ययेन अभिधानात् न उभयत्र प्राप्तिः तादृशकृत्यस्य योगे कृद्योगनिमित्तकषष्ठ्या नियमेन प्रसक्तौ ' कृत्यानां कर्तरि वा ' इति सूत्रेण कर्तृषष्ठ्याः विकल्पविधानं ' कर्तव्यमिदं कृष्णेन कृष्णस्य वा ' । न च भावकर्मणोरेव कृत्यविधानात् तत्र च कर्मणः कृत्येन अभिधानादेव तत्र षष्ठ्यप्राप्तेः परिशेषात् कर्तर्येव विकल्पविध्युपपत्तेः कर्तृग्रहणवैयर्थ्यम् ( इति वाच्यम् ) । ' भव्यगेय० ' ( पा० ३।४।६८ ) इति सूत्रेण कर्तर्यपि यत्प्रत्ययाख्यकृत्यविधानात् तद्योगे कर्मणि अनभिहितत्वेन षष्ठीप्राप्तेः तत्र विकल्पव्यावृत्त्यर्थं कर्तृग्रहणोपपत्तेः । यथा ' गेयो माणवकः साम्नाम् ' । अत्र गेयः इति कर्तरि कृत्यः, सामकर्मकगानकर्ता माणवकः इति शाब्दबोधः ।

एवं ' तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ' ( पा० २।३।७२ ) इति सूत्रात् तुल्यार्थकैः तुलोपमाशब्दभिन्नैः शब्दयोगे तृतीया स्यात् पक्षे षष्ठी इत्यर्थकात् ' तुल्यः सदृशः समो वा कृष्णेन कृष्णस्य वा ' इत्यत्र पक्षे षष्ठी । अत्र अतुलोपमाभ्यां इति द्विवचनं छान्दसम् । अन्यथा विशेषणविभक्तित्वेन बहुवचनापत्तेः । अयं च मण्डूकप्लुत्या शेषषष्ठ्या एव पाक्षिकत्वकल्पको विधिः, न तु कारकषष्ठ्याः । तुल्यशब्दस्य तद्धितान्तत्वेन कारकषष्ठ्या अप्राप्तेः । तुलोपमाशब्दयोगे तु शेषषष्ठ्येव । अत एव ' तुला उपमा वा कृष्णस्य नास्ति ' इत्यत्र शेषे तृतीयाया अविधानात् न तृतीया । कथं तर्हि ' तुलां यदारोहति दन्तवासाः ' ' स्फुटोपमं भूतिसितेन शम्भुना ' इत्यादिकाव्ये तुलादिशब्दयोगे तृतीया इति चेत् । तस्याः तोलनोपमानादिरूपधात्वर्थं प्रति करणत्वेन उपपत्तेः । सहयोगनिमित्तिका वा इयं तृतीया । साहित्यं च निरूपकत्वम्, तस्य च तत्त्वेन तृतीयातो बोधः । प्रकृते तु शेषत्वार्थकतृतीयायाः पर्युदास इति न कश्चिद्विरोधः । अत्र बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणोपपत्तौ अर्थग्रहणं पदान्तरनैरपेक्ष्येण बोधकपरम् । तेन ' गौरिव गवयः ' ' यथा गौः तथा गवयः ' इत्यादौ न षष्ठ्यादि । प्रथमोत्पत्तिप्रयोजकं तु पूर्वमेवोक्तम् ।



एवं ' चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ' ( पा० २।३।७३ ) इति सूत्रात् आयुष्याद्यर्थकशब्दयोगे आशिषि शेषे चतुर्थी स्यात् पक्षे षष्ठी स्यात् इत्यर्थकात् ' आयुष्यादि असै भूयात् ' इति चतुर्थी पक्षे षष्ठी । आयुष्यं चिरं जीवितम् । मद्रं भद्रमेव उभयोः पर्यायत्वेऽपि आयुष्यादिपदानां अर्थपरत्वख्यापनाय उभयोपादानम् । यत्तु व्याख्यानात् सर्वत्र अर्थग्रहणोपपत्तेः मद्रभद्रयोः अन्यतरत् न पठनीयं इति कैश्चिदुक्तं तत् भाष्यकारेण एतत्सूत्रस्य अव्याख्यानादुपेक्षितम् । कुशलं निरामयम्, सुखं शम्, अर्थः प्रयोजनम्, हितं पथ्यम् । न च ' हितयोगे चतुर्थी वक्तव्या ' इति वार्तिकादेव तत्सिद्धेः हितग्रहणवैयर्थ्यम् । अनाशिषि तेन तन्नियमेऽपि एतस्य आशिषि विकल्पविधायकत्वोपपत्तेः । अत एव आयुष्यादौ अनाशिषि षष्ठ्येव ' चैत्रस्य आयुष्यमस्ति ' इति ।

सर्वथा षष्ठ्यर्थः सर्वोऽपि आख्यातार्थे अन्वेति इति सिद्धम् । रहस्य. पृ. १२६–१४२.

* षष्ठी षण्णां पूरणी । भा. ४।४।७।१४, * षष्ठी संबन्धे सति भवति । ३।७।१०।२५. * षष्ठी । संबन्धिमात्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । बृहती. पृ ७२, * षष्ठी संबन्धमात्रवाचित्वेन व्यवहितमपि –पारंपरिकमपि– संबन्धमभिधत्ते, यथा ' देवदत्तस्य नप्ता ' इति । तथा ' वाजपेयस्य सप्तदशारत्निर्यूपः ' इत्यत्र ऊर्ध्वमानस्य यूपद्वारा पश्वङ्गत्वेन वाजपेयसंबन्धः । वि. ३।१।९, * षष्ठ्याः अव्यवहितसंबन्ध एवाभिधेयोऽर्थः, तदसंभवे तु परंपरासंबन्धः कथंचिद् गृह्यते । ३।७।५. * षष्ठ्याः कारकविभक्तित्वाभावात् तदर्थस्य उपपदार्थेन अन्वयः इति संप्रदायः । अन्ये तु साक्षात्परंपरासंबन्धेन भावनायामेव प्राधान्येन अन्वयो युक्त इत्यप्याहुः । मणि. पृ. ११३. * षष्ठ्याश्च स्वस्वामिसंबन्धविकारावयवादिसंबन्धो वाच्यः । वा. ३।१।६।१२ पृ. ६७४. * षष्ठ्याः चितेः नैमित्तिकत्वं प्रतिष्ठार्थत्वम् । भा. ४।४।७।१४–१८.

* षष्ठ्यन्तः परपदार्थं विशिनष्टि । भा. १०।३।११।४२.

* षष्ठ्युपस्थितसंबन्धस्य अपि संसर्गमर्यादयैव भानम् । सोम. ६।१।१३.

* षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानः असत्त्वभूतश्च प्रत्याय्यते न तादृक् मत्वर्थीयेन । वा. ३।१।६।१२ पृ. ६७६.

* षष्ठीसमासः । न च षष्ठीसमासे लक्षणादोषः, मानाभावात् । न च विग्रहसमासयोः एकार्थत्वं पाणिनिना विभाषारम्भात् ज्ञापितम्, इतरथा विनाऽपि विभाषारम्भं स्वस्वार्थप्रतिपादनाय व्याससमासयोः सिद्धेः विभाषारम्भोऽनर्थकः स्यात् । एकार्थत्वे तु समासेन विग्रहवाक्यस्य निवृत्तिर्मा भूत् इति तत्सार्थक्यम् । ततश्च राज्ञः पुरुष इति विग्रहे संबन्धप्रतीतेः समासेऽपि तत्प्रतीत्यर्थं लक्षणा इति युक्तम् । कर्मधारये अभेदस्येव वाक्यार्थविधयैव संबन्धस्य प्रतीत्युपपत्तेः । अथ कर्मधारये विग्रहवाक्येऽपि अभेदो वाक्यार्थविधयैव प्रतीयते, तत्र अभेदवाचकशब्दाभावात्, षष्ठीसमासे तु विग्रहवाक्ये संबन्धो न वाक्यार्थः किंतु षष्ठीश्रवणात् पदार्थ एव । अपदार्थसंबन्धश्च वाक्यार्थः । तेन तत्र संबन्धसंबन्ध एव वाक्यार्थविधया प्रतीयते न तु संबन्ध एव । तथा च विग्रहवत् समासेऽपि संबन्धसंबन्धप्रतीतिसिद्ध्यर्थं लक्षणा । किंच नामार्थयोः भेदेन अन्वयस्य विभक्त्यर्थद्वारकत्वात् विभक्त्यर्थसंबन्धः अवश्यं लक्षणीय इति चेत्, एवमपि ' दधि पश्य ' इत्यादौ इव लुप्ताया एव विभक्तेः तदर्थप्रतीत्युपपत्तेः । घटः कर्मत्वं आनयनं कृतिः इति वाक्ये क्रियाकर्मभावेन अन्वयाभावात् विभक्त्या तदुपस्थितेरेव प्रयोजकत्ववत् ' दधि पश्य ' इत्यादौ लुप्ताया एव विभक्तेः द्वितीयायाः स्वार्थबोधकत्वस्वीकारे प्रकृतेऽपि राजा संबन्धः पुरुषः ( राज्ञः पुरुषः ) इत्यन्वयाभावेन संबन्धस्यापि विभक्त्युपस्थितेरेव स्वीकार्यत्वात् । न च समासे विभक्तिलोप एव असिद्धः । ' एकदेशविकारे हि नित्यत्वं नोपपद्यते ' इति शाब्दिकमुख्यसिद्धान्तात् । तथा च रेखागवयन्यायेन अनुशासनाय कल्पिते प्रक्रियावाक्ये एव विभक्तिलोपः इति समासे लुप्तविभक्तेरेव अभावात् न तस्याः संबन्धोपस्थापकत्वं इति वाच्यम् । एवं सति तुल्यन्यायतया ' दधि

पश्य' इत्यादावपि लुप्तविभक्त्यसंभवात् लक्षणा स्यात् । यदि च तत्र लुप्तविभक्त्यसद्भावेऽपि अध्याहृतविभक्तिसंभवात् न लक्षणा, तदा समासेऽपि अध्याहृतविभक्तिरेव अस्तु । 'नीलं च तदुत्पलं च' इति समुच्चयवाचिच[श]ब्दश्रवणेनापि अन्यत्र समुच्चयस्य अभेदपर्यवसानेन कर्मधारयविग्रहवाक्येऽपि अभेदः पदार्थ एव । निपातत्वेन चशब्दस्य अवाचकत्वेऽपि तदुपसंदानेन तत्समभिव्याहृतपदान्तरस्य तत्र शक्तेरवर्जनीयत्वात् । पर्वतो वह्निमान्, दण्डी पुरुषः इत्यादौ मत्वर्थोपस्थितसंबन्धवत् विग्रहवाक्ये षष्ठ्युपस्थितसंबन्धस्यापि संसर्गमर्यादयैव भानं च उपपद्यते । सोम. ६।१।१३. अत्र 'निषादस्थपतिन्यायः' मीको. पृ. २३९२ इति बिन्दौ भाट्टग्रन्थे द्रष्टव्यम् । * षष्ठीसमासः । यत्र षष्ठ्यर्थलक्षणया सामानाधिकरण्यं तत्र षष्ठीसमासः । यत्र तु षष्ठ्यर्थलक्षणां विनैव सामानाधिकरण्यं तत्र कर्मधारयः । सोम. ६।१।१३. * षष्ठीसमासात् कर्मधारयो बलीयान् । 'दीर्घसोमे संतृद्येत्' दीर्घश्चासौ सोमश्चेति विग्रहः । न तु दीर्घस्य सोम इति । 'निषादस्थपतिं' निषादश्चासौ स्थपतिश्चेति विग्रहः न तु निषादानां स्थपतिरिति । वै. ३।३।१६.

𝕏 **षाष्ठतिर्यगधिकरणन्यायः** । ( मीमांसाग्रन्थेषु बहुशः स्पष्टं विवृतत्वात् अत्र न व्याख्यानं कृतम् ) । साहस्री. ८४६.

𝕏 **'षोडशाज्यानि गृह्णाति' इति समस्तसंख्या ॥**

'चतुर्गृहीतं गृह्णाति' इत्यादि विधाय 'षोडशाज्यानि भवन्ति' इति श्रुतानि षोडशगृहीतानि । चतुर्गृहीतानि चतुर्गृहीतादिभिः सह विरोधाद्विकल्प्यन्ते । इति प्राप्ते, सुकृद्ग्रहीतानां समस्यवादोऽयं 'चतुर्दशपौर्णमास्यामाहुतयो हूयन्ते' इतिवत् । विकल्पस्यान्याय्यत्वात् । संकर्ष. २।२।१२.

* षोडशि साम अङ्गिरसां द्विरात्रे उत्तरेऽहनि भवति । भा. १०।५।१३।५३. * षोडशी अग्निष्टोमस्य काम्यः संस्थाविशेषः । अग्निष्टोमानुष्ठानात् प्राक् नानुष्ठेयोऽयम् । वि. ५।३।१३-१४, * षोडशी 'अग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इति स्तुतशस्त्रवर्जितो भविष्यति इति पूर्वपक्षः । पूर्वसंस्थात्वहानिं अन्यसंस्थात्वं चाभ्युपेत्य स्तुतशस्त्रयुतत्वमेव द्रष्टव्यं इति सिद्धान्तः । संस्थान्तरं चेदं अत्यग्निष्टोमो नाम । १०।५।१२. * षोडशी अग्निष्टोमोक्थ्ययोर्गृहीतश्चेत् सस्तुतशस्त्र एव । १०।५।१२।४९-५२. मीको. पृ. ७५ 'अग्निष्टोमोक्थ्ययोः षोडशी०' इत्यत्र अधिकरणं द्रष्टव्यम् । * षोडशी अङ्गिरसां द्विरात्रे एव उत्तरे गृह्यते । नान्यत्र द्विरात्रे । इति वृत्तिकारमतम् । परिसंख्यार्थं वचनम् । भा. १०।५।१३।५३-५४. * षोडशी आग्रयणादेव ग्राह्यः नोक्थ्यात्, न च उभाभ्याम् । १०।५।१०।४२-४३, ४५-४८. * षोडशी उक्थ्योत्कर्षे उत्कृष्टव्यः । भा. ५।१।१८।३५, * षोडशी । 'एकविंशः षोडशी वैराजसामा' इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते । ३।८।२२।४४, * षोडशी ( यागः ) ऐन्द्रः । ३।६।७।१८. * षोडशी ग्रहः अङ्गिरसां द्विरात्रे नित्यः । इतरद्विरात्रे विकल्पित इति चेन्न । सर्वत्र विकल्पित एवायं इति सिद्धान्तः । अङ्गिरसां द्विरात्रे नित्यः इतरत्र तु नास्त्येव इति वृत्तिकारमतम् । वि. १०।५।१३, * षोडशी ग्रहः । 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' । अत्र विकल्प एव स्वीकार्यः । वचनयोः समबलत्वात् । १०।८।३, * षोडशी ग्रहः 'उत्तरेऽहन् द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य' इदं वाक्यं अहर्विशेषसंबन्धाय राजन्यादिनिमित्तनैरपेक्ष्याय च । राजन्यस्य तु अग्निष्टोमेऽपि गृह्यते षोडशी ग्रहः (तदा च 'अत्यग्निष्टोमः' नाम संस्थान्तरमेव निष्पद्यते तदेव राजन्यस्य नियतमित्यन्यदेतत् ) । १०।५।९, * षोडशी ग्रहः ज्योतिष्टोमविकृतौ इति पक्षः । राजन्यार्थमग्निष्टोमेऽपि इति सिद्धान्तः । १०।५।९, * षोडशी ग्रहः सवनत्रयेऽपि ग्राह्य इति पक्षः । 'तृतीयसवने ग्राह्यः । न सर्वेषु सवनेषु गृह्णाति' इति तृतीयसवने एव ग्राह्य इति सिद्धान्तः । १०।५।११.



𝕏 **षोडशी चोक्थ्यसंयोगात् । ५।१।१८। ३५ ॥**

ज्योतिष्टोमे षोडशिग्रहं प्रकृत्य 'तं पराञ्चमुक्थ्येभ्यो गृह्णाति' इति श्रूयते । तृतीयसवने सूर्यास्तमयात् प्रागेव उक्थ्यग्रहास्त्रयो गृह्यन्ते । तेभ्यः परस्तादयं षोडशीग्रहो विहितः । 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति च षोडशिस्तोत्रस्य काल उक्तः । यदा तु केनचित् प्रतिबन्धेन उक्थ्यग्रहाः अस्तमयादूर्ध्वं उत्कृष्येरन्, तदा षोडशिग्रहस्यापि उत्कर्षोऽस्ति न वा इति विचारे नोत्कर्षः, स्वकालातिक्रमकारणाभावात् इति उत्सूत्रे पूर्वपक्षे प्राप्ते, सिद्धान्तमाह । चशब्दः तुशब्दस्थाननिवेशी पूर्वपक्षं निराचष्टे । न अनुत्कर्षः । किंतु उक्थ्योत्कर्षे षोडशी उत्कृष्टव्यः । उक्थ्यसंयोगात् 'पराञ्चमुक्थ्येभ्यो गृह्णाति' इति षोडशिनः उक्थ्यैः संयोगस्य विहितत्वात् । उक्थ्योत्तरकाले षोडशियागस्य प्रधानस्य कालः । षोडशिस्तोत्रकालस्तु समयाध्युषितत्वं अङ्गकालः । नहि अङ्गकालानुरोधेन प्रधानकालविरोधो युक्तः । तस्मात् षोडशी उत्कृष्टव्यः । के.

* षोडशी 'चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते' इति अन्यतमस्यैकस्यैव अहीन[स्य] आदितश्चतुर्थेऽहनि, पुनः पञ्चममारभ्य चतुर्थेऽहनि ( अर्थात् आदितः अष्टमेऽहनि ) ग्राह्यः इति पूर्वपक्षः । कस्मिंश्चिदपि अहीने आदितश्चतुर्थेऽहनि एव एकदा ग्राह्यः न पुनरष्टमादौ अहनि इति सिद्धान्तः । वीप्सा तु अनेकाहीनार्था । वि. १०।५।१४. * षोडशी ज्योतिष्टोमस्य संस्थाविशेषः । स च एकविंशः वैराजसामा । वैराजं च पृष्ठार्थमेव, न सर्वार्थम् । भा. १०।६।६।१५, * षोडशी ज्योतिष्टोमे तृतीयसवने एव ग्रहीतव्यः, न सवने सवने । 'तृतीयसवन आग्रयणाद् गृह्णाति षोडशिनम्' इति वचनात् । १०।५।११।४४, * षोडशी ज्योतिष्टोमे प्राकृतः । १०।५।९।३४-४१. * षोडशी तृतीया संस्था । तत्र उक्थ्यस्तोत्रोत्तरं षोडशिस्तोत्रं अधिकम् । इति तत्र षोडश स्तोत्राणि । भाट्ट. ३।६।१६. * षोडशी नाम अग्निष्टोमविकृतिः यागविशेषः, पञ्चदशस्तोत्रेभ्यः ( द्वादशस्तोत्राणि अग्निष्टोमे, उक्थ्ये अग्निष्टोमस्तोत्रोत्तरं त्रीणि अन्यानि उक्थ्यस्तोत्राणि, अतः पञ्चदशस्तोत्राणि ) ऊर्ध्वं षोडशेन स्तोत्रेण समाप्यते । वि. ८।३।५. * 'षोडशी वैराजसामा' इति श्रुतम् । अत्र विकृतिरूपे षोडशियागे एकमेव वैराजं साम सर्वोत्तरसामस्थाने निविशते इति पक्षः । पृष्ठस्तोत्रे एव वैराजस्य निवेशः । इतराण्यपि सामानि यथायथं सन्त्येवेति सिद्धान्तः । माहेन्द्रस्तोत्रस्थाने एव निवेशः इति । भाट्ट. १०।६।६. * षोडशी सर्वेष्वेव द्विरात्रेषु उत्तरेऽहनि भवति, अनारभ्यविधानात् । ( शाबरमतमिदम् ) । 'वैखानसं पूर्वेद्युः साम भवति षोडश्युत्तरे' इति वाक्यं तु वैखानसविधानार्थम् । षोडशिनस्तु प्राप्तत्वादनुवादः । भा. १०।५।१३।५४ वर्णकं २. * षोडशी स्तुतशस्त्रसहितः संस्थारूपः उक्थ्याग्निष्टोमसंस्थोपमर्देन राजन्यस्य स्यात् । भाट्ट. १०।५।१२.

𝕏 **षोडशिनः आग्रयणपात्रादेव ग्रहणम् ॥ तस्याऽऽग्रयणाद्ग्रहणम् ॥ १०।५।१०। ४२ ॥**

भाष्यम्--अस्ति षोडशी । 'य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति । तत्रायमर्थः समधिगतः । प्राकृतः षोडशीति । अथेदानीमिदं संदिह्यते, किमसौ आग्रयणात् उक्थ्याच्च ग्रहीतव्य इति, उत आग्रयणादेवेति ? किं प्राप्तम् ? तस्य आग्रयणाद् ग्रहणम् । कुतः ? वचनात् 'आग्रयणाद् गृह्णाति षोडशिनम्' इति ।

**उक्थ्याच्च वचनात् । ४३ ॥**

गृह्णीम एतत्, आग्रयणात् ग्रहीतव्यः षोडशीति । किंतु उक्थ्याच्च ग्रहीतव्यः । कुतः ? वचनात् । वचनमिदं भवति 'उक्थ्याद् गृह्णाति षोडशिनम्' इति । किमिदं वचनं न कुर्यात् । तस्मात् उक्थ्याग्रयणाभ्यां ग्रहीतव्य इति । ( इति स्थितं तावत् मध्ये अन्तरागमिणी ) ।

**अनभ्यासे पराक्शब्दस्य तादर्थ्यात् । ४५ ॥**

भाष्यम्— स्थितादुच्यते । इतश्च पश्यामः । उक्थ्याच्च ग्रहीतव्य इति । कुतः ? 'यत्पराञ्चमुक्थ्येभ्यो गृह्णाति षोडशिनम्' इति । उक्थ्याद्गृह्णातीति संबन्धो नोक्थ्यात्पराञ्चमिति । कुतः ? अनभ्यासे पराक्शब्दो

वर्तते । कुतः ? तादर्थ्यात् । तादर्थ्यं ह्यस्यावगम्यते । पराचीः सामिधेनीरन्वाह । अनभ्यस्ताः सामिधेनीरन्वाहेति । तथा, अनभ्यासवचनः सन् नोक्थ्येन संबध्यते । न हि भवति संबन्धः, उक्थ्यादनभ्यस्तमिति । कथं तर्हि ? उक्थ्यान्निगृह्णाति, तमनभ्यस्तमिति । तस्मादप्युक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ।

**उक्थ्यविच्छेदवचनत्वात् । ४६ ॥**

**भाष्यम्—** इतश्चोक्थ्यादपि ग्रहीतव्य इति । कुतः ? उक्थ्यविच्छेदवचनं भवति । 'विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनं च ततः प्रणयन्ति' इति । प्रणयतिना संबन्धात् विस्पष्टमपादानं दर्शयति । तस्मादप्युभाभ्यां ग्रहीतव्य इति ।

**आग्रयणाद्वा, पराक्शब्दस्य देशवाचित्वात्पुनराधेयवत् । ४७ ॥**

**भाष्यम्—** आग्रयणादेव वा ग्रहीतव्यः । न उक्थ्यात् । कुतः ? 'यदाग्रयणाद् गृह्णाति षोडशिनम्' इति वचनात् । न शक्यः आग्रयणात्कृत्स्नो गृह्यमाण उक्थ्याद् ग्रहीतुमिति । अगतिका ह्येषा गतिः । यत्कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्याताम् । सत्यां हि गतौ न तावाश्रयणीयौ स्तः । अस्ति चात्र गतिः । कथम् ? पराक्शब्दस्य देशवाचित्वात् । दिग्देशकालवचनो हि पराक्शब्दो भवति । तथा सति, उक्थ्यात्पराञ्चमिति संबन्धो भविष्यति, न कृत्स्नसंयोगो विरोत्स्यते । यथा, 'पराञ्चमग्न्याधेयात्पुनरादधाति' इति कालसंयोगे पञ्चमी, नापादाने । एवमिहापि द्रष्टव्यम् । तस्मादप्याग्रयणादेव ग्रहीतव्यः इति ।

**विच्छेदः स्तोमसामान्यात् । ४८ ॥**

**भाष्यम्—** अथ यदुक्तम्, विच्छेदवचनादपादानदर्शनमिति । नैतदेवम् । विच्छेदः स्तोमसामान्यात् भवति । विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनं च ततः प्रणयन्ति' इति । एकविंशस्तोमत्वादुक्थ्यग्रह इव षोडशीति । तत्र पूर्वयोर्विच्छिन्न एवोच्यते, ततः प्रणयन्तीति । इयमपि कालसंबन्धे एव पञ्चमी, नापादाने । तस्मादाग्रयणादेव ग्रहीतव्यः षोडशी ।

**शा—** षोडशिन्येव संदेहः किं असौ आग्रयणात् उक्थ्यात् वा ग्रहीतव्यः उत आग्रयणादेवेति । तत्र 'आग्रयणात् गृह्णाति, उक्थ्यान्निगृह्णाति' इति वचनद्वयात् विकल्पेन समुच्चयेन वा द्वाभ्यां गृह्यते, इति पूर्वपक्षः । **'कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवच्छ्रुतम् । न युक्तं बाधितुं तस्मान्न विकल्पसमुच्चयौ ॥'**

**वि—** 'उक्थ्याग्रयणतः स स्यात्केवलाग्रयणादुत ।, आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः ॥'

**भाट्ट—** षोडशिन्येव किमाग्रयणादेव ग्रहणं उत उक्थ्यादपीति चिन्तायां 'आग्रयणाद् गृह्णाति' इति वचनात् आग्रयणापादानकत्ववत् 'उक्थ्याद् गृह्णाति' इति वचनादुक्थ्यस्याप्यपादानत्वश्रुतेस्तस्मादपि विकल्पेन समुच्चयेन वा ग्रहणम् । न च 'उक्थ्याद् गृह्णाति' इत्यत्रोक्थ्यात्परस्ताद्गृह्णातीत्यर्थाङ्गीकारेण उक्थ्यपरभावमात्रविधानात् नापादानविधानमिति वाच्यम्, दिग्योगनिमित्तकत्वे पञ्चम्या उपपदविभक्तित्वेन कारकविभक्तेः बलीयस्तया अपादानार्थकत्वस्यैवावगतेः । परस्तादित्येवंविधदिक्शब्दयोगाभावे पञ्चम्या दिग्योगनिमित्तकत्वानुपपत्तेश्च । 'अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' ( पा० २।३।२९ ) इति सूत्रेण शब्दयोग एव पञ्चमीविधानात् । इति प्राप्ते,

नेयमपादानपञ्चमी, तथात्वे अष्टदोषदुष्टविकल्पापत्तेः । समुच्चये नैरपेक्ष्यबाधापत्तेश्च । अपि तु 'तं पराञ्चमुक्थ्येभ्यो गृह्णाति' इति शाखान्तरवचनैकवाक्यतया दिग्योगनिमित्तैव, विकल्पाद्यपेक्षया उपपदविभक्तित्वस्यापि स्वीकारे बाधकाभावात् । न च शब्दयोग एव सा 'मासात् प्रवक्ष्यामि' इत्यादौ शब्दयोगाभावेऽपि अर्थयोगमात्रेण तद्दर्शनात् । अत एव 'ङ्याप्प्रातिपदिकात्' ( पा० ४।१।१ ) 'धृत्तादनन्तरस्य' इत्यादिसूत्रभाष्यकृद्व्यवहारोऽपि संगच्छते ।

अतश्च यथैव सहशब्दाभावेऽपि 'वृद्धो यूना' इत्यादिप्रयोगदर्शनादर्थमात्रविवक्षयाऽपि तृतीया । तथैव दिगर्थविवक्षयैव पञ्चम्या अपि नानुपपत्तिः ।

न च 'तं पराञ्चम्' इत्यत्रैव प्राप्तषोडश्यनुवादेन पराक्छब्दार्थस्य उक्थ्यशब्दार्थस्य विधौ वाक्यभेदापत्तेरुक्थ्येभ्य इत्यपि पञ्चमी अपादानस्वार्थिकैव । पराञ्चमिति तु 'पराचीः सामिधेनीरनुब्रूयात्' इतिवत् अनभ्यासवाचित्वान्नित्यानुवाद इति वाच्यम्, उपपदविभक्तिस्थले प्राचां परस्परान्वयस्य व्युत्पन्नत्वात् पराक्छब्दस्य तात्पर्यग्राहकस्य सत्त्वे पञ्चम्या एव तदर्थकत्वेन वाक्यभेदाप्रसक्तेश्च । उक्थ्यपात्रस्य एकत्वेनापादानत्वे बहुवचनानुपपत्तेश्च ।



अतः उक्थ्यप्रचाराणां बहुत्वात्तदुत्तरकाल एव पञ्चम्यर्थोऽनेन विधीयते इति तदेकवाक्यतयाऽस्यापि तद्विधायकत्वान्नोक्थ्यापादानकत्वं षोडशिग्रहणस्येति सिद्धम् । बाधोपयोगिता च पक्षे आग्रयणस्य पूर्वपक्षे बाधात् द्रष्टव्या ।

**मण्डन—** 'स गृह्यते चाग्रयणान्न तूक्थ्यात् ।'

**शंकर—** 'स च आग्रयणतो ग्राह्यः ।'

* षोडशिनः ज्योतिष्टोमे तृतीयसवने एव ग्रहणम् । १०।५।११।४४. मीको. पृ. १८०१ 'ज्योतिष्टोमे तृतीयसवने एव षोडशिनो ग्रहणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * षोडशिनः नानाऽहीनेषु प्रत्यहीनं चतुर्थे चतुर्थे दिवसे ग्रहणम् । १०।५।१४।५५–५७. मीको. पृ. २३११ 'नानाऽहीनेषु प्रत्यहीनं०' इत्यत्र अधिकरणं द्रष्टव्यम् । * षोडशिनः रात्रौ समाप्तिः । वि. ६।५।१४.

**ष षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् । १०।५।९।३४ ॥**

ज्योतिष्टोमं प्रकृत्य 'य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति षोडशी नाम ग्रह आम्नातः । स विकृतौ ग्राह्यः ( वैकृतः ) प्रकृतौ ( प्राकृतः ) वा इति विचारे पूर्वपक्षमाह । षोडशिनो ग्रहस्य वैकृतत्वं स्यात् । तत्र विकृतौ कृत्स्नविधानात् शान्ताकाङ्क्षो यथा स्यात् तथा विधानात् 'मध्यमेऽहन् त्रिरात्रस्य गृह्यते' इति । एतद्वाक्यानुसारेण 'अतिरात्रे ब्राह्मणस्य' इति वचनं वैकृते अतिरात्रे इति गम्यते । तस्मात् वैकृतः षोडशी ।

**प्रकृतौ चाभावदर्शनात् । ३५ ॥**

षोडशिग्रहस्य वैकृतत्वे हेत्वन्तरमाह । प्रकृतौ च षोडशिनः अभावस्य दर्शनात् । 'द्वे संस्तुतानां विराजमतिरिच्येते' इति, अभावे षोडशिनः द्वे स्तोत्रीये विराजमतिरिच्येते इति वर्णितं द्वितीयेऽध्याये 'विहितप्रतिषेधात्' इत्यत्र ( २।४।२।२७ ) । तस्मात् षोडशी वैकृतः ।

**अयज्ञवचनाच्च । ३६ ॥**

'न षोडशी नाम यज्ञोऽस्तीत्याहुः' इति प्रकृतौ ज्योतिष्टोमे वचनम् । एवं अयज्ञत्ववचनात् षोडशी वैकृत एव ।

**प्रकृतौ वा शिष्टत्वात् । ३७ ॥**

षोडशी ग्रहो वैकृतः इति पूर्वपक्षं सूत्रत्रयेण प्राप्तं वाशब्दो व्यावर्तयति । न वैकृतः षोडशी, प्रकृतौ ज्योतिष्टोमे 'षोडशिनं गृह्णाति' इति शिष्टत्वात् विहितत्वात् असौ प्राकृतः ।

**प्रकृतिदर्शनाच्च । ३८ ॥**

इतश्च षोडशी प्राकृतः स्यात् 'तिस्रः संस्तुतानां विराजमतिरिच्यन्ते' इति लिङ्गस्य दर्शनात् ( 'विहितप्रतिषेधात्०' २।४।२।२७ इति सूत्रे द्रष्टव्यम् ) प्रकृतौ प्रकृतिगतत्वे लिङ्गस्य दर्शनात् ।

**आम्नानं परिसंख्यार्थम् । ३९ ॥**

'मध्यमेऽहन् त्रिरात्रस्य गृह्यते' इति पूर्वपक्षोक्तस्य वचनस्य गतिः प्रदर्श्यते । इदं आम्नानं परिसंख्यार्थं स्यात् । 'अग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचने षोडशिनो राजन्यनिमित्तकता उक्ता चोदकेन च विकृतौ षोडशिनि प्रापणीये राजन्यनिमित्तकतयैव स प्राप्नुयात् तत्परिसंख्यार्थं 'मध्यमेऽहन् त्रिरात्रस्य गृह्यते' इत्याम्नानम् । तथा च ब्राह्मणस्यापि प्रकृतौ षोडशी स्यादेव ।

**उत्क्रमभावदर्शनम् । ४० ॥**

यदुक्तं पूर्वपक्षे 'प्रकृतौ चाभावदर्शनात्' ( १०।५।९।३५ ) इति तत्राह । अभावदर्शनं उक्तं प्रत्युक्तम् । अभावदर्शनात् वैकल्पिकः षोडशी । विहितप्रतिषेधात् पक्षे स्तोत्रियातिरेकः ( 'विहितप्रतिषेधात्०' २।४।२।२७ इति सूत्रे द्रष्टव्यम् ) ।

**गुणादयज्ञत्वम् । ४१ ॥**

यदुक्तं पूर्वपक्षिणा 'अयज्ञवचनात्' (सू० ३६) इति तदपि उक्तं प्रत्युक्तं इत्यनुवर्तते । षोडशिग्रहस्य वैकल्पिकत्वात् पक्षे अयज्ञत्वं इति गुणात् भक्त्या अयज्ञत्वम् । तस्मात् प्राकृतः षोडशी, चोदकाद्वैकृतः । इति **सिद्धान्तः** । के.

* षोडशिनः सस्तुतशस्त्रता । भा. १०।५।१२।४९–५२. * **षोडशिनि** अतिरात्रे च पितृदेवत्यप्रदाने श्रूयमाणं 'अनुष्टुप्छन्द इति भक्षमन्त्रं नमति' इति वाक्यम् । भा. टिप्पणी ३।२।११।२९ पृ. ७८८. * षोडशिनि ऐन्द्रं वृष्णिं तृतीयम् । त्रयः क्रतुपशवः । (अग्निष्टोमे आग्नेयः अजः, उक्थ्ये ऐन्द्राग्नः द्वितीयः, षोडशिनि ऐन्द्रः वृष्णिः तृतीयः ।) । भा. ३।६।१६।४२, ३।६।७।१८, * षोडशिनि क्रतौ क्रतुपशवः त्रयः । आग्नेयः ऐन्द्राग्नः ऐन्द्रो वृष्णिश्चेति । ९।१।१६।४५. * षोडशिनि सर्वस्तोत्राणि एकविंशानि भवन्ति । टुप्. ९।२।५।२४ वर्णकं २. * षोडशिनि सवनीयाः पशवस्त्रयः । 'आग्नेयः पशुरग्निष्टोम आलभ्यः, ऐन्द्राग्न उक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः' इति विधानात् । तत्र षोडशिनि सवनीयपशूनां त्रित्वेऽपि अध्रिगुप्रैषे 'प्रास्मा अग्निं' इत्यत्र 'प्रैभ्यो अग्निं' इति नास्त्यूहः । कृत्वाचिन्ता, वस्तुतस्तु ऊहः कर्तव्य एव । वि. ९।३।८.

* **षोडशिक्रतौ** वैराजसाम्नः होतुः पृष्ठे निवेशः । न कृत्स्ने क्रतौ 'षोडशी वैराजसामा' । भा. १०।६।६।१५–२१.

**॥ षोडशिग्रहो ज्योतिष्टोमाङ्गम् ॥**

**षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् । १०।५।९।३४ ॥**

**भाष्यम्**––अस्ति षोडशी ज्योतिष्टोमं प्रकृत्याम्नातः 'य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति । तत्र संशयः, किमेषः प्राकृतो वैकृत इति । कथं प्राकृतः ? ज्योतिष्टोमं प्रकृत्य आम्नानात् । वैकृतो विकृतौ वचनात् 'मध्यमेऽहंस्त्रिरात्रस्य गृह्यते' इति । प्रकृतावपि वचनमस्त्येव इत्याशङ्क्य 'अग्निष्टोमे राजन्यस्य गृह्णीयात्, अतिरात्रे ब्राह्मणस्य' इति, विकृतावपि वचनसामर्थ्यात् विकृतौ अतिरात्रे स्यात् इत्याशङ्क्यते । प्रकृतौ आम्नानात् प्रकृतौ चातिरात्रस्य भावात् प्राकृत इत्याशङ्का । तस्मात् संशयः । किं प्राप्तम् ? षोडशिनो वैकृतत्वं स्यात् । कुतः ? तत्र कृत्स्नविधानात् । विकृतावसौ कृत्स्नो विधीयते । कथम् ? 'य एवं विद्वान् एतं षोडशिनं गृह्णाति' इत्यभिधाय 'मध्यमेऽहंस्त्रिरात्रस्य गृह्यते' इति विधीयते । प्रकरणाच्च वाक्यं बलीयः । एवं वाक्येन प्रकरणे बाधिते 'अतिरात्रे ब्राह्मणस्य' इति वचनं वैकृते अतिरात्रे इति गम्यते । तेन यद्यपि ज्योतिष्टोमं प्रकृत्य विधानात् विकृतावसौ न कृत्स्न आम्नातः, तथापि कृत्स्न एव विकृतौ विहितो भवति । तस्मात् विकृतिषु परिगणितासु षोडशी ग्रहीतव्यो न प्रकृताविति ।

**टुप्**–– 'य एवं विद्वान् षोडशिनं गृह्णाति' इति । अत्र पूर्वः पक्षः । 'मध्यमेऽहंस्त्रिरात्रस्य गृह्यते' इति प्रत्यक्षेण वाक्येन विकृतिसंबन्धः । प्रकृतौ प्रकरणाम्नानानुमितेन वाक्येन संबन्धः स्यात् । तच्च प्रत्यक्षे सति वाक्ये दुर्बलमिति ।

**प्रकृतौ चाभावदर्शनात् । ३५ ॥**

**भाष्यम्**–– इतश्च वैकृत इति । कुतः ? प्रकृतौ अभावो दृश्यते । कथम् ? 'द्वे संस्तुतानां विराजमतिरिच्येते' इति । अभावे षोडशिनो द्वे स्तोत्रीये विराजं अतिरिच्येते इति वर्णितं द्वितीयेऽध्याये (२।४।२।२७)। तस्मादपि वैकृतः षोडशी इति ।

**अयज्ञवचनाच्च । ३६ ॥**

**भाष्यम्**–– इतश्च वैकृतः स्यात् । एवं हि भवति वचनं 'न षोडशी नाम यज्ञोऽस्ति इत्याहुः' इति । न तावन्नास्ति षोडशी । ज्योतिष्टोमे प्रकृतौ इदं भवति वचनम् । यदि ज्योतिष्टोमे नास्ति, एवमुपपद्यते । तस्मादपि वैकृत इति गम्यते ।



**प्रकृतौ वा शिष्टत्वात् । ३७ ॥**

**भाष्यम्**–– वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति वैकृतः षोडशीति । प्राकृतः स्यात् । कुतः ? प्रकृत्यां हि ज्योतिष्टोमे आम्नातः । प्रकरणाच्च ज्योतिष्टोमेन एकवाक्यता स्यात् । सा विकृतौ अपि उच्यमानस्य नापैति । नहीदं वचनं प्रकृतौ प्रतिषेधकम् । किं तर्हि ? विकृतावुपदेशकम् । तस्मात् प्रकृतौ शिष्टाप्रतिषिद्धत्वात् षोडशी भवितुमर्हतीति । अपि च न केवलं प्रकरणमस्य साधकम् । किं तर्हि ? वाक्यमपि तथा 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् अतिरात्रे ब्राह्मणस्य' इति । न चेदं प्रकृतौ संभवत् वैकृतेऽतिरात्रे शक्यते कल्पयितुम् । तस्मात् प्राकृतः षोडशीति ।

**टुप्**— 'नहीदं वचनं प्रकृतौ प्रतिषेधकम्, किं तर्हि ? विकृतावुपदेशकम्' इति । जात्युत्तरम् । 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्रापि शक्यं वक्तुम् । गार्हपत्यसंबन्धं श्रुतिः ब्रवीति इति न इन्द्राभिधानं निवर्तयति इति । सर्वत्रैव इदमुत्तरं घटते । अत इदमुत्तरं न्यायेन (बलाबलाधिकरणन्यायेन) विरुद्धम् । तस्मादसमञ्जसम् । कथं तर्हि अयं ग्रन्थः ? उपचयत्वेन । (मूलयुक्तिस्तु अन्यैव । तामाह–) यदुक्तं वाक्येन उत्कर्षः षोडशिन इति, तन्न । कथम् ? प्रकृतौ षोडशी विधीयते 'षोडशिनं गृह्णाति' इति । तत्र विधीयमानस्य त्र्यंशा भावना, किं केन कथमिति । तत्र किमंशं करणोपकारो विपरिवर्तमानो निराकाङ्क्षं करोति । केनेत्यंशं षोडशी । कथमंशं षोडशिन इतिकर्तव्यता या आम्नायते सा निराकाङ्क्षं करोति । तत्र वाक्यं परिसमाप्तं (प्रकृतौ), न केनाप्यंशेन अपरिपूर्णम् । परिपूर्णत्वात् वाक्यस्य प्रकृतावेव निवेशः । यत्र स्ववाक्य एव विधीयमानस्यैव किमंशपूरणं पदान्तरेण उपनीयते, यथा 'युवं हि स्थः स्वर्पती' (इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्) इति प्रतिपत् विधीयमानैव वाक्येन द्वियजमानेन क्रतुना संबध्यते, तत्र प्रकरणबाधो युक्तः । यथा च द्वादशोपसत्त्वस्य विधीयमानस्यैव किमंशपूरणं अहीनशब्दः करोति । एवं नात्र किमंशस्य पूरणं वाक्येन, येन प्रकरणात् उत्कर्षः स्यात् । तस्मात् प्रकरणे एव निवेशः ।

**प्रकृतिदर्शनाच्च । ३८ ॥**

**भाष्यम्**––प्रकृतौ भवति दर्शनं अस्य षोडशिनः । 'तिस्रः संस्तुतानां विराजमतिरिच्यन्ते' इति । उक्तमेतत् (२।४।२।२७) षोडशिनि गृह्यमाणे तिसृणां स्तोत्रीयाणां दर्शनमवकल्पते इति । तस्मात् प्राकृतः षोडशीति ।

**आम्नानं परिसंख्यार्थम् । ३९ ॥**

**भाष्यम्**–– अथ यदुक्तं वैकृतस्तत्र कृत्स्नविधानात् इति । तदुक्तं प्रकृतौ अप्रतिषेधकं तद् वचनमिति । अथ चोदकेन प्राप्तौ किमर्थं पुनरुच्यत इति । अविशेषेण हि तद्वचनं प्रकृतावभिधाय अग्निष्टोमे राजन्यस्य ब्राह्मणस्य चातिरात्रे इति वाक्येनोक्तम् । तद्विकारार्थं एवं प्राप्नोति परिसंख्यानम्, तदर्थमुच्यते । अनतिरात्रेऽपि अनग्निष्टोमेऽपि कथं गृह्येत 'मध्यमेऽहन् त्रिरात्रस्य गृह्यते' इति ।

**उक्तमभावदर्शनम् । ४० ॥**

**भाष्यम्**–– अथ यदुक्तं प्रकृतौ षोडशी न दृश्यते, 'द्वे संस्तुतानां विराजमतिरिच्येते' इति । तदुक्तम्, अभावदर्शनात् वैकल्पिकः षोडशी विहितप्रतिषेधात् पक्षेऽतिरेक इति ।

**गुणादयज्ञत्वम् । ४१ ॥**

**भाष्यम्**–– अथ यदुक्तं अयज्ञवचनात् न प्रकृतौ षोडशीति, तदुक्तम् । शिष्टत्वात् प्रकृतौ गृह्यते इति । कथं तु अयज्ञवचनम् ? वैकल्पिकत्वात् । पक्षे स यज्ञो नास्ति इति भक्त्या अयज्ञ इत्युच्यते । तस्मात् प्राकृतः षोडशीति । प्रयोजनं पूर्वपक्षे प्रकृतौ न गृह्यते, गृह्यते सिद्धान्ते ।

**शा**–– अस्ति ज्योतिष्टोमे षोडशी । स च 'षोडशिना वीर्यकामः' इति पुरुषार्थतया विहितोऽपि पुनः क्रत्वर्थतया श्रूयते 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः, अतिरात्रे ब्राह्मणस्य, उत्तरेऽहनि द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य, चतुर्थेऽहन्यहीनस्य गृह्यते' इति । तत्र क्रत्वर्थं षोडशिनं प्रति

संदेहः, किं प्रकृतौ स्यात् उत विकृतिष्वेव उत्क्रष्टव्य इति । 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादिवचनैः विकृतिसंबन्धावगमात् 'अग्निष्टोमे राजन्यस्य' इत्यादिवचनस्य च वैकृताग्निष्टोमाभिप्रायत्वेनापि अविरोधात् प्रकरणं बाधित्वा वाक्येन उत्कर्षे प्राप्ते, ब्रूमः, प्रकृतिकरणाम्नातैः अग्निष्टोमादिशब्दैः तत्रैव संभवद्भिः किमिति असंनिहिताऽपि विकृतिरभिधीयते । तस्मात् वाक्येनैव प्रकृतौ स्यात् । तत्र राजन्यादिनिमित्तेन विहितः स विकृतिषु अनैमित्तिको विधीयते 'उत्तरेऽहन् द्विरात्रस्य' इति ।

**सोम**--त्रिरभ्यासस्येव षोडशिनो न प्रकृतिविकृतिसंबन्धः, किंतु विकृतिमात्रसंबन्धः इत्युत्थितेः **संगति**रित्याहुः । बाधप्रसङ्गात् प्रकृतिसंबन्धः षोडशिनो बाध्यते न इति चिन्त्यते इत्यध्याय**संगतिः** ।

**वि**-- 'विकृतौ प्रकृतौ वा स्यात्, षोडश्युत्कर्षतोऽग्रिमः।, अविरुद्धेन वाक्येनानुत्कर्षात् प्रकृतावसौ ॥'

**भाट्ट**-- ज्योतिष्टोमप्रकरणे समाम्नातः षोडशी ज्योतिष्टोमाङ्गं उत नेति चिन्तायां 'षोडशिना वीर्यकामः स्तुवीत' इत्यनेन तस्य पुरुषार्थत्वावगमेन गोदोहनादिवत् प्रकरणबाधात् न ज्योतिष्टोमाङ्गत्वम् । न च 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचनेन संयोगपृथक्त्वन्यायेन प्रकृत्यर्थता इति वाच्यम् । तस्य 'उत्तरेऽहन् द्विरात्रस्य गृह्यते, मध्यमेऽहन् त्रिरात्रस्य, चतुर्थेचतुर्थेऽहनि अहीनस्य' इत्यादिविकृतिप्रायपाठेन वैकृताग्निष्टोमाभिप्रायत्वात् ।

वस्तुतस्तु, अग्निष्टोमादिपदानां संस्थावाचित्वस्थापनात् अग्निष्टोमसंस्थाकायां प्रकृतौ विकृतौ वा षोडशिसंस्थाया निवेशायोगेन विधातुमशक्तेः द्विरात्रादिविधेः अयमर्थवाद एव । यत्र संस्थान्तरयुक्तेऽपि क्रतौ अयं पूर्वसंस्थाबाधेन ग्रहीतुमुचितः, तत्र किमु वक्तव्यं विरुद्धसंस्थान्तररहितद्विरात्रादौ इति स्तुतेः । अतः प्रकृत्यङ्गताग्राहकप्रमाणाभावात् न प्रकृत्यङ्गत्वम् । इति प्राप्ते, षोडश्यादिशब्दास्तावत् अनेकेषु प्रयुज्यमाना अपि संस्थायामेव शक्ताः । तद्वत् ज्योतिष्टोमे निरूढलक्षणया तद्वति क्रत्वन्तरे सांप्रतिकलक्षणया ग्रहणे स्तोत्रे च तथैवेत्यादि संस्थाधिकरणे कौस्तुमे च द्वितीये क्षुण्णम् ।

तदिह 'य एवं विद्वान् षोडशिनं गृह्णाति' इत्यत्र भाष्यकारादिलिखनात् संस्थैव ग्रहणविशिष्टा विधीयते । षोडशिशब्देन नागृहीतविशेषणान्यायेन संस्थावचनेनापि तद्विशिष्टक्रतोः उपस्थापनेन ग्रहणेन संस्थावन्तं क्रतुं कुर्यात् इति वाक्यार्थप्रतीतेः । जायते हि यागाभ्याससाधनीभूतद्रव्यसंस्कारद्वारा ग्रहणेनापि संस्था । अतश्च तत्र ग्रहणविशिष्टसंस्थोत्पत्तिर्न विरुध्यते । षोडशिशब्दस्य ग्रहणमात्रपरत्वमङ्गीकृत्य तन्मात्रविधिस्तु लक्षणाऽऽपत्तेरेव अयुक्तः । अत एव उत्पन्नायाः संस्थाया एव वीर्यार्थत्वेन विधिः न तु स्तोत्रस्य । तस्य 'एकविंशं (स्तोत्रं) भवति प्रतिष्ठित्यै' इति वचनप्राप्तस्य साधुत्वार्थमनुवादात् । अत एव स्तोत्रं ग्रहणं च संस्थासंपादकतया वाक्याच्च तदङ्गमेव, न तु ज्योतिष्टोमाङ्गं इत्यप्यविवादमेव । अतश्च संस्थायाः फलार्थत्वात् यद्यपि प्रकरणं 'चतस्रः सोमसंस्थाः' इत्यादिवचनं च नाङ्गताबोधनक्षमं आश्रयत्वसंबन्धेनापि तदुपपत्तेः, तथापि 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये, अतिरात्रे ब्राह्मणस्य गृह्णीयात्' इत्यादिवचनैः संयोगपृथक्त्वन्यायेन ज्योतिष्टोमाङ्गत्वस्यापि उपपत्तिः । नहि एतानि अर्थवादरूपाणि, लिङ्श्रवणात् विनिगमनाविरहाच्च । राजन्यादिपदस्य स्तुतौ अनुपयुक्तत्वाच्च । एतद्वाक्यार्थस्तु अग्रे निरूपयिष्यते, निरूपितः कौस्तुमे अपि । नैमित्तिकप्रतिप्रसवविधित्वाच्च एतेषां विकृतिप्रायपाठोऽपि अकिंचित्करः । अस्तु वा विद्वद्वाक्येन संस्थाङ्गतया ग्रहणमात्रविधिः, तथापि उक्तवाक्येनैव संस्थाया वीर्याङ्गत्वे सिद्धे निरुक्तवाक्येनैव तस्याः प्रकृत्यङ्गता, संस्थास्वरूपं तु ग्रहणादिविधितो याज्ञिकप्रसिद्धिसिद्धं इति न कश्चित् विरोधः । अतः सिद्धं नैमित्तिकमिदं प्रकृत्यङ्गम् । तेन च नित्यसंस्थायाः प्रकृतौ राजन्यस्य बाधः इति बाधोपयोगिताऽपि । न चैवं कासुचित् विकृतिषु तत्पुनःश्रवणं अनर्थकमिति वाच्यम्, अनैमित्तिकत्वाद्यर्थत्वस्य प्रयोजनत्वेन वक्ष्यमाणत्वात् ।



**मण्डन**-- 'स्यात् षोडशी तु प्रकृतौ प्रयोगे ।'

**शंकर**-- 'षोडशी प्रकृतावेव ।'

* **षोडशिग्रहस्य** अङ्गिरसां द्विरात्रे उपसंहारः इति वृत्तिकारमतम् । 'षोडश्युत्तरे' इत्यस्य वैखानससामविध्यर्थवादत्वमिति भाष्यमतम् । १०।५।१३।५३-५४. **मीको.** पृ. १८१ 'अङ्गिरसां द्विरात्रे षोडशिग्रहस्योपसंहारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **षोडशिग्रहस्य** उत्कर्षः, उक्थ्यानां दैवादुत्कर्षे सति, कर्तव्य एव । 'तं पराञ्चमुक्थ्येभ्यो निगृह्णाति' इत्युक्थ्योत्तरं षोडशिनो विधानात् । **वि.** ५।१।१८, * **षोडशिग्रहस्य** मुख्यस्य उक्थ्योत्तरत्वरूपकालं अबाधितुं उपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्रो ग्रह उत्क्रष्टव्यः । ५।१।१८. * **षोडशिग्रहे** सस्तुतशस्त्रे अग्निष्टोमादौ गृहीते संस्थान्यत्वं स्यात् । वचनात्तु अग्निष्टोमे उक्थ्ये वा गृहीतः सन् न संस्थान्यत्वं करोति । **भा.** १०।५।१२। ४९-५२.

* **षोडशिग्रहणस्य** अतिरात्रे प्रतिषेधः । **भा.** १०।८।३।६.

* **षोडशिग्रहणनिषेधस्य** विकल्परूपता अतिरात्रे । **वि.** १०।८।३.

* **षोडशिपात्रं** खादिरं ऊर्ध्वमानं च वाजपेये । **भा.** ३।१।९।१८.

* **षोडशियागाभ्यासस्य** कालः उक्थ्ययागाभ्यासोत्तरकालम् । **वा.** ५।१।१८।३५.

* **षोडशिशस्त्रे** 'व्यत्यस्तं षोडशिनं शंसति' इत्युक्तम्, तेन व्यत्यासः श्रौतः क्रमः अतिरात्रे । **भा.** ५।१।४।७.

* **षोडशिसंस्थे** (ज्योतिष्टोमे) प्रातरग्निहोत्रप्रभृति प्रतिहोमानुष्ठानम् । **भा.** ६।५।१४।४४.

* **षोडशिसंस्थायाः** चयनमङ्गं भवति । (न भवतीति सत्याषाढः- के.) । **वि.** २।३।१०. * **षोडशिसंस्थायां** उक्थ्यस्तोत्रोत्तरं षोडशिस्तोत्रं न तु तस्याप्युत्तरं अतिरात्रादि । **भाट्ट.** १०।५।१२.

**षोडशिसंस्थायां प्रातरग्निहोत्रमारभ्य प्रतिहोमानामनुष्ठानम् ॥**

**प्रातस्तु षोडशिनि । ६।५।१४।४४॥**

षोडशिसंस्थे ज्योतिष्टोमेऽतिपन्नेषु होमेषु संदेहः, किं सायमग्निहोत्रेण प्रतिहोतव्यमुत प्रातरग्निहोत्रेणेति । किं प्राप्तम् ? सायमग्निहोत्रेणेति पूर्वस्मिन्नधिकरणे उक्तम् । उत्सर्गेण सर्वत्रैवमिति प्राप्तम् । **तथा प्राप्ते, उच्यते** । प्रातस्तु षोडशिनि । षोडशिसंस्थे प्रातरग्निहोत्रप्रभृतीन्यतिपन्नानीति प्रातरग्निहोत्रादेव समारभ्याणीति ।

[ **सोम-वि-भाट्ट**-व्याख्यानानि **मीको.** पृ. २७४० 'प्रतिहोमपक्षे सायमग्निहोत्रमारभ्यानुष्ठानम्' इति बिन्दौ द्रष्टव्यानि । ]

**मण्डन**-- 'प्रातराद्याः षोडशिनि ।' षोडशिसंस्थायाः रात्रौ समाप्तिः भवति । तस्मात् तत्र अतिपाते प्रातर्होम एव प्रथमः । तस्मात् प्रतिहोमेषु अपि प्रातर्होम एव आदौ कर्तव्यः इति ।

**शंकर**-- 'षोडशिनि प्रातरादि ।'

* **षोडशिसंस्थायां** 'सौभरमुक्थ्यानां ब्रह्मसाम भवति' इति नित्यतया विहितम् । पुनश्च तत्रैव 'यो वृष्टिकामो योऽन्नाद्यकामः०' इत्यादिना फलत्रयाय सौभरं विधीयते इति काम्यमपि । **कौ.** २।२।१३।२७.

* **षोडशिसंस्थाविषयः** सौभरस्य नित्यविधिः । **सु.** पृ. ८७३.

* **षोडशिस्तोत्रस्य** उक्थ्योत्तरत्वरूपकाल-समयाध्युषितकालयोर्मध्ये प्रधानकालः उक्थ्योत्तरत्वरूप एव ग्राह्यः, अन्यस्तु बाध्यः । तस्मादुत्क्रष्टव्यः षोडशी । **टुप्.** ५।१।१८।३५. * **षोडशिस्तोत्रस्योत्कर्षः** उक्थ्यस्तोत्राणामुत्कर्षे । ५।१।१८।३५. **मीको.** पृ. १०८४ 'उक्थ्यस्तोत्राणामुत्कर्षे षोडशिस्तोत्रस्यापि उत्कर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **षोडशिस्तोत्रस्य** उपाकरणकालः समयाध्युषितः सूर्यः । समयः अस्तमयः तं अधि उषितः प्राप्तः समयाध्युषितः । **वि.** ५।१।१८.

# स

* 'सं' । आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नः तेन ( कात्यायनेन ) 'सं' इति संज्ञा कृता । वा. १।३।६।११ पृ. २३१ । यत्र आर्भवपवमाने गायत्रानन्तरं साम तत्र तस्य 'सं' इति संज्ञा । सु. पृ. २३०. * 'सं ते प्राणो वातेन०' इत्यादौ एकवाक्यार्थं वाक्यशेषाध्याहार एव कर्तव्यः न त्वनुषङ्गः, व्यवेतत्वात् । अग्नीषोमीयपशौ । वि. २।१।१८. * 'सं ते वायुर्वातेन गच्छतां, सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा' इत्यत्र गच्छतां इत्येष शब्दः 'सं यजत्रैरङ्गानि' इति बहुवचनान्तेन व्यवहितत्वात् 'सं यज्ञपतिराशिषा' इत्यत्र नानुषज्यते । लौकिकाध्याहारेण तु वाक्यसमाप्तिः । भा. २।१।१७।४९.

* संयवनं चरौ न कर्तव्यम्, पुरोडाशे तु पिण्डार्थं कर्तव्यम् । भा. १०।१।१३।५१. * संयवनं पिष्टस्योदकेन मिश्रणम् । वि. १०।१।११. * संयवनं पिष्टानां दर्शपूर्णमासयोः क्रियते 'प्रणीताभिर्हवींषि संयौति' । भा. १०।१।१३।५१, * संयवनं प्रणीतानां प्रयोजकम्, निनयनं तु प्रतिपत्तिः । 'अपः प्रणयति दर्शपूर्णमासयोः' । ४।२।५।१४–१५. * संयवनस्य बाधः सौर्ये चरौ । १०।१।१३।५४. 'सौर्ये चरौ संयवनस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* संयवनप्रयुक्ताः प्रणीताः दर्शपूर्णमासयोः । भा. ४।२।५।१४–१५.

* संयाज्ये त्रिष्टुभौ काम्ये नित्ये च संयोगपृथक्त्वेन दर्शपूर्णमासयोः । संकर्ष. ४।३।१२. मीको. पृ. २०४५ 'दर्शपूर्णमासयोः त्रिष्टुभौ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* 'संयुक्तान्येकापवर्गाणि' इति न्यायात् विहव्यान्वाधानं प्रधानेन एकैकेन सह कार्यम् । सत्या.श्रौ. १।२।६ वैजयन्ती.

**ॠ संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् । २।३।७।१८॥**

अग्निचयने 'नैवारश्चरुर्भवति' इत्युक्त्वा 'यदेनमुपदधाति' इति समामनन्ति । किमयं चरुः यागार्थः यागं कृत्वा अवशिष्ट उपधातव्यः उत उपधानार्थ एवायं इति विचारे वाक्यशेषे 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति देवतावचनेन एकवाक्यतया देवतासंयुक्तश्चरुः यागार्थ इति पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अर्थः कार्यं उपधानम् । अर्थवाचकशब्देन उपदधातिना संयुक्तः चरुः तदर्थः उपधानार्थ एव स्यात्, न यागार्थः । श्रुतिसंयोगात् । उपदधाति इति श्रुत्या चरोः साक्षात् संबन्धात् । बृहस्पतिना देवतया तु नीवारद्वारा परोक्षया संबन्धः । तस्मात् कृत्स्नः चरुः उपधानार्थ एवेति सिद्धान्तः । के.

* 'संयुक्तस्त्वर्थशब्देन तदर्थः०' (२।३।७।१८) इत्यधिकरणे उपक्रमस्य नैराकाङ्क्ष्यात् 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इत्यस्य वाक्यशेषस्य देवतासमर्पकत्वं निराकृत्य बृहस्पतिपदस्य ब्राह्मणपरत्वाङ्गीकारेण मुख्यत्वतया नीवारस्तुतिपरत्वनिर्णयात् अग्निचये 'नैवारं चरुमुपदधाति' इत्यस्य स्थण्डिलनिर्वृत्त्योपयिकया-श्रुतचरूपधानविधानेन निराकाङ्क्षस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इत्युपधानरूपगुणकर्मान्वयिदेवतासंबन्धप्रतिपादकवाक्यशेषानुसारेण यागविधायकत्वं नाङ्गीक्रियते । पराक्रमः. ४४।२. * संयुक्तस्य हि पृथग्भावः अपच्छेदः । भा. ६।५।१७।५०.

**ॠ संयुक्ते तु प्रक्रमात् तदङ्गं स्यादितरस्य तदर्थत्वात् । ५।२।४।६॥**

दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यति' इति विधानात् द्वित्वसंख्याविशिष्टमेकमवदानम् । तथा च आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात् प्रागेव अग्नीषोमीयस्य द्विरवदानं कार्यं इति अवदानमात्रेण अनुसमयः कार्य इति उत्सूत्रं पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तमाह । प्रदानान्तमवदानं एकः पदार्थः । तेन अनुसमयः कर्तव्यः



इति सिद्धान्तः । सूत्रार्थस्तु, संयुक्ते चतुरवत्तसंबद्धे होमे विधीयमाने प्रक्रमात् चतुरवत्तेन उपक्रमात् इतरस्य अवदानस्य तदर्थत्वात् होमार्थत्वात् तदन्तं ( तदङ्गं इत्यत्र पाठः) होमान्तं एकः पदार्थः स्यात् इति– बृ. ।

संयुक्ते चतुरवत्तसंयुक्ते होमे इतरस्य इतरस्य अवदानस्य प्रक्रमात् आद्यावयवत्वेन विधानात्, तदर्थत्वात् चतुरवत्तस्य होमार्थत्वात् तदन्तं होमान्तं एकः पदार्थः इति वा, संयुक्ते अवदानसंयुक्ते होमे विधीयमाने इतरस्य अवदानस्य तदर्थत्वात् होमार्थत्वात् अवदानेनैव होमप्रक्रमात् तदन्तं अवदानादिहोमान्तं एकः पदार्थः स्यात् इति वा कुतूहलम् ।

अवदानसंयुक्ते होमे विधीयमाने अवदानस्य होमार्थत्वात् अवदानेनैव होमप्रक्रमात् होमान्तमवदानं स्यात् इति सोमेश्वरः ।

वृत्ति–कुतूहल–सोमेश्वरेषु तदन्तं इत्येव पाठः । तन्त्ररत्ने च तथैव पाठः । भाष्यमूले तु तदङ्गं इत्यनूदितं न च व्याख्यातम् । तत्र तु तदङ्गं अवदानं होमाङ्गं होमस्य आद्योऽवयवः । तस्मात् प्रदानान्तमवदानं इति व्याख्येयम् । के.

* 'संयुक्ते तु प्रक्रमात्०' ( ५।२।३।६ ) इत्यत्र ह्यवदानस्य चतुरवत्तं जुहोति इत्येतदवयवत्वे विधानात् न पृथक्पदार्थत्वं इयुक्तम् । सोम. ५।२।६.

* संयोगः अन्यतरकर्मजः उभयकर्मजः संयोगजश्च भवति । ऋजु. पृ. २४२. * संयोगः । एकदेशसंयोगेऽपि संयोगप्रसिद्धिः । सु. पृ. ५३१. * संयोगः परमाणुषु व्याप्यवृत्तिः स्वीक्रियते । तत्तद्देशस्य अवच्छेदकत्वसंभवेन अव्याप्यवृत्तिसंयोगस्यापि नानुपपत्तिः । इति तार्किकाः । मणि. पृ. ४६. * 'संयोगः पूर्वसिद्धो हि निमित्तत्वं प्रपद्यते' । वा. ३।७।१९।४०. * 'संयोगा: विप्रयोगान्ताः' इति न्यायेन कृतकस्यानित्यत्वप्राप्तिः । उपदेशसाहस्री. पद्य १६।६२ रामतीर्थः.

* संयोगानुसारेण स्फ्यादीनां व्यवस्थितत्वं दर्शपूर्णमासयोः । वि. ३।१।५.

* संयोगादयः सद्वितीयं पदार्थमाश्रयन्तो नैकत्र निरूप्यन्ते, न च समुदायाश्रयाः । न च भवतः 'समूहः संयुक्तः' इति प्रत्ययव्यपदेशौ । अपितु 'अनेन एतत्संयुक्तं' इति वा, 'संयुक्ते एते' इति वा । समुदायैकार्थसमवायस्तु संयोगादीनाम् । कणिका. पृ. ४१६.

* संयोगादिवत् । पदार्थाः यद्यपि प्रत्येकं न क्रममनुलम्बन्ते, परस्परं मिलितास्तु संयोगादिवत् विततिरूपं क्रमं बिभ्रति । शा. ५।१।१.

* संयोगजसंयोगो नाङ्गीक्रियते । मणि. पृ. २०.

* संयोगतोऽविशेषात् प्रकरणाविशेषाच्च मुष्टीकरणवाग्यमयोः हस्तावनेजनस्य च कृत्स्ने प्रकरणे निवेशः सिद्धान्तः । भा. ३।१।१४।२४–२५.

* संयोगपृथक्त्वात् स्तरणस्य बर्हिःसंस्कारकत्ववत् वेदिसंस्कारकत्वमपि । भाट्ट. ११।४।१४.

**ॠ संयोगपृथक्त्वन्यायः** । खादिरत्वादिन्यायः । दधिन्यायः । संयोगान्तरन्यायः । अग्निहोत्रे दध्नः नित्यत्वं काम्यत्वं च संयोगपृथक्त्वेन ॥

**एकस्य तूभयत्वे संयोगपृथक्त्वम् ।४।३।३।५॥**

भाष्यम् — अग्निहोत्रे श्रूयते 'दध्ना जुहोति' इति । पुनश्च 'दध्नेन्द्रियकामस्य जुहुयात्' इति । तथा अग्नीषोमीये पशौ आम्नायते 'खादिरे बध्नाति' इति, पुनश्च 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति । तत्र संदेहः किमत्रापि अन्यत् नित्यार्थं उत नैमित्तिकमेवेति । किं प्राप्तम् ? पूर्वेण न्यायेन अन्यदिति । एवं प्राप्ते, ब्रूमः । एकस्य उभयत्वे –नित्यत्वे नैमित्तिकत्वे च संयोगपृथक्त्वं कारणम् । तदिह संयोगपृथक्त्वमस्ति । एकः संयोगः 'दध्ना जुहोति' इति, एकः 'दध्नेन्द्रियकामस्य' इति । तथैकः 'खादिरे बध्नाति' इति, अपरः 'खादिरं वीर्यकामस्य' इति । तस्मात् नित्यार्थे कामाय च दधिखादिरादीति ।

टुप् — संयोगपृथक्त्वं हि एकस्यापि उभयरूपत्वे कारणम् । तस्मात् ईदृगुभयार्थम् ।

**शेष इति चेत् । ६ ॥**

**भाष्यम्** — इति चेत् पश्यसि, कस्मान्न पूर्वस्यामपि शेषो भवति । यदेतदुक्तं 'दध्ना जुहोति'

'खादिरे बध्नाति' इति । तस्यैव तु दध्नः फलमिन्द्रियम्, तथा खादिरस्य वीर्यम्। तच्चेदं चैकं वाक्यमिति ।

टुप्— यथा प्रणयनमनूद्य चमसे विधीयमानेऽपि एकवाक्यत्वम्, एवं यद्दध्ना जुहोति तदिन्द्रियकामस्येति । एवं च आकाङ्क्षोपरमार्थं उभयोरप्येकवाक्यतेति ।

**नार्थपृथक्त्वात् । ७ ॥**

**भाष्यम्**— नैतदेवम् । पृथगेतावर्थौ— यश्च दधिहोमसंयोगः यश्च दधीन्द्रियसंयोगः । तथा खादिरस्य वध्नातिना संयोगो वीर्येण च द्वावेतावर्थौ । द्वावपि च विधित्सितौ । अर्थैकत्वाच्च एकं वाक्यं समधिगतम् (२।१।१४) । इह अर्थद्वयेन भिद्येत वाक्यम् । कथम्? जुहोतिसमभिव्याहृता विधिविभक्तिः असंभवे श्रौतहोमविधानस्य गुणं समभिव्याहृतं विधातुमर्हति, तदसंभवे गुणफलसंबन्धम् । तत्र हि अत्यन्ता श्रुतिरुत्सृष्टा वाक्यानुरोधेन स्यात् । न च युगपत्संभवासंभवौ संभवतः । तस्मात् यदेव नैमित्तिकं तदेव नित्यार्थमिति ।

टुप्— प्रणयनं विधीयमानमेव पात्राकाङ्क्षं सत् विधीयते । तत्र यत् प्रणयति केनापि पात्रेण तत् चमसेनेति तस्याऽऽकाङ्क्षां निवर्तयति । अतश्चमसस्य युक्ता एकवाक्यता, प्रयोजनैक्यात् । इह तु 'दध्ना जुहोति' इति होमप्रयोजनेनैव निराकाङ्क्षत्वात् नान्यत् प्रयोजनमपेक्षते । एतदपि इन्द्रियेण साध्येन निराकाङ्क्षीकृतम् । तस्मात् द्वयोरपि भिन्नसाध्ययोः परस्परसंबन्धो नास्ति, अर्थे भेदात् ।

शा— '**पूर्वाधिकरणन्यायात् काम्यत्वेन श्रुतं दधि । न नित्यार्थमुपादेयमतोऽन्यन्नित्यमिष्यताम् ॥ नैवमेतस्य वाक्यस्य कामवाक्यैकवाक्यता । गम्यतेऽतो न नित्यार्थे पृथग् दधि विधीयते ॥ द्वयोरेकस्य वाऽऽकाङ्क्षा भवेद्यदि ततस्तयोः । प्रकल्प्येतैकवाक्यत्वं निराकाङ्क्षं त्विहोभयम् ॥**'

वि— 'दध्ना त्विन्द्रियकामस्य नित्येऽन्यदुत तद्दधि । अन्यत् स्यात्, पूर्ववत्, मैवं संयोगस्य पृथक्त्वतः ॥'

भाट्ट— यत्र तु विध्यन्तरं 'दध्ना जुहोति' इत्यादि श्रुतम्, तत्र काम्यस्यापि द्रव्यान्तरेण विकल्पः । द्रव्यान्तरविध्यभावे तु तस्यैव ग्रहणम् । न च 'दध्ना जुहोति' इत्यादि दध्यादेः उत्पत्तिविधिः, उक्थ्यव्यूढादिवत् अस्य अलौकिकत्वाभावात् । नापि काम्यदध्यादेः आश्रयविधिः, तस्य प्रकरणलभ्यत्वेन वैयर्थ्यात् । अतो नित्यप्रयोगे अङ्गताबोधार्थमेव स विधिः इति तस्य उभयप्रयुक्तत्वम् ।

**मण्डन**— 'नित्ये काम्ये च दध्यादि ।'

**शंकर**— 'दध्यादेरुभयार्थता ।'

* ('पशुकामश्चिन्वीत, प्रजाकामश्चिन्वीत' इत्यादिवाक्यैः) अग्नेः काम्यत्वावगमेऽपि 'अथातोऽग्निमग्निष्टोमेन' इत्यादिवचनैः **संयोगपृथक्त्वन्यायेन** क्रत्वर्थत्वमपि वक्ष्यते । कौ. १।२।१।५. * आधानोत्तरं क्रतुकरणात्प्राक् यजमानमरणे दाहकरणम्, दाहस्य संस्कारेषु पाठेन पुरुषार्थत्वस्यापि संयोगपृथक्त्वन्यायेन सत्त्वात् बोध्यम् । **भाट्ट.** ११।३।१३ * 'उत्तरवेद्यामग्निं निदधाति' इति वचनेन उत्तरवेदेः संयोगपृथक्त्वन्यायेन साक्षात् अग्निधारणार्थत्वेनापि विनियोगः । **कौ.** २।३।१०।२२. * दर्शपूर्णमासयोः 'त्रिष्टुभौ वीर्यकामस्य' इति श्रुतम्, तत्र त्रिष्टुप्–शब्देनापि द्रव्यवचनेन संनिहितयोर्ऋचोः परामर्शसंभवात् संयोगपृथक्त्वेन उभयार्थता । **संकर्ष.** ४।३।१२. * पवमानेष्टीनां नित्यप्रयोगे सहत्वविधानेऽपि संयोपृथक्त्वन्यायेन फलार्थे सहत्वं दध्यादिवत् विधीयते । **भाट्ट.** ११।४।४, * प्रतिग्रहादेरपि संयोगपृथक्त्वन्यायेन क्रत्वर्थत्वस्य स्थापितत्वात् प्रयाजादिवत् क्रतुना तदाक्षेपोपपत्तेश्च अद्रव्योऽपि नरः द्रव्यमार्जयित्वा अधिक्रियते एव । ६।१।८, * 'सर्वेभ्यो ज्योतिष्टोमः' 'सर्वेभ्यो दर्शपूर्णमासौ' इति वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्वफलार्थत्वम् । ४।३।८.

* **संयोगप्रत्यक्षे** यावदाश्रयप्रत्यक्षं हेतुः । **मणि.** पृ. १६.



* **संयोगविचारः** क्रियांश्रित् । संयोगस्य संयोगिषु कथं वृत्तिः? किं जातिवत्, किंवा अवयविवत् । उभयविलक्षणा इति ब्रूमः । स हि संयोग्यन्तरमपेक्ष्य संयोग्यन्तरे वर्तते नानपेक्ष्य इति न जातितुल्यत्वम् । एकत्रैव च स्वानुरूपां जनयति बुद्धिं 'इदमनेन संयुक्तम्, इदमनेन' इति । तेन अवयविनाऽपि नातीव तुल्यत्वं इत्युभयवैलक्षण्यम् ।

अथ संयोगः किमेक एव द्वयोः संयोगिनोः उत प्रतिसंयोगि भिन्नावेव संयोगौ । काश्यपीयास्तावत् संयोगं उभयोर्व्यासक्तं एकं मन्यन्ते । वयं तु यथा 'इदमनेन सदृशं इदमनेन' इति प्रतियोगिनमपेक्ष्य इतरत्र इतरस्य अवगम्यमानं सादृश्यं प्रतिधर्मि भिन्नं भवति तथा संयोगस्य तादृशबुद्धिविषयत्वात् भेदमेव रोचयामहे । शा. १।१।५ पृ. १०३.

* **संयोगिनो**श्चान्यतरो दृश्यमानः इतरं अदृश्यमानमपि अनुमानाद् बुद्धौ संनिधापयति । अभिधानवत् । **भा.** ८।१।२।२.

* **संवत्सरात्** पुरा पवमानहवींषि निर्वपेत् आधानसमनन्तरं सोमेनायक्ष्यमाणः । 'यः सोमेनायक्ष्यमाणोऽग्निमादधीत, स पुरा संवत्सरात् हवींषि निर्वपेत्' इति । **भा.** ५।४।३।८. * 'संवत्सराद्धि एतदधि भवति' (व्रीहिसस्यं यवसस्यं वा) इति । **संकर्ष.** ३।१।८. * **संवत्सरेषु** पञ्चसु भिन्नानामेवोक्ष्णां आनयनं उक्षवाक्ये कर्मशेषप्रतिषेधविधानात् पञ्चशारदीयेऽहीने । पञ्चशारदीयाधिकरणम् । **भा.** ११।२।१३।५४–५६.

* **संवत्सरादिकाल**: पवमानेष्टीनां सोमेनायक्ष्यमाणस्य । सोमाधानपक्षे तु तासां सद्यः एव करणम् । **भाट्ट.** ५।४।३.

* **संवत्सरव्यवहार**: परुत् सस्यपाकादिः, ऐषमः सस्यपाकावधिकाले भवति लोके । **संकर्ष.** ३।१।१७.

* **संवत्सरशब्देन**–'सहस्रसंवत्सरं सत्रं' इत्यत्र– गौणत्वेन मास उच्यते 'यो मासः स संवत्सरः' इति वचनात् । द्वादशरात्रीणां वा संवत्सरत्वं 'संवत्सरस्य प्रतिमा वै द्वादश रात्रयः' इति वचनात् । इति **पूर्वपक्षः** । संवत्सरशब्दो दिनपरः इति **सिद्धान्तः** । सहस्रसंवत्सरं सहस्रदिनम् । वि. ६।७।१३. * **संवत्सरशब्दस्य** दिवसपरत्वात् विश्वसृजामयने सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः । ६।७।१३।३१–४०. **मीको.** पृ. २९८ 'अधिकारः विश्वसृजामयने०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संवत्सरसत्रे** 'पत्नय उपगायन्ति' । 'ऋत्विज उपगायन्ति' इति सहस्रसंवत्सरे । **भा.** ८।१।११।१८. * **संवत्सरसत्रेषु** गवामयनधर्माणामतिदेशः । ८।१।११।१८. **मीको.** पृ. २२७ 'अतिदेशः संवत्सरसत्रेषु गवामयनधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संवत्सरसत्रत्वं** सोमप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

* **संवपनं** उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः । तत् चरौ न कर्तव्यम्, पुरोडाशार्थे हि तत् । **वि.** १०।१।१४.

**संवपनं च तादर्थ्यात् । १०।१।१४।५५ ॥**

सौर्ये चरौ संवपनं न कर्तव्यं संवपनस्य तादर्थ्यात् पिण्डार्थत्वात्। इति **सिद्धान्तः** । **के.**

* **संवपनस्य** सौर्ये चरौ बाधः । १०।१।१४।५५. 'सौर्ये चरौ संवपनस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**संवादाधिकरणम्** । रजस्वलया संवादस्य निषेधः पुरुषार्थः ॥

**प्रागपरोधान्मलवद्वाससः । ३।४।७।१८ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'मलवद्वाससा न संवदेत्, नास्या अन्नमद्यात्' इति । तत्र संदेहः किं मलवद्वाससा सह दर्शपूर्णमासाङ्गस्य संवादस्य प्रतिषेधः उत पुरुषस्य सर्वत्र प्रतिषेधः इति । किं प्राप्तम्? प्रकरणात् दर्शपूर्णमासयोः प्रतिषेधविधिः । एवं प्राप्ते, ब्रूमः । मलवद्वाससा सह संवाद उत्कृष्येत, प्रकरणात् । कस्मात् । प्रागपरोधात् । एवं श्रूयते 'यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत' इति । पत्न्या च सह संवादः अध्वर्योः दर्शपूर्णमासयोरस्ति 'पत्नि पत्न्येष ते लोकः' इति । प्रसज्यमानः प्रतिषिध्येत । स चाप्राप्त एव प्रागपरोधादपनीय तां यागमनुतिष्ठतां

कथं संवादः प्रसज्येत । यतः प्रतिषेधमर्हेत् । तस्मात् उत्कृष्येत मलवद्वाससा सह संवादः ।

**वा--** 'नास्या अन्नमद्यात्' इति वाक्यान्तरमपि सदन्यार्थदर्शनौपयिकत्वात् सहोदाहृतम् । मलवद्वासाः ऋतुमती स्त्री । तत्संवादप्रतिषेधेऽपि त एव पक्षाः । तत्र यच्छब्द–जञ्जभ्यमानशब्द–तुल्योपादानशब्दाभावात् संवादस्य च क्रतौ पुरुषे चाविशेषप्रसक्तेः अभिहिते-नानृतवदनप्रतिषेधन्यायेन 'पत्नि पत्न्येष ते लोकः' इत्यादेः क्रत्वर्थस्य संवादस्य प्रतिषेध इति प्राप्तेऽन्यथा प्रत्यवस्थीयते । '**निषेधः प्राप्तिपूर्वोऽयं प्राप्तिश्च पुरुषे स्थिता । न हि प्रागपरुद्धायाः प्राप्तिरस्ति क्रतुं प्रति ॥**' 'तामपरुध्य यजेत' इति हि सामान्यतः सर्वस्मादेव क्रत्वनुष्ठानात् असौ निवर्तिता कथं संवादे प्रसज्येत । पुरुषस्य तु स्वातन्त्र्यात् सर्वकालसंवादे प्राप्ते, निषेधस्यार्थवत्ता । यदि च स्मृतिरेवमर्था विद्यते, ततो मूलमूलिभाव एवाभ्युपगन्तव्यः । न हि केनचिन्नित्यानुवादत्वमुक्तम् ।

**अन्नप्रतिषेधाच्च । १९ ॥**

**भाष्यम्—** अन्नप्रतिषेधश्च भवति 'नास्या अन्नमद्यादभ्यञ्जनं वै स्त्रिया अन्नम्' इत्युपगमनप्रतिषेध एष विधीयते । स च प्रकरणे न प्रसक्त इति, प्रकरणादुत्कृष्टः पुरुषधर्म एष निश्चीयते ।

**वा--** इतश्च पुरुषमात्रधर्मः । कुतः ? '**प्रायोवचनंनिर्णेयं संदिग्धं वस्तु वर्णितम् । ( २।३।६ ) असंदिग्धश्च पुंधर्मो नास्या अन्नमिति स्मृतेः ॥**' 'नास्या अन्नमद्यात्' इति 'अभ्यञ्जनं वै स्त्रिया अन्नम्' इति वाक्यशेषादुपगमनप्रतिषेधः । तथाहि, लाटानामप्यभ्यञ्जनपर्यायान्तरवाच्यलक्षणमुपगमनं प्रसिद्धम् । तच्च न कदाचिच्छब्दादर्थाद्वा क्रत्वर्थे प्रसक्तम् । पुरुषार्थं तु सर्वप्राणिप्रसिद्धम् । यदर्था च प्राप्तिस्तदर्थः प्रतिषेध इत्युक्तम् । ब्रह्मचर्यविधानाच्च न ऋतुकाले पुरुषार्थस्यापि सतस्तत्प्रसक्तिर्येन स्वकाले निषिध्यते । तस्मादुल्लङ्घ्य तावत्प्रकरणमेष तावत्पुरुषधर्मो भवति । ततश्च तत्सामान्यादितरेषु तथात्वमिति संवादतादर्थ्यसिद्धिः ।

**शा--** दर्शपूर्णमासयोः श्रूयते 'मलवद्वाससा न संवदेत्' इति । किमयं प्रतिषेधः क्रत्वर्थः उत पुरुषार्थः इति । प्रकरणात्क्रत्वर्थत्वे प्राप्ते, **अभिधीयते** । 'तामवरुध्य यजेत' इति वचनात् सर्वस्मादेव क्रतुव्यापारान्निवृत्ता रजस्वला, तेन न अनया सह संवादस्य प्रसक्तिः । प्रसक्त्यभावाच्च प्रतिषेधानुपपत्तिः । पुरुषस्य हि स्वातन्त्र्येण प्रवर्तमानस्य रजस्वलया प्रसज्यते संवादः । तेन यत्र प्रसक्तिः तत्र प्रतिषेधः इति पुरुषार्थता ।

**सोम--** मलवद्वाससा रजस्वलया इत्यर्थः । पूर्ववत् इहापि फलाभावात् क्रत्वर्थत्वमिति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु–** मलवद्वाससः संवादनिषेधनमपि पुरुषार्थः, तस्याः प्रयोगारम्भात् पूर्वमेव अवरोधादिति ।

**वि--** 'न संवदेत मलवद्वाससेत्यपि पूर्ववत् । पुमर्थः स्यात्क्रतौ क्वापि संवादस्याप्रसक्तितः ॥'

**भाट्ट--** दर्शपूर्णमासयोरेव 'मलवद्वाससा न संवदेत' इति श्रुतम् । मलवद्वासाः रजस्वला । अस्य प्रतिषेधस्य फलाश्रवणात् क्रत्वङ्गत्वे नानुपपत्तिः । न च 'यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत' (तैब्रा. ३।७।१) इति वचनेनैव अनालम्भुकापदवाच्यरजस्वलाऽपरोधोत्तरं क्त्वाप्रत्ययेन यागप्रयोगकर्तव्यताविधानात् क्रत्वङ्गभूतस्य लौकिकस्य च याजमानस्य आर्त्विज्यस्य वा रजस्वलासंवादस्याप्रसक्तेः कथं प्रतिषेध इति वाच्यम्, अन्यस्याप्रसक्तावपि साधारणद्रव्यतया व्रीह्याद्यंशेऽनुमतिरूपस्य तस्य प्रसक्तेः । अनुमतेरपि परंपरया ज्ञातुं शक्यत्वेन संवादाप्रसक्तौ तु पत्न्यतिरिक्तरजस्वलान्तरसंवादस्य क्रतुमध्ये रागतः प्राप्तस्यापरोधवाक्याविषयस्य स्मृतौ निषिद्धस्यापि क्रत्वर्थतया प्रतिषेधोऽनृतवदनप्रतिषेधवदिति **प्राप्ते**, मनुना 'रजस्वला च षण्ढश्च' इत्यादि प्रक्रम्य 'होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते । दैवे हविषि पित्र्ये वा तद्गच्छत्ययथायथम् ॥' इत्युक्त्वा 'तानप्यपनयेत्ततः' इत्यनेन रजस्वलामात्रस्य दैवकर्ममात्रे वाक्येन श्राद्धप्रकरणं बाधित्वाऽपनयविधानात्तया सह संवादाप्रसक्तेर्न क्रत्वर्थत्वम् । न च इयमेव श्रुतिस्तस्या मूलम् । स्मृतेर्दैव-



कर्ममात्रविषयत्वेन सामान्यरूपत्वात् । न च रजस्वलामात्रस्यापनयेऽपरोधवाक्यवैयर्थ्यं अपरोधवाक्यस्य पत्न्या सहैव पत्युरधिकारात् रजस्वलायाश्च अनधिकारेण तां विना यागाकरणप्रसक्तौ दर्शपूर्णमासकरणविध्यर्थत्वात् । अत एव तत्रत्यमपरुध्य इति अनुवादः । अतश्चाप्रसक्तत्वात् पुरुषार्थ एवायं निषेधः । श्रौतप्रायश्चित्तप्राप्त्यर्थ इति तु शक्यते वक्तुमिति ध्येयम् ।

**मण्डन—** 'सर्वार्थताऽसंवदतेर्मलिन्या ।' सर्वार्थता सकलसाधारणपुरुषार्थत्वं इत्यर्थः ।

**शंकर—** 'उदक्या भाषा हानं च ।'

* **संवादत्वं** तद्विषयविषयकत्वम् । **मणि. पृ. १४.**

**संवादिभ्रमन्यायः** । यथा कश्चित् मणिप्रभां मणिबुद्धया पश्यन् भ्रान्त एव, तथापि तद्ग्रहणकाले मणिं लभतेऽतः स संवादिभ्रमः, एवं त्वंपदार्थं तत्पदार्थमणिप्रभाभूतं तत्पदार्थबुद्ध्या भावयन् व्यवहारतो भ्रान्त एव, तथापि तत्साक्षात्कारकाले तदनन्यस्य तत्पदार्थस्य साक्षात्कारोऽपि संवादिभ्रमन्यायेन जायते इति **नीलकण्ठः** । संवादिनी सदृशीत्यर्थः । तस्या भ्रमः संवादिभ्रम इत्यर्थः । **साहस्री. ९२१.**

* **संवित्** । अर्थविषया हि प्रत्यक्षा संवित्, न बुद्धिविषया । बृहती. पृ. १२८, * संवित् । एकसंवेद्यविषयैव हि एका संवित् । न सा वेद्यद्वयविषया । किमसंवेद्यैव संवित् ? न ब्रूमो न संवेद्या संविदिति । संवित्तयैव हि संवित् संवेद्या न संवेद्यतया । पृ. ६४. * संविदेव तेनतेन रूपेण अनुभूयते न व्यतिरिक्तं किंचित् विज्ञानवादे । ऋजु. पृ. १६५. * संवित् । न च असंवेद्यैव संवित्, तन्मूलत्वात् सर्वभावानां संवेद्यभावस्य । बृहती. पृ. ६४. * संवित् । स्वयंप्रकाशरूपत्वात् संविदः न पराधीनप्रकाशः इति न कर्मता । प्रत्यक्षशब्दोऽपि संविदां अपरोक्षतया, न पुनः इन्द्रियज्ञानवेद्यतया । ऋजु. पृ. ६४. * **संविदः** प्रत्यक्षत्वम् । बृहती. पृ. २६.

* **संवित्स्वप्रकाशता** । स्वप्रकाशत्वं नाम स्वसंबद्धव्यवहारे संविदन्तरनिरपेक्षत्वम् । **ननु** संविदो व्यवहारः शब्दप्रयोगरूपः, तस्य संविच्छब्देन सह वाच्यवाचकसंबन्धज्ञानसापेक्षत्वादसंभवि लक्षणम् । नैवं स्वसंबद्धव्यवहारे ग्रहणान्तरनिरपेक्षत्वमित्यर्थः । संविद्व्यवहारस्तु वाच्यवाचकसंबन्धस्मरणमेवापेक्षते । ग्रहणापेक्षा च स्मरणार्था, गृहीतेऽपि संबन्धे स्मृते शब्दप्रयोगाभावात् । अतः प्रमातृप्रमेययोः स्वव्यवहारे संविदपेक्षत्वात् अस्वप्रकाशत्वमिति नातिव्याप्तिः । प्रमाणं च अनुमानं अर्थापत्तिर्वा । अनुमानं तु– घटादिसंविद्व्यवहारो घटादिसंविन्निबन्धनः तदनन्तरमुपजायमानत्वात्, घटव्यवहारवदित्यादि । अर्थापत्तिस्तु– घटसंविद्व्यवहारो घटज्ञानहेतुतां विना नोपपद्यते इति घटसंविद्विषयसंविद एव सिद्धेः । न चान्योपपत्तिः वक्तुं शक्यते ।

**ननु** सर्वत्र व्यवहार्यातिरिक्तसंविद्धेतुक एव व्यवहारो दृष्टः, कथमत्र संविद्व्यवहारे संविद्धेतुकत्वं व्यवहारस्य साध्यते ? नैवम्, व्यवहार्यातिरिक्तहेतुकत्वं यदि दर्शनादेवाङ्गीक्रियते तर्हि व्यवहार्यविसजातीयहेतुकत्वं व्यवहारस्य दृष्टमिति तदप्यङ्गीक्रियताम्, ततश्च संविद्व्यवहारस्य संविद्धेतुकत्वमपि न स्यात् । व्यवहार्यविसजातीयहेतुकत्वमत्र त्यजतां कः पक्षपातहेतुः ? क्लृप्तेन कारणेनोपपत्तौ संविद्द्वितयकल्पनमनुचितम् ।

एवं वाऽनुमानम्, संवित् स्वप्रतिबद्धव्यवहाररूपकार्ये सजातीयपरानपेक्षा, तथाभूतपरगतकार्यकारित्वात्, यद्यथाभूतपरगतकार्यकारि तत् स्वगततथाभूते कार्ये सजातीयपरानपेक्षं यथा रूपं रूपान्तरानपेक्षं परिमाणं वा परिमाणान्तरानपेक्षम् ।

**ननु** लिङ्गलिङ्गितेन लिङ्गेनानैकान्तिकः, यथा धूमेन अग्निरनुमीयते, अग्निना चौष्ण्यम्, तत्र अग्निः परत्रानुमानज्ञानकार्यं करोति, स्वानुमाने च धूमं अपेक्षते, नैवम्, तत्रापि विजातीयलिङ्गापेक्षत्वात् । न हि सजातीयशब्देन अत्यन्तापरजातिरभिप्रेता, एवं तर्हि घटज्ञानस्य घटज्ञानान्तरापेक्षाऽस्मन्मतेऽपि नास्ति, ज्ञानविषयज्ञानमेवापेक्षते, अतश्च सिद्धसाधनमिति चेत्, नैवम्, ज्ञानं सर्वमेकजातीयम्, घटज्ञानं पटज्ञानमित्युपाधिभेदात् भेदः, यत्र तूपाधिमन्तरेण स्वत एव भेदो

निरूपयितुं शक्यते तत्र भेदाभ्युपगमः, अतश्च न सिद्धसाधनता ।

ननु अङ्गुल्यग्रेऽनैकान्तिकत्वं यथा च अङ्गुलिः परगतस्पर्शकार्यं करोति अथ स्वगते स्पर्शेऽङ्गुल्यन्तरमपेक्षते । तथा चोक्तम् ' अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ।। ' इति ।

नैवम्, यस्य पदार्थस्य यदसाधारणं कार्यं तस्य कार्यस्य स्वस्मिन्नुत्पत्तौ सजातीयपरानपेक्षत्वं साध्यम्, इह तु स्पर्शकार्ये अङ्गुल्या नैवासाधारणं अवयवान्तरेणापि स्प्रष्टुं शक्यत्वात् । व्यवहाराख्यं तु कार्यं ज्ञानस्यैव, रूपव्यवच्छेदोऽपि रूपस्यैव, मानव्यवहारोऽपि परिमाणस्यैव, अतो न कश्चिद्दोषः ।

परप्रकाश्यत्वे यदनुमानम्– परापेक्षत्वात् गुणत्वात् व्यवहार्यत्वादात्मगुणत्वादित्यादि, तत् सर्वं धर्मिग्राहकप्रमाणविरुद्धत्वात् बाधितविषयम्, ज्ञानस्य स्वत एव सिद्धिः न ज्ञानान्तरेणेत्युक्तत्वात् । तदुक्तम्– 'स्वत एव यदुत्पद्यते न तत्र परापेक्षा ' इति, ' धीकर्मणः सिद्धिमभ्युपगच्छताऽवश्यं धीत्वेनापि सिद्धिरुपेया ' इति । परप्रकाश्यत्वनिराकरणेऽपि अनुमानं व्यतिरेकिरूपमस्ति, अनुभूतित्वात् प्रकाशत्वात् ज्ञानत्वात् व्यवहारहेतुत्वादित्यादि, एतच्च नासाधारणम्, सपक्षाभावाद्विपक्षाभावाच्च ।

यच्चोक्तं– किं स्वस्य प्रकाशः स्वप्रकाशः किंवा स्वश्चासौ प्रकाशश्च इत्यादि, तदतिमन्दम्, प्रकाशशब्देन व्यवहारहेतुत्वमुच्यते ' घटप्रकाशः ' इति घटव्यवहारहेतुरित्यर्थः । ' स्वप्रकाश: ' इति स्वयमेव स्वव्यवहारहेतुरित्यर्थः । अतः स्वयंप्रकाशा संविदिति सिद्धम् । प्रवि. पृ. २६–२९.

* **संवेष्टितपटप्रसारितपटन्यायेनैव** अनन्यत् कारणात् कार्यम् । यथा संवेष्टितः पटः प्रसारितात् पटात् न भिन्नः न वा प्रसारितात् संवेष्टितः । तद्वत् । **शांभा.** २।१।६।१९.

* **संशयः** । धर्मिज्ञानाभावेऽपि धर्मीन्द्रियसंनिकर्षमात्रेण संशयोत्पत्तिः । सत्यपि प्रामाण्यज्ञाने दोषवशादेव संशयोत्पत्तिः । **मणि.** पृ. १८. * संशयः सर्वाप्रसिद्धावपि भवति । यथा को नामायं पर्वतः, का नामेयं नदी, किमिदं फलं इति । **भा.** १०।२।२४।५९. * यत्र **संशयः**, तत् प्रत्याय्यं भवति । **वा.** १।३।९।३३ पृ. ३०४. * **संशयात्** संस्कारो न जायते । **मणि.** पृ. १२.

* **संशयार्थो** मन्त्रः यथा– ' तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ' इति । अत्र ह्येषां ' कवयो मनीषा ' इति पूर्वस्यामृचि निर्दिष्टानां कवीनां रश्मिः तिरश्चीनो विततः किमध आसीत् उतोपरीति स्विच्छब्दादधः स्विदासीदिति उपरि स्विदासीदिति च विचार्यमाणार्थयोर्वाक्ययोष्टेः क्रमेण उदात्ताया अनुदात्तायाश्च ' विचार्यमाणानाम् ' ( पा. ८।२।९७ ) ' उपरिस्विदासीदिति च ' ( पा. ८।२। १०२ ) इति सूत्राभ्यां विहितात् प्लुताच्च संशयो गम्यते । **बाल.** पृ. ६१.

* **संशयार्थवादः**– ' होतव्यं गार्हपत्ये न होतव्यम् ' इति । **बाल.** पृ. ५०.

ꕥ **संशयात्मा विनश्यतीति न्यायः । साहस्री.** ७६५.

* **संशयापादनात्** परपक्षे जितेऽपि स्वपक्षसिद्धिर्दुर्लभैव । **वा.** १।३।८।२६ पृ. २७७.

* **संशयोत्थापनोपयोगः** । ' संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये । इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ।। ' दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादातिभारात् भारैकदेशावतारणार्थे संशयोत्थापनमेव तावद्युक्तम् । **वा.** १।३।८।२५ पृ. २७५.

* **संशयवादः** । असंशयितेऽपि संशयवादो भवति । यथा ' ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः । शास्त्राणि चेत् प्रमाणं स्युर्यातास्ते परमां गतिम् ।। ' इति । तथा यद्यपि वैकृत एव पशुः तथापि ' वैकृतश्चेत् ' इति सूत्रकारेण असंशये अपि संशयवादः उदितः । **भा.** १२।२।१२।३०.

* **संशयहेतुरेव** न हि निर्णयहेतुर्भवति । **शा.** १।१।५ पृ. ७७.



* **संशरः** । यदि न्यूनच्छन्दस्का ऋचः उपादास्यामहे, गीतिं संशृणीयाम ( गीतिः अपूर्णा स्यात्, अंशनाशः स्यात् ) । संशरः हिंसा नाशः । **भा.** ९।२।४। २१. * संशरः साम्नो हिंसा, यदि अधिकच्छन्दस्कायामृचि उत्पन्नं साम न्यूनच्छन्दस्कायामृचि गीयेत, तदा केनचिदेव सामभागेन ऋक्पूर्तेः अवशिष्टसामभागः आश्रयाभावात् हिंस्येत । **रसायनम्** . पृ. ४६.

* ' **संसर्गोऽपि** पदार्थानामन्योन्येनानुरञ्जनम् ' । **वा.** २।१।१४।४६, * संसर्गः पदार्थान्तर्गतत्वात् न वाक्यार्थो भवति । २।१।१४।४६ पृ. ४४७. * संसर्गः वाक्यार्थः नैयायिकमते । **बाल.** पृ. ७३. * संसर्गः विशेषणविशेष्यसमभिव्याहारगम्यत्वात् संसर्गमर्यादया लभ्यः । इति नैयायिकाः । **मणि.** पृ. १७३.

ꕥ **संसर्गजा दोषगुणा भवन्तीति न्यायः** । यथा ' संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते, मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते, प्रायेणाऽधममध्यमोत्तमगुणः संसर्गतो जायते ।। ' इति श्लोकेन विवृतोऽयं न्यायः । **साहस्री.** ९९.

* **संसर्गिणोऽर्था** नोह्यन्ते पशुगणेषु । ( ' सूर्यं चक्षुर्गमयतात् ' इत्यादौ सूर्यं चक्षुषी इति, सूर्यं चक्षूंषि इति वा नोहः ) । **भा.** ९।३।१०।२७–२८.

ꕥ **संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्** । ९।३।१०।२८ ।।

अग्नीषोमीये पशौ अध्रिगुप्रैषे ' सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात् ' इति पठ्यते । अथ द्विपश्वादिषु पशुगणेषु ' सूर्यं चक्षुषी गमयतात्, वातं प्राणौ अन्ववसृजतात्' इतिरित्या ऊहः कर्तव्यो न वेति विचारे सिद्धान्तमाह । संसर्गिषु शरीरसंसृष्टेषु चक्षुः प्राणः इत्यादिषु द्रव्येषु प्रतिनिधिवत् ऊहो न स्यात् । च–शब्दात् ऊहो नेत्यस्य अनुकर्षः । तत्र हेतुमाह । अर्थस्य तेजसः क्रियाशक्तेश्च अस्थितपरिमाणत्वात् स्वतः स्थितसंख्याकत्वाभावात् नियतसंख्याकत्वाभावात् एकस्य पशोः चक्षुर्गोलके द्वे, द्वयोः पश्वोः चत्वारि । चक्षुस्तेजस्तु एकमेव । एकस्मिन्नेव रश्मय एकीभूताः । तस्मात् एकवचनान्तः तेषां चक्षूरश्मीनां वाचकः शब्दः इति अनूहः । एवं प्राणादावपि ।

**लिङ्गदर्शनाच्च । २९ ।।**

अध्रिगुप्रैषे ' सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात् ' इत्यत्र चक्षुः प्राणः इत्यत्र पशुगणे ऊहो न कर्तव्यः इति सिद्धान्ते हेत्वन्तरमाह । संसर्गिणोऽर्थाः चक्षुःप्राणादयो नोहितव्या इत्यत्र 'न माता वर्धते न पिता, न नाभिः प्राणो हि सः ' इति प्राणस्य सिद्धं ऊहाभावं हेतुत्वेनोपदिशति । तदेतत् लिङ्गस्य दर्शनं संसर्गिणो नोह्यन्ते इत्यत्र प्रमाणम् । तस्मात् पशुगणे चक्षुःप्राणादेर्नोहः इति **सिद्धान्तः** । **के.**

* **संसर्गिद्रव्यवाचकचक्षुरादिपदानां** पशुगणस्याध्रिगुप्रैषगतानां नोहः । ९।३।१०।२८–२९. **मीको.** पृ. ३४३ ' अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचक० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संसवः** नाम 'परस्परमात्सर्येण प्रवृत्तयोर्यजमानयोः कश्चिन्नैमित्तिकः प्रयोगः ' । ' मात्सर्येण सोमयागं कुर्वतोर्द्वयोर्यजमानयोः ' नैमित्तिकः प्रयोगः । **तैसं.** ३।१।७ **सायणः.** * ' **संसवे** उभे कुर्यात् ' अत्र बृहद्रथंतरे उभे सामनी पृष्ठस्तोत्रे एव समुच्चेतव्ये साम्नोः तदाधारर्चोश्च समुच्चयः, तत्रापि आदौ रथंतरं पश्चात् बृहत् । कल्पसूत्रकारास्तु संसवादावपि एकस्य पृष्ठस्तोत्रे, अपरस्य च पवमाने निवेशमामनन्ति । क्रत्वन्तरेषु केषुचित् ' बृहद्रथंतरयोः पर्यायभेदेन, एकं मध्येऽपरमुभयतः ' इति । केषुचित् तु ' एकस्यामेव बृहद्योनौ रथंतरयोनौ वा पूर्वार्धर्चे एकम्, अपरमुत्तरार्धर्चे' इत्येवम् । **वि., भाट्ट.** १०।६।८ । सामसमुच्चयमुखेन पृष्ठसमुच्चय एवात्र । **सोम.** * ' संसवे उभे कुर्यात् ' इति बृहद्रथंतरपृष्ठयोः समुच्चयः । तत्र ' उपवर्ती रथंतरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रियवर्ती बृहत्पृष्ठस्य ' इति प्रतिपदौ संसवे न कर्तव्ये, बृहद्रथंतराभ्यामेकस्यैव पृष्ठस्य निष्पादनात् । **शा.** १।५।१६. * **संसवे** उभे ( बृहद्रथंतरे ) कुर्यात्, एकाहत्वात् विभागासंभवात् समस्ते सामनी । **भा.** १०।६।३।४–५, * **संसवे** उभे ( बृहद्रथंतरे ) कुर्यात् । तत्र प्रतिपत् बहिष्पवमाने

न उपवती न अग्रियवती वा कर्तव्या किन्तु अन्यैव । भा. १०।५।१६।५९-६१.

*** संसवादौ उभयसामके क्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्र एव समुच्चित्य निवेशः ॥**

**उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ।१०।६।८।२४ ॥**

**भाष्यम्**— सन्त्युभयसामानः क्रतवः । 'संसवे उभे कुर्यात्, अपचितावप्येकाहे उभे कुर्यात्' इति । तत्र संशयः किं बृहद्रथंतरे विभक्ते भवतः, उत समस्ते इति । कुतः समस्तता अवगम्यते, कुतो वा व्यस्ततेति । उच्यते । एतदेव वचनमुभयमर्थं उद्भासयति । कथम् ? उभाभ्यां क्रतुः संबन्धयितव्यः । ते यदि समस्ते, अथवा व्यस्ते भवतः, उभयथाऽपि क्रतुस्ताभ्यां संबद्धो भवति । तत्रोभयथा प्रतिभाति वचने किं युक्तम् । व्यस्ते इति । कुतः ? प्रकृतौ हि बृहद्रथंतराभ्यामन्यतरेण पृष्ठं साधितम्, इहापि प्रकृतिवच्चोदकानुग्रहाय अन्यतरेण साधयितव्यमवगम्यते । एवं च पृष्ठसंबद्धानां कर्मणां कार्त्स्न्येन प्रवृत्तौ चोदकोऽनुग्रहीष्यते, उभयोश्च पृष्ठं साधयतोरन्योन्येन विहतत्वात्प्रयोगान्तरमापद्येत, न रथंतरं पृष्ठं न बृहत्पृष्ठमिति । उभयथाऽपि वचनार्थोपपत्तौ न चोदकबाधायां कारणमस्ति । तस्माद्यथा न विश्वजिति बृहदादीनां सर्वेषामेकत्र निवेशः, एवमिहापीति ।

**पृष्ठार्थे वाऽतदर्थत्वात् । २५ ॥**

**भाष्यम्**— नैतदस्ति, विभक्ते इति । किं तर्हि ? समस्ते सामनी स्याताम् । कुतः ? प्रकृतौ हि बृहद्रथंतराभ्यां विकल्पमानाभ्यां पृष्ठं साधितम् । इह इदानीं विकृतौ तयोरधिगतदेशयोः विकल्परूपेणैव प्राप्तयोः केवलमेतद्वचनं सामस्त्यविधानार्थम्, उभे बृहद्रथंतरे कुर्यादिति । एवं च सामस्त्यं भवति, यदि ते सामनी परस्परं न जहीतः । उपादेयत्वेन चानयोः श्रुतत्वात् द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैव । तेन यत्र बृहत्, तत्र रथंतरसहितम्, न केवलमिति ।

तत्रैतत्स्यात् । प्रधानक्रियापेक्षमनयोः साहित्यम् । तत्र व्यस्तयोरपि क्रियमाणयोः साहित्यं न विरुध्यते । यथा देवदत्तयज्ञदत्तयोः पाकेन समस्तयोरपि संयोगे उच्यमाने, एकः किंचित्करोति, अपरोऽपि किंचित् । न यदेकेन कृतं तदेवापरः करोति । तद्वदेकं साम किंचित्स्तोत्रमभिनिर्वर्तयिष्यति, द्वितीयमप्यपरम् । प्रधानोपकारापेक्षं साहित्यमिति समस्तसंयोगो न विरोत्स्यते इति ।

तत्राभिधीयते । यत्र परस्परमन्यपेक्षयोर्योगो भवति, तत्रैतदेवं न्याय्यम् । येन क्रियावयवेनाऽऽरम्भेण मध्येन अवसानेन वा योगः, तेन सहितयोः न पृथक्शः । कुतः ? यथैवानेनोपकर्तव्यमित्यवगम्यते, एवमितरसहितेनेति । यत्तु, लोके कारकसामस्त्येऽप्यभिहिते भेदेन व्यापारदर्शनमिति । अर्थासंभवादसौ । न ह्युखायामधिश्रीयमाणायां भूयोऽधिश्रयणं शक्यते कर्तुमित्यर्थविरोधान्न करोति, न तु शब्देनासौ तत्र न चोदितः । यत्रत्कर्तव्यं तत्तत्सहिताभ्यामेव, नान्यथा । इह तु नासंभवः । बृहद्रथंतरयोर्हि ऋक्संस्कारत्वेन विनियोगः । ते च शक्नुतः सहिते पृष्ठं संस्कर्तुमिति । अतस्तयोः साहित्यमेव युक्तम् । यदुक्तम्, उभयथा संभवे चोदकानुग्रहो न्याय्य इति । धर्मकार्त्स्न्ये निमित्तविघातश्च न भविष्यति । तत्र प्रत्यक्षात्समस्तविधानाच्चोदके बाध्यमाने न दोषो भवति ।

**लिङ्गदर्शनाच्च । २६ ॥**

**भाष्यम्**— लिङ्गं च दर्शयति, यथा समस्तयोः प्रयोगो न व्यस्तयोरिति । किं लिङ्गम् ? एवमाह, महावृक्षौ वै बृहद्रथंतरे निधनेन समाप्येते, यन्महावृक्षौ समृच्छयेते । न ह्यत्र विभग्नं प्रभग्नमिति.निधनभेदवचनादेकस्थानताऽवगम्यते । यदि भिन्नदेशे स्याताम्, अर्थादेव तत्र निधनभेदः सिद्धः । अथ तु सहिते भवतस्ततो निधनभेदवचनमर्थवद्भवति । तस्मादप्यभेदः । तथाऽपरं लिङ्गम्, पूर्वाह्णो वै रथंतरम्, अपराह्णो बृहदिति, एकेनाह्नाऽभिसंबन्धादेकस्थानतां दर्शयति । तस्मात्समस्तयोः पृष्ठदेशे निवेश इति ।

**शा**— यत्र संसवादौ 'उभे बृहद्रथन्तरे भवतः' इति श्रुतं तत्र किं उभयोः पृष्ठसाधनत्वं उत एकेन पृष्ठं इतरेण स्तोत्रान्तरं साधयितव्यमिति संशये चोदकेन वैकल्पिकपृष्ठप्राप्तेस्तदनुग्रहाय एकमेव पृष्ठसाधनं इतरत्तु



साम विश्वजिद्वत्स्तोत्रान्तरेऽपि स्यात्, नैवं विश्वजिति वाचनिकः कार्यान्तरे निवेशः न त्विह तादृक् वचनमस्ति येन कार्यान्तरे निवेशः स्यात्, तेन विकल्पेन प्राप्तयोः पृष्ठयोः समुच्चयमात्रं वचनेन क्रियते, चोदकबाधस्तु स्तोत्रान्तरसाधनत्वेऽपि तुल्यः, तस्मात् पृष्ठ एव निवेशः ।

**सोम**— चोदकानुग्रहोक्तयैव पूर्वोक्तयथास्तोत्रीयासंख्यामात्रविकारत्वे इतरद्रव्येषु संख्याप्रापकचोदकानुग्रह एवं इहापि तदनुग्रहाय नोभयोः साधनं इत्युत्थानात् संगतिः ।

**वि**— 'संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम् । एकं प्रकृतिवद्विश्वजिद्वदन्यत्र चेतरत् ॥ वचनाद्विश्वजित्येते सामनी स्तोत्रयोर्द्वयोः । नेहास्ति तत्पृष्ठ एव साहित्यं स्यात्पुनर्विधेः ॥'

**भाट्ट**— संसवादौ यत्र बृहद्रथंतरयोः समुच्चयविधिः तत्र किमुभयोः प्राकृतपृष्ठस्तोत्र एव निवेशः ? अथवा एकस्य पृष्ठेऽपरस्य स्तोत्रान्तरे ? इति चिन्तायां क्रतुसंबन्धित्वेन श्रुतस्य सामद्वयसमुच्चयस्य एकस्तोत्रनिवेशाभावेऽप्युपपत्तेः प्रकृतिप्राप्तनैरपेक्ष्यानुरोधेन स्तोत्रभेदेनैव निवेशावगतेः तत्रापि एकस्याप्यवगतपृष्ठसंबन्धेनैव निवेशोपपत्तौ उभयोस्तद्बाधे प्रमाणाभावात् एकस्य पृष्ठस्तोत्रे निवेशोऽपरस्य स्तोत्रान्तरे, तत्रापि पवमान एव । इति प्राप्ते,

नात्र समुच्चितसामद्वयविधिः, गौरवात् । अपि तु प्राप्तसामानुवादेन समुच्चयमात्रविधिः । प्राप्तिश्चातिदेशतः पृष्ठस्तोत्र एवेति तत्रैव समुच्चयः । यन्मते तु प्रकृतौ सामद्वयसाध्यपृष्ठस्तोत्रभेदः तन्मतेऽपि साम्नोः प्रकृतौ भिन्नकार्यत्वेन नैरपेक्ष्यस्याप्रसक्तेः स्तोत्रयोरेव निरपेक्षयोर्विकल्पेन साधनत्वात् उभयोः साम्नोरेकपृष्ठापूर्वरूपावगतावान्तरकार्यबाधे प्रमाणाभावेनावश्यकैकपृष्ठस्तोत्र एव समुच्चयविशिष्टसामद्वयविधानम्, अन्यथा सामान्तरांशे स्तोत्रान्तररूपद्वारान्तरस्याक्लृप्तस्य कल्पनापत्तेः ।

अतश्च उभयमतेऽप्येकस्मिन्नेव पृष्ठस्तोत्रे द्वयोः साम्नोस्तदाधारर्चोश्च समुच्चयः । तत्रापि 'पूर्वाह्णो वै रथंतरमपराह्णो बृहत्' इत्यर्थवादात् 'आद्या अष्टौ रथंतरेण अन्त्या नव बृहता' इति प्राप्तेऽपि साम्नस्तृचपाठसंपत्त्यर्थे पर्यायभेदेन 'केषुचित् प्रथमतो रथंतरं पश्चात् बृहत्' इति ध्येयम् ।

**कल्पसूत्रकारास्तु**— संसवादावपि एकस्य पृष्ठस्तोत्रे अपरस्य पवमाने विश्वजिद्वदेव निवेशमामनन्ति— क्रत्वन्तरेषु केषुचित् 'बृहद्रथंतरयोः पर्यायभेदेन एकं मध्येऽपरमुभयतः' इत्येवंगर्भम् । केषुचित्तु 'एकस्यामेव बृहद्योनौ रथंतरयोनौ वा पूर्वार्धर्चे एकं अपरमुत्तरार्धर्चे' इत्येवं समुच्चयम् ।

**मण्डन**— 'द्वैपृष्ठ्यमुभयश्रुतौ ।' उभयश्रुतौ उभयसामनि यागे 'द्वैपृष्ठ्यम्' द्वे पृष्ठे इति द्वैपृष्ठ्यम्, द्वयोरेव साम्नोः समुच्चयेन प्रयोगः न विकल्पेन इत्याशयः ।

**शंकर**— 'पृष्ठे संसवगे उभे ।'

*** संसवादिविकृतौ** उपवत्यग्रवत्योः नैमित्तिकयोः प्राकृत्योः पृष्ठप्रतिपदोः नानुष्ठानम् । १०।५।१६।५९-६१. **मीको.** पृ. ११६४ 'उपवत्यग्रवत्योर्नैमित्तिकयोः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

*** संसारः** अनादिः । **मीन्या.**, **रत्नाकरः** आत्मवादे ८९. * न च अनादितया **संसारस्य** आदिशब्दता कस्यचित् कल्पयितुं शक्यते । **बृहती.** पृ. २३८.

* 'धर्मोऽपि च वृणोत्येव नरं **संसारवर्तिनम्** । न हि केवलपापेन देहेनाच्छाद्यते नरः ॥' **वा.** ३।४।१०।२९ पृ. ९६२.

*** संसारहेतवः** । अनित्ये नित्यबुद्धिः असुखे सुखबुद्धिः अनात्मनि आत्मबुद्धिः इति उपपन्नाः संसारहेतवो विपरीतग्रहाः । **बृहती.** पृ. ४९.

*** संसृतः** नाम दश हवींषि राजसूये । तेषु अष्टम–नवम–दशमानि त्रीणि उपसदामादिमध्यावसानेषु कर्तव्यतया विहितानि, तथापि न तानि उपसदामङ्गं किन्तु अनुमत्यादिवत् राजसूये प्रधानान्येव । **वि.** ४।४।३.

*** संसृपः** नाम दश इष्टयो राजसूये । **वि.** ११।२।१४.

* 'संसृष्टस्यान्यतरत्यागमात्रान्न स्वत्वं निवर्तते किन्तूभयत्यागेन' इति न्यायः। अत एव दंपत्योः दानादिकर्तृत्वं व्यासज्यवृत्ति, तयोः संसृष्टद्रव्यत्वात् संसृष्टस्य स्वत्वनिवृत्तेश्चोभयत्यागाधीनत्वात्। सोम. ६।१।४.

* संस्कारः अग्नेः चयनम्। 'य एवं विद्वानग्निं चिनुते' इति। संस्कारः चयनमग्नेः, न तु कर्मान्तरं चयनं नाम। भा. २।३।१०।२१–२३, * संस्कारः अदृष्टोऽप्यस्ति इत्यवगम्यते लोके, यथा–ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते इत्युच्यते। लोके च नानुपपत्तिः। २।१।४।१२. * संस्कारः अदृष्टोपकारजनकोऽपि संभवति (यथा ग्रामान्तरादागतानां अग्निलवणादिना परिकरणम्। 'दृष्ट काढणे इति भाषायां प्रसिद्धम्')। सु. पृ. ६३३. * संस्कारः। अनुभूते एव वस्तुनि स्मरणं भवति नाननुभूते। तत्र यदि अनुभवः कंचिदतिशयं आत्मनि नादध्यात् तदा अनुभूताननुभूतयोः अविशेषात् उभयत्रापि स्मृतिः स्यात्। न चोभयत्रापि। अतश्चेयं व्यवस्थया स्मृतिः उपजायमाना अनुभवाहितसंस्कारं प्रकल्पयति। सोऽपि यदि अनुभववत् क्षणिकः स्यात्, कालान्तरे स्मृतिर्नोपपद्यते। तस्मात् कालान्तरावस्थायी संस्कारोऽस्ति इति गम्यते। ऋजु. पृ. ११४. * संस्कारोऽपि शेषः। संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो योग्यो भवति कस्यचिदर्थस्य। तेनापि क्रियायां कर्तव्यायां प्रयोजनं इति सोऽपि परार्थः। भा. ३।१।३।३, * संस्कारोऽयं उपाकरणादिः पशुयागप्रयुक्तः न ज्योतिष्टोमप्रयुक्तः। ३।६।७।२५. * संस्कारः अर्थप्रयुक्तः। संकर्ष. ३।२।६. * संस्कारः अवघात–प्रोक्षणादिकः। स च शेषभूतः। वि. ३।१।३. * संस्कारः अवहन्त्यादिः यागसाधनपुरोडाशादिनिर्वृत्तये चोदितानां व्रीह्यादीनां स्वरूपेणायोग्यत्वात् अवहतानां योग्यत्वात्, अवहतानां योग्यत्वमापादयन् उत्पत्त्यैवाङ्गं भवति। वा. ३।१।३।३.

ꣻ संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्। २।३।५।१२॥

दर्शपूर्णमासयोः 'ईषामालभेत' 'चतुरो मुष्टीन् निर्वपति' इति श्रूयते। ईषा शकटावयवः कश्चित्। (धुरांब्या इति भाषा)। ईषाया आलम्भनं स्पर्शः निर्वापकाले। तथा अनारभ्य श्रूयते 'वायव्यं श्वेतमालभेत भूतिकामः' इति 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति च। किमत्र वायव्यवाक्ये दार्शपौर्णमासिकं ईषालम्भं अनूद्य ईषायां श्वेतत्वं गुणो विधीयते, तथा सौर्यवाक्ये दार्शपौर्णमासिकं निर्वापमनूद्य चरुर्गुणो विधीयते अथवा भूतिब्रह्मवर्चसफले वायुसूर्यदेवश्वेतत्वचरुगुणके आलम्भनिर्वापरूपे कर्मान्तरे यावदुक्तेतिकर्तव्यताके विधीयेते किंवा उक्तगुणफलविशिष्टौ यागौ विधीयेते इति त्रिकोटिको विचारः। तत्र प्रथमः पक्षः अस्मिन् सूत्रे, द्वितीयः पक्षः 'यावदुक्तं' (१३) इति सूत्रे, तृतीयः पक्षः 'यजतिस्तु' (१४) इति सूत्रे सिद्धान्तत्वेन वक्ष्यते। प्रकृतसूत्रार्थस्तु, चशब्दः पूर्वाधिकरणोक्तदाक्षायणयज्ञादिवैषम्यार्थः। अप्रकरणे कस्यचित् प्रकरणमनारभ्य श्रुते वायव्यादिवाक्ये ईषायाः संस्कारः आलम्भः, व्रीहिसंस्कारश्च निर्वापः क्रमेण श्वेतत्वचरुलक्षणगुणविधानाय अनूद्यते। अकर्मशब्दत्वात् वायव्यादिवाक्यद्वये आलभतिनिर्वपत्योः अपूर्वालम्भनिर्वापकर्मशब्दत्वाभावात्। विशिष्टविधानापेक्षया गुणविधानाय अनुवादस्यैव युक्तत्वात्। तस्मात् दार्शपौर्णमासिकालम्भनिर्वापानुवादेन श्वेतत्वचरुरूपगुणविधिः। इति प्रथमः **पूर्वपक्षः**।

अत्र **वार्तिकम्**— यथैव अयनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावात् अकर्मान्तरत्वं तथा इहापि भविष्यति इति चशब्देन अन्वादिश्यते। क्व चासौ गुणविधिः इति विषयावधारणार्थं अप्रकरणग्रहणम्। (**सुधा**— अनारभ्याधीतत्वेन अयनवैलक्षण्यात् कथं निर्वापालम्भश्रुत्योः गुणार्थता इत्याशङ्कानिरासार्थः अप्रकरणशब्दः इति अन्यथा व्याचष्टे–) अथवा यद्यप्येतावता पूर्ववैलक्षण्येन अप्रकरणे श्रूयते तथापि कर्मणो विधिशब्दानवरोधात् गुणार्थैव पुनः श्रुतिः इति। (**सुधा**— यद्यपि अप्रकरणे श्रूयते इत्येतावता कारणेन आलम्भो निर्वापश्च अयनवैलक्षण्येन युक्तः तथापि



निर्वापालम्भाख्येन कर्मणा विधायकस्य गुणसंचरितत्वेन अनवरोधात् गुणार्थैव आलम्भनिर्वापश्रुतिरित्यर्थः) दर्शपूर्णमासयोः शकटेषा (चूर्णादिना) श्वेतीकृत्य आलब्धव्या। (**सुधा**– व्रीहिनिर्वापे कथं ओदनाख्यस्य चरोर्निर्देशः इत्याशङ्क्य स्थालीवचनं चरुशब्दमङ्गीकृत्य मुख्यत्वात् श्रुतिवृत्तप्रातिपदिकाभ्युपगमेन द्वितीया सप्तम्यर्थे कल्प्या। 'पञ्चशरावमोदनं निर्वपेत्' इत्यादौ वा शरावादिशब्दस्य तत्परिमिते प्रयोगदर्शनात् चरुशब्दस्यापि तत्परिमितलक्षणार्थत्वोपपत्तेः, यथा चरुपरिमिता व्रीहयो भवन्ति तथा चत्वारो मुष्टयः कार्याः इत्यर्थाभ्युपगमात् उत्पत्तिशिष्टचतुर्मुष्टिपरिमाणाविरोधोपपत्तेः, परिमितलक्षणार्थतया चरुश्रुत्यर्थस्यापि वाक्यार्थान्वयेन अत्यन्ताबाधात् सप्तम्यर्थकल्पनायां तु द्वितीयार्थात्यन्तबाधापत्तेः प्रातिपदिकमेव लक्षणया व्याख्येयं इति द्वेधा परिहरति–) निर्वापश्च चरौ कर्तव्यः चरुपरिमितो वा। भूतिब्रह्मवर्चसकामयोश्च 'सर्वेभ्यो दर्शपूर्णमासौ' इत्येवं प्राप्तयोरनुवादः। तथा वायव्यमिति सर्ववनस्पतीनां वायुदेवतत्वात् कथंचित् ईषाया एव अनुवादः। (**सुधा**– 'ओषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादम्' इति प्राणभृतां वनस्पतीन् प्रति भोक्तृत्वे श्रुते भोक्तृस्वरूपदेवतात्वावगमात् प्राणाख्यस्य वायोः देवतात्वमुपचर्य वनस्पतीनां वायुदेवत्यत्वात् तत्प्रभवत्वेन ईषायाः वायुदेवत्यत्वानुवादः, वायुगुणस्पर्शवत्त्वाद्वा वनस्पतीनां वायुदेवत्यता) सौर्यमिति च आग्नेयस्यैव तेजोदेवत्यसामान्यादनुवादः। तस्मात् गुणो विधीयते इति। — इति।

**यावदुक्तं वा कर्मणः श्रुतिमूलत्वात्। १३॥**

('संस्कारश्चाप्रकरणे०' २।३।५।१२ इति सूत्रस्य वृत्तिं बुद्धौ निधाय एतत्सूत्रार्थो विज्ञेयः)। वाशब्दः प्रथमं पूर्वपक्षं व्यावर्तयति। आलम्भान्तरं निर्वपणान्तरं च गुणफलविशिष्टं विधीयते। ननु तत् किं–प्रकृतिकं इति चेत् दर्विहोमवत् अपूर्वं इदं इत्याह– यावदुक्तं इति। यावत् उक्तं तावदेवेदं कर्मान्तरम्। यत्किंचित् श्वेतद्रव्यं वायवे संकल्प्य भूतिकामेन स्प्रष्टव्यम्। चरुश्च सूर्याय संकल्प्य ब्रह्मवर्चसकामेन निर्वप्तव्यः इति। ननु द्रव्यदेवतासंबन्धावगमात् यागः कुतोऽत्र न कल्प्यते अत आह– कर्मणः श्रुतिमूलत्वात् श्रुतिप्रमाणकं श्रुतिमूलकं कर्म इत्युक्तम्। तस्मात् यावदुक्तौ आलम्भनिर्वापौ गुणफलविशिष्टौ वायव्यसौर्यवाक्ययोः विधीयेते इति द्वितीयः **पूर्वपक्षः**।

**यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्। १४॥**

('संस्कारश्चाप्रकरणे०' २।३।५।१२ इति सूत्रस्य वृत्तिं बुद्धौ संगृह्य एतत्सूत्रार्थो विचार्यः)। तुशब्दः पूर्वपक्षव्यावर्तकः। यजतिः याग एव आलभतिनिर्वपतिपदोपलक्षितः 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्' इति वाक्ययोः विधीयते। द्रव्यफलभोक्तृसंयोगात् तद्धितोपात्तद्रव्यस्य, भोक्तुर्देवतायाः तद्धितप्रकृत्युपात्तायाः, फलस्य भूतिकामब्रह्मवर्चसकामपदोपात्तस्य च संयोगात् संबन्धात्। एतेषां द्रव्यफलभोक्तृणां कर्मसंबन्धात् कर्मण्येव संबन्धसंभवात्। तथा च वायव्यं सौर्यं इति तद्धितोपात्तद्रव्यदेवतासंबन्धस्य यागमन्तरा असंभवात् याग एवात्र लक्षितो विधीयते नालम्भमात्रं निर्वापमात्रं वा। अत्र **सुधा**– यावदुक्तसूत्रस्य (२।३।५।१३) आद्यपक्षनिरासार्थत्वात् तत्रैव प्राप्ते कर्मणि गुणफलान्वयविधौ वाक्यभेदसूचनार्थं संस्कारत्वनिराससूचनार्थं च फलपदे 'फलसंयोगाच्च' इति प्रयोक्तव्ये द्रव्यदेवतयोः यागकर्मणि सति संबन्धोपपत्तेः, फलस्य च कर्मान्तरे प्रधानभूते सति संबन्धोपपत्तेः, यागोऽयं अपूर्वः प्रधानभूतो विधीयते, न तु प्रकृते कर्मणि संस्कारके गुणविधिः इत्यर्थत्रयस्य लघुना सूत्रेण उक्तिसंभवे सूत्रगौरवस्य अनाश्रयणीयत्वात् इह सूत्रे फलपदं प्रयुक्तम्। फलसंयोगमात्रेण वाक्यभेदानापत्तेः द्रव्यफलसंयोगस्य वाक्यभेदहेतुत्वसूचनार्थं मध्ये फलपदप्रयोगः। सूक्तादेः देवतासंयोगेऽपि यागाकल्पनात् द्रव्यस्यैव देवतासंयोगो यागकल्पको नान्यस्य इति सूचनार्थं फलपदव्यवहितस्यापि द्रव्यशब्दस्य भोक्तृशब्दान्वयो विवक्षितः। देवतायाश्च भोक्तृत्वाभावेऽपि स्तुतिभोक्तृलक्षणस्य देवतात्वस्य याग-

कल्पकत्वात् तद्व्यावृत्त्या त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वसूचनार्थं भोक्तृशब्दः । इति ।

अनेन सूत्रेण सिद्धान्त उक्तः ।

**लिङ्गदर्शनाच्च । १५ ॥**

'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्' इति आलभतिनिर्वपतिभ्यां लक्षणया यागो विधीयते इत्यत्र 'सोमारौद्रं चरुं निर्वपेत्' इति प्रकृत्य 'परिश्रिते याजयेत्' इति सोमारौद्रे चरौ परिश्रयणविधिपरे वाक्ये यागानुवादो दृश्यते तत् लिङ्गं भवति । के.

* संस्कारश्चाप्रकरणे० ' २।३।५।१२–१५ ॥ द्वितीये 'वायव्यं श्वेतमालभेत' 'चतुरो मुष्टीन् निर्वपति' इत्यालम्भनिर्वापौ अनूद्य श्वेतचरुगुणौ विधीयेते, वायव्यं इति ईषायाः वृक्षप्रभवत्वात्, वृक्षस्य च वायुसंबन्धात् । सौर्यमिति च चरोः स्थाल्याः तेजस्वित्वेन सूर्यसादृश्यात् कथंचित् अनुवादः इति पूर्वपक्षिते, आलम्भनिर्वापयोः लोकेऽपि सत्त्वेन व्यभिचारात् न दार्शपौर्णमासिकयोरेव उपस्थितिः संभवति इति सिद्धान्तिना उक्ते लिङ्ग विहितौ यौ आलम्भनिर्वापौ इति विशेषणात् नायं दोषः इत्याशङ्क्य, एवं तर्हि लिङ्गः अनुवादकत्वात् गुणविधिर्न लभ्यते, उभयाश्रयणे च युगपद्विध्यनुवादविरोधः इत्युत्तरितं इति । बाल. पृ. १८२–१८३. * संस्कारः पशुयागीयदेवतायाः पशुपुरोडाशयागः । पशुपुरोडाशन्यायः (मीको. पृ. २५१८)। १०।१।९।१९–३५. * संस्कारः शेषभूतस्यावकल्पते नान्यथा । भा. ३।४।८।२१. * संस्कारः सविषयकः । अन्यथा पटविषयकानुभवस्य स्वजन्यसंस्कारसंबन्धेन स्मृतिहेतुत्वे घटत्वप्रकारकानुभवात् तद्विशेष्यकस्मरणापत्तिः । अतः समानप्रकारकसमानविशेष्यकसंस्कारस्य तादृशस्मृतिं प्रति हेतुत्वात् नानुपपत्तिः । मणि. पृ. १३. * संस्कारः स्विष्टकृद्यागः प्रधानहविषां न कर्मान्तरम् । भा. २।३।१३।२६. * संस्कारो हि नाम स भवति यः स्वकार्ये शक्तिमुपजनयति । बृहती. पृ. २०७. * अग्निहोत्रदोहाधिकारस्थो वत्सालम्भः स्पर्शमात्ररूपः संस्कारः । वत्सालम्भाधिकरणम् (मीको. पृ. ३४०१) । २।३।६।१६–१७. * अञ्जनं चक्षुषोः संस्कारः क्रत्वर्थः याजमानार्थः, स न फलप्रयुक्तः । तत्र फलश्रुतिः अर्थवादः । वि. ४।३।१. * .'दृढज्ञानगृहीतेऽर्थे संस्कारोऽस्तीति गम्यते' । श्लोवा. स्फोटवादे ९९ । यथा आहुः 'वस्तुधर्मो ह्येष यदनुभवः पटीयान् स्मृतिबीजमाधत्ते' इति । रत्नाकरः. * द्रव्याश्रितो यः संस्कारः स तद्द्रव्याभावे न भवति (प्रतिनिधौ तु भवत्येव) । वा. ६।३।४।१६. * न च स्मृतिविज्ञानशून्यः संस्कारोऽस्ति इति प्रमाणमस्ति । बृहती. पृ. ११४. संस्काराः कार्यसामर्थ्याधानार्थाः । सु. ३।८ पृ. ५४. * संस्काराः गुणान्तरमुपजनयन्ति । वा. ३।८।३।९, * संस्काराश्च केचित् प्रथममेव प्रधानेभ्यः क्रियन्ते, केचिदूर्ध्वम्, केचिद्युगपत् । ३।४।१४।४१ पृ. ९८३. * संस्काराश्च संस्कुर्वन्तीत्युच्यन्ते । यत्तस्य संस्कर्तव्यस्य प्रयोजनं तत्र सामर्थ्यं जनयन्तीति । फलं च ग्रहीतुं पुरुषस्य प्रयोजनम्, न यागमभिनिर्वर्तयितुम् । तस्माद्ये पुरुषसंस्काराः ते पुरुषं फलप्रतिग्रहणसमर्थं कुर्वन्ति, न यागनिर्वृत्तिसमर्थम् । आह, यदि यागनिर्वृत्तौ न सामर्थ्यं जनयन्ति, कथं तर्हि यागधर्मास्ते भवन्ति? उच्यते । यागस्य स्वार्थं साधयतः साहाय्ये वर्तन्ते । कश्च तस्य स्वार्थः? यदस्य कर्ता फलेन संबध्यते । भा. ३।७।२।६. * संस्कारास्तन्त्रं यूपस्य पशुत्रये ज्योतिष्टोमे । ११।३।४।५–९. मीको. पृ. ७४ 'अग्निष्टोमे पशुत्रयार्थ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'संस्कारास्त्वावर्तेरन्नर्थकालत्वात्' । ११।३।४।५॥ इत्यत्रैकादशे 'दीक्षासु यूपं छिनत्ति' इत्यनेन छेदनग्रहणस्य उपलक्षणत्वात् सर्वेषां यूपधर्माणां अपकर्षविधिः इत्यकर्मकालत्वात् तन्त्रमुक्त्वा, अस्तु वा छेदनमात्रापकर्षः, तथापि यूपस्य साधारण्यात् अग्नीषोमीयकाले अनुष्ठीयमानानामपि प्रोक्षणादीनां सवनीयानुबन्ध्योपकारकत्वं इति यत् पक्षान्तरमुक्तं (शा.) तत् द्रव्यसाधारण्ये संस्काराणां एकस्मिन् कर्मणि क्रियमाणानां कर्मान्तरे प्रसङ्गादुपकारकत्वस्य एतदधिकरणसिद्धस्य कथनमिति बोध्यम् । सोम. १२।१।१९.



*** संस्कारास्त्वावर्तेरन्नर्थकालत्वात् । ११।३।४।५॥**

ज्योतिष्टोमे पशुत्रयार्थस्य यूपस्य प्रोक्षणादयः संस्काराः प्रतिपशु भेदेन कर्तव्याः तन्त्रेण वेति विचारे पूर्वपक्षमाह । यूपस्य संस्कारास्तु प्रोक्षणाञ्जनादयः आवर्तेरन् प्रतिपशु । अर्थकालत्वात्, अर्थः पशोः नियोजनम् । तस्य काले एते संस्काराः क्रियन्ते । तथा च त्रयाणां पशूनां नियोजनकालस्य भेदात् यूपसंस्काराणामावृत्तिः कर्तव्या । तुशब्दः यूपवैलक्षण्यार्थः, यूपो नावर्तते, संस्कारास्तु आवर्तेरन् इति ।

**तत्कालास्तु यूपकर्मत्वात्, तस्य धर्मविधानात्, सर्वार्थानां च वचनादन्यकालत्वम् । ६ ॥**

सिद्धान्तमाह । तुशब्दः संस्काराणां नियोजनार्थत्वं व्यावर्तयति । प्रोक्षणाञ्जनादयः संस्काराः तत्कालाः स्युः, तस्य यूपस्य कालः दीक्षाकालः स एव कालो येषां ते तत्कालाः । तथा च दीक्षाकालाः यूपसंस्काराः । यूपकर्मत्वात् क्रियते इति कर्म कार्यम् । यूपः कर्म येषां ते यूपकर्माणः संस्काराः । यूपकर्मत्वात् तत्कालाः यूपकालाः दीक्षाकालाः । अथवा तत्कालाः, तस्य अग्नीषोमीयस्य काल एव कालो येषां ते तत्कालाः संस्काराः तन्त्रेण सर्वेषामुपकर्वन्ति इति । तस्य यूपस्य धर्मविधानात् धर्माणां विधानात् यूपधर्मत्वेन संस्काराणां विधानात् न तेषां नियोजनधर्मत्वम् । तस्मात् दीक्षाकालाः यूपसंस्काराः । सर्वार्थानां सर्वेषां अर्थानां यः कालः तस्मात् तेषां अन्यकालत्वमपि वचनात् वचनबलात् स्यात् । वचनाभावे तु स्वकालत्वमेव युक्तम् ।

**सकृन्मानं च दर्शयति । ७ ॥**

सिद्धान्ते युक्त्यन्तरमाह । मानं निखननम् । 'त्रिवृता यूपं परिवीय' इति परिव्याणेन यूपधर्माननुक्रममाणः यूपस्य मानं सकृदेवेति दर्शयति । एवं निखननस्य यूपधर्मस्य सकृत्वात् इतरेषामपि संस्काराणां सकृत्त्वं गम्यते । तस्मात् यूपसंस्काराणां तन्त्रमिति सिद्धान्तः ।

मी. को. ५०६

**आनन्तर्यार्थमिति चेत् । ८ ॥**

पूर्वपक्षी आह । न परिव्याणानुक्रमणेन सकृत्त्वं सिध्यति । परिव्याणादनन्तरं उपाकरणं स्यात् इति परिव्याणोपाकरणयोरानन्तर्यार्थं परिव्याणानुक्रमणम् । इति चेत् ।

**न प्रकृतितः सिद्धत्वात् । ९ ॥**

नानन्तर्यार्थं परिव्याणानुक्रमणं कर्तव्यम् । तादृशानन्तर्यस्य प्रकृतित एव सिद्धत्वात् । अग्नीषोमीये पशावपि परिव्याणादनन्तरमेव उपाकरणं भवति । तत् सवनीये चोदकेन प्राप्तमेव । तस्मादपि तन्त्रं संस्काराः । के.

*** संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् । ३।८।२।३॥**

ज्योतिष्टोमे 'केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति' इति संस्काराः वपनादयः पुरुषसामर्थ्ये निमित्ते, कर्तुः पुरुषस्य कर्मसामर्थ्यप्राप्त्यर्थं विहिताः । ते यथावेदं विधायकवेदानुसारेण समाख्यया व्यवतिष्ठेरन् व्यवस्थिताः स्युः । कर्मवत् यानि कर्माणि यस्मिन् वेदे विधीयन्ते तानि तद्वेदसंबन्धिना पुरुषेण क्रियन्ते, आध्वर्यवाणि कर्माणि अध्वर्युणा, हौत्रकर्माणि होत्रा इत्यादि तद्वत् । कर्माणीव कर्मवत् इति प्रथमान्ताद्वतिः । तुशब्दः पूर्वाधिकरणोक्तपरिक्रयात् वैलक्षण्यार्थः ।

अत्र सुधा– पुरुषाणां कर्तॄणां स्रुगादिवत् अपूर्वसाधनत्वसामर्थ्ये जनयितव्ये तज्जननार्थं संस्कारापेक्षा इति ।

**याजमानास्तु तत्प्रधानत्वात् कर्मवत् । ४ ॥**

सिद्धान्तसूत्रम् । तु–शब्दः पूर्वपक्षं निरस्यति । संस्कारा इति पदमनुवर्तते । संस्कारा वपनादयः ज्योतिष्टोमे याजमानाः यजमानकर्तृकाः स्युः नाध्वर्युकर्तृकाः । तत्प्रधानत्वात् यजमानप्रधानत्वात्, क्रियाफलस्य यजमानगामित्वेन संस्कारेषु यजमानस्यैव प्रधानत्वात् । कर्मवत् प्रधानभूतानि द्रव्योत्सर्गरूपाणि कर्माणि यथा यजमानकर्तृकाणि तद्वत् । किंवा क्रियते इति कर्म फलमित्यर्थः । फलं यथा याजमानं तथा फलार्थाः संस्कारा अपि याजमानाः ।

अत्र सुधा– संस्कारार्णा फलप्रतिग्रहणशक्तिजननार्थत्वात् यजमानस्यैव च तज्जननापेक्षत्वात् भोक्त्रंशपातित्वलक्षणेन लिङ्गेन तदर्थत्वनिश्चयात् न समाख्यया अध्वर्युसंस्कारार्थता शङ्कितुं शक्या इति ।

**व्यपदेशाच्च । ५ ॥**

ज्योतिष्टोमे वपनादय: संस्कारा: याजमाना: नाध्वर्यवा: इति सिद्धान्ते हेत्वन्तरप्रतिपादनार्थं सूत्रम् । ‘तमभ्यनक्ति’ ‘शरेषीकया अनक्ति’ इति यजमानस्य अभ्यञ्जने अञ्जने च अध्वर्युकर्तृके परस्मैपदेन व्यपदेशात् ‘वपते, दतो धावते’ इत्यत्र च आत्मनेपदेन व्यपदेशात् ज्ञायते वपनादयो याजमाना: संस्कारा इति । चकारो हेत्वन्तरसमुच्चयार्थ: ।

अत्र सुधा– धावतिवपतिकृन्ततीनां स्वरितेत्त्वात् दन्तधावनादीनां कर्त्रभिप्रायक्रियाफलवाच्यात्मनेपदात् दन्तधावनस्य च लोकतोऽपि तत एव स्नानस्यापि स्वयंकर्तृत्वप्रसिद्धे: वपन–नखनिकृन्तनयोश्च नापितकर्तृत्वनियमप्रसिद्धे: कर्त्रनाकाङ्क्षा युक्ता । अनक्ते: अनुदात्तेत्त्वात् परस्मैपदात्मनेपदाभ्यां कर्तृविशेषानवगमेऽपि ‘तमभ्यनक्ति’ इति परस्मैपदयुक्ते वाक्ये तं इति स्वामिपरामर्शितच्छब्दव्यपदेशात् तदानन्तर्यात् ‘शरेषीकयाऽनक्ति’ इत्यत्रापि अनुषक्ततच्छब्दव्यपदेशावगते: कर्त्रन्तरावगमे सति तद्विशेषाकाङ्क्षायां समाख्यया अध्वर्युनियमोपपत्ति: । व्यापारद्वयविधिं विना विधिद्वयानर्थक्यापत्ते: व्यापारद्वयावगमे सति भिन्नविषयत्वेन अविरोधात् समाख्यया अध्वर्युनियमोपपत्तौ अभ्यञ्जनस्य अध्वर्युसंस्कारत्वं कल्पयित्वा कर्त्रन्तरकल्पनाऽयोगात् परस्मैपदयुक्ते वाक्ये तं इति अभ्यङ्क्तृ–अभ्यञ्जनीययो: भेदव्यपदेशात् तद्विहिते अभ्यञ्जने लिङ्गाविरुद्धया समाख्यया अध्वर्युव्यापारत्वेन अवगते वाक्यान्तरस्थ: अभ्यञ्जनविधि: यजमानस्येति गम्यते ।

सूत्रे च तं इति भेदव्यपदेशात् अभ्यङ्क्ते आङ्क्ते इति च विध्यन्तरात् व्यापारभेदावगमेन अविरोधात् अभ्यञ्जनाञ्जनयो: अध्वर्युकर्तृकता यजमानकर्मता च युक्ता इति वपनादिसाम्यशङ्का निरस्ता भवति, इति ।

**गुणत्वे तस्य निर्देश: । ६ ॥**

ज्योतिष्टोमे वपनादिसंस्कारा: अध्वर्यो: आध्वर्यवमिति समाख्यानात् इति यत् पूर्वपक्षिणा उक्तं तत्रोत्तरार्थं सिद्धान्तपक्षीयं सूत्रमिदम् । कर्माणि प्रति ऋत्विजां गुणत्वे सति तस्य परिक्रयस्य निर्देश: परिक्रीतै: ऋत्विग्भि: कर्माणि कारयेदिति । दीक्षणीयादिकर्माणि प्रति गुणभूतत्वेनैव ऋत्विजामनुवादेन परिक्रयविधि: इति निर्विवादम् । ततश्च वपनादिसंस्कारकर्माणि प्रति प्रधानत्वेन ऋत्विजामनुवादेन परिक्रयविधिर्न संभवति इति **कुतूहलम्** । तस्य संस्कारस्य निर्देश: गुणत्वे पर्यवस्यति इति **वृत्ति:** । परिक्रयस्य निर्देश: पुरुषाणां गुणत्वमापादयितुं क्रियते न संस्काराय इति **वार्तिकम्** ।

अत्र सुधा– आध्वर्यवं इति निर्देश: समाख्याया: पूर्वपक्षे वपनादिषु अध्वर्युनियमाय उक्त:, स: अङ्गेषु पुरुषसंस्कारव्यतिरिक्तेषु कर्तु: गुणत्वे तेष्वेव तस्य नियामक: इति सूत्रव्याख्या इति ।

तस्मात् वपनादय: संस्कारा याजमाना एव ।

**चोदनां प्रति भावाच्च । ७ ॥**

चोदना इति अपूर्वं ब्रूम: इति **भाष्यम्** । चकारो सिद्धान्ते हेत्वन्तरपर: । चोदनां प्रति, अपूर्वं प्रति, संस्काराणां भावात् विद्यमानत्वात् प्रधानापूर्वाश्रयत्वाच्च यजमानस्य संस्कारा अपि संनिकृष्टस्य यजमानस्यैव न तु अपूर्वं प्रति विप्रकृष्टस्य अध्वर्यो: । तस्मात् वपनादय: संस्कारा: ज्योतिष्टोमे याजमाना एवेति सिद्धान्त: ।

अत्र सुधा– फलप्रतिग्रहणयोग्यताख्यां फलापूर्वाश्रयत्वयोग्यतां चोदनोक्त्या विवक्षित्वा फलापूर्वाश्रयत्वयोग्यतोद्देशेन संस्कारविधानात् इति सूत्रव्याख्या, इति ।

चोद्यते विधिना गम्यते इति चोदना परमापूर्वम्, तां प्रति वपनादिसंस्काराणां विधिसद्भावादपि याजमानास्ते भवन्ति इति **कुतूहलम्** ।

**अतुल्यत्वादसमानविधाना: स्यु: । ८ ॥**

ज्योतिष्टोमे वपनादय: संस्कारा: याजमाना: सन्तु नाम, आध्वर्यवसमाख्याबलात् अध्वर्योरपि ते स्यु: इति चेन्नेत्याह सिद्धान्ती । ऋत्विग्यजमानयो: समानं



विधानं येषां ते समानविधाना: । न समानविधाना: असमानविधाना एव वपनादय: संस्कारा: । कुत: ? अतुल्यत्वात् परिक्रयस्य वपनादिसाधारण्याभावात्, परिक्रयस्य पुरुषसंस्कारान्यकर्मानुष्ठानार्थत्वात् । तस्मात् नैते संस्कारा: ऋत्विग्यजमानानां समानविधाना: किंतु याजमाना एवेति **सिद्धान्त:** । **के.**

* संस्कारा: द्रव्यस्य अङ्गप्रधानार्था: । **भा.** ३।८।१५।३०, * संस्कारा: बर्हिष: प्रोक्षणम्, अग्राणामुपपायनम्, मूलानामवसेचनम् । १२।१।१९।४२, * संस्कारा: यजमानस्य ज्योतिष्टोमे वपनादय: प्रधानार्था एव, नाङ्गप्रधानोभयार्था: । ३।७।२।६. * संस्कारा: याजमाना: सत्रे सर्वै: कर्तव्या: । १२।४।१४।३५–४१. * संस्कारा: वपनादय: जपाश्च अस्थियज्ञे न कर्तव्या: । **भा.** १०।२।१८।४९. * संस्कारा वपनादय: ज्योतिष्टोमे न ऋत्विग्यजमानानां समानविधाना: । **वा.** ३।८।२।८. * संस्कारा: वपनादय: यजमानस्यैव । क्वचित्तु केचित् वचनात् ऋत्विजामपि । ‘हिरण्यमालिन: ऋत्विज:’ वाजपेये, ‘लोहितोष्णीषा:’ श्येने । **वि.** ३।८।३. * संस्कारा: वपनपयोव्रतादय: याजमाना: ज्योतिष्टोमे । **भा.** ३।८।२।३–८. * संस्कारा: सन्तो ये वचनात् ऋत्विजां जाता:, ते औद्गात्रादिवेदसमाख्यया न नियम्यन्ते, सर्वेषां एव ऋत्विजां ते धर्मा भवन्ति । यथा श्येने लोहितोष्णीषत्वादय:, यथा वा वाजपेये हिरण्यमालित्वम् । **वा.** ३।८।४।१२. * संस्कारा: हि द्रव्यं कर्मयोग्यं कुर्वन्ति । **भा.** ६।३।१८।३८, * ‘अचोदकाश्च **संस्कारा:**’ (२।२।६।१८) इत्युक्तम् । १०।६।१३।३८. * द्रव्यगुणसंस्कारा: फलवन्तं यागं प्रति नियोगत: शेषभूता: । सत्यपि स्वाङ्गानि प्रति शेषित्वे तं प्रति नास्ति इत्यभिधीयते । **वा.** ३।१।३।६ पृ. ६६४, * योग्यतां आदधाना: क्रिया: संस्कारा इत्युच्यन्ते । ३।७।२।६, * कार्ये हि प्रवर्तमानं द्रव्यं **संस्कारं** गृह्णाति, नोदासीनम् । न च द्व्यवदानव्यतिरिक्तस्य हविष: कार्यं अस्ति इति न संस्कारमपेक्षते । ३।४।१४।४० पृ. ९७६.

**संस्काराद्वा गुणानामव्यवस्था स्यात् । ३।१।८।१६ ॥**

‘ग्रहं संमार्ष्टि’ इति एकवचनमविवक्षितं सर्वे संमार्ष्टव्या: इत्यवगतम् । तथा प्रातिपदिकार्थमपि अविवक्षितं मत्वा यथा ग्रहा: तथा चमसा अपि संमार्ष्टव्या न वा इति विचारे **पूर्वपक्षमाह** । संमार्जनादिगुणानां अव्यवस्था स्यात् ग्रहाणामेवेति व्यवस्था न स्यात् । संस्कारात् संस्कारत्वात् संमार्जनस्य ग्रहेष्विव चमसेष्वपि आवश्यकत्वात् । तस्मात् ग्रहाणामिव चमसानामपि दशापवित्रेण संमार्जनं कर्तव्यं स्यात् ।

**व्यवस्था वाऽर्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् । १७ ॥**

ग्रहाणामिव चमसानामपि दशापवित्रेण संमार्जनं कर्तव्यं इति पूर्वपक्षं वाशब्दो व्यावर्तयति । अर्थस्य संमार्गस्य व्यवस्था स्यात् ग्रहाणामेव संमार्गो न चमसानामिति । अर्थस्य ग्रहपदार्थस्य श्रुतिसंयोगात् ग्रहपदेन वाच्यत्वात् । तस्य संमृजिगतस्य ग्रहविषयकस्य पुरुषप्रयत्नस्य शब्दप्रमाणत्वात् ‘ग्रहं संमार्ष्टि’ इति शब्द एव तत्र प्रमाणम् । चमसस्तु न तथा इति चमसा न संमार्जनीया: । किंतु ग्रहा एव । **के.**

* **संस्कारस्य** कर्मापवर्गे अपवर्ग: । **संकर्ष.** ३।२।६. * संस्कारस्य चैष स्वभाव: यदुपयुक्तमुपयोक्ष्यमाणं वा द्रव्यमवलम्बते । वा ३।५।१९।४८. * संस्कारस्य दर्शपूर्णमासाभ्यां संबन्ध: ‘शेषं स्विष्टकृते समवद्यति’ इत्यनेन विधीयते, न तु कर्मान्तरम् । त्रि. २।३।१३. * संस्कारस्य द्रव्यस्य च विरोधे द्रव्यस्यैवोपादानम् । **भा.** ६।३।१८।३८. * संस्कारस्य शेषत्वम् । **वि.** ३।१।३. * स्मृतिहेतो: **संस्कारस्य** सर्वत्रानुच्छेद: । **वा.** ३।३।७।१४ पृ. ८२९. * **संस्काराणां** अपि नामधेयत्वं दृष्टं ‘उपांशुं गृह्णाति’ ‘अन्तर्यामं गृह्णाति’ इति । **शा.** १।४।४ पृ. ६६–६७. * संस्काराणां अपूर्वप्रयुक्तत्वे सत्यपि दृष्टप्रयोजनद्वार एव संबन्धोऽवकल्पते । **वा.** ३।१।४।७ पृ. ६६६. * संस्काराणामाधानादीनां लोपो आप्त्यादिकाम्येऽग्नौ चयने । **भा.** १२।४।९।२८–२९. * संस्काराणां

कार्यार्थत्वेन यावत्कार्यमेव तदवस्थानं ( इति ) शास्त्रादवगम्यते । संकर्ष. ३।२।९. * संस्काराणां कार्यत एव संबन्धोऽपि कल्पनीयः । बृहती. पृ. १२१. * संस्काराणां तक्षणादीनां नानुष्ठानं साद्यस्के खलेवाल्याम् । १०।२।३२।७२–७३. मीको. पृ. १५३५ ‘ खलेवाल्यां तक्षणजोषणादिधर्माणां बाधः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * संस्काराणां नातिदेशो यूपशब्देन एकादशिनीगते उपशये । भा. ७।३।१३।३३–३४. मीको. पृ. २४८ ‘ अतिदेशो न उपशये यूपसंस्काराणाम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * संस्काराणां – पर्यूहणं सेचनं दृढीकरणं अञ्जनं – इत्यादीनां अनुष्ठानं साद्यस्के खलेवाल्याम् । १०।२।३३।७४. मीको. पृ. १५३६ ‘ खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * संस्काराणां वपनादीनां याजमानता । भाट्ट. ३।८।२. * संस्काराणां वपनादीनां लोपोऽस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१८।५०. मीको. पृ. ७६० ( ४ ) ‘ अस्थियज्ञस्य मृताधिकारित्वपक्षे० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * एकस्मिन् द्रव्ये व्रीह्यादौ संस्काराणां अवहन्त्यादिनां व्याख्यातं ( ५।२।७ इत्यत्र ) एककर्मत्वम्, आतण्डुलनिर्वृत्तेरेकमिदं कर्मेति । भा. ११।४।१२।४२. * न हि समानद्रव्याश्रयत्वेन सर्वस्य प्राधान्यं भवति, संस्काराणापि ( संस्कारत्वेन अङ्गभूतानामपि ) प्रधानद्रव्यवर्तित्वोपपत्तेः । वा. ३।१।४।७, * यजमानसंस्काराणां च यागगुणभूतकर्त्रंशातिरेकेण फलप्रतिग्रहणयोग्यपुरुषकरणात् भोक्तृत्वांशपातिनामपि यागाङ्गत्वं वक्ष्यते ( ३।७।२ इत्यत्र ) । ३।१।७।१४ पृ. ७१८. * यथा स्नाता कन्याऽनलंकृता, मालागुणेनापि अलंकृतेति । एवं एकदेशेनापि संस्काराणां संस्कृत इति स्तुत्याऽभिधीयते । भा. ७।३।१३।३४, * एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात् । १०।७।७।२१.

**संस्कारे चान्यसंयोगात् । १०।४।६।१० ॥**

एकोनपञ्चाशद्रात्रे अञ्जनाभ्यञ्जने नाम सत्रे ‘ गौग्गुलवेन प्रातःसवने समञ्जते अभि वाऽञ्जते, पैलुदारवेण माध्यंदिने सवने, सौगन्धिकेन तृतीयसवने ’ इति, प्रकृतौ च नवनीतेनाभ्यञ्जनं दीक्षायाम् । अत्र वैकृतेन प्राकृतस्य समुच्चयः बाधो वेति विचारे सिद्धान्तमाह । संस्कारे अञ्जने अभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात् अन्यसंयोगात् अन्यस्मिन् काले कार्यान्तरार्थं संयोगात् । दीक्षायां नवनीतेन, सवनेषु गौग्गुलवादिना । स्नेहनार्थं नवनीतम्, विरूक्षीकरणार्थं गौग्गुलवादि इति । तस्मात् समुच्चयः इति सिद्धान्तः ।

**प्रयाजवदिति चेत् । ११ ॥**

अञ्जनाभ्यञ्जने सत्रे सवनत्रये अञ्जनाभ्यञ्जनद्रव्येण गौग्गुलवादिना प्राकृतस्य चोदकप्राप्तस्य नवनीतस्य समुच्चयः इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । प्रयाजवत् अन्यकालमपि तत्कार्यमेव द्रष्टव्यम् । कालमात्रमन्यत्, पदार्थस्तु स एव । यथा ‘तिष्ठन्तं पशुं प्रयजन्ति’ इति तिष्ठति पशौ प्रयाजा वर्तमानाः प्राकृतकार्यका एव भवन्ति तेन प्राकृतप्रयाजानां पाशुकैः प्रयाजैः बाध एव न समुच्चयः । एवं अञ्जनादिद्रव्ययोरपि न समुच्चयः इति ।

**नार्थान्यत्वात् । १२ ॥**

‘ प्रयाजवदिति चेत् ’ इति सूत्रेण प्राप्तां पूर्वपक्षिणः शङ्कां निरस्यति । न प्रयाजवत् भवितुमर्हति । अर्थान्यत्वात् अर्थस्य प्रयोजनस्य भिन्नत्वात् । स्नेहनार्थं नवनीतं दीक्षायां सुखप्रचाराय । प्रवृत्ते कार्ये सुत्यायां गौग्गुलवादिना अभ्यञ्जनं विरूक्षीकरणार्थम् । इति प्रत्यक्षं कार्यान्तरं वर्तते इति प्राकृतस्य नवनीतस्य न बाधः । इति सिद्धान्तः । के.

* ‘ संस्कारे चान्यसंयोगात् ’ ( १०।४।६।१०–१२ ) इत्यत्र अञ्जनाभ्यञ्जने ‘ गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते ’ इत्युपदिष्टगौग्गुलवाभ्यञ्जनस्य अतिदिष्टनवनीताभ्यञ्जनेन सह समुच्चयः उक्तः । बाल. पृ. १७८.

**संस्कारे च तत्प्रधानत्वात् । ४।२।११।२६ ॥**

अधिकरणातिदेशोऽयम् । दर्शपूर्णमासयोः ‘ व्रीहीनवहन्ति ’ ‘ तण्डुलान् पिनष्टि ’ इति श्रुतम् । अत्र



अवहननपेषणयोरनुवादोऽयं लोकतः प्राप्तत्वात् इति पूर्वः पक्षः । अवहननवत् दलनघर्षणादेरपि पक्षे लोकतः प्राप्तौ नियमार्था अवहननश्रुतिः । तथा पेषणवत् दलनस्यापि लोकतः प्राप्तौ पिनष्टि इति नियमार्था श्रुतिः । तस्मान्नानुवादः किंतु नियमविधिरिति सिद्धान्तः । **सूत्राक्षरार्थस्तु,** चशब्दः अतिदेशसूचनार्थः । संस्कारे अवहननादिरूपे श्रुतिः नियमार्था । तत्प्रधानत्वात् अवहननादिनियमस्य यागप्रधानत्वात् इति **कुतूहलम्** । द्रव्यस्य नियमप्रधानविधिसंभवात् इति **सुबोधिनी** । सः नियमः प्रधानं यस्यां सा श्रुतिः तत्प्रधाना । संस्कारश्रुतेः संस्कारनियमप्रधानत्वात् । लोकतः पक्षे प्राप्तौ अवहननादिश्रुतेः नियमपरत्वं स्पष्टं प्रतीयते इति । के.

* ‘ संस्कारे च तत्प्रधानत्वात् ’ (४।२।११।२६) अत्र अवहन्त्यादीनां दृष्टार्थत्वेन प्राप्तत्वात् अविधेयत्वमाशङ्क्य नियमादृष्टार्थत्वेन देशादिवत् विधानं भविष्यति इति वक्ष्यते । सु. पृ. ५३९.

**संस्कारे च तत्प्रधानत्वात् । १२।४।४।८ ॥**

ऐकादशिनेषु पशुषु गुदानां उपयाजहोमः प्रतिपत्तिरूपः संस्कारः । तस्मिन् उपयाजहोमे संस्कारे तत्प्रधानत्वात् उपयुक्तद्रव्यसंस्कारप्रधानत्वात् उपयाजहोमस्य गुदानां समुच्चयः स्यात्, न विकल्पः । इति सिद्धान्तः । के.

* संस्कारे च तत्प्रधानत्वात् ’ ( १२।४।४।८ ) अत्र ‘ गुदेनोपयजति ’ इति श्रुतं पशुगणे प्रतिपत्तित्वात् गुदानां समुच्चयः उक्तः । बाल. पृ. १७८.

**संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् । १०।३।३।१८ ॥**

सौमिकचातुर्मास्येषु ‘ उत्करे वाजिनमासादयन्ति ’ ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रूयते । इदं आसादनं नियोजनं च धर्ममात्रं अदृष्टार्थं क्रियान्तरं इति पूर्वपक्षमाह । वाजिनस्य पशोश्च संस्कारे सति आसादनं नियोजनं च प्राकृतात् आसादनादेः क्रियान्तरं स्यात् । तस्य उक्तवाक्यस्य विधायकत्वात् ।

**प्रकृत्यनुपरोधाच्च । १९ ॥**

सौमिकेषु चातुर्मास्येषु ‘ उत्करे वाजिनमासादयन्ति ’ ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रूयते । इदं आसादनं नियोजनं च धर्ममात्रं अदृष्टार्थं क्रियान्तरं विधीयते । एवं सति प्रकृत्यनुपरोधात् प्रकृतेः प्राकृतस्य चोदकस्य उपरोधः प्रकृत्युपरोधः, न प्रकृत्युपरोधः प्रकृत्यनुपरोधः, तस्मात् । ‘वेद्यां हवींष्यासादयति’ ‘यूपे पशुं नियुञ्जन्ति’ इत्यस्य प्राकृतस्य न विरोधः । तस्मात् प्रकृतासादनादेः क्रियान्तरत्वाभ्युपगमात् । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**विधेस्तु तत्र भावात् संदेहे यस्य शब्दस्तदर्थः स्यात् । २० ॥**

सौमिकेषु चातुर्मास्येषु ‘उत्करे वाजिनमासादयन्ति’ ‘परिधौ पशुं नियुञ्जन्ति’ इति श्रूयते । इदमासादनं नियोजनं च धर्ममात्रं क्रियान्तरं इति पूर्वपक्षं प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । विधेः प्राकृतस्य वैकृतस्य च आसादननियोजनविधेः तत्र चातुर्मास्यप्रकरणे भावात् विरोधेन संदेहे सति यस्य शब्दः यदुद्दिश्य विधायकः शब्दः स्यात् तदर्थः स्यात् स शब्दः तदर्थ एव स्यात् । तथा च प्राकृतं वाजिनासादनमुद्दिश्य उत्कररूपस्य गुणस्य विधिरत्र । एवं प्राकृतं पशुनियोजनमुद्दिश्य परिधिरूपस्य गुणस्य विधिः इति विज्ञेयम् । तस्मादत्र प्राकृतयोरेव आसादननियोजनयोः उत्करपरिधिरूपगुणविधिः दृष्टार्थ एवेति सिद्धान्तः ।

**संस्कारसामर्थ्याद् गुणसंयोगाच्च । २१ ॥**

सौमिकेषु चातुर्मास्येषु ‘ उत्करे वाजिनमासादयन्ति ’ ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रूयते । अत्र प्राकृतयोरेव आसादन– नियोजनयोः उत्करपरिधिरूपगुणविधिर्दृष्टार्थः इति सिद्धान्त उक्तः । ननु उत्करः तीक्ष्णाग्रो मृदां राशिर्भवति तत्र वाजिनासादनं कर्तुं शक्येत, एवं पशुगतिप्रतिबन्धनरूपं नियोजनं अस्थूले उपशयाने परिधौ कर्तुं न शक्येत इति गुणविधिरशक्य इति । अत्रोच्यते । गुणसंयोगाच्च संस्कारसामर्थ्यात् संभवति गुणविधिः इति । यादृशेन गुणेन संयोगे सति उत्करे आसादनं परिधौ नियोजनं कर्तुं शक्यते

तादृशगुणकं उत्करं परिधिं च करिष्यामः । पृथ्वग्रं उत्करं करिष्यामः । स्थूलं च परिधिं करिष्यामः । एतादृशेन गुणेन संयोगात् आसादननियोजनरूपसंस्कार-सामर्थ्यं उत्करपरिध्योर्भविष्यति । तस्मान्न कर्मान्तरं किंतु गुणविधिरेव ।

**विप्रतिषेधात् क्रियां प्रकरणे स्यात् । २२ ॥**

सौमिकेषु चातुर्मास्येषु 'उत्करे वाजिनमासादयन्ति' 'परिधौ पशुं नियुञ्जन्ति' इति श्रूयते । अत्र प्राकृतयोरेव आसादननियोजनयोः उत्करपरिधिरूप-गुणविधिर्दृष्टार्थः इति सिद्धान्त उक्तः । ननु यथा सौत्रा-मणीप्रकरणे 'ब्राह्मणस्य मूर्धन्नासादयति' ( सुराग्रहान् ) इति धर्ममात्रमासादनं एवमिहापि स्यात् इति चेत् । तत्राह । प्रकरणे चरकसौत्रामणीप्रकरणे विप्रतिषेधात् सुराभाण्डस्य होमपर्यन्तचिरकालीनासादनस्य ब्राह्मण-मूर्धनि अशक्यत्वात् क्रिया क्रियान्तरं धर्ममात्रं अदृष्टार्थं स्यात् । इह प्रकृते तु नाशक्यम् । तस्मादत्र गुणविधि-रेव इति सिद्धान्तः । के.

* संस्कारे फलश्रुतिः 'यदाङ्क्ते, चक्षुरेव भ्रातृ-व्यस्य वृङ्क्ते' इति । इयं फलश्रुतिरर्थवादः । मीन्या.

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात् । ९।१।२।२ ॥**

दर्शपूर्णमासयोः 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामव-हन्ति' 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि' इति श्रूयते । तत्र प्रोक्षणं किं हन्तिपिषिप्रयुक्तं उत अपूर्व-प्रयुक्तं इति विचारे पूर्वपक्षमाह । संस्कारे अवहनन-पेषणादिरूपे प्रयुज्यमानानां प्रोक्षणादिधर्माणां तत्प्रयुक्तता संस्कारप्रयुक्तता स्यात् । तादर्थ्यात् अवहननपेषणादि-संस्कारार्थत्वात् । यद्धि यदर्थं कर्तव्यं भवति तत् तस्य प्रयोजकम् । तस्मात् प्रोक्षणादीनां हन्तिपिष्यादिप्रयुक्तत्वं इति । अथवा । ज्योतिष्टोमे 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायां, उपांशूपसत्सु' इति श्रूयते । तत्र किं परमापूर्वप्रयुक्ता एते धर्माः उत दीक्षणीयाद्यपूर्वप्रयुक्ता इति विचारे पूर्वपक्षमाह । संस्कारे परमापूर्वरूपे युज्यमानानां दीक्षणीयाद्यपूर्वे युज्यमानानां धर्माणां ताद-र्थ्यात् परमापूर्वार्थत्वात् तत्प्रयुक्तता परमापूर्वप्रयुक्तता एव स्यात् । परमापूर्वं हि फलवत् नाङ्गापूर्वम् । इति द्वितीयं वर्णकम् ।

**तेन त्वर्थेन यज्ञस्य संयोगाद् धर्मसंबन्ध-स्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थ-त्वात् । ३ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ । यदुक्तं प्रोक्षणादीनां अवहननपेषणादिप्रयुक्तत्वमिति, तन्न । तेनावहननादिना यज्ञस्य अपूर्वस्य संयोगात् अवघातस्य प्रकरणात् अपू-र्वार्थत्वात् धर्मसंबन्धः अवहननस्य अपूर्वसाधनत्वरूपेणैव प्रोक्षणेन धर्मेण संबन्धः । तस्मात् नखनिर्भिन्नचरावपि नखेषु प्रोक्षणं यज्ञप्रयुक्तं अपूर्वप्रयुक्तं स्यात् । संस्कारस्य प्रोक्षणादेः तदर्थत्वात् अपूर्वार्थत्वात् । तस्मात् द्रव्यादि-संस्कारः न अवहननादिप्रयुक्तः किंतु अपूर्वप्रयुक्त एवेति सिद्धान्तः । इति प्रथमं वर्णकम् ।

अथवा । 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायां, मन्द्रतरमाति-थ्यायां, उपांशूपसत्सु' इति दीक्षणीयादौ स्वरविशेषः परमापूर्वप्रयुक्तः न तु दीक्षणीयाद्यवान्तरापूर्वप्रयुक्त इति यदुक्तं तन्न इति तुशब्दार्थः । सिद्धान्तमाह– तेन अर्थेन दीक्षणीयापूर्वेणैव धर्मसंबन्धः तत्तत्स्वरसंबन्धः । यज्ञस्य संयोगात् दीक्षणीयेष्ट्यादिवाचकशब्दसंयोगात् । तस्मात् यज्ञप्रयुक्तं दीक्षणीयाद्यङ्गयज्ञप्रयुक्तं स्यात् धर्म-जातम् । संस्कारस्य यथाकामस्वरादेः तदर्थत्वात् दीक्ष-णीयाद्यर्थत्वात् । ततश्च यथाकामस्वरादेः दीक्षणीयाद्य-वान्तरापूर्वप्रयुक्तत्वमेवेति सिद्धान्तः । दीक्षणीयावाङ्-नियमन्यायोऽयम् । इति द्वितीयं वर्णकम् । के.

* **संस्कारानुरोधात्** शक्तेरुद्बोधः इत्युक्तम् । बृहती. पृ. २३३.

* **संस्कारायोग्यस्यापि** (सकलसंस्कारायोग्यस्यापि) मुख्यस्यैवोपादानम् । भाट्ट. ६।३।१५.

* **संस्कारार्थानां** कर्मणां सत्रे अहीने च बहुकर्तृके सर्वे कर्तारः न तु गृहपतिरेव । भा. १२।४।१४।३५.

* **संस्कारोद्बोधकं** न वस्तुग्रहणमेवैकम्, नाना-प्रकारत्वात् तदुद्बोधहेतूनाम् । ऋजु. पृ. २३९.



* **संस्कारकर्म** साम ऋचाम् । ९।२।२।३–१३.

* **संस्कारकर्माणि** प्रोक्षणावेक्षणपर्यग्निकरणादीनि । भा. ७।२।१।१, * **संस्कारकर्मणः** सामशब्दो वाचकः । ९।२।२।३.

* **संस्कारकर्मत्वं** उत्तमप्रयाजस्य दर्शपूर्णमासादौ । १०।१।७।१४–१५. * संस्कारकर्मत्वं याज्यानु-वाक्ययोः । १०।४।२०।३९–४१.

* **संस्कारनामातिदेशः** । बाल. पृ. ११७–११९.

* **संस्कारनिमित्तत्वं** क्लृप्तजातिवाचित्वेन बाध्यते । यथा बर्हिराज्यपुरोडाशादौ । बाल. पृ. १४५.

* **संस्कारभेदे** कर्मभेदो न हि भवति । भा. १०।६।१३।३८, * संस्कारभेदे हि विकारपृथक्त्वं दृष्टम् । तद्यथा– अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णनम् । न तु एकस्य तण्डुलीभावश्चूर्णनं च । ७।२।१।१.

* **संस्कारलक्षणानां** गुणानां गुणिनाशमन्तरेणा-नपायः । संकर्ष. ३।२।९.

* **संस्कारलोपः** अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१८।५०. मीको. पृ. ७६० ( ४ ) 'अस्थि-यज्ञस्य मृताधिकारित्वपक्षे०' इत्यत्र अधिकरणं द्रष्ट-व्यम् ।

* **संस्कारशब्दस्तु** अयम् ( ऋत्विक् ), वरणभरणे हि संस्कारौ । ते येषां न स्तो न ते सत्यपि क्रियायोगे तच्छब्दवाच्या भविष्यन्ति । ते च वरणभरणे सप्तदशा-नामेव यजमानेन क्रियेते । वा. ३।७।१६।३३.

* **संस्कारसंबन्धः** दर्शपूर्णमासयोः 'शेषं स्विष्ट-कृते समवद्यति' इति विधीयते न कर्मान्तरम् । वि. २।३।१३.

* **संस्कारहेतुः** क्रिया न द्रव्यम्, तत्तु व्यञ्जकं स्यात् । वि. ५।३।११.

* **संस्कारकः** तृतीयोऽनुयाजः दर्शपूर्णमासगत-स्विष्टकृद्देवतानाम्, अतः संनिपत्योपकारकः । भा. १०।४।१९।३८, * संस्कारकः हि मन्त्रः । सोऽसति संस्कार्ये अनर्थकः स्यात् । ३।२।१।२.

* **संस्कारकता** मन्त्राणां स्मृतिहेतुसंस्कारोद्बोधक-त्वाख्या । सु. पृ. ११०८–११०९.

* **संस्कार्यं** अनुपादेयं कर्मभेदकम् । 'त्रैधातवीया दीक्षणीया' इत्यादि, यजमानसंस्कारार्थत्वेन उपादा-नात् । वा. २।३।१२।२५ पृ. ६१८. * संस्कार्यं ईप्सितं कर्म । अदृष्टातिशयोत्पादनं संस्कारः । यथा 'व्रीहीन् प्रोक्षति' । मणि. पृ. १२९. * संस्कार्यं देशः कालः फलं निमित्तं इत्यनुपादेयपञ्चकम् । बाल. पृ. ८८. * संस्कार्यः प्रधानम्, संस्कारो गुणः । वि. १०।१।८. * 'भूतभाव्युपयोगं हि संस्कार्यं द्रव्य-मिष्यते' । वा. २।१।४।१२ पृ. ४११. * संस्का-र्यस्य फलस्य च कर्मभेदकत्वम् । ( फलसंस्कार्याधि-करणम् । मीको. पृ. २९०८ ) । २।३।१२।२५.

* **संस्कार्यतः** वाचनिकः व्यवस्थाविधिः यथा– आज्यौषधसांनाय्यधर्माणाम् । स्मार्ते तु 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥' इति । बाल. पृ. १९, * संस्कार्यतः व्यवस्थारूपः प्रतिषेधो यथा– आश्वलायन-गृह्ये होष्यद्धर्मेषु सर्वत्र परिस्तरणं विधाय 'कृताकृत-माज्यहोमेषु परिस्तरणम्' इति अकृतशब्देन अन्यत्र व्यवस्थया निषेध उक्तः । पृ. ३५.

**संस्कृतं स्यात् तच्छब्दत्वात् । ७।३।१३। ३३ ॥**

यूपैकादशिन्यां श्रूयते 'उपशयो यूपो भवति' इति । एकादश यूपाः उच्छ्रितव्या भवन्ति । द्वादशोऽयं उप-शयो नाम । स च नोच्छ्रीयते किंतु दक्षिणतः उप समीपे अयं शेते इति उपशयनात् उपशयोऽयम् । तदिदं उपशयद्रव्यं जोषणादिधर्मसंस्कृतं स्यात् असं-स्कृतमेव वा स्यात् इति विचारे पूर्वपक्षमाह । उप-शयद्रव्यं संस्कृतं स्यात् जोषणच्छेदनादिभिः संस्कारैः । कुतः ? तच्छब्दत्वात् । सः यूपः इति संस्कृतत्वविशिष्ट-बोधकः शब्दः यस्य स तच्छब्दः । संस्कारनिमित्तक-यूपशब्दबोधितत्वात् अस्य उपशयस्य 'उपशयो यूपो भवति' इति । अत्र हि यूपशब्दोऽस्ति । तस्मात् उप-शयद्रव्यं संस्कृतं स्यात् ।

**भक्त्या वाऽयज्ञशेषत्वात् गुणानामभिधानत्वात् । ३४ ॥**

यूपैकादशिन्याम् 'उपशयो यूपो भवति' इति श्रुतम् । यूपानां दक्षिणतः भूमौ अयं उप शेते इति उपशयो नाम द्वादशः यूपः । अयं संस्कारैः संस्कृतः स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् अर्थात् असंस्कृतत्वं सिद्धान्तमाह । यद्यपि उपशये यूपशब्दः संस्कारवाची प्रयुक्तः तथापि अयं यूपशब्दो भक्त्या स्यात् स्तुत्यर्थः । अयज्ञशेषत्वात् अस्य । नहि अस्मिन् पशुर्नियुज्यते, तेन अयं यज्ञशेषो न भवति । कथं तर्हि यूपशब्दस्तत्रेति ? आह । गुणानां अभिधानत्वात् । अभिधत्ते इति अभिधानम् । छेदनादीनां केषांचिदेव संस्काराणां अभिधायकः यूपशब्दोऽयम् । गुणानामभिधानत्वात् यूपशब्दत्रोध्यत्रमस्य । परंतु अयज्ञशेषत्वात् भक्त्यैवायं यूपः । तस्मात् इतरयूपवत् नायं मन्त्रसंस्कृतः इति सिद्धान्तः । के.

**☒ संस्कृतेषु कर्माणि संस्काराणां तदर्थत्वात् । ५।३।९।२१॥**

आधानमात्रसंस्कृतेषु अग्निषु अग्निहोत्रादीनि नियतानि कर्माणि ऐन्द्राग्नादीनि च अनियतानि कर्माणि प्रवर्तेरन् उत पवमानेष्टिभिः संस्कृतेषु अग्निषु ( इति ) विचारे आधानमात्रसंस्कृतेषु अग्निषु कर्माणि प्रवर्तेरन् । यथा 'आहिताग्निः न क्लिन्नं दारु अभ्यादध्यात्' इत्यादीनि आहिताग्नेः व्रतानि आहितमात्रेष्वेव भवन्ति तद्वत् । इति उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । संस्कृतेषु पवमानेष्टिभिः संस्कृतेषु अग्निषु कर्माणि अग्निहोत्रादीनि ऐन्द्राग्नादीनि च प्रवर्तेरन् । कुतः ? संस्काराणां पवमानेष्ट्यादीनां तदर्थत्वात् अग्न्यर्थत्वात् कर्मार्थत्वाद्वा । आहवनीयादिषु सिद्धेषु कर्माणि भवन्ति, आहवनीयादिसिद्धिश्च आधानेन पवमानेष्टिभिश्च । तस्मात् पवमानेष्टिसंस्कृतेषु अग्निषु कर्माणि ।

**अनन्तरं व्रतं तद्भूतत्वात् । २२ ॥**

आधाने पवमानेष्टीः कृत्वा अग्निहोत्रादीनि कर्माणि कुर्यात् । 'आहिताग्निर्न क्लिन्नं दारु अभ्यादध्यात्' क्लिन्नं आर्द्रम्, दारु काष्ठं अग्नौ आहिताग्निः न अभ्यादध्यात् इत्यादिव्रतं तु अनन्तरं एव आधानानन्तरमेव पवमानेष्टिभ्यः प्रागपि स्वीकुर्यात् । आहितेष्वेव अग्निषु यजमानस्य तद्भूतत्वात् आहिताग्नित्वेन निष्पन्नत्वात् ।

**पूर्वं च लिङ्गदर्शनात् । २३ ॥**

पवमानेष्टिभिः संस्कृतेषु अग्निषु अग्निहोत्रादीनि कर्माणि न पवमानेष्टिभ्यः पूर्वं इति सिद्धान्ते उक्ते पूर्वपक्षमाह । चकारो दृष्टान्तार्थः । यथा पवमानेष्टिभ्यः परस्तात् कर्माणि तथा पूर्वमपि पवमानेष्टिभ्यः स्युः । 'अग्निं वै सृष्टं अग्निहोत्रेणानुद्रवन्ति' इति आहितमात्रेषु अग्निषु अग्निहोत्रं दर्शयति । एतस्य लिङ्गस्य दर्शनात् पवमानेष्टिभ्यः पूर्वं कर्माणि स्युः ।

**अर्थवादो वाऽर्थस्य विद्यमानत्वात् । २४ ॥**

आधानानन्तरं संवत्सरोत्तरं वा द्वादशदिनोत्तरं वा आधानाङ्गभूताः पवमानेष्टयः कर्तव्याः । अन्तराले च तूष्णींहोमरूपा अग्निहोत्रहोमाः कर्तव्या भवन्ति । पूर्वपक्षी तु पवमानेष्टिभ्यः प्रागपि मुख्योऽग्निहोत्रहोमः दर्शपूर्णमासादयश्च कर्तव्या इति मन्यते । 'पूर्वमिष्टिभ्यः' इति च तत्र प्रमाणमाह । तन्निरासार्थे सिद्धान्तपक्षीयं सूत्रमिदम् । वाशब्दः शङ्कानिरासार्थः । अर्थस्य तूष्णींहोमरूपस्य अर्थस्य विद्यमानत्वात् 'पूर्वमिष्टिभ्यः' इत्ययमर्थवादः प्रत्येतव्यः । तस्मात् पवमानेष्ट्युत्तरमेव मुख्याग्निहोत्रादीनि कर्माणि कर्तव्यानि ।

**न्यायविप्रतिषेधाच्च । २५ ॥**

आधानमात्रसंस्कृतेषु अग्निषु पवमानेष्टिभ्यः प्राक् यदि अग्निहोत्रादीनि ऐन्द्राग्नादीनि च कर्माणि स्युः तदा 'न वा तासां तदर्थत्वात्' ( ३।६।४।१२ ) इति यो न्याय उक्तः, तेन विप्रतिषेधः विरोधः स्यात् । तस्मात् पवमानेष्टिसंस्कृतेषु अग्निषु कर्माणि कर्तव्यानि इति सिद्धान्तः । के.

* **संस्कृतत्वाच्च** । ३।४।१५।४३ ॥ दर्शपूर्णमासयोः शेषकार्याणि एकस्मादेव हविषः कर्तव्यानि इति पूर्वपक्षे हेत्वन्तरम् ।

तुषोपवापकपालवत् शेषस्य अन्यार्थत्वेन प्राप्तस्यापि शेषकार्याणि प्रति उपादेयत्वेन विवक्षितैकसंख्यत्वात्



एकशेषसाधितैरेव शेषकार्यैः प्रधानस्योपकृतत्वात् न शेषान्तरेभ्यः कार्याणि । इति यथाभाष्यं सूत्रार्थः ।

पर्यग्निकरणादिभिरेव शेषस्य संस्कृतत्वात् शेषकार्याणां संस्कारत्वानुपपत्तेः न सर्वसाद्गुण्यसिद्ध्यै सर्वेभ्यः कार्याणि इत्येवं पूर्वसूत्रस्थशेषपदानुषङ्गेण सूत्रव्याख्या ( वार्तिककारीया ) ।

प्रधानापूर्वसाधनत्वयोग्यताधानार्थसंस्कारसंस्कृतस्यापि शेषस्य प्रतिपत्त्यर्थोऽयं संस्कारो न विरुद्ध इत्याशङ्कानिरासार्थत्वेन कृतकार्यद्रव्यसंस्कारानर्थक्यापत्तेः अतीतसंस्कारावसरत्वात् इत्येवं आवृत्त्या व्याख्या । (अतिक्रान्तसंस्कारावसरत्वात् इत्यपि व्याख्येयम् । कृतप्रयोजनद्रव्यसंस्कारानर्थक्यात् इति तदर्थः । ) । सु. पृ. १५३८.

* **संस्कृतिरूपं** वैदिकं कर्म यथा– 'व्रीहीन् प्रोक्षति' इति । अदृष्टरूपसंस्कारार्थं प्रोक्षणम् । बाल. पृ. ८४.

* **संस्तारपङ्क्तिः** पङ्क्तिः । पादेषु अक्षराणि १२।८।८।१२ । उदा० 'षष्टिं सहस्रा' ( ऋसं. ८।४६।२२ ) ।

* **संस्था** च ग्रहस्तोत्राभ्यासविषयकव्यापारोपरमात्मकत्वेन अभावरूपा । बाल. पृ. १६३. * संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः । भाट्ट. ३।६।१६. * संस्था । संतिष्ठते– तदुत्तरकालौदासीन्यवचनत्वं संपूर्वस्य तिष्ठतेः । वा. ३।६।१६।४२ पृ. १०६३. * संस्था हि क्रियां प्रति औदासीन्यम्, व्यापारान्तरकरणं वा पूर्वस्मात् कर्मणः । संस्थानं पर्यवसानम्, व्यापारोपरमः । भा. १०।६।१०।३०. * संस्था हि व्यापारपरित्यागात्मकत्वात् अभावभूता । वा. ३।६।१६।४२ पृ. १०६३. * संस्थाः अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः इति चतस्रः । यास्तु अत्यग्निष्टोम–वाजपेय–अप्तोर्यामाख्याः अन्यास्तिस्रः स्मृतौ गण्यन्ते ताः एतास्वेव अन्तर्भूताः । भाट्ट. ३।६।१६. * 'संस्थाश्च समानविधानाः प्रकरणाविशेषात्' ( ३।६।१६।४१ ) इत्यधिकरणे उक्थ्यादिसंस्थानां प्रकरणं निराकरिष्यते । इति चेत्, सत्यम् । तत्र हि अग्निष्टोमसंस्थस्य नित्यत्वात् तदीयप्रकरणेन अविशेषसंयुक्ता नित्यवदाम्नाता एव धर्मा गृह्यन्ते । उक्थ्यादीनां तु काम्यत्वेन अनित्यत्वात् न तद्धर्मा गृह्यन्ते, नित्यानित्यसंयोगात् इति वक्ष्यते । कु. ३।३।१६।२६.

**☒ संस्थास्तु समानविधानाः प्रकरणाविशेषात् । ३।६।१६।४१ ॥**

ज्योतिष्टोमस्य चतस्रः संस्थाः समाम्नाताः । अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । तस्य दीक्षणीयादयो धर्मा भवन्ति । ते किं सर्वसंस्थस्य ज्योतिष्टोमस्य उत अग्निष्टोमसंस्थस्यैवेति संदेहे पूर्वपक्षसूत्रम् । तु–शब्दः त्रयोदशाधिकरणोक्तफलचमसात् वैचित्र्यार्थः । अग्निष्टोमादयः ज्योतिष्टोमस्य संस्थाः दीक्षणीयादिधर्मविशिष्टत्वेन समानविधानाः स्युः, न तु फलचमसवत् असमानविधानाः । कुतः ? प्रकरणाविशेषात् । प्रकरणस्य विशेषः भेदः प्रकरणविशेषः । न प्रकरणविशेषः प्रकरणाविशेषः तस्मात् प्रकरणभेदाभावात् । चतसृष्वपि संस्थासु एकहेलया दीक्षणीयादयो विधीयन्ते न तु तत्र कश्चित् प्रकृतिविकृतिभावः ।

**व्यपदेशश्च तुल्यवत् । ४२ ॥**

ज्योतिष्टोमस्य चतस्रः संस्थाः– अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । दीक्षणीयादयश्च तत्र धर्माः । ताश्च संस्थाः समानविधानाः न तु प्रकृतिविकृतिभावः कश्चित्तत्र इति पूर्वपक्षस्य उपोद्बलकं सूत्रमिदम् । तुल्य एव तुल्यवत् । स्वार्थे वतिः 'असिद्धवदत्राभात्' ( पा. ६।४।२२ ) इत्यादिवत् । व्यपदेशः ज्योतिष्टोमप्रकरणे विशिष्य धर्मोपदेशः सर्वसंस्थानां तुल्यः । 'यमग्ने पृत्सु मर्त्यं इति प्रचरणीशेषात् क्रतुकरणं जुहोति यद्यग्निष्टोमः, अथ यद्युक्थ्यो मध्यमपरिधिमनक्ति, यदि षोडशी द्रोणकलशमुपस्पृशति, यद्यतिरात्रः यजुर्जपन् हविर्धानं प्रपद्यते' इति । सोऽयं व्यपदेशः समानविधानत्वे उपपद्यते । तथा 'आग्नेयमजं सवनीयमग्निष्टोमे आलभते, ऐन्द्राग्नमुक्थ्ये द्वितीयं, ऐन्द्रं वृष्णिं षोडशिनि तृतीयं, सारस्वतीं मेषीं चतुर्थीमतिरात्रे' इति व्यपदेशोऽपि ज्ञेयः । तस्मात् सर्वाः संस्थाः समानविधानाः ।

**विकारास्तु कामसंयोगे सति नित्यस्य समत्वात् । ४३ ॥**

ज्योतिष्टोमस्य चतस्रः संस्था आम्नाताः । अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । तस्य दीक्षणीयादयश्च धर्मा आम्नाताः । ताश्च सर्वाः संस्थाः समानविधाना इति पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न संस्थाः समानविधानाः । किंतु उक्थ्यादयः अग्निष्टोमस्य काम्या विकाराः । कामसंयोगे सति उक्थ्यादीनां श्रवणात्, 'पशुकाम उक्थ्यं गृह्णीयात्', 'षोडशिना वीर्यकामः स्तुवीत', 'अतिरात्रेण प्रजाकामं याजयेत्' इति । काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते । तस्मान्न साधारणी इतिकर्तव्यता । साधारणत्वे दोषमाह– नित्यस्य समत्वात् इति । नित्यस्य धर्मजातस्य आश्रयभूतज्योतिष्टोमक्रियान्वये सत्येव समत्वात् ऐकरूप्यात् । काम्यसंस्थान्वये च वैरूप्यप्रसङ्गात् । किंच यदि नित्यं आम्नानं अनित्यस्य स्यात्तदा नित्यस्य धर्मस्य अनित्येन समत्वप्रसङ्गात् अनित्यत्वप्रसङ्गादित्यर्थः । नित्यानित्यसंयोगो हि विरुद्धः । तस्मात् संस्थाः न समानविधानाः ।

**अपिवा द्विरुक्तत्वात् प्रकृतेर्भविष्यन्ति । ४४ ॥**

इदं सूत्रं वृत्तौ कुतूहले च नास्त्येव । वार्तिकस्वारस्यादपि नेदं सूत्रं सिध्यति । भाष्यमपि सूत्रं विनैवोपपद्यते । कथंचिदेव तु सूत्रव्याख्यारूपेण भाष्यं योजनीयं भविष्यति । तत्रापि अपिवा इतिशब्दो नैव संबध्यते । एवं सत्यपि वृ.कु.यभिन्नेषु सर्वेषु पुस्तकेषु अस्य सूत्रत्वेन पठितत्वात् अस्माभिः व्याख्यायते । 'अपिवा द्विरुक्तत्वात्' इत्ययं शङ्काग्रन्थः । शङ्का चेत्थम्, ननु अग्निष्टोमसंस्थाऽपि नित्या काम्या चेति द्विरूपा स्वीकर्तव्या । तत्र 'सोमेन यजेत' इति उत्पन्नस्य सोमयागस्य 'वसन्तेवसन्ते ज्योतिषा यजेत' इति प्रत्यवायपरिहारार्था नित्या । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति काम्या । तथा च अग्निष्टोमसंस्थाया अपि द्विरुक्तत्वात् द्विविधत्वेन उक्तत्वात् न नित्यवदाम्नानं वक्तुं शक्यमिति । तत्रोत्तरमाह– प्रकृतेर्भविष्यन्ति इति । द्वयोर्वाक्ययोः सामर्थ्यात् नित्ये एव स कामो भविष्यति, तावता च नित्यताविघातो नास्ति । तस्मात् दीक्षणीयादयो धर्माः प्रकृतेः प्रकृतिभूतस्य अग्निष्टोमस्यैव भवितुमर्हन्ति न विकृतिभूतानां उक्थ्यादीनाम्, तेषां तु चोदकेन स्युरिति ।

**वचनात्तु समुच्चयः । ४५ ॥**

अग्निष्टोमः उक्थ्यः षोडशी अतिरात्रश्चेति ज्योतिष्टोमस्य चतस्रोऽपि संस्थाः समानविधानाः इति पूर्वपक्षे 'आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि' इत्यत्र द्वितीयस्य तृतीयस्य दर्शनं समानविधानत्वे एव घटते इत्युक्तं तन्निरासार्थमिदं सूत्रम् । तुशब्दः पूर्वपक्षयुक्तिनिरासार्थः । न तावता समानविधानत्वसिद्धिः । द्वितीयतृतीयशब्दाभ्यां यद्यपि प्रथमेन समुच्चय उच्यते तथापि स समुच्चयः वचनाद् भविष्यति न समानविधाननिमित्तकः । नहि विशिष्टविधानस्य अतिभारः आग्नेयाद्यनुवादेन समुच्चयविधानोपपत्तेः ।

**प्रतिषेधाच्च पूर्वलिङ्गानाम् । ४६ ॥**

अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति ज्योतिष्टोमस्य चतस्रः संस्थाः । तत्र अग्निष्टोमः प्रकृतिः इतराः काम्याः । अतो न तासां समानविधानम् । तासां प्रकृतिविकारभावश्च पूर्वलिङ्गानां प्रतिषेधात् सिध्यति अतो न तासां समानविधानम् । 'यमग्ने पृत्सु मर्त्यमिति प्रचरणीशेषात् क्रतुकरणं जुहोति यद्यग्निष्टोमः, अथ यद्युक्थ्यः परिधिमनक्ति, न जुहोति । यदि षोडशी द्रोणकलशमुपस्पृशति, न जुहोति, न परिधिमनक्ति । यद्यतिरात्र एतदेव यजुर्वदन् हविर्धानं प्रपद्यते, न जुहोति, नानक्ति, नोपस्पृशति' इति पूर्वेषां होमादीनां लिङ्गानां प्रतिषेधानुवादः स विकारपक्षे एवावकल्पते । तस्मात् न समानविधित्वम् ।

**गुणविशेषादेकस्य व्यपदेशः । ४७ ॥**

अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्च इति ज्योतिष्टोमस्य चतस्रः संस्थाः समानविधानाः इतिपूर्वपक्षे 'व्यपदेशश्च तुल्यवत्' (३।६।४२) इत्यत्र यो हेतुरुक्तः तन्निरासार्थं सिद्धान्तसूत्रम् । एकस्य क्रतुकरणाख्यधर्मविशेषस्य प्राकरणिकसंस्थाभिः अङ्गतया



व्यपदेशः संबन्धः गुणविशेषात् 'यद्युक्थ्यः परिधिमनक्ति' इत्यादि गुणविधायकवाक्यवशात् युज्यते । न तु तावता सर्वाङ्गसंबन्धोऽपि आपतति ।

ननु उक्थ्यादिसंस्थानां अप्राकरणिकत्वे 'यदि उक्थ्यः परिधिमनक्ति, यदि षोडशी यदि अतिरात्रः' इति यदिशब्दस्योपबन्धः अनुपपन्नः तस्य संनिहितानेकविषयत्वात् इति शङ्कायां इदमेव सूत्रमुत्तरम् । एकशब्दः केवलार्थकः । एकस्य केवलस्य धर्मविहीनस्य उक्थ्यादेः पाठः संनिहितत्वलक्षणगुणविशेषात् व्यपदेशः यदिशब्दोपबन्धः युज्यते ।

ननु धर्माम्नानस्य अग्निष्टोममात्रविषयत्वे 'यद्यग्निष्टोमः क्रतुकरणं जुहोति' इत्यनर्थकं इति शङ्कायां एतदेव सूत्रमुत्तरम् । गुणविशेषात् इति पञ्चमी फलस्य हेतुत्वविवक्षया । एकशब्दो मुख्यवाची । 'यद्युक्थ्यः परिधौ निमार्ष्टि' इत्यादेर्गुणविशेषस्य विधानार्थं 'यद्यग्निष्टोमः' इति एकस्य मुख्यस्य अग्निष्टोमस्य व्यपदेशः नित्यानुवादः । तस्मादुक्थ्यादिसंस्थाः न समानविधानाः । के.

* संस्थया प्रतिषेधानुमानम्, तेन कार्यापत्तिः । 'उद्गीथा वा एतर्हि वाग् भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते' इति संस्थया प्रतिषेधः, तेन तत्कार्यम् । तस्मिन् मध्वशनघृताशने । एवमत्र लक्षितलक्षणया स्वशब्दः । टुप्. ९।२।१२।४० पृ. १७३०–३१. * संस्थानां अत्यग्निष्टोमादीनां क्रतुभावनान्तर्भावो नास्ति, फलार्थत्वात् । अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गता । शा. ५।३।१३. * संस्थानां असमानविधानत्वम् । वा. ३।३।१२।३३ पृ. ८७८, * संस्थानां च (ज्योतिष्टोमसंस्थानां) विरोधात् अन्योन्यं समावेशो नास्ति । ३।६।१६।४१.

**संस्थाधिकरणम्** । सोमसंस्थाः न समानविधानाः ॥

**संस्थास्तु समानविधानाः प्रकरणाविशेषात् । ३।६।१६।४१ ॥**

**भाष्यम्**– अस्ति ज्योतिष्टोमः । तत्र संस्थाः समाम्नाताः – अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति । तत्र दीक्षणीयादयो धर्माः । तेषु संदेहः किं सर्वसंस्थं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्मा उक्ताः उत अग्निष्टोमसंस्थमभिप्रेत्य इति । किं प्राप्तम् ? सर्वसंस्थासु समानं विधानम् । कुतः ? प्रकरणाविशेषात् । नास्ति प्रकरणे विशेषो येन ज्ञायेताग्निष्टोमसंस्थं प्रकृत्येति । तस्मात् समानविधानाः संस्थाः इति ।

**वा**— अनेकग्रह – चमसयागाभ्यासात्मकचतुःसंस्थो ज्योतिष्टोमोऽवधारितः । सर्वसंस्थासु तु ज्योतिष्टोमरूपमनुस्यूतम् । यथैव देवदत्तस्य स्थानोपवेशनगमनशयनाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति तथा ज्योतिष्टोमात्मनः संस्थान्तरोपजनापाये तत्त्वं नापैति । संस्थानां च विरोधादन्योन्यं समावेशो नास्ति । ज्योतिष्टोमरूपं तु सर्वत्राविरुद्धमनुवर्तते । स च ज्योतिष्टोमः फलाय चोदितः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तथोक्थ्यादिसंस्थानामपि 'पशुकाम उक्थ्यं गृह्णीयात्' इत्यादि फले विधानम् । तमेवंविधं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्माः समाम्नाताः । ते संदिह्यन्ते, किं सर्वसंस्थज्योतिष्टोमोद्देशेनाऽऽम्नाता उत केवलाग्निष्टोमसंस्थोद्देशेनेति । न त्वयमुपन्यासो युक्तः । न हि धर्मसंबन्धवेलायामुद्दिश्यमानस्य ज्योतिष्टोमस्य काचित्संस्था विशेषणत्वेन श्रूयते । यद्यपि कथंचित् श्रूयेत तथाऽप्युद्दिश्यमानविशेषणत्वान्न विवक्ष्येत । न चोक्थ्यादिग्रहणांशेन ज्योतिष्टोमस्य ग्राहकत्वम्, फलसाधनभावाद्धि तत्रोक्थ्यादय एवेतिकर्तव्यतावन्तो भवन्ति । ज्योतिष्टोमस्तत्र आश्रयत्वेन उपसर्जनभावान्न धर्मग्रहणयोग्यो विज्ञायते । 'ज्योतिष्टोमेन स्वर्गकामः' इति चैतद्वाक्यगतस्य ज्योतिष्टोमस्य धर्मसंबन्धः सर्वसंस्थासु अविशिष्ट इत्यग्निष्टोमसंस्थमेवेत्ययुक्तम् । अत एवं वक्तव्यम् । किं ज्योतिष्टोमस्यैवैतद्धर्माम्नानं उतोक्थ्यादीनामपि संस्थानामिति । तच्चैवं समर्थनीयमेतदेव ग्रन्थेनोक्तमिति । यद्यपि संस्थाभिर्धर्मा गृह्यन्ते तथाऽपि तासां स्वयमक्रियात्मकत्वाज्ज्योतिष्टोम एवाऽऽश्रयत्वाद्द्वारं भवतीति किं सर्वसंस्थं प्रकृत्येत्याह । किं द्वारभूतं फलवन्तं च प्रकृत्योत फलवन्तमेवेत्यर्थः । यदा च केवलज्योतिष्टोमार्थत्वं तदा तदसाधारणत्वात् परिशेषाद्वाऽग्निष्टोम-

संस्थस्यैव जायत इति तत्संस्थस्य व्यपदेशः । उक्थ्यादिषु हि यद्यपि ज्योतिष्टोमस्यापि ग्राहकत्वमस्ति तथाऽपि तन्न व्यज्यते किमुक्थ्यादिगृहीता धर्मा एतस्य द्वारत्वात् भवन्त्युत आत्मीयफलसाधनत्वादिति । अग्निष्टोमसंस्था चास्य निजमङ्गम् । अतस्तत्संस्थो गृह्णन्नयं गृह्णातीति शक्यते वक्तुम् । तस्मात् सम्यगुपन्यस्तम् । धर्मसाधारण्यं चोपदेशातिदेशाभ्यां पक्षद्वयेऽपि अभ्युपगम्यत एवेति विधानग्रहणम् । किं प्राप्तम् ? ज्योतिष्टोमेन सह समानं संस्थानां धर्मविधानम् । कुतः ? प्रकरणाविशेषात् । ज्योतिष्टोमो हि फलवत्त्वादुपजातकथंभावस्तदनुवृत्तिसंनिधौ समाम्नातान् धर्मान् गृह्णाति न ज्योतिष्टोमत्वेन । तच्चोक्थ्यादीनामेतेष्वेव धर्मेषु सर्वमविशिष्टम् । उपदेशासंभवे चातिदेशो भवति । तस्मादुपदेश एव साधारण इति ।

**व्यपदेशश्च तुल्यवत् । ४२ ॥**

**भाष्यम्—** तुल्य इव प्रकरणे व्यपदेशो भवति । 'यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः, परिधिमनक्ति, यद्यतिरात्र एतदेव यजुर्जपन् हविर्धानं प्रतिपद्येत' इति सर्वावस्थस्य विशेषवचनादवगम्यते । यदपि सामान्यं तदपि सर्वावस्थस्यैवेति । यदि हि (न) समानं विधानमग्निष्टोमसंस्थस्यैव स्यात् नेहाग्निष्टोमं संकीर्तयेत् । असंकीर्त्यमानेऽपि धर्मसंबन्धो भवतीति, सर्वावस्थस्य कीर्तनात्सर्वावस्थस्य प्रकरणमित्यवगच्छामः । अपि च श्रूयते 'आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि' इति । द्वितीयस्य तृतीयस्य च दर्शनं सामानविध्ये घटते । उक्थ्ये हि द्वे निमित्ते स्तः, अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं चेति । तत्र द्वौ नैमित्तिकौ, आग्नेयः पशुः, ऐन्द्राग्नश्चेति । तेन द्वितीयदर्शनं तत्र युज्यते । एवं षोडशिन्यतिरात्रे च । प्रकृतिविकारभावे तु प्रत्यक्षश्रुतैरैन्द्राग्नादिभिरतिदेशेन प्राप्त आग्नेयो बाध्येत । तत्र द्वितीयादिदर्शनं नोपपद्येत । भवति च । तस्मात्सर्वावस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा इति ।

**वा—** आज्यशेषस्य प्रतिपत्तिं विदधत्तुल्यवत्संस्थाक्रतुप्रकरणसंबन्धित्वेन कीर्तयति । 'यद्यग्निष्टोमो जुहोति यद्युक्थ्यस्तेनैव शेषेण परिधिमनक्ति । यद्यतिरात्रः, एतदेव होमयजुः, यमग्ने पृत्सु मर्त्यमिति जपन्हविर्धानं प्रतिपद्येत' इति । अतो विज्ञायते सर्वोऽङ्गविधिः साधारण इति । सामान्यतो दृष्टमिवायुक्तमुक्तम् । यदि हि वाक्यवशेन किंचित्प्रकरणाम्नातं संस्थाभिः संबध्यते ततः किमसंयुक्तसंबन्धेनापि युक्तं भवितुम् । न हि 'द्वादशाहीनस्य' इत्यादिषु शेषधर्माणामप्यहीनार्थत्वमाशङ्कितम् । यावद्वचनं क्षयित्वाद्वचनानामित्येवं व्याचष्टे । यदि हि सामान्यविहितमग्निष्टोमसंस्थस्यैव स्याद्विनाऽपि तदुपादानेन तदङ्गत्वसिद्धेः नात्राग्निष्टोमं संकीर्तयेत् । यतस्तु संकीर्तयत्यतो मन्यामहे नूनमविशेषितमग्निष्टोमस्य न लभ्यते । तच्चैवं न लभ्यते यदि संस्थानामपि साधारणं प्रकरणम् । केवलज्योतिष्टोमप्रकरणपक्षे तु पुनःश्रुतिरनर्थिका स्यात् । तथोक्थ्यादीनामपि यदि प्रकरणमस्ति ततोऽन्यतरनिर्धारणार्थं यदिशब्दोपबद्धं ग्रहणं युक्तम् । अप्रकृतत्वे तु 'द्वादशाहीनस्य' इतिवद्विनैव यदिशब्देन संबन्धः स्यात् । न हि ज्योतिष्टोमप्रकरणे स्थितस्यैवं वादो युज्यते । यदि ज्योतिष्टोमस्तत एतत् । यदि द्वादशाहस्ततोऽमुकमिति । अनेकसंनिहितापेक्षं ह्येतद्वचनं भवति । अतोऽपि समानं प्रकरणम् । इदमपरं लिङ्गम् 'आग्नेयमजमग्निष्टोम आलभेत' 'ऐन्द्राग्नमुक्थ्ये द्वितीयम्' 'ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्' इति । समानविधानत्वे पूर्वपूर्वो ह्युत्तरोत्तरत्र प्रत्यक्षश्रुतत्वात्क्रियत इति द्वितीयतृतीयदर्शनमुपपद्यते । विकारपक्षे तु प्रत्यक्षश्रुतैरैन्द्राग्नादिभिराग्नेये बाधिते सर्वत्रैक एव स्यात् । ननु च प्रत्यक्षश्रुतत्वेऽपि संस्थान्तरे संस्थान्तरासंभवान्निनिमित्तः पूर्वः पूर्वो न प्राप्नोति । यो ह्यग्निष्टोमस्तोत्रे समाप्यते सोऽग्निष्टोमो न तद्वन्मात्रम् ( मात्रशब्दः कात्स्न्र्यवाची । तेनोक्थ्यादिसंस्थायामग्निष्टोमस्तोत्रसत्त्वेऽपि नाग्निष्टोमस्तोत्रेण क्रतुप्रयोगोपरम इति नोक्थ्यादीनामग्निष्टोमसंस्थात्वमिति शेषम् ) । यश्चोक्थ्यादिषु समाप्यते नासौ पूर्वत्र समाप्तो भवति । तेन द्वितीयदर्शनाद्यप्रसङ्गः पक्षद्वयेऽपि तुल्यः । सत्यं संस्थानिमित्तत्वे तुल्यः । स्तोत्रनिमित्तत्वे तु समुच्चयः । तथा च



भाष्यकार आह– 'द्वे हि तत्र निमित्ते अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं च' इति सिद्धवदेतद्ब्रवीति । कथं पुनः संस्थास्तोत्रसाधारणाग्निष्टोमादिसमभिव्याहारे तुल्ये स्तोत्रनिमित्तत्वमेवाङ्गीक्रियते न संस्थानिमित्तत्वम् । तासां हि फलवत्त्वेन प्रयोजनवत्त्वादक्लेशेनैव निमित्तत्वमापद्यते । तत्र केचिदाहुः । सत्यपि शब्दसाधारण्ये शास्त्रस्य महाविषयत्वानुग्रहार्थं स्तोत्रनिमित्तत्वाश्रयणमिति । अथवा स्तोत्रविशेषिताया एव संस्थाया एवंशब्दकत्वात् पूर्वतरप्रतीतविशेषणनिमित्तत्वसंभवे जघन्यविशेष्यनिमित्तत्वकल्पना न युक्ता । यद्वा आकृत्यधिकरणन्यायेनैव (१।३।९) स्तोत्रेषु मुख्यः शब्दः संस्थायां लाक्षणिकः । श्रुत्यसंभवे च लक्षणा आश्रयितव्या । शक्नोति च स्तोत्रमपि सप्तमीनिर्देशात् निमित्तत्वं प्रतिपत्तुम् निष्फलानामपि च भेदनादीनां वचनसामर्थ्यान्निमित्तत्वमिष्टम् । अथवा 'संदिग्धेषु वाक्यशेषात्' (१।४।१३।२४) इत्येवं स्तोत्राश्रयणम् । सत्यपि वा संस्थानां मुख्यत्वे व्यवधारणकल्पनया वाक्यशेषेण स्तोत्रपरिग्रहः । एवं हि श्रूयते 'आग्नेयमजमग्निष्टोम आलभेत' 'आग्नेयो ह्यग्निष्टोमः' इति । कतरस्मिन्नग्निष्टोमे, य आग्नेयः । स्तोत्रस्य च स्तुतिभागग्निर्देवता विद्यते न संस्थायाः । सा हि व्यापारपरित्यागात्मकत्वादभावभूता । न चाभावस्य देवतया कार्यमस्ति । यागाभ्यासेऽपि हि या देवता सा तस्यैवाऽऽग्नेयत्वं करोति न संस्थायाः । न च स एव संस्था । तदुत्तरकालौदासीन्यवचनत्वात्संपूर्वस्य तिष्ठतेः । न चान्यगतया देवतयाऽन्यस्य व्यपदेशो भवति । तथोक्थ्यषोडशिनोरपि दर्शयितव्यम् । अपि च 'ऐद्राग्नान्युक्थ्यानि' इति स्फुटमेव स्तोत्रग्रहणम् । न हि संस्था, उक्थ्यानीत्यनेन (उक्थ्यसंस्थाया एकत्वात् बहुवचनविरोधापत्तेरिति शेषः) शब्देनोच्यते । तस्मात्सति स्तोत्रनिमित्तत्वे युक्तः समुच्चय इति । ननु विकारपक्षेऽप्यदृष्टार्थत्वात्पशुयागानामन्योन्यकार्यापरयसंभवादुपपद्यत एव समुच्चयः । तथाहि 'नानुमानिकमात्रं यत्तत्प्रत्यक्षेण बाध्यते । विरोधे सति बाधो हि विरोधश्चैकगोचरः ॥' यदि हि प्रत्यक्षश्रुतत्वमेव केवलं विरोधनिरपेक्षं बाधकारणं स्यात्ततो न किंचिन्न बाध्यते क्रत्वन्तरगतं दृष्टार्थमदृष्टार्थं वा तुल्यकल्पमतुल्यकल्पं वा । न चैतदिष्टम् । अत उभयोः पक्षयोः समुच्चयदर्शनमुपपन्नम् । तथा च वक्ष्यति 'प्रकृतिलिङ्गसंयोगात्' ( १०।४।१ ) इति । तथा 'प्राजापत्येषु चाऽऽम्नानात्' ( १०।४।४।६) इत्यादावेवंजातीयकानां तत्र तत्राविरोधात्समुच्चयं वक्ष्यति । तत्रैवं समाधिमाहुः । अस्त्येव अत्र प्रकृतिलिङ्गसंयोगः सवनीयसमाख्यानिमित्तः । सर्वे ह्येते सवनीयशब्देनोक्ताः । तस्मात्समाख्यानात्तुल्यकार्यत्वे सति, अस्ति विरोध इति प्राप्नोति बाधः । यद्येवम्, ततः समानविधानत्वेऽपि सामान्यविशेषलक्षणबाधप्रसङ्गः । पूर्वपूर्वो हि पशुर्महाविषयत्वात्सामान्यविहितो भवति । उत्तर उत्तरोऽल्पावकाशत्वाद्विशेषविहितः । बाध्यते च सामान्यं सावकाशं वा विशेषेण निरवकाशेन वा । केचित्तु आहुः । सर्वान्त्यस्य केवलस्य निरवकाशत्वादत्यन्तविशेषस्थत्वात् बाधकत्वं भवेन्न मध्यमयोः । सत्यपि बह्वल्पविषयत्वे प्रमाणगतिस्तुल्या । यथैवाऽऽग्नेयः संस्थाचतुष्टयविषयत्वात्साधारणो भवत्येवमैन्द्राग्नोऽपि संस्थात्रयसाधारणः । यावता च यत्नेनासौ प्राप्नोति तावता च पूर्वोऽपि । मेध्यास्तु संस्थानिमित्तत्वेऽप्यदोषः । न हि तदधिका ज्योतिष्टोमे संस्थाऽस्ति । तस्मादबाध इति । उच्यते । यद्यपि न बाधस्तथाऽपि विकल्पस्तावत्प्राप्नोति । न हि तुल्यार्थानां क्वचित् समुच्चयो दृष्टः । सेयमुभयतःपाशा रज्जुः । यदि तावत्किंचिदपि कार्यान्यत्वं समुच्चयसिद्ध्यर्थमभ्युपगम्यते ततो विकारपक्षेऽपि समुच्चयः । अथ तत्र बाधं समर्थयितुं कार्यैकत्वं कल्प्यते ततः सामानविध्येऽपि ( सामानविध्यं इति पूर्वपक्षे अपि इत्यर्थः ) व्रीहियवादिवदसमुच्चय इति । न चैतत्पूर्वपक्षवचनमात्रं सिद्धान्तेऽपि दर्शनमेवागत्या वचनीकृत्य समुच्चयं वक्ष्यति 'वचनात्तु समुच्चयः' ( ३।६।१६।४५ ) इति । तदवश्यं वक्तव्यो विशेषः । स उच्यते ।

**'समानविधिपक्षे हि सर्वे सर्वाङ्गभाविनः ।**
**तान्निमित्तवशप्राप्तान्न समाख्या निवर्तयेत् ॥'**

सर्वे हि पशवः सर्वत्र प्राप्नुवन्तो यत्पूर्वसंस्थासु परे न भवन्ति तन्निमित्ताभावात् । प्रत्यक्षेण तु निमित्तेन

पूर्वः पूर्वः परत्र वाक्यात्प्राप्नोति । तत्र किं समाख्ययैककार्यत्वं कल्पयित्वा बाधविकल्पयोरन्यतर आश्रीयतामुत वाक्यप्राप्तसमुच्चयानुरोधेन कार्यान्यत्वं कल्प्यतामिति वाक्यबलीयस्त्वात्समुच्चयेन भवितव्यम् । यथा प्रयाजानुयाजादीनां सत्यपि समाख्यैकत्वे वाक्यसामर्थ्यात् कार्यान्यत्वं समुच्चयश्च । अतिदेशे पुनः, समाख्यया कार्यैकत्वम्, अतिदेशेन कार्यान्यत्वं ( तेनापि समुच्चयः ) । तस्माच्चोपदेशान्तर्गता ( ‘ कल्पितातिदेशापेक्षया ’ इति तस्मात् इत्यस्य अर्थः ) समाख्यैव बलीयसीति तत्कृतं कार्यैकत्वमाश्रित्य विरोधाद्बाधः परिगृह्येत । विकारे च प्रकृतिलिङ्गसंयोगापेक्षा विद्यते इति कार्यापत्तिर्विज्ञायते । न तु समानविधिपक्षे प्रकृतिलिङ्गसंयोगः कश्चित्, येन कार्यापत्तिरवधार्येत । केचित्त्वाहुः । समानविधित्वे परस्परानपेक्षैर्द्रव्यदेवतासंयोगैः कर्मभेदोऽवसीयते । विकारे पुनरतिदेशप्राप्तयागानुवादेन गुणमात्रं विधीयते । ततश्चैक एव यागः स्यान्न द्वितीयादय इति । स त्वयं गुणविधिरैन्द्राग्ने संभवेन्नेन्द्रसरस्वत्योः । अनेकद्रव्यदेवताविधानेन वाक्यभेदप्रसङ्गादेकान्तेन कर्मान्तरता । तेनैत्रं समर्थनीयम्, कर्मान्तरमेवेदं विधीयमानं किमपूर्वान्तरसाधनत्वं प्रतिपद्यतामुत प्राकृतसवनीयापूर्वमेव साधयत्विति । पूर्वक्लृप्तापूर्वविनियोगमात्रे संभवति नापूर्वान्तरं कल्पयित्वा तत्साधनत्वाध्यवसानं युक्तम् । तथाऽतिदेशप्राप्तसवनीयापूर्वमपि साधनापेक्षावेलायां प्रत्यक्षश्रुतसवनीयपरित्यागेन न सवनीयान्तरं गृह्णाति । सर्वापेक्षासु प्रकृतासंभवेनाप्रकृतग्रहणात् यागगतोऽपि व्यापारः प्राकृतेनैवापूर्वेण क्लृप्तसंबन्धो न शक्नोत्यपूर्वान्तरसंबन्धं प्रतिपत्तुम् । कथमक्लृप्तसामर्थ्यं सवनीयान्तरं प्राकृतमपूर्वं साधयतीति चेत् । यथा इतरस्मिन्पक्षेऽपूर्वान्तरं यागगतं व्यापारमित्यदोषः । कस्तर्हि अनयोः विशेषः । उच्यते । यदा यागगतव्यापारेणापूर्वाण्यपेक्ष्यन्ते न तदा वैकृतसवनीयापूर्वं क्लृप्तम्, यत्तस्मिन्नंशे निपतेत् । यदा पुनरपूर्वेण कर्मापेक्ष्यते तदा सवनीयत्वप्रकृतिलिङ्गसंयुक्तं कर्मान्तरं विद्यमानमवबुध्य प्राकृतं निराकरोति । प्रकृतौ चापूर्वकल्पनावसरात् विधीयमानसवनीयचतुष्टयानुनिष्पाद्यपूर्वचतुष्टयं कल्प्यते । न हि तत्र ज्ञायते करतरत्पूर्वतरं क्लृप्तं यस्य साधनान्तरसंबन्धः स्यात् । कर्मालोचनवेलायां हि कर्मरूपाण्येव दृश्यन्ते । अपूर्वकल्पनाऽपि युगपद्भवतीति न ज्ञायते विशेषः । विकारपक्षे तु ज्ञायते प्राकृतस्य पूर्वतरं क्लृप्तिरित्यवश्यावहेयेऽन्यतरस्मिन्कर्मणि विप्रकृष्टं प्राकृतं हातव्यं भवतीति बाधप्रसङ्गः । ननु च विकारपक्षेऽग्निष्टोमसंस्थाया एव विकारभूताः पराः संस्था भवन्ति न परस्परेणेति केवलस्य आग्नेयस्य प्राप्तस्य परैर्बाधात् सर्वत्र द्वितीयस्य दर्शनं न स्यादित्येतावन्मात्रं वक्तव्यं किमुच्यते तृतीयस्य दर्शनं न प्राप्नोतीति । नैष दोषः । यदि त्वयमैन्द्राग्नादीनां परत्र प्राप्तानां बाधाददर्शनं ब्रूयात्ततो निष्प्रमाणकं वदेत् । अयं त्वदर्शनमात्रं वदति । तच्चाऽऽग्नेयस्य बाधात् मध्यमयोश्चाप्राप्तेः उपपन्नमेव । तेनैव चाऽऽग्नेयो बाध्येतेत्याह— न पूर्वः पूर्वः परेणेति । तस्मात्समानविधानाः ।

**विकारास्तु कामसंयोगे स नित्यस्य समत्वात् । ४३ ॥**

**भाष्यम्**— नैतदस्ति, समानविधाना इति । किं तर्हि ? उक्थ्यादयः संस्थाः विकारभूताः स्युः । अग्निष्टोमसंस्थ्यमूरीकृत्य दीक्षणीयादयो धर्माः समाम्नाताः । कुतः ? उक्थ्यादीनां कामसंयोगेन श्रवणात् । ‘पशुकाम उक्थ्यं गृह्णीयात्’ । ‘षोडशिना वीर्यकामः स्तुवीत’, ‘अतिरात्रेण प्रजाकामं याजयेत्’ इति । काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते । कथम् ? गुणादेवंजातीयके काम्ये फलनिर्वृत्तिः । पशुकाम उक्थ्यं गृह्णीयान्न ज्योतिष्टोमकाम उक्थ्यग्रहणकामो वा । यथा पशवो भवन्ति, तथा गृह्णीयादित्यर्थः । कथमिति तत्रावश्यमितिकर्तव्यताऽपेक्षितव्या, संनिधानात् नित्यस्येतिकर्तव्यतयेति गम्यते । कथं पुनर्या ह्ययमितिकर्तव्यता सा नित्यस्येत्यवधार्यते, न पुनः अस्यैव काम्यस्य साधारणी वेति । उच्यते । यत्र यत्र गुणे कामो भवति तत्र तत्र क्रियायां साध्यमानायाम्, नान्यथा । सा तत्रेतिकर्तव्यता याऽन्तिकमुपनिपतति । सा साधनस्य वा साध्यस्य वेति संदिह्यमाना साध्यस्य भवितुमर्हति । नासौ साध्यस्याभवन्ती साधनेन संबध्यते । एवं हि स इतिकर्तव्यताविशेषश्चोद्यते । अनेन साधनं



साधकं कुर्यादिति । न चास्ति स प्रकारः, येनासाध्यमानायां क्रियायां तेन साधकः कृतो भवेत् । तस्मात् साधकस्यापीतिकर्तव्यताविशेषं अभ्युपगच्छता साध्यस्यापीत्येतदभ्युपगमनीयम् । साध्यश्च ज्योतिष्टोमः साधिकाः संस्थाः । तस्माज्ज्योतिष्टोमस्य तावत्सा इतिकर्तव्यतेति सिद्धम् । अथ कस्मात् न साधारणी । नित्यवदाम्नानात् । यदैव ज्योतिष्टोमः, तदैव दीक्षा । यदा तु ज्योतिष्टोमे पशुकामस्तदोक्थ्यसंस्था । सर्वदा ज्योतिष्टोमे धर्माः कर्तव्याः । एकदोक्थ्यसंस्था । तत्र सर्वदा ज्योतिष्टोमस्य धर्माः कर्तव्याः । ते चोक्थ्यादिसंस्थस्यार्थेनेति पूर्वमुत्तरेण विरुध्यते, यदि सर्वदा, नोक्थ्यादीनामर्थेन । अथोक्थ्यादीनामर्थेन, न सर्वदा, उभयं विप्रतिषिद्धम् । तस्मान्न साधारणी । नित्यवदाम्नानं च यद्यनित्यस्य स्यात्, नित्यवदाम्नानं तदनित्यं क्रियेत । तत्र नित्यवदाम्नानं बाध्येत । तस्मान्नित्यसंस्थस्य ज्योतिष्टोमस्य, न काम्यस्योक्थ्यादिसंस्थस्येति ।

**वा**— उक्थ्यादयः समाप्तिविशेषाः फलसाधनत्वेन चोद्यमानाः समाप्तिमन्तमाश्रयं अपेक्षमाणाः प्रकृतं ज्योतिष्टोमं समाश्रयन्तस्तस्य निजामग्निष्टोमसंस्थां विकृत्य निविशन्त इति विकारशब्देनोच्यन्ते । ननु चोक्थ्यादीनां समाप्तित्वे सिद्धे समाप्तिमदपेक्षा भवति । न चैषां प्राग् ज्योतिष्टोमसंबन्धात्समाप्तित्वसिद्धिः, आरम्भमध्यापेक्षत्वात्समाप्तिशब्दप्रवृत्तेः । अथ प्रथमं तत्संबधस्ततः प्रथमं क्रत्वर्थत्वे अवधारिते फलसंबन्धाभावात् ‘ स नित्यस्य समत्वात् ’ इत्येवमविकारत्वप्रसङ्गः । किंच **‘ ग्रहणादौ च विस्पष्टे चोद्यमाने फलं प्रति । संस्थानां फलसंबन्धः कथमध्यवसीयते ॥ ’** तत्र केचिदाहुः । ग्रहणादीनामपि फलसंबन्धेऽधिकरणं गच्छत्येव ( अधिकरणविचारः संगच्छते एव इत्यर्थः ) किं ज्योतिष्टोमार्थो धर्मविधिरुत ग्रहणाद्यर्थोऽपीति । संस्थाशब्दः कथमिति चेत् । तेषां ग्रहणादीनामन्ते विधानात्समाप्तिसंबन्धोऽस्तीति तच्छब्दलाभः । ‘ पशुकाम उक्थ्यं गृह्णीयात् ’ ‘ षोडशिना वीर्यकामः स्तुवीत ’ इति पूर्वसमाप्त्युत्तरकालं चोद्यमानानां समाप्त्यन्तरव्यपदेशभाक्त्वं भवति । अन्ये त्वाहुः । ग्रहणादयोऽप्यत्र फलवत्समाप्त्यङ्गत्वेन प्राप्ता एव साध्यसाधनसंबन्धविधिपरे वाक्ये निर्वपत्यालभतिवदनूद्यन्त इति । कुतः ? **‘ संक्रान्तविधिसामर्थ्ये प्रत्यये धातुरुच्यते । तस्मान्नाम्नः फलं ह्येतद्भवेदिन्द्रियकामवत् ॥ ’** ननु च ‘ उक्थ्यं गृह्णीयात् ’ इति सामानाधिकरण्यप्रयोगान्नामापि ग्रहणादीनामेव स्यात् । **नैतदेवम्** । उक्थ्यस्तोत्रसंबन्धाद्धि समाप्तिरेव उक्थ्यशब्देन उच्यते, तत्संबन्धाद्ग्रहण उपचर्यते । न च मुख्यसंभवे गौणः परिगृह्यते । नित्यं तु यज्ञसामानाधिकरण्येनोक्थ्यादीनां प्रयोगो दृश्यते, ‘ उक्थ्येन यजेतोक्थ्यो यज्ञः ’ इति । तथा ‘ षोडशिना यजते षोडशी यज्ञः ’ । स वै षोडशी नाम यज्ञोऽस्तीति । स च अत्यन्ताव्यतिरिक्तसमाप्तिवचनत्वेऽवकल्पते न ग्रहस्तोत्रवचनत्वे । षोडशीति च पुंलिङ्गः समाप्तिवचन एवोपपद्यते । नपुंसकलिङ्गस्य स्तोत्रवचनत्वात् । यस्तु पुंलिङ्गप्रयोगः स्तोत्रे क्वचित् दृश्यते यथा ‘ एकविंशः षोडशी ’ इति, स गौण इति प्रतिपत्तव्यम् । इह वाक्यशेषे पुंलिङ्गः षोडशी प्रतीयत इति संस्थावचनः । ‘ अतिरात्रेण प्रजाकामम् ’ इति विस्पष्टमेव संस्थावचनत्वम् । न हि तत्र क्रियान्तरमुपात्तम् । यजिरपि च ण्यर्थोपसर्जनत्वेन श्रुतः क्लेशेन प्रधानीकर्तव्यः । तस्माद्रात्रिमतीत्य या समाप्तिः सा फलेन संबध्यते । यदि च ग्रहणस्तोत्रयोः फलसंबन्धः स्यात्ततस्तयोः क्रियात्वादाश्रयापेक्षा नास्तीति स्वतन्त्रयोरेव प्रयोगः प्राप्नोति । तत्र च प्रकरणाम्नानप्रयोजनमुक्थ्यादिशब्दप्रयोगश्च न ज्ञायेत । तस्मादपि समाप्तयः फलवत्यः । कथं तु प्राक् क्रतुसंबन्धात्समाप्तित्वमिति । केचित्तावदाहुः (प्रथमं तावद्याज्ञिकमतमाह ) ‘ सप्त सोमसंस्थाः अग्निष्टोमोऽत्यग्निष्टोमः उक्थ्यः षोडश्यतिरात्रो वाजपेयोऽप्तोर्यामः ’ इति स्मरणात्सोममात्रसमाप्तिवचनत्वे सिद्धे कर्मान्तराण्यनादृत्य सोमयागमात्रेऽपेक्षिते प्रकरणात् ज्योतिष्टोमस्याऽऽश्रयत्वसिद्धिरिति । अन्ये तु मन्यन्ते । ज्योतिष्टोमस्य क्वचित् अभ्यासविशेषे समाप्त्यन्तरं विज्ञायते यदुत्पद्यमानमेव उक्थ्यादिव्यपदेशं लभते फलसंबन्धं च तत्र श्रुतिबली-

यस्त्वात्प्रकरणलभ्यं क्रत्वर्थत्वं बाध्यते । यस्त्वाश्रयाश्रयि-
संबन्धः सोऽनुगुणत्वादाश्रीयते ।

**अपरं दर्शनम्** । उक्थ्यादिशब्दवाच्यं किमपि प्रथम-
मेव फलेन संबध्यते । किंपुनस्तदित्यपेक्षायां वचनान्तरेण
ज्योतिष्टोमस्य समाप्त्यन्तरं विज्ञायते । यद्वा अभ्यास-
विशेष एवायं वचनान्तराज्ज्योतिष्टोमस्यान्ते निविशमानः
फलाय चोद्यते । तेन वा तस्मिन्वा क्रतुः संतिष्ठते इति
संस्थाशब्देन अभिधीयते । केचित्पुनर्मन्यन्ते । संस्था
नामान्त्ययागाभ्यासानन्तरं या क्रियोपरतिः साऽभिधीयते ।
न चाक्रियात्मकत्वात् तस्याः फलसाधनत्वं युक्तमतस्तदु-
पलक्षितोऽभ्यासश्चोद्यते इति । **अन्ये त्वाहुः** । वचन-
स्यातिभाराभावात् अभावोऽपि चोद्यमानः फलसाधन-
त्वेन नैव विरुध्यते इति । यथा ‘ अकुर्वन्विहितं कर्म ’
इत्यत्र अकरणस्य असतः प्रत्यवायहेतुत्वम् । **अथवा**
अस्त्येवात्र औदासीन्यप्रतिपत्तिरूपः संकल्प इत्यविरोधः ।
इह च यथा गुणात् फलं भवति यथा च काम्यो
गुणो नित्यं अर्थं विकरोति तदिन्द्रियकामाधिकरण-
गोदोहनाधिकरणाभ्यामुपसंहर्तव्यम् । तद्दर्शयति–‘ गुणा-
देवंजातीयके फलनिष्पत्तिः ’ । एवं हि श्रूयते–
‘ पशुकाम उक्थ्यं गृह्णीयात् ’ । ‘ न ज्योतिष्टोमकाम
उक्थ्यग्रहणकामो वा ’ इत्यनेन क्रत्वर्थत्वं निराकरोति ।
क्रत्वर्थत्वे हि सति, अन्तरेणापि कामपदोपबन्धं तदुप-
कारकमेवैतत्कर्तव्यमिति विज्ञायते । यदि चोक्थ्यग्रहण-
स्वरूपमात्रं चिकीर्षेत ततोऽर्थात् उक्थ्यग्रहणकामस्यैष
विधिर्भवेद्यस्यैवं प्रार्थनमुक्थ्यग्रहणस्वरूपमात्रं कथं निर्व-
र्तेतामिति । तत्तु द्वयमपि पशुकामोपादानादनवक्लृप्तम् ।
अतः काम्यत्वात् अस्ति गोदोहनन्यायेन विकारत्वम् ।
‘ तत्र कथमिति ’– इतिकर्तव्यताकाङ्क्षायां ज्योतिष्टोम-
गृहीतेतिकर्तव्यता अतिदिश्यते । कः पुनरिह प्रकारो
येनेतिकर्तव्यता गृह्यते । यदि तावत्संनिधानं ततः समान-
विधानमेवाभ्युपगतं भवति । न ह्यतिदेशस्य संनिधिः
कारणम्, सारूप्यप्रभवत्वेन वक्ष्यमाणत्वात् । अथ
कार्यापत्त्या, तत्रापि कारणान्तरत्वं निराकृतम् । न च
दीक्षणीयादयः संस्थाधर्माः । यतः कार्यापन्ने संस्था-
न्तरे भवेयुः । न ज्योतिष्टोमस्य उक्थ्यादयः कार्ये
वर्तन्ते । यतस्तद्धर्मान् प्रतिपद्यन्ते । एतेनातिदेशपक्षः
प्रत्युक्तः । यो हि मन्यतेऽतिदेशेन धर्मा भविष्यन्तीति,
तस्याप्यतिदेशकारणं सारूप्यं नास्तीति । यद्यपि अग्नि-
ष्टोमस्य संस्थया सामान्यमस्ति । ज्योतिष्टोमस्य तु न
किंचिदुक्थ्यादिसारूप्यमित्यप्रकृतित्वम् । अत एव च
भाष्यकारोऽपि ‘संनिधानात् ’ इत्येतावन्मात्रमुक्त्वा तूष्णीं-
भूतः । तेन वक्तव्यमेतत् । उच्यते । **‘अतिदेशोऽय-
मित्येतत्पुरस्तादेव साधितम् । न च सारूप्य-
मेवैकमतिदेशस्य कारणम् ॥’** यथा ‘ दध्नेन्द्रिय-
कामस्य ’ इत्यत्र व्याख्यातम्, विनाऽपि सारूप्येणान्यथा
तत्फलाप्राप्तेरतिदेशो भवति । सारूप्यं हि प्रकृत्युपस्था-
पनद्वारेण उपयुज्यते नादृष्टोपकारनिर्वृत्त्या । तदिहा-
न्तरेणापि सारूप्यं आश्रयत्वप्रतिपत्तिः संनिधानादस्त्येव ।
भाष्यकारोऽप्येतदेव संनिधानमाह, न दीक्षणीयादिसामी-
प्यम् । आश्रयत्वेन हि गृहीतो ज्योतिष्टोमः शक्नोति
दीक्षणीयाद्यपूर्वजनितं स्वगतं व्यापारं बोधयितुमिति
सिद्धोऽतिदेशः । आह – ‘ कथं पुनर्ज्ञेयमितिकर्तव्यता
सा नित्यस्य, न पुनरस्यैव काम्यस्य, साधारणी वा ’
इति । **‘ तत्र साधारणीत्येष न्याय्यः पक्षोऽस्य
संमतः । काम्यस्यैवेति सोल्लुण्ठं पूर्वोक्ताक्षम-
योदितम् ॥ यदि युक्त्या विनैवेयं नित्यस्येत्यभि-
धीयते । काम्यस्यैवेति किं नैतदयुक्ततरमुच्यते ॥
अथ त्वयुक्तियुक्तत्वान्नैवमभ्युपगम्यते । हन्त
साधारणीत्वेतत्सयुक्तिकमिहोच्यताम् ॥ ’** यदि
विनैव प्रमाणेन केवलनित्यार्थत्वं त्वमिच्छसि हन्त
मदिच्छया अपि केवलकाम्यार्थत्वमेवास्तु । अथ पुनरि-
दमप्रमाणकमिति नाऽऽश्रीयते ततः प्रमाणवत्साधारण्य-
मिष्यतामिति । तत्र अतिशयोक्तिमसहमानो भाष्यकारः
साधारणपक्षे चोपकरिष्यतीति निष्प्रमाणकमपि केवल-
काम्यपक्षमेव तावत् न्यायेन निराकरोति– ‘ यत्र यत्र
गुणे कामस्तत्र तत्र क्रियायां साध्यमानायां नान्यथा ’
इति । यदि नाम गुणः ( काम्यो गुणः ) स्वातन्त्र्येणे-
तिकर्तव्यतां ग्रहीतुं शक्नुयात्तत एवं स्यात् । स च कथं
शक्नुयात्, यदि करणैरेवेतिकर्तव्यता संबध्येत । यदि
च गुणानां स्वत एव भावनाविशेषणत्वं भवेत् । न



तावत्करणैरितिकर्तव्यता संबध्यते इत्युक्तम् ( इन्द्रिय-
कामाधिकरणे इति शेषः ) । सप्तमनवमाद्ययोश्च वक्ष्यति
भावयेत्कथमित्यपेक्ष्य भवति न करणेन कथमिति ।
यस्यां तु भावनायां धात्वर्थाः करणं भवन्ति तस्यां ते
वस्त्वन्तरनिरपेक्षाः पश्चात्तनं अरुणैकहायनीन्यायलभ्य-
मितिकर्तव्यतासंबन्धं लभन्ते । यस्यां पुनर्गुणानां करणत्वं
तस्यां धात्वर्थविशेषाद्विना करणत्वानुपपत्तेः साध्यभूतो
धात्वर्थोऽपरः अपेक्षितव्यः । न हि व्यापारसामान्यस्य
गुणैरुत्पत्तिः शक्या । न च क्रियाविशेषमसाधयन् गुणः
सामान्यसाधनत्वं भजते । तेन यस्यां भावनायामवस्थितो
गुण इतिकर्तव्यतां गृह्णाति तस्यां प्रथमतरसंनिविष्टो
धात्वर्थो दृश्यते । ततश्च तेन तावत्सह प्रथमतरमरुणै-
कहायनीवन्नियमः । यदि हि इतिकर्तव्यताग्रहणयोग्यः स
न भवेत्ततो न गृह्णीयात् । स तु फलवत्त्वात् इति-
कर्तव्यताद्वारभूतभावनाविशेषणत्वाच्च न कथंचित् न
गृह्णाति । तत्र चतुष्टयमप्यत्र प्रथमतरं ग्रहणं प्रयुङ्क्ते ।
भावना तावन्न धात्वर्थविशेषाद्विनेतिकर्तव्यतां शक्नोति
ग्रहीतुम् । गुणोऽपि च न धात्वर्थमनुपनीय स्वतन्त्रः
शक्नोति तन्निरपेक्षभावनारहितत्वात् निर्विशेषस्य च
करोत्यर्थमात्रस्य अननुष्ठेयत्वादव्यापारत्वाच्च ग्रहीतुमित्या-
श्रयति । तथा, इतिकर्तव्यता गुणाभिमुखं गच्छन्ती न
धात्वर्थमुल्लङ्घ्य शक्नोति गन्तुमिति तन्मुखे तावत्पतति ।
धात्वर्थोऽपि स्वयमितिकर्तव्यताकाङ्क्षः सन् गुणार्थमपि
प्रस्थितामेतां ग्रहणसमर्थः सन् किमिति परित्यजेत् ।
अतोऽत्र फलाय चोदितानां उक्थ्यादीनां ज्योतिष्टोमा-
श्रयत्वेन अवगतानामितिकर्तव्यतामाकाङ्क्षतां प्रकरणेन
दीक्षणीयादय उपनीयमाना मार्गान्तराभावादवश्यं ताव-
ज्ज्योतिष्टोममुखे पतन्ति । न ह्युक्थ्यादयः समाप्तिरूपा-
स्तत्परिहारेण ग्रहीतुं समर्थाः । स्वमुखपतितांश्च न कथं-
चिज्ज्योतिष्टोमस्तानुपेक्षते । तद्दर्शयति– ‘ नासौ साध्य-
स्याभवन्ती साधनेन संबध्यते । स हीतिकर्तव्यताविशेष
एवं चोद्यते, अनेन फलस्य साधनमुक्थ्यादि साधकं
कुर्यात् ’ इति । यथाऽसौ साधको भवति तथा कुर्यादि-
त्यर्थः । ततश्च करोतिसंस्पर्शाद्भावनयैव संबन्धः । एवं
च सति नास्ति स प्रकारो येन धात्वर्थं परिहृत्यानयेति-
कर्तव्यतया उक्थ्यादयः साधकाः क्रियेरन् । ‘ क्रियाया-
मसाध्यमानायाम् ’– अननुगृह्यमाणायामित्यर्थः । ये तु
तेनासाध्यमानायामिति– उक्थ्यादिनेति संबन्धयन्ति तेषां
पूर्वप्रस्तुतेतिकर्तव्यताविशेषपरित्यागात् असंबद्धत्वम् ।
‘ तत्र तत्र क्रियायां साध्यमानायाम् ’ इत्यनेन च
पुनरुक्तत्वं स्यात् । तेन ‘ साधकस्यापि ’ – गुणस्य,
इतिकर्तव्यतामिच्छता ‘ साध्यस्य ’ असौ– धात्वर्थस्य,
इत्येतदभ्युपगन्तव्यम् । एवं सामान्यलक्षणमुक्त्वा संप्रति
प्रस्तुते विशेषे योजयति ‘ साध्यश्च ज्योतिष्टोमः ’
इति । तस्मान्न तावत् केवलकाम्यार्थत्वम् । ‘ अथ
कस्मान्न ’ साधारणत्वमिति बलवत्त्वेन द्वितीयपक्षो-
पन्यासः । सिद्धान्तवादी आह । ‘ नित्यवदाम्नानात् ’
इति । सर्वत्र ह्यैकरूप्ये सति तन्त्रसंबन्धो घटते । न
च धर्मान्प्रति ज्योतिष्टोमस्य संस्थानां चैकरूप्यमस्ति ।
धर्मा हि कामनिमित्तसंयोगाभावात् नित्यवदाम्नायन्ते,
‘ यदैव ज्योतिष्टोमस्तदैव ’ दीक्षणीयादयः प्रयोक्तव्या
इति । सत्यपि च ज्योतिष्टोमे विना पशुकामादिनो-
क्थ्यादयो न संभवन्ति । न त्वेतासु ज्योतिष्टोमः
कदाचिन्नास्ति । सर्वत्र समस्तात्मना प्रत्येकं जातिवत्सम-
वेतत्वात् । अत एते ( दीक्षणीयादयो धर्माः ) यथा-
म्नाता ज्योतिष्टोमेन सह संबध्यन्ते, न अनित्याभिः
संस्थाभिः । ननु सत्यप्यासामनित्यत्वे ज्योतिष्टोमस्यैकस्य
नित्यत्वान्नित्यवद्धर्माम्नानं नित्यार्थत्वे न विरोत्स्यते ।
नित्याम्नानं तावत्तं प्रति कृतार्थं भविष्यति । यदि तु
तस्मिन् सत्येवानित्योऽप्यपरः संबन्धः कल्प्यते किं नो
बाध्यते । यो ह्यनित्यार्थमेव नित्यवदाम्नायते स विरु-
ध्यते नैवंजातीयक इति । **नैतदेवम्** । एवं सति तन्त्रं
तावत्परित्यक्तम्, अप्रयोजकलक्षणापन्नत्वात् । यदा हि
नित्यवदाम्नानं नित्यार्थत्वेन तावद्विना न भवति क्लृप्ते
च तादर्थ्ये निराकाङ्क्षीभूते पाठे प्रसङ्गादितरसंबन्ध
इति न सामानविध्यम् । इतरथा ह्येवं धर्मविधिः
स्यात्, नित्यमेतान् ज्योतिष्टोमे धर्मान् कुर्यात् कदाचिच्च
यदा पशुकामादयो भवन्तीति, तच्च विप्रतिषिद्धमेकस्य
विधानस्य । ननु द्वावेतौ प्रकरणाम्नानानुमितौ विधी ।
तयोरेको नित्यवद्विधास्यति, अपरश्च अनित्यवदिति ।

सत्यं प्रयोगवचनयोर्भेदादविप्रतिषेधः। प्रयोज्यवचनानि तु नित्यानित्यप्रयोगवचनानुविधानाद्विप्रतिषिध्यन्ते। तेन एषां नित्यत्वाविघातमिच्छताऽवश्यं ग्राहकमपि तद्भूयमेवाभ्युपगन्तव्यम्। अतश्चाव्यभिचाराज्ज्योतिष्टोमार्थत्वमेव युक्तमिति। 'नन्वग्निष्टोमसंस्थाऽपि काम्येति'– यदा सर्वसंस्थानामनित्यत्वम्, न च तद्व्यतिरिक्तं नित्यं किंचिज्ज्योतिष्टोमरूपमस्ति तदा ज्योतिष्टोमेन नित्यवद्ग्रहणात् तद्द्वारभूतेन तुल्यकल्पमेव सर्वासां धर्मोपनयनमिति क्व नित्यः प्रयोग इत्यनवधारणात् केवलानित्यार्थं बलात् वैकल्पिकन्यायेन भविष्यतीत्यत आह– स नित्यस्य समत्वादिति। समौ हि क्रत्वर्थपुरुषार्थौ विधी। तौ हि द्वावालोच्य 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (४।३।३।५) इत्येवमग्निष्टोमान्तस्य नित्यस्यैव कामसंयोग इति। इतरस्य तु केवलकामसंयोगादनित्यत्वमिति विशेषः। तेन यद्यपि प्रयोगेण इयमनित्या तथाऽपि ज्योतिष्टोमस्य नित्यत्वादेतस्याश्च तं प्रति प्राप्तिरूपेण नित्यत्वात्तद्गृहीतधर्मपरभागलाभाच्च अग्निष्टोमस्येत्येवं धर्माणां व्यपदेशः। अथ वोक्थ्यादिष्वपि प्राप्तिद्वये सति ज्योतिष्टोमांशेन या प्राप्तिः सोपदेशेन, या उक्थ्यांशेन साऽतिदेशात्मिकेति विवेकः।

अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति। ४४॥

**भाष्यम्**-- नन्वग्निष्टोमसंस्थाऽपि काम्या श्रूयते। द्वे हि तत्राऽऽम्नाने। एकं नित्यवदेकं काम्यम्। तत्र द्वयोर्वाक्ययोः सामर्थ्यान्नित्य एव स कामो भविष्यति। नित्यताविघातो नास्तीत्यग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा भविष्यन्तीति।

वचनात्तु समुच्चयः। ४५॥

**भाष्यम्**-- अथ यदुक्तम्, द्वितीयतृतीयदर्शनं समानविधित्वेऽवकल्पते नान्यथेति। वचनं तद्भविष्यति, न दर्शनम्। ऐन्द्राग्न उक्थ्ये द्वितीयो विधीयते। तथैन्द्रः षोडशिनि तृतीयः।

**वा**-- विशिष्टविधानस्य नातिभारः।

प्रतिषेधाच्च पूर्वलिङ्गानाम्। ४६॥

**भाष्यम्**-- इतश्च पश्यामः प्रकृतिविकारभाव इति। कुतः? प्रतिषेधात् पूर्वलिङ्गानाम्। 'यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः, परिधिमनक्ति, न जुहोति' इति होमाभावदर्शनं न स्यात्। प्राप्ते निमित्ते वचनप्रामाण्यात्सामानविध्ये।

**वा**-- क्रतुकरणेषु चोत्तरविधौ यत्पूर्वाभावमनुवदति स विकारपक्षेऽवकल्पते। चोदकप्राप्तस्य चोत्तरेण पूर्वस्य बाधितत्वात्। सामानविध्ये हि प्रत्यक्षनिमित्तसंनिधानात् प्राप्ते निमित्ते नैमित्तिकमवश्यं कर्तव्यमिति समुच्चयः स्यात्। तत्र प्रतिषेधः पृथग्विधेरुपगम्यमानो वाक्यं भिन्द्यात्। न ह्यत्र द्वितीयतृतीयादिवद्विशिष्टविधिरवकल्पते। विधिप्रतिषेधयोः विप्रतिषेधात्, पर्युदासासंभवाच्च। सर्वश्चेह सवनीयपशुविषयः पूर्वपक्षवाद्युक्तो न्यायः सिद्धान्तत्वेनानुसंधातव्यः। संस्थानिमित्तत्वे हि सामानविध्येऽपि निमित्ताभावादभावदर्शनमुपपद्यतैव। सिद्धान्तेऽपि चादृष्टार्थत्वात् समुच्चयप्रसङ्गे सति क्रतुकरणसमाख्या प्रकृतिलिङ्गमिति योज्यम्। **केचित्पुनराहुः।** प्रचरणीहोमशेषप्रतिपत्तिवद्धोमस्य परिध्यञ्जनेन प्रतिपादिते सामानविध्येऽप्यभावः सिध्यतीति। तत्र तु वाक्येन स्वतन्त्रे विधीयमाने कथमप्रस्तुतं प्रतिपत्तित्वमवगम्यते इति वक्तव्यम्। सत्यपि च होमेन प्रतिपादने यावता परिध्यञ्जनशब्दार्थो निर्वर्तते किंचिच्च श्रुत्योच्यते तावत्पुनः संभवत्येव। तस्माद्यथोक्तेन न्यायेन दर्शनमेवेदमभावसंकीर्तनम्।

गुणविशेषादेकस्य व्यपदेशः। ४७॥

**भाष्यम्**-- अथ यदुक्तं व्यपदेश इति। एकस्यैवाधिकृतस्य यथोक्तेन न्यायेन अयमनधिकृतेन गुणेन व्यपदेशः। अग्निष्टोमग्रहणं चानुवाद इति।

**वा**— यत्त्वप्रकृतस्य यदिशब्दोपबन्धो द्वादशाहादिवन्नावकल्पते इति। नोक्थ्यादीनामन्यैरप्रकृतैस्तुल्यता। यद्यपि ह्येषां नित्यानित्यसंयोगविरोधात् प्रकरणमग्राहकमितिकर्तव्यतायास्तथापि संनिहितत्वाद्यदिशब्दव्यपदेशं लभन्ते। प्रस्तुतगुणिद्वारेण वाऽप्रस्तुतानामपि गुणानां प्रस्तुतव्यवहारः संभवति। प्रकरणप्राप्तं त्वग्निष्टोमग्रहणं नित्यानुवादः। अथवा स्तोत्रनिमित्तत्वप्रतिपादनपरत्वा-



दर्थवदेवेत्यदोषः। किं भवति प्रयोजनम्। फलत्वमसवदेवेति केचित्। इदं तु वक्तव्यम्। सत्यमेतत्प्रयोजनं न तु सर्वधर्मेषु। यावन्तो हि सदोमानादिषु गुणकामास्ते सत्यप्यतिदेशे स एव औपदेशिक आश्रयोऽस्तीति न विकृत्यन्तरवद्विहन्यन्ते। विकृत्यन्तरेषु हि ज्योतिष्टोमस्याऽऽश्रयस्याभावाद्गुणकामा यथाश्रुता न भवन्तीति न सिध्यन्ति। संस्थासु तु यद्यप्यङ्गफलं नातिदिश्यते तथाऽपि स्वयमर्थित्वात्पुरुषस्य चिकीर्षमाणस्य गुणोपादित्सायां यथाश्रुताश्रयसंभवे नानुपपत्तिर्गुणकामानाम्। अतो यन्मात्रमुक्थ्यादिसंस्थानिमित्तमुक्थ्यग्रहणस्तोत्रशस्त्राद्यप्राकृतं तत्र यदितरग्रहस्तोत्रशस्त्रधर्मातिदेशेन किंचिद्गुणकामगतं प्राप्नोति तन्न भवतीति प्रयोजनम्। तथेदमपरम्, यदि समानविधानं तत् 'अव्यक्तासु तु सोमस्य' इत्यनेन न्यायेन ये ज्योतिष्टोमविकारा विज्ञायन्ते तेषु सर्वाः संस्था विकल्पेन, सिद्धान्ते त्वग्निष्टोमसंस्थैवैका प्रवर्तते। यत्र चोक्थ्यादिविशेषचोदना तत्रैव केवलं तद्धर्मप्राप्तिरिति प्रयोजनं सिद्धम्।

**शा**-- किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य संस्थानां च समानं उत ज्योतिष्टोमस्यैव इति इह विचार्यते। तत्र– '**तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः। तुल्यमङ्गविधानं स्यादिति प्राप्तेऽभिधीयते॥ वैरूप्यमङ्गवाक्यानां प्रसज्येतोभयान्वये। संभवत्येकरूपत्वे नानारूपं न युज्यते॥ न च क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः। संस्थावधारणेनैव युज्यते क्रतुसंगतिः॥**'

**सोम**-- पूर्ववत् इहापि सामानविध्यमिति प्रत्यवस्थानात्संगतिः।

**वि**-- 'उक्थ्यादिषु समो दीक्षणीयाद्यङ्गविधिर्न वा। एकप्रकरणत्वेन फलवत्त्वाच्च तुल्यता॥ उक्थ्यादयः कामयोगाद्विकाराः प्रक्रिया ततः। अग्निष्टोमात्मके ज्योतिष्टोममात्रे च तद्विधिः॥'

**भाट्ट**-- ज्योतिष्टोमे चतस्रः संस्थाः, अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंज्ञकाः। संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः। तत्र द्वादश स्तोत्राण्यग्निष्टोमे, तत्र अग्निष्टोमस्तोत्रमन्त्यम्। सा अग्निष्टोमसंस्था नित्या काम्या च, संयोगपृथक्त्वात् दध्यादिवत्। उक्थ्ये अग्निष्टोमस्तोत्रोत्तरं त्रीण्यन्यानि उक्थ्यस्तोत्राणि, सा उक्थ्यसंस्था। षोडशिनि तदुत्तरं षोडशिस्तोत्रम्, सा षोडशिसंस्था। अतिरात्रे तदुत्तरं द्वादशस्तोत्रात्मकाः त्रयः रात्रिपर्यायाः आश्विनस्तोत्रं च, सा अतिरात्रसंस्था। यास्तु अत्यग्निष्टोमवाजपेयाप्तोर्यामाख्याः अन्यास्तिस्रः स्मृतौ गण्यन्ते, ता एतास्वेवान्तर्भूताः। यत्र अग्निष्टोमस्तोत्रोत्तरमुक्थ्यानि अकृत्वा षोडशिस्तोत्रं क्रियते, सा अग्निष्टोमसंस्था एव अत्यग्निष्टोमपदवाच्या। यथाऽवस्थितषोडश्युत्तरं यत्र वाजपेयस्तोत्रं क्रियते, सा षोडशिसंस्थैव वाजपेयपदवाच्या। यत्र अतिरात्रे चतुर्थो रात्रिपर्यायः स्तोत्रत्रयात्मको वर्धते, तत्र अतिरात्रसंस्थैव अप्तोर्यामपदवाच्या। तत्र अत्यग्निष्टोमो राजन्यस्य नित्यः 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचनात्। अन्यास्तु उक्थ्यादयः काम्याः 'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्' इति वचनेभ्यः। अत्र अग्निष्टोमादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्तिः, तद्वति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे साम्प्रतिकी, ग्रहणे स्तोत्रे च गौणी इत्येवं कौस्तुभे द्रष्टव्यम्। अतश्च संस्थानामेव फलसंबन्धः। ग्रहणस्तोत्रादिकं तु तत्तद्वाक्ये वाक्यान्तरप्राप्तमनूद्यते। संस्थापदार्थवृत्तिप्रयोगस्य प्रतिसंबन्ध्यपेक्षायां च प्रकरणाज्ज्योतिष्टोमक्रतुरेव आश्रयत्वेनान्वीयते। तदेतत्सर्वमिन्द्रियकामाधिकरणे स्थितमेव।

इह तु सर्वगुणकामानामाश्रयसामानविध्यचिन्तायां– फलवत्त्वेन संस्थादीनामपि ज्योतिष्टोमादिवत् प्रकरणाविशेषात् दीक्षणीयादिधर्माणां उभयार्थत्वमिति प्राप्ते, फलवत्त्वज्ञानं विना धर्माणामङ्गत्वबोधानुपपत्तेः, तस्य च गुणस्थले आश्रयसंबन्धव्यतिरेकेण अबुद्ध्यमानत्वादाश्रयस्य च स्वविधिविहितस्य लाभसंभवे गुणेनोत्पत्तिविनियोगप्रयोगाणामनाक्षेपात् धर्माणां गुणान्वयात् पूर्वमेवाश्रयान्वयस्य तद्विधिपर्यवसानार्थमवश्यं वाच्यत्वेन विरम्यव्यापारत्वापत्तेः न उभयार्थत्वम्। न ह्येवमाश्रयनिष्ठफलवत्त्वज्ञानं गुणान्वयाधीनम्, तद्बोधव्यतिरेकेणापि यागस्य क्रियारूपस्य फलवत्त्वबोधोपपत्तेः। गुणे तु

फलवत्त्वज्ञापकविधिवैयर्थ्यापत्त्यैव कृतिसाध्याश्रयान्वयस्य धर्मान्वयात् पूर्वमवश्यं वाच्यत्वम् । अत एव आश्रयो गुणनिष्ठकरणतासंपादको गुणकरणतावच्छेदककोटिप्रविष्टो वा इति करणाकाङ्क्षैव विततेऽऽश्रयाकाङ्क्षा इति मूलप्रवादः । अतो धर्माणामाश्रयाङ्गत्वमेव । गुणभावनायां तु आश्रयतो धर्मातिदेशः इति सिद्धम् ।

**प्रयोजनं** यद्यपि न गुणकामप्राप्तिरूपं संभवि, संस्थानां विकृतित्वेऽपि तदाश्रयभूतस्य ज्योतिष्टोमस्य प्रकृतिभूतस्य सत्त्वेनैव सदोमानाद्याश्रितगुणकामानाम्, षोडश्याद्यभ्यासाङ्गभूतग्रहणाद्याश्रितानां वा गुणकामानां प्राप्त्युपपत्तेः । नापि उद्भिदादीनां वैकल्पिकसंस्थाप्रकृतिकत्वरूपम्, यागत्वसादृश्याधिक्येन ज्योतिष्टोमप्रकृतिकत्वस्यैवापत्तेः, तथाऽपि यत्र 'अथैष भूर्नैश्वदेवः' इत्यादौ न यागत्वपरिचायकपदश्रवणम्, तत्र वैकल्पिकसंस्थाप्रकृतिकत्वं पूर्वपक्षे । सिद्धान्ते ज्योतिष्टोमप्रकृतिकत्वमेव इति द्रष्टव्यम् । संस्थाऽङ्गभूतधर्मभ्रेषे याजुर्वेदिकादिप्रायश्चित्तं पूर्वपक्षे । सिद्धान्ते तु अविज्ञातमपि । तथा 'यशस्याशीरुदृचमशीय' इत्यादियज्ञपदोपेतमन्त्रे अविकृतप्रयोगः पूर्वपक्षे, संस्थायामस्य लोपात् । सिद्धान्ते यज्ञस्य संस्थायाश्चाशीः इत्येवं ऊहितव्यम् ।

**मण्डन**— 'संस्थासु नाङ्गान्युपदेशभाञ्जि ।' 'अङ्गानि' दीक्षणीयादीनि, 'संस्थासु' सर्वासु सप्तसु, 'न उपदेशभाञ्जि' न विधिप्राप्तानि, अपितु एकस्यामेव संस्थायां अग्निष्टोमनाम्ना प्रसिद्धायां प्राप्तानि इत्याशयः ।

**शंकर**— 'संस्थानां न समो विधिः ।'

* **संस्थाधिकरणेन** ( ३।६।१६।४१–४७ ) संस्थानां ज्योतिष्टोमेन सह प्रकरणतुल्यत्वं निराकरिष्यते । **सु.** पृ. १३०५. * **संस्थाधिकरणे** ( ३।६।१६ ) उक्थ्यादौ उपदिष्टस्य ऐन्द्राग्नादेः अतिदिष्टस्य चाग्नेयस्य समुच्चय उक्तः । **बाल.** पृ. १७७, * संस्थाधिकरणे वार्तिके– 'आग्नेयमजमग्निष्टोमे आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयं, ऐन्द्रं वृष्णिं षोडशिनि तृतीयं, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्' इत्यत्र तत्तद्देवताविशिष्टद्रव्याणां समुच्चयो विधीयते अन्यथा सवनीयसमाख्यया एककार्यत्वावगमात् उक्थ्याद्युत्तरसंस्थासु विकृतिषु उपदिष्टैः ऐन्द्राग्नादिभिः अतिदिष्टस्य पूर्वस्य आग्नेयस्य बाधापत्तेः इत्युक्तम् । पृ. १७०. * संस्थाधिकरणे संस्थानां विकारत्वं वक्ष्यते । **सु.** पृ. ११५८. * षोडश्यादिशब्दास्तावत् अनेकेषु प्रयुज्यमाना अपि संस्थायामेव शक्ताः, तद्वज्ज्योतिष्टोमे निरूढलक्षणया, तद्वति क्रत्वन्तरे सांप्रतिकलक्षणया, ग्रहणे स्तोत्रे च तथैव इत्यादि **संस्थाधिकरणे कौस्तुभे** च द्वितीये क्षुण्णम् । **भाट्ट.** १०।५।९.

* **संस्थाधिकरणन्यायेन** सर्वेषां गुणानां काम्यानां आश्रयैः सह सामानविध्यनिरासः । **सु.** पृ. ८४७.

* **संस्थाधिकरणभाष्ये** धात्वर्थानवच्छिन्नायाः भावनायाः धर्मान्वयः निराकरिष्यते । **सु.** पृ. १२१६, * 'नासौ साध्यस्य भवति इति साधनेन संबध्यन्ते' इत्यादि**संस्थाधिकरणभाष्ये** साध्यभूतधात्वर्थान्वयद्वारा साधनभूतस्य गुणस्य इतिकर्तव्यतान्वयस्य वक्ष्यमाणत्वात् गुणस्य साक्षात् इतिकर्तव्यतान्वयायोग्यत्वावगतेः, कर्तव्यताविशेषत्वाच्च इतिकर्तव्यतायाः कर्तव्यतापरपर्यायानुष्ठेयरूपेण धात्वर्थेनैव अन्वययोग्यत्वप्रतीतेः । पृ. ८४८.

* **संस्थान्तरे** संस्थान्तरासंभवः । **वा.** ३।६।१६।४२ पृ. १०६२. * **संस्थागणः**– पञ्चाग्निष्टोमः । अग्निष्टोमस्य पञ्चकृत्वोऽभ्यासेन जायमानो गणः पञ्चाग्निष्टोमः । तत्र द्वादशाहस्य विध्यन्तः । स्तोत्राणि तु ज्योतिष्टोमादेव ग्राह्याणि न द्वादशाहात् । **वि.** ८।३।४–५.

**संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ।८।३।४।८॥**

पञ्चोक्थ्यः, शताग्निष्टोमं भवति, शतातिरात्रं भवति इति संस्थागणाः श्रूयन्ते । तेषु तत्तत्संस्थानां गणेषु तदभ्यासः तस्यास्तस्याः संस्थायाः अभ्यासः प्रतीयेत । पञ्चवारं उक्थ्यस्य प्रयोगे पञ्चोक्थ्यः स्यात् । एवं अग्निष्टोमस्य शतवारमभ्यासे शताग्निष्टोमः स्यात्, अतिरात्रस्य तु शतवारमभ्यासे शतातिरात्रः संस्थागणः स्यादिति । कृतलक्षणग्रहणात् । अग्निष्टोमः उक्थ्यः



अतिरात्रः एतेषां लक्षणानि नाम्नैव कृतानि । तथा च कृतानि लक्षणानि येषां ते कृतलक्षणाः ज्ञातस्वरूपाः यागाः । तेषां कृतलक्षणानां स्वरूपतो ज्ञातानामेव पञ्चोक्थ्यादिशब्दैः ग्रहणं कृतम् । कृतलक्षणानां ग्रहणात् तेषां अग्निष्टोमादीनां अभ्यासः प्रतीयते, नात्र द्वादशाहिकानामह्नां अतिदेशः इति **पूर्वः पक्षः ।**

**अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् । ९ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । गणानां द्वादशाहः प्रकृतिः इति उक्तम् ( ८।१।१०।१७ ) । अतः अत्र प्रकृतिशब्देन द्वादशाह उच्यते । तद्विशिष्टा इति तच्छब्देन अधिकरणविषयगतः उक्थ्यादिः प्रतिनिर्दिश्यते । प्रकृतिः द्वादशाहः, द्वादशाहस्य दशाहानि, तद्विशिष्टा उक्थ्यादिसंस्थाविशिष्टा पञ्चोक्थ्यादिषु प्रवर्तेत । तद्विशिष्टा प्रकृतिः स्यात् । अधिकारात् चोदकेन तस्याः प्राप्तत्वात् । न च अग्निष्टोमादिनाम्ना तत्तत्संस्थाकज्योतिष्टोमः प्रत्यभिज्ञायते इति **वाच्यम् ।** अभिधानस्य अग्निष्टोमादिशब्दस्य तन्निमित्तत्वात् अग्निष्टोमादिसंस्थामात्रनिमित्तत्वात् । तथा च पञ्चोक्थ्ये द्वादशाहस्य यः प्रथमः पञ्चाहः तस्यातिदेशः । शताग्निष्टोमे यावत्संख्यापूरणं द्वादशाहस्य दशाहानामावृत्तिः इत्यादि । परंतु शताग्निष्टोमे द्वादशाहिकोक्थ्यानां उक्थ्यस्तोत्रलोपं कृत्वा, शतोक्थ्ये च द्वादशाहिकाग्निष्टोमयोः उक्थ्यस्तोत्रोपचयं कृत्वा आवृत्तिः इति विशेषः । इति **सिद्धान्तः । के.**

* संस्थागणेषु पञ्चोक्थ्यशतोक्थ्यशताग्निष्टोमशतातिरात्रादिषु द्वादशाहिकधर्मातिदेशः परंतु तत्र तत्र तत्तत्संस्थता । **भा.** ८।३।४।८–९.

* **संस्थाजपेन** वैदिककर्मसमाप्तिः । **सु.** पृ. १५३९.

* **संस्थापदस्य** तद्विषयकव्यापारोपरमे शक्तिः । **मणि.** पृ. १६४.

* **संस्थाविशेषः** उक्थ्यः षोडशी च ज्योतिष्टोमस्य । **भा.** १०।६।६।१५.

* **संस्थासप्तकरूपस्य** ज्योतिष्टोमस्य 'य एतेनानिष्ट्वा॰' इत्येतच्छब्देन न परामर्शः, किंतु अग्निष्टोमरूपस्यैव । **भा.** ५।३।१३।३७–३८.

* **संस्थानं** आकृतिः । अग्नितोयवाय्वाकाशानां पार्थिवद्रव्यपरिग्रहवशात् आकारानुवृत्तिः कल्प्येत न स्वातन्त्र्येण, दिक्कालात्ममनसां तु गुणकर्मणां च न कथंचिदपि संस्थानं संभवति । **वा.** १।३।९।३० पृ. २९५. * संस्थानं पर्यवसानं व्यापारोपरमः । न च पुनः कुर्वाणः तद्व्यापारादुपरत इत्युच्यते । संस्था हि क्रियां प्रति औदासीन्यं व्यापारान्तरकरणं वा पूर्वस्मात् कर्मणः । **भा.** १०।६।१०।३०.

* **संस्थितं च न लङ्घयेत्**' ( मस्मृ. ५।१५१ ) इत्यनेन न्यायेन ( संस्थितं मृतं पतिं स्त्री न लङ्घयेत् नातिक्रामेत् अन्यासक्तिं न कुर्यात्– इत्यक्षरार्थः ) पुंसः अन्यया सह पुनः प्रवृत्तिकर्म नेह । **मेधा.** ५।१६४. * '**संस्थिते** पृष्ठ्ये षडहे मध्वाशयेद् घृतं वा' अत्र षडहधर्मो व्रतनियमादिः मध्वशनैः कर्तव्यः । **वि.** ९।२।१२.

* **संस्पर्शादीनि** । अङ्गारापोहनादीनि संस्पर्शादीनि च प्रतिप्रधानं भिद्यन्ते दर्शपूर्णमासयोः । **भा.** ११।१।१०।५५.

* **संहितं** ( नाम ) साम गायत्रे तृचे आर्भवे । **भा.** ९।२।६।२५ वर्णकं ३.

[ तच्छब्दस्य 'सः' 'सा' इति तच्छब्दरूपारब्धानि अधिकरणादीनि तच्छब्दे संग्राह्याण्यपि प्रमादात् न संगृहीतानि, तानि अत्र सकाराक्षरे संगृहीतानि । ]

**स आहवनीयः स्यादाहुतिसंयोगात् । १२।४।८।२६ ॥**

सः उखायां स्थापितः भ्राष्ट्रादिरग्निः आहवनीयः स्यात् । आहवनीयनामा आहवनीयधर्मा स्यात् । आहुतिसंयोगात् आहुत्या संयोगो हि आहवनीयस्य भवति भ्राष्ट्रादौ च उखायां स्थापिते हूयते । तस्मात् स आहवनीयः स्यात् । इति **पूर्वः पक्षः ।**

अन्यो वोद्धृत्याऽऽहरणात् । २७ ॥

नासौ आहवनीयः । आहवनीयादन्य एव स्यादसौ । भ्राष्ट्रात् प्रादान्यात् वा उद्धृत्य आहरणात् । असौ हि भ्राष्ट्रादेः उद्धृत्य आह्रियते, स तु आधानादिना संस्क्रियते । तस्मान्नासौ आहवनीयः, न चात्र आहवनीयधर्माः इति सिद्धान्तः । के.

* 'स एष औपवसथ्येऽहन् द्विदेवत्यः पशुरालभ्यते' इति । अयं क्रयसंनिधौ उत्पन्नस्य उत्कर्षविधिः । बाल. पृ. २१,

ङ्क स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् । १०।१।११।४७॥

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति श्रुतम् । तत्र श्रुतः सः चरुः प्रकृत्या दर्शपूर्णमासानुसारेण कपाले पक्तव्यः स्यात् । अन्यस्य च कपालादितरस्य कस्यचित् द्रव्यस्य पाकाधिकरणत्वेन अश्रुतित्वात् । नास्ति श्रुति यस्य तत् अश्रुति । अन्यस्य च अश्रुतित्वात् कपालस्य च चोदकेन प्राप्तत्वात् कपाले एव चरुः पक्तव्यः इति पूर्वः पक्षः ।

संख्या चापि कपालवत् । ४८ ॥

यथा चरुश्रपणार्थं चोदकेन कपालं प्राप्तं तद्वत् कपालसंख्याऽपि अष्टत्वं प्राप्ता भवति । यदि तु अष्टसु कपालेषु चरुः पक्तुं न शक्यते इति संख्या बाध्येत तदा कपालमपि बाधनीयम् । एकपदोपात्तत्वादुभयोः । इति शङ्का ।

एकस्मिन् वा विप्रतिषेधात् । ४९ ॥

'सौर्यं चरुं निर्वपेत्' इत्युक्तः चरुः कपाले पक्तव्यः इत्युक्तं पूर्वपक्षिणा । तत्र कपालवत् अष्टत्वसंख्याऽपि प्राप्नोति । यदि संख्या बाध्येत कपालमपि बाध्यतां इति शङ्का प्राप्ता, तां निरस्यति पूर्वपक्षी । वाशब्दः शङ्काव्यावृत्त्यर्थः । एकस्मिन्नेव कपाले पक्तव्यश्चरुः । अष्टत्वसंख्या तु विप्रतिषेधात् बाध्यते । नहि अष्टसु कपालेषु चरुः पक्तुं शक्यते । तथा च विरोधात् संख्या बाध्यते, कपालं तु अविरोधात् न बाधनीयम् । तस्मात् सौर्यश्चरुः एकस्मिन् कपाले पक्तव्यः इति पूर्वः पक्षः ।

न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्याद्नियमोऽविशेषात् । ५० ॥

सौर्यश्चरुः कपाले पक्तव्यः इति पूर्वपक्षनिरासार्थः वाशब्दः । सौर्यश्चरुः कपाले न पक्तव्यः । पुरोडाशादर्थान्तरं चरुः । तस्य पाकेन संयोगात् चरुपाकस्य कपाले असंभवात् कपाले न चरुः पक्तव्यः । अपूपे पुरोडाशे तु कपालं पाकसंयुक्तम् । कपाले अपूपः पक्तुं शक्यते इति । चरौ तु श्रपणीये उदकस्य धारणार्थं कपालमुपादेयं भवति । तत्तु न संभवति तस्मात् अर्थात् उदकधारणाद्यर्थं तत्र चरौ पात्रलाभः स्यात् । किंचित् पात्रमेव लब्धव्यं स्यात् । तस्मिंश्च पात्रे अविशेषात् चरुपाके विशेषाभावात् अनियमः स्यात् । अत एव पात्रं ग्राह्यं इति नियमो न स्यात् । चरुपाकोपयुक्तं किंचित् पात्रं अनियमेन ग्राह्यम् ।

चरौ वा लिङ्गदर्शनात् । ५१ ॥

सौर्यश्चरुः पात्रे कस्मिंश्चित् पक्तव्यः न कपाले इत्युक्तम् । तत्र कीदृशे पात्रे इति चेत् चरौ स्थाल्यां स चरुः पक्तव्यः नान्यस्मिन् पात्रे । चरुशब्दोऽत्र स्थालीवाचकः । 'यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः' इदं लिङ्गं सोमस्थाली चरुपाकार्था इति दर्शयति । स्थाल्यामेव च चरुपाकः उत्कृष्टो भवति । तस्मात् चरुः स्थाल्यां पक्तव्य इति सिद्धान्तः । एवं चरुर्हविर्विकारः न कपालविकारः, सौर्यश्चरुश्च ओदनशब्दवाच्यः न स्थाली । चरुपाकश्च स्थाल्यां कर्तव्यो न कपाले इति सिद्धम् । के.

ङ्क स तद्धर्मा स्यात् कर्मसंयोगात् । ६।३।१०।२६ ॥

सत्रे अपचरितस्य अन्यतमस्य यजमानस्य स्थाने योऽन्यः प्रतिनिहितः सः तद्धर्मा स्वामिधर्मा स्यात् न ऋत्विग्धर्मा । कर्मसंयोगात् स्वामिकर्मसंयोगात् । यश्च यस्य कार्यमधितिष्ठति सः तद्धर्मैः संबध्यते । तस्मात् स स्वामिधर्मा इति सिद्धान्तः । तस्य धर्मा एव स्वामिनो धर्मा एव यस्य स तद्धर्मा । अनिच् समासान्तः ।



कर्मसंयोगात् इत्यत्र तत्संयोगात् इति पाठः कुतूहले । प्रतिनिहितस्य स्वामिधर्मत्वे सत्येव इतरेषां फलिसंस्कारसंयोगात् संयोगसंभवात् इति तदर्थः ।

तत्कर्मसंयोगात् इति वृत्तिपाठः । स्वामिकर्मभिः संयोगात् इति तदर्थः । के.

* 'स देवतार्थस्तत्संयोगात् ।' ३।२।५।१३॥ स सूक्तवाकः देवताकल्पनार्थः अङ्गत्वेन रूपेण प्रहरणं प्रति संयोगात् ( इति अक्षरार्थः ) । आग्नेयादियागेषु अग्न्यादीनां प्रत्येकं देवतात्वेऽपि एतद्यागान्तर्गतोद्देशनिरूपितदेवतात्वस्य लाघवेन व्यासज्यवृत्ति-एकस्यैव कल्पनम् । अतश्च परप्रयुक्ताग्न्यादिवृत्तिना एकेन देवतात्वेन एकस्यैव एतत्प्रस्तरद्रव्यकस्य त्यागस्य कल्पनम् । शाब्दत्वार्थं चाजहत्स्वार्थलक्षणया आघारयतिवत् प्रहरतिना लक्षणात् होमत्वसिद्धिः । तृतीयायाः ('सूक्तवाकेन प्रस्तरं प्रहरति') लाघवात् प्रचुरप्रयोगाच्च करणत्वे एव शक्त्यङ्गीकारात् उत्तरसूत्रवक्ष्यमाणन्यायेन प्रहरतौ जघन्ये होमलक्षणायाः फलमुखत्वेनादोषत्वाच्च । कौ. ३।२।५।१२–१३. * '० स नित्यस्य समत्वात्' ( ३।६।१६।४३ ) प्रथमं क्रत्वर्थत्वेऽवधारिते फलसंबन्धाभावात् 'स नित्यस्य समत्वात्' इत्येवं अधिकारत्वप्रसङ्गः ( उक्थ्यादेः ) । वा. ३।६।१६।४३ पृ. १०६५–६६.

ङ्क स प्रत्यामनेत् स्थानात् । ६।४।१०।३०॥

दर्शे 'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्युक्तः कर्मान्तररूपः पञ्चशरावः सः अमावास्यां प्रत्यामनेत् । अमावास्यायागस्य प्रत्याम्नायरूपः स्यात् नासौ अमावास्यायागाङ्गम् । स्थानात् । यागे विनष्टे तस्य स्थाने पञ्चशरावस्य विधानात् । इति पूर्वः पक्षः ।

अङ्गविधिर्वा निमित्तसंयोगात् । ३१ ॥

दर्शे 'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्युक्तः कर्मान्तररूपः पञ्चशरावः अमावास्यायागस्य नाङ्गं किंतु प्रतिनिधिः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन प्रत्याख्याय सिद्धान्तमाह । अङ्गविधिरेवायं पञ्चशरावः । दर्शाङ्गमयम् । निमित्तसंयोगात् । हविरार्तिरूपेण निमित्तेन यागस्य संयोगात् संबन्धस्य विधानात् । तस्मात् नैमित्तिकं कर्माङ्गं पञ्चशरावः । के.

ङ्क स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् । ७।४।२।२॥

अविहितेतिकर्तव्यताकेष्वपि सौर्यादिषु काचिदितिकर्तव्यता स्यादिति पूर्वाधिकरणे अवगतम् । अथ कोऽसौ इतिकर्तव्यताविशेषः इत्याकाङ्क्षायां आह । स इतिकर्तव्यताविशेषः लौकिकः स्यात् । लौकिक इति गृह्योक्त उच्यते । ततश्च पार्वणस्थालीपाकादौ यस्य प्रवृत्तिर्दृष्टा स दृष्टप्रवृत्तित्वात् गृह्योक्त इतिकर्तव्यताविशेषः स्यात् सौर्यादौ । स हि स्थालीपाकादौ फलसाधकतया सिद्धः इति सौर्यादावपि ग्रहीतुं योग्यः । तस्मात् लौकिकः इति पूर्वः पक्षः ।

वचनात्तु ततोऽन्यत्वम् । ३ ॥

सौर्यादौ अपेक्षितः इतिकर्तव्यताविशेषः लौकिको ग्राह्य इत्युक्तम् । ततो वैलक्षण्यार्थं तुशब्दः । यत्र तु वैदिकस्य इतिकर्तव्यताविशेषस्य विशेषवचनं स्यात् तत्र वचनात् ततः लौकिकात् अन्यत्वं इतिकर्तव्यताविशेषस्य । यथा उपसत्सु गृहमेधीये च । यथाकथंचित् वचनाभावे तु लौकिकः स्यात् ।

लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् । ४ ॥

यत्र इतिकर्तव्यता न पठिता तत्रापि सा कुतश्चित् ग्राह्यैव । सा च क्वचित् वचनात् इति पूर्वमुक्तम् । ततो वैलक्षण्यार्थो वाशब्दः । लिङ्गेन वा क्वचित् वैदिकी इतिकर्तव्यता नियम्येत । यथा सौर्ये चरौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति । कृष्णलमिति कृष्णमुखगुञ्जापरिमितं सुवर्णमिति । तथा ऐन्द्राबार्हस्पत्ये 'अर्धं बर्हिषो लुनाति अर्धं न, स्वयंदितमर्धं वेद्यां करोति अर्धं न' इति । तथा पितृयज्ञे 'न होतारं वृणीते, नार्षेयम्' इति । एतैर्लिङ्गैर्ज्ञायते एतेषु वैदिकी इतिकर्तव्यतेति । लिङ्गस्य तद्गुणत्वात् । प्रयाजादयो हि तस्य वैदिकस्य अपूर्वस्य गुणाः । तस्मात् क्वचित् लिङ्गेन नियमः ।

**अपिवाऽन्यायपूर्वत्वाद् यत्र नित्यानुवादवचनानि स्युः । ५ ॥**

सौर्यचर्वादौ लिङ्गेन वैदिकी इतिकर्तव्यता नियम्यते इति सिद्धान्तिना उक्तं तत् व्यावर्तयितुं अपिवाशब्दः । न सौर्यादौ लिङ्गेन वैदिकी इतिकर्तव्यता सिध्यति । अन्यायपूर्वत्वात् नात्र न्यायपूर्वकत्वम्, न्यायाभावात् । का तर्हि लिङ्गानां गतिः ? उच्यते । यत्र नित्यानुवादवचनानि स्युः नित्यस्य सिद्धस्य अनुवादो यत्र वचने दृश्यते तत्र उक्तैः लिङ्गैः किंचित् बोध्येत । तदर्थानि तानि । तद्यथा । यत्र प्रयाजाः सिद्धाः तत्र तदनुवादेन कृष्णलविधिः इति कृष्णलवाक्यस्य सौर्यात् उत्कर्षः । अथवा कृष्णलविशिष्टप्रयाजविधिरयम् । 'नार्षेयं वृणीते' इति वचनं तु नित्यानुवादः 'नान्तरिक्षे न दिवि अग्निश्चेतव्यः' इतिवत् । 'अर्धं बर्हिषो लुनाति' इत्यादिवाक्यं च यत्र बर्हिः सिद्धं तत्र ऐन्द्राबार्हस्पत्यात् उत्कष्टव्यम् । तस्मात् सौर्यादिषु लौकिकी एव इतिकर्तव्यता न वैदिकी । इति पूर्वः पक्षः ।

**मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् । ६ ॥**

सौर्यादिषु लौकिकी इतिकर्तव्यता ग्राह्या इति पूर्वपक्षिणा उक्ते कश्चित् ब्रूयात् ननु लौकिकी च वैदिकी च इत्युभयं प्रवर्ततां इति । तत्राह पूर्वपक्षी । एकत्र कर्मणि लौकिक्या वैदिक्याश्च सह प्रवृत्तिर्न संभवति, मिथो विप्रतिषेधात् । तस्मात् गुणानां अङ्गानां यथार्थं अर्थं अनतिक्रम्य प्रकृतिसिद्धं प्रयोजनं अनतिक्रम्य कल्पना स्यात् । यथार्थकल्पना स्यात् एकस्या एव इतिकर्तव्यतायाः फलजनिकायाः प्रवृत्तिः स्यात् । यदा च एकस्याः तदा लौकिक्या एव दृष्टप्रवृत्तित्वात् इति ।

**भागित्वात्तु नियम्येत, गुणानामभिधानत्वात्, संबन्धादभिधानवद्, यथा धेनुः किशोरेण । ७ ॥**

सौर्यादिषु लौकिकी इतिकर्तव्यता स्यात् इति पूर्वपक्षे सिद्धान्ती आह । भागित्वात् अपूर्वं भजते इति भागिनी वैदिकी अपि इतिकर्तव्यता । लौकिक्या वैदिक्याश्च उभयोः समानेऽपि भागित्वे गुणानां प्रयाजादीनामङ्गानां वैदिकानामेव अभिधानत्वात् –अभिदधति इति अभिधानानि– अभिधायकत्वात् । कथं गुणा वैदिकाभिधायकाः ? संबन्धात् प्रयाजादीनां वैदिकेतिकर्तव्यतयैव संबन्धात् । नहि लौकिके स्थालीपाकादौ प्रयाजाः सन्ति । अभिधानवत्, यथा कुण्डपायिनामयने अग्निहोत्रं इत्यभिधानं नित्यस्य अग्निहोत्रस्य सहचरितान् धर्मान् आनयति तद्वत् । एवं भागित्वात्, संबन्धात् गुणानां अभिधानत्वात् अभिधानवत् वैदिकी इतिकर्तव्यता नियम्येत । अत्र भागित्वात् इति न्यायः, इतरत्तु लिङ्गम् । यथा धेनुः किशोरेण । तद्यथा 'कृष्णकिशोरा धेनुः' इति । अत्र धेनुशब्दो यद्यपि धयन्त्यां गवि दृष्टप्रवृत्तिः तथापि अभिधानसामान्यात् धयन्त्यामश्वायामपि भागी इति किशोरेण लिङ्गेन धयन्त्यामश्वायां विज्ञायते । किशोरशब्दो हि अश्वस्यैव बालके रूढः । एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः तथापि इतिकर्तव्यतासामान्येन भागित्वात् लिङ्गेन वैदिकी विज्ञेया ।

**उत्पत्तीनां समत्वाद्वा यथाऽधिकारं भावः स्यात् । ८ ॥**

सौर्यादौ प्रयाजकृष्णलादिलिङ्गेन वैदिकी इतिकर्तव्यता इति सिद्धान्तिना उक्ते पुनः पूर्वपक्षी शङ्कते । पक्षविपरिवर्तने वाशब्दः । अथवा नैव लिङ्गेन नियम्येत । प्रयाजादीनां धर्माणां या उत्पत्तयः उत्पत्तिविधयः, तासां समत्वात् । आग्नेयाद्यङ्गत्वेन ताः सर्वाः समानाः । तेन केवलं प्रयाजाः सधर्मका अनुमीयेरन् न तु अनुयाजादीनि इतराण्यङ्गानि । अतो न सर्वा वैदिकी इतिकर्तव्यता सौर्यादौ ग्रहीतुं शक्यते । एतस्मात् हेतोः यथाधिकारं यत्रयत्र येये धर्माः श्रुताः तेषां भावः सत्त्वं स्यात् न तु अन्येषाम् । अतः स्मार्तानां सर्वेषां श्रुतमात्रस्य प्रयाजादेश्च सौर्यादौ अङ्गत्वं स्यात् ।

**उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् । ९ ॥**

लौकिकी इतिकर्तव्यता, श्रुतं च प्रयाजरूपं वैदिकमङ्गं सौर्ये चरौ स्यात् इति पूर्वपक्षिणा उक्ते इयं शङ्का– ननु इतिकर्तव्यताशून्यप्रधानयागासंभवात् सेतिकर्तव्यताकं प्रधानं प्रधानविधिरेव विधत्ते । अतश्च सौर्यस्य साङ्गप्रधानस्य वेदेन विहितत्वात् वैदिकी एव तत्र



इतिकर्तव्यता स्यात् । न लौकिकी इति । तत्राह पूर्वपक्षी । चकारः शङ्कानिराससूचकः । उत्पत्तिश्च शेषवचनं च तयोः समाहारः उत्पत्तिशेषवचनम् । एकस्मिन् वाक्ये शब्दे वा प्रधानस्य उत्पत्तिः, शेषाणां अङ्गानां वचनं विधिश्च विप्रतिषिद्धं विरुद्धम्, न संभवति । यदि च 'सौर्यं चरुं निर्वपेत्' इति आख्यातेन प्रधानवत् अङ्गान्यपि विधीयेरन् ततः तेषामपि प्रधानवत् फलसंबन्धः स्यात् । ततश्च अङ्गत्वमेव व्याहन्येत । तस्मान्नोभयविधिः । एवं च लौकिकी एव इतिकर्तव्यता सौर्यादौ ।

**विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम् । १० ॥**

सौर्यादौ लौकिकी इतिकर्तव्यता ग्राह्या इति पूर्वपक्षं वाशब्देन निरस्यन् पुनः सिद्धान्तमाह । सौर्यादिचोदनायां कथंभावाकाङ्क्षिण्यां विध्यन्तः कथंभावो वैदिक एव प्रकृतिवत् दर्शपूर्णमासयोरिव प्रवर्तेत । तथाहि लिङ्गदर्शनं वैदिककथंभावप्रवृत्तौ एव सत्यां उपपद्यते । प्रयाजादिप्राप्तौ च अनूयाजादीनामपि चोदकतः प्राप्तिरवर्जनीया इति भवति प्रयाजादिदर्शनं वैदिककथंभावप्राप्तौ लिङ्गम् । तस्मात् सौर्यादौ वैदिकी एव इतिकर्तव्यता ।

**लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् । ११ ॥**

पूर्वपक्षी ब्रूते । वैदिक्या इतिकर्तव्यताया लिङ्गहेतुत्वात् लिङ्गं हेतुः साधको यस्याः तादृशत्वात् अलिङ्गे यत्र किंचिदपि लिङ्गं नास्ति 'ऐन्द्राग्नमेकादशकपालं निर्वपेद् यस्य सजाता वीयुः' इत्यादौ, तत्र लौकिकं गृह्योक्तं अङ्गजातं स्यात् इति ।

**लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन । १२ ॥**

वैदिकस्य कथंभावस्य लिङ्गहेतुकत्वात् लिङ्गशून्ये वैदिके कर्मणि लौकिकः कथंभावः स्यात् इति पूर्वपक्षिणा उक्ते आह सिद्धान्ती । लिङ्गस्य लिङ्गसामान्यस्य पूर्ववत्त्वात् न्याययुक्तत्वात् न्यायस्य च सलिङ्गेषु अलिङ्गेषु च तुल्यत्वात् अलिङ्गेषु 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः' इत्यादावपि वैदिक एव कथंभावः स्यात् । न्यायस्य तुल्यत्वं तु चोदनाशब्दसामान्यात् विधिप्रत्ययस्य तुल्यत्वात् । चोदनाशब्दसामान्येन लिङ्गस्य न्यायपूर्वकत्वात् एकेनापि वैदिकेन लिङ्गेन लिङ्गरहितेष्वपि यागेषु वैदिकः कथंभावो निरूप्येत । यथा स्थाली पच्यमानस्यौदनस्य स्थाली । पुलाकेन एकेनापि निरूप्यते तद्वत् । तस्मात् ऐन्द्राग्नादावपि वैदिके कर्मणि विध्यन्तेन वैदिक एव कथंभावः स्यात् न लौकिकः इति सिद्धान्तः । के.

**॥ स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् । ८।४।२।२॥**

दर्विहोमशब्दः कर्मनामधेयमिति सिद्धान्तितम् । तत्र किमयं दर्विहोमशब्दः स्मार्तानां कर्मणां नामधेयं उत सर्वेषां स्मार्तानां श्रौतानां च कर्मणां इति विचारे पूर्वपक्षमाह । सः दर्विहोमशब्दः लौकिकानां–स्मार्तानामित्यर्थः– कर्मणां अभिधानं स्यात् । कर्तुः दर्विहोमानां कर्तुः तदाख्यत्वात् दर्विहोमघटितदार्विहोमिकनामकत्वात् । तया आख्या येषां, सा आख्या येषां इति वा समासः । 'शिबीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मणः' इति तदाख्यत्वम् । तस्मात् दर्विहोमशब्दः लौकिकानां कर्मणां नामधेयं इति । प्रथमे अन्तरागर्भिणीन्याये पूर्वपक्षसूत्रमिदम् ।

**सर्वेषां वा दर्शनात् वास्तुहोमे । ३ ॥**

दर्विहोमशब्दः स्मार्तानामेव कर्मणां नामधेयं इति पूर्वपक्षस्य व्यावृत्त्यर्थो वाशब्दः । सर्वेषां लौकिकानां वैदिकानां च कर्मणां नामधेयं दर्विहोमशब्दः । वास्तुहोमे तथा दर्शनात् । वास्तूनि नाम वास्तुशाकबीजानि । वास्तु वास्तुकं ( चन्दनचटवा, चन्दनबथुआ इति मध्यदेशे ) वास्तूनां होमः वास्तुहोमः नाम वैदिकं कर्म । तत्र दर्विहोमत्वं दर्शितम्, 'यदेकया जुहुयात् दर्विहोमं कुर्यात् पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति । इदं च लिङ्गम् । होमशब्दस्य सामान्याभिधायित्वाच्च प्राप्तिः । तस्मात् लौकिकानां वैदिकानां च कर्मणां नामधेयं दर्विहोमशब्दः इति सिद्धान्तः । प्रथमे अन्तरागर्भिण्यधिकरणे सिद्धान्तसूत्रमिदम् । के.

* 'स वैव स्यात्' इति प्राजहितवादो ज्योतिष्टोमे। **संकर्ष.** ३।२।२१. **मीको.** पृ. १८३० "ज्योतिष्टोमे 'स वैव स्यात्०'" इत्यत्र अधिकरणं द्रष्टव्यम्।

* 'स वै (वैमृधः) पौर्णमासेन हविषेष्ट्वा अनुनिर्वाप्यः' अनेन वाक्येन पूर्णमासप्रयोगोत्तरकालीनता वैमृधस्य प्रतीयते। **संकर्ष.** १।२।६, * 'स वै वाजिनो नावाहयति'। वैश्वदेवे पर्वणि। ४।४।८.

**स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्। ४।३।७।१५॥**

'तस्मात् पितृभ्यः पूर्वेद्युः करोति' 'यः सत्रायागुरते स विश्वजिता यजेत' इत्यादिकं कर्म एकमेव फलं साधयति इति पूर्वाधिकरणे अवगतम्। तत् एकं किंनाम स्यात्। इति विचारे यत् एकं फलं स स्वर्गः स्यात्। विधेयानुसारेण 'सः' इति पुंलिङ्गता। स्वर्ग एव कुतः? तत्राह, सर्वान् पुरुषान् प्रति निरतिशयप्रीतिरूपस्य स्वर्गस्य अविशिष्टत्वात् समानत्वात्। सर्वश्च प्रीतिं कामयते। एवं स्वीकारे यजेत इत्यादिरविशेषवचनः शब्दः न विशेषे व्यवस्थापितो भवति।

**प्रत्ययाच्च। १६॥**

'विश्वजिता यजेत' इत्यादौ एकमेव स्वर्गः फलं इति सिद्धान्त उक्तः, तत्र हेत्वन्तरमाह सूत्रम्। चकारः समुच्चयार्थः। अनादिष्टफले कर्मणि स्वर्गः फलं इति प्रत्ययो भवति लोके। 'आरामकृद्देवदत्तः' इति केनचिदुक्ते 'नियतोऽस्य स्वर्गः' इत्यपर आह। 'तडागकृद्देवदत्तः' इत्युक्ते 'नियतोऽस्य स्वर्गः' इत्यपर आह। एवमत्रापि। के.

**स स्वामी स्यात् तत्संयोगात्। ६।३।९।२३॥**

सत्रे अन्यतमे यजमाने अपचरिते तस्य स्थाने प्रतिनिधिः कर्तव्य इति अवगतम्। स च प्रतिनिहितोऽन्यः स्वामी स्यात्। तत्संयोगात् स्वामित्वेन संयोगात्। यो हि असौ अन्य आनीयते स स्वामी क्रियते। तस्मात् प्रतिनिहितः स्वामी स्यात् इति पूर्वः पक्षः।

**कर्मकरो वा भृतत्वात्। २४॥**

सत्रे अन्यतमे यजमाने अपचरिते योऽन्यः प्रतिनिधीयते स स्वामी स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह। स प्रतिनिधीयमानः न स्वामी स्यात् किंतु कर्मकरः, दर्शादौ ऋत्विग्वत्। कुतः? भृतत्वात् भृतिदानेन परिक्रीतत्वात्। परिक्रीयमाणश्च न स्वामी भवति। नैवासौ सत्रफलं प्राप्नोति।

**कुतूहले** 'भृतत्वात्' इत्यस्य स्थाने 'अकृतत्वात्' इति पाठः। प्रतिनिहितेन आदित आरभ्य कर्म न कृतम्। अकृतत्वात् कर्मणः नासौ सत्रफलं प्राप्नुयात् इति नासौ स्वामी। कृतत्वात् इति वा पदच्छेदः। नियुक्तत्वात् इति तदर्थः।

क्रीतत्वात् द्रव्यदानेन परिक्रीतत्वात् इति वृत्तिः।

**तस्मिंश्च फलदर्शनात्। २५॥**

सत्रे अन्यतमे यजमाने मृतेऽपि तस्मिन् मृते यजमाने फलदर्शनात् 'यो दीक्षितानां प्रमीयेत अपि तस्य फलम्' इति सत्रफलस्य दर्शनात् स एव स्वामी। तस्य स्थाने प्रतिनिहितस्तु कर्मकर एव न स्वामी इति न तस्य सत्रफलम्। इति **सिद्धान्तः**। के.

* **'साऽस्य देवता'** इति तद्धितस्य देवताविशिष्टद्रव्याभिधायित्वम्। वस्तुतस्तु तद्धितस्य द्रव्यविशेषवाचित्वाभावेऽपि चतुर्थ्यपेक्षया बलवत्त्वं संभवति, द्रव्यस्य सामान्यरूपेणापि प्रतीत्या द्रव्यस्य देवतायाः संबन्धस्य च तद्धितादेवावगतेः चतुर्थ्या द्रव्यसामान्यस्य अप्यप्रतीतेः द्रव्यदेवतासंबन्धस्य सुतरामप्रतीतेश्च। **सोम.** २।२।९. * 'साऽस्य देवता' (पा. ४।२।२४) इति सर्वनामार्थे तद्धितप्रवृत्तिः। **सु. पृ.** ८०९.

**सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते इति न्यायः।** अयं यत्र वृथा कार्यकरणे स्वल्पफलकर्मणि च महाश्रमकरणम्, तत्र प्रवर्तते। 'ऋलृक्'-सूत्रमहाभाष्ये ह्युदाहृतश्च। तथाहि— "स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते, 'सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते'" इति। 'लट्वा करञ्जभेदे



स्यात् फले वाद्ये खगान्तरे' इति मेदिनी। 'लट्वा ग्रामचटके' इति वा। **साहस्री.** ३१२.

* **'सा लिङ्गादार्त्विजे स्यात्'** ३।४।११।३१॥ यो नाम वदेत् याज्ञेऽपि (अश्वदाने) अचोदितमेतत् कर्मभेदे सति निर्णयकारणाभावादिति तस्योत्तरं 'सा लिङ्गा०' इति। यत् ऋत्विग्भ्योऽश्वदानं तत्र स्यात्, वैदिकत्वयज्ञियत्वलिङ्गविशेषात्, निमित्तत्वोपयुक्तस्यापि लिङ्ग एव लिङ्गत्वात्। **वा.** ३।४।११।३१ पृ. ९६८, * 'सा लिङ्गादार्त्विजे स्यात्'। ३।४।११।३१॥ सा खलु अश्वप्रतिग्रहेष्टिः आर्त्विजे स्यात्, यजमाने स्यादित्यर्थः। स हि ऋत्विजामयं इत्येवं आर्त्विजोऽभिधीयते। अथवा 'स्वामिसप्तदशाः कर्मसामान्यात्' (३।७।१८।३८) इति यजमानस्यापि ब्रह्मादिवत् ऋत्विक्त्वं वक्ष्यति। तेन शक्यं याजमानमपि प्रदानं आर्त्विजं इत्यभिधातुम्। लिङ्गं चात्र पूर्वपदानां उत्तरैः पदैर्यथार्थमभिसंबन्धः। ३।४।११।३१ पृ. ९६५.

* **सकर्मकाकर्मकयोर्भेदः** (लक्षणम्)– 'साक्षाद्व्यभिचारेण धात्वर्थो यत्र कर्मभाक्। सकर्मकः स धातुः स्यात्, पारंपर्ये त्वकर्मकः॥' पचिगम्यादयः, आसनशयनादयः। **वा.** २।१।१।१ पृ. ३८५.

* **सकर्मकत्वं** धातोः फलव्यधिकरणव्यापारवाचित्वम्। **रहस्य.** पृ. ४९। अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वं सकर्मकत्वम्। **मणि.** पृ. १०३, **रहस्य.** पृ. ५१.

* **सकृदनुष्ठानमवघातमन्त्रस्य** दर्शपूर्णमासयोः। ११।४।१२।४५. **मीको.** पृ. ६८१ 'अवघातन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सकृदनुष्ठानं दर्शपूर्णमासयोरन्वारम्भणीयायाः। ९।१।११।२४-३५. **मीको.** पृ. ९७९ 'आरम्भणीयान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सकृदनुष्ठानं स्विष्टकृदिडादीनां सर्वपृष्ठेष्टौ। **वि.** ३।५।४.

**सकृदुच्चरितः शब्दः सकृदेवार्थमवगमयतीति। साहस्री.** ५७.

* सकृदुच्चरितस्य अनेकार्थपरत्वायोगः। **सु.** पृ. ८६६, * सकृदुच्चरितस्य अनेकतात्पर्यायोगः। पृ. ७७२.

* सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वं इति नियमः। **भाट्ट.** ९।३।१२. * 'सकृदुच्चरिते चास्मिन् विवक्षैकैव दृश्यते' इत्यनेन न्यायेन अनेकार्थस्यापि शब्दस्य सकृदुच्चारणेन एकार्थपरत्वायोगात् पौर्णमास्यमावास्याशब्दयोः अनेकयागनामत्वायोगमाशङ्क्य सकृदुच्चरितस्यापि अन्योन्यसापेक्षानेकार्थपरत्वोपपत्त्यै...। **सु.** पृ. ७३१, * रजतेऽपि दुर्वर्णरजतापेक्षया सुवर्णत्वसंभवेऽपि एकजातीयसर्वरजतव्यक्तिप्रत्ययबाधापत्तेः दुर्वर्णरजतव्यावृत्त्ययोगात् जातिद्वयेऽपि साधारणस्यापि हिरण्यशब्दस्य 'सकृदुच्चरिते चास्मिन् विवक्षैकैव दृश्यते' इत्यनेन **न्यायेन** सकृदुच्चरितस्य जातिद्वयपरत्वायोगः। पृ. १४७९. * सकृदुच्चारिते च उपादीयमानोद्दिश्यमानत्वे न संभवतः, विवक्षाभेदात्। **टुप्.** ९।१।१।१.

* **सकृदुच्चरितन्यायः।** 'गोतो णित्' इत्यादौ गोशब्देन अनेकार्थानामुपस्थितावपि 'सकृदुच्चरितन्यायेन' गोशब्दे एकस्यैवार्थस्य अन्वयात् तद्वाचकगोशब्दे एव 'गोतो णित्' इत्यस्य प्रवृत्त्या अपरार्थवाचकगोशब्दे तु प्रवृत्त्यर्थे आवृत्तिः कल्पनीया स्यात् (सा तु न युक्ता)। **भूतिः** पृ. ८३। 'गोतो णित्' इत्यत्र गोपदस्य नानाशक्तिकतया सकलार्थोपस्थितावपि सकृदुच्चरितन्यायेन (सकृदुच्चरितः शब्दः सकृदर्थं गमयति) एकस्यैवार्थस्य अन्वयेन तदर्थतात्पर्योच्चरितस्यैव गोशब्दस्य णित्प्रयुक्तं कार्यं स्यात् नान्यस्य। अतः शास्त्रस्य तन्त्रावृत्त्याश्रयणे **भाष्यमते गौरवम्।** **सूत्रमते** तु आत्मीयत्वेन सामान्यतः अर्थोपस्थापकस्वपदोपादानेन यावदर्थस्य संज्ञित्वबोधनात् न सकृदुच्चरितन्यायविरोधः, नापि तन्त्रावृत्त्याश्रयणरूपं **गौरवम्।** **तत्त्वप्रकाशिका.** पृ. ८३. * सकृदुपात्तस्य पुनरुपादानानुपपत्तेः। **वा.** ३।७।९।२४. * 'सकृत्कृतः शास्त्रार्थः' इति न्यायेन सकृदनुष्ठानेन अपवर्गः (विरामः) स्यात्। **वृ.** ११।१।६।२८. * सकृत् क्रियया कृतः शब्दार्थः। **भा.** ११।१।६।२८. * **'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव'** (परिभाषा ४०)। गतौ शास्त्रयोः

प्राप्तौ विप्रतिषेधे सति सकृत् यद् बाधितं तत् बाधितमेव ज्ञेयमित्यर्थः ।

स्थानिवद्भावविषये निर्दिश्यमानस्य इति परिभाषायाः प्रवृत्तौ तिसृणां इत्यत्र परत्वात् तिस्रादेशे स्थानिवद्भावेन त्रयादेशं आशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासंगतिः । **परिभाषेन्दुः** पृ. ५९, * सकृद्गतिन्यायः । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव । पृ. १५४, क्वचित् चरितार्थयोः एकस्मिन् युगपदुभयोः कार्ययोः असंभवेन बाधकाभावात् पर्यायेण तृजादिवत् शास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रं इति सकृद्गतिन्यायसिद्धिः ॥ 'व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवात् उभयोरपि शास्त्रयोः लक्ष्यविषययोः अचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेव इति नियमार्थमिदं इति सकृद्गतिन्यायसिद्धिः' । इति **कैयटादयः** । ( शेखर. पृ. १५४–१५५ ) । * तिसृणामित्यत्र सकृद्गतिन्यायेन त्रयादेशवारणपरं भाष्यम् । भूतिः पृ. ६२. * '**सकृत्प्रवृत्तायाः किमवगुण्ठनेन**' इति **न्यायः** । अथ शब्द एव प्रथमं विषयतया ( धात्वर्थं ) अभिधाय पुनः करणतयाऽपि अभिधत्ते । कथं सकृदुच्चरितो द्विरभिदध्यात् ? अभिधाने वा साध्यत्वमपि पुनरभिदधीत । नहि नियामकमस्ति द्विरेवाभिधत्ते न त्रिरिति । सकृत्प्रवृत्तायाः किमवगुण्ठनेन इति न्यायात् । ( या स्त्री सकृत् अवगुण्ठनं विना आपणमार्गादौ प्रवृत्ता तस्याः पुनर्गमने अवगुण्ठनेन नास्ति कर्तव्यं प्रथमप्रवृत्तिवत् –इति न्यायाक्षरार्थः ) । शा. १।४।४।४ पृ. ६८. * 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायः । एकहायनीशब्दस्यापि क्रियासंबन्धात् स्वातन्त्र्यमपनीतम् । तत्र पदान्तरसंबन्धेऽपि 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन' इतिवत् तस्य तावत्येव श्रुतिपीडा । वा. ३।१।६।१२ पृ. ६८९, * 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायः । 'बुद्धौ संनिहितेन शक्यते साकाङ्क्षः शब्दः संबन्धयितुमिति । नैतदेवम्, यो हि असंबध्यमानः अनर्थको भवति स संबध्यते नान्यः' इति **भाष्यम्** । अत्र **वार्तिकम्**– यावद्यावत् हि पदार्थो विशेष्यते तावत्तावत् श्रुतेः स्वरसभङ्गः । तेन 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इत्येवं एकेन केनचित् विशेषितः परेणापि विशेष्यतां इत्यभ्युपगन्तव्यं इति । ३।१।६।१२ पृ. ६९० । या हि कामिनी सकृत् परपुरुषे प्रवृत्ता सा पुनरपि प्रवर्तेतैव, तथा सति लोका मा द्राक्षुरिति किं जवनिकया अवगुण्ठनेन कार्यम् ? नावगुण्ठनस्य प्रयोजनमित्यर्थः । के. * '**सकृद्भक्षिते कृतः शास्त्रार्थः**' । द्रव्यैकत्वात् ऐन्द्रवायवग्रहे 'सकृद्०' इति न्यायेन सकृत् भक्षणे प्राप्ते 'द्विरैन्द्रवायवस्य भक्षयति' इति वचनात् द्विर्भक्षणम् । वा. ३।५।५।१८. * '**सकृद्वाऽऽरम्भसंयोगात्०**' ( ९।१।१०।३५ ) इति न्यायेन 'कृतस्य यावज्जीविकस्य प्रयोगस्य अर्थेन आदौ कृता आरम्भणीया' इति (पूर्वपक्षे) । **भा. १२।२।६।१९.**

* सक्तुषु ( पयःसक्तुधानादिषु ) प्रदेयधर्मा नानुष्ठेयाः ज्योतिष्टोमे । ९।४।१२।४५–५०. **मीको.** पृ. १८२४ 'ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सक्त्वधिकरणम्** । सक्तुन्यायः । 'सक्तून् जुहोति' इति द्वितीया न प्राधान्यबोधिका ॥

**द्रव्योपदेश इति चेत् । २।१।४।११॥**

**भाष्यम्**— इति चेत् पश्यसि, द्वितीयादर्शनात् प्रधानभूतमत्र द्रव्यमिति । नैतदेवम् । गुणभूतेऽपि द्वितीया भवति । तथाहि दृश्यते 'सक्तून् जुहोति', 'मारुतं जुहोति', 'एककपालं जुहोति' इति ।

**वा**— ( द्वितीयाविभक्तिविचारः ) परस्तु आह ( पूर्वपक्षी ) '**अन्वयव्यतिरेकाभ्यामुपकारानुसारिता । शेषत्वस्य. द्वितीया तु प्राधान्यव्यभिचारिणी ॥**' तन्नाम प्रमाणं युक्तं यदैकान्तिकम् । अनैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् 'सक्तून् जुहोति' इति । तथा 'प्रयाजशेषेण हवींष्यभिघारयति' इति अन्तरेणापि द्वितीयां आज्यप्राधान्यं दृष्टम् । अतो 'व्रीहीनवहन्ति' इत्यत्र उभयसंभवेऽपि उपकारदर्शनकृतमेव द्रव्यप्राधान्यम्, न द्वितीयाकृतम् । न च तत् संमार्गप्रोक्षणादिषु अस्ति, इतीहापि द्वितीयया द्रव्यमेवोपदिश्यतामिति ।



**न तदर्थत्वात् लोकवत् तस्य च शेषभूतत्वात् । १२ ॥**

**भाष्यम्**— न गुणभूतेऽपि द्वितीया । एवं हि अभियुक्ता उपदिशन्ति 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' इति । न च लोके गुणभूते क्वचित् द्वितीयां पश्यामः । यदपि च 'तण्डुलानोदनं पच' इति, ओदनार्थं तण्डुलान् संस्कुरु इति ईप्सिता एव तण्डुलाः । 'बल्वजान् शिखण्डकान् कुरु' इति बल्वजा एव तेन आकारेण संबद्धा ईप्सिता इति तत्राभिप्रायः । लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुः, न वैदिकः । या लौकिके जुहोति इति प्रयोगे द्वितीया, शक्यते तत्र वक्तुं ईप्सिततम एव स प्रयोग इति तण्डुलानद्य जुहुधि, तण्डुलानद्य होमेन संबन्धय इति । लोके भवति हि बहुप्रकारा विवक्षा, अन्यायश्चानेकार्थत्वम्, तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत । वेदे तु कथं द्वितीयानिर्दिष्टे गुणभाव इति, द्वितीयानिर्देशात् प्राधान्यमेव अवगच्छामः । एवमवगते प्राधान्ये बलीयसा हेतुना नास्ति प्राधान्यमित्यवगम्यते । कुतः ? न होमस्य केनचित् प्रकारेण सक्त्वर्थता अवकल्पते । कुतः ? सक्तूनां निष्प्रयोजनत्वात् । न सक्तूनामन्यत् प्रयोजनं दृश्यते श्रूयते वा । यदि वा होमः, तदर्थो होमोऽपि निष्प्रयोजनः । अथ आरादुपकारको होमः, ततः प्रयोजनवान् । ज्योतिष्टोमप्रकरणे पाठात् गम्यते प्रयोजनवत्ता, नाप्रयोजन इति शक्यते वक्तुम् । प्रयोगवचनेन हि स आकाङ्क्ष्यते । ननु सक्तूनामपि प्रकरणपाठात् प्रयोजनवत्त्वं भविष्यति । को वा ब्रूते नेति, प्रयोजनवत्त्वेव, प्रयोजनवत्त्वं तु होममभिनिर्वर्तयताम्, नान्येन प्रकारेण । ननु तेऽपि प्रयोगवचनेन आकाङ्क्ष्यन्ते । तदुच्यते । न द्रव्यं तेन आकाङ्क्ष्यते । इतिकर्तव्यतां हि स आकाङ्क्षति । होमश्च इतिकर्तव्यता, न द्रव्यम् । ननु होमे कृते सक्तुभ्यः अदृष्टं निष्पत्स्यते । नास्त्यत्र प्रमाणम् । ननु द्वितीया विभक्तिः प्रमाणम् । नहि । द्वितीया विभक्तिः होमस्य सक्त्वर्थतां ज्ञापयति । न सक्तवः प्रयोजनवन्त इति । भवेद्धोमः सक्त्वर्थः, होमसंबद्धाः सक्तवः स्युरिति । भवन्ति होमे कृते सक्तवो होमसंबद्धाः । न होमस्य सक्त्वर्थता निष्प्रयोजनेषु सक्तुषु घटते । सक्त्वर्थतावचनं तु न पुरुषस्योपकारकम्, न क्रतोः, तदनर्थकमेव स्यात् । न च तद्वचनात् शक्यमन्यत् कल्पयितुम् । स एव द्वितीयान्तः सक्तूनां होमस्य च संबन्धं करोति । संबन्धे च सति 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' ( ६।१।१ ) इति भूतत्वात्, गुणभावे च तृतीया । तेनोच्यते 'तृतीयायाः स्थाने द्वितीया' इति । तेन तदर्थत्वात् होमार्थत्वात् सक्तूनां न प्राधान्यं द्वितीयासंयोगेऽपि । एवं सति अर्थवद्वचनम् । न चार्थवत्त्वे सति आनर्थक्यमित्युच्यते । तस्य च पुरोडाशादेः यागादिषु शेषभावः, तेन प्रयोजनवन्तः, तत्र संस्कारो नानर्थकः । न स दृष्टोपकारायेति चेत्, अदृष्टार्थो भविष्यति । अदृष्टोऽपि संस्कारोऽस्ति इत्यवगम्यते लोके । यथा ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते इत्युच्यते । लोके च नानुपपत्तिः ।

प्रयोजनं च वरुणप्रघासेषु श्रूयते 'शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वा' इति । प्रकृतौ नानावृक्षस्रुक्संमार्गसाध्यं अपूर्वं इति नानावृक्षस्रुच उत्पादयितव्याः संमार्गार्थत्वेन यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तः, शमीमय्य एव हिरण्मय्यो वा संमार्ष्टव्याः । तथा, यत्र बाणवन्तः परिधयः तत्रापि पालाशा उत्पादयितव्याः पूर्वपक्षे । सिद्धान्ते बाणवन्त एव संमार्ष्टव्याः । अवभृथे च पूर्वपक्षे उत्पादयितव्योऽग्निः संमार्गाय, सिद्धान्ते च आपः संमार्जनीयाः । तथा, षट्त्रिंशत्संवत्सरे 'तरसमयाः पुरोडाशाः सवनीयाः' इति श्रूयते । तत्रापि पिष्टमयः पुरोडाश उत्पादयितव्यः पर्यग्निकरणार्थत्वेन पूर्वपक्षे, सिद्धान्ते मांसमया एव पर्यग्निकर्तव्या इति ।

**वा**—तिष्ठतु तावत् प्रयोगः । किं कारणम् ? '**आचारत्वात् प्रयोगो हि स्मृत्या सर्वत्र बाध्यते । विवक्षाऽनेकधा चात्र स्मरणे त्वेकरूपता ॥**' यदि हि आचारस्य ऐकरूप्यं भवेत् नैव स्मृतयः प्रयत्नेन धार्ये-

रन् । स एव तु संकीर्णत्वादस्फुटः स्मरणेन प्रतिपाल्यते । स्मर्यते च द्वितीयायाः प्राधान्यमर्थः, 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' इति । तथा लोकवेदयोः प्रयुज्यते 'घटं करोति' 'व्रीहीनवहन्ति' इति । यानि च लोके व्यभिचाराशङ्कास्थानानि तान्युदाहरति (भाष्यकारः) 'तण्डुलानोदनं पच, बल्वजान् शिखण्डकान् कुरु, तण्डुलानद्य जुहुधि' इति । तण्डुलैः बल्वजैः इति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते तन्नूनं तृतीयासमानार्था सा इति गम्यते । तत्रोच्यते । '**सर्वे पाकादिसंबन्धे द्व्यथाकारास्तण्डुलादयः । प्राधान्यांशमुपादाय द्वितीया तत्र वर्त्स्यति ॥**' यदा पदार्थान्तरभूतौदनशिखण्डकसाधनत्वेन तण्डुलबल्वजा विवक्ष्यन्ते तदा तृतीयान्तपदभाजो भवन्ति । यदा तु भोजनयोग्यौदनावस्थापरिणतिरूपेण तण्डुलाः, मार्दवोत्पत्त्यर्थं च शिखण्डकाकारेण बल्वजा दृश्यन्ते, तथा वेदवाक्यावगतगुणभावाश्च ते द्रव्यसाधनके अग्निहोत्रे सुखण्डितास्तिछन्तो रमणीयत्वात् कस्याश्चित् ब्राह्मण्याः स्वकर्मशोभादर्शनार्थं तण्डुला होमसंबन्धित्वेन अभिप्रेताः । सा एवं प्रेष्यति गुणकामा वा 'यजमान तण्डुलानद्य जुहुधि' इति, तदा द्वितीयार्थभाक्त्वं भवति । 'भवति हि लोके बहुप्रकारा विवक्षा' इति । गुणभूतेऽप्यर्थे केनचित् कारणेन कश्चित् प्राधान्यांशो विवक्ष्यते, तथा प्रधानभूतेषु गुणांशः, कदाचिदुभौ कदाचिन्नोभौ । न च यद्विवक्ष्यते तत् शब्देनाभिधातव्यं इत्यस्ति प्रमाणम् । विवक्षासंपत्त्यर्थं तु लक्षणाद्युपायान्तराश्रयणम्, न स्वार्थत्यागः । तस्मात् प्राधान्यमेव द्वितीयार्थः । (इति **द्वितीयाविभक्तिविचारः**) ।

(**अथ सक्तुन्यायः**–) कथं तु सक्त्वादिषु गुणत्वमिति । तदुच्यते । '**प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः । विरोधात्तेन संबन्धो गुणभावस्तु लक्ष्यते ॥**' द्वितीया तावत् कर्मत्वं प्रधानरूपं आत्मशक्त्या वदति । तत्तु इह बलवता कारणान्तरेण विरुध्यमानत्वात् नाश्रीयते । तेन तु कारकविशेषात्मकत्वात् यत् कारकसामान्यं अविनाभूतं लक्ष्यते तदविरुद्धत्वात् विवक्ष्यते । तत्र एतावानर्थो विज्ञायते, होमस्य कारकं सक्तव इति । न च सामान्यं निर्विशेषं व्यवहारक्षमम्, इति विशेषापेक्षायां करणत्वं भविष्यति, 'द्रव्याणां कर्मसंयोगे' (६।१।१) इति भूतभव्यसमुच्चारणन्यायात् ।

कथं पुनः सक्तुप्राधान्यविवक्षा विरुध्यते ? तत्राह '**भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते । सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥**' यस्य हि द्रव्यस्य क्वचित् उपयोगो निर्वृत्तो भविष्यति इति वा अवधार्यते, तत् संस्कारार्हत्वात् कर्म प्रति प्राधान्यं प्रतिपद्यते । यत् पुनर्नोपयुक्तम्, नोपयोक्ष्यते वा, तस्य संस्कारो निष्प्रयोजनः, इति तद्विधानवाक्यानर्थक्यप्रसङ्गः । ते चामी सक्तवः, न होमात् प्रागुपयुज्यन्ते, नोर्ध्वं भस्मसाद्भावात्, भस्मविनियोगवचनाभावाच्च । तत्र समस्तं वाक्यं अनर्थकं भवतु, द्वितीया वा लक्षणावृत्त्या इति (चिन्तायां) स्थितत्वात् वेदप्रामाण्यस्य लक्षणा ग्रहीतव्या । मुख्यार्थप्रयोगो हि औत्सर्गिकत्वात् अपवाददर्शनेन भ्रान्तित्वं प्रतिपद्यते । सर्वत्रैव लक्षणाश्रयणं आनर्थक्यप्रसङ्गनिमित्तम्, अन्यथा मुख्यार्थोपपत्तेः । तेन विरोधात् सक्तुसाधनकहोमविधानं प्रकरणसंबन्धि गृह्यते । 'ननु सक्तूनामपि' इति (भाष्यं) होमवन्तः सक्तवोऽपि ज्योतिष्टोमस्य उपकृत्य अर्थवन्तो भविष्यन्ति इत्याह (पूर्वपक्षत्वेन) । सिद्धान्तवादी तु छलेन होमसाधनीभूतानामेव अर्थवत्त्वमभ्युपगच्छति 'को वा ब्रूते नेति' (इति भाष्येण) । सर्वत्रैव च '**द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्तनाद्विना । न प्रयोजनमस्त्यन्यत् कथंभावाद्यसंगतेः ॥**' यथा होमः क्रियात्मकत्वात् 'किं' इत्यपेक्षमाणः प्रधानकथंभावेन इत्थं अनुग्राहकत्वेन गृह्यते, नैवं द्रव्यम् । न च तस्मात् अदृष्टकल्पना, क्रियानिर्वर्त्यत्वादपूर्वाणाम् । यत्रापि तावत् द्रव्यं साक्षात् फलाय चोद्यते, यथा 'गोदोहनेन पशुकामस्य' इति, तत्रापि अन्यप्रयोजनक्रियाद्वारमन्तरेण नापूर्वं भविष्यति, किमुत यदा, न कस्यचिदङ्गत्वेन सक्तवः श्रूयन्ते । न च किंचित् कल्पनाप्रमाणमस्ति । द्वितीयेति चेत्, 'नहि' इति (भाष्यं) उत्तरम् । द्वितीया हि सक्तूनां प्राधान्यं वदन्ती होमं तदर्थं कुर्यात्, न 'सक्तुभ्योऽपूर्वं' इति



प्रतिपत्तिम् । तेन द्वितीयाप्रसादात् भवेत् होमः सक्त्वर्थः, 'कथं नाम होमव्याप्ताः सक्तवः स्युः' इति, नान्यस्मै प्रयोजनाय, अश्रवणात् । ते चामी 'भवन्ति होमे कृते सक्तवो होमसंबद्धाः' (भाष्यं) इति प्रागेव प्रयोजनलाभात् पर्यवसिता द्वितीया, निष्प्रयोजनेष्वपि, होमं प्रति प्राधान्यमात्रेण कर्मत्वसिद्धेः । तत्र सिद्धे वाक्यार्थे, पश्चात् न पुरुषस्य क्रतोर्वा उपयुज्यन्ते इति ज्ञात्वा, तद्वचनाद्वा अदृष्टं कल्प्येत, प्राधान्यज्ञानं वा भ्रान्तिरिति । तत्र आह (भाष्यकारः) 'न च तद्वचनात् शक्यमन्यत् कल्पयितुम्' इति । (तत्र) प्राधान्यविवक्षैव न्याय्या । ततश्च तृतीयार्थसिद्धिः इति मत्वा महाभाष्यकारेण (उपवर्षेण– मु. पृ. ६३२) उक्तं 'तृतीयायाः स्थाने द्वितीया' इति । तेन वैषम्यं होमसंमार्गयोः, सक्तूनां निष्प्रयोजनत्वेन तदर्थत्वात्, पुरोडाशादेश्च अन्यशेषभावेन पर्यग्निकरणादिसंस्कारार्हत्वात् । दृढे च शास्त्रार्थे अवस्थिते दृष्टोपकाराभावेऽपि अदृष्टकल्पना भविष्यति । लोकेऽपि अदृष्टार्थाः संस्कारा आचाराद्गम्यन्ते यथा 'ग्रामान्तरादागतानां' (इति भाष्यं) शान्त्यर्थं अग्निलवणदध्यक्षतप्रभृतेः शिरस उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च (दृष्ट काढणें इति भाषा) । न चास्य अनुपपत्तिः, आचारप्रामाण्यात् । तेन अदृष्टार्थानामपि तुल्यश्रुतित्वात् सिद्धो गुणभावः (सक्तूनाम्) ।

ननु एवं सति सर्वत्र प्रयोजनवत्ताकृतमेव द्रव्यप्राधान्यम्, इति न वक्तव्यं 'तुल्यश्रुतित्वात्' (२।१।४।१० सू.) इति, दर्शयितव्यं वा यत्र प्रयोजनवत्तानिरपेक्षं द्वितीयाकृतमेव प्राधान्यम्, केवलतृतीयाकृतो वा गुणभाव इति । तदुच्यते । प्राधान्ये तावत् 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र लिङ्गात् इन्द्रार्थत्वावगतेः गार्हपत्यैकवाक्यत्वात् च तत्साधनकेन्द्रोपस्थानप्रसङ्गे केवलद्वितीयाकृतमेव गार्हपत्यप्राधान्यम् । तथा 'सूक्तवाकेन प्रस्तरं' इति उभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् । तेन विभक्तिभिरेव अङ्गाङ्गिभावे अभिधीयमाने निष्प्रयोजनत्वं अपवादः, न तु प्रयोजनसदसद्भावेन अङ्गाङ्गित्वं इति विवेकः । (इति **सक्तुन्यायः**) ।

प्रयोजनं तु अधिकरणस्य न सम्यगनुमन्यन्ते । तथाहि, '**स्रुङ्मात्राद्यनुवादेन शमीमय्यादिचोदितम् । ज्ञायतेऽङ्गप्रधानार्थं पूर्व–सिद्धान्तपक्षयोः ॥**' प्रियङ्गवो हि उत्पत्तिवाक्यात् केवलप्रधानार्थत्वेन ज्ञायमानाः, युक्तं यदङ्गेषु न भवन्तीति । शमीमयत्वादि तु स्रुगादिमात्रानुवादेन विधीयमानं 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' (३।७।१।२) इत्यनेन वाक्यसंयोगबलीयस्त्वात् प्रकरणगम्यप्रधानार्थत्वबाधेन अङ्गप्रधानार्थं विज्ञायते । न चात्र विशेषणं किंचिदुपात्तम्, येन प्रधानगतस्रुगादिमात्रप्रतीतिः स्यात्, सदपि वा उद्दिश्यमानविशेषणत्वात् न विवक्ष्येत । तस्मात् पूर्वपक्षे अपि यानि च प्रधानसंबन्धीनि स्रुगादीनि, यानि च आरादुपकारकसंमार्गादिसंबन्धीनि तानि सर्वाणि शमीमयीत्वादियुक्तानि इत्ययुक्तो नानाःवृक्षस्रुक्संमार्गः ।

स्यादेतत् 'मुख्यार्थो वाऽङ्गस्याचोदितत्वात्' (३।८।१९।३६) इति वैकृतविशेषाणां केवलप्रधानार्थत्वात् न इह अङ्गप्रधानार्थता भविष्यति इति । तदयुक्तम् । '**वाक्योपात्तप्रधानार्थसंबन्धो यत्र गम्यते । तत्रैतद् वक्ष्यते, नात्र तादृशश्च प्रतीयते ॥**' 'यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्याः' इति हि प्रधानैरेव काम्यशब्दोपात्तैः उपांशुत्वं संबध्यमानं अङ्गस्याचोदितं इति वक्ष्यते (३।८।१९।३५–३६) । न चात्र तादृशः प्रधानसंयोगः इति वैषम्यम् ।

ननु च आतिदेशिकत्वात् अप्राप्तावस्थेषु अङ्गेषु शमीमयीत्वाद्युपदिश्यमानं प्रधानमात्रार्थं भवेत् । नार्हत्येवं भवितुम् । एवं हि स्थास्यति '**क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह । संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम् ॥**' अवश्यं च अनेकार्थविध्यनुपपत्तेः स्रुगादीनि अनुवदितव्यानि । तेन प्रत्यक्षोऽपि सन् उपदेशः अतिदेशं तावत् प्रतीक्षते । तत्र यावता कालेन प्रधानस्रुगादीनि

प्राप्नुवन्ति तावतैव अङ्गस्रुगादीन्यपि इति अविशेषः। किंच '**यदि प्रधानमात्रेण शमीमय्यादिसंगतिः। प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादिस्रुचस्ततः॥**' य एव हि संमार्गस्रुचां वर्जनोपायः तेनैव प्रयाजादिस्रुग्वर्जनमपि प्राप्नोति। न चैतदिष्टं युक्त्यभावात्। यद्यपि च किंचित् प्रधानमात्रसंबन्धकारणं भवेत् तथापि सौमिकवेदिदक्षिणान्यायेन प्रसङ्गसिद्धेः न प्राकृतजात्युपसंग्रहो युज्यते।

किंच '**परिध्यादेश्च कार्येण स्वरूपमुपलक्षितम्। अतत्कार्यस्य संमार्गः परिधेर्न कृतो भवेत्॥**' परिधिः इति अग्निपरिधानार्थं द्रव्यमुच्यते। तथा होमाद्यर्था जुह्वादयः। तत्र संमार्गस्य 'अर्थाभिधानकर्म च०' (४।१।११।२६) इति अप्रयोजकत्वमपि शक्यं वक्तुम्। ततश्च बाणवत्परिधिश्रवणे यदि तावत् अपरिहितानेव पलाशादीन् संमार्ष्टि, अपरिधय एव संमृष्टा भवेयुः। अथ तानपि परिदधीत, ततः कृते परिधाने प्राकृतार्थता न स्यात्। न च तुल्यार्थानां समुच्चयो दृष्टः। तस्मान्न परिध्यन्तरमुत्पादनीयम्। अवभृथस्य तु अपूर्वत्वात् यावदुक्तमात्रपर्यवसायिनः साङ्गस्य च अप्सु चोदितस्य केन संमार्गः अग्निर्वा प्राप्नोति येन उत्पाद्येत। तस्मात् अप्रयोजनान्येतानि।

तस्योदाहरणं तु एकं सत्यम्। तत्र हि 'मांसं तु सवनीयानाम्' (३।८।२२।४३,४२ भा.) इति सिद्धान्तात् पुरोडाशमात्रेण असंबध्यमानं तरसमयत्वं असवनीयत्वात् न पर्यग्निकरणपुरोडाशेन संबध्यते। नहि सवनीयाङ्गे सवनीयशब्दप्रयोगः सवनसंबन्धिविषयत्वात्। सवनीयाङ्गस्य च असवनार्थत्वात् तत्रापि तु व्रीहिमयत्वं दुर्लभम्। 'व्रीहिभिर्यजेत' इति प्रधानपुरोडाशमात्रेण तेषां संबन्धात्। एवं तर्हि अनियतद्रव्यकता पर्यग्निकरणपुरोडाशस्य इति प्रयोजनम्। तदप्ययुक्तम्। तथा सति कांस्यभोजिन्यायेन तरसमयपर्यग्निकरणेनैव शास्त्रार्थोपपत्तेः सिद्धान्तार्थसदृशकर्मप्रसङ्गः। तस्मात् कथंचित् प्रकृतौ व्रीहिमयपुरोडाशग्रहणात् तत्साधनत्वं शास्त्रकृतत्वात् प्राप्नोति इति वक्तव्यम्। तत्रापि तु एकहायनीन्यायेन अप्रयोजकत्वात् तदभावे लोपप्रसङ्गः। तेन एतदेव (लोपः) प्रयोजनं इत्याश्रयणीयम्। अनियतद्रव्यकत्वं वा। न चात्र कांस्यभोजिन्यायः संभवति, मांसेन पुरोडाशत्वानभिव्यक्तेः। सवनीयपुरोडाशे कथमिति चेत्, नैव तत्र पुरोडाशत्वमिष्टम्। वचनात् अपुरोडाशात्मकमेव मांसं पुरोडाशस्य स्थाने विधीयते यथा धानादीनाम्। नहि कथंचिदपि मांसेन धानादयो भवन्ति। अतश्च प्रैयङ्गवन्यायेन प्रधानमात्रे मांसेन पुरोडाशो निवर्तितः। पर्यग्निकरणं तु पुरोडाशसाधनकमेव। स तु अनियतद्रव्यको वा कथंचिद्वा प्रकृतिदर्शनेन व्रीहियवद्रव्यकः इति स्थितम्।

एतानि च प्रयोजनानि स्रुक्संमार्गस्य प्रकृतौ बहुसाधनत्वात् कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात् पात्रविवृद्धावपि पशुचातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे, सिद्धान्ते तु सर्वाः, संस्कारस्य प्रतिप्रधानवर्तित्वात्। तथा पशुन्यायेन विवक्षितैकसंख्यत्वात् एक एव संमार्ष्टव्यः परिधिः पूर्वपक्षे। सिद्धान्ते तु सर्वे। यत्र च परिधिविवृद्धिः तत्र विशेषः। एवं एकपुरोडाशे पर्यग्निकरणम्, सर्वपुरोडाशे च वक्तव्यम्। तथा 'विशये लौकिकः स्यात्' (७।३।१२।३०) इत्येवं 'अग्निमुपनिधाय स्तुवते' इतिवत् लौकिकाग्निसंमार्गकरणं पूर्वपक्षे। सिद्धान्ते तु तस्याप्रयोजनत्वेन असंस्कार्यत्वात् सर्वेषां आहवनीयादीनां इति विशेषः।

शा— सक्तूनां तु भूतभाव्युपयोगरहितत्वात् न समीहितत्वमस्ति इति समीहितसाध्यापेक्षिण्यां भावनायां भाव्यत्वेन अन्वयस्य अयोग्यत्वात् साधनत्वमेव लक्षणया द्वितीया अभिधत्ते। स्रुगादीनि तु क्रतुसाधनत्वरूपेण ईप्सितत्वात् योग्यान्येव समीहितभाव्यापेक्षिण्या संमार्गभावनया अन्वेतुं इति साध्यत्वमेव श्रुतिबलेन गृह्यते। तत्र दृष्टोपकाराभावेऽपि अदृष्टसंस्कारकल्पनात् सिद्धं गुणकर्मत्वम्।

[ संमार्गाधिकरणान्तर्गतोऽयं न्यायः। ]

त्रि— 'द्वितीयां सक्तुवद्भङ्क्त्वा नियोगेऽन्वीयतां क्रिया। साक्षादिति न मन्तव्यं दृष्टस्यात्रोपपत्तितः॥'

* सक्त्वधिकरणे (२।१।४) अनीप्सितत्वस्य द्वितीयावाच्यत्वनिषेधः। सु. पृ. १०८७.



**सक्तुन्यायः। साहस्री. ८७३.**

* **सक्तुन्यायः**। 'सक्तून् जुहोति' इत्यादौ द्वितीयायाः करणत्वे प्रयोगात् करणत्वमपि द्वितीयार्थं इति चेन्न। साध्यत्वमेव द्वितीयार्थः। ... अत एव यत्र नोपयोगः क्लृप्तः, न वा कल्पयितुं शक्यः यथा सक्तुषु, तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैव अदृष्टार्थं विधानम्। न च अनीप्सितकर्मत्वेन अपि अन्वयोपपत्तेः न करणत्वलक्षणा इति वाच्यम्। तथा सति अदृष्टोपकारकस्यापि भावनायां कर्मत्वेन अन्वयावश्यंभावे तस्य द्विकर्मकत्वापत्त्या उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेः। अतः सक्तुकरणकहोमस्य आरादुपकारकत्वम्। भाट्ट. २।१।४, * 'चतुरो मुष्टीन् निर्वपति' इति। नात्र द्वितीयान्तार्थद्वयस्य उद्देश्यतया निर्वापं प्रति कर्मत्वम्, अपि तु द्वितीयया **सक्तुन्यायेन** करणत्वं लक्षयित्वा प्रातिपदिकशक्यार्थद्वयस्यैव संख्यापरिमाणरूपस्य निर्वापभावनान्वयित्वम्। १०।२।२७. * 'चतुरो मुष्टीन् निर्वपेत्' इत्यत्र द्वितीया सक्तुन्यायेन भङ्क्त्वा चतुर्भिर्मुष्टिभिर्निर्वपेत् इति संख्यामुष्ट्युभयविशिष्टनिर्वापविधिः। **सोम.** ५।२।२. * 'तप्ते पयसि' इत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन करणत्वलक्षणा। **भाट्ट.** ८।२।४, * 'योऽदाभ्यं गृहीत्वा सोमाय जुहोति' इति द्रव्यदेवताविशिष्टयागान्तरविधानमेतत्। अदाभ्यपदेन हिंसानर्हसोमाख्यद्रव्यस्य अंशुपदेन च निर्यासद्रव्यस्याभिधानात्। द्वितीया चोभयत्र सक्तुन्यायेन। देवता तु एकत्र सोमः अन्यत्र च प्रजापतिः। २।३।९, * 'यवाग्वा जुहोति' इत्यत्र यवाग्वास्तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः। तथात्वे यवाग्वा उपयोगाभावेन होमवाक्ये एव सक्तुन्यायेन विनियोगभङ्गाङ्गीकारः। ५।१।२, * 'सुवर्णं हिरण्यं भार्यम्' इति। कृत्यप्रत्ययलक्ष्या एकैव अत्र भावना। तस्यां चावश्यकत्वात् आर्थवादिकस्य फलस्यैव भाव्यत्वं न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात्। अतः सक्तुन्यायेन विनियोगभङ्गात् सुवर्णहिरण्यविशिष्टधारणमेव अर्थकर्मतया विधीयते। ३।४।१२. * 'सोमेन यजेत' इत्यत्र न सोमविशिष्टयागविधिः। तथात्वे उत्पत्तिशिष्टस्य सोमाख्यस्य लताद्रव्यस्य अभिषवादिसंस्कारैः विनाशप्रसङ्गेन तद्वाक्येषु सक्तुन्यायेन विनियोगभङ्गापत्तिः। पूर्वपक्षे इदम्। **कौ.** २।२।६।१७. * **सक्तुन्यायस्य स्वरूपम्**— 'भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते। सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥' इति। **वा.** २।१।४।१२ पृ. ४११. * सक्तुन्यायस्य स्वरूपम्— 'सक्तुप्राधान्यस्य द्वितीयोक्तस्यापि असंभवाद् बाधः' इति। **सु.** पृ. ६३२.

* **सक्तुवत्** साधनान्तरं अधिकरणापादानादि लक्षयिष्यति। **वा.** ३।२।२।३.

* **सगुणात्** अपि प्रतिनिधेर्विगुणोऽपि मुख्य एव वरम्। **वि.** ६।३।१९. * **सगुणस्य** अपि निर्गुणदेवताके कर्मण्यपि विनियोग उपपद्यते। 'पीवोऽन्नां रयिवृधः' इत्यादेः। **सोम.** १।२।१ पृ. ५.

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात्। १०।४।१८।३६॥**

अग्नीषोमीयपशुपुरोडाशस्य स्विष्टकृति 'अग्निं यजति' इति गुणस्य स्विष्टकृत्त्वस्य लोपः श्रूयते। तथा च स्विष्टकृतः अग्नेः सगुणस्य सतः गुणलोपे गुणस्य लोपे श्रूयमाणे सति निगमेषु मध्ये यावदुक्तं तावत् स्यात्। यागे गुणलोपः श्रुतः इति यागे एव गुणलोपः न तु त्यागे अनुब्रूहि इत्यादौ गुणलोपः। यागादन्यत्र तु स्विष्टकृच्छब्दो वक्तव्यः। इति पूर्वः पक्षः।

**सर्वस्य वैककर्म्यात्। ३७॥**

अग्नीषोमीयपशुपुरोडाशस्य स्विष्टकृति 'अग्निं यजति' इति गुणस्य स्विष्टकृत्त्वस्य लोपः श्रूयते स सर्वस्य स्विष्टकृन्निगमस्थस्यापि गुणो लुप्येत। ऐककर्म्यात्। एकमेवेदं कर्म स्विष्टकृद्यागतदङ्गात्मकम्। 'अग्निं यजति' इति प्रयोगवचन एष शब्दः। तस्मात् सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत। अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्याग एव। तस्मात् सर्वत्र गुणलोपः। इति **सिद्धान्तः**। **के.**

* **सगुणधात्वर्थविधिः** प्रत्यक्षविधिः । बाल. पृ. २२.

* ‘**सगोत्रा** न परिणेया’ अयं स्मृतिकल्प्यः प्रतिषेधः । बाल. पृ. २९.

* **संकरजातानामपि** च पुनः उत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते । तत्र तु एतावन्मात्रमागमिकं प्रत्येतव्यम्, नहि अयं पुरुषेयत्तानियमः लौकिकप्रमाणगम्यः । वा. १।२।१।२ पृ. १०९.

* **संकर्षे** ‘व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवैरेव यजेत आ व्रीहिभ्यः’ इतिवाक्यमुदाहृत्य किमनेन आग्रयणाभ्यासो विधीयते दर्शपूर्णमासयोर्वा द्रव्यनियमः इति संदिह्य आग्रयणप्रकरणे पाठात् यजेस्तद्विषयत्वप्रतीतेः व्रीह्याग्रयणेन इष्ट्वा पुनः व्रीह्याग्रयणेन यजेत इति आग्रयणाभ्यासविधिरयं इति ‘व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्य इत्याग्रयणाभ्यासः प्रकरणात्’ इत्यनेन सूत्रेण पूर्वपक्षयित्वा अभ्यासविधौ प्राप्ते कर्मणि अभ्यास–द्रव्यरूपानेकगुणविधानेन वाक्यभेदापत्तेः, कर्मान्तरविधौ च गौरवापत्तेः, प्रकृताग्रयणप्रकृतित्वेन उपस्थापिते दर्शपूर्णमासाख्ये कर्मणि व्रीहियवयोः विकल्पेन प्राप्तयोः यवव्रीह्याग्रयणावधिव्यवस्थाविधानार्थं एतद् वाक्यं इति ‘दर्शपूर्णमासयोर्वाऽन्तरालसंयोगान्नह्यन्यत् प्रत्यक्षं विद्यते’ इति सूत्रेण सिद्धान्तयिष्यते । सु. पृ. १४५–१४६. * यथा पत्नी तुल्यवत् श्रूयते इति **संकर्षे** वक्ष्यति । भा. १२।२।३।११, * स्विष्टकृद्विकारो वनस्पतिः इति संकर्षे वक्ष्यते । १०।४।१६।३२.

* ‘प्रकृतित इत्याश्मरथ्यः’ ( संकर्ष. ४।२।१ ) इति **संकर्षचतुर्थद्वितीयपादाधिकरणन्यायेन** अनुवचनत्वसामान्यात् नित्यसामिधेन्यनुवचनप्रकृतित्वस्य काम्यानुवचनेषु सत्त्वेन चोदकतः प्राप्तानां ऋचां प्राप्तिः । कु. ३।१।११।२२.

* **संकल्पः** ज्योतिष्टोमस्यैव, न दीक्षणीयादीनाम् । टुप्. १०।१।२।४. * **संकल्पे** वैकल्पिकाङ्गाद्युल्लेखः कर्तव्यः । सु. पृ. ९९६.

* **संकल्पापरपर्यायप्रक्रमवशेन** वैकल्पिकानामप्यङ्गानां यदेव संकल्पितं तदेवानुष्ठेयं इति नियमात् तदतिक्रमे कर्मैक्येऽपि प्रायश्चित्तमविरुद्धम् । ... कर्मोपक्रमकाले एव वैकल्पिकानामङ्गानां ‘इदमेव करिष्यामि’ इत्येवं अङ्गीकरणीयत्वात् अङ्गीकृतसंकल्पस्य अङ्गस्य अतिक्रमे प्रायश्चित्तविधिर्युक्तः । सु. पृ. ९९६.

* सकृत् **संकल्पितस्य** पुनः संकल्पयितुमशक्यम् । वा. ३।२।१२।३२.

* **संकृतीनां** नाराशंसो द्वितीयः प्रयाजः । भा. ६।६।१।१, वा. १।३।७।१७.

* **संकोचः** नाम ( श्रुतेः ) श्रुतिजनिताविशेषप्रत्ययस्य विशेषे अवस्थापनम् । सोम. ३।१।१०. * स्वत एव आकाङ्क्षितः **संकोचः** अन्यानुसारेण क्रियमाणोऽपि न तत्कृतो बाधः । पराक्रमः. २९।१.

* **संक्रमयज्ञः** । ‘संक्रमयज्ञेन यजेत अन्नाद्यकामः’ इति गुणविशिष्टौ दर्शपूर्णमासावेव । तयोरेव गुणात् फलं न कर्मान्तरम् । भा. २।३।४।५–११.

* **संक्षेपः** । ‘तस्माद् विस्तरसंक्षेपावर्थमार्गानुभावपि । व्याख्यायामुपयुज्येते इति कश्चित् क्वचित् कृतः ॥’ वा. ३।१।१।१ पृ. ६५१.

* **संख्या** आख्याताभिहिता कर्त्रैव संबध्यते न कारकान्तरेण । मीन्या. * संख्या आख्यातवचनस्याङ्गभूता प्रतीयते । यथा पशुमानय इत्युक्ते, एक एवानीयते । पशू इति द्वौ, पशून् इति बहव आनीयन्ते । भा. ४।१।५।१३. * संख्या उद्दिश्यमानस्य विवक्ष्यते उत नेति संशयः । नेति सिद्धान्तः । वा. ३।१।७।१३–१५. * संख्या उपादेयपश्वादिगता विवक्षिता ‘पशुना यजेत’ ‘पशुमालभेत’ इति । वि. ४।१।५. * संख्यैव कर्तृविशेषणम् । धात्वर्थस्य पूर्वापरीभावलक्षणव्यापारत्वेऽपि अन्योत्पादानुकूलत्वलक्षणक्रियात्वाभावेन कर्त्रनाक्षेपकत्वात् आक्षेपकत्वेऽपि वा धात्वर्थज्ञानानन्तरमेव प्रत्ययवाच्यसंख्याज्ञानात् कर्तृज्ञानस्य च संख्याज्ञानसमकालधात्वर्थाविनाभावस्मृतिव्यवहितत्वेन संख्याज्ञानोत्तरकालत्वात् कर्तृविशेषणत्वानुपपत्तिः । संख्यान्वयाच्च प्राक् कर्तृज्ञानाभ्युपगमे



ज्योतिष्टोमे संख्यानपेक्षस्य कर्तुः आवि(धि?)कारावगमात् एकस्य अशक्तौ अङ्गान्तरवत् एकत्वस्यापि त्यागोपपत्तेः यजमानानेकत्वसंभवेन द्वित्वबहुत्वयुक्तप्रतिपदुत्कर्षसिद्धान्तभङ्गप्रसङ्गात् संख्यैव कर्तृविशेषणं न तु कर्ता संख्याविशेषणम् । सु. पृ. १४०१. * संख्या कर्मभेदकं प्रमाणम्, वैदिक उपदेशः शब्दप्रमाणम् । बाल. पृ. ८. * संख्या कर्मभेदिका । ‘व्यासज्ज्यसमवायाच्च संख्या भिन्ना गुणान्तरात्’ । संख्या युगपदनेकोत्पद्यमानसमवेता पूर्वासंभवद्गुणान्तरात् भिद्यते । वा. २।३।१३।२६ पृ. ६२०. * संख्या । क्वचिदाख्याते कर्ता वाच्यः, क्वचित् कर्म इति व्यवस्थावत् क्वचित् कर्त्रन्विता संख्या वाच्या क्वचित् कर्मान्विता इति व्यवस्थाऽपि शब्दशक्तिवशायुक्ता । सु. पृ. १४००. * संख्या तु एषामेव ( शब्दान्तरादीनां पञ्चानां ) अन्यतमेन उत्पत्तिपरत्वे विधेरवगते सति अनेकोत्पत्तिपरतां विधेर्बोधयन्ती स्ववाक्यविधेयानामेव कर्मणां मिथोभेदमावहति इति वेदितव्यम् । शा. २।१।१. * संख्या तु व्यासज्ज्यवृत्तित्वेन एकनिष्ठत्वाभावात् संख्यान्तरावरुद्धेष्वपि कर्मसु उपजनापायेन उपपत्तेः स्वविशिष्टकर्मोत्पत्तिमाक्षेप्तुं अशक्नुवन्ती प्रमाणान्तरेण कर्मोत्पत्तौ अवधारितायां अनेकत्वमात्रं बोधयति । सु. पृ. ५४१. * संख्या द्रव्यगता भिन्नद्रव्यैरेव पूर्यते न तु एकद्रव्यावृत्त्या । वि. १०।५।६. * संख्या द्वित्वादिः व्यासज्यवृत्तिः । सु. पृ. १६४. * संख्या धर्मभेदे प्रमाणम् । मणि. पृ. १३. * संख्या पृथक्त्वनिवेशिनी । तत्र द्रव्याणां पृथङ्निष्पन्नरूपाणामेकक्रियया संबध्यमानानां युज्यते संख्या, ‘दश घटा आनीयन्ताम्’ इति । वा. ५।३।१।२. * संख्या यथा ‘ग्रहं संमार्ष्टि’ इत्यत्राविवक्षिता, तथा ‘स्वर्गकामः’ इत्यत्र लिङ्गं अविवक्षितं सिद्धान्ते इति । शा. ६।१।३. * संख्या विधीयमाना योग्यत्वात् परिच्छेदकतया विधीयते । सु. पृ. ९६. * संख्या शब्दार्थत्वात् विवक्षिता ‘पशुना यजेत’ इत्यत्र । भाट्ट. ४।१।६. * संख्या संख्यान्तरं न निवर्तयति । अष्टाचत्वारिंशत्संख्यापरिच्छिन्नेष्वक्षरेषु अवयवभूते द्वे चतुर्विंशतिसंख्ये । यस्य दश गावः तस्य द्वौ पञ्चकौ गवाम् । तस्मान्न संख्या संख्यान्तरं निवर्तयति । भा. ८।३।६।१५. * संख्या । सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते । टुप्. १२।१।१।१, * संख्या हि केनचिदेकेन अवान्तरधर्मसंयोगेन प्रवर्तते । १०।७।३।११. * अविवक्षितेऽपि वचने या संख्या अनूद्यते, तेन वचनेन भवितव्यम् । यथा लक्षणत्वेनापि उच्यमाने ब्राह्मणजातीयो न हन्तव्य इति । न द्विवचनान्तेन निर्देशो भवति, ब्राह्मणौ न हन्तव्यौ इति । भा. १०।३।११।४०, * उत्पत्तिस्था हि संख्या भेदिका भवति, ‘तिस्र आहुतीः’ इत्यादिषु । वा. २।२।५।१६ पृ. ५०७. * कर्तृगतैव संख्या आख्याते गम्यते नान्यगता । सु. पृ. १३९९. * क्रियाविधौ च तदाक्षिप्तकर्तुः परिच्छेदापेक्षायां तत्परिच्छेदकत्वेन संख्या विवक्षिता । सोम. ६।२।२. * न च संख्या क्रियाकारकविशेषाक्षेपसमर्था इत्युक्तम् । वा. ३।४।४।१३ पृ. ९२९, * न च पृथक्त्वेन विना संख्यायाः आत्मलाभः संभवति । न च अभ्यासपूरिता संख्या समञ्जसा भवति । अगत्या हि सा नियतपरिमाणप्रयाजोपसदादिविषयत्वेन आश्रयिष्यते । २।२।७।२१ पृ. ५२२. * न च संख्या संख्यान्तरे वर्तते । गुणो हि संख्या । न च गुणा गुणेषु वर्तन्ते । भा. ८।३।६।१४, * पृथक्त्वनिवेशिनी हि संख्या । यथा अष्टौ घटा इति । १०।५।६।१७, * यदि एका च षट् च समुच्चीयेरन् संख्यान्तरं सप्तसंख्या उत्पद्येत । १२।४।५।९. * या हि जुहोतिपदे संख्या, कर्तुः खलु सा भविष्यति न भावनाधात्वर्थयोः । वा. २।३।७।२१ पृ. ५२२. * येषामेकेन केनचित् संबन्धः तेषां तमेकं संबन्धिनमपेक्ष्य संख्या निविशते । स तत्र एकः संबन्धी वक्तव्यः, प्रकृतो वा ग्रहीतव्यः । अर्थाद्वा य आपद्येत स उपादेयः । भा. १०।३।११।४४, * साधनं परिच्छिन्दती संख्या कर्मणि अङ्गीभवति । ८।३।६।१५. * **संख्यया** कर्मभेदः ( २।२।७।२१ ) इत्यनेन न्यायेन द्वादश यागा एते ( द्वादशाहगताः ) । टुप्. ९।१।८।३२, * ‘संख्यया कर्मभेदः’ ( २।२।७।

२१ ) इत्यनेन न्यायेन संख्याशब्दः द्वादशाहे द्वादशयागान् प्रतिपादयति । ११।४।५।१८. * ‘ संख्यया कर्मभेदः ’ ‘ तिस्र आहुतीर्जुहोति ’ इति । वा. २।२।५।१६ पृ. ५०७. * संख्यया विहितानां मन्त्राणां समुच्चयः अग्निचयनादौ । १२।३।१४।३०. मीको. पृ. ५१ ‘ अग्निचयने संख्यया० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * इह च प्रकृताः नानाजातीयाः । तेषामन्यतमः **संख्यया** संबद्धः स्यात् । यथा ‘ शतमाम्यां दीयताम् ’ इति एकजातीयानां शतम्, न भिन्नजातीयानाम् । यथा द्रव्यं गुणः कर्म अवयव इत्येवमादीनाम् । भा. १०।३।११।४४. * प्रमाणान्तरेण उत्पत्तिविषयत्वेन अवगतस्य विधेः अनेकविषयत्वमात्रं संख्यया अवगम्यते । सु. पृ. ९६१. * **संख्यायाः** इदमेव स्वाभाव्यं यदुत भिन्नेषु इतरेतरयुक्तेषु वर्तते । योऽन्यो गुणः स इतरेतरनिरपेक्षैरेव संबध्यते एकैकेन च प्रधानेन परस्परनिरपेक्षेण वशी क्रियते । संख्यायामुभयमपि नास्ति, अतोऽयं गुणोऽपि सन् इतरगुणविसदृशः । टुप्. ५।३।१।२. * संख्यायाः उद्देश्यगताया अविवक्षा । वृ. ३।१।७।१२–१४. * संख्यायाः एकत्वातिरिक्तायाः अपेक्षाबुद्धिहेतुकत्वेन संख्येयसमूहापेक्षत्वम् । सु. पृ. १६४. * संख्यायाः गुणादिसापेक्षाया अपि शब्दान्तरादिभिः सह परिगणनम्, लिङ्गस्य क्रमप्रकरणादिसापेक्षस्यापि श्रुत्यादिभिः सहैव न विरुध्यते । सोम. २।१।१ पृ. ९५. * संख्यायास्तिङुक्तायाः कर्त्रन्वये एव योग्यत्वं न कारकान्तरान्वये इति शब्दशक्तिकृतयोग्यत्वायोग्यत्वव्यवस्था । सु. पृ. १४०२. * संख्यायाः द्वादशशतरूपायाः निवेशः दक्षिणान्तर्गतगोष्वेव ज्योतिष्टोमे । दक्षिणाऽधिकरणम् । १०।३।११।३९–४९. * संख्यायाः द्वित्वादिरूपायाः अपेक्षाबुद्धिर्जनिका । अपेक्षाबुद्धेः अभिव्यञ्जकत्वमेव इति मते तु द्वित्वादीनां नित्यतैव । मणि. पृ. १७, * संख्यायाः पदार्थान्तरत्वेन समवायेन उत्पत्त्यभावेन समवायिकारणं नावश्यकम् । ‘ अभावौ द्वौ ’, ‘ चतुर्विंशतिर्गुणाः ’ इति प्रतीत्या अभावगुणादिनिष्ठतया स्वरूपसंबन्धेन उत्पत्तिः । पृ. १७. * संख्यायाः प्रत्ययार्थत्वम् । सु. पृ. ७३९. * संख्यायाः सर्वत्र परिच्छेदात्मकत्वम् । वा. ३।४।४।१३ पृ. ९२०. * संख्यायाः स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्यत्वरूप-पृथक्त्वनिवेशितत्वात् भेदकत्वम् । कौ. २।२।८।२१. * एकत्वादि**संख्यायाः** अपि तिबाद्युक्तायाः सामानाधिकरण्यसंबन्धेन भावनायामेवान्वयः । न तु साक्षात्संबन्धेन कर्त्रादौ । ‘ भावप्रधानं ’ इति स्मृतिसंकोचे प्रमाणाभावात्, कार्यकारणभावादिकल्पनागौरवापत्तेश्च । तत्रापि कर्त्राख्यातस्थले स्वाश्रयसमवेतत्वसंबन्धेन, कर्माख्यातस्थले च स्वाश्रयभूतकर्मवृत्तिफलप्रयोजकत्वसंबन्धेन । ‘ चैत्रेण ओदनः पच्यते ’ इत्यत्र हि ‘ चैत्रेण पाकेन ओदनः क्रियते ’ इतिविवरणानुसारात् कृतिरेव आख्यातार्थः । पाकस्य करणत्वं चैत्रस्य च कर्तृत्वं प्रतीयते, आत्मनेपदेन च लक्षणया कर्म, उक्तानुशासनानुरोधात् । फलं तु विक्लृत्यादि न कस्यापि पदस्यार्थः, तस्य अन्यलभ्यत्वात् । अत एव ‘ फलं आत्मनेपदस्यार्थः कृतिस्तृतीयार्थः ’ इत्यपि अपास्तम् । ‘ चैत्रः पचते ’ इत्यादौ कृतावपि शक्तेः आवश्यकत्वेन अनेकशक्तिकल्पने गौरवात्, ‘ चैत्रेण ओदनः क्रियते ’ इति तृतीयातः कृतेः पृथक् विवरणाच्च । अतश्च तत्र कृतेरेव आख्यातार्थत्वात् तस्यां एकत्वान्वयः स्वाश्रयीभूतौदनवृत्तिविक्लृतिरूपफलजनकपाकजनकत्वसंबन्धेन नानुपपन्नः ।

एवं भावाख्यातेऽपि ‘ चैत्रेण सुप्यते, गगनेन स्थीयते ’ इत्यादौ आख्यातेन ‘ स्वापः क्रियते ’ इति विवरणात् भावनैवोच्यते । स्थीयते इत्यत्रापि आश्रयत्वम् । न च तत्र लक्षणायां प्रमाणाभावः । ‘ चैत्रो जानाति ’ इत्यादौ विशेषणीभूतधात्वर्थान्वयस्येव ‘ गगनेन स्थीयते ’ इत्यादौ विशेषणीभूतधात्वर्थान्वयस्यापि लक्षणाबीजत्वोपपत्तेः । न च तत्र धात्वर्थविशेष्यक एव बोधः । भावनाप्रकारकबोधत्वावच्छिन्नं प्रति आख्यातपदज्ञानत्वेन कारणत्वस्य अन्यत्र क्लृप्ततया ‘ समिधो यजति ’ इत्यादौ प्रथमान्तपदाध्याहारस्येव धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्य अन्यत्र क्लृप्ततया तन्निर्वाहार्थं भावाख्यातेऽपि आश्रयत्वलक्षणोपपत्तेः । तत्रापि ‘ भावप्रधानं ’ इति स्मृत्या प्रत्ययार्थप्राधान्यस्मृत्या च भावनाया एव प्राधान्यम् । अनुशासनबलाच्च आख्यातेन कर्तृकर्मलक्षणावत् भावरूपधात्वर्थस्य अपि गुणत्वेन लक्षणा । तथा च गगननिष्ठं स्थितिमत् स्थित्याश्रयत्वं इति शाब्दबोधः । द्वितीयवारं स्थितिबोधस्तु अनुवादः साधुत्वार्थः । अतः स्थीयते इति एकत्वमपि स्वाश्रयीभूतभावरूपधात्वर्थनिरूपितत्वसंबन्धेन आश्रयत्वादौ एव अन्वेति, ‘ भावप्रधानं ’ इति स्मृतिसंकोचे प्रमाणाभावात् । न चैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः, प्रयोगाभावसहकृतानुशासनबलेन एकवचनेनैव द्वित्वादिलक्षणात् । अत एव ‘ उष्ट्रासिका आस्यन्ते ’ इति महाभाष्यकारवचनात् भावेऽपि बहुवचनं काचित्कम् । ( इवशब्दप्रयोगमन्तरेणापि इवार्थावगतिर्भवति । तदयमर्थः– यादृशानि उष्ट्राणां अनेकप्रकाराणि आसनानि, तादृशानि देवदत्तादिभिः क्रियन्ते इति । एवं च इह आसिका इति द्वितीयाबहुवचनान्तं क्रियाविशेषणत्वेन कर्मत्वात् । केचिदिह कर्मणि लकारमिच्छन्ति । एवं तु विवक्षान्तरे भवत्येव । भाष्यकारेण तु भावेऽपि लविधाने बहुवचनमुपपादितम् ) । रहस्य. पृ. ४५–४६. * **संख्यायां** कर्तृगतायामेव तिङः अभिधानशक्तिः नान्यगतायाम् । सु. पृ. १३९९. * ‘ संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते ’ इति न्यायः । ‘ पचति देवदत्तः ’ इत्यत्र कर्तृत्वं तावत् भावनयैव बोधितम् । याऽपि संख्या साऽपि तिङा । किमन्यदवशिष्यते यदर्थं विभक्तिरुत्पद्येत । वा. ३।४।४।१३ । सिद्धान्ते अनिष्टतृतीयापत्तिः ‘ संख्यायां० ’ इत्यादिवार्तिकोक्तन्यायनिरस्ता । सु. पृ. १४५५. * संख्यायां परस्यामुपादीयमानायां अपरा संख्या अनुगृह्यते । भा. ३।७।१२।२७, * नोत्तरस्यां **संख्यायामुपात्तायां** पूर्वाः संख्या उपात्ता भवन्ति । ८।३।६।१५.

**Ж संख्यासु तु विकल्पः स्यात् श्रुतिविप्रतिषेधात् । १२।४।५।९ ॥**

‘ एका देया ’, ‘ षड् देया ’, ‘ द्वादश देयाः ’ इत्येवमादयः आधाने दक्षिणाविधयः । तत्र दक्षिणासंख्यासु विकल्पः स्यात्, न समुच्चयः । समुच्चये हि संख्याश्रुतीनां परस्परं विप्रतिषेधः प्राप्नोति । यदि एका च षट् च समुच्चीयेरन् तदा संख्यान्तरं सप्तत्वं उत्पद्येत । तत्परिच्छिन्नेन च द्रव्येण परिक्रयः कृतः स्यात् । तत्र एकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात् । तस्मात् आधाने दक्षिणानां विकल्पः । के.

**Ж संख्याधिकरणम् । तिस्र आहुतीर्जुहोति इति संख्यया कर्मभेदः ॥**

**पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् । २।२।७।२१ ॥**

**भाष्यम्**— अस्ति वाजपेयः ‘ वाजपेयेन स्वाराज्यकामो यजेत ’ इति । तत्र प्राजापत्याः पशवः ‘ सप्तदश प्राजापत्यान् पशूनालभते । सप्तदशो वै प्रजापतिः । प्रजापतेराप्त्यै श्यामास्तूपरा एकरूपा भवन्ति, एवमेव हि प्रजापतिः समृद्ध्यै ’ । तत्र संदिह्यते किं सप्तदशैतानि कर्माणि, अथ सप्तदशपशुगुणकमेकं कर्मेति । किं तावत् प्राप्तम् ? एकं कर्मेति । कुतः ? प्रजापतये सप्तदश पशवः संकल्प्यन्ते । किमेकं यागमभिनिर्वर्तयितुम्, उत बहूनिति संशये, एकमिति न्याय्यम् । यो हि बहून् यागान् कल्पयति, कल्पयत्यसावेकम् । तत्र एकस्मिन्नेव परिक्लृप्ते सप्तदशानामेव पशूनां परिकल्पनमुपपन्नं भवति । केन च द्वितीयादीन् यागानवकल्पयेम । एवमल्पीयसी अदृष्टानुमानप्रसङ्गकल्पना भवति । तस्मादेको यागः सप्तदशभिः पशुभिर्निर्वर्तयितव्य इति । एवं प्राप्ते, ब्रूमः । संख्यया कर्मभेदो भवेत् । पृथक्त्वे पशूनां सति सप्तदशसंख्या निविशेत । तच्च पशूनां पृथक्त्वं बहुषु यागेषु अवकल्पते, नैकस्मिन् । कथम् ? एकादशभिरवदानैरसौ यागो निर्वर्तयितव्यः इत्येवं चोदकः प्रतिदिशति । तानि चैकस्मादेव पशोः अवाप्यन्ते । तत्र द्वितीयादेरालम्भो नावदानसंपादनाय भवितुं अर्हति । एकमालभ्यमानमन्वालभ्येरन्नदृष्टार्थायापरे । तथा सति, अतदर्थत्वान्न ते प्राजापत्या भवेयुः । तत्र प्राजापत्यानिति श्रवणमुपरुध्यते । तेन एकस्मिन् पशौ पृथक्त्वनिवेशिनी सप्तदशसंख्या नावकल्प्येत । बहुषु यागेषु बहुभिरेवावदानगणैः प्रयोजनम् । तेन सप्तदशभ्यो यागेभ्यः

सप्तदश पशूनुपाददीरंस्तत्र संख्यासामञ्जस्यं भविष्यति । तस्मात् सप्तदश यागाः ।

ननु एकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते, वचनात् । नैतदेवम् । पशुषु हि सा संख्या श्रूयते, नावदानगणेषु । अवदानानि हवींषि यागसाधनानि न पश्वाकृतिः । सा ह्यवदानप्रकृतिद्रव्यं विशिंषन्ती प्रकृतौ प्रधानस्योपकृतवतीति विकृतावप्यवदानप्रकृतिद्रव्यं विशिंषन्ती प्रधानस्योपकरिष्यति । तत्र च पशोः सप्तदशसंख्या विकारिका, नावदानगणस्य । तस्मादेकस्मै अवदानगणाय एकः पशुरालब्धव्यः प्राप्नोति । तत्र सप्तदशसंख्या नोपपद्यते । एवमेवावकल्पिष्यते, यदि शृङ्गाभिप्राया वर्णाभिप्राया रूपाभिप्राया वाऽभविष्यन् सप्तदश पशवः श्वेतः कृष्णो रोहित इत्येवमादयस्तेषामन्यतमो गृह्यते इति । अथवा तूपराः शृङ्गिण एकशृङ्गा इत्येवमादयस्तेषामन्यतम इति । ते हि श्यामास्तूपराः एकरूपाः श्रूयन्ते । तदेषु बहुषु यागेषूपपद्यते नैकस्मिन् । तस्मात् सप्तदश यागा इति । प्रयोजनम्— एकस्मिन्नष्टे दुष्टे कृत्स्नः पशुगण आवर्तेत । एकमालभ्यमानमन्वालभेरन् पूर्वपक्षेऽदृष्टार्थम् । सिद्धान्त एक एव पशुरावर्तते । न हि कर्मभेदे पशुः पश्वन्तरमाकाङ्क्षतीति ।

वा— गतोऽभ्यासापवादप्रसङ्गः । संख्यया भेदः इदानीं अभिधीयते । तत्र ‘ तिस्र आहुतीर्जुहोति ’ ‘ द्वादश द्वादशानि जुहोति ’ इत्येवमादयः उत्पद्यमानकर्मसामानाधिकरण्यचोदिताः स्वसंख्यायुक्ता उदाहर्तव्याः । सकृज्जुहोतिश्रवणात् कर्मैकत्वे सति संख्यानुग्रहोऽभ्यासेन भविष्यतीति प्राप्ते, अभिधातव्यम् । उत्पद्यमानस्यैवात्र होमस्य संख्यासंबन्धः श्रूयते नोत्पन्नस्य पश्चात् ‘ एकादश प्रयाजान् ’ इतिवत् । न च पृथक्त्वेन विना संख्याया आत्मलाभः संभवति । न चाभ्यासपूरिता संख्या समञ्जसा भवति । अगत्या हि सा नियतपरिमाणप्रयाजोपसदादिविषयत्वेन आश्रयिष्यते । संभवति चात्र प्रागनवधारितसंख्यान्तरत्वात् स्वरूपत एव भेदः । तस्मात् कर्मपृथक्त्वनिवेशिन्येवैषा नाभ्यासपृथक्त्वाश्रयाऽऽश्रयितव्या । तथा च वक्ष्यति ‘ आगमेन वाऽभ्यासस्याश्रुतत्वात् ’ (१०।५।६।१६) इति । ननु च जुहोतिशब्दात् प्रथममेको होमोऽवधारित इत्यभ्यासेन पूरणमेव प्राप्नोति । न, जुहोतिशब्दाभिहितस्य कर्मणोऽसत्त्वभूतत्वेनासंख्यत्वात् । या हि तत्र जुहोतिपदे संख्या, कर्तुः खलु सा भविष्यति न भावनाधात्वर्थयोः । तत्र सकृदाम्नानवशात् अर्थादेकसंख्यं होममुत्प्रेक्षितुमारभमाण एव स्ववाक्यश्रुतया संख्यया वार्यमाणस्तत्परिच्छिन्नमेवाङ्गीकुर्वन् स्वरूपभेदं सर्वत्र प्रतिपद्यते । तस्मात् कर्मभेद इति । यत्तु भाष्यकारेण ‘ सप्तदश प्राजापत्यान् ’ इत्युदाहृतं तत्र द्रव्यगताऽपि संख्या कर्मभेदं करोतीत्येतद्दुष्प्रतिपादं प्रतिपादयामीत्यनेनैवाभिप्रायेण । कुतः संशयः ? उच्यते । ‘ **किं न्वयं तद्धितान्तानामेकशेषः कृतो भवेत् । किं वा कृतैकशेषाणां पश्चात्तद्धितसंगतिः ॥** ’ यदि प्रजापतिरेतेषां देवतेति कृतैकशेषेण सर्वनाम्ना निर्दिश्य तद्धितः क्रियते तत एक एव संबन्धः सप्तदशानां द्रव्याणामेकस्याश्च देवताया इत्येककर्मत्वम् । अथ तु प्रजापतिर्देवताऽस्येति प्राजापत्यश्च प्राजापत्यश्चेति सप्तदशकृत्व उच्चार्य प्राजापत्या इति सरूपैकशेषः क्रियते ततः सप्तदशैव द्रव्यदेवतासंयोगाः पृथक्प्रदर्शिता इति प्रतिसंयोगं यागानुमानात्कर्मभेदः । किं तावत्प्राप्तम् । एककर्मेति । कुतः ? ‘ **प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेत् ॥** ’ यो हि प्राजाप्रत्यः प्राजापत्यश्चेत्येवमेकशेषं करोति तेनोभयोः प्रकृतिप्रत्यययोरसावभ्युपगतो भवति । तस्य च निमित्तं बहुवचनान्यथानुपपत्तिः । न च तत्प्रातिपदिके बहुवचनमुपलभ्यते तेन तस्याप्येकशेषः क्रियते । न च तदेकशेषमन्तरेण प्रत्ययार्थस्य दर्शयितुं न शक्यते । विगृह्यमाणवेलायां सर्वनाम्ना कथ्यमानत्वात् । तस्मात् सकृत् श्रुत एव प्रजापतिर्बहुभिर्द्रव्यैः संबध्यते । किंच—

‘ **कर्माण्यश्रूयमाणानि तदपूर्वाणि चात्र मे । न कल्प्यानि भविष्यन्ति सिद्धेऽर्थे स्तोककल्पनात् ॥** ’ कृत्वाऽपि हि तद्धितान्तेनैव चैकशेषं न तावन्मात्रेण मुच्यते । पुनरदृष्टाश्रुतानि कर्माण्यपूर्वाणि च कल्पयितव्यानि । न च तानि यथेष्टं कल्पयितुं



लभ्यन्ते इत्युक्तं शब्दान्तराधिकरणे ( २।२।१ )। यन्मात्रेण विना चोदितद्रव्यदेवतासंबन्धानुपपत्तिस्तन्मात्रमेवादृष्टाश्रुतमर्थापत्त्या कल्पयितुं शक्यते नान्यत् । तेनाभ्यधिकं न लभ्यते । अवश्यं ह्येकादिक्रमेण सप्तदश कर्माण्यपूर्वाणि च कल्पयितव्यानि । तत्र प्रथमकल्पनेनैवानुष्ठानतन्त्रत्ववदगृह्यमाणविशेषत्वात्सर्वद्रव्याणि यागवन्ति जातानीति नोपरिष्टात् गन्तुं शक्यते । किंच— ‘ **न चान्यभेदेनान्यस्य भेदो भवितुमर्हति । हृदयाद्यवदानानां न भेदात्कर्म भिद्यते ॥** ’ यदि हि द्रव्यभेदात् क्रियाणां भेदः स्यात् ततो हृदयादिभेदेन द्र्यवदानभेदेनापि वा भेदः स्यात् । न च अर्हति भवितुम् । वक्ष्यति हि— ‘ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च ’ (६।३।३।१२) इति । प्रकृतौ च कृत्स्ने पशौ यागसाधनत्वेन चोदिते तथैवोत्स्रष्टव्ये प्राप्ते हृदयाद्येकादशावदानप्रकृतित्वेन पशुना यागः साधयितव्य इति वाक्यान्तरवशादवगम्यते । तेनासौ पशोर्धर्मो न यागस्य । इहापि सप्तदशानां यागसाधनत्वेऽवगतेऽतिदेशेन प्रत्येकं सर्वधर्माः प्राप्यन्त इत्येकोऽपि यागः सप्तदशावदानगणानतिदेशेन गृह्णन्न विहन्यते । तस्मादेकं कर्मेति प्राप्ते, उच्यते । ‘ **एककर्मत्वपक्षे स्यादेक एवात्र चोदकः । ततश्चैकगणप्राप्त्या न सर्वपशुसंग्रहः ॥** ’ न ह्येतदेतावत्येव वाक्यं पर्यवस्यति प्राजापत्यान् पशूनिति, किं तर्हि ? प्रकृतिवदित्यपरो वाक्यशेषः । एककर्मत्वे चात्र सवनीयः प्रकृतिर्भवेत् । तत्र च एकोऽवदानगणो यागस्य साधनमासीदित्यत्राप्येक एव प्राप्नोति । सोऽपि विवक्षितैकसंख्यपशुनिष्पन्न आसीदिति तादृगेव कर्तव्यः । ततश्चैकेनैव पशुना सिद्धत्वान्न पश्वन्तराणि प्रजापतिना संबध्यन्ते इति स्वपदोपात्तं बहुत्वं वाक्यप्राप्तं च सप्तदशत्वमुभयमपि नानुष्ठीयेत । यदा तु सप्तदश यागा इति बुद्धिः क्रियते तदा प्रतिकर्मावसायिभिश्चोदकैस्तावन्त एवावदानगणाः प्राप्यन्ते । तत्सिद्ध्यर्थं चाश्रुतानामपि सप्तदशानां पशूनामागमः क्रियते, किं पुनः श्रुतानामुपादानम् । ननु च प्रत्यक्षं यागैकत्वमुत्सृज्य न युक्तं आनुमानिकचोदकानुरोधेन नानात्वं कल्पयितुम् । पश्य । ‘ **यागोपदेशवेलायामेकानेकत्वकल्पना । तद्वशेनातिदेशश्च नोपदेशस्तदाश्रयः ॥** ’ उत्पत्तिवेलायां हि कर्मणामेकानेकत्वनिर्णयो भवति । उत्पत्तिश्च सर्वत्रोपदेशेन गम्यते नातिदेशेन । न ह्यनुत्पन्ने कर्मणि कथंभावो भवति । न च तस्मिन्नसत्यतिदेशः प्रवर्तते । तस्माच्चिरप्रवृत्तभेदाभेदज्ञानावसरभावित्वान्नातिदेशवशेन भेदज्ञानं युक्तम् । अत्रोच्यते—

‘ **संदिग्धे वाक्यशेषेभ्यो निर्णयः प्राक्समर्थितः ( १।४।१३ )। सामर्थ्याच्च तदत्रास्ति द्वयं निर्णयकारणम् ॥** ’ नात्रास्माभिः अतिदेशेनैव कर्मभेदोऽवधारितः । केन तर्हि ? प्राजापत्यानित्युपदेशेनैव । स तु द्रव्यदेवतायजिसद्भावमात्ररूपेण निर्णीतः । परिमाणं प्रत्यनिश्चितसामर्थ्यविशेषः प्रागुपदिष्टसंदिह्यमानैकशेषतद्धितपौर्वापर्यरूपः सन् अतिदेशात्मकेन वाक्यशेषेण तद्ग्रहणानुरूपसामर्थ्येन च निर्णीयते । यद्यपि च पश्चात्तनोऽतिदेशस्तथाऽपि सोऽत्र भविष्यतीत्यादित एव ज्ञात्वा तदविरुद्धार्थवृत्तित्वमुपदेशस्याध्यवसीयते । ततश्च यद्यपि प्रजापतिर्देवतैषामिति विगृह्य वाक्यार्थोन्नयनं प्रक्रम्यते, तथाऽप्यन्ते विसंवाददर्शनाद् भ्रान्त्या मयाऽसौ विग्रहः कृत इति न बुद्धिपूर्वकारी नाध्यवस्यति । न चात्रैष प्रकारोऽस्ति ( यश्चोपदेशस्यातिदेशानुरोधवृत्तित्वे संदिग्धत्वरूपो विरोधरूपश्च प्रकारः सोऽत्र नास्तीत्यर्थः ) येन अतिदेश एव पूर्वज्ञानानुरोधेन प्रवर्तेत । न ह्यसौ प्रकृतावपठ्यमानान् सप्तदशावदानगणानेकस्मिन् कर्मणि ज्ञापयितुं समर्थः । नाप्येकस्यैव गणस्य सप्तदश प्रकृतिद्रव्याणि प्रापयितुं समर्थः । न वाऽसौ संदिग्धो येनोपदेशान्निर्णीयेत । न च संदेहावस्थत्वादुपदेशेनैकान्तिकोऽतिदेशस्य विरोधो येनैकगणप्राप्तिर्बाध्येत । न ह्येककर्मत्वमुपदिष्टम् । सर्वत्र चाविरोधसंभवे विरोधो नाऽऽश्रीयते । शक्यते चात्र कर्मबहुत्वाभ्युपगमेनाविरोधः संपादयितुम् । तस्मादेवमुपदेशवचनं व्यज्यते । प्रजापतिर्देवताऽस्येति विगृह्य सप्तदशानां तन्त्रेणोच्चारणम् । ततश्चाऽऽग्नेयाग्नीषोमीयादिवदेव भिन्नैर्देवतासंयोगैर्भिन्ना यागाश्चोद्यन्ते । यदुक्तम्, भवति पशोरयं धर्म एकादशावदानं नाम । स चैककर्मत्वेऽपि प्रतिपशु

भेत्स्यत इति । तदयुक्तम् । कुतः ? '**न हि द्रव्यकथंभावादतिदेशोऽत्र कल्पते । कर्मोद्भूतः कथंभावः कर्मधर्मान्प्रतीच्छति ॥**' प्राजापत्यपशुयागेन भावयेत्कथमिति ह्यपेक्ष्यते, न पशुना कथमिति, त्यज्यमानत्वेन द्रव्यस्य ज्ञातप्रकारत्वात् । प्रकृतावपि च एकपशुनिष्पन्नैकादशावदानगणसाध्यत्वं यागधर्मो न पशोः । निष्फलत्वात् । तद्धर्मत्वपक्षे ह्यवदानैरसौ संस्क्रियेत । न च तेन प्रयोजनम्, विनाशितवात् । यागेन तु सिद्धेनार्थस्तत्संबन्धिनाऽपूर्वेण वेति सर्वमिदं तन्निर्वृत्तिप्रकारत्वेनाऽऽश्रीयते । तस्मान्नैको यागोऽनेकगणं समर्थो ग्रहीतुम् । न च तदग्रहेऽनेकपशुग्रहणम् । यद्यपि चावदानप्रकृतेरेकत्वं सप्तदशसंख्यया बाध्यत इति नानापशुनिष्पन्न एक एव गणो गृह्यतामिति बुद्धिर्भवेत् । तथाऽप्येकादश पशव उपयुज्येरन् सप्तदश । 'ननु एकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते' इति अनेकादृष्टकल्पनाभयात् पशुशब्देनावदानगणं यागप्रत्यासत्तेर्लक्षयित्वा तत्परिच्छेदार्था सप्तदशसंख्या विधास्यत इति मन्यते । नैतदेवम् । लक्षणाकारणाभावात् । न ह्यसति विरोधे लक्षणा युक्ता । तेन एतत्संकटमापद्यते– सप्तदश पशवः कर्तव्या एकेन चावदानगणेनैकपशुनिष्पन्नेनैको यागः साधयितव्य इति । न चैतत्कथंचिदनुष्ठानं शक्यम् । अथ अन्यत्रापि श्रुता संख्या अन्यत्रापि नीयते ततोऽपूर्वप्रत्यासन्नतरेषु वरं यागेष्वेव कल्पिता । न चाविरोधसंभवात् किंचिदपि चोदकस्य बाधनीयमित्युक्तम् । प्रमाणवशाच्चानेकादृष्टकल्पनाऽपि निर्दोषा । कृत्स्नवाक्यगमनिकार्थं शृङ्गाभिप्रायाद्युपन्यासः । एतदुक्तं भवति । ये सप्तदशवर्णादिभेदभिन्नाः पशवस्तेषां कश्चित्प्राजापत्यः कर्तव्य इति । तत्राऽऽह– 'ते हि श्यामास्तूपरा एकरूपाः श्रूयन्ते तस्मात् सप्तदश यागाः' इति । प्रयोजनं यद्यपि पूर्वपक्षवादिनो नाभिप्रेतं तथाऽप्येकस्यैव साक्षाद्यागसाधनत्वमितरे तत्संख्यासंपादनार्थमुपादीयन्ते, इत्येकस्मादवदातव्यम् । तद्विनाशे चेतरेऽप्यावर्तेरन् । अथवाऽर्धकृतेषु संस्कारेषु य एव नष्टस्तत्रैव समस्तानामावृत्तिः । ननु च यथैव सप्तदशसु यागेषु सह क्रियमाणेषु एकविनाशे सति 'अहर्गणे तु यस्मिन्नपच्छेदः' (६।५।२१।५६) इत्यनेन न्यायेनेतरेषु प्रतीक्ष्यमाणेषु स एवाऽऽवर्तते तथैव द्रव्यसाहित्येऽपि स्यात् । नैतदेवम् । तथाहि, सप्तदशसंख्यैकार्थसमवायित्वासङ्गियागसाधनत्वमिति तादृशस्यैव उपाकरणादिभिर्भवितव्यम् । तत्र यदेव द्रव्यं नष्टं तेनैव विना यथाश्रुतसाधनविनाशो जात इति सर्वे संस्कारास्तिष्ठत्स्वपि द्रव्येषु साधनात्प्रच्युता इति पुनरादित एव कर्तव्याः । तथा यस्याप्यभिनवानीतस्य ते क्रियन्ते तस्यापि ते साधनभूतस्य श्रुताः । न च सप्तदशत्वेन विनाऽस्य साधनत्वमस्तीति तत्सिद्ध्ये अवश्यमितरेऽपि अपेक्षितव्या इति । सिद्धान्ते तु अन्योन्यनिरपेक्षसाधनत्वशक्तियुक्तानां सहप्रयोगमात्रं क्रियत इत्युपपन्ना तन्मात्रावृत्तिः । नन्वेवं सति पूर्वपक्षन्यायेन स्तोत्रशस्त्रेषु 'तां चतुर्भिरादत्ते' इत्यादिषु चैकमन्त्रविनाशे समस्तावृत्तिः प्राप्नोति । न, तत्र प्रत्येकं साधनत्वे सति वचनेन समुच्चयाश्रयणात् । यत्कुर्वाणा हि ते मन्त्राः स्तोत्रादीनि साधयन्ति तत्रैषां प्रत्येकाकाङ्क्षानिवर्तनसामर्थ्यम् । अन्यथा ( संख्यायुक्तवचनविनियुक्तानां स्तोत्रादिमन्त्राणां प्रत्येकं यदि वाक्यार्थाभिधाननिष्पादनशक्तिर्वाभविष्यत्तर्हि विभज्यमानसाकाङ्क्षत्वे सत्येकार्थत्वापत्तेरेकस्तोत्रादिसाधनानामैकमन्त्र्यं स्यादित्यभिप्रायः ) ह्येकमन्त्रतैव स्यात् । भिन्नैरेव च प्रात्यात्मिकैर्मन्त्रकार्यैः संहत्य कार्यान्तरमारभ्यते न मन्त्रेषु व्यासङ्गि साधनत्वम् । पशूनां तु व्यासङ्गीत्युक्तम् । मन्त्रकार्याणां तर्हि संहत्यकारित्वादेकविनाशे समस्तावृत्तिः स्यात् । नैतदस्ति । साधनविनाशव्यतिरेकेण कार्यविनाशाभावात् । साधनेष्वेव पुरुषस्य व्यापार इति तद्विनाशानुरोधेनैवानुष्ठानमिति विशेषः ।

**शा**— गतः अभ्यासप्रसङ्गः । संख्यया भेद इदानीं अभिधीयते । अत्र कर्मोत्पत्तिवाक्यगता कर्मसमानाधिकरणा संख्या उदाहरणम् । यथा 'तिस्र आहुतीर्जुहोति', 'द्वादश द्वादशानि जुहोति'। तत्र एको होमो विधीयते बहवो वा इति संदेहः । आख्यातस्य सकृत् श्रुत्या एको होमः ( कर्म ) विधीयते इति पूर्वपक्षे प्राप्ते– '**यदि कर्म भवेदेकमेकः स्यात्**



**चोदकस्ततः । तेन चैकगणप्राप्तेः पशुसंख्या विरुध्यते ॥**'

**सोम**— अभ्यासस्थले आख्यातस्य पुनःश्रुत्या कर्मभेदे अपि संख्यास्थले न कर्मभेदः, पुनःश्रुत्यभावात् इति अभ्यासप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात् **संगतिः** ज्ञेया । **सूत्रार्थस्तु**– एकाधिकायाः संख्यायाः पृथक्त्वैकार्थसमवायात् तया कर्मभेदः स्यादिति ।

**वि**–– 'आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता । एकत्वं सकृदाख्यातात् संख्यावृत्त्या प्रयाजवत् ॥ आख्यातमात्रं नो मानं संख्यया बहुकर्मता । आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः ॥ पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् । विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः ॥ बहुत्वोपेतपशुभिर्दैवयोगादभिन्नता । रूपस्य तेन कर्मैक्यं संख्या नात्र क्रियागता ॥ देवतासंगतस्यैव तद्धितार्थस्य पश्चिमः । बहुत्वसंगमो रूपसंख्यया तत्क्रियाभिदा ॥'

**भाट्ट**— 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' ( तैसं. २।३।९ ) 'आज्यभागौ यजति' ( तैसं. २।६।२ ) इत्यादौ एकत्वातिरिक्तसंख्यायाः स्वाश्रयप्रतियोगिकस्वाश्रयवृत्तिभेदव्याप्यत्वेन न तावत् साक्षाद्भावनाभेदबोधकत्वम् । तस्या उक्तसंख्याश्रयत्वाप्रतीतेः । नापि धात्वर्थभेदबोधकत्वम्, तस्य पूर्वप्रमितैकत्वसंख्यावरुद्धत्वेन 'एकादश प्रयाजान् यजति' 'विराट्संपन्नमग्निहोत्रं जुहोति' इत्यादिवत् संख्यान्तरसंबन्धानुपपत्तेः एतत्संख्याया अभ्यासविषयत्वप्रतीतेर्न कर्मान्तरत्वम् । **इति प्राप्ते,**

नात्र संख्यान्तरावरोधः । सा हि न तावत्तिङुपात्ता, तस्याः कर्तृवृत्तित्वात् । न चानवच्छिन्नस्यान्वयानुपपत्तेः प्रथमातिक्रमे च कारणाभावात् धात्वर्थे एकत्वसंख्यानुमानमिति वाच्यम् । श्रुतसंख्यासत्त्वे कारणाभावस्यासिद्धत्वेन अनुमानाप्रसरात् । अत एव प्रयाजैकादशत्वस्थले यत्र प्रकृतौ अनुमानप्रसरः तत्राभ्यासविषयत्वम् । न चैवं विराट्संपत्तिवाक्यादावपि उत्पत्तिवाक्ये एकत्वानुमानानापत्तिः । तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधत्वनिर्वाहार्थं पूर्वप्रवृत्तस्यास्य अनुमानस्योत्तरकालीनेन संख्याश्रवणेन बाधायोगात् तस्याम्यासविषयत्वप्रतीतेः । प्रकृते तु शाब्दबोधात्पूर्वमेव इतरपदार्थवत् संख्याया अपि प्रतीतेः युक्तः शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति **कौस्तुभे** विस्तरः । अतश्च सिद्धं उत्पत्तिवाक्यगतकर्मसमानाधिकरणविधेयसंख्यायाः कर्मभेदबोधकत्वम् । भावनाभेदस्तु शब्दान्तरादेव ।

**प्रयोजनं**– वेदिप्रोक्षणमन्त्रवत् पूर्वपक्षे सकृन्मन्त्रः, सिद्धान्ते तदावृत्तिरिति ।

**भाष्यकारेण** तु 'सप्तदश प्राजापत्यान् पशूनालभते' ( तैब्रा. १।३।४ ) इति वाक्ये यागभेदाभेदचिन्ता कृता । तत्र यद्यपि देवतात्वविशिष्टद्रव्यविशेषवाची तद्धितः, यद्यपि च प्राजापत्यपद एवैकशेषः । तथाऽपि तदुत्तरविभक्त्युपात्तायाः संख्यायाः प्रकृत्यर्थविशेष्य एवान्वयः । न तु विशिष्टे । द्वौ अग्र इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम् । सोऽपि च न द्रव्ये देवतात्वान्वयोत्तरम् । तथा सति देवतात्वप्रतिसंबन्धिनि द्रव्ये साहित्यानवगमेन प्रत्येकवृत्तिपशुत्वावच्छिन्न एव तत्संबन्धप्रतीतेरनेकत्वावगमात् संबन्धभेदेनानेकयागादिकल्पनागौरवापत्तेः । अतो लाघवात् देवतात्वान्वयात्पूर्वमेव संख्याऽन्वयः । तदा हि बहुत्वावच्छिन्न एवैकदेवतासंबन्धादेकयागादिकल्पनाल्लाघवम् । न च प्रकृतिप्राप्तैकपशुनिष्पन्नैकादशावदानगणैकत्वानुरोधेन संख्यायाः देवतात्वान्वयोत्तरमन्वयः । पशुगतैकत्वस्य श्रुतसप्तदशत्वेन बाधात् अवदानगणैकत्वस्य च प्रकृतावार्थिकत्वेन इहानतिदेशात् । अतो देवतासंबन्धभेदे प्रमाणाभावात् न यागभेदः । अस्तु वा– समानाभिधानश्रुत्या बहुत्वान्वयात् प्राक् देवतात्वान्वयेन संबन्धभेदः । तथापि लाघवात् यागैकत्वम् । यथैव सिद्धान्ते अनेकयागाः सकृदनुष्ठानेनोपपद्यन्ते, तथा मन्मतेऽप्येकेन यागेनानेके द्रव्यदेवतासंबन्धाः । **इति प्राप्ते,**

समानाभिधानश्रुत्या देवतात्वस्यान्तरङ्गत्वात् संख्यान्वयात् सर्वान्वयित्वम् । पशूनां प्रत्येकं स्वत्वाश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मक–यागकरणत्वरूपहविष्ट्वस्य प्रत्येकवृत्तितया 'सूक्तहविषो' इत्यादिस्मृत्यनुसारेण हविष्ट्वावच्छेदकपशुत्वावच्छेदेनैव देवतासंबन्धोऽचि-

त्वाच्च । अतश्च बहुत्वानवच्छिन्नस्यैव प्रतिसंबन्धित्वात् प्रतिसंबन्धिताऽवच्छेदकस्य प्रत्येकवृत्तित्वेन प्रतिसंबन्धिभेदप्रतीतेः तद्भेदेन संबन्धभेदसिद्धिः । न च संबन्धभेदेऽपि यागैकत्वम् । संबन्धानामेकत्वानेकत्वाभ्यामुभयथाऽप्युपपत्तौ लाघवापेक्षया पश्वेकताप्रापिचोदकस्य शास्त्रतया बलवत्त्वेन नियामकत्वात् । अतस्तदनुरोधेन सर्वत्र यागभेदो भावनाभेदश्चेति सिद्धम् ।

प्रयोजनं च यागैकत्वे एकपशुविसरणेऽपि तस्य जातत्वात् न पुनर्यागकरणम् । सिद्धान्ते तदिति ।

**मण्डन**— 'मैत्री यजेर्भवति सप्तदशत्वसंख्या ।'
**शंकर**— 'संख्यया कर्मभेदोऽय ।'

* संख्याधिकरणम् (४।१।५।११–१६)। अग्नीषोमीयं पशुं इत्यत्र एकत्वसंख्या विवक्षिता । एवं 'अनड्वाहौ युनक्ति' 'कपिञ्जलानालभते' इत्यत्रापि। * संख्याधिकरणं अभ्यासाधिकरणस्य प्रत्युदाहरणम् । **कौ.** २।२।७।२०. * संख्याधिकरणं लिङ्गाधिकरणे अतिदिश्यते । **भा.** ४।१।६।१७. * संख्यायाः यथा न गुणान्तर्भावः तथा **संख्याधिकरणे** वक्ष्यते । **कौ.** २।२।३।३.

* **संख्याधिकरणन्यायः**— उत्पद्यमानकर्मसमानाधिकरणा विधेया संख्या कर्मभेदिका इति । **कौ.** २।२।७।२०. * **संख्याधिकरणन्यायस्य स्वरूपम्** (२।२।७।२१) – 'यत्र गुणद्वये अन्योन्यविरुद्धे कर्मोत्पत्तिवाक्योपात्ते भेदाद्वृत्त्योः अन्यतराक्षेपमन्तरेण कर्मान्वयोऽनुपपन्नः तत्र भेद एवाक्षिप्यते, नावृत्तिः' इति । **बाल.** पृ. ८९.

* **संख्याधिकरणपूर्वपक्षे** सप्तदशानां पशूनामेकसाधनत्वेन प्रत्येकं प्रत्येकं साधनत्वाभावात् इतिकर्तव्यतानाकाङ्क्षत्वम् । **सु.** पृ. ७९७.

* **संख्याधिकरणन्यायविषयाविषयविवेकनिरूपणम्** । संख्याधिकरणे (२।२।७।२१) 'सप्तदश प्राजापत्यान् पशूनालभते' इत्युदाहरणे एकस्य हृदयाद्येकादशावदानगणस्य प्रापको यश्चोदकः तद्बलात् कर्मभेदः प्रतिपादितः । एवं चेत् यत्र चोदको नास्ति तत्र तदपवादः, यथा नवमोपान्त्ये (९।४।१३।५१–५५) अश्वमेधे श्रुतं 'ईशानाय परस्वत आलभते, तान् पर्यग्निकृतान् आरण्यानुत्सृजन्ति' इत्युदाहृत्य प्रतिपादितं "'तान् पर्यग्निकृतान्' इति गुणवाक्येन तदन्ताङ्गरीतिविधानात् अपूर्वत्वम् ।" इति । ततश्च हृदयाद्येकादशावदानगणप्रापकस्य चोदकस्याभावात् एक एव यागः अनेकपशुद्रव्यकः प्राजापत्येषु पूर्वपक्षे इव । इयांस्तु विशेषः, तत्र आलम्भविशसनाद्यभावात् वपाहृदयादि अनिष्कास्यैव कृत्स्ना एव पश्ववयविनो देवतोद्देशेन त्याज्या इति । तदुक्तं सर्वप्रदानाधिकरणे (३।४।१८) मिश्रैः "त्यागमात्रेण होमाभावेऽपि 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इतिवत् देवतासंबन्धोपपत्तेः" इति (पृ. २७७)। अतश्च संख्याधिकरणे न्यायसुधाकृता आरण्येषु यो यागभेद उक्तः (पृ. ८१३) स भ्रान्त्यैव इत्युपेक्षितव्यः ।

एवं सति केचिदाक्षिपन्ति । एकादशे 'पञ्चशारदीयास्तयेति चेत्' इत्यत्र (११।२।११३।५२–५४) उदाहृतं 'वैशाख्याममावास्यां सप्तदश मारुतीस्त्रिवत्सा उपाकरोति, सप्तदश पृश्नीनुक्ष्णः, तान् पर्यग्निकृतान् (प्रोक्षितान्) इतरा आलभन्ते, प्रेतरानुत्सृजन्ति' इति । तत्र च सिद्धान्तितं 'पर्यग्निकृतवाक्येन तदन्ताङ्गरीतिविधिः, उक्षवाक्ये च मारुतपदानुषङ्गेण सप्तदशोक्षयागा विधीयन्ते इति त्रिवत्सायागैः सप्तदशभिः सह चतुस्त्रिंशत् कर्माणि इति । तदनुपपन्नम् । अत्रापि हि उक्षवाक्येऽपि एक एव यागः प्राप्नोति तदन्ताङ्गरीतिविधिना आरण्यवत् चोदकाभावेन प्राजापत्यन्यायाभावात् इति (५।२।१)। **अत्र ब्रूमः** । उक्षवाक्ये आख्याताश्रवणात् त्रिवत्सावाक्यश्रुतं 'उपाकरोति' इत्यनुषज्यते । तच्च अनेककर्मविधायि इत्युक्षवाक्ये अनुषज्यमानं अवैरूप्याय अनेकमेव कर्म विधत्ते । अन्यथा असकृदाम्नातं 'उपाकरोति' इत्याख्यातं त्रिवत्सावाक्ये सप्तदश कर्माणि विधत्ते उक्षवाक्ये चैकं कर्म विधत्ते इति वैरूप्यमापद्येतेति । **बाल.** पृ. ८६–८७.

* **संख्याधिकरणसिद्धान्तः** (२।२।७।२१)— 'सप्तदश प्राजापत्यान् पशून्' इति । 'विग्रहकाले तद्धितपदस्य विभक्त्यनन्वयेन अपरिपूर्णत्वात् तदर्थकथ-



नार्थविग्रहवाक्यान्तर्गतस्य सर्वनाम्नः पशुशब्दान्वयायोगेन तद्गतबहुवचनालोचनाऽभावात् तन्निमित्तैकशेषानवगतेः कृते च सर्वनामैकशेषे तस्य इतरेतरयोगवाचित्वात् सर्वनामपरामृष्टानां द्रव्याणां इतरेतरसापेक्षत्वेन असामर्थ्यापत्तेः तद्धितानुत्पत्तिप्रसङ्गात् तद्धितापेक्षत्वे वा इतरेतरयोगासंभवेन एकशेषानुपपत्तिप्रसङ्गात् इतरेतरयोगे च समुदायस्य देयतान्वयापत्तेः प्राजापत्यशब्दे बहुवचनानुपपत्तिप्रसङ्गात् द्रव्यस्वरूपापेक्षया वा कथंचित् बहुवचनोपपत्तौ विग्रहतद्धितयोर्द्वयोरपि एकशेषकल्पनापत्तेः सर्वनामैकशेषत्वायोगात् एकवचनान्तेन सर्वनाम्ना विग्रहावगतेः प्रत्येकं देवतान्वयावसायेन द्रव्यभेदात् यागभेदः इति सर्वनामैकशेषत्वनिरासेन सिद्धान्तोक्तिः संभवति । तथापि यत्र एकया चतुर्थ्या बहुवचनान्तपदोक्तानां पशूनां देवतान्वयः क्रियते तत्रापि यागभेदसिद्ध्यर्थं भाष्यकृता सिद्धान्तः (अन्यथा) उक्तः । (सु. पृ. ८१२) एकवचनान्तेनैव सर्वनाम्नो विग्रह्य तद्धितानामेकशेषत्वनिश्चयात् द्रव्यदेवतान्वयभेदेन यागभेदसिद्धिः इति सिद्धान्तः । **सु.** पृ. ८१४.

* **'संख्याऽभावात्'** १।१।६।२० ॥ अष्टौ गोशब्दा इति संख्याव्यवहाराभावात् एक एव नित्यः शब्दः इति सूत्रार्थः । सु. पृ. ९६०, * 'संख्याऽभावात्' इति न्यायेन (लौकिकवैदिकशब्दार्थयोः) अभेदः सिध्यति । पृ. ३७१. * 'तेन प्रतीतशब्दार्थे निर्णयार्थमिदं पुरा । एकत्वं विद्यते नेति चिन्त्यं शब्दाभिधेययोः ॥ **संख्याऽभावादिति** ह्येतन्नु स्पष्टं निरूपितम् ॥' **वा.** १।३।९।३३ पृ. ३०८, * नहि पञ्चकृत्वोऽभ्यस्तो यजतिः शब्दान्तरत्वं प्रतिपद्यते, शब्दैकत्वप्रत्यभिज्ञानात् । तथा चोक्तं 'संख्याऽभावात्' इति । २।३।१३।२६ पृ.६२०.

* संख्यादि (द्रव्यविशेषणं) स्वविशेषणविशिष्टक्रियान्यथानुपपत्तिलक्षणयैव अर्थापत्त्या विधातुमिष्यते । (स्वं द्रव्यम्)। **सु.** पृ. १०१२, * **संख्यादेः** कारकत्वेन श्रुतस्य साक्षात्कारकत्वायोगेऽपि कारकीभूतद्रव्यद्वारा कारकत्वसंभवे विधेयत्वानपह्नवः । पृ. १००६.

* निरपेक्षशक्यताशालिन्योः विधिभावनयोः युगपदेकशब्दोपस्थापितयोः **संख्याकारकन्यायेन** अन्विताभिधाने अवश्यं वाच्ये मूलोपन्यस्तप्रतीतिमनुसृत्य आख्यातार्थस्य लिङर्थं प्रति प्रकारतौचित्यम् । **भाट्टालंकारः** २६.

* **संख्यातः** विशेषग्रहणं अस्ति । यथा एकादशसंख्याकैः पाशुकैः प्रयाजैः पञ्चसंख्याकानां आतिदेशिकानां प्रयाजानां प्रसङ्गसिद्धौ । **बाल.** पृ. १४७–१४८.

* **संख्यानिबन्धनस्तु** भेदः द्रव्यादिकारकात्मकव्यञ्जकभेदोपाधिकः वर्णस्य इव द्रुतादिभेदोपाधिकः । **सु.** पृ. ७१४.

* **संख्यापूरणं** अप्राकृतानां साम्नां आगमेन अतिरात्रे एकविंशादौ । १०।५।६।१५–२५. **मीको.** पृ. २५६ 'अतिरात्रे एकविंशादौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * संख्यापूरणं प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानां ऋचामागमेन सामिधेनीविवृद्धौ दर्शपूर्णमासयोः । १०।५।८।२७–३३. **मीको.** पृ. २०६२ 'दर्शपूर्णमासयोः सामिधेनीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * संख्यापूरणम् । यस्मिन् कस्मिंश्चित् अपगते येन प्रथमेन मध्येनान्त्येन वा संख्या पूर्यते, तत् षष्ठम् । यथा षष्ठो भ्रातॄणां न दृश्यते इति । कनीयसि ज्येष्ठे मध्ये वा अदृश्यमाने भवति । **भा.** १०।५।१।५. * संख्यापूरणं साम्नामभ्यासेन विवृद्धस्तोमके क्रतौ बहिष्पवमाने । १०।५।७।२६. **मीको.** पृ. ३६७१ 'विवृद्धस्तोमके क्रतौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **संख्यापूरणे** आगमेन कर्तव्ये सति पाठक्रमेणैव ऋच आगमयितव्याः एकविंशे त्रिणवे त्रयस्त्रिंशे चातिरात्रे । **भा.** ५।१।६।१३.

* परिधिः त्रित्व**संख्याप्रयुक्तो** न भवति ('त्रीन् परिधीन्' इति मन्त्रे) दर्शपूर्णमासयोः, किन्तु अपूर्वप्रयुक्तः । **भा.** ९।१।५।११–१९.

* **संख्याप्राधान्यपक्षे** 'तदेके मन्यन्ते' इत्येकत्वप्राधान्यात् एकवचनप्रसङ्गो यश्चोदितः सः अन्यत्ववाच्यत्वेन परिहृतः । **वा.** ३।४।४।१३ पृ. ९२५.

* न च **संख्याभेदेन** द्रव्यभेदेन वा अपूर्वान्तरं भवति । किं तर्हि ? प्राकृती संख्या प्राकृतं च द्रव्यं अपनीयते, उपकारस्तु स एव । **टुप्.** १२।१।१।४.

* **संख्यामन्त्रः** यथा– ' एको मम एका च तस्य ' इति । बाल. पृ. ५९.

**संख्यामुष्टिन्यायः** । वाजपेये सप्तदशशरावे चरौ मुष्टिलोपेन चतुःसंख्यानुग्रहः ॥

**मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् । १०।२।२८।६५ ॥**

**भाष्यम्**–– अस्ति वाजपेयः ' शरदि वाजपेयेन स्वाराज्यकामो यजेत ' इति । तत्र श्रूयते ' नैवारः सप्तदशशरावः क्षीरे चरुर्भवति ' इति । अस्ति तु प्रकृतौ संख्या मुष्टयश्च ' चतुरो मुष्टीन्निर्वपति ' इति । उभयं चोदकेन प्राप्तम् । तत्र संशयः किं संख्यानुग्रहो मुष्टिलोपः, उत मुष्ट्यनुग्रहः संख्यालोपः, अथवा किं संख्याया मुष्टीनां च लोपः, अथवा अन्यतरलोप इति । किं प्राप्तम् ? अन्यतरलोप इति । यदि वा मुष्टिषु, यदि वा संख्यायाम् । कुतः ? नियमकारिणः शब्दस्याभावादनियम इति ।

एवं प्राप्ते, ब्रूमः । मुष्टिलोपः स्यात्, संख्यानुग्रहश्चेति । कुतः ? मुख्यत्वात् संख्यायाः । पूर्वं हि संख्या निपतति । सा पूर्वमेव अवगम्यते, न तदवगमकाले संख्याविज्ञानस्य परिपन्थि किंचिद्विज्ञानमस्ति । तस्मिन्निष्प्रतिद्वंद्वे संख्याविज्ञाने प्राप्ते मुष्टिविज्ञानमापतति । तत् संख्याविज्ञानपरिपन्थितां नाऽऽचरितुमर्हति । तस्मात् जघन्यत्वात् मुष्टीनां लोपः । मुख्यत्वात् संख्यानुग्रहः । तदुक्तम् ' मुख्यं वा पूर्वचोदनाल्लोकवत् ' इति ( १२।२।८।२५ ) ।

एवं प्राप्ते, ब्रूमः । मुष्टिलोपेन संख्या लोपमर्हतीति । कुतः ? तद्गुणत्वात् । मुष्टिगुणो हि संख्या श्रूयते 'चतुरो मुष्टीन्' इति । चतुःसंख्याविशिष्टा मुष्टयः कथं भवेयुरिति संख्योच्चार्यते, न स्वार्थे । तस्मात् संख्या पूर्वनिर्दिष्टाऽनिर्दिष्टेव । सा हि परविशेषणार्थमेवोच्चार्यते । तेन नैव तस्या अनुग्रहः कार्यः । मुष्टिलोपे सति तदधिकरणा संख्या अधिकरणाभावात् निवर्तते । अन्याधिकरणायां क्रियमाणायां न प्रकृतिवत्कृता स्यात् । संख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणानिवृत्त्या न निवर्त्स्यन्ति । तस्मात् मुष्टिगुणत्वात् संख्या निवर्तेत, न मुष्टयः । तदुक्तम् ' अङ्गगुणविरोधे च तादर्थ्यात् ' इति ( १२।२।९।२७ ) ।

**न निर्वापशेषत्वात् । ६६ ॥**

**भाष्यम्**–– नैतदेवम् । न संख्या मुष्टिषु श्रूयते । यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्तेत । क्व तर्हि श्रूयते ? निर्वापे । कथम् ? नैवमभिसंबन्धः क्रियते 'चतुरो मुष्टीन्' इति । कथं तर्हि ? चतुरो निर्वपतीति । मुष्टिगुणः संख्यागुणश्च निर्वापो निर्दिश्यते । क्रियासंबन्धे हि द्वितीयाविभक्तिर्भवति । कथम् ? कारकविभक्तिर्हि सा । कारकं क्रियाया एव भवति, न द्रव्यस्य । अतश्चतुःसंख्या श्रुत्या अवगता निर्वापस्य, वाक्येन मुष्टीनाम् । वाक्याच्च श्रुतिर्बलीयसी । तस्मात् मुख्यानुग्रहात् मुष्टिलोप एवेति ।

**संख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः । ६७ ॥**

**भाष्यम्**–– तुशब्दः एनं पक्षं व्यावर्तयति, न संख्यानुग्रहो मुष्टिलोप इति । किं तर्हि ? संख्यया संख्या निवर्तते, शरावैश्च मुष्टयः । कथम् ? सामान्यात् । निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः । तासां परिच्छेदिका चतुःसंख्या । इह सप्तदशसंख्याकः शरावद्रव्यकश्चरुर्भवतीति श्रूयते । तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्यते । तत्परिच्छेदनार्था चतुःसंख्या परिच्छेदार्थया सप्तदशसंख्यया निवर्त्यते । तद्यथा, इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेनेति, भोजने यद्घृतेन शक्यते कर्तुं तत्तैलेन क्रियते । तस्माद्यद्यपि न श्रूयते तैलेन स्नेहयितव्यमिति, तथाऽपि समानकार्यत्वात्तैलं घृतस्य विनिवर्तकं भवति । एवं संख्या परिच्छेदं कुर्वती परिच्छेदिकाया एव संख्याया निवर्तिका भवितुमर्हति । परं च शरावद्रव्यं मुष्टिनिवर्तकम्, संयोगात् । तस्मात् प्राकृती संख्या प्राकृतं च द्रव्यं निवर्तते ।

**न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात् । ६८ ॥**

**भाष्यम्**–– नैतदेवम् । चोदनेति यागं ब्रूमः । यागसंबद्धा हि सप्तदशसंख्या, शरावद्रव्यं च । प्रकृतौ निर्वापसंस्कारसंबद्धा चतुःसंख्या मुष्टिद्रव्यं च । न चान्यत्र



क्रियमाणं समानकार्यमप्यन्यत्र निवर्तकं भवति । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यमभिनिर्वर्त्यते, तत्तेन निवर्त्यताम् । न च यागे क्रियमाणे निर्वापकार्यं निवर्त्यते । तस्मान्निर्वापप्राप्तं किंचिदप्यनेन न निवर्त्यते इति । विरोधात्तु चतुर्भिर्मुष्टिभिर्निरुप्यमाणं द्रव्यं न सप्तदशशरावं भवति । तस्माद्विरोधादन्यतरत् निवर्त्यते, द्रव्यं संख्या वा । तत्र चतुःसंख्यानुग्रहात् मुष्टिलोपो न्याय्यतर इति ।

**शा**–– वाजपेये श्रूयते ' बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवति ' इति । अस्ति तु प्रकृतौ ' चतुरो मुष्टीन्निर्वपति ' इति चतुःसंख्या मुष्टिद्रव्यं च, तदुभयं इह चोदकेन प्राप्तम् । न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरुः संपादयितुं शक्यते । अतोऽवश्यं बाधितव्ये सति किं उभयं बाधितव्यं– शरावद्रव्येण मुष्टिद्रव्यम्, सप्तदशसंख्यया च चतुःसंख्या किंवा अन्यतरत् । तत्राऽपि किं अनियमः अथवा मुष्ट्यनुग्रहः संख्यालोपः, विपरीतं वेति ! तत्र अविशेषात् उभयोर्बाधः । तत्राऽपि समानकार्यत्वात् द्रव्यं द्रव्येण, संख्या संख्ययेति एकः पक्षः । सप्तदशसंख्याशरावपरिमाणं च यागद्रव्याङ्गम्, चतुःसंख्या मुष्टिश्च निर्वापाङ्गम्, अतो न साक्षादेकविषयत्वं येन उभयं उभयेन बाध्येत । चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न संपादयितुं शक्यते इति अर्थाद्बाधः । तत्र एकबाधेन उपपत्तौ न उभयबाधनं युक्तम् । तस्मात् अन्यतरबाधः । तत्र अविशेषात् अनियम इति द्वितीयः । संख्याया द्रव्याङ्गत्वात् प्रधानस्य मुष्टिद्रव्यस्य अनुग्रहः, संख्यायास्तु बाध इति तृतीयः । न संख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसंबन्धबाधेन द्वितीयाश्रुत्या निर्वापाङ्गत्वावगमात् उभयोरपि क्रियाङ्गत्वावगमात् तुल्यत्वम् । तत्र मुख्यत्वात्संख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति **सिद्धान्तः** ।

**सोम**–– इहापि पूर्ववदेव गुणभूतायाः संख्याया बाधेऽपि प्रधानभूतमुष्टीनां न बाध इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**– मुष्टिलोपे संख्यालोप आवश्यकः मुष्टिगुणत्वात्संख्यायाः तस्मात् आवश्यकत्वात् संख्यामात्रलोपो न तु मुष्टिलोपः इति ।

**वि**–– ' शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः । चत्वारः सन्ति नो वोत स्यादेकं मुष्टिसंख्ययोः ॥ तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः । द्वितीयोऽस्त्विति चेन्मैवं द्विलोपे बाधगौरवात् ॥ तृतीयोऽस्त्वेकलोपोऽत्र धर्मः संख्यैव लुप्यताम् । क्रियायोगान्न तद्धर्मः प्राथम्यात्साऽनुगृह्यताम् ॥ '

**भाट्ट**— वाजपेये ' बार्हस्पत्यो नैवारश्चरुः सप्तदशशरावो भवति ' इति श्रुतम् । तत्रातिदेशप्राप्ते निर्वापे किं मुष्टिचतुःसंख्ययोरुभयोरप्यतिदेशप्राप्तयोः बाधः उत चतुःसंख्याया एव उत मुष्टीनामेवेति चिन्तायां ' चतुरो मुष्टीन्निर्वपति ' इति प्रकृतौ विहितस्य मुष्टिसंख्योभयविशिष्टनिर्वापस्याङ्गभूतयोः मुष्टिसंख्ययोः आतिदेशिकयोरौपदेशिकाभ्यां सप्तदशसंख्याशरावपरिमाणाभ्यां बाधः प्रत्याम्नानेन । निर्वापाङ्गभूतयोरपि मुष्टिसंख्ययोर्निर्वापस्वरूपे वैयर्थ्येन फलतो यागार्थतया समानविषयत्वोपपत्तेः । तत्रापि संख्यया संख्यायाः परिमाणेन परिमाणस्येति **प्रथमः पक्षः** ।

**द्वितीयस्तु** मुष्टिसंख्ययोर्यागोपकारकत्वेऽपि निर्वापसंबन्धित्वेनैव श्रवणान्न यागाङ्गभूताभ्यां संख्यापरिमाणाभ्यां निर्वापाङ्गभूतयोः संख्यापरिमाणयोर्बाधो युक्तः । सप्तदशशरावपरिमितद्रव्यस्य तु चतुर्मुष्टिपरिमितनिर्वापेण संस्कारायोगादर्थात् निरोधावश्यंभावे अन्यतरबाधेनैवोपपत्तौ उभयबाधे प्रमाणाभावः । न च चतुर्मुष्टिपरिमितवैधनिर्वापस्यावृत्त्याऽपि विरोधपरिहारोपपत्तौ नावश्यमन्यतरस्यापि बाधो युक्त इति वाच्यम्, चतुःसंख्यायाः प्रकृतौ यागीययावद्द्रव्यसंस्कारकनिर्वापवृत्तिमुष्टिपरिच्छेदकत्वेन आवृत्त्या तदनुपपत्तावन्यतरबाधस्यावश्यकत्वात् । तत्रापि मुष्टीनां प्राधान्यात् तदङ्गभूतसंख्याया एव बाधः ।

तथाहि चतुःशब्दो विशेष्यनिघ्नो न स्वतः संख्यायाः क्रियान्वयं गमयति विशेष्यं च मुष्टिपदोपात्तं परिमाणमेव, न तु तद्विशिष्टं व्रीहिद्रव्यं तथैवानुभवात् विशेष्ये बाधाच्च । अत एव मुष्टिशब्दस्य परिमाणविशिष्टद्रव्यपरत्वेन विशेष्यनिघ्नत्वेऽपि संख्याया एकदेशान्वयोऽपि

नानुपपन्नः। अतश्च संख्यायाः परिमाणं प्रत्यङ्गत्वात् तस्या एव बाधः।

**वस्तुतस्तु**—- द्वितीयान्तमुष्टिपदसमानाधिकरणसंख्यापदं परिमाणविशिष्टव्रीहिराशिमेव विशेष्यतया संगृह्णातीति यद्यपि न परिमाणस्य संख्यां प्रति प्राधान्यम्, तथाऽपि संख्यायाः परिमाणपरिच्छेदद्वारैव तत्परिमितद्रव्यपरिच्छेदकत्वात् परिमाणस्य अन्तरङ्गतया बाधानुपपत्तिः, अतो मुष्टिगतां चतुःसंख्यां बाधित्वा सप्तदशशरावपरिमितव्रीहीणां यावन्मुष्टि निर्वापः कार्यं इति।

**सिद्धान्तस्तु**– नात्र द्वितीयान्तार्थद्वयस्योद्देश्यतया निर्वापं प्रति कर्मत्वं उद्देश्यानेकत्वनिमित्तकवाक्यभेदापत्तेः। अपि तु द्वितीयया सक्तुन्यायेन करणत्वं लक्षयित्वा प्रातिपदिकशक्यार्थद्वयस्यैव संख्यापरिमाणरूपस्य निर्वापभावनान्वयित्वम्। अत एव नानयोः अरुणान्यायेन विशेष्यनिष्ठत्वमपि। गुणद्वयविशिष्टनिर्वापभावनाविधानाच्च न वाक्यभेदः। गुणद्वयस्य वैशिष्ट्यमारुण्यवत् द्रव्यपरिच्छेदद्वारेणेति न कश्चिद्विरोधः।

एवं च संख्यापरिमाणयोः परस्परं अङ्गाङ्गिभावे अन्तरङ्गबहिरङ्गभावे वा प्रमाणाभावादन्यतरबाधे नियामकापेक्षायां प्राथम्यात् संख्याया अबाधः मुष्टिपरिमाणस्य तु बाधः। न च प्राथम्यजघन्यत्वादेः प्रकृतौ विद्यमानत्वेऽपि विकृतावतिदेशेन युगपत्सर्वाङ्गप्राप्तेः तस्याभावात् कथं तस्य नियामकत्वमिति वाच्यम्, विकृतावभावेऽपि प्रकृतिदृष्टस्यैव तस्य नियामकान्तराभावे नियामकत्वोपपत्तेः। अतः संख्यानुरोधात् सपादचतुःशरावपरिमितं पात्रं कृत्वा तेन चतुर्वारं निर्वापः।

अयं चार्थो भाष्यकारादिभिः कर्कादिभिश्च सर्वैर्निर्णीतः। मम तु प्रतिभाति—साक्षात् साधनीभूताग्निहोत्रहवण्याः मुष्टीनां च बाधापेक्षया संख्याया एवैकस्या मुष्टिपरिच्छेदद्वारा निर्वापसाधनीभूताया बाधः उचितः।

**वस्तुतस्तु**—- चतुःसंख्याकमुष्टिसाधनकवैधनिर्वापाभूत्या उभयसंपादनसंभवे न तस्या अपि बाधः। यागीययावद्द्रव्यसंस्कारकनिर्वापवृत्तिमुष्टिपरिच्छेदकत्वस्य प्रकृतावार्थिकत्वेन इह बाधेऽप्यदोषत्वात्। अत एव जैमिनिसूत्रे कात्यायनादिसूत्रेषु चौपदेशिकाभ्यां संख्यापरिमाणाभ्यामातिदेशिकतदुभयबाधं पूर्वपक्षयित्वा तदभाव एव सिद्धान्तितः। तत्त्वं तु ईश्वरो वेत्ति।

**मण्डन**—- 'संख्या स्यान्मुष्टिलोपनम्।'

**शंकर**—— 'मुष्टेर्लोपो न संख्यायाः।' २९.

* **संख्यामुष्टिन्यायः**। (१०।२।२८।६५–६८) 'बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवति' इति विहितायां विकृतीष्टौ प्राकृते चतुर्मुष्टिनिर्वापे चोदकतः प्राप्ते चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरकस्य चरोः संपादयितुमशक्यत्वेन तत्र संख्यामुष्टयन्यतरबाधे कर्तव्ये 'मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्' (१०।२।२८।६५) इति सूत्रेण मुष्टिगुणभूतसंख्याबाधः कार्यः इति पूर्वपक्षं कृत्वा 'न निर्वापशेषत्वात्' (१०।२।२८।६६) इति सूत्रेण संख्यामुष्ट्योरुभयोरपि निर्वापशेषत्वेन तयोर्गुणप्रधानभावविशेषाभावात् चरमश्रुतस्य मुष्टेरेव बाधः कार्यः। अतः चतुर्भिः महापात्रैः सप्तदशशरावचरुसंपादनापेक्षितव्रीहिनिर्वापः कार्यं इति दशमे सिद्धान्तितम्। **परिमल.** ३।३।३।७ पृ. ७५६ ब्रसू.

**संख्यायुक्तं क्रतोः प्रकरणात् स्यात्। ३।३।१२।३२॥**

प्रवर्ग्यं प्रकृत्य 'न प्रथमयज्ञे प्रवृञ्ज्यात्, द्वितीये तृतीये वा प्रवृञ्ज्यात्' इति श्रूयते। अत्र संख्यायुक्तं संख्याविशेषवाचकप्रथमपदघटितं प्रथमयज्ञपदं अग्निष्टोमोक्थ्यषोडश्यादीनां यज्ञानां यः प्रथमो यज्ञः अग्निष्टोमो नाम, तस्य क्रतोः अग्निष्टोमस्य बोधकं स्यात्। प्रकरणात् अग्निष्टोमप्रकरणानुसारात्। न तु अग्निष्टोमप्रथमप्रयोगपरम्। द्वितीये तृतीये वा इत्यस्य उक्थ्यादौ द्वितीयादौ क्रतौ इत्यर्थः। इति **पूर्वः पक्षः**।

**नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्। ३३॥**

'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति प्रथमयज्ञे प्रवर्ग्यनिषेधः कृतः। प्रथमयज्ञशब्दश्च यज्ञानां मध्ये यः प्रथमः अग्निष्टोमः तत्परम्, न तु प्रथमप्रयोगपरं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। प्रथमयज्ञपदं नैमित्तिकं प्रथमप्रवृत्तिविषयत्वरूपप्रवृत्तिनिमित्तकम्। तथा च प्रथमप्रयोगपरं न यज्ञपरम्। कर्तृसंयोगादिति ल्यब्लोपे पञ्चमी कर्तृसंयोगं अपेक्ष्य लिङ्गस्य प्रतिषेधोपलक्षणभूतप्रथमपदस्य तन्निमित्तत्वात् मुख्यवृत्तिनिमित्तकत्वात्। प्रथमशब्दो हि अप्रवृत्तपूर्वस्य कर्तुः आद्यप्रवर्तने एव मुख्यवृत्त्या वर्तते। तेन अग्निष्टोमस्य अतिरात्रप्रथमाहारे तु अतिरात्रस्य प्रथमप्रयोगे प्रवर्ग्यस्यायं निषेधः न तु तस्यैव द्वितीयादिप्रयोगे इति **सिद्धान्तः**। के.

* 'संख्यायुक्तं क्रतोः प्रकरणात् स्यात्।' ३।३।१२।३२॥ ज्योतिष्टोमाङ्गत्वप्रतिज्ञार्थस्य क्रतुशब्दस्य आवृत्त्या ज्योतिष्टोमाख्यक्रतुसंबन्धित्वात् इति हेत्वर्थकं आवृत्तं क्रतुपदम्। तथा च प्रथमशब्दोक्तसंख्यायुक्तं प्रवर्ग्यनिषेधनं ज्योतिष्टोमाख्यस्य क्रतोः अङ्गं स्यात् ज्योतिष्टोमाख्यक्रतुसंबन्धित्वात् प्रकरणादपि च इति सूत्रार्थः। सु. पृ. १३११–१३१२. * '**संख्यायुक्तेषु** तु समुच्चयः०' (१२।३।१४।३०) इति न्यायः 'तां चतुर्भिरभ्रिमादत्ते' इत्यत्र मन्त्रसमुच्चयाय उक्तः। बाल. पृ. १६६.

* **संख्यायुक्तवचन**विहितानां मन्त्राणां समुच्चयः। (अग्निचयने अभ्र्यादाने चतुर्णाम्, खनने द्वयोः, मृदाहरणे षण्णाम्)। भा. १२।३।१४।३०.

* **संख्यावचनं** समस्य कार्यं पशुगणे अध्रिगुप्रैषे समस्तवङ्क्रीयत्ताप्रकाशनार्थम्। ९।४।१।१–१६. **मीको.** पृ. ३४६ 'अध्रिगुप्रैषे पशुगणे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **संख्याविशेषनियमः** ऋत्विजां कार्यानुसारेण। ३।७।९।२१–२४. **मीको.** पृ. १२४८ 'ऋत्विजः कर्तव्यानुसारिसंख्यया वरीतव्याः' इत्यत्र अधिकरणं द्रष्टव्यम्।

**संख्याविहितेषु समुच्चयोऽसंनिपातित्वात्। १२।३।१४।३०॥**

अग्निचयने 'चतुर्भिरभ्रिमादत्ते' 'द्वाभ्यां खनति' 'षड्भिराहरति' इति संख्यया मन्त्राः विहिताः। तेषु समुच्चयः स्यात्, न विकल्पः। प्रतिमन्त्रं कर्मादिसंनिपातासंभवात् असंनिपातित्वात् समुच्चयः। इति **सिद्धान्तः**। के.

* 'संख्याविहितेषु०' (१२।३।१४।३०) अत्र चतुर्भिरभ्रिमादत्ते इति मन्त्रचतुष्टयसमुच्चय उक्तः। बाल. पृ. १७८. * 'संख्याविहितेषु तु समुच्चयः०' (१२।३।१४।३०)। 'विराट्संपन्नं' इत्येतस्मादेव वचनात् 'संख्या०' इत्यनेन न्यायेन समुच्चयः (अग्निहोत्रे दशानामाहुतीनां)। वा. २।२।५।१६ पृ. ५०६. * पाठादेव चतुष्ट्वसिद्धौ चतुर्भिरिति वचनं समुच्चयसिद्ध्यर्थम्, अन्यथा विकल्पः स्यात् इति द्वादशस्य तृतीये '**संख्याविहितेषु०**' इत्यधिकरणे व्यक्तीभविष्यति। कु. १।२।४।३१.

* **संख्यावृत्तिस्वाभाव्यं** तुल्यजातीयेषु। वा. ३।५।२०।५२.

* **संख्याशब्दः**। यस्य शब्दस्य संनिधाने संख्याशब्द उच्चरितः, सोऽर्थः संख्याविशिष्टः प्रतीयेत। अनन्तरमुच्चरितेन हि सह एकवाक्यता भवति। अनन्तरसंबद्धं हि विशेषणं विज्ञानं विशेष्टुं शक्नोति, न हि व्यवहितम्। भा. १०।३।११।४१, * **संख्याशब्दाः** हि अनियतवृत्तयो भवन्ति। ते येन येन संबध्यन्ते संख्येयेन, तं तं परिसंचक्षते। १०।६।७।२३, * संख्याशब्दाः हि द्वेधा। प्राग् विंशतेः संख्याप्रधानाः। ऊर्ध्वं विंशतेरुभयप्रधानाः। तत्र यदा संख्या आत्मानमुपसर्जनीकृत्य संख्येये वर्तते, तदा विना षष्ठ्या सामानाधिकरण्यं भवति। टुप्. ९।४।१।१ पृ. १७६७. * 'शतायुर्वै पुरुषः' इति। अत्रोच्यते, शतानि आयुरस्येति विग्रहीष्यामः। नैवं **संख्याशब्दानां** समास इष्यते। न च गमकानि भवन्ति। द्विवचनबहुवचनान्तानामसमास इति चाभियुक्तवचनात्। भा. ६।७।१३।३३, * लोके हि निर्विशेषिते **संख्याशब्दे** उच्चरिते, एकजातीये प्रत्ययो भवति। कुतः? अन्यथा व्यवहारानुपपत्तेः। १०।३।११।४४. * **संख्याशब्देषु** प्राग् विंशतेः संसृष्टगुणवचनाः। पञ्च गावो दश गावः इति। विंशत्यादयस्तु उभयवचनाः। टुप्. ९।४।१।१२.

* समाने हि कस्मिंश्चित् आश्रीयमाणे **संख्यासंव्यवहारो** भवति। भा. ९।२।४।२१.

* **संख्याने** प्रकृतिलिङ्गसंयोगः । न हि संख्यामात्रमनूद्य शक्यते गुणो विधातुम् । न हि कस्यचित् काचित् संख्या न भवति । भा. १०।४।४।७.

**सङ्गगुणदोषन्यायः ।** अयं पद्येन विवृतः । तथाहि– 'संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते, मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकम्, प्रायेणाऽधममध्यमोत्तमगुणः संवासतो जायते ॥' इति । साहस्री. ६३५.

* **संगतिः ।** 'शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा । शास्त्रादिविषये ज्ञाते तत्तत्संगतिरूह्यताम् ॥' शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति त्रिधा संगतिः । वि. प्रस्तावना श्लो. १० । 'ऊहित्वा संगतीस्तिस्रस्तथाऽवान्तरसंगतिम् । ऊहेताऽऽक्षेपदृष्टान्तप्रत्युदाहरणादिकम् ॥' शास्त्रादिप्रतिपाद्यार्थसंबन्धितया अधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति तिस्र ऊहिता भवन्ति । तथा पूर्वोत्तराधिकरणयोः परस्परं अवान्तरसंगतिरूहनीया । सा चानेकरूपा—आक्षेपसंगतिः, दृष्टान्तसंगतिः, प्रत्युदाहरणसंगतिः, प्रासङ्गिकसंगतिः, उपोद्घातसंगतिः, अपवादसंगतिश्चेत्येवमादिरूपा । वि. प्रस्तावना श्लो. २७.

* **संघः ।** प्रधानयागसंघस्य प्रकृतिगतस्य विकृतौ नातिदेशः । वि. ८।१।१३.

* **संघातः ।** 'संघातस्याचोदितत्वात्' ( ९।१।६।२५ ) 'संघातस्य गुणत्वात्' ( ७।४।३।१७ ) इत्येवमादिषु समुदायिवचनत्वमभ्युपगतम् । वा. २।२।३।३ पृ. ४८०. * '०संघातस्याचोदितत्वात्' ( 'तद्देशानां वा संघातस्याचोदितत्वात्' ९।१।६।२५ )। यथा अङ्गप्रधानानां समुदितानां फलसिद्धिहेतुत्वेऽपि समुदायस्य शब्दवाच्यत्वाभावात् तत्संबन्धित्वेन उपांशुत्वस्य अचोदनात् प्रधानानां समुदितानामपि फलसाधनत्वे तत्समुदायस्य शब्दवाच्यत्वाभावेन अचोदना इत्यर्थः । सु. पृ. ७३१.

**सच्छिद्रघटाम्बुन्यायः ।** पूर्वोक्तन्यायसदृश- ( मण्डूकतोलनन्यायः– यथा मण्डूकतोलने तुलास्थाः मण्डूकास्तुलात उत्प्लुत्योत्प्लुत्य पतन्ति ) विषये अयं प्रवर्तते । साहस्री. ९१.

* **सजाताः** ज्ञातयः । वि. ३।२।७.

* **सजातीयेनैव** संख्यापूरणन्यायः । अस्य गोर्द्वितीयोऽन्वेष्टव्यः इत्युक्ते गौरेव द्वितीयोऽन्विष्यते । नाश्वः इति सजातीयेनैव संख्यापूरणन्यायः । के.

* **सजातीयकलहनिवारणकामः** 'ऐन्द्राग्नमेककपालं निर्वपेत् यस्य सजाता वीयुः'। भा. ३।२।७।२० पृ. ७७१.

**संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य । ५।३।१०।२६॥**

'वर्षति न धावेत्, न स्त्रियमुपेयात्, पक्षिणो नाशितव्याः' इत्यादीनि अग्निचितः व्रतानि श्रूयन्ते । तानि किं चयनमात्रे कृते प्रतिपत्तव्यानि उत क्रत्वन्ते इति विचारे पूर्वपक्षमाह । तुशब्दः पक्षान्तरनिरासार्थः । अग्निं चितवान् अग्निचित् । अग्निचिता युक्तं संबद्धम्, तेन आचरणीयं व्रतं अग्निचिद्युक्तम् । तत् संचिते संचितमात्रे अग्नौ क्रतुसमाप्तेः प्रागेव आरब्धव्यम् । निमित्तस्य व्रताचरणनिमित्तभूतस्य चयनस्य प्रापणात् प्राप्तत्वात् सिद्धत्वात् । प्राप्ते च निमित्ते नैमित्तिकं कर्तव्यम् । तस्मात् संचितमात्रे अग्निचिता व्रतानि प्रतिपत्तव्यानि ।

**क्रत्वन्ते वा प्रयोगवचनाभावात् । २७ ॥**

अग्निचिद्व्रतानि संचितमात्रे प्रतिपत्तव्यानि इति सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन व्यावर्त्य सिद्धान्तमाह । क्रत्वर्थानां हि प्रयोगवचनो ग्राहको भवति । व्रतानि तु पुरुषार्थानि, न क्रत्वर्थानि इति तत्र प्रयोगवचनाभावः । प्रयोगवचनाभावात् अग्निचिद्व्रतानि क्रत्वन्ते स्युः, न चितमात्रे । चयनं साङ्गक्रतुपरिसमाप्त्युत्तरकालं निमित्ततां प्रतिपद्यते । तस्मात् साङ्गे कृते यागे अग्निचिदुच्यते । तस्मात् क्रत्वन्ते व्रतानामारम्भः ।



**अग्नेः कर्मत्वनिर्देशात् । २८ ॥**

ननु वर्षति पर्जन्ये धावनाभावादीनि व्रतानि पुरुषार्थानि चयनानन्तरमेव स्युः इति पूर्वपक्षिशङ्कानिरासार्थं द्वितीयं **सिद्धान्तसूत्रम्** । 'य एवं विद्वानग्निं चिनुते' इति वचने अग्नेः कर्मत्वेन निर्देशात् चयनस्य अग्न्यर्थत्वं सिध्यति । तथा च क्रतूत्तरमेव व्रतानि न चयनोत्तरम् । के.

* **संज्ञपनं** पशुधर्मः । भा. ३।६।७।१८.

* **संज्ञप्तहोमः** अग्नीषोमीयादिपशौ, मरणवेलायां पशुना शब्दाकरणेऽपि कर्तव्यः अपूर्वार्थत्वात् । वि. ६।८।७. * संज्ञप्तहोमः पशौ नित्यः । भा. ६।८।८।२८.

* **संज्ञा** अपि गुणवत् भेदिका । यथाहि उत्पत्त्यवगतस्य गुणस्य पाक्षिकबाधं अष्टदोषदुष्टं च विकल्पं परिहर्तुं गुणान्तरं वाजिनादि कर्मान्तरं कल्पयति तथा संज्ञायामपि अस्त्येव पाक्षिको बाधो विकल्पोऽपि, कदाचित् कस्यचित् शब्दस्य उपादानात् । रत्नाकरः. शब्दार्थसंबन्धे श्लो. १३. * संज्ञा उत्पत्तिसंयोगे पूर्वासंबन्धे च भेदिका भवति । वा. २।३।४।१० पृ.५९६. * संज्ञा कर्मभेदकं प्रमाणम्, वैदिक उपदेशः शब्दप्रमाणम् । बाल. पृ. ८. * संज्ञा कर्मभेदिका । 'स्वरूपानभिधानत्वात् संज्ञा शब्दान्तरात् पृथक्'। संज्ञा हि द्रव्यरूपापन्नामपि क्रियामभिदधाना विच्छेदमात्रात् भिनत्ति । वा. २।३।१३।२६ पृ. ६२०.

**संज्ञा चोत्पत्तिसंयोगात् । २।२।८।२२ ॥**

शब्दान्तरेण अभ्यासेन संख्यया च कर्मभेद उक्तः । इदानीं संज्ञया कर्मभेद उच्यते । 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' 'एतेन सहस्रदक्षिणेन यजेत' इति श्रूयते । किं एभिर्नामधेयैः प्रकृतं ज्योतिष्टोमं संकीर्त्य तत्र सहस्रदक्षिणादिर्गुणो विधीयते अथवा कर्मान्तराणि उपदिश्यन्ते इति विचारे सिद्धान्तमाह । संज्ञा च संख्यावत् कर्म भिनत्ति । उत्पत्तिसंयोगात् ज्योतिः विश्वज्योतिः सर्वज्योतिः इतीयं संज्ञा उत्पत्तिसंयुक्ता उत्पत्तिवाक्ये विद्यते । उत्पत्तिशिष्टा संज्ञा कर्मभेदिका । अत्र संज्ञया धात्वर्थो भिद्यते धात्वर्थभेदाच्च भावनाभेदः ततः कर्मभेद इति ज्ञेयम् । के.

* 'संज्ञा चोत्पत्तिसंयोगात्' ( २।२।८।२२ )। इदमेव संज्ञाधिकरणम् । पदभेदादेव च अर्थोऽपि भिद्यते 'संज्ञा' इति द्वैतीयीकाधिकरणन्यायात् । कु. १।३।१०।२७. * 'संज्ञा चोत्पत्तिसंयोगात्' ( २।२।८।२२ )। एष न्यायः यथा कर्मभेदं बोधयितुं समर्थः तथा कर्तृभेदमपि । वा. ३।७।९।२२ पृ. १०८९. * 'संज्ञा चोत्पत्तिसंयोगात्'। संख्यावत् ( व्यतिरेकेण दृष्टान्तः ) संज्ञायाः स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्यत्वरूपपृथक्त्वविनिवेशित्वाभावात् न भेदकता इति पूर्वपक्षन्यायः । संख्याधिकरणेन प्रत्युदाहरणरूपा संगतिः संज्ञाधिकरणस्य । कौ. २।२।८।२१. * 'संज्ञा चोत्पत्ति०'। 'नामान्तरे श्रुते चार्थस्तद्भिन्नोऽन्यः प्रतीयते । संज्ञा चोत्पत्तिसंयोगादित्यत्रैतद्विदिष्यते ॥' वा. १।३।८।२६ पृ. २७८. * संज्ञा तु न स्वेन भावनानुरञ्जकव्यापाररूपेण धात्वर्थं वदति, नाम्नां निष्पन्नरूपाभिधानस्वभावत्वात् नासौ धात्वर्थमात्रभेदे व्याप्रियते, तद्भेदात्तु शब्दान्तरन्यायेन भावनाभेदसिद्धिः । सु. पृ. ५४१. * संज्ञा धर्मभेदे प्रमाणम् । मणि. पृ. १३. * संज्ञा । भाविसंज्ञाभूतत्वेन उपसत्तो न स्वीक्रियते, अगत्या हि सा अन्यत्र आश्रीयते । वा. २।३।२।३ पृ. ५८२. * संज्ञा व्यवहारार्थं कार्या, यथा पुत्रस्य पित्रा चैत्र इति । ऋजु पृ. १५६. * संज्ञा संज्ञिव्यवहारार्था । सु. पृ. ३९५. * 'विशेषप्रतिपत्त्यर्थं संज्ञा सर्वा प्रवर्तते'। वा. २।२।५।१४, * **संज्ञया** ( काठकाद्यया ) शाखा एव भिद्यन्तां न कर्माणि, संबन्धाभावात् । २।४।२।१०. * **संज्ञायाः** अप्रवृत्तप्रवर्तनस्वभावत्वाभावात् नाभ्यासन्यायविषयता । सु. पृ. ८२०. * संज्ञायाः विशेषाश्रयत्वम् । भा. २।२।५।१४, * संज्ञायाः व्यवहारार्थत्वात् एकेन व्यवहारसिद्धेः नापरेणार्थः । ८।३।६।१८.

**संज्ञाधिकरणम्** । ज्योतिः विश्वजोतिः सर्वज्योतिः इति संज्ञाभेदात् कर्मभेदः ॥

**संज्ञा चोत्पत्तिसंयोगात् । २।२।८।२२॥**

**भाष्यम्**— 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः एतेन सहस्रदक्षिणेन यजेत' इति श्रूयते । अत्र संदेहः, किमेभिर्नामधेयैः प्रकृतं ज्योतिष्टोमं संकीर्त्य तत्र सहस्रदक्षिणादिर्गुणो विधीयते, अथवा वक्ष्यमाणविशेषाणि कर्मान्तराण्युपदिश्यन्ते इति । किं प्राप्तम् ? प्रकरणानुग्रहात् प्रकृतस्य गुणविधानमिति । ननु वाक्यसामर्थ्याज्ज्योतिरादीनामेते गुणा विधायिष्यन्ते । नैष दोषः । ज्योतिष्टोमस्यैव एतानि वाचकानि । ज्योतिरिति ज्योतिष्टोमस्य प्रतीकं उपादीयते, विश्वज्योतिरिति । त्रिवृदादीन्यस्य ज्योतींषि वाक्यशेषसंकीर्तितानि । तानि सर्वाण्यस्य । तेनासौ विश्वज्योतिः सर्वज्योतिश्च ज्योतिष्टोम इत्येवं प्राप्तम् । एवं प्राप्ते, ब्रूमः । संज्ञा हि तिस्रो भेदिकाः । तेषां ज्योतिराद्याः । उत्पत्तिवाक्ये ह्येताः श्रूयन्ते । नासामिमाः पुनः श्रुतयः । तस्मादथैष ज्योतिरित्यपूर्वस्य कर्मणो विधायकं वाक्यम् । अनुवादे हि सत्यप्रवृत्तिविशेषकरमनर्थकं स्यात् । प्रकृतस्य च गुणविधाने विकल्पो भवेत् । तत्र पक्षे बाधः । न च ज्योतिरादयो ज्योतिष्टोमस्य वदितारः । समुदायान्तराणि ह्येतानि । न चावयवेन समानेन समुदायान्तरं तदर्थमेव भवति । यथा शालाशब्दो गृहवचनः, तत्र न शालाशब्दसामान्यान्मालाशब्दादयोऽपि गृहवचना भवन्ति । यत्तु ज्योतिष्टोमस्य ज्योतिरिति प्रतीकमुपादीयते इति । प्रकरणसामर्थ्याद्धि तत्र ज्योतिष्टोमशब्देन परोक्षेणैकवाक्यता भवेत् । सा प्रत्यक्षं ज्योतिःशब्देन सहैकवाक्यतां बाधेत । न चैतन्न्याय्यम् । वाक्यं हि प्रकरणाद्बलीयः । अथ पुनरयं द्योतनार्थत्वाद्वा ज्योतिष्मत्त्वाद्वा कर्मान्तरे वर्त्स्यति । यश्च त्रिवृदादीनि ज्योतींषि तेषां साकल्यवचनो विश्वज्योतिः सर्वज्योतिरिति चेन्नेति ब्रूमः । न हि त्रिवृदादिषु ज्योतिःशब्दः प्रसिद्धः । एवं ब्रुवन् प्रसिद्धिं बाधेत । यत्तु वाक्यशेषाज्ज्योतिःशब्दस्त्रिवृदादिवचन इति । तस्मिन्नेव वाक्ये स तत्र प्रयुक्त इति गम्यते प्रमाणान्तरेण ('एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः' इत्येवं श्रुतिनिर्दिष्टत्रिवृदादिवाचिस्तोमशब्दसामानाधिकरण्यरूपप्रमाणान्तरेण ज्योतिःशब्दः स्तोमवाची गौण्या न शब्दशक्त्या इत्यर्थः ।) न शब्देन । यत्र तु तत्प्रमाणान्तरं नास्ति, न तत्र वर्तितुमर्हति । यथा सिंहो देवदत्त इति सिंहशब्दो देवदत्तवचनः प्रमाणान्तरेण, न तु सिंहमालभेतेति यत्र, तत्र तु तत् प्रमाणान्तरं नास्ति । तस्मान्न विश्वज्योतिः सर्वज्योतिरिति च ज्योतिष्टोमस्य वदितारौ । न चेज्ज्योतिष्टोम उच्यते, सर्वाणि कर्मान्तराणि इति ।

**वा**— बहुविचारत्वाद्गुणप्रकरणभेदावुपेक्ष्य संज्ञा तावदुदाह्रियते । तत्र 'अथैष ज्योतिः' इत्यादिषु अथशब्दैषशब्दयोः पूर्वप्रकृतापेक्षत्वात् प्रकृतहान्यप्रकृतप्रक्रियाकल्पनदौर्बल्यात् एकस्यापि च दाक्षायणयज्ञादिवद्वक्ष्यमाणेन गुणयोगेन अनेकनामधेयत्वसिद्धेः । न च गुणफलसंबन्धपरे वाक्ये सति कर्मान्तरं कर्मानुसारि चापूर्वं तत्सिद्ध्यर्थानि चात्यन्ताश्रुतेतिकर्तव्यतादीनि कल्पितानि भविष्यन्ति । कथंभावापेक्षया च ज्योतिष्टोमः सहस्रदक्षिणादि गृह्णन्न वारितो भविष्यति । न च कर्मान्तरविधावथशब्देन पूर्वापेक्षेण किंचित्फलमस्ति । न हि क्रतुः क्रत्वन्तरमपेक्षते । न च क्रतूनां क्रमविवक्षेति वक्ष्यामः (५।३।१२) । तेन क्रमार्थमपि नाथशब्दश्रवणम् । न च संज्ञा भावनां ब्रवीति । नापि धात्वर्थो यजत्यादिवत्तदुपश्लिष्टः, येन तद्भेदबुद्धिः स्यात् । न चेयं विधात्री श्रुतिर्येन विहिते कर्मान्तरे पुरुषं प्रवर्तयेत् । न चाप्रवर्तिते पुरुषे भेदः प्रतीतोऽपि ग्रहैकत्ववद्विवक्ष्यते । यस्त्वत्र विधायकः स गुणाद्याक्षेपान्न कर्मस्वरूपे निपतति । न चेदसावाक्षिप्तस्ततोऽभ्यासादेव भेदः स्यान्न संज्ञातः । 'फलसंबन्धोऽपि च संनिधौ त्वविभागात्' इत्यनेन न्यायेन न कर्मान्तरबुद्धिं करोति । यद्वा दधिगोदोहनादिवत् प्रकृतकर्माश्रयात् सहस्रदक्षिणादेर्गुणादेवैतत्फलमित्यध्यवसानादकर्मान्तरत्वम् । ज्योतिरादिषु त्वयमपरो विशेषः । यज्ज्योतिष्टोमनामैकदेशत्वेन तद्बुद्ध्यनपायः । तथा 'वसन्ते वसन्ते ज्योतिषा' इति तत्र तत्र प्रयोगो दृश्यते । तस्मात् शब्दान्तराभ्याससंख्यापूर्वकर्मायोग्यगुणप्रकरणान्तराणामभावात् अभेद इति प्राप्तेऽभि-



धीयते— '**अनुक्ते कर्मशब्दे या संज्ञा पूर्वं प्रवर्तते । न वस्त्वन्तरबुद्धेः सा कथंचिदपनीयते ॥**'

या ह्युत्पन्ने पूर्वोच्चारित आख्यातशब्दे संज्ञा प्रवर्तते, सा पूर्वमेवाऽऽख्यातेन भेदाभेदयोः अन्यतरत्र निश्चये कृते पश्चात् प्रवर्तमाना न भिन्द्यात् । इयं पुनरुत्पत्स्यमानसंयुक्ता संख्यावच्च पृथक्त्वनिवेशिनी । कथम् ? सर्वत्रैव तावदनेकार्थानेकशब्दयोरन्याय्यत्वादर्थान्तरदर्शनात् संज्ञान्तरमपेक्षते । संज्ञान्तरदर्शनाच्चार्थान्तरत्वम्, तच्चोभयमपि बलीयसस्तद्बाधकप्रत्यभिज्ञानात् बाध्यते । यावत्तु तादृग्बाधकविज्ञानं नास्ति तावदनपोदितमौत्सर्गिकं भेदज्ञानमास्ते । तदिह पूर्वप्रस्तुतज्योतिष्टोमविलक्षणमनन्तरम् 'अथैष गौः' इति संज्ञान्तरमुच्चार्यमाणमेव पूर्वसंबन्धानुभवाहृते तत्र बुद्धिमनादधदात्मानुरञ्जितप्रत्याय्यार्थान्तरबुद्धिं करोति । तत्र प्रागूर्ध्वं वा संज्ञी स्यादित्यन्विष्यमाणे यावन्तः प्रागुच्चारिता यजतयस्ते सर्वे ज्योतिष्टोमबुद्धावविच्छिन्नायां प्रवृत्तत्वात्तद्विषयत्वेनावधारिता नार्थान्तरत्वं संज्ञान्तरभाक्त्वं वा लभन्ते । यस्तु प्रस्तूयमानः स यद्यपि फलगुणोपबन्धादन्यत्र व्यापृते विधायके तद्वशेन न भिद्यते तथाऽप्यसंबद्धपदव्यवायन्यायेन गोशब्दे पूर्वत्रानिविशमाने तद्बुद्धावननुषज्जमानायां प्रकरणविच्छेदे ज्ञाते अर्थान्तरकलुषितायां च बुद्धौ निपतत्संज्ञान्तराविरुद्धं च ज्योतिष्टोमं गन्तुमशक्नुवन् विच्छिन्नानुसंधानादर्थान्तरे वर्तते । तथाहि— '**संज्ञानदीव्यवच्छिन्नो यजिः पूर्वं न गच्छति । न च पूर्वस्तमित्येवं बलादर्थान्तरं गतः ॥**' एवं च सति अथशब्दः पूर्वप्रकृतापेक्षणानन्तर्याद्यसंभवात्कर्मान्तराधिकारार्थ एवावगम्यते । एषशब्दोऽपि संनिहितप्रत्यक्षवचनः सन् यथैव च पूर्वप्रकृते तद्रूपत्वाद्वर्तते तथोत्तरे प्रस्तूयमानेऽपीत्यविशेषः । प्रकृतविच्छेदाप्रकृतप्रक्रिये च संज्ञाश्रुतिवशादाश्रीयमाणे निर्दोषे । 'नासामिमाः पुनः श्रुतयः' इति । प्रथमोच्चारितत्वान्नैव पुनः श्रुतित्वाशङ्काऽस्तीत्येवं वर्ण्यते । नोत्पन्ने कर्मणि पुनः श्रूयन्ते इत्यभिप्रायः । समस्तमेव च वाक्यमनर्थकं भवेत् । अथैष ज्योतिरिति ह्यनुक्त्वाऽपि शक्यन्ते सहस्रदक्षिणादयो गुणा विधातुम् । कर्मैकत्वपक्षे च द्वादशशतप्रभृतीनां सहस्रदक्षिणादीनां च तुल्यार्थत्वाद्विकल्पः स्यात्, स चान्याय्यः । कर्मान्तरत्वे तु नैष दोषः । न च गुणात्फलमवसीयते, संज्ञाविच्छिन्नाश्रयलाभासंभवात् । प्रस्तूयमानकर्मसंबन्धश्च संज्ञागुणफलादीनां वाक्येन, पूर्वकर्मसंबन्धः प्रकरणेन । तस्मादपि कर्मान्तरम् । न च ज्योतिरादीनां ज्योतिष्टोमावयवत्वम् । न हि कण्वरथंतरावयवो रथंतरमिति निश्चीयते । यत्तु 'वसन्ते ज्योतिषा यजेत' इति प्रयोगो दृष्ट इति स प्रमाणान्तरावगमवशाद्गौण इति द्रष्टव्यम् । न चेह तादृक्प्रमाणान्तरमस्ति, येन तद्विषयत्वमवगम्येत ।

योऽपि त्रिवृदादिषु ज्योतिःशब्दप्रयोगः सोऽपि तत्रैव वाक्ये सामानाधिकरण्यात् औपचारिक इति न सर्वत्र लभ्यते । तथाहि— '**सिंहशब्दः क्वचिद्गौणो माणवादौ निरूपितः । नाऽऽलम्भे श्रूयमाणोऽपि तदर्थः परिगृह्यते ॥**' तस्मान्मुख्यार्थपरिग्रहाद्भेदिका संज्ञेति सिद्धम् ।

**शा**— संज्ञातो भेदोऽभिधीयते । ज्योतिष्टोमं प्रकृत्य श्रूयते— 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत' इति । तत्र एतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिना सामानाधिकरण्यात् यागनामत्वं तावत् सिद्धम् । तत्र संशयः किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते उत कर्मान्तराणि एवंनामकानि एवंदक्षिणानि विधीयन्ते इति । तत्र प्रकरणादेतच्छब्दस्य च प्रकृताभिधायित्वात् तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहान्यप्रकृतकल्पनागौरवाच्च पूर्वस्यैव गुणविधिरिति प्राप्ते, ब्रूमः— '**नामान्तरश्रुतावर्थभेदस्तावत्प्रतीयते । बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते ॥**' अतः कर्मान्तराणि ।

**सोम— सूत्रार्थस्तु**— संज्ञा अपि भेदिका, पृथक्त्वनिवेशित्वात् । पूर्वपक्षेऽपि ज्योतिरादिशब्दाः यद्यपि संज्ञाः तथाऽपि उत्पन्नकर्मगोचरत्वेन उत्पत्तिसंयोगाभावात् न तासां भेदकत्वम् । सिद्धान्ते तु उत्पत्तिसंयोगात् भेदकत्वं इत्याशयेन उक्तम् 'उत्पत्तिसंयोगात्' इति ।

**वि**-- ' अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक् । गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते ॥ अथेति प्रकृते छिन्न एतच्छब्दोऽग्रगं वदेत् । संख्यये-वान्यकर्मत्वमिह नूतनसंज्ञया ॥ '

**भाट्ट**-- ' ज्योतिष्टोमं प्रकृत्य ' अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत ' इति श्रुतेषु ज्योतिरादिपदानां गुणविशेषे प्रसिद्ध्यभावात् द्योतनात्मकत्वेन प्रसिद्ध्युपपादने कर्मण्यपि तदापत्तेः । एतच्छब्देन च तद्विधाने वाक्यभेदाद्यापत्तेस्तेषां नामत्वं तावदविवादम् । तच्च न प्रकृतस्य यागस्य, ज्योतिष्टोमसंज्ञावरोधात् संज्ञाकार्यस्य व्यवहारस्यैकेनैव सिद्धेरितरवैयर्थ्याच्च । न च विनिगमकाभावाद्विकल्पः । अथशब्दस्य पूर्वकर्माधिकारविच्छेदकस्य नियामकत्वात् । अत एव ' वसन्ते वसन्ते ज्योतिषा यजेत ' इतिवत् नाख्याविकारत्वाशङ्का । तस्याविच्छिन्ने अधिकारे समाम्नानेन तथाऽङ्गीकारात् । न चैवमधिकारविच्छेदाभावे उद्भिदादिसंज्ञातो भेदानापत्तिः । ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं न स्यादिति वाच्यम् । सोमयागे क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञावरुद्धे उद्भित्संज्ञायाः कथमपि निवेशानुपपत्तेः तस्या भेदकत्वात् । अत एव यत्र न किञ्चिन्नियामकमस्ति तत्र संकल्पादौ संज्ञयोर्विकल्प एव । प्रकृते तु अथशब्देन विच्छेदात् भेदकत्वमेव संज्ञायाः । ' सहस्रदक्षिणेन यजेत ' इत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दान्तस्य ज्योतिरादिवाक्यस्य वैयर्थ्यप्रसङ्गाच्च । अतः द्योतनादियोगेन ज्योतिरादिसंज्ञं कर्मत्रयं सोमयागप्रकृतिकं तत्तद्वाक्यैरुत्पन्नं सहस्रदक्षिणाकं ' य एतेन ऋद्धिकामो यजेत ' इति वाक्येन फले विधीयते इति सिद्धः संज्ञया कर्मभेदः ।

**मण्डन**-- ' ज्योतिःप्रभृत्यपि भवेत् यजिभेत्तृ नाम । '

**शंकर**-- 'संज्ञया च स इष्यते । ' सः इति कर्मभेदः ।

* संज्ञाधिकरणम् । अन्यविषयत्वासम्भवनिश्चयाभावदशायां संज्ञात्वं पूर्वं प्रमितं बाधकाभावेनावतिष्ठमानं पूर्वविषयासंभवात् विषयान्तरं स्वसंगतये कल्पयति इति युक्तः संज्ञाप्रमाणको भेदः । ( अयमेव संज्ञाधिकरणन्यायः ) । **कौ.** २।२।८।२१ पृ. २५१.

* **संज्ञान्तरं** उच्चार्यमाणमेव पूर्वसंबन्धानुभवादृते तत्र बुद्धिमनादधत् आत्मानुरञ्जितप्रत्याय्यार्थान्तरबुद्धिं करोति । **वा.** २।२।८।२२ पृ. ५२९. * सर्वत्रैव तावत् अनेकार्थानेकशब्दयोः अन्याय्यत्वात् अर्थान्तरदर्शनात् **संज्ञान्तरमपेक्षते** । संज्ञान्तरदर्शनाच्च अर्थान्तरत्वम्, तच्चोभयमपि बलीयसः तद्बाधकप्रत्यभिज्ञानात् बाध्यते । यावत्तु तादृक्बाधकविज्ञानं नास्ति तावत् अनपोदितं औत्सर्गिकं भेदज्ञानमास्ते । **वा.** २।२।८।२२. * **संज्ञान्तरैरनाख्यातं** अनीप्सितं कर्म यथा- ' गां दोग्धि ' । **मणि.** पृ. १३०.

* **संज्ञाग्रहणे** पुनर्न पदान्तरमपेक्षते । श्रुत्यैव परिपूर्णार्थो गृह्यते । तस्मान्न संबन्धिशब्दोऽध्यवसानीयः । उत्तरासंज्ञैव उपादातव्येति । न हि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्यं अपेक्षितव्यं भवति । **भा.** ९।२।५।२३ पृ. १७११.

* **संज्ञाव्यवस्था** धर्मभेदात् । सत्रं अहीनः इति वा । ब्राह्मणः परिव्राट् वानप्रस्थ इति यथा । **भा.** ८।२।५।२४.

* **सतामपि** प्रतिबन्धात्, कारणान्तराभावात्, अन्यतो वा सिद्धेः, कार्यानारम्भाविरोधात् । **वा.** ३।४।४।१३ पृ. ९२९. * 'एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् । **सतां** हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ ' इति । बहुदिनाभ्यस्तधर्मव्यासात्मनो हि न कथंचिद्धर्मकरणरूपारमतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते । **भा.** १।३।३।७ पृ. २०७. * **सत्यपि** विधिभेदे अन्यत्वं नास्ति, अवयवत्वेन विधानात् इति नानाबीजेष्टिन्यायः । राजसूये नानाबीजेष्टौ कृष्णाजिनास्तरणादिफलीकरणपर्यन्त एकः पदार्थः, तेन उलूखलादौ अनुसमयः । **शा.** ५।२।६. * सत्यपि संस्कारयोग्येऽमुख्ये मुख्यस्यैवोपादानम् । **भा.** ६।३।१८।३८.



**सति कुड्ये चित्रमिति न्यायः** । स्फुटः । **साहस्री.** ४३२.

* सति निमित्ते नैमित्तिकस्य त्यागायोगः । **वि.** २।४।१. * सति पुष्कले हेतौ कार्यं भवत्येव इतिन्यायानुगृहीतं श्रुत्यन्तरमेव बलवत् । **न्यायनि.** ३।३।१६।२७ ब्रसू. * **सत्यां** ( इतिकर्तव्यता- ) आकाङ्क्षायां संनिहितैः धर्मैः अविप्रतिषिद्धः संबन्धः प्रकृतौ । विकृतौ तु आनुमानिकैः । **भा.** ७।४।१।१.

**सदसतोरुत्पत्तिनिवृत्त्यसंभवेन परस्परविरोधे च प्रकारान्तरस्थितिरिति न्यायः** । स्फुटः । **साहस्री.** ३८३.

* ' **सन्मूलस्य** प्रमाणत्वं साध्यस्यापि वरं श्रितम् । न सिद्धमप्यसन्मूलमाश्रयेण हि दूषितम् ॥ ' **वा.** १।३।५।१० पृ. २२४.

**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् । १।१।४।४॥**

प्रत्यक्षं तावत् अनिमित्तं ( धर्मस्य ) । किं कारणम् ? एवंलक्षणकं हि तत् सत्संप्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् ( इति ) । सति इन्द्रियार्थसंबन्धे या पुरुषस्य बुद्धिर्जायते तत् प्रत्यक्षम् । भविष्यंश्च एषोऽर्थः ( धर्मः ) न ज्ञानकालेऽस्ति । अतः प्रत्यक्षमनिमित्तम् । प्रत्यक्षपूर्वकत्वाच्च अनुमानोपमानार्थापत्तीनामपि अकारणत्वमिति ।

वृत्तिकारस्तु-- किं तर्हि प्रत्यक्षम् ? ' तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत् प्रत्यक्षम् ' । यद्विषयं ज्ञानं तेनैव संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म ( यत् तत् ) सत् प्रत्यक्षम् । यदन्यविषयज्ञानं अन्यसंप्रयोगे भवति न तत् प्रत्यक्षम् । तस्मात् प्रसिद्धत्वात् न परीक्षितव्यं निमित्तम् । इति ।

' अनिमित्तं विद्यमानोपलम्भनत्वात् । ' ( इति पृथक् पूर्वपक्षसूत्रम् । अस्य निरासः पञ्चमसूत्रे ) शब्दस्तु न प्रमाणम् । अनिमित्तं अप्रमाणं शब्दः । यो हि उपलम्भनविषयो नोपलभ्यते स नास्ति यथा शशस्य विषाणम् । उपलम्भकानि इन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । ( प्रमाणानां विद्यमानोपलम्भनत्वात् । शब्दस्तु न विद्यमानोपलम्भनः तस्मान्न प्रमाणं इति पूर्वपक्षः । ) इति **भाष्यम्** । पृ. ३९ । इन्द्रियाणां सत्संप्रयोगे ( सता विद्यमानेन संनिकर्षे ) विषयसंनिकर्षे सति पुरुषस्य बुद्धिजन्म प्रत्यक्षस्योत्पत्तिर्भवति । तत् प्रत्यक्षं धर्मस्य अनिमित्तं स्वरूपनिश्चायकं न भवति । कुतः ? विद्यमानमात्रग्राहित्वात् । अनुमानादेरप्युपलक्षणमेतत् । इति **कुतूहलम्** । **के.**

* ' सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् । ' १।१।४।४॥ इदं सूत्रं 'यो धर्मः तत्र चोदनैव प्रमाणम्' इति नियमस्य फलमुपपादयितुम् । तत्र श्रुत्या प्रत्यक्षमात्रस्य अप्रामाण्यमुक्तं अर्थादितरेषाम् । अत्र सर्वज्ञनिरासः प्रत्यक्षनिरासायैव । **बाल.** पृ. ५ * 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् । ' १।१।४।४ ॥ इदानीं प्रत्यक्षस्य धर्मप्रामाण्यनिराकरणाय प्रत्यक्षलक्षणमुक्तं सूत्रकारेण । इन्द्रियार्थसंबन्धजन्यं ज्ञानं प्रत्यक्षं इति सूत्रकारः । **मणि.** पृ. १९. * 'सत्संप्रयोगे पुरुषस्य० । ' १।१।४।४ ॥ ( अत्र वृत्तिकारव्याख्याने ) तत्सतोर्व्यत्ययः लक्षणाभिधानं च सर्वप्रमाणानाम् । **बृहती.** पृ. ३८ । अनिमित्तपरे हि सत्संप्रयोगसूत्रे पूर्वव्याख्याने ( शाबरे ) तत्सतोर्व्यत्ययो न लभ्यते । ततश्च अन्यसंप्रयोगेऽपि अन्यविषयविज्ञानप्रत्यक्षत्वात् निरालम्बनपक्षसिद्धेः पूर्वोक्तं सर्वमेव न सिध्येत्, लक्षणाभिधानं च सर्वप्रमाणानां पूर्वोक्तव्याख्याने हि न लक्षणपरता, किंतु अनिमित्तपरता । अस्मिंस्तु व्याख्याने ( वृत्तिकारीये ) लक्षणपरत्वेन तत्संप्रयोगसूत्रस्य प्रदर्शनार्थतया सर्वप्रमाणलक्षणाभिधानं सिध्यति । सर्वप्रमाणलक्षणोपयोगस्तु अव्यभिचारप्रदर्शनेन निरालम्बनत्वनिरासः । **ऋजु.** पृ. ३८.

* **सतः** इति दारुमयं पात्रं परिमण्डलं शतच्छिद्रम् । **भा.** १।३।५।१०.

* **सतोबृहती** पङ्क्तिः । पादेषु अक्षराणि १२।८। १२।८ । उदा० ' आ यं नरः सुदानवो ' ( **ऋसं.** ५।५३।६ ) ।

* **सत्कार्यवादः** साधितो भाष्यकारैः असत्कार्यवादं निरस्य । **संकर्ष**. ३।३।१३.

* **सत्ता** । देशकालाद्यपेक्षायामपि नैव सत्तायां नास्तित्वं अभिधातुं युक्तम् । विभुत्वनित्यत्वाभ्यां सर्वदेशकालव्यापित्वात् । **वा**. १।३।९।३० पृ. २९७ । द्रव्यादिसामान्यं सत्ता इत्येतन्न युज्यते । न तु वैशेषिकपरिभाषया 'यतो द्रव्यगुणकर्मसु सत् इति प्रतीतिः सा सत्ता' इत्येवं लक्षणा जातिः प्रतिपत्तव्या । तार्किकैः कल्पितं सच्छब्दवाच्या सत्ता महासामान्यं इति तन्न । पृ. २९८. * **सत्तायाः** उपलम्भप्रतिबन्धकं किंचिन्नास्ति । **सु**. पृ. ३४७. * सत्तायाः प्रत्येकवर्तित्वात् न समुदाये वाक्यपरिसमाप्तिः । **वा**. १।४।२।३ पृ. ३३२, * सत्तायाः वस्त्वात्मलाभमात्रापवर्गान्न साध्यत्वम् । तद्व्यतिरिक्तसाध्यान्तरानपेक्षणाच्च उपकारासंबन्धात् नेतिकर्तव्यतात्वम् । १।४।२।३ पृ. ३३१.

* **सत्तामहासामान्यस्य निरासः प्राभाकरमतेन** । एतेन सत्त्वादिसामान्यानि प्रत्युक्तानि । नहि जातिगुणक्रियाद्रव्येषु साधारणाकारावमर्शोऽस्ति । सदादिशब्दानां प्रमेयादिशब्दवत् प्रवृत्तिसंभवात् । किं पुनः सच्छब्दस्य प्रवृत्तिनिमित्तम् ? प्रमाणसंबन्धः । ननु एवं तर्हि प्रमाणसंबन्धस्य अपरिकल्पने अप्रमीयमाणावस्थायां सच्छब्दानुविद्धा बुद्धिर्न स्यात् अस्ति घटः, आसीत् घटः, भविष्यति घटः इति । न खलु पचिक्रियासंबन्धानवबोधे पाचक इति कश्चित् व्यपदिशति । यदि तु प्रमाणोत्तरकालभाव्येव चायं व्यपदेशः स्यात् तथापि त्रिधा भेदो नोपपद्यते । सर्वस्य प्रमाणस्य अतिवृत्तत्वात् आसीत् इति भवेत् । सत्ताख्ये तु महासामान्ये तस्य च अतीतत्वात् आसीदित्युच्यते, तथा वर्तमानत्वात् अस्तीति, आगामित्वाच्च भविष्यतीति । अत्र प्रतिविधीयते । यस्यापि सामान्यं व्यतिरिक्तमस्ति तस्यापि तत् किमिति क्वचित् विचलितं आगमिष्यति वा । विनष्टत्वात् आश्रयभूतस्य द्रव्यस्य उत्पद्यमानत्वाच्च इति चेत्, कः पुनर्विनाशः ? सत्तापगम एवेति चेत् । सूक्तमिदं सत्तापगमात् सत्तापगम इति । अथ स्वरूपापगमो विनाशः, तथा भाविन्यपि स्वरूपस्यैव भावित्वमिति, अङ्गीकृतं तर्हि स्वरूपसत्ताऽपि भावानामस्तीति । सा चेदभ्युपगता, तदा तस्या एव त्रैकाल्यात् आसीदस्ति भविष्यति इत्युपपन्नः त्रेधा व्यपदेशः । महासामान्यं च सत्तां अवजानीमहे । न स्वरूपसत्तामपि । एतेन इदमपि निराकृतम्, यदुच्यते निवृत्तसकलप्रमाणसंबन्धे वस्तुनि सत्तासंदेहो न स्यात्, प्रमाणसंबन्धस्य निरस्तत्वात् तल्लक्षणत्वाच्च सत्तायाः इति । यतः अस्तमितसकलप्रमाणव्यापारे स्वरूपमेव संदिह्यते । भिन्नेषु तु पदार्थस्वभावेषु सच्छब्दप्रवृत्तौ प्रमाणसंबन्धयोग्यतैव निमित्तं इत्युच्यते, न पुनः प्रमाणसंबन्ध एव सच्छब्दवाच्यः । यथा बहुषु पुरुषेषु परस्परभिन्नेषु एकपचिक्रियोपाधिवशेन पाचकशब्दो निविशते इति नानुपपन्नम् । **ऋजु**. पृ. १२०–१२१.

* **सत्ताशब्दो** यौगिक एव न रूढः । अस्तीत्याख्यातस्यार्थे सन् इति शब्दः । ततश्च सतो भावः सत्ता इत्यस्मिन्नर्थे सच्छब्दात् तल्प्रत्ययोत्पत्त्या सत्ता इति शब्दः प्रवर्तमानो यौगिक एव । **सु**. पृ. ३४८.

* **सत्तासामान्यनिराकरणम्** । इदानीं सत्तासामान्यं निराक्रियते । न हि द्रव्यगुणकर्मसामान्येषु द्रव्यगुणकर्मसु वा 'सत्' इत्यनुवृत्ताकारप्रतिपत्तिः । ननु अनुवृत्तिप्रत्ययमन्तरेणैकशब्दप्रयोगो नोपपद्यते । तथा हि, नानाभूतेषु वृक्षघटलोष्टादिषु 'सत् सत्' इत्येकशब्दप्रयोगो दृश्यते, एकशब्दप्रयोगस्त्वेकनिबन्धनमन्तरेण नोपपद्यते इत्यर्थापत्त्या अनुमानेन वा एकनिबन्धनत्वे सिद्धे तत्प्रतीतिपूर्वकत्वमेकशब्दप्रयोगस्य । नैवम्, व्यभिचारित्वात्, एको हि गोशब्दः सास्नादिमति, भूमौ रश्म्यादौ च ।

गोशब्दस्य भिन्नशब्दशक्त्यैव वृत्तिः एकत्र, गृहीतसंबन्धस्यान्यत्र प्रयोगाभावात् । सच्छब्दस्य तु न प्रतिविषयं व्युत्पत्त्यपेक्षा गवादिशब्दानामिव । तन्न, तथाप्यन्यथोपपन्नत्वात्, उपाधिरपि एकशब्दप्रयोगस्य कारणं भवत्येव, यथा पाचकः, वाचकः, मीमांसक इत्यादि । एवं तर्ह्युपाधिविशेषो वक्तव्यः । श्रूयताम्– क्वचिद् गुणयोगः शुक्लादिशब्देषु, क्वचिच्च क्रियायोगः पाचकादिशब्देषु, अत्र तु प्रमितिक्रियायोग एवोपाधिः । अतश्च



सर्षपमहीधरादिषु प्रयोगः, शशविषाणादिष्वप्रयोगश्चेति नान्याप्तिः । ननु एवं भूतभविष्यतोरपि सत्त्वप्रसङ्गः, तयोरपि प्रमाणसंबन्धस्य विद्यमानत्वात् । 'सत्' इत्यत्र प्रकृतिमात्रस्योपाधिः, न प्रत्ययपर्यन्तस्य, भूतभविष्यतोरपि प्रकृत्यर्थो विद्यत एव, न वर्तमानप्रत्ययार्थः, अतो यस्य स्वरूपं वर्तमानं तत् 'वर्तते' इत्युच्यते, यस्य स्वरूपं विनष्टं तत् 'भूतं' इत्युच्यते, यस्य स्वरूपमुत्पत्स्यते तत् 'भविष्यत्' इति त्रिधा व्यपदेशोपपत्तिः ।

यत्तु निध्यादिषु प्रमाणाभावात् सदसत्संदेहो न स्यादिति, तत्रापि यस्य कस्यचित्प्रमाणसंबन्धोऽस्तिनास्तीतिसंदेह इत्युपेक्षणीयम् । ननु प्रमितिक्रियायोगः संविदि नास्ति, स्वयंप्रकाशत्वादेव, अतः संविदोऽसत्त्वप्रसङ्ग इति, नैवम्, यद्यपि संवित्स्वयंप्रकाशा, तथापि स्वयंप्रकाशत्वग्राहकप्रमाणसंबन्धोऽस्तीति नासत्त्वम्, परेण परसंविदनुमानाच्च ।

ननु प्रमितिनानात्वेन नैकं निबन्धनमस्ति, तद्वरं भिन्नानामेव स्वरूपाणामुपाधित्वम्, नैवम्, यद्यपि प्रमितीनां स्वरूपतो नानात्वम्, तथापि प्रमितिसामान्यमेकमस्तीति तदेव निबन्धनमस्तु । प्रमितिसामान्यं नास्तीति येषां पक्षः तेषामपि प्रमात्रैक्यनिबन्धनमेकत्वम् । प्रमातॄणामपि नानात्वादुपाधित्वं नोपपद्यते इति चेत्, नैवम्, प्रमातृत्वं हि जातित उपाधितो वा एकमिति निश्चितं संप्रतिपन्नं च, अतस्तेनैवैकत्वेन प्रमितीनामेकत्वमिति न दोषः । सत्तासामान्याभ्युपगमे स्वरूपसत्ता हि स्वीकर्तव्या । वैशेषिकास्तु द्रव्यगुणकर्मसु सत्तासामान्यमिच्छन्ति सामान्यविशेषसमवायेषु स्वरूपसत्त्वमेव । वार्तिककारीयाश्च द्रव्यगुणकर्मसामान्येषु सत्तासामान्यमिच्छन्ति, सत्तासामान्यस्य स्वरूपसत्त्वमेव, अतः सर्वत्र स्वरूपसत्त्वमेवास्तु, किमर्धजरतीयेन ? किंच, सत्तासामान्यं कुत्र वर्तते ? इति पर्यनुयोगे स्वरूपेषु वर्तते इति वक्तव्यम्, स्वरूपाणां किं सत्त्वम्, असत्त्वं वा ? इति विकल्पिते सत्त्वमेव इति वक्तव्यम्, अन्यथा शशविषाणादिष्वपि सत्तासमवायप्रसङ्गात् । अतः सत्तासामान्ययोगव्यतिरेकेणापि स्वरूपसत्त्वमङ्गीकर्तव्यम् । एवं च सति स्वरूपसत्त्वमेव कृताकृतप्रसङ्गित्वादास्थेयम् । अतोऽनुवृत्तिप्रत्ययाभावादेव सत्तासामान्यं नास्तीति स्थितम् । **प्रवि**. पृ. ६२–६५.

* **सत्त्वाभूतं** साम अनृक्कम् । **बाल**. पृ. ७२.

* **सत्प्रतिपक्षन्यायः** । यथा सत्प्रतिपक्षस्थले न कस्याप्यनुमितिः परस्परप्रतिबन्धात् । **भूतिः**. पृ. १५५.

* **सत्यं** द्विविधम्, शब्दसत्यं अर्थसत्यं च । तत्र साधुशब्दोच्चारणं शब्दसत्यम्, यथावस्थिताविप्लुतार्थवचनं अर्थसत्यम् । **वा**. १।३।८।२७ पृ. २८७, * सत्यं ब्रुवाणस्य स्वर्गो भवति । ३।४।४।१३ पृ. ९११, * 'सत्यं ब्रूयात्' इति स्मृतौ धर्माय सत्यनियमः श्रूयते । ३।४।४।१३ पृ. ९११.

* **सत्यवचनं** च सर्वश्रुतिस्मृतिषु स्वर्गसाधनत्वेन यागसाधनत्वेन च नियतम् । **वा**. १।३।८।२७ पृ. २८७. * सत्यवचनं व्रतं पुरुषधर्मत्वात् अनुवर्तमानं अपि दर्शपूर्णमासयोः पुनरुपेयते । संयोगपृथक्त्वात् पुरुषार्थमुपेतं कर्मार्थं पुनरुपेयते । **भा**. १२।१।११। २२–२३.

* **सत्यवचनव्रतस्य** कर्मार्थत्वे ज्ञाते प्रयोजनं प्रायश्चित्तविशेषः तृतीये अध्याये व्याख्यातः । **भा**. १२।१।११।२३.

* '**सत्यवाचां** च वाक्यानि वैदिकैः संगतानि च । ज्ञातसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ॥' **वा**. १।३।६।११ पृ. २३२.

* **सत्यशब्दः** परमार्थस्य वाचकः न तु अक्षादिशब्दवदनेकार्थः । **रत्नाकरः** निरालम्बनवादे श्लो. ६ पृ. २१८.

* **सत्यवत्यां** अनूढायां पराशरात् द्वैपायनो जातः । **सु**. पृ. १९१.

**☒ सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् । ८।२।५।२५॥**

द्वादशाहो नाम अहर्गणः । प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, त्रयः छन्दोमाः, अविवाक्यमहः, उदयनीयोऽतिरात्रः इति तस्य अहःक्लृप्तिः । स च

सत्रं अहीनश्च इति द्विविधः । तस्य द्विरात्रादिषु अहर्गणेषु प्रवृत्तिः इत्युक्तं प्राक् 'गणेषु द्वादशाहस्य' ( ८।१।१०।१७ ) इत्यत्र । स यदा विकृतौ प्रवर्तते तदा किं उभयरूपः प्रवर्तते उत क्वचिदहीनभूतः, क्वचित् सत्ररूपः इति व्यवस्थया प्रवर्तते इति विचारे पूर्वपक्षमाह । सत्रमहीनश्च इति द्विविधो यो द्वादशाहः, तस्य विकृतौ उभयथा द्विविधस्यापि प्रवृत्तिः स्यात् । ऐककर्म्यात् । द्वादशाहस्य एककर्मत्वात् । सत्रं वा अहीनो वा कर्म समानमेव । तस्मात् उभयथा प्रवृत्तिः स्यात् । अर्थात् तु विकल्पः । सत्रस्य वा अहीनस्य वेति ।

**अपिवा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् । २६ ॥**

सत्रं अहीनश्चेति द्विविधस्य द्वादशाहस्य विकृतौ उभयथा विकल्पेन प्रवृत्तिः इति पूर्वपक्षं अपिवाशब्देन व्यावर्तयति । नोभयथा प्रवृत्तिः किंतु यजतिश्रुतेः अहीनभूतप्रवृत्तिः स्यात् । यत्र यजतिश्रुतिः तत्र विकृतौ अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः स्यात् । परिशेषात् यत्र आसनोपायिश्रुतिः तत्र विकृतौ सत्रभूतस्य द्वादशाहस्य प्रवृत्तिः । प्रकृत्या तुल्यशब्दत्वात् विकृतेः । अहीनेषु यजतिशब्दः, सत्रेषु उपायिशब्दः आसनशब्दो वेति । एतच्च अधुनैव उत्तरसूत्राभ्यां वक्ष्यते । तस्मात् यथायथं प्रवृत्तिः ।

**द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् । २७ ॥**

अस्मिन् सूत्रे अहीनोदाहरणान्याह हेतुत्वेन च अहीनलक्षणमाह । द्विरात्रः आदिर्येषां ते द्विरात्रादयः आ एकादशरात्रात् एकादशरात्रमन्तर्भाव्य ये यागाः, तेषां अहीनत्वं स्यात् । ते अहीना नाम । कुतः ? यजतिचोदनात् 'द्विरात्रेण यजेत' इति तत्र यजधातुना चोदनं विधानं भवति । एवं च यजतिचोदनात् अहीनत्वम् । तेषु अहीनेषु अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः ।

**त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् । २८ ॥**

अस्मिन् सूत्रे सत्राणामुदाहरणानि तद्धेतुत्वेन सत्रलक्षणं चाह । त्रयोदशरात्रादिषु संवत्सरपर्यन्तेषु यागेषु सत्रत्वं स्यात् । आसनचोदनात् उपायिचोदनाद्वा । आसधातुना उप+इ धातुना वा यत्र चोदनं तत्र सत्रत्वम् । तादृशेषु च सत्रेषु सत्रभूतः द्वादशाहः प्रवर्तते ।

**लिङ्गाच्च । २९ ॥**

द्विरात्रादीनां अहीनत्वे लिङ्गमाह । 'अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत । तमेतं द्विरात्रादय अहर्गणा ऊचुः त्वमस्मान् मा हासीः इति । तदेषामहीनत्वम्' इति अर्थवादः, प्रजापतिना अग्निष्टोमेन न हीनाः अहीनाः द्विरात्रादयः इत्याह । तस्मात् ते अहीनाः । के.

* सत्रं उभयतोऽतिरात्रम् । संकर्ष. १।४।२७.

**⌛ सत्रमेकः प्रकृतिवत् । १०।६।१४।४५॥**

द्वादशाहः गवामयनं इत्यादि सत्रं एकः कर्ता प्रयुञ्जीत । प्रकृतिवत् । यथा प्रकृतिं ज्योतिष्टोमं एक एव प्रयुङ्क्ते तद्वत् । 'य एवं विद्वांसः सत्रमासते' इति बहुवचनं तु एकैकश्येन करणेऽपि युक्तम् । यथा लोके 'देवश्चेद्वर्षेत् बहवः कृषिं कुर्युः' इति पृथक्त्वेनापि कृषिं कुर्वाणानां बहुवचनं दृश्यते तद्वत् । इति पूर्वः पक्षः ।

**वचनात्तु बहूनां स्यात् । ४६ ॥**

तुशब्दः सत्रस्य एककर्तृकत्वपूर्वपक्षं व्यावर्तयति । 'आसीरन्' 'उपेयुः' इति वचनात् बहुत्वसंबद्धात् वचनात् सत्रं बहूनामेव कर्म स्यात् नैकस्य । वचनात् कर्त्रैकत्वचोदकबाधः । इति सिद्धान्तः ।

**अपदेशः स्यादिति चेत् ।**

आसीरन्, उपेयुः इति बहुवचनप्रयोगात् सत्रे बहूनामेव संभूय कर्तृत्वं इति सिद्धान्तिना उक्ते आह । अपदेशः व्यपदेशः शब्दप्रयोगः । 'कृषिं कुर्युः', 'पृष्ठशमनीयेन यजेरन्' इतिवत् सामान्यक्रियासंबन्धमभिसमीक्ष्य आसीरन् उपेयुः इति अपदेशः बहुवचनशब्दप्रयोगः स्यात् । तस्मात् सत्रे न बहूनामेव कर्तृत्वं इति चेत् पूर्वपक्षी ब्रूयात् ।



**नैकव्यपदेशात् । ४८ ॥**

'अपदेशः स्यादिति चेत्' ( १०।६।१४।४७ ) अत्रोच्यते । सत्रे न एककर्तृकत्वम् । एकव्यपदेशात् । 'एष वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति, एक एव यजेत' इति सत्रमपोद्य एककर्तृकतां विदधत् सत्रस्य बहुकर्तृकतां गमयति । आसीरन् उपेयुः इति शब्दप्रामाण्यात् उपादीयमानायां क्रियायां बहुत्वं विवक्षितं इति बहवः सत्रं प्रयुञ्जीरन् । इति सिद्धान्तः ।

**संनिवापं च दर्शयति । ४९ ॥**

'पञ्चभिः पशुभिर्यक्ष्यमाणाः संनिवपेरन्' 'सावित्राणि होष्यन्तः संनिवपेरन्' इति सत्रकर्तृणां ये विहाराग्नयः तेषां संनिवापं एकीकरणं दर्शयति । तस्मात् सत्रं बहव एव आसीरन् नैकः इति गम्यते । इति सिद्धान्तः ।

**बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् । ५० ॥**

'यो वै बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाप्नोति' इति बहूनां इति वचनं एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं ब्रुवन् बहूनां सह प्रयोगं दर्शयति । इतरथा एकस्मिन् यजमाने कर्तुरेकत्वात् फलैकत्वाच्च सामान्यविशेषभावानुपपत्तेः विशेषवचनं फलविशेषवचनं व्यर्थं स्यात् । तस्मात् बहव एव सत्रेण यजेरन् नैकः । इति सिद्धान्तः । के.

* सत्रं कामिनां विधीयते । भा. १०।६।१४।४५, * सत्रम् । 'गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इति सत्रस्य धर्मा आम्नाताः । ८।२।५।२४. * सत्रं संकल्प्य, अनुष्ठातुं कश्चित् प्रवृत्तः कश्चिदप्रवृत्तः, तयोरन्यतरस्य विश्वजिद्यागः इत्येकः पक्षः । प्रवृत्तस्यैव विश्वजिद्यागः इति द्वितीयः पक्षः । संकल्प्याननुष्ठातुरेव प्रायश्चित्तार्थं विश्वजिद्यागः इति सिद्धान्तः । 'यः सत्रायागुरते स विश्वजिता यजेत' इति । वि. ६।४।११, * **सत्राणि** अग्निष्टोमानुष्ठानात् प्राक् नानुष्ठातुं शक्यन्ते । ५।३।१४. * सत्राणि ज्योतिष्टोममपेक्ष्य कालतो दीर्घाणि भवन्ति । भा. ३।३।११।२५.

**⌛ सत्राणि सर्ववर्णानामविशेषात् । ६।६।३।१६ ॥**

गवामयनादीनि सत्राणि सर्ववर्णानां सर्वेषां त्रयाणामपि वर्णानां स्युः । अविशेषात् 'अमीषां वर्णानां सत्राणि भवन्ति, नामीषाम्' इति विशेषस्य अनुक्तत्वात् । इति पूर्वः पक्षः ।

**लिङ्गदर्शनाच्च । १७ ॥**

द्वादशाहे 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति वचने राजन्यवैश्ययोरपि निर्देशः सत्रे त्रयाणामपि वर्णानां संबन्धे लिङ्गं दृश्यते । तस्मात् त्रयाणामपि वर्णानां सत्रेऽधिकारः इति पूर्वः पक्षः ।

**ब्राह्मणानां वेतरयोरार्त्विज्याभावात् । १८ ॥**

सत्रे त्रयाणामपि वर्णानामधिकार इति पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न राजन्यवैश्ययोः सत्रेऽधिकारः किंतु ब्राह्मणानामेव । इतरयोः ब्राह्मणादन्ययोः क्षत्रियवैश्ययोः आर्त्विज्याभावात् आर्त्विज्याधिकारस्य अभावात् । तस्मात् ब्राह्मणानामेव सत्रेऽधिकारः ।

**वचनादिति चेत् । १९ ॥**

राजन्यवैश्यानां नास्ति सत्राधिकार इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । यजमानत्वं तावत् राजन्यवैश्यानामविरुद्धमेव । आर्त्विज्यं तु 'ये यजमानास्त ऋत्विजः' इति वचनात् स्यात् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न स्वामित्वं हि विधीयते । २० ॥**

'ये यजमानास्त ऋत्विजः' इति वचनात् राजन्यवैश्यानां यजमानानां सतां आर्त्विज्यं विधीयते इति तेषामपि सत्राधिकारः इति पूर्वपक्षं सूत्रेण प्राप्तं वाक्यार्थविचारेण निराचष्टे । यजमानानुद्दिश्य संस्कारत्वेन आर्त्विज्यविधौ अप्राकृतकार्यत्वापत्तिः । तस्मात् ऋत्विज उद्दिश्य यजमानत्वविधिः । तेन अन्यकर्तृकत्वस्य बाधः । ब्राह्मणकर्तृकत्वस्य तु न बाधकमस्ति । तदेतदाह– न वचनात् राजन्यवैश्ययोः सत्रेऽधिकारः प्राप्नोति । हि यस्मात् 'ये यजमानास्त ऋत्विजः' इति वाक्ये स्वामित्वं

विधीयते, नार्त्विज्यम् । ये ऋत्विजः ते यजमानाः इति वचनव्यक्तिरत्र । न राजन्यवैश्ययोः सत्रे अधिकारः ।

**गार्हपते वा स्यातामविप्रतिषेधात् । २१ ॥**

आर्त्विज्यमुद्दिश्य स्वामित्वविधानात् राजन्यवैश्ययोश्च आर्त्विज्याभावात् न तयोः सत्रेऽधिकारः इति सिद्धान्तिना उक्ते पूर्वपक्षी पुनः शङ्कते । वाशब्दः प्रत्यवस्थाने । राजन्यवैश्यौ गार्हपते गृहपतेः पदार्थे स्याताम् । न च तत्र आर्त्विज्येन प्रयोजनम् । तस्मात् गृहपतिकर्मणि आर्त्विज्यरहिते राजन्यवैश्ययोः अविप्रतिषेधात् प्रतिषेधाभावात् तावपि सत्रे अधिकारिणौ स्याताम् । इति ।

**न वा कल्पविरोधात् । २२ ॥**

राजन्यवैश्ययोरपि सत्रे सहाधिकारः, गृहपतिकर्मणि तयोरधिकारसंभवात् इति पूर्वपक्षिणा उक्ते सिद्धान्ती आह । वाशब्दः पूर्वपक्षिशङ्कानिरासार्थः । गृहपतिकर्मण्यपि राजन्यवैश्ययोः नाधिकारः संभवति, कल्पविरोधात् । ब्राह्मणानां यजमानचमसः सोममयः । क्षत्रियवैश्यानां च फलचमसमयः । एवं ब्रह्मसाम बार्हद्गिरं ब्राह्मणानाम्, पार्थुरश्मं राजन्यानाम्, रायोवाजीयं वैश्यानाम् । तस्मात् राजन्यवैश्ययोः गृहपतिकर्मण्यपि न निवेशः ।

**स्वामित्वादितरेषामहीने लिङ्गदर्शनम । २३ ॥**

सप्तदशसूत्रे राजन्यवैश्ययोः सत्राधिकारप्रदर्शनार्थं यत् लिङ्गमुक्तं 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति, तत् लिङ्गदर्शनं अहीने स्यात् । सत्रे तु इतरेषां ऋत्विजां स्वामित्वात् राजन्यवैश्ययोश्च ऋत्विक्त्वासंभवात् । अहीने तु राजन्यवैश्ययोरपि अधिकारोऽस्त्येव । तस्मात् ब्राह्मणानामेव सत्रे सहाधिकारो न राजन्यवैश्ययोः इति **सिद्धान्तः । के.**

* सत्राणि सोमविकारः । **वि.** ५।३।१४. * सत्राणि स्वयंकर्तृकाणि । १०।६।१५।५१–५९. * '**सत्रायागूर्य** विश्वजिता यजेत' अयं भावे **पुरुषार्थो** विधिः । **बाल.** पृ. २०.

*** सत्राय प्रवृत्तमात्रस्य साम्युत्थाने विश्वजिद्विधानम् ॥**

**साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् । ६।५।७।२५ ॥**

**भाष्यम्**— इदमामनन्ति 'यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन्, सोममपभज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्' इति । तत्र संदेहः किं क्रीतराजकस्योत्थाने विश्वजित् उत प्रवृत्तमात्रस्येति । किं प्राप्तम् ? साम्युत्थाने विश्वजित् क्रीते स्यात् । कुतः ? विभागसंयोगात् । 'सोममपभज्य विश्वजिता यजेरन्' इति । ये ह्यक्रीते राजन्युत्तिष्ठन्ति, तेषां सोमविभागाभावाद्वैगुण्यं स्यात् । तस्मात् क्रीतराजका उत्तिष्ठन्तो विश्वजितं कुर्युः ।

**वा**— विश्वजिदयं सत्रफलार्थः, सत्रापरिसमाप्तिदोषोपघाताय वा, न तु स्वर्गफलाय, अश्रवणात् ।

**प्रवृत्ते वा प्रापणान्निमित्तस्य । २६ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । प्रवृत्तमात्रस्योत्थाने स्यात् । कुतः ? प्रापणान्निमित्तस्य । साम्युत्थानं निमित्तं विश्वजितः । तच्च प्राप्तम् । न च तच्छक्यं विशेषयितुम्, क्रीते यदि साम्युत्थानमिति ।

**आदेशार्थेतरा श्रुतिः । २७ ॥**

**भाष्यम्**— अथ यदुक्तम् 'अक्रीते राजन्युत्तिष्ठन्तो विभागाभावाद्विगुणं कुर्युः' इति । तत्परिहर्तव्यम् । अत्रोच्यते । न विभागो विधीयते । भिद्यत हि तथा वाक्यम् । साम्युत्थाने विश्वजिता यजेरन्, सोमस्य तु विभागं कृत्वेति । तेन अपभज्येत्यनुवादः । कथं प्राप्तिरिति चेत् ? अर्थादुत्तिष्ठतां विभागो भवति धनस्य । सोऽयं सर्वद्रव्याणां विभागः सोमविभागेन लक्ष्यते । सोमं विभज्य अन्यानि च द्रव्याणीति, आदेशार्थेतरा श्रुतिर्भवति । तस्मात् क्रीते चाक्रीते च राजन्युत्तिष्ठतां विश्वजिदिति ।

**शा**— 'यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममपभज्य विश्वजिता यजेत' इति । किमयं विश्वजित् क्रीतराजकस्यैव उत्थाने उत अक्रीतराजकस्यापि इति विचारः । तत्र– '**नैमित्तिकमिदं सोमविभागेन**



**विशेषितम् । नाक्रीतराजकस्यैतच्छक्यं क्रीते भवेदतः ॥**' उच्यते– '**यदि सोमविभागोऽयं अङ्गत्वेन विधीयते । तत एवं भवेदेष त्वर्थप्राप्तो न चोद्यते ॥**' तस्मात् रागप्राप्तद्रव्यविभागानुवादमात्रं इदम्, सोमग्रहणं तु प्रदर्शनार्थम्, विश्वजिन्मात्रं तु विधीयते इति अक्रीतराजकस्यापि स्यात् ।

**सोम**— यथा असंनयतोऽपि अभ्युदयेष्टिः एवं अक्रीतराजकस्यापि विश्वजित् इति प्रत्यवस्थानात् संगतिः ।

**वि**— 'सत्राय दीक्षितानां चेत् साम्युत्थानामिवाञ्छनम् । यजेद्विश्वजिता क्रीते राजन्ये तत्पुराऽपि वा ॥ आद्यः सोमविभागोक्तेरक्रीते तदसंभवात् । अर्थप्राप्तविभागस्यानुवादादन्तिमो भवेत् ॥'

**भाट्ट**— 'यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन् सोममपभज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्' इति श्रुतम् । तत्र विश्वजिदयं सोमक्रयोत्तरं उत ततः पूर्वमप्युत्थाने भवेदिति चिन्तायाम्, यद्यपि त्यागापरपर्यायं व्युत्थानमात्रं निमित्तं न तु सामिपदवाच्यार्धत्वमपि विशेषणम्, नापि सोमक्रयः । तथाऽपि सोमविभागस्यापि विश्वजिदङ्गत्वेन विधेयत्वात्पुनराधानवदेव नैमित्तिकत्वरूपपर्यालोचनया सोमक्रयोत्तरमेव विधीयते । न हि पूर्वं सोमोऽस्ति येन सोमविभागरूपमङ्गमनुष्ठीयेत । न च बोधायनादिकल्पपर्यालोचनया पूर्वमपि सोमसत्त्वाद्विभागोपपत्तिः विक्रेतृसोमस्यैव क्रयात्पूर्वमुपकल्पनेन तस्मिन् यजमानस्वत्वाभावात् । अतः सोमक्रयोत्तरमेव व्युत्थाने विश्वजित् । इति प्राप्ते—

नात्र विभागविधिः संसृष्टद्रव्याणां व्युत्थाने द्रव्यविभागस्यार्थप्राप्तत्वात् । अत एव सोमपदं संसृष्टवस्तुमात्रपरम्, अतश्च सोममपभज्य इत्यस्यानुवादत्वाद्विश्वजिन्मात्रं नैमित्तिकं सोमक्रयात् पूर्वमपि व्युत्थानस्य निमित्तस्य सत्त्वात्कर्तव्यमेव । किञ्च यद्यपि विभागो विधीयते तथाऽपि तस्यादृष्टविधया विश्वजित्यारादुपकारकाङ्गत्वान्नावश्यं क्रीतस्यैव स्वस्यैव वा सोमस्य विभागः, किंतु लौकिकस्यैव सत्रासंबन्धिनो यस्य कस्यचित् सोमस्य प्रत्येकः विभागः, अतश्च तादृशनैमित्तिकस्य पूर्वमपि संभवादविशेषः । अयं विश्वजित् गुणात्कर्मान्तरं स्वर्गार्थविश्वजिदपेक्षया, आगूरणविश्वजिदपेक्षयाऽपि । तयोस्त्वेतदपेक्षया यागान्तरत्वेऽभ्यासः प्रकरणान्तरं च प्रमाणं बोध्यम् । एतत्फलमागूरणविश्वजिद्वदेव द्रष्टव्यम् ।

वस्तुतस्तु निमित्तभेदस्य निर्वक्तुमशक्यत्वात् शाखान्तरन्यायेन एक एव विश्वजिद्वाक्यद्वयेन विधीयते इति नागूरणविश्वजितोऽस्य भेदः । प्रवृत्तस्य विश्वजित् उताप्रवृत्तस्येति विचारस्त्वेतद्वचनाभावं कृत्वाचिन्तया इति ध्येयम् ।

**मण्डन**— 'साम्युत्थानोऽक्रयेऽपि स्यात् ।'

**शंकर**— 'अक्रीतेऽपि च विश्वजित् ।'

* सत्राय प्रवृत्तमात्रस्य ( क्रीतराजकस्य अक्रीतराजकस्यापि च ) साम्युत्थाने विश्वजिद्विधानम् । 'साम्युत्थाने विश्वजिति क्रीते विभागसंयोगात्' इत्यधिकरणे ( ६।५।७।२५–२७ ) 'यदि सत्राय दीक्षितानां सामि उत्तिष्ठासेत् सोममपभज्य विश्वजिता यजेत' इत्युदाहृत्य किमयं विश्वजित् क्रीतराजकस्यैव उत्थाने उत अक्रीतराजकस्यापि इति संशय्य तदर्थं च सोममपभज्य इति विधिः अनुवादो वा इति संशय्य, विधिः ततश्च तद्विशिष्टं नैमित्तिकं क्रीतराजक एव शक्नोति कर्तुं नाक्रीतराजकः इति तस्य न विश्वजित् । इति प्राप्ते, सोममपभज्य इत्यनुवादः अर्थसिद्धत्वात् । सत्रार्थे हि एकीकृतधनानां सत्रत्यागे दक्षिणाद्रव्यस्येव सोमस्यापि विभज्य ग्रहणं प्राप्तमेव । न विधिः । ततश्च विश्वजिन्मात्रं नैमित्तिकम् । तच्च शक्यमेव अक्रीतराजकेन कर्तुं इति तस्याप्यधिकार इति सिद्धान्तितम् **बाल.** पृ. ११५–११६. *** सत्रे** अञ्जनाभ्यञ्जनाख्ये गौग्गुलवादिभिस्तैलैः अभ्यञ्जनं क्रियते । **भा** १२।१।४.

* सत्रे अञ्जनाभ्यञ्जनाख्ये समाम्नातेन गौग्गुलवाभ्यञ्जनादिना प्राकृतनवनीताभ्यञ्जनस्य समुच्चयः । १०।४।६।१०–१२. * सत्रे अञ्जनादौ काण्डानुसमय एव तत्तत्संस्कारकदीक्षोत्तरकालत्वविधानात् । **भाट्ट.** ५।२।३ * सत्रे अञ्जनादिसंस्काराणां सर्वगामित्वम् । **वि.** १२।४

१४. * सत्रे अधिकारः वैश्वामित्रतत्समानकल्पानामेव। ६।६।४।२४–२६. मीको. पृ. ३०४ 'अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव' इत्यत्र अधिकरणं द्रष्टव्यम्। * सत्रे अधिकारः समानकल्पानामेव (कल्पः प्रयोगः, न तु सूत्रम्)। ६।६।१।१–११. मीको. पृ. ३०५ 'अधिकारः सत्रे समानकल्पानामेव' इत्यत्र अधिकरणं द्रष्टव्यम्। * सत्रे अध्वर्य्वादयः सन्तीति तृतीये दर्शितम्। शा. ५।१।१ वर्णकं ३. * सत्रे इडोपाह्वानमन्त्रे 'ये च यज्ञपतिं वर्धान्' इत्यत्र यज्ञपतिशब्दे बहुवचनत्वेनोहो न कर्तव्यः, प्रशंसापरत्वात्। वि. ९।१।१४. * सत्रे ऋतुयाज्यावरणमात्रेयाय दानं च कर्तव्यम्। भाट्ट. १०।२।२५. * सत्रे ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोर्न बाधः। १०।२।२।६३. मीको. पृ. १२४६ 'ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः सत्रे न बाधः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सत्रे ऋत्विजामेव यजमानत्वात् न कापि दक्षिणा देया। 'अदक्षिणानि सत्राणीत्याहुर्न ह्यत्र गौर्दीयते न वासो न हिरण्यम्' इति। वि १०।२।८, १०–११.

ॐ सत्रे ऋत्विक्परिक्रयस्य बाधः॥

परिक्रयश्च तादर्थ्यात्। १०।२।११।३६॥

भाष्यम्— परिक्रयश्च प्रकृतौ ज्योतिष्टोमे आम्नातः 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति। तद्दाक्षिण्यं सत्रे चोदकेन प्राप्तं किं कर्तव्यं निवृत्तं वेति संशयः। किं प्राप्तम्? कर्तव्यः परिक्रयः, चोदकानुग्रहाय। अपि च तत्र गवादयः प्रतिषिध्यन्ते 'न ह्यत्र गौर्दीयते, न वासो न हिरण्यम्' इति। तत्सति परिक्रये अवकल्पते। एवं प्राप्ते, ब्रूमः। परिक्रयश्च तादर्थ्यादिति। परिक्रयश्च न कर्तव्यः। उक्तमधस्ताद्वरणं सत्रेषु न कर्तव्यमिति। परिक्रयश्चेति चशब्देनान्वादेशः क्रियते, न कर्तव्यः परिक्रयः। कुतः? आत्मार्थत्वात्। न कश्चिदात्मानं परिक्रीणीते इति।

प्रतिषेधश्च कर्मवत्। ३७॥

भाष्यम्— प्राप्तौ सत्यां प्रतिषेधोऽवकल्पते इति यदुक्तम्, तत्परिहर्तव्यम्।

स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात्। ३८॥

भाष्यम्— प्रतिषेध उपपद्यते इत्यर्थः। कस्य? प्रासर्पिकस्य दानस्येति। धर्ममात्रं हि तत् सत्रेषु चोदकप्राप्तम्। तन्निवर्तते। तस्मादुपपन्नः प्रतिषेध इति।

न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात्। ३९॥

भाष्यम्— नायं प्रासर्पिकस्य प्रतिषेधः। दक्षिणाशब्दात्। दक्षिणाशब्दो ह्यत्र भवति। 'अदक्षिणानि सत्राण्याहुः। न ह्यत्र गौर्दीयते, न वासो न हिरण्यम्' इति। दक्षिणाशब्दश्च परिक्रयार्थो भवति। तत्र हि श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति। ऋत्विग्दानं दक्षिणा, न प्रासर्पिकम्। तस्यैवासौ प्रतिषेधो न प्रासर्पिकस्य। तस्मात् नित्यप्राप्तस्यैवानुवादोऽसौ न सत्रेषु दक्षिणेति।

शा— दक्षिणादानं परिक्रयार्थं न अदृष्टार्थमित्युक्तम्। इदानीं परिक्रय एव सत्रे किं कर्तव्यो नेति संशयः। आनमनार्थत्वात् वरणवत् परिक्रयो निवर्तते।

सोम— सूत्रार्थस्तु- परिक्रयश्च सत्रे न कर्तव्यः, सत्रस्य आत्मार्थत्वादिति।

वि— 'क्रयः कार्यो न वा सत्रे निषेधात्कृतिकल्पनम्। नित्यानुवादेनाक्लृप्तेर्न क्रयो वरणं यथा॥'

भाट्ट— परिक्रयणवत् वरणमपि ऋत्विगानत्यर्थत्वात् सत्रे न कार्यमेव। न हि तत् अदृष्टरूपऋत्विक्त्वसंपत्त्यर्थम्, ऋत्विक्त्वस्य दृष्टरूपत्वे प्रमाणाभावस्य तृतीये साधितत्वात्। न वा ऋतुयाज्यावरणवत् स्वतन्त्रादृष्टार्थम्, प्रमाणाभावात्। सिद्धमपि च एवमादि बाधलक्षणे शिष्यहितार्थं कथ्यते इति विवेकः।

मण्डन— 'सत्रेषु दक्षिणा न स्यात्।'

शंकर— 'दक्षिणायाश्च बाधोऽत्र।'

* सत्रे ऐकादशिनपशुक्रमः— आग्नेय–सारस्वत–सौम्य–पौष्ण–बार्हस्पत्य–वैश्वदेव–ऐन्द्र–मारुत–



ऐन्द्राग्न–सावित्र–वारुणाः इति। संकर्ष. १।४।२७. * सत्रे औदुम्बरीसंमानं एकेनैव यजमानेन, न सर्वैः, न ह्ययं यजमानसंस्कारः। अहीनेऽप्येवम्। वि. १२।४।११. * सत्रे कर्तृभेदात् व्यासज्यवृत्ति कर्तृत्वं न स्वीक्रियते, अतो बहुवचनोपपत्तिर्यथा तथा 'यजेत' इत्यत्र न। 'यजेत' इत्यत्र तु दंपत्योर्व्यासज्यवृत्ति एकं कर्तृत्वम्। भाट्ट. ६।१।४. * सत्रे कस्यचित् एकदेशमनुष्ठाय सोमक्रयोत्तरमुत्थाने प्रायश्चित्तार्थो विश्वजित् विभज्यगृहीतेन सोमेन स्यात्। प्रागुत्थाने तु नूतनक्रीतेन सोमेन स्यात्। वि. ६।५।७.

ॐ सत्रे कस्यचित्स्वामिनो मरणे प्रतिनिधिर्भवति॥

बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात्। ६।३।८।२२॥

भाष्यम्— सत्राण्युदाहरणम् 'सप्तदशावराः सत्रमासीरन्' इति। तेषु कस्मिंश्चित् स्वामिनि, अपचरति संदेहः किं तत्र अन्यः प्रतिनिधातव्य उत नेति। किं प्राप्तम्? न स्वामिनः प्रतिनिधिरिति। एवं प्राप्ते, ब्रूमः। बहूनां यजमानानां प्रवृत्ते कर्मणि, अपचरिते कस्मिंश्चित्स्वामिनि, अन्यमागमयेत्। कुतः? एवमवैगुण्यं भवतीति। स्वामिगता सप्तदशादिसंख्या तत्राङ्गम्। तया विना कर्म विगुणम्। तत्संपादनाय अन्य आगमयितव्यः। ननु स्वामिगता संख्या, न त्वागम्यमानः स्वामीति वक्ष्यामः। तेनाशक्यैव सा संख्योपादातुमिति। उच्यते। स्वामिगता न हि भविष्यति। न हि सा शक्या कर्तुमिति। इदं तु शक्यं कर्तुम्। ये स्वामिनां पदार्थास्ते इह सप्तदशावरैः कर्तव्या इत्येतत् उपपादितं भविष्यति। तस्मात् प्रतिनिधातव्यं तत्रेति।

वा— आसीरन्निति कर्तृगता अनियमेन संख्या प्राप्ता 'सप्तदशावराः' इत्यनेन नियम्यते। फलेन व्याप्यमानः कर्ता भवति। तत्रान्य आनीयमानः क्रियाफलेन न संबध्यते। अतस्तत्फलाभावात्कर्तृगतसंख्यापूरणं नास्ति। अपि च– देवतोद्देशेन द्रव्यत्यागं कुर्वत इयं संख्या। न चाऽऽनीयमानो द्रव्यत्यागं करोति। तस्य प्रथममेव कृतत्वात्। अत आनीयमानः स्वामिगतां कर्तृगतां त्यक्तृगतां च संख्यामसमर्थः पूरयितुम्। तस्मान्न प्रतिनिधिः। आरब्धसमाप्तिस्त्वविशिष्टैव।

एवं प्राप्ते, ब्रूमः। आरब्धमवश्यं समापनीयं यथाश्रुतमेव। तत्र आनीयमानः स्वामिगतां संख्यां न पूरयति। यस्तु म्रियते, तस्य पदार्थे कर्तृत्वं शक्नोति प्रतिपत्तुमिति। तस्मादनेनांशेनावश्यमुपादेयः।

शा— 'सप्तदशावराः सत्रमासीरन्' इति सप्तदशसु प्रवृत्तेषु यदा कश्चिन्म्रियते तदा तत्स्थानेऽन्यः प्रतिनिधेयः उत नेति (संशये) न स्वामिनः प्रतिनिधिरित्युक्तम्। एवं प्राप्ते, अस्ति प्रतिनिधिरित्याह। काम्यमपि कर्म यदा प्रवृत्तं भवति तदा अवश्यं समापनीयमित्युक्तम्। आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम्। अतो यद्यपि 'ये यजमानास्ते ऋत्विजः' इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वात् एकपदोपात्तयोश्च स्वामिकर्तृकत्वयोः आर्त्विज्योद्देशेन विधिसंभवात् स्वामिभिरेव आर्त्विज्यं कर्तव्यम्, आनीयमानश्च उपरितनाधिकरणन्यायेन स्वामी न भवति तथापि तन्मात्रं हित्वा कर्मांशे साप्तदश्यं समापयितुं आगमयितव्यं पुरुषान्तरम्।

सोम— सूत्रार्थस्तु- बहूनां संबन्धिनि कर्मणि प्रवृत्ते कस्मिंश्चिद्यजमानेऽपचरितेऽन्यमागमयेत् तथा सति अवैगुण्यादिति।

वि— 'मृते सत्रिणि नान्यः स्यात् स्याद्वा नात्रापि पूर्ववत्। स्यादस्वाम्येऽपि कर्मांशे साप्तदश्यस्य सिद्धये॥'

भाट्ट— एवं तावत्स्मृत्याचारप्रामाण्यात् क्वचित्कर्मान्तरसत्त्वेऽपि न्यायेन तत्प्रतिनिधिरिति स्थितेऽपवादः क्रियते– सत्रमध्ये कस्यचिद्यजमानस्य मरणे तत्प्रतिनिधिरन्यः कार्य एव। काम्यस्यापि प्रारब्धस्यावश्यं समापनीयत्वात्। यद्यपि च मुख्यकर्तुः प्रयोगविध्यविषयत्वान्न प्रतिनिधिः न वा मृतेन तदुपादानसंभवः। तथाऽपि साङ्गकर्तरि 'सप्तदशावराः सत्रमासीरन्' इति वाक्येन साप्तदश्यविधानात् साप्तदश्यरूपाङ्गसंपत्त्यर्थमन्योपादानं अवशिष्टैः कार्यम्। न च तस्य आख्यातोपात्ताधिकारिसंख्याविशेषत्वादानीयमानस्य च वक्ष्यमाणरीत्या फलभोक्तृत्वाभावादधिकारित्वानु-

पपत्तेः कथं तमादाय साप्तदश्यसंपत्तिः । फलभोक्तृत्वाभावेऽपि कर्तृनिष्ठत्वमात्रेणैव साप्तदश्योपपत्तेः । अत एव आर्त्विज्येऽपि ' ये यजमानास्त ऋत्विजः ' इत्यनेन जघन्यऋत्विक्पदे आर्त्विज्यलक्षणामङ्गीकृत्य तदुद्देशेन यजमानानां कर्तृत्वविधानात् यजमानपदस्य च शानजन्ततया आत्मनेपदरूपत्वेन फलभोक्तृत्वविशिष्टकर्तृत्ववाचित्वेऽपि यथाशक्ति प्रयोगेण भोक्तृत्वाभावेऽप्यानीयमानस्य कर्तृत्वसत्त्वात् संख्यासंपत्त्यविघातः । ततश्च संख्यासंपत्तये न्यायेनैवात्र प्रतिनिध्युपादानम् । एवं च न्यायप्राप्तेः पूर्वमेव प्रवृत्तेन ' यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ' इत्यनेन वचनेन नेदिष्ठत्वविधानार्थे पुनर्विधिः । अत एवेदमधिकरणं शिष्यव्युत्पत्तिमात्रार्थम्, तदभावेऽपि वचनेनैवान्यागमोपपत्तेः । अत्र च पत्नीमरणेऽपि ' तेन सह यजेरन् ' इति पुल्लिङ्गनिर्देशात् यजमानसाप्तदश्येनैव च संख्याया अपि संपत्तेः तत्कर्तव्यपदार्थानां च पत्न्यन्तरेण यजमानैरेव वा सिद्धेः नान्यानयनम् । अत एव तादृशस्थले पत्न्या नाग्निभिर्दाहः । किन्त्वग्न्यन्तरेणैव । यजमानस्य तु मृतस्य पृथक्कृतस्वाग्निभिर्दाहेऽप्यनाहिताग्निसाधारण्येन आनीतस्याग्निसंसर्गे प्रमाणाभावात् ऋत्विग्वदेव कर्तृत्वोपपत्तिः ।

**मण्डन**-- ' सत्रेऽसौ स्वामिनो भवेत् । ' ' सत्रे ' सप्तदशस्वामिके यज्ञे, ' स्वामिनः ' यजमानस्य अपि ' असौ ' प्रतिनिधिः ' भवेत् ' इति संबन्धः ।

**शंकर**-- ' सत्रे स च मृतस्य तु । '

**सत्रे गृहपतिरसंयोगाद्धौत्रवत् । १२।४।१४।३५ ॥**

सत्रे यानि याजमानानि कर्माणि संस्कारार्थानि वपनाञ्जनादीनि तानि गृहपतिरेव कुर्यात्, तत एव हि गृहपतिसमाख्याया अर्थवत्त्वम् । नेतरे यजमानाः तानि कुर्युः, असंयोगात् । नहि इतरैः संस्कारकर्मणां संबन्धो युज्यते । हौत्रवत् । यथा हौत्रं इति समाख्यायाः अर्थवत्त्वात् तस्य होतैव कर्ता, तथा सत्रे संस्कारार्थानां कर्मणां गृहपतिरेव कर्ता नेतरे । इति पूर्वः पक्षः ।

**आम्नायवचनाच्च । ३६ ॥**

' यो वै सत्रे बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमृध्नोति ' इति आम्नाये वचनात् सत्रे गृहपतेः फलभूयस्त्वं गम्यते । तस्मात् संस्कारार्थानां याजमानानां कर्मणां सत्रे गृहपतिरेव कर्ता नेतरे । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**सर्वे वा तदर्थत्वात् । ३७ ॥**

सर्वे यजमानाः संस्कारार्थानि कर्माणि कुर्युः, न गृहपतिरेव । तदर्थत्वात् यजमानसंस्कारार्थत्वात् कर्मणाम्, सर्वेषां च यजमानत्वात् । तस्मात् सर्वे कुर्युः इति सिद्धान्तः ।

**गृहपतिरिति च समाख्या सामान्यात् ।३८॥**

ननु यदि याजमानान्यपि कानिचित् कर्माणि सर्वेषां स्युः तर्हि मुख्यस्य गृहपतिरिति समाख्या कथं युज्यते । तत्राह । गृहपतिः इति या समाख्या, सा सामान्यात् । यथा लोके गृहपतिः स्वयं कर्म न करोति, अन्ये कर्मकराः कुर्वन्ति, एवमस्यापि इत्येतस्मात् सामान्यात् सत्रे गृहपतिः गृहपतिरित्युच्यते ।

**विप्रतिषेधे परम् । ३९ ॥**

सत्रे पुरुषार्थस्य क्रत्वर्थस्य च विप्रतिषेधे विरोधे सति परं परार्थं क्रत्वर्थं कर्तव्यम्, न पुरुषार्थम् ।

**हौत्रे परार्थत्वात् । ४० ॥**

सत्रे हौत्रे होतुः परार्थत्वात् क्रत्वर्थत्वात् हौत्रं एकेन कर्तव्यं भवति न सर्वैः । तत्र समाख्या नियामिका । संस्कारकर्मसु तु गृहपतिरिति समाख्या इतरान् निवर्तयितुं न शक्नोति । तस्मात् संस्काराणां सर्वार्थत्वम् ।

**वचनं परम् । ४१ ॥**

यदुक्तम् ' आम्नायवचनाच्च ' ( सू. ३६ ) इति, तत् वचनं परं परार्थः गृहपतेः स्तुत्यर्थः अर्थवादः । न तस्य फलभूयस्त्वम् । तस्मात् सत्रे याजमानानि संस्कारार्थानि कर्माणि सर्वेषां स्युः इति **सिद्धान्तः । के.**

* सत्रे गृहपतिराम्नातः । भा. ८।२।६।३२, * सत्रे गृहपतेः फलभूयस्त्वम्, वचनात् । १२।४।



१४।३६. * सत्रे च यजमाना एव कर्तारः । टुपू. ११।४।५।१७. * सत्रे जुह्वादिपात्राणि साधारणानि पृथगेव संपादनीयानि । वि. ६।६।६. * सत्रे दीक्षाक्रमो विहितः ' अध्वर्युर्गृहपतिं दीक्षयित्वा० ' इत्यादिना । श्रौतः क्रमोऽयम् । भा. ५।१।१।१. * सत्रे पृष्ठ्यषडहान्ते सत्रिभिर्मधु भक्षयितव्यं क्रत्वर्थत्वात् । १०।६।१२।३२-३३. * सत्रे प्रतिनिहितस्य स्वामित्वाभावः । ६।३।९।२३-२५. ' सत्रे स्वामिस्थले० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सत्रे प्रतिनिहितस्य स्वामिधर्मत्वं भवति ॥**
**स तद्धर्मा स्यात् कर्मसंयोगात् । ६।३।१०। २६ ॥**

**भाष्यम्**-- बहूनां कस्मिंश्चिदपचरिते प्रतिनिधेयोऽन्य इत्येतत्समधिगतम् । इदमिदानीं तत्र संदिग्धं किमसौ स्वामिधर्मा स्यात् उत ऋत्विग्धर्मा । किं प्राप्तम् ? ऋत्विग्धर्मा । कुतः ? परार्थं हि स यजति । यश्च परार्थं यजति, स ऋत्विगिति । एवं प्राप्ते, ब्रूमः । स तद्धर्मा स्यात् । स्वामिधर्मा । तस्य हि कार्यं श्रूयते । यश्च यस्य कार्यमधितिष्ठति स तद्धर्मैः संबध्यते । यथा स्रुवधर्मैः स्वधितिरिति ।

**शा**-- किमानीतस्य फलिसंस्काराः कर्तव्याः नेति विचारः । फलप्रतिग्रहणयोग्यताजननार्था हि ते । न च आनीतस्य फलमित्युक्तम् । अतो नास्य फलिसंस्कारा इति । सत्यं नास्ति फलम्, इतरेषां तु सप्तदशकर्तृकैः संस्कारैर्योग्यता जन्यते, सर्वत्र कर्त्रंशे साप्तदश्यनिवेशात्, ततस्तत्सिद्ध्यर्थं प्रतिनिधिरपि संस्कारान् कुर्यात् ।

**सोम**-- सूत्रे ' तत्संयोगात् ' स्वामिकार्यसंयोगादित्यर्थः ।

**वि**-- ' नास्य स्युः फलिसंस्काराः कार्या वा नाफलित्वतः । अन्येषां साप्तदश्यार्थमफलिन्यपि ते मताः ॥'

**भाट्ट**-- फलिसंस्काराः ब्रह्मचर्यपयोव्रतादयः आनीतस्य फलित्वाभावादप्राकृतकार्यकारित्वापत्तेर्न कर्तव्याः । अवशिष्टानां तु सत्रफलाभावेऽपि प्रारम्भनिमित्तकपापक्षयस्य सत्त्वात् कर्तव्याः । अत एव फलिसंस्काराणां प्रकृतौ प्रधानफलाधानयोग्यताजननार्थत्वात् यदा प्रधानकरणात्पूर्वं मृतिस्तदैव तेषां फलिसंस्काराः । पापक्षयस्य प्रधानजन्यत्वात् न तदूर्ध्वमिति ध्येयम् । दीक्षाकरणं त्वानीतस्य वाचनिकमप्राकृतं कार्यम् । इति प्राप्ते, यद्यपि न तस्य फलित्वं तथाऽप्यन्येषां फलिसंस्कारकर्तरि साप्तदश्यसंपत्त्यर्थमानीतस्यापि ते कार्याः । न च ब्रह्मचर्यादिषु पुरुषस्य संस्कार्यत्वेन कर्तृत्वस्यार्थिकत्वात्संख्यायाश्च वैध एव कर्तृत्वे निवेशात् फलिसंस्कारकर्तरि साप्तदश्याभावः वैधावैधसाधारणावश्यककर्तृत्वद्वारेणैव लाघवात् साप्तदश्यस्य सत्त्राङ्गत्वोपपत्तेः । अतस्तत्संपत्त्यर्थं कर्तव्या एव फलिसंस्काराः । ननु ' सप्तदशावराः ' इत्यनेन सत्रप्रयोगकर्तृपरिच्छेदकत्वेन साप्तदश्यं विहितं न तु प्रत्येकम्, तत्तत्पदार्थे । प्रत्येकपदार्थानां सप्तदशभिरकरणात् । न चानुमतिद्वारा सप्तदशानां सर्वत्र कर्तृत्वम्, तथात्वे फलिसंस्कारेष्वप्यनुमतिद्वारेणैव साप्तदश्योपपत्तेरानीते फलिसंस्कारकरणानापत्तेः । किञ्चैवं मृतस्यैव पूर्वकालेऽनुमतिसत्त्वात् संख्यासंपत्तिसंभवेनानयनवैयर्थ्यम् । मृतकर्तव्यपदार्थानुष्ठानार्थमानयनमिति चेत्तेषां कर्मान्तरेष्विव आध्वर्य्वादिसमाख्यया ' इतरमन्यस्तेषाम् ' इति न्यायेन वा कर्त्रन्तरैरेव सिद्धेः । अतश्चानयने एव प्रमाणाभावे कुतस्त्यं संस्कारकल्पनमिति चेत्, तन्न, न्यायेन तदसिद्धावपि वचनेनैव तत्सिद्धेः । अत एवोक्तवचने दीक्षितमरणे निमित्ते दीक्षानेदिष्ठसाहित्याद्यनेकगुणविशिष्टनैमित्तिकव्याप्यतावत्पदार्थप्रयोगस्य एव विधानात् न वाक्यभेदः । दीक्षा चाप्राकृतकार्याऽपि वचनादेव विधीयते । तस्याश्च यमनियमपरिग्रहरूपत्वात् ब्रह्मचर्यादिसिद्धिः । एवं च ये केचित्तद्भिन्नाः संस्कारास्ते न कार्या इति प्रतिभाति । सत्राय दीक्षितानामिति श्रवणाच्च नाहीने तदानयनम् ।

**मण्डन**— ' स्वामिधर्मा त्वसौ भवेत् । '

**शंकर**— ' फलिसंस्कारभाक्तु सः । '

* सत्रे प्रत्येकं कृत्स्नेन फलेनार्थिनामधिकारः । ६।२।१।१-२. मीको. पृ. २८०५ ' प्रयोजनाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे प्रत्येकस्य सत्रिणः फलसंबन्धः । भाट्ट ६।२।१, * सत्रे प्रैषानुवचने एव एव दण्डः । ४।२।६,* सत्रे बहूनां कर्तृत्वम् । १०

६।१४. * सत्रे ब्रह्मा वेदत्रयाध्यायी । वि. ६।३।१४. * सत्रे ब्राह्मणानामेवाधिकारः । ६।६।३।१६-२३. मींको, पृ. ३०२ ' अधिकारः सत्रे ब्राह्मणानामेव ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे यः कोऽपि सत्रैकदेशमनुष्ठाय सत्रं परित्यज्य गन्तुमिच्छेत् तेन सोमादिद्रव्येषु स्वीयांशस्य विभागः कर्तव्यः । वि. ६।५।७, * सत्रे यः कोऽपि सोमक्रयात् प्राक् पश्चाद्वा सत्रं परित्यज्य गन्तुमिच्छेत् तेन विश्वजिद्यागः कर्तव्यः । ६।५।७. * सत्रे यजमाना एव आर्त्विज्ये स्युर्नान्ये । भा. १०।६।१५।५२.

**सत्रे यजमाना एव ऋत्विजः ॥**

**अन्ये स्युर्ऋत्विजः प्रकृतिवत् । १०।६।१५। ५१ ॥**

भाष्यम्-- इह सत्राण्येवोदाहरणम् । तेषु बहवः कर्तार इत्युक्तम् । इदमिदानीं संदिह्यते किं ते एव सत्रिणः ऋत्विजः, उत अन्ये उपादातव्या इति । किं प्राप्तम् ? अन्ये उपादातव्या ऋत्विजः । कुतः ? ज्योतिष्टोमे हि प्रकृतावन्ये कर्तार उपादेयाः समाम्नाताः । तद्वदिहापि सत्रिभिः प्रकृतिवत् कुर्वाणैश्चोदकानुग्रहायान्ये एवोपादेया इति । एवं प्रकृतिवत्कृतं भविष्यतीति ।

**अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् । ५२ ॥**

भाष्यम्— नैतदस्ति, अन्ये ऋत्विजः इति । यजमाना एव ऋत्विजः स्युः । कुतः ? ऋत्विजामभिधानसंयोगात् । यजमानसंस्कारो हि दीक्षापदार्थोऽध्वर्य्वादिसमाख्यासंयोगेन कर्मनिमित्तेन प्रसिद्धिरूपेण अभिधाय विधीयमानो यजमानानां तेषामाध्वर्यवादिसंबन्धमवबोधयति । कथम् ? यदि ते तान् पदार्थान् कुर्वन्ति, एवं ते नैमित्तिकीभिराख्याभिर्युज्यन्ते, नान्यथेति । अतोऽवगम्यते, अस्ति तैः पदार्थैरभिसंबन्ध इति । किं तद्वचनम् ? ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, ततो होतारं तत उद्गातारम् ' इत्युपक्रम्य सर्वर्त्विजः उपक्रान्ता दीक्षासंबन्धेन । तस्मात् गम्यते यजमाना एव आर्त्विज्ये स्युर्नान्ये इति ।

**कर्तृसंस्कारो वचनादाधातृवदिति चेत् ।५३॥**

भाष्यम्— इति चेत् मन्यसे यजमाना एव ऋत्विजः स्युरिति । तन्न युक्तम् । प्रकृतौ हि यजमानादन्ये श्रूयन्ते । प्रकृतिवत् इहापि यजमानेभ्योऽन्यैरेव भवितव्यमिति पूर्व एव पक्षो व्यपदिश्यते । केवलं तु पूर्वोक्तस्य परिहारो वक्तव्यः । स उच्यते । कर्तृसंस्कारो वचनात् आधातृवत् भविष्यति । कथम् ? एतावदेव श्रूयते ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति । तद्यदि भिन्ना अपि कर्तारो भवन्ति, तान् आत्मीयाभिः संज्ञाभिरुपलक्ष्य वचनसामर्थ्यात् दीक्षासंस्कारस्तेषां विधीयते इति नानुपपन्नम् । आधातृवत् । यथाऽन्यत्राप्यृत्विजां संस्कारो विधीयते आधाने ' यस्तं श्वोऽग्निमाधास्यत्स्यात्स एतां रात्रिं व्रतं चरेत् ' इति । ' न मांसमश्नीयात् , न स्त्रियमुपेयात् ' इति वचनादध्वर्योर्नियमो विधीयते । तथा ज्योतिष्टोमे ' सर्वर्त्विज उपवसन्ति ' इति ऋत्विजामुपवासो विधीयते । तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति ।

**स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् । ५४ ॥**

भाष्यम्— नैतदस्ति, अन्य ऋत्विज इति । किं तर्हि ? यजमाना एव ऋत्विजः स्युः । कुतः ? एतस्मिन् संशये त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्ना इति । त एवेति न्याय्यम् । उक्तोऽत्र न्यायः ' अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात् ' इति । अनेन न्यायेन पश्यामस्ते एवेति । यदुक्तम्, आधानवत्संस्कार ऋत्विजां भविष्यतीति । तदनुपपन्नम् । कथम् ? अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते । प्रकृतिवद्वा प्राकृतकार्यका सती यजमानबहुत्वात् क्रमपरतया संकीर्त्येत । प्राप्तायाः संकीर्तनं लघीयः । क्रममात्रविधानात् । ऋत्विक्संस्कारे सत्यदृष्टकल्पना, अधिकार्थविधानं च । तस्मात् प्राप्तायाश्चोदकेन संकीर्तनम्, नाप्राप्तविधानमिति । यत्तु, यथा ऋत्विजामुपवासविधानम्, आधातुश्च व्रतविधानं तद्वदिहापीति । तन्न युक्तम् । विस्पष्टं वचनम् ' ऋत्विज उपवसन्ति, स तां रात्रिं व्रतं चरेत् ' इति । न च तत्रापूर्वत्वात् प्राप्त्याशङ्का । तस्मात्तत्र विधानम् ।



**स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् । ५५ ॥**

भाष्यम्-- परिचोदनासूत्रमेतत् । अथ कस्मान्न स्वाम्याख्या एता अध्वर्य्वाद्या भवन्ति गृहपतिवदिति । किमेवं भविष्यति । एवं चोदकप्राप्ता अन्यकर्तृकता न बाधिता भविष्यति । अध्वर्य्वाद्याश्च समाख्या गृहपतिवद्यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति, स्थितेऽर्थे सूत्रेण परिचोदयति ।

**न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण । ५६ ॥**

भाष्यम्— नैतद्युक्तम्, स्वाम्याख्या एता गृहपतिवदिति । कुतः ? प्रसिद्धग्रहणत्वात् । आध्वर्यवादिकर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु । यजमानानामाभिः क्रियाभिरसंयुक्तानां भविष्यन्तीत्यनुपपन्नम् । कथं गृहपतिरित्याख्या । उच्यते । असंयुक्तस्य ऋत्विग्धर्मेण स्वामिन एवाऽऽख्या गृहपतिरिति । अपि चावयवप्रसिद्ध्याऽपि गृहपतिशब्दस्य पतिर्वाच्य इति यजमानाभिधेयतोपपत्स्यते । प्रकृतावपि स्वामिनि चायं प्रयुक्तः, गृहपतिर्यजेतेति । न त्वध्वर्य्वाद्याः स्वामिनि केनचिदपि प्रकारेण तत्क्रियासंयुक्ता उपपद्यन्ते इत्यन्यक्रियासंबन्धात्ता भिद्यन्त इति ।

**बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते । ५७ ॥**

भाष्यम्— इतश्च आर्त्विजेषु यजमाना एव । कुतः ? एवमाह ' यो वै बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाध्नोति ' इति, एकस्मिन् गृहपतिरिति विशेषवचनमसमानत्वे सत्युपपद्यते, नान्यथा । यदि सर्वे गृहपतिकर्म कुर्युर्न कर्मान्तरम् , ततो विशेषाभावाद् गृहपतौ विशेषवचनानुपपत्तिः स्यात् । अथ त्वितरे उभयं कुर्वन्ति, गृहपतिर्याजमानमेव, ततो विशेषवचनं युक्तं भवति । तस्मात् विशेषवचनात्ते एव ऋत्विज इति गम्यते ।

**दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् । ५८ ॥**

भाष्यम्— इतश्च स्वयंकर्तृकाणि सत्राणि इत्यवगम्यते । कुतः ? दीक्षितादीक्षितव्यपदेशात् । एवमाह ' दीक्षिताः सत्रैर्यजन्ते, अदीक्षिता अहीनैर्यजन्ति ' इति । एतौ च नियतौ एवार्थौ । दीक्षिताः स्वार्थं यजन्ते । याजका अप्यदीक्षिता याजयन्तीति । अहीने सत्रे चैतयोरर्थयोर्विशेषाभावात् व्यपदेशानुपपत्तिः स्यात् । अथ तु सत्रे यावत्कार्यं तत्सर्वं दीक्षितैरेव, क्रियते । अहीने चादीक्षितैः , ततो व्यपदेश उपपद्यते, नान्यथा । अतो व्यपदेशादवगच्छामः , अस्ति सत्रे स्वयंकर्तृत्वमिति ।

**अदक्षिणत्वाच्च । ५९ ॥**

भाष्यम्— इतश्च स्वयंकर्तृकं सत्रम् । कुतः ? अदक्षिणत्वात् । ' अदक्षिणानि सत्राण्याहुः । न ह्यत्र गौर्दीयते, न वासो न हिरण्यम् ' इति दक्षिणाभावदर्शनं स्वयंकर्तृकत्वे उपपद्यते, नान्यथा । परकर्तृकत्वे हि दक्षिणाभावो नोपपद्यते । न हि कश्चिदृते स्वार्थात् परार्थे परः प्रवर्तते । तस्मादपि गम्यते स्वयंकर्तृकाणि सत्राणीति ।

**शा**— सत्रेषु अपि किमन्यैरार्त्विज्यं उत यजमानैरेवेति संदेहे चोदकानुग्रहादन्यैः । ' ये यजमानास्ते ऋत्विजः ' इति वचनं यच्छब्दोपबद्धयजमानोद्देशेन तत्संस्कारार्थतया आर्त्विज्यविधिः , न तु आर्त्विज्ये यजमानविधिः । तेन आर्त्विज्यं अन्यैः कार्यम् । यद्वा ' अध्वर्युर्गृहपतिं दीक्षयित्वा० ' इत्यनेन ऋत्विजां संस्कारार्थत्वेन दीक्षा विधीयते इति तद्योगात् ऋत्विगेव यजमानशब्दगोचरः इत्यनुवादः । नैवम् , अप्राकृतकार्यत्वप्रसङ्गात् , वचनानर्थक्याच्च । न च आर्त्विज्यस्य यजमानसंस्कारत्वम् । अप्राकृतकार्यत्वप्रसङ्गादेव । तस्मात् प्राकृतकार्यस्यैव आर्त्विज्यस्य यजमानाः कर्तारो विधीयन्ते, अतः अन्येषां चोदकप्राप्तानां बाधः ।

**सोम**-- पूर्वत्र बहुकर्तृकत्वविधिबलादेककर्तृकत्वबाधेऽपि इह आर्त्विज्ये यजमानकर्तृकत्वविध्यभावात् अन्यकर्तृकत्वं चोदकप्राप्तं न बाधनीयमित्युत्थानात् संगतिः ।

**वि**-- ' ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात् । अन्ये, यष्टार एव स्युः प्रत्यक्षवचनादिभिः ॥'

**भाट्ट**— तत्र च यजमानैरेवार्त्विज्यं कार्यं ' ये यजमानास्त ऋत्विजः ' इति वचनेन जघन्यऋत्विक्पद-

लक्षितऋत्विक्कार्योद्देशेन यजमानानां कर्तृत्वेन विधानात् प्राकृतं यजमानभिन्नकर्तृकत्वं वरणभरणादिकं च बाध्यते इति । इदमप्यधिकरणं पूर्ववत् । न ह्यत्र यजमानसंस्कारार्थतया आर्त्विज्यविधिः, अप्राकृतकार्यकारितापत्तेः ।

**मण्डन**— 'ऋत्विजस्त्विह नान्ये स्युः ।'

**शंकर**— 'बाधस्त्वर्त्विजामिष्टः ।'

**सत्रे यजमाना बहवः ॥**

**सत्रमेकः प्रकृतिवत् । १०।६।१४।४५ ॥**

**भाष्यम्**— इह द्वादशाहप्रभृतीनि सत्राण्युदाहरणम् । तत्र संशयः किं सत्रमेकः प्रयुञ्जीत, उत बहवः । किं प्राप्तम् ? एकः । कुतः ? प्रकृतिवत् । ज्योतिष्टोमे एकः कर्ता । तत्प्रकृतित्वात् चोदकानुग्रहाय सत्रमेक एव प्रयुञ्जीतेति । ननु बहवः श्रूयन्ते 'य एवंविद्वांसः सत्रमासते । य एवंविद्वांसः सत्रमुपयन्ति' इति । उच्यते । कामिनां सत्रं विधीयते । ते च परस्परनिरपेक्षा बहव एव । ते यद्येकैकश्येनापि कुर्वन्ति तथाऽपि सत्रक्रियामभिसमीक्ष्य बहव एव कुर्वन्तीति बहुवचनं भविष्यति । यथा लोके पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते 'देवश्चेद्वर्षेद्बहवः कृषिं कुर्युः, सस्यं चेत्संपद्येत बहवो ब्राह्मणा यजेरन्' इति । तथा वेदेऽपि प्रयोगदर्शनम् 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति । एवमत्रापि, आसीरन्, उपेयुरिति बहुवचनं भविष्यतीति ।

**वचनात्तु बहूनां स्यात् । ४६ ॥**

**भाष्यम्**— नैतदस्ति, एको यजेत, न बहव इति । किं तर्हि ? बहवो यजेरन् । कुतः ? वचनात् । वचनमिदं भवति आसीरन्, उपेयुरिति । बहुत्वसंबद्धः प्रयोगो विधीयते । स प्रत्यक्षवचनात् चोदकप्राप्तमेककर्तृकतां बाधेतेति ।

**अपदेशः स्यादिति चेत् । ४७ ॥**

**भाष्यम्**— यदुक्तम्, सामान्यक्रियासंबन्धमभिसमीक्ष्य लोकवद्बहुवचनशब्दप्रयोगो भविष्यति । यथा 'कृषिं कुर्युः' इति । वेदेऽपि दर्शनम् 'पृष्ठशमनीयेन यजेरन्' इति बहुवचनं भवति, एवमत्रापीति । तत्परिहर्तव्यम् ।

**नैकव्यपदेशात् । ४८ ॥**

**भाष्यम्**— नैतत्सत्रे उपपद्यते, एककर्तृकमिति । कुतः ? एकव्यपदेशात् । कथम् ? एवमाह 'एष वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति, एक एव यजेत' इति, सत्रमपोह्यान्यस्यैककर्तृकतां विदधत्तस्य बहुकर्तृकतां गमयति । यत्तु लोकवदिति । तन्न युक्तम् । लोकेऽन्यतः प्रवृत्तस्यार्थस्यानुवादभूतः शब्द उच्चार्यमाणः सामान्यक्रियासंबन्धाभिसमीक्षयोच्चरित इति गम्यते । यदपि, उदवसानीयवदिति । तदप्युदवसानीये युक्तम् । तत्र हि भिन्नान्युदवसानान्युपलक्ष्य क्रियामात्रं विधीयते, तद्बहुत्वं च समानकर्तृकत्वादेव प्राप्तमनूद्यते इत्युक्तमेव । इह तु शब्दपूर्विका क्रियाप्रवृत्तिः । शब्दश्च बहुत्वविशिष्टं प्रयोगं सन्निभिरभिसंबन्धयति । अतः शब्दप्रामाण्यादुपादीयमानायां क्रियायां बहुत्वं विवक्षितमिति बहवः प्रयुञ्जीरन्निति ।

**संनिवापं च दर्शयति । ४९ ॥**

**भाष्यम्**— इतश्च बहव एव यजेरन्निति । कुतः ? संनिवापदर्शनात् । बहूनामग्नीनामेकत्र संनिवापमाह 'पञ्चभिः पशुभिर्वक्ष्यमाणाः संनिवपेरन्, सावित्राणि होष्यन्तः संनिवपेरन्' इति । यदि संहत्य कुर्वन्ति, एवमग्नीनां संनिवाप उपपद्यते । अथ त्वेकैकश्येन कुर्युः, संनिवापदर्शनं नोपपद्यते । तस्मादपि गम्यते बहूनां सत्रमिति ।

**बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् । ५० ॥**

**भाष्यम्**— इतश्च पश्यामः संभूय प्रयोग इति । कुत ? एवं श्रूयते 'यो वै बहूनां यजमानानां गृहपतिः, स सत्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमाप्नोति' इति । एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं ब्रुवन् बहूनां सह प्रयोगं दर्शयति । इतरथा, एकस्मिन् यजमाने कर्तुरेकत्वात्फलैकत्वाच्च सामान्यविशेषभावानुपपत्तेः फलविशेषवचनं व्यर्थं स्यात् । अस्ति



तु फलविशेषवचनम् । तस्मादपि गम्यते बहव एव यजेरन्निति ।

**शा**— सत्राणि किं कामिन एवैकैकशः कुर्युरुत बहवः संहत्य इति (विचारे) चोदकानुग्रहाद्बहुवचनस्य च एकैकशोऽपि लोके बहवः कामिनः सत्रं कुर्वन्ति इत्यनेन अभिप्रायेण अनुवादत्वोपपत्तेः एकैकशः कुर्युः । नैवम् । आख्यातगता हि कर्तृसंख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता । न हि तस्याः किंचित् अविवक्षाकारणमस्ति । सा च चोदकप्राप्तमेकत्वं बाधते, तस्मात् बहवः प्रयुञ्जीरन् ।

**सोम**— मानसस्य विकृतिषु अबाधेऽपि सत्रे न एककर्तृकत्वबाध इत्युत्थितेः संगतिः ।

**वि**— 'सत्रमेकः करोत्याहो बहवः प्रकृताविव । एकः कुर्यादिहासीरन्नित्युक्त्या बहवो मताः ॥'

**भाट्ट**— सत्रात्मकद्वादशाहे अतिदेशप्राप्तकर्तृगतैकत्वबाधेन 'ऋद्धिकामाः सत्रमासीरन्' इति औपदेशिककर्तृबहुत्वविधानात् बहवः कर्तार इति सिद्धमेव बाधप्रसङ्गाच्छिष्येभ्य उपदिश्यते ।

**मण्डन**— 'सत्रं स्यात् बहुकर्तृकम् ।'

**शंकर**— 'बहूनां सत्रकर्तृता ।'

* सत्रे यजमानैः साधारणानि पात्राणि संपादनीयानि । ६।६।६।३३–३४. मीको. पृ. ३०५ 'अधिकारः सत्रे संपादितसाधारणपात्राणामेव यजमानानाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सत्रे यजमानसंस्काराः सर्वयजमानार्थाः ॥**

**सत्रे गृहपतिरसंयोगाद्धौत्रवत् । १२।४।१४।३५ ॥**

**भाष्यम्**— अथ यानि याजमानानि संस्कारार्थानि कर्माणि, तान्यपि किं सत्रे गृहपतिनैव कर्तव्यानि, उत सर्वैरिति । उच्यते । गृहपतिना कर्तव्यानि । कुतः ? असंयोगात् । एवं गृहपतिरिति समाख्यया अर्थेन असंयोगो न भविष्यति । अर्थवत्ता भविष्यतीत्यर्थः । कथं कृत्वा ? तत्रोच्यते । इहानेन गृहशब्देन कर्मोच्यते, न शाला । शालायामभिधीयमानायामविशेषः स्यात् । सर्वे हि ते शालायाः पतयः । ननु च कर्मणोऽपि ते सर्वे एव पतयः । सत्यमेवम्, समाख्यानात् प्रकर्षावगतिर्विज्ञायते । यथा देवदत्तो मथुरायां ब्राह्मण इति । प्रकर्षश्च कर्मभूयस्त्वाद्वा स्यात्, फलभूयस्त्वाद्वा । तत्र कर्मभूयस्त्वं नोपपद्यते । यत इतरेषां बहुतरं कर्म । फलभूयस्त्वं तु युज्यते । यजमानसंस्काराणां तस्याधिक्यात् । तस्मात् गृहपतिसमाख्याया अर्थवत्त्वात् पुरुषार्थानां गृहपतिः कर्तेति । हौत्रवत् । तद्यथा हौत्रमिति समाख्याया अर्थवत्त्वात् होता हौत्रस्य कर्ता भवति, एवमिहापि ।

**आम्नायवचनाच्च । ३६ ॥**

**भाष्यम्**— आम्नायिकं वचनं गृहपतेः फलभूयस्त्वे भवति 'यो वै सत्रे बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता । स हि भूयिष्ठामृद्धिमृध्नोति' इति । तच्चैतस्मादेव कारणात् स्यात् ।

**सर्वे वा, तदर्थत्वात् । ३७ ॥**

**भाष्यम्**— सर्वे वा यजमानाः पुरुषार्थानि कुर्युः, न गृहपतिरेव । कुतः ? तदर्थत्वात् । सर्वार्थमेव हि कर्म, अविशेषेण हि श्रुतं 'द्वादशाहमृद्धिकामा उपेयुः' इति । यस्त्वेषां संस्कारैर्न युज्यते, तस्य गुणहीनमफलं कर्म भवेदिति । तत्राविशेषश्रुतिर्बाध्येत ।

**गृहपतिरिति च समाख्या सामान्यात् । ३८ ॥**

**भाष्यम्**— यथा गृहपतिः स्वयं कर्म न करोति, अन्ये तस्य कर्मकरा भवन्ति, एवं अस्यापीत्यनेन सामान्येन स्वामित्वप्रकर्षः, न फलप्रकर्षः, फलप्रकर्षाभावात् ।

**विप्रतिषेधे परम् । ३९ ॥**

**भाष्यम्**— ननु स्वार्थलाभेन यजमानाः क्रत्वर्थं परिहापयन्ति । अत्रोच्यते । यत्र क्रत्वर्थेन पुरुषार्थस्य विप्रतिषेधः, तत्र स्वार्थं करिष्यन्ति । विप्रतिषेधे तु परकीयं क्रत्वर्थम् । किं कारणम् ? क्रत्वर्थे ह्यक्रियमाणे क्रतुरेव न संपद्यते । पुरुषार्थे तु हीने पुरुषो विगुणः । अङ्गगुणविरोधे च तादर्थ्यादिति क्रत्वर्थो बलवान् । तस्मात् कर्तव्यः ।

**हौत्रे परार्थत्वात् । ४० ॥**

**भाष्यम्**— यत्तु हौत्रवदिति । हौत्रे परार्थः पुरुषः, न कर्म पुरुषार्थम् । तदेकेन केनचित् कर्तव्यम्, न सर्वैः । तत्र समाख्या नियामिका स्यात् । इह पुनर्गृहपतिरिति समाख्या निवृत्तिं न शक्नोति कर्तुम् । यतोऽन्यथाऽपि युज्यते । अयुज्यमानाऽपि काममनर्थिका स्यात् । नैव निवर्तयितुं शक्नुयात् । निवर्तकस्य वचनस्याभावात् ।

**वचनं परम् । ४१ ॥**

**भाष्यम्**— यच्च दर्शनमुपदिष्टं 'स सत्रस्य प्रत्येता' इति । न तद्दर्शनम् । किं तर्हि ? वचनं तत्, फलभूयस्त्वस्याप्राप्तेः । प्राप्तिपूर्वकं हि दर्शनं भवति ।

**सोम**-- परार्थवत् गृहपतिरेव स्वामिसंस्कारानपि कुर्यात् इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**-- सत्रे गृहपतिरेव यजमानसंस्कारान् कुर्यात् । गृहस्य कर्मणः पतिः इत्यस्य संयोगात् तत्रैव समाख्याया अन्वर्थत्वात्, यथा हौत्रसमाख्यानात् होता हौत्रकर्मसु कर्ता तद्वत् इति ।

**वि**-- 'अञ्जनाद्या गृहपतेः सर्वेषां वा, समाख्यया । आद्यो, नो फलिसंस्काराः सर्वेषां फलिता मता ॥'

**भाट्ट**-- ये पुनर्यजमानसंस्काराः ते सर्वेषामेव । सत्यपि गृहपतेः फलभूयस्त्वे अन्येषामपि फलभोक्तृत्वावश्यंभावात् कर्तृत्वाविशेषाच्च द्विविधानामपि संस्काराणामविशेषप्रतीतेः । यत्र तु आर्त्विज्यसंस्कारयोर्विरोधः, तत्र द्विविधस्यापि संस्कारस्य आर्त्विज्यं प्रति गुणत्वात् अङ्गगुणविरोधन्यायेन आर्त्विज्यस्यैव अनुग्रहो न संस्काराणाम् । 'ये यजमानास्त ऋत्विजः' इति प्रत्यक्षवचनेन आर्त्विज्ये यजमानकर्तृकत्वस्य प्रत्यक्षशिष्टतया चोदकप्राप्तसंस्कारबाधोपपत्तेश्च ।

**मण्डन**-- 'संस्काराः सर्वकर्तृषु ।' सत्रे ।

**शंकर**-- 'स्वाम्यर्थे सर्वकर्तृता ।'

* सत्रे याजमानार्त्विज्ययोः आर्त्विज्यं बलवत् । तेन क्वचित् आर्त्विज्येन याजमानबाधः । वि. १२।४।१५. * सत्रे यूपगणे येन केनापि यजमानेनाध्वर्युसहायार्थं यूपधारणसंभवात् अञ्जनादिपरिव्याणान्तधर्मेषु पदार्थानुसमय एव । सत्रातिरिक्ते तु परिव्याणान्तकाण्डानुसमयः । भाट्ट. ५।२।५. * सत्रे 'रश्मिरसि क्षयाय त्वा०' इत्यादिस्तोमभागसंज्ञकमन्त्रान् अधीयानः अवासिष्ठोऽपि ब्रह्मा भवितुं अर्हति । वि. ६।६।४. * सत्रे वरणं ऋत्विक्त्वार्थं कार्यमित्येकः पक्षः । वरणमदृष्टार्थं कार्यमित्यपरः पक्षः । दानवत् सत्रे वरणं लुप्यते इति **सिद्धान्तः** । वि. १०।२।१०. * सत्रे ( ऋत्विजां ) वरणं नास्ति । १०।२।१०।३५. **मीको.** पृ. ३४२० 'वरणं सत्रे नास्ति' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे वेदत्रयाध्यायी ब्रह्मा । तस्मिन् दैवान्मृते तादृशालाभात् स्ववेदमात्राध्यायी प्रतिनिधापितः । पुनश्च तस्मिन् प्रतिनिधौ स्ववेदमात्राध्यायिनि मृते यः पुनः प्रतिनिधिर्ग्राह्यः स सति संभवे वेदत्रयाध्यायी एव ग्राह्यः न तु एकवेदाध्यायी । वेदत्रयाध्यायिनोऽलाभे तु एकवेदाध्यायी ग्राह्यः । वि. ६।३।१४, * सत्रे 'शुक्रं यजमानोऽन्वारभते' नायं यजमानसंस्कारः । ततश्चैक एव यजमानोऽन्वारम्भं कुर्यान्न सर्वे । एकश्चायं गृहपतिरेव । अहीनेऽप्येवम् । १२।४।११.

**§ सत्रे शुक्रान्वारम्भादौ नियोगतो गृहपतिकर्तृकत्वम् ॥**

**मुख्यो वाऽविप्रतिषेधात् । १२।४।१३। ३४ ॥**

**भाष्यम्**-- मन्त्रे तु मुख्यः कुर्यात् गृहपतिः । कुतः ? अविप्रतिषेधात् । कुर्वतः अविप्रतिषेधः । नहि तेनाऽऽर्त्विजीनाः पदार्थाः कर्तव्याः । ऋत्विजां तु स्वपदार्थसंनिपाते विप्रतिषेधः स्यात् । एवं तर्हि गृहपतेरर्थवत्त्वम्, क्रत्वर्थानि याजमानानि करिष्यतीति ।

**शा**-- सत्रेषु गृहपतिरेव परार्थानि कुर्यात् नानियमः । कस्मात् ? इतरेषामार्त्विज्यविरोधात् ।

**सोम**— न च एवं येषु परार्थयाजमानेषु आर्त्विज्यसंनिपातो नास्ति तेषु आर्त्विज्येन साकं विरोधाभावात् अनियमः स्यादिति वाच्यम् । आर्त्विज्येन सह संनिपातिषु परार्थयाजमानेषु गृहपतेरेव कर्तृत्वावश्यंभावात् अन्येष्वपि क्लृप्तगृहपतिनैव उपपत्तौ अनियमस्यायुक्तत्वात् ।



**वि**— 'कश्चिद् गृहपतिर्वा स्यात् सत्रे, कश्चिदहीनवत् ।, इतरेषां तदाऽऽर्त्विज्यादविलम्बार्थमन्तिमः ॥'

**भाट्ट**— सत्रे तु गृहपतिरेव तानि कुर्यात्, इतरेषामार्त्विज्यावरोधात्, गृहपतिसमाख्याया नियामकत्वाच्च । 'यो वै सत्रे बहूनां यजमानानां प्रत्येता, स भूयिष्ठामृद्धिमाप्नोति' इति तस्य फलाधिक्यश्रवणेन यजमानश्रेष्ठत्वावगमाच्च । १२.

**मण्डन**-- 'सत्रे गृहपतिः कुर्यात् ।' क्रत्वर्थम् ।

**शंकर**-- 'सत्रे गृहपतिः स स्यात् ।'

* सत्रे शुक्रान्वारम्भणादीनां एकतमयजमानकर्तृकत्वम् । १२।४।११।३२. 'सत्राहीनयोः शुक्रान्वारम्भादीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे संस्कारार्थानां पुरुषार्थानां कर्मणां सर्वे यजमानाः कर्तारः न गृहपतिरेव । १२।४।१४।३५. * सत्रे सत्रात्मकद्वादशाहधर्माणामतिदेशः । ८।२।५।२५-२९. **मीको.** पृ. २२८ 'अतिदेशः सत्राहीनयोः सत्राहीनो०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे सत्रिभिर्विहितकाले मध्वशनं क्रत्वर्थे कर्तव्यमेव । भा. १०।६।१२।३२-३३. * सत्रे साम्युत्थाने प्रयोगः । जैब्रा. १।३४८-३४९. * सत्रे सारस्वते कामेष्टौ दानमदृष्टार्थम् । १०।२।१५। ४५-४६. 'सारस्वते सत्रे दक्षिणादानमदृष्टार्थम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे सारस्वतभिन्ने आहिताग्नीनामिष्टप्रथमयज्ञानामधिकारः । ६।६।५।२७-३२,३५. **मीको.** पृ. ३०८ 'अधिकारः सारस्वतभिन्नसत्रेषु आहिताग्नीनामेव' इत्यत्र अधिकरणं द्रष्टव्यम् । * सत्रे सूक्तवाकमन्त्रे 'अयं यजमानः आयुराशास्ते०' इत्यत्र 'इमे यजमानाः आयुराशासते' इत्यूहः कार्यः, फलप्रकाशकत्वात् सूक्तवाकमन्त्रस्य, सत्रे च फलिनां बहुत्वात् । वि. ९।१।१५.

**§ सत्रे स्वामिस्थले प्रतिनिहितस्य न स्वामित्वम् ॥**

**स स्वामी स्यात्तत्संयोगात् । ६।३।९।२३ ॥**

**भाष्यम्**-- तस्मिन् आगम्यमाने इदानीं संदेहः किमसौ स्वामी, उत कर्मकर इति । किं प्राप्तम् ? स स्वामी स्यात् । कस्मात् ? तत्संयोगात् । तेन स्वामित्वेन संयोगः । यो ह्यसावानीयते, स स्वामी क्रियते । स्वामिनि अपचरितेऽन्यो यदि स्वामी क्रियते, ततः स प्रतिनिधिः कृतो भवति । तस्मात् स्वामीति ।

**टुप्**-- एतस्मिंश्च स्थिते उत्तरेऽधिकरणे यो विचारः स नैव ।

**कर्मकरो वा भृतत्वात् । २४ ॥**

**भाष्यम्**-- कर्मकरो वा स स्यात् । कुतः ? भृतत्वात् । भृतो ह्यसौ तैः शिष्टैः स्वामिभिः प्रयुक्तः । परिक्रीयमाणो न स्वामी भवति । यः फलं प्राप्नोति, स स्वामी । यः परस्योपकारे वर्तते, स कर्मकरः । नैवासौ फलं प्राप्नोति । कुतः ? यो ह्यारभ्य परिसमापयति, स फलवान् । एष ह्याख्यातार्थः । स ह्युपक्रमप्रभृत्यपवर्गपर्यन्तमाह । ननु तेऽपि तत्र विगुणं कुर्वन्ति । सप्तदशानां स्वामिनामभावात् । तस्मात्तेऽपि न स्वामिनः । नो चेत्स्वामिनः, न फलं प्राप्नुवन्ति । उच्यते । न सप्तदशावराः फलसमवाये भवेयुरिति श्रूयते । न संख्या फलपरिग्रहे गुणभूता । किं तर्हि ? पदार्थेषु । सप्तदशावरैर्याजमानाः पदार्थाः कर्तव्या इति । ते च प्रतिनिहितेन क्रियन्ते । अफलत्वेऽपि च सत्यं संकल्पं कर्तुमन्यमानयन्ति । आनीयमानस्य च न तेन प्रयोजनम् ।

**तस्मिंश्च फलदर्शनात् । २५ ॥**

**भाष्यम्**--तस्मिंश्च दिष्टां गतिं गते फलं दर्शयति, यो दीक्षितानां प्रमीयेत, अपि तस्य फलमिति । तस्मात्कर्मकर इति ।

**टुप्**— 'तस्मिंश्च फलदर्शनात्' इति । फलसरूपोऽयमर्थवादः । सत्यपि फले मृतस्य प्राप्त्यभावादितरस्य कर्मकरत्वादपि नास्ति फलसंबन्धः ।

**शा**-- योऽसौ आनीतः स किं स्वामी फलभागी स्यात् उत कर्तृमात्रमिति संशये स्वामिस्थानोपनिपातात् स्वामित्वं मन्यमानस्य उत्तरं यो हि आरभ्य समापयति तस्य फलम् । अयं पुनर्मध्ये प्रविष्टो न फलं प्राप्तुमर्हति । न चासौ विधिवशात् प्रवृत्तो येन विधिप्रामाण्यात् फलं लभेत, इतरैरिह स्वामिभिः असौ सामादिभिः

संख्यासंपत्त्यर्थं आनीतः, तस्मात् नास्य स्वामित्वम् ।

**सोम**— योऽपि प्रतिनिधिः स्यात् सः फलभागपि स्यादिति । तस्मान्नास्ति प्रतिनिधिरिति पूर्वाक्षेपे पूर्वपक्षपर्यवसानात् **संगतिः** ।

**वि**— ' स स्वाम्यप्युत कर्तैव, स्वामी तत्स्थानगत्वतः । अनारब्धुः फलाभावादस्वामी कर्तृमात्रता ॥ '

**भाट्ट**— पूर्वाक्षेपेणेदं आनीयमानस्य न कर्तृत्वमात्रम्, अपि तु स्वामित्वमपि तत्स्थानापन्नत्वात् दीक्षारूपफलिसंस्कारश्रवणाच्च । इति प्राप्ते, न तावदत्र सत्रफलं तस्य वैगुण्ये सत्यनुपपत्तेः । तद्धि न तावदानीतस्य साङ्गकर्तृत्वाभावात् । अत एव न मृतस्यापि । नाप्यवशिष्टानां सप्तदशस्वामिकसत्रकर्तृत्वाभावात् । अवशिष्टैस्तु शिष्टविगर्हणादोषपरिहारार्थं अवश्यं कर्तव्ये क्रतुसमापने सामाद्युपायैः संख्यासंपत्त्यर्थमन्यः समानीयते । अत एव प्रारम्भनिमित्तकसमापनसाध्यपापक्षयोऽप्यवशिष्टानामेव नानीतस्य, प्रारम्भरूपनिमित्ताभावात् । अतस्तस्य कर्तृत्वमात्रमिति सिद्धम् ।

**मण्डन**— ' न त्वसौ फलभागी स्यात् । '

**शंकर**— ' आनीतोऽसौ न च स्वामी । '

* सत्रे स्वामिस्थले प्रतिनिहितस्य स्वामिधर्मत्वं भवति । ६।३।१०।२६. **मीको.** पृ. ४१०३ ' सत्रे प्रतिनिहितस्य॰ ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सत्रेषु** इडाचमसादिभक्षाः सन्त्येव प्रतिपत्तिरूपत्वात् । वि. १०।२।९, * सत्रेषु ' पत्नय उपगायन्ति ' । ८।१।११, * सत्रेषु संवत्सरादर्वाक्कालसाध्येषु सत्ररूपद्वादशाहमध्यगतदशाहविध्यन्तस्यातिदेशः । ८।२।५, * सत्रेषु संवत्सरसाध्येषु गवामयनस्य विध्यन्तो ग्राह्यः, संवत्सरसाध्यत्वात् षष्ट्युत्तरशतत्रयदिवससाध्यत्वात् पत्न्युपगानाच्च । ८।१।११. * सत्रेषु संवत्सरसाध्येषु गवामयनधर्माणामतिदेशः । ८।१।११।१८. **मीको.** पृ. २२७ ' अतिदेशः संवत्सरसत्रेषु गवामयनधर्माणाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रानङ्गत्वादुदवसानीये** दक्षिणादानं ऋत्विक्परिक्रयार्थम् । १०।२।१२।४०–४१. **मीको.** पृ. १११५ ' उदवसानीयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्राहीनयोः** अनेकयजमानसमवाये शुक्रान्वारम्भादीनामेकतमयजमानकर्तृकत्वम् । **भा.** १२।४।११।३२. * सत्राहीनयोर्लक्षणम् । १०।६।१६।६०–६१.

**सत्राहीनयोः शुक्रन्वारम्भादीनामेकतमयजमानकर्तृकत्वम् ॥**

**परार्थान्येको यजमानगणे । १२।४।११।३२॥**

**भाष्यम्**— सत्राहीनयोर्यजमानानां गणे यानि परार्थानि कर्माणि यथा ' शुक्रं यजमानोऽन्वारमते ' ' यजमानसंमितौदुम्बरी भवति ' इति । तान्येको यजमानः कुर्यात्, न सर्वे । कस्य हेतोः ? परार्थत्वादेव । न तत्र कर्मणा यजमानस्य कश्चिदुपकारः क्रियते । यदि क्रियेत, ततः स्वस्मै उपकाराय सर्वे कुर्युः । यजमानेन तु तत्कर्म क्रियते । तदेकेनैव कृतमिति द्वितीयानां प्रवृत्तौ हेतुर्नास्ति । तस्मादेकः कुर्यात् ।

**सोम**— धारणस्य विकल्पाभाववत् यजमानानामपि शुक्रान्वारम्भणादौ न विकल्पः इत्युत्थितेः **संगतिः** । यजमानानां फलित्वेन प्राधान्यात् अन्यत्र गुणभावासंभवात् यजमानसंस्कारार्थं औदुम्बरीसंमाननं इति शङ्कायाः शब्दतो यजमानानां गुणाभावबोधनेन स्वकीयफलसिद्ध्यर्थमेव तेषां गुणभावाभ्यनुज्ञाऽवश्यंभावेनैव अनुन्मेषात् उत्तरत्र अनियमप्रतिपादनाय प्राप्तिमात्रं अत्र क्रियते ।

**वि**— ' शुक्रस्पर्शादिकं सत्रे सर्वेषामुत कस्यचित् ।, अविशेषादादिमो,ऽन्त्यस्तावतैवार्थसिद्धितः ॥ '

**भाट्ट**— सत्राहीनादौ अपि अनेकयजमानसमवाये यानि न यजमानसंस्कारार्थानि शुक्रान्वारम्भणौदुम्बरीसंमानादीनि तान्येकेनैव यजमानेन कर्तव्यानि, कर्तुर्गुणत्वेन विवक्षितसंख्यात्वात्, गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वाच्च, इतरेषां तेनैव प्रसङ्गात् फलसिद्धिः । तेन अहीनादौ अनियमः एव ।

**मण्डन**— ' गणे क्रत्वर्थमेकस्य । '

**शंकर**— ' यष्टैकस्तु परार्थानि । ' कुर्यात् ।

* **सत्राहीनादौ** अनेकयजमानके कर्मणि औदुम्बरी केनचित् यजमानेन संमिता भवति, शुक्रान्वारम्भणं केनचित् यजमानेन कर्तव्यम् । **भा.** ९।१।



१३।४०, * सत्राहीनादौ बहुयजमानके इडानिगदे यज्ञपतिशब्दः । ९।१।१३।४०, * सत्राहीनादौ बहुयजमानके सूक्तवाके यजमानशब्दः । ९।१।१४।४१.

* **सत्राहीनोभयात्मकद्वादशाहधर्माणामतिदेशः** व्यवस्थया सत्रे अहीने च । ८।२।५।२५–२९. **मीको.** पृ. २२८ ' अतिदेशः सत्राहीनयोः सत्राहीनो॰ ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रात्मके** द्वादशाहे सत्रिभिर्मध्वशनं कर्तव्यमेव ( विहितकाले ) । १०।६।१२।३२–३३. **मीको.** पृ. २२०३ ' द्वादशाहे सत्रात्मके॰ ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रात्मकद्वादशाहधर्माणामतिदेशः** पञ्चदशरात्रे कुण्डपायिनामयने च । ८।२।६।३०–३३. **मीको.** पृ. २१२ ' अतिदेशः पञ्चदशरात्रे॰ ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रेतरकर्मणि** एक एव कर्ता, न द्वौ बहवो वा । ( अहीनेऽपि क्वचित् द्वौ कर्तारौ ) । वि. ६।२।२.

* **सत्रकर्तॄणां** प्रत्येकं पृष्ठशमनीयकर्तृत्वं ऋत्विगन्तरसंपादनेन । १०।२।१३।४२,४४. **मीको.** पृ. २६१० ' पृष्ठशमनीयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सत्रत्वं आसनोपायिचोदनत्वम्, अहीनत्वं तु यजतिचोदनत्वे सति अहर्गणसाध्यत्वम् ॥**

**द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् । १०।६।१६।६० ॥**

**भाष्यम्**— द्वादशाह एवोदाहरणम् । उक्तं च पूर्वं सत्रमहीनं च द्वादशाह इति । तस्येदानीं द्विप्रकारस्य लक्षणमन्वाख्यायते, एवंलक्षणको द्वादशाहः सत्रम्, एवंलक्षणकोऽहीन इति । तद्विवेकज्ञानार्थमिदमुच्यते, आसनोपायिचोदनया यजमानबहुत्वेन च सत्रत्वमवगम्यते । एते चोदने, आसते, उपयन्तीति हि नित्यं सत्रसंबद्धे दृष्टे । य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति । यजमानबहुत्वेन च, चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्निति । तत्सहचरितलिङ्गदर्शनात् सहचरिते प्रत्ययो भवतीति ।

**यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् । ६१ ॥**

**भाष्यम्**— अथ किंलक्षणकोऽहीन इति । तदुच्यते । यत्र यजतिचोदना, अनियतं च कर्तृपरिमाणं तत्राहीन इति निश्चीयते । अहीनानां यजतिचोदनया विधानम्, ' द्विरात्रेण यजेत ' इत्येवमादि । कर्तृपरिमाणं चैषामनियतम् । सत्राणां तु नियतं परिमाणं बहवः । एवंलक्षणस्य च लक्षणे लक्षितं प्रयोजनं नान्यन्मृग्यमिति ।

**सोम**— आसनोपायिचोदनाचोदितत्वे सति बहुयजमानकत्वं सत्रत्वम् । यजतिचोदनाचोदितत्वे सति अनियतसंख्याकयजमानकत्वं अहीनत्वम् । यद्वा, यजमानकर्तृकार्त्विज्यकाहर्गणत्वं सत्रत्वम्, यजमानभिन्नऋत्विग्युक्ताहर्गणत्वमहीनत्वम् ।

**वि**— ' अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा नहि । आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदा ॥ '

**भाट्ट**— त्रयोदशरात्रादिषु आसनोपायिचोदनावत्त्वेन वैदिकैः सत्रशब्दप्रयोगात् द्वादशाहेऽपि तत्सत्त्वेन सत्रत्वम् । द्विरात्रादिष्वहर्गणेषु यजतिचोदनावत्त्वे सत्यनियतसंख्याकर्तृकत्वेन वैदिकानां अहीनशब्दप्रयोगात् द्वादशाहेऽपि तत्सत्त्वेनाहीनत्वमित्यपि प्रसङ्गात् व्यवहारसौकर्यार्थमुच्यते ।

**मण्डन**— ' सत्रं स्याद् द्वादशाहकम् । '

**शंकर**— ' सत्रलक्षणमेव च । '

* **सत्रत्वम्** । तदवधिकमेव ( द्वादशाहावधिकमेव ) च आसहस्रसंवत्सरं सततकालयोगनिमित्तं सत्रत्वम् । वा. २।२।२।२ पृ. ४७१. * सत्रत्वं सोमप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* **सत्रन्यायः** ( रात्रिसत्रन्यायः ) । ४।३।८।१७–१९. **मीको.** पृ. ३३२३ ' रात्रिसत्रन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रफलं** संभूयकर्तॄणामपि मध्ये एकैकस्यापि संपूर्णमेव लभ्यते । ६।२।१।१-२. **मीको.** पृ. २८०५ ' प्रयोजनाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रशब्दोपाधित्वम् ।** आसीरन् इति आसिचोदितगतस्य, उपेयुः इति उपैतिचोदितगतस्य वा सततानुष्ठानस्य सत्रशब्दोपाधित्वम् । सु. पृ. ७१७.

**सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानम् ॥**

**विश्वजित् त्वप्रवृत्ते भावः कर्मणि स्यात् । ६।४।११।३२ ॥**

**भाष्यम्**— एतदाम्नायते ' सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते, यः सत्रायाऽऽगुरते, स विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत, सर्वाभ्य एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते ' इति । सत्राय आगूरणे निमित्ते विश्वजित् श्रूयते । तत्र संदेहः किं सत्रायाऽऽगूर्य यः सत्रं प्रयुङ्क्ते तस्य विश्वजित्, उत यो न प्रयुङ्क्ते तस्येति । किं तावत् प्राप्तम् ? यश्च प्रयुङ्क्ते, यश्च नेत्यविशेषात् । अथवा प्रयुञ्जानस्येति । कुतः ? निमित्ते कर्माङ्गमेवंजातीयकम्, इत्युक्तम् । तत् अप्रयुज्यमानस्य कथमङ्गं स्यादिति । एवं प्राप्ते, ब्रूमः । विश्वजित्तु अप्रवृत्ते भवेत् । सत्रस्य क्रियाया अभावे विश्वजित् । किं कारणम् ? एवं हि श्रूयते ' यः सत्रायाऽऽगुरते, स विश्वजिताऽतिरात्रेण यजेत ' इति । यः सत्रं करिष्यामीत्येवमागुरते स विश्वजिता यागेन साधयेदिति । यदर्थमसौ सत्रं कर्तुमिच्छति, तदर्थमिति गम्यते । कथम् ? य आगुरते, स तेन यजेत, यागेन निर्वर्तयेदिति वाक्यार्थो गम्यते, न यागं निर्वर्तयेदिति । कुतः ? यागस्य गुणत्वेन श्रवणात् । कथं तस्य गुणत्वम् ? तृतीयानिर्देशात् । प्राधान्ये हि फलं कल्प्येत । इतरस्मिंस्तु पक्षे प्रत्यक्षात् वाक्यात् फलावगमः ।

**टुप्**— ( एकेषां मतेन सिद्धान्तमाह- ) फलमात्मसंबन्धि ( स्यात्, तदर्थं च ) कर्मापि इत्येवं अभिसंधाय पुमान् प्रवर्तते । सत्रमागूर्य सत्रफलमागूर्य इत्यर्थः । तत्र फले आगूःकृते ( अभिसंहिते ) विश्वजित् उपायत्वेन विधीयते ' सत्रफलमागूर्य ( अभिसंधाय ) विश्वजिता तत् साधयेत् ' इति । एवं च यदि विश्वजिता तत् साधितम्, न सत्रेणार्थः । अथ सत्रेण ( साधितम् ) न विश्वजिता ( अर्थः । तस्मात्- ) तुल्यकार्यत्वात् विकल्पः ( एवं च सत्रे अप्रवृत्तस्यैव विश्वजित् इति ) ।

( ' पक्षान्तरमाह ' इति **तन्त्ररत्नम्**, ' स्वाभिमतमाह ' इति **भा-टिप्पणी** ) अथवा यः ' सत्रेण फलं करिष्ये ' इति संकल्पयति, तस्य सत्रकर्तव्यताऽशक्तौ यत् फलमभिप्रेतम्, तस्मिन् विश्वजित् विधीयते । सत्रमागूर्य ( तदशक्तौ ) विश्वजितं कुर्यात् इति वाक्यार्थः । ( प्रथमं पूर्वपक्षं दूषयति- ) आगोरणमात्रे ( निमित्ते सति ) एकस्य (वाक्यस्य) द्वे भिन्ने प्रयोजने स्याताम् । तत्र विवक्षाभेददोषः ( स्यात् ), सत्राय ( विश्वजित् ) इत्येका ( विवक्षा ), फलाय ( विश्वजित् ) इत्यपरा । ( द्वितीयं पक्षं दूषयति- ) अङ्गपक्षे च आगोरणस्य ( नित्य- ) प्राप्तत्वात् आगूर्य इत्यवाच्यम् ( स्यात् ), यथा अन्येष्वङ्गेषु ' यः सत्रायागुरते ' इति नोच्यते, तथा अत्रापि ( नोच्येत । तस्मात् सत्रमागूर्य अशक्नुवतो विश्वजित् इति ) ।

**निष्क्रयवादाच्च । ३३ ॥**

**भाष्यम्**— एवं तत्र श्रूयते ' सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते ' इति । निष्क्रयद्वारेण च संस्तवः प्रवृत्ते न युज्यते । तस्मादप्रवृत्ते विश्वजिदिति । अथ कस्मात् नैवमभिसंबन्धः क्रियते, आगूर्य सत्राय विश्वजिता यजेतेति । विश्वजितः सत्रस्य च संबन्धो विज्ञायते, आगूरणवेलायामिति । नैवम् । आगूरणविशेषणं हि सत्रम्, सत्रविश्वजित्संबन्धे व्यवहितकल्पना स्यात् । श्रुतिश्च पुरुषेण विश्वजितं संबन्धयति ' विश्वजिता यजेत पुरुषः ' इति । न सत्रेण, ' सत्रस्य विश्वजिद्यागः ' इति, आगूर्येति च एवं श्रवणं अर्थवद्भवति । सत्राङ्गत्वे तु अर्थप्राप्तं न वक्तव्यम् । न च आगूर्य यजेत इत्यागूरणानन्तर्यं शक्यं विधातुम् । अशब्दार्थो हि तदा आश्रीयेत । समानकर्तृकता हि शब्दवती । पूर्वकालभावस्य च अर्थप्राप्तत्वान्न वक्तव्यता । तस्मादागूर्य इत्यत्रैव विश्वजितोऽभिसंबन्धः । स चेत्, य आगूर्य ( अशक्त्या ) न सत्रेण यजेत, तस्य विश्वजिदिति ।

**शा**— किमागूर्य प्रवृत्तस्य विश्वजित्, उत अप्रवृत्तस्य, उतोभयोरिति संशयः । ' **द्वयोरपि भवेत्, कस्माद् ? विशेषस्याश्रुतत्वतः । प्रवृत्त एव वा कुर्यात् सत्राङ्गं हि तथा भवेत् ॥ निमित्तश्रुतिवैयर्थ्यान्न त्वेतदपि युज्यते । साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥** ' तस्मात् सत्रमागूर्य अकुर्वतः प्रायश्चित्तमिदम् ।

**सोम**— पूर्ववत् इहापि अङ्गत्वमिति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**— अप्रवृत्ते विश्वजित् स्यात् यतः भावः सत्रफलभवनं कर्मणि विश्वजिति स्यादिति ।

**वि**— ' सत्रायाऽऽगुरते योऽयं यजेद् विश्वजितेत्यसौ । यः कोऽप्युत प्रवृत्तः स्यादप्रवृत्तोऽथवा, ऽग्रिमः ॥ अविशेषात् प्रवृत्तोऽस्तु सत्राङ्गं हि तथा भवेत् ।, निमित्तोक्तेरप्रवृत्तः प्रायश्चित्तं चरेदिदम् ॥ '

**भाट्ट**— सत्रप्रकरणे ' यः सत्रायागुरते स विश्वजिता यजेत ' इति श्रुतो विश्वजित् । सत्रसंकल्परूपमागूरणं कृत्वा यः सत्रं न करोति, तस्येदं सत्रफलार्थत्वेन विधानम्, न तु सत्राङ्गतया, तथात्वे आगूरणस्य निमित्तत्वश्रवणवैयर्थ्यात् । न च एवं सत्राकरणस्यापि निमित्तान्तःप्रवेशात् गौरवापत्तिः । अतः संकल्पमात्रे निमित्ते नैमित्तिकमिदं फलान्तरार्थं विधीयते इति वाच्यम् । फलान्तरकल्पनापेक्षया सत्रफलस्यैव साधनसाकाङ्क्षस्य फलत्वकल्पने लाघवात् । तच्च फलं यद्यपि न मुख्यमेव स्वर्गादि फलत्वेन कल्पयितुं शक्यम्, तथात्वे वीतायां फलेच्छायां संकल्परूपस्य निमित्तस्य सत्त्वेन नैमित्तिकाननुष्ठाने निमित्तसंकोचापत्तेः, तथापि प्रारब्धाकरणनिमित्तदोषपरिहारार्थं त्रैधातवीयास्थाने विधीयते । अत एव तादृशफलवाचकपदकल्पनयैव अकरणविषयत्वसिद्धेर्न तस्यापि निमित्तान्तःप्रवेशः । अत एवैकस्यापि अकरणे अन्यैः कर्त्रन्तरं संपाद्य, असंपाद्यैव वा सत्रप्रयोगेऽपि अनेनैव विश्वजित् कार्य इत्येकवचनस्याप्युपपत्तिः ।

**मण्डन**— ' सत्रोद्यमे विश्वजिदप्रवृत्तौ । '

**शंकर**— ' सत्रत्यागे च विश्वजित् । '

* **सत्रसमाप्तिः** पृष्ठशमनीयेन । सु. पृ. १५३९.

* **सत्रस्पर्धि** नाम साम अनूक्रम् । बाल. पृ. ७२.

* **सत्रिणः** प्रत्येकं कृत्स्नं फलं लभन्ते ' पुरुषार्थैकसिद्धित्वात्० ' ( ६।२।१।१ ) इति न्यायात् । सु. पृ. ५४४. * **सत्रिभिः** मध्वशनं क्रत्वर्थत्वात् कर्तव्यमेव सत्रे । १०।६।१२।३२-३३. **मीको.** पृ. २२०३ ' द्वादशाहे सत्रात्मके० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रिभ्योऽन्ये** ऋत्विजः पृष्ठशमनीये । १०।२।१४।४३. **मीको.** पृ. २६०९ ' पृष्ठशमनीये सत्रिभ्योऽन्ये ऋत्विजः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सत्रिवत्तु** दंपत्योः कर्तृभेदः यागाधिकारस्तु सहैव । ६।१।४।१७-१८.

* **सत्वक्त्वं** परिधिधर्मः । भा. १२।२।११।२८.

* **सत्त्ववत्** ( ७।१।१।२ सूत्रे ) सत्त्वधर्मवत् । यथा- सत्त्वधर्माः ' गौर्न पदा स्प्रष्टव्यः ( न्या ) ' इति गोत्वसंबन्धेन श्रूयमाणाः तत्रासंभवन्तः तत्संबद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसंबन्धस्याविशेषात् सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । भा. ७।१।१।२.

* **सत्त्वाभूतं** नाम साम अनूक्रम् । बाल. पृ. ७२.

* **सदनाङ्गं** ' स्योनं ते० ' इति पूर्वार्धम्, सादनाङ्गं ' तस्मिन् सीद० ' इत्युत्तरार्धम्, लिङ्गस्य वाक्यात् प्राबल्यात् दर्शपूर्णमासयोः । वि. ३।३।८.

* **सदनकरणमन्त्रे** नीवाराणां मेध इत्यूहः कार्यः यत्र नैवार एव चरुः विहितः, न तु प्रतिनिधिः । भा. ९।१।१।१-२.

* **सदः** ऐन्द्या उपतिष्ठते प्रकृतया न तु दाशतयीस्थया ज्योतिष्टोमे । भा. ३।२।८।२१-२४. * **सदः** ज्योतिष्टोमे शालाविशेषः । यत्र औदुम्बरी शाखा मध्ये निखन्यते । यस्मिंश्च ऋत्विजः स्थित्वा स्तोत्राणि गायन्ति शस्त्राणि शंसन्ति । के. * **सदसः** पुरस्तात्

श्लोकं नाम साम महाव्रते गीयते, अनुश्लोकं च पश्चाद्देशे गीयते । वि. १०।४।९. * महाव्रते 'श्लोकेन पुरस्तात्सदस: स्तुवते, अनुश्लोकेन पश्चात्सदसः क्रौञ्चेन चात्वालमवेक्ष्यमाणः' । भा. १०।४।८।१६, * **सदसि औदुम्बरी मध्यमा स्थूणा भवति**, तां स्पृष्ट्वा उद्गाता गायति । ९।२।२।११. * सदसि होत्रादीनां कर्मप्रवृत्तिः । वा. ३।५।११।३२.

* **सदोनीचमानादौ** वृष्ट्यादिकामना याजमानी, नार्त्विजी । ३।८।५।१३–१४. मीको. पृ. १४३५ 'काण्डाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सदोमण्डपस्योपस्थानं** ( अभिमर्शनं ) ज्योतिष्टोमे ( 'ऐन्द्या सद' इति ) प्रकृताभिरेवैन्द्रीभिः ( कर्तव्यम् ) । वि. ३।२।८, * सदोमण्डपस्य नीचमानादिना वृष्टिकामनादिकं अस्थियज्ञे मृताधिकारपक्षे न संभवति । क्त्वाचिन्ता । १०।२।२०, * **सदोमण्डपे औदुम्बरी शाखा निखन्यते** । तां स्पृष्ट्वा उद्गाता गायति । सा च अहतेन वाससाऽऽवेष्ट्यते । १।३।२.

* **सदस्य:** सदसि अवस्थितः सदस्यः । स च नर्त्विक् । तस्य यजनक्रियाभावात् । वि. ३।७।१८. * सदस्यो मेदेन वरीतव्य एव । न च ब्रह्मा सदस्यशब्देनोच्यते । वचनसामर्थ्यादेवासौ व्रियते न तु कश्चित् पदार्थस्तदधीनः । वा. ३।७।१८।३८, * सर्वेषु उपहवादिषु ब्रह्ममन्त्रव्यतिरेकेण अस्य मन्त्रः पठ्यते । सामर्थ्याक्षिप्तेन च उपद्रष्ट्रा **सदस्येन** अवश्यं भवितव्यम् । सोऽपि च प्रत्यवेक्षणात् क्रतौ यजति इति शक्यो वक्तुम् । ऋत्विक्त्वं तु इतरवन्नास्य । ३।७।१८।३८. * **सदस्यस्य** ब्रह्मातिरिक्तस्य भाष्यकृदनिष्टता । सु. ३।७ पृ. ३८.

* **सदाचार:** । 'उपकुर्वतां चोपकारः कर्तव्यः' इति सदाचारः । भा. १०।३।११।४७. * सदाचारः मन्वादिभिः विशेषरूपेणानुपदिष्टोऽपि सामान्याकारेणोपदिष्टः 'श्रुतिः स्मृतिः सदाचारः' इति । स च प्रमाणम् । वि. १।३।४ वर्णक ३. * यो हि सदाचारः पुण्यबुद्ध्या क्रियते, स धर्मादर्शत्वं प्रतिपद्यते । यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स यथाविधिप्रतिषेधं वर्तिष्यते । वा. १।३।३।५ पृ. २०८. * **सदाचारात्** स्मृतिः प्रबला । वि. १।३।५ वर्णकं २. * **सदाचारेषु** हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च । वा. १।३।३।७ पृ. २०३ । तत्रोच्यते 'श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति । मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥ यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति ॥' ( इति सामान्यत उत्तरम्, विशेषतस्तु तत्र तत्र शब्दे द्रष्टव्यम् ) । पृ. २०७.

* **'सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम्'** । वा. १।३।३।७ पृ. २०४.

* **सदाचारप्रामाण्याधिकरणम्** । वा. १।३।३।५–७.

* **सदृशं** अपि साधकमसाधकं वेति परीक्षितव्यम् । भा. २।२।११।२५ पृ. ५४४. * सदृशमेव प्रतिनिधातव्यम्, न वैकल्पिकं प्रतिनिधिर्नाम भवति । वि. ६।३।१२.

**सदृशन्याय:** । श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वम् ॥

**सामान्यं तच्चिकीर्षा हि । ६।३।११।२७ ॥**

**भाष्यम्**— श्रुते द्रव्येऽपचरति प्रतिनिधिमुपादाय प्रयोक्तव्यमिति स्थितम् । तत्र संदेहः किं 'यत्किंचिद्द्रव्यमुपादाय प्रयोगः कर्तव्यः उत सदृशमिति । किं प्राप्तम् ? यत्किंचिदुपादायेति । **एवं प्राप्ते, ब्रूमः** । सामान्यं यत्र गृह्यते, तदुपादातव्यम्, सदृशमिति । कुतः ? सर्वे ह्याकृतिवचनाः शब्दाः । आकृतिश्च यद्यपि अङ्गभावेन श्रूयते, तथाऽपि न साक्षात् तस्याः क्रियां प्रत्यङ्गभावः । यत्तु, क्रियासाधनं द्रव्यमर्थादङ्गभूतं प्राप्तं तत्परिच्छिन्दती क्रियायामङ्गभावं याति । व्यक्तेश्च आकृत्या विशेषाः परिच्छिद्यन्ते । ते विशेषा अङ्गभूताः । अथ तस्यामाकृतावपचरितायामर्थप्राप्तं द्रव्यं ग्रहीतव्यमेव । यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित्संगृहीता भवन्ति, स तत्र लाभो लभ्यत इति तत्सदृशं



द्रव्यमुपादातव्यं भवति । तस्माद्व्रीहीणामपचारे नीवाराः प्रतिनिधेया इति ।

**टुप्**— अष्टाकपालादिचोदना येन केनचिन्निर्वर्त्यते । तत्र किं सादृश्योपादानेन ? अथोच्येत— व्रीहिचोदनानुग्रहार्थं सादृश्योपादानम् । उच्यते । व्रीहिचोदनायां फलार्थिनः प्रवर्तामहे, न तस्याः स्वरूपानुग्रहार्थं शक्यं वक्तुम्, नीवारास्तत्फलं साधयन्तीति । यदि साधयेयुर्विकल्पेरन् । तस्मान्न सादृश्योपादानम् । **एवं प्राप्ते, ब्रूमः** । फलार्थिना यथाश्रुतं प्रक्रान्तम्, तत्र व्रीह्यभावे फलाभावात्तदन्तोत्सर्गे प्राप्ते वचनात्प्रारभ्य यजेतैवेति समाप्तिर्विधीयते । सा च यादृशः प्रक्रान्तस्तादृशस्य । तत्र व्रीह्याकृतिर्यागस्य साधनं द्रव्यं परिच्छिन्दत्यङ्गतां प्रतिपद्यते यथा, एवं तद्गता विशेषा दीर्घशूकत्वादयस्तानपि परिच्छिनत्ति । तत्र यद्यपि नीवाराकृतिर्व्यक्तिश्चान्या ( व्रीह्याकृतिव्यक्तिभ्यां ) तथाऽप्यन्ये बहवो धर्माः समानाः । ते श्रुतसंपत्तयेऽवश्यमुपादेयाः । यत्त्वधिकं तन्नान्तरीयकत्वादुपादीयते । तत्र कर्तव्यतोपदेशात्फलेन भवितव्यम् । सोमयागस्य यत्फलमवगतं तदत्राप्यनुषज्यते । अवश्यकर्तव्ये सौकर्यात् ( बुद्धिसंनिधानादित्यर्थः ) । विप्रकर्षान्न दर्शपूर्णमासफलानुषङ्गः । अनाकाङ्क्षितत्वाच्च ।

**अथवा**— कर्तव्यतानियमः । स च गुणस्तस्य यन्मनसि विपरिवर्तते तत्साधयति । वीतायां फलेच्छायां पापक्षयादि । अवीतायां तु यत्संनिहितम् । स चानाश्रितो न शक्नोति साधयितुमिति प्रक्रान्तं कर्माऽऽश्रयति । तच्च साङ्गं प्रक्रान्तम् । तत्र व्रीह्याकृतिर्व्यक्तिर्वा केवलासंभवान्नीवारेषूपादीयमानेषु परित्यज्यते । शिष्टं तु यथाश्रुतमेवाऽऽश्रयत्वेन गृहीतम् ।

**शा**— श्रुतापचारे प्रतिनिध्युपादानं स्थितम् । तत्र यत्किंचित्प्रतिनिधातव्यं उत सदृशमेवेति संशयः । तत्र **'आग्नेयचोदना तावद्यत्किंचित् द्रव्यमाक्षिपेत् । व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम् ॥ अतः केन प्रमाणेन सदृशस्योपसंग्रहः । व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते ॥ सा च द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति । तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम् ॥'** अवयवा एव हि एकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते न अत्यन्तं अर्थान्तरम् । अतस्तैरवयवैः जात्याश्रयभूतैः कर्म साधनीयम् । तत्र यदि सदृशं उपादीयते ततः तेषां अवयवानां कतिपया लभ्यन्ते जातिमात्रं अवयवान्तरमात्रं च परित्यक्तं भवति । विसदृशोपादाने पुनः समस्तपरित्यागः स्यात् । अतो व्रीहिशास्त्रमपि यथासंभवं उपपादयितुं सदृशोपादानम् । एवं च सुसदृशलाभे मन्दसदृशं नोपादेयं किन्तु सुसदृशमेव, तत्र बह्ववयवानुग्रहात् ।

**सोम**— पूर्वोक्तप्रतिनिधौ विशेषविचारात् संगतिः । **सूत्रार्थस्तु**— यत्र सामान्यं सादृश्यं अस्ति नीवारेषु तदेव द्रव्यं प्रतिनिधेयम्, यस्मात् व्रीह्यादिमुख्यशास्त्रार्थचिकीर्षा इति ।

**वि**— 'किंचित्प्रतिनिधेयं स्यात् श्रुततुल्यमुताग्रिमः । आक्षेपान्न समद्रव्ये मुख्यांशानुगमो यतः ॥'

**भाट्ट**— एवं प्रतिनिधौ विचारिते किं सति संभवे सदृश एव प्रतिनिधिरुतानियम इति चिन्तायाम्, कर्मचोदनया यत्किञ्चिद्द्रव्यमात्राक्षेपात् द्रव्यशास्त्रस्य च नीवारेषु व्रीहित्वाभावेन सदृशनीवारादिनियामकत्वाभावात् न सदृशनियमः । न च व्रीह्यवयविनः स्वावयवैरत्यन्तभेदाभावात्तदवयवानामेव कतिपयानां नीवारोपादानतया नीवाराभिन्नतया व्रीहिशास्त्रेणैव तद्विधानमिति वाच्यम् । तथात्वे व्रीहिसत्त्वेऽपि नीवारोपादाने वैगुण्याभावप्रसङ्गात् । इति प्राप्ते—

व्रीहिशास्त्रेण व्रीहित्वजातेः साधनत्वे प्रमितेऽमूर्तायास्तस्याः साधनत्वासंभवात् अर्थात्तत्परिच्छिन्नस्यावयविनः साधनत्वमवगम्यते तस्यापि चावयवोपादानव्यतिरेकेण साधनत्वासंभवात् । तदवयवानामपि साधनत्वमर्थादेवावगम्यते । तज्जातीयावयवानामेव च कतिपयानां विजातीयावयवान्तरोपेतानां नीवारारम्भकत्वमिति यथाशक्तिप्रयोगे जातेरवयविनो अवयवान्तराणां च साधनत्वासंभवेऽपि कतिपयावयवानामेव तत्संपत्त्यर्थमवर्जनीयतया नीवारविजातीयतदवयवोपादानमिति सदृशप्रतिनिधिनियमसिद्धिः । अत एव सादृश्यं समानजातीयावयवा-

रव्यत्वेनैव नियामकं न तु समानजातीयधर्मान्तरेण तस्य व्रीहिशास्त्राविषयत्वात्। एवं च व्रीह्याद्यभावे सुसदृशं तदभावे मन्दसदृशमित्यादिक्रमेण बोध्यम्।

मण्डन-- ‘सदृक् प्रतिनिधिर्ग्राह्यः।’

शंकर-- ‘सदृगेव प्रतिनिधिः।’

* ‘पूतिकानभिषुणुयात्’ अत्र पूतिकानां मन्दसदृशत्वेन सोमाभावे सुसदृशस्यैव प्राप्तेः। तथापि कर्मचोदनया यत्किंचित्प्रतिनिधिप्रसक्तौ सदृशन्यायेन नियमकरणात् पूर्वमेव एतद्वचनप्रवृत्त्या नियमोपपत्तेः। भाट्ट. ६।३।१३.

**सद्भावार्द्रः फलति न चिरेणोपकारो महत्स्विति न्यायः।** अस्यार्थः– महत्सु गुणगरिष्ठेषु विषये योऽसौ उपकारः स चिरेण दूरेण न फलति, किन्तु तत्कालमेव फलति। कथम्भूत उपकारः– सद्भावार्द्रः सम्यक्स्नेहरससहितः इति अन्वयः, इति कालिदासः। **साहस्री.** ९७५.

* **सद्यस्कालाः** विकृतयः। **भा.** ५।४।७।२४.

**सद्यस्कालताऽपि साङ्गप्रधानस्य ॥**

उक्तरीत्यैव अन्वाधानस्य तदितरतन्त्रप्रक्रमस्य च कालभेदे नित्यं प्राप्ते यजनीयेऽप्यहनि वैकल्पिकस्तत्प्रक्रमो। भवेत् तदेतत्स्मृतिष्वेव व्याख्यातम्। ‘संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः। सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः॥’ इति कातीयवचनात्। ‘आवर्तनात्प्राग्यदि पर्वसंधिः सद्यस्तदा वा क्रियते समस्तम्’ इति संग्रहादिषु द्रष्टव्यम्। भाष्ये त्वेतत्सूत्रं रात्रीज्याधिकरणगुणसूत्रत्वेन व्याख्यातम्। अहर्यजनीयः कालो न रात्रिरित्युक्तम्। तदहन्येव यजेतेति तच्चिन्त्यम्। **संकर्ष.** ३।१।५.

* सद्यस्कालता ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनाम्। ५।४।७।२२–२४. **मीको.** पृ. १३२० ‘ऐन्द्राग्नादीनां विकृतिरूपाणां०’ इत्यत्र अधिकरणं द्रष्टव्यम्। * सद्यस्कालता साकमेधीयानां अनीकवत्यादीनाम्। ५।१।११।१९–२२. ‘साकमेधीयन्यायः’ इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सद्यस्कालत्वं** विकृतीनां सर्वासाम्। **वा.** ५।१।११।१९.

* **सधस्थं** नाम साम अनृक्कम्। **बाल.** पृ. ७२.

* **सनाद्यन्तः** धातुः अभिधात्री श्रुतिः। **बाल.** पृ. ४१.

* **सन्प्रत्ययः।** उपचारेण इच्छाव्यतिरिक्ते सन्प्रयोगोपपत्तिः। **सु.** पृ. १००६.

* **सनकादयः।** अलौकिकसनकादिमनुष्यप्रधानस्य कर्मणः (इत्यादि)। **सु.** पृ. १३५०.

* **सनिवन्यम्।** सनिवनिप्राप्तं सनिवन्यम्, याच्ञाप्राप्तमित्यर्थः। **भा.** १०।२।८।२७.

* ‘**संततमाघारयति**’ इति द्रव्याभिप्रायः संततशब्दः। संततं क्षारयति इति दीर्घधारया जुहोति इति दीर्घधारत्वात् संततशब्दः। **भा.** १२।३।१२।२८, * संततम्। ‘ऋजुमाघारयति, संततमाघारयति, प्राञ्चमाघारयति’ इति। संततत्व–ऋजुत्व–प्राक्त्वानामाघारे समुच्चयः, भिन्नकार्यत्वात्। १२।३।३।९. * संततं वसोर्धारां जुहोति। **संकर्ष.** १।३।५.

**संततवचनाद् धारायामादिसंयोगः। १२।३।११।२६ ॥**

अग्निचयने ‘संततां वसोर्धारां जुहोति’ इति वसोर्धारा श्रुता। तस्यां धारायां संततवचनात् संततत्वविशेषणात् मन्त्रकर्मणोः सांतत्यसिद्ध्यर्थं मन्त्रादिना कर्मादेः संयोगः कर्तव्यः। आदिसंयोगोऽत्र, नान्तसंयोगः। इति **पूर्वः पक्षः।**

**कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात्। २७ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। वसोर्धारा नैकं कर्म, कर्मसंतानोऽयम्। नानाकर्मत्वात् ‘द्वादश द्वादशानि जुहोति’ इति वचनेन नानाभूतानां कर्मणामुक्तत्वात्। तथा च नानाकर्मसंतान एवात्र एकमिव कर्म। तेन तादृशेन कर्मणा मन्त्रादेः संनिपातः। एतादृश एवात्र मन्त्रकर्मणोः संतानः। इतरस्य अन्यादृशस्य मन्त्रकर्मणोः संतानस्य वक्तुं अशक्यत्वात् कर्मणः क्षणिकत्वात्।



तस्मात् वसोर्धारायामपि मन्त्रान्तेन कर्मादिसंनिपातः इति सिद्धान्तः। **के.**

* **संततिर्हि** हेतुहेतुमद्भावनिबन्धना। हेतुहेतुमद्भावावस्थितानि वस्तूनि निरन्तरोत्पन्नानि संततिशब्दाभिधेयानि। **ऋजु.** पृ. १५१.

* **संतनोति।** सं इत्येकीभावः। तनोतिर्विस्तारे। द्वयोर्यत्र सह तननं भवति, तत्र संपूर्वस्तनोतिर्वर्तते। **भा.** १२।३।११।२६.

* **संतर्दनं** अग्निष्टोमप्रकरणात् उत्कृष्टं सर्वत्रान्यत्र भवति। **सु.** पृ. ३९२, * संतर्दनं अभिषवणफलकयोः। द्वयोः समीभूतयोः संश्लेषणार्थं संश्लेषप्रदेशौ भेदनेन तनूकृत्य एकस्योपरि अपरं स्थापयित्वा संश्लेषणम्। पृ. १३०२. * संतर्दनम्। दीर्घकाले सोमे पुनः पुनर्ग्रावभिरभिहन्यमाने सोमाभिषवणफलकयोः दारणशङ्कायाम्, ‘धृत्यै’ इत्यर्थवादः उपपद्यते। **भा.** ३।३।११।२७. * संतर्दनं दृढः संश्लेषः। दीर्घसोमेषु अधिषवणफलकयोः संतर्दनं कार्यम्, तस्य प्रकृतौ न निवेशः, किंतु विकृतिषु। **वि.** ३।३।१६. * संतर्दनं नाम द्वयोः फलकयोः संश्लेषप्रदेशतनूकरणेन एकोपरि अपरस्य दृढः संश्लेषः। **भाट्ट.** ३।३।११.

**संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात्। ३।३।११।२४ ॥**

‘दीर्घसोमे संतृद्याद् धृत्यै’ इति अधिषवणफलके प्रकृत्य श्रूयते। इदं संतर्दनं किं अग्निष्टोमे एव निविशते उत अन्यत्र उत्कृष्यते। उत्कर्षपक्षेऽपि किं द्विरात्राद्यहीनसत्रेषु उत्कर्षः उत उक्थ्यादिसंस्थास्वेव अथवा संस्थासु च अहीनादिषु च इति विचारे पूर्वपक्षमाह। संतर्दनं नाम अधिषवणार्थयोः काष्ठफलकयोः मध्ये एकस्य अन्तरा द्वितीयस्य दृढः संश्लेषः। तदेतत् संतर्दनं सम्यक् तर्दनं प्रकृतौ ज्योतिष्टोमे स्यात् अनर्थलोपात् अर्थलोपाभावात् दीर्घश्चासौ सोमश्चेति कर्मधारये इष्ट्याद्यपेक्षया दीर्घत्वस्य सोमवत्त्वस्य च ज्योतिष्टोमे संभवेन दीर्घसोमपदार्थबाधविरहात्। क्रयणवत् यथा सोमक्रये गोवासोहिरण्यादिक्रयद्रव्याणां विकल्पः पूर्वपक्षे तथा संतर्दनासंतर्दनयोः विकल्पोऽत्र। अथवा ‘धृत्यै’ इति वाक्यशेषश्रुतधारणशक्तेः संतर्दनप्रयोजनस्य प्रकृतौ संभवात् संतर्दनं नोत्कृष्यते। क्रयणवत् इति प्रयोजनलोपाभावे दृष्टान्तः इति। तस्मात् संतर्दनस्य ज्योतिष्टोमान्नोत्कर्षः।

**उत्कर्षो वा ग्रहणाद् विशेषस्य। २५ ॥**

‘दीर्घसोमे संतृद्यात् धृत्यै’ इति ज्योतिष्टोमे श्रुतं संतर्दनं ज्योतिष्टोमात् नोत्कृष्यते इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। उत्कर्षः संतर्दनस्य स्यात् ज्योतिष्टोमात्। विशेषस्य ग्रहणात्। दीर्घसोमशब्देन विकृतिभूतसोमस्य ग्रहणात्। न च इष्ट्याद्यपेक्षया दीर्घत्वं दीर्घसोमशब्दप्रवृत्तौ निमित्तम्। सर्वेषामेव सोमानां इष्ट्याद्यपेक्षया दीर्घत्वात्। तस्मात् ज्योतिष्टोमे दीर्घसोमत्वाभावात् संतर्दनस्य तस्मादुत्कर्षः इति सिद्धान्तः।

**कर्तृतो वा विशेषस्य तन्निमित्तत्वात्। २६ ॥**

‘दीर्घसोमे संतृद्यात् धृत्यै’ इति विहितं संतर्दनं ज्योतिष्टोमान्नोत्कृष्येत। दीर्घसोमत्वं च कर्तृतो भविष्यति। दीर्घस्य उन्नतस्य यजमानस्य सोमः दीर्घसोमः इति। तन्निमित्तत्वात् तस्य कर्तृदैर्घ्यस्य कादाचित्कत्वेन निमित्तत्वसंभवात्। तस्मात् संतर्दनं ज्योतिष्टोमात् नोत्कर्षणीयम्।

**क्रतुतो वाऽर्थवादानुपपत्तेः स्यात्। २७ ॥**

‘दीर्घसोमे संतृद्ये धृत्यै’ इदं दीर्घसोमत्वं कर्तृतः स्यात् दीर्घस्य उन्नतस्य सोम इति पूर्वपक्षिणः सूत्रप्राप्तां शङ्कां वाशब्देन निरस्यन् आह सिद्धान्ती। क्रतुतः एवेदं दीर्घसोमत्वं स्यात् न कर्तृतः। दीर्घेण कालेन क्रियमाणः सोमः दीर्घसोम इति। कर्तृतः दीर्घसोमत्वे तु ‘धृत्यै’ इति अर्थवादस्य अनुपपत्तेः। उन्नतस्य वामनस्य वा यजमानस्य धृतिः समानैव। दीर्घकाले तु सोमे पुनः पुनर्ग्रावभिः अभिहन्यमाने सोमाभिषवणफलकयोः दारणाशङ्कायां धृत्यै इत्यर्थवादस्योपपत्तिः। तस्मात् संतर्दनस्य ज्योतिष्टोमादुत्कर्षः।

**संस्थासु च कर्तृवद् धारणाऽविशेषात्। २८॥**

‘दीर्घसोमे संतृद्ये धृत्यै’ इति विहितं संतर्दनं उक्थ्यादिषु संस्थासु भविष्यति अग्निष्टोमापेक्षया उक्थ्या-

दिषु ग्रहाधिक्येन दीर्घकालत्वात् । तस्मात् संस्थासु संतर्दनं स्यात् । इति पूर्वपक्षिणः शङ्कायां आह सिद्धान्ती । संस्थासु च धृत्यै इत्यर्थवादो नोपपद्यते । अग्निष्टोमे इव उक्थ्यादिष्वपि तावानेव सोमः 'दश मुष्टीर्मिमीते' इति वचनात् । तथा च तत्रापि धारणे न कश्चित् विशेषः । तस्मात् संतर्दनस्य अहीनसत्रेषु उत्कर्षः । कर्तृवत् यथा उन्नतस्य वामनस्य वा यजमानस्य विद्यमानत्वेऽपि सोमाभिषवधारणे न कश्चिद्विशेषः तद्वत् ।

**उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् । २९ ॥**

'दीर्घसोमे संतृद्ये धृत्यै' इति उक्तस्य संतर्दनस्य अहीनादिषु नोत्कर्षः, वाशब्दः उत्कर्षपक्षव्यावृत्त्यर्थः । उक्थ्यादिषु अर्थस्य दीर्घसोमशब्दार्थस्य विद्यमानत्वात् । अग्निष्टोमात् उक्थ्यादिषु अधिकः सोमः । प्रदानानि हि विवर्धन्ते । अविवृद्धे प्रदेये सोमे न तानि शक्यानि विवर्धयितुम् । पूर्णे च ग्रहे ग्रहशब्दो भवति । तेन न शक्यानि अपूर्णानि पात्राणि ग्रहीतुम् । तस्मात् फलकयोः दारणाशङ्कायां धारणमाशंसितव्यं भवति । तत्र धृत्यै इति अर्थवादोपपत्तिः । अतः संस्थासु संतर्दनं निविशेत इति सिद्धान्ती आह स्म ।

**अविशेषात् स्तुतिर्व्यर्थेति चेत् । ३० ॥**

'दीर्घसोमे संतृद्यात् धृत्यै' इति उक्तं अग्निष्टोमप्रकरणे संतर्दनं प्रदेयविवृद्ध्या उक्थ्यादिषु संस्थासु उत्कृष्टव्यं 'धृत्यै' इति स्तुतत्वात् इति सिद्धान्तसूत्रेणोक्ते पूर्वपक्षी आह । स्तुतिर्व्यर्था अविशेषात् यावानेव अग्निष्टोमे सोमः तावानेव उक्थ्यादिषु संस्थासु । स च दशमुष्टिः सन् कथं शक्यते विवर्धयितुम् । त्रिपर्वा इति च पर्वसंख्यानियमात् न शक्यो बहुपर्वा ग्रहीतुम् । जलस्य आधिक्येन प्रक्षेपणात्तु प्रदेयरसवृद्धिः । न च तावता संतर्दनस्यावश्यकता । एवं सोमस्य अविशेषात् 'धृत्यै' इति स्तुतिर्व्यर्था इति चेत् ।

**स्यादनित्यत्वात् । ३१ ॥**

अग्निष्टोमात् उक्थ्यादिषु संस्थासु सोमस्य अविशेषात् समानत्वात् 'धृत्यै' इति स्तुतिर्व्यर्था संस्थापक्षे इति पूर्वपक्षिणा शङ्किते सिद्धान्ती आह । स्यात् संस्थासु संतर्दनम् । प्रदेयविवृद्ध्या दारणाशङ्कायां 'धृत्यै' इति अर्थवाद उपपद्यते । ननु प्रदेयविवृद्धिर्नोपपद्यते दशमुष्टित्रिपर्वत्वयोर्विधानात्, अत आह– अनित्यत्वात् पर्वणां आयामपरिमाणस्य अनियतत्वात् । तेन विप्रकृष्टपर्वा सोमो ग्रहीष्यते । अपि च तृतीये सवने अंशुरेकः अभिषूयते तस्य प्रमाणं नाम्नातं तमनेकपर्वाणं स्थूलपर्वाणं दीर्घपर्वाणं च ग्रहीष्यति । किंच 'प्रजाभ्यस्त्वा इति अवशिष्टानंशून् उपसमूहति' इति उपसमूहनविधानेन यावदपेक्षितसोमविवृद्धिः संभवति । एवं सोमपरिमाणस्य अनित्यत्वात् अर्थवादोपपत्तिः । तस्मात् संस्थासु निवेशः संतर्दनस्य । सत्राहीनेष्वपि तुल्यम् । इति **सिद्धान्तः । के.**

* **संतर्दनस्य** ज्योतिष्टोमात् दीर्घसोमेषूत्कर्षः । **वि.** ३।३।१६.

**संतर्दनाधिकरणम् ।** ज्योतिष्टोमे श्रुतं संतर्दनं संस्थासु अहीनेषु सत्रेषु च निविशते न प्रकृतौ ॥

**संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात् । ३।३।११।२४ ॥**

**भाष्यम्**— ज्योतिष्टोमे अधिषवणफलके प्रकृत्य श्रूयते 'दीर्घसोमे संतृद्याद् धृत्यै' इति । तत्र संदेहः किं संतर्दनं ज्योतिष्टोमे एव, आहोस्विद्दीर्घकालेषु सोमेष्विति । उच्यते । नैतत् लुप्तार्थं प्रकृतौ, तस्मान्नोत्कृष्येतेति । आह । ननु असंतर्दनमपि श्रूयते 'असंतृण्णे भवतः' इति । उच्यते । क्रयणवत् विकल्पिष्यते । यथा 'हिरण्येन क्रिणाति' 'गवा क्रीणाति' इत्येवमादीनां विकल्पः । एवमत्रापि विकल्पो भविष्यति । संतर्दनं असंतर्दनं वा भविष्यतीति ।

**वा**—– इह वाक्यप्रकरणयोः विरोधाविरोधचिन्ता । ज्योतिष्टोमे सोमाभिषवाधारत्वेन फलकद्वयमाम्नातम् । तत् प्रकृत्य श्रूयते 'दीर्घसोमे संतृद्यात् भृत्यै (धृत्यै)' इति, भित्त्वा संघातयेत् इत्यर्थः (द्वयोः समीभूतयोः फलकयोः संश्लेषार्थं संश्लेषप्रदेशौ तक्षणेन तनूकृत्य एकस्योपरि अपरं स्थापयित्वा कीलकादिना दृढं संश्लेषयेत्) । तत्र दीर्घसोमशब्दः किं प्रकृतावेव कथंचित् उपपद्यते ततश्च अविरोधः प्रकरणस्य, अथ दीर्घकालसत्राहीनग्राहित्वात् अनुपपद्यमानः उत्कर्षेत् इति संशयः । एते चात्र पक्षा भविष्यन्ति । किं शुद्धे एव ज्योतिष्टोमे निवेशः दीर्घयजमानके वा, अथवा उक्थ्यादिसंस्थास्वेव, अथवा सत्राहीनयोरेव, अथवा अग्निष्टोमान्यमात्रे इति । किं प्राप्तम् ? दीर्घसोमशब्दस्य इष्टिपशुदर्विहोमापेक्षया प्रकृतावेव उपपत्तेः, संतर्दनप्रयोजनस्य च दार्ढ्यस्य संभवात्, (अ ?)संतर्दनविधिना च सह व्रीहियववत् विकल्पसिद्धेः प्रकरणानुग्रहाय अनुत्कर्षः इति 'क्रयणवत् विकल्पः' इति उपरिष्टात् (१२।४।३।५-७ । क्रयद्रव्याणां) समुच्चयस्थापनात् पूर्वपक्षेण दृष्टान्त इति व्याख्येयम् । न चावश्यं सर्वत्र सिद्धान्त एव दृष्टान्तो भवति, यस्य कस्यचित् निदर्शनस्य प्रतिपत्तिकारणत्वसिद्धेः । असंतर्दनवाक्यमनुपन्यस्यैव वा अनर्थलोपदृष्टान्तः (न तु संतर्दने दृष्टान्तः) क्रयवत् (क्रयणवत्) इति समर्थनीयः । तत्र एवं योजना भवति– ननु अल्पकालत्वात् सोमस्य प्रकृतौ मन्दफलं संतर्दनम् । नैष दोषः । क्रयणवत् अर्थत्वात् (अर्थवत्त्वात्) । यथा अल्पमूल्यत्वात् सोमस्य वासःप्रभृतीनामेकेन केनचित् क्रये सिद्धे शेषाणि वचनसामर्थ्यात् दीयमानानि तस्यैव आनतस्य सुतरां आनतिं कुर्वन्ति इति न लुप्तार्थानि भवन्ति, स्वानतात् क्रीतः सोमः अभ्युदयकारी भवति इति च शास्त्रार्थो विज्ञायते, तथा अत्र सत्यपि असंतृण्णयोरपि प्रकृताभिषवक्षमत्वे वचनसामर्थ्यात् दृढतरकृतः अभिषवः श्रेयस्करः इत्यवगमात् अलुप्तार्थत्वम् । तस्मात् अनुत्कर्ष इति ।

**उत्कर्षो वा, ग्रहणाद् विशेषस्य । २५ ॥**

**भाष्यम्**-- उत्कृष्यते वा संतर्दनम् । गृह्यते हि विशेषः 'दीर्घसोमे संतृद्यात्' इति । ज्योतिष्टोममपेक्ष्य सत्राणि कालतो दीर्घाणि भवन्ति ।

**वा**-- वाक्यकृताद्वा दीर्घसोमसंयोगादुत्कर्षः । कुतः ? **'दृष्ट्वा ह्रस्वं सजातीयं दीर्घबुद्धिः प्रवर्तते । तस्मात् सोमस्य दीर्घत्वं भवेत्सोमान्तरेक्षया ॥'** न हि इष्टिपशुदर्विहोमापेक्षया सोमस्य दीर्घत्वं युक्तम्, विजातीयत्वादनुपात्तत्वाच्च । सर्वत्र प्रतियोगिनि उपात्ते दीर्घह्रस्वादिविभागो भवति । न चात्र इष्ट्यादय उपात्ताः, यानालोच्य ज्योतिष्टोमो दीर्घ इत्युच्येत । ननु सोमयागभेदोऽपि अनुपात्त एव । यद्यपि अनुपात्तः तथाऽपि तुल्यजातीयत्वं तावदस्ति अपेक्षाकारणम् । विशेषणविशेष्यभावाच्च सोमत्वे सति दीर्घत्वमुपादीयमानं सोमान्तरस्य व्यवच्छेदार्थमेव विज्ञायते । तेषां कः पुनर्दीर्घः कुतो वा दीर्घ इत्यपेक्षिते, ज्योतिष्टोमस्तावत् न कुतश्चिद्दीर्घः इति ततोऽन्ये गृह्यन्ते । तेषां च प्राथम्यात् स एवापेक्षाकारणं भवति ।

**कर्तृतो वा विशेषस्य तन्निमित्तत्वात् । २६ ॥**

**भाष्यम्**-- नोत्कृष्येत वा संतर्दनं ज्योतिष्टोमात् । एवं प्रकरणमनुगृहीतं भवति । दीर्घसोमशब्दश्च कर्तृतो भविष्यति । दीर्घस्य यजमानस्य सोमो दीर्घसोम इति ।

**वा**— यथाकथंचित् दीर्घसोमशब्दे अवकल्प्यमाने न युक्तः प्रकरणबाधः । स च कर्तृद्वारेणोपपत्स्यते । न च स्वरगतः कश्चित् समासे विशेषोऽस्ति । उभयथाऽपि अन्तोदात्तत्वात् । अतः षष्ठीसमास इति ।

**क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् । २७ ॥**

**भाष्यम्**-- न चैतदस्ति, ज्योतिष्टोमे संनिवेश इति । दीर्घकाले सोमे क्रियेत । क्रतुत एव दीर्घत्वम्, न कर्तृतः । कुतः ? अर्थवादानुपपत्तेः । धृत्यै इत्यर्थवादो भवति । धारणायेत्यर्थः । दीर्घकाले सोमे पुनःपुनर्ग्रावभिरभिहन्यमाने सोमाभिषवणफलकयोर्दारणशङ्कायां 'धृत्यै' इत्यर्थवादः उपपद्यते । तस्मादुत्कर्ष इति ।

**वा**-- क्रतुत एव दैर्घ्यम्, समानाधिकरणसमासः इत्यर्थः । किं कारणम् ? एवमुभयोः स्वार्थः एव वादो भविष्यति, अन्यथा एकस्य परविशेषणत्वात् स्वप्रधानभूतार्थवादानुपपत्तिर्भवेत् । एवं च बहुसोमाभिषवात् दृढत्वाकाङ्क्षायां सत्यां दृष्टार्थोऽयं वादो भविष्यति, अन्यथा मन्दत्वात् दृढत्वाकाङ्क्षायाः तदनुपपत्तिः स्यात् । तथा 'धृत्यै' इत्यर्थवादः अमुमेवार्थं द्योतयति । (एवं अर्थवादानुपपत्तेः इति पदं त्रेधा योजितम् ।) तस्माद्यत्र फलकयोर्दारणशङ्का तत्रैव एतद्विधानम् । इतरथा दीर्घेण कर्त्रा विशेषणं अत्यन्तादृष्टार्थं भवेत् । दीर्घे ह्रस्वे च कर्तरि कर्मणस्तुल्यरूपत्वात् । बाढं चैत-

त्कर्त्रा विशेषणम् । स्वतो विशेषणं त्वन्तरङ्गम् । तस्मादुत्कर्षः ।

**संस्थासु च कर्तृवद्धारणाऽविशेषात् । २८ ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । कानि पदानि ? अथ किमर्थं संस्थासु न निवेशः । तथा सति प्रकरणमनुगृहीतं भविष्यति । दीर्घसोमशब्दश्च । दीर्घकालो हि अग्निष्टोममपेक्ष्य उक्थ्यादिषु संस्थासु सोमः इति । उच्यते ! न संस्थासु दीर्घकालत्वेऽपि सोमे अर्थवादः उपपद्यते । तावानेव हि तत्र सोमः 'दश मुष्टीर्मिमीते' इति वचनात् । तत्र धारणे न विशेषः कश्चित् । तस्मादुत्कर्ष एव ।

**वा**— परिचोदनापदोत्तरभूतमेतत् सूत्रम् । मा नाम अग्निष्टोमसंस्थायां निवेशोऽभूत् उक्थ्यादिषु तु अग्निष्टोमापेक्षया दीर्घसोमशब्दः उपपत्स्यते, प्रकरणं चानुग्रहीष्यते । तस्मात् तिसृष्वपि संस्थासु निवेशः इति । प्रकरणाविशेषः संस्थाधिकरणेन अद्यापि न निराकृत इत्येव युक्तम् । अथवा अस्त्येव संस्थानां प्रकरणम् । तत्र येषां धर्माणामग्निष्टोमार्थता संभवति, तेषु नित्यानित्यसंयोगविरोधात् व्यावर्तते । संतर्दनस्य पुनर्नित्येनाग्रहणात् केवलानित्यविषयत्वं न विरुध्यते । तस्मात् संस्थासु निवेशः इत्युक्तेऽभिधीयते । '**संस्थास्वपि तु तावत्त्वात् सोमस्याभिषवः समः । कर्तृपक्षवदेवातो धृत्या इति वृथा स्तुतिः ॥**' सत्यपि अत्र कर्मकालयोर्दीर्घत्वे तावानेव अतिदेशप्राप्तः दशमुष्टिः सोमः अभिषूयते । धारणस्य तु तुल्यत्वात् दृष्टार्थत्वार्थवादयोः अनुपपत्तिः स्यात् । ('उक्थ्यादिषु वाऽर्थस्य' इतिसूत्रभाष्यतात्पर्यार्थमाह– ) प्रदानविवृद्ध्या न्यूनपात्राग्रहणाच्च सोमवृद्धिः भविष्यति इति चेन्न । ('अविशेषात् स्तुतिर्व्यर्था' इति सूत्रभाष्याभिप्रायमाह– ) दशमुष्टित्रिपर्वपरिमाणयोः शाब्दत्वात् प्रदानविवृद्धिः तोयादिविवृद्ध्या संपादनीया । तस्मात् अविशिष्टं धारणं इत्युत्कर्षः ।

**उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् । २९ ॥**

**भाष्यम्**— न चैतदस्ति उत्कर्षः इति । प्रकरणानुग्रहात् अनुत्कर्षः । दीर्घसोमशब्दश्च दीर्घकालत्वादुपपद्यते । तत्रापि अधिकः अग्निष्टोमात् सोमः । प्रदानानि हि विवर्धन्ते । तानि अविवृद्धे प्रदेये न शक्यानि विवर्धयितुम् । पूर्णे च ग्रहे ग्रहशब्दो भवति । तेन न शक्यानि न्यूनानि पात्राणि ग्रहीतुम् । तस्मात् दारणाशङ्कायां धारणं आशंसितव्यं भवति । तत्र 'धृत्यै' इत्युपपद्यते इति ।

**अविशेषात् स्तुतिर्व्यर्थेति चेत् । ३० ॥**

**भाष्यम्**— इति चेत् पश्यसि । संस्थास्वपि अर्थवादः अवकल्पते प्रदेयविवृद्ध्या इति । नैतदेवम् । व्यर्थैव हि स्तुतिर्भवेत् । कुतः ? सोमाविशेषात् । यावानेव अग्निष्टोमे सोमः, तावानेव उक्थ्यादिष्वपि संस्थासु । उक्थ्यादिष्वपि दशमुष्टिरेव सोमो ग्रहीतव्यः । ननु अर्थात् प्रदेयं विवर्त्स्यति इति । दशमुष्टिः सः, कथं शक्येत विवर्धयितुम् । 'त्रिपर्वा' इति च पर्वसंख्यानियमात् न शक्यो बहुपर्वा ग्रहीतुम् । तस्मात् धारणाविशेषात् अर्थवादानुपपत्तिः संस्थासु स्यात् । तस्मात् उत्कर्षः ।

**स्यादनित्यत्वात् । ३१ ॥**

**भाष्यम्**— नैतदस्ति उत्कर्षः इति । संस्थासु स्यात्, प्रकरणानुग्रहात् । अर्थाच्च प्रदेयविवृद्ध्या दारणशङ्कायामर्थवाद उपपद्यते । केन प्रकारेण प्रदेयं विवर्धिष्यते इति । विप्रकृष्टपर्वा सोमो ग्रहीष्यते । अपि च तृतीये सवने अंशुरेकोऽभिषूयते । तस्य प्रमाणं च नाम्नातम् । तमनेकपर्वाणं स्थूलपर्वाणं च ग्रहीष्यति । तेन प्रदेयविवृद्धिर्भविष्यति । अतः अर्थवादः अवकल्पिष्यते । तस्मात् संस्थासु निवेशः इति सिद्धम् ।

**वा**— स्याद्वा तेनैव हेतुना संस्थासु निवेशः । प्रदानविवृद्ध्या च प्रदेयविवृद्धौ सत्यां अर्थवाद उपपत्स्यते । तोयेन विवृद्धिरिति चेन्न । सोमसाधनकत्वे सति वचनाद्विना द्रव्यान्तरप्रक्षेपानुपपत्तेः । तस्मात् सोम एव वर्धनीयः । स च स्थौल्यबहुपर्वत्वयोरसंभवात् दीर्घपर्वा ग्रहीष्यते । तथा सति प्रदानविवृद्धिर्यथोक्तं च परिमाणं संभावितं भविष्यति । प्रकरणदीर्घसोमशब्दौ चोपपत्स्येते । शक्यं चेदानीं लतादैर्घ्येणापि सोमो दीर्घः इति वक्तुम् । अनित्यत्वादिति– नियतपरिमाणत्वस्य अनियतत्वादिति मन्यते । शक्यं हि उपायान्तरेण पूर्वपरिमाणमतिक्रमितुमित्यर्थः । न तु एतत् युक्तम्, सत्राहीनेष्वसंभवात् । अतः 'अवशिष्टानंशूनभ्यूहेत्' इत्यभ्यूह्यो यः अनियतपरिमाणः, तदभिप्रायम् 'स्यादनित्यत्वात्' इत्येतत् व्याख्येयम् । संस्थाधिकरणन्यायेनैव वा प्रकरणविरोधं ब्रुवाणस्य नित्येन अग्रहणादिति अनित्यत्वमुत्तरमभिधीयते । 'तृतीयसवने अंशुरेकः' गृह्यते इत्यत्र विवदन्ते । तस्यापि तत एव सोमादुपादानात् अतोऽत्रापि विप्रकृष्टपर्वत्वमात्रमेव कारणं वक्तव्यम् । तस्मादपि संस्थासु निवेश इति ।

न त्वत्र संस्थास्वेव इत्यवधारयितव्यम् । कुतः ? '**अग्निष्टोमान्यमात्रे हि दीर्घशब्दोऽवकल्पते । अथान्येनेतिवत् तस्मात् संस्थाकृत्वन्तरग्रहः ॥**' यथैव 'य एतेनानिष्ट्वाऽन्येन यजेत' इत्येतन्न संस्थास्वेव स्यास्यति ( ५।३।१३।३७ )। किं तर्हि अग्निष्टोमव्यतिरेकमात्रे, तथा दीर्घत्वमपि अग्निष्टोमातिरिक्तमात्रावलम्बनमशक्यं प्रकरणेन संस्थास्वेव स्थापयितुम् । प्रकृतिवच्छब्दपूर्णत्वाच्च न तासां प्रकरणमस्ति । न ह्येतत् गृहीतं प्राकृतं किंचिदङ्गं पुनरुच्चार्य विधीयते, प्रथमोपदिश्यमानज्योतिष्टोमधर्ममध्यपातित्वात् । इतश्च न संस्थानां प्रकरणमस्ति । कथम् ? '**असंबद्धव्यवाये हि सति तद् विनिवर्तते । तेनासां ज्यौतिषैर्धर्मैर्विच्छिन्ने नानुषङ्गधीः ॥**' यदि हि संतर्दनं उक्थ्यादीन् विधाय अवान्तरप्रकरणे श्रूयेत, ततः स्यादपि प्रकरणग्रहणम् । इदं तु संस्थाधिकरणन्यायेन ( ३।६।१२ ) तदग्राह्यैर्ज्योतिष्टोमधर्मैः अन्तरितत्वात्, न संस्थाकथंभावानुषङ्गेण संस्पृश्यते । तस्मान्न प्रकरणं संस्थाने वा संस्थासु विनियोजकम् । किं तर्हि ? वाक्यमेव । तच्च दीर्घसोमत्वाविशेषात् सत्राहीनेष्वपि तुल्यमिति सर्वधर्मता । ( दीर्घसोमशब्दस्य कर्मधारयेण यागवाचित्वसंभवे दीर्घः सोमः अस्मिन् अस्ति इति बहुव्रीह्याश्रयणायोगात् दीर्घकालसोमयागमात्रवाची अयं शब्दः इत्याशयः । सूत्राणि तु [ इत्येव व्याख्येयानि इति उपरिष्टादन्वयः ।] पदोत्तरसूत्रेण संस्थास्वेव इत्यवधारणां निरस्य, 'उक्थ्यादिषु वा' इति सूत्रेण अपिशब्दार्थे वाशब्दमङ्गीकृत्य 'उक्थ्यादिषु चार्थस्य' इति चकारयुक्तमेव वा पाठं कृत्वा, उक्थ्यशब्देन वा संस्थास्तिस्रोऽपि [ उक्थ्य–षोडशी–अतिरात्रान् ], आदिशब्देन च सत्राणि अहीनांश्च उक्त्वा संस्थासु सत्राहीनेषु च दीर्घसोमशब्दार्थस्य दीर्घकालसोमयागत्वस्य विद्यमानत्वात् संतर्दनं स्यात् इति द्वितीयपूर्वपक्षोक्तेः, सत्राहीनमात्रविषयतया उत्कर्षनिरासेन अग्निष्टोमान्यमात्रविषयतया उत्कर्षे सिद्धान्तिते, संस्थासु प्रदेयस्य सोमस्य दशमुष्टित्रिपर्वत्वनियमेन वृद्ध्याख्यविशेषाभावात् निरालम्बनस्तुत्यापत्तेः अग्निष्टोमान्यमात्रविषयसिद्धान्तायोगं 'अविशेषात्' इति सूत्रेण आशङ्क्य अवशिष्टांशवभ्यूहपरिमाणस्य [क्रीतात् सोमात् दशमुष्टिषु पृथक् कृतासु अवशिष्टाः ये अंशवः, तेषां अभ्यूहस्य समाहारस्य यत् मुष्टिदशकात् अधिकं परिमाणम्, तस्य ] अनियतत्वात् संस्थास्वपि प्रदेयस्य वृद्ध्याख्यो विशेषः स्यात् इति अन्त्यसूत्रेण परिह्रियते इत्येव व्याख्येयानि । सिद्धान्तसूत्रस्थं अनुत्कर्षभाष्यं प्रकरणानुग्रहभाष्यं चोपेक्षणीयम् । सुधा. पृ. १३१०)।

**शा**— अवशिष्टानामंशूनां उपसमूहनवचनं श्रूयते 'यद्वा एतावानेव सोमः स्यात् यावन्तं मिमीते, यजमानस्यैव स्यात् नापि सदस्यानां प्रजाभ्यस्त्वा इत्यवशिष्टान् अंशूनुपसमूहति, सदस्यानेवान्वाभजति' इति ।

**सोम**— पूर्ववत् इहापि अनुत्कर्षः इति प्रत्यवस्थानात् संगतिः ।

**वि**— 'संतृद्येद् दीर्घसोमे तत् प्रकृतौ विकृतावुत ।, दीर्घस्य सोम इत्युक्ते प्रकृतावस्तु तर्दनम् ॥, सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः । दैर्घ्ययुक्तोक्थ्यसंस्थादावुत्कर्षोऽन्यत्र बाधनात् ॥' १६.

**भाट्ट**— ज्योतिष्टोमे अधिषवणफलके प्रकृत्य 'न संतृणत्ति' इत्यनेन असंतर्दनं विधाय 'अथो खलु दीर्घसोमे संतृद्येद् धृत्यै' इत्यनेन संतर्दनं विहितम् । संतर्दनं नाम द्वयोः फलकयोः संश्लेषप्रदेशतनूकरणेन एकोपर्यपरस्य संश्लेषः । तदेवं संतर्दनं किं प्रकरणे एव निविशते, उत अग्निष्टोमादन्यत्र उत्कृष्यते इति चिन्तायाम्, प्रकरणानुग्रहादनुत्कर्षः । न च वाक्यविरोधः, ज्योतिष्टोमस्यापि इष्ट्याद्यपेक्षया दीर्घत्वात् सोमद्रव्य-

कत्वाच्च दीर्घसोमत्वोपपत्तेः । अतश्च व्रीहियवादिवत् संतर्दनासंतर्दनयोः विकल्पः । यस्त्वत्र सूत्रे क्रयणवदिति क्रयदृष्टान्तो विकल्पे दत्तः, स द्वादशे 'दशभिः क्रीणाति' इति वचनेन समुच्चयस्य वक्ष्यमाणत्वात् वचनाभावं कृत्वा बोध्यः । अस्तु वा इष्ट्यादेः इहानुपादानात्, तदपेक्षया दीर्घत्वस्य च नित्यत्वेन दीर्घसोमपदवैयर्थ्यापत्तेः अष्टदोषदुष्टविकल्पस्य च अन्याय्यत्वात्, दीर्घस्य यजमानस्य सोमो दीर्घसोमः इत्येवं षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते संतर्दनविधानम् । यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात्, यजमानदैर्घ्येण च फलकविदारणाप्रसक्तेः तद्द्वा( ? द्धा, द्वा )रकत्वेन संतर्दनस्तुतेरसंभवेन 'धृत्यै' इत्यर्थवादानुपपत्तेः, दीर्घश्चासौ सोमश्च इति कर्मधारय एवाङ्गीक्रियते । तदाऽपि ज्योतिष्टोमे एव उक्थ्यादिसंस्थान्तरयुक्ते प्रदानविवृद्ध्या प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेः वाक्यप्रकरणयोरविरोधान्निवेशः । न च प्रदानविवृद्धेः तोयादिना संपादनम्, सोमद्रव्यकस्य यागस्य विना वचनं द्रव्यान्तरसंसृष्टेन सोमेन करणायोगात् । न च त्रिपर्वदशमुष्टित्वरूपसोमपरिमाणबाधः, स्थूलदीर्घपर्वसोमग्रहणेन तद्बाधाभावात् । अत एव सोमपदेन यागलक्षणायां प्रमाणाभावात् सोमदीर्घपर्वत्वमेव संतर्दने निमित्तमित्यपि शक्यं वक्तुम् ।

वस्तुतस्तु— त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तरं 'अवशिष्टानंशूनुपसमूहति' इत्युपसमूहनविधानात्, तत्र चार्थवादे 'यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशून् उपसमूहति' इति पूर्वोक्तमाननिन्दया उत्तरादोहनवत् यावदपेक्षितपरत्वप्रतीतेः कपिञ्जलाधिकरणन्यायस्य अपि अप्रवृत्त्या परिमाणाभावात् प्रदेयविवृद्धिः सुलभैव । न च एवमपि अग्निष्टोमसंस्थाया अङ्गत्वात् अन्यासां काम्यानां तिसृणां संस्थानां च विकृतित्वेन सर्वतः प्रकरणाभावात् ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोधः इति वाच्यम् । काम्यसंस्थासु ग्रहणविवृद्ध्या आश्रयभूतज्योतिष्टोमाभ्यासविवृद्धेरावश्यकत्वात्, संस्थानां च तिसृणामपि स्वतः प्रकरणाभावे च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात्, काम्यसंस्थाकज्योतिष्टोमप्रयोगे संतर्दनविधानेन प्रकरणानुग्रहोपपत्तेः । अत एव अग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगे असंतर्दनम्, प्रदानविवृद्ध्यभावात् न विकल्पोऽपि । अत एव च दीर्घत्वस्यानुयोगिनः काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव लाभादिति लाघवम् । न च एवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणे अङ्गीक्रियमाणे ' एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति ' इत्यत्रापि एतच्छब्देन इतरसंस्थाकज्योतिष्टोमस्य ग्रहणापत्तेः अग्निष्टोमसंस्थाकस्यैव प्रकरणात् ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यम् । ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात्, अग्निष्टोमसंस्थाया अङ्गत्वेन इतराङ्गवत् प्रकरणविच्छेदकत्वानुपपत्तेश्च । एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्य उक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्थानामपि उक्तत्वात् तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेः अर्थात् अग्निष्टोमसंस्थाकस्यैव प्रथमकरणोपपत्तेः । अतो वाक्यप्रकरणयोरविरोधात् प्रकरणे एव संतर्दनस्य निवेशः । **इति प्राप्ते,**

**भाष्यकारेण** तावदिष्टापत्त्यैव सिद्धान्तितम् । पूर्वपक्षश्च प्रकारद्वयेनैव कृतः । **वार्तिककारेण** तु विकृतिमात्रे अग्निष्टोमातिरिक्तविवृद्धस्तोमके निवेश इत्युक्तम् । तस्यायमाशयः । दीर्घत्वं तावत् ग्रहणविवृद्धिप्रयुक्तसोमविवृद्धिकृतमिति भवतोऽप्यविवादम् । विवृद्धग्रहणानि च संस्थाङ्गानि वचनात् न तु ज्योतिष्टोमाङ्गानि । अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसंबन्धाभावात् विकृतिमात्रपरत्वमिति । न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्संबन्धसत्त्वात् तस्य दीर्घसोमत्वोपपत्तिः, सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वात् अग्निष्टोमसंस्थाकेऽपि संतर्दनापत्तेः । यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र, तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया संतर्दनविध्यवगमात् उक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात् तदङ्गत्वेन



संतर्दनविध्यनुपपत्तेः, वाक्येन प्रकरणं बाधित्वा उक्तविधसर्वविकृतावेव निवेशः, न तु संस्थास्वेव, तासां विकृतित्वेन प्रकरणाभावादिति । अत एव संतृद्यादिति धातोः सकर्मकत्वात् अनुषक्तद्वितीयान्तपदेन फलकस्यैव संस्कार्यत्वावगमात् दीर्घसोमत्वस्य उद्देश्यत्वतद्विशेषणत्वयोरसंभवेन निमित्तत्वमेव । अत एव नायं बहुव्रीहिः, न वा सोमपदेन यागलक्षणया स्वराक्रान्तोऽपि तत्पुरुषः । अपि तु तेन लतामेवोक्त्वा तत्पुरुषः । समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेदः ।

**मण्डन**-- ' दीर्घसंस्थासु तर्दनम् । ' १६.

**शंकर**-- ' उत्कर्षः संतर्दने मतः । ' १६.

* **संतर्दनादि**– ( संतर्दन–प्रवर्ग्य )न्यायेनैव वाक्यप्रकरणविरोधे सति ( वाक्यात् ) विकृत्यर्थत्वं भवति । वा. ३।३।१३।३४, कु. ३।३।१८।२९.

* **संतानं** नाम उत्पाद्योत्पादकक्रमेण अवस्थिताः पुरुषा एव । **सु**. पृ. १०. * **संतानः** संततत्वम् । पूर्वोत्तरोच्चारणयोः मध्ये मौनकृतकालव्यवधानाभावः । **संकर्ष**. ४।१।६.

**संतापनमधःश्रपणात् । १०।१।१५।५६ ॥**

संतापनं कपालानां पुरोडाशश्रपणार्थं क्रियते अधःश्रपणात् अधस्तात् पाकार्थम् । सौर्ये चरौ तु अधःश्रपणाभावात् संतापनं न कर्तव्यम् । इति सिद्धान्तः । **के.**

* संतापनं कपालानामङ्गारैः प्रतापनम् । इदं चरौ न कर्तव्यम्, पुरोडाशे तु कर्तव्यम् । **भा**. १०।१।१५।५३, * संतापनं कपालानां दर्शपूर्णमासयोः क्रियते । १०।१।१५।५३. * **संतापनस्य** सौर्ये चरौ बाधः । १०।१।१५।५६. 'सौर्ये चरौ संतापनस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संदंशः** अवान्तरप्रकरणाभिव्यञ्जकः । **सु**. पृ. ८९१. * संदंशः एकविषयकवाक्यद्वयमध्ये स्थितत्वम् । संदंशेन चावान्तरप्रकरणं सिध्यति । **वि**. ३।१।१० **वार्तिकमतम्**. * संदंशः नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् । यथा अभिक्रमणस्य प्रयाजेषु । **मीन्या**. * संदंशः । प्राकृतैरङ्गैर्यदपूर्वं समभिव्याह्रियते, तदपूर्वमपि संबध्यत एव आकाङ्क्षायां अव्यावृत्तायां असंबद्धैः पदैर्व्यवहितमपि । **टुप्**. ४।४।४।७, * संदंशः । प्राकृताङ्गसंबन्धेन श्रूयमाणाः कथंभावाकाङ्क्षायां अव्यावृत्तायां ये पदार्था उपनिपतन्ति ते संबन्धिव्यवायेन ( अवान्तरप्रकरणेन ) गृह्यन्ते । ४।४।२।३. * संदंशः विनियोजकावान्तरप्रकरणोन्नायकः । **मीन्या**. * संदंशः सप्तविधः 'श्रुत्यादिप्रमाणषट्क०' इतिबिन्दौ बाल.प्रघट्टके द्रष्टव्यः । **बाल**. पृ. ९–१२. * **संदंशं** विना अवान्तरकथंभावाऽनिष्पत्तिः । **सु**. पृ. १०६९. * **'संदंशेन** अभिचरन् यजेत' इति संदंशशब्दः कर्मनामधेयं न गुणविधिः । **भा**. १।४।४।५, * 'संदंशेन अभिचरन् यजेत ' इति संदंशशब्दः, संदंशेन यथा दुरादानमादत्ते इति साहश्येन यागे, तस्मात् कर्मनामधेयम् । १।४।४।५. * 'परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः । ज्ञाते, पुनश्च तैरेव **संदंशेन** तदिष्यते ॥ ' ( दर्शपूर्णमासादिप्रकरणस्थानां प्रयाजादीनां श्रुत्यादिभिस्त्रिभिः कस्मिंश्चिदङ्गे ज्ञाते, पुनश्च तैरेव प्रमाणैरपरस्मिन्नङ्गे ज्ञाते, संदंशेन संदंशसंभवेन तदिष्यते अवान्तरप्रकरणमिष्यते । न सर्वत्र, इति **कारिकार्थः** ) । सर्वेषां हि प्रयाजादीनां अङ्गं किंचिदुक्त्वा पुनः परामर्शोऽस्ति इति तत्पर्यन्तावान्तरप्रकरणकल्पना भवति । **वा**. ३।१।१४।२४ । बलवता प्रमाणेन प्रधानकथंभावं बाधित्वा अङ्गगुणत्वावगमे संदंशसंभवः । सर्वेषां च अवान्तरप्रकरणित्वेन अभिमतानां श्रुत्यादिभिः प्राक् तदङ्गमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावात् न क्वचित् संदंशाभावः शङ्कनीयः । **सु**. पृ. १०७०.

* **संदंशन्यायः** । न च आत्मशब्दस्य ( 'आत्मैवास्य ज्योतिः ' इत्यत्र ) परमात्मपरत्वम्, पूर्ववाक्ये आत्मनि नाडीसंबन्धप्रतिपादनात् उत्तरवाक्ये च 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृदि अन्तर्ज्योतिः ' इति पर्यालोचनया संदंशन्यायेन जीवपरत्वम् । **अद्वैत**. २।१२ ( १३ ) । २०–२१.

**संदंशपतितन्यायः** । संदंशः ' सनासी ' इति यस्य प्रसिद्धिः । तदवयवयोः मध्यपातिनः पदार्थस्य यथा ग्रहणमेवं पूर्वोत्तरयोर्ग्रहणेन तन्मध्यस्थपदार्थस्य ग्रहणं यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरिति । **साहस्री.** ५०७.

* **संदंशरूपत्वं** अवान्तरप्रकरणस्य । **भाट्ट.** ३।१।१०.

* **संदष्टन्यायः मीको.** पृ. ३६७८ ' विशिष्टविधि-संदष्टन्यायः ' इत्यत्र द्रष्टव्यः ।

* **संदिग्धं असंदिग्धेन निर्णीयते** । **वा.** ३।४।१३।३५, * संदिग्धं असंदिग्धेन बाध्यते, अप्राप्तबाधः । ३।३।७।१४ पृ. ८६०. * संदिग्धं असंदिग्धेन बाध्यते । यथा शर्कराञ्जनं घृतस्तुत्या । **बाल.** पृ. १४०.

**संदिग्धं सप्रयोजनं च विचारमर्हतीति न्यायः** । यथा– विचारविषयत्वं हि नाज्ञातस्य नापि निश्चितस्य, किन्तु संदिग्धस्येति भावः । **साहस्री.** ३८७.

* **संदिग्धस्य उपक्रमस्य वाक्यशेषात् निर्णयः** । १।४।१३।२४. **मीको.** पृ. ७ ' अक्ताधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **संदिग्धानां** अर्थानां वाक्यशेषात् अर्थाच्चाध्यवसानमुक्तम् । **भा.** २।१।१।१ पृ. ३७०.

**संदिग्धे तु व्यवायाद् वाक्यभेदः स्यात् । ३।१।११।२१ ॥**

तैत्तिरीयके दर्शपूर्णमासयोः सप्तमाष्टमयोर्ब्राह्मणानुवाकयोः सामिधेन्य उक्ताः, नवमे निविदः, दशमे काम्याः सामिधेनीकल्पाः, एकादशे च यज्ञोपवीतमाम्नातम् ' उपव्ययते देवलक्ष्ममेव तत् कुरुते ' इति, ततः पुनरपि सामिधेनीगुणाः । तत्र किं उपवीतस्य अवान्तरप्रकरणात् सामिधेन्यङ्गत्वं उत महाप्रकरणात् दर्शपूर्णमासाङ्गत्वं इति विचारे उपवीतं सामिधेन्यङ्गं इति पूर्वपक्षे सिद्धान्तमाह । उपवीतवाक्यं सामिधेनीवाक्येन एकवाक्यं न वेति संदिग्धे वाक्यभेद इति निर्णयः स्यात् । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न तस्य तेन एकवाक्यत्वं व्यवायात् निविदां विधायकेन वाक्येन सामिधेनीभिरसंबद्धेन व्यवधानात् । तथा च न सामिधेनीभिः एकवाक्यता उपवीतस्य । तस्मात् कृत्स्ने दर्शपूर्णमासप्रकरणे यदनुष्ठेयं तत् यज्ञोपवीतिना इति **सिद्धान्तः । के.**

* ' संदिग्धे तु व्यवायाद् वाक्यभेदः स्यात् । ' ३।१।११।२१ ॥ निविदधिकरणमिदम् । * ' संदिग्धे वाक्यशेषेभ्यो निर्णयः प्राक् समर्थितः ' ( १।४।१३। २४ इत्यत्र ) । **वा.** २।२।७।२१ पृ. ५२५.

* **संदिग्धेषु उपक्रमेषु वाक्यशेषात् निर्णयो भवति** । ' अक्ताः शर्करा उपदधाति ' अत्रोपक्रमे अञ्जनद्रव्यस्य संदेहः । ' तेजो वै घृतम् ' इति वाक्यशेषे घृतस्य स्तुतत्वात् घृतेनाञ्जनं इति निर्णयः । **वि.** १।४।१९. ' संदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् । ' ( वक्ष्यति ) । **वा.** १।३।४।९ पृ. २१८.

**संदिग्धेषु वाक्यशेषात् । १।४।१३।२४॥**

' अक्ताः शर्करा उपदधाति, तेजो घृतम् ' इति ' वाससा दीक्षयति सौम्यं वै क्षौमं देवतया ' इति ' ओषधीर्वपति, सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः ' इति च श्रूयते । चातुर्होत्रचयनेषु क्षुद्रपाषाणाः शर्कराः उपधेया भवन्ति । ताश्च शर्करा अक्ता इत्युक्तं विधिवाक्ये अञ्जनद्रव्यं तु नोक्तं इति उपक्रमः संदिग्धः । एवं किं तत् वासः, काश्च ता ओषधयो वप्तव्या इति उत्तरमपि वाक्यद्वयं संदिग्धम्, एतादृशेषु संदिग्धेषु उपक्रमेषु सत्सु वाक्यशेषात् निर्णयो भवति । ' तेजो घृतम् ' इत्यनेन घृतस्य स्तुतत्वात् घृतेन अक्ता इति निर्णयः । एवं क्षौमस्य अतसीतन्तुजन्यस्य (अतसी–आळशी–जवस) स्तुतत्वात्, ग्राम्यारण्यानां च धान्यानां वाक्यशेषे स्तुतत्वात् तत् वासः क्षौमं स्यात्, ओषधयश्च ग्राम्या आरण्याश्च स्युः इति निर्णयः । एवं संदिग्धोपक्रमस्थले असंदिग्धवाक्यशेषेण निर्णयः कर्तव्यः इति **सिद्धान्तः । के.**

**संदिग्धेषु वाक्यशेषात् । १।४।१३।२४ ॥**

' अक्ताः शर्करा उपदधाति, तेजो वै घृतम् ' इति श्रूयते । तत्र संदेहः किं घृततैलवसानामन्यतमेन द्रवेण अञ्जनीयाः शर्करा उत घृतेनैवेति । अत्र प्रभाकरेण संगतिलोभात् इत्थमधिकरणमुपवर्णितम्–' अक्ताः ' इत्युपक्रमे



अञ्जनाक्षेपात् घृततैलवसानामन्यतमं अञ्जनसाधनमवगम्यते । ' तेजो वै घृतम् ' इत्युपसंहारे घृतं स्तूयते, तत्रोपक्रमोपसंहारस्थयोः कतरद् बलीयः इति विशेषानध्यवसायात् अप्रामाण्यं इति **पूर्वः पक्षः । सिद्धान्तस्तु** यथाभाष्यमेवेति । तदयुक्तम्, वक्ष्यमाणपूर्वपक्षन्यायेन विध्युद्देशबलीयस्त्वेनैव अध्यवसायात्, इति यथावार्तिकमेवाधिकरणं प्रस्तूयते । स्तुत्युपयोगमर्थवादस्याभिधाय इदानीं प्रसङ्गात् संदिग्धनिर्णयोपयोगः प्रतिपाद्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । विध्युद्देशे हि प्रथममञ्जनसाधनं घृततैलवसासाधारणं स्नेहद्रव्यमात्रमुपस्थितम् । न तदवसानस्थितजघन्यार्थवादानुरोधेन संकोचमधिकुरुते, किंतु बलवन्मुख्यविध्यनुरोधेन अर्थवाद एव तदनुगुणतयाऽवस्थापयितुमुचितः । शक्नोति च घृतपदं लक्षणया विध्युद्देशावगतं स्नेहमात्रं स्तोतुम् । तदुक्तम् **' स्तुतीनां विध्यधीनत्वादनुवादाच्च लक्षणा । मुख्यत्वाच्च ( त्तु ) विधेर्नासावविरोधाच्च कल्प्यते ॥ '** ( वा. १।४।१३ पृ. ३६६ ) इति । तेन बलवद्विध्यनुरोधेन तैलघृतवसानां विकल्प एव । **इत्येवं प्राप्ते, अभिधीयते ।** भवेदेवं यदि घृतस्तुतिदर्शने सति विध्युद्देशगतं अञ्जनपदं द्रव्यान्तरमञ्जनसाधनं कल्पयितुमुत्सहते । तथाहि, सर्वेष्वेव ' गामानय शुक्लाम् ' इत्यादिवाक्येषु उपक्रमावगतसामान्यशब्दस्य अवसानगतविशेषशब्दवशादेवार्थविशेषनिर्णयो भवति । उक्तं चार्थवादानां विधिवाक्यशेषत्वम् । तेन यद्यपि अक्तपदमुपक्रमे अञ्जनसाधनद्रव्यमात्रवचनम्, तथापि तद्विशेषाक्षेपदशायां घृतस्तुतिदर्शनात् विधिस्तुत्योश्च समानविषयत्वनियमात् घृतमेव निर्णीयते, तदुक्तं **' विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धमितरेणावधार्यते ॥ '** ( वा. १।४।१३ पृ. ३६५ ) इति । किंच शब्दभावना हि विधिः, तस्य चाङ्गं विधेयस्तुतिरूपा प्ररोचना । इह च तैलाद्युपादानपक्षे विधेरेव तत्र प्ररोचनाशक्तिः कल्पनीया । क्लृप्ता च घृते प्ररोचना समस्ति । तथा च सति एकत्र क्लृप्तां गृह्णन् इतरत्र कल्पयन् विधिः वैरूप्येण भिद्येत । तेन यत्रैव प्ररोचना स एव विधीयते इति निर्णयो भवति । तदुक्तम् **' समाप्यते विधिः कश्चित् कदाचिन्नाप्ररोचितः । घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥ '** ( वा. १।४।१३ पृ. ३६७ ) इति । किंच ' अक्ताः शर्करा उपदधाति ' इति नात्र विधिः श्रूयते किन्तु अर्थवादवशादुन्नेतव्यः, अतोऽपि घृतविषयार्थवाददर्शनात् घृतमेव विधीयते । न च ' छागो वा मन्त्रवर्णात् ' इत्यस्य (६।८।१०।३१) षष्ठान्त्याधिकरणस्यानेन पुनरुक्तत्वम्, मन्त्रस्य भिन्नवाक्यत्वेन पूर्वपक्षोत्थानोपपत्तेः । न च तेनैवास्य दण्डापूपीयितत्वम्, अनुष्ठेयार्थप्रतिपादकत्वस्य विनिगमनाहेतोरभावेनात्र पूर्वपक्षोपपत्तेः ।

**प्रयोजनम्**— पूर्वपक्षे स्नेहद्रव्यानियमः । सिद्धान्ते घृतमेवेति । **सूत्रं तु**–एकवाक्यत्वे सति उपक्रमोपसंहारस्थयोः सामान्यविशेषशब्दयोः कस्य किमधीना प्रवृत्तिः इति संदेहे उक्तप्रकारेण वाक्यशेषादेवोपक्रमस्थशब्दार्थनिर्णयः इति । **तौता.** ( १।४।१९।२४ ).

**' संदिग्धेषु वाक्यशेषात् ' इति न्यायः ।** अयं निर्णयसिन्धावनन्तचतुर्दशीप्रकरणेऽभिहितः । तथा हि– तत्त्वं तु विध्यर्थवादयोः भिन्नार्थत्वेऽप्येकवाक्यतायोगात् ' संदिग्धेषु वाक्यशेषात् ' इति न्यायेन पूर्वा परा वा मध्याह्नव्यापिन्येव मुख्येत्युक्तम् । **साहस्री.** ५८८.

* अर्थवादानां अवयवार्थपरत्वाभावे **' संदिग्धेषु** वाक्यशेषात् ' इत्यधिकरणविरोधः । तत्र ' अक्ताः शर्करा उपदध्यात् ' इति विधितः सामान्यावगतं अञ्जनसाधनं ' तेजो घृतम् ' इति वाक्यशेषात् घृते व्यवतिष्ठते इति व्यवस्थापनात् । **कु.** १।२।१।१८. * कश्चिज्जातिविधिरर्थवादः । ' यदाग्नेयोऽष्टाकपालः ' इति विधितः ' संस्कृतं भक्षाः ' इत्यस्मिन्नर्थे तद्धितोत्पत्तेः भक्षद्रव्ये प्राप्ते मण्डकादिप्रसक्तौ ' ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यन् ' इति वाक्यशेषः पुरोडाशत्वजातिमात्रप्रापकः । इदं ' संदिग्धेषु वाक्यशेषात् ' इति न्यायादेव सिद्धम् । **बाल.** पृ. ५४. * जाम्युपन्यास–अजामित्वयोरेकविषयत्वेन अजामित्वस्य विष्णवादिवाक्योक्तयागविषयत्वात् जामित्वस्यापि उपक्रमस्थस्य ' संदिग्धेषु वाक्यशेषात् ' इत्यनेन न्यायेन तद्विषयत्वावगतेः

उपसंहारस्थस्य विधेः उपक्रमानुसारित्वस्य न्याय्यत्वात् विष्ण्वादियुक्ता एव विषयः । सु. पृ. ७४६. * न चात्र ' संदिग्धेषु वाक्यशेषात् ' ( १।४।१३।२४ ) इत्येतेन तुल्यार्थत्वम्, ( लौकिक-वैदिक- )प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात् । वा. १।३।४।९ पृ. २२३, * यदि तर्हि वाक्यशेषात् दातुः प्रतीयते ( वारुणश्चतुष्कपालः ) ' संग्दिधेषु वाक्यशेषात् ' इत्यनेनैव गतार्थत्वात् अधिकरणं ( ३।४।११ ) नारब्धव्यम् । उच्यते । ३।४।११।३० पृ. ९६३. * ' सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यात् ' सायंप्रातःशब्दौ अन्तराशब्दार्थनिरूपकौ 'संदिग्धेषु वाक्यशेषात् ' इति न्यायात्। **आचारमयूखः** पृ. ८१ ( घारपुरेसंपादितः ).

* **संदिग्धार्थोपादाननिर्णायकः** अर्थवादः यथा– ' एतद्वै दैव्यं मिथुनं यत् सरस्वती च सरस्वांश्च ' इति शास्त्रदीपिकायाम् ( ५।१।७ ) । बाल. पृ. ५७.

* **संदिग्धार्थनिर्णायकत्वं** यथा वाक्यशेषस्य (१।४।१८।२४ ) तथा सामर्थ्यस्यापि ( १।४।१९।२५ ) । सु. पृ. ५२९.

* **संदिग्धार्थशक्तिग्राहकार्थवादो** यथा– ' यवमतीभिरद्भिरौदुम्बरीं प्रोक्षति ' इति विधेर्वाक्यशेषः ' यदा वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति ' इति तदुक्तम् ' शास्त्रस्था वा तन्निमित्तत्वात् ' इत्यधिकरणे (१।३।५) । बाल. पृ. ५७–५८.

* **संदिग्धपक्षेतरत्वं** नोपाधिः । संप्रदायात् इति केचित् । मणि. पृ. ३५.

* **संदिग्धश्रुतेः** असंदिग्धश्रुतिर्बलीयसी । वा. ३।३।७।१४ पृ. ८४०.

* ' **संदेहः** क्रियते सर्वः साधारणपदे स्थितः । ' ( नासौ पूर्वपक्षगतः नापि उत्तरपक्षगतः ) । वा. ३।१।६।१२ पृ. ६९५.

* **संधिश्चेत्** संगवादूर्ध्वं प्राक् पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥ ' कातीये । संकर्ष. ३।१।५.

* **संधिदिने एव सोमे सुत्या** । संकर्ष. ३।१।६. ' सोमे सुत्या संधिदिने एव ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संध्योपासना** नित्यत्वेन आदिष्टा । वा. ४।१।३।३.

* **संनयदसंनयदुभयस्यैवाभ्युदये** प्रायश्चित्तम् । वि. ६।५।६.

* **संनयदसंनयदुभयसाधारणता** बर्हिषेत्याद्युक्तकालस्य वत्सापाकरणस्य । भा. ६।४।१३।४१–४२.

**संनहनं च वृत्तत्वात् । १२।१।१३।२९॥**

' योक्त्रेण पत्नीं संनह्यति ' इति दर्शपूर्णमासयोः पत्न्याः संनहनमुक्तम् । तत् सोमाङ्गेषु ऐष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्तव्यम् । वृत्तत्वात् दीक्षाकाले पत्न्याः संनहनं वृत्तम् । तत् वाससो धारणार्थं प्रसङ्गेन सिध्यति । इति **सिद्धान्तः** । **के.**

* संनहनं सर्वासां यजमानपत्नीनां दर्शादौ । **संकर्ष.** १।२।१ वर्णकं २. **मीको.** पृ. ३१८३ 'यजमानपत्नीनां सर्वासां० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**संनहनादौ यजमानस्यैव पत्नी, नाध्वर्योः ॥**

' पत्नीं संनह्याज्येनोदेहि ' इत्यध्वर्युकर्तृकप्रैषे पत्नीशब्दस्य प्रतिसंबन्धिबोधं अपेक्ष्य स्वार्थोपस्थापकत्वेन ' अर्धो वा एष आत्मनो यत् पत्नी ' इत्याम्नानात् दम्पत्योरेककारकत्वेन च गृहकर्मसु पत्न्येव निपुणा मदपेक्षयेति लौकिकवाक्य इव वक्तुर्भार्याया एव बोधादध्वर्युभार्याया एव संनहनम् । ऋत्विक्संस्कारवत् क्रतूपकारकत्वसंभवात् । इति **प्राप्ते,** ' संपत्नी पत्या सुकृतेन गच्छताम् ' इति मन्त्रवर्णाद्यजमानपत्न्या एव फलभोक्तृत्वादध्वर्युवक्तृकेऽपि तस्मिन् पत्नीपदेन यजमानाया एव बोधदर्शनात्तस्या एव संस्कारः । ' यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेत ' इति लिङ्गाच्च । अध्वर्युभार्योपरोधस्य स्वभावसिद्धत्वेन पुनर्विधानायोगात् । **संकर्ष.** १।२।१ वर्णकं १.

* **संनहनमन्त्रस्य** ( बर्हिषः ) आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्तरणार्थं संनह्य आह्रियमाणे आवृत्तिर्न कार्या ज्योतिष्टोमे । **भा.** १२।१।२१।४५–४६.



**संनहनहरणे तथेति चेत् । १२।१।२१।४६॥**

आतिथ्यायामुपयुक्तस्य बर्हिषः अग्नीषोमीयार्थं उत्तरवेदिसमीपे नयने ' पूषा ते ग्रन्थिं ग्रथ्नातु ' इति संनहनमन्त्रः ' बृहस्पतेर्मूर्ध्ना हरामि ' इति हरणमन्त्रश्च आतिथ्यायाः सकाशात् भेदेन प्रयोक्तव्यौ । संनहनहरणे संनहनहरणमन्त्रौ तथा स्तरणमन्त्रवत् आवर्तनीयौ इति **पूर्वः पक्षः** ।

**नान्यार्थत्वात् । ४७ ॥**

आतिथ्याबर्हिषः आतिथ्यादेशात् अग्नीषोमीयार्थं उत्तरवेदिसमीपे नयने ' पूषा ते ० ' इति ' बृहस्पतेर्मूर्ध्ना० ' इति च संनहनहरणमन्त्रौ भेदेन न प्रयोक्तव्यौ । अन्यार्थत्वात् दर्भच्छेदनदेशात् यागदेशे संनह्याहरणार्थं तौ मन्त्रौ । मन्त्रयोः अन्योऽर्थः । अत्र तु न सोऽर्थः । तस्मात् संनहनहरणमन्त्रौ न आवर्तनीयौ इति **सिद्धान्तः** । **के.**

* संनहनहरणे लूनस्य बर्हिष उपादानार्थे । तत्र मन्त्रौ स्वीक्रियमाणस्यैव उपवर्णनारूपौ । **भा.** १२।१।२१।४६.

**संनहनहरणमन्त्राधिकरणम्** । आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्तरणार्थं संनह्याऽऽह्रियमाणे संनहनाहरणमन्त्रयोर्नावृत्तिः ॥

**संनहनहरणे तथेति चेत् । १२।१।२१।४६ ॥**

**भाष्यम्**— अग्नीषोमीये एव देशान्तरं नीयमानस्य बर्हिषः संनहनहरणमन्त्रौ प्रयोक्तव्यौ नेति चिन्त्यते । तत्राऽऽह । संनहनहरणमन्त्रौ तथा, यथा स्तरणमन्त्रः । भेदेन प्रयोक्तव्यावित्यर्थः । कुतः ? उक्तो न्यायः । संनहनहरणमन्त्रौ कर्माङ्गे । ते च कर्मणी आवर्तेते । अतो मन्त्रयोरावृत्तिर्न्याय्या । तस्माद्भेदः ।

**नान्यार्थत्वात् । ४७ ॥**

**भाष्यम्**— नैतद्युक्तम् । कुतः ? अन्यार्थत्वात् । लूनस्य बर्हिषो ये संनहनहरणे ते उपादानार्थे । तत्र हि मन्त्रौ स्वीक्रियमाणस्यैवोपवर्णनारूपौ, ' पूषा ते ग्रन्थिं ग्रथ्नातु ' ' बृहस्पतेर्मूर्ध्ना हरामि ' इति । इमे पुनः स्वीकृतस्य देशान्तरप्रापणार्थे, अन्यार्थत्वादप्राकृतकार्ये न मन्त्रं गृह्णीतः । यथा तत्रैवाऽऽतिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय बर्हिर्नीयते, न तदा आहरणमन्त्रः प्रयुज्यते । एवमिहापि ।

**शा**— तदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः संनह्य उत्तरवेदिसमीपे स्तीर्यते । प्रकृतौ संनहनमन्त्रः ' पूषा ते ग्रन्थिं ग्रथ्नातु ' इति । तथा हरणमन्त्रः ' बृहस्पतेर्मूर्ध्ना हरामि ' इति । तौ किमस्मिन् संनहने हरणे च प्रयोक्तव्यौ नेति संदेहे संनहनहरणयोरावृत्तेः मन्त्रयोरपि पूर्ववदावृत्तिः स्यात् । मैवम् । प्रकृतौ हि लूनस्य बर्हिषो यद्विहारदेशप्रापणार्थं संनहनं हरणं च तदर्थावेतौ मन्त्रौ, विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थमेतत् । अतः अन्यकार्यत्वात् कार्यप्रयुक्तत्वाच्च मन्त्रयोः, न प्रसङ्गः । तथा च प्रकृतावेव गार्हपत्यादाहवनीये नीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तथेहापि ।

**सोम**-- तन्त्रावापचिन्ताऽपि इयं पूर्वाधिकरणोक्तमन्त्रावृत्तिप्रसङ्गात् अत्र कृतेति ध्येयम् । सूत्रे स्तरणतौल्यं तथाशब्दार्थः ।

**वि**-- ' संनाहे हरणे मन्त्रावावर्त्यौ किं न वा, ऽग्रिमः । पूर्ववत्, नेदृशं कार्यं प्रकृतौ तदभावतः ॥ ' प्रकृतौ लवनदेशादानयने कार्ये तौ मन्त्रौ दृष्टौ, न तु गार्हपत्यादाहवनीयं प्रति आनयने । अतोऽत्रापि प्राग्वंशादुत्तरवेदिं प्रति आनयने तौ मन्त्रौ न चोदकात् प्राप्नुतः ।

**भाट्ट**-- तस्यैव बर्हिषः प्राग्वंशे स्तीर्णस्य उत्तरवेदिसमीपे स्तरणार्थं पुनः संनहनमाहरणं च क्रियते । तत्र प्राकृतौ तन्मन्त्रौ ' पूषा ते ग्रन्थिं ग्रथ्नातु ' ' बृहस्पतेर्मूर्ध्ना हरामि ' इत्येतौ किं पुनः प्रयोक्तव्यौ न वेति चिन्तायाम्, पूर्ववत् क्रियावृत्तौ आवृत्तिः । इति **प्राप्ते,** नेदं प्राकृतं संनहनं लवनोत्तरकालविहितसंनहनस्यैव तत्त्वात्, किंतु आर्थिकम् । अतश्च वैधप्राकृतसंनहनाङ्गभूतो मन्त्रो नावैधे भवितुमर्हति । **याज्ञिकास्तु** तत्र मन्त्रं पठन्ति, तेषामयमाशयः, यद्यपि आर्थिकमिदं संनहनं तथापि तस्य प्राकृतकार्यकरत्वमेव । प्राकृतस्य संनहनस्य वेदिस्तरणार्थाहरणसिद्धिरेव । प्रयोजनं न त्वन्यत् । अतश्च उक्तप्रणाड्या अपूर्वसंबन्धिसंनहनाङ्गं मन्त्रः उक्तविधेः आर्थिकेऽपि संनहने स्यादेव । नहि मन्त्रं प्रति

तस्य वैधत्वादिना लवनोत्तरकालीनत्वादिना वा उद्देश्यता, प्रमाणाभावात् ।

वस्तुतस्तु 'बर्हिः संनह्यति' इति वचनेन उक्तप्रयोजनार्थं विहितस्य संनहनस्य अत्र प्रयोजनानुरोधेन आवृत्तिरेव स्तरणवत् इति मन्त्रावृत्तौ न किंचित् बाधकमस्ति । आहरणे तु प्रकृतौ विहारदेशप्रापणानुकूल एव मन्त्रो विहितः, न तु गार्हपत्यात् वेदिदेशप्रापणानुकूलः । इह च वेदिदेशप्रापणानुकूलस्यैव आवृत्तिः इति क्व मन्त्रावृत्तिशङ्का । अत एव वस्तुतः उभयत्रापि अत्र प्रसङ्गाभावेऽपि आवृत्त्यभावमात्रेण प्रासङ्गिकी अध्यायसंगतिः ।

**मण्डन**— 'तेषां पशौ संनहनं न मन्त्रवत् ।' तेषां बर्हिषाम् ।

**शंकर**— 'नाहृद्धतिमनू नैवम् ।' नाहः संनहनम्, हृतिः हरणम्, तयोः मनू मन्त्रौ, एवं मिन्नौ न, नावर्तनीयौ इत्यर्थः ।

*** संनिकर्षः ।** न हि अत्यन्तसंनिकर्ष एव एकं संबन्धकारणम् । यथा यथा हि संनिकृष्टं न लभ्यते तथा तथा विप्रकृष्टे वेदशक्तिः संचरति । वा. ३।३।४।११. * संनिकर्षः ( प्रत्यक्षज्ञानहेतुः ) संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायश्चेति (त्रिविधः) । द्रव्यं संयोगेन, तद्गतगुणकर्मजातयो द्वितीयेन, गुणकर्मगतजातयः तृतीयेन ।

केचित्तु, समवायरूपप्रत्यासत्त्या द्रव्यगुणकर्मसामान्यगता सत्ता गृह्यते । सत्ता च तत्कालसंबन्धः इति तस्य जातिगतत्वं नानुपपन्नमित्याहुः । तेषां भावं नाकलयामः ।

शब्दस्य च द्रव्यत्वात् तत्रापि संयोग एव संबन्धः । न च शब्दे श्रोत्रसंयोगासंभवः, तस्य सर्वत्रोपलम्भेन विभुतया दिगात्मकश्रोत्रस्यापि विभुतया संयोगासमवायिकारणकर्माभावात् इति वाच्यम् । न तावत् संयोगत्वावच्छिन्नं प्रति कर्मणो जनकता, संयोगजसंयोगे व्यभिचारात् । किंतु विजातीयसंयोगे, तत्र वैजात्यकल्पनमपेक्ष्य जन्यसंयोगे कर्मत्वेन कारणता युक्ता । संयोगजसंयोगानङ्गीकाराच्च न व्यभिचारः । विभुनी मिथः संयुक्ते, निरन्तरद्रव्यत्वात्, घटाकाशवत्, इत्यनुमानेन विभुसंयोगसिद्धेश्च । मणि. पृ. २०. * संनिकर्षस्य संनिधित्वेन स्थानत्वात् तस्य च प्रकरणात् दौर्बल्यम् । सु. पृ. १२८६.

*** संनिकर्षविप्रकर्षौ** तत्रापेक्ष्येते यत्र विरोधः कश्चित् । वा. ३।५।१०।२१.

*** संनिकृष्टानुवादासंभवे** विप्रकृष्टानुवादोऽपि आश्रीयते । यथाप्राप्त्यपेक्षो हि स भवति । वा. ३।४।१।९-२.

*** संनिधानम् ।** असत्यां हि आकाङ्क्षायां संनिधानमकारणं भवति । यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति । एकस्मिन्नपि वाक्ये तदवयवभूतस्यानपेक्षितस्य नैव भवति संबन्धः । यथा अश्वेन व्रजति, श्वेतेन पटेनावृतः इति । नानपेक्षितस्याश्वस्य श्वैत्यं विशेषणं भवति । भा. ६।४।६।२३. * आकाङ्क्षा-योग्यता-**संनिधानानि** हि अन्विताभिधाने प्रयोजकानि न तु शब्दोपात्तत्वमपि । सोम. ५।१।१ वर्णकं ३. * सर्वथैवानन्वयिनि विध्यन्तरे **संनिधानस्य** अपि आकाङ्क्षावशात् विशेषक(र)त्वम् । के. ( संकर्ष. )

### ॥ संनिधानविशेषादसंभवे तदङ्गानाम् । ३।८।२०।३७ ॥

श्येने 'दृतिनवनीतमाज्यं भवति' इति श्रूयते । दृतिः चर्मपात्रम् । तस्मिन् चिरकालं संगृहीतं यत् नवनीतं तत् आज्यस्थाने ग्राह्यं इति वाक्यार्थः । तदिदं नवनीतं प्रधानस्य स्यात्, इति उत्सूत्रे पूर्वपक्षे सिद्धान्तयति । ज्योतिष्टोमविकारे श्येने संनिधानविशेषात् चोदकेन प्राकृतस्य सोमस्य संनिधानं भवति, तादृशात् सोमस्य चोदकप्राप्तसंनिधानविशेषात् श्येनप्रधाने नवनीतस्य असंभवे सति आनर्थक्यतदङ्गन्यायेन तदङ्गानां श्येनाङ्गानां दीक्षणीयादीनां दृतिनवनीतमाज्यं स्यात् । यत्र चोदकेन आज्यं प्राप्तं तत्र आज्यस्थाने दृतिनवनीतं स्यात् । तथा च श्येने दृतिनवनीतं न प्रधानस्य किंतु अङ्गानां इति सिद्धान्तः ।



### आधानेऽपि तथेति चेत् । ३८ ॥

श्येनयागे 'दृतिनवनीतमाज्यम्' इति श्रूयते । दृतिश्चर्मपात्रम् । तत्र प्राक् स्थापितं आज्यं आज्यार्थेषु ग्राह्यम् । तत्र शङ्का, आधानेऽपि आधानगतपवमानेष्टिष्वपि तथा श्येनाङ्गेषु इव दृतिनवनीतमेव आज्यार्थेषु स्यात् । दर्शादिवत् श्येनाङ्गत्वं सामान्यतः पवमानेष्टिष्वपि विद्यत एवेति । इति चेत् ।

### नाप्रकरणत्वादङ्गत्वस्यातन्निमित्तत्वात् । ३९ ॥

श्येनयागे 'दृतिनवनीतमाज्यं भवति' इति श्रुतम् । दृतिः चर्मपुटकम् । तस्मिन् चिरधृतं नवनीतं आज्यस्थाने भवति इति वाक्यार्थः । तद्यदि श्येनाङ्गेषु भवेत् तथा सति आधाने पवमानेष्टिष्वपि श्येनाङ्गत्वाविशेषात् स्यात् इति पूर्वसूत्रेण शङ्कायां उच्यते न पवमानेष्टिष्वपि दृतिनवनीतं प्राप्नोति । न हि पवमानेष्टयः श्येनाङ्गम्, अप्रकरणत्वात् । न प्रकरणं श्येनप्रकरणं यासु ताः पवमानेष्टयः अप्रकरणाः । आधानस्य पवमानेष्टीनां वा श्येनप्रकरणस्थत्वाभावात् तास्वपि दृतिनवनीतं न स्यात् । पवमानेष्टीनां यत् अङ्गत्वं तत् न तन्निमित्तं श्येननिमित्तकम् । किंतु कर्मसामान्यसंबद्धाधाननिमित्तकं अग्निनिमित्तकं वा । तस्मात् पवमानेष्टिषु न दृतिनवनीतम् ।

**अत्र सुधा**— पवमानेष्टीनां श्येनप्रकरणानधीतत्वात् अङ्गत्वस्य उपकारनिमित्तत्वाभावात् अनङ्गत्वेन आनर्थक्यतदङ्गन्यायाविषयत्वात् न तत्र नवनीतापत्तिः इत्येवमर्थतया सूत्रं भाष्यात् भासते । पवमानेष्टिस्थस्य आज्यकार्यस्य असंनिहितत्वेन नवनीतविधौ अनुवादायोगात् नवनीतस्य च श्येनोपकारिकर्माङ्गतायाः संनिध्यनपेक्षोपकारित्वमात्रनिमित्तत्वाभावात् । पवमानेष्टीनां श्येनोपकारित्वमात्रेण तदङ्गत्वस्य आज्यकार्यस्य असंनिहितस्य अनुवादायोगात् न नवनीतेन सह अङ्गाङ्ग्यन्वयः किंतु संनिधानात् इति वार्तिकमतेन सूत्रार्थः । इति । के.

*** संनिधानविशेषात्** यो गम्यते स विवक्षितो भवति । अविवक्षायां कारणाभावात् । भा. ११।१।१।२.

*** संनिधिः ।** अपेक्षितसंनिधिर्हि ( पदार्थानां ) संबन्धकारणं न संनिधिमात्रम् । शा. ३।२।८ पृ. २२०. * संनिधिः बुद्धौ विपरिवृत्तिः । सा च आनन्तर्ये संबद्धपदव्यवाये च भवति । संबद्धपदव्यवधिरपि आनन्तर्यप्रकार एव । वा. २।१।१६।४८ पृ. ४५५. * संनिधिः वाक्यस्य स्वार्थप्रतिपादने सहकारी । वि. १।१।७. * संनिधिः शाब्दबोधहेतुः । मीको. पृ. १०१९ 'आसत्तिः' इत्यत्र द्रष्टव्यम् । * न हि अतिदेशस्य **संनिधिः** कारणम्, सारूप्यप्रभवत्वेन वक्ष्यमाणत्वात् ( सप्तमेऽध्याये ) । वा. ३।६।१६।४३ पृ. १०६७ । न च सारूप्यमेवैकमतिदेशस्य कारणम् । पृ. १०६८. * **संनिधिना** समाख्याया बाधः । यथा श्येने सामवेदोक्ते लोहितोष्णीषवसनत्वं सर्वेषामृत्विजां न तूद्गातॄणामेव । वि. ३।८।५, * **संनिधेः** महाप्रकरणं प्रबलम्, तेन अक्षविदेवनादीनां राजसूयाङ्गत्वमेव, न तु अभिषेचनीयाङ्गत्वम् । वि. ४।४।२. * **संनिधेः** सादेश्यनिमित्तस्य विनियोगहेतुत्वं अवसीयते । सु. पृ. ११९३. * **संनिधौ** अनुपादेयगुणानां ( देशकालनिमित्तफलसंस्काराणां ) कर्मान्तरत्वासाधकत्वम् । भाट्ट. २।३।१३.

### ॥ संनिधौ त्वविभागात् फलार्थेन पुनःश्रुतिः । २।३।१३।२६ ॥

अवेष्टिं प्रकृत्य 'एतयाऽन्नाद्यकामं याजयेत्' इति श्रूयते । राजसूयगतावेष्टेः कर्मान्तरमियं अवेष्टिः विधीयते इति पूर्वपक्षं तुशब्दो व्यावर्तयति । नेदं कर्मान्तरं किंतु फलान्तरप्रतिपादनार्थं प्रकृताया एव अवेष्टेः पुनर्विधानम् । इति **सिद्धान्तः ।** अक्षरार्थस्तु संनिधौ कर्मणः संनिधौ सति अविभागात् धातोः संनिहितकर्मपरामर्शकत्वस्यैव युक्ततया तदर्थस्य विभागाभावात् संनिहितकर्मापेक्षया भेदासंभवात् फलार्थेन अनुपादेयगुणसंबन्धरूपप्रयोजनानुरोधेन पुनःश्रुतिः संनिहितकर्मण एव पुनःश्रवणम् । न कर्मान्तरविधानार्थम् । अत्र फलपदं अनुपादेयमात्रोपलक्षकम् । अनुपादेयानि च '**देशः कालो निमित्तं च फलं संस्कार्यमेव च । इति मीमांसकाः प्राहुरनुपादेयपञ्चकम् ॥**' इति । के.

* नापि अनुपादेयगुणयोगरूपं प्रकरणान्तरं तद्भेदकम्। तस्य '**संनिधौ त्वविभागात्०**' इति न्यायेन संनिधौ अप्रवृत्तेः। कौ. २।२।३।३ पृ. १६४. * 'पौर्णमास्यां यजेत' 'सायं जुहोति' 'प्रातर्जुहोति' इत्यादौ कालोद्देशेन कर्मविधावपि न कर्मान्तरत्वमिति 'संनिधौ त्वविभागात्०' इत्यधिकरणेऽनुपदमेव वक्ष्यामः। कु. २।३।११।२४. * प्रकरणान्तरत्वाच्च विना फलादीनां भेदकत्वमुक्तमपि न दृष्टं (भाष्यान्तरकृद्भिः) 'संनिधौ त्वविभागात्०' इत्यादौ। वा. २।३।१३।२६ पृ. ६२०, * फलसंबन्धोऽपि च 'संनिधौ त्वविभागात्०' इत्यनेन न्यायेन न कर्मान्तरबुद्धिं करोति। २।२।२।२, * सत्यपि फलं प्रति विधाने 'संनिधौ त्वविभागात्' इत्यनेनाकर्मान्तरता। २।३।४।८ पृ. ५९५, * सति हि वपाप्रचारेण उत्कर्षे पूर्वस्यैव प्रातःसवने विपरिवृत्तेः कालं प्रति उपादानं प्रत्यभिज्ञानात् कल्प्येत। यथोक्तं 'संनिधौ त्वविभागात्' इति। ३।६।७।२२ पृ. १०४९-१०५०. * संनिधौ फलादेः कर्मभेदकत्वाभावः (देश-काल-निमित्त-फल-संस्काराणाम्)। भा. २।३।१३।२६ पृ. ६२०.

* **संनिधिपाठः** पाठसादेश्यरूपक्रमस्य अपरः प्रकारः। बाल. पृ. १२. * **संनिधिपाठात्** वैकृतानां प्राकृताङ्गानुवादेन विहितानां अङ्गानां संदंशपतितानां विकृत्यर्थत्वं सिध्यति। **मीन्या.** * संनिधिपाठात् 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः सांनाय्यपात्रशोधने विनियुज्यते। ३।३।५।१२ **मीको.** पृ. १५०९ 'क्रमाधिकरणम्' द्रष्टव्यम्।

* **संनिधिप्रकरणयोः** प्रकरणं बलवत्। संनिधिः अविरोधे विनियुङ्क्ते। विरोधे तु विदेवनादिवत् (राजसूये 'अक्षैर्दीव्यति, शौनःशेपमाख्यापयति') प्रकरणेन बाध्यते। वा. ३।१।११।२१ पृ. ७३६.

* **संनिधिबलात्** आमनहोमाः सांग्रहणीष्टयङ्गम्। वि. ४।४।४.

* **संनिधिमात्रेण** कर्मानुवादोपपत्तिः। सु. पृ. ७७७.

* **संनिधिलक्षणलौकिकप्रकरणस्य** यौगिकश्रुतिजनिताविशेषप्रत्ययेन बाध्यमानत्वम्। वा. ३।२।८।२१ पृ. ७७४.

* **संनिधिविषयः** विकृतिषु सर्वास्वेव। वा. ३।१।१२।२१ पृ. ७३६.

* **संनिधिसत्त्वेऽपि** अनुपादेयगुणयोगेऽपि न कर्मान्तरम्। भाट्ट. २।३।१३.

* **संनिपत्योपकारकं** अङ्गाङ्गम्। कर्माङ्गव्रीह्याद्युद्देशेन विधानात्। **मीन्या.** * संनिपत्योपकारकमपि प्रोक्षणादि अपूर्वप्रयुक्तम्। **भा.** ९।१।२।२।-३. * संनिपत्योपकारकं आराटुपकारकाद् बलीयः। 'स्थाण्वाहुतिं जुहोति' इति विहिता स्थाण्वाहुतिः यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था। नासौ आराटुपकारिका। **मीन्यां.** * संनिपत्योपकारकं उत्पत्त्यपूर्वप्रयुक्तं द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपोपयोगात्। तत्रापि पूर्वाङ्गानां उत्पत्त्यपूर्वोत्पत्तौ उपयोगः, उत्तराङ्गानां तु तत्स्थितावुपयोगः। **मीन्या.** * संनिपत्योपकारकमेव आश्रयिकर्म इत्युच्यते। बाल. पृ. ८३, * संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म त्रिविधम्-दृष्टार्थं अदृष्टार्थं दृष्टादृष्टोभयार्थं चेति। पृ. ८२. * संनिपत्योपकारकं दृष्टार्थं अदृष्टार्थं दृष्टादृष्टार्थं चेति त्रिविधम्। तत्र दृष्टार्थं अवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। **मीन्या.** * संनिपत्योपकारकं द्रव्यदेवतान्यतरनिष्ठोद्देश्यतानिरूपितविधेयताशालि कर्म। यथा प्रोक्षणावघातादि। यत्तु द्रव्यदेवतान्यतरसंस्कारकं कर्म इति लक्षणं तन्न। यजमाननिष्ठप्रयाजादिजन्यादृष्टव्यावृत्तदृष्टादृष्टसंस्कारमात्रवृत्तिसंस्कारत्वस्य एकस्याभावेन तद्घटितलक्षणासंभवात्। **केचित्तु** द्रव्यदेवतान्यतरनिष्ठापूर्वसाधनत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताशालित्वं इति लक्षणमाहुः। तन्न। यूपाद्युद्देशेन विधीयमानच्छेदनादौ अव्याप्तेः। **मुरारिः** भा-पृष्ठं ११६२. * संनिपत्योपकारकं द्विविधं उपयोक्ष्यमाणार्थं उपयुक्तार्थं चेति। तत्रोपयोक्ष्यमाणार्थं अवघातप्रोक्षणादि, उपयुक्तार्थं च प्रतिपत्तिकर्म। **मीन्या.** * **संनिपत्योपकारकाणि**



अवघातादीनि द्रव्यदेवतासंस्कारद्वारेण उत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, आराटुपकारकाणि प्रयाजादीनि तु फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते। वि. २।१।२. * संनिपत्योपकारकाण्येव 'गुणकर्माणि' 'आश्रयिकर्माणि' इति चोच्यन्ते। कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकं यथा अवघातप्रोक्षणादि। **मीन्या.** * संनिपत्योपकारकाणि कानिचिदङ्गानि। टुप्. ९।१।१।१, * **संनिपत्योपकारकः** तृतीयोऽनुयाजो दर्शपूर्णमासयोः। १०।४।१९।३८. **मीको.** पृ. ४२१ 'अनुयाजस्य तृतीयस्य०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **संनिपत्योपकारकाः** आराटुपकारकाश्च धर्माः अपूर्वार्था इति स्थितं प्रकरणेन प्रमाणेन। टुप्. ९।१।१।१ वर्णकं २, * इह च **संनिपत्योपकारकाः** सर्वे आम्नायमानाः निराकाङ्क्षीकरणसमर्थाः। ८।१।३।५. * **संनिपत्योपकारकेण** आराटुपकारकत्वं बाध्यते (अयं) अप्राप्तबाधः। वा. ३।३।७।१४ पृ. ८६०. * **संनिपत्योपकारकाणां** अङ्गानां अनेकप्रधानसाहित्यस्थले प्रधानविरोधे काण्डानुसमयः विरोधाभावे तु पदार्थानुसमयः। प्राजापत्यपशुषु उपाकरणादीनां पदार्थानुसमयः। दर्शपूर्णमासयोः पदार्थानुसमयः। वारुणचतुष्कपालानां निर्वापादौ पदार्थानुसमयः श्रपणादौ तु काण्डानुसमयः। तेषामल्पसंख्यत्वे तु श्रपणादावपि पदार्थानुसमयः। सोम. ५।२।१. * **संनिपत्योपकारकेषु** पदार्थानुसमयः प्राजापत्यपशुषु। टुप्. ५।२।१।१-३. * संनिपत्योपकारकेषु वाक्यविनियुक्तेषु प्रोक्षणादिषु अपूर्वप्रयुक्तत्वम्। भा. ९।१।२।२-३.

* **संनिपत्योपकारकाङ्गजन्यानि** अपूर्वाणि उत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते। वि. २।१।२.

* **संनिपत्योपकारकाङ्गविचारः** (अङ्गपारायणम्) -- 'व्याख्याविकल्पसंभवमङ्गान्यधिकृत्य **संशयं छेत्तुम्। परमं प्रभाकरगुरोर्गम्भीरं भावममिधास्ये ॥**' इह चतुर्विधमङ्गजातं जातिगुणद्रव्यभावार्थात्मकम्, तत्र भावार्थात्मकमपि द्विविधं संनिपत्योपकारकमाराटुपकारकं च। तत्र संनिपत्योपकारकं चतुर्विधम्, साध्यभूतोत्पत्तिप्राप्तिविकृतिसंस्कृतिभेदात्। यथाक्रमं संयवनदोहनविलापनप्रोक्षणादिरूपम्। संयवनेन प्रागभूतः पिण्डः उत्पद्यते। सदेव क्षीरं दोहनेन प्राप्यते। विलापनेन प्राचीं संहतावस्थामपबाध्य इतरा द्रवावस्था आज्यस्योत्पद्यते। पार्थिवं ह्याज्यं गन्धवत्त्वात्स्वभावतः संहतरूपमग्नियोगेन द्रवीभवति। तदाह भगवान्काश्यपः- 'सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम्' इति। तथा च शाब्दैरप्युक्तम्। अग्निसंनियोगेनाज्यं द्रवीभवतीति च्विप्रत्ययप्रयोगादिति। प्रोक्षणं तु द्रव्यस्य न प्रागवस्थाध्वंसेन दशान्तरमादधातीति। श्लोकश्चात्र भवति '**पूर्वावस्थाप्रहाणेन दशान्तरपरिग्रहः। विकारमाहुः संस्कारं केवलातिशयोदये ॥**' इति। किं पुनरेषां चतुर्णामपि संनिपत्योपकारित्वे लक्षणम्, यत्कारकविध्यपेक्षं फलं जनयति तत्संनिपत्योपकारकम्। यथा कर्तरि स्थानम्, कर्मणि अवघातादि, अधिकरणे दध्यानयनमित्यूहनीयम्। तत्र संनिपत्योपकारकाङ्गवाक्येषु केचित् पृथग्विधीनभ्युपगच्छन्ति। ते हि मन्यन्ते- यद्यत्र पृथग्विधयो नाभ्युपगम्येरंस्तदा अधिकृताधिकारादङ्गत्वेवावघातादीनां न स्यात्। न च द्रव्यसंबन्धमुखेन प्रकृताधिकारापूर्वसंबन्धादङ्गतासिद्धिः। व्रीह्यादिशब्दानामाकृतिवचनत्वात्, यद्यपि कार्यप्रत्यासन्नतया व्यक्तीनां तल्लक्षणार्थो जातिशब्दः, तथापि व्यक्तिमात्रं लक्ष्येत नापूर्वविशेषसंबद्धा व्यक्तिः। न च प्रकृताग्नेयीवत् तदपूर्वसंबन्धव्यक्तिवशेनापूर्वसंबन्धः तथापि यथा आग्नेयीन्यायेन संनिहितव्यक्तिपरिग्रहः, तथापि स्वरूपेणैव तासां प्रकृतव्यक्तिपरिग्रहेण प्रतीतिः, न पुनरपूर्वविशेषसाधनतया तस्य स्वरूपस्य लाक्षणिकत्वात्। न च लक्षितलक्षणायां प्रमाणमस्ति। तथाहि, जात्या व्यक्तिः लक्ष्यते। व्यक्त्या च साधनविशेषः इति लक्षितलक्षणा प्रकरणाभावात् अयुक्ता। अत एव च 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति सत्यपि प्रकृतपरिग्रहे न ऋगन्तरेण आग्नीध्र उपस्थातव्यः। अत एव च न तत्र विनियुक्तविनियोगविरोधः। कार्यान्तरसाधनतया च आग्नीध्रोपस्थानेऽविनियोगात्। एवं च स्वरूपमात्रेण अवघातादीनां संबन्धात् नापूर्वविशेषसंबन्धसिद्धिः। दीक्षणीयावाङ्-

नियमनवत् । यथा स्वावान्तरापूर्वसंबन्धात् वाङ्नियमो
नाधिकारापूर्वानुप्रवेशी तथा अवघाताद्यपि स्यात् ।
ततश्च अधिकारपूर्वं प्रत्यवघातादीनामङ्गता न स्यात्,
तदनङ्गत्वे च तत्प्रयुक्त्यभावात् अवघातादीनामनुष्ठानं
न स्यात् । अतः अवघातादिषूत्पत्तिनियोगोऽङ्गीकर-
णीयः । तस्मिन् खल्वाश्रिते अधिकाराभावेन तस्या-
नुष्ठानानुपपत्तेरधिकारिणि कल्पयितव्ये प्रकृताधिकारा-
पूर्वोऽधिकृत एव प्रयाजादिष्विवाधिक्रियते इति
उपायोपेयभावात् तदङ्गत्वसिद्धिरिति । तदिदं
तत्र भवानुपाध्यायो न मृष्यति । अनभिज्ञो भवान्
विषयनियोज्यानामिति । अवघातादिषु शब्दतो
वस्तुतो वस्तुस्वभावतश्च प्रोक्षणादिषु शब्दत एव
तुषकणविमोचनादि दृष्टमदृष्टं च कार्यमङ्गीक्रियते ।
तत्र यदि नियोगोऽप्यपर आश्रीयते कार्यभूतस्तदा
कार्यद्वयमेकस्मिन् कार्ये नान्वीयते । न च यथा
स्वर्गादिकं फलं तथा भूतमेव तद्भवितुमर्हति ।
तस्य च नियोज्यविशेषणत्वेनान्वयसंभवात् । न च
तुषकणविमोचनादि नियोज्यविशेषणं क्रियाफलत्वात् यदेव
नियोगात् फलं तदेव नियोज्यविशेषणतामनुभवति ।
साध्यविशिष्टो हि नियोज्यस्तदेव कार्यतया प्रतिपत्तुमर्हति
यदेव तस्य साध्यं साधयति इति नियोज्यविशेषणस्य
सिद्धिरवसीयते । यच्च क्रियाफलं न तन्नियोगात्सिध्य-
तीति न तद्विशिष्टो नियोगे नियोज्यतामश्नुते । न
च प्रतीततुषकणविमोचनादिकार्यत्यागो युक्तः, प्रतीत-
हानादेव । ननु च नियोगाभिधायिलिङ्गादिप्रयोगवशेन
नियागोऽपि प्रतीत एवेति तुल्यो दोषः । उच्यते ।
संनिहिते विधौ विधिरवगम्यमानः स एव तावदवगन्तु-
मुचितः । तत्र यदि तद्विषयानुप्रवेशिता विषयस्य न
स्यात् । भवेद्विध्यन्तरम् । अनुप्रविशति चावघातादि-
प्रकृतविषये तदर्थव्रीह्यादिसंबन्धात् । तथाहि संनिहिता-
धिकारिनियोगपरतयैव अवहन्त्यादिभिः पदैः अवघा-
तादय उच्यन्ते । तथाभूतानां तेषां क्रियाकारकभावोपदे-
शात् । यदि स्वरूपमात्रावस्थितैर्व्रीह्यादिभिः सह संबन्धः
स्यात्तदा तदधिकारसंबन्धो न स्यात् तदीयसाधनविशेष-
लक्षणया व्रीह्यादिभिः पदैरवस्थापितोऽवघातादिभिरन्वीयते
न स्वरूपमात्रमेवं चोपदेश एव यवेष्वप्यवघातादयः सिद्धा
भवन्ति, साधनभावस्याविशेषात् । अत एव चावघातादयो
नियोगसाधनतयाऽप्राप्ता एव विधीयन्ते । नियमस्तु प्रयो-
जनम् । यदि नियोगाङ्गतया अवघातादयो न विधीयेरन् ।
तदा पुरोडाशमात्रसिद्ध्यर्थतया नखदलनाद्यप्याक्षिप्येत,
नियोगाङ्गतया त्ववघातादिषु विहितेषु तैर्विना नियोग-
सिद्ध्यनुपपत्तेर्नियमेन त एवाक्षिप्यन्ते नियोगाङ्गता तु
पक्षेऽप्यप्राप्ता । नियोगस्यालौकिकतया तदङ्गस्यापि शब्दा-
दन्यतोऽनवगमात् नियोगाङ्गत्वाच्च अवघातादीनां नियोग-
संबन्धः प्राप्तः स लिङादिभिरनूद्यते । ननु यद्यवघाता-
दीनां नियोगसंबन्धोऽस्ति कथं तर्हि तेषां नियोगाविषय-
त्वम् ? उच्यते । किंतु यस्य नियोगस्य सिद्धिरेव कार्यः स
विषयः, अवघातादीनां च तुषकणविमोचनाद्यवान्तरकार्यं
कुर्वतां नियोगाविषयत्वम्, तेन नियोगाविषयत्वमङ्गता
चेति सिद्धम् । विधेयास्त्ववघातादयो नियोगसिद्ध्यर्थ-
तयोपादीयमानत्वात्तदुक्तम् ' यत्तु तत्सिद्ध्यर्थमुपादीयते
तद्विधेयमिति तत्र व्यवहारः ' इति । तदेवं नियोगप्रत्य-
भिज्ञोपबृंहितसंनिधानमात्रेणैवावघातादीनां नियोगाङ्गता न
पदार्थान्वयमुखेनेति सिद्धम् । येषां पुनः पदार्थान्वयमुखे-
नानुप्रवेशोऽभिमतस्तेषां प्रकरणाधीनस्य पाञ्चदश्यस्या-
नारभ्याधीतस्य च साप्तदश्यस्य सामिधेनीसंबन्धमुखेना-
नुप्रवेशिनोरविशेषात् उभयोरपि प्रकृतावेव नियोगो
विकल्पश्च स्यात् । संनिधानमात्रेण तु प्रकरणाधानस्य ग्रहणे
शीघ्रं पाञ्चदश्यमधिकारानुप्रविष्टमिति तदवरुद्धे साप्त-
दश्यमधिकारविधौ चानुप्रविशति तेन विकृतावेव तस्य
निवेशः इति । यदि संनिधानतोऽधिकारविधावनुप्रवेशः
तर्हि पर्णतादीनां अनारभ्याधीतानां कथमनुप्रवेशः ।
उच्यते । जुह्वादयोऽव्यभिचरितक्रतुसंबन्धा इति तत्सं-
बन्धमुखेन क्रतुसंबन्धसिद्धिः । तत्संबन्धेनैव च जुह्वादिषु
पर्णतादिसंबन्धात् । अत एव ' हिरण्यं भार्यम् ' इति
स्वतन्त्रमेवाधिकारनियोगविषयः । हिरण्यस्य क्रतुसंबन्ध-
व्यभिचारात् । ये च पदार्थस्वरूपानर्थकत्वापत्तेस्तत्संब-
न्धावस्थान्वयपूर्वकं ग्राहकान्वयमाहुः । तेषामिदमेव
तावत्कथम् ? आनर्थक्येन न भवितव्यमिति, वेदवाक्य-
त्वादिति चेत्, वेदेनानर्थकेन न भवितव्यमिति न



राज्ञा ज्ञापितम्, यस्यार्थो गम्यते तस्य मा भूदानर्थ-
क्यम् । अनवसीयमानार्थस्य त्वर्थवत्त्वं मनोरथमात्र-
विजृम्भितम् । पक्षान्तरालम्बनेनाप्यर्थवत्ता भवत्येवेति
परं संनिधानवशेन नियोगाङ्गताभ्युपगमः । संनिधान-
मपि संबन्धे कारणमिति वाक्यविदः । संबन्धश्च गुण-
प्रधानभावमन्तरेण न स्यात् । तत्र न च कार्य-
मन्यथा भवतीति नियोग एव प्रधानम् । अङ्ग-
मवघातादयः । यदि वाऽनर्थको न नियोगसंबन्धः तदा
च तृच उत्तमः पर्यासः इति द्वादशाहविधिविरोधान्न
क्रतुसंबन्धे ह्येष पर्यास उच्यते । तेन तत्र पदार्थमात्र-
संबन्धे एवातिक्रान्तमिति आनर्थक्यं नास्ति । तथा
' हिरण्मय्यः स्रुचो भवन्ति ' इति स्रुचामव्यभिचरित-
क्रतुसंबन्धानां धर्मविधेरानर्थक्यं नास्तीति न प्रकृताधि-
कारसंबन्धः स्यात् । किंच आनर्थक्यपरिहाराय पूर्व-
संबन्धोऽभ्युपेयेत किमिति संनिहितापूर्वसंबन्धे स आश्री-
यते । यदि संनिधानमात्रेण, ततश्च अग्नेस्तृणान्यपचिनोति
नाग्निहोत्रे एव व्यवतिष्ठेत । अथ संनिधानविशेषात्तद-
पूर्वसंबन्धिनामग्न्यादीनां परिग्रहः तदा वरं संनिधान-
विशेषात्तदपूर्वसंबन्ध एवास्तु । किं परंपराश्रयणेन । यथा
क्रियाकारकभावेनान्विताभिधानम्, यथा प्रयोजनप्रयो-
जनिभावेन लोके प्रतिपन्नम् । नहि व्रीह्यादयः प्रयो-
जनतां प्रतिपत्तुमर्हन्ति इति तत्परित्यागेनापूर्वेण सह प्रयो-
जनप्रयोजनिभावेन संबन्धः । ये चावघातादिष्ववान्तरा-
पूर्वाणि संगिरन्ते तेषां मते ' प्रोक्षिताभ्यामुलूखलमुसला-
भ्यामवहन्ति' इति प्रोक्षणं दीक्षणीयावाङ्नियमवत् अवा-
न्तरापूर्वप्रयुक्तं स्यात्ततः स त्रैधातवीयायां वाङ्नियमो न
स्यात्तथा नखनिर्भिन्नैः प्रोक्षणं न स्यात्तत्प्रयोजकं रूपं
तत्र नास्तीति । न चैतद्वाच्यम्, तुषकणविवेचनाधिकार्य-
मुखेनाधिकारापूर्वमेव प्रयोजकमिति । वाङ्नियमेऽपि तथा
प्रसङ्गाद्दीक्षणीयायामपि क्रत्वपेक्षितत्वोत्पत्तिरिति तदधि-
कार्यं नास्तीति ज्योतिष्टोम एव प्रयोजको वाङ्नियमस्य
स्यात् । तदीक्षितत्वोत्पादिकायां त्रैधातवीयायामपि
स्यात् । ननु चावघातादिष्ववान्तरविधयो नेष्यन्ते, कथं
तर्हि ' न चाविहितमङ्गं भवति ' इति अङ्गेष्वेवावा-
न्तरविध्यवगमो भाष्यकारस्य । उच्यते । आरादुप-
कारकेऽनृतवदनप्रतिषेधे चावान्तरविधिरङ्गीकृतः । तद्-
व्यतिरेकेणाङ्गत्वानुपपत्तेः । स्वरूपेण क्षणिकत्वात्कर्मणा-
मुपकारजननकाले तदनवस्थानादङ्गत्वं न घटते इति
इहैव वक्ष्यामः । अत एव ' संहन्यमानमन्त्रवचनोऽसं-
निपत्योपकारिणि न पुरुषप्रयत्नश्रवणमनुवदति ' इति
वदति भाष्यकारो यत्र ह्यवान्तरविधिरस्ति तत्र पुरुष-
यत्नश्रवणं नानुवादः । यदेव तदवान्तरापूर्वं तत्कार्यतया
लिङादिवाच्यम् । न च कृतिरूपपुरुषप्रयत्नानभिधाने
कृत्यवच्छिन्नस्वभावस्या कार्याभिधानोपपत्तिरिति तदर्थं
पुरुषप्रयत्नाभिधानं युक्तमिति नाविवक्षितः पुरुषप्रयत्नः ।
एवं नियोगप्रत्यभिज्ञोपबृंहितसंनिधिसमाम्नानादवघाता-
दयः अवहन्त्यादिपदैरधिकारनियोगैदमर्थ्येनान्वयिनोऽव-
गताः सन्तस्तदन्वितावस्थैर्व्रीह्यादिभिः सह क्रियाकारक-
भावेनान्विता न प्रतिशेषतां प्रतिपद्यन्ते । किं पुनरव-
घातस्य व्रीह्यादिशेषत्वे प्रमाणम् ? कार्यमिति ब्रूमः । तदा
हि न कार्यमन्यार्थं भवति । कार्यत्वादेव । तेन यत्कार्येण
संबद्धं तत्तावत्तदर्थम् । यदपि च कार्यैदमर्थ्यापन्नेन संबद्धं
तेनापि सह यस्य साध्यसाधनभावस्तदपि तदर्थमेव
कार्यैदमर्थ्यापन्नस्यान्यैदमर्थ्ये प्रमाणाभावात् । एवं च
सर्वेष्वशेषशेषित्वं वेदितव्यम् । यदि कार्यत एवैदमर्थ्या-
वगमः । कथं तर्हि श्रुत्यादीनां विनियोगकारणत्वम् ।
द्वारविशेषसमर्पकतया कार्यविशेषकरतया हि शेषः
शेषिणि शेषतामापद्यते । नान्यथा अकिंचित्करस्य शेष-
त्वानुपपत्तेः । तत्र श्रुतिः ' व्रीहीनवहन्ति ' इति द्विती-
यात्मिका व्रीह्यादिगतं तुषकणविमोचनादिसमभिव्याहृत-
क्रियासाध्यभूतं समर्पयन्ती नियोगकरणतामनुभवति ।
न पुनरन्विततयैव शेषितां व्रीह्यादीनामवघातस्य च
शेषतामाह । ' गां ददाति ' इत्यादिषु व्यभिचारात् ।
क्रियाजन्यफलभागिता हि सर्वत्राव्यभिचारिणी द्वितीया
वाच्या । न शेषिता, व्यभिचारित्वात् । क्रियाजन्यस्य
फलस्य भागि कारकमेव तत्कर्म तच्च किंचिदीप्सितं
भूतमाव्युपयोगात् । किंचिच्च अनीप्सितमनुपयोगात् ।
तेनैव विशेषेण भगवतः पाणिनेः सूत्रद्वयम् ' कर्तु-
रीप्सिततमं कर्म ' ' तथायुक्तं चानीप्सितम् ' इति ।
येषां मते शेषितैव द्वितीयादीनामर्थः, तेषां मते

'सुवर्णं भार्यम्' इति क्रतुधर्म एव स्यात् । श्रुतानुगुणाधिकारानुप्रवेशितैव न्याय्या, यतः न स्वतन्त्राधिकारकल्पना एवमतः सुवर्णशेषित्वत्यागप्रसङ्गात् । क्रियाजन्यफलभागित्वे तु शब्दार्थे न श्रुतहानिरिति स्वतन्त्रकर्तृतावगमात्, तत्कारणभूताधिकारत्वेनैव न्याय्या प्रकृतनियोगाप्रत्यभिज्ञानाद् नियोगान्तरे स्थिरे प्रजापतिव्रताधिकारवत् कल्पनेनाधिकारकल्पनैव उचितेति स्नानादिषु वस्तुस्वभावपर्यालोचनया लिङ्गात्कर्तृसंस्काररूपकार्याङ्गीकारः । तेन कर्तरि शेषितामानादीनां सामर्थ्यात्सामर्थ्यमात्रं च लिङ्गम् । नाभिधानसामर्थ्यमेवं सति 'आज्यं जुहोति' इत्यादिषु वाक्यादतिक्रमस्य होमः कार्यतया प्रतीयते इति वाक्येनापि न विनियोगः संनिपत्योपकारकारणम् । न च प्रकरणेन विनियोगः संभवति येषां प्रकरणं कल्पयति तेषां प्रकरणाधीनो विनियोगः । इतिकर्तव्याताकाङ्क्षा प्रकरणम् । तया च करणोपकारः कार्यभूतः कल्प्यते, तथाऽसौ संनिपत्योपकारिणां द्वारमिति न तेषां प्रकरणेन विनियोगः । स्थानसमाख्ययोरपि संनिपत्योपकारकारिणि प्रति न कार्यकल्पकतेति न विनियोगकारणत्वम् । एवं संनिपत्योपकारकाणां नियोगैदमर्थ्यमभिदधानतो विनियोगतश्च कारकैदमर्थ्यमुपादानतश्चाधिकारनियोगकरणीभूतयागाद्यैदमर्थ्ये विनियोगाक्षेपो ह्युपादानम् । तत्कृतं प्रोक्षणादेः क्रत्वर्थत्वम् । यदि यदीयप्रकरणोपकारता प्रोक्षणादेर्न स्यात् तदा केनापरेण प्रकारेण तदन्विता विनियोगप्रतीतिर्निर्वहतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकताकल्प्यं करणैदमर्थ्यमाक्षिपतीति तत्कृतमेव प्रोक्षणादेः क्रत्वर्थत्वं विनियोगात् पुनः करणैदमर्थ्यमेवेति । कथं पुनस्तेषां करणोपकारकता तुषकणविमोचनादिकार्यपरंपरादानेनोपकार्यविशेषादायकतया । ननु एवं सति कारकानुप्रवेशिनामवघातादीनां करणशरीरविशेषादायकतया करणोपकारकत्वम्, प्रयाजादीनां तु व्यतिरिक्तकारकानुग्रहजनकतेति न सर्वैरेक उपकारः क्रियते । ततश्च सर्वैरेकेतिकर्तव्यतेति न स्यात् । उच्यते, उपकार्यविशेषायत्तत्वात् उपकारसिद्धेरुपपन्नमुपकार्यस्य हि विशेषस्योपकारकं कल्पयितुं शक्यते । नान्यस्येत्यवघातादिविनियोगादवगम्यते । एवं चेदुपपन्नमवघातादेरपि प्रयाजादिभिः सह करणोपकारजनकत्वम् । कस्मात् पुनः प्रयाजादिवदवघातादयोऽप्युपकारका नाभ्युपेयन्ते । प्रकृताधिकारनियोगप्रत्यभिज्ञानात् । संभवति च अत्र नियोगैक्यं तदीयव्रीहिसंस्कारगुणेनेत्युक्तम् । प्रयाजादितुल्यत्वे हि अवघातादीनामङ्गीक्रियमाणे उत्पत्तिनियोगान्तरमाश्रयणीयमिति वक्ष्यामः । तत्र संग्रहश्लोकाः–

'संनिधानवशोत्पन्ना प्रकृता पूर्वभाविनी । भावाधिष्ठा त्वभिज्ञेति तदनुग्रहकाङ्क्षया ॥ अवहन्त्यादिभिः शब्दैः कार्यान्वितपदार्थकैः । प्रकृतापूर्वसंबन्ध एव स्वार्थोऽभिधीयते ॥ तथा सति तदीयत्वं तेषां रक्षितुमिच्छता । व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा ॥ क्रियाकारकसंबन्धो ह्येतत्साधनगोचरः । शेषिबोधोऽपि तस्यैव श्रौतत्वाद्यनुसारतः ॥' पञ्जिका. पृ. २०२–२१०.

* **संनिपत्योपकारकत्वे** ( सामवायिकत्वे ) संभवति न आरादुपकारकल्पना युक्ता । तद्यथा 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इत्यत्र अग्नीषोमयोरेव संनिहितयोः संस्कार्यत्वं विज्ञायते, न पशोः आरादुपकारकत्वेन कल्प्यते । वा. ३।४।४।१२ पृ. ९०२.

* **संनिपत्योपकारिणः** ( मन्त्राः ) । आज्यग्रहणे प्रोक्षणे अभिमर्शने च मन्त्राः उपस्थितं कर्म अभिदधति । भा. १२।१।९।१८. * **संनिपत्योपकारिणः** संस्कारातिरिक्तापूर्वकल्पनाऽभावः । सु. पृ. १३७८.

* **संनिपत्योपकारित्वेन** समवेतार्थत्वसंभवे आरादुपकारित्वं बाध्यते, नान्यथा । सु. पृ. ७२८.

* **संनिपत्योपकार्यं** यागापूर्वं प्रधानोत्पत्त्यपूर्वे एव व्याप्रियते इति सार्वत्रिकम् । क्वचित्तु अगत्या तदुत्पन्नस्यैव प्रधानापूर्वस्य धारणे व्याप्रियते । बाल. पृ. ८४.



**संनिपातश्चेद् यथोक्तमन्ते स्यात् । ५।२। १२।२३ ॥**

अग्निचयने दीक्षणीयहोमानन्तरं चोदकेन वपनादयो दीक्षितसंस्काराः प्राप्ताः प्रत्यक्षवचनपाठक्रमेण च रुक्मधारणं प्राप्तम् । तयोर्मध्ये आदौ किं कार्यं इति विचारे रुक्मधारणं पूर्वं इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । संनिपातश्चेत् प्राकृतवैकृतयोः युगपत्प्राप्त्या क्रमविरोधः चेत् यथोक्तं प्रत्यक्षश्रुतं रुक्मधारणं अन्ते स्यात् । आदौ दीक्षितसंस्काराः कर्तव्याः पश्चात् रुक्मधारणं कर्तव्यम् । तथा कृतेऽपि दीक्षणीयोत्तरत्वस्य अविघातात् । के.

* संनिपातः सूर्याचन्द्रमसोः सहावस्थानम् । संकर्ष. ३।१।१.

**संनिपातेऽवैगुण्यात् प्रकृतिवत् तुल्यकल्पा यजेरन् । ६।६।१।१॥**

बहूनां यजमानानां संनिपाते समवाये सत्रे इत्यर्थः । तुल्यकल्पाः ये स्युः ते एव समेत्य यजेरन् । तथा सति कस्यापि वैगुण्यं न स्यात् । यथा प्रयाजेषु केचित् नराशंसकल्पाः केचित् तनूनपात्कल्पाः । तत्र यस्य कल्पो नोपसंह्रियेत तस्य वैगुण्यं स्यात् । अवैगुण्यार्थं तु तुल्यकल्पानामेव संभूय यजनम् । प्रकृतिवत्, यथा प्रकृतावेव विना साद्गुण्येन फलाभावः एवं सत्रेऽपि । तस्मात् समानकल्पानामेव सहाधिकार इति सिद्धान्तः ।

**वचनाद्वा शिरोवत् स्यात् । २ ॥**

सत्रे नराशंसादिसमानकल्पानामेव सहाधिकारः इति सिद्धान्ते उक्ते पूर्वपक्षी आह । वाशब्दात् पक्षो विपरिवर्तते । न चैतदस्ति भिन्नकल्पानां न सहाधिकार इति । वचनात् 'सत्रमुपेयुः' इत्यादिसामान्यवचनात् भिन्नकल्पानामपि सहाधिकारः स्यात् । शिरोवत् । यथा 'पुरुषशीर्षमुपदधाति' इति वचनात् शवशिरसां स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते तद्वत् ।

अथवा 'वचनाद्वाऽऽशिरवत् स्यात्' इति सूत्रपाठः । आशिरवत् । यथा ऋतपेये नाम यागे 'घृतव्रतो भवति' इति वचनात् व्रतदुहि गवि निवृत्तायामपि, आशिरार्थं अन्यां गां कल्पयन्ति तद्वत् ।

**न वाऽनारभ्यवादत्वात् । ३ ॥**

भिन्नकल्पानां न सहाधिकारः सत्रादौ यजमानसमवाये इति न वा इति शब्दयोरर्थः । 'सत्रमुपेयुः' इत्यादिवचनं तु न भिन्नकल्पान् अधिकृत्य उच्यते । अनारभ्यवादस्तु सः सामान्यवचनं तत् इत्यर्थः । समानकल्पेषु तद्वचनं सार्थकं भविष्यति । इति न तेन भिन्नकल्पानां सहाधिकारः सिध्यति । तस्मान्न भिन्नकल्पानां सहाधिकारः इति सिद्धान्ती ब्रवीति ।

**स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् । ४ ॥**

पुनः पूर्वपक्षी ब्रूते । स्याद् वा भिन्नकल्पानामपि संभूयकर्तव्ये सत्रादौ सहाधिकारः । वसिष्ठादीनां नराशंसादिकल्पस्य यज्ञार्थत्वात् । सोऽपि कल्पो यज्ञसाधक एव तनूनपात्कल्पोऽपि । तस्मादुभयकल्पानामपि सहाधिकारः स्यात् । औदुम्बरीवत् । यथा 'यजमानेन संमितामौदुम्बरीं परिवासयन्ति' इति कस्यचिद्यजमानस्य परिमाणेन संमिताऽपि सर्वेषां यज्ञसाधिका, तद्वत् नराशंसादिकल्पोऽपि । तस्मात् भिन्नकल्पानामपि सहाधिकारः स्यात् इति ।

**न तत्प्रधानत्वात् । ५ ॥**

'स्याद्वा यज्ञार्थत्वात्०' इति पूर्वपक्षिशङ्कां निराकरोति सिद्धान्ती । औदुम्बरीदृष्टान्तं तु उत्तरसूत्रे विघटयिष्यति । न वासिष्ठादीनां नराशंसादिकल्पो यज्ञार्थः किंतु पुरुषार्थः पुरुषप्रधानः । यच्च यस्य यज्ञाङ्गम्, तेन सहितं कर्म तस्य फलदम्, नान्यस्य । तेन नराशंसकल्पो न वसिष्ठादिभिन्नानां यज्ञसाधको भविष्यति । तस्मात् तत्तत्कल्पस्य तत्तत्प्रधानत्वात् न भिन्नकल्पानां सहाधिकारः संभूयकर्तव्ये सत्रादौ ।

**औदुम्बर्याः परार्थत्वात् कपालवत् । ६ ॥**

सिद्धान्ती चतुर्थसूत्रोक्तं औदुम्बरीदृष्टान्तं विघटयति । सत्रादौ केनचिदेकेन यजमानेन संमिता औदुम्बरी सर्वेषां यज्ञं साधयति इति यदुक्तं तद्युक्तम् । औदुम्बर्याः शाखायाः परार्थत्वात् । औदुम्बर्यां पुरुषो गुणः, न प्रधानम् । तस्मात् सा परार्था न पुरुषार्था । कपालवत् । यथा 'पुरोडाशकपालेन तुषानुपवपति' इति तुषोप-

वापात् परस्य पुरोडाशस्य कृते कपालं इति परार्थं तथा औदुम्बरी पुरुषात् परस्य यज्ञस्य कृते इति परार्था। वासिष्ठादीनां नराशंसादिकल्पस्तु न परार्थः किंतु पुरुषार्थः। तस्मात् वासिष्ठादेरेकस्य नराशंसादिकल्पे संगृहीते न सर्वेषां कल्पः संगृहीतो भवति। अतः भिन्नकल्पानां सत्रादौ न सहाधिकारः।

**अन्येनापीति चेत्। ७॥**

सत्रे अनेकेषां यजमानानां मध्ये केनापि एकेन यजमानेन संमिता औदुम्बरी शाखा यदि प्रकृतं यज्ञं संपादयेत् तर्हि अन्येनापि प्रयोगान्तरस्थेनापि यजमानेन संमिता सती यज्ञं संपादयेत् इति चेत् पूर्वपक्षी ब्रूयात्।

**नैकत्वात् तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात्। ८॥**

एकप्रयोगस्था औदुम्बरी शाखा अन्यप्रयोगस्थेन यजमानेन संमिता न स्यात्। न सा आत्मीयं यज्ञं संपादयेत्। यजेत इत्याख्यातार्थेन अन्वितस्य यजमानस्य एकत्वात्, तस्य चान्यप्रयोगस्थस्य यजमानस्य पूर्वप्रयोगे अनधिकारात्। 'यजमानेन संमिता' इति विशिष्टव्यक्तिवाचकस्य शब्दस्य च अविभक्तत्वात् विभक्तत्वाभावात् भिन्नव्यक्तिवाचकत्वाभावात् प्रकृतप्रयोगेण असंबद्धस्य यजमानव्यक्तिविशेषस्य बोधकत्वाभावात्। तस्मात् प्रयोगान्तरस्थेन अन्येन यजमानेन प्रकृतयज्ञस्था औदुम्बरी संमातुं न शक्यते। सर्वथाऽपि औदुम्बरीदृष्टान्तो न युज्यते। तस्मात् भिन्नकल्पानां सत्रादौ न सहाधिकारः इति सिद्धान्तः।

**संनिपातात्तु निमित्तविघातः स्याद् बृहद्रथंतरवद् विभक्तशिष्टत्वाद् वसिष्ठनिर्वर्त्ये। ९॥**

सत्रादौ भिन्नकल्पानामपि सहाधिकारः इति पूर्वपक्षवादी अन्यदृष्टान्तेन शङ्कते। तुशब्दः सिद्धान्तपक्षनिरासार्थः। संनिपातात् भिन्नकल्पयोः द्वयोः संनिपातात् समवायात् हेतोः निमित्तस्य एकैकस्य विघातः अभावः स्यात्। प्रयाजेषु नराशंसकल्पः वासिष्ठत्वनिमित्तकः, तनूनपात्कल्पः वसिष्ठादिभिन्नकश्यपादिनिमित्तकः। अथ एकस्मिन् सत्रे वासिष्ठकाश्यपसमवाये नराशंसतनूनपात्कल्पयोः निमित्तस्य अभावः संपन्नः। तत्र इच्छया अन्यतरः कल्पः स्यात्। तेन अविरोधः। बृहद्रथंतरवत्। पृष्ठस्तोत्रे बृहत्साम्नि शुक्राग्रता, रथंतरसाम्नि ऐन्द्रवायवाग्रता। अथ 'बृहद्रथंतरं पृष्ठं भवति' इति यत्र विकृतिविशेषे उभयसामत्वमुक्तं तत्र निमित्तद्वयं परस्परेण बाधितम्। इच्छैव तत्र अग्रतायां निमित्तं तद्वत्। वसिष्ठनिर्वर्त्ये कश्यपनिर्वर्त्ये च प्रयोगे नराशंसस्य तनूनपातश्च द्वितीयस्य प्रयाजस्य विभक्तशिष्टत्वात् विभागेन विहितत्वात् वसिष्ठकश्यपसंनिपाते एकैकस्य निमित्तस्य परस्परेण विघातात् इच्छयैव प्रयाजः स्यात् कश्चिदेकः। तेन भिन्नकल्पानामपि सत्रादौ सहाधिकारो न विरुध्यते। वसिष्ठनिर्वर्त्ये कश्यपनिर्वर्त्ये च प्रयाजस्य विभक्तशिष्टत्वात्, संनिपातात् निमित्तविघातात् न विरोधः बृहद्रथंतरवत् इति सूत्रपदान्वयो ज्ञातव्यः। इदं सूत्रं पूर्वपक्षिणः।

**अपिवा कृत्स्नसंयोगादविघातः प्रतीयेत स्वामित्वेनाभिसंबन्धात्। १०॥**

अपिवा इति अखण्डेन पदेन पूर्वपक्षं व्यावर्तयति सिद्धान्ती, निमित्तविघातो न भवति इति। स्वामित्वेन अभिसंबन्धात् कृत्स्नसंयोगात्। नराशंसप्रयाजविशिष्टे निखिले कर्मणि सफले वसिष्ठादीनां स्वामित्वेन अभिसंबन्धः। एवं तनूनपात्प्रयाजविशिष्टे निखिले सफले कर्मणि कश्यपादीनां स्वामित्वेन अभिसंबन्धः। एवं स्वामित्वेन अभिसंबन्धात् हेतोः कृत्स्नसंयोगः कृत्स्नेन कर्मणा एकैकस्य संयोगो विज्ञायते। तस्मात् स्वामित्वेनाभिसंबन्धात् कृत्स्नसंयोगात् निमित्तस्य अविघातः विघातो न भवति। न चात्र वसिष्ठकश्यपयोः संनिपातो विहितः। तस्मान्न निमित्तविघातः। एवं च सति भिन्नकल्पानां -सहाधिकारस्वीकारे विरोधो भवति। तस्मात् न भिन्नकल्पानां सहाधिकारः।

**किंवा।** कृत्स्नसंयोगात् कृत्स्नेन प्रयोगेण सह एकैकस्य यजमानस्य संयोगात् संबन्धात् निमित्तानां तनूनपान्नराशंसादीनां अविघातः विघाताभावः प्रतीयेत। विघातो न स्यात्। **अथवा** कृत्स्नानां सर्वेषां यजमानानां निमित्तैः साकं संयोगात् निमित्तविघातो न प्रतीयेत। कृत्स्नसंयोगश्च स्वामित्वेन अभिसंबन्धात्।



सर्वेषां यजमानानां कर्मणा सह स्वामित्वेन फलभोक्तृत्वरूपेण संबन्धात् कृत्स्नसंयोगो ज्ञायते। तथा च समानकल्पानामधिकारे स्वीकृते सर्वेषामेव यजमानानां तेनतेन एकेनैव केनचिन्निमित्तेन संयोगस्य समानत्वात् निमित्तविघातप्रसङ्ग एव न स्यात्। निमित्तविघातस्तु एवं स्यात्– कस्यचित् यजमानस्य नराशंसप्रयाजे स्वीकृते अन्यस्य यजमानस्य यदि तनूनपात् प्रयाजः स्यात्, स न क्रियेत इति। अन्यस्य यजमानस्य यन्निमित्तं तनूनपात् प्रयाजः, तस्य विघातो भविष्यति। स च विघातः समानकल्पत्वपक्षे न प्राप्नोति। इति असमानकल्पानां सत्रे नाधिकारः इति।

**साम्नोः कर्मवृद्ध्यैकदेशेन संयोगो गुणत्वेनाभिसंबन्धस्तस्मात् तत्र विघातः स्यात्। ११॥**

सत्रे समानकल्पानामेव सहाधिकारः इति सिद्धान्तः। यथा प्रयाजेषु मध्ये येषां सप्तदशानामपि नराशंस एव द्वितीयः प्रयाजः तेषामेव सहाधिकारः। येषां वा सप्तदशानामपि तनूनपादेव द्वितीयः प्रयाजः तेषामेव सत्रे सहाधिकारः। (कल्पशब्देन कल्पसूत्रमत्र न ग्राह्यम्)। पूर्वस्मिन् 'संनिपातात्तु' इति नवमे सूत्रे भिन्नकल्पानां समवाये बृहद्रथंतरवत् निमित्तविघातः स्यात् इति दृष्टान्तेन आशङ्कितम्। तं दृष्टान्तमत्र वैधर्म्येण परिहरति सिद्धान्ती। बृहद्रथंतरयोः साम्नोः नैमित्तिकया कर्मवृद्ध्या कर्मवृद्धिनिमित्तेन एकदेशेन स्तोत्रैकदेशेन संयोगो भवति। तत्र हि उभयोः साधनत्वम्, नैकैकस्य। स्तोत्रैकदेशेन तु तत्र साम्नोः संबन्धः न कृत्स्नेन स्तोत्रेण। नराशंसतनूनपात्प्रयाजयोस्तु नैकदेशेन संयोगः किंतु कृत्स्नसंयोगः। इति एकं वैधर्म्यम्। गुणत्वेन अभिसंबन्धः। गुणत्वेन च तत्र साम श्रूयते, स्तोत्रं प्राधान्येन। नराशंसः तनूनपाद्वा न गुणः, किंतु प्रधानं इत्यपरं वैधर्म्यम्। तस्मात् तत्र बृहद्रथंतरयोः निमित्तताविघातः स्यात्। नराशंसतनूनपातोस्तु न निमित्तविघातो भवति। तस्मात् समानकल्पानामेव सत्रे बहुयजमानके अहीने च सहाधिकारो न भिन्नकल्पानां इति सिद्धान्तः। के.



**ॐ संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात्। ५।२।१।१॥**

वाजपेये प्राजापत्याः सप्तदश पशवः समाम्नाताः। तेषु अग्नीषोमीयपशुधर्माः उपाकरणनियोजनादयः चोदकेन प्राप्ताः। तत्र सर्वेषां उपाकरणं कृत्वा ततः सर्वेषां नियोजनं इतिरीत्या धर्माः कर्तव्याः उत एकस्य पशोः उपाकरणादीन् सर्वान् धर्मान् कृत्वा ततो द्वितीयस्य पशोः सर्वे, तृतीयस्य सर्वे इतिरीत्या कर्तव्याः इति विचारे पूर्वपक्षमाह। प्रधानानां अनेकेषां संनिपाते सहप्रयोगे सति गुणानां उपाकरणनियोजनादिधर्माणां एकैकस्य प्रधानस्य पशोः सर्वकर्म सर्वशः कृत्स्नशः काण्डशः कर्म अनुष्ठानं स्यात्। काण्डानुसमयोऽत्र कर्तव्यः, न पदार्थानुसमयः इति पूर्वः पक्षः।

**सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात्। २॥**

वाजपेये प्राजापत्यपशुषु अग्नीषोमीयात् पशोः चोदकेन प्राप्ता उपाकरणादयो धर्माः। तेषां काण्डशः कर्म इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तयति। वाशब्देन पूर्वपक्षं निरस्यति। सर्वेषां प्रधानानां प्राजापत्यानां पशूनां धर्माणां कर्म अनुष्ठानं एकजातीयं स्यात् न सर्वजातीयम्। सप्तदशस्वपि उपाकरणं कृत्वा ततः सप्तदशस्वपि नियोजनं कर्तव्यम्। एवमेव उत्तरो धर्मः एकजातीयः सर्वेषु सर्वेषु कर्तव्यः। एवमेव हि धर्माणां आनुपूर्व्यं क्रमः प्रकृतौ अग्नीषोमीये पशौ कृतम्। कृतं आनुपूर्व्यं येषां ते धर्मा कृतानुपूर्व्याः। तेषां भावः कृतानुपूर्व्यत्वम्।

**कारणादभ्यावृत्तिः। ३॥**

सप्तदशसु पशुषु पदार्थानुसमयेन अनुष्ठानं कर्तव्यं इति सिद्धान्ते उक्ते, पूर्वपक्षिणः शङ्का एवम्। यथा अश्वप्रतिग्रहजन्यदोषनिरासार्थं क्रियमाणेषु पुरोडाशेषु एकजातीयानुसमयो न भवति तथा अत्रापि एकजातीयधर्मानुसमयो न स्यादिति। तत्रोत्तरं सिद्धान्ती आह। अश्वप्रतिग्रहजन्यदोषपरिहारार्थेषु पुरोडाशेषु अभ्यावृत्तिः अभितः आवृत्तिः प्रत्येकं भेदेन सर्वधर्मानुष्ठानं कारणात् भवति। तत्र पदार्थानुसमये स्वीकृते पूर्वपूर्व-

पुरोडाशाः शुष्काः भस्मीभवेयुः । ततः कारणात् काण्डानुसमयः । प्रकृते तु न तथा कश्चिद्दोषः । तस्मात् प्राजापत्येषु धर्माणां पदार्थानुसमयेनैवानुष्ठानम् । के.

* **संनिपाती** । कर्मसंनिपाती मन्त्रः नाम कर्मणि करणभूतो मन्त्रः । यत्र मन्त्रान्तेन कर्मादिसंनिपातो भवति । ९।४।१।९ सूत्रम् । * **संनिपातिनोऽपि** अङ्गस्य अङ्गान्तरं न विप्रतिषिद्धम्, रथंतराङ्गस्य वरदानस्य दर्शनात् । **संकर्ष.** १।१।६. * **संनिपातिनां** अङ्गानां आरादुपकारकाङ्गवत् अपूर्वप्रयुक्तत्वं न वेति चिन्ता । अपूर्वप्रयुक्तत्वमेवेति सिद्धान्तः । **शा.** ९।१।१ वर्णकं ३. * संनिपातिनां अङ्गानां प्रधानविरोधे सति काण्डानुसमयः । **भा.** ५।२।२।३, * संनिपातिनां अनेकप्रधानेषु पदार्थानुसमयः । ५।२।१।१-३. * **संनिपातिषु** बहुधा पदार्थानुसमय एव । प्रधानविरोधे तु क्वचित् काण्डानुसमयः, अनेकप्रधानसाहित्ये । **भाट्ट.** ५।२।२.

* **संनिपातित्वेन** आरादुपकारित्वं बाध्यते, यथा पशुपुरोडाशादौ । बाल. पृ. १४०.

**संनियोगशिष्टानामन्यतराऽपाये उभयोरप्यपाय इति न्यायः** । तद्यथा– देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्तव्यमित्यादेशे देवदत्ताऽपाये यज्ञदत्तोऽपि न करोति, तथा प्रकृतेऽपि । अयम् ' पूतक्रतोरै च ' ( पा० ४।१।३६ ) इति सूत्रमहाभाष्ये अभिहितः । **साहस्री.** ४४४.

* **संनिहितश्च** बुद्धौ भवति । तेन बुद्धौ संनिहितेन शक्यते साकाङ्क्षः शब्दः संबन्धयितुमिति । **भा.** ३।१।६।१२ पृ. ६९०.

**संनिहिते बुद्धिरन्तरङ्गमिति न्यायः** । संनिकृष्टविप्रकृष्टयोरुभयोः यत्रान्वयसंभावना तत्र संनिहितस्यैवासत्तिबलादन्वयो न विप्रकृष्टस्येत्येवं विवक्षायामस्य प्रवृत्तिरिति । **साहस्री.** ५०९.

* **संनिहितवचनः** हि सर्वनामशब्दः । उच्चरितमात्रो यः पदार्थः शब्देन संनिहितः, तेन संबध्यते । अथ तस्मिन्नसति लिङ्गादिसर्वविशेषणविशिष्टे रूपेण ( स्वसामर्थ्येन ) संनिहिते प्रयुज्यते । संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिं अभिवदितुं शक्नोति । **भा.** ९।१।१६।४९ । संनिहितवचनत्वं सर्वनामशब्दानां स्वभावः । उच्चरितमात्रः सर्वनामशब्दो यत्पदान्तरेण संनिधाप्यते तेन सह शीघ्रं संबध्यते । **वा.**

* **सन्मानपूर्वको** नियोगः अध्येषणम् । **वा.** ३।२।१५।३७.

* **सपत्नद्रोहकामः** ' अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् ' । **भा.** ३।२।७।२० पृ. ७७१.

* **सपिण्डीकरणं** प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थम् । **सु.** पृ. १६६, * **सपिण्डीकरणात्** प्राक् पार्वणं नास्ति । पृ. १६६.

* **सपिण्डीकरणोत्तरकालं** एकोद्दिष्टमपि अन्येषां स्मर्तॄणां मतेन अनिषिद्धम् । **सु.** पृ. १६६.

* **' सप्त** वृणीते ' इति अग्नीषोमीये पशौ वषट्कर्त्रनुवादः, न तु वरणान्तरम् । **संकर्ष.** ३।४।१२. **मीको.** पृ. १२३. ' अग्नीषोमीये पशौ सप्त वृणीते० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **' सप्तभिराधुनोति '** इत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानम् । **चू.** १०।५।५।१४.

* **सप्तदशः** प्रजापतिः ' आश्रावय ' इत्यादिः दृष्टार्थ एव । **संकर्ष.** २।३।१. **मीको.** पृ. २६९९ ' प्रजापतिः सप्तदशो दृष्टार्थ एव ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' सप्तदशः स्तोमः ' अयं सप्तदशशब्दः सप्तदशत्वसंख्यारूपगुणविधायकः । **वि.** १।४।३, * सप्तदशः स्तोमविशेषः, अष्टरात्रे षष्ठसप्तमाष्टमेषु अहःसु । ७।३।१०, ज्योतिष्टोमे । ५।३।१५.

* **सप्तदश** प्राजापत्याः पशवः ऐकादशिनपशुगणविकृतिः । **वि.** २।२।७. * ' सप्तदश वैश्यस्य (सामिधेन्यः) ' । **संकर्ष.** ४।३।२. * **'सप्तदश** पृश्नीनुक्षणः ' इत्यस्य सापेक्षत्वात् निराकाङ्क्षीकरणेन भवितव्यम् । तत्र ' मारुतीरालभते ' इति मनसि विपरिवर्तमानेन निराकाङ्क्षीक्रियते । **टुप्.** ११।२।१३।५५. * ' सप्तदश प्राजापत्यान् पशूनालभते ' अत्र पशुषु प्रोक्षणादयो धर्माः कर्तव्याः । तेषु प्रथमे यः इच्छया क्रमः स्वीकृतः तेनैव क्रमेण द्वितीयादयः पदार्थाः



कर्तव्याः । सोऽयं प्रवृत्त्या क्रमो नाम । **भा.** ५।१।५।८. * ' सप्तदश मारुतीः पृश्नीरुपाकरोति ' द्रव्यदेवतासंयोगात् यागचोदनैषा । **टुप्.** ११।२।१३।५५.

* **सप्तदशातिरात्रः** अन्नाद्यकामस्य इति कातीयसूत्रे । **बाल.** पृ. ३४.

* **सप्तदशारत्निता** यूपद्वारा पश्वङ्गम् । **वि.** ३।१।९. * सप्तदशारत्निता वाजपेयाङ्गभूतस्य पशोरङ्गे यूपे निविशते, न तु ऊर्ध्वपात्रे षोडशिनि । **भा.** ३।१।९।१८.

* **सप्तदशारत्नित्वम्** । वाजपेयोपकारित्वं विना तदङ्गत्वायोगात् वाजपेयस्य च साक्षात् परिमाणेन उपकारासंभवात् यथा वाजपेयस्य उपकर्तुं शक्नोति सप्तदशारत्नित्वं तथा उपकरिष्यति इत्यध्यवसानात् वाजपेयाङ्गपशुयागाङ्गयूपाङ्गत्वद्वारा उपकरोति इत्यवधार्यते । **सु.** पृ. ८५६, * सप्तदशारत्नित्वम् । स्वरूपे कार्ये वा उपयोगिनः अङ्गत्वावसायात् यूपस्य च प्रकृतौ विज्ञातोत्पत्तिप्रकारत्वेन स्वरूपोपयोग्यङ्गानपेक्षणात् कार्यस्यापि पशुनियोजनस्य पशुयागस्य च अतिदेशादेव ज्ञातोपायपरिमाणत्वेन तदुपयोगिनोऽपि अङ्गस्य अनपेक्षणात् सप्तदशारत्नित्वस्य वाजपेयापूर्वोपयोगित्वोक्त्यै वाजपेयविशिष्टस्य यूपस्य उद्देश्यता अङ्गीकार्या । पृ. १०५०.

* **सप्तदशारत्निन्यायः** ( ३।१।९।१८ ) । आनर्थक्यतदङ्गन्याय एवायम् । ' एतानि वै दश यज्ञायुधानि ' नह्यत्र वाजपेयस्य इतिवत् संबन्धमात्राभिधायिनी यज्ञशब्दात्परा षष्ठी दृश्यते । तेन नात्र सप्तदशारत्निन्यायः अवकल्पते । **वा.** ३।१।५।११.

**' सप्तदशाज्यानि पशुकामस्य ' इति काम्यध्रुवापञ्चत्वाभिप्रायम् ॥**

अग्निहोत्रप्रकरणे ' सप्तदशान्याज्यानि पशुकामस्य गृह्णीयात् ' इति श्रुते समस्य वादासंभवात् पयःप्रभृतिद्रव्याणां तदवदानसंख्यायाश्च पशुकामाग्निहोत्रप्रयोगे निरासः । इति प्राप्ते, पशुकामस्य पञ्चगृहीतं ध्रुवायां यथा प्रकृतीतरयोरिति दर्शपूर्णमासप्रकरणस्थकल्पसूत्रानुमितश्रुत्यनुवादकत्वादयमपि समस्य वादः प्रकरणादुत्कृष्येत । **संकर्ष.** २।२।१३.

* **सप्तदशादिस्तोमेषु** आवृत्तगानम्, ऋचामावृत्त्या स्तोमसंख्या पूर्यते । **वि.** ५।३।४.

* **सप्तदशशरावे चरौ** चतुःसंख्यामुष्टिनिष्ठ–प्राथम्यजघन्यत्वस्येव संभवति विकृतौ नियामकान्तरासत्त्वे प्राकृतस्यापि बलाबलस्य नियामकता । **भाट्ट.** ५।२।८. * सप्तदशशरावे चरौ मुष्टिलेपेन चतुःसंख्यानुग्रहः वाजपेये । १०।२।२८।६५–६८. **मीको.** पृ. ४०८४ ' संख्यामुष्टिन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सप्तदशस्तोमस्य** विष्टुतिः । तिस्रः एव ऋचः पर्यायत्रयेण आवृत्त्या गीयमानाः सप्तदशसंख्याका भवन्ति । तत्र प्रथमे पर्याये प्रथमा ऋक् त्रिवारं द्वितीया तृतीया च एकैकवारं मिलित्वा प्रथमे पर्याये पञ्च जाताः । द्वितीये पर्याये प्रथमा तृतीया च ऋक् एकैकवारं द्वितीया ऋक् तु त्रिवारं गेया इति द्वितीये पर्याये पञ्च जाताः । तृतीये पर्याये प्रथमा ऋक् एकवारं द्वितीया त्रिवारं तृतीया च त्रिवारं इति तृतीये पर्याये सप्त जाताः ५+५+७=१७ इति सप्तदशत्वं सिद्धं भवति । **वि.** १।४।३,९।२।६ वर्णकं २.

* **सप्तदशस्तोमकानि** पृष्ठस्तोत्राणि चत्वारि माध्यंदिने सवने ज्योतिष्टोमे । **वि.** १।४।३.

* **सप्तमेन** अध्यायेन सामान्यतः अतिदेशलक्षणमुक्तम् । **भा.** ८।१।१।१, * सप्तमेन तावत् ऐन्द्राग्नादीनां कर्मणां धर्माः सन्तीत्युच्यते । ते चातिदेशेनेति । अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः । स च नाम्ना वचनेन वा । तत्र नाम त्रिविधमातिदेशकम्, कर्मनाम, संस्कारनाम, यौगिकमिति । वचनं पुनर्द्विविधम्–प्रत्यक्षश्रुतं आनुमानिकं च । तयोरानुमानिकमुपरिष्टाद्वक्ष्यते । प्रत्यक्षश्रुतं तु इदानीमेव चिन्त्यते । ७।१।१।१२, * सप्तमेन ( अध्यायेन ) तावत् सन्ति धर्माः इत्युच्यते । अष्टमेन चेमेऽस्येति । इत्थं प्रयोक्तव्या इति नवमेन । दशमैकादशद्वादशैः एतावन्तः प्रयोक्तव्याः, नातोऽधिकाः इति । ७।१।१।१.

* **सप्तमाध्यायार्थः** । एवं तावत्सप्तमेनाध्यायेन सामान्यतः अतिदेशलक्षणमुक्तम्, अविहितधर्मकेषु ऐन्द्राग्नादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्ते इति । भा. ८।१।१।१. * सप्तमाध्यायार्थः । 'प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः सामनिरूपणम् । नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ॥' सप्तमाध्यायस्य **प्रथमे** पादे– 'समानमितरच्छ्येनेन' इत्यादि प्रत्यक्षवचनातिदेशः । **द्वितीये**– रथंतरशब्देन गानमात्राभिधायिना गानस्यैव अतिदेश्यत्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः । **तृतीये**– अग्निहोत्रनाम्नाऽतिदेशः । **चतुर्थे**– निर्वापौषधद्रव्यादिलिङ्गातिदेशः । वि. प्रस्तावना श्लो. १९.

* **सप्तमाध्यायादिः** उत्तरः षट्कः । 'उत्तरेण इदानीं' (षट्केन) अविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते किमेषां धर्माः सन्ति उत नेति । यदा च सन्ति तदा के कियन्तो वा कथं चानुष्ठातव्याः इति । तदर्थमुत्तरः षट्कः प्रवर्तनीयः । तत्र सप्तमेन सन्ति धर्मा इत्युच्यते । अष्टमेन च इमे अस्येति । इत्थं प्रयोक्तव्या इति नवमेन । दशमैकादशद्वादशैः एतावन्तः प्रयोक्तव्याः नातोऽधिका इति । भा. ७।१।१।१ । पूर्वे षट्के उपदेशविचारं परिसमाप्य इदानीं उत्तरे षट्के अतिदेशविचारो हेतुहेतुमद्भावसंगत्या प्रस्तोष्यते । 'इत्थं कुर्यात्' इत्युपदेशपूर्वकत्वात् 'तद्वत्कुर्यात्' इत्यतिदेशस्य तद्विचारयोरपि हेतुहेतुमद्भावः । सोम. ७।१।१ । अतिदेशविचारश्च सप्तमादिभिर्दशमपर्यन्तैः समाप्तः । शा. ७।१।१ । सौर्यादयः प्राकृतैः धर्मैरधिक्रियन्ते अतिदेशेन, किंवा न इत्यनेन प्रसङ्गेन सप्तमोऽध्याय आरभ्यते । तद्बलेन विशेषातिदेशोहबाधानामारम्भः । पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते । टुप्. ७।१।१।१.

* **सप्तमाष्टमनवमाध्यायार्थविचारः** । एवं तावदौपदेशिकाङ्गसंबन्धप्रकारः सप्रमाणकः पूर्वाध्यायषट्कगोचरः प्रदर्शितः । इदानीं आतिदेशिकाङ्गसंबन्धविधा सप्रमाणोत्तरषट्कप्रतिपाद्या अभिधीयते । द्विविधं हि शब्दजातं उपदेशात्मकमतिदेशात्मकं च । इत्थमिदं कर्तव्यमिति **उपदेशः**, तद्वदिदं कर्तव्यमिति **अतिदेशः** । तत्रानुपदिष्टधर्मकेषु ऐन्द्राग्नादिषु अतिदेशेन तत्प्राप्तिः सविशेषा सप्तमादिषु चिन्त्यते । तत्र प्रथमं तावदुपोद्घातत्वेन व्यवस्था धर्माणां प्रतिपाद्यते । तस्यां हि सत्यामतिदेशविचारः कर्तव्यो नान्यथेति । तत्र दर्शपूर्णमासादिकरणपठिताः प्रयाजादयः सर्वयागेष्वेव उपदेशेन संबन्धं लभन्ते । कथम् ? इतिकर्तव्यता हि करणानुग्राहिणी तेनैव संबन्धमर्हति । न च तद्विधीयमानं फलं प्रतीतिकर्तव्यतया संगन्तुं क्षमते, वैरूप्यापत्तेः । तस्माद्यागे फलं प्रति विहिते सत्यनुमितेन वाक्येन यागमनूद्य धर्मा विधीयन्ते । ततश्चाविशेषात्सर्वेष्वेव यागेषु विहिता भवन्ति । **ननु** प्रकरणाम्नानानुमितेन वाक्येन प्रकृतस्यैव यागस्यानुवादात् कथं पारिप्लवत्वम् । **नैष दोषः** । प्रकरणाम्नानादपि यजिशब्दस्यैव प्रधानानुवादकस्य परिकल्पनात् । तेन च स्वशक्त्या सर्वयागानामनुवादात् । यद्दर्शपूर्णमासाभ्यां यजेतेत्येवं कल्पनेऽपि उद्दिश्यमानस्य विशेषणविवक्षाऽसंभवात् सर्वार्था धर्मा इति पूर्वः पक्षः । सिद्धान्तस्तु भावनैव प्रत्ययार्थः करणेतिकर्तव्यताविशिष्टा विधीयते । तस्याश्च सहभाव्यरूपेणापूर्वेण शब्दान्तरादिभिर्भेदः साधितः । तत्रैकस्यामितिकर्तव्यताविशिष्टायां विधीयमानायामन्यस्याः कुतस्तत्प्राप्तिः । विधीयमानैव भावना त्रिभिरंशैरवैरूप्येण संबध्यते । इदमनेनेत्थं कुर्यादिति तस्यां तु विशिष्टायां विहितायां पश्चादरुणैकहायनीन्यायेन अंशानां परस्परं संबन्धः । यथोक्तम्– 'एकभावनयोपात्तास्त्रयोऽप्यंशाः परस्परम् । उपकार्योपकारित्वं पश्चादनुभवन्ति ते ॥' इति । यद्यपि करणानुग्राहिण्येवेतिकर्तव्यता तथाऽपि न तेन साक्षात्संबध्यते न हि भवतीत्थं याग इति किंत्वित्थं कुर्यादिति । तस्मात् भावनासंबन्धाद्भाव्यरूपापूर्वविशेषप्रयुक्तमङ्गजातं न पारिप्लवमिति यद्यपि यजिप्रयुक्तं तथाऽपि प्रकृतयागानुवादेन विधानान्न पारिप्लवं स्यात् । सामान्यवचनोऽप्यधिकारवशाद्विशेषे वर्तते तस्माद्यजिप्रयुक्तत्वपक्षेऽपि न पारिप्लवत्वम् । तथा च नवमाद्ये **भाष्यकारो** वक्ष्यति । किं प्रतिप्रकरणं नियता धर्मा उत सर्वे सर्वत्रेति । तदपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति ।



यद्येवं किमिति तर्ह्यपूर्वप्रयुक्तत्वमत्र साधितम् । यजिप्रयुक्तत्वेऽपि तद्विशेषप्रयुक्तत्वाच्छक्यते एव व्यवस्थापयितुम् । तत्त्वेन तूत्तरं विवक्षता अपूर्वभावनया संबन्धः कथित इत्यदोषः । युक्तं तावत् भाव्यनिष्केण संबध्यमानं धर्मजातं भाव्यप्रयुक्तमिति भाव्यं तु नापूर्वं स्वर्गं भावयेदिति ब्रूयुः । भावना च फलस्योच्यते इति तत्र तत्र भाष्यकारवचनात् । स्वर्गकामाधिकरणे अपि यागस्य कर्तव्यतोच्यते कामस्य वेति भाव्यविशेषविचारं दर्शयन् सिद्धान्ते कामस्यैव भाव्यतेति दर्शयति । विश्वजिदधिकरणे च पूर्वपक्षे न चापूर्वस्य कर्तव्यतामाह फलकर्तव्यतायां हि सत्यां तदवगम्यते इति वदन् फलभाव्यतोत्तरकालमपूर्वकल्पनं दर्शयति । सिद्धान्तेऽपि फलविशेषापेक्षां दर्शयन् न व्यापारस्य कर्तव्यतोच्यते, कस्य तर्हि व्यापारेणान्यस्य कस्येति भवति तदानीं साकाङ्क्षमित्याह । तत्कथमिह यजेर्गुणभावः श्रूयते । दर्शपूर्णमासाख्येन यागसमुदायेनान्यं कुर्यादिति यत्र कर्तव्यतया चोद्यते न यजिः अपूर्वं तदित्याह । तस्माद् व्याख्येयमेतत् । किमिति व्याख्यातं स्वयमेव भाष्यकारेण । ननु फलमत्र वाक्ये श्रूयते 'स्वर्गकामो यजेत' इति तत्कर्तव्यं स्यादिति चोदयित्वा सत्यं श्रूयते न तु तद्यजिना क्रियते, विनष्टे यज्ञौ तद्भवति अपूर्वं तु तेन क्रियते तस्मान्न तस्य कर्तव्यतोच्यते इति परिहृतम् । अस्यार्थः, न साक्षाद्यजिर्विशरारुत्वात्फलं साधयति किंतु अपूर्वप्रणालिकया । तेनापूर्वे कृते तेनैव फलं भविष्यतीत्यवधारणात्तत्सिद्ध्यर्थं तत्कर्तव्यं भवति, तेन भाव्यप्रयुक्तमङ्गजातम् । आन्तरालिकभाव्येऽपूर्वे वाङ्नियमवदवान्तरापूर्वे पर्यवस्यतीति एतदेव पुनश्चोद्यपूर्वकं प्रकटितम् । यश्च यजेः प्रत्यक्षः फले गुणभावः, स नानावृत्त्या पूर्वं संभवतीति प्राणालिको विज्ञायते इति । एतेन नवमाद्यभाष्यमपि भावप्रत्ययार्थे न हीतिकर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथमिति, न यजिः कीदृश इति, तस्माद्यत्कर्तव्यं तस्येतिकर्तव्यतया संबन्धोऽपूर्वं च तदित्येतद्व्याख्यातं कर्तव्यमिति भाव्यनिष्ठं व्यापारं विधियुक्तं प्रत्ययार्थे दर्शयति । तस्माद्यत्कर्तव्यमिति यत्तस्य व्यापारस्य भाव्यं तदर्थं इतिकर्तव्यताजातमित्यर्थः । अपूर्वं च तदिति फलस्य भाव्यत्वं साक्षादसंभवदपूर्वे संक्रान्तमतस्तदेव साक्षाद्भाव्यमित्यपूर्वप्रयुक्तमित्यर्थः । यदि पुनरनेन भाष्येणापूर्वस्य प्रत्ययवाच्यत्वमुच्यते, ततो विश्वजिदधिकरणे व्यापारेणान्यस्य कर्तव्यतोच्यते, कस्येति भवति साकाङ्क्षं तत्राध्याहारोऽवकल्पते इति न युज्यते । यदा ह्यपूर्वाख्यस्य भाव्यविशेषस्य स्वशब्देनैवाभिधानं तदा कस्य भाव्यत्वमित्याकाङ्क्षा न जायेत यत्र तद्विशेषाध्याहारो भवेत् । यदा तु भाव्यनिष्ठो व्यापारः सविधिकः कर्तव्यमिति भाव्यविशेषापेक्षनिमित्तोऽध्याहारः । एवमन्यत्रापि यागे वा कर्तव्यतोच्यते कामे वेति न तावदपूर्वं कर्तव्यमित्युक्त्वा, ननु च फलं कर्तव्यं स्यादित्यनेन तदेवोपपाद्यते नापूर्वस्य भाव्यविशेषशब्दार्थत्वम् । तस्मात् **एवमाद्यना**लोचनेन प्रत्ययार्थत्वमपूर्वस्य भाष्यकारेणोक्तमिति जल्पतामुपेक्षैवोत्तरमिति ।

किमर्थं पुनः प्रत्यक्षप्रतिपन्नभाव्यभावफलपरित्यागेन आनुमानिकभाव्यभावस्यापूर्वस्य प्रयोजकत्वमङ्गीक्रियते । एतदपि भाष्यकारेणैव फले यजेः प्रत्यक्षो गुणभावः आनुमानिकोऽपूर्वं इति चोदयित्वा प्रत्यक्षोऽपि नाऽनाहत्यापूर्वं संभवतीति प्राणालिको विज्ञायते । न चैतावता प्रत्यक्षश्रुतयागकरणत्वहानिः । यतः प्रणाल्याऽपि येन क्रियते तत्करणं भवति यथा 'गोमयैः पचन्ति' 'तुषपक्वा भवन्ति' इति अनेन परिहृतम् । कथमनेनैतत्परिहृतम् ? उच्यते । प्रत्यक्षोऽपि यागस्य फलसाधनभावः क्षणिकस्य न साक्षात्संभवतीत्यानुमानिकापूर्वप्रणाल्या समाश्रीयते । अनुमिते चापूर्वे न फलापूर्वयोः कश्चिद्विशेषः, द्वयोरपि भाव्यत्वस्यावगतत्वात्, अनिर्ज्ञातोपायत्वाच्च । नात्र कश्चिद्धेतुरस्ति यदव्यवहितभाव्यमपूर्वमुल्लङ्घ्य फलं यावदितिकर्तव्यता गच्छेत् । एतेनाज्यौषधसांनाय्यधर्माणां वाङ्नियमादीनां चावान्तरापूर्वप्रयुक्तिर्व्याख्याता । अतः सिद्धमवान्तरापूर्वभावनासंबन्धाद् व्यवस्थिता एव धर्मा न पारिप्लवा इति । तेनानुपदिष्टधर्मकेष्वैन्द्राग्नादिष्वतिदेशेन धर्माः सिध्यन्तीत्येतत्साधनार्थं सप्तमादिकमारब्धव्यम् ।

**तत्र सप्तमे** प्रत्यक्षवचनेन नामधेयेन च सापवादोऽतिदेशः कृत्स्नः साध्यः । आनुमानिकवचनेनातिदेशो-

ऽपि सामान्येन । तद्विशेषस्त्वष्टमे चिन्तितः । **नवमे** त्वतिदिष्टानां पदार्थानां दशमाद्यसाध्यं कार्यप्राधान्यं सिद्धं कृत्वा प्रयोगविशेषविचार ऊहाख्यः क्रियते, यद्यपि चोहशब्दस्तर्कमात्रवचनः तथाऽप्यस्मिन् शास्त्रे अन्यथाऽवगतानां पदार्थानामन्यथाभावविषयो यस्तर्कः स ऊहशब्देनोच्यते । यद्यपि चात्रोपदेश एव चिन्त्यते । किं प्रकृतौ हन्तिपिषिप्रयुक्तं प्रोक्षणम्, उत अपूर्वप्रयुक्तम् । प्रत्नोवाजीयाप्रयुक्तं प्राथम्यप्रयुक्तं वा त्रित्वम् । सवित्रादिशब्दाः समवेताभिधायिनो न वा यज्ञपतिशब्दः स्वार्थः परार्थो वा । अग्निस्वरूपप्रयुक्तं मन्त्रोच्चारणं देवताविशेषप्रयुक्तं वेति । तथा विकृतौ अपि अर्थान्तराणां नीवारनखावपनपरिधिमध्वशनादीनां पञ्चधा प्राकृतव्रीह्यादिकार्यापत्तिः उपदेशार्थ एव तथाऽप्यष्टमानन्तरमेवास्य संगतिः । न हि प्रकृतिमात्रालोचने प्रयुक्तिविशेषजिज्ञासा जायते, कारणाभावात् । यदा तु विकृतावतिदिष्टा धर्मास्तदा कथमत्रैते प्रयोक्तव्या इति चिन्ता जायते तदुपायत्वेन च किंप्रयुक्ता एते प्रकृताविति जिज्ञासा तेन उपदेशविचारोऽप्यतिदिष्टेष्वेव विशेषं फलतीति विशेषातिदेशानन्तरमारब्धः । तदुपोद्घाततया चापूर्वप्रयुक्तत्वं सप्तमाद्यसाधितं स्मारितम् । **अथवा** अत्रैवैतत् साध्यते धर्मव्यवस्था तु यजिविशेषप्रयुक्तत्वेऽप्युपपद्यते इत्युक्तम् । ऊहस्तु नापूर्वप्रयुक्तत्वमन्तरेण सिध्यतीति इह तत्साध्यते तत्र तु यजिमात्रप्रयुक्तत्वनिराकरणपरेण सता अत्रत्यमपूर्वप्रयुक्तत्वमुक्तम् । **अथवा** तत्रारादुपकारिणां इह संनिपातिनां तत्प्रयुक्तत्वमभिधीयते । तत्र तु चोद्यनिराकरणमात्रार्थं संनिपातिपरामर्शः । निमित्तमात्रं वा तत्र, अत्र तु प्रयोजकं विचारितमित्यपुनरुक्तत्वम् । दशमाद्यसाध्यं चोपकारपुरोधानं पदार्थानामूहसिद्ध्यर्थमपेक्षितव्यम् । अन्यथा तदसंभवात् । यदा ह्यनाहृतोपकाराः पदार्थाः प्रकृताविव विकृतौ संबध्यन्ते तदा तद्वदेव यथाऽवस्थितानामेवाङ्गानां दृष्टमदृष्टं वा प्रयोजनं परिकल्प्य लक्षणया वाऽविकृतानामेव प्रयोगः स्यात् । यदा तु यथा प्रकृतावुपकृतं तथा विकृतावित्युपकारः पूर्वं प्राप्तस्तथाविधश्चोपकारस्तैरेव पदार्थैर्ज्ञातोत्पत्तिरिति तत्सिद्ध्यर्थं तेषामतिदेशः पश्चाद्भवति । तदा येन यथोपकृतं तेन तथैवोपकर्तव्यमिति विकृतावपि आरादुपकारकाणां परमापूर्वोत्पत्तावदृष्टोपकारसाधनत्वं संनिपातिनामपि स्वकारके दृष्टमदृष्टं वा कुर्वतां यागसामर्थ्यजननद्वारेण उत्पत्त्यपूर्वसाधनत्वम् । मन्त्राणामपि देवतादिप्रकाशनद्वारेण उपकारकत्वमिति तत्सिद्ध्यर्थं ऊहः संनिपातिनां मन्त्रसामसंस्काराणां सिद्धो भवति । न हि व्रीहिषु क्रियमाणं प्रोक्षणं नैवारचरोः प्राकृतमुपकारं साधयतीत्यूहितव्यम् । एवं साम्नामप्यृगन्तरसंचारे द्रष्टव्यम् । मन्त्राणामपि देवतान्तरद्रव्यान्तरवत्यां विकृतावधिकृतानां प्रकृतिवदुपकारकत्वं न संभवतीति प्रातिपदिकलिङ्गवचनानामेकैकस्य द्वयोर्द्वयोर्वा समस्तानां वा अन्यथाभावात्तथाऽवस्थितानामेव वा अभ्यासादष्टधा अधिकार ऊहः सिध्यति । तदूहस्यापि कार्यप्रधान्यमपेक्षितव्यमिति द्वयोरप्यूहबाधयोः साधारणं मध्ये समारब्धमिति वेदितव्यम् । **रत्नमाला.** पृ. १६९–१७४.

* **सप्तमादिभिः** अध्यायैः ‘ तथाऽनाम्नातशेषाणां शेषिणां सप्तमादिभिः । शेषसद्भावतद्रूपपरिमाणादिनिर्णयः ॥ ’ **वा.** ३।१।१।१ पृ. ६४८, * **सप्तमादौ** ‘ सप्तमेनातिदेशेन शेषाः सन्तीति साधिते । ततोऽष्टमे नये यस्य यतश्चेति निरूपणा ॥ नवमेऽर्थप्रधानत्वात्तदधीनाऽन्यरूपता । इयत्ता दशमे शेषबाधाभ्युच्चयचिन्तया ॥ प्रयोगपरिमाणं च तत्तन्त्रावापलक्षणम् । एतदेव प्रसङ्गेन परार्थाङ्गोपजीवनात् ॥ ’ । ३।१।१।१ पृ. ६४८.

* **सप्तमादिषट्कः** उपदेशपूर्वकातिदेशविषयत्वात् उपदेशविचारार्थप्रथमषट्कसमाप्तिं प्रतीक्षते । **वा.** ३।१।१।१ पृ. ६५१.

* **सप्तमाद्याधिकरणे** सर्वेषां भावनान्वयः व्युत्पाद्यते । **कौ.** २।१।१।१.

* **सप्तमपदम्** । सोमक्रयण्याः गोः सप्तमं पदं यत्र पतितं तत्र भूमौ हिरण्यं निधाय आज्येन जुहोति । आज्यसंसृष्टं च सर्वं रजः अध्वर्युर्गृह्णाति तदीयतृतीयांशेन शकटस्याक्षः उपाज्यते । **वि.** ४।१।१०.



* **सप्तमी** ( भाट्टरहस्यस्था ) । एवं सप्तम्यर्थोऽपि तत्रैव ( आख्यातार्थे एव ) अन्वेति । स च ‘सप्तम्यधिकरणे च ’ ( पा० २।३।३६ ) इतिसूत्रानुशिष्टं अधिकरणत्वम् । तच्च ‘ आधारोऽधिकरणम्’ (पा० १।४।४५) इतिसूत्रनिरुक्तम् ।

**ननु** अधिकरणत्वं नाम न येन केनचित् संबन्धेन संबन्धित्वम्, रूपरसादीनामपि परस्पराश्रयत्वापत्तेः । नापि स्वाधेयसंबन्धित्वम्, आधेयत्वस्यैव निर्वक्तुमशक्तेः । तस्य स्वाश्रयसंबन्धित्वरूपत्वे अन्योन्याश्रयप्रसङ्गाच्च । नापि कारणत्वम्, निमित्तकारणादौ अतिव्याप्तेः । नापि समवायिकारणत्वम्, संयोगेन घटाद्याश्रये जात्याश्रये समवायाश्रये च भूतलादौ अव्याप्तेः ।

“ यत्तु तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनवन्निरूपिताधिकरणत्वम् । पतमानपर्णादौ आश्रयत्ववारणाय सत्यन्तम् । ब्रह्माण्डादिधारकसंयोगाश्रयेश्वरवारणाय मूर्तपदोपादानम् । वस्तुतस्तु ‘ यस्मिन् सर्वं प्रतिष्ठितम्’ ‘ येनेदं धार्यते जगत् ’ इत्यादिवचनात् ईश्वरेऽपि अस्त्येव अधिकरणत्वम् । इतरथा ब्रह्माण्डादिधारकत्वस्यैव अनुपपत्तेः । अतो मूर्तपदं नैव देयम् । लक्ष्यं द्रव्यनिरूपिताधिकरणत्वम् । आकाशादीनां तु प्रमाणाभावादेव न द्रव्याधारत्वं आधेयत्ववत् । ईश्वरे तु उक्तवचनात् आधारत्ववत् आधेयत्वेऽपि ‘ यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति ’ ‘ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ’ इत्यादि श्रुतिस्मृतिवशात् न क्षतिः । गुणादिनिरूपिताधिकरणत्वं समवायित्वम् । समवायादिनिरूपितं च तत्तत्स्वरूपसंबन्धित्वम् ” इति मतम् । तदपि न, अननुगमात् सप्तम्या नानार्थकत्वापत्तेश्च । इति चेत् । न । अनुगताकारप्रतीत्या प्रतियोगित्वादिवत् अधिकरणत्वाधेयत्वयोश्च अखण्डोपाधित्वस्यैव स्वीकारात् । शक्यतावच्छेदकैक्यानुरोधेनापि करणत्वत्वादिवत् पदार्थान्तरकल्पने बाधकाभावाच्च । यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकविधया प्रतीतिरानुभविकी, न तत्र कल्पनं यथा विश्वादिपदेषु । यत्र तु तद्घटकपदार्थाप्रतीतावपि तत्प्रतीतिः, तत्र शाब्दव्यवहारानुरोधादपि तत्कल्पनं असकृदावेदितम् ।

तत्र आधेयत्वमेव आधेयत्वत्वेन सप्तम्यर्थः, तत्र च निरूपकतासंबन्धेन प्रातिपदिकार्थस्य भूतलादेरन्वयः, तस्य च अनुयोगितासंबन्धेन घटादौ अन्वयः । तेन ‘ भूतले घटः ’ इत्यत्र भूतलवृत्तिर्घटः इत्येवं शाब्दबोधः इति **तार्किकाः** । तन्न । ‘ सप्तम्यधिकरणे च ’ इत्यनुशासनविरोधात् । ‘ भूतले घटः, गृहे पचति ’ इत्यादौ सर्वत्र ऐकरूप्येण अन्वयानङ्गीकारेण अनेकव्युत्पत्तिकल्पनापत्तेश्च । अतः अधिकरणत्वमेव सप्तम्यर्थः । यद्यपि संयोगसमवायाद्यवच्छिन्नाधिकरणत्वानि नाना, तथापि अधिकरणत्वत्वस्य शक्यतावच्छेदकस्य एकत्वात् न नानार्थकत्वम् । तत्र च आधेयत्वसंसर्गेण प्रातिपदिकार्थस्य अन्वयः, तस्य च निरूपकत्वघटितसंसर्गेण आख्यातार्थभावनायां अन्वयः । तत्र ‘ भूतले घटः ’ इत्यत्र अस्तीति अध्याहारात् सप्तम्यर्थाधिकरणत्वस्य स्वनिरूपकघटवृत्तित्वसंसर्गेण आख्यातार्थे सत्ताश्रयत्वे अन्वयः । भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिवर्तमानसत्ताश्रयत्वं घटवृत्ति इति च शाब्दबोधः । न च पूर्वं घटे भूतलस्थे संप्रति च अधिकरणान्तरस्थे ‘ भूतले घटोऽस्ति ’ इति प्रयोगापत्तिः, यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वान्वयः तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्या बोधनात् । ‘ गृहे चैत्रः पचति ’ इत्यत्र स्वनिरूपकचैत्रवृत्तित्वसंसर्गेण आख्यातार्थकृतौ । ‘ स्थाल्यामोदनं पचति ’ इत्यत्र स्वनिरूपकौदनकर्मत्वसंसर्गेण तस्यामेव । अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्यतरद्वारक एव आख्यातार्थान्वयः, न तु कारकान्तरद्वारकः साक्षाद्वा । ( तत्र कारकान्तरद्वारकत्वविषये आह– ) ‘ काश्यां ब्राह्मणेभ्यः प्रयच्छति ’ इत्युक्ते कर्तुरेव झटिति काशीस्थत्वप्रतीतेः । यत्र तु ‘ पाटलिपुत्रे स्थितो राजा काश्यां ब्राह्मणेभ्यः प्रयच्छति ’ इत्यादौ ब्राह्मणेषु काशीवृत्तित्वप्रतीतिः । तत्र ‘ स्थितेभ्यः ’ इतिपदाध्याहारेण स्थितिकर्तृद्वारैव इति न विरोधः । अत एव ‘ भूभृति वृक्षात् पर्णं पतति ’ इत्यत्र ‘ स्थितात् ’ इति पदाध्याहारं विना न झटिति भूभृद्वृत्तित्वप्रतीतिः । (साक्षात् इत्येतद्विषये आह –) साक्षात्तु सप्तम्यर्थस्य भावनान्वयो गृहादौ

बाधित एव ( गृहादौ इत्यस्यानन्तरं अधिकरणत्वेन विवक्षिते इति पूरणीयम् । 'गृहे चैत्रः पचति' इत्यत्र चैत्रवृत्तेः भावनायाः गृहे वृत्त्यभावात् गृहनिष्ठाधिकरणत्वनिरूपकत्वं भावनाया न भवतीति भावः । ननु चैत्रस्य भावनाश्रयत्वात् चैत्रपदोत्तरसप्तम्यर्थस्य साक्षात् भावनायाः संभवत्येव इत्याशङ्कायां भावनाश्रयस्य कर्तृसंज्ञावश्यंभावात् तत्पदोत्तरं प्रथमाविभक्तिरेव भवेत् , न सप्तमी । तस्मात् तत्रापि अधिकरणस्य न साक्षात् भावनान्वयः इति समाधत्ते– ) चैत्रादौ तु परया कर्तृसंज्ञया बाधितः । अतः सिद्धं कर्तृकर्मान्यतरद्वारक एव सप्तम्यर्थान्वयः इति ।

ननु एवं कर्माविवक्षायां 'ग्रामे गच्छति, ग्रामे गम्यते' इति प्रयोगानापत्तिः , ग्रामाधिकरणत्वस्य कर्तृकर्मद्वारकत्वासंभवात् । 'लक्षणया उद्देश्यत्वं तत्र सप्तम्यर्थः' इति चेत् , 'ओदने पचति' इत्यपि प्रयोगापत्तिः । अत एव धात्वर्थतावच्छेदकफलद्वारक एवान्वयः इत्यपास्तम् , ओदनस्यापि तदापत्तेः । इति चेत् । तत्रापि कर्तृद्वारकत्वस्य संभवात् । ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे संभवात् अन्यावच्छेदेन ग्रामप्राप्तिफलकक्रियावत्यपि चैत्रे ग्रामाधिकरणकत्वस्य भावित्वात् ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे नानुपपत्तिः । पाककर्तुस्तु ओदनाधिकरणकत्वाभावात् न तथा प्रयोगः ।

ननु एवमपि 'अग्नौ पचति, आतपे तिष्ठति, आकाशे पक्षी गच्छति, आकाशे तिष्ठन् आकाशमन्तरो यमयति' इत्यादिप्रयोगानुपपत्तिः , अग्न्याद्यधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकत्वायोगात् । न च 'अग्नौ पचति इति प्रयोगो नास्त्येव' इति केषांचिदुक्तं युक्तम् , 'यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते' इति बहुतरप्रयोगवचनात् । न हि वृत्त्यनियामकसंयुक्तसंयोगादिसंबन्धस्य अधिकरणतानिरूपकत्वं संभवति । अन्यथा 'आकाशे मनुष्यस्तिष्ठति, चैत्रः मैत्रात्मनि तिष्ठति' इत्यादिप्रयोगापत्तेः । इति चेत् , तादृशस्थले 'गङ्गायां घोषः' इतिवत् अग्न्यादिपदे तत्संबन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारा अन्वयोपपत्तेः । तेन 'अग्नौ पचति' इत्यादेः अग्निसंयुक्तस्थाल्यां पचति, आतपसंयुक्तगृहे तिष्ठति इत्यर्थः । आकाशपदेन गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशो लक्ष्यते, यं अन्तरिक्षमिति व्यवहरन्ति । सप्तम्या अवच्छेदकत्वम् । विषयत्वादिवत् तस्य विभक्त्या लक्षणायामपि न दोषः । तस्य उद्देश्यत्वादिवत् सप्तम्यर्थस्यापि साक्षात्संबन्धेनैव गमनसंबन्धित्वम् । नहि सप्तम्यर्थमात्रे तन्नियमः । अपितु सप्तमीवाच्ये एव । तच्च प्रचुरप्रयोगात् अधिकरणत्वमेव इति तत्रैवायं नियमः । धातुना च निराधारं गमनम् । तथा च उक्तविधभूप्रदेशानवच्छिन्ननिराधारगमनानुकूलकृतिः पक्षिनिष्ठा इति शाब्दबोधः । 'आकाशे तिष्ठन्' इत्यादौ संयुक्तसंयोगावच्छिन्नसंबन्धित्वं लक्षणया सप्तम्यर्थः । षष्ठ्यर्थस्यापि 'सुपां सुलुक्०' ( पा० ७।१।३९ ) इत्येवं लक्षणा । तस्यापि पूर्ववत् धात्वर्थद्वारकः कर्तृद्वारक एव वा संसर्गः । वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वात् उपादानत्वमेव सप्तम्यर्थः उपादानकर्तृद्वारकः अन्वेति । आकाशे उपादानकरणत्वात् अनुगतस्तिष्ठन् इत्यर्थः । अस्तु वा एतद्वचनबलादेव आकाशेऽपि शब्दनिरूपिताधारत्ववत् अन्तर्यामिनिरूपिताधारत्वमपि इति न तत्र लक्षणाऽपि । न चैवं 'अग्नौ पचति' इत्यादिप्रयोगाणां लक्षणया उपपादने 'आकाशे मनुष्यस्तिष्ठति' इत्यादि प्रयोगापत्तिः । तथात्वे 'गङ्गायां घोषः' इत्यादौ गङ्गापदेन गङ्गासंबन्धितीरलक्षणायाः सर्वसंमतत्वेन भवदुक्तप्रयोगापत्तेरनिवारणात् । अतः सिद्धं सप्तम्यर्थाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकः अन्वय इति ।

यस्तु गृहात् बहिः स्थितेन कर्त्रा दीर्घदण्डादिना काष्ठचलनद्वारा गृहमध्ये पाककरणे 'गृहे पचति' इति प्रयोगः, स कर्मकारकस्य तण्डुलादेः परंपरया गृहाधिकरणत्वान्नानुपपन्नः ।

ननु एवमपि 'भूतले घटो नास्ति, चैत्रो गृहे न पचति' इत्यादौ कथं कर्तृकर्मान्यतरद्वारकोऽन्वयः । नहि तत्र भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिसत्ताश्रयत्वं अभावप्रतियोगि इत्येवं शाब्दबोधः संभवति, भूतले घटदशायामपि तथा प्रयोगापत्तेः । उक्ताश्रयत्वस्य घटातिरिक्तवृत्त्यभावप्रतियोगित्वात् , नञा घटादिनिष्ठाभावलक्षणायामपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनः अप्रसिद्धेश्च । तद्वाक्यात् अनुभूयमानघटत्वावच्छिन्नप्रतियोगिताकभूतलनिष्ठाभावबोधस्य अपलापापत्तेश्च । न हि 'उक्तविधाभावोऽस्ति' इति एतादृश एव बोधः अनेन जनयितुं शक्यः, भूतलनिष्ठाधिकरणत्वस्य सप्तम्यर्थस्य अभाववद्द्वारकत्वापत्त्या कर्तृकर्मद्वारकत्वनियमभङ्गापत्तेः । घटस्य प्रतियोगितासंसर्गेणान्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वाभावात् प्रथमानुपपत्तेश्च । भूतलवृत्तिघटप्रतियोगिताकाभावस्य कर्तृत्वोक्तौ तस्य एकत्वात् 'घटौ न स्तः' इति द्विवचनानुपपत्तेश्च । 'घटौ नास्ति' इति प्रयोगापत्तेश्च । घट एव प्रतियोगितासंबन्धेन अभावान्वये, अभावे च भूतलाधिकरणत्वमङ्गीकृत्य 'भूतलवृत्त्यभावप्रतियोगी घटोऽस्ति' इति शाब्दबोधाङ्गीकारे तु अतीते भाविनि वा 'घटोऽस्ति' इति वर्तमानकालान्वयानुपपत्तेः 'घटो नास्ति' इति प्रयोगानुपपत्तिः ।

एतेन 'भूतलाधेयत्वाभाववान् घटोऽस्ति इत्यपि शाब्दबोधः' प्रत्युक्तः ।

"अथ एतद्दोषपरिहारार्थं सप्तम्यर्थाधिकरणत्वस्य निरूपकतासंबन्धेन धात्वर्थे कालसंबन्धे अन्वयः , तत्रैव लडर्थान्वयोऽपि, तस्य च आश्रयत्वे आख्यातार्थे, तस्य च प्रतियोगितासंसर्गेण नञर्थे अभावे, तस्य च प्रथमान्तार्थे घटादौ इति भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसंबन्धाश्रयत्वप्रतियोगिताकाभाववान् घटः इति शाब्दबोधः । भावनान्वय्यभावप्रतियोगिनि च संख्यान्वयः नञः समभिव्याहारस्थले इति मतम्" तदपि न । सप्तम्यर्थस्य साक्षाद्धात्वर्थान्वयाव्युत्पत्तेः । अन्यथा कर्तृत्वाविवक्षायां चैत्रे पच्यते इति भावे प्रयोगापत्तेः । अत एव सप्तम्यर्थस्य धात्वर्थान्वये परंपरापदोपादानं कर्तृकर्मान्यतरद्वारकत्वोपादानं वा प्रामाणिकानाम् ।

न च नञ्समभिव्याहारस्थले साक्षात्संबन्धेन अन्वयव्युत्पत्तिकल्पनं इति केषांचिदुक्तं युक्तम् , चैत्रे न पच्यते इति प्रयोगस्य एवमपि निवारयितुमशक्यत्वात् । आख्यातार्थभावनासंख्यादेः नञ्समभिव्याहारसत्त्वे अन्यान्वयबोधकव्युत्पत्त्यन्तरकल्पनापत्तेश्च ।

एतेन नञ्समभिव्याहारस्थले धातुना शक्यार्थाभावो लक्ष्यते । नञस्तु द्योतकत्वात् तात्पर्यग्राहकत्वमेव । सप्तम्यर्थस्य च व्युत्पत्तिविशेषकल्पनया धात्वर्थभूताभावे प्रतियोगिनि शक्यार्थे कालसंबन्धादौ अन्वयः । भूतलनिष्ठाधिकरणतानिरूपक––वर्तमानकालसंबन्धप्रतियोगिकाभावाश्रयत्वं घटवृत्ति इत्यादिश्च शाब्दबोधः । भावनासंख्यादेश्च न व्युत्पत्त्यन्तरकल्पनम्– इति केषांचिदुक्तं अपास्तम् , कल्पनागौरवस्य तदवस्थत्वात् । 'चैत्रे न पच्यते' इति प्रयोगापत्तेश्च, 'गृहे न पचति' इति प्रयोगानापत्तेश्च गृहस्य साक्षात् पाकाधिकरणत्वाभावात् ।

अथ –– तत्र कर्तृद्वारकान्वयस्वीकारेऽपि 'भूतले घटो नास्ति' इत्यत्रैव सप्तम्यर्थस्य धात्वर्थभूताभावप्रतियोगिकालसंबन्धे अन्वयः –– इति मतम् , ततः अस्त्याख्यधातुघटितव्युत्पत्तिकल्पनात् अतिगौरवम् । 'गृहे न पचति' इत्यादौ च गृहाधिकरणकचैत्रवृत्तिपाकस्य अप्रसिद्धेः न तदभावो धातुना बोधयितुं शक्यते इति तत्र शाब्दबोधानुपपत्तिः तदवस्थैव । इति चेत् । न । 'इदानीं भूतले घटो नास्ति' इत्यादावपि भूतलाधिकरणकघटवृत्तिसत्ताश्रयत्वं घटनिष्ठाभावप्रतियोगि इत्येव शाब्दबोधात् । प्रसिद्धं हि घटस्य भूतलाधिकरणत्वं कालान्तरे । अतो न प्रतियोगिनोऽप्रसिद्धिः । न वा व्युत्पत्त्यन्तरकल्पनम् । तथाहि । सप्तम्यर्थस्य तावत् निरुक्तसंसर्गेण आख्यातार्थे अन्वयः । प्रथमार्थस्यापि क्लृप्तसंसर्गेण तत्रैव । नञा परं लडाद्यर्थकालावच्छिन्नघटनिष्ठाभावलक्षणा, लडादिश्च तात्पर्यग्राहकमात्रम् । इदानींपदस्य च निपातत्वात् नञर्थान्वयेऽपि न क्षतिः । संभवति हि उक्तसत्ताश्रयत्वाभाव एव तत्कालावच्छेदेन घटे एतस्मिन् काले एतद्भूतले घटाभावात् । अत एव भूतलवृत्तिघटाभावस्यापि अर्थात् अनुभूयमानस्य नापलापः । यत्र तु अधिकरणे कदाऽपि न कर्त्रादिसत्ता प्रसिद्धा, तत्रापि न कर्तुः घटत्वादिना संसर्गघटकता, येन प्रतियोग्यप्रसिद्धिः आशङ्क्येत, अपि तु प्रकृतक्रियाश्रयत्वेनैव । तथा च

भूतलनिष्ठाधिकरणतानिरूपक —– वृत्तिवर्तमानसत्ताश्रयत्वं भूतलवृत्तिपरमाण्वादावेव प्रसिद्धम् । अयमेव प्रकारः पूर्वत्र अनुसंधेयः । एवं लडाद्यर्थस्यापि धात्वर्थान्वयो न त्यक्तो भवति । तात्पर्यग्राहकत्वस्यापि च स्वीकारात् तत्कालावच्छिन्नघटनिष्ठाभावप्रतियोगित्वं उक्तविधाश्रयत्वे अन्याहृतम् । यदि तु अस्मिन् पक्षे घटस्य आख्यातार्थे साक्षात्संबन्धेन अनन्वयात् कर्तृत्वानुपपत्तिः आशङ्क्येत, ततः अस्त्वाख्यातस्यैव उक्ताश्रयत्वप्रतियोगिकोक्तविधाभावे सप्तमीनञुभयसमभिव्याहारे लक्षणा, नञ्पदं च तात्पर्यग्राहकम् । तस्मिंश्चाभावे घटस्य आधेयत्वसंबन्धेनैव अन्वयात् कर्तृत्वोपपत्तिः । सप्तम्यर्थस्य च तस्मिन्नेवाभावे कर्तृघटितपरंपरासंबन्धेनैव अन्वयात् न व्युत्पत्त्यन्तरकल्पना । उक्तविधाश्रयत्वत्वावच्छिन्नप्रतियोगिताकाभावश्च घटे न घटस्य भूतलवृत्तितादशायां इत्यर्थात् भूतलाधिकरणकघटाभावबोधः ।

एवं ‘ वायौ रूपं नास्ति, ह्रदे वह्निर्नास्ति, जातौ सत्ता नास्ति ’ इत्यादिप्रयोगा अपि उपपादनीयाः । न च समवायसंबन्धेन जातिवृत्तेः अप्रसिद्ध्या समवायसंबन्धावच्छिन्नजातिनिष्ठाधिकरणतानिरूपकवृत्तिविद्यमानकालसंबन्धाश्रयत्वाप्रसिद्धेः कथं तदभावस्य सत्तायां बोधः इति वाच्यम् । जातावपि साक्षात् स्वरूपसंबन्धेन वृत्तेः प्रसिद्धत्वात् सत्तायामपि निरुक्तसामान्याभावोपपत्तेः । ‘ जातौ समवायेन सत्ता नास्ति ’ इति प्रयोगस्तु निरुक्ताश्रयत्वस्यैव व्यधिकरणसंबन्धावच्छिन्नाभावमादाय उपपादनीयः । ( जातिनिष्ठाधिकरणतानिरूपकवृत्तिविद्यमानकालसंबन्धाश्रयत्वनिष्ठा या समवायसंबन्धावच्छिन्नाधिकरणतानिरूपकवृत्तिविद्यमानकालसंबन्धाश्रयत्वत्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभावमादाय इत्यर्थः । प्रतियोगितावच्छेदककोटौ व्यधिकरणस्य समवायसंबन्धस्य घटकत्वात् अभावे व्यधिकरणसंबन्धावच्छिन्नत्वोक्तिः इति ध्येयम् ) । समवायेन इत्यस्य च आख्यातार्थे अभावे स्वावच्छिन्नत्वसंबन्धेन अन्वयः इति न काऽप्यनुपपत्तिः ।

एवं ‘ गृहे चैत्रो न पचति ’ इत्यादावपि पूर्ववदेव सर्वैः प्रकारैः बोधोपपादनं द्रष्टव्यम् । तत्र तु अयं विशेषः । चैत्रस्य गृहस्थत्वे पाकाश्रयत्वाभावमादाय पाकाश्रयत्वे गृहस्थत्वाभावमादाय उभयाभावे च उभयाभावमादाय विशिष्टाभावः संपादनीयः । तत्तदभावबोध एव च तात्पर्यभेदेन फलम् ।

एवं ‘स्थाल्यां तण्डुलं न पचति चैत्रः ’ इत्यत्रापि स्थाल्यां तण्डुलवृत्तित्वाभावे, तण्डुलस्य पाककर्मत्वाभावे, पाकस्य चैत्रवृत्तित्वाभावेऽपि च तात्पर्यभेदो द्रष्टव्यः । तात्पर्यग्राहकान्तराभावे तु स्थालीपदवैयर्थ्यमिया आधाराभाव एव झटिति अर्थात् प्रतीतेः । अत एव ‘ न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणम् ’ इत्यादौ कृष्णत्वाभावे एव तात्पर्यम्, न तु तिलतर्पणाभावादौ इति व्याचक्षते वृद्धाः । ‘ नान्तरिक्षेऽग्निश्चेतव्यः ’ इत्यादौ तु सप्तम्यर्थस्य कर्तृकर्मद्वारकत्वासंभवेन प्रतियोग्यप्रसिद्ध्यापत्तेः अगत्या नञ्सप्तम्यन्ताभ्यां अन्तरिक्षवृत्त्यभावलक्षणया तत्प्रतियोगित्वं आख्यातार्थः अनूद्यते इति तस्य नित्यानुवादता । तत्र सप्तम्यर्थस्य स्वातन्त्र्येण अन्वयाभावादेव न व्युत्पत्त्यन्तरकल्पना । ( पदद्वयलक्षितार्थस्यापि आख्यातार्थान्वये निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यत्वात् वक्ष्यमाणव्युत्पत्त्यैव निर्वाहोपपत्तेः न व्युत्पत्त्यन्तरकल्पनम् । इत्यधिकः पाठः क्वचित् ) अत एवार्थवादवाक्यलक्ष्यप्राशस्त्यस्याप्यनयैव व्युत्पत्त्या आख्यातार्थभावनान्वयः । ‘ अन्तरिक्षे घटो न पचति ’ इत्यादौ च सप्तम्यन्त—नञ्—धातुभिः अन्तरिक्षवृत्तित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकपाकाभावो लक्ष्यते । आख्यातेन च आश्रयत्वम् । तथा च उक्तविधाभावाश्रयत्वं घटवृत्ति इति शाब्दबोधः । अतः अत्रापि न सप्तम्यर्थान्वयः इति न कुत्रापि सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकत्वव्यभिचारः । यत्र तु न सप्तम्यन्तपदसमभिव्याहारः ‘ चैत्रो न पचति ’ इत्यादौ, तत्र नञर्थस्य चैत्रवृत्त्यभावस्य चैत्रवृत्तिकृतौ प्रतियोगितासंबन्धेन अन्वयः । अथवा वर्तमानपाकानुकूलकृत्यभावं आख्यातेन लक्षयित्वा तस्मिन् चैत्रान्वयः इत्यादि बोध्यम् ।

एवं लिङादिसमभिव्याहारेऽपि ‘ चैत्रो न कलञ्जं भक्षयेत् ( पचेत् ) ’ इत्यादौ यत्र चैत्रवृत्तिकृतिप्रसिद्धिः तत्र तस्यां ‘ न कलञ्जं भक्षयेत् ’ इतिवदेव विध्यर्थस्य



स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेणैव नञर्थस्यापि चैत्रवृत्त्यभावस्य प्रतियोगितासंसर्गेण ऽन्वयः । अप्रसिद्धौ तु आख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा तस्मिन् विध्यर्थस्य प्रयोज्यत्वेन चैत्रस्य च आधेयत्वेन अन्वयः इति सर्वमनवद्यम् ।

तच्च अधिकरणत्वं त्रिविधम् – औपश्लेषिकं वैषयिकं अभिव्यापकं चेति । ‘कटे आस्ते, घटे ज्ञानमस्ति, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्माऽस्ति, तिलेषु तैलमस्ति ’ । उपश्लेषः सावच्छिन्नवृत्तित्वम् । वैषयिकं विषयतासंबन्धावच्छिन्नम् । अभिव्यापकं अवच्छेदकावच्छेदेन वृत्तिमत् ।

‘ सप्तम्यधिकरणे च ’ ( पा० २।३।३६ ) इति चकारात् दूरान्तिकार्थेभ्योऽपि सप्तमी । ‘ वनस्य दूरे अन्तिके वा ग्रामः ’ । दूरे दूरत्वावच्छिन्नप्रदेशे । प्रतियोगित्वं षष्ठ्यर्थः । यद्यपि अत्र अधिकरणत्वादेव सप्तमी प्राप्यते, तथापि द्वितीयादिविभक्तित्रयेण विशेषविहितेन बाधप्रसक्तौ प्रतिप्रसवार्थः चकारः ।

एवं ‘ क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ’ इति वार्तिकात् ( सप्तम्यधिकरणे च इत्यत्रैव पठितात् ) इनः शब्दः विषयो वर्तमानभूमिर्यस्य, यदुपरि इन् – शब्दः इत्यर्थः, तादृशक्तप्रत्ययस्य वस्तुतो यत्कर्म तस्मिन् सप्तमी । अधीती व्याकरणे । अधीतमनेन इति विग्रहः । ‘इष्टादिभ्यश्च’ ( पा० ५।२।८८ ) इति कर्तरि इन् – प्रत्ययस्य विधानात् । एतस्य च तद्धितत्वेन ‘ कृतपूर्वी कटम् ’ इतिवत् द्वितीयायां प्राप्तायां कर्मणि सप्तमीविधिः तद्बाधेन । शाब्दबोधश्च तद्वदेव । कर्म चात्र मुख्यमेव न तु मासादि । तेन ‘ मासमधीती व्याकरणे ’ इत्यत्र काले द्वितीयैव ।

एवं ‘ साध्वसाधुप्रयोगे च ’ इति वार्तिकात् ( २।३।३६ अत्र सूत्रे ) ‘साधुः कृष्णो मातरि भवति, असाधुर्मातुले ’ इत्यत्र सप्तमी । अत्र वैषयिकत्वादिना अधिकरणसप्तम्यैव सिद्धौ पुनर्वचनं षष्ठीनिषेधार्थम् । न च ‘साधुनिपुणाभ्यामर्चायांसप्तम्यप्रतेः’ ( पा० २।४।४३ ) इति वक्ष्यमाणसूत्रेणैव साधुशब्दप्रयोगे सप्तमीसिद्धेः एतद्वार्तिके साधुशब्दग्रहणवैयर्थ्यम् । अनर्चायां प्रतिनायोगेऽपि साधुशब्दयोगे सप्तमी इत्येवं सार्थक्यात् । न चैवं ‘ साधुर्भृत्यो राज्ञः ’ इति षष्ठीप्रयोगानापत्तिः, तत्र राज्ञो भृत्यद्वारकान्वयस्वीकारेण साधुत्वद्वारकान्वयानङ्गीकारात् । न चैवमपि अर्चानर्चादिसाधारण्येन साधुशब्दयोगे सप्तमीविधौ वक्ष्यमाणसूत्रे ( पा० २।३।४३ ) अर्चाग्रहणवैयर्थ्यं निपुणपदयोगे अर्चायामेव सप्तमी इत्येवं सार्थक्यात् । न चैवं एतद्वाक्येनैव साधुशब्दयोगेऽपि सप्तमीसिद्धेः उक्तसूत्रे ( पा० २।३।४३) साधुशब्दग्रहणवैयर्थ्यम्, उत्तरभाविवार्तिकेन पूर्वभाविसूत्रे वैयर्थ्यशङ्काया अनुक्तिसहत्वात् ।

एवं ‘ निमित्तात् कर्मयोगे ’ (पा० २।३।३६ सूत्रे ) इति वार्तिकात् ‘ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ’ इत्यादौ सप्तमी ( सीम्नि कस्तूरियुक्ताण्डकोशनिमित्तं पुष्कलकः गन्धमृगः हतः । सीम्नि सीमाज्ञानार्थं पुष्कलकः शङ्कुः हतो निखातः इति हरदत्तः ) अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम् । अत एव प्रयोज्यत्वं सप्तम्यर्थः साक्षात्संबन्धेन क्रियान्वयी । तस्य च कर्मकारकयोगः संयोगसमवायादिः वास्तव एव सप्तमीप्रयोजकः न तु शाब्दबोधे ज्ञातः । अत एव तदभावे ‘वेतनेन धान्यं लुनाति’ इत्यादौ ‘ हेतौ ’ ( पा० २।३।२३ ) इत्यनेन तृतीयैव । तृतीयापवादत्वेनैव चायं सप्तमीविधिः, तादर्थ्यचतुर्थ्यपवादत्वेन वा तदा ‘ वेतनाय धान्यं लुनाति ’ इत्यपि वा प्रयोगः । अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकसंबन्धः अवयवावयविभावात् । चतुर्थे तु संयोगः, सीम्नो ज्ञानार्थं पुष्कलकः शङ्कुः निखातः इति तदर्थात् ।

एवं ‘ यस्य च भावेन भावलक्षणम् ’ (पा० २।३।३७ ) इति सूत्रात् यत्संबन्धिन्या निर्ज्ञातकालया यया क्रियया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते तस्याः क्रियायाः कर्तुः कर्मणो वा स्वक्रियाद्वारके इतरक्रियालक्षकत्वे विवक्षिते तद्बोधकात् सप्तमी स्यात् इत्यर्थकात् ‘ ब्राह्मणेषु अधीयानेषु गतः, गोषु दुह्यमानासु गतः ’ इत्यादौ सप्तमी । अत्र कर्तृत्वकर्मत्वा-

न्यतरसंबन्धेन स्वसंबन्धिक्रियाकालकत्वं सप्तम्यर्थः । तस्य च साक्षात्संबन्धेन इतरक्रियान्वयः पूर्वक्रियायाश्च कर्तृकर्मविशेषणत्वेऽपि सप्तमीलक्ष्यसंबन्धिसंसर्गघटकत्वमपि नानुपपन्नम् । एवं च यत्र ' इको यणचि ' (पा० ६।१।७७ ) इत्यादौ क्रिया नोपात्ता, तत्र ' सति ' इति सत्तारूपक्रियाऽध्याहारो बोध्यः । यत्र तु संबन्धिनो लक्षकत्वं न विवक्षितं तत्र ' गावो दुह्यन्ते, चैत्रो गतः ' इति वाक्यद्वयप्रयोगः । अत एव तत्र पूर्वक्रियायाः उत्तरक्रियोपलक्षकत्वबोधः कविकाव्यादिवत् मानस एव । अत एव च समानार्थकत्वाभावात् न सप्तमीविधिः तस्य बाधकः, अपितु अपूर्वविधिः, कथंचित् षष्ठीबाधको वा इति ध्येयम् ।

यत्तु— ' क्रियार्हाणां क्रियाकर्तृत्वादौ विवक्षिते, क्रियानर्हाणां च तदभावे विवक्षिते सप्तमी ' तथा ' क्रियार्हाणां तदभावे क्रियानर्हाणां च तस्मिन् विवक्षिते ' इत्येवं वार्तिकं ( वस्तुतस्तु ' कारकार्हाणां च कारकत्वे, अकारकार्हाणां चाकारकत्वे, तद्विपर्यासे च ' इत्येव वार्तिकाक्षरानुपूर्वी ) ' सत्सु तरत्सु पूज्यमानेषु वा असन्त आसते न पूज्यन्ते वा, असत्सु तिष्ठत्सु अपूज्यमानेषु वा सन्तस्तरन्ति पूज्यन्ते वा, सत्सु तिष्ठत्सु अपूज्यमानेषु वा असन्तस्तरन्ति पूज्यन्ते वा, असत्सु तरत्सु पूज्यमानेषु वा सन्तस्तिष्ठन्ति न पूज्यन्ते वा ' इत्यत्र सप्तमीविधायकम् , तत् ' यस्य च भावेन भावलक्षणम् ' इत्यनेनैव सिद्धे अनारम्भणीयं इति केचित् । **कैयटादयस्तु** लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थं इत्याहुः, तन्न, लक्ष्यलक्षणभावातिरिक्तसंबन्धस्य अस्माद्वाक्यात् अभानेन तस्मिन्नर्थे सप्तमीविधानवैयर्थ्यापत्तेः । अतः अर्हत्वाद्यवच्छिन्नकर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिक्रियाकालिकत्वस्य सप्तम्यर्थत्वद्योतनाय अनुशासनान्तरम् । तथाहि । अत्र प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यम् । अन्त्यद्वये च अनौचित्यम् । तदुपपादकत्वं च निरुक्तसप्तम्यर्थस्य । तद्विशेषणीभूतार्हत्वाद्युपपादनार्थं च ' तिष्ठत्सु आसते ' इत्येताभ्यां तरणाभावो लक्ष्यते । सदसत्पदाभ्यां च वाच्यव्यङ्ग्यविषया क्रियार्हत्वानर्हत्वे व्यज्येते । अतश्च एतादृशलक्ष्यलक्षणभावस्य ' गोषु दुह्यमानासु गतः ' इत्यादिव्यावृत्तस्य अत्र विशिष्य अनुभूयमानस्य अपह्नोतुमशक्यत्वात् पृथगनुशासनम् ।

एवं ' षष्ठी चानादरे ' ( पा० २।३।३८ ) इति सूत्रात् अनादरविशिष्टलक्ष्यलक्षणभावविवक्षायां षष्ठीसप्तम्यौ विकल्पेन । ' रुदति रुदतो वा प्राव्राजीत् ' रुदन्तं पुत्रमनादृत्य इत्यर्थः ।

एवं ' स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ' ( पा० २।३।३९ ) इति सूत्रात् एभिः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । ' गोषु गवां वा स्वामी ' । निरूपकत्वं विभक्त्यर्थः । तस्य च स्वाम्यादिद्वारकः अस्तिक्रियान्वयः । समानार्थकस्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम् । ' विरूपाणामपि समानार्थानाम् ' इति वार्तिकात् वक्रदण्डौ इतिवत् पदत्रयैकशेषस्तु शब्दस्वरूपपरत्वात् न शङ्क्यः ' गवां गोषु वा प्रसूतः ' गा अनुभवितुं जात इत्यर्थः इति हरदत्तः ।

एवं ' आयुक्तकुशलाभ्यां चासेवायाम् ' (पा० २।३।४०) इति सूत्रात् ' गोषु गवां वा आयुक्तः कुशलो वा' इत्येवं षष्ठीसप्तम्यौ । आयुक्तो व्यापारितः ! विषयसप्तम्यां प्राप्तायां पक्षे षष्ठी विधीयते । आसेवा तदेकपरत्वम् । तदभावे तु ' आयुक्तो गौः शकटेन ' ईषद्युक्त इत्यर्थः ।

एवं ' यतश्च निर्धारणम् ' ( पा० २।३।४१ ) इति सूत्रात् जातिगुणक्रियासंज्ञाभिः यतः समुदायात् एकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते तद्वाचकात् षष्ठीसप्तम्यौ स्तः । ' नृणां नृषु वा ब्राह्मणः श्रेष्ठः, गवां गोषु वा कृष्णा बहुक्षीरा, गच्छतां गच्छत्सु वा धावन् शीघ्रगामी, छात्राणां छात्रेषु वा मैत्रः पटुः ' इत्यादौ । अत्र विभक्त्यर्थः उक्तविधनिर्धारणम् । तत्र च निरूपकतया प्रकृत्यर्थान्वयः । तस्य च विषयीभूतब्राह्मणादिवृत्तित्वसंसर्गेण क्रियान्वयः । इदं च पदोपात्तस्य निर्धारणप्रतियोगितावच्छेदकस्य मनुष्यत्वगोत्वादेः निर्धारणविषयीभूतब्राह्मणादौ सत्त्वे एव विकल्पाभिधानं बोध्यम् । यदा तु तस्य तत्र असत्त्वं तदा निर्धारणप्रतियोगिवाचकात् पञ्चम्येव ।



' पञ्चमी विभक्ते ' (पा० २।३।४२) इति सूत्रात् ' माथुराः काशीस्थेभ्य आढ्यतराः ' इत्यादौ पञ्चमी ।

एवं ' साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ' ( पा० २।३।४३ ) इति सूत्रात् ' मातरि साधुर्निपुणो वा ' इत्यत्र सप्तमी । अर्चाऽभावे ' निपुणो राज्ञो भृत्यः ' इति षष्ठी । प्रतिग्रहणमुपलक्षणम् । ' साधुर्निपुणो वा मातरं प्रति परि अनु वा ' । पूर्वमेव च व्याख्यातप्रायं इदं सूत्रम् ।

एवं 'प्रसितोत्सुकाभ्यां तृतीया च' (पा० २।३।४४) इति सूत्रात् आभ्यां योगे तृतीया स्यात् सप्तमी वा इत्यर्थकात् प्रसित उत्सुको वा हरिणा हरौ वा इत्यत्र विकल्पेन सप्तमी । प्रसितः आसक्तः, न तु प्रकर्षेण शुक्लः । विषयत्वं विभक्त्यर्थः । तृतीयायाः पाक्षिकत्वार्थे वचनम् ।

एवं ' नक्षत्रे च लुपि ' ( पा० २।३।४५ ) इति सूत्रात् नक्षत्रवाचिप्रकृतेः ' नक्षत्रेण युक्तः कालः ' ( पा० ४।२।३ ) इत्यनेन अण्प्रत्ययस्य ' लुबविशेषे ' ( पा० ४।२।४ ) इति लुपि कृते नक्षत्रयुक्तकालप्रातिपदिकात् अधिकरणे तृतीयासप्तम्यौ स्तः इत्यर्थकात् ' मूलेन मूले वा देवीमावाहयेत् ' इत्यादौ सप्तमी । कालिकाधिकरणत्वं विभक्त्यर्थः । अण्प्रत्ययाकरणेन शुद्धनक्षत्रपरत्वे ' पुष्ये शनिः ' इत्यादौ सप्तम्येव, न तृतीया । कालपरत्वेऽपि अधिकरणत्वाविवक्षायाम् 'अद्य पुष्यः ' इत्यादौ प्रथमाऽपि ।

एवं 'सप्तमीपञ्चम्यौ कारकमध्ये' ( पा० २।३।७ ) इति सूत्रात् सजातीययोर्विजातीययोर्वा कारकयोर्मध्ये यौ कालाध्वानौ तत्र सप्तमीपञ्चम्यौ स्तः इत्यर्थकात् ' अद्य भुक्त्वा अयं द्व्यहे द्व्यहाद्वा भोक्ता, इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् ' इत्यादौ विकल्पेन सप्तमी । अत्र यद्यपि भोजनद्वयेऽपि एक एव पुरुषः कर्तृकारकं तथापि अद्यतनकालीनभोजनक्रियानिरूपितकर्तृत्वात् द्व्यहकालीनभोजनक्रियानिरूपितकर्तृत्वस्य भेदात् कारकद्वयमध्यत्वम् । द्वितीयोदाहरणे तु अयं इति कर्ता, लक्ष्यं इति कर्म, इह इत्यधिकरणम्, इति विजातीयमध्यत्वम् । सर्वत्र अधिकरणत्वं विभक्त्यर्थः । अपादानत्वाद्यसंभवात् पक्षे पञ्चमीप्राप्त्यर्थः विधिः ।

एवं अधिकशब्देनापि योगे 'लोके लोकाद्वा अधिको हरिः ' इत्यादौ पञ्चमीसप्तम्यौ ज्ञेये, ' तदस्मिन्नधिकं० ' ( पा० ५।२।४५ ) ' यस्मादधिकं० ' ( पा० २।३।९ ) इति च सूत्रीयद्विविधनिर्देशात् । निरूपितत्वं विभक्त्यर्थः । स्वसंबन्ध्याधिक्याश्रयवृत्तित्वसंसर्गेण क्रियान्वयी ।

एवं ' यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ' ( पा० २।३।९ ) इति सूत्रात् आधिक्यार्थककर्मप्रवचनीययुक्ते सप्तमी स्यात् इत्यर्थकात् 'उप परार्धे हरेर्गुणाः' इत्यादौ सप्तमी । प्रतियोगित्वं सप्तम्यर्थः । स्वसंबन्ध्याधिक्याश्रयगुणवृत्तित्वेन क्रियान्वयी । उपपदं तात्पर्यग्राहकम् ।

एवं 'अधिरीश्वरे ' ( पा० १।४।९७ ) इति सूत्रात् ऐश्वर्ये अधिः कर्मप्रवचनीयसंज्ञः तद्युक्ते ऐश्वर्यप्रतियोगिनि तदनुयोगिनि च ' अधि रामे भूः, अधि भुवि रामः ' इत्यादौ पर्यायेण सप्तमी । अत्र क्रमेण अनुयोगित्वं प्रतियोगित्वं च सप्तम्यर्थः । स्वसंबन्ध्यैश्वर्यसंबन्धीतरवृत्तित्वं आख्यातार्थसंसर्गः । अधिः तात्पर्यग्राहकः । रामप्रतियोगिकस्वत्वाश्रयो भूः, भूवृत्तिस्वत्वप्रतियोगी रामः इति च फलितोऽर्थः ।

तत् सिद्धं सप्तम्यर्थः शक्यो लाक्षणिको वा सर्वोऽपि भावनान्वयी इति ।

तदेवं लिङ्गसंख्याव्यतिरिक्तसुबर्थमात्रस्य सिद्धो भावनान्वयः । रहस्य. पृ. १४३–१५८.

* सप्तमी ( **मणिस्था** ) । सप्तम्याः अधिकरणत्वमर्थः । ' सप्तम्यधिकरणे च' ( पा० २।३।३६ ) इति सूत्रात् । अधिकरणत्वं च आधारत्वम् । ' आधारोऽधिकरणम् ' ( पा० १।४।४५ ) इति सूत्रात् । तच्च आश्रयत्वम् । तच्च साक्षात्परंपरासाधारणम् । परंपरा कर्तृकर्माद्याश्रयत्वद्वारा । तेन ' स्थाल्यां पचति, भूमौ वसति, कटे शेते ' इत्यादिप्रयोगः । अधिकरणं च त्रिविधं औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति । तेन 'गुरौ वसति, घटे ज्ञानम्, तिलेषु तैलम्' इत्यादिः

प्रयोगः । 'चर्मणि द्वीपिनं हन्ति' इत्यत्र निमित्तत्वे लक्षणा । चर्मनिमित्तं हन्ति इत्यर्थः । निमित्तत्वं च धात्वर्थजनकेच्छादिविषयत्वम् । 'गोषु दुह्यमानासु आगतः' इति सतिसप्तमी 'यस्य च भावेन भावलक्षणम्' (पा० २।३।३७) इति सूत्रात् । क्रियान्तरोपलक्षणं यत्र अन्या क्रिया तद्वाचकपदोत्तरं सप्तमी इति तदर्थः । तेन क्रियान्तरोपलक्षणत्वं सप्तम्यर्थः । उपलक्षणत्वं च क्रियाकालान्तरव्यावर्तकत्वम् । एवं मुख्यक्रियाप्रतिबन्धकक्रियानादरे लक्षणा । यथा 'रुदति प्राव्राजीत्' इति रोदनमनादृत्य इत्यर्थः । अत्र षष्ठ्या अपि लक्षणा 'षष्ठी चानादरे' (पा० २।३।३८) इति सूत्रात् । एवं 'गोषु गवां वा स्वामी, ईश्वरः, अधिपतिः' 'वैश्वामित्राणां विश्वामित्रेषु वा दायादो देवरातः' इत्यादिषु च । 'साक्षी चैत्रस्य धने वा प्रतिभूः, गवां गोषु वा प्रसूतः' इत्यादौ षष्ठीसप्तम्योः उपपदविभक्तित्वम्, श्रूयमाणस्वामित्वादिक्रियासंबन्धेन मुख्यक्रियासंबन्धित्वात् । 'गोषु प्रसूतः' इत्यत्र कल्पितज्ञानक्रियायां अन्वयाच्च । गोज्ञानार्थे प्रसूत इत्यर्थः । एवं 'हरिपूजने आयुक्तः, आसक्तः, कुशलः' इत्यत्रापि । एवं निर्धारणमपि षष्ठीसप्तम्यर्थः । जातिगुणक्रियानामभिः अभिव्यज्यमानभेदनिरूपकत्वं निर्धारणत्वम् । अत्र भेदाधिकरणभेदनिरूपकयोः व्याप्यव्यापकरूपावच्छिन्नत्वं बोध्यम् । तेन 'नराणां नरेषु वा क्षत्रियः शूरः, गोषु कृष्णा संपन्नक्षीरा, गच्छत्सु धावन् शीघ्रः, छात्रेषु मैत्रः प्रियः' इति प्रयोगः, न तु 'विप्रेषु क्षत्रियः शूरः' इत्यादिः प्रयोगः । नरत्वावच्छिन्ननिरूपितभेदासमानाधिकरणत्वे सति क्षत्रियत्वावच्छिन्ननिष्ठमन्यनरभेदसमानाधिकरणं शूरत्वं इति बोधः ।

न चैवं 'इज्याचारदमाहिंसातपःस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इत्यत्र, 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥' इत्यत्र च निर्धारणषष्ठी न स्यात् अभेदाभावात् इति वाच्यम् । कर्मभेदस्य आत्मदर्शने निर्धारणसंभवात् । द्वितीये तु सर्वस्येति षष्ठ्या निर्धारणत्वसंभवात् । अत एव 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यत्र निर्धारणैकदेशे पञ्चम्या लक्षणा, अभेदभानाभावात् । एवं 'मातरि साधुर्निपुणो वा' इत्यत्रापि । 'हरिं हरौ वा उत्सुकः, प्रसितः' 'मूलेनावाहयेत्' इत्यत्रापि लक्षणा इति दिक् ।

अत्र च उपपदविभक्तितः कारकविभक्तेः बलीस्त्वम्, कारकविभक्त्यर्थस्य श्रुतक्रियान्वयित्वात् । उपपदविभक्त्यर्थस्य कल्पितक्रियान्वयित्वात् इति दिक् । मणि. पृ. १४०-१४४.

* सप्तमी प्राधान्यमपि बोधयति । अगारे गावो वास्यन्ताम्, अगारे कुसुमानि इत्यादिवत् प्राधान्येऽपि सप्तम्यविरोधः । सु. पृ. १०६०. * सप्तमी 'भिन्ने जुहोति' इतिवत् निमित्तार्था भविष्यति । वा. २।४।१७. * सप्तमी विभक्तिः आधारे भवति । आधारश्च क्रियायाः तत्कारकाणां च विशिष्टानां धारणे वर्तते । भा. ११।२।१६।६८. * सप्तमी विभक्तिः क्वचित् निमित्तत्वबोधिका । 'भिन्ने जुहोति' अत्र कपालादिभेदो होमे निमित्तम् । वि. ४।४।५. * सप्तमी विभक्तिः प्राधान्ये दृष्टा । भा. ११।२।१६।६७, * ननु प्रधानभूतेऽपि सप्तमी भवति–यथा आगारे गावो वास्यन्ताम्, प्रावारे कुसुमानि इति । भवति, यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम् । यत्र तु शब्दगम्य एवार्थस्तत्र गुणभावो युक्तः । ११।२।१६।६६-६८. * न हि सप्तमी शेषशेषिसंबन्धं वदति । वा. ३।३।७।१४ पृ. ८३९.

* सप्तम्यन्तेन निमित्तमुच्यते, यथा 'भिन्ने जुहोति' इति । टुप्. ११।१।१।१ पृ. २०९८.

* सप्तम्यन्तस्थले शेषत्वमेव श्रौतं न तु शेषित्वम्, नहि सप्तम्याः प्राधान्यमर्थः अधिकरणत्वमात्रस्य तदर्थत्वात् । कौ. ३।३।७।१४.

* 'सप्तमीपञ्चम्यौ कारकमध्ये' (पा० २।३।७) कृतिशक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ । 'अद्य भुक्त्वा द्व्यहे द्व्यहाद्वा भोक्ता ।' 'पञ्चम्यपाङ्परिभिः' (पा० २।३।१०) एतैः कर्मप्रवचनीयैः योगे पञ्चमी । अप हरेः संसारः । मणि. पृ. १३१.



* षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानः अस्वत्वभूतश्च प्रत्याय्यते न तादृक् मत्वर्थीयेन । वा. ३।१।६।१२ पृ. ६७६.

* सप्तरात्रे चयनं कर्तुं शक्यते । भा. १०।५।२३।७८, १०।८।११।२३. * सप्तरात्रे नाम अहीने चयनाग्निः कर्तुं शक्यते । वि. १०।८।११.

* सप्रयोजनेन निष्प्रयोजनं बाध्यते । प्राप्तबाधोऽत्र । वा. ३।३।७।१४ पृ. ८६०, बाल. पृ. १३२.

* सर्फ नाम साम 'इन्द्रमच्छ सुता०' इति उष्णिक्त्र्यात्मके सूक्ते गेयं तृतीये सवने आर्भवपवमाने । परंतु सर्फस्य गानं तृचे न कर्तव्यं किंतु 'उष्णिहि' इत्येकवचनेन विशेषविधानात् एकस्यामेव ऋचि । वि. ९।२।६ वर्णकं ३. * सर्फ साम उष्णिहि आर्भवे । भा. ९।२।६।२५ वर्णकं ३, (तदपि) एकस्यामृचि । ९।२।६।२८ वर्णकं ३.

* सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते तथापि परोपकारश्रुत्यैव समस्तानामुपादानात् प्रामाण्यम् । वा. १।३।१।२ पृ. १६६.

* सभागविभागशब्दौ बौद्धानां निकायप्रसिद्ध्या सजातीयविजातीययोर्वर्तेते । ऋजु. पृ. १५१.

* सभ्यः नाम अग्निः, सभायां गृहमध्ये भवः । के.

* सभ्यावसथ्यौ आधाने लौकिकाग्निरूपौ, न तु आहवनीयात् प्रणीतौ । संकर्ष. ३।२।३ मीको. पृ. ९२७ 'आधाने सभ्यावसथ्यौ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**समं स्यादश्रुतत्वादिति न्यायः ।** अयं न्यायः पारस्करगृह्यपरिशिष्टकण्डिकायां धृतः । तथाहि– ततश्च 'समं स्यादश्रुतत्वात्' इति न्यायेन एकैकेन मन्त्रेण एकैकाहुतिरिति । साहस्री. ५७३.

**समं स्यादश्रुतत्वात् । १०।३।१३।५३ ॥**

ज्योतिष्टोमे दक्षिणा ऋत्विग्भ्यो यजमानेन विभज्य देया इत्युक्तम् । तच्च दानं सर्वेभ्यः समं देयं स्यात्, विशेषस्य अश्रुतत्वात् । यत्र विशेषो न श्रूयते तत्र समो विभागो भवितुमर्हति । तस्मात् समं देयम् ।

**अपिवा कर्मवैषम्यात् । ५४ ॥**

ज्योतिष्टोमे षोडशभ्यः ऋत्विग्भ्यः सदस्याय चेति या दक्षिणा देया सा समं विभज्य देया इति प्रथमं पूर्वपक्षं वाशब्देन निरस्यन् द्वितीयं पक्षमाह । न समं विभागः किंतु कर्मवैषम्यात् विषमो विभागः । यदि कर्मसाम्यमभविष्यत् विभागोऽपि समोऽभविष्यत् । कर्मणां तु न्यूनाधिकत्वेन वैषम्यात् विभागोऽपि विषमः स्यात् इति द्वितीयः पूर्वपक्षः ।

**अतुल्याः स्युः परिक्रये, विषमाऽऽख्या विधिश्रुतौ, परिक्रयात्र कर्मण्युपपद्यते, दर्शनाद्विशेषस्य तथाऽभ्युदये । ५५ ॥**

ज्योतिष्टोमे ऋत्विजः दक्षिणादानेन परिक्रये अतुल्याः स्युः । तुशब्दः पूर्वसूत्रद्वयोक्तपक्षद्वयनिरासार्थः । सर्वेषां दक्षिणा समाना न भवति इत्यर्थः । यतः परिक्रयस्य विधिश्रुतौ विषमाख्याः भवन्ति ऋत्विजः । अर्धिनः तृतीयिनः पादिनः इति विषमा वैषम्यबोधिका आख्या येषां ते विषमाख्याः भवन्ति । तस्मात् अतुल्याः । षोडशानां ऋत्विजां मध्ये चतुर्णां चतुर्णामेकैको गणः । तत्र प्रथमगणस्थेभ्यो द्वादशद्वादश गावो दक्षिणा । द्वितीयगणस्थेभ्यः अर्धमर्धं षट् षट् गावो दक्षिणा, तस्मात्ते अर्धिनः उच्यन्ते । तृतीयगणस्थेभ्यः तृतीयः अंशः चतस्रश्चतस्रो गावो दक्षिणा इति ते तृतीयिनः इत्युच्यन्ते । चतुर्थगणस्थेभ्यस्तु पादः पादः तिस्रस्तिस्रो गावो दक्षिणा इति ते पादिनः इत्युच्यन्ते । सैषा तेषां विषमा आख्या । एतावता सूत्रभागेन प्रथमपूर्वपक्षस्य दक्षिणासाम्यरूपस्य निरासः कृतः । कर्मवैषम्यनिमित्तकं दक्षिणावैषम्यं इति द्वितीयपूर्वपक्षस्य निरासार्थं 'परिक्रयात् न कर्मणि उपपद्यते' इति सूत्रांशः । एतादृशात् विधिविहितात् परिक्रयात् हेतोः कर्मणि कर्मनिमित्तकं दक्षिणावैषम्यं नोपपद्यते । तस्मात् विध्यनुसारादेव दक्षिणावैषम्यम् । अभ्युदये अभ्युदयफलके सत्रात्मके द्वादशाहे तथा विशेषस्य दक्षिणानिमित्तकाख्याविशेषस्य दर्शनात् ज्योतिष्टोमेऽपि वैषम्यं स्वीकार्यम् । के.

* ' समं स्यादश्रुतत्वात् ' इतिन्यायेन एकस्मिन् पात्रे विद्यमानसोमस्य सर्वैः समांशतया भक्षणीयत्वात् कस्यचिद्भागाधिक्यं न युक्तम्, तत्सहनार्थं अनुज्ञापनम्। **सोम.** ३।५।१६. * अथवा **' समं स्यादश्रुतित्वात् '** इति न्यायेन दशदश ( पातार: ) प्राप्ता मुख्ययैव वृत्त्या अनुवदिष्यन्ते। **वा.** ३।५।२०। ५३ पृ.१०२२। कर्तृसंस्कारार्थे हि सति दक्षिणावत् विभागप्राप्त्या ' समं स्यात्० ' इति दशदशैकं इति प्राप्नुयात्। पृ. १०२३. * एकादशानां ऋचां ( सामिधेनीनां ) प्रथमोत्तमयोः यावत्संख्यासंपत्त्यभ्यासे ' समं स्यात्० ' इति न्यायेन प्रत्येकं त्रिरभ्यासः एव संपद्यते। **भाट्ट.** १०।५।८. * एकादशसु अनूयाजेषु ' समं स्यात्० ' इति न्यायेन सैकीकरणेन विभज्य प्रकृतिविकारभावः। बर्हिर्नराशंसयोः चत्वारश्चत्वारः विकाराः, स्विष्टकृतः तु त्रयः इति। **संकर्ष.** २।३।४. * 'द्वे आहवनीये' इति वाक्येन अभ्यासद्वयस्यापि आहवनीयाधिकरणकत्वे विहिते अवशिष्टाभ्यासेषु तत्तद्वाक्याभ्यां गार्हपत्यान्वाहार्यपचनरूपाधिकरणमात्रविधानात् ' समं स्यादश्रुतत्वात् ' इति न्यायेन च एकैकस्मिन् गार्हपत्यान्वाहार्यपचनरूपे अधिकरणे अभ्यासचतुष्टयप्राप्तेः दशधा अभ्याससिद्धिः। **कौ.** २।२।५।१६ पृ. २०१. * द्वयोर्देशेनापि च त्यज्यमानस्य ' समं स्यादश्रुतत्वात् ' इत्यनेन न्यायेन अर्धं पूष्णो भागः इति गम्यते ( सोमापौष्णादौ )। **वा.** ३।३।१५।४१ पृ. ८८५. * न च ' समं स्यात्० ' इति न्यायात् ( एकादशानां सामिधेनीनां पञ्चदशत्वार्थे ) समविभाग एव प्राप्नोति न, द्विश्चतुरभ्यास इति वाच्यम्। यत्र हि एकेन वाक्येन एकार्थः अनेकस्य विधीयते तत्रैव समविभागः। एकस्मिन् विधेये, विभागं विना तस्यानेकसंबन्धाभावेन विभागपर्यन्तत्वात् तत्र विधिव्यापारस्य, तत्र चैकरूप एवोभयत्र विधिव्यापारो वाच्य इति समविभागविधिः। यत्र तु वाक्यद्वयेनानेकमनेकस्य विधीयते तत्र विधिद्वयव्यापारयोरैकरूप्यप्रमाणाभावात् न समविभागस्य प्रसक्तिः। **सोम.** १०।५।८. * पञ्चशारदीये ' पञ्चोत्तमेऽहनि ' इत्यत्र उत्तमेऽहनि पञ्चत्वविधौ अवशिष्टानां द्वादशानां ' समं स्यादश्रुतत्वात् ' इति न्यायेन अन्वहं त्रयाणां त्रयाणां प्राप्तेः। ' त्रींस्त्रीनन्वहं ' इत्यनुवाद इत्यपास्तम्। **भाट्ट.** ११।२।१२. * पशौ एकादश प्रयाजाः तत्र प्राकृतानां पञ्चानां मध्ये चतुर्थोत्तमयोरेव, षडपि अप्राकृतदेवत्याः ' समं स्यादश्रुतत्वात् ' इति न्यायेन क्रमशोऽङ्गं इति तयोरेवाभ्यासः। **सोम.** ५।३।२०. * प्रयाजानूयाजयोर्मिलित्वा पञ्चसंख्याकत्वात् ' समं स्यादश्रुतत्वात् ' इति न्यायेन प्रयाजद्वयार्थं किंचिदधिकस्रुवत्रयस्यैवानयनं प्रसज्येत। **कौ.** १।२।३।२९. * ' यदाहवनीये जुहोति ' इत्यनारभ्यवादेन सर्वहोमानां आहवनीयाधिकरणत्वप्राप्तेः ' आहवनीये द्वे ' इत्यस्य आहुत्यन्तरपरिसंख्यार्थत्वात् अष्टानामाहुतीनामधिकरणापेक्षायां गार्हपत्यान्वाहार्यपचनाधिकरणत्वविधौ 'समं स्यात्०' इत्यनेन न्यायेन एकत्र चतुष्टयस्य प्राप्तस्यानुवादात् ' गार्हपत्ये जुहोति ' ' अन्वाहार्यपचने जुहोति ' इति वाक्यान्तराभ्यां वा गार्हपत्यान्वाहार्यपचनप्राप्तेश्चतुरावृत्तिलक्षणगुणमात्रविधानार्थत्वात् तत्संयोगस्य आहवनीयसंयोगस्य च द्विरावृत्तिलक्षणगुणमात्रविधानार्थत्वात् न वाक्यभेदापत्तिः। सु. पृ. ७८१. * यूपैकादशिन्यां यूपानामन्तरालभागदशके समपरिमाणतायाः 'समं स्यात्०' इति न्यायेन लाभः। **संकर्ष.** १।४।२३. * विराट्संपत्तिवाक्यविहितेऽपि दशधाऽभ्यासे गार्हपत्यादिवाक्ययोः होमानुवादेन अधिकरणमात्रविधाने 'समं स्यात्०' इति न्यायेन एकैकस्मिन् पञ्चहोमाभ्यासापत्तेः चतुःपदानुवादायोगः। **कौ.** २।२।५।१६ पृ. २०१. * संधिकालस्याल्पत्वेन साङ्गप्रयोगभावनापर्याप्तत्वाभावेन तत्पर्याप्तये ' समं स्यात्० ' इति न्यायेन तत्पूर्वापरभागयोः समयोराक्षेपः इति पूर्वपक्षः। **संकर्ष.** ३।१।२. * समानपात्राणां तु ' समं स्यादश्रुतत्वात् ' इत्यनेन न्यायेन समविभागे सति वैषम्यप्रसक्तौ अनुज्ञाप्य ( चमसभक्षणं ) कार्यम्। **वा.** ३।५।१७।४३ पृ. १०१३. * **' समे** दर्शपूर्णमासाभ्यां यजेत ' इति देशस्य नियमविधिः, नानुवादः। **भा.** ४।२।९।२३–२४. * **' समे** दर्शपूर्णमासाभ्यां यजेत ' इयं अधिकरणे सप्तमी, कारकविभक्तिरूपा विनियोक्त्री श्रुतिः। **बाल.**



पृ. ४५, * ' समे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' अयं प्रयोगविधिः पुरुषार्थः महाप्रयोगविधिः। पृ. १३. * ' समे यजेत ' इत्यनेन दर्शपूर्णमासकर्मणा देशसंबन्धो विधीयते न कर्मान्तरम्। **भा.** २।३।१३।२६.

**समेषु कर्मयुक्तं स्यात्। २।२।१२।२७॥**

' त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत ' ' एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ' इति श्रूयते। तत्र किं तस्यैव अग्निष्टुतः वारवन्तीयाद्गुणात् पशवः फलम्, 'एतेन यजेत' इत्यनुवादः, अथवा ' एतेन यजेत ' इति कर्मान्तरं इति विचारे **सिद्धान्तमाह।** समेषु एवंजातीयकेषु भिन्नवाक्येषु फलं कर्मयुक्तं भवेत्। कर्मान्तरेण फलं भवेत्। न गुणात् फलम्। ' एतेन यजेत ' इति नानुवादः किंतु कर्मान्तरम्। **के.**

**समेषु वाक्यभेदः स्यात्। २।१।१५।४७॥**

' इषे त्वा ' ' ऊर्जे त्वा ' इत्येवंजातीयकेषु परस्परनिराकाङ्क्षत्वेन समेषु तुल्येषु पदसमूहेषु वाक्यभेदः यजुर्भेदः स्यात्। ' इषे त्वा ' इति एकं यजुः, ' उर्जे त्वा ' इत्यपरं यजुः इति। **के.**

* न वा एकापूर्वकल्पनातः एकवाक्यता आपद्यते **' समेषु वाक्यभेदः स्यात् '** ( २।१।१५।४७ ) इत्यत्र प्रत्याख्यातत्वात्। **वा.** २।२।१।१ पृ. ४६५. * मनुष्यप्रधाने ( निवीतादिवाक्ये ) पुनः षष्ठी भविष्यति, संबन्धश्चैवं अवकल्पिष्यते, फलं चैवं न कल्पनीयम्, तदुक्तम् ' समेषु वाक्यभेदः स्यात् ' इति। **भा.** ३।४।१।७ पृ. ८९३. * **' समा विप्रतिपत्तिः स्यात्'** ( १।३।४।८ )। यववराहाधिकरणपूर्वपक्षसूत्रम्। यववराहशब्दार्थावधारणे आर्याणां म्लेच्छानां च विप्रतिपत्तिः समा इत्यर्थः। **कल्पतरुः.** ३।४।११। ४२ ब्रसू. * **समास्वेव** तिसृषु ऋक्षु गानम्। **वि.** ९।२।४, * ' समासु गानम् ' ' समासु गायेत् '। श्रुतिश्च बहुत्वलिङ्गात् ' समासु गानम् ' इति न्यायाच्च बलीयसी। ९।२।५ वर्णकं २.

* **समसंख्याकानां** धर्मविप्रतिषेधे प्रथमस्य धर्मानुष्ठानम्। **बिन्दु.** १२।२।८।२३–२४.

* **समसंख्याकविरोधे** मुख्यधर्मानुष्ठानम्। **भाट्ट.** १२।२।८.

* **समक्षप्रवाहन्यायः।** समक्षप्रवाहन्यायेन मुख्याल्पप्रबोधार्थं अमुख्यार्थविवेकोऽविरुद्धः। **श्रीकर.** १।३। १३, * श्रुतिशतेषु उपास्तिशब्दानां बहूनां अधिकारिभेदेन **समक्षप्रवाहन्यायेन** श्रूयमाणत्वात् परस्परभिन्नत्वं सिद्धम्। ३।३।५६.

* **समन्वयसूत्रम्।** ( इदमेव समन्वयाधिकरणम्। १।१।४।४ )। ' आम्नायस्य क्रियार्थत्वात् ' इत्यादिसूत्रेण वेदस्य क्रियार्थत्वेनैव प्रामाण्यं वक्तव्यं इत्यविशेषेण अक्रियार्थानां अप्रामाण्यमाशङ्क्य ' विधिना त्वेकवाक्यत्वात् ' इति सूत्रेण केवलसिद्धार्थविषयत्वेन भासमानानां वाक्यानां विध्येकवाक्यतया क्रियार्थतामुपपाद्य जैमिनिना यत् प्रामाण्यसमर्थनं कृतं तदपि बादरायणेन समन्वयसूत्रे ब्रह्मविषयाणां वाक्यानां अनपेक्ष्य विधिशेषतां अक्रियार्थानामेव सतां प्रामाण्यसमर्थनेन व्याख्यातम्। **परिमल.** १।१।१।१ पृ. ५० ब्रसू.

* **समभिव्याहारश्च** सति संबन्धे भवति। यथा पाचको लावकः इति। समभिव्याहारात् संबन्धमनुमास्यामहे। **भा.** ३।२।९।२५.

* **समभिव्याहारमात्रकल्प्यं** साधनत्वं औदुम्बराधिकरणे निरस्तम्। **सु.** पृ. ४९०.

* **समभिव्याहारशब्दः** संनिध्युच्चारणवाची। **सु.** पृ. ११३७.

* **समयः।** यदा अयमर्थः प्रतिपादयितुमभिप्रेतः तदा अयं शब्दः प्रयोज्यः इति योऽयं प्रयोगनियमः स समयः। समयेन निर्वृत्तः सामयिकः। **ऋजु.** पृ. १०९.

* **समयाध्युषितः**– समयः अस्तमयः, तमध्युषितः प्रातः सूर्यः। समयाध्युषितः सूर्यः। **वि.** ५।१।१८.

* **समर्थः** अधिकारी। सामर्थ्यं च काम्ये कर्मणि अङ्गप्रधानोभयविषयम्। नित्यकर्मसु तु अङ्गेषु यथा-

शक्तिन्यायः । तथा च नित्यकर्मसु प्रधानमात्रसमर्थोऽधिकारी । मीन्या. * समर्थः । अर्थी समर्थश्चाधिक्रियते इत्युक्तम् ( ६।१।२।५ ) । भा. १०।२।२२।५६. * 'समर्थः पदविधिः' ( पा० २।१।१ ) । पदोद्देशेन विधीयमानः समासादिः समर्थः विग्रहवाक्यार्थाभिधाने शक्तिं प्राप्तः इति सूत्रार्थः इति वैयाकरणाः । मणि. पृ. १४६ । पदोद्देशेन विधीयमानः समासादिः समर्थः स्वार्थवाचकपदनिष्ठः इति सूत्रार्थः इति गौतमीयाः । पृ. १४८. * **समर्थस्यैव** सर्वाङ्गोपसंहारे काम्ये अधिकारः । भा. ६।३।२।८-१०, * **समर्थानां** हि तद्धित उत्पद्यते । ६।१।३।९, * समर्थानां हि पदानां समासो भवति । सामर्थ्यं च भवति विशेषणविशेष्यभावे । असाधारणं च भवति विशेषणम् । २।३।१।१ पृ. ५७२.

* **समर्थहेतुसद्भावे** कार्यक्षेपाऽनुपपत्तिः । कणिका. पृ. ४५६.

* **समर्हणं** संस्तवः । भा. ५।३।३।४.

* **समवत्तशब्दः** अन्यसहितात् अवदीयमानवचनः । वा. ३।५।१।३.

* **समवत्तधानी** पशौ पात्रविशेषः इडापात्रसदृशः । वि. १०।७।४.

* **समवद्यति** । अनेकेभ्यो हविर्भ्यः अवदाने वक्तव्ये समवद्यति इतिशब्दः प्रयुज्यते । एकस्मादेवावदाने तु अवद्यति-शब्दः । के. ( वृ. ३।५।१।३ )

* **समवायः** एकार्थोपनिपातः । वा. ३।३।७।१४ पृ. ८२२. * समवायश्चैकः । येन संबन्धेन आधेयं आधारस्य स्वानुरक्तबुद्धिजनकं स संबन्धः समवायः । न तु अयुतसिद्धसंबन्धः सः । युतसिद्धेर्वक्तुमशक्यत्वात् । पृथक्चलनवत्त्वस्य वृक्षशाखयोः सत्त्वेन तयोः समवायसंबन्धो न स्यात् । मणि. पृ. २२-२३. * 'आश्रयी येन भिन्नोऽपि संबन्धेनाश्रये धियम् । स्वानुरूपां सदा कुर्यात् समवायः स कीर्त्यते ॥' सु. पृ. ३७५. * इह प्रत्ययात् समवायः इति पदार्थविदामुद्गारः । ऋजु. पृ. १९७. * 'समानविषयत्वं हि समवायोऽभिधीयते' । न ह्येकत्र संभवमात्रं समवायः । किं तर्हि ? विषयैकत्वम् । ... प्रमाणयोः परस्परापहार्यसमानविषयत्वलक्षणः समवायः । तथा यत्र शेषभेदेऽपि एकस्मिन्नेव शेषिणि तुल्योपकारनिबन्धनः एकेन प्रमाणेन अन्यः शेषः साधनत्वेन प्रतीयते अन्येनापरः । न च एकसाधितोपकारः शेषी शेषान्तरमपेक्षते, तत्रापि एकविषयापहारित्वात् समवायः । स च विरोधे एव सति भवति इति समवायग्रहणेनैव सिद्धो विरोधः । ... तस्मात् विरोधविषयमेव समवायग्रहणम् । वा. ३।३।७।१४ पृ. ८२२-८२३. * न वयं ( प्राभाकराः ) वैशेषिका इव नित्यं **समवायं** अभ्युपेमः । ऋजु. पृ. १८८.

**समवाये चोदना संयोगस्यार्थवत्त्वात् । ४।३।१२।२९ ॥**

'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र अग्निचयनसौत्रामण्योः वाजपेयबृहस्पतिसवयोर्वा किं अङ्गाङ्गिसंबन्ध उच्यते अथवा कालार्थः संयोग इति विचारे सिद्धान्तयति । इयं चोदना समवाये अङ्गाङ्गिसंबन्धे स्यात् । अग्निचयनसौत्रामण्यादेः अङ्गाङ्गिसंबन्धविषयिणी इयं चोदना स्यात् । कुतः ? संयोगस्य अर्थवत्त्वात् 'चित्वा यजेत' इति संबन्धस्य सफलत्वात् । अङ्गाङ्गिसंबन्धाभावे तयोरुक्तः संबन्धो निष्फलः स्यात् । तस्मात् अग्निचयनस्याङ्गं सौत्रामणी । वाजपेयस्याङ्गं बृहस्पतिसवः ।

**कालश्रुतौ काल इति चेत् । ३० ॥**

'अग्निं चित्वा सौत्रामण्या यजेत' इत्यनेन अग्निचयनस्याङ्गं सौत्रामणी, 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यनेन च वाजपेयस्याङ्गं बृहस्पतिसव इति ज्ञायते इति सिद्धान्तिना पूर्वसूत्रेणोक्ते पूर्वपक्षमाह । चित्वा इष्ट्वा इति क्त्वाशब्दः कालश्रुतिः । क्त्वाप्रत्ययस्य पूर्वकालवाचित्वात् । अस्यां कालश्रुतौ सत्यां बृहस्पतिसवस्य कालः कालमात्रमुक्तं नाङ्गाङ्गिभावः । तस्मादयं कालार्थः संयोगः । इति चेत् ।

**नासमवायात् प्रयोजनेन स्यात् । ३१ ॥**

सिद्धान्ती आह । न कालार्थः संयोगः स्यात् । प्रयोजनेन फलेन असमवायात् संबन्धाभावात् । केवलं



कालार्थे संयोगे सति सौत्रामण्याः बृहस्पतिसवस्य च स्वतन्त्रं फलं वाच्यम्, तच्चेह न श्रूयते इति अङ्गत्वमेव स्वीकार्यम् । इति वृत्तिः ।

**अथवा** प्रयुज्यते इति प्रयोजनं कर्मणि ल्युट् । बृहस्पतिसवयागात् परतः प्रयुज्यमानेन प्रत्ययेन वाजपेये बृहस्पतिसवपूर्वकालस्य विधेयतया असंबन्धात् । न हि केवलकालार्थत्वे वाजपेयबृहस्पतिसवयोः नियतः पूर्वापरीभावो ज्ञातुं शक्यः । तस्मान्न कालार्थः संयोगः । इति कुतूहलम् ।

**किंवा** प्रयोजनेन शब्दस्यार्थेन चयनेन सौत्रामण्याः, वाजपेयेन च बृहस्पतिसवस्य असमवायात् संबन्धाज्ञानात् प्रकरणबाधः स्यात् । तस्मान्न कालार्थः संयोगः किंतु अङ्गाङ्गिभाव एव । के.

* **समवायनित्यत्वस्य** परिभाषामात्रत्वम् । कु. १।१।६।८.

* **समवायलक्षणः** संबन्धः अपौरुषेयः व्यक्तेः जात्या सह, क्रियायाः कारकैः सह, अवयविनां अवयवैः सह, गुणानां गुणिभिः सहेति । अयुतसिद्धयश्चैते व्यक्त्यादयः । जातिक्रियागुणावयविनः व्यक्त्यादिभ्यः अन्यत्र अनाश्रिताः । व्यक्तिगुणिकारकावयवास्तु यद्यपि अन्यत्राश्रिताः तथापि अपृथग्गतिमन्तः इति अयुतसिद्धाः । ऋजु. पृ. १८८.

* **समवायसंबन्धेन** भावकार्योत्पत्तौ तादात्म्यसंबन्धेन द्रव्यस्य जनकता इति समवायिकारणविषयकः कार्यकारणभावः । मणि. पृ. १७.

* **समवायिकारणं** तदेव भवति, यत्रैव कारणं तत्रैव कार्योपलब्धिः इति युक्तम् । बृहती. पृ. २१६. * समवायिकारणं यत्र तत्रैव कार्योपलब्धिः यथा, यत्र तन्तवः तत्रैव पटोपलब्धिः । ऋजु. पृ. २१६, * समवायिकारणम् । समवायिकारणप्रत्यासन्नं हि असमवायिकारणं भवति । यथा तन्तुसंयोगः तन्तुसमवेतस्य पटस्योत्पत्तौ निमित्तम् । पृ. १६१. * **समवायिकारणस्य** आधारत्वप्रसिद्धिः । सु. पृ. ६६०.

* **समवेतगुणग्राही** हि भावप्रत्ययः । वा. ३।१।६।१२ पृ. ६७७.

* **समस्तं** प्रैषानुवचनं मैत्रावरुणम्, व्यस्ताः प्रैषा आध्वर्यवाः, व्यस्तानि अनुवचनानि हौत्राणि । वि. ३।७।२१.

* **समस्तपञ्चशरावन्यायः** । मीको. पृ. ९९२ 'आर्तिन्यायः' इत्यत्र द्रष्टव्यः ।

* **समस्तवचनं** कपालविषये 'आग्नेयमष्टाकपालम्' इति । भा. १०।५।१।१, * समस्तवचनं सामिधेनीविषये 'पञ्चदश सामिधेनीरन्वाह' इति । १०।५।१।१.

* **समस्यमानपदलक्ष्यार्थगतस्वार्थबोधकत्वं व्युत्पत्तिः** । मणि. पृ. १४९.

* **समस्यवादः** 'षोडशाज्यानि भवन्ति' इति दर्शे । संकर्ष. २।२।१२, 'सप्तदशाज्यानि पशुकामस्य गृह्णीयात्, पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः । २।२।१३.

* **समाख्या** अपि पृथक् प्रमाणम्, अबोधकत्व-बाधितत्वयोरप्रामाण्यकारणयोरभावात् । वि. ३।३।६. * समाख्या अपि विनियोगकारणम् । भा. ३।३।६।१३. * समाख्या उत्पत्तिगता भेदिका भवति । वा. ३।७।१३।२९. * समाख्या काठक-कौथुमादिरूपा अध्ययनसंप्रदायप्रवर्तकत्वेनोपपद्यते । तेन कठादेः काठकादिवेदकर्तृत्वं नास्ति । वि. १।१।८. * समाख्या कामं विप्रकृष्टत्वात् दुर्बला स्यात्, साऽपि तु अनवकाशत्वात् अवश्यमङ्गीकर्तव्या । तथा सति प्राप्तिमात्रेऽसौ व्याप्रियते नान्यन्निवर्तते । वा. ३।५।१२।३४, * समाख्या काम्ययाज्यानुवाक्या इति । यद्यपि समाख्या यज्ञसंबन्धमात्रं कुर्यात् तथापि बलीयसा क्रमेण बाध्येतैव । ३।२।७।२०. * समाख्या क्रमात् ( स्थानात् ) दुर्बला । तथा क्रमसमाख्ययोः क्रमे वेदकल्पितमेव अङ्गाङ्गिनोः देशसामान्यनिमित्तं परस्परपर्युपस्थापनम् । सर्वत्र हि केनचित् अभिन्नदेशेन संबन्धोऽवकल्पते । न च समाख्यानवतः किंचित् देशसामान्यं वेदक्लृप्तमुपलभामहे, येन संबन्धाभिमुख्यसंभवः । ननु च समाख्या संबन्धमेवाभिदधाना प्रवर्तते इति श्रुतितुल्या प्राप्नोति । नैतदेवम् । 'अन्य एव हि संबन्धः कल्प्यते यः समाख्यया । अन्यच्च शेषशेषित्वं यच्छ्रुत्या प्रतिपाद्यते ॥' अर्थानां प्रथमं केनचित् प्रकारेण अनव-

गतसंबन्धानां समाख्या प्रवर्तते । सा च शेषशेषित्वं तावत् नैव प्रतिपादयति । केनचित् संबन्धेनोपपद्यमानत्वात् संबन्धमात्रमपि नैवाभिधत्ते । नहि यौगिकैः संबन्धोऽभिधीयते इत्युक्तम् । समाख्याऽन्यथाऽनुपपत्त्या अनुमीयते । संबन्धमात्रस्य चैतद्रूपम्, किंचिदभिन्नमेषामस्ति इत्यवगमः । ततश्चापन्नं क्रमात् जघन्यत्वम् । नहि किंचित्तत्र सामान्यमनुमातव्यम्, देशसामान्यस्य प्रत्यक्षत्वात् । इह तु तत्पदस्याप्रत्यक्षत्वात् आनुमानिकत्वं इति विप्रकर्षः । समाख्या हि यावत् किंचित् सामान्यमस्तीति कल्पयति, तावत् क्रमेण नूनमनयोः काचिदपेक्षाऽस्ति येनेत्थं समानदेशौ पठितौ इति प्रकरणं कल्प्यते । यावच्च किंचित् सामान्यं अपेक्षां कल्पयति, तावदितरत्र एकवाक्यता क्लृप्ता । तथा यावदिह एकवाक्यता भवति, तावदितरत्र उपकारसामर्थ्यसिद्धिः । यावच्चेह उपकारसामर्थ्यकल्पना तावदितरेण श्रुतिरुत्पादिता । ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते तावदितरत्र विनियोगे सिद्धे निराकाङ्क्षीभूते प्रकरणपाठे, सर्वमेतत् प्रचितमपि अपरिपक्वविच्छेदात् आमसस्यमिव लूनं निर्बीजं भवति । तस्मात् अर्थविप्रकर्षात्तु परंपरं बाध्यते इति सिद्धम् । **वा.** ३।३।७।१४ पृ. ८३४. * समाख्या त्रिकालविषया । **टुप्.** १०।२।२७।६३. * समाख्या द्विविधा– लौकिकी वैदिकी चेति । पुनरपि समाख्या द्विविधा– सामान्यसमाख्या, विशेषसमाख्या च । **बाल.** पृ. १२. * समाख्या द्विविधा वैदिकी लौकिकी चेति । होतुश्चमसभक्षणाङ्गत्वम् ‘ होतृचमसः ’ इति वैदिक्या समाख्यया । अध्वर्योः तत्तत्पदार्थाङ्गत्वं च लौकिक्या ‘ आध्वर्यवम् ’ इति समाख्यया । **मीन्या.** * समाख्या धर्माङ्गताबोधकं प्रमाणम् । **मणि.** पृ. १३. * समाख्या निरपेक्षा प्रबला यथा – ‘ अध्वर्युः ’ इति । सापेक्षा च दुर्बला यथा– ‘ चमसाध्वर्युः ’ इति । प्रयोगवचनाधीना तु समाख्या अत्यन्तजघन्या, तेन श्येनस्य सामवेदोत्पन्नत्वेऽपि ज्योतिष्टोमविकारत्वात् न केवलमुद्गातृभिरेव तत्रत्यः कर्मकलापः कर्तव्यः । वाजपेयस्य यजुर्वेदोत्पन्नत्वेऽपि च आज्यपृष्ठादिस्तोत्रयुक्तत्वात् नाध्वर्युभिरेव कर्तव्यः किंतु सर्वैः । **वि.** ३।७।२२–२३. * समाख्या । प्रयोगवचनाश्रया च प्रधानसमाख्या, सा सत्यपि प्रत्यक्षत्वे दुर्बला । यावच्च अतिदेशेन नाङ्गानि प्राप्यन्ते तावत् कस्य कर्तारं नियच्छति । **वा.** ३।७।२३।५१. * समाख्या भक्षकारणं (चमसिसमाख्या) । वषट्कारश्च भक्षणे निमित्तम् ‘ वषट्कर्तुः प्रथमभक्षः ’ इति वचनात् । अत्र प्राथम्यविशिष्टं भक्षणं विदधाति । **भा.** ३।५।१०।३१. * समाख्या भक्षविशेषानुसरणमेव करोति । ‘ उद्गातृचमसः ’ इति समाख्या । **वा.** ३।५।८।२३.

* **समाख्या** निरूप्यते । समाख्या यौगिकः शब्दः इति **प्राञ्चः** । परस्परार्थान्वयतात्पर्यकपदघटितयौगिकशब्दत्वं समाख्यात्वं इति तु निष्कर्षः । स्वघटकपदार्थनिरूपितस्वघटकपदार्थनिष्ठाङ्गत्वाबोधके द्वंद्वे अतिव्याप्तिवारणाय घटितान्तम् । ‘ धेनुर्दक्षिणा ’ इत्यादिवाक्ये अतिव्याप्तिवारणाय यौगिकशब्देति । अथ यौगिकत्वं न अनेकपदघटितत्वम्, ‘ धेनुर्दक्षिणा ’ ‘ शुक्लो घटः ’ इत्यादिव्यस्तवाक्यसाधारणत्वात् । अत एव न विग्रहवत्त्वम्, स्वसमानार्थकवाक्यान्तरकत्वरूपस्य तस्य ‘ गौर्भूतिः ’ ‘ श्वेतः कलशः ’ इत्यादिवाक्यान्तरमादाय उक्तव्यस्तवाक्येऽपि सत्त्वात् । न च स्वघटकपदघटितविग्रहकत्वस्य तत्त्वात् नोक्तदोषः, ‘गौर्दक्षिणा’ ‘ श्वेतो घटः ’ इत्यादिवाक्यं आदाय उक्तदोषात् । स्वघटकयावत्पदघटितविग्रहकत्वं ‘ आध्वर्यवम् ’ इत्याद्यस्वपदविग्रहकसमाख्यासु अव्याप्तम् । इति चेत् । न, आनुशासनिकानुपूर्वीकपदघटितत्वस्य प्रकृते यौगिकत्वरूपत्वात् । कृदन्ततद्धिताद्यानुपूर्वी आनुशासनिकी इति न दोषः । अत्र ‘ यजेत ’ इत्यादिपदश्रुतौ अतिव्याप्तिवारणाय सुबन्तत्वं परस्परार्थान्वयतात्पर्यकपदविशेषणं बोध्यम् । ‘ आध्वर्यवं ’ इत्यादौ सुबन्तादेव तद्धितोत्पत्तेः ‘ होतृचमसः ’ इत्यादौ ‘ सुप्सुपा ’ इत्यनेन सुबन्तयोरेव समासविधानात् अस्ति सुबन्तपदघटितत्वम् । ‘ यजेत ’ इत्यादौ न तत्, इति न दोषः । वस्तुतस्तु परस्परार्थान्वयतात्पर्यकपदघटितत्वे सति सुबन्तत्वं समाख्यात्वम् । ‘ कृत्तद्धितसमासाश्च ’ ( पा० १।२।४६ ) इत्यनेन कृदन्ततद्धितान्तसमासेषु प्रातिपदिकसंज्ञाऽवगमात्तेषां सुप्प्रकृतित्वरूपसुबन्तत्वं इति लक्षणसमन्वयः । सुबन्तसोमादिपदे द्वंद्वे च अतिव्याप्तेः घटितान्तम् । ‘ सोमेन यजेत ’ इति सुप्तिङ्घटितसमुदाये अतिव्याप्तेः सुबन्तेति, ‘ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ’ इति सूत्रे ( पा० १।२।४५ ) अप्रत्ययपदस्य प्रत्ययतदन्तान्यपरतया सुप्तिङ्घटितसमुदायस्य प्रातिपदिकसंज्ञाऽभावेन तदुत्तरं सुपः अनुत्पत्तेः । ‘ धेनुर्दक्षिणा ’ इत्यत्र दक्षिणाप्रातिपदिकस्य सुप्प्रकृतित्वेऽपि धेनुर्दक्षिणापदघटितसमुदायस्य अतत्त्वात् नातिव्याप्तिः इति न तद्वारकतया यौगिकत्वनिवेशः इति तत्त्वम् ।

सा च द्विविधा वैदिकी लौकिकी चेति । याजुर्वेदिकपदार्थेषु ‘ आध्वर्यवं ’ इति, आग्वेदिकेषु ‘ होत्रं ’ इति, सामवेदिकेषु ‘ औद्गात्रं ’ इति, तथा ‘ होतृचमसः ’ इति पात्रविशेषे । ‘ पौरोडाशिकं ’ इति दार्शपूर्णमासिकपदार्थेषु या समाख्या सा, ‘ आध्वर्यवमधीते ’ इत्यादिवेदप्रयुक्तत्वात् वैदिकी । ‘ सोमचमसः ’ इत्याद्या याज्ञिकप्रयुक्ता लौकिकी । अत्र विशेष्यविशेषणसंबन्धस्य सिद्धवत् निर्देशात् तदन्यथाऽनुपपत्त्या अवयवार्थसंबन्धबोधकं वाक्यं आकाङ्क्षायोग्यतादिबलेन कल्पयित्वा कर्तृत्वादिरूपः संबन्धः प्रतीयते, इति सा विशेषणस्य विशेष्याङ्गतायां प्रमाणम् । उक्ताङ्गत्वस्य च प्रमाणान्तरागम्यत्वात् सामाख्यानिकत्वम् । अत एव यत्र वाक्यादिप्रमाणान्तरेण समाख्याघटकीभूतपदार्थस्य अङ्गत्वावगमः, तत्र न सामाख्यानिको विनियोगः, यथा ‘ निर्मन्थ्येनेष्टकाः पचन्ति ’ ‘प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति ’ इत्यादौ मन्थनप्रोक्षणादेः । तत्र मन्थनकर्मभूताग्नेः प्रोक्षितोलूखलमुसलयोश्च विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन मन्थनप्रोक्षणयोरेव विधितात्पर्येण विनियोगस्य वाक्यीयत्वात् । ‘आध्वर्यवमधीते’ इत्यादौ तु अध्वर्य्वादेः विधितात्पर्यविषयत्वात् समाख्याविनियोज्यत्वमेव । अत्र च समाख्याघटकीभूतपदार्थयोः संसर्गविधादिना संबन्धे बुद्धे तन्निर्देशान्यथाऽनुपपत्त्या न स्वतन्त्रो विधिः कल्प्यते, ‘ अध्वर्युणा अन्वाधानादि कर्तव्यम् ’ इति गौरवात् । अपि ‘ तु अध्वर्युं वृणीते ’ इति अध्वर्युवाक्यस्य अन्वाधानादिवाक्यस्य च एकवाक्यतासंपादकपदमात्रं ‘ यं अध्वर्युं वृणीते सोऽग्नीन् अन्वादधाति ’ इति । तच्च द्वयोर्विध्योः एकबुद्धिस्थतारूपस्थानकल्पनां विना न संभवति इति कल्पयित्वा, अध्वर्य्वादेश्च व्यापारविषयतया इतिकर्तव्यतात्वं प्रकल्प्य तदाकाङ्क्षारूपप्रकरणकल्पनया द्वयोर्विध्योः महावाक्यैकदेशत्वरूपपारिभाषिकपदत्वाक्रान्तयोः संनिधिरूपं वाक्यं कल्प्यते, ततश्च अध्वर्युनिष्ठयोग्यतारूपलिङ्गं प्रकल्प्य एकवाक्यतासंपादकपदरूपश्रुतिकल्पनात् समाख्यायाः विनियोजकत्वम् । अत एव पञ्चान्तरितप्रामाण्यकत्वेन समाख्यायाः चतुरन्तरितप्रामाण्यकस्थानापेक्षया दुर्बलत्वम् । अत एव पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य ‘ शुन्धध्वं ’ इति मन्त्रस्य समाख्यया पुरोडाशसाध्याग्नेयादियागीयपात्रप्रोक्षणाङ्गत्वे प्रसक्ते सांनाय्यसंनिध्याख्यस्थानात् सांनाय्यपात्रप्रोक्षणाङ्गत्वं इत्युक्तं बलाबलाधिकरणे । यद्यपि अत्र लिङ्गस्य विनियोजकत्वेन स्थानसमाख्ययोः अपूर्वविशेषसाधनत्वबोधकत्वमेव, तथापि विनियोगप्रमाणसहकारित्वात् उदाहरणत्वोपपत्तिः । तयोरेव विनियोजकत्वोदाहरणं तु मृग्यम् । इत्यनवद्यं श्रुत्यादिप्रमाणकमङ्गत्वम् । इति समाख्यानिरूपणम् । **मुरारि.** पृ. ११८८–११९०.

* समाख्या यौगिकः शब्दः । **मीन्या.** * समाख्या । यौगिकत्वलक्षणं समाख्यात्वम् । **सु.** पृ. १२००. * समाख्या लौकिकः शब्दः । यद्यपि लौकिकः ( भक्षानुवाकः ) तथापि अनादिः तस्य अनुवाकेन संबन्धः । **भा.** ३।२।९।२५, * समाख्या सति संबन्धे भवति, यथा ‘ पाचको लावकः ’ इति । तत्र पाचकशब्दमुपलभ्य पचतिनाऽस्य संबन्ध इति गम्यते । एवं वेदेऽपीति । ३।३।६।१३, * समाख्या संबन्धिनौ बुद्धौ संनिधिमुपनेष्यति । ३।२।९।२५. * समाख्या ‘ होतुश्चमसः ’ इत्यादिः सोमभक्षहेतुः । **वि.** ३।५।११. * अनादिसमाख्याप्रमाणकस्य संबन्धस्य अनादित्वम् । **सु.** पृ. १२०२. * इह तु समाख्या बलीयसी ( लिङ्गात् ) । न हि एताः ( ऋचः ) समाख्यानादृते

एषां काम्यानां कर्मणां प्राप्नुवन्ति न भिन्नदेशानां कर्मणाम् । समाख्यामन्तरेण आसामृचां याज्यानुवाक्यात्वमेव न विज्ञायते । भा. ३।२।७।२० पृ. ७७१. * कल्पितातिदेशापेक्षया उपदेशान्तर्गता समाख्यैव बलीयसी । वा. ३।६।१६।४२ पृ. १०६०, * गुणभूते हि कर्तरि अपेक्षिते समाख्या नियामिका भवति । ३।८।२।४. * तेन ज्ञायते पूर्वं समाख्या, पश्चात् संबन्धः इति । ( वा. ३।३।७।१४ पृ. ८२१ ) । क्लृप्तावयवार्थप्रत्यभिज्ञानेन अवयवार्थाभावविनिश्चयं च विना समुदायकल्पनाऽयोगात् संबन्धज्ञानपूर्वं प्रयोक्तृस्था समाख्या ज्ञायते, पश्चात् संबन्धो ज्ञायते । सु. पृ. १२०३. * प्राकृताङ्गव्यतिरिक्तेषु समाख्या विनियोक्त्री । वा. ३।७।२३।५१. * यत्र पुरुषस्य गुणभावः तत्र समाख्या नियामिका । पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम् । भा. ३।८।४।१२. * 'यौगिकी या समाख्या सा संबन्धप्रतिपादिनी । सोऽपि बुद्धावुपस्थाप्य शेषसंबन्धबोधकः ॥' वा. ३।३।६।१३. * लौकिकश्च शब्दः समाख्या । भा. ३।३।७।१४ पृ. ८५६. * विशेषसमाख्याऽपि विशेषश्रुतिवदेव शीघ्रतरप्रवृत्तेः बाधिका भवति । वा. ३।७।२०।४१, * वेदे हि प्रथममेव क्रियाकर्तृसंबन्धो निष्पन्नः । तस्मिन् सति समाख्या प्रवृत्ता । वयं तु तं संबन्धं प्रमाणान्तरेण अप्रतिपद्यमानाः समाख्यादर्शनेन प्रतिपद्यामहे । तेन ज्ञायते पूर्वं समाख्या पश्चात् संबन्धः इति । वस्तुतस्तु प्रथममेव संबन्धः । स चाप्रतीतोऽपि सत्तामात्रेणैव समाख्यां प्रवर्तितवान् । ३।३।६।१३, * सा नाम विशेषसमाख्या सामान्यसमाख्यां बाधते या तन्निरपेक्षा प्रवर्तते । ३।७।२२।४७, * सा नाम समाख्या विनियोक्त्री युक्ता या वेद एव पठ्यते, 'भक्षानुवाकसमाख्या' तु असमाम्नानात् कथं विनियोक्ष्यते इति चोदयन्ति । ३।२।९।२५ पृ. ७८३. * सामान्यविशेषसमाख्ये तुल्यबले विशेषसमाख्या वा बलीयसी इति संदेहे यौगिकत्वेन द्वयोः विशेषविषयत्वसाम्यात् तुल्यबलत्वप्राप्तौ सामान्यसमाख्यायाः विशेषविषयत्वेऽपि अनेकविशेषविषयत्वेन सावकाशतया विशेषसमाख्याऽनवरुद्धेष्वपि विशेषेषु भूम्ना प्रवृत्त्युपपत्तेः तदवरुद्धेषु अन्यथाऽनुपपत्त्यभावेन श्रुत्यकल्पकतया अनवरुद्धविशेषालोचनाऽपेक्षत्वेन मान्द्यात् विशेषसमाख्या निरपेक्षत्वेन शीघ्रप्रवृत्तित्वात् बलीयसी इति सिद्धान्तः । सोम. ३।७।१९. * दाक्षिणात्याः, प्राच्याः, उदीच्याः इति पुरुषसमाख्याः 'संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते । निवास–भव–जातत्व–तदागमनहेतुभिः ॥' 'सोऽस्य निवासः, तत्र भवः, तत्र जातः, तत आगतः' । वा. १।३।७।२१ पृ. २५१. * समाख्यां शक्नोति लिङ्गं बाधितुम् । भा. ३।२।७।२०. * तत्र वयं समाख्यां नियामिकामिच्छामः, यत्र कर्मणः प्राधान्यं यदर्थे क्रेतव्याः पुरुषाः प्राप्ताः तत्र समाख्यया नियमः । भा. ३।८।२।६ । तत्र समाख्या नियामिका भवति, यत्र कर्तुरपेक्षा । क्वासौ ? यदर्थः परिक्रयः । वा. * तत्र वयं विशेषसमाख्यां बलीयसीमिच्छामः यत्र सकृदाम्नानम् । वा. ३।८।७।१७. * स च ( संबन्धः ) अप्रतीतोऽपि सत्तामात्रेणैव समाख्यां प्रवर्तितवान् । (वा. पृ. ८२१) संबन्धस्य अप्रतीतावपि असत्त्वनिश्चयाभावमात्रेण क्लृप्तावयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगात् प्रयोक्तृस्थायाः समाख्यायाः श्रोतारं प्रति ज्ञेयत्वेन प्रवृत्तिरयुक्ता । सु. पृ. १२०३. * समाख्यया अकर्मसंयुक्ता आशीर्मन्त्राः न नियम्यन्ते । याजमाना एव ते नार्त्विजाः । वा. ३।८।६।१५. * समाख्यया अग्न्यन्वाधानं आध्वर्यवम् । भा. ३।८।१३।२६, * समाख्यया अध्वर्य्वादीनां नियतपदार्थकर्तृता । ३।७।१९।४० पृ. ११०५. * समाख्यया क्रमस्य बाधः । ज्योतिष्टोमे वरणोपात्तानां ऋत्विजां संनिधानात् सर्वत्र अन्ययस्यया कर्तृत्वे प्राप्ते समाख्यया व्यवस्था । बाल. पृ. १४६. * समाख्यया 'चमसिन्' इत्येतया ऋत्विजां यजमानस्य च सोमभक्षसिद्धिः । वि. ३।५।७. * समाख्यया ज्योतिष्टोमे चमसिनां सोमशेषभक्षः । ३।५।७।२२. मीको. पृ. १७९९ 'ज्योतिष्टोमे चमसिनां सोमशेषभक्षः' इत्यत्र अधिकरणं द्रष्टव्यम् । * समाख्यया यौगिक्यैव विनियोगः ।



वा. ३।३।६।१३. * समाख्यया समाख्या बाध्यते । यथा विशेषसमाख्यया सामान्यसमाख्या । यथोक्तं तृतीये ३।७।२१ इत्यत्राधिकरणे । बाल. पृ. १३५. * ऋत्विगुद्देशेन ह्येते ( लोहितोष्णीषत्वादयः ) विधीयमानाः प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम् । वा. ३।८।४।१२. * **समाख्यायाः** क्रमो बलवान् । भा. ३।३।७।१४ पृ. ८५६, वा. ३।३।७।१४ पृ. ८३४. * समाख्यायाः क्रमो बलीयान्, अर्थविप्रकर्षात् ।... उपदिश्यते हि क्रमे समाम्नानात् सांनाय्यसंबन्धः, नोपदिश्यते समाख्यायाम् । शब्दमुच्चार्यमाणं उपलभ्य अर्थापत्त्या नूनमस्तीति कल्प्यते । भा. ३।३।७।१४ पृ. ८५८, * समाख्यायाः चोदको बलवान् । ३।७।२३।५१. * समाख्यायाः प्रकरणं बलवत् । वा. ३।३।७।१४ पृ. ८३७, * समाख्यायाः लिङ्गं बलवत् । पृ. ८३७, * समाख्यायाः वाक्यं बलवत् । पृ. ८३७, * समाख्यायाः श्रुतिर्बलवती । पृ. ८३६. * **समाख्यायाः** अध्वर्य्वादिरूपायाः अनुरोधेन ज्योतिष्टोमे द्वादशशतदक्षिणाया विभागः । भा. १०।३।१३।५३–५५. * समाख्यायाः पूर्वैः सह विरोधाविरोधविचारपेटिका । के. ३।७।८–३।८।१४. * समाख्यायाः रूढिशब्दलक्षणायाः सिद्धान्तेऽपि विनियोजकत्वं नाभ्युपगम्यते । सु. पृ. ११९३. * समाख्यायाः विप्रकर्षः । समाख्या हि यावत् किंचित् सामान्यमस्तीति कल्पयति तावत् क्रमेण नूनमनयोः काचिदपेक्षा अस्ति येनेत्थं समानदेशौ पठितौ इति प्रकरणं कल्प्यते । यावच्च किंचित् सामान्यं अपेक्षां कल्पयति तावदितरत्र एकवाक्यता क्लृप्ता । तथा यावदिह एकवाक्यता भवति तावदितरत्र उपकारसामर्थ्यसिद्धिः । यावच्चेह उपकारसामर्थ्यकल्पना तावदितरेण श्रुतिरुत्पादिता । ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते तावदितरत्र विनियोगे सिद्धे, निराकाङ्क्षीभूते प्रकरणपाठे सर्वमेतत् प्रचितमपि अपरिपक्वविच्छेदात् आमसस्यमिव लूनं निर्बीजं भवति । वा. ३।३।७।१४ पृ. ८३४. * समाख्यायाः श्रुत्यपेक्षया अर्थविप्रकर्षः । तत्रापि यावत् समाख्यया किंचित् सामान्यं कल्प्यते तावत् श्रुत्या विनियुक्तत्वात् प्रकरणवाक्यसामर्थ्यश्रुतिषु अकल्पितास्वेव श्रुत्या समाख्यायाः बाधः । वा. ३।३।७।१४ पृ. ८३६. * सामान्यसमाख्यायाः विशेषसमाख्यया बाधः । सु. ३।८ पृ. ६१, * पौरुषेय्यामपि तावत् दीक्षानुवाकादिसमाख्यायां अनादित्वान्न दोषोऽस्ति । आध्वर्यवादिसमाख्यायां तु दोषशङ्का अपि नास्ति । सु. पृ. १२००. * **समाख्ययोः** विरोधे विशेषसमाख्या सामान्यसमाख्याया बलवती यथा । वा. ३।३।७।१४ पृ. ८४१. * समाख्ययोर्विरोधे शेष्यनेकत्वे शेषानेकत्वे च सामान्यविशेषभावादिना विरोध उदाहर्तव्यः । कौ. ३।३।७।१४.

**समाख्याऽधिकरणम्** । समाख्या अपि विनियोजकं प्रमाणम् ॥

**आख्या चैवं तदर्थत्वात् । ३।३।६।१३॥**

**भाष्यम्**— अथ किमेतावन्त्येव विनियोगकारणानीति ? नेत्युच्यते । किंच, समाख्या चैवं स्यात् । कथं विनियोगकारणमिति ? समाख्या सति संबन्धे भवति, यथा 'पाचको लावकः' इति । तत्र पाचकशब्दमुपलभ्य पचतिनाऽस्य संबन्ध इति गम्यते । एवं वेदे अपीति । अकृतकार्यसंबन्धं समाचक्षाणं शब्दमुपलभ्य भवति संबन्धे तस्मिन् संप्रत्ययः । किमिहोदाहरणं प्रयोजनं च ? आध्वर्यवमिति समाख्यातानि कर्माण्यध्वर्युणा कर्तव्यानि । हौत्रमिति च होत्रा । एतदुदाहरणं प्रयोजनं चेति ।

वा–– **'यौगिकी या समाख्या सा संबन्धप्रतिपादिनी । सोऽपि बुद्धावुपस्थाप्य शेषसंबन्धबोधकः ॥'** आध्वर्यवादिसमाख्यानां वेदे एव प्रयोग इति न लौकिकत्वचोद्यं क्रियते । तत्र अध्वर्युर्वृत्तमात्रमेवापेक्षते । किं मया कर्तव्यमिति । तदपेक्षमाणस्य च यदि न कुतश्चिद्विशेषोऽवगम्यते ततो यत्किंचिदिति भविष्यति । तथा आध्वर्यवसंज्ञितं कर्म, को मे कर्ता भविष्यतीत्येवमेव शेषमपेक्षते । तत्र शब्दज्ञस्याऽऽदित एवैषा उत्प्रेक्षा प्रत्येकं भवति यदस्य अध्वर्योः कर्म तदाध्वर्यवशब्दवाच्यं भविष्यति । तथाऽप्यस्य आध्व-

र्यवस्य यः कर्ता तस्याध्वर्युर्नामेति प्रकृतेर्वा विकारस्तद्नुरूपोऽनुमीयते विकाराद्वा प्रकृतिः। यद्यपि शब्दान्तरं विकार इत्युभावप्येतौ परस्परनिरपेक्षौ नित्यसंबन्धौ च तथाऽपि नित्याया एव शब्दप्रवृत्तेर्नित्यः संबन्धो निमित्तमिति सर्वयौगिकानामेवमन्वाख्यानम्। न हि राज्यशब्दस्याप्यादिमती प्रवृत्तिरित्युक्तम् (२।३।१२)। शब्दार्थयोरिवेह निमित्तनैमित्तिकभावस्यनादित्वेऽपि अविरुद्धः। तत्र केचित् वदन्ति। प्रागेतस्मात्समाख्याविनियोगादध्वर्य्वाध्वर्यवयोरसंबन्धादशक्यं यौगिकत्वं समाख्याया विज्ञातुम्। अथ तु प्रथमं सिद्धे संबन्धे पश्चात्समाख्यायाः प्रवृत्तिः। ततो न समाख्या विनियोजिका स्यात्। अतः परस्परनिरपेक्षयोरेव रूढयोः सारूप्यादुपतिष्ठमानयोरेष विनियोग इति। न त्वेदयुक्तम्। न हि रूढानां सारूप्यादुपस्थापनसामर्थ्यं धर्मसंबन्धेऽप्यस्ति। यथा कण्वरथंतरे रथंतरधर्मान्निराकरिष्यति (१०।४।२३), किमुतात्र क्रियाकर्तृसंबन्धे। पाचकाद्युदाहरणं वा युक्तं स्यात्। तस्माद्यौगिकत्वमेवाभ्युपगन्तव्यम्। यत्तु प्राक्प्रयोगात्प्रमाणं नास्तीति। सत्यं प्रत्यक्षं नास्तीति। समाख्ययैवानुमीयमानं भविष्यति। वेदे हि प्रथममेव क्रियाकर्तृसंबन्धो निष्पन्नः। तस्मिन् सति समाख्या प्रवृत्ता। वयं तु तं संबन्धं प्रमाणान्तरेणाप्रतिपद्यमानाः समाख्यादर्शनेन प्रतिपद्यामहे। तेन ज्ञायते पूर्वं समाख्या पश्चात् संबन्ध इति। वस्तुतस्तु प्रथममेव संबन्धः। स चाप्रतीतोऽपि सत्तामात्रेणैव समाख्यां प्रवर्तितवान्। यदि ह्येषा आदिमती स्यात्ततः प्रयोक्तुः प्रथमं संबन्धावगत्या भवितव्यम्। न च सा तथा भवतीति न पर्यनुयुज्येमहि। नित्यसंबन्धाश्रयणे तत्र नित्यप्रयुक्तया समाख्यया नूनं कश्चिदस्ति संबन्ध इति प्रतिपादितेऽन्यथानुपपत्त्या शेषशेषिभावः पश्चाद्विज्ञायते। तस्माद्यौगिक्यैव समाख्यया नूनं कश्चिदस्ति संबन्ध इति प्रतिपादिते अन्यथानुपपत्त्या शेषशेषिभावः पश्चाद्विज्ञायते। तस्माद्यौगिक्यैव समाख्यया विनियोग इति सिद्धम्।

शा-- दर्शपूर्णमासादिषु आध्वर्यवहौत्रौद्गात्रादिसमाख्याताः पदार्थाः किं अध्वर्य्वादिभिरेव कर्तव्याः उत अनियमेन इति श्रुत्यादिभिः नियमाभावात् समाख्यायाश्च पदार्थमात्रविषयत्वेन अविधायकत्वेन अप्रमाणत्वात् अनियमः। इति प्राप्ते, उच्यते। अनादिस्तावत् अपौरुषेयी समाख्या। तेन आध्वर्यवादिशब्दाः पदार्थानां वाचका इति तावत्प्रमाणम्। संबन्धनिमित्ता च समाख्या न असति संबन्धे अवकल्पते इति अस्ति नूनं कर्तॄणां पदार्थानां च कश्चित् संबन्ध इति निश्चिते ततः कर्तॄणां कार्यापेक्षत्वात् पदार्थानां च कर्त्रपेक्षत्वात् समाख्यया मिथः पर्युपस्थापितानां योग्यतया क्रियाकर्तृसंबन्धमेव प्रयोगविधिः विधत्ते इति सिद्धः समाख्यया नियमः।

सोम-- सूत्रार्थस्तु- समाख्या अपि क्रमवत् विनियोजिका, तस्याः संबन्धार्थकत्वात् विनियोज्यप्रयोजकत्वोपपत्तेरिति।

वि-- 'वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः। अनियत्या नियत्या वा नियतिर्नानिरूपणात्॥ हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः। निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम्॥'

भाट्ट-- ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते। साऽप्यङ्गत्वे प्रमाणम्। तथाहि- सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नं चेति। तत्र आद्यं 'निर्मन्थ्येनेष्टकाः पचन्ति' 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यादौ निर्मन्थ्यादिपदम्। तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वान्न सामाख्यानिको विनियोगः। द्वितीयं तु 'आध्वर्यवमधीते' 'प्रैतु होतुश्चमसः' इत्यादौ। तस्य विशेष्यस्य काण्डस्यैव प्रकृतविधौ अन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विनियोगः कल्प्यते इति तत्र समाख्यया विनियोगः। अत्र समाख्ययाऽवयवार्थयोः संबन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना गौरवापत्तेः। किंतु अन्वाधानादिवाक्यस्य 'अध्वर्युं वृणीते' इति वाक्यस्य चैकवाक्यतासंपादकपदमात्रं 'यमध्वर्युं वृणीते सोऽग्नीनन्वादधाति' इति तद्द्वयोर्विध्योः कथञ्चिदस्त्येकबुद्धि-



स्थता इत्येवंविधस्थानकल्पनापूर्वकं अध्वर्योरितिकर्तव्यताकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसंनिधिरूपं वाक्यं प्रकल्प्यते। तेन च अध्वर्युमात्रनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासंपादकपदरूपश्रुतिकल्पनाद्युक्तं तस्याः षष्ठप्रमाणत्वम्।

मण्डन-- 'समाख्या विनियोजिका।'

शंकर-- 'समाख्या विनियोजिका।'

* **समाख्याक्लृप्तमेव** आतिदेशिकं संबन्धं बाधित्वा समवायविशेषात् होत्रा करणः प्रयोक्तव्यः। **वा. ३।८।१०।२१.**

* **समाख्याप्राप्त**कर्तृत्वस्य क्वचिद् बाधः। **भा. ३।७।२०।४१.**

* **समाख्याभक्षः** वषट्कारनिमित्तं भक्षणं कृत्वा कर्तव्यः। **वा. ३।५।१०।३१.** * समाख्याभक्षः सुब्रह्मण्यानां उद्गातॄणां अस्ति। अपसुब्रह्मण्यानां इति वार्तिकमतम्। **भा. ३।५।८।२३-२६.**

* **समाख्याहेतुकात्** विनियोगात् प्राक् अध्वर्युणा आध्वर्यवानुष्ठानात् अध्वर्य्वाध्वर्यवयोः संबन्धे प्रत्यक्षं प्रमाणं नास्ति, तथापि 'अध्वर्युणा आध्वर्यवं कर्तव्यम्' इत्येवंरूपं श्रुत्याख्यं प्रमाणं समाख्यया क्रमादिपारंपर्येण अङ्गाङ्गिसंबन्धबोधाख्यात् विनियोगात् प्राक् अनुमाय संबन्धे प्रमाणं भविष्यति। **सु. पृ. १२०२.**

* **समाख्यातं** सर्वं समाख्यातपुरुषैः कर्तव्यम्। **भा. ३।७।२०।४१.**

* **समाख्यानम्।** न हि संबन्धादृते समाख्यानम्। **भा. १।१।८।२७.**

ॾ **समागमाः सापगमा इति न्यायः।** सर्वमुत्पादि भङ्गुरमिति विषये अस्य प्रचार इति। **साहस्री. ८०६.**

* **समाजेषु** समासेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टाननुपमृद्यैव निविशन्ते। **भा. १०।५।१।१।** समाजेषु समासेषु च आगन्तुर्जनो वास्तव्याननुपमृद्यैव निविशते। युक्तं यत् वास्तव्यैराक्रान्ते देशे आगन्तुर्जनः असंभवात् अन्ते निविशते। **१०।५।१।४.**

* '**समानमितरच्छ्येनेन**' इत्यनेन श्येनगतं लोहितोष्णीषादि वैशेषिकं धर्मजातं इषौ अनुष्ठेयत्वेनातिदिश्यते, न तु अनुवादकं वाक्यम्। **वि. ७।१।२.** * 'समानमितरच्छ्येनेन' इति किमनुवादो विधिर्वा। यदि विधिस्तदा अतिदेशः। अथानुवादस्ततो नातिदेशः। विधिरिति सिद्धान्तः। **भा. ७।१।२।१३-१६।** **टुप्**— ज्योतिष्टोमात् चोदकेन यत् प्राप्तं तत् इतरशब्देन परामृश्यते। युदितरत् ज्योतिष्टोमात् प्राप्तं तत् श्येनेन समानं कर्तव्यम् (इत्यर्थः)। इषौ वषट्कारनिधन-इष्वाकारविष्टुतित्व-सत्तदशसामवत्त्वानि भवन्ति।

ॾ **समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्। ७।१।२।१३॥**

इषुर्नाम एकाहः सोमविकारः आभिचारिकः। तत्र कांश्चिद्धर्मान् विधाय 'समानमितरत् श्येनेन' इत्युक्तम्। अयमनुवादो विधिर्वा स्यात् तथा नातिदेशः अतिदेशो वा इतिविचारे पूर्वपक्षमाह। समाने समानपदघटिते वाक्ये 'समानमितरत् श्येनेन' इति वाक्ये उत्पन्नाधिकारः श्येने उत्पन्नस्य धर्मजातस्य अधिकारः अनुवादः स्यात्। पूर्ववत्त्वात् इषोः ज्योतिष्टोमपूर्वकत्वात्। ज्योतिष्टोमस्यैव विध्यन्तो यस्मात् इषौ प्रवर्तते। तस्मादनुवादः।

**श्येनस्येति चेत्। १४॥**

इषुर्नाम एकाहः सोमविकारः आभिचारिकः। तत्र 'समानमितरत् श्येनेन' इत्युक्तम्। अयं तावदनुवादः ज्यौतिष्टोमिकानां धर्माणां इति पूर्वपक्ष उक्तः। तत्र सिद्धान्ती आह। ननु यद्यपि अनुवादः तथापि श्येनस्य धर्माणामनुवादः, न ज्यौतिष्टोमिकस्येति। इति चेत्।

**नासंनिधानात्। १५॥**

'समानमितरत् श्येनेन' इति यो धर्माणामनुवादः स न श्येनधर्माणां असंनिधानात् इषुनामके यागे श्येनधर्माणामसंनिहितत्वात्। श्येनोऽपि ज्योतिष्टोमस्य विकारः, इषुरपि तथैव। न च विकारो विकारस्य

संनिहितो भवति । प्रकृतिः ज्योतिष्टोमस्तु विकारभूतस्य श्येनस्य यथा संनिहितः तथा इषोरपि । तथा च इषो श्येनस्य असंनिधानात् ज्योतिष्टोमस्यैव संनिधानात् न श्येनधर्माणामनुवादः किंतु ज्योतिष्टोमधर्माणामनुवाद एषः इति पूर्वः पक्षः ।

**अपिवा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद् विधेस्तद्वाचकं समानं स्यात् । १६ ॥**

इषुर्नाम ज्योतिष्टोमविकारः सोमयागः आभिचारिकः । तत्र ‘ समानमितरत् श्येनेन ’ इत्युक्तम् । सः ज्यौतिष्टोमिकानां धर्माणामनुवादः, न श्येनधर्माणां इति पूर्वपक्षं सूत्रप्राप्तं ‘ यदि अपिवा ’ इति अक्षरसमुदायेन निरस्यन् सिद्धान्तमाह । ‘ यदि इति असंदिग्धे सदिग्धवचनम् ’ इति ‘यदि अपिवा इति विपर्यस्य पक्षव्यावृत्तौ व्याख्येयम्’ इति च **तन्त्ररत्नम्** । ‘ समानमितरत् ’ इति विधिरयं नानुवादः अपूर्वत्वात् अपूर्वार्थकत्वात् । मानान्तरेण अप्राप्तार्थको हि विधिर्भवति । ननु समानमितरत् इति इतरशब्दस्य सर्वनामत्वेन संनिहितवाचकत्वात् अनुवादो ज्ञायते । **उच्यते** । इतरत् अन्यत् इत्यर्थः । तत् कस्मादन्यत् इत्यपेक्षायाम्, इतरत् अधिकार्थे ज्यौतिष्टोमिकात् विधेः इत्युच्यते । ज्योतिष्टोमगतात् विधेः ज्योतिष्टोमगतधर्मेभ्यः अधिका ये श्येनवैशेषिका धर्माः इति अधिकार्थे “इतरत् ’ इति शब्दो भवति । समानमितरत् इति इतरशब्दः ज्योतिष्टोमधर्मेभ्यः अधिकानां श्येनधर्माणां बोधकः इत्यर्थः । तद्वाचकं समानं स्यात्, समानशब्दः तद्वाचकः स्यात् । समानमितरत् इति समानशब्दोऽपि अधिकधर्मवाचकः स्यात् । ते च ज्योतिष्टोमधर्मेभ्यः अधिकाः श्येनधर्माः लोहितोष्णीषत्व–लोहितवसनत्व–निवीतत्वादयः कण्टकवितोदनादयश्च ।

**वार्तिकानुसारेण** तु– अधिकार्थे श्येनात् अधिके अर्थे, श्येनविकारे इषौ इत्यर्थः । अधिकार्थे ज्यौतिष्टोमिकात् विधेः इतरत् विधीयते इति सौत्रपदानां अन्वयार्थौ ग्राह्यौ । सर्वथाऽपि ‘समानमितरत् श्येनेन ’ इति विधिरयं नानुवादः इति **सिद्धान्तः** । के.

**समानाऽपि देवता अन्येन व्यवहिता चेत् भेदेन आवाहनं प्रदानं च ॥**

‘ एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालं सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम् ’ इति विहितायां चक्षुष्कामेष्टौ अग्निं भ्राजस्वतमावहेत्यावाहनं तन्त्रेण स्यात् । संप्रतिपन्नदेवताकत्वेन प्रदानस्यापि तन्त्रेण संभवात् । इति प्राप्ते, सौर्यपूर्वोत्तरत्वरूपकालभेदस्य विवक्षिततया तन्त्रेण प्रदाने तदन्यतरबाधापत्तेः । पार्थक्येनैव प्रदानादि । दधिपयसोस्तु सौविष्टकृताग्नेयपूर्वोत्तरत्वयोरबाधात् तन्त्रतोपपत्तिः । **संकर्ष.** ४।४।९.

* **समानाधिकरणसमासस्तु** ( षष्ठीतत्पुरुषात् ) बलीयान् । **भा.** ६।१।१३।५१.

* **समानकल्पानामेव** सत्रेऽधिकारः । ६।६।१। १–११. **मीको.** पृ. ३०५ ‘ अधिकारः सत्रे समानकल्पानामेव ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * ‘अपि वा नानागोत्राः स्युः ’ इत्यादेः तनूनपान्नाराशंसकल्पाद्यवैगुण्याय ‘ **समानकल्पानामेव** सत्रेष्वधिकारः ’ इति वेदोत्थेन **न्यायेन** विसंवाददर्शनात् कल्पसूत्रकारवाचां वेदादेव अनृतत्वावगतिः । **सु.** पृ. २४२.

* **समानच्छन्दस्कास्वेव** तिसृषु ऋक्षु गानं ( ज्योतिष्टोमे ) । **भा.** ९।२।४।२१–२२. * समानच्छन्दस्कास्वेव तिसृषु ऋक्षु साम गातव्यम्, न विषमच्छन्दस्कासु । अन्यथा हि संशरविलेशप्रसङ्गः । संशरः हिंसा । विलेशः अल्पत्वम् । अधिकच्छन्दस्कायां योनौ गीतस्य साम्नो न्यूनच्छन्दस्कयोरुत्तरयोर्गाने सामभागस्य विनाशप्रसङ्गः । अधिकच्छन्दस्कयोरुत्तरयोर्गाने तु साम्नो न्यूनत्वप्रसङ्गः । **वि.** ९।२।४.

* **समानतन्त्रप्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानम्** । **वि.** १२।२।१३.

* **समानप्रवरा** कुमारी न परिणेया । **वि.** १।३।५ वर्णकं २.

* ‘ **समानबर्हींषि** भवन्ति ’ पवमानहवींषि इत्यनुवादः । **भा.** ११।४।४।१४.

* **समानविधानाः** न भवन्ति ज्योतिष्टोमे वपनादयः संस्कारा ऋत्विग्यजमानानाम् । **वा.** ३।८।२।८.



* **समानविधिः** न भवति नित्यनैमित्तिकयोः । **भा.** ३।६।१३।३६, * समानविधिर्नास्ति गुणकामानामाश्रयेण सह । ३।६।१६।४१–४७.

* **समानविधित्वं** मुख्यप्रतिनिध्योः ( नीवाराणां व्रीहिभिः ) । **भा.** ३।६।१४।३७–३९, * समानविधित्वं मुख्यमन्दसदृशप्रतिनिध्योरपि ( पूतीकानां सोमेन ) । ३।६।१५।४०.

* **समानविभक्त्यन्तानां** सामानाधिकरण्येन विशेषणविशेष्यभावो भवति । **वा.** ३।४।४।१३ पृ. ९२३.

* **समानविषयमात्रे** बाधो विज्ञायते । **वा.** ३।६।१।५.

* **समानसंख्येषु** प्रधानेषु धर्मविरोधे प्रथमपठितस्यैव धर्मानुग्रहः । **भा.** १२।२।८।२३–२४.

* **समानयनं** आज्यस्य धर्माणां च प्रयोजकम् । आज्यसमानयनाधिकरणम् । ४।१।१५।४०–४१. **मीको.** पृ. ८७८ इत्यत्र द्रष्टव्यम् ।

**समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् । ४।१।१५।४०॥**

दर्शपूर्णमासयोः श्रूयते ‘ अतिहायेडो बर्हिः प्रति समानयति जुह्वामौपभृतम् ’ इति । इट्संज्ञकप्रयाजोत्तरं बर्हिःसंज्ञकप्रयाजात् पूर्वं औपभृताज्यस्य जुह्वां समानयनमुक्तं तत्र वाक्ये । इदं समानयनं किं औपभृताज्यस्य प्रयाजार्थस्य प्रयोजकं न वेति संशये औपभृताज्यस्य अनुयाजार्थत्वात् इति उत्सूत्रे पूर्वपक्षे सिद्धान्तसूत्रमिदम् । तुशब्दः शङ्कितपूर्वपक्षव्यावृत्त्यर्थः, प्राजापत्यवपावैषम्यार्थो वा । प्राजापत्यवपाः प्रयाजशेषाभिघारणस्य न प्रयोजकाः, समानयनं तु प्रयोजकमिति । औपभृताज्यस्य जुह्वां समानयनं मुख्यं प्रधानं प्रयोजकम्, न संस्कारकर्म स्यात् । लिङ्गदर्शनात् । आतिथ्याप्रकरणे ‘ चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानूयाजान् यक्ष्यन् भवति ’ इत्यत्र चतुर्गृहीतानि इति बहुवचनं लिङ्गम् । आतिथ्यायामनूयाजाभावेन अनूयाजार्थचतुर्गृहीतं निवृत्तम् । जुह्वां एकं चतुर्गृहीतं प्रयाजत्रयार्थम्, उपभृति द्वितीयं चतुर्गृहीतं प्रयाजद्वयार्थम्, ध्रुवायां च एकं चतुर्गृहीतं इति बहुवचनमुपपन्नं भवति । तत्र यदि औपभृतं चतुर्गृहीतं प्रयाजार्थं न स्यात् किंतु अनूयाजार्थमेव स्यात् तदा आतिथ्यायां अनूयाजाभावेन औपभृतं चतुर्गृहीतं नैव स्यात् इति बहुवचनमनुपपन्नं स्यात् । तस्मात् दर्शादावपि औपभृतं एकं चतुर्गृहीतं प्रयाजार्थमेव स्यात् । तस्य च जुह्वां समानयनम् । औपभृतं अपरं चतुर्गृहीतं तु अनूयाजार्थं कामं स्यात् । एतस्मात् बहुवचनाल्लिङ्गात् जुह्वां औपभृताज्यसमानयनं प्रयोजकमेव आज्यतद्धर्माणाम् । लिङ्गदर्शनात् इत्यत्र लिङ्गं च दर्शनं च, अनयोः समाहारः लिङ्गदर्शनम्, तस्मात् । तत्र लिङ्गं व्याख्यातम् । दर्शनं च न्यायः । स च भाष्ये इत्थमुक्तः– ‘ ननु लिङ्गमुपदिश्यते, का प्राप्तिः ? उच्यते । दृष्टं तत्र प्रयोजनम् । प्रयाजौ द्वौ यष्टव्यौ, तत्र जुह्वामाज्येन प्रयोजनम्, नोपभृति रिक्तायाम् । उपभृतो रेचनमदृष्टार्थं जुह्वां च निधानं दृष्टार्थमेव ’ इति । अत्र दृष्टप्रयोजनस्वरूपो न्याय उक्तः ।

**वचने हि हेत्वसामर्थ्यम् । ४१ ॥**

दर्शपूर्णमासयोः तृतीयप्रयाजोत्तरं उपभृति वर्तमानस्य आज्यस्य अर्धं जुह्वामानेतव्यम् । तच्चानयनं अवशिष्टप्रयाजद्वयार्थं सत् आज्यतद्धर्माणां प्रयोजकम् । तत्र च लिङ्गं आतिथ्यायां ‘ चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानुयाजान् यक्ष्यन् भवति ’ इत्यत्र बहुवचनमुक्तं ‘ समानयनं तु० ’ इति पूर्वसूत्रे सिद्धान्तिना । तत्रेयं शङ्का– ननु ‘ चतुर्गृहीतान्याज्यानि ’ इति वचनमेव कस्मान्न भवति । अनेन वाक्येन त्रीणि चतुर्गृहीतानि विधातव्यान्येवेति । तत्र सिद्धान्ती उत्तरयति । हि यस्मात् तस्मिन् वचने विधिरूपे स्वीकृते सति हेत्वसामर्थ्यम्, ‘ न हि अत्र ( आतिथ्यायां ) अनुयाजान् यक्ष्यन् भवति ’ इत्युत्तरवाक्ये आतिथ्यायामनुयाजाभावः हेतुरुक्तः, तस्य सामर्थ्यं साधकता न स्यात्, हेतुरसमर्थः स्यात् । नहि विधिः हेतुमपेक्षते । तस्मात् प्रयाजार्थं समानयनं प्रयोजकं औपभृतस्य आज्यस्य । के.

* समानयनं दाशतयीभ्यः उत्पन्नगायत्रीणां बृहस्पतिसवादौ । ८।३।६।१२–३६. **मीको.** पृ. २९८० ‘ बृहस्पतिसवादौ दाशतयीभ्यः० ’ इत्यत्र अधिकरणं

द्रष्टव्यम् । * **समानयने** औपभृतं जुह्वां अर्धं समानेतव्यम् । **भा.** ४।१।१७।४६-४८.

* **समापन्नं** सर्वस्वारस्य यज्ञस्य यजमानमरणोत्तरमपि । १०।२।२३।५८-५९. 'सर्वस्वारः यजमानमरणोत्तरमपि समापनीयः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **समाप्तिः** न नियता प्रारब्धस्यापि लौकिककर्मणः । **भा.** ६।२।४।१६-१८. * 'समाप्तिः शब्दार्थः' इति न्यायः । 'नोभे आरम्भपरिसमाप्ती (आख्यात-) शब्दार्थः । किं तर्हि ? परिसमाप्तिः शब्दार्थः । परिसमाप्त्यां अर्थप्राप्तत्वात् आरम्भस्य । तस्मात् परिसमाप्तिः शब्दार्थः इति गम्यते' । भा. ६।२।३।१३ । 'समाप्तिः शब्दार्थः' इत्यनेन न्यायेन पूर्वं त्यज्यमानकर्मतिरोधानेन परपूज्यमानकर्माविर्भावात् एककर्मत्वावधारणेन संप्रदानत्वशक्तिमभिभूयैव निर्देशो भवति 'विष्णुं यजति' 'विष्णुर्यष्टव्यः' इति, न तु तत्र देवतात्वमभिधीयते । वा. २।२।४।१० पृ. ४९१. * सत्यपि कर्तुः शब्दार्थरूपेण प्राधान्ये वस्तुलक्षणस्य कर्मप्राधान्यस्य भाव्याकाङ्क्षाकाले प्रतीतेः भावनास्वरूपावगतिकालकर्तृप्राधान्यप्रतीत्युत्तरकालत्वेन परतया 'समाप्तिः शब्दार्थः' इति न्यायात् विवक्षौचित्यम् । **सु.** पृ. १४०७.

* **समाम्नायस्य** समस्तस्य वेदस्य ऐदमर्थ्यं अर्थवादाधिकरणे अध्ययनविधिवशात् व्यवस्थापितम् । **कु.** १।४।१।१.

* स्मृतिषु **समाम्नायशब्दाभावः** । ऋजु. पृ. ८.

* **समारोपः** । सोमान्ते शालामुखीयादीनां नास्ति लौकिकत्वं प्राप्तत्वात् प्राजहितस्यैव तु समारोपः । **संकर्ष.** ३।२।२९ । अजस्रपक्षे तु शालामुखीयस्यापि समारोपः । गतश्रियामेवमेव । शालानुसारेण नित्याहवनीयधारणेऽप्येवम् । ३।२।३०. * **समारोपं** कृत्वैव अग्नयो नेतव्याः सोमान्ते । **संकर्ष.** ३।२।३४.

* **समारोपोत्तरं** अग्नेः परिदृश्यमानस्यापि लौकिकत्वं संपद्यते । **संकर्ष.** ३।२।९.

**समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् । १०।६।४।६॥**

'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्' इति श्रूयते । तत्र उच्यते । तुशब्दः संशयनिवृत्त्यर्थः । ऐकादशिनेषु समासः समासता स्यात् ।' सर्वे प्रायणीये पुनः सर्वे उदयनीये स्युः । तत्प्रकृतित्वात् सः ज्योतिष्टोमः प्रकृतिः ययोः प्रायणीयोदयनीययोः तौ तत्प्रकृती तयोर्भावः तस्मात् । ज्योतिष्टोमप्रकृतिकत्वात् । ज्योतिष्टोमे च एकस्मिन्नेवाहनि समस्तानामैकादशिनानामालम्भात्, प्रायणीये उदयनीयेऽपि तथैव चोदकात् । तस्मात् समास इति सिद्धान्तः ।

**विहारप्रतिषेधाच्च । ७ ॥**

'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्' इत्यनेन विहारस्य प्रतिषेधात् । विहारः विहरणं पृथक्करणम् । 'अन्वहमेकैकमालभेत' इति ऐकादशिनानां पशूनां विहारः प्राप्तः तस्य प्रतिषेधः कृतोऽत्र । तस्मात् सर्वे प्रायणीये, सर्वे च उदयनीये स्युः । इति पूर्वः पक्षः ।

**श्रुतितो वा लोकवद् विभागः स्यात् । ८ ॥**

प्रायणीयोदयनीययोः प्रत्येकं सर्वे ऐकादशिनाः पशव आलब्धव्याः इति पूर्वपक्षं वाशब्दो व्यावर्तयति । ऐकादशिनानां प्रायणीयोदयनीययोः समासो न कर्तव्यः किंतु विभागः स्यात् । श्रुतितः प्रायणीयोदयनीययोः इति द्विवचनश्रुतितः, द्वित्वश्रुतिरुपादेया न लक्षणतया । तस्मात् विभागः । लोकवत् यथा लोके शतं देवदत्तयज्ञदत्ताभ्यां दीयतां इत्युक्ते न प्रत्येकं शतं दीयते किंतु विभज्य तद्वत् । इति सिद्धान्तः ।

**विहारप्रकृतित्वाच्च । ९ ॥**

प्रायणीयोदयनीययोः ऐकादशिनानां पशूनां विभागेनानुष्ठानं न समासेन इत्यत्र हेत्वन्तरमाह । विहारः प्रकृतिर्यस्य स विहारप्रकृतिः प्रायणीयोदयनीययोरैकादशिनपशुविभागः । एकादशिन्याम् 'अन्वहमेकैकमालभेत' इति विहारः प्रकृतः, तस्य विकारः विभागः समासो वा तत्र यावच्छक्यं विहारस्य अनुग्रहीतव्यम् । तस्मात् विभागः इति सिद्धान्तः ।



**विशये च तदासत्तेः । १० ॥**

प्रायणीयोदयनीययोः ऐकादशिनानां पशूनां विभागेनानुष्ठानमित्युक्तम् । प्रायणीयोदयनीययोः इति द्विवचनानुसारात् एकादशानां द्वेधा विभागे कर्तव्ये सर्वथा समत्वेन विभागासंभवात् प्रायणीये कति, कति च उदयनीये इति विशये-संशये सति तदासत्तेः समविभागस्य आसत्तेः प्रत्यासत्तेः सांनिध्यात् पञ्च प्रायणीये षट् उदयनीये इति निर्णयः ।

**त्रयस्तथेति चेत् । ११ ॥**

प्रायणीयोदयनीययोः ऐकादशिनानां पशूनां तथा द्वेधा विभागे कर्तव्ये सति प्रायणीये त्रयः स्युः शेषा अष्टौ उदयनीये इति विभागः कर्तव्यः । बहुत्वसमानाधिकरणसंख्यानां त्रित्वस्य प्राथम्यात् प्रथमोपस्थितस्य च त्यागे कारणाभावात् । इति चेत् कश्चित् ब्रूयात् ।

**न समत्वात् प्रयाजवत् । १२ ॥**

प्रायणीयोदयनीययोः ऐकादशिनानां पशूनां द्वेधा विभागे कर्तव्ये त्रयः अष्टौ इति विभागः स्यात् बहुषु त्रित्वस्य प्राथम्यात् इति शङ्कां निषिध्य सिद्धान्तमाह । नैतदेवम् । किंतु पञ्च षट् इत्येव विभागः कर्तव्यः । समत्वात् ईषदसमाससमत्वात् । समत्वं च प्राथम्यात् बलवत् । प्रयाजवत्, यथा पशौ षडागन्तवः प्रयाजाः दार्शिकप्रयाजयोः प्रथमोत्तमयोः विकारभूताः साम्येन प्रविभज्यन्ते, एवमिहापि यावच्छक्यं साम्येन विभज्य अभ्यधिक एक उदयनीये आलप्स्यते । तस्मात् पञ्च षट् इति विभाग इति **सिद्धान्तः । के.**

* समासः । देवदत्तस्य गुरुकुलं इत्यत्र नित्यसापेक्षत्वात् समासः । (देवदत्तस्य यो गुरुः तस्य कुलं गृहं इत्यर्थः ) । गुरुशब्दस्य संबन्धिशब्दत्वात् शिष्यसंबन्धिरूपं विना स्वार्थप्रतिपादनाशक्तेः ताद्रूप्यमन्तरेण स्वार्थाभिधानापर्यवसानात् अपर्यवसितस्वार्थाभिधान(त्वे ?) एव शब्दान्तराभिधानसंयोगात् स्वार्थाभिधानवेलायामेव संबन्ध्यन्तरशिष्यमात्रप्रतीतौ निर्विशेषसामान्यानुपपत्तेः तद्विशेषापेक्षायामपि पर्यवसितस्वार्थाभिधानव्यापारस्य शब्दस्य संबन्ध्यन्तरान्वयसिद्धौ व्यापारान्तराभावेन सामर्थ्याविघातात् समासो युक्तः । सु. पृ. २५२. * समासः । द्विवचनबहुवचनान्तानामसमास इति चाभियुक्तवचनात् । **भा.** ६।७।१३।२३ । सर्वेषु समासेषु अभियुक्तवचनं प्रमाणं इति वार्तिककारचरणाः । संख्याशब्दविषयकमेवाभियुक्तवचनं स्यात् इति **केवलः** । * समासः नोपपद्यते असामर्थ्ये । **भा.** १०।७।३।११. * समासः वाक्यम् । यदा वाक्यं तदा अन्यपदार्थसंबन्ध एव भवति नावान्तरसंबन्धः । यदा समासः तदा अवान्तरसंबन्धो लभ्यते । **टुप्.** १०।६।३।४. * समासः । वृत्तिपक्षे समासस्य नित्यत्वात्, पूर्वपक्षीभूते । **भा.** १०।६।३।४ । न चैष नियोगो वृत्तिपक्षे नित्यः समास इति । विभाषां हि भगवान् पाणिनिः अधीते इति सिद्धान्ते । १०।६।३।५, * समासः । समानाधिकरणसमासस्तु बलीयान् ( कर्मधारयः तत्पुरुषाद् बलीयानित्यर्थः ) । ६।१।१३।५१. * समासः सापेक्षस्यापि प्रधानस्य भवति । **वा.** २।१।५।१७ पृ. ४२२ । भवति वै प्रधानस्य सापेक्षस्यापि समासः । पृ. ४२४, * समासः । सापेक्षत्वे सति समासानुपपत्तिः । ३।५।१०।३१. * अर्थप्रयुक्तो हि **समासः । टुप्.** १०।१।६।१२. * असति सामर्थ्ये समास एव न स्यात् । **भा.** ९।२।३।१४, * द्वंद्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः । १०।६।४।८. * प्रधानस्य पदान्तरं अपेक्षमाणस्यापि भवति समासः । यथा, राजपुरुषो दर्शनीयः इति प्राधान्यात् पुरुषस्य दर्शनीयत्वमपेक्षमाणस्य अपि राज्ञा सह समासो भवति । एवं प्रायणीयोदयनीययोः ऐकादशिनान् अपेक्षमाणयोरपि भवति समासः । **टुप्.** १०।६।४।८. * 'भवति हि प्रधानस्य सापेक्षस्यापि समासः' इति स्मृतेः ( महर्षिपतञ्जलिवाक्यरूपायाः ) 'राजपुरुषः शोभनः' इति पुरुषशब्दस्य शोभनशब्दसापेक्षस्यापि राजानं प्रति प्राधान्यात् राजशब्देन सह समासो युक्तः । **सु.** पृ. २५१. * समर्थानां हि पदानां समासो भवति । **भा.** २।३।१।१ पृ. ५७२. * **समासाः ।** सर्वे च समासाः संबन्धोत्तरकालम् । यथा राजपुरुष

इति स्वस्वामिभावे अवगते, चित्रगुरिति चित्राभिर्गोभिः संबन्धेऽवगते, पञ्चमूलीति समाहारसंबन्धोत्तरकालम्, उपकुम्भमिति समीपसंबन्धोत्तरकालम्। टुप्. ६।१। ६।२४ पृ. १३७३. * **समासेन** च विदधतो नानेकगुणविधानं दुष्करम्। भा. ३।५।१३।३८, टुप्. ७।३।३।७. * **समासस्य** ऐकपद्यम्। सु. पृ. ७८४. * समासस्य तद्धितवत् सापेक्षेष्वप्रवृत्तिः। वा. ३।२। १७।४१. * **समासे** साकाङ्क्षेणासंबन्धः। भा. ३।२। १७।४१. * **समासेषु** शक्तिरङ्गीकार्या इति **वैयाकरणाः**। मणि. पृ. १४६–१४७। लक्षणा इति **नैयायिकाः**। १४८–१४९। न शक्तिर्न वा लक्षणा। किंतु समासोपस्थितविग्रहवाक्यादेव बोधः इति **भाट्टचिन्तामणिकारः**। 'समासवादः' इति बिन्दौ द्रष्टव्यम्।

* **समासान्तर्गतयोः** एकमुद्देशकं इतरद्विधायकं भवितुं न खलु अर्हति (एकप्रसरताभङ्गापत्तेः इति शेषः)। टुप्. ४।१।४।७.

* क्रियया च संबन्धः **समासोत्तरकालभावी**। टुप्. ६।१।६।२४ पृ. १३७३.

* **समासोपात्तविशिष्टार्थविधौ** वाक्यभेदो नास्ति। बाल. पृ. १०१.

* **समास–प्रातिपदिकावृत्तिलक्षणः** वाक्यभेदः। बाल. पृ. १८१.

* **समासवाक्यस्य** विग्रहवाक्योपस्थित्या बोधजनकत्वं युक्तम्। अत एव विग्रहसंदेहे बोधसंदेहोऽपि उपपद्यते। मणि. पृ. १५०.

* **समासवादः**। समासः चतुर्विधः, अव्ययीभावतत्पुरुषद्वंद्वबहुव्रीहिभेदात्। तत्र पूर्वपदार्थप्रधानः अव्ययीभावः। यद्वा अव्ययार्थप्रधानः अव्ययीभावः। तेन सूपप्रति इत्याद्यव्ययीभावे नाव्याप्तिः। उत्तरपदार्थप्रधानः तत्पुरुषः। उभयपदार्थप्रधानो द्वंद्वः। अन्यपदार्थप्रधानो बहुव्रीहिः। इति लक्षणानि। उपकुम्भं, राजपुरुषः, धवखदिरौ, चित्रगुः इत्याद्युदाहरणानि। नीलोत्पलं इति कर्मधारयः, पञ्चमूली इति द्विगुश्च तत्पुरुषस्यैव भेदौ।

ननु उन्मत्तगङ्गं इत्यव्ययीभावे तल्लक्षणं अव्याप्तम्, अतिव्याप्तं च बहुव्रीहिलक्षणम्। एवं सूपप्रति इत्यादौ अव्ययीभावे 'सुप् प्रतिना मात्रार्थे' (पा० २।१।९) इतिसूत्रविहिते तत्पुरुषलक्षणातिव्याप्तिः, उत्तरपदार्थप्राधान्यात्। एवं 'अर्धं नपुंसकम्' (पा० २।२।२) इत्यादिसूत्रविहिते अर्धपिप्पली, पूर्वकायः इत्यादितत्पुरुषे अव्ययीभावलक्षणातिव्याप्तिः। एवं द्वित्राः इति बहुव्रीहौ तल्लक्षणाव्याप्तिः, द्वंद्वलक्षणातिव्याप्तिश्च। एवं शशकुशपलाशं इति समाहारद्वंद्वे समाहारप्राधान्यात् द्वंद्वलक्षणस्य अव्याप्तिः, बहुव्रीहिलक्षणस्य च अतिव्याप्तिः। इति चेन्न। तेषां प्रायिकत्वेन लक्षणत्वाभावात्। तत्तदधिकारपठितत्वमेव तत्तल्लक्षणं इति **वैयाकरणाः**।

वस्तुतः अव्ययार्थप्रधानत्व–अविद्यमानावयवार्थत्वविशिष्टान्यपदार्थप्रधानत्वान्यतरत्वं अव्ययीभावत्वम्। तेन उन्मत्तगङ्गं, सूपप्रति इत्याद्यव्ययीभावे नाव्याप्तिः, न वा तत्पुरुषलक्षणातिप्रसङ्गः। समस्यमानान्यतरपदार्थप्रधानत्वे सति सुब्लोपाभाववत्पदान्तत्वं तत्पुरुषत्वम्। तेन राजपुरुषः, अर्धपिप्पली इत्यादितत्पुरुषे न लक्षणाव्याप्तिः, न वा अव्ययीभावे लक्षणातिप्रसङ्गः। एवं अन्यपदार्थप्रधानत्वं बहुव्रीहित्वम्। द्वित्राः इत्यत्र अपि समस्यमानपदार्थसंख्याप्राधान्येन द्वंद्वत्वेऽपि अन्यपदार्थसंख्येयप्राधान्येन बहुव्रीहित्वम्। अन्यपदार्थतावच्छेदकं चात्र अल्पत्वम्। एवं च 'संख्ययाऽव्यया०' (पा० २।२।२५) इति सूत्रं संख्येयप्राधान्यगमकं संख्यावाचकाव्ययादिपदानां बहुव्रीहिविधायकं इति संगच्छते। एवं 'दिङ्नामान्यन्तराले' (पा० २।२।२६) इत्यादिसूत्राणि अन्यपदार्थप्राधान्येन बहुव्रीहिविधायकानि भवन्ति, यथा उत्तरपूर्वा, केशाकेशि, भुजाभुजि, सपुत्रः इति। अत्र अंशे तुल्यसंबन्धित्वं अन्यपदार्थतावच्छेदकम्। अत एव '**एकद्वैरथवा द्वित्रैर्भ्रमरा मधुसीकरैः। कुक्षिंभराः परं तेऽपि न सन्ति खलु केतके॥**' इत्यादौ अल्पत्वपरिच्छिन्नव्यक्तीनां बोधः। एवं 'उपदशाः' इत्यत्र अन्यपदार्थेनवैकादशव्यक्तीनां बोधः। अतः अत्रापि अन्यपदार्थप्राधान्यमव्याहतम्। एवं 'तेन सहेति तुल्ययोगे' (पा० २।२।



२८) इतिसूत्रविहिते 'सपुत्रः' इति बहुव्रीहौ तुल्यक्रियान्वयी पिता अन्यपदार्थः इति बहुव्रीहित्वं मुख्यम्। समाहारद्वंद्वे तु समाह्रियमाणानामेव क्रियान्वयित्वेन समाहारस्य अप्राधान्यात् न द्वंद्वलक्षणाव्याप्तिः बहुव्रीहिलक्षणातिव्याप्तिश्च इति युक्तम्।

**अन्ये** तु 'उन्मत्तगङ्गं' इत्यादीनां बहुव्रीहित्वम्, द्वित्रा इत्यादौ द्वंद्वत्वादिकमेव। अव्ययीभावबहुव्रीह्यधिकारपाठस्तु तद्धर्मनपुंसकत्वस्वरादिप्राप्त्यर्थः। अन्यथा अधिकारसूत्रविरोधापत्तेः। न च तत्रापि प्रकरणविरोधापत्तिः, अधिकारसूत्रश्रुत्यनुरोधेन प्रकरणबाधस्य न्याय्यत्वात्। 'अन्यपदार्थे च संज्ञायाम्' (पा० २।१।२१) इत्यव्ययीभावस्य समभिव्याहारविशेषे अन्वर्थताबाधवत् तेन प्रकरणबाधाच्च। अतः उक्तान्येव लक्षणानि **इत्याहुः**।

**(अथ समासार्थविचारः-) अत्र वैयाकरणाः।** राजपुरुषः इत्यादितत्पुरुषादीनां राजविशिष्टपुरुषादौ शक्तिः। न तु समासान्तर्गतराजादिपदशक्त्या राजादिबोधः। 'समर्थः पदविधिः' (पा० २।१।१) इति महाधिकारेण एकार्थीभावलक्षणे सामर्थ्ये समासादिसकलवृत्तिविधानात्। पदोद्देशेन विधीयमानः समासादिः समर्थः विग्रहवाक्यार्थाभिधाने शक्तिं प्राप्तः इति सूत्रार्थः। एकार्थीभावश्च समस्यमानपदद्वयस्य स्वार्थपरित्यागेन एकार्थप्रतिपादकत्वम्। स च अर्थः अराजकीयभिन्नः राजसंबन्धवांश्च अयं इति भेदरूपः संसर्गरूपश्च। न च क्लृप्तराजादिपदशक्तित एव तादृशोपस्थितिसंभवे किं समासशक्तिकल्पनेन इति **वाच्यम्**। राजपुरुषादिपदे उत्करूपेणोपस्थितये चित्रग्वादिपदे स्वामित्वेनोपस्थितये च तत्कल्पनात्। अन्यथा पङ्कजादिपदेऽपि पद्मत्वेन उपस्थितये अतिरिक्तशक्तिकल्पनं न स्यात्।

किंच समासगतराजपदेन राज्ञः स्वतन्त्रोपस्थितेः राजा पुरुष इत्यत्रैव विशेषणान्वयापत्तिः। न च 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति निषेधेन तदनापत्तिः, तस्य विशिष्टशक्तिसिद्धपदार्थैकदेशत्वकृतानन्वयानुवादकत्वात्। अपिच एवं वाक्यसमासयोः तुल्यार्थत्वेन विभाषावचनस्य समासनियमनिवारणार्थत्वं कल्प्यं इति गौरवम्।

किंच, कृतविश्वः, प्राप्तोदकः, उद्धृतौदनः इत्यादिबहुव्रीहिषु विश्वजनककृतिमान्, उदककर्तृकप्राप्तिकर्म, ओदनोद्धरणावधिः इत्याद्यर्थकेषु कृतादिपदानां लक्षणासंभवात्, चित्रग्वादिपदे च विनिगमनाविरहेण चित्रपदे गोपदे वा लक्षणासंभवात् उभयत्र लक्षणायां बोधावृत्तिप्रसक्तेः। न च प्रत्ययार्थान्वयानुरोधेन चरमपदे लक्षणा इति **वाच्यम्**। अनेकपदानां अन्यपदार्थप्रतिपादकत्वाभावेन बहुव्रीहित्वभङ्गापत्तेः। न च तात्पर्यग्राहकतया अन्येषां तत्प्रतिपादकत्वम्, घटादिपदेष्वपि आद्यवर्णानां तात्पर्यग्राहकतया अन्त्यवर्णे शक्त्यापत्तेः।

किंच, शिवो नाम गायको यस्य इति शिवनामगायकः इति बहुव्रीहौ शिवकर्तृकगानकर्मीभूतनामवान् इति बोधस्य शक्तिकल्पनं विना सुतरामनुपपत्तिः। अतः समासेषु विशिष्टशक्तिरङ्गीक्रियते।

किंच, तत्र शक्त्यनङ्गीकारे अर्थवत्त्वाभावेन प्रातिपदिकसंज्ञा न स्यात्। न च 'चित्रगुमानय' इत्यादिषु कर्मत्वाद्यर्थबोधकत्वं समस्यमानोत्तरपदार्थगतस्वार्थबोधकत्वं वा समासोत्तरविभक्तीनां इति **वाच्यम्**। अर्धपिप्पली इत्यादौ व्यभिचारात् क्लृप्तव्युत्पत्तिभङ्गापत्तेश्च।

किंच, समासस्य प्रातिपदिकतया तदेकदेशपुरुषादिपदार्थस्य पुरुषादेः प्रातिपदिकार्थत्वाभावेन तत्प्रकारकबोधो न स्यात्। न स्याच्च समस्यमानपदार्थयोः परस्परान्वयः, विभक्तिजन्योपस्थित्यभावेन राजपदार्थप्रकारकबोधायोगात्, अभेदातिरिक्तसंबन्धेन नामार्थप्रकारकबोधे विभक्तिजन्योपस्थितेर्हेतुत्वात्।

किंच, राजपदस्य संबन्धिनि संबन्धे वा लक्षणा? नाद्यः, राज्ञः पुरुष इति वाक्यस्य समासभिन्नार्थकतया तेन विवरणविरोधात्। नान्त्यः, विरुद्धविभक्तिरहितप्रातिपदिकार्थयोः अभेदान्वयव्युत्पत्त्या राजसंबन्धरूपः पुरुषः इति बोधापत्तेः।

अतः समासेषु शक्तिरङ्गीकार्या इत्याहुः।

अत्र **गौतमीयाः** । समासेषु क्लृप्तराजपदादेरेव संबन्धिलक्षणया राजसंबन्ध्यभिन्नः पुरुषः इति बोधसंभवे न शक्तिकल्पनं युक्तम् । महाधिकारस्यापि अजहत्स्वार्थलक्षणव्यपेक्षारूपसामर्थ्ये समासादिविधानेन उपपत्तेः । पदोद्देश्येन विधीयमानः समासादिः समर्थः स्वार्थवाचकपदनिष्ठः इति सूत्रार्थः ।

एतेन– राजपदार्थे शोभनादिविशेषणान्वयापत्तिः, निष्कौशाम्बिः, गोरथः इत्यादौ क्रान्तयुक्तादिपदकल्पनाऽऽपत्तिश्च– परास्ता । राज्ञः पदार्थैकदेशतया तत्र विशेषणानन्वयात् .लक्षणया क्रान्ताद्युपस्थितिसंभवाच्च । लक्षणाशक्तिभ्यां बोधेच्छायां समासविग्रहनियमेन विभाषासूत्रोपपत्तेः । राजादिपदशक्त्यग्रहे राजपुरुषः, चित्रगुः इत्यादौ बोधाभावेन तत्र शक्तिग्रहस्य आवश्यकतया पङ्कजादिपदेषु अवयवशक्त्यग्रहेऽपि बोधोदयेन तच्छक्तिग्रहस्यानावश्यकतया पङ्कजादिपदवैलक्षण्यस्य स्पष्टत्वात् ।

किंच, 'चित्रगुः' इति समासस्य न स्वामित्वादौ शक्तिः संभवति, तत्तत्पदेन सेवकदेशादिप्रतीत्या नियमेन तदप्रतीतेः तत्रतत्र शक्तिकल्पनायां नानार्थताऽऽपत्तिः, पङ्कजत्वस्य तु नियतप्रतीत्या तत्र शक्तिः इति वैलक्षण्यम् ।

किंच, 'प्राप्तोदकः' इत्यादावपि उदकपदे लक्षणा, प्राप्तादिपदस्य धातुप्रत्ययतदर्थज्ञानविलम्बेन तत्र लक्षणाया विलम्बितत्वात् । प्रत्ययार्थस्य संनिहितपदार्थगतत्वानुरोधाच्च । अत एव चित्रग्वादिपदेऽपि गोपदे लक्षणा । विरुद्धविभक्तिरहितप्रातिपदिकार्थयोः अभेदान्वयव्युत्पत्त्यङ्गीकाराच्च चित्रराजादिपदार्थान्वयसिद्धिः । **न च** एकपदलक्षणायां 'अनेकमन्यपदार्थे' (पा० २।२।२४) इतिव्याकरणविरोधः । तेन अनेकस्य अन्यपदार्थे वर्तमानस्य समासानुशासनात् इति **वाच्यम्** । सर्वपदस्यापि तात्पर्यग्राहकतया परंपरया अन्यपदार्थबोधकत्वात् । अतः अन्य(न्त्य)पदे लक्षणा । घटादिपदशक्तिस्तु विशिष्टस्य संकेतितत्वात् विशिष्टे कल्प्यते । अस्तु वा अन्त्यवर्णे शक्तिः । अत्र क्लृप्तराजादिपदादेव लक्षणया तादृशार्थबोधसंभवे शक्तिकल्पनमन्याय्यम् ।

यत्तु समासे अर्थवत्त्वाभावात् प्रातिपदिकसंज्ञा न स्यादिति । तन्न, 'कृत्तद्धितसमासाश्च' (पा० १।२।४६) इति तद्विधानात् । 'शशशृङ्गं' इत्याद्यनर्थकेषु तद्विधानस्य सप्रयोजनकत्वात् ।

एतेन तत्र कर्मत्वानन्वयदूषणं अपास्तम् । समस्यमानपदलक्ष्यार्थगतस्वार्थबोधकत्वव्युत्पत्त्यङ्गीकारात् । विशिष्टशक्तिस्वीकारे उक्तरीत्या उक्तस्मृतिविरोधः । विशिष्टस्य अतिरिक्ततया अनेकत्वासंभवात् । अतो लक्षणैव युक्ता इत्याहुः ।

**आचार्योदयस्तु** बहुव्रीहौ शक्तिरेव, तस्य मतुबर्थसमानार्थकत्वात्, मतुपः 'गोमांश्चैत्रः' इत्यादौ अभेदान्वयाय संबन्धिवाचित्वनिश्चयात् । अत एव इन्द्रपीताधिकरणे तत्पुरुषात् बहुव्रीहौ लाघवं अङ्गीकृतं इत्याहुः ।

अत्र **मीमांसकैकदेशिनः** । 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते' इति वार्तिकात् ( वा. पृ. ६७५ ) सर्वेषां कृत्तद्धितसमासरूपयौगिकशब्दानां द्रव्ये शक्तिं आहुः ।

**परे** तु अनिर्ज्ञातशक्तिकैकदेशयौगिकपदपरं इदं वार्तिकम् । तेन पाचकः, गोमान् इत्यादिकृत्तद्धितानां द्रव्यवाचित्वेऽपि बहुव्रीहेः न तद्वाचित्वम् । तत्रापि विशेष्ये द्रव्याविनाभूतगुणवाचकपदबहुव्रीहेः एकहायनी पिङ्गाक्षी इत्यादेः द्रव्यवाचित्वे द्रव्याक्षेपकत्वे वा चित्रगुः इत्यादौ तदसंभवेन द्रव्यलक्षणाया आवश्यकत्वात् । अतः क्वचित् बहुव्रीहौ लक्षणा । न चैवं इन्द्रपीताधिकरणविरोधः, इन्द्रपीतपदे तत्पुरुषेऽपि पूर्वपदलक्षणया पीतपदे हुताहुतशेषलक्षणया लक्षणाद्वयापत्त्या लाक्षणिकबहुव्रीह्यपेक्षया तत्पुरुषस्य दुर्बलत्वात् सिद्धान्तसिद्धिः । अत एव निषादस्थपत्यधिकरणे लक्षणापत्त्या तत्पुरुषापेक्षया कर्मधारयस्य प्राबल्यमुक्तम् । अन्यथा तत्र ज्ञानोपायाक्षेपलाघवेन बहुव्रीह्यापत्तेर्दुरुद्धरत्वात् । अतः क्वचित् बहुव्रीहौ लक्षणा इत्याहुः ।

**ये** तु सर्वत्र बहुव्रीहौ शक्तिं मन्यन्ते तेषां भावं नाकलयामः ।

अन्ये तु मतुपोऽपि संबन्धो वाच्यः । तस्य चैत्रे प्रकारतया अन्वयः, संबन्धिनि वा लक्षणा । तेन बहुव्रीहेः न मतुबर्थकत्वं इत्याहुः ।



**अहं तु ब्रुवे** । समासेषु न शक्तिः, न वा लक्षणा, किंतु समासोपस्थितविग्रहवाक्यादेव बोधः, श्लोकादौ अन्वयवाक्यादिवत् । अत एव 'रामेश्वरः' इत्यादौ **'रामस्तत्पुरुषं प्राह बहुव्रीहिं महेश्वरः । अन्ये तु ऋषयः सर्वे कर्मधारयमूचिरे ॥'** इत्यादौ तादृशविग्रहवाक्योपस्थित्यैव बोधः । एवं च विग्रहसंदेहे बोधसंदेहोऽपि उपपद्यते । अतः समासवाक्यस्य विग्रहवाक्योपस्थित्या बोधजनकत्वं युक्तम् । **न च** बहुव्रीहौ विग्रहवाक्यात् पुरुषप्रकारको बोधः, समासे तु पुरुषस्य विशेष्यत्वेन भानं इति कथं वैषम्यं इति **वाच्यम्** । चित्राणां गवां यः, प्राप्तस्य उदकस्य यः, कृतस्य विश्वस्य यः इति विग्रहवाक्यस्यापि तादृशस्य अङ्गीकारात् । **न चैवं** सर्वत्र षष्ठीबहुव्रीह्यापत्त्या 'शेषो बहुव्रीहिः' (पा० २।२।२३) इति सूत्रानुपपत्तिः इति **वाच्यम्** । तस्य उक्ताव्ययीभावादिसंज्ञकसमासभिन्नपरत्वात् । अत एव 'निषादस्थपतिं' इत्यादौ व्यधिकरणतत्पुरुषात् समानाधिकरणतत्पुरुषस्य ज्यायस्त्वं संगच्छते । सामानाधिकरण्यवैयधिकरण्ययोः विग्रहवाक्याधीनत्वादिति । विशेषणपदे सामानाधिकरण्यं च विशेष्यसमानलिङ्गरूपत्वानुरोधकृतसमानविभक्तिविशेषकत्वम् । तेन 'देवदत्तस्य पत्न्याः' इत्यत्र विशेष्यलिङ्गकत्वाभावात् 'देवदत्तः पचति' इत्यादौ समानविभक्तिकत्वाभावात् नातिप्रसङ्गः । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तकानां एकत्र प्रवृत्तिः । अत्र लिङ्गनियमाननुशिष्टविभक्त्यन्तत्वं विवक्षणीयम् । तेन 'देवदत्तो मित्रं' इत्यादौ न व्यभिचारः इति दिक् ।

अथ 'राजपुरुषः' इति तत्पुरुषे पूर्वपदे लक्षणा । **न च** तत्र लुप्तषष्ठ्यैव संबन्धबोधात् न शक्तिः, न वा लक्षणा इति **वाच्यम्** । षष्ठीलोपं अजानतोऽपि अर्थप्रत्ययात् । किंचैवं साधुशब्दस्मारकत्वेन अपभ्रंशोपयोगवत् विग्रहस्मारकत्वमात्रेण समासोपयोगः स्यात् । **न च** संबन्धस्य संसर्गतया भानोपपत्तेः न लक्षणा इति **वाच्यम्** । विग्रहसमासयोः भिन्नार्थत्वापत्तेः । विग्रहवाक्ये संबन्धस्य प्रकारतया भानेन समासे संसर्गत्वायोगात् । अतो लक्षणा आवश्यकीति ।

अत्र **पक्षधरः** । राजपदेन राजसंबन्धी लक्ष्यते, राजसंबन्धी पुरुषः इत्यनुभवात् । विरुद्धार्थकविभक्त्यवरुद्धयोः प्रातिपदिकार्थयोः भेदान्वयस्य व्युत्पत्तिसिद्धत्वात् । एवं 'घटो न' इत्यत्रापि घटपदेन घटप्रतियोगिकलक्षणया घटप्रतियोगिकाभावयोः अभेदान्वयानुभवः । अतो राजपदेन संबन्धी लक्ष्यते इत्याह ।

**अन्ये** तु राजपदेन संबन्ध एव लक्ष्यते, लाघवात् । न चात्र अभेदस्य नियमतः प्रतीतिः । नीलोत्पलं इत्यादिसमानाधिकरणतत्पुरुषेऽपि नीलस्यैव समवायेन प्रकारत्वात् भेदान्वयः । नीलमुत्पलं इति वाक्ये तु समानविभक्त्यवरुद्धत्वस्य विरुद्धविभक्त्यनवरुद्धत्वापेक्षया लघुतया तन्त्रत्वात् अस्तु अभेदान्वयः । एवं च भिन्नप्रवृत्तिनिमित्तकत्वे सति एकधर्म्युपस्थापकत्वरूपं सामानाधिकरण्यं नीलघटयोरभेदः इत्यादिव्यवहारश्च युज्यते । नीलरूपघटत्वयोः आश्रयाभेदः इति वाक्यार्थः । तेन समासे समानविभक्तिकत्वाभावात् अभेदप्रत्ययायोगेन संबन्धमात्रं लक्ष्यते । 'अर्धपिप्पली' इत्यत्रापि पिप्पलीपदेन संबन्ध एव लक्ष्यते इत्याहुः ।

**परे** तु नीलोत्पलं इति कर्मधारये नीलपदस्य नीलवति लक्षणा । अभेदश्च उत्पले प्रकारतया भासते, व्याससमासयोः समानप्रकारकभानजनकत्वनियमात् । यदि च व्यासेऽपि कर्मत्वार्थकद्वितीयायाः अभिन्ने लक्षणा, तस्य च उत्पले अभेदेन अन्वयः तदा समासेऽपि अभिन्ने लक्षणा इति समानार्थकत्वोपपत्तिः इत्याहुः ।

अन्ये तु विशेषणविभक्तेः साधुत्वार्थत्वात् अभेदस्य व्यासे समासेऽपि संसर्गतयैव भानम् । अन्यथा अभिन्नलक्षणायां नीलाभिन्नाभिन्नं उत्पलं इति बोधः स्यात् । अभेदलक्षणायामपि लक्षणैव दोषः । अतः कर्मधारये न लक्षणा । अत एव निषादस्थपतिशब्दे तत्पुरुषबहुव्रीह्यपेक्षया लक्षणाऽभावलाघवेन कर्मधारयः अङ्गीकृतः । अङ्गीकृतं च फलमुखं अध्ययनप्रयुक्तं गौरवं इत्याहुः ।

'चार्थे द्वंद्वः' ( पा० २।२।२९ ) इति विहिते द्वंद्वे पदद्वये लक्षणा । तथाहि । समुच्चय–अन्वाचय–इतरेतरयोग–समाहाराः चत्वारः चार्थाः । तुल्य-

वदुभयोः क्रियाप्रयोजकत्वे समुच्चयः । अन्यतरस्य अप्रयोजकत्वे अन्वाचयः । चकारसमभिव्याहारे एव एतद्बोधक इति न तयोः समासः । ' चार्थे द्वंद्वः ' इति सूत्रेण चकारमात्रबोधितेऽर्थे द्वंद्वविधानात् अनयोः चकारं विना अपिशब्देनापि बोधनाच्च । इतरेतरयोग-समाहारयोस्तु चकारमात्रार्थत्वात् तत्रैव समासः । यथा ' धवखदिरौ छिन्धि, कुशपलाशमानय ' इति । अत्र इतरेतरयोगद्वंद्वस्थपदोपस्थितयोः धवखदिरयोः छिदि-क्रियान्वयेन द्वित्वान्वयेन च कुत्रापि न शक्तिर्लक्षणा वा । घटौ घटाः इत्यादिस्वरूपैकशेषेऽपि न लक्षणा । घटपदाच्च शक्त्यैव युगपन्नानाघटोपस्थितौ द्वित्वबहुत्वा-न्वयसंभवात् । ' पितरौ ' इत्यादिविरूपैकशेषेषु पितृ-पदेन जनकदांपत्ये लक्षिते द्वित्वान्वये लक्षणैव । ' पाणि-पादं ' इत्यादौ समाहारद्वंद्वेऽपि एकत्वान्वयानुरोधेन तावत्पदार्थवृत्तिः एकबुद्धिविषयरूपः समाहारो लक्षणया उपस्थाप्यते इति सिद्धान्तः ।

**अत्र केचित्** । इतरेतरयोगे विभक्त्युपस्थिते द्वित्वादिसंख्यायाः धवे खदिरे चान्वयः । तत्र च न धवत्वाद्यन्वयितावच्छेदकं द्वित्वपर्याप्त्यधिकरणत्वानव-च्छेदकत्वात् , विभक्तेः प्रकृत्यर्थतावच्छेदकव्याप्यसंख्या-भिधायकत्वनियमात् । अतो धवपदं साहित्याश्रयतया धवखदिरौ लक्षणया उपस्थापयति इति साहित्यावच्छिन्ने द्वित्वान्वयः । न चैवं खदिरपदवैयर्थ्यम् , साहित्याश्रय-विशेषलाभतात्पर्यकत्वात् । वृत्तिद्वयविरोधापत्त्या धवेऽपि लक्षणैव । अतः इतरेतरयोगद्वंद्वे लक्षणा आवश्यकी । एवं च मित्रावरुणपदे मित्रयोः वरुणयोः इति विग्रहो-पदर्शकं वाक्यं उपपद्यते, अन्यथा द्विवचनानुपपत्तेः । एवं समाहारद्वंद्वेऽपि एकत्वान्वयार्थे साहित्ये लक्षणा आवश्यकी । परंतु इतरेतरयोगद्वंद्वे साहित्याश्रये लक्षणा । एवं च विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्व-व्युत्पत्तिः अपरित्यक्ता भवति । एवं सरूपैकशेषस्थलेऽपि साहित्योपस्थित्या द्वित्वान्वय्यर्थे लक्षणा इत्याहुः ।

**तन्न** । प्रत्यक्षेणेव पदद्वयेनोपस्थिते अर्थद्वये द्वित्वान्वयसंभवात् , योग्यतावच्छेदकप्रकारकज्ञानस्य शाब्दबोधहेतुत्वे मानाभावात् , विभक्तेः पदार्थतावच्छे-दकधर्मसमानाधिकरणसंख्याभिधायकत्वाच्च । अत एव ' घटेन जलमाहरति ' इत्यत्र सच्छिद्रेतरत्वेन न घटो-पस्थितिः, किंतु घटत्वेनैव, ' घटश्च पटश्च स्तः ' इति द्वित्वान्वयश्च ।

एतेन सुप्तिङोः एकसंख्याभिधायकत्वलक्षणसामाना-धिकरण्यनियमात् एकत्वेन उपस्थिते द्वित्वान्वयासंभवात् ' चैत्रो मैत्रश्च गच्छतः ' इत्यादौ चकारोपात्तसाहित्या-न्वयिनि द्वित्वान्वयेन, क्रियायां वा द्वित्वान्वयेन बोधः । अन्यथा एकत्वेन उपस्थिते द्वित्वान्वये ' एकौ द्वौ ' इति प्रतीत्यापत्तिः । इति **परास्तम्** ।

वस्तुतो यत्र सुबुपस्थाप्यसंख्या तिङुपस्थाप्यसंख्या-विरोधिनी तत्र सामानाधिकरण्यानुपपत्तिः । सुब्द्वयोप-स्थाप्यैकत्वद्वयस्य तिङुपस्थाप्यद्वित्वेन विरोधाभावात् ' घटश्च पटश्च स्तः ' इति प्रयोगो युक्तः, न तु ' एको द्वौ ' इति, तत्र एकत्वस्य विरोधित्वात् इति ।

न च समाहारलक्षणायां पाण्यादीनां क्रियान्वयो न स्यादिति वाच्यम् । परंपरासंबन्धेन पाण्यादौ क्रियान्व-याङ्गीकारात् ।

**केचित्तु** । एवं नञ्तत्पुरुषेऽपि ' अघटः पटः ' इत्यादौ घटप्रतियोगिकान्योन्याभावे नञो लक्षणा, तत्रापि अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्ति-लभ्यत्वात् अन्योन्याभावमात्रे लक्षणा । एवं च घट-प्रतियोगिकान्योन्याभाववान् पटः इति बोधः । एवं ' न घटः ' इति वाक्येऽपि लक्षणैव, नञः संसर्गाभावे शक्तत्वात् इति दिक् । **मणि. पृ. १४४–१५४.**

* **समासव्यासयोः** समानप्रकारकभानजनकत्व-नियमात् । **मणि. पृ. १५२.**

* **समासस्थमुपसर्जनं विशेषणैर्न संबध्यते** । वाक्य-स्थं तु ' ऋद्धस्य राज्ञः पुरुषः ' इतिवत् संबध्यमानं दृष्टम् । वा. ३।४।४।१३ पृ. ९३८.

* **समाहारद्वन्द्वे** चरमपदं समाहारलक्षकम् । वि. १०।४।२ वर्णकं २.

* **समित्** । खादिरी अग्निहोत्रसमिद् भवति । भा. ७।३।१।४. * ' **समिधो** यजति ' अयं क्रत्वर्थः



अपूर्वविधिः । बाल. पृ. २२, * ' समिधो यजति ' अयं क्रत्वर्थः उत्पत्तिविधिः । पृ. १३, * ' समिधो यजति ' अयं पञ्चमलकारः विधिः श्रौतः । पृ. ४०, * ' समिधो यजति ' इत्यवान्तरवाक्यम् । पृ. ९. * ' समिधो यजति ' इत्याद्याः प्रयाजाः दर्शपूर्ण-मासाङ्गं प्रकरणात् । भा. ३।३।४।११. * ' समिधो यजति ' ' तनूनपातं यजति ' इति क्रमेण पठितानां यागानां अनियमेनानुष्ठानमुत पाठक्रमेण । पाठक्रमेणात्र क्रमनियमः इति निर्णयः । शा. ५।१।४. * ' समिधो यजति ' ' तनूनपातं यजति ' इति यजतिशब्दः पञ्च-कृत्वोऽभ्यस्तः । तत्र प्रत्यभ्यासं अदृष्टभेदः, न तु पञ्चभ्यः एकमपूर्वम् । भा. २।२।२।२. * ' समिधो यजति ' ' तनूनपातं यजति ' इत्यादीनि कर्मनामधेयानि । वि. ९।२।२०. * ' समिधो यजति ' 'तनूनपातं यजति ' इत्यादौ यजतिपदाभ्यासः कर्मभेदकं प्रमाणम् । २।२। २।२. मीको. पृ. ५६८ ' अभ्यासाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' समिधो यजति ' ' तनून-पातं यजति ' इत्यादिविधिवाक्यपाठेन प्रतीतः क्रमो नियतो गृह्यते प्रयाजानाम् । वि. ५।१।४ । अत्र समिधः इति बहुत्वं ' समिधो अग्न आज्यस्य व्यन्तु ' इति मन्त्रवर्णप्राप्तं देवतागतमनूद्यते, न तु कर्मगतत्वेन विधी-यते, उत्पत्तिवाक्ये विधानाभावात् । **सोम. २।२।७.**

* **समिदादयः** शब्दाः यागवचनाः । भा. १०।१।७।१४ पृ. १८१०. * **समिदादीनां** अङ्गानां यथा प्रयोगवचनैक्यं न तथा नैमित्तिकपाथिकृतादि-यागानां प्रयोगवचनैक्यम् । **सोम. ५।३।१२.** * **समिदादिषु** प्रत्यक्षयागपुनःश्रुतेर्भेदकत्वम् । वा. २।३।१४।२८.

* **समिदादिपदानां** नामधेयत्वेन प्रयाजानामारा-दुपकारकत्वम् । ९।२।२०।५८–५९. **मीको. पृ.** २०५२ ' दर्शपूर्णमासयोः प्रयाजाः० ' इत्यत्र अधि-करणं द्रष्टव्यम् ।

* **समिदादियाज्यासु** अनृक्ष्वपि याज्यात्व-प्रसिद्धिः । वा. ३।२।५।१२ पृ. ७६०.

* **समिदादिवाक्यानि** याज्याविधिपराण्येव इति वेदार्थज्ञानकुशला मीमांसकशिरोमणयो विदांकुर्वन्तु । कु. २।२।२।२. * **समिदादिवाक्यानां** उत्पत्तिविनि-योगपरत्वम् । **कणिका. पृ. ३८३.**

* **समिदादिशब्दानां** देवताविधित्वं नवमे निरा-करिष्यते । **सु. पृ. ७१८.**

* **समिदाधानं** प्रत्याहुति प्राक् कर्तव्यम् । **संकर्ष.** २।४।८.

* **समिद्घृतन्यायः** । आज्यभागयोः ' जुषाणो अग्न आज्यस्य वेतु ' ' जुषाणः सोम आज्यस्य हविषो वेतु ' इति निगदरूपौ मन्त्रौ । तत्र अर्थप्रतिपादनरूप-द्वारभेदे अपि मुख्यविशेष्यभूतप्रधानप्रकाशनरूपकार्यै-कत्वात् जुषाणनिगदयोर्विकल्पः । याज्यावषट्कारयोस्त-थात्वे अपि वाचनिकः समुच्चयः । हविः–पदविषये तु अहविः–सहविः– पदयोः **समिद्घृतन्यायेन** उक्त-योरेव निगदयोः प्रयोगसंभवादनुवादमात्रम् । **संकर्ष.** ४।३।११, * इडायां चतुरुपह्वयते इति विधिः । इडोप-हूता इति पदे एव प्रकृत्य अस्य पाठात् पदविषयिणी एवावृत्तिः समिद्घृतन्यायेन अयं प्रवादः । ४।३।१८.

### समिद्बर्हिर्वनस्पत्यादीनां अलौकिकानां देवतात्वम् ॥

वनस्पतियागे समिद्बर्हिःप्रयाजादिषु च या देवताः ताः प्रत्यक्षा यूपसमिद्बर्हिरादय एव । 'यूपमेवैनं भागधेयं करोति ' इति वचनान्तरे यूपस्यैव वनस्पतीज्याभागित्व-श्रवणात् । अप्रसिद्धलौकिकार्थान्तरकल्पने मानाभावाच्च । इति प्राप्ते, नामसाम्यमात्रेण तत्प्रत्यक्षाणां देवतात्वम् । अलौकिकप्रमाणैकसमधिगम्याया अपूर्ववदलौकिकत्वाव-श्यंभावात् । भावनायां करणत्वेनान्वयदशायामेव देवतो-द्देश्यकत्वेन यागस्वरूपबोधात् पश्चात्कथंभावाकाङ्क्षया अन्वीयमानानामिध्मबर्हिरादीनां देवतास्वरूपघटकत्वा-योगात् सरस्वतीतिप्रसिद्धदेवतानामसाम्येन ' एका चेत् सरस्वती नदीनाम् ' इति मन्त्रे नदीस्तवनवत् सोम-लतायामुमासहायनामसाम्येन ' सोमः पवते जनिता मतीनाम् ' इति मन्त्रे द्यावापृथिव्यादिजनकत्वोक्तिवच्च स्तावकमात्रं यूपस्य हविर्भागित्ववादः । अत एव

प्रयाजेषु देवताविप्रतिपत्तौ निर्णायिका स्मृतिः । 'आग्नेया इति तु स्थितिर्भक्तिमात्रमितरत्' इति । कौषीतकी श्रुतिरपि । 'यदुत्तमे प्रयाजे देवताः समावपति प्रयाजभाज एवैनास्तत्करोति तद्यथाऽग्निः सर्वेषु भागी भवत्येवं तदग्नेर्भागे देवताभागिनीः करोति' इति पञ्चस्वपि प्रयाजेष्वग्नेर्भागित्वं सिद्धवत्कृत्याह । **संकर्ष.** २।२।२.

* '**समिद्वती** घृतवती चानूच्येते' । सामिधेनी 'तं त्वा समिद्भिः०' इयमेव सा नान्या काचित् । **संकर्ष.** ४।१।१०.

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् । ५।३।३।४ ॥**

दर्शपूर्णमासयोः पञ्चदश सामिधेन्यः । 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य', 'चतुर्विंशतिमनुब्रूयात् ब्रह्मवर्चसकामस्य' इत्यादयः काम्याः पक्षाः । तत्र संख्यापूरणं दाशतयीतः ऋचामागमेन इति वक्ष्यते (१०।५।८।२७–३३) । आगन्तूनां च क्व निवेश इति विचारे पूर्वपक्षमाह । संख्यापूरणार्थं आगमितानामृचां धाय्याशब्दो वाचकः । धीयन्ते आधीयन्ते आगमय्य स्थाप्यन्ते इति धाय्याः । 'पाय्यसांनाय्यनिकाय्यधाय्याः०' (पा० ३।१।१२९) इति निपातनात् साधुत्वम् । ता एता धाय्याः ऋचः समिध्यमानवतीं समिध्यमानशब्दघटितां 'समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥' इति ऋचम्, समिद्धवतीं समिद्धशब्दघटितां 'समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर । त्वं हि हव्यवाडसि ॥' इति ऋचं च अन्तरेण मध्ये, अनयोर्ऋचोर्मध्ये स्युः, न सर्वासामन्ते । कुतः ? द्यावापृथिव्योरन्तराले समर्हणात् स्तवनात् स्तुतत्वात् । 'इयं वै समिध्यमानवती (पृथिवी), असौ समिद्धवती (द्यौः) यदन्तरा तद्धाय्याः' इति अन्तरिक्षत्वेन संस्तवात् उक्तयोरन्तराले धाय्या विधीयन्ते । इति **पूर्वः पक्षः** ।

**तच्छब्दा वा । ५ ॥**

दर्शपूर्णमासयोः पञ्चदश सामिधेन्यो नित्याः । एकविंशतिचतुर्विंशत्यादिसंख्याकास्तु काम्याः । तत्र काम्यत्वपक्षे संख्यायाः पूरणं दाशतयीतः ऋचामागमेन । आगन्तवश्च ऋचः समिध्यमानवतीसमिद्धवत्योरन्तराले स्युः इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तमाह । वाशब्देन पूर्वपक्षः निराक्रियते । याः ऋचः तच्छब्दाः सः शब्दः यासां बोधकत्वेन श्रुतः ताः तच्छब्दाः । धाय्याशब्दोक्ताः ऋच एव समिध्यमानवतीसमिद्धवत्योरन्तराले स्युः, न सर्वा आगन्तवः ऋचः । यद्यपि पाणिनिवचनात् सर्वा एव सामिधेन्यो धाय्याशब्दिताः भवेयुः तथापि 'पृथुपाजवत्यौ धाय्ये' 'उष्णिक्ककुभौ धाय्ये' इति यासु धाय्याशब्दः श्रूयते, ता एव धाय्याः । ता एव च मध्ये निवेशनीयाः, इतरास्तु अन्ते । इति **सिद्धान्तः** ।

'तच्छब्दो वा' इति पाठे तु तच्छब्दः धाय्याशब्दः यस्यामृचि श्रुतः स्यात् सैव मध्ये निवेशनीया, इतरास्तु अन्ते इति **सूत्रार्थः** ।

**उष्णिक्ककुभोश्चान्ते दर्शनात् । ६ ॥**

त्रैधातवीयायामिष्टौ 'उष्णिक्ककुभौ धाय्ये' इति वचनेन ककुप्छन्दस्कायाः 'प्र सो अग्ने तवोतिभिः' इति ऋचः, उष्णिक्छन्दस्कायाः 'प्र होत्रे पूर्व्यं वचः' इति ऋचश्च 'समिध्यमानवतीसमिद्धवत्योरन्तरालदेशं दर्शयित्वा' इति शेषः । 'अग्ने त्री ते वाजिना' इति अधाय्यायाः त्रिष्टुप्छन्दसः 'त्रिवत्या परिदधाति' इति वचनेन सामिधेनीपरिधानीयात्वमुक्तम् । तेन च 'अग्ने त्री ते' इत्यस्याः अन्ते दर्शनात् धाय्याशब्दितानां मध्ये निवेशः, इतरासां तु अन्ते निवेशः इति सिध्यति । इति वृत्तौ व्याख्यातम् ।

भाष्ये कुतूहले च उष्णिक्ककुप्शब्देन सूत्रकारः त्रिष्टुभमेव ब्रूते 'त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभौ' इति कारणे कार्यवदुपचारः कृतः इत्युक्तम् । तथा च उष्णिक्ककुभोः त्रिष्टुभः इत्यर्थः, अन्ते दर्शनात् इति सूत्राक्षरार्थः संपद्यते ।

अत्र वृत्तिपक्षे अध्याहारदोषः, भाष्यादिपक्षे तु लक्षणादोषः, इत्युभयत्र दोषेऽपि भूयःसु सूत्रेषु अध्याहारं विना अर्थसामीचीन्याभावदर्शनात् वृत्तिपक्ष एव साधीयान् इति मन्यामहे । अत्र 'प्र सो अग्ने इत्युष्णिक्ककुभौ धाय्ये अग्ने त्री ते वाजिना इति त्रिवत्या परि-



दधाति' इति सत्याषाढीयं श्रौतसूत्रं (२५।६।२७) द्रष्टव्यं वृत्तिपक्षोपयोगि । **के.**

* '**समिध्यमानवतीं** समिद्धवतीं च' । सामिधेनी । **संकर्ष.** ४।१।१०.

* **समिध्यमानवती**–समिद्धवत्योरन्तराले धाय्याशब्दितानामेव निवेशः । **भा.** ५।३।३।४–६.

* **समिष्टयजुः** । यस्तु समस्तकार्यनिर्वृत्त्युत्तरकालं साधारणः शेषो भविष्यति तस्य तस्य समिष्टयजुराख्यं प्रतिपत्त्यन्तरं आम्नातम् । यदा तु इदमपि उपस्तरणादिवदेव अर्थकर्म अवधार्यते तदा सुतरां शेषाभावः । शक्यं तु तैत्तिरीयवाक्यापेक्षया प्रतिपत्तित्वमवधारयितुम् । **वा.** ३।५।१६. * **समिष्टयजूंषि** अग्निष्टोमे तृतीयसवनान्ते । 'स्तीर्णे वेदे नवगृहीतमाज्यं अध्वर्युर्गृहीत्वा 'धाता रातिः०' इति अन्तर्वेदि ऊर्ध्वस्तिष्ठन् जुह्वा आहवनीये नव समिष्टयजूंषि जुहोति' । **सत्याश्रौ.** ९।४।६०. * समिष्टयजूंषि दर्शपूर्णमासयोः । 'देवा गातुविदः' इति अन्तर्वेदि ऊर्ध्वस्तिष्ठन् ध्रुवया आहवनीये त्रीणि समिष्टयजूंषि जुहोति । **सत्याश्रौ.** २।६।२० । एकं द्वे त्रीणि वा, संततं विग्राहं वा । २१–२२ । मध्ये स्वाहाकारे बर्हिरनुप्रहरति । २५ । बर्हिर्मुष्टिं वा । २६ । हुते वा अनुप्रहरति । २७ । प्रहृत्य वा अभिजुहुयात् । २८ । * समिष्टयजूंषि न जुहोति अग्निष्टोमे । **भा.** ११।१।७।३५. * **समिष्टयजुषः** अपि ध्रौवकार्यत्वमेव न प्रतिपत्तित्वमित्याहुः । तन्न । समिष्टयजुर्होमस्यैव दृष्टार्थत्वाय ध्रौवप्रतिपत्तित्वात् । **सोम.** ३।५।१.

* **समिष्टयजुःपत्नीसंयाजानां** पाशुकप्रयोगविधिविहितानां क्रमः व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यादेव सिध्यति । **भाट्ट.** ५।१।१५.

**समीपलक्षकशब्दमङ्गीकृत्य तदर्थः क्रियते इति न्यायः** । अयं ज्योतिःशास्त्रे व्यवहृतः । **साहस्री.** ५६९.

* **समुच्चयः** । अगतिका ह्येषा गतिः । यत् कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्याताम् । सत्यां हि गतौ न तौ आश्रयणीयौ स्तः । **भा.** १०।५।११।४७.

* समुच्चयः अग्नीनामुत्पत्तौ आधानस्य पवमानेष्टीनां च (भाष्यमते) । **वि.** ५।३।९. * समुच्चयः अग्निचयने श्रुतानां दीक्षाहुतिमन्त्राणां सौमिकदीक्षाऽऽहुतिमन्त्रैः । १०।३।४।२३–२९. **मीको.** पृ. ४९ 'अग्निचयने श्रुतानां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः अग्निचयनादौ संख्यया विहितानां मन्त्राणाम् । १२।३।१४।३०. **मीको.** पृ. ५१ 'अग्निचयने संख्यया विहितानां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः अञ्जनाभ्यञ्जनाख्ये सत्रे गौग्गुलवादितैलेन नवनीतस्य । १०।४।६।१०–१२. **मीको.** पृ. १८६ 'अञ्जनाभ्यञ्जने सत्रे०' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः । अदृष्टार्थत्वे सति अनिर्ज्ञातोपायपरिमाणत्वेन प्रधानस्य एकाङ्गविधानेन नैराकाङ्क्ष्याप्रतीतेः समुच्चयः स्यात् । **सु.** पृ. १४१. * समुच्चयः अनुवाक्यासु याज्यासु च गायत्रीपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतिषु यथायथम् । **संकर्ष.** ४।३।११. **मीको.** पृ. १५५६ "गायत्री पुरोऽनुवाक्या भवति' इत्येवमादिलक्षणानि०" इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः अश्वमेधोपदिष्टसौवर्णराजतग्रहाभ्यां अतिदिष्टैन्द्रवायवादिग्रहाणाम् । **भा.** १०।४।२।३–५. * समुच्चयः अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः, वत्सत्वचः उपरिवासस्त्वात् । १२।३।१।१–२. **मीको.** पृ. ७५१ 'अष्टरात्रगते विश्वजिति०' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः आतिदेशिकोपगानकर्तृणामृत्विजां उपगानकर्त्रीभिः पत्नीभिः गवामयने महाव्रते । १०।४।५।८–९. **मीको.** पृ. ११४२ 'उपगानकर्त्रीभिः पत्नीभिः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः आध्वरिकाहुतीनां दीक्षाहुतिभिः । **संकर्ष.** २।४।२७. **मीको.** पृ. ९३५ 'आध्वरिकाहुतीनां दीक्षाहुतिभिः समुच्चयः' इत्यत्र अधिकरणं द्रष्टव्यम् । * समुच्चयः उभयोरेकार्थत्वे न भवति । **भा.** ८।१।१५।२६. * समुच्चयः उभयोर्भिन्नकार्यत्वे । **शा.** १२।३।१. * समुच्चयः एकस्मिन् कर्मणि विहितानां गुणानाम् । यथा आघारे 'ऋजुमाघारयति, संततमाघारयति, प्राञ्चमाघारयति' इति । **भा.** १२।३।३।९, * समुच्चयः ऐकादशिनेषु पशुषु उपयड्-

होमे अनेकगुदानाम्, न विकल्पः । १२।४।४।८. ❋ समुच्चयः क्रतुपशूनां प्राजापत्यैः पशुभिर्वाजपेये । १०।४।३।६. मीको. पृ. ३४९२ ' वाजपेयोपदिष्टैः प्राजापत्यैः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः ग्रहचमसानां अतिरात्रे रात्रिपर्यायेषु । संकर्ष. ३।३।१६. मीको. पृ. २६१ ' अतिरात्रे रात्रिपर्यायेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः चतुष्पथैकोल्मुकयोः त्र्यम्बकेषु । संकर्ष. २।४।१५. मीको. पृ. १९८५ ' त्र्यम्बकेषु चतुष्पथैकोल्मुकयोः समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः जपमन्त्राणाम्, स्तुतिमन्त्राणाम्, आशीर्मन्त्राणाम्, अभिधानमन्त्राणां च प्रत्येकम् । १२।४।१।१–२. मीको. पृ. १७४४ ' जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**समुच्चयस्त्वदोषार्थेषु । १२।३।६।१७ ॥**

यानि तु प्रायश्चित्तानि अदोषार्थानि न दोषस्य निर्घातार्थानि ' यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियात् मैत्रं चरुं निर्वपेत् सौर्यमेककपालम् ' इत्यादीनि निमित्ते सति विहितानि तेषु समुच्चयः स्यात् । यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन गृह्यन्ते । इति सिद्धान्तः । के.

❋ ' समुच्चयस्त्वदोषनिर्घातार्थेषु ' ( १२।३।६।१७ ) इत्यत्र नैमित्तिकक्रत्वङ्गक्रियासमुच्चयः उक्तः । बाल. पृ. १६६, ❋ 'समुच्चयस्त्वदोषनिर्घातार्थेषु' (१२।३।६। १७ ) इत्यत्र ' मित्रे जुहोति ' इति क्रत्वर्थः अधिकारविधिः नैमित्तिकः सन् अदोषनिर्घातार्थः इत्येतदुदाहरणं शास्त्रदीपिकायामुक्तम् । पृ. १४, ❋ ' समुच्चयस्त्वदोषनिर्घातार्थेषु ' ( १२।३।६।१७ ) इत्यधिकरणे अनियतं अदोषनिर्घातार्थं प्रतिपादितम् । पृ. ८५, ❋ समुच्चयः त्रिविधः– न्यायगम्यः, वाचनिकः, ऐच्छिकः इति । तत्र सजातीय–विजातीय–विषयत्वेन जातिद्रव्यगुणक्रियासु द्विक–त्रिक–चतुष्कविषयत्वेन पञ्चदशविधः । तत्र सजातीयविषयः चतुर्विधः । विजातीयद्विकविषयः षोढा, जातिद्रव्ययोः, जातिगुणयोः, जातिक्रिययोः, द्रव्यगुणयोः, द्रव्यक्रिययोः, गुणक्रिययोश्चेति । विजातीयत्रिकविषयः चतुर्धा । चतुष्कविषयस्तु एकः । एते पञ्चदश भेदा न्यायगम्याः । उदाहरणानि ' न्यायगम्यः ' इति शब्दे द्रष्टव्यानि । मीको. पृ. २४०५ । ते च पुनः क्रत्वर्थजात्यादिविषयाः पुरुषार्थजात्यादिविषयाश्चेति प्रत्येकं द्विविधाः । पृ. १६६. ❋ समुच्चयः न आधाने दक्षिणासंख्यासु भिन्नासु, किंतु विकल्पः । भा. १२।४।५।९. ❋ समुच्चयः न ऐन्द्राबार्हस्पत्ये कर्मणि याज्यानुवाक्यायुगलद्वयस्य, किंतु विकल्पः । १२।४।२।३–४. मीको. पृ. १३२२ 'ऐन्द्राबार्हस्पत्ये कर्मणि० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः न काम्यनित्ययोः चयने उख्येऽऽग्नौ । भा. १२।४।७।१७–२५, ❋ समुच्चयः न किंतु विकल्पः, पशुगणेषु पत्नीसंयाजेषु जाघनीनाम् । जाघन्या पत्नीसंयाजनं च न प्रतिपत्तिः किंतु अर्थकर्म । १२।४।६। १०–१६. ❋ समुच्चयः न दाशतयीभ्य आनीतानामाग्नेयीनां याज्ञसेनीभिः सांवत्सरिके अग्निचयने । संकर्ष. २।१।३३. मीको. पृ. ५४ ' अग्निचयने सांवत्सरिके दाशतयीभ्य आहृतानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः न दोषनिर्घातार्थेषु प्रायश्चित्तेषु किंतु विकल्पः ' यदि ऋक्तो यज्ञ आर्तिमियात् भूः स्वाहेति जुहुयात् ' इत्यादिषु । भा. १२।३।५।१६, ❋ समुच्चयः न ब्राह्मणविहितानां एकार्थानां मन्त्राणाम्, किंतु विकल्पः । १२।३।१५।३१–३५, ❋ समुच्चयः न विकृतिषु कौत्सादिभिः सामभिः प्राकृतानां साम्नाम् । १०।४।८।१७ वर्णकं २, ❋ समुच्चयः न संभवति, एकार्थत्वात् । ८।१। १५।२६. ❋ समुच्चयः नारिष्ठहोमादीनामातिदेशिकानां नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः । १०।४।१।१–२. मीको. पृ. २३२७ ' नारिष्ठहोमादीनामातिदेशिकानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः निवीतोपवीतयोः श्येने । भा. १०।४।१।१–२, ❋ समुच्चयो नैमित्तिकानां प्रायश्चित्तानां यथानिमित्तम् । १२।३।६।१७. ❋ समुच्चयः पशुगणे उपयाजसाधनानां गुदानाम् । १२।४।४।८. मीको. पृ. ११५८ 'उपयाजगुदसमुच्चयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः पृष्ठ्ये षडहे उपदिष्टेन मध्वशनेन अतिदिष्टस्य पयोव्रतादेः । भा. १०।४।१।१–२ वर्णकं १.



❋ समुच्चयः प्रत्येकं एकक्रियान्वयः इति शाब्दिकाः । साहित्यसामान्यं इति मीमांसकाः । बाल. पृ. १६३. ❋ समुच्चयः प्राकृताहतवाससः तार्प्यादिभिः महाव्रते । १०।४।७।१३–१५. मीको. पृ. ३१३२ ' महाव्रते तार्प्यादिभिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः प्राकृतसाम्नां स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः महाव्रते । १०।४।८।१६–१७. मीको. पृ. ३१३४ ' महाव्रते स्तोत्रान्तरसाधनीभूतैः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः प्रायश्चित्तानामदोषनिर्घातार्थानाम् । समुच्चयाधिकरणम् । १२।३।६।१७. ❋ समुच्चयः बृहद्रथंतरधर्माणां अविरुद्धानां वैश्यस्तोमे कण्वरथंतरे । ९।२।१६।४७. मीको. पृ. १३५१ ' कण्वरथंतरे अविरुद्धानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः बृहस्पतिसवादिविकृतौ औपदेशिकैः बार्हस्पत्यादिग्रहैः आतिदेशिकानामैन्द्रवायवादिग्रहाणाम् । १०।४।२।३–५. मीको. पृ. १६४४ ' ग्रहसमुच्चयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः भिन्नकार्याणां गुणानामेकस्मिन् कर्मणि । १२।३।३।९. मीको. पृ. १२६८ 'एकस्मिन् कर्मणि भिन्नकार्याणां गुणानां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः मन्त्राणां संख्यायुक्तवचनविहितानाम् । अग्निचयने अभ्र्यादाने चतुर्णाम्, खनने द्वयोः, मृदाहरणे षण्णाम् । भा. १२।३।१४।३०, ❋ समुच्चयः महाव्रते शुक्रग्रहस्य प्राकृतैर्ग्रहैः । १०।४। २।३–५, ❋ समुच्चयः याज्यावषट्कारयोः । ' याज्याया अधि वषट्करोति ' इति नानार्थत्वात् । १२।३।१५। ३२. ❋ समुच्चयः वत्सत्वगहतवाससोः अष्टरात्रगते विश्वजिति । १२।३।१।१–२. मीको. पृ. ७५१ ' अष्टरात्रगते विश्वजिति० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ ' समुच्चयो वा प्रयोगे द्रव्यसमवायात् । ' ( १२। ४।३।६ ) इत्यनेन सूत्रेण क्रयसाधनानां द्रव्याणां समुच्चयः सिद्धान्तितः । सु. पृ. १३०३. ❋ समुच्चयः वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य । १०।३।२१।७४–७५. मीको. पृ. ३१८५ ' यजुर्युक्ताधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः वाजपेयोपदिष्टप्राजापत्यपशुभिः आतिदेशिकक्रतुपशूनाम् । १०।४।३।६. मीको. पृ. ३४९२ ' वाजपेयोपदिष्टैः प्राजापत्यैः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः विषुवति अर्कग्रहस्य प्राकृतैर्ग्रहैः । भा. १०।४।२।३–५, ❋ समुच्चयः शास्त्रानुवचनयोः । १२।४।१।१२. ❋ समुच्चयः श्येनादौ उपदिष्टेन निवीतेन अतिदिष्टस्य उपवीतस्य । १०।४।१।१–२. मीको. पृ. २३२७ ' नारिष्ठहोमादीनां आतिदेशिकानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः श्येनोपदिष्टलोहितोष्णीषत्वादिभिरातिदेशिकस्योपवीतस्य । भा. १०।४।१। १–२. ❋ समुच्चयः संतानं च याज्यावषट्कारयोः । संकर्ष. ४।३।३. मीको. पृ. ३२४४ ' याज्यावषट्कारयोः समुच्चयः संतानं च ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः सांग्रहण्येष्टौ उपदिष्टैरामनहोमैः आतिदेशिकानामनूयाजानाम् । १०।४।४।७. ❋ समुच्चयः सोमक्रयणार्थानां दशानां द्रव्याणाम्, न तु विकल्पः । १२।४।३।५–७. ' सोमक्रयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ समुच्चयः हौत्रमन्त्राणाम् । १२। ३।१६।३६–३८. ' हौत्रमन्त्राणां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ❋ तुल्यवदुभयोः क्रियाप्रयोजकत्वे समुच्चयः । मणि. पृ. १५२. ❋ न च तुल्यार्थानां समुच्चयः । वा. १।२।१।७ पृ. ११६, ❋ न च तुल्यार्थानां समुच्चयो दृष्टः । २।१।४।१२ पृ. ४१४, ❋ नहि तुल्यार्थानां क्वचित् समुच्चयो दृष्टः । ३।६।१६। ४२ पृ. १०६४. ❋ याज्यानुवाक्ययोः गायत्रीत्वपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतौ यथासंभवं समुच्चयः । संकर्ष. ४।३।१२. ❋ समुच्चये हि पौर्वापर्यं भवति । भा. १२।३।१५।३२, ❋ न च संभवति समुच्चये विकल्पो न्याय्यः, पक्षे बाधः स्यात् । ५।३।११।२९.

**समुच्चयाधिकरणम्** । अदोषनिर्घातार्थानां प्रायश्चित्तानां समुच्चयः ॥

**समुच्चयस्त्वदोषार्थेषु । १२।३।६।१७ ॥**

भाष्यम्— यानि तु न दोषनिर्घातार्थानि, तेषु समुच्चयः । कानि पुनस्तानि ? यानि श्रुतस्याक्रियया प्रतिषिद्धसेवनानि, तान्युच्यन्ते । यथा ' यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियान्मैत्रं चरुं निर्वपेत्, सौर्यमेक-

कपालम् ' ' यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियात्, अग्निं समाधाय वाचं यत्वा दंपती सर्वाहमुपासीयाताम् ' इति । तत्र दोषो न दृश्यते । दोषस्याभावान्निर्घातार्थता नास्ति । केवलमभ्युदये निमित्ते कर्म विधीयते । तन्नैमित्तिकं कर्मणः प्रकरणे उत्पन्नत्वात् कर्माङ्गं विज्ञायते । यावन्ति चोद्यन्ते, तानि सर्वाणि प्रयोगवचनेन गृह्यन्ते । तेषां समुच्चयः ।

**शा—** यानि पुनर्न दोषनिर्घातार्थानि, निमित्ते कर्माङ्गानि ' भिन्ने जुहोति ' इत्यादीनि, तेषां प्रयाजादिवत् अपर्यायविधानात् समुच्चयः । इति प्रत्युदाहरणमात्रमेतत् ।

**सोम—** एकैकस्मिन्निमित्ते श्रूयमाणानामपि बहूनां तत्तद्विधिषु तत्तद्वाक्यशेषे वा दोषश्रवणाभावेन पूर्ववत् वाक्येन निरपेक्षतया दोषनिर्घातार्थत्वेन विधानाभावात् न विकल्पः, किंतु निमित्ते विधीयमानानामपि प्रयाजादिवत् क्रत्वङ्गतया तद्वदेव अपर्यायव्यापारेण प्रकरणेन युगपत् ग्रहणात् समुच्चयः ।

**वि—** ' भिन्नस्कन्नादिहोमादेर्विकल्पो वा समुच्चयः ।, विकल्पः पूर्ववत्, मैवमदोषे विहितत्वतः ॥ '

**भाट्ट—** यानि दोषग्राहकप्रमाणाभावान्न दोषनिर्घातार्थानि, अपि तु केवलं निमित्ते नैमित्तिकानि अदृष्टार्थानि, तत्र एकनिमित्तकानेकनैमित्तिकस्थले प्रयाजादिवत् समुच्चय एव । यथा अन्वाधानोत्तरं चन्द्रसूर्योपरागे इडाभक्षणात् पूर्वमपि ' उद्वयं, उदुत्यं, चित्रं ' इति मन्त्रत्रयकरणकहोमत्रयविधौ । नहि तत्र कश्चिद्दोषः वेधादिप्रयुक्तस्यापि इडाभक्षणात् पूर्वमप्रवृत्तेः । एतादृशविषये प्रायश्चित्तसमाख्या तु प्रायश्चित्तकाण्डपठितत्वमात्रेण औपचारिकी, यजमानकर्तव्यसामवैदिकपदार्थेषु औद्गात्रसमाख्यावत् । न तु पापविशोधकत्वेन, पापादेरेवाप्रसिद्धेः । यत्तु अत्र भाष्यकारेण सूर्योदयात् पूर्वमग्निहोत्रहोमाकरणे प्रायश्चित्तद्वयाम्नानमुदाहृतम्, तत् ' रूपं कालोऽनुनिर्वापो देवता श्रपणं तथा । आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः ॥ ' इति छन्दोगपरिशिष्टानुसारात् अनुदितहोमिनां कालातिक्रमनिमित्तदोषनिर्घातार्थत्वोपपत्तेः, इतरथा उदितहोमिनां सर्वदा प्रायश्चित्तकरणापत्तेः उपेक्षितम् । यदपि **पार्थसारथिना** ' भिन्ने जुहोति ' इत्याद्युदाहृतम्, तदपि क्रत्वङ्गकपालभेदननिमित्तवैगुण्यसमाधानार्थत्वोपपत्तेः द्वितीयप्रायश्चित्तालिखनाच्च उपेक्षितम् ।

**मण्डन—** ' नैमित्तं चेत् तत् समुच्चेयमेव । '

**शंकर—** ' दोषाभावे समुच्चयः । '

* **समुच्चयासंभवे** च बाधविकल्पौ, न संभवति समुच्चये । भा. १०।३।४।२६.

* **समुच्चयभेदाः** निरूप्यन्ते । यद्यपि शाब्दिकैः ' प्रत्येकमेकक्रियान्वयः समुच्चयः ' इति विशेषतोऽसौ लक्षितः, तथापि मीमांसकव्यवहारः साहित्यसामान्ये एव दृश्यते । ' परेणावेदनात् ' (५।३।११।२९) इत्यत्र हि समुच्चयप्रमाणाभावोऽपि ऐकार्थ्यवत् विकल्पहेतुरुक्तः । ' समुच्चयप्रमाणं च एकः प्रयोगविधिः ' इत्युक्तम् । न च प्रयाजादिषु प्रत्येकं एकस्याः दर्शपूर्णमासक्रियायाः अन्वयोऽस्ति । ग्रहैकत्वाधिकरणे ( ३।१।७।१३-१५ ) हि वार्तिककृता प्रत्येकवाक्यपरिसमाप्ति-समुदायवाक्यपरिसमाप्तिन्याययोः एवं विषयभेद उक्तः- प्राधान्ये पूर्वः, गुणत्वे तु उत्तरः । यथा 'ग्रहं संमार्ष्टि ' 'अरुणयैकहायन्या क्रीणाति ' इति । प्रयोगविधौ च प्रयाजादेर्गुणत्वात् न प्रत्येकं एकक्रियाऽन्वयोऽस्ति, अस्ति च समुच्चयप्रमाणत्वव्यवहारः इति साहित्यसामान्ये एव मीमांसकानां समुच्चयव्यवहारः सिद्धः ।

सोऽयं समुच्चयोऽपि विकल्पवत् प्रथमं तावत् त्रिविधः, न्यायगम्यो वाचनिकः ऐच्छिकश्चेति । तत्र न्यायगम्यः समुच्चयो विकल्पवत् नाष्टविधः, द्रव्यादीनां तदभावानां च समुच्चयायोगात् । नापि चतुर्विध एवासौ जात्योः द्रव्ययोः गुणयोः क्रिययोश्चेति, किंतु सजातीयविजातीयविषयत्वेन द्विकत्रिकचतुष्कविषयत्वेन च पञ्चदशविधः समुच्चयः ॥ तत्र सजातीयविषयश्चतुर्विध उक्त एव ॥ विजातीयद्विकविषयस्तु षोढा, जातिद्रव्ययोः जातिगुणयोः जातिक्रिययोः, द्रव्यगुणयोः द्रव्यक्रिययोः, गुणक्रिययोश्चेति ॥ विजातीयत्रिकविषयः चतुर्धा, चतुष्कविषयस्तु एकः ॥ एवं पञ्चदशानां न्यायगम्यसमुच्चयभेदानां क्रमेणोदाहरणान्युच्यन्ते । तत्र



(१) न्यायगम्यो जात्योः समुच्चयो यथा, सोमेश्वरमते क्रयैक्यात् तत्रैव गवाजादीनां न्यायेन समुच्चयः साधितो द्वादशे 'क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्' इत्यधिकरणे (१२।४।३) ॥ (२) न्यायगम्यो द्रव्ययोः समुच्चयो यथा, आधाने ' संभारान् संभरति ' इत्यत्र संभ्रियन्ते इति संभाराः इति संभारशब्दस्य यौगिकत्वेन, ' परिधीन् परिदधाति ' इत्यत्र च परिधीयते अग्निः तदायतनं वा यैः इति, परि समन्तात् धीयन्ते इति वा परिधिशब्दस्य यौगिकत्वेन द्रव्यत्वाचित्वात् ' संख्यायुक्तेषु तु समुच्चयः ' इति द्वादशाधिकरणन्यायात् ( १२।३।१४।३० ) ' तां चतुर्भिरभ्रिमादत्ते ' इत्यत्र मन्त्रसमुच्चयाय उक्तात् आधाने संभाराणां दर्शपूर्णमासयोश्च परिधीनां समुच्चयः इति ॥ ( ३ ) न्यायगम्यो गुणयोः समुच्चयो यथा ' अरुणया एकहायन्या ' इत्यत्र अरुणाधिकरणन्यायेन ( ३।१।६।१२ ) ' ऐककर्म्यान्नियमः स्यात् ' इत्यनेन आरुण्यस्य एकहायन्येकसंख्ययोश्च अन्योन्यनियमात् समुच्चयः ॥ ( ४ ) न्यायगम्यः क्रिययोः समुच्चयो यथा, एकादशे हि ' अङ्गानां तु शब्दभेदात् ' इत्यादिपञ्चदशसूत्रे द्वितीयेऽधिकरणे (वार्तिकमतेन अधिकरणस्य पञ्चदशसूत्रकत्वम् । ११।१।२।५-१९ ) प्रयाजानुयाजादीनामङ्गानां विकल्पः, अङ्गभूयस्त्वे फलभूयस्त्वं चेति पूर्वपक्षद्वयं निरस्य एकप्रयोगविधिविधेयत्वात् समुच्चय उक्तः । तथा द्वादशे ' क्रयणेषु तु ' ( १२।४।३।५ ) इत्यत्र संनिपातिक्रयसमुच्चयो न्यायगम्य उक्तः । तथा द्वादशे ' समुच्चयस्त्वदोषनिर्घातार्थेषु ' इत्यधिकरणे ( १२।३।६।१७ ) नैमित्तिकक्रत्वङ्गक्रियासमुच्चयो न्यायगम्य उक्तः ॥ ( ५ ) न्यायगम्यो जातिद्रव्ययोः समुच्चयो यथा 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति ' इति गोपदमाम्नातं इति आकृत्यधिकरणे ' अद्रव्यशब्दत्वात् ' ( १।३।९।३१ ) इति सूत्रव्याख्याने वार्तिककृता उक्तम् । तत्र एकहायनीपिङ्गाक्षीशब्दाभ्यां यौगिकाभ्यां उक्तस्य द्रव्यस्य गोशब्दोक्तायाश्च जातेः अरुणाधिकरणन्यायेन समुच्चयः ॥ (६) जातिगुणयोरपि न्यायगम्यः समुच्चयः अत्रैव गोत्वारुण्ययोः ॥ (७) न्यायगम्यो जातिक्रिययोः समुच्चयो यथा- ' निर्मन्थ्येनेष्टकाः पचन्ति ' इति । नहि अरुणाधिकरणे ( ३।१।६।१२ ) नियम्यमानस्य स्वशब्देनोपादानं न्यायशरीरान्तर्गतम्, किंतु यथाकथंचित् उपादानमपेक्षते । अस्ति चात्र पाकेन आक्षेपतः अग्निजातेरुपादानम् । तेन निर्मन्थ्यशब्दविहिताया मथनक्रियायाः पाकाक्षिप्तायाश्चाग्निजातेरैककर्म्यात् अरुणान्यायेनैव समुच्चयः इति ॥ ( ८ ) न्यायगम्यो द्रव्यगुणयोः समुच्चयो यथा- एकहायनीपिङ्गाक्षीशब्दाभ्यामभिहितस्य द्रव्यस्य आरुण्यस्य च समुच्चयः ॥ (९) न्यायगम्यो द्रव्यक्रिययोः समुच्चयो यथा- निर्मन्थ्यशब्देन यौगिकेन द्रव्योपादानात् तस्य मथनक्रियायाश्च अन्योन्यनियमात् अरुणान्यायेनैव समुच्चयः ॥ (१०) न्यायगम्यो गुणक्रिययोः समुच्चयो यथा- 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति' इति । अत्र हि वस्यते परिधीयते तत् वसनं इति यौगिकोऽयं वसनशब्दो निर्मन्थ्यवत् न वस्त्रजातिवचनः । तथा सति उष्णीषस्यापि वस्त्रत्वात् लोहितवसना इत्यनेनैव सिद्धे लोहितोष्णीषा इत्यनर्थकं स्यात् । ततश्च निर्मन्थ्यशब्देनेव वसनशब्देनोक्तायाः परिधानक्रियायाः लौहित्यगुणस्य च प्रचरन्ति इत्येकक्रियावशीकारात् अरुणान्यायेनैव समुच्चयः ॥ तदेवं न्यायगम्यानां द्विकसमुच्चयभेदानां दशानामुदाहरणान्युक्तानि ॥

एवं जातिद्रव्यगुणानां, जातिद्रव्यक्रियाणां, जातिगुणक्रियाणां, द्रव्यगुणक्रियाणां इति त्रिकविषयाश्चत्वारः, चतुष्कविषयश्चैकः इति पञ्चानां न्यायगम्यसमुच्चयभेदानामुदाहरणानि वाच्यानि । यथा- अरुणावाक्ये गोत्वजाति-एकहायनीद्रव्य-अरुणागुणानां इत्यादि । त एते पञ्चदश न्यायगम्यसमुच्चयभेदाः क्रत्वर्थजात्यादिविषया एवोदाहृताः । एवं पुरुषार्थजात्यादिविषया अपि पञ्चदश न्यायगम्यसमुच्चयभेदा उच्यन्ते । ( १ ) तत्र पुरुषार्थयोर्जात्योर्न्यायगम्यः समुच्चयो यथा-- मनुः- ' तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥ ' इति । अत्र हि व्रीहियवैरिति द्वंद्वोपात्तं समुच्चितं जातिद्वयं प्रकृतश्राद्धाश्रितं फले विधीयते । एवं मूलफलेनेति । ( वस्तुतस्तु छन्दोभङ्गो मा

भूदिति द्वंद्वद्वयं स्वीकृतं इति नात्र समुच्चयो विधित्सित इति प्रतीयते । के.) ॥ ( २ ) पुरुषार्थद्रव्ययोः न्यायगम्यः समुच्चयो यथा-- मार्कण्डेयः- ' भक्षभोज्यैस्तु संस्कृतैः' 'रागखाण्डवचोष्यैश्च' 'दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम्' इति । अत्र हेमाद्रिणा व्याख्यातम् -दन्तैरवखण्ड्य यद् भुज्यते तद् भक्षम् । यत्तु अनतिकाठिन्यादतिप्रयत्नवत्खण्डनानपेक्षं चर्वयित्वैव निगीर्यते तद् **भोज्यम्** । यस्य ओष्ठदशनरसनादिभिर्निष्पीडितस्य ससूत्कारेण मुखमारुतेन रसो निष्पीयते तत् **चोष्यम्** । यथा इक्षुखण्डादिकम् । मुद्गाढक्यादिरसाः क्वाथ्यगृहीताः शर्करादियुक्ताः **रागाः** । अम्लादियुक्ताः **खाण्डवाः** इति । तत्रैते सर्वे न जातिवचनाः । किंतु द्रव्यवचनाः । तत्र भक्ष-भोज्य-चोष्यशब्दाः उक्तार्थविशेषवचनेभ्यो धातुभ्यः कृत्प्रत्यये कृते निष्पत्तेर्यौगिकत्वात् द्रव्यवचनाः । रागखाण्डवशब्दौ तु रूढावपि कुलालादिशब्दवत् आकृत्यधिकरणाविषयत्वात् रूढ्यैव उपाधिविशिष्टद्रव्यवचनौ इति द्रव्याणामेवात्र द्वंद्वोपात्तानां प्रकृतश्राद्धाश्रितानां फले न्यायगम्यः समुच्चय इति । ( अत्र कुं भूमिं मृत्तिकां लालयति संस्कारैर्निष्पादयति इति यौगिकत्वेन कुलालशब्दो द्रव्यवचन इति युक्तं प्रतीमः- के. ) ॥ ( ३ ) पुरुषार्थयोर्गुणयोः न्यायगम्यः समुच्चयो यथा— वायुपुराणे- ' स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेत् ' इति । न च चशब्ददर्शनात् वाचनिकोऽयं समुच्चय इति भ्रमितव्यम्, ऐकार्थ्याभावात्, एकवाक्योपादानादेव समुच्चयसिद्धौ चशब्दस्यानुवादत्वात् । न च स्निग्धोष्णशब्दौ द्रव्यविधी, लोहितोष्णीषादिवत् अप्राप्तगुणस्यैव विधानात् । द्रव्यस्य तु श्राद्धविधिना प्राप्तस्यैवानुवादात् ॥ ( ४ ) पुरुषार्थक्रियासमुच्चयो न्यायगम्यो यथा- ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । अत्र हि यजिरूपैकशब्दोपादानात् आग्नेयादीनां साहित्यं फले विवक्षितं इत्येकादशाद्ये साधितम् ॥ (५) पुरुषार्थयोः जातिद्रव्ययोः न्यायगम्यः समुच्चयो यथा— पद्मपुराणे- 'संवत्सरं तथा गव्यं पयः पायसमेव च ' इति । अत्रापि चशब्दोऽनुवादः, एकवाक्योपादानेन न्यायादेव समुच्चयसिद्धेः । न च भिन्नपदोपात्तयोः पयःपायसयोः विधौ वाक्यभेदः, इन्द्रियकामाधिकरणे ( २।२।११ ) गुणफलसंबन्धविधौ भावनान्तरविध्यभ्युपगमेन उभयविशिष्टैकफलभावनाविधानात् अवाक्यभेदात् ॥ (६) पुरुषार्थयोः जातिगुणयोः न्यायगम्यः समुच्चयो यथा- 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति । इहापि हि खादिरप्रातिपदिकोपात्तया जात्या एकवचनोपात्तया चैकत्वसंख्यया विशिष्टं यत् एकं करणकारकं द्वितीयालक्षितं तद्विशिष्टा एका फलभावना विधीयते । तत्र खदिरत्वजातेः एकत्वसंख्यायाश्च एकपदोपादानात् ' पशुना यजेत ' इतिवत् समुच्चयः ॥ ( ७ ) जातिक्रिययोः पुरुषार्थयोः समुच्चये उदाहरणं मृग्यम् ॥ ( ८ ) पुरुषार्थयोः द्रव्यगुणयोः न्यायगम्यः समुच्चयो यथा- ' गोदोहनेन पशुकामस्य प्रणयेत् ' इति । अत्रापि हि खादिरपदवत् यौगिकगोदोहनप्रातिपदिकोक्तेन द्रव्येण एकवचनोपात्तया चैकत्वसंख्यया विशिष्टमेकं करणकारकं फले विधीयते । तयोर्द्रव्यसंख्ययोः एकपदोपादानात् ' पशुना ' इतिवत् समुच्चयः ।

**ननु** ' चमसेनापः प्रणयेत् ' इति चमसैकत्वं चमसस्थानापन्ने गोदोहनेऽपि प्राप्तमेवानूद्यताम्, न च प्रणयनाङ्गमेव एकत्वस्य द्वारमपेक्षितमिति वाच्यम्, अभ्युदयेष्टौ इज्यार्थत्वेन श्रपणानङ्गभूतयोरपि दधिपयसोः प्रणीतास्थानापत्त्या प्रणीताधर्मप्राप्तेः नवमे स्थापनात् (९।४।११।४३-४४) । **मैवम्** । प्रणीताधर्माणां हि प्रणीताङ्गत्वात् प्रणीतास्थानापन्नयोः दधिपयसोः युक्ता प्राप्तिः, चमसैकत्वं तु न चमसस्याङ्गं पश्वेकत्वमिव पशोः 'तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥ ' इति न्यायात् ( वा. ३।३।७।१४ पृ. ८४० ) । तेन चमसाधर्मत्वात् न चमसैकत्वं चमसस्थानापन्नेऽपि गोदोहने प्राप्नोति ।

**ननु** एवं स्थानापत्तिरूपेणातिदेशेन मा प्रापत् चमसैकत्वं गोदोहने, उपदेशेनैव तु प्राप्नोतु । 'चमसेन' इति हि चमसः एकत्वं च प्रणयनाङ्गम्, प्रणयनं च गोदोहनस्याश्रयः । तत्र गोदोहनेन एककार्यत्वात् चमसमात्रबाधेऽपि भिन्नकार्यत्वात् नैकत्वं बाध्यते इति तदङ्गकमेव प्रणयनमाश्रयो भवति इति एकत्वानुवाद एव स्यात् । न च ' नानृतं वदेत् ' इति पुरुषार्थनिषेधेऽपि क्रत्वर्थं संयोगान्तरमर्थवत् इत्युक्तं कर्त्रधिकरणे, तद्वदत्र क्रत्वर्थत्वेऽपि एकत्वस्य पुरुषार्थं संयोगान्तरमर्थवत् इति वाच्यम् । तत्र हि पुरुषार्थनिषेधेन नैतत् सिध्यति यत् ' तदतिक्रमे क्रतुफलं न भवति ' इति तदर्थं संयोगान्तरम् । इह तु फलार्थसंयोगान्तराभावेऽपि एकत्वस्य, प्रणयनाङ्गैकत्वातिक्रमे विगुणप्रणयनाश्रितात् गोदोहनात् फलं न भवति इति सिद्धमेव एकेनैव क्रत्वर्थसंयोगेन इत्यनर्थकं संयोगान्तरम् । तस्मात् 'गोदोहनेन ' इत्येकत्वानुवाद एव स्यात् । **मैवम्** । चमसैकत्वं हि प्रणयने उपदिश्यमानं द्वारमाकाङ्क्षमाणं प्रणयने यत् विधितो नित्यं चमसादि, तद्द्वारैव प्रणयने उपदिश्यते, अन्यथा नित्यानित्यसंयोगविरोधात् । तस्मात् गोदोहनाश्रयीभूते क्रत्वङ्गेऽपि प्रणयने नित्यद्वाराभावात् नोपदेशतश्चमसैकत्वं प्राप्नोति इति ' गोदोहनेन ' इत्येकत्वानुवादासंभवात् गोदोहनं तदेकत्वं चेत्युभयं समुच्चितं फलार्थे विधीयते इति सिद्धम् ॥ ( ९ ) द्रव्यक्रिययोः पुरुषार्थयोः न्यायगम्ये समुच्चये उदाहरणं मृग्यम् ॥ ( १० ) गुणक्रिययोः पुरुषार्थयोः न्यायगम्यः समुच्चयो यथा- ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति । अत्र हि 'अरुणयैकहायन्या ' इतिवत् एकवाक्योपात्तं ज्योतिष्टोमेन इत्येकत्वम्, करणं यागश्च यजिना करणत्वेन लक्षितः फलभावनायां समुच्चित्य विधीयते इति ॥ ( ११-१५ ) एवमेव जात्यादित्रिकविषयेषु चतुर्षु भेदेषु, चतुष्कविषये चैकस्मिन् भेदे उदाहरणान्यन्वेष्याणि । तदेवं न्यायगम्यः त्रिंशद्विधः समुच्चयो निरूपितः ।

वाचनिकस्यापि समुच्चयस्य तावन्त एव भेदाः, ते उच्यन्ते । यद्यपि दर्शपूर्णमासादिसमुच्चयोऽपि प्रागुक्तः कश्चित् एकयज्याद्यभिधानश्रुतिगम्यः, कश्चित् एकवाक्यगम्यः इति वाचनिक एव, तथापि चशब्द--उभयशब्दादिश्रुतिगम्य एव इह वाचनिकत्वेनाभिप्रेत इति भेदः । (१) तत्र क्रत्वर्थजातिसमुच्चयो वाचनिको यथा-- 'गौश्चाश्वश्च' इत्यादिः । न चात्र एकवाक्योपादानादेव समुच्चयसिद्धौ चशब्दः अनुवादमात्रमिति **वाच्यम्** । ' ऋत्विग्भ्यो दक्षिणां ददाति ' इति प्राप्तदक्षिणोद्देशेन अनेकद्रव्यविधौ वाक्यभेदापत्तेः चशब्दार्थविशिष्टानेकद्रव्यविधिं विना एकवाक्योपादानस्यैव असिद्धेः । (२) क्रत्वर्थद्रव्यसमुच्चयो वाचनिको यथा- सवनीयेषु ' आग्नेयमजमग्निष्टोम आलभेत ' इत्युक्त्वा ' ऐन्द्राग्नमुक्थ्ये द्वितीयं, ऐन्द्रं वृष्णिं षोडशिनि तृतीयं, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्' इति द्वितीयादिशब्दैः चशब्दस्थानीयैः यौगिकैन्द्राग्नादिशब्दोक्तानां तत्तद्देवताविशिष्टद्रव्याणां समुच्चयो विधीयते । अन्यथा सवनीयसमाख्यया एककार्यत्वावगमात् उक्थ्याद्युत्तरसंस्थासु विकृतिषु उपदिष्टैः ऐन्द्राग्नादिभिः अतिदिष्टस्य पूर्वस्याग्नेयस्य बाधापत्तेः । तदिदं संस्थाधिकरणे ( ३।६।१६ ) वार्तिककृतोक्तम् ॥ (३) क्रत्वर्थगुणसमुच्चयो वाचनिको यथा-- ब्रह्मपुराणे- ' मृष्टस्निग्धानि यानि स्युरीषत्कट्वम्लकानि च । स्वादूनि देवभोज्यानि तानि श्राद्धे नियोजयेत् ॥ ' इति । अत्रापि स्निग्धकट्वम्लकशब्दैः अरुणादिवत् गुणवचनैः अनेके गुणाः प्राप्तश्राद्धोद्देशेन चशब्दात् समुच्चिता एव '**गौश्चाश्वश्च**' इत्यादिवत् विधीयन्ते ॥ ( ४ ) क्रत्वर्थक्रियासमुच्चयो वाचनिको यथा- ' संसव उभे कुर्यात् ' ' गोसव उभे कुर्यात्' इति वार्तिककृन्मते अतिदेशतो विकल्पेन प्राप्तयोः रथंतरसाधनक--बृहत्साधनकयोः पृष्ठयोः समुच्चयो विकृतौ समुच्चयविशिष्टपदार्थवाचिना उभयशब्देन विहितः ॥ (५) क्रत्वर्थजातिद्रव्यसमुच्चयो वाचनिको यथा-- देवलः- ' ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्षवत् । चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत् ॥ ' इति । अत्र प्राप्तश्राद्धोद्देशेन ओदनजातिः अन्नशब्देनोक्ता, यौगिकचोष्यपेयशब्दोक्ते च द्रव्ये वाक्यभेदपरिहाराय चशब्देन समुच्चित्य विधीयन्ते । (६) क्रत्वर्थजातिगुणसमुच्चयो वाचनिको यथा-- देवलः -' अथ पिण्डावशिष्टान्नं भोजयेत् प्रयतो द्विजान् । भोजनैः सतिलैः स्नेहैर्भक्षपूपविमिश्रितैः ॥ ' इति । अत्र स्नेहैरिति गुणः तिलजातिश्च सहादेशोपस्थापित-

शब्देन चशब्दसमानार्थेन प्राप्ते श्राद्धे समुच्चित्य विधीयते ॥ (७) क्रत्वर्थजातिक्रियासमुच्चयो वाचनिको यथा—शङ्खलिखितौ— 'ततस्तिलैर्मांसैः शाकैः पूपैः कृशरपायसापूपैर्लाजैर्भक्षैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टमन्नं दद्यात्' इति । अत्र निर्मन्थ्यशब्दवत् पयसा शृतं पायसं इति शृतार्थतद्धितोपात्ता श्रपणक्रिया पयआदिजातिश्च चशब्देन प्राप्ते श्राद्धे समुच्चित्य विधीयते ॥ (८) क्रत्वर्थद्रव्यगुणसमुच्चयो वाचनिको यथा—ब्रह्मपुराणे— 'पूरिकां च रसालां च गोक्षीरं च नियोजयेत् । यानि चाभ्यवहार्याणि स्वादुस्निग्धानि भो द्विजाः । ईषदुष्णकटून्येव देयानि श्राद्धकर्मणि ॥' इति । अत्र रसालाशब्दः कुलालशब्दवत् रूढोऽपि न जातिवचनः । किंतु 'सिताचतुर्जातमधूषणाढ्यं दधिप्रघृष्टं सरसं रसाला ।' इत्युपाधिपुरस्कारेण द्रव्यवचनः । चशब्देन च तद् द्रव्यं स्निग्धोष्णादिश्च गुणः समुच्चित्य प्राप्ते श्राद्धे विधीयते ॥ (९) क्रत्वर्थद्रव्यक्रियासमुच्चयो वाचनिको यथा—पूर्वोक्ते शङ्खलिखितवाक्ये पायसशब्दः श्रपणक्रियाविधिः निर्मन्थ्यवत् इत्युक्तम्, भक्षशब्दो यौगिको द्रव्यवचनः इत्यप्युक्तम् । अतस्तत्र क्रियाद्रव्ये चशब्देन समुच्चित्य प्राप्ते श्राद्धे विधीयेते ॥ (१०) क्रत्वर्थगुणक्रियासमुच्चयो वाचनिको यथा—सौरपुराणे— 'विविधं पायसं दद्यात् भक्ष्याणि विविधानि च । लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना ॥' इति । अत्र पायसशब्दे प्रत्ययोपात्ता श्रपणक्रिया उष्णगुणश्च चशब्देन समुच्चित्य प्राप्ते श्राद्धे विधीयते ॥

एवं क्रत्वर्थजात्यादिविषया वाचनिकसमुच्चयभेदा दश सोदाहरणा उक्ताः । एवमेव दश पुरुषार्थजात्यादिविषया वाचनिकसमुच्चयभेदास्तदा स्युः यद्युदाहरणानि संभवेयुः । न तु तानि संभवन्ति । यानि तु 'श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियङ्गुभिः । गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥' इत्यादीनि कूर्मपुराणादिवाक्यानि प्रकृतश्राद्धाश्रितव्रीह्यादिजातीनां चशब्देन समुच्चितानां फलसंबन्धबोधकानीव दृश्यन्ते, तत्र सर्वत्र अनेकव्रीह्यादिविशिष्टफलभावनाविधाने वाक्यभेदाभावात् एकवाक्योपादानेनैव समुच्चये सिद्धे चशब्दस्यानुवादत्वात् न क्वापि वाचनिकः पुरुषार्थजात्यादिसमुच्चयोऽस्ति । पुरुषार्थपयआदिजातेः पुरुषार्थगयाश्राद्धक्रियायाश्च चशब्देन फले वाचनिकसमुच्चयोदाहरणं दृश्यते, पाद्मे— 'वाध्रीणसामिषं लोहं कालशाकं तथा मधु । दुहित्रामिषमन्नं च दत्तान्यात्मकुलोद्भवैः ॥ अनन्तां वै प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा । पितॄणां नात्र संदेहो गयाश्राद्धं च भो द्विजाः ॥' इति । न चात्र पयआदिना गयाश्राद्धेन च विशिष्टा एका फलभावना विधीयते इत्यवाक्यभेद इति वाच्यम् । रेवतीवारवन्तीयसंबन्धेन यागेन च विशिष्टाया एकस्याः फलभावनायाः विधानेन वाक्यभेदोद्धारात् रेवत्यधिकरणसिद्धान्तभङ्गापत्तेः (२।२।१२) । तस्मात् चशब्देनैव अत्र वाक्यभेदपरिहारो वाच्यः इति । यदा तु अत्रापि प्रकृतश्राद्धाश्रितजात्यादि तत्प्रकृतश्राद्धाश्रितैव गयाऽपि देशः फलाय विधीयते आश्रयश्राद्धानुवादेन, 'संक्रमयज्ञेन यजेत' 'साकंप्रस्थायीयेन यजेत' इतिवत्, तदा नास्त्येव वाचनिके पुरुषार्थजातिक्रियासमुच्चये उदाहरणम् । एवमेव जात्यादित्रिकविषयेषु चतुर्षु भेदेषु चतुष्कविषये चैकस्मिन् भेदे पञ्च उदाहरणानि अन्वेष्याणि ।

इति वाचनिकसमुच्चयभेदाः त्रिंशत् निरूपिताः । इदानीं ऐच्छिकसमुच्चयभेदाः तावन्त एवोच्यन्ते । तत्र तु क्रत्वर्थजात्यादिविषयेषु पञ्चदशसु ऐच्छिकेषु समुच्चयभेदेषु प्रायशः उदाहरणानि न सन्ति, क्रत्वर्थानां जात्यादीनां प्रयोगविधिना नित्यवत् समुच्चयस्यैव सिद्धेः । पुरुषार्थजात्यादिविषयेषु तु पञ्चदशसु ऐच्छिकेषु समुच्चयभेदेषु उदाहरणान्युच्यन्ते । तेषां च एकफलत्वे न्यायेन विकल्पावश्यंभावात् फलभेदे एवोदाहरणानि संभवन्ति । तथा एकाश्रयत्वे फलभेदेऽपि ऐच्छिको विकल्प एव भवति, यथा— आश्वलायनसूत्रे 'यवागूः ओदनः दधि सर्पिः ग्रामकाम–अन्नाद्यकाम–इन्द्रियकाम–तेजस्कामानाम्' इति । अत्र यवाग्वादीनां चतुर्णां क्रमेण फलचतुष्टयकामनायां ऐच्छिको विकल्पः एव भवति, न समुच्चयः । तस्मात् फलभेदवन्ति आश्रयभेदवन्ति



च इहोदाहरणानि प्रायशः । तत्र (१) पुरुषार्थजातिसमुच्चयः ऐच्छिको यथा— 'कांस्येन ब्रह्मवर्चसकामस्य प्रणयेत्' 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्वीत' इति दर्शपूर्णमासयोः ब्रह्मवर्चसपशुरूपफलद्वयकामनायां प्रणयनपात्रप्रकृतिपरिच्छेदककांस्यजातेः वेदिप्रकृतिपरिच्छेदकपुरीषजातेश्च ऐच्छिकः समुच्चयः । ननु 'वेदिं खनति' इति नित्यप्रयोगे खननोत्पाद्यं मृदाख्यं पुरीषं प्राप्तमेव, तत्र प्राप्ताप्राप्तविवेकेन आहरणमेव 'आहार्यपुरीषां' इत्यत्र विधीयते न मृज्जातिः । न । आहरणस्य आहार्यसापेक्षत्वात् पुरीषमपि अवश्यं विधेयम्, तत्र अप्रतीतं विशेषणत्वं हित्वा प्रतीतविशेष्यत्वेनैव विधिर्युक्तः । तथा च वेद्याश्रयानुवादोऽपि उपपन्नः, अन्यथा क्रियाया आश्रयानपेक्षत्वात्तदनुपपत्तिरिति ॥ (२) पुरुषार्थद्रव्यसमुच्चय ऐच्छिको यथा— आश्वलायनसूत्रे अन्नप्राशनाश्रितौ गुणकामौ श्रूयेते 'आजमन्नाद्यकामः, तैत्तिरं ब्रह्मवर्चसकामः' इति । अत्र तद्धितान्तत्वेन यौगिकाभ्यां द्रव्यवचनाभ्यां आजतैत्तिरशब्दाभ्यां अजमांसं तित्तिरिमांसं फलार्थे विधीयते, तत्र फलद्वयकामनायां ऐच्छिकः समुच्चयः । अत्र यद्यपि एकाश्रयत्वं तथापि वृत्तिकृता 'व्यञ्जनत्वेनैव मांसस्य लोके भक्ष्यत्वप्रसिद्धेः अन्नमपि देयम्' इत्युक्तत्वात् व्यञ्जनानां च लोके समुच्चयस्यापि संभवदर्शनात् समुच्चयाविरोधः ॥ (३) पुरुषार्थगुणयोः ऐच्छिकः समुच्चयो यथा— 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात्' इति ज्योतिष्टोमाङ्गसदोमानाश्रितः काम्यो गुणः, 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति ज्योतिष्टोमाश्रितातिरात्रसंस्थाख्यकाम्यगुणाङ्गस्तोमाश्रितः त्रिणवादिसंख्याविशेषात्मकः काम्यो गुणः, तयोर्ज्योतिष्टोमप्रयोगे ऐच्छिकः समुच्चयः ॥ (४) पुरुषार्थक्रिययोः ऐच्छिकः समुच्चयो यथा— दर्शपूर्णमासयोः प्रस्तरप्रहरणं प्रस्तरप्रतिपत्त्यर्थत्वात् नित्याङ्गमपि सत् करणीभूतसूक्तवाकप्रकाशितफलसमवायकल्पनात् काम्यमपि, 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति च क्रियान्तरं काम्यं अनुशब्दबलात् दर्शपूर्णमासप्रयोगान्तर्गतं इत्युक्तं तृतीये 'संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात्' इति निविदधिकरणे (३।१।११।२१) । अतः 'आयुराशास्ते दिव्यं धामाशास्ते सुप्रजास्त्वमाशास्ते' इति सूक्तवाकोक्तफलकामनया प्रस्तरप्रहरणानुष्ठाने प्रतिष्ठाकामनया च एकविंशतिसामिधेन्यनुवचनानुष्ठाने पुरुषार्थक्रिययोः ऐच्छिकः समुच्चयः ।

ननु सूक्तवाकोक्तफलकामनया प्रस्तरप्रहरणानुष्ठाने इत्युक्तिरयुक्ता, नित्यं हि सूक्तवाकस्य करणत्वात् आयुरादीनि आनुषङ्गिकाणि अकाम्यमानान्येव नित्यकर्मफलवत् क्रतूपकारार्थमेव अनुष्ठीयमाने प्रहरणे उत्पद्यन्ते । मैवम् । नित्यकर्मणां हि यावन्निमित्तं नियतमनुष्ठानं नियतं फलं विना अनुपपन्नं इति अकाम्यमानमपि फलं विधिरनुमन्यते । प्रहरणविधिस्तु नित्यवत्प्रवृत्तोऽपि नित्यक्रतूपकारफलार्थतयैव उपपन्नो नायुरादीनां फलानां अकाम्यमानत्वमनुमन्यते । यथा जातेष्टिविधिः यावन्निमित्तं नियतमनुष्ठापयन् नियतप्रत्यवायपरिहारादिफलार्थतयैव उपपन्नो न पूतत्वादेः फलस्य अकाम्यमानत्वमनुमन्यते । दशमे च अस्थियज्ञे कृत्वाचिन्तया उक्तेन 'ईहार्थाभावात् सूक्तवाकवत्' इति न्यायेन (१०।२।२१।५३) सर्वस्वारेऽपि सर्वेषामेव सूक्तवाकफलानां अकाम्यमानत्वेन अवचने प्राप्ते 'जीवत्यवचनमायुराशिषस्तदर्थत्वात्' (१०।२।२५।६१) इत्यायुर्मात्रे अपवादोक्तेः इतरसूक्तवाकफलस्य काम्यमानस्यैव फलत्वमिष्टं इति गम्यते इति । न चेच्छायाः कर्तव्यत्वाक्षेपो विरुद्धः, अधीतस्वाध्यायस्य अवश्यकर्तव्यविचारार्थे धर्मजिज्ञासाकर्तव्यता अध्ययनविधिना आक्षिप्ता तन्मूलकेन 'अथातो धर्मजिज्ञासा' इति सूत्रेण कर्तव्यपदाध्याहारसहितेन उच्यते इत्युक्तेः ॥ (५) पुरुषार्थजातिद्रव्यसमुच्चयः ऐच्छिको यथा— 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्वीत' 'गोदोहनेन पशुकामस्य प्रणयेत्' इति दर्शपूर्णमासयोः ऐहिकामुष्मिकादिभेदभिन्नपशुफलकामनायां आहार्यपुरीषजातेः गोदोहनद्रव्यस्य च ऐच्छिकः समुच्चयः । न च पुरीषगोदोहनयोः अन्यतरेणैव सर्वपशुफलसिद्धौ अनर्थकः समुच्चयः । वृष्ट्यादौ हि अयं दोषः । वृष्टिर्हि

शुष्यत्तस्यानुकूलैव लोके काम्यते । तादृश्याश्च एकेन साधनेन सिद्धौ अपरमनर्थकम् । यथा 'सौभरे पुरुषश्रुतेर्निधने कामसंयोगः' ( २।२।१३।२८ ) इत्यत्र 'हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति सौभरफलेभ्यो वृष्ट्यादिभ्यो भिन्नानि हीषादिनिधनफलानि इति पूर्वपक्षे, यदा वृष्ट्यर्थं सौभरप्रयोगः तदा वृष्ट्यन्तरार्थे हीष्निधनप्रयोगः अनर्थकः इति । न तु एतादृशी ऐहिकादिभेदभिन्नसर्वपशुकामना लोकतः सिद्धाऽस्ति । तेन उभयोः पश्वर्थयोः समुच्चयो युक्तः । अन्यथा चित्रेष्ट्यादेरपि पुनःप्रयोगो न स्यात्, एवं स्वर्गाद्यर्थकर्मणामपीति ॥ ( ६ ) पुरुषार्थजातिगुणसमुच्चयः ऐच्छिको यथा —'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति ज्योतिष्टोमाङ्गाग्नीषोमीयपश्वङ्गयूपाश्रितखदिरजातेः, वीर्यफलार्थायाः 'यदि कामयीत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्' इति वृष्ट्यर्थं नीचैः परिमाणस्य च उभयकामनायां समुच्चयः ॥ (७) पुरुषार्थजातिक्रियासमुच्चयः ऐच्छिको यथा— दर्शपूर्णमासयोः 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्' इत्याहार्यपुरीषजातेः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इति च अनुवचनान्तरक्रियायाः उभयफलकामनायां ऐच्छिकः समुच्चयः ॥ ( ८ ) पुरुषार्थद्रव्यगुणसमुच्चयः ऐच्छिको यथा— 'गोदोहनेन पशुकामस्य प्रणयेत्' इति गोदोहनद्रव्यस्य 'वत्सजानुं पशुकामस्य वेदिं कुर्यात्' इति वत्सजान्वाकारस्य अवयवसंयोगात्मनः तत्परिमाणस्य वा गुणस्य पशुफलार्थं विहितस्य उभयफलकामनायां ऐच्छिकः समुच्चयः ॥ ( ९ ) पुरुषार्थद्रव्यक्रियासमुच्चयः ऐच्छिको यथा— गोदोहनस्य एकविंशत्यनुवचनस्य च उभयफलकामनायां ऐच्छिकः समुच्चयः ॥ ( १० ) पुरुषार्थगुणक्रियासमुच्चय ऐच्छिको यथा— वत्सजान्वाकारस्य एकविंशत्यनुवचनस्य च उभयफलकामनायां ऐच्छिकः समुच्चयः ॥ ( ११ ) पुरुषार्थजातिद्रव्यगुणत्रिकस्य ऐच्छिकः समुच्चयो यथा— दर्शपूर्णमासयोः आहार्यपुरीष–गोदोहन–वत्सजान्वाकाराणां त्रयाणां पशुत्रयकामनायां समुच्चय ऐच्छिकः ॥ ( १२ ) पुरुषार्थजातिद्रव्यक्रियात्रिकस्य ऐच्छिकः समुच्चयो यथा— आहार्यपुरीष–गोदोहन–एकविंशत्यनुवचनानां पशुद्वय–प्रतिष्ठाकामनायां ऐच्छिकः समुच्चयः ॥ ( १३ ) पुरुषार्थजातिगुणक्रियात्रिकस्य ऐच्छिकः समुच्चयो यथा— आहार्यपुरीष–वत्सजान्वाकार–एकविंशत्यनुवचनानां पशुद्वय–प्रतिष्ठाकामनायां ऐच्छिकः समुच्चयः ॥ ( १४ ) पुरुषार्थद्रव्यगुणक्रिया-( त्रिक )समुच्चयः ऐच्छिको यथा— गोदोहन–वत्सजान्वाकार–एकविंशत्यनुवचनानां पशुद्वय–प्रतिष्ठाकामनायां ऐच्छिकः समुच्चयः ॥ ( १५ ) पुरुषार्थचतुष्टयसमुच्चयो यथा— आहार्यपुरीष–गोदोहन–वत्सजान्वाकार–एकविंशत्यनुवचनानां चतुर्णामपि पशुत्रय–प्रतिष्ठारूपफलचतुष्टयकामनायां ऐच्छिकः समुच्चयः ॥

एवं ऐच्छिकसमुच्चयभेदाः त्रिंशत् निरूपिताः । तदेवं न्यायगम्याः त्रिंशत्, वाचनिकाः त्रिंशत्, ऐच्छिकाः त्रिंशत् इति नवतिसमुच्चयभेदा उक्ताः । एते च जात्यादिसमुच्चयाभावविषया एवेत्युक्तम् ।

ते च पुनः पञ्चधा । केचित् प्रकृतौ उपदिष्टपदार्थविषयाः, केचित् विकृतौ उपदिष्टपदार्थविषयाः, केचित् प्रकृतिविकृत्यात्मककर्मोपदिष्टपदार्थविषयाः, केचित् विकृतौ अतिदिष्टपदार्थविषयाः, केचित् विकृतावेव उपदिष्टातिदिष्टपदार्थविषयाः इति । तत्र आद्योदाहरणं यथा— क्रये गवारुण्यादीनां क्रयाणां च ज्योतिष्टोमे दर्शपूर्णमासयोश्च अदोषनिर्घातार्थप्रायश्चित्तानाम् । तत्र उत्तरद्वयं द्वादशे उक्तम् ( १२।३।६।१७ ) । तथा द्वादशे याज्यानुवाक्ययोः समुच्चय उक्तः ( १२।४।२।४ ) ॥ द्वितीयोदाहरणं यथा— दशपेये 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इत्युपदिष्टायाः ब्राह्मणजातेः 'दशदश एकैकं चमसमनुप्रसर्पन्ति' इत्युपदिष्टायाः शतसंख्यायाश्च समुच्चय इति ॥ तृतीयोदाहरणं यथा— आधाने पवमानेष्टीनां समुच्चयः । तत्रापि भाष्यकृन्मते तासां आधानेन समुच्चयो वाचनिकः 'संवत्सरे निर्वपेत्, द्वादशसु रात्रिषु, सद्यो वा' इति । वार्तिककृन्मतेऽपि अङ्गत्वात् प्राकरणिकः तासामेव तिसृणां अन्योन्यम् 'अग्नये पवमानाय, अग्नये पावकाय,



अग्नये शुचये' इति ॥ चतुर्थोदाहरणं यथा— 'संसवे उभे कुर्यात्' 'गोसवे उभे कुर्यात्' 'अपचितावपि एकाहे उभे बृहद्रथंतरे कुर्यात्' इति ॥ पञ्चमोदाहरणं यथा— संस्थाऽधिकरणे ( ३।६।१६ ) संस्थापशोः 'ऐन्द्राग्नमुक्थ्ये द्वितीयम्' इति उक्थ्यादिविकृतौ उपदिष्टस्य ऐन्द्राग्नादेः, अतिदिष्टस्य चाग्नेयस्य सवनीयस्य समुच्चय उक्तः । तथा दशमे 'द्रेष्ये चाचोदनाद् दक्षिणाऽपनयः स्यात्' इत्यधिकरणे (१०।२।१६।४६) प्राकृतवैकृतदक्षिणासमुच्चय उक्तः । तथा 'नैमित्तिके तु कार्यत्वात् प्रकृते स्यात्तदापत्तेः' इत्यधिकरणे ( १०।२।३०।७० ) वायव्यादिपशौ उपदिष्टश्वेतगुणस्य प्राकृताजादिजातेश्च समुच्चय उक्तः । तथा 'षड्भिर्दीक्षयति' इत्यधिकरणे ( १०।३।४।२३–२९ ) अग्नौ 'आकूतिमग्निम्' इत्यादयः 'षड्भिर्दीक्षयति' इति दीक्षार्थतया उपदिष्टाः षण्मन्त्राः अतिदिष्टैर्दीक्षार्थैः 'आकूत्यै प्रयुजेऽग्नये' इत्यादिभिः षड्भिः मन्त्रैः सह समुच्चीयन्ते, 'द्वादश जुहोति' इति दीक्षाऽऽवृत्तिविधेः इत्युक्तम् । तथा 'यजुर्युक्तः' ( १०।३।२१।७४) इत्यधिकरणे वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति यजुर्युक्तेनोपदिष्टेन अतिदिष्टस्याध्वर्युभागस्य समुच्चयः इत्युक्तम् । तथा तदुत्तराधिकरणे ( १०।४।१ ) नक्षत्रेष्टौ 'सोऽत्र जुहोति' इत्युपदिष्टानां उपहोमानां अतिदिष्टानां च नारिष्ठहोमानां समुच्चय उक्तः । तथा तदुत्तराधिकरणे बृहस्पतिसवादौ 'बार्हस्पत्यं गृह्णाति' इति ग्रहान्तरस्य उपदिष्टस्य अतिदिष्टानां च ग्रहाणां समुच्चय इत्युक्तम् । तथा तदुत्तराधिकरणे वाजपेये उपदिष्टानां प्राजापत्यपशूनां अतिदिष्टानां च संस्थापशूनां समुच्चय उक्तः । तथा तदुत्तराधिकरणे सांग्रहण्यामुपदिष्टानां त्रयाणां आमनहोमानां अतिदिष्टैः त्रिभिरनुयाजैः सह समुच्चय उक्तः ॥ तथा 'उपगेषु' इत्यधिकरणे ( १०।४।५।८–९ ) गवामयने महाव्रते 'दिक्षु दुन्दुभयो नदन्ति' इति प्रकृत्य 'पत्नय उपगायन्ति' इत्युपदिष्टानां पत्नीनामतिदिष्टैः उपगातृभिः ऋत्विग्भिः समुच्चयः उक्तः ॥ तथा 'संस्कारे च' इत्यधिकरणे ( १०।४।६।१०-१२ ) अञ्जनाभ्यञ्जने 'गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते' इत्युपदिष्टगौग्गुलवाभ्यञ्जनस्य अतिदिष्टनवनीताभ्यञ्जनेन सह समुच्चय उक्तः ॥ तथा तदुत्तराधिकरणे (१०।४।७।१३–१५) महाव्रते 'तार्प्यं यजमानः परिधत्ते' इत्युपदिष्टस्य तार्प्यस्य अतिदिष्टस्य चाहतस्य समुच्चय उक्तः ॥ तथा तदुत्तराधिकरणे (१०।४।८।१६–१७ ) महाव्रते एव उपदिष्टश्लोकादिसाम्नां अतिदिष्टानां च गायत्रादीनां समुच्चय उक्तः ॥ तथा 'स्तोमविवृद्धौ' इत्यधिकरणे (१०।४।१०।२०) 'द्वात्रिंशत् पवमानोऽभिषेचनीयः' इत्यादिविवृद्धौ उपदिष्टानां राजसाम्नां अतिदिष्टानां च समुच्चय उक्तः ॥ तथा द्वादशे ( १२।४।४।८ ) 'गुदेनोपयजति' इति प्रतिपत्तित्वात् पशुगणे अनेकेषां गुदानां समुच्चय उक्तः ॥

अत्र च ये केचिदन्ये समुच्चयभेदा दृश्यन्ते यथा द्वादशोक्तः ( १२।४।२।३–४ वर्णकं २ वि. ) याज्यानुवाक्ययोः समुच्चयः ॥ यथा वा द्वादशोक्तः एव ( १२।३।१४।३० ) 'तां चतुर्भिरभ्रिमादत्ते' इत्यादौ मन्त्रसमुच्चयः ॥ यथा वा अग्निहोत्रे अग्निसूर्यप्रजापतीनां देवतानां समुच्चयः ॥ यथा वा ज्योतिष्टोमे प्राकरणिकग्रहणसमुच्चयात् अर्थात् सिद्धो यागे अनङ्गभूतानामपि इन्द्रवाय्वादीनां समुच्चयः । तदुक्तं पशुसोमाधिकरणे ( २।२।६।१७–२० ) वार्तिके 'देवतानामन्यसंयुक्तत्वात् अक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्वं विज्ञायते ( वा. पृ. ५१९ ) इति यागानङ्गत्वादेव इमाः पुनर्ग्रहणसंबद्धाः श्रुताः प्रकरणेन यागसंबन्धं प्रतिपद्यन्ते इति प्रसङ्गोपकारित्वेन यागान्वयमात्रं उपक्रमे उक्तम् । उपसंहारेऽपि 'तद्वशेन देवतानामपि समुच्चयसिद्धिः' ( वा. पृ. ५१९ ) इत्येवोपसंहृतं नाङ्गत्वम् । एष तावद्वार्तिकार्थः प्रतिभाति । सोमेश्वरेण तु उपसंहारवार्तिकं अङ्गत्वपरतया व्याख्यातम् ॥ यथा वा सत्रे 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति कर्तृसमुच्चयः ॥ यथा वा आध्वर्यवे याजमाने च काण्डे दर्शपूर्णमासयोराम्नातेषु 'वाजस्य मा प्रसवेन' इत्यादिमन्त्रेषु सामाख्यानिककर्तृद्वयसमुच्चयः तृतीये 'द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात्' ( ३।८।७।१७ ) इत्यत्रोक्तः ॥

यथा वा जातेष्टौ नैमित्तिकत्वान्यथाऽनुपपत्तिकल्पितस्य प्रत्यवायपरिहाररूपाभावात्मकस्य फलस्य आर्थवादिकेन पूतत्वरूपपापक्षयात्मकाभावत्वेन सह भावात्मकैश्च तेजस्वित्व–अन्नादत्व–इन्द्रियावित्व–पशुमत्त्वरूपैः फलैः सह तेषामपि वा अन्योन्यं समुच्चयः ॥ यथा वा स्वर्गादिकाम्यस्वफलार्थं विविदिषार्थं वा अनुष्ठितेरग्निहोत्रादिभिः प्रसङ्गात् नित्यप्रयोगफलसिद्धौ फलसमुच्चयः ॥ यथा वा द्वादशे 'एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात्' (१२।३।३।९) इत्यत्रोक्तः 'ऋजुमाघारयति, ऊर्ध्वमाघारयति, दीर्घमाघारयति, संततमाघारयति' इति विहितानां ऋजुत्व–ऊर्ध्वत्व–दीर्घत्व–संततत्वानां चतुर्णामाघारे समुच्चयः ॥ यथा वा 'त्वाष्ट्रं पात्नीवतमालभेत' 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्' 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्' 'विष्णवे शिपिविष्टाय शृते चरुम्' 'इन्द्राय प्रदात्रे दधंश्चरुम्' 'अग्नये पवमानायाग्नये पावकायाग्नये शुचये' इत्यादौ एकवाक्योपादानात् देवतातद्विशेषणानां तत्रतत्रोक्तः समुच्चयः ॥ ते यथासंभवं जात्यादिसमुच्चयेष्वेव अन्तर्भवन्ति इति केचित् । ऋजुत्व–ऊर्ध्वत्व–दीर्घत्व–संततत्वादीनामपि क्रियाधर्मत्वात् धर्मधर्मिणोश्च अभेदात् समुच्चयः क्रियासमुच्चयभेदेष्वेवान्तर्भवति । तथा क्वचित् समुच्चयस्यापि समुच्चयव्यतिरिक्तेन केनचिद्भावेन सह समुच्चयो भवति यथा– 'संसवे उभे बृहद्रथंतरे कुर्यात्' इत्यादौ द्वंद्वोपात्तस्य इतरेतरयोगात्मकस्य समुच्चयस्य द्विवचनोपात्तया बृहद्रथंतररूपसमुच्चेयव्यतिरिक्तया द्वित्वसंख्यया समुच्चयः । तदुक्तं दशमषष्ठे भाष्यकारेण (१०।६।८।२५) 'उपादेयत्वेन चानयोः द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैव' इति (चानयोः श्रुतत्वात् द्वित्व० इति पाठो मूले)। अत्रोदाहरणान्तरं लिङ्गपादे सूक्तवाकविभागाधिकरणे वार्तिके उक्तम् (३।२।६।१९ पृ. ७६७ पं. १९)। 'ननु चायमितरेतरयोगः फलार्थं विवक्ष्यमाणः इतिकर्तव्यतासंबन्धवेलायां बलात् प्रसज्यमानो न शक्यते वारयितुम्' इति । ननु एकयजिशब्दोपादानावगतेतरेतरयोगपरमेव इदं वार्तिकमस्तु, न द्वंद्वावगतेतरेतरयोगपरं इति चेन्न, 'तेन सहापि नाम्ना इतरेतरयुक्तत्वमात्रमेव धर्मोऽभ्यधिकः, न समुदायः फलवान्' इत्युपक्रमवार्तिकात् (वा. पृ. ७६७ पं. १३) द्वंद्वसमासोपेतदर्शपूर्णमासनामगम्यस्यैव इतरेतरयोगस्य विवक्षितत्वाविवक्षितत्वचिन्ताविषयत्वावगमात् । एवं च वदतो वार्तिककृतोऽपि भाष्यवदेव अयमर्थोऽभिप्रेतो गम्यते "द्वंद्वे 'चार्थे द्वंद्वः' इति स्मृतिबलात् वाच्य एव इतरेतरयोगः, तस्मिंश्च शाब्दे सति एकयजिशब्दोपादानार्थो न विवक्षितः, तस्य संनिकृष्टप्रमाणद्वंद्वावगतस्य एकशब्दोपादानेन लक्षणया विप्रकृष्टेनानुवादात्" इति ।

एतत्तु उदाहरणं मिश्राणां न संमतम्, षष्ठेऽध्याये 'आधानं च' (६।१।५।२२) इत्यत्र द्वंद्वे इतरेतरयोगो न वाच्यः प्रधानभूतेन कारकेण आदौ अन्विताः समस्यमानपदार्थाः गुणभावेन च कारकं प्रति विवक्षितसाहित्याः तथैव क्रियान्वयिनो भवन्ति । यत्र तु प्रधानभूताः पदार्थाः तत्र द्वंद्वस्थानामपि साहित्यं न विवक्ष्यते इति प्रतिपादनात् (तात्पर्यतोऽनुवादोऽयम्)। तदा च न्यायादेव समुच्चयावगमसिद्धेः 'चार्थे द्वंद्वः' इति स्मृतिः शब्दानुशासनमात्रपरा नार्थानुशासनमात्रपराऽपि । तस्मात् एकपदेन समुच्चयसमुच्चये 'बृहद्रथंतरे' इत्येवोदाहरणम् । एकवाक्योपादानात्तु द्वित्वसमुच्चययोः समुच्चये 'दर्शपूर्णमासाभ्याम्' इत्यपि उदाहरणमेव । यदा हि न द्वंद्ववाच्य इतरेतरयोगः, तदा पदान्तरलभ्यत्वेन विप्रकृष्टात् समासलभ्यात् इतरेतरयोगात् भावार्थाधिकरणन्यायेन (२।१।२) फलसंबन्धिना 'यजेत' इत्येकशब्देनोपादानात् लभ्यमेव साहित्यं संनिकृष्टमिति विधीयते, द्वंद्वस्तु तदंशेऽनुवादः। लिङ्गपादवार्तिके तु (३।२।६।१९ पृ. ७६७) परमतमभ्युपेत्य वादः एव । तदाऽपि तु 'दर्शपूर्णमासाभ्यां' इति समुदायगतं द्वित्वं विवक्षितमेव, अन्यथा पौर्णमास्यधिकरणे (२।२।३) दर्शपूर्णमासनाम्नोः प्रत्येकवाचितोक्तेः, संकल्पे यजेर्विशेषणापेक्षायां 'दर्शैः पूर्णमासैश्च यक्ष्ये' ('दर्शाभ्यां पूर्णमासाभ्यां च यक्ष्ये') इति संकल्पापत्तेः । तस्मात् 'दर्शपूर्णमासाभ्यां यक्ष्ये' इति



इष्टसंकल्पसिद्ध्यै द्वित्वमपि विवक्षितं इत्येकवाक्योपादानात् द्वित्वसमुच्चययोः समुच्चये 'दर्शपूर्णमासाभ्यां यजेत' इत्यप्युदाहरणं इति सिद्धम् ॥ **इति समुच्चयभेदनिरूपणम् ॥** बाल. पृ. १६५–१८०.

* **समुच्चयशब्दः** प्राधान्येन निर्दिशति, न अन्यत्र गुणभावेन। टुप्. १०।३।१४।५६.

* **समुच्चितयोः** अनुवचनप्रैषयोः मैत्रावरुणकर्तृत्वम् । प्रैषानुवचनाधिकरणम् । ३।७।२१।४३–४५. **मीको.** पृ. २८८० इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **समुच्चितानामङ्गानां** प्रधानोपकारकत्वम् (काम्ये)। ११।१।३।११–१९. **मीको.** पृ. १५१ 'अङ्गानां समुच्चितानामेव प्रधानोपकारकत्वं काम्येषु' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **समुदायः** पुनर्निष्कृष्य शब्देन अर्थान्तरात्मना उच्यमानः शक्यः साध्यत्वेनाभिधातुम्, यथा ओदनपाकं पचतीति विशेषः सामान्येन ईप्सिततमः कर्मत्वेनोच्यते । **वा.** २।२।५।१४. * समुदायो हि वनादिवत् देशादिकं यत्किंचित् एकमुपाधिमाश्रित्य भवति । **रत्नाकरः** स्फोटवादे श्लो. ४९. * समुदायो हि विनियुज्यमानो नावयवान् अविनियुज्य विनियोक्तुं शक्यते । **वा.** ३।३।७।१४ पृ. ८३२. * अनवगतफलानामपि कर्मणां' एकप्रकरणविधानलक्षणैकधर्मान्वयाख्यात् प्रचयात् साहित्याख्यः **समुदायः** सेत्स्यति। **सु.** पृ. ७७९. * दानं च एकैकं प्रति कर्तव्यम्। यदि **समुदाय**मङ्गीकृत्य परित्यजेत् तथा सति त्यागः एव कृतो भवेन्न ददातिः। **टुप्.** १०।३।१२।५०. * **समुदायेन** अनुसमयः। ५।२।३।४–५. 'समुदायानुसमयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * **समुदायस्य** अवयवैरव्यतिरेकः। **भा.** ११।२।३।१४. * समुदायस्य दार्शपौर्णमासिकस्य सौर्यादिषु नातिदेशः। ८।१।१३।२०–२२. **मीको.** पृ. २५० 'अतिदेशो न फल–नियम–कर्तृ–समुदायस्य दार्शपौर्णमासिकस्य' इत्यत्र अधिकरणं द्रष्टव्यम्। * समुदायस्य फलैकत्वात् एकः प्रयोगः। **भा.** ११।२।३।१४. * समुदायस्य समुदायिभ्यः अत्यन्तभेदाभावः। **सु.** पृ. ७६२. * समुदायस्य समुदायिभ्यः अव्यतिरेकः। **वा.** २।२।५।१४. * प्राणमन्त्रसहचरितमन्त्राणां **समुदायस्य** लक्षकः प्राणभृच्छब्दः 'प्राणभृत उपदधाति' इति। **वि.** ११।४।१८.

☞ **समुदाये वाक्यपरिसमाप्तिरिति न्यायः।** अयम् 'हलोऽनन्तराः संयोगः' १।१।७ इत्यादिसूत्रमहाभाष्येऽभिहितः। तद्यथा– 'गर्गाः शतं दण्ड्यन्ताम्, अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति' इति। **साहस्री.** ४४०.

* समुदाये वाक्यपरिसमाप्तिः, प्रत्येकं वाक्यपरिसमाप्तिः। **वा.** १।४।५।८ पृ. ३३८. * समुदाये वाक्यपरिसमाप्तिः । प्रत्येकं वाक्यपरिसमाप्तिः । 'प्रायणीयोदयनीययोः' इति । तत्र द्वंद्वभाविनोः प्राधान्यात् सत्यां अपेक्षायां भवति समासः। समासे च इतरेतरयोगात् न ऐकादशिनी केवले प्रायणीये। सा उदयनीययुक्ते भवितुमर्हति। तद्वदुदयनीयेऽपि। तस्मात् समुदाये वाक्यपरिसमाप्तिः। यदि पुनः नोपादेयत्वेन अश्रोष्येताम्, तत्र द्वंद्वभाविनोरप्राधान्यम्। अप्राधान्ये असत्यामाकाङ्क्षायां न समासो भविष्यति। तत्र प्रत्येकं वाक्यपरिसमाप्तिः स्यात्। **भा.** १०।६।४।८. * क्रियाप्राधान्ये तु तद्वशीकृतविशेषण**समुदाये** वाक्यपरिसमाप्तिः। **वा.** ३।१।६।१२ पृ. ६९६, * प्रधानक्रिया हि विशेषणानि पिण्डीकरोति, सत्त्वास्तु प्रत्येकवर्तित्वात् न समुदाये वाक्यपरिसमाप्तिः अतश्च परस्परसंबन्धाभावः। १।४।२।३ पृ. ३३२. * यथा गर्गाः शतं दण्ड्यन्तामिति। तथा अभिषुत्य हुत्वा भक्षयन्तीति। समुदाये एव वाक्यपरिसमाप्तिः न प्रत्यवयवम्। **भा.** ३।१।६।१२ पृ. ६९७. * '**समुदायेषु** हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इत्येष **न्यायः।** ग्रामशब्दो हि प्रसिद्धभूयिष्ठप्रयोगः समुदाये एव, 'ग्रामो दग्धः' इत्यादिपदसंबन्धात् तदवयवे वर्तते। **मेधा.** २।६.

* **समुदायानुरागकल्पनस्य** अपूर्वकल्पनालाघवार्थत्वात् फलान्वयकल्प्यत्वाच्च अपूर्वस्य फलान्वयस्य धात्वर्थोत्पत्तिवाक्यानां प्रयोगवाक्यशेषत्वाधीनत्वात्

समुदायानुरागकल्पनस्य प्रयोगवाक्यशेषत्वहेतुकता । सु. पृ. ७०८.

* **समुदायानुवादाधिकरणम्** । २।२।३।२-८. मीको. पृ. २६२७ 'पौर्णमासीन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **समुदायानुवादापवादः** अधिकरणत्रयेण ( २।२।४-६ ) क्रियते । वा. २।२।४।९.

* **समुदायानुसमयः** । 'चतुरो मुष्टीन्निर्वपति' अत्र चतुर्णां मुष्टीनामेकः समुदायः । अनेकहविष्के पूर्णमासादौ एकस्मिन् समुदायं कृत्वा द्वितीयस्मिन् समुदायः कर्तव्यः इति । वि. ५।२।३.

**समुदायानुसमयन्यायः** । दर्शपूर्णमासयोः आग्नेयादिपुरोडाशयोः मुष्टिकपालोपधानावदानेषु, अनेकयजमानके क्रतौ अञ्जनाभ्यञ्जनवपनपावनेषु च समुदायेनानुसमयः ॥

**मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन । ५।२।३।४ ॥**

**भाष्यम्**— मुष्ट्यादिषु संशयः । किं मुष्टिनाऽनुसमय उत चतुर्भिः मुष्टिभिरिति । किं प्राप्तम् ? मुष्टिनेति । कुतः ? एकमुष्टिनिर्वापो ह्येकः पदार्थः, न चतुर्मुष्टिनिर्वापः । कथम् ? एकस्मिन् मुष्टौ निरुप्ते निर्वपतिभावः पर्यवस्यति । न शक्यं वदितुं न किंचिन्निरुप्तमिति । न च निरुप्ते निर्वापो न कृतः स्यात् । न च मुष्टिमात्रेण निरुप्तेन न प्रयोजनम् । न ह्येकस्मिन् अनिरुप्ते चत्वारः संभवन्ति । मुष्टिसमानाधिकरणो हि चतुःशब्दः । तस्मात् मुष्टिनाऽनुसमयः कार्यः । एवं 'कपालान्युपदधाति' इति । तथा 'मध्यादवद्यति' 'पूर्वार्धादवद्यति' । तथा अङ्क्ते, अभ्यङ्क्ते, वपति, पावयति इति ।

**टुप्**— 'चतुरवत्तं जुहोति' इत्यस्य विधीयमानत्वात् अवदानादिः प्रदानान्त एकः पदार्थः । तस्मात् 'द्विर्हविषोऽवद्यति' इति संख्याविशिष्टमवदानं विधीयते इत्येतदसत् । 'चतुरवत्तं जुहोति' इत्यनेन अर्थप्राप्तावदाने संख्यामात्रं विधीयते । तस्मादुभयोः पक्षयोः पदार्थावयवोऽयम् । एकमुष्टिग्रहणे कृते यतीभावः पर्यवस्यति । द्वितीयादयोऽपि पुनःप्रयत्नेनैव आरभ्यन्ते । तस्मात् प्रयत्नभेदाद्भिद्यते निर्वापः । पृथक्करणं सामर्थ्यादेव प्राप्तं न विधीयते । नह्यपृथक्कृते यागः संप्रवर्तते । अतो निर्वापे यः प्रत्ययः, स संख्यामुष्टिसंबन्धं विधत्ते । मुष्टिसंख्ययोः सामानाधिकरण्यादन्तरङ्गः संबन्धः ।

**सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् । ५ ॥**

**भाष्यम्**— सर्वाणि तु परिसमाप्य अनुसमेयात् नैकमुष्टिनिर्वापः पदार्थः । चतुःसंख्यत्वात् निर्वापस्य । कथं चतुःसंख्यता ? चतुःशब्दस्य निर्वपतिना संबन्धात् । एवं सह कर्मणा अनेकगुणविधानं न्याय्यम् । इतरथा, मुष्टिसंबन्धे सति वाक्यभेदः प्रसज्येत, अनिर्वापाङ्गं च स्यात् । तथा उपधानादिष्वपि, अष्टाकपालं एकादशकपालं निर्वपतीति निर्देशात् । 'द्विरवद्यति', 'त्रिरभ्यङ्क्ते', 'एकविंशत्या पावयति' इति संख्यादीनां क्रियागुणत्वं भवति । तस्मात् समुदायेनानुसमय इति ।

**टुप्**-- चतुःसंख्याविशिष्टो निर्वापो विधीयते । न च नियोगतो निर्वापः प्राप्नोति, येन न विधीयते । कारकाणां क्रियासंबन्धः श्रौतः । यदि च संख्या क्रियां प्रति न विधीयेत, अक्रियार्थत्वात् अनिर्वापाङ्गं स्यात् । निर्वापे चाविधीयमाने वाक्यभेदादिदोषो भवति । तस्मादुभयविशेषणविशिष्टो निर्वापो विधीयते । एवं सर्वेषु योज्यम् । ( संगतिमाह- ) पूर्वस्मिन् पदार्थानुसमये स्थिते, प्रसङ्गेन पदार्थस्वरूपनिरूपणमायातम् ।

**शा**— दर्शपूर्णमासयोः आग्नेयाग्नीषोमयोः पदार्थानुसमये स्थिते संशयः किमेकैकेन मुष्टिना अनुसमयः, उत चतुर्मुष्टिभिरिति । ( अयं फलसंशयः । अधिकरणाङ्गसंशयस्तु किमेकमुष्टिनिर्वापः पृथक् पदार्थः, उत चतुर्मुष्टिनिर्वाप एकः पदार्थः इति । फलफलिभावमाह ) यदि एकैको मुष्टिः पृथक् पदार्थः, तत एकैकेनानुसमयः । अथ चतुर्मुष्टिनिर्वाप एकः पदार्थः, ततश्चतुर्मुष्टिभिरिति । '**प्रतिमुष्टि यतीभावः ( समाप्तिः ) पर्यवस्यन् हि दृश्यते । मुष्टिना मुष्टिरेवातोऽनुसमयो, न संघशः** ॥' उच्यते । '**अङ्गत्वं चोदनागम्यं पदार्थाश्चाङ्गमेव नः** । ( ननु



निर्वापस्य धान्यराशितः यागोपयुक्तपृथक्करणात्मकस्य अर्थादेव प्राप्त्या तद्विध्यसंभवात् न शास्त्रगम्यमङ्गत्वं संभवति । 'चतुरो मुष्टीन्' इति वाक्यं तु सत्यां कारकविभक्तौ 'रुद्राय एकां गां दद्यात्' इत्यादौ यथा गवानुवादेन संख्यामात्रविधिः, एवं मुष्ट्यनुवादेन संख्यायाः, संख्यानुवादेन मुष्टेर्वा विधायकम् । इत्यत आह- ) **चतुर्णामिह मुष्टीनां निर्वापः शास्त्रचोदितः** ॥' ( यत्र यागोपयुक्तमात्रा एव व्रीहयो नाधिकाः, तत्र निर्वापस्याप्राप्तेः धात्वर्थो निर्वाप एव विधेयः । न चैवमपि द्वितीयया मुष्टीनां प्राधान्यात् प्रतिप्रधानं गुणावृत्तिन्यायेन चतुर्षु मुष्टिषु चत्वारो निर्वापा विहिताः संपन्ना इति मुष्ट्यनुसमय एवेति वाच्यम् । मुष्टीनामप्राप्तत्वेन तदर्थतया निर्वापविध्यसंभवात् । एवं च संख्याया अपि अप्राप्ततया अन्यतरानुवादेनान्यतरविधिर्न संभवति । तस्मात् द्वितीया सक्तुन्यायेन ( २।१।४ ) भङ्क्त्वा चतुर्भिर्मुष्टिभिर्निर्वपेत् इति संख्यामुष्ट्युभयविशिष्टनिर्वापविधानात् चतुर्मुष्टिनिर्वाप एव शास्त्रार्थः, इति तावानेकः पदार्थः इत्यर्थः ) । अङ्गपर्यायो पदार्थशब्दः, तेन ययोः प्रधानयोः सहानुष्ठानम्, तयोर्यदङ्गम्, तदेकस्य कृत्वा परस्य कर्तव्यम्, 'चतुरो मुष्टीन् निर्वपति' इति शास्त्राच्च चतुर्मुष्टिनिर्वापोऽङ्गम् । एकैकस्तु मुष्टिस्तदवयवो न पदार्थः, तथा अविधानात्, पदार्थेन चानुसमयः, न तदवयवैः, अतः चतुर्भिरनुसमयः ।

एवं कपालोपधानेऽपि न एकैकेनानुसमयः, किंतु आग्नेयकपालानि सर्वाण्युपधाय अग्नीषोमीयस्योपधानम् । एवं 'द्विर्हविषोऽवद्यति' इत्यत्रापि नैकावदानेनानुसमयः । एवमञ्जनादिष्वपि योज्यम् । ( 'त्रिरङ्क्ते' 'त्रिरभ्यङ्क्ते' 'क्षुरेण त्रिर्वपति' 'एकविंशत्या पावयति' इति तत्तत्संख्यायुक्तानामेव अञ्जनादीनां यजमानसंस्कारत्वात् द्वित्रबहुयजमानकक्रुलायाहीनादिषु तावत्संख्याकाञ्जनाद्यनुसमयः, न प्रत्येकम्) । ५।२।२.

**सोम**-- पदार्थानुसमयप्रसङ्गात् कियानेकः पदार्थः इति चिन्ता, इति **संगतिः** ।

**चि**-- 'निर्वापे तु किमेकैकमुष्टेरस्त्यङ्गता न वा ।, अस्त्येकैकप्रतिष्ठानात् कपालादिषु तत् समम् ॥, चतुरो निर्वपेन्मुष्टीनिति निर्वापसंश्रयात् । एकैकमुष्टेरंशत्वात् पदार्थत्वं चतुष्टये ॥'

**भाट्ट**--- पदार्थानुसमयप्रसङ्गात् कियानेकः पदार्थः इति चिन्त्यते । किमेकैकमुष्टिनिर्वाप एकः पदार्थस्तेन चाग्नेयाग्नीषोमीयनिर्वापयोः अनुसमयः, किंवा चतुर्मुष्टिनिर्वापः एकः पदार्थस्तावता चानुसमय इति चिन्तायाम्, एकैकमुष्टिनिर्वापे यत्नसमाप्तेर्मन्त्रसत्त्वाच्च तस्यैवैकपदार्थत्वम् । **इति प्राप्ते**, अङ्गपर्यायः पदार्थशब्दः, तस्यैव प्रयोगविधिना विधानात्, विहितस्यैवाङ्गत्वम् । न चैकमुष्टिनिर्वापो विहितः, किन्तु चतुर्मुष्टिनिर्वाप एव, 'चतुरश्चतुरो मुष्टीन्निर्वपति' इति विधानात् । अत्र हि अर्थप्राप्तनिर्वापानुवादेन न गुणमात्रविधानं संख्यामुष्ट्युभयविधाने वाक्यभेदात्, पुरोडाशमात्रपर्याप्तव्रीहिमतः पृथक्करणरूपनिर्वापस्य नियमेनाप्राप्तत्वाच्च । अतश्चतुर्मुष्टिनिर्वापेणैवानुसमयः । अत एव वीप्साऽप्युपपद्यते । एवं 'कपालान्युपदधाति अष्टौ दक्षिणतः एकादशोत्तरतः' इति संख्यादिविशिष्टोपधानविधानात् सर्वकपालोपधानेनानुसमयः । यद्यपि च कपालगतबहुत्वमुद्देश्यविशेषणत्वादविवक्षितम्, तथापि अष्टत्वादिसंख्याया उपधानविशेषणत्वाद्विवक्षोपपत्तिः । यद्यपि च तत्तन्मन्त्रादिभेदादेकैकोपधानविधिरपि कश्चिदुद्भाव्येत, तथापि वक्ष्यमाणकृष्णाजिनास्तरणन्यायेन ( ५।२।७ ) एकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम् । अतः आग्नेयस्य सर्वाण्युपधायाग्नीषोमीयस्योपधेयानि । एवं 'द्विर्हविषोऽवद्यति' इत्यत्रापि द्वित्वविशिष्टावदानविधानात् द्विरवदानेनानुसमयो न त्वेकैकावदानेन । न च 'मध्यादवद्यति' 'पूर्वार्धादवद्यति' इति वाक्याभ्यामेव द्विरवदानप्राप्तेस्तद्विधिवैयर्थ्यम्, एतद्विध्यभावे चतुरवत्तवाक्यस्थचतुःसंख्या मध्यात् द्विः पूर्वार्धात् द्विः इत्येवं हविष एव संपाद्येत । एतत्सत्त्वे तु तद्विरोधादुपस्तरणाभिघारणाभ्यामिति तद्वाक्यस्था चतुःसंख्या अनुवाद एव । इदं च सांनाय्यविषयं द्विरवदानानुसमयकथनम्, आग्नेयादौ तु अवदानादिप्रदानान्तेन अनुसमयस्य वक्ष्यमाणत्वात् ।

सांनाय्ये तु उपस्तरणाभिघारणयोस्तन्त्रत्वात् दध्नो द्यवदानं गृहीत्वा पयसो ग्राह्यम् । कल्पसूत्रेषु तु पयसो द्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तं तत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात् । होमस्तन्त्रेणैव संप्रतिपन्नदेवताकत्वात् । एवं अञ्जनाभ्यञ्जनवपनपावनेष्वपि तत्तद्विधिसत्त्वान्नैकेन नेत्रेण शरीरावयवेन वाऽनुसमयः, अपि त्वनेकयजमानके अहीने एकत्र नेत्रद्वयेऽप्यञ्जनं कृत्वा यजमानान्तरे तत्कार्यं सर्वावयवोपेताभ्यञ्जनादिना च प्रत्येकमनुसमयः । सत्रे तु 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिना तत्तत्संस्कारकदीक्षोत्तरकालत्वविधानात् काण्डानुसमय एव ।

मण्डन— 'मुष्ट्यादयः स्युर्गणशः क्रमेण ।'

शंकर— 'मुष्ट्यादौ स च वर्णितः ।' सः काण्डानुसमयः ।

* **समुदायापूर्वं** अङ्गापूर्वं प्रधानापूर्वं परमापूर्वं इति अपूर्वावान्तरभेदाः । वि. २।१।२, * समुदायापूर्वम् । दर्शपूर्णमासयोर्भिन्नकालवर्तिनोः समुदायद्वयजन्यमपूर्वद्वयं कल्प्यते, तच्च द्वयं फलापूर्वजनकम् । २।१।२.

* भवति हि बहूनां एकवचनान्तः शब्दः **समुदायापेक्षः**, यथा यूथं वनं कुलं परिषद् इति । तथा विद्वद्वाक्यस्थौ पौर्णमासीशब्दः अमावास्याशब्दश्च । भा. २।२।३।३.

* **समुदायामीज्या** पार्वणौ होमौ, न कालाभीज्या । भा. ९।२।१८।५१–५६.

* **समुदायत्वापादनं** एकशब्दसंयोगात् समुदायानुवादरूपेण वा भवति, यथा– 'य एवं विद्वान् पौर्णमासीं यजते' इति । फलादिसंबन्धेन वा यथा 'राजसूयेन स्वाराज्यकामः' इति । वा. २।२।१।१ पृ.४६३.

* **समुदायप्रयुक्तं**– पौर्णमासी–अमावास्यासमुदायप्रयुक्तं नामिमर्शनं दर्शपूर्णमासयोः किंत्वपूर्वप्रयुक्तम् । द्रव्यसंख्याहेतुसमुदायन्यायः । ९।१।५।११–१९. मीको. पृ. २१७२.

* **समुदायप्रसिद्धिः** अवयवप्रसिद्धेः बाधिकैव समधिगता । भा. ६।७।१०।२२, सु. पृ. ६४८.

* समुदायप्रसिद्धिस्तत्र भवति यत्रावयवार्थौ तिरोधाय त्यक्तभेदः समुदाय एव प्रतीयते । वा. ३।२।१।१ पृ. ७४७. * समुदायप्रसिद्धिः नावयवप्रसिद्ध्या बाध्यते इत्युक्तमेव । भा. ६।८।१०।४२,४३. * समुदायप्रसिद्धिः लब्धात्मिका अवयवप्रसिद्धिं बाधते । न च समुदायस्य अपूर्वशक्त्यन्तरकल्पनाप्रमाणं विद्यते । वा. २।१।५।१७ पृ. ४२१, * **समुदायप्रसिद्ध्या** अवयवप्रसिद्धेः निराकरणात् । अहीनशब्दः अहर्गणवाचकः न तु न हीनः अहीनः इति व्युत्पत्त्या ज्योतिष्टोमार्थकः । रूढिर्योगमपहरति । योगात् रूढिर्बलीयसी । ३।३।८।१६, * अवयवप्रसिद्धिः **समुदायप्रसिद्ध्या** बाध्यते । ६।१।६।२३ पृ. १३६९, * **समुदायप्रसिद्धेः** अवयवार्थप्रसिद्धिः दुर्बला । वाक्यार्थवत् अवयवार्थौ समुच्चित्य संबन्धं कल्पयित्वा सा ( अवयवार्थप्रसिद्धिः ) भवन्ती श्रुतिमात्रोपनिपातलभ्यायाः समुदायप्रसिद्धेर्दुर्बला भवति । २।२।९।२३ पृ. ५३७, * समुदायप्रसिद्धेः अवयवप्रसिद्धिर्दुर्बला । 'अक्षरैरेव बुध्यन्ते समुदायप्रसिद्धिषु । अर्थभागोपसंहारादितरा विप्रकृष्यते ॥ असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते । तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥ लब्धात्मिका हि समुदायप्रसिद्धिः अवयवप्रसिद्धिं बाधते । तस्यास्तु आत्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहितेऽर्थे शब्दप्रयोगो दृश्यते यथा अश्वत्वकर्णत्वरहिते वृक्षे अश्वकर्णशब्दस्य । १।४।८।११ पृ. ३४४. * समुदायप्रसिद्धेः अवयवप्रसिद्धितो बलीयस्त्वं रथकाराधिकरणे ( ६।१।१२।४४–५० ) वक्ष्यते । सु. पृ. ४६६. * **समुदायप्रसिद्धौ** संभवन्त्यां नावयवप्रसिद्धिः प्रातिपदिकस्य युक्ता, उद्गातॄणां इत्यत्र । वा. ३।५।८।२६.

* **समुदायवाक्यपरिसमाप्तिन्यायः** गुणत्वविषयकः । यथा 'अरुणयैकहायन्या क्रीणाति' इत्यत्र । बाल. पृ. १६५.

* **समुदायवाची** च नावयवे प्रवर्तितुमर्हति । भा. १।४।१२।२३–१ पृ. ३५६. * **समुदायवाचिनां** एकदेशेषु न गौणत्वसंभवः । वा. १।४।१२।२३–१ पृ. ३५७.



* **समुदायशब्दानां** एकदेशेष्वपि उपलब्धेः । यथा 'ग्राम आयातः' इति । तथा च अध्येतारस्त्रैव सुतरां प्रयुञ्जते 'वेदमधीमहे' 'वेदो वर्तते' इति । न च ब्राह्मणमधीयानास्तथा वदन्ति । वा. ३।३।१।१.

* **समुदायशब्दतया** एकवचनान्तो बहूनां वाचकोऽवकल्पिष्यते । भा. २।२।३।३ पृ. ४७९.

* **समुदायसमुदायिनोः** अव्यतिरेकः । वा. २।२।३।३ पृ. ४७७. * समुदायसमुदायिनोः अत्यन्तभेदाभावः । सु. पृ. ७२९,११६१.

* एकफलत्वात् **समुदायसिद्धिः** । सु. पृ. ७७९.

* **समुद्धरणं** प्रादुष्करणं वा अग्नीनां प्रतिकर्म अरणीभ्यामिति पूर्वपक्षः । गार्हपत्यादेवेति सिद्धान्तः । संकर्ष. ३।२।७.

* **समुद्रमापः प्रविशन्ति यद्वदिति न्यायः** । यथा समुद्रं आपः गङ्गानर्मदागोदावरीकृष्णाकावेरीसिन्ध्वादिमहानदीनदानां नानामुखेभ्यः समागताः नानाविधवर्णरसगन्धगुणफलवत्यः स्वकीयशुक्लनीलारुणपीतादिगुणविशेषम् , मधुराऽम्लतिक्तकषायादिरसविशेषम्, परिमलपूत्यादिगन्धविशेषम्, लघुत्वगुरुत्वादिगुणविशेषमेकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशशतकृच्छ्रसमानपुण्यविशेषम्, तत्तन्नामविशेषं च परित्यज्य समुद्रभावमेव गच्छन्ति, समुद्रं प्राप्य तत्संबन्धिमहिम्ना नामरूपगुणविशेषैः समुद्रान्न भिद्यन्ते इत्यर्थः, तथा प्रकृतेऽपि । साहस्री. ५२६.

* **समुद्रतरङ्गादिन्यायः** । "समुद्रादुदकात्मनः अनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनां इतरेतरविभागः इतरेतरसंश्लेषादिलक्षणश्च व्यवहारः उपलभ्यते । न च समुद्रादुदकात्मनः अनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गादीनां इतरेतरभावापत्तिर्भवति, न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनः अन्यत्वं भवति" अनेन न्यायेन भोक्तृभोग्ययोः ब्रह्मणः अनन्यत्वेऽपि न तेषामितरेतरभावापत्तिः, न च परस्मात् ब्रह्मणः अन्यत्वं भविष्यति । शांभा. २।१।५।१३ ब्रसू.

* **समुद्रतरङ्गन्यायः** । शिवजीवयोः समुद्रतरङ्गन्यायवत् भेदाभेदभावो निष्प्रत्यूहः । श्रीकर. ३।१।७ ब्रसू.

* **समुद्रमनोध्यानादिवत्** । यथा मनसि समुद्रत्वध्यानमदृष्टार्थं तथा स्वर्गकामनाया गुणत्वेन विधाने अदृष्टार्थत्वं स्यात् । पूर्वपक्षप्रघट्टके इदम् । सोम. ६।१।१.

**समुद्रवृष्टिन्यायः** । वैपर्ययबोधकोऽयं न्यायः । यत्र क्रिया निष्फला तत्रैवास्य प्रवृत्तिरिति भावः । साहस्री. २९६.

* **समुपहूय** भक्षणं सोमधर्मः । 'उपह्वयस्व' इति पृष्ट्वा 'उपहूतः' इत्युक्ते भक्षणं सोमधर्मः वाजिनस्य सुरायाश्च । भा. ८।२।१।२.

* **समूढो** द्वादशाहः । 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः । अथेतरेषां नवानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रं, अथ शुक्राग्रं, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रं, अथ शुक्राग्रं, अथाग्रयणाग्रम्' इति । भा. १०।५।२४।७९. * समूढः । यत्र ऐन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानां त्रिः परिवर्तमानानां समूहनं अस्ति क्रमभङ्गो नास्ति स समूढः द्वादशाहः । यत्र तु उक्ताग्रत्वानां व्युत्क्रमेण आवृत्तिः स व्यूढः । कु. १०।५।२४।७९, * यथा तर्हि सिद्धान्तः, यत्र वचनं लिङ्गं च तत्र व्यूढः प्रवर्तते, अन्यत्र अविशेषेण **समूढः** इति । भा. १०।५।२४।८२, * **समूढस्य** विकारो व्यूढः । १०।५।२४।८०. * समूढस्य व्यूढो द्वादशाहो विकारः । १०।५।२४।७९–८२. मीको. पृ. २१८९ 'द्वादशाहो व्यूढः समूढस्य विकारः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**समूहालम्बनन्यायः** । यत्र उपस्थितपदार्थानां विशेषणविशेष्यभावेनान्वयासंभवस्तत्र उपस्थितपदार्थानां समूहमालम्ब्यैव बोधः । यथा– घटः पटश्चेत्यादौ घटपटयोरुभयोरेव विशेष्यता, समूहालम्बनबोधे च विशेष्यताद्वयम्, संशये त्वेका विशेष्यतेति भेदः । साहस्री. ५१०.

* **समूहावृत्तिः** द्वेधा दण्डाकलितवत् प्रपाठकाध्ययनवच्चेति । एकदा कृत्स्नस्यानुष्ठानम्, पुनः कृत्स्नस्य, पुनः कृत्स्नस्येति क्षेत्रमापने दण्डस्येवावृत्तिः प्रथमा । प्रपाठकाध्ययने तु एकं वाक्यं सप्तवारमावर्त्य, द्वितीयं वाक्यं सप्तवारम्, एवं तृतीयमिति प्रपाठकसमाप्तिपर्यन्तमावर्त्यते सा द्वितीया ( संथा, गुंडिका- इति मराठीभाषायाम् ) । **वि.** १०।५।२५.

* **समूहलेख्यानि** । आत्मरक्षणार्थमेव ( वर्णसंकरात् ) राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारंपर्यविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । **वा.** १।२।१।२ पृ. १०९.

* **संपत्नीयहोमः** । दर्शपूर्णमासयोः पत्नीसंयाजेषु अग्निं गृहपतिमिष्ट्वा ' सं पत्नी पत्या सुकृतेन० ' इति स्रुवेण गार्हपत्ये संपत्नीयं जुहोति पत्न्यां समन्वारब्धायाम् । **सत्याश्रौ.** २।५।११.

* **संप्रतिपन्नदेवताकत्वे** प्रदाने तन्त्रत्वमेव । **भाट्ट.** ५।२।२.

* **संप्रदानं** च कारकम् । **टुप्.** १०।३।१२।५०. * संप्रदानं च नाम कर्मणोऽपि ईप्सिततमात् अभिप्रेततरम् । **भा.** ९।१।४।६. * प्रतिग्रहे व्यापृतं च कारकं संप्रदानं भवति । **वा.** २।२।९।२३ पृ. ५३६. * **संप्रदानस्य** त्याज्यद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मकत्वम् । **सु.** पृ. ७५१. * संप्रदानस्य विशेषणैरेव यागशरीरघटकत्वम् । **संकर्ष.** २।४।२. * **संप्रदाने** चतुर्थी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा 'मैत्रावरुणाय दण्डं प्रयच्छति' । **बाल.** पृ. ४४, * संप्रदाने षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा ' पुरुषमृगश्चन्द्रमसे गोधा-कालका-दार्वाघाटास्ते वनस्पतीनाम् ' । पृ. ४५.

* **संप्रदानत्वं** त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वम् । **भाट्ट.** २।२।९ पृ. १२९.

* **संप्रदायः** वेदाध्ययनम् । **सु.** पृ. ५२. * **संप्रदायात्** वेदं व्याचक्षते याज्ञिकाः । **वा.** ३।१।७।१३ पृ. ७०१.

* **संप्रदायप्रवर्तकाः** । ' अष्टाशीतिसहस्राणि संप्रदायप्रवर्तकाः ' । **मणि.** पृ. ५३.

* **संप्रवेधः** । शकृत्संप्रवेधः पशालम्भस्य न प्रयोजकः किंतु प्रतिपत्तिः अग्नीषोमीये पशौ । **भाट्ट.** ४।१।१२, * **संप्रवेधस्य** लोपः शकृतः अभावे नाशे वा । प्रायश्चित्तं तु लोपनिमित्तं स्यात् अग्नीषोमीये पशौ । ४।१।१२.

* **संबन्धः** अनेकविधः वाक्यात् गम्यते । क्वचित् क्रियाकारकसंबन्धः । क्वचित् विशेषणविशेष्यसंबन्धः । क्वचित् लक्ष्यलक्षणसंबन्धः । इत्येवंप्रकाराः संबन्धविशेषाः इति । **भा.** १०।६।२।३, * संबन्धोऽपि शब्दार्थयोर्नित्यः । १।१।५।५. * संबन्धः आकाङ्क्षापूर्वकः । **वा.** २।१।१।१ पृ. ३७६. * संबन्धः देशकालनिमित्तफलसंस्काराणां दर्शपूर्णमासादौ विधीयते । **वि.** २।३।१३. * संबन्धः प्रधानेन, न गुणेन इत्युत्सर्गः । **वा.** २।१।१११. * संबन्धः यत्र विधीयते, तत्र अन्यतरस्यान्यत्र विधानम् । संबन्धो नान्तरीयकः । यद्वा संबन्धस्य विधानम्, नान्तरीयकौ संबन्धिनौ । यत्रोभौ लक्षणत्वेन तत्र स्वशब्देन संबन्धो विधीयते । यत्र तु अन्यतरो लक्षणत्वेन तत्र एकं लक्षयित्वा अन्यतरो विधीयते । **भा.** ३।३।१०।२१. * 'संबन्धो विधीयमानः संबन्धिनं तावदाक्षिपेत् ' इति वार्तिकोक्तन्यायेन संबन्धाक्षिप्तयोः संबन्धिनोः अक्रियाङ्गत्वेन अननुष्ठेयत्वात् अनुष्ठेयत्वसिद्ध्यै क्रियाङ्गत्वेन तयोरपि विधानापत्तेस्तुल्यो वाक्यभेदः । **सु.** पृ. ७७३, * ' संबन्धो विधीयमानः संबन्धिनं तावदाक्षिपेत् ' । वाक्यान्तरप्राप्ते यागे द्रव्यदेवतासंबन्धविधौ ' संबन्धो विधीयमानः ' इत्याघाराग्निहोत्राधिकरणवार्तिकोक्तन्यायेन (वा. पृ. ५०२ पं २२ ) द्रव्यदेवतयोरपि विध्यापत्तिः । पृ. ७४३. * संबन्धः सर्वत्रैव आकाङ्क्षापूर्वको भवति । **वा.** २।२।३।३ पृ. ४७९, **पराक्रमः** १. * संबन्धः हि विधीयमानो न शक्यते संबन्धिनौ अविधाय, ' विहितः ' इति वक्तुम् । **भा.** १।४।६।९. * अर्थद्वारो हि अध्यायादिसंबन्धः न ग्रन्थस्वरूपाश्रयः । **वा.** ३।१।१।१ पृ. ६४९, * उभयापेक्षालक्षणश्च संबन्धः शीघ्रं निर्वर्त्यते । **वा.** ३।१।६।१२ पृ. ६९३. * प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुम् । **भा.** ३।१।७।१४ पृ. ७१५. * **संबन्धौ** विरोधिनौ तुल्यकक्षौ परस्परं बाधेयातां न गुणप्रधानभूतौ । **वा.** ३।४।४।१२ पृ. ९०१. * न हि द्वौ संबन्धौ एकस्मिन् वाक्ये विधीयेते, भिद्येत हि तथा वाक्यम् । **भा.** ३।४।१।७. * **संबन्धेन** अर्थाक्षिप्तेनैव भवितव्यम् । **वा.** ३।१।६।१२ पृ. ६७५, * **संबन्धस्य** अवान्तरव्यापाराधीनत्वम् । ३।१।६।१२ पृ. ६९३. * ' ०संबन्धस्याशास्त्रहेतुत्वात् ' ( ' गुणाद्वाऽप्यभिधानं स्यात् संबन्धस्याशास्त्रहेतुत्वात् ' ) ३।२।२।४ इति न्यायेन वेदस्य विशिष्य शक्त्यनिर्णायकत्वम् । पूर्वपक्षे । **कौ.** १।३।८।२७. * ' ०संबन्धस्याशास्त्रहेतुत्वात् ' ( ३।२।२।४ ) । वैयधिकरण्येन अपि यजिसंबन्धोपपत्तेः ( उद्भिदादिशब्दस्य ) सामानाधिकरण्येन यागार्थत्वस्य अवगन्तुमशक्यत्वात् अलौकिकार्थकल्पना पारिभाषिकी आपद्यते । सा च ' ० संबन्धस्याशास्त्रहेतुत्वात् ' इति ऐन्द्रयधिकरणसूत्रावयवेन निरस्तत्वात् अयुक्ता । **सु.** पृ. ३९९, * संबन्धस्य आकाङ्क्षानिबन्धनत्वम् । पृ. ५२५. * संबन्धस्य भेदनिबन्धनत्वम् । **वा.** २।१।५।२७ पृ. ४३०. * संबन्धस्य विशिष्टार्थप्रतीतौ नान्तरीयकत्वात् संबन्धशब्देन लक्षणया वैशिष्ट्याभिधानम् । **सु.** पृ. ७५२, * संबन्धस्य संबन्धिद्वयनिष्ठत्वम् । पृ. ७६५, * संबन्धस्य संबन्धिनिरूपणाधीननिरूपणस्य संबन्धिभेदेन भेदः । पृ. ७०४, * **संबन्धानां** सर्वेषां ' न क्रियाकर्तृसंबन्धादृते संबन्धनं क्वचित् ' इति न्यायेन क्रियागर्भत्वम् । पृ. ४६३. * संभवति साक्षात्संबन्धे परंपरासंबन्धो न ग्राह्यः । **कु.** ३।७।५।३१.



* **संबन्धासिद्धिः** हेत्वाभासः, ' हेत्वाभासाः ' इति बिन्दौ द्रष्टव्यः । **मणि.** पृ. ४१.

* नहि अगृहीतयोः संबन्धिनोः संबन्धग्रहणं संभवति । **रत्नाकरः** अनुमानं श्लो. १४६.

* **संबन्धतः** व्यवस्थितता स्फ्यादीनां दर्शपूर्णमासयोः । **बिन्दु.** ३।१।५।११.

* **संबन्धद्वयकरणात्** वाक्यं भिद्येत प्राप्ते कर्मणि । **वा.** ३।१।११।२१ पृ. ७३४.

* **संबन्धमात्रविवक्षायां** अविवक्षितकारके षष्ठी । **भा.** ३।१।६।१२ पृ. ६८८.

* **संबन्धविधिः** । उभयप्राप्तौ अनुभयप्राप्तौ वा संबन्धविधिः इति हि जाघन्यधिकरणे उक्तम् ( ३।३।१० ) । **बाल.** पृ. ११४. * संबन्धविधिः । उभयप्राप्तौ संबन्धविधिः जाघन्यधिकरणे वक्ष्यते । **सु.** पृ. ८८३.

* **संबन्धिपदव्यवायेऽपि** हि संबन्धादेव पूर्वसंस्कारो नापैति । यत्रापि अपरेण साकाङ्क्षेण व्यवायः तत्राप्यस्ति संबन्धः । अव्यवधाने, विच्छेदेऽपि भवति संबन्धः । **भा.** २।१।१६।४८.

* **संबन्धिशब्दाश्च** सर्वे सापेक्षाः विना पदान्तरेण न परिपूर्णमर्थं अभिवदन्ति । सामान्यपदार्थसंबन्धे च संव्यवहारानुपपत्तिः । **भा.** ४।२।२।७.

⌛ **संबन्धिशब्दैर्वा तुल्यमेतदिति न्यायः ।** तद्यथा- संबन्धिशब्दाः- मातरि वर्तितव्यं, पितरि वर्तितव्यं, शुश्रूषितव्यमिति । न चोच्यते स्वस्यां मातरि स्वस्मिन्पितरीति । संबन्धाद्गम्यते- या यस्य माता, यो यस्य पितेति ' आदिरन्त्येन सहेता ' १।१।७१ इति सूत्रमहाभाष्ये स्पष्टम् । **साहस्री.** ६००.

* **संबन्धिशब्दानां** प्रतिसंबन्धिनं अपेक्षमाणानामपि न सामर्थ्यविघातो भवति, देवदत्तस्य गुरुकुलं इतिवत् । **रत्नाकरः** पृ. ३४७, * संबन्धिशब्दानां प्रतिसंबन्धिव्यतिरिक्तार्थान्तरापेक्षायां भवत्येव सामर्थ्यविघातः । नहि भवति शोभनस्य गुरुकुलं इति शोभनस्य गुरोः कुलं इति विवक्षाऽत्र । पृ. ३४७.

* **संबोधनं** अभिमुखीकृत्य ज्ञापनम् । **कु.** १।२।४।४३ पृ. ४८. * संबोधनं चेतने एव मुख्यम् । अचेतने तु ज्ञानवत्त्वारोपेण गौणो व्यवहारः । **रहस्य.** पृ. ५८, * **संबोधने** अभिमुखत्वं- प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यकवक्तृनिच्छाविषयीभूत-शाब्दज्ञानवत्त्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृभिन्ननिष्ठवक्तृनिच्छाविषयतावत्त्वं वा । पृ. ५८.

* **संबोधनविभक्तेः** अपि प्रथमासमानार्थकत्वात् तदर्थोऽपि भावनान्वयी । **मणि.** पृ. ११२–११३.

* **संभवः** नाम प्रमाणं सहस्रसंख्यान्तर्गतशत-संख्याप्रमाकरणं यत्, तत् अनुमानान्तर्गतम् । **मणि.** पृ. ६२.

**संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति न्यायः** । यथा नीलो घटः इत्यत्र घटस्य नीलता नीले घटे संभवति, पीतादिघटे व्यभिचरत्यतो घटस्य नील इति विशेषणमर्थवदिति तथा अन्यत्रापि बोध्यम् । **साहस्री.** १८६.

* 'संभवव्यभिचाराभ्यां स्याद्विशेषणसंभवः ' । **वा.** १।३।८।२४ पृ. २६४.

**संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते इति न्यायः** । यथा ' पशुना यजेत ' इत्यादौ यागे एकत्वविशिष्टपशुकरणकत्वं विधेयम्, न तु पशावेकत्वं, यागे च पशुकरणकत्वमित्येवं विधेयद्वयम्, एवमन्यत्राऽपि । यथा चैवं शैववैष्णवादिमतेषु दर्शितानि तत्तन्मतप्रदर्शनवाक्यानि सर्वाण्येव अभेदप्रतिपादकानि बोध्यानि, प्रकृतन्यायत इत्यन्यत्र विस्तरः । **साहस्री.** १२९.

* संभवति दृष्टफलकत्वे अदृष्टकल्पना अन्याय्या । **वि.** १।१।१. * संभवति श्रुत्यर्थे लक्षणार्थोऽग्राह्यः ('असंभवति श्रुत्यर्थे लक्षणार्थो गृह्यते ' इति पाठः ) । **भा.** ७।३।८।२१. * संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम् । वि. १।४।२.

**संभवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वमिति न्यायः** । आधारोऽधिकरणम्, समानं अधिकरणं ययोस्तयोर्भावः सामानाधिकरण्यं एकाश्रयत्वम् । पदयोरेकार्थनिष्ठत्वमेकविशेष्यकप्रतीतिजनकत्वमिति यावत् । **साहस्री.** ४४९.

* **संभाराः** । संभ्रियन्ते इति संभाराः । संभारशब्दो यौगिकत्वात् द्रव्यवाची । * बाल. पृ. १६६. संभाराः । संभ्रियन्ते इति संभारशब्दः यौगिकः । आधाने अग्न्यायतनेषु प्रथमतः स्थापनीयाः वानस्पत्याः पार्थिवाश्च ससस पदार्थाः ! के.

* '**संभूयकारिणां** सहक्रिया ' स हि न्यायः । तन्न्यायेन सर्वत्रैव सहक्रिया । **भा.** ११।१।१०।५९.

* **संभूयकारित्वम्** । ( प्रधानानामिव ) अङ्गानामपि संभूयकारित्वमुक्तम् । ' अथेहैकार्थ्यादैककर्म्यम् ' ( ११।१।२।६ ) इति । **भा.** ११।१।१०।५७, * **संभूयकारित्वात्** प्रधानानां सर्वेषां अविभक्ता प्रक्रिया इत्युक्तम् । ११।१।१०।६५.

* **संभृत्यधिकरणम्** । ( ३।३।१२।२३ ब्रसू. ) । अनारभ्याधीतानां संभृत्यादिगुणानां उपासनाविधिसंनिधिरहितानामपि उपासनार्थत्वं सिद्धवत्कृत्य किं तेषां कलशशाण्डिल्यविद्यान्वयः उत तत्रैव कल्प्येन विद्यान्तरेणान्वयः इति विशेषचिन्ता संभृत्यधिकरणे कृता । **परिमल.** ३।४।३।२१ ब्रसू .

* **संमार्गः** ग्रहं प्रति गुणः, ग्रहः प्रधानम् । ' ग्रहं संमार्ष्टि ' इत्यत्र । **वि.** ३।१।७. * संमार्गः । ' ग्रहं संमार्ष्टि ' इति सर्वग्रहाणां संमार्गः अभिधीयते । **भा.** १०।४।२।३ पृ. १९१४. * संमार्गः ग्रहाणां सर्वेषामेव । **वि.** ३।१।९, ३।७।११, * संमार्गः ग्रहधर्मः सवनत्रयेऽपि संबध्यते । ३।६।९. * संमार्गो ग्रहेष्वेव न चमसेषु इति चमसाधिकरणे ( ३।१।८। १६–१७ ) उक्तम् । सु. पृ. १०७२. * संमार्गः दशापवित्रेण ग्रहाणामेव न तु चमसादीनाम् । **वि.** ३।१।८. * संमार्गः । यथा च आहवनीये क्रियमाणः संमार्गः न शक्यते वक्तुं प्रधानस्य योऽग्निस्तस्यायं संमार्गः नाङ्गानां योऽग्निरिति । **टुप्.** ११।३।९।१७. * संमार्गः स्रुचां दर्शपूर्णमासादौ । **वि.** २।१।४.

**संमार्गाधिकरणम्** । दर्शपूर्णमासयोः संमार्जनं पर्यग्निकरणं च गुणकर्म न प्रधानकर्म ॥

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् । २।१।४।९ ॥**

**भाष्यम्**— ' स्रुचः संमार्ष्टि ' ' अग्निं संमार्ष्टि ' ' परिधिं संमार्ष्टि ' ' पुरोडाशं पर्यग्नि करोति ' इति श्रूयते । तत्र संदेहः किं पर्यग्निकरणं संमार्जनं च प्रधानकर्म उत गुणकर्म इति । किं तावत् प्राप्तम् ? तदुच्यते ।



कर्ममात्रं एवंजातीयकं अपर्याप्तं यत् प्रयोजनस्य दृष्टस्य, तत् धर्ममात्रमिति ब्रूमः । तत्र प्रधानकर्मत्वं स्यात् । कस्मात् ? अनिर्वृत्तेरुपकारस्य । न हि एवंजातीयकं द्रव्यस्योपकारकम् । द्रव्यं तु एवंजातीयकं अभिनिर्वर्तयत् गुणभूतम् । तस्य गुणभूतत्वात् इदं प्रधानभूतम् ।

**वा**— स्रुक्परिध्यग्निपुरोडाशसंमार्गाणां उत्तरोत्तरप्रधानप्रत्यासत्तिभेदेन उदाहरणपृथक्त्वम् । एतदुक्तं भवति

**' दूरेणापि प्रधानानां यद् द्रव्यमुपकारकम् ।
तेनापि कर्मसंबन्धान्न प्राधान्यं प्रपद्यते ॥ '**

तत्र पूर्वपक्षवादी पूर्वोक्तेनैव ' यैर्द्रव्यं न चिकीर्ष्यते ' ( २।१।३।७ ) इत्यनेन प्रधानकर्मलक्षणेन आह– द्रव्येण निष्पादितं कर्म, न किंचित् तस्य प्रत्युपकुर्वत् दृश्यते । तस्मात् प्रधानकर्म संमार्गप्रोक्षणादि इति ।

**तुल्यश्रुतित्वाद् वेतरैः सधर्म स्यात् । १० ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । इतरैर्गुणकर्मभिः सधर्मः स्यात् एवंजातीयकः । यथा व्रीहीनवहन्ति तथा । कुतः ? तुल्यश्रुतित्वात् । तुल्या हि द्वितीयाश्रुतिरेषां द्रव्येषु यथा व्रीहीनवहन्ति इति । एवं अग्निं संमार्ष्टि, पुरोडाशं पर्यग्नि करोति इति । किं गुणकर्मणि द्रव्ये द्वितीया दृष्टेति । यतो द्वितीयादर्शनात् इहापि सामान्यतो दृष्टेन गुणकर्मता । नेति ब्रूमः । द्वितीया विभक्तिः कर्तुरीप्सिततमे स्मर्यते । सा चेह द्वितीया विभक्तिः । तत एव तदीप्सिततममिति गम्यते । तच्चेदीप्सिततमम्, कर्म, गुणभूतम् । यद्यपि प्रत्यक्षादिभिः गुणभावो न गम्यते, प्रमाणान्तरेण शब्देन गम्यते । तस्मात् गुणभूतं एवंजातीयकमिति ।

**वा**—( सिद्धान्ती आह– ) नैव हि एतत् गुणकर्मलक्षणम्, यत् द्रव्यचिकीर्षा नाम, उपकारलक्षणशेषत्वप्रतिषेधात् । तादर्थ्यलक्षणं हि श्रुत्यादिप्रमाणकं तत्, न प्रत्यक्षाद्युपकारनिमित्तं इति वक्ष्यामः ( ३।१।१।२ ) ।

किमर्थं तर्हि द्रव्यचिकीर्षा उपन्यस्ता ? तदुच्यते ।

**' अन्यतः सिद्धशेषाणां येषां दृष्टोपकारिता ।
तेषां नापूर्वमस्तीति हन्त्यादीनामुदाहृतिः ॥ '**

यत्र द्रव्यचिकीर्षया गुणभावः तत्र नापूर्वभेदः प्रतिपत्तव्य इति यावत् । पूर्वपक्षवादी तु एतदेव गुणकर्मलक्षणं मत्वा संमार्गादिषु तदपश्यन् प्रत्यवस्थितवान् । सिद्धान्ताभिप्रायस्तु, सर्वत्र श्रुत्यादिभिरवधृते तादर्थ्ये पश्चात् उपकारदर्शनं तदभावे अदृष्टकल्पनं वा । तत्र ईप्सिततमत्ववाचिन्या द्वितीयया द्रव्यप्राधान्यद्वारेण क्रियाशेषत्वे प्रतिपादिते हन्त्यादीनां दृष्टार्थत्वात् नैराकाङ्क्ष्यं जातम्, न तु संमार्गादीनां इत्यदृष्टार्थता । न च तावता पूर्वावगतशेषत्वहानिः । [ ' द्रव्योपदेशः० ' ( २।१।४।११,१२ ) इत्यादिसूत्रद्वयं मीको. पृ. ४०६८ इत्यत्र ' सक्त्वधिकरणे ' द्रष्टव्यम् । ]

**शा**— यत्र न किंचित् दृष्टमस्ति कर्मोपयिकं तु द्रव्यं द्वितीयया संयुज्य निर्दिश्यते ' स्रुचः संमार्ष्टि ' इत्यादिषु तत्र विचार्यते, किं प्रधानकर्म उत गुणकर्म इति । तदर्थं च किं साध्यवाचिनी द्वितीया अथवा साधनवाचिनी इति । यद्यपि चात्र सिद्धान्तेऽपि द्रव्यगतादृष्टसंस्काररूपापूर्वसद्भावात् न अपूर्वभेदाभेदयोरुपयोगः तथापि पूर्वोक्तगुणकर्मलक्षणस्य अव्यापकत्वम्, प्रधानकर्मलक्षणस्य अतिव्याप्तिं चाशङ्क्य समाधीयते इति **संगतिः** । अत्र पूर्वपक्षाभिप्रायः– दृष्टप्रयोजनत्वमेव गुणकर्मलक्षणम्, न द्वितीयेति । कुतः ?

**' व्यभिचारान्न साध्यत्वमुच्यते लोकवेदयोः ।
साधनत्वं द्वितीयार्थः सर्वत्राव्यभिचारतः ॥ '**

ततश्च प्रधानकर्मैव संमार्गादि इति प्राप्ते, ब्रूमः ।

**' स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते ।
कर्तुर्यदीप्सितं यच्च तथायुक्तमनीप्सितम् ॥ तत् कर्म तद्द्वितीयार्थ इत्येवं पाणिनेः स्मृतिः ।
बलीयसी च साऽऽचारात् प्रयोगोऽप्यस्ति तादृशः ॥ '**

विधिविशेषणीभूतया क्रियया ईप्सितत्वं स्रुगादीनां द्वितीयया प्रतिपादितसाध्यभावानां विधिवशाद्गम्यते इत्युच्यते । स्वरूपेण तु तेषां समीहितत्वं क्रतुसाधनत्वादेव सिद्धम् ।

**सोम**— अव्याप्त्यादिशङ्कापूर्वकं पूर्वाधिकरणोक्तलक्षणबलेन आपाततः प्रसक्तं संमार्गादेः प्रधानकर्मत्वं अपोद्यते इति **संगतिः** ।

**वि**-- 'संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्य-कर्मता । गुणकर्मत्वमथवा, दृष्टाभावेऽवघातवत् ॥ गुणत्वं नहि संभाव्यं प्राधान्यं तु प्रयाजवत् ।, अदृष्ट-कल्पनेनापि गुणत्वं स्याद् द्वितीयया ॥'

**भाट्ट**-- 'व्रीहीन् प्रोक्षति', 'स्रुचः संमार्ष्टि' इत्यादौ दृष्टोपकारकत्वासंभवात् द्वितीयायाश्च साध्यत्ववत् करणत्वेऽपि 'सक्तून् जुहोति' 'बल्वजान् शिखण्डकान् कुरु' इत्यादौ प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवत् अर्थकर्मत्वमेव । बल्वजानां हि करोतेः द्विकर्मकत्वापत्तेः न साध्यत्वम् । अतः करणत्वमपि द्वितीयार्थः । अतश्च व्रीहिकरणकप्रोक्षणमेव अदृष्टार्थं विधीयते । इति प्राप्ते, 'कर्मणि द्वितीया' इत्यनुशासनात् 'घटं करोति' इत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थः न करणत्वम् । अनेकशक्तिकल्पनाप्रसङ्गात् । कर्मत्वं च 'कर्तुरीप्सिततमं कर्म' इति सूत्रात् न ईप्सिततमत्वरूपमेव । अपितु 'तथायुक्तं चानीप्सितम्' इति सूत्रात् ईप्सितानीप्सितसाधारणं साध्यत्वमेव । अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगमेन च ईप्सितत्वप्रतीतेः तदुद्देशेन प्रोक्षणं विधीयते । दृष्टद्वारासंभवेऽपि च अदृष्टमेव द्वारं व्रीहिनिष्ठं कल्प्यते । अत एव यत्र नोपयोगः क्लृप्तः, न वा कल्पयितुं शक्यः यथा सक्तुषु, तत्र द्वितीयया करणत्वलक्षणां अङ्गीकृत्य सक्तुविशिष्टहोमस्यैव अदृष्टार्थं विधानम् । न च अनीप्सितकर्मत्वेनापि अन्वयोपपत्तेः न करणत्वलक्षणा इति वाच्यम् । तथा सति अदृष्टोपकारस्यापि भावनायां कर्मत्वेन अन्वयावश्यंभावे तस्य द्विकर्मकत्वापत्त्या उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेः । अतः सक्तुकरणकहोमस्य आराादुपकारकत्वेऽपि प्रोक्षणादेः संनिपत्योपकारकत्वमेव ।

**मण्डन**— 'संमार्जनं संस्करणं स्रुगादेः ।'
**शंकर**-- 'संमार्गो गुणकर्म च ।'

* न च भावनाया द्विकर्मकत्वम् । करोतिपर्यायत्वेन प्रतीत्यनुसारेण च एककर्मकत्वस्य **संमार्गाधिकरणे** स्थापितत्वात् । कौ. २।२।१२।२६ पृ. २८८.

* **संमार्गादीनां** ग्रहधर्माणां सवनत्रयार्थत्वम् । वृ. ३।६।९।३०.

* **संमार्गवत्** । पवमानेष्टयः आधानसिद्धेष्वेव अग्निषु स्वोत्तरभाविक्रतूपयोगितया संमार्गवत् संस्कारविशेषाधायकाः भाष्यमते । **भाट्ट**. ५।३।९.

* **संमार्जनं** परिधिधर्मः । भा. ११।२।१०।२६, * **संमार्जने** परिधीनां मन्त्रः सकृत् पठनीयः । नायं परिधिप्रयुक्तः किंतु अपूर्वप्रयुक्तः । ९।१।५।११-१९.

* **संमार्जनाधिकरणम्** । ३।१।७।१३-१५. **मीको**. पृ. १६२९ 'ग्रहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **संमार्ष्टि** गार्हपत्यौ ( प्राजहितशालामुखीयौ ) । **संकर्ष**. ३।२।१२.

* **संमीलनं** वीक्षणं च- रथंतरे साम्नि 'अभि त्वा शूर...ईशानमस्य जगतः' इति भागे गीयमाने नेत्रसंमीलनं कर्तव्यम्, 'स्वर्दृशं' इत्यादिशब्दगानकाले तु वीक्षणं कर्तव्यम् । 'रथंतरे प्रस्तूयमाने संमीलयेत्, स्वर्दृशं प्रति वीक्षेत' । वि. १०।६।२.

* **सम्यग्जरणार्थता**- सम्यक् परिणतः शक्नोति गात्राणि प्रीणयितुं नाभेश्चाधस्तात् अगन्तुं इति सम्यग्जरणार्थता । वा. ३।२।९।२५ पृ. ७८३.

* **सम्यग्जरणग्रहणावेक्षणेषु** भक्षानुवाकः यथालिङ्गं विनियोक्तव्यः । वा. ३।२।९।२५-२६ पृ. ७८२.

* **सम्यग्ज्ञानम्** । इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः । अनुपहतेषु हि ( इन्द्रियमनोऽर्थेषु ) सम्यग् ज्ञानम् । वृत्तिकारः । भा. १।१।५।५ पृ. २८.

* **सरस्वत्यां** आज्यभागायां प्राप्तं पौर्णमासतन्त्रं आग्नावैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् अमावास्यातन्त्रेण बाध्यते अध्वरकल्पायाम् । बाल. पृ. १४१.

* **सरस्वत्याज्यस्य** उपांशुयाजविकारस्य धर्माः पश्चात्, बार्हस्पत्यस्याग्नेयविकारस्य धर्मास्तु पूर्वं कार्याः, चोदकस्य प्रयोगवचनात् अध्वरकल्पायां बलीयस्त्वात् । भा. ५।१।१०।१७-१८.



* **सर्पः** । 'न सर्पायाङ्गुलिं दद्यात्' तत्र दोषदर्शनात् । भा. ६।२।५।२०.

* 'यथा वा **सर्पसिद्धान्ते** नकुलो यां किलौषधिम् । दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ॥' वा. १।३।३।७ पृ. २०७.

* **सर्वं** ( वैदिकं ) कर्म सफलम् । शा. ४।३।५.

**सर्वं कार्यं सकारणमिति न्यायः** । कार्यं प्रागभावप्रतियोगि, कार्यनियतपूर्ववृत्तिकारणमिति सर्वं कार्यजातं घटादिज्ञानं सकारणं मृदादिज्ञानपूर्वकं भवति । उक्तं च-- 'कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत्' इति । उक्तं च-- 'जगतां यदि नो कर्ता कुलालेन विना घटः । चित्रकारं विना चित्रं स्वत एव भवेदिति ॥' **साहस्री**. ३७.

**सर्वं खलस्य चरितं मशकः करोतीति न्यायः** । स्पष्टार्थः । उक्तं च-- 'प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥' इति । **साहस्री**. ६४६.

**सर्वं पदं हस्तिपदे निमग्नमिति न्यायः** । यत्र महति लघ्वारोपस्तत्रायं प्रवर्तते इति । **साहस्री**. ५१९.

* सर्वं फलं यजमानस्य इति फलोत्सर्गन्यायः । **परिमल**. ३।४।१३।४४ ब्रसू. * सर्वं बलवतः पथ्यम् । विश्वामित्रस्यापि यत् रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितं सत् 'सर्वं बलवतः पथ्यम्' इत्यनेन **न्यायेन** महान्ति च तपांसि कृत्वा तानि क्षयं नयतः उत्तरकालं वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि । वा. १।३।३।७ पृ. २०८. * सर्वं बलवतः पथ्यम् । व्यासवसिष्ठविश्वामित्रादीनां तु तपोबलेन 'सर्वं बलवतः पथ्यम्' इति **न्यायात्** विरुद्धाचरणेऽपि न क्षतिः । **कौ**. १।३।४।७. * 'सर्वं ब्रह्मणे परिहरति' इत्यत्र ब्रह्मपदं विधेयम् । **टुप्**. १०।२।५।१९.

**सर्वं वाक्यं साऽवधारणमिति न्यायः** । यथाऽवधारणार्थक एवकारस्त्रिविधः-- ( १ ) क्रियान्वितः, (२) विशेषणान्वितः, (३) विशेष्यान्वितश्च । तत्र प्रथमस्य अत्यन्तायोगव्यवच्छेदोऽर्थः, यथा नीलमुत्पलं भवत्येवेति । द्वितीयस्य अयोगव्यवच्छेदोऽर्थः, यथा शंखः श्वेत ( एव ) इति पूर्वं उक्तमिति । तृतीयस्य अन्ययोगव्यवच्छेदोऽर्थः, यथा पार्थ एव धनुर्धर इत्येवमन्यत्रापि बोध्यम् । **साहस्री**. ९६.

* सर्वं वाक्यं सावधारणम् । वाक्यमात्रस्यासति बाधके सावधारणपरत्वम् । इमौ **न्यायौ** समानार्थकौ । **दत्तकमीमांसाटीका** पृ. ८१.

**सर्वं विशेषणं सावधारणमिति न्यायः** । यथा शङ्खः श्वेत एवेत्यर्थः, एवमन्यत्रापि बोध्यमिति । **साहस्री**. ९५.

* 'सर्वं विशेषणं सावधारणम्' । 'व्रीहिभिर्यजेत' इत्यत्र 'सर्वं विशेषणं सावधारणम्' इति **न्यायेन** विशेषणस्य अन्ययोगव्यवच्छेदकार्थकतया व्रीहिरूपविशेषणेन तदितरव्यावृत्त्या इतरनिरपेक्षत्वमार्थिकम् । कु. १।४।२०।२१.

* '**सर्वाण्येव** हि शास्त्राणि स्वप्रदेशान्तरैः सह । एकवाक्यतया युक्तमुपदेशं वितन्वते ॥' इति **न्यायेन** 'कर्मणि द्वितीया' इत्यादिवत् 'लः कर्मणि०' इत्यस्यापि 'द्व्येकयोः' इत्याद्येकवाक्यतावश्यंभावात् । कु. ३।४।८।१९.

**सर्वे इमे स्वभूत्यर्थं प्रवर्त्तन्ते इति न्यायः ॥ सर्वः स्वार्थं समीहते इति न्यायः ॥ ननु स्वार्थपरो लोक इति न्यायः ॥** इमे त्रयः समानाभिप्रायकाः । 'हेतुमति च' ३।१।२६ इति सूत्रमहाभाष्योक्तः । तथाहि- "ये तावदेते गुरुशुश्रूषवो नाम, तेऽपि स्वभूत्यर्थं प्रवर्तन्ते, पारलौकिकं च नो भविष्यति, इह च नः प्रीतो गुरुरध्यापयिष्यतीति । तथा य एते दासाः कर्मकरा नाम, तेऽपि स्वभूत्यर्थं प्रवर्तन्ते, भक्तं चैलं च लप्स्यामहे, परिभाषाश्च नो भविष्यन्ति । तथा य एते शिल्पिनो नाम, एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते, मित्राणि नो भविष्यन्तीति वेतनं च लप्स्यामहे" इति ।

द्वितीयस्तु पञ्चतन्त्रोक्तः । तृतीयस्तु श्रीमद्भागवतोक्तः । साहस्री. ६२६, ६२७, ६२८.

**सर्वे गुणाः काञ्चनमाश्रयन्तीति न्यायः ।** प्रसिद्धाभिप्रायकोऽयम् । साहस्री. ९८६.

* 'सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात्' (३।५।८।२६) । अथवा 'सर्वे तु' इत्यवान्तरपूर्वपक्षं परिगृह्य 'कारणादेकदेशे स्यात्' इति सूत्रान्तरं स्तोत्रकारिपक्षे नियोक्तव्यम् । वा. ३।५।८।२६ पृ. १००४. * 'सर्वे तु वेद०' । सांवत्सरिके चयने सर्वेषामपि आग्नेयीनां 'यद्दषीणामाग्नेयं छन्दः' इत्युद्देश्यकोटौ निवेशनविनियोगात् सर्वेषामेवाङ्गत्वं 'सर्वे तु वेदसंयोगात् कारणादेकदेशस्य' (३।५।८।२६) इति न्यायात् । संकर्षभाट्टदीपिका. २।१।३४. * 'सर्वे द्रव्यविषयो नियमविषयः' इति चातुर्थिकन्यायेन व्रीह्यादिसाधनकावघातादिविधावपि विशेषणभूतव्रीह्यादिद्रव्यविधेर्नियमार्थतया नियमादृष्टस्य अवर्जनीयत्वात् । कु. २।१।३।६.

**सर्वे वेदा यत्पदमामनन्तीति न्यायः ।** यथा– सर्वस्यापि शास्त्रस्य महत्तात्पर्यं निर्विशेषे एव ब्रह्मणीति पर्यवसितमिति । साहस्री. ५२४.

**'सर्वान् वर्णान् इष्टकासु' इति रेखावादः ॥**

'सर्वान् वर्णान् इष्टकानां कुर्यात्' इति श्रुतः वर्णशब्दः श्वेतादिरूपपर एव । अन्यसमवेतरूपाणां अन्यत्र कर्तुमशक्यत्वादेव तादृशवर्णसमवायिसुधागैरिकादिद्रव्यलेपः आक्षेपलभ्यः, न तु वर्णशब्द एव तत्परः शब्दसंयोगात् इति सूत्रस्वरसात् । रेखासामान्ये वर्णशब्दस्य शक्तिनिरूढयोरभावात् । 'वर्णं तु चाक्षरः' इति कोशेन नपुंसकत्वापत्तेश्च । इति प्राप्ते, 'ऋजुरेखाः पश्चाच्च पुरस्ताच्च व्यालिखिता मध्ये' इत्यन्तेन नानारेखावतीनामिष्टकानां देशविशेषविधानोत्तरं 'सर्वान्वर्णान्' इत्यस्य पाठेन सर्ववर्णशब्दस्य पूर्वप्रक्रान्तत्रिविधरेखापरत्वावसायात् सति तात्पर्यग्रहे तदनुपपत्त्या लक्षणाया अपि न्याय्यतया यावद्विशेषाणां विनियोगविधिभिरेव सर्वरेखाक्षेपे सति तदनुवादके वाक्ये तस्या अदोषत्वाच्च उक्तकोशे चकारेण पुंलिङ्गपदस्यापि अनुकर्षात् रेखापर एव । संकर्ष. २।१।५.

* 'सर्वेभ्यो ज्योतिष्टोमः' इयं तादर्थ्यचतुर्थी उपपदविभक्तिः विनियोक्त्री । बाल. पृ. ४५. * **'सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात् ।'** (३।४।१५।४४) । दर्शपूर्णमासयोः शेषकार्याणि एकस्मादेव हविषः कार्याणि इति पूर्वपक्षे प्राप्ते सिद्धान्तयति ।

शेषात् शेषकार्यानुष्ठानकारणस्य सर्वशेषेषु अविशेषात् सर्वेभ्यः कार्याणि इत्युक्तेः किं तत् कारणं इत्यपेक्षायां प्रतिपाद्यत्वकारणसूचनार्थः संस्कारस्य तदर्थत्वात् इत्यंशः ।

'शेषस्य गुणभूतत्वात्' (३।४।१५।४२) इति पूर्वपक्षहेतुनिरासार्थत्वेनापि संस्कारस्य शेषाङ्गत्वात् इत्येवं 'संस्कारस्य तदर्थत्वात्' इति सूत्रावयवो व्याख्येयः ।

प्रतिपाद्यत्वस्य अविशेषोपपादनार्थत्वेन तैः सर्वैः संस्कारस्य अर्थ्यमानत्वात् अपेक्ष्यमाणत्वात् इत्यपि संस्कारस्य तदर्थत्वात् इति योज्यम् ।

अप्रयोजकत्वस्य पूर्वपक्षासाधकत्वोक्त्यर्थत्वेन अपि संस्कारस्य तैः हविर्भिः एव अर्थ्यमानत्वात् प्रयुज्यमानत्वात् इत्येवं संस्कारस्येत्यादिसूत्रावयवव्याख्या ।

'संस्कृतत्वाच्च' (३।४।१५।४३) इति सूत्रस्य अतिक्रान्तसंस्कारावसरत्वात् इति व्याख्यायां कृतप्रयोजनद्रव्यसंस्कारानर्थक्यस्य उक्तस्य परिहारार्थत्वेनापि कारणाविशेषात् संस्कारस्य इत्येतावता संस्कारस्य यत् कारणं तस्य प्रधाने निष्पन्नेऽपि अविशेषात् इत्युक्तम् । किं तत् कारणं इत्यपेक्षायां च तदर्थत्वात् इत्यनेन हविषः प्रधानार्थता उक्ता । यथा, हविषः प्रधानार्थत्वात् प्रधानापूर्वसाधनत्वयोग्यत्वसिद्ध्यर्थं प्राक् संस्कारार्थवत्ता तथा निष्पन्नेऽपि प्रधाने तदीयस्य हविषः अशुचिस्पर्शादिना उपघाते क्रतुवैगुण्यात् निष्पन्नस्यापि प्रधानापूर्वस्य नाशोपपत्तेः तदीयत्वनिर्वृत्त्यै प्रतिपत्त्यपेक्षाऽस्तीत्याशयः । सु. पृ. १५३८–१५३९ । संस्कारस्य सर्वप्रकृतहविरर्थत्वेन सर्वहविषां 'कार्यते प्रयुज्यते अनेन' इति व्युत्पत्त्या कारणशब्दोक्तस्य प्रयोजकत्वस्य अविशेषात् सर्वेभ्यो हविर्भ्यः शेषकार्याणि क्रियेरन् इति सिद्धान्तप्रयोजनार्थत्वेन सूत्रयोजना । सु. पृ. १५४०. * 'सर्वेभ्यो वा कारणाविशेषात्०' (३।४।१५।४४) इत्यस्य अतिप्रसक्तस्य अपवादः क्रियते ('आज्याच्च०' ३।५।१।१ इत्यादिना) । वा. ३।५।१।१ पृ.९८९. * सर्वेभ्यः शेषकार्यानुष्ठानम् । भा. ३।४।१५।४५ पृ. ९८५. * '० **सर्वस्य वचनार्थत्वात्**' (१२।३।१०।२५) । न च विकल्पमन्तरेण सर्वेषां मन्त्राणां अन्तैः कर्मादिसंनिपातः कर्तुं शक्यः । किं वचनमेतत् ? नहि । न्यायः, सर्वस्य वचनार्थत्वात् इति । भा. १२।३।१३।२९. * **'सर्वस्य वा क्रतुसंयोगादेकत्वाद्दक्षिणार्थस्य गुणानां चार्थैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तत्समवायो हि कर्मभिः ।' १०।३।१४।५७ ॥** भूनाम्नि क्रतौ 'धेनुर्दक्षिणा' इत्युक्तया एकया धेन्वा ज्यौतिष्टोमिकीनां गवामेव निवृत्तिः नाश्वादीनां इति पूर्वपक्षे सिद्धान्तः । सर्वस्य क्रतुदाक्षिण्यस्य धेनुर्विकारः बाधिका । कुतः ? 'तस्य विश्ववत्यः स्तोत्रियाः' इति तच्छब्दानुषङ्गेण तस्य भूनाम्नः क्रतोः 'धेनुर्दक्षिणा' इति कृत्स्नक्रतुसंयोगात् विकृतौ भूनाम्नि क्रतौ प्राकृते अर्थे दक्षिणात्मके कार्ये श्रुतितो भूतं प्रत्यक्षश्रुत्या प्राप्तं धेनुर्द्रव्यं आनुमानिकसर्वदक्षिणाबाधकं स्यात् ।

ननु ज्योतिष्टोमे बहुद्रव्यानतानां ऋत्विजां कर्मसंबन्धावगतेः तद्विकृतौ भुवि अपि एकद्रव्यानतानां कर्मसंबन्धो न युक्तः इत्याशङ्क्य 'तत्समवायो हि' इत्युक्तम् । तया दक्षिणया ऋत्विजां कर्मसंबन्धावधारणात् एकेनापि द्रव्येण दक्षिणात्वेन श्रुतेन आनतानां कर्मसमवायो युक्त इत्यर्थः ।

ननु गवादिद्रव्यजन्यानामानतीनां भेदात् न गोजन्यानत्यर्थं विहितया धेन्वा अश्वादिनिवृत्तिर्युक्ता इत्याशङ्क्य 'एकत्वात् दक्षिणार्थस्य' इत्युक्तम् । ऋत्विगानत्युपायापेक्षायां 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यानतिसाधनवाचिदक्षिणाशब्दस्य ददात्यन्वयात् दक्षिणायाश्च उपादेयत्वेन विवक्षितैकसंख्यत्वात् तदर्थस्य प्रयोजनस्य आनमनस्यापि एकत्वमित्यर्थः ।

ननु 'दक्षिणां ददाति' इत्येकवचनश्रवणेऽपि 'गौश्चाश्वश्च' इत्यादिवाक्ये दक्षिणासमुच्चयप्रतीतेः तत्प्रयोजनानतिभेदोऽवसीयते इत्याशङ्क्य 'गुणानां चार्थैकत्वात्' इत्युक्तम् । चशब्देन इतरेतरसहितानामेव गवादीनां दक्षिणात्वप्रतीतेः 'तस्य द्वादशशतं दक्षिणा' इत्येकवचनाच्च समुच्चितानामेव दक्षिणात्वम् । गवादीनां उद्देश्यत्वात् साहित्याविवक्षाशङ्कानिरासाय उपादेयत्वज्ञापनार्थं गुणशब्देनाभिधानं दक्षिणात्वं च गवादीनां प्रत्युद्देश्यं इति ज्ञापयितुं अर्थशब्देनोक्तम् । सु. पृ. ४३५. * **'सर्वेषामभिगमयन्नवद्यत्यछंबट्कारम्'** इति वचनात् सहैवावदानं 'इन्द्राय राज्ञे ... इन्द्रायाधिराजाय इन्द्राय स्वराजे' इत्यत्र । संकर्ष. २।२।१४.

**सर्वेषामविशेषात् । १०।४।९।१८॥**

विकृतिसोमेषु 'कौत्सं भवति', 'काण्वं भवति' इति एकवचनान्तेन शब्देन साम श्रुतम् । 'वसिष्ठस्य जनित्रे भवतः' 'शुद्धाशुद्धीये भवतः' 'भर्गयशसी भवतः' इति द्विवचनान्तेन शब्देन सामानि श्रुतानि । 'क्रौञ्चानि भवन्ति' इति तु बहुवचनान्तेन शब्देन सामानि श्रुतानि । तास्वेव विकृतिषु प्राकृतान्यपि गायत्रादीनि सामानि प्राप्तानि । वैकृतानि तु तेषां प्राकृतानां निवर्तकानि इत्यवगतम् । तत्र किं सर्वाणि सर्वेषां निवर्तकानि उत एकवचनान्तशब्दोक्तं एकस्यैव प्राकृतस्य निवर्तकम्, द्विवचनान्तशब्दोक्ते द्वयोः निवर्तके, बहुवचनान्तशब्दोक्तानि तु बहूनि बहूनां प्राकृतानां इति स्वसंख्यासमसंख्याकानां साम्नां निवर्तकानि इति विचारे पूर्वपक्षमाह– सर्वेषां प्राकृतानां साम्नां सर्वाणि वैकृतानि निवर्तकानि, अविशेषात् विशेषाभावात् । तस्मात् सर्वं सर्वस्य निवर्तकं इति **पूर्वपक्षः** ।

एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात् । १९ ॥

'सर्वेषामविशेषात्' इति सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । वाशब्दः पूर्वपक्षव्यावर्तकः । न सर्वे सर्वस्य निवर्तकम् । किंतु एकस्य प्राकृतस्य एकं वैकृतं निवर्तकम्, द्वयोः द्वे, बहूनां बहूनि इति नियमः । श्रुतिसामर्थ्यात् एकवचनादिश्रुतेः एवमेव सामर्थ्यात् । एवं सति प्रकृतेरविकारात् प्रकृतेः प्राकृतानां चोदकप्राप्तानां साम्नां अविकारात् विकारो बाधो न भवति । तथा च कौत्सेन काण्वेन च प्राकृतमेकैकमेव बाध्येत प्राकृतानामितरेषां तु कौत्सादिना समुच्चयः । एवं शुद्धाशुद्धीयाभ्यां प्राकृतयोः द्वयोर्बाधः इतरेषां तु समुच्चयः । एवमन्यत्रापि । इति सिद्धान्तः । के.

* सर्वेषामृत्विक्शब्दावाच्यता । भा. ३।७।१६।३५ पृ. १०९९. * सर्वेषामेकानेकस्तोमकानां अग्निष्टोमपूर्वकता । वि. ५।३।१५. * सर्वेषामेवाङ्गानां श्येने हतिनवनीतम्, न सुत्याकालीनानामेव । मीको. पृ. २११४ 'हतिनवनीतं श्येने०' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'सर्वेषां त्वैक( वैक )मन्त्र्यं स्यात्' ( ३।२।११।४४ ) इति सिद्धान्तन्यायेन प्रकृतौ अग्निष्टोमसंस्थायां अनूहितप्रयोगः । सु. पृ.११४२. * 'सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि' । ३।२।११(१९) । ४४ ॥ मन्द्रादिमन्त्रः लिङ्गेन ऐन्द्रसोमभक्षणेषु न विनियुज्यते इति प्रकृताधिकरणपूर्वपक्षनिरासेन सिद्धान्तोक्त्यर्थं एतत् सूत्रम् । एकशब्देन एकरूपत्ववाचिना ऊहो निरस्तः इत्येवं ऐकमन्त्र्यशब्दव्याख्या । सवनाधिकारो हि इति अवयवः 'तत्पुरुषबलीयस्त्वेन इन्द्रपीतशब्दस्य ऐन्द्रसोमवाचितया अनैन्द्रेषु अशक्तेः कुतो लिङ्गेन विनियोगः' इत्याशङ्कानिरासार्थः । इन्द्रपीतत्वोक्तेः बहुव्रीहित्वेन इन्द्रपीतसवनवाचित्वात् अनैन्द्रस्यापि च सोमस्य इन्द्रपीतसंबन्धितया प्रकाशयितुं शक्यत्वात् तत्रापि विनियोगोपपत्तिः इति तदर्थः । लिङ्गेन अनैन्द्रेष्वपि मन्त्रो विनियुज्यते ततश्च तेष्वपि मन्त्राः प्रयोक्तव्याः

इति सिद्धान्तः । अधिकारोक्तेः विषयवाचित्वात् इन्द्रपीतशब्दः सवनविषयो हि इति 'सवनाधिकारो हि' इत्यस्य व्याख्या वार्तिककृता । समुदायस्य इन्द्रदेवत्यस्य इन्द्रपीतोक्त्या विवक्षितस्य अवयवद्वोमेन नष्टस्य प्रत्यक्षवचनेन शब्देन व्यपदेष्टुमशक्यत्वात् हुतशेषे च भक्त्या पानोक्त्यापत्तेः तत्पुरुषायोगे च बहुव्रीहेरपि स्त्रीकार्यत्वात् कण्ठेकालादिवत् व्यधिकरणबहुव्रीहेरपि संभवात् पूर्वपदप्रकृतिस्वरत्वाच्च बहुव्रीहित्वावगते न इन्द्रपीतशब्दस्य सोमविषयता युक्ता इत्येवं भक्तिपानत्वात् इत्यवयवव्याख्या । सोमविषयत्वे अभक्तपानप्रसङ्गात् इन्द्रपीतोक्तेः सवनविषयत्वं गृह्यते इति सूत्रावयवयोजना । सु. पृ. ११६३-६४. * 'सर्वेषां वा०' । अथ स्रुक्प्रकृतिपरिच्छेदत्वेन एकरूपत्वेऽपि प्रधानस्रुक्प्रकृतिपरिच्छेदलक्षणात् कार्यात् अङ्गस्रुक्प्रकृतिपरिच्छेदलक्षणस्य कार्यस्य अन्यत्वात् विकृतौ प्रयाजादिस्रुग्वर्जनम्, ततः प्रकृतावपि अपूर्वसाधनांशे धर्मविध्यभ्युपगमात् प्रधानापूर्वसाधनस्रुगर्थतैव पर्णतादेः, बर्हिषश्च प्रधानहविर्मात्रसादनार्थता स्यात् इति 'सर्वेषां वा' इति न्यायो बाध्येत । अथ प्राकृताङ्गबाधेन वैकृताङ्गनिवेशात्, एकत्र च बाधेन चरितार्थस्य वैकृताङ्गविधेः सर्वत्र बाधकत्वायोगात् न विकृतौ असौ न्यायः । सु. पृ. ६३५. * 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' ।३।७।१।२॥ शमीमयत्वादि तु स्रुगादिमात्रानुवादेन विधीयमानं 'सर्वेषां वा०' इत्यनेन वाक्यसंयोगबलीयस्त्वात् प्रकरणगम्यप्रधानार्थत्वबाधेन अङ्गप्रधानार्थं विज्ञायते । वा. २।१।४।१२ पृ. ४१३ । नष्टसौ (फल्चमसभक्षः) प्रधानेन विशेष्यते 'सर्वेषां वा०' इत्येवमङ्गप्रधानार्थत्वप्रतीतेः । ३।५।२०।५३ पृ. १०२३ । ( श्येने नवनीतं अङ्गप्रधानानां सर्वेषां इति सिद्धान्ते उक्ते आह—) तदुक्तं 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' ( ३।७।१।२ ) इति । ३।८।२१।४०. * 'सर्वेषु वाऽभावादेकच्छन्दसः' । ३।२।१८।४३ ॥ आक्षिप्तप्रयोजनसमाधानार्थं सूत्रम् । मन्त्रस्याविधायकत्वेन अपूर्वयागकल्पकत्वायोगात् बृहस्पतिसवे अपि गायत्रत्वश्रुतेः अविहितच्छन्दोविशेषाज्यादिविषयत्वेनापि संभवे प्रात-



रनुवाकादौ अनिर्देशप्राप्त ( अतिदेशप्राप्त ? )सप्तच्छन्दस्कत्वादिबाधायोगात् 'यस्तस्तम्भ धुनेत यः' इति सूक्तमुखीये इत्यादिनानाछन्दोविधानाच्च केवलगायत्रीछन्दस्तुतित्वानुपपत्तेः एकच्छन्दस्कसोमयागाभावात् सर्वेषु सोमयागेषु मन्द्रादिमन्त्रः स्यात् इत्येवं 'ऐन्द्राम्ने लिङ्गाभावात् स्यात्' ( ४० ) इत्येतत्सूत्रस्थस्य स्याच्छन्दस्य 'एकस्मिन् वा०' ( ४१ ) ( स्यात् ) इत्येवं तदनन्तरसूत्रे अनुषक्तस्य 'छन्दश्च०' ( ४२ ) इत्याक्षेपसूत्रे अस्य बुद्धिस्थीकृतस्य अनुषङ्गेण योज्यम् । सु. पृ. ११६२.

सर्वासां गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्ते स्यात् । १०।७।१७।५८ ॥

सर्वासां 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इत्यादीनां काम्येष्टीनां ये गुणाः द्रव्यदेवतारूपाः तेषां ग्रहणं अर्थवत्त्वात् सफलत्वात् अप्रवृत्ते एव चोदके स्यात् । काम्यचोदनानां उत्पद्यमानानां द्रव्यदेवतेन सहैव उत्पत्तिः । तदुत्तरकालं चोदकेन अवशिष्टानामङ्गानां प्राप्तिः । तस्मादत्र प्राकृतं द्रव्यदेवतं न प्रवर्तते । इति सिद्धान्तः ।

अधिकं स्यादिति चेत् । ५९ ॥

पूर्वपक्षी शङ्कते । काम्येष्टिषु काम्यचोदनाचोदितं द्रव्यदेवतं स्यादेव चोदकप्राप्तमपि प्राकृतं द्रव्यदेवतं अधिकं स्यात् । तथा च समुच्चयः । इति चेत् ।

नार्थाभावात् । ६० ॥

सिद्धान्ती आह । न अधिकं द्रव्यदेवतं कर्तव्यं अर्थाभावात् प्रयोजनाभावात् । एकेन हि विशेषविहितेन द्रव्यदेवतेन यागे निर्वृत्ते नापरस्य किंचित् फलम् । तस्मात् चोदको द्रव्यदेवतं न प्रापयति इत्येव सिद्धान्तः । अप्राप्तबाधः । के.

* सर्वाङ्गोपसंहारेण प्रयोगः । भा. ११।१।३। ११–१९.

* सर्वाङ्गोपसंहारसमर्थस्यैव काम्येषु अधिकारः । ६।३।२।८–९. 'सर्वशक्त्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । भा. १२।३।१५।३१,१२।४।३।६.

सर्वापेक्षन्यायः । यथा बहुषु निमन्त्रितेषु एकस्मिन् आगतेऽपि तस्मै भोजनं न दीयते अपेक्ष्यन्ते च सर्वे, एवं यत्र सर्वापेक्षा तत्रास्य प्रवृत्तिरिति । साहस्री. ५११.

सर्वार्थमप्रकरणात् । ३।६।२।१ ॥

अनारभ्य श्रूयते 'यस्य पर्णमयी जुहूर्भवति' 'यस्य खादिरः स्रुवो भवति' इति । इयं जुह्वाः पालाशता, स्रुवस्य वा खादिरता किं प्रकृतौ निविशते उत प्रकृतौ विकृतौ चेति सर्वत्रेति संशये पूर्वपक्षसूत्रमिदम् । इदं पालाशत्वादि सर्वार्थं प्रकृतिविकृत्युभयार्थं स्यात् । अस्मिन् वाक्ये प्रकृतेः अप्रकरणात् प्रकरणाभावात् । अनारभ्याधीतत्वेन कस्यचित् प्रकरणस्य अभावात् सर्वार्थता न्याय्या ।

प्रकृतौ वाऽद्विरुक्तत्वात् । २ ॥

'यस्य पर्णमयी जुहूर्भवति' 'यस्य खादिरः स्रुवो भवति' इति कस्यचित् प्रकरणं विना अनारभ्याधीतं पर्णमयीत्वं खादिरत्वं च प्रकृतौ विकृतौ च निविशते इति पूर्वपक्षनिरासार्थो वा–शब्दः । न सर्वत्र निविशते किंतु प्रकृतौ एव निविशते न विकृतौ, तथा सति अद्विरुक्तत्वं भवति द्विरुक्तत्वदोषो नायाति । प्रकृतौ विधाने सति चोदकेन विकृतौ प्राप्नोत्येव । विकृतौ पुनर्विधाने तु द्विरुक्तत्वं स्यात् । तथा च पूर्वपक्षे द्विरुक्तत्वदोषप्रसङ्गः । सिद्धान्तिमते तु अद्विरुक्तत्वं द्विरुक्तत्वदोषाभावः सिध्यति । तस्मात् प्रकृतौ एव निवेशः । अत्र द्विरुक्तत्वात् अद्विरुक्तत्वात् इत्युभयथा पाठो वार्तिकमतेन । अस्माभिस्तदनुसारेण उभयथा व्याख्यातम् ।

तद्वर्जं तु वचनप्राप्ते । ३ ॥

अनारभ्याधीतं 'यस्य पर्णमयी जुहूः' 'यस्य खादिरः स्रुवः' इति पालाशत्वादिकं प्रकृतौ एव निविशते न विकृतौ इति सिद्धान्तिना उक्ते पुनः पूर्वपक्षी ब्रूते । तु–शब्दः सिद्धान्तपक्षनिरासार्थः सन् विशेषं बोधयति । वचनप्राप्ते अनारभ्यवचनेन पालाशत्वादिकत्वे विकृतावपि प्राप्ते सति तद्वर्जं अनारभ्यविधिं वर्जयित्वा चोदक-

प्राप्तिः । यत्र तु विकृतौ न विधिः तत्र चोदकेन प्राप्तिः । तस्मात् सर्वार्थमेव पर्णतादिकम् ।

**दर्शनादिति चेत् । ४ ॥**

अनारभ्यविधिना अप्राप्ते चोदकः प्रवर्तते । अनारभ्य वचनेन प्राप्ते तु न चोदकाकाङ्क्षा इति पूर्वपक्षिणा उक्ते सिद्धान्ती शङ्कते । यदि अनारभ्यविधिना विकृतिः चोदकनिराकाङ्क्षा स्यात् तदा शतकृष्णले 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति प्रयाजदर्शनं नोपपद्येत । शतकृष्णले हि प्रयाजाः चोदकेनैव प्राप्नुवन्ति । शतकृष्णले प्रयाजानां दर्शनात्तु विकृतौ चोदकः सिद्धो भवति । तस्मात् जुहूपालाशत्वादिकं अनारभ्याधीतं प्रकृतौ एव निविशते विकृतौ तु चोदकेन ।

**न चोदनैकार्थ्यात् । ५ ॥**

'दर्शनादिति चेत्' (३।६।१।४) इति सिद्धान्तिकृतशङ्कायाः निरासार्थं पूर्वपक्षसूत्रमिदम् । अनारभ्यविधिना विकृतेः निराकाङ्क्षीकरणे चोदको न प्रवर्तेत इति सिद्धान्तिना यदुक्तम्, तन्न । कुतः ? चोदनैकार्थ्यात् । चोदनायाः अनारभ्याधीतजुहूपालाशत्वचोदनायाः एकार्थत्वात् पालाशत्वरूपस्य एकस्यैव अर्थस्य विधायकत्वात् । एकः अर्थः विधेयः यस्याः सा चोदना एकार्था । एकार्थायाः भावः ऐकार्थ्यम् । अनारभ्यचोदनायाः ऐकार्थ्यम् । तस्मात् सिद्धान्त्युक्तं न युक्तम् । विकृतौ चोदकेन जुहूः प्राप्नोति । तत्र केवलं पालाशत्वं अनारभ्यविधिना विधीयते । तथा च अनारभ्यविधिना विहितं वर्जयित्वा चोदकः प्रापयति । ततश्च अनारभ्यविधौ सत्यपि चोदकः प्रवर्तते एव । तस्मात् अनारभ्यविधिः सर्वार्थः ।

**उत्पत्तिरिति चेत् । ६ ॥**

अनारभ्यविधिः प्रकृतिविकृत्यर्थः इति पूर्वपक्षिणा उक्ते पुनः सिद्धान्ती शङ्कते । प्रकृतौ तावत् अङ्गानि संक्षेपेण विस्तरेण च उत्पाद्यन्ते । 'पञ्च प्रयाजान् यजति' इति संक्षेपः । 'समिधो यजति, तनूनपातं यजति' इत्यादिर्विस्तरः । एवं प्रकृतौ उत्पत्तिः संक्षेपविस्तराभ्यां भवति । एवं 'यस्य पर्णमयी जुहूर्भवति' 'यस्य खादिरः स्रुवो भवति' इत्यादिः विस्तरः, 'यस्यैवंरूपाः स्रुचः' इति संक्षेपः । तथा च प्रकृतौ यादृशी अङ्गानामुत्पत्तिः तादृशी एव अनारभ्यवाक्ये 'यस्य पर्णमयी' इत्यादौ उत्पत्तिः । तस्मात् इयमपि प्राकृती एव उत्पत्तिः इति प्रकृत्यर्थैव न विकृत्यर्था । तस्मात् अनारभ्यविधिः प्रकृत्यर्थ एव । इति चेत् ।

**न तुल्यत्वात् । ७ ॥**

प्रकृतौ अङ्गानां उत्पत्तिः संक्षेपविस्तराभ्यां भवति इति जुहूपर्णमयीत्वादेरपि उत्पत्तिः प्राकृती इति सिद्धान्तिना यदुक्तं तन्न । विकृतौ अपि उत्पत्तेः संक्षेपविस्तरोक्तत्वस्य तुल्यत्वात् । विकृतावपि अङ्गानामुत्पत्तिः संक्षेपेण विस्तरेण च उच्यते एव । यथा सांग्रहण्यामिष्टौ 'तिस्र आहुतीर्जुहोति' इति संक्षेपः । 'आमनमस्यामनस्य देवाः' इति विस्तरः (आमनं असि आमनस्य देवाः इति श्रुतौ पदच्छेदः) । तथा च संक्षेपविस्तरवती उत्पत्तिः प्रकृतिविकृत्योः तुल्या । तस्मात् अनारभ्यविधिः प्रकृतिविकृत्युभयार्थः ।

**चोदनार्थकात्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थः । ८ ॥**

अन्तिमं सिद्धान्तसूत्रमिदम् । 'न चोदनैकार्थ्यात्' (३।६।१।५) इति यत् पूर्वपक्षिणा उक्तं तस्यात्र विशेषतः उत्तरम् । चोदनायाः चोदकस्य यावान् अर्थः तस्य सर्वस्य कात्स्न्यं कृत्स्नता एव विकृतौ, न एकदेशपरत्वम् । जुहूश्च पालाशत्वं च, स्रुवश्च खादिरत्वं च चोदकेन विकृतौ प्रापणीया अर्थाः । तान् सर्वानेव चोदकः प्रापयति न केवलं जुहूमेव स्रुवमेव वा, येन पालाशत्वार्थं खादिरत्वार्थं वा अनारभ्यविधिमपेक्षेत । समर्थश्चोदकः सर्वं प्रापयितुम् । तस्मात् विकृतौ पालाशत्वादिकस्य प्राप्त्यर्थं न अनारभ्यविधेरपेक्षा । मुख्यविप्रतिषेधात्, मुख्यस्य चोदकस्य विकृतौ प्रवृत्तस्य सतः अनारभ्यविधिना पुनः पालाशत्वादेर्विकृतौ विधाने विप्रतिषेधः स्यात् 'प्रकृतौ वा द्विरुक्तत्वात्' (३।६।१।२) इति पूर्वोक्तं द्विरुक्तत्वदोषवत्त्वं स्यात् । तस्मात् न चोदकस्य अनारभ्यविध्यपेक्षा । एवं चोदनार्थकात्स्न्यात् मुख्यविप्रतिषेधप्रसङ्गाच्च अनारभ्यविधिः प्रकृत्यर्थः एव, न विकृत्यर्थोऽपि ।



अत्र कुतूहले 'न चोदनैकार्थ्यात्' इति पञ्चमे सूत्रे चोदना-पदस्य पाठः । अष्टमे च प्रकृते सूत्रे 'चोदकार्थ०' इति पाठः । भादिपुस्तकेषु तु अष्टमेऽपि चोदना-शब्दस्यैव पाठः । उभयत्र एकस्यैव शब्दस्य तु पाठो युक्त इति मत्वा अस्माभिरपि अष्टमेऽस्मिन् सूत्रे कुतूहलपाठो न स्वीकृतः । अर्थतस्तु चोदनापदेन चोदक एव ग्राह्यो भवति । अत एव 'कृत्स्नं चोदकः प्रापयति' इति भाष्यं 'वर्तेत यदि भेदेन प्रकृत्यङ्गेषु चोदकः' इति वार्तिकं च संगच्छते । के.

* 'सर्वार्थं वाऽऽधानस्य स्वकालत्वात्' । ३।६।५।१५ ॥ अग्नयः प्रकृतिविकृत्यर्थाः स्वतन्त्रोत्पत्तिकत्वात् । तदेतत् वर्णितं 'सर्वार्थं वा०' इत्यत्र । वा. ३।७।१९।३९ पृ. ११०४, यत्तु 'सर्वार्थं वा०' इति वक्ष्यति तत् सर्वकर्मार्थाग्न्यर्थत्वात् इति व्याख्यास्यते । २।३।३।४ पृ. ५९०. * 'सर्वार्थानां च वचनादन्यकालत्वम्' । ११।३।४।६ सूत्रांशः । सर्वार्थानां च सतां केषांचित् अन्यकालत्वं कृतम् । यथा 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति । भा. ११।३।४।६.

**ꕥ 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः' इति न्यायः ।** स्पष्टार्थोऽयं भगवद्गीतावाक्यात्मकः । साहस्री. ९२९.

* **सर्वौषधेषु इष्टकाधर्माः अग्निचयने न कर्तव्याः ।** संकर्ष. २।१।१०. मीको. पृ. ३१ 'अग्निचयने इष्टकाधर्माः चरुसर्वौषधेषु न भवन्ति' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वौषधावघातस्य नाभ्यासः अग्निचयने ।** ११।१।६।२८. मीको. पृ. ५३ 'अग्निचयने सर्वौषधावघातस्य नाभ्यासः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वकर्मणां आधानं तन्त्रम्, न तु प्रतिकर्म पृथक् ।** ११।३।२।२. मीको. पृ. ९१३ 'आधानं सर्वकर्मणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वकामार्थता** दर्शपूर्णमासादीनां 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' । ४।३।१०। २५-२६. मीको. पृ. २०७५ 'दर्शपूर्णमासन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वतो बलवती ह्यन्यथानुपपत्तिः इति न्यायः ।** कुतः उपाधेरेव त्यागनियमः इति चेत् नेतिनेतीति निषेधान्यथानुपपत्त्या तन्मिथ्यात्वावधारणात् इति । के.

* **'सर्वत्राऽऽख्यातसंबद्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादता ॥'** इति न्यायः । जायते च 'सोमेन यजेत' इति श्रवणात् सोमेन यागं कुर्यात् इति प्रथमबोधः । सर्वेषां 'सर्वत्राख्यातसंबद्धे०' (वा. पृ. ३२८) इति न्यायात् तृतीयाश्रवणाच्च । भाट्टालङ्कारः पृ. ६३. * सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते । टुप्. १२।१।१।१ पृ. २२१७. * 'सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥' वा. १।३।८।२७ पृ. २८८, * सर्वत्र च कृतार्थयोः संबन्धे कालार्थत्वं स्यास्यति । ३।२।५।११.

**ꕥ सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत् । १०।४।२।३॥**

बृहस्पतिसवे श्रूयते 'बार्हस्पत्यं ग्रहं गृह्णाति' इति । विषुवति 'अर्कं ग्रहं गृह्णाति' इति । महाव्रते 'शुक्रं ग्रहं गृह्णाति' इति । अश्वमेधे 'सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाति' इति । प्रकृतौ ऐन्द्रवायवादयो ग्रहाः विहिताः । ते बृहस्पतिसवादौ प्राप्ताः । तत्र प्रत्यक्षश्रुताः वैकृताः ग्रहाः चोदकप्राप्तान् प्राकृतान् निवर्तयेरन् प्रकृतिलिङ्गेन ग्रहशब्देन संयोगात् इति पूर्वपक्षे प्राप्ते, सिद्धान्तमाह । सर्वत्र बृहस्पतिसवादौ ग्रहाम्नानं यत् ग्रहाणामाम्नानं तत् अधिकं स्यात् प्राकृतेभ्यश्चोदकप्राप्तेभ्यो ग्रहेभ्यः । प्राकृतवैकृतानां समुच्चयः स्यादित्यर्थः । उभयेषां प्रमाणावगतत्वात् चोदकेन प्रत्यक्षश्रवणेन चेति । प्रकृतिवत् यथा प्रकृतौ 'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इति अप्राकरणिकौ प्राकरणिकैः समुच्चीयेते तद्वत् ।

**अधिकैश्चैकवाक्यत्वात् । ४ ॥**

बृहस्पतिसवविषुवदादौ बार्हस्पत्यार्कादिग्रहाणां प्राकृतैः ऐन्द्रवायवादिभिः ग्रहैः समुच्चयः इति सिद्धान्ते युक्त्यन्तरमाह । अधिकैः प्राकृतग्रहभिन्नैः निःसंदिग्धैः

अधिकैः सुराग्रहैः सोमग्रहाणां एकवाक्यत्वात् समुच्चयः एवं बार्हस्पत्यादीनां ऐन्द्रवायवादिभिः समुच्चयः इति सिद्धान्तसिद्धिः ।

लिङ्गदर्शनाच्च । ५ ॥

बृहस्पतिसवविषुवदादौ बार्हस्पत्यार्कादीनां वैकृतानां ग्रहाणां ऐन्द्रवायवादिभिः प्राकृतैः ग्रहैः समुच्चयः इति सिद्धान्ते हेत्वन्तरमाह । लिङ्गदर्शनाच्च समुच्चयः । 'विरण्यो वा एष यज्ञक्रतुर्यद्वाजपेयः, अतीव ह्यग्निष्टोमं क्रामति, अत्युक्थ्यं, अति षोडशिनं, नातिरात्रमाप्नोति ' इति । विरण्यशब्दो विस्तीर्णे भवति, यथा 'विरण्यान्यरण्यानि ' विस्तीर्णानि इति गम्यते । यदि समुच्चयः एवं विस्तीर्णता । अस्माल्लिङ्गात् समुच्चयः । के.

* 'सर्वत्र तु ग्रहाम्नान०' ( १०।४।२।३-५ )। अत्र बृहस्पतिसवे 'बार्हस्पत्यं गृह्णाति ' इति उपदिष्टस्य अतिदिष्टानां च ग्रहाणां समुच्चयः उक्तः । बाल. पृ. १७७. * 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते'। ( वा. ३।१।६।१२ पृ. ६७५ ) इति न्यायेन पवमानशब्दस्य पवनक्रियाकर्तरि योगेन निरूढत्वम् । कौ. १।४।३।३, सु. पृ. ४११. * 'वेदादेवानृतत्वं च तद्वाचामवगम्यते । विसंवादो हि भूयिष्ठस्तन्न्यायेन च दृश्यते ॥ सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते । संनिधानाच्च शास्त्रस्य विसंवादः स्फुटः स्फुटः ॥ ' वा. १।३।६।१४ पृ. २४२-२४३.

* 'सर्वत्वमाधिकारिकम्'। ( १।२।१।१६ )। 'सर्वाणि हवींषि पर्यग्नि करोति ' इत्यापस्तम्बवचनस्य सर्वत्वस्य उद्देश्यविशेषणत्वेन अविवक्षितत्वात् विवक्षितत्वेऽपि वा 'सर्वत्व० ' इति न्यायेन वचनान्तरानुरोधेन ('पुरोडाशं पर्यग्नि करोति ') पुरोडाशमात्रविषयत्वोपपत्तेः श्रुतिदर्शनोत्तरमपि एतस्याप्रामाण्यमेवेति कैश्चिदुक्तम् । तदयुक्तम् । कौ. १।३।६।१४ पृ. ९६, * 'सर्वत्वमाधिकारिकम्'। विश्वेदेवशब्दस्य क्लृप्तामपि देवताविशेषरूढिं परित्यज्य विश्वशब्दस्य सर्वशब्दपर्यायत्वाङ्गीकारेण 'सर्वत्वमाधिकारिकम्' इति न्यायात् प्रकृतसर्वविषयत्वमापाद्य देवशब्दस्य च देवतापरत्वमङ्गीकृत्य प्रकृताग्न्यादिसर्वदेवताकत्वस्यैव अष्टस्वपि यागेषु प्रवृत्तिनिमित्तं अङ्गीक्रियते । १।४।११।१४ पृ. २५१.

꙰ सर्वत्वं च तेषामधिकारात् स्यात् । १०।२।५।१९ ॥

शतकृष्णले चरौ शेषभक्षविषये 'सर्वं ब्रह्मणे परिहरति ' इति श्रूयते । तत्र तेषां ब्रह्मसंबन्धिभागानां अधिकारात् उद्देश्यत्वात् सर्वत्वं विहितं स्यात् 'यद् ब्रह्मणे परिहरति तत् सर्वं ' इति वचनव्यक्तिः । इति पूर्वः पक्षः ।

पुरुषापनयो वा तेषामवाच्यत्वात् । २० ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । शतकृष्णलचरौ शेषभक्षविषये 'सर्वं ब्रह्मणे परिहरति ' इति श्रुतौ 'यद् ब्रह्मणे परिहरति तत् सर्वम् ' इति यत् पूर्वपक्षिणा उक्तम्, तत्र । किंतु अत्र ब्रह्मभिन्नेभ्यः पुरुषेभ्यः शेषस्य अपनयः पुरुषापनयः क्रियते । तेषां ब्रह्मभागानां प्रकृतित एव सिद्धत्वेन अवाच्यत्वात् अविधेयत्वात् । तस्मात् पुरुषाणां इतरेषां ऋत्विजां ये भागाः ते सर्वे ब्रह्मणे एव परिहर्तव्याः इति विधीयते । 'यत् सर्वं परिहरति तत् ब्रह्मणे ' इति वचनव्यक्तिः । इति सिद्धान्तः । के.

꙰ 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ ' यथा- मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादं चानुरुध्यन्ते । बुधास्तु श्रुत्यन्तरविरुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैव तेनैव सदाचारेण मुच्यन्ते इति । साहस्री. २४१.

* 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥' (वा. १।३।२।३ पृ. १७६)। एकं विनाशयितुं शीलं येषां, येषां चानेकं, तेषां मध्ये 'सर्वनाशे०' इत्ययं लोकप्रवादः प्रसिद्धः इत्यन्वयः । सु. पृ. १४०.

* सर्व-पदस्य पर्याप्तिसंबन्धेन बुद्ध्यवच्छिन्ने शक्तिः । 'सर्वेषु घटेषु द्रव्यत्वम्' इत्यत्र घटपर्याप्तिभानम् । 'सर्वेषु घटेषु रूपम्' इत्यत्र व्यापकत्वे लक्षणा, कस्यापि रूपस्य सर्वघटवृत्तित्वाभावात् । 'सर्वेषु सत्त्वं,



प्रमेयत्वं ' इत्यादौ भेदप्रतियोगितानवच्छेदकत्वे लक्षणा । एवं 'सर्वेभ्यो दर्शपूर्णमासौ ' 'सर्वं ब्रह्मणे परिहरति ' इत्यादावपि इति दिक् । मणि. पृ. १६४.

* सर्वपरिदानाधिकरणम् । ३।४।६।१७. मीको. पृ. ६७७ 'अवगोरणन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* 'सर्वपाकादिसंबन्धे ह्याकारास्तण्डुलादयः ' इत्यनेन न्यायेन पूर्वावगतस्याङ्गत्वस्य उत्तरकालावगतेन प्राधान्येनाविरोधात् पशुयागाङ्गभूतस्य पुरोडाशयागस्य पशुयागसमवेताग्नीषोमसंस्कारार्थत्वे दशमे वक्ष्यते । सु. पृ. १३७०-७१.

* सर्वपुरोडाशक्षामे प्रायश्चित्तम् । ६।४।५।१७-२१. मीको. पृ. १५३१ 'क्षामेष्टिन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

꙰ सर्वप्रदानं हविषस्तदर्थत्वात् । ३।४।१४।३७ ॥

दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' इति श्रुतम् । किं कृत्स्नं हविः अग्नये प्रदातव्यं उत किंचित् दत्त्वा इतरत् शेषयितव्यं इति विचारे पूर्वपक्षमाह । सर्वप्रदानं सर्वस्य पुरोडाशस्य अग्नये प्रदानं स्यात् । हविषः तदर्थत्वात् 'आग्नेयोऽष्टाकपालः ' इति तद्धितेन सर्वस्य पुरोडाशस्य हविषः अग्न्यर्थत्वावगमात् । तस्मात् सर्वं प्रदातव्यं इति पूर्वः पक्षः ।

निरवदानात्तु शेषः स्यात् । ३८ ॥

पुरोडाशादिहविः सर्वं प्रदातव्यं इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । निष्कृष्य अवदानं निरवदानम् । 'द्विर्हविषोऽवद्यति ' इति निरवदानं श्रूयते । किंच 'द्व्यवदानं जुहोति ' इति श्रूयते । एतस्मात् निरवदानश्रवणात् शेषः स्यात् द्व्यवदानमात्रं होतव्यं अन्यत् अवशेषणीयं इति गम्यते । ततश्च सशेषं होतव्यं इति सिद्धान्तः ।

उपायो वा तदर्थत्वात् । ३९ ॥

द्व्यवदानमात्रं हविर्होतव्यं अन्यत् शेषयितव्यं इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । 'द्विरवद्यति ' इति द्विरवखण्डनं उपाय उच्यते, पुरोडाशादि हविः न सर्वमेव एकदैव अग्नौ प्रक्षेप्तव्यं किंतु द्विः द्विः कृत्वा इति उपायेन सर्वं हविः अनेकवारं मिलित्वा प्रक्षेप्तव्यम् । तदर्थत्वात् सर्वस्य हविषस्तु देवतार्थत्वात् सर्वं प्रदातव्यमेव परंतु द्विः खण्डयित्वा खण्डशः प्रदातव्यमिति । वाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः ।

कृतत्वात्तु कर्मणः सकृत् स्याद् द्रव्यस्य गुणभूतत्वात् । ४० ॥

पुरोडाशादि हविः द्विरवदाय खण्डशः सर्वं होतव्यं न शेषयितव्यं इति पूर्वपक्षिणा उक्ते सिद्धान्ती पुनराह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । द्व्यवदानं सकृत् एकदैव होतव्यं स्यात् न खण्डशः । तथैव कर्मणः होमस्य कृतत्वात् कृतत्वसिद्धेः । द्रव्यस्य पुरोडाशादेः होमं प्रति गुणभूतत्वात् । होमः प्रधानम्, द्रव्यं गुणः । न च गुणावृत्त्या प्रधानावृत्तिः संभवति । तस्मात् द्विरवदाय द्वावपि भागौ स्रुचि गृहीत्वा सकृत् होतव्यम् । तावता शास्त्रं कृतार्थं भवति । तस्मात् सशेषं होतव्यम् ।

शेषदर्शनाच्च । ४१ ॥

सशेषं होतव्यं इति सिद्धान्ते हेत्वन्तरमाह । 'शेषात् स्विष्टकृतं यजति ' इत्यादिशेषकार्यदर्शनादपि न सर्वहोमः । स्विष्टकृत्, इडा, चतुर्धाकरणम्, प्राशित्रं इति शेषकार्यस्य दर्शनं सर्वहोमपक्षे नोपपद्येत । तस्मात् सर्वप्रदानं इति पक्षो न युक्तः । सशेषमेव होतव्यं इति सिद्धान्तः । के.

꙰ सर्वप्रदानाधिकरणम् ॥

सर्वप्रदानं हविषस्तदर्थत्वात् । ३।४।१४।३७॥

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्र समाम्नायते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' इति । तत्र संदेहः किं कृत्स्नं हविरग्नये प्रदातव्यमुत शेषयितव्यं किंचित्, किंचिद्दातव्यमिति । किं प्राप्तम् ? कृत्स्नं हविः प्रदीयेत । कुतः ? तदर्थत्वात् । पुरोडाशः आग्नेयः कर्तव्य इति वचनम् । तस्मात् सर्वं प्रदातव्यमिति ।

वा— अष्टाकपालादिशब्दैः समस्तं द्रव्यं देवतार्थमवगमितम्, आहवनीयप्रक्षेपेण च हविषो देवतार्थता

भवति । 'यदाहवनीये जुह्वति' इति विधेः 'अग्निमुखा वै देवाः' इति चार्थवादात् । एवं च सति ततश्चेत् किंचिदप्यपनीयेत तदा अन्यत् श्रुतमन्यत्क्रियेत । तस्मात् सर्वप्रक्षेपः । किं पुनरयं पूर्वपक्षवादी शेषकार्याणां स्विष्टकृदिडाप्राशित्रशंयुवाककालभक्षचतुर्धाकरणानां विधिं न पश्यति । सत्यम्, न पश्यति इति केचित् । न त्वेतद्युक्तमिव । न ह्येवं क्वचित्पूर्वपक्षो न भवेत् । अतः पश्यन्नेवानेनाभिप्रायेण मन्त्रयते इति वक्तव्यम् । **'विद्यमानेषु शेषेषु द्रव्याणामप्रयोजकाः । भवेयुः शेषभाजो हि निःशेषे तु प्रयोजकाः ॥'** यदा हि द्व्यवदानमात्रे हुते पुरोडाशादयः सशेषाः क्रियन्ते तदा 'उत्तरार्धात्स्विष्टकृते समवद्यति' इत्येवमादिचोदनावशेन 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्' (४।१।१३।२८) इत्येवं स्विष्टकृदादीनामप्रयोजकत्वं भवति । यदा तु खलु सर्वप्रदानमवगम्यते तदा विद्यमानसंयोगासंभवाच्चोदितैकदेशानुष्ठानानुपपत्त्या शक्यमेकदेश्युत्पादनमध्यवसातुमिति स्विष्टकृदाद्यर्थं पुरोडाशान्तराण्युत्पाद्येरन् । शेषशब्दः 'शेषात्स्विकृष्टते समवद्यति' इत्यादिषु कथमिति चेत् ? उच्यते । **'हविरन्तरमालोच्य शेषशब्दो भविष्यति । आज्येन शेषमितिवत्तच्छेषेणेतिवच्च नः ॥'** यथैव 'आज्येन शेषं संस्थापयति' इति पूर्वकर्मणः पर्यवसानादधिके पूर्वसदृशे वा शेषशब्दः प्रयुज्यते । यथा च 'ततः शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति स्वर्गफलकर्मणो निःशेषोपयोगादन्यफलस्य चान्यत्र व्यापारासंभवात्ततोऽन्येनेति वक्तव्ये ततः शेषेणेति गौतमाचार्येणोक्तम् । एवमिहापि यत्प्रधानहविर्भ्योऽन्यद्धविस्तेनैवान्यत्वेन आधिक्येन वा भविष्यति । अथवा गुणत्वेन वा शेषादित्येवमभिधास्यते । शेषशब्दो ह्युपयुक्तेतरद्विद्यमानं ब्रवीति । न च प्रधानहविषां किंचिद्विद्यते । अन्येषां च सर्वमेतद्रूपमस्ति । तस्मात् द्रव्यान्तराणि गृह्येरन् । यथा वक्ष्यति 'निर्देशात्तस्यान्यदर्थादिति चेत्' इति । अथाप्यत्यन्तं शेषशब्दानुरोधं कृत्वा तेषामेव किंचिच्छेष्यते । तथाऽप्यस्त्येवान्यद्विचारस्य प्रयोजनं नावश्यं पक्षोक्तेनैव प्रयोजनेन भवितव्यम् । इदमपि संभवति । यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां शेषकार्यवशेन शेषाः स्थाप्यन्ते, तदा यथैव प्रधानं तस्य हविषः प्रयोजकमेवं स्विष्टकृदादीन्यपि इति । तदर्थावदाननाशदोषापहारेष्वपि प्रधानवदेव हविरन्तरमुत्पाद्येत । यदा पुनः प्रधानचोदनाक्षिप्तस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकाणि भवन्ति तदा तेषां परप्रयुक्तद्रव्योपजीवनादप्रयोजकत्वे सति नाशदोषापहारेष्वप्यक्रिया सिद्धा भवति । तस्मात् सत्यप्युभयोः पक्षयोरसर्वप्रदानेऽस्ति प्रयोजनम्, इत्यर्थवान् विचारः ।

**निरवदानात्तु शेषः स्यात् । ३८ ॥**

**भाष्यम्**— निष्कृष्यावदानं निवरदानम् । तद्धि श्रूयते 'द्विर्हविषोऽवद्यति' इति । अपरमपि वचनं 'द्व्यवदानं जुहोति' इति । तेन द्व्यवदानमात्रं होतव्यमन्यत्परिशेषणीयम् ।

**वा**— यद्याग्नेयोऽष्टाकपाल इत्येवमाद्येव भवेत्ततः सर्वप्रदानमेवावधार्येत । अत्र पुनस्तस्मात्पुरोडाशादेर्निष्कृष्य किंचिदेव होतव्यं श्रूयते 'द्विर्हविषोऽवद्यति' 'मध्यात्पूर्वार्धाच्च द्विरवद्यति' 'अङ्गुष्ठपर्वमात्रमवदानं भवति' 'द्व्यवदानं जुह्वति' इत्येवमादिवाक्यालोचनेन हि किंचिदेव होतव्यमवगतमतः शेषयितव्यं किंचित् ।

**उपायो वा तदर्थत्वात् । ३९ ॥**

**भाष्यम्**—न चैतदस्ति द्व्यवदानमात्रं होतव्यमिति । यज्जुहोति तद्द्विरवखण्डनेन संस्कर्तव्यमिति होतव्यमिति होतव्ये द्विरवखण्डनमात्रं विधीयते, नाद्विरवखण्डितस्य होमः प्रतिषिध्यते । कृत्स्नं च होतव्यमिति तदेवं न्याय्यम्, नान्यथा ।

**वा**— यद्येतानि वाक्यान्युत्पत्तिवाक्यावगतमशेषहोममबाधमानानि न निविशेरन्, यदि चैतानि प्रधानस्य प्रत्यासन्नतराणि भवेयुस्ततो बाधेरन् । एतानि तु संस्कारवाक्यानि अविरोधेनैवोपपद्यन्ते । शक्यते ह्यङ्गुष्ठपर्वमात्रैर्मध्यपूर्वार्धोद्धृतैर्दिशः प्रवृत्तैरवदानैः संस्कृत्य संस्कृत्य निशेषं हविः प्रदातुम् । अतः सर्ववाक्यवशेनैवं शास्त्रार्थो भवति । यदशेषं हविर्जुहोति तदेवमुपायमिति । तेन न कस्यचिद्धोमः प्रतिषिध्यते । तस्मा-



त्सर्वप्रदानं कर्तव्यम् । यत्तु यथाश्रुतेतिकर्तव्यताको युगपन्न शक्यते कर्तुमद्व्यवदानहोमप्रसङ्गादिति । ज्योतिष्टोमवदभ्यसितव्यो होमः । तदर्थत्वात् । देवतार्थत्वाद्यागार्थत्वादपूर्वार्थत्वात् वा कृत्स्नस्याष्टाकपालस्य । नैकदेशमात्रहोमेनोत्पत्तिवाक्यार्थसंभावना भवेत् । अथवा अवदानसंस्कारस्य द्रव्यार्थत्वात् ।

**कृतत्वात्तु कर्मणः सकृत् स्याद् द्रव्यस्य गुणभूतत्वात् । ४० ॥**

**भाष्यम्**— उच्यते । यदा द्विरवखण्डनविशिष्टं होमे श्रुतम्, तदा सकृद्द्व्यवदानेन यावत् श्रुतं तत्सर्वं कृतम् । तदा नापरं द्रव्यमस्तीति पुनर्यागो नाऽऽवर्तितव्यः । कथम् ? तद्धि द्रव्यं यागनिर्वृत्त्यर्थम्, न द्रव्यं यागेन संबन्धयितव्यमिति । यदि हि यागेन हविः संबन्धयितव्यं स्यात्ततो यागेन द्व्यवदाने संबन्धितेऽपरमपि संबन्धनीयमस्तीति तत्संबन्धार्थं पुनर्याग आवर्तेत । न तु यागो द्रव्यसंबन्धार्थः । किं तर्हि ? द्रव्यं यागे गुणभूतम्, यागः कथं निर्वृत्तिमुपेयादिति द्रव्यमुपादीयते । तेन निर्वृत्ते यागे सिद्धे च पुरुषार्थे न नियोगेन गुणानुरोधेन प्रधानावृत्तिर्युक्तेति ।

कथं न द्रव्यं प्रधानम्, येनाऽऽवृत्तिर्न भवेत् । यतो यागात् फलम् । 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति । न च यागेन द्रव्यस्योपकारो निर्वर्त्यते प्रत्यक्षः कश्चित् । तस्माद्द्व्यवदानं हुत्वा शेषयितव्यमिति । यत्तूक्तम् 'आग्नेयं हविः' इति वचनात् सर्वं होतव्यमिति गम्यते इति । तत्र आनुमानिको होमसंबन्धः । इह तु प्रत्यक्षो द्विरवदाने । अपि चाकृत्स्नसंबन्धेऽपि तद्धितस्योपपत्तिः । ततो ग्रहीतव्यमिति । सामान्यं खल्वाग्नेय इति, द्व्यवदानं जुहोतीति विशेषः । तस्माच्छेषयितव्यं किंचिदिति ।

**वा**— नैतदस्ति । पुनःपुनर्द्विरवखण्डनं तद्वांश्च होमोऽभ्यसितव्य इति । कुतः ? **'खण्डनं गुणभूतत्वादभ्यस्येतेह यद्यपि । होमः प्रधानभावात्तु नाऽऽवृत्तिं प्रतिपद्यते ॥'** 'द्विर्हविषोऽद्यति' इत्येतस्य संस्कारत्वाद्यावत्संस्कार्यं ध्रियते तावत् आवृत्तिर्भवत्विति शक्यते वक्तुम् । होमस्य फलवत्त्वात् 'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि' (२।१।३।७) 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' (६।१।१।१) इति च प्राधान्यावगमादेकेन द्व्यवदानेन निर्वृत्तस्य न द्रव्यमस्तीति न पुनरावृत्तिर्युक्ता । तस्मिंश्चानावर्तमानेऽर्थाभावादवद्यतिरपि नाऽऽवर्तते । कार्ये हि प्रवर्तमानं द्रव्यं संस्कारं गृह्णाति नोदासीनम् । न च द्व्यवदानव्यतिरिक्तस्य हविषः कार्यमस्तीति न संस्कारमपेक्षते । तस्मात्सोऽपि नाऽऽवर्तते । यदि हि द्रव्यार्थो होमो भवेत्ततस्तद्वशेन स्वयमावर्तेताऽवखण्डनं चाऽऽवर्तयेत् । अतदर्थस्य नाऽऽवृत्तिः । न चैष वाक्यार्थो यज्जुहोतीति हूयमानस्य द्विरवखण्डनमुपायो विधीयते इति । न हि जुहोतिशब्देन द्रव्यमुपादीयते । न चैष कर्मणि लकारो यतो हूयमानानुवादत्वं प्रतिपद्यते । क्रियायामेव त्विदं द्व्यवदानं विधीयते । योऽपि यज्जुहोतीति यच्छब्दात् द्रव्यप्रत्ययो भवति सोऽपि यच्छब्दस्यावैदिकत्वात् क्रियाविशेषणभूतस्य अनुवादत्वप्रदर्शनार्थं व्याख्यातृभिरुच्चारितस्य परमार्थानालोचनाद्भविष्यतीत्युपेक्षणीयः । यत्तु ज्योतिष्टोमवत् उत्पत्तिवाक्यावगतस्य समस्तद्रव्यप्राप्त्यर्थमावर्तिष्यते इति । तदयुक्तम् । कुतः ? **'अशेषग्रहणे सिद्धे भवेत्सोमेन तुल्यता । अपवादात्तदेवेह न तु सिद्धं कथंचन ॥'** आग्नेयचोदनाया ह्यानुमानिको होमसंबन्धः सर्वपुरोडाशावयवसामान्यप्रवृत्तश्च स यावन्नैव निर्वर्तते तावदस्त्येव 'द्व्यवदानं जुहोति' इत्यनेन निष्कृष्य संबन्धः कल्पितः । तस्मिंश्च सिद्धे नाऽऽनुमानिकोऽवकल्पते । तेन यत्सामान्यप्रवृत्तमाग्नेयत्वं तद्द्व्यवदानचोदनया सासदश्यमिव प्राकरणिकैर्द्व्यवदानविषयमेव उपसंह्रियते । तत्रैषोऽर्थो विज्ञायते द्व्यवदानमाग्नेयं करोति । अतोऽवयवान्तराणामचोदितत्वान्न होमप्रसङ्गः । किंच । **'न चावश्यं प्रदानेन हविराग्नेयमिष्यते । द्व्यवदाने गृहीते हि सर्वाग्नेयत्वसंभवः ॥'** तद्धितेन हि तादर्थ्यमात्रमुक्तं न प्रदानम् । द्वेधाऽपि च तादर्थ्यं भवति प्रदानेन प्रदानार्थद्रव्यसाधनत्वेन वा । तथाहि 'व्रीहिभिर्यजेत' इति वचनान्न तावत् व्रीहयः साक्षात्प्रदीयन्ते अथ च प्रदेयप्रकृतित्वादेवमुपदिश्यते । तस्मात् यद्यपि पुरोडाशः

समस्तः साक्षान्न प्रदीयते तथाऽपि द्व्यवदानप्रकृतित्वादाग्नेयो भविष्यति । तेन द्व्यवदानेनैव तावद्दीयमानेन तस्याऽऽग्नेयत्वं कृतं भवति । द्वावेव च तौ व्याख्याप्रकारौ । एको देवतासंबन्धस्य द्व्यवदाने संक्रान्तिरिति । अपरः पुनरिदमेव पुरोडाशस्य आग्नेयत्वं द्व्यवदानं ततो गृह्यते इति । तस्मान्न सर्वहोमः ।

**शेषदर्शनाच्च । ४१ ॥**

**भाष्यम्**— शेषादिडामवद्यति, शेषात् स्विष्टकृतं यजति, इत्यनुवादादस्ति शेष इति पश्यामः ।

**वा**— एवं च शेषशब्दो मुख्य एवोपयुक्तेतरविद्यमानवचनो भविष्यति । उत्तरार्धादिशब्दश्च नावयविविधिकल्पनार्थापत्तिक्लेशमाश्रयिष्यति । अत्राभिधीयते । यत्तावदुक्तं सामिधेन्यवदाग्नेयत्वं द्व्यवदानमात्रे उपसंहृतमिति । तन्न घटते । कथम् ? ‘ **सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः ॥** ’ सामिधेन्यं ( अस्पष्टस्य तु विधेरुदाहरणं दर्शयति ‘ सामिधेन्यं ’ इत्यादिना ) हि सामिधेनीनामुक्तमनारभ्यवादेन न क्रतूनाम् । तस्य तु क्रतुसंबन्धस्तद्द्वारेणाऽऽनुमानिकः कल्प्यः । न च प्रत्यक्षसंबन्धे सत्यानुमानिकः कल्प्यते इति युक्त उपसंहारः । न त्वष्टाकपालस्यास्फुटो देवतासंबन्धः । तद्धितश्रुत्या अभिहितत्वात् । स हि द्व्यवदानस्यैवाऽऽनुमानिकः स्यात् । उत्पत्तिवाक्ये च कर्मणोऽष्टाकपालेन संबन्धः श्रूयते । द्व्यवदानेन पुनरुत्पन्नवाक्ये । तत्रैतत्स्यात् । कर्मसंबन्धोऽष्टाकपालस्याऽऽनुमानिको द्व्यवदानस्य प्रत्यक्षस्तद्भावे वाऽऽनुमानिककल्पनं न संभवतीति । नैतद्युक्तम् । एवं सति ‘ द्व्यवदानं जुहोति ’ इत्येतदेवोत्पत्तिवाक्यमभ्युपगतं भवेत् । यदि हि अष्टाकपालवाक्यं जुहोतिवाक्येनोपसंहृतं ततोऽनेनैव कर्मोत्पत्तिः क्रियेत । ततश्च आग्नेयवाक्ये ‘चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत’ ( २।२।३।६ ) इत्येवं वाक्यभेदः प्राप्नोति । न चाननुमाय यागं आग्नेयादिवाक्यानां वाक्यान्तरापेक्षा तत्संबन्धो वाऽवकल्पते इत्युक्तम् । अतो यद्यप्यानुमानिकः संबन्धस्तथाऽपि स्वार्थपर्यवसायित्वान्यथानुपपत्तेः प्रथमतरमनुमित इति सिद्धे संबन्धे न शक्यं प्रत्यक्षशतेनाप्यन्यथात्वं कर्तुम् । न चेह सामान्यविशेषभावः संभवति । अवयवावयविनोः सामान्यविशेषव्यवहाराभावात् । अष्टाकपालचोदनया हि प्रत्यक्षमेव समस्तः पुरोडाश उपदिश्यते । द्व्यवदानचोदनयाऽपि, ततस्तुल्यबलत्वम् ।

ननु द्व्यवदानव्यतिरिक्तावयवप्राप्तिः सामान्येन पुरोडाशशब्देन क्रियमाणा दुर्बला स्यात् । उच्यते । ‘ **यदि ह्यवयवार्थेन पुरोडाशो विधीयते । ततः सामान्यवृत्तिः स्यात्स तु साक्षाद्विधीयते ॥** ’ आकृतिशास्त्राणि आकृतावसंभवन्ति व्यक्तिलक्षणार्थानि भवन्ति । तानि व्यक्तिषु परोक्षत्वाद्दुर्बलानि जायन्ते । न त्ववयविव्यक्तिः कर्म साधयितुं न शक्नोति । यतस्तच्छब्दस्य अवयवलक्षणार्थता कल्प्येत । अथ विनैव कारणेन लक्षणाश्रयणम् । ततोऽवयवशास्त्रस्याप्यवयवान्तरलक्षणार्थत्वाद्दौर्बल्यं स्यात् । तस्माद्यथैव द्व्यवदानं स्वावयवनिरपेक्षमात्मनैव केवलेन विधीयते तथैवाष्टाकपालस्य द्व्यवदानमवयवान्तराणि चानपेक्ष्य प्रत्यक्षविधानात् प्राप्तिस्तत्प्राप्तौ च यदाऽवयवान्तराण्यनुषज्यन्ते को वारयति । न तु तानि स्वमहिम्ना संबध्यन्ते तत्परा वा चोदना । न चात्यन्तमवयवावयविनोर्व्यतिरेक इति यदा आलोच्यते तदा अवयवान्तराण्यपि प्रत्यक्षाण्येव भवन्ति । तेनाष्टाकपालचोदना द्व्यवदानचोदनावशेनैवं कर्म प्राप्नोति द्व्यवदानं दत्त्वा पुनः शेषप्रदानम् ।

अथवा विकल्पः कदाचित्सकलस्य प्रदानं कदाचित् द्व्यवदानमात्रस्य । अथवा अष्टकपालस्योत्पत्तिवाक्यशिष्टत्वादामिक्षावद्बलीयस्त्वे सति द्व्यवदानं तेन सह बाधविकल्पसमुच्चयान्न प्रतिपद्यते इति ‘ गुणश्चापूर्वसंयोगे ’ ( २।२।९।२३ ) इत्येवं कर्मान्तरं कल्पयेत् । यतः कुतश्चिच्च द्रव्यान्तरादुपादीयेत, अष्टाकपालसंबन्धाभावात् । पूर्वकर्मसंबन्धेऽपि च पुनर्द्रव्यान्तरादेवोत्पन्नस्याष्टाकपालेन सह विकल्पसमुच्चयावुपन्यसितव्यौ ।

अथवा कृत्स्नपुरोडाशग्रहणेऽवधारिते द्व्यवदानचोदनायाश्च गुणपरत्वात् कर्मान्तरविध्यशक्तेरष्टाकपालविषयत्वावगमात्संस्कारस्य यावत्संस्कार्यमावृत्तेः प्रधानस्य च यथाश्रुतगुणसंपादनाय ज्योतिष्टोमवदावृत्तेरिष्टत्वात् ‘ उपायो वा तदर्थत्वात् ’ ( ३।४।१४।३९ ) इत्ययमेव



पक्षः प्राप्नोति निरवदानप्रमाणाभावात् । निरवदानाश्रयणे चात्यन्तदुष्टा परिसंख्या स्यात् । न ह्यत्र नियम उपपद्यते, सर्वपुरोडाशावयवानां नित्यत्वप्राप्तेः । यदि हि कतमोऽवयवः प्रक्षिप्यतामित्येवं नियमापेक्षायां सत्यां मध्यपूर्वार्धद्व्यवदानं विधीयते ततः स्यान्नियमार्थत्वम् । नित्यप्राप्ते त्ववयविनि द्व्यवदानपुनःश्रुतेरवयवान्तरनिवृत्तिपरत्वात् अस्वार्थग्रहणमित्यादिदोषत्रयं अपरिहार्यं ( आदिपदेन स्वार्थपरित्यागप्राप्तबाधयोः परिग्रहः ) स्यात् । तत्र हि तत्परिहर्तुं शक्यते यत्र परिसंख्यायमानप्राप्तिशास्त्रमक्लृप्तमुत्प्रेक्षाभिमुखं वर्तते । न चात्राष्टाकपालशास्त्रमक्लृप्तम् । न च क्लृप्ते सति दोषपरिहारः संभवति । तस्मान्न निरवदानम् । यदि च निरवदानशास्त्रादाग्नेयत्वं यागार्थद्व्यवदानविषयमुपसंह्रियेत ततः शेषावयवानामदेवतार्थत्वात् न स्वत्वमपेतं स्यात् । ततश्च ‘ भक्षार्थो वा द्रव्ये समत्वात् ’ (३।४।१७।५० ) इत्यादिषु यदृत्विग्भिः साम्यादस्वामित्वं यजमानस्य तत्र तत्रोच्यते तत्सर्वं विरुध्यते । तत्रैतत् स्यात् । देवतोद्देशसंबन्धो द्व्यवदानस्यैव त्यागः पुनः समस्तस्य हविषः । त्यागकृता च स्वत्वनिवृत्तिर्न देवतासंबन्धकृता । तस्मादविरुद्धं तदभिधानमिति । तदसत् । कुतः ? ‘ **निर्वपन्नेव जानाति ह्येतावदिह दास्यते । तत्राधिकपरित्यागः कल्प्यते केन हेतुना ॥** ’ देवतायै हि दातुं द्रव्यं त्यजन्ति न विभवेन । तत्र यद्देवतार्थादन्यदधिकं तद्गृहावस्थितद्रव्यान्तरवदपरित्यक्तम् । न चात्र त्यागस्य भेदेन विधानमस्ति । देवतासंबन्धकरणविधिनैव ह्यसौ अर्थापत्त्या आक्षिप्यते । सा चार्थापत्तिः यावता विना देवतायै दानं न संभवति तावत्येवावस्थिता नान्यत्र । न हि शेषद्रव्यपरित्यागाद्विना अनुपपत्तिः । सर्वत्र च समाप्तिविधानमिष्यते तेनापि यावत एव यागसमाप्त्यङ्गत्वं तावत एवाऽऽक्षिप्तस्य यागविधिर्नावयवान्तराणाम् । अतो यथा चतुर्मुष्ट्यतिरिक्तानामनसि स्थितानां व्रीहियवानां न निर्वापवेलायामत्यागादस्वत्वमेवमिहापि नावयवान्तराणां तत्स्यादिति । अथोच्येत निर्वापवेलायामनुपजातमध्यपूर्वार्धादिविभागं द्रव्यं अनभिप्रेतत्यागमपि बलात्परित्यक्तव्यम् । न हि तदानीं विज्ञायते केभ्यो व्रीहिभ्यो द्व्यवदानं निष्पत्स्यते केभ्यो नेति, अगम्यमाने विशेषे यानेव न त्यजेत्तेभ्य एव कदाचिदवदीयेत । तत्र त्यक्तानामदानादत्यक्तानां च दानादयथाश्रुतकरणप्रसङ्गः । तस्मात् सर्वत्याग इति । नैतदेवम् । ‘ **न हि सामान्यशास्त्रेण व्यवहारे कृते सति । विशेषशास्त्रावसरस्तस्मादादित एव सः ॥** ’ यदा हि सामान्यशास्त्रं प्रवृत्तव्यवहारं भवति तदा न शक्यं केनापि व्यावर्तयितुम् । तद्यदि समस्ताष्टाकपालनिर्वृत्त्यर्था व्रीहयो देवतोद्देशेन निरुप्तास्ते सर्वे दातव्यत्वेन प्रक्रान्तास्तेषां य एव न दीयेरन्, तत्रैव प्रक्रान्तापरिसमापनदोषो भवेत् । ततश्च सर्वप्रदानमेव प्राप्नोति । यदि तु द्व्यवदानशास्त्रेण विशेष्टुमिष्यते तत आदित एवैवमवधारयितव्यम्, अष्टाकपालनिर्वृत्त्यर्थेषु चतुर्मुष्टिषु ये द्व्यवदाननिर्वृत्त्यर्थास्तानग्नये जुष्टं निर्वपामीति । यद्यपि च विशेषो न गम्यते तथाऽप्येतेषां मध्ये येऽत्र द्व्यवदानं साधयन्ति तावन्तो न ममेति शक्यं संकल्पयितुम् । तद्यथा लोके कश्चित् बहुद्रव्यसमुदायेऽवस्थिते कंचिदभिधत्ते ‘ इतस्त्वं यावत्तृप्ति गृहाण’ इति । तत्र न तदवयवविशेषो गम्यतेऽथ च न सर्वत्यागोऽध्यवसीयते तथेहापि द्रष्टव्यम् । यत्तु तावन्मात्रमेव न निरुप्यते तत्र ‘ चतुरो मुष्टीन्निर्वपति ’ ‘ अश्वशफमात्रः पुरोडाशो भवति ’ इत्यादिवचनसामर्थ्यादीदृक्परिमाणाद्गृहीतं द्व्यवदानं देवतार्थतां प्रतिपद्यते इत्यवगम्यते । यत्तदन्यत्तत्तदनुग्रहार्थं नाधिकत्यागार्थमिति द्रष्टव्यम् । अतो यथैव ‘ अनसोऽधिनिर्वपति ’ इत्युक्ते निर्वापपरिच्छेदार्थमुपात्तेष्वपि शकटस्थितेषु व्रीहिषु न स्वत्वमपैति तथैव द्व्यवदानापादानभूते पुरोडाशेऽपीति स्वत्वे सति शक्याः परिक्रयादयस्तेन कर्तुमिति समत्ववचनविरोधः । एतेन द्व्यवदानप्रकृतित्वादेवाष्टाकपाल आग्नेयः कृतो भवतीत्येषोऽपि पक्षः प्रत्युक्तः । तत्रापि शेषपरित्यागानुपपत्तेः । न च व्रीहिवत्पुरोडाशस्य प्रकृतित्वं युक्तम् । व्रीहयो ह्यनदनीया वाक्यान्तरशिष्टाश्च प्रकरणादुत्पत्तिवाक्यशिष्टप्रकृतिद्रव्यापेक्षपुरोडाशावरुद्धयागानुवादेन विधीयमाना न शक्नुवन्ति प्रकृतित्वप्रतिपत्ति-

मन्तरेण यागसाधनत्वं प्रतिपत्तुम् । अष्टाकपालस्त्ववदनीय उत्पत्तिवाक्यशिष्टश्च शक्नोति साक्षाद्यागं साधयितुम् । न च पूर्वतरप्राप्ते प्रकृत्यपेक्षिणि द्व्यवदाने चोद्यते । तस्मान्न तत्प्रकृतित्वेन यागं साधयति । कस्तर्हि सर्वप्रदानस्य परिहारः ? उच्यते । '**यागहोमावभेदेन यैर्मोहात्परिकल्पितौ । तेषामपरिहार्यत्वं भेदे त्वेषोऽभिधीयते ॥**' यद्याग्नेयादिचोदनयैव हविःप्रक्षेपोऽभिधीयते ततो द्व्यवदानचोदनया परिसंख्यातुमशक्यत्वात् सर्वप्रक्षेपः प्राप्नोति । तदा च तयाऽऽग्नेयचोदनयैव प्रक्षेपश्चोद्येत यदा यागहोमयोरभेदः । तयोस्तु भेदः शब्दान्तराधिकरणन्यायसिद्धः । 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' ( ४।२।१०।२८ ) इति सूत्रकारेण उच्यमानं तत्रैव समर्थयिष्यामहे । यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागो देवतोद्दिष्टत्यज्यमानस्वत्वद्रव्यप्रक्षेपो जुहोतिः । तत्र ये दोषा दर्शपूर्णमासज्योतिष्टोमादिष्वहोमत्वादाहवनीयो न भवेदित्यादयस्तानपि तत्रैव परिहरिष्यामः । उभयोश्च भेदे सति 'आग्नेयोऽष्टाकपालः' इत्यनेन तावद्वाक्येन यावता विनाऽष्टाकपालस्याऽऽग्नेयत्वं न भवति तावदेव चोद्यते । तस्य च स्वत्वपरित्यागदेवतोद्देशौ केवलावन्तरेणाऽऽग्नेयत्वं न जायते न प्रक्षेपमपि । तत्र यदि वाक्यान्तरं ( अवदानप्रक्षेपविधायकं इति शेषः ) न स्यात्ततः ईदृशं कर्म ( अनुष्ठानं ) भवेत् । सुपक्वमविकलमष्टाकपालमाचारतः शुचौ देशे निधाय देवतामुद्दिश्य नायं ममेति संकल्पः कर्तव्यः । तत्परिपालनार्थं च पुनः कदाचिदपि न स्वत्वं द्रव्ये बध्नीयात् । यदि हि बध्नीयात्ततः पूर्वसंकल्पं विनाशयेदनृतं च वदेत् । यो हि प्रथममेव जानाति पुनरप्यहमत्र स्वत्वमाधास्यामीति तस्य न ममैतद्देवतायै त्वेतदिति संकल्प एव न भवेत् । तेन देवतोद्देशत्यागोत्तरकालं यदस्य भवति तद्भवत्वित्यवधार्य न कश्चिद्व्यापारो वोढव्यो भवेत् । तथा प्राप्ते तु वाक्यान्तराणि भवन्ति 'उपस्तृणाति' 'द्विर्हविषोऽवद्यति' 'अभिघारयति' 'चतुरवत्तं जुहोति' इत्येवमादीनि । तैः तावदिदमवधार्यते द्व्यवदानं हविषो होतव्यमिति । सर्वाणि चैतानि प्रकृतद्रव्यालम्बित्वात्तदुपादाय प्रवर्तन्ते नापूर्वद्रव्यग्राहित्वेन । तथाहि । 'चतुरवत्तं जुहोति' इत्यत्र होमस्याप्राप्तत्वान्न तमुद्दिश्य द्रव्यं विधीयते । चतुरवत्तं च पूर्ववाक्यकल्पितं (पूर्ववाक्यकल्पितमिति—'उपस्तृणाति' 'द्विर्हविषोऽवद्यति' इत्यादिवाक्यविहितमित्यर्थः ) प्रयोजनापेक्षमस्ति । तस्मात्तस्यानेन प्रक्षेपमात्रं शक्यं विधातुमिति न चतुरवत्तविशिष्टहोमविधानमवकल्पते । होमस्यापि च त्र्यंशस्य समाप्तिपर्यन्तत्वात् सर्वान्त्येंऽशे प्रक्षेपे चोद्यमाने त्यागतद्देवतोद्देशयोः किमपूर्वयोरर्थापत्त्या विधिः कल्प्यतामुत कुतश्चित्प्राप्तयोरेवाऽऽश्रयणं क्रियतामिति । तत्राऽऽग्नेय्यधिकरणन्यायेन ( ३।२।८ ) लाघवे सति गौरवस्याप्रमाणकत्वादवगतत्यागोद्देशांशद्वयान्यष्टाकपालादीन्येव गृह्यन्ते । न च तेषामौत्पत्तिकं यागसाधनत्वं विरुध्यते । प्रक्षिप्यमाणानामग्नियागसाधनत्वाविघातकत्वात् । देवतान्तरसंबन्धेन हि यागविपरीतक्रियासंबन्धेन वा विरोधः स्यात्, न त्वसावस्ति । तेनैषोऽर्थो भवति, अष्टाकपालेन यत्र क्वचित्प्रदेशे स्थितेन यजेत तदीयं च द्व्यवदानं यत्र क्वचित्प्रक्षिपेदिति । तत्र 'वेद्यां हवींष्यासादयति' 'बर्हिषि' इति वचनात्तत्र स्थितेन पुरोडाशेनेज्यते । 'यदाहवनीये जुहोति' इति वचनात्तत्र द्व्यवदानं हूयते । स तु होमः किं पूर्वस्माद्यागात् अर्थान्तरमितिकर्तव्यता भवति, उत तस्यैव यागस्यांशान्तरविवृद्ध्या रूपान्तरं जातमिति चिन्तनीयम् ! तत्रैव रूपान्तरोपजननमिति ब्रूमः । कर्मान्तरत्वे हि द्रव्यान्तरं देवतान्तरं च नारिष्ठहोमादिवत् प्राप्नोति । यथोक्तेन न्यायेन स एव यागः प्रचिततरो जुहोतित्वमापद्यते । न चैतावतौत्पत्तिकयजिरूपविघात आशङ्क्यः, जुहोतेर्यजिविशेषत्वात् । सामान्ये हि कश्चिद्विशेषो भवत्यपि । न तु निःसामान्यः कश्चिद्विशेष उपपद्यते । ततश्च यथा वृक्षमानयेत्युक्ते शिंशपामित्यविरोधात् पश्चादुच्यमानं न विरुध्यते तथा यजेतेत्युक्ते जुहोतित्वाविरोधोऽवगन्तव्यः । सोऽयं याग एव द्व्याकारः समस्तेन पुरोडाशेन क्रियते । द्व्यवदानेन जुहोत्यवस्थानीतः शेषेण तु सामान्यरूप एकस्मिन्नपि च क्षणे द्व्याकारोऽपि निष्पद्यते । यदैव



हि द्व्यवदानमाहवनीये निक्षिप्यते तदैव याज्यानुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते । तेन नैवं भ्रमितव्यं यस्माज्जुहूस्थं द्व्यवदानमाश्रावणप्रत्याश्रावणाभ्यां ( आश्रावणमिति– देवतायै द्रव्यं दातुमाभिमुख्येन यजमानं श्रावयेत्यर्थकः 'आश्रावय' इत्याग्नीध्रं प्रत्यध्वर्युणोच्यमानः प्रैष इत्यर्थः । प्रत्याश्रावणमिति— यदाश्रावयितव्यत्वेनाध्वर्युणोक्तं तदाश्रावितमस्त्वित्यर्थकः 'अस्तु श्रौषट्' इत्याग्नीध्रेणोच्यमानो मन्त्र इत्यर्थः । ) त्यागायोद्धृतं च तस्मात्तदेव केवलं देवतायै संकल्पितं नेतरदिति । विद्वद्भ्यामध्वर्युयजमानाभ्यां वेदार्थमनुसृत्य समस्तपरित्यागदेवतोद्देशौ यथार्हं कर्तव्यौ । अध्वर्युणा द्व्यवदानप्रक्षेपः अतिरिक्तोऽनुष्ठेय इति । न चैतावता यागस्य वैरूप्यमशोभनं मन्तव्यम् । वचनसामर्थ्यादीदृशस्यैव शोभनत्वप्रतीतेः । यथा कस्यचित्पुरुषस्यैकः पादः पुरस्ताद्गत इति न तावता किंचिद्वैलक्षण्यं भवति । तथाऽत्र द्व्यवदानपादेऽधिकमपि प्रक्षेपांशं गते सत्युत्पत्तिवाक्यशिष्टं यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः । तस्मात् द्व्याकारमेवैतत्प्रधानं द्रष्टव्यम् । अथवा यस्तत्र यागस्तस्य प्राधान्यं यस्तु प्रक्षेपः सोऽङ्गमेव । तथाहि– '**फलवाक्ये यजेरेव संबन्धः श्रूयते स्फुटः । तत्संनिधौ समाम्नानाज्जुहोतेरङ्गतेष्यते ॥**' यद्यपि तस्मिन्नेव द्रव्ये होमोऽप्याश्रितस्तथापि प्रोक्षणादिवदस्याङ्गत्वमविरुद्धम् । न हि समानद्रव्याश्रयत्वेन सर्वस्य प्राधान्यं भवति । संस्काराणामपि प्रधानद्रव्यवर्तित्वोपपत्तेः । संस्काराश्च केचित् प्रथममेव प्रधानेभ्यः क्रियन्ते केचिदूर्ध्वं केचिद्युगपत् । तत्र केचिदाहुः । परस्तात्संस्कारोऽयं होमः । निर्वापवेलायामेव देवतोद्देशत्यागात्मकतया यागस्य निर्वृत्तत्वात् । तदयुक्तम् । नह्यनदनीयावस्थैर्व्रीहिभिः पुरोडाशसाधनको यजिः शक्यः साधयितुम् । यदि च निर्वापवेलायामेव यागनिर्वृत्तिर्भवेत्तथा सति तदुत्तरकालं नाशदोषापहारेषु द्रव्यान्तरं नोपादीयेत । तत्र 'निर्देशाद्वाऽन्यदागमयेत्' ( ६।४।१।१ ) इत्यादि विरुध्यते । भाष्यकारोऽपि उपाकृते पशावाह ( ९।३।१२।३६ ) 'परकीयोऽसौ रक्ष्यते कालेन देवतया संभन्त्स्यते' इति । तेन निर्वापवेलायामेतस्यै दास्यामीत्येतावन्मात्रं संकल्पत्यागः केवलः क्रियते न यागः । स तु पूर्वनिर्वृत्तत्यागापेक्षया यथाश्रुतेतिकर्तव्यताकदेवतोद्देशरूपः प्रक्षेपवेलायामेव निर्वर्तते । तत्र तस्मिन्नेव क्षणे समस्तेन पुरोडाशेन यागः साध्यते । तत्साधनैकदेशश्च द्व्यवदानं यागस्याङ्गेन प्रक्षेपेण संस्क्रियते । तदुपलक्षितत्वादेव यागनिर्वृत्तेः प्राक्प्रक्षेपादनिर्वृत्तयागावगमान्नाशादिष्वन्यद्रव्यागमनम् । सत्यपि होमस्य संस्कारकत्वे नाप्रयोजकत्वम् । निर्वृत्तयागभावित्वात्तु स्विष्टकृदादीनां स्फुटमेव अप्रयोजकत्वं भविष्यति । यदि वैष प्रक्षेपः प्रधानं भवेत्ततो दर्शपूर्णमासादिषु जुहोतिव्यवहार एव स्यात् । विकृतिषु च प्रधानानामनतिदेशात् जुहोतावसति अप्रक्षिप्तानामेव सौर्यादीनां दानं स्यात् । अङ्गत्वे तु तेषामप्याहवनीये प्रक्षेपः सेत्स्यति । ये तु जुहोतिचोदनोत्पत्तयस्तेषु पूर्वार्धभूतोऽपि यजिरात्मा वा भविष्यति । अथवा तेषामपि सोऽङ्गम् । तत्र हि त्यागदेवतोद्देशावपि तेनैवाऽऽक्षिप्येते । यजतिचोदनोत्पत्तिषु पुनः सिद्धयोस्त्यागदेवतोद्देशयोः जुहोतिः प्रवर्तमानः 'आहवनीये यूपशकला होतव्याः' इतिवत्प्रक्षेपमात्रवचनो विज्ञायते । ततश्च सिद्धमङ्गत्वम् । एवं च सति पुरोडाशो यागे श्रूयते न होमे । सोऽपि द्व्यवदानस्य विहितो न समस्तपुरोडाशस्येति तन्मात्रस्य । समस्तस्य पुरोडाशस्य देवतां प्रत्युत्सृष्टत्वाद्विनाऽपि प्रक्षेपादस्वत्वव्यवहार उपपद्यते । न च परिसंख्यादोषो भविष्यति । निरवदानाच्च शेषसिद्धिः । '**अथवा नैव भिद्येते यागहोमौ परस्परम् । पूर्वापरौ हि सदृशौ तद्भागौ नरसिंहवत् ॥**'

शा— वमनस्य हविःशेषविषयत्वात् तत्प्रसङ्गात् हविःशेषो हृदयमागत इति अतः प्रभृति आपञ्चमपादपरिसमाप्तेः हविःशेषविषया कथा प्रवर्तिष्यते । प्रथमं तावच्छेषसद्भाव एव प्रतिपाद्यते । दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालो भवति' इति । तथा 'उपस्तृणाति, अभिघारयति, द्विर्हविषोऽवद्यति, चतुरवत्तं जुहोति' इति । तत्र संशयः किं सकलस्य पुरोडाशस्य आहवनीये प्रदानं उत द्व्यवदानमात्रं प्रदाय अन्यत्

शेषयितव्यमिति । यदि आग्नेयचोदना सकलहोमेन विना नोपपद्यते ततः सकलस्य, अथ द्व्यवदानमात्रेणापि तदुपपत्तिः ततः तन्मात्रस्य होमः । तत्र अष्टाकपालशब्दस्य अवयवपरत्वे लक्षणाप्रसङ्गात् तच्छ्रुत्या पुरोडाशावयवी एव अनेन देवता संबन्धीक्रियते । न च प्रदानमन्तरेण देवतासंबन्धोपपत्तिरिति सकलस्य प्रदानम् । यद्यपि द्व्यवदानस्य प्रत्यक्षश्रुतं होमसाधनत्वं अष्टाकपालस्य तु अनुमेयम्, तथापि अनिवार्यं अनुमानम् । अन्यथा अष्टाकपालसंबन्धस्य श्रुतस्य अनुपपत्तेः । उत्पत्तिशिष्टत्वाच्च पुरोडाशस्य द्व्यवदानादुत्पन्नशिष्टात् बलीयस्त्वम् । अतो बलात् द्व्यवदानवाक्यं उपायपरं व्याख्येयम् । यत् सकलं जुहोति तत् द्विरवदाय इति । न च अभ्यासमन्तरेण सकलपुरोडाशसाधनको यागः शक्यते द्व्यवदानेन कर्तुमिति अर्थात् अभ्यस्यते सोमयागवत् । कथमिदानीं शेषकार्याणि स्विष्टकृदादीनि विद्यमानसंनिहितशेषाभावात् हविरन्तरमाक्षेप्स्यन्ति ? यद्वा भवतु यत् शेषकार्यवशात् द्व्यवदानमात्रं हुत्वा अन्यत् शेष्यते, तदभावे तु सकलहोमो न्याय्यः इत्येतावान्पूर्वः पक्षः । कः पुनरयं पक्षद्वयस्य अनुष्ठाने विशेषः ? पूर्वपक्षे शेषकार्याणामपि प्रयोजकत्वात् तदर्थावदाननाशेऽपि प्रधानवद्धविरन्तरोत्पादः, सिद्धान्ते तु अप्रयोजकत्वात् लोपः इति । अत्राभिधीयते– '**यागः प्रधानमेकेन द्व्यवदानेन साधितः । द्रव्यमस्तीति कृत्वाऽसौ नावृत्तिं प्रतिपद्यते ॥ आग्नेयत्वं च कृत्स्नस्य तावतैवोपपद्यते । अग्नये द्व्यवदानं यत् तत उद्धृत्य दीयते ॥**' प्रधानभूतो हि यागो न युक्तं यत् द्रव्यवशेन आवर्तते । न च सोमयागवदभ्यासमन्तरेण अनुपपत्तिः । उत्पत्तिशिष्टं हि पुरोडाशस्य आग्नेयत्वं एतावतैवोपपन्नम्, यत्ततो गृहीतं द्व्यवदानं अग्नये दीयते । अग्निदेवत्ययागसाधनता हि आग्नेयता, साधनत्वं च प्रदेयप्रकृतितयाऽप्युपपन्नं व्रीहीणामिव पुरोडाशद्वारम्, सोमस्येव रसद्वारम्, पशोरिव हृदयादिद्वारम्, अतो द्व्यवदानद्वारं पुरोडाशस्य साधनत्वमिति न सर्वप्रदानमिति **सिद्धान्तः** ।

**सोम**–– करिष्यमाणविचाराणामनारभ्यवादप्रस्तावासंगतिं आशङ्क्य आह–– **वमनस्येति** । तथा च उपोद्घातरूपा **संगतिः** । **सूत्रार्थस्तु**––सर्वस्य हविषः प्रदानं कृत्स्नस्य हविषो देवतार्थत्वादिति भाष्यकारपक्षे प्रदानशब्दो देवतोद्देशेन दानपरः । वार्तिककारपक्षे तु प्रक्षेपपरः ।

**वि**–– ' यागे हविस्त्यजेत्कृत्स्नं कोऽप्यंशः शिष्यतेऽपि वा । , देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः ॥ '

**भाट्ट**— शेषभूतसोमवमनप्रसङ्गात् किमाग्नेयादौ कृत्स्नस्य पुरोडाशादेर्यागसाधनता होमश्च, उत द्व्यवदानादेरेव तत् पुरोडाशादिस्तु तत्प्रकृतिकः उत कृत्स्नः पुरोडाशादिः यागसाधनं होमस्तु द्व्यवदानस्यैव इति चिन्तायाम्– उत्पत्तिवाक्ये कृत्स्नस्यैव साधनत्वप्रतीतेर्न तावत् द्व्यवदानस्यैव यागसाधनत्वम् । न हि ' चतुरवत्तं जुहोति ' इत्येतदुत्पत्तिवाक्यम्, तथात्वे आग्नेयादिवाक्ये द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्तेः । अतश्च उत्पन्नशिष्टत्वेन पुरोडाशावरुद्धे यागे चतुरवत्तविधानानुपपत्तेः चतुरवत्तवाक्ये जुहोतिना यागमनूद्य अवदानाख्यः संस्कार एव ' निर्मन्थ्येनेष्टकाः पचन्ति ' इतिवत् विधीयते । न हि यागाद्धोमो भिद्यते येन जुहोतिना नानुवाद इत्याशङ्क्येत । जुहोतिचोदितानामपि ' स एष यज्ञः पञ्चविधः ' इत्यादौ यजिनाऽनुवादात् । यजतिचोदितानां च प्रयाजादीनां ' अभिक्रामं जुहोति ' इति जुहोतिना अनुवादाच्च । यागहोमयोर्भेदे प्रयाजानूयाजगृहमेधीययागादौ प्रक्षेपे प्रमाणाभावाच्च । अतो यागहोमयोरभेदात् युक्तो जुहोतिना यागमनूद्य प्रदेयपुरोडाशसंस्कारकतया अवदानविधिः । अतश्च कृत्स्नस्यैव पुरोडाशस्यावदानेन संस्कार्यत्वात् पुनः पुनरवदाय याग इति ज्योतिष्टोमवद्यागाभ्यासेऽपि न दोषः । वस्तुतस्तु सर्वं पुरोडाशं पुनःपुनरवदाय सकृदेव हृदयादिवत् याग इत्यपि शक्यं वक्तुम् । शेषकार्याणि स्विष्टकृदादीनि तु प्रकृते विद्यमानशेषाभावाद्धविरन्तराक्षेपकाणि । तद्वाक्यस्थशेषशब्दस्तु अवशिष्टवचनत्वासंभवात् ' आज्येन शेषं संस्थापयति ' इतिवत् अन्यपरः । दृष्टश्च शेषशब्दोऽन्यत्रापि ' ततः शेषेण



विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति गौतमस्मृतौ स्वर्गारम्भकसुकृतातिरिक्तसुकृतपरः । न हि स्वर्गारम्भकसुकृतशेषेण देहान्तरप्राप्तिः, अन्यत्रान्यस्य व्यापारायोगात् । अतस्तत्र शेषशब्दोऽन्यवाच्येव इति प्रकृतेऽपि हविरन्तरमेव पूर्वसदृशं शेषशब्दवाच्यं भवति । अस्तु वा शेषकार्यानुरोधात् यस्य कस्यचित्प्रकृतस्य एकस्य हविषः शेषस्थापनम्, इतरेषां तु सर्वहोम एव । तथा च तद्विषयमेव मध्यपूर्वार्धवाक्यम् । इति प्राप्ते––

न चतुरवत्तवाक्येन अवदानविधिः ' द्विर्हविषोऽवद्यति ' इत्यनेनैव प्राप्तेः । अनेनैव विधानेऽपि वा निष्ठाप्रत्ययोपादानवैयर्थ्यप्रसङ्गेन अवदानसंस्कृतस्यैव द्रव्यस्य विधेयत्वाच्च । अतश्च यागानुवादेनावत्तस्यैव हविष्ट्वेन विधेयत्वादुत्पत्तिवाक्ये अष्टाकपालपदं पशुसोमवत् प्रकृतिद्रव्यविधायकम् । अतश्च द्व्यवदानस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिः शेषकार्याणि इति **भाष्यकारः** ।

**वार्तिककारस्तु**–– न यागहोमयोरभेदः याज्ञिकानां देवतोद्देशपूर्वकद्रव्यत्यागे प्रक्षेपाङ्गके यजिपदप्रयोगात्, देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिपदप्रयोगात्, प्रक्षेपाङ्गकक्रियाद्वयवृत्तिजातिर्यागत्वं क्रियात्रयवृत्तिजातिश्च होमत्वमिति तयोर्भेदात् । अत एव न यजिना अङ्गभूतोऽपि प्रक्षेपः शक्त्योच्यते । अपि तु प्रमाणान्तरलभ्य एव । तदत्र आग्नेयादिवाक्ये यागमात्रानुमानेऽपि अङ्गभूतस्य प्रक्षेपस्याप्राप्तत्वात् चतुरवत्तवाक्येनैव अवत्तोद्देशेन तद्विधानम् । अत एव तत्र द्वितीयाऽप्युपपद्यते । यागे तु अष्टाकपालः कृत्स्न एव हविः, प्रक्षेपस्तु त्यागसमकालीनस्तदुत्तरकालीनो वा द्व्यवदानस्य प्रतिपत्तिः । अत एव अत्रत्यजुहोतिना उद्देशत्यागयोरुत्पत्तिवाक्यादेव प्राप्तेर्लक्षणया प्रक्षेप एव प्रतिपाद्यते । एवं च यत्र प्रकृतौ विकृतौ वा प्रत्यक्षवचनेन अतिदेशेन वा प्रक्षेपप्राप्तिः तत्र न आक्षेपः प्रक्षेपस्य । अन्यत्र तु प्रयाजादौ प्रमाणान्तराभावात् यत्र न प्राप्तिः तत्र यजिनैवाक्षेपः, तदङ्गक एव शक्तिग्रहात् । पात्नीवतादौ तु देवतासंबन्धेन उद्देशत्यागयोरेव कल्पनात् पर्यग्निकरणान्ताङ्गरीतिविधानेन च प्रक्षेपानतिदेशात् न प्रक्षेपः । गृहमेधीयादौ तु आज्यभागपुनःश्रवणात् यजिश्रवणाद् वा तत्करणमिति विशेषः । अतश्च कृत्स्नस्यैव पुरोडाशस्य देवतायै त्यागादुपयुक्तस्य च द्व्यवदानस्य प्रक्षेपेण प्रतिपत्तिः । उत्तरार्धादेश्च स्विष्टकृदिडादिना । न च त्यक्तस्य स्विष्टकृते पुनस्त्यागानुपपत्तिः । वचनवशेन त्यक्तस्यापि पुनः स्वीकारेण त्यागोपपत्तेः । अतः अस्ति शेष इति सिद्धम् ।

**मण्डन**— ' न सर्वदानं हविषोऽवखण्ड्य । ' ' अवखण्ड्य ' पुरोडाशात् पर्वद्वयमात्रं अवच्छिद्यैव त्यक्तव्यमिति शेषः ।

**शंकर**— ' नाग्नेये सर्वदानता ' । (२०)

* **सर्वप्रदानाधिकरणे** वार्तिके होमसमकाला प्रतिपत्तिः प्रतिपादिता । बाल. पृ. ८२.

* **सर्वप्रदानाधिकरणसिद्धान्तप्रयोजनं** शेषकार्याणां सर्वहविःप्रयोज्यत्वात् सर्वेभ्योऽनुष्ठेयत्वं प्रतिपत्तिरूपम् । सु. पृ. १५४०.

* **सर्वयज्ञाङ्गता** वारणादीनाम् । ३।१।१२।२२. मीको. पृ. ३४९८ ' वारणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* ' **सर्ववाक्येषु** चाख्यातं तेनाकाङ्क्षानिवर्तनात् ' इत्यनेन न्यायेन अश्रुताख्यातकेषु वाक्येषु तत्कल्पनेन आख्यातवत्त्वम् । सु. पृ. ७११.

* **सर्वविचाराणां** प्रतिज्ञापूर्वकत्वम् । बृहती. पृ. १५.

**सर्ववेदान्तप्रत्यय इति न्यायः** । यथा सर्वेभ्यो वेदान्तेभ्यः एकमेव परं ब्रह्म प्रतीयते, एतदभिप्रायकप्रसङ्गेऽयं प्रवर्तते इति । साहस्री. ७८८.

* ' **सर्वव्याख्याविकल्पानां** द्वयमेव प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥ ' वा. १।३। २।४ पृ. १८६.

**सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात्** । ६।३।१।१ ॥

नित्यस्य अग्निहोत्रदर्शपूर्णमासादेः कर्मणः सर्वाङ्गसंयुक्तस्य सर्वस्य अनुष्ठाने शक्तौ सत्यामेव तस्मिन्

कर्मणि प्रवृत्तिः स्यात् । पुरुषस्य सर्वानुष्ठानशक्तौ एव प्रवृत्त्या भाव्यम् । तथाभूतस्य उपदेशात् काम्यस्य अग्निहोत्रादेः कर्मणः यथाभूतस्य उपदेशः तथाभूतस्यैव नित्यस्यापि उपदेशः । काम्ये यथा कृत्स्नानुष्ठातुः प्रवृत्तिः तथा नित्येऽपि इति **पूर्वः पक्षः ।**

अत्र **टुप्टीकायां** ' तथाभूतोपदेशात् ' इत्यस्य नानाविधा योजना कृता । सा उदाह्रियते । [ **अत उत्तरं कंसस्थं तन्त्ररत्नं कंसाद्बहिस्तु टुप्टीका इति ज्ञेयम् ।** ]

१ सर्वैरङ्गैः क्रतुः ( ' अग्निहोत्रं जुहोति ' इत्येवमुत्पन्नः ) निराकाङ्क्षीक्रियते, तादृश एव ( सर्वाङ्गीण एव क्रतुः ) कर्तृधर्मत्वेन ( यावज्जीववाक्येन ) चोद्यते तदिदमुक्तं ' तथाभूतोपदेशात् ' ( इति ) ।

२ ( योजनान्तरमाह— ) अथवा यथा काम्ये धातोः ( धात्वर्थस्य ) पूर्वापरीभूतभावनाकरणता सर्वैः अङ्गैः निराकाङ्क्षीक्रियते ( काम्ये न तु कतिपयैरेव ) तथा नित्येऽपि ( ' विधेस्त्वेकश्रुतित्वात्० ' ११।१।३।१६ इत्यस्य न्यायस्य काम्ये नित्ये वा अविशेषात् ) इत्यतः तथाभूतोपदेशात् ( इत्युक्तम् । यथाभूतं काम्यं तथाभूतमेव नित्यमपीति ) ।

३ ( व्याख्यानान्तरमाह— ) अथवा नामविशिष्टं ( दर्शपूर्णमासाख्यं कर्म ) सर्वैः ( अङ्गैः ) निराकाङ्क्षीक्रियते, यथा काम्ये तथा नित्येऽपि ( कुतः ) तन्नामस्तुल्यत्वात् ( यदि हि नामान्तरं श्रूयेत ततः काम्यात् नित्यं कर्मान्तरं स्यात् । ततश्च क्रत्वन्तरधर्मा इव क्रत्वन्तरेषु, काम्यस्य धर्मा नित्ये न प्रवर्तेरन् । तन्नामकमेव तु निमित्तं प्रति उपदिश्यते ) इत्यतः तथाभूतोपदेशात् ( इत्युक्तम् ) ।

४ ( व्याख्यानान्तरमाह— ) अथवा यथा काम्यस्य संनिधौ इतिकर्तव्यता ( आम्नाता ) तथा नित्यस्यापि ( द्वयोरपि ) संनिधानाविशेषात् इत्यतः तथाभूतोपदेशात् ( इत्युक्तम् । इतिकर्तव्यतासंनिधिः द्वयोरपि तुल्य इत्यर्थः ) ।

५ ( व्याख्यानान्तरमाह— ) अथवा भावनात्मनेपदेतरेतरयोगकारणानां तुल्यत्वात् ( नामधेयगतेतरेतरयोगकारणविभक्त्योः आख्यातपदस्य च काम्यवाक्यसमानरूपत्वात् इदं कर्मैकत्वमित्युच्यते । कर्मैक्ये च सति धर्माणामपि ऐकरूप्यमेव युक्तम्, न तु क्वचित् साकल्यं इतरत्र वैकल्यं इति वैचित्र्यं युक्तमिति ) तथाभूतोपदेशात् ।

६ ( व्याख्यानान्तरमाह— ) अथवा पुरुषार्थस्य ( भाव्यस्य ) उभयत्र ( काम्ये नित्ये च ) विद्यमानत्वात् तथाभूतोपदेशात् ( इत्युक्तम् । यदि हि निमित्ते निष्फलं कर्ममात्रमेव कर्तव्यं स्यात् तत्स्वरूपस्य अङ्गैर्विनापि सिद्ध्यवगमात् हीनाङ्गस्यापि प्रयोगः स्यात् उभयत्रापि फलसंभवात् । तस्य च यथाश्रुतसामग्र्याधीनसिद्धित्वात् समस्तेतिकर्तव्यतोपेतस्य करणस्य फलसाधनत्वेन श्रवणात् काम्यवत् नित्येऽपि सर्वाङ्गोपसंहारः इति । यथा काम्यं फलायोपदिष्टं तथाभूतमेव नित्यमपि इति सूत्रार्थः । ) इति ।

**अपिवाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत् तदर्थत्वात् । २ ॥**

दर्शपूर्णमासादि नित्यं कर्म किं कृत्स्नैरङ्गैः सहितं सगुणमेव कर्तव्यं यथाशक्ति वा कथंचिद्विगुणमपि कर्तव्यमेवेति विचारे सगुणमेवेति पूर्वपक्षनिरासार्थः अपिवाशब्दः । अङ्गानां एकदेशे सत्यपि स्यात् नित्यः प्रयोगः । हि यस्मात् प्रधाने कृते सति अर्थनिर्वृत्तिः अर्थस्य फलस्य प्रत्यवायाभावरूपस्य निष्पत्तिः भवत्येव नित्ये कर्मणि । इतरत् प्रधानात् अन्यत् अङ्गजातं तु गुणमात्रं गुणभूतमेव । अङ्गजातस्य तदर्थत्वात् प्रधानार्थत्वात् प्रधानपोषकत्वात् । साङ्गं तु प्रधानं उत्कृष्टमेव । यजमानस्य कथंचित् अशक्तौ उत्पन्नायां विगुणमपि फलदम् ।

सूत्रस्यैकदेशपदविषये **वार्तिककारैरुक्तम्**, 'साङ्गस्य ( प्रधानस्य ) वाचकः कृत्स्नशब्दः, प्रधानमात्रापेक्षया एकदेशशब्दः । अथवा दृष्टार्था ( कर्मस्वरूपोत्पत्त्यर्था ) या पुरोडाशनिर्वृत्तिः तामपेक्ष्य एकदेशशब्दः ' इति । अन्ते चोक्तम्, ' साङ्गं यावज्जीवं न शक्नोति कश्चिदपि कर्तुं इतिकृत्वा यावच्छक्नुयात् इति निबध्यते । शक्तस्य कामतो वैगुण्यं स्यात् ' इति ।



वृत्तौ तु इतरत् इत्यत्र इतरत्र इति पाठः । इतरत्र इतरफले स्वर्गादौ यावदङ्गानुष्ठानं इति तदर्थः ।

' अप्येकदेशे स्यात् ' इत्यत्र ' अप्येकदेशेन स्यात् ' इति कुतूहले पाठः । एकदेशेनापि कृते नित्ये इति तस्यार्थः ।

**तदकर्मणि च दोषस्तस्मात् ततो विशेषः स्यात् प्रधानेनाभिसंबन्धात् । ३ ॥**

नित्ये अग्निहोत्रादिकर्मणि अशक्त्या केषांचिदङ्गानां लोपेन अनुष्ठितेऽपि प्रत्यवायपरिहारो भवति इति उक्ते सिद्धान्ते, ननु अङ्गानामप्रयोजकत्वे प्रधानस्यापि अप्रयोजकत्वं स्यात् इत्याशङ्कां निरसितुमाह । तदकर्मणि तस्य प्रधानस्य अकर्मणि अननुष्ठाने च दोषः स्यात् फलच्छेदरूपः । तस्मात् प्रधानात् अन्यस्मात् ततः अङ्गात् अङ्गानुष्ठानात्तु विशेषः स्यात् । अङ्गानां प्रधानेन अभिसंयोगात् । साङ्गप्रधानानुष्ठाने तु प्रत्यवायपरिहारे फलेऽपि विशेषः स्यादेव । परं तु अशक्त्या अङ्गलोपेऽपि नित्ये न दोषः । प्रधानं तु कर्तव्यमेव ।

' तस्मात् ' इति पदं कुतूहले नास्ति ।

**कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् । ४ ॥**

काम्ये कर्मणि सर्वाङ्गसाहित्यमावश्यकम्, नित्ये तु अशक्त्या कतिपयाङ्गलोपेऽपि न दोषः इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । नित्यकाम्ययोः कर्मणोः अभेदं जैमिनिराचार्यः मन्यते । तुशब्दः सिद्धान्तपक्षव्यावर्तनार्थः । प्रयोगवचनैकत्वात् एकमेव प्रयोगवचनं ययोः तादृशत्वात् काम्यनित्ययोरभेदः । ' पौर्णमास्यां पौर्णमास्या यजेत ' ' अमावास्यायाममावास्यया यजेत ' इति सर्वेषां साङ्गप्रधानानां उपदेशः स्यात् । तस्मात् काम्यवत् नित्येऽपि साङ्गता समाना । इति ।

**अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद् यथा क्रत्वन्तरेषु । ५ ॥**

काम्यनित्ययोरभेदात् नित्येऽपि सर्वाङ्गसंपूर्णतैव इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्ती आह । अर्थस्य पौर्णमास्यमावास्याशब्दयोरर्थस्य प्रधानस्य अङ्गेभ्यो व्यपवर्गित्वात् भिन्नत्वात् एकस्यापि केवलस्यापि विगुणस्य प्रधानस्यापि नित्ये प्रयोगे प्रत्यवायाभावरूपं फलं स्यात् । यथा क्रत्वन्तरेषु प्रकृति[P] विकृतिषु च । प्रकृतौ कृतायां विकृतेरकरणेऽपि यथा न प्रत्यवायस्तद्वत् । तस्माच्च नित्ये कर्मणि सर्वाङ्गोपसंहारनियमः ।

**विध्यपराधे च दर्शनात् समाप्तेः । ६ ॥**

सिद्धान्ते हेत्वन्तरमाह । चशब्दः अप्यर्थकः । विध्यपराधे विधेः विहितस्य अपराधे अशक्त्यादिना अकरणेऽपि, अग्निहोत्रद्रव्यस्कन्दनरूपे विध्यपराधेऽपि समाप्तेः दर्शनात् 'तदेव यादृक् च कीदृक् च होतव्यम्' इति वैगुण्येऽपि समाप्तिं दर्शयति । तस्मात् नित्यकर्मणि वैगुण्येऽपि न दोषः ।

**प्रायश्चित्तविधानाच्च । ७ ॥**

सिद्धान्ते हेत्वन्तरमाह । विध्यपराधे इति पूर्वसूत्रादनुवर्तते । चकारः हेत्वन्तरसमुच्चयार्थः । ' भिन्ने जुहोति ' ' स्कन्ने जुहोति ' इति विध्यपराधे प्रायश्चित्तानां विधानात् लिङ्गात् नित्ये कर्मणि वैगुण्येऽपि दोषाभावः । यदि विगुणे निष्फले एव सति कस्य अङ्गभूतैः प्रयोजनं स्यात् ? तस्मात् विगुणानामपि नित्यकर्मणां प्रयोगः कर्तव्य इति **सिद्धान्तः । के.**

☒ **सर्वशक्त्यधिकरणम्** । अधिकारः काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैव । काम्येषु सर्वाण्येवाङ्गान्यनुष्ठेयानि ॥

**काम्येषु चैवमर्थित्वात् । ६।३।२।८॥**

**भाष्यम्**— ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ' ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' ' वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः ' इत्येवमादिषु संदेहः किं विगुणमपि फलवत् उत अविगुणमेव फलवदिति । किं प्राप्तम् ? काम्येषु चैवं स्यात्, विगुणमपि फलवदिति । कुतः ? अर्थित्वात् । यदि विगुणमपि फलवत् एवं अर्थिमात्रं अधिकृतं भविष्यति । अन्यथा सामान्यशब्दः अन्तरेण विशेषम्, विशेषे अवस्थापितो भविष्यति । असमर्थत्वात् नाधिक्रियते इति चेत्, साङ्गं न समर्थः कर्तुम्, प्रधानमात्रं तु शक्नोति, ( इति ) प्रधानमात्रेऽधिकरिष्यति ।

**असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् । ९ ॥**

**भाष्यम्**— तुशब्दात् पक्षो विपरिवर्तते । नैवं स्यात् । यदुक्तं विगुणमपि फलवदिति, असंयोगात् प्रधानमात्रस्य फलेन । साङ्गाद्धि फलं श्रूयते प्रधानात्, न केवलात् । तेन यद्यपि केवलमुच्यते, तथापि नैवंजातीयकं तत् कुर्यात् । न केवलस्य फलेन संयोग इति । शब्दप्रमाणकश्च अयमर्थो विधीयते । शब्दश्च साङ्गात् फलमाह इति वक्ष्यामः । तस्मात् न विगुणं कर्म कर्तव्यं एवंजातीयकमिति ।

**अकर्मणि चाप्रत्यवायात् । १० ॥**

**भाष्यम्**— न चात्र प्रधानमात्रस्य अकर्मणि प्रत्यवाय उच्यते, यथा दर्शपूर्णमासयोः । तस्मादपि न विगुणं एवंलक्षणकं कर्म प्रयोक्तव्यमिति ।

**शा**— प्रजाकामादिशब्दाः समर्थेऽप्यविरुद्धाः । न च कामनानिमित्तं येनावश्यकत्वं शाब्दं स्यात्, अङ्गानि तु शाब्दानि न शक्यन्ते बाधितुम् । नैमित्तिके पुनः शाब्दमावश्यकत्वं प्रधानस्य इति तदविरोधेन अङ्गानि यथाशक्ति गृह्यन्ते इति विशेषः ।

**सोम**— भाष्ये विकृत्युदाहरणं न्यायसाम्यादुपलक्षणम्, प्रकृतावपि काम्यः प्रयोग उदाहरणमेव । **सूत्रार्थस्तु**— काम्येष्वपि यथाशक्तिप्रयोगः स्यात् अशक्तस्यापि अर्थित्वाविशेषादिति ।

**वि**— ' काम्ये शक्त्योत सर्वाङ्गं, शक्त्या लोपस्य संभवात् ।, मैवं लोपे निष्फलत्वाच्छाब्दमङ्गं न लुप्यते ॥ प्रधानानुष्ठितौ यद्वज्जीवनस्य निमित्तता । काम्यस्य न तथा यस्मात् काम्यं त्यक्तुं च शक्यते ॥ '

**भाट्ट**— काम्ये तु यद्यपि फलसंबन्धोत्तरमेव अङ्गान्वयः, तथापि साङ्गस्य प्रयोगविधिना अनुष्ठानावगमोत्तरं प्रवृत्तिकारणत्वेन उपस्थितायाः कामनायाः अधिकारिविशेषणत्वकल्पने शक्त्या अवच्छिन्नाया एव तत्कल्पनात् अकरणे प्रत्यवायाश्रवणाच्च सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः इति प्रत्युदाहरणमात्रम् ।

**मण्डन**— ' काम्ये सर्वाङ्गसंग्रहः । '

**शंकर**— ' काम्ये तु न तदिष्यते । ' तत् अङ्गहानम् ।

* सर्वशक्त्यधिकरणम् । नित्याधिकारेऽपि यः समस्तधर्मोपेतं कर्तुं शक्नुयात् सोऽवश्यं कुर्यात् इति वाक्यशेषकल्पनया सर्वाङ्गोपसंहारसमर्थस्यैव अधिकारोपपत्तेः सर्वशक्त्यधिकरणविरोधः स्यात् इत्याशङ्क्य, जीवने सत्यपि अकरणे जीवितस्य निमित्तत्वव्याघातापत्तेः पौर्णमास्यादिकालवच्च आज्यावेक्षणादेरुपादेयत्वेन अनुपादेयनिमित्ततावच्छेदकत्वायोगात् निमित्तपरतन्त्रत्वाच्च प्रयोगविधेः तदनुरोधेन निमित्तश्रुतिबाधायोगात् निमित्तश्रुत्यवगतावश्यकर्तव्यतानुरोधेन यावज्जीवादिप्रयोगविधेः शक्यमात्राङ्गविषयतया संकोचकल्पना युक्ता इत्याह । सु. पृ. ५३२. * उपपादितं च पापक्षयफलकत्वं नित्यनैमित्तिकानां सर्वशक्त्यधिकरणे मिश्रैः । **भाट्टालंकारः** पृ. १२.

* यानि तु विध्यन्तरप्रयुक्तानि स्वयंसिद्धानि वा प्रयोगविधिः अङ्गत्वेन परिगृह्णाति, तानि तु स्वरूपत एवाधिकारिविशेषणतां प्रतिपद्यन्ते, न तु तत्र **सर्वशक्त्यधिकरणन्यायः** । कु. ३।४।१३।३२.

* **सर्वशब्दः** अधिकृतापेक्षो गृह्यते, सर्वत्रैव परमसर्वेण व्यवहाराभावात् । वा. ३।५।१।१०. * सर्वशब्दः प्रकृतापेक्षः– सर्व ओदनो भुक्तः, सर्वे ब्राह्मणा भुक्तवन्तः इति । भा. ३।५।१।१०.

* **सर्वशब्दन्यायः** । ३।५।९।२७–३०. **मीको.** पृ. १६४९ ' ग्रावस्तुतोऽपि हारियोजने सोमभक्षः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सर्वशब्दन्यायः । ( ३।५।९ ) । अर्थवादस्य स्तुत्यर्थत्वेनैवोपपत्तौ हारियोजनगतसर्वशब्दन्यायेन ' सर्वेभ्यो ज्योतिष्टोमः ' इति सर्वशब्दसंकोचकत्वानुपपत्तेः । **भाट्ट.** ४।३।८.

**सर्वशाखाप्रत्ययमेकं कर्मेति न्यायः** । यथा– सर्वशाखाभ्यः प्रतीयते इति सर्वशाखाप्रत्ययमिति । यथा– नानावेदशाखाविहितमप्यग्निहोत्रं न भिद्यते इति स्थितम् । केचित्– ' उदिते जुहोति ' इति श्रुतिमाश्रित्योदितेऽर्के होमं कुर्वन्तीति । केचित्– ' अनुदिते जुहोति ' इति श्रुतिमाश्रित्यानुदितेऽर्के जुह्वति,



अत्र केवलकालभेदोऽस्ति । वस्तुतः कर्मैकमेव, एवं प्रकृतेऽपीत्यन्यत्र विस्तरः । **साहस्री.** १३८.

* सर्वशाखाप्रत्ययमेकं कर्म इति, शाखान्तरविहिताङ्गानुवादेन तद्धर्मविधानं शाखान्तराधीतस्य च मन्त्रस्य स्वशाखाधीतेन मन्त्रेण सह विकल्पवचनं अन्योन्यधर्मसांकर्यं सूचयत् द्योतयति । सु. पृ. १०००. * सर्वशाखाप्रत्ययं चैकं कर्म । **भा.** ६।८।१०।३०.

* **सर्वशाखाप्रत्ययन्यायः** । २।४।२।८–३३. **मीको.** पृ. ३८९२ ' शाखाऽन्तराधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सर्वशाखाप्रत्ययन्यायः । ( २।४।२।८–३३ ) । उदात्तानुदात्तस्वरितलक्षणैः त्रिभिः स्वरैः क्वचित् शाखायां मन्त्राः पठ्यन्ते । क्वचित्तु प्रचयेन सह चतुर्भिः । तत्र त्रैस्वर्यचातुस्वर्ययोः (सर्वशाखाप्रत्ययन्यायेन ) समुच्चयः, विकल्पो वा अथ उभयहानेन एकश्रुत्या प्रयोगो वा इति संशयः । **शा.** ९।२।८. * यथा गीत्युपायानां दृष्टार्थतया **सर्वशाखाप्रत्ययन्यायं** बाधित्वा विकल्पः एवमिहापि त्रैस्वर्यादीनां अक्षराभिव्यक्त्यर्थत्वात् एकेनैव तत्सिद्धेर्विकल्प एव ( पूर्वपक्षः ) । **सोम.** ९।२।८.

* **सर्वशेषैः** स्विष्टकृदनुष्ठानम् । वि. ३।४।१९.

* **सर्वसाधारणात्** ध्रौवाज्यात् उपांशुयाजार्थेऽपयातिते परिशिष्टमन्यदेवतार्थं भवति । **भा.** १२।१।१।५.

* **सर्वसोमोत्तरं** प्राजापत्याङ्गप्रचारः वाजपेये । ११।३।१५।४८–५४. **मीको.** पृ. ३४८५ ' वाजपेये सर्वसोमोत्तरं० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वजनीनशब्दस्य** हितार्थे व्युत्पन्नस्यापि विदितार्थे लाक्षणिको निरूढः प्रयोगः । **सोम.** १।२।१ पृ. ७.

* **सर्वज्ञता** च न कदाचिदुपलब्धा । **वा.** ४।३।१०।२६.

* **सर्वज्ञतावादः** । न च सर्वज्ञो नास्ति । तथाहि, तदभावव्यवहारो बाधकप्रमाणसद्भावाद्वा साधकप्रमाणाऽभावाद्वा भवेत् । न तावद्बाधकप्रमाणसद्भावः । न खलु प्रत्यक्षमस्य बाधकं रजतस्येव समारोपितस्य शुक्तितत्त्वं विषयः संभवति । तद्विरुद्धोपस्थानाऽसंभवात् । सर्वज्ञताया अत्यन्तपरोक्षायाः केनचिदपि सह प्रत्यक्षप्रतीतेन विरोधानवगतेः । नापि अनुमानं अस्य बाधकम् । तद्धि विधिनिषेधसाधनतया द्विविधम् । तत्र विधिसाधनं स्वभावहेतुकं कार्यहेतुकं वा न निषेधे साध्ये प्रभवति । अन्यसाधनत्वे अन्यसाधनस्याऽप्रसङ्गात् । अनुपलब्धिलिङ्गकं तु प्रतिषेधसाधनं भवेत् । तच्च स्वभावाऽनुपलम्भसाधनादन्यत् इह सर्वज्ञविरुद्धार्थान्तरविधानेन वा तत्कारणव्यापकनिषेधेन वा सर्वविदभावं साधयेत् । न तावत्स्वभावविप्रकर्षिणा सर्वविदा सह कस्यचिदपि प्रतीयमानस्य विरोधो दृष्टपूर्वः । विरोधिप्रतिपत्तिनान्तरीयकतया विरोधावगतेः । विरोधिप्रतिपत्तौ वा नात्यन्ताय तन्निषेधः । न च प्रत्यक्षाऽनुपलम्भसाधनं कार्यकारणभावः स्वभावविप्रकर्षवति सर्वविदि शक्यावगमः । अत एव व्यापकत्वमपि कस्यचिद् दुरवसायमेव सर्वविदि । नापि विपक्षे बाधके प्रमाणप्रवृत्तिः क्षणिकत्वस्येव सत्त्वे सर्वविद्व्यापकाभावावगमनिबन्धनम् । तदभावात् । भावे वा निषेधो नास्ति अत्यन्ताय तस्य । न खलु खपुष्पं कस्यचिद् व्याप्यं संभवति व्यापकं वा । न चान्यमात्रनिवृत्तावन्यस्य निवृत्तिः, अतिप्रसङ्गात् । यथा आहुः— ' अन्यस्यैव निवृत्त्याऽन्यविनिवृत्तिः कथं भवेत् । नाऽश्ववानिति मर्त्येन न भाव्यं गोमताऽपि किम् ॥ ' इति । न च सत्त्वज्ञेयत्वादयो सर्वज्ञतासहभुवः सहस्रशः उपलब्धा व्याप्ता विवादाध्यासितस्य पुरुषधौरेयस्य विरुद्धोपस्थापनेन सर्वज्ञतां प्रतिक्षिपन्तीति सांप्रतम्, सत्त्वादेरसर्वविद्व्याप्त्यसिद्धेः । न खलु दर्शनादर्शनमात्रनिबन्धनं व्याप्तिविज्ञानम्, मा भूत् चैत्रः श्यामो मैत्रीतनयत्वात् परिदृश्यमानमैत्रीतनयस्तोमवदित्यनुमानम् । तत्तनयताया अश्यामतया विरोधाभावेन संदिग्धव्यतिरेकित्वान्नानुमानमेतदिति चेत्, न, इहापि समानत्वात् । नहि सर्ववित्तया सह सत्त्वादेः कश्चिद्विरोधः, येनासौ न संदिग्धव्यतिरेकः स्यात् । द्वयी हि विरोधावगतिः— सहानवस्थानं वा छायाऽऽतपवत्, परस्परपरिहारो वा भावाऽभाववत् । न तावदविकलकारणस्य सर्वज्ञत्वस्य आलोकस्येवा-

भावः सत्त्वादेः संतमसस्येव भावेऽभावः । यतः सहानवस्थितिरूपविरोधसंगतिः स्यात् । तथा च भावे वा नात्यन्ताभावः सर्वज्ञताया इत्युक्तम् । नाप्युत्तरः । न खलु सर्वज्ञता सत्त्वादिपरिहारेण, सत्त्वादयो वा तत्परिहारेण भावाऽभाववत् प्रत्ययपथमवतरन्ति । न च सर्वज्ञतया तेषां व्याप्तिरस्ति इत्युक्तम् ।

**स्यादेतत् ।** उपदेशप्रणयनमेव बाधकं सकलवस्तुतत्त्वदर्शनस्य । तथाहि– उपदेशो विकल्पविज्ञानयोनिः, विकल्पश्च समारोपितगोचरतया मिथ्येति न तथा तथागतविज्ञानं भवितुमर्हति । तदयमुपदेशो निषेध्यसर्वविषयतत्त्वविज्ञानविरुद्धसमारोपितगोचरविकल्पविज्ञानकार्यं इति विरुद्धकार्योपलब्ध्या बुद्धादीनां सर्वज्ञत्वाऽभावसाधनम् । उपदेशाऽभावे वा वृथा तत्प्रसाधनं तत्संनिधानमात्राद्वा चैत्यवन्दनादिचोदनानां अनिसृतत्वाभ्युपगमे अनाश्वास इति । तन्न । विकल्पस्य सर्वविज्ञानत्वाऽविरोधात् । द्विविधो हि विकल्पो विपर्यासपूर्वोऽतत्पूर्वश्च । तत्र विपर्यासपूर्वो भवादृशाम्, अतत्पूर्वस्तत्रभवतः सर्ववेदिनः । न खल्वसौ भ्रान्तो विकल्पवान्, अपि तु विदितसमस्तवस्तुतत्त्वविस्तारः करुणापराधीनमानसो दुःखिन उपदेष्टुकामः । वचनमन्तरेण तदनुपपत्तेः विकल्पं विना तदसंभवात् तस्याताात्त्विकत्वं विद्वानपि तमाहरति । यथा नैरात्म्यतत्त्वं विद्वानपि विकल्प्य समारोपितमात्मानं निषेधति, नास्त्यात्मेति । यथा वा वैयाकरणप्रवरो गाव्यादिशब्दानसाधून् जानानोऽपि पृथग्जनप्रतिपिपादयिषया प्रयुञ्जानोऽपि नापशब्दकारी । तदिदमाहार्यमस्य रूपं न तात्त्विकमिति तत्त्वविदो नोपदेशविरोधः । न च रागादिमत्ता । न खलु कृपा रागपक्षे वर्तते । नन्वियं परदुःखप्रहाणेच्छेति राग एव । मैवम् । न हीच्छामात्रं रागः, अपितु चित्तमलमात्मनो दर्शनावरणमभूतगुणाभिनन्दनं रागमाचक्षते । न ह्यसति नित्यात्मदर्शने स्वार्थतृष्णापरिप्लुतः कश्चित्परिस्पन्दते । यथा हि चैत्रः स्वतो भिन्नं मैत्रमुदीक्षमाणः स्वगतसुखतृष्णापरिप्लुतो न मैत्रसुखाय घटते । तथा पूर्वाऽपरक्षणविविक्तं विज्ञानमात्रमात्मानं साक्षादीक्षमाणः सन् अतिपतिततद्विपरीतलक्षणान्तरोपकारकर्मणि प्रवर्तते, प्रवर्तते च स्वार्थतृष्णापरिप्लुतः । तेनावगच्छामः, अवगच्छति नूनमयमहमिति विभिन्नानपि स्वचित्तक्षणानेकतया । तदिदं सहजमात्माऽदर्शनं निदानं रागादीनाम् । यथाऽहं सुखी भवेयं दुःखी च मा भूवमिति च मा भूवमिति च तृप्यतो यैवाहमिति धीः सैव सहजं सत्त्वदर्शनमिति । न च सर्वविदः करुणाऽहमुपकुर्यां परान् इत्येवमाकाराऽपि सत्त्वदर्शनावयवा, यस्मान्नात्मगामी फलाभिलाषोऽयमपितु स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छेत्युक्तम् । न च सर्वे चित्तक्षणाः प्रत्येकं परमुपकुर्यामहमहमिति अहमहमिकया उत्पद्यमाना अपि आत्मदर्शनावयवाः । परोपचिकीर्षायास्तं विना अपि उपपत्तेः । तत्त्वदर्शने चोपदेशसंभवात् स्वगततामन्तरेणापि परोपकारस्य समीहितत्वादपेक्षितलक्षणत्वाच्च फलस्य तत्संबन्धस्य प्रवृत्तेः प्रेक्षावत्ताऽविघातात् । तस्मात् उपदेशतत्त्वविज्ञानयोरविरोधात् संदिग्धव्यतिरेकित्वाद्वचनमपि न सर्वज्ञताया बाधकमिति न बाधकप्रमाणसद्भावः तदभावव्यवहारसाधनम् । नापि साधकप्रमाणाभावः । तथाहि– प्रत्यक्षाभावो वा सकलप्रमाणाभावो वा स्यात् । प्रत्यक्षाभावोऽपि चात्मनः सर्वेषां वा, यदा आत्मनस्तदापि दृश्यताविशेषणो निर्विशेषणो वा । न तावदात्मप्रत्यक्षनिवृत्तिर्दृश्यताविशेषणा सर्वज्ञाभावसाधनी । तस्य स्वभावविप्रकर्षिणः तत्त्वानुपपत्तेः । प्रसिद्धत्वात्, निर्विशेषणायाश्च व्यभिचारात् समस्तप्रत्यक्षनिवृत्तेश्चासिद्धत्वात् । न खल्वर्वाग्दृशः सकलप्रत्यक्षनिवृत्तिः, असिद्धत्वात् । न च प्रमाणं प्रमेयस्य व्यापकं कारणं वा, येन तन्निवर्तेत । तस्मान्न तदभावसिद्धिः । नापि तद्भावसंदेहः । तत्साधनेन तत्सद्भावस्य निवेदयिष्यमाणत्वात् । तस्मात् अनुविधेयपुरुषधौरेयनियोगादेव प्रवृत्तिनिवृत्ती इति सांप्रतम् । **कणिका.** १११–११४.

*** सर्वज्ञतावादार्थः ।** अस्तु तर्हि अनुविधेयो नियोक्ता भूतानां साक्षात्कृतानुभविकश्रेयःसाधनो हितकामः सर्वज्ञः । (कणिका– प्रहीणरागाद्यावरणतत्त्वज्ञानः खल्वयं अनवयवेन विश्वं करतलामलकमिव साक्षादीक्ष-



माणः । निराचष्टे– ) न । तस्य ( अनुविधेयस्य सर्वविदः ) अनुपपत्तेः, अज्ञानाच्च । तथाहि **' हेत्वभावे फलाभावात् प्रमाणे सति न प्रमा । चक्षुराद्यक्तविषयं परतन्त्रं बहिर्मनः ॥ ' १५ ॥** यद्यपि आत्मप्रत्यक्षनिवृत्तिः विप्रकर्षवतां अभावं व्यभिचरति ( त्रिविधेन काल–देश–स्वभावविप्रकर्षेण तद्वतां राम–सुमेरु–परमाण्वादीनां अभावं व्यभिचरति ) सर्वप्रत्यक्षनिवृत्तिरसिद्धा, असर्वदृशः ( अस्मदादेः ) सकलप्रमाणनिवृत्त्या च नार्थाभावसिद्धिः, अव्यापकनिवृत्त्या अव्याप्यनिवृत्तेरनियमात् । अव्यापकत्वं चाहेतुत्वात् तन्मात्रानुबन्धाभावाच्च । (हेतुधर्ममात्रानुबन्धे हि साध्यधर्मोऽस्य व्यापकः, यथा वृक्षत्वं शिंशपात्वस्य । न च प्रमेयमात्रानुबन्धि प्रमाणम् ) अन्यथा ( प्रमेयमात्रानुबन्धित्वे प्रमाणस्य अस्मदादेः ) सर्वस्य सर्वदर्शित्वप्रसङ्गात् ( प्रमेयमात्रानुबन्धिप्रमाणशालिता हि सर्वज्ञता, सा चास्मदादेरपि इति ) अविशेषाच्च ( सर्वविदा अस्मदादेः ) । वचनादयश्च यद्यपि अविरोधात् अनिवर्तकाः, तथापि कारणनिवृत्त्या कार्यनिवृत्तिप्रतीतेः प्रमाणानुपपत्त्या तत्कार्यायाः सर्वार्थेषु संविदः अभावमनुमिमीमहे । तथाहि, न प्रत्यक्षं चक्षुरादिजन्म तावत् सर्वार्थेषु, ( संभवति ) तेषां ( चक्षुरादीनां ) विषयनियमात् । किंचिदेव हि वर्तमानं संबद्धं च तद्विषयः, न सर्वे अर्थाः ( देशकालस्वभावविप्रकर्षशालिनः ) । यद्यपि च अनेकविधप्रमेयसंवेदनात् रूपतो नियमो दुर्निरूपः ( न तावत् रूपवत् चाक्षुषम्, अरूपस्यापि संख्यादेश्चाक्षुषत्वात् । नापि रूपिसमवेतम्, तदसमवेतस्य नीरूपस्य कालादेरपि चाक्षुषत्वात् ) । पटुमन्दतादिभेदतश्च नानादेशपरिमाणार्थपरिच्छेदात् न देशतः संबन्धनियमः । ( चक्षुः एतावति देशे संनिकृष्यते, नैतावति इति नायं नियमः संभवति, तुल्यवद्भूम्यादिगतकुम्भादिशनैश्चरादिग्रहणदर्शनात् ) परिमाणतो नियमश्च (दुर्निरूपः, सूक्ष्मसूक्ष्मतरसूक्ष्मतमगोचरत्वस्योपलब्धेः ) । कालतस्तु निरूप्यते ( नियमः । तथाहि, इन्द्रियाणि प्राप्यकारीणि न वा, उभयथाऽपि तेषां वर्तमानविषयता एषितव्येत्याह– ) प्राप्यकारित्वे अवर्तमानस्य प्राप्त्यभावात् । अप्राप्यकारित्वेऽपि अर्थसामर्थ्यसव्यपेक्षत्वात् ( यद्यपि प्राप्त्याश्रयत्वेन नापेक्ष्यते अर्थः, तथापि इन्द्रियाणां असत्यर्थे विज्ञानाजननात् ) । ज्ञानोत्पत्तौ अजात–निवृत्तयोः अनुपाख्येयत्वात् ( हेतोः ) असामर्थ्यात् । तथा च अतिशयानामपि (योगिनां) चक्षुरादयः, (सिद्धाञ्जनादिभिः अर्वाग्दृशामिन्द्रियाणि च) स्वविषयमेव देशतः परिमाणतः संख्यातो वा अधिकं बोधयेयुः, नाविषयं अजातं अतिवृत्तं ( वा ) । तदुक्तं ' विद्यमानोपलम्भनत्वात् ' ( इति १।१।४।४) । तथाहि– प्रत्यक्षे रूपादिवेदने तच्चक्षुरादिपरतन्त्रं तन्नियमादेव नियतम् । अन्यथा अन्धाद्यभावप्रसङ्गादिति । मानसमपि प्रत्यक्षं आन्तरसुखादिविषयं ( न सर्वं बोधयति ) । बहिः मनसः अस्वतन्त्रत्वात् । स्वातन्त्र्ये ( रूपादौ मनसः ) अन्धबधिराद्यभावप्रसङ्गात् ( न खलु अन्धादयो निर्मनस्काः, तेषां स्मृत्याद्यभावप्रसङ्गात् । मनश्चेत्, चक्षुरादिनिरपेक्षमीक्षेत रूपादीन्, न कश्चित् अन्धबधिरादिः प्रसज्येतेति । तथाहि, प्रत्यक्षे रूपादिवेदने तत् मनः चक्षुरादिपरतन्त्रं तन्नियमादेव नियतम् । अन्यथा नियमाद्यभावे अन्धाद्यभावप्रसङ्गात् ) इत्युक्तम् । ( शङ्कते– ) तज्जन्मसमनन्तरप्रत्ययसहकार्यपेक्षणात् यदि नान्धाद्यभावः । ( निराकरोति– ) सर्वथा (इन्द्रियान्तर–)पारतन्त्र्यं न निवर्तते (स्वोत्पत्तौ मानसस्य प्रत्यक्षस्य ), तद्विषयत्वात् ( यदिन्द्रियजविज्ञानविषयानन्तरक्षणो ग्राह्यः, तदिन्द्रियविषयजविषयत्वात् ) । अन्यथा ( तदिन्द्रियजविषयानपेक्षणे स्वोत्पत्तौ मानसस्य ) इन्द्रियान्तरज( विज्ञान )सहकारिणोऽपि ( अर्थात् प्रवर्तमानस्य रूपविज्ञानस्य ) प्रवृत्तेः स एवान्धाद्यभावः ( प्रसज्येत । यदि उच्येत, तुल्यजातीयविषय एव समनन्तरप्रत्ययो भवति, नासजातीयविषयः, तेनायं प्रसङ्गः इति, तत्राह– ) न च तुल्यजातीयविषय एव समनन्तरप्रत्ययः, जात्यन्तरसंचाराभावात् ( संचाराभावप्रसङ्गात् ) । न खलु एष ज्ञानधर्मः, जात्यन्तरसंचारात् । न प्रत्यक्षधर्मः ( न प्रत्यग्धर्मः ), अवितर्कितरूपाद्यपेक्षणात् ( अविकल्पित-

रूपार्थापेक्षणात् )। न मानस( प्रत्यक्ष )धर्मः, सुखादिषु तददर्शनात् ( तद्विषयपूर्वज्ञानादर्शनात् )।

( एवं तावत् सहकारिविशेषापेक्षया क्षणान्तरविषयत्वेऽपि पारतन्त्र्यमापादितं मनसः। संप्रति विमर्शपूर्वकं इन्द्रियविषयतयैव पारतन्त्र्यं अवधारयति- ) अपिच विषयनियमात् पारतन्त्र्यमस्तु सहकारिविशेषापेक्षया वा इति ( विमर्शे ) पारतन्त्र्यं युक्तम् ( य एव यदिन्द्रियविषयः तत्रैव मनः तदिन्द्रियतन्त्रं प्रवर्तते इति युक्तम् ), स्मरणे तथा दर्शनात्। ( अपि च तुल्यजातीयविषयं समनन्तरप्रत्ययं मानसप्रत्यक्षकारणं ब्रुवाणो न तावत् एकेन्द्रियग्राह्यतया तुल्यजातीयतां वक्तुमर्हति अतिप्रसङ्गात् इत्याह- ) एकेन्द्रियग्राह्ये च सजातौ ( अभ्युपगम्यमाने ) रूपान्तरग्रहणप्रसङ्गः ( पीतदर्शनमपि चाक्षुषं मानसप्रत्यक्षं चक्षुरसंनिकृष्टेऽपि नीले प्रसुवीत, तदिन्द्रियग्रणार्हत्वस्य उभयत्राविशेषात् )। अवान्तरजात्यपेक्षणे ( तु ) भिन्नसंतानापातः ( भिन्नसंतानज्ञानापातः। एकनीलोत्पलसंतानवर्त्येकनीलोत्पलक्षणविषयं इन्द्रियासंनिकृष्टसंतानान्तरवर्ति-नीलोत्पलक्षणविषयमपि विशदं मानसं जनयेत् ), तदतत्संतानक्षणयोः जात्यभेदात्। ( उपसंहरति- ) तस्मात् एकसंतानक्षणे समनन्तरप्रत्ययतां वदता चक्षुरादिविषयग्राहित्वमेव उक्तं भवति, क्षणविवेकप्रतिभासनात्। ( ननु मा नाम क्षणभेदः प्रतिभासताम्, तदभेदस्तु कुतः ? इत्यत आह- ) अभेदप्रतिभासनात् ( 'सोऽयं स्फटिकः' इति प्रत्यभिज्ञैव भगवती स्थापयिष्यति [ अभिन्नं ] स्फटिकम्। सदृशापरापरोत्पत्तिविप्रलब्धबुद्धयस्तु क्षणानामन्योन्यस्य भेदमपश्यन्तः अज्ञादिवत् अर्वाग्दृशः तदेवेदं स्तम्भादि इत्यध्यवस्यन्ति इत्याशङ्क्याह- ) क्षणिकत्वप्रतिक्षेपात्। अपि च मनोवैगुण्ये चक्षुराद्यभावे च रूपाद्यवेदनात् उभयवेद्यताऽवसीयते। केवलमनोवेद्यता तु कुतः ? ( शङ्कते। प्रथमे एव क्षणे इन्द्रियसामर्थ्योपक्षयात् ) द्वितीयक्षणोपलब्धेः ( केवलमनोवेद्यता अनुमीयते ) इति चेत्। ( निराकरोति- ) न, तत्र चक्षुरादीनां सामर्थ्यपरिक्षये हेत्वभावात्। तज्ज्ञानधारावाहिकत्वदर्शनाच्च। ( ननु स्मरणे केवलमेव मनः प्रवर्तते, अन्धादीनामपि रूपादिस्मरणोपलब्धेः इत्यत आह- ) स्मरणे तु प्रतीतमेव पारतन्त्र्यं ( मनसः, प्रमाणान्तराधिगतगोचरत्वात्। न चानुमानादिज्ञानेषु मनः स्वतन्त्रमित्याह- ) अनुमानादिषु लिङ्गाद्यभावे अप्रत्ययात् पारतन्त्र्यम्, इति न क्वचिदपि अनान्तरे मनः साक्षात् स्वतन्त्रं प्रवर्तते इति आन्तरः एव साक्षाद्विषयः ( सुखादिः )। तत्रैव साक्षात् वृत्त्या प्रकर्षमनुभवेत् नाऽविषये ( बाह्ये )।

(ननु मा भूत् इन्द्रियजं मानसं च प्रत्यक्षं सर्वविषयम्, भावनामयं तु भविष्यति इति चेत्तत्राह- ) भावनामयमपि विज्ञानं श्रुतानुमितविषयं अकस्मात् भावनाऽयोगात् आगमानुमानपरतन्त्रं पूर्वज्ञानभूतार्थत्वविपर्ययानुविधानात् (च) सापेक्षत्वादप्रमाणम् ॥ १५ ॥

( संप्रति व्यवस्थापितोन्मूलने कश्चित् प्राभाकरगन्धी प्रत्यवतिष्ठते- ) ननु न कालतो नियमश्चक्षुरादीनां ( इदं रजतं इत्यत्र ), अवर्तमानरजताद्युपलब्धेः। न हि सा शुक्तिकाद्युपलब्धिः, अन्याकारसंविदः अन्यविषयत्वायोगात् ( तद्योगे विषयत्वस्यानियमात् ), अनाश्वासात् ( यदि हि अन्याकारा संवित् अन्यविषया भवेत् तदा संविदः स्वार्थव्यभिचारात् सर्वत्रैवानाश्वासप्रसङ्गः, इति न प्रेक्षावान् क्वचित् प्रवर्तेत कुतश्चिद्वा निवर्तेत, तस्मादपि रजतविषयैव )। ( 'परतन्त्रं बहिर्मनः' इत्याक्षिपति- ) अधिगतस्वातन्त्र्यं च मनः स्वप्ने। न च स्वप्नज्ञानं स्मृतिः, अतद्रूपत्वात् ( अनुभूतविषयासंप्रमोषो हि स्मृतेः रूपम्। असंप्रमोषश्च अनुभूततया अनुमान्यस्यानुसंधानम्। न चैवंविधं स्वप्नज्ञानम्। तत् सिद्धमेतत् बाह्ये मनः स्वतन्त्रमिति। तदेतत् प्राभाकरगन्धिनो मतं निराकरोति- ) नैतत् सारम्। तथाहि, '**अर्थापेक्षा मुधा तुल्यमन्याकारप्रवेदनम्। देहिनो वर्तमानाभा स्वप्ने स्पष्टाऽपि हि स्मृतिः ॥' १६ ॥** चक्षुरादयस्तावत् वर्तमानमेव शुक्तिकाशकलाद्यर्थं दर्शयन्ति, तदपेक्षणात्। अन्यथा ( शुक्तिकाद्यनपेक्षणे ) वैफल्यात् तत्संनिधेः, तदसंनिधावपि रजतवेदनप्राप्तेः। ( यच्चोक्तं अन्याकारा संवित् नान्यविषयेति, तत्राह- ) रजतावभासनं यदि न शुक्तिविषयं वर्तमानावभासनमपि तर्हि नावर्तमानगोचरम्। ( दोषवशात् अवर्तमानमपि वर्तमानतया प्रतीयते एवेत्याह- ) दोषतस्तथात्वं ( अवर्तमानगोचरस्य विज्ञानस्य वर्तमानावभासनं ) इतरस्यापि तुल्यम् ( शुक्तिकागोचरस्यापि रजतावभासनं तुल्यमेव। एवमापाततस्तुल्यतामभिधाय स्वाभिमतस्यास्य विशेषमाह- ) वर्तमाने च ( शुक्तिशकले ) अवर्तमाना(रजता-)वभासः, नावर्तमाने ( रजते ) वर्तमानावभासः ( पुरोवर्तिवस्तुविषयं नातीतविषयं 'रजतमिदं' इति विज्ञानमित्यर्थः )। अर्थसंनिधेः साफल्यात्। 'नेदं रजतम्' इति च प्रसक्तस्य प्रतिषेधोपपत्तेः (अङ्गुलीनिर्देशेन शुक्तिकाशकलमेव रजततया प्रतिषेधन्ति विप्रतिपत्तारः। तत्तत्र रजतं प्रसञ्जितं पूर्वविज्ञानेन इति गम्यते )। तैमिरिकस्य केशोण्ड्रभं ज्ञानं ( तु ) आलोकांशेषु इति नार्थापेक्षो व्यभिचारः। ( यच्चोक्तं अधिगतस्वातन्त्र्यं मनः स्वप्नावस्थायां बाह्ये इति तत् विमृश्य स्वपक्षं प्रतिजानीते- ) स्वप्नेऽपि किं स्मृतेर्वर्तमानावभासत्वम्, उत ( तस्मिन् ) मनसः स्वातन्त्र्यं इति (विचारे) स्मृतेर्वर्तमानावभासिता युक्ता, अनन्तरदिवसानुभूतस्य अविकलाऽनधिकस्य विस्पष्टस्मृतेः [ अविकला ... स्मृतेः इत्यत्रस्थाने कणिकायां -कल्पनाधिकस्यापि स्पष्टस्मृतेः- इति पाठः। मूलपाठ एव तु शुद्धः ] वर्तमानवद्वेदनाद्दोषोपप्लवेन। न तु अदृष्टं मनसः स्वातन्त्र्यम् ( बाह्ये युक्तम् )। दोषतश्च न सामर्थ्यातिरेकः ( येन मनः स्वतन्त्रं बाह्ये तत्त्वज्ञानं प्रसुवीत। विपर्यासस्तु संस्कारतन्त्रादेव मनसः ), दोषस्य तदपनयनहेतुत्वात् (तच्छब्देन सामर्थ्यपरामर्शः)। (ननु क्वचित् सत्यमपि स्वप्नदर्शनं भवति, तस्मात्तत्र मनसः स्वातन्त्र्यमभ्युपेयं इति चेत्, तत्राह-) सत्यस्वप्नदर्शनं तु यदि वर्तमानस्य तथा ग्रहणात् तददृष्टम्। (शङ्कते-) प्रबोधे स्वप्नाख्यानार्थसंवाददर्शनात् दृष्टम्, इति चेत् ( निराकरोति- ) न, आख्यानसंवादाऽभावात्। आख्यानसंवादस्तु काकतालीयः। भविष्यतस्तु वर्तमानवत् दर्शनं कथं सत्यम् ? ( चोदक आह- ) मा भूत् सत्यम्, अस्ति तावत् स्वातन्त्र्यं मनसः ( संस्कारस्य भविष्यति असंभवात्। समाधाता स्वाभिप्रायमाह- ) तदपि तद्विधस्य ( अन्यत्र ) अनुभूतस्य स्मरणम् ( नहि सर्वथा अननुभूतमुपलभ्यते स्वप्ने, परस्परविरुद्धानामपि क्वचित् कदाचित् कथंचिदुपलब्धानां सहानुभवविभ्रमसंभवः )। इतरथा मनसः अदृष्टसामर्थ्यस्य कल्प्यत्वात् ( कल्पनाप्रसङ्गात् )। धर्मविशेषश्चेत् ( स्वप्ने सुखोपलब्धौ कारणं स्यात्, तदा- ) यथार्थदर्शनप्रसङ्गात्। तस्य ( धर्मविशेषस्य, मनःस्वातन्त्र्यरूपं ) कार्यं प्रति अदृष्टसामर्थ्यस्य कल्प्यत्वात् ( कल्प्यत्वप्रसङ्गात् )। यदि च न स्मृतिः स्वप्नज्ञानं प्रमाणं तर्हि, न प्रमाणमपि बहिस्तथा ग्राह्यस्य अभावात् [ स्वप्नज्ञानस्य स्मृतित्वाभावे अनुभवत्वेन प्रामाण्यप्रसङ्गः इति चेत्, न, बहिर्ग्राह्यस्याभावात् प्रामाण्याभावात् ]। ( यदि चेत्यादेरुत्तरमाह- ) न तर्हि बहिरर्थे स्वतन्त्रं मनः, स्वप्ने तस्य ( तथाविधस्य ) अग्राह्यत्वात्, ग्राह्यत्वे वा अनुभूतस्य ग्रहणम्, तथा दृष्टत्वात्। न ( तु ) दोषतः अदृष्टसामर्थ्यातिरेककल्पना इति उभयथा ( बाह्यस्य ग्राह्यत्वे अग्राह्यत्वे चेति ) न स्वतन्त्रं बहिर्मनः। एतेन ( मनसः स्वप्नविज्ञानेऽस्वा-[ मुद्रिते तु अवग्रहो नास्ति ] तन्त्र्यप्रदर्शनमार्गेण ) तिमिरतः केशादिदर्शनं ( मानसं इति ) प्रत्युक्तम् ( आलोकांशालम्बनतया तद्विज्ञानस्य दोषवल्लोचननिमित्तत्वात् )॥ १६ ॥

( संप्रति नैयायिकाभिमतयोगिज्ञानविषयत्वं विश्वस्य निराकरोति- ) '**लिङ्गाद्याभासजं लोके प्रतिभानमनिश्चयः। सर्वतः पूर्णविज्ञानः पूर्णे न्यूने न कश्चन ॥' १७ ॥** यदपि किल 'श्वो मे भ्राता आगन्ता' इति प्रतिभायां अक्षलिङ्गाद्यपेक्षाऽभावात् बहिः स्वतन्त्रं मनो दृष्टम्। सर्वं च 'सर्वं' इति वा सदसत्पदार्थौ द्रव्यादयः, प्रकृतिपुरुषौ, पञ्च स्कन्धाः, इत्यादिना वा भेदेन (प्रकारेण) लोकप्रमाणवशेन मनसो विषयः ( भावनामयस्य स्फुटावभासस्य लोकोत्तरस्य प्रत्यक्षस्य विषयः ) इत्यपि ( मनसः ) स्वातन्त्र्ये बहिः, सर्वज्ञत्वसिद्धिः। ( इति चेत् ) अत्रोच्यते। लोकोत्तरं तावत् प्रतिभानं ( सत्तया ) विवादपदम् ( इति न तत्र

मनसः स्वातन्त्र्यं स्वरूपेण प्रतिषेधनीयम् )। लौकिकं तु प्रियाप्रियगोचरं (न स्वतन्त्रमनोजन्यम्, यतः) प्रायः सहृप्रवृत्तहृदयप्रसादोद्वेगादि-( लक्षण )लिङ्गाद्याभासप्रभवम्, अत एव अनिश्चयात्मकम्, तथा च व्यपदिशन्ति ' एवं प्रतिभानं न तु निश्चयः ' (इति)। उभयकोटिसंस्पर्शस्यातुल्यत्वाच्च न संशयात्मकम्। [ ०संस्पर्शित्वात् तुल्यत्वाच्च० इति मूलपाठो मुद्रितः, कणिकामुद्रितपाठस्तु अस्माभिर्गृहीतः ] ( किंतु ) प्रतिभैव ( अतः ) न प्रमाणम् , अनिश्चयफलत्वात् , प्रमाणान्तरापेक्षनिश्चयत्वात् । ( उपसंहरति– ) एवं लिङ्गादिजातीयापेक्षत्वात् ( लिङ्गाद्याभासापेक्षत्वात् ) तत्रापि पारतन्त्र्यम् ( प्रतिभानेऽपि मनसः पारतन्त्र्यम् ) । अन्यथा तदनपेक्षमनोमात्रसाधनो बहिरर्थसंबन्धः सर्वस्य सर्वस्मिन् सर्वदा स्यादिति ( सर्वः -सर्वज्ञः स्यात् । ननु अदृष्टविशेषात् वाह्ये मनः स्वतन्त्रं कदाचित् कस्यचिदेव इति नातिप्रसङ्गः इति चेत्तत्राह– ) अदृष्टविशेषात् अक्षलिङ्गाद्यपेक्षं मनः कस्यचित् ( क्वचित् ) बाह्येऽप्यर्थे सति चक्षुराद्यारम्भवैयर्थ्यप्रसङ्गः, तत एव ( मनसः ) अदृष्टविशेषाभिसंस्तुतात् [ ० षाभिसंस्कृतात् – इति कणिकापाठः ] सर्वप्रतिपत्तिसिद्धेः ( सर्वरूपादिप्रतीतिसिद्धेः ) तस्यापि ( मनसोऽपि ) वैयर्थ्यात्, अकरणस्यैव कर्तुरात्मनः अदृष्टविशेषादेव ( रूपादि– ) परिच्छित्तिक्रियासिद्धेः । ( यदि च– ) न खलु अनुपायमदृष्टमपि अर्थं साधयति, शरीराद्यारम्भात् तेन तर्हि अक्षलिङ्गाद्यनपेक्षा मनसः ( बहिः ) प्रवृत्तिः ( न स्वतः ) । अत एव योगजाद्धर्मात् सर्वार्थेषु न मानसं प्रत्यक्षम्, ( इन्द्रियार्थ–) संनिकर्षोपायत्वात् ( बाह्यविषयप्रत्यक्षत्व– ) सिद्धेः । संयुक्तसंयोगानभ्युपगमात् ( भवद्भिः योगजधर्मवादिभिः )। अन्यथा कुड्यादिव्यवहितार्थोपलब्धिप्रसङ्गात् ( अस्मदादीनां इति सर्वस्य सर्वज्ञत्वप्रसङ्गात् । तथा– ) अनुमानेऽपि प्रत्यक्षत्वापातात् । अजातातिवृत्तेषु तस्याप्ययोगात् । अत एव नेन्द्रियार्थयोः सद्भावः [ सिद्धयोः इति मूलपाठः ] संनिकर्षः (ज्ञानजननं प्रति परस्परानुकूल्येनावस्थानं ), अतीतानागतानां तदा ( विज्ञानसमये ) अपि असत्त्वात् व्यवहितार्थोपलब्धिप्रसङ्गात्, अनुमानादिषु च प्रत्यक्षत्वापातात्, संनिकर्षग्रहणानर्थक्याच्च ।

ननु अतीतानागतानां देशादिविशेषणत्वेन ज्ञानात् ( इयमतीतानागतबहुराजा जगती इति ) ज्ञानस्य च ( तज्ज्ञानस्य च ) विशेषदेशाद्यालम्बनत्वात् तैः ( देशादिभिर्यथायथं– ) चक्षुषो मनसो वा संनिकर्षसंभवात्, तेषां च ( देशादीनां ) सत्त्वात् संनिधानादव्याहतं अनुत्पन्नातिवृत्तज्ञानस्य इन्द्रियार्थसंनिकर्षजत्वम् । ( संनिकर्षजत्वाविशेषणानवभासोऽपि विशेष्यस्यैवार्थत्वादिति भावः )। अनुमानादिलक्षणमपि च इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं इति नानुमानादिषु तत्त्वम् ( पृथक् अनुमानादिलक्षणप्रणयनसामर्थ्यात् अनुमानादिलक्षणाभावे इन्द्रियार्थसंनिकर्षोत्पन्नं इति प्रत्यक्षलक्षणमिति नानुमानादिषु तत्त्वं प्रत्यक्षत्वं तल्लक्षणविरहात् ) । ( दूषयति– ) यदि तावत् यः कश्चिदर्थः ( तेन सह इन्द्रियासंनिकर्षात् यद्विज्ञानं तत् प्रत्यक्षं– ) ततः स्मृतौ प्रत्यक्षत्वप्रसङ्गः। ( शङ्कते– ) अथ प्रमेयः (देशादिः), (दूषयति–) देशादिमात्रज्ञानं भवतु प्रत्यक्षं तन्मात्रसंनिकर्षात्, न तु विशेषणज्ञानम् ; ( शङ्कते– ) विशिष्टज्ञानं प्रत्यक्षमिति तदाक्षेपात् विशेषणमपि प्रत्यक्षं इति चेत् । ( निराकरोति– ) न तस्य (अविधेयस्य विशेषवत् ) असंनिकर्षात् । नहि असति विशेषणे विशिष्टो वर्तमानोऽपि भवति । सर्वस्य तथात्वप्रसङ्गात् ( असंनिधानाविशेषात् ) । ( चोदयति– ) कथं तर्हि ( अवर्तमाने विशेषणे विशिष्टस्य वर्तमानत्वाभावे ) अतिवृत्तायां मातरि ' देवदत्तापुत्रो यज्ञदत्तः ' उच्यते ? ( समाधातुं निगूढाभिसंधिः पृच्छति– ) किमत्र ? ( किमत्र कथम् । चोदक आह– ) न स तथा तदा ( देवदत्तापुत्रः इति ) विशिष्टतया व्यवहारमनुपतेदिति ( अवर्तमानस्य व्यवहारानङ्गत्वात् । समाधाता आह– ) यदि तर्हि अवर्तमानं न व्यवहाराङ्गम्, देवदत्ताऽपि विशेषणतया न व्यवहाराङ्गं स्यात् । ( चोदक आह– ) अथ भूतपूर्वेण विशेषणेन व्यवहारः, ( समाधाता आह– ) विशिष्टतयाऽपि तादृश्या (अतिवृत्तया मात्रा) न दण्डवारितः ( व्यवहारः । परमार्थतस्तु– ) न चेदृशं



विशेषणम् । उपलक्षणं तु, रूपतो भिन्नस्य (स्वलक्षणस्य आकारिणः ) असंनिधानात् ( विशेष्यस्य अभिमतवस्त्वनाकारत्वात् ) संनिध्यसंनिधिकृत एव च एतयोः ( विशेषणोपलक्षणयोः ) भेदः । तस्मात् नासंनिहितविशेषणो विशिष्टः संनिहितः । यदि च ( विशिष्टप्रमेयतासिद्ध्यर्थं ) विशेषणं ( अपि ) प्रमेयम्, जाताद्यर्थश्च प्रमेयः । ( ततः– ) अनर्थसंनिकर्षजमपि ( ज्ञानं ) प्रत्यक्षं प्राप्तम् ( विशेषणस्य तत्र संनिकर्षाभावात् ), न च तथा ( संभवति )। तल्लक्षणविरहात् ( नैयायिकोक्तप्रत्यक्षलक्षणविरहात् । ननु मा भूत् लक्षणम्, विशेष्येन्द्रियसंनिकर्षमात्रात् तज्जनिष्यते, लप्स्यते च प्रत्यक्षं वैशद्यात् इति चेत् तत्राह–) इन्द्रियस्य अर्थापेक्षत्वात् ।

( शङ्कते– ) अथ देशविशेष एव प्रमेयो न तद्विशेषणम्, तथा च न तल्लक्षणविरहः ( प्रत्यक्षलक्षणविरहः ), अर्थ्यमानसंनिकर्षात् । ( उत्तरम्– ) न तर्हि देशाद्यालम्बनं अज्ञानेन अनुत्पन्नादिवेदिनो ध्यायिनः [ न तर्हि देशाद्यालम्बनेन ज्ञानेन अनुत्पन्ना० इति कणिकापाठः ] । प्रमेयैकदेशसंनिकर्षाच्च ( कथंचिद्विशेषणीभूतवर्तमानविश्वविषयक– ) प्रत्यक्षज्ञानोदये ( स्वीकृते ) सर्वः सर्वप्रत्यक्षदर्शी स्यात्, सर्वस्य इन्द्रियसंनिकृष्टं प्रति कथंचिद्विशेषणत्वोपपत्तेः । अनुमानलक्षणाऽभावेऽपि प्रत्यक्षविद्यमानार्थस्मृतौ प्रत्यक्षप्रसङ्गः ( अनुमानलक्षणानवरुद्धे विषये प्रत्यक्षलक्षणे व्यवस्थाप्यमाने, प्रत्यक्षे कस्मिंश्चित् सदृशे गवयादौ दृष्टे संस्कारोद्बोधात् सदृशान्तरस्य गवादेरर्थस्य विद्यमानस्य स्मृतौ प्रत्यक्षप्रसङ्गः । शङ्कते– ) संस्कारस्तत्र कारणं नार्थसत्ता, असत्यप्यर्थे ( स्मृतेः ) भावात् । ( उत्तरम् – ) इतरत्रापि तुल्यम् । (अर्थसत्तानिरपेक्षस्य) योगजधर्मस्य हेतुत्वात् । नहि तत्र अर्थोपयोगे प्रमाणम्, संनिहिते असंनिहिते, व्यवहिते अव्यवहिते, वर्तमाने अवर्तमाने च सर्वत्र योगिप्रत्यक्षोत्पादाभ्युपगमात् । ' वर्तमानदेशाद्यालम्बनत्वं लिङ्गाद्यभावे ' इति वदता संप्लवो निरस्तः स्यात् ( न्यायभाष्यकारेण, प्रमाणेन प्रमाणाभ्यां प्रमाणैश्च एकस्यैव प्रमेयस्य आत्मादेः प्रमितिः इति यः प्रमाणसंप्लवो दर्शितः, स त्वया चोदकेन निरस्तः स्यात् तथा च भाष्यविरोधः )। उत्सूत्रं च कल्पित ( स्यात् ) । ( शङ्कते– लिङ्गाद्यभावपदेन– ) अनुमानादिबाधनात् ( प्रत्यक्षलक्षणसूत्रेणापि तत्करणात् ) नोत्सूत्रं इति चेत् ( निराकरोति– ) शब्दनिवृत्त्यर्थं अव्यपदेश्यपदव्याख्यानं ( भाष्यगतं ) अयुक्तं ( स्यात् ) । षड्विधसंनिकर्षाभ्युपगमः इन्द्रियग्रहणं च ( इन्द्रियार्थसंनिकर्षोत्पन्नं इति न्यायसूत्रगतम् ) अनुमानादिनिवृत्त्यर्थं इत्यादि ( सूत्र-भाष्योक्तं ) पराहतं स्यात् । तस्मात् अक्षलिङ्गादिपरतन्त्रं ( बहिः ) मनः ।

( अपि च ) सर्वं च परिपूर्णं चेत् लौकिकं प्रमाणगोचरः, लौकिकप्रमाणव्यवहारी अपि परिपूर्णज्ञानः एव इति न ततो लोकोत्तरज्ञानाभिमतस्य विशेषः । ( शङ्कते– ) स्पष्टावभासं ( लोकोत्तरं ) ज्ञानं यदि ( विशेषः । निराकरोति– ) न तत्र ( सर्वस्मिन् संपूर्णगृहीते ) तस्य ( स्पष्टावभासस्य ) उपयोगः । ( शङ्कते– ) अथ निश्चयः ( लोकोत्तरेण जायमानो विशेषः, नासौ लौकिकेन इति चेत् । निराकरोति– ) स इतरस्यापि ( लौकिकस्य प्रमाणत्वेन ) तुल्यः । ( शङ्कते– ) प्रमितेः प्रत्यक्षदर्शिनः ( सर्वार्थप्रत्यक्षदर्शिनः सर्वस्याः प्रमितेः प्रत्यक्षपरत्वात् ) सर्वार्थेषु नैराकाङ्क्ष्यम् , नेतरस्य ( प्रमाणान्तरेण सर्वार्थप्रत्यक्षदर्शिनो लौकिकस्य । निराकरोति ) अप्रत्यक्षमपि यदि परिपूर्णम् , ( तर्हि ) मानान्तरेण मितं किमन्यदाकाङ्क्षेदिति । नहि प्रमाणान्तराऽऽकाङ्क्षा ( अलौकिकज्ञानवतः ), प्रमेयसिद्ध्यर्थत्वात् तदाकाङ्क्षायाः ( अलौकिकज्ञानवतश्च सर्वस्य प्रमेयस्य सिद्धत्वात् । प्रमेयसिद्धावपि तस्या आशुतरविनाशित्वेन– ) पुनः प्रमेयसिद्ध्यर्थं प्रमाणान्तराकाङ्क्षा, ( इति चेत् ) न, पूर्वस्मादपि ( योगजज्ञानात् ) असकृत् तत्सिद्धेः, सिद्धस्य पुनः सिद्ध्यपेक्षाहेत्वभावाच्च । ( यदि विचित्राभिसंधित्वात् प्रतिपत्तॄणां ) उपायान्तरसद्भावः ( चेत् बुभुत्सितः स्यात् , तर्हि– ) उपायान्तराऽऽकाङ्क्षैव स्यात्, ( न प्रमेयान्तराऽऽकाङ्क्षा । अथ ) प्रीतिविशेषश्चेत् ( उपायान्तरेण आकाङ्क्ष्येत, तर्हि– ) पूर्वप्रमाणजाद्दर्शनात् सिध्यति इति व्यर्थं प्रमाणान्तरम् । उपयान्तरसद्भावाच्च पुन-

जिज्ञासमानं (प्रत्यक्ष-) दृष्टमपि इतरैः (प्रमाणैरनुमानादिभिः अयं विचित्राभिसंधिः प्रतिपत्ता) जिज्ञासेत, (न प्रत्यक्षपरा सर्वप्रमितिः। अथ-) विशेषनिश्चयात्मकं प्रत्यक्षम्, अनिश्चयात्मकमनुमानादि व्यभिचारात् (इति विशेषश्चेत्, तदिदमनुपपन्नम्, अनुमानादेरपि यथोक्तलक्षणोपपन्नस्य व्यभिचाराभावात्। आभासव्यभिचारस्तु प्रत्यक्षेऽपि तुल्यः। स्थूलनिराकरणान्तरमाह-) अप्रमितत्वादेव तर्हि आकाङ्क्षा, व्यभिचारिणः (अत एव) अनिश्चयात्मकस्य अप्रमाणत्वात्। (शङ्कते-) भानादियोग्यं प्रत्यक्षं संनिकर्षात् (संनिहितत्वात्) नानुमानादि (तस्य देशकालविप्रकृष्टवस्तुगोचरत्वात्। निराकरोति-) संनिकर्षसाधनं तर्हि गमनादि अपेक्षताम्, न तु प्रमासाधनम्, (अनुमानादेरेव हेतोः) सिद्धत्वात् प्रमायाः। (न च प्रमैव भानादिहेतुः इत्याह-) प्रमितौ च संनिकर्षस्य भानादिहेतुत्वात्। प्रकृतं च (अलौकिकं) प्रत्यक्षं असंनिकृष्ट-(वस्तु)गोचरं इति न नैराकाङ्क्ष्यायालं इत्यविशेष एव लौकिकलोकोत्तरयोः प्रमात्रोः (सर्वप्रमायाम्)। (शङ्कते-) अनुमानादेः सामान्यविषयत्वात् प्रत्यर्थनियतात्मविशेषानवधारणात् साकाङ्क्षत्वं लौकिकस्य प्रमातुः, लौकिकोत्तरस्य तु अविकलरूपावधारणात् (अप्रमितस्य वस्तुनः अभावात्) नैराकाङ्क्ष्यं इति नाविशेषः। (दूषयति-) यदि तर्हि लौकिकं प्रमाणं विकलवस्तुविषयं (नाविकलवस्तुविषयं) लोकोत्तरमपि भावनामयं (भावनया कृतं) तत्परतन्त्रं (भावना च विकलविषयकलौकिकप्रमाणपरतन्त्रा इति) न तत् (अविकलं) गोचरयितुमर्हति। स्वातन्त्र्यं तु बहिर्मनसो नेत्यावेदितमेव। तस्मात् 'सर्वं मनसो विषयः' इति प्रलापः॥ १७॥

अपि च '**मिथ्यैव वर्तमानाभं न तु प्रत्यक्षमन्यथा। क्रमाक्रमौ न कल्पेते न प्रमेयं निरूप्यते॥**' १८॥ (यथालोकप्रतीति-) कालत्रयपरिवृत्त्यर्थगोचराणि मानान्तराणि, वर्तमानविषयं प्रत्यक्षम्। तत्र (सर्वज्ञस्य प्रत्यक्षेण सर्वं) वर्तमानात्मना पश्यतो मिथ्याज्ञानं (स्यात्), सर्वस्य अतथाभावात् (वर्तमानत्वाभावात्)। यथार्थं तु (अतीतत्वादिना) पश्यतो न (अतीतादिविषयं ज्ञानं) प्रत्यक्षं (स्यात्), अतीतानागतविषयत्वाभावात् तस्य (प्रत्यक्षस्य)। **अथवा** ('न तु प्रत्यक्षमन्यथा' इति श्लोकचरणस्य द्वितीया व्याख्या-) अवश्यमनेन बहुविधस्य प्रत्यक्षस्य एकं लक्षणं वाच्यम्, अन्यथा (अनुमानादिभ्यः) प्रमाणान्तरत्वाभिधानं अप्रत्ययं (अविश्वसनीयं स्यात्) प्रमाणान्तराभ्युपगमो वा (प्रत्यक्षादितरेषामनुमानादीनामभ्युपगमो वा अप्रत्ययः स्यात्) परिभाषाप्रयोजनाभावात्। भिन्नलक्षणेष्वपि केषुचित् लौकिकाः प्रत्यक्षशब्दं प्रयुञ्जते इति (अपि) मिथ्या, लोकोत्तरे (भवदभिमते) तदयोगात् (लौकिकप्रयोगायोगात्)। तत्र (प्रत्यक्षसामान्यलक्षणे वक्तव्ये) न अक्षजत्वं लक्षणं मनसः [मानसे इति युक्तः पाठः] अतिव्याप्तेः (अनुमानादेरपि मनोजन्यत्वात्, मनसोऽपि अक्षत्वात् अनक्षत्वे तु सुखादिज्ञाने अव्याप्तेः)। तस्मात् इन्द्रियार्थसंनिकृष्टार्थजत्वं तल्लक्षणम् (प्रत्यक्षलक्षणं सर्वैरास्थेयम्)। यथोक्तं "अर्थसामर्थ्येन समुद्भवात्' 'इन्द्रियार्थसंनिकर्षोत्पन्नं' 'सत्संप्रयोगः" इति। मनसः अक्षत्वे सुखादिज्ञानव्याप्तेः (नाव्याप्तिः, नाप्यतिव्याप्तिः-) अर्थसामर्थ्यजत्वेन अनुमानादिव्यवच्छेदात्। (एवं लक्षणे च सर्वज्ञत्वं न सिध्यतीत्याह-) न च सूक्ष्मविप्रकृष्टव्यवहितानां ज्ञानोत्पत्तौ सामर्थ्यम्, इति न सर्वविषयप्रत्यक्षस्योपपत्तिः।

(बौद्धदिङ्नागसंमतं लक्षणमाह-) कल्पनाऽपोढत्वं प्रत्यक्षलक्षणं इति चेत् (विकल्प्य दूषयति-) केयं कल्पना? (यस्या अपोढत्वं प्रत्यक्षत्वमुच्यते) यदि शब्दाभासा (शब्दाकारा) प्रतीतिः, श्रौत्रं ज्ञानं (शब्दविषयकं) अप्रत्यक्षं (प्रसज्येत इत्यव्याप्तिः)।

अथ अभिलापसंसर्गयोग्यप्रतिभासा (अभिलापसंसर्गयोग्यः प्रतिभासः आकारो यस्याः सा प्रतीतिः कल्पना नाम, इति चेत्। ज्ञानसाकारवादिनां कल्पनां दूषयति-) सामान्याकारस्वसंवेदनेऽपि अप्रत्यक्षत्वम् (ज्ञानाकारसामान्यस्य स्वसंवेदनेऽपि विकल्पनीयतया अप्रत्यक्षत्वं स्यात्। निराकारज्ञानवादिनां मतमाशङ्कते-) अथ वस्तुनि वस्त्वन्तरयोजना (वस्तुनि पुरोवर्तिनि



शुक्तिकादौ वस्त्वन्तरस्य रजतादेः योजना 'रजतमिदं' इति विज्ञानं कल्पना नाम। निराकरोति-) सामान्याकारप्रतीतेः प्रत्यक्षत्वम्। (सामान्यं आक्रियते व्यज्यते यया सा सामान्याकारा प्रतीतिः, तस्याः प्रत्यक्षत्वं स्यात्)। सामान्यस्य वस्त्वन्तरस्यानभ्युपगमात्। (प्रकारान्तरेण कल्पनां शङ्कते-) अथ अभिधानयोजना (अभिधेये अभिधानस्य योजना कल्पना नाम इति चेत्। निराकरोति-) अव्युत्पन्नाभिधानस्य तथा स्यात् (अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः शब्दयोजनारहिता सा तथा प्रत्यक्षं स्यात्, न चेष्यते। अन्यथा कल्पनां शङ्कते-) अथ अरूपस्य (अलीकस्य) आरोपः (कल्पना नाम। ततश्च-) कल्पनापोढं रूपमात्रवेदनं प्रत्यक्षम् (तथा च नोक्तदोषप्रसङ्गः। निराकरोति-) न तर्हि अजाताऽतिवृत्तेषु योगिनः अन्यस्य वा ज्ञानं प्रत्यक्षम्। ज्ञानप्रतिभासिनो रूपस्य तेषु (अजातातिवृत्तेषु) अभावात्, भावे वा प्रत्युत्पन्नत्वापातात्। (ननु आरोपितरूपानुकारिणी कल्पना। न चातीतानागतेषु विज्ञानं योगिनस्तथा, इति न तत् कल्पनेति अत आह-) आरोपितरूपानुकारित्वात् तत्र (अजातातिवृत्तज्ञाने) कल्पनात्वप्राप्तेः। (ननु आरोपितरूपानुकारित्वमेव योगिज्ञानस्यासिद्धं इत्यत आह-) नहि अविद्यमानरूपानुकारादन्यो ज्ञानस्याध्यारोपः (न चेदं विद्यमानम्। चोदयति-) ननु निरधिष्ठान आरोपः, अतो वस्तुनः अन्यरूपप्रतीतिः कल्पना (नाम। एकदेशी परिहरति-) निरधिष्ठानं तर्हि तैमिरिकस्य केशादिज्ञानं प्रत्यक्षं (प्रसज्येत। चोदक आह-) अथ तत्र किंचिदधिष्ठानमुच्यते। (परमार्थदूषणमाह-) 'खपुष्पं' इति तु ज्ञानं अकल्पना (यतः) प्रत्यक्षं स्यात्। (अपिच) सामान्ये च सामान्याकारा प्रतीतिः स्वसंवित्ताविव तत्र (सामान्ये) अनारोपरूपत्वात्। (शङ्कते-) अथ (अविद्यमानस्वरूपसामान्यादेः) रूपमात्रकल्पना (कल्पना नाम। न चैवं सति स्वसंवित्तौ कल्पनात्वप्रसङ्गः, विकल्पविज्ञानस्वरूपस्य विद्यमानत्वात्। निराकरोति-) अतीताऽज्ञातादिषु ज्ञानं कल्पनापोढम् (तत्प्रतिभासिनो रूपस्य जात्यादेरिवाविद्यमानत्वात्)।

(शङ्कते-) अथ सामान्याकारप्रतीतिः वस्तुनि कल्पना (समारोपरूपत्वात्) तत् प्रत्यक्षम्, सामान्ये तु भ्रान्तत्वात् (असत् खलु सामान्यम्। तदेतत् विकल्प्य दूषयति-) का पुनरियं भ्रान्तता? यदि असदर्थता, तुल्येयं सर्ववेदने (अजातातिवृत्तयोरसत्त्वात्)। अथ अत्यन्तासदर्थता, तैमिरिकस्वप्नादिज्ञानं प्रत्यक्षम् (प्रसज्येत तस्य अर्थस्यात्यन्तासत्त्वाभावात्)। अथ अर्थक्रियासंवादित्वं अभ्रान्तत्वं (तद्भिन्नं भ्रान्तत्वम्। एतत् विकल्प्य दूषयति-) यदि अर्थनिबन्धनौ (ज्ञानविषयनिबन्धनौ) सुखदुःखप्राप्तिपरिहारौ (अर्थक्रियासंवादित्वमिष्यते ततः) उपादानपरित्यागायोग्यवेदनस्य (चन्द्रतारकादिविषयस्य विज्ञानस्य) भ्रान्तत्वप्रसङ्गः। अथ उत्तरोत्तरज्ञाननिर्वृत्तिः (एकस्मिन्नर्थे संवादः, स चास्ति चन्द्रतारकादिविषयस्यापि विज्ञानस्य इति तदपि अभ्रान्तं प्रत्यक्षं चेति न व्यभिचारः। दूषयति-) क्षणिकविज्ञानस्य (क्षणिकविषयस्य विज्ञानस्य भवताम्, अस्माकं च आशुतरविनाशिविद्युदादिविषयस्य विज्ञानस्य) तथात्वं (भ्रान्तत्वं प्रसज्येत)। तस्मात् (पारिशेष्यात्) अतदात्मनि तादात्म्यप्रतीतिर्भ्रान्तिः। तथा च (भ्रान्तिकल्पनयोः समारोपरूपेण ऐक्ये सति) सर्वज्ञज्ञानं न कल्पनापोढं अभ्रान्तं इति न प्रत्यक्षलक्षणमन्वेति।

(प्रत्यक्षस्य लक्षणान्तरं शङ्कते-) अथ अनुभवाकारप्रवृत्तं ज्ञानं (प्रत्यक्षम्) अतः अन्वेत्येव (अतीतानागतविषयं सर्वज्ञज्ञानम्)। यथोक्तं 'मानसमपि अनुभवाकारप्रवृत्तं प्रत्यक्षम्' इति। (विकल्प्य दूषयति-) अथ केयमनुभवाकारता? यदि बोधात्मकता (ततः) सर्वं तथा (बोधात्मकं) ज्ञानम् (इति अनुमित्यादिकमपि प्रत्यक्षं प्रसक्तम्)। अथ व्यक्त्यन्तरावभासता (ततः) प्रथमोपनिपात्यपि (निर्विकल्पकं) दूरत्वादिना (दोषेण) अव्यक्तपीतादिपरिच्छेदं न प्रत्यक्षं स्यात्। अथ अदूरान्तरातिरोहितवेदना (अदूरान्तरस्य अतिरोहितस्य च वेदना अनुभवा-

कारप्रवृत्तिर्नाम । दूषयति–) सामान्यवेदनस्य प्रत्यक्षत्वप्रसङ्गः । यदि मन्येत संनिहितवर्तमानाऽवभासा अनुभवाकारप्रवृत्तिः ( न च सामान्यं अलीकम्, संनिहितं च वर्तमानं च ) तथाभूतं च सर्वार्थेषु योगिनां ( कतिपयभूमिकासमारूढानां ) तथागतानां च ( दशमभूमिकागतानां ) दर्शनमिति । ( दूषयति- ) तदसत्, पूर्वदोषाऽनतिवृत्तेः । ( यद्यपि सामान्यं अपरमार्थकतया असंनिहितमवर्तमानं च, तथापि तथा अवभासते इति अनुभवाकारप्रवृत्त्या तत्प्रतिपत्तिः प्रत्यक्षं प्रसज्येत इति पूर्वदोषापत्तिः ) ।

( अत्रैव दूषणान्तरं १८ कारिकायाः पूर्वार्धेनाह– ) अपि च तथाभूते ( वर्तमाने अतीते अनागते च ) तथाभूतदर्शनात् [ अतथाभूतदर्शनात् इति युक्तं भाति ] वर्तमानं मिथ्याज्ञानमेव, तैमिरिकदर्शनवत् । न तु प्रत्यक्षमन्यथा भवति, तदिन्द्रियार्थसामर्थ्यजन्यलक्षणम्, इतरथा तिमिराद्युपप्लवजकेशादिदर्शनं कस्य हेतोरवाक्रीयेत ( प्रत्यक्षत्वात् अभ्रशत् ) ।

( साकारवादी प्रत्यवतिष्ठते– ) सर्वमेव प्रत्यक्षं असंनिहितावभासम्, अर्थज्ञानयोः कार्यकारणभावेन ( नात्र यथासंख्यम् ) कालभेदात् । ( दूषणवादी गूढाभिप्रायः पृच्छति– ) किं तर्हीदं प्रकाशते ( नीलादि संनिहितदेशकालं चोदक आह– ) ज्ञानाकारम् । ( प्रष्टा अभिप्रायमाविष्करोति– ) न हीदानीं सर्वैकदेशस्यापि ( अर्थरूपस्य ) प्रत्यक्षदर्शी ( विद्यते ) । ( सर्वार्थप्रत्यक्षदर्शी चोदयति– ) ज्ञानाकारे अर्थवेदनाऽध्यवसायेनैव व्यवहारदर्शनात् नार्थदर्शनहानिः । (दूषयति–) कथमन्यवेदने ( स्वाकारवेदने ) अन्याध्यवसायः ( बाह्यवेदनस्य अध्यवसायः । चोदक आह– ) निरूढत्वात् अनादेः अर्थग्रहाभिनिवेशापस्मारलक्षणाया अविद्यायाः [ षष्ठी इयम् ] । ( सोपहासं दूषयति– ) स्वस्ति तर्हि सर्वज्ञत्वाय भूयिष्ठाविद्यापस्माराय, वरं कनीयोऽविद्यं [ कनीयसी अविद्या यस्मिन् तत् ] एकदेशदर्शित्वमेव । अपिच परिभाषयाऽपि तावत् एकदेशे एव प्रत्यक्षं स्यात् । ग्राह्यत्वं हेतुत्वमेव ज्ञानाकारार्पणक्षममिति, न पुनः सर्वः, तस्याहेतुत्वात् देशतः कालतो वाऽसंनिधानात् । अन्यथा ( संनिधिविरहिणोऽपि हेतुत्वे ) सर्वस्य ( अस्मदादेरपि ) सर्वदर्शित्वप्रसङ्गात् । ( पूर्वार्धस्य अन्या व्याख्या– ) अथवा प्रत्युत्पन्नाकारमेव ज्ञानम्, अतीतानागताकारमपि वा ? पूर्वत्र ( पूर्वकल्पे ) सर्वस्यातथाभावात् मिथ्या । उत्तरत्र ( कल्पे ) अतीतादिरूपकल्पनाप्रवृत्तत्वात् न प्रत्यक्षम् ( कल्पनारहितस्य तत्त्वात् । यस्तु मन्यते 'अस्तु वर्तमानविषयमेव प्रत्यक्षं तथापि सर्वविषयम्, अतीतानागतयोरपि अतीतानागतत्वाभ्यां वर्तमानत्वात् ' इति, तन्निरासाय १८ कारिकापूर्वार्धस्यैव व्याख्यान्तरमाह– ) सर्वं वा ज्ञानकाले प्रत्युत्पन्नात्मना ज्ञायेत, तथाऽवस्थं वा ( यो यदवस्थः स तथेत्यर्थः ) । पूर्वस्मिन् ( पक्षे ) मिथ्यात्वम् ( अन्यावस्थस्य अन्यथाग्रहणात् ) । उत्तरत्र ( पक्षे ) न सर्वं प्रत्यक्षम्, अवस्थान्तराप्रत्यक्षीकरणात् ।

( उत्तरार्धं विवृणोति– ) अपि च सर्वं न क्रमेण शक्यावगमम्, आनन्त्यात् । नहि पूर्वापरकोटिविरहिणो ज्ञेयस्य उत्पादवतः परिनिष्ठा अस्ति । ( नित्यस्यापि तावत् परमाण्वादेः व्यवस्थितरूपस्यापि नेयत्ता, किमङ्ग पुनः अव्यवस्थितरूपस्योत्पादवतः ) न यौगपद्येन, आनन्त्यादेव । इयत्ताऽनवधारणे सर्वैकदेशप्रतिपत्त्योरविशेषात् । ( चोदयति– ) ननु अनवधारयन्नपि इयत्तां रूपतो यौगपद्येन सर्वमवैति । ( निराकरोति– ) नैतत् सारम् । नहि इयत्ताऽनवधारणे सर्वमवधारितं भवति एकदेशो वा, अन्यतराव्यवच्छेदात् ( अन्यतरस्यैकदेशस्य परिमितरूपमात्राग्रहणे अव्यवच्छेदात् । एतावता व्यतिरेको दर्शितः । अन्वयमाह– ) बहुद्रव्यसमवाये इयत्ताऽवधारणादेव सर्वप्रतिपत्तिः । सा च ( इयत्तानिःशेषता ) परिमिते संभवति, नापरिमिते । ज्ञानाकाराधीनश्च ज्ञेयाधिगमः ( सौत्रान्तिकनये ) । न चैकविज्ञानवर्तिनामाकाराणां युगपद्भुवां आनन्त्यं समस्ति, सर्वेषां प्रत्युत्पन्नत्वात् । अव्यवच्छिन्नदेशकाला हि अजातातिवृत्तप्रत्युत्पन्ना अनन्ताः सहापेक्षमाणाः, अतीताश्च ( अनन्ताः ), पूर्वकालकोटेरनवच्छेदात्, अवच्छेदेऽपि पुरस्तात् । [ पुरातनानामवच्छेदेऽपि पूर्वकालकोटेरनवच्छेदात् इत्यर्थः ] प्रत्युत्पन्नास्तु उभयकोट्यव्यवच्छिन्नाः यावन्त उत्पन्नाः, तावन्त एव इति कथमानन्त्यम् ? अतः नानन्ताकारमेकं ज्ञानम्, अनन्तानि वा युगपत् ज्ञानानि ( उभयत्रापि उभयकोट्यव्यवच्छेदात् । ' न प्रमेयं निरूप्यते ' इति चतुर्थचरणं विवृणोति– ) किंच इदं सर्वम्, यत् विद्वान् सर्ववित् । न तावत् प्रत्येकं अर्थाः ( प्रत्येकं अन्यनिरपेक्षेषु सर्वशब्दाप्रयोगात् ) नापि अन्यसहिताः ( एकस्मिन् देवदत्तपुत्रे यं कंचिदन्यमपेक्ष्य सर्वशब्दाप्रयोगात् ) । अपि तु केनचित् सामान्येन वशीकृताः कियन्तोऽपि ( सर्वे नाम ) । न चेत्थंभावः अनन्तेषु संभवति । ( शङ्कते– ) मुख्यमनन्तमेव सर्वं ( नाम ) इति चेत्, ( निराकरोति– ) न । अन्यतरकालकोटिभाजामानन्त्येऽपि ( अतीतया एकया कोट्या उपहितानां ) असर्वत्वात् पूर्वापराव्यवच्छिन्नानां च ( प्रत्युत्पन्नतोपहितानां ) सर्वत्वात् । अपि च आनन्त्यमेव सर्वत्वे [ आनन्त्ये एव सर्वत्वे– इति युक्तः पाठः ] तदवधारणं न संभवति । तथाहि, सर्वा व्यक्तयः ( अवधारिता न वा ) अवधारिताश्चेत् तावत्य एव, नानन्ताः । अनवधारणे हि अनन्तत्वं तासाम्, तदनवधारणं चानन्तम्, इति कथं तदवधारणम् ? ( कणिकायां तु ' अनवधारणं चानन्तमिति कथम् ? तस्य सर्वस्यावधारणात् । न चानवधार्यमाणं प्रमेयं इति भावः ' इति ) । ( शङ्कते– ) कालत्रयावच्छिन्नास्तर्हि अर्थाः सर्वे, ( न वयं अनन्ततामेव सर्वतां ब्रूमः, किंतु एकेनैव कालेन उपाधिवशलब्धातीताद्यर्थव्यवस्थाभेदेनावच्छिन्नत्वाभावात् सर्वे इत्यर्थः । निराकरोति– ) न, तेषु अवच्छेदाभावात् एकदेशाविशेषात् ( सर्वप्रतिपत्तेरनुपपत्तेः । कारिकायाः पश्चार्धं प्रमाणयन्नुपसंहरति– ) तस्मात् क्रमाक्रमातिरिच्यमानविधाऽभावात् ताभ्यां व्याप्तेर्ज्ञानस्य तदनुपपत्तौ अनुपपत्तिः । प्रमेयाभावाच्च ( प्रमेयं न निरूप्यते । प्रमेयानिरूपणादेव च सर्वग्रहणसामर्थ्यमात्रेण सर्वज्ञता प्रत्युक्ता वेदितव्या । ननु मा नाम सर्वं प्रत्यक्षेण ज्ञासीत्, अनुमानादिभिस्तु ज्ञास्यति इत्यत्राह– ) प्रत्यक्षपूर्वकत्वाच्चानुमानादीनामपि सर्वस्मिन्नकारणत्वम् ( अप्रमाणत्वम् ) । प्रत्यक्षेण साक्षात् पारंपर्येण वा संबन्धग्रहणाभावात् नानुमानम्, न शब्दः अत एव ( प्रत्यक्षसंबन्धग्रहणलब्धजन्मत्वात् । ननु अगृहीतसंबन्धं सर्वं मा भूत् पदार्थः, वाक्यार्थस्तु भविष्यति, इत्यत आह– ) पदार्थान्तरोपहितविशेषपदार्थस्यैव वाक्यार्थत्वात् । नार्थापत्तिः, तदभावे ( सर्वस्याभावे ) अनवकल्पमानदर्शनानुपपत्तेः । नोपमानं ( दृष्टस्य– सदृशस्य– स्मृत्यारूढस्य गवादेः दृश्यमानेन गवयादिना उपमेयत्वात् सर्वस्य च क्वचिददर्शनात् ), सादृश्यविषयत्वात् ( च । सर्वस्य चासादृश्यरूपत्वात् ) [ चासदृशरूपत्वात् ] । नाभावः, अभावविषयत्वात् । [ अत्र कणिका तु–न प्रमाणाभावः, तस्य प्रमेयाभावविषयत्वात् । सर्वस्य च सदसद्रूपतया तदनुपपत्तेः– इति व्याचष्टे ] प्रत्यक्षस्यैव चेतरेषामपि प्रमाणानां क्रमाक्रमौ न कल्पेते, प्रमेयं च न निरूप्यते । एवं तावदनुपपत्तिः ।

[ पञ्चदशकारिकाया अवतरणे सर्वज्ञशङ्कामुपन्यस्य ' न तस्यानुपपत्तेः अज्ञानाच्च ' इति यदुक्तम्, तत्र अनुपपत्तिः पञ्चदशादिभिः अष्टादशान्ताभिः कारिकाभिः परिशोधिता । अथ अज्ञानं परिशोधनीयम्, तत्र– ] ज्ञानमपि ( परिशोध्यते ) ' **सर्वादृशामन्यवित्तमिन्द्रियाणां न गोचरः । अत एव न सर्वज्ञज्ञानकार्यं प्रसिध्यति ॥** ' १९ ॥ न तावत् अनतीन्द्रियदृशः सदपि परवर्ति संवेदनं प्रत्यक्षम् । [ सर्वादृशां सर्वे पश्यन्ति इति सर्वादृशः । ' आ सर्वनाम्नः ' इति सर्वशब्दस्य आकारोऽन्तादेशः । सर्वादृशः न भवन्ति इति सर्वा–अ–दृशः । नञः मध्यनिवेशोऽत्र । अस्यैवार्थः ' अनतीन्द्रियदृशः ' इतिपदेन व्याख्यातः । अन्यवित्तं अन्येन पुरुषेण ज्ञातमित्यर्थः । अयमर्थः ' परवर्ति संवेदनं ' इत्यनेन व्याख्यातः । इन्द्रियाणां गोचरः इति पदयोरर्थः ' प्रत्यक्षं ' इति पदेन स्पष्टीकृतः ] अत एव ( अत्यन्ताप्रत्यक्षत्वादेव ) नानुमेयम् । तदसिद्धौ तत्कार्यासिद्धेः ( सर्वज्ञानस्यासिद्धौ च प्रत्यक्षेण तत्कार्यासिद्धेः ) ॥ १९ ॥

( स्वायंभुवाभिमतं सार्वज्ञं निरसितुमुपन्यस्यति– ) ननु सातिशयानां काष्ठाप्राप्तिः, परिमाणानामुपलब्धा,

सातिशयं च ज्ञानं ( उपलभ्यते ) अतः क्वचित् काष्ठाप्राप्तं सर्वविषयमिति । (उत्तरमाह) उच्यते **'काष्ठा यद्यवधिः कामं परं यस्मादसंभवि । कार्यद्रव्यैरनेकान्तो गुणैश्च गरिमादिभिः ॥ ' २० ॥** ( विकल्प्य दूषयति– ) यदि यतः परं नास्ति सा काष्ठा, भवतु तत्प्राप्तिः, न च तया सर्वविषयत्वसिद्धिः । भूयिष्ठविषयत्वं तु भवेत् । पार्थिवस्येव गोलकस्य पार्थिवान्तरापेक्षं ( पर्वताद्यपेक्षं ) बहुतराकाशावकाशव्यापित्वम्, न सर्वव्यापिता । ( कल्पान्तरमाशङ्कते– ) अथ यतः परं न संभाव्यते ( सा काष्ठा । दूषयति– ) कार्यद्रव्यैर्व्यभिचारः । नहि सातिशया अपि घटादयः [ कुटकुम्भमणिकादयः– इति कणिका ] परिमाणतः परासंभवनीयाऽ( नीयरूपदेशाऽ )तिशायिनः, अन्यानवकाशप्रसङ्गात् एकेन ( द्रव्येण ) सर्वव्याप्तेः । ( गुणत्वे सति इति विशेषणान्न व्यभिचार इति चेत्तत्राह– ) न च गुणधर्मोऽयमिति सांप्रतम् । तद्गतानां (कार्यद्रव्यगतानां) गरिमादीनां तदवस्थाऽसंभवात् ( काष्ठाया असंभवात् ) सर्वैर्गुरुत्ववद्भिः एककार्यारम्भाभावात् । प्रयत्नविशेषाच्च अन्तिकदूरप्राप्तिः मनुष्य–वात–हरिण–हरि–पतत्रिणाम् । न च तस्य ( विशेषस्य ) असंभवनीयपरावस्थः अतिशयः, अनन्तत्वात् नभसः । केषांचित् निरतिशयप्राप्तानां पातप्रसङ्गात् । निरवशेषगन्तव्यदेशप्राप्त्या हि प्रयत्नो निरतिशयः स्यात् । तदनन्ततया कुतोऽस्य निरतिशयता । तस्मात् प्रयत्नेनैवासाधारणगुणेन बुद्धिगुणेन वा व्यभिचारः । ऐश्वर्यफलस्य धर्मस्य न सा काष्ठा । तद्वदैश्वर्यजननात् धर्मस्यापि ( तद्वत्तया व्यपदेशः ) । ईश्वरैश्वर्यस्य धर्मफलत्वाभावात् ( धर्मफलत्वापातात् इति पाठान्तरम् ) क्लेशकर्मविपाकाशयापरामर्शात् [ ईश्वरस्य क्लेशादिशून्यत्वात् ] ( यस्तु परमेश्वरैश्वर्यस्यापि धर्मजनितत्वमभ्युपैति, तं प्रत्याह– ) अनेकेश्वरप्रसङ्गात् ( सर्वेषां ) ऐश्वर्यव्याघातात् ॥ २० ॥

( यच्च ' काष्ठाप्राप्तिरुपलभ्यते परिमाणानां ' इत्युक्तम्, तद्विकल्प्य दूषयति– ) अपि च **' नासंभाव्य परावस्थं नभः परिमितं यदि । अथानन्ततया तत्त्वं न त्वेषां परिमाणता ॥२१॥** [यदि परावस्थं असंभाव्य नभः परिमितं न इत्यन्वयः ] ( परिमितं चेदाकाशं इति ततोऽधिकं किमिति न संभाव्येत, सातिशयपरिमाणदर्शनादेव संभावनीयमेतत् । शङ्कते– ' अथानन्ततया तत्त्वं '– ) अनन्तत्वादिति चेत् ( शङ्कां निराचिकीर्षुः पृच्छति– ) किमिदं आनन्त्यम् ? ( शङ्किता ब्रूते– ) अपरिच्छिन्नता । ( उत्तरं– ) ननु एष परिमाणाभावः ( एव वचनव्यक्त्यन्तरेण आश्रितः ) । एतावत् तर्हि परिमाणम् ( तद्विपरीतता तु तदभावः ) । ईदृशीं च काष्ठाप्राप्तिं ईश्वरज्ञानस्य वदन् अज्ञानं ( ईश्वरस्य ) आविर्भावयति ( आत्मीयस्यैव विज्ञानस्य साकल्येनापरिज्ञानात् ) । सोऽयं शान्तिकर्मणि वेतालोदय । ( ईश्वरज्ञानस्य आनन्त्येन समर्थने ईश्वरस्यैव वस्त्वज्ञानलक्षणः ) ।

( नैयायिकः प्रत्यवतिष्ठते– ) सर्वकार्याणां कर्तृत्वादेव तर्हि सर्वज्ञत्वम् । उपादानोपकरणसंप्रदानप्रयोजनाभिज्ञा हि कुलालादयः कर्तारः । ( उपादानमत्र परमाणुजातिचतुष्टयम् । उपकरणं समस्तक्षेत्रज्ञसमवायिनौ धर्माधर्मौ । संप्रदानं क्षेत्रज्ञाः, यानयं भगवान् स्वकर्मभिरभिप्रैति । प्रयोजनं सुखदुःखोपभोगः । क्षेत्रज्ञानां कुलालादिकर्तृव्यापारविषयस्तु उपादानादिः प्रसिद्ध एव ) । सर्वेषां च कार्याणामीश्वरः कर्ता, इति समस्तकार्योपादानाद्यभिज्ञः, तथा च सर्वज्ञ इति । (एतं परतन्त्रसिद्धान्तं दूषयितुमुपक्रमते– ) किमेते ( कुलालादयः ) स्वकार्यस्य निरवशेषोपकरणवेदिनः कतिपयोपकरणवेदिनो वा ? न तावत् अशेषोपकरणवेदिनस्ते ( अन्ततः ) अदृष्टस्याज्ञानात् । नापि संप्रदानप्रयोजनविशेषवेदिनः तस्यानेकस्यापि संभवात् । ( ईश्वरस्यापि) तन्मात्रज्ञाने न सर्वज्ञतासिद्धिः । बालोन्मत्तादयश्च सर्वकार्याणां न प्रयोजनादिवेदिनः ( इति तन्निदर्शनेन ईश्वरस्य तन्मात्रज्ञानमपि न सिध्यति ) । साध्यं चेत् कर्तृत्वं तत् कथं अन्तर्भावितसर्वज्ञत्वं हेतुमन्तरेण सेद्धुमर्हति ? ॥ २१ ॥



' ननु सिद्धमेव, संनिवेशादीनां बुद्धिमत्पूर्वकत्वात् । ( तदेतत् दूषयति– ) वार्तमेतत् । **' संनिवेशादिमत् सर्वं बुद्धिमद्धेतु यद्यपि । प्रसिद्धेः संनिवेशादेरेककारणता कुतः ॥ ' २२ ॥** प्रेक्षापूर्वप्रासादादिसंनिवेशवैलक्षण्येऽपि च इतरेषां तरुगिरिसागरादीनां यद्यपि संनिवेशमात्रसामान्यात् ( चैतन्यमात्रसिद्धिः स्यात् इति परेण संबन्धः ) तथा असति विभक्तेशतया स्वार्थे परानुग्रहे वा दुःखोत्तरसर्गदर्शनात् प्रयोजनाभावनिराकृताऽपि चैतन्यमात्रसिद्धिः स्यात्, एकत्वं तु तस्य ( ईश्वरस्य ) कुतस्त्यम् ? नहि घटरथादयः एकबुद्धिमत्पूर्वकाः । (शङ्कते–) ईश्वरपूर्वकत्वेन [ ईश्वरकर्तृकत्वेन– इति कणिकायाम् ] (सर्वस्य कार्यजातस्य) तथा (एककर्तृकत्वं) इति चेत् (उत्तरमाह–) साध्यं तत् ( ईश्वरपूर्वकत्वम्, तत् कथं साधनतयोपादीयते । पुनः शङ्कते– ) चेतनमात्रनान्तरीयकत्वात् संनिवेशस्य केषांचित् (घटरथादीनां) तथा दर्शनात् अन्यत्रापि (क्षित्यादौ) तथाभावः ( इति सिद्धमीश्वरपूर्वकत्वं एककर्तृकत्वं च ) इति चेत् । ( निराचष्टे– ) दृष्टान्तसाध्याभ्यामनेकान्तः, ( दृष्टान्ते हि घटादौ एकः कर्ता कुलालादिः, साध्ये च क्षित्यादौ ईश्वरः, इति व्यभिचारात् नोत्पत्तिमत्त्वं अचेतनोपादानत्वं वा चेतनात्मानं कर्तारं तनुभुवनादीनां साधयितुमर्हति, अनेककर्तृकत्वस्य दृष्टान्तसाध्ययोर्दर्शनात् । यदि तु सर्वमेव ईश्वरपूर्वकत्वेन साध्येत ततो घटादीनां ईश्वरपूर्वकत्वेन पक्षविनिवेशात् दृष्टान्ताभाव इत्याह– ) सर्वसाध्यत्वे दृष्टान्ताभावः । द्विकर्तृकत्वे च घटादेः [ ईश्वरश्च कुलालश्चेति द्वावपि घटादेः कर्तारौ इति चेत् ] भुवनाद्यपि तथा इति ईश्वरेश्वरप्रसङ्गादनवस्था [ यथा घटकर्तारं कुलालमधिष्ठातुमीश्वरः तथा जगत्कर्तारमीश्वरमधिष्ठातुं अन्य ईश्वरः, तस्याप्यपरः इत्यनवस्था ] । ( चोदयति– ) अत एव ( अनवस्थाप्रसङ्गादेव ) न द्वितीयानुमानम् । ( परिहरति– ) एकानुमानमपि तर्हि मा भूत्, तथापि ( एकानुमानेऽपि ) अनवस्थायास्तुल्यत्वात् ( लब्धपरिपाकाऽदृष्टवत्क्षेत्रज्ञसंयोगादेव क्षित्यादिलक्षणकार्योत्पत्तौ एतस्यापीश्वरस्यानुमाने तुल्यैवानवस्थेत्यर्थः । शङ्कते– ) अथ न ह्यधिष्ठातृका घटादयः ( किंतु ) सर्वमेकाधिष्ठातृकम् । ( निराकरोति– ) इति न सर्वज्ञत्वसिद्धिः । ( शङ्कते– ) रथाङ्गाद्यवयवाः नानातक्षनिर्मिता अपि दृश्यन्ते जगति प्राय उपकार्योपकारकाः, एवं च 'रथाङ्गादि एकतक्षपूर्वकं दृष्टम्, तस्मात् जगदपि एककर्तृपूर्वकम्' इति (यत् परस्परोपकार्योपकारकत्वेन व्यवस्थितं तत् एककर्तृकं दृष्टं यथा रथावयवाः एकतक्षपूर्वका दृष्टाः, तथा च तनुभुवनादि इति ) । ( दूषयति– ) तदेतद् व्यभिचारि, नानातक्षपूर्वकस्यापि दर्शनात् ॥ २२ ॥

**' हेत्वभावप्रतिक्षिप्तं न कार्यमनुमीयते । हेतुर्न चेतनामात्रं प्रेक्षा त्वनुपपत्तिका ॥ ' २३ ॥** नहि कर्माशयाऽभावे तस्य ( ईश्वरस्य ) शरीरेन्द्रिययोगः, बुद्धिः, ऐश्वर्यं वा संभवति इति प्रमाणविरुद्धस्तदुपगमः, हेत्वभावे कार्यानुपपत्तेः । उपपत्तौ वा न संनिवेशात् तदनुमानम् ( बुद्धिमतोऽनुमानम् ) । कर्माशयपूर्वकत्वे वा तज्ज्ञानमन्यतः स्यात् ( येन कर्माशयेन अस्य शरीरादयो जनयितव्याः । चोदयति– ) ननु अत एव ( हेत्वभावे कार्याभावादेव) तदनुमानं (तस्य बुद्धिमतः तनुभुवनादिहेतोः अनुमानं ) अन्यथा ( हेत्वभावेऽपि कार्यभावे ) दूषणमपि ( कारिकोक्तं ) न स्यात् । वक्तव्यो वा विशेषः, यतो दूषणम्, न साधनमिति (उभावपि हि दूषणसाधनवादिनौ कारणाभावे कार्याभावं वक्तुं प्रवृत्तौ, तत् कथमेकः पर्यनुयुज्यते ? स्वपक्षे विशेषमादर्शयन् परिहरति– ) उच्यते । प्रत्यक्षेण विलक्षणा हि अप्रत्ययपूर्वाः संनिवेशाः अतद्धेतवः स्युः ( अप्रत्ययवद्धेतवः स्युः ) । न चैवं बुद्धिरनुमेया दृष्टसालक्षण्येनाऽनुमानात् ( सा च नित्या असर्वविषया उपलब्धा अस्मदादौ इति तद्विधैवानुमातव्या, तथा च नित्यत्वसर्वविषयत्वव्याहतिः । इति दूषणस्य विशेषः) । अपि च तुल्यत्वेऽपि [ साधनदूषणयोः स्वीकृतेऽपि ] प्रतिबन्धमात्रात् दूषणं साधनमपि ( सत्प्रतिपक्षतया ), साधनं तु निरस्तप्रतिपक्षं साध्यसिद्धौ ( साधनतायामवतिष्ठते, न तु सप्रतिपक्षं प्रतिबन्धमात्रादिति ) इति ।

( कारिकायाः पश्चार्धं व्याचष्टे— ) न च बुद्धिमात्रं संनिवेशहेतुः ( किंतु ) विन्यासप्रयोजनविचारनिर्णयात्मिका प्रेक्षा ( विन्यासप्रयोजनयोः यौ विचारनिर्णयौ तदात्मिका प्रेक्षा बुद्धिविशेषः ) । न च सा तत्र ( ईश्वरे ) संभवति, स्वार्थपरार्थाभावादिति ॥ २३ ॥

[ एतावता ग्रन्थेन सर्वज्ञः कश्चिन्नियोक्ता इति मतं निराकृतम् । तत्र बौद्धनैयायिकयोगिसिद्धमतानि निराकृतानि । अथ योगसिद्धः कश्चित् साक्षात्कृतधर्मा नियोक्ता इति मतं निराकरोति । तत्र पूर्वपक्षोपन्यासं करोति— ]

**ननु मा भूत् सर्वज्ञो नियोक्ता, धर्मज्ञस्तु इष्यताम् ।** नहि रूपतश्चक्षुरादीनां विषयनियमो निरूप्यते इत्युक्तम् । कालतस्तु नियमे यदा वर्तमानत्वं तदा अतिशयवच्चक्षुरादिविषयभावो न विरुद्धः । आत्यन्तिके चावर्तमानत्वे अत्यन्ताऽसत्त्वं खपुष्पादिवत् इत्युक्तम् । तत्र ' कुरु ' इत्यर्थो धर्मः, यागादेर्विषयस्य धर्मत्वेनोपगमात् । उत्पाद्यत्वात् तस्य अप्रत्यक्षत्वं इति चेत् ( निराकरोति परः— ) उत्पन्नस्यास्तु ( प्रत्यक्षत्वम् ) । **ननु उत्पन्नमपि ( न ) स्वरूपेण धर्मः श्रेयःसाधनत्वेन तु ( धर्मः ), तच्चातीन्द्रियम् ।** ( विकल्प्य दूषयति परः— ) किं पुनरिदं श्रेयःसाधनत्वम् ? यदि तावत् शक्तिः, सा चातीन्द्रियेति । उक्तमत्र नेन्द्रियाणां परिमाणतो वा, ( स्वरूपतो वा, ) विषयनियमस्तु निरूपित इति । अथ तदा ( यागादिसमये ) असत्त्वात्, कालान्तरभावित्वात् श्रेयसः ( आमुष्मिकस्य स्वर्गादेः ) । ( उत्तरं— ) भवतु (कालान्तरभावि श्रेयः, तत्साधनत्वं तु अतिशयः यागादिसमवेतो यागादिकालः ) अन्यथा ( यागादीनां ) धर्मत्वहानेः । श्रेयःसाधनं तु वर्तमानं इति नाक्षाणां ( अतिशयवतां श्रेयःसाधनरूपो धर्मः ) अविषयः । ननु प्रागनुष्ठानात् धर्मज्ञानमिष्यते अनुष्ठातृभिः । तथा च भविष्यत्वादक्षाणामविषयः । ( परिहरति— ) नैव अधिष्ठातॄणां प्रत्यक्षं धर्मं ब्रूमः, अपि तु उपदेष्टुमति- [ देष्टुरतिइति युक्तम् ] शयवतः । स च ( अस्य ) अतिशयः स्वाभाविको महत्त्वमिव व्योम्नः उपदेशान्तरजः क्रियानिबन्धनो वा इत्यदोषः । ( कस्यचिदातोपदेशात् अष्टाङ्गयोगमवगम्य तदनुष्ठानात् तत्परिपाके सति तां तां योगभूमिमधिरूढस्य संप्रज्ञातसमाधिप्रभावादेव अयमतिशयो जायते इति । ' ननु मा भूत् ' इत्यादिना प्राप्तं निराकरोति— ) उच्यते— ' **अतुल्यकालं सामर्थ्यं कर्मणः क्षणभङ्गिनः । चिरकालफलायाऽऽहुर्न तदध्यक्षमीक्षते ॥ ' २४ ॥** ( आशुतरविनाशित्वात् कर्मणः— ) प्रलीयमानकर्मलब्धोपजनः पूर्वापराङ्गोपपादिताशब्दान्तरः देशकालाद्यासादितपरिणतिमेदः आनन्तर्यमपि ( अनन्तरमपि ) कर्मणः अतिवर्तमानः कोऽपि अतिशयः कर्तरि ( नित्यात्मनि आश्रितः ), कर्मणः चिरभाविनः फलस्य साधनं कथ्यते ( वृद्धैः ) । तदसौ न कर्मकाले वर्तमानः । स्वकाले वर्तमानोऽपि, कर्मणः अतिवृत्तत्वात् न कर्मसंबन्धितया अध्यक्षमीक्ष्यते । तदुक्तं ' **फलसाधनरूपेण तदानीं येन नास्त्यसौ** ' इति । **विवि. पृ. ११४—२३१.**

● **सर्वज्योतिः** । इदं स्वतन्त्रं कर्म, संज्ञाभेदात् । ' अथैष ज्योतिः, अथैष सर्वज्योतिः ' इति । **वि.** २।२।८.

● **सर्वनाम** च पूर्वोक्तेन शब्देन एकवाक्यतां याति । **भा.** ४।१।९।२३. ● सर्वनाम निर्दिष्टस्य प्रतिनिर्देशकम् । अथवा सर्वनाम गुणवचनत्वात् यद्यत्परामृशति तदीयं लिङ्गं संख्यां च भजते इति केचित् । सर्वनाम संनिहितस्य प्रातिपदिकार्थस्य वाचकं ( इति तत्त्वम् ) । **टुप्.** ८।१।१९।४०. ● सर्वनाम प्रकृतप्रधानपरामर्शि । **भाट्ट.** ४।१।९. ● **सर्वनामानि** निर्दिष्टप्रतिनिर्देशकानि । **सु. पृ.** ५. ● सर्वनामानि प्रकृतवाचीनि भवन्ति । **भा.** ५।३।१३।३७. ● **सर्वनाम्नः** पदान्तरसंनिधापितार्थविषयकत्वम् । **सु. पृ.** ८०९, ८२९, ● सर्वनाम्नः संनिहितालम्बनत्वात् प्रत्यभिज्ञां च विना संनिध्ययोगात् । **पृ.** ९११.

● **सर्वनामप्रातिपदिकस्य** निर्दिष्टप्रतिनिर्देशकत्वशक्तिः । **टुप्.** १२।१।१।१.

● **सर्वनामशब्दः** संनिहितवचनः । उच्चरितमात्रो यः पदार्थः शब्देन संनिहितः, तेन संबध्यते । **भा.**



९।४।१६।४९. ● **सर्वनामशब्दानां** संनिहितार्थविशेषवाचित्वान्न जातिवाचकत्वम् । वार्तिकमते तु तेषामपि जातिवाचकत्वम् ' गवादिशब्दानां सर्वनामाख्यातशब्दानामन्तर्भावार्थम् ' । **सु. पृ.** ३३१.

▓ **सर्वपृष्ठे पृष्ठशब्दात् तेषां स्यादेकदेशत्वम्, पृष्ठस्य कृतदेशत्वात् । १०।६।५।१३॥**

विश्वजिति सर्वपृष्ठे तेषां पृष्ठानां साम्नां एकदेशत्वं स्यात् एकस्मिन्नेव देशे निवेशः स्यात् । एको देशो येषां, तेषां भावः एकदेशत्वम् । पृष्ठशब्दात् 'विश्वजित् सर्वपृष्ठः ' इति सर्वपृष्ठशब्दात् एकदेशत्वम् । पृष्ठस्य च पृष्ठानां च कृतदेशत्वात् कृतो निश्चितो देशः ' माध्यंदिनपवमानादूर्ध्वं मैत्रावरुणसाम्नः प्राक् ' इत्येवंरूपः कृतो निश्चितः । तस्मिन् एकदेशे सर्वेषां पृष्ठसाम्नां निवेशः स्यात् विश्वजिति इति **पूर्वः पक्षः ।**

**विधेस्तु विप्रकर्षः स्यात् । १४ ॥**

पूर्वपक्षं तुशब्दो व्यावर्तयति । विश्वजिति सर्वपृष्ठे नैकस्मिन् देशे सर्वेषां साम्नां निवेशः किंतु विप्रकर्षः स्यात् एकस्य पृष्ठकार्ये निवेशः इतरेषां परिसामकार्ये इति । विधेः ' पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि, वैरूपं होतुः पृष्ठं, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम ' इति विधेः । तस्मात् एकस्य साम्नः पृष्ठकार्ये अन्येषां परिसामकार्ये निवेश इति **सिद्धान्तः । के.**

● सर्वपृष्ठे षण्णां पृष्ठस्तोत्राणां देशव्यवस्था एवम्— 'पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि, वैरूपं होतुः पृष्ठं, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम ' इति । **वि.** १०।६।५.

● **सर्वपृष्ठा** नाम इष्टिः । **भा.** ११।२।४।२३. ● **सर्वपृष्ठायां** किं सकृदुत्तरार्धात् स्विष्टकृते अवदेयं उत भेदेन इति चिन्तितम् ( ३।५।४।१६ ) । **टुप्.** ७।१।१।१. ● सर्वपृष्ठायां ' न बृहत्या वषट् कुर्यात् ' इति अक्षरन्यूहनविध्यर्थवादः । **संकर्ष.** ४।४।४. **मीको. पृ.** २२९३ " न बृहत्या वषट् कुर्यात् ' इति अक्षरन्यूहनविध्यर्थवादः " इत्यत्र अधिकरणं द्रष्टव्यम् । ● सर्वपृष्ठायां ' न बृहत्या वषट् कुर्यात् ' इति बृहतीपदशक्यतावच्छेदकीभूताक्षरसंख्यावच्छेदकधर्मस्य बृहतीत्वस्य प्रदानकरणतावच्छेदकत्वप्रतिषेधोऽयं न तु वाक्यान्तिमाक्षरचतुष्टयस्य याज्याया अध्यूहनविधेरर्थवादः । **संकर्ष.** ४।४।४.

▓ **सर्वपृष्ठायां न हविर्विभागमन्त्रावृत्तिः ॥**

बहुपुरोडाशानामेक एव पिण्डो यत्र विहितः, तत्र प्रदानकाले हविर्विभागस्यावश्यकत्वात् चरुपुरोडाशाधिकरणन्यायेन तदैव विभागमन्त्रः प्रयोक्तव्यः । **इति प्राप्ते,** प्रदानकालेऽप्यविभक्तानामेव हविषां प्रतिदैवतं प्रदीयमानतया हविर्विभागस्यैवाभावान्न तदङ्गमन्त्रप्रवृत्तिः । **संकर्ष.** १।३।२४.

● **सर्वपृष्ठादिषु** आनुमानिकवचनोपदिष्टानामुपदेशः । **टुप्.** ७।१।१।१.

● **सर्वपृष्ठेष्टिः** । ' इन्द्राय राथंतराय, इन्द्राय बार्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय रैवताय ' इति विशेषणभेदात् भिन्नाः षड् इन्द्राः षड् देवताः । हविर्द्रव्यं तु द्वादशकपालः पुरोडाशः, स च रथचक्रमात्रः महान् । ' प्रचरणकाले तस्य पुरोडाशस्य पूर्वार्धात् प्रथमां देवतां यजति । एवमितराः प्रदक्षिणम् । समन्तं पर्यवद्यति इति विज्ञायते ' इति **सत्याषाढः । के.**

▓ **सर्वपृष्ठेष्टिः । शेषकार्यं तन्त्रेण ॥**

**द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन् । ३।५।४।१६॥**

**भाष्यम्**— अस्ति सर्वपृष्ठेष्टिः— ' इन्द्राय राथंतराय, इन्द्राय बार्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय ' इति । तत्र पुरोडाशो बहूनां कर्मणां साधारणः । तत्र संदेहः किं प्रतिकर्म स्विष्टकृदिड कर्तव्यं सकृदेव वेति । किं प्राप्तम् ? चोदनानुग्रहात् प्रतिकर्म कर्तव्यम् । एकस्मिन्नपि द्रव्ये बहुत्वात् कर्मणाम् ।

**वा**— इदानीं सत्सु शेषकार्येषु तद्विशेषाश्चिन्त्यन्ते । तत्र सर्वपृष्ठायां अन्योन्यनिरपेक्षचतुर्थ्यन्तपरिकल्पितैः षड्भिर्गुणैः भिन्नद्रव्यदेवतासंयोगैः देवतान्तरावरुद्धयागे

देवतान्तरासंभवात् गुणेन भेदकेन षट् कर्माणि । तेषु केषांचिद्भिन्नान्येव हवींषि । अन्येषां पुनरेक एव रथचक्रमात्रः पुरोडाश आम्नातः । स यदाऽङ्गीक्रियते तदा विचारः, किं कर्मभेदात् शेषकार्याणां भेदः उत द्रव्यैकत्वात्तन्त्रमिति । ननु चैकादशविचारोऽयं तत्र निर्णेष्यते 'एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम्' (११।४। १२।४२) इत्यत्र । अत इह न विचारणीयम् । उच्यते । '**प्रतिपाद्यमिदं द्रव्यं भेदेन सहते क्रियाम् । खण्डशश्च प्रधानानामङ्गत्वान्नास्ति तन्त्रता ॥**' यद्यप्ययमेकादशानुगुणो विचारस्तथाऽपि अत्र शेषकार्यप्रसङ्गाच्छेषशेषिविचारात्मकत्वाच्च क्रियते । तत्र चैकद्रव्यत्वात्तन्त्रत्वं सिध्यति यत्र द्रव्यं तदवस्थितमेव सर्वकर्मणामुपकरोति । भेदकरणे च प्रयोजनान्तरं न दृश्यते न च कर्तुं शक्यते । खण्डशस्त्वस्य प्रधानोपयोगित्वं तदुपकारद्वारश्च संस्कारः प्रधानभेदाद्भेदं प्रतिपद्यमानो न द्रव्यैकत्वात्तन्त्रीकर्तुं शक्यते । भवति चैकदेशे प्रतिपादितेऽपि एकदेशान्तरप्रतिपादनम् । अवदानदेशानां भिन्नत्वादुत्तरार्धदक्षिणदेशभेदोऽप्यस्तीत्यावर्तनीयं स्विष्टकृदिडं गम्यते ।

**अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात् । १७ ॥**

**भाष्यम्**— सकृदेव कर्तव्यमिति ब्रूमः । अविभागाच्छेषस्य । नात्र विभागः सर्वेषां कर्मणां पुरोडाशस्य । उत्तरार्धात् स्विष्टकृदवदातव्यम् । एकश्चासावुत्तरार्धः, ततोऽवदीयमाने न गम्यते विशेषः । कस्य अवत्तम्, कस्य नेति । एवमिडायामपि । तस्मात् सकृदवदातव्यमिति ।

**वा**— सकृत्करणम् । कुतः ? '**न ह्येष कर्मसंस्कारो हूयमानस्य वेष्यते । हुतशेषसमानत्वात्तन्त्रत्वं तु प्रतीयते ॥**' कर्मसंस्कारपक्षे हूयमानसंस्कारपक्षे वा तद्भेदाद्भेदो भवेत् । शेषसंस्कारस्त्वयम् । स च शेषः साधारणः । तस्य च दक्षिणोत्तरार्धे गृह्येते । न प्रधानावदानदेशः । तस्य प्रकृतावचोदितत्वात् । ततश्च शक्यमगृह्यमाणविशेषत्वं वक्तुम् । यद्यपि ह्येकप्रधानोद्देशेनोत्तरार्धे गृह्णीयुस्तथापि तथा चोदितार्थसंपत्त्या प्रधानान्तराण्यपि कृतार्थानि भवेयुः । तस्मात् तन्त्रम् । यत्तु प्रतिपाद्यं विभवतीति, प्रतिपत्त्यन्तरे चतुर्धाकरणे तदुपयुज्यते ।

**शा**— सर्वपृष्ठायां 'इन्द्राय राथन्तराय' इत्यादीनि षट् कर्माणि विहितानि । तत्र किं प्रतिकर्म भेदेन स्विष्टकृदिडं अवेद्यं उत सकृदिति संशयः । '**तत्र कर्मबहुत्वेन प्रतिकर्मावसायिभिः । चोदकैः शेषकर्मापि प्रतिकर्म प्रदिश्यते ॥**' तस्मात् प्रतिकर्म अवदेयम् । इति प्राप्ते, सिद्धान्तमाह– '**सर्वसाधारणः शेषस्तस्मात्सकृदवद्यते । तावतैव हि सर्वेषां कृतं स्यादविशेषतः ॥**'

**सोम**— शेषकार्यप्रसङ्गात् संगतिः । सूत्रार्थस्तु– द्रव्यैकत्वेऽपि कर्मभेदात् स्विष्टकृदादीनि प्रतिकर्म भेदेन क्रियेरन् इति ।

**वि**— 'रथन्तरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते । पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥, भिद्यते कर्मणां भेदात् चोदकैः पृथगुक्तितः । शेषस्य सर्वतुल्यत्वात् तत्कार्यं सकृदिष्यताम् ॥'

**भाट्ट**— सर्वपृष्ठायामिष्टौ 'इन्द्राय राथन्तराय निर्वपति, इन्द्राय बार्हताय, इन्द्राय वैरूपाय' इत्यादि षड्हविष्कायां षड्भ्योऽपि निरुप्य सहावघातपेषणे कृत्वा प्रकृतिवत् विभागे प्राप्ते, तमकृत्वा वचनादेकमेव रथचक्रमात्रं पुरोडाशं कृत्वा 'समन्ततः पर्यवद्यति' इति वचनेन समन्ततः पर्यवदाय प्रधानानि क्रियन्ते । अत्र समन्तत इत्येव कर्मभेदतात्पर्यग्राहकम् । अन्यथा 'अग्नये कृत्तिकाभ्यः' इतिवत्कर्मैकत्वे सकृदवदानापत्तेः । याज्याभेदाद्वा कर्मभेदः । तत्र च स्विष्टकृदिडादिप्रधानभेदात्प्रत्येकं भवति । न च द्रव्यैकत्वात्तन्त्रता, अवदानप्रदेशभेदेन तत्तदुत्तरार्धादीनां भेदात् । न च संस्कारवाक्यानां परस्परान्वये प्रमाणाभावेन उत्तरार्धस्य अवदानप्रदेशप्रतियोगिकत्वाभावात् प्रकरणेन हविःप्रतियोगिकत्वप्रतीतेः तस्य च पुरोडाशैक्येन साधारणत्वात् द्रव्यैकत्वमिति वाच्यम्, तत्तद्देवतायै चतुर्मुष्टिपरिमित-



स्यैव निरुप्तस्य हविष्ट्वेन पुरोडाशस्य अत्र हविःप्रकृतितया हविष्ट्वाभावात् । न च तथाऽपि हविषः संसृष्टत्वेन साधारणत्वाद्यागकाले इन्द्राय राथन्तराय यन्निरुप्तं तत्तस्मै न मम इति प्रत्येकं संकल्पेऽपि संसृष्टोत्तरार्धादेः अगृह्यमाणविशेषत्वात् तन्त्रत्वं शेषकार्याणामिति वाच्यम्, तथाऽपि 'न ह्यत्रानूयाजान्' इतिवत् 'द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट् करोति' इत्यनेन प्रदानभेदस्य शेषकार्यभेदे हेतुत्वावगमात्तदन्यथाऽनुपपत्तिकल्पितव्याप्तिबलेन भेदोपपत्तिः । इति प्राप्ते, 'तेन ह्यन्नं क्रियते' इतिवत् विधौ लटो भूतकाललक्षणापत्तेरपेक्षितस्तुतिमात्रपरत्वावसायात्, गमकमात्रस्य च न्यायप्राप्ततन्त्रत्वबाधकत्वानुपपत्तेः सकृदेव शेषकार्याणि । 'न ह्यत्र' इत्यत्र तु लक्षणाभावाद्धेतुविधित्वमिति विशेषः । ऐन्द्रवायवे तु वचनादेव भक्षावृत्तिरिति वैषम्यम् ।

**मण्डन**— 'सर्वपृष्ठेष्टितः सकृत् ।' सर्वपृष्ठेष्टिकर्मणि प्रदत्तात् पुरोडाशात् 'सकृत्' एकमेव भवति शेषकार्यमिति शेषः ।

**शंकर**— 'तन्त्रं तत् सर्वपृष्ठायाम् ।'

* **सर्वपृष्ठेष्टौ** राथंतर–बार्हत–वैरूप–वैराज–शाक्वर–रैवताः षट् इन्द्राः । एक एव च द्वादशकपालः पुरोडाशः । 'समन्तं पर्यवद्यति' इति श्रूयते । अत्र प्रदानानां भेदः, परंतु शेषकार्यं सकृदेव कार्यम्, न षट्कृत्वः पृथक् । वि. ३।५।४.

* **सर्वपृष्ठनाम्ना** षडहपृष्ठानां विश्वजिति सर्वपृष्ठे अतिदेशः । ७।३।३।७–१२. **मीको.** पृ. २२० 'अतिदेशः विश्वजिति षडहगतपृष्ठानाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वस्वमपि** (अधिकमपि) ज्योतिष्टोमे द्वादशशतदक्षिणया ऋत्विगानत्यभावे दातव्यम् । **वि.** ६।७। ९. * **सर्वस्वस्य** विद्यमानस्यैव विश्वजिति दानम् । ६।७।४।५. **मीको.** पृ. ३६८९ 'विश्वजिति विद्यमानस्यैव सर्वस्वस्य दानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वस्वदाक्षिण्य–अदाक्षिण्ययोः** अपच्छेदयौगपद्ये विकल्पः । ६।५।१८।५१–५३. **मीको.** पृ. ४९७ 'अपच्छेदयौगपद्ये अदाक्षिण्य०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सर्वस्वदानं** अष्टरात्रगतेऽपि विश्वजिति । ६।७। ८।१४–१७. **मीको.** पृ. ७५० 'अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * सर्वस्वदानं अहर्गणस्थेऽपि विश्वजिति । **वि.** ६।७। ८. * सर्वस्वदानमेव ( न द्वादशशतं ) उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे । ६।५।२०।५५. **मीको.** पृ. ११२२ 'उद्गात्रपच्छेदस्य परत्वे०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सर्वस्वदानेऽपि** विश्वजिति, प्रतिषिद्धत्वात् अश्वादीनामदानमिति वक्ष्यति ( ६।७। ३।४ ) । **वा.** ३।४।१०।२८ पृ. ९६१.

**सर्वस्वदानन्यायः** । विश्वजिति सर्वस्वदाने पित्रादयो न देयाः ॥

**स्वदाने सर्वमविशेषात् । ६।७।१।१ ॥**

**भाष्यम्**— इदं आमनन्ति 'विश्वजिति सर्वस्वं ददाति' इति । तत्र संदेहः किं यावत्किंचित् स्वशब्देनोच्यते, यथा माता पितेत्येवमाद्यपि, तत्सर्वं देयं उत यत्र प्रभुत्वयोगेन स्वशब्दस्तदेव देयमिति । किं प्राप्तम् ? अविशेषात् माता पितेत्येवमाद्यपि दातव्यम् । ननु दानमित्युच्यते स्वत्वनिवृत्तिः, परस्वत्वापादनं च । तत्र पित्रादीनामशक्यं स्वत्वं निवर्तयितुम् । न हि कथंचित्पिता न पिता भवति । उच्यते । सत्यं नासौ न पिता भवति । शक्यते तु परविधेयः कर्तुम् । परस्वत्वापादनं च दानं ददातेरर्थः । अर्थाच्च स्वत्वत्यागः । तस्मात् सर्वं देयमिति ।

**यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् । २ ॥**

**भाष्यम्**— वाशब्देन पक्षो विपरिवर्तते । यस्य प्रभुत्वयोगेन स्वत्वं तदेव देयम्, नेतरत् । कस्मात् ? प्रभुत्वयोगिनः शक्यत्वात् । इतरस्य चाशक्यत्वात् । न हि पित्रादीनां शक्यते स्वत्वं परित्यक्तुम् । ननु चोक्तं परविधेयीकरणं तस्य शक्यमिति । उच्यते । प्रभुत्वयोगिनः स्वस्यात्र दीयमानस्य सर्वत्वमुच्यते । नाप्रभुत्वयोगिनः स्वस्य दानम् । न चैतन्न्याय्यम्, यत्पित्रादीनां परिचारकत्वम् । यस्य चैतन्न्याय्यमपि भवेत्स दद्यादपि ।

अत्राऽऽह । ननु यत्र स्वशब्दो वर्तते तद्देयमित्युक्ते पित्रादयो दातव्या गम्यन्ते । तस्मात् तान् प्रति प्रभुत्वाय स्मृतिं बाधित्वाऽपि यतितव्यमिति । अत्रोच्यते । स्वशब्दोऽयमात्मीयधनज्ञातीनां प्रत्येकं वाचको न समुदायस्य । तत्रात्मीये सर्वतायां कृतायां कृते शास्त्रार्थे, नाशक्येषु ज्ञातिषु सर्वता कल्पनीया, नापि स्मृतिर्बाधितव्या । अपि च गवादीनामात्मीयानां चोदकेन प्राप्तौ सत्यामवश्यमात्मीयगता सर्वतोपादेया । तस्यां चोपात्तायां कृतः शास्त्रार्थ इति ज्ञातीनामुपादाने न किंचित्कारणमस्ति । तस्मान्न पित्रादयो देयाः । तस्माद्यत्रैव प्रभुत्वयोगेन स्वत्वम्, तदेव देयमिति ।

**सोम**— पूर्वेषु पादेषु एकपदपर्यालोचनादविशेषतः प्रसक्तस्याधिकारस्य पदान्तरवाक्यान्तरादिबलात् व्यवस्था कथिता । इह तु यत्पदपर्यालोचनात् अविशेषतः प्रसक्तिः तत्पदबलादेव विशेषे व्यवस्थाप्यते इति पादान्तरत्वमस्य सूक्ष्मत्वात् आनन्तर्यं च ।

वि— 'सर्वस्वदाने पित्रादावपि तद्धन एव वा ।,
स्वत्वादाद्यः, पितृत्वादावत्यागाद्धन एव तत् ॥'

**भाट्ट**— विश्वजिति 'सर्वस्वं ददाति' इति श्रुतम् । तत्र पित्रादीनामपि ज्ञातित्वेन स्वशब्दवाच्यत्वात् धनवदेव दानम् । न च पित्रादिषु यथेष्टविनियोज्यत्वरूपस्वत्वस्य 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' इत्यादिस्वत्वहेत्वभावेनासंभवात्, पितृत्वाद्यतिरेकेण आत्मीयत्वाभावात् स्वत्वत्यागघटितददातिकर्मत्वानुपपत्तिः । कन्यापुत्रदानादेरपि स्मृतिभूक्तत्वेन तत्रापि स्वत्वाङ्गीकारात् । अस्तु वा तदनुरोधेन परस्वत्वापादनमेव दानपदार्थः । इति प्राप्ते, परविधेयीकरणमात्रेण लोके दानशब्दप्रयोगाभावात् स्वत्वत्यागपूर्वकपरस्वत्वापादनमेव दानपदार्थः । न च पित्रादौ स्वत्वे प्रमाणमस्ति, स्वत्वहेतूनामभावात् । कन्यादानादौ ददातेर्गौणत्वात् । न चेह तदाश्रयणं युक्तम्, स्वशब्दस्य स्वत्वाश्रयीभूतधनपरत्वेनापि उपपत्तेः । किंच अयं स्वशब्दः प्रत्येकशक्त्यैवात्मीयज्ञातिधनेषु प्रवर्तते, सर्वानुगतैकशक्यतावच्छेदकाभावात् । अतश्चैकस्मिन् प्रयोगे एकस्यैवार्थस्य ग्राह्यत्वाद्दात्यनुरोधेन धनस्यैव ग्रहणम् ।

**मण्डन**— 'सर्वस्वे ज्ञातयो न स्युः ।' सर्वस्वे विश्वजिति देयत्वेन विहिते, ज्ञातयः पित्रादयः न स्युः, अपितु गवादिधनमेव इत्याशयः ।

**शंकर**— 'सर्वस्वे जनकादि न ।'

* **सर्वस्वारः** क्रतुर्मरणकामस्य । 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति । स च यजमानमरणोत्तरमवशिष्टः ऋत्विग्भिः समापनीयः । वि. १०।२।२३. * सर्वस्वारः नाम क्रतुः शुनःकर्णः अग्निष्टोमः । शुनःकरणस्तोमः इति **सोमनाथी** । शुनःकर्णस्तोमः इत्येके शाखिन इति **कुतूहलम्** । 'मरणकामो ह्येतेन यजेत यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति विधिवाक्यम् । तत्र च 'आर्भवे प्रस्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्टय, ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य अग्निं प्रविशति' इति भाष्ये वचनमुक्तम् । 'दक्षिणेनौदुम्बरीं पत्तोदशेन वाससा संवृतो दक्षिणाशिराः संविशन् ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य म्रियेत' इति वचनं **कुतूहले** । 'आर्भवपवमाने औदुम्बरीं दक्षिणेन देशेन अहतेन वाससा परिवेष्टय ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य अग्नौ संविशति' इति वचनं **सुबोधिन्याम्** । **के.** * सर्वस्वारः नाम यागः मरणकामस्य । **संकर्ष.** ४।३।५.

**◆ सर्वस्वारः यजमानमरणोत्तरमपि समापनीयः ॥**

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् । १०।२।२३।५८ ॥**

**भाष्यम्**— अस्ति सर्वस्वारः क्रतुः, शुनःकर्णोऽग्निष्टोमः 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति । तत्र संशयः किं दिष्टगते यजमाने तदन्तं कर्मोत्स्रष्टव्यं उत परिसमापयितव्यमिति । किं तावत् प्राप्तम् ? सर्वस्वारे दिष्टगतौ यजमानस्य सत्यां तदन्तं कर्मोत्स्रष्टव्यम् । कर्मणो जीवसंयोगात् । जीवता हि शक्यम्, नाजीवता । तस्मादिदमर्थादापद्यते, सर्वस्वारेण दिष्टगत्यन्तं यजेतेति ।



**स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् । ५९ ॥**

**भाष्यम्**— स्याद्वा तस्य परिसमाप्तिः । उभयं हि प्रत्यक्षशिष्टं क्रतुः, परिसमाप्तिश्च । मरणकामो ह्येतेन यजेतेति– आरभ्य परिसमापयितव्यमित्याख्यातार्थः । तेन समाप्तिराख्यातेनैवोक्ता भवति । अपि चेदमाम्नायते 'आर्भवे प्रस्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्टय ब्राह्मणाः परिसमापयत मे यज्ञमिति संप्रेष्याग्निं विशति' इति । यदि प्रैषमात्रं स्यात्, अदृष्टार्थं भवेत् । तस्मात् संप्रेषणाद्वारलक्षणया परिसमाप्तिरेव विधीयते । यथा, 'यदि सोममपहरेयुः, विधावतेच्छतेति ब्रूयात्' इति । अथ यदुक्तम्, जीवन् कर्ता भवति, न मृतः इति । नेत्युच्यते । जीवता वचनं प्रोक्तम् । आरब्धं परिसमापयतेति । अतस्तत्कृतैवासौ परिसमाप्तिः । अत्राह । यदा असौ प्रयुक्तवांस्तदा तावत्परिसमाप्तिस्तेन न कृता । यदा परिसमाप्तिस्तदाऽसौ नास्ति । कः परिसमाप्तेः कर्तेति । अत्रोच्यते । मुक्तसंशयेनैतत्तुल्यम् । यद्भवान् मुक्तसंशयं जीवन्तं कर्तारं मन्यते तेनैतत्तुल्यम् । योऽपि परिसमापयतेति प्रैष्य परिसमाप्तिकाले जीवति, तस्यापि जीवनं परिसमापनकालेऽनुपकारकम्, पूर्वप्रैषादेवास्य कर्तृत्वमुपपद्यते इति । स च पूर्वप्रैषो जीवतोऽजीवतश्च तुल्यः । तस्माज्जीवन्निवायमपि कर्तेति । अथोच्येत । जीवतः सत्त्वात् कर्तृत्वमुपपद्यते इति । एतदपि तुल्यमेव । जीवतोऽपि, पुरुषः कर्ता, न शरीरम् । स च पतितेऽपि शरीरे पुरुषोऽस्ति । तस्मात्स एव परिसमाप्तौ कर्तेति । अथोच्येत । यजमानासंभवादशक्यं हि दिष्टगतावुत्तरं तन्त्रं कर्तुम् । अतस्तच्चोदको न प्रापयतीति । नैतदेवम् । याजमानवर्जं प्रापयिष्यति सः । तस्माददोषः । अथवा, प्रत्यक्षमेव परिसमाप्तेर्वचनम् 'ब्राह्मणाः संस्थापयत मे यज्ञम्' इति । तत्सामर्थ्यादेव याजमानं भविष्यति ।

**शा**— सर्वस्वारो नाम एकाहः स्वर्गकामस्य विहितः । तत्र आर्भवस्तोत्रकाले 'ब्राह्मणाः समापयत मे यज्ञम्' इति प्रैषं ऋत्विग्भ्यः प्रदाय यजमानो म्रियते । तस्मिन्मृते शेषं कर्म समापनीयं न वेति संशये न समाप्यम्, मृतस्य कर्तृत्वासंभवात् इति पूर्वपक्षे सिद्धान्तमाह– 'यद्यसंभवि कर्तृत्वं तत एवं भवेदिदम् । जीवन्नेव तु संप्रैषात् शिष्टे कर्तृत्वमृच्छति ॥' वरणभरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वम्, तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामिव संविधानेन संभवति । प्रत्यक्षमेव च 'समापयत' इति प्रैषेण समाप्तिश्चोद्यमाना न शक्या अपह्नोतुम् ।

**सोम**— कामनाभावान्नीचैस्तरत्वादिनिवृत्तौ किमु वक्तव्यं कामयितुरभावे इत्युत्थिते: **संगतिः** । **सूत्रार्थस्तु**– दिष्टगतौ यजमानस्य मरणे सर्वस्वारस्य समापनं न विद्यते, सर्वस्यापि कर्मणः जीवदधिकारकत्वेन मृतस्य अधिकारासंभवात् इति ।

वि– 'सर्वस्वारो मृतेरूर्ध्वं त्यज्यतां वा समाप्यताम् ।, त्यज्यतां स्वाम्यभावेन, प्रैषादन्यैः समाप्यताम् ॥'

**भाट्ट**— अस्ति सर्वस्वारो नाम यज्ञः 'मरणकामो ह्येतेन यजेत यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति वाक्येन स्वर्गार्थतया विहितः । अत्र हि न मरणं फलम्, तस्यानिष्टत्वात् । अनेकोद्देशे वाक्यभेदाच्च । अतो मरणकाम इत्यस्य अङ्गीकृतमरण इत्यर्थः । 'आर्भवे प्रस्तूयमाने अग्निं प्रविशति' इत्यनेन चोपायविधानात् मरणमत्राङ्गतया विधीयते । अतश्च मरणोत्तरकालं स क्रतुः समापनीयो न वेति चिन्तायां मृतस्यास्थियज्ञवत् कर्तृत्वासंभवात् मरणान्तस्यैव स्वर्गसाधनत्वात् न समापनीयः । इति प्राप्ते, 'आर्भवे प्रस्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्टय ब्राह्मणाः परिसमापयत मे यज्ञमिति संप्रेष्याग्निं प्रविशति' इति वचनेन समापनप्रैषविधानात्तस्य च दृष्टार्थत्वलाभाय लैङ्गिकसमाप्तिविधिकल्पकत्वावगतेस्तद्बलेन च मृतस्यापि ऋत्विक्प्रयोजकत्वोपपत्तेः समापनीय एव क्रतुः ।

यत्तु कैश्चित् प्रैषस्यैवास्य 'स्वाध्यायोऽध्येतव्यः' इतिवत् समापनविधायकत्वमित्युक्तम्, तत् ब्राह्मणा इति संबोधनेन विधिशक्तिप्रतिबन्धात् कर्मकाले प्रयोज्यत्वानुपपत्तेश्चोपेक्षितम् । वस्तुतस्तु समापनप्रैषाभावेऽपि

सकलैः क्रत्वर्थतयैव वरणभरणयोः प्रकृताविवानुष्ठानात् तद्बलेन च जीवदवस्थायामिव मृतावस्थायामपि ऋत्विजां कर्तृत्वोपपत्तिः। अत एव ज्योतिष्टोमादिकर्मान्तरेष्वनयैव दिशाऽन्तरामरणे ऋत्विग्भिः समापनम्। एवं च प्रैषस्य विधिकल्पकत्वाभावेऽपि समापनस्मारकत्वेनैव दृष्टार्थतेति ध्येयम्। २२.

**मण्डन**-- 'सर्वस्वारः समाप्यते।' २४.

**शंकर**-- 'सर्वस्वारः समाप्यते।'

* **सर्वस्वारात् परेषु यथा।** ('यथा परेषु सर्वस्वारात्' ५।३।१२।३६ सूत्रांशः) सर्वस्वारनामकात् क्रतोः परस्तात् यानि कर्माणि स्वाध्याये विहितानि, तेषां पाठः पूर्वपक्षे केवलमदृष्टार्थः स्वीकर्तव्यः स्यात्। तच्चायुक्तम्। **भा.** ५।३।१२।३६.

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्।१०।२।२३।५८॥**

सर्वस्वारः क्रतुः शुनःकर्णः अग्निष्टोमः 'मरणकामो ह्येतेन यजेत यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति विहितः। तत्र आर्भवे प्रस्तूयमाने 'औदुम्बरीं सदशेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य अग्निं विशति' इत्याम्नातम्। 'शुनःकरणस्तोमोऽग्निष्टोमः' इति सोमनाथीपाठः। शुनःकर्णस्तोम इत्येके शाखिनः आहुः इति, 'दक्षिणेनौदुम्बरीं पत्तोदशेन वाससा संवृतो दक्षिणाशिराः संविशन् ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य म्रियेत' इति च कुतूहलम्। अस्मिन् सर्वस्वारे यजमानमरणे तदन्तं कर्म उत्स्रष्टव्यं परिसमापनीयं वेति विचारे पूर्वपक्षमाह। यजमानस्य दिष्टगतौ मरणे सर्वस्वारस्य क्रतोः समापनं न विद्यते। तदन्तः क्रतुरुत्स्रष्टव्यः पूर्णाहुतिं हुत्वा। कुत? कर्मणः जीवसंयोगात् जीवेन जीवता यजमानेन संयोगात्। अत्र च यजमानस्य मृतत्वात् समापनं नास्ति इति **पूर्वः पक्षः।**

**स्याद्वोभयोः प्रत्यक्षशिष्टत्वात्।५९॥**

मरणकामस्य विहिते सर्वस्वारे क्रतौ 'आर्भवे प्रस्तूयमाने औदुम्बरीं दक्षिणेन पत्तोदशेन वाससा संवृतो दक्षिणाशिराः संविशन् ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य अग्नौ संविशति' इत्युक्तम्। तत्र यजमानमरणेऽपि क्रतुशेषः ऋत्विग्भिः समापनीयः स्यात्। उभयोः क्रतोः परिसमापनस्य चेति, प्रत्यक्षशिष्टत्वात् वचनेनैव विहितत्वात्। 'मरणकामो ह्येतेन यजेत' इत्याख्यातेनैव आरभ्य परिसमापयितव्यं इत्युक्तम्। 'ब्राह्मणाः परिसमापयत मे यज्ञम्' इति जीवता यजमानेनैव क्रतोः परिसमाप्तिः प्रेषिता। तस्मात् यजमानमरणे सत्यपि सर्वस्वारस्य समापनं स्यात् इति **सिद्धान्तः। के.**

* **सर्वस्वारे** अस्थियज्ञवत् बाध्याबाध्यविवेकः। **भा.** १०।२।२४।५९, * **सर्वस्वारे** दिष्टगतौ यजमानस्य क्रत्वर्थं शवेन कारयितव्यं शुक्रान्वारम्भणं औदुम्बरीसंमानमिति। नान्यत्। १०।२।२४।५९.

**सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गताऽऽयुराशासनादेर्न बाधः॥**

**जीवत्यवचनमायुराशिषस्तदर्थत्वात्।१०।२।२५।६१॥**

**भाष्यम्**-- सर्वस्वारे एव जीवति यजमाने भवत्येवं संशयः 'आशास्ते यजमानः' इति किमायुराशीर्वक्तव्या, उत नेति। किं प्राप्तम्? जीवत्यवचनमायुराशिषः। कुतः? तदर्थत्वात्। यत्राऽऽयुराशास्ते यजमानस्तत्र प्रस्तरं प्रयच्छत एव, एवंकामो यजमान इत्यावेदयितव्यं भवति, तद्यजमानः कथं प्राप्नुयादिति। स चायमत्र यजमानो विपरीतकामः मरणकामः। तस्मादायुराशीस्तत्र न वक्तव्या।

**वचनं वा भागित्वात् प्राग्यथोक्तात्।६२॥**

**भाष्यम्**-- उच्यते। वक्तव्याऽऽयुराशीः। भागी ह्यायुराशीर्वादः। आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति। प्रागार्भवकालादायुराशास्ते यजमानः 'आर्भवकालं यावज्जीव्यासम्' इति। चोदकश्चैवमनुग्रहीष्यते। तस्मादत्राप्यायुराशीर्वक्तव्येति।

**शा**-- सर्वस्वारे एव मरणात्प्राक् जीवदवस्थायां 'आयुराशास्ते' इत्यायुराशीर्वक्तव्या न वेति संशयः। तत्र मरणाभ्युपगमेन प्रवृत्तस्य न आशासितव्यमायुः। प्रागपि तु आर्भवकालात् मरणसंभवात् तथासति क्रतोः



वैगुण्यात् यावदार्भवकालं आशासितव्यमायुः। तस्मादायुराशीर्वक्तव्या।

**सोम**-- मरणानन्तरमस्थियज्ञवत् 'आयुराशास्ते' इत्यस्य निवृत्तिस्तथा मरणात्पूर्वमपि इत्युत्थितेः **संगतिः।** **सूत्रार्थस्तु**-- आयुराशिषो जीवत्यपि यजमाने अवचनं स्यादायुरर्थत्वात्तस्य, प्रकृते च यजमानस्य मरणार्थतया आयुषः अनपेक्षितत्वादिति।

**वि**-- 'मृतेः प्रागायुराशीर्नो स्याद्वा, नो मृतिकामनात्।, प्रागार्भवाज्जीवनार्थमायुराशासनं भवेत्॥'

**भाट्ट**-- अथ तत्रैव प्रायणीयादौ जीवद्दशायां सूक्तवाके आयुराशासनादेः करणं न वेति चिन्तायाम्, आयुषो मरणाभ्युपगमेनाप्रार्थनीयत्वाल्लोपः। इति प्राप्ते, आर्भवकालपर्यन्तं जन्मान्तरे वा आयुष आशासनसंभवादलोपः। एवमन्येषामपि फलानां 'उत्तरां देवयज्याम्' इत्यादीनामिह जन्मनि जन्मान्तरे वा आशासनसंभवादलोपः। २४.

**मण्डन**-- 'जीवत्यायुरिहाशास्यम्।' इह सर्वस्वारे, यजमाने 'जीवति' सति तृतीयसवनात् प्राक् यावत् यजमानो जीवति तावत् 'आयुः' 'आशास्यम्' आयुराशासनरूपो मन्त्रभागः पठनीय एव।

**शंकर**-- 'आयुराशीस्त्वत्र जीवति।'

**सर्वस्वारे यजमानमरणोत्तरं क्रत्वर्थं कर्तव्यम्, इतरन्न कर्तव्यम्॥**

**गते कर्मास्थियज्ञवत्।१०।२।२४।६०॥**

**भाष्यम्**-- अस्ति सर्वस्वारः क्रतुः, शुनःकर्णोऽग्निष्टोमः। 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति। तत्र दिष्टगतौ यजमानस्य सत्यां किं कर्तव्यमिति प्रश्नः। भवति चादर्शयित्वाऽपि द्वौ पक्षौ, प्रश्नेनोपक्रमः। पक्षद्वयेऽपि प्रतिभाति, भवति संशयः। सर्वाप्रसिद्धावपि भवति। यथा, को नामायं पर्वतः? का नामेयं नदी? किमिदं फलमिति? तदभिधीयते। गते कर्मास्थियज्ञवत्। दिष्टां गतिं गते यजमाने, अस्थियज्ञवत् कर्म भविष्यति। यथा, अस्थियज्ञे क्रत्वर्थं क्रियते, नान्यदस्थिभिः। एवं दिष्टामपि गतिं गते क्रत्वर्थं शवेन कारयितव्यम्। नान्यत्। यथा, शुक्रं यजमानोऽन्वारभते, यजमानेन संमितौदुम्बरी भवतीति।

**शा**-- अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यं किं नेति प्रश्नेनैवोपक्रमः। अत्रोत्तरं-- अस्थ्नां अधिकारपक्षे यथोक्तं तथा इहापि द्रष्टव्यम्।

**सोम**-- पूर्वोक्तसमापनोपजीवनेन बाध्यविशेषनिरूपणात् **संगतिः।** सूत्रे 'गते' इत्यस्य दिष्टगतिं गते यजमाने इत्यर्थः।

**वि**-- 'किं कार्यमत्र किं बाध्य, मिति प्रश्ने तदुत्तरम्। क्रत्वर्थमस्थिवत्कार्यं बाध्यते मृतकर्तृकम्॥'

**भाट्ट**-- मृते यजमाने अस्थियज्ञे मृताधिकारपक्षे यथा बाध्याबाध्यविवेकः स सर्वोऽप्यत्र द्रष्टव्यः।

**मण्डन**-- 'सर्वस्वारः समाप्यते।'

**शंकर**-- 'मृतेऽस्थियज्ञवत् कर्म।'

**सर्वस्वारे** शुनःकर्णो नाम अग्निष्टोमः 'आर्भवे स्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञं इति संप्रेष्य अग्निं विशति' इति। तत्र यजमाने दिष्टगतौ अपि कर्म समापयितव्यमेव। १०।२।२३।५८–५९. * **सर्वस्वारे** सूक्तवाके 'आयुराशास्ते' इति भागो होत्रा पठनीय एव, सूक्तवाकोत्तरं आर्भवपवमानपर्यन्तं जिजीविषुत्वात्। (त्रि.) जन्मान्तरे वा फलस्य संभवात् 'आयुराशास्ते, उत्तरां देवयज्यामाशास्ते' इत्यादि सर्वमेव पठनीयम् (भाट्ट.)। **वि.** १०।२।२५.

* **सर्वानुक्रमणिका** (शाकलसंहितायाः) कात्यायनप्रणीता। **कु.** १।२।१।१८ पृ. २८.

**सलिलादग्निरुत्थित इति न्यायः।** अयमपि पद्येनोपनिबद्धः। तथाहि-- 'विद्या हि विनयाऽवाप्त्यै सा चेदविनयावहा। किं कुर्मः कुत्र वा यामः सलिलादग्निरुत्थितः॥' इति। **साहस्री.** ९३५.

**सलिलभास्करन्यायः।** 'यथा सलिलमाविश्य बहुधा भाति भास्करः। तथा शरीराण्याविश्य बहुधा स्फुरतीश्वरः॥' इति। **साहस्री.** ९०९.

* **सवनानि** त्रीणि पशुमन्ति कर्तव्यानि। तत्रेदं वचनं 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यं-

दिने सवने, अह्नस्तृतीयसवने ' इति । टुप्. १२।२।१२।३२.

* **सवनत्रयसंबन्धिग्रहार्थता** ग्रहधर्माणाम् । ३।६।९।३०. **मीको.** पृ. १६२८ ' ग्रहधर्माधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* सन्ति ज्योतिष्टोमे दश चमसाः । तत्र मध्यतः-कारिसमाख्याकानां होतृब्रह्मोद्गातृयजमानानां चत्वारश्चमसाः, मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकाग्नीध्राणां होत्रकाणां षट् । तत्र प्रातःसवने शुक्रामन्थिप्रचारे अच्छावाकचमसवर्जं नव चमसाः **सवनमुखीयाः** प्रथममिन्द्राय हूयन्ते । कु. ३।२।१२।२७.

* **सवनवत्** ( ५।१।१७।३० सूत्रे भाष्ये च ) । यथा प्रातःसवनं दैवान्मानुषाद्वा प्रतिबन्धात् उत्कृष्यमाणं माध्यंदिनं सवनमुत्कर्षति तथा सांतपनीया उत्कृष्यमाणा प्रातरग्निहोत्रमुत्कर्षेत् इति पूर्वपक्षः । भा. ५।१।१७।३०.

* **सवनीयः** पशुरग्निष्टोमे । आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति । सवनीये च परिव्याणान्तरं ( अग्नीषोमीयार्थपरिव्याणात् ) अप्राकृतम्, यत्र त्रिवृत्त्वं दृश्यते । भा ३।६।१०।३१, * **सवनीयाः** अग्नीषोमीयश्च यदा समानविधानास्तदा अध्रिगुप्रैषे 'प्रास्मै ' इत्यस्य न विकारः । ९।३।८।२२, * सवनीयाः पशवः अश्वमेधे त्रयः-- अश्वः तूपरो गोमृगश्च । ९।४।२।१७, * सवनीयाः पशवः ( क्रतुपशवः )- आग्नेयः पशुः अग्निष्टोमे आलभ्यः । ऐन्द्राग्नः पशुरुक्थ्ये आलभ्यः । ऐन्द्रो वृष्णिः षोडशिनि आलभ्यः । सारस्वती मेषी अतिरात्रे आलभ्या इति । ३।६।७।१८, * सवनीयाः पुरोडाशाः अनुसवनं निरुप्यन्ते इति । १२।२।१२।३२, * सवनीयाः पुरोडाशाः ज्योतिष्टोमे प्रतिसवनम् । ११।४।२०।५४, * सवनीयाः पुरोडाशाः न तावत् पशुकर्म उद्दिश्य विधीयन्ते । अथ च पशुतन्त्रमध्ये विहिता भवन्ति । यस्मिन् स्थाने विहिताः तत् स्थानं पशुतन्त्रमध्ये इति । १२।२।५।१७. * **सवनीयस्य** धर्मा आतिदेशिकाः, पुरोडाशदर्शनात् । वा. ३।६।७।२६. * सवनीयस्य प्रथममुपाकरणं स्थानात् । तदुत्तरं दैक्षस्य, तदुत्तरमनूबन्ध्यस्य, प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । साद्यस्के । भाट्ट. ५।१।६. * **सवनीयानां** प्रस्तरः प्रासङ्गिकः । यदर्थश्च प्रस्तरस्तदर्थं प्रहरणम्, प्रहरणाङ्गं च सूक्तवाकः । टुप्. ११।३।१६।५४. * नं च **सवनीयानां** सूक्तवाकोऽस्ति । पाशुक एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः । भा. ११।३।१६।५४.

**सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् । १२।२।२।८ ॥**

सवनीये पशौ पशुपुरोडाशो न स्यात् न कर्तव्यः । छिद्रापिधानार्थत्वात् वपोद्धरणेन पशौ यच्छिद्रमुत्पन्नं तस्य अपिधानार्थं पुरोडाशः श्रुतः ' सुषिरो वा एतर्हि पशुः यर्हि वपामुत्खिदति, यद् व्रीहिमयः पुरोडाशो भवति, अपिधानायासुषिराय ' इति । परंतु अन्येषां सवनीयपुरोडाशानां एवमर्थत्वात् छिद्रापिधानार्थत्वस्य श्रुतत्वात् छिद्रापिधानं सवनीयैः पुरोडाशैः सिद्धम् । तच्च ' अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्तेऽपिहित्यै अच्छिद्रतायै ' इति । ततश्च कृतार्थत्वात् सवनीये पशौ पशुपुरोडाशो न कर्तव्य इति **पूर्वः पक्षः** ।

**क्रिया वा देवतार्थत्वात् । ९ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । सवनीये पशौ पशुपुरोडाशस्य क्रिया स्यात् । स कर्तव्यः देवतार्थत्वात् देवतासंस्कारार्थोऽयम् । नासौ पशुच्छिद्रापिधानार्थः । प्रत्यक्षविरोधात् । छिद्रापिधानवाक्यं तु पुरोडाशविधानार्थं अर्थवादमात्रम् । सवनीयपुरोडाशीयच्छिद्रापिधानवाक्यमपि अर्थवाद एव । तस्मात् सवनीये पशौ पशुपुरोडाशः कर्तव्यः इति **सिद्धान्तः** ।

**लिङ्गदर्शनाच्च । १० ॥**

लिङ्गस्य दर्शनाच्च सवनीये पशौ पशुपुरोडाशः कर्तव्यः । ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति तन्त्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति अतः तल्लिङ्गम् । तस्मात् कर्तव्यः इति **सिद्धान्तः** । **के.**

* सवनीये पशौ अग्नीषोमीयपशुधर्माणामतिदेशः । ८।१।६।१३. **मीको.** पृ. २१४९ ' दैक्षन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सवनीये पशौ अग्नीषोमीयस्थस्य लाक्षस्य बर्हिषः नोत्कर्षः । **संकर्ष.** १।३।१४. * सवनीये पशौ अनुयाजानामुत्कर्षः श्रूयते ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति । तत्र नानुयाजमात्रस्योत्कर्षः किंतु अनुयाजादेः सूक्तवाकशंयुवाकादीनामुत्कर्षः । वि. ५।१।१२. * सवनीये पशौ ' त्रिवृता यूपं परिवीय ' इति द्वितीयपरिव्याणं त्रिवृता विदधीत । भा. ११।३।३।४.



**सवनीये पशौ पशुपुरोडाशः कर्तव्यः ॥**

**सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् । १२।२।२।८ ॥**

**भाष्यम्**— सवनीये पशौ पुरोडाशो न स्यात्, न कर्तव्यः । कुतः ? छिद्रापिधानार्थत्वात् । पशोश्छिद्रापिधानार्थः सः । एवं श्रूयते ' सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति, यद् व्रीहिमयः पुरोडाशो भवत्यपिधानायासुषिराय ' इति । अन्येषां चैवमर्थत्वात् । तत् छिद्रापिधानमन्यैरेव क्रियते, सवनीयैः पुरोडाशैः । तत्रापि श्रूयते ' अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्तेऽपिहित्या अच्छिद्रतायै ' इति । अतः कृतार्थत्वात् पशुपुरोडाशो निवर्तते ।

**क्रिया वा, देवतार्थत्वात् । ९ ॥**

**भाष्यम्**-- कर्तव्यो वा पशुपुरोडाशः । कुतः ? देवतार्थत्वात् । देवतासंस्कारार्थोऽयं इत्येतदुक्तम्, ' अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ' इति ( १०।१।९।२३-२४ ) । न च पुरोडाशः छिद्रापिधानार्थः, प्रत्यक्षविरोधात् । अर्थवादमात्रं तत् । पुरोडाशविधानार्थं वादमात्रम् । सवनीयेष्वपि एवमेवार्थवादमात्रम् । तस्माच्चोदकप्राप्त्या कार्यः पुरोडाशः ।

**लिङ्गदर्शनाच्च । १० ॥**

**भाष्यम्**-- ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने ' इति तन्त्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति । तस्मादपि कार्यः ।

**सोम**-- यथा अग्नीनां श्रौतविनियोगविरोधात् न सामर्थ्यात् सर्वकर्मार्थत्वम्, तथा पुरोडाशस्यापि श्रौतच्छिद्रापिधानार्थत्वविरोधात् न सामर्थ्यात् देवतासंस्कारार्थत्वं इत्युत्थितेः **संगतिः** । सूत्रे अन्येषां सवनीयपुरोडाशानां एवमर्थत्वात् छिद्रापिधानार्थत्वात् इति ।

**वि**-- 'सवनीये पुरोडाशोऽतिदिष्टो नोत विद्यते ।, अन्यैः पिधानतो न स्यात् , देवसंस्कृतये भवेत् ॥ '

**भाट्ट**-- सवनीये पशुपुरोडाशः अतिदेशेन प्रातःसवनीयहविर्भिः प्रसज्यते । प्रकृतौ विहितस्य ' सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति यद् व्रीहिमयः पुरोडाशो भवति छिद्रस्यापिहित्यै ' इत्यर्थवादात् छिद्रापिधानार्थत्वम्, सवनीयहविषामपि च 'अनुसवनं सवनीया निरुप्यन्ते अपिहित्या अच्छिद्रतायै ' इत्यर्थवादादेव छिद्रापिधानार्थत्वम् । अतश्च पशुपुरोडाशकार्यस्य छिद्रापिधानस्य सवनीयहविर्भिरेव प्रसङ्गात् सिद्धेः सवनीयपशौ पशुपुरोडाशो न कार्यः । ' वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने ' इति लिङ्गाच्च विकल्पः । इति प्राप्ते, उभयत्र प्रत्यक्षविरोधात् आर्थवादिकछिद्रापिधानार्थत्वस्यानपेक्षितस्यानुपपत्तेः, पशुपुरोडाशस्य देवतासंस्कारार्थत्वस्य दशमे स्थापितत्वाच्च आरादुपकारकैः सोमाङ्गैः सवनीयहविर्भिः पुरोडाशकार्यसिद्धेरभावात् प्रसङ्गानुपपत्तिः । एवं च ' पुरोडाशेन माध्यंदिने ' इत्यस्यापि न पाक्षिकत्वकल्पनेति न विकल्पः । सिद्ध एव चायमर्थः कल्पसूत्रकाराणां न्यायोपन्यासपूर्वकं विकल्पमभिदधानानां मतनिराकरणायोक्तः ।

**मण्डन**— 'पुरोडाशः क्रतोः पशौ । ' कार्यः ।

**शंकर**-- ' नित्यः पशुपुरोडाशः । ' सवनीये ।

* सवनीये पशौ सूक्तवाकप्रैषः विक्रियते ' अग्निमद्य होतारमवृणीतायं यजमानः सुतासुती ' इति । टुप्. १२।२।१२।३१. * सवनीये पुरोडाशे पिष्टलेपफलीकरणहोमयोः आग्निमारुतादूर्ध्वमुत्कृष्टैरनुयाजैः सह नोत्कर्षः, अनुयाजानां पश्वर्थत्वात् होमयोः पुरोडाशार्थत्वात् उभयोः प्रयोगभेदात् संबन्धाभावात् । वि. ५।१।१५. * **सवनीयेषु** पुरोडाशेषु हविष्कृदाह्वानं न कर्तव्यं पश्वर्थेन प्रसङ्गसिद्धत्वात् । १२।२।३।११.

* **सवनीयाग्नीषोमीय**पशुसाधारण्यं त्रिवृत्त्वादीनां रशनाधर्माणाम् । भाट्ट. ३।६।१०.

* अग्नीषोमीयसवनीयानुबन्ध्याः पशवः ज्योतिष्टोमे । तेषां यूपस्तन्त्रम् । यूपन्यायः । भा. ११।३।३।३-४.

* **सवनीयादौ** स्तोत्रादौ च सवनान्तर्गते यथासवनं स्वरः । सु. पृ. ११८०. * **सवनीयादिषु** पशुषु अग्नीषोमीयस्य विध्यन्तः, आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्यात् च । भा. ८।१।६।१३. * सवनीयादिषु यथासवनमेव स्वरा भवन्ति । सु. पृ. ११८०.

**सवनीयादिन्यायः** । सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव प्रसङ्गः ॥

**पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् । १२।२।१२।३० ॥**

**भाष्यम्**-- सवनीये पशौ सवनीयेषु च पुरोडाशेषु प्रसङ्गे विकल्पः स्यात् । पाशुकं वा तन्त्रं सवनीयेषु प्रसज्यते, सवनीयतन्त्रं वा पशौ । कुतः ? विशेषाभावात् । नात्र पुरोडाशाः पशुतन्त्रे विधीयन्ते, न पशुः पुरोडाशतन्त्रे । उभये स्वतन्त्राः । 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति । तत्र यदि कस्यचित्तन्त्रं प्रत्यक्षशिष्टं स्यात् कस्यचिदानुमानिकम्, तदा यस्य प्रत्यक्षशिष्टम्, स तन्त्री स्यात्, इतरः प्रसङ्गभाक् । उभयोश्चाश्रुतिभूतत्वम् । पशुरपि वैकृतः, पुरोडाशा अपि । तेनायमपि विशेषो नास्ति । अतः उभयोस्तुल्यप्राप्तेरन्यतरेण कृतार्थत्वाद्विकल्पः । ननु वैकृत एवायं पशुः । तत्र वैकृतश्चेदिति संशयवचनं न युक्तम् । अत्रोच्यते । असंशयितेऽपि संशयवादो भवति । यथा '**ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः । शास्त्राणि चेत्प्रमाणं स्युर्यातास्ते परमां गतिम् ॥**'

**टुप्**— सवनीयपशोः सवनीयानां च ( पुरोडाशानां ) इतरेषु वा ( पुरोडाशेषु ) इतरस्य तन्त्रं प्रसज्यते, इतरेषां वा ( पुरोडाशानां ) इतरस्मिन् ( पशौ तन्त्रं प्रसज्यते ) । कुतः ? यतो नास्ति ईदृशी चोदना सवनीयमुपक्रम्य ( सवनीयं पशुमुपाकृत्य ) सवनीयाः ( पुरोडाशाः ) निर्वप्तव्याः ( इति ), यथा पशुपुरोडाशस्य ( पशौ उपक्रान्ते श्रवणम्, येन तन्त्रमध्यपातात् पशुतन्त्रं पुरोडाशेषु प्रसज्यते । ननु असत्यपि श्रवणे तन्मध्यपतितत्वात् निशीष्टिवत् प्रसङ्गः स्यात्, अत आह-) निशीष्टिन्यायोऽपि ( १२-२-५ ) अत्र नास्ति । तत्र हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः कृते ( सति ) ततो निमित्ते ( सति ) नैमित्तिकी निशीष्टिरापतति ( तेन ) साऽपि तन्त्रमध्ये पतत्येव ( असत्यपि श्रवणे ) । इह तु प्रातरनुवाककाले पशुसवनीययोः समानकालः प्रक्रमः । तस्मात् विकल्पः ( तन्त्रस्य ) ।

**पाशुकं वा तस्य वैशेषिकाम्नानात्, तदनर्थकं विकल्पे स्यात् । ३१ ॥**

**भाष्यम्**— पाशुकं वा तन्त्रं पुरोडाशेषु प्रसज्यते । न विकल्पः स्यात् । कुतः ? तस्य वैशेषिकाम्नानात् । पशोर्वैशेषिको धर्मस्तत्राऽऽम्नातः सूक्तवाकप्रैषः 'अग्निमद्य' इति । तदाम्नातमनर्थकं विकल्पे सति स्यात् । अन्तरेणापि ह्याम्नानं पक्षे भवत्येव सः । अतः आम्नातसामर्थ्यान्नित्योऽसौ । न च पौरोडाशिके तन्त्रे प्रसज्यते । स हि मैत्रावरुणेन प्रैषो वक्तव्यः । न च तत्र मैत्रावरुणोऽस्ति । 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति नियमात् । पशौ तु सोऽस्ति । पशुतन्त्रे प्रसज्यमाने न किंचिद्वैगुण्यम् । पुरोडाशतन्त्रे सति ऋत्विक्संख्या वा वर्जयितव्या, अमैत्रावरुणेन वाऽयं प्रैषो वक्तव्यः । उभयथाऽपि प्रकृतिविरोधः । तस्मात् नियमेन पाशुकं तन्त्रं प्रसज्यते ।

**टुप्**-- ( 'इषिता दैव्या होतारः' इत्ययं- ) दार्शिकः सूक्तवाकप्रैषः अग्नीषोमीये पशौ ( 'अग्निमद्य होतारमवृणीत' इत्येवं ) विकृतः । पुनः सवनीये पशौ ( 'अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः सुतासुती' इति ) विक्रियते । यदि ( पशौ ) पौरोडाशिकं तन्त्रं स्यात्, तत इदं नित्यवदाम्नानं पाक्षिकं कृतं स्यात् । तस्मात् नित्यवदाम्नानसामर्थ्यात् नित्यमसौ ( प्रैषः ) प्रयोक्तव्यः । (ननु प्रयुज्यतामसौ पौरोडाशिकेऽपि तन्त्रे, अत आह- ) तस्य च मैत्रावरुणेन कर्त्रा क्रियमाणस्य ( साद्गुण्यम्, तादृशेन च ) पशोः



साद्गुण्यम् । न च सवनीयानां मैत्रावरुणोऽस्ति ( तस्मात् वैगुण्यपरिहाराय पशुस्तन्त्री ) ।

**पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् । ३२ ॥**

**भाष्यम्**-- अपि च पशोस्तन्त्रस्य विप्रकर्षः 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति । तस्य विप्रकृष्टत्वात् तन्त्रमध्ये पुरोडाशानां विधानं युज्यते । प्रातःसवनीयानां तु पुरोडाशानां तन्त्रं प्रातःसवने एवापवृज्यते, 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति वचनात् । तन्मध्ये पशोः पातो न घटते, पुरोडाशाङ्गप्रचारयोर्व्यतिरेकात् । इह च प्रातःसवनीयैरेव सह पशोः संदेहः । इतरे पुनः पुरोडाशाः असंशयं पशोः प्रातःसवनीयानां वा तन्त्रमध्ये पतिताः ।

ननु 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इत्यनुयाजानामुत्कर्षात् पौरोडाशिकमपि तन्त्रं प्रततम् । नेत्याह । अयमपि पाशुकानामनुयाजानामुत्कर्षः । कथं ज्ञायते ? सोमान्ते स्वरोः प्रतिपत्तिर्दृश्यते, 'संस्थिते यज्ञे प्रस्तरं प्रास्यति सस्वरुम्, अयज्ञवैशसाय' इति । सा पश्वनुयाजैरुत्कृष्टस्य युज्यते, न पौरोडाशिकैः । तस्योत्कर्षो न प्राप्नोति । 'प्रासङ्गिकं च नोत्कर्षेदसंयोगात्' ( ५।१।१५।२८ ) इति । तेषां हि हविःप्रचारादूर्ध्वमवसरः । तद्देशश्चोत्कर्षवादः । प्रातःसवनीयानां तु येऽनुयाजा न ते तद्देशाः । अतो न तेषामुत्कर्षः । तस्मात् पाशुकं तन्त्रम् । अथ वचनमिदं कस्मान्न भवति ? परिहृतमेतत्, द्व्यर्थं वाक्यं स्यात्, प्रतिपत्तिविशेषं कालं च विदधत् । तस्मात् पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते, न विकल्पते इति ।

**टुप्**-- पशुमन्ति त्रीणि सवनानि ( कर्तव्यानि सवनीयसमाख्यया सर्वसवनीयार्थत्वावगमात् ), तत्र इदं विभागवाक्यं 'वपया प्रातःसवने प्रचरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति । एवं पशोर्विप्रकर्षः ( प्रातःसवनादारभ्य- ) आ तृतीयसवनात् विद्यते । पुरोडाशेषु ( पुनः ) 'अनुसवनं सवनीया निरुप्यन्ते' इति ( वचनम् ) । ( तत्र ) माध्यंदिने सवने ये सवनीयाः, ते तस्मिन्नेव प्रक्रम्यन्ते, परिसमाप्यन्ते च, प्रातःसवनकाले ( तेषां ) प्रक्रमस्याविधानात् । तार्तीयसवनिकानामपि अयमेव न्यायः । तस्माद्येषां तयोरेव सवनयोः प्रारम्भपरिसमाप्ती तेषां तु पशुना सह चिन्तैव नास्ति प्रसङ्गं प्रति । तेषां पशुरेव तन्त्री ( इत्यसंदिग्धं तन्मध्यपातित्वात् तेषाम् ) । येऽपि प्रातःसवने सवनीयाः, तेऽपि नैव तन्त्रिणः । कथम् ? तेऽपि हि प्रातःसवने एव प्रक्रम्यन्ते परिसमाप्यन्ते च, न ( तु ते ) पशुवत् दीर्घकालाः, वचनाभावात् । दीर्घकालस्तन्त्री भवति । पशुश्च दीर्घकालः ( इत्युक्तम् ) । तस्मात् स एव तन्त्री । यदि चैषां ( प्रातःसवनीयपुरोडाशानां ) दीर्घकालता विधीयेत ( तथा सति ), अनुयाजाः तृतीयसवने कर्तव्याः इति विधातव्यं स्यात्, ते च आग्निमारुतादूर्ध्वं कर्तव्याः, नानियमेन ( इत्यपि विधातव्यं स्यात् ) इति वाक्यं भिद्येत । पशोः पुनस्तन्त्रित्वे (सति) 'अङ्गैस्तृतीयसवने' इत्यङ्गप्रचारोत्कर्षात् अनुयाजा अपि ( तृतीयसवने ) उत्कृष्यन्ते । तेषां अनियतकाले (प्रचारे) प्राप्ते विशेषमात्रं ( इदं ) विधीयते 'आग्निमारुतादूर्ध्वं' इति । ( यत्तु अत्र भाष्यकारेण कारणान्तरमुक्तं 'सोमान्ते स्वरोः प्रतिपत्तेर्दर्शनात्' इति तदयुक्तम् ) ।

**शा**-- सवनीयः पशुः प्रातःसवने प्रारभ्यते तृतीयसवने समाप्यते । 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति सवनीयाः पुरोडाशाः प्रतिसवनं विहिताः । अनुसवनं सवनीयाः पुरोडाशाः निरुप्यन्ते इति माध्यंदिनीयानां तार्तीयसवनिकानां च पुरोडाशानां तन्त्रमध्यपातादसंदिग्धं प्रसङ्गित्वम्, प्रातःसवनिकानां पशोश्च मिथश्चिन्ता किं पुरोडाशास्तन्त्रिणः पशुः प्रसङ्गी, अथवा तन्त्री । ते प्रसङ्गिणः पशुरेव तन्त्री विपरीतं वेति । यस्य पूर्वमुपक्रमो यस्य वा पश्चात् समाप्तिः स तन्त्री इतरस्तु प्रसङ्गी, तत्रेह कस्य प्रथममुपक्रमः इति विशेषः नावगम्यते । ननु समाप्तावस्ति विशेषः पशोस्तृतीयसवने समाप्तेः स एव तन्त्री स्यात् । प्रातःसवनिकाः पुरोडाशा हि प्रातःसवने समाप्यन्ते । अतस्ते प्रसङ्गिणः । नैवम् । तेऽपि तृतीयसवने समाप्यन्ते । 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति पौरोडाशिकानूयाजोत्कर्षविधिरस्त्विति मन्यते तस्माद्-

विशेषः । उच्यते । पशुरेव तन्त्री । तत्र हि 'अग्निमद्य होतारमवृणीतायं यजमानः' इत्यादिसूक्तवाकप्रैषो मैत्रावरुणकर्तृकोऽग्नीषोमीयात् पशोश्चोदकेन प्राप्तः पुनः 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः' इत्यादिरूपेण विकृतः प्रत्यक्षेण सवनीये पशौ पठ्यते सोऽयमनर्थकः पुरोडाशानां तन्त्रित्वे स्यात्। नहि तेषामयमङ्गं नापि मैत्रावरुणस्तेषामस्ति येनायमुच्यते । विकल्पेऽपि नित्यवचनानर्थक्यम्, तस्मादनेन पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते । किंच 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इत्ययमपि पाशुकानामेव अनूयाजानामुत्कर्षः, तेषां हि अङ्गैस्तृतीयसवने इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसंबन्धे प्राप्ते प्रदेशविशेषमात्रं सुखेन विधीयते, पुरोडाशानां त्वनुसवनं निरुप्यन्ते इति वचनात् प्रातःसवनसमाप्त्यवगमात्तद्विरोधेन अयुक्तं तदीयानूयाजोत्कर्षविधानम् । तस्माद्दीक्षाकालत्वात् पशोस्तन्त्रित्वं तन्मध्यपातात् पुरोडाशाः प्रसङ्गिनः ।

**सोम**— परिधित्वपुरस्कारेण नियोजने विधिवत् इह सवनीयं पशुमुपाकृत्य सवनीयाः पुरोडाशा निर्वप्याः इत्येवं यदि पशुतन्त्रपुरस्कारेण पुरोडाशविधिः स्यात्, तदा परिधिधर्मग्रहवत् पाशुकतन्त्रग्रहनियमः स्यात् । न त्विह तथा विधिरस्ति । तस्मादनियमः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**— सवनीयपशौ सवनीयपुरोडाशेषु च प्रसङ्गे विकल्पः स्यात्, यतः पशुरयं वैकृतः, ततश्च पुरोडाशानामपि वैकृतत्वेन उभयोरपि प्रत्यक्षश्रुतधर्मकत्वाभावेन अविशेषात् एकस्य तन्त्रे परस्य विधिः, इत्यत्र प्रमाणाभावादिति ।

**वि**— 'सवनीयपुरोडाशाः प्रातःसवनगास्त्रयः । सवनीयः पशुस्तत्र तन्त्रित्वं किं विकल्प्यते ॥, पशोरेवेति नियमो हेत्वभावाद् विकल्प्यते ।, पुनः प्रैषात् स्वरुप्राप्तात् पशोरेव हि तन्त्रिता ॥'

**भाट्ट**— सवनीयपशुः वपाप्रचारादिभेदेन सवनत्रयेऽपि विततः, सवनीयपुरोडाशाश्च 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति वचनेन विहिताः । तत्र माध्यंदिनसवनिकतार्तीयसवनिकानां तावत् पशुतन्त्रमध्यपातात् विस्पष्टमेव प्रसङ्गित्वम् । प्रातःसवनिकानां तु यद्यपि सहैव पशुनोपक्रमः इति न तदालोचनया कस्य तन्त्रित्वं कस्य प्रसङ्गित्वमिति नियन्तुं शक्यम् । तथापि पशुयागस्य तृतीयसवने समाप्यमानत्वात् निशीष्टिवत् तन्त्रमध्यपातावगतेर्युक्तमेव पशुयागस्य तन्त्रित्वम्, पुरोडाशानां च प्रातःसवने एव समाप्यमानत्वात् प्रसङ्गित्वमिति नियन्तुं शक्यम् । पशुयागस्य हि प्रधानमेव तृतीयसवने । अनूयाजाश्चाग्निमारुतादूर्ध्वमुत्कृष्टास्तत्रैव । न चानूयाजानां पुरोडाशीयत्वस्यापि संभवात् पशुयागीयमात्रत्वे प्रमाणाभावः, प्रातःसवनिकपुरोडाशाङ्गभूतानूयाजानां तृतीयसवने अप्रसक्तानामेव आग्निमारुतोत्तरकालत्वविधौ गौरवात् । पाशुकानां तु प्रधानोत्कर्षेणोत्कृष्टानां आग्निमारुतोत्तरत्वस्य अध्वरकल्पावद्विधाने लाघवोपपत्तेः । अत एव तदुत्तरकालीनस्य 'अग्निमद्य होतारमवृणीतायं यजमानः' इति सूक्तवाकप्रैषस्यापि दैक्षादतिदेशेन प्राप्तस्य 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः' इत्यादियत्किञ्चिद्विकारयुक्तस्य पाठोऽपि पशुतन्त्रस्यैव विततत्वं गमयति । नह्यस्य पुरोडाशाङ्गत्वं युज्यते, तेषु दार्शिकस्य 'वीता दैव्या होतारः' इत्यस्यैव प्राप्तेः तस्यैव दैक्षवद्विकारविधौ 'अग्निमद्य' इत्यादिपदानामपि विकारतया विधानापत्तेः । अस्मन्मते तु दार्शिकस्य दैक्षे अतिदेशप्राप्तस्य 'अग्निमद्य' इत्यादिविकारस्य दैक्षप्रकरणे एव विधानात्ततोऽतिदेशप्राप्तस्य सवनीयपशौ 'सुतासुती' इत्यादिविकारमात्रस्यैव विधाने लाघवात् । यत्तु भाष्यकारेण सोमान्ते 'संस्थिते यज्ञे प्रस्तरं प्रहरति सस्वरुम्' इति पाशुकस्वरोः प्रतिपत्तिदर्शनादपि सवनीयपशुतन्त्रस्य विततत्वमित्युक्तम्, तत् स्वरोः पशुत्रयसाधारण्यादेव अन्ते प्रतिपत्तिदर्शनोपपत्तेर्नासाधारणं सवनीयतन्त्रविततत्वे लिङ्गमित्युपेक्षितम् ।

नन्वेवं 'दीक्षासु यूपं छिनत्ति' इत्यादिना पशुत्रयार्थयूपच्छेदनाद्यारम्भेण तन्त्रेण पशुत्रयप्रयोगारम्भात् अन्ते च स्वरुप्रतिपत्तिदर्शनेन तथैव समाप्तेः पशुत्रयार्थे तन्त्रेणाङ्गानि प्रयाजादीनि तन्मध्यपतित-



प्रायणीयादौ च प्रसङ्गसिद्धिरस्त्विति चेत्, आतिथ्यादौ 'चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान् यक्षन् भवति' इत्यादौ अनूयाजाभावमात्रस्य चतुर्गृहीतत्वित्वे हेतुत्वानुवादात् प्रयाजादिसत्ताप्रतीतेर्न तावत् प्रायणीयादौ प्रयाजादिप्रसङ्गापत्तिशङ्का । गमकान्तराणि चैवंविधान्यन्यान्यपि उद्भावनीयानि । अतश्च यूपछेदनादि पशुप्रयोगबहिर्भूतमेव । औपवसथ्येऽहन्येव च दैक्षप्रयोगारम्भ इति न पशुत्रयस्य तन्त्रप्रयोगत्वशङ्काऽपि । न च एवमपि दैक्षप्रयोगस्य स्वरुप्रतिपत्त्यैव समाप्तेः तन्मध्यपतितानां सवनीयपश्वादीनामपि प्रसङ्गसिद्ध्यापत्तिः, पशुपुरोडाशस्य तत्तद्देवतासंस्कारकत्वेन भेदेनैवानुष्ठेयतया, पुरोडाशेन माध्यंदिने इत्यस्याविरोधात्, अनूयाजानां च दैक्षसंबन्धिनामेवाग्निमारुतोत्तरत्वविध्युपपत्तेरिति वाच्यम् । प्रस्तरभेदे प्रमाणाभावेन सूक्तवाकप्रैषस्य द्विविधस्य द्विः पाठवैयर्थ्यात् । 'पत्नीसंयाजान्तो दैक्षः पशुः', 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इत्यादिगमकानुपपत्तेश्च । अत एव स्वरुप्रतिपत्तिरपि दैक्षादिप्रयोगबहिर्भूतैव तयोरङ्गं तत्परमापूर्वस्थापिका ज्योतिष्टोमोपकारजननानुकूलतन्निष्ठयोग्यताजनिका वेत्यपि ध्येयम् । इतरथा दैक्षपरमापूर्वोत्पादकत्वे प्रसङ्गानिवारणात् ।

**मण्डन**— 'सवनीये पशोस्तन्त्रम् ।'

**शंकर**— 'सवने पशुतन्त्रित्वम् ।'

* **सवनीयदेवताः** सोमाङ्गं न पश्वङ्गम् । भा. ११।३।१६।५२.

* **सवनीयनिर्वापोत्तरं** प्रोक्षणादय ऐष्टिकाः पदार्थाः कर्तव्याः, पश्चात् सौमिकाः प्रचरणीनिर्वापादयः ज्योतिष्टोमे प्रातरनुवाककालादौ । वि. ५।१।१३.

* **सवनीयपशुः** अग्निष्टोमे एक एव आग्नेयः । उक्थ्ये आग्नेयश्चैन्द्राग्नश्चेति द्वौ । षोडशिनि पूर्वौ द्वौ ऐन्द्रो वृष्णिस्तृतीयः । अतिरात्रे तु पूर्वे त्रयः सारस्वती मेषी च चतुर्थी । वि. ९।३।८. * सवनीयपशुरेव पूर्वमालब्धव्यः स्थानात्, साद्यस्क्रे 'सह पशूनालभते' इति सवनीयदेशे पशुत्रयालम्भे कर्तव्ये सति सवनीयः, अग्नीषोमीयः, अनुबन्ध्य इति क्रमः । भा. ५।१।६। १३ वर्णकं २. * सवनीयपशुः तन्त्री, सवनीयपुरोडाशास्तु प्रसङ्गिनः पशुसमाप्तिपूर्वभावित्वेन पशुमध्यपातित्वात् । यदीयतन्त्रमध्ये अर्थान्तरं स तन्त्री, अर्थान्तरं च प्रसङ्गि । वि. ११।३।१६, १२।२।१२ । सवनीयपुरोडाशेषु सवनीयपशुतन्त्रं प्रसज्यते । **सोम.** ११।३।१५. * सवनीयपशुः सौत्यो नाम । सुत्यायां भवः सौत्यः । वि. ८।१।७, * सवनीयपशुः सौत्येऽहनि क्रियते । 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' । ५।१।६, ३।६।७, * **सवनीयपशोः** अग्नीषोमीयपशुः प्रकृतिः । ततश्चाग्नीषोमीयविध्यन्तस्यैव अतिदेशो न तु ऐष्टिकस्य । ३।६।७, ८।१।६, ९।१।१७, * सवनीयपशोः अनुयाजाः 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति उत्कृष्यन्ते । तत्रापि अनुयाजान्ताङ्गकलापोत्कर्षः । अनुयाजाः पश्वङ्गम् । तत्रानुयाजेषु द्रव्यं पृषदाज्यम् । ११।३।१६. * सवनीयपशोः ऐककर्म्यात् प्रयोगाख्यस्य तन्त्रस्य विप्रकृष्टकालत्वेऽपि अङ्गानावृत्तिः । सु. पृ. ७७९. * सवनीयपशोः विध्यन्तः ऐकादशिनेषु अतिदेष्टव्यः, रशनाद्वय–सुत्याकालीनत्वलिङ्गाभ्याम् । वि. ८।१।७, * **सवनीयपशूनामग्नीषोमीयसमानविधानत्वे** 'प्रास्मै अग्निं' इति मन्त्रे अनूहः । कृत्वाचिन्ता । वस्तुतस्तु लिङ्गवचनयोरूहः । ९।३।८, * सवनीयपशूनामध्रिगुप्रैषे, उक्थ्ये द्विवचनत्वेन, षोडशिनि अतिरात्रे च बहुवचनत्वेन नास्त्यूहः । कृत्वाचिन्तेयम्, अस्त्येवोहः । ९।३।८, * **सवनीयपशौ** मैत्रावरुणप्रैषे पाठविकारः 'अयं यजमानः' इत्यत्र 'अयं सुतासुती यजमानः' इति । १२।२।१२, * सवनीयपशौ रशनाद्वयं चोदकप्राप्तैका, वाचनिकी च द्वितीया । द्वितीया चेयं रशना न पश्वर्था किंतु यूपार्था । वि. ८।१।७ । द्वितीयरशनायाश्च कालः 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय' इत्युक्तः । ४।४।९, * सवनीयपशौ 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति पशोरेकत्वेऽपि वपादिप्रचाराणां कालभेदेन विधानम् । ११।२।३.

* **सवनीयपशूपाकरणं**, आश्विनग्रहोत्तरं द्वितीयरशनया यूपपरिव्याणं पुनः कृत्वा कर्तव्यम् । वि. ४।४।९.

* **सवनीयपशुधर्माणां** ऐकादशिनेषु पशुषु अतिदेशः । ८।१।७।१४. **मीको**. पृ. २०० ' अतिदेशः ऐकादशिनेषु पशुषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सवनीयपशुविध्यन्तः** ऐकादशिनेषु, द्वैरशन्यस्य दर्शनात् । भा. ८।१।७।१४.

* **सवनीयपुरोडाशः** अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यंदिनीयः, द्वादशकपालः तार्तीयसवनिकः । भा. १०।५।२६।८८, * **सवनीयपुरोडाशाः** नाम धाना, करम्भः, परिवापः, पुरोडाशः, पयस्या चेति पञ्च हवींषि प्रतिसवनं ज्योतिष्टोमे ।( एषां पञ्चहविषां पुरोडाश इति नाम पुरोडाशस्य एकत्वेन अल्पत्वाख्यगौणीनिमित्तेन गौणं ज्ञेयम् ) । ३।८।२२।४२. * सवनीयपुरोडाशाः शाक्त्यानामयने तरसमयाः । ३।८।२२।४३–४४. **मीको**. पृ. ३१३६ ' मांसाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सवनीयपुरोडाशानां** देवताः सूक्तवाकस्य उत्कर्षे उत्कृष्टा एव प्रकाशयिष्यन्ते । टुप्. ११।३।१६।५४. * सवनीयपुरोडाशानां निर्वापः हविर्धानशकटाभ्यां भिन्ने शकटे । न तु हविर्धानशकटयोरन्यतरस्मिन् । भा. १२।१।७।१४–१६. * सवनीयपुरोडाशानां प्रस्तरः प्रसङ्गसिद्धः । प्रस्तरश्च पश्वर्थः । यदर्थश्च प्रस्तरः तदर्थमेव प्रहरणम्, प्रहरणाङ्गं च सूक्तवाकः । टुप्. ११।३।१६।५४. * सवनीयपुरोडाशानां सूक्तवाकः पाशुकसूक्तवाकेन प्रसङ्गसिद्धः । भा. ११।३।१६।५४, * सवनीयपुरोडाशानां होमः दार्शपौर्णमासिकैरेव पात्रैः स्यात् न सौमिकैः ग्रहचमसैः ज्योतिष्टोमे । १२।१।४।१०–११. * **सवनीयपुरोडाशे** चोदकप्राप्तौ पिष्टलेपफलीकरणहोमौ अनुयाजैः सह नोत्क्रष्टव्यौ, अनुयाजानां तु आग्निमारुतादूर्ध्वमुत्कर्षः, होमयोस्तु नोत्कर्षः, अनुयाजानां पश्वर्थत्वात् होमयोश्च पुरोडाशार्थत्वात् । वि. ५।१।१५, * सवनीयपुरोडाशे हविष्कृदाह्वानस्य पशौ कृतेन हविष्कृदाह्वानेन प्रसङ्गसिद्धिः । १२।२।३, * **सवनीयपुरोडाशयोः** पशोरेव तन्त्रिता । १२।२।१२.

* **सवनीयपुरोडाशेषु** तार्तीयसवनिकेषु हविष्कृत् पश्वर्थतया प्रसङ्गसिद्धा भेदेन नाह्वातव्या । भा. १२।२।४।१२–१३, * सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव प्रसङ्गः । १२।२।१२।३०–३२, * सवनीयपुरोडाशेषु प्रतिसवनं क्रियमाणेषु हविष्कृदाह्वानस्य आवृत्तिः ज्योतिष्टोमे । ११।४।२०।५४–५६. * सवनीयपुरोडाशेषु येषां माध्यंदिनतृतीयसवनयोः प्रारम्भपरिसमाप्ती तेषां तु पशुना सह चिन्तैव नास्ति प्रसङ्गं प्रति । तेषां पशुरेव तन्त्री । टुप्. १२।२।१२।३२. * सवनीयपुरोडाशेषु शाक्त्यानामयनगतेषु पेषणार्थमधिवापस्य मन्त्रे धान्यशब्दस्य स्थाने मांसशब्दो ग्राह्यः । ९।१।१३।३८–३९ वर्णकं २. * सवनीयपुरोडाशेषु हविष्कृदाह्वानस्यावृत्तिर्ज्योतिष्टोमे । ११।४।२०।५४–५६.

**सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावः ॥**

**हविष्कृत् सवनीयेषु न स्यात्, प्रकृतौ यदि सर्वार्था, पशुं प्रत्याहूता, सा कुर्याद्विद्यमानत्वात् । १२।२।३।११॥**

**भाष्यम्**-- सवनीयेषु पुरोडाशेषु हविष्कृदाह्वानं न कर्तव्यम् । कुतः ? पशुं प्रत्याहूताऽसौ । पशुमध्यपतिताश्च सवनीयाः । तेषु सैव विद्यमानत्वात् प्रसङ्गादुपयोक्ष्यते । नार्थः पुनराह्वानेन । ननु नैव पशोर्हविष्कृदस्ति औषधार्था, अवहननार्था वा । यथा पत्नी तुल्यवत् श्रूयते इति संकर्षे वक्ष्यति । प्रकृतौ यदि सर्वार्था, आज्यौषधसांनाय्यार्थेत्येवं कृत्वा चिन्त्यते । कृत्वाचिन्तेयम् ।

**शा**-- सवनीयपश्वर्थेन तदीयपात्रप्रोक्षणानन्तरं आहूता हविष्कृत् तन्मध्यपातिनां सवनीयपुरोडाशानां प्रसङ्गसिद्धेर्न पुनराह्वातव्या इति सिद्धमेव उत्तरविवक्षया प्राप्यते ।

**सोम**-- सत्यपि एककार्यत्वे भिन्नकालत्वात् पृथगनुष्ठानं इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**- यदि हविष्कृत् प्रकृतौ आज्यौषधसांनाय्यार्था, तदा हविष्कृत् पश्वर्थमाहूतैव विद्यमानत्वात् सवनीयपुरोडाशेऽपि उपकरिष्यति इति न पृथक् स्यादिति ।



**वि**-- ' सवनीये पुरोडाशे स्यादाहूतिर्हविष्कृतः । न वा, ऽतिदेशात् स्या, न्मैवं पश्वाह्वानात् प्रसक्तितः ॥'

**भाट्ट**— दर्शपूर्णमासयोः हविष्कृदाह्वानमवघातार्थं उत्करदेशप्रापणफलकं विहितम्, न तत् सांनाय्याद्यर्थम् । कृत्वाचिन्तया तद्यदि सर्वार्थं तदा पशावपि पात्रप्रोक्षणानन्तरमतिदेशेन प्राप्यते, अतश्च तदतिदेशेन सवनीयपशावपि पात्रप्रोक्षणानन्तरं आहूता हविष्कृत् तन्मध्यपातिनां प्रातःसवनिकमाध्यंदिनसवनिकसवनीयहविषामपि उपकरोतीति न तदर्थं पृथगाह्वातव्या । सर्वार्थत्वपक्षे हि हविष्कृदाह्वानं नोत्करदेशप्रापणफलकम्, अपितु विहारदेशप्रापणफलकम्, अतश्च विहारप्रापितायास्तस्याः कार्यनिष्पत्तिपर्यन्तं सत्त्वाद्युक्त एव प्रसङ्गः । यदि हि अवान्तरप्रकरणादवघातमात्रार्थं हविष्कृदाह्वानमुत्करदेशप्रापणफलकम्, हविष्कृत्समाख्या च अवघातकरणमात्रेणोपपन्ना, तदा एकावघाते कृते पुनः जघनेन गार्हपत्यमुपविष्टायास्तस्याः द्वितीयावघातवेलायां पुनरुत्करदेशप्रापणफलकमाह्वानमावर्तते इत्युक्तमेवैकादशे । सर्वार्थत्वपक्षे तु विहारदेशप्रापणफलकस्याह्वानस्य सकृत्करणेनैव कार्यसिद्धेर्युक्तः प्रसङ्गः ।

**मण्डन**— ' सवनीये हविष्कृन्न ।' पशौ ।

**शंकर**— ' हविष्कृच्चेत् पशौ सकृत् । '

* सवनीयपुरोडाशेषु हविष्कृदाह्वानमन्त्रः आवर्तनीयो न तन्त्रम्, कालभेदात् सवनीयपुरोडाशानाम् ( प्रातःसवनीयपुरोडाशगतहविष्कृदाह्वानेन माध्यंदिनसवनीयपुरोडाशगतहविष्कृदाह्वानस्य न सिद्धिः इत्यर्थः )। वि. ११।४।२१.

* **सवनीयपुरोडाशादीनां** सौम्यचरोश्च होमो ज्योतिष्टोमे ऐष्टिकैरेव पात्रैः, न तु सौमिकैश्चमसादिभिः । वि. १२।१।४. * **सवनीयपुरोडाशादिषु** सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां प्रसङ्गसिद्धिर्नास्ति ज्योतिष्टोमे । १२।१।४।१०–११. **मीको**. पृ. २८२८ ' प्रसङ्गो न ज्योतिष्टोमे सवनीयपुरोडाशादिषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सवनीयपुरोडाशदेवतानामप्युत्कर्षः** आग्निमारुतादूर्ध्वमनुयाजोत्कर्षेणोत्कृष्यमाणे सूक्तवाके । ११।३।१६।५५–५६. **मीको**. पृ. ८२७ ' आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सवनीयपुरोडाशदेवतानां हरिवदिन्द्र–पूषण्वदिन्द्र–सरस्वतीवदिन्द्राणाम्, आग्निमारुतादूर्ध्वमुत्कृष्टानामनुयाजानामपरि उत्कृष्टे सूक्तवाके उत्कर्षः कार्यः । **वि**. ११।३।१६.

* **सवनीयपुरोडाशशकलमेव** ऐन्द्रवायवपात्रे निधेयं न तु निधानार्थं अपूर्वपुरोडाशोत्पत्तिः । **वि**. ३।८।१९.

* **सवनीयपुरोडाशशब्देन** धाना–करम्भ–परिवाप–पुरोडाश–पयस्याख्यानां पञ्चानामपि हविषां अभिधानात् पुरोडाशशब्दस्य लिङ्गसमवायात् धानादिष्वपि प्रवृत्तिः । सु. पु. ६३८.

* **सवनीयवत्**- तद्यथा सवनीयाः पुरोडाशाः न तावत् पशुकर्म उद्दिश्य विधीयन्ते । अथ च पशुतन्त्रमध्ये विहिता भवन्ति । यस्मिन् स्थाने विहिताः, तत् स्थानं पशुतन्त्रमध्ये इति । **भा**. १२।२।५।१७.

* **सवनीयहविषां** मांसमयत्वं शाक्यानामयने । भा. ३।८।२२।४४ पृ. ११४०.

* **सवर्णेन** च ( भर्तृभिन्नेन ) उत्पादितस्य नैव वर्णान्तरत्वापत्तिः । वा. १।२।१।२ पृ. १०९.

* **सविकल्पकं** ज्ञानं द्विविधं लौकिकं अलौकिकं च । लौकिकसंनिकर्षजन्यमाद्यम् । सामान्यलक्षणा–ज्ञानलक्षणाजन्यं द्वितीयम् । **मणि**. पृ. २७. * सविकल्पकं ज्ञानम् । सविशेष्यकं सप्रकारकं ससंसर्गकं च ज्ञानं सविकल्पकम् । तच्च जातिद्रव्यगुणक्रियानामविषयकतया पञ्चधा । चाक्षुषादिभेदेन षोढा च । **मणि**. पृ. २१, ' पटो रूपवान् ' ' नीलश्चलति ' ' डित्थोऽयम् ' इति सविकल्पकं ज्ञानम् । पृ. २२. * **सविकल्पकस्यापि** ज्ञानस्य प्रमाणत्वं इष्यते मीमांसकानां सिद्धान्ते । **ऋजु**. पृ. ४१.

* **सविकल्पकज्ञानं** निर्विकल्पकेन सह पूर्वानुभूतं यत् स्वलक्षणं तस्य यदनुसंधानं अर्थान्तरघटनं योजनं तेनोत्पद्यते । निर्विकल्पकं तु न पूर्वानुसंधानेन उत्पद्यते । इति **बौद्धाः** । **ऋजु**. पृ. ४०.

✱ सवित्रादिपदानां निर्वापमन्त्रगतानां नोहः । ९।१।१२।३६–३७. मीको. पृ. २११९ 'देवस्य-त्वेतिमन्त्रन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

✱ सवित्रादिशब्दाः निर्वापमन्त्रगताः कर्मणि समवेतार्थका न सन्ति । भा. ९।१।१२।३८.

✱ 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषण-, योगो न' । इदं विशिष्टशक्तिसिद्धपदार्थैकदेशत्वकृतानन्वयानुवादकम् । मणि. पृ. १४६.

⧗ सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते इति न्यायः । साहस्री. ६८६.

✱ 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः' इति न्यायः । गोविन्दभाष्ये १।४।२६ ब्रसू. ✱ 'सविशेषणे विधिनिषेधौ विशेषणे संक्रामतो विशेष्यबाधे' इति न्यायेन 'स्वर्गी ध्वस्तः' 'लोहितोष्णीषाः' इत्यादिवत् विशेषणीभूतेऽपि रथंतरसामत्वे संक्रमणं नानुपपन्नम् । कौ. २।३।१।२ पृ. ११.

⧗ सविशेषणे हि वर्तमानौ विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसंक्रामतः इति न्यायः । यथा घटाकाशमानय न मण्याकाशमित्यानयनविषयौ विधिनिषेधौ विशेष्याकाशे बाधात् घटादिरूपं विशेषणमुपसंक्रामतः, तथा प्रकृतेऽपि इति । साहस्री. १५६.

✱ सविशेषणे हि विधिनिषेधौ, सति विशेष्ये बाधे विशेषणमुपसंक्रामतः इति न्यायः । स्वर्गकामस्य भाव्यत्वेन अन्वये विशेष्ये पुरुषे भाव्यत्वासंभवेऽपि 'सविशेषणे हि॰' इति न्यायेन स्वर्गे भाव्यत्वोपपत्तिः । वृ. ६।१।१।२. ✱ द्वैधीभावानुकूलव्यापारे उद्यमनादौ कुठारः करणं इत्युक्ते 'सविशेषणे हि॰' इति न्यायेन द्वैधीभावनिष्पत्तौ कुठारः करणं इति पर्यवस्यति । एवं 'यजेत स्वर्गकामः' इत्यत्रापि दृष्टादृष्टोपकारविशिष्टतया यागस्य अवघातप्रयाजादिरूपे कर्तृव्यापारे स्वर्गानुकूलव्यापारत्वरूपापन्ने साधनत्वं 'सविशेषणे हि॰' इति न्यायेन स्वर्गोत्पत्तौ पर्यवस्यति । एतन्मूलक एव भावनाभाव्यनिर्वर्तकत्वं करणत्वं इति प्रवादः । इति यत्तु तन्न । कु. २।१।१।२ पृ. १२६, ३।३।४।१०.

✱ सव्यशब्दः रूक्षे भाष्यते । सव्या वपा इति अनभिघृततां दर्शयति । भा. ४।१।१४।३६.

✱ 'सस्यं नाश्नीयात्' (आग्रयणाकरणे) । संकर्ष. ३।१।११.

✱ सस्यादिषु कर्षणाद्यावृत्तिकृतो भूयानुपकारः फलं वर्धयति । वि. ११।१।७.

✱ सस्यभेदेन आग्रयणमेकस्मिन्नपि संवत्सरे भेदेन कर्तव्यम् । संकर्ष. ३।१।८. मीको. पृ. ८५२ 'आग्रयणं एकस्मिन्नपि संवत्सरे॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

✱ 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' । अत्र एतावानेवार्थो विज्ञायते— सत्स्वपि दशसु पुत्रेषु सैव वहतीति । (अतः एतदवगम्यते विनाऽपि कार्ययोगित्वेन सहशब्दप्रयोगो भवतीति) । वा. ३।२।१४।३६. ✱ 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र पुत्राणां वोढृत्वादर्शनात् । वि. ३।२।१४ । अयुक्तमिदं प्रत्यक्षविरोधादिति केवलः । ✱ 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' सहयोगिन्या तृतीयया सतम्यर्थलाभः । सु. पृ. ४१२. ✱ 'सह पशूनालभते' इति साद्यस्के सवनीयकाले त्रयाणामालम्भे सवनीयपशुरेव पूर्वमालब्धव्यः, स्थानात् । सवनीयः, अग्नीषोमीयः, अनुबन्ध्य इति क्रमः । भा. ५।१।६।१३ वर्णकं २. ✱ 'सह भोजनं भार्यापत्यमित्रैः' अनाचारः उदीच्यानाम् । वा. १।३।३।७ पृ. २०४. ✱ 'सह शाखया प्रस्तरं प्रहरति' इति शाखाप्रहरणं प्रतिपत्तिः, न अर्थकर्म, दर्शपूर्णमासयोः । शाखाप्रहरणाधिकरणम् । ४।२।४।१०–१३.

⧗ सहाधिकाराधिकरणम् । दंपत्योः कर्मसु सहाधिकारः । पत्नीन्यायः । पत्न्यधिकरणम् ॥

**स्ववस्तोतु वचनादैककर्म्यं स्यात् । ६।१।४।१७॥**

भाष्यम्— स्ववन्तावुभावपि दंपती इत्येवं तावत् स्थितम् । तत्र संदेहः किं पृथक् पत्नी यजेत, पृथक्



यजमानः, उत संभूय यजेयातामिति । किं प्राप्तम् ? पृथक्त्वेन । कुतः ? एकवचनस्य विवक्षितत्वात् । उपादेयत्वेन कर्ता यजेतेति श्रूयते । तस्मादेकवचनं विवक्ष्यते । यथा न द्वौ पुरुषौ संभूय यजेयाताम्, तथा अत्रापि द्रष्टव्यम् । एवं प्राप्ते, ब्रूमः । स्ववतोस्तु वचनादैककर्म्यं स्यात् । वचनात् तयोः सहक्रिया । एवं हि स्मरन्ति 'धर्मे चार्थे च कामे च नातिचरितव्या' इति । तथा 'सह धर्मश्चरितव्यः, सहापत्यमुत्पादयितव्यम्' इति । उच्यते । स्मृतिवचनेन न श्रुतिवचनं युक्तं बाधितुम् । नेति ब्रूमः । इह किंचित्कर्म स्त्रीपुंसकर्तृकमेव, यथा दर्शपूर्णमासौ ज्योतिष्टोम इति । यत्र पत्न्यवेक्षितेन यजमानावेक्षितेन च आज्येन होम उच्यते, तत्रान्यतराभावे वैगुण्यम् ।

ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यम्, स्त्रिया यजमानायाः पत्न्यवेक्षितं भविष्यतीति । नेत्याह । नायमीक्षितृसंस्कारः । ईक्षितुः संस्कारो यदि, तदैवं स्यात् । आज्यसंस्कारश्चायम् । गुणभूतौ ईक्षितारौ । तत्रान्यतरापाये नियतं वैगुण्यम् । सर्वाङ्गोपसंहारी च प्रयोगवचनः । तत्रैतत् स्यात् । स्त्री यजमाना पुमांसं परिक्रेष्यत्याज्यस्येक्षितारम्, पुमांश्च स्त्रियं त्ववेक्षित्रीमिति । तच्च न । पत्नीति हि यज्ञस्य स्वामिनीत्युच्यते, न क्रीता । पत्नीति संबन्धिशब्दोऽयम् । यजमान इति च स्वामी, न क्रीतः । तस्मात् स्त्रीपुंसयोरेकमेवंजातीयकं कर्मेति । तत्र श्रुतिसामर्थ्याद्यः कश्चिद्यया कयाचित्संभूय यजेत । इति प्राप्ते, इदमुच्यते । यस्त्वया कश्चिद्धर्मः कयाचित्सह कर्तव्यः सोऽनया सहेति । तेन न श्रुतिविरोधः स्मृतेरिति गम्यते । अथ यदुक्तम्, केवलस्य पुंसोऽधिकारः, केवलायाश्च स्त्रियाः । यजेतेत्येकवचनस्य विवक्षितत्वादिति । तत्परिहर्तव्यम् ।

इदं तावदयं प्रष्टव्यः । यजेतेत्येकवचने विवक्षिते, कथं षोडशभिर्ऋत्विग्भिः सह यागो भवतीति । एवमुच्यते, प्रतिकारकं क्रियाभेदः । याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन्, यजते इत्युच्यते यजमानः । आध्वर्यवानेव कुर्वन् अध्वर्युर्यजतीत्येवमुच्यते । यथा संभरणमेव कुर्वती स्थाली पक्तिं करोतीत्युच्यते । यस्य च कारकस्य य आत्मीयो व्यापारः, स एकवचने विवक्षिते, एकेन कर्तव्यो भवतीति । एवं चेद्यावान् व्यापारो यजमानस्य, तावान् न संभूय कर्तव्यः । एकैको याजमानोऽपरेणापरः । द्वादशे वा शते, एकेन षट्पञ्चाशत् अपरेणापि षट्पञ्चाशदिति । इह तु पत्नीव्यापारोऽन्य एव । न तत्र पत्नी प्रवर्तमाना यजमानस्यैकत्वं विहन्ति । यथा अध्वर्युराध्वर्यवेषु प्रवर्तमानः । अवश्यं च सह पत्न्या यष्टव्यम् । मध्यगं हीदं दंपत्योर्धनम् । तत्र यागोऽवश्यं सह पत्न्या कर्तव्यः । इतरथा अन्यतरानिच्छायां त्याग एव न संवर्तेत । तथा हि द्वितीयया पत्न्या विना त्यागो नैवावकल्पते । यस्य द्वितीया पत्न्यस्ति, तत्र क्रत्वर्थान् एका करिष्यति । कर्तृसंस्कारार्थेषु नैव दोषः । संभवन्ति हि तानि सर्वत्रेति ।

टुप्— पत्नी आज्यमवेक्षते, यजमानश्चेति तस्मात् द्विरवेक्षणसंस्कृतमाज्यं प्रयोगाङ्गम् । एकावेक्षणे वैगुण्यं स्यात् । पत्नी च न या काचित् । किं तर्हि ? यज्ञस्वामिन्यां पत्नीशब्दं स्मरन्ति । एवं यजमानशब्दमपि । तस्माद्यादृशं कर्तृत्वमितिकर्तव्यतापेक्षायामवगतम्, तादृशं प्रयोगवचन उपसंगृह्णाति । अध्वर्य्वाद्युपन्यासस्त्वयुक्तः । कथं व्यापारान्तरे अध्वर्य्वादीनां कर्तृत्वात्तत्रैकवचनस्य नास्ति विघातः । पत्नीयजमानयोस्तु य ऋत्विगानमने देवतोद्देशे च व्यापारः स एक इत्येकसंख्या विरुध्यते । तस्माद्यद्येको देवतोद्देशेन परित्यागं कुर्यादितरो याजमानम्, नैवं विरोधः स्यात् । तस्मात् द्वयोः कर्तृत्वतुल्यत्वाद्विरोधः । 'अवश्यं च पत्न्या सह यष्टव्यम्' इत्यादिस्त्वयुक्तो ग्रन्थः । कथम् ? उद्वाहकाले एवानयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितम् । 'धर्मे चार्थे च कामे च नातिचरितव्या' इति प्रतिपादितत्वात् । यस्त्यागः स इतरेतरसंसृष्टयोरेव । कथमेकवचनम् । द्वयोश्चैतयोः संसृष्टकर्तृता । तत्रैकवचनमुपपद्यते एव संसर्गाभिप्रायं मिथुनकारकाभिप्रायं वा । तयोश्च विभागः प्रतिषिद्धः 'न भर्त्रा सह विभजेत' इति । तस्मान्नास्ति भिन्नयोः कर्तृता ।

**लिङ्गदर्शनाच्च । १८ ॥**

**भाष्यम्**-- लिङ्गं खल्वपि दृश्यते 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं मिथुनत्वाय' इति । यदि स्त्रीपुंसावेकत्र, योक्त्रस्य मेखलायाश्च विभागो वाक्यात् गम्यते, मिथुनसंस्तवश्च । तदेतत्स्त्रीपुंससाधनके कर्मण्युपपद्यते, नान्यथा ।

**सोम**— पत्न्याः न प्राभाकरमत इव अनुमतिमात्रेण कर्तृत्वं ( पत्युः ), अनुमते यजिधात्वर्थत्वाभावेन अनुमत्या तदनुकूलाचरणेऽपि अध्वर्य्वादिवत् यागकर्तृत्वानुपपत्तेः । अतो न केवलं यजमानेनैव देवतोद्देशेन द्रव्यत्यागः कर्तव्यः, किंतु पत्न्या अपि इति व्यासक्तमेव तयोः कर्तृत्वम् । संसृष्टस्य अन्यतरत्यागमात्रात् न स्वत्वं निवर्तते, किंतु उभयत्यागेनेति प्रत्येकसमवेतव्यापारस्य अवयवरूपतया वाच्यत्वेन कृत्स्नायाः क्रियायाः प्रत्येकपर्यवसानाभावेन तस्या उभयत्र व्यासक्तत्वात् कर्तृत्वस्यापि ऐक्योपपत्तेः । **सूत्रार्थस्तु**— स्ववतोः द्रव्यवतोः आज्यावेक्षणान्वारम्भादिवचनात् ऐककर्म्यं सह प्रयोगः स्यादिति ।

**वि**— 'दंपतिभ्यां पृथक् कार्यं सह वा, ऽऽख्यातसंख्यया । पृथ, ङ्मैवमवैगुण्यात् कर्त्रैक्यं दैवतैक्यवत् ॥'

**भाट्ट**-- सिद्धे द्वयोरप्यधिकारे, किं दंपती पृथक् पृथक् यजेयातां उत सह इति चिन्तायां स्वर्गकामपदोपात्तस्य एकत्वस्य पुंस्त्ववत् अविवक्षितत्वेऽपि आख्यातोपात्तस्य तस्य गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वात् एकैकशः प्रयोगः । इति प्राप्ते, प्रत्येकप्रयोगे अन्यतरकर्तृकाज्यावेक्षणान्वारम्भणादिपदार्थलोपेन वैगुण्यापत्तेः, अन्यतरेण अन्यतरस्य परिक्रयादिना उपादाने च फलभोक्तृत्वाभावात् स्वामित्ववाचिपत्नीयजमानशब्दप्रयोगानुपपत्तेः अङ्गसाकल्यार्थं सहैव प्रयोगः । न हि आज्यावेक्षणादीनां कर्तृसंस्कारकत्वम्, येन तत्तत्प्रयोगे व्यवस्था लभ्येत । क्रतुधर्मत्वात्तु उभयकर्तृकमवेक्षणद्वयं अदृष्टविधया क्रतोरङ्गम् । यत्र तु अन्यतररोगनिवृत्त्यर्थमेव दर्शादिप्रयोगः तत्र इतरस्य पत्नीत्वाद्यभावेऽपि 'गुणलोपे च' (१०।२।२७।६३) इति न्यायेन परिक्रयाद्युपात्तेतरकर्तृकाज्यावेक्षणेऽपि न सर्वत्र तथा कल्पनायां प्रमाणमस्ति । साहित्यस्य पुण्यफलेष्वपि स्मृत्यादिप्रमितत्वात्, 'धर्मे च' इत्यादिवाक्यपर्यालोचनया च तयोः संसृष्टद्रव्यत्वात् विभागप्रतिषेधाच्च सहैव प्रयोगः । अत एव उभयस्वत्वस्य संसृष्टत्वात् द्रव्यत्यागे दक्षिणादानादौ च उभयोरेव कर्तृत्वम् । यत्तु भाष्ये द्वादशशते षट्पञ्चाशदेकेन अपरेणापि तावदेव इत्येवं विभागः कथितः, स द्वादशशतस्यैव विहितत्वात् तत्रापि उभयोः संसृष्टस्वत्वोपपत्तेः उपेक्षितः । द्वादशशतद्वयनिवृत्तौ वा भाष्यतात्पर्यम् । यदपि तत्स्वारस्यात् पुंस एव त्यागे कर्तृत्वम्, तस्या अपि अनुमतिद्वारा तत् इति केषांचिन्मतम्, तत् अनुमतेः फलसंबन्धाश्रवणात् तद्द्वारकत्वे प्रमाणाभावेन पूर्वाधिकरणव्युत्पादिताधिकारभङ्गापत्तेः उपेक्षितम् । यत्तु आख्यातोपात्तं एकत्वं सहाधिकारे नावकल्पते इति, तन्न, एकवचनश्रवणादेव दंपत्योः व्यासज्यवृत्त्येकस्यैव कर्तृत्वस्य कल्पनात्, इतरथा कर्तृभेदात् सत्रवत् द्विवचनाद्यापत्तेः । अत एव क्रियाक्षिप्तयोः कर्तृत्वतदाश्रययोर्मध्ये आवश्यकत्वात् कर्तृत्वांशे एव शाब्दत्वसिद्ध्यर्थं लक्षणामङ्गीकृत्य तत्रैव पार्ष्ठिकैकत्वाद्यन्वयः, 'क्षौमे वसानौ' इत्यादौ तु अगत्या, क्वचित् तदाश्रयेऽपि । अत्र च कर्तृत्वं कृत्याश्रयत्वसमनियतं अखण्डोपाधिरूपं द्रष्टव्यम् । न तु कृत्याश्रयत्वमेव, तस्य प्रत्यात्मं कृतिभेदेन भेदात् व्यासज्यवृत्तित्वानुपपत्तेः । तस्मात् सह प्रयोगः ।

**मण्डन**— 'दंपत्योश्च यजिः सह ।'

**शंकर**-- 'दंपत्योश्च सहैवासौ ।' असौ अधिक्रिया ।

* **सहानुष्ठीयमानेषु** प्रधानेषु धर्मविरोधे भूयसां सधर्मत्वम् । १२।२।७।२२. **मीको.** पृ. ३०६७ 'भूयोऽनुग्रहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सहकारन्यायः** । एकफलाकाङ्क्षया तदाराधनं अन्यदपि फलं प्रयच्छति । **न्यायसंग्रहः.**

**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमिति न्यायः** । यथा रामलक्ष्मणाविति । अत्र दाशरथेः रामस्य ग्रहणं न तु परशुरामबलरामयोः, लक्ष्मणसाहचर्यात् इत्यन्यत्रापि बोध्यमिति संक्षेपः । **साहस्री.** ६६.



* **सहजा** शक्तिः, 'शक्तिवादः' **मीको.** पृ. ३८१० इत्यत्र द्रष्टव्यम् । **मणि.** पृ. ४१.

* **सहत्वानुग्रहाय** वाजपेये प्राजापत्यपशुषु एकजातीयधर्मानुसमयः कर्तव्यः । पदार्थानुसमयन्यायः । **भा.** ५।२।१।१–३.

* **सहभावः** त्रिप्रकारः । एकस्तावत् उभावपि प्रधानभूतौ । अपरः द्वावपि गुणभूतौ । अन्यः एकः प्रधानभूतः इतरो गुणभूत इति । **वा.** ४।२।४।१०.

* **सहभोजनम्** । सोमेनानुच्छिष्टत्वे, तत्कृते च अदृष्टदोषाभावे प्रत्यक्षेणैव सहभोजनात् व्यलीकोत्पत्तेरुपपत्तेः अनुज्ञावसरो भवति । **वा.** ३।५।१७।४२.

* **सहभोजनादि** ( एकपात्रे ) आचरितुकामः चित्तमन्यस्य अनुकूलयति, तदेतन्नानापात्रेषु नैव संभवति । **भा.** ३।५।१७।४३.

* **सहयोगे** यत्र तृतीया तस्य गुणभावः । यत्र द्वितीया तस्य प्राधान्यम् । **भा.** ४।२।४।१०.

* **सहवासी** तु पञ्चमः । ब्रह्महत्यातिरिक्तमहापापकारिणः अपरिहरणं अनाचारः उदीच्यानां दाक्षिणात्यानां च । **वा.** १।३।३।७ पृ. २०४.

* विनापि कार्ययोगित्वेन **सहशब्दप्रयोगात्** । तद्यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' । तत्र हि एतावानेवार्थो विज्ञायते, सत्स्वपि दशसु पुत्रेषु सैव वहतीति । **वा.** ३।२।१४।३६.

* **'सहस्रं** चिन्वीत प्रथमं चिन्वानः' । **संकर्ष.** २।१।१२. * 'सहस्रं चिन्वीत' इति सहस्रशब्दः न क्रतुपरः अग्निचयने । **संकर्ष.** २।१।१२. **मीको.** पृ. ५३ "अग्निचयने 'सहस्रं चिन्वीत' इति सहस्रशब्दः न क्रतुपरः" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* 'सहस्रस्य प्रमा असि' इति मन्त्रः सर्वचित्यङ्गं अग्निचयने । **संकर्ष.** २।१।१४. **मीको.** पृ. ५३ "अग्निचयने 'सहस्रस्य प्रमा असि' इति मन्त्रः०" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सहस्राधिकस्य** आधाने दानस्य अपरिमितत्वं नाम । ६।७।११।२३–२५. **मीको.** पृ. १२२ 'आधाने दक्षिणानां अपरिमितत्वं सहस्राधिकत्वम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सहस्राश्वप्रतिग्रहणस्थले** एकैकस्य एकदा सर्वधर्मानुष्ठानम् । **वि.** ५।२।२.

* **सहस्रमण्डपः** इति पदप्रयोगः सहस्रस्तम्भघटिते मण्डपे ज्ञेयः । **संकर्ष.** २।१।१३.

* **सहस्रवत्** । यथा अतिरात्रः सहस्रमहानि । 'अतिरात्रेण सहस्रसाध्येन यजेत' इति अधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः । **भा.** १०।६।१३।३७. ( तत्र हि प्रमाणान्तरेण संख्येयावगमात् अधिके सहस्रशब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते । **के.** )

* **सहस्रसंवत्सरं** कर्म दिवसेष्वेव कल्पयितव्यम् । **भा.** ६।१।२।५.

**सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु । ६।७।१३।३१ ॥**

'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः' इत्युक्त्वा तावन्तः पञ्चदशाः, तावन्तः सप्तदशाः, तावन्त एकविंशाः इति चोक्त्वा 'विश्वसृजामयनं सहस्रसंवत्सरं' इति विश्वसृजामयनं नाम सत्रं सहस्रसंवत्सरं प्रतिपादितम् । ( पञ्चपञ्चाशतः नाम २५० । तत्र २५० त्रिवृतः + २५० पञ्चदशाः + २५० सप्तदशाः + २५० एकविंशाः = १००० ) मनुष्येषु तावत आयुषः असंभवात् ये तदायुषः तत् तावत् सहस्रसंवत्सरात्मकं आयुर्येषां तेषां तदायुषां गन्धर्वादीनां सहस्रसंवत्सरं सत्रं स्यात्, न मनुष्याणां इति **प्रथमः पूर्वपक्षः** ।

**अपिवा तदधिकारान्मनुष्यधर्मः स्यात् । ३२ ॥**

'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः' इत्यादिना उक्तं सहस्रसंवत्सरं सत्रं तावदायुषां गन्धर्वादीनां स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं 'अपिवा' इति शब्देन निरस्यन् द्वितीयं पूर्वपक्षमाह । शास्त्रीये कर्मणि तदधिकारात् तस्य मनुष्यस्यैव अधिकारात् मनुष्यधर्मः मनुष्याणामेव धर्मः सहस्रसंवत्सरं स्यात् । गन्धर्वादीनां तु नात्रा-

धिकारः । वैद्यकोक्तरसायनसेवनेन तु मनुष्या दीर्घमायुर्लप्स्यन्ते सत्रं च करिष्यन्ति ।

**नासामर्थ्यात् । ३३ ॥**

सहस्रसंवत्सरं सत्रं रसायनसेवनसिद्धानां मनुष्याणामेव धर्मः इति द्वितीयं पूर्वपक्षं निषेधति । न मनुष्यधर्मः सहस्रसंवत्सरम् । असामर्थ्यात् मनुष्याणां तावज्जीवितुं सामर्थ्याभावात् । नापि रसायनानां एतावत्सामर्थ्यम् । येन सहस्रसंवत्सरं जीवेयुः ।

**संबन्धादर्शनात् । ३४ ॥**

सहस्रसंवत्सरं सत्रं रसायनसेवनसिद्धानां मनुष्याणां धर्म इति द्वितीयपूर्वपक्षे निषिद्धे रसायनसिद्धानां तावदायुष्ट्वं सेत्स्यति इत्यंशे विशेषकथनार्थं सूत्रम् । संबन्धादर्शनात् रसायनानां तावदायुषा संबन्धस्य अदर्शनात् । रसायनानां जठराग्निवर्धनादिसामर्थ्येऽपि सहस्रायुष्ट्वप्रदानसामर्थ्यं नास्तीति भावः ।

**स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् । ३५ ॥**

सहस्रसंवत्सरं सत्रं मनुष्यधर्म एव । परंतु सः कुलकल्पः स्यात् । एकस्मिन् पुरुषे असंभवात् । सत्रारम्भकमनुष्याणां कुलेषु जनिष्यमाणैः पुत्रपौत्रप्रपौत्रादिभिः सहस्रसंवत्सरपर्यन्तं तत्सत्रमनुष्ठेयम् । एवं कुलानां कल्पः सहस्रसंवत्सरं सत्रं इति कार्ष्णाजिनिराचार्यो मन्यते स्म । यथा अन्येऽपि कुलपरंपरागता धर्मा भवन्ति तद्वत् । वृत्तौ तु स कुल्यः इति पाठः । तत्र कुले भवः कुल्यः, कुलधर्मः इत्येवार्थः । अयं तृतीयः पक्षः ।

**अपिवा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् । ३६ ॥**

सहस्रसंवत्सरं सत्रं मनुष्याणामेव, परंतु कुलधर्मः स्यात् इति तृतीयं पक्षं पूर्वसूत्रेण प्राप्तं अपिवाशब्देन निरस्यन् तत्र विशेषमाह । एकस्यैव कृत्स्नसंयोगात् एकस्यैव प्रयोगः स्यात् इत्यन्वयः । कृत्स्नेन यागेन एकैकस्य यजमानस्य संयोगो विधीयते ' यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्तः स एवाधिक्रियते ' इति । तस्मात् एकस्यैव व्यक्तिभूतस्य प्रयोगः अनुष्ठानं स्यात्, न कुलस्य इति तृतीयोऽपि पक्षः अयुक्त एव ।

अत्र भाष्ये अन्येऽपि केचित् पक्षा आशङ्क्य निराकृताः । तद्यथा- एवं तर्हि एतदध्यवसेयम्, वचनप्रामाण्यात् एतत् कर्म कुर्वतां आयुर्वर्धते इति । तच्च न, प्रमाणाभावात् । नहि एतस्मिन्नर्थे वाक्यमन्यद्वा प्रमाणमस्ति । ननु अर्थापत्तिः प्रमाणम्, अन्यथा विध्यानर्थक्यं भविष्यतीति । नानर्थक्यम् । सत्रप्रतिपादकवाक्याध्ययनादेव सत्राद्दष्टं भविष्यति । तथाहि सामान्येन अदृष्टं कल्पयितुं लघीयः, न तु कर्मणा आयुर्वर्धते इति विशेषादृष्टकल्पना । अथवा आनर्थक्यमेव अभ्युपगम्येत कामम्, न युक्तिशून्यं फलकल्पनम् ।

**अथोच्येत** । अर्धतृतीयानि शतानि ( २५० मनुष्याः समं- ) दीक्षिष्यन्ते, चतुर्भिर्वर्षैः समाप्यते इति । एवमपि नियतपरिमाणं हीयेत, ' चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन् ' इति । वचनस्य तु आनर्थक्यपरिहाराय परिमाणं हापयिष्यते इति चेत् । तदयुक्तम् । अध्ययनात् फलमस्ति इत्युक्तम् । तस्मान्नैषा कल्पनेति । इति ।

' अपित्राऽकृत्स्नसंयोगात् ' इत्येतावदेव सूत्रं **कुतूहले** । न कुलकल्पः, केनापि एकेन यजमानेन यागस्य कृत्स्नसंयोगः न संभवति इति । इति तदर्थः ।

**विप्रतिषेधात्तु गौणोऽन्यतरः स्यादिति लावुकायनः । ३७ ॥**

सहस्रसंवत्सरे सत्रे ' पञ्च-पञ्चाशतः त्रिवृतः संवत्सराः ' इत्यादिवाक्ये पञ्च-पञ्चाशच्छब्दः संवत्सरशब्दश्चेत्यनयोः अन्यतरः शब्दः गौणः स्यात् । विप्रतिषेधात् । नहि कथाऽपि युक्त्या मनुष्येषु सहस्रसंवत्सरपरिमितमायुः कर्मानुष्ठानयोग्यं संभवति । तस्मात् संवत्सरशब्दो वा संवत्सरान्यकालवाची स्यात्, पञ्च-पञ्चाशच्छब्दचतुष्टयं वा अन्यसंख्यावाचि स्यात् इति **लावुकायन आचार्यो** मन्यते । जैमिनेरपि संमतमेवेदं **गौणत्वम्**, लावुकायनग्रहणं तु पूजार्थम् । पूर्वसूत्रयोः संवत्सरशब्दो मुख्यार्थकः स्वीकृतः । तन्निरासार्थः सौत्रः तुशब्दः ।

**संवत्सरो विचालित्वात् । ३८ ॥**

सहस्रसंवत्सरे सत्रे ' पञ्च-पञ्चाशतः त्रिवृतः संवत्सराः ' इत्यादिवाक्ये पञ्च-पञ्चाशच्छब्दः संवत्सरशब्दो वा अन्यतरो गौणः इति पूर्वसूत्रे उक्तम् । तयोः कतरो गौण इति अवधारणार्थं विचारे क्रियमाणे संवत्सरः संवत्सरशब्द एव गौणः स्यात् । विचालित्वात्, विचलनशीलः न्यूनाधिकसंख्याकदिनघटितः संवत्सरो भवति । यथा सावनः षष्ट्यधिकशतत्रयदिनैः, सौरः पञ्चषष्ट्यधिकशतत्रयदिनैः, चान्द्रः चतुष्पञ्चाशदधिकशतत्रयदिनैः इत्यादिः । पञ्च-पञ्चाशत्-शब्दस्तु एकेनाप्यूने न भवेत् तस्मात् स मुख्यार्थक एव । तस्मात् संवत्सरशब्दो गौणः स्यात् ।

**मासाः प्रकृतिः स्यादधिकारात् । ३९ ॥**

सहस्रसंवत्सरे सत्रे ' पञ्च-पञ्चाशतस्त्रिवृतः संवत्सराः ' इत्यादिवाक्ये संवत्सरशब्दो गौणः स्यात् इत्युक्तं पूर्वसूत्रे । अथ कोऽसौ गौणोऽर्थः इति विचारे प्रकृतिः संवत्सरः स्यात् । किंरूपः स्यात् ? मासाः, मासरूपः स्यात् । संवत्सरशब्देन मासा ग्राह्या इत्यर्थः । ' यो मासः स संवत्सरः ' इति अधिकारात् गवामयनप्रकरणे उक्तत्वात् ।

नैषोऽपि पक्षो युज्यते । माससहस्रेण त्र्यशीतिर्वर्षाणि चत्वारश्च मासाः भवन्ति । दाराग्निकालसोमपूर्वत्वापेक्षया अनुष्ठानाय समर्थं एतावदायुः पुरुषस्य यतो न संभवति ।

एवं तर्हि संवत्सरशब्देन द्वादशाहानि ग्राह्याणि, पञ्च-पञ्चाशतो द्वादशाहा भविष्यन्ति । तथा च 'द्वादश वै रात्रयः संवत्सरस्य प्रतिमाः ' इति श्रूयते ।

अस्मिन् पक्षे यद्यपि सहस्रेण द्वादशाहैः त्रयस्त्रिंशद्वर्षाणि चत्वारश्च मासाः स्युः इति अनुष्ठानयोग्यमायुर्लभ्यते, तथापि उक्तवाक्ये संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात् सहस्रं द्वादशाहा ग्रहीतुं न शक्यन्ते । त्रिवृत्पञ्चदशादिशब्दाश्च दिवसे दृष्टाः, न द्वादशरात्रे । इति अयमपि पक्षो न युक्तः ।

**अहानि वाऽभिसंख्यत्वात् । ४० ॥**

सहस्रसंवत्सरे सत्रे ' पञ्च-पञ्चाशतः त्रिवृतः संवत्सराः ' इत्यादिवाक्ये संवत्सरशब्देन मासो वा द्वादशरात्रिसमुदायो वा ग्राह्य इति पक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । सहस्रसंवत्सरशब्देन सहस्रसंख्याकानि अहानि ग्राह्याणि । अभिसंख्यत्वात् । ' अभिसंख्यं त्रिवृदहः ' इति भाष्यम् । त्रिवृति अहनि संवत्सरशब्दो दृश्यते ' आदित्यो वा सर्वे ऋतवः । स यदैव उदेति अथ वसन्तः, यदा संगवोऽथ ग्रीष्मः, यदा मध्यंदिनोऽथ वर्षाः, यदाऽपराह्णोऽथ शरत्, यदा अस्तमेति अथ हेमन्तशिशिरौ ' इति । अत्र सर्वे ऋतवः अहनि संपादिताः । सर्वे च ऋतवः संवत्सरः । तस्मादहः संवत्सरशब्देनोच्यते । अहःसहस्रेण च वर्षद्वयं नव मासाः दश अहानि च भवन्ति । तस्मात् सहस्रसंवत्सरं नाम सहस्राहं सत्रं इति सिद्धान्तः । के.

* ' सहस्रसंवत्सरं तदायुषामसंभवात् मनुष्येषु ' ( ६।७।१३।३१ ) इत्यत्र सहस्रसंवत्सरशब्दस्य अहःसहस्रवाचिता वक्ष्यते । सु. पृ. ७१७. * **सहस्रसंवत्सरे** ' ऋत्विज उपगायन्ति ' । संवत्सरसत्रे ' पत्नय उपगायन्ति ' । भा. ८।१।११।१८.

* **सहस्रसंवत्सरसत्रे** मनुष्याणामेव अधिकारः, संवत्सरशब्दस्य दिवसपरत्वात् । ६।७।१३।३१-४०. **मीको.** पृ. २९८ ' अधिकारः विश्वसृजामयने० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सांवत्सरिके** चयने आग्नेयसूक्तानां चयने एव विनियोगः, न तूपस्थाने ( **संकर्ष.** २।१।३६ ) । तत्रापि ब्रह्मवर्चसकामस्य गायत्रचिते गायत्रसूक्तान्येव ग्राह्याणि, नेतरच्छन्दस्कानि । एवं वीर्यकामस्य त्रिष्टुप्चिते त्रिष्टुप्छन्दस्कान्येव, एवं पशुकामस्य जागतान्येव सूक्तानि, नेतराणि । **संकर्ष.** २।१।३७.

* **सांविज्ञायिकानि** नामपदानि, यानि निरूढानि तेषां चिन्ता तद्व्यपदेशाधिकरणे । **वा.** १।४।३।४ पृ. ३३२, सु. पृ. ४३०.

* **साकमेधं** नाम चातुर्मास्येषु तृतीयं पर्व । चातुर्मास्येषु वैश्वदेवादीनि चत्वारि पर्वाणि । **वि.** ७।१।३. * **साकमेधे** अनीकवती, सांतपनीया, गृहमेधीया चेति इष्टयः क्रमेण प्रातर्मध्यंदिने सायं च कर्तव्याः, सद्यस्काला एव । चातुर्मास्येषु । **भा.** ५।१।११।१९-२२, * साकमेधे श्रूयते ' एतद्ब्राह्मण

एककपालः ' इति । तत्र वैश्वदेविकस्य एककपालस्य इदं ग्रहणं उत वारुणप्राघासिकस्येति । वैश्वदेविकस्य ग्रहणमिति प्राप्ते, वारुणप्राघासिकस्य एककपालस्य ग्रहणं इति सिद्धान्तः । ७।१।५।२३. * **साकमेधेषु** अग्निप्रणयनमपूर्वं ' आहवनीयाद्वाऽग्निं प्रणयते ( तः ) ' इति विहितम् । न प्राकृतं नापि सौमिकम् । अतिदेशप्राप्तं प्राकृतं कृत्वा पुनरपूर्वं कर्तव्यम् । **वि.** ७।३।९ वर्णकं २. * साकमेधेषु अनीकवत्यादीनां सद्यस्कालतैव न द्व्यहकालता । ( **सोम.** ) औपदेशिककालबलात् उपदेशस्य चोदकात् बलवत्त्वात् , औपदेशिककालैकत्वबाधभयात् , ' प्रातः मध्यंदिने सायं ' इत्येकत्वविशेषणस्य विवक्षितत्वात् चोदकप्राप्तस्य आनुमानिकस्य द्व्यहकालत्वेन प्रत्यक्षेण वाक्येन बाधः । **टुप्.** ५।१।११।१९–२२. * साकमेधेषु अनीकवतीष्टिः प्रातःकाले ' अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत् ' इति । **वि.** ५।१।११, * साकमेधेषु ( वरुणप्रघासे च ) उत्तरवेदिरस्ति, 'उपात्र वपन्ति ' इत्यनारभ्यश्रुतेन वाक्येन उत्तरवेद्यामग्नेरुपवापस्य विहितत्वात् । ७।३।९, * साकमेधेषु ' एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालः ' अनेन वैश्वदेववरुणप्रघासोभयस्यैककपालब्राह्मणस्य वरुणप्रघासस्यैन्द्राग्नब्राह्मणस्य च सार्थवादविधिकाण्डस्य अतिदेशः, न तु अर्थवादमात्रस्य । ७।१।४–५. * साकमेधेषु पूर्वदिनकर्तव्यानि त्रीणि कर्माणि किं द्व्यहकालानि उत सद्यस्कालानि इति क्रमविशेषौपयिकतया संदेहे सद्यस्कालानि इति निर्णयः । **भाट्ट.** ५।१।११. * साकमेधेषु वैश्वकर्मण एककपालः । **भा.** ७।१।४।२२.

* **साकमेधपर्वगतसांतपनीयोत्कर्षेऽपि** अग्निहोत्रहोमस्य नोत्कर्षः । ५।१।१७।३०–३४. ' सांतपनीयान्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **साकमेधवरुणप्रघासयोः** चातुर्मास्यगतयोः अग्निप्रणयनं अपूर्वमेव, न दार्शिकं न सौमिकम् । **वा.** ७।३।८।१९–२५.

* **साकमेधीयैककपाले** वारुणप्राघासिकैककपालधर्माणामतिदेशः । ७।१।५।२३. **मीको.** पृ. २२९ ' अतिदेशः साकमेधीयैककपाले वारुण० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **साकमेधीयैन्द्राग्नैककपालयोः** वारुणप्राघासिकसार्थवादविधिकाण्डस्य अतिदेशः । ७।१।४।२२. **मीको.** पृ. २३० ' अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**साकमेधीयन्यायः** । चातुर्मास्येषु साकमेधीयानामनीकवत्यादीनां सद्यस्कालता ॥

**विकृतिः प्रकृतिधर्मत्वात् तत्काला स्याद् यथाशिष्टम् । ५।१।११।१९॥**

**भाष्यम्**— चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तस्यावयवाः ( पूर्वेद्युः ) ' अग्नयेऽनीकवते प्रातरष्टाकपालः, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इति । तत्र संदेहः किमेता द्व्यहकाला इष्टयः उत सद्यस्काला इति । किं प्राप्तम् ? विकृतिस्तत्काला भवितुमर्हतीति । यथाशिष्टम् । यथा प्रकृतिरुक्ता, तथा विकृतिः स्यात् । प्रकृतिधर्मा हि सा । तस्मात् या विकृतिः सा द्व्यहकाला भवितुमर्हतीति ।

**टुप्**— सर्वविकृतीनां सद्यस्कालत्वं वक्ष्यति ( ५।४।७।२२–२४ ) । अतस्तेनैव गतत्वादनारभ्यमिदम् । उच्यते । द्वैयहकाल्यमनुगृह्णन् पौर्णमासीश्रवणं बाधते । यदि हि तत्र द्वे पौर्णमास्यौ स्याताम् , स्यादेवं द्वैयहकाल्यम् । इह तु द्वौ प्रातःकालौ विद्येते । तमनुगृह्णन् चोदकप्राप्तं न शक्नोति बाधितुम् । अतो द्वैयहकाल्यं भविष्यति ।

**अपिवा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् । २० ॥**

**भाष्यम्**— अह्नः कालेषु ये पदार्था उच्यन्ते प्रातर्मध्यंदिने सायमिति, क्रमेण ते एकस्मिन्नहनि इति प्रतीयन्ते । यथा देवदत्तः प्रातरपूपं भक्षयति, मध्यंदिने विविधमन्नमश्नाति, अपराह्णे मोदकान् भक्षयतीति, एकस्मिन्नहनि इति गम्यते । तस्मात् सद्यस्काला एवंजातीयका विकृतयः । द्वैयहकाल्यं हि चोदकप्राप्तं आनुमानिकं प्रत्यक्षरूपया सद्यस्कालतया बाध्येत ।



**टुप्**— प्रातर्मध्यंदिने सायं इति वाक्यात् उच्चरितात् एकस्मिन्नेव अहनि इति प्रतीतिर्भवति । अनुच्चरितात्तु न भवति । तस्मात् प्रत्यक्षेण वाक्येन चोदकप्राप्तमानुमानिकं बाध्यते द्वैयहकाल्यम् ।

**कालोत्कर्ष इति चेत् । २१ ॥**

**भाष्यम्**— इति चेत् पश्यसि प्रातः साङ्गं श्रूयते, तथा मध्यंदिने सायं चेति । उत्कर्षो भविष्यति । यथा एतेषु कालेषु साङ्गम् । न च द्व्यहकालताया बाधः । एकस्याह्नः प्रातः अनीकवन्तमुपक्रंस्यते, द्वितीयस्य प्रातर्यक्ष्यते । एवं सांतपनीया पूर्वेद्युर्मध्यंदिने उपक्रंस्यते, अपरेद्युर्मध्यंदिने यक्ष्यते । तथा गृहमेधीये सायमुपक्रमणं पूर्वेद्युः, सायं यागः अपरेद्युरिति । **ननु** वाक्यात् एकमहर्गम्यते इत्युक्तम् । **उच्यते** । पदार्थसामर्थ्यजनितो हि वाक्यार्थो भवति । न चात्र पदार्थसामर्थ्यमस्ति, येन एकमहर्गम्येत ।

**टुप्**— इतर आह, उपपदप्रकरणार्थैः तस्मिन्नेवाहनि इत्यनुपात्तत्वात् भ्रान्तिरेषा ।

**न तत्संबन्धात् । २२ ॥**

**भाष्यम्**— नैतदेवम् । कस्मात् ? तत्संबन्धात् । एककालसंबद्धानि प्रधानानि अङ्गैः सह श्रूयन्ते । कथम् ? साङ्गं हि प्रधानं प्रातःकाले श्रूयते तथा मध्यंदिने सायं च । नाङ्गानि प्रातःकालादिषु । तत्र अन्यकालेषु अङ्गेषु अन्यकालेषु च प्रधानेषु न साङ्गं तेषु कालेषु कृतं स्यात् । तस्मात् सद्यस्काला एव एता विकृतय इति । अपि च ' द्व्यहं साकमेधैः ' इति श्रूयते । तत् सद्यस्कालासु उपपद्यते ।

**टुप्**—प्रातर्मध्यंदिने इति प्रयोगपुनःश्रुतिः । स च प्रयोगः प्रातःकाले विधीयते । तत्र यदि पूर्वस्मिन् प्रातःकाले प्रक्रम्य उत्तरस्मिन् परिसमाप्येत, तथा सति प्रातर्मध्यंदिनापराह्णेषु साङ्गानि न कृतानि स्युः । तत्र अङ्गानां प्रधानकालता बाध्यते । तस्मात् यस्मिन्नहनि प्रातरारम्भः तस्मिन्नेव परिसमाप्तिः ।

**शा**— ' **तत्रातिदेशतस्तासां प्राप्नोति द्व्यहकालता । प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव ॥** ' इति प्राप्ते, ब्रूमः । ' **साङ्गं प्रारिप्सितं कर्म प्रातःकाले विधीयते । स चाविशेषात् तन्त्रेण सर्वस्यैको भविष्यति ॥** ' तस्मात् उपदेशात् सद्यस्कालाः ।

**सोम**— इहापि चोदक एवानुग्राह्यः इति प्रत्यवस्थानात् संगतिः । सति प्रमाणे कर्ममध्येऽपि कर्मान्तरारम्भो युज्यते, दर्शकर्ममध्ये अनुष्ठितनिशीष्टिवत् इति पूर्वपक्षः । कालस्य प्रयोगापरनामधेयसाङ्गप्रधानभावनया अन्वयेन अङ्गप्रधानयोः एककालत्वं एकादशे वक्ष्यते । तदिह द्व्यहकालत्वे बाध्येत । तस्मात् औपदेशिककालत्वबलात् आतिदेशिकद्व्यहकालत्वं बाध्यम् । **सूत्रार्थस्तु**— यथा प्रकृतिः द्व्यहकाला शिष्टा तथा अनीकवतादिविकृतिरपि तत्काला स्यात्, विकृतेः प्रकृतिधर्मत्वादिति ।

**वि**— ' साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा । , प्रातरादेर्द्वयोरह्नोः सत्त्वात्, प्रकृतिवत् द्व्यहे ॥ साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः । श्रौतं सद्यस्त्वमन्यत्तु चोदकात् तेन दुर्बलम् ॥ '

**भाट्ट**— चातुर्मास्येषु साकमेधः तृतीयं पर्व । तत्र कार्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहिताः । तासु वक्ष्यमाणेनैव न्यायेन ' य इष्ट्या ' इति वाक्यवशेन अन्येष्टिवत् सद्यस्काला एवेत्यविवादम् । यानि तु 'द्व्यहं साकमेधेन यजेत ' इति वचनेन तत्पूर्वदिनकर्तव्यानि कर्माणि ' अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत् , मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुम् , मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इत्येवंविधवाक्यत्रयविहितानि, तानि किं द्व्यहकालानि उत सद्यस्कालानि इति क्रमविशेषौपयिकतया संदेहे प्रकृतिप्राप्तत्वात् द्व्यहकालत्वम् । न चात्र अन्यविकृतीष्टिन्यायः (५।४।७) । तत्र हि 'य इष्ट्या' इत्यादिवाक्येन साङ्गप्रयोगस्य पौर्णमास्यादिकालविधानात् आतिदेशिकद्व्यहकालत्वानुग्रहे च तद्बाधप्रसङ्गात् युक्तं सद्यस्कालत्वम् । प्रकृते तु प्रातरादिकालकत्वस्य दिनद्वयेऽपि संभवात् द्व्यहकालत्वमेव । अतश्च त्रयोदश्यां प्रातरादिकालेषु त्रयाणामपि अन्वाधानं कृत्वा चतुर्दश्यां प्रातरादिकालेषु यागा इति द्रष्टव्यम् ।

कर्ममध्ये कर्मान्तरारम्भस्तु ‘ द्व्यहं साकमेधेन ’ इति वचनात् नैव दुष्यति । यदि तु प्रसङ्गसिद्धिराशङ्क्येत तदा अस्तु त्रयोदश्यां प्रातः सकृदेव अन्वाधाय चतुर्दश्यां प्रातरादिकालेषु यागाः । अङ्गानुष्ठानं तु पूर्वाङ्गानां अनीकवत्या सह, उत्तराङ्गानां तु सांतपनीयया सह । गृहमेधीयस्य तु अपूर्वत्वादेव नाङ्गापेक्षा । अन्वाधानं तु आज्यभागार्थं इति द्रष्टव्यम् । **केचित्तु** एकादशीप्रभृति द्व्यहकालं पृथक्प्रयोगं इष्टित्रयं पूर्वपक्षे कर्तव्यं इति वदन्ति । तेषां ‘ द्व्यहं साकमेधेन ’ इति वचनानुपपत्तिः । **इति प्राप्ते,** एकस्मिन् प्रातरादिकाले विहितस्य साङ्गतत्तत्प्रयोगस्य द्व्यहकालत्वपक्षे औपदेशिककालैकत्वबाधापत्तेः सद्यस्कालत्वम् । न च सायंप्रातःशब्दयोः अव्ययत्वेन एकवचनान्तत्वे प्रमाणाभावः । एकवचनान्तमध्यंदिनपदप्रायपाठादेव एकवचनान्तत्वनिर्णयोपपत्तेः । ‘ द्व्यहं साकमेधेन ’ इति साङ्गस्यैव द्व्यहकालत्वश्रुतेश्च । अतश्च विशेषणस्य एकत्वस्य विवक्षितत्वात् सद्यस्काला एव एता इष्टयः ।

**मण्डन**— ‘ प्रातरादियजिः सद्यः । ’ १३.

**शंकर**— ‘ प्रातरादिश्रुतौ सद्यः । ’ १४.

* **साकंप्रस्थायीयः** दर्शपूर्णमासविकारः । तत्र स्विष्टकृदिडं नास्ति । **भा.** ३।५।२।१३. * साकंप्रस्थायीयः सांनाय्यस्य गुणविकारः । **वा.** ३।५।२।१३. * ‘**साकंप्रस्थायीयेन** यजेत पशुकामः’ इति गुणविशिष्टौ दर्शपूर्णमासावेव । तयोरेव गुणात् फलम्, न कर्मान्तरम् । **भा.** २।३।४।५–११. * **साकंप्रस्थायीयेऽपि** सहप्रस्थानं गुणसंबन्धः । **भा.** २।३।४।१० । साकंप्रस्थायीयेऽपि सांनाय्यमनवदाय कुम्भीभ्यामेव साकं प्रस्थीयते इति एवमभिधीयते । **वा.** * साकंप्रस्थायीये अमावास्याविकारे उपांशुयाजो न श्रूयते । **भा.** १०।८।१७।६१. * साकंप्रस्थायीये चतसृभिर्दधिपयःकुम्भीभिः सह आहवनीयमभिक्रम्य कुम्भीभिरेव होमः कार्यः, न जुह्वा । सर्वहोमश्च, न तु शेषोऽवस्थापनीयः । अर्थात् स्विष्टकृदादिकं शेषकार्यं नास्ति । **वि.** ३।५।२.

**꣸ साकंप्रस्थायीये उपस्तरणाभिघारणे स्विष्टकृच्च न सन्ति ॥**

तेष्वेव शेषकार्याण्युपस्तरणाभिघारणे च कर्तव्यानि, कुम्भीतो दारुपात्रेषु ग्रहणसमये उपस्तरणादिसंभवात्, सावशेषस्यैव चोदकानुग्रहाय ग्रहीतुं युक्तत्वाच्च । इति प्राप्ते, ‘ अभिक्रामं माहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यज ’ इति प्रैषौ इत्यभिक्रमणकाल एव विधानादुपस्तरणादेः सशेषावदानस्य च कालातिक्रान्तेर्न कार्याणि । **संकर्ष.** १।३।४.

**꣸ साकंप्रस्थायीये कुम्भीभिरिति सायंप्रातर्दोहयोरनुवादः ॥**

कुम्भ्याः प्रदानकरणत्वपूर्वपक्षोत्तरमन्तरा चिन्त्यते । दोहयोः द्वित्वेन दोहनकाले कुम्भ्याधिक्याभावात्सह कुम्भीभिरिति प्रदानकाले कुम्भीबहुत्वश्रवणाद्दोहेऽन्ये कुम्भ्यौ प्रदाने चान्ये । अत एव दोहकालीनं कुम्भ्यां संस्कारान्तरविधानं संगच्छते । तयोरेव प्रदानार्थत्वे तु स्रुक्संस्कारस्यैव प्रकृतितः प्राप्तेस्तदानर्थक्यं वैकृतेन प्राकृतबाधो वा स्यात् । पात्रभेदे तु समुच्चयः । इति प्राप्ते, ‘ सायंदोहाभ्यां चरति प्रातर्दोहाभ्यां चरति ’ इति वचनात्प्रतिदोहं द्वे द्वे कुम्भ्यावित्येवं दोहकाले एव तावतां धारणार्थं कुम्भीबहुत्वं सामर्थ्यात् प्राप्तं प्रदानकाले शेषकार्यापनयार्थमनूद्यते । इदं च चतुर्णामपि दोहानां प्रातरेव प्रचार इति पक्षे, कालभेदेन प्रचारे तु प्रचयशिष्टसंख्याऽनुवादः । **संकर्ष.** १।३।३.

**꣸ साकंप्रस्थायीये दारुपात्रैरेव होमो न कुम्भीभिः ॥**

स्रुचोराग्नीध्रहस्तेऽवस्थापनपूर्वकं कुम्भीग्रहणात्तासामेव प्रदानकरणत्वं तेन ‘ मध्यमेन पलाशपर्णेन जुहोति ’ इत्यादाविव स्रुचः प्रत्याम्नायः । भाष्ये तु सह कुम्भीभिरभिक्रामन् इति वाक्ये उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वात् कुम्भीनां प्रदानकरणत्वमुक्तं तत्प्रौढिमात्रम्, यत्तु वाक्यम् ‘ यावत्यः कुम्भ्यः स्युः तावन्ति दारुपात्राण्युपक्लृप्तानि स्युस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्तिष्ठेयुरध्वर्योराहुतिमनुजुहुयुः ’ इति, तत्र दारुपात्राणां करणत्वेनाश्रवणात्तदुपक्लृप्तिरदृष्टार्था । वस्तुतस्तु ‘ यत्कुम्भैर्जुहोति तन्निष्ठूर्यं दारुमयेण होतव्यमनिष्ठूर्यतायै ’ इति कुम्भनिन्दापूर्वकं दारुमयस्य



होमकरणत्वेन विधानादुपक्लृप्तानां पात्राणामितरब्राह्मणकर्तृकानुहोमेष्वेव करणत्वम् । अध्वर्युकर्तृके तु होमे कुम्भ्य एव करणं कुम्भीसंख्यातोऽधिकस्य दारुपात्रस्यानुपक्लृप्तत्वात्, कुम्भनिन्दा तु ब्राह्मणकर्तृकानुहोमपरा, तस्मात् कुम्भीभिर्दारुपात्रैश्च होतव्यम् । इति प्राप्ते, ‘ दारुमयेण होतव्यम् ’ इति वाक्ये ब्राह्मणकर्तृकत्वादिविशेषणविशिष्टोद्देशादनुशब्दाश्रवणाच्च, होमेऽनुहोमे च दारुपात्रमेव करणम्, तावन्तो ब्राह्मणा इति त्वध्वर्युसाहित्येनाप्युपपन्नम् । तेष्वेकोऽध्वर्युः जुहुयादन्येऽनुजुहुयुः । पलाशपर्णस्य तु होम एव करणत्वेन श्रवणात् स्रुक्प्रत्याम्नायत्वम् । **संकर्ष.** १।३।२.

**꣸ साकंप्रस्थायीये दोहयोरेव सह प्रदानम् ॥**

‘ साकंप्रस्थायीयेन यजेत ’ इति श्रुतस्य कर्मनाम्नः सहप्रदाननिमित्तकत्वादाग्नेयस्य दोहयोश्च सहैव प्रदानम् । ‘ आग्नेयेन पुरोडाशेन प्रचर्याग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह ’ इति पौर्वापर्यस्योत्पन्नशिष्टत्वेऽप्यानर्थक्याद्विकल्पो वा । इति प्राप्ते, कुम्भीभिः साकं परतः प्रस्थानस्यैव शक्यतावच्छेदककोटिप्रवेशेन नामत्वोपपत्तौ आग्नेयस्य सह प्रदाने मानाभावाद्दोहयोरेव सह प्रदानम् । **संकर्ष.** १।३।१.

**꣸ साकंप्रस्थायीये प्रैषत्रयं यथाकालं विभज्य प्रयोक्तव्यम् ॥**

तदिति प्रैषत्रयं ‘ इन्द्रायानुब्रूहि, आश्रावय, इन्द्रं यज ’ संततं वक्तव्यं न विरम्य ‘ संततं वसोर्धारां जुहोति ’ इत्यादौ विरामादर्शनात् । इति प्राप्ते, यथाकालमेव वक्तव्यं सामर्थ्यलक्षणात् लिङ्गात् । तस्य च वाक्याद् बलवत्त्वात् अभिक्रमणसमकालिकत्वं तु पुरोऽनुवाक्याप्रैषस्यैव, अन्ययोस्त्वनुवादमात्रम् । ‘ संततमाह ’ इति तु समासवचनं ‘ तस्यैकशतं प्रयाजा इज्यन्ते ’ इतिवदिति मूले स्थितम् । **संकर्ष.** १।३।५.

**꣸ साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् । ३।५।२।१३ ॥**

दर्शविकारः साकंप्रस्थायीयो नाम यागविशेषः । तस्मिन् साकंप्रस्थायीये तद्वत् उपांशुयाजवत् स्विष्टकृच्च इडा च तयोः समाहारः स्विष्टकृदिडम्, तत्र भवति । सर्वप्रदानेन शेषाभावात् । ‘ आज्यभागाभ्यां प्रचर्य आग्नेयेन च पुरोडाशेन, अग्नीधे स्रुचौ प्रदाय, सह कुम्भीभिः ( चतसृभिः ) अभिक्रामन्नाह ’ इति तत्र वचनम् । तस्मान्न शेषकार्यम् । **सिद्धान्तसूत्रम्** । **के.**

**꣸ साकंप्रस्थायीयाधिकरणम्** । साकंप्रस्थायीये सर्वस्य हविषो हुतत्वेन शेषाभावात् न शेषकार्यम् ॥

**साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् । ३।५।२।१३ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते ‘ साकंप्रस्थायीयेन यजेत ’ इति । तत्र संदेहः किं स्विष्टकृदिडमस्ति, नास्तीति । अस्तीति ब्रूमः । कुतः ? दर्शपूर्णमासविकारो हि साकंप्रस्थायीयमिति । एवं प्राप्ते, ब्रूमः । नास्तीति । कुतः ? अशेषत्वात् । सर्वादानाच्चाशेषता । कथम् ? एवं तत्र श्रूयते ‘ आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह ’ इति । तस्मान्न ततः शेषकार्यमिति ।

**वा**— अमावस्यायां नित्यं स्विष्टकृदिडं सांनाय्यादवदीयते । तद्गुणविकारश्च साकंप्रस्थायीयः । अतः इहापि अवदातव्यमित्येतावता विशेषेणातुल्याशङ्कायामतिदेशः क्रियते । तद्वदेवाशेषत्वान्नैवं स्यात् । सर्वदानादशेषतेति । एवं ह्यत्र सर्वदानम्, होमार्थं प्रसर्पतः सह कुम्भीभिरिति, अनवत्तस्यैव दोहस्य कुम्भीभ्यां सहेति विदधदशेषहोमं विदधाति । अतो न शक्यं किंचिच्छेषयितुम् ।

**सोम**— **सूत्रार्थस्तु**— साकंप्रस्थायीयेऽपि स्विष्टकृदादिकं उपांशुयाजवदेव न कर्तव्यमिति, ‘ तद्वत् ’ इत्यनेनैव आतिदेशिकी संगतिः स्फुटा ।

**वि**— ‘ आक्रामन्सह कुम्भीभिरस्ति शेषक्रिया न वा ।, जुह्वावदानात्प्रकृताविव शेषक्रियोचिता ॥, कुम्भीषु शेषासंसिद्धेः साकंप्रस्थाय्यकर्मणि । न स्विष्टकृदिडं कार्यमग्नीधः स्रुक्प्रदानतः ॥ ’

**भाट्ट**— दर्शपूर्णमासयोः ‘ साकंप्रस्थायीयेन यजेत पशुकामः ’ इत्यत्र सहत्वं फलाय विधीयते । तस्य च ‘ आग्नेयेन प्रचर्याग्नीधे स्रुचौ प्रदाय सह कुम्भीभि-

रमिक्रामेत्' इति वाक्येन सांनाय्याङ्गभूतमभिक्रमणमाश्रयत्वेनोच्यते, कुम्भ्यौ निरूपकत्वेन, अन्यत् सर्वमनूद्यते। वाक्यभेदश्च न, निपातत्वाद्विशिष्टभावनाविधानाद्वा इत्युक्तं द्वितीये। तदत्र सांनाय्याङ्गतया स्विष्टकृदादिशेषकार्याणि कर्तव्यानि न वेति चिन्तायाम्, अभिक्रमणे कुम्भीसाहित्येऽपि आहवनीयदेशं गत्वा चतुरवत्तं आदाय एव होमानुष्ठानात् शेषसद्भावेन कर्तव्यानि। इति प्राप्ते, न अत्र अपूर्वमभिक्रमणमाश्रयः, भेदकप्रमाणाभावात्, अपि तु सांनाय्यप्रक्षेपाङ्गभूतमेव। तादृशाभिक्रमणकर्तुः कुम्भीनां साहित्यं च कर्त्रभिक्रमणकालीननयनसंस्कार्यत्वम्, नान्यत्। नयनमपि च नेदमपूर्वम्, अपि तु दृष्टार्थत्वलाभाय स्रुक्त्यागानुवादाच्चोक्तप्रक्षेपाङ्गभूतस्रुग्दण्डनयनमेव। अतश्च कुम्भीनां उक्तसंस्कार्यत्वान्यथानुपपत्त्या अभिषवयुक्तपूतीकवत् स्रुक्कार्यप्रक्षेपार्थत्वावगत्या तत्स्थस्य हविषोऽपि द्व्यवदानवत् प्रक्षेपप्रतिपाद्यत्वावगतेः सर्वहोमावसायात् न साकंप्रस्थायीयप्रयोगे सांनाय्यस्य शेषकार्याणि।

**मण्डन**-- 'साकंप्रस्थाय्यके च न।'

**शंकर**-- 'साकंप्रस्थाय्ये च तद्वत्।'

* **साकाङ्क्षं** त्वेकवाक्यं०' ('साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण' ३।१।१०।२०) इत्यत्र च संबन्धमात्राभिप्रायम्। **वा.** ३।६।७।२२ पृ. १०५०. * 'साकाङ्क्षं त्वेकवाक्यं स्यात्०' इत्यधिकरणे, (विस्तरे तु सूत्रमेतत् गुणसूत्रम्। कुतूहले तु अधिकरणसूत्रमिति भाति, कुमूलेऽपि गुणमेवैतत्। तथा तर्हि अत्र 'साकाङ्क्षं त्वेक०' इत्यधिकरणे इति कथमुक्तम्? सिद्धान्तसूत्रतया तु अस्य सूत्रस्य, कथंचित् समाधेयम्—**केवलः**।) अङ्गविधिष्वपि इतिकर्तव्यताकाङ्क्षालक्षणावान्तरप्रकरणस्य प्रपूर्वपादे 'साकाङ्क्षं०' इत्यधिकरणे वार्तिके प्रपञ्चितत्वेन अङ्गानामपि धर्मग्राहित्वम्। **कु.** ३।३।२।८. * **साकाङ्क्षस्य** तद्धितार्थेन असंबन्धः। एवं समासेऽपि। **भा.** ३।२।१७।४१.

* '**साकारा बुद्धिः**' इति **बौद्धाः**, 'निराकारा' इति **मीमांसकाः**। **भा.** (वृत्तिग्रन्थे) १।१।५।५ पृ. ३१.

**साक्षात् प्रकृतौ विकारलय इति न्यायः।** यथा घटादेर्लयो हि कपालादावेव न तु परमाणुषु, तथैवानुभवादिति तदर्थः। एवं हि विकारस्य स्वप्रकृतिलयो यत्र विवक्ष्यते तत्रास्य न्यायस्य प्रवृत्तिरिति। अयमपि शास्त्रीयो न लौकिकः। **साहस्री.** ४६.

* साक्षात् विधेयप्रशंसार्थः अर्थवादः यथा— 'प्रजापतिरात्मनो वपामुदक्खिदत्, तामग्नौ प्रागृह्णात्, ततोऽजस्तूपरः समभवत्, तेनायजत्, ततो वै स प्रजाः पशूनसृजत, यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत' इति। **बाल.** पृ. ५२.

* **साक्षाद्विनियुक्तस्य** यदुपकारकं तत्संस्कारार्थं भाव्युपयोगसंस्कारार्थं अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा— 'खलेवाल्यां स्थाण्वाहुतिः' (इदं तु अयुक्तमुदाहरणम्)। **बाल.** पृ. ८३.

* **साक्षाद्विनियुक्तोपकारकभाव्युपयोगद्रव्यसंस्कारार्थं** अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा— 'खलेवाल्यां स्थाण्वाहुतिः'। इयं न कर्तव्या यूपीयो ह्ययमाव्रश्चनस्थाणुः तत्संस्कारद्वारा यूपसंस्कारार्थत्वादिति सिद्धान्तितं दशमे। **बाल.** पृ. ८३, * साक्षाद्विनियुक्तोपकारक—भाव्युपयोग—द्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा— 'वत्समालभेत' इति। अत्र वत्सस्य विनियुक्तदोहाङ्गगोद्रव्योपकारकतया आलम्भसंस्कार्यत्वं इति पशुलोमाधिकरणे **भवदेवः**। पृ. ८२, * साक्षाद्विनियुक्तोपादानानुषङ्गसिद्धप्रतिपाद्यविषयप्रतिपत्तिविधिर्नियमविधिः यथा— 'शकृत् प्रविध्यति' इति। पृ. २४, * साक्षाद्विनियुक्तप्रतिपाद्यविषयप्रतिपत्तिविधिर्नियमविधिः यथा— 'चात्वाले कृष्णविषाणां प्रास्यति' इति। पृ. २४, * साक्षाद्विनियुक्तभाव्युपयोगद्रव्यसंस्कारार्थं अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा— 'व्रीहीन् प्रोक्षति' इति। पृ. ८३, * साक्षाद्विनियुक्तभाव्युपयोगद्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा— व्रीहीनवहन्ति' इति। पृ. ८२.

* **साग्नयः** त्रेताग्न्याधानवन्तः। **वि.** ६।६।५.



* **साग्निचित्ये** क्रतौ एकादिदीक्षापक्षाः प्रकृतितः प्राप्ता न बाध्यन्ते। **संकर्ष.** २।१।१९.

* **सांख्याः** कर्मनिमित्तो बन्धः, कर्म तु अज्ञाननिमित्तम्, उत्पन्ने तु प्रकृतिपुरुषविवेकज्ञाने कारणाभावात् कर्मानुत्पत्तौ बन्धाभावात् मोक्षसिद्धिः इत्याहुः। **रत्नाकरः** संबन्धाक्षेपपरिहारे श्लो. १०१. * सांख्याः ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयते इति मन्यन्ते। **वैद्यनाथः** १।१।२।२ पृ. १४. * सांख्याः। निरीश्वरसांख्याः प्रकृतिरचेतना सत्त्वरजस्तमोगुणात्मिका प्रधानशब्दवाच्या चेतनात्मनामुपभोगाय महदादिविशेषप्रपञ्चरूपेण परिणमति इत्याहुः। तत्र। 'सृष्टिप्रलयौ' इत्यत्र द्रष्टव्यम्। **मणि.** पृ. ५१–५३. * सांख्याः— पुरुषो न कस्यचित् कर्ता, भोक्ता तु केवलम्। गुणास्तु सत्त्वरजस्तमांसि अव्यक्तप्रधानप्रकृत्यादि महदादिरूपेण परिणताः महाभूतान्तं प्रपञ्चमारभन्ते इत्याहुः। **रत्नाकरः** संबन्धाक्षेपपरिहारे श्लो. ८७. * सांख्याः सुखदुःखमोहात्मकसत्त्वरजस्तमोरूपं प्रधानं जगत्कारणं मन्यन्ते। **सु.** पृ. १३१. * सांख्याः। सेश्वरसांख्याः प्रकृतिरेव अविद्याऽस्मितारागद्वेषाभिनिवेशक्लेशकर्मविपाकाशयैरपरामृष्टं सर्वव्यापिनं पुरुषशब्दवाच्यं ईश्वरं अधिष्ठाय महदहङ्कारपञ्चतन्मात्रादिक्रमेण जगत् सृजति इत्याहुः। तदपि न। **मणि.** पृ. ५१–५३.

* **सांख्यानां** एषा प्रक्रिया— प्रकृतिः महदादिरूपेण विपरिणमते। तथाहि, प्रकृतिः महच्छब्दवाच्यबुद्धिरूपतया विपरिणमते। महतोऽपि अहंकारो विपरिणामः। अहंकारस्य पञ्च तन्मात्राणि गन्धरसरूपस्पर्शशब्दात्मकानि, तथा एकादश इन्द्रियाणि। पञ्च ज्ञानेन्द्रियाणि चक्षुस्त्वग्रसनश्रवणनासिकात्मकानि, कर्मेन्द्रियाणि च उत्सर्गानन्दादानगत्यालापकारणानि पायूपस्थहस्तपादवाग्रूपाणि। साधारणं च मनः। तन्मात्राणि च पृथिव्यादीनि भूतानि। यथाक्रमं पञ्चानामपि पृथिवी, चतुर्णामापः, त्रयाणां तेजः, द्वयोर्वायुः, एकस्य गगनमिति। सुखदुःखमोहात्मिका प्रकृतिः एवंविधपरिणामा। तद्व्यतिरिक्तः पुरुषः। तदाहुः 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥' इति। **ऋजु.** पृ. १६३. * सांख्यानां सर्वं जगत् नित्यमेव इति नित्यत्वैकान्तप्रतिपादनम्। **सु.** पृ. १३१.

* **सांख्याधिकरणम्** (२।२।१।१–१० ब्रसू.)। ननु सांख्याधिकरणे कारणानि, चेतनाधिष्ठानमन्तरेण कार्याणि न जनयन्तीत्यनुमानिकेश्वरसिद्धिरङ्गीकृता, इह कथं तद्दूषणं क्रियते? नैष दोषः, तत्र (२।२।१) पूर्वपक्षे मृद्घटादिषु दृष्टं कार्यानुसारिणा कारणेन भाव्यं इति नियममवलम्ब्य सुखदुःखमोहात्मकस्य जगतस्तथाभूतं कारणमनुमिमानं सांख्यं प्रति मृदादिदृष्टान्तेनैव अचेतनस्य जगत्कारणस्य चेतनेनाधिष्ठानमपि सिध्येत्, स्वतन्त्रं प्रधानं जगत्कारणं इति निरीश्वरसांख्याभिमतं न सिध्येत् इत्येतावन्मात्रमुक्तम्, न तु स्वतन्त्रमीश्वरानुमानमनवद्यमिति। **परिमल.** २।२।७।४१ ब्रसू.

* **सांख्यादिकल्पितप्रधानादिनिषेधे** बौद्धादेः विनाध्यारोपेण प्रयोगासंभवः। इति चेत्, न। **वा.** १।४।१२।२३–१ पृ. ३५५.

* **सांख्यकृतं अद्वैतिमतखण्डनम्**। ऐकात्म्यवादिनस्तर्हि औपनिषदाः कथम्? अवैलक्षण्येनेति ब्रूमः। भेदशब्दो हि वैलक्षण्यवचनो लोके प्रसिद्धः। तथाहि सुसदृशेषु वक्तारो भवन्ति 'नास्यास्य च कश्चित् भेदोऽस्ति' इति। तथा आत्मनामपि नरपशुतिर्यग्भेदभिन्नशरीरवर्तिनां शरीरसंबन्धमपोह्य केवलं नैजरूपेण निरूप्यमाणानां पद्मरजःपरमाणुद्वयवत् न किंचिदपि वैलक्षण्यमस्ति इत्यनेनाभिप्रायेण एकत्ववादाः नानात्वनिषेधवादाश्च। एतदभिप्रायमेव चैतदपि भगवद्वासुदेववचनं 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥' इति। तथैव 'इन्द्रो मायाभिः पुरुरूप ईयते' इति स्वयमविलक्षणोऽपि आत्मा नरपश्वादिविचित्रशरीरसंपर्कवशात् भ्रान्त्या स्वयमपि विलक्षणरूपः प्रतीयते इत्यर्थः। ये च मुक्तानां क्षेत्रज्ञानामीश्वरेण सह एकत्ववादाः तेऽपि अत्यन्तसाम्यात् वैलक्षण्याभावाच्च। तथा च श्रुत्यन्तरं 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे

विधूय निरञ्जनः परमं साम्यमुपैति ॥ ' इति ईश्वरसादृश्यापत्तिमेव मुक्तस्य दर्शयति । तथा भगवता वासुदेवेनाप्युक्तम् ' इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ' इति । यत्तु ' ममैवांशो जीवलोके जीवभूतः सनातनः । ' इति भगवद्वचनं तत् स्वामिभृत्यभावपरम् । यथा खलु अमात्याः राज्ञोंऽशाः व्यपदिश्यन्ते तथा जीवोऽपि ईश्वरांश इत्युच्यते । अन्यथा जीवत्वनाशात् सनातनत्वानुपपत्तिः । यान्यपि 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ ' इत्यादीनि पुराणवचनानि तेषामयमेवार्थः, वैलक्षण्यमात्मनो ब्रह्मणश्च अन्यत्वं अत्यन्तमविद्यमानमेव अज्ञाननिमित्तं अज्ञाने विनष्टे स्वयमेव विलीयते इति । विस्पष्टं हि परापरपुरुषयोः भेदः गीतादिषूपदर्शितः ' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ' ' उपद्रष्टाऽनुमन्ता च कर्ता (भर्ता) भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ ' इति । अलमतिदूरं गत्वा । ( अस्य अनुद्धारात् इदं पार्थसारथिसंमतमेव स्यात् सांख्यकृतं अद्वैतिमतखण्डनम् । के. ) शा. १।१।५ पृ. ११३.

* **सांख्यमतं तत्खण्डनं च**– आत्मभेदं प्रकृतिपरिणामं च जगत् सांख्या मन्यन्ते । द्विविधं च सांख्यं निरीश्वरं सेश्वरं च । निरीश्वरवादिनस्तावदाहुः– प्रकृतिरचेतना त्रिगुणात्मिका प्रधानशब्दाभिधेया महदादिविशेषपर्यन्तेन प्रपञ्चरूपेण चेतनानामुपभोगाय परिणमतीति । सेश्वरवादिनोऽप्येवमाहुः । इयांस्तु विशेषः, पुरुषशब्दाभिधेयं ईश्वरं क्लेशकर्मविपाकाशयैरपरामृष्टं आश्रित्य प्रकृतिर्जगत् सृजति इति । यथा हि संस्कृतं क्षेत्रमधिष्ठाय तत्संपर्कवशात् बीजं अङ्कुरादिक्रमेण महान्तं वृक्षमारभते, तथा सर्वव्यापिनमीश्वरं अधिष्ठाय सर्वव्यापिनी प्रकृतिः तत्संपर्कवशात् महदहंकारतन्मात्रादिक्रमेण परिणमन्ती विशेषान्तं प्रपञ्चमारभते इति । इतिहासपुराणेष्वपि प्रायेणैतदेव मतम् । सेयं प्रकृत्युपादाना सृष्टिः, ईश्वरस्तु निमित्तमात्रम् । क्षेत्रज्ञास्तु भोक्तारः । प्रकृतिरेव तु सर्वकार्याणां कर्त्री इति भोग्या । सा च सर्वत्रैका । भोक्तॄणां च भेदात् बद्धमुक्तव्यवस्थोपपत्तिः । तथा च ' अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ' इति व्यक्तमेव भोग्यायाः प्रकृतेः रजःसत्त्वतमोरूपाया एकत्वम्, भोक्तॄणां भेदात् बद्धमुक्तव्यवस्थानं च दर्शितम् । ..... तस्मात् प्रकृत्युपादानेयं प्रपञ्चसृष्टिः इति न अनुपादानोपालम्भः । ( अथ खण्डनम्– ) अत्राभिधीयते । कथं खलु एकरूपा प्रकृतिः नरपशुतिर्यग्भेदभिन्नं प्रपञ्चमारभते । नहि अविलक्षणं कारणं विलक्षणं कार्यं निर्मातुमर्हति । क्षेत्रज्ञगतधर्माधर्मसहायवैचित्र्यात् वैचित्र्यमिति चेत्, न, अन्तःकरणवृत्तित्वात् धर्माधर्मयोः, अन्तःकरणस्य च कार्यवर्गान्तःपातित्वात् सर्वस्य महदादेः कार्यस्य प्राकृतप्रतिसंचरे ( प्रकृतौ सर्वेषां प्रलये ) प्रकृतौ विलीनत्वात् धर्माधर्मावपि तस्यामवस्थायां अविद्यमानावेव इति न तद्बलेन वैचित्र्यम् । महदादिविकारारम्भे च अस्याः किं कारणम् ? स्वरूपमेवेति चेत्, सर्वदा आरम्भप्रसङ्गः, ततः प्रलयानुपपत्तिः । ईश्वरेच्छया विक्रियते इति चेत्, न, ईश्वरस्य समस्तक्लेशरहितस्य अपास्तसमस्तकामस्य इच्छाऽसंभवात् । इच्छायाश्चापि अन्तःकरणधर्मत्वात् तस्मिन् काले तदसंभवात् ।

किंच प्राकृते प्रलये प्रकृतिमात्रमात्मानश्च केवलमवतिष्ठन्ते, सर्वे चात्मानो निर्विशेषाः, सर्वेषां चैतन्यमात्ररूपत्वात् । न च धर्माधर्मकृतमपि वैलक्षण्यं आत्मनां संभवति, तयोरात्मधर्मत्वाभावात्, अन्तःकरणवृत्तित्वात् तस्य च तदानीमभावात् इत्युक्तम् । एवं च धर्माधर्मरहितेषु निर्विशेषेषु पुरुषेषु अवस्थितेषु सर्गकाले प्रकृतिः शरीरारम्भेण आत्मनो बध्नातीति चेत्, ये पूर्वसृष्टौ मुक्ताः ये चामुक्ताः तान् सर्वान् बध्नीयादविशेषात् । तथा ये अश्वमेधमनुष्ठाय फलमभुक्त्वा पूर्वसृष्टौ स्थिताः, ये च ब्रह्महत्याकारिणः, तेषां सर्वेषां ऐकविध्यमेव स्यात्, पूर्वकृतयोर्धर्माधर्मयोर्नष्टत्वात् ।

ननु नाशो नाम नात्यन्ताभावः किंतु कारणे कार्याणां तिरोभावमात्रं विनाशः, उत्पत्तिरपि विद्यमानानामेव



कारणे कार्याणां आविर्भावमात्रम् । नहि अत्यन्तासतां उत्पत्तिः संभवति, शशविषाणस्यापि उत्पत्तिप्रसङ्गात्, असदुत्पत्तौ च सर्वत्र सर्वं स्यात् नियमो न स्यात्, तन्तुभ्यः पटः, मृत्तो घट इति । यथाहुः– ' असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् । शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥ ' इति । तथा ' नासतो विद्यते भावो नाभावो विद्यते सतः । ' इति भगवद्वासुदेववचनम् । तस्मात् प्रलये धर्मादेः शक्त्यात्मना अवस्थितत्वात् तद्वशेन युक्तं सृष्टिवैचित्र्यम् । **नैतदेवम्** । नहि मृत्पिण्डावस्थायां वा कपालावस्थायां वा घटरूपमस्ति, दृश्यादर्शनविरोधात् । यत्तु ' नासतो विद्यते भावः ' इति वचनं तदात्माभिप्रायम् । पूर्वत्र हि ' न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम् ॥ ' इत्यात्मनित्यत्वं प्रतिपादयितुमुपक्रान्तमेव अनेन उच्यते । नाविद्यमानस्यात्मनः उत्पत्तिः, न विद्यमानस्य विनाशः, सर्वे एवात्मानः अनुत्पत्तिविनाशधर्माणः नित्या इति, न पुनः कार्यजातस्य सर्वस्य नित्यत्वाभिप्रायं असर्वगतत्वात् अनुपलब्धिविरोधाच्च इत्युक्तम् । यदि परं उपादानोपादेययोरभेदमाश्रित्य मृदात्मना आदौ घटो व्यवस्थित इत्युच्यते, न च तावता कार्यसिद्धिः । नहि मृदवस्थेन घटेन उदकाहरणं क्रियते । तथा धर्माधर्मावपि स्वरूपेणाविद्यमानौ प्रकृत्यात्मना स्थितावपि न स्वकार्याय पर्याप्तौ इति न तद्वशेन वैचित्र्यसंभवः । प्रमाणमपि महदादिक्रमेण प्रकृतिपरिणामे किंचिन्नास्ति, पुरुषवचसां प्रमाणान्तरागोचरार्थे प्रमाणत्वासंभवात् । वेदानामपि पौरुषेयत्वात् इतरपुरुषवचनवदप्रामाण्यात् । यदि तु सृष्टिप्रलयपरंपरां अनादिं अङ्गीकृत्य प्रतिसृष्टि ' सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ ' इत्यादिवचनैः ऋतुलिङ्गन्यायेन नामप्रभावव्यवहारवस्तूत्पत्त्या शब्दानां अनाद्यर्थसंबद्धानां वेदानां च नित्यत्वमाश्रित्य प्रामाण्यमङ्गीक्रियते तथापि एकस्य प्रजापतेः संप्रदायप्रवर्तकत्वे कृतकाशङ्का स्यादेव । अथ पुनः ' अष्टाशीतिसहस्राणि संप्रदायप्रवर्तकाः ' इत्यादिवचनानुरोधेन बहूनां महर्षीणां सृष्ट्यन्तराधीतं वेदं स्मरतां सुप्तप्रतिबुद्धन्यायेन संप्रदायप्रवर्तकत्वमाश्रित्य कृतकाशङ्कां निरस्य नित्यता समर्थ्येत, तथापि अनुपादानं जगन्निर्माणं अशक्यं अभ्युपगन्तुम् । प्रकृत्यादीनां हि उपादानत्वं निरस्तम् । **औपनिषदास्तु** सृष्टिप्रलयवादाः पौराणिकाश्च अर्थवादतया नेतव्याः । भवतु च एवं तथापि नास्माकं काचित् क्षतिः । संबन्धनित्यत्ववेदप्रामाण्ययोरविघातात् । **शा.** १।१।५ पृ. ११३–११५.

* **सांख्यमतखण्डनं** भाट्टचिन्तामणिकृतं ' सृष्टिप्रलयौ ' इति बिन्दौ अन्ते द्रष्टव्यम् । **मणि.** पृ. ५१– ५३.

* **सांख्ययोगादिशास्त्रेषु** वैदिकपरिग्रहो यदंशे अस्ति उपासनादिविषये तदंशे प्रामाण्यमिष्टमेव । यदंशे तु प्रपञ्चसत्यत्वमिथ्यात्वद्वैताद्वैतादिविषये, विहितस्य हिंसादोषास्तित्वादिविचारविषये च प्रत्यक्षश्रुतिविरोधोऽस्ति तदंशे अप्रामाण्यमेव । कु. १।३।३।४.

* **साङ्गः** अवभृथः अप्सु अनुष्ठेयः । ११।२।८। ३१-३४. **मीको.** पृ. ६९६ 'अवभृथः साङ्गः अप्सु अनुष्ठेयः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **साङ्गकर्मणि** त्यागमात्रं यजमानेन कर्तव्यं इतरत् सर्वमृत्विग्भिः । **वि.** ३।७।८.

* **साङ्गप्रधानस्यैव** सद्यस्कालता । **संकर्ष.** ३।१।५. **मीको** पृ. ४११६ ' सद्यस्कालताऽपि साङ्गप्रधानस्यैव ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सांग्रहणी** इष्टिः । तत्र आमनहोमाः ' आमनमस्यामनस्य देवाः इति तिस्र आहुतीर्जुहोति ' । प्रकृतौ अनुयाजाः । तेऽत्र चोदकप्राप्ताः । तत्र आमनहोमैः प्राकृतानुयाजानां समुच्चयः । **भा.** १०।४।४।७. * सांग्रहणी इष्टिः । ' वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः ' इति । तत्र च आमनहोमाः श्रुताः ( तैसं. २।३।९ ) ' आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति ' इति । एते होमा न समप्रधानाः किंतु सांग्रहणीष्ट्यङ्गभूताः । **वि.** ४।४।४. * **' सांग्रहण्या** ग्रामकामो यजेत ' । **बाल.** पृ. ३. * **सांग्रहण्यां**

आमनहोमैः त्रयाणामनुयाजानां बाध इति पूर्वपक्षः । आमनहोमानां कर्मान्तरभूतानामनुयाजैः समुच्चयः इति सिद्धान्तः । आमनहोमा अनुयाजमध्ये कार्याः । वि. ३।७।२०, १०।४।५, १०।७।९. * सांग्रहण्यामिष्टौ 'आमनमस्यामनस्येति तिस्र आहुतीर्जुहोति' इत्यत्र संख्यया कर्मभेदः । वि. २।२।७.

* **सांग्रहण्यादिकायाः** निवृत्ताकाङ्क्षाया विकृतेः संनिध्याम्नातानां अश्रुतफलानां आमनहोमादिकर्मणां संनिहितफलवत्कर्मोपकाराख्यसाध्यसंभवे कल्पनागौरवापादकस्वर्गफलत्वकल्पनाऽयोगः । सु. पृ. ११९७.

**सांग्रहणीष्टौ उपदिष्टैरामनहोमैः आतिदेशिकानामनूयाजानां समुच्चयः ॥**

**आमने लिङ्गदर्शनात् । १०।४।४।७ ॥**

**भाष्यम्**— अस्ति सांग्रहणी इष्टिः 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इति । तत्र श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति । सन्ति तु प्रकृतौ त्रयोऽनुयाजाः । तेऽत्र चोदकेन प्राप्ताः । तत्र संशयः किमामनहोमैरनुयाजा निवर्तन्ते उत तैः समुच्चीयन्ते इति । किं प्राप्तम्? प्रत्यक्षश्रुतैः आमनहोमैः आनुमानिका अनुयाजा निवर्त्येरन् । अपि च त्रित्वं प्रकृतिलिङ्गसंयोगो भवति । एवं प्राप्ते, **ब्रूमः** । आमने समुच्चयः स्यात् । कुतः? लिङ्गदर्शनात् । लिङ्गं हीममर्थं दर्शयति । किं लिङ्गम्? 'बहिरात्मा वै प्रयाजानुयाजाः, आत्मा देवता, यत्प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातानामादधीत । अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते' इत्यनुयाजानामनिवृत्तिं दर्शयति । आह । ननु त्रित्वं प्रकृतिलिङ्गसंयोगः । नेत्याह । न हि संख्यामात्रमनूद्य शक्यते गुणो विधातुम् । न हि कस्यचित् काचित् संख्या न भवति । तस्मान्न संख्या प्रकृतिलिङ्गसंयोगः । लिङ्गदर्शनं त्विदमपदिष्टम्, प्राप्तिरत्र वक्तव्येति । उच्यते । 'आहुतीर्जुहोति' इति श्रुत्या आहुतिसत्ता, वाक्येन मन्त्रविधानम् । त्रिसंख्या चानुवादत्वेनावकल्पते । संख्यामन्त्रवन्ति तु यागान्तराणि विधीयन्ते । तेषां चोभयप्रमाणावगतत्वात् समुच्चयो न्याय्य इति ।

**शा**— सांग्रहण्यां श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति । सन्ति तु प्रकृतौ त्रयोऽनुयाजाः, ते किं आमनहोमैर्बाध्यन्ते उत समुच्चीयन्ते । प्रत्यक्षश्रुतत्वात् त्रित्वस्य च प्रकृतिलिङ्गत्वात् निवृत्तिः । अथवा 'यस्तिस्रो जुहोति तदामनमसीत्यादिभिर्मन्त्रैः' इत्यनुयाजेषु एव मन्त्रविधिः, त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादात् वाक्यभेदः, तस्मात् कर्मान्तराणि । न च त्रित्वमात्रमनेकसाधारणं अनुयाजकार्यं शक्नोति उपस्थापयितुमिति समुच्चयः ।

**सोम**— पूर्वत्र सप्तदशत्वसंख्यायाः प्रकृतौ अविद्यमानतया प्रकृतिलिङ्गत्वाभावेऽपि इह त्रित्वसंख्यायाः लिङ्गत्वं संभवतीत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— आमनहोमेऽपि समुच्चयः 'यत्प्रयाजानां पुरस्तात् उपरिष्टाद्वा जुहुयात् बहिरात्मन्सजातां दधीताथ यन्मध्यतो जुहोति मध्यत एव सजातां धत्ते' इत्यनूयाजानिवृत्तिलिङ्गादिति ।

**वि**— 'आमनाहुतिभिर्बाध्या अनुयाजा न वाऽग्रिमः । त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः ॥'

**भाट्ट**— सांग्रहण्येष्टयाम् 'आमनस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यत्रापि मन्त्रसंख्योभयविधाने वाक्यभेदापत्तेः कर्मान्तरविधानावश्यंभावे तेषामदृष्टार्थत्वात् न त्रित्ववत्त्वमात्रेणानूयाजकार्यापन्नत्वं यागहोमयोरत्यन्तवैसादृश्याच्च । अतश्चात्रापि नानुयाजानां बाधः । 'यत्प्रयाजानुयाजानां पुरस्तादुपरिष्टाज्जुहुयादात्मानमेव सजातानामादधीत मध्ये जुहोति' इति लिङ्गान्तरप्रदर्शनार्थं त्वधिकरणान्तरम् ।

**मण्डन**— 'अनुयाजाः स्युः सहाऽऽमनैः ।'

**शंकर**— 'अनुयाजास्तथाऽऽमनैः ।' समुच्चय इत्यर्थः ।

* सांग्रहणीष्टौ निर्वापमन्त्रे विश्वदेवपदोहः । भा. ९।३।१।१-२, ४-८.



* **सांग्रहणीन्यायः** । सांग्रहण्यङ्गं आमनहोमाः । ४।४।४।७. **मीको.** पृ. ९४९ 'आमनहोमन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **'साण्डः त्रिसंवत्सरः सोमक्रयणः'** प्रथमे साद्यस्क्रे । उत्तरेषु तु **'स्त्री गौः सोमक्रयणी'** । **भा.** ८।१।१२।१९. * साण्डः सोमक्रयणः त्रिवत्सः (त्रिवर्षः) साद्यस्क्रे । तेन च दशानामपि सोमक्रयसाधनानां बाधः । वि. १०।३।१६. * **साण्डे** त्रिवत्से सोमक्रयमन्त्रे 'तस्यै शृतं' इत्यादिपदानामूहो न कर्तव्यः । साद्यस्क्रे । ९।१।१५।४२-४४ वर्णकं २.

* **सादनं** ग्रहणशेषः । ग्रहणं हि प्रदानार्थम् । सादनेन ग्रहणं होमयोग्यं भवति । तस्मात् ग्रहणशेषः सादनम् । **भा.** १०।५।२१।७३.

**सादनं चापि शेषत्वात् । १०।५।२१।७३ ॥**

ज्योतिष्टोमे फलविशेषार्थं आश्विनाग्रता– शुक्राग्रता– मन्थ्यग्रताः श्रुताः । तेषां चाश्विनादीनां ऐन्द्रवायवात् प्राक् प्रतिकर्ष इत्युक्तम् । एवं प्रतिकर्षेण गृहीतानां आश्विनादीनां सादनं चापि सादनमपि प्रतिकृष्टव्यम् । शेषत्वात् सादनस्य ग्रहणशेषत्वात् । तस्मात् सादनस्यापि प्रतिकर्षः इति **सिद्धान्तः** ।

**लिङ्गदर्शनाच्च । ७४ ॥**

काम्यानां ऐन्द्रवायवात् प्राक् गृहीतानां आश्विनशुक्रादीनां ग्रहाणां सादनमपि ग्रहणवत् ऐन्द्रवायवसादनात् प्रतिकृष्टव्यं इत्यत्र लिङ्गदर्शनं पूर्वतरसूत्रे उक्तमेव ज्ञातव्यम् । **के.**

* **सादनस्यापि** प्रतिकर्षः ग्रहणप्रतिकर्षे ग्रहाग्रतासु । १०।५।२१।७३-७४. **मीको.** पृ. १६४८ 'ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सादनाङ्गं** 'तस्मिन् सीद०' इत्युत्तरार्धम्, सदनाङ्गं 'स्योनं ते०' इति पूर्वार्धम्, लिङ्गस्य वाक्यात् प्राबल्यात्, दर्शपूर्णमासयोः । **वि.** ३।३।८.

* **सादनापकर्षेऽपि** प्रदानस्य नापकर्षः ग्रहाग्रतासु । १०।५।२२।७५-७६. **मीको.** पृ. १६२५ 'ग्रहाग्रतासु सादनापकर्षेऽपि प्रदानस्य नापकर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सादनादीनां** ग्रहधर्माणां अनारभ्याधीतांश्वदाभ्यग्रहार्थताऽपि । ३।६।११।३२-३४. **मीको.** पृ. २ 'अंश्वदाभ्ययोरपि सादनादयो ग्रहधर्माः सन्ति' इत्यत्र अधिकरणं द्रष्टव्यम् । * सादनादीनां ग्रहधर्माणां सवनत्रयधर्मता । वि. ३।६।९.

* **सादनवत्** । यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते (एवं) । **भा.** १०।५।२२।७५.

* **सादनसंमार्गादयः** ग्रहधर्माः प्रातःसवने पठिता अपि सवनत्रये संबध्यन्ते । **वि.** ३।६।९.

* **सादृश्यमेव** सामान्यं इति मतनिरासः 'आकृतिवादः' इति बिन्दौ शास्त्रदीपिकाप्रघट्टके **मीको.** पृ. ७८४ इत्यत्र द्रष्टव्यः । * सादृश्यं धर्मसामान्यभूयस्त्वलक्षणम् । भूयस्त्वस्य तु आपेक्षिकत्वेन भूयस्तरापेक्षायां भूयसोऽपि अभूयस्त्वापत्तेः सुसदृशापेक्षायां मन्दसादृश्यस्य सादृश्यभावो युक्त एव । **सु.** पृ. ८४१. * सादृश्यं भूयोऽवयवसामान्यम् । वि. ६।३।११. * सादृश्यम् । 'भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्' । १८ ॥ 'सदृशावयवत्वं तु यत्र पद्मदलाक्षिवत् । तत् स्वावयवसामान्यभूम्ना तेषां भविष्यति ॥ १९ ॥ एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः । एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥' २० ॥ **श्लोवा.** उपमानम् । **रत्नाकरः**— वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा समवेतैर्यैः सामान्यैः येनैव प्रकारेण योगः तेनैव प्रकारेण वस्त्वन्तरस्य योगः सादृश्यम् । न तु अवस्तु, नापि तत्त्वान्तरं प्रमाणाभावात् । सर्वत्र सादृश्यबुद्धेः ईदृशसामान्ययोगान्वयव्यतिरेकात् । यदपि गुणयोः सादृश्यं यथा केतकीगन्धस्य सर्पगन्धस्य च, तत्रापि अवयविगुणानां अवयवगुणसामान्ययोगः सादृश्यम् । कर्मणामपि स्वसंबन्धिद्रव्यदेवतासामान्ययोग इति । पद्मदलस्य अक्ष्णोश्च स्वावयवसामान्ययोगः सादृश्यम् । पृ. ४३९.

* सादृश्यं यत्र तत्र धर्माः प्राप्यन्ते । असति सादृश्ये नास्ति धर्मप्राप्तिः । टुप्. ८।१।२।२. * सादृश्यम् । सामान्यमेव कैश्चित् सादृश्यमुक्तम् । न तत् सादृश्यम् । किं तर्हि ? अन्यदेव हि तत् । गोत्वादेरेकत्वात् । बृहती. पृ. ८४ । उक्तं तावत् सादृश्यज्ञानग्राह्यं सादृश्यमस्तीति । इदानीं किं सामान्यमेव उत अन्यत् इति विवेक्तुं परमतमुपन्यस्यति ' अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम् ' सामान्यमेव गुणावयवकर्मत्वादिकं धर्म्यन्तरगतं ज्ञायमानं सादृश्यमुक्तम्, सामान्यानि च भूयांसि गुणावयवकर्मणाम्, भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते इति । तत्राह– ' न तत् सादृश्यम् ' सादृश्यं भिन्नम् । अन्यदेव हि गवि गवये सादृश्यम्, अन्यच्च गवये गोसादृश्यम् । गुणत्वादिकं तु तदेव तद्धर्म्यन्तरे । ऋजु. पृ. ८४. * सामानाधिकरण्येन हि भवति सादृश्यं यथा सिंहो देवदत्तः इति । टुप्. ६।१।५।२३ पृ. १३६९. * देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यं बलीयः। भा. ८।१।१७।३२-३४. * सादृश्येन विध्यन्तो नियम्यते । टुप्. ८।१।३।५, १०।७।९।२५. * सादृश्याच्च परशब्दः परत्र प्रवर्तते । भा. ८।२।१।१, * सादृश्यात् यज्ञसाधनत्वरूपात्, ऐश्वर्याद्वा इन्द्रशब्दः गार्हपत्ये गौणः । ३।२।२।४. * सादृश्यस्य आपेक्षिकत्वात् सुसदृशेऽपेक्षिते विप्रकृष्टं विसदृशमेव भवति । वा. २।२।११।२५ पृ. ५४३.

* सादृश्यमात्रं दृष्ट्वा न प्रकृतिर्विकृतिर्वोच्यते । न हि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते । भा. ११।१।६।१६.

* सादृश्यविधिसरूपः मन्त्रः– ' श्येनमस्य वक्षः कृणुतात् ' इति । बाल. पृ. ६५.

* सादृश्यविशेषेण नियतप्रकृतितो धर्माणामतिदेशः । ८।१।२।२. मीको. पृ. २०९ ' अतिदेशः धर्माणां सादृश्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* साद्यस्कस्य पूर्वस्य धर्माणामुत्तरसाद्यस्केऽप्यतिदेशः । भा. ८।१।१२।१९, * साद्यस्के अपरस्मिन् स्त्री गौः सोमक्रयणी । सा कृत्स्नस्य क्रयद्रव्यसंघस्य निवर्तिका । १०।३।१६।६१. * साद्यस्के आग्नेयस्यैव पशोः प्रथममुपाकरणं न त्वग्नीषोमीयस्य । टुप्. ५।१।६।१३. * साद्यस्के खलेवाली एव यूपः । तत्र खादिरत्वादिनियमो नास्ति । तक्षणजोषणादयः पदार्थाः न कर्तव्याः । मैत्रावरुणदण्डेन भूमेः समक्रिया, अद्भिरवसेचनं इत्यादयः पदार्थाः कर्तव्याः । भा. १०।२।३२-३३।७१-७३. * साद्यस्के खलेवाल्यां जोषण–तक्षण–उच्छ्रयणानि न कर्तव्यानि । वि. १०।२।३२ ( जोषणं नाम प्रीतिपूर्वको यूपीयवृक्षस्य लक्षणलक्षिततया सेव्यत्वनिश्चयः । यूपार्थवृक्षलक्षणानि च ' समे जातं अशाखाजं, बहुपर्णशाखं, अप्रतिशुष्काग्रं, असुषिरं' इत्यादीनि ) । पर्यूहणं, परिदंहणं, परिषेकः, अञ्जनं, प्रोक्षणं इत्यादयस्तु यूपधर्माः खलेवाल्यां कर्तव्याः सार्थकत्वात् अविरुद्धत्वाददृष्टार्थत्वाच्च । खलेवाली नाम खले बलीवर्दबन्धनाय निखातो मेढिः । १०।२।३३. * साद्यस्के खलेवाल्यां तक्षणादीनामननुष्ठानम् । १०।२।३२।७२-७३ मीको. पृ. १५३५ ' खलेवाल्यां तक्षणजोषणादिधर्माणां बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * साद्यस्के खलेवाल्यां पर्यूहणसेचनादीनां संस्काराणामनुष्ठानम् । भा. १०।२।३३।७४. मीको. पृ. १५३६ ' खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * साद्यस्के खलेवाल्यां यूपाहुतेः बाधः । १०।१।५।९. मीको. पृ. ३२६३ ' यूपाहुतिन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * साद्यस्के चयनं नैव कर्तुं शक्यते, सद्यः समाप्तेः । सत्याश्रौ. ११।१।२ प्रयोगचन्द्रिकायाम्. * साद्यस्के ज्योतिष्टोमगतसोमक्रयाङ्गमन्त्रे ' इयं गौस्तया ते क्रीणामि ' इत्यत्र ' अयं गौः साण्डस्त्रिवत्सस्तेन ते क्रीणामि ' इत्यूहं कृत्वा ' तस्यै शृतं ' इत्येवमादिपदानां ऊहो न कर्तव्यः । भा. ९।१।१५।४२-४४. * साद्यस्के ' त्रिवत्सः साण्डः सोमक्रयणः ' अनेन दशानामपि सोमक्रयसाधनानां बाधः । वि. १०।३।१६. * साद्यस्के पशुषु शास्त्रीयसंस्कारनिरपेक्षाः वेदि–उत्तरवेदि–यूपाः ग्राह्याः । ' साद्यस्केषु उर्वरा वेदिः, खल उत्तरवेदिः, खलेवाली



यूपः ' इत्याश्वलायनः । आश्रौ. ९।७. * साद्यस्के पूर्वस्मिन् ' साण्डः त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानाम् ' इत्याम्नाय उत्तरस्मिन् अपि तमेव दर्शयति ' स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धिता ' इति । भा. ८।१।१२।१९. * साद्यस्के विहितेन त्रैवार्षिकेण पुंगवेन प्राकृतसर्वक्रयद्रव्यस्य बाधः । १०।३।१६।६०-६१. मीको. पृ. १९७१ ' त्रिवत्साधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**¤ साद्यस्के सवनीयमालभ्य इतरयोरालम्भ इति साहित्यम् ॥**

**स्थानाच्चोत्पत्तिसंयोगात् । ५।१।६।१३ वर्णकं २ ॥**

**भाष्यम्**— समाम्नायपाठक्रमादेवात्र ( एकविंशात्यतिरात्रे ) नियम इति पुनरुक्तता गम्यते इति अन्यथा ( सूत्रं ) वर्ण्यते । साद्यस्के श्रूयते ' सह पशूनालभते ' इति । तत्र एषोऽर्थः समधिगतः, सवनीयकाले त्रयाणामालम्भः इति ( ३।८।२१।३९-४१ ) । अथात्र पाठक्रमात् किं अग्नीषोमीयः पूर्वमालब्धव्य उत स्थानक्रमात् पूर्वं सवनीय इति । किं प्राप्तम् ? पूर्वं अग्नीषोमीय इति । कुतः ? पाठक्रमात् । एवं प्राप्ते, ब्रूमः । सवनीयः पूर्वं स्थानात् । यदि पूर्वमग्नीषोमीयः स्यात्, सवनीयस्थानं व्याहन्येत, ' आश्विनं गृहीत्वा त्रिवृता यूपं परिवीय ' इति । ननु इतरत्रापि पाठक्रमो बाध्येत । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्दः समाम्नातः । अप्रतिषिद्धं च आश्विनग्रहस्थानम्, तन्न बाधितव्यम् ।

**टुप्**— ' सह पशूनालभते ' इति श्रुत्यर्थपाठप्रवृत्तीनामभावात् अनियमः । अथास्य प्रयोजनं नियमेन ततः अग्नीषोमीयप्रकृतौ प्रथममनुष्ठानं पाठादवगतं इहापि तथैव भवितुमर्हति इत्येवं प्राप्ते, ब्रूमः । आग्नेयस्य प्रथममुपाकरणम् । कथम् ? ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति । ( ननु ) अयुक्तमिदं व्याख्यानम् । न हि शास्त्राणि अतिदिश्यन्ते । यद्यपि अतिदिश्येरन् तथापि पाठक्रमो वा स्यात् श्रुतिक्रमो वा । पाठक्रमे पुनः उक्तमेव । क्त्वाशब्देन पूर्वकालता अभिधीयते, नानन्तर्यम् । आनन्तर्याभावात् अग्नीषोमीयेऽपि प्राकृते पूर्वकालताऽपि घटत एव । उच्यते । ' सह पशूनालभते ' इति न्यायात् ( ३।८।२१।३९-४१ ) सवनीयस्थाने । तत्र आश्विनो गृह्यमाण आग्नेयं शक्नोत्यवबोधयितुम् । स्वस्थानाद्धि चलितत्वात् नास्त्यवबोधकं प्रमाणं अग्नीषोमीयस्य । तस्मात् नानेन वाक्येन शास्त्रातिदेशं भाष्यकार आह, न च वचनेन कृतं क्रमम् । किं तर्हि ? अनेन आश्विनकालं लक्षयति । स च शक्नोति सवनीयमेव बोधयितुं इत्येतावदेव अभिप्रेतम् । अग्नीषोमीयानुबन्ध्ययोः अनियमे प्राप्ते प्रकृतौ अनुबन्ध्यात् पूर्वं अग्नीषोमीयो दृष्ट इहापि तथैव भवितुमर्हति । ' नन्वितरत्रापि पाठक्रमो बाध्यते । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्दः ' इति । कोऽभिप्रायः– पूर्वः पदार्थः समाप्यमानः उत्तरं बुद्धौ अभिनिर्यस्यति इत्ययं पाठक्रमः । अग्नीषोमीयसवनीययोश्च पौर्वापर्यमात्रं तत् बाध्यते । यद्येवंविधं पाठक्रमं ब्रवीषि स बाध्यते । सहशब्दश्रवणात् सवनीयस्य उपस्थापकमस्ति, नेतरयोः ।

**शा**— ' आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः । इतरश्चलितः स्थानान्नोपस्थाप्येत केनचित् ॥ ' अतः सवनीयस्यैव प्राथम्यं इतरयोस्तु मिथःक्रमे अनियम एव, तयोरुपस्थाने विशेषाभावात् । अथवा प्रकृतिदृष्टं पौर्वापर्यमात्रं असति बाधके अनुगृहीतव्यं इति अग्नीषोमीयमुपाकृत्य अनुबन्ध्योपाकरणम् ।

**सोम**–– प्रधानप्रत्यासन्नत्वात् अग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशाभ्यामनुग्रहवचनाच्च सवनीयस्थाने एव इदं साहित्यं इति तृतीयोपान्त्ये स्थितम् । वार्तिककारैः अग्नीषोमीयानुबन्ध्ययोः क्रमविषयं विचारान्तरं कृतम् ।

**वि**–– ' प्राथम्यमग्नीषोमीये साद्यस्काख्यक्रतावुत । सवनीये, ऽग्रिमो यस्मात् प्रकृतौ तदपेक्षितम् ॥, आश्विनग्रहसामीप्ये सवनीयपशोः स्थितिः । नियते तत्क्रमे स्थानाच्छिष्टयोः प्राकृतो नयः ॥ '

**भाट्ट**—— स्थानं च क्रमनियमे प्रमाणम् । तच्च क्लृप्तक्रमकपूर्वपदार्थोपस्थितिः । सा च ‘ एकसंबन्धिदर्शनेन अपरसंबन्धिस्मरणम् ’ इति न्यायेन उत्तरपदार्थस्य झटिति उपस्थापिका । अतः तत्साहित्येन विहितानामन्येषां पदार्थानां तदनन्तरानुष्ठानसिद्धिः । यथा प्रकृतौ अग्नीषोमप्रणयनानन्तरं औपवसथ्याहे दैक्षः पशुः, आश्विनग्रहग्रहणोत्तरकालं च सौत्याहे सवनीयः, उदयनीयानन्तरं सुत्योत्तरमनूबन्ध्यः । साद्यस्क्रे च सर्वं अग्नीषोमप्रणयनादि सौत्येऽहन्येव क्रियते । तद्वाचनिकातिदेशात् श्येनेऽपि । तत्र च ‘ सह पशूनालभते ’ इति श्रुतम् । तच्च प्रधानेन अत्यन्तप्रत्यासत्तिलाभात् आश्विनोत्तरमेव इति स्थितं तृतीये ( उपान्त्येऽधिकरणे ) । अतश्च आश्विनस्य उपस्थापकस्य सत्त्वात् सवनीयस्यैव स्थानात् प्रथमत उपाकरणम् , न तु दैक्षस्य, तदुपस्थापकस्य भ्रष्टत्वेन स्थानाभावात् । प्राकृतपाठस्य च व्यवधायकपदार्थान्तरसत्त्वेन नियामकत्वाभावात् । अत एव उपाकरणोत्तरभाविनियोजनादिपदार्थेषु प्रधानसहितेष्वपि प्रवृत्त्यैव क्रमसिद्धेः न स्थानोदाहरणता । प्रधाने स्थानाभावाच्च नोपाकरणे मुख्यक्रमाशङ्का । अतः स्थानादेव सवनीयस्य प्रथममुपाकरणम्, तदुत्तरं दैक्षस्य, तदुत्तरं अनूबन्ध्यस्य । प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । अत्रापि स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगे अवगते प्रयोगविधिना प्रयोगविधानम् ।

**मण्डन** —— ‘ साद्यस्क्रे तु पशुक्रमः । ’ स्थानात् ।

**शंकर**—— ‘ स्थानात् साद्यस्क्रपशुषु । क्रमश्चेतरयोस्ततः ।’

* साद्यस्क्रे ‘ सह पशूनालभते ’ इति अग्नीषोमीयसवनीयानुबन्ध्यानां सहालम्भः । तत्र सुत्यादिने प्रातःसवने आश्विनग्रहोत्तरं आदौ सवनीयः पशुः , ततः सद्योऽग्नीषोमीयः , ततश्चानुबन्ध्यः इति क्रमेण साहित्यं इति स्थानरूपः क्रमोऽयम् । वि. ५।१।६, * साद्यस्क्रे सोमक्रये ‘ इयं गौः सोमक्रयणी, तया ते क्रीणामि’ इति ज्यौतिष्टोमिकमन्त्रस्थाने ‘अयं साण्डः सोमक्रयणः तेन ते क्रीणामि ’ इति ऊहः कार्यः । परंतु ‘ तस्यै शृतं, तस्यै शरः ’ इत्यादिस्थाने ‘ तस्मै शृतं, तस्मै शरः ’ इत्यादिरूहो न कर्तव्यः किंतु यथाश्रुतो मन्त्रो ग्राह्यः । अविद्यमानधर्मैरपि स्तुतिर्भवति परंपरया वा । ९।१।१६ वर्णकं २. * साद्यस्क्रे सोमक्रयसाधने साण्डे पुंस्त्वेऽपि ज्योतिष्टोमगतमन्त्रस्य ‘ तस्यै शृतम् ’ इत्यादेर्नोहः । ९।१।१६।४२–४४ वर्णकं २. **मीको.** पृ. १२३० ‘ऊहः न साद्यस्क्रे सोमक्रयसाधने० ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * साद्यस्क्रे स्थाण्वाहुतेर्बाधः । १०।१।६। १०–१३. ‘ स्थाण्वाहुतिन्यायः ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * साद्यस्क्रे स्थानादेव सवनीयस्य प्रथममुपाकरणम् , तदुत्तरं दैक्षस्य, तदुत्तरमनूबन्ध्यस्य, प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । भाट्ट. ५।१।६, * साद्यस्क्रे स्थानगम्यक्लृप्तक्रमकउपाकरणस्य वाचनिकातिदेशवत्यां कस्यांचित् विकृतौ वाचनिकोपाकरणव्यत्यये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः । ५।१।१०.

* **साद्यस्क्रादिनिकायिषु** तत्तत्प्रथमनिकायिधर्माणामतिदेशः । ८।१।१२।१९. **मीको.** पृ. २११ ‘ अतिदेशः निकायिनामुत्तरेषु पूर्वनिकायिधर्माणाम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **साधकम्** । यद्धि यस्य कारणभूतं दृष्टं सिद्धे, तच्चेत्साध्येऽपि कारणभूतमित्यवगम्यते, भवति तत्तस्य साधकम् । यन्न ज्ञायते कारणभूतमिति न तत् सदृशमपि साधकम् । **भा.** २।२।११।२५ पृ. ५४४.

* **साधकतमत्वं** प्राधान्यलक्षणम् । **सु.** पृ. ७४४. * यदेव हि तदुपयोगिमात्रम् , तदेव शक्यते कथंचित् **साधकतमत्वेन** विवक्षितुम् । **वा.** १।२।३।२६ पृ. १३९.

* **साधनम्** । न किंचित् साधनं अप्रदर्शितविषयं स्वार्थं साधयति (साधनं हेतुः, विषयः साध्यम् ) । **वा.** २।३।६।१६. * साधनम् । स्वयमनुमितार्थे परस्यापि अनुमानबुद्धिः येन वाक्येन उत्पद्यते तत् वाक्यं साधनमित्युच्यते । तच्च वाक्यं प्रतिज्ञाहेतुदृष्टान्तैः सावयवम् । **रत्नाकरः** अनुमानपरिछेदे श्लोकः ५३



पृ. ३६१. * **साधने** कामना गौणी, साध्ये च मुख्या । **टुप्** . ११।१।१।१.

* **साधनानुरूपत्वं** साध्यानाम् । **वा.** १।२।१।१७ पृ. १३०.

**साधनाऽनुष्ठानतन्त्रा हि साध्यसंसिद्धिरिति न्यायः** । यथा, साधनानि चत्वारि– १ नित्यानित्यवस्तुविवेकः , २ इहामुत्रार्थफलभोगविरागः , ३ शमदमादिषट्संपत्तिः , ४ मुमुक्षुत्वं च । एतत्साधनानुष्ठानतन्त्रा हि यथा साध्यस्यात्मज्ञानस्य संसिद्धिर्भवति, तथा प्रकृतान्तरेऽपीति बोध्यम् । **साहस्री.** ४२२.

* **साधनाभासः** । ‘ अन्यसाधनमन्यस्य साधनाभास उच्यते ’ । **श्लोवा.** १।१।१।१२२.

* **साधनग्रहणम्** । कार्यार्थं हि सर्वत्र साधनग्रहणम्, न स्वरूपमात्रसंभावनार्थम् । **वा.** ३।६।३।१० पृ. १०३६.

* **साधनता** । न चैकस्वरूपैव सर्वेषां साधनता । **वा.** ३।१।६।१२ पृ. ६९३.

* **साधनत्वम्** । न हि अविधीयमानानां अर्थानां साधनत्वं संभवति । **वा.**२।२।११।२६ पृ. ५४७.

* **साधनत्वमात्रं** धर्मप्राप्तौ तन्त्रं न तु वाचनिकत्वम् । **सोम.** ९।२।१४.

* **साधनवशेन** साध्यस्य नियमो भवति, तद्यथा आहवनीयादिवशेन अग्निहोत्रादेः । **वा.** ३।२।११।२९.

* **साधनविनाशव्यतिरेकेण** कार्यविनाशाभावः । **वा.** २।२।७।२१ पृ. ५२८.

* **साधारणानि** पात्राणि पृथगेव सत्रे कर्तव्यानि । ६।६।६।३३–३४. **मीको.** पृ. ३०५ ‘ अधिकारः सत्रे संपादितसाधारणपात्राणामेव यजमानानाम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **साधारणे** वस्तुनि कथंचिदेकस्य भागाधिक्ये अपराधो भवति । **वि.**३।५।१७. * **साधारणेषु** च परिषद्वनोपहारगोष्ठीभोजनादिषु इयं स्थितिः, यदेकस्य भागे अपयातिते तावन्मात्रमेव तस्य, अवशिष्टं तु तत्समानभागं अवधार्यमाणं न पूर्वशेषः इत्येवमकृतार्थत्वेन प्रतिपत्तिमपेक्षते । यदा तु सर्वैः समानभागिभिर्यथायोग्यमुद्धृता भागा भवन्ति तदा तस्य साधारण्यानुगुणा एव प्रतिपत्त्यपेक्षा भवति । **वा.** ३।५।१।६. * **साधारणी** न दीक्षा दक्षिणा च अङ्गेषु प्रधानेषु च, किंतु प्रधानमात्रार्थे ते ज्योतिष्टोमे । **भा.** ३।७।५।११–१२.

* **साधारणधर्मेण** गम्येन उपमानोपमेयभावनिर्देशेऽपि न काचिदनुपपत्तिः । **पराक्रमः** . ४५।२.

* **साधारण्यं** अभिमर्शनादेः अङ्गप्रधानहविषाम् । ३।७।४।८,१०. **मीको.** पृ. ५५९ ‘ अभिमर्शनाधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * साधारण्यं न यजमानसंस्काराणां किंतु प्रधानमात्रार्थत्वम् । **भा.** ३।७।२।६, * साधारण्यं बर्हिरादीनां अङ्गेषु प्रधानेषु च । वेदिबर्हिर्धर्मन्यायः । ३।७।१।१–५, साधारण्यं सौमिक्या वेदेः अङ्गप्रधानेषु । ३।७।३।७,९.

* **साधारण्यविधिः** क्रिया–गुण–जाति–द्रव्यविषयकत्वेन चतुर्विधः सन् प्रत्येकं उद्देश्यांशे विधेयांशे उद्देश्यविधेयोभयांशे चेति त्रिविधः इति संहत्य द्वादशविधः । **बाल.** पृ. २१, * साधारण्यविधिः द्विविधः क्रत्वर्थः पुरुषार्थश्च । क्रत्वर्थः दृष्टार्थः, पुरुषार्थः अदृष्टार्थः । पृ. २१, * साधारण्यविधिः द्विविधः– विनियोगसाधारण्यविधिः अनुष्ठानसाधारण्यविधिश्चेति । पृ. २०.

* **साधुः** शब्दः ‘ गौः ’ इति, गावी–गोणी–गोपोतलिका इत्येवमादयः स्वस्वदेशभाषामनुसृत्य ये प्रयुज्यन्ते लोकैस्ते असाधवः । **वि.** १।३।९, * **साधवः** एव सर्वे शब्दाः । साधुत्वासाधुत्वे नियामकं नास्तीति चेन्न, व्याकरणस्य नियामकत्वात् । गवाद्या एव साधवः, न तु गावी इत्यादयः इति व्याकरणेन नियम्यते । ‘एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति ’ इति गुणवाक्यम् । ‘ ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः ’ इति दोषवाक्यम् । १।३।९. * **साधोः** वचनं बहुशोऽप्युच्यमानं न्याय्यमेव । असाधोस्तु सकृदप्यन्याय्यम् । **भा.** ५।१।१।१. * **साधूनामेव** शब्दानां प्रयोगः कर्तव्यः । **भाट्ट.** १।३।८ । ‘ अत्र श्रेयोऽर्थिनोऽवश्यं

साधुभाषा नियम्यते । नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति ॥ ' वा. १।३।८।२७ पृ. २८२.

* **साधुत्वं** (शब्दस्य) अनादिवृत्तिप्रमाप्रयोज्यार्थप्रतिपादकत्वम् । पौरुषेयसंकेतविरहविशिष्टत्वं साधुत्वं इत्याह । अदृष्टजनकतावच्छेदकः व्याकरणाभिव्यङ्ग्यः जातिविशेष एव साधुत्वं इत्यपि कश्चित् । **मणि.** पृ. ७२. * साधुत्वं ( शब्दस्य ) – ' न हि वाच्यमविज्ञाय साधुत्वमवधार्यते ' । **वा.** १।३।९।३३ पृ. ३०७.

* **साधुत्वासाधुत्वविचारः**– अत्राहुः । असाधुपदेन अर्थप्रत्ययाभावात् साधुपदज्ञानमपि शाब्दबोधे हेतुः । साधुत्वं च अनादिवृत्तिप्रमाप्रयोज्यार्थप्रतिपादकत्वम् । तेन भाषाशब्देषु अनादिशक्त्यभावात् शक्यार्थाभावेन लक्षणाया असंभवात् न साधुत्वम् । लाक्षणिकगङ्गापदे च न क्षतिः । आधुनिकसंकेतितडित्थादिपदेषु पाणिनिसंकेतितवृद्धिटिघुभादिपदेषु च ' पिता नाम कुर्यात् ' इति विधिना पुत्रत्वनामत्वोपाधिना ' व्याकृता वागुद्यते ' इति विधिना व्याकरणोपाधिना च अनादिवृत्तिप्रमासंभवात् साधुत्वम् ।

वृत्तिभ्रमेण अर्थप्रत्यायकत्वं असाधुत्वम् । तद्यथा, भाषाशब्दानां प्रयोगप्रमयोः करणापाटवशक्तिभ्रमाभ्यां उपपत्तेः शक्त्यभावादेव वृत्त्यन्तरस्य चासंभवात् न वृत्तिप्रमा इति न साधुत्वम् ।

**राणकस्तु** पौरुषेयसंकेतविरहविशिष्टत्वं साधुत्वम् । व्याकरणसंकेतितानां असाधुत्वं इष्टमेव इत्याह । तन्न । टिपदोत्तरं विभक्त्यनुत्पत्तिप्रसङ्गात् ।

टिघुभादिशब्दानां उभयबहिर्भूतत्वं इति **केचित्** ।

अदृष्टजनकतावच्छेदकः व्याकरणाभिव्यङ्ग्यः जातिविशेषः एव साधुत्वं इत्यपि **कश्चित्** । तदुक्तम्– ' अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता । व्याक्रियाव्यञ्जनीया सा जातिः काऽपीह साधुता ॥ यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः । कथं नु तासां साधुत्वं, नैवं ताः साधवो मताः ॥ अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता । हस्तचेष्टा यथा लोके तथा संकेतिता इमाः ॥ ततश्चासां नाभ्युदयः प्रत्यवायोऽपि वा भवेत् । लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥ ' इति ।

वस्तुत: साधुत्वज्ञानं न कारणम्, नापि असाधुत्वज्ञानं प्रतिबन्धकम् । किंतु तादृशसमभिव्याहारस्य तादृशाकाङ्क्षाया वा हेतुत्वात् नोक्तातिप्रसङ्ग इति युक्तम् । **मणि.** पृ. ७२.

* **साधुभाषणस्य** सर्वदा नियमे मौने दोषः अपरिहार्यः । स्वाभिप्रायप्रकाशनद्वारा अर्थज्ञापनं मौनिना अक्षिनिकोचादिना क्रियमाणं न श्रेयःसाधनम् । भोजनादौ मौनविधाने शाकादेः निवारणादि हस्तसंज्ञादिना न कार्यम् । शिष्टाचारविरोधपरिहारार्थं वा मौनविध्यभावविषयत्वं साधुभाषणनियमस्य कल्पनीयम् । सु. पृ. ३१८.

**साधुमैत्रीन्यायः** । आदौ लघुः पश्चान्महती । **संग्रहः**.

* **साधुशब्दाधिकरणम्** । ( १।३।८।२४–२९ ) । असंसारिरूपसगुणनिर्गुणात्मज्ञानस्य अभ्युदयनिःश्रेयसार्थतया साधुशब्दाधिकरणे वक्ष्यमाणत्वात् सिद्धार्थप्रतिपादनपराणामप्युपनिषदां उपासनाविधिशेषतया चोदनाशब्देन उपादानसंभवात् चोदनासूत्रप्रतिज्ञातप्रामाण्यसाधनं संगतम् । सु. पृ. २५. * साधुशब्दाधिकरणम् ( कर्मसु साधवः एव शब्दाः प्रयोज्याः ) । १।३।८। २४–२९. **मीको.** पृ. ३७६६ ' व्याकरणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * गाव्यादिशब्दानां अवाचकत्वे अप्रामाण्यस्यातिप्रसिद्धत्वात् अनादरे लौकिकानां वाचकावाचकेषु समदृष्टित्वापत्तेः तत्कथनं साधुशब्दाधिकरणे करिष्यते । सु. पृ १७१.

* **साधुशब्दोच्चारणं** उच्चारयित्रर्थं क्रत्वर्थं च यद्यपि न भवति तथापि तद्गतनियमप्रतिषेधयोरेव क्रत्वर्थपुरुषार्थत्वे भविष्यतः । वा. १।३।८।२७ पृ. २८४.

* **साधुशब्दप्रयोगस्य** फलसाधनतैव अवगम्यमाना प्रयोक्तुः फलभाक्त्वं आक्षिपति । सु. पृ. ३२१.

* **साध्यस्य** साधनवशेन नियमो भवति, तद्यथा आहवनीयादिवशेन अग्निहोत्रादेः । वा. ३।२।११।२९.



* **साध्ये** कामना मुख्या, साधने तु नान्तरीयकी, साधनेन विना साध्याभावात् । **टुप्.** ११।१।१।१.

* **साध्यसाधनभावलक्षणसंबन्धविशेषः** व्यवधाने न संभवति । सु. पृ. ८५६.

* **साध्यसाधनसंबन्धस्य** ( वैदिककर्मस्वर्गादिफलयोः ) वैदिकत्वम् । **टुप्.** ७।४।१।१. * ' साध्य-**साधनसंबन्धे** विधिना प्रतिपादिते । लक्ष्यमाणत्वमुभयोः ' । फलस्य विधेयनिषेध्यत्वाभावेन विधिनिषेधविषयत्वायोगात् तद्भेदनिमित्तविषयभेदायोगमाशङ्क्य ' साध्य...... मुभयोः ' इत्यनेन न्यायेन फलस्यापि विषयत्वोपपत्तिं सूचयति । सु. पृ. १३९२.

* **साध्यसिद्धये** साधनं स्वयमेवोपादीयते । **भा.** ६।३।१३।३१.

* **साध्यस्वभावः** धात्वर्थः ' करोति ' इत्यनेन व्यवह्रियमाणो लिङ्गसंख्याद्यपेतः । **वि.** २।१।१ वर्णकं २.

* **साध्यस्वभावधात्वर्थद्योतनाय** आख्यातप्रत्ययो विहितः । **वि.** २।१।१ वर्णकं २.

* **सांतपनीयस्य** माध्यंदिने निरुप्यते इति वचनात् मध्यंदिनकालान्येव अङ्गानि भवन्ति । **भा.** ११। ४।५।१६, * यदनीकवतो बर्हिस्तत् **सांतपनीयस्य** । ११।२।३।१७, * **सांतपनीया** इष्टिः चातुर्मास्यगतसाकमेधस्था मध्यंदिने कर्तव्या सद्यस्काला । साकमेधीयन्यायः । ५।१।११।१९–२२.

**सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद् वैगुण्यात्** । ५।१।१७।३०॥

चातुर्मास्येषु साकमेधावयवः माध्यंदिने सांतपनीया नाम इष्टिः ' मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुं निर्वपति ' इति । सा दैवान्मानुषाद्वा प्रतिबन्धात् सायमादिकाले उत्कृष्यमाणा सायमग्निहोत्रहोमं उत्कर्षेन्न वा इति विचारे पूर्वपक्षमाह । पूर्वं प्रासङ्गिकस्य उत्कर्षाभाव उक्तः, तद्वैलक्षण्यार्थः तु–शब्दः । सांतपनीया इष्टिः उत्कृष्यमाणा सायमग्निहोत्रं उत्कर्षेत् । सवनवत् । यथा प्रातःसवनं केनचित् प्रतिबन्धेन उत्कृष्यमाणं सत् माध्यंदिनं सवनं उत्कर्षति तथा । उत्कर्षाभावे तु वैगुण्यात् वैगुण्यप्रसङ्गात् । योग्यकाले उद्धरणाभावादिना अग्निहोत्रं विगुणं स्यात् । तस्मात् अग्निहोत्रस्य उत्कर्षः ।

**अव्यवायाच्च । ३१ ॥**

चातुर्मास्येषु साकमेधपर्वणि सांतपनीया नाम इष्टिः माध्यंदिने विहिता । तत्र दैवात् मानुषाद्वा प्रतिबन्धात् यदि कालात्ययः स्यात् तदा सायमग्निहोत्रस्यापि कालात्ययः प्रसज्येत । तथा सति अग्निहोत्रस्य उत्कर्षः कालात्ययः कर्तव्यः इति पूर्वः पक्षः । तत्र हेत्वन्तरपरं सूत्रम् । चकारः हेतुसमुच्चयार्थः । उत्कर्षे कृते आदौ सांतपनीया ततः सायमग्निहोत्रं इति क्रमः संगच्छते, अव्यवायात् व्यवायाभावात् । उत्कर्षाभावे तु सांतपनीयामध्ये एव अग्निहोत्रं कर्तव्यं भवेत्, ततश्च व्यवायो व्यवधानं स्यात् । तस्मात् उत्कर्षः । संपूर्णसांतपनीयोत्तरं अग्निहोत्रं कर्तव्यं इति ।

**असंबन्धात्तु नोत्कर्षेत् । ३२ ॥**

चातुर्मास्येषु साकमेधपर्वणि सांतपनीया नाम इष्टिः माध्यंदिने उक्ता । दैवात् मानुषाद्वा प्रतिबन्धात् तस्याः कालात्यये सायमग्निहोत्रमपि सा उत्कर्षेन्न वा ? नोत्कर्षेत् इति सिद्धान्तः । सांतपनीया कालातीता सती सायमग्निहोत्रं नोत्कर्षेत् । कुतः ? असंबन्धात् । तयोः अङ्गाङ्गिभावाभावात् । तथा च तादृशस्थले सांतपनीयायाः मध्ये अग्निहोत्रकाले किंचिद्विरम्य अग्निहोत्रहोमं कृत्वा सांतपनीयायाः अवशिष्टं कर्म कर्तव्यं इति **सिद्धान्तः** ।

**प्रापणाच्च निमित्तस्य । ३३ ॥**

साकमेधेषु प्रथमदिने माध्यंदिने विहिता सांतपनीया नाम इष्टिः केनचित् प्रतिबन्धेन सायंकालादौ उत्कृष्टाऽपि सायमग्निहोत्रहोमं नोत्कर्षेत् इति उक्ते सिद्धान्ते हेत्वन्तरमाह सूत्रम् । अग्निहोत्रे कालरूपं यन्निमित्तं ' सायं जुहोति ' ' प्रथमास्तमिते जुहोति ' ' संधौ जुहोति ' इति, तस्य प्रापणात् प्राप्तत्वात् तदतिक्रमे कारणाभावात् होमस्य नोत्कर्षः । चकारः हेतुसमुच्चये ।

**संबन्धात् सवनोत्कर्षः । ३४ ॥**

साकमेधेषु प्रथमदिने माध्यंदिने विहिता सांतपनीयेष्टिः केनचित् प्रतिबन्धेन सायंकालादौ उत्कृष्टा सती

सायमग्निहोत्रमपि उत्कर्षेत् इति पूर्वपक्षे सवनवत् इति यो दृष्टान्त उक्तः, तं निरसितुं सिद्धान्तपक्षीयं सूत्रमिदम्। सवनेन प्रातःसवनेन प्रतिबन्धबलात् माध्यंदिनादिकाले उत्कृष्टेन माध्यंदिनं सवनमुत्कृष्यते इति यः सवनोत्कर्षं उक्तः स संबन्धात् एकक्रतुसंबन्धात् युक्तः। अग्निहोत्रहोमस्य तु न साकमेधैः न वा सांतपनीयया संबन्धः। तस्मात् सांतपनीयया अग्निहोत्रहोमस्य नोत्कर्षः। के.

* सांतपनीयोत्कर्षे अग्निप्रणयनं कालेन बाध्यते। बाल. पृ. १३२.

* सांतपनीयान्यायः ( ५।१।१७ )। 'द्वादशाहेन प्रजाकामं याजयेत्' इति द्वादशदिनात्मककालविधिरेवायम्, अतश्च सांतपनीयान्यायेन आतिदेशिककालबाधात् साङ्गानां द्वादशसुत्यानां द्वादशदिनसमाप्यत्वावगतेः, इत्यादिः द्वितीयः पूर्वपक्षः। भाट्ट. ११।४।५.

**सांतपनीयान्यायः।** सांतपनीयोत्कर्षेऽपि अग्निहोत्रहोमस्य नोत्कर्षः॥

**सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद् वैगुण्यात्। ५।१।१७।३०॥**

**भाष्यम्**-- चातुर्मास्येषु साकमेधावयवः सांतपनीया नामेष्टिः 'मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुं निर्वपति' इति। सा दैवान्मानुषाद्वा प्रतिबन्धादुत्कृष्यमाणा अग्निहोत्रमुत्कर्षेन्न वेति संशये। उच्यते। सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवत् वैगुण्यात्। यदि नोत्कर्षेदग्निहोत्रं अनग्निहोत्रकाले उद्धृतेऽग्नौ अग्निहोत्रं विगुणं स्यात्। तस्मादुत्क्रष्टव्यम्, सवनवत्। यथा प्रातःसवनं दैवान्मानुषाद्वा प्रतिबन्धादुत्कृष्यमाणं माध्यंदिनं सवनमुत्कर्षतीति। एवमत्रापि द्रष्टव्यम्।

**टुप्**-- भिन्नप्रयोगवचनपरिगृहीतानामपि पौर्वापर्यं चिन्त्यते। यथा प्रोक्षणादिभिः प्रचरणीहोमादय उत्कृष्यन्ते। पूर्वो हि पदार्थः उत्तरमभिनियच्छति, एवमिहापि।

**अन्यवायाच्च। ३१॥**

**भाष्यम्**-- एवं सांतपनीयमग्निहोत्रेण न व्यवहितं भविष्यतीति। तत्र क्रमोऽनुग्रहीष्यते। क्रमभेदे च दोषः श्रूयते 'अप वा एतद्यज्ञस्य छिद्यते, यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायते' इति।

**असंबन्धात्तु नोत्कर्षेत्। ३२॥**

**भाष्यम्**— नाग्निहोत्रस्य सांतपनीया अङ्गम्, न सांतपनीयाया वाऽग्निहोत्रम्। तेन नासावग्निहोत्रस्य पुरस्तात् कर्तव्या। अतो नाग्निहोत्रमुत्क्रष्टव्यम्।

**टुप्**— एकप्रयोगवचनपरिगृहीतानामुत्कर्षः।

**प्रापणाच्च निमित्तस्य। ३३॥**

**भाष्यम्**— प्राप्तं चाग्निहोत्रस्य निमित्तम्। 'सायं जुहोति' 'प्रातर्जुहोति' 'उदिते जुहोति' 'अनुदिते जुहोति' 'प्रथमास्तमिते जुहोति' 'संधौ जुहोति' 'नक्षत्राणि दृष्ट्वा जुहोति' इति। तन्नातिक्रमितव्यम्। तस्मादपि नोत्कर्षः। यदुक्तं वैगुण्यमिति, उत्कर्षेऽपि वैगुण्यम्, कालान्यत्वात्। अङ्गप्राप्तेर्जघन्यः कालविधिर्बाध्यतामिति चेन्न, कालस्य निमित्तत्वात्। तदपाये अश्रुतमेव सर्वं क्रियेत तन्निमित्तत्वं चानुपादेयत्वेन श्रवणात्। सप्तमी ह्याघारादिष्वसंभवान्निमित्तसप्तमी द्रष्टव्या।

**टुप्**—काले हि निमित्ते कर्म विधीयमानं तस्मिन्नेव काले कर्तव्यम्। 'अङ्गप्राप्तेर्जघन्यः कालविधिर्बाध्यतामिति चेत्' सेतिकर्तव्यताकेऽत्र प्रयोगेऽवधृते पश्चात् कालसंयोगः। तस्माज्जघन्यत्वादसौ बाध्यताम्। इतरस्त्वाह, नाङ्गमात्रं कालः। किं तर्हि ? निमित्तम्।

**संबन्धात् सवनोत्कर्षः। ३४॥**

**भाष्यम्**-- अथ यदुक्तं सवनवदुत्क्रष्टव्यमिति। तदुच्यते। संबद्धं हि सवनं सवनेन। एकक्रतुसंबन्धात् तदुत्कृष्यते।

**शा**-- सायंकाले द्वयोः संनिपतितयोः अवश्यंभाविनि पौर्वापर्ये, सांतपनीयां कृत्वा क्रियमाणस्याग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति किं न्याय्यं इति युक्ता चिन्ता। तत्र सांतपनीया तावत् स्वकालं मध्यंदिनमतिपन्नैव, न तस्याः कश्चित् उभयथाऽपि विशेषः।



अग्निहोत्रस्य तस्मिन् काले क्रियमाणस्य प्रणयनलोपः स्यात्, उत्कर्षे तु काललोपः। तत्र कस्यानुग्रहः, कस्य लोपः इति चिन्त्यते। तत्र मुख्यत्वात् प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाधः, **इति प्राप्ते, उच्यते।** कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात् तस्मिन् प्राप्तमग्निहोत्रं किंचिदङ्गमपहायापि कर्तव्यम्। तस्मात् अग्निहोत्रं हुत्वा सांतपनीया समापनीया।

**सोम**--पूर्वत्र जघन्यपाठक्रमवत् इह जघन्यकालस्य बाध इति प्रत्यवस्थानात् **संगतिः।** न च कालस्य अधिकारिविशेषणत्वात् तदभावे अधिकाराभावात् कथमग्निहोत्रानुष्ठानमिति **वाच्यम्।** कालस्य अधिकारिविशेषणत्वेनाश्रवणात्, इति **चेन्न,** अश्रवणेऽपि कालस्यानुपादेयतया यदा स्वयमेव काल आपतति, तदा कर्म कर्तव्यम्, इत्यर्थात् कालतः अधिकारपर्यवसानात् कालस्याधिकारिविशेषणत्वस्य आर्थिकत्वात्। **सूत्रार्थस्तु**– यथा प्रातःसवनमुत्कृष्यमाणं माध्यंदिनं सवनमुत्कर्षति, एवं सांतपनीयाऽपि उत्कृष्यमाणा अग्निहोत्रमुत्कर्षेत्, तदा अग्निहोत्रस्य प्रणयनाभावेन वैगुण्यात् इति।

**वि**-- 'दैवात् सांतपनी सायं प्राप्ता चेदग्निहोत्रकम्। उत्कर्षति न वो,– त्कर्षः पौर्वापर्यस्य भावतः॥ भिन्नप्रयोगप्राप्तत्वादग्निहोत्रं स्वकालके। इष्टिमध्येऽपि हुत्वाऽथ यागशेषः समाप्यताम्॥'

**भाट्ट**— दैवात् मानुषाद्वा प्रतिबन्धात् मध्यंदिनक्रियमाणसांतपनीयाया उत्कर्षे स्वकालेऽग्निहोत्रहोमः कर्तव्यो न वेति चिन्तायाम्, स्वकालकरणे सांतपनीयाऽर्थे प्रणीतस्याग्नेः पुनः प्रणयनासंभवात् मन्त्रवत्प्रणयनलोपेन वैगुण्यापत्तेः, कालस्य च पदार्थगुणत्वेन प्रयोगविधिविशेषणतयोत्तरकालप्रतीतिकत्वेन च लोपेऽपि वैगुण्याभावात् उत्कर्षः। **इति प्राप्ते,** अनुपादेयत्वात् कालस्य नित्ये यथाशक्ति उपादेयाङ्गत्यागस्यैव तदनुरोधेन षष्ठे वक्ष्यमाणत्वात् ( ६।३।१ ) प्रणयनलोपेनापि कालानुग्रहः एव न्याय्यः। सायंप्रातःकालस्य जीवनरूपनिमित्तविशेषणत्वेन सुतरामनुग्राह्यत्वाच्च। **वस्तुतस्तु,** अग्निहोत्रस्य अन्यतः प्रणयनजन्योपकारलाभे तदनाक्षेपकत्वस्य दर्शादौ क्लृप्तत्वात्तल्लोपेऽपि न वैगुण्यम्। अतः स्वकाले एवाग्निहोत्रं कृत्वा सांतपनीया कर्तव्येति सांतपनीयाङ्गानां नैव क्रम आदरणीयः। अत्र च सांतपनीयेत्युपलक्षणं प्रारब्धकर्ममात्रस्य। अग्निहोत्रेत्यपि आवश्यकमात्रस्य। अनावश्यकविषये 'अप वा एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायते' इति निषेधात्। न चैवमनीकवत्युत्कर्षेऽपि मध्यंदिने सांतपनीयापत्तिः, तथात्वे सांतपनीयाया अनीकवत्युत्तरकालत्वस्यैकप्रयोगविध्यवगतस्य प्रणयनस्य च बाधेन वरमेकस्यैव मध्यंदिनकालस्य बाधः। केचित्तु निमित्तविशेषणीभूतकालस्यैवानुग्राह्यत्वम्, न तु कालमात्रस्येत्यङ्गीकृत्य सांतपनीयायाः काम्यवत् मध्येऽनावश्यकत्वादकरणमिति वदन्ति। तत्तु चातुर्मास्यानामपि नित्यत्वात् माध्यंदिनस्यापि निमित्तविशेषणत्वापत्तेरुपेक्षितम्।

**मण्डन**— 'उत्कर्षो नाग्निहोत्रस्य।' १९.

**शंकर**-- 'अग्निहोत्रोत्कर्षणं न च।' २१.

* **सांनाय्यं** असोमयाजिनोऽपि श्रूयते 'तद्दु संनयेत्' इति। तथा 'तथेह स्माहुर्गोपायनाः सांनाय्यमेवासोमयाजिनः' इति ( बादरायणमतेन )। भा. १०।८।१४।४४, * सांनाय्यं एकेन वाक्येन सोमयाजिनः विधीयते, अपरेणापि वाक्येन असोमयाजिनः। १०।८।१४।४५. * सांनाय्यं ऐन्द्राग्नपुरोडाशेन विकल्प्यते. सोमयागात् प्राक्, सोमयागात् पश्चात् तु सांनाय्यमेव इति न सिद्धान्तः। सोमयाजिन एव सांनाय्यम्, असोमयाजिनस्तु पुरोडाशावेव आग्नेयश्चैन्द्राग्नश्च नित्यौ इत्येव सिद्धान्तः। वि. १०।८।१४. * सांनाय्यं नाम दधिपयसी। मीन्या. * सांनाय्यं प्रकृतिः अग्नीषोमीयपशोः। भा. ८।२।२।१०–१४। तत्रापि पयः, न दधि। ८।२।३।१५ – १८. * 'सांनाय्यं वा तत्प्रभवत्वात्' ( ८।२।२।१३ ) इत्यनेनैव **न्यायेन** अयमवद्यतिः ( हृदयस्याग्रेऽवद्यति ) सारूप्यात् सांनाय्यावद्यतिप्रकृतिः। वा. २।२।६।१७ पृ. ५११. * 'सांनाय्यं वा तत्प्रभवत्वात्'

(८।२।२।१३) । पशुसांनाय्ययोः पशुप्रभवत्वसाम्येन द्रव्यसारूप्यात् पशुयागस्य अष्टमे सांनाय्ययागविकारत्वाभिधानात् , तेनैव न्यायेन हृदयाद्यवदानस्य द्रव्यसारूप्यात् सांनाय्यावदानप्रकृतिकत्वावगतेः, सानाय्यावदानस्य च यागीयद्रव्यसंस्कारार्थत्वेन अस्यापि तथात्वावसायात् हृदयादीनां संस्कार्यत्वान्यथानुपपत्त्या पूतीकफल्गमसवत् यागान्वयप्रतीतेः प्रत्यवदानं यागकल्पनात् पशुवाक्ये यागसमुदायानुवादोपपत्तिः । सु. पृ. ७९१. * सांनाय्यं सोमादूर्ध्वमुत्कृष्यते ' नासोमयाजी संनयेत् ' इति निषेधात् । सांनाय्यविकार आमिक्षा अपि सोमादूर्ध्वमेव । वि. ५।४।८. * सांनाय्यात् अग्नीषोमीयस्य विध्यन्तः । टुप्. १०।७।१।१. * सांनाय्यात् स्विष्टकृदिडं नित्यं अमावास्यायामवदीयते । वा. ३।५।२।१३, * सांनाय्यस्य गुणविकारः साकंप्रस्थायीयः । ३।५।२।१३. * सांनाय्यस्य विध्यन्तः आग्नेये पयसि । भा. ८।१।१७।३४. * सांनाय्यस्य स्विष्टकृदवदानं प्रयाजशेषाभिघारणं वेद्यामासादनं च प्रवृत्तिक्रमात् पूर्वं न कर्तव्यं किंतु मुख्यक्रमात् आग्नेयपुरोडाशस्यैव, अन्यथा बहुविप्रकर्षप्रसङ्गः । तस्मात् मुख्यक्रमो बलीयान् । दर्शपूर्णमासयोः । शा. ५।४।२. * सांनाय्ये अप्रवृत्तस्यापि व्रतनियमः । भा. ६।४।१३।४१–४२. * सांनाय्ये अवदानादिप्रदानान्तः एकः पदार्थः । भाट्ट. ५।२।६, * सांनाय्ये उपस्तरणाभिघारणयोस्तन्त्रत्वात् दध्नो द्व्यवदानं गृहीत्वा पयसो ग्राह्यम् । कल्पसूत्रेषु तु पयसो द्व्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तम् । तैत्तिरीयश्रुतौ तादृशक्रमः वाचनिकः । ५।२।३. * सांनाय्ये उपस्तरणाभिघारणसहितं चतुरवत्तत्वम्, 'द्विर्हविषोऽवद्यति' । वि. १०।८।१३। सांनाय्यपात्रशोधने ' शुन्धध्वं० ' इति मन्त्रः संनिधिना विनियुज्यते । ३।३।५ । सांनाय्यपात्राणि कुम्भीशाखापवित्रादीनि । क्रमेण समाख्यां बाधित्वा ' शुन्धध्वं०' इति मन्त्रः सांनाय्यपात्रशेषः । ३।३।११ । योऽयं व्रतकालः ६।४।१२, स सांनाय्यरहितस्यापि । तथा च असंनयतः वत्सापाकरणाभावेऽपि तदुपलक्षिते काले व्रतोपानयनं (भोजनम्)। ६।४।१३। 'सह शाखया प्रस्तरं प्रहरति' इदं संनयत एव, सांनाय्यरहितेन तु दर्शे शाखाप्रहरणं न कर्तव्यम् , न च तदर्थं शाखा संपादनीया । ६।४।१४। संनयतः दर्शभ्रान्त्या हविर्निर्वापे ततश्चन्द्रोदये सति अभ्युदयेष्टिर्विहिता, तत्र सांनाय्यस्यापि पूर्वदेवतात्यागेन ' ये स्थविष्ठाः ( तण्डुलाः ) तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् ' इत्यत्र दधिपयसोर्विनियोगः । ६।५।१। सांनाय्यं सोमोत्तरमुत्कृष्यते ' नासोमयाजी संनयेत् ' इति निषेधात् । सांनाय्यविकारस्यापि ' वैश्वदेव्यामिक्षा ' इत्यस्यापि सोमोत्तरमुत्कर्षः । (५।४।८) । सांनाय्यरहितस्यापि अभ्युदयेष्टिः कर्तव्या भवति । तत्र सांनाय्यिनः चरू दधनि पयसि च स्याताम्, सांनाय्यरहितस्य तु पूर्वदधिपयसोरभावात् अपूर्वयोरविधानाच्च उदके एव चर्वोः श्रपणम् । ६।५।६ । सांनाय्यावदानप्रदानात् आग्नेयस्यावदानप्रदानं पूर्वं कार्यम् । ५।४।२. * सांनाय्ये दोहनं स्वीयानां सर्वासां गवाम् । भा. ११।१।९।४७–५३. * सांनाय्ये द्विरवदानं मध्यात् पूर्वार्धात् इत्येकः पदार्थः । भाट्ट. ५।२।३.

## सांनाय्ये पुरोडाशविधिवाक्यं दारुपात्रस्तुत्यर्थम् ॥

सांनाय्यं प्रकृत्य श्रूयते ' न दारुपात्रेण दुह्यादग्निवद्वै दारुपात्रम्, यद्दारुपात्रेण दुह्याद्यातयाम्ना हविषा यजेत । अथो खल्वाहुः पुरोडाशमुखानि वै हवींषि नेतः इतः पुरोडाशं हविषो यामोऽस्तीति काममेव दारुपात्रेण दुह्यात् ' इति । अत्राग्नेयपुरोडाशोऽग्निदेवत्यः । दारुणोऽन्तरग्नेः सत्त्वेन दारुसंबद्धपयसोऽपि अग्निसंबन्धानपायादनूचीनावाग्नेयावेव यागौ संपन्नौ । तस्य जामितापादकत्वात् तत्परिजिहीर्षया ' पुरोडाशमुखानि वै ' इति वाक्येनाग्नेयसांनाय्ययोर्मध्ये यागान्तरं पुरोडाशद्रव्यमुपांशुयाजवद्विधीयते । तस्यापि पयोद्रव्यकत्वे उक्तरीत्या अग्निसंबन्धाज्जामितातादवस्थ्यापत्त्या तदनुक्तिः । तुल्यन्यायेन मध्यस्थयागस्याग्निदेवताकत्वेऽपि जामितानपायात् तदितरदेवताकत्वे सिद्धे ' इन्द्राय त्वा जुष्टं प्रोक्षामि ' इति प्रकरणाम्नातमन्त्रानुत्कर्षायेन्द्र एव



देवतेति नियम्यते । संप्रतिपन्नदेवताकत्वाच्च सांनाय्येन सहास्य प्रदानम् । ' आग्नेयोऽष्टाकपालः ' इति वाक्ये इव विधिकल्पनाऽपि न दुष्यतीति बोधायनकल्पानुगुणे पूर्वपक्षे प्राप्ते, सिद्धान्तस्तु जातेष्टिवाक्ये इव उपक्रमोपसंहारयोः दारुपात्रकरणकदोहकीर्तनादेकवाक्यत्वम् । तत्र च दोहोद्देशेन दारुपात्रमेव विधीयते । दारुपात्रे च दोषसद्भावादयुक्ततामिवाशङ्क्याथो खल्वित्यादिना तदभावं समर्थ्य काममिति निगमनवाक्ये विधेः स्पष्टं प्रतीतेः । एवं सति मध्ये यागान्तरविधाने वाक्यभेदः स्यादेव, आग्नेयवाक्ये देवतातद्धितादिना द्रव्यदेवतासंबन्धप्रतीत्याऽऽमिक्षावाक्य इव यागकल्पनसंभवेऽपि द्रव्यमात्रश्रवणेन कथं तत्कल्पना । आग्नेययागस्य स्पष्टमकीर्तनात् कथमनूचीनताऽवगमः । उपांशुयाजे ' यदन्वञ्चौ पुरोडाशावन्तरा यजति ' इत्यादिपदश्रवणाद्वैषम्यम् । अनुत्कर्षमात्रलिप्सया देवताकल्पने पूषादिदेवताः कुतो न नियम्यन्ते । पूषानुमन्त्रणमन्त्रादेरनुत्कर्षसंभवात् । यागान्तरकल्पनाग्रहे वा इत इतः पुरोडाशपदेनोभयतः पुरोडाशवत उपांशुयाजस्यैव परामर्शः कुतो न कृतः, बह्वृचब्राह्मणेनैकवाक्यत्वसंभवात् । तस्मादर्थवादवाक्ये अग्निस्पृष्टदारुसंबन्धमात्रेण दोषमाशङ्क्यायातयामरूपपुरोडाशस्य प्रथमं सत्त्वात्तदुत्तरं क्रियमाणं सर्वमयातयाममेवेति परिहृत्य पश्चाद्दारुपात्रं विधीयते इत्येव युक्तमिति । संकर्ष. १।२।४.

* सांनाय्ये भक्षः राजन्यवैश्ययोः प्रतिषिद्धः । 'न राजन्यो न वैश्यो वा सांनाय्यं पिबेत्, असोमपीथो ह्येषः ' । भा. १२।४।१५।४५, * सांनाय्ये यावत्स्वं उत्तरगोदोहनम् । उत्तरागोदोहाधिकरणम् ( मीको. पृ. १०९८ ) । ११।१।९।४७–५३.

## सांनाय्याग्नीषोमीयवि[illegible]रा ऊर्ध्वं सोमात् प्रकृतिवत् । ५।४।८।२५ सिद्धान्तसूत्रम् ॥

सानाय्यं शृतं दधि च अमावास्यायाम् । तद्विकाराः आमिक्षा पशुश्च इति । अग्नीषोमीयपुरोडाशस्य विकाराः ' अग्नीषोमीयमेकादशकपालं निर्वपेत् श्यामाकम् ' इत्यादयः सोमात् अग्निष्टोमानुष्ठानोत्तरं स्युः न प्राक् । प्रकृतिवत् । दर्शगतसांनाय्यरूपा प्रकृतिः । पौर्णमासीगताग्नीषोमीयपुरोडाशरूपा प्रकृतिश्च यथा इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति तद्वत् । प्रकृतिवत् विकृतिः इति न्यायात् । के.

* सांनाय्यार्थं उत्पन्नयोर्दधिपयसोः अभ्युदयेष्ट्यां चन्द्रोदयं निमित्तीकृत्य श्रपणहेतुत्वात् प्रणीताधर्मा उत्पवनादय एवाभ्युदयेष्ट्यां कर्तव्याः । वि. ९।२।१४. * सांनाय्यार्थे तिसृभ्योऽधिकाः सर्वाः स्वीया गावो दोग्धव्याः । ११।१।९।४७–५३. मीको. पृ. १०९८ ' उत्तरागोदोहाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* सांनाय्य–आज्य–औषध–धर्माः न सर्वे सर्वत्र कर्तव्याः, किंतु यत्र क्रियमाणा अर्थवन्तः तत्र ते कर्तव्याः ( दर्शपूर्णमासयोः ) । भा. ३।१।४।७–१०.

* सांनाय्यादौ एकप्रयोगविधिपरिग्रहेऽपि संप्रतिपन्नैकदेवताकत्वेन सहानुष्ठानात् न क्रमापेक्षा । भाट्ट. ५।१।४. * सांनाय्यादौ संप्रतिपन्नदेवताके अवदानस्य न प्रदानान्तता इति चतुरवदानमात्रस्यानुसमयः । सोम. ५।२।५.

* सांनाय्यादिविकृतिवत् । यथा सांनाय्यादिविकृतीनां ज्योतिष्टोमोत्तरत्वं तथा सोमविकाराणां दर्शपूर्णमासोत्तरत्वम् । वृ. ५।४।९।२६.

* सांनाय्यदोहे 'अनन्वारभ्य तूष्णीमुत्तरा दोहयति ' अत्र प्राप्तं सर्वोत्तरादोहनमनूद्य अपूर्वमनन्वारम्भणं विधीयते । वि. ११।१।९, * सांनाय्यदोहे ( सायं ) 'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति ' । अत्रोत्तरास्तिस्र एव दोहनीया इति पक्षः । हविर्बाहुल्यार्थं उत्तराः सर्वा दोहनीया इति सिद्धान्तः । ११।१।१९.

* सांनाय्यधर्माः वत्सापाकरणादयः पूर्वमाम्नाताः पुरोडाशधर्मा निर्वापादयः पश्चात् । अनुष्ठानमपि तथैव प्रवृत्तम् । तत्र अवदानं ( अभिघारणमासादनं च ) प्रवृत्तिक्रमेण सांनाय्यस्य पूर्वं न कर्तव्यं किंतु आग्नेयस्यैव ततः सांनाय्यस्य । मुख्यक्रमस्य प्रावृत्तिकक्रमात् बलवत्त्वात् । अन्यथा अङ्गाङ्गिविप्रकर्षप्रसङ्गात् । दर्शपूर्णमासयोः । वि. ५।४।२. * सांनाय्यधर्माः शाखाहरणं

गवां प्रस्थापनं गवां प्रस्नावनं इत्येवमादयः । भा. ३।१।४।७. * **सांनाय्यधर्माणामतिदेशः** अग्नीषोमीये पशौ । ८।२।२।१०–१४. **मीको.** पृ. १०० 'अग्नीषोमीयः पशुः सांनाय्यविकारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सांनाय्यधर्माणां** वाजिनयागे अतिदेशः । **भा.** ८।२।१।१–९.

* **सांनाय्यपक्षे** शाखा सती हि प्रतिपाद्यते । तत्रैवोपवेषो नान्यत्रेति । **भा.** ६।४।१४।४७.

* **सांनाय्यपयोधर्माणां** आग्नेये पयसि अतिदेशः । **वि.** ८।१।१७.

* **सांनाय्यपयोधर्मातिदेशो** वैश्वदेव्यामिक्षायाम् । ८।२।४।१९–२४. **मीको.** पृ. २२२ 'अतिदेशः वैश्वदेव्यामिक्षायां सांनाय्यपयोधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सांनाय्यपात्राणां** शुन्धने 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः विनियोक्तव्यः, न तु पुरोडाशपात्राणां शुन्धने । समाख्यानात् क्रमस्य बलीयस्त्वात् । भा. ३।३।७।१४ पृ. ८५५.

* **सांनाय्यपात्रप्रोक्षणाङ्गं** 'शुन्धध्वं०' मन्त्रः, संनिधिक्रमात् । **वि.** ३।३।५.

* **सांनाय्ययागः** अग्नीषोमीयपशोः प्रकृतिः । तत्रापि पयोयागः प्रकृतिर्न दधियागः इति सांनाय्यगतपयोधर्मातिदेशः, न तु पुरोडाशधर्मातिदेशः पशौ । **वि.** ८।२।२–३.

* **सांनाय्ययाजिनः** एव उपवेषो नान्यस्य । **भा.** ११।३।१३।३८.

* **सांनाय्यवत्** आग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि द्व्यवदानेन अनुसमयः इति पूर्वः पक्षः । **भाट्ट.** ५।२।४.

* **सांनाय्यविकाराः** आमिक्षा पशुः इति । तत्र संदेहः किमेते प्रागूर्ध्वं सोमात् उत ऊर्ध्वं (एव) इति । किं प्राप्तम् ? प्रागूर्ध्वं च, विशेषानवगमात् । एवं प्राप्ते, ब्रूमः । ऊर्ध्वं सोमात् स्युः इति । प्रकृतिर्हि एषां ऊर्ध्वं सोमात् । चोदकेन एभिरपि ऊर्ध्वं सोमात् भवितव्यम् । सांनाय्यस्य ऊर्ध्वं सोमात् वचनं 'नासोमयाजी संनयेत्' इति । तद्विकृतिरपि ऊर्ध्वं सोमात् भवितुमर्हति । **भा.** ५।४।८।२५. * **सांनाय्यविकाराणां** सोमोत्तरकालता । ५।४।८।२५. **मीको.** पृ. ११० 'अग्नीषोमीयपुरोडाशविकाराणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सांनाय्यविध्यन्तः** ऐन्द्रपुरोडाशे प्राप्तः आग्नेयपुरोडाशविध्यन्तेन बाध्यते । **बाल.** पृ. १४१.

* **सांनाय्यशून्यस्यापि** चन्द्राभ्युदयेष्टिः, तत्र तु चरुद्वयं 'अप्सु श्रपयिष्यते' । **भा.** ६।५।६।२४.

⧖ **सांनाय्यसंयोगान्नासंनयतः स्यात् । ६।५।६।२१ ॥**

चन्द्राभ्युदयेष्टिः असंनयतः सांनाय्यमकुर्वतः न स्यात् । येन सोमयागो न कृतः नासौ सांनाय्यं करोति । तस्य चन्द्राभ्युदितेष्टिर्न स्यात् । तस्या इष्टेः 'शृते चरुं, दधनि चरुम्' इति वचनेन सांनाय्येन संयोगात् सांनाय्यसंयोगस्य उक्तत्वात् इति **पूर्वः पक्षः** । सांनाय्यसंयोगात् संनयतः स्यात् इति **वृत्तिपाठः साधीयान्** ।

**औषधसंयोगाद् वोभयोः । २२ ॥**

चन्द्राभ्युदितेष्टिः संनयत एव स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । अभ्युदितेष्टिः संनयतः असंनयतश्चेति उभयोः स्यात् । औषधसंयोगात् । 'ये मध्यमाः, ये स्थविष्ठाः, ये क्षोदिष्ठाः' इति औषधसंयोगः तण्डुलसंयोग उक्तः । स च उभयोः समानः । तस्मादुभयोरिष्टिः प्रायश्चित्तम् ।

**वैगुण्यान्नेति चेत् । २३ ॥**

चन्द्राभ्युदितेष्टिः संनयतः असंनयतश्चेति उभयोः स्यात् इति सिद्धान्ते सूत्रेण उक्ते पूर्वपक्षी शङ्कते । न उभयोः अभ्युदितेष्टिः । वैगुण्यात् तण्डुलरूपौषधस्य असंनयतः विद्यमानत्वेऽपि दध्नः शृतस्य च चरोरधिकरणस्य अभावेन वैगुण्यात् । इति चेत् ।

**नातत्संस्कारत्वात् । २४ ॥**

असंनयतोऽपि चन्द्राभ्युदितेष्टिः इति सिद्धान्ते असंनयतः दधिशृतयोरभावात् वैगुण्यं इति पूर्वपक्षिणः शङ्कां निराकरोति सिद्धान्ती । असंनयतः दधिशृतयोरभावेऽपि न वैगुण्यम् । अतत्संस्कारत्वात् दध्नः शृतस्य च चरुसंस्कारत्वाभावात् । 'दधनि, शृते' इति न विधिः किंतु संनयत्पक्षे अनुवादः । असंनयतस्तु चरुद्वयं अप्सु श्रपयिष्यते । तस्मात् अभ्युदितेष्टिः संनयतः असंनयतश्चेत्युभयोरपि इति **सिद्धान्तः** । 'अतत्संस्कारार्थत्वात्' इति **कुतूहलपाठः** । दधिशृतयोः चरुसंस्कारार्थत्वस्य अभावात् इति तदर्थः । कुतूहलपाठस्तु इतरस्मात् साधीयान् । **के.**

* **सांनाय्यिनः** इष्टप्रथमयज्ञाः । **भा.** २।४।२।८.

* **सांन्यासिकम्** । त्यागार्थात् संन्यासप्रातिपदिकात् 'तदर्हति' (पा० ५।१।६३) इत्यस्मिन्नर्थे (लब्धुं योग्यो भवति इत्यर्थे इति श्रीभट्टोजीदीक्षिताः) ठगुत्पत्तेः सांन्यासिकपदव्युत्पत्तिः । **सु.** पृ. ३३२.

* **सापेक्षमसमर्थं भवति । (महाभाष्यम्)** । अत्र **कैयटः**— न्यायोऽयम् । वृत्तौ हि उपसर्जनपदेन प्रधानार्थाभिधायिना भाव्यम् । स्वविशेषणापेक्षायां च तस्य प्राधान्यम्, इति कथमेकस्यैकदा प्राधान्यमेकार्थीभावश्च स्यात् । इति । **महाभाष्यम्** २।१।१. * 'सापेक्षमसमर्थम्' इति । 'समर्थानां प्रथमाद्वा' इति स्मरणात् तद्धितः सामर्थ्यमपेक्षते, 'सापेक्षमसमर्थम्' इति न्यायात् । **सोम.** ३।१।१५.

⧖ **सापेक्षमसमर्थवदिति न्यायः** । व्याकरणशास्त्रविषयकोऽयं न्यायः । **साहस्री.** ६८७.

* **सापेक्षत्वे** सति समासानुपपत्तिः । **वा.** ३।५।१०।३१.

* **साप्तदश्यं** (सामिधेनीनां) अनारभ्याधीतं परिगणितासु विकृतिषु पुनःश्रूयमाणं वाक्यशेषात् तास्वेव नियम्यते । **भा.** १०।८।१३।३३, * साप्तदश्यं अनारभ्याधीतं 'सप्तदश सामिधेनीरन्वाह' इति । अनारभ्यवादानां प्रकृत्यर्थत्वात् दर्शपूर्णमासौ आगतम् । ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृत्यर्थं जातम् । ८।४।५।१४. * साप्तदश्यं न सामिधेनीस्वरूपार्थं किंतु सामिधेन्युपस्थितक्रत्वपूर्वार्थम् । **सोम.** ११।३।२. * साप्तदश्यं पाञ्चदश्येन (प्रकृतौ) बाधितम् । कासुचित् विकृतिषु साप्तदश्यं पुनः पठ्यते । तेन चोदकप्राप्तं निवर्त्यते प्रत्याम्नातेन । **टुप्.** ९।१।१७।५३, * साप्तदश्यं पाञ्चदश्येन बाध्यते । ६।४।४।१३. * साप्तदश्यम् । 'सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिषु' इति वाक्यशेषात् नान्यासु इष्टिषु साप्तदश्यम् । **भा.** १०।७।९।३२. * साप्तदश्यं सामिधेनीनां यासु श्रुतं तासु विकृतिषु वर्णत्रयस्याधिकारो न वैश्यमात्रस्य । ६।६।७।३६–३९. **मीको.** पृ. २८३ 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् । * साप्तदश्यं हि सामिधेनीनामुक्तं अनारभ्यवादेन न क्रतूनाम् । तस्य तु क्रतुसंबन्धः तद्द्वारेणानुमानिकः कल्प्यः । न च प्रत्यक्षसंबन्धे सति आनुमानिकः कल्प्यते इति युक्त उपसंहारः । **वा.** ३।४।१४।४१ पृ. ९७८, * **साप्तदश्यस्य** अनारभ्यवादेन सामिधेनीसंबन्धितया उत्पत्तेः, प्राकरणिकैश्च वचनैर्विनियोगात् अर्थवत्त्वम् । २।३।९।२०. * साप्तदश्यस्य वैमृधादिषु पुनःश्रवणं अनारभ्याधीतसाप्तदश्योपसंहारार्थम् । १०।८।९।१७–१९. **मीको.** पृ. ३७४० 'वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * साप्तदश्यस्य सामिधेनीगतस्य अनारभ्याधीतस्य प्रकृतौ न निवेशः । **भा.** ३।६।२।९, * **साप्तदश्ये** पशौ श्रूयमाणेऽपि न दार्शपौर्णमासिकी प्रवृत्तिर्विप्रतिषिध्यते । वाचनिकत्वात् साप्तदश्यस्य । ८।४।५।१४.

* **साप्तदश्यादेः** सामिधेनीविषयकस्य नैमित्तिकस्य प्रकृत्यर्थता । **भा.** ३।६।३।१०.

⧖ **साप्तदश्यन्यायः** । अनारभ्याधीतं सामिधेनीसाप्तदश्यं विकृतौ निविशते ॥

**प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् । ३।६।२।९ ॥**

**भाष्यम्**— अनारभ्य किंचित् सामिधेनीनां परिमाणमाम्नातं 'सप्तदश सामिधेनीरनु ब्रूयात्' इति । तत्र संदेहः, किं एतत् प्रकृतौ उत विकृताविति । किं प्राप्तम् ? पूर्वेण न्यायेन प्रकृतौ इति प्राप्तम् । प्रकृतौ च पाञ्चदश्यमाम्नातम्, तेन विकल्प इति । एवं **प्राप्ते, ब्रूमः** । विकृतौ एवंजातीयको विधिः स्यात् । कस्मात् ?

प्रकृतेः पाञ्चदश्येन निराकाङ्क्षत्वात् । ननु विकल्पो भविष्यतीत्युक्तम्, प्रकरणविशेषात् पाञ्चदश्येन न विकल्पः, विषमशासनात् । विकृतौ तु आनुमानिकं पाञ्चदश्यं बाधित्वा अनारभ्यविधिवाक्येन प्रत्यक्षेण साप्तदश्यं निवेक्ष्यते । अद्विरुक्तं चैतत् प्रयोगवचनमुपसंहरिष्यति । तस्मात् एवंजातीयकं विकृत्यर्थम् ।

**वा**— अपवादाधिकरणमेतत् । तत्र पूर्वाधिकरणेनैव सामिधेनीसाप्तदश्यानारभ्यवादस्य प्रकृत्यर्थत्वे, प्रकरणाधीतेन पाञ्चदश्येन सह विकल्प इति विशेषाशङ्कां निवर्तयति । कथं पुनः प्राकरणिकेन विशेषविधिना सह अतुल्यबलस्य विकल्पोऽभिधीयते ? आह । **'तत्र नाम विशेषेण सामान्यस्य निराक्रिया । प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते ॥'** तुल्यप्रमाणको हि विशेषो बाधको भवति, न दुर्बलप्रमाणकः । न च क्रतुप्रयोगादन्यत्र सामिधेन्यो विद्यन्ते । तस्मात् क्रतुप्रयोगप्राप्तिस्तुल्या । ततश्च किं प्रकरणमधिकं करिष्यति ? द्वयोस्तुल्यबलयोः प्रमाणयोः विरोधे सति बलवत्तरेण निर्णयः कर्तव्यः । न च प्रकरणं वाक्यात् बलवत्तरम् । अतो यावत् प्रकरणव्यापारो नैव भवति तावत् वाक्यद्वयेन तुल्यबलेन विकल्पोऽवधार्यते । तेन न्यूनबलं यद्यपि प्रकरणसहस्रमपि च सहायीभवति तथापि न तदनुरोधः कर्तव्यः । तस्मात् प्रकृत्यर्थं साप्तदश्यम् । इति प्राप्ते, ब्रूमः । **'तुल्यो यद्यपि संबन्धः सामिधेनीः प्रतीष्यते । तथापि क्रतुसंबन्धवैषम्यान्न विकल्पते ॥'** सामिधेनीस्वरूपप्रयुक्तत्वे अनर्थिका संख्या इत्यवश्यं यागापूर्वसाधनत्वकारितः संबन्धः अभ्युपगन्तव्यः । न च यागापूर्वसाधनत्वं प्रकरणादृते लक्षयितुं शक्यते इति नवमे (आद्याधिकरणे उपोद्घाते) वक्ष्यामः । तेन प्रकरणानुग्रहविशेषात् पाञ्चदश्यं अपूर्वसंबन्धप्रमाणप्रत्यासत्तेः बलीयः । विधिरपि हि पूर्वं प्रयोजनवति पुरुषं नियुङ्क्ते । साप्तदश्याच्च पाञ्चदश्यं शीघ्रतरं प्रयोजनवत् अवधार्यते, इति विधिकालवैषम्यात् अतुल्यबलत्वम् । अपि च, क्रतुं अविगुणं कर्तुं पुरुषः प्रवर्तते, न सामिधेनीः । क्रत्वङ्गत्वे च साप्तदश्यस्य न किंचित् श्रुत्यादि प्रमाणमुपलभामहे, यथा पाञ्चदश्यस्य प्रकरणम् । तस्मात् एतत् पाञ्चदश्यं सामिधेनीनां दर्शपूर्णमासयोश्च वाक्यप्रकरणाभ्यामवधार्यते । साप्तदश्यं तु केवलं सामिधेन्यर्थमेव । तस्येदानीं आनर्थक्यपरिहाराय खादिरत्वादिवत् क्रतुसंबन्धः कल्प्यते, यदि तु असौ प्रतीच्छेत् । न तु असौ संख्यान्तरावरुद्धः सन् प्रतीच्छति । तत्र सामिधेनीनां उभयथाऽपि अवैगुण्यं भवति । क्रतोः पुनः पाञ्चदश्येन । ततश्च कांस्यभोजिवत् ( १२।२।१४।३४ ) अमुख्येऽपि अविरोधः स्यात्, किमङ्ग पुनः यत्र अङ्गगुणविरोध एव स्पष्टः । तस्मात् क्रत्ववष्टम्भदर्पितेन पाञ्चदश्येन उत्कालितं साप्तदश्यम् । क्लिष्टेन यावत् अतिदेशेन पाञ्चदश्यं विकृतीः प्राप्नोति तावत् औपदेशिकेन साप्तदश्येन प्रथमतरावरुद्धत्वात्ताभ्यो निराकृतं केवलप्रकृतिविषयत्वेनैव अवधार्यते । इति व्यवस्थायामुक्तायां उच्यते । **'न साप्तदश्यं बलवद् विकृतिष्वौपदेशिकम् । अनारभ्यविधेस्तद्धि सामिधेन्यङ्गतां गतम् ॥ विकृतीनां तु नास्त्येवं प्रमाणं तत्परिग्रहे । अतिदेशेन हि प्राप्तिः पाञ्चदश्यस्य तास्वपि ॥ यथा प्रकरणप्राप्तं प्रकृतौ बलवत्तरम् । तथाऽतिदेशविज्ञातं क्रत्वङ्गं विकृतिष्वपि ॥'** न च सामिधेनीषु अनतिदिष्टासु तद्द्वारेण साप्तदश्यं विकृतीरनुप्रवेष्टुं शक्नोति । यदा तु सामिधेन्यः अतिदेशेन प्राप्स्यन्ते, तदा पाञ्चदश्यमपि क्लृप्तोपकारसंबन्धं ताभिरेव सह पूर्वतरमाक्रम्य प्रकृताविव साप्तदश्यबाधकं भविष्यति । तस्मात् यास्वेव पशु–मित्रविन्दा–अध्वरकल्पादौ साप्तदश्यं प्रकरणविहितं तास्वेव तत् अतिदेशप्राप्तपाञ्चदश्यबाधेन निविशते । **'नानारभ्यविधिप्राप्त्या सर्वास्वेव भविष्यति । पश्वादिव्यतिरिक्तासु पाञ्चदश्येन बाधनात् ॥ स्वाङ्गेन पाञ्चदश्येन व्याप्तास्ता ह्यतिदेशतः । विहितं सामिधेन्यङ्गं साप्तदश्यं न गृह्णते ॥ एवं च दशमेऽप्येतद् विविक्तं स्थापयिष्यते ( १०।८। ९।१७ ) । तेन नैतद् ग्रहीतव्यं सर्वत्र बलवत्तरम् ॥ सूत्रकारोऽपि विकृतौ विरोधीति यदब्रवीत् ( प्रकृतसूत्रे ) । प्रकृतौ नैतदस्तीति तदेतावद्विवक्षया ॥ सामिधेनीः प्रति प्राप्तिस्तुल्या वाक्येन यद्यपि । विशेषः पाञ्चदश्यस्य क्रतौ प्रकरणेन तु ॥ अतो यद्यपि दौर्बल्यं वाक्यात् प्रकरणस्य नः । तथापि विषयान्यत्वात् क्रतौ तद्विनियोजकम् ॥ समानविषयत्वे हि वाक्यात् तद् दुर्बलं मतम् । क्रतौ त्वप्रतिपक्षत्वान्न तद् वाक्येन बाध्यते ॥ विशेषश्चायमेवास्य यदसाधारणं क्रतोः । सामिधेनीषु तुल्यत्वे शेषत्वे वाक्यकल्पिते ॥ क्रतुं प्रत्यसमानत्वात् साप्तदश्यस्य बाधकम् । न श्रुत्याद्युपदेशेन नातिदेशेन तस्य तु ॥ एवं च प्रकृतावेतत् पाञ्चदश्यं प्रतिष्ठितम् । विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः ॥'**

**शा**— 'वाक्यात् तत् ( प्रकरणं ) दुर्बलं यस्मात् तस्मात् प्रकृतिगामिता । पूर्ववत् साप्तदश्यस्य तथा प्राप्तेऽभिधीयते ॥ सामिधेनीस्वरूपेण संबन्धो वाक्यतो भवेत् । तन्मात्रसंगते चैते संख्ये स्यातामनर्थिके ॥ अपूर्वसाधनत्वांशे लक्षिते संगतिर्भवेत् । तल्लक्षणावबोधश्च शीघ्रं प्रकरणाद् भवेत् ॥' साप्तदश्यं विकृतिषु निवेक्ष्यते । तत्रापि न सर्वासु, किंतु श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेव इति दशमे ( १०।८।९।१७–१९ ) वक्ष्यते ।

**के**— दृष्टान्तसंगतिरत्र ।

**वि**— 'सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।, पूर्ववत् प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते ॥, विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात् । पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः ॥'

**भाट्ट**— 'सप्तदश सामिधेनीरनुब्रूयात्' इति अनारभ्याधीतं सामिधेन्युद्देशेन विधीयमानं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरोधात् न पूर्ववत् प्रकृतौ दर्शपूर्णमासयोर्निविशते, सामिधेनीस्वरूपे आनर्थक्यप्रसक्तौ लक्षणीयस्य अपूर्वविशेषसाधनत्वस्य प्रकरणेन झटिति उपस्थापनात् । साप्तदश्ये तु अव्यभिचरितक्रतुसंबन्धेन कथंचित् अपूर्वसामान्यस्य उपस्थितावपि तद्विशेषस्य द्विरुक्तत्वन्यायेन ( ३।६।१।२ ) उपस्थित्या विलम्बितत्वात् । किंतु विकृतौ । न च तत्रापि क्लृप्तोपकारपाञ्चदश्यावरोधः, औपदेशिकत्वेन शरवत् बाधकत्वोपपत्तेः । न च अनारभ्याधीतत्वेन दौर्बल्यम्, निरवकाशत्वरूपप्राबल्ययुक्तेः उभयत्रापि तुल्यत्वात् । अत एव 'य इष्टया' इत्यनेन अवगम्यमानं सद्यस्कालत्वादि सर्वविकृतिषु निविशते एव । अत एव सर्वविकृतिषु साप्तदश्यप्राप्तौ कासुचित् मित्रविन्दादिविकृतिषु तत्पुनःश्रवणं अन्यविकृतिषु तत्परिसंख्याफलकोपसंहारार्थम् । न च वाक्यद्वयवैयर्थ्यापत्तिः, एकेन सामिधेनीसंबन्धः अपरेण क्रतुविशेषसंबन्धः इति विषयभेदात् । न च एवमपि प्राकरणिकेनैव उभयसंबन्धसिद्धौ इतरवैयर्थ्यम्, वाक्यद्वयाम्नानबलेन अभ्युदयशिरस्कत्वकल्पनात् इति दशमे ( १०।८।९ ) वक्ष्यते ।

**मण्डन**— 'न साप्तदश्यं प्रकृतौ विरोधात् ।'

**शंकर**— 'साप्तदश्यं तु विकृतौ ।'

* साप्तदश्यपूर्वपक्षन्यायः । ( ३।६।२ )। यद्यपि उत्पत्तिवाक्यशिष्टं कृष्णसारङ्ग–लोहितसारङ्गादिगुणान्तरं पुस्त्वं च ( चित्रत्वस्त्रीत्वयोः ) बाधकं संभाव्यते तथापि पूर्ववदेव बाधविकल्पौ वक्तव्यौ । साप्तदश्यपूर्वपक्षन्यायश्चात्र द्रष्टव्यः । वा. १।४।२।३.

* **साप्तदश्यवत्** । यथा विकृतिषु साप्तदश्यं निविशते । भा. ९।१।१७।५३.

**§ साप्तदश्यवन्नियम्येत । १०।८।१३।३३॥**

अनारभ्याधीतं सामिधेनीसाप्तदश्यं कासुचिदेव विकृतिषु पुनः श्रवणात् तास्वेव नियम्यते तद्वत् चतुरवत्तं उपस्तरणाभिघारणसत्त्वे एव औषधसांनाय्ययोः नियम्येत उपांशुयाजे तु चतुरवत्तं न स्यात् । इति पूर्वः पक्षः ।

**हविषो वा गुणभूतत्वात् तथाभूतविवक्षा स्यात् । ३४ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । हविषः चतुरवत्तस्य होमे गुणभूतत्वात् उपांशुयाजहोमेऽपि तथाभूतस्य होमशेषभूतस्य चतुरवत्तस्य विवक्षा स्यात् । अवदानमुद्दिश्य चतुःसंख्याविध्यभावात्, चतुरवदानरूपसंस्कारविशिष्टद्रव्यस्य होमोद्देशेन विधानात् । तस्मात् उपांशुयाजेऽपि चतुरवत्तं कर्तव्यं उपस्तरणाभिघारणे तु न स्तः । के.

* **साम**— अनुश्लोकं, अभीवर्तं, आन्धीगवं, आमहीयवं, औशनं, काण्वं, कालेयं, कावं, कौत्सं, क्रौञ्चानि, गायत्रं, नौधसं, पौष्कलं, यज्ञायज्ञीयं, यौधाजयं, रथंतरं, रौरवं, वामदेव्यं, वासिष्ठस्य जनित्रे शारीरं, श्यावाश्वं, श्लोकं, संहितं, सफम्। वि. ९।२।६ वर्णकं २-४; १०।४।६, ९,१०,११. * साम अर्थतः परिपूर्णे एकस्मिन् वाक्ये गातव्यम्। **तदाहुः शबराचार्याः** — "प्रत्यृचं गानं कर्तव्यम्। अर्धर्चप्रगीतेष्वपि ऋच्येव गानं कर्तव्यम्। अपरिपूर्णं वाक्यं अर्धर्चे भवति। ऋचि तु परिपूर्यते इति। पादप्रगीतेषु पाद एव गानं कर्तव्यमिति। पाद एव हि तत् परिपूर्णं वाक्यम्। यथा गोष्ठः वासिष्ठः इति (नामनी द्वे सामनी)। एवं यावति परिपूर्णं वाक्यं तावति साम परिसमापयितव्यम्। क्वचित् पादेऽपि पूर्णं वाक्यं ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णम्। यत्र यथा परिपूर्णं तत्र तथा गातव्यमिति" इति। भा. ९।२।३।१८, * साम—अवभृथसाम—ऐन्द्यां गायति। ९।२।१०।३४. * साम ऋगक्षराभिव्यक्त्या दृष्टोपकारि। टुप्. ९।२।१५।४६.

**साम एकं समानच्छन्दस्के एव तृचे गेयम्॥ तदभ्यासः समासु स्यात्। ९।२।४।२१॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्रैतत्समाम्नायते 'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति। तत्रैतत्समधिगतम्। प्रत्यृचं परिसमाप्तं गेयमिति। इदमन्यत्सांशयिकम्, समासु विषमासु वा गेयमुत समास्वेवेति। किं तावन्नः प्रतिभाति? नियामकस्य शास्त्रस्याभावादनियम इति। एवं प्राप्ते, ब्रूमः। समास्वेव गेयम्, न नानाच्छन्दस्कास्विति। किमेवं भविष्यति। गीतेः संशरविलेशौ न भविष्यतः। यदि न्यूनच्छन्दस्का ऋच उपादास्यामहे गीतिं संशृणीयाम। अथ, अधिकच्छन्दस्काः, ततो गीतिं विलेशयाम। उभयथा चाऽऽर्षं बाधेमहि। समासु तूपादीयमानासु न किंचिद् दुष्यति। तस्मात् समासु गानं कर्तव्यमिति। अपि च, त्रिशब्दोपचारः समासु युक्तो भविष्यति। समाने हि कस्मिंश्चिदाश्रीयमाणे संख्याव्यवहारो भवति।

**लिङ्गदर्शनाच्च। २२॥**

**भाष्यम्**— लिङ्गं खल्वप्यस्मिन् अर्थे पश्यामः। 'स्थाल्यां सक्थि अवधीयत इत्याहुः, यद्बृहद्गायत्रीषु क्रियते' ऋक्त्वेनान्तरुजतीति (?) न चास्यां संभवतीति विच्छन्दस्कासु दोषं ब्रुवन् समानच्छन्दस्कासु गानं दर्शयति।

**सोम**— यदि त्रित्वं न सामाङ्गं किंतु स्तोत्रसाधनीभूतऋक्परिच्छेदद्वारा स्तोत्राङ्गम्, तर्हि तस्य प्रधानगततया प्राबल्यात् संशरविलेशकृतं वैगुण्यं गुणभूतसामगतत्वेन दुर्बलमुल्लङ्घ्य समासु विषमासु वा गानं इत्युत्थितेः **संगतिः**। साम्नो गुणत्वेऽपि तदनुसरणेऽपि तृचशास्त्रस्योपपत्तेः अत्यन्तानुपपद्यमानगुणानुसारेण कांस्यभोजिन्यायेन तृचशास्त्रवर्णनमेव युक्तम्, इति संशरविलेशदोषपरिहारार्थं समानच्छन्दस्कास्वेव गानमिति **सिद्धान्तः**। अयं च विचारो यत्र सामनि उत्तराग्रन्थे योनेरुत्तरे ऋचौ न पठिते तद्विषयो बोध्यः। अन्यथा 'यद्योन्यां तदुत्तरयोः' इति वचनेन विषमच्छन्दस्कयोरपि उत्तरयोरेव गानावश्यम्भावेन विचारानवकाशात् इति ध्येयम्।

**वि**— 'तिसृष्वृक्षूदितं साम विषमासु समासु वा।, यथेच्छाऽनियमा,दन्त्यः शरलेशापनुत्तये॥' शरः संशरः हिंसा साम्नः। लेशः विलेशः अल्पत्वं साम्नः।

**भाट्ट**— तिसृषु प्रत्येकं गीयमानमेकं साम समास्वेव गेयं न विषमासु, न्यूनासु गाने सामैकदेशस्य लोपाख्यसंशरापत्तेः। अधिकपरिमाणासु गाने ऋक्शेषे सामादर्शनरूपविलेशापत्तौ तत्र सामैकदेशस्यावृत्त्यापत्तेः। तस्मात् समासु गानम्। इदं चाग्निष्टुदादित्रिषयमेव। तत्र आगम्यमानानां ऋचां सामपरिमितछन्दस्कानामेवानयनात्। न त्वन्यत्र, समयोर्विषमयोर्वा उत्तराग्रन्थपठितोत्तरयोः योनेश्च क्रमप्रकरणादिविनियुक्तत्वेन त्यागायोगात्तत्र साम्यवैषम्यचिन्तानुपपत्तेः।

**मण्डन**— 'समासु गानं कर्तव्यम्।' ५.



शंकर— 'समासु च तदिष्यते।' ५. तत् साम।

* साम। 'एकं साम तृचे क्रियते'। वि. १०।४।२५, * साम कृत्स्नं स्तुतिनिष्पादकम्। ९।२।३, * साम। 'कौत्सं भवति' 'वासिष्ठस्य जनित्रे भवतः' 'क्रौञ्चानि भवन्ति' इत्येकवचनादियुक्तेन वैकृतेन साम्ना प्राकृतसर्वसामबाधः इति पूर्वपक्षः। एकवचनेन वैकृतेन एकमेव प्राकृतं बाध्यम्, द्विवचनेन द्वे, बहुवचनेन च बहूनि प्राकृतानि बाध्यानि इति सिद्धान्तः। १०।४।११, * साम गीतिविशिष्टा मन्त्राः तत्रापि गीतिरेव मुख्या। २।१।११, * साम। ज्योतिष्टोमे 'यज्ञायज्ञीयेन स्तुवीत'। योनिगाने सामगाः 'गायीरा गिरा' इति गायन्ति। प्रयोगे तु 'आयीरा यीरा' इति गातव्यम्। ९।१।१८, * साम। ज्योतिष्टोमे यज्ञायज्ञीये 'ऐरं कृत्वोद्गेयं' इत्यत्र 'गिरा'-पदधर्म आयीभावादिः इरापदे कर्तव्यः इत्युक्तम्। ९।२।१२, * साम। ज्योतिष्टोमे यज्ञायज्ञीये साम्नि 'गिरा-गिरा' इत्यस्य स्थाने 'आयीरा यीरा' इत्यूहः कर्तव्यः। तत्रापि तत् गातव्यम्, न तु गानरहितः अक्षरपाठः। ९।१।१९. * साम तृचे गेयम्, तच्च प्रत्यृचं समापनीयम्। ९।२।३।१४-२०. **मीको.** पृ. १९५७ 'तृचे गेयं साम प्रत्यृचं समापनीयम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम नानास्वरसमाहारात्मकम्। सु. पृ. ८५५. * साम पृष्ठस्तुतौ विनियुज्यते 'रथंतरं पृष्ठं भवति' इति। तच्च सामपदानां स्तुतिं निर्वर्तयतां संश्लेषादिभिर्विशेषैः स्तुतिपदाक्षराणि उपदर्शयत् स्तुतिमभिनिर्वर्तयतीत्युच्यते। भा. १०।६।२।३ पृ. १९८६. * साम। प्रत्यृचं कृत्स्नं साम समापनीयम्, तदेव च द्वितीयतृतीययोः ऋचोरावर्तनीयम्। वि. ९।२।३, * साम। बहिष्पवमानशब्दो नामधेयं स्तोत्रविशेषस्य 'त्रिवृद्-बहिष्पवमानं' इति। १।४।३. * साम ब्रह्मसामगानं गवामयने द्वयोर्द्वयोः ऋचोः प्रग्रथनेन। ९।२।६।२५-२८ वर्णकं ४. **मीको.** पृ. १५४७ 'गवामयने द्वयोर्द्वयोर्ऋचोः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम। रथंतरादिशब्दानां गीतिविशेषवाचित्वम्। ७।२।१।१-२१. **मीको.** पृ. ३२९४ 'रथंतराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम वैखानसं अङ्गिरसां द्विरात्रे पूर्वेद्युः, षोडशि उत्तरेद्युः। **भा.** १०।५।१३।५३. * साम श्लोकं नाम महाव्रते सदसः पुरस्तात् गीयते, अनुश्लोकं च पश्चात्। रथंतर-वामदेव्यादिमिश्रानयोः समुच्चयः। **वि.** १०।४।९. * साम समछन्दस्के तृचि गेयं न विषमछन्दस्के। **भा.** ९।२।४।२१. * साम स्तोत्रप्रयोगे तृचे गेयं नैकस्यामेव ऋचि। **वि.** १०।६।१. * स्तोभादिविशिष्टा ऋक् **साम** इति प्रवक्तृभिः शिष्येभ्यः शिष्टम्। **भा.** ७।२।१।१. * **सामनी** बृहद्रथंतरे उभे यत्र तत्र क्रतौ (गोसवे संसवे अपचितौ) रथंतरादिधर्माणां प्रकृतिवत् व्यवस्था। ९।२।१७।४८-४९. **मीको.** पृ. २९७५ 'बृहद्रथंतरोभयसामके क्रतौ०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सामानि** अनृक्काणि पञ्चत्रिंशत् = १ अर्कग्रीवं एकम्, २-४ पञ्चानुगानमध्ये सामत्रयम्, ५ हा उ हो वा साम एकम्, ६-८ हा उ वाक् सामानि त्रीणि, ९-१० वाचो व्रते द्वे, ११ सत्रस्यर्धि एकम्, १२ परमेष्ठिसाम एकम्, १३ आङ्गिरसव्रतमेकम्, १४ इलान्दं एकम्, १५ सधस्थं एकम्, १६-१८ देवव्रतानि त्रीणि, १९ कश्यपग्रीवमेकम्, २० प्रजापतेर्हृदयमेकम्, २१ अनडुद्व्रतं एकम्, २२-३० महादिवाकीर्त्यानि नव, ३१ सत्वाभूतं एकम्, ३२ धर्मवोचनं एकम्, ३३ आदित्य आत्मा एकम्, ३४ इन्द्ररोचनं एकम्, ३५ इडानां संक्षारः एकम्, इति। बाल. पृ. ७२-७३. * सामानि आज्यदोहानि नाम गर्गत्रिरात्रे। **भा.** ७।३।१२।३०, * सामानि आज्यदोहानि नाम प्रकृत्य श्रूयते 'अग्निमुपनिधाय स्तुवते' इति सोऽयमग्निः लौकिक एव। ७।३।१२।३०, * सामानि आधाने उपांशु गेयानि नोच्चैः। ३।३।२।९, * सामानि। 'दश सामसहस्राणि शतानि च चतुर्दश। साङ्गानि सरहस्यानि यानि गायन्ति सामगाः॥ अशीतिशतमाग्नेयं पावमानं चतुःशतम्। ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगाः॥' १०।५।६।२३, * सामानि बहूनि गायत्रादीनि ज्योतिष्टोमस्य। २।३।१।१ पृ. ५७२.

ऊ सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् । ९।२।१।१॥

किं प्रगीतं मन्त्रवाक्यं साम उत गीतिमात्रं साम इति उत्तरविचारोपोद्घातत्वेन स्मारणार्थं विचारे पूर्वपक्षमाह । मन्त्रं प्रगीतं सामानि इति एके मन्यन्ते । स्मृत्युपदेशाभ्याम् । प्रगीतं मन्त्रवाक्यं साम इति हि स्मरन्ति च्छान्दसाः । ' अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूंषि ' इति मन्त्रप्रकारः कश्चित् सामानि इति उपदेशश्च भवति । तस्मात् स्मृतेः उपदेशाच्च प्रगीता मन्त्राः सामानि इति पूर्वः पक्षः ।

अथवा ऊहसामानि नित्यानि अपौरुषेयाणि उत अनित्यानि पौरुषेयाणि इति विचारे ऊहसामानि मन्त्रभूतानि नित्यानि आर्षाणि इत्येके मन्यन्ते । स्मृत्युपदेशाभ्याम्, ' मन्त्रभूतान्येतान्येतानि आर्षाणि नित्यानि ' इति स्मृतेः । ' ऊहश्चिकीर्षितः ' इति ब्राह्मणोपदेशाच्च । चिकीर्षित इति च इष्ट इत्यर्थः । यदि चायं पौरुषेयः स्यात् न प्रमाणं स्यात् । तस्मात् ऊहग्रन्थो नित्यः इति पूर्वः पक्षः ।

तदुक्तदोषम् । २ ॥

यदुक्तं पूर्वपक्षिणा ऋचः सामानीति तत् उक्तदोषं उक्तः सप्तमे दोषः यस्य तदेतत् उक्तदोषम् । ऋचः सामत्वे ऋचः प्रदेशो नोपपद्यते ' कवतीषु रथंतरं गायति ' इति देशलक्षणा धर्मलक्षणा वा प्राप्नोति इत्युक्तं ( ७।२।१।१३ ) तस्मात् गीतयः सामानि, न प्रगीतानि मन्त्रवाक्यानीति । इति सिद्धान्तः ।

अथवा यदुक्तं पूर्वपक्षिणा ऊहग्रन्थो नित्य इत्यादि तत् भवतो वचनं उक्तदोषं भवद्वचनेनैव तस्य दोष उक्तो भवति । ऊहश्चिकीर्षित इति भवतो वचनम् । इच्छायां हि सन् विधीयते । यद्धि कर्तुमिष्टं भवति तत् क्रियते । तस्मादनित्य ऊहः । यदुक्तं स्मृतेर्नित्यतेति, नैषा स्मृतिः प्रमाणम् । दृष्टमूला ह्येषा । भवति हि वचनं ' कवतीषु रथंतरं गायति ' इति अतिदेशवचनात् न्यायेन एवं गातव्यं इति वाचनिकं प्रथमं विज्ञानम् । तत एषा स्मृतिः । तस्मात् कृत्रिम ऊहः अप्रमाणम् । तेन न्यायविरोधे अप्रामाण्यम् । इति सिद्धान्तः । के.

* सामानि– रथंतरम्, बृहत्, वैरूपम्, वैराजम्, शाक्करम्, रैवतम्, ऐशोकम्, गायत्रम्, आमहीयवम्, रौरवम्, यौधाजयम्, औशनम्, वामदेव्यम्, नौधसम्, कालेयम्, संहितम्, श्यावाश्वम्, आन्धीगवम्, सफम्, पौष्कलम्, कायम्, यज्ञायज्ञीयम्, सिमा–संतनि–यतय–एवागपत्य–शाक्करवर्णम् इति । भा. ९।२।१।१, ९।२।५–६।२३–२८, १०।६।१।१. * सामानि । रथंतरं, बृहत्, वैरूपं, वैराजं, शाक्करं, रैवतं, एतानि सामानि द्वादशाहगतपृष्ठ्ये षडहे क्रमेण षट्सु अहःसु गीयन्ते । वि. १०।६।३. * साम्ना एकेन ज्योतिष्टोमे पृष्ठं साधितम् । विकृतौ ( गवामयने पृष्ठ्ये षडहे ) अपि एकेन साधितव्यं चोदकानुग्रहाय । भा. १०।६।३।५.

ऊ साम्नैव स्तोतव्यम् । प्रगीताया एव ऋचो वैकृतापूर्वसाधनत्वम् ॥

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् । ९।२।८।२९॥

भाष्यम्— क्वचित् कर्मविशेषे श्रूयते ' ऋचा स्तुवते ' ' साम्ना स्तुवते ' ' यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन् । य एवं विद्वान् साम्ना स्तुवीत ' इति । तत्रायमर्थः सांशयिकः, किं ऋचा वा स्तोतव्यं साम्ना वा, उत साम्नैवेति । किं तावत् प्राप्तम् ? विकल्पः, ऋचा वा साम्ना वा ( इति ) । भिन्नमिदं वाक्यं दृश्यते ' यदृचा स्तुवते तदसुरा अन्ववायन् ' इति । ऋचा स्तवे क्रियमाणे असुरा अन्ववगता इति । परिपूर्णे एतावति वाक्यं पश्यामः । एवमर्थमिदं संकीर्त्यते, कथं नाम गम्यते ऋचा स्तोतव्यमिति । किमर्थम् ? यस्मिन् कर्मविशेषे श्रूयते, तस्याङ्गं यथा स्यात् । तच्च प्रयोगसामर्थ्यात् प्रयोगवचनेन गम्यते इति । ननु असुरसंकीर्तनात् निन्दैषा, नेत्याह । न वयं निन्दितान् अनिन्दितान् वा असुरान् विद्मः । संकीर्तनात् कर्तव्यतामध्यवस्यामः । एवं ' साम्ना स्तुवते ' इति पृथक् वाक्यम् ।



तस्मात् विकल्पः । ऋक्सामयोः स्तुत्यर्थत्वात् उभयोरप्येकं कार्यम् । स्तुतिर्हि निर्वर्तयितव्येति, तदन्यतरेण सिध्यति इति विकल्पः ।

टुप्— ऋचा स्तोतव्यम्, साम्ना वा । कुतः ? उभयत्र वर्तमानापदेशात् । यदि साम्नि विधायकः श्रूयेत, तथा सति कांचित् निन्दां प्रकल्प्य साम्नां स्तुत्येकवाक्यता स्यात् । न तु विधायकः श्रूयते । तस्मात् स्तुत्यैव उभयत्र विधायकं कल्पनीयम् । ननु ऋचि निन्दा श्रूयते । उच्यते । विपरीतमिदं कस्मान्न भवति । इत्थं ऋक् शोभना यदसुरा अपि अनागतपूर्वाः तत्रागच्छन्तीति ।

वचनाद्विनियोगः स्यात् । ३० ॥

भाष्यम्— नैतदस्ति, विकल्प इति । साम्नो विनियोगः स्यात् । कुतः ? तस्येह विनियोजकं वचनमस्ति । ' यदृचा स्तुवते, तदसुरा अन्ववायन् ' ' यत्साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत ' इति साम्ना स्तुतिः प्रशस्यते प्रत्यक्षेण प्रशंसावचनेन । इतरथा कल्प्या स्यात्, ' ऋचा स्तवने असुरा अनुगताः, तस्मात् ऋचा स्तोतव्यम् ' इति । अथ साम्ना स्तवः प्रशस्यते, ततो ' यदृचा स्तुवते तदसुरा अन्ववायन् ' इति इतरप्रशंसार्था निन्दैषा, न किंचित् कल्पयिष्यते इति । कथं निन्दावचनमेतदिति गम्यते ? इतरस्तुतिवचनात् । तस्मात् साम्नैव स्तोतव्यमिति ।

टुप्— ' साम्ना स्तुवते ' इति साम्नः स्तुतौ विधानं असुराणामनागमनार्थवादेन । असुरागमननिन्दाद्वारेण साम्ना सह एकवाक्यतां याति ' यदृचा स्तुवते ' इत्येतत् । इतरथा निन्दया निन्दितायाः प्रशंसां कल्पयित्वा वाक्यद्वयं प्रकल्प्यम् । वाक्यद्वयाच्च अदृष्टद्वयं प्रकल्प्यम् । न च विपरीतो वाक्यार्थः । साम्नामुपसंहारे श्रवणात् ' य एवं विद्वान् साम्ना स्तुवते ' इति ।

शा— क्वचिद्विकृतिविशेषे कानिचित् अप्राकृतानि स्तोत्राणि विहितानि । तेषां च न प्रकृतितः किंचित् साधनं प्राप्नोति । प्राकृतानां गायत्ररथंतरादिसाम्नां प्राकृतीषु बहिष्पवमानादिस्तुतिषु निबद्धानां अप्राकृतेषु प्राप्त्यभावात्, तेन तानि साकाङ्क्षाणि । तत्रेदं श्रूयते ' यदृचा स्तुवते तदसुरा अन्ववायन्, यत् साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत ' इति । तत्र ऋग्ग्रहणं अप्रगीतऋक्परम् । प्रगीतायाः सामोपदेशेनैव सिद्धत्वात् । साम्ना हि अक्षराभिव्यक्तिद्वारैव स्तुतिः क्रियते, न साक्षात् । तेन ' साम्ना स्तुवीत ' इति सामाभिव्यक्तैः ऋगक्षरैः स्तुवीत इत्यर्थः । एवं चेत् अप्रगीतपरं ऋग्वचनम् । तत्र संशयः, किमृचा साम्ना वा स्तोतव्यं उत साम्नैवेति । द्वयोर्वचनात् विकल्पप्राप्तौ, उच्यते । साम्न उपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमात् ऋक्कीर्तनं असुरागमनिन्दया सामप्रशंसार्थम् । तस्मात् साम्नैव स्तोतव्यम् ।

सोम— पूर्ववदिहापि विकल्प इत्युत्थितेः संगतिः ।

वि— ' ऋक्सामाभ्यां विकल्पेन स्तुतिः साम्नैव वा, ऽग्रिमः । पुरेव, मैवमृङ्निन्दासामप्राशस्त्यदर्शनात् ॥ '

भाट्ट— सामवेदे शाखाभेदेन एकस्यैव स्वरसमूहात्मकस्य साम्नः आरोहावरोहादिभेदेन प्रकारभेदा आम्नाताः, एकस्यैव रागस्य देशभेदेन प्रकारभेदवत् । तेषां च प्रकाराणां एकगीत्यर्थत्वात् व्रीहियवादिवदेव विकल्पः सिद्ध एव प्रसङ्गात् सार्यते ।

एवं वा, विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि । तेषु च यूपावटास्तरणबर्हिर्न्यायेन न प्राकृतानां रथंतरादिसाम्नां ऋचां वा प्राप्तिः, प्राकृतस्तोत्रविशेषेष्वेव तेषां निबद्धत्वात् । तत्प्रकरणे चेदं श्रुतम्– ' यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन्, तस्मात् य एवं विद्वान् साम्ना स्तुवीत ' इति । तत्र ऋक्शब्दः अप्रगीतऋक्परः । प्रगीतायाः सामविधिनैव प्राप्तेः । नहि ऋगाश्रयत्वं विना साम्नः स्तोत्रसाधनता संभवति । स्तोभानामर्थशून्यत्वेन तदाश्रितानूकसाम्नां गुणाभिधानरूपस्तोत्रसाधनत्वासंभवात् । अतस्तत्र प्रगीताप्रगीतऋचोर्विकल्पेन साधनता उत प्रगीताया एवेति चिन्तायाम्, अन्तिमस्याख्यातस्य यच्छब्दोपबद्धत्वेन सामविधायकत्वाभावात्

आद्ययोरेव अप्रामाण्यर्थवादिना लेट्त्वनिश्चयात् ऋक्सामयोः उभयोरपि विधिः । अर्थाच्च तुल्यकार्यत्वसिद्धौ विकल्पः । न चाक्षुरागमनेन ऋचो निन्दितत्वात् कथं तद्विधिः ? निषेधैकवाक्यतां विना निन्दात्वस्यैवाप्रतीतेः । अतः अत्यन्तदुराराध्यानामपि ऋचा वशीकरणात् विध्येकवाक्यतया अस्य स्तुतित्वमेव । इति प्राप्ते, वाक्यभेद-विषमशिष्ट-विकल्पादिदोषभिया यच्छन्दोपबद्धस्यापि लिङ् एव सामविधायकत्वम्, न तु लट्त्वेन संदिग्धयोः । एवं च साम्न एवेयं सर्वा स्तुतिः । ऋङ्निन्दाऽपि 'नहि निन्दा'-न्यायेन विधेयसामस्तुत्यर्थैव इति तस्याः प्रगीताया एव साधनत्वम् ।

इदं चाधिकरणं यत्र स्तोत्रावान्तरप्रकरणे साम, तद्योनिस्तत्राश्च न पठिताः तद्विषयम् । इतरत्र साम्नः ऋचां च प्रकरणादिनैव अङ्गत्वोपपत्तेः सामविधिवैयर्थ्यात् । अत एव प्रकृतोदाहरणे साम्ना इत्येकवचनोपादानात् एकमेव साम सामवेदादानेयम् । ऋक् च तत्र योनिरूपैव । 'एकं साम तृचे क्रियते' 'यद्योन्यां गायति' इत्यादेः दीक्षणीयावाङ्नियमन्यायेन प्राकृततत्तत्स्तोत्रीयर्चामेव उद्देशेन अप्राकृते अप्रवृत्तेः । ऋतुगतप्राकृतचतुःस्तोमत्वादिगुणानुरोधात्तु एकस्या एव प्रगीताया ऋचः तावद्वारमभ्यासः ।

ननु एवं यत्र अप्राकृतस्तोत्रावान्तरप्रकरणे योनिः उत्तरा च आम्नाता तत्रोत्तरयोः साम्नि प्रमाणाभावः । यत्र च संज्ञादिभिन्नं स्तोत्रान्तरमुपात्तम्, न च प्रकरणे ऋचः पठिताः, न वा प्रकृतोदाहरणवत् सामविधिः, तत्र स्तोत्रविध्यन्यथाऽनुपपत्त्या ऋचामानयनेऽपि सामानयने प्रमाणाभावः । अथ तत्र प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तोत्रतया स्तोत्रविध्यन्यथाऽनुपपत्त्यैव सामानयनम्, ततः अत्रापि तत एव सामप्राप्तेः 'साम्ना स्तुवीत' इति विधिवैयर्थ्यापत्तिः इति चेत्, 'साम्ना स्तुवीत' इत्यस्य अनारभ्याधीतत्वेन प्रकृतौ आनर्थक्येन अनिवेशे सर्वत्रैव विकृतौ अप्राकृतस्तोत्रविषये सामविधायकत्वोपपत्तेः । भाष्यकारादिलेखनस्वारस्यात् अस्य विकृतिविशेषप्रकरणपठितत्वाङ्गीकारे तु नायं वस्तुतः सामविधिः, अपितु स्तोत्रपदशक्तिग्राहकयाज्ञिकप्रसिद्धयुपोद्बलकः सन् अनुवाद एव अप्राकृतस्तोत्रविधिस्तुत्यर्थः एकत्वविधानार्थो वेति ध्येयम् ।

मण्डन— 'साम्नैव क्रियते स्तोत्रम् ।' १३.

शंकर— 'यद्वचेत्यादिका स्तुतिः ।' १३.

* सामभिः अविवृद्धक्रतूपदिष्टैः प्राकृतसाम्नां बाधः । भा. १०।४।१०।२०, * सामभिर्युक्तं रथं उद्गात्रे ददाति वाजपेये नान्यं न चान्यस्मै । १०।३।१२।७५, * सामभिः विवृद्धस्तोमकक्रतूपदिष्टैः, प्राकृतसाम्नामबाधः । १०।४।१०।२०.

**¶ साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् । ७।२।१।१ ॥**

'रथंतरमुत्तरयोर्गायति' 'कवतीषु रथंतरं गायति' इति रथंतरशब्देन किमुच्यते इति विचार्यते । यद्यपि 'गीतिषु सामाख्या' (२।१।११।३६) इत्यत्र रथंतरादिशब्दः गीतिवाची इति सिद्धं तथापि स्थूणानिखननन्यायेन दार्ढ्यार्थं पुनर्विचार्यते । तत्र केवला ऋचः रथंतरादिशब्देन अभिधेयाः इति उत्सूत्रः प्रथमः पूर्वपक्षः । इमं पक्षं अयुक्तं मत्वा द्वितीयं पूर्वपक्षमाह सूत्रम् । साम्नः अभिधानशब्देन रथंतरबृहदादिशब्देन यथाशिष्टं प्रवक्तृभिः शिष्येभ्यः यथा शिष्टं उपदिष्टं तदनतिक्रम्य यथाशिष्टं रथंतरादिशब्दस्य प्रवृत्तिः स्यात् । सस्तोभस्वरकालाभ्यासविकारायां हिंकारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यां ऋचि सामशब्दः अभियुक्तैरुपचर्यते । तस्मात् सैवोच्यते इति ।

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसंबन्धः । २ ॥**

'रथंतरमुत्तरयोर्गायति' इति रथंतरादिशब्दस्य स्तोभस्वरादिविशिष्टायां ऋचि प्रवृत्तिः इति पूर्वसूत्रोक्तं पक्षं निरस्यति । तुशब्देन पक्षनिरास एव सूच्यते । शब्दैः शब्दानामित्यर्थः । षष्ठ्यर्थे तृतीया सौत्री । शब्दानां अर्थविधित्वात् अर्थविधानपरत्वात् अर्थाभिधानपरत्वात् रथंतरशब्दः 'अभि त्वा शूर नोनुमः' इति अभिवतीसंज्ञकऋग्वाचकः । 'कवतीषु रथंतरं गायति' इति वचनाच्च 'कया नश्चित्र आभुवत्'



इत्यस्यां ऋचि गातव्यम् । परंतु कवती ऋक् अन्यार्थाभिधायिनी । अभिवती च अन्यार्थाभिधायिनी । तेन अर्थान्तरे अप्रवृत्तिः स्यात्, कवत्या अर्थे अभिवती वक्तुं न शक्नुयात् । अर्थान्तरे प्रवृत्तिर्न स्यात् । पृथग्भावात् कवत्याः अभिवत्याश्च अर्थभेदात् । तथा च अभिवत्याः कार्ये कवत्या अतिदेशो न घटते । तस्मान्न कार्यातिदेशोऽयं 'कवतीषु रथंतरं गायति' इति । नापि कवत्यां अभिवत्या आधेयत्वं वक्तुं शक्यते, पृथग्भावात् । नहि शब्दः शब्दे समवैति पृथगेव तु अवतिष्ठते । तस्मात् 'कवतीषु रथंतरं गायति' इत्यत्र हि यस्मात् क्रियायाः गानक्रियायाः रथंतरशब्देन अभिसंबन्धः स्यात्, अभिवत्यां यद्गानं तत् कवत्यां कर्तव्यं इति, तस्मात् रथंतरादिशब्दस्य न ऋचि प्रवृत्तिः । रथंतरादिशब्दो न ऋग्वाचकः । 'क्रियायां' इति पाठे तु रथंतरादिशब्दस्य क्रियायां गानक्रियायां अभिसंबन्धः इत्यर्थः ।

**स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् । ३ ॥**

वाशब्देन पक्षान्तरं परिगृह्यते । 'कवतीषु रथंतरं गायति' इत्यत्र स्वार्थे वर्तमाना अभिवत्यः ऋचः तदङ्गभावेन कवतीनामङ्गभावेन अङ्गत्वेन उपदिश्येरन् । तत्र प्रयोजनं अदृष्टं स्यात् । क्रियायाः, क्रियात्वात् इत्यर्थः । क्रिया हि प्रयोजनार्था । ऋगुच्चारश्च क्रिया । प्रयोजनस्य अदृष्टस्य कल्प्यत्वात् नायमपि पक्षः साधुः ।

**शब्दमात्रमिति चेत् । ४ ॥**

'कवतीषु रथंतरं गायति' इत्यत्र यदि रथंतरशब्दः न केवलऋग्वाचकः, न स्वरादिविशिष्टऋग्वाचकः नापि अभिवतीनां कवत्यङ्गभावः, तर्हि शब्दमात्रं स्यात् । 'कया नश्चित्र आभुवत्' इति कवतीषु ऋक्षु रथंतरशब्दः प्रयोक्तव्यः इति वाक्यार्थः स्यात् । शब्दमात्रं विधीयते । इति चेत् ।

**नौत्पत्तिकत्वात् । ५ ॥**

'कवतीषु रथंतरं गायति' इत्यस्य 'कया नश्चित्र आभुवत्' इत्यादिषु कवतीषु ऋक्षु रथंतरशब्दः प्रयोक्तव्यः इत्यर्थः इति यदुक्तं तन्न, औत्पत्तिकत्वात् संज्ञासंज्ञिनोः संबन्धः औत्पत्तिकः उत्पत्तिसिद्धः अनादिः । रथंतरशब्दश्च कवतीषु प्रयोक्तुं न शक्यते, तयोरसंबन्धात् ।

**शास्त्रं चैवमनर्थकं स्यात् । ६ ॥**

'शब्दमात्रमिति चेत्' (७।२।१।४) इति सूत्रोक्तस्य पक्षस्य 'नौत्पत्तिकत्वात्' (७।२।१।५) इति सूत्रेण निषेधः कृतः । तदर्थमेव इदमपि सूत्रम् । एवं 'शब्दमात्रस्य प्रयोगः' इति पक्षे च शास्त्रं अनर्थकं स्यात् 'कवतीषु रथंतरं गायति' इति अतिदेशशास्त्रं व्यर्थं स्यात् अशक्यार्थकत्वात् ।

उपवर्षवृत्तिकारस्तु मेने— 'गानशास्त्रं औक्थिक्यं अनर्थकं स्यात् इति । तस्यायमभिप्रायः, सत्यां गतौ नैतावान् प्रयासः शिष्टानां अफलोऽभ्युपगन्तुं न्याय्य इति' इति भाष्यम् । सौत्रश्चकारः शब्दमात्रत्वपक्षनिरासे हेत्वन्तरसमुच्चयार्थः ।

**स्वरस्येति चेत् । ७ ॥**

'कवतीषु रथंतरं गायति' इत्यत्र को रथंतरशब्दार्थः कश्च वाक्यार्थः इत्यत्र पञ्चमः पक्षः उच्यते । अस्मिन् वाक्ये स्वरस्य अतिदेश उच्यते । सामशब्देन लोके स्वरोऽभिधीयते, सुसामा देवदत्त इति सुस्वरो देवदत्त इत्यर्थः । स्वरो घोषो नाद इत्यनर्थान्तरम् । रथंतरं च साम । तस्मात् 'कया नश्चित्र आभुवत्' इत्यादिषु कवतीषु रथंतरस्वरस्यातिदेशः । इति चेत् ।

**नार्थाभावात् श्रुतेरसंबन्धः । ८ ॥**

'कवतीषु रथंतरं गायति' इति वाक्ये रथंतरस्य नाम स्वरस्य 'कया नश्चित्र आभुवत्' इति कवतीषु ऋक्षु अतिदेशः इति पक्षस्य निषेधार्थं सूत्रम् । नायं कवतीषु रथंतरस्वरस्यातिदेशः । अर्थाभावात् । 'अभि त्वा शूर नोनुमः' इति अभिवत्याः अर्थस्य स्वरस्य कवतीषु अभावात् । नापि तथा भावयितुं शक्यते । नहि अभिवत्यक्षराणां अभिव्यञ्जको नादः कवतीषु भावयितुं शक्यते । एवं श्रुतेः 'कवतीषु रथंतरं गायति' इति श्रुतिपदानां असंबन्धः परस्परं संबन्ध एव न स्यात् स्वरातिदेशपक्षे । तथा च वाक्यं बाधितं स्यात् । तस्मान्न स्वरस्यातिदेशः ।

**स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् । ९ ॥**

तुशब्दः पक्षान्तरपरिग्रहे । यदि 'अभि त्वा शूर नोनुमः' इति अभिवत्याः स्वरस्य 'कया नश्चित्र आभुवत्' इति कवतीषु उपदेशो नोपपद्यते, अनुवादस्तर्हि भवतु 'कवतीषु रथंतरं गायति' इति । कवतीषु यत् रथंतरं तत् गायति इति वचनव्यक्तिः । तदित्थम् । स्वरः अभिवतीस्वरः कवतीनां उत्पत्तिषु उच्चारणेषु स्यात् । स्वरः उत्पत्तिषु स्यात् । मात्रावर्णाविभक्तत्वात् अभिवतीषु कवतीषु च बह्व्यो मात्राश्च वर्णाश्च अविभक्ताः समाना विद्यन्ते । सोऽयं अभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते । तस्य स्वरस्य अनुवादोऽयं 'कवतीषु रथंतरं गायति' इति । तस्मात् स्वरस्यानुवादः ।

**लिङ्गदर्शनाच्च । १० ॥**

'अभि त्वा शूर नोनुमः' इत्यभिवत्या ऋचः 'कया नश्चित्र आभुवत्' इति कवत्याश्च ऋचः बहूनां मात्राणां वर्णानां च समानत्वात् कवतीषु विद्यमानस्य अभिवतीस्वरस्य अनुवादोऽयं 'कवतीषु रथंतरं गायति' इत्युक्तम् । तस्मिन्नर्थे च लिङ्गदर्शनं भवति । 'रथंतरमुत्तरयोर्गायति' इति वचनं तावत् भवति । 'रथंतरमुत्तरयोर्न पश्यामि इति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामि इति वसिष्ठः' इति तल्लिङ्गम् । यच्च विद्यमानमपि न दृश्यते तद्दर्शनाय यत्नः क्रियते, यथा घटं न पश्यामीति प्रदीपं करोति । न, शशविषाणं न पश्यामीति प्रदीपं करोति । तस्मादस्ति उत्तरयोः रथंतरं बृहच्च । तयोः अनुवादः 'रथंतरमुत्तरयोर्गायति' इति 'कवतीषु रथंतरं गायति' इति च ।

**अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति । ११ ॥**

रथंतरादिशब्दः स्वरस्यानुवादकः इति षष्ठस्य पक्षस्य व्यावृत्त्यर्थं सूत्रम् । तुशब्दः स्वरपक्षव्यावृत्त्यर्थ एव । यदि 'रथंतरमुत्तरयोर्गायति' 'कवतीषु रथंतरं गायति' इति रथंतरशब्दः स्वरस्यानुवादः स्यात् तदा, उत्तरासु योनेरुत्तरासु ऋक्षु विकारस्य अपूर्वस्य विहितस्य धर्मस्य अश्रुतेः श्रवणाभावात् यथाश्रुति स्वाध्यायकाले इव उत्तरा ऋचः पठनीयाः स्युः । तत्र 'रथंतरमुत्तरयोर्गायति' इति अनुवादमात्रं अनर्थकं स्यात् । अतो न स्वरस्यानुवादः । योनिः नाम सामाधारभूता प्रथमा ऋक् । उत्तरा नाम योनेरुत्तराभूता एका द्वे वा ऋचौ । यथाश्रुति इत्यत्र श्रुतिमनतिक्रम्य इति अव्ययीभावः समासः ।

**शब्दानां चासामञ्जस्यम् । १२ ॥**

'रथंतरमुत्तरयोर्गायति' 'कवतीषु रथंतरं गायति' इति रथंतरशब्दः स्वरस्यानुवादकः इति पक्षस्य निराकरणार्थं हेत्वन्तरपरं सूत्रम् । रथंतरशब्दः आनुपूर्वीविशेषविशिष्टस्वरसमुदायवाची । तत्र केवलं स्वरानुवादकत्वे रथंतरबृहदादिशब्दानां असामञ्जस्यं अयुक्तत्वं स्यात् । नहि समुदायवाचकस्य एकदेशवाचकत्वं समञ्जसम् । तस्मात् न स्वरस्यानुवादः ।

**अपितु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः । १३ ॥**

'रथंतरमुत्तरयोर्गायति' 'कवतीषु रथंतरं गायति' इत्यादौ रथंतरादिशब्दः न केवलऋग्वाचकः, न स्तोभस्वरादिविशिष्टऋग्वाचकः, नापि अभिवत्या ऋचः कवतिऋगङ्गत्वम्, न रथंतरशब्दमात्रातिदेशः, न स्वरस्यातिदेशः, नापि स्वरस्यानुवादः । अपितु रथंतरशब्दः कर्मशब्दः स्यात् कर्मणः गानकर्मणः वाचकः स्यात् । कर्मशब्दोऽयम्, न ऋग्रूपद्रव्यशब्दः । ततश्च रथंतरशब्दस्य भावः अर्थः । गैधातोर्योऽर्थः स एव रथंतरादिशब्दार्थः । गैधातोर्गानं प्रसिद्धोऽर्थः । प्रसिद्धग्रहणत्वात् प्रसिद्धं अर्थं गृह्णाति इति प्रसिद्धग्रहणः । रथंतरादिशब्दस्य प्रसिद्धार्थग्रहणत्वात् प्रसिद्धार्थग्राहकत्वात् तस्य भावोऽर्थः ततश्च कर्मशब्दोऽयम् । हि यस्मात् रथंतरपदार्थः विकारः अन्यैः अविशिष्टः समानः । लोकेऽपि श्लोकादेः पद्यस्य गानं विकार एव प्रसिद्धः । अवहननेन व्रीहीणां तण्डुलीभावो विकारः, पेषणेन तण्डुलानां पिष्टीभावो विकारः । तथा ऋचामपि गानं विकारः । इति समानम् । तथा च अन्यविकारसदृशत्वात् प्रसिद्धधात्वर्थग्रहणाच्च रथंतरादिशब्दः गानकर्मवाचक एव, न ऋग्वाचकः, इति सिद्धान्तः ।



**अद्रव्यं चापि दृश्यते । १४ ॥**

सामशब्द. गीतिवाचकः रथंतरादिशब्दश्च गीतिविशेषवाचकः इति अवगतम् । तत्रैव हेत्वन्तरमाह सिद्धान्ती । अद्रव्य द्रव्यरहितं ऋग्रहितम् । अपि च साम अद्रव्यं अनृक्कं दृश्यते । द्रव्यशब्दः छन्दोगैः ऋक्षु प्रयुक्तः । ऋग् द्रव्यं गीतिश्च तस्य गुण इति । 'प्रजापतेर्हृदय अनृचं गायति' इति । प्रजापतेर्हृदयं नाम साम । तत् अनृचि उत्पन्नम् । यदि ऋचि सामशब्दः स्यात् कथं प्रजापतेर्हृदयं नाम साम अनृचं स्यात् । तस्मादपि गीतिः साम । 'चापि' इति अपिच इति शब्दः हेत्वन्तरसमुच्चये ।

**तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासां न लौकिके विधानात् । १५ ॥**

सामशब्दार्थो गीतिः ऋचां संस्कारकर्म इति, इति सिद्धान्त उक्तः । तत्रेयमाशङ्का । ननु संस्कारकर्मत्वे अकर्मकाले गीतिप्रयोगः अनर्थकः स्यात् इति । तत्रोच्यते । अकर्मकाले शिक्षाकाले अभ्यासकाले च तस्य गीतिरूपस्य साम्नः क्रिया उच्चारणरूपा ग्रहणार्था ज्ञानार्था । नानार्थेषु विरूपित्वात् नानाभूतेषु भिन्नेषु अर्थेषु विविधरूपत्वात् । लौकिके गाने एकस्मिन्नपि श्लोके यथा भैरवभैरवीसारङ्गादयो रागविशेषा गीयन्ते तथा एकैकस्यां ऋचि नानाविधानि गीतिरूपाणि सामानि गातव्यानि भवन्ति । तानि च पूर्वाभ्यासं विना याज्ञे कर्मणि अकस्मात् गातुं न शक्यन्ते । तस्मात् अकर्मकाले गानक्रिया ग्रहणार्था । सा तस्य प्रयोगकाले सौकर्यमुत्पादयति । यथा भूमिरथिकः भूमौ रथमालिख्य अभ्यासं करोति तद्वत् । अर्थो हि यस्मात् आसां रथंतरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः । नायं सामगानं नाम लौकिकः पदार्थः । विधानात् विधीयमानत्वात् । विधीयते हि असौ शिष्योपाध्यायसंबन्धेन 'एवंरूपं रथंतरं भवति, एवंरूपं बृहत्, एवंरूपं वामदेव्यं' इति । तस्मात् अकर्मकाले गानक्रिया ग्रहणार्था ।

**तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् । १६ ॥**

ननु रथंतरं बृहत् वामदेव्यं इत्यादिसंज्ञाभेदात् ऋग्विशेषा एव रथंतरादिशब्दवाच्याः स्युः इति । तत्राह– तस्मिन् एकस्मिन्नपि गानाख्ये संस्कारे रथंतरबृहदादयः संज्ञाविशेषाः भिन्नाः संज्ञाः स्युः । विकारपृथक्त्वात् विकाराणां भिन्नत्वात् । गानत्वे तुल्ये गानविशेषा भवन्ति । गानविशेषाच्च संज्ञापृथक्त्वम् । न तु ऋक्भेदात् संज्ञापृथक्त्वम् । यथा आसारितकं गीतिः, वर्धमानकं गीतिः, इति । अन्यथालक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः । एवमिहापि अन्यथालक्षणा रथंतरगीतिः, अन्यथालक्षणा बृहद्गीतिः । तस्मात् गीतिभेदात् संज्ञापृथक्त्वं न ऋग्भेदात् ।

**योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते । १७ ॥**

यस्यां ऋचि साम्न उत्पत्तिर्भवति सा योनिर्नाम ऋक् । योनिः सती या ऋक् शस्यते शस्त्रे अप्रगीतत्वेन पठ्यते सा योनिशस्या ऋक् । 'याम्याः शंसति' 'शिपिविष्टवतीः शंसति' इत्येवं या ऋक् विहिता सा न कस्यचित् साम्नो योनिभूता । तादृशी ऋक् शस्या सती अयोनिभूता इति अयोनिशस्या इत्युच्यते । योनिशस्याः ऋचः इतराभिः अयोनिशस्याभिः ऋग्भिः तुल्यवत् विधीयन्ते । तुल्यत्वमत्र शंसतिशब्देन विधानम् । 'याम्याः शंसति' 'शिपिविष्टवतीः शंसति' 'रथंतरस्य योनिमनु शंसति' 'बृहतो योनिमनु शंसति' इति । एवं च शंसतिशब्देन विधानात् अप्रगीतामृचं रथंतरस्य योनिं दर्शयति । यदि च रथंतरं गीतिरूपम्, तत एव तस्य अप्रगीता ऋक् योनिः संभवति नान्यथा । तस्मात् रथंतरादिशब्दः सामशब्दश्च गीतिवाचक एव । सिद्धान्ते हेत्वन्तरसमुच्चयार्थश्चकारः ।

**अयोनौ चापि दृश्यतेऽतथायोनि । १८ ॥**

सामशब्दो गीतिवाचकः, न ऋग्वाचकः इति सिद्धान्ते युक्त्यन्तरस्य प्रदर्शनार्थं सूत्रम् । चकारः समुच्चयार्थः । साम अयोनौ अपि दृश्यते । साम प्रायः तृचे गीयते । तत्र प्रथमा ऋक् योनिर्नाम । सर्वाश्च योनयः सामवेदे पूर्वार्चिके नाम योनिग्रन्थे पठिताः ।

उत्तरे द्वे ऋचौ उत्तरार्चिके नाम उत्तराग्रन्थे पठिताः। किंचित्तु साम क्वचित् अयोनौ योनिभिन्नायामपि ऋचि पठ्यते। तथा च श्रुतिः बृहद् गायत्रीषु क्रियते ' इति। तथा समानच्छन्दस्के तृचे साम प्रायः गीयते। तादृशं साम तथायोनि इत्युच्यते। क्वचित्तु योनिच्छन्दसः भिन्नेऽपि च्छन्दसि गीयते तादृशं साम अतथायोनि। तथा च श्रुतिः ' यो वै विच्छन्दसि साम ऊहति ' इति। एवं सति साम्नः क्वचित् अयोनिकत्वात्, क्वचिच्च अतथायोनिकत्वात् सामशब्दः नियतं ऋग्वाचको भवितं नार्हति। तस्मात् स गीतिवाचक एव।

**एकार्थ्ये नास्ति वैरूप्यमिति चेत्। १९ ॥**

' तस्य च क्रिया ग्रहणार्था० ' इति सूत्रे (७।२।१।५) सिद्धान्तिना यदुक्तं तत्र पूर्वपक्षी शङ्कते। रथंतरबृहदादिसंज्ञाभेदः गानभेदात् स्यात्, परंतु रथंतरगानं सर्वत्र एकरूपमेव। तस्य च स्वयोनिभूतायां ' अभि त्वा शूर ' इत्यस्यां ऋचि अभ्यासेन दृढीकरणे उत्तरयोरपि ऋचोः प्रयोगवेलायां गातुं शक्यत्वेन प्रयोगात् बहिः पठनं व्यर्थम्। तदाह, रथंतरगानस्य ऐकार्थ्ये एकरूपत्वे सति उत्तरयोर्गानस्य वैरूप्यं भेदो नास्ति इति ग्रहणार्थायाः क्रियायाः नापेक्षा। तस्मात् संस्कारकर्मपक्षे अकर्मकाले प्रयोगः अनर्थक एवेति। इति चेत्।

**स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके। २० ॥**

रथंतरगानस्य एकरूपत्वात् योनिगाने अभ्यस्ते उत्तरागानस्य अकर्मकाले प्रयोगो वृथा इति शङ्कायां उत्तरमाह सिद्धान्ती। स्यात् वैरूप्यं एकस्यामृचि रथंतरगानात् अन्यस्यामृचि रथंतरगानस्यैव। एकस्यामृचि अभ्यासेऽपि अर्थान्तरेषु ऋगन्तरेषु अभ्यस्तरथंतरगानस्य अनिष्पत्तेः ऋगन्तरेष्वपि पुनः पुनरभ्यासः सार्थकः। रथंतरगानस्य एकरूपत्वेऽपि आश्रयभेदात् कियांश्चिद्भेदो भवत्येव। तदर्थमभ्यासः पृथगावश्यकः। यथा पाके। एक एवायमर्थः पाको नाम। परंतु अन्यथालक्षणः ओदनस्य पाकः, अन्यथालक्षणः सूपस्य, अन्यथालक्षणो गुडस्य। येन ओदनपाको गृहीतः नासौ अशिक्षित्वा सूपं गुडं वा पक्तुं जानाति। तस्मात् रथंतरगानस्यापि आश्रयभेदाद्भिन्नस्य अकर्मकाले अभ्यास उपपद्यते। तस्मात् संस्कारकर्मत्वपक्षे अकर्मकाले प्रयोगो नानर्थकः।

**शब्दानां च सामञ्जस्यम्। २१ ॥**

यदुक्तं ' शब्दाना चासामञ्जस्यम् ' (७।२।१।१२) इति तत्रोत्तरमाह सिद्धान्ती। एवं च सामशब्दस्य रथंतरादिशब्दानां च गीतिवाचकत्वे सामशब्दानां ऋक्शब्दानां च सामञ्जस्यं भवति। ' कवतीषु रथंतरं गायति ' इति कवतीशब्दः ' कया नश्चित्र आभुवत् ' इत्यादीनृच एव वक्ष्यति रथंतरशब्दश्च साम वक्ष्यति। तथा च न विरोधः। तस्मात् गीतौ सामशब्दः इति सिद्धान्तः। के.

* साम्नः आधारभूते तृचे प्रथमा ऋक् योनिर्नाम, सा च ' योनिग्रन्थे पूर्वार्चिके ' विहिता। उत्तरे द्वे ऋचौ ' उत्तरं ' नाम, ते च ' उत्तराग्रन्थे-उत्तरार्चिके ' विहिते। वि. १०।४।२५, * साम्नः ऋक्संस्कारकर्मता। ९।२।२. * साम्नः वैखानसस्य विध्यर्थं ' षोडश्युत्तरे ' इति प्राप्तानुवादः अङ्गिरसां द्विरात्रे। १०।५।१३।५३-५४ वर्णक २. मीको. पृ. १८१ ' अङ्गिरसां द्विरात्रे० ' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्नः सौभरस्य हीष् इत्यादिनिधनस्य च फलकयं वृष्ट्यादि। अत्र निधनविशेषनियमविधिः। वि. २।२।१३. * साम्नोः गौषूक्ताश्वसूक्तयोः गानं बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे, ज्योतिष्टोमे। ९।२।६।२५-२८ वर्णकं २. मीको. पृ. १८१९ ' ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव० ' इत्यत्र अधिकरणं द्रष्टव्यम्। * **साम्नां** अक्षराभिव्यक्तिः प्रयोजनम्। **मणि.** पृ. ५. * साम्ना अप्राकृतानां आगमेन अतिरात्रे एकविंशादौ काम्ये अधिकसंख्यापूरणं कर्तव्यम्। १०।५।६।१५-२५. **मीको.** पृ २५६ ' अतिरात्रे एकविंशादौ काम्ये० ' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्नामभ्यासो विवृद्धस्तोमके क्रतौ बहिष्पवमाने। १०।५।७।२६. **मीको.** पृ. ३६७२ ' विवृद्धस्तोमके क्रतौ बहिष्पवमाने० ' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्नां- अवभृथसामादीनां उच्चैस्त्वम्। सवनग्रहणाभावात् यथावेदमेव स्वरः। **वा.** ३।३।२।९ पृ. ८१३. * साम्नामागन्तूनां माध्यंदिनार्भवपवमानयोः गायत्र्यादिष्वेव निवेशः। **भा.** ५।३।५।१३-१४। बहिष्पवमाने तु स्तोमानां पर्यासोत्तरम्। ५।३।४।११-१२. * साम्नां आधानगतानां उच्चैष्ट्वं उपांशुत्वेन बाध्यते। बाल. पृ. १४०. * साम्नां-आधानसाम्नां- प्रधानसंस्पर्शनिमित्तं उपांशुत्वं इति प्रधानधर्मता। **वा.** ३।३।२।९ पृ. ८११, * साम्नां- आधानसाम्नां- याजुर्वेदिकप्रधानविधिविहितत्वात् उपांशुत्वम्। ३।३।२।९ पृ. ८१३. * साम्नामावापोद्वापौ कस्मिंश्चित् स्तोत्रे पवमानेष्वेव गायत्री-बृहत्यनुष्टुप्सु कर्तव्यौ न तु कस्याचिदृचि। वि १०।४।१३. * साम्नामावापोद्वापौ विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानयोरेव। १०।४।११।२१-२२. **मीको** पृ. ३६६८ ' विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भव० ' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्नामृचं प्रति गुणत्वम्। **भाट्ट** ९।२।२.

**साम्नामृक्संस्कारकर्मत्वेन प्राधान्यं नास्ति ॥**

**कर्म वा विधिलक्षणम। ९।२।२।३॥**

**भाष्यम्**-- तान्येवोदाहरणानि। तेष्वयमर्थः समधिगतः, गीतिः सामशब्देनोच्यते इति। तत इदमिदानीं संदिह्यते, किं सा गीतिः ऋचः प्रति प्रधानभूता, उत गुणभूतेति। ननु सिद्धं संस्कारकर्मणः सामशब्दो वाचक इति, अपितु कर्मशब्दः स्याद्भावोऽर्थः, प्रसिद्धग्रहणत्वादिति। उच्यते। सत्यम्, आक्षेपेण प्रवर्तते। स एव निर्णयो भविष्यति। किं प्राप्तम्? तेनैवाधिकरणेन संस्कारकर्मेति। तथा प्राप्ते, ब्रूमः। प्रधानकर्म वा सामशब्देनोच्यते इति। किं कारणम्? प्रधानविधिलक्षणं ह्यत्रास्ति द्वितीया विभक्तिः- ' रथंतरं गायति, बृहद्गायति ' इति। तस्मात्प्रधानकर्मति। अपिच, अकर्मकाले गानं भवति। तद्यदि द्रव्यसंस्कारार्थम्, संस्कृतं द्रव्यमदृष्टेन संस्कारेण, न कर्मकाले पुनः संस्कर्तुं शक्यम्। न हि स्निग्धस्य स्नेहनं शक्यं कर्तुम्, पिष्टस्य वा पेषणम्। स एषोऽग्नीनामिवाभ्युपगन्तव्यः, अकर्मकाले क्रियमाणः संस्कारो भवतीति। अस्मत्पक्षे पुनः प्रधानकर्म फलाय भविष्यति। तत्राविप्रतिषिद्धमकर्मकाले गानम्। अपिच ' श्रावण्यां पौर्णमास्यां व्रतान्युपाकृत्य, अर्धपञ्चमान् मासान् स्वाध्यायमधीयीत ' इति। तदेषां फलाय भविष्यति। इतरथा पुरुषाणामुपदिश्यमानं कर्मणां कल्प्येत। तस्मादपि प्रधानकर्मेति।

**टुप्**-- ननु सप्तमे निर्णीतं संस्कारकर्म सामेति। उच्यते। यदि प्रधानकर्म, सर्वथाऽप्यतिदेशस्य सिद्धिः। इह गुणप्रधानताऽवश्यं विचारणीया। यदि प्रधान ततो गीत्यनुरोधेन वर्णाः। अथ गुणभूताः, ततो विपरीतम्।

**तदृग्द्रव्यं वचनात् पाकयज्ञवत्। ४ ॥**

**भाष्यम्**-- आह। प्रधानकर्मेत्युच्यते। न चैतत्प्रधानकर्म। न हीदं फलदम्। फलकल्पनायां चाश्रुतं कल्प्येत। तेन यागं प्रति गुणभूतम्। यदि न गुणभूतम्, किमस्य द्रव्यम्, यत्प्रति प्रधानभूतमेतत्। तदुच्यते। ऋग्द्रव्यम्। ऋगस्य द्रव्यस्थानीया। यथाऽन्यस्य कर्मणो द्रव्यं साधकम्, एवमस्य ऋक् साधिका। तस्मादृचं प्रति प्रधानभूतमेतत्। भूतं हि भव्यायोपदिश्यते। कथं पुनरेतदृग्द्रव्यम्? वचनात्। वचनमिदं भवति ' ऋचि साम गायति ' इति। यथा, पाकयज्ञेषु तत्तद्वाचनिकं द्रव्यं भवति, लाजाः, धानाः, तण्डुलाः, आज्यमिति। एवमिहापि ऋग्द्रव्यम्, वचनादिति।

**तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च। ५ ॥**

**भाष्यम्**— आह। या ऋगस्य वचनेनोच्यते, तद्द्रव्यमेतद्भवति। कथं द्रव्यव्यतिरेके सति द्रव्यान्तरप्रदेशे च तदिदं सामेति। अत्रोच्यते। अविप्रतिषिद्धमेतत्। गीतिमात्रं हि सामेति। द्रव्यमस्य निर्वर्तकं वाचनिकम्। तत्सामान्यविहितं विशेषविहितेन द्रव्यान्तरेण बाध्यते। यदत्र द्रव्यव्यतिरिक्तं गीतिमात्रम्, तदेव बृहद्वा रथंतरं वेति न दोषो भवति। तस्मात् प्रधानकर्म सामेति।

**शब्दार्थत्वात्तु नैवं स्यात्। ६ ॥**

**भाष्यम्**-- तुशब्दः पक्षं व्यावर्तयति। नैतदेवं भवितुमर्हति, प्रधानकर्म सामेति। गुणकर्म स्यात्। कुतः? शब्दार्थत्वात्। शब्दस्योपकारकं साम प्रत्यक्ष-

मुपलभ्यते । साम्नि क्रियमाणे ऋगक्षराण्युच्चार्यन्ते । तस्मिन् सति नादृष्टं कल्पनीयम् ।

**परार्थत्वाच्च शब्दानाम् । ७ ॥**

भाष्यम्— परार्थाश्च शब्दाः स्तुत्यर्थाः । स्तुतिर्हि चोदिता, 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति । सा ऋगक्षरैरुच्चार्यमाणैः प्रत्यक्षाऽवगम्यते । ततः स्तुत्यर्थाया ऋचः सत्याः सामार्थता परिकल्प्येत । कल्पनायां च प्रमाणं नास्ति । तस्मादपि साम गुणभूतमृच इति ।

**असंबन्धश्च कर्मणा, शब्दयोः पृथगर्थत्वात् । ८ ॥**

भाष्यम्-- इतश्च गुणभूतं साम । कुतः ? असंबन्धश्च साम्नः स्तोत्रेण स्यात् । तत्प्रधानभावेन स्तुतिः साम्न उपदिश्येत, न साम स्तुतेः । तत्र 'बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवति' इति वचनं बाध्येत । रथंतरगुणकं पृष्ठं भवति, बृहद्गुणकं पृष्ठं भवतीत्येतदेवमुपदिश्यते । तदृगर्थे साम्न्यवकल्पते । प्रत्यक्षं हि तदा पृष्ठस्योपकारं साम करोति । यदस्य वाचकं प्रकाशयति शब्दम् , तद्रथंतरपृष्ठशब्दयोः सामानाधिकरण्यादेकार्थत्वे शक्य विज्ञातुम् । पृथगर्थत्वे त्वसंबन्धः स्यात् । तस्मादृचः साम गुणभूतमिति ।

**संस्कारश्चाप्रकरणेऽग्निवत् स्यात् प्रयुक्तत्वात् । ९ ॥**

भाष्यम्— अथ यदुक्तम् , अकर्मकाले गानमृचः संस्कारकमग्न्याधानमिव कल्प्येत । प्रयुक्तत्वादिति । तत्परिहर्तव्यम् ।

**अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत । १०॥**

भाष्यम्-- यदि ह्यकर्मकाले गानं कृतं कर्मकालं यावत्तिष्ठेत् , न विनश्येत् । ततः पुनरप्रयोगः प्रतीयेत । यदि वा पुनर्न शक्येत कर्मकाले गानं कर्तुम् , तथाप्यप्रयोगः स्यात् । शक्यन्ते तु प्रगीताः शब्दाः पुनः प्रयोक्तुम् । तस्मादकर्मकाले प्रयुक्ता असाधका इति कर्मकाले प्रयुज्येरन् । तस्मान्न दोषो भविष्यतीति ।

**आश्रितत्वाच्च । ११ ॥**

भाष्यम्-- अपिच, कर्मकालाश्रितं गानं दर्शयति 'औदुम्बरीं स्पृष्ट्वाऽनपाश्रित उद्गातोद्गायेत्' इति । सदस्यौदुम्बरी मध्यमा स्थूणा भवति । तां स्पृष्ट्वेति ब्रुवन् सदसि गानं दर्शयति । तस्मान्नाकर्मकाले गानमग्न्याधानवत् कल्पयितव्यमिति ।

**प्रयुज्यत इति चेत् । १२ ॥**

भाष्यम्— अथ यदुक्तम् , अर्धपञ्चमान्मासानध्ययनं प्रयुज्यते, तत्फलाय भविष्यतीति । तत्परिहर्तव्यम् ।

**ग्रहणार्थं प्रयुज्येत । १३ ॥**

भाष्यम— न हि फलाय भवितुमर्हति । तथा ह्यदृष्टं कल्प्येत । दृश्यतेऽत्र प्रयोजनम् । यत्तावदुपाध्यायः शिष्यसंनिधावधीते, तत् ग्रहणार्थम् । यच्छिष्यस्तद्धारणार्थम् । ग्रहणधारणे प्रयोगार्थे भूमिरथिकवत्, शुष्केष्टिवद्वा । तद्यथा. भूमिरथिको भूमौ रथमालिख्य शिक्षा करोति. संग्रामे प्राशुभावो भवितेति । यथा च छात्रः शुष्कष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्मा भविताऽस्मीति । एवमेतत् द्रष्टव्यम् । तस्मात् दृष्टे सति नादृष्टायाध्ययनम् । तस्मात् संस्कारकर्म सामेति ।

**शा**— सामानि किं ऋचं प्रति प्रधानभूतानि उत तत्संस्कारार्थानि गुणभूतानि इति विचारः । तत्र अकर्मकालेऽपि ( अभ्यासकाले ) प्रयोगात् प्राधान्यमिति पूर्वपक्षे प्राप्ते- '**अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम । अक्षरश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ॥ एवं दृष्टे फले लब्धे नादृष्टफलकल्पना । ननु चाविनियुक्तत्वादक्षराणां न संस्क्रिया ॥ सक्तूनामिव होमेन नैवं दृष्टफलत्वतः । प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥**' तस्मात् संस्कारकर्माणि सामानि इति सिद्धान्तः । यत्तु अकर्मकाले गानं वाचनिकं तत् शिक्षार्थतया रथस्याध्यियोगवत् ।

**सोम**— यदर्थं गीतिः सामेति विचारितं तदिदानीं विचार्यते इति अवसरलक्षणा **संगतिः । सूत्रार्थस्तु**— साम प्रधानकर्म यतः प्रधानविधिलक्षणं द्वितीया रथंतरादिषु विद्यते इति ।

**वि**— 'सामर्चं प्रति मुख्यं स्याद् गुणो वा बाह्यपाठतः ।, मुख्यमभ्यसितु पाठो गुणो गीताक्षरः स्तुतेः ॥'



**भाट्ट**-- साम्नां किं ऋचं प्रति प्राधान्यं उत गुणत्वमिति संदेहे सत्यपि क्रमप्रकरणाभ्यां ऋचां स्तोत्राङ्गत्वेन विनियोगे साम्नामपि तत एव स्तोत्राङ्गत्वोपपत्तेर्न तावत्परस्परं गुणप्रधानभावः । यदि तु योग्यतारूपं लिङ्गं पुरस्क्रियते ततः स्तोभाक्षरवदृगक्षराणामपि गीतिकालपरिच्छेदकत्वयोग्यत्वात् सामाङ्गत्वम् । न च साम्नामपि ऋगक्षराभिव्यञ्जकत्वलिङ्गेन ऋगङ्गता, उभयथोपपत्तौ 'ऋच्यध्यूढं साम गायति, यद्योन्यां गायति तदुत्तरयोर्गायति, कवतीषु रथंतरं गायति' इत्यादौ सप्तमीश्रुत्या ऋचां सामाङ्गत्वप्रतीतेः । संयुक्ताक्षरस्यैव गुणाभिधानरूपस्तोत्रजनकत्वेन विश्लिष्टाक्षराभिव्यञ्जकसाम्नः प्रयोजनविरोधितयाऽभिव्यञ्जकत्वानुपपत्तेश्च । अत एव प्रयाजशेषन्यायेन सप्तम्याः प्राधान्यलक्षणेत्यप्यपास्तम् । निषादस्थपत्यधिकरणन्यायविरोधेन प्राचीनप्रयाजशेषन्यायस्य अपभ्रंशितत्वात् । एवं च स्तोत्राङ्गतया ऋचां पृथगुच्चारणं कृत्वा सामाधारतया पुनः कार्यम् ।

किञ्चैवं क्रमप्रकरणसहकृतलिङ्गेनैव साम्नां ऋगक्षराभिव्यक्तिद्वारा स्तोत्रोपयोगे 'यज्ञायज्ञीयेन स्तुवीत, बृहत्पृष्ठं भवति, रथंतरं पृष्ठं भवति' इत्यादिस्तोत्रे विनियोगवैयर्थ्यम् । अतश्च वैयर्थ्यपरिहारार्थमप्यारादुपकारकतया साम्नां स्तोत्राङ्गत्वम् । न चैवं करणत्वनिर्देशानुपपत्तिः, आरादुपकारकस्यापि बृहस्पतिसववदपूर्वद्वारा स्तोत्रोपकारं प्रति करणत्वोपपत्तेः । ऋचां तु सामाङ्गभूतानामपि पृथगुच्चारणाभावेऽप्यानुषङ्गिकं स्तोत्रोपकारकत्वमित्यपि सुवचम् । इति प्राप्ते, स्तोत्रशब्दस्य याज्ञिकवृद्धव्यवहारेण प्रगीतमन्त्रसाध्यगुणाभिधानवाचित्वावगतेः इतरथा शस्त्रापेक्षया स्तोत्रस्य भेदानुपपत्तेरवश्यं गानविश्लिष्टाक्षरवृत्तिसंश्लेषज्ञानजन्यगुणाभिधानस्यैव स्तोत्रत्वावसायात् , तादृशस्तोत्रस्य च गानाभिव्यक्ताक्षरसाध्यत्वेन गानं विनाऽनुपपत्तेः युक्तमेव साम्नो ऋगक्षराभिव्यक्तिद्वारा स्तोत्रसाधनत्वमिति क्रमप्रकरणसहकृतलिङ्गेनैव ऋचां स्तोत्राङ्गत्वमिव साम्नामपि ऋगक्षराभिव्यक्त्यर्थत्वम् ।

अत एव ऋगक्षराभिव्यक्त्यर्थस्यैव साम्नः आनुषङ्गिकतया ऋगाधारत्वस्यापि प्राप्तेः 'ऋच्यध्यूढं साम गायति' इत्यनुवादः । आवश्यकं चास्यानुवादकत्वं तत्तत्साम्नां तत्तदृगाधारत्वस्य पाठादिनैव प्राप्तेः ऋचः सामाङ्गत्ववादिनोऽपि । 'यद्योन्यां गायति तदुत्तरयोः' इत्यादौ तु सप्तम्या प्राधान्यलक्षणा, अन्यथाऽतिदेशानुपपत्तेः । न ह्यत्रोत्तरयोः सामाधारत्वविधिः संभवति । गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् । 'एकं साम तृचे क्रियते' इत्यनेन तृचाधारत्वस्य भवन्मते विधानेन ऋक्त्रयस्य विकल्पानुपपत्तेश्च । 'एकं साम' इत्यनेन तृचाधारत्वसिद्धेः पाठादिना च विवक्षितऋक्प्राप्त्युपपत्तेः 'यद्योन्यां' इत्यस्य वैयर्थ्यापत्तेश्च । अतोऽतिदेश एवानेनोत्तरयोर्विधेय इति तयोः प्राधान्यसिद्ध्यर्थं लक्षणाऽऽवश्यकी ।

एतेन ऋचामुक्तवचनैः सामाङ्गत्वेऽप्यानुषङ्गिक्या अक्षराभिव्यक्तेरपि जायमानत्वात् तामादायैव स्तोत्रपदार्थनिर्वाहोपपत्तेर्न साम्नां ऋचं प्रत्यङ्गत्वमिति परास्तम् । ऋगङ्गत्वाभावे साम्न ऋगन्तरेऽतिदेशानुपपत्तेः । अतः ऋचां प्राधान्यादुत्तरावर्णवशेन साम्नोऽन्यथाभावात्मक ऊहोऽपि वक्ष्यमाणो नानुपपन्नः ।

**मण्डन**-- 'ऋचः संस्कारकं साम ।'

**शंकर**-- 'साम संस्कारकर्म च ।'

* साम्नां- प्रवर्ग्यसाम्नां- 'उच्चैः प्रवर्ग्येण' इत्येवमुच्चैस्त्वम् । वा. ३।३।२।९ पृ. ८१३. * साम्नां प्राकृतानां कौत्सादिसमसंख्यानामेव विकृतिविशेषगतकौत्सादिभिर्बाधो न सर्वेषाम् । भा १०।४।९।१८-१९, * साम्नां प्राकृतानां बाधो विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः । १०।४।८।१७ वर्णकं २ * साम्नां प्राकृतानां महाव्रतगानस्तोत्रान्तरसाधनीभूतश्लोकादिसामभिः समुच्चयः । १०।४।८।१६-१७. * साम्नां रथंतरादीनां तृचे गानम् । १०।६।१।१-२. **मीको.** पृ. ३२९९ 'रथंतरादिसाम्नां तृचे गानम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * साम्नां- सर्वस्तोत्रसाम्नां- हि तृचा एवोपादीयन्ते । वा. ३।५।१०।३१. * साम्नाम् । सुत्योत्तरकालेषु अनुबन्ध्यादिषु ज्योतिष्टोमाङ्गेषु मध्ये

अवभृथाङ्गभूतानां साम्नां अनुबन्ध्यादिसाम्नां परिसामाख्यानां च स्वरूपतः प्राप्तो यथावेदमेव स्वरो युक्तः। सु. पृ. ११८३.

**सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत। १०।४।८।१६॥**

महाव्रते 'श्लोकेन पुरस्तात् सदसः स्तुवते, अनुश्लोके पश्चात्, क्रौञ्चेन चात्वालमवेक्षमाणः' इति श्रूयते। प्राकृतानि सामानि चोदकेन प्राप्तानि। तत्र वैकृतैः प्राकृतानां बाधः समुच्चयो वा इति विचारे सिद्धान्तमाह। सामसु श्लोकादिषु श्रूयमाणेषु प्राकृतानां अविकारः प्रतीयेत। अर्थान्तरश्रुतेः सदसः पुरस्तात् श्लोकं साम गातव्यं सदसः पश्चात् अनुश्लोकम्। तथा च प्राकृतानां वैकृतानां च अन्यदेशत्वात् समुच्चय एव न बाधः इति।

**अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात्। १७॥**

महाव्रते श्लोकानुश्लोकादिसाम्नां प्राकृतैः चोदकप्राप्तैः सामभिः समुच्चयः इत्युक्त पूर्वसूत्रे सिद्धान्तिना। तत्र शङ्का— ननु यथा 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्यजनित्रे भवतः' इत्येवमादिभिः वैकृतैः सामभिः प्राकृतानां बाधो भवति एवं श्लोकादिभिः सामभिरपि प्राकृतानां बाधः स्यात् इति। तुशब्दः शङ्काव्यावृत्त्यर्थः। अर्थे प्राकृते फले अश्रूयमाणे सति शेषत्वात् प्राकृतस्यापि साम्नः विकृतिशेषत्वात् प्राकृतस्य प्रकृतिगतस्य विकृतौ चोदकप्राप्तस्य विशेषविहितेन विकारः बाधः स्यात्। महाव्रते तु वैकृतानामर्थान्तरश्रवणात् तैः प्राकृतानां न बाधः।

एवं पूर्वाधिकरणगुणसूत्रतया इदं व्याख्यातम्। अधिकरणान्तरपरतयाऽपि इदं व्याख्यातम्। उदाहरणं अक्षरार्थस्तु स एव। रचनाविशेषस्तु इत्थं कुतूहले— विकृतिविशेषेषु 'कौत्सं भवति', 'काण्वं भवति' इति श्रुतम्। तत्र साममात्रश्रवणात् स्तुतेरश्रवणात् दीक्षणीयादिपरिसामवत् अदृष्टार्थत्वात् न तैः प्राकृतस्तुतिसाम्नां निवृत्तिः। इति प्राप्ते, सिद्धान्तयति। तुर्वैषम्ये। श्लोकादिसाम्नां स्तुत्यनुवादेन विधानाभावात् विशिष्टस्तुत्यन्तराणां अदृष्टार्थतया विधानात् न तैः प्राकृतसाम्नां निवृत्तिः। अर्थे स्तुतिलक्षणकार्ये श्रूयमाणे तु कौत्सादिविधौ प्राकृतस्य गायत्र्यादिसाम्नः विकारः बाधः स्यात्। शेषत्वात् प्राकृतगायत्र्यादिसामवत् कौत्सादिसाम्नामपि स्तुत्यर्थत्वात्। इति। के.

* 'सामस्वर्थान्तरश्रुतेः०' (१०।४।८।१६) इत्यत्र महाव्रते उपदिष्टानां श्लोकादिसाम्नां अतिदिष्टानां च गायत्रादीनां समुच्चय उक्तः। बाल पृ. १७८. * सामसु- दीक्षणीयादिपरिसामसु— 'प्राचीनमग्नीषोमीयात्' इत्यनेन उपांशुत्वम्। वा. ३।३।२।९ पृ. ८१३.

* **सामान्तरागमः** विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये। १०।५।६।१५–२५. मीको. पृ. २५६ 'अतिरात्रे एकविंशादौ काम्ये०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सामार्थं** ऋचोऽध्ययनं गम्यते। न हि अन्तरेण ऋचं सामनिर्वृत्तिर्भवति। अन्तरेणापि तु साम, ऋङ्निर्वर्त्यते। न ऋक् साम आकाङ्क्षते इति। भा. ९।२।८।३१ वर्णकं २. * '**सामार्थो** यः कश्च गीतेः स स्वरः' इति श्रुतेः सामशब्दस्य षड्जादिस्वरसमूहवाचित्वावगतिः। सु. पृ. ८६१.

* **सामादयोऽपि** ननु प्रवर्तनोपायाः। न ब्रूमो न प्रवर्तनोपाया इति, परिक्रयस्तु यज्ञे आम्नातः। भा. १०।२।८।२५.

* **सामादिशब्दानां** गीतिवाचित्वम्। ९।२।१।१–२.

* **सामाधारभूतामृचं** उच्चैरुच्चारयन् सामानि अन्यथा उच्चारयितुं न हि कश्चित् समर्थः। वा. ३।३।१।८.

**सामोहन्यायः**। सामयोन्यां ये आईभावादयः, ते उत्तरयोस्तद्गतवर्णवशेन कर्तव्याः॥

**सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्। ९।२।९।३१॥**

भाष्यम्— इदमाम्नायते 'रथंतरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति, कवतीषु रथंतरं गायति, विराट्सु वामदेव्यं गायति' इति। तत्र संदेहः, किमुत्तरावर्णवशेन गातव्यम्, किं योनिवर्णवशेन? 

कथमुत्तरावर्णवशेन गीतं भवति, कथं वा योनिवर्णवशेनेति? उच्यते। किंचिदुदाहरणं गृहीत्वा व्याख्यास्यामः। यदा तावत् वृद्धं तालव्यमाई भवतीति, योनौ यस्मिन् भागे आईभावः कृतस्तस्मिन्नेव भागे उत्तरासु आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति। अथ भागान्तरे वृद्धं तालव्यं दृष्ट्वा आईभावः क्रियते, तत उत्तरावर्णवशेन गीतं भवति। किं पुनरत्र कर्तव्यम्? योनिवर्णवशेनेति। कथम्? यावति भागे एकारस्य योनौ आईभावः कृतस्तं विचारयामः। किं तत्र कृतमिति? एकारो नोच्चारितः, इकाराकारौ आगमिताविति। एवं चेदुत्तरास्वपि तावत्येव भागे यो वर्णः, स नोच्चारयितव्यः। इकाराकारौ आगमयितव्याविति। एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति। तस्मात् योनिवर्णवशेन गातव्यमिति। अपिचैवं गीतिर्न प्रणङ्क्ष्यति। इतरथा क्वचित्प्रणश्येत्। यत्र महती गीतिरल्पेष्वक्षरेषु गीयते, तत्र व्यक्तं प्रणश्यति यद्युत्तराक्षरवशेन क्रियते। तस्मात् योन्यक्षरवशेन कर्तव्यम्। अपिच क्वचित्क्रम उपरुध्यते, यत्राक्रमे आईभावभाग्वर्णः। आर्षे च क्वचिदुपरुध्यते। यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकाले गानमविरुद्धं कर्तव्यम्। तस्मात् योन्यक्षरवशेन कर्तव्यमिति। सामप्रदेशे विकारः आईभावादिः। तदपेक्षो योन्यपेक्षः। एतच्छास्त्रेण कृतम्, यद्योन्यां तदुत्तरयोरिति। यावति सामभागे योनावाईभावः कृतः, तावत्येव उत्तरासु कर्तव्यः।

टुप्— 'आम्नातादन्यत्' इत्यारभ्यौपोद्घातिकं वृत्तम्, प्रासङ्गिकं च। प्रकृतमिदानीमभिधीयते। सामोहः प्रतिज्ञातः। सोऽभिधीयते। अत्र पूर्वपक्षः। नोहः साम्नाम्। कुतः? वचनादेतदतिदिश्यते 'यद्योन्यां तदुत्तरयोः' इति। यद्यपि साम ऋगक्षराणामुपकारकमिति समधिगतं तथाऽप्युपकारस्यानतिदिष्टत्वात्। यादृशं योनौ तादृशमेव उत्तरयोरपि यदि (मन्यसे)। नात्र यथातथाभावः (पाठान्यथाभावः)। यथा, ऐष्टिकानां विकृतिषु। वचनादिदं साधारणीकृतम्। तस्माद्यथा सप्तमे पूर्वपक्षे साधारणा धर्मा इति तथेहापि। वचनसामर्थ्याच्च यत्र भागे योनावाईभावः कृतः, उत्तरयोरपि तथैव कर्तव्यः।

**वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्। ३२॥**

भाष्यम्— उत्तरावर्णवशेन कर्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन। कुतः? योऽसौ प्रकृतावाईभावः कृतः, नासावागमः। न च तत्रैकारलोपः। किं तर्ह्यैकारो नाम? अवर्णम्, इवर्णं च। अवर्णं संवृतम्, इवर्णं विवृतम्। उभे अपि च दीर्घे। ताभ्यामसाधुभ्यां संध्यक्षरं साधु जन्यते। तत्र प्रकृतौ अकारेकारौ विश्लेषितौ, नापूर्वावागमितौ। गुणस्तु तयोः कश्चिदपूर्वः कृतः। सर्वत्रात्र प्रमाणं प्रत्यक्षम्। तद्यत्र, तावति भागेऽन्यो वर्णो भवति, न संध्यक्षरम्, तत्र संश्लेषाभावे विश्लेषो न शक्यः कर्तुम्। अन्यस्मिन् भागे यत्र संध्यक्षरं भवति, तत्र तद्वशाद्विश्लेषः क्रियते। एवं, यद्योन्या तदुत्तरयोः कृतं भवति। योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः। इहापि संश्लिष्टयोर्विश्लेषः। इतरथा व्यतिरिक्तं कल्पितं स्यात्। अथ यदुक्तम्, गीतिः प्रणङ्क्ष्यतीति। न प्रणङ्क्ष्यतीति। विरामं कृत्वाऽनक्षरं गायिष्यते। संश्लेषाभावाच्चाशक्यो विश्लेषः कर्तुम्। आर्षक्रमौ नोपरोत्स्येते।

टुप्— एवं प्राप्ते, ब्रूमः। नैतद्वचनमुपकारस्य निषेधकम्। किं तर्हि? उत्तरयोः कर्तव्यमित्येतावदुक्त्वा कृतार्थम्। तत्तूत्तरयोः क्रियमाणं यथोपकरोति ऋगक्षराणां तथा कर्तव्यम्। नेदमदृष्टेनोपकरोति। तस्माद्यस्य वर्णस्य येन प्रकारेणोपकारकमवगम्यते तस्मिंस्तथैव प्रयोक्तव्यमत आह— 'सर्वत्रात्र प्रमाणं प्रत्यक्षमिति। विरामं कृत्वाऽनक्षरं गायिष्यते' इति। एतदयुक्तम्। ऋगक्षराणां साम संस्कारकं समधिगतं योनौ। तत्र यद्यनक्षरं गीयतेऽयथाप्रकृतिकं स्यात्। अदृष्टार्थं च स्यात्। सर्वं चैतदन्याय्यम्। तस्माद्यत्राल्पान्यक्षराणि महती गीतिस्तत्रापि तयाऽक्षराण्येव संस्कर्तव्यानि। तथा यत्राल्पा गीतिर्बहून्यक्षराणि तत्रापि सैव तेषां संस्कारिकाऽवगन्तव्या। न तत्रैकश्रुत्यं त्रैस्वर्यं वा कर्तव्यम्। एतदेव साम्नामृचं प्रति गुणभावस्य प्रयोजनम्।

शा— उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं चिन्तयति 'रथन्तरमुत्तरयोर्गायति' इत्यादिभिः। ऋगन्तरे गीयमानानि सामानि किं ऊहितव्यानि नेति। यदि योनिवर्णवशेन गानं यस्मिन् प्रदेशे योनौ आयीभावः तस्मिन्नेव असत्यपि संध्यक्षरे उत्तरयोः आयीभावः, ततो नोहः। अथ तु उत्तरावर्णवशेन गाने यस्मिन् प्रदेशे संध्यक्षरवशेन आयीभावो योनौ ततः प्रदेशान्तरे यत्र संध्यक्षरं तत्र आयीभावः ततः ऊहः। किं प्राप्तम्? योनिवर्णवशेन। कुतः? योनावेकारं निवर्त्याकार ईकारश्चोच्चारितः तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकारावुच्चार्यौ। किंच नात्र कार्यमुखेन साम्नः प्राप्तिः रथंतरादिस्वरूपस्यैवातिदेशात्तेन दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात् तस्मान्नोहः साम्नामिति प्राप्ते, ब्रूमः। यदि हि एकारं लुप्त्वा अवर्णेवर्णौ उच्चारितौ ततो भवेत् यथा अत्र भवान् आह। न त्वेतत्। किं तर्हि? एकारो नाम न वर्णान्तरम्, अवर्णेवर्णौ संहतौ एकभावमापन्नौ आयीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं हि अवर्णेवर्णौ एकारे प्रत्यभिज्ञायेते, तस्मादुत्तरयोरपि एकार एव यत्र तत्रस्थोऽप्यायीभावेन विश्लेषणीयः। एवं ऋगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते नान्यथा। यद्यपि च सामस्वरूपस्य अतिदेशः तथापि स्तोत्रसाधनतया अतिदिश्यते। 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनात्। स्तोत्रसाधनता च अक्षराभिव्यक्तिद्वारा। न च संध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति एवं सर्वत्र। तस्मात् योनिवर्णवशेन गानात् अस्ति ऊहः साम्नाम्।

**सोम**— **सूत्रार्थस्तु**— सामातिदेश आयीभावादिलक्षणो विकारो योन्यपेक्षः स्यात्तस्य यद्योन्यामित्याद्यतिदेशशास्त्रकृतत्वादिति।

**वि**— 'आयीभावो योनिवशादुत्तरावशतोऽथ वा।, गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यञ्जकत्वतः॥'

**भाट्ट**— एवं सामोहोपोद्घातं सप्रसङ्गं निरूप्याधुना सामोहो निरूप्यते। 'कवतीषु रथंतरं गायति, यद्योन्यां गायति' इत्यादौ यत्र सामातिदेशस्तत्र साम्न ऋगक्षराभिव्यक्त्यर्थत्वात् यत्र स्थाने योनौ एकाराद्यक्षरसंस्कारिका आईभावादिरूपा गीतिः श्रुता तत्र स्थानान्तरे यत्रैवैकारपाठ उत्तरादौ तत्रैव आईभावरूपा गीतिरूहितव्या. न तु प्राकृतस्थानपठिताक्षरान्तरे कर्तव्या, तत्र गीतेस्तदक्षराभिव्यञ्जकत्वासंभवेनारादुपकारकत्वप्रसङ्गात्। आईभावो हि प्रकृतौ अवर्णेवर्णात्मकस्य संध्यक्षरस्यैकारस्य विश्लेषरूपसंस्कारार्थः। न हि एकारो नाम वर्णान्तरम्, प्रमाणाभावादपितु स्मृतिसहकृतप्रत्यक्षेणावर्णेवर्णात्मक एव। अतश्च तद्विश्लेषकस्याईभावस्य तत्स्थानपठिताक्षरविश्लेषकत्वासंभवात् यत्रैवोत्तरादावेकारस्तत्रैवाईभावः कार्यः। यद्यपि चायं विश्लेषादिरूपः संस्कारो नार्थाभिधानोपयोगितया दृष्टार्थः, तद्व्यतिरेकेणैव संध्यक्षरेणार्थाभिधानस्य जायमानत्वात्। तथाऽपि गानसंस्कृतमन्त्रजन्यगुणाभिधानव्यक्तेरेव स्तोत्रतया स्तोत्रत्वसिद्ध्यर्थतयैवोपयुज्यते। न चैवं न विश्लेषादिरूप एव संस्कारः, प्रमाणाभावादननुगमाच्च। न हि विश्लेष एव सर्वत्र संस्कारः 'ए इ ऐ ई इत्येतानि तालव्यम्' इति स्मृत्या ईईकारयोरपि तालव्यत्वात् 'तालव्यमाई यद्वृद्धम्' इति स्मृत्या च तत्रापि आईभावविधानेन तत्र संध्यक्षरत्वाभावेन विश्लेषासंभवात्। अतः सर्वानुगतो वर्णान्तरागमेन पूर्वाक्षरपरिलोप एव संस्कारः स्तोत्रत्वघटकः। तस्य चैकारस्थानस्थितवर्णान्तरेऽपि संभवान्नोहसिद्धिरिति वाच्यम्। तथात्वेऽपि संस्कार्यतावच्छेदकस्यैकारत्वस्याक्षरान्तरेष्वभावेनोहोपपत्तेः। वस्तुतस्तु— परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्रसाधनत्वानापत्तेर्लोपस्य क्वापि संस्कारत्वादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्ध ऊहः। एवं च प्रधानभूतोत्तरादिऋगक्षरानुरोधेन यत्र ऋगक्षराल्पत्वं तत्रावशिष्टगीतेर्लोपः। यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्यावृत्तिः इत्याद्यापद्यमानमपि न दुष्यति।

**मण्डन**— 'योनिवर्णक्रमो न हि।'

**शंकर**— 'उत्तरादिषु सामोहः।'



* **सामकाले–ब्रह्मसामकाले**– प्राजापत्यानां पशूनामालम्भोत्कर्षमात्रविधानं वाजपेये। ११।२।१२।५१–५३. **मीको**. पृ. २८४५ 'प्राजापत्यानां पशूनां ब्रह्मसामकाले०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सामगानं** आधाने उपांशु। ३।३।२।९. **मीको**. पृ. १५८८ 'गुणमुख्यव्यतिक्रमन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सामगानस्य** विकल्पः आधाने। १०।८।६।९–११. **मीको**. पृ. ११६६ 'उपवादाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सामगाने** 'यत्राऽऽर्चिकानि पदानि निवर्तन्ते, स्तोभा गेह्माश्चानुयन्ति' इति। गेह्माः स्वराः (मगरिसा)। **भा.** ९।२।१०।३६.

* **सामगानकाले** ज्योतिष्टोमे बृहद्रथंतरधर्माणां व्यवस्थया अनुष्ठानम्। ९।२।१५।४५–४६. **मीको**. पृ. २९७७ 'बृहद्रथंतरधर्माणां व्यवस्थया०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सामतः** यज्ञस्यार्तौ स्वः स्वाहा इति आहवनीये जुहुयात्। **भा.** १२।३।५।१६. * सामतो यज्ञभ्रेषप्रायश्चित्तार्थं 'स्वः स्वाहेत्याहवनीये जुहुयात्' इति। **वि.** १२।३।५.

* **सामप्रकारभेदानां** शाखाप्रकारभेदेन विकल्पः। **भाट्ट**. ९।२।७.

**सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्। ९।२।९।३१॥**

इदमाम्नायते 'यद् योन्यां तदुत्तरयोर्गायति' इति। किं योनिवर्णवशेन गातव्यं उत्तरावर्णवशेन वा। 'कया नश्चित्र आभुवत्' इत्यसौ ऋक् वामदेव्यस्य साम्नो योनिः। तस्यामृचि 'कया' इत्यक्षरद्वयं आद्यो भागः। 'नश्चित्र आभुवत्' इत्यक्षरषट्कं द्वितीयो भागः। तस्मिन् भागे द्वितीयाक्षरे चकारस्य उपरितनं इकारं विलोप्य तस्य स्थाने आयीभावं आम्नाय गीतिर्निष्पाद्यते (चायीत्रा)। 'कस्त्वा सत्यो मदानां' इत्यनन्तरभाविनी ऋक् उत्तरा तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्य उपरितनं यकारं ओकारं च लोपयित्वा तयोः स्थाने आयीभावः कर्तव्यः (सतायी)। 'अभीषुणः' इत्यसौ अपरा उत्तरा, तस्यामपि चतुर्थाक्षरे णकारस्य उपरितनं अकारं लोपयित्वा तस्य स्थाने आयीभावः कर्तव्यः (षुणायी) इति पूर्वः पक्षः। तदाह सूत्रम्, सामप्रदेशे योनौ उत्पन्नस्य साम्नः ऋगन्तरे अतिदेशे विकारः आयीभावादिः तदपेक्षः योन्यपेक्षः स्यात्। योनेर्यत्र भागे विकारः उत्तरयोरपि तत्रैव भागे स विकारः स्यात्। 'यद्योन्यां तदुत्तरयोर्गायति' इति शास्त्रेण विकारस्य कृतत्वात्। तस्मात् योनिवर्णवशेनैव उत्तरयोः विकारः कर्तव्यः इति **पूर्वः पक्षः**।

**वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्। ३२॥**

योनौ उत्पन्नस्य साम्नः उत्तरयोरतिदेशे आयीभावादिर्विकारः योन्यनुसारेणैव कर्तव्यः इति पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह। बादरिः आचार्यस्तु यथाद्रव्यं वर्णे विकारः इति मन्यतेस्म। द्रव्यं इति उत्तरा ऋक् ग्राह्या। तामनतिक्रम्य वर्णे विकारः स्यात्। योन्यां तावत् इकारस्य स्थाने आयीभावो जातः उत्तरयोरपि यस्मिन् कस्मिन्नपि भागे इकारः वृद्धस्तालव्यः स्यात् तस्यैव आयीभावः स्यात्, न तु चतुर्थे एवाक्षरे। तेन 'अभीषुणः सखीनामविता जरितॄणाम्' इति द्वादशाक्षरगतस्य रेफस्य उपरितन इकारः आयी भवति (जरायि)। न तु चतुर्थे एवाक्षरे षुणायी इति, द्रव्यव्यतिरेकात् योनिगतचतुर्थाक्षरस्थात् वृद्धतालव्यात् इकारात् अभीषुणः इत्यत्रत्यणकाराकारस्य द्रव्यव्यतिरेकात् वृद्धतालव्यरूपवर्णात् भिन्नत्वात्। द्रव्यशब्दो वर्णवाची अत्र। एवं 'कस्त्वा सत्यो' इत्यत्रापि द्रष्टव्यम्। तस्मात् न योनिवर्णवशेन गीतं भवति किंतु उत्तरावर्णवशेनैव गीतम्। इति **सिद्धान्तः**। **के.**

* **सामभक्तिः** अन्त्या निधनमित्युच्यते। **वा.** २।२।१३।२८. * **सामभक्तयः** प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। **सु.** पृ. ८७६.

* **साममन्त्राणां** अशब्दतायामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वात् शाब्दप्रमाजनकसामग्र्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावः। **बाल.** पृ. ७२.

* **सामरूपं** हि समाम्नायादवगम्यते । तच्च अल्पेन अन्यत्वेन अप्रत्यभिज्ञानादन्यदेव भवति । ' प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम् । अतः समस्तैव विकल्प्यमाना यथासमाम्नायमसौ नियम्या ॥ ' वा. २।२।१३।२९ पृ. ५७०. * **सामरूपाः** मन्त्राः । बाल. पृ. ५८.

* **सामलक्षणं** अस्तिनास्तीति विचारे अस्तीति निर्णयः । गीतिः साम । गीतिविशिष्टो मन्त्रः साम । भा. २।१।११।३६.

**सामलक्षणम् ॥**

**गीतिषु सामाख्या । २।१।११।३६ ॥**

**भाष्यम्**— अथ साम्नः किं लक्षणम् ? विशिष्टा काचित् गीतिः सामेत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति । सामान्यधीमहे, सामान्यध्यापयामः, सामानि वर्तन्ते इति । अभियुक्तोपदेशश्च नः प्रमाणम् । यथा अम्लं दधि, मधुरो गुड इति । गीतिविशिष्टे तावन्मन्त्रे गीतिशब्दः । गीतिसंबन्धात् मन्त्रे संप्रत्ययः इत्यवगन्तव्यम् ।

**वा**-- तेषामित्यनुवर्तते । अत्रापि स एवाभियुक्तोपदेशोपन्यासः । प्राथम्यात्, ' यथाऽम्लं दधि ' इति । पूर्वत्रैव वाच्यं सदनादरादिहोदाहृतम् । अथवा यथाऽनेकधर्मसमाहारे सति दधिगुडयोः रसविशेषमात्रमम्लमधुरशब्दावुपाददाते । तथा सामशब्दो गीतिमात्रमित्यत्रोदाहरणम् । ननु च प्रत्यक्षगम्यत्वाद्रसविशेषस्याभियुक्तोपदेशोऽनुवादत्वान्नैव प्रमाणम् । **नैष दोषः ।** प्रत्यक्षमेवात्र इतिकरणावच्छिन्नं निदर्शनम् । एतदुक्तं भवति । यथाऽम्लं दधि मधुरो गुड इत्येतद्विज्ञानं प्रमाणमेवमभियुक्तोपदेश इति । गीतेर्विशेषणत्वात्पूर्वतरप्रत्यायने सत्याकृतिवदभिधेयत्वं निर्णेतव्यम् । आह च- ' **एकखण्डेन शब्देन विशिष्टो यत्र गम्यते । विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते ॥** '

**शा**— यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां तथापि नागृहीतविशेषणेतिन्यायात् ' कवतीषु रथन्तरं गायति ' इत्याद्यतिदेशोपपत्तेश्च गीतिरेव सामेति सप्तमे स्वयमेव सूत्रकारो वक्ष्यति । इह तु मन्त्रविभागमात्रं विवक्षितम् । तद्यदि प्रगीतो मन्त्रः साम यदि वा गीतिमात्रं उभयथापि ऋग्यजुषाभ्यामन्यत्सामेति विभागसिद्धेः विभागाय न प्रयत्यते । सप्तमे तु ' रथन्तरमुत्तरयोर्गायति ' इत्याद्यतिदेशौपयिकत्वात् विभागेन प्रयोजनमस्तीति तत्रैव वक्ष्यमाणावष्टम्भेन ' गीतिः साम ' इत्युक्तम् । यत्तु अत्र भाष्यवार्तिकयोः गीतिवाचित्वं साधितम्, तत् वक्ष्यमाणमेव प्रसङ्गात् इति द्रष्टव्यम्, न सूत्रार्थतया । मा भूत् साप्तमिकस्य पौनरुक्त्यम् ।

**सोम**— मन्त्रप्रसङ्गात् ऋगादिलक्षणस्य **संगतिः ।**

**वि**— ' नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते । पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः ॥ '

**भाट्ट**— मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ।

**मण्डन**-- ' मन्त्रस्य गीतिं प्रवदन्ति साम । '

**शंकर**-- ' सामलक्षणमप्युक्तम् । '

* **सामविकल्पः** आधाने विहितत्वात् निन्दितत्वात् च । १०।८।६।९-११. **मीको.** पृ. ११६६ ' उपवादाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामशब्दः** ऋक्-स्तोभ-स्वर-काल-अभ्यास-विशिष्टायाः गीतेः वाचकः । **भा.** ९।२।१०।३५, * सामशब्दः गानकर्मणो वाचकः इति सिद्धम् । ९।२।१।१, * सामशब्दः गीतौ ! ७।२।१।२१. * सामशब्दः गीतिविशेषवाचकत्वेन निर्णीतः । **पराक्रमः.** २।१.

**सामशब्दो रथंतरादिशब्दाश्च गीतिवाचकाः ॥**

**सामानि मन्त्रमेके, स्मृत्युपदेशाभ्याम् । ९।२।१।१॥**

**भाष्यम्**— सन्ति सामानि, रथंतरं, बृहत्, वैरूपं, वैराजं, शाक्करं, रैवतमिति, ' अभि त्वा शूर नोनुमः ' इत्येवमादिषु । तत्रैषोऽर्थः संदिह्यते किं प्रगीता एते मन्त्राः सामानि, उत गीतयः सामानीति । ननु सिद्धं 'गीतिषु सामाख्या' ( २।१।११।३६ ) इति । उच्यते । तत्र द्वितीयेऽध्याये मन्त्रगते भावशब्दे चोदकत्वं प्रति विचार्यमाणे, मन्त्राभावाशङ्कायां मन्त्रसद्भावोपपादनाय, ' तच्चोदकेषु मन्त्राख्या ' ( २।१।७।३२ ), इति कृते



लक्षणे, ' अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूंषि ' इति ऋगादीनां विभागाय प्रसक्तानुप्रसक्तं लक्षणम्, ' गीतिषु सामाख्या ' इत्युक्तम् । तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रं उभयथाऽपि, ऋग्यजुर्भ्यामन्यत्सामेति सिद्धे विभागे न विवेकाय प्रयत्नः, प्रयोजनाभावात् । इह तु प्रगीते मन्त्रे अन्यत्कर्म, गीतिमात्रे अन्यदिति विवेकाय प्रयत्यते । आह । नन्वेतदपि सिद्धम्, गानकर्मणो वाचकः सामशब्द इति । उच्यते । तदेव पुनरभिधीयते स्मरणाय, उत्तरमधिकरणं चिन्तयितुम् । गीतिः सामेति स्थिते इदं चिन्त्यते, गीतिषु ऋचः प्रधानभूता उत गुणभूता इति । आह । नैव स्मरणाय पूर्वपक्षोद्धरणम् । नहि मन्त्राः सामानीत्येषोऽर्थः स्मर्तव्यः । अत्रोच्यते । पूर्वपक्षेऽपि सिद्धान्तस्मरणार्थमेवोपादीयते । यत् प्रगीतं मन्त्रवाक्यम्, तत् सामेत्येवं पूर्वपक्षं कृत्वा गीतिमात्रं सामेति स्थापितम् । तस्मिन् स्थिते अयमुत्तरो विचारः कर्तव्यः, गीतिषु किमृचः प्रधानभूता उत गुणभूता इति । किं प्राप्तम् ? एके मन्यन्ते प्रगीतं मन्त्रवाक्यं सामेति । कुतः ? स्मृत्युपदेशाभ्याम् । एवं हि स्मरन्ति, प्रगीतं मन्त्रवाक्यं सामेति तत्रभवन्तश्छान्दसाः, एवं चोपदिशन्ति शिष्येभ्यः । आह । ननु यदेव स्मरन्ति, तदेवोपदिशन्ति । नैवं सति उपदेशो हेत्वन्तरमिति । उच्यते । बाढम् । अन्यथा तर्ह्युपदेशं वर्णयामः । अयमुपदेशः ' अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूंषि ' इति । मन्त्रप्रकारः कश्चित् सामानीति मन्त्रोपदेशो भवति । तस्मादुपदेशात् मन्त्राः सामानीत्यवगच्छामः ।

**तदुक्तदोषम् । २ ॥**

**भाष्यम्**— तस्यैतस्य पक्षस्योक्तो दोषः सप्तमे ( ७।२।१।१३ ) । ऋचः प्रदेशो नोपपद्यते 'कवतीषु रथंतरं गायति ' इति, देशलक्षणा धर्मलक्षणा वा प्राप्नोतीति । तस्माद्गीतयः सामानि, न प्रगीतानि मन्त्रवाक्यानीति ।

**सोम**-- सामोहोपोद्घातत्वेन अवान्तर**संगतिः । सूत्रार्थस्तु**- प्रगीतमन्त्रः साम इत्यध्यायकस्मरणात् ' अहे बुध्निय मन्त्रं मे गोपाय-ऋचः सामानि ' इति मन्त्रे सामशब्दोपदेशाच्च प्रगीतमन्त्रमेव सामान्येके मन्यन्ते इति ।

**वि**-- ' सामोक्तिबृहदाद्युक्ती गीतायामृचि केवले । गाने वा, गान एवेति स्मार्यते सप्तमोदितम् ॥ '

**भाट्ट**-- रथंतरादिशब्दानां सामादिशब्दानां च गीतिमात्रवाचित्वम्, गीतिविशेषत्वादिधर्ममात्रवाचित्वं वा सिद्धमेव उत्तरविवक्षया स्मार्यते ।

**मण्डन**-- ' गीतिमात्रं भवेत् साम । '

**शंकर**-- ' गीतेः सामादिरूपता । '

* सामशब्दः संस्कारकर्मणो वाचकः ( ७।२।१ ) । **भा.** ९।२।२।३, * सामशब्दः । सस्तोभस्वरकालाभ्यासविकारायां हिंकार-प्रणव-प्रस्ताव-उद्गीथ-प्रतिहार-उपद्रव-निधनवत्यामृचि सामशब्दोऽभियुक्तैरुपचर्यते । ७।२।१।१, * स्वरः **सामशब्देन** लोकेऽभिधीयते-सुसामा देवदत्त इति, सुस्वरो देवदत्त इति । स्वरो घोषो नाद इति समानार्थाः । इति शङ्का । ७।२।१।७.

* **सामशब्दस्य** षड्जर्षभगान्धारमध्यमपञ्चमधैवताख्य( धैवतनिषादाख्य ? )स्वरसमूहवाचित्वम् । **सु.** पृ. ८६१, * सामशब्दस्य सामसाध्यस्तोत्रलक्षणार्थत्वमभिप्रेत्य कार्यार्थत्वात् साधननियमस्य स्तोत्रकार्यार्थत्वेन वृत्तिर्विवक्षिता । पृ. ८७२.

* **सामस्तुत्यर्थः** अयज्ञशब्दः ' अयज्ञो वा एष योऽसामा ' इति । **वि.** १।४।१६.

* **सामगानां** ऊहग्रन्थः पौरुषेय एवेति न्यायविरोधे सति अप्रमाणम् । **वि.** ९।२।१ वर्णकं २, * सामगानां द्वौ ग्रन्थौ छन्दः, उत्तरा चेति । तत्र छन्दोनामके ग्रन्थे नानाविधसाम्नां योनिभूता एव ऋचः पठिताः । उत्तराग्रन्थे तु तृचात्मकानि सूक्तानि प्रायः पठितानि । एकस्मिंस्तृचे प्रथमा ऋक् छन्दोगता योनिर्नाम, इतरे द्वे उत्तरे नाम । ' उत्तरयोर्गायति ' इत्यत्रोत्तराशब्देन उत्तराग्रन्थस्थयोर्ऋचोर्ग्रहणं न तु छन्दोग्रन्थस्थयोनिभूताया ऋचः परतो विद्यमानयोर्ऋचोः ।

९।२।५. * **सामगानां** रथंतरादिसामयोनीनामेव पाठात्मकः एको ग्रन्थः छन्दोनामकः। तथा एकस्य साम्नो योनिपाठानन्तरमपि अयोनिभूतऋग्द्वयपाठः क्वचिदेकऋक्पाठोऽपि, ततः समनन्तरयोनिपाठः, इत्येवं योनितदुत्तरऋक्पाठात्मकः अपरो ग्रन्थः यः, स एव उत्तराग्रन्थः इत्युच्यते। **सोम.** ९।२।५ वर्णकं १.

* **सामर्थ्यं** अप्रापकं सति प्रत्यक्षवचने। **वा.** २।३।३।४ पृ. ५८९. * **सामर्थ्यम्**। अशक्यार्थानुष्ठानायोगात् प्रवर्तकत्वव्याघातापत्तेः सर्वविधिभिः सामर्थ्यस्यावश्यापेक्षणीयत्वात् सामर्थ्यस्य च प्रमाणान्तरगम्यत्वेऽपि विषयस्य अन्यतोऽनवगतेः वेदस्य नैरपेक्ष्याविघातात् सामर्थ्यात् व्यवस्थितविषयत्वकल्पना युक्ता। **सु.** पृ. ५३०. * 'सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम्। अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात्॥' **वा.** ३।४।११।३१ पृ. ९६५. * सामर्थ्यं च भवति विशेषणविशेष्यभावे। असाधारणं च भवति विशेषणम् ( समर्थः पदविधिः )। **भा.** २।३।१।१ पृ. ५७२, * सामर्थ्यं च लिङ्गमित्युच्यते। ३।३।७।१४ पृ. ५८०. * सामर्थ्यं च व्यपेक्षा। विगतापेक्षत्वं च व्यपेक्षा निरपेक्षसाधनत्वमित्यर्थः। ( समर्थः पदविधिः )। इति भट्टसोमेश्वरः। **बाल.** पृ. १५०. * सामर्थ्यं च सर्ववस्तुविषयम्, लिङ्गं केवलं मन्त्रगतमेव अवगन्तव्यम्। **वा.** ३।३।७।१४ पृ. ८४१. * सामर्थ्यं नाम लिङ्गम्। **भा.** ६।५।९।३२. * सामर्थ्यम्। मुख्यसामर्थ्यसंभवे गौणसामर्थ्यस्य अग्राह्यत्वम्। **सोम.** १।२।१ पृ. ७. * सामर्थ्यम्। 'समर्थः पदविधिः', 'समर्थानां प्रथमाद्वा' इत्यत्र एकार्थीभावलक्षणं व्यपेक्षालक्षणं वा सामर्थ्यम्। **वा.** २।१।५।१६ पृ. ४१८, * सामर्थ्यम्। सर्वपदार्थानामिव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति। १।३।९।३० पृ. २९९. * **सामर्थ्येन** अव्यवस्थितानां व्यवस्था। **वि.** १।४।२०. * सामर्थ्येन विना समासो नावकल्पते। **वा.** २।३।१।१ पृ. ५७२. * **सामर्थ्यस्य** ऐकार्थ्याधीनत्वात् विशेषणविशेष्यत्वं च विना ऐकार्थ्यायोगात् विशेषणत्वापेक्षा। **सु.** पृ. ८८७.

* **सामर्थ्याधिकरणम्**। १।४।१४।२५. **मीको.** पृ. ३८०८ 'शक्त्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * सामर्थ्याधिकरणम्। अत्र सामर्थ्यकल्पितस्य द्रवादिपदस्य संदिग्धार्थनिर्णये प्रामाण्यं अभिहितम्। **कौ.** १।४।२०।३०, * **सामर्थ्याधिकरणे** लिङ्गस्य क्रियान्वयबोधकत्वं व्युत्पादितम्। ३।१।४।७, * सामर्थ्याधिकरणे लिङ्गस्य स्वरूपेण विनियोजकत्वमुक्तम्। ३।३।४।११, * सामर्थ्याधिकरणे सामर्थ्यकल्पितद्रवादिपदस्यैव स्वार्थोपस्थापनद्वारा निर्णायकत्वोपपत्तिः। १।४।१।१.

* **सामर्थ्यानुसारी** विनियोगः। **वा.** ३।३।७।१४ पृ. ८२९.

**सामर्थ्ययोगन्यायः**। अयं न्यायः 'इको यणचि' (पा०६।१।७७) इति सूत्रमहाभाष्येऽभिहितः। तथाहि– 'जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः। दीर्घश्च यण् ह्रस्व इति प्रवृत्तं संबन्धवृत्त्या गुणवृद्धिबाध्यम्॥ नित्ये च यः शाकलभाक्समासे तदर्थमेतद्भगवाँश्चकार। सामर्थ्ययोगान्न हि किंचिदस्मिन्पश्यामि शास्त्रे यदनर्थकं स्यात्॥' इति। **साहस्री.** ४८१.

* **सामर्थ्यवान्** मन्त्रः यथा 'देवस्य त्वा०' इति निर्वापप्रकाशनसमर्थो मन्त्रः। **बाल.** पृ. ६०.

* **सामवायिकं** आरादुपकारकाच्च गरीयः। **टुप्.** १०।१।६।१२. * सामवायिकं क्लृप्तसंबन्धं अदृष्टसंस्कारद्वारकमपि आरादुपकारकात् कल्प्यसंबन्धात् प्रबलम्। **सोम.** १०।१।६. * **सामवायिकानि** अङ्गानि आरादुपकारकेभ्यो गरीयांसि। तत्र हि साक्षात् वाक्यम्। आरादुपकारकेषु प्रकृतेन परोक्षेण एकवाक्यता स्यात्। **भा.** १०।४।१९।३८, * सामवायिकान्यङ्गानि आरादुपकारकेभ्यः वरीयांसि भवन्ति। १०।१।९।२३. * सामवायिकानि आरादुपकारकेभ्यो गरीयांसि। **टुप्.** ९।४।६।२८.

* **सामवायिकत्वेन** ( संनिपत्योपकारकेण ) आरादुपकारकत्वं बाध्यते। अप्राप्तबाधः। **वा.** ३।३।७।१४ पृ. ८६०, * **सामवायिकत्वस्य** आरादुपकारकत्वात् अभ्यर्हितत्वम्। ३।३।१०।२०.



* **सामवेदः** आदित्यादजायत। **भा.** ३।३।१।२. * **सामवेदेन** यत् किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् उच्चैः कर्तव्यम्। **वा.** ३।३।१।९ पृ. ८१३. * **सामवेदस्य** उच्चैः स्वरः। **भा.** ३।३।१।१. * **सामवेदे** आज्यस्तोत्र– पृष्ठस्तोत्रादयो धर्मा विहिताः। **वि.** ३।३।६. * सामवेदे उपतिष्ठते वा स्तौति वा इत्युक्ते प्रगीतायामेव ऋचि संप्रत्ययो भवति, नाप्रगीतायाम्। **भा.** ९।२।८।२१ वर्णकं २, * सामवेदे कृत्स्नेऽपि जगत्–नाम साम न हि अस्ति। १०।५।१५।५८. * सामवेदे गानमेव प्रकृतम्, ऋचां संहितापाठस्तु अत्र गानायैव। **वि.** ९।२।८ वर्णकं २. * सामवेदे ज्योतिष्टोमोत्पत्त्यभावः। **सु.** पृ. ११७. * सामवेदे तलवकारादिशाखाभेदः, तेन गीतिहेत्वक्षरविकारादिवैलक्षण्यम्। तेषां चानुष्ठाने विकल्पाः, न समुच्चयः। **वि.** ९।२।७. * सामवेदे न हि ज्योतिष्टोमस्य विधानम्। **भा.** २।४।२।२५, * सामवेदे सहस्रं गीत्युपायाः। ९।२।७।२९.

* **सामवेदोत्पन्नः** श्येनः। **वि.** ३।७।२३.

* **सामस्त्यव्यवहारः**। किंचिदपनयेऽपि सामस्त्यव्यवहारोपपत्तिः ( एकदेशविकृतस्य अनन्यत्वम् )। **सु.** पृ. ७९२.

* **सामानाधिकरण्यं** अन्तरेणापि षष्ठीं एकविभक्तिनिर्देशात् अवगमिष्यामः, यथा नीलमुत्पलमिति। **भा.** ३।१।६।१२ पृ. ६८५. * सामानाधिकरण्यं– भिन्नप्रवृत्तिनिमित्तानां एकस्मिन्नर्थे वृत्तिः तात्पर्याख्या। **सु.** पृ. ४०९, १४४०. * सामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तकत्वे सति एकधर्म्युपस्थापकत्वम्। **मणि.** पृ. १५१. * सामानाधिकरण्यं– यदा संख्या आत्मानमुपसर्जनीकृत्य संख्येये वर्तते, तदा विना षष्ठ्या सामानाधिकरण्यं भवति, यथा विंशतिर्गाव इति। यदा संख्या प्रधानभूता, तदा षष्ठीमन्तरेण संख्येयशब्देन सामानाधिकरण्यं नास्ति, विंशतिर्गवां इति यथा। **टुप्.** ९।४।१।१ पृ. १७६७. * **सामानाधिकरण्येन** विशेषणविशेष्यभावो भवति समानविभक्त्यन्तानाम्। **वा.** ३।४।४।१३ पृ. ९२३, * सामानाधिकरण्येन शब्दानां संबन्धः। यदा उभाभ्यां उभयार्थोपादानं तदा सामानाधिकरण्यं भवति। ३।१।६।१२ पृ. ६८५. * सामानाधिकरण्येन हि भवति सादृश्यम्, यथा सिंहो देवदत्त इति। **टुप्.** ६।१।६।२३ पृ. १३६९.

* **सामानाधिकरण्यनिबन्धना** विशेषणविशेष्यता अरुणैकहायन्यादौ। **सु.** पृ. ४०९.

* **सामानाधिकरण्यप्रयोगात्** आचाराच्च अर्थाध्यवसानं भवति। यथा 'अयं देवदत्तः' इति। **भा.** १०।६।७।२३.

* **सामानाधिकरण्यबोधकवाक्यात्** निमित्तविशेषसंयोगबोधकं वाक्यं बलीयः वाक्ययोर्विरोधे। **वा.** ३।३।७।१४ पृ. ८४०.

* **सामानाधिकरण्यबोधकश्रुतेः** विशेषसंयोगबोधकश्रुतिर्बलवती। **वा.** ३।३।७।१४ पृ. ८४०.

* ये तु **सामानाधिकरण्यविकल्पाः** तान् 'नियमो वैकार्थ्ये हि' ( ६।८।१०।३५ ) इत्यत्र षष्ठान्त्याधिकरणसूत्रे सर्वानेव वक्ष्यामः। **वा.** ३।१।६।१२ पृ. ६८८.

* **सामान्यं** अनभिधाय विशेषाभिधानशक्तिर्न विरुध्यते। शिंशपाशब्दो हि न तावत् वृक्षत्व–पार्थिवत्व–द्रव्यत्व–सत्ता–प्रमेयत्व–ज्ञेयत्वानां अभिधायकः। अथ च तद्विशेषमेव शिंशपां अभिधत्ते। **वा** ३।४।४।१३ पृ. ९४०, * सामान्यं अनित्यत्वं अगृह्णतोऽपि चक्षुषः रूपग्रहणशक्तिः न विरुध्यते। ३।४।४।१३ पृ. ९४०. * सामान्यं आकृतिः जातिः। **भा**–– द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः। १।३।९।३० पृ. २९४। **वा**–– 'द्रव्यादीनां च सामान्यं परापरविभागवत्। वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा॥ पुनर्वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता। पृथिवीत्वाद् घटत्वं च तद्व्यक्तिषु समाप्यते॥ वृक्षत्वात् परतश्चेष्टं शिंशपात्वादि केवलम्। शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते॥ वाजिकत्वादि चाश्वत्वात् कर्कादिस्तु गुणो मतः। हस्तित्वाद् भद्रमद्रादिदिङ्नागकुलजातयः॥ पुंस्त्वाद् ब्राह्मणकौण्डिन्यकठत्वादि समाप्यते। तथा गुणत्वकर्मत्वरूपता जन्मतादि यत्॥ ततः शुक्लादि तद्व्यक्तिगुणेषु

प्रतितिष्ठति । कर्मणामपि यागत्वहोमत्वादिविभागतः ॥ अपर्यायस्मृतैरुक्तं धातुभिः प्रविभज्यते । पुनर्विधान-संख्याख्या गुणप्रकरणान्तरैः ॥ अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते ॥ ' पृ. २९५ । परसामान्यापेक्षया च सर्वाण्येव अवान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति । पृ. २९६ । **केचित्** गोत्वादिषु विशेष-त्वमङ्गीकृत्य सामान्यवाचिना शब्देन अनभिधेयत्वात् यदेव महासामान्यं सत्तावस्तु–भावशब्दाभिधेयं तदेव शब्दस्वरूपव्यवच्छिन्नं गोत्वादि विशेषव्यवच्छिन्नं वा गोसत्ताख्यं आकृत्यभिधानपक्षे वाच्यमिति **मन्यन्ते ।** यथा आहुः– ' अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् । अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ ' इति । ' तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात् । अयुक्तं न गवादीनां तत्र वाचकशक्तता ॥ ' पृ. २९७. * सामान्यं जातिः । तस्याः पटः घटः इत्यादिः प्रमा । ननु नेयं प्रमा, अलीकघटत्वादिजातिविषयकत्वात् । तथाहि, न तावत् व्यक्तिभिन्ना जातिः प्रत्यक्षत उप-लभ्यते ' इह गवि गोत्वं ' इति प्रतीत्यभावात् । भिन्ना-ऽपि सा सर्वगता व्यक्तिगता व्यक्तिमात्रनिष्ठा वा ? अन्तराले अनुपलब्धेर्नाद्यः । द्वितीयेऽपि नित्याया उत्पत्त्ययोगात् । अमूर्ताया व्यक्त्यन्तरात् आगमनासंभ-वात् भविष्यति घटे सा न स्यात् । न चांशत आग-मनम्, निरवयवत्वात् । एवं एकस्यां व्यक्तौ कृत्स्नायां अंशेन वा न वृत्तिः संभवति इत्यवगन्तव्यम् । अतो न व्यक्तितो भिन्ना जातिः संभवति । व्यक्त्यात्मकत्वं तु नित्यत्वानित्यत्वाभ्यां विरुद्धधर्माभ्यां अपहस्तितम् । भेदाभेदश्च अत्यन्तविरुद्धः । एवं च स्वलक्षणरूपशुद्ध-विषयकमेव निर्विकल्पकं प्रमा इति **चार्वाकैकदेशिनः ।** तन्न, काणकूटाद्यसदृशगोव्यक्तिषु एकाकारप्रत्ययानु-पपत्तेः । किंच सामान्यस्य अलीकत्वं वदता वस्तुत्व-व्यापकभेदाभेदासंभवेन सामान्ये वस्तुत्वं निराक्रियते । सिद्धं तर्हि वस्तुत्वसामान्यम् । तेन सिद्धं सामान्यं जातिरूपम्, तद्बाधके तु उपाधिरूपम् ।

सामान्यं च नित्यमेकमनेकानुगतम् । तद्बाधकानि च ' व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानि-रसंबन्धो ह्यांशिकत्वमपीष्यते ॥ ' इति । एकव्यक्ति-गतं न सामान्यम् । यथा आकाशत्वम् । तुल्यव्यक्ति-गतं न सामान्यद्वयम् । यथा घटत्वकलशत्वादि । परस्परात्यन्ताभावसमानाधिकरणं एकव्यक्तिवृत्ति न सामान्यद्वयम्, यथा भूतत्वमूर्तत्वे । अनवस्थितं न सामान्यम्, यथा जातित्वम् । अनित्यं न सामान्यम्, यथा पृथुबुध्नोदराकारत्वम् । असमवेतं न सामान्यम्, यथा अभावत्वादि । आंशिकं न सामान्यम्, यथा उपेक्षात्वम् । इति दिक् । तत्रापि आंशिकत्वं संकरा-न्तर्गतम् । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य जातिनिष्ठस्वस्वाभावोभयसामानाधिकरण्यकत्वस्य भेदा-भेदगर्भस्य दूषकताबीजस्य तुल्यत्वात् । **मणि.** पृ. २२ –२३.

**सामान्यं तच्चिकीर्षा हि । ६।३।११।२७॥**

कर्मसु श्रुतद्रव्यापचारे प्रतिनिधिमुपादाय प्रयोक्तव्यं इत्यवगतम् । यत्तु प्रतिनिधेयं द्रव्यं तत् सामान्यं श्रुतेन मुख्येन सदृशमेव उपादातव्यं न तु यत्किंचित् । हि यस्मात् तच्चिकीर्षा यद्विषयिणी इच्छा, तदलाभे तत्स-दृशस्यैव इच्छा लोके दृष्टा । तच्चिकीर्षा मुख्यद्रव्योपा-दित्सा सदृशद्रव्येण पूर्यते, न विसदृशद्रव्येण इति कुतूहले ।

तस्मात् मुख्यसदृश एव प्रतिनिधिर्ग्राह्यः इति **सिद्धान्तः । के.**

* ' सामान्यं तच्चिकीर्षा हि ' ( ६।३।११।२७ ) । नहि नीवारेभ्यो व्रीहिबुद्धिः व्यावर्तते इति वक्ष्यति ' सामान्यं० ' इति । **वा.** ३।६।१४।३८ पृ. १०५८. * सामान्यं ( सादृश्यं ) देवतासामान्यात् हविःसामान्यं बलीयः । वृ. ८।१।१७।३२–३४. * सामान्यं निःशेष-सामान्यायोगात् विशेषापेक्षायां संबन्धविशेषं बोधयति । **सु.** पृ. १२००. * सामान्यं परापररूपं द्वेधा । **मणि.** पृ. २१. * सामान्यं यत् शब्दार्थभूतं तस्याननुष्ठेयत्वेना-विधेयत्वात् सर्वत्र व्यक्तय एव विधीयन्ते । ' व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिताः ' इति । **वा.** २।२।२।२ पृ. ४७१, * सामान्यं विशेषो बाधते एक-विषयत्वे सति । ३।८।७।१७, * सामान्यं विशेषेण



बाध्यते । ३।६।१६।४२ पृ. १०६३. * सामान्यं विशेषेण बाध्यते । **भा.** १२।४।७।२०. **मीको.** पृ. ३६७९ ' विशेषेण ' इति बिन्दौ द्रष्टव्यम् । * सामान्यं सर्वविशेषेषु अन्तर्गतम् । **वा.** ३।२।८।२२. * अन्या च व्यक्तिः, अन्यच्च **सामान्यम् । भा.** ३।२।८।२१ पृ. ७७६. * ' अवश्यमेव सामान्यं विशेषं प्रति गच्छति । गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवम् ॥ ' **वा.** ३।१।१५।२७. * तत्र हि सामान्यमङ्गीक्रियते यत्र हि भेदग्रहणानुबन्धं अभेदग्रहणम् । यथा गवादिषु । यत्र पुनः भेदग्रहो नास्ति, तत्र भेदाग्रहणनिबन्धनः अभेदाव-सायव्यपदेशः शुक्तिरजतवत् इति न सामान्यकल्पनोप-पत्तिः । **ऋजु.** पृ. १८९. * यस्मिन् पदार्थग्रहणे सति पूर्वदर्शनसंबन्धव्यवमर्शो भवति तत् सामान्यम् । **बृहती.** पृ. १२०. * सूक्ष्ममपि किंचित् सामान्यं शब्दो वा ( यथा– निर्वपतिशब्दः ) अर्थो वा ( एकदेवताकत्वं द्विदेवताकत्वं इ. ) हविः ( यथा– ओषधिः ) देवतादि वा तद्गुणा वा रूपादयः उपलभ्येरन् यत्र तत्र तदीयो विध्यन्तः कल्प्यः । **भा.** ८।१।२।२. * ' **सामान्या-न्यपि** चैतानि नश्यन्त्याश्रयनाशतः । ' **सु.** पृ. १३२६. * **सामान्येन** यत् प्राप्नोति तत्परोक्षं लक्षणया, यत्तु विशेषेण, तत् प्रत्यक्षं श्रुत्या । श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात् । **भा.** ३।६।३।१०. * सामान्येन व्यवहारो न भवति किंतु विशेषेण । **टुप्.** ११।४।७।२८, * **सामान्यात्** विशेषो बल-वान् । सामान्येन शुक्राग्रता द्वितीयेऽहनि, विशेषेण ऐन्द्रवायवाग्रता । १०।५।२५।८५. * सामान्यात् विशेषो बलीयान् । **भा.** ३।६।३।१०. * **सामा-न्यस्य** अनुवादकं शास्त्रं सामान्ये मुख्यत्वात् विशेषे लाक्षणिकतया दुर्बलम् । विशेषशास्त्रं तु व्यावृत्त्या विधायकत्वात् प्रबलम् । ' आहवनीये जुहोति ' ' पदे जुहोति ' इति । **वि.** १०।८।८. * ' सामान्यस्य प्रति-व्यक्ति समाप्तिः ' । **वा.** ३।२।८।२१ पृ. ७७६. ( अत्र मन्त्रदेवतासंबन्धरूपं सामान्यम् । प्रतिव्यक्ति प्रतिमन्त्र-व्यक्ति । आग्नेय्या ऐन्द्र्या इत्यादि– **टिप्पणी.** ) । * सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तः अनुमानैक-गम्यत्वं मन्यन्ते शाक्याः । **रत्नाकरः** अनुमानं श्लो. १४९. * सामान्यस्य । ' प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् । वस्तुत्वं च... ॥ ' **श्लोवा.** अनुमान १४६. * सामान्यस्य प्रवृत्तौ अनुपयोगः ( देवता-नाम् ) । **संकर्ष.** २।४।२. * सामान्यस्य विशेषेण– ' तत्र नाम विशेषेण सामान्यस्य निराक्रिया । प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते ॥ ' तुल्यप्रमाणको हि विशेषो बाधको भवति, न दुर्बलप्रमाणकः । **वा.** ३।६। २।९ पृ. १०३०. * सामान्यस्य विशेषेण बाधः यथा– आहवनीयस्य वर्त्मना, आहवनीयस्य वल्मीकवपया इत्यादि । **भा.** १०।८।८।१६. * सामान्यस्य व्यक्तिपार-तन्त्र्यात् व्यक्तेः सामान्याश्रयत्वं मुख्यम् । समुदाय्या-श्रयत्वं तु वृक्षाश्रयो वनं इतिवत् समुदायस्य तन्मध्ये समुदायिप्रतीतेः औपचारिकम् । **सु.** पृ. ३४६. * सामान्यस्य साक्षात् कार्यान्वयाभावः ( साक्षात् विशेषं विना ) । **रत्न.** ६।५।१९।५४. * ' **सामान्यानां** तु वा नाशः क्वचिदभ्युपगम्यते । ' **श्लोवा.** उपमानं २५ । सामान्यं नित्यं इति सिद्धान्तः । **रत्नाकरः.** पृ. ४४१. * **सामान्ये** प्राप्ते विशेषो विधीयते । **टुप्.** १०।३।२।१५. * सामान्ये हि कश्चिद् विशेषो भवत्यपि । न तु निःसामान्यः कश्चिद् विशेष उप-पद्यते । **वा.** ३।४।१४।४१ पृ. ९८२.

**सामान्यातिदेशे विशेषानतिदेश इति न्यायः ।** अयं भावः– सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति। तद्यथा– ब्राह्मणवत् अस्मिन् क्षत्रिये वर्तितव्यमिति । सामान्यं यद्ब्राह्मणकार्यं तत्क्षत्रियेऽति-दिश्यते, यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते, एवं प्रकृतेऽपि । अयं न्यायः 'स्थानिवदादेशोऽनल्विधौ' ( पा० १।१।५६ ) इति सूत्रमहाभाष्ये स्पष्टः । **साहस्री.** ४३८.

* ' **सामान्यान्यन्यथाऽसिद्धेर्विशेषं** गमयन्ति हि ॥ ' **श्लोवा.** अर्थापत्तिपरिच्छेदः ७०.

* **सामान्यावगमात्** विशेषानवगमाच्च सर्वप्रत्ययः । **भा.** ३।१।७।१४ पृ. ७०६.

* **सामान्यावबोधो** विशेषेण बाध्यते । हविरभिवासनोत्तरं पठिता वेदिः अमावास्यायां विशेषवचनेन पूर्वेद्युरपकृष्यते । टुप्. ५।१।१६।२९.

* **सामान्यादिविध्येकादशकं** जाति–द्रव्य–गुण–क्रियाविषयत्वेन यथासंभवं चतुर्विधम् । जात्यादिविषयत्वमपि उद्देश्यांशे, विधेयांशे, उभयांशे चेति त्रिविधं इति ( ११×४ = ४४×३ = १३२ ) द्वात्रिंशदुत्तरं शतं भेदा भवन्ति । **बाल.** पृ. २१.

* **सामान्यतोदृष्टं** अनुमानं द्विविधं स्वार्थं परार्थं च । बाल. पृ. ८. * सामान्यतोदृष्टं अनुमानं यथा–देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य आदित्यगतिस्मरणम् । **भा.** १।१।५।५ पृ. ३६–३७ । यत्र सामान्ययोरेव प्रत्यक्षेण संबन्धो गृह्यते तत् सामान्यतोदृष्टसंबन्धम् । **वैद्यनाथः.** * सामान्यतोदृष्टं च यद्व्यभिचारि तत् प्रमाणम् । **भा.** ७।४।२।१२. * सामान्यतोदृष्टं विषयान्तरे अनपास्तं मन्यते । **बृहती.** पृ. २६. * **सामान्यतोदृष्टेन** न शास्त्रे व्यवहारः । **टुप्.** ६।२।६।२२.

* **सामान्यधर्मस्य** प्रागभावप्रतियोगितानवच्छेदकत्वम् । **मणि.** पृ. १७४.

* **सामान्यप्रतिषेधो** यथा– ‘ न हिंस्यात् सर्वा भूतानि ’ इति । **बाल.** पृ. ३३.

* **सामान्यप्रत्यासत्त्या**– घटत्वसामान्यप्रत्यासत्त्या नीलघटादिज्ञानम् । **मणि.** पृ. २.

* **सामान्यप्राप्तौ** सत्यां विशेषो विधातुं शक्यते नान्यथा । **वा.** ३।२।८।२२ पृ. ७७९.

* **सामान्यरूपः** निषिद्धविषयः व्यावृत्तविषयोऽभ्यनुज्ञाविधिः प्रत्यक्षविधिर्यथा– ‘ न दीक्षितस्यान्नमश्नीयात् ’ इति निषिद्धे ‘ जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥ ’ इति ( मनुः ) । अत्र अल्पदोषत्वं प्रयोजनम् । **बाल.** पृ. १६, * सामान्यरूपः पर्युदस्तविषयः व्यावृत्तविषयः अभ्यनुज्ञाविधिः यथा– ‘ न दीक्षितस्यान्नमश्नीयात् ’ इत्यस्य पर्युदासत्वपक्षे अग्नीषोमीये संस्थिते यजमानस्य गृहे अशितव्यं इति । पृ. १७.

* **सामान्यलक्षणा प्रत्यासत्तिः** सामान्यज्ञानं ज्ञायमानं सामान्यं वा । तेन संबन्धेन इन्द्रियसंबद्धानां तत्सामान्याश्रयव्यक्तीनां प्रत्यक्षम् । इदं चावश्यकम् । अन्यथा व्यवहारविषये घटे शक्तिग्रहे सर्वव्यक्तीनामप्रत्यक्षतया सर्वत्र शक्तिग्रहो न स्यात् ।

गङ्गेशस्तु, महानसीयधूमे व्याप्तिप्रत्यक्षे धूमत्वसामान्यलक्षणप्रत्यासत्त्या सकलधूमप्रत्यक्षानङ्गीकारे ‘ धूमो वह्निव्याप्यो न वा ’ इति संशयो न स्यात् । प्रसिद्धधूमे प्रत्यक्षेण व्याप्तिनिश्चयात् । अन्यस्य च अज्ञानात् संदेहानुपपत्तिः ।

किंच सुखार्थं कर्मणि प्रवृत्तिर्न स्यात्, सिद्धे सुखेच्छाविरहात् । असिद्धस्य चाज्ञानात् । एवं सुखादौ इच्छाऽपि न स्यात् ।

किंच कपालेषु घटप्रागभावप्रत्यक्षं न स्यात् । प्राचीनघटानां प्रतियोगित्वानुपपत्त्या प्रागभावविशेषणीभूतस्य प्रतियोगिनो घटस्य अज्ञानात् । एवं ‘ कपालाधिकरणको वर्तमानप्रागभावप्रतियोगी घटः ’ इति शाब्दबोधोऽपि न स्यात् । अतः सामान्यलक्षणा अङ्गीकार्या इति ।

**अत्र शिरोमणिः** । प्रसिद्धधूमे तद्धूमत्वेन व्याप्तिनिश्चयेऽपि धूमत्वेन तन्निश्चयाभावात् उक्तसंशयस्य नानुपपत्तिः । समानप्रकारकनिश्चयस्यैव संशयादिविरोधित्वात् । धूमत्वेन व्याप्तिनिश्चये संशयाभावस्येष्टत्वात् ।

एवं इच्छाप्रवृत्त्योरपि तत्प्रकारकनिश्चयहेतुकतया नानुपपत्तिः ।

विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वाङ्गीकारेण विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वाङ्गीकारेण च न प्रागभावप्रत्यक्षानुपपत्तिः ।

किंच प्रागभावसत्त्वेऽपि ‘ अत्र घटो भविष्यति ’ इत्यत्र न घटप्रागभावप्रतीतिः किंतु उत्पत्तिप्रागभावस्य । तस्याश्च कालसंबन्धरूपायाः अप्रत्यक्षत्वात् तत्प्रतियोगिकप्रागभावस्य सुतरामप्रत्यक्षत्वात् तत्प्रतियोगिप्रत्यक्षार्थं का कथा सामान्यलक्षणायाः । तथाहि, ‘ भविष्यति ’ ‘ भविता ’ इत्यादौ उत्पत्तिर्धात्वर्थः । आख्यातार्थः तदनुकूलव्यापारः । तेन वर्तमानकालोत्तरकालीनकपालाधिकरणकोत्पत्त्यनुकूलव्यापारवान् वर्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलव्यापारवान् वा घटः इति बोधः, उत्पत्त्याश्रय इति वा । एवं नङ्क्ष्यतीत्यत्र नाशो धात्वर्थः वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वरूपं भविष्यत्त्वं प्रतियोगितासंबन्धेन धात्वर्थेऽन्वेति । तेन वर्तमानप्रागभावप्रतियोग्युत्पत्तिककपालाधिकरणकनाशप्रतियोगी घट इति बोधः । एवं चात्र वर्तमानोत्तरकालीनत्वं न प्रागभावेन, तत्प्रतियोगिना घटेन वा, नाशेन वा अन्वेति । तदन्वये ‘ परश्वो भविष्यति ’ ‘ परश्वो नङ्क्ष्यति ’ ‘ श्वो भविष्यति ’ ‘ श्वो नङ्क्ष्यति ’ इति प्रयोगापत्तिः । गृहाङ्गणे आगमिष्यति देवदत्ते श्व उत्पत्स्यति ‘ गृहाङ्गणे भविष्यति ’ इति प्रयोगापत्तिश्च । तेन वर्तमानोत्तरकालत्वस्य उत्पत्तौ एवान्वयः, इति न तदर्थं सामान्यलक्षणापेक्षा ।

वस्तुतः प्रागभावे प्रमाणाभावात् सर्वमिदं गर्भस्रावगलितमिति ।

वस्तुतः सिद्धसुखविषयकप्रवृत्त्यभावात् असिद्धसुखज्ञानार्थं, अरण्यस्थदण्डादौ प्रवृत्तिजनकघटहेतुताग्रहार्थं, शक्तिग्रहार्थं च सामान्यलक्षणा आवश्यकी इति युक्तम् । **मणि.** पृ. २७–२९.

* **सामान्यवचनः** शब्दो न विशेषे अवस्थापितो भवति । **भा.** ४।३।९।२०, * **सामान्यवचनेन** विशेषविधानं परोक्षं भवति, प्रत्यक्षं तु विशेषवचनेन विशेषविधानम् । प्रत्यक्षं परोक्षात् प्रबलम् । विशेषवचनं सामान्यवचनात् प्रबलम् । ३।१।५।११ पृ. ६७२, * **सामान्यवचनात्** विशेषवचनं प्रबलम् ( अर्थतः ) । ३।१।५।११ पृ. ६७२.

**सामान्यवाक्यस्य विशेषवाक्यानुरोधाद्विशेषे पर्यवसानमिति न्यायः** । यथा ‘ पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति ’ इतिवत् । तेन न वैश्वदेवाख्यपुरोडाशस्य चतुर्धाकरणमिति । **साहस्री.** ५७५.

* **सामान्यवाची** शब्दः विशेषान्नाभिवदति । यदि चाभिवदेत् अद्य जाते गवि नावकल्पेत । पूर्वदर्शनाभावात् । सामान्ये च दृष्टपूर्वत्वादवकल्पते । तस्मान्न सामान्यं विशेषानभिवदति । **भा.** १०।८।८।१६ पृ. २०७३. * सामान्यवाची सामशब्दः, विशेषवाचिनो बृहद्रथंतरादिशब्दाश्च गानमात्रे वर्तन्ते न तु गानविशिष्टायां ऋचि । **वि.** ७।२।१, ९।२।१.

* **सामान्यवाचिता** ( शब्दानां ) आकृत्यधिकरणसिद्धा । **वा.** १।४।१२।२३–१ पृ. ३५६.

* **सामान्यविधिः** अदृष्टार्थः ‘ आहवनीये जुहोति ’ इति । **बाल.** पृ. २१. * “ सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेरन्यैरुपसंहारसंभवः ॥ ” **वा** ३।४।१४।४१ पृ. ९७७. * सामान्यविधिः क्रत्वर्थः यथा– ‘ यदाहवनीये जुहोति ’ इति । **बाल.** पृ. १५, * सामान्यविधिः क्रिया–गुण–जाति–द्रव्यविषयकत्वेन चतुर्विधः सन् प्रत्येकं उद्देश्यांशे विधेयांशे उद्देश्यविधेयोभयांशे चेति त्रिविधः इति संहृत्य द्वादशविधः । पृ. २१, * सामान्यविधिः दृष्टार्थः– सोमविधिः । पृ. २१, * सामान्यविधिः द्विविधः– क्रत्वर्थः पुरुषार्थः इति , दृष्टार्थः अदृष्टार्थः इति च । पृ. २१, * सामान्यविधिः पुरुषार्थः यथा– पुत्रकामेष्टिः । पृ. १५.

* **सामान्यविशेषेषु** सामान्याश्रयस्य विशेषे लक्षणया कार्यप्राप्तिः, विशेषाश्रयस्य तु श्रुत्या, श्रुत्या च लक्षणाप्राप्तं बाध्यते तत्र वाक्यसंबन्धविज्ञानस्य लक्षणाप्राप्तस्य श्रौतविज्ञानेन बाधः । **रत्न.** ६।५।१९।५४.

* **सामान्यविशेषन्यायः** । आधाने सामानि विहितानि । उच्चैर्ऋचा क्रियते० । प्रधानप्रयोगविधिरेव सामांशे उत्पत्तिविध्यनुसारेण सामवैदिकः सन् उच्चैष्ट्वं विधत्ते उत विनियोगविध्यनुसारेण याजुर्वैदिकः सन् उपांशुत्वं इति संदेहः । तत्र उत्पत्तिविनियोगयोरुभयोरपि एकसाममात्रविषयत्वात् सावकाशनिरवकाश–सामान्यविशेषभावन्याययोः इह असंभवः । **कौ.** ३।३।२।९. * सामान्यविशेषन्यायः । सामान्यतः इष्ट्यधिकृतमात्रविषये चमसः, विशिष्य पशुकामविषये गोदोहनं इति सामान्यविशेषन्यायेन गोदोहनं बलवत् । **रसायनम्** पृ. १७७.

* **सामान्यविशेषलक्षणो** बाधः । **वा.** २।२।१३। २९ पृ. ५६६.

* **सामान्यविहितं** विशेषविहितेन बाध्यते । प्राप्तबाधोऽत्र । **वा.** ३।३।७।१४ पृ. ८६०. * सामान्यविहितं विशेषविहितेन वाक्यैक्येऽपि बाध्यते । यथा वारुण्या निष्कासेन इति द्रव्यविशेषेण अवभृथनाम्ना सामान्यतोऽतिदिष्टः पुरोडाशः । **बाल.** पृ. १३२, * सामान्यविहितं विशेषविहितेन वाक्यभेदे विधेयैक्ये च सति बाध्यते, यथा– उपसंहारः । 'पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति' इति । पृ. १३२, * सामान्यविहितं विशेषविहितेन विधेयभेदे वाक्यभेदे च सति बाध्यते यथा आहवनीयः पदेन । पृ. १३२.

* **सामान्यवृत्ति** पदं विशेषवृत्ति वाक्यम् । **भा.** ३।१।६।१२ पृ. ६८९.

* **सामान्यशास्त्राणि** विशेषविधिविषयं परित्यज्य प्रवर्तन्ते । **वा.** ३।२।८।२१ पृ. ७७४, * सामान्यशास्त्राणि विशेषशास्त्रैरुपसंह्रियमाणानि न कर्मान्तरैः संबध्यन्ते । ३।१।५।११ पृ. ६७२, * **सामान्यशास्त्रेण** । 'नहि सामान्यशास्त्रेण व्यवहारे कृते सति । विशेषशास्त्रावसरस्तस्मादादित एव सः ॥' यदा हि सामान्यशास्त्रं प्रवृत्तव्यवहारम्, तदा न शक्यं केनापि व्यावर्तयितुम् । ३।४।१४।४१ पृ. ९८०. * **सामान्यशास्त्रस्य** विशेषशास्त्रेण बाधः । सु पृ. ६७८.

* **सामान्यश्रुतिः** तत्र नाम विशेषे उपसंह्रियते, यत्र सा विशेषशास्त्रात् अतिरिक्तार्था भवति । तद्यथा 'पुरोडाशं चतुर्धा करोति' इति सामान्यश्रुतिः आग्नेये उपसंह्रियते 'आग्नेयं चतुर्धा करोति' इत्यनेन । तत्र यदि 'आग्नेयं चतुर्धा करोति' इत्येतावन्मात्रं न श्रूयेत, अनाग्नेयस्यापि प्रसज्येत, तत् उभयमर्थवत् । **कणिका.** पृ. ३५४. * **सामान्यश्रुतिं** विशेषश्रुतिर्बाधते । **भा.** १।१।७।२५. * **सामान्यश्रुतेः** विशेषश्रुतिर्बलवती श्रुत्योर्विरोधे । **वा.** ३।३।७।१४ पृ. ८४०.

* **सामान्यसमाख्या** विशेषसमाख्या चेति समाख्या द्विविधा । **बाल.** पृ. १२. * (समाख्ययोः) **सामान्यसमाख्यायाः** विशेषसमाख्या बलीयसी । **वा.** ३।३।७।१४ पृ. ८४१.

* **सामान्यसमाख्यातकर्तुः** विशेषसमाख्यादिना बाधः । **भा.** ३।७।२०।४१–४२ पृ. ११०६. **मीको.** पृ. १२५१ 'ऋत्विजां अनियतपदार्थे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**🕮 साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् । ६।५।७।२५॥**

'यदि सत्राय दीक्षितानां सामि उत्तिष्ठेरन्, सोममपभज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्' इति सामि उत्थाने अर्धादेव केनचित् सत्रस्य त्यागे कृते यो विश्वजित् यागः कर्तव्यतया विहितः, सः क्रीते राजनि सति स्यात् । सोमक्रयोत्तरं कर्तव्यः । विभागसंयोगात् 'सोममपभज्य विश्वजिता यजेरन्' इति सोमस्य विभागेन संयोगात् । सोमक्रयात् प्राक् तु सोमविभागासंभवात् वैगुण्यं स्यात् । तस्मात् सत्रमारभ्य कुतश्चित् कारणात् यदि कश्चित् यजमानः सत्रं त्यक्तुमिच्छति सः सोमक्रयोत्तरं सोमस्य अंशं विभज्य स्वीकृत्य तेन विश्वजितं यागं कुर्यात् । ततश्च क्रीतराजका उत्तिष्ठन्तो विश्वजितं कुर्युः । इति **पूर्वः पक्षः ।**

**प्रवृत्ते वा प्रापणान्निमित्तस्य । २६ ॥**

'यदि सत्राय दीक्षितानां सामि उत्तिष्ठेरन् सोममपभज्य विश्वजिताऽतिरात्रेण यजेत' इति विहितो विश्वजित् राजक्रयोत्तरमुत्थाने कर्तव्यः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । प्रवृत्ते प्रवर्तनमात्रे सत्रारम्भोत्तरं राजक्रयात् प्रागपि उत्थाने विश्वजित् कर्तव्यः स्यात् । निमित्तस्य विश्वजिदनुष्ठाननिमित्तस्य साम्युत्थानस्य राजक्रयात् प्रागपि प्रापणात् प्राप्तेः । विश्वजितो निमित्तं साम्युत्थानं अर्धादुत्थानम्, न तु राजक्रयः । तस्मात् प्रवृत्तेरनन्तरं सोमक्रयात् प्राक् पश्चाद्वा यदा साम्युत्थानं तदा विश्वजित् इति **सिद्धान्तः ।** प्रवृत्तौ इति क्वचित् पाठः । अर्थस्तु स एव ।



**आदेशार्थेतरा श्रुतिः । २७ ॥**

'यदि सत्राय दीक्षितानां सामि (अर्धात्) उत्तिष्ठेरन् सोममपभज्य विश्वजिताऽतिरात्रेण यजेत' इति विहितो विश्वजित् सोमक्रयात् प्रागपि साम्युत्थानेन निमित्तेन कर्तव्य इति सिद्धान्तिना उक्ते 'अक्रीते राजनि उत्तिष्ठन्तः सोमविभागाभावात् विगुणं कुर्युः' इति पूर्वपक्षिणा शङ्कितम् । तत्राह सिद्धान्ती । इतरा श्रुतिः आदेशार्था । आदेशः उपलक्षणमत्र । सोममपभज्य इति इतरा 'साम्युत्तिष्ठेरन् विश्वजिता यजेत' इत्यस्याः श्रुतेरन्या तन्मध्य एव पठिताऽपि श्रुतिः आदेशात् सोमादितरेषामपि द्रव्याणां उपलक्षणार्था । यो हि अर्धात् उत्तिष्ठेत स संसृष्टात् सर्वस्मात् द्रव्यात् स्वीयं विभागं पृथक् कृत्वा उत्तिष्ठेत । तत्र सोमोऽपि विभज्येत । परंतु विश्वजिदनुष्ठाने निमित्तं साम्युत्थानमेव न सोमक्रयो वा सोमविभागो वा । तस्मात् प्रवृत्तमात्रे सति साम्युत्थाने विश्वजित् इति सिद्धान्तः । इतरा श्रुतिः इत्यत्र इतरश्रुतिः इत्यपि पाठः । अर्थस्तु न भिन्नः । **के.**

* **सामिधेनी** ऋक् । अग्निसमिन्धनमासामृचां कार्यम् । **वि.** १०।६।१९, * सामिधेनी । 'एकां सामिधेनीमन्वाह' इति प्राकृतपञ्चदशसामिधेन्येकदेशग्रहणे आदितः क्रमेण प्रवृत्तिः, अवशिष्टस्य च लोपः । १०।५।१, * सामिधेनी । 'प्र वो वाजा अभिद्यवः' इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः । सम्यगिध्यतेऽग्निर्यया सा सामिधेनी । ३।६।२. * सामिधेनी । वामदेवेन दृष्टाः पञ्चदशर्चः । अगस्त्यस्य कयाशुभीयाश्च तावत्यः । तत्र प्रथमोत्तमावृत्त्यैव पञ्चदशत्वसिद्धेः एकादशर्चः सामिधेन्यः, चतस्रो याज्यानुवाक्याः इत्येवं विभज्य विनियोगः । **संकर्ष.** ४।४।३. * **सामिधेन्यः** एकादशैव अगस्त्यस्य कयाशुभीयादौ । **संकर्ष.** ४।४।३. **मीको.** पृ. १४ 'अगस्त्यस्य कयाशुभीयादौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सामिधेन्यः, 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति दर्शपूर्णमासयोरेव । तत्र षण्णामागमः कार्यः । निवेशश्च तासामागन्तूनामन्ते । **वि.** ५।३।३, (संप्रदायविदस्तु अन्यथा वर्णयन्ति, तैसं. २।५।१० भाष्ये द्रष्टव्यम्) । * सामिधेन्यः दर्शपूर्णमासयोरङ्गम् । ४।३।१०. * सामिधेन्यः मनोर्ऋचः यावदर्थं उपादेयाः न सर्वाः । **भा.** १०।६।१९।७३–७६, * सामिधेन्यः, 'सप्तदशानुब्रूयाद् वैश्यस्य' । ६।६।७।३६. * सामिधेन्यः । सम्यगिध्यतेऽग्निः याभिर्ऋग्भिः प्रदत्ताभिः समिन्द्भिस्ताः ऋचः सामिधेन्यः, तासां चाग्न्यङ्गत्वम् । **वि.** ३।१।११.

**🕮 सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात् सामिधेनीनाम् । ३।७।७।१५ ॥**

ज्योतिष्टोमे 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रूयते । हविर्धानयोः शकटयोर्मध्ये यस्मिन् हविर्धाने सुन्वन्ति सोमरसं निष्पादयन्ति तस्मिन् सामिधेनीनामनुवचनं कर्तव्यं इति तदर्थः । अत्र किं सामिधेनीनामङ्गभावेन हविर्धानं चोद्यते उत सामिधेनीनां हविर्धानेन देशो लक्ष्यते इति संदेहे पूर्वपक्षमाह सूत्रम् । सामिधेनीः तत् अन्वाहुः इति तच्छब्देन सप्तम्यर्थकेन अव्ययेन हविर्धानयोः मध्ये दक्षिणस्य हविर्धानस्य वचनात् प्रतिपादनात्, तत् सामिधेनीनां अङ्गं इति विधीयते । सामिधेनीनां ऋचां अनुवचनं तत्र कर्तव्यमित्यर्थः ।

**अत्र सुधा–** 'यत् सुन्वन्ति' इति सप्तम्यन्ताव्ययच्छब्देन अभिषवाधारस्य हविर्धानस्य उपलक्षितस्य 'तदन्वाहुः' इति सप्तम्यन्ताव्ययतच्छब्देन परामर्शात् हविर्धानयोः शकटयोर्मध्ये यस्मिन् हविर्धाने सोममभिषुण्वन्ति तस्मिन् सामिधेनीरन्वाहुः इति श्रुत्यर्थप्रतीतेः 'सामिधेनीस्तदन्वाहुः इति वचनात् हविर्धानयोर्मध्ये अभिषवाधारभूतं हविर्धानं सामिधेनीनामङ्गम्' इति सूत्रार्थः इति ।

**देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य । १६ ॥**

ज्योतिष्टोमे 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रूयते । उत इति अथ इत्यर्थः । यत् हविर्धानशकटयोर्मध्ये यत्र सुन्वन्ति सोमरसं निष्पादयन्ति, तत् तत्र सामिधेनीः अन्वाहुः इति श्रुत्यर्थः । अनेन वाक्येन

सामिधेनीनामङ्गभावेन हविर्धानं चोद्यते इति पूर्वपक्षे पूर्वसूत्रेण प्राप्ते सिद्धान्तसूत्रमिदम्। तेन वाक्येन सामिधेनीनां देशमात्रं दक्षिणहविर्धानशकटसमीपदेश एव सामिधेनीनामनुवचनस्य अङ्गतया लक्ष्यते न तु शकटम्। वा-शब्दः पूर्वपक्षव्यावृत्त्यर्थः । हि यस्मात् सोमस्य आसादनरूपं दक्षिणशकटस्य अर्थकर्म प्रयोजनरूपं कर्म प्रत्यक्षं श्रुतं 'दक्षिणस्य हविर्धानस्य नीडे राजानमासादयति' इति । अक्षदण्डस्य उपरि अन्तरालप्रदेशः फलकास्तीर्णः नीडमित्युच्यते ('साटीचा मध्यभाग' इति मराठीभाषायाम्) । तत्र नीडं सोमस्थानम् । नीडस्य पुरस्तात्तु ईषान्तराले स्थापितफलकं होतुः स्थानं संभवति । भाष्ये तु एवमुक्तं "प्रत्यक्षं ह्यर्थकर्म सोमस्य, न तु सामिधेनीकर्म प्रत्यक्षं हविर्धानस्य । भवति तु देशस्य सामिधेनीसंबन्धः । 'अपरेण वेदिं' इति होतुर्देशो लक्षितः । स उत्तरस्य दक्षिणस्य वा हविर्धानस्य समासन्नः" इति । तेन दक्षिणहविर्धानसमीपदेशे स्थित्वा सामिधेन्यः अनुवक्तव्याः ।

**समाख्यानं च तद्वत् । १७ ॥**

ज्योतिष्टोमे 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इत्यनेन यथा सामिधेन्यनुवचनार्थं दक्षिणहविर्धानशकटसमीपदेशः 'दक्षिणस्य हविर्धानस्य नीडे राजानमासादयति' इति वचनानुसारेण लक्षितः तद्वत् समाख्यानं सोमरूपं हविः धीयते स्थाप्यते यस्मिन् तत् शकटं हविर्धानं इति समाख्याऽपि शकटसमीपदेशमेव लक्षयति इति सिद्धान्तः । चकारो हेत्वन्तरसमुच्चयार्थः । के.

* सामिधेनीः प्रकृत्य 'अन्तर्वेदि अन्यः पादो भवति बहिर्वेद्यन्यः' इति श्रुतम् । तत्र पादशब्दः ऋक्पादवाची । एकः ऋक्पादः अन्तर्वेदि स्थित्वा अनुवक्तव्यः । द्वितीयः ऋक्पादः बहिर्वेदि स्थित्वा इति पूर्वपक्षः । नायं पादशब्दः ऋक्पादवाची, किन्तु होतुः पादवाची इति सिद्धान्तः । संकर्ष. ४।१।३. * 'सप्तदश सामिधेनीरनुब्रूयात्' इति अनारभ्य आम्नायते । तथा वैमृध-अध्वरकल्पादौ च पुनः साप्तदश्यं विहितम्, तेन वैमृधादिकमपूर्वं कर्म इति सिध्यतीति चेन्न, उभयोरुपसंहारः कर्तव्यः तेन नापूर्वसिद्धिः । वि. १०।८।९. * **सामिधेनीनां** अग्निसमिन्धनार्थेध्मकाष्ठप्रक्षेपप्रकाशनार्थत्वम् । सु. पृ. १०५६. * सामिधेनीनां अग्निसमिन्धनार्थत्वम् । भा. ३।७।७।१६. * सामिधेनीनां अनुवचने सार्धाया ऋचस्त्रिरभ्यासः इति पूर्वपक्षः । एकस्या एव ऋचः अभ्यासः इति सिद्धान्तः । संकर्ष. ४।१।५. * सामिधेनीनामेकविंशतेरनुवचनं प्रतिष्ठाकामस्य दर्शपूर्णमासप्रयोगान्तर्गतम् । ३।१।११।२१. मीको. पृ. ११६९ 'उपवीताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * सामिधेनीनां काम्यसंख्याया विवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणम्, नाभ्यासेन दर्शपूर्णमासयोः । १०।५।८।२७-३३. मीको. पृ. २०६२ 'दर्शपूर्णमासयोः सामिधेनीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सामिधेनीनां काम्यसंख्यापूरणं अधिकागमेनैव, परंतु प्रथमोत्तमयोः षट्त्वेन सह पञ्चदशत्वं प्राकृतं गृहीत्वा अधिकागमः कार्यः । वि. १०।५।८. * सामिधेनीनां देशलक्षणार्थं हविर्धानग्रहणम् । भा. ३।७।७।१५-१७.

**सामिधेनीनां नाहुतिमन्त्ररूपत्वम् ॥**

'इध्मः प्रथम आहुतीनां हूयते' इति वचनेन सामिधेनीभिरिध्मप्रक्षेपस्यापि होमत्वावगमात् मान्त्रवर्णिकाग्नेर्देवतात्वं 'सूक्तवाक एव याज्या, प्रस्तर एवाहुतिः' इति श्रुतेः प्रस्तरप्रहरणेऽपि यागत्वस्वीकारात् । प्रस्तरस्योपयुक्तत्वेन तत्र प्रक्षेपांशस्य प्रतिपत्तित्वस्वीकारेऽपि प्रकृते समिधामतथात्वेन प्रयाजादिवदारादुपकारक एवैष यागः । तेन प्रकृतिमन्त्रान्तःपातिनिर्शीष्टौ प्रसङ्गादुपकारात् सामिधेनीलोपः । इति प्राप्ते, यक्ष्यमाणयागोपयोगित्वेन पूर्वमग्निसमिन्धनरूपदृष्टप्रयोजनसंभवेन अदृष्टार्थकत्वकल्पनायोगात् । सामिधेनीषु ज्वलनस्यैव देवतात्वेन स्तवनसंभवात्तार्थवादमात्रेण होमत्वसिद्धिः । प्रस्तरप्रहरणे त्विष्टदेवताप्रत्यभिज्ञानात् तासां हविर्भक्षणसंबन्धलिङ्गाच्च यागत्वसंभवेऽपि प्रकृते ज्वलनसमिन्धनस्यैव प्रतिपादनात् निशीष्टावपि संनिपातित्वात्सामिधेन्यो



भवेयुः । भाष्ये तु प्रस्तरप्रहरणस्यापि केवलसंनिपातित्वमेव समर्थ्य पूर्वोक्तमारादुपकारकत्वं कृत्वाचिन्तयेत्युक्तम्, सूत्रे 'सूक्तवाक एव याज्या' इति श्रुतेर्ग्रहणं पूर्वपक्षे दृष्टान्तार्थत्वेन सुयोजम् । संकर्ष. २।४।३.

* सामिधेनीनां नित्यस्य पाञ्चदश्यस्य काम्येन एकविंशतित्वेन बाधः । (काम्येन नित्यस्य बाधः— इत्यस्योदाहरणमिदम्) । बाल. पृ. १३३. * सामिधेनीनां नित्या पञ्चदशसंख्या दर्शपूर्णमासयोः अभ्यासेन पूरिता 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति । भा. १०।५।८।२७. * सामिधेनीनां प्रथमा दर्शपूर्णमासयोः 'प्र वो वाजा' इति । विकृतौ तु क्वचिदन्यापि प्रथमा तदा तु तस्या एव त्रिः पाठः । वि. ९।१।१०, * सामिधेनीनां सप्तदशसंख्यायाः विकृतिगामिता । ३।६।२.

**सामिधेनीनां सर्वासामेव सांतत्यविधिः ॥**

'ता एकश्रुति संततमनुब्रूयात्' इति वचनान्तरेणापि सांतत्यं प्रथमोत्तमास्वेव विधीयते । 'त्रिः प्रथमाम्' इति वाक्योत्तरमेवास्य पाठेन तच्छब्देन संनिहितपरामर्शात् । नन्वनवानविधिनैव तासु सांतत्यलाभात्पुनर्विधिर्न वाच्यः इति चेत्, न, अनवानसांतत्ययोर्भेदात् । पूर्वोत्तरोच्चारणयोर्मध्ये मौनकृतकालव्यवधानाभावः संतानः । निःश्वासाभावोऽनवानमिति । ननु 'संततमुत्तरमर्धर्चमारभेत' इति विधिनैव सांतत्यलाभादवाच्य इति चेत्, न । तेन पूर्वोत्तरार्धद्वयसंधौ संतानप्रापणेऽपि प्रत्यृचं पूर्वोत्तरार्धयोः संतानप्रापणस्यैतत्फलत्वेन फलभेदात् । ननु 'संततमुत्तरमर्धर्चमारभेत' इति विधौ उत्तरपदेन तत्तदृगुत्तरार्धस्यापि प्रतीतेरविशेषात्तेनैव सांतत्यप्राप्तेरयं विधिर्न वाच्य इति चेत्, न । तेनायुष्कामप्रयोगे प्राप्तावपि नित्यप्रयोगे लाभाय विध्यन्तरस्यावश्यकत्वात् । तथा च सूत्रम् 'अवाच्यत्वान्नेति चेत् स्यात्संयोगपृथक्त्वात्' इति । एवं त्रेधा संयोगे पृथक्त्वव्याख्यानसंभवेऽपि 'यदेकैकामेव संतनुयात्' इति विध्यन्तरसत्त्वादिति भाष्यकृतो व्याख्यानं तदवाच्यत्वान्नेत्याक्षेपनिरसनासमर्थत्वादुपेक्ष्यम् । तस्मात्प्रथमोत्तमयोरेव सांतत्यं एकैकामेवेति वचनान्तरमप्यस्यैवानुवादः । इति प्राप्ते, तादृशवचनवैयर्थ्यापत्त्यैव सामिधेनीमात्रोद्देशेनर्चां संधिषु सांतत्यविधिः । प्रथमोत्तमपदेन तासां विशेष्टुमशक्यत्वात् । 'ता एकश्रुति' इत्यत्र तु संततमित्यनूद्यैकश्रुतिमात्रविधिः । अन्यथा वाक्यभेदात् । 'उत्तरमर्धर्चमारभेत' इत्यत्र त्वारम्भपदसमवधानेनोत्तरपदमृगन्तरप्रथमार्धर्चमात्रपरम् । संकर्ष. ४।१।६.

* सामिधेनीनां साप्तदश्यं अनारभ्य आम्नातं तत् विकृत्यर्थम् । भा. ३।६।२।९, * सामिधेनीनां साप्तदश्यं अनारभ्याधीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषत्वात् तास्वेव नियम्यते । १०।८।१३।३३. * सामिधेनीनां साप्तदश्यं प्रकृतौ वैश्यस्य । वि. ३।६।३, * सामिधेनीनां स्थानं (पठनस्य) दर्शपूर्णमासयोः आहवनीयाग्नेः पश्चिमो देशः । ज्योतिष्टोमे च हविर्धानमण्डपगतदक्षिणहविर्धानशकटसमीपो देशः । ३।७।७. * सामिधेन्यां त्रिरभ्यासस्य प्रथमोत्तमस्थानधर्मत्वम् । ९।१।१०।३३. * **सामिधेनीषु** आगन्तूनामन्ते निवेशः दर्शपूर्णमासयोः । वि. ५।३।३.

**सामिधेनीषु आद्योत्तमयोरनवानविधिः तृतीये वचने एव ॥**

"यं कामयेत सर्वमायुरियादिति 'प्र वो वाजा०' इति तस्य त्रिरनवानमनूच्य 'अग्न आयाहि वीतये' इति संततमुत्तरमर्धर्चमालभेत" । "यं कामयेत सर्वमायुरियादिति 'आजुह्वोता दुवस्यत' इति तस्य त्रिरनवानमनूच्य सहोपक्रमेत्" इति च श्रुतम् । अत्र प्रवोवाजीयायाः 'अग्न आयाहि' इत्यनेन सांतत्यविधानात् सार्धाया ऋचस्त्रिरभ्यासः । न चोक्ताक्षरसंख्याविरोधः । काम्येन नित्यबाधसंभवात् । न च तृतीयानुवचने एवोत्तरार्धर्चसांतत्यविधिरस्तु, संख्याया अविरोधायेति वाच्यम् । प्रवोवाजीयामुद्दिश्य संतानविधेः प्रतिप्रवोवाजीयं प्रवृत्तेरावश्यकत्वात् । न च 'त्रिरनवानमनूच्य' इति त्रिः पाठोत्तरकालमेव संतानविधानेन चरमानुवचने एव तल्लाभ इति वाच्यम् । 'त्रिः प्रथमां त्रिरुत्तमाम्' इति विधिभ्यामेव त्रिरभ्यासलाभेन प्रकृतविध्योरनुवचनमात्रोत्तरत्वविधानात् । इति प्राप्ते, अन्यतः

प्रासत्रिरभ्यासोद्देशेन त्रिरनवानमित्यंशेन निरुच्छ्वासत्वविधिः । आवृत्तित्रयसमाप्तिपर्यन्तं एकेनैवोच्छ्वासेन ब्रूयान्न मध्ये निःश्वसेदित्यर्थः । ऋङ्मात्रोद्देशेन अनवानविधौ प्रत्यभ्यासमृचो मध्ये निःश्वासाभावेऽप्युक्तमासौ निःश्वासाभावो न प्राप्नुयात् । तथा च त्रिरित्यस्य वैयर्थ्यापत्तिः । अभ्यासमात्रस्य विध्यन्तरेण लाभात् । एवं ' अग्न आयाहि ' इत्यर्धर्चस्य पाठत एवोत्तरत्वलाभेन अन्यतरवैयर्थ्यापत्त्या ' ऐन्द्रवायवाग्रं प्रथममहः ' इत्यत्र प्राथम्यस्येवोत्तरत्वमात्रं विवक्षितम् । ऋग्ग्रहणं त्वहःपदवदनुवादः । तृतीयानुवचनोत्तरं तस्या एवोत्तरत्वात् । तथा च प्रथमद्वितीयानुवचनयोर्द्वितीयतृतीयानुवचनसंबन्धिप्रवोवाजीयार्धर्चेनैव सांतत्यसिद्धिः । वस्तुतः प्रथमोपस्थितत्वात् ' अग्न आयाहि ' इत्येतदेव विवक्षितमिति तृतीयानुवचने एवोत्तरयर्चा सांतत्यम्। तेन याजुषहौत्रविधायककल्पादिसामञ्जस्यम् , उत्तरमित्येव त्वनुवादः । नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेतेत्युक्तेः । रेवतीवाक्य इव च भावनाविशिष्टभावनान्तरविधानान्न वाक्यभेद इति भाष्यकारः । त्रिरभ्यासोद्देशेनानवानमात्रविधिरिति तु युक्तम् । इतरांशस्य विध्यन्तरेण लाभस्योत्तराधिकरणे एव वक्तव्यत्वात् । तस्मान्न सार्धर्चाभ्यास इति नाक्षरसंख्याविरोधः । संकर्ष. ४।१।५.

**सामिधेनीषु आद्योत्तमयोः त्रिरावृत्त्या संख्यापूरणम्, नागमः ॥**

सामिधेन्य ऋचः एकादश पठिताः । विहितास्तु पञ्चदश । तत्र चतसृणामग्निसमिन्धनलिङ्गानामागमेन संख्या पूरणीया । तस्याः पृथक्त्वनिवेशित्वस्वाभाव्यात् । न च प्रथमोत्तमयोर्ऋचोस्त्रिरभ्यासविधानेन तदभिप्रायेण पञ्चदशत्वानुवादो युज्यते इति वाच्यम् । तथापि ऋचां एकादशत्वानपायेन तासां चतुःषष्ट्युत्तरद्विशताक्षरत्वेन तासां ' त्रीणि च शतानि षष्टिश्चाक्षराणि भवन्ति तावतीः संवत्सरस्य रात्रयः ' इति श्रुत्यन्तरविरोधापत्तेः । रात्रिदृष्टान्तेनानभ्यस्ताक्षरनिष्ठत्वेन संख्याप्रतीतेः । तस्मात्षण्णवत्यक्षरपूर्त्यर्थमनुष्टुप्त्रयं जगतीद्वयं गायत्रीचतुष्टयं वाऽऽनेयम् । पञ्चदशेति त्वेकादशानामभ्यासविशिष्टानामनुवादकमित्युक्तम् । इति प्राप्ते, अक्षरशब्दस्य व्यञ्जनोपसर्जनकस्वरपरत्वेन तेषां च ' स्वरा विंशतिरेकश्च ' इति शिक्षापरिगणितानामल्पत्वेन तदधिकसंख्यायाः सर्वत्राभ्यासाभिप्रायेणैव कथनावश्यंभावात् ' सप्तदश पृष्ठानि ' इत्यादौ तृचस्याभ्यासेनैव सप्तदशत्वस्य 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम् ' इत्यक्षरसंपत्तेश्च निर्वोढव्यतया प्रकृतेऽपि प्रथमोत्तमयोरभ्यस्तयोर्मेलनेन पञ्चदशर्चत्वस्य षष्ट्यधिकत्रिशताक्षरकत्वस्य चोपपत्तेर्नान्यागमः । स्पष्टं च कौषीतकिवचनम् ' एकादश सामिधेनीरन्वाह ' इति प्रकृत्य ' त्रिः प्रथमया त्रिरुत्तमया पञ्चदश संपद्यन्ते, पञ्चदश पूर्वपक्षापरपक्षयोरहानि ' इत्यादि । संकर्ष. ४।१।४.

**सामिधेनीषु उत्तरार्धपूर्वार्धयोः संधानं कार्यम् ॥**

' एकैकामृचं संतन्वन्ति ' इति विधौ ऋचः संतन्वन्तीत्यनुक्त्वैकैकामित्युक्तेरेकैकस्या ऋचो यौ अवयवावर्धर्चौ तयोराम्नायपाठेन प्राप्तस्य मध्येऽवसानस्य निषेधः प्रतीयते । ऋङ्मात्रोद्देशेन विधाने त्वृच एकस्या ऋगन्तरेण संतानः प्राप्नुयात् । संततमेकं श्लोकं वक्तीत्यादौ अर्धयोः संतानप्रतीतेः । तस्मात्प्रवर्ग्यर्चामिव न मध्येऽवसानम् । ऋगन्ते तु भवेदेव । अत एवायुष्कामस्य 'अग्न आयाहि' इत्यस्या ऋचः पूर्वेण संतानविधिरुपपद्यते । इति प्राप्ते, एकैकामृचमित्यनेन संतानप्रतियोगिनः कीर्तनात्तदनुयोगिनोऽपेक्षायामुपस्थितत्वात्तदुत्तरासामृचामेकैकस्या उपस्थितेरेकैकां स्वस्वपरयोः संयोजयेदित्यर्थप्रतीतेर्नार्धर्चयोः परस्परं संतानविधिः । अत एव चरमाया ऋचस्तृतीयावृत्तौ अनुयोगिन्या ऋचोऽभावान्निगदेनैव संतानो वचनान्तरेण विहितो युज्यते । ' उत्तमायै तृतीये वचने प्रणवेन निगदमुपसंदधात्यग्ने महाँ असि ' इत्यादिना । ऋगुद्देशेन संतानविधाने त्ववसानसामान्याभाव एव प्राप्येत । न च ' अर्धर्चौ संदधाति ' इति वचनादनुयोगिप्राप्तिः । तस्यर्गुत्तरार्धर्गन्तरपूर्वार्धमात्रपरत्वात् । ' यदसंयुक्ताः स्युः ' इत्यादिनर्चामसंयोगं विनिन्द्यार्धर्चयोः संधानं विधाय ' संयुनक्त्येवैनाः ' इत्युपसंहारात् । एतेन ' अन्तरा ऋचोः



अव्यन्य पुनरर्धर्चे व्यन्यात् ' इति यथासमाम्नायं विरामानुवादः संगच्छते । संकर्ष. ४।१।७.

* सामिधेनीषु त्रिरभ्यासः प्रथमोत्तमस्थानधर्मः , न तु प्रवोवाजादिऋग्विशेषधर्मः दर्शपूर्णमासयोः । ९।१।१०।३३. मीको. पृ. २०६४ ' दर्शपूर्णमासयोः सामिधेनीत्रिरभ्यासः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सामिधेनीषु ' त्रिर्विगृह्णाति ' इति विग्रहः ' तं त्वा समिद्भिरङ्गिरः ' इत्यस्यामेव ऋचि ॥**

' राथंतरीं प्रथमाम् ' इत्यादिना ऋक्त्रयं स्तुत्वेदमाम्नायते ' त्रिर्विगृह्णाति अन्तरिक्षेण वा इमे लोकाः संतता अन्तरिक्षं वा अङ्गिरः ' इति । एकस्या ऋचस्त्रिर्विभागं कुर्यादित्यर्थः । सामिधनीप्रकरणे चास्य विधेः पाठात्तासामेवोद्देश्यत्वात्प्रत्यृचं त्रिस्त्रिर्विभजेत् । न च ' तं त्वा समिद्भिरङ्गिरः ' इत्येतत्संनिधौ पाठात्तस्या एव त्रिर्विग्रह इति वाच्यम् । संनिधानात् सामिधेनीप्रकरणस्य बलवत्त्वात् । इति प्राप्ते, ' तं त्वा ' इत्यृच एव त्रिर्विभागः । तस्याः पाठं विधाय मध्ये विग्रहं विधाय ' अन्तरिक्षं वा अङ्गिरः ' इति पुनस्तस्या ऋचः परामर्शेनावान्तरप्रकरणप्रतीतेः तस्याश्च सामिधेन्यवान्तरप्रकरणाद्बलवत्त्वात् । यत्तु शाखान्तरीयं वचनं ' तं त्वा समिद्भिरङ्गिर इत्येतां त्रिर्विगृह्णाति ' इति तन्न्यायसिद्धानुवादकम् । संकर्ष. ४।१।९.

**सामिधेनीषु ' त्रींस्तृचाननुब्रूयात् ' इति त्रिस्त्रिरुक्ते प्रथमोत्तमे एव द्वौ तृचौ ' अग्न आयाहि ' इत्यादिश्च तृतीयः ॥**

सामिधेनीरेव प्रकृत्य ' त्रींस्तृचाननुब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात्पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति ' इति श्रुतम् । सन्ति हि गायत्री त्रिष्टुब् जगत्यनुष्टुप् चेति चत्वारि छन्दांसि ब्राह्मणादिवर्णचतुष्टयसंबन्धित्वेन तत्र तत्र स्तुतानि । तदत्र राजन्यातिरिक्तवर्णत्रयस्य स्ववशंवदतापादकत्वेन तृचत्रयसंस्तवबलात्तृचा अपि गायत्रजागतानुष्टुभा एव राजन्येनोपादेयाः । तुल्यन्यायेन वैश्यस्य गायत्रत्रैष्टुभानुष्टुभा भवन्ति । ' ता वै गायत्र्यो भवन्ति ' इति प्राकृतविधेर्नैमित्तिकेन विकारेण बाधः इत्यालेखनो मन्यते । आश्मरथ्यस्तु ' अष्टावेतानि हवींषि भवन्त्यष्टाक्षरा गायत्री ' इत्यादिवदर्थवादमात्रेण छन्दोविशेषपरत्वेन नियमनस्य प्राकृतबाधस्य चायुक्तत्वात् पुनर्विधेः प्रकृतिप्राप्ततृचान्तरपरिसंख्यार्थत्वेन सार्थक्याद्गायत्रा एव प्राकृतास्तृचा ग्राह्या इत्याह । ते च तृचाः प्रथमोत्तमे त्रिस्त्रिरुक्ते इति द्वौ ' अग्न आयाहि वीतयः ' इत्यृक्त्रयेण तृतीयः इत्येवंरूपाः । प्रथमोत्तमे त्रिरुक्ते ' सहसामन्वता तृचेन ' इति वाक्यशेषात् । ' अग्न आयाहि ' इत्यृक्त्रयस्य रथंतरवामदेव्यबृहत्सामत्वेन संस्तवात् सामन्वत्तृचपदेन परिग्रहः । संकर्ष. ४।२।१.

**सामिधेनीषु पठिते एव आद्यान्त्ये ऋचौ राथंतरी बार्हती च, न तु सामयोनी ॥**

' राथंतरीं प्रथमामन्वाह, बार्हतीमुत्तमाम् ' इति सामिधेनीष्वेव प्रकृतौ श्रुतम् । तद्वशात् बृहद्रथंतरयोर्योनी ऋचावागमयितव्ये 'त्रिः प्रथमाम् ' इति विधिभिः स्तुतयोरप्यभ्यासादि भवेत् । तेन प्रवोवाजीयाद्योर्विकल्पः । इति प्राप्ते, 'प्रतिरथंतरस्य रूपं करोति' इति वचनेन प्रवोवाजीयाया एव रथंतररूपत्वेन संस्तवान्नान्या ऋक् प्रथमा कार्या । उत्तमायास्तूत्तमत्वादेव बृहद्रूपत्वम् । परमत्वमेव निमित्तीकृत्य बृहत्सामत्वेन वेदे बहुशः स्तुतिदर्शनात् । यथा ' ऐन्द्रवायवोऽग्रे गृह्यते ' ' रथंतरस्यैष वर्णो ध्रुव उत्तमो गृह्यते बृहत एष वर्णः ' इति । ' अयशो वा एष योऽसामेत्यारभ्याग्न आयाहि ' इति तृचं रथंतरवामदेव्यबृहद्वर्णत्वेन संस्तुत्य ' यमेवैतत्सामन्वन्तं करोति ' इत्युपसंहाराच्च । अस्मिन्नेव तृचे प्रथमोत्तमयोः सा स्तुतिरित्यपि सुवचम् । अतो नोत्तमाऽप्यन्या ऋक् । संकर्ष. ४।१।८.

**सामिधेनीषु प्रणवविधानं अन्त्ये ऋगक्षरे एव स्थाने ॥**

निवेश्यमानः प्रणवः प्रथमोपस्थितत्वादाद्याक्षर एव निवेश्यः, ' अग्न आयाहि वीतये ' इत्यादिरीत्या। इति प्राप्ते, ऋगक्षराणां क्रमविपर्यासे मानाभावेनागन्तुकत्वादन्त्याक्षरस्यैव विकारः ' अग्ने दीद्यतं बृहत् ' इत्यादौ तु चरमव्यञ्जनसहितः स्वर एकाक्षरम् । अत एव वषट्-

कारकत्वेन प्रणवस्तुतिरुपपद्यते । 'ऋचमुक्त्वा प्रणौति' इत्यादौ त्वाधाराधेयभावाभावान्नान्त्याक्षरविकारः । **संकर्ष.** ४।१।१२.

**सामिधेनीषु प्रणवविधानं ऋगक्षरस्थाने एव ॥**

तत्रैव 'ऋचि प्रणवं दधाति' इति विधानात्प्रत्यृचमन्ते प्रणवः प्रयोज्यः, स च यद्यपि कुण्डे बदरन्यायेन ऋगक्षरासंमिश्रो वा दधनि सितान्यायेन तत्संमिश्रो वेति द्वेधाऽपि संभाव्यते तथाऽपि प्रकृतेरुपांशुयाजपुरोनुवाक्योत्तरमिव कुण्डबदरन्याय एव युक्तः । आम्नातऋगक्षराणां मध्ये एकस्यापि विकारायोगात् । 'यो वै सामिधेन्याः प्रणवः स गायत्र्या नवममक्षरम्' इति श्रुत्यन्तरेणाष्टमाक्षरोत्तरत्वप्रतीतेः । इति प्राप्ते, क्रमेण उच्चरणीययोर्द्वयोः शब्दयोः संबन्धस्याङ्गुलिद्वयसंबन्धस्येव वृत्तिनियामकत्वाभावाद् ऋचि इति सप्तमीबोधिताधाराधेयभावबाधापत्तेः वाचनिकत्वेनाक्षरविकारस्यादोषत्वात् 'प्रणवष्टेः' इति विधिसिद्धत्वाच्चाक्षरं विकुर्वन्नेव निविशते । उपांशुत्वोच्चैस्त्वधर्मभेदात्तु नोपांशुयाजीयाक्षरविकारः । क्रतुमध्येऽष्टमाक्षरस्यापार्थक्येऽपि ब्रह्मयज्ञादौ तस्याविकृतस्य पाठात्तदभिप्रायेण नवमाक्षरत्वोक्तिः, कालभेदेन ध्रियमाणयोरपि द्वे वस्त्रयुगे धारयतीति मिलित्वोक्तिदर्शनात् । **संकर्ष.** ४।१।११.

**सामिधेनीषु प्रणवशब्दार्थस्य ओङ्कारस्यैव विधानम्, न तु 'प्रणवः' इति शब्दस्य ॥**

'ऋचि प्रणवं दधाति' इति विधानात् प्रणव इत्यक्षरत्रयात्मक एव शब्दो निक्षेप्यः । विधौ श्रूयमाणशब्दनियमनस्य न्याय्यत्वात् 'ऐरंकृत्वोद्गेयम्' इत्यादौ तथा दर्शनात् । इति प्राप्ते, ओंकारस्यैवान्ते निक्षेपः । इरापदार्थस्य भूम्यादेः शब्दानुपूर्वीघटकत्वबाधेनेवेति शब्दस्वरूपलक्षणायामपि प्रणवपदस्य शब्दविशेष एव शक्तत्वेन वाचकशब्दे लक्षणायां मानाभावात् । अग्न्यादिदेवतावाचकपर्यायाणां अनियमप्रसक्तौ वैधशब्दनियमनस्य न्याय्यत्वेऽपि नियतलब्धशब्दबाधस्यान्याय्यत्वात् । न हि 'वेदशास्त्रपुराणानि पठेत्' इत्युक्ते वेदादिशब्दान् पठेदित्यर्थः प्रतीयते । अत एव 'ओमिति प्रणौति' इति बह्वृचाः प्रणवपदस्यार्थप्रदर्शनीं श्रुतिमामनन्ति । तस्मादोंकार एव निधेय इति । **संकर्ष.** ४।१।१३.

* सामिधेनीषु मनोर्ऋचः धाय्या इत्युच्यन्ते आग्निवारुण्या इष्टेः क्रमे अतीते सौमारौद्रीणां अनागते । तथा 'पृथुपाजास्तं सबाधो०' इति द्वे धाय्ये । **भा.** ३।२।७।२० पृ. ७७३.

**सामिधेनीषु 'समिद्वती घृतवती चानूच्येते' इति 'तं त्वा समिद्भिः०' इत्येव ग्राह्या ॥**

'समिद्वती घृतवती चानूच्येते' इति श्रुतौ समिद्वतीति स्त्रीलिङ्गवशादृचो विशेष्यत्वावगमात् 'समिध्यमानवतीं समिद्धवतीं च' इत्यादाविव समित्पदप्रथमप्रतीका ऋक् तादृश्येव घृतवती चानेया । 'समिधाऽग्निं दुवस्यत, घृतं मिमिक्षिरे' इत्यादिका । अनूच्येते इत्यृग्द्वयाभिप्रायं द्विवचनम् । इति प्राप्ते, 'तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि' इत्यस्या एवायं वादः समिद्घृतयोरग्निसमिन्धनानुगुण्यद्योतनार्थः । 'अनूच्येते' इति द्विवचनं तु छान्दसं तत्पदवैशिष्ट्यभेदेनैकस्या एव द्वित्वोपचार इति तु पदवाद इत्यस्यार्थः । **भाष्यकारस्तु** 'समिद्वती' इति नपुंसकद्विवचनं पदविशेष्यत्वाभिप्रायं समित्पदघृतपदयोः सृष्टिन्यायेनैकैकपदाभ्यां व्यपदेश इत्याह । 'समिद्वती घृतवती च पदे अनूच्येते' इति शाखान्तरवाक्यं तु यतः पदे अनूच्येते ततः करणादियमेव ऋक्समिद्वती घृतवती चेति सुयोजम् । **संकर्ष.** ४।१।१०.

**सामिधेनीषु 'सर्वाणि च्छन्दांसि अनुब्रूयात्' इति गायत्रीत्रिष्टुब्जगत्य एव सर्वाणि च्छन्दांसि ॥**

सामिधेनीष्वेव 'सर्वाणि च्छन्दांस्यनुब्रूयाद्बहुयाजिनः' इति श्रुतम् । तत्र सप्ताधिकशतसंख्यानि छन्दांसि सर्वपदेनोच्यन्ते । संकोचे मानाभावात् । यदि गायत्र्यादिसप्तकमेव निरुपपदच्छन्दःपदेनोच्यते । तदधिकोनाक्षराणां त्वतिछन्दःकृतिछन्दःपदादिनैव व्यवहारः । अत एव आथर्वणसर्वानुक्रमण्यां 'यत्र सर्वाणि छन्दांसीत्युच्यते तत्र गायत्र्यादिजगत्यन्तानि सप्त छन्दांसि जानीयात्' इति सूत्रमित्यालोच्यते तदा तावन्त्येव प्रयोज्यानि । इति प्राप्ते, गायत्रीत्रिष्टुब्जगतीनामेव प्रकृतत्वात्सर्वत्वमिहाधिकारिकम् । अत एव त्रैधातवीयायामपि 'एतत्त्रितयमेव सर्वाणि छन्दांसि एतस्यामिष्ट्यामनूच्यानि' इत्युक्त्वा 'त्रिष्टुभो वा एतद्वीर्यम्' इत्यादिना त्रिष्वेवेतरचतुष्टयरूपतासंपादनार्था स्तुतिरुपपद्यते । **संकर्ष.** ४।२।२.

* **सामिधेन्यनुवचनं** दक्षिणहविर्धानदेशे ज्योतिष्टोमे । ३।७।७।१५–१७.

* **सामिधेन्यनुवचनार्थं** 'उत यत् सुन्वन्ति' इति वाक्येन हविर्धानदेशो लक्ष्यते ज्योतिष्टोमे । ३।७।७।१५–१७. **मीको.** पृ. १७८७ "ज्योतिष्टोमे 'उत यत् सुन्वन्ति' इत्यादिना श्रुतेन०" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेन्यनुवचनादीनां** ऋग्वेदे, अन्वाधानमन्त्रादीनां च यजुर्वेदे विधानात् पूर्वपक्षन्यायेन नानावेदस्वरप्राप्तौ सिद्धान्तन्यायेन बाधितानां विशेषविषयेण मन्द्रादिवचनेन प्रधानेषु सामान्यवचनप्राप्तोपांशुत्वादिबाधपूर्वकं अङ्गेषु तद्बाधः । **सु.** पृ. ११७८.

* **सामिधेन्युत्तरं** निविदामपि संतानः कार्यः इति पूर्वपक्षः, नेति सिद्धान्तः । **संकर्ष.** ४।२।४.

* **सामिधेन्येकविंशत्याद्यनुवचनानां** प्रकरणात् दर्शपूर्णमासाङ्गत्वे प्राप्ते श्रुत्यैव प्रतिष्ठाकामादिषु पुरुषार्थत्वावधारणात् प्रकरणबाधः । श्रुतिः प्रकरणात् बलीयसी । **वा.** ३।३।७।१४ पृ. ८३५.

* **सामिधेनीकर्मणा** होतुः संयोगः प्राग्वरणात् 'अवृतः सामिधेनीरन्वाह' इति । **भा.** १२।१।१८।४१.

* **सामिधेनीकार्ये** मानवीनामृचां एकादशानामेव दाशतयीभ्यः समानयनं सौमारौद्रेष्टौ । १०।६।१९।७३–७६. 'सौमारौद्रेष्टौ सामिधेनीकार्ये०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेनीकाले** 'अन्तर्वेद्यन्यः पादः' इति लक्षणया देशविधिः । **संकर्ष.** ४।१।३. **मीको.** पृ. ४'९२ 'अन्तर्वेद्यन्यः इति लक्षणया देशविधिः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेनीत्वं** अग्निसमिन्धनप्रकाशकत्वं विना न संभवति । **सु.** पृ. १०५८. * 'सामिधेनीत्वमप्यासां न स्यादग्न्यसमिन्धनात् । न चाप्रयोगमध्यस्थैः शक्यो वह्निः समिन्धितुम् ॥' सामिधेन्यः । अग्निसमिन्धनं प्रकाशयन्त्यः (ऋचः) सामिधेन्य इत्युच्यन्ते । स चाग्निः परप्रयुक्तः ताभिः प्रकाशयितव्यः । **वा.** ३।१।११।२१ पृ. ७३५.

* **सामिधेनीनिषेधेऽपि** नावाहनबाधः गृहमेधीये । **संकर्ष.** ४।४।७. **मीको.** पृ. १६०३ 'गृहमेधीये सामिधेनीनिषेधेऽपि नावाहनबाधः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेनीपाञ्चदश्यं** प्रकरणानुग्रहविशेषात् अपूर्वसंबन्धप्रमाणप्रत्यासत्तेर्बलीयः । **वा.** ३।६।२।९. * सामिधेनीपाञ्चदश्यं ब्राह्मणराजन्ययोर्दर्शपूर्णमासयोः । **वि.** ६।६।७. * **सामिधेनीपाञ्चदश्यस्य** नित्यस्य वैश्यनिमित्तकसाप्तदश्येन बाधः । **बाल.** पृ. १३२.

* **सामिधेनीपादः** चतुर्थस्य प्रथमः । तत्र त्रयोदशाधिकरणानि । **संकर्ष.** ४।१।१–१३.

* **सामिधेनीप्रकरणे** 'सर्वाणि छन्दांसि अनुब्रूयात् बहुयाजिनः' इति श्रुतम् । तत्र सर्वाणि नाम गायत्रीत्रिष्टुब्जगत्य एव, न तु सप्त वा सप्ताधिकशतसंख्यानि वा । **संकर्ष.** ४।२।२.

* **सामिधेनीप्रयाजयोर्मध्यकाले** देवतानामावाहनम् । **वि.** १०।१।१ वर्णकं ३.

* **सामिधेनीब्राह्मणं** (तैसं. २।५।७–८) दर्शपूर्णमासप्रकरणे 'विश्वरूपो वै त्वाष्ट्रः' इत्यस्मिन् सप्तमाष्टमयोरनुवाकयोः आम्नातम् । **वि.** ३।१।११.

* **सामिधेनीमन्त्राः** एकादश पठिताः, विहितास्तु पञ्चदश । तत्र चतसृणामागमः कर्तव्यः इति पूर्वपक्षः । प्रथमोत्तमयोर्ऋचोरभ्यासेनैव पञ्चदशत्वात् नान्यागमः इति सिद्धान्तः । **संकर्ष.** ४।१।४.

* **सामिधेनीमात्रसंयोगेन** श्रुतस्य साप्तदश्यस्य अक्लृप्तक्रतुसंयोगत्वात् पाञ्चदश्येन प्रकरणक्लृप्तक्रतुसंयोगेन बाधः । **सु.** पृ. ४१४.

* **सामिधेनीविषये** एकदेशवचनं 'एकां सामिधेनीमन्वाह, तिस्रः सामिधेनीरन्वाह' इति । समस्तग्रहणमपि भवति 'पञ्चदश सामिधेनीरन्वाह' इति । भा. १०।५।१।१.

* **सामिधेनीसंख्यायां** काम्यविवृद्धौ आगन्तूनामृचां समिध्यमानवतीसमिद्धवत्योरन्तराले निवेशः । ५।३।३।४-६. **मीको.** पृ. २०६६ 'दर्शपूर्णमासयोः सामिधेनीसंख्यायां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेनीसाप्तदश्यं** अनारभ्याधीतं पशुमित्रविन्दाऽध्वरकल्पादिप्रकरणाधीतैः साप्तदश्यैः पश्वादिविषयमेव उपसंह्रियते इति दशमे वक्ष्यते । सु. पृ. १५२०. * सामिधेनीसाप्तदश्यं विकृतिषु वर्णत्रयस्यापि । **वि.** ६।६।७. * सामिधेनीसाप्तदश्यं विकृतिगामि । ३।६।२।९. **मीको.** पृ. ४२७१ 'साप्तदश्यन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * सामिधेनीसाप्तदश्यं १ वैमृधे २ अध्वरकल्पायां ३ पशौ ४ चातुर्मास्येषु ५ मित्रविन्दायां ६ त्रैधातव्यां ७ आग्रयणेष्टयाम् । नान्यस्यां विकृतौ । **भा.** १०।८।९।१७. * सामिधेनीसाप्तदश्यं वैश्यस्य दर्शपूर्णमासयोः, पाञ्चदश्यं तु ब्राह्मणराजन्ययोः । वि. ६।६।७. * **सामिधेनीसाप्तदश्यस्य** अनारभ्यवादेन सामिधेनीसंबन्धितया उत्पत्तेः प्राकरणिकैश्च वचनैर्विनियोगात् अर्थवत्त्वम् । **वा.** २।३।९।२०. * सामिधेनीसाप्तदश्यस्य वैश्यनिमित्तिकस्य काम्येन एकविंशतित्वेन बाधः । **बाल.** पृ. १३३.

* **सामिधेनीसाप्तदश्यपुनःश्रवणस्य** अनारभ्याधीतसाप्तदश्येन उपसंहारः वैमृधादौ । १०।८।९।१७-१९. **मीको.** पृ. ३७४० 'वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामिधेनीसाप्तदश्यविशिष्टविकृतिषु** वर्णत्रयस्याधिकारः, न वैश्यमात्रस्य । ६।६।७।३६-३९. **मीको.** पृ. २८३ 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सामुद्रविद्या** (दृष्टमूला तत्रापि वैदिकसंबन्धि वेदमूलम्) । **वा.** १।३।१।२ पृ. १६७.

* **सामुद्रिकविषयः** शरीरसंनिवेशः । **सु.** पृ. १३०.

**ꣿ 'सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥' इति न्यायः ।** अयं 'वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु' (पा० ८।१।८) इति सूत्रमहाभाष्ये प्रोक्तः । तथाहि– 'असूया कुत्सनमित्येकोऽर्थः । कोपो भर्त्सनमित्येकोऽर्थः । असूयाकुत्सनयोः कोपभर्त्संयोनश्चैकार्थत्वात् पृथक्त्वनिर्देशोऽनर्थकः । न ह्यनसूयन् कुत्सयति, न चाप्यकुपितो भर्त्सयते । ननु च भोः अकुपिता अपि दृश्यन्ते दारकान् भर्त्सयमानाः । अन्ततस्ते तां शरीराकृतिं कुर्वन्ति या कुपितस्य भवति । एवं तर्ह्याह–'सामृतैः ०' इत्यादि । **साहस्री.** ८३८.

* **सांप्रदायिकशब्दः** धारणाध्ययनपरः । **सु.** पृ. ५३. (संप्रदायः प्रयोजनं यस्य वाक्यस्य, येन प्रवर्तितः संप्रदायः तस्मात् 'स्वाध्यायोऽध्येतव्यः' इति वाक्यं सांप्रदायिकम् । इति तु वार्तिकम् । **वा.** १।२।१।८ पृ. १२२.)

* **साम्यवैषम्यप्रतिपादनप्रतिज्ञा** । **भा.** ४।१।८। २१.

* **सायं** अग्निहोत्रमारभ्य प्रतिहोमाः कार्याः प्रतिहोमकरणपक्षे ।६।५।१३।४३. **मीको.** पृ. २७४० 'प्रतिहोमपक्षे सायमग्नि०' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यात् ॥' अयं कालतः व्यवस्थारूपः प्रतिषेधः । **बाल.** पृ. ३४.

* **सायंहोमस्य** अग्निप्रजापती भविष्यतः । प्रातर्होमस्य सूर्यप्रजापती । **वा.** २।२।५।१६ पृ. ५०७. * **सायंहोमे** कृते यजमानापदि ऋत्विग्द्वारा प्रातर्होमः अवश्यं कार्यः इति आचारः । **सु.** पृ. ७८७.

* **सायंहोमोत्तरं** यजमानमरणे । यदा सायंप्रातर्भ्यस्तोऽयं एक एव प्रयोगो भवति, तदा सायंहोमे कृते यदि नाम यजमानस्य कदाचिदापद्भवति तदा यथाकथंचित् प्रातर्होमः कर्तव्यः, प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम् । **वा.** २।२।५।१६ पृ. ५०८.



* **सायुज्यकामौ** । एतेन (कुलायेन यज्ञेन) राजपुरोहितौ सायुज्यकामौ यजेयाताम् । **भा.** ३।३।९।१७.

* **सारस्वतं** आज्यं 'आग्नावैष्णवमेकादशकपालं निर्वपेत्', 'सरस्वतीमाज्यस्य यजेत' इति उपांशुयाजस्य विकृतिः । वि. १२।२।८, * सारस्वतं आज्यं उपांशुयाजविकारः अध्वरकल्पायाम् । ५।१।१०. * **सारस्वतः** अतिरात्रः । **भा.** ३।६।७।१८, * सारस्वतः मेषः (सरस्वत्यै) चरकसौत्रामण्यां पशुः द्वितीयः । ११।४। १०।३७. * **'सारस्वतौ** भवतः' इति । तत्र सरस्वती च सरस्वांश्च इति स्त्रीदेवत्यस्य पूर्वं याज्याऽनुवाक्ययोः समाम्नानम् 'प्र णो देवी' इति, मुख्यक्रमात् । ५।१। ७।१४. **मीको.** पृ. ३१५९ 'मुख्यक्रमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **'सारस्वतं चरुम्'** (निर्वपेत्), द्वितीयं हविः प्रातश्च माध्यंदिने च तृतीयसवने च अध्वरकल्पायाम् । **भा.** ११।२।४।१९.

**ꣿ सारस्वते सत्रे (कामेष्टौ) दक्षिणादानमदृष्टार्थम् ॥**

**कामेष्टौ च दानशब्दात् । १०।२।१५।४५ ॥**

**भाष्यम्**— अस्ति सारस्वते सत्रे कामेष्टिः, 'प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं पुरोडाशं निर्वपन्ति, तस्यामश्वां पुरुषीं च धेनुके दत्त्वा प्रति यमुनामवभृथमभ्यवयन्ति' इति । तत्र संशयः किं परिक्रयार्थं दानमुत धर्ममात्रमिति । पृष्ठशमनीये च सत्रस्यानङ्गभूते परिक्रयार्थं दानमित्युक्तम् । अथेदानीमङ्गभूतायां कामेष्टौ चिन्त्यते । तत्र किं तावत् प्राप्तम् ? यथा पृष्ठशमनीये परिक्रयार्थम्, एवमिहापीति चशब्देनान्वादिश्यते । कुतः ? दानशब्दात् । दानशब्दो भवति । 'तस्यामश्वां पुरुषीं च धेनुके दत्त्वा' इति । दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थ इत्युक्तम् । न चैतत्सत्रम् । सत्रस्याङ्गभूतमेतत् । प्रकरणाच्च सत्रस्य स्वयंकर्तृकता, नाङ्गानाम् । तच्चोदकप्राप्तैर्ऋत्विग्भिः सगुणं सत् सत्रस्योपकारकं भवति । अन्यैर्ऋत्विग्भिर्विना विगुणं सत्रस्य नोपकुर्यात् । तस्मादत्र दानं परिक्रयार्थमिति ।

**टुप्**— ननु नैवात्र दानं परिक्रयार्थम्, दक्षिणाशब्दाश्रवणात् । पृष्ठशमनीये तु विद्यते दक्षिणाशब्दः ('सहस्रदक्षिणेन यजेरन्' इति) । तस्मात् (पूर्वपक्षासंभवात्) कथमेतत् (अधिकरणम्) । उच्यते । 'भक्षाश्रवणाद्दानशब्दः परिक्रये' (३।४।१७।४८) इत्यत्र दानं परिक्रयार्थं न्यायेन स्थापितं पूर्वपक्षे । (स तर्हि तत्रैव निराकृतः, अत आह–) स चात्रापि न्यायः । (तत्र 'द्रव्ये समत्वात्' इति यजमानस्य देवतार्थे द्रव्ये स्वाम्याभावात् परिक्रयार्थता निरस्ता । अत्र तु किमिति परिक्रयार्थता न भवति) तथा च भाष्यं 'दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थः इत्युक्तम्' । (अत्र तु सत्रत्वात् न ते सन्ति, इति आशङ्कापरिहारार्थः) ।

अत्र (भाष्य-)ग्रन्थः 'न चैतत् सत्रम्' इति । कोऽभिप्रायः ? (यावता गवादिवत् कामेष्टिरपि सत्रमेवेति । उत्तरमाह–) अस्मिन् सारस्वते सत्रे, गोआयुषी (एकाहौ यथाक्रमं) यजनीययोरह्नोः (पौर्णमास्यमावास्ययोः), शिष्टेषु अहःसु (अन्तरालेषु पूर्वपक्षापरपक्षयोरहःसु) दर्शपूर्णमासौ (पूर्वपक्षे दर्शः, अपरपक्षे पूर्णमासः इति) एतत् सारस्वतं सत्रम् (यदुत गौश्चायुश्च दर्शपूर्णमासौ चेति) । नात्र कामेष्टिचोदना । तस्मादाह न चैतत् सत्रमिति । इतरो ब्रवीति (चोदयिता), सत्रस्याङ्गम् (कामेष्टिः) । साङ्गं च सत्रं कर्तव्यम् (यजमानैरेव 'ये यजमानास्ते ऋत्विजः' इति सर्वास्त्विज्येषु यजमानविधानादिति) । तत आह (उत्तरवादी–) 'प्रकरणाच्च सत्रस्य स्वयंकर्तृकता, नाङ्गानाम् ।' (इति भाष्यम् । टुप्टीका तु– प्रकरणाच्च साङ्गस्य सत्रस्य, नाङ्गानामिति) । कोऽभिप्रायः ? द्वादशाहे आर्त्विज्येषु यजमानाः कर्तारो विधीयन्ते, तेष्वेव स्वयंकर्तृकता, प्रकरणाच्च सत्रस्य प्रकृतौ स्वयंकर्तृकतोक्ता । इह चोदकेन तेष्वेवाङ्गेषु स्वयंकर्तृकता प्राप्नोति । कामेष्टिरपूर्वमङ्गम् । न च प्राकृतस्य कार्यं वर्तते । तस्मात् स्वयंकर्तृकतानिवृत्तिः । यो यूपावटस्तरणन्यायः (३।८।१६), स इहापि । न तु अनेन न्यायेन यूपावटस्तरणे अध्वर्युः कर्ता न प्राप्नोति । उच्यते, ज्योतिष्टोमे साङ्गे प्रत्यक्षेण कर्तारो विधीयन्ते, यत्र चोदकेन तत्र नियतेष्वेव नाधिकेषु ।

वचनं वा सत्रत्वात् । ४६ ॥

**भाष्यम्**— वाशब्दात् पक्षो व्यावर्त्यते । नात्र परिक्रयार्थं दानम्, धर्ममात्रमिति । कुतः ? सत्रत्वात् । सत्रेष्वानतिर्निवृत्ता । आह । नैतत्सत्रम्, सत्राङ्गमित्युक्तम् । उच्यते । न सत्रम्, सत्राङ्गं तु सत्रमध्यपतितम् । सत्रस्य च साङ्गस्य स्वयंकर्तृकता । तस्यां क्रियमाणायां सिद्धा अस्या इष्टेः कर्तारः । तत्र आनत्या न प्रयोजनम् । श्रूयमाणं तु दानं धर्ममात्रं भवितुमर्हतीति ।

**टुप्**— प्रकृता एव यजमानाः कामेष्टिं करिष्यन्ति, लाघवात् । कामेष्टौ प्रत्यक्षेण वचनेन कर्तारो न प्राप्नुवन्ति । चोदकेनापि न, प्रसङ्गेनात्र प्राप्नुवन्ति ।

**शा**—सारस्वते सत्रे श्रूयते 'प्लाक्षं प्रस्रवणं प्राप्य अग्नये कामायाष्टाकपालं निर्वपन्ति, तस्यामश्वां च पुरुषीं च धेनुके दद्युः' इति ( सारस्वतं सत्रं सरस्वत्याः नद्यास्तीरे कर्तव्यम् । सा च नदी यस्मात् पर्वतादारभ्य प्रवहति, तत्र प्लक्षमूलोत्पन्नं जलप्रस्रवणमस्ति । तद्देशं प्राप्य तत्र देशे इयमिष्टिः कर्तव्या– **सोम.** । अश्वां पुरुषीं धेनुके दत्त्वा इति तुरग–मनुष्य–गोजातीयानां स्त्रीणां दक्षिणात्वेन दानं श्रुतम्– इति **विस्तरे** उक्तम् । **आश्व. श्रौ. सू.** १२.६ **नारायणवृत्तौ** तु 'अश्वां च पुरुषीं च धेनुके दद्युः' इति स्त्री अश्वा, स्त्री पुरुषी ते धेन्ववस्थे इति प्रथमप्रसूते इति च व्याख्यातम् । धेनुके धेन्ववस्थे धयन्त्यौ इत्यर्थः ।) किमिदं दानमदृष्टार्थम्, उत परिक्रयार्थमिति । तदर्थं चिन्त्यते, किमेतस्यां ऋत्विजः सन्ति, उत यजमानैरेव इयमिष्टिः कर्तव्येति । तत्र द्वादशाहे 'ये यजमानास्ते ऋत्विजः' इति यजमानानामार्त्विज्यं इहातिदेशेन प्राप्यमाणं प्राकृतेष्वेव अङ्गेषु प्राप्यते, नापूर्वाङ्गेषु यूपावटस्तरणबर्हिःष्विव बर्हिर्धर्माः । तेन अपूर्वाङ्गे कामेष्टौ असति यजमानार्त्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यम् । सत्सु च तेषु दानं असत्यपि दक्षिणाशब्दे दृष्टार्थत्वात् परिक्रयार्थमेव । इति प्राप्ते ब्रूमः । प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानां अङ्गत्वात् युक्तं यत् अपूर्वेषु न भवन्ति, यजमानास्तु कर्तारः प्रयोगाङ्गत्वात् विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति । तस्मिंश्च प्रयोगे यत् अपूर्वमप्यङ्गं निपतति, तत्रैव प्रसङ्गसिद्धत्वात् न कर्त्रन्तरमाकाङ्क्षति । तस्मात् अदृष्टार्थमेवैतद्दानम् ।

**सोम**— पूर्वत्र अन्तराचिन्तायां दानं यथा परिक्रयार्थम्, एवमिहापि इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**– कामेष्टौ च दानं परिक्रयः एव पृष्ठशमनीये इव । कुतः ? दानशब्दात् । कर्मकरेषु सत्सु दानशब्दस्य परिक्रयार्थदानप्रतिपादकत्वात् इति ।

**वि**-- 'अश्वां पुरुषीं वाऽऽनत्यै धर्मार्थं वा,–ऽऽनतिर्यतः । इष्टिर्न सत्रं, धर्मार्थं सत्रादङ्गं बहिर्नहि ॥'

**भाट्ट**— सारस्वते सत्रे 'प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं निर्वपन्ति, तस्यां अश्वां पुरुषीं च धेनुके दद्युः' इति श्रुतम् । तत्र न तावदिहोदवसानवत् प्रस्रवणप्राप्तेर्निमित्तता, येन तद्वदेव कामेष्टेः प्रत्येकमेव ऋत्विगन्तरोपादानेन करणमाशङ्क्येत । सरस्वतीविनशनादारभ्य प्लाक्षप्रस्रवणपर्यन्तं सत्रदेशविधानादेव प्राप्तेरर्थप्राप्ताया अनुवादमात्रत्वात् । अतो न तावत् प्रत्येकं करणम् । सत्रवत् संहत्यापि करणे किं ऋत्विगन्तरमुपादेयं न वेति चिन्तायाम्, दानस्यादृष्टार्थत्वकल्पनाभिया ऋत्विगानमनार्थत्वावगतेः ऋत्विगन्तरोपादानम् । न चास्य सत्रत्वेनातिदेशिकस्य ऋत्विक्षु यजमानाभेदस्य प्राप्तेर्न ऋत्विगन्तरोपादानमिति **वाच्यम् ।** अस्य सत्राङ्गत्वेन सत्रत्वाभावात् । अत्र हि सारस्वते सत्रे पौर्णमास्युत्तरप्रतिपदि गोसञ्ज्ञक एकाहः, अमावास्योत्तरप्रतिपदि च आयुःसंज्ञकः, अन्तरा शुक्लपक्षे दर्शः, कृष्णपक्षे पौर्णमासः, इत्येवंक्रमेण क्लृप्तिः । तत्र च सोमयागस्यैव प्राधान्यम् । अस्तु वा **तन्त्ररत्नोक्त्या** कौण्डपायिनामयनवत् दर्शपूर्णमासयोरपि । कामेष्टेस्त्वङ्गत्वमविवादमेव । न च तथापि प्रकृतौ द्वादशाहे आर्त्विज्ये एव यजमानविधेस्तस्य चाङ्गमात्रविषयत्वात् कामेष्ट्याद्यङ्गेष्वपि तत्प्राप्त्यविरोध इति **वाच्यम् ।** प्राकृतऋत्विक्कर्तव्यपदार्थेषु यजमानकर्तृकत्वप्राप्तावपि यूपावटस्तरणबर्हिर्न्यायेन ( ३।८।१६ ) अप्राकृतकार्यापन्नाया कामेष्टौ तत्प्राप्त्यनुपपत्तेः । कथंचित्तत्प्राप्तावपि वा कामेष्ट्यतिदेशेनैष्टिकेन ऋत्विगन्तरस्य विशेषविहितस्य प्राप्तेस्तेन तस्य बाधाच्च । यद्यपि हि अतिदिश्यमानपदार्थविषये द्वयोरप्यतिदेशयोः सामान्यविषयत्वम्, तथाऽपि ऐष्टिकातिदेशे कामेष्टेरेवोद्देश्यत्वात् तस्यैव विशेषविषयत्वम् । एवं सत्यपि यदि 'ये यजमानास्ते ऋत्विजः' इत्यस्य सारस्वतसत्रे उपदेशो भवेत्, तदा सौमिकवेद्या दीक्षादिषु ऐष्टिकवेदिबाधस्येव अवभृथाङ्गेषु अद्भिराहवनीयबाधस्येव औपदेशिकयजमानाभेदेनैष्टिकऋत्विगन्तरबाधो भवेत् । न त्वेतदस्ति, तस्य द्वादशाहे पठितत्वेनेह सत्रातिदेशेनैव प्राप्तेः । न च तथापि तस्य प्रधानीयत्वात् ऐष्टिककामेष्ट्यतिदेशसंकोचकत्वम्, तस्य स्वरूपेण प्रधानीयत्वेऽपि यजमानाभेदस्यार्त्विज्यपृष्ठभावेन प्राप्तस्याङ्गमात्रविषयत्वेन प्रधानीयत्वाभावात् । अतः कामेष्टौ ऋत्विगन्तरस्याबाधः, इति प्राप्ते, प्राकृतलवनादिपदार्थानां आसादनार्थबर्हिःपृष्ठभावेनैव प्राप्तेर्यूपावटास्तरणबर्हिषि न प्रापकप्रमाणम्, न वा तस्य व्यक्त्यन्तरवर्तिनः अन्यत्र प्रसङ्गेनोपकारकत्वम् । प्रकृते तु यजमानाभेदस्य द्वादशाहिकऋत्विक्कर्तव्यपदार्थमात्रोद्देशेन विधानात्, कामेष्ट्यङ्गभूतऋत्विक्कर्तव्यपदार्थेषु प्रापकप्रमाणाभावेऽपि कामेष्टेः सत्रमहाप्रयोगमध्यवर्तित्वात्, सत्रादौ यजमानैः कृतस्य ऋत्विक्त्वाध्यवसायस्य आसत्रसमाप्तेः, कामेष्ट्युत्तरकर्तव्यसत्रपदार्थसिद्ध्यर्थमावश्यकत्वात् तेनैव कामेष्टावुपकारसिद्धेर्न पृथक्स्वसिद्ध्यर्थं वरणभरणाक्षेपः । प्रकृतौ हि न ऋत्विक्षु यजमानभेदः साक्षाद्विहितः, अपि तु ऋत्विक्त्वाध्यवसायसिद्ध्यर्थं वरणभरणाम्नानात्तु आर्थिकः । अतश्च तदध्यवसायस्य सत्रार्थमपि स्वत एव सिद्धौ पशुपुरोडाशचोदकेन प्रयाजादेरिव कामेष्ट्यतिदेशेनापि न वरणभरणादेस्तदर्थमतिदेशः । अत एव यत्र सौमिकवेद्युत्तरमपूर्वो दर्शविकारः श्रुतः, तत्र सौमिकवेद्यैव प्रसङ्गसिद्धेर्नैष्टिकवेदिरपि । नहि तत्र सौमिकवेदिरङ्गम्, तस्याः प्राकृताङ्गप्रधानमात्रार्थत्वेन विहितायाः अपूर्वाङ्गे उपदेशातिदेशाभ्यामप्राप्तेः । अतस्तत्र प्रसङ्गसिद्धिरेव । कामेष्टेस्तु देशान्तरीयत्वात् प्रसङ्गसिद्ध्यनुपपत्तेरैष्टिकी वेदिरिति विशेषः । ऋत्विक्षु तु प्रसङ्गसिद्धेर्न ऋत्विगन्तरमिति सिद्धम् । न चैवं ऋत्विगन्तरबाधस्य प्रसङ्गसिद्धतया दाशमिकबाधलक्षणानाक्रान्ततया अध्यायासंगतिः, अश्वादिदानस्य प्राकृतान्वाहार्यादिदक्षिणाबाधकत्वस्यापवादात् संगत्युपपत्तेः ।

यत्तु 'यत्किञ्चित्प्राचीनम्' इत्यादौ भागधर्मत्वपक्षे तद्भागारम्भके वैकृतेऽपूर्वे पदार्थे उपांशुत्वमिव यजमानाभेदस्यापि ऋत्विक्कर्तव्यप्रयोगधर्मत्वात् तत्प्रयोगारम्भके वैकृतकामेष्ट्यादिपदार्थेऽपि प्राप्त्युपपत्तिरिति सिद्धान्तोपपादनम्, तत् भागधर्मत्वपक्षेऽपि यत्र स्वातिदेशेन तद्विरुद्धधर्मप्राप्तिः, यथा दीक्षणीयाङ्गादौ तद्व्यतिरिक्तापूर्वपदार्थेष्वेव तद्धर्मप्राप्तेः, कामेष्टौ च स्वातिदेशेन ऋत्विगन्तरस्यैव प्राप्ततयोपेक्षितम् ।

**मण्डन**— 'धेनुका दक्षिणा नेष्टौ ।'

**शंकर**— 'ऋत्विजो नैव कामेष्टौ ।'

* **सारस्वती** मेषी अतिरात्रे क्रतुपशुः सवनीयः । भा. ३।६।७।१८. * सारस्वती मेषी ऐकादशिनेषु द्वितीयः पशुः, अश्वमेधे ज्योतिष्टोमे च । वि. ८।१।७. * **सारस्वतीमनूच्य** वाग् यन्तव्या । जपोऽयम् । **भा.** १२।४।१।१. * **सारस्वत्यां** मेष्यां अध्रिगुप्रैषस्य बाधः । कृत्वाचिन्ता । ९।१।१७।४५–४९. **मीको.** पृ. ३१७० 'मेष्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सारस्वतभिन्नसत्रेषु** अधिकारः आहिताग्नीनामिष्टप्रथमयज्ञानाम् । ६।६।५।२७–३२, ३५. **मीको.** पृ. ३०८ 'अधिकारः सारस्वतभिन्नसत्रेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सारस्वतसत्रम् ।** सरस्वत्यास्तीरे यानि क्रियन्ते तानि सारस्वतसत्राणि । 'त्रीणि सारस्वतानि, मित्रावरुणयोः प्रथमं, इन्द्राग्न्योर्द्वितीयं, अर्यम्णस्तृतीयम्' । **सत्याश्रौ.** १८।४।२१–२२.

* **सारस्वतसत्रविशेषः** मित्रावरुणयोरयनम् । सु. पृ. ९९९.

* **सारूप्यं** गौण्याः वृत्तेरेको हेतुः । 'यजमानो यूपः' इत्यत्र सारूप्यमूर्ध्वत्वम् । 'आदित्यो यूपः' इत्यत्र तेजस्वित्वम् । **शा.** १।४।१३.

**सारूप्यम् । १।४।१२।२३-३ ॥**

'यजमानो यूपः', 'आदित्यो यूपः' अत्र यजमानेन आदित्येन च यूपस्य स्तुतिः कृता । आदित्ययजमानशब्दौ च यूपे तेजस्वित्वोर्ध्वत्वगुणेन प्रवृत्तौ । ततश्च सारूप्यं अत्र गौण्या वृत्तेर्निमित्तम् । तस्मान्न गुणविधिः किंतु अर्थवादः । के.

* 'न च सारूप्यमेवैकमतिदेशस्य कारणम् ।' वा. ३।६।१६।४३ पृ. १०६८. * सारूप्येण अशाब्देन उपस्थापने शाब्दत्वान्यवहारः । सु. पृ. १२०२. * 'सारूप्यात्' इति जैमिनिसूत्रे ( १।४।१२। २३-३ ) 'आदित्यो यूपः' इत्यादिकं सादृश्यात् इत्युक्तम् । अद्वैत. २।२९( ३० ) । १०.

**सारूप्याधिकरणम् ।** 'यजमानो यूपः' इत्यादौ यजमानशब्दः सारूप्येण निमित्तेन गौणः यूपस्तुत्यर्थः ॥

**सारूप्यम् । १।४।१२।२३-३ ॥**

**भाष्यम्**— 'यजमानो यूपः', 'आदित्यो यूपः' इत्यादि श्रूयते । तत्र गुणविधिः, अर्थवादः, इति संदेहः । अर्थवत्त्वात् गुणविधिः । अशक्यत्वात् यूपकार्यसाधने यजमानस्य यजमानकार्यसाधने वा यूपस्य, विध्यन्तरभावाच्च न विधिः । विधिस्तुत्यर्थं संवादः । गुणवादात् सामानाधिकरण्यम् । को गुणः ? सारूप्यम् । किं सारूप्यम् ? ऊर्ध्वता, तेजस्विता च । तस्मादेवंजातीयका अर्थवादाः ।

**वा**-- 'सारूप्यम्' । ननु सर्वत्रैव सारूप्यनिमित्तं गौणत्वम् । सत्यमेवम् । इह तु चक्षुर्ग्राह्यशब्दविवक्षया पृथगुपादानम् । चाक्षुषं हि यूपस्योर्ध्वत्वम्, अञ्जननिमित्तं च तेजस्वित्वम् । तद्द्वारेण यजमानादित्यशब्दाभ्यां स्तूयते । यजमानस्य हि पशुधारणे विनियुक्तस्य निखातस्य च स्वपदार्थकरणविरोधः । सहस्ररश्मेस्तु अशक्यमेव यूपकार्यमाधातुम् । यदि च कश्चिन्नास्तिक्यात् दारुप्रतिकृतिमुपादद्यात् तस्यापि गौणतापत्तिर्विधिविषया स्यात् तद्वरं स्तुतावेव तदाश्रयणमित्यविधित्वं स्यात् ।

**सोम**— ननु यजमानस्य यूपकार्ये नियोजनादौ विधिसंभवेऽपि आदित्यस्य तत्र विधानासंभवात् तद्वाक्ये ('आदित्यो यूपः' इत्यत्र) कथं गुणविधिपक्षसंभवः ? न च 'असावादित्यो यतोऽजायत, ततो बिल्व उदतिष्ठात्' इत्येकदेशजननिमित्तेन आदित्यशब्देन बिल्व एव गौण्या प्रतिपाद्यते । स एव खलेवालीवत् यूपकार्ये विधीयते इति युक्तम् । तथा सति विधेयसमर्पकादित्यशब्दस्य लक्षणाप्रसङ्गात्, तदपेक्षया अर्थवादत्वस्यैव ज्यायस्त्वात् । एतेन आदित्यशब्दप्रकृतेः अदितिशब्दस्य भूवाचकत्वमङ्गीकृत्य मृन्मयो यूपः कार्यः इति, आदित्यशब्दस्य अर्कवृक्षवाचकत्वमङ्गीकृत्य अर्कवृक्षमयो यूपः कार्यः इति, निम्बवृक्षस्य आदित्यनिवासत्वात् तत्परत्वमाश्रित्य निम्बवृक्षमयो यूपः कार्यं इति, यूपे आदित्यप्रतिबिम्बं संपाद्य तत्र नियोजनं कार्यं इति, आदित्यप्रतिकृतौ वा नियोजनं कार्यं इति, 'इवे प्रतिकृतौ' ( पा० ५।३।९६ ) इति विहितकन्प्रत्ययस्य 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥' इति स्मरणात् यूपे लिखितमादित्यं आदित्याकारध्वजं वा संपाद्य नियोजनं कार्यं इति गुणविध्युपपादनप्रकारा निरस्ताः । तेषां प्रसिद्धादित्यशब्दार्थत्यागतद्धितान्तरकल्पनादुष्टत्वात् इति चेत्, आदित्यसाधनककर्माङ्गोपस्थानादौ यूपस्य, 'अन्तरा यूपं चाहवनीयं च दक्षिणाऽतिहृत्य' इत्यादिकतिपययूपकार्ये आदित्यस्य वा विधिसंभवात् । ( इति पूर्वपक्षः ) ।

चक्षुर्ग्राह्यसादृश्यस्य उद्भूतत्वात् तन्निमित्तकं शब्दप्रवृत्तेः झटिति प्रतीयते इत्याशयेन, सूत्रे प्रथमान्तस्यापि सारूप्यशब्दस्य उद्भूतशक्तिस्फोरणार्थं 'सारूप्यात्' इति पञ्चम्या ( शा-दीपिकाकारेण ) उपादानं कृतमिति ध्येयम् । न्यायसुधाकृतस्तु- 'आदित्यो यूपः' इत्यादौ सारूप्यं प्रत्यक्षत्वात् शाब्दबुद्धिविषयः । 'यजमानः प्रस्तरः' इत्यादौ तु सत्तया सारूप्यमुपयुज्यते । शाब्दबुद्धिस्तु सारूप्यप्रयोजकतत्कार्यकरत्वादेः इति विशेषः इत्याहुः । तन्न । इह सारूप्यस्य प्रत्यक्षसिद्धत्वं हि तत्प्रयोजकतेजस्वित्वोर्ध्वत्वादेः प्रत्यक्षत्वात् वाच्यम् । तथा चेहापि सारूप्यप्रयोजकतेजस्वित्वादेः प्रथमोपस्थितत्वावश्यंभावेन शाब्दज्ञानविषयत्वसंभवात् । तस्मात् सत्तया सारूप्यस्य 'यजमानः प्रस्तरः' इत्यादौ नियामकत्वे इहापि तथा स्यात्, इह सारूप्यस्य शाब्दज्ञानविषयत्वस्वीकारे 'यजमानः प्रस्तरः' इत्यादावपि तथा स्यात्, इति यत्किंचिदेतत् ।

**सुधाग्रन्थस्तु**— 'लिङ्गसमवायाः इति द्वंद्वसमासे प्रथमाबहुवचनदर्शनात् तत्सिद्धिश्च जातिश्च सारूप्यं च प्रशंसा च भूमा च लिङ्गसमवायश्च इति प्रथमयैव सर्वत्र विगृहीतव्येऽपि प्रस्तरादेर्यजमानादिसारूप्यं तत्कार्यकरत्वादिधर्मसामान्यात् संभवदपि शब्दस्य तत्कार्यकरत्वादिमात्रे पर्यवसानेन शाब्दबुद्धिविषयत्वाभावात्, अविषयस्य च प्रतिपादनात्मकशब्दप्रवृत्तिनिमित्तत्वायोगात् न शब्दप्रवृत्तिनिमित्तम् । यूपस्य तु आदित्ययजमानसारूप्यं शब्दप्रतीतिविषयत्वात् शब्दप्रवृत्तिनिमित्तं इति वैषम्यं दर्शयितुं पञ्चमी अध्याहृता ।' इति । 'सारूप्यं विना गौणत्वाभावात् तस्य गौणत्वनिमित्तत्वेऽपि बोधकत्वातिरिक्तायाः शब्दस्य वृत्तेरभावात्, निर्विषयायाश्च बुद्धेरसंभवात् शाब्दबुद्धिविषयस्यैव शब्दप्रवृत्तिनिमित्तत्वं वाच्यम् । न च शब्दतात्पर्यावधारणं विना शाब्दबुद्धिविषयत्वं युक्तम् । तत्कार्यकरत्वादिनिमित्ते च सारूप्ये तन्मात्रपर्यवसितस्य शब्दस्य तात्पर्यावधारणमशक्यम् । इह तु प्रत्यक्षत्वेन शब्दप्रवृत्तिनिमित्तत्वं युक्तम् ।' इति । 'चक्षुर्ग्राह्ये सादृश्ये तात्पर्याख्यविवक्षाऽवधारणसंभवात् शाब्दबुद्धिविषयत्वरूपशब्दप्रवृत्तिनिमित्तत्वविशेषाभिधानार्थं तत्कार्यकरत्वादिहेतुकेभ्यः सद्भावमात्रेण गौणत्वनिमित्तेभ्यः सादृश्येभ्यः अस्य (सारूप्यस्य) पृथक् असाधारण्येन इहोपादानम् ( पञ्चम्यन्तत्वेन ) ।' इति च ।

**वि**-- 'आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः । द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्ति तत् ॥' एवं 'यजमानो यूपः' इत्यत्र चक्षुर्गम्यस्य ऊर्ध्वत्वस्य समानत्वात् यजमानशब्देन यूपः स्तूयते ।

**भाट्ट**— 'आदित्यो यूपः' इत्यादौ तु सारूप्यं गौणीनिमित्तम् । न च सर्वत्र तदेव निमित्तम्, कोऽत्र विशेषः ? चक्षुर्ग्राह्यं तेजस्वित्वादि अत्र निमित्तमिति प्राञ्चः । वस्तुतस्तु-- अन्यत्र शक्यनिष्ठगुणस्यैव स्वसमानजातीयगुणवत्तासंसर्गेण प्रकारत्वान्निमित्तता, न तु सारूप्यस्य, तस्य संसर्गत्वात् । इह तु शक्यनिष्ठगुणसजातीयगुणवत्त्वरूपस्य सारूप्यस्यैव समवायादिसंसर्गेण प्रकारत्वात् तदेव निमित्तमिति विशेषः ।

**मण्डन**-- 'यूपे सूर्य इति स्तुतिः ।' १४.

**शंकर**-- 'सारूप्याच्च क्वचिन्मता ।' गौणी मता । १५.

* सारूप्याधिकरणम् । १।४।१५।२३ ॥ अर्थवादानां अवयवार्थपरत्वाभावे सारूप्याधिकरणविरोधः तत्र यजमानशब्दस्य ऊर्ध्वत्वगुणयोगात् गौण्या वृत्त्या यूपे वृत्तेर्व्यवस्थापनात् । कु. १।२।१।१८ पृ. ३०-३१.

**सार्वकाम्यमङ्गकामैः प्रकरणात् । ४।३। १०।२५ ॥**

'एकस्मै वा अन्या इष्टयः कामायाऽऽह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ' इति 'एकस्मै वा अन्ये क्रतवः कामायाऽऽह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः' इति च । अत्र च यत् दर्शपूर्णमासादेः सार्वकाम्यं सर्वफलकत्वं उक्तं तत् अङ्गकामैः अङ्गफलैः सह । अङ्गकामैः अङ्गाङ्गकामैश्च सह सार्वकाम्यं अनूद्यते । प्रकरणात् दर्शपूर्णमासादिशब्दप्रकरणात् । अङ्गकामानां प्रकरणे विधानात् उक्तवाक्ये सर्वेषां फलानामनुवादः, न विधिः इति पूर्वः पक्षः ।

**फलोपदेशो वा प्रधानशब्दसंयोगात् । २६ ॥**

'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इति यत् दर्शपूर्णमासादेः सार्वकाम्यमुक्तं सोऽनुवादः, न विधिः इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षं व्यावर्तयति । नायं अनुवादः सार्वकाम्यस्य, किंतु फलोपदेशोऽयं फलविधिः । कुतः ? प्रधानशब्दसंयोगात् । दर्शपूर्णमासौ ज्योतिष्टोमः इति च प्रधानवाचकशब्देन सर्वफलानां संयोगो विहितः । तस्मान्नानुवादः । प्रतिफलार्थं तु पृथक् प्रयोग इति वक्ष्यते उत्तराधिकरणे । के.

* सार्वकाम्यं दर्शपूर्णमासयोः ज्योतिष्टोमस्य च फलविधिरेव, न अङ्गकामैः अङ्गाङ्गकामैश्च सहानुवादः । भा. ४।३।१०।२५-२६, एतच्च सार्वकाम्यं पर्यायेण न युगपत् । ४।३।११।२७-२८.

**सार्वजनीनस्तुल्याऽऽयव्ययः** । साहस्री. ८८.

* **सार्वभौमः** महाभूमिं गोपथ-राजमार्ग-जलाशयादिसहितां दातुं न शक्नोति, स्वत्वाभावात् । खण्डभूमिं तु स्वकीयां दद्यात् । वि. ६।७।२.

* **सार्ष्टिता** समानदेहभोगवत्त्वम् । ' ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ' । शरीरनिमित्तको भोगः मूर्तिभावः । तत्र विद्यमानात् ऋच्छेः क्तिन् । ' समानस्य च्छन्दसि० ' ( पा० ६।३।८४ ) इति सभावः । तस्य छान्दसं उपसर्गत्वम् । ' उपसर्गादृति धातौ ' ( पा० ६।१।९१ ) इति वृद्धिः । समाना ऋष्टिः दिव्यशरीरायत्तस्रक्चन्दनवनितादिभोगः येषां ते सार्ष्टयः । तेषां भावः सार्ष्टिता । ' न देवानां देवतान्तराभावात् ' ६।१।२।६ सूत्रे **कुतूहलम्** ।

* **सावकाशं** निरवकाशेन । अङ्गं प्रधानेन । अङ्गधर्मः प्रधानधर्मेण । उपादेयं अनुपादेयेन । ( बाध्यते इति शेषः ) । बाल. पृ. १३२. * सावकाशं निरवकाशेन बाध्यते । प्राप्तबाधोऽत्र । वा. ३।३।७।१४ पृ. ८६०. * सावकाशं निरवकाशेन बाध्यते, यथा- ' यत् किंचित् प्राचीनं० ' इति वीप्सार्थकयत्किंचिच्छब्देन अग्नीषोमीयप्रागभाविपदार्थविशेषोद्देशेन विहितं दीक्षणीयातः अन्यत्रापि सावकाशं उपांशुत्वं दीक्षणीयादिमात्रार्थेन स्वरेण अन्यत्र निरवकाशेन बाध्यते । बाल. पृ. १३२.

* **सावकाशनिरवकाशयोर्निरवकाशं** बलीयः । वि. ३।६।३.

**सावकाशनिरवकाशयोर्निरवकाशो बलीयानिति न्यायः** । संभवद्विषयान्तरः सावकाशः, अतथाभूतो निरवकाशः । तेन निरवकाशेन सावकाशो विधिर्बाध्यते । यथा- ' मा हिंस्यात्सर्वभूतानि ' इति निषेधवाक्यं निरवकाशेन ' श्वेतमालभेत ' इति वाक्येन बाध्यते, हिंसाया वैधेतरविषयकत्वसंभवेन तत्र तस्य सावकाशत्वात् । परवाऽऽलम्भनस्य विषयान्तराभावान्न तस्य संकोचः । एवमन्यत्र लोकेऽपि चेति । साहस्री. ६४.

* **सावकाशनिरवकाशन्यायः** । पशुकामातिरिक्तविषये चमसः सावकाशः, गोदोहनं निरवकाशं इति ' सावकाश० ' न्यायेन गोदोहनं बलवत् । **रसायनम्** पृ. १७७.

* **सावनः संवत्सरः** गणितदिवसकः ( ३६० ) । भा. ६।७।१३।३८.

* **सावनसंवत्सरस्य** अतुलसंख्याकाः ( ३६० ) दिवसाः । **संकर्ष.** ३।१।१८.

* **सावित्राणि** जुहोति अन्तर्वेदि तिष्ठन् अग्निचयने । भा. ८।४।५।२०.

* **सावित्रहोमः**, तत उखासंभरणम्, ततो दीक्षणीयादिकं इति यथापाठमेवानुष्ठेयम्, प्रत्यक्षपाठक्रमस्य चोदकात् प्राबल्यात् । वि. ५।२।११, * **सावित्रहोमाः** अग्निचयने, ' सावित्राणि जुहोति ' इति । ५।२।११.

**सावित्रहोमन्यायः** । अग्निचयने सावित्रहोमाः दीक्षणीयायाः प्राक् कर्तव्याः ॥

**प्राकृताच्च पुरस्तायत् ।५।२।११।२२॥**

**भाष्यम्**— अस्त्यग्निः ' य एवं विद्वानग्निं चिनुते ' इति । तत्र दीक्षणीयायाः पूर्वं सावित्रहोमाः, उखासंभरणम्, इष्टकाः, पशुश्च इत्येतदाम्नातम् । किं तदेव पूर्वं कर्तव्यं उत दीक्षणीया इति । किं प्राप्तम् ? वैकृतानामन्ते प्रयोगः, ' अन्ते तु बादरायणः ' इति । एवं प्राप्ते, ब्रूमः । पूर्वं सावित्रहोमाः, इष्टकाः, पशुः, उखासंभरणं च । कुतः ? प्रत्यक्षपाठात् । पुनस्तत्र दीक्षणीया आम्नाता । तस्याश्च पुरस्तात् सावित्रहोमाः, इष्टकाः, पशुः, उखासंभरणं च । तस्मात् तेषां पूर्वं प्रयोगः इति ।

**टुप्**-- सावित्रहोमाः उखासंभरणं इत्यादि विधाय अनन्तरं दीक्षणीयागुणवाक्यानि श्रूयमाणानि तत्स्थानमेव गुणिनमवबोधयन्ति । अतोऽस्य पाठस्य प्रत्यक्षत्वात् प्रथमं सावित्रहोमास्ततो दीक्षणीया ।

**शा**-- दीक्षणीयादीन् कृत्वा सावित्रादयः, विपरीतं वेति संदेह । तत्र ' **प्रकृतेः पूर्वविज्ञानात् प्राकृतानां पुरःक्रिया । पश्चात्तु वैकृतानां स्याद् बादरायणदर्शनात् ॥** ' उच्यते- ' **गुणार्थं श्रूयमाणानामपि**



प्रत्यक्षपाठतः । पश्चादवगतेस्तेषां युक्ता पश्चादनुष्ठितिः ॥ '

**सोम**— इह प्रत्यक्षोऽपि पाठो न नियामकः इति प्रत्यवस्थानात् **संगतिः** ।

**वि**— ' चयने दीक्षणीयादिसावित्राद्यथवा पुरा । , प्राकृतत्वादिहाऽऽद्यः स्या, दन्त्यः प्रत्यक्षपाठतः ॥ '

**भाट्ट**— दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता । चयनं च अनारभ्याधीतं वैकल्पिकं सोमयागाङ्गम्, तत्प्रकरणे च सावित्रहोम-उखासंभरणादयः चयनाङ्गभूता धर्माः श्रुताः । पश्चाच्च सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचित् गुणाः श्रुताः । तदत्र दीक्षणीयायाः सामान्यतः सोमप्रकरणाम्नातदीक्षणीयापूर्वपदार्थैः सह पाठेन बद्धक्रमत्वावगमात् चयनप्रकरणे दीक्षणीयायाः गुणमात्रश्रवणेन पाठाभावाच्च सावित्रादीनामागन्तुकानां दीक्षणीयादिनकृत्यान्ते निवेशः । इति प्राप्ते, गुणेनापि गुणिन उपस्थितेः, तद्वाक्ये गुणिन उद्देश्यतया संकीर्तनाच्च गुणगुणिनोः एकस्थानत्वावगतेः, प्रत्यक्षेण विशेषरूपेण च पाठेन सामान्यरूपस्य पाठस्य बाधात् पूर्वं सावित्रादयः पश्चाद्दीक्षणीया इति सिद्धम् ।

**मण्डन**— ' पश्चादुखासंभरणाच्च दीक्षा । '

**शंकर**-- ' दीक्षा सावित्रतः परा । '

* ' **सास्नाद्येकार्थसंबन्धिगोत्वमात्रस्य** वाचकः । गोशब्द इति विज्ञातमन्वयव्यतिरेकिणम् ॥ ' इत्यनेन **न्यायेन** अन्वयव्यतिरेकबलेनैव आकृत्यभिधानस्य अविचारितसिद्धत्वम् । **सु.** पृ. ३८९.

* ' **साहस्रं** प्रथमं चिन्वानश्चिन्वीत ' इत्यादि अग्नौ नैमित्तिकमेव न नित्यम् । वृ. ४।३।२।४. * **साहस्राः** नाम बहवो यागाः । तत्र प्रथमसाहस्रधर्मा द्वितीयादिसाहस्रेषु अतिदिश्यन्ते । वि. ८।१।१२ । ' चत्वारः साहस्राः ' । **सत्याश्रौ.** १७।१।२२. * **साहस्रस्य** प्रथमस्य विध्यन्तः उत्तरेषु साहस्रेषु । भा. ८।१।१२।१९, * **साहस्रे** सहस्रं दक्षिणा । ८।१।१२।१९.

* **साहस्रसाद्यस्कादिप्रथमनिकायिधर्माणां** द्वितीयादिनिकायिषु अतिदेशः । भा. ८।१।१२।१९.



* **साह्नः** । एकेनाह्ना निष्पाद्यो ( सुत्या ) यागः, यथा ज्योतिष्टोमः । वि. ३।३।१३.

* **साह्नता** । ज्योतिष्टोमे हि साह्नता, अह्ना समाप्यमानत्वात् । वा. ३।३।८।१५-१६.

* **साह्नशब्देन** अह्ना समाप्यमानत्वात् ' सहैवाह्ना संस्थापयन्ति ' इत्येवं ज्योतिष्टोमो गृह्यते इति त्र्युपसत्त्वं तस्य । वा. ३।३।८।१५.

* **सिंहः** । अप्रसह्यकारी अपि हि कदाचिद्रोगेणोपहतः सिंह्याः पुत्रः सिंह एव । भा. १।४।१२।२३-१. * ' सिंहो देवदत्तः, अग्निर्माणवकः ' गुणादेष वादः । स्वार्थाभिधानेन ( सिंहादिशब्दः ) गुणं ब्रूयात् । भा. १।४।१२।२३-१ । सिंहत्वावगतव्यक्त्युपस्थापितप्रसह्यकारित्वाद्यनेकधर्मप्रत्ययात् देवदत्तप्रत्ययः इति पूर्वैव शक्तिः निमित्तम् । अन्येषां तु दर्शनं- सर्व एव हि सिंहादिशब्दाः जातिगुणक्रियासमुदायवाचिनः समस्तार्थासंभवे देवदत्तादिषु कतिपयगुणक्रियायोगात् उपचर्यन्ते इति । तन्न । आकृतिवाचिन एव शब्दाः । वा. १।४।१२।२३-१ पृ. ३५६. * ' सिंहो देवदत्तः ' इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते । वि. १।४।१३. * ' सिंहो देवदत्तः ' इति पुरुषस्य तद्भावेन प्रशंसा । भा. ८।२।१।६, * ' सिंहो देवदत्तः ' इति भवति हि गुणादप्यभिधानम् । ३।२।२।४. * ' सिंहो देवदत्तः ' इति सिंहशब्दो देवदत्तवचनः प्रमाणान्तरेण, न तु ' सिंहमालभेत ' इति यत्र, तत्र तु तत् प्रमाणान्तरं नास्ति । भा. २।२।९।२२ पृ. ५३१ । 'सिंहशब्दः कचिद्गौणो माणवादौ निरुक्तितः । नालम्भे श्रूयमाणोऽपि तदर्थः परिगृह्यते ॥ ' वा. * ' सिंहो देवदत्तः ' इति सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते ( ज्ञायते ) । **टुप्**. ६।१।६।२३ पृ. १३७४. * सिंहः । न च सर्वे गुणसमुदायवचनाः । स्वार्थाभिधानेन अर्थसंबन्धात् प्रत्ययव्यवस्था । सिंहार्थः प्रतीतः प्रसह्यकारीति संबन्धात् इतरमर्थं प्रत्याययति । एवं स्वार्थाभिधानेन तद्रूपसंबन्धः प्रतीयते । भा. १।४।१२।२३-१.

**सिंहावलोकनन्यायः** । यथा सिंहः कञ्चिन्मृगं हत्वा अग्रे गच्छन्नन्योऽपि चेत्स्यात्तमपि हन्यामिति धिया पश्चात्पश्यति हन्ति च दृष्टिपथमागतम्, तथा बुद्धि-पथागतस्वपक्षपरिपन्थिपरिकल्पितयुक्त्याभासान्तरनिरासायाप्युत्तरग्रन्थप्रवृत्तिरित्यर्थः । **साहस्री**. १२.

* **सिंहावलोकितवत्** क्वचिदनुवृत्तिः । ( सिंहो यथा व्याघभीत्या पलायमानः मध्ये शिरो विपरिवर्त्य पश्चादवलोकते व्याघ आयाति न वेति तद्वत् । ) । **मणि**. पृ. ७१.

* **सिंहादिशब्दानां** माणवकादौ शक्त्यभावः । **वा**. ३।४।४।१३ पृ. ९१३.

**सिंहमृगन्यायः** । शाश्वतिके विरोधेऽयम् । **साहस्री**. ४००. * सिंहमृगन्यायः । घात्यघातकभावोऽत्र । **के**.

**सिंहमेषन्यायः** । यथा सिंहशावकोऽपि कथंचित् ग्रामीणवशं प्राप्तो मेषैः सह चरन् युवाऽपि सन् विविधरूपकृतलम्बकर्णत्वालम्बकर्णत्वशृङ्गित्वाशृङ्गित्वादिकृतं विशेषं पश्यन् आत्मानमपि मेषविशेषं मेने, दूर्वादिकं च बुभुजे, तथा प्रकृतेऽपि । **साहस्री**. ३५८. * सिंहमेषन्यायः । स्वस्य सिंहत्वमज्ञात्वा मेषत्वं मेने तथा जीवः संसारित्वं मन्यते । **न्यासं**.

**सिंहीक्षीरन्यायः** । यथा सुवर्णपात्रे एव सिंहीक्षीरं तिष्ठति फलाय च भवति, तथा सद्गुरूपदेशो हि शमादिसाधनसंपन्ने सच्छिष्ये एव प्रतिष्ठां लभते । **साहस्री**. २१९.

**सिकतासु इष्टकाधर्माः अग्निचयने न कर्तव्याः ॥**

सिकतानामपि स्थलनिर्वर्तकत्वाविशेषात् इष्टकाशब्द-प्रयोगाच्च संख्यान्तर्गत्यवश्यम्भावेन 'तया देवतया' इति मन्त्रेणैव उपधानं भवेत् । इति प्राप्ते, तासां 'अपरिमिताभिः सिकताभिः पूरयति' इति अपरिमितविशेषणेन सहस्रसंख्याबहिर्भावात् चतुर्धाकरणे दक्षिणाशब्दस्येव तासु इष्टकाशब्दप्रयोगस्य स्तुत्यर्थत्वात् न मन्त्रः । **संकर्ष**. २।१।९.

* **सिद्धाः** । ननु चान्ये सिद्धाः केचित् ( स्वर्गं ) दृष्टवन्तः, ते चाऽऽख्यातवन्त इति चेत् । न तत्र प्रमाणमस्ति, सिद्धा एवंजातीयकाः सन्ति, ते च दृष्ट्वा आचक्षीरन्निति । **भा**. ६।१।१।१ पृ. १३४८.

**सिद्धमवयुत्यानुवाद इति न्यायः** । समुदायादेकं पृथक्कृत्य अनुवादः अवयुत्यानुवादः । **साहस्री**. ७९१.

* **सिद्धे सति आरम्भो नियमाय** । यो यदा यत् सपिण्डीकरोति स तत्पित्रादिभिस्त्रिभिरेव करोति इति चतुर्थे विरामः सिद्ध एवेति 'चतुर्थे पुरुषे छेदं' इति वचनारम्भः 'सिद्धे सति आरम्भो नियमाय' इति न्यायेन , सापिण्ड्यव्यवच्छेदार्थः । **दत्तकचन्द्रिका** पृ. २६.

* **सिद्धद्रव्यस्य साधनानाकाङ्क्षत्वेनासाधितं (त्वं) इति न्यायः** । 'तिस्रो यद्वस्य समिधः इत्येतया सोमं करोति' इति सोमग्रहसंनिधौ श्रूयते । इह करोतेरेव भावनार्थकतया तत्र सोमस्य भाव्यतया ऋचः करणत्वेन च अन्वयो भासमानोऽपि न युक्तः, 'सिद्धद्रव्यस्य०' इति न्यायेन यागक्रिययैव तेन स्वभाव्यकभावनान्तरानाक्षेपात् । **संकर्ष**. भाट्टदीपिका ३।३।१३.

* **सिद्धवत्कीर्तनार्थवादकल्प्यो** विधिः यथा— 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च । अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति । अत्र आवप्तव्यं अत एव उद्वप्तव्यं इति कल्पना । **बाल**. पृ. १२.

* **सिद्धवत्कीर्तनकृत्स्वतन्त्रार्थवादकल्प्यो** निषेध-कल्प्यप्रतिषेधो यथा— अग्निहोत्रप्रकरणे 'तस्माद्वत्सं जातं दशरात्रीर्न दुहन्ति' इति दशरात्रं गां न दुह्यात् इति कल्पना । **बाल**. पृ. ३०.

* **'सिद्धसाध्ययोः समभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायः** । स्वर्गो द्रव्यरूपः सिद्धः, यागस्तु श्रवणवेलायामसिद्धः इति 'सिद्धसाध्ययोः...... युज्यते' इतिन्यायात् यागस्य भाव्यत्वमेवोचितम् । ( पूर्वपक्षे ) । **वृ**. ६।१।१।१ । 'तृप्तिकामो भोजनं कुर्यात्' इत्यादौ असिद्धस्यापि भोजनस्य तृप्तिसाधनत्वग्रहणे 'सिद्धसाध्ययोः०' इति न्यायस्य



व्यभिचारः । ६।१।१।२. * येषां हि यागीयद्रव्यदेवतादिसंस्कारार्थत्वं तदङ्गताबोधकप्रमाणाभावेन नेष्यते, तानि कर्माणि स्वतन्त्रात्मनिष्ठादृष्टजनकानि सन्ति द्रव्यादिप्रतिप्रधानभूतानि । द्रव्यादीनि च तत्र '**सिद्धसाध्यसमभिव्याहारे** सिद्धं साध्यायोपयुज्यते ( सिद्धं साध्यार्थ–पाठः ) ' इति **न्यायेन**, तृतीयाश्रुत्यैव वा क्रियां प्रति गुणभूतम् । **कौ**. २।१।४।८.

* **सिद्धस्वभावः** धात्वर्थः 'पाकः , पक्तिः, पचनम्' इत्यादिभिः शब्दैर्व्यवह्रियमाणो लिङ्गसंख्याकारकान्वितः । **वि**. २।१।१ वर्णकं २.

* **सिद्धस्वभावधात्वर्थद्योतनाय** घञादयः प्रत्यया विहिताः । **वि**. २।१।१ वर्णकं २.

* **सिनीवालीकुह्वोः** संनिपाते उत्तरस्मिन् दिने एव पिण्डपितृयज्ञः कार्यः । **संकर्ष**. १।२।१०. **मीको**. पृ. २५६६ 'पिण्डपितृयज्ञः सिनीवालीकुह्वोः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सीधुः** नाम गौडी सुरा । **सु**. पृ. १९४ । तस्याः क्षत्रियवैश्ययोः न प्रतिषेधः ब्राह्मणस्य तु निषेध एव । **वा**. १।३।३।७ पृ. २०९.

* **सुखम्** । अर्थसुखविषयं यत् तत् लोकव्यवहारपूर्वकम् । **वा**. १।३।१।२ पृ. १६७. * **सुखस्य** भाव्यत्वं विधिश्रुत्या सिद्धम् । कर्मयोगादपि सुखस्य भाव्यत्वं 'स्वर्गकामो यजेत' इति । **वि**. ६।१।१.

* **सुखादयस्तु** भ्रूभङ्गनेत्रविलासादिगम्याः । **बृहती**. पृ. १८१.

* **सुखादिगुणितया** शरीरादिभिन्नात्मसिद्धिः । **मणि**. पृ. ५४.

* **सुखफलं** हि कर्तव्यं भवति । **भा**. ४।३।५।१०.

* **सुखवान्** । 'स्वर्गकामो यागं कुर्यात्' इति । स्वर्गकामस्य यागः कर्तव्य इति । कर्तव्यश्च सुखवान् । अकर्तव्यो दुःखवान् । **भा**. ६।१।१।१ पृ. १३४९.

* **सुच्** प्रत्ययः, 'द्वित्रिचतुर्भ्यः सुच्' ( पा० ५।४।१८ ) इति विहितः 'वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति' इत्यादौ विनयोक्त्री श्रुतिः **भट्टसोमेश्वरमते** । **पार्थसारथिमते** तु नेयं श्रुतिः । मन्त्रावृत्त्यनावृत्तिचिन्तार्थैकादशाधिकरणे ( ११।४।१५।४९–५० ) 'क्रियाभ्यावृत्तौ हि सुच् विधीयते न क्रियाभेदे' इति शास्त्रदीपिकाग्रन्थः वाक्यीयक्रियान्वयाशय एव । **बाल**. पृ. ४६,४७.

**सुतजनिमृतिन्यायः** । कश्चित् एकं देवमाराध्य एकं पुत्रं लब्धवान् । पुनश्च अपरं देवं आराध्य द्वितीयं पुत्रं लब्धवान् । परंतु प्रथमदेवकोपात् प्रथमः पुत्रो मृतः इति । **न्यासं**.

**सुतजन्ममृतिन्यायः** । यथा कश्चित् कञ्चिद्देवमाराध्य ततः पुत्रं लब्ध्वा पुत्रान्तरलाभाय देवान्तरमाराध्य ततः तं लब्धवान् । तज्जन्मक्षणे एव पूर्वदेवकोपात् पूर्वजातमरणं जातम् । **साहस्री**. ८७.

* **सुत्या** ज्योतिष्टोमे दीक्षोपक्रमदिनमारभ्य पञ्चमे सप्तमेऽष्टमे वा दिने भवति । **वि**. ६।५।११. * सुत्या पर्वणि कार्या प्रधानत्वात्, दीक्षा तु अपर्वणि अङ्गत्वात् । १२।२।९।२५. **मीको**. पृ. १५९ 'अङ्गगुणविरोधन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * सुत्या संधिदिने एव सोमे । **संकर्ष**. ३।१।६. 'सोमे सुत्या संधिदिने एव' इत्यत्र अधिकरणं द्रष्टव्यम् । * सुत्या– सोमवल्ल्याः दृषदि ग्रावभिः कण्डयित्वा रसनिष्पादनम् । लक्षणया च रसनिष्पादनं हवनं भक्षणं इति सर्वं सुत्या इत्युच्यते । ज्योतिष्टोमादौ एतत् सर्वं यस्मिन् दिने भवति तत् सौत्यं अहः इत्युच्यते । ( **के**. ) * **सुत्याः** द्वादश द्वादशाहे । **भा**. ११।४।५।१५–२२. * सुत्याः द्वादशाहे द्वादश द्वादशसु अहःसु कर्तव्याः । द्वादश दीक्षाश्च, द्वादशोपसदश्चेति षट्त्रिंशदहो द्वादशाहः । **वि**. ११।४।५. * **सुत्यायाः** कालः 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा ( यजेत ) ' इति । **भा**. १२।२।९।२५. * सुत्यायाः पूर्वं दिनं औपवसथ्यं नाम । **वि**. ५।१।६, * **सुत्यायां** सवनत्रये अञ्जनाभ्यञ्जनाख्ये सत्रे क्रमेण गौग्गुल–पैतुदारव–सौगन्धिक–स्नेहैरभ्यङ्गः । १०।४।७. * सुत्यायां सौमिकपदार्थेभ्यः पौरोडाशिकानां प्रोक्षणादीनां पूर्वभावित्वं ज्योतिष्टोमे । **भा**. ५।१।१३।२५–२६.

* सुत्याङ्गमेव स्तोत्रशस्त्रादि कृत्स्नम् । वा. ३।३।२।९ पृ. ८१२.

* सुत्योत्तरकालानि यान्यङ्गानि तेषु सवनग्रहणाभावात् यथावेदमेव स्वरः । वा. ३।३।२।९ पृ. ८१३.

* सुत्याकालं गौग्गुलवेन अभ्यञ्जनं विरूक्षीकरणार्थम् । भा. १०।४।६।१२.

* सुत्याकालत्वं पशुप्रकृतिलिङ्गम् । बाल. पृ. ११९. * सुत्याकालत्वात्, द्वैरशन्यस्य दर्शनाच्च ऐकादशिनेषु सौत्यस्य विध्यन्तः । भा. ८।१।७।१४.

* सुत्याकालसवनीयादीनामपि प्रातःसवनाद्यन्तर्गतत्वात् यथासवनमेव स्वरा भवन्ति ज्योतिष्टोमे । वा. ३।३।२।९ पृ. ८१२.

* सुत्याकालीनानामङ्गानां आवृत्तिः द्वादशाहे । ११।४।६।२६–२९. मीको. पृ. २२०४ 'द्वादशाहे सुत्याकालीनानामङ्गानामावृत्तिः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य अहर्गणे प्रत्यहमावृत्तिः । ११।३।११।२४–३४. मीको. पृ. ७६६ 'अहर्गणे सुत्याकालीनसुब्रह्मण्या०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* सुत्यादिने आश्विनग्रहात् ऊर्ध्वं सवनीयस्थाने साद्यस्के पशुत्रयस्य सहालम्भः । तत्र आदौ स्थानात् सवनीयः ततः अग्नीषोमीयानुबन्ध्यौ प्रकृतिदृष्टपौर्वापर्यात् । वि. ५।१।६, * सुत्यादिने सवनीयः पशुः । ५।१।६.

* सुत्यादीक्षयोः कालैक्ये प्रसक्ते सुत्यैव पर्वणि, दीक्षायास्त्वपकर्षः, प्रधानशेषयोर्मध्ये प्रधानस्य मुख्यत्वात् । वि. १२।२।९. * सुत्यादीक्षयोः पर्वकालकर्तव्ययोर्विरोधे सुत्या पर्वण्येव, दीक्षा तु अपर्वण्यपि । भा. १२।२।९।२५.

* सुत्यापर्वकालत्वेन दीक्षणीयापर्वकालत्वं बाध्यते । ( अङ्गधर्मः प्रधानधर्मेण बाध्यते । )। बाल. पृ. १३२.

**सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् । ११।४।७।३० ॥**

द्वादशाहे सुत्याविवृद्धौ सत्यां उपसत्कालीनायां सुब्रह्मण्यायां सर्वेषामह्नां उपलक्षणं कर्तव्यं त्रयोदशाहे सुत्यामागच्छ मघवन्', द्वादशाहे, एकादशाहे इत्यादि । प्रकृत्यन्वयात् प्रकृतौ ज्योतिष्टोमे 'चतुरहे सुत्यामागच्छ' सुत्याहस्य अन्वयात् विकृतावपि तथात्वात् । आवाहनवत् यथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवम्' इत्यत्र 'अग्निमावह, सोममावह, अग्निमावह' इति अग्नेः कर्मभेदात् भेदेनावाहनं तद्वत् । इति पूर्वः पक्षः ।

**अपिवेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् । ३१ ॥**

अपिवा–शब्देन पूर्वपक्षं निराकुर्वन् सिद्धान्तमाह । सुब्रह्मण्यामन्त्रस्य इन्द्राभिधानत्वात् इन्द्रस्तावकत्वात् सकृत् उपलक्षणं स्यात्, अविकारेणैव मन्त्रस्य प्रयोगः स्यात् । 'चतुरहे' इति कालस्य सुत्यालक्षणार्थत्वात् । सुत्यायामागन्तव्यं इत्येवात्र प्रार्थ्यते । सा सुत्या अद्यारभ्य कियद्भिर्दिनैः इति तु अविवक्षितम् । तस्मात् अविकारः। इति सिद्धान्तः ।

**अविभागाच्च । ३२ ॥**

कृष्णग्रीवयोः सौम्येन व्यवधानात् अग्नेरावाहने भेदः । द्वादशाहे तु सुत्यानां अविभागात् विभागाभावात् व्यवधानाभावात् सुब्रह्मण्या न विकारः । तस्मात् विवृद्धसुत्याहानुपलक्षणं इति सिद्धान्तः । के.

**सुन्दोपसुन्दन्यायः ।** अन्योन्यनाश्यनाशकभावविवक्षायामयं न्यायो हि प्रवर्तते । यथा सुन्दोपसुन्दाख्यौ सहोदरौ दैत्यौ तिलोत्तमाख्यस्त्रवेश्यार्थं परस्परं विरोध्य नष्टाविति भारतादिषु प्रसिद्धम् । तथा ईश्वरकोटिनिविष्टानां ईशत्वबोधकानि सर्वाणि वाक्यानि ह्यन्योन्यं विरोधं प्राप्य प्रकृतन्यायेन बाधितानि स्युः । न हि सर्वेषामन्योन्यभिन्नानां तच्छास्त्रोक्तं सर्वेश्वरत्वाऽद्वयत्वादिकं संभवतीत्यन्यत्र विस्तरः । साहस्री. १३१.



* सुबन्त–एकपदरूपा विनियोक्त्री श्रुतिः उपश्लेषलक्षणा नाम । बाल. पृ. ४१.

* सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावः । भाट्ट. ४।१।३.

* सुबर्थस्य लिङ्गसंख्याभिन्नस्य भावनायामेवान्वयः प्रकारतया इति ज्ञेयम् । रहस्य. पृ. ५७.

* सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणं इति कार्यकारणभावः । रहस्य. पृ. ६०

* सुप्तिङ्भ्यां शक्तिमात्रं शक्तिमद्द्रव्यकारकत्वपक्षेऽपि अवश्यं निष्कृष्य एष्टव्यम् । वा. ३।४।४।१३ पृ. ९३४.

* सुप्तिङ्श्रुतिः स्वोक्तानामेवार्थानां अन्योन्यं विनियोक्त्री, कारकविभक्तिस्तु प्रातिपदिकार्थक्रिययोः अस्वार्थयोरपि विनियोक्त्री । बाल. पृ. ४४.

* सुप्प्रत्ययावृत्तिलक्षणः वाक्यभेदः । बाल. पृ. १८१.

* सुब्विभक्तयः । तत्र प्रथमाषष्ठीवर्जं सर्वा विभक्तयः कारकाणि । मणि. पृ. १२४.

* सुपर्णाकृतिरग्निचयने न नित्या, बोधकमन्त्रास्तु अर्थवादः । संकर्ष. २।१।३९. मीको. पृ. ५४ 'अग्निचयने सुपर्णाकृतिबोधकमन्त्रः अर्थवादः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सुपेटिकास्थापनन्यायः ।** यथा समीचीनां पेटिकां दृष्ट्वा स्वस्योत्कृष्टं वस्तु सर्वे स्थापयन्ति, तथा भगवतः कीर्तिं श्रुत्वा स्वबुद्धिरत्नं भगवति स्थापयन्तीति श्रीवल्लभचरणैः प्रथमस्कन्धसुबोधिन्यां ध्वनित इति । साहस्री. ६१३.

**सुप्तडिम्भमुखचुम्बनन्यायः ।** सुप्तस्य डिम्भस्य बालस्य मुखस्य चुम्बनं यद्वत् इति अक्षरार्थः । यत्र क्रिया निष्फला तत्र अस्य प्रवृत्तिः । साहस्री. ३११.

* सुप्तप्रतिबुद्धन्यायः । शा. १।१।५ पृ. ११५. * सुप्तप्रतिबुद्धन्यायेन अनादिरेव वृद्धव्यवहारः । रत्नाकरः संबन्धाक्षेपपरिहारे ११७.

**सुप्तप्रबुद्धन्यायः ।** अयं न्यायः श्रीमद्भागवतीयाऽऽद्यश्लोकीयः 'तेने ब्रह्म हृदा य आदिकवये' इति वाक्यं विवृण्वता श्रीधरस्वामिनोल्लेखि श्रीभागवतभावार्थदीपिकायाम् । तथाहि– ननु सुप्तप्रबुद्धन्यायेन स्वयमेव वेदमुपलभताम्, नेत्याह, यद्यस्मिन् ब्रह्मणि सूरयोऽपि मुह्यन्ति, तस्माद् ब्रह्मणोऽपि पराधीनज्ञानत्वात् स्वतःसिद्धज्ञानः परमेश्वर एव जगत्कारणमित्यादि । साहस्री. ४७०.

* सुब्रह्मण्यः उद्गातुः पुरुषः, चतुर्थवर्गस्थोऽयम्, अयं 'पादी' चतुर्थांशभाक् तिस्रो गा लभते । 'सुब्रह्मण्यमुन्नेता दीक्षयति' इति । वि. ३।७।१७, * 'सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति' । ३।५।८, ३।७।९. * सुब्रह्मण्यस्य उद्गातृचमसभक्षो नास्ति इति वार्तिकमतम्, अस्तीति भाष्यमतम् । भा. ३।५।८।२३–२६. * सुब्रह्मण्यस्य सदसि प्रवेशो नास्ति । वि. ३।५।८. * सुब्रह्मण्या अग्निष्टुति आग्नेयी 'अग्न आगच्छ रोहिताश्व' इत्यादिः । भा. ९।१।१५।४४. * सुब्रह्मण्या आतिथ्यान्ते उपसत्सु च या क्रियते तस्यां यथादेवतमेव तन्त्रभेदः नास्ति तन्त्रेण उच्चारणम् । तस्मात् द्वे अपि सुब्रह्मण्ये आह्वातव्ये पञ्चदशरात्रे । टुप्. १२।२।७।२२. * सुब्रह्मण्या उपसत्कालीना एकाहरूपे अग्निष्टुति आग्नेयी । पञ्चदशरात्रस्य प्रथमाहेऽग्निष्टुति तु ऐन्द्री उत्तरचतुर्दशसु अहःसु ऐन्द्या एव सत्त्वात् । ( वस्तुतस्तु पञ्चदशरात्रीयाग्निष्टुति अग्नेरिन्द्रस्य चोभयोः प्रकाशनार्थं उभयविधा ) । वि. १२।२।७. * सुब्रह्मण्या ऐन्द्री एव कार्या, पञ्चदशरात्रे अग्निष्टुति प्रथमाहे एकादशानामह्नां धर्मभूता । न तु आग्नेयी । भा. १२।२।७।२२.

**सुब्रह्मण्या तु तन्त्रं स्याद्दीक्षावदन्यकालत्वात् । ११।३।१०।२३॥**

द्वादशाहे उपसत्काला सुब्रह्मण्या तु तन्त्रं स्यात् । तन्त्रेण आह्वानम् । अन्यकालत्वात् प्रयोगकालात् अन्यः कालः अस्याः भवति । दीक्षावत् । यथा दीक्षा प्रयोगकालात् पृथक्कालत्वात् तन्त्रं भवति तद्वत् इति सिद्धान्तः । के.

* सुब्रह्मण्या पञ्चदशरात्रे वसतीवरीग्रहणोत्तरकाला प्रतिदिवसं क्रियते, यथादेवतं च अग्निष्टुति आग्नेयी अन्येषु ऐन्द्री । टुप्. १२।२।७।२२. * **सुब्रह्मण्याया:** ऐन्द्या एव अग्निष्टुति अपि अविकारेण प्रयोगः । याज्ञिकास्तु आग्नेयीमेव पठन्ति । भा.९।१।१५।४२–४४.

* **सुब्रह्मण्याख्ये** 'इन्द्राऽऽगच्छ' इति मन्त्रे प्रकृत-देवतामात्रोपलक्षणार्थं मुख्यतया इन्द्रः प्रकाश्यते इति एकादशे सुब्रह्मण्याधिकरणे वक्ष्यते । सु. पृ. ११५८. ( ११।३।१०–११ इति द्वे, ११।४।७ इदमेकं इति त्रीणि सुब्रह्मण्याविषयकाण्यधिकरणानि, परंतु तत्र क्वापि सुधोक्तोऽर्थो भाष्ये टुप्टीकायां वा न दृश्यते । के. )

* **सुब्रह्मण्याऽऽह्वानं** उपसत्कालीनं तन्त्रं अहर्गणे। ११।३।१०।२३. **मीको.** पृ. ७६० (९) 'अहर्गणे उपसत्कालीनं०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सुब्रह्मण्याह्वानं सुब्रह्मण्यस्योद्गातृगणस्थस्य कर्म । वि. ३।५।८. * **सुब्रह्मण्याऽऽह्वानस्य** सुत्याकालीनस्य अहर्गणे प्रत्यहमावृत्तिः । ११।३।११।२४–३४. **मीको.** पृ. ७६६ 'अहर्गणे सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सुब्रह्मण्याऽऽह्वाने** उपसत्कालीने विवृद्धसुत्याहानुपलक्षणं द्वादशाहे । ११।४।७।३०–३२. **मीको.** पृ. २१९१ 'द्वादशाहे उपसत्कालीनसुब्रह्मण्याऽऽह्वाने०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सुब्रह्मण्याऽऽह्वानार्थो** निगदः 'इन्द्राऽऽगच्छ, हरिव आगच्छ, मेधातिथेर्मेषः, वृषणश्वस्य मेने, गौरावस्कन्दिन्, अहल्यायै जार०' इत्यादिः ज्योतिष्टोमे । अग्निष्टुति तु 'आग्नेयी सुब्रह्मण्या भवति' तत्र 'अग्न आगच्छ' इत्येतावानूहः कर्तव्य एव । परंतु 'हरिव आगच्छ, मेधातिथेर्मेष०' इत्यादौ ऊहो न कर्तव्यः, किंतु यथाश्रुत एव मन्त्रः पठनीयः । अविद्यमानधर्मैरपि स्तुतिः भवत्येव । वि. ९।१।१६. ('तदेतन्न रोचयन्ते याज्ञिकाः, ऊहं कुर्वन्ति– अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो विचर्षणे– इति । भा. ९।१।१५ वर्णकं १ )

* **सुब्रह्मण्याऽऽह्वानमन्त्रः** उपसत्कालीनः विकारमकृत्वैव द्वादशाहे प्रयोक्तव्यः । वि.११।४।७.

* **सुब्रह्मण्यानिगदः** ज्योतिष्टोमे 'इन्द्र आगच्छ०' इत्यादिः । भा. ९।१।१५।४२. * **सुब्रह्मण्यानिगदस्य** न देवताप्रकाशनार्थत्वम्, ज्योतिष्टोमे महेन्द्रस्यैव देवतात्वेन इन्द्रस्य देवतात्वाभावात् । अत एव स्तुत-शस्त्राधिकरणे ( २।१।५ ) स्तुतशस्त्रयोर्देवताप्रकाशकत्व-पक्षे ऐन्द्रस्तुतिरुत्कृष्येत इत्युक्तं संगच्छते । इति **चेत्, नैवम्** । ज्योतिष्टोमे इन्द्रस्यापि देवतात्वावश्यंभावात् । कथमन्यथा भक्षपेटिकायां अनैन्द्रेषु इन्द्रपीतशब्दस्य निवृत्तिपक्षस्य ऊहपक्षस्य चोत्थितिः, कथं वा इन्द्रस्य देवतात्वाङ्गीकारेणैव सिद्धान्ते 'इन्द्राय दत्तः सोमः यस्मिन् सवने' इति सवनविशेषणतामादाय अविकारेण प्रवृत्तिसमर्थनं माहेन्द्रग्रहयजिसंनिध्याम्नाताया इन्द्रस्तुतेः तत्क्रमोल्लङ्घनेन इन्द्रयागशेषता स्यात् इत्यभिप्रायेण उत्कर्षोक्तिः इत्याहुः । **सोम.** ९।१।१४. * **सुब्रह्मण्यानिगदे** हरिवदादिपदानां अग्निष्टुति नोहः । ९।१।१६।४२–४४. **मीको.** पृ. ६२ 'अग्निष्टुति सुब्रह्मण्यानिगदे हरिवदादिपदानां नोहः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सुब्रह्मण्यासहितानां** उद्गातॄणां समाख्यया भक्षोऽस्ति इति भाष्यम् । अपसुब्रह्मण्यानां इति वार्तिकम् । भा ३।५।८।२३–२६.

**सुभगाबालोदिताख्यायिकान्यायः** । सुभगा बालयोदिता आख्यायिका । कथेत्यर्थः । यद्वा सुभगया बालयोदिता सुभगाबालोदिता । यथा– 'बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम् । कचित्सन्ति महाबाहो राजपुत्रास्त्रयः शुभाः ॥ द्वौ न जातौ तथैकस्तु गर्भ एव न च स्थितः । वसन्ति ते धर्मयुक्ता अत्यन्तासति पत्तने ॥ स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः । गच्छन्तो गगने वृक्षान् ददृशुः फलशालिनः ॥ भविष्यनगरे तत्र राजपुत्रास्त्रयोऽपि ते । सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ धात्र्येति कथिता राम बालकाख्यायिका शुभा । निश्चयं निर्ययौ बालो निर्विचारणया



धिया ॥' इति, तथा 'इयं संसाररचना विचारोज्झितचेतसाम् । बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥' इत्यन्यत्र विस्तरः । **साहस्री.** ४५९.

**सुभगाभिक्षुन्यायः** । एकत्र विरुद्धानेकधर्म-समावेशासंभवविवक्षायामयं न्यायोऽवतरति । एकस्मिन्नीशरूपाप्तवचने प्रामाण्याप्रामाण्यलक्षणविरुद्धधर्मद्वयं न संभवतीति केचित् । यथा सुभगात्वं भिक्षुकत्वं पुंस्त्वं च यथाविधपदद्वयसामानाधिकरण्यात्प्रतीयमानमपि विरुद्धत्वादेकस्मिन् युगपन्न संभवति, तथा प्रकृतेऽपीति केचित् । अन्ये तु– यथा सुभगाभिक्षुकौ प्रबलघातक-भयात् कञ्चित् शरणं प्रपन्नौ । स च शरणागतत्यागदोष-श्रवणात् सर्वप्रयत्नेनोभयोः रक्षणे प्रबलारिकृतस्वघात-भयेन त्यागे वा प्राप्तेऽपि सुभगां रक्षति, भिक्षुकं त्यजतीति यत्तत्र तस्येच्छैव नियामिका, न त्वन्यत्किञ्चिद्विनिगमकमस्ति । तथा प्रकृतेऽपि ईशवचनादुभयोः प्रामाण्ये पौरुषेयत्वात् मूलसापेक्षतया धर्माधर्मादौ तद-भावादप्रामाण्ये चाप्राप्तेऽपि उक्तविभागे तार्किकेच्छैव नियामिकेत्यर्थमाहुः । एवं स्मृत्यादिष्वागममूलकतया प्रामाण्यं न तु ऋषिवचनत्वादिना, बृहस्पतिप्रणीत-नास्तिकशास्त्राणामपि प्रामाण्यापत्तेरित्यादि स्वयमूह्यमिति । **साहस्री.** २५७.

* **सुभद्रा**— न अर्जुनमातुलस्य वसुदेवस्यात्मजा सुभद्रा इति क्वचिदाख्यायते । किंतु 'अनुजा वासुदेवस्य सुभद्रा वरवर्णिनी' । इत्यादिव्यवहारदर्शनात् कल्प्यम्, स तु अन्यथाऽप्युपपत्तेः नैकान्ततः सुभद्राया वसुदेवात्मजात्वं कल्पयितुं शक्नोति । सु. पृ. १९५. * सुभद्रा यद्यपि 'वासुदेवस्वसा' इति ख्याता तथापि वस्तुतः मातृष्वस्रीया सा तस्याश्च अर्जुनेन परिणयनं अभ्यनुज्ञातं 'मातृ–पितृष्वस्रीया वा' इति । वा. १।३।३।७ पृ.२१०.

* **सुभाषितवचननिमित्तत्वं** सूक्तवाकशब्दस्य । सु. पृ.११०९.

* **सुमना** नामेष्टिः । भा. ११।२।४।२३.

* **सुरा** । अन्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः । मधुसीध्वोस्तु क्षात्रयवैश्ययोः नैव प्रतिषेधः, केवलब्राह्मणविषयत्वात् । 'मद्यं नित्यं ब्राह्मणस्य' इति वचनात् । 'गौडी पैष्टी माध्वी च' इति त्रिविधाया अपि ब्राह्मणानां निषेधः । अन्नसुरा त्रयाणामपि अपेया । सर्वा ब्राह्मणानामपेया । वा. १।३।३।७ पृ. २०९–२१०. * सुरा औषध–(पुरोडाश) विकृतिः । भा. ८।२।१।५. * 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥' ( मनुः ११।९३ ) । अयं पुरुषार्थः क्रियानिषेधः स्मार्तः । बाल. पृ. ३१. * **सुरायाः** क्रयणं ( सौत्रामण्यां ) 'सीसेन क्लीबात् क्रय्या' इति । भा. ८।२।१।४, * सुरायाः पुरोरुक् (सौत्रामण्यां)– एका पुरोरुक् एका याज्या । ८।२।१।४, * सुरायाः वीहि इत्यनुवषट् करोति । ८।२।१।२, * सुरायाः समुपहूय भक्षणं सौत्रामण्याम् । ८।२।१।३.

* **सुराग्रहाः** पयोग्रहाश्च सौत्रामण्याम् । 'उत्तरेऽग्नौ पयोग्रहान् जुहुति, दक्षिणेऽग्नौ सुराग्रहान् जुहुति' इति । भा. ३।५।३।१४. * सुराग्रहाः पयोग्रहाश्च सौत्रामण्याम् । होमावशेषश्च ब्राह्मणाय वा वल्मीकवपायां वा शतातृण्णायां वा अवनेतव्यः । तत्र स्विष्टकृदादिकं नास्ति । वि. ३।५।३, * 'सुराग्रहाः सोमग्रहाश्च वाजपेये'। १०।४।३. * **सुराग्रहे** ऐष्टिकधर्माणामतिदेशः । ८।२।१।१–९. **मीको.** पृ. २१८ 'अतिदेशः वाजिन-सुराग्रहयोः ऐष्टिकधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सुरानिषेधः** मानवः रागप्राप्तपुरुषार्थमात्रविषयकः पुरुषार्थः स्मृतिकल्प्यः प्रतिषेधः । बाल. पृ. ३१.

* **सुरापानं** वासुदेवार्जुनयोः, अहिच्छत्रमथुरा-निवासिब्राह्मणीनां चाद्यत्वेऽपि अनाचारः । वा. १।३।३।७ पृ. २०४.

* '**सुरूपं** वा कुरूपं वा पुमानित्येव भुञ्जते ।' इति स्मृतेः ( मस्मृ. ९।१४ ) स्त्रीचाञ्चल्यं ज्ञायते । सु. पृ. १२.

* **सुवर्णधारणं** पुरुषार्थम् । ३।४।८।२०–२४. 'हिरण्यधारणन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सुवर्णधारणादीनां** पुरुषार्थत्वम् । वि.३।४।१२.

**सुवर्णन्यायः** । यथा सुवर्णं निघर्षणच्छेदनतापनादिकर्मभिरुत्कृष्टतां प्राप्नोति, तथा पठितशास्त्रमपि घोषणपरिप्रश्नविचारणादिभिरुत्कृष्टतां लभते, एवं प्रकृतान्तरेऽपि । साहस्री. ८९२.

* **सुसदृशे** सति, ईषत्सदृशः पक्षेऽपि न हि प्राप्तः । वा. ६।३।४।१६.

* ' **सुहृदश्चापि** धर्मात्मा ( पाण्डुः ) धनेन समतर्पयत् । ' सु. पृ. १८५.

* **सुहृदुपदेशः** अविगीतः सुप्रतिष्ठितः कथमिव उन्मत्तबालवाक्यसदृश इति । भा. १।१।८।३२.

* **सूकरः** एव आर्यप्रसिद्धया वराहशब्देन ग्राह्यो न म्लेच्छप्रसिद्धया कृष्णशकुनिः । भा. १।३।४।८–९, * ' **सूकरं** हि गावोऽनुधावन्ति ' । १।३।४।९.

* **सूक्तं** अव्यक्तलिङ्गायामृचि देवताज्ञानहेतुत्वेन अर्थज्ञानोपायः । सु. पृ. १११. * ' **सूक्तेन** सूक्तेनोपदधाति ' ( सांवत्सरिके चयने इष्टकाः ) । संकर्ष. २।१।३५.

* **सूक्तभाजः** देवताः हविर्भाजश्च । काः सूक्तभाजः ? ' इमं स्तोममर्हते जातवेदसे० ' इति । हविर्भाजः ' आग्नेयमष्टाकपालं निर्वपेत्० ' इति । भा. १०।४।१२।२३.

* **सूक्तवाकः** अनेकवाक्यसमुदायो वा एकमेव वाक्यम् । अनेकवाक्यसमुदाय इति भाष्यम् । ' न हि एतदेकं वाक्यं ... ' । एकमेव वाक्यं इति वार्तिकमतम् । भा. ३।२।६।१९ पृ. ७६९. * सूक्तवाकः एव याज्या प्रस्तर एवाहुतिः । संकर्ष. २।४।३. * सूक्तवाकः न त्यज्यमानप्रस्तरदेवतोद्देशार्थमुत्पन्नः, इष्टदेवताभिधानस्वरूपत्वात् । वा. ३।२।५।१२ पृ. ७६१. * सूक्तवाकः पौर्णमास्याममावास्यायां च विभज्य प्रयोक्तव्यः । ३।२।६।१६–१९. * सूक्तवाकः । प्रयोगमध्यवर्तिदेवतापदसहितं अभितः श्रूयमाणतन्त्रपदोपेतं इष्टदेवताप्रकाशनं कुर्वत् वाक्यं सूक्तवाकः । ततश्च एकस्मिन् देवतापदे अनेकस्मिंश्च, प्राकृते वैकृते च तन्त्रपदमध्यस्थे सकलः ( एक एव ) सूक्तवाकः । ' तेन त्रिधैव मन्तव्यः सूक्तवाकः प्रतिष्ठितः । स्वाध्याये कर्मकाले च प्रकृतौ विकृतावपि ॥ सर्वप्राकृतदेवत्यः स्वाध्याये तावदिष्यते । निकृष्टदेवतामध्यः प्रकृतौ समुदाययोः ॥ सूर्यादिपदमध्यश्च विकृताववधार्यते । सूक्तवाकः स तत्रैव यत्र यादृङ् निरूपितः ॥ ' वा. ३।२।६।१९ पृ. ७७०. * सूक्तवाकः प्रस्तरप्रहरणे मन्त्रत्वेनोपदिश्यते न तु कालार्थः संयोगः दर्शपूर्णमासयोः । भा. ३।२।५।११–१५. * सूक्तवाकः प्रस्तरप्रहरणाङ्गम् । प्रस्तरश्च सवनीयपुरोडाशदेवतानां प्रासङ्गिकः ( पश्वर्थस्तु सः ) । टुप्. ११।३।१६।५४. * "सूक्तवाकः याज्या प्रस्तर आहुतिः ' ' इध्मः प्रथम आहुतीनां हूयते ' इत्येतेन व्याख्यातम् " इति सूत्रेण ( संकर्ष. २।४।३ ) प्रस्तरप्रहरणं इध्माधानं च होमरूपं ' सूक्तवाको याज्या, प्रस्तर आहुतिः ' इति ' इध्मः प्रथम आहुतीनां हूयते ' इति च वाक्यशेषात् होमत्वावगमात् मन्त्रवर्णतो विशिष्य देवतालाभाच्च इति पूर्वपक्षयित्वा ' प्रशंसा वा संस्कारः प्रस्तरस्य संनिधानात् समिन्धनार्थं इध्मः ' इतिसूत्रेण आहुतित्वेन प्रशंसैषा, यतः प्रहरणं प्रस्तरस्य प्रतिपत्तिः, स्रुग्धारणोपयुक्तस्य प्रस्तरं इति द्वितीयान्तेन उपस्थितत्वात्, इध्माधानं च अग्निवृद्ध्यर्थत्वात् दृष्टार्थं इति सिद्धान्तितम् । कु. ३।२।५।१३. * सूक्तवाकः याज्या, प्रस्तरः द्रव्यम्, अग्न्यादिश्च देवता । यागः सन् प्रतिपत्तिरपि दर्शपूर्णमासयोः । भा. ३।२।५।११–१५, * सूक्तवाकः सवनीयपुरोडाशानां पृथक् नास्ति । पाशुकः एव सूक्तवाकः । सवनीयानां तु प्रसङ्गसिद्धः । ११।३।१६।५४. * ' सूक्तवाकेन प्रस्तरं प्रहरति' इति तृतीयाश्रुत्या सूक्तवाकमन्त्रः प्रहरणे विनियुज्यते इति प्रहरणाङ्गं मन्त्रः । मन्त्रप्रहरणयोश्च देवताद्वाराऽन्वयः । वि. ३।२।५. * 'सूक्तवाकेन प्रस्तरं प्रहरति' इति पौर्णमासीदेवतावाचिनां अमावास्यादेवतावाचिनां च निष्कृष्य प्रयोगे तच्छेषाणामपि निष्कृष्य प्रयोगः । भा. ३।३।७।१४ पृ. ८५३. * ' सूक्तवाकेन प्रस्तरं प्रहरति ' ' प्रस्तरे जुहूमासादयति ' इदं द्रव्यप्रक्षेपांशेन देवतोद्देशांशेन च दृष्टार्थमेव द्रव्यत्यागांशेन तु केवलादृष्टार्थं एतादृशं दृष्टादृष्टोभयार्थं द्रव्यसंस्कारकं संनिपत्योपकारकं



क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । बाल. पृ. ८४. * सूक्तवाकस्य इष्टदेवताप्रकाशनार्थत्वम् । सु. पृ. ६३४. * सूक्तवाकस्य उत्कर्षे उत्कृष्टा एव सवनीयानां देवताः प्रकाशयिष्यन्ते । टुप्. ११।३।१६।५४. * सूक्तवाकस्य दर्शपूर्णमासयोः विभज्य प्रयोगः प्रयोजनवशात् । शा. ३।२।६ । दृष्टप्रयोजनसंभवे अदृष्टप्रयोजनस्य अयुक्तत्वात् प्रकृतप्रत्यभिज्ञानाच्च इष्टदेवतासंस्कार एव प्रयोजनं न्याय्यं इति प्रयोजनवशाद्विभागः । सोम. * सूक्तवाकस्य पौर्णमास्यां प्रयोगे पूर्णमासीदेवतानां निष्कर्षे अमावास्यादेवतानामनन्वयः । इतरत्र चेतरासाम् । इतरेतरस्यानङ्गत्वात् । भा. ११।३।१६।५३. * सूक्तवाकस्य विभज्य विनियोगः । ३।२।६।१६–१९. * सूक्तवाकस्य प्रैषेण वैशेषिकेण पाशुकं तन्त्रं नियतं सवनीयपुरोडाशेषु । भा. १२।२।१५।३५. * सूक्तवाकस्य सवनीयपशुसंबन्धिनः उत्कर्षः । स च सवनीयपश्वनुयाजानामनुष्ठानादूर्ध्वं ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' । वि. ११।३।१६. * सूक्तवाके आग्निमारुतादूर्ध्वमनुयाजोत्कर्षेण उत्कृष्यमाणे सवनीयपुरोडाशदेवतानामप्युत्कर्षः । ११।३।१६।५५–५६. मीको. पृ. ८२७ ' आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सूक्तवाके ' आयुराशास्ते ' इत्यादिर्यजमान–आशासनभागः 'सर्वस्वारे ' पठनीय एव । सूक्तवाकोत्तरं आभवपवमानपर्यन्तं जन्मान्तरे वा तत्तत्फलसंभवात् । वि. १०।२।२५.

**सूक्तवाके च कालविधिः परार्थत्वात् ।** ३।२।५।११॥

' सूक्तवाकेन प्रस्तरं प्रहरति ' इति दर्शपूर्णमासयोः श्रूयते । तत्र किं सूक्तवाकः प्रस्तरप्रहरणं प्रति उपदिश्यते उत इयं काललक्षणा इति विचारे पूर्वपक्षमाह । सूक्तवाके सूक्तवाकवाक्ये उत्थानविसर्जनवत् कालविधिः स्यात् । यदा सूक्तवाकः तदा प्रस्तरप्रहरणं इति, न तु प्रस्तरप्रहरणाङ्गं सूक्तवाकः उभयोरपि परार्थत्वात् देवतास्तुतिपरत्वात् सूक्तवाकस्य, स्रुग्धारणार्थत्वाच्च प्रस्तरस्य । तस्मात् कालविधिः, इष्टदेवताप्रकाशनार्थः सूक्तवाकः ।

**उपदेशो वा याज्याशब्दो हि नाकस्मात् ।** १२ ॥

' सूक्तवाकेन प्रस्तरं प्रहरति ' इति वाक्ये प्रस्तरप्रहरणकाले सूक्तवाकः इति कालविधिः इति पूर्वपक्षं सूत्रप्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । उपदेशः सूक्तवाकमन्त्रस्य प्रस्तरप्रहरणं प्रति स्यात् । प्रस्तरप्रहरणे सूक्तवाकः करणमन्त्रः । एवं च सति ' सूक्तवाक एव याज्या, प्रस्तर आहुतिः ' इति वाक्यशेषे याज्याशब्दः अकस्मात् कारणं विना न स्यात् । याज्याशब्दः अयुक्तो न स्यात् । अन्यथा तु अयुक्तः स्यात् । तस्मात् प्रहरणाङ्गत्वेन सूक्तवाकस्योपदेशः इति सिद्धान्तः ।

**स देवतार्थस्तत्संयोगात् ।** १३ ॥

' सूक्तवाकेन प्रस्तरं प्रहरति ' इति वाक्ये प्रस्तरप्रहरणाङ्गत्वेन सूक्तवाको विधीयते इति सिद्धान्त उक्तः । ननु देवतासंकीर्तने सूक्तवाकः समर्थः, न प्रस्तरप्रहरणे इति चेत्तत्राह । सः सूक्तवाकः देवतार्थः प्रस्तरहविष्के यागे देवताप्रकल्पकः । स च देवतार्थः सन् तत्संयोगात् अङ्गत्वेन प्रहरणेन संयोगात् प्रहरणाङ्गमपि । तत्संयोगात् सूक्तवाकेन इति तृतीयाश्रुतिसंयोगात् तस्य प्रहरणाङ्गत्वम् ।

**प्रतिपत्तिरिति चेत् ।** १४ ॥

ननु प्रस्तरस्य प्रहरणं प्रतिपत्तिः तथा च तदङ्गत्वं सूक्तवाकस्य नोपपद्यते इति कालार्थ एव संयोगोऽस्तु इति चेत् पूर्वपक्षी ब्रूयात् ।

**स्विष्टकृद्वदुभयसंस्कारः स्यात् ।** १५ ॥

' सूक्तवाकेन प्रस्तरं प्रहरति ' इति प्रस्तरप्रहरणं प्रतिपत्तिः अतो न तदङ्गं सूक्तवाक इति चेन्न । प्रहरणं उभयसंस्कारः स्यात् । यागांशे अदृष्टार्थे प्रक्षेपांशे प्रतिपत्त्यर्थमिति । उभयसंस्कारशब्देन उभयात्मकत्वं विवक्षितम् । किंवा प्रक्षेपांशेन प्रस्तरस्य संस्कारः उद्देशांशेन उपयुक्तदेवतायाश्च संस्कारः इति उभयसंस्कारत्वं ज्ञेयम् । स्विष्टकृद्वत् यथा स्विष्टकृद्यागः प्रक्षेपांशेन उपयुक्तहविःसंस्कारः मन्त्रांशेन इष्टेज्यमानदेवतासंस्कारश्च तद्वत् । तस्मात् सूक्तवाकः प्रस्तरप्रहरणाङ्गम् । अथवा यथा स्विष्टकृत् द्रव्यसंस्कारार्थः,

स्विष्टकृतोऽग्नेः कृतार्थत्वेन शेषत्वात् । अथ च यागत्वं न जहाति । एवमुभयोः कृतार्थयोः संस्कारः । परस्परनियमाच्च अदृष्टं साधयन् यागो भविष्यति । उभयसंस्कारः इत्यस्य उभयरूपश्चासौ संस्कारश्च इति कर्मधारयः उक्ते प्रथमेऽर्थे । उभयोः द्रव्यदेवतयोः संस्कारः इति षष्ठीसमासः उत्तरेऽर्थे । के.

* सूक्तवाके दर्शपूर्णमासगते यजमानशब्दः बहुकर्तृके विकारे ऊहितव्यः । भा. ९।१।१४।४१.

**सूक्तवाके यजमाननामनिर्देशे नामद्वयग्रहणम् , सोमयाजिनस्तु तृतीयमपि ॥**

'नामानि गृह्णीयात्' 'नाम गृह्णीयात्' इति च श्रुतम् । यजमानस्य अमुकत्वेन ज्ञापनार्थत्वात् बहुनामशालिनोऽपि यत्किंचिदेकं नाम ग्राह्यमतो विधौ बहुत्वमविवक्षितम् । इति प्राप्ते, 'द्व्यक्षरचतुरक्षरनामानि कुर्यात्' इति विधाय 'सोमयाजी तृतीयं नाम कुर्वीत' इति विधिना बहुनामविधेः सोमयाजिपरत्वेनोपसंहारादितरेषां द्वे एव नामनी इति स्थितिः । एतेषां च विधीनां वैयर्थ्यापत्तेः 'नामानि गृह्णाति' इत्येक एव विवक्षितसंख्यो विधिः । एकवचनघटितस्त्ववयुत्याऽनुवादः । एतद्दशादेव 'असोमयाजिनामपि यज्ञकाम इति तृतीयं नाम' इति केचित् । नामानीत्यस्यैकत्वातिरिक्तसंख्यापरत्वेन सुव्याख्यत्वान्न यज्ञकामपदे प्रमाणमिति भाष्याशयः । संकर्ष. ४।३।२१.

* सूक्तवाके सोमयाजिनः नामत्रयं निर्देष्टव्यम् , इतरेषां तु द्वे नामनी । इतरेषामपि 'यज्ञकामः' इति तृतीयं नाम निर्देष्टव्यं इति केचित् । नेति भाष्यम् । संकर्ष. ४।३।२१.

* सूक्तवाकाधिकरणोक्तं ( ३।२।५ ) स्वार्थसमवायकल्पकत्वं तावत् स्मारयति । स्वशक्त्या प्रकाश्यार्थव्यतिरिक्तक्रियासाधनत्वेनापि विहितो मन्त्रः क्रियां तत्संबन्धार्हं वा किंचित् कारकं क्रियान्वयि कल्पयित्वा प्रकाशयन् ( मन्त्रः ) यस्मात् सूक्तवाकाधिकरणन्यायेनाङ्गत्वं याति तस्मात् नित्याङ्गाश्रयं फलमेवेदं कल्प्यम् । सु. ३।७ पृ. ७५, * करणत्वेन श्रुतिविनियुक्तस्य मन्त्रस्य अन्यतोऽसिद्धस्वार्थसमवायकल्पकत्वे सूक्तवाकाधिकरणोक्तेऽपि सूक्तवाकेन स्वसाध्यायाः साक्षात् प्रकाशनाशक्तेः तत्प्रकाश्यस्य च कस्यचित् अन्यतः क्रियान्वयासिद्धेः तत्र स्वार्थस्य क्रियान्वयकल्पना युक्ता । ३।७ पृ. ७५-७६.

* सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागस्य न अनुष्ठानं अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२१। ५३-५५. **मीको.** पृ. ७६० (५) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाका०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सूक्तवाकान्तर्गतायुराशासनादेः** न बाधः सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ । १०।२।२५।६१-६२. **मीको.** पृ. ४२३४ 'सर्वस्वारे यजमानजीवद्दशायां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सूक्तवाकाग्निवत् ।** आग्निमारुतादूर्ध्वमनुयाजेषु उत्कृष्टेषु सूक्तवाकोऽपि यथा उत्कृष्यते तथा पिष्टलेपफलीकरणहोमावपि उत्कृष्टव्यौ इति पूर्वः पक्षः । नेति सिद्धान्तः । **वि.** ५।१।१५.

* **सूक्तवाकनिगदे** 'अग्निर्होत्रेण' इति गार्हपत्यवाद एव नाहवनीयवादः । **संकर्ष.** ४।२।१६. * सूक्तवाकनिगदे 'अवीवृधेतां महोज्यायोऽक्राताम्' इति भागः यत्र इन्द्राग्निशब्दः उत्कृष्य नीतः तत्र प्रयोक्तव्यः न तु यावत्कृत्वः स सूक्तवाके समाम्नातः तावत्कृत्वः उभयोः पौर्णमास्यमावास्ययोः प्रयोक्तव्यः । **भा.** ३।३।७।१४ पृ. ८५३. * सूक्तवाकनिगदे 'सूपावसाना च स्वध्यवसाना च' इति, 'सूपचरणा च स्वधिचरणा च' इति च शाखान्तरानुसारेण प्रकृतौ उभयोरपि विकल्पेन निवेशः । **संकर्ष.** ४।३।१९.

**सूक्तवाकन्यायः ।** प्रस्तरप्रहरणन्यायः । दर्शपूर्णमासयोः सूक्तवाकः प्रस्तरप्रहरणाङ्गम् ॥

**सूक्तवाके च कालविधिः परार्थत्वात् । ३।२।५।११॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'सूक्तवाकेन प्रस्तरं प्रहरति' इति । तत्र संदेहः, किं सूक्तवाकः प्रस्तरप्रहरणं प्रति उपदिश्यते उत इयं काललक्षणा



( सूक्तवाकपठनकाले प्रस्तरः प्रहर्तव्यः इति ) इति । तदुच्यते, काललक्षणा इति । कुतः ? सूक्तवाकस्य देवतासंकीर्तनार्थत्वात् , प्रस्तरप्रहरणं च प्रति अशक्तेः , प्रस्तरस्य च स्रुग्धारणार्थत्वात् ।

**वा**— देवताप्रकाशस्रुग्धारणाभ्यां ( सूक्तवाकप्रस्तरयोः ) कृतार्थत्वात् अङ्गाङ्गिभावापेक्षा नास्ति इति कालार्थता । सर्वत्र च ( 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यादौ ) कृतार्थयोः संबन्धे कालार्थत्वं स्थास्यति ( ४।२।१२-१५ अधि० ) । तृतीयां च इत्थंभूतलक्षणार्थां मन्यते । प्रस्तरकृतार्थत्वाभिधानं च ( भाष्यीयं ) प्रतिपाद्यमानप्रधानत्वात् अस्य सूक्तवाकाङ्गत्वं तद्द्वारान्यदेवताङ्गत्वं वा न घटते इत्यस्य प्रतिपादनार्थम् । तथा सदेवतस्य सूक्तवाकस्यापि तदङ्गत्वमिति ।

**उपदेशो वा याज्याशब्दो हि नाकस्मात् । १२ ॥**

**भाष्यम्**— उपदेशो वा प्रस्तरप्रहरणं प्रति मन्त्रस्य स्यात् । एवं श्रुतिविहितोऽर्थो भवति, सूक्तवाकेन इति करणविभक्तिसंयोगात् । इतरथा लक्षणा स्यात्, सूक्तवाकेन लक्षणेन प्रस्तरं प्रहरेत् ( अग्नौ प्रक्षिपेत् ) इति । एवं च कृत्वा याज्याशब्द उपपन्नो भवति । सूक्तवाक एव याज्या, प्रस्तर आहुतिः इति ।

**वा**— 'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रत्यक्षात् क्रियासंबन्धात् करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम्, कारकविभक्तिबलीयस्त्वात् । एवं च श्रुतिवृत्तः सूक्तवाक एव कार्येण संभन्त्स्यते । अन्यथा तल्लक्षितः कालः संबध्येत । तथा च अङ्गत्वे सति साधर्म्यात् याज्याशब्दः उपपत्स्यते 'सूक्तवाक एव याज्या' इति ।

किं पुनरस्य पारमार्थिकमेव याज्यात्वं उत उपचारमात्रम् ? कश्चात्र विशेषः ? सति याज्यात्वे तद्धर्मैः भवितव्यम् 'आसीनो यजति' 'अनवानं यजति' 'याज्याया अधि वषट् करोति' 'पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते' इत्यादिभिः । अथ स्तुतिमात्रम्, ततो नैषां कश्चिदादर्तव्य इति । किं प्राप्तम् ? भवितव्यं धर्मैः । यया इज्यते सा याज्या । सूक्तवाकेन च इज्यते । तस्मादस्ति याज्यात्वम् । तत्र एतत् स्यात्, अस्त्रीलिङ्गत्वात् अनृचि स्त्रीप्रत्ययः ( टाप् ) न प्राप्नोति । नैष दोषः । समिदादियाज्यासु अनृक्ष्वपि याज्यात्वप्रसिद्धेः । अथोच्येत, आध्वर्यवेषु दर्विहोमसाधनेषु सत्यपि यागकरणत्वे याज्यात्वं न दृष्टम्, अतो नैतत् ऐकान्तिकं कारणं इति । यत्रैव याज्याशब्दः प्रयुक्तः सैव केवला याज्या । तेन तर्हि 'सूक्तवाक एव याज्या' इत्यत्रापि प्रयोगात् भवितव्यं धर्मैः । न चास्य औपचारिकत्वम्, मुख्यकारणसंनिधेः प्रत्यक्षत्वात् । अपिच सामान्यशब्दोऽयं याज्या इति । न स शक्यो लक्षणमन्तरेण प्रयोगतो विविक्तविषयः अवधारयितुम् । तत्र एतल्लक्षणं स्यात् 'होत्रेण येन इज्यते तद्वस्तु याज्या' इति । तथा सति सूक्तवाकेऽपि प्रसङ्गः । तस्मात् मुख्यमेवास्य याज्यात्वं इति । **एवं प्राप्ते, ब्रूमः । 'येन मन्त्रेण यागाङ्गं होता यजति देवताम् । प्रसिद्धेस्तस्य याज्यात्वं सूक्तवाको हि नेदृशः ॥'** प्रकृतौ हि सर्वमेव तादर्थ्योत्पत्त्या वस्तु निरूप्यते । याज्यात्वं च त्यज्यमानहविर्द्रव्यदेवतोद्देशार्थविहितमन्त्रत्वेन अवधारितम् । न च सूक्तवाकः त्यज्यमानप्रस्तरदेवतोद्देशार्थे उत्पन्नः, इष्टदेवताभिधानस्वरूपत्वात् । लिङ्गं श्रुत्या बाध्यते इति चेत् , न, श्रुतेर्लिङ्गविनियोगाभ्यनुज्ञामन्तरेण अग्निसेकादिवत् असामर्थ्यात् । तथा च उत्तरसूत्रे वक्ष्यामः । तेन स्वतः तावन्न याज्यात्वम् । न चान्या काचिदेवंविषया याज्याऽस्ति, यस्याः कार्ये वर्तमानो याज्याधर्मान् लभेत । प्राक् च यस्य यागत्वमवधारितं तस्य साधनं पश्चाच्चोद्यमानं याज्या इत्यवगम्यते । न तु अत्र प्राक् सूक्तवाकसंबन्धात् केनचित् यागत्वमवधारितम् । तदितरेतराश्रयत्वं प्राप्नोति, याज्यायोगात् यागः, यागसंबन्धात् याज्या इति । अथ एवं परिह्रियेत, विनैव तावत् याज्याव्यपदेशेन सूक्तवाकमात्रतया गृह्यमाणो यागे विनियुज्येत, ततो याज्यात्वं तदभिधेयदेवतासंबन्धलभ्यम् – यागत्वप्रधानप्रहरणसंबन्धात् याज्यात्वं लभ्यते इति । तदुच्यते । 'येनोत्पत्तौ

**न याज्यात्वं विनियोगे च लभ्यते । तस्य पश्चात् कथं नाम तल्लाभोऽध्यवसीयते ॥'** यो हि यूपादिशब्दो न क्वचित् प्रसिद्धः स एवं प्रसिद्धिं लभते । अयं पुनर्याज्याशब्दः उत्पत्तिवेलायामेव विनियोगवेलायां वा अर्थं लभमानो नोत्तरकालभावं अपेक्षते । येऽपि च याज्याधर्माः तेऽपि प्रथमसिद्धेषु यागेषु लब्धात्मानो नेदं क्लेशेन लभ्यमानं याज्यात्वं प्रतीक्षन्ते । यदि तु विकृतिर्भवेत् ततः परिधिकलेवाल्योरिव यूपत्वम्, कार्येण याज्यात्वमध्यवसीयेत । प्रकृतिस्तु इयम्, नात्र कार्यपूर्वकं धर्मनिरूपणम्, अतोऽपि न याज्याधर्माः । तथा च 'सूक्तवाक एव याज्या' इति एवकारः उपचारं द्योतयति । अयाज्यायां हि याज्योपचारे सति एवमुपपद्यते, न मुख्ये एव याज्यात्वे । मुख्यायां तु आहुतौ न एवकारः प्रयुक्तः । तदाहुतिः पारमार्थिकी । '**न च प्रहरणं यागमात्ररूपेऽवतिष्ठते । होम एव त्वयं स्पष्टः प्रक्षेपाधिक्यचोदनात् ॥ आघारादि यथा द्रव्यक्षारणाद्धोमतां गतम् । तथा प्रक्षेपरूपत्वाद्धरणस्यापि ( प्रहरणस्यापि ) होमता ॥ होमाङ्गस्य च याज्यात्वं न कस्यचिदपीष्यते । निगदत्वाद्विशेषेण सूक्तवाके निषिध्यते ॥ नितरां गद्यमानत्वान्निगदो ह्येष गद्यते । निगदानां च याज्यात्वमाहत्य प्रतिषिध्यते ॥ अयाज्या एव निगदा ऋचैव यजतीति हि । निषिद्धमपि याज्यात्वं प्रशंसार्थमिहोदितम् ॥**' तत्संबन्धात्तु सूक्तवाको याज्यात्वेन स्तूयते । न चोभयोः स्तुतिः, अत्यन्तं निरालम्बनत्वप्रसङ्गात् ।

**स देवतार्थस्तत्संयोगात् । १३ ॥**

**भाष्यम्**— यदुक्तम्, देवतासंकीर्तने सूक्तवाकः समर्थः, न प्रस्तरप्रहरणे इति । उच्यते । स देवतावचनः प्रहरणेन संबध्यते । प्रहरणं हि यजिः । मान्त्रवर्णिको देवताविधिः । एवमभिसंबन्धः । 'अग्निरिदं हविरजुषतावीवृधत' इत्येवं देवतामनुक्रम्य 'आशास्तेऽयं यजमानः' इत्युक्त्वा इदमिदमाशास्ते इति च, 'यदनेन हविषाऽऽशास्ते तदस्य स्यात्' इति प्रस्तरं हविर्निर्दिशति, अग्न्यादींश्च देवताविशेषान् । तेन प्रहरतिर्यजतिः । एवं सूक्तवाकेन प्रस्तरः प्रहर्तुं शक्यते यदि प्रहरतिर्यजतिः अग्न्यादिदेवताकश्च । तस्मात् सूक्तवाकस्य हरतिसंयोगेऽपि देवतार्थता घटते एव । यदि 'अग्निरिदं हविरजुषतावीवृधत' इत्येवमाद्येव श्रूयेत, न 'आशास्तेऽयं यजमानः' इत्येवमादीनि अपराणि, ततः अग्न्यादय एव इष्टाः, नान्तरिताः इत्येव पर्यवसितं वाक्यं भवेत् । यतस्तु खलु 'आशास्तेऽयं यजमानः' इत्येवमादीनि अपराणि श्रूयन्ते, तेन इह पर्यवसानम् । अग्न्यादयः पुरोडाशादिभिः इष्टाः, अपरं तु यजमान आशास्ते, तदनेन प्रस्तरेण प्राप्नुयादिति ।

**ननु** सत्स्वपि एतेषु देवतासंकीर्तने एव पर्यवस्येत्, पुरोडाशादिभिरिष्टा अग्न्यादयः, तत एव यजमान आयुरादीन्यपि आशासानः प्राप्नुयादिति । उच्यते । उभयथा संबन्धे सति प्रहरणे विनियोक्तव्यः । लिङ्गं च न बाधितं भविष्यति, वाक्यं च अनुग्रहीष्यते इति । **अथवा** 'अग्निरिदं हविरजुषत' इति प्रस्तर एव हविर्निर्दिश्यते एवमिदमिति संनिहितवचनं उपपन्नं भविष्यतीति ।

**वा**— यत्तु इष्टदेवतासंकीर्तनेन सूक्तवाकस्य कृतार्थत्वात् न भूयो विनियोगः संभवतीति । तत्राभिधीयते । **'भेदेन श्रुतिलिङ्गाभ्यां सूक्तवाकाङ्गता यदि । स्याद् विरोधस्ततः, किंतु तुल्यार्थत्वेन नास्त्यसौ ॥'** यत्तु अस्य स्वसामर्थ्येन देवताप्रकाशनसाधनत्वम्, प्रस्तरप्रहरणेऽपि विनियुज्यमानस्य तन्नैवापगच्छति, तत्रापि प्रकारान्तरेण अनुपयुज्यमानत्वात् । इह हि यत् इष्टदेवताऽभिधानसामर्थ्यं तत् सूक्तवाकेन इत्यनया श्रुत्या सह अविरोधं प्रार्थयते । श्रुतिरपि च प्रस्तरप्रहरणानभिधायिनं सन्तं असति सामर्थ्ये विनियोक्तुं अशक्नुवन्ती सामर्थ्यान्तरं चानुत्पादयन्ती 'यदयं अभिधातुं समर्थः, कथं नाम तदेवाभिदधन्मदर्थं कुर्यात्' इत्येवमपेक्षते । सर्वत्र क्रियां तत्साधनं वा अभिदधन्मन्त्रः अङ्गभावं गच्छति । तत्रापि प्रथमं तावदियं गतिः,



यत् प्रसिद्धं शेषिणि रूपं तन्मन्त्रेणाभिधातव्यमिति । यदा तु असामर्थ्यात् तादर्थ्यं न प्रतिपद्यते तदा अर्थात् विपर्ययो भवति, यदयमभिधत्ते तन्नूनमस्यां क्रियायामस्तीति । नहि अन्यथा तस्य श्रुतमङ्गत्वमुपपद्यते । तस्मात् 'सूक्तवाकेन' इत्यनया श्रुत्या एतत् प्रतिपाद्यते, 'यत् त्वं अभिधत्से तदेवाभिदधानः प्रस्तरप्रहरणं साधय' इति । मन्त्रोऽपि च इत्थमेव ब्रवीति, 'इष्टदेवताभिधानं कुर्वन्नहं यत् करोमि तत्सर्वं करोमि' इति । तत्र यदि इष्टा देवताः पूर्वयागसंबन्धिन्यः एव केवला भवन्ति ततो न किंचित् प्रहरणस्य कृतं स्यात् । अथ तु ता एवास्यापि अङ्गभूताः ततः तत्प्रकाशनद्वारेण सूक्तवाकेन प्रस्तरः प्रहृतो भवति । न च तासां देवतात्वात् अन्येन प्रकारेण उपयोगो विज्ञायते इति अत्रापि देवतात्वम् । अतश्च प्रस्तरद्रव्यस्य हविष्ट्वसंकीर्तनात् अग्न्यादीनां च देवतात्वात् यागोऽयं विज्ञायमानः 'हरणे तु जुहोतिः' ( ४।२।४।१० ) इति प्रक्षेपाधिकत्वात् होमः इत्यवधार्यते । तस्मादविरोधः श्रुतिलिङ्गयोः । एवं च सूत्रं इहापि, स देवतार्थ एव । कुतः ? ताभिः अस्यापि हरतेः संयोगात् कालार्थताऽपि च प्रसङ्गात् भविष्यत्येव । मन्त्रपाठक्रमेण सूक्तवाकस्य ज्ञातकालत्वात् ।

'यदि अग्निरिदं हविरजुषत इत्येवमाद्येव श्रूयेत' इति ( भाष्यं ) प्रागपि सूक्तवाकेनेति श्रुतेः अस्त्येव एकदेशस्य प्रहरणं प्रति सामर्थ्यं इति दर्शयति । यद्यपि च साधारणं मन्त्रस्य सामर्थ्यं तथापि श्रुत्यनुग्रहार्थं प्रस्तर एव 'यदनेन हविषा' इति निर्देष्टव्यः । अथवा आदित एवारभ्य इदंशब्देन प्रस्तरनिर्देशः, पुरोडाशादीनां अप्रत्यक्षत्वात् । अजुषत इत्यनर्थकमिति चेत्, न, पूर्वसेवितप्रसिद्धिद्वारेण स्तुत्यर्थत्वात् । अत उपपन्नमङ्गत्वम् ।

**प्रतिपत्तिरिति चेत् । १४ ॥**

**भाष्यम्**— अथ स्रुग्धारणे विनियुक्तस्य प्रस्तरस्य प्रहरणं प्रतिपत्तिः इत्युच्यते ।

**वा**— अनुभाषणं परिचोदना वा ।

**स्विष्टकृद्वदुभयसंस्कारः स्यात् । १५ ॥**

**भाष्यम्**— तत्र प्रतिवचनं स्विष्टकृद्वत् एतत् स्यादिति । यथा इज्यार्थात् पुरोडाशात् वचनप्रामाण्यात् स्विष्टकृदिज्यते यागश्च स भवति । प्रतिपाद्यते च पुरोडाशः, एवं प्रतिपाद्यतैव हि प्रस्तरो यागश्च निर्वर्त्स्य- (र्त्य)ते इति न दोषः । प्रतिपाद्यमानोऽपि हि त्यज्यते, प्रत्यक्षतः प्रतिपाद्यते, वचनादिज्यां साधयति इत्येवं गम्यते । तस्मात् सूक्तवाकः प्रहरतिमन्त्रः इति (न काललक्षणा ) ।

**वा**— कथं अप्रधानकर्मणः सूक्तवाकः अग्न्यादयो वा अङ्गं इत्यत उत्तरसूत्रं पठति– 'स्विष्टकृद्वदुभयसंस्कारः स्यात्' ( इति )। आचार्यशैल्या द्वे सूत्रे मन्यामहे । यथैव स्विष्टकृत् प्रतिपत्तिः यागश्च तथा अयंमपि भविष्यति । यथा च तत्र मन्त्राणामङ्गत्वं तथेह । नहि प्रतिपत्तित्वेन यागत्वं विरुध्यते । द्रव्यदेवतासंबन्धेन हि यागो भवति । तस्य च स्वरूपावधारणोत्तरकालं प्रतिपत्त्यर्थकर्मत्वादिविचारे सति 'उत्पत्तौ येन संयुक्तं' ( ४।२।७।१९ ) इत्यनेन लक्षणेन प्रतिपत्तित्वम् । न च तावता कश्चिद्दोषः । तेन यागप्रतिपत्त्यात्मकत्वं उभयसंस्कारशब्देन उच्यते । अथवा यथा स्विष्टकृत् द्रव्यसंस्कारार्थः, स्विष्टकृतोऽग्नेः कृतार्थत्वेन शेषत्वात् । अथ च यागत्वं न जहाति । एवमुभयोः कृतार्थयोः संस्कारः । परस्परनियमाच्च अदृष्टं साधयन् यागो भविष्यति । अथवा स्विष्टकृत्यपि 'अयाडग्निरग्नेः प्रिया धामानि' इत्येवमादिभिः इष्टदेवताप्रकाशनमस्ति इति उभयसंस्कारत्वेनैव दृष्टान्तः । न च प्रतिपत्तेः मन्त्रः अङ्गं न भवति । निष्प्रयोजनस्य तु अङ्गं नेष्यते । प्रतिपत्तिस्तु दृष्टार्थत्वेन सुतरां प्रयोजनवती । नियमादृष्टसिद्ध्यर्थं च अपेक्षते वैदिकानि साधनानि इत्यविरुद्धं सूक्तवाकग्रहणम् ।

**सुधा**––वचनविनियोज्यत्वाभावेन अप्रसक्तापवादविषयत्वानामेव हविष्कृदादिमन्त्राणां उत्सर्गविषयत्वे अधिकरणद्वयेनोक्ते 'सूक्तवाकस्य वचनविनियोज्यत्वात् प्रसक्तापवादविषयत्वस्यापि उत्सर्गविषयतैव' इत्यभि-

धानार्थत्वेन अस्याधिकरणस्य प्रकृतविषयविवेकसंगतिः, अपवादत्वेन च अवान्तरसंगतिः।

**शा—** 'तत्र द्वयोः कृतार्थत्वान्नाङ्गाङ्गित्वं प्रकल्पते। कालार्थस्तेन संयोगस्तयोर्दर्शादिवद्भवेत् ॥' एवं प्राप्ते, ब्रूमः। 'श्रुत्या प्रहरणाङ्गत्वं सूक्तवाकस्य गम्यते। तेन तद्देवतायोगादेष होमो भविष्यति ॥' तेन उपपन्नं इष्टदेवताप्रकाशनं कुर्वत एव सूक्तवाकस्य प्रहरणाङ्गत्वम्।

**सोम--** पूर्ववदिहापि कालार्थ एव संयोग इति प्रत्यवस्थानात् **संगतिः**। प्रयोजनं पूर्वपक्षे प्रहरणस्य होमरूपत्वाभावात् उद्देश्यत्यागाभावः, सिद्धान्ते तु तत्सद्भावः इति।

**वि--** 'प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः। अङ्गाङ्गिता वा, स्यात् कालोऽजुषतेत्याद्यनन्वयात् ॥, प्रहृतेरिष्टदेवार्थसंस्कारत्वात् तदन्वयः। संपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥'

**भाट्ट—** दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रुतम्। तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन कृतार्थत्वात् प्रस्तरप्रहरणस्य च उपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवत् कालार्थः संबन्धः। तृतीया च इत्थंभूतलक्षणत्वपरा सती सूक्तवाकस्य कालिकसंबन्धेन प्रहरणोपलक्षणत्वेन अन्वयं वोधयन्ती नानुपपन्ना। न चैवं लक्षणा, तस्या अपि आनुशासनिकत्वेन शक्यत्वात्। अतश्च अनूयाजोत्तरं सूक्तवाकपाठात् तत्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते, न तु सूक्तवाकस्य प्रहरणाङ्गत्वम्। इति प्राप्ते, प्रचुरप्रयोगात् लाघवाच्च करणत्वे एव तृतीयायाः शक्तिः, न तु इत्थंभूतलक्षणे, तस्या आनुशासनिकत्वेऽपि लाक्षणिकत्वेनापि उपपत्तेः। अतश्च श्रुत्या प्रहरणाङ्गत्वस्यापि अवगतेः प्रहरतिः मान्त्रवर्णिकदेवताकल्पनया आश्रयिकर्मरूपहोमलक्षको न विरुध्यते। अत एव 'सूक्तवाक एव याज्या' इति यागलिङ्गमपि संगच्छते। यद्यपि च नास्य मन्त्रत्वादिवत् अभियुक्तप्रसिद्धिविषयत्वाख्यं मुख्यं याज्यात्वं संभवति, एवकारोपनद्धत्वेन एतल्लिङ्गस्य याज्यात्वासाधकत्वात्, तथापि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशात् यागलिङ्गत्वम्। अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नात्र बाधः, प्रहरणेऽपि तदुपपत्तेः।

**मण्डन—** 'स्यात् सूक्तवाकेन यजिः प्रहारः।'

**शंकर--** 'सूक्तवाकेऽङ्गत्वमिष्टम्।' ६.

* **सूक्तवाकन्यायेन** 'पूषाऽसि' इति मन्त्रस्य श्रुत्या करणत्वेन विनियुक्तस्य देवताकल्पनद्वारा यागकल्पकत्वबुद्धिर्भविष्यति। सु. पृ. ९३२.

* **सूक्तवाकप्रैषः** 'अग्निमद्य' इति पशोर्वैशेषिकधर्मः। आम्नानसामर्थ्यात् नित्योऽसौ। स च मैत्रावरुणेन वक्तव्यः। मैत्रावरुणश्च पशौ अस्ति पुरोडाशे नास्ति। **भा.** १२।२।१२।३१. * सूक्तवाकप्रैषः दर्शपूर्णमासयोः 'इषिता दैव्या होतारः०' इति। स अग्नीषोमीये पशौ 'अग्निमद्य होतारमवृणीत' इत्येवं विकृतः। पुनः सवनीये पशौ विक्रियते 'अग्निमद्य होतारमवृणीतायं यजमानः सुतासुती' इति। **टुप्.** १२।२।१२।३१.

* **सूक्तवाकमन्त्रः** दर्शे पूर्णमासे च लिङ्गबलेन वाक्यबलेन च विभज्य विनियोक्तव्यः। **वि.** ३।२।६, ३।३।९, * **सूक्तवाकमन्त्रेण** प्रस्तरस्याग्नौ प्रक्षेपः। ३।२।५, * **सूक्तवाकमन्त्रे** 'अयं यजमानः आयुराशास्ते' इत्यादौ 'इमे यजमानाः आयुराशासते' इत्यादिरीत्या ऊहः कर्तव्यः, फलिनां बहुत्वात् मन्त्रस्य च फलप्रकाशकत्वात्। ९।१।१५. * सूक्तवाकमन्त्रे 'यजमान आयुराशास्ते' इत्यत्र सत्रे 'यजमाना आयुराशासते' इत्यूहः। ९।१।१५।४१. **मीको.** पृ. ९६९ 'आयुरादिफलन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सूक्तवाकमन्त्रगतः** यजमान-आशासनपरो भागः 'आशास्तेऽयं यजमानोऽसौ आयुराशास्ते' इत्यादिः अस्थियज्ञे मृताधिकारपक्षे लुप्यते (कृत्वाचिन्ता)। **वि.** १०।२।२१.



* **सूक्तवाकविनियोगः** अर्थानुसारेण। **वि.** ३।२।६.

**सूक्तवाकविभागन्यायः**। दर्शपूर्णमासयोः सूक्तवाकस्य विभज्य विनियोगः ॥

**कृत्स्नोपदेशादुभयत्र सर्ववचनम्। ३।२।६।१६ ॥**

**भाष्यम्—** दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रूयते। तत्र संदेहः किं पौर्णमास्यां कृत्स्नः सूक्तवाकः प्रयोक्तव्यः, कृत्स्नोऽमावास्यायां उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोग इति। तदुच्यते। उभयत्र सर्ववचनमिति। कुतः ? कृत्स्नो हि मन्त्रः सूक्तवाक इत्युच्यते। स पदेनापि विना, सूक्तवाको न स्यात्। तत्र सूक्तवाकेन न प्रहृतं भवेत्। तस्मादुभयत्र कृत्स्नः सूक्तवाको वदितव्यः।

**वा--** अधिकारमुपजीवयन् विचारयति किमुभयोर्दर्शपूर्णमासयोः सकलः सूक्तवाकः प्रयोक्तव्यः उत इष्टदेवतानुरोधेन निष्कर्ष इति। किं प्राप्तम् ? एकैकत्र सकल इति। कुतः ? '**मन्त्रो यथा समाम्नातः सूक्तवाकोऽभिधीयते। तस्य निष्कृष्यमाणस्य नैव स्यात् सूक्तवाकता ॥**' ततश्च असूक्तवाकेनैव प्रहृतः स्यात्।

**यथार्थं वा शेषभूतसंस्कारात्। १७ ॥**

**भाष्यम्—** ये पौर्णमासीदेवतावाचिनः शब्दाः, ते पार्णमास्यां प्रयोक्तव्याः नामावास्यायाम्। येऽमावास्यादेवतावाचिनः ते अमावास्यायाम्, न पौर्णमास्याम्। शेषभूतमर्थं संस्कुर्वन्तो मन्त्रा उपकुर्वन्ति, नान्यथा इत्युक्तम्। तस्मात् ये यत्रोपकुर्वन्ति, ते तत्र प्रयोक्तव्या इति न कृत्स्नः पौर्णमास्याम्, न कृत्स्नश्च अमावास्यायामिति।

**वा--** एवमादीनां अपकर्ष इत्युक्तं स्तुतशस्त्राधिकरणे (२।१।५), पूषाद्यनुमन्त्रणेषु चोक्तम् (३।१।१।२)। यद्येतानि केवलप्रहरणाङ्गभूतानि देवतान्तराणि भवेयुः, तत उभयत्र सकलः प्रयुज्येत। त एव तु इहापि अग्न्यादयः प्रत्यभिज्ञायन्ते इति न भेदहेतुरस्ति। अतश्च इष्टदेवताप्रकाशनोपजीवित्वात् अप्रयोजकं प्रहरणम्, सूक्तवाकस्य प्रधानप्रयुक्तदेवताश्रयत्वात्तु तदधीनं विज्ञायते। तानि च प्रधानानि यथादेवतं प्रयुज्यते, नाविशेषेण। तस्मादपकर्ष इति।

**वचनादिति चेत्। १८ ॥**

**भाष्यम्—** अथ यदुक्तं वचनमिदं भविष्यति 'सूक्तवाकेन प्रहरति' इति। तत्र पदेनाप्यूनेन, न सूक्तवाकेन प्रहृतं भवेत्। कृत्स्नस्य हि सूक्तवाकस्य उपदेशः इति।

**वा--**सूक्तवाकशब्दः कथमिति चेदत आह।

(**सुधायां** इदं वार्तिकं 'इदं द्यावापृथिवी इत्यादौ देवेभ्यः इत्यन्ते पौर्णमास्या देवताप्रकाशनार्थे पदसमूहे सूक्तवाकशब्दप्रसिद्धेः पौर्णमास्यां वा अमावास्यादेवतानां अमावास्यायां वा पौर्णमासीदेवतानां आभाषितत्वेन अवयवार्थाभावात् रूढिताशयत्वेन व्याचष्टे' इत्यनेन ग्रन्थेनावतारितम्। **के.**)

**प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः। १९॥**

**भाष्यम्--** तदुच्यते। उभे पौर्णमास्यमावास्ये प्रति एष कृत्स्नशब्दः, उभयोः प्रकरणात्। उभयोरसौ कृत्स्न उच्यते, अवयवे अवयवः इति। (अथ भाष्यकारः सूत्रं दूषयति) नैतदेवम्। नहि सापेक्षाणां इतिकर्तव्यतया संबन्धः। नहि इतिकर्तव्यता एतद्विशिष्टा श्रूयते। इतिकर्तव्यताविशिष्टास्तु एते गम्यन्ते। कुतः ? नहि इतिकर्तव्यतां प्रति कर्माणि विधीयन्ते, फलं प्रति तेषां विधिः। इतिकर्तव्यता तु कर्मणां विधीयते। तत्र संनिधानाविशेषात् कस्य किं विधीयते कस्य न इति न गम्यते विशेषः। साधनत्वेन च सर्वेषां निर्देशात् इतिकर्तव्यतायाः संनिधानादवचनाच्च। अस्य प्रकरणलिङ्गस्य अविशेषात् एकैकस्य कृत्स्नं प्रकरणं निराकाङ्क्षस्य, न सहायमपेक्षमाणस्य। तस्मादेकैकं प्रति कृत्स्नः सूक्तवाक उपदिश्यते। संविभागेऽपि प्रधानानां कृत्स्न एव प्रयोक्तव्य इति यानि यत्र अनर्थकानि पदानि, तान्यपि तत्र प्रयोक्तव्यानि, अदृष्टाय भविष्यन्ति, 'सूक्तवाकेन प्रहरति' इति वचनात्। नास्ति वचनस्यातिभारः। गुणेन वा केनचित् अभिधानं तासां देवतानां निर्वर्त-

यिष्यन्तीति । ( अथ भाष्यकारीयः सिद्धान्तः ) अत्रोच्यते । नैतदेवम् । उक्तं मुख्यमेव कार्यं मन्त्राणां न गौणमिति । संस्कारार्थत्वादेव उत्कर्षो न्याय्यः, न गौणमभिधानमिति । कस्तर्हि कृत्स्नसंयोगस्य समाधिरुच्यते इति ? एष समाधिः । नहि एतदेकं वाक्यं यः कृत्स्नः सूक्तवाकः । बहून्येतानि वाक्यानि, येषां प्रधानदेवताभिधायीनि पदानि मध्ये, साधारणानि तन्त्रपदानि पुरस्तादुच्चार्यन्ते, तथा परस्तात् । यथा 'अग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृत, अग्नीषोमाविदं हविरजुषेतामवीवृधेताम्' इत्येवमादीनि । तेषां पुरस्तात्तन्त्रं यथा 'इदं द्यावापृथिवी' इति । परस्तादपि यथा 'अस्यामृधेत्' इति । तान्येतानि सर्वाणि सूक्तवचनेन सूक्तवाकशब्दं लभन्ते । न च तेषां समुदायः कंचिदर्थं वदति । तस्मान्न समुदायः सूक्तवाकः, न च साक्षात् साधनम् । सूक्तवाकसामान्यस्य एकत्वात् सूक्तवाको वर्तते इत्येकवचनं भवति । 'सूक्तवाकेन प्रस्तरं प्रहरति' इति तु येन केनचित् सूक्तवाकेन प्रह्रियमाणे यथाश्रुतं कृतं भवति । तस्मान्न समुदायः सूक्तवाकः । यत्तु अमावास्यादेवतावाचीनि पदानि न पौर्णमास्यां प्रयुज्यन्ते, न तत्र सूक्तवाकशब्दो बाध्यते । प्रकरणं तत्र लिङ्गेन बाधितम् । तच्च न्याय्यमेव । तस्मात् पौर्णमास्याममावास्यायां च विभज्य सूक्तवाकः प्रयोक्तव्य इति ।

**वा**— द्वौ हि प्रस्तरप्रहरणप्रयोगौ, भिन्नकालपौर्णमास्यमावास्याधीनत्वात् । अतश्च उभे प्रति कृत्स्नः सूक्तवाकशब्दः, तयोरुभयोरपि सकलसूक्तवाकः साधनम्, प्रकरणस्य अविभक्तत्वात् विज्ञायते । यदा तु भेदेन प्रहरणमात्रमालोच्यते तदा प्रायणीयोदयनीयैकादशिनीवत् ( १०।६।४ ) चातुर्विद्यघनवच्च ( चातुर्विद्येभ्यः शतं देयं इत्यत्र एकैकवेदविदे शतस्य चतुर्थश्चतुर्थो भागो दीयते तद्वत् ) अवयवशः संबन्धो भवति । तस्मात् श्रुतिलिङ्गप्रकरणानां अविरोधः इति सूत्रम् ।

तदिदानीं भाष्यकारो दूषयति– 'नैतदेवम्, नहि सापेक्षाणामितिकर्तव्यतया संबन्धः' इति । कुतः ?

**'विधिर्यदि प्रधानानामितिकर्तव्यतां प्रति । उभे प्रति ततः कृत्स्नः सूक्तवाको भवेदयम् ॥'**

प्रधानानि हि फलं प्रति विधीयन्ते न इतिकर्तव्यतायाम् । अतस्तेषां फले विवक्षितं साहित्यं नेतिकर्तव्यतायाम् । इतिकर्तव्यतां हि प्रति तानि उद्दिश्यमानानि भवन्ति, अविधीयमानायास्तस्या गुणत्वाभावप्रसङ्गात् । सा चेद्विधीयते द्वयोरन्योन्यं प्रति विधानासंभवात् असंबन्धात् अवश्यं प्रधानोद्देशेन भवितव्यम् । ततश्च उद्दिश्यमानानां द्वंद्वावगमितं ( दर्शपूर्णमासाभ्यां इति द्विवचनावगमितं ) इतरेतरसाहित्यं न विवक्ष्यते । तेन प्रत्येकं इतिकर्तव्यतावाक्यसमाप्तेः एकैकं प्रधानं समस्तेतिकर्तव्यतायुक्तं अवगतम् । तथैवानुष्ठानेऽपि प्राप्ते सकृत्कृतानामेव एककालवर्तिनां प्रत्येकं कार्त्स्न्यमस्ति इति तन्त्रेणानुष्ठानं भविष्यति । तदिहापि प्रत्याग्नेयादि प्रधानं मा नाम सूक्तवाक आवर्तिष्ट । प्रयाजादिवत्तु पौर्णमास्याममावास्यायां च सकलेन भवितव्यम् । इतरथा वा प्रयाजादयोऽपि विभज्यैव प्रयुज्येरन् । न चेदं प्रमाणवत् । अतः श्रुतिबलीयस्त्वात् लिङ्गं बाधित्वा गौणत्वं अदृष्टार्थत्वं तद्विषयं वा प्रहरणस्य देवतान्तरमध्यवस्यामः ।

कथं पुनः समुदाये फलसाधनत्वेन चोद्यमाने साधनत्वरहितानां अवयवानां इतिकर्तव्यतासंबन्ध इति ? उच्यते- **'यागस्य फलसंबन्धात् प्रत्येकसमवायिनः । समुदायः फलार्थः स्यादिति केनावगम्यते ॥'** यागत्वं हि प्रत्येकं समवेतम् । तद्वाचिना च धातुना एकैकस्य इतरानपेक्षस्य साधनशक्तिरवधार्यते । ननु समुदायवाचिनामविशेषितत्वात् धातुरपि समुदायलक्षणार्थ एव भवेत् । न । नाम्न एव च धात्वधीनत्वेन प्रत्येकवृत्तित्वात् । तदुक्तं पौर्णमास्यधिकरणे ( २।२।३ ) । तेन सहापि नाम्ना इतरेतरयुक्तत्वमात्रमेव धर्मोऽभ्यधिको न समुदायः फलवान् । ननु एवमपि यथैव साधनत्वं इतरेतरयुक्तानां एवं तदनुग्रहार्थत्वात् इतिकर्तव्यताऽपि तथैव स्यात् । न । तस्यैव साहित्यस्य उद्दिश्यमानत्वेन इतिकर्तव्यतां प्रति अविवक्षितत्वात् । एकमपि हि



वस्तु लक्षणतः ( उपादेयोद्देश्यगतत्वरूपलक्षणभेदात् ) क्वचिदेव विवक्ष्यते न सर्वत्र । कथं एकस्य युगपदुद्दिश्यमानोपादीयमानत्वं इति चेत्, अपेक्षाहेतुभेदात् ईदृशान्यपि भवन्ति इत्युक्तम् ( २।१।५ ) ।

ननु वैरूप्यात् वाक्यभेदः स्यात् । को वा प्रधानोद्देशेन इतिकर्तव्यतां विदधतः प्रकरणाम्नानानुमितस्य ( प्रयाजादिभिर्दर्शपूर्णमासौ उपकुर्यात् इत्यस्य ) श्रुतात् वाक्यान्तरत्वं नेच्छति । ननु च अयमितरेतरयोगः फलार्थमपि विवक्ष्यमाणः इतिकर्तव्यतासंबन्धवेलायामपि बलात् प्रसज्यमानो न शक्यते वारयितुम् । सत्यं प्रतीतितो न शक्यते, विधितस्तु शक्यते । कथम् ? इह हि विशिष्टभावनाविध्युत्तरकालं अवान्तरविधिषु कल्प्यमानेषु कर्मणः फलसाधनांशे पुरुषः प्रवर्त्यमानः कर्मसाहित्येऽपि पश्वेकत्ववत् प्रवर्तितः प्रधानेतिकर्तव्यतासंबन्धांशे प्रधानानि प्रति अप्रवर्त्यमानत्वात् तदीयसाहित्येऽपि प्रवर्तितः अङ्गानि तु सहितानि प्रति नियुक्तः । तस्मादितिकर्तव्यतां प्रति ग्रहैकत्ववत् प्रधानसाहित्यमविवक्षितम् । नहि एकेनैव प्रधानशब्देन प्रधानानि अङ्गार्थमुद्दिशता तत्साहित्यमुपादातुं शक्यम्, वचनव्यक्तिभेदात् । तस्मात् प्रत्येकमितिकर्तव्यता । तद्दर्शयति ( भाष्यं ) 'संनिधानाविशेषात्' 'साधनत्वेन च सर्वेषां निर्देशात्' एकस्यापि च इतिकर्तव्यतान्तरानुपदेशात् । 'अस्य' च कथंभावरूपस्य 'प्रकरणसामर्थ्यस्याविशेषात् एकैकस्य कृत्स्नम्' अन्योन्यनिरपेक्षस्य 'प्रकरणं' इति । ततश्च 'वचनादिति चेत्' ( सू. १८ ) इत्ययमेव पक्षोऽवशिष्यते ।

एवं च भङ्क्त्वा सूत्रं 'अत्रोच्यते, नैतदेवं' इति ( भाष्यं ) स्वयमुत्तरपक्षमभिधत्ते । न तावत् गौणत्वं अदृष्टार्थत्वं देवतान्तरं वा युक्तम्, पुरस्तान्निराकरणात् । अतो यथार्थनिष्कर्षे सति सूक्तवाकशब्द उपपद्यते, सूक्तवाकबहुत्वात् । नहि भिन्नकर्मगतभिन्नदेवताप्रकाशनसमर्थानां अन्योन्यनिरपेक्षनानाप्रयोजनयुक्तानां 'अग्निरिदं हविरजुषत' इत्येवमादीनां एकवाक्यतालक्षणमस्ति । तस्मात् पुरस्तात् परस्ताच्च अनुषङ्गयुता बहव एते सूक्तवाका ईदृशा द्रष्टव्याः । 'इदं द्यावापृथिवी' इत्यारभ्य 'अग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृत, अस्यामृधेद्धोत्रायां देवंगमायाम्' इति यावत् समाप्तिः । ततः पुनः 'इदं द्यावापृथिवी' इत्यारभ्य 'सोम इदं०' इत्युक्त्वा 'अस्यामृधेद्धोत्रायाम्' इति समाप्यते । तेन प्रतिदेवतं भिन्नानां सूक्तवाकानां समानप्रयोगभाजां आम्नानवत् तन्त्रेण कतिपयानां पाठः । 'येन केनचित्' ( भाष्यं ) तु प्रहृते सूक्तवाकेन प्रहृतं भवति, जातिवत् प्रत्येकं सूक्तवाकत्वस्य सुभाषितयोगात्मकस्य समाप्तत्वात् । तत्रोपपन्ने सूक्तवाकशब्दे यत् अन्यदेवतावाचीनि अन्यत्र न प्रयुज्यन्ते, न तत्र श्रुतिः पीड्यते । किं तर्हि ? लिङ्गवाक्याभ्यां प्रकरणं ( पीड्यते ) । तच्च न्याय्यमेव इति निष्कृष्य प्रयोगः ।

इदमपि तु न युक्तमभिहितं ( भाष्यकारेण ), तन्त्रपदैः वैश्वानरवाक्यवत् एकवाक्यतायाः प्रत्यक्षत्वात् । नहि प्रतिपदं परस्पराकाङ्क्षा संबन्धो वा भवति । किं तर्हि केनचिदेकेन संबध्यमानानि सर्वाणि एकवाक्यतां गच्छन्ति । तद्यथा, 'अरुणया पिङ्गाक्ष्यैकहायन्या' इति परस्परेण असंबद्धानामपि क्रीणातिना अभिसंबन्धात् एकवाक्यत्वम् । एवमिहापि 'यदनेन हविषाऽऽशास्ते' इत्यादिभिः संबन्धात् एकवाक्यत्वं भविष्यति । अस्ति च इष्टदेवताप्रकाशनं नाम एकं प्रयोजनं तन्त्रपदवशेन साकाङ्क्षावयवत्वम् । तस्मात् यद्यपि तावत् अर्थतः प्रत्येकं वाक्यपरिसमाप्तिः तथापि शब्दतः सिद्धमेव एकवाक्यत्वम् । किमुत हरतिं प्रति उपादीयमानत्वेन समुदाये वाक्यपरिसमाप्त्यङ्गीकरणात् । यदि च भिन्नानि वाक्यानि भवेयुः तत उपमद्दक्षिणादिमन्त्रवत् प्रयोगकाले देवतापदप्राधान्यात् भेदेनैव प्रयोगः प्राप्नोति । प्रस्तरप्रहरणे च विवक्षितैकसंख्यत्वात् तावता कृतार्थत्वात् एकदेवत्यस्य अयं कस्यचित् प्रयोगः प्राप्नोति । तस्मात् समस्तमेकं वाक्यम् । अतश्च वक्तव्यः कृत्स्नवचनस्य परिहारः । स उच्यते । **'बिन्दौ च समुदाये च तोयशब्दो यथेष्यते । संसर्गिद्रव्यरूपत्वात् सूक्तवाकपदं तथा ॥'** सूक्तवाको हि सामर्थ्यतः प्रयोजनतश्च ईदृगवधार्यते, प्रयोगमध्यवर्तिदेवतापदसहितम्, अभितः श्रूयमाणतन्त्र-

पदोपेतम्, इष्टदेवताप्रकाशनं कुर्वत्, वाक्यं सूक्तवाकः। ततश्च एकस्मिन् देवतापदे सति अनेकस्मिंश्च प्राकृते वैकृते च तन्त्रपदमध्यस्थे सकलः सूक्तवाकः। प्रयोगासंबद्धदेवतापदसाहित्ये तु दुरुक्तवाको भवति। तेन पौर्णमास्यमावास्ययोः स्वदेवतापदोपेतः सूक्तवाकः युक्तिसहितेन पाठेन अनुषङ्गादिपूरितमन्त्रवत् अवधारितः इति असमवेतार्थपदप्रयोगे सति असूक्तवाकत्वात् सुतरां श्रुतिपीडा स्यात्। अतश्च हरतिरपि यथाविद्यमानसूक्तवाकसाध्यत्वात् कृत्स्नेनैव साधितो भवति इत्यदोषः। **'तेन त्रिधैव मन्तव्यः सूक्तवाकः प्रतिष्ठितः। स्वाध्याये कर्मकाले च प्रकृतौ विकृतावपि ॥ सर्वप्राकृतदेवत्यः स्वाध्याये तावदिष्यते। पठन्नन्यादृशं तत्र तं विनाशयति ध्रुवम् ॥ निष्कृष्टदेवतामध्यः प्रकृतौ समुदाययोः। सूर्यादिपदमध्यश्च विकृतावपधार्यते ॥ सूक्तवाकः स तत्रैव यत्र यादृङ् निरूपितः। जहाति सूक्तवाकत्वं असंगतनिरूपणात् ॥'** भाष्येऽपि च यावद्देवतं सूक्तवाकसंभवात् एकस्यापि बहुत्वं अभिहितं इति द्रष्टव्यम्। तथा सूत्रमपि उभे प्रति स्वदेवतापदसाहित्यमात्रेण कृत्स्नसूक्तवाकशब्दः प्रकरणाविभागात् कल्पितः इत्येवमेव गमयितव्यं इति सर्वेषामविरोधः।

**सु--** प्रहरणाङ्गत्वेऽपि सूक्तवाकस्य इष्टदेवताभिधानार्थत्वाविघातात् श्रुतिविनियोज्यस्यापि मुख्ये एवार्थे विनियोगात् 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यस्यापवादे पूर्वाधिकरणेन कृते, पौर्णमास्यमावास्यादेवतावाचिनां इन्द्रादिपदानां अमावास्यायां च पौर्णमासीदेवतावाचिनां प्रजापत्यादिपदानां असंभवेन अयथार्थत्वात् मुख्येऽर्थे विनियोगो न संभवति इत्याक्षिप्य असमवेतार्थानामप्रयोगात् अपवादसमर्थनाय इदमधिकरणं इत्यनन्तरसंगतिः।

**सोम--** कालार्थसंयोगे विभज्यविनियोगस्याप्राप्तेः अङ्गाङ्गित्वमुपजीव्य अस्य विचारस्य प्रवर्तनीयत्वात् **संगतिः।**

**वि--** 'प्रहृतेरखिलः सूक्तवाकोऽङ्गं स्याद् विभज्य वा।, समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता नहि ॥, दर्शपूर्णिमयोर्देवाननुसृत्य विभज्यताम्। आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥'

**भाट्ट--** श्रुत्या लिङ्गोपष्टब्धया प्रहरणाङ्गत्वावगमात् न लिङ्गमात्रेण सूक्तवाकस्य इष्टदेवतास्मरणार्थत्वम्। न चात्र विरोधोऽपि अध्येतृप्रसिद्ध्या समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेन अवयवशो विभज्य विनियोगे अवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः। न चासौ 'सुष्ठु उक्तं वक्ति' इति व्युत्पत्त्या इष्टदेवतावाचिपदसमुदाये यौगिकः, पारायणाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसंपत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यंभावात्। अस्तु वा इष्टदेवताप्रकाशनं आनुषङ्गिकं फलम्, प्रहरणमेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजकं इति दर्शे पौर्णमासे च सर्वः प्रयोक्तव्यः। इति प्राप्ते, प्रबलयाऽपि श्रुत्या लिङ्गस्य बाधे प्रहरतिलक्ष्यहोमान्तर्गतदेवतोद्देशस्य आराद्रुपकारकत्वापत्तेः दृष्टविधया संनिपत्योपकारकत्वलाभार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते। अत एव श्रुतिबलीयस्त्वात् प्रहरणप्रयुक्तः सूक्तवाकः प्रहरणाभावे अननुष्ठीयमानोऽपि विभज्य विनियोगांशे इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वं अनुमन्यते। न चैवं सूक्तवाकशब्दस्य अवयवलक्षणार्थत्वापत्तिः, सूक्तवाकपदस्य 'सुष्ठु उक्तं वक्ति' इति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात्। तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः। अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः। न चाध्ययनादौ योगबाधात् रूढिमात्रकल्पना, तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपूर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गीकारात्। अश्वकर्णादौ शक्यसंबन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनापि अतिरिक्तशक्तिकल्पनं इति विशेषः। प्रयोजनं विभज्य विनियोगः।

**मण्डन--** 'सूक्ताभिधानाद् बहवोऽत्र मन्त्राः।' (तस्मात् दर्शे पौर्णमास्यां च विभज्य विनियोगः)।



**शंकर--** 'विभागः सूक्तवाकके।' ७।

* **सूक्तवाकविशेषांशस्य** वाक्यबलात् दर्शपूर्णमासयोः विभज्य विनियोगः। वि. ३।२।९.

* **सूक्तवाकशब्दः** मन्त्रभागे यौगिकः। वि. ३।२।६. * सूक्तवाकशब्दः सुभाषितवचननिमित्तकः। सूक्तवाकशब्दावयवव्युत्पत्त्या सुभाषितवाचिपदसमूहवाचित्वात्। सु. पृ. ११०९, * सूक्तवाकशब्दस्य 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादौ 'नमो देवेभ्यः' इत्यन्ते पदसमूहे अध्येतृप्रसिद्धिः। पृ. ११०८.

**सूचीकटाहन्यायः।** यथा लोहकारं प्रति पूर्वं कश्चित्कटाहोत्पादनार्थी ह्यागतः, पश्चात्सूच्युत्पादनार्थी प्राप्तः, तत्र लोहकारः प्रथमं कर्तव्यत्वेन प्राप्तमपि कटाहं बहुकालसाध्यत्वात्तत्परित्यज्य पश्चात्कर्तव्यतया प्राप्तामपि स्वल्पकालसाध्यां सूचीं प्रथममुत्पादयति, तथा अनेकेषु पदेषु वाक्येषु व्याख्येयेषु प्रथमपठितमपि बृहद्वाक्यं परित्यज्य मध्ये चान्ते वा पठितं स्वल्पं वक्तव्यं व्याख्यायते, ह्येवं प्रकृतान्तरेऽपि बोध्यम्। **साहस्री.** १९८.

* तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके **सूचीकटाहन्यायेन** इष्टिविकृतीरुपेक्ष्य अग्नीषोमीयपशोः विकृतयः पशवः अल्पवक्तव्यतया वर्ण्यन्ते। **तैसंसा.** २।१।१. * यद्यपि (चयनाङ्गपशूनां) सामिधेन्यः पूर्वमुक्ता अनुष्ठेयाश्च तथापि प्रयाजयाज्यानामल्पवक्तव्यात् सूचीकटाहन्यायेन ता एव प्रथमं विधत्ते। **तैसंसा.** ५।१।८. * शब्दान्तरस्य प्रमाणान्तरसिद्धधात्वर्थभेदोपजीवित्वेन भावनाभेदमात्रे व्यापारात् सूचीकटाहन्यायेन प्रथमं तस्यैव (भावनादिभेदस्यैव) भेदकता निरूप्यते। **कौ.** २।२।१।१.

**सूचीमुखन्यायः।** अस्य गाथा यथा— कस्मिंश्चित् पर्वते वानराः हेमन्तर्तौ शीतेन वेपमानकलेवराः वह्निकणसदृशगुञ्जाफलान्यवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात्तस्थुः। अथ सूचीमुखनामा पक्षी तेषां तं वृथाऽऽयासमवलोक्य आह— भो मूर्खाः नैते वह्निकणाः गुञ्जाफलानीमानि, नैतस्माच्छीतरक्षा भविष्यति, तदन्विष्यतां कश्चित् निर्वातो वनप्रदेशो गुहा वा। अथ तेषामेको वृद्धवानरस्तमुवाच किं तवाऽनेन व्यापारेण, तद्गम्यताम्। स भूयोऽपि वानरान् पुनरेवोवाच। अथ तावदेकेन कुपितकपिना पक्षयोर्गृहीत्वा शिलायामास्फालितः उपरतश्च। अयं न्यायः मूर्खोपदेशकरणविषये प्रवर्तते। **साहस्री.** ८०२.

**सूचीमुखीन्यायः।** अस्य गाथा यथा—कस्मिंश्चिद्वने शमीवृक्षशाखायामरण्यचटकदम्पती वसतः स्म। तत्र कदाचिद्धेमन्ते मेघे वर्षत्येकः शाखामृगः शीतवातवेपमानः शमीमूल उपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह— भो भद्र हस्तपादसमोपेतपुरुषाकृतिस्त्वं मूढ शीतेन कथं पीड्यसे, 'गृहं कथं न कुरुषे'। एतच्छ्रुत्वा तां वानरः सकोपमाह— 'सूचीमुखी दुराचारा रण्डा पण्डितवादिनी। नाशङ्कते प्रजल्पन्ती तत्किमेनां न हन्म्यहम् ॥' एवं प्रलप्य तां शमीमारुह्य तस्याः कुलायः शतधा खण्डशः कृत इति। अयं न्यायः मूर्खोपदेशकरणविषये प्रवर्तते। अत्र सूचीव मुखं यस्याः सा इत्यर्थः। **साहस्री.** ८०३.

**सूचीसूत्रविचारन्यायः।** सूच्यां सूत्रस्य विचारः प्रवेशः, तादृशी रीतिः इत्यर्थः। 'यादृक् चित्तप्रतीतिः स्यात् तादृक् कर्मफलं नृणाम्। परलोकगतिस्तादृक् सूचीसूत्रविचारवत् ॥' **गरुडपुराणे** प्रेतखण्डे अध्यायः ३८ श्लोकः १५.

* **सूत्रम्।** अन्यतोऽवगतेऽर्थे सूत्रं 'एवमर्थमिदं' इत्यवगम्यते। तेन च एकदेशः सूच्यते इति सूत्रम्। तत्र भिन्नयोरेव वाक्ययोः (चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थः इत्यनयोः) इमौ (चोदनालक्षणः, अर्थ इति) एकदेशौ इत्यवगन्तव्यम्। **भा.** १।१।२।२ पृ. २०. * सूत्रम्। 'प्रणीतादि तथेति चेत्' इति प्रत्यनुभाषणसूत्रम्। **टुप्.** ९।१।६।२३. * सूत्रम्। वेदसूत्रविरोधे सूत्राण्येवान्यथा नेयानि। **वैद्यनाथः** १।१।१।१ पृ. ३. * **सूत्राणि।** अतः परं (३।४।१।९) षट्सूत्राणि भाष्यकारेण न लिखितानि। तत्र व्याख्यातारो विवदन्ते। केचिदाहुर्विस्मृतानि। लिखितो ग्रन्थः प्रलीन इत्यपरे। फल्गुत्वादुपेक्षितानि इत्यन्ये। अनार्षेयत्वात् इत्यपरे।

वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि । सन्ति च जैमिनेः एवंप्रकाराणि अपि अनत्यन्तसाङ्गभूतानि सूत्राणि । तत्र केश्चित् त्रीणि अधिकरणानि कल्पितानि, अपरैश्चत्वारि । वा. ३।४।१।९-१. * **सूत्रस्य** अपरिपूर्णार्थस्यापि पटुव्याख्यानात् पूर्णार्थत्वोपपत्तिः । **सु. पृ. ९३१.** * ‘**सूत्रेष्वेव** हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥’ इति ये वदन्ति तान् प्रति उच्यते । वा. २।३।६।१६ पृ. ६०२. * ‘सूत्रेष्वेव हि तत् सर्वं यद्वृत्तौ यच्च वार्तिके ।’ एतत् च सामान्यतः सर्वोपयोगप्रतिपादनं ‘सूत्रेष्वेव०’ इति न्यायात् ‘विधिना त्वेकवाक्यत्वात्०’ ( १।२।७ ) इति सूत्रावयवारूढं द्रष्टव्यम् । **सु. पृ. २५.** सूत्रेषु- ‘प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना । न कार्या वृत्तिकारेण सति सिद्धार्थसंभवे ॥ सूत्रार्थे क्लिश्यतश्चैवं दूरे वेदार्थनिर्णयः । तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥’ **श्लोवा.** १।१।१।३५-३६. * सूत्रेषु भाष्यकारेण क्वचित् शब्दतो वा अर्थतो वा विपरिवर्तनं कृतम् । यथा- ‘शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥ ५४ ॥ विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते । पदेन व्यवधानं तु लोके संनियमादिति ॥ ५५ ॥ सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् । पशुसामान्यविध्यादौ सूत्रमेवान्यथा कृतम् ॥ ५६ ॥ अग्नयश्च स्वकालत्वाद् देयधर्मापयातनम् । व्याख्यानं वाक्यभेदेन गुणकल्पास्त्वमी कृताः ॥ ५७ ॥ औत्पत्तिकस्तु गव्यस्य, तयोर्ष्णिककुभोरिति । दर्शनाच्च विशेषस्य तथाऽभ्युदय इत्यपि ॥ ५८ ॥ **श्लोवा.** १।१।१ । ( अस्य विवरणं तु ‘अध्याहारोदाहरणं’, ‘विपरिणामोदाहरणं’, ‘व्यवहितकल्पनायां’, ‘अन्यथाकरणं’, ‘वाक्यभेदः सूत्रे यथा’, ‘गुणकल्पना’ इति बिन्दुषु द्रष्टव्यम् । ( के. )

* **सूत्रोक्तस्य** दोषस्य सूत्रेण अपरिहारे सूत्रकृतः शून्यहृदयताऽऽपत्तिः । सु. पृ. ७९७.

* ‘**सूत्रवार्तिकभाष्येषु** दृश्यते चापशब्दनम् । अश्वारूढाः कथं चाश्वान् विस्मरेयुः सचेतनाः ॥’ **वा.** १।३।८।२४ पृ. २६०.

* **सूत्रवेदविरोधे** सति- ‘वैदिकं जैमिनीयं च यात्र वाक्यं विरुध्यते ॥ ४७ ॥ यथाश्रुतगृहीतेऽर्थे, तत्रेदमुपदिश्यते । अध्याहारादिभिः सूत्रं, वैदिकं तु यथाश्रुतम् ॥ ४८ ॥ नेयं ...... । **श्लोवा.** १।१।१.

* **सूत्रव्याख्या** । ‘साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता । विशिष्टा प्रतिसूत्रं या ॥’ **श्लोवा.** १।१।१।२८

**सूत्रशाटकन्यायः** । अयं हि ‘इग्यणः संप्रसारणम्’ ( पा० १।१।४५ ) इति सूत्रस्थमहाभाष्ये अभिहितः । तद्यथा- ‘एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते । तद्यथा- कश्चित्कञ्चित्तन्तुवायमाह-अस्य सूत्रस्य शाटकं वयेति । स पश्यति- यदि शाटको न वातव्यः । अथ वातव्यो न शाटकः । शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाऽभिप्रेता । स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । एवमिहापि स यणः स्थाने यस्याभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति’ इति । एवं हि यत्र भाविसंज्ञया निर्देशस्तत्राऽयं प्रवर्तते । यथोक्तरीत्या सूत्रावस्थायां भाविन्या संज्ञया निर्देशस्तथा यथाऽन्यरुद्रो वसेत्काश्यामित्यत्र दार्ष्टान्तिकेऽपि बोध्यम् । **साहस्री.** १६९.

* **सूत्रसमुदायात्मकं** शास्त्रम् । **मणि. पृ. १.**

* **सूत्रकारस्यापि** अविशेषो वृत्तिकारेण । **भा.** ५।१।१।१.

* **सूत्रकारादीनां** शिष्यप्रज्ञासंस्कारे प्रवर्तमानानां येनैव तदनुगुणं यत् कृतम्, तदेव ग्रहीतव्यं नासद्ग्रहः कर्तव्यः । **वा.** २।३।६।१६.

* **सूत्रकारवचनात्** आचार्यवचनाद् वा न शब्दार्थो भवति, प्रत्ययादसौ गम्यते । **भा.** ३।४।४। १३ पृ. ९२३.

**सूपावसानाऽधिकरणम्** । ( ‘सूपावसाना सूपचरणा’ इति प्रकृतावेव विकल्पेन निवेशः ) ॥

सूक्तवाकनिगदे यद् ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यादिति विनिन्द्य सूपचरणा च स्वधिचरणा चेत्येव ब्रूयात्’ इत्येवमादयो



विधयः श्रूयन्ते । तेषु श्रुतस्यापि गिरापदस्य निषेधेनेरापदविधिना गिरापदघटितमन्त्रस्यान्यत्र विनियोगकल्पनवदश्रुतस्य पदस्य निषेधेन श्रुतदृढीकरणेऽपि निषेधानुमितस्याश्रुतपदप्रयोगस्य विकृतौ निवेशः । इति प्राप्ते, शाखान्तरे ‘सूपचरणा च’ इति पाठं विनिन्द्य ‘सूपावसाना च’ इत्यस्यैव विधिदर्शनात् उभयोरपि प्रकृतौ विकल्पेन निवेशः । **संकर्ष.** ४।३।१९.

* **सूर्मिः** स्थूणा । **के.**

* ‘**सूर्याय** जुष्टं०’ इति ऊहस्य न मन्त्रत्वम् । सौर्ये चरौ । **वा.** २।१।९।३४. * **सूर्यस्य** अभिधानानि- सूर्यः, आदित्यः, भास्करः, सविता, दिवाकरः इति । **भा.** १०।४।१३।२५.

**सूर्यास्तन्यायः** । यथा सूर्येऽस्तं गते सति जारचोरानूचानादयः स्वेष्टानुसारेणाऽभिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते, एवं प्रकृतेऽपि ज्ञेयमिति । अयं सर्वदर्शनसंग्रहे बौद्धनये अभिहितः । **साहस्री.** ६९४.

* **सूर्यादिपदेन** अग्न्यादिपदस्य अगत्या बाधः । **सु. पृ.** ८८३.

* **सूर्यनानात्वं** योग्यानुपलब्ध्या बाधितत्वात् न युक्तमभ्युपगन्तुम् । **वैद्यनाथः** १।१।६।१५ पृ. ८१.

* ‘**सृण्येव** जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥’ ( **ऋसं.** १०।१०६।६ ) । भूतांशः नाम कश्चित् ऋषिः जरामरणनिराकरणार्थी अश्विनौ देवौ स्तुतवान् । तत्र सृणिः अङ्कुशः सरणसाधनत्वात् (संरणं गमनम्) तं अर्हन्तौ तत्र वा साधू सृण्यौ, अर्थात् कुञ्जरौ । आकारः ( सृण्या इति ) छन्दसि द्विवचनादेशः । तौ इव अत्यर्थं जृम्भमाणौ अष्टाङ्गप्रहरणव्यापृतौ **जर्भरी** ( चत्वारः पादाः द्वौ दन्तौ शुण्डा पुच्छं च इत्यष्टावङ्गानि । भृञो यङन्तात् पचाद्यच् । यङो लुक् । छान्दसः अभ्यासस्य जकारः विभक्तेरीकारश्च । स्वानुग्राह्याणां अतिशयेन भर्तारौ । **तुर्फरीतू** शत्रूणां हिंसितारौ । तुर्फ हिंसायाम् । औणादिकं रूपम् । **नैतोशेव,** नितोशतिर्वधार्थकः । पचाद्यजन्तात् स्वार्थे अण् । प्रथमाद्विवचनस्य आकारश्छान्दसः । नैतोशा इव योधौ इव तुर्फरीतू इत्यन्वयः । **तुर्फरी** त्वरमाणौ । त्वरेः औणादिकं रूपम् । प्रथमाद्विवचनस्य ईकारश्छान्दसः । **पर्फरीका** पर्फरीकौ शोभमानौ । पर्फेरौणादिकं रूपम् । प्रथमाद्विवचनस्य आकारश्छान्दसः । **उदन्यजा** उदन्या पिपासा चातकस्य विवक्षिता । तया च प्रावृट्कालो लक्ष्यते । प्रावृषि जातौ । विभक्तेराकारश्छान्दसः । उदन्यजा इव चातकौ इव । **जेमना**- जेमानौ उदकलाभेन पिपासायाः जेतारौ । छान्दसं रूपम् । **मदेरू** मत्तौ । उदन्यजा जेमना मदेरू चातकाविव स्थितौ इत्यर्थः । ता तौ प्रसिद्धौ युवां हे अश्विनौ । मे मम । **जरायु** जराधर्मकम् । **मरायु** मरणधर्मकं शरीरं **अजरं** जरामरणरहितं कुरुतम् । इति । **कु.** १।२।४।३९.

अत्र **निरुक्तं** ( १३।५ ) ‘सृण्येवेति । द्विविधा सृणिर्भवति भर्ता च हन्ता च, तथा अश्विनौ चापि भर्तारौ, जर्भरी भर्तारौ इत्यर्थः, तुर्फरीतू हन्तारौ । नैतोशेव तुर्फरी पर्फरीका । नितोशस्य अपत्यं नैतोशं नैतोशेव तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू । उदन्यजेवेति उदकजे इव रत्ने सामुद्रे चान्द्रमसे वा । जेमने जयमने जेमना मदेरू । ता मे जरायु अजरं मरायु । एतज्जरायुजं शरीरं शरदमजीर्णम् ।’ इति ।

* ‘**सृष्टीरुपदधाति**’ अत्र मन्त्रानुवादी सृष्टिशब्दः न गुणविधायकः किन्तु अर्थवादः । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानविधिरत्र । **वि.** १।४।१७. * ‘सृष्टीरुपदधाति’ अत्र सृष्ट्यसृष्टिसमुदायपरत्वस्य सृष्टिशब्दे स्वीकृतत्वात् न्यूनस्य अधिकार्थविषयकत्वकल्पने गौणत्वदोषः । **बाल. पृ. ३,** * ‘सृष्टीरुपदधाति’ अयं गुणकल्पनया क्रत्वर्थः विधिः । **पृ. २७.** * ‘सृष्टीरुपदधाति’ इति अयं अनुवादोऽर्थवादः न गुणविधिः । **भा.** १।४।१२।२३-५. * ‘सृष्टीरुपदधाति’ इति बाहुल्येन सृष्टिव्यपदेशः । **वि.** १।४।१७, * ‘सृष्टीरुपदधाति’ इति सृष्टिशब्दः भूमगुणयोगेन सृष्ट्यसृष्टिसंघलक्षकः सन् इष्टकालक्षकः अग्निचयने ।

१।४।१७. * सृष्टिषु असृष्टिषु च सृष्टिशब्दः । भा. १।४।१३।२४.

* **सृष्टयधिकरणम्** । इदमेव भूमाधिकरणम् । ( १।४।१२।२३–५ भा. ) । बाल. पृ. ५४.

* **सृष्टयधिकरणे** ( १।४।१२।२३–५ ) भट्टसोमेश्वरेणोक्तं 'सृष्टीरुपदधाति' इत्यत्र भाष्यकृद्वत् नोपधानमात्रविधिः मन्त्रानुवादश्च किंतु उपधानमात्रविधावपि दोषोक्तेः विशिष्टविधौ मुख्यानां सृष्टिलिङ्गकानामेव मन्त्राणां विधिप्रसक्तौ 'यत् सप्तदशेष्टका उपदधाति' इति वाक्यशेषात् गौण्या सप्तदशसंख्याविधिः इति । ( एतत् तात्पर्यतः अनूदितं न तु एतादृशी पङ्क्तिस्तत्र विद्यते ) । बाल. पृ. ५४.

* **सृष्टिन्यायः** । ( सृजधातुघटितमन्त्राणां बहुत्वात् 'सृष्टीरुपदधाति' इति इष्टकासमुदायो गृह्यते । १।४।१२।२३–५. मीको. पृ. ३०६४ 'भूमाऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सृष्टिप्रलयौ** इष्येते मन्त्रार्थवादेतिहासप्रामाण्यात् ।... प्रतिसृष्टि च ऋतुलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्गः इति । वा. १।२।१।१० पृ. १२६.

* सृष्टिप्रलयौ । प्रसङ्गात् सृष्टिप्रलयौ चिन्त्येते । अत्र नैयायिकवैशेषिकौ– त्रिविधं वस्तुजातं संप्रतिपन्नचेतनकर्तृकं यथा घटादि, संप्रतिपन्नचेतनकर्तृकं व्योमादि, विप्रतिपन्नचेतनकर्तृकं महीरुहाङ्कुरादि । तत्र तृतीयं सावयवत्वेन सिद्धकार्यत्वकं पक्षीकृत्य बुद्धिमत्कर्तृकं कार्यत्वात्, पटवत्, इति ईश्वरं कर्तारमनुमापयति । तस्य च परमाणवः समवायिकारणम्, तत्संयोगश्च असमवायिकारणम्, क्षेत्रज्ञपदवाच्या जीवात्मानो धर्माधर्मौ च निमित्तकारणम् । सर्गकाले पुनः ईश्वरेच्छां अदृष्टं च निमित्तमासाद्य परमाणुषु कर्माणि उत्पद्यन्ते । ततो मिथः संयुक्तैः परमाणुभिः द्व्यणुकादिक्रमेण पृथिव्याद्यवयविचतुष्टयमारभ्यते ।

न च परमाणूनां निरवयवत्वात् अव्याप्यवृत्तिः परमाणुसंयोगो न संभवतीति वाच्यम् । तत्र व्याप्यवृत्तिसंयोगस्य अङ्गीकारात् । तत्तद्देशस्य अवच्छेदकत्वसंभवेन अव्याप्यवृत्तिसंयोगस्यापि परमाणौ नानुपपत्तिः । निमित्तभूतादृष्टवैचित्र्यात् ईश्वरेच्छाजन्यक्रियावैचित्र्यवशाच्च जरायुजाण्डजोद्भिज्जस्वेदजमेदं शरीरमारमन्ते– इत्यूचतुः ।

इदमेव युक्तम् । अस्मन्मतं च । परंतु एतावान् विशेषः– इच्छायाः कार्यमात्रजनकत्वे न किंचिन्मानमस्ति । न च आत्मनिष्ठप्रयत्नोत्पादनं विना इच्छायाः कार्यजनकत्वम् । अचेतननिष्ठक्रियादिजनकत्वं च नानुभूतपूर्वम् । अतः तादृशहेतुहेतुमद्भावकल्पनेन अत्यन्तगौरवापत्तिः । आवश्यकादृष्टहेतुकतया अन्यथासिद्धिश्च । अतो धर्माधर्मयोरेव विजातीयक्रियाजनकत्वं नेश्वरेच्छाप्रयत्नादीनामिति । तेन ईश्वरेच्छायां तस्याः कार्यजनकत्वे च 'स ऐक्षत बहुः स्यां प्रजायेय' इति श्रुतिरेव मानम्, तत्र च 'आत्मनः आकाशः संभूतः' इत्यादाविव ईक्षतिः अदृष्टे लाक्षणिकः । इत्यलं पल्लवितेन ।

ननु प्रलये किं मानमिति चेत्, न । **कालकपालान्यवृत्तिप्रागभावः** कार्यद्रव्यानाधारकार्याधिकरणवृत्तिः, अभावत्वात्, आत्मावृत्त्यन्योन्याभाववत्, इत्यनुमानेन, **घटः** कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगी भावकार्यत्वात्, शब्दवत्, इत्यनुमानेन च खण्डप्रलयस्य, **पटः**, अदृष्टासमानकालीनध्वंसप्रतियोगी, भावकार्यत्वात्, मुक्त्यव्यवहितप्राक्कालीनज्ञानवत्, **बुद्धिः**, प्रागभावासमानकालीनध्वंसप्रतियोगिनी, भावकार्यत्वात्, मुक्त्यव्यवहितप्राक्कालीनादृष्टवत्, **सुखम्**, गन्धानाधारसमयवृत्तिध्वंसप्रतियोगि, जन्यगुणत्वात्, संस्काराजनकानुभववत्, आकाशवदिति व्यतिरेकिणा, **एककालीनाः सर्वे परमाणवः**, समग्रोपादेयप्रबन्धशून्याः, आरम्भकत्वात्, नष्टपवनारम्भकत्वात्, नष्टपवनारम्भकपरमाणुवत्, **दुःखसंततिरत्यन्तमुच्छिद्यते**, संततित्वात्, प्रदीपसंततिवत्, इत्याचार्योपदर्शितानुमानेन च महाप्रलयस्य च सिद्धेः । एवं च नन्दान्तं क्षत्रियकुलमित्यादिपौराणव्यवहारोपपत्तिरित्याहुः ।

**अत्र जैमिनीयाः**– उक्तानुमानेन 'धाता यथापूर्वमकल्पयत्' इत्यादिमन्त्रलिङ्गेन अवान्तरप्रलयसिद्धा-



वपि महाप्रलये नास्ति प्रमाणम्, उक्तानुमानानामुपाधिग्रस्तत्वात् । तथाहि, अमूर्तमात्रवृत्त्यभावत्वस्योपाधित्वात् । उक्तः पक्षः कार्यद्रव्याधाराधारः, मूर्तमात्रवृत्त्यभावत्वात्, तन्तुनिष्ठपटप्रागभाववदिति सत्प्रतिपक्षाच्च । एवं द्वितीयतृतीययोरमूर्तमात्रवृत्तिभावत्वमुपाधिः । एवं महाप्रलयानुमाने, उक्ताः परमाणवः समग्रोपादेयप्रबन्धवन्तः, प्रागभाववत्त्वात्, कपालवदिति सत्प्रतिपक्षः ।

**आचार्यानुमानं** तु 'धाता यथापूर्वमकल्पयत्' इति श्रुतिविरोधात्, 'अचन्द्रार्कग्रहा भूमिः कदाचित्तु भविष्यति । अपौरवा तु पृथिवी कदाऽपि न भविष्यति ॥' इति हरिवंशरूपव्यासस्मृतिविरुद्धत्वात्, यावत्तैलं तावद्व्याख्यानमिति दृष्टान्तप्रसिद्धतैलाभावादिरूपोपाधिविस्मरणाच्चानाचार्यानुमानमेव । अन्यथा नरशिरःकपालं शुचि, प्राण्यङ्गत्वात्, शङ्खवत्, इत्यनुमानस्यापि प्रामाण्यापत्तेः । एवमन्येष्वप्यनुमानेषु दूषणान्यूह्यानीति दिक् ।

**वेदान्तिनस्तु**– 'सर्वं खल्विदं ब्रह्म, नेह नानास्ति किंचन' इत्यद्वैतवादश्रुतिभिः 'सदात्मकं जगदादावासीत्' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिब्रह्मोपादानत्वाभेदकश्रुतेः, 'इन्द्रो मायाभिः पुरुरूप ईयते' इति भेदावगमस्य मायारूपाविद्यानिबन्धनत्वश्रुतेश्च सदेव व्योमादिरूपेण परिणतमिति चिदेकरसस्य च ब्रह्मणो जडरूपेण परिणामोऽनेकत्वं च न वास्तवम्, किंत्वविद्योपाधिकम्, स्वप्नप्रपञ्चवत् । प्रत्यक्षविरोधिश्रुतिजन्यं ज्ञानं चन्द्रतारकापरिमाणबोधकवाक्यवत् प्रत्यक्षबाधेनोपपन्नम् । एवं च 'लोकास्तं परादुरन्यत्राऽऽत्मनो लोकान् यः पश्यति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादयो भेदज्ञाननिन्दार्थवादा उपपद्यन्ते । तेन प्रपञ्चोऽविद्योपाधिकोऽपारमार्थिकः । अत एव सदसद्विलक्षण इत्याहुः ।

तत्र किमिदमपारमार्थिकत्वम् ? मिथ्यात्वमिति चेत्, किमिदं मिथ्यात्वम् ? न तावत् शशशृङ्गादिवत् अत्यन्तासत्त्वं तत्, अबाधितप्रत्यक्षादिविषयप्रपञ्चे तदभावात् । नापि ज्ञानबाध्यत्वमज्ञानजन्यत्वं वा, घटादेर्ज्ञानबाध्यत्वाभावात् अज्ञानस्य जनकत्वेऽबाधितमानाभावेन अज्ञानजन्यत्वासंभवाच्च । न त्वागमेन तद्बोधः, मिथ्याभूतप्रपञ्चान्तर्गतागमेन प्रत्यक्षदृष्टप्रपञ्चे मिथ्यात्वबोधासंभवात् । अन्यथा वेदबोध्ययागस्वर्गसाध्यसाधनभावज्ञाने मिथ्यात्वबोधप्रसङ्गात् । इष्टापत्तौ स्वर्गसाध्यसाधनभावज्ञानेन ब्रह्मज्ञाने मिथ्यात्वबोधापत्तिः, आगमजन्यत्वाविशेषात् । नाप्यनिर्वाच्यत्वं तत्, अनिर्वाच्यपदार्थस्य लोकेऽसंभवात्, प्रपञ्चस्यापि निर्वचनीयत्वेन अनिर्वचनीयत्वाभावाच्च । किञ्च, एवं श्रुतिबोध्यप्रपञ्चमिथ्यात्वेऽपि मिथ्यात्वप्रसङ्गः । तदङ्गीकारे सिद्धं प्रपञ्चस्यामिथ्यात्वमिति दिक् ।

इदमत्र वेदान्तिनामाकूतम् । चैत्रस्य शुक्त्यज्ञानमित्यादौ चैत्रनिष्ठशुक्तिज्ञानस्याभाव इति न बोधः, प्रतियोग्यप्रसिद्धेः, किंतु चैत्रनिष्ठं शुक्त्यज्ञानमिति तदर्थः । तेनाज्ञानं भावरूपः पदार्थः । तस्य च शुक्तिरजते हेतुत्वं लाघवात्, न तु तज्ज्ञाने, गौरवात् । किंच, तत्र रजतं पश्यामीति लौकिकसाक्षात्कारोऽनुभवसिद्धः । तत्र लौकिकसंनिकर्षस्य विषयस्य च हेतुतेति तत्र रजतोत्पत्तिरावश्यकी । एतेन तत्र रजतत्वमेव विषयः, ज्ञानलक्षणा चालौकिकसंनिकर्ष इत्यपास्तम् । अज्ञानं च जीवानां न ब्रह्मणः । एवं चाधिष्ठानाज्ञानस्य शुक्तिरजतादौ हेतुत्वबन्निष्प्रपञ्चब्रह्माज्ञानस्य जीवसंबन्धिनः प्रपञ्चहेतुत्वमिति । इदमेव मिथ्यात्वं सदसद्विलक्षणत्वं चेति पूर्वमतोपपत्तिरिति । नेदमपि युक्तम्, अधिष्ठानज्ञानेऽपि शङ्खपीतिमोत्पत्तेः अधिष्ठानाज्ञानस्योत्पादकत्वायोगात् । न च तत्र दोषस्य हेतुत्वेन दोषाजन्यरजताद्युत्पत्तावधिष्ठानाज्ञानस्य हेतुत्वमिति वाच्यम्, तर्हि परमाण्वाद्युपादानाजन्यस्वाप्नादिप्रपञ्च एवाधिष्ठानाज्ञानस्य हेतुत्वमस्तु, न प्रपञ्चमात्रे । किंच, चन्द्रतारकापरिमाणशङ्खपीतिमादीनामधिष्ठानज्ञाने सत्यपि कथमुत्पत्तिः ? भवतां विशेषदर्शने सत्यपि भ्रान्तेरिव दोषवशादिति चेत्, तर्हि अविद्यातिरिक्तस्यापि प्रपञ्चहेतुत्वापत्त्या गतमज्ञानकारणत्वनियमेन ।

यत्तु रजतं पश्यामीति लौकिकसाक्षात्कारे विषयस्य लौकिकसंनिकर्षस्य च हेतुत्वसिद्धये रजतोत्पत्त्यङ्गीकार इति, तदपि पुरोवर्त्यंशे लौकिकत्वेन रजतत्वांशे अलौकिकत्वेन दोषजन्यत्वाङ्गीकारेण परास्तम् । यत्तु रजतज्ञानत्वस्य कार्यतावच्छेदकत्वमपेक्ष्य रजतत्वस्यैव कार्यतावच्छेदकत्वे लाघवमिति, तदपि अज्ञानस्य कारणत्वकल्पनमपेक्ष्य लघुभूतमेव । न च एवमधिष्ठानज्ञानेऽपि भ्रमापत्तिः, लौकिकतदभावसाक्षात्कारस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकत्वात् । 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतेरपि स्वाप्नसृष्टिविषयत्वेन मायापदस्य दोषपरत्वेन वा व्याख्यानादिति संक्षेपः ।

केचित् तु परमात्मैव स्वेच्छया परमार्थत एव व्योमादि जनयति । 'सदेव सोम्येदमग्र आसीत्, तदैच्छत्, बहु स्यां प्रजायेय' इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति, 'पुरुष एवेदम्, नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतयोऽमुमेवार्थं प्रकटयन्ति ।

अत्र हि आद्यश्रुतिद्वयेन आत्मनस्तद्रूपत्वेन प्रागवस्थितस्य बीजस्येव हेतुत्वं व्योमादीनां च वृक्षस्येव तत्कार्यत्वमुक्तम् । अपरश्रुतिद्वयेन धर्मिभेदाभाव उक्तः । नानाशाखस्य वृक्षस्यानेकत्वेन ज्ञातस्य एकबोधवत् । यानि तु 'आत्मैवैकः सत्यः, इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिनिष्प्रपञ्चस्य मिथ्यात्ववादासत्यत्ववादभ्रान्तिवादमायावादबोधकानि, तानि अस्यानित्यत्वमेव प्रतिपादयन्ति । अपशवो वा अन्ये गोअश्वेभ्य इतिवत् । एतेषामपि मुमुक्षूणामुत्साहजननार्थतया वैराग्यजननार्थतया च प्रपञ्चासत्यत्वात्मपरमार्थसत्यत्वप्रतिपादकतयाऽर्थवादत्वस्य तुल्यत्वात् । विस्पष्टं चैतत् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतौ । मृत्पिण्डभावेन सकलतद्विकारशरावघटादिज्ञानमिव आत्मज्ञानेन तज्जन्यसकलप्रपञ्चज्ञानमित्यर्थः । यद्यपि व्यासरूपेण न ज्ञानं तथापि समासरूपेणेत्युपपत्तिः । तच्च प्रपञ्चस्य सत्यत्वे उपपद्यते । न हि सद्रूपज्ञानेन असत्यस्य ज्ञानम्, शशविषाणादिज्ञानप्रसङ्गात् । अतः सत्यत्वमेव प्रपञ्चस्य युक्तमित्याहुः ।

**निरीश्वरसांख्यास्तु** प्रकृतिरचेतना सत्त्वरजस्तमोगुणात्मिका प्रधानशब्दवाच्या चेतनात्मनामुपभोगाय महदादिविशेषप्रपञ्चरूपेण परिणमति इत्याहुः ।

**सेश्वरसांख्यास्तु** प्रकृतिरेव अविद्याऽस्मितारागद्वेषाभिनिवेशक्लेशकर्मविपाकाशयैः अपरामृष्टं सर्वव्यापिनं पुरुषशब्दवाच्यं ईश्वरमधिष्ठाय महदहंकारपञ्चतन्मात्रादिक्रमेण जगत् सृजति, बीजमिव संस्कृतं क्षेत्रमधिष्ठाय अङ्कुरादिक्रमेण वृक्षादि । तस्मात् प्रकृत्युपादाना सृष्टिः ईश्वरभिन्नक्षेत्रज्ञपदवाच्यजीवभोग्या । प्रकृतेरैक्येऽपि भोक्तॄणां भेदात् प्रपञ्चवैचित्र्योपपत्तिः । **औपनिषदास्तु** ऐकात्म्यवादाः साद्दश्यपरत्वेन व्याख्येयाः । एवं नानात्वनिषेधाश्च । एतदभिप्रायेणैव 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥' इति, 'इन्द्रो मायाभिः पुरुरूप ईयते' इति च द्रष्टव्यम् । येऽपि मुक्तात्मनां ईश्वरेण सह एकत्ववादाः तेऽपि अत्यन्तसाम्येन वैलक्षण्याभावेन वा उपपादनीयाः । 'यदा पश्यः पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' इति श्रुत्या परमसाम्योक्तेः । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति भगवद्वाक्येनापि साम्योक्तेः ।

न च 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति भगवद्वाक्यस्य 'भेदस्य जनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति पुराणवचनस्य च अनुपपत्तिः, तयोः स्वामिभृत्यभावबोधकत्वेन उपपत्तेः । एवं च 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' 'उपद्रष्टाऽनुमन्ता च कर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥' इति भेददर्शनमुपपद्यते । तस्मात् प्रकृत्युपादानोऽयं प्रपञ्चः इत्याहुः ।

तदपि न, प्रकृतेरेकरूपतया हेतुवैलक्षण्याभावेन नरपश्वादिरूपकार्यवैलक्षण्यानुपपत्तेः । क्षेत्रज्ञादृष्टवशात्



वैलक्षण्यं इत्यपि अदृष्टस्य कार्यवर्गान्तःपातितया प्रकृतौ विलीनत्वेन अकारणत्वात् वक्तुमशक्यम् ।

कुतो वा प्रकृत्या महदादिविकारारम्भः ? ईश्वरेच्छयेति चेत्, तस्य अपास्तसमस्तकामस्येच्छाऽभावात् । किंच प्रलये प्रकृतिमात्रस्य आत्मनां च निर्विशेषाणामवस्थितत्वात् धर्माधर्मयोश्च अन्तःकरणधर्मतया तदानीमभावात् पूर्वजन्मनि कृताश्वमेधानां कृतमहापातकानां च विशेषो न स्यात् । न च असतः शशविषाणादेः उत्पत्तिनाशयोः अदर्शनात् ( सतः ) नियतोत्पत्तिदर्शनाच्च उत्पत्तिनाशयोः आविर्भावतिरोभावरूपतया शक्त्यात्मनाऽवस्थितधर्माधर्मवशेन वैचित्र्योपपत्तिः इति वाच्यम् । मृत्पिण्डकपालावस्थयोः घटसत्त्वस्य अनुपलब्धिबाधितत्वात् । 'नासतो विद्यते भावः' इति तु 'न त्वेवाहं जातु नासं' इति नित्यत्वप्रतिपादनोपक्रमात् आत्ममात्रस्य अनुत्पत्तिविनाशधर्मत्वप्रतिपादकम्, न तु सर्वस्य कार्यजातस्य । अस्तु वा कारणात्मना अवस्थानं तथापि मृदात्मनाऽवस्थितघटादिना उदकाहरणासंभववत् प्रकृत्यात्मनाऽवस्थितधर्माधर्माभ्यामपि न वैचित्र्यसंभवः । यदि तु सृष्टिप्रलयपरंपरया अनादित्वं शब्दानां अनाद्यर्थसंबद्धानां वेदानां नित्यतां चाश्रित्य 'सर्वेषां चैव नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथगर्थांश्च निर्ममे ॥' इति वचनानुरोधेन एककर्तृका तुल्यनामव्यवहारकवस्तूत्पत्तिः अङ्गीक्रियते, 'अष्टाशीतिसहस्राणि संप्रदायप्रवर्तकाः' इति वचनानुरोधेन वा अनेककर्तृका तादृशसृष्टिरङ्गीक्रियते । तत्रापि प्रकृतेरुपादानत्वासंभवात् अनुपादाननिर्माणासंभवात् सोपादानत्वसिद्धिः इति संक्षेपः । **मणि.** पृ. ४५–५३.

* सृष्टिप्रलयौ यथा अद्यत्वे तथैव अनादिकालमारभ्य भवतः । समस्तजगतः सृष्टिप्रलयौ तु न संभवतः इति **मीको.** पृ. १७३३ 'जगत् अनादि । न च तस्य कश्चित् स्रष्टा' इति बिन्दौ श्लोकवार्तिके द्रष्टव्यम् ।

* **सृष्टिप्रलयप्रवाहः अनादिः**– वैशेषिका आहुः, अनादिरयं सृष्टिप्रलयप्रवाहः । ब्राह्ममानेन वर्षशतान्ते भगवतो महेश्वरस्य समस्तजगत्संहारेच्छा भवति, तदिच्छावदीश्वरात्मसंयोगात् परमाणुषु विभागकर्माणि उत्पद्यन्ते । तैश्च सर्वेषु मिथो विभक्तेषु यावत् द्व्यणुकं सर्वावयविनाशात् परमाणव एव केवलाः पार्थिवाप्यतैजसवायवीयाः व्योमकालदिगात्ममनांसि च अवतिष्ठन्ते, धर्माधर्माश्च तावन्तं कालं ईश्वरेच्छाप्रतिबद्धाः फलमप्रयच्छन्तः तेषुतेषु आत्मसु अवतिष्ठन्ते । पुनस्तावति काले गते तस्यैव भगवतः कर्मोपभोगशून्यानात्मनो दृष्ट्वा अनुकम्पापरवशस्य सिसृक्षा भवति । ततः सिसृक्षावदीश्वरात्मसंयोगात् परमाणुषु कर्मोत्पत्तेः तद्वशात् मिथः संयुक्तैस्तैः द्व्यणुकादिक्रमेण पृथिव्यादय आरभ्यन्ते । ततः तदिच्छावशादेव अपगतप्रतिबन्धैः अभिव्यक्तसामर्थ्यैः विविधैः कर्मभिः विविधानेकनरपश्वादिभेदभिन्नं भूतजातमारभ्यते । ततः स एव महेश्वरो धर्माधर्मप्रतिपादनाय वेदान् सृजति । तदेवं प्रतिसर्गं अन्येऽन्ये च वेदाः । प्रवाहतस्तु वेदाः सृष्टिप्रलयाश्च अनादयः । कर्ता च महेश्वरः अनादिरेव । इह च परमाणूनां उपादानत्वात् नानुपादानत्वं सृष्टेः । इति । **रत्नाकरः** पृ. ६१६–६१७.

* **सृष्टिप्रलयवादः**—समस्तजगदाश्रयसृष्टिप्रलयवचनं अर्थवादः । अवश्यं च स्वाध्यायविध्यध्यापितस्य उपनिषद्भागस्य प्रयोजनवदर्थपरता वक्तव्या । तेन दैवप्रभावकथनार्थोऽयं सृष्टिप्रलयवादः । समस्तपुरुषकाराभावेऽपि सृष्टिकाले दैववशेनैव सर्वं प्रवर्तते, प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेव उपरमति, तस्मात् धर्मानुष्ठाने एव यतितव्यं इत्येतत्परं सृष्टिप्रलयवचनम् । **रत्नाकरः** संबन्धाक्षेपपरिहारे ११२.

* **सृष्टिप्रलयविषयस्य** तर्कस्य धर्मोपयोगिता—सति असति वा पुरुषकारे दैवबलेन कार्यं प्रवर्तते दैवोपरमे चोपरमति । सृष्ट्यादौ च पुरुषकाराभावेऽपि दैवमात्रात् जगदुत्पत्तेः प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमे जगदुपरमते, तस्मात् दैवस्य अधिकः पुरुषकारात् प्रभावः इति मत्वा श्रौतस्मार्तकर्मानुष्ठाने यतितव्यं इति ज्ञानात् । **सु.** पृ. १३२.

* **सेचनपर्यूहणादीनां** अनुष्ठानं साद्यस्के खलेवाल्याम् । १०।२।३३।७४. **मीको.** पृ. १५३६ 'खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सेवको** यो धर्मार्थं तस्य शूद्रस्य विश्वजिति अदेयत्वम् । ६।७।५।६. **मीको.** पृ. ३६८८ 'विश्वजिति धर्मार्थसेवकः शूद्रो न देयः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सेवा** राजकुले क्रियते । वा. ३।४।९।२६.

⧗ **सैन्धवोदकन्यायः** । यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते, एवं प्रकृतेऽपि । **साहस्री.** ७४५.

⧗ **सोपानावरोहन्यायः** । यथा हि येन क्रमेण सोपानमारोहन्ति तद्विपरीतक्रमेण ततः अवरोहन्तीति लोके प्रसिद्धम् । **साहस्री.** ४५.

⧗ **सोपानारोहन्यायः** । 'आरोहणं स्यात्सोपानम्' इत्यमरः । यथा प्रासादमारुरुक्षुर्युगपदारोढुमशक्नुवन् पूर्वांपूर्वां कक्षां परित्यजन्नुत्तरामुत्तरां च आरोहन् क्रमेण प्रासादमारोहति, तथा स्वात्मभूतमपि ब्रह्माज्ञानाद्व्यवहितमिवापन्नमात्मत्वेन ज्ञातुकामः सहसा ज्ञातुमशक्नुवन् उत्तरोत्तरात्मत्वबुद्ध्या पूर्वपूर्वात्मत्वधीबाधनक्रमेण प्रपञ्चोपशमं शिवं अद्वैतं चतुर्थं आत्मत्वेन जानातीति भावः । **साहस्री.** ४४.

* **सोमः** अपूर्व एव । स न कुतश्चिद्धर्मान् गृह्णाति । **भा.** ८।१।३।५. * सोमः अव्यक्तचोदनः । तस्मात् सोमे ये एव धर्माः विधीयन्ते ते एव भवन्ति, नान्ये । **टुप्.** १०।४।१।१. * सोमः अव्यक्तचोदनः । व्यक्तचोदनात्वं च द्रव्यदेवतावत्त्वम् । **भा.** ८।१।५।१२. * सोमः एकच्छन्दस्को नास्त्येव, किंतु नानाछन्दस्कः । **वि.** ३।२।१९.

[ 'वचनादिष्टिपूर्वत्वम्' (५।४।३।५-९) इत्यधिकरणावयवभूतानि 'सोमश्चैकेषां०' इत्यादीनि चत्वारि सूत्राणि तत्रैव ( **मीको.** पृ. ३३९४ ) संग्रहीतुं योग्यान्यपि प्रमादात् न संगृहीतानि । तानि प्रथमसूत्रवर्णानुक्रमानुरोधेन अत्र संगृह्यन्ते । ]

⧗ **सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदन्तेनानर्थकं हि स्यात् । ५।४।३।६॥**

यद्यपि आधानं कृत्वा ततो दर्शपूर्णमासेष्टिः कर्तव्या ततो यथाकालं सोमः इति आधानस्य इष्टिपूर्वत्वं वचनादस्त्येव तथापि एकेषां केषांचित् शाखिनां आधानोत्तरं इष्टेः प्राक् सोमः स्यात् आधानोत्तरं आदौ सोमः तत इष्टिः इति । चकारः वैकल्पिकसमुच्चयपरः । कुतः ? सोमपूर्वत्वं अग्न्याधेयस्य आधानस्य तदन्तेन तदन्तत्वेन सोमान्तत्वेन हेतुना सोमस्य आधानानन्तर्यं गृहीत्वा इत्यर्थः । ऋतुनक्षत्रातिक्रमवचनात् सोमकालस्य वसन्तादेः ऋतोः, कृत्तिकादेश्च नक्षत्रस्य, अतिक्रमः उक्तो वचनेन 'यः सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तुं प्रतीक्षेत न नक्षत्रम्' इति । सोम आधानानन्तर्याभावे तु ऋतुनक्षत्रातिक्रमवचनं अनर्थकमेव स्यात् । हिशब्दः एवार्थकोऽत्र । तस्मात् सोमपूर्वत्वम् । तदन्तेन इत्यत्र तदर्थेन इति पाठे तदर्थेन पूर्वपक्षसिद्धार्थेन योगे कालबाधकं वचनं अनर्थकमेव स्यात् इत्यर्थः ( वृत्तौ ) । तदर्थेन अव्यवहितोत्तरकालवाचिना यक्ष्यमाण इति लटा युक्तं वचनं अनर्थकं स्यात् । यद्वा अद्यतनभविष्यत्कालवाचिना लटा युक्तं वचनं अनर्थकं विरुद्धं स्यात् इत्यर्थः ( कुतूहले ) । तस्मात् आधानादानन्तर्यं सोमस्य ।

**तदर्थवचनाच्च, नाविशेषात् तदर्थत्वम् । ७ ॥**

आधानोत्तरं आदौ सोमः ततो दर्शपूर्णमासौ इति आधानस्य सोमपूर्वत्वं इति सिद्धान्ते हेत्वन्तरमाह । चकारः समुच्चये । 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत' इति वचनं सोमार्थमेव । अन्यथा हि सर्वैरपि असौ यक्ष्यमाणः अग्निमाधत्ते सोमेन च अग्निहोत्रादिभिश्च । ततश्च सोमार्थत्वस्य अग्निहोत्राद्यर्थत्वस्य च अविशेषात् विशेषाभावात् तदर्थत्वं विशेषतः सोमार्थत्वं न स्यात् । विद्यते च वचनं सोमार्थम्, तस्मात् इदं वचनं



आधानस्य सोमार्थत्वं ब्रवीति । तस्मात् सोमाधानयोरानन्तर्यार्थं वचनम् । इति सोमपूर्वत्वम् ।

**अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशादानन्तर्यात् विशङ्का स्यात् । ८ ॥**

आधानस्य इष्टिपूर्वत्वं सोमपूर्वत्वं वा विकल्पेन इति सिद्धान्ते युक्त्यन्तरप्रदर्शनार्थं सूत्रम् । चकारः समुच्चयार्थः । आनन्तर्यात् अयक्ष्यमाणस्य आधानानन्तरमेव यः सोमेन न यक्ष्यते तस्य, पवमानहविषां पवमानेष्टीनां कालस्य निर्देशात् 'यः सोमेनायक्ष्यमाणः अग्निमादधीत न स पुरा संवत्सरात् हवींषि निर्वपेत्' इति श्रुत्या पवमानहविःकालनिर्देशात् विशङ्का स्यात् सोमपूर्वत्वाभावपक्षस्य शङ्का संशयः न स्यात् । विशब्दोत्र नञर्थकः । श्रुतौ अयक्ष्यमाणपदेन आधानादनन्तरमेव यो न सोमेन यक्ष्यते इत्युक्तमित्यर्थः । तथा च इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः **सिद्धान्तः** ।

**इष्टिरयक्ष्यमाणस्य, तादर्थ्ये सोमपूर्वत्वम् ।९॥**

पञ्चमादिभिः अष्टमान्तैः सूत्रैः सिद्धस्याधिकरणस्य प्रयोजनकथनार्थमिदं सूत्रम् । एवं च सोमेन अयक्ष्यमाणस्य यः इदानीं सोमेन न यक्ष्यते तस्य आधानोत्तरं दर्शपूर्णमासेष्टिरारब्धव्या । तादर्थ्ये आधानस्य सोमार्थत्वे तु सोमपूर्वत्वमेव । यः सोमेनैव आदौ यक्ष्यते तस्य आधानोत्तरं दर्शपूर्णमासाभ्यां प्रागेव सोमः कर्तव्यः पश्चात् दर्शपूर्णमासेष्टिर्भविष्यति । **के.**

* सोमः चमसिभिर्भक्षयितव्यः ज्योतिष्टोमे । ३।५।७।२२. * सोमः दर्शपूर्णमासाभ्यां प्रागूर्ध्वं वा, सोमविकारास्तु गवादयः एकाहाः ऊर्ध्वमेव । **टुप्.** ५।४।९।२६. * सोमः दर्शपूर्णमासोत्तरकालः कर्तव्यः इति विधीयते । ४।३।१५।३७. **मीको.** पृ. १७७९ 'ज्योतिष्टोमः दर्शपूर्णमासोत्तरं कर्तव्यः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सोमः दशमुष्टिपरिमितः शुद्रः । **भा.** २।२।६।१९. * सोमः नैव यागसाधनम्, किंतु तदुपलक्षितो रसः । स चाविशिष्टः पूतीकेष्वपि । तस्मान्नास्ति रूपभेदः । वा. ६।३।४।१६, * सोमः नित्यः । सः राजन्यवैश्ययजमानचमसमात्रान्निराकृतोऽपि ग्रहचमसान्तरेषु संभवात् नित्यः । तेन धर्माः तं न व्यभिचरन्ति । ३।६।१३।३६. * सोमः पवमानेष्टि–व्रात्यपशु–अग्निहोत्राणि कृत्वाऽपि दर्शपूर्णमासयोः प्राक् कर्तव्यः । यथा तु भाष्यकारेणोक्तं ( तथा ) व्रात्यपशुः सोमाङ्गत्वाद्भवति, पवमानेष्टयोऽपि अग्निसंस्कारत्वात् भवन्त्येव । अग्निहोत्रं तु नास्ति । **टुप्.** ५।४।३।६. * सोमः फलचमसस्य प्रकृतिः । त्रि. ३।६।१३, * सोमः मूलप्रकृतिः । ८।१।३ वर्णकं २, * सोमः, यः पूर्वं प्राचीनवंशे संस्थापितः, स वैसर्जनहोमोत्तरं हविर्धाने प्रणीयते । ५।१।१४. * सोमः यजतिचोदनः । **भा.** ८।४।५।१२, * सोमः । यावानेवाग्निष्टोमे सोमः तावानेव उक्थ्यादिषु अपि संस्थासु । उक्थ्यादिष्वपि दशमुष्टिरेव सोमो ग्रहीतव्यः । त्रिपर्वा इति पर्वसंख्यानियमात् ... । विप्रकृष्टपर्वा सोमो ग्रहीष्यते ( उक्थ्यादिषु ) । अपि च तृतीयसवने अंशुरेकोऽभिषूयते । तस्य प्रमाणं च नाम्नातम् । तमनेकपर्वाणं स्थूलपर्वाणं च ग्रहीष्यति । तेन प्रदेयविवृद्धिर्भविष्यति । ३।३।११।३०,३१. * **सोमाः** ये चमसैः ग्रहैश्च युगपद्धूयन्ते तेषु 'उक्थशा यज सोमानाम्' इति मन्त्रः । 'उक्थशा यज सोमस्य' इति एकवचनान्तमन्त्रस्तु केवलग्रहकरणकहोमे एव । **संकर्ष.** २।३।११. * सोमाः वषट्कारसमाख्यानिमित्तभक्षार्थं सदसि आनेतव्याः । **वा.** ३।५।११।३२. * **सोमं** 'एकहायन्या क्रीणाति' ज्योतिष्टोमे । वि. ४।१।१०, * सोमं क्रीतं शकटेऽवस्थाप्य प्राचीनवंशे आनयन्ति । ४।२।१३. * सोमं दक्षिणे हविर्धाने ( शकटे ) आसादयन्ति । **भा.** ३।७।७।१६, * सोमं न आज्येन अभिघारयति । ८।१।३।६, * 'सोमं यदि न विन्देत पूतीकानभिषुणुयात्' । ३।६।१५।४०. * **सोमेन** अनुच्छिष्टत्वे तत्कृते चादृष्टदोषाभावे प्रत्यक्षेणैव सहभोजनात् व्यलीकोत्पत्तेरुपपत्तेः अनुज्ञावसरो भवति । वा. ३।५।१७।४३. * सोमेन आधानसमनन्तरमयक्ष्यमाणः पुरा संवत्सरात् पवमानहवींषि निर्वपेत् । भा. ५।४।३।८. * सोमेन आधानसमनन्तरं यक्ष्यमाणः ऋतुं नक्षत्रं च न प्रतीक्षेत ।

ऋतुनक्षत्रप्रतीक्षाभावोऽयं आधानविषयकः इति सूत्रभाष्यकारौ वृत्तिश्च, सोमविषयकः अयं 'सोमस्य ऋतुं नक्षत्रं न प्रतीक्षेत' इति वार्तिकं तन्त्ररत्नं च। **के.** ५।४।३।६. * सोमेन उच्छिष्टा न भवन्ति इति श्रूयते। **भा.** ३।५।२०।५२. * सोमेन धिष्ण्यव्याघारणं परिप्लुपात्रेण। **संकर्ष.** ३।२।१९. **मीको.** पृ. १८३१ 'ज्योतिष्टोमे सोमेन धिष्ण्यव्याघारणं०' इत्यत्र अधिकरणं द्रष्टव्यम्। * 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' 'नर्तुन् सूर्क्षेन्न च नक्षत्रम्' इत्यनेन 'वसन्ते वसन्ते ज्योतिषा यजेत' इति विहितस्य सोमकालस्यैव बाधः। आधानकालबाधस्तु अन्यवाक्येन सिद्ध एव। **वि.** ५।४।५. * 'सोमेन यक्ष्यमाणः' इत्यनुवादोपपत्तिः ऐन्द्रवायवाग्रान् इतिवत्। **भाट्ट.** ५।४।३. * 'सोमेन यजेत' अत्र न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणा दोषः। **बाल.** पृ. ३. * 'सोमेन यजेत' इति द्रव्यस्य नियमविधिः। **वि.** ४।२।९. * 'सोमेन यजेत' इति यजतिः अपूर्वस्य कर्मणो विधायकः न तु ऐन्द्रवायवं गृह्णाति इत्यादीनां कर्मणां समुदायस्य अनुवादकः। **भा.** २।२।६।१७–२०. * 'सोमेन यजेत' इति विद्यते यागः। **टुप्.** १०।४।२।३, * 'सोमेन यजेत' इति सोमविशिष्टो यागो विधीयते। १०।१।९।३३. * 'सोमेन यजेत' इत्यत्र अप्रसिद्धार्थनामधेयकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाऽऽश्रयणं इत्यभिप्रेत्य 'सोमद्रव्यवता यागेन' इति मत्वर्थलक्षणा स्वीकृता। **वि.** १।३।२, १।४।२, * 'सोमेन यजेत' इत्यत्र देवता अव्यक्ता। ८।१।५. * 'सोमेन यजेत' इयं करणे तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः। **बाल.** पृ. ४५. * 'सोमेन यजेत'। दशमुष्टीर्मिमीते इति च प्रकरणे परिमाणं श्रुतम्। अतः 'सोमेन यजेत' इत्येतद्वचनमेव विशेष्यते दशमुष्टिना सोमेन यजेत इति। स च नियतपरिमाणेनोदकेनाभिषुतः। **वा.**२।२।६।१९ पृ. ५२०. * 'सोमाय वनस्पतये श्यामाकं चरुं निर्वपेत्' इति नानाबीजेष्टौ द्वितीयं हविः। **भा.** ११।३।७।१५, * **सोमात्** ऊर्ध्वं द्विपुरोडाशा पौर्णमासी, प्राक्सोमात् एकपुरोडाशा। १०।८।१८।६२, * सोमात् ऊर्ध्वं सांनाय्यविकाराः आमिक्षादयः न प्राक्। ५।४।८।२५. * सोमात् प्रागूर्ध्वमिति सांनाय्यविकाराणां न नियमः। **भाट्ट.** ५।४।८. * सोमात् प्राक् पूर्णमासयागे अग्नीषोमीयः पुरोडाशो न कर्तव्यः। किं त्वेक एव आग्नेयः पुरोडाशः। उपांशुयाजस्तु अस्त्येव। तस्य देवता तु सोमात् प्राक् अग्नीषोमरूपा न कर्तव्या। **वि.** १०।८।१९. * सोमात् प्राक् ब्राह्मणेन उपांशुयाजाज्यं न कर्तव्यं प्राजापत्यं वैष्णवं वा कर्तव्यमिति तस्य सोमादुत्कर्षो न दर्शपूर्णमासयोः। **भा.** ५।४।६।१९–२१. * **सोमेभ्यः** सर्वेभ्यः उत्तरं प्राजापत्याङ्गप्रचारो वाजपेये। ११।३।१५।४८–५४. **मीको.** पृ. ३४८५ 'वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचारः' इत्यत्र अधिकरणं द्रष्टव्यम्। * '**सोमस्याग्ने** वीहीत्यनुयजति' अत्र यजिश्रुत्या उपस्थितस्य यागान्तरस्यैव सोमयागोत्तरकालविशिष्टस्य विधिः। **संकर्ष.** १।१।१. * 'सोमस्याग्ने वीहि०' इति मन्त्रः प्रधानभूतद्रव्यविधिः। **बाल.** पृ. ६४. * सोमस्य अपहारे एकां गां दक्षिणां दद्यात्। दाहे पञ्च गाः दक्षिणां दद्यात्। **भा.** १०।३।१५।५९. * सोमस्यापूर्वत्वम्। 'सोमेन यजेत' इति। **वि.** २।२।६. * सोमस्य अल्पमूल्यत्वात् वासःप्रभृतीनामेकेन केनचित् क्रये सिद्धे शेषाणि वचनसामर्थ्यात् दीयमानानि तस्यैव आनतस्य सुतरामानतिं कुर्वन्ति। स्वानतात् क्रीतः सोमः अभ्युदयकारी भवति इति शास्त्रार्थो विज्ञायते। **वा.** ३।३।११।२४. * सोमस्येव वाजिनस्य अपि अनुवषट्कारोऽस्ति। स च स्विष्टकृद्रूपः। **संकर्ष.** १।४।२. * सोमस्योपावहरणं मानं च केनापि साधनेन न कार्यं किंतु 'वाससि मिनोति, वाससा चोपावहरति' इति वाससैव कार्यमिति। **वि.** १०।६।२०. * सोमस्य कालविशेषबाधः 'नर्तुं प्रतीक्षेत न नक्षत्रम्' इत्यनेन, न तु आधानस्य। **भा.** ५।४।५।१५–१६. * सोमस्य गृह्यमाणस्य मीयमानस्य चैन्द्रत्वं 'इन्द्राय त्वा वसुमते०' इति ग्रहणमन्त्रादवगम्यते। **वि.** ३।२।१६, * सोमस्य जगतीछन्दस्कऋच्युत्पन्नसामकत्वे माध्यंदिने पृष्ठस्तोत्रे आग्रयणाग्रत्वम्। १०।५।१५. * सोमस्य दर्शपूर्णमासाभ्यां सादृश्यं नास्ति अव्यक्तचोदनत्वात्। **टुप्.** ८।१।३।५, * सोमस्य द्वौ कालौ प्राग्दर्शपूर्णमासयोरूर्ध्वं च। ५।४।३।६. * सोमस्य प्रतिनिधिः श्रौतः पूतीकाः। ६।३।१३।३१. **मीको.** पृ. २५९३ 'पूतीकाः सोमस्य प्रतिनिधिः श्रौतः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमस्य प्रदेयप्रकृतित्वेनैव साधनता। **सु.** पृ. ७९७. * सोमस्य बृहत्सामत्वे–पृष्ठस्तोत्रे, शुक्राग्रत्वम्। **वि.** १०।५।१५. * सोमस्य भक्षः एकपात्रे प्रथमं होतुरेव। ३।५।१३।३६–३९. **मीको.** पृ. १७९२ 'ज्योतिष्टोमे एकपात्रे०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमस्य भक्षणं सदसि भवति। **वि.** ३।५।६, ११. * सोमस्य मानं उपावहरणं च वाससा कर्तव्ये ज्योतिष्टोमे। १०।६।२०।७७. **मीको.** पृ. १८३१ 'ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमस्य रथंतरसामत्वे ऐन्द्रवायवाग्रत्वम्। **वि.** १०।५।१५. * सोमस्य विक्रयो न चोद्यते क्रयश्चोद्यते। **भा.** ३।७।१५।३१, * सोमस्य श्रुतः प्रतिनिधिः पूतीकाः। ३।६।१५।४०. * **सोमानामि**ष्टिपूर्वत्वमाम्नातम्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति। **भा.** ६।८।५।३०. * सोमानामुपरिष्टात् प्राजापत्यप्रचारः। **भाट्ट.** ११।३।१४. * सोमानां मूलप्रकृतिर्ज्योतिष्टोमः। **वि.** ८।१।३ वर्णकं २. * **सोमे** अग्निप्रणयनं धर्मवत्। **भा.** ७।३।८।१९.

**सोमे अग्निचित्कर्तृके उत्तरवेदिपुराणाग्निद्वयस्यैव एकविंशतिलोकंपृणानां च समुच्चयः॥**

उक्तवचने चयनोत्तरकालीनानां इष्टिपशुसोमानामविशेषेण ग्रहणात् सर्वाङ्गं पुराणाग्निद्रव्यम्। इति प्राप्ते, 'पुनर्वास्तु वा एतत्क्रियते पुनर्वा एतत्प्रयान्ति यत्रैवाग्निचित् सोमेन यजेत तदेता एकविंशतिलोकंपृणा उत्तरवेद्यामुपनिधाय यजेत' इति वचनान्तरेण सोमे द्रव्यान्तरविधानात् सामान्यवचनेन इष्टिपशुबन्धयोरेव पुराणद्रव्यविधिः पर्यवस्यति। वस्तुतस्तु 'यदीष्ट्या०' इति वाक्येऽपि सोमस्य विशिष्य ग्रहणान्यथाऽनुपपत्त्योत्तरवेदिपुराणाग्निद्वयस्येवैकविंशतिलोकंपृणानामपि अग्निचित्कर्तृकसोमे समुच्चयः। सोमानन्तर्गतेष्टिपशूनां त्वेकविंशतिलोकंपृणाभावः इति। **संकर्ष.** १।३।१२. * सोमेऽग्नीषोमीये पशौ विहितैरेकादशप्रयाजैः प्राकृताङ्गान्तराणां न बाधः। १०।३।१।१–१२.

**सोमेऽवचनाद् भक्षो न विद्यते। ३।५।६।१९॥**

ज्योतिष्टोमे विद्यमाने सोमे हुते शेषभक्षो विद्यते न वेति संदेहे पूर्वपक्षसूत्रमिदम्। सोमे भक्षो न विद्यते अवचनात् भक्षयितव्यः सोमः इति वचनाभावात्।

**स्याद्वाऽन्यार्थदर्शनात्। २०॥**

ज्योतिष्टोमे सोमशेषस्य नास्ति भक्षः इति पूर्वपक्षनिरासार्थो वा–शब्दः। स्यादेव भक्षः 'सर्वतः परिहारमाश्विनं भक्षयति' 'भक्षिताप्यायितांश्चमसान् दक्षिणस्यानसोऽवलम्बे सादयन्ति' इति अन्यार्थदर्शनात्। वचनं अन्यार्थं सत् भक्षं दर्शयति इति अन्यार्थदर्शनं इत्युच्यते। आश्विनपात्रभक्षणात् प्राक् तत्पात्रं स्वमस्तकस्य सर्वतः समंतात्, परिहरणीयं भ्रामयितव्यं इति परिहरणविधानार्थं वाक्यं इति भाष्याशयः प्रथमवाक्ये। द्वितीयवाक्यं तु भक्षितान्, भक्षणोत्तरं अधिकेन सोमरसेन आप्यायितान् वर्धितान् चमसान् कृत्वा दक्षिणदेशस्थस्य अनसः शकटस्य अवलम्बे ईषयोर्मध्ये अधस्तात् सादयेत् इति विधानार्थं इति।

**वचनानि त्वपूर्वत्वात्, तस्माद् यथोपदेशं स्युः। २१॥**

सिद्धान्तसूत्रम्। पूर्वसूत्रे सिद्धान्तसाधकं अन्यार्थदर्शनमुक्तम्। विधिप्रदर्शनार्थं तु एतत् सूत्रम्। तुशब्दः पूर्वस्माद्विशेषप्रदर्शनार्थः। पूर्वसूत्रे यानि अन्यार्थदर्शनानि उक्तानि तानि वस्तुतः भक्षविधायकानि वचनान्येव 'सर्वतः परिहारमाश्विनं भक्षयति' इत्यादीनि। स्वमस्तकस्य समंतात् भ्रामणविशिष्टं भक्षणं तद्वाक्यं विदधाति। भक्षणस्य अपूर्वत्वात् अन्यप्रमाणेनाप्राप्तत्वात्। तस्मात् भक्षवचनसद्भावात् यथोपदेशं येन ऋत्विजा यद्देवताकं

पात्रं यथा भक्षणीयं उक्तं वचनैः तथा तथा भक्षणानि स्युः। सर्वथाऽपि अस्ति सोमभक्षः इति **सिद्धान्तः**। **के.**

* 'सोमेऽवचनाद्भक्षो न विद्यते' (३।५।६।१९) इति सामान्येन भक्षविचारं कृत्वा विशेषविचारोऽयं ('ऐन्द्रवायवे तु०' ३।५।५।१८ इत्ययं) कर्तव्य आसीत्। **वा.** ३।५।५।१८ पृ. ९९७। ग्रहचमसेषु हविःप्रकल्पनमात्रे कृते यथा न सर्वहोमः, तथा 'सोमेऽवचनात्' इत्यत्राधिकरणे वक्ष्यामः। ३।५।१।८ पृ. ९९२. * सोमे अविद्यमाने सोमसदृशं द्रव्यं प्राप्तम्। तत्र सुसदृशे द्रव्ये प्राप्ते ईषत्सदृशं नियम्यते 'यदि सोमं न विन्देत पूतिकान् अभिषुणुयात्' इति। **भा.** ३।६।१५।४०. * सोमे आग्निमारुतं शस्त्रं सवनीयविकारे सोमयागानङ्गे न कार्यम्। **भाट्ट.** ४।३।१२. * सोमे आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन, पशौ आज्यभागप्रतिषेधस्यार्थवादत्वम्। १०।८।२।५. **मीको.** पृ. २५६० 'पाशुकाज्यभागन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमे आतिथ्योपक्रमे लूयमानं बर्हिः आतिथ्योपसदग्नीषोमीयत्रितयसाधारणम्। त्रिष्वपि व्यक्त्यैकविधानम्। तत्र क्रियमाणा धर्मा अपि प्रतिपत्ति-(दाहः)वर्जं सर्वसाधारणाः। न तु आतिथ्यया बर्हिषः उपादानमात्रं प्रयुज्यते अन्ये धर्माः आस्तरणादिकार्यं च उपसदग्नीषोमीयाभ्यां प्रयुज्यन्ते इति। **भाट्ट.** ४।२।११. * सोमे ऋत्विजः सप्तदश। ३।७।१६।३२–३५. **मीको.** पृ. १२५६ 'ऋत्विक्शब्दः यागीयसर्वकर्मकरेषु न प्रवर्तते, किन्तु सप्तदशस्वेव' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमे एकपात्रे साधारणे संस्कर्तव्ये न्यायेन ('समं स्यादश्रुतत्वात्' १०।३।५३) समो विभागः प्राप्नोति। तत्र अविभज्य पीयमाने कदाचिदन्येन पातव्यमन्यः पिबेत्। तत्र अनुज्ञापनं संभवति। त्वयाऽर्धं पातव्यं मयाऽर्धम्। कदाचिदहं अभ्यधिकं न्यूनं वा पिबेयम्, तदनुज्ञातुमर्हसीति। **भा.** ३।५।१७।४३. * सोमे एव साक्षात् 'क्रीणाति' इत्यादयः संस्कारविधयः प्रवर्तन्ते, फलचमसे तु चोदकेन। **वि.** ३।६।१३. * सोमे ऐष्टिकधर्माणां नातिदेशः। ८।१।३।३–१०. **मीको.** पृ. २५३ 'अतिदेशो न सोमे ऐष्टिकधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमे 'कृष्णविषाणया कण्डूयते' 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति'। अत्र अनन्यथासिद्धप्रतिपत्तिविधिबलादेव दक्षिणादानप्राक्कालभाविकण्डूयनमेव विधीयते। **भाट्ट.** ४।२।७. * सोमे क्रीते वा दीक्षासु वा यूपं छिनत्ति। **भा.** ११।३।३।३. * सोमे गार्हपत्यकार्याणि सर्वाणि शालामुखीये एव। प्राजहिते तु पशुश्रपणमेव। **संकर्ष.** ३।२।१३. * सोमे चमसभक्षः, इष्टौ इडाप्राशित्रादिभक्षाश्च सर्वे ऋत्विक्परिक्रयार्था इति पूर्वपक्षः। प्रतिपत्त्यर्थो भक्ष इति सिद्धान्तः। 'यजमानपञ्चमाः संभूयेडां भक्षयन्ति' इति यजमानस्यापि भक्षसद्भावात्। भक्षमात्रेण च परिक्रयस्यासंभवात्। सत्रेषु अपि प्रतिपत्तिरूपत्वात् इडा–चमसादिभक्षाः सन्त्येव। **वि.** १०।२।९. * सोमे 'तस्यैकशतं प्रयाजानुयाजाः' इति। **भा.** ८।१।३।४, तद्दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानुयाजास्तेषां समुच्चयवचनम्। अङ्गाङ्गमपि च 'तस्य' इति शक्यते वक्तुम्। यथा वाजपेयस्य यूप इति। ८।१।३।१०. * सोमे दार्शिकवेद्यकरणम्। **वि.** १२।१।३. * सोमे दीक्षणीयादिषु ऐष्टिकेषु कर्मसु चोदकप्राप्तं ब्रह्मवरणं प्रतितन्त्रं न कर्तव्यम्, आनत्यर्थमेव तत्, सौमिकेन च वरणेनानतोऽसौ तस्मात् ब्रह्मवरणं न कर्तव्यम्। ब्रह्मवरणं दृष्टार्थम्। **भा.** १२।१।१८।३५–४१, * सोमे दीक्षणीयादिषु ऐष्टिकेषु कर्मसु चोदकप्राप्तं होतुर्वरणम्। तत् प्रवृत्तवरणात् प्रतितन्त्रं होतुर्वरणं कर्तव्यम्। अदृष्टार्थं तत् नानत्यर्थम्। १२।१।१८।३५–४१, * सोमे दीक्षणीयादिषु ऐष्टिकेषु दार्शिकाग्निसमिन्धनाभावः। १२।१।१०।१९. * सोमे दीक्षणीयोत्तरं अग्निः लौकिको न संपद्यते किंतु सोमे समाप्ते एव लौकिकता। **संकर्ष.** ३।२।१०. * सोमे 'प्रहृत्य परिधीन् हारियोजनं जुहोति' अत्र न हारियोजनस्य परिधिप्रहरणाङ्गत्वं तस्य ज्योतिष्टोमत्वेनैव स्वर्गादिरूपस्य फलक्लृप्तत्वात्। **भाट्ट.** ४।३।१२.



* सोमे प्रायणीयादिषु दार्शिकं व्रतं नानुष्ठेयम्। १२।१।११।२०–२३. **मीको.** पृ. १८१८ 'ज्योतिष्टोमे प्रायणीयादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमे 'मैत्रावरुणाय दण्डं प्रयच्छति' अत्र दण्डविशिष्टदानस्योपयोगापेक्षायां 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनार्थत्वेन विनियुज्यते इति प्रैषानुवचनं दण्डदानस्य प्रयोजकम्। अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानम्। **भाट्ट.** ४।२।६. * सोमे य एव धर्मा विधीयन्ते त एव भवन्ति नान्ये। **टुप्.** १०।४।१।१. * सोमे शेषभक्षास्तित्वम्। ३।५।६।१९–२१. **मीको.** पृ. १८३६ 'ज्योतिष्टोमे सोमशेषभक्षविधानात् अस्ति सोमभक्षः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमे संस्थिते प्रस्तरं प्रहरति स्वरुं च। **भा.** ११।३।५।८. * सोमे समाम्नातं अग्निप्रणयनं सर्वस्यैवाहवनीयस्येति पूर्वपक्षः। न सर्वस्य किंतु एकदेशस्यैवेति सिद्धान्तः। **संकर्ष.** ३।२।११.

### सोमे सुत्या संधिदिने एव ॥

सोमयागे दीक्षादिदैक्षान्ताङ्गानां कालभेदस्य वाचनिकत्वेऽपि सौत्याहतन्त्रस्य पर्वसंधिदिवसे एव वा दिनान्तरे वा करणमिति विकल्पे प्राप्ते, संधिदिने एव सुत्या सर्वा स्यात्। संधिकालस्याल्पत्वेऽपि तदाक्षिप्तपूर्वापरकालयोः कर्मसंबन्धस्यावर्जनीयत्वात्। तद्बाधकवचनस्याप्यप्रत्यक्षत्वात् तदेतदाह 'विक्रमसंनिपातयोर्व्याप्त्या तत्संयोगान्न ह्यन्यत् प्रत्यक्षं विद्यते' इति। प्रत्युत कौषीतकीवचनं प्रत्यक्षमेवेत्युक्तं त्रिकाण्डमण्डने–खण्डपर्वणि सोमश्चेत् प्रतिपन्मिश्रपर्वणि। सोमसुत्या प्रयोक्तव्येत्याह कौषीतकीश्रुतिरिति। **भाष्यकृता** तु द्वाविज्याकालाविति सूत्रेण 'यदहरेष पुरस्तान्न पश्चान्न दृश्यते तदहरुपवसेच्छ्वोभूते यजेत या पूर्वा पौर्णमासी सा अनुमतिर्योत्तरा सा राका' इत्यादिवचनैर्द्वावपि यागकालावेवेति पूर्वपक्षं प्रापय्यानेन सूत्रेण तेषां प्रत्यक्षतः कालद्वित्वबोधकताभावात् 'द्वादश वै संवत्सरस्य पौर्णमास्यः' इत्यादिलिङ्गाच्चैकैक एव काल इति सिद्धान्तितम्। **संकर्ष.** ३।१।६.

* सोमे सौम्यचरौ ऐष्टिकैः पात्रैरेव होमो न सौमिकैः। **भा.** १२।१।४।१०–११. * सोमे स्वरोः यावदनुबन्ध्याञ्जनं धारणं न तु अग्नीषोमीयाञ्जने प्रतिपत्तिः। **सोम.** ४।४।१०. * **सोमेषु** अतिदेशकराणि प्रकृतिलिङ्गानि– अव्यक्तचोदितत्वम्, अहर्गणत्वम्, अहीनत्वम्, सत्रत्वम्, संवत्सरसत्रत्वम्, निकायित्वं इत्यादीनि। **बाल.** पृ. ११९.

* **सोमाङ्गेषु** इष्टिपशुषु दार्शिकं होतृवरणं कर्तव्यं अदृष्टार्थत्वात्। ब्रह्मवरणं तु न कर्तव्यं दृष्टार्थत्वात्। **भा.** १२।१।१८।३५–४१.

* **सोमाङ्गेष्टिगतशेषभक्षाणां** सौमिकदक्षिणया न प्रसङ्गसिद्धिः। १२।१।१७।३४–३५. **मीको.** पृ. २८२९ 'प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमाङ्गेष्टिपश्वादिषु** दार्शिकाग्न्यन्वाधानप्रसङ्गस्याऽऽक्षेपसमाधाने। **भा.** १२।१।१२।२४–२८. * सोमाङ्गेष्टिपश्वादिषु पत्नीसंनहनाननुष्ठानम्। १२।१।१३।२९. **मीको.** पृ. २८३१ 'प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमाङ्गेष्टिपश्वादिषु शेषभक्षानुष्ठानम्। १२।१।१५।३१–३२. **मीको.** पृ. २८३१ 'प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गसिद्धिः। १२।१।३।८–९. 'सौमिकवेदिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमाङ्गदीक्षणीयादिषु** अन्वाहार्यदक्षिणाया अननुष्ठानम्। १२।१।१६।३३. 'सौमिकदक्षिणान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमाङ्गदीक्षायां** सप्तहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्ममात्रं वा अपकृष्य कार्यं न तु तदन्तापकर्षः। **भाट्ट.** ५।१।१४.

* **सोमाङ्गप्रायणीयादिषु** सौमिकेन पयोव्रतेन आतिदेशिकस्यारण्याशनस्य प्रसङ्गः। १२।१।१४।३०. **मीको.** पृ. ९७२ 'आरण्यभोजनन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमान्ते** अनुबन्ध्या क्रियते । वा. ३।६।७।१८. * सोमान्ते स्वरोः प्रहरणं अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य । नानुबन्ध्याकालस्य । भा. ११।३।५। ८-१२.

**ॾ सोमापवर्गे गतश्रियः शालामुखीयवत् आहवनीयस्यापि समारोपः ॥**

अजस्रपक्षेऽप्यनेनैव न्यायेन शालामुखीयस्य समारोपणाभावे प्राप्ते, सर्वकर्मार्थतया तद्धारणस्यापि गतश्रियो नित्यत्वात्तस्यापि समारोपः । यच्छालायामाहवनीयस्य नित्यं धारणमाम्नातं तच्छालीयानामप्ययमेव न्यायः । संकर्ष. ३।२।३०.

**ॾ सोमापवर्गे शालामुखीयस्यैव समारोपः ॥**

शालामुखीयादीनामग्नीनां धारणावश्यंभावात् अनुगतेषु प्रायश्चित्तस्य 'यदाहवनीय उद्वायेदाग्नीध्राद्धरेत्' इत्यादिनाऽऽम्नानाच्च सोमयागापवर्गे ते सर्वेऽपि समारोपणीयाः । इति प्राप्ते, प्राजहितस्यैव समारोपः । तद्धारणस्यैव सर्वाग्न्यर्थत्वात् । इतरधारणस्य सोममात्रार्थत्वात् । प्रायश्चित्तस्यापि क्रत्वर्थत्वात् । अतोऽन्येषां कर्मापवर्गे लौकिकत्वान्न समारोपः । संकर्ष. ३।२।२९.

* **सोमापहारे** दक्षिणा एकैव गौर्देया न द्वादशशतम् । 'अश्वश्चाश्वतरश्च गर्दभश्च' इत्यादयस्तु दक्षिणा देया एव । वि. १०।३।१५.

**ॾ सोमापहारादौ एकादिगोदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्याया एव बाधः, न तु अश्वादीनाम् ॥**

**एकां पञ्चेति धेनुवत् । १०।३।१५।५९॥**

**भाष्यम्**— 'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे पञ्च गाः' इति । अत्र संदेहः, एका पञ्च च गावः श्रूयमाणाः किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिकाः, उत गवामिति । किं प्राप्तम् ? एकां पञ्चेति धेनुवत् । यथा धेनुः कृत्स्नस्य निवर्तिका एवमेका पञ्च च भवेयुः । दक्षिणासंबन्धो हि तासां प्रत्यक्षः श्रूयते । तेन ताः प्राकृतीनां कार्यमभिनिर्वर्तयन्ति । प्राकृत्यश्च आनुमानिक्यो निवर्तन्ते इति । तत्र एवमन्तरागार्भिणीन्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते । इतश्च, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिकाः, शिवत्सश्च । तथा च लिङ्गदर्शनम् । एवमेतत्समानश्रुतिश्चिवत्सोऽपि सर्वस्य निवर्तकः प्राप्नोति । तदेतद्दर्शनमुपपत्स्यते । व्यावृत्ता ह्येषां स्पर्धा इति । ६१ ॥

**एके तु श्रुतिभूतत्वात् संख्यया गवां लिङ्गविशेषेण । ६२ ॥**

**भाष्यम्**— स्थितादुत्तरम् । यदुक्तम्—एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिकेति । एतन्न । एके तु अर्था निवर्तन्ते, एके गावो निवर्तन्ते, अश्वादयो न निवर्तन्ते । 'एका देया, पञ्च देयाः' इति य एष नियमः, स गोविषयः । कुतः ? गोविशिष्टया संख्यया संबन्धात् । यदेतत् 'एकां ददाति, पञ्च ददाति' इति । नैवमभिसंबन्धः क्रियते, एकां दक्षिणां ददातीति । कथं तर्हि एकां गामिति ? गोसंबन्धो हि मुख्यत्वात् बलीयान् ।

अपि च गोशब्देन सह संख्यायाः प्रत्यक्षः संबन्धः । गोशब्दव्यवधानात् परोक्षो दक्षिणाशब्देन । गोशब्दश्चैवं मुख्यार्थो भवति । इतरथा लक्षणा स्यात्, एकां गामश्वादि चेति । तेन गवां लिङ्गविशेषेण संख्या गोषु निविशते । एवं च सर्वेषामनिवृत्तावश्वादीनां यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति । तस्मादेका पञ्च च गवां निवर्तिका इति ।

**शा**— 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे सोमे पञ्च गा दद्यात्' इति श्रुतम् । तत्र संशयः किं एका पञ्च गवां निवर्तिका किंवा सर्वस्य दाक्षिण्यस्येति । तदर्थमिदं विचार्यते किं गां एकां दद्यात् इति संबन्धः उत एकां गामिति । तत्र– 'द्वितीयाश्रुतिसामर्थ्यात् ददातिक्रिययाऽन्वयः । एकया पञ्चमिश्चातः सर्वं देयं निवर्तते ॥' उच्यते– 'ददाति संगतौ सत्यां गोशब्दे लक्षणा भवेत् । पाक्षिको वाऽनुवादः स्यात् विधौ वाक्यं तु भिद्यते ॥'



**सोम**— पूर्ववत् इहापि कृत्स्नदक्षिणानिवृत्तिरित्युत्थितेः संगतिः । एका पञ्च इत्यत्रापि धेनुवत् कृत्स्नदक्षिणानिवृत्तिरिति सूत्रार्थः ।

**वि**— 'एकां पञ्चेति कृत्स्नां वा गोसंख्यां वा निवर्तयेत् । स्यादाद्यो दक्षिणायोगान्मैवं व्यवहितत्वतः ॥'

**भाट्ट**— ज्योतिष्टोमे दक्षिणादानं प्रक्रम्य 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे पञ्च गाः' इति श्रुते नैमित्तिकेऽपि तृतीयविधिप्रकारलिप्सया दक्षिणादानोद्देशेन एकत्वगोत्वविशिष्टकारकविधानाद्धेनुवत् गोद्रव्येणाश्वादीनां संख्यया च द्वादशशतस्य निवृत्तिः । इति प्राप्ते, 'गां दद्यात्' इत्येतावतैव विवक्षितार्थलाभादाद्यवाक्ये एकामित्यस्य वैयर्थ्यापत्तेः द्वितीयवाक्ये च पञ्चत्वस्याप्राप्ततया विधेयत्वाद्गोरपि विधाने वाक्यभेदापत्तेरगत्या चतुर्थविधिप्रकारमङ्गीकृत्य गोरुद्देशेन संख्यामात्रविधिः । अवान्तरप्रकरणादेव च दक्षिणादानस्याश्रयत्वोपपत्तेर्न दोहनाद्यर्थगोषु संख्यापत्तिः । अतश्च तत्र संख्यया द्वादशशतनिवृत्तावपि नाश्वादीनां निवृत्तिः ।

**मण्डन**— 'एका च पञ्चेति गवां निवृत्तिः ।'

**शंकर**— 'एका पञ्चेति धेनुवत् ।'

* **सोमाभावे** बहुषु सदृशेषु प्राप्तेषु नियमः क्रियते पूतीका एवाभिषोतव्या इति । भा. ६।३। ४।१६.

* **सोमाभिदाहे** दक्षिणा पञ्चैव गावः न तु द्वादशशतम्, 'अश्वश्चाश्वतरश्च०' इत्यादयस्तु सन्त्येव । वि. १०।३।१५.

* **सोमाभिधानं** ऋत्विग्वरणकाले कर्तव्यम् । 'ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथंतरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र त्वमुद्गाता भव' इत्यादिरूपं तत् । वि. १०।२।११.

* **सोमाभिषवः** वेद्यां सदसः प्राचीने हविर्धानमण्डपे दक्षिणहविर्धानशकटसमीपे । वि. ३।७।७.

* **सोमाभिषवाधारफलकयोरधस्तात्** 'उपरवाः' नाम गर्ताः । तत्र 'किमत्र, भद्रं, तन्नौ सह' इति मन्त्रान् यजमानाध्वर्यू पठतः । तदुक्तं फलमुभयोरेव । वि. ३।८।१६.

**ॾ सोमार्थं वरणं औपवसथ्येऽहनि ॥**

औपानुवाक्यकाण्डे च प्रकरणे अवभृथात्परतश्चाश्वदाभ्यविधिद्वयं पठ्यते । तन्मन्त्रौ तूपांश्वादिभ्यः पूर्वमाम्नातौ । तत्रानारभ्याधीते सर्वक्रतूनामुपस्थितिविशेषेऽपि द्विरुक्तत्वादिदोषपरिहारानुगुणनिवेशानुसंधानसापेक्षात् तस्मात् प्राकरणिकवाक्यस्य प्रबलत्वेन तत्रैवांश्वदाभ्ययोरुत्पत्तिविधी । एतदनुवादेन औपानुवाक्यकाण्डे गुणविधयः । तेषां प्रधानविधिपारतन्त्र्येणैव प्रकृतिगामित्वसंभवात् । तस्मादवभृथानन्तरमेव पाठक्रमात् तयोः प्रचारः । इति प्राप्ते, 'भूयस्त्वेनोभयश्रुति' इति न्यायेनौपानुवाक्ये एव गुणविधिबाहुल्यात् प्रधानविधिरपि । तत्र च प्राकृताङ्गान्तरैः सह पाठक्रमाभावादितरग्रहप्रचारकाले एव तयोः प्रचारः । वस्तुतस्तु औपानुवाक्य एव विधिस्वीकारेऽपि तस्य प्रकृतावन्ते तु बादरायण इति न्यायेन कलशक्रमकग्रहाणां परत एव निवेशे प्राप्ते, प्राकरणिकपुनःपाठवैयर्थ्यपरिहाराय तस्य क्रमार्थकत्वं स्वीकर्तुं युक्तमिति न पूर्वोत्तरपक्षयोः फलभेदः । यदि ब्राह्मणपाठात् प्रबलेन मन्त्रपाठेनोपांश्वन्तर्यामादिग्रहेभ्यः पूर्वमेव प्रचार इत्युच्यते तर्हि तत एव पूर्वपक्षेऽपि तत्रानुष्ठानं सिध्यति । वस्तुतो 'व्यवनीयापोदधिग्रहेण चरित्वांऽश्वदाभ्यौ चरति' इति श्रौतक्रमेणैव सिद्धेः प्रासिसूत्रमेवैतत् । एवं पशुशीर्षोपधानेऽपि । संकर्ष. ३।३।१४.

* **सोमालाभे** पूतीका एव प्रतिनिधिर्नान्य इति नियमः, प्रत्यक्षशिष्टत्वात् । वि. ६।३।१३, * सोमालाभे पूतीकाः, पूतीकापचारे च सोमसदृशं ग्राह्यम्, न पूतीकसदृशम् । ६।३।१५.

* **सोमाधानयोरानन्तर्यमस्ति**, ऋतुनक्षत्रातिक्रमवचनात् । भा. ५।४।३।६.

* **सोमाधानपक्षे** पवमानेष्टीनां सद्य एव करणम् । सोमेनायक्ष्यमाणस्य तु संवत्सरादिकालः । भाट्ट. ५।४। ३, * सोमाधानपक्षे सोमकालबाधे ऋतुनक्षत्रयोरिव पौर्णमास्यादिपर्वणोऽपि अनादरः इति केचित् । वस्तु-

तस्तु ऋतुनक्षत्रमात्रानादरः नञ्द्वयाम्नानसामर्थ्यात् वाक्यभेदाङ्गीकारात् । पर्वपञ्चाहत्वाद्यादरस्तु कर्तव्यः । ५।४।५.

* **सोमोत्तरं** उपांशुयाजस्य नोत्कर्षः, विष्णुप्रजापतिदेवत्यस्य प्रागपि संभवात् । ५।४।६।१९–२१. **मीको.** पृ. ११९९ ' उपांशुयाजस्य सोमोत्तरं० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमोत्तरकालता** सांनाय्याग्नीषोमीयविकाराणाम् । ५।४।८।२५. **मीको.** पृ. ११० ' अग्नीषोमीयपुरोडाशविकाराणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमोपावहरणं** द्वादशाहे द्वादशेऽहनि मानवाससैव, न तस्मिन्नहनि पृथग्वासः । वि. १०।६।२१.

* **सोमोपावहरणार्थं** अहर्गणे प्रत्यहं पृथग् वासः उत्पादनीयम् । १०।६।२१।७८. **मीको.** पृ. ७६४ ' अहर्गणे प्रत्यहं सोमोपावहरणार्थं० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमोपावहरणकाले** प्रत्यहं वासोन्तरमुत्पाद्यमहर्गणे । १०।६।२२।७९–८०. **मीको.** पृ. १२१६ ' उपावहरणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमोपावहरणवासांसि** अहर्गणे ग्रावस्तुते देयानि । **भाट्ट.** १०।६।१९.

* **सोमकालस्य** बाधः नाधानकालस्य, आधानस्य सोमपूर्वकत्वे । ५।४।५।१५–१६. **मीको.** पृ.९२१ ' आधानस्य सोमपूर्वत्वे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमकालबाधे** सोमाधानपक्षीये ऋतुनक्षत्रयोरिव पौर्णमास्यादिपर्वणोऽप्यनादरः लक्षणया विहितकालमात्रस्यानादरविधानात् इति केचित् । नञ्द्वयाम्नानवैयर्थ्यात्तु वाक्यभेदमप्यङ्गीकृत्य ऋतुनक्षत्रमात्रानादरः । पर्वपञ्चाहत्वाद्यादरस्तु कर्तव्य एव इति तत्त्वम् । **भाट्ट.** ५।४।५.

* **सोमक्रयः** उत्तरवेदिदेशे उपरवप्रदेशे वा । **सोम.** ४।१।१०. * सोमक्रयः गवानयनस्य प्रयोजकः, न तु पदकर्म प्रयोजकम्, तथा च क्वचित् पदनाशादौ सत्यपि तदर्थं पुनर्गवानयनं न कर्तव्यम् । अक्षाञ्जनं तु लौकिकेन । वि. ४।१।१०. * सोमक्रयः ज्योतिष्टोमे नित्यः, स्वीयसोमवतोऽपि । ६।८।७।२६–२७. **मीको.** पृ. १८२३ ' ज्योतिष्टोमे भृतिवननं सोमक्रयश्च नित्यौ ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सोमक्रयः । द्वाविमौ क्रयौ, एकः अर्थहेतुकः अन्यः शब्दकृतः । यत् प्राक् क्रतुप्रवृत्तेर्यज्ञसाधनोपार्जनकाले सोमविक्रयिणा सह संवादः– सोमस्य परिक्रयणं मूल्यपरिच्छेदः, सोऽर्थादवश्यं करणीयः । तस्मिन्नकृते क्रतोरेव प्रवृत्तिर्न युक्ता । कुतः ? क्रतुकाले कदाचित् सोमो न स्यात् । विक्रेता वाऽस्य नार्घेण वा दद्यात् । तथा क्रतुरेव न संवर्तेत। **भा.** ११।२।१४।२९. * **सोमक्रयात्** प्रागपि सत्रं संकल्प्य उत्तिष्ठतो विश्वजिद्विधिः । **वि.** ६।५।७. * **सोमक्रये** ज्योतिष्टोमे मन्त्रः– ' इयं गौः सोमक्रयणी, तया ते क्रीणामि । तस्यै शृतं, तस्यै शरः, तस्यै दधि० ' इत्यादिः । साद्यस्क्रे च तत्र– ' अयं साण्डः तेन ते क्रीणामि ' इत्यूहः कर्तव्यः । अग्रे ' तस्यै शृतं० ' इत्यादिर्भागस्तु अविकृत एव पठनीयः । अविद्यमानधर्मैरपि स्तुतिर्भवति । **वि.** ९।१।१६ वर्णकं २. * सोमक्रये विधीयमाने अर्थात् लोभेन प्राप्तो विक्रयो न विधीयते, न च कर्माङ्गं भवति । **वा.** ३।४।१०।२८ पृ. ९६०.

* **सोमक्रयार्थं** साद्यस्क्रे विहितेन त्रैवार्षिकपुङ्गवेन प्राकृतसर्वक्रयद्रव्यस्य बाधः । १०।३।१६।६०–६१. **मीको.** पृ. १९७१ ' त्रिवत्साधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमक्रयोपसंवादः** अभिषेचनीय–दशपेययोः सहैव, इतराङ्गानुष्ठानं तु भेदेनैव । वि. ११।२।१४.

* **सोमक्रयद्रव्याणि**— ' अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति' इत्येवमादीनि । **भा.**१०।३।१६।६०.

**सोमक्रयन्यायः** । सोमक्रयद्रव्याणां समुच्चयः ॥

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ।१२।४।३।५॥**

**भाष्यम्**— सोमक्रयणार्थानि द्रव्याणि समाम्नातानि ' अजया क्रीणाति, हिरण्येन क्रीणाति ' इत्येवमादीनि । तेषु क्रयणेषु विकल्पः स्यात् । सर्वाणि हि क्रयणस्य साधनत्वेन निरपेक्षाणि विधीयन्ते । यथा व्रीहियवौ यागेषु । तथा ' अजया क्रीणाति ' 'हिरण्येन क्रीणाति ' ' वाससा क्रीणाति ' इति । तान्येकार्थानि भवन्ति । तस्मात्तेषु विकल्पः ।

**समुच्चयो वा, प्रयोगे द्रव्यसमवायात् ।६॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, विकल्प इति । किंतु समुच्चयः । कस्मात् ? प्रयोगे द्रव्यसमवायात् । क्रयणस्य प्रयोगे, अधिकस्यापि द्रव्यस्य समवाय उपपद्यते । तत्र विक्रेतुः मूल्येन आनमनं क्रियते । तद्बहुभिः सुकरतरं भवति । तस्यतस्य द्रव्यस्य आम्नानमपाक्षिकम् । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । अपि च विषमाण्येतानि, ' अश्वशफेन क्रीणाति ' इति, ' गोमिथुनाभ्यां क्रीणाति ' इति समुच्चयेन आनतिं कर्तुं शक्नुवन्ति, न विकल्पेन । विकल्प्यमानानामानर्थक्यमापद्यते । तस्मात् समुच्चयः ।

**समुच्चयं च दर्शयति । ७ ॥**

**भाष्यम्**-- ' तं वै दशभिः क्रीणाति, दशाक्षरा विराट्, विराजमेव प्राप्नोति' इति क्रीणात्यनुवादोऽयम् । स एतेन न्यायेन प्राप्तानां स्यात् । तस्मादपि समुच्चयः । अथ अर्थवादेन विधिः कस्मान्न विज्ञायेत ? तथाप्यनुवादरूपं बोध्यते । तच्च सति संभवे न बाधितव्यम् । तस्मादनुवादः ।

**सोम**— पूर्ववत् इहापि विकल्पः इत्युत्थितेः संगतिः ।

**वि**-- ' क्रयणेषु विकल्पः स्यात् साहित्यं वा, ऽग्रिमो यतः । कार्यैक्य, मानतेर्लाभाद् दशोक्तेश्चासमुच्चयः ॥ '

**भाट्ट**— सत्यपि गुणात् क्रयाणां भेदे एकसोमप्राप्त्यर्थत्वाद्विकल्पः । न च विक्रेत्रानतिरूपकार्यानुरोधेन समुच्चयः संभवत्समुच्चयो वा, एकद्रव्यानतस्यैव विक्रेतुः निरपेक्षसाधनत्वानुरोधेन संपादनीयत्वात् । अन्यथा दक्षिणानामपि प्राकृतानां ऋत्विगानत्यनुरोधेन समुच्चयापत्तौ प्रसङ्गन्नाधाद्यनापत्तेः । इति प्राप्ते, ' तं वै दशभिः क्रीणाति ' इत्यनुवादबलात् समुच्चयः । इदं हि विध्यन्तरैकवाक्यताऽऽपन्नत्वात् अनुवादस्वरूपत्वाच्च अनुवाद एव । अतश्च एतत्तात्पर्यग्राहकानुरोधेन यावता विक्रेतुरानतिः, तावतां समुच्चयः । दक्षिणासु तु एवंविधज्ञापकाभावान्न समुच्चयः । एतदभिप्रायेणैव क्रयवत् संभवत्समुच्चयो विविदिषार्थकर्मणामित्युक्तं पितामहैः । यदि तु पाक्षिकानुवादत्वपरिहारार्थमस्यैव उपरिधारणवत् विधित्वं विधिकल्पकत्वं वा विभाव्यते, तदा अस्तु सर्वसमुच्चय एव । पितामहानां संभवत्समुच्चयोक्तिस्तु दार्ष्टान्तिकमात्रविषयिणीति ध्येयम् ।

**मण्डन**-- ' समुच्चयः क्रयद्रव्ये । '

**शंकर**-- ' क्रयणेषु तु स न्याय्यः । ' सः समुच्चयः ।

* **सोमक्रयसमीपे** अग्नीषोमीयः पशुः समाम्नायते । वा. ३।६।७।१८.

* **सोमक्रयसाधनानां** दशानां ज्योतिष्टोमे समुच्चयो न विकल्पः । १ अरुणया, २ अजया, ३ हिरण्येन, ४–५ सवत्सया धेन्वा, ६ ऋषभेण, ७ अनडुहा, ८–९ मिथुनाभ्यां ( गोभ्यां ), १० वाससा –क्रीणाति । दश संपद्यन्ते ( तैसं. ६।१। १० ) । **वि.** १०।३।१६, १२।४।३, * सोमक्रयसाधनानां दशानामपि साद्यस्क्रे ' त्रिवत्सः साण्डः सोमक्रयणः ' इत्यनेन बाधः । १०।३।१६. * **सोमक्रयसाधने** साण्डे पुंस्त्वेऽपि ज्योतिष्टोमगतमन्त्रस्य ' तस्यै शतम् ' इत्यादेः नोहः साद्यस्क्रे । ९।१।१६।४२–४४ वर्णकं २. **मीको.** पृ. १२३० ' ऊहः न साद्यस्क्रे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमक्रयणः** साण्डः त्रिवत्सः साद्यस्क्रे कृत्स्नस्य क्रयदाक्षिण्यस्य निवर्तकः । **भा.** १०।३।१६।६०, * सोमक्रयणः साद्यस्क्रे प्रथमे साण्डः त्रिसंवत्सरः । ८।१।१२।१९, * **सोमक्रयणी** एकहायनी गौः ज्योतिष्टोमे । ९।१।१६।४२ वर्णकं २. * सोमक्रयणी

गोः सोमं क्रेतुं ज्योतिष्टोमे यदा नीयते तदा तया सप्तमं पदं यत्र निहितं तत्र भूमौ हिरण्यं निधाय हुत्वा तद्रजोऽध्वर्युर्गृह्णाति आज्यसंसृष्टम्, ' सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति ' इति । वि. ४।१।१०. * सोमक्रयणी स्त्री गौः अपरे साद्यस्के कृत्स्नस्य क्रयद्रव्यसंघस्य निवर्तिका । भा. १०।३।१६।६१, * सोमक्रयणी स्त्री गौः उत्तरेषु साद्यस्केषु । ८।१।१२।१९.
* **सोमक्रयण्याः** सप्तमेन पदेन ( रजसा ) गृहीतेन हविर्धानशकटयोरक्षमुपाञ्जति । ' यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात् ' इति । वि. ४।१।१०.

* **सोमक्रयणार्थानां** द्रव्याणां दशानां समुच्चयः न तु विकल्पः । भा. १२।४।३।५–७. **मीको.** पृ. ४३४६ ' सोमक्रयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमक्रयणीनयनं** क्रयप्रयुक्तं न तु पदप्रयुक्तं ज्योतिष्टोमे । भा. ४।१।१०।२५.

* **सोमग्रहाः** केचित् शस्त्रवन्तः । केचिच्च शस्त्ररहिताः वाजपेये । तत्र वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः । वि.११।३।१५, * सोमग्रहाः सुराग्रहाश्च वाजपेये । १०।४।३. * **सोमग्रहे** दधिग्रहविकारे न सोमधर्माः । **संकर्ष.** ३।३।११. **मीको.** पृ. २००७ ' दधिग्रहविकारे सोमग्रहे न सोमधर्माः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सोमग्रहे दधिग्रहविकारे सोमधर्माभावेऽपि अभिषवस्य आक्षेपः । **संकर्ष.** ३।३।१२. **मीको.** पृ. २००७ ' दधिग्रहविकारे सोमग्रहे सोमधर्माभावेऽपि० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमग्रहाज्यग्रहौ** काम्यग्रहौ कर्मान्तरे एव दधिग्रहविकृतिभूतौ न तु फलाय गुणविधिः । **संकर्ष.** ३।३।९.

* **सोमचमसः** एव ब्रह्मणे दक्षिणा ऋतपेये नान्यत् किमपि इतरऋत्विग्भ्योऽपि । वि.१०।२।८, १०।३।१९. * सोमचमसः औदुम्बरः दक्षिणा । स ब्रह्मणे देयः । टुप्. १०।३।१७।६४. * सोमचमसः। विकृतौ ऋतपेये वचनप्रामाण्यात् अल्पबलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः । **भा.**१०।३।११।४५. * **सोमचमसेन** ऋतपेये विहितेन कृत्स्नक्रतुदक्षिणायाः ब्रह्मभिन्नपुरुषाणां च निवृत्तिः । १०।३।२०।७२–७३. **मीको.** पृ. १२४२ ' ऋतपेये सोमचमसेन० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सोमचमसेन ब्रह्मसंबद्धदक्षिणांशस्य निवृत्तिः । क्त्वाचिन्ता । वि. १०।३।१९ वर्णकं २.

* **सोमचमसदक्षिणया** ऋतपेये विहितया प्राकृतकृत्स्नक्रतुदक्षिणायाः बाधः । १०।३।१९।६८–७२. **मीको.** पृ. १२४० ' ऋतपेये विहितया सोमचमसदक्षिणया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमचिकीर्षायां** आधानकालो बाध्यते । सामग्रीसंपत्तौ तु सोमकालोऽपि बाध्यताम् । वि. ५।४।५.

* **सोमद्रव्यस्य** यजुर्वेदेऽधिगतिः । वि.३।३।२.

* **सोमधर्मः** क्रयाभिषवादिः पूतीकादिषु श्रुतेष्वपि प्रतिनिधिषु तुल्यः । भा.३।६।१५।४०. * **सोमधर्माः** अभिषवक्रयादयो नित्याः, फलचमसे चोदकप्राप्ताः । वि. ३।६।१३. * **सोमधर्माणां** उद्भिदादिषु अव्यक्तयागेषु अतिदेशः । ८।१।९।१६. **मीको.** पृ.१९९ ' अतिदेशः उद्भिदादिषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सोमधर्मासमानविधित्वाधिकरणम्** । ग्रहधर्मा न फलचमससाधारणाः । नित्यनैमित्तिकयोर्न समानविधित्वम् ॥

**नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् । ३।६।१३।३६ ॥**

**भाष्यम्**-- ज्योतिष्टोमे श्रूयते ' स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य, ताः संपिष्य, दधन्युन्मृज्य, तमस्मै भक्षं प्रयच्छेन्न सोमम् ' इति । ज्योतिष्टोमे सन्ति सोमधर्माः– मानम्, उपावहरणम्, क्रयः, अभिषव इत्येवमादयः । तत्र संदेहः किं समानविधाना इमे धर्माः सोमस्य फलचमसस्य च, उत सोमधर्माः, फलचमसस्य तु तद्विकारत्वादिति । गुणकामानां प्रवृत्तिरप्रवृत्तिर्वा प्रयोजनमधिकरणचिन्तायाः । किं प्राप्तम् ? समान-



विधानाः प्रकरणाविभागात् । इति प्राप्ते, उच्यते । नैमित्तिकमेवंजातीयकमसमानविधानं स्यात् । कुतः ? अतुल्यत्वात् । अतुल्यः सोमेन फलचमसः । सोमो नित्यवदाम्नातः, फलचमसो नैमित्तिकः । किमतो यद्येवम्, धर्मा अपि नित्यवदाम्नाताः न शक्या अनित्यवत् कर्तुम् । यदि साधारणाः, तत्रानारभ्योऽर्थो विधीयेत । अपि च नैमित्तिकः फलचमसः । स सोमधर्मान् गृह्णाति । तत्र धर्माः साधारणाः सन्तो द्विरुक्ता इत्युच्येरन् । तस्मादसमानविधानाः ।

**वा**-- अधिकरणद्वयेन कार्यप्रयुक्तत्वात् धर्माणां साधारण्यमुक्तम् । फलचमसोऽपि च इष्टयविकारत्वात् सोमकार्ये वर्तते । तस्मात्तस्यापि सोमधर्मविधिः साधारणो यथा ' व्रीहीन् प्रोक्षति ' इत्येवमादिः यवानाम् । इति प्राप्ते, **अभिधीयते** । युक्तं यत् व्रीहिधर्माः यवेषु क्रियन्ते ; द्वयोरपि वैकल्पिकत्वेन अनित्ययोस्तुल्यरूपत्वात् । सोमधर्माः पुनर्नित्यवज्ज्योतिष्टोमापूर्वेण गृहीताः । ते नित्यमेव द्वारमाश्रयितुमर्हन्ति । सोमश्च नित्यो न फलचमसः । ब्राह्मणपक्षे विधानाभावात् । यदि सर्वसोमोपमर्देन फलचमसो भवेत्, ततो राजन्यवैश्यपक्षयोरभावात् सोमोऽप्यनित्य इति तुल्यता स्यात् । स तु यजमानचमसमात्रात् निराकृतोऽपि ग्रहचमसान्तरेषु संभवान्नित्यः । तेन धर्मास्तं न व्यभिचरन्ति । तत्प्रयुक्ताः फलचमसस्य इदानीं कथं भविष्यन्तीति । कार्यापत्त्येति ब्रूमः । आह । किं कार्यापत्तिरुपदेशातिदेशाभ्यामन्या, एतयोरेवान्तर्गता वा ? अतिरिक्तेति केचिन्मन्यन्ते । न तु तथा सति प्रमाणत्वाध्यवसानम् । अतोऽतिदेशान्तर्गतिरेव वक्तव्या । कथं पुनः प्रकृतावेव अतिदेशः कल्प्यते इति चेत् । सत्यं नावकल्पते, यत्र कर्मधर्मातिदेशो भवति । नह्येकस्य कर्मणः स्वत एव प्रकृतिविकारभाव उपपद्यते । द्रव्यधर्मातिदेशस्त्वयम् । समानेऽपि च कर्मणि द्रव्यभेदः प्रत्यक्षः । यथा च कर्म साकाङ्क्षं कर्मान्तरात् धर्मान् गृह्णाति, तथा द्रव्यमपि । तस्मात् फलचमसेन इज्यां भावयेत्, कथम् ? अनन्तरं विपरिवृत्तेः द्रव्यसारूप्यात् सोमवत् इत्यवगतेः अतिदेशसिद्धिः । किं भवति प्रयोजनं यदा उभयोरपि पक्षयोः सोमधर्माः क्रियन्ते । सत्यपि उभयत्र करणे यथैव अन्यत्र औपदेशिकातिदेशिकयोः गुणकामप्रवृत्त्यवृत्ती प्रयोजनं भवतः, तथेहापि द्रष्टव्यम्, निवृत्तिवत् द्रव्यभेदात् इत्यपि हि शक्यं वक्तुम् । ये हि सोमस्य अभिषवमानादिषु आश्रिताः फलसाधनत्वेनावगताः, ते कथं फलचमसस्थाः साधयिष्यन्ति ( गुणजन्यं फलं ) । क्रतुसाधनत्वेन फलचमसः प्रवर्तमानो ये एव तदङ्गपातिनः क्रत्वर्थेन क्रियन्ते, तानेव शक्नोति ग्रहीतुम्, न फलार्थान् । अतः सिद्धा तन्निवृत्तिः । अनेनैव ऊहोऽपि कर्तव्य इत्युक्तं भवति । समानेऽपि हि कर्मप्रकरणे द्रव्यसामानविध्यभावात् कार्यापत्तिपुरःसरं प्राप्नुवतः सोमपदस्य अशक्तेः विक्रिया विज्ञायते ।

**शा**-- **' अपूर्वसाधनत्वांशे संस्कारविधयो यतः । तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः ॥ तेन व्रीहियवा नित्याः समानविधयो यथा । नित्यनैमित्तिके द्रव्ये समानविधिनी तथा ॥ उच्यते साधनेनैव नित्यसंस्कारसंगतिः । सरूपेण त्वसंयुक्ता न विरूपेण युज्यते ॥ '**

**सोम**— यथा अपूर्वसाधनत्वाविशेषात् अनारभ्याधीतानां समानविधित्वम्, तथा फलचमसस्यापि इति प्रत्यवस्थानात् **संगतिः** । प्रयोजनं पूर्वपक्षे फलचमसे गुणकामानां प्रवृत्तिः, तथा ' व्रीहीणां मेध ' इत्यस्य यवेष्विव ' सोमं ते क्रीणामि ' इत्यादेर्निवृत्तिश्च । सिद्धान्ते तु गुणकामानामप्रवृत्तिः ' सोमं ते ' इत्यादेः ऊहेन प्रवृत्तिश्च इति । सूत्रे अतुल्यत्वात् नित्यधर्मसारूप्याभावात् इत्यर्थः ।

**वि**-- ' विधयोऽभिषवाद्याः स्युः फलाख्ये चमसे न वा ।, नैमित्तिकस्य नित्येन तुल्यत्वादस्ति तद्विधिः ॥, नित्ये कृतार्थाः संस्काराः पश्चाद्भाविनिमित्तजे । न विधेयाः किंतु तत्र प्राप्यन्तामतिदेशतः ॥ '

**भाट्ट**— सोमधर्मा अभिषवादयः, फलचमसेऽपि समानविधानाः सोमस्वरूपे आनर्थक्यप्रसक्तौ लक्षणीयस्य ज्योतिष्टोमापूर्वसाधनीभूतप्रदेयप्रकृतित्वस्य उद्देश्यताऽवच्छेदकस्य यवेष्विव फलचमसेऽपि अविशेषात् ।

न ह्यत्र सोमत्वमपि विवक्षितम्, फलचमसे स्थानापत्त्याऽपि अभिषवाद्यनापत्तेः। न च नित्यानामभिषवादीनां नित्यक्रतुसंबन्धे अनित्यस्य फलचमसस्य द्वारत्वानुपपत्तिः, नित्यानामपि नित्यसोमवत् अनित्यफलचमसस्य द्वारत्वे उद्देश्यत्वे एव वा बाधकाभावात्। इष्यते एव हि 'उपांशु यजुषा' इत्यादौ नित्यानां नैमित्तिकानां च होमादीनामुपांशुत्वादिविषयता। न च एवं नैमित्तिकस्य नित्यविनियोगोत्तरप्रतीतिकत्वेन विलम्बितप्रतीतिकत्वात् अतुल्यत्वम्, तथात्वे प्रमाणाभावात्, क्वचित् सत्त्वेऽपि वा संस्कारविध्युत्तरप्रवृत्तिकत्वे प्रमाणाभावेन अतुल्यत्वाभावाच्च। अस्तु वा तत्, तथापि संस्कारविध्युद्देश्यताऽवच्छेदकाक्रान्तत्वस्य फलचमसेऽपि अनिवारणाच्च। न च संस्कारविधौ अपूर्वसाधनत्वरूपसामान्यधर्मप्रकारकसोमविशेष्यकबोधाङ्गीकारात् न फलचमससंग्रह इति वाच्यम्। एवमपि उपदेशस्य सोमतात्पर्यकत्वानिवारणेन विकारभूतेऽपि फलचमसे अप्राकृतविशेष्यकत्वप्रसङ्गात् अभिषवाद्यनापत्तेः। अतश्च सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसाधनत्वप्रकारकप्रकृत्यपूर्वसाधनविशेष्यकः एव बोधः इति तद्वत् कुर्यादिति अतिदेशेन विकृत्यपूर्वसाधनेऽपि समानविधानत्वाभावेऽपि धर्मप्राप्तिरविरुद्धा। प्रकृते तु फलचमसस्य प्रकृत्यपूर्वसाधनत्वादेव यवादिवत् उपदेशविषयत्वम्। इति प्राप्ते, सत्यं सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसंबन्धित्वप्रकारकप्रकृत्यपूर्वसंबन्धिविशेष्यकः एव पार्यन्तिकः उद्देश्यबोधः, तथापि सा संबन्धिता यद्धर्मावच्छिन्नस्य संस्कारविधिपार्यन्तिकशाब्दबोधात् पूर्वं प्रमीयते, तद्धर्मावच्छिन्नस्यैव संस्कारविध्युपदेशविषयत्वेन व्यवहारो नान्यस्य, तस्य घटादेरिव तत्त्वेनाप्रतीतस्य उद्देश्यत्वानुपपत्तेः। अत्र च 'तप्ते पयसि दध्यानयति' इत्यादौ प्रथमं पयस्त्वावच्छिन्नोद्देशेन विधीयमानेऽपि दध्यानयने पयस्त्वावच्छिन्नस्य अपूर्वसाधनत्वबोधोत्तरमेव अपूर्वसाधनत्वावच्छिन्नोद्देश्यत्वस्य पार्यन्तिकत्वात् पयस एव उपदेशविधिविषयत्वं पार्यन्तिकपदोपादानान्न विरुध्यते। प्रकृते च न फलचमसत्वावच्छेदेन अपूर्वसाधनता अभिषवादिविधितः पूर्वं प्रमिता, तथात्वे 'स यदि सोमं बिभक्षयिषेत्तमस्मै भक्षं प्रयच्छेत् न सोमम्' इत्याद्यनुवादानुपपत्तेः। अतः तात्पर्यानुग्राहकानुरोधेन सत्यपि उद्देश्यताऽवच्छेदकावच्छिन्नत्वे न उपदेशविषयत्वं फलचमसस्येति असमानविधानता। अतश्च तस्यैव धर्माकाङ्क्षायां सत्यपि कर्मैकत्वे कल्पितेन स्थानापत्त्याख्यातिदेशेन क्रयाभिषवादीनां सोमधर्माणां प्राप्तिः। अत एव प्राकृतिकोपदेशविषयभिन्नविषयत्वात् अस्य संस्कारोहत्वमाचक्षते। वस्तुतस्तु गुणकामवाक्ये इव अत्र भावनाऽन्तरमेव विधीयते अनेकगुणोपादानाच्च। अतश्च तस्या एव इतिकर्तव्यताकाङ्क्षया अतिदेशकल्पनमित्यपि वक्तुं शक्यम्। अत एव 'न्यग्रोधस्तिभिनीराहृत्य' इति आहरणस्यैव औपदेशिकत्वात् न क्रय इति केचित्। **प्रयोजनं**— गुणकामप्रवृत्त्यप्रवृत्ती, सोमपदवतो मन्त्रस्य लोपोहौ च।

मण्डन— 'नैमित्तिके धर्मगणः श्रुतो न।'

शंकर— 'स्तिभिन्यः सोमविकृतिः।' १४.

* **सोमधर्मसामानविध्याधिकरणम्**। ३।६।११। ३२–३४. **मीको.** पृ. २ 'अंश्वदाभ्ययोरपि सादनादयो ग्रहधर्माः सन्ति' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमधर्मसामानविध्याधिकरणप्रयोजनम्**— याजुर्वैदिकात् ज्योतिष्टोमात् तद्विकृतौ सामवैदिके श्येने इष्टिषु जुहूभ्रेषे याजुर्वैदिकाङ्गभ्रेषप्रायश्चित्तं पूर्वपक्षे। सिद्धान्ते तु सामवैदिकाङ्गभ्रेषप्रायश्चित्तम्। इति। **बाल.** पृ. १०५–१०६.

* **सोमधारणेन** तावत् प्रत्यक्षं नैरपेक्ष्यं हविर्धानस्य। वा. ३।७।७।१६.

* **सोमपानं** धातुसाम्यार्थं लौकिकम्, तत्र वमनेऽपि न दोषः। वि. ३।४।१६. * **सोमपानं** वैदिकं ज्योतिष्टोमे तद्विकृतिषु च। लौकिकं सोमपानं यत् सप्तरात्रेषु दशरात्रेषु च धातुसाम्यार्थमासेव्यमाने सोमे। भा. ३।४।१२।३२. * **सोमपाने** वैदिके जरणमिष्यते न वमनम्, तत्र वमने सति प्रायश्चित्तार्थं 'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः' इति चरुर्विधीयते। न तु लौकिके। वि. ३।४।१६.



* **सोमपूर्वत्वं** इष्टिपूर्वत्वं इति उभयथा, आधानस्य सोमार्थत्वे सोमपूर्वत्वं सोमार्थत्वाभावे तु इष्टिपूर्वत्वम्। भा. ५।४।३।५–९. * **सोमपूर्वत्वेऽपि** आधानस्य पवमानेष्टिव्रात्यपश्वग्निहोत्राणि कृत्वाऽपि दर्शपूर्णमासयोः प्राक् सोमः कर्तव्यः। भाष्यकारमतेन तु पवमानेष्टिव्रात्यपशू कृत्वा सोमः अथाग्निहोत्रं अथ दर्शपूर्णमासौ। **टुप्.** ५।४।३।५–९.

* **सोमपूर्वत्वकल्पे** सोमस्य विहितकालबाधः। भा. ५।४।५।१५–१६.

* **सोमपूर्वकत्वं** दर्शपूर्णमासयोः, दर्शपूर्णमासपूर्वकत्वं वा सोमस्य इत्युभयथा। भा., शा. ५।४।३।५–९.

* **सोमपूर्वकत्व–इष्टिपूर्वकत्वयोः** सर्वेषां विकल्पः। **वि.** ५।४।३–४.

* **सोमप्रकरणे** 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' अत्र दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य फलवत्सोमयागोद्देशेन विधेयपूर्वकालविशेषणतया विधानम्, इति प्राप्ते, नेदं कर्मान्तरम्, वाक्यं च स्वफलप्रयुक्तदर्शपूर्णमासपूर्वकालकत्वमेव सोमयागोद्देशेन विदधाति इति कालार्थः संयोगो न कर्मान्तरविधानं इति सिद्धान्तः। **भाट्ट.** ४।३।१३.

* **सोमप्रकृतिरेव** दर्शपूर्णमासाभ्यां प्राक् कर्तुं शक्यते न तु सोमविकृतिः। वि. ५।४।९.

* **सोमप्रकृतिलिङ्गानि**– अव्यक्तचोदितत्वम्, अहर्गणत्वम्, अहीनत्वम्, सत्रत्वम्, संवत्सरसत्रत्वम्, निकायित्वं इत्यादीनि। बाल. पृ. ११९.

* **सोमप्रवहणे** 'अनड्वाहौ युनक्ति' इति द्विवचनं विवक्षितमेव ज्योतिष्टोमे। ४।१।५।११–१६. **मीको.** पृ. २४९४ 'पश्वेकत्वाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमप्रवहणीयं** नाम सूक्तम्। भा. ९।१।६।२०.

* **सोमभक्षः** अनुज्ञापूर्वकः एकपात्राणामेव। ३।५।१७।४३. **मीको.** पृ. १८३२ 'ज्योतिष्टोमे सोमभक्षः अनुज्ञापूर्वकः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षः एकपात्रे अनुज्ञापूर्वकः ज्योतिष्टोमे। ३।५।१४।४०. **मीको.** पृ. १७९१ 'ज्योतिष्टोमे एकपात्रे अनेकैः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षश्चमसिनाम्। ३।५।७।२२. 'सोमशेषभक्षश्चमसिनाम्' इत्यत्र द्रष्टव्यम्। * सोमभक्षः राजन्यवैश्ययोर्नास्ति किंतु न्यग्रोधफलभक्षः फलचमसो नाम तयोः। वि. ३।५।१९, * सोमभक्षः हारियोजने ग्रावस्तुतोऽपि वाक्येन ज्योतिष्टोमे। ३।५।९. * **सोमभक्षाः** ज्योतिष्टोमे यथोपदेशं स्युः। ३।५।६।१९–२१. **मीको.** पृ. १८३६ 'ज्योतिष्टोमे सोमशेषभक्षविधानात् ०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सोमभक्षे** अनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः। ३।५।१६।४२. **मीको.** पृ. १८३३ 'ज्योतिष्टोमे सोमभक्षे अनुज्ञायाः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षे अनुज्ञापनं वैदिकमन्त्रेण। ३।५।१५।४१. **मीको.** पृ. १७९३ 'ज्योतिष्टोमे एकपात्रे सोमभक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षे ज्योतिष्टोमे उपह्वयस्व इति प्रश्नमन्त्रः उपहूतः इति प्रतिवचनमन्त्रः। **भा.** ३।५।१६।४२. * सोमभक्षे वषट्कारो निमित्तम्। ३।५।१०।३१. **मीको.** पृ. १८२७ 'ज्योतिष्टोमे वषट्कारोऽपि०' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षे होमाभिषवौ समुच्चितं निमित्तम्। ६।४।७।२४–२५. **मीको.** पृ. १८३७ 'ज्योतिष्टोमे होमाभिषवौ०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमभक्षनिमित्तानि**– 'समाख्यानात्' (३।५।७।२२) 'वषट्कारात् च भक्षयेत्' (३।५।१०।३१) 'होमाभिषवाभ्यां च' (३।५।११।३२) सूत्राणि एतानि। के. * **सोमभक्षनिमित्तानां** समुच्चयः। ३।५।१२।३३–३५. **मीको.** पृ. १८३४ 'ज्योतिष्टोमे सोमभक्षनिमित्तानां समुच्चयः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमभक्षमन्त्रे** अनुवषट्कारदेवतायाः अग्नेः नोपलक्षणम्। ३।२।१६।३८. **मीको.** पृ. ४२६ 'अनुवषट्काराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * सोमभक्षमन्त्रे इन्द्रपीतपदे नास्त्यूहः क्वापि भक्षणेषु; इन्द्रपीतपदं तु सवनपरं बहुव्रीहिणा, न तु तत्पुरुषेण

सोमपरम् । तत्पुरुषः अन्तोदात्तः, बहुव्रीहौ तु प्रकृत्या पूर्वपदस्वरः । वि. ३।२।११. * सोमभक्षमन्त्रे गायत्रच्छन्दसः इतिपदं अनेकच्छन्दस्केऽपि सोमे स्यात् । ३।२।१८।४२–४३. मीको. पृ. १७२७ 'छन्दोऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमभक्षहेतवः** समाख्या–वाक्य–वषट्कार–अभिषवसहितहोमश्चेति चत्वारः । वि. ३।५।११.

* **सोमभक्षणं** अपूर्वार्थम् । वि. ३।५।६, * सोमभक्षणं एकपात्रे अध्वर्योः पूर्वं होतुः, ज्योतिष्टोमे । ३।५।१३, * सोमभक्षणं सुब्रह्मण्यासहितोद्गात्रादीनामिति भाष्यमतम्, सुब्रह्मण्यारहितानां त्रयाणामेवेति वार्तिककारमतम् । ३।५।८, * **सोमभक्षणे** 'उपह्वयस्व' इति प्रश्नमन्त्रः, 'उपहूतः' इति चोत्तरमन्त्रः इति लिङ्गेन विभज्य विनियोगः । ३।५।१६.

* **सोमभक्षणानुज्ञा** 'उपहूतः, उपह्वयस्व' इति मन्त्रेणैव । वि. ३।५।१५.

* **सोममात्रधर्माः** क्रयाभिषवादयः ज्योतिष्टोमे । वि. ३।६।१३.

* **सोममानोपावहरणे** ज्योतिष्टोमे 'वाससि मिनोति' 'वाससोपावहरति' इति वचनात् वासःसाधनके । भाट्ट. १०।६।१९.

* **सोमयागः** । 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्यविहितानां यागानां समुदायः 'सोमेन यजेत' इत्यनेनानूद्यते इति पूर्वपक्षः । 'सोमेन यजेत' इति यागविधिरेव, ग्रहणवाक्यैस्तु देवताविशिष्टः सोमसंस्कारो विधीयते इति सिद्धान्तः । वि. २।२।६, * सोमयागः फलवान्, न तु सवनम् । ५।३।६, * **सोमयागाः** ( अत्यग्निष्टोमादयः ) अग्निष्टोमेनेष्ट्वा अनुष्ठातुं शक्यन्ते, न पूर्वम् । ५।३।१३, * **सोमयागस्य** यस्य माध्यंदिने पृष्ठस्तोत्रे रथंतरं साम स रथंतरसामा, एवं बृहत्सामा । १०।५।१५. * सोमयागस्य स्तोमा अङ्गम्, समभिव्याहारात् । 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति । भा. ४।४।१२।४०. * **सोमयागानां** काम्यानां गवादीनामनुष्ठाने पाठक्रमो न नियामकः, यथाकाममनुष्ठानम् । ५।३।१२।३२–३६. * **सोमयागे** गुणो विधीयते ऐन्द्रवायवाग्रत्वादिवाक्येन ( यदि रथंतरसामा ) न कर्मान्तरम् । भा. २।३।१।१. * सोमयागे यस्मिन् वमनात् प्रतिपत्तिभ्रंष्टा तज्जनितस्यापूर्वस्य सहकार्यभावात् फलापूर्वोत्पादनाशक्त्यवगतेः तस्य फलापूर्वोत्पादनशक्त्याधानाख्यसंस्कारार्था वमनेष्टिः इति पक्षः । सु. पृ. १५१२. * सोमयागे सुत्या सर्वा संधिदिने एव स्यात् । संकर्ष. ३।१।६. * **सोमयागेषु** 'अल्पं जुहोति' इति वचनात् शेषः सिध्यति । 'आश्विनं भक्षयन्ति' इत्यादिभक्षविधानाच्च शेषभक्षणमस्ति । वि. ३।५।६.

* **सोमयागचिह्नानि** । ऐकान्तिकसोमयागचिह्नानि उपसदादीनि उभयत्र संबद्धानि श्रूयन्ते । वा. २।३।१०।२१.

**सोमयागप्राधान्याधिकरणम्** । ज्योतिष्टोमे सोमयागः प्रधानं इतरदङ्गम् ॥

**ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ।४।४।१२।३९॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्र दीक्षणीयादयश्च यागा विद्यन्ते, सौत्ये चाहनि सोमयागः । तत्र संदेहः किमत्र यागमात्रं प्रधानम्, उत सोमयागः इति । किं प्राप्तम् ? ज्योतिष्टोमे तुल्यानि सर्वाणि भवेयुः । कुतः ? अविशिष्टं हि कारणम् । यागात् फलं श्रूयते । सर्वे चामी यागाः । फलवच्च प्रधानम् । तस्मात् ज्योतिष्टोमे सर्वे यागाः प्रधानमिति ।

**गुणानां तूत्पत्तिवाक्येन संबन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात् । ४० ॥**

**भाष्यम्**-- गुणानां तूत्पत्तिवाक्येन संबन्धो भवति । केषां गुणानाम् ? ज्योतिषां स्तोमानाम् । कतमेनोत्पत्तिवाक्येन संबन्धो भवति ? 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । ज्योतिष्टोमात् यागात् स्वर्गः श्रूयते, न यागमात्रात् । यत्र च ज्योतींषि स्तोमाः, स ज्योतिष्टोमः । कस्य ज्योतींषि स्तोमाः ? सोमयागस्येति ब्रूमः । एवं ह्याम्नायते– कतमानि वा एतानि ज्योतींषि, य एतस्य स्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशाः । एतानि



वा ज्योतींषि । तान्येतस्य स्तोमाः इति । सोमयागस्य स्तोमा अङ्गम्, समभिव्याहारात् । 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति । ते च स्तोमास्त्रिवृदादयः । कथम् ? त्रिवृद्बहिष्पवमानम्, पञ्चदशानि आज्यानि इत्येवमादिभिः श्रवणैः । तस्मात् त्रिवृदादिस्तोमकः सोमयागः, स ज्योतिष्टोम इति । यश्च ज्योतिष्टोमः, ततः फलम् । यतश्च फलम्, तदेव प्रधानमिति । कथं पुनस्त्रिवृदादयो ज्योतींषि ? उच्यते । भवन्तु वा ज्योतींषि, मा ( वा ) भूवन् । ज्योतिःशब्देन तावदुक्तानि । वचनमात्रेणापि शब्दो भवति, विशेषतो लक्षणायाम् । अपि च द्योततेर्वा दीप्तिकर्मणः, द्योतयतेर्वा ज्योतिःशब्दं लभन्ते । द्योत्यन्ते हि तैः शब्दैः, द्योतयन्तीति वा स्तुत्यम् । तस्मात् सोमयागो ज्योतिष्टोमः । स च प्रधानम्, गुणभूता दीक्षणीयादयः इति ।

**टुप्**-- न यागमात्रं विधीयते फले, किं तर्हि ? ज्योतिष्टोमशब्दवाच्यो यागः फले विधीयते । कुतः ? ज्योतिष्टोमसामानाधिकरण्यात् । कतरोऽसौ ज्योतिष्टोमशब्दवाच्यः ? यस्य त्रिवृदादीनि ज्योतींषि सन्ति । त्रिवृदादयश्च स्तोत्रेषु सन्ति 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति वचनात् ग्रहचमससंबन्धिनः एव यागस्य, न दीक्षणीयादीनां ( स्तोत्रसंबन्धोऽस्ति) । तस्माद्यः स्तोत्रसंबन्धी यागः फले विधीयते, स च सोमयागः । (यदेतत् स्तोत्रसंबन्धात् सोमयागस्य प्राधान्यमुक्तं ) एतदयुक्तम्, स्तोत्रस्य ग्रहस्य च कालार्थं संबन्धो नाङ्गाङ्गिसंबन्धः । इतरेतराश्रयं च स्यात् । यस्याङ्गत्वेन ज्योतींष्यवगतानि स फले विधीयते, यश्च फले विधीयते तस्य ज्योतींष्यङ्गानि भवन्ति ( इति ) । प्राक् फले विधानात् ज्योतिःसंबन्धो यद्यवगतः स्यात्, तत इतरेतराश्रयं न स्यात् । इह तु फलोत्तरकालं ज्योतिःसंबन्धेन विशिष्टयागग्रहणम् । तस्मात् राजसूयन्यायेन सर्वाणि प्रधानानीति । मृग्योऽत्र परिहारः ।

**केचिदाहुः** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति फलसंयुक्तो याग उत्पद्यते उद्भिदादिवत् । तं द्रव्याभिलाषिणमनूद्य ( 'सोमेन यजेत' इति ), सोमः (द्रव्यं) विधीयते । तस्य कथंभावाकाङ्क्षायां ग्रहणमपि अङ्गम्, स्तोत्रमपि ( प्रकरणात् ) । 'ग्रहं वा गृहीत्वा चमसं वोन्नीय' इति कालार्थेऽपि संबन्धे ( सति प्रकरणेनैव सोमयागाङ्गत्वात् स्तोत्राणि– ) ज्योतींषि स्तोमा अस्य सन्ति इति मत्वर्थं ( फलसंबन्धोत्तरकालभाविनं ) उररीकृत्य नामधेयं प्रवृत्तम् । ( स्वमतमाह– ) अथवा ( 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति ) नेदं उत्पत्तिवाक्यम् । तथापि न सर्वेषां फले विधिः । कथम् ? यदिदं ( ज्योतिष्टोमेन इति ) नामधेयम्, किमिदं दीक्षणीयाऽऽदीन्यपि वदति, उत नेति । ( इति विमृश्य सिद्धान्तं परिगृह्णाति– ) **नेति ब्रूमः** । ( कुतः ? ) ज्योतींषि स्तोमा यस्य सोऽयं ज्योतिष्टोमः । न च दीक्षणीयादीनां केनचिदपि प्रकारेण ज्योतींषि स्तोमा अवगताः । इतरत्र कालार्थेऽपि संबन्धे लक्ष्यलक्षणत्वेन अस्ति संबन्धः । तमभिप्रेत्य ज्योतिष्टोमशब्दः ( सोमयागे ) प्रवृत्तः । तस्मात् ज्योतिष्टोम–( शब्द- ) वाच्यं ( सोमयागाख्यं कर्म ) फले विधीयते । दीक्षणीयाऽऽदीनां तु ग्रहस्य अनङ्गत्वात् न साक्षात् संबन्धः, न लक्ष्यलक्षणतया ( संबन्धः ) । तस्मात् न तेभ्यः फलम् । ( विकल्पमात्रं पक्षान्तरमाह– ) अथवा विनाऽपि लक्ष्यलक्षणत्वेन अस्ति प्रणाड्या संबन्धः । (कथम् ? ग्रह–) ग्रहणं यागाङ्गम्, तस्यापि (ग्रहणस्य फलवतो निष्फलं अङ्गं ) उपाकरणम् । उपाकरणस्तोत्रयोः अङ्गाङ्गिसंबन्धो नास्ति । अस्ति तु अन्यः संबन्धः ( आनन्तर्यलक्षणः ) इति, ( अनया प्रणाड्या स्तोत्रसोमयागयोरस्ति संबन्धः ) ।

**तथा चान्यार्थदर्शनम् । ४१ ॥**

**भाष्यम्**-- 'शिरो वा एतद्यज्ञस्य यद्दीक्षणीया' इत्येवमादि च लिङ्गं दृश्यते । तथा गुणाश्च ज्योतिष्टोमविकारे दीक्षणीयादयो दृश्यन्ते, 'चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात् । प्रायणीयायां द्वे चतुर्विंशतिमाने' इति । तुल्यत्वेन प्रवर्तयिष्यन्ते दीक्षणीयादयः । तस्मादपि सोमयागः प्रधानमिति ।

शा— ' तत्राख्याताविशेषेण सर्वयागप्रधानता । नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि ॥ ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद् यजेः । यत्रावयवशो वृत्तिर्नामधेयस्य गम्यते ॥ त्रिवृदादिषु तच्छब्दः स्तुतिमात्रतयोदितः । न तु स्तोमाभिधायित्वं ज्योतिःशब्दस्य तावता ॥ अस्तु वा त्रिवृदादीनां ज्योतिःशब्दाभिधेयता । तथापि सर्वयागानां तत्संबन्धात् प्रधानता ॥ स्तोमा हि सर्वयागानामङ्गं स्युरविशेषतः । सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते ॥ अतः प्रकरणात् स्तोमाः सर्वयागाङ्गतामियुः । सोमयागेन संयुक्ताः स्तोमा वाक्येन चेन्न तत् ॥ ग्रहणस्तोत्रयोर्वाक्ये कालार्था संगतिर्यतः । द्वयोरपि कृतार्थत्वात् स्तोत्रस्य ग्रहणस्य च ॥ तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः । प्राधान्यं सर्वयागानामिति प्राप्तेऽभिधीयते ॥ ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम् । ज्योतिष्टोमपदं चेदं वाक्यशेषे निरुच्यते ॥ (' त्रिवृत् पञ्चदशः सप्तदश एकविंशः, एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमाः ' इति स वाक्यशेषः ) प्रसिद्धरूपे सति सोमयागे न दीक्षणीयाऽऽदिषु वर्तते तत् । ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः ॥ '

सोम— पूर्ववैलक्षण्येन प्रत्यवस्थानात् संगतिः । फलवाक्यस्य कर्मोत्पादनार्थत्वे द्रव्यवाक्ये नामार्थस्य विधेयत्वं स्यात् । सोमवाक्यस्य द्रव्यविशिष्टकर्मोत्पादकत्वे तु फलवाक्ये फलस्य अविधेयत्वात् कर्मैव विधेयं इति उभयत्र भावार्थविधिसिद्धिः, इत्यतः सोमवाक्ये एव कर्मोत्पत्तिः, न फलवाक्ये । भट्टसोमेश्वरस्तु फलवाक्ये यागविधौ भावनायाः फलं प्रति गुणत्वात् यागं प्रति प्राधान्याच्च वैरूप्यं स्यात् । उद्भिदादौ तु गत्यभावात् इदं वैरूप्यमङ्गीकृतम्, न तु इह गत्यन्तरसंभवात् इत्याह । सूत्रार्थस्तु- यजित्वरूपकरणत्वाविशेषात् सर्वाणि कर्माणि समप्रधानानि इति ।

वि— ' मुख्या न वा दीक्षणीया, मुख्या स्यात् सोमसाम्यतः ।, ज्योतींषि यस्य स्तोमाः स्युरिति सोमैकमुख्यता ॥ ' सोमयागानामेव प्राधान्यम् ।

भाट्ट— ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्यनेन स्वर्गफलसंबन्धो न सोमयागस्यैव, अपि तु प्रायणीयाऽऽदीनां सर्वेषामेव, यागत्वाविशेषेण सर्वेषामेव यजिना फलोद्देशेनोपादानात्, सर्वेषां ज्योतिष्टोमनामत्वाविशेषाच्च । न च स्ववाक्ये विहितस्यैव ज्योतिष्टोमसंज्ञकस्य फलोद्देशेन विधानात् इतरेषां तदङ्गत्वमिति वाच्यम् । अग्नीषोमीयाद्यपेक्षया अत्र कर्मान्तरे प्रमाणाभावात् । अत एव एतद्वाक्यविहितकर्मणः अप्रसिद्धत्वात् अग्नीषोमीयाद्यनुवादेन च सोमविधानायोगात् सोमवाक्येऽपि सोमविशिष्टयागस्यैव विधानम् । न च विशिष्टविधिगौरवभिया लाघवसहकृतवाक्यान्तरोपात्तगुणादेव ज्योतिष्टोमवाक्ये कर्मविध्यङ्गीकारः, तथात्वे नित्यवाक्येऽपि कर्मान्तरस्य विनिगमनाविरहेण आपत्तौ सोमवाक्ये एव उत्पत्त्यन्वयिगुणेन विशिष्टविध्यङ्गीकारस्य न्याय्यत्वात् । अतश्च प्रकृतत्वाविशेषात् राजसूयवत् सर्वेषां फलसंबन्धः । न च ' एतानि वाव ज्योतींषि य एतस्य स्तोमाः ' इति वाक्यशेषात् सोमयागस्यैव ज्योतीरूपत्रिवृदादिस्तोमसंबन्धेन ज्योतिष्टोमनाम्नस्तत्रैव प्रसिद्धार्थकत्वात् दर्शपूर्णमासपदवत् यज्यवच्छेदकत्वोपपत्तेः तस्यैव फलसंबन्धोपपत्तिरिति वाच्यम् । एतस्यार्थवादत्वेन गौणतयाऽपि उपपत्तौ अर्थान्तरवाचिनो ज्योतिःशब्दस्य स्तोमवाचित्वाभावात्, ज्योतीरूपस्तोमाङ्गकत्वस्य फलसंबन्धोत्तरकालीनत्वेन अविशेषात् । न च ' ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् ' इत्यनेन वचनेन स्तोत्रोपाकरणस्य सोमयागाङ्गभूतग्रहग्रहणाद्यङ्गत्वावगमात् स्तोमानामपि स्वसाध्यस्तोत्रोपाकरणद्वारा सोमयागसंबन्धावगतेः विशेषकत्वोपपत्तिरिति वाच्यम् । उपाकरणस्य दृष्टविधया स्तोत्रोपकारकत्वेन द्वितीयया च स्तोत्राङ्गत्वावगतेः अस्य कालार्थत्वात् । न च कालद्वारैव संबन्धेन विशेषकत्वम्, कालस्य फलसंबन्धोत्तरापेक्षत्वात्, तस्य च स्तोत्रगतफलवत्त्वज्ञानाधीनत्वात्, तस्यापि च यागगतफलवत्त्वबोधकवाक्याधीनत्वेन



तत्प्रवृत्तेः पूर्वं एतद्वाक्यप्रवृत्त्यभावेनैव तत्संबन्धावगतेः, नाम्नो विशेषकत्वाभावात् । यद्यपि च पदार्थानां प्राप्तत्वेन अस्य वाक्यस्य क्रमविधायकत्वं स्यात्, तथापि ' वेदं कृत्वा वेदिं करोति ' इतिवत् श्रौतक्रमविधायकत्वात् तस्य च प्रातिस्विकविधिविधेयत्वेन इतरक्रमवत् प्रयोगविधिविधेयत्वाभावेऽपि क्रमस्य अनुष्ठानावगमोत्तरापेक्षत्वात्, तस्य च फलवत्त्वज्ञानोत्तरकालीनत्वेन उक्तविधया न विशेषकत्वम् । इति प्राप्ते, क्रमादेः उत्तरकालमाकाङ्क्षायामपि निराकाङ्क्षत्वज्ञानाभावमात्रेण वाक्यस्य पूर्वप्रवृत्त्युपपत्तेः, तेन च कालस्य क्रमस्य वा विधेयत्वेन विशिष्य तद्घटितसंबन्धस्य सोमयागे अवगमात् नाम्नः प्रसिद्धार्थकत्वेन तस्यैव फलसंबन्धागवमेन प्राधान्यम्, अन्येषां तदङ्गत्वमिति तद्विकृतौ अतिदेशः । तदेवं प्रयोज्यवर्गो निरूपितः ।

मण्डन— ' सोमयजेरितरे गुणयागाः । '

शंकर— ' ज्योतिष्टोमे सोमयजेः । ' फलम् ।

* **सोमयागविशेषवचनः** वाजपेयशब्दः । भा. ३।१।९।१८.

* **' सोमयाजी '** इति तृतीयं नाम कुर्वीत । **संकर्ष.** ४।३।२२. * सोमयाजी एव बहुयाजी नाम । **संकर्ष.** ४।२।३. **मीको.** पृ. २९४९ ' बहुयाजी नाम सोमयाजी एव ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सोमयाजिनः** एकेन वाक्येन सांनाय्यं विधीयते । अपरेणापि वाक्येन असोमयाजिनः । **भा.** १०।८। १४।४५. * सोमयाजिनः सूक्तवाके नामत्रयं ग्राह्यम् । इतरेषां नामद्वयम् । इतरेषामपि ' यज्ञकामः ' इति तृतीयं नामेति केचित्, नेति भाष्यम् । **संकर्ष.** ४।३।२१. * आग्नेयश्चैन्द्राग्नश्च पुरोडाशौ असोमयाजिनः प्राप्तौ, **सोमयाजिनः** सांनाय्यमपरमपि । **भा.** १०।८।१४।४५.

* **सोमयाजिभिन्नस्य** पुरोडाशद्वयश्रवणं अनुवादः दर्शपूर्णमासयोः । १०।८।१४।३५–४६. **मीको.** पृ. २०२८ ' दर्शपूर्णमासयोः असोमयाजिनः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमलता** स्वीयक्षेत्रेऽपि वर्धयितुं शक्यते, सोमक्रयस्तु अपूर्वार्थत्वात् पुनः कर्तव्य एव । वि. ६।८।६.

* **सोमलताविशिष्टयागविधिपक्षेऽपि** अभिषवेण लतास्वरूपनाशात् प्रदेयप्रकृतित्वेनैव यागाङ्गता तुल्या । **सु.** पृ. ७९५.

* **सोमलिप्तानामवभृथे** नयनं प्रतिपत्तिः । ४।२।८।२०–२२. **मीको.** पृ. ६९९ ' अवभृथे ऋजीषादिनयनं प्रतिपत्तिकर्म ' इत्यत्र अधिकरणं द्रष्टव्यम् । * सोमलिप्तानां द्रव्याणां अवभृथगमनं प्रतिपत्तिः । **भा.** ११।३।१४।४५.

* **सोमवत्** पूतीकासु क्रयाभिषवादिविषयः साक्षादेव प्रवर्तन्ते, प्रतिनिधित्वात् । वि. ३।६।१५.

* **सोमवतोऽपि** स्वयम्, ज्योतिष्टोमे सोमक्रयः नित्यः । ६।८।७।२६–२७. **मीको.** पृ. १८२३ ' ज्योतिष्टोमे भृतिवननं सोमक्रयश्च नित्यौ ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमवमने** याजमाने सौमेन्द्रचरुः प्रायश्चित्तं न तु आर्त्विज्ये सोमवमने । वि.३।४।१७.

* **सोमवमनाधिकरणम्** । ( सोमवमने प्रायश्चित्तम् ) । ३।४।१२।३२–३३. **मीको.** पृ. ३४१७ ' वमनाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सोमविकाराः** अग्निष्टोमानुष्ठानात् प्राक् कर्तुं न शक्यन्ते । वि. ५।३।१४, * सोमविकाराः अत्यग्निष्टोमादयः संस्थाः– एकाहाः, अहीनाः, सत्राणि चेति । ५।३।१४.

**सोमविकाराणां दर्शपूर्णमासाभ्यां प्राक् नानुष्ठानम् ॥**

**तथा सोमविकारा दर्शपूर्णमासाभ्याम् । ५।४। ९।२६ ॥**

**भाष्यम्**— सोमविकाराः गवादयः, एकाहाः । तेषु संदेहः किं दर्शपूर्णमासात् प्रागूर्ध्वं च प्रयोक्तव्या उतोर्ध्वमिति । किं प्राप्तम् ? अनियमः, अविशेषात् । **एवं प्राप्ते, ब्रूमः** । तथा सोमविकारा दर्शपूर्णमासाभ्यामूर्ध्वं स्युः । ज्योतिष्टोमो दर्शपूर्णमासाभ्यामूर्ध्वं

भवति 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति। चोदकेनैष धर्मो गवादिष्वप्येकाहेषु प्राप्नोति। तस्मात्तेऽपि दर्शपूर्णमासाभ्यामूर्ध्वं कर्तव्याः इति।

**टुप्**— दर्शपूर्णमासोत्तरकालं सोमस्य काले चोद्यमाने विकृतीनामपि तदूर्ध्वता प्राप्नोत्येव। तस्मात् पूर्वाधिकरणेनैव सिद्धत्वान्नैवाऽऽरम्भणीयम्। प्रागपि दर्शपूर्णमासाभ्यां सोमः श्रूयते इत्यनेन विशेषेण प्रस्तावः। अत्र किं गवादयः ऊर्ध्वं प्राग् भवन्तीति संप्रधारणा। तत्रानियमे प्राप्ते, उच्यते। न हि वचनमस्ति, यत्प्राक्कालतां सोमस्य विदध्याद्दर्शपूर्णमासयोः। कुतस्तर्हि? अर्थप्राप्तः। न चार्थप्राप्तं चोदकः प्रापयति। अथोच्येत, आधानानन्तरः सोमस्य कालो वचनादिति। न शक्यम्। प्रकृत्यवरुद्धो न हि संभवति विकृतेः। स हि यद्वा प्रकृत्याऽवरोधनीयो यद्वा विकृत्या। तत्र यदि प्रकृतिर्नावरुणद्धि, विकृतेः प्राप्तिरेव नास्ति। प्रकृत्या चेदवरुद्धं सामर्थ्यादेवेतरासां नास्ति। तस्मादूर्ध्वं दर्शपूर्णमासयोर्गवादयः इति सिद्धम्।

**शा**—— इष्टिपूर्वत्वं सोमपूर्वत्वं च उभयमस्तीत्युक्तम्। अतः प्रकृतिवत् सोमविकाराणामपि इष्टेः प्राक् ऊर्ध्वं संभवं मन्यते। न त्वेवम्– 'नहीष्टेः प्रागनुष्ठानं **सोमस्याहत्य चोदितम्। आधानानन्तरोक्त्या तु संजातं प्राक्त्वमर्थतः॥ आधानानन्तरत्वं च विकृतीनां न सिध्यति। ज्योतिष्टोमोर्ध्वकालत्वात् द्वयोश्च तदसंभवात्॥**' '**अतः सोमविकाराणां दर्शादेः परतः क्रिया। एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः॥**'

**सोम**— पूर्ववैधर्म्येण प्रत्यवस्थानात् संगतिर्बोध्या।

**वि**—— 'एकाहानामनियमो दर्शादेरूर्ध्वमेव वा। सोमवत्प्रथमो मैवमनुक्तेः स्यात्तदूर्ध्वता॥'

**भाट्ट**— सोमे इष्टिपूर्वत्वमाधानाव्यवहितोत्तरत्वं च वैकल्पिकमङ्गम्। अतस्तद्विकारेषु तथैवातिदेशप्राप्तावपि इष्टिपूर्वत्वमेव। 'एष वाव प्रथमः' इति वाक्यविहितज्योतिष्टोमोत्तरत्वबलेन आधानाव्यवहितोत्तरत्वस्य तेषु कर्तुमशक्यत्वात्। अतश्चाधानानन्तर्यस्य प्रकृत्यवरुद्धत्वेनानतिदेशात् इष्टिपूर्वकत्वमेवातिदेशिकं तेष्विति सिद्धं क्रमस्य षट्प्रमाणकत्वम्।

**मण्डन**— 'इष्टेः पश्चात् सोमधर्मा विकारः।' सोमधर्मा विकारः सोमस्य विकारः गवादियागः इष्टेः पश्चात् एव अनुष्ठेयः इति शेषः।

**शंकर**— 'दर्शोर्ध्वा सोमविकृतिः।'

* **सोमविकारकालः** यज्ञायज्ञीयसामसमाप्तिः। वि. ११।२।१५.

* **सोमविकृतीनामेव** संस्थानां एकाहादीनां च अग्निष्टोमानुष्ठानात् प्रागननुष्ठेयतानियमः। वि.५।३।१४,

* सोमविकृतीनां दर्शपूर्णमासेष्टिपूर्वकत्वम्। ६।६।५,

* **सोमविकृतौ** 'यदि जगत्सामा आग्रयणाग्रान् ग्रहान् गृह्णीयात्' इति निविशते। विषुवन्नामके सोमविकारे जगत्सामत्वं भवति। १०।५।१५ वर्णकं २.

* **सोमविकृतिमात्रस्य** अग्निष्टोमोत्तरकालता। भाट्ट. ५।३।१५.

* **सोमविक्रयी** ऋत्विग्भ्यो भिन्नः। ३।७।१५।३१. मीको. पृ. १८३५ 'ज्योतिष्टोमे सोमविक्रयी ऋत्विग्भ्यो भिन्नः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* 'सोमविद्याप्रजमृणवाक्येन संयोगात्' (६।२।११) इत्यधिकरणे अनियतनिमित्तकं नैमित्तिकं कर्म उक्तम्। बाल. पृ. ८५. **सोमविद्याप्रजानां** आवश्यकत्वं अर्थवादप्रामाण्याधीनम्। सु. पृ. ६६.

## सोमविद्याप्रजाधिकरणम्। सोमविद्याप्रजं ब्राह्मणस्य क्षत्रियवैश्ययोश्च नित्यम्॥

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्॥६।२।११।३२॥**

**भाष्यम्**— इदं श्रूयते 'सोमेन यजेत' 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' 'प्रजामुत्पादयेत्' इति। तत्र संदेहः किं नित्यान्येतानि उतानित्यानीति। किं प्राप्तम्? कामसंयोगादनित्यानि। इति प्राप्ते, उच्यते। ब्राह्मणादीनां सोमादीनि नित्यानीति। कुतः? ऋणवाक्येन हि संयोगो भवति 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इति, स वै तर्ह्यनृणो यदा



यज्वा ब्रह्मचारी प्रजावान्' इति। ऋणसंस्तवोऽवश्यकर्तव्यानां भवति। तस्मान्नित्यानीति।

ननु लिङ्गमसाधकम्, न्याय उच्यताम्, यस्यैतद्द्योतकमिति। उच्यते। अकामसंयुक्तान्येषां पृथग्वाक्यानि भवन्ति। 'वसन्ते वसन्ते ज्योतिषा यजेत' 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'। तथा 'विद्यामधीयीत'। तथा 'प्रजा उत्पादयितव्या' इति। एवं नित्यतायाः प्राप्तायाः इदं लिङ्गं भवतीति।

**अथवा**— अयमन्योऽर्थः। 'ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्'। सोमादयो नियताः किं ब्राह्मणस्यैव, राजन्यवैश्ययोरनियताः, उत सर्वेषां नियताः इति। किं प्राप्तम्? ब्राह्मणस्यैव नियता नेतरयोरिति। कुतः? एवं श्रूयते 'जायमानो ह वै ब्राह्मणः' इति। ब्राह्मणस्य नियमो दृश्यते, नेतरयोः, ब्राह्मणसंकीर्तनात्। एवं प्राप्ते, ब्रूमः। सर्वेषां नियमः। कुतः? अविशेषेण नियमविधानं यत्तदकामसंयुक्तं वचनं नियामकम्। तदविशिष्टं सर्वेषाम्। तस्मात् सर्वेषां नियमः इति। ननु 'जायमानो ह वै ब्राह्मणः' इति ब्राह्मणस्य संकीर्तनम्। उच्यते। भवत्यस्मिन् वचने ब्राह्मणसंकीर्तनम्। न ह्येतद्वचनं नियमस्य विधायकम्। एतैरकामसंयुक्तैर्वचनैर्विहितस्य नियमस्य अनुवादोऽयमवदानस्तुत्यर्थः। तस्मान्नात्र ब्राह्मणसंकीर्तनेन राजन्यस्य वैश्यस्य वाऽनियमो विज्ञायते। ब्राह्मणग्रहणं तु प्रदर्शनार्थम्। जायमानो ब्राह्मणो राजन्यो वैश्यश्चेति। तथा जायमानो जातश्चेति।

**शा**—— फलकामाधिकारत्वमेषां (वाक्यानां) इति प्राप्ते, ब्रूमः, नित्यानीति। कुतः? '**वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते। यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते॥ यावद्वसन्तमभ्यासः कामस्यैवाथ चोद्यते। यजेतेतिपदेनैवं प्राप्नोत्यभ्यासलक्षणा॥**' तस्मात् वसन्तं निमित्ते विधानात् आगतेआगते वसन्ते नियमेन सोमः कर्तव्यः इति नित्यः। अध्ययनमपि अश्रुतफलं अक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलकत्वात् तस्य चावश्यकत्वात् आवश्यकम्। प्रजोत्पादनमपि अनृणत्वफलश्रवणात् 'अनुत्पाद्य तथा सुतानधो गच्छति' इति प्रत्यवायस्मरणात् आवश्यकम्। तस्मात् नित्यमेव सोमविद्याप्रजम्। न च तत्र ब्राह्मणश्रवणात् तद्विषयमेव आवश्यकत्वम्, विधिवाक्येषु विशेषाश्रवणात्। ब्राह्मणग्रहणस्य उपलक्षणार्थत्वात्। अतः त्रयाणामपि आवश्यकाः सोमादयः।

**सोम**—— गुर्वनुगमनादेः नित्यत्वेऽपि न सोमादेर्नित्यत्वं इति प्रत्यवस्थानात् (प्रत्युदाहरण–) **संगतिः।** द्वितीयवर्णके ऋणवाक्येन संयोगात् खलु सोमविद्याप्रजं ब्राह्मणस्यैवावश्यकं इति मन्यते। नैतद्युक्तं विधिवाक्येषु अविशेषश्रवणात् इति **सूत्रार्थः।**

**वि**— 'सोमाधीतिप्रजं काम्यं नित्यं वा, कामतोऽग्रिमः।, वीप्सानुष्ठेयविज्ञानलोपैस्तन्नित्यतेष्यते॥'

**भाट्ट**— सोमस्य 'वसन्तेवसन्ते ज्योतिषा यजेत' इति वचनादेव नित्यत्वम्। न चायं कालविधिः, 'वसन्ते ज्योतिषा यजेत' इति वीप्सारहितवाक्येनैव तद्विधानात्। न च विनिगमनाविरहः। गुणभूतकालानुरोधेन प्रधानावृत्तेरप्राप्ततया वीप्सार्थस्यापि विधेयत्वे वाक्यभेदापत्तौ प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायप्राप्तवीप्सार्थानुवादबलात् तद्वाक्यस्थाया एव सप्तम्या निमित्तपरत्वावसायात्। अग्निहोत्रादीनां तु नित्यत्वं स्थितमेव। एवं विद्याया अप्यध्ययनसहितायाः 'स्थाणुरयं भारहारः किलाभूत्, अधीत्य वेदं न विजानाति योऽर्थम्' 'अनधीयाना व्रात्या भवन्ति' इत्यादिनिन्दोन्नीताकरणप्रत्यवायबलेन नित्यत्वम्। एवमुपनयनस्यापि षोडशादिवर्षोत्तरमकरणे प्रत्यवायश्रवणादेव नित्यत्वम्। यत्तु 'षष्ठे अन्नाद्यकामस्योपनयीत' इत्यादिफलश्रवणं तदुपनयनाश्रितषष्ठादिकालस्येति ज्ञेयम्। यत्तु तन्त्ररत्ने क्रतूनामावश्यकत्वात्तदपेक्षितविद्यादेरप्यावश्यकत्वेन फलतो नित्यत्वमुक्तम्, तत् क्रतूनां विद्याप्रयोजकत्वस्य निरस्तत्वात्तद्गत एवावश्यकक्रत्वकरणे प्रत्यवायावगतेः विद्यादेरकरणे क्रतूनामनधिकारादेवानावश्यकत्वादुपेक्षितम्। एवं प्रजोत्पादनमपि 'अनुत्पाद्य सुतं मोहान्मोक्षमिच्छन् पतत्यधः' इत्यविरक्तस्य प्रत्यवायश्रवणात् नित्यत्वम्।

अत एव 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्यपि संगच्छते। न चात्र ब्राह्मणपदश्रवणात्तस्यैवैते नित्याः इतरयोस्त्वनावश्यका इति शङ्क्यम्। अस्यावदानविधिशेषत्वेनार्थवादस्य विधायकत्वाभावेन अत्रत्यब्राह्मणपदस्योपलक्षणत्वात्।

मण्डन-- 'यज्ञः प्रजा चाध्ययनं च नित्यम्।' 'वर्णत्रये नित्यमिदं त्रयं स्यात्।'

शंकर-- 'सोमादेश्चापि नित्यता।'

* **सोमविधिः** अयं सामान्यविधिः दृष्टार्थः। बाल. पृ.२१.

* **सोमशब्दः** आकृतिवचनः, न व्यक्तिवचनः। भा. २।२।६।१७, * सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धः न रसे। २।२।६।१७. * सोमशब्दः न कर्मनामधेयं अतो नासौ धर्मातिदेशकः। वि.४।३।१६. * **सोमशब्दस्य** सोमहविष्कत्वं उपाधिः। सु. पृ. ७१७.

* **सोमशेषभक्षश्चमसिनाम्**। ३।५।७।२२. मीको. पृ. १७९९ 'ज्योतिष्टोमे चमसिनां सोमशेषभक्षः' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सोमशेषभक्षे** होमाभिषवौ समुच्चित्य कारणम्। ३।५।११।३२. मीको. पृ. १८३३ 'ज्योतिष्टोमे सोमभक्षे होमाभिषवौ समुचितौ कारणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमशेषभक्षणं** ऋत्विजां यजमानस्य च 'चमसि' समाख्यया सिध्यति। वि. ३।५।७.

* **सोमसंस्कारविधीनां** 'क्रीणाति' 'अभिषुणोति' इत्यादीनां सोमे एव प्रवृत्तिः, फलचमसे तु अतिदेशेन संस्कारसिद्धिः। वि. ३।६।१३.

* **सोमसंस्कारकत्वं** भक्षणस्य। वा.३।५।११। ३२.

* **सोमसंस्थाः** न समानविधानाः। ३।६।१६। ४१-४७. मीको. पृ. ४०५१ 'संस्थाऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सोमसंस्थासु** अग्निष्टोमस्य प्राथम्यं प्रकरणाच्छिङ्गाच्च। ५।३।१३।३७-३८. मीको. पृ. ७१ 'अग्निष्टोमस्य यज्ञेषु प्राथम्यम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमहविः**। सुचि सोमहविर्नासाद्यते। भा. ८।१।३।६.

* **सोमहिरण्यादयो** द्रव्यशब्दाः, सुवर्णादयो गुणशब्दाः, चित्राश्येनादयः कर्मशब्दाः अपूर्वप्रत्यायका इति पूर्वपक्षः। आख्यातेनापूर्वं प्रतीयते, आख्यातप्रत्ययान्तात् भावार्थपदादपूर्वं गम्यते इति सिद्धान्तः। वि. २।१।१ वर्णकं २.

* '**सोमापौष्णः** एकादशकपालः' इत्याद्येकं त्रिकम्, तत्र श्यामो दक्षिणा। 'आग्नावैष्णव एकादशकपालः' इत्यादि द्वितीयं त्रिकम्, तत्र 'वामनो दक्षिणा'। एतत्सर्वं राजसूये। तत्र त्रिकद्वये दक्षिणाभेदेन कर्तृभेदादङ्गभेदः। वि. ११।४।१. * सोमापौष्णः एकादशकपालः राजसूये द्वितीये त्रिसंयुक्ते प्रथमं हविः। भा. ११।४।१।२. * **सोमापौष्णे** पशौ विहितेन औदुम्बरेण प्राकृतस्य खादिरस्य बाधः यूपार्थम्। १०।७।१८।६१-६३. मीको. पृ. १५३९ 'खादिरत्वस्य प्राकृतस्य सोमापौष्णे पशौ०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सोमापौष्णादिद्विदैवत्ये** पौष्णं पेषणं नास्ति, एकदैवत्ये एव हि तत्। वि. ३।३।२०.

* '**सोमारौद्रं** चरुं निर्वपेत् कृष्णानां व्रीहीणां अभिचरन्, शरमयं बर्हिर्भवति' इति। शरमयेन प्राकृतकुशमयं निवर्त्यते। भा. १०।४।१।१-२ वर्णकं २. * **सोमारौद्रे** चरौ आज्यमेव प्रोक्षणम्। तत्र 'प्रोक्षणीरासादय' इति प्रैषमन्त्रे प्रोक्षणीशब्दः संस्कारवाची इतिपक्षे अविकारः। जातिवाचीति द्वितीयपक्षे 'आज्यमासादय' इत्यूहः। यौगिकः इति सिद्धान्ते तु 'प्रोक्षणमासादय' इति लिङ्गवचनोहेन प्रयोगः। सोम. १।४।९. * सोमारौद्रे यागे उपदिष्टैः शरैः अतिदिष्टानां कुशानां बाधः। १०।४।१।१-२ वर्णकं २. मीको. पृ. ३८८४ 'शरन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।



**सोमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां बाधः॥**

**विकृतौ त्वनियमः स्यात्पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदीति स्यात्। १०।७।१९।६४॥**

**भाष्यम्**-- 'सौमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, सौमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्, नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणां, सौर्यं चरुं निर्वपेच्छुक्लानां व्रीहीणाम्' इति। तत्र संशयः, किं व्रीहिभिर्यवैर्वा यष्टव्यम्, उत व्रीहिभिरेव। किं प्राप्तम्? विकृतौ तु विरोधिनामन्यतमे गृह्यमाणेऽनियमः स्यात्, व्रीहिभिर्यवैर्वेति। कुतः? ग्रहणस्य गुणार्थत्वात्। तस्य हि व्रीहेर्ग्रहणं गुणार्थम्, न यागसंबन्धार्थम्। शुक्ला व्रीहयो भवन्ति, यागस्तूभाभ्यामपीति। यथा 'पृषदाज्येनानुयाजान् यजति' इति आज्यं पृषत्तासंबन्धार्थं भवति। एवमिहापि व्रीहयः शुक्लगुणसंबन्धार्थाः, न यागसंबन्धेनान्यपरिसंख्यानार्थाः। तथा, 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इत्येतत् श्रवणमुपपद्यते। यद्येवंजातीयकेन प्राकृतं न निवर्त्येत, ततः पञ्चावत्तेन चतुरवत्तेऽनिवर्तिते, यद्यपि चतुरवत्तीति दर्शनं युक्तं भवति। न चानर्थको गुणोपदेशो भवति। उभयोः प्रदिष्टत्वात्। उभये व्रीहियवाश्चोदकेन प्राप्ता विकल्पन्ते। यदा व्रीहयः, तदा गुणशास्त्रम्। अव्रीहिपक्षेऽसंभवादर्थान्निवर्तेत। तस्माद्विकल्प इति।

**ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात्। ६५॥**

**भाष्यम्**-- एकार्था हि व्रीहियवाः, तत्र व्रीहीणां श्रुतत्वाद्यवा नैव प्राप्नुवन्ति। ननूक्तं गुणसंबन्धार्था व्रीहय इति। नैतदेवम्। यदि गुणसंबन्धार्था भवेयुस्ततो न नियमः स्यात्। न तु गुणसंबन्धार्थाः। विकारसंबन्धे हि षष्ठी भवेत्, व्यतिरिक्ते प्रातिपदिकार्थे। तेन विकारविशेषणं श्रुत्या भवति। गुणविशेषणं वाक्येन। श्रुतिश्च वाक्याद्बलीयसीति। तस्मात् श्रुत्या व्रीहयो यागेन संबध्यमानाः समानार्थान् यवान्निवर्तयेयुः।

**विरोधित्वाच्च लोकवत्। ६६॥**

**भाष्यम्**-- विरोधिनश्चैते। कथम्? ये लोकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति। विरोधिनां च न सह प्रवृत्तिः। लोकवत्। यथा 'मत्स्यान् न पयसा समश्नीयात्' इति। यद्यपि सगुणा मत्स्या भवन्ति, तथाऽपि पयसा सह न समश्यन्ते। तस्मात् सगुणा अपि व्रीहयो यवान्निवर्तयन्त्येव।

**क्रतोश्च तद्गुणत्वात्। ६७॥**

**भाष्यम्**-- यदि व्रीहीणां विकारेण संबन्धः, कथमेषां गुणेनापि संबन्धो भविष्यतीति? अत्रोच्यते। नैषां गुणेन संबन्धः श्रुत्या वाक्येन वा, नापि गुणस्य व्रीहिभिः। कथं तर्हि? क्रतोस्तद्गुणत्वात्। क्रतुरयं शुक्लगुणः श्रूयते, कृष्णगुणश्च। तत्रैकवाक्यत्वादेकस्मिन् क्रतावर्थेन द्रव्यगुणौ संबध्येते। तेनार्थभेदोऽपि परिहृतो भवति।

**विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात्। ६८॥**

**भाष्यम्**-- विरोधिनां चान्यतमे प्रत्यक्षे श्रूयमाणे, अन्यस्मिंश्च चोदकप्राप्ते, अशब्दत्वात् प्रत्यक्षे विरोधिनि सति चोदकस्यान्याय्यो विकल्पः स्यात्। तस्मादपि नियमः।

**पृषदाज्ये समुच्चयाद् ग्रहणस्य गुणार्थत्वम्। ६९॥**

**भाष्यम्**-- पृषदाज्ये तु युक्तम्। न हि तत्र केनचिद्विरोध आज्यस्य। तेन न पाक्षिकमाज्यम्। ततस्तत्र दध्ना आज्यसमुच्चयः। यतः पृषत्तासंजननार्थं दधि। तेन न पाक्षिकं दधि। आज्येन च समुच्चय इति।

**यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते। ७०॥**

**भाष्यम्**-- अथ यदुक्तम्, यद्येवंजातीयकेषु नियमो भवेत्, 'यद्यपि चतुरवत्ती' इति चतुरवत्तदर्शनं नोपपद्यते इति। तत्परिहर्तव्यमिति।

**क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् । ७१ ॥**

**भाष्यम्**— क्रत्वन्तरे एव वा, दर्शपूर्णमासयोश्चतुरवत्तदर्शनं भविष्यति । यद्यपि दर्शपूर्णमासयोश्चतुरवत्ती यजमानः, तथाऽपि पञ्चावत्तैव वपा भवतीति । अन्यस्मिन् कर्मणि चतुरवत्तम् । अन्यस्मिन् पञ्चावत्तम् । यद्यप्येवंजातीयकेषु नियमस्तथाऽपि चतुरवत्तदर्शनमुपपद्यते इति ।

**शा**— 'सौमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्, नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इति । तत्र संशयः किं व्रीहियवयोः विकल्पः, व्रीहिपक्षे च शुक्लकृष्णविधिरुत सर्वदा व्रीहय एवेति । तत्र व्रीहिग्रहणस्य शुक्लादिगुणसंबन्धार्थत्वेन अविधायकत्वात् न यवानां बाधः । तस्मात् विकल्पः । नैवम् । नह्येकेन वाक्येन यागस्य चोदकप्राप्तव्रीह्युद्देशेन गुणस्य च विधानं संभवति, तस्मात् द्रव्यगुणविशिष्टकर्मविधानात् उपदिष्टा व्रीहयो यवान् बाधेरन् ।

**सोम**— द्रव्यविधिस्थले बाधेऽपि नात्र बाधः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**— सौमारौद्रादिविकृतौ व्रीह्यादेरनियमः स्यात् व्रीहिगणस्य पृषदाज्येनानूयाजानित्याज्यग्रहणवत् गुणार्थत्वात् व्रीहियवयोरप्यतिदिष्टत्वादनियता व्रीहय इत्येवं व्रीहिपक्षे गुणशास्त्रमुपपन्नं स्यादिति ।

**वि**— 'किं शुक्ला व्रीहयः पक्षे चोदकप्रापितान् यवान् । न बाधन्तेऽथ बाधन्ते गुणार्थोक्तिरतोऽग्रिमः ॥ वाक्यभेदो यागशुक्लगुणयोर्विधितो भवेत् । विशिष्टस्य विधौ कार्यमेकं वा बाधकास्ततः ॥'

**भाट्ट**— यत्र प्राकृतानां वैकल्पिकानां व्रीहियवादीनां कर्मानुत्पत्तिवाक्येऽन्यतरस्य शुक्लादिगुणयुक्तस्य श्रवणं तत्र द्रव्योद्देशेन गुणमात्रविधानात् द्रव्यांशे विधानाभावेन नेतरद्रव्यबाधः । यत्र तूत्पत्तिवाक्ये न तच्छ्रवणं यथा 'सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाम्' इत्यादौ तत्रातिदेशप्राप्तव्रीह्यनुवादेन शुक्लगुणविधौ यागादेरपि विधेयत्वेन वैशिष्ट्याभावाद्वाक्यभेदापत्तेर्व्रीह्यादेरप्यतिदेशप्राप्तस्य विशिष्टविधिसंदष्टतया प्राप्तस्यापि विशेषणस्य विशिष्टविधिमात्रविषयत्वावश्यंभावेन विधेयत्वात्तेन यवव्यावृत्त्युपपत्तिः ।

**वस्तुतस्तु**— एतादृशस्थले अतिदेशप्राप्तेः पूर्वमेवैतद्विधिप्रवृत्त्यङ्गीकारात् व्रीहीणामपि फलतो नियमविधिविषयतया यवव्यावृत्तिसिद्धिः ।

**मंडन**— 'व्रीहिर्विकारे यवबाधकः स्यात् ।'

**शंकर**— 'शुक्लव्रीह्यविकल्पनम् ।'

**❀ सोमारौद्रेष्टौ सामिधेनीकार्ये मानवीनामृचां एकादशानामेव दाशतयीभ्यः समानयनम् ॥**

**लिङ्गेन द्रव्यनिर्देशे सर्वप्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् । १०।६।१९।७३॥**

**भाष्यम्**— क्वचित् कर्मविशेषे श्रूयते 'मनोर्ऋचः सामिधेन्यो भवन्ति' इति । तत्र संशयः किं यावत्यो मनुलिङ्गा ऋचः, ताः सर्वा दाशतयीभ्य आनीय सामिधेनीषु विनियोक्तव्याः, उत काश्चिदेव, न सर्वा इति । किं प्राप्तम् ? सर्वा एवंलिङ्गा उपादेयाः । कुतः ? लिङ्गस्य सर्वगामित्वात् । इहैतावत् श्रूयते 'मनोर्ऋचः सामिधेन्यो भवन्ति' इति । मनुशब्दसंयोगो हि लक्षणमृचामुपादीयमानानाम् । मनुसंबन्धेन च शब्द उपलक्षयन् यावतीषु संभवेत्, तावतीरविशेषात् शक्नोत्युपलक्षयितुम् । एतच्च वचनं लिङ्गमात्रसंबन्धेन विनियोजकम्, नेयत्तापरिच्छिन्नानां विशेषकम् । तस्मादविशेषात् सर्वास्तल्लिङ्गवत्य उपादेयाः । आग्नेयवत् । यथा ऋजीषाणामाग्नेयेन संवत्सरमुपधाने आसीत सूक्तेन सूक्तस्याविच्छेदायेति, आग्नेयेन सूक्तेनेत्युक्ते यावन्त्याग्नेयानि सूक्तानि दाशतयानि, सर्वैरिष्टका उपधीयन्ते, एवमिहापि मनुलिङ्गाभिः सामिधेनीकार्यं कर्तव्यमिति । यथा वाऽहर्गणे 'ऋजीषमप्सु प्रास्यति' इति, सर्वेषामह्नां यदृजीषम्, अविशेषात्तत्सर्वं प्रास्यते । तद्वदिहाप्यविशेषात् सर्वासामुपादानमिति ।

**यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् । ७४ ॥**

**भाष्यम्**— न चैतदस्ति, सर्वासां मनुलिङ्गानां दाशतयीनामागम इति । किं तर्हि ? यावदर्थमुपादेया इति । कुतः ? अर्थशेषत्वात् । कार्यशेषभावेन हि सामिधेनीनामुपादानम् । तच्च कार्यमल्पाभिरपि सिध्यतीति । सिद्धत्वात्कार्यस्य, यद्यपि लक्षिताः सन्त्यपरा ऋचः, तथाऽपि प्रयोजनाभावान्नैवोपादीयन्ते इति । ननु कार्यशेषभावः सर्वत्र वाचनिकः, इहापि प्रत्यक्षवचनाल्लिङ्गपरिच्छिन्नाः सामिधेन्यो विधीयन्ते इति सर्वासां विधानं भविष्यतीति । **अत्राभिधीयते ।** सत्यं सर्वत्र वाचनिकः शेषभावः, न त्विह सामिधेन्यो विधीयन्ते । किं तर्हि ? चोदकप्राप्तानां इयत्तापरिच्छिन्नानां केवलमनेन विशेष उच्यते, मनोर्ऋचः इति । सोऽयं विशेष उच्यमानो यावत्य उपन्यस्ताः, ता एव विशेष्य कृतार्थत्वात् व्यावर्तन्ते, नापरा अपि तल्लिङ्गाः प्रसज्यन्ते । तस्मात् लिङ्गवतीनां नियतानामुपादानं न सर्वासामिति । न च लिङ्गवतीनां भावाद् गुणानुरोधेन प्रधानावृत्तिर्न्याय्या । एवं च लाघवं प्रयोगप्राशुभावश्च भविष्यतीति । अपि चास्मिन् पक्षे लिङ्गमपि समर्थमेव । कथम् ? लिङ्गं हि लक्षणत्वेन सामिधेनीनामुच्यते । तत्र यद्यपि न तल्लिङ्गाः सर्वा उपादीयन्ते, यास्त्विह प्रयुज्यन्ते तास्तल्लिङ्गाः एव, नान्यलिङ्गाः, तथाऽपि लिङ्गमनुगृहीतमेव, न बाधितमिति । तस्माद्यावदर्थमुपादानं न सर्वासामिति ।

**आग्नेये कृत्स्नविधिः । ७५ ॥**

**भाष्यम्**— यदुक्तं यथा 'आग्नेयैः सूक्तैरिष्टका उपदधाति' इत्युक्ते सर्वाणि लिङ्गविशिष्टान्युपादीयन्ते, न कानिचित् । एवमत्रापि द्रष्टव्यमिति । तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमाग्नेयेषु कृत्स्नविधानम् । कुतः ? इष्टकाबहुत्वात् । प्रतिसूक्तमुपदधातीति वचनात् बह्वीनामुपधेयानां सूक्ताल्पत्वात् कार्त्स्न्येनोपादानमविरुद्धम् । इह त्वियत्तापरिमितानां विशेष उच्यते इत्यपदिष्टो हेतुः । तस्मादयमिहादृष्टान्त इति ।

**ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् । ७६ ॥**

**भाष्यम्**— यदप्युक्तमहर्गणे यथा ऋजीषस्य कृत्स्नस्याप्सु प्रासनम्, एवमत्राप्यविशेषात्सर्वासामुपादानमिति । तत्परिहर्तव्यम् । अत्रोच्यते । ऋजीषस्य प्रधानत्वात् युक्तम् । ऋजीषस्याविशेषात् प्रतिपत्तिरियमभिधीयते । सा सर्वस्य ऋजीषस्य स्यात् । यस्य न क्रियेत, तस्य संस्कारपरिलोपः स्यात् । तस्मात् सर्वेषामह्नां यदृजीषम्, तत्सर्वं प्रास्यते । इह त्वर्थशेषत्वादित्यपदिष्टो हेतुः । तस्माद्विषममेतदृजीषेणेति ।

**शा**— क्वचित् विकृतौ श्रूयते 'मनोर्ऋचः सामिधेन्यो भवन्ति' इति । तत्र किं सर्वा एव मनोर्ऋचः सामिधेनीत्वेन वक्तव्याः उत यावतीभिः संख्या पूर्यते प्राकृती तावत्य एव इति प्रत्यक्षेण वचनेन सर्वासामविशेषेण प्राप्त्यवगमात् चोदकप्राप्तसंख्याबाधेन सर्वासामुपादानमित्येतावान् पूर्वः पक्षः । न अवश्यं प्रत्यक्षवचनेन सर्वासां प्राप्तिः । न हि इदं ऋक्संस्कारार्थम्, अग्निसमिन्धनार्थं हि अत्र ऋच उपादीयन्ते, तत्र बहुवचनात् त्रित्वे प्राप्ते त्रित्वं अतिक्रम्य पञ्चदशोपादीयन्ते अधिकानां तु अनाशङ्क्यमेव उपादानम् ।

**सोम**— पूर्वत्र चोदकानुग्रहाय द्वादशाहवत् विभज्य नयनेपीह चोदकप्राप्तपञ्चदशत्वबाध इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**— 'मनोर्ऋचः' इति लिङ्गेन उपलक्षणीकृत्य ऋग्विधाने लिङ्गस्य सर्वसाधारण्यात् सर्वासामपि संप्रत्ययः स्यात् यथा 'आग्नेयैः सूक्तैः संवत्सरमुपदधान आसीत' इत्यत्र सर्वेषां आग्नेयसूक्तानां इष्टकोपधाने विनियोगस्तद्वदिति उपादेयानामिष्टकानां बहुत्वात् आग्नेयसूक्तानां कार्त्स्न्येन उपादानं न विरुद्धमिति आग्नेयसूक्तवैषम्यं आग्नेये तु कृत्स्नविधिः इति गुणसूत्रभाष्ये स्पष्टम् ।

**वि**— 'मनोर्ऋचः सामिधेन्यः सर्वाः पञ्चदशैव वा ।, अविशेषेण सर्वाः स्युः कार्याः पञ्चदशैव ताः ॥'

**भाट्ट**— विकृतिविशेषे 'मनोर्ऋचः सामिधेन्यो भवन्ति' इति श्रुतम् । वेदे च पञ्चदशसंख्याधिकास्ताः पठिताः । अतः सर्वासामपि मनोर्ऋक्त्वाविशेषात् प्राकृतऋग्बाधेन प्राकृतसंख्याबाधेन च सर्वासां पाठः । इति प्राप्ते, नात्र मनोर्ऋचः संस्कार्या येनाहर्गणे 'ऋजीषमप्सु प्रास्यति' इत्यत्र सर्वाहःसंबन्धिऋजीषप्रासनरूपप्रतिपत्तिवदिहापि सर्वर्चो पाठो भवेत् । प्रकृतिवदनुवचनानुवादेन तु मनोर्ऋग्विधानात् उपादेयत्वेन बहुत्वस्य कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानप्राप्तौ अतिदेशप्राप्तसंख्यानुरोधेनैकादशैव । प्रथमोत्तमयोस्त्रिरभ्यासेन तु पञ्चदशसंपत्तिः । इष्यते चोत्तरान्यायेन

प्रमाणान्तरसत्त्वे अन्यत्रापि कपिञ्जलाधिकरणन्यायबाधः । यथा 'आग्नेयैः सूक्तैरिष्टका उपदधाति' इत्यत्र यावदिष्टकमाग्नेयसूक्तग्रहणम्, न तु तत्र कपिञ्जलाधिकरणन्यायप्रवृत्तिः ।

**मण्डन**— 'यावदर्थं मनोर्ऋचः ।' मनोर्ऋचः याः विकृतौ विहिताः ताः यावदर्थं प्रयोजनानुसारेण यावतीभिः अग्निसमिन्धनरूपोऽर्थः सिध्यति तावत्य एव प्रयोक्तव्या न सर्वा मनुलिङ्गा इति शेषः ।

**शंकर**— 'यावत्संख्यं मनोर्ऋचः ।'

**सोमेन्द्रश्चरुः यजमानसोमपानव्यापदि ॥**

**तत् सर्वत्राविशेषात् । ३।४।१३।३४॥**

**भाष्यम्**— तत् एतत् सोमपानव्यापदि सोमेन्द्रं कर्म सर्वत्र वमने स्यात् आर्त्विजे याजमाने च । कुतः ? अविशेषात् । न विशेषः कश्चिदाश्रीयते अस्य वमने स्यात्, नास्येति । तस्मात् सर्वत्र भवेत् ।

**वा**— अश्वप्रतिग्रहेष्टिवदेव कर्माङ्गत्वात् स्वामिकर्तृकत्वे सिद्धेऽपि तस्य किं आत्मीयं वमनं निमित्तं उत आर्त्विजमपि इति विचार्यते । किं प्राप्तम् ? विशेषानुपादानात् उभयत्रापि स्यात् । यथा च स्वामिवमनेन प्रतिपत्तिविनाशः तथा आर्त्विजेनापि, उभयोः द्रव्यसंस्कारात्मकत्वात् । तस्मात् यदि दोषनिर्घातार्थमेतत् कर्म अथापि अपूर्वोपकारार्थं उभयथा वमनद्वयेऽपि कर्तव्यम् ।

**स्वामिनो वा तदर्थत्वात् । ३५ ॥**

**भाष्यम्**— स्वामिनो वा वमने स्यात् । कुतः ? तदर्थत्वात् । तदर्थं कर्म यजमानार्थम्, यत्र सोमो वम्यते । यत्तु अत्र सोमेन्द्रं कर्म, तदपि तदर्थमेव । इदं हि सोमवामिनः उपकाराय श्रूयते । तत् सोमवामिनो यजमानस्य सत् उपकर्तुं शक्नोति, न ऋत्विजः । न हि तत् ऋत्विगर्थं कर्म, यत्र सोमो वम्यते । अथोच्येत, सोमवामिनः अध्वर्योः होतुर्वा आत्मीया ऋत्विजः तदीयेषु अग्निषु निर्वर्तयिष्यन्तीति । तथा सति, यदि वा व्यृद्धसोमस्य कर्मणो नाङ्गम्, न सोमवामिनोऽध्वर्योर्होतुर्वा, तत्र अत्यन्तगुणभूता अध्वर्य्वादयः स्वैर्ऋत्विग्भिः कारयन्तो न फलं प्राप्नुवन्ति । तदर्थं च क्रियमाणं न यजमानस्योपकारे वर्तते इति न ऋत्विजो वमने क्रियेत ।

**वा**— यद्यपि तावत् आरादुपकारकत्वं तथापि स्वामिवमने भवितव्यम् । कुतः ? '**पूर्वं यच्छब्दसंबन्धान्निमित्तत्वं न जायते । तत्संबन्धात् परस्तात्तु कर्तैकः संप्रतीयते ॥**' 'यः सोमं वमति स निर्वपेत्' इति यच्छब्दतच्छब्दयोगात् यागवमनयोः एकः कर्ता गम्यते । तत्र नैमित्तिकं तावत् स्वामिकर्तृकत्वेन असंदिग्धम् । तेन असंदिग्धेन संदिग्धं वमनं निर्णीयते । तदपि स्वामिकर्तृकमेव सत् निमित्तमिति । न च स्वतन्त्रमेव निमित्तम्, शुद्धेन आख्यातेन निमित्तप्रत्ययानुत्पादात् । यच्छब्दोपबद्धं तत् निमित्तं प्रतिपादयति । तेन चेत् संबद्धम्, पूर्वतरं समानकर्तृकत्वम्, पश्चात् निमित्तत्वप्रतीतिः । अथ ऋत्विजः देवतार्थं ऋत्विक्परिक्रयार्थं च द्रव्यं त्यजन्ति । ततस्तेषां स्वात्मनि परिक्रयविरोधात् अवश्यं तैरपि अन्ये अध्वर्य्वादयो वरीतव्याः । आधानगतेन तु आत्मनेपदेन अग्नीनां आधातृव्यतिरिक्तपुरुषसंबन्धाभावात् स्वात्मार्थेषु अग्निषु यष्टव्यम् । ततश्च यदि तावत् वान्तसोमकर्मोपकारबुद्ध्या कुर्वन्ति ततो देशकालकर्तृभेदात् विगुणम्, न तेन प्रधानेन गृह्यते । न च आहत्य देशादिभेद आम्नायते, येन तत्सद्भावेऽपि अवैगुण्यमाश्रीयेत । स्वामिवमनेन च कृतार्थत्वात् न अनेनैव शास्त्रेण देशान्तरादीनामनुज्ञानम् । कथं वा एकमेव शास्त्रं स्वामिवमनपक्षे समानदेशादित्वं आश्रयेत्, ऋत्विग्वमने च तद्भेदम् ? अथ तु आत्मार्थबुद्ध्यैव ते प्रयुञ्जीरन्, एवमपि क्रत्वर्थेनावधारितस्य पुनः पुरुषार्थत्वाभावात् तादर्थ्येन क्रियमाणस्य आनर्थक्यमेव स्यात् । अथ तु एतत्सिद्ध्यर्थं पुरुषार्थतैव शास्त्रेणाश्रीयते तथा सति उपस्थितक्रतुत्यागात् असंनिहितस्वर्गादिकल्पनाच्च विप्रकर्षः । सदृशं लौकिकवमनेऽपि एतत् इति न याज्ञे स्यात् । तच्च पूर्वमेव निराकृतम् । तस्मात् स्वामिवमने स्यात् । अथ तु अध्वर्य्वादिवमनेऽपि स्वाम्येव द्रव्यं त्यजेत् तथा सति तदेव भिन्नकर्तृकत्वं आपद्येत । तत्समर्थने वा



अश्रुतषष्ठ्यर्थकल्पना सामानाधिकरण्यबाधश्च । तथा कल्पनायां च स्वामिवमनस्य अनिमित्तत्वप्रसङ्गः । उभयाश्रयणे वा वैरूप्यनिमित्तो वाक्यभेदः स्यात्, 'यः सोमं वमति, यस्य सोमं ऋत्विग् वमति' इति च आश्रयणात् । अन्यतरपरिग्रहे तु स्वामिवमनग्रहणं युक्तम्, शब्दसामञ्जस्यात् । एवं तावत् आरादुपकारकत्वे । यदा तु वाक्यशेषोपनीतयागशेषद्रव्यप्रतिपत्तिनियमभ्रेषोपजनितफललाभायोग्यत्वं तेन प्रतिसमाधीयते इति कल्प्यते, तदा यजमानफलोत्पत्तेः अत्यन्तादृष्टत्वात् तदाशङ्का ( फललाभायोग्यत्वाशङ्का ) इति तेनैव प्रतिसमाधानेष्टिः कर्तव्या इत्यसंदिग्धम् । यत्तु दक्षिणालाभात्मकं ऋत्विजां फलं तत् सति च असति च वमने लभ्यमानं दृश्यते इति निराशङ्कत्वात् अनपेक्षितप्रतिसमाधानं नेष्टिं गृह्णाति । यदाऽपि प्रकृतकर्मकर्तृनियमांशेन भक्षयितृसंस्कारार्थं भक्षणम्, अतश्च तद्भ्रेषे कर्तुर्वैगुण्यमुपजातं द्रव्यसंस्कारस्य तदुपयोगात्मकस्य निवृत्तत्वात् इति कल्प्यते तदाऽपि तद्–भ्रेषकृतयाजमानफलविघ्नप्रसङ्गात् तन्निवृत्त्यर्थत्वात् यत्तच्छब्दनिर्देशाच्च यजमानवमने एव भवितव्यम् । एतेन अपूर्वसंस्कारार्थत्वमपि व्याख्यातम् । यदाऽपि हि सोमवमनात् न विहिताकरणम्, नापि प्रतिषिद्धसेवनमापद्यते इति कृत्वा दोषनिर्घातार्थत्वं इष्टेः अनाश्रित्य नैमित्तिकं कर्माङ्गम्, तदाऽपि च यच्छब्देन पुरुषस्योपात्तत्वात् जञ्जभ्यमानन्यायेन ( ३।४।५।१४–१६ ) प्रकरणगतपुरुषसंस्कारता अध्यवसीयते तदाऽपि 'याजमानास्तु' ( ३।८।२।४ ) इत्यनेनैव तत्कर्तृकता । वमनसमानविषयत्वाच्च यजमानवमनमेव निमित्तम् ।

यत्तु अध्वर्य्वादिवमनेऽपि द्रव्यप्रतिपत्तिभ्रेषः, कर्तृसंस्कारात् विनाशो वा समाधिमपेक्षते इति, यद्यपि अपेक्षते तथापि अविधानात् न ग्रहीष्यते । सर्वेषु च क्रत्वर्थपुरुषार्थपक्षेषु च ऋत्विग्वमने अविधानमित्युक्तम् । अतश्च यदि तद्वमनमदुष्टमेव ततस्तूष्णीमेव आसितव्यम् । अथ दुष्टं ततः सामान्यविहितं किंचित् कर्तव्यम् । ( भुवः स्वाहा इत्याग्नीध्रीये होतव्यं–इति सुधा ) । न चात्र क्रत्वर्थाद्यन्यतमपक्षावधारणप्रयोजनमस्ति इति नातीव अवधारणे यतितव्यम् । अथापि तत्त्वज्ञानं प्रयोजनम्, ततो जञ्जभ्यमानपक्षः परिग्रहीतव्यः । ( क्रतुगतपुरुषार्थत्वपक्षः स्वीकर्तव्यः ) । तथा च सूत्रकारः 'स्वामिनो वा तदर्थत्वात्' (३।४।१३।३५) इत्याह ।

**लिङ्गदर्शनाच्च । ३६ ॥**

**भाष्यम्**— लिङ्गं च भवति, यजमानस्य सोमवामिन इति । कथम् ? 'सोमपीथेन वा एष व्यृध्यते यः सोमं वमति' इति । यजमानः सोमसंस्कारे विनष्टे विगुणमस्य कर्म इति व्यृध्येत, न कथंचित् ऋत्विजो व्यृद्धिः । 'ऋत्विजो यस्य सोमं वमन्ति' इति वमनेन संबन्धः स्यात्, न 'यः सोमं वमति' इति । तस्मादपि पश्यामो यजमानस्य वमने सोमेन्द्रमिति ।

**वा**— व्यृध्यते इति स वक्तव्यो यस्य सोमपानात् ऋद्धिः प्रार्थ्यते । तद्वैगुण्याच्च व्यृद्धिराशङ्क्यते । स्वामिनश्च तदुभयमपि इति तस्यैवेष्टिः ।

**शा**— '**तत्राविशेषतः सर्ववमने स्यात्, तदुच्यते । सौमेन्द्रं स चरुं कुर्याद् यः सोमं वमतीति हि ॥ यच्छब्दादिष्टिवमने गम्येते तुल्यकर्तृके । इष्टौ च क्रतुशेषत्वात् स्वाम्येव हि नियुज्यते ॥ कर्तृत्वेनेति वमनमपि तत्कर्तृकं ततः । निमित्तमृत्विग्वमनं न निमित्तमिति स्थितम् ॥**'

**सोम**—प्रासङ्गिकी संगतिः । पूर्वाधिकरणसिद्धान्तहेतूपजीवनादपि संगतिर्बोध्या ।

**वि**— 'ऋत्विजां वमनेऽप्येष कर्तुरेवोत, वर्जनात् । विशेषस्याग्रिमो, मैवं कर्तुरेव निरुसितः ॥'

**भाट्ट**— सैव किं याजमाने एव वमने स्यात् उत ऋत्विजोऽपि इति चिन्तायाम्, ऋत्विग्वमनेऽपि प्रतिपत्तिविलोपादिना वैगुण्यस्यावश्यकत्वात् तत्समाधानार्थं इयमिष्टिः स्यादेव । इति प्राप्ते, इष्टिस्तावदियं क्रत्वङ्गत्वात् यजमानेन कार्या, ऋत्विग्भिः यजमानद्रव्यस्य त्यक्तुमशक्यत्वात्, स्वद्रव्येण स्वाग्निषु करणे पुनः क्रत्वर्थत्वानुपपत्तेः । यजमानकर्तृकायां च न ऋत्विग्वमनस्य निमित्तता, 'यः सोमं वमिति' इति यच्छब्द-

बलेन इष्टेः वमनसमानकर्तृकत्वावगतेः, तस्य च उपादेयविशेषणत्वेन विवक्षितत्वात् । अतश्च समानकर्तृकत्वबलात्, यद्यपीयमिष्टिः नैमित्तिकी क्रत्वुपकारिका, यदि वा अनैमित्तिकी एव अर्थवादवशात् क्रतुवैगुण्यसमाधानार्था सती आरादुपकारिका, यदि वा वमनस्य जृम्भावदेव आर्थिकं निमित्तत्वमङ्गीकृत्य तद्वदेव इयमिष्टिः षष्ठ्या क्रतुयुक्तपुरुषसंस्कारिका, सर्वथा यजमानवमने एव स्यात् । ऋत्विग्वमने तु सामान्यविहितं यजुर्भ्रेषनिमित्तम् ( प्रायश्चित्तं कार्यम् ) ।

मण्डन— 'स्यात् स्वामिनो वै वमने स यागः ।'

शंकर— 'सा यष्टृवमने कार्या ।' १९.

* **सौगताः** जातिं न मन्यन्ते । तन्मतं तन्निरासश्च **मीको.** पृ. ७८४ **'आकृतिवादः'** इति बिन्दौ शास्त्रदीपिकाप्रघट्टके द्रष्टव्यः ।

* **सौगन्धिकेन** तृतीयसवने अभ्यञ्जते अञ्जनाभ्यञ्जने नाम सत्रे । **भा.** १०।४।६।१०.

* **सौत्यमहः** बहुवृत्तान्तम् । **भा.** ९।१।६।२१, * **सौत्यः** इति सुत्याकालत्वात् सवनीयं (पशुं) आहुः । ८।१।७।१४. * सौत्यः पशुर्नाम सवनीयः पशुः । सुत्यायां भवः सौत्यः । **वि.** ८।१।७. * **सौत्यस्य** पशोर्धर्माणामतिदेशः ऐकादशिनेषु । ८।१।७।१४. **मीको.** पृ. २०० 'अतिदेशः ऐकादशिनेषु पशुषु०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सौत्येऽहनि** अग्निष्ठभिन्नानां यूपानां मानम् । **संकर्ष.** १।४।१७. **मीको.** पृ. ३२५९ 'यूपानां अग्निष्ठभिन्नानां मानं सौत्येऽहनि' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौत्रान्तिकाः** ज्ञानवैचित्र्यसिद्ध्यर्थं अर्थमपि नीलपीतादिविचित्राकारमेव कल्पयन्ति, न निराकारम् । यदेव च आकारसमर्पणक्षमं हेतुत्वं तदेव अर्थस्य ग्राह्यं इति न ग्राह्यलक्षणायोगः । यथा आहुः— 'भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव, तद्युक्तं ज्ञानाकारार्पणक्षमम् ॥' इति । ननु एवं जन्यज्ञानसमये जनकस्यार्थस्य अतीतत्वात् कथं वर्तमानावभासः ? ज्ञानाकारो ह्ययं वर्तमानः प्रथते, अर्थस्तु तत्समर्पकतया अतीत एव कल्प्यते, अतो न दोषः । कथं पुनः प्रत्यक्षज्ञानेन अवभासस्य प्रत्यक्षत्वम् ? इदमेव प्रत्यक्षत्वमर्थस्य यत् साक्षात् साकारविज्ञानजननम् । यस्तु परंपरया साकारं विज्ञानं जनयति, सोऽनुमेयः । यथा वह्निस्वलक्षणं धूमस्वलक्षणं तद्दर्शनतद्विकल्पप्रणाडिकया अग्निज्ञानं जनयत् अनुमेयम् । अत एव प्रत्यक्षमनुमानं च द्वे एव प्रमाणे । साक्षाज्जनकस्य प्रत्यक्षत्वात् परंपरया जनकस्य चानुमेयत्वात् अजनकस्य अग्राह्यत्वात्, नातो द्वयादन्यत् संभवति इति । **रत्नाकरः.** ( शून्यवादे ) पृ. २८३-२८४.

* **सौत्रामणिः** । 'अग्निं चित्वा सौत्रामण्या यजेत' अत्र प्रसिद्धसौत्रामण्यपेक्षया कर्मान्तरमेव तद्धर्मकं अग्निपूर्वकालकत्वविशिष्टं विधीयते । तच्च अग्न्यङ्गम् । अग्निप्रयुक्तं चेदम् । **भाट्ट.** ४।३।१० । अत्राग्निचयनाङ्गत्वेन सौत्रामणियागस्य विधिः न तु कालार्थः संयोगः । **सोम.** ४।३।१३. * सौत्रामणिः अग्निचयनाङ्गं सन् अपि इष्टिप्रकृतिकत्वात् पर्वणि कार्यः न तु चयनकाले एव । **वि.** ४।३।२०, * सौत्रामणिः चयनाङ्गं 'अग्निं चित्वा सौत्रामण्या यजेत' इति । ४।३।१३. * सौत्रामणिः चयनाङ्गभूतः यागप्रयोगोत्तरकालीने पर्वणि कार्यः, न तु चयनसमनन्तरमेव । तथा च सौत्रामणिः कालप्रयोजकः । **भाट्ट.** ४।३।१५.

* **सौत्रामणी** 'अग्निं चित्वा' इति विहितः क्रत्वङ्गम्, न चित्यङ्गम् । **संकर्ष.** १।१।५. **मीको.** पृ. १७ "'अग्निं चित्वा' इति सौत्रामणी०" इत्यत्र अधिकरणं द्रष्टव्यम् । * सौत्रामणी । 'अग्निं चित्वा सौत्रामण्या यजेत' इति साग्निचित्यक्रतोरेव चिनोत्यर्थत्वात् क्रत्वङ्गं सौत्रामणी वैमृधवत् क्रतोरनन्तरमेवानुष्ठेया । **संकर्ष.** १।१।५. * सौत्रामणी अग्निचयनोत्तराङ्गं 'अग्निं चित्वा सौत्रामण्या यजेत' इति । वि.१०।२।१२. * सौत्रामणी चयनाङ्गमपि । ४।३।१२।२९-३१. **मीको.** पृ. २९८४ 'बृहस्पतिसवन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौत्रामणी त्रिपशुका । तत्र पशुषु ऐकादशिनविध्यन्तः । **सोम.** ८।१।८. * सौत्रामणी द्वेधा अङ्गमनङ्गं च । तत्र अग्निचयनाङ्गं प्रसिद्धसौत्रामण्याः सकाशात् कर्मान्तरमेव । तत्राङ्गभूते प्रसिद्ध-



सौत्रामणीधर्मातिदेशः सौत्रामणीशब्दस्य तत्र प्रयोगात् मासाग्निहोत्रवत् । **वि.** ४।३।१३, * **सौत्रामण्याः** अङ्गाङ्गित्वेऽपि नाङ्गिनः काले अनुष्ठानं किंतु स्वकाले पर्वणि । ४।३।२०. * सौत्रामण्याः चयनाङ्गत्वेऽपि स्वकालकर्तव्यता ( दर्शपूर्णमासकाले ) । ४।३।१७। ४०-४१. **मीको.** पृ. २७ 'अग्निचयनाद्यङ्गभूताः सौत्रामण्यादयः ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौत्रामण्याः चोदनासामान्यात् दर्शपूर्ण०कालः । **भा.** ४।३।१७।४१, * **सौत्रामण्यां** अन्यदेवत्याः पशुपुरोडाशाः भवन्ति अन्यदेवत्याः पशवः । १०।१।९। २४, * सौत्रामण्यां आश्विनो धूम्रः, सारस्वतो मेषः, ऐन्द्र ऋषभः इत्येवंविधाः पशवो विजातीयाः सन्ति । तेषु कुम्भीशूलवपाश्रपणीनां भेद एव, न तन्त्रम् । ११। ४।१०।३७-३८, * सौत्रामण्यां आश्विनः सारस्वतः ऐन्द्रश्च इति त्रयः सुराग्रहाः, त्रयः पयोग्रहाश्च । तत्र अध्वर्युः आश्विनं जुहोति, ब्रह्मा सारस्वतम्, प्रतिप्रस्थाता च ऐन्द्रम् । तथा उत्तरेऽग्नौ पयोग्रहान् जुहोति, दक्षिणेऽग्नौ सुराग्रहान् । ग्रहशेषस्य च पातारं कंचिद् ब्राह्मणं परिक्रीणाति । वल्मीकवपायां वा अवनयति । तस्यैव शेषस्य कियन्तंचिदंशं शतातृण्णायां ( शतच्छिद्रायां ) कुम्भ्यां विक्षारयन्ति । ३।५।३।१४-१५. * सौत्रामण्यां 'आश्विनं गृह्णाति' इत्यादिना सुराग्रहा उक्ताः, तत्रैष्टिकहविःसाम्यादैष्टिको विध्यन्तः न तु सोमविध्यन्तः । **वि.** ८।२।१. * सौत्रामण्यां आश्विनसारस्वतसुत्रामदेवताकेषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते । संस्कारपक्षे उत्कृष्येरन् । छिद्रापिधानार्थतायाश्च उक्तमर्थवादत्वम् । **भा.** १०।१।९।२२ । सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कारे एवावकल्पते । 'यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धं, यदन्यदेवत्याः पशुपुरोडाशाः भवन्ति, अन्यदेवत्याः पशवः' इति । २४ । एवं चेत् पश्यसि संस्कारपक्षे व्यृद्धवचनमवकल्पत इति । तन्न । संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते । नहि तत्र किंचित् व्यृद्धम् । विप्रतिपन्नदेवताकैरेव पुरोडाशैः तत्कर्म समृद्धतरं भवति । एवं ह्याह 'यदन्यदेवत्याः पुरोडाशा भवन्ति, अन्यदेवत्याः पशवः इति तदस्याः समृद्धं भवति' इति । यश्चोभयोः पक्षयोर्दोषः न तमेकश्चोद्यो भवति । यथैव हि संस्कारपक्षे व्यृद्धवचनमर्थवादः, एवमितरस्मिन्नपि पक्षे अर्थवादो भविष्यति । २५ । नैतदेवम् । भवदीये पक्षे न किंचिदपि हीनम् । अन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किंचित् पशुदेवतायां हीयते । तत्र अव्यृद्धे एव व्यृद्धवचनं भवति । मदीये तु पक्षे देवताप्रकाशनं अङ्गभूतं हीयते । अन्यदेतदुच्यते यत् व्यृद्धमपि समृद्धं भवतीति । अहीने तु व्यृद्धशब्दे उच्चरिते न शब्दार्थो गृहीत इति । २६ । सौत्रामण्यां संप्रतिपन्नदेवताकेषु ग्रहेषु पुरोडाशवचनं भवति । नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशव इति । न तावन्न विद्यन्ते । विप्रतिपन्नदेवताकैस्तु संस्काराभावमालोच्य एवमुच्यते । ग्रहा एषां पुरोडाशाः, ग्रहपुरोडाशा ह्येते इति । किं तेषां पुरोडाशैः सामान्यम् ? यदेते देवतासंस्कारार्थाः । यदि पुरोडाशा अपि देवतासंस्कारार्थाः एवमेतदवकल्पते । तस्मात् संस्कारपक्ष एव श्रेयान् । २७ । एवं श्रूयते 'नैतस्य पशोर्ग्रहं गृह्णन्ति पुरोडाशवानेष पशुः' इति । पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोरेकार्थतां दर्शयति । तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता । यदि पुरोडाशोऽपि देवतासंस्कारार्थः एवमेतदवकल्पते । २८ । अथ यदुक्तं ऐन्द्रवारुणसावित्राणां पुरोडाशानां सौत्रामणीप्रकरणादुत्कर्षः प्राप्नोति । तत्रेदमुच्यते । स ह्यर्थो यागो देवतासंस्कारार्थः छिद्रापिधानार्थश्च । उभयोरर्थयोः श्रुतिभूतत्वात् । अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति । तत्प्रकरणगत एवायं विकारो भविष्यति । ३१ । तस्याप्युक्तमर्थवादत्वं इति यदुक्तं तत्रेदमुच्यते । एवं तर्हि अनेन प्रकारेण प्रकरणादुत्कर्षः । देवतासंस्कारस्तावत् प्रकरणादुत्कर्षेण न शक्यते बाधितुम् । तत्र सौत्रामण्यां संप्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः । तत्र इन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः । कथम् ? एकदेशा हि तेषामिमे वर्णान्तरसहिता उच्चारिता इति गम्यते ।

किमर्थं पुनरेवं कल्प्यते ? यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याख्यमानानि अनर्थकानि भवेयुः। तस्मात् पशुदेवतानामाख्याविकाराः पुरोडाशदेवताशब्दा इति । ३२ ॥

वा-- ( सौत्रामण्याम् । ) इमे सूत्रभाष्ये अयुक्ते । अस्यां सौत्रामण्यां पशुयागा आम्नायन्ते । देवतासंस्कारद्वारेण च पशुपुरोडाशाः प्राप्नुवन्ति । तत्र वाचनिकोऽयं देवताविधिः । तस्मात् अप्राकृतकार्याः पुरोडाशयागाः । वचनसामर्थ्यात् । यो ग्रहो देवतासंबद्धः स पशुपुरोडाशयागेन न संबध्यते । कथम् ? अविपरिवर्तमानत्वात् । कथं न विपरिवर्तते ? अविधानात् । कथमविधानम् ? अत्रोपकारा अतिदिश्यन्ते । यत्र प्रकरणं तत्र विपरिवृत्तिः । एतच्च प्रकृतौ । अभ्युपेत्य ब्रूमः । अस्ति प्रकरणं विपरिवृत्तिश्च । तथापि न संबध्यते । नैतत् सोमयजिना तुल्यम् । ‘ सोमेन यजेत ’ इति सोमविशिष्टो यागो विधीयते । ऐन्द्रवायवादीनि ग्रहणानि सोमयागद्रव्यस्यैव संस्कारकाणि । तानि च ग्रहणानि प्रकरणेन गृह्यन्ते । अर्थात् तत्र यागाभ्यासः । इह पशुपुरोडाशयागद्रव्यस्य ग्रहदेवतया न कश्चित् संस्कारः क्रियते । तस्मात् यागान्तरम् । **ननु** अभ्युदितेष्टिवत् भविष्यति । नैतत् अभ्युदितेष्ट्या तुल्यम् । तत्र निमित्ते सति विभागो विधीयते यागस्तु विद्यते एव । न तु इह तथा विभागवचनम् । येन अभ्युदितेष्ट्या तुल्यं स्यात् । ननु प्रत्यक्षः पशुपुरोडाशयागः । आनुमानिकस्तु देवतासंबन्धेन यागः । तस्मान्न यागान्तरम् । नैतदेवम् । यदि अस्मिन् यागे येन केनचित् प्रकारेण निवेशः स्यात्, तद्यदि यागान्तरं न लभ्येत । यदि च प्रत्यक्षे यागे सति आनुमानिको न लभ्येत तदा दीक्षणीयादीनि सर्वाणि अकर्मान्तराणि भवेयुः । यदि च एको यागः तदा एक एव विध्यन्तः प्राप्नोति । द्वितीयस्य द्रव्यस्य चोदकवत् प्राप्नोति । एकेन प्रधानं भवतु । द्वितीयस्य तु प्रोक्षणादिविशिष्टार्थत्वेन प्राप्नोति । देवतयोस्तु यदि निवेशः स्यात् । प्रयाजानुवादेन तु संख्या विधीयते तत्र यागान्तराशङ्कैव नास्ति । ३३ ॥

भाट्ट-- सौत्रामण्यां आश्विन-सारस्वत-सुत्रामदेवताकेषु पशुषु ‘ ऐन्द्रवारुणसावित्राः पुरोडाशा भवन्ति ’ इत्यादिना अपूर्वा विधीयमानाः नोत्कृष्टा भवन्ति । इतरथा यत्र तद्देवत्याः पशुयागाः तत्रोत्कर्षापत्तिः । इति **तन्न** । इन्द्रादिदेवत्यपशुषु न्यायादेव तत्तद्देवत्यपुरोडाशसिद्धेः विधिवैयर्थ्यात् । अतश्च तद्वाक्ये न पशुपुरोडाशयागोद्देशेन देवतान्तरविधिः । तथात्वे पुरोडाशपदे तद्-द्रव्यकयागलक्षणापत्तेः । किंतु पुरोडाशोद्देशेनैव, अभ्युदितेष्टिवत् । तत्र च योगापेक्षायां योग्यतयैव पशुपुरोडाशयागस्यैव अतिदेशप्राप्तस्य संबन्धः । अन्यस्य पुरोडाशद्रव्यकत्वाभावात् । अतस्तस्य कार्यपृष्ठभावेन प्राप्तस्यापि वाचनिकदेवतान्तरसंबन्धात् प्राकृतकार्यमात्रबाधेऽपि तस्याप्राकृतकार्यान्तरकल्पनया तत्रैव निवेशात् नोत्कर्षः । यानि तु सौत्रामणीप्रकरणे एव तत्तत्पशुदेवत्यानि ‘ आश्विनं गृह्णाति ’ इत्यादिना सुरापयोद्रव्यकाणि ग्रहणानि विहितानि तेषु ऐन्द्रवायवादिग्रहणेष्विव यागापेक्षायां अतिदेशप्राप्ते पशुपुरोडाशयागे एव देवताविशिष्टग्रहणसंस्कृतद्रव्यविनियोगविधिः नान्यत्र । आश्विनादिदेवत्यत्वस्य अन्यत्रासंभवात् । प्रधानभूतपशुयागेषु च उत्पत्तिविशिष्टपश्ववरोधेन द्रव्यान्तरनिवेशानुपपत्तेः । अतो विभिन्नद्रव्यदेवतासंबन्धद्वयात् उत्पन्नवाक्यशिष्टात् प्रयाजैकादशत्वन्यायेन ( ५।३।१ ) पशुपुरोडाशयागस्य अभ्यासः संपद्यते । तत्र च आश्विनादिदेवत्यस्य प्राकृतमेव कार्यम्, ऐन्द्रादिदेवत्यस्य तु अप्राकृतं इति **सूत्रभाष्यकारयोः** अभिप्रायः । **वार्तिककारस्य** तु न तावत् सुरादिद्रव्यस्य पशुपुरोडाशे विनियोगः संभवी । तस्य एतद्विध्यभावे देवतान्तरावरुद्धत्वेन आश्विनादिदेवत्यत्वस्य तत्र प्रकृतौ विकृतौ वा अप्रसिद्धेः । वक्ष्यमाणरीत्या तत्र पुरोडाशद्रव्यकत्वस्यापि औपदेशिकत्वेन सुरादिद्रव्यस्य निवेशानुपपत्तेश्च । नापि अतिदेशप्राप्तप्रयाजादौ निवेशः । तत्र अङ्गभूतक्लृप्तदेवताऽवरोधेन ग्रहणाङ्गभूतदेवतायाः प्रसङ्गेनोपकारकत्वानुपपत्तेः । अतो गुणात् कर्मान्तरमेव प्राकृतपशुपुरोडाशकार्यापन्नं दर्शपूर्णमासप्रकृतिकं विधीयते ( ऐन्द्रवारुणसावित्राः



पुरोडाशा भवन्ति इति ) । न चैवं पशुपुरोडाशस्य पुनःकरणापत्तिः । पशुपुरोडाशबाधोपपत्तेः । अत एव ऐन्द्रादिवाक्ये द्रव्यदेवताविशिष्टप्राकृतपशुपुरोडाशयागस्यैव अप्राकृतकार्यार्थतया विधेयत्वाङ्गीकारः । न चेह पशुपुरोडाशयागस्यैव प्रत्यभिज्ञाभावः । ‘यद्वै सौत्रामण्यां व्यृद्धं तदेव समृद्धं यदन्यदेवत्याः पशुपुरोडाशाः अन्यदेवत्याः पशवः ’ इत्यर्थवादस्यैव प्रत्यभिज्ञापकत्वात् । अतः अप्राकृतकार्ये एव पशुपुरोडाशाः सुरादियागास्तु कर्मान्तरमेव प्राकृतकार्यापन्नम् । अत एव ‘ नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः ’ इति लिङ्गमपि पुरोडाशाः तज्जन्यदेवतास्मरणानि न विद्यन्ते अपि तु ग्रहजन्यान्येव तानि इति व्याख्येयम् । १०।१।९. * सौत्रामण्यामैष्टिकधर्मातिदेशः । वृ. ८।२।१।१-९. * सौत्रामण्यां गोऽजाविषु शूलानां वृद्धिर्दृश्यते । भा. ११।४।१०।३८.

सौत्रामण्यां च ग्रहेषु । ३।५।३।१४ ॥

सिद्धान्तसूत्रम् । सौत्रामण्यां नाम यागविशेषे आश्विनः , सारस्वतः , ऐन्द्रश्च ये सुराग्रहाः पयोग्रहाश्च तेषु च स्विष्टकृदिडं न कर्तव्यम् । ‘ उत्तरेऽग्नौ पयोग्रहान् जुहुति, दक्षिणेऽग्नौ सुराग्रहान् जुहुति ’ इति होमसंयोगात् ।

तद्वच्च शेषवचनम् । १५ ॥

यद्यपि ‘ उच्छिनष्टि न सर्वं जुहोति ’ इति शेषः श्रूयते तथापि तत् शेषवचनं तद्वत् साकंप्रस्थायीयकुम्भीवत् न स्विष्टकृदर्थम् । सत्यपि शेषवचने यथा कुम्भीनां स्विष्टकृदर्थः शेषो नास्ति तथा अत्र विद्यमानोऽपि शेषः न स्विष्टकृदर्थः । किंतु तस्य वाचनिकः अन्यत्रोपयोगः । ‘ ब्राह्मणं परिक्रीणीयात् उच्छेषणस्य ( शेषस्य) पातारम् , यदि न विन्देत, वल्मीकवपायामवनयेत् ’ इति वचनात् । अन्योऽपि तस्य विनियोगः ‘ शतातृण्णायां ( शतच्छिद्रायां कुम्भ्यां ) विक्षारयन्ति ’ इत्युक्तः । तस्मात् न स्विष्टकृदादि । कुतूहले तु शेषविनियोग एवमुक्तः, ‘ अध्वर्युः प्रतिप्रस्थाता आग्नीध्रश्च आश्विनं भक्षयन्ति, होता ब्रह्मा मैत्रावरुणश्च सारस्वतं, ऐन्द्रं यजमानः । सुराग्रहान् दक्षिणतः प्राचीनावीतिनो भक्षयन्ति । अपिवा ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् । यदि ब्राह्मणं न विन्देत् वल्मीकवपायामवनयेत् ’ इति । सिद्धान्तशेषसूत्रम् । **के.**

* सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च, तत्र सुराग्रहेषु शेषकर्मानुष्ठानं नास्ति, होमावशेषस्तु ब्राह्मणाय दातव्यः वल्मीकवपायां शतातृण्णायां वाऽवनेतव्यः । वि. ३।५।३. * सौत्रामण्यां पशुदेवताऽपेक्षया पुरोडाशदेवताया भिन्नत्वात् पुरोडाशानां देवतासंस्कारकत्वासंभवात् आरादुपकारकत्वमेवागत्या । न चैवं संस्कारलोपो मा भूदिति पशुषु या देवताः तद्देवताकपुरोडाशान्तरानुष्ठानमपि स्यादिति वाच्यम् । तद्देवताकग्रहैरेव संस्कारसिद्धेः । **सोम.** १०।१।९. * सौत्रामण्यां प्रधानाङ्गयोः कर्तृभेदः ‘ वडवा दक्षिणा ’ इति दक्षिणाभेदात् । **भा.** ११।३।१।१.

सौत्रामण्यां शेषकार्यं नास्ति । सौत्रामण्यां सुराग्रहशेषस्य अन्यत्रोपयुक्तत्वविधानात् स्विष्टकृदादिशेषकार्यं नास्ति ॥

**सौत्रामण्यां च ग्रहेषु । ३।५।३।१४ ॥**

भाष्यम्-- अस्ति सौत्रामणी । तत्र ग्रहाः श्रूयन्ते आश्विनसारस्वतैन्द्राः । तत्र चोदकेन स्विष्टकृदिडं प्राप्तम् । अथेदानीं संदेहः , किं निवर्तते उत नेति । किं प्राप्तम् ? चोदकानुग्रहाय कर्तव्यमिति । एवं प्राप्ते, ब्रूमः । सौत्रामण्यां च ग्रहेषु न कर्तव्यमिति चशब्देनान्वादिश्यते । कुतः ? अशेषत्वात् । सर्वादानादशेषता । तत्रापि हि ग्रहैरेवं( व ) होतुं प्रतिष्ठन्ते, यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते इति । ग्रहस्थं खल्वपि तद्द्रव्यम्, अभिगृहीतमभ्यनुक्रममश्रावितं देवतां प्रति । यथागृहीतान् ग्रहानृत्विज आददते, आश्विनमध्वर्युः , सारस्वतं ब्रह्मा, ऐन्द्रं प्रतिप्रस्थाता, इति होमार्थमशेषादानं भवति । होमसंयोगश्चैषां श्रूयते ‘ उत्तरेऽग्नौ पयोग्रहान् जुहुति, दक्षिणेऽग्नौ सुराग्रहान् जुहुति ’ इति ।

वा-- तद्वदित्यनुवर्तते । सौत्रामण्यां सुराग्रहाः पयोग्रहाश्च आश्विनादय आम्नाताः । तेषां पृथक् प्रकल्पनमात्रात्मकत्वात् चमसवत् सर्वहोमप्राप्तिर्नास्तीति

विशेषाशङ्कायामतिदेशात् तत्रापि यथागृहीतानां होमार्थेन आदानेन संबन्धो यथोपात्तानां च होमेन श्रूयते ' यथागृहीतान् ग्रहानृत्विज उपाददते । उत्तरेऽग्नौ पयोग्रहान् जुह्वति, दक्षिणे सुराग्रहान् ' इति ।

**तद्वच्च शेषवचनम् । १५ ॥**

**भाष्यम्**— एतमेव न्यायं शेषवचनमुपोद्बलयति ' उच्छिनष्टि, न सर्वं जुहोति ' इति। सर्वहोमे प्राप्ते प्रतिषेधोऽवकल्पते । वाचनिकत्वाच्च स्विष्टकृदिडं न भवति । तस्यान्यत्रोपयोगवचनात् ' ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् ' इति। अपरस्यापि शेषस्य वाचनिको विनियोगः, ' शतातृण्णायां विक्षारयन्ति ' इति ।

**वा**— अनन्यशेषभूतश्च प्रतिषेधोऽनुवादः ' उच्छिनष्टि न सर्वं जुहोति ' इति। उच्छिनष्टीति विधिः । तदनुवादस्तु निषेधः, अशेषहोमप्राप्त्या शेषकार्यनिर्वृत्तिं दर्शयति। वाचनिकस्य च शेषस्य प्रतिपत्त्यन्तरमर्थकर्म वाऽन्यदस्तीति ' ततोऽपि ' इति स्विष्टकृदिडं न कर्तव्यमिति ।

**शा**— सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च । तत्र श्रूयते ' यथागृहीतान् ग्रहान् ऋत्विज उपाददते, उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणेऽग्नौ सुराग्रहान् ' इति । तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः । विशेषः सोमग्रहतुल्यश्रुतित्वात् । तत्र च शेषसद्भावात् इहापि स्यात् इत्येतावतीं आशङ्कां व्यावर्तयितुं अतिदेशः ।

**वि**— 'सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वाऽस्ति तत् । शेषणात्र सुराक्षीरयोरन्यत्रोपयोगतः ॥ '

**भाट्ट**— सौत्रामणी नाम पशुयागाः । तत्र अतिदेशप्राप्तदेवतासंस्कारार्थे पशुपुरोडाशे द्रव्यतया पयोग्रहाः सुराग्रहाश्च विधीयन्ते इति दशमे सूत्रभाष्यकाराभ्यां वक्ष्यते । तदत्र स्थानापत्त्या पुरोडाशाङ्गं स्विष्टकृदिडं कर्तव्यमेव। न च ग्रहशब्दस्य नामातिदेशकत्वात् ज्योतिष्टोमिकशेषकार्यातिदेशशङ्का । ग्रहशब्दस्य प्रायणीयपदवन्नामातिदेशकत्वानुपपत्तेः। इति प्राप्ते, न तावदत्र अवशिष्टः शेषोऽस्ति । ' यथागृहीतान् ग्रहान् ऋत्विज उपाददते, उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणेऽग्नौ सुराग्रहान्' इति वचनेन अनवदाय एव होमावगमात् । न च ' उच्छिनष्टि न सर्वंहुतं जुहोति ' इति वचनेन हुतशेषावगतेः शेषकार्यकरणम् , तस्य ' ब्राह्मणं परिक्रीणीतोच्छेषणस्य पातारं यदि न विन्देत् वल्मीकवपायामवनयेत् ततोऽप्यवशिष्टं शतातृण्णायां विक्षारयन्ति ' इति विशिष्य प्रतिपत्त्यन्तरविधानेनातिदेशिकप्रतिपत्तिबाधात् । वाल्मीकवपा वल्मीकच्छिद्रम् । शतातृण्णा शतच्छिद्रा कुम्भी । इदं च **सूत्रभाष्यकारमता**भिप्रायेणोक्तम् । यदा तु **वार्तिकोक्तरीत्या** देवतासंस्कारार्थं यागान्तरमेव सुरापयोद्रव्यकं विधीयते तदाऽप्यौषधद्रव्यकत्वपयोद्रव्यकत्वाभ्यां दार्शपौर्णमासिकविध्यन्तस्य अष्टमे वक्ष्यमाणत्वेन स्विष्टकृदादिप्राप्तावपि पूर्ववदेव तदभाव इत्यधिकरणं व्याख्येयम् ।

**मण्डन**— ' सौत्रामणीग्रहे न स्युः । ' सौत्रामणीयागसंबन्धिनि ग्रहे न स्युः, शेषकार्याणीति शेषः ।

**शंकर**— ' सौत्रामण्यां ग्रहेषु च । '

* सौत्रामण्यां सुराग्रहाः श्रुताः 'आश्विनं ग्रहं गृह्णाति सारस्वतं ऐन्द्रम् ' इति । तत्र दार्शपौर्णमासिकः पौरोडाशिकः विध्यन्तः न सौमिकः । भा. ८।२।१।१–९, * सौत्रामण्यां सुराग्रहेषु अनुवषट्कारः, समुपहूय भक्षणं, क्रयणं, श्रयणं, पुरोरुचं, उपयामग्रहणं, आसादनं, वासं, उपनहनं च वचनात् कर्तव्यानि । तेषु विध्यन्तस्तु पौरोडाशिकस्यैव न सोमस्य । ८।२।१।२–७. * सौत्रामण्यां सुराचमसं ' ब्राह्मणस्य मूर्धनि आसादयति ' इति धर्ममात्रम् । भा. १०।३।३।१८ । सौत्रामणीप्रकरणे विप्रतिषेधात् न शक्यं दृष्टकार्यकमासादनं कर्तुम् । तस्मात् क्रियामात्रमदृष्टकार्यकं सौत्रामणीप्रकरणे स्यात् । १०।३।३।२२.

* **सौत्रामणीगतसुराग्रहेषु** ऐष्टिकपुरोडाशधर्मातिदेशः । ८।२।१।१–९. **मीको.** पृ. २१८ ' अतिदेशः वाजिनसुराग्रहयोः ऐष्टिकधर्माणाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौत्रामणिन्यायः** । दीक्षानिर्मोकात् पूर्वं प्रयाणप्रसक्तौ अग्नीनां पात्रान्तरे स्थापनेन सहनयनं स्यान्न समारोपः । 'प्रातरग्निहोत्रं हुत्वा समारोपयेत्' (सोमान्ते)



इति विधिना समारोपस्य सौत्रामण्यग्निन्यायेन अग्निहोत्राङ्गत्वम् ( इत्यादिः पूर्वपक्षः ) । **संकर्षभाट्टदीपिका.** ३।२।३१.

* **सौत्रामणियागे** अग्निचयनाङ्ग कर्मान्तरसौत्रामणियागधर्माः सौत्रामणिनाम्ना अतिदिश्यन्ते । **सोम.** ४।३।१३.

* **' सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् '** ( ६।१।१२।५० ) इत्यनेन न्यायेन, ' ऋभूणां त्वा देवतानां व्रतपते व्रतेनादधामि इति रथकारस्यादध्यात् ' इत्याधानमन्त्रवर्णात् ' सौधन्वना ऋभवः ' इति च सौधन्वनशब्दसामानाधिकरण्यात्, ऋभुशब्दस्य ' तं नेमिमृभवो यथा ' इति मन्त्रवर्णात् रथकारविषयत्वप्रसिद्धिः । **सु.** पृ. ४६७. * **सौधन्वनस्य** नाम रथकारस्य संकरजातेरपि आधाने अधिकारः। ६।१।१२। ४४–५०. **मीको.** पृ. ३२८५ ' रथकाराधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौधन्वनापरपर्यायः** रथकारः त्रैवर्णिकेभ्यः किंचिद्धीनः जात्यन्तरम् । **भा.**६।१।१२।५०.

* **सौपर्णोपाख्याने** विनतया गरुत्मान् अमृतार्थं प्रेषितः । **वा.** २।१।७।३२.

* **सौभरं** नाम सामविशेषः, षोडशीसंस्थायां नित्यं काम्यं च, अतिरात्रे नैमित्तिकं च । **वि.** २।२।१३, * सौभरं— हीष्, ऊर्क्, ऊ । ' यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत ' इत्येकं वाक्यम्, ' हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय ' इति वाक्यान्तरम् । अत्र वाक्यद्वये यत् वृष्टिस्वर्गादिफलं तत् पृथक्पृथक् स्वीकार्यं मेलने चोभयोः फलभूयस्त्वं स्यादिति **पूर्वपक्षः** । सौभरस्य फलभूताः ये वृष्ट्यादयस्त एव हीषादिवाक्येष्वनूद्यन्ते न तु पार्थक्यं वाक्ययोः, हीषादिनिधनानां केवलं नियमनमत्रेति सिद्धान्तः । २।२।१३. * ज्योतिष्टोमे **सौभरं** उक्थ्यानां ब्रह्मसाम विहितम् । **वा.** २।२।१३।२८ । नित्यविधिस्तु षोडशीसंस्थाविषयः । **सु.** पृ. ८७३. * **सौभरस्य** एकाक्षरसाध्यत्वेन आश्रयत्वायोग्यत्वात् आश्रयत्वयोग्यस्य च निधनस्य प्रकरणाभावात् प्रकृताश्रयालाभेन गुणफलान्वयायोगात् श्रुत्यर्थान्वयानुपपत्तेः लक्षणा युक्ता । **सु.** पृ. ८७८.

**ꕥ सौभरे पुरुषश्रुतेर्निधने कामसंयोगः । २।२।१३।२८ ॥**

ताण्ड्यब्राह्मणे षोडशिसंस्थावान्तरप्रकरणे ' सौभरमुक्थ्यानां ब्रह्मसाम भवति ' इति उक्थ्यस्तोत्रमध्यमत्वेन नित्यतया विहितम् । तदेव पुनः ' यदि रथंतरसामा ' ' यदि बृहत्सामा' इति नैमित्तिकत्वेन अतिरात्रे विहितम् । ततः पुनः ' यो वृष्टिकामः, योऽन्नाद्यकामः , यः स्वर्गकामः स सौभरेण स्तुवीत ' इति नित्यस्यैव सतः पृथक् फलत्रयसंबन्धः कृतः । पुनश्च ' हीष् इति वृष्टिकामाय निधनं कुर्यात् ' ' ऊर्क् इत्यन्नाद्यकामाय ' ' ऊ इति स्वर्गकामाय ' इति श्रूयते । तत्र किं हीषादयः निधनविशेषाः सौभरफलतः फलान्तरार्थतया विधीयन्ते ? एवं च यदा वृष्टिकामेन सौभरं प्रक्रान्तं तदा इतरयोरपि ऊर्क् ऊ इति निधनयोः तत्तत्फलकामनया प्रयोगः हीष्निधननिवृत्तिश्च, ' वृष्टिकामः सौभरसाम्ना स्तोष्ये ' ' अन्नाद्यकामश्च ऊर्क् इति निधनं सौभरसाम्नि करिष्ये ' इति पृथक् फलकामनं च । उत सौभरस्यैव तत्तत्फलं साधयतः तत्तन्निधनं शाखान्तरपठितं नियम्यते, एवं च वृष्टिफलके सौभरे हीष् इत्येव निधनं प्रयोक्तव्यं एकैव वृष्टिः प्रार्थयितव्या । एवं अन्नाद्यकामस्वर्गकामयोरपि द्रष्टव्यम् । इति विचारे पूर्वपक्षमाह । वृष्ट्यादिफलार्थतया श्रुते सौभरे साम्नि, हीषादौ निधने च कामसंयोगः अन्यः स्यात् । पुरुषश्रुतेः वृष्टिकामादिशब्दैः तत्तत्फलकामस्य पुरुषस्य सौभरे निधने च पृथक् श्रवणात् । तस्मात् सौभरात् फलन्तरार्थतया निधनविधिः ।

**सर्वस्य वोक्तकामत्वात् तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः । २९ ॥**

सौभरस्य साम्नः तदीयस्य हीषादिनिधनस्य च वृष्ट्यादिरूपं पृथक् फलं इति पूर्वपक्षं वाशब्देन निवर्तयन् सिद्धान्तमाह । न पृथक् फलम् । सर्वस्य समस्तावयवस्य सौभरस्य ' यो वृष्टिकामः ' इत्यादिवाक्यान्तरैः

उक्तकामत्वात् उक्तवृष्ट्यादिफलकत्वात्, तस्मिन् सौभरफले एव वृष्ट्यादिलक्षणे कामश्रुतिः 'वृष्टिकामाय' इत्यादिचतुर्थ्यन्त–वृष्टिकामादिपदगत–वृष्ट्यादिफलशब्दः सौभरवाक्योक्तफलस्यैव प्रत्यभिज्ञापकः स्यात्। ननु यदि सौभरवाक्ये निधनवाक्ये च एकमेव फलं तर्हि निधनवाक्ये वृष्टिकामाय इत्यादि पुनःश्रवणं व्यर्थं स्यात्, इति चेत्तत्राह। पुनःश्रुतिः निधनार्था निधनव्यवस्थाविधानार्था। सौभरस्य वृष्टिकामार्थत्वे हीष् इत्येव निधनम्, अन्नाद्यकामार्थत्वे ऊर्क् इत्येव निधनम्, स्वर्गकामार्थत्वे ऊ इत्येव निधनं इति। तस्मात् तत्तन्निधनविशिष्टस्य सौभरादेव फलं निधनमात्रान्नैव किंचित् फलं इति सिद्धान्तः। के.

**सौभराधिकरणम्। सौभरनिधनयोः कामैक्यम्॥**

**सौभरे पुरुषश्रुतेर्निधने कामसंयोगः। २।२। १३।२८॥**

**भाष्यम्**-- 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः, स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे' इति समाम्नाय ततः समामनन्ति 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। तत्र विचार्यते किं सौभरं वृष्टेर्निमित्तं हीषित्येतदपरं वृष्टेर्निमित्तम्, अथ सौभरमेव वृष्टेर्निमित्तम्। यदा तत् वृष्टेर्निमित्तं तदा हीषिति सौभरस्य निधनं कर्तव्यमिति। एवमूर्गित्यन्नाद्यकामस्य, ऊ इति स्वर्गकामस्य च तुल्यो विचारः। कथं निधनादपरं फलम्? कथं वा निधनव्यवस्थार्थं श्रवणमिति। यद्येवमभिसंबन्धः क्रियते हीषिति वृष्टिकामाय कुर्यादिति, ततो निधनादपरं फलम्। अथैवमभिसंबन्धः– हीषिति निधनं कुर्यादिति, तदा निधनव्यवस्थार्थं श्रवणम्। तदा वृष्टिकामायेति सौभरविशेषणं क्रियते, न हीषा संबन्धः। किं तावत्प्राप्तम्? सौभरे निधनेऽपरः कामो विधीयते इति। कुतः? पुरुषश्रुतेः। पुरुषप्रयत्नस्यात्र श्रवणं भवति, कुर्यादिति। तत् वृष्टिकामस्य हीषश्च संबन्धे कर्तव्ये वक्तव्यं भवति, न तु सौभरनिधनसंबन्धे। तत्र हि साङ्गं सौभरं कुर्यादिति प्रयोगवचनसामर्थ्यादेव सिद्धम्। तस्मात् कुर्यादिति पुरुषप्रयत्नवचनादवगच्छामो यतरस्मिन् पक्षे पुरुषप्रयत्नवचनमर्थवत्, ततरोऽयं पक्ष इति। तत्रास्मिन् पक्षेऽर्थवत्, निधनादपरं फलमिति। तस्मात्सौभरे एकः कामः। भेदेन निधनादपि द्वितीयः कामः इति।

अथवा वृष्टिकामायेति पुरुषश्रुतिः। वृष्टिं यः कामयते स पुरुषो वृष्टिकामशब्देनोच्यते। तदस्मिन् पक्षे श्रुतिर्विनियोक्त्री। इतरस्मिन् पक्षे पुनर्वृष्टिकामशब्देन पुरुषवचनेन सता सौभरं लक्ष्येत। तथा लक्षणाशब्दः स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तस्मात्पश्यामो निधने द्वितीयः काम इति। एवं च फलभूयस्त्वं भविष्यति। तस्मान्निधनेऽपरः कामः।

**वा**— ज्योतिष्टोमे सौभरमुक्थ्यानां ब्रह्मसाम विहितम्। पुनश्च तदेव 'यदि रथंतरसामा' 'यदि बृहत्सामा' इति च निमित्तयोर्विहितम्। ततः पुनः 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति नित्यस्यैव सतः फलत्रयसंबन्धः कृतः। तथा च वक्ष्यति एवंजातीयकेषु कामेषु 'नित्यस्य समत्वात्' (३।६।१६।४३) इति। क्रत्वर्थं पुरुषार्थं चैवंजातीयकं भववीति वक्ष्यति 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (४।३।३।५) इति। एतदपि वक्ष्यति यथा विकल्पेनैतान्यस्य फलानि भवन्ति 'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्' (४।३। ११।२८) इति। तदेवं रूपं सौभरं प्रकृत्य पुनः श्रूयते 'हीषिति वृष्टिकामाय निधनं कुर्यात्' 'ऊर्गित्यन्नाद्यकामाय' 'ऊ इति स्वर्गकामाय' इति। निधनमिति चान्त्या सामभक्तिरभिधीयते। तत्रैतद्विचार्यते। किं सौभरं निरपेक्षं फलानि साधयति, इमानि वृष्ट्यादीनि हीषादिनिधनफलानि पृथगेव भवन्ति, उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनं नियम्यते इति। यद्यपि चात्र कर्मभेदाभेदौ न स्तस्तथापि प्रसङ्गादुपन्यस्येते। अथवा कर्मभेदाभेदवत् फलापूर्वभेदाभेदावपि लक्षणार्थाविति संबन्धः। एवं चानुष्ठानेऽपि विशेषो भवति। यदा वृष्टिकामेन सौभरं प्रक्रान्तं तदेतरयोरपि निधनयोः



स्वफलप्रार्थनावशेन प्रयोगः। अपि च वृष्टिप्रार्थनयोरपि भेदः कर्तव्यो यदि निधनादपरं फलम्। अथ तु निधननियमस्ततो हीषेव प्रयोक्तव्यमेकैव वृष्टिः प्रार्थयितव्या। एवमन्नाद्यकामस्वर्गकामयोरपि दर्शयितव्यम्। कुतः संशयः? केचित् तावद्भाष्यकारकृतेन वचनव्यक्तिद्वयप्रतिभानेन वर्णयन्ति किं हीषादिशब्दानां वृष्टिकामादिपदैः संबन्धोऽथ निधनपदेनेति। यद्यपि चोत्तरयोर्निधनमिति न श्रूयते तथाऽप्याकाङ्क्षावशेनानुषज्यमानं सर्वसंबन्धित्वेन कथ्यते। किं तावत्प्राप्तम्? '**पुनर्विधानसामर्थ्यात्स्वार्थत्वाच्च फलश्रुतेः। फलभूयस्त्वलाभाच्च हीषादेरपरं फलम्॥**' यदि हि सौभरफलान्येवैतान्यभविष्यंस्ततः पुनर्वचनमनर्थकमापत्स्यत। न हि विधेयं तस्य तदा किंचिदपि लभ्यते। हीषादीनां शाखान्तरेषु सौभरनिधनत्वेन पाठादेव प्राप्तत्वात्। नियमार्था श्रुतिरिति चेत्, न, श्रुतिप्राप्तानां नियमेन निवर्तयितुमशक्यत्वात्। सर्व एव तावन्नियमोऽन्यव्यावृत्तिफलत्वादन्याय्यः। तथाऽपि तु यत्रार्थाक्षिप्तावस्थानि वस्त्वन्तराणि भवन्ति तत्रैकश्रवणवशेनेतरन्निवर्तते। न त्विह हीषादीनामर्थात्प्रयोगः, येनैकविधानादितरनिवृत्तिर्गम्येत। सौभरश्रुत्या हि तानि प्राप्यन्ते। तत्र न शक्यं विधिमात्रप्रवृत्तया पुनःश्रुत्या गत्यन्तरे संभवति बाधनं कर्तुम्। अस्मत्पक्षे तु काम्यत्वादन्यतरद्वचनं क्रत्वर्थप्राप्तेतरबाधेनैव भविष्यति। वाक्यान्तराविहितं च वृष्टिहीषादिसंबन्धं विदधद्वाक्यमर्थवद्भवति। वृष्टिकामशब्दश्च स्वार्थत्वेन संभवन्न निधनव्यवस्थापरे वाक्ये सौभरविशेषणार्थः कल्पितो भविष्यति। पुरुषार्थभूयस्त्वं च विध्यात्मके वेदे पुरुषप्रवर्तनसौकर्यादिष्यते। तस्मान्निधनादपरं फलमिति।

**सर्वस्य वोक्तकामत्वात् तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः। २९॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, यदुक्तं निधनेऽपरः काम इति। नैवं संबन्धः क्रियते वृष्टिकामाय हीषिति कुर्यादिति। कथं तर्हि? हीषिति निधनं सौभरस्येति। कथम्? हीषो वृष्टिकामसंबन्धे क्रियमाणे, निधनं कुर्यादिति संबन्धो न कृतः स्यात्। तत्र हीषिति निधनमिति नावकल्प्येत। तत्रोभयसंबन्धे वाक्यभेदः। तत्र निधनशब्दः प्रमादसमाम्नातः इति गम्यते। न चैवंजातीयकः प्रमादसमाम्नात इत्युक्तम्। तस्मान्न हीषो वृष्टिकामेन संबन्धः। तेन न निधनादपरं फलम्।

अथ हीषो निधनसंबन्धे कथमवाक्यभेद इति? उच्यते। वृष्टिकामाय सौभरमस्त्येव। सौभरस्य निधनप्राप्तिरस्त्येव। तत्र हीषिति कुर्यादित्येष एवार्थो विधीयते। तस्मादवाक्यभेद इति। अतो निधनव्यवस्थेति गम्यते। एवमेव ऊर्गिति, ऊ इति च वदितव्यम्। सर्वस्य सौभरस्य ऊर्वृष्टिस्वर्गकामत्वाच्छक्यते कामवचनैः सौभरं लक्षयितुम्। किमर्थं लक्ष्यते इति, निधनार्था पुनःश्रुतिर्निधनव्यवस्थां करिष्यतीत्यर्थः।

**वा**-- उच्यते– '**निधनश्रुतिवैयर्थ्यान्न हीषः फलसंगतिः। निधनेन तु संबन्धे फलशिष्टं विशेषणम्॥**' हीषा वृष्टिं कुर्यात्तां च निधनभूतेनेति वाक्यभेदः। तदसंबन्धे चाऽऽनर्थक्यम्। अस्मत्पक्षे न किंचिदनर्थकम्। सर्वस्य सौभरस्य वचनान्तरैरुक्तवृष्ट्यादिकामत्वेन तत्पदानां च प्राप्तत्वाद्धीषादिसंबन्धमात्रे विधीयमाने वाक्यभेदाभावः। न च वचनमनर्थकम्, निधनविशेषनियमार्थत्वात्। विनाऽपि च गुणकामत्वेनास्त्येवात्र सामान्यविशेषलक्षणो बाधः, सौभरशब्दस्य सर्वभक्तिसामान्यवचनत्वात् (सर्वभक्तीति– सर्वासां प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यानां भक्तीनां यत् सामान्यं तद्वचनत्वादित्यर्थः।) सौभरश्रुत्या हि परोक्षवृत्त्या निधनान्तरं प्राप्नोति। इदं पुनः प्रत्यक्षम्, तस्माद्बलीयः। यथा चार्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते तथा परोक्षवृत्त्याऽपीति। अथवा सौभरशब्दवाच्याया गीतेर्नैव किंचिद्बाध्यते। अक्षरविधानेनाक्षरान्तरमात्रबाधनात्। यदि हि गीत्यन्तरावयवो विधीयेत ततः सौभरावयवोऽपि बाध्येत। स्तोभाक्षरबाधस्त्वयं निधनविषय इत्यदोषः। तस्मान्निधननियमार्था पुनःश्रुतिरिति।

एवं तु व्याख्यायमानेऽस्ति किंचिद्वाच्यम् । तदुच्यते '**न तावत्संशयो युक्तो वचनव्यक्तिभेदतः । हीषो निधनसंबन्धो नेष्टो हि व्यवधानतः ॥**' हीषिति निधनमिति व्यवहितकल्पनादोषादनिष्टः संबन्धः । तथोत्तरपक्षेऽपि– '**निधने हीष्विधानं चेद्वृष्टिकामविशेषिते । विशिष्टार्थानुवादत्वाद्वाक्यभेदः स्फुटो भवेत् ॥**' निधनानुवादेन हीषादिविधाने फलपदमनर्थकं पुनःश्रुतिवैयर्थ्यं च स्यात् । सौभरग्रहणेनैव हि निधनमात्रसंबन्धः प्राप्त इति न तन्मात्रवचनेनार्थः । तत्र यदि वृष्टिकामाय यद्यत्सौभरं तस्य यन्निधनमिति विशिष्टमनूद्य तत्र हीष्पदं प्रयुञ्जीतेति विधीयते ततोऽनेकसंबन्धकरणाद्वाक्यं भिद्येत । यद्यपि वृष्टिकामसौभरतन्निधनानि प्राप्तानि तथाऽप्यनेकेषामपि संनिधिरस्तीति व्यवच्छेदार्थमवश्यं यत्नः कर्तव्यः । ततश्चानेकार्थत्वमिति दुर्बलः सिद्धान्तः । पूर्वपक्षनिराकरणमपि न सम्यक् कृतम्, समाम्नायादेव हीषादीनां निधनत्वसिद्धेः ।

तस्मादेवं वर्णनीयम् ( दूषणमभिधाय स्वमतेन भाष्यं व्याख्यातुमुपक्रमते ) '**वृष्टिकामपदेनैव संबन्धे सति संशयः । फलेन साधनेनेति वाक्यसामर्थ्यवीक्षणात् ॥**' अत्र हीषिति वृष्टिकामायेत्येवमेवावस्थिते संदेहः किं साक्षात्फलेन हीषः संबन्धोऽथ फललक्षितेन साधनविशेषेणेति । तदा च 'हीषिति निधनम्' इति, एतत्फलं भवतीति वचनव्यक्तिरिव भाष्यकारेण दर्शिता । 'वृष्टिकामायेति सौभरविशेषणम्' इति सौभरस्य निधनवाक्ये स्वपदेनानुपादानाल्लक्षणारूपेणैव विशेषणत्वम् । 'न हीषा संबन्धः' इति फलस्वरूपासंबन्धाभिप्रायेण । तत्र तथैव विधिपुनःश्रुत्यपेक्षं व्याख्यानम्, प्रयोगवचनसामर्थ्यादेव सिद्धं स्यादिति, अपरा व्याख्या । यदि हि स्वार्थप्रवृत्तस्यैव सौभरस्य निधनमात्रं नियम्येत ततस्तत् प्रयोगवचनेनैवोपनीतमात्रहीषादिविधिसिद्धेर्विध्यानर्थक्यं भवेत् । फलसंबन्धपक्षे तु न प्रयोगवचनः समर्थ इत्यर्थवत्ता । किंच '**वृष्टिकामपदेनात्र श्रुत्यैवाभिहितः पुमान् । साधनापेक्षिणस्तस्य हीषादिपदसंगतिः ॥**' अन्यथाऽनेन सौभरं प्रकरणावगतमपि वृष्टिसाधनशक्तियुक्तं लक्ष्येत । न च तदाश्रयणे किंचित्प्रयोजनमस्ति । तथा 'श्रुतिलक्षणाविशये च' इति ब्रुवतो भाष्यकारस्याप्येतदेव व्याख्यानमभिप्रेतमिति गम्यते ।

सिद्धान्तस्तु–– '**सौभरस्य समस्तस्य यः कामोऽभिहितः पुरा । नियन्तुं निधनं तस्य स एवायमनूद्यते ॥**' सर्वस्यैव सौभरस्यायं कामसंयोगः पूर्वोक्त एव प्रत्यभिज्ञायमानः कीर्त्यत इति नापूर्वफलप्रतिपत्तिः । किमर्था तु प्राप्तस्य पुनः श्रुतिरित्यत आह––निधनार्था पुनः श्रुतिरिति । कस्मात्पुनःश्रुत्युपात्तेन फलेनैव हीषादयो न संबध्यन्ते । तत्रोच्यते– '**यथैव वारवन्तीयं नेष्टमाश्रयमाप्नुयात् । फले तथैव हीषादि नाऽऽप्नोत्याश्रयमीप्सितम् ॥**' हीषा वृष्टिं साधयेदिति हि गृह्यमाणेऽवश्यं किमाश्रितेनेत्यपेक्ष्यते । तत्र यत्सौभरं प्रकृतं तत्तावन्न शक्तमाश्रयत्वं प्रतिपत्तुम् । समस्तं हि साम सौभरशब्देनोच्यते । न च तद्धीषा साधयितुं शक्यम्, यथा दध्ना होमः । तद्धि सकलं होमं व्याप्तुं शक्नोति । न तु हीषा सौभरं व्याप्यते । बह्वक्षरसाध्यत्वात् । न च तदसाधयत आश्रयाश्रयिसंबन्धोऽवकल्पते । यत्तु तेन व्याप्त्या साधयितुं शक्यते निधनम्, न तस्य प्रकरणमस्तीति न वाक्याद्विनाऽऽश्रयत्वं प्रतिपद्यते । तत्र यदि वाक्येनैव फलसंबन्धस्तेनैव चाऽऽश्रयलाभस्ततो वाक्यं भिद्यते । तथा निधनमात्रानुवादेन हीषादिसंबन्धे प्रकरणं बाधित्वा सर्वसामसंबन्धप्रसङ्गे पुनः सौभरस्य यदिति कथमपि विशेषणीयम्, तत्रापि पुनर्मतिः क्लेशनीया ।

किंच –– '**यद्यप्यवयवद्वारं भवेत्सौभरसाधनम् । तथाऽपि भक्त्यनेकत्वात्क हीषिति न गम्यते ॥**' न तावत्सौभरावयवेन निधनेन साधितेन प्रकरणलभ्यसौभरं साधितं भवति । अवयवस्य सौभरत्वेनाप्रतीतेः । न च यथा शक्नुयात्तथाऽऽश्रयेदित्येषा कल्पनाऽस्तीत्युक्तम् । उपेत्यापि त्वाश्रयत्वमनेकप्रस्तावादिभक्तिनि सौभरे कतमस्यां भक्तौ हीषादयः प्रयुज्यन्तामिति नैव ज्ञायते । 'मुख्यं वा पूर्वचोदनाल्लोकवत्' ( १२।२।१०।२५ ) इति प्रस्तावे वा प्राप्नुवन्ति । तत्र निधनमित्यनुवादो नावकल्प्यते । अथोच्येत यथोक्थ्यादीनां फलाय चोदितानां प्रकरणाज्ज्योतिष्टोममाश्रयतामसमस्तव्यापित्वेनानेकावयवत्वेऽपि सति वाक्यान्तरवशेनान्ते निवेशो भवति । एवमत्रापि फले विहितानां हीषादीनामाश्रयत्वेन सौभरमुपसर्पतां समाम्नायवशेन लब्धस्थानानां निधनत्वमनुवदिष्यत इति । तदयुक्तम् । कुतः ? '**अनन्यविषयत्वेन स्थानमुक्थ्यादिषु स्थितम् । हीषादिस्तु बहुस्थानः क स्यादिति न गम्यते ॥**' युक्तमुक्थ्यादीनां प्रदेशान्तरेष्वदृष्टेरलौकिकत्वाच्च क्रत्वन्तरनिवेशित्वम् । न हि तेषां स्थानान्तरं दृष्टपूर्वम् । न चाविज्ञातस्थानविशेषाणां रूपावधारणं फलसंबन्धो वा । न चान्यत्र वर्तमानानां स्वरूपप्रयुक्त उक्थ्यादिव्यपदेशसंभवः । योऽपि वचनान्तरेण स्थानविशेषलाभः सोऽपि पृथक्क्रत्वर्थत्वाविज्ञानादनयैव फलचोदनया गृह्यते इति तदर्थ एव विज्ञायते । हीषादीनां यः पुनः समाम्नायप्राप्तः स्थानविशेषसंबन्धः स तावत् सौभरविधानेन क्रत्वर्थत्वेन सौभरफलार्थत्वेन चोपयोजितः । इदानीं तु फलं प्रति स्वतन्त्रस्य हीषो विधानात् लोकवेदसामान्तरभक्त्यन्तरप्रकृतभक्तिवर्तित्वादिविशेषो न ज्ञायते क्वावतिष्ठताम् । यदि हि प्रकृत एव विहित इति विज्ञायेत ततस्तस्य ज्ञातस्थानत्वात् संदेहो न स्यात् । ननु चैकत्वाच्छब्दस्य य एवायं प्रकृतः स्यात् स एव लोकादिष्वपीति तद्गतग्रहणेऽपि तदेव विशेषस्थानं भविष्यतीति । नैतदेवम् । कुतः ? '**एकत्वेऽपि हि शब्दस्य शक्तिभेदः प्रयोजने । तत्र कार्यान्तरस्थानं न स्यात्कार्यान्तरेष्वपि ॥**' न शब्दैकत्वेन यत्किंचित्कार्ये स्थानं दृष्टसामर्थ्यं तदेवान्यत्रापीति शक्यते वक्तुम् । न हि यत्, देवदत्तस्य युध्यमानस्य स्थानमवगतं तदेव भुञ्जानस्यापि भवतीति गम्यते । कार्यप्रयुक्ता हि स्थानविशेषादयो न स्वरूपप्रयुक्ताः । स्वरूपस्य स्थानान्तरेऽप्यविभागात् । अतः कार्यान्यत्वादेकस्यापि स्थानभेदप्राप्तिः । न च यत्सौभराङ्गभूतस्य हीषः स्थानं तदेव पुरुषार्थस्यापीत्यवधारणं शक्यम् । प्रासङ्गिकसौभरसाधनत्वादिति चेत्, न, तस्यैव स्थानविशेषलाभात्प्रागसिद्धत्वात् । इतरेतराश्रयं हि स्यात्सौभरसाधनत्वेन स्थानविशेषस्तस्माच्च साधनत्वमिति ।

ननु यथाऽभ्युदितेष्ट्यां मध्यमादितण्डुला उपादीयमानत्वेऽपि प्रकृता गृह्यन्ते तथाऽत्र हीषादयो ग्रहीष्यन्ते । युक्तं तत्र प्रकृतगामिविभजतिवाक्यापेक्षितानां देवतासंयोगवाक्यानां तद्विषयत्वाच्छब्दोपबद्धमध्यमादिविभागस्य च प्रकृतप्रत्ययानतिरेकादन्येषामग्रहणम् । इह तु न हीषादीनां तादृक्कारणमस्तीति न लौकिकप्रत्ययो निवर्तते । तस्मान्नैवं वाक्यार्थः संभवतीत्ययमपरः परिगृह्यते । यदा सर्वप्रकारमन्विष्यमाणोऽपि श्रौतः फलसंबन्धो न लब्धः, तदा मा बाधितरां श्रुतिरिति प्रकृतसाधनलक्षणा विज्ञायते । तत्रैषोऽर्थो भवति । प्रकृताय वृष्टिसाधनाय हीष्शब्दोऽङ्गमिति । प्रकृतगामी च वृष्टिशब्दस्तत्साधनभूतं सौभरमेव लक्षयति नान्यत् । न चान्यसाधनभूतमप्रतीतेः । सत्यामपि च हीषादीनां प्राप्तौ नियमार्थत्वादर्थवद्वाक्यमित्युक्तम् । ते च हीषादयो यथाभूताः सौभरेण आक्षिप्तास्तथाभूता एव नियम्यन्त इति विनाऽपि निधनशब्दसंयोगेन सिद्धं निधनत्वमनूद्यते । तद्दर्शयति– 'वृष्टिकामाय सौभरमस्त्येव' इत्यादि । तदेतदधिकरणं गुणक्रियाफलप्रतिपादनपरयोरनन्तराधिकरणयोरुभयोरप्यपवादभूतम् । वृष्ट्यादिशब्देनैवेदं फलं साधनलक्षणयेति प्रतिपादनात् । यस्तु वाक्यभेदश्चोदित आसीत्स निधनसंबन्धे सति श्रुत्या वा सौभरे विशेषणत्वेनोपादीयमाने भवेत् । न त्विह तदुभयमप्यस्ति । वृष्टिकामपदेनैव संबन्धात्, प्रकरणलभ्यत्वाच्च सौभरविशेषणत्वस्य । न च प्रकरणलभ्या विशेषा वाक्यं भिन्दन्ति । तस्माददोषः । इदं त्विह विचारयितव्यं भवति । किं यत्र क्वचन शाखायामधीतस्य सौभरस्य वृष्ट्यादिसाधनभूतस्य हीषादयो नियम्यन्त उत यत्र हीष्निधनकं पठ्यते तच्छाखागतं वृष्टिकामस्य प्रयोक्तव्यम् । एवमूर्ङ्निधनकम्, ऊनिधनकं चेति सदृशो विचारः । तत्रानियमेन सहस्रशाखागतसौभरप्रयोगविकल्पे सति वृष्टिकामादिनिमित्ते हीषादिमात्रनियम इति प्राप्तेऽभिधीयते । यत्र तन्निधनकं पठ्यते तच्छाखागतैव वृष्टिकामादेः समस्ता गीतिरुपादातव्येति । कुतः ? '**प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम् । अतः समस्तैव विकल्प्यमाना यथासमा-**

**न्नाद्यमसौ नियम्या ॥** ' सामरूपं हि समाम्नायादवगम्यते तच्चाल्पेनान्यत्वेनाप्रत्यभिज्ञानादन्यदेव भवति । तत्र यदि शाखान्तरीयायां गीतौ शाखान्तरीयनिधनं प्रयुज्येत ततो रूपान्यत्वं स्यात् । न च वचनादृते ऐरवद्विकारः ( ऐरवदिति– ' न गिरागिरेति ब्रूयात् ' ' ऐरं कृत्वोद्गेयम् ' इति वचनबलात् यज्ञायज्ञीयसाम्नो गिरापदत्यागेन इरापदे गानेऽपि न प्रकृते, इति व्यतिरेकदृष्टान्तार्थः ) । तच्छाखागतगीतिग्रहणेनाविरोधोपपत्तेः सर्वत्रासंभवाद्विकाराश्रयणम् । अस्ति चात्र गतिः । विकल्पप्राप्तौ चायं नियमः । समस्तस्य च साम्नः पदार्थत्वाद्विकल्पप्राप्तिर्नावयवानाम् । अतो नान्यदीयनिधनविधानम् । अत एकदेशनियमे सति कांस्यभोजिन्यायेन समस्तनियमः । एषोऽपि चात्र वाक्यार्थः संभवति । उभयोः प्राप्तयोः संबन्धमात्रं विधीयते । यद्वृष्टिकामाय सौभरं यच्च हीषित्येवं निधनं तदेकत्र संपादनीयमिति । तस्मात्समस्तगीतिनियम इति सिद्धम् ।

**शा**— ' यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत ' इति ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य तदाश्रयं सौभरं फलत्रयसाधनत्वेन आम्नातम् । फलत्रयसाधनभूतं सौभरं प्रकृत्य आमनन्ति– ' हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय ' इति । तत्र संशयः– किं हीषादयो निधनविशेषाः सौभरफलात् फलान्तरार्थेन विधीयन्ते उत सौभरस्यैव तत्तत्फलं साधयन्तः तत्तन्निधनं अनियमेन पाठतः प्राप्तं नियम्यन्ते इति । तत्र पुरुषस्य श्रौतत्वात् तादर्थ्यमेव हीषादीनां विज्ञायते चतुर्थ्या । तच्छेषता च तदभिलषितफलसाधनतया इति फलार्थत्वमेव एषाम् । साधनसंबन्धे तु वृष्टिकामादिशब्दैः सौभरं लक्ष्येत । न च श्रुतिसंभवे लक्षणासंभवः । तस्मात् हीषादयो गुणाः फलान्तरार्थाः । **इति प्राप्ते, ब्रूमः ।** वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्तमानानि प्रत्यभिज्ञायन्ते इति न फलान्तरावगमः । **' तस्मात्फलान्तरार्थेन नैव हीषादयो गुणाः । विधीयन्ते नियम्यन्ते यथाप्राप्ते तु सौभरे ॥ '**

**सोम**— संगतिस्तु रेवतीवाक्ये गुणफलविध्यसंभवेऽपि इह तत्संभव इति प्रत्यवस्थानात् बोध्या । **सूत्रार्थस्तु**– वृष्टिकाम इत्यादिपुरुषसंयोगात् सौभराश्रिते हीषादौ फलसंयोगः इति ।

**वि**— ' वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम् । निधनान्यपि हीषूर्गू इति वृष्ट्यादिकामिनाम् ॥ फलान्तरं किं वृष्ट्यादि हीषादीनामुतोदिते । सौभरे फलसंभिन्ने निधनं विनियम्यते ॥ फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति । सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्धते ॥ नोक्तवृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया । नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ॥ '

**भाट्ट**—– ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य समाम्नातैः ' यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत ' इत्येतैरुक्तस्तोत्राश्रितं सौभरं साम फलत्रयोद्देशेन विधीयते । उद्देश्यानेकत्वेन स्तुवीत इत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमसामावयवाधारतया ' हीष् ऊ ऊर्क् ' इत्यादीन्यक्षराण्याम्नातानि तदेव सौभरं प्रकृत्य ' हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊ इति स्वर्गकामाय, ऊर्गित्यन्नाद्यकामाय ' इति श्रुतम् । तत्र वृष्टिकामादिशब्दानां फलपरत्वात् तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरं च प्रकृतत्वाद्यूपादिवदाश्रयः निधनाधारतया हीषादिपाठस्यैव नियामकत्वात् भागान्तरे स्तोभाद्यक्षरान्तरबाधापत्तेश्च न निधनातिरिक्तभागस्याश्रयत्वापत्तिः । न च लाघवात् वृष्टिसाधनसौभरीयनिधने अनियमेन प्राप्तानां हीषादीनां नियममात्रकरणात् व्यवस्थार्थत्वं शङ्क्यम् । तथात्वे वृष्टिकामादिपदैस्तत्तत्साधनीभूतसौभरलक्षणाद्यापत्तेः । तस्य च निधनविशेषणत्वे विशिष्टोद्देशापत्तेश्च । अतः सौभरफलात् फलान्तरार्थानि हीषादीनि । **इति प्राप्ते,** नियमविधिलाघवानुरोधेन वृष्टिकामादिपदैः वृष्टिसाधनसौभरलक्षणामङ्गीकृत्यापि हीषादिनियमविधिरेवाश्रीयते पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानकत्वलाभः । **वस्तुतस्तु**– नियमविधिलाघवानुरोधेन हीषादेः वृष्ट्याद्यर्थतैव स्वसाधनसौभराधारत्वसंबन्धेना-



श्रीयते इति न लक्षणाऽपि । संबन्धघटकीभूतं च सौभरं न सौभरत्वावच्छिन्नम्, अपि तु सौभरविशेष एव । शाखाभेदेन हि क्वचिद्विजातीयानि सौभराणि निधनान्तरयुक्तानि समाम्नातानि । तत्र हीषः पक्षेऽप्यप्राप्तत्वात् न तस्य सौभरस्य संबन्धघटकत्वम् । अपि तु यज्जातीयसौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत् । अतश्च वृष्ट्यर्थं निरुक्तसंबन्धेन हीषेवेति नियमकरणात् संबन्धघटकीभूतसौभरे निधनान्तरव्यावृत्तिवत् विजातीयसौभरान्तरस्यापि वृष्ट्याद्यर्थत्वव्यावृत्तिसिद्धिः । अतश्च तन्नित्यप्रयोगविषयमेव संपद्यते इति विवेकः ।

**मण्डन**—– ' हीषादि सौभरफलं नियमाय शिष्टम् ।' सौभरं नाम सामविशेषः, निधनं नाम साम्नः अन्तिमो भागः । ' सौभरफलं ' सौभरस्य फलमेव फलं यस्य तत् ' हीषादि ' निधनविशेषः ' नियमाय ' फलविशेषापेक्षया निधनान्तरव्यावृत्त्या हीषाद्येकमात्रनिधनप्रयोगं नियमयितुं ' शिष्टं ' विहितम् ।

**शंकर**— ' हीषादेर्न फलार्थत्वम् । व्यवस्था निधनेषु च । '

* **' सौमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः '** इत्यत्र शुक्लवर्णस्य विधिः नानुवादः । **भा.** ४।२।१०।२५.

* **सौमारौद्रादियागे** श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां बाधः । १०।७।१९। ६४–७१. **मीको.** पृ. ४३५९ ' सोमारौद्रादियागे श्रूयमाणैः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सौमिकं तु प्रणयनमवाच्यं हीतरत् । ७।३।८।२०॥**

सोमे अग्निप्रणयनं धर्मवदाम्नातम् । दर्शपूर्णमासयोः अधर्मकम् । चातुर्मास्येषु ' द्वयोः प्रणयन्ति ' इति श्रुतम् । इदं द्वयोः पर्वणोः अग्निप्रणयनं सौमिकवत् दार्शपौर्णमासिकवत् वा इति विचारे पूर्वपक्षमाह । प्रणयनं चातुर्मास्येषु द्वयोः पर्वणोः अग्निप्रणयनं सौमिकं सौमिकाग्निप्रणयनधर्मकं स्यात् । हि यस्मात् इतरत् प्रणयनं दार्शपौर्णमासिकं अवाच्यं न विधेयं चोदकेन प्राप्तत्वात् । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः ।

**वार्तिके** तु " दार्शिकं उत्सूत्रं पक्षं कृत्वा ' सौमिकं तु प्रणयनं ' इत्यनेन निवार्यते । एवं तुशब्दः अर्थवान् प्रणयनं तु इति " इत्युक्तम् ।

**कुतूहले** तु सौमिकं प्रणयनं इदं सिद्धान्तपक्ष एवेत्युक्तम् । **सुबोधिन्यां भाष्ये** च सौमिकं प्रणयनं पूर्वपक्ष एव । तत्र कुतूहलपक्षं याज्ञिकाः स्वीकुर्वन्ति ।

**उत्तरवेदिप्रतिषेधश्च तद्वत् । २१ ॥**

चातुर्मास्येषु द्वयोः पर्वणोः अग्निप्रणयनं सौमिकवत् इत्यत्र पूर्वपक्षी हेत्वन्तरमाह । चकारो हेत्वोः समुच्चये । ' न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये ' इति प्रथमचतुर्थपर्वणोः उत्तरवेदिप्रतिषेधः उक्तः । प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् सौमिके च प्रणयने उत्तरवेदिसत्त्वात् सौमिकमेव प्रणयनं अतिदिश्यते । तद्वत् यथा प्राकृतप्रणयनस्यावाच्यत्वं सौमिकं प्रणयनं गमयति तथा क्वचिदुत्तरवेदिप्रतिषेधः अन्यत्र सौमिकं उत्तरवेदिविशिष्टं प्रणयनं गमयति इत्यर्थः ।

**वार्तिकमतेन** इदं सूत्रं दार्शिकप्रणयनपक्षनिरासार्थम्, **कुतूहलमतेन** सौमिकप्रणयनसिद्धान्तसाधकम्, **सुबोधिनीमतेन भाष्यमतेन** च सौमिकप्रणयनपूर्वपक्षसाधनार्थं इति विशेषः । अक्षरार्थे तु न भेदः ।

**प्राकृतं वाऽनामत्वात् । २२ ॥**

' द्वयोः प्रणयन्ति ' इत्युक्तं चातुर्मास्येषु द्वयोः पर्वणोः अग्निप्रणयनं सौमिकं इति पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । एतत् अग्निप्रणयनं प्राकृतं दार्शपौर्णमासिकम् । कुतः ? सौमिकस्य प्रणयनस्य अनामत्वात् । नैतत् तस्य वाचकमित्यर्थः । प्रणयनशब्दोऽयं प्राङ्नयनस्य वाचकः ।

**अत्र वार्तिकम्**– " अपूर्वं प्रणयनान्तरं वरुणप्रघाससाकमेधयोर्विधीयते । अग्निप्रणयनोत्तरकालं ' आहवनीयात् द्वौ अग्नी प्रणयतः ' इति श्रूयते । तस्मान्न देशलक्षणार्थं आहवनीयशब्दः । एवं चेत् प्रणयनान्तरं विधीयते । प्राकृतं वा इति स्वाभाविकमित्यर्थः । अनामत्वादिति भाष्यव्याख्यानमेव " । इति । अत्र

तन्त्ररत्नम्– शाखान्तरे अग्निप्रणयनोत्तरकालं आहवनीयात् द्वौ अध्वर्युप्रतिप्रस्थातारौ अग्नी प्रणयतः इति श्रूयते। तदेकवाक्यतया 'द्वयोः प्रणयन्ति' इत्यनेनापि आहवनीयात् प्रणयनं विधीयते। तेन चोदकप्राप्तं यत् गार्हपत्यात् प्रणयनं ततो विलक्षणमिदं अदार्शिकं असौमिकं च। इति। कुतूहले तु दार्शपौर्णमासिकप्रणयनं पूर्वपक्षः। तदर्थमिदं सूत्रं इत्युक्तम्। दार्शिकं प्रणयनं सिद्धान्तः इति तु सुबोधिन्यां भाष्ये च।

**परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा। २३॥**

चातुर्मास्येषु अग्निप्रणयनं दार्शिकवत् इत्युक्तम्। अत्र तु 'द्वयोः प्रणयन्ति' इत्यस्य सार्थक्यमाह सिद्धान्ती। 'द्वयोः प्रणयन्ति' इति श्रवणं परिसंख्यार्थं द्वयोः प्रणयन्ति न चतुर्षु इति। गुणार्थं प्राग्देशनयनरूपगुणार्थं वा, अर्थवादो वा तस्य प्रयोजनम्। 'तस्मात् द्वाभ्यां यन्ति' इत्यर्थवादार्थम्। स्तुत्यर्थं प्रणयनानुवाद इत्यर्थः।

अत्र वार्तिकम्– प्रथमस्य (दार्शिकप्रणयनपक्षस्य) प्रयोजनसूत्रमिदम्। यथासंभवं एतेषु पुनःश्रुतिर्योजनीया–इति। इदं प्रणयनं सौमिकप्रणयनवत् इति याज्ञिकपक्षानुसारि कुतूहलमतम्। दार्शिकप्रणयनवत् इति सुबोधिनीभाष्ययोर्मतं अपूर्वमेवेदं न सौमिकं नापि दार्शिकं इति वार्तिकमतम्। के.

* **सौमिकं** होतुः वरणं प्रसङ्गात् दार्शपौर्णमासिकस्य कार्यं साधयिष्यति इति न। भा. १२।१।१८।३९. * **सौमिकेन** दीक्षाकालीनजागरणेन दार्शिकजागरणस्य न प्रसङ्गः ज्योतिष्टोमे। १२।१।८।१७. मीको. पृ. १७५३ 'जागरणन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सौमिकानां** दर्विहोमाणां वैसर्जनादीनां सोमो द्रव्यं इति पूर्वपक्षः। आज्यमेव द्रव्यं इति सिद्धान्तः। संकर्ष. ३।२।१०. * **सौमिके** चाग्निप्रणयने उत्तरवेदिः, न दार्शपौर्णमासिके। भा. ७।३।८।२०.

**सौमिके च कृतार्थत्वात्। ४।२।८।२०॥**

ज्योतिष्टोमे अवभृथे 'यत् किंचित् सोमलिप्तं द्रव्यं तेनावभृथं यन्ति' इति श्रुतम्। अत्र सोमलिप्तानां ऋजीषग्रावौदुम्बर्यभिषवणफलकादीनां द्रव्याणां अवभृथगमनं किं प्रतिपत्तिः अर्थकर्म वा इति विचारे अनेन सूत्रेण सिद्धान्त उच्यते। पूर्वसूत्रात् प्रतिपत्तिः इति शब्दोऽनुवर्तते। सोमलिप्तानां ऋजीषादीनां अवभृथगमनं प्रतिपत्तिः स्यात् इति प्रतिज्ञा चशब्देन सूचिता। तत्र हेतुः सौमिके कृतार्थत्वात् इति। सौमिके सोमसंबन्धिनि अभिषवादौ कर्मणि ग्रावादीनां कृतार्थत्वात् कृतकार्यत्वात् अवभृथगमनरूपे अर्थान्तरगमने सति प्रतिपत्तित्वमेव न्याय्यम्।

**अर्थकर्म वाऽभिधानसंयोगात्। २१॥**

पूर्वपक्षसूत्रम्। ज्योतिष्टोमे अवभृथे सोमलिप्तानां द्रव्याणां नयनं न प्रतिपत्तिः किंतु अर्थकर्म। 'तेनावभृथं यन्ति' इति प्रधानेन अवभृथेन सोमलिप्तानां संयोगात् संयोगस्य उक्तत्वात् गुणभूतत्वं ज्ञायते। तस्मात् अर्थकर्म। वा–शब्दः उत्तरपक्षस्य पूर्वसूत्रोक्तस्य व्यावृत्त्यर्थः।

**प्रतिपत्तिर्वा तन्न्यायत्वाद् देशार्थाऽवभृथश्रुतिः। २२॥**

ज्योतिष्टोमे अवभृथे सोमलिप्तानां ग्रावाभिषवणफलकादीनां गमनं अर्थकर्म इति पूर्वपक्षे प्राप्ते सिद्धान्तयति। वाशब्दः पूर्वपक्षं निरस्यति। ग्रावादीनां अवभृथगमनं नार्थकर्म किंतु प्रतिपत्तिः। तन्न्यायत्वात् प्रतिपत्तित्वसाधको यो न्यायः 'यदन्यत्र कृतार्थं तदन्यत्र प्रतिपाद्यते' इति, तद्वत्त्वात्। अथ यदुक्तं 'अवभृथं यन्ति' इति द्वितीयाश्रुत्या अवभृथस्य प्राधान्यमिति तत्रोच्यते, देशार्था अवभृथश्रुतिः इति। अवभृथशब्दः देशं लक्षयति। यस्मिन् देशे अवभृथः तं देशं यन्तीति। प्रतिपत्तिन्यायात्तु सोमलिप्तानां गमनं प्रतिपत्तिः इत्येव सिध्यति। के.

* सौमिके तन्त्रे वषट्कारो निर्दिष्टः। भा. ८।४।४।११, * **सौमिकेषु** चातुर्मास्येषु उत्करे वाजिनासादनं गुणविधिः। तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनम्। पृष्वमुत्करं करिष्यामः। १०।३।३।१८–२२, * सौमिकेषु चातुर्मास्येषु परिधौ पशुनियोजनं गुणविधिः। पशवनपगमः दृष्टं प्रयोजनम्। महान्तं परिधिं करिष्यामः। १०।३।३।१८–२२. * सौमिकेषु चातुर्मास्येषु प्राकृतासादननियोजनानुवादेन विहिताभ्यां उत्करपरिधिभ्यां प्राकृतयोः वेदियूपयोः बाधः। १०।३।३।१८–२२. मीको. पृ. १६९४ 'चातुर्मास्येषु सौमिकेषु प्राकृतासादननियोजना०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **सौमिकी** वेदिः प्रचारार्था। दार्शपौर्णमासिकी हविषामासादनार्था। भा. १२।१।३।८. * सौमिकी वेदिः मुख्य–अङ्गयोः उपकरोतीत्युभयार्था। वि. ३।७।३, * सौमिकी वेदिः सदोहविर्धानादीनां पर्याप्तो भूभागः। अयं भूभागः, दार्शिकीं वेदिं अन्तर्भाव्य योऽयं प्राचीनवंशो नाम मण्डपः, ततः प्राचीनः। ३।७।३. * **सौमिक्याः** महावेद्याः पृथक् ऐष्टिकी वेदिर्न कार्या। भा. १२।१।३।८.

* **सौमिकाग्निप्रणयनधर्माणां** चातुर्मास्यगताग्निप्रणयने नातिदेशः। ७।३।८।२०–२३. मीको. पृ. २७०३ 'प्रणयनाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सौमिकावभृथधर्माणां** अवभृथनाम्ना वरुणप्रघासावभृथे अतिदेशः। ७।३।४।१३–१६. मीको. पृ. २१६ 'अतिदेशः वरुणप्रघासावभृथे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सौमिकातिथ्येष्टिगतवैष्णवशब्दो** राजसूये पूर्वत्रिकगतवैष्णवत्रिकपाले धर्मान्नातिदिशति। ७।३।६।१८. मीको. पृ. ३७५९ 'वैष्णवन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सौमिकेष्टिपशुषु** सौमिकपत्नीसंनहनेन दार्शिकपत्नीसंनहनस्य प्रसङ्गसिद्धिः। १२।१।१३।२९. मीको. पृ. २८३१ 'प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **सौमिकदक्षिणया** सोमाङ्गेष्टिशेषभक्षाणां न प्रसङ्गसिद्धिः। १२।१।१७।३४–३५. मीको. पृ. २८२९ 'प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया' इत्यत्र अधिकरणं द्रष्टव्यम्।

**सौमिकदक्षिणान्यायः।** अन्वाहार्यदक्षिणा प्राकृती सौमिकदीक्षणीयादीष्टिषु न देया॥

**भृतत्वाच्च परिक्रयः। १२।१।१६।३३॥**

**भाष्यम्**— दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य आम्नातः, इह चोदकेन प्राप्तः सन् न कर्तव्यः। कुतः? भृतत्वात्। भृतास्ते ऋत्विजः सोमार्थेन परिक्रयेण 'तस्य द्वादशशतं दक्षिणा' इति। एकदेशकालकर्तृत्वं चाङ्गप्रधानानाम्। तस्मात्तैरेवाङ्गानि कर्तव्यानि। अतो न पृथगङ्गानां परिक्रयः। तस्मादन्वाहार्यो निवर्तते।

**शा**— दीक्षणीयादिषु चोदकप्राप्ता अन्वाहार्यदक्षिणा दातव्या नेति संशये 'दक्षिणा सोमस्य' इति वचनात् द्वादशशतदक्षिणा केवलं प्रधानार्था इत्युक्तम् (३।७।५)। अतः अङ्गेषु स्वार्थदक्षिणा दातव्यैव। (सिद्धान्तमाह–) प्रसङ्गसिद्धकार्यत्वात्तु न दातव्या। प्रधानार्था ह्येषा आनतिः उपक्रमप्रभृति आसमाप्तेः प्रवृत्ता च अनपवृत्ता च, इति तामेवोपजीवन्तो दीक्षणीयादिविषयः चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जते। किंच पृथक् दक्षिणायां आनतिभेदात् अङ्गप्रधानानामश्रुतः कर्तृभेद आपद्येत। (कर्तृभेदश्च प्रयोगभेदापादकत्वात् प्रयोगविधिना एकस्यैव प्रयोगस्यावगमादयुक्तः। क्वचिद्दक्षिणाभेदस्य श्रुतत्वात् कर्तृभेदो न दोषः। वाजपेयबृहस्पतिसवयोश्च श्रुतत्वादेव प्रयोगभेदोऽपि न दोषः)। किंच यैः प्रधानं कर्तव्यम्, तैरेव अवश्यमङ्गान्यपि कर्तव्यानि। नाकुर्वद्भिरङ्गानि प्रधानं कर्तुं शक्यमिति निश्चिते शास्त्रार्थे प्रधानार्थत्वेन अङ्गानां, बलात् अङ्गान्यपि कर्तव्यानि भवन्ति, इति प्रसङ्गसिद्धानुष्ठानत्वात् नाङ्गेषु दक्षिणा शक्यते।

**सोम**— केवलप्रधानार्थत्वबलात् केवलप्रधानानतिरेव कार्यम्, इत्यङ्गेष्वपि अकृतकरत्वात् कर्तव्यं (दक्षिणादानं) शेषभक्षणवत् इत्युत्थितेः **संगतिः।** **सूत्रार्थस्तु**– सोमदक्षिणयैव भृतत्वात् न पृथक् अन्वाहार्येण परिक्रयः इति।

**वि**— 'अन्वाहार्योऽत्र (सौमिकेष्टिषु) दातव्यो न वा, ऽऽद्यः सोममात्रगा। गवादिदक्षिणा यस्माज्ञानत्यन्तरवर्जनात्॥'

**भाट्ट**— दीक्षणीयादिषु चोदकप्राप्तान्वाहार्यदक्षिणा सोमार्थदक्षिणयैव प्रसङ्गादानतिसिद्धेर्न देया। न च 'दक्षिणाः सोमस्य' इत्यस्याङ्गसाधारण्यनिवर्तकत्ववत्

प्रसङ्गनिवर्तकत्वमपि शङ्क्यम् । तथात्वे आनतिभेदेन कर्तृभेदापत्तेः अङ्गप्रधानानामश्रुतप्रयोगभेदप्रसङ्गात् । अतः सोमाङ्गदक्षिणयैवानतत्वात् तदानत्युपजीवनेऽपि च पशुप्रयाजादीनामिव तन्त्र्यङ्गत्वानपायात् न दीक्षणीयादीनां पृथग्दक्षिणाप्रयोजकत्वम् । न चैवमङ्गसाधारण्यनिवृत्तिप्रयोजनाभावः, तद्विकृतौ निरूढपश्वादौ द्वादशशतनिवृत्तिप्रयोजनकत्वात् । अत एव तत्र प्रकृतोऽन्वाहार्यो वाऽर्थाक्षिप्तयत्किञ्चिदानतिसाधनं द्रव्यं दक्षिणेत्यन्यत्र विस्तरः ।

**मण्डन**— 'स्याद्दक्षिणा नेह च दर्शचोदिता ।' इह सोमाङ्गेष्टिषु ।

**शंकर**— 'सोमाङ्गे दक्षिणा न च ।'

* सौमिकदक्षिणान्यायः । 'दक्षिणाः सोमस्य' इति वाक्यात् प्रधानमात्रार्थाया अपि दक्षिणायाः अतिदेशप्राप्तान्वाहार्यनिवर्तकत्वम् । सु. पृ. ६३६. * यद्यपि च किंचित् प्रधानमात्रसंबन्धकारणं भवेत् (संमार्गस्रुचां) तथापि **सौमिकवेदिदक्षिणान्यायेन** प्रसङ्गसिद्धेः न प्राकृतशात्युपसंग्रहो युज्यते । वा. २।१।४।१२ पृ.४१४.

* **सौमिकदीक्षाहुतिमन्त्रैः** अग्निचयनप्रकरणश्रुतदीक्षाहुतिमन्त्राणां समुच्चयः । १०।३।४।२३-२९. **मीको.** पृ. ४९ 'अग्निचयने श्रुतानां दीक्षाहुतिमन्त्राणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौमिकधर्माणां** उद्भिदादिषु अव्यक्तयागेषु अतिदेशः । ८।१।९।१६. **मीको.** पृ. १९९ 'अतिदेशः उद्भिदादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौमिकपदार्थेभ्यः** पौरोडाशिकानां प्रोक्षणादीनां पूर्वभावित्वं ज्योतिष्टोमे सुत्यायाम् । ५।१।१३।२५-२६.

* **सौमिकपात्रैर्ग्रहचमसैः** दार्शिकपात्राणां जुह्वादीनां प्रसङ्गसिद्धिर्न भवति सवनीयपुरोडाशादिषु ज्योतिष्टोमे । **मीको.** पृ. २८२८ 'प्रसङ्गो न ज्योतिष्टोमे सवनीय०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौमिकबर्हिस्तरणार्थः** 'अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि' इत्यादिः प्रैषः । **संकर्ष.** १।३।१५. **मीको.** पृ. २९१० "बर्हिः स्तृणीहि' इति प्रैषः सोमार्थः" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौमिकवेदेः** अङ्गप्रधानार्थता । ३।७।३।७,९. **मीको.** पृ. १७०० 'चिकीर्षान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सौमिकवेदिन्यायः** । सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गसिद्धिः ॥

**नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् । १२।१।३।८॥**

**भाष्यम्**— सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्तन्ते, तेषु चिन्ता तेषां वेदिर्भेदेन कर्तव्या उत नेति । किं प्राप्तम् ? भेदेन कर्तव्या । किं कारणम् ? चोदकं प्रापयति । एवं चोदकानुग्रहो भवति । ननु सौमिक्येव प्रसङ्गात्कार्यं साधयेत् । अत्रोच्यते ! न साधयेत् । कस्मात् ? नानार्थत्वात् । नानार्थे एते वेदी । दार्शपूर्णमासिकी हविषामासादनार्था, सौमिकी प्रचारार्था । तत्र प्रसङ्गो नोपपद्यते । यत् तन्त्रिणोऽङ्गमध्यपात्यङ्गेनैकार्थं तत् प्रसज्यते । यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु । न त्विह तथा । तस्माद्वेदिः कर्तव्या ।

**अकर्म वा, कृतदूषा स्यात् । ९ ॥**

**भाष्यम्**— न वा कर्तव्या दार्शिकी वेदिः । कुतः ? कृतदूषा स्यात् । सा क्रियमाणा केवलं सौमिक्या वेदेः कृताया दूषणं स्यात् । न किंचित् स्वार्थं साधयति । ननु हविषामासादनं तत्र करिष्यते । शक्यं तु तत् महावेद्यामपि कर्तुम् । नन्वन्यार्था सेत्युक्तम् । अन्यार्थाऽपि सती हविषामासादने अधिकरणीभवितुं प्रभवति । वेद्यां हविषामासादनं श्रुतम् । इयमपि च वेदिः । न तत्र तदर्थायामतदर्थायां वेत्येष विशेषः श्रूयते । तस्मान्न कर्तव्या दार्शिकी ।

**शा**— ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्तन्ते, तेषु महावेदेः भेदेन प्राकृती वेदिः कर्तव्या नेति संदेहे यद्यपि अङ्गप्रधानार्था महावेदिः तथापि प्रचारार्थत्वान्न हविरासादनार्थायाः प्राकृत्याः कार्यं साधयतीति तदर्थं प्राकृती कर्तव्या ।



नैवम् । प्रचारार्थाऽपि प्रसङ्गात् हविरासादनमपि शक्नोति साधयितुम् । नहि तस्यां क्रियमाणं हविरासादनं विगुणं भवति । वेद्यां हि हविरासादनं प्रकृतौ श्रुतं न स्वार्थायामेवेति । तस्मात्प्रचारार्थैव प्रसङ्गात् आसादनेन उपजीव्यते ।

**सोम**— आज्यभागादिकार्यस्य अन्यतः असिद्धेः यथा तत्करणम्, तथा प्राकृतवेदेरपि इत्युत्थितेः संगतिः । सूत्रे नानार्थत्वात् प्रचारहविरासादनलक्षणकार्यभेदात् इत्यर्थः ।

**वि**— 'सोमे वेद्यां कृतायां यदिष्टिप्रकृतिकं भवेत् । तत्र कार्यैष्टिकी वेदिर्न वा, वेदिस्तु सौमिकी ॥ प्रचाराय हविःसादनाय कार्यैष्टिकी पृथ ।, मैवं सादनमप्यत्र कर्तुं शक्यं ततो न सा ॥'

**भाट्ट**— सौमिकमहावेदिः दर्शत्वेन अङ्गप्रधानार्थेत्युक्तं तृतीये । तदा 'इयति शक्ष्यामहे अस्यां कर्तुम्' इति महावेदिस्तुत्यर्थोऽर्थवाद एव । तेन महावेदिकरणोत्तरं यानीष्टिपश्वादीनि दर्शपूर्णमासविकाराणि सोमाङ्गानि कर्माणि तेषु हविरासादनरूपस्य अङ्गाङ्गस्य महावेदिधर्मकत्वोपदेशात् आतिदेशिकैष्टिकवेदेः तद्वेदिकरणस्य च बाध इत्यविवादमेव । यदा तु अनेनार्थवादिकं गमनागमनादिरूपकर्तृप्रचारमात्रार्थत्वं महावेदेः, तदा कृत्वाचिन्तया किं तादृशकर्मणि हविरासादनार्थैष्टिकवेदिकरणस्य कार्यसिद्ध्यभावात् प्रसङ्गसिद्ध्यनुपपत्तेः ऐष्टिकवेदिकरणेन तां संपाद्य तद्धविरासादनीयम्, तेन हि ऐष्टिकसौमिकवेदी, तद्वेदिकरणं च कर्तव्यं न वेति चिन्तायाम्, कर्तृप्रचारेण हविरासादनस्य महावेद्या वा ऐष्टिकवेदेः तद्वेदिकरणेन वा तद्वेदिकरणयोस्तद्वेद्योर्वा एकत्वप्रत्यभिज्ञापकाभावात् प्रकरणान्तराच्च वेदिकरणभेदप्रतीतेः, सत्यपि च वेदिशब्दमात्रस्य एकत्वे तद्वाच्यानां तत्तत्परिमाणविशिष्टदेशविशेषाणां भिन्नत्वेन तत्तद्वेदिभेदात् भेदः । इति प्राप्ते, सत्यम्, न कर्तृप्रचारेण हविरासादनस्य प्रसङ्गसिद्धिः, तस्य पृथगनुष्ठानावश्यकत्वात् । तथापि महावेदिसंपादकवेदिकरणेनैव ऐष्टिकवेदेरपि सिद्धतया नैष्टिकवेदिकरणस्य पृथगनुष्ठानम् । वेदिर्हि न परिमाणविशिष्टदेशविशेषः, तस्य स्वतःसिद्धत्वेन वेदिकरणजन्यत्वानुपपत्तेः, वेदिकरणसमाख्यया तस्य वेद्युत्पादकत्वावगतेश्च । किन्तु अदृष्टविशेषावच्छिन्नदेशविशेषः, अदृष्टमेव वा । तत्र च विशेष्यभूतस्य देशस्य वेदिकरणाजन्यत्वात् अदृष्टमेव तज्जन्यम् । तच्च वेदिशब्दस्य नानार्थकत्वपरिहाराय एकजातीयमेवेति सौमिकवेदिकरणेन तस्य जातत्वात् अदृष्टविशेषावच्छिन्नाहवनीयप्रत्यग्देशरूपस्य ऐष्टिकवेदिपदार्थस्य सिद्धेः नैष्टिकवेदिकरणानुष्ठानम् ।

न चैवमेकजातीयादृष्टं प्रति वेदिकरणद्वयस्य कारणत्वे व्यभिचारसंकरयोरापत्तिः, तत्तत्क्रत्वपूर्वसाधनीभूतवेदिरूपादृष्टं प्रति तत्तद्वेदिकरणस्य कारणत्वात् दर्शादौ वेदिकरणान्तराप्रसक्तेः । प्रकृते तु अदृष्टमात्रस्यैव लाघवेनातिदिष्टतया तज्जनकवेदिकरणविशेषस्यानतिदेशादिति कौस्तुभे एव संमार्गाधिकरणे क्षुण्णम् ।

**मण्डन**— 'सोमे न वेदिः पृथगिष्टिकर्मणाम् ।'

**शंकर**— 'दैक्षादौ सोमवेदिश्च ।' प्रसज्यते ।

* सौमिकवेदिन्यायः । 'तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात्' (३।७।३।९) इत्यत्र तृतीये 'षट्त्रिंशत्प्रक्रमा प्राची' इत्यादिवाक्यविहिताया वेदेः साङ्गसोमयागार्थत्वेन उक्तायाः अपि औपवसथ्याहे क्रियमाणत्वेन तत्प्राचीनाङ्गार्थत्वाभावात् वेदिकरणोत्तरकालभाव्यग्नीषोमीयपशुयागार्थत्वे च सत्यपि तत्प्रक्रमात् प्रागेव सौमिकाग्निप्रणयनप्रक्रमे अनुष्ठानेन सोमार्थानुष्ठानावधारणात् सौमिकत्वाभिधानम् । तथा च प्रधानार्थयाऽपि (तया वेद्या) अग्नीषोमीयादिषु अतिदेशप्राप्तदार्शपौर्णमासिकवेदिकार्यस्य हविरासादनस्यापि प्रसङ्गात् सिद्धेः दार्शपौर्णमासिकी यजमानसंमिता वेदिः निवर्तते इति द्वादशे वक्ष्यते (१२।१।३।८-९) । अतः तन्त्रिमध्यपाताभावेऽपि तन्त्रमध्यपातनामात्रेण प्रसङ्गो भवति इत्याशयः । सु. पृ. ६३६. * सौमिकवेदिन्यायः । स्वरूपं वेदेर्देशविशेषात्मकत्वात् देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात् सर्वार्थत्वं इति । **वा.** ३।७।४।९ पृ. १०७९.

* **सौमिकव्रतैः** ज्योतिष्टोमीयप्रायणीयादिषु दार्शिकव्रतानां प्रसङ्गसिद्धिः । १२।१।११।२०-२३. **मीको.**

पृ. १८१८ ' ज्योतिष्टोमे प्रायणीयादिषु दार्शिकं व्रतं० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौमिकव्रतादिभक्षणेन** ऐष्टिकशेषभक्षाणां न प्रसङ्गसिद्धिः । १२।१।१५।३१-३२. **मीको.** पृ. २८३१ ' प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकव्रतभक्षेण ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **' सौमेन्द्रं चरुं निर्वपेत्० '** इत्यत्र तु अग्नीषोमीयविध्यन्त एव सोमसंबन्धात् । **बाल.** पृ. १२०.

* **सौमेन्द्रचरुः** यजमानस्यैव सोमवमने न तु ऋत्विजामपि । **वि.** ३।४।१७.

* **सौमेन्द्रश्यामाकचरुः** वैदिकपानव्यापदि प्रायश्चित्तम् । ३।४।१३।३४-३६. **मीको.** पृ. ४३६२ ' सोमेन्द्रश्चरुः यजमानपानव्यापदि ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **' सौम्यं बभ्रुमालभेत '** इत्यत्र लक्षणया यागचोदना भवति , आलभनस्य प्रकृतिलिङ्गस्य सत्त्वात् । **भा.** ११।२।९।३९, * ' सौम्यं बभ्रुम् ' इति पुरोधास्पर्धमानेष्टौ द्वितीयं हविः । ११।४।७।२७, * **' सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः '** इति कर्तॄणां नियमविधिः, नानुवादः । ४।२।९।२३-२४.

* **सौम्यादीनां** काम्यानां पशूनामनुष्ठाने पाठक्रमो न नियामकः काम एव तु तत्र नियामकः । ५।३।१२। ३२-३६. **मीको.** पृ. १४४५ ' काम्येष्टिन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौम्यादिपशुबन्धेषु** विध्यन्तः अग्नीषोमीयपशोः । ८।१।६।१३. **मीको.** पृ. २१४९ ' देक्षन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौम्यचरोर्निर्वापः** हविर्धानशकटाभ्यां भिन्नशकटे, न तु हविर्धानशकटयोरन्यतरस्मिन् । **भा.** १२।१।७।१४-१६, * **सौम्यचरोर्होमः** ज्योतिष्टोमे दार्शपौर्णमासिकैरेव पात्रैः कर्तव्यः, न तु सौमिकैः ग्रहचमसैः । १२।१।४।१०-११.

* **सौम्यचरु-आश्विनद्विकपाले** तार्तीयसवनिकपुरोडाशेषु च हविष्कृदाह्वानं भेदेन न कर्तव्यम् । १२।२।४।१२-१३. ' हविष्कृदाह्वानं तार्तीयसवनिक० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

## ※ सौम्यत्वाष्ट्रवैष्णवानां पुरोडाशानामुपसत्कालिकत्वम् ॥

**प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् । ४।४।३।५॥**

**भाष्यम्--** राजसूये उपसदः प्रकृत्य श्रूयते ' पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन ' इति । तत्र संदेहः किमुपसदङ्गं सौम्यादयः, उत उपसत्कालाः इति । उपसदङ्गमिति ब्रूमः । कुतः ? उपसत्संयोगस्य श्रुतत्वात् । कालविधौ सति लक्षणा स्यात् । तस्मादुपसदङ्गमिति । ननु कालवदङ्गं भविष्यति । तथा सत्युभयमनुगृह्येत । उपसत्संयोगश्च, पुरस्तादिति च कालाभिधानम् । उपसच्छब्दसंयोगादुपसदङ्गता भविष्यति । पुरस्ताच्छब्दसामर्थ्याच्च पूर्वादिषु प्रयोगः इति । उच्यते । विप्रतिषिद्धं ह्युभयम्, न शक्नोत्युपसदामित्येष शब्दः सौम्यादींश्च विशेष्टुमेकस्मिन् वाक्ये, पूर्वादींश्च । भिद्येत हि तथा वाक्यम् । तस्मान्न कालवदङ्गम् ।

**वा--** सौम्येनेति तृतीयानिर्देशादुपसदामपि षष्ठ्यन्तत्वात्प्राधान्यमेव गम्यते सौम्यं प्रति । तस्मादङ्गाङ्गिसंबन्धः । ' कालवदङ्गं भविष्यति ' इति अन्तर्णीताभिप्रायश्चोदयति । यथैवोपसदः श्रुतास्तथैव पुरस्ताच्छब्दः कालं प्रतिपादयति । तस्मात्तेन प्रतिपादिते काले कालार्थः संबन्धः । अङ्गाङ्गिसंबन्धस्य प्रयोजनवत्त्वादितरोऽर्थप्राप्तत्वादनुवादः ।

**अपिवा कालमात्रं स्याददर्शनाद्विशेषस्य । ६ ॥**

**भाष्यम्--** अपिवेति पक्षव्यावृत्तिः । कालमात्रं स्यात् । नाङ्गप्रयोजनसंबन्धः । कुतः ? अदर्शनाद्विशेषस्य । नान्यैः कालाभिधानैरस्य कश्चिद्विशेषो लक्ष्यते ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इत्येवमादिभिः । अत्रापि हि सौम्यादयो विहिताः, उपसदोऽपि । इदमानुपूर्व्यमविहितं तद्विधीयते । तस्मात्कालमात्रमिति ।

**वा--** उत्पद्यमानान्येवैतानि अवगतपारार्थ्यानि यत्पुनरुच्चारणं तत्कालार्थमितरस्यावगतत्वात् ।



**शा--** राजसूये एव ' सौम्यं चरुं बभ्रुर्दक्षिणा ' इति विधाय श्रूयते- ' पुरस्तादुपसदां सौम्येन प्रचरन्ति ' इति । किमयं चरुः उपसदामङ्गं अङ्गप्रयोजनसंबन्धोऽयं उत यागान्तरवत् फलार्थः कालार्थोऽयं संयोग इति । **' तत्र प्रकरणाक्षेपात् सामान्यवचनादयम् । स्वाराज्ये विनियुज्येत साक्षादुपसदङ्गता ॥ ' ' अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी । दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः ॥ अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम् । प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते ॥ तथा च सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः ॥ नह्युत्पत्तिविधयोऽनेकार्थव्यापृतिक्षमाः ॥ '** तस्मात्कालार्थ एव संयोगः इति फलार्थः सौम्यः ।

**सोम--** एवं यागानां प्राधान्ये अयागानामङ्गत्वे स्थापिते यागानामपि न सर्वेषां प्राधान्यमित्याक्षेपात् **संगतिः । सूत्रार्थस्तु--** ' पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन ' इति सौम्यत्वाष्ट्रादेः प्रकृतयागत्वाविशेषेऽपि उपसदङ्गत्वेव । उपसदङ्गत्वपुरस्तात्वोभयविधानस्य वाक्यभेदप्रसङ्गेन प्रतिषिद्धत्वे सति षष्ठीतृतीयाभ्यामङ्गत्वस्यैव न्याय्यत्वादिति ।

**वि--** ' किं पुरस्तादुपसदां सौम्येन प्रचरेदिति । अङ्गाङ्गिभावः कालो वा, वाक्यादाद्यः प्रतीयते ॥ पुरस्तादिति कालोऽत्र भाति कालविधिस्ततः । नाङ्गकस्यापि सौम्यादि प्रधानमितरेष्टिवत् ॥ '

**भाट्ट--** राजसूये एव ' सौम्यश्चरुर्बभ्रुर्दक्षिणा ' इति विधाय ' पुरस्तादुपसदां सौम्येन प्रचरन्ति ' इति श्रुतम् । तत्रापि सत्यप्युपसदां राजसूयान्तर्गतदशपेयाख्यसोमयागाङ्गतया फलवत्त्वे षष्ठ्याः पुरस्ताच्छब्दस्य वैयर्थ्यप्रसङ्गेन ' षष्ठ्यतसर्थप्रत्ययेन ' इति सूत्रानुसाराद्दिग्योगनिमित्तायास्तादर्थ्यपरत्वाभावात् सौम्यस्य तदर्थत्वानुपपत्तेः, वैमृधवत् पदान्तरकल्पनया तदर्थत्वस्य चानुत्पत्तिवाक्यतयाऽनुपपत्तेः, उत्पत्तिवाक्ये च फलापेक्षायां सामान्यविधिनाऽपि कल्प्तेन स्वाराज्यफलार्थत्वस्यैवावसायात्कालार्थ एव संयोगः ।

- वस्तुतस्तु उत्पत्तिवाक्यत्वेऽपि प्रवर्ग्यन्यायेन उपसन्निष्ठफलवत्त्वज्ञानस्य स्वाराज्यवाक्याधीनत्वात्तदर्थत्वमेव युक्तम् । अतः सौम्यः फलप्रयुक्त एव पाठक्रमात्पूर्वपठितकर्मानन्तरकर्तव्यत्वेन प्राप्तोऽतिदेशप्राप्तोपसत्पूर्वं विधीयते । ततश्च न तद्विकृतौ कर्तव्यः । पूर्ववच्चास्यापि तद्विकृतौ कर्तव्यता प्राप्ता अपोद्यते इति **संगतिः ।** तेन संगत्यभावादिदमधिकरणं विदेवनाधिकरणात्पूर्वं द्रष्टव्यमिति तन्त्रसारोक्तिरपास्ता । आचार्योक्तत्वादिति हेतूक्तिस्तु अनुपलब्धिबाधितैव ।

**मण्डन--** ' नोपसदङ्गमगादि हि सौम्यम् । '

**शंकर--** ' सौम्ये नोपसदङ्गता । '

* **सौरैः** षष्ट्या मासैः एकषष्टिः सावनाः, द्विषष्टिश्च पार्वणमासा भवन्ति । **संकर्ष.** ३।१।१८.

* **सौरसंवत्सरदिवसाः** मातुलसंख्याकाः । (म ५, तु ६, ल ३ = ३६५ ) । **संकर्ष.** ३।१।१८.

* **सौराजशब्दः** नाक्षत्रिये धर्मशास्त्रकाराणामभिप्रेतः । **सु.** पृ. ९०३.

* **सौराष्ट्रे** दीक्षा दक्षिणाश्च प्रधानार्था एव नोभयार्थाः । ३।७।५।११-१२. **मीको.** पृ. २१०९ ' दीक्षादक्षिणन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौर्यः** आग्नेयात् उपमितलक्षितप्रापणेन इतिकर्तव्यतां गृह्णाति । आग्नेयस्य च पौर्णमास्याममावास्यायां च विद्यमानत्वात् अगृह्यमाणविशेषत्वात् किं पौर्णमास्या इतिकर्तव्यता प्रवर्तते उतामावास्यायाः । तस्मात् अगृह्यमाणविशेषत्वाद्विकल्पः । **वा.** ८।१।१५।२६. * **सौर्यः** आग्नेयवदनुष्ठेयः इत्यनुमितेन चोदकवाक्येन आग्नेयधर्मातिदेशः । अनुमापकं च लिङ्गं एकदेवतावत्त्वं औषधद्रव्यकत्वं निर्वापश्च । **वि.** ८।१।२. * **सौर्यः** उपमानेन आग्नेयविध्यन्तं गृह्णाति । **टुप्.** १०।१।१।२ पृ. १८००. * **सौर्यश्चरुः** आग्नेयविकारः इत्येतत् समधिगतम् । **भा.** ८।१।१६।२८, १०।१।१०।३४. * **सौर्यश्चरुः** ओदनः स्थाल्यामेव पक्तव्यः न कपालादौ । १०।१।

११।४७–५१. ‘सौर्यचरोः पाकः ०’ इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्यश्चरुः काम्यं कर्म । वि. ६।३।२. * सौर्यश्चरुः समुदायिविकारः न समुदायविकारः । भा. ८।१।१५।२६, * सौर्यश्चरुः हविर्विकारः न कपालविकारः । ओदनेन हविर्विक्रियते न स्थाल्या हविर्विक्रियते । १०।१।१०।३४–४४, * सौर्यः विकृतित्वात् पूर्वत्राभिहितं विध्यन्तमपेक्षते । १०।१।१६।२८. * ‘सौर्यं चरुं’ इत्यादौ सूर्यादिदेवतायाः प्रतिनिधिः नास्ति । वि. ६।३।५, * ‘सौर्यं चरुं निर्वपेत्’ अत्र चरुशब्दस्य ओदन इत्यर्थो न तु स्थाली । ‘आदित्यः प्रायणीयश्चरुः’ इत्यत्र ‘अदितिमोदनेन’ इति वाक्यशेषेणार्थनिर्णयात् । अनवस्त्रावितान्तरूष्मपक्वौदनः चरुशब्दार्थः । ( शा., सोम. १।३।५ ) । याज्ञिकाः अनवस्त्रावितान्तरूष्मपाके जीवतण्डुले विशदसिद्धे ओदने चरुशब्दं प्रयुञ्जते । १०।१।१०. * ‘सौर्यं चरुं निर्वपेत्’ आग्नेयवत् । भा. ८।१।२।२. * ‘सौर्यं चरुं निर्वपेत्’ इत्यादीनां विकृतीनां सद्यस्कालत्वमेव न द्व्यहकालत्वम् । वि. ५।४।७. * ‘सौर्यं चरुं निर्वपेत्’ इत्यादौ यत्र आत्मनेपदं नास्ति तत्रापि आधानगतात्मनेपदादेव फलस्य कर्तृगामित्वसिद्धिः । सोम. ६।२।२. * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ अत्र अधिकस्य स्वर्गस्य कल्पने न्यूनस्य अधिकार्थविषयत्वकल्पने वाक्यभेदः । बाल. पृ. ३. * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ अत्र प्रधानविधेरपेक्षितः शेषोऽङ्गकलापः वैदिक एव दर्शपूर्णमासगतो ग्राह्यः, न तु स्थालीपाकगतो लौकिकः । वि. ७।४।२. * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ इति अनारभ्य श्रूयते । दर्शपूर्णमासयोश्च ‘चतुरो मुष्टीन् निर्वपति’ इति श्रूयते । तत्र दार्शपौर्णमासिके निर्वापे गुणविधिः सौर्यचरुनिर्वापः उत तत्रैव निर्वापान्तरं किंवा कर्मान्तरमेवेति विचारे कर्मान्तरमेवेति निर्णयः । भा. २।३।५।१२–१५, * ‘सौर्यं च निर्वपेद् ब्रह्मवर्चसकामः’ इत्यस्य फलं इहैव लोके सति तु प्रतिबन्धे जन्मान्तरे । ४।३।११।२७–२८ वर्णकं २, * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ इत्यादीनां काम्यानां कर्मणां काम एव फलं न स्वर्गोऽपि । ४।३।९।२०–२४. * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ इत्यादावनुमानेनावघातादिधर्माणामतिदेशः । ‘यागः उपकरणापेक्षः, करणत्वात्, भोजनवत् दर्शपूर्णमासवच्च’ इत्यनुमानम् । वि. ७।४।१. * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ इति । तत्र कथमिति विध्यन्तापेक्षायां निर्वपतिशब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते । तत्रापि एकदेवतात्वेन वा ओषधिना वाऽसाधारणेन लिङ्गेन आग्नेयविध्यन्तो नियम्यते । भा. ८।१।२।२, * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ तत्र अयाट्–उज्जित्यादिनिगमेषु सूर्य शब्द एव वक्तव्यः । १०।४।१३।२५, * ‘सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः’ तत्र दर्शपूर्णमासाभ्यां मन्त्रद्वयेनाभिमर्शनद्वयं प्राप्तम् । तयोर्विकल्पेन प्रवृत्तिः । ८।१।१५।२६, * ‘सौर्यं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्’ । १०।७।१९।६४, * ‘सौर्यं निर्वपेत्’ इति सूर्यसंबन्धं कुर्यात् द्रव्यस्य इति विवक्षिते निर्वपणाश्रय एव प्रयोगः शब्देन निर्दिश्यते इति सनिर्वपणकात् प्रयोगात् अनेन निर्वपणशब्देन ऐष्टिको विध्यन्तो नियम्यते । १०।३।१४।५६, * सौर्ये अनुवाक्या ‘उदुत्यं जातवेदसं’ इति, तत्रैकत्वश्रवणम् । ८।१।१६।३१. * सौर्ये आग्नेयधर्मा अतिदिश्यन्ते । टुप्. ९।१।१।१ पृ. १६३७. * सौर्ये कर्मणि दार्शपौर्णमासिको विध्यन्तः । सन्ति तु तत्राग्नेयादीनि कर्माणि । तत्र आग्नेयस्यैव सौर्ये विध्यन्तो न तु यस्य कस्यचित् । भा. ८।१।१६।२७–३१, * सौर्ये कर्मणि प्रयाजानां दर्शनं ‘प्रयाजे प्रयाजे कृष्णलं जुहोति’ इति । ७।१।१।६, * सौर्ये चरौ ‘अगन्म ब्रह्मवर्चसं, सूर्यस्याहमुज्जितिमनूज्जेषम्’ इत्यूहः । ९।१।३।४–५.

**सौर्ये चरौ अवज्वलनस्य बाधः ॥**

**तथाऽवज्वलनम् । १०।१।१९।६०॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते ‘दर्भपिञ्जूलैरवज्वलयति’ इति । सौर्ये चरौ संदेहः किं तत्कर्तव्यं नेति । किं प्राप्तम् ? प्रकृतिवद्वचनात् कर्तव्यम् । उपरिपाकार्थत्वान्निवर्तते इति ।

**वि**— ज्वाला दर्भपिञ्जूलैः प्रज्वालनम् ।

* सौर्ये चरौ आग्नेयस्यैव धर्माणामतिदेशः । ८।१।१६।२७–३१. मीको. पृ. २३५ ‘अतिदेशः सौर्ये चरौ आग्नेयस्यैव धर्माणाम्’ इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्ये चरौ आग्नेयद्वयधर्माणामतिदेशः विकल्पेन । ८।१।१५।२६. मीको. पृ. २३३ ‘अतिदेशः सौर्ये चरौ आग्नेय०’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सौर्ये चरौ उपधानस्य बाधः ॥**

**उपधानं च तादर्थ्यात् । १०।१।१६।५७॥**

**भाष्यम्**— चरावेव कपालोपधानं प्रति संदेहः, कर्तव्यं, नेति । प्रकृतिवद्वचनात्प्राप्तम् । अधःपाकार्थत्वान्निवर्तते इति ।

**शा**— उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्यां कुर्वते । न च स्थाली कपालकार्ये वर्तते, उदकधारणार्थत्वात् । अतः उपधानस्य व्यावृत्तिः ( चरौ ) ।

**सोम**— उपधानं अङ्गारस्योपरि ‘ध्रुवमसि’ इत्यादिमन्त्रैः कपालस्थापनम् । तत् चरौ न कर्तव्यम्, तस्याधःपाकार्थत्वात् ।

**मण्डन**— ‘तथोपधानं न विधेयमत्र ।’ १८.

तथा संतापनवत् । अत्र सौर्ये चरौ ।

**शंकर**— ‘सौर्ये बाधः कपालानाम् ।’ १३.

**सौर्ये चरौ पेषणस्य बाधः ॥**

**तस्मिन् पेषणमनर्थलोपात् स्यात् । १०।१।१२।५२ ॥**

**भाष्यम्**— एवं वा । पृथगधिकरणानि पेषणादीनि । अस्ति चरुः ‘सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः’ इति । ओदनेन हविर्विक्रियते इत्येतत्समधिगतम् । तत्रैतत्संदिह्यते किं चरौ पेषणं कर्तव्यं, नेति । किं प्राप्तम् ? तस्मिन् पेषणमर्थलोपात् स्यात् । शक्यते हि तण्डुलेषु पेषणं कर्तुम् ।

**अक्रिया वाऽपूपहेतुत्वात् । ५३ ॥**

**भाष्यम्**— यद्यपि शक्यते, तथाऽपि न क्रियते । अपूपः पेषणेन विना न निर्वर्तते । ओदनस्तु विनैव पेषणेन भवति । कामं पेषणेन व्याहन्यते, पिष्टकं यवागूर्वा स्यात् खलिर्वा । तस्मात् चरोः पेषणं निवर्तेत ।

**वि**— ‘पेषणं यवनं वापस्तापश्चोपहितिः प्रथा । मार्जनाभ्यूहनज्वालास्तथा व्युद्धृत्यसादनम् ॥ एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः । अपूपस्यैव योग्यानीत्येतत् सूत्रैर्निरूपितम् ॥’ पेषणं चुर्णनम् ।

**सौर्ये चरौ प्रथन–श्लक्ष्णीकरणयोर्बाधः ॥**

**पृथुश्लक्ष्णे वाऽनपूपत्वात् ।१०।१।१७।५८॥**

**भाष्यम्**— पृथुश्लक्ष्णे च प्रति चरोरेव संदेहः । प्रकृतौ श्रूयते ‘उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति । सं ते तन्वा तनूः सृज्यतामिति त्रिः परिमार्ष्टि’ तदुभयं चरौ कर्तव्यम्, नेति । चोदकानुग्रहाय कर्तव्यमिति प्राप्ते, अनपूपत्वात्तन्निवर्तते ।

**सोम**— प्रथनं सर्वेषु कपालेषु अभिव्याप्य स्थापनरूपम्, श्लक्ष्णीकरणं ‘त्वचं गृहणीष्व’ इति अद्भिः श्लक्ष्णीकरणरूपं न कर्तव्यम्, उभयोः अपि अपूपार्थत्वात् ।

**वि**— प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणम् । मार्जनं श्लक्ष्णीकरणम् ।

**सौर्ये चरौ भस्मसहितानामङ्गाराणां अध्यारोपस्य बाधः ॥**

**अभ्यूहश्चोपरिपाकार्थत्वात् । १०।१।१८।५९॥**

**भाष्यम्**— प्रकृतौ श्रूयते ‘वेदेन भस्मनाऽङ्गारानभ्यूहति’ इति । तत्सौर्ये चरौ कर्तव्यम्, नेति संदेहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्ते, ब्रूमः । उपरि पाकार्थं हि तत्पुरोडाशस्यावकल्पते, न चरोरिति निवर्तते ।

**सोम**— अभ्यूहनं पुरोडाशस्योपरि अङ्गाराणां स्थापनम्, उपरिपाकार्थत्वात् ।

* सौर्ये चरौ वैदिक्या एव इतिकर्तव्यताया अतिदेशः । विध्यन्ताधिकरणम् । भा. ७।४।२।२–१२. * सौर्ये चरौ वैदिकेतिकर्तव्यताग्रहणे ‘प्रयाजे प्रयाजे कृष्णलं जुहोति’ इति कृष्णलहोमविधानाय प्रयाजानुवादो लिङ्गम् । वि. ७।४।२.

**सौर्ये चरौ व्युद्धरणस्य बाधः ॥**

**व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतत्वात् । १०।१।२०।६१ ॥**

**भाष्यम्--** प्रकृतौ श्रूयते 'अन्तर्वेद्यां हवींष्यासादयति' इति । तत् प्रकृतौ कपालेभ्यो व्युद्धृत्याऽऽसादनं क्रियते । सौर्ये चरौ संदेहः किं स्थाल्या व्युत्थाप्य चरुरासादयितव्य उत व्युत्थानं न कर्तव्यमिति । प्रकृतौ कृतत्वाच्चरावपि कर्तव्यमिति प्राप्तम् । तदुच्यते । व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतित्वात् । प्रकृतौ न श्रूयते, कपालेभ्यो व्युद्धृत्याऽऽसादयितव्यः पुरोडाश इति । अर्थात्स व्युद्भ्रियते । यच्चार्थात्कृतं न स चोदनार्थः । तस्माच्चरौ व्युद्धरणं न कर्तव्यम् । अपि चोद्धरणे क्रियमाणे कपित्थवत् परिशेष्योद्भ्रियेत । तत्र पात्रभेदः स्यात् । तस्मात् व्युद्धृत्याऽऽसादनं चरौ न कर्तव्यमिति ।

**सोम--** व्युद्धृत्यासादनं कपालेषु श्रपितस्य पुरोडाशस्य तेभ्य उद्धृत्य बर्हिषि यदासादनं तन्न कर्तव्यम्, प्रकृतावश्रुतत्वात् । यद्यपि व्युद्धरणं न कर्तव्यं आसादनं च न कर्तव्यमिति सूत्रे प्रतीयते तथापि अश्रुतत्वादिति हेतुपर्यालोचनया व्युद्धरणमेव न कर्तव्यं तस्यार्थिकत्वेन प्रकृतौ श्रुतत्वाभावात् । आसादनं तु 'अन्तर्वेद्यामासादयति' इति श्रुतत्वात् कर्तव्यमेवेति ध्येयम् ।

* सौर्ये चरौ श्रुतमेव फलम्, नेतरत्कल्पनीयम् । ४।३।९।२०–२४. 'स्ववाक्यश्रुतफलानां कर्मणां न स्वर्गः फलम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**सौर्ये चरौ संयवनस्य बाधः ॥**

**पिण्डार्थत्वाच्च संयवनम् । १०।१।१३।५४ ॥**

**भाष्यम्--** चरुरेवोदाहरणम् । प्रकृतौ श्रूयते 'प्रणीताभिर्हवींषि संयौति' इति । तदिह चरौ संयवनं कर्तव्यम्, नेति । कर्तव्यम् । शक्यते हि कर्तुमिति । एवं प्राप्ते, ब्रूमः । शक्यमपि न क्रियते । पिण्डार्थं हि तत् । पिण्डेन चापूपस्य प्रयोजनम्, न चरोः ।

**सोम--** 'प्रणीताभिः संयौति' इति संयवनं प्रणीताभिः संयोजनं न कर्तव्यम्, पिण्डोत्पत्त्यर्थत्वात् । पिण्डाश्च अपूपे एवोपयुज्यन्ते न त्वोदने ।

**वि--** यवनं पिष्टस्योदकमिश्रणम् ।

**सौर्ये चरौ संवपनस्य बाधः ॥**

**संवपनं च तादर्थ्यात् । १०।१।१४।५५ ॥**

**भाष्यम्--** सौर्य एव चरुरुदाहरणम् । प्रकृतौ श्रूयते 'सवितृप्रसूत इत्येवैनं देवताभिः संवपति' इति । इह चरौ संदेहः संवपनं कर्तव्यम्, नेति । किं प्राप्तम्? शक्यत्वाच्चोदकानुग्रहाय कर्तव्यमिति । एवं प्राप्ते, ब्रूमः । संयवितुं हि तत्प्रकृतौ क्रियते, न चरोः संवप्तव्येन प्रयोजनम् ।

**सोम--** 'पवित्रवत्यां पात्र्यां पिष्टानि संवपति' इति पात्र्यां यत्संवपनं तदपि न कर्तव्यम्, संवपनस्य संयवनार्थत्वात् तस्यैवाभावात् ।

**वि—** वापः उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः ।

**सौर्ये चरौ संतापनस्य बाधः ॥**

**संतापनमधःश्रपणात् । १०।१।१५।५६॥**

**भाष्यम्—** चरावेव च संदेहः । प्रकृतौ संतापनं कपालानामस्ति 'वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम्' इति । चरौ संतापनं कर्तव्यम्, नेति संदेहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्तम् । अधःपाकार्थं हि तत् । तस्मान्न चरौ चोदकः प्रापयति ।

**सोम—** 'भृगूणामङ्गिरसां तपसा तप्यध्वम्' इत्यनेन मन्त्रेण कपालानां अङ्गारैः संतापनमपि न कर्तव्यम्, तस्य अधःश्रपणार्थत्वेन पुराडाशे एव तदुपयोगात्, ओदने अधःश्रपणाभावात् ।

**वि--** तापः कपालानां अङ्गारैः प्रतापनम् ।

* सौर्ये चरौ 'सूर्याय जुष्टं' इति य ऊहांशस्तस्य न मन्त्रत्वम् । एवमन्यत्रापि । वि. २।१।९.

* **सौर्यादीनि** क्रत्वन्तराणि । क्रत्वर्था चारम्भणीया । इति विकृत्यारम्भे आरम्भणीया पृथक् कर्तव्या । वि. १२।२।६. * सौर्यादीनि वैतानिकेऽग्नौ प्रवर्तन्ते । शा. ७।४।२. * **सौर्यादिः** आग्नेयस्यैव विकृतिः न तु आग्नेयादित्रयसंघस्य । वि. ९।२।१८. * **सौर्यादीनां** काम्यानामनुष्ठाने पाठक्रमो न नियामकः । यथाकाममनुष्ठानम् । वृ. ५।३।१२. * आरादुपकारकेषु भेदेन क्रियमाणेषु **सौर्यादीनामिव** तन्त्रभेदः स्यात् । टुप्. ५।२।१।१. * **सौर्यादौ** इतिकर्तव्यताया अतिदेशः । ७।४।१।१. **मीको. पृ. २३१** 'अतिदेशः सौर्यादौ इतिकर्तव्यतायाः' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्यादौ कर्मणि नियतादेवैकस्मात् कर्मणो धर्मातिदेशः । यतः कुतश्चिदित्यव्यवस्था तु नास्ति । वि. ८।१।१, * सौर्यादौ दर्शपूर्णमासेष्टिसंबद्धानि--फलं स्वर्गादि, नियमो यावज्जीवत्वादि, कर्ता स्वर्गकामः, संघः आग्नेयादीनां साहित्यं च इत्येतेषामतिदेशो नास्ति, प्रधानस्यातिदेशात् । ८।१।१३, * सौर्यादौ दर्शपूर्णमासगताग्नेयस्यैव विध्यन्तस्यातिदेशः, एकदेवतत्वात् औषधद्रव्यकत्वाच्च । न तु अग्नीषोमीयैन्द्राग्नयोः । ८।१।१६, * सौर्यादौ दर्शपूर्णमासगतपुरुषार्थगोदोहनादेः नातिदेशः । क्रत्वङ्गमेव तु अतिदिश्यते । ८।१।१४, * सौर्यादौ दर्शपूर्णमासस्थपार्वणहोमयोः नातिदेशः । पार्वणयोः दर्शाद्यर्थत्वात्, सौर्यादेश्च संघविकारत्वाभावात् । ९।२।१८. * सौर्यादौ दार्शपौर्णमासिकस्य फल–नियम–कर्तृ–समुदायस्य नातिदेशः । ८।१।१३। २०–२२. **मीको. पृ २५०** 'अतिदेशो न फल–नियम०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्यादौ धर्मोपदेशाभावादतिदेशेन धर्मप्राप्तिः । वि. ७।१।१. * सौर्यादौ वैदिकस्यैव विध्यन्तस्यातिदेशः । ७।४।२। २–१२. **मीको. पृ. ३५६८** 'विध्यन्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सौर्यादिषु** अविहितेतिकर्तव्यताकेषु दर्शपूर्णमासेतिकर्तव्यताया अतिदेशः । भा. ७।४।१।१. * सौर्यादिषु क्रतुपृथक्त्वेन चोदितेषु पृथगेव फलसंबन्धो भवति । भा. ११।१।२।५ । युक्तं यत् क्रतुषु फलभेदः । शब्देन तत्र भिन्नानि फलान्युक्तानि । ११।१।२।६. * सौर्यादिषु दर्शपूर्णमासविकृतिषु आरम्भणीयायाः पुनरनुष्ठानम् । १२।२।६।१९–२१. **मीको. पृ. ९७६** 'आरम्भणीयायाः दर्शपूर्णमासविकृतिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्यादिषु पार्वणहोमाननुष्ठानम् । वि. ९।२।१८. * सौर्यादिषु यथा सर्वं गुणकाण्डं एकस्मिन्नपवर्ज्यते तथा प्राजापत्यपशुषु प्राप्येत । भा. ५।१।५।९.

* **सौर्यादिकर्मसु** विप्रतिपन्नदेवताकेषु उत्तमप्रयाजे प्राकृतानि देवतापदानि सिद्धान्ते निवर्तन्ते । भा. १०।१।७।१५.

* **सौर्यादियागे** प्रथमाज्यभागे अग्निर्न निवर्तते, आज्यभागयोरारादुपकारकत्वादिष्टौ । त्रि. १०।१।८.

* **सौर्यादिविकृतयः** सद्यस्कालाः । वि. ५।४।७. * **सौर्यादिविकृतौ** अतिदिष्टे मन्त्रे वैकृतद्रव्यादिवाचकपदस्य ऊहः । ९।३।१।१–२, ४–८. **मीको. पृ. ३११८** 'मन्त्रोहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * सौर्यादिविकृतौ आवाहनादिनिगमेषु विधिगतशब्देनैव देवतानां प्रकाशनम् । १०।४।१३।२५. **मीको. पृ. २१२९** 'देवतानां विधिगतशब्देनैव०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **सौर्यादिविकृतिषु** उत्तमप्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरित्यागेन वैकृतदेवतास्वीकारः कर्तव्यः । वि. १०।१।७, * सौर्यादिविकृतिषु निर्वापमन्त्रे 'अग्नये जुष्टं' इत्यत्र 'सूर्याय जुष्टं' 'इन्द्राग्निभ्यां जुष्टं' इत्यादिरूहः कर्तव्यः, कर्मसमवेतदेवतावाचकत्वात् । ९।१।१३, * सौर्यादिविकृतिषु सूर्यादिपदं यागे उपयुक्तम्, निगमेषु तु केनापि पर्यायेण देवताभिधानं कर्तव्यमिति चेन्न । चोदकप्राप्तनिगमेष्वपि वैधेनैव सूर्यादिपदेन देवताभिधानं कर्तव्यं न पर्यायेण । १०।४।१५.

* समाने औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन **सौर्यकर्मणि** आग्नेयविध्यन्तः (न अग्नीषोमीयविध्यन्तः)। भा. ८।४।५।१२.

**सौर्यचरोः पाकः स्थाल्यामेव ॥**

**स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् । १०।१।११।४७॥**

**भाष्यम्—** अस्ति चरुः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति । अत्रैषोऽर्थः समधिगतः ओदनेन हविर्विक्रियते इति । स इदानीमोदनः क्व पक्तव्य इति भवति संशयः । किं तावत्प्राप्तम्? न नियमः स्यात्

कपालेष्वेवेति । अर्थप्राप्ते यस्मिन् कस्मिंश्चित् द्रव्ये पच्येत । यदि हि कपालं चोदकेन प्राप्येत, कपालवच्चोदकेन संख्याऽपि प्राप्येत । नहि प्रकृतौ कपालेषु श्रपयितव्यमित्येवं चोदना । किं तर्हि ? अष्टाकपालो भवतीति । संख्यायां प्राप्यमाणायामष्टाकपालता अस्य चोदिता भवति, नान्यथा । न चैवं संख्या प्राप्यते । नहि बहुषु कपालेषु पुरोडाशवत् ओदनः पक्तुं शक्यः । केवले च कपाले प्राप्यमाणे याऽसौ अष्टाकपालता चोदिता, सा नैव प्राप्येत । अतो यस्मिन् कस्मिंश्चिदर्थप्राप्ते द्रव्ये पक्तव्यश्चरुरिति । एवं प्राप्ते, ब्रूमः । 'स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्' । स एष चरुः कपाले एव स्यात्, एवं प्रकृतिवच्छन्दः अनुगृहीतो भवति । न चान्यत् किञ्चित् द्रव्यमाम्नायते । तस्मान्नियमः ।

**संख्या चापि कपालवत् । ४८ ॥**

**भाष्यम्**-- इति यदुक्तम्, तत् परिहर्तव्यम् ।

**एकस्मिन् वा विप्रतिषेधात् । ४९ ॥**

**भाष्यम्**-- यदि बहुषु कपालेषु न शक्यते चरुः पक्तुम्, विप्रतिषेधादेकस्मिन् पक्तव्यः । यदेतदुच्यते, 'अष्टाकपालो भवति' इति एतदुक्तं भवति अष्टसु कपालेषु श्रपयितव्य इति । तन्न । यद्यष्टत्वं विरोधान्न प्राप्यते, तत्कपालमविरोधात्प्राप्येत ।

**न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् । ५० ॥**

**भाष्यम्**-- न वा कपालेषु पक्तव्यः । कुतः ? अर्थान्तरसंयोगात् । अपूपपाके यत् कपालमुपादीयते, तद्गतेनोष्मणाऽपूपस्य निर्वर्तकः पाको यथा स्यादिति । तत्र कपालं चरोरुपादीयमानं उदकधारणार्थं भवति । यदूष्मणोदकगतेन ओदनपाको निर्वर्त्यते, स ओदनपाको न कपालगतेन ऊष्मणा निर्वर्तते । तत्रोदकधारणार्थं कपालमुपादीयमानं न प्राकृतकार्यं स्यादिति चोदको नैवानुगृह्यते । तस्मादर्थात्पात्रलाभः स्यादिति । तदविशेषान्न नियम्येत, किं तदिति ।

**चरौ वा लिङ्गदर्शनात् । ५१ ॥**

**भाष्यम्**-- स्थाल्यां वा श्रपणं क्रियेत । लिङ्गं हि भवति । यासु स्थालीषु सोमाः स्युस्ते चरवः स्युरिति । सोमस्थालीषु चरुं पक्तव्यं ब्रुवन् विशेषेण स्थालीं चरुसाधनार्थां दर्शयति । आह, दर्शनमिदं व्यपदिश्यते प्राप्तिरुच्यतामिति । अत्रोच्यते । स्थाल्यां स चरुसंज्ञकः पाको निर्वर्त्यते, न कटाहे, कपाले वा । तस्मात् स्थाल्यां चरुः पक्तव्य इति ।

किं भवति प्रयोजनम् ? यदि कपालविकारश्चरुः, यदि वौदनेन हविर्विक्रियते इति, यदि कपालविकारः, तस्मिन् पेषणमनर्थलोपात् कर्तव्यम् । अथ ओदनेन हविर्विक्रियते, अक्रिया पेषणस्य, अपूपहेतुत्वात् । पिण्डार्थत्वाच्च संयवनं पूर्वपक्षे कर्तव्यम्, न सिद्धान्ते । संवपनमप्येवम् । संतापनं चाधस्तात् श्रपणार्थं पूर्वपक्षे कर्तव्यम्, न सिद्धान्ते । उपधानं चैवमेव । पृथुश्लक्ष्णे च पूर्वपक्षे कर्तव्ये, न सिद्धान्ते । अध्यूहश्चाङ्गाराणां पूर्वपक्षे कर्तव्यः, न सिद्धान्ते, उपरिपाकार्थत्वात् । अवज्वलनमप्येवमेव । व्युद्धृत्यासादनं पूर्वपक्षे अर्थात्कर्तव्यम् । अर्थो नास्तीति न सिद्धान्ते । अर्थात्कृतं हि व्युद्धृत्यासादनं न शब्दप्राप्तम् । अर्थाच्च कृतं न चोदकः प्रापयति ।

**शा**— स एष चरुः किं कपाले पक्तव्यः उत यत्र क्वचित् उत स्थाल्यां इति संशयः । चोदकप्राप्तेः कपाले स्यात् । ननु अष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति । न च चरुः अष्टसु कपालेषु शक्यः पक्तुम् । सत्यं अष्टत्वं प्राप्यते, तत्तु असंभवान्निवर्तते, न तु तन्निवृत्त्या कपालमपि निवर्तितुं अर्हति । तस्मात्कपाले स्यात् । **नैवम्** । अप्राकृतकार्यत्वात् । प्रकृतौ हि कपालगतोष्मणा हविःपाको निर्वर्तते, चरुस्तु उदकगतोष्मणा पक्तव्यः, तत्र कपालं उदकधारणार्थं उपादीयमानं अप्राकृतकार्यं स्यादिति न चोदकानुग्रहः । तस्मात् यत्र क्वचित् पक्तव्यः । इति प्राप्ते, ब्रूमः । स्थाल्यामेव स्यात् तस्यां हि चरुत्वनिमित्तः पाको निर्वर्तते नान्यत्र, तस्मात् स्थाल्यां स्यात् । यद्योदनवचने अपि चरुशब्दे स्थाल्यामेव पाकः ततः पूर्वाधिकरणे स्थालीकपालविकार इति पक्षस्य ओदनेन हविः विक्रियते इति पक्षस्य च



कोऽनुष्ठाने विशेषः ? उभयथाऽपि स्थाल्यां पक्वस्य हविष्ट्वात् इत्याशङ्क्य (अग्रिमाधिकरणेन प्रयोजनमुच्यते इति शेषः ) ।

**सोम**— पुरोडाशकार्ये चरोरिव कपालकार्ये अन्यस्याविधानात् न तन्निवृत्तिः इत्युत्थितेः संगतिः । **सूत्रार्थस्तु**— स पाकः प्रकृतिप्राप्त्या कपाले एव स्यात् इति ।

**वि**-- 'चरुः कपाले पक्तव्यः क्वापि वाऽप्युचितेऽथवा । , कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित् ॥ , स्थाल्यां चरुत्वयोग्यत्वात् कटाहे योग्यता नहि । चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्तनम् ॥ पेषणं यवनं वापस्तापश्चोपहितिः प्रथा । मार्जनाध्यूहनज्वालास्तथा व्युद्धृत्यसादनम् ॥ एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः । अपूपस्यैव योग्यानीत्येतत् सूत्रैर्निरूपितम् ॥'

**भाट्टमन्थस्तु** पूर्वाधिकरणे एव गतः । स च 'चरुशब्दवाच्येनौदनेन प्राकृतहविषो बाधः' (मीको. पृ. १६८४ ) इत्यत्र द्रष्टव्यः ।

**मण्डन**-- 'स्थाल्यां चरोः पाकविधिं प्रकुर्यात् ।' १३.

**शंकर**-- 'सौर्ये बाधः कपालानाम् ।' १३. 'पेषणादि च बाध्यते ।' १४.

* **सौर्ययागे** चरुशब्दवाच्येनौदनेन प्राकृतहविषो बाधः । १०।१।१०।३६-४६. **मीको.** पृ. १६८४ 'चरुशब्दवाच्येनौदनेन सौर्ययागे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौवर्णराजताभ्यां** अश्वमेधोपदिष्टग्रहाभ्यां अतिदिष्टैन्द्रवायवादिग्रहाणां समुच्चयः । **मीको.** पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **सौविष्टकृतैः** अवदानैः सौविष्टकृतानां ( दैवतैः दैवतानां, ऐडैश्च ऐडानां ) एकदेवताकपशुगणे अनुसमयः, वाजपेये प्राजापत्यपशु[ष] । **भा.** ५।२।६। १०-१२.

* **सौविष्टकृतव्यङ्गेषु** हविःप्रत्यभिघारणं अस्त्येव । **संकर्ष.** २।२।१७.

* **स्कन्दनादिनिमित्तकहोमानां** दर्शपूर्णमासमात्राङ्गता । ६।५।१५।४५-४७. **मीको.** पृ. २०६९ 'दर्शपूर्णमासाङ्गं भेदनादिनिमित्तकहोमाः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्कन्दनभेदनादौ** एकदेशस्य जातेऽपि प्रायश्चित्तं दर्शपूर्णमासयोः । ६।४।४।१०-१६. **मीको.** पृ. २०३९ 'दर्शपूर्णमासयोः कपालादेः एकदेश०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्कन्दनहोमादीनां** स्कन्दनादिनिमित्तत्वात् न विकल्पः । किंतु समुच्चयः 'स्कन्ने जुहोति' 'भिन्ने जुहोति' इति । **वि.** १२।३।६.

* **स्कन्धघनशब्दः** बौद्धपरिभाषया विज्ञानरूपवस्तुमात्रपरः । **वैद्यनाथः** . १।१।५।५ पृ. ६५.

* **स्कन्धोग्रीवी** बृहती । पादेषु अक्षराणि ८।१२। ८।८ । उदा० 'ईशानमिद्' ( ऋसं. १०।१३२।१)। **के.**

* 'स्कन्ने जुहोति' इति श्रूयते । तत्र स्कन्ने स्कन्ने होतव्यमिति सिद्धान्तः । **भा.** ६।२।९।२९. * 'स्कन्ने जुहोति' इति स्कन्दनहोमः निमित्तावृत्तौ आवर्तनीयः । दर्शादौ हि आज्यादिहविःस्कन्दनादौ प्रायश्चित्तार्थं होमो विहितः । **वि.** ६।२।९.

**स्तनन्धयन्यायः** । यथा स्तनन्धयः शिशुः आगलं स्तनं पाययित्वा मृद्वादिगुणयोगिनि तल्पे शायितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितः सन् सुखमूर्तिरेवावतिष्ठते, तथा ब्रह्मानन्दैकतत्परः पुरुषो ब्रह्मानन्दैकभाग्भवतीति । **साहस्री.** ३३६.

* '**स्तनयित्नौ** नाध्येयम्' अध्ययनधर्मोऽयं न कर्मणि प्रयोगधर्मः । **भा.** १२।३।७।१८-१९.

* **स्तम्बयजुर्हरणम्** । स्तम्बेन तृणमूलेन सह पांसूनां वेदेः पूर्वार्धात् बहिर्हरणम् । **सत्याश्रौ.** १।६। ६२-८५.

* **स्तरणं** अनतिदृश्यं वेद्यादेः पुरुषार्थमेव । **भा.** ४।१।२।२ वर्णकं २, * **स्तरणं** देशसंस्कारकम् । १२।१।२०।४४, * **स्तरणे** प्रयोजनं वेद्याच्छादनम् । ११।४।१४।४४.

* **स्तरणमन्त्रः** 'ऊर्णाम्रदसं त्वा स्तृणामि' इति। **भा.** ११।४।१४।४४, १२।१।२०।४४. * **स्तरणमन्त्रस्य**, आतिथ्याबर्हिषः अग्नीषोमीयार्थं स्तरणकाले आवृत्तिः कर्तव्या ज्योतिष्टोमे। १२।१।२०।४५. **मीको.** पृ. ११२ 'अग्नीषोमीये पशौ आतिथ्याबर्हिषः॰' इत्यत्र अधिकरणं द्रष्टव्यम्। * स्तरणमन्त्रस्य वेदिस्तरणे प्रतिस्तरणं आवृत्तिः दर्शपूर्णमासयोः। **भा.** ११।४।१४।४४-४५. * **स्तरणमन्त्रे** (बर्हिस्तरणमन्त्रे) हरितपदस्थाने रक्तपदस्योहो मौद्गे चरौ। ९।३।२।३. **मीको.** पृ. १२२६ 'ऊहः रक्तपदस्य हरितपदस्थाने॰' इत्यत्र अधिकरण द्रष्टव्यम्।

* **स्तवः** साम्नैव। ९।२।८।२९-३०. **मीको.** पृ. 'साम्नैव स्तोतव्यम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **स्तावकेन** ब्राह्मणादिसंयुक्तस्य विधायकत्वं न निवार्यते तदानुगुण्यात्। वा. २।२।३।४ पृ. ५९३.

* **स्तिभिनी**- न्यग्रोधस्तिभिनी- वटफलानि। ('जटाग्राणि' इति तु केवलानन्दमतम्)। वि. ३।५।१९.

### ※ स्तुतशस्त्रयोस्तु संस्कारो याज्यावत् देवताऽभिधानत्वात्। २।१।५।१३॥

'प्रउग शंसति' 'आज्यैः स्तुवते' इति स्तवनं शंसनं च श्रूयते। तत् किं देवतां प्रति गुणभूतं उत प्रधानं इति विचारे पूर्वपक्षमाह। तुशब्दः पूर्वोक्तसंमार्गादिवैषम्यमाह। स्तुतशस्त्रयोः स्तोत्रशस्त्रयोः फल देवतासु संस्कारः। तद्गतप्रगीताप्रगीतमन्त्राणां देवताभिधानत्वात् देवतागुणवर्णनपरत्वात्। याज्यावत् याज्यामन्त्राणां गुणप्रकाशद्वारा गुणिप्रकाशनपरत्वं तद्वत्। तस्मात् स्तोत्रशस्त्रे देवतां प्रति गुणभूते।

### अर्थेन त्वपकृष्येत देवतानामचोदनाऽर्थस्य गुणभूतत्वात्। १४॥

स्तोत्रशस्त्रे देवतां प्रति गुणभूते इति उक्ते पूर्वपक्षे दूषणमाह। तुशब्दः पूर्वपक्षस्य अनभिमतत्वं द्योतयति। यदि स्तोत्रशस्त्रे देवतासंस्कारकर्मणी स्यातां तर्हि अर्थस्य इन्द्रादिदेवतारूपमर्थं प्रति स्तोत्रशस्त्रयोः गुणभूतत्वात् शेषत्वात् देवता-नाम-चोदना अर्थेन अपकृष्येत। देवतानां नाम इन्द्रादिपदम्। चोदना विधानम्। देवतानामघटितमन्त्रात्मकस्तोत्रशस्त्रयोः विधानं अर्थेन इन्द्रादिप्रकाशनरूपप्रयोजनवशेन यत्र प्रधानं तत्र नीयेत। प्रधानकर्मत्वे तु तयोः प्रयाजादिवत् अदृष्टद्वारा क्रत्वर्थतया यागीयदेवतार्थत्वाभावात् नोत्कर्षः स्यात्। तस्मान्न गुणकर्मत्वपक्षो युक्तः। अथवा देवतानामरूपः यश्चोदनार्थः तस्य देवतानामचोदनार्थस्य गुणभूतत्वात् अर्थेन अर्थानुसारेण यत्र प्रधानं देवता तत्र नीयेत स्तोत्रं शस्त्रं चेत्यादि समानम्।

### वशावद् वाऽगुणार्थं स्यात्। १५॥

स्तोत्रशस्त्रयोः संस्कारकर्मत्वे माहेन्द्रग्रहयजेः संनिधौ आम्नातयोः यत्र इन्द्र तत्र उत्कर्षः स्यादिति दोषः सिद्धान्तिना उक्तः। तत्राह पूर्वपक्ष्येकदेशी, वाशब्दः सिद्धान्तिदत्तदोषनिरासं सूचयति। माहेन्द्रे महत्त्वगुणविशिष्टे चोदितेऽपि अगुणार्थं महत्त्वगुणरहितकेवलेन्द्राभिधानं स्यात् मन्त्रेण। इन्द्रमहेन्द्रयोरैक्यात्। ततश्च स्तोत्रशस्त्रयोरुत्कर्षो न प्रसज्यते। वशावत्। 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत' इति अजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्ति तद्वत् सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति। तेन उत्कर्षो न प्रसज्येत।

अत्र गुणार्थं इति पदच्छेदः **कुतूहलादौ**। तस्मिन् पक्षे 'माहेन्द्रं ग्रहं गृह्णाति' इत्युक्तेऽपि इन्द्र एव ग्रहयजिदेवता। महत्त्वगुणकीर्तनार्थं महत्पदं इति व्याख्येयम्।

### न श्रुतिसमवायित्वात्। १६॥

स्तोत्रशस्त्रयोः गुणकर्मत्वेऽपि माहेन्द्रग्रहार्थयोः स्तुतशस्त्रयोः केवलेन्द्रस्थले उत्कर्षो न प्रसज्यते इन्द्रमहेन्द्रयोरभेदात् गुणराहित्यविवक्षया इन्द्रशब्दः गुणसाहित्यविवक्षया तु महेन्द्रशब्दः इति यदुक्तं पूर्वपक्षिणा तन्निरस्यति सिद्धान्ती। 'माहेन्द्रं ग्रहं गृह्णाति' इत्यत्र महेन्द्रो देवता अस्येति माहेन्द्रः ग्रहः इति माहेन्द्रपदस्य व्युत्पत्तिः। तत्रत्यतद्धितश्रुत्या ग्रहसमवायी



महेन्द्रो ज्ञायते नेन्द्रः। एवं महेन्द्रस्यैव तद्धितश्रुतिसमवायित्वात् न निर्गुणेन्द्राभिधानात् अनुत्कर्षः। अथवा श्रुत्या विधिगतदेवतापदेनैव देवतायाः समवायित्वात् कर्मान्वयित्वात् न अनुत्कर्षः। अथवा श्रुत्या विधिश्रुत्या सं सम्यक् अवायः अवगमः यस्य देवतात्वस्य तत् श्रुतिसमवायि तस्य भावः श्रुतिसमवायित्वं तस्मात् देवतात्वस्य विधिश्रुत्यधीनज्ञानत्वात् इन्द्रमहेन्द्रयोर्भेदात् न अनुत्कर्षः। किंतु देवतान्तरमिन्द्रात् महेन्द्रः तेन ऐन्द्रस्य 'अभि त्वा शूर' इत्यस्य प्रगाथस्य उत्कर्ष एव प्राप्नोति स्तुतशस्त्रयोः गुणकर्मत्वपक्षे।

### व्यपदेशभेदाच्च। १७॥

इन्द्रमहेन्द्रयोर्भेदः व्यपदेशभेदात्। 'बहु दुग्धीन्द्राय देवेभ्यो हविः' इति 'बहु दुग्धि महेन्द्राय देवेभ्यो हविः' इति व्यपदेशस्य भेदो भवति। तेन देवतान्तरत्वम्। एकदेवतत्वे तु मन्त्रविकल्पः स्यात्।

### गुणश्चानर्थकः स्यात्। १८॥

महेन्द्रत्वरूपे देवतात्वे यदि महत्त्वरूपो गुणो नान्तर्भवेत् स गुणः अनर्थकः स्यात्। यदि वा विधिगतशब्दात् शब्दान्तरेण निगमादिषु देवतोपलक्षणं स्यात् विधिवाक्ये गृह्यमाणो गुणः अनर्थकः स्यात्। यदि वा इन्द्रमहेन्द्रयोः ऐक्यं स्यात् तदा महत्त्वरूपो गुणः अनर्थकः स्यात्। तस्मात् इन्द्रमहेन्द्रयोः भेदः स्यात्।

### तथा याज्यापुरोरुचोः। १९॥

पुरोरुक्शब्दस्य शस्त्रगतमन्त्रविशेषवाचित्वे अपि याज्यासाहचर्यादत्र पुरोऽनुवाक्यापदत्वम्। दर्शे सांनाय्ये 'एन्द्र सानसिं रयिं, प्र ससाहिषे पुरुहूत शत्रून्' इति ऐन्द्र्यौ याज्यानुवाक्ये 'महां इन्द्रो य ओजसा, भुवस्त्वमिन्द्र ब्रह्मणा महान्' इति माहेन्द्र्यौ याज्यानुवाक्ये च पृथगुक्ते। एवं याज्यापुरोरुचोः भेदात् इत्यनुवर्तते, इन्द्रमहेन्द्रयोर्भेदः तथाशब्देनोक्तः। किंवा तथा इति 'बहु दुग्धीन्द्राय' इत्यादिव्यपदेशभेदो दृष्टान्तितः।

### वशायामर्थसमवायात्। २०॥

महत्त्वगुणाधिक्येऽपि महेन्द्रः इन्द्रान्न भिन्न इत्यत्र पूर्वपक्षिणा यो वशादृष्टान्त उक्तः तत्राह सिद्धान्ती। यदुक्तं अजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्तीति तद्युक्तं वशायाम्। वशायां वशाशब्दार्थे विशेषरूपे छागशब्दस्य चोदकप्राप्तस्य सामान्यरूपेण समवायात् संभवात्। महेन्द्रविधिगतमहत्त्वगुणपरित्यागे न किंचित् कारणम्। तस्मात् इन्द्रशब्दघटितमन्त्रकं स्तोत्रं शस्त्रं च महेन्द्रं प्रकाशयितुं न शक्नोति इति स्तुतशस्त्रयोः उत्कर्षः स्यादेव गुणकर्मत्वपक्षे। तथा च प्रधानकर्मणी एव स्तोत्रशस्त्रे।

### यत्रेति वाऽर्थवत्त्वात् स्यात्। २१॥

स्तुतशस्त्रयोः संस्कारकर्मत्वपक्षे माहेन्द्रग्रहयजिं त्यक्त्वा यत्र इन्द्रस्तत्र 'अभि त्वा शूर' इति प्रगाथस्य उत्कर्षः स्यात् इति दोषः सिद्धान्तिना उक्तः। 'न श्रुतिसमवायित्वात्' इत्यादिना सूत्रपञ्चकेन पूर्वपक्ष्येकदेशी निरस्तः। इदानीं मुख्यपूर्वपक्षी लिङ्गेन क्रमसंनिधी बाधित्वा न्याय्य एवोत्कर्षः इति प्रतिपादयति। इतिशब्देन संस्कार्यसद्भावः परामृश्य यत्र संस्कार्यसद्भावः तत्र अभि त्वेति प्रगाथः स्यात् इत्यर्थः। यत्र इन्द्रः तत्र इन्द्रमन्त्रकस्तुतशस्त्रयोः उत्कर्षः स्यात्। अर्थवत्त्वात् ऐन्द्रमन्त्रकस्तुतशस्त्रयोः माहेन्द्रग्रहयजेः अन्यत्रैव यागीयदेवताप्रकाशनसमर्थत्वेन प्रयोजनवत्त्वात्। अतः स्तुतशस्त्रयोः गुणकर्मत्वमेव स्यात्।

### न त्वाम्नातेषु। २२॥

येषु मन्त्रेषु उत्कृष्टेषु अर्थवत्त्वं संभवति तत्र उत्कर्षेऽपि येषु आग्निमारुतशस्त्रादौ आम्नातेषु यमपितृदेवत्यादिषु मन्त्रेषु अन्यत्र उत्कर्षे अर्थवत्त्वं न संभवति तत्र कथमुत्कर्षः स्यात्। तथा च तत्सादृश्यात् 'अभि त्वा शूर' इत्यादीनामपि माऽस्तु उत्कर्षः इति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः।

### दृश्यते। २३॥

आग्निमारुतशस्त्रे आम्नातानां याम्यादिमन्त्राणां आग्निमारुते असमवेतानां अन्यत्र अर्थवत्त्वं न संभवतीति सिद्धान्तिना शङ्किते पूर्वपक्षी आह। दृश्यते सर्वेषामेव अर्थवत्ता। मण्डूकसूक्तस्य अग्निचयने, अक्षसूक्तस्य राजसूये, मूषिकासूक्तस्य ऐकादशिन्याम्,

सर्वेषां वाचःस्तोमे ‘ सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि सामानि वाचःस्तोमे पारिप्लवं शंसति ’ इति । तथा ‘ यस्याऽऽश्विने शस्यमाने सूर्यो नोदियात् अपि सर्वा दाशतयी अनुब्रूयात्’ इति । तस्मादस्ति अर्थवत्ता उत्कृष्टानाम् । तस्मात् संस्कारकर्मणी स्तोत्रशस्त्रे इति पूर्वः पक्षः ।

**अपिवा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् । २४ ॥**

स्तोत्रशस्त्रे देवतां प्रति गुणभूते इति पूर्वपक्षव्यावृत्त्यर्थः अपिवाशब्दः । ‘ आज्यैः स्तुवते ’ ‘ प्रउगं शंसति ’ इति स्तौतिशंसती स्तुवते शंसति इति आख्याते श्रुतिसंयोगात् प्रकरणे प्रकृते कर्मणि माहेन्द्रयागादौ क्रियोत्पत्तिं क्रियायाः अपूर्वस्य उत्पत्तिं विदध्यातां प्रतिपादयेताम् । श्रुतिसंयोगात् इत्यत्र ‘ कवतीषु स्तुवते ’ इत्यादौ सप्तमीश्रुत्या स्तौतिना संयोगः । ‘प्रउगं शंसति’ इत्यादौ द्वितीयाश्रुत्या शंसतिना संयोगः । ‘ इन्द्रस्य नु वीर्याणि प्रवोचम्’ इति षष्ठीश्रुत्या देवताया गुणैः संबन्धः । ‘ इन्द्रो यातोऽवसितस्य राजा ’ इति प्रथमया देवतायाः गुणैः संबन्धः । इति भाष्ये चतुर्धा श्रुतिसंयोगो व्याख्यातः । प्रकरणे इत्यत्र ‘ प्रक्रियते इति कर्मन्युत्पन्नं प्रकरणशब्दमङ्गीकृत्य प्रकृते माहेन्द्रयागाङ्गभूते पृष्ठाख्ये स्तोत्रे रथंतरचोदनोपस्थानात्मकेन संनिधिना वत्सतया श्रुत्या ऐन्द्रस्य प्रगाथस्य अङ्गत्वेन संयोगात् ’ इति उपलक्षणतया सुधायामुक्तम् । किंच इदं पूर्वपक्षसूत्रं इतिपक्षे अश्रुतिसंयोगात् इति अकारप्रश्लेषेण अश्रुतिसंयोगदोषापत्तेः इति सूत्रावयवो वार्तिककारेण योजितः इति सुधायामुक्तम् । इदं सिद्धान्तसूत्रं इतिपक्षस्तु सर्वमान्य एव । किंच स्तौतिशंसतिधात्वोः श्रुत्या स्तुतिवाचित्वात् इत्येवं श्रुतिसंयोगात् इत्यस्यार्थोऽपि सुधायामुक्तः । सर्वथाऽपि स्तोत्रशस्त्रे प्रधानकर्मणी इति सिद्धान्तः ।

**शब्दपृथक्त्वाच्च । २५ ॥**

स्तोत्रशस्त्रे प्रधानकर्मणी इति सिद्धान्ते हेत्वन्तरमाह । शब्दपृथक्त्वात् द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः इति द्वादशशब्देन स्तोत्राणां शस्त्राणां च पृथक्त्वं ज्ञायते । तच्च तेषां प्राधान्ये युज्यते इतरथा शंसनस्य स्तवनस्य च एकैकत्वात् द्वादशत्वं नोपपद्येत । तस्मात् स्तोत्रशस्त्रे प्रधानकर्मणी ।

**अनर्थकं च तद्वचनम् । २६ ॥**

स्तोत्रशस्त्रयोः आरादुपकारकत्वेन प्रधानकर्मत्वाभावे तद्वचनं अनर्थकं स्यात् । अग्निष्टुति क्रतौ प्राकृतग्रहानुवादेन ‘ आग्नेया ग्रहा भवन्ति ’ इति अग्निसंबन्धविधौ अग्निप्रकाशकत्वेन आग्नेयीनां ऋचां प्राप्तौ पुनः ‘ आग्नेयीषु स्तुवते ’ इति विधिः व्यर्थः स्यात् । तस्मात् स्तोत्रशस्त्रे प्रधानकर्मणी आरादुपकारके न गुणकर्मणी इति सिद्धान्तः ।

**अन्यश्चार्थः प्रतीयते । २७ ॥**

‘ स्तुतमनु शंसति ’ इति वचनात् स्तोत्रशब्दात् शस्त्रशब्दस्य अन्योऽर्थः प्रतीयते । उभयोरेकस्तुतिपरत्वे तु वचनबाधः स्यात्, किंच स्तुतशस्त्रयोः पौर्वापर्यसंबन्धवचनात् दृष्टादन्योऽर्थः प्रतीयते । प्रकाशनरूपदृष्टार्थत्वे तस्य एकत्वेन एकार्थत्वात् विकल्पापत्तौ पौर्वापर्यसंबन्धानुपपत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे आरादुपकारके ।

**अभिधानं च कर्मवत् । २८ ॥**

‘ समिधो यजति ’ ‘तनूनपातं यजति’ इति कर्मवत् प्रधानकर्मणः इव ‘ प्रउगं शंसति ’ ‘ पृष्ठान्युपयन्ति ’ इति द्वितीयया ईप्सिततमत्वाभिधानं दृश्यते । तस्मात् स्तोत्रशस्त्रयोः प्रधानकर्मता ।

**फलनिर्वृत्तिश्च । २९ ॥**

‘ स्तुतस्य स्तुतमसि ’ इत्येवमादि ‘ इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याऽऽशीर्यशस्य भूयात् ’ इति फलस्य निर्वृत्तिः निष्पत्तिः स्तोत्रात् दृश्यते, न तु देवतायाः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे, न तु देवतां प्रति गुणभूते इति **सिद्धान्तः । के.**

स्तुतशस्त्राधिकरणम् । स्तोत्रशस्त्राधिकरणम् । ज्योतिष्टोमे स्तोत्रशस्त्रे प्रधानकर्मणी, न देवतासंस्कारके । महेन्द्राधिकरणम् । इन्द्रमहेन्द्राधिकरणम् ॥



**स्तुतशस्त्रयोस्तु संस्कारो याज्यावत्, देवताभिधानत्वात् २।१।५।१३॥**

**भाष्यम्**-- ‘ प्रउगं शंसति ’ ‘ निष्केवल्यं शंसति ’ ‘ आज्यैः स्तुवते ’ ‘ पृष्ठैः स्तुवते ’ इति गुणवचनं स्तवनं शंसनं च । यथा ‘ इन्द्रस्य नु वीर्याणि प्रवोचम् ’ इति । यदेतद् गुणवचनं श्रूयते किमेतद् गुणभूतं देवतां प्रति, उत प्रधानमिति । तत्रोच्यते । स्तुतशस्त्रे संस्कारकर्मणी इति । कुतः ? देवताभिधानत्वात् । गुणवचने निर्वर्त्यमाने गुणिनी देवता संकीर्त्यते, नान्यथा तद्गुणवचनं भवति । तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशेन च प्रत्यक्ष उपकारो यागसिद्धिः । तस्मात् संस्कारकर्मणी । याज्यावत् । यथा ‘ याज्यामन्वाह ’ ‘ पुरोऽनुवाक्यामन्वाह ’ इति स्तुतिवचनं देवताप्रकाशनेनार्थवत् तद्वदेतदपीति ।

**वा**-- ‘ यैस्तु द्रव्यं चिकीर्ष्यते ’ इत्यस्यापवादत्वेन स्तोत्रशस्त्रोपन्यासः । स्तुतिरेव स्तोत्रम्, शस्त्रमपि सैव अप्रगीतमन्त्रसाध्या । गुणगुणिसंबंधकीर्तनं च स्तुतिः शिष्यते । सा च प्रथमं गुणगुणिभ्यां निर्वर्त्यते । तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात् । तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वात् एकान्तेन स्तुत्यर्थता । तन्निर्वर्तिता तु स्तुतिः किं स्तुत्यस्य स्मारकत्वेन शेषीभवति, उत स्वप्राधान्येनादृष्टार्था भवतीति । किं प्राप्तम् ? ‘ **दृष्टेन क्रतुसिद्ध्यर्था साधयन्ति यतः स्मृतिम् । स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवताः प्रति ॥** ’

**अर्थेन त्वपकृष्येत, देवतानामचोदनाऽर्थस्य गुणभूतत्वात् । १४ ॥**

**भाष्यम्**-- यदि संस्कारकर्मणी एव स्तोत्रशस्त्रे, अर्थेनापकृष्येत देवतानाम्नश्चोदनार्थस्य गुणभूतत्वात् । देवतार्थस्य गुणभूतो मन्त्र इति तत्प्रधानभावे यत्र प्रधानं तत्र नीयेत । तत्र क्रमसंनिधी उपरुध्येयाताम् । तस्मादेष दुष्टः पक्ष इति पर्युदसितव्यः । कतमः पुनरसौ मन्त्रः ‘ अभि त्वा शूर ’ इत्यैन्द्रः प्रगाथो माहेन्द्रस्य ग्रहयजेः संनिधावाम्नातः, यत्रेन्द्रस्तत्रापकृष्येत ।

**वा**-- प्रमाणान्तरविरोधेन दूषणं तावदुच्यते । तथाहि-- ‘**यद्यत्राविद्यमानार्थो मन्त्रः स्तोतुं प्रयुज्यते । तस्यार्थेनापकृष्टत्वात् प्राप्तबाधः प्रसज्यते ॥** ’ या यद्देवतानामसंयुक्ता स्तुतिचोदना भावनेति यावत्, चोद्यमानत्वात्, सा तदर्थपरत्वात् तस्मिन्नसति न स्वार्थं करोतीति तद्वशेन ऐन्द्रीस्तुतिर्माहेन्द्रग्रहयजिसंनिधिमुल्लङ्घ्य यत्रेन्द्रस्तत्र गच्छेत् । ततश्च क्रमसंनिधिबाधः । क्रमश्चात्र यथासंख्येनोत्तरासु पाठः । संनिधिस्तु रथंतरचोदनयोपस्थानं प्रकरणपरामर्शो वा ।

**वशावद्वाऽगुणार्थं स्यात् । १५ ॥**

**भाष्यम्**-- न पर्युदसिष्याम इमं पक्षम्, संस्कारकर्मणी एव स्तोत्रशस्त्रे, देवताभिधानत्वादेव । यत्तूक्तम्, प्रगाथस्योत्कर्ष इति, तन्न । इन्द्रशब्देन महेन्द्रोऽभिधायिष्यते, स एवेन्द्रो महत्त्वेन गुणेन महेन्द्र इत्युच्यते । प्रत्यक्षं हि इन्द्रशब्दं देवतावचनमुपलभामहे, महत्त्ववचनं च महच्छब्दम् । यथा राजा महाराजः, ब्राह्मणो महाब्राह्मण इति । वशावत् । यथा ‘ सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत ’ इत्यजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्ति तद्वत् । सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति । तेन न भविष्यत्युत्कर्ष इति ।

**वा**-- नायं दोषः । किं कारणम् ? ‘ **तत्र मन्त्रोऽपकृष्येत यत्र सोऽर्थान्तरं व्रजेत् । अभिवत्योऽर्थवत्यस्तु साम्यादिन्द्रमहेन्द्रयोः ॥** ’ य एव हि अभिवतीभिरिन्द्रः स्तूयते, स एव माहेन्द्रग्रहेणेज्यते । तत्र सत्येवार्थे किमित्यपकर्षः स्यात् । न च यावत्कर्माङ्गभूतेऽर्थे विद्यते, तत्सर्वं मन्त्रेणाभिधातव्यम्, न्यूनमधिकं वाऽसौ यदभिधातुं समर्थस्तदभिधत्ते । तेन निर्गुणेन्द्रप्रकाशनं गुणस्यातन्त्रत्वात् प्रकरणलभ्यत्वाद्वा निर्गुणद्रव्यप्रकाशनवदेव । न च शब्दमात्रं देवतेति नवमदशमयोरभिधास्यते ( ९।१।९,१०।४।२३ ) । ततश्च य एव महेन्द्रशब्देनार्थश्चोदितः, स एवेन्द्रशब्देनोच्यते इत्यर्थान्तरत्वकल्पनाप्रमाणाभावात् । तस्मात् उत्कर्षोपलम्भाभावात् संस्कारकर्मत्वमेव युक्तमिति ।

**न श्रुतिसमवायित्वात् । १६ ॥**

**भाष्यम्**-- नैतदेवम् । इन्द्रोऽस्य ग्रहस्य देवतेति तद्धितसंयोगेन विज्ञायते । न चास्य महत्त्वमपेक्षमाणस्य तद्धितसंयोगः उपपद्यते । तद्धितसंयोगापेक्षस्य वा महत्त्वसंबन्धात् समासकल्पना । न च तद्धितार्थे वृत्तस्य महत्त्वसंबन्धः । न च समासार्थे वृत्तस्य तद्धितसंबन्धः । न चास्मिन्नेव प्रयोगे समासार्थे वृत्तिरिष्यते, एतस्मिन्नेव तद्धितार्थे । न चायमिन्द्रशब्दः अविहितवत् स्वार्थं तद्धितार्थेन संबध्येत, विहितवच्च परार्थं महत्त्वेन संबद्धुमनूद्येत । विस्पष्टश्चायमन्योऽर्थो महेन्द्रो भवति । महानिन्द्रो भवतीति महेन्द्रः । अन्यश्चेन्द्रो हविषो देवता भवतीति सकृदुच्चारणे च नोभयं शक्येत । तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः ( अकारस्य प्रश्लेषेण प्रश्लेषाभावेन चेति द्वेधा व्याख्यास्यते वार्तिके) । महेन्द्रशब्दात्तु तद्धित उत्पन्नः । तस्मात् तत् प्रातिपदिकमर्थवदिति गम्यते, न त्ववयवसंबन्धेन । तस्माद्देवतान्तरमिन्द्रान्महेन्द्रः । तेनैन्द्रस्य प्रगाथस्योत्कर्षः प्राप्नोति । अतः पर्युदसितव्य एष पक्षः । यदप्युच्यते, इन्द्रस्य वृत्रवधोत्तरकालं महेन्द्रत्वं दर्शयति, ' महान् वाऽयमभूद् यो वृत्रमवधीत् ' इति, तथा वेदस्यादिमत्तादोषः प्रसज्येत । अतोऽन्य इन्द्रो महेन्द्रात् ।

**वा**-- नैतदस्ति निर्गुणेन्द्राभिधानादनुत्कर्ष इति । प्रसज्यते एवोत्कर्षः । कुतः ? **' यद्यभेदः प्रमाणेन भवेदिन्द्रमहेन्द्रयोः । ततोऽयं नापनीयेत भेदस्त्वत्र प्रतीयते ॥ '** यदि अवयवव्युत्पत्त्या महांश्चासाविन्द्रश्चेत्येवं महेन्द्रशब्दमन्वाचक्षाणैः तद्धितानुगमः क्रियेत, तत इन्द्र एव गुणमात्रविशिष्टोऽस्य ग्रहस्य देवतेति गम्येत, न त्वेवमस्ति । समुदायप्रसिद्धिबलीयस्त्वेन इन्द्रव्यतिरिक्तरूढिशब्दाभिधेयमहेन्द्रप्रतीतेः । तथाहि, **' व्युत्पाद्यते महेन्द्रश्चेद् वाक्यभेदादि दुष्यति । अव्युत्पत्तौ महेन्द्रार्थः स्फुटं वस्त्वन्तरं भवेत् ॥ '** ' न चास्य महत्त्वमपेक्षमाणस्य ' इति अवयवव्युत्पत्तिं निराकरोति । कथम् ? **' वृत्तिद्वयेऽपि सामर्थ्यं स्मर्यते हि विशेषणम् । व्युत्पत्त्याश्रयणे चैतदुभयत्रापि दुर्लभम् ॥ '** ' समर्थः पदविधिः ', ' समर्थानां प्रथमाद्वा ' इति च समासतद्धितवृत्त्योर्विशेषणम् । अतस्तदभावे नैकयाऽपि भवितव्यम् । यदि युगपत् समासतद्धितौ अन्वाख्यायेते, ततो नैकत्रापि सामर्थ्यं लभ्यते । कुतः ? **' तद्धितेन ह्यसंबन्धो महत्त्वेऽपेक्षिते भवेत् । तस्मिन्नपेक्ष्यमाणे च न महत्त्वेन संगतिः ॥ '** एकार्थीभावलक्षणं व्यपेक्षालक्षणं वा सामर्थ्यमुभयथाऽपि सापेक्षस्य नावकल्पते । कथम् ? **' अन्यवस्त्वनपेक्षत्वे ह्यन्येनैकार्थतेष्यते । सापेक्षस्त्वन्यविक्षिप्तो नैकार्थ्यं प्रतिपद्यते ॥ '** अविक्षिप्यमाणौ हि द्वावर्थौ एकत्र लोलीभावं प्रतिपद्येयाताम् । न च विक्षिप्यमाणौ, नानात्वे बुद्धिकालुष्यात् । यो हि अवयवाभ्यामेकत्रोपसंहृताभ्यामुभयविशिष्टः एकोऽर्थः प्रतिपाद्यते, सोऽपि निरपेक्षाभ्यामेव । सापेक्षत्वे संशयरूपेणैकत्रानुपसंहारात् । एवं तावदैकार्थ्यलक्षणसामर्थ्याभावः । **' व्यपेक्षा पुनराहृत्य विगतापेक्षतोच्यते । सापेक्षत्वे च दूरेऽसावित्येवमसमर्थता ॥ '** नहि सापेक्षो विगतापेक्षशब्देन शक्यो वक्तुं इत्युभयसामर्थ्याभावात् उभयवृत्त्यभावप्रसङ्गः । एवं तावत् युगपदन्वाख्याने दोषः । **' क्रमेणाऽऽख्यायमाने तु वाक्यभेदोऽसकृच्छ्रुतेः । कृत्वा समासमुच्चार्यं पुनः शब्दद्वयं भवेत् ॥ '** एतदेवाभिप्रेत्याऽऽह-- ' न च तद्धितार्थे वृत्तस्य ' इत्यादि । **' तद्धितार्थे च वृत्तस्य वृद्धिः स्यादुत्तरे पदे । महत्त्वं द्रव्यसंबन्धि नोपसर्जनसंगति ॥ '** महैन्द्र इति हि स्यात् । न चेन्द्रविशेषणं महत्त्वम् । नह्युपसर्जनमभिभूतस्वार्थवृत्ति विशेषणान्तरैः संयुज्यते । ' न च समासार्थे वृत्तस्य ' इति वाक्यभेदमात्रेणैवोच्यते । तेन क्रमवृत्तिरपि नास्तीति प्रतिपाद्य पुनर्युगपद्वृत्तिमेव दोषान्तराभिधित्सयोपन्यस्यति । ' ऐकशब्द्ये परार्थवत् ' इत्यनेन न्यायेन ( १।४।५।८ ) इन्द्रशब्दस्य महत्त्वतद्धितार्थौ प्रति वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । विध्यनेकव्यापारात्मकश्चापरो वाक्यभेदः । तथाहि-- **' महत्त्वस्येन्द्रसंबन्धं तस्य च द्रव्यसंगतिम् । विदधत् प्रत्ययो वाक्यं भिन्द्यात् पुनरपि श्रुतेः ॥ '** तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः । किं तर्हि अवयवसंबन्धनिरपेक्षात् रूढिशब्दात् तद्धितोत्पत्तिः । अतश्च सिद्धं देवतान्तरत्वम् । न च वृत्रवधोत्तरकालं महत्त्वाभिधानेनेन्द्रस्यैव महेन्द्रत्वं भवेत् । वेदस्याऽऽदिमत्त्वप्रसङ्गात् । अतो नित्यरूढस्यैव स्तुतिमात्रार्थमेतत् ।



**व्यपदेशभेदाच्च । १७ ॥**

**भाष्यम्**-- व्यपदेशभेदश्च भवति । ' बहु दुग्धीन्द्राय देवेभ्यो हविः ' इति । ' बहु दुग्धि महेन्द्राय देवेभ्यो हविः' इति । अतोऽपि देवतान्तरम् , एकदेवतात्वे मन्त्रविकल्पः स्यात् ।

**वा**-- व्यपदेशभेदाच्च भेदः । एवं च मन्त्रयोर्व्यवस्था भविष्यति । इतरथा विकल्पे, पक्षे बाधः स्यात् । असति चार्थभेदे मन्त्रभेदस्यादृष्टार्थता प्रसज्येत । **' तस्माद्यथैव सूर्यादेरिन्द्रादत्यन्तभिन्नता । महेन्द्रस्य तथैवेति प्रगाथापनयो भवेत् ॥ '** ( एतद्व्याख्यानं दूषयति । इत आरभ्य पुनः षोडशसूत्रीयभाष्यस्यैव व्याख्या) **'एवं व्याख्यायमाने तु रूढित्वे तद्धिते सति । अग्नीषोमादयः सर्वे रूढित्वान्न द्विदेवताः ॥ '** यथैव हीन्द्रशब्दस्य महत्त्वतद्धितौ अपेक्षमाणस्य युगपत्क्रमेण वा वृत्तिर्न संभवति एवमेव सोमस्याग्निमपेक्षमाणस्य न तद्धितसंबन्धः तदपेक्षस्य वा नाग्निना सह समासः । तथा क्रमवृत्तौ पुनरुच्चारणे वाक्यभेदान्नान्यतरत्र वृत्तस्य अन्यतरेण वृत्तिः, सोमपदस्य वैरूप्यम् , प्रत्ययस्यानेकार्थवृत्तिरिति दोषाणां साम्येन अरूढित्वप्रसङ्गात् समस्तद्विदेवत्यत्वव्यवहारोच्छेदः स्यात् । न चैषां रूढित्वं शक्यं वदितुम्, सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात् । तद्यथा चतुर्थाकरणेन्द्रपीतपूषप्रपिष्टभागविचारेषु ( ३।१।१५, ३।२।११, ३।३।१५ ) सापेक्षाग्निदेवत्यादीनामैन्द्राग्नाग्नीषोमीयादीनां आग्नेयादिशब्दैः केवलाग्न्यादिदेवताकैः असामर्थ्यादग्रहणमिति वक्ष्यति । रूढित्वे हि कस्य क्वापेक्षा भवेत् ।

तथा द्विदेवतत्वसामान्येन ऐन्द्रापौष्णादीनामग्नीषोमीयैन्द्राग्नप्रकृतिकत्वं वक्ष्यते ( ८।१।१६।२८ ) । तथा ' मेधपतिभ्यां मेधम् ' इत्यत्र ' देवता तु तदाशीष्ट्वात् ' ( ९।३।१२।३६ ) इत्यर्थद्वयमाश्रयिष्यते । तथा मनोताधिकरणे ( १०।४।२१।४३ ) वक्ष्यति ' सत्यमग्नीषोमौ देवताप्रकृतौ, तावग्निश्च सोमश्च, तत्राग्निरदेवता न त्वसमवेतः ' इति ( भा. पृ. १९३९ ) । तथा देवताद्वन्द्वाश्रयाणि अग्नेरीत्वषत्वादीनि ( व्याकरणे ) स्मर्यमाणानि न शक्यानि बाधितुम् । यदि च व्याकरणमेवमादौ अप्रमाणम् , तर्हि देवतातद्धितस्मरणाप्रामाण्यात् अग्नीषोमादीनां देवतात्वमपि न स्यात् । अथ तत्प्रतीतिरभ्युपगम्येत, सा तुल्याऽर्थद्वयप्रतीतावपीति रूढित्वाभावः । एतेन अश्वकर्णादिवदर्थरहितसमासान्वाख्यानेन स्वरसंस्कारप्रसिद्ध्यर्थमग्नीषोमीयादिद्वंद्वस्मरणप्रामाण्यकल्पनं प्रत्युक्तम् । तथाहि **' यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः ॥ '** महदिन्द्रशब्दयोस्तावत् अवश्यं पृथगर्थाभिधानशक्तिः कल्पयितव्या । तयोश्च गुणगुण्यभिधायित्वात् विशेषणविशेष्यात्मकत्वमवधारितम् । तत्र यावदेव संहतावुच्चारितौ तावदेव पूर्वानुभूतार्थसंबन्धितया विशिष्टार्थप्रत्ययो जायते । न चास्य निवर्तकं किंचिदस्ति । न च समुदायस्यापूर्वशक्त्यन्तरकल्पनाप्रमाणं विद्यते । लब्धात्मिका च समुदायप्रसिद्धिः अवयवप्रसिद्धिं बाधते । न चावयवार्थरहितार्थान्तरप्रयोगं विस्पष्टमन्तरेण तदात्मलाभः । किंच **' एकस्तावदतिक्लेशैरिन्द्रोऽस्तीत्यवगम्यते । महेन्द्रस्त्वपरः कल्प्यः पुनः क्लेशान्तरैर्भवेत् ॥ '** प्रत्यक्षेऽपि तावदर्थे अनेकशब्दशक्तेः कल्पना निष्प्रमाणिका, किमुत यत्रार्थसद्भावोऽपि कल्पनीयः । तदिह इन्द्रशब्दप्रयोगान्यथाऽनुपपत्त्या इन्द्रस्तावददृष्टोऽपि कल्प्यते, तत्र यदि पुनर्महेन्द्रशब्दप्रयोगान्यथाऽनुपपत्तिर्भवेत् ततोऽर्थान्तरं महेन्द्रो नाम कल्प्येत । यदा तु पूर्वकल्पिताभ्यामेव महदिन्द्रपदशक्तिभ्यां प्रयोगः सिध्यति, स एव चार्थः किंचिद्विशिष्टः प्रत्यभिज्ञायते, कस्तदाऽर्था-

न्तरं कल्पयितुं शक्ष्यति । ( परव्याख्यादूषणमुपसंहरति– ) तस्मादिन्द्र एव महत्त्वविशिष्टो महेन्द्रो नान्य इति सिद्धम् । न च समासं कृत्वा तद्धिते क्रियमाणे कस्यचिदसामर्थ्यम् , समासवेलायां तद्धितवेलायां चापेक्षणीयार्थान्तरानुपादानात् । न च द्विरुच्चारणनिमित्तवाक्यभेदप्रसक्तिः, सकृदुच्चारितैकपदोपात्तानेकार्थकथनात् । वृत्तिद्वयात्मकं हि माहेन्द्रपदम् । एकैका च वृत्तिर्वाक्यार्थे वर्तते । तत्र ययोर्वाक्ययोरर्थौ माहेन्द्रपदेनोपात्तौ, तौ ताभ्यां निर्भिद्य कथ्येते । यच्चात्रासकृदुच्चारणं दृश्यते, न तत् वेदवचनस्यैव । नहि कदाचिदप्येवं रूपो वेदोऽस्ति महांश्चासाविन्द्रश्च महेन्द्रो देवता अस्येति माहेन्द्रः । न चैतदेव वैदिकं पदमेवं विभज्यते । विभागस्य पौरुषेयत्वेनावैदिकत्वापत्तेः । किंतु– 'वेदे स्वरूपतः शब्दो माहेन्द्रादिरवस्थितः । तस्यार्थः सकलो वाक्यैः पौरुषेयैर्निरूप्यते ॥' विचित्रशक्तीनि हि पदानि, एकानेकपदार्थप्रतीतेः । तथा एषामर्थकथनं कदाचित् पदेनैवान्येन क्रियते कदाचिद्वाक्येन, तेनाप्येकेनानेकेन वा, द्विपदेन बहुपदेन वेति वैचित्र्यम् । तद्यथा 'कः पिकः ? कोकिलः' 'क औपगवः ? उपगोरपत्यम् , उपगुना वा स्वकान्तायामुत्पादितः' । तथा पचतीत्युक्ते पाकं परगामिफलमेकः कर्ता पूर्वापरीभूतं वर्तमानकाले निर्वर्तयतीति कथ्यते । न चैवं कथयतां वाक्यभेदः प्रसज्यते । न वा अशब्दार्थत्वमध्यवसीयते । एवमेव यदि माहेन्द्रपदोपात्तोऽर्थः तदस्पृशद्भिरेव शब्दशक्तिविद्भिः पुरुषैः स्ववाक्येनैकेनानेकेन वा कथ्यते, कस्तत्र वाक्यभेदः । शतकृत्वोऽपि हि स्ववाक्यमुच्चार्यमाणं न वेदं दूषयति । न च तदीयोऽर्थः कथ्यमानः पौरुषेयत्वं भजते । अवश्यं चानेकोऽर्थः पुरुषैः कथ्यमानः क्रमेण कथयितव्यः, सोऽपि च प्रकृतिप्रत्ययपौर्वापर्येण इत्येवं कथ्यते महांश्चासाविन्द्रश्चेत्यादि । न चैवं सापेक्षत्वम् । 'अथवा भवति च प्रधानस्य सापेक्षस्यापि समासः' इति । यद्यपीन्द्रशब्दस्तद्धितापेक्षस्तथापि महत्त्वं प्रति प्राधान्याल्लभते समासम् । अतश्च युगपदपेक्षायामविरोधः तथापि तु वृत्तिः क्रमेणैव । कुतः ? 'सापेक्षोऽपि महत्त्वेन प्रधानत्वात् समस्यते । तदपेक्षो गुणत्वात्तु तद्धितेनैव वर्तते ॥' तेन यत्रैव प्रधानं सापेक्षम् , तत्रैतयैव तावद्वृत्त्या भवितव्यं इति समास एव प्रथमं भवति । यदि वा कृत्वा समासं तन्त्रेण वृत्तिरिष्येत, ततः शुद्ध इन्द्रः तद्धितसंबन्धी, शुद्धश्च समासभागिति निर्गुणस्यैवेन्द्रस्य देवतात्वापत्तेर्गुणानर्थक्यप्रसङ्गः ।

न चेन्द्रमहत्त्वयोर्युगपत्तद्धितार्थे निपतितयोः अरुणैकहायन्यादिवत् परस्परनियमो लभ्यते । न ह्यक्रियायां युगपत्संनिपातः, नापि विशेषणवशीकारसामर्थ्यम् । सत्यपि च द्वन्द्वदेवतापत्तिः । अकृतसमासयोश्च महदिन्द्रशब्दयोरनेकत्वात् विवक्षितैकसंख्यप्रातिपदिकनिमित्ततद्धितसंबन्धाभावप्रसङ्गः । किंच 'सुबन्तौ यदि वैतौ ते, न प्रातिपदिकं ततः । असुबन्तत्वक्लृप्तौ वा समासांशो न लभ्यते ॥' ( यौगपद्यनिरासमुपसंहरति– ) तस्मान्न युगपद्वृत्तिरिति क्रमवृत्त्या समासार्थस्यैव देवतात्वम् । अतश्चेन्द्र एव गुणसंयुक्तो महेन्द्रः, नार्थान्तरमिति पूर्वपक्ष एव शोभन इत्यन्यदुत्तरं वाच्यम् ।

( स्वमतेन पूर्वपक्षनिरासे सूत्रं योजयति–– ) तदुच्यते 'श्रुत्या हि देवता यागे समवैति न रूपतः । तस्मान्माहेन्द्रशब्दोक्त्या महेन्द्रो देवतेष्यते ॥' यद्यप्यभिन्नोऽर्थः तथापि 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना' ( १०।४।१२।२३ ) इति महेन्द्रशब्देनैवोच्यमानस्यास्मिन् ग्रहयागे देवतात्वं नान्यथा । तत्र सकलपर्यायेणापि बृहदिन्द्रादिशब्देनोच्यमानस्य देवतात्वं न भवति, किमुत न्यूनेनैवेन्द्रशब्देन । तथाहि, 'अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः । मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥' देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वात् चोदनैव एकं प्रमाणम् , सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैवानुष्ठानेऽपि संपाद्येत, ततस्तत्प्रमितोऽयमित्यवसीयते । किंचिदपि चेदिहान्यथा



जातं निवृत्तव्यापारायां चोदनायां प्रमाणान्तरं मृग्यम् , न च तदस्तीत्यप्रमाणता । यथा वक्ष्यति 'स एवाग्निरष्टाकपालस्य देवता नाऽऽज्यस्य' ( २।२।३।६ भा. पृ. ४८७ ) इति । तेन व्यवस्थावशात् यथैवेन्द्रे चोदितेऽग्नेर्देवतात्वं न भवति, सोमस्य च चोदिते न पुरोडाशस्य, अभिषुतस्य च न लतायाः, शुद्धे च न सगुणस्य, तथैव गुणवति चोदिते न निर्गुणस्य । कुतः ? 'देवता हि विधेयत्वाद्विवक्षितगुणेष्यते । लक्षणत्वे तु तस्याः स्यादविवक्षा गुणादिषु ॥' यदि हि तद्धितसंबन्धे देवतोद्दिश्यमाना स्यात्, ततोऽस्या गुणाविवक्षा भवेत् । इयं पुनरविधीयमाना देवतात्वमेव न प्रतिपद्यते, इत्यवश्योपादातव्या । ततश्च विवक्षितगुणत्वात्तदपाये न कथंचिद्देवतेति गम्यते । यथा 'शुक्लवासा भोजयितव्यः' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इति विशेषणरहितानामकर्माङ्गत्वम् । यदा तेऽप्युद्दिश्यन्ते योऽयं शुक्लवासास्तमानयेत्यादौ, तदा विनाऽपि विशेषणेनाऽऽनीयन्ते । तदिह यद्यपि तावद्देवता रूपेणोपकुर्यात्, तथापि न गुणरहिता आश्रीयेत, किमुत यदा अभिधानोपकारिणी विधिगतव्यतिरिक्ताभिधानाभिहिता नैव प्रत्यभिज्ञायते सैवेयं देवतेति । समासेन च विधीयमानायां नानेकार्थविधिदोषप्रसक्तिः । तत्र माहेन्द्रग्रहगता न कथंचिदिन्द्रशब्देनोच्यते । या तु तेनोच्यते, सा तत्र नैव देवता इति अनर्थकमेवास्याः प्रकाशनम् । ( शुद्धेन्द्रदेवतात्वनिरासेऽपि विधिश्रुत्या सम्यक् अवायः अवगमो यस्य देवतात्वस्य तत् श्रुतिसमवायि, तस्य भावः श्रुतिसमवायित्वं इत्येवं सूत्रं (१६) योजयति–) अतश्च 'न श्रुतिसमवायित्वात्' इत्ययमपि सूत्रार्थो भवति श्रुतिसमवेतं देवतात्वं भविष्यति तदधीनज्ञानमित्यर्थः । तच्च तद्धितसंवादे सति ज्ञायते । ( अधिष्ठानाभेदेऽपि देवतारूपं भिन्नमित्युपसंहरति– ) तस्मादस्ति देवताभेद इति ।

कथं त्वस्मिन् पक्षे भाष्यगमनिका । तदभिधीयते । पूर्वपक्षवादी तावदनुत्कर्षं प्रगाथस्य वदति, यश्च माहेन्द्रात् ग्रहादिन्द्राभिधानसमर्थमन्त्रानुत्कर्षं वदति तेनाकर्माङ्गभूतार्थप्रकाशनवैयर्थ्यादिन्द्र एवात्र शुद्धो देवताभूतः प्रकाश्यते इत्यभ्युपगतं भवति । तस्य च देवतात्वं नाभ्युपगममात्रेण सिध्यति, नापि प्रमाणान्तरेणेति य एतद्ग्रहोत्पत्तिवाक्ये देवताभिधानशक्तिस्तद्धितः श्रूयते 'माहेन्द्रं गृह्णाति' इति तत्संयोगात् विज्ञायते । स च यदि समासान्निष्कृष्य केवलादिन्द्रशब्दादुत्पाद्यते, ततो मन्त्राभिधेयसदृशं देवतात्वमुक्तं भवति । सिद्धवच्चैतमर्थं पूर्वपक्षवादिनोऽभिप्रेतं मन्वानो निष्कृष्य ब्रवीति 'इन्द्रोऽस्य देवता' ––इति तद्धितसंयोगेन ज्ञायते, न चास्य महत्त्वमपेक्षमाणस्य, अकृते समासे शुद्धस्योपसर्जनीभूतस्य 'तद्धितसंयोगः' 'तद्धितसंयोगापेक्षस्य वा' इति । सत्यपि सापेक्षप्रधानसमासे प्रातिपदिकावस्थायां तद्धितापेक्षा, न च तदानीमसुबन्तत्वात् समासोपपत्तिः । तेन यत्रैव पृथग्भूतं सुबन्तं संबन्धार्हमेव पदान्तरमपेक्षते यथा 'राजपुरुषः शोभनः' इति, तद्विषयमेवैतत्, 'भवति वै प्रधानस्य सापेक्षस्यापि समास' इति द्रष्टव्यम् । अकृते च समासे तद्धितापेक्षायां वाक्यात्तद्धितोत्पत्तिरित्यभ्युपेतं स्यात् । शुद्धस्य वा तद्धितसंस्पर्शाद्विशेषणानन्तर्गतिप्रसङ्गः । क्रमवृत्तिः पुनर्भवतो नाभिप्रेतैव, पूर्वं तद्धितसंबन्धे पूर्वोक्तावेव द्रव्यविशेषणोत्तरपदवृद्धिप्रसङ्गदोषौ । न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसंबन्धः । तेनैकस्मिन्नेव प्रयोगे तन्त्रसंबन्धोऽभ्युपगन्तव्यः । ततश्च 'ऐकशब्द्ये परार्थवत्' ( १।४।५।८ ) इति तथैव वैरूप्यदोषः ।

'विस्पष्टश्चायमन्योऽर्थः' इति प्राक्समासादनेकार्थविधेः समासपदलभ्यत्वाद्वाक्यभेदमाह । कृते तु समासे नैष दोषः । 'तस्मान्नेन्द्रो देवता अमहत्त्वविशिष्टः' शुद्धः किं तर्हि, विशिष्ट एव । अथवा नेन्द्रो देवता केवलपदोपात्तः शुद्ध इत्यभिप्रायः । कथं तर्हि, महत्त्वविशिष्टः, समासप्रातिपदिकात्तद्धितोत्पत्तेः । 'न त्ववयवसंबन्धेन' इति नावयवप्रसिद्धिनिराकरणपरम्, किं तर्हि, नावयवसंबन्धेन तद्धितोत्पत्तिः निष्क्रष्टुमशक्यत्वादित्यभिप्रायः । 'तस्माद्देवतान्तरम्' इति । सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणाद्देवतान्तरत्वम् । आह च–

'आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥ ' 'यदप्युच्यते इन्द्रस्य वृत्रवधोत्तरकालं' इति । पूर्वं सर्वत्र शुद्धात्मनः प्रतिपन्नदेवतात्वस्य पश्चात्तनोऽयं गुणः स्तुतिमात्रोपयोगी, न देवतात्वेऽन्तर्भवतीति मन्यते । अस्य तूत्तरं गतार्थम् ।

स्थिते च देवतान्तरत्वे, शुद्धस्य देवतायाः प्रकाशनम्, शुद्धेन वा विशिष्टस्य, विशिष्टचोदनायामपि वा शुद्धस्य देवतात्वम्, शुद्धशब्दोच्चारणेऽपि वा विशिष्टे देवतात्वं प्रतिपद्यते इत्यादि सर्वमन्धकारनिरीक्षितं साहसमात्रेणाभ्युपगम्येत, न चैतद्युक्तम् । अतो यत्र विधिमन्त्रयोर्देवतासंवादः तत्र प्रगाथो नीयेत । अस्मत्पक्षे पुनः

**'यां कांचिदप्युपादाय देवतां साधिता स्तुतिः । अदृष्टं यागमात्रार्थं करोत्याराादवस्थितम ॥'**

**गुणश्चानर्थकः स्यात् । १८ ॥**

**भाष्यम्**— यदा विधिशब्दादवगतमेतद्भवति इन्द्रो देवतेति, तदाऽस्य गुणान्वाख्याने किं प्रयोजनम् ? महत्त्वं नामेन्द्रस्य गुणो भवतीति । देवताभिधानं कथं तस्यै देवतायै दीयते इति । गुणेऽपि हि विहिते सति तस्यै एव देवतायै दीयते, अविहितेऽपि । तस्माद् गुणविधानमनर्थकम् । अथोच्येत, योऽस्मिन् ग्रहे इन्द्रः स महानिति । नैवम् । ग्रहसंबन्धस्याप्रसिद्धत्वात् विशेषणं नात्र कल्प्यते, गुणसंबन्धस्य चाप्रसिद्धत्वात् गुणेन विशेषणमनवक्लृप्तम् । तस्मादपि देवतान्तरम् ।

**वा**— यदि चाऽऽदिमान् अनादिर्वा गुणः केवलमिन्द्रस्तुत्यर्थमेवोपादीयते, न देवतात्वेऽन्तर्भवति, ततोऽस्योपादानमेवानर्थकं स्यात् । सर्वा हि देवता एवमर्थमभिधीयते विधीयते वा, कथं नाम तदुद्देशेन कर्म क्रियेतेति । यदि चाविहिते विहिते च गुणे केवलेनेन्द्रेण व्यवह्रियते, ततो नार्थो गुणाभिधानेन । किंच **'गुणोऽनन्तर्गतश्चात्र पश्चादभिहितो भवेत् । लक्षणत्वेन वोक्तः सन्नचाप्राप्तेस्तदस्ति ते ॥'** नहि ग्रहसंबन्धः इन्द्रस्य प्राप्तः, येन तद्गतेन्द्रानुवादेन महत्त्वं केवलमेव स्तुत्यर्थमुच्येत । न च महानिन्द्रः प्राप्तः, यतो गुणेनोपलक्ष्य विधीयेत । तस्मादप्राप्तविधेर्देवतान्तरता ।

**तथा याज्यापुरोरुचोः । १९ ॥**

**भाष्यम्**— एवं सति याज्यापुरोनुवाक्ययोर्भेदेन दर्शनमुपपद्यते । 'एन्द्र सानसिं रयिम्' इत्यैन्द्रयाज्यापुरोनुवाक्याद्वयम्, 'महाँ इन्द्रो य ओजसा' इति भेदेन माहेन्द्रं दर्शयति । तदेकत्वे विकल्प्येत । तत्र पक्षे बाधः स्यात् ।

**वा**— पूर्ववन्मन्त्रव्यपदेशभेदव्यवस्था ।

**वशायामर्थसमवायात् । २० ॥**

**भाष्यम्**— यदुक्तम्, अजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्तीति । तत् युक्तम् । वशायामर्थसमवायित्वं वयं प्रत्यक्षमवगच्छामः । 'छागस्य वपाया मेदसोऽनुब्रूहि' इति । यैव वशा सैव छागेति । तस्मात् प्रगाथस्योत्कर्षः संस्कारपक्षे । अतः प्रधानकर्मणी इति ।

**वा**— वशादिद्रव्याणामर्थरूपोपकारित्वात् प्रत्यक्षलभ्ये विशेषे सामान्येनापि सिद्धेर्न विधिशब्दादरः ।

**यत्रेति वाऽर्थवत्त्वात् स्यात् । २१ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति संस्कारकर्मणी एव स्तोत्रशस्त्रे । यच्चैतत् प्रगाथस्योत्कर्ष इति । उत्कृष्यता यत्रेन्द्रस्तत्र प्रगाथः । लिङ्गेन हि क्रमसंनिधी बाधितव्यावेव ।

**वा**— बलवत्प्रमाणविरोधे संस्कारपक्षः त्यज्येत, न च सोऽस्ति, लिङ्गबलीयस्त्वादुत्कर्षसिद्धेः इत्यपर्युदासः संस्कारपक्षस्य । **'अथ वाऽर्थैकदेशोऽयं समासार्थप्रकाशनम् । करिष्यत्यविरोधाय मनोतास्थाग्निशब्दवत् ॥'** अनुत्कृष्यमाण एव वा प्रगाथः संनिधिवशात् अवयवद्वारेण महेन्द्रमविरोधाय दृष्टार्थत्वाय च प्रकाशयिष्यति, यथाऽग्नीषोमीये मनोतायामग्निशब्दः प्रकरणात् समासस्थः प्रतीयमानः साहचर्यात् सोममपि प्रतिपादयन् समुदायार्थो विज्ञायते । अतश्चानुत्कर्षेऽप्यदोष इति ।



**न त्वाम्नातेषु । २२ ॥**

**भाष्यम्**— अपरेषां मन्त्राणामुत्कृष्टानां अन्यत्रार्थवत्ता नास्ति, तेषामानर्थक्यं स्यात् । यथा 'याम्याः शंसति' 'शिपिविष्टवतीः शंसति' 'पितृदेवत्याः शंसति' आग्निमारुते, कुषुम्भकसूक्तम्, अक्षसूक्तम्, मूषिकासूक्तमित्येवमादीनाम् ।

**वा**— **'आम्नातेष्वपि मन्त्रेषु नोत्कृष्टेष्वर्थदर्शनम् । सर्वेषु भवतीत्येवं नोत्कृष्टत्वं न दुष्यति ॥'** नहि यमादीनां ग्रहान्तरेष्वपि देवतात्वम्, येनेन्द्रवदुत्कृष्टैर्मन्त्रैः प्रकाश्येरन् । अतस्तेषां तावद्विध्यानर्थक्यप्रसङ्गात् अवश्यमदृष्टार्थत्वेन भवितव्यम् । ततश्च तत्सामान्यादितरेषु तथात्वम्, तस्मात्र संस्कारकर्मत्वमिति ।

**दृश्यते । २३ ॥**

**भाष्यम्**— तदुच्यते । सर्वेषामर्थवत्ताऽस्ति । मण्डूकसूक्तस्याग्नौ, अक्षसूक्तस्य राजसूये, मूषिकासूक्तस्यैकादशिन्यां, सर्वेषां वाचस्तोमे 'सर्वा ऋचः सर्वाणि यजूँषि सर्वाणि सामानि वाचस्तोमे पारिप्लवं शंसति' इति । तथा 'यस्याऽऽश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात्' इति । तस्मादस्त्यर्थवत्तोत्कृष्टानाम् । अतः संस्कारकर्मणी स्तोत्रशस्त्रे इति ।

**वा**— **'यमादयो न विद्यन्ते यद्यपि ग्रहदेवताः । अन्यकर्मोपयोगित्वात् प्रकाश्याः स्युस्तथाऽपि नः ॥'** मण्डूकसूक्तस्याग्नौ प्रयोगः, तत्र मण्डूकेनाग्निविकर्षणाम्नानात् । अक्षसूक्तस्य राजसूये, तत्र 'अक्षैर्दीव्यति' इति विधानात् । मूषिकासूक्तस्यैकादशिन्याम्, 'आखुस्ते पशुः' इत्युपशयसंबन्धसंकीर्तने सति तद्द्वारेणोपशयस्यैव स्तुतिः । कुषुम्भकसूक्तादीनां तु यदि क्वचिद्विशेषरूपेणार्थो नास्ति, ततः सामान्यविधानेनार्थवत्ता भविष्यति, वाचःस्तोमे सर्वमन्त्रोपदेशात् । तथा आश्विने सूर्योदयावधि समाप्त्यसंभवे सर्वासामृचामुपदेशात् । तत्र वचनेनैव असमवेतार्थमन्त्रविधानसामर्थ्यात् अगतेरदृष्टार्थाश्रयणम्, न च क्वचिददृष्टार्थत्वेन सर्वत्रैव दृश्यमानमप्यर्थं प्रोज्झ्य अदृष्टार्थत्वकल्पना युज्यते । तथाहि, **'न जपादावदृष्टार्थे वैष्णव्यादिनिदर्शनात् । याज्यादावपि दृष्टार्थे स्याददृष्टार्थकल्पना ॥'**

**अपिवा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् । २४ ॥**

**भाष्यम्**— अपिवा प्रधानकर्मणी स्तोत्रशस्त्रे स्याताम् । कुतः ? श्रुतिसंयोगात् । सप्तमीश्रुतिसंयोगो हि भवति । 'कवतीषु स्तुवते' 'शिपिविष्टवतीषु स्तुवते' इति । यदि स्तुतिः ततः कवती अक्षरेष्वाहिता । यदि प्रकाशनम्, ततो देवतायाम् । तत्र करणं कवत्यः तृतीयया अश्रोष्यन्त, न सप्तम्या । अपि च, श्रुतिसंयोगो भवति 'प्रउगं शंसति' 'निष्केवल्यं शंसति' इति । अतः स्तुतिरभिनिर्वर्तयितव्या तेन मन्त्रेण । गुणवचनः शब्दः स्तुतिनिर्वर्तनार्थो दृष्टमर्थं करिष्यति । तस्मात् प्रधानकर्मणी । अपि च श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः । यथा 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति । तेन देवताशब्दः स्तुतिसंबन्धार्थः इत्युच्यते । देवताभिधानार्थे प्रातिपदिकार्थत्वात् प्रथमा स्यात् । अथ यत् प्रथमान्तम्, तद्देवतार्थं भवितुमर्हति यथा 'इन्द्रो यातोऽवसितस्य राजा' इति । नेत्युच्यते । तदपि वाक्यसंयोगात् स्तुत्यर्थमेव । ननु वाक्याल्लिङ्गं बलीयः । सत्यम् । एतदपि लिङ्गम्, यत् स्तुतिवाक्यस्य साकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यम् । तथाऽपि उभयथा लिङ्गे अनुगृह्यमाणे कुतो निर्णयः, वाक्यशेषादेव, न देवताभिधानार्थ इति । देवताभिधानार्थ इत्येतस्मिन् पक्षे स्तुत्यर्थं साकाङ्क्षवचनमनर्थकमेव स्यात् । तस्माददृष्टार्थत्वात् स्तुतिवचनस्य प्रधानकर्मणी स्तोत्रशस्त्रे । अपिच, 'स्तौति' 'शंसति' इति साक्षात् गुणवचनौ लक्षणया अभिधार्थौ स्याताम् । तस्मात् क्रियोत्पत्तिं अपूर्वोत्पत्तिं विदध्यातामिति ।

**वा**— यदुक्तं मनोतायामिवाग्निशब्दः इन्द्रशब्दः समासार्थं लक्षयिष्यतीति । तदयुक्तम् । कुतः ? एतस्मादेव दोषात् । नहि इन्द्रशब्दस्य स्वार्थमभिदधतः कश्चिद्विरोधः, येन श्रुतिवृत्तिं जह्यात् । सर्वादृष्टार्थानां

च यथाकथंचिल्लक्षणया दृष्टार्थत्वापादनसंभवात् अयुक्तमेतत् । यत्तूक्तमुत्कृष्यतामेवेति । तदयुक्तम् । कुतः । '**प्रकृतस्तोत्रशेषत्वं श्रुत्या संनिधिक्लृप्तया । विना सामान्यसंबन्धाल्लिङ्गं चाविनियोजकम् ॥**' यदि ह्येकान्तेन प्रथमं दृष्टार्थत्वमवधारितं स्यात्, ततः क्रमसंनिधिकल्प्या श्रुतिर्बाध्येत । यतस्तु विनियोगोत्तरकाला प्रयोजनकल्पना, न तद्वशेनैव विनियोगः, तेन क्रमसंनिधिभ्यां विनियुक्ते दृष्टमदृष्टं वा प्रयोजनं कल्प्यमानं न विरुध्यते । न चोत्कृष्टस्य प्रगाथस्यान्यत्र विनियोगहेतुरस्ति । लिङ्गं हि देवतां प्रकाशयितुं सामर्थ्येन तन्मन्त्रं स्वरूपे विनियुञ्जीत, तथा चास्यानर्थक्यप्रसङ्गः । कर्मसंबन्धे तु न कश्चिदस्य व्यापारः । तदेतल्लिङ्गं यदि सामान्यतः केनचित्कर्मसंबन्धः क्रियते, ततः कथं तस्योपकरिष्यतीत्यपेक्षिते, यथा शक्नोतीत्येवमाश्रयणात् देवताप्रकाशनद्वारेणेति विनियुङ्क्ते । न चात्र सामान्यसंबन्धकारणं पश्यामः । तस्मादुत्कृष्टानामानर्थक्यमेव स्यादिति अदृष्टार्थतैव न्याय्या । किंच '**एवं च सप्तमी षष्ठी द्वितीया स्तौतिशंसती । श्रुतिवृत्ता भविष्यन्ति त्वत्पक्षेऽन्यार्थवृत्तयः ॥**' गुणगुण्यभिधानक्रियाणां अक्षरारूढत्वात् सप्तमीश्रुतिसंयोगो घटते । प्रकाशने हेतुकरणत्वात् तृतीयायुक्ताः कवत्यादयः श्रूयेरन् । ननु स्तुतावपि कवतीनां करणत्वात्तृतीयैव प्राप्नोति । नैष दोषः, '**आधारत्वमपि ह्यासां करणत्वं च विद्यते । तत्रैतयोर्यथाभीष्टं निर्देश उपपद्यते ॥**' प्रकाशनं पुनः परमार्थतस्तावदात्माधारम् । कर्मत्वप्रतिपत्त्युत्तरकालं च व्याप्यत्वाद्देवताधारम् । तत्र कवतीनामैकान्तिकमेव करणत्वमिति वैषम्यम् । अपि च 'स्तौति' 'शंसति' इति स्तुतिभावना पूर्वापरीभूता श्रूयते । तस्यां च धात्वर्थः करणभूतः शेषाणि च कारकाणि नित्यं धात्वर्थं निष्पादयन्ति संबध्यन्ते । तत्र यदि मन्त्राः स्तोत्रनिर्वृत्त्यर्था भवन्ति, ततोऽपेक्षितार्थकरणात् शास्त्रदृष्टमर्थं कुर्वन्तो दृष्टार्था भवन्ति । प्रकाशनं तु कुर्वन्तः अचोदितकरणाददृष्टार्था भवेयुः । ततश्च वरं स्तुतीनामेव अदृष्टार्थत्वम् । किंच, '**श्रुत्यैव षष्ठी पारार्थ्यं देवतानां ब्रवीति नः । न प्रधानं गुणाश्चेष्टाः स्तुतेस्तेन प्रधानता ॥**' देवताप्राधान्ये हि प्रातिपदिकार्थपरत्वात् अव्यतिरिक्तार्थविषया 'अग्निर्मूर्धा' इतिवत् प्रथमैव श्रूयेत । यदपि किंचित्प्रथमान्तम्, तदपि योग्यतापूर्वकैकवाक्यत्ववशेन गुणसंबन्धार्थमेव । यथा इन्द्रो यातो जङ्गमस्य, अवसितस्य स्थावरस्य च राजेति । न च गुणानामुपयोगोऽस्तीति तत्प्राधान्यानाश्रयणे स्तुत्यर्थतैव युक्ता । सत्यमिति ग्रन्थच्छेदः (स्वतन्त्रं वाक्यम्) । तत्रार्थवादन्यायेन शेषपदानर्थक्यप्रसङ्गात् सत्यपि पूर्वत्र प्राधान्यपर्यवसानसंभवे स्तुत्यर्थेनैव एकवाक्यता युक्ता । न चैवं स्तौतिशंसत्योः प्रकाशनलक्षणार्थता भविष्यतीति स्तुतेरेव प्राधान्यम् ।

**शब्दपृथक्त्वाच्च । २५ ॥**

**भाष्यम्**— शब्देन पृथक्त्वमेव गम्यते । द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः । इतरथा हि द्वादशत्वं न स्यात् स्तोत्राणां शस्त्राणां च । एकमेव शंसनं स्तवनं च । अथ भेद आश्रीयते, ततो न द्वादशत्वे अवतिष्ठते ।

**वा**— पृथक्त्वनिवेशिनी द्विद्वादशसंख्या न प्रकाशनाभेदे सति शब्देनोच्यते । सामान्याविवक्षायां वा प्रत्यृचं प्रतिपदं च तन्निर्वृत्तेर्न द्वादशत्वेऽवतिष्ठते । ननु च स्तुतावपि तुल्यमेतत् । तथाहि, '**सामान्यस्तुतिरेकैव भेदोऽपि प्रत्यृचं स्थितः । न चान्यथा विवक्षाऽस्ति यतो द्वादशता भवेत् ॥**' अथ स्तोमवशात् ऋक्समुदायसाध्याः स्तुतयो गण्यन्ते, तथा प्रकाशनान्यपीत्यविशेषः । उच्यते— '**क्रियाः फलापवर्गिण्यस्तत्संख्यागणनाः सदा । अपूर्वद्वादशत्वाच्च द्वादशत्वं निरूप्यते ॥**' प्रकाशनार्थत्वे हि प्रत्यृचं प्रतिपदं च तन्निर्वृत्तिदर्शनात् क्रियासमाप्तेर्न किंचित्कारणमस्ति, येन द्वादशत्वं परिच्छिद्येत । अपूर्वार्थत्वे तु तेषां शास्त्रगम्यत्वात् यथोक्तस्तोमसंपदः प्राङ्निर्वृत्तिप्रमाणाभावात् ऋक्समुदायेनापूर्वनिर्वृत्तेः तद्द्वारेण क्रियासमाप्त्युपलक्षणात् अपूर्वाणां द्वादशत्वेन स्तुतिद्वादशत्वसिद्धिः । नहि प्रत्यृचं सर्वस्तोत्रेभ्यो वा तत्कल्पनायाः किंचित्प्रमाणमस्ति यथा प्रकाशनस्य दर्शनम् ।



**अनर्थकं च तद्वचनम् । २६ ॥**

**भाष्यम्**— अग्निष्टुति श्रूयते, 'आग्नेया ग्रहा भवन्ति' इति । तत्र पुनरुच्यते 'आग्नेयीषु स्तुवन्ति' 'आग्नेयीषु शंसन्ति' इति । तत्र विघातव्यमेव, यदि संस्कारकर्मणी । तस्मादपि प्रधानकर्मणी इति ।

**वा**— ऋचामनूद्यत्वात् आग्नेयग्रहचोदनयैव आग्नेयीनां स्तुतिसाधनत्वसिद्धेः 'आग्नेयीषु स्तुवते' इत्यनर्थकं वचनम् ।

**अन्यश्चार्थः प्रतीयते । २७ ॥**

**भाष्यम्**— 'संबद्धे वै स्तोत्रशस्त्रे' इति । यद्यन्यत् स्तोत्रमन्यच्छस्त्रम्, ततस्तयोः संबन्धः । यदि वा अपूर्ववचने ततोऽन्यत् स्तोत्रमन्यच्छस्त्रम् । इतरथा यदेव स्तोत्रं तदेव शस्त्रं स्यात् ।

**वा**— संबन्धस्य भेदनिबन्धनत्वात् संबन्धवचनेन स्तोत्रशस्त्रयोर्भेदः । स च प्रकाशनैकत्वान्न प्राप्नोति । ननु स्तुत्येकत्वादितरत्रापि तुल्यमेतत्, अथ प्रगीताप्रगीतमन्त्रसाधनत्वेन भेदः, तद्व्यक्तिद्वारेण वा, स पूर्वपक्षेऽप्यविशिष्टः । तत्रोत्तरं द्वादशत्ववत् । अत्यन्तभेदाद्धि स्तोत्रशस्त्रापूर्वयोस्तद्द्वारेण क्रिययोर्भेदमुपचर्य संबन्धवचनम् । न तु प्रकाशनं स्वतः फलतो वा भिद्यते ।

**अभिधानं च कर्मवत् । २८ ॥**

**भाष्यम्**— प्रधानकर्मणः इव चाभिधानं भवति द्वितीयासंयोगेन । 'प्रउगं शंसति' 'निष्केवल्यं शंसति' इति ।

**वा**— यदिदं द्वितीयाप्रतिपादितकर्मार्हमभिधानम्, इदं चापरं प्राधान्ये कारणम् । प्रधानक्रिया हि केनचिद्रूपेणेप्सिता 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इतिवद्भवति, न संस्कारक्रिया, अत्यन्तगुणभूतत्वात् । अथवा स्तोत्रशस्त्रसमाख्ययोरभिधानत्वं तत्प्राधान्यज्ञापनार्थम् । इतरथा हि प्रकाशनमित्येवं समाख्या स्यात् । अहवन्त्यादिवद्वा नैव भवेत् ।

**फलनिर्वृत्तिश्च । २९ ॥**

**भाष्यम्**— फलनिर्वृत्तिदर्शनं च भवति । 'स्तुतस्य स्तुतमसि' इत्येवमादि 'इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याशीर्यज्ञस्य भूयात्' इति स्तोत्रफलमनूद्यते, न देवतायाः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे । अन्यत्र सूत्रबद्धं प्रयोजनम् । दशमेऽध्याये 'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः प्रधानकर्मत्वादविकारः स्यात्' ( १०।४।२४।५० ) ।

**वा**— योऽयं मन्त्रे फलाशीरर्थवादः स स्तुतेः प्रधानत्वे घटते, सर्वत्र प्रधानविषयत्वात् प्रार्थनानाम् । त्वत्पक्षे तु '**देवतैव प्रधानत्वात् फलं याच्येत कर्मवत् । न स्वामिनि स्थिते कश्चिद्दासात् प्रार्थयते फलम् ॥**'

**शा**— प्रगीतमन्त्रसाध्यं गुणेन गुणिनः संबन्धाभिधानं स्तवनं स्तोत्रम् । शस्त्रमपि स्तवनमेव अप्रगीतमन्त्रसाध्यम् । 'आज्यैः स्तुवते' 'प्रउगं शंसति' इति गुणकर्माणि प्रधानकर्माणि वेति विचारः । तदर्थं च किं देवतां प्रति गुणभूतानि तत्प्रकाशनार्थानि, किंवा देवतां प्रति प्रधानभूतानि अदृष्टार्थानि इति । तत्र '**देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनम् । न युक्तं, तेन तादर्थ्यात् स्तोत्रादेर्गुणकर्मता ॥**' उच्यते । '**सत्यं दृष्टार्थता युक्ता श्रुतिश्चेन्न विरुध्यते । देवतास्मरणार्थत्वे श्रुतरूपं विहन्यते ॥**' तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ।

**सोम**— पूर्ववदिहापि गुणकर्मत्वं इति प्रत्यवस्थानात् **संगतिः** । तानि द्वैधाधिकरणोक्त-(२।१।३) प्रधानकर्मत्वापवादकतया तेन संगतिः । प्रकृते न केवलं प्रकरणाम्नानेन लक्षणा किंतु 'अभि त्वा शूर नोनुमः' इति प्रगाथस्य महेन्द्रग्रहयज्याभ्यासक्रमे उत्तराग्रन्थे पठितत्वात् उत्तराग्रन्थपठितस्य क्रत्वर्थतया तद्बलादेव इन्द्रशब्दस्य महेन्द्रे तात्पर्यग्रहात् संभवति लक्षणा । पूर्वोत्तरपक्षयोः उत्कर्षानुत्कर्षरूपं **प्रयोजनम्** ।

**वि**— 'प्रउगं शंसतीत्यादौ गुणतोत प्रधानता ।, दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥, स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम् । तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् ॥'

भाट्ट— ‘ आज्यैः स्तुवते ’ ‘ प्रउगं शंसति ’ इत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतया याज्यामन्त्रवदेव दृष्टार्थत्वात् अवघातादिवदेव संनिपत्योपकारकत्वम् । इति प्राप्ते, लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात्, प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तोत्रशस्त्रपदवाच्यत्वात्, एषां गुणिप्रकाशनतात्पर्यकत्वासंभवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम्, अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारकत्वात् तन्मन्त्राणां तदर्थत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्, लिङ्गादेव तादृक्त्वोपपत्तौ विधिवैयर्थ्यात् । एवं च माहेन्द्रयागसंनिधौ ऐन्द्री स्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम् । अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः, सामान्यसंबन्धबोधकप्रमाणाभावेन वा मनोतास्थाग्निशब्दवत् लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ।

मण्डन— ‘ न देवतार्थः स्तुतशस्त्रपाठः । ’ ६.

शंकर— ‘ स्तोत्रशस्त्रप्रधानत्वम् । ’ ८.

* स्तुतशस्त्राधिकरणम् । इदमेव महेन्द्राधिकरणम् । स्तोत्रशस्त्राधिकरणं चेदमेव । स्तोत्रशस्त्रेषु विनियुक्तानां मन्त्राणां कर्मसमवायिदेवतास्तुत्या देवतास्मरणार्थत्वं नास्ति इति स्तुतशस्त्राधिकरणे उक्तम् । सोम. १।२।१ पृ. ८. * स्तुतशस्त्राधिकरणे अपकर्ष उक्तः । वा. ३।२।६।१७, * स्तुतशस्त्राधिकरणे लिङ्गक्रमयोर्विरोधो दर्शितः ‘ अर्थेन त्वपकृष्येत ’ ( २।१।५।१४ ) इति । ३।३।७।१४ पृ. ८३६. * स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयोरदृष्टार्थत्वं वक्ष्यते तथापि तयोरभिधानात्मकयोरदृष्टार्थत्वेऽपि तन्मन्त्राणां अभिधानरूपदृष्टार्थत्वं न विरुध्यते । कु. १।२।४।४३ पृ. ४६. * स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयोः आरादुपकारकत्वं वर्णितम् । सोम. १०।४।२५.

* स्तुतशस्त्राधिकरणोदाहृतवृद्धश्लोके ‘ आचार्यो मातुलश्चैव द्रव्यैकत्वेऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥ ’ इत्यत्र विरुद्धानामपि अपेक्षाभेदेन एकत्र युगपत्संभवस्योक्तत्वात् वस्तुविरोधस्तावन्नास्ति । सु. पृ. ११११.

* वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन, ततश्च स्तुतशस्त्राधिकरणगतेन्द्रमहेन्द्रन्यायेन देवताभेदात् नास्ति पूर्वकर्मसमवायः इति न च वाच्यम् । कु. २।२।९।२३.

* स्तुतशस्त्राधिकरणवार्तिके ‘ तदर्थो यादृशो यत्र देवतात्वेन चोदितः । मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥ ’ इति व्याख्यातम् । सु. पृ. ७४२.

* स्तुतशस्त्रवान् षोडशिग्रहः । भा. १०।५।१२।४९–५२.

* स्तुतिः गुणगुणिसंबन्धकीर्तनम् । सु. पृ. ३९५. * स्तुतिः गुणगुणिसंबन्धकीर्तनम् । सा प्रथमं गुणगुणिभ्यां निर्वर्त्यते । तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात् । तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वात् एकान्तेन स्तुत्यर्थता । वा. २।१।५।१३ पृ. ४१६. * स्तुतिः गुणसंकीर्तनम् । सु. पृ. ८८५ । गुणसंकीर्तनपरः पदसमूहः स्तुतिः । वि. १०।५।३. * स्तुतिः नाम गुणकथनपरमेकं वाक्यम् । वि. ९।२।३, * स्तुतिः नाम स्तोतव्यस्य स्तावकैर्गुणैः संबन्धकीर्तनं गानविशिष्टम् । २।१।५, * स्तुतिः विद्यमानगुणैरिव अविद्यमानगुणैरपि भवति । ९।१।१६. * स्तुतिः । ‘ विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धमितरेणावधार्यते ॥ ’ वा. १।४।१३।२४. * स्तुतिः साम्नैव, न ऋचा । वि. ९।२।८. * न च प्रत्यक्षविरुद्धा स्तुतिः संभवति । वा. १।२।१।२ पृ. १०८. * ननु ‘ इदं विष्णुर्विचक्रमे ’ इति स्तुतिरियम् । न खलु, नास्त्यत्र स्तुतिशब्दः । नापि किंचित्स्तोतव्यमस्ति । ननु विष्णुः । न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः क्वचिदङ्गीक्रियते । भा. १२।४।१।१ पृ. २२७०.



* न हि तेनैवात्मना तस्य संस्तुतिर्भवति । कुतः ? अत्यन्तभेदात् स्तुतिस्तुत्ययोः । न हि देवदत्तो देवदत्तेन स्तूयते । भिन्नैः शिरःपाण्यादिभिः संस्तूयते । भा. १०।६।१३।३५ । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सरसत्रस्य । ‘ यन्ति वा एते मिथुनात् ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतः ( महाव्रते ), तेनैव मिथुनान्नयन्ति ’ इति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेण अनुजिघृक्षन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोकेऽपि अवयवधर्मेण अवयवी संस्तूयते एव । यथा दीर्घैः केशैः शोभनो देवदत्तः इति । १०।६।१३।४३. * यस्य स्तुतिस्तस्य विधानं यच्च विधीयते तस्य स्तुतिः इति परिभाषा । वा. ३।४।११।३० पृ. ९६४. * यत्र ‘ आज्यैः स्तुवते ’ इति चोदना तत्र कानिचित् पदानि गुणं प्रत्याययन्ति कानिचित् गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति । स्तुतिचोदनासु स्तुतिमात्रस्य गुणाभिधानात्मकस्य चोदितत्वात् विपरिवृत्त्या न गुण्यर्थव्याप्तिर्विवक्ष्यते । करणेषु ( अभिधानेषु तु ) विपरिवृत्त्या स्तुतिर्गुणिनं व्यापयति । टुप्. १२।४।१।१. * सर्वत्र अल्पैर्बहुभिर्वा अक्षरैः स्तुतयो दृश्यन्ते । श्रोतृप्रकारानेकत्वाच्च क्वचित् काश्चित् अर्थवत्यो भवन्ति । वा. १।४।११।२०.

* स्तुत्यर्थः आदित्य इति शब्दो यूपस्य । वि. १।४।१५, * स्तुत्यर्थः ‘ ऐन्द्रो राजन्यः ’ इत्यैन्द्रशब्दो राजन्यस्य । १।४।१४. * स्तुत्यर्थः गवादीनां अपशुशब्दः ‘ अपशवो वा अन्ये गोअश्वेभ्यः ’ । भाट्ट. १।४।१६ ( १३ ). * स्तुत्यर्थः छन्दोमस्य असत्रशब्दः ‘ असत्रं वा एतद्यदच्छन्दोमम् ’ । वि. १।४।१६, * स्तुत्यर्थः प्राणभृदादिशब्दः । १।४।१८, * स्तुत्यर्थः ब्राह्मणस्य ‘ आग्नेयो वै ब्राह्मणः ’ इत्याग्नेयशब्दः । १।४।१४, * स्तुत्यर्थः यजमानशब्दः एककपालस्य ‘ यजमान एककपालः ’ । १।४।१३, * स्तुत्यर्थः यजमानशब्दः प्रस्तरस्य ‘ यजमानः प्रस्तरः ’ । १।४।१३, * स्तुत्यर्थः यूपस्य यजमानशब्दः ‘ यजमानो यूपः ’ । १।४।१५, * स्तुत्यर्थः वैश्यस्य वैश्वदेवशब्दः ‘ वैश्यो वैश्वदेवः ’ । १।४।१४, * स्तुत्यर्थः साम्नः अयज्ञशब्दः ‘ अयज्ञो वा एष योऽसामा ’ । १।४।१६.

* स्तुत्यर्थताऽपि असत्यस्य नास्तीति व्यवस्थितमेव । वा. १।२।१।३. * स्तुत्यर्थता आग्नेयपुनःश्रुतेः ‘ यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति ’ । २।३।१४।२७–२९. मीको. पृ. ८३२ ‘ आग्नेयस्तुत्यर्थताऽधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* स्तुत्यर्थवादः विधायकरूपविध्येकवाक्यत्वम् । सु. पृ. ११७१.

* स्तुतिपदवाच्यप्राशस्त्यं बलवदनिष्टाननुबन्धित्वयोग्यत्वम् । अर्थवादेषु । भाट्ट. १।२।१.

* असताऽपि गुणेन असतोऽपि गुणिनः स्तुतिबुद्ध्युत्पत्तिसंभवः । बाल. पृ. ७२.

* स्तुतिभाक्त्वलक्षणं देवतात्वम् । सु. पृ. ७५२.

* स्तुतिमन्त्राः ‘ अग्निर्मूर्धा दिवः ’ इति । भा. १२।४।१।१, बाल. पृ. ५१. * स्तुतिमन्त्राः — येषु कानिचित्पदानि गुणं प्रत्याययन्ति कानिचित् गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति । स्तुतिचोदनासु स्तुतिमात्रस्य चोदितत्वात् विपरिवृत्त्या न गुण्यर्थव्याप्तिर्विवक्ष्यते । टुप् १२।४।१।१. * स्तुतिमन्त्राणां समुच्चयः । भा. १२।४।१।१–२. * स्तुतिमन्त्रेषु सजातीयैः समुच्चयो न विकल्पः । वि. १२।४।१.

* स्तुतिमात्रं यत्र कस्यचिद् विधानार्थं तदनर्थकं इत्युक्तं ‘ आम्नायस्य क्रियार्थत्वात्० ’ ( १।२।१।१ ) इति । भा. २।३।१४।२९.

* स्तुतिशब्दस्य गुणवत्त्वाभिधानवाचित्वम् । सु. पृ. ७८५.

स्तुत्ये बले तु बलवान् परिकोपमेतीति न्यायः । अयं महान् जनः महत्सु जनेष्वेव पराक्रमं करोति, न दुर्बलेष्विति भावविवक्षायामवतरतीति । साहस्री. ७९५.

* ‘ स्तूयते स विधीयते ’ इति न्यायः । ‘तेजो वै घृतम्’ इत्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वात् विधेयत्वं

गम्यते, 'स्तूयते स विधीयते' इति न्यायात्। वि. १।४।१९.

* **स्तेनप्रायश्चित्तेन** स्तेयलब्धद्रव्यस्य कर्मार्हत्वाभावः। सोम. ६।५।१ पृ. ४९३.

* **स्तोकेन** स्तोकाद्वा मुक्तः इयं करणे पञ्चमी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः। बाल. पृ. ४५.

* **स्तोकार्थविधिसंभवे** तावत् विधायको बहुतरार्थविधानमुपेक्षते। ( इति परिभाषा )। ( श्लो. ) 'स्याद् बह्वर्थविधानं ते स्तोकार्थविधिसंभवे। मत्वर्थश्चोपलक्ष्येत पदत्यागोऽन्यथा भवेत्॥' होमस्य फलभावनाकरणत्वात् भावयेदिन्द्रियं होमेन इत्येवमवस्थितस्य करणभूतेनैव दध्ना समत्वात् संबन्धे अनुपपद्यमाने अवश्यं मत्वर्थलक्षणा परिग्रहीतव्या दधिमता होमेन इति। न च तस्यां किंचित् प्रमाणमस्ति। न च दधिशब्दस्य असति प्रवृत्तिनिमित्ते कर्मनामधेयत्वं घटते। सोऽयमुभयस्मात् भ्रष्टः दधिशब्दः अनर्थक एव प्राप्नोति। ततश्च शब्दधर्मसंनिकर्षानुग्रहेण धर्मी एव शब्दः परित्यागात् बाधितः इति बाध्यतेतरां श्रुतिः। गुणसमभिव्याहारपक्षे तु न कस्यचित् बाधः। वा. २।२।११।२६ पृ. ५४८.

* **स्तोतव्यं** साम्नैव न ऋचा। ९।२।८।२९-३०. **मीको.** पृ. ४२७६ 'साम्नैव स्तोतव्यम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **स्तोत्रं** अर्थकर्म, 'स्तौति' इति कर्तव्यताप्रतीतेः। वि. १०।४।२२. * स्तोत्रं एकापूर्वसाधनीभूतस्तुतिसमूहः। सु. पृ. ८८५. * स्तोत्रं प्रगीतमन्त्रसाध्या स्तुतिः। वि. २।१।५. * स्तोत्रं स्तुतिरेव। वा. २।१।५।१३ पृ. ४१६. * उक्थ्येषु उत्कृष्टेषु षोडशिस्तोत्रं उत्कृष्यते न वेति चिन्तायां उत्कर्षः इति सिद्धान्तः। ग्रहणस्य षोडशियागाभ्यासकल्पकत्वेन अन्तरङ्गत्वात् तत्क्रमस्य प्राबल्यम्, स्तोत्रे ग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेश्च बाधप्रसङ्गेन एकस्यैवास्य समयाध्युषितकालबाधस्य न्याय्यत्वात्। **भाट्ट.** ५।१।१८. * **स्तोत्राणि** सर्वाणि एकविंशानि भवन्ति षोडशिनि। टुप्. ९।२।५।२४ वर्णकं २. * **स्तोत्रस्य** उपाकरणं ग्रहग्रहणोत्तरं भवति। उपाकरणं आरम्भणम्। वि. १०।५।१२.

* **स्तोत्रातिदेशः** पञ्चोक्थ्य-शतोक्थ्य-शताग्निष्टोम-शतातिरात्रादिषु ज्यौतिष्टोमिकोक्थ्याग्निष्टोमातिरात्रादिभ्यः। **भा.** ८।३।५।१०-११.

* **स्तोत्रान्तरगतस्तोममात्रबाधकं** अग्निष्टुति श्रुतं त्रिवृत्त्वम्। १०।६।७।२२-२३. **मीको.** पृ. ६१ 'अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **स्तोत्रापूर्वप्रयुक्ता** हि गीतिः, न वर्णस्वरूपप्रयुक्ता। टुप्. ९।१।१८।५५.

० **स्तोत्रादौ** सवनीयादौ च सवनान्तरगते यथासवनं स्वरः। सु. पृ. ११८०, * मन्द्रादिस्वरलाभस्य सवनाधारत्वाविशेषेण स्तोत्रादिष्वपि अवगतत्वेन संभवात् स्तोत्रादौ मन्द्रादिस्वराभावापत्तिरूपो दोषो नास्ति। पृ. ११८०.

* **स्तोत्रविशेषस्य** नामधेयं आज्यशब्दः। 'पञ्चदशान्याज्यानि'। वि. १।४।३, * स्तोत्रविशेषस्य नामधेयं पृष्ठशब्दः 'सप्तदशानि पृष्ठानि'। १।४।३, * स्तोत्रविशेषस्य नामधेयं बहिष्पवमानशब्दः 'त्रिवृद्बहिष्पवमानम्'। १।४।३.

* **स्तोत्रशस्त्रे** यागस्याङ्गभूते ग्रहग्रहणनिमित्ते। **भा.** १०।५।१२।५०, * स्तोत्रशस्त्रे स्तौति शंसति इति कर्तव्यतावगमात् प्रधानकर्मणी। १०।४।२०।३९, * **स्तोत्रशस्त्रयोः** प्राकृतयोः अग्निष्टुति अविकारः। १०।४।२४।४९.

* **स्तोत्रशस्त्राधिकरणम्।** ( २।१।५।१३-२९ ) स्तुतिस्तु गुणतात्पर्यकं अभिधानं अदृष्टार्थकं इत्युक्तं स्तोत्रशस्त्राधिकरणे। **भाट्ट.** १२।४।१.

* '**स्तोत्रशस्त्रानुवाक्यादिशेषस्तु** सवनस्य यः। षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः॥ इत्युक्ते, नैष दोषोऽस्ति, यतः षष्ठ्या विनाऽप्ययम्। षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः॥ यदि वा स्तोत्रशस्त्रादि



कृत्स्नं सुत्याङ्गमेव नः। आधार एव तस्यापि सवनानीतराङ्गवत्॥ नानावेदस्वरस्तस्मात् स्तोत्रादेः प्राप्त आदितः। प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः॥ ततो वाचनिकेनैव यथावचनभाविना। मन्द्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्ज्महे॥' वा. ३।३।२।९ पृ. ८१२-१३.

* **स्तोत्रशस्त्रादयः** षडहधर्माः षडहावृत्तौ आवर्तन्ते। ते हि अहःसंबद्धाः। तेषामह्नामावृत्तिरिति स्तोत्रशस्त्रादीनामावृत्तिरित्युक्तम्। न हि ते अहःसु अवसानसंयोगेन चोद्यन्ते। **भा.** १०।६।१०।३०. * **स्तोत्रशस्त्रादीनां** अदृष्टार्थानां वचनसामर्थ्यात् ग्रहणम्। वा. ३।३।३।१०.

* **स्तोत्रशस्त्रमन्त्राणां** आरादुपकारकत्वम्। सु. पृ. १०२. * स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेव अग्निष्टुति अविकारेण प्रयोगः। **भा.** १०।४।२४।५०. **मीको.** पृ. ६५ 'अग्निष्टुति स्तोत्रशस्त्रमन्त्राणां०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **स्तोत्रसाधनत्वं** विक्रय्यपूर्वार्थम्, प्रगीताया एव ऋचः। **भा.** ९।२।८।३०-३१ वर्णकं १.

* **स्तोत्रीयः** नाम तृचः ज्योतिष्टोमे बहिष्पवमानादौ प्रथमः 'उपास्मै गायता०' इत्यादिः। वि. ५।३।४, * **स्तोत्रीया** ऋक्। साम्नो योनिभूता प्रथमा ऋक्। ९।२।६. * **स्तोत्रीयाः** विश्ववत्यः भूर्नामयागे। **भा.** १०।३।१४।५६.

* **स्तोभः** गीत्युपायः अन्यतमः। **भा.** ९।२।७।२९. * स्तोभः नाम अधिकत्वे सति ऋग्विलक्षणवर्णत्वम्, ऋग्विलक्षणवर्णत्वं चार्थानभिधायकत्वम्। वि. ९।२।११. * **स्तोभाः** सामशब्दार्थैकदेशः इति भाष्यम्, नेति वार्तिकम्। के. (९।२।१०।३५).

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत्। ९।२।१०।३३॥**

'यद्योन्यां तदुत्तरयोर्गायति' अत्र उत्तरावर्णवशेन गातव्यं न योनिवर्णवशेन इत्यवगतम्। अथ स्तोभाः अतिदिश्यन्ते न वेति विचारे पूर्वपक्षमाह। एके आचार्याः द्रव्यान्तरे ऋगन्तरे उत्तरायां स्तोभस्य निवृत्तिं मन्यन्ते। ऋग्वत् ऋगक्षरवत्। यथा योन्यक्षराणां स्तोभाः उत्तरायां न प्रदिश्यन्ते तथा योन्यां गीतस्य स्तोभस्यापि उत्तरायां नातिदेशः इति।

**सर्वातिदेशस्तु सामान्याल्लोकवत् विकारः स्यात्। ३४॥**

योनौ गीतानां स्तोभानां उत्तरायां नातिदेशः इति पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह। स्तोभानां न निवृत्तिः। किंतु सर्वातिदेशः सर्वस्य साम्नः अतिदेशः। सामशब्दश्च ऋक्स्तोभस्वरकालाभ्यासविशिष्टस्य गीतिसामान्यस्य वाचकः। सामान्यात् सामान्यवाचकत्वात्। यद्यपि स्तोभाः ऋक्शब्दार्थैः न संबध्यन्ते तथापि नानर्थकास्ते। लोकवत् यथा लोके गायकैः अङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालगणनार्थानि न अर्थसंबन्धाय उच्चार्यन्ते तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्तेरन्। तस्मात् स्तोभोऽपि प्रक्षेपरूपो विकारः स्यात्। ततश्च स्तोभस्याप्यतिदेशः इति सिद्धान्तः।

**अन्वयं चापि दर्शयति। ३५॥**

योनिस्थानां स्तोभानां उत्तरयोर्ऋचोः अन्वयं दर्शयति 'यत्र आर्चिकानि पदानि निवर्तन्ते स्तोभा गेह्माश्चानुयन्ति' इति। गेह्माः स्वराः। चापि अपिच इति हेतुसमुच्चयमाह। तस्मात् स्तोभानामतिदेशः।

**निवृत्तिर्वाऽर्थलोपात्। ३६॥**

योनिगतस्तोभानां उत्तरयोरतिदेशः इति सिद्धान्ते उक्ते पूर्वपक्षी आह। वाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः। स्तोभानां निवृत्तिः स्यात् अतिदेशो न स्यात्। अर्थलोपात्। अग्निष्टोमे अवभृथसाम अग्निं होतारं मन्ये दास्वन्तं इति आग्नेय्यां ऋचि गीयते। तत्र च 'अग्निष्टपति प्रतिदहति' इति स्तोभा भवन्ति। क्वचित् विक्रुनिसोमे च 'ऐन्द्र्यामवभृथसाम गायति' इति श्रुतम्। इन्द्रश्च शीतकर्मा वाक्यशेषादवगम्यते। तेन उक्तानां स्तोभानां तत्र अर्थस्य तपनप्रतिदहनादेर्लोपात् निवृत्तिरेव स्वीकर्तव्या। तत्सामान्याच्च अन्यत्रापि स्तोभानां नातिदेशः स्यात्।

**अन्वयो वाऽर्थवादः स्यात् । ३७ ॥**

'निवृत्तिर्वा' इति सूत्रेण प्राप्तां पूर्वपक्षिणः शङ्कां निरस्यति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अग्निष्टपति इत्येवंजातीयकानामपि स्तोभानां ऐन्द्यां ऋचि अन्वयः स्यात्, इन्द्रस्य शीतकर्मत्वविषयकोऽवाक्यशेषस्तु अर्थवादः स्यात् । सर्वथाऽपि स्तुतिसंभवात् न वाक्यशेषविरोधः । तस्मात् ऐन्द्यां अवभृथसामगानेऽपि अग्निष्टपतीत्यादीनां स्तोभानामतिदेशो न विरुद्धः । एवं सर्वत्र स्तोभानामतिदेश इति **सिद्धान्तः** । के.

* **स्तोभानामपि** अतिदेशः कर्तव्यः । तथा च वामदेव्यसाम्नः योनिस्थस्य 'ओ ओ हो हाई' इत्यस्य स्तोभस्य उत्तरयोरपि अतिदेशः । वि. ९।२।१०.
* स्तोभानां सामकालपूर्तिः प्रयोजनम् । **मणि.** पृ. ५.
* स्तोभानां हुंफडादीनां कात्यायनादिकृतस्तोभभाष्यरीत्या अर्थाभिधानार्थता । अभिधानं तु स्तोत्रशस्त्रादिवत् अदृष्टार्थम् । यद्यपि नवमे ( ९।२।११।३८ ) स्तोभानामनर्थकत्वं वक्ष्यते तथापि सामयोनिभूतया ऋचा एकवाक्यत्वाभावाभिप्रायकं तत् इति अदोषः । कु. १।२।४।४३ पृ. ४६.

* **स्तोभाक्षराणि** गीतिकालपरिच्छेदार्थानि ऋचि प्रक्षिप्यन्ते । **भा.** ९।२।१०।३५.

**स्तोभाधिकरणम्** । अतिदेशः योनिस्थस्तोभानां उत्तरयोर्ऋचोः ॥

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् । ९।२।१०।३३॥**

**भाष्यम्**— 'कवतीषु रथंतरं गायति' 'रथंतरमुत्तरयोर्गायति' 'यद्योन्यां तदुत्तरयोर्गायति' इति । तत्र उत्तरावर्णवशेन गातव्यं इत्येतत् समधिगतं (९।२।९)। अथेदानीं इदं संदिह्यते, किं स्तोभाः प्रदिश्यन्ते नेति । किं प्राप्तम् ? न प्रदिश्यन्ते इति । कुतः ? गीतिर्हि साम, न स्तोभाः । या गीतिः, सा प्रदिश्यते, 'यद्योन्यां तदुत्तरयोर्गायति' इति गायति–शब्दसंबन्धात् । अपिच, ऋक्–शब्दार्थैः असंबध्यमानः स्तोभः अनर्थकः स्यात् । तस्मादपि न प्रदिश्येत । अपिच क्वचित् भवति वचनं 'ऐन्द्यामवभृथसाम गायति' इति । तत्र अनुपपत्तिर्भवेत् । शीतकर्मा ह्रीन्द्रो वाक्यशेषेभ्योऽवगम्यते । तस्य 'तपति' इत्यनेन संबन्धो न स्यात् । तस्मात् स्तोभस्य ऋगन्तरे निवृत्तिः । यथा ऋगक्षराणां अगीतित्वात् निवृत्तिः, एवं स्तोभाक्षराणामपीति ।

**सर्वातिदेशस्तु सामान्याल्लोकवद् विकारः स्यात् । ३४ ॥**

**भाष्यम्**— नैतदस्ति स्तोभानां निवृत्तिः इति । सर्वातिदेशो भवति । ऋक्–स्तोभ–स्वर–काल–अभ्यासविशिष्टायाः गीतेः सामशब्दो वाचकः । कथमवगम्यते ? तत्र प्रयोगात् । यदि स्तोभा निवर्तेरन्, तत्कृतो विशेषो नोपसंगृहीतः स्यात् । तत्र शब्दो बाध्येत । तस्मात् स्तोभाः प्रदिश्येरन् । यत्तूक्तम्, ऋक्–शब्दार्थैः असंबध्यमानाः स्तोभा अनर्थका भवेयुः इति । अत्र **ब्रूमः** । लोकवत् नानर्थका भविष्यन्ति । तद्यथा लोके गायनैः अङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालगणनार्थानि नार्थसंबन्धाय उच्चार्यन्ते । सुखं हि अक्षरैः गीतिकालः परिच्छिद्यते । तद्वत् इहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्तेरन् इति ।

**टुप्**— 'ऋक्स्तोभस्वरकालाभ्यासविशिष्टाया गीतेः सामशब्दो वाचकः' इति एतत् ( भाष्यं ) अयुक्तम् । 'गीतिषु सामाख्या' (२।१।११।३६) इत्युक्तत्वात् । तस्मादन्यथा वर्ण्यते । यद्यपि स्तोभा न सामशब्दवाच्याः तथापि अतिदिश्यन्ते । कथम् ? साम उपकारकं ऋगक्षराणाम् । तस्योपकुर्वतः दृष्टेन साहाय्यं कुर्वन्तः स्तोभा उपकुर्वन्ति । तदतिदेशे च यदि स्तोभाः नागच्छेयुः तत्कृत उपकारोऽपि हीयेत । तस्मादतिदिश्यन्ते ।

**अन्वयं चापि दर्शयति । ३५ ॥**

**भाष्यम्**— अन्वयतश्चापि स्तोभान् दर्शयति 'यत्र आर्चिकानि पदानि निवर्तन्ते स्तोभा गेह्माश्च अनुयन्ति' इति । स्तोभाः स्तोभा एव । गेह्माः स्वराः । तस्मादपि स्तोभाः प्रदिश्यन्ते ।



**निवृत्तिर्वाऽर्थलोपात् । ३६ ॥**

**भाष्यम्**— वाशब्दात् पक्षो विपरिवर्तते । निवृत्तिः 'अग्निष्टपति' इत्येवंजातीयकानां स्तोभानाम् । शीतकर्मा ह्रीन्द्रो वाक्यशेषे उपलभ्यते । न तेन एवंजातीयकाः स्तोभाः संबध्येरन् इति ।

**अन्वयो वाऽर्थवादः स्यात् । ३७ ॥**

**भाष्यम्**— अन्वयात् संबध्यन्ते लोकवत् इति यदुक्तम्, तत् परिहर्तव्यम् । ( उच्यते ) अन्वीयुर्वा एवंजातीयकाः स्तोभाः । नहि वयं इन्द्ररूपं प्रत्यक्षमुपलभामहे । यच्च वाक्यशेषवचनम्, सोऽर्थवादः ।

**शा**— सामातिदेशे किं स्तोभानां अतिदेशः अस्ति न इति संशये, सामभ्यः अभिन्नत्वात् स्तोभानां ऋगक्षराणामिव नातिदेशः । भिन्नानामपि गीतिकालपरिच्छेदेन सामाङ्गत्वात् तदतिदेशादेव अतिदेशः । सामानि हि योनौ येन अंशेन अक्षराणि अभिव्यञ्जन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति । स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन तु अंशेन स्तुत्यौपयिकमेव अदृष्टं कुर्वन्ति । तद्यदि स्तोभा नातिदिश्येरन् तन्निर्वर्त्यस्य गीत्यंशस्य लोपात् तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्, तस्मादतिदिश्येरन् । ऋगक्षराणां तु प्रधानत्वात् न सामवशात् अतिदेशः ।

**सोम**— यदि ऋगक्षराभिव्यक्तिरूपोपकारमुखेन सामातिदेशः तर्हि स्तोभानां ऋगक्षराभिव्यक्तौ अनुपयोगात् तेषामनतिदेशः इत्युत्थितेः **संगतिः** । भिन्नत्वेन रथंतरादिशब्दवाच्यत्वबलात् अतिदेशाभावेऽपि रथंतरादिशब्दवाच्यगीत्यङ्गतया प्रधानभूतगीत्यतिदेशादेव तदतिदेशः इति **सिद्धान्तः** । स्तोभनिर्वर्त्यसामभागस्य ऋगक्षरानभिव्यञ्जकतया दृष्टद्वारा स्तुत्युपकाराभावेऽपि अदृष्टद्वारा स्तुत्युपकारकत्वं योनौ क्लृप्तम्, उत्तरयोरपि स्तोभनिर्वर्त्यसामभागानतिदेशे तत्साध्यादृष्टवैकल्येन स्तुतेः वैगुण्यं स्यात्, अतः ऋगक्षरानभिव्यञ्जकस्यापि स्तोभगीत्यंशस्य अदृष्टरूपस्तुत्युपकारार्थं अतिदेशे सिद्धे तन्निर्वर्तकतया स्तोभानामपि अतिदेश आवश्यकः । **सूत्रार्थः**– स्तोभानामृगन्तरे निवृत्तिमृगक्षरवत् एके आचार्या ब्रुवते इति ।

**वि**— 'स्तोभा नोत प्रदिश्यन्ते, नागीतित्वेन वर्णवत् ।, स्वरादिवत् प्रदिश्यन्ते गीतिकालोपयोगतः ॥'

**भाट्ट**— साम्नः कश्चित् अंशः ऋगक्षराधिरूढः कश्चिच्च स्तोभाक्षराधिरूढः । प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव । तत्र सामातिदेशे स्तोभानामपि अतिदेशो भवेन्न वा इति चिन्तायां साम्नः ऋगक्षराभिव्यक्त्यर्थत्ववत् स्तोभाक्षराभिव्यक्त्यर्थत्वस्य तुल्यत्वात् गुणानुरोधेन प्रधानभूतानां ऋचामिव स्तोभानामपि नातिदेशः । न च स्तोभानां प्रायशः अनर्थकत्वात् स्तोत्रसाधनत्वासंभवेन निष्प्रयोजनानां प्राधान्यानुपपत्तेः गीतिकालपरिच्छेदकत्वेन गीत्यङ्गत्वात् तदतिदेशे अतिदेशोपपत्तिः इति **वाच्यम्** । 'अग्निष्टपति' इत्यादिभाष्यकारोक्तस्तोभाक्षराणां ऋगेकवाक्यत्वासंभवेऽपि स्वातन्त्र्येणैव गुणाभिधानरूपस्तोत्रकरणत्वसंभवेन ऋग्वदेव प्राधान्योपपत्तेः । येषामपि हुंफडादिस्तोभाक्षराणां अर्थशून्यत्वं तत्रापि तदुच्चारणस्य अदृष्टद्वारा अनुष्ठानसादेश्यात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोत्राङ्गत्वमेव वा इति न सामाङ्गत्वकल्पनावसरः । न च साम्नो वा अदृष्टार्थत्वं स्तोभानां वा इत्यत्र नियामकाभावः, साम्नोंऽशे दृष्टार्थत्वं अंशे च अदृष्टार्थत्वं इत्येवंविधवैरूप्यापत्तेरेव नियामकत्वात् । इति **प्राप्ते**, 'यज्ञायज्ञियेन स्तुवीत' इत्यादौ तत्रतत्र साम्नां सामान्यतो विशेषतश्च विनियोगस्यैव नियामकत्वेन सामोच्चारणस्यैव तदंशे अदृष्टार्थत्वम्, स्तोभानां तु अर्थशून्यानां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव । अन्यथा हि साम्नः प्रकरणादिनैव सर्वस्यापि विवक्षितार्थस्य लाभे विनियोगविधिवैयर्थ्यापत्तिः । अतो विनियोगवशेन झटिति प्रयोजनलाभे द्वारभूतादृष्टस्यापि तत्रैव इति झटिति कल्पना, न तु स्तोभेषु, स्तोत्रादिरूपद्वारिसंबन्धकल्पनासापेक्षत्वात् । अतः स्तोभादीनां गीत्यङ्गत्वात् तदतिदेशेन अतिदेशोपपत्तेः न तदंशस्य लोपाख्यः अन्यथाभावः । अर्थवत्स्तोभाक्षरेषु तु ऋगक्षरवदेव स्तोत्राद्युपयोगोपपत्तेः गीतेरेव तदङ्गत्वं इति तु प्रतिभाति । अत एव अनर्थकस्तोभेषु ऋक्सत्त्वे साम्नः आश्रयिकर्मत्वं तदभावे शुद्धादृष्टार्थत्वमेव ।

**मण्डन**— 'स्तोभस्य चातिदेशोऽस्ति।' १७.
**शंकर**— 'तत्र स्तोभातिदेशनम्।' तत्र उत्तराणु। १७.

**स्तोभलक्षणम् ॥**

**अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात्। ९।२।११।३८ ॥**

**भाष्यम्**— अथ कः स्तोभो नाम, तस्य लक्षणं कर्तव्यम्। उच्यते। य ऋगक्षरेभ्योऽधिकः, न च तैः सवर्णः स स्तोभो नाम। ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति। तद्यथा, देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति। यदर्थवचनेभ्योऽधिकं विवर्णं च, तदालोच्यैवंवक्तारो भवन्ति। लक्षणकर्मणः प्रयोजनं न वक्तव्यम्। लक्षणकर्मणो हि तदेव प्रयोजनम्, यल्लक्षितो भविष्यतीति। किमर्थमुभयं सूत्रितम्। नन्वन्यतरत्पर्याप्तम्, अधिकमिति वा विवर्णमिति वेति। नेत्याह। भवति हि किंचिदधिकम्, न विवर्णम्। यथा, अभ्यासः, श्वाद्रिः श्वाद्रिरिति। तथा किंचिद्विवर्णं नाधिकम्। यथा, विकारः, ओ ग्रा इ इति। तस्मादुभयं सूत्रयितव्यमिति।

**सोम— सूत्रार्थः**— अधिकं च विवर्णं च यत्स स्तोभः इति जैमिनिर्मन्यते लोके देवदत्तेन वाक्यं विप्लावयता बहुस्तोभं कथितं इत्यादौ अर्थाभिधानानुपयुक्ते च विपरीतशब्दभूते स्तोभव्यवहारादिति।

**वि**— 'स्तोभस्य लक्षणं नास्ति किंवाऽस्ति, न विवर्णता। आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् ॥'

**भाट्ट**— प्रसङ्गात् स्तोभलक्षणमुच्यते। येऽक्षरेभ्यो ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षरविलक्षणा वर्णाः ते स्तोभाः। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि श्वाद्रिः श्वाद्रिरित्यभ्यासे ऋगक्षरविलक्षणत्वाभावात् अन्त्यं विशेषणम्। 'ओ ग्रा ई' इत्यादिविकारे ऋगक्षरविलक्षणत्वेऽपि आधिक्याभावादाद्यम्।

**वस्तुतस्तु**— विलक्षणत्वस्य अर्थानभिधायकत्वरूपत्वे अर्थाभिधायकेषु अग्निष्टपतीत्यादिस्तोभेष्वव्याप्तेरन्यस्य च विलक्षणत्वस्य निर्वक्तुमशक्यत्वात् यत्र अभियुक्तानां स्तोभ इति प्रसिद्धिः ते स्तोभाः। स्तोभत्वं च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न शक्यतावच्छेदकाप्रसिद्धिः। अत्र च येऽर्थवन्तः स्तोभास्तेषां ऋङ्मन्त्रवदेव गुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यम्। गुणाभिधानस्य चादृष्टार्थत्वेऽपि ज्ञानस्य स्वतः प्रमाणत्वात् दोषाभावेन चाप्रामाण्यायोगात् विषयसिद्धेः प्रमाणत्वाविघातो ऋग्वदेव नानुपपन्नः।

यदि तु देवताविग्रहादिप्रसङ्गभिया तात्पर्यविषयीभूतस्यैवार्थस्य सिद्धिः, प्रकृते तु सदृष्टान्तं गुणाभिधानस्यादृष्टार्थत्वान्न तात्पर्यकल्पना, अपितु आहार्यज्ञानजनकत्वमेव, तदाऽस्तु पदार्थविषया प्रामाण्यमनर्थकस्तोभाक्षरवत्। अथवा सर्वत्रैवमादिस्थले प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोगः। नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा 'वेदोऽखिलो धर्ममूलम्' इति मूलपदस्य जनकत्वज्ञापकत्वोभयसाधारण्येनाप्युपपत्तेः।

**मण्डन**— 'विवर्णश्चाधिकश्च सः।' सः स्तोभः।
**शंकर**— 'स्तोभोऽधिकं विवर्णं च।'

* ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्ति। तद्यथा— देवदत्तेन सभायां प्रलपता बहुस्तोभं कथितं इति। यत् अर्थवचनेभ्योऽधिकं विवर्णं च तदालोच्य एवंवक्तारो भवन्ति। भा. ९।२।११।३९.

* **स्तोमः** त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः ज्योतिष्टोमे। त्रिणवः, त्रयस्त्रिंशः, इत्यादिः विवृद्धस्तोमके क्रतौ। वि. ७।३।१०, १०।५।६, * स्तोमः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः इति पृष्ठ्ये षडहे। १०।६।९. * स्तोमः। 'स्तुतेर्मानं स्तोमः' इति स्मृतेः स्तोमशब्दस्य स्तोत्रीयसंख्यावाचित्वावधारणात्। सु. पृ. ४९७. * स्तोमः। स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमानात्मकः स्तोमः। वा. १।४।२।३ पृ. ३२९. * **स्तोमाः** विवृद्धा अविवृद्धा वा येषु तेषु क्रतुषु साम्नामावापोद्वापौ माध्यंदिनार्भवपवमानस्तोत्रयोरेव। १०।४।११।२१-२२. **मीको.** पृ. ३६६८ 'विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव०' इत्यत्र अधिकरणं द्रष्टव्यम्। * स्तोमाः विवृद्धा यस्मिन् तत्र क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागमः। भा. १०।५।६।१५-२५, * स्तोमाः विवृद्धा यस्मिन् तत्र विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासः श्रुतसंख्यासंपत्तये। १०।५।७।२६, * स्तोमाः विवृद्धा येषु तेषु क्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नामबाधः। १०।४।१०।२०.

* **स्तोमानामागन्तूनां** बहिष्पवमाने पर्यासोत्तरकालता। भा. ५।३।४।७-१२। माध्यंदिनार्भवपवमानयोस्तु साम्नां गायत्र्यादिष्वेव निवेशः। ५।३।५।१३-१४.

* **स्तोमत्वं** मुख्यं स्तुतिमाननिमित्तम्। वा. १।४।२।३। स्तोमशब्दो ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनः। स्तुतेश्च मानं स्तोमः इति याज्ञिकस्मरणात्। १।३।४।९ पृ. २२३.

* **स्तोमपदस्य** स्तोत्रसाधनऋक्समुदाये शक्तिः। **मणि.** पृ. १६४.

* **स्तोमभागान्** अधीयानः एव ब्रह्मा भवेत्। सः अवासिष्ठोऽपि वासिष्ठकार्यं समर्थः कर्तुम्। भा. ६।६।४।२५.

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च। १०।४।१०।२० ॥**

विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतवो भवन्ति। प्रकृतौ यत्र यावन्तः स्तोमा भवन्ति ततोऽधिकाः न्यूना वा स्तोमाः क्वचिद्विकृतौ भवन्ति। यत्र प्रकृतेरधिकाः स्तोमाः स विकृतिक्रतुः विवृद्धस्तोमकः न्यूनत्वे च अविवृद्धस्तोमकः इति। सर्वास्वेव विकृतिषु प्रकृतितः साम्नां प्राप्तिर्भवत्येव। एवं सति किं विकृतौ स्तोमानां विवृद्धौ हानौ च उभयथाऽपि प्राकृतानां साम्नां निवृत्तिः कर्तव्या किंवा हानौ निवृत्तिः, विवृद्धौ तु न निवृत्तिः इति विचारे सिद्धान्तमाह। स्तोमविवृद्धौ सत्यां प्राकृतं सामजातं अधिकं स्यात्, समुच्चयः स्यात्, न निवृत्तिः। अत एव स्तोमविवृद्धौ साम्नामागमेन संख्यापूरणं वक्ष्यते। अविवृद्धौ हानौ तु द्रव्यविकारः स्यात्, यावता निवृत्तेन संख्या पूर्येत तावत् प्राकृतस्य सामद्रव्यस्य विकारः बाधः स्यात्, न तु सर्वस्य प्राकृतस्य बाधः। अन्यत् प्राकृतमेव स्यात्। इतरस्य अश्रुतित्वात् हानौ सत्यां यावत् किंचित् न्यूनं प्रयोक्तव्यं तस्य आगमे न श्रुतिः। तस्मात् तावत् प्राकृतमेव स्यात्। तथा च चोदकस्य सर्वथा बाधो न भविष्यति। तस्मात् स्तोमविवृद्ध्यविवृद्ध्योः प्राकृतस्य व्यवस्थया बाधाबाधौ इति सिद्धान्तः। के.

* 'स्तोमविवृद्धौ०' (१०।४।११।२०) इत्यधिकरणे द्वात्रिंशत्पवमानोऽभिषेचनीयः इत्यादिविवृद्धौ उपदिष्टानां राजसाम्नां अतिदिष्टानां च समुच्चय उक्तः। बाल. पृ. १७८. * स्तोमविवृद्धौ न्यूना संख्या प्राकृतैः सामभिः पूरणीया। न प्राकृतानां बाधः। भा. १०।४।१०।२०.

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमधिकारात् संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात्। १०।५।६।१५॥**

विवृद्धस्तोमकेषु 'एकविंशेनातिरात्रेण, त्रिणवेन त्रयस्त्रिंशेन' इत्यादिषु क्रतुषु स्तोमविवृद्धौ स्तोमानां विवृद्धौ प्राकृतानां साम्नां अभ्यासेन संख्यापूरणं संख्यायाः पूर्तिः स्यात्। अधिकारात् एवं हि अधिकृतानां प्रकृतानां ग्रहणं स्यात्, इतरथा अप्रकृतप्रक्रिया भविष्यति। ननु एकविंशत्यादिसंख्याविशिष्टसंख्येयान्तरविधानात् अप्राकृतसामभिरेव संख्यापूरणमुचितं इत्यत आह। संख्यायां गुणशब्दत्वात् एकविंशत्यादिः संख्याशब्दः साम्नां गुणबोधकः शब्दः। संख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन। अन्यस्य च अश्रुतित्वात्, न च प्राकृतादन्यत् सामद्रव्यं श्रुत्या विधीयते। अविद्यमाना श्रुतिर्यस्य, तस्य भावः अश्रुतित्वं श्रुतिशून्यत्वं तस्मात्। तस्मात् स्तोमविवृद्धौ अधिकसंख्यापूरणं प्राकृतसाम्नामभ्यासेन स्यात् इति **पूर्वः पक्षः**।

**आगमेन वाऽभ्यासस्याश्रुतित्वात् । १६ ॥**

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं प्राकृतानां साम्नामभ्यासेन इति पूर्वपक्षव्यावृत्त्यर्थो वाशब्दः । स्तोमविवृद्धौ अधिकसंख्यापूरणं साम्नां आगमेन कर्तव्यम्, न प्राकृतसामाभ्यासेन पूरणं साम्नां आगमेन कर्तव्यम्, न प्राकृतसामाभ्यासेन अभ्यासस्य अश्रुतित्वात् विधानाभावात् अविद्यमानश्रुतिकत्वात् । इति सिद्धान्तः ।

**संख्यायाश्च पृथक्त्वनिवेशात् । १७ ॥**

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं अप्राकृतानां साम्नां आगमेन इति सिद्धान्ते हेत्वन्तरमाह । एकविंशत्यादेः उक्तायाः संख्यायाः पृथक्त्वनिवेशात् पृथक्त्वे स्वभावतो निवेशात् । 'अष्टौ घटाः' इत्यादौ संख्या पृथक्त्वनिवेशिनी दृष्टा । अभ्यासे तु पृथक्त्वनिवेशो न स्यात् । तस्मात् आगमेन संख्यापूरणम् ।

**पराक्शब्दात् । १८ ॥**

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं अप्राकृतानां साम्नां आगमेन इति सिद्धान्ते हेत्वन्तरमाह । पराक्शब्दात् 'पराग् बहिष्पवमानेन स्तुवन्ति' इति अनभ्यासस्य वाचकः पराक्शब्दो भवति । यथा 'पराचीः सामिधेनीरन्वाह' इति अनभ्यस्ता इति गम्यते । तस्मात् नाभ्यासेन संख्यापूरणम् ।

**उक्ताविकाराच्च । १९ ॥**

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन इति सिद्धान्ते हेत्वन्तरमाह । उक्ताविकारात् उक्तानां अविकारात् अपुनर्वचनात् अनभ्यासात् । अभ्यासे हि जामितादोष उक्तः 'जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियते' इति । तस्मान्नाभ्यासः ।

**अश्रुतित्वादिति चेत् । २० ॥**

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन, अभ्यासस्याश्रुतित्वात् (१०।५।६।१६) इति सिद्धान्तिना उक्ते, पूर्वपक्षी शङ्कते । आगमस्यापि अश्रुतित्वात् न आगमेन संख्यापूरणम् । इति चेत् ।

**स्यादर्थचोदितानां परिमाणशास्त्रम् । २१ ॥**

अश्रुतित्वादिति चेत् (१०।५।६।२०) इत्यस्य उत्तरमाह । परिमाणशास्त्रं एकविंशेन त्रिणवेन इति स्तोमपरिमाणविधानं अर्थचोदितानां संख्याविधिप्रसूतार्थापत्तिलब्धानां प्रापकं स्यात् । नहि सामसु उक्ता संख्या तावतीर्व्यक्तीः विना स्वरसा । तस्मात् आगमेनैव संख्यापूरणम् ।

**आवापवचनं चाभ्यासे नोपपद्यते । २२ ॥**

विवृद्धस्तोमकेषु एकविंशत्रिणवाद्यतिरात्रेषु आगमेन संख्यापूरणं इति सिद्धान्तवादी– अभ्यासपक्षं अनुपपत्त्या दूषयति । 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् ... अत्र ह्येवावपन्ति' इति आवापवचनं अभ्यासे स्वीकृते नोपपद्यते । अभ्यासपक्षे हि आवाप एव नास्ति । तस्मादागम एव । चकारो हेत्वन्तरसमुच्चयार्थः ।

**साम्नां चोत्पत्तिसामर्थ्यात् । २३ ॥**

विवृद्धस्तोमकेषु एकविंशत्रिणवाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन इति सिद्धान्ते हेत्वन्तरमाह । सामशास्त्रे साम्नां उत्पत्तेः सामर्थ्यात् आगमेनैव संख्यापूरणं नाभ्यासेन । उक्तं च 'दश सामसहस्राणि शतानि च चतुर्दश । साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥ अशीतिशतमाग्नेयं पावमानं चतुःशतम् । ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगाः ॥' इति अभ्यासेन संख्यापूरणे एतेषां साम्नां उत्पत्तिरनर्थिका स्यात् । तस्मादागमेन पूरणम् ।

**धुर्येष्वपीति चेत् । २४ ॥**

यदि विवृद्धस्तोमकेषु क्रतुषु साम्नामभ्यासो न स्यात्, धुर्येष्वपि सामसु अभ्यासो न स्यात् । तथा सति प्रागुक्ता धुर्ये आवृत्तिः (१०।५।३।११) विरुध्येत । इति चेत् पूर्वपक्षी ब्रूयात् ।

**नाऽऽवृत्तिधर्मत्वात् । २५ ॥**

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु यदि साम्नां नाभ्यासः धुर्येष्वपि न स्यात् इति पूर्वपक्षिणः शङ्कायाः सिद्धान्ती परिहारमाह । न धुरिसामसु विरोधः तेषां



'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति वचनेन आवृत्तिधर्मत्वात् । वचनात् तेषामावृत्तिः । विवृद्धस्तोमकेषु च तथा आवृत्तिवचनं नास्ति । तस्मात् आगमेनैव संख्यापूरणं नाभ्यासेन इति सिद्धान्तः । के.

*** स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात् पर्यासादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे । ५।३।४।७॥**

अग्निष्टोमे बहिष्पवमानं त्रिवृत् नाम ऋङ्नवकात्मकं भवति । 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति विवृद्धस्तोमकाः क्रतवः पठिताः । वर्धितसंख्यापूरणं च ऋगागमेनेति वक्ष्यते (१०।५।७।२६) तत्र आगमितानां ऋचां किं अन्ते निवेशः किंवा पर्यासात् प्राङ्निवेशः इति विचारे पूर्वपक्षमाह । एकविंशाद्यतिरात्रेषु स्तोमविवृद्धौ सत्यां बहिष्पवमाने स्तोत्रे आगन्तवः तृचाः पर्यासात् पुरस्तात् स्युः । न अन्ते । तथाहि एवमेव किल द्वादशाहे दृष्टम् । तत्र हि 'स्तोत्रीयानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचाः, तृच उत्तमः पर्यासः' इत्युक्तम् । द्वादशाहे षाडहिके द्वितीयेऽहनि स्तोत्रीयानुरूपौ तृचौ पठित्वा अपूर्वाः वृषण्वन्तः वृषन्शब्दघटिताः तृचाः पठिताः । तत उत्तमः पर्यासः पठितः । तस्मात् पर्यासात् पूर्वं एतेषां निवेशो द्वादशाहे दृष्टः इति प्रकृतेऽपि तथैव भवितुमर्हति ।

**पर्यास इति चान्ताख्या । ८ ॥**

पूर्वस्मिन् सूत्रे 'पुरस्तात् पर्यासात्' इत्युक्तं तत्र कोऽयं पर्यासो नामेति पर्यासशब्दार्थं उच्यते सूत्रेण । पर्यास इति च अन्तस्य अन्तिमस्य आख्या नाम भवति लोके । यथा क्षेत्रपर्यासः, नदीपर्यासः इति ।

**अन्ते वा तदुक्तम् । ९ ॥**

'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इत्यत्र स्तोमानां विवृद्धौ, आगमेन च संख्यापूरणे सति आगन्तूनां तृचानां पर्यासात् पुरस्तान्निवेशः इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तमाह । वाशब्देन पूर्वपक्षव्यावृत्तिः । आगन्तूनां निवेशः न पर्यासात् प्राक्, किंतु अन्ते निवेशः पर्यासस्थाने एव तेषां निवेशः । तत् तत्र उक्तम् । तत्साधको न्यायः 'अन्ते तु बादरायणः' इति प्रागुक्तः (५।२।९।१९) । तस्मात् आगन्तूनामन्ते निवेशः ।

**वचनात्तु द्वादशाहे । १० ॥**

एकविंशोऽतिरात्रः त्रिणवोऽतिरात्रः त्रयस्त्रिंशोऽतिरात्र इत्यत्र स्तोमविवृद्धौ सत्यां बहिष्पवमाने संख्यापूर्तिः तृचागमेन भविष्यति । आगन्तवश्च तृचाः पर्यासात् तृचात् पुरस्तात् निवेशनीया इति पूर्वपक्षे द्वादशाहे वृषण्वतां तृचानां दृष्टान्त उक्तः 'स्तोमविवृद्धौ०' इति सूत्रे । तत्र सिद्धान्ती दृष्टान्तं वैषम्येण परिहरति । सत्यं द्वादशाहे षाडहिके द्वितीये अहनि वृषण्वतां तृचानां पर्यासात् पुरस्तान्निवेशः इति । स तु 'वृषण्वन्तस्तृचाः, तृच उत्तमः पर्यासः' इति वचनात् भवति । न तु न्यायात् । एकविंशाद्यतिरात्रे तु प्रकृते वचनाभावात् न्यायेन निर्णयः कर्तव्यः । न्यायश्च आगन्तूनामन्ते निवेश इति 'अन्ते वा तदुक्तम्' इत्यत्रोक्तम् ।

**अतद्विकारश्च । ११ ॥**

सिद्धान्तगतं सूत्रम् । द्वादशाहे यद्यपि वृषण्वदादयस्तृचाः पर्यासात् प्राक् भवन्ति तथापि एकविंशातिरात्रादयः न तद्विकारः न द्वादशाहविकारः । तस्मात् संख्यापूरणार्थं आगमितास्तृचा अन्ते एव स्युः । पर्यास इति अन्तिमस्य तृचस्य आख्या ।

**तद्विकारेऽप्यपूर्वत्वात् । १२ ॥**

तद्विकारेऽपि अहीनसत्रयोः वृषण्वदतिरिक्तानां ऋचां अन्ते एव निवेशः न पर्यासात् प्राक् । अपूर्वत्वात् अक्लृप्तस्थानत्वात् । वृषण्वतां पाठक्रमेण स्थानं पर्यासात् प्राङ्निश्चितम् । वृषण्वद्भिन्नानां तु क्लृप्तस्थानाभावात् अन्ते निवेश एव युक्तः । तस्मात् स्तोमविवृद्धौ बहिष्पवमाने आगन्तूनां तृचानां अन्ते एव निवेश इति सिद्धान्तः । के.

* स्तोमविषये त्रिवृच्छब्दस्य अन्यत्र दर्शनात्, यथा 'त्रिवृद् बहिष्पवमानः' इत्यत्र स्तोमविषयता

परिच्छिन्ना । एवं 'त्रिवृदग्निष्टोमः' इत्यत्रापि स एव शब्दः उच्चरितः तमेव संबन्धिनं अनुमानात् बुद्धौ संनिधापयेत्। भा. १०।६।७।२३.

* **स्तोमवृद्धौ** 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्यादौ आगमेन संख्यापूरणं दशमे वक्ष्यते। **सु. पृ. ८०९.**

* **स्तोमशब्दस्य** लोकप्रसिद्धसमुदायमात्रवचनत्वातिक्रमेण स्तोत्रीयासमुदायवचनत्वं वेदयाज्ञिकव्याकरणप्रसिद्धिबलात्। **सु.** पृ. २१७.

* **स्तौति-शंसति** । इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ । प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः। यथा—'प्रउगं शंसति', 'निष्केवल्यं शंसति'। 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति। भा. ७।२।१। १७.

* **स्त्री** नाम व्यक्तिविशेषः। भा. ९।१।९।३३, * **स्त्री** पुमान् नपुंसकं इति द्रव्यविशेषा ह्येते। ३।१। ६।१२. * **स्त्री** पुंसा अतुल्या। यजमानः पुमान् विद्वांश्च, पत्नी स्त्री चाविद्या च। ६।१।६।२४. * **स्त्रियः** । क्रयविक्रयसंयुक्ता हि स्त्रियः। पित्रा विक्रीयन्ते भर्त्रा क्रीयन्ते। विक्रीतत्वाच्च पितृधनानामनीशिन्यः। क्रीतत्वाच्च भर्तृधनानाम् (पूर्वपक्षे)। न चैतदस्ति निर्धना स्त्रीति। द्रव्यवती हि सा। अर्थेन चास्याः समवेतत्वं भवति। एवं दानकाले संवादः क्रियते–धर्मे चार्थे च कामे च नातिचरितव्येति। स्मार्तं च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते 'पत्नी वै पारिणह्यस्येष्टे'। (इति सिद्धान्ते)। भा. ६।१।३।१० –१६। दंपती उभावपि स्ववन्तौ इति तावत् स्थितम्। ६।१।४।१७. * **स्त्रिया** अध्ययनरहिततया उपस्थानं अनुमन्त्रणं इत्यादीन्यङ्गानि कर्तुमशक्यानि तानि तु पुंसैव कर्तव्यानि, पत्न्या तु 'पत्नी आज्यमवेक्षते' आशीः ब्रह्मचर्यं इत्यादि यावदुक्तं कर्तव्यम्। **वि.**, भा. ६।१।६।२४. * **स्त्रियाः** अध्ययननिषेधः अयं विधिप्राप्तविषयकः पुरुषार्थमात्रविषयकः पुरुषार्थः कल्प्यः प्रतिषेधः। बाल. पृ ३१-३२. * **स्त्रियाः** अपि कर्माधिकारोऽस्ति 'स्वर्गकामो यजेत' इत्यत्र पुंलिङ्गस्योद्देश्यगतत्वेन एकत्वस्येवाविवक्षितत्वात्। **वि.** ६।१।३. * **स्त्रियाः** अपि क्रतुष्वधिकार इति बादरायणमतं सिद्धान्तः। नास्त्यधिकार इति ऐतिशायनमतं पूर्वपक्षः। भा. ६।१।३।६-१६, १९-२१. * **स्त्रियाः** अपि क्रतुष्वधिकारः। ६।१।३।६-१६, १९-२१. **मीको.** पृ. २८८ 'अधिकारः क्रतुषु स्त्रिया अपि' इत्यत्र अधिकरणं द्रष्टव्यम्। * **स्त्रियाः** कर्माधिकारसत्त्वेऽपि न स्वातन्त्र्येणाधिकारः। दंपत्योर्हि सहाधिकारः। सहाधिकारत्वेन यजमानविद्ययैव पत्न्या अपि कार्यसिद्धिः। **मीन्या.** * **स्त्रियाः** द्रव्यवत्ता भवति न वेति विचारः **मीको.** पृ. २८८ 'अधिकारः क्रतुषु स्त्रिया अपि' इति बिन्दौ द्रष्टव्यः। * **स्त्रियाः** यद् द्रव्यं भक्तोपसर्पणेन वा कर्तनादिना वोपार्जितं भवति तदपि सा यस्य स्वभूता तस्यैव 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते। यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥' इत्यैतिशायनमतम्। यत्तूच्यते भार्यादयो निर्धना इति, स्मर्यमाणमपि निर्धनत्वं अन्याय्यमेव श्रुतिविरोधात्। दानकाले च विवाहे संवादः क्रियते 'धर्मे चार्थे च कामे च नातिचरितव्या' इति। भा. ६।१।३।१२-१४. * **स्त्रीणां** अपि वैदिके कर्मणि अधिकारः, स च पत्या सहैव। ६।१।३।६-१६, १९-२१. * **स्त्रीणां** अस्वातन्त्र्यं उच्यते संव्यवहारप्रसिद्ध्यर्थम्। भा ६।१।३।१४. * **स्त्रीणां** पत्यन्तरवर्जनाचारस्य मूलभूता श्रुतिः 'द्वे द्वे रशने......नैका बहून् पतीन्' इति यूपैकादशिन्याम्। वा. १।३।४।९ पृ. २२१, **सु.** पृ. २१४. * **स्त्रीणां** पूर्वं सव्याञ्जनाचारमूलभूता श्रुतिः 'सव्यं हि मनुष्याः पूर्वमञ्जते' इति। वा. १।३।४।९ पृ. २२१, **सु.** पृ. २१४. * **स्त्रीणां** प्रायेण चञ्चलत्वदर्शनम्। **सु.** पृ. १२. * दृश्यते हि अपराधिनीनामपि (**स्त्रीणां**) स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेत् न तु अपत्यानां वर्णसंकरः। न च नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते। वा. १।२।१।२. * **स्त्रियां** यत् प्रातिपदिकं वर्तते तस्मात् स्त्रीप्रत्ययो भवति। भा. ३।१।६।१२ पृ. ६८१-६८२.

* 'स्त्र्युपायमांसभक्षादि पुरुषार्थमपि श्रितः। प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्॥' इति व्याकरणाधिकरणे निषेध उक्तः। बाल. पृ. ३२.

* '**स्त्रीकामः** प्रायश्चित्तं कुर्यात्' इतिवत्। स्त्रीकामना यथा प्रायश्चित्तनिमित्तं तथा 'स्वर्गकामो यागं कुर्यात्' इत्यत्र स्वर्गकामना निमित्तम्। पूर्वपक्षे, 'स्त्रीकामः' इत्यादावपि न कामनाया निमित्तत्वम्। प्रायश्चित्ताकरणे प्रत्यवायान्तरप्रसङ्गात्। अपितु प्रमाणान्तरसिद्धकामनाजनितप्रत्यवायनाशार्थत्वमेव सिद्धान्ते। **भाट्ट.** ६।१।१.

* **स्त्रीत्वं** खट्वादौ अविद्यमानमेव टाबादिप्रत्ययदर्शनेन आरोप्यते। सु. पृ. ४१४.

* **स्त्रीदेवत्यः** सारस्वतः पूर्वम्, पुंदेवत्यः सारस्वतः पश्चात् इति मुख्यक्रमेण नियमः पुरोडाशयोः। भा. ५।१।७।१४.

* **स्त्रीपुंसयोः** सहाधिकारः। भा. ६।१।६।२४.

* **स्त्रीमात्रकर्तृकाणां** आज्यावेक्षणादीनां पदार्थानां ज्ञानं तद्विधिभिराक्षिप्यते। **मीन्या.**

* **स्त्रीलिङ्गस्य** द्योतकाः टाबादयः। वा. ३।४। ४।१३ पृ. ९२१.

* **स्त्रीलिङ्गता** गुणवचनस्यापि भवति। यथा—करुणा बुद्धिरिति, तथा अरुणा इति। भा. ३।१। ६।१२ पृ. ६८५.

* **स्त्रीवासःपरिधानरूपात्** पापात् लक्ष्मीहानिर्भवति। बाल. पृ. ६५.

* न चैक एक प्रकारो मुखशोभायाः संस्थानं रमणीयता लावण्यं चेति। **स्त्रीविषयं** ह्येतत्। विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते। वा. १।२। १।१५.

* प्रातिपदिकविशेषणं **स्त्रीशब्दः**, स्त्रियां यत् प्रातिपदिकं वर्तते ततष्टाबादयः इति। भा. ९।१।९।३३.

* **स्त्रीसद्वितीयस्य** एकस्यैव पुरुषस्य आधानेऽधिकारः। ६।१।५।२२-२३. **मीको.** पृ. २२०९ 'आधानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **स्त्रीसंभोगाभावः** अग्निचिद्व्रतं चयनोत्तरम्। **वि.** ५।३।१०.

**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् । ६।१।१३।५१॥**

'रौद्रं वास्तुमयं चरुं निर्वपेत्' इति रौद्री इष्टिर्विहिता। वास्तुमयो नाम वास्तुकाख्यशाकविशेषप्रकृतिकः इति **कुतूहलम्**। वास्तुशाकबीजप्रकृतिकः इति **सोमनाथः**। 'रौद्रं वास्तुमयम्' इति **भाष्यादौ** पाठः। 'ऐन्द्रं वास्तुमयम्' इति तु पाठः **शास्त्रदीपिकायाम्**। एतामिष्टिं विधाय 'एतया निषादस्थपतिं याजयेत्' इत्युक्तम्। तत्र कोऽयं निषादस्थपतिः इति विचार्यते। निषादा ये आरण्यकाः तेषां स्थपतिः श्रेष्ठः त्रैवर्णिकेषु अन्यतमः इति **पूर्वपक्षः**। सिद्धान्तस्तु अयं स्थपतिः जातितः निषाद एव स्यात् न त्रैवर्णिकः। षष्ठीतत्पुरुषापेक्षया समानाधिकरणः कर्मधारयः समासो बलवान्, शब्दयोः स्वार्थवृत्तित्वात्। षष्ठ्यर्थकल्पनायां तु लक्षणाप्रसङ्गः। तस्मात् स्थपतिः निषाद एव स्यात्।

**लिङ्गदर्शनाच्च । ५२ ॥**

'एतया निषादस्थपतिं याजयेत्' इति रौद्यामिष्टौ यजमानत्वेन उक्तः स्थपतिः जात्या निषाद एव स्यात्, न त्रैवर्णिकः। निषादश्चासौ स्थपतिश्च इति कर्मधारयः, न तु षष्ठीतत्पुरुषः इति उक्ते सिद्धान्ते लिङ्गदर्शनं हेत्वन्तरमाह। 'कूटं दक्षिणा' इति पशुपक्षिणां बन्धनार्थः यन्त्रविशेषः कूटो नाम दक्षिणात्वेन उक्तः। स च निषादस्यैव संभवति न त्रैवर्णिकस्य। तदेतत् लिङ्गं स्थपतेर्निषादत्वे दृश्यते। तस्मात् स्थपतिर्निषाद एवेति सिद्धान्तः। चकारो हेतुसमुच्चयार्थः। **के.**

* **स्थपत्यधिकरणन्यायः**। तस्य स्वरूपमित्थम्, अत्रैवर्णिकेन निषादेन कृतमपि आधानं आहवनीय-

संस्काराधायकं न भवति । तस्य आधाने विशेषवचनाभावात् । इति ( ६।८।३।२०–२१ ) । परिमल. ३।४।११।४१–४२ ब्रसू.

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत् तादर्थ्याच्चापवृज्येत । ६।८।३।२०॥**

रौद्रीमिष्टिं विधाय 'एतया निषादस्थपतिं याजयेत्' इति विहितम् । इयं स्थपतीष्टिः निषादस्थपतेः इष्टिः अग्न्याधेयं प्रयोजयेत् । स्थपतिः इष्ट्यर्थं अग्न्याधेयं कृत्वा तत्संस्कृतेषु अग्निषु इष्टिं कुर्यात् । नहि अग्न्याधेयं विना संस्कृतानामग्नीनां लाभः संभवति । प्रयाजवत् यथा प्रयाजान् चोदकात् प्रयोजयति तथा अग्न्याधेयं प्रयोजयेत् । तादर्थ्याच्च अग्न्याधेयस्य इष्ट्यर्थमेव प्रयुक्तत्वात् इष्ट्यपवर्गे आधानमपि अपवृज्येत समाप्तं स्यात् । अग्नीनाधाय इष्टिं कृत्वा अग्नयो विसर्जनीयाः स्थपतिना इत्यर्थः । तस्मात् स्थपतीष्टिः संस्कृतेषु अग्निषु इति पूर्वः पक्षः ।

**अपिवा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ।२१ ॥**

निषादस्थपतीष्टिः आधानसंस्कृतेषु अग्निषु भवेत् इति पूर्वपक्षं सूत्रेण प्राप्तं अपिवाशब्देन निरस्य सिद्धान्तमाह । स्थपतीष्टिः लौकिके अग्नौ स्यात् न संस्कृते । आधानस्य असर्वशेषत्वात् सर्वपुरुषकर्तृकयज्ञाङ्गत्वाभावात् आधानोत्पत्तिवाक्ये त्रैवर्णिककर्तृकत्वश्रवणेन त्रैवर्णिकयज्ञाङ्गत्वात् । निषादस्थपतेश्च अत्रैवर्णिकत्वेन आधानाधिकाराभावात् लौकिकेष्वग्निषु एव स्थपतीष्टिः इति सिद्धान्तः । के.

* स्थपतीष्टेः लौकिकादिषु अनुष्ठानम् । ६।८।३। २०–२१. मीको पृ. २३८९ 'निषादस्थपतीष्टिः लौकिकेष्वग्निषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**स्थविरलगुडन्यायः ।** वृद्धहस्तपातितलगुडस्य यथा यथास्थानं न पतनमेवं लक्ष्यस्थानेऽपतनं यत्र तत्रास्य प्रवृत्तिरिति साहस्री ५।२.

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत । १०।१।६।१०॥**

'स्थाणौ स्थाण्वाहुतिं जुहोति' इति यूपे श्रुतम् । स्थाणुः यूपे छिन्ने अवशिष्टो वृक्षभागः । तत्र आज्याहुतिः स्थाण्वाहुतिः । स्थाणुरयं देशमात्रं होमस्य आधारमात्रमुक्तम् । एवं च देशमात्रत्वात् स्थाणौ आहुतेः अनिवृत्तिः प्रतीयेत । न निवृत्तिः । किंतु साद्यस्क्रे खलेवाल्यां यूपे सति स्थाण्वाहुतिः यत्र क्वचित् स्थाणौ कर्तव्या । आरादुपकारकमिदं कर्म । इति पूर्वः पक्षः ।

**अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत । ११ ॥**

साद्यस्क्रे स्थाणौ स्थाण्वाहुतिः कर्तव्या न वा, सा चाहुतिः आरादुपकारिका वा यूपसंस्कारो वा इति विचारे आरादुपकारिका स्थाण्वाहुतिः, सा च अग्नीषोमीये पशौ इव साद्यस्क्रेऽपि कर्तव्या इति पूर्वपक्षं निराकर्तुं अपिवा इति शब्दः । स्थाण्वाहुतिः अग्नीषोमीये पशौ तावत् तत्संस्कारः यूपस्य संस्कारः प्रतीयेत, शेषभूतत्वात् स्थाणोः यूपशेषभूतत्वात् । स्थाणोः आहुत्याधारत्वात् यूपसंस्कारत्वम् । तस्मात् संस्कारः स्थाण्वाहुतिः । साद्यस्क्रे च तस्य सर्वस्याभावात् स्थाण्वाहुतेर्लोपः इति सिद्धान्तः ।

**समाख्यानं च तद्वत् । १२ ॥**

तद्वत् यूपवान्तरप्रकरणवत् स्थाण्वाहुतिः इति समाख्यानं आहुतेः यूपसंस्कारार्थत्वं बोधयति । ततश्च स्थाण्वाहुतिः स्थाणुद्वारा यूपसंस्कारः । साद्यस्क्रे च खलेवाल्यां यूपत्वेन उक्तासंभवात् स्थाण्वाहुतेर्लोपः इति सिद्धान्तः ।

**मन्त्रवर्णश्च तद्वत् । १३ ॥**

'अतस्त्वं देव वनस्पते शतवल्शो विरोह' इति यस्त्वं मया वृक्णः सः अत आव्रश्चनात् बहुप्रकारो विरोह इति यूप इव स्थाणुराद्रियते । सोऽयं मन्त्रवर्णः तद्वत् समाख्यानवत् स्थाण्वाहुतेः संस्कारकर्मत्वं बोधयति । तस्मात् तत् साद्यस्क्रे खलेवाल्यां यूपे न कर्तव्यं इति सिद्धान्तः । के.

* 'स्थाणौ तु देशमात्रत्वात् ०' ( १०।१।६। १०–१३ ) इत्यत्र खलेवाल्यां स्थाण्वाहुतिः कर्तव्या



विनियुक्तयूपासंबन्धत्वेन अविनियुक्तस्थाणुसंबन्धत्वेन वा आरादुपकारित्वादिति पूर्वपक्षयित्वा सिद्धान्तितं न कर्तव्या यूपीयो ह्ययमाव्रश्चनस्थाणुः इति तत्संस्कारद्वारा यूपसंस्कारार्थत्वादिति । बाल. पृ. ८३.

* स्थाण्वाहुतिः अग्नीषोमीये पशौ । भा. १०।१। ६।१० . * स्थाण्वाहुतिः । यूपे वृक्णे सति अवशिष्टं वृक्षमूलं स्थाणुः तत्राहुतिः स्थाण्वाहुतिः । 'वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति' । वि.१०।१।६, * स्थाण्वाहुतिर्यूपसंस्कारार्था । १०।१।६.

**स्थाण्वाहुतिन्यायः ।** साद्यस्क्रे स्थाण्वाहुतिर्नानुष्ठेया ॥

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत । १०।१।६।१०॥**

**भाष्यम्**— तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते 'स्थाणौ स्थाण्वाहुतिं जुहोति' इति । ततः साद्यस्क्रे अयमर्थः सांशयिको भवति किं साद्यस्क्रे स्थाण्वाहुतिः कर्तव्या नेति । तत्रैतत् तावन्नः परीक्ष्यं किमारादुपकारकं कर्म स्थाण्वाहुतिः उत यूपसंस्कार इति । यदि आरादुपकारकं कर्म तदा कर्तव्या, अथ यूपसंस्कारः निवर्तेतेति । कथमारादुपकारकं कर्म स्यात्, कथं वा यूपसंस्कार इति ? यद्येवमभिसंबन्धः क्रियते यूपमच्छेष्यता स्थाण्वाहुतिः कर्तव्येति ततो यूपसंस्कारः । अथ यूपमच्छेष्यतेति प्रकृतेन न संबध्येत तदा आरादुपकारकं कर्मेति । किं तावत् प्राप्तम् ? आरादुपकारकं कर्मेति । एतद्विज्ञातं कर्मणां प्रयोजनम् । भूतं हि तावत् भव्यार्थमिति । अपिच निवृत्तप्रयोजनेन स्थाणुना संबध्यमाना आहुतिः किमिव यूपस्योपकरिष्यति ? संबद्धे हि क्रियमाणं संबन्धिनि उपकुर्यात् । व्यावृत्तो हि यूपात् स्थाणुः । अपिच तन्त्रमेकादशिन्यां यूपाहुतिर्भविष्यति, यदि आरादुपकारकं कर्म स्यात्, तथाहि नाश्रुतोऽभ्यासः कल्पयिष्यते । अपिच अविशिष्टेन वाक्येन स्थाणौ स्थाण्वाहुतिः श्रूयते । सा च प्रकरणेन यूपव्रश्चनस्थाणुविशेषे कल्प्येत । तस्मादारादुपकारकं कर्म स्थाण्वाहुतिः, साद्यस्क्रे च कर्तव्या चोदकानुग्रहायेति ।

**अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत । ११ ॥**

**भाष्यम्**— एवं प्राप्ते, ब्रूमः । अपिवेति पक्षव्यावृत्तिः । यूपसंस्कारः प्रतीयेत । कुतः ? प्रकरणविशेषात् यूपमच्छेष्यतः स्थाण्वाहुतिः विधीयते इति गम्यते । यो हि मन्यते अविशिष्टेन वाक्येन स्थाणुदेशमात्रे विधीयते इति, फलं तस्य कल्पनीयं भवति । योऽपि मन्यते प्रकरणात् आरादुपकारकं अग्नीषोमीयस्य भवतीति, तस्यापि प्रकरणसामान्यं प्रकरणविशेषेण बाध्येत । कर्मशेषभूतश्च यूपः , प्रयोजनवत्त्वात् तेन संबध्यमाना अदृष्टार्थाऽपि आरादुपकारिका सती कल्प्यप्रयोजना स्यात् । अतः प्रसिद्धिर्न्यायेन बाध्येत । यथा अश्वकर्ण इति । निवृत्तप्रयोजने चापि स्थाणौ, यूपात् व्यावृत्ते च यूपीयोऽसौ इति कृत्वा तत्र क्रियमाणा यूपाहुतिः यूपसंबद्धा कृता भवति इति तदाव्रश्चने क्रियते । यथा शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः देवदत्तीयाऽसौ इति कृत्वा शुचिदेशनिधानादिः संस्कारः एषितव्यो भवति । एवं स्थाण्वाहुतिरपि । एकादशिन्यां च अन्तिकदेशस्य अविवक्षितत्वात् तन्त्रं यूपाहुतिर्भविष्यत्येव । तस्मात् संस्कारपक्ष एव ज्यायान् ।

**समाख्यानं च तद्वत् । १२ ॥**

**भाष्यम्**— स्थाण्वाहुतिरिति च समाख्यानं स्थाणुप्रधानाया इवाहुतेर्भवतीति । कथम् ? षष्ठीसमासोऽयम् । कर्मणि षष्ठी । ईप्सिततमं च कर्म । सप्तमीसमासो लक्षणापेतः इति कृत्वा नादर्तव्यो भवति ।

**टुप्**— 'स्थाण्वाहुतिः' इति षष्ठीसमासोऽयम् , सप्तमीसमासानुपपत्तेः । कथम् ? सप्तम्यन्तस्य शौण्डादिभिः सह समासः ('सप्तमी शौण्डैः' पा० २।१।४०) । ननु 'संज्ञायाम्' ( पा० २।१।४४ ) इति समासो भविष्यति । उच्यते । तत्र अलुक् प्राप्नोति, यथा अरण्येतिलकाः इति । नैतदेवम् । हलदन्तात् स उच्यते । उकारान्तं चेदम् । तस्मात् लुगेव । एवं तर्हि अन्यथा नियमः । अर्थप्रयुक्तो हि समासः । सप्तमीसमासे अधिकरणप्रधानो निर्देशः । तत्राहुतिः आरादुपकारिका ।

षष्ठीसमासे संबन्धः प्रधानम्। तत्र आहुतिः संस्कारिका। आरादुपकारकाच्च सामवायिकं गरीयः। ननु उभयथाऽपि अदृष्टार्था, किमत्र गरीयस्त्वम्? उच्यते। सत्यमदृष्टार्था, किंतु समवायसंबन्धः क्लृप्तः। आरादुपकारकत्वे कल्प्यः संबन्धः। तत्र प्रकरणेन एकवाक्यता।

**मन्त्रवर्णश्च तद्वत्। १३ ॥**

**भाष्यम्—** इतश्च पश्यामः संस्कारकर्मेति, यतो मन्त्रवर्णोऽपि तद्वत् भवति 'अतस्त्वं देव वनस्पते शतवल्शो विरोह' इति। यस्त्वं मया वृक्णः सोऽतः आव्रश्चनात् बहुप्रकारो विरोह इति यूपमिव आद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म खलेवाल्यां न कर्तव्यमिति।

**शा—** स्थाण्वाहुतिः खलेवाल्यां न कर्तव्या।

**सोम—** यूपाहुतेर्दृष्टार्थत्वेन निवृत्तावपि स्थाण्वाहुतिः अदृष्टार्थत्वात् कर्तव्या इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु—** देशमात्रत्वात्स्थाणोः सप्तम्या आधारमात्रत्वात् होमार्थतया होमसंस्कार्यत्वाभावात् अनिवृत्तिः। स्थाण्वाहुतेः खलेवाल्यामिति।

**वि—** 'तस्यां (खलेवाल्यां) स्थाण्वाहुतिः कार्या न वा, स्थाणौ विधानतः। कर्तव्योपकरोत्यारात् पशौ सा प्रकृताविव ॥, यूपीयाव्रश्चनस्थाणुद्वाराऽसौ यूपसंस्कृतिः। स्रग्वत् तत्संभवात् सेयमयूपाद् विनिवर्तते ॥' खलेवाल्याः निवर्तते।

**भाट्ट—** तत्रैव (खलेवाल्यां) स्थाणौ 'स्थाण्वाहुतिं जुहोति' इति प्रकृतौ विहिता स्थाण्वाहुतिः कार्या न वेति चिन्तायाम्, स्थाण्वाहुतेर्यूपत्वोत्पादकत्वे प्रमाणाभावात् आरादुपकारकत्वेन पशुयागाङ्गत्वावगतेः कर्तव्यैव सा। न चात्र 'यूपमच्छेष्यता' इत्यस्य तृतीयान्तस्य कर्माख्याते अनुषङ्गेण यूपत्वोत्पादकत्वकल्पना संभवति, छेदनादिना व्यवायाच्च सुतराम्। न च स्थाणुसंस्कारद्वारा यूपत्वोत्पादकत्वकल्पना, स्थाणोः सप्तम्या गुणत्वावगमेन संस्कार्यत्वानुपपत्तेः। होमेन तस्य प्रतिपत्त्यजननेन प्रयाजशेषन्यायासंभवाच्च (४।१।१४)। न च यूपवियुक्तस्थाणोः कश्चिदुपयोगः, येन संस्कार्यत्वमाशङ्क्येत। अत एव यस्य कस्यचिदेव स्थाणोः अधिकरणत्वेन प्राप्तत्वात् स्थाण्वाहुतिः इत्यपि सप्तमीसमासेनैव नामधेयम्। न च आहुतिशब्दस्य शौण्डादिगणपाठाभावात् सप्तमीसमासानुपपत्तिः, तथात्वेऽपि संज्ञायामपि सप्तमीसमासविधानेन तदुपपत्तेः। न च तदानीं अरण्येतिलकाः इतिवत् अलुक् प्रसङ्गः, हलदन्ते एव तद्विधानेन उकारान्ते तदप्रसक्तेः। अत एव क्लृप्तप्रवृत्तिनिमित्तेन सप्तमीसमासोपपत्तौ न कर्मषष्ठीमङ्गीकृत्य षष्ठीसमासाङ्गीकारेण संस्कारकर्मत्वकल्पना। इतरथा आघारस्यापि प्रयाजीयचतुर्गृहीतसंस्कारकत्वापत्तेः। अतो यस्मिन् कस्मिंश्चित् स्थाणौ खलेवाल्यादावपि पश्वङ्गभूता स्थाण्वाहुतिः कार्यैव। इति **प्राप्ते**, सप्तम्या अधिकरणत्वेन स्थाणोर्गुणत्वेऽपि प्रयोजनाकाङ्क्षायां वैमृधन्यायेन (४।३।११) पदान्तरकल्पनया यूपोपयुक्तस्थाणुसंस्कारार्थत्वावगतेः तद्-द्वारा यूपत्वोत्पादिकैवैषा। इष्यते च गुरुधृताया अपि स्रजः पूजादिना संस्कारः शिष्यैः। अत एव होमजन्यं स्थाणुनिष्ठमेव अदृष्टं स्वजन्यवृत्तित्वसंबन्धेन यूपत्वोत्पादकम्। अत एव यूपानुनिष्पन्नस्थाणौ एवायं होमः, न तु स्थाण्वन्तरप्रयोजकः। एवं प्रोक्षणादिवत् अदृष्टविषयाऽपि संनिपत्योपकारकत्वलाभेन न आरादुपकारकत्वकल्पना युक्ता, प्रकरणकल्प्यश्रुतिकल्पनायां गौरवात्। आघारे तु आरादुपकारकत्वेऽपि परप्रयुक्तद्रव्योपजीवित्वलाभात् न तत्संस्कारकत्वकल्पना। **वस्तुतस्तु** प्रकरणकल्प्यश्रुतिकल्पनागौरवभिया तत्रापि 'चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य' इत्यत्र तस्य इति कर्मषष्ठ्यङ्गीकारेण सुतरां संस्कारकर्मत्वाङ्गीकारः इति न्यायसुधोक्तमेव सम्यक्। परंतु 'अमीषू वा एतद्यज्ञस्य यदाघारौ वर्म प्रयाजाः' इति यज्ञाङ्गत्वश्रुतेः प्रयाजाङ्गत्वानङ्गीकारः। अतो यूपानुनिष्पन्नस्थाणोः खलेवाल्यादौ अभावात् उत्पाद्ययूपत्वाभावाच्च न स्थाण्वाहुतिः। यूपाहुतेस्तत्र असत्यपि संस्कारकर्मत्वे 'यूपमच्छेष्यता' इति वचनेन साक्षादेव यूपत्वोत्पादकतया विहितत्वात् अकरणमिति विशेषः।



**मण्डन—** 'स्थाण्वाहुतिश्चापि न तत्र कार्या।'

**शंकर—** 'तत्र स्थाण्वाहुतिर्न च।'

* **स्थानं** अन्यतराकाङ्क्षा। **मीन्या.** * स्थानम्–इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोः वाक्यार्थयोः संनिधिः इति स्थानलक्षणम्। **भाट्ट.** ३।६।७. * स्थानमेव विनियोजकम्। कर्मगोचरे अल्पस्य कर्मणः परिमाणसामान्येन फलगोचरे अल्पमेवोपतिष्ठते मध्यमस्य मध्यमं महतो महत् इति स्थानमेव विनियोजकम्। **वा.** १।२।२।१७. * स्थानं क्रमः देशसामान्यं इत्येकोऽर्थः। **मीन्या.** * स्थानं क्रमबोधकं प्रमाणम्। **मणि.** पृ. १३. * स्थानं द्विविधं पाठसादेश्यं अनुष्ठानसादेश्यं चेति। **मीन्या.** * स्थानं धर्माङ्गताबोधकं प्रमाणम्। **मणि.** पृ. १३. * स्थानं नाम क्रमे प्रमाणम्। बाल. पृ. ८.

* **स्थानं निरूप्यते।** सादेश्यं (समानदेशत्वं) स्थानम्। तच्च द्विविधं अनुष्ठानसादेश्यं पाठसादेश्यं चेति। पाठसादेश्यं द्विविधं यथाक्रमपाठः संनिधिपाठश्चेति। पशुधर्माणां अग्नीषोमीयपश्वङ्गत्वं अनुष्ठानसादेश्यात्। तथाहि, 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति क्रयसंनिधौ आम्नातस्य अग्नीषोमीयपशोः 'स एष द्विदेवत्यः पशुरौपवसथ्येऽहनि आलब्धव्यः' इति वचनात् औपवसथ्ये अहनि अनुष्ठानम्। तद्दिने एव च पशुधर्माः श्रूयन्ते। अतस्ते अनुष्ठानसादेश्यात् पश्वङ्गम्। ज्योतिष्टोममहाप्रकरणे सत्त्वेऽपि पशुधर्माणां सोमद्रव्यकज्योतिष्टोमाङ्गत्वायोग्यत्वात् तदनङ्गत्वम्। अत एव आनर्थक्यतदङ्गन्यायेन ज्योतिष्टोमाङ्गसर्वपश्वङ्गत्वप्रसक्तावपि स्थानेन उपसंहारन्यायेन (३।१।१५) अग्नीषोमीयमात्राङ्गत्वं पश्वन्तरे तु अतिदेशादेव तेषां प्राप्तिः इति सिद्धान्तः। 'इन्द्राग्नी रोचना दिवः' इत्यादीनां क्रमाम्नातानां याज्यानुवाक्यानां 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति क्रमाम्नातेषु अङ्गत्वं यथाक्रमपाठात्। नक्षत्रेष्टिसंनिधिपठितोपहोमानां नक्षत्रेष्ट्यङ्गत्वं संनिधिपाठात्, नक्षत्रेष्टेः प्राकृताङ्गनिराकाङ्क्षत्वेन प्रकरणात् अङ्गत्वायोगात् इति प्राचीनप्रवादः। स्व–स्वबोधकवाक्यान्तरसमानदेशीयत्वसंबन्धेन किंचित्पदार्थविशिष्टत्वं स्थानं इति निष्कर्षः। उक्तसंबन्धेन तत्पदार्थविशिष्टत्वं तद्विनियोजकक्रमः इति यावत्। **एतेन** देशसमानत्वं प्राथम्यादिरूपसादृश्यं इत्युक्तौ यथाक्रमपाठसंग्रहेऽपि अभिन्नदेशतायां उपहोमाङ्गताप्रमाणभूतायामव्याप्तिः। 'अभिन्नं' इत्युक्तौ तु सदृशदेशभूतायां यथाक्रमपाठरूपायामव्याप्तिः इति **निरस्तम्।** अन्यतमत्वादिना सबन्धानुगमसंभवेन संबन्धाननुगमस्य अदोषतया उक्तनिरुक्तौ अव्याप्त्यसंभवात्। यथाक्रमपाठस्थले याज्यामन्त्राणां ऐन्द्राग्नादिषु, सांनाय्यसंनिधिपठितस्य 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रस्य सांनाय्ये च स्वबोधकवाक्यसमानदेशीयत्वसंबन्धेन वैशिष्ट्याभावात् अव्याप्तिः, अतः स्वेति। उपहोमबोधकवाक्यसमानदेशीयत्वसंबन्धेन उपहोमवैशिष्ट्यस्य संग्रहाय स्वबोधकवाक्येति। न च विकृत्युपहोमयोः एकदेशानुष्ठेयत्वेन स्वसमानदेशीयत्वसंबन्धेन उपहोमवैशिष्ट्यस्य विकृतौ क्रमत्वोपपत्तौ स्वबोधकवाक्यसमानदेशीयत्वस्य असंग्रहेऽपि अदोषः इति वाच्यम्। विकृत्युपहोमयोः अङ्गाङ्गित्वानवगतौ उपहोमानां विश्वजिन्न्यायेन फलार्थत्वापत्त्या भिन्नदेशानुष्ठेयत्वापत्तेः तयोरेकदेशानुष्ठेयत्वस्य अङ्गताबोधोत्तरकालीनत्वेन अङ्गत्वप्रमाणत्वानुपपत्तेः। उपहोमबोधकवाक्यसमानदेशीयत्वस्यैव अङ्गत्वप्रमाणत्वावश्यकत्वेन संग्राह्यत्वात्। उक्तदेशीयत्वं च उक्तदेशवृत्तित्वम्। तच्च अनुष्ठेयत्वपठितत्वान्यतरसंबन्धेन। तेन पशुधर्मबोधकवाक्यसमानदेशानुष्ठेयत्वस्य, उपहोमबोधकवाक्यसमानदेशपठितत्वस्य च संग्रहः। उक्तसंबन्धेन समिद्यागवैशिष्ट्यस्य च तनूनपादादौ सत्त्वेऽपि वक्ष्यमाणरीत्या प्रकरणप्राबल्यात् दर्शपूर्णमासाङ्गत्वस्यैव अवगतेः न समिद्यागस्य तदङ्गत्वम्।

**नव्यास्तु** इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोर्वाक्यार्थयोः संनिधिः क्रमः। इतिकर्तव्यतात्वेन अयोग्यत्वं च द्वेधा। क्वचित् तदाकाङ्क्षाविरहात् यथा विकृतौ, क्वचिदव्यापारात्मकत्वात् यथा अनुमन्त्रणजपादि-

मन्त्रादौ । एकवाक्योपात्तव्रीहियागादिसंनिधेरपि क्रमत्वापत्तेः वाक्यार्थेत्युक्तम् । प्रयाजाद्यङ्गवाक्यप्रधानवाक्यार्थयोः संनिधौ स्थानत्वापत्तिनिरासाय आद्यं विशेषणम् । वाक्यार्थसंनिधेरुक्तत्वात् नानुष्ठानसादेश्यासंग्रहः इत्याहुः ( भाट्ट. ३।३।५ ) । अत्र उपहोमवाक्यार्थस्य व्यापाररूपत्वेन इतिकर्तव्यतात्वेन अन्वययोग्यत्वात्, अन्यथा उत्थाप्येतिकर्तव्यताऽऽकाङ्क्षयाऽपि तदन्वयानापत्तेः तत्संनिधौ अव्याप्तेः, संनिधिपाठयथाक्रमपाठस्थलीयसंनिधित्वानिरुक्तेः, व्रीहियागसंनिधेः प्रयाजादिवाक्यप्रधानवाक्यार्थसंनिधेश्च सत्त्वेऽपि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन तदङ्गाङ्गिभावस्य श्रौतप्राकरणिकत्वव्यवहारोपपत्तेः तद्वारकविशेषणद्वयवैयर्थ्यापाताच्च एतदुपेक्षितम् । केचित्तु देशसामान्यं इत्यस्य प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वमित्यर्थः । अतः सामान्यपदेन प्राथम्यादिसादृश्यविवक्षायां अभिन्नदेशत्वासंग्रहः, अभेदविवक्षायां सदृशदेशत्वासंग्रहः इति दूषणमनवकाशं इत्याहुः ( भाट्टालंकारः पृ. १९९ ) । तन्न, देशे प्रधानविपरिवृत्तिवैशिष्ट्यानिरुक्तेः, उपहोमदेशे दर्शपूर्णमासविपरिवृत्तेरपि स्मृत्याद्यात्मिकायाः कदाचित् सत्त्वात् उपहोमानां तदङ्गत्वापत्तेश्च । न च शास्त्रीयत्वं विपरिवृत्तौ विशेषणं अतो नोक्तदोषः, दर्शपूर्णमासशास्त्रस्मृतिजन्यायाः शास्त्रीयदर्शपूर्णमासविपरिवृत्तेरपि तत्र संभवात् । न च प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वं स्वविनियोजकक्रमः । दर्शपूर्णमासयोः उपहोमप्रधानत्वाभावात् न दोषः इति वाच्यम् । अङ्गत्वज्ञानजनकक्रमशरीरे अङ्गतानिरूपकत्वरूपप्राधान्यनिवेशे अन्योन्याश्रयप्रसङ्गात् । अतः अस्मदुक्त एव सादेश्यनिष्कर्षो गरीयान् ।

अयं च द्विविधोऽपि क्रमः प्रत्येकं उभयाकाङ्क्षया अन्यतराकाङ्क्षया च विनियोजकः, इत्यतः षड्विधः । तत्र प्रधानस्य विकृतित्वे अनुष्ठानसादेश्यस्य अन्यतराकाङ्क्षया विनियोजकत्वं यथा उक्तपशुधर्मस्थलीयानुष्ठानसादेश्यस्य क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षतया प्रधानस्य आकाङ्क्षाऽभावात् । प्रधानस्य प्रकृत्यनिरूपकदर्विहोमादिरूपत्वे तु अनुष्ठानसादेश्यस्य उभयाकाङ्क्षया विनियोजकत्वम् । एवं ऐन्द्राग्नादिविकृतिक्रमपठितमन्त्राणां अन्यतराकाङ्क्षासहकृतयथाक्रमपाठात् तदङ्गत्वम् । यद्यपि याज्याऽनुवाक्यामन्त्राणां लिङ्गविनियोज्यत्वेन यथाक्रमपाठस्य तत्र अपूर्वविशेषसाधनत्वबोधकत्वमेव, न तद्विनियोजकत्वम्, तथापि विकृतिक्रमपठितलिङ्गाविनियोज्यजपादिमन्त्राणां यथापाठक्रम एव अन्यतराकाङ्क्षासहकारेण विनियोजकः अन्वेषणीयः । अत एव दर्विहोमाद्यङ्गभूतजपादिमन्त्राणां यथाक्रमपाठ एव उभयाकाङ्क्षया विनियोजकोदाहरणम् । एवं उपहोमीयविकृतिसंनिधिपाठः अन्यतराकाङ्क्षासहकृतः तदुदाहरणम् । शुन्धनमन्त्रस्य सांनाय्यपात्रप्रोक्षणे लिङ्गादेव विनियोगात् तस्य सांनाय्यसंनिधिपाठः साक्षादविनियोजकोऽपि अपूर्वविशेषसाधनत्वोपस्थापकत्वेन विनियोगप्रयोजकत्वात् उभयाकाङ्क्षासहकृतसंनिध्युदाहरणम् । नहि अन्यदत्र उदाहरणं संभवति । प्रकृतित्वानिरूपकप्रधानसंनिधिपठितारादुपकारकस्य प्रकरणविनियोज्यत्वात् । अत्र अन्यतराकाङ्क्षासहकृतक्रममात्रस्य इतिकर्तव्यताऽऽकाङ्क्षोत्थापकतया प्रकरणात् दुर्बलत्वं स्पष्टम् । उभयाकाङ्क्षासहकृतयथाक्रमपाठानुष्ठानसादेश्ययोः विधिसंनिधिघटितप्रकरणात् दुर्बलत्वमपि । एवं विनियोजकप्रकरणसहकृतपाठसंनिधेस्तु स्वतः अविनियोजकत्वादपि दुर्बलत्वम् । प्रकरणापेक्षया क्रमस्य दुर्बलत्वादेव च इष्टिपशुसोमयागात्मकराजसूयान्तर्गताभिषेचनीयसंनिधिसमाम्नातविदेवनादीनां अन्यतराकाङ्क्षासहकृतसंनिधिपाठात् अभिषेचनीयमात्राङ्गत्वप्रसक्तौ राजसूयमहाप्रकरणात् राजसूयाङ्गत्वं इत्युक्तं बलाबलाधिकरणे । न च राजसूयस्यापि विकृतिसमुदायात्मकत्वेन प्राकृताङ्गैरेव निराकाङ्क्षत्वात् प्रकरणासंभवः, प्रत्येकजन्यपरमापूर्वाणां प्राकृताङ्गैः नैराकाङ्क्ष्येऽपि सर्वयागजन्यपरमापूर्वस्य साकाङ्क्षत्वेन तदनुकूलप्रत्येकपरमापूर्वनिष्ठयोग्यताजनकत्वेन प्रकरणग्राह्यत्वोपपत्तेः । न च सर्वयागजन्यैकपरमापूर्वे मानाभावः, दर्शपूर्णमासयोः समुदितसाधनताश्रवणस्य समुदायापूर्वे



इव सर्वयागसमुदायात्मक–राजसूयत्वावच्छिन्नसाधनताश्रवणस्यैव तत्र मानत्वात् । तदनङ्गीकारेऽपि वा पवित्रादारभ्य क्षत्रस्य धृतिं यावत् अङ्गविधिषु 'राजसूयाय क्षेना उत्पुनाति' इत्यनेन उपक्रमात् 'राजसूयेनेजानः सर्वमायुरेति' इत्युपसंहारात् वाचनिकाङ्गसंदंशेन राजसूयत्वेन रूपेण सर्वेषामाकाङ्क्षायाः उत्तेजनात् तत्प्रकरणोपपत्तेश्च । एवमन्यविधक्रमस्यापि प्राबल्यदौर्बल्ये उदाहरणानि सुधीभिः यथासंभवमूह्यानि । इति स्थाननिरूपणम् । मुरारि. पृ. ११८५–११८८.

* स्थानं समाख्यातः प्रबलम् । शुन्धनमन्त्रः सांनाय्यपात्राङ्गं पाठसादेश्यात् न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गम् । मीन्या. * स्थानादेव सवनीयस्य प्रथममुपाकरणम्, तदुत्तरं दैक्षस्य तदुत्तरमनूबन्ध्यस्य, प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् साद्यस्के । भाट्ट.५।१।६.

**स्थानाच्चोत्पत्तिसंयोगात् । ५।१।६।१३॥**

साद्यस्के नाम यागे 'सह पशूनालभते' इति सवनीयपशुकाले त्रयाणां साहित्यं श्रुतम् । तथापि तत्र किं अग्नीषोमीयः पूर्वमालब्धव्यः सवनीयो वेति विचारे पूर्वं अग्नीषोमीय एव कर्तव्यः प्रकृतौ तथात्वात् इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह । सवनीयपशुरेव प्रथममुपाकरणमर्हति स्थानात् आश्विनग्रहग्रहणोत्तरकालरूपस्थानवशेन तस्यैव प्रथममुपस्थितेः । 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति उत्पत्तिविधौ तेन कालेन सवनीयस्य संयोगात् । ततः अग्नीषोमीयस्य ततोऽनुबन्ध्यस्येति क्रमः । स्थानक्रमोऽयम् । के.

* स्थानात् सवनीयपशुरेव पूर्वमालब्धव्यः । साद्यस्के 'सह पशूनालभते' इति सवनीयस्थाने पशुत्रयस्यालम्भे कर्तव्ये सति सवनीयः अग्नीषोमीयः अनुबन्ध्य इति क्रमः । भा. ५।१।६।१३ वर्णकं २. * यद्यपि प्रकरणं स्थानात् बलवत् तथापि उपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतक्रम एवात्र बलीयान् विज्ञायते । वा. ३।६।७।२५, * स्थानस्य चैतदेव लक्षणं यदुत धर्माणां साकाङ्क्षत्वेन प्रधानस्योत्पाद्य कथंभावं, संबन्धः । ३।६।७।२५. * स्थानस्य पूर्वैः सह विरोधाविरोधविचारपेटिका । भा. ३।६।७ तः ३।७।७, * स्थानस्य प्रथमस्योत्तमस्य च धर्मः सामिधेन्यां त्रिरभ्यासः । ९।१।९।३३.

**स्थानक्रमाधिकरणम् ।** अतिरात्रेषु त्रिणवादिस्तोमकेषु ऋचः काण्डक्रमेणैव विनियोक्तव्याः ॥

**स्थानाच्चोत्पत्तिसंयोगात् । ५।१।६।१३ वर्णकं १ ॥**

**भाष्यम्**— 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इत्येवमादि श्रूयते । तत्र आगमेन संख्यापूरणं इति वक्ष्यते ( १०।५।८।२७ ) । तत्र आगमे क्रियमाणे किं अनियतक्रमाः सर्वा ऋचः आगमयितव्याः उत काण्डक्रमेणेति । किं प्राप्तम् ? अनियमेनेति । कुतः ? अतिरात्रे त्रिणवादिशब्दार्थेन एताः प्राप्नुवन्ति । तत्र एतासां प्राप्नुवतीनां पाठक्रमो नास्तीति । एवं प्राप्ते, उच्यते । यत् आसां समाम्नाये स्थानं तेनैताः अत्र नियम्यन्ते । याः पूर्वं समाम्नाताः ताः पूर्वमेव प्रयोक्तव्याः । आनुपूर्व्यस्य हि दृष्टमेतत् प्रयोजनम् । यत् उत्तरस्फुरणं तदपि चिकीर्षितमेवेति । त्रिणवादिशब्दैः अतिरात्रे यौगपद्येन आसां प्राप्तेः पाठक्रमस्य अविषयः इत्यधिकरणान्तरं इति भवति मतिः ।

**टुप्**— यद्यपि प्रथममन्त्रग्रहणे अनियमः तथापि पूर्वो मन्त्रः पाठेनैव उत्तरं पर्युपस्थापयति । यथा मन्त्ररूपमाम्नायादवगम्यते, एवं क्रमविशिष्टमपि अवगम्यते । ब्राह्मणपाठेन तु पदार्था विधीयन्ते इत्येतावान् विशेषः । क्रमावबोधस्तु उभयोः स्वाध्यायावगमात् तुल्यः । तस्मात् पाठक्रमेण तुल्यमिति ।

* **स्थानधर्मः** सामिधेनीषु प्रथमोत्तमयोः त्रिः पठनं न तु 'प्र वो वाजा' इत्यादेरेव । भा. ९।१।९।३३.

* **स्थानविशेषादयः** कार्यप्रयुक्ताः न स्वरूपप्रयुक्ताः । वा. २।२।१३।२९ पृ. ५६९.

* स्थानापत्तिः ऊहे प्रमाणम् । मणि. पृ. १३.

* स्थानापत्त्यतिदेशः आनुमानिकवचनातिदेशभेदः । बाल. पृ. ११७–११९.

* स्थानापत्तिप्रमाणपञ्चकं भट्टसोमेश्वरेण नवमे उक्तं 'प्रत्यक्षविधिना भावे विकारेण विधानतः । स्वशब्दाच्च निषेधानुवादात् तत्कार्यकारिता ॥' इति । बाल. पृ. १२६.

**स्थानिधर्माणामूहः प्रतिनिधौ ॥**

**धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् । ९।२।१२। ३९ ॥**

भाष्यम्— वाजपेये श्रूयते 'बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति' इति । अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणम् । तत् नीवारेषु भवति न वेति संशयः । तथा 'उद्गीथा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै ब्रूयात् । संस्थिते षडहे मध्वाशयेत्, घृतं वा'—इति मध्वशने घृताशने च षडहधर्मा भवन्ति वा, न भवन्तीति संशयः । तथा राजसूये श्रूयते 'नैर्ऋतं चरुं नखावपूतानां परिवृत्त्यै गृहे' इति । अस्ति प्रकृतावुलूखलमुसलयोः प्रोक्षणम् । प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति । तन्नखेषु भवति, न भवतीति संशयः । तथा चातुर्मास्येषु श्रूयते 'परिधौ पशुं नियुञ्जीत' इति । परिधौ यूपधर्माः कर्तव्या न कर्तव्या इति संशयः । तथा 'न गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेदैरं कृत्वोद्गेयम्' इति । इरापदे गिरापदधर्मा भवन्ति, न भवन्तीति संशयः । किं तावत् प्राप्तम्? व्रीह्यादिषूक्ता धर्माः, न नीवारादिषु । तस्मात्तेषु न भवेयुरिति । एवं प्राप्ते, ब्रूमः । नीवारादिषु चोदनानुबन्धः स्यात् । समवैति हि तेषु स प्राकृतो धर्मः । प्रकृतौ तावत् अपूर्वप्रयुक्तोऽसौ, न व्रीह्यादिप्रयुक्तः । येनापूर्वस्य विशिष्टोऽयं साधनविशेषस्तत्रैष धर्मो न व्रीह्यादाविति समधिगतमेतत् । नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते । नीवारस्य तावच्चोदना 'नैवारश्चरुः कर्तव्यः' इति । स च नान्येन प्रकारेण नीवारो यागस्योपकरोति वर्जयित्वा तण्डुलनिर्वृत्तिम् । स प्रत्यक्षेणावगम्यते व्रीहिकार्ये वर्तते इति । तस्मात् व्रीहिधर्मा नीवारे भवेयुरिति ।

एवं 'षडहेनोपासीत' इति चोदनायां सत्यां यदा षडहः संतिष्ठते, न षडहेनोपास्यते इत्यर्थः । मधुघृताभ्यामशनेनोपासीतेति गम्यते । यस्य भावे यस्य निवृत्तिस्तत्तस्य स्थानेऽवगम्यते । षडहनिवृत्तौ मध्वशनं ब्रुवन् षडहकार्ये वदतीति गम्यते । तस्मात् षडहधर्मो व्रतं नियमो वा मध्वशने भवतीति । यागाभावात् तन्निमित्ता ग्रहा न प्रवर्तन्ते । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति ग्रहचमसाभावात्स्तोत्राभावः । स्तुतमनुशंसतीति स्तोत्राभावाच्छस्त्राभावः । सवनाभावात्सवनीया न प्रवर्तन्ते, इत्येवमादि न प्रवर्तते । व्रतानि नियमाश्च प्रवर्तन्ते इति । यच्चान्यदनर्थलुप्तम्, नखावपूतानामिति । नान्यथा नखावपूता भवन्ति । यदि न तैस्तुषा विपूयन्ते, तस्मात्तुषविमोचने नखाः श्रुता इति गम्यते । अतश्चोलूखलमुसलधर्मैः संबध्यन्ते इति ।

तथा 'परिधिर्यूपकार्ये वर्तते' इति विस्पष्टमेव वचनं 'परिधौ पशुं नियुञ्जीत' इति । तस्मात्तद्धर्मकः परिधिः स्यादिति । तथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति नैतौ द्वावपि विधीयेते— प्रतिषेध इरापदं च । तथाहि वाक्यं भिद्येत । न चेरापदमप्राप्तत्वादनूद्यते । प्रतिषेधे त्वनुवादः संभवति । यदा इरापदं तदा व्यक्तं गिरापदं न भवतीति । एकवाक्यरूपं च गम्यते । यस्माद्गिरापदस्यायं दोषस्तस्मादिरापदं ब्रूयादिति । भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात् । 'न ह्यात्मानं गिरेत्' इति दोषो विधीयते । शरीरं गिरितुमसंभवः । परमात्मन्यदोषः । वाक्यभेदस्तु स्थित एव । तस्माद्गिरापदोच्चारणमिरापदस्य तत्कार्यापत्तिप्रदर्शनार्थं 'न गिरा गिरेति कृत्वोद्गायेत्' इति । तस्माद्गिरापदधर्मा इरापदे भवेयुरिति । सर्वत्र पर्यवसितम् । परिधावनन्तरा कथा वर्तिष्यते ।



टुप्— यद्यप्यपूर्वप्रयुक्ताः धर्मा इति स्थितम्, तथाऽपि कार्यापत्त्या विनोहसिद्धिर्नास्तीत्यनेनाधिकरणेन कार्यापत्तिः प्रतिपाद्यते । सा च पञ्चधा भवति । वास्तवी सा द्विविधा, प्रत्यक्षानुमानाभ्याम् । शब्दात् त्रेधा । स्वशब्दात्, प्रतिषेधेन स्वशब्दानुमानम्, संस्थया प्रतिषेधानुमानम्, प्रतिषेधाच्च शब्दः । तत्र प्रत्यक्षात्तावत् 'नैवारो बार्हस्पत्यश्चरुः' । ननु स्वशब्देनैव नीवारा व्रीहिकार्ये विनियुज्यन्ते । उच्यते । नीवारशब्दो नीवारान् वदति, तद्धितो विकारम्, देवतां बार्हस्पत्यशब्दः, चरुशब्दो द्रव्यम् । कतरः कार्यापत्तिपरः? तस्मात् प्रत्यक्षेणात्र कार्यापत्तिः । व्रीहयः पुरोडाशाख्यहविर्निर्वृत्त्या यागार्थाः । नीवारा अपि तन्निर्वृत्त्या यागसाधनार्था एव प्रत्यक्षमुपलभ्यन्ते । तस्मात् व्रीहयो यथाऽपूर्वार्था इति धर्मान् प्रयुञ्जते तथा नीवारा अपि । 'नखावपूतानां चरुः' इत्यवहननस्य तुषकणविप्रमोकं फलं दृष्ट्वा अनुमानं भवति, नूनमुलूखलमुसलकार्ये नखा वर्तन्त इति ।

'परिधौ पशुं नियुञ्जन्ति' इति स्वशब्देनैव यूपकार्ये परिधिर्वर्तते । 'न गिरागिरेति ब्रूयात्' इति, गिरापदं प्रतिषेधन् तत्कार्ये लक्षयति । तत्र लक्षित इरापदविधिः । तच्च शब्दादृते न शक्यं विधातुम् । अत उच्यते प्रतिषेधात् स्वशब्दानुमानम् । लक्षणया अत्र स्वशब्दः । 'उद्गीथा वा एतर्हि वाग्भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते' इति संस्थया प्रतिषेधः । तेन तत्कार्यम् । तस्मिन् मध्वशनघृताशने । एवमत्र लक्षितलक्षणया स्वशब्दः ।

तदेतदयुक्तम् । कथम्? यदि मध्वशनघृताशने षडहकार्ये वर्तेयातां तथा फलसाधके स्याताम् । तत्र 'द्वादशाहेन प्रजाकामं याजयेत्' इति वचनं विरुध्येत । यागा ह्येतेन फले विधीयन्ते । ते च द्वादशसंख्याविशिष्टाः । न मध्वशनघृताशने यागौ । ताभ्यां फलवत्त्वयां चतुर्दशसंख्योपजायेत । राजसूयवदिति चेत् । तन्न । 'षट्त्रिंशदहो वा एष यद्द्वादशाहः' इत्येवमादीनि लिङ्गानि विरुध्येरन् । यदि चानयोस्तत्कार्यापत्तिः स्यात्तथा सति षडहं निवर्तयेताम् । तत्रास्योत्पत्तिरनर्थिका स्यात् । लिङ्गविप्रतिषेधस्तु स्थित एव । कर्तृसंस्कारकेऽवगम्यमाने कथं फलसाधिके इत्यभ्युपगम्येते । सर्वं चैतदन्याय्यम् ।

तत्र वर्णयन्ति । द्वयमिहास्ति फलसाधनत्वं साधनत्वं च । तत्र न फलसाधनत्वाद्धर्मलाभः । किंतु साधनत्वात् । तदप्ययुक्तम् । यद्येते षडहकार्यं कुरुतः, ततस्तद्धर्मैः संबध्येयाताम्, यथा नीवाराः । न चैते षडहकार्ये वर्तन्ते इत्युक्तमेव । तदङ्गत्वाद्धर्मलाभो न भवति । किं तर्हि? कार्यापत्त्या । तस्मादन्यदुदाहरणमुदाहियते 'स प्रत्यामनेत् स्थानात्' इति द्रव्यविनाशात् कर्मविनाशः । कर्मविनाशेन प्रतिषेधो लक्ष्यते । प्रतिषेधाच्च स्वशब्दः । अयमप्यस्मिन्नधिकरणे नैव सिद्धान्तः । तस्मादेतत्सदृशमन्यदुदाहरणं मृग्यम् ।

शा— प्रकृतौ व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयः न तत्स्वरूपप्रयुक्ताः तन्मात्रपर्यवसायिनः किंतु 'व्रीहिभिर्यजेत' इत्यादिविहितसाधनविशेषद्वारेण अपूर्वभावनार्थाः । तथाहि 'आग्नेयोऽष्टाकपालः' इति पुरोडाशद्रव्यकोऽग्निदेवत्यो यागो विहितः, तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृतित्वं प्रतिपद्यन्ते । तदयमर्थः— व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति । ततः पुनराह यैर्यजेत तान् व्रीहीन् प्रोक्षति अवहन्तीति । ततश्च सर्वैरुपसंहियमाणैरयमर्थः संपद्यते— प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति । अयमेव वाक्यार्थः पारमार्थिकः । व्रीह्यादिवाक्यार्था अस्यैव उपायभूताः पदार्थस्थानीयाः । एवं चेत् आग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीरर्थभावः तद्विकारेषु अतिदेशेन नीयते । तत्र नैवारे चरौ पुरोडाशस्थाने चरोर्निवेशात् व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथातिदेशमवस्थानात् नैवारं चरुं निर्वपेत् आग्नेयवत् इत्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेः अयमर्थो भवति— प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति । तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः, स्थाना-

पत्तिस्तु कथमवगम्यते इदं अस्य प्राकृतस्य कार्ये वर्तते इदमस्येति । तत्प्रदर्शनार्थमिदमधिकरणम् ।

**सोम— सूत्रार्थः**– द्रव्ये नीवारादौ गुणे मध्वशनादौ विकारे च नखावपनादौ व्यतिक्रमे यूपं व्यतिक्रम्य नियोजनसाधनतया श्रुते परिध्यादौ प्रतिषेधे गिरापदं प्रतिषिध्य विहितेरापदादौ चोदनानुबन्धः चोद्यमानप्रोक्षणादिधर्मसंबन्धः धमस्यार्थकृतत्वात् प्रोक्षणादेः कार्यार्थत्वात् तत्कार्यस्य च नीवारादौ समवायादिति ।

**वि**–– 'न स्युः स्युर्वाऽत्र नीवारा व्रीहिस्थानेऽमितेर्नहि । विकारतद्धितात्ते स्युः, प्रोक्षणादिरतो भवेत् ॥ मध्वाशनखपूतत्वपरिधीरापदेष्वपि । ये धर्माः षडहादीनां ते कार्याः स्थानपाततः ॥'

**भाट्ट**— तदेवं त्रिविधस्यापि ऊहस्य प्राकृतदेवतादिस्थानापन्न एव वैकृतदेवतादौ प्रसक्ते स्थानापत्तिरिदानीं निरूप्यते । तत्र मूले तत्कार्यकारित्वरूपां स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तम् । यद्यपि च सर्वत्र विधिरेव स्थानापत्तौ बीजम्, तथाऽपि तत्सहकारीणि पञ्चेति पञ्चविधत्वम् । प्रत्यक्षादनुमानात् श्रुतस्वशब्दात् प्रतिषेधानुमितस्वशब्दात् अभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति ।

तेषां चोदाहरणानि 'नैवारश्चरुः' इति नीवाराणां व्रीहिकार्यकारित्वं प्रत्यक्षात् । न च नैवार इति विकारार्थतद्धितरूपस्वशब्दादेव तदिति शङ्क्यम्, तस्य संबन्धसामान्यवाचित्वेनाप्युपपत्तौ चरोः नीवारविकृतित्वस्य प्रत्यक्षाधीनत्वात् । तथा 'नखावपूतश्चरुर्भवति' इत्यत्र नखानामुलूखलमुसलस्थानापन्नत्वमनुमानात्–– नखानां हि आवपनमेव प्रत्यक्षेण कार्यमवधार्यते उलूखलमुसलयोश्चावघातः । आवपनावघातयोश्चैकवितुषीभावकार्यत्वात् तत्साधनयोरप्येकवितुषीभावप्रयोजनकत्वमनुमेयमेव । तथा पाशुकचातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुतस्य परिधेः यूपकार्यकारित्वं श्रुतस्वशब्दादेव । न ह्यत्राप्राकृतनियोजनान्तरविधिः, विशिष्टविध्यादिगौरवापत्तेः । तथा 'न गिरागिरा' इति निषेधानुवादबलात् गिरापदकार्यवाचिस्वशब्दानुमानेनेरापदस्य गिरापदस्थानापन्नत्वम् । तथा 'संस्थिते षडहे मध्वाशयेत् घृतं वा' इत्यत्र षडहाभावे मध्वशनादिविधिना षडहप्रतिषेधमनुमाय तेन षडहकार्यवाचिस्वशब्दानुमानेन षडहस्थानापन्नत्वं मध्वशनादेः । इदं च भाष्यकारोक्तमपि कृत्वाचिन्तयोदाहृतमिति मन्तव्यम्, षडहसमाप्त्युत्तरं तदङ्गत्वेनात्र मध्वशनविधानेन षडहाभावे मध्वशनविधौ प्रमाणाभावात् । स्थिरोदाहरणान्तरं मृग्यमित्युक्तम् ।

अत्र प्रतिभाति— न तावत् तत्कार्यकारित्वं तत्स्थानापन्नत्वं ब्रह्मवर्चसादिफलस्य सौर्यादिकरणस्य च स्वर्गाग्नेयादिकार्यकारित्वाभावेन स्थानापत्त्यनापत्तेः । न चेष्टापत्तिः, 'अगन्म सुवः' इत्यादौ यागानुमन्त्रणादौ चोहानापत्तेः । 'सूर्यस्याहं देव यज्यया' इत्यादियागानुमन्त्रणे यज्यापदे पदान्तरप्रक्षेपरूपभाक्तोहाभावेऽपि यागान्तरपरत्वेन अन्यथाभावात्मकस्य मुख्यस्योहस्य तादवस्थ्यात् । चरुनीवारनखादीनामवान्तरकार्यभेदेन स्थानापत्त्यनापत्तेश्च ।

तथोदाहरणान्यप्ययुक्तानि । तथाहि नीवाराणां चरुविशेषजनकत्वस्यान्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात् । न हि साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्षं संभवति । अलौकिकप्रत्यक्षं तु नखादावपि तुल्यम् । किञ्चैवं नखेष्वप्युलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्तिः । तृतीयोदाहरणेऽपि यद्यपि परिधेः पशुनियोजनसाधनत्वं श्रुतम्, तथाऽपि नियोजनस्य यूपीयत्वं न श्रुतमिति न यूपकार्यकारित्वस्य श्रुतस्वशब्दगम्यता । चतुर्थे तु गिरापदस्याग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्यस्यैवाप्रसिद्धेरर्थाभिधानमात्ररूपकार्यस्य च गीत्यादिधर्मग्राहित्वाभावात् सत्यपि तन्निवर्तकत्वे इरापदस्य नैव तत्कार्यापत्तिरित्युक्तमेव । पञ्चमेऽपि सत्यामपि षडहादिकार्यापत्तौ अभावे विधिनैवाशक्त्यादिना तदकरणे स्वशब्दमात्रकल्पनया तत्कार्ये मध्वशनादिविध्युपपत्तेः प्रतिषेधानुमानवैयर्थ्यम् ।



अतो मूलोक्तप्रकारानुपपत्तेरेवं वाच्यम्– यस्य पदार्थस्य येन रूपेण यादृशपदार्थाकाङ्क्षापूरकत्वं तेनैव रूपेण तस्यास्तादृशाया वा भावनायास्तादृशाकाङ्क्षापूरकत्वं यस्य पदार्थस्य तस्य पदार्थस्य तत्पदार्थस्थानापन्नत्वम् । अस्ति चेदं ब्रह्मवर्चसादौ, स्वर्गादेर्हि येन रूपेण भाव्यत्वकरणत्वादिना 'किमस्या भाव्यं करणं वा' इत्यादि भावनाकाङ्क्षापूरकत्वं प्रकृतौ, तेनैव रूपेण तद्भावनासदृशायां सौर्यादिभावनायां ब्रह्मवर्चसादेः तादृशाकाङ्क्षापूरकत्वात् स्वर्गादिस्थानापन्नत्वसिद्धिः । सौर्यस्य चाग्नेयस्थानापन्नत्वम् । नीवारनखादीनां च–– 'किमस्य प्रदेयप्रकृतिद्रव्यं वैतुष्यसाधनीभूतक्रियासाधनं वा' इत्येवमाद्याकाङ्क्षापूरकत्वं तेन तेन रूपेण व्रीहिमुसलादिवदेव समानमिति तत्स्थानापन्नत्वसिद्धिः । षडहस्य च येन रूपेण यस्यामेव भावनायां यादृशाकाङ्क्षापूरकत्वं तस्यामेव तेन रूपेण मध्वशनस्येति तस्यापि तत्स्थानापत्तिः कृत्वाचिन्तया न विरुध्यते ।

ईदृशस्थानापत्तिघटकं च भाव्यत्वादिकं रूपं **पञ्चधाऽवगम्यते** । क्वचिदनुमानात्, क्वचिच्छक्तस्वशब्दात्, क्वचिल्लाक्षणिकात्, क्वचित्प्रतिषेधानुमितात्, क्वचिदभावेविध्यनुमितात् । तत्राद्योदाहरणं नीवाराः । **अनुमानप्रकारश्च** –– नीवाराः प्रदेयचरुप्रकृतिभूताः चर्वन्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वे सति समवायित्वात् सामान्यमुखव्याप्त्या मृत्पिण्डवदिति । नखेष्वपि चैवमेवानुमानप्रकारो बोध्यः । नखा वैतुष्यप्रयोजकाः वैतुष्यान्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वात्, कुलालपितृदण्डत्वादिवत् । **द्वितीयोदाहरणं** तु– परिधिरेव, यूपीयत्वस्य शक्तशब्दगम्यत्वाभावेऽपि परिधिजन्यत्वस्य तद्गम्यत्वात् । **तृतीयोदाहरणम्**–'शरमयं बर्हिः' इत्यत्र बर्हिःपदेन तत्कार्यलक्षणात् शराणां बर्हिःस्थानापन्नत्वम् । **चतुर्थोदाहरणम्**– 'ऋधक्सोम स्वस्तये' इत्यादिऋचां प्रकृतौ बहिष्पवमानस्तोत्रे क्लृप्तकार्याणामुपहव्याख्यविकृतौ अतिदेशेन प्राप्तौ 'न सोमेति ब्रूयात् इन्दो इति ब्रूयात्' इति निषेधानुवादबलेनेन्दुपदस्य सोमपदस्थानापन्नत्वम् । एवं 'न मित्रस्येति ब्रूयात् यज्ञस्येति ब्रूयात्' इत्याद्यपि वैकृतमुदाहर्तव्यम् । **पञ्चमं** तु निषेधकल्पनाभावेऽपि कृत्वाचिन्तया तदेव । स्थिरोदाहरणं 'यदि दीक्षितानां साम्युत्तिष्ठेरन् सोममपभज्य विश्वजिता यजेत, यः सत्रायागुरते स विश्वजिता यजेत' इत्यादौ सोमाद्यभावे वैश्वानरेष्ट्यादौ बोध्यम् । तत्र च स्थानापत्तिसत्त्वेऽपि न सत्रादिधर्मप्राप्तिः, अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरःस्फूर्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्यैव बलवत्त्वात् ।

**मण्डन**— 'नीवारे व्रीहिधर्माः स्युः ।'

**शंकर**— 'प्रत्यक्षात्कार्यकारिता ।' 'अभावविधिना तद्वत्, विकारेण च सामता । स्वशब्दादपि सा ज्ञेया, सा निषेधानुवादतः ॥'

* **स्थाली** पचति । स्थाल्यादीनां कर्तृत्वविवक्षया तिङः स्थाल्यादिपदोक्तसंख्यानुवर्तनोपपत्तेः न कर्त्रेतिक्रमेण अधिकरणादिसंख्यावाचित्वकल्पना युक्ता । **सु.** पृ. १४५३. * स्थाली यथा संभरणमेव कुर्वती पक्तिं करोतीत्युच्यते, तथा आध्वर्यवानेव पदार्थान् कुर्वन् अध्वर्युः यजतीत्युच्यते । **भा.** ६।१।४।१७. * **स्थाल्यामेव** पाकः सौर्ये चरौ । १०।१।११। ४५–४८. **मीको.** पृ. ४३८५ 'सौर्यचरोः पाकः स्थाल्यामेव' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्थाल्यां (मृन्मय्यां) स चरुसंज्ञकः पाको निर्वर्त्यते, न कटाहे कपाले वा । **भा.** १०।१।११।४८.

**स्थालीपुलाकन्यायः** । यथा प्रज्वलितचुल्ल्यधिरोहितस्थाल्यन्तर्गतेष्वेकस्मिन् पक्के निश्चिते सर्वे पुलाका निश्चीयन्ते, तद्वत्प्रकृतेऽपि । यथा वा पाचकः स्थालीपुलाकस्यैकस्य पक्वताज्ञानेन सर्वस्याप्यन्यस्य पक्वतां विजानाति, तथा ब्रह्मविद्यतिः स्वमुक्त्या सर्वान् मुक्तानेव विजानाति, न तु स्वमात्रमिति शङ्करानन्दस्वामी । **साहस्री.** १९७.

* एकदेशस्थमपि लिङ्गं **स्थालीपुलाकन्यायेन** समस्तद्योतकं भविष्यति । वा. ३।५।६।१९.

* **स्थालीपुलाकवत्** अलिङ्गास्वपि इष्टिषु दार्शपौर्णमासिकविध्यन्तस्य सिद्धिः । भा. ८।१।४।११.

* **स्थालीपाकः** दर्विहोमो लौकिकः । वि.८।४।१.

* **स्थालीपाकादीनां** स्मार्तानां वैदिकस्य च वास्तुहोमस्य नामधेयं दर्विहोमशब्दः । भा. ८।४। २।२-३. मीको. पृ. २०१८ 'दर्विहोमशब्दः स्मार्तानां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

卐 **स्थावरजङ्गमविषन्यायः** । यथा रजतादिज्ञानतद्बाधज्ञानयोः सर्पवत्सनाभादिरूपजङ्गमस्थावरविषयोश्चेतरेण पूर्वबाधः प्रसिद्धः, तथा प्रकृतेऽपि । साहस्री. २२६.

* **स्थितिसिद्धान्तापरपर्याया** प्रक्रिया सांख्यानाम् । सु. पृ. १३१.

卐 **स्थूणानिखननन्यायः** । 'स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरः । अपिशब्दाल्लोहप्रतिमायामपि । स्थूणा यथाऽसकृत्संचाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादितार्थदार्ढ्यं भवतीत्यर्थः । साहस्री. १२.

* स्थूणानिखननन्यायः । 'आख्या चैवं तदर्थत्वात्' ( ३।३।६।१३ ) इत्यत्रोक्तस्य समाख्याकृतस्य विनियोगस्य स्थूणानिखननन्यायेन दृढीकरणार्थं पूर्वपक्षं रचयति । सु. ३।७ पृ. ४०.

* **स्थूणानिखननवत्** । यदि स एव निर्णयः किमर्थं आक्षेपः ? दार्ढ्यार्थः, स्थूणानिखननवत् । भा. ७।२।१।१. * स्थूणानिखननवत् फलद्वारेण आक्षेपसमाधाने क्रियेते दार्ढ्याय । शांभा. ३।४।१।२ ब्रसू. * इहैव ( ७।२।१ ) अतिदेशविषयनिर्णयार्थं तत्र ( २।१।११।३६ ) अर्थादुक्तमेव गीतिवचनत्वं न्यायेन स्थूणानिखननवत् दृढीक्रियते । सोम. ७।२।१.

卐 **स्थूलात्सूक्ष्मं ज्यायः इति न्यायः** । यदा तु महापातस्य स्थितिरूपसूक्ष्मकालज्ञानं स्यात्तदा स्थूलात्सूक्ष्मं ज्यायः इति न्यायेन स एव पातमध्यकालो विवाहादिमङ्गलकृत्येषु त्याज्यः, अन्यथा गणितग्रन्थेषु पातस्थितिकालानयनवैयर्थ्यप्रसङ्गः इति निष्कृष्टोऽर्थ इत्युक्तः । साहस्री. ५६०.

卐 **स्थूलारुन्धतीन्यायः** । **स्थूलारुन्धतीनिदर्शनन्यायः** । अविद्योपाधिकजीवस्य अहंकारत्वोक्तिः स्थूलारुन्धतीन्यायेन । अद्वैत. पृ. ५९८ । अत्र लघुचन्द्रिका– यथा अरुन्धतीनिकटस्था स्थूला तारा अरुन्धती इयं इत्युक्त्वा प्रदर्श्यते, सूक्ष्मत्वेन अरुन्धत्याः प्रथमतो दर्शनासंभवात् । पश्चात् नेयं अरुन्धती किंतु इयं निकटस्था सूक्ष्मतारा इत्युक्त्वा अरुन्धतीप्रदर्शनात् पूर्ववाक्यस्य अरुन्धतीज्ञाने तात्पर्यनिश्चयात् प्रदर्शिततारयोः भेदपर्यवसानं तथा ... इति । * स्थूलारुन्धतीन्यायः । गौस्तिष्ठति, देवदत्तः पचति, इत्यादयः ( शब्दाः ) शृङ्गग्राहिकया तावज्जन्मसहस्रेणापि बोधयितुं बोद्धुं चाशक्याः, आनन्त्यात् । अतः प्रकृतिप्रत्ययविभागकल्पनारूपो लघुभूत उपायः समाश्रीयते लिपिवत् । आरोपित एव च तत्र संबन्धः । प्रसिद्धो हि स्थूलारुन्धती–शाखाचन्द्रादिन्यायो लोके, पञ्चकोशावतरणन्यायश्चोत्तरमीमांसायाम् । शब्दकौस्तुभः स्फोटः. * स्थूलारुन्धतीन्यायः । यथा अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैव अरुन्धती भवति इति । शांभा. १।१।१२ ब्रसू.

* **स्नातकः** । 'गुरुगेहादनावृत्तः स्नातको हि न कथ्यते ।' श्लोवा. १।१।१।१०४.

* **स्नाति** इति स्नानस्य 'मेध्य एव मेधमुपैति' इति फलश्रुतिः फलार्थवादः न तु फलविधिः ज्योतिष्टोमे । भा. ४।३।१।१-३.

* '**स्नात्वा** उप्त्वा केशश्मश्रूणि अरणी समारोप्य निर्मथ्योदवसाय' । अनेन पशोः सद्यस्कालत्वमुक्तम् । संकर्ष. ३।२।२७.

* **स्नानं** 'अस्नाताशी मलं भुङ्क्ते' इति भोजनादिपूर्वभावि नियतम् । सु. पृ. १४६४. * स्नानं ज्योतिष्टोमे यजमानसंस्कारः । भा. ३।८।२।३–८, * स्नानं ज्योतिष्टोमे संस्कारः न फलप्रयुक्तः, तत्र फलश्रुतिरर्थवादः । तच्च क्रत्वर्थं यजमानार्थम् । भा. ४।३।१।१-४. * स्नानं मलापकर्षणार्थम् । वा. ३।४।५।१४. * स्नानस्य मलापकर्षणाख्यपुरुषोपकारसामर्थ्यात्मकेन लिङ्गेन पुरुषार्थत्वम् । सु. पृ. १४६४.



* **स्नानीयम्** । यथा स्नानार्थं यत् तत् स्नानीयम्, तथा यत् दीक्षार्थं तत् दीक्षणीयम् । भा. ५।३। ११।३१.

* **स्निग्धस्नेहनम्** । न हि स्निग्धस्य स्नेहनं शक्यं कर्तुं पिष्टस्य वा पेषणम् । भा.९।२।२।३.

卐 **स्नेहदीपन्यायः** । स्नेहाऽभावे जाते दीपनिवृत्तिः । साहस्री. ३७७.

* **स्पर्शः** । शीतोष्णस्पर्शौ आप्यतैजसावेव न वायवीयौ । ऋजु. पृ. २५३. * **स्पर्शे** लौकिके यूपस्य पुरुषार्थं प्रायश्चित्तम् । भा.९।३।३।९.

* **स्पर्शमात्रविधिः** 'वत्समालभेत' इति अग्निहोत्रे दोहाविकारे । वि. २।२।६.

* **स्पर्शवतां** परस्परदेशप्रतिबन्धात् देशान्तरव्याप्त्या विकासो घटते । वा. २।१।२।५ पृ. ४०३.

* मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनं च अनाचारः उदीच्यानां दाक्षिणात्यानां च । वा. १।३।३।७.

* **स्फटिकः** उपरागोपधानेन पद्मरागविशेषात् सौगन्धिकात् भेदेन न गृह्यते, उपरागापगमे तु गृह्यते । ऋजु. पृ. २०६.

卐 **स्फटिकलौहित्यन्यायः** । यथा स्फटिके जपापुष्पादिसंनिधिकृतलौहित्यस्य तन्निवृत्तौ निवृत्तिः, तथाऽऽत्मेत्युपाधितन्त्रस्य जीवस्य तद्बाधात्तद्बाध इति । साहस्री. ३५१.

卐 **स्फुलिङ्गन्यायः** । मन्थनानन्तरं जातस्याग्नेः अभिमन्त्रणात् पूर्वमनुगमने स्फुलिङ्गन्यायेन तमनादृत्य पुनर्मन्थनम् । ( स्फुलिङ्गमात्रस्य नाशे यथा न किंचिद्विचार्यते तद्वत् ) । के. ( हिरण्यकेशिप्रायश्चित्तविवरणम्–गणेशसोमयाजी ) ।

* '**स्फोटगोशब्दतासत्त्वप्रभृतौ** पदकल्पना । गकारादिपदव्याख्याद्वारेणैव निराकृता ॥' वा. १।३।८।२४ पृ. २७२ । 'स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते । असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥ वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः । नामाख्यातादि संस्कार्यं तेषां शशविषाणवत् ॥' पृ. २७३.

* **स्फोटवादः** । भा– अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः । श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः । यद्येवं अर्थप्रत्ययो नोपपद्यते । कथम् ? एकैकाक्षरविज्ञाने अर्थो नोपलभ्यते । न च अक्षरव्यतिरिक्तः अन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकारो न तदा औकारविसर्जनीयौ, यदा औकारविसर्जनीयौ न तदा गकारः । अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् । अन्तर्हिते शब्दे स्मरणात् अर्थप्रतिपत्तिश्चेत्, न, स्मृतेरपि क्षणिकत्वात् अक्षरैस्तुल्यता । ( सिद्धान्तमाह– ) पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः इत्यदोषः ।

नन्वेवं शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनं अनुपपन्नं स्यात् । उच्यते । यदि नोपपद्यते, अनुपपन्नं नाम । नहि लौकिकं वचनं अनुपपन्नं इत्येतावता प्रत्यक्षादिभिः अनवगम्यमानोऽर्थः शक्नोति उपगन्तुम् । लौकिकानि वचनानि उपपन्नार्थानि अनुपपन्नार्थानि च दृश्यन्ते । यथा 'देवदत्त गामभ्याज' इत्येवमादीनि, 'दश दाडिमानि, षडपूपाः' इत्येवमादीनि च । ननु च शास्त्रकारा अप्येवमाहुः 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति इति उपक्रमप्रभृति अपवर्गपर्यन्तं' ( नि. १।१ ) इति यथा । न शास्त्रकारवचनमपि अलं इमं अर्थं अप्रमाणकं उपपादयितुम् । अपि च नैव एतदनुपपन्नार्थम्, अक्षरेभ्यः संस्काराः, संस्कारात् अर्थप्रतिपत्तिः इति संभवति अर्थप्रतिपत्तौ अक्षराणि निमित्तम् । ( ननु– ) गौण एव अर्थप्रतिपत्तौ शब्द इति चेत्, न गौणः अक्षरेषु निमित्तभावः, तद्भावे

भावात् तदभावे चाभावात् । अथापि गौणः स्यात् । न गौणः शब्दो मा भूत् इति प्रत्यक्षादिभिः अनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम् । नहि अग्निर्माणवकः इत्युक्ते अग्निशब्दो गौणो मा भूत् इति ज्वलन एव माणवक इत्यध्यवसीयते । न च प्रत्यक्षो गकारादिभ्यः अन्यो गोशब्द इति । भेददर्शनाभावात् अभेददर्शनाच्च । गकारादीनि हि प्रत्यक्षाणि । तस्मात् गौः इति गकारादिविसर्जनीयान्तं पदं अक्षराण्येव । अतो न तेभ्यो व्यतिरिक्तं अन्यत् पदं नामेति । ननु संस्कारकल्पनायामपि. अदृष्टकल्पना । उच्यते । शब्दकल्पनायां सा च ·शब्दकल्पना च । तस्मात् अक्षराण्येव पदम् । १।१।५।५ पृ. ४५–४८.

**शा**–– वर्णानां वाचकत्वं समर्थयितुं शब्दस्वरूपं निरूप्यते । किं ' गौः ' इत्यत्र वर्णा एव शब्दः उत तेभ्यः अर्थान्तरं इत्येतत् प्राधान्येन निरूप्यते । वर्णावयव–गत्व–गोशब्दावयवि–जातिनिराकरणं तु प्रासङ्गिकं वर्णा एव शब्द इत्यवधारणसमर्थनार्थम् । ( **अथ वर्णावयवनिराकरणम्–**) तत्र वर्णानामपि पुद्गलाख्यान् अवयवान् आर्हताः संगिरन्ते । तत्तु अवयवानुपलम्भात् अयुक्तम् । प्रत्यक्षेण तावत् अवयवा नोपलभ्यन्ते, वर्णेषु साकल्यवैकल्यग्रहणाभावात् । नानुमानेन, तैः सह कस्यचित् लिङ्गस्य संबन्धाग्रहणात् । न च सामान्यतो दृष्टम्, नहि यद्यत् वस्तु तस्यतस्य अवश्यं अवयवैर्भवितव्यम्, परमाणूनां निरवयवत्वात् । तेऽपि सावयवा इति चेत्, तदवयवा अपि तथा स्युः, ततः परमपि तथा इत्येकस्यैव माषावयविनः अनन्तावयवत्वं स्यात् । ततश्च एकेनैव माषेण तिलेन वा सर्वं जगद् व्याप्येत, अनन्तैरवयवैर्मूर्तैः अन्योन्यस्य अवकाशमप्रयच्छद्भिरनन्तदेशव्याप्तेः । तस्मात् निरवयवाः परमाणवः वर्णाश्च । ( **गत्व–औत्वादिजातिनिराकरणम्–** ) तथा गत्वजातिः औत्वजातिश्च निष्प्रमाणिकैव । ( देशादिभेदेन प्रतीयमानस्यापि गकारस्य ' स एवायं ' इत्येकबुद्धिग्राह्यत्वेन व्योमवत् एकत्वे सति नैकव्यक्तिकं गत्वसामान्यं भवति ) । **ननु** द्रुतविलम्बितमध्येषु उदात्तानुदात्तस्वरितेषु सानुनासिकनिरनुनासिकयोः ह्रस्वदीर्घप्लुतेषु च प्रत्यभिज्ञायमाना जातिः कथं नास्तीति शक्यतेऽभिधातुम् । **सत्यं** अस्ति प्रत्यभिज्ञा, सा तु व्यक्त्येकत्वादेवोपपन्ना । द्रुतादिभेदावभासस्तु द्रुताद्यवस्थाभेदालम्बनः न व्यक्तिभेदमापादयितुमलं भवति । **भेदाभेदावभासोऽपि द्वेधा भवति** । क्वचित् भेदो धर्मिविषयः अभेदस्तु धर्मविषयः यथा शाबलेयादिषु ' अयं **गौरयं गौरयमपि** ' इति जातेरात्मलाभः । क्वचित्तु भेदावभासो धर्मात् अभेदावभासश्च धर्मिणमालम्बते, यथा एकस्मिन्नेव देवदत्ते युवाऽयं वृद्धोऽयं कृशोऽयं इति । न तत्र जातिरङ्गीक्रियते । तदिह द्रुतादिषु धर्मिविषयः अभेदः धर्मविषयस्तु भेदः । तथाहि ईदृशोऽत्रावभासः ' अनेनायमकारो द्रुतमुच्चारितः, अनेन विलम्बितं ' इति, न तु 'अयमकारो द्रुतः अयं तु विलम्बितः ' इति, येन धर्मिभेदो जातिश्च अङ्गीक्रियेयाताम् । **ननु** कार्श्यादीनां क्रमवर्तित्वात् एकस्मिन् देवदत्ते युक्तः समावेशः, अनुनासिकादीनां तु धर्माणां युगपत् अनेकवक्त्रुच्चारिते वर्णे समवेतानां कथमेकवर्णविषयत्वम् । नहि विरुद्धधर्मान् एको धर्मी युगपद् बिभर्ति । सत्यम् । न त्वेते परमार्थतो वर्णधर्माः, ध्वनिधर्मास्त्वेते, वर्णे केवलमाभासन्ते । यथा अल्पे महति च दर्पणे युगपत् दृश्यमाने मुखे अल्पत्वं महत्त्वं चेति । तस्मात् वर्णस्य व्यक्त्येकत्वेऽपि न विरोधः इति अप्रामाणिकी गत्वादिजातिः । ( **गोशब्दावयविनिरासः –** ) एवं गोशब्दावयव्यपि गकारादीनां अयौगपद्यात् सर्वगतत्वाच्च अवयव्यारम्भासामर्थ्यात् । सर्वत्र हि कारणपरिमाणात् अधिकं कार्यपरिमाणं तन्तुपटयोरिव । न च विभुभ्यो वर्णेभ्यः परिमाणाधिक्यं कस्यचित् भवति । अतो नास्त्यवयवी । तदभावे च तदाधारं गोशब्दत्वं दूरापास्तम् । तस्मात् वर्णा एव शब्दः ।

( **वर्णानामर्थप्रत्यायकत्वोपपत्तिः –** ) आह । गृह्णीम एतत् अवयवावयविगत्वादिकं नास्तीति, न तु वर्णा एव शब्द इति अर्थप्रत्ययानुपपत्तेः । तथाहि । ' नह्येकाक्षरविज्ञानादर्थधीरुपजायते । वाचश्च क्रमवर्तित्वात् साहित्यं नावकल्पते ॥ ' उच्यते । 'यथाग्नेयादिकर्माणि क्रमवर्तीनि सन्त्यपि । संहत्य कुर्वते कार्यमेकं वर्णास्तथैव नः ॥ ' **ननु** क्रमवर्तिनामपि उत्पत्त्यपूर्ववशेन युक्तं साहित्यम्, वर्णानां तु कथम् । तेषामपि संस्कारेण भविष्यति ( साहित्यम् ) । तत्सद्भावे किं प्रमाणम् ? यदेवाग्नेयादिषु । यथाहि तेषां शास्त्रेण संहत्यकारितावगमात् स्वरूपतश्च तदसंभवात् अपूर्वं द्वारं कल्प्यते, तथा वर्णानामपि एकैकशः अभिधानादर्शनात् सकलोच्चारणे चावगमात् संहत्यकारित्वे निश्चिते स्वरूपेणासंभवात् संस्कारकल्पनं युक्तमेव, तद्वदेव चैककर्तृकत्वं क्रमविशेषश्च आद्रियते, विपर्ययेण अर्थाभिधानादर्शनात् ।

( **स्फोटनिराकरणम्–** ) **ननु** एवं प्रतिवर्णं संस्कारकल्पनात् अनेककल्पना स्यात् तद्वरं एकमेव शब्दतत्त्वं कल्पितम् । ( न तावत् वर्णानां प्रत्येकं अर्थबोधकत्वं एकैकस्मादर्थाप्रतीतेः । नापि समुदितानां समुदायानुपपत्तेः । अतः वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते । स एव पदात्मा शब्दः । एवं वाक्यस्फोटोऽपि । अप्रत्यक्षोऽपि अयमर्थः प्रतीतिलक्षणकार्यानुपपत्त्या गम्यते । **वर्णा एवानुभूयन्ते न तदतिरिच्यमानस्वरूपं वस्तुतत्त्वमिति चेत्** । न । ' एकं पदं ' ' एकं वाक्यं ' इति चैकरूपस्यानुभवात् । न चेयं वर्णावगाहिनी, तेषां परस्परभिन्नत्वात् । तस्मान्न वर्णात्मकः शब्दः, किंतु स्फोटरूप एव । इति । **सिद्धान्तचन्द्रिका नाम टीका**) । **नैवम्** । दृश्यादर्शनेन निरस्तत्वात् । शब्दो हि प्रत्यक्षग्राह्योऽभ्युपगम्यते । न च प्रत्यक्षेण वर्णातिरिक्तं किंचित् प्रकाशते, तेन नास्तीत्यवगच्छामः । त्वयाऽपि हि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पना अवश्यं कर्तव्या । ध्वनयो हि न प्रत्येकं स्फोटमभिव्यञ्जन्ति । साहित्यं च क्रमवर्तिनां संस्कारद्वारमेव इति तुल्यं तत्कल्पनम् । **स्यान्मतम्**, प्रत्येकमेव नादाः शब्दमभिव्यञ्जन्ति । न चैवं उत्तरनादवैयर्थ्यम्, पूर्वे हि नादाः शब्दमस्फुटमभिव्यञ्जन्ति, उत्तरोत्तरे स्फुटं स्फुटतरं च व्यञ्जन्ति इति नोत्तरेषामानर्थक्यम् । यद्येवं ततो य एव उत्तरे नादाः स्फुटाभिव्यक्तिसमर्थाः तैरेव भवितव्यम्, अलं पूर्वैः । **ननु** न कश्चिदपि नादः स्वतः अस्य (शब्दस्य) स्फुटाभिव्यक्तिं करोति, किंतु सर्वे ते प्रत्येकं व्यञ्जकाः । स तु न द्रागेव स्फुटमवभासते, प्रथमं अस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवति । तद्यथा दूरादवलोकितः सहकारः प्रथमं हस्ति–पलालकूटादिसाधारणरूपेण प्रतिभातः पुनरालोच्यमानो वृक्षात्मना प्रकाशते पुनः सहकारात्मना स्फुटो भवति, तद्वदेव द्रष्टव्यम् । **यद्येवं** य एव ते पूर्वे नादाः तैरेव अभ्यस्यमानैः ईदृशी स्फुटाभिव्यक्तिः स्यात् उत्तरैर्वा केवलैरभ्यस्यमानैः । तत्र विजातीयनादाश्रयणमनर्थकम् । तथा प्रत्येकं हि व्यञ्जकत्वे सति उत्तरैः अस्फुटाभिव्यक्तिः, पूर्वैश्च स्फुटाभिव्यक्तिः स्यात् इति व्युत्क्रमेणापि उच्चारणं स्यात् । अतः अपेक्षितक्रमविशेषानेकविजातीयनादसमुच्चयाश्रवणात् अवश्यं पूर्वनादाहितसंस्कारसहितान्तिमनादाभिव्यङ्ग्यः स्फोटः इति अवश्यमङ्गीकर्तव्यं इति तुल्या संस्कारकल्पना ।

**यद्वा** तवैवेयं संस्कारान्तरकल्पना, मत्पक्षे तु स्मृतिहेतुभिरेव संस्कारैः सिध्यति अर्थावगतिः इति न संस्कारान्तरं कल्पयितव्यम् । **ननु** ममापि त एव भविष्यन्ति । न । तेषां स्मृतेरन्यत्र अव्यापारात् । मत्पक्षे तु स्मृतिमेव जनयन्तः अर्थप्रतिपत्तिं संस्कारा जनयन्ति । तथाहि, प्रत्येकवर्णानुभवभावितैः संस्कारैः संहत्य सर्ववर्णगोचरा एका स्मृतिर्जन्यते । तस्यां च युगपदवभासमाना वर्णा विनैव संस्कारान्तरेण संहत्य अर्थप्रत्ययं जनयन्ति । त्वत्पक्षे तु नैवं संभवति । तथाहि, नादा हि न ज्ञायमानतया स्फोटं व्यञ्जयन्ति अश्रावणत्वात् । अगृहीतत्वादेव च न स्मर्यमाणानां व्यञ्जकत्वम्, येन वर्णवत् स्मर्यमाणाः कार्यं कुर्वन्ति इत्युच्येत । सत्तया हि ते श्रोत्रसंस्कारं कुर्वन्तः शब्दं व्यञ्जयन्ति । न च युगपत् सत्ताऽस्ति क्रमवर्तित्वात् । अतः संस्कारद्वारमेव साहित्यं इत्यवर्जनीयं संस्कारान्तरकल्पनम् ।

**अथ मतम्** । सत्यं न स्मृतिहेतुभिः स्फोटाभिव्यक्तिः, ये तु वर्णोपलब्धिहेतवो नादजन्याः श्रोत्रगताः संस्काराः तैरेव वर्णानामिव स्फोटाभिव्यक्तिर्भविष्यति । किं संस्कारान्तरकल्पनयेति । **तदयुक्तम्** । तेषां क्षणिकत्वात् । नहि आद्यवर्णोपलब्धिहेतुः संस्कारः, अन्त्यवर्णश्रवणवेलायामवतिष्ठते । यदि अवतिष्ठेत ततो विसर्जनीयश्रवणवेलायामपि गकारश्रवणमनुवर्तेत । तस्मात् क्षणभङ्गिनस्ते । अतो न तेषां संहत्य स्फोटाभिव्यञ्जकत्वं भवति । प्रत्येकाभिव्यक्तौ च उत्तरोत्तरेषामनर्थकत्वं इत्युक्तम् । **अथवा** ध्वनिसंयोग एव श्रोत्रसंस्कारो नान्यः । तस्य च विस्पष्टमेव भङ्गुरत्वं गत्वरत्वात् ध्वनीनाम् । तस्मादन्ये स्थायिनः संस्काराः कल्प्याः । तथा वर्णातिरिक्तः शब्दः कल्प्यः इति बहु अप्रमाणकमापन्नम् । मत्पक्षे तु दृढस्मृतिविपरिवर्तिनां वर्णानां वाचकत्वात् न किंचिदूनम् । **ननु** युगपत् स्मर्यमाणानां वाचकत्वे व्युत्क्रमेणापि उच्चारिता वर्णाः वाचकाः स्युः । **न** । तत्क्रमस्यापि अङ्गत्वात् । कः पुनः क्रमोऽङ्गम्, नहि वर्णानां विभूनां नित्यानां च स्वरूपतः क्रमवत्त्वम् । न प्रतीतिक्रमः, तस्याः स्मृतिरूपाया एकत्वात् । एवं तर्हि ध्वनिक्रमो यो वर्णेषु आरोपितः प्रतिभासते सोऽङ्गं इत्यदोषः । तस्मात् व्यञ्जकानां ध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्वन्तः स्मर्यमाणा वर्णा वाचकाः । नान्यः शब्दोऽस्ति इति सिद्धम् । इति **स्फोटवादः** । पृ. ९२–९७.

**स्फोटवादः** । **बृहती—** 'अथ गौरित्यत्र कः शब्दः' इति । कोऽयं प्रश्नः ? अयं अयं प्रश्नः, यदि अपरिणत्या शब्दः अर्थं प्रतिपादयति, कस्तर्हि शब्दोऽभिप्रेतः । यः श्रोत्रेण अवच्छिद्यते स शब्दः ? ओमित्युच्यते ! 'श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः' गकारौकारविसर्जनीयाः । **ननु** एवमर्थप्रत्ययो नोपपद्यते क्रमवर्तित्वात् वर्णानाम् । क्षणिकत्वाच्च तदुपलब्धानाम्, उपलभ्यमानतया च पदादिव्यवस्था, न तु सन्मात्रतया । तस्मादनुपपन्नः अर्थप्रत्ययः । ( ऋजु— वर्णास्तावन्न सन्मात्रतया अर्थं प्रतिपादयन्ति । तेषां सर्वगतत्वात् नित्यत्वाच्च सर्वदा सर्वत्र च अर्थप्रतीतेः प्रसङ्गात् । उपलब्धिपक्षे तु प्रत्येकं प्रतिपादकत्वं नास्ति । न च समुदितानाम् । क्रमवर्तित्वात् तदुपलब्धीनाम् । न च क्रमोत्पन्नानां उपलब्धीनां स्थेम्नोपलब्धौ साहित्यम् । तासां क्षणिकत्वात् । न च तत्प्रकारातिरेकि प्रकारान्तरमस्ति इति अनुपपन्नः अर्थप्रत्ययः । ) अथायमभिप्रायः— उपलब्धिविनाशेऽपि हि तत्स्मृत्यनुग्रहात् अर्थावगम इति । ( यद्यपि क्षणिकत्वादुपलब्धयो युगपन्न संभवन्ति तथापि तत्स्मृत्यनुगृहीता वर्णा अवगमं करिष्यन्ति । ) साऽपि न सर्वविषयिणी, उपलब्धिवत् । उपलब्ध्यनुसारिणी हि सा । अतोऽपि अर्थावगतिर्न घटते । तस्मात् शब्दतत्त्वमेव इदं अर्थरूपतया विपरिवर्तते इत्युक्तं शब्दविद्भिः ( यस्मात् वर्णातिरेकी शब्दः कार्यगम्यः, तस्मात् स विवर्तते अर्थरूपेण इति प्रतीतिविरुद्धता नास्ति । वर्णात्मके हि शब्दे गवादीनां तद्रूपता विरुध्यते ) । किंच अविवर्तपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपे अर्थे वा अवगतिः शक्यते वक्तुम् । बाढम् । शब्दादयः श्रोत्राद्यवच्छेदेन एकरूपा अपि अनेकरूपतया प्रतिभान्ति । मरकतपद्मरागादिषु मुखमेकं अनेकमिव प्रतिभाति तथात्रापि ।

**ननु च** खड्गादिषु एकं ग्राहकं ( चक्षुः ) । उपाधयो हि खड्गादयः । तदेकग्राहकवशात् एकं मुखं इति शक्यते वक्तुम् । भेदाश्च उपाधिनिबन्धनाः । अत्र पुनः किमेकं ग्राहकं शब्दादेः ? यद्वशात् श्रोत्राद्युपाधिकृतो भेदः, एकमेवेदं वस्तु इति वर्ण्यते । किमिदं प्रलप्यते एकग्राहकवशात् एकं वस्तु इति । ( अत्रापि नैकग्राहकवशात् एकं मुखं, किंतु– ) एकत्वादेव हि एकत्वम् ( एकत्वेनैव प्रतीतेरेकत्वम् । तेन अत्रापि एकत्वेन प्रतीतेः शब्दरूपादीनामेकत्वमिति ) । **ननु** चोक्तं एकत्वमेव न प्रतीयेत इति, ( कस्मात् ? ) श्रोत्रादयो हि प्रतीतेः कारणम् । ते च भेदेनैव प्रतीतिमुत्पादयन्ति इति प्रतीतिभेदे सति एकं वस्तु इति दुर्वचः । कथं तर्हि खड्गादिषु तदेवेदं मुखं इति,



त्रिम्बाकारप्रत्यभिज्ञानात् तदुपाधिनिबन्धनो भेद इति शक्यते वक्तुम् ( कथमुपाधिषु नानावभासे सत्यपि 'तदेवेदं मुखं' इति निश्चयः, यावता भेद एव स्यात् । यदि त्रिम्बाकारप्रत्यभिज्ञा स्यात् तद्दोषनिबन्धनो भेद इति शक्यते वक्तुम्, नान्यथा ) । उक्तं तर्हि त्वयैव एकत्वं 'प्रत्यभिज्ञानादेकत्वं' इति । अस्ति चेदमेकत्वं शब्दादावपि 'गौरयं, शुक्लोऽयं, सुरभि चन्दनं' इति ( गौरयं इति जातिशब्दयोः तुल्यव्यपदेशात् एकत्वावगमः । शुक्लोऽयमिति रूपशब्दयोः । सुरभि चन्दनमिति गन्धशब्दयोः द्रव्यशब्दयोश्च ) । तस्मादत्रापि एकतया प्रत्यभिज्ञानात् श्रोत्राद्युपाधिनिबन्धन एव भेदः इत्युपपन्नम् । श्रोत्रादिभेदः किंनिबन्धनः ? विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । विषयभेदप्रतिपत्तेः किं निबन्धनम् ? श्रोत्रादिभेद इत्युक्तम् । एवं तर्हि इतरेतराश्रयता उक्ता भवति । बाढमुक्ता । अविद्यामातृकेयम्, अत एव अविद्येत्युच्यते बुधैः ( येयं इतरेतराश्रयता सेयं अविद्या, मातृका मातृसदृशी–इति ऋजु. । अविद्या माता जननी यस्याः इति तु केवलः. ) । तस्मात् विवर्त एव आश्रयणीयः तत्त्वविद्भिः अवगतेः कारणम् । तस्मात् अशब्दज्ञो देवानांप्रियः ( मीमांसकः ) यो हि युतसिद्धयोः शब्दार्थयोः संबन्धं अर्थावगतौ कारणं मन्यते । पूर्ववर्णजनितसंस्कारसहितः अन्त्यो वर्णः प्रत्यायकः इति कोऽयं संस्कारो नाम ? यदि तावत् वर्णावगतिः, प्रत्युक्ता सा । स्मरणमपि तथैव ( अयौगपद्यात् ) । अथ स्मृतिकार्यान्यथाऽनुपपत्त्या कश्चित् पदार्थः कालान्तरावस्थायी विद्यते इति कल्प्यते, असावपि प्रतिवर्णविषय एव इति शक्यते कल्पयितुम् । एकैकवर्णविषयत्वात् उपलब्धेः, तदनुसारित्वाच्च स्मृतेः, तत्कार्यत्वाच्च संस्कारस्य । ( ऋजु– संस्कारो हि वर्णस्मृतिजनकतया वर्णान् स्मृतौ युगपदुपलम्भयन् अर्थप्रतीतौ कारणतां यायात् । स च एकैकवर्णविषयः एव न सकलवर्णविषयः । कस्मात् ? उपलब्धिभिराधीयन्ते संस्काराः । उपलब्धयश्च प्रत्येकवर्णविषया एव । तेन कारणमुखेन तावत् एकैकवर्णविषयः संस्कारः । तथा कार्यमपि यत् संस्कारस्य कल्पकम्, तदपि प्रत्येकवर्णविषयमेव उपलब्ध्यनुसारित्वात् स्मृतेः । उपलब्धं हि स्मर्यते, नानुपलब्धम् । न च समुदिता वर्णा उपलब्धा इति न समुदितवर्णविषया स्मृतिः । 'तत्कार्यत्वाच्च संस्कारस्य' सैव स्मृतिः कार्यं यस्य स तत्कार्यः, तस्य भावः तत्कार्यत्वं तस्मात् । एतदुक्तं भवति, स्मृतितः संस्कारः कल्प्यमानः कार्यानुरूप्यात् प्रतिवर्णविषय एव कल्पनीय इति ) । तस्मात् वर्णोपलब्धिवत् असावपि न कारणम् । न च स्मृतिविज्ञानशून्यः संस्कारः अस्तीति प्रमाणमस्ति । दर्शयति च प्रत्येकवर्णविषयमेव संस्कारं 'पूर्ववर्णजनितविशेषसंस्कारसहितः अन्त्यो वर्णो वाचकः' इति ब्रुवन् । तस्मात् उपलब्धिस्मृतिभ्यां किमधिकं अस्य अर्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः ? । (ननु यथा अर्थप्रतीतिरनुपपन्ना, तथा स्फोटाभिव्यक्तिरपि अनुपपन्ना । तस्मात् नैकैकेन वर्णेन ध्वनिना वा स्फोटोऽभिव्यज्यते । न च नाभिव्यज्यतां इति वाच्यम् । अनभिव्यक्तात् अर्थप्रत्ययप्रसङ्गात् । न च समुदितैः, समुदायासंभवात् । न च भागशोऽभिव्यक्तिः, भागाभावात् । तस्मादर्थप्रतीतिरेव परमस्तु वर्णेभ्यः, किं स्फोटकल्पनयेति । तत्राह– ) स्फोटवादिनो वा कथं ( स्फोटाभिव्यक्तिः ) इत्येतदप्यनुत्तरम् ( सिद्धान्तिनः ) । नहि अभ्युपगतिः अर्थसिद्धौ हेतुः । ( यत् खलु अनुपपन्नम्, तत् अनुपपन्नमेव । न चाभ्युपगमात् उपपन्नता भवति ) । तस्मात् उपवर्णनीयोऽयं ग्रन्थः ।

अथ कालान्तरावस्थायितैव (संस्कारस्य ) विशेषः । तन्न । परस्परासंबन्धे हि किमवस्थितिः करिष्यति । अथ अर्थप्रतिपत्तिरेव संबन्धहेतुः । ( उत्तरं– ) एवमितरेतराश्रयता प्राप्नोति । भवतु इति चेत् ( भवतु इतरेतराश्रयता, न च दोषमावहेत् विवर्तवादिन इव ) । न तत्त्वावगमे युक्तोऽयं अभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु ? दर्शनात् इति यदि उच्येत, तदिहापि दर्शनं शक्यते वक्तुम्, विवर्तस्य प्रतिपक्षस्य संभवात् ( विवर्तादपि अर्थप्रतीतिसंभवात् ) । अर्थावगतिर्हि

कारणमात्रस्य हेतुतां प्रतिपद्यते, न संस्कारसंबन्धस्यैव। बीजाङ्कुरादिषु विशेषदर्शनात् उपपन्नम्। इह तु आनुमानिकत्वात् संस्कारस्य विशेषोपलब्धिर्नोपपद्यते। तस्मात् विवर्तमेव उपपन्नतरं मन्यामहे। अत एव इदमपि अयुक्तम्। किमयुक्तम्? 'सा च शब्दकल्पना च' (भाष्यम्) इति। कथमयुक्तम्? विवर्तपक्षे हि का नाम इयं शब्दकल्पना? यस्मात् अध्यासितोपाधि सर्वप्रमाणावगम्यं एकं वस्तु इत्युक्तम्। तस्मात् अशब्दज्ञता एवेयं यदुत भिन्नयोरपि शब्दार्थयोः औत्पत्तिकः संबन्धोऽभिधीयते (इति)।

**ननु** एकत्ववादिनोऽपि नैवायं विभागः शक्यतेऽवगन्तुम्, 'ज्योतिष्टोमोऽयम्, दर्शपूर्णमासाविमौ' इति। एकत्वे हि न वाक्यैकत्व एवावस्थितिः। सर्ववाक्यानां एकता प्राप्नोति, वर्णानामिव पदे, पदानामिव वाक्ये, एकत्वावगमादेव। भवति हि सर्ववाक्येषु शब्दः शब्दः इत्येका बुद्धिः। सर्ववाक्यार्थेषु च वाक्यार्थ इति। तदिदं अभिन्नं सर्वमेव ज्योतिष्टोमादि कर्मजातं प्राप्नोति। दृश्यन्ते च अधिकारभेदा विरुद्धाश्चाविरुद्धाश्च। विरुद्धाः विरुद्धफलाः अविरुद्धाश्च अविरुद्धफलाः। तत्र विरुद्धाः कृष्णलचरुसर्वस्वारादयः, अविरुद्धाश्च अग्निहोत्रादयः। न चैतदेकत्वे उपपद्यते। सत्यं नैकत्वे उपपद्यते, भिन्नार्थानि चैतानि वाक्यानि, एकार्थप्रतिपत्त्यर्था चैकता। न चात्र एकार्थता अवसीयते। तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तः। वाक्यान्तरे तु किंकृतो वाक्यान्तरस्यापलाप इति। तस्मान्नेयं विरुद्धाविरुद्धचोदना उपपद्यते। शब्दप्रामाण्यवादिनो हि (च) अर्थसंबद्धः शब्दः शब्देनोच्यते (अभिमतः) न काकवाशिताद्यपि श्रोत्रग्राह्यम्।

**ननु** श्रोत्रादिभेदमुपवर्णयता सर्वमेतत् अविद्याजातं इत्युक्तम्। किमिदमिदानीं अर्धजरतीयमुपन्यस्यते वाक्यवाक्यार्थयोर्भेद एव इति। अनभिप्रायज्ञो देवानांप्रियः। ब्रह्मणि असौ अभेद उक्तः। तद्रूपतया केन भेदोऽभिधीयते? शास्त्रार्थावगतौ च केन वा भेदोऽपह्नोतुं शक्यते श्रोत्रादीनामिव? सत्यं नापह्नूयते, अविद्या तु प्राप्नोति। विद्या चेष्यते वैदिकोऽर्थः। कथमविद्यातः अभ्युदयः शक्यते वक्तुम्। अविद्या हि प्रत्यवायस्य निमित्तम्। सत्यं यथा भवानाह। प्रत्यवायस्तु आपेक्षिकः। सर्वं हि क्षयि प्रत्यवायायैव। किंतु प्रत्यवाय एवैकत्र (ब्रह्महत्यादौ)। स च उपायश्चान्यत्र (वैदिकोऽर्थः) इति विशेषः। तस्मान्न किंचिदत्र पूर्वं परेण विरुध्यते (अभेदाभिधानं परमार्थाभिप्रायं परेण अविद्यानिबन्धनभेदाभिधानेन)। ननु वाक्यवाक्यार्थयोर्भेदेऽपि कर्मोत्पत्तिवाक्यैः गुणवाक्यानां कथमर्थत एकता शक्यते वक्तुम्? उक्तं भिन्नत्वेऽपि एकानुष्ठानसिद्धिरिति नित्यकाम्यप्रयोगयोरिव। तस्मात् सर्वमुपपन्नम्।

(**सिद्धान्तमुपक्रमते–**) स्यादेतदेवं यद्येका बुद्धिः स्यात्। नहि अत्र एका बुद्धिरस्ति। ननु च सर्वशब्देषु 'शब्दः शब्दः' इत्येका बुद्धिरस्ति। असत्यां चैकबुद्धौ शब्दशब्दवाच्यताऽपि न स्यात् सर्वशब्दानाम्। एकनिमित्तता हि एकशब्दवाच्यता न पुनरेकत्वकृता। (ऋजु- न वर्णेष्वेकाकारा बुद्धिरस्ति। यस्मादेकेन निमित्तेन विना एकशब्दप्रवृत्तिर्न भवति। तच्च निमित्तं क्वचित् जातिः, क्रिया, गुणः, द्रव्यं वा गौः, गन्ता, शुक्लः, विषाणी इति यथा। क्वचित् वस्तुना एव एकत्वं यथा तस्मिन्नेव वस्तुनि पुनः शब्दप्रवृत्तौ आकाशं आकाशं इति। न पुनः एकत्वमेव अस्या निमित्तम्। अतः अनैकान्तिकत्वात् एकशब्दप्रवृत्तेः न सिध्यत्येका बुद्धिः)। अत्र च एकं निमित्तमस्ति श्रोत्रग्राह्यता श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। किं पुनः कारणं श्रोत्रग्राह्यतैवात्र गृह्यते न पुनः गोत्ववत् शब्दत्वमाश्रीयते। (उत्तरं–) सामान्यविशेषविषयमज्ञानं अत्रापराध्यते एवं चोदयतः। (पृच्छति–) किं पुनः सामान्यविशेषविषयं ज्ञानम्? (उत्तरं–) इदं ज्ञानं, यस्मिन् पदार्थग्रहणे सति पूर्वदर्शनसंबन्ध्यवमर्शो भवति, तत् सामान्यम्। न च गकारादिषु एकवर्णग्रहे सति वर्णान्तरावमर्शो भवति पाचकादिवत्। तस्मात् क्रियानिबन्धनैव इयं शब्दशब्दवाच्यता। कस्यायं विवर्तः,



कस्य वा श्रोत्रादयः उपाधितामापद्यन्ते? तस्मात् विडम्बनैषा विवर्तते अर्थभावेनेति। तस्मात् कार्यत एव संबन्धोऽपि कल्पनीयः संस्काराणाम्, नोपलब्धिस्मृत्योः, अनवस्थितेः।

(ऋजु— अत्रापरे परिचोदयांबभूवुः। यदि प्रत्येकवर्णोपलम्भसंभूतभावनोपजातसकलवर्णविषयस्मृतिनिबन्धनः अर्थप्रत्ययः, तर्हि विपरीतक्रमोच्चरितेष्वपि वर्णेषु प्रत्येकानुभवाहितानां भावनानां अविशेषात् यौगपद्याच्च मिलितसकलवर्णगोचरस्मरणकारणत्वात् अर्थप्रतीतिः किं न भवेत्? तथा नानापुरुषसमुच्चारितेष्वपि एकैकोपलम्भानां अभेदात्। अत्र इदमेव तावदुत्तरं वाच्यम्, कार्यतः साहित्ये कल्प्यमाने यथाकार्यमेव कल्पयितुं न्याय्यमिति। किंतु क्रमविशेषपरिगृहीता एव वर्णाः अर्थप्रतीतिहेतवः।

स्यान्मतम्, स्वभावतो नित्यानां विभूनां वर्णानां कालनिबन्धस्य देशनिबन्धनस्य च पौर्वापर्यस्याभावात् उपलब्धिनिबन्धनं तदुपेयम्। एका चेयं सकलस्मरणात्मिका बुद्धिः इति न तन्निबन्धनः क्रम उपपद्यते इति। तदिदमसांप्रतम्। उक्तं स्मरणात्मिका धीरियमिति। तेन पूर्वोपलम्भसंबन्धसंभवं पौर्वापर्यं पर्यालोचयन्ती जायते इति किमनुपपन्नम्। ननु एकक्षणभाविनी स्मृतिः कथं भिन्नं अवध्यवधिमद्भावं भासयति, क्रमवदवगतनानावर्णविषयत्वात् तस्याः स्मृतेः। एतेन नदीदीनादिषु पदभेदबुद्धिः व्याख्याता, क्रमभेदेन तदुपपत्तेः। एवं च विच्छेदोच्चरितेषु अर्थप्रत्ययो न भवति, युगपत्स्मरणाभावात्। **भाष्ये** च 'पूर्ववर्णजनितसंस्कारसहितः अन्त्यो वर्णो वाचकः' इत्यनास्थावादः। परमार्थतस्तु सर्ववर्णेषु स्मरणारूढेष्वेव अर्थप्रत्ययः। अन्विताभिधानस्य अन्यथाऽनुपपत्तेः इति वक्ष्यामः।)

यदप्युक्तम् 'अयुक्तं सा च शब्दकल्पना च इति' तत्रापि अर्थापरिज्ञानमेव अपराध्यते। इदं हि तत्रोच्यते परमार्थस्य उपाधिकल्पना, अविद्यमानस्य च कल्पनेति, तदिदं 'सा च शब्दकल्पना च' इति। सुरभिचन्दनादीनां आकृतिग्रन्थे परिहारं वक्ष्यामः इत्युक्तम्।

**ननु** च शब्दादर्थं प्रतिपद्यामहे इत्येतत् इदानीं लौकिकं वचनं नोपपद्यते। किं गकारादयो न शब्दाः? शब्दास्ते, न शब्दः। 'शब्दात्' इति चैकवचनं पदाभिप्रायम्। न चैतत् पदमस्ति इति उपपन्नैवेयं अनुपपत्तिः। तथा च शास्त्रकारैरपि (यास्काचार्यैः) पदाभिप्रायेणैव उपन्यस्तं 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे' इति (१।१।४) कामं मोपपादि, अनुपपन्नार्थमपि हि लौकिकं वचनं दृष्टं 'दश दाडिमानि षडपूपाः' इति। लोके च अनुपपन्नार्थमेव किंचित् दृष्ट्वा शास्त्रं तन्नियमाय प्रवृत्तम्। इह पुनः नैवेयं अनुपपत्तिः समुदायस्य निमित्तत्वात्। कार्यैक्यात्तु एकत्वोपचारः। तस्मात् शास्त्रकारवचनमपि अनयैव युक्त्या उपपन्नम्। पदवाक्यनिर्देशश्च। गौः पदं, अश्वः पदं, लौकिकं वाक्यं, वैदिकं वाक्यं इति च। तस्मात् गकाराद्येव पदं, स एव शब्दः, नान्यत् व्यतिरिक्तमस्ति इति सिद्धम्। **बृहती. पृ. १०९–१२३.**

* **स्फोटवादनिरासः** चोदनायाः धर्मप्रामाण्यसिद्ध्यर्थमेव। ऊहादिमान् हि धर्मश्चोदनाप्रमेयः, ऊहश्च पदादिधर्मः पदाद्यसत्वे कथं प्रमीयेत? एवं पदार्थमृषात्वेऽपि तदाश्रितं ऊहतन्त्रप्रसङ्गादि। **बाल. पृ. ६.**

* **स्फोटवादिभिः** निरवयवस्यापि स्फोटस्य क्रमवर्तिभिः नादैः अस्फुटस्फुटस्फुटतरत्वेन अभिव्यक्तिः इष्यते। **सु. पृ. ५९७.**

* **स्फोटविचारः** क्रियांश्चित् **मीको. पृ. ३४६२** 'वाक्याधिकरणं' इति बिन्दौ मणिग्रन्थे द्रष्टव्यः।

* स्फोटविचारः **मीको. पृ. ३४६४** 'वाक्यार्थे शक्तिः लक्षणा वा' इति बिन्दौ मणिग्रन्थे द्रष्टव्यः।

* '**स्फ्यश्च** कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि। **मा. ४।१।४।७.**

* स्फ्यः यज्ञायुधम्। 'यज्ञायुधानि संभरति' 'स्फ्येनोद्धन्ति' इति। स्फ्यः खड्गाकारं काष्ठम्। **वि. ३।१।९.** * **स्फ्यस्य** धारणं तावदग्नीध एकान्तेन। **वा. ३।८।१२।२४.**

* स्फ्याधिकरणम् । ३।१।५।११. मीको. पृ. २१५७ ' द्रव्याधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम्। * स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वं दर्शपूर्णमासयोः । वि. ३।१।५.

* स्मान्तं यजुः– ' वसिष्ठा भूयास्म ' इति । श्राद्धमयूखः पृ. ५१ घारपुरेसंपादितः.

* स्मरणं अनादि न शक्यं पर्यनुयोक्तुम् । टुप्. १०।४।१२।२३. * स्मरणम् । असंनिकृष्टावमर्शे हि स्मरणमेव मन्यन्ते । बृहती. पृ. ८०. * 'स्मरणं चोक्तमाचाराद् बलवत्तरम् । ' वा. १।३।८।२७ पृ. २८०. * स्मरणं नाम गृहीतग्रहणम् । ऋजु. पृ. ५२, * स्मरणं पूर्वानुभवोपजीवि विज्ञानम् । पृ. ८०. * स्मरणं प्रमुष्टतत्ताकं अङ्गीक्रियते । मणि. पृ. २६.

* स्मारकाः मन्त्राः । नियतोच्चारणं च नियमादृष्टार्थम् । भा. १।२।४।३१–४९.

* स्मार्तं च श्रुतिविरुद्धं ( स्त्रीणां ) विक्रयं नानुमन्यन्ते । भा. ६।१।४।१५, * स्मार्तानि अष्टकादीनि कर्माणि लौकिकानि । ८।४।२।२. * स्मार्ताः पदार्थाः यत्र न क्रमकालपरिमाणानुरोधेन बाधिताः तत्र श्रौता बाधिष्यन्ते इति कुत एतत् ? तेनैव गतत्वादवाच्यमिति चेन्न, सूत्रकारस्यात्रैव प्रथमाभिधानात् । तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता । शेषं त्विह सिद्धमसूत्रितमित्यपुनरुक्तत्वम् । वा. २।४।२।३३. * स्मार्तानां स्थालीपाकादीनां कर्मणां दर्विहोमशब्दो नामधेयम् । ८।४।२।२–३. मीको. पृ. २०१८ ' दर्विहोमशब्दः स्मार्तानां श्रौतानां च कर्मणां नामधेयम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्मार्तेष्वपि कर्मसु दोषनिर्घातार्थानां प्रायश्चित्तानां ऐकार्थ्ये विकल्पः । भा. १२।३।५।१६.

* स्मार्तादीनामपि उपनयनोत्तरकालकर्तव्यत्वम् । भा. ६।२।६।२१–२२.

* स्मार्तादिकर्मसु उपनीतस्यैवाधिकारः । ६।२। ६।२२–२३. मीको. पृ. ३१० ' अधिकारः स्मार्तादिकर्मसु उपनीतस्यैव ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* स्मार्तादिनिषेधः दृष्टार्थः यथा विवाहे–' अरोगिणीं ' इत्यादिः । तदुक्तं विज्ञानेश्वरेण ' रोगिण्यादिषु तु दृष्टविरोध एव ' इति । बाल. पृ. ३१.

* ' स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ' अयं निमित्ततो व्यवस्थारूपः प्रतिषेधः । बाल. पृ. ३५, * ' स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ' अयं निषिद्धप्रतिप्रसवविधिः स्मार्तः । पृ. १६.

* स्मार्तनियमानां प्राङ्मुखान्नभोजनादीनां उपनयनात् प्राङ्न नियमः । वि. ६।२।६.

* स्मृतिः । ' अनुच्चारणकाले च संस्कारैरेव केवलैः । तत्कृतस्मरणैर्वाऽयं वेदोऽध्येतृषु तिष्ठति ॥ तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः । पठिताभिः समानाऽसौ केन न्यायेन बाध्यते ॥ स्मृतिशास्त्रं च यद्येकं भवेत्कृत्स्नमवैदिकम् । तन्मुक्त्वैकं ततोऽन्यानि व्यवहाराङ्गतामियुः ॥ कठमैत्रायणीयादिपठितश्रुतिमूलिकाः । दृश्यन्ते स्मृतयः सर्वा भद्रोपनयनादिषु ॥ तदा तन्मध्यपात्येकं वाक्यं किंचिदपस्मृतिः । मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्तते ॥ बाधिता च स्मृतिर्भूत्वा काचिन्न्यायविदा यदा । श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ॥ तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः । बाधाबाधानवस्थानं ध्रुवमेवं प्रसज्यते ॥ ' वा. १।३।२।४ पृ. १८७ –१८८. * स्मृतिः अनुभूतविषयैव । बृहती. पृ. १६५. * स्मृतिः अपि आचारं वेदवचनं वोपलभ्य अभ्यनुज्ञानायैव प्रवृत्ता । वा. १।३।३।७. * स्मृतिः अर्थवादप्रभवा विधिप्रभवया स्मृत्या बाध्यते । यथा– ' मा गामनागामदितिं वधिष्ट ' इति विधिप्रभवया ' गां न हन्यात् ' इत्यनया ' तद्यथैवादो मनुष्यराज आगते अन्यस्मिन् वाऽर्हति उक्षाणं वा वेहतं वा क्षदन्ते ' इत्यर्थवादप्रभवया ' महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ' इति । बाल. पृ. १४०. * स्मृतिः अस्मर्यमाणावधिः । इतः प्रभृति इयं स्मृतिः प्रवृत्ता इत्यस्मर्यमाणः अवधिः यासाम् । सु. पृ. ११६. * स्मृतिः आचाराद् बलीयसी भा. १०।१।१०।४२. * स्मृतिः उपनयनमारभ्याऽऽमरणं पुरुषस्यानृतं प्रतिषेधति । वि. ३।४।८, * स्मृतिः काचित् ' औदुम्बरी सर्वा वेष्टयितव्या ' इत्यादिः न प्रमाणम् । १। ३।२, * स्मृतिः ' क्षुते आचामेत् ' इत्यादिः प्रमाणम् । १।३।४. * स्मृतिः गृहीतग्राहित्वमात्रेण अप्रमाणमित्युच्यते, न तु अयथार्थतया । सा हि स्वातन्त्र्येण अर्थपरिच्छेदासमर्थाऽपि यथार्थविषयपूर्वानुभवप्रभवा तद्विषयभूतं यथावस्थितमेवार्थं अवस्थापयति । रत्नाकरः अनुमानं श्लो. १५८. * स्मृतिः ज्ञानकरणिका । मणि. पृ. १९. * स्मृतिः धर्मे प्रमाणं न भवति पौरुषेयत्वे सति मूलप्रमाणरहितत्वात् , अनुवादत्वे चाप्रामाण्यमेव इति पूर्वपक्षः । अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्य एकत्र संक्षेपेण कथनार्थकत्वात् स्मृतिर्धर्मे प्रमाणं इति सिद्धान्तः । वि. १।३।१. * स्मृतिः । नच स्मृतितोऽपि स्मृतिजननात् नानुभवत्वेन स्मृतिहेतुता इति वाच्यम् । प्रथमानुभवस्यैव संस्कारद्वारा तत्र हेतुत्वात् । न च स्मरणेन अनुभवजन्यसंस्कारनाशात् स्मरणोत्तरं अस्मरणप्रसङ्गः । चरमस्मृतेरेव तन्नाशकत्वकल्पनात् । मणि. पृ. १२. * स्मृतिः प्रत्यक्षश्रुतिविरुद्धा न प्रमाणम् । वा. १।३।२।३–४. * स्मृतिः प्रमाणम् । ननु नोपलभन्ते एवंजातीयकं ग्रन्थम् ( स्मृतिमूलभूतम् ) । अनुपलभमाना अपि अनुमिमीरन्, विस्मरणमपि उपपद्यते इति । तदुपपन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरताम् , विस्मरणस्य चोपपन्नत्वात् ग्रन्थानामनुमानमुपपद्यते इति प्रमाणं स्मृतिः । भा. १।३।१।२ पृ. १६५ । यदा तु शाखान्तरेषु विद्यन्ते एव ताः श्रुतयः , तदाऽपि कस्यां शाखायां काः पठ्यन्ते इत्यस्यांशस्य विस्मरणम् । वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति, तद्विशेषविज्ञानं पुनः अनौपयिकत्वात् अनादर्तव्यमेव । वा. * स्मृतिः प्रमाणं विहितस्य बाधाभावे । १।३।३।५–७. * स्मृतिर्लोभमूलिका न प्रमाणम् । भा. १।३।२।४. * स्मृतिः वेदमूला वैदिकमन्वादिप्रणीतत्वात् , उपनयनाध्ययनादिस्मृतिवत् । वि. १।३।१. * स्मृतिः शब्दप्रयोगात् बलीयसी । प्रयोगात् स्मृतिरनुमीयते । प्रयोगो दुर्बलः स्मृतेः इत्युक्तम् । भा. २।३।२।३ पृ. ५८६–५८७, * स्मृतिः श्रुतिविरुद्धा अप्रमाणम् । १।३।२।३ पृ. १८५. * स्मृतिः श्रुत्या बाध्यते, अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०. * स्मृतिः । समानप्रकारकस्मृतेरेव संस्कारनाशकत्वकल्पनात् समूहालम्बनादितो न एकैकगोचरक्रमिकस्मरणानुपपत्तिः । उद्बोधकसमवधानस्यैव तत्तत्स्मृतिजनकत्वात् । मणि. पृ. १२. * ' ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् । तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥ ' वा. १।३।२।४ पृ. १९३, * 'दुःश्रुतस्वप्नविज्ञानमूला त्वापद्यते स्मृतिः । ' १।३।२।३ पृ. १८३. * न वा अदृष्टपूर्वे स्मृतिर्भवति । भा. १।१।५।५ पृ. ६५. * ' परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते । १०३ ॥ प्रमिते च प्रवृत्तत्वात् स्मृतेर्नास्ति प्रमाणता । ' १०४ ॥ श्लोवा. शब्द. * ' प्रतिमन्वन्तरं चैवं स्मृतिरन्या विधीयते । स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ॥ ' वा. १।३।२।७ पृ. २०२, * ' या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते । सा तु स्याद् भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका ॥ ' १।३।२।३ पृ. १७२. * वेदतुल्या हि स्मृतिः । वैदिका एव पदार्थाः स्मर्यन्ते इत्युक्तम् । भा. ६।२।६।२२. * ' सर्वा तावत् स्मृतिर्नित्यं श्रुतिमूलप्रमाणिका । ' वा. ३।४।४।१२ पृ. ९०८. * स्मृतयः धर्मे प्रमाणम् । मणि. पृ. १३. * स्मृतयः धर्मे प्रमाणं न वेति संदेहे प्रमाणं इति सिद्धान्तः । भा. १।३।१।१–२. * स्मृतयः । शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात् स्वरूपेणानुपन्यस्य अर्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते । वा. १।३।२।४ पृ. १८७, * अनाशङ्कितविप्रलम्भभ्रान्त्यादिमूला हि अव्याहतवेदमूलत्वावधारणाः स्मृतयः निर्व्याजप्रामाण्याः शक्यन्ते धर्मव्यवहाराङ्गत्वेन स्थापयितुम् । १।३।२।३

पृ. १६९, * स्मृत्या अदृष्टार्थया दृष्टार्था बाध्यते, अप्राप्तबाधः । ३।३।७।१४ पृ. ८६०. * स्मृत्या अविगीतया विगीतस्मृतिर्बाध्यते, यथा– 'न स्तेनः स्यात्' इत्यनया 'तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥' इति आप्त-स्मृतिरपि । बाधस्तु अत्र दण्डाभावमात्रपरत्वं अल्पदोष-परत्वं वा । बाल. पृ. १३९. * स्मृत्या आचारो बाध्यते, अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०. * स्मृत्या आचारो बाध्यते, यथा– 'मातुलस्य सुता-मूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इति स्मृत्या मातुलकन्यापरि-णयनाचारः दाक्षिणात्यानाम् । बाल. पृ. १३८. * स्मृत्या– आप्ताविगीतस्मृत्या अनाप्तविगीतस्मृतिः बाध्यते, अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०. * स्मृत्या –आप्तस्मृत्या– अनाप्तस्मृतिर्बाध्यते । यथा– 'नात्मानं घातयेत्' इति मन्वादिस्मृत्या 'केदारे पातयेद्देहम्' इति पाखण्ड्यादिस्मृतिः । बाल. पृ. १३९. * स्मृत्या श्रुतिप्रभवया लिङ्गादिप्रभवा अर्थ-वादप्रभवा च स्मृतिर्बाध्यते, अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०. * स्मृत्या श्रुतिप्रभवया लिङ्गप्रभवा स्मृतिः बाध्यते, यथा– 'पुत्रं प्रतिग्रहीष्यन् निवे-शनस्य मध्ये व्याहृतिभिर्हुत्वा' इत्याद्यया श्रुतिप्रभवया स्मृत्या 'न शेषो अग्ने अन्यजातमस्ति' इति दत्तक-पुत्रनिषेधलिङ्गात् तत्प्रभवा 'यस्य ये बीजिनो जातास्तस्य ते नेतरस्य तु' इत्याद्या । बाल. पृ. १३९–१४०. * स्मृतेः प्रमाणान्तरमूलत्वम् । बृहती. पृ. १३०. * स्मृतेः प्रमेयबलीयस्त्वेन अबाध्यत्वमात्रं भवति, न तु श्रुतिबाधकत्वम् । सु. पृ. १८०. * स्मृतेर्मन्त्रार्थ-वादमूलत्वम् । मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यते इति प्रत्यक्षमवगम्यते ।...... ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति तेषां तत् स्मृतिमूलम् । ये पुनर्निपुणतः पश्यन्ति तेषां तद्बाधित-मपि च कस्यचित्स्मृतिमूलं भवति । तस्मात्तत एव स्मृतिः । भा. ९।१।४।९ पृ. १६५३. * स्मृतेर्मूलं न दृश्यते— 'शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते ॥' वा. १।३।१।२ पृ. १६४. * स्मृतेर्लोभादिदृष्टमूलि-काया अप्रामाण्यम् । वि. १।३।३. * स्मृतेः वैदिकं लिङ्गं बलवत् । वा. ३।३।७।१४ पृ. ८४१. * स्मृतेः श्रुतिविरुद्धायाः अप्रामाण्यम् । भा. १।३ २।३–४. * 'अनन्यमूलिकायां च श्रुतौ मूलेऽव-धारिते । विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते ॥' वा. १।३।३।७ पृ. १९८. * सदृश-दर्शनात् सदृशे अर्थान्तरे स्मृतेरुद्बोधः । बृहती. पृ. ५४. * 'स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न संम-तम् ।' वा. १।३।२।३ पृ. १७२, * 'स्मृतीनाम-प्रमाणत्वे विगानं नैव कारणम् । श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते ॥ विगीतवाक्यमूलानां यदि स्यादविगीतता । तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्य-यात् ॥' १।३।८।२७ पृ. २८६, * स्मृतीनां कासांचित् स्ववेदशाखागतवचनविपरीतार्थशाखान्तर-वचनमूलानां अधीतवाक्यविरोधो दृश्यते, तावतैव दृढतरस्मरणोपस्थापितपुरुषान्तरस्थ– ( स्मृतिमूलभूत– ) श्रुतिनिराकरणं न शोभते, अध्ययनवच्च स्मृतेरपि धारणसामर्थ्यात् । १।३।२।३ पृ. १७०. * स्मृतीनां धर्मादिविषयाणां वेदैकशरणत्वात् प्रामाण्यम् । सु. पृ. ४१. * स्मृतीनां प्रत्यक्षश्रुतिविरोधे स्वरूपेणैव अप्रामाण्यं इति भाष्यकारमतम् । तत्र अननुष्ठानलक्षण-मप्रामाण्यं न स्वरूपतः इति वार्तिककारमतम् । कु. १।३।४।५ पृ. ५६. * स्मृतीनां वेदमूलत्वात् वेद-तुल्यता । वा. ६।२।६।२२. * स्मृतीनां शाक्या-दीनां अप्रामाण्यम् । भा. १।३।३।५ वर्णकं ३, * स्मृतीनां श्रुतिविरुद्धानां अननुष्ठानलक्षणमप्रामाण्यम् । १।३।२।४ वर्णकं २, * स्मृतीनां सर्वधर्मत्वं असति विशेषे । १।३।७।१५–२३. * स्मृतीनां ( मन्वादि ) स्वसमानाधिकरणस्वाव्यवहितपूर्व – क्षणवृत्तिज्ञानाविषय-विषयकत्वरूपागृहीतग्राहित्वेन प्रामाण्यम् । मणि. पृ. १३. * 'तेन वेदविरुद्धानां स्मृतीनामप्रमाणता ।



रुद्धश्रुत्यनुमानत्वादन्यमूला हि ता यतः ॥' वा. १।३।२।३ पृ. १७४, * 'तस्माद् वेदविरुद्धानां दृष्टार्थानां च हेतुभिः । स्मृतीनां न प्रमाणत्वं विहन्तव्यं मनागपि ॥' १।३।२।३ पृ. १७२, * 'न हि साक्षात् प्रमाणत्वं स्मृतीनामुपपद्यते' । 'वेदवाक्यानुमानं हि तावदेव प्रवर्तते । तदर्थविषयं यावत् प्रत्यक्षं नोपलभ्यते ॥ प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम् । न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते ॥ तावदेव स्फुरन्त्यर्थाः पुरस्तादानुमानिकाः । यावत्प्रत्यक्षशास्त्रेण मूलमेषां न कृत्यते ॥' १।३।२।३ पृ. १७२. * स्मृतौ ज्ञानस्य अनुभवत्वेन हेतुत्वम् । मणि. पृ. ३०. * स्मृतिषु समाम्नायव्यपदेशाभावः । ऋजु. पृ. ८.

स्मृत्यधिकरणम् । स्मृतिः धर्मे प्रमाणम् ॥

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् । १।३।१।१॥**

**भाष्यम्**— एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्य-मुक्तम् । अथेदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्य एतस्मै च प्रयोज-नायेति । किमसौ तथैव स्यान्न वेति । यथा अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यमित्येवमादयः । तदु-च्यते– 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्' इति । शब्दलक्षणो धर्म इत्युक्तम् । 'चोदनालक्षणोऽर्थो धर्मः' इति । अतो निर्मूलत्वान्नापेक्षितव्यमिति । ननु ये विद्वा-रित्थमसौ पदार्थः कर्तव्यः इति, कथमिव ते वदिष्यन्त्य-कर्तव्य एवायमिति । स्मरणानुपपत्त्या । न हि अननुभूतो-ऽश्रुतो वाऽर्थः स्मर्यते, न चास्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते पूर्वविज्ञानकारणाभावादिति । या हि वन्ध्या स्मरेदिदं मे दौहित्रकृतमिति, न मे दुहिताऽस्तीति मत्वा न जातुचिदसौ प्रतीयात्सम्यगे-तज्ज्ञानमिति । एवमपि यथैव पारम्पर्येणाविच्छेदात् अयं वेद इति प्रमाणमेषां स्मृतिरेवमियमपि प्रमाणं भविष्यतीति । नैतदेवम् । प्रत्यक्षेणोपलब्धत्वात् ग्रन्थस्य नानुपपन्नं पूर्वविज्ञानम् । अष्टकादिषु त्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावात् व्यामोहस्मृतिरेव गम्यते । तद्यथा, कश्चिज्जात्यन्धो वदेत् स्मराम्यहमस्य रूपविशेष-स्येति । कुतस्ते पूर्वविज्ञानमिति च पर्यनुयुक्तो जात्यन्ध-मेवापरं विनिर्दिशेत् । तस्य कुतः ? जात्यन्धान्तरात् । एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित्संप्रतीयु-र्विद्वांसः सम्यग्दर्शनमेतदिति । अतो नाऽऽदर्तव्यमेवं-जातीयकमनपेक्षं स्यादिति ।

**वा**— एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः, इदानीं पौरुषेयीषु स्मर्यमाणार्थावधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्व-निबद्धेषु चाऽऽचारेषु चिन्ता । तत्र किंचिदुदाहृत्य विचारः कर्तव्यः इत्यष्टकादिस्मरणानि मन्वादिस्थानि तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाहि-यन्ते । संदेहहेतुश्चाभिधीयते । **'पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा । अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते ॥'** मन्वादिवचनं स्मृत्यपेक्षं स्मृतिश्च मूलप्रमाणापेक्षिणीति नैकस्यापि वेदवन्निरपेक्षप्रामाण्य-निश्चयः । यतस्तु वेदवादिनामेवाविभागेनाविच्छिन्नपार-म्पर्यपरिग्रहदार्ढ्यमतो नाप्रामाण्याध्यवसानमिति युक्तः संदेहः । तत्र पूर्वपक्षवादी वदति नैषां प्रामाण्यमेवा-पेक्षितव्यमिति । कुतः ? **'पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते । पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते ॥'** सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्थयन्ति । तदिहाष्टका-दीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्ण-न्तीति साधितम् । शब्दोऽपि यथाऽग्निहोत्रादिषु प्रत्यक्षे-णोपलभ्यते नैवं मन्त्राः । **'प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना । धर्मास्तित्वप्रमाणाद्धि विप्रकृष्ट-तरा भवेत् ॥'** शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् । स चेत्तेनानवगम्यमानोऽप्यस्तीत्युच्यते ततो वरं धर्मा-स्तित्वमेव निष्प्रमाणकमभ्युपगतमिति । **'न वाऽऽनु-मानमप्यस्मिन्नष्टकाश्रुतिकल्पने । न हि स्मृति-स्तया व्याप्ता दृष्टाऽन्यद्वाऽनुमापकम् ॥'** यथैव धर्मे संबन्धादर्शनान्न किंचिल्लिङ्गं क्रमते तथाऽष्ट-

कादिश्रुतावपि । ‘**न वाऽऽगमेन तद्बोधो नित्येन कृतकेन वा । विस्रम्भः कृतके नास्ति नित्यो नैवोपपद्यते ॥** ’ यद्यप्यैन्द्रियकत्वादष्टकादिस्मृतीनां पौरुषेयागमगम्यत्वं संभवति । तथापि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यवसानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिदद्यत्वेऽप्यभिदधानाः । तेन मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुपलभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति संदेहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्याऽऽदिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति । न च मन्त्रलिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते । विधिशून्यत्वात् । न च मूलान्तरं न्यायागतं सूचयन्ति । अन्यपरत्वात् । न त्र सर्वेषां स्मृतिप्रणयिनामविगानम् । येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् । ‘ **न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् । अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ॥** ’

यदि ह्येतदेकान्तेन गम्येत यथाविधि वाक्यान्येव मन्वादिभिरुपलब्धानीति । ततः काऽपि कल्पना स्यादद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रलीनशाखामूलत्वकल्पनायां यस्मै यद्रोचते स तत्प्रमाणीकुर्यात् । तस्मान्नाऽऽगमेनापि मूलोपलब्धिः । ‘ **उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते । नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥ अर्थापत्त्याऽपि यत्किंचिन्मूलमित्यवगम्यते । तच्चाप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुध्यते ॥** ’ यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते ततः सम्यङ्मूला स्यात् । संभवति तु स्वप्नमूलत्वेन तेनानैकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वाऽनवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् । ‘ ननु ये विदुरेवमितिकर्तव्यताक एवंफलकश्चासौ पदार्थः कर्तव्यः ’ इति । अथवा ये कर्तव्योऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्तव्योऽसाविति वदेयुः । नन्वन्ये एवं वदन्ति कर्तव्य इत्यन्ये न वा कर्तव्य इत्याहुः । कथमन्यत्वं यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः । अथवा ये मन्वादयो विदुरकर्तव्योऽयं पदार्थ इति कथमिव ते विनाऽपराधेन लोकं वञ्चयितुं वदिष्यन्ति कर्तव्य एवायमिति । ‘ स्मरणानुपपत्त्या ’ इति । ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किंचित्प्रमाणं संभाव्यते ततः स्मरणं भवेन्नान्यथा । कस्मात्पुनः पुत्रं दुहितरं वाऽतिक्रम्य वन्ध्यादौहित्रोदाहरणं कृतम् । स्थानतुल्यत्वात् । पुत्रादिस्थानीयं हि मन्वादेः पूर्वविज्ञानं दौहित्रस्थानीयं स्मरणमतश्च यथा दुहितुरभावं परामृश्य दौहित्रस्मृतिं भ्रान्तिं मन्यते तथा मन्वादिभिः प्रत्यक्षाद्यसंभवपरामर्शादष्टकादिस्मरणं मिथ्येति मन्तव्यम् । ‘ यथैव पारम्पर्येणाविच्छेदादयं वेदः ’ इति वाक्यानुमानाभिप्रायेणोक्तम् ।

इतरस्त्वर्थस्यैवाविच्छेदस्मरणमयमाहेति मत्वा पुनर्निर्मूलत्वमाह । वेदः पुनः सविशेषः प्रत्यक्षगम्यस्तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरपि स्मृतमुपलभ्यान्येऽपि स्मरन्तोऽन्येभ्यस्तथैव समर्पयन्तीत्यनादिता । सर्वस्य चाऽऽत्मीयस्मरणात्पूर्वमुपलब्धिः संभवतीति न निर्मूलता । शब्दसंबन्धव्युत्पत्तिमात्रमेव चेह वृद्धव्यवहाराधीनम् । प्रागपि हि वेदशब्दादन्यवस्तु विलक्षणं वेदान्तरविलक्षणं वाऽध्येतृस्थमृग्वेदादिरूपं मन्त्रब्राह्मणादिरूपाणि चान्यविलक्षणान्युपलभ्यन्ते । सर्वेषां चानादयः संज्ञा इति तद्द्वारेणोत्तरकालमपि गम्यमानानां प्रत्यक्षत्वं साधितम् । ननु अष्टकादिषु पुरुषान्तरस्थेष्वपि कुम्भकारक्रियास्विव किंचिद्विज्ञानमूलमस्ति । यदि हि कर्मस्वरूपमात्रं स्मर्येत ततः पाकादि तदिन्द्रियैरन्याननुतिष्ठतो दृष्ट्वा परे स्मरेयुः । यतस्त्विह स्वर्गादिसाध्यसाधनसंबन्धः स्मर्यते । नासौ पुरुषान्तरेषूत्पद्यमानः कैश्चिद्दृश्यत इत्यन्धपरम्परान्यायेनाप्रमाणता । सर्वस्यानादिव्यवहारोपन्यासेन वेद-



वत्प्रसिद्ध्यभिमानो भवत्यतोऽन्धपरम्परानिदर्शनम् । वेदे हि प्रामाण्यस्यानादित्वमिहाप्रामाण्यस्य । कथम् ? ‘ **यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान् । स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ॥** ’ तादृशं वाऽष्टकादिस्मरणम् । न च चोदना मूलभूतोपलभ्यते । न चाननुभूतसंबन्धाऽनुमातुं शक्यते । यदि च वेदादुपलभ्य स्मृतयः प्रवर्तिताः स्युस्ततोऽर्थस्मरणवदित उपलभ्यायं मन्वादिभिः प्रणीत इत्यपि पारम्पर्येण स्मर्येत । स्यादेतत् । अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमनादराद्भ्रष्टमिति । तदयुक्तम् । न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते । अर्थस्मृतेः स्वतः प्रामाण्याभावात् । सर्वे पुरुषास्तावदेतज्जानन्ति यथा वेदमूलज्ञानाद्विना प्रामाण्यं न निश्चीयते इति ते कथमिव तत्रानादरं कुर्युः । अपि च— ‘ **येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम् । कस्मात्तेनैव तन्मूलं चोदना न समर्पिता ॥** ’ यदि हि तैरप्यर्थमात्रमेवान्येभ्योऽधिगतं न वेदो दृष्ट इति ततस्तत्पूर्वकेष्वप्ययमेव पर्यनुयोग इति निर्मूलसंप्रदायत्वप्रसङ्गात् निर्मूलत्वान्न मुच्यसे । यदि तु प्रलीनशाखामूलता कल्प्येत ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्यते । यस्यैव च यदभिप्रेतं स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् । अथ विद्यमानशाखागता एवैतेऽर्थास्तथाऽपि मन्वादय इव सर्वे पुरुषास्तत एवोपलप्स्यन्ते । युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद्वेदादेव प्रतीतिरिति स्मृतिप्रणयनवैयर्थ्यं स्यात् । न च तद्विज्ञायते । कीदृशाद्वाक्यादिदं मन्वादिभिः प्रतिपन्नं किं विधिपराद्गुतार्थवादरूपादिति । पश्य— ‘ **महताऽपि प्रयत्नेन तमिस्रायां परामृशन् । कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति ॥** ’ न च मन्वादिवचनाद्वेदमूलत्वं निश्चिनुमः । ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्या लोकं वञ्चयितुमेवं वदेयुः । तस्मादप्रमाणम् ।

**अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् । २ ॥**

**भाष्यम्**— अपिवेति पक्षो व्यावर्त्यते । प्रमाणं स्मृतिः । विज्ञानं हि तत्किमित्यन्यथा भविष्यति ? पूर्वविज्ञानमस्य नास्ति, कारणाभावादिति चेत् । अस्या एव स्मृतेर्दृढिम्नः कारणमनुमास्यामहे । तत्तु नानुभवनम्, अनुपपत्त्या । न हि मनुष्या इहैव जन्मन्येवंजातीयकमर्थमनुभवितुं शक्नुवन्ति । जन्मान्तरानुभूतं च न स्मर्यते । ग्रन्थस्त्वनुमीयेत, कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोः । तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम् । ननु नोपलभन्ते एवंजातीयकं ग्रन्थम् । अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते इति । तदुपपन्नत्वात्पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां विस्मरणस्य चोपपन्नत्वाद्ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः ।

अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते ‘ यां जनाः प्रतिनन्दन्ति ’ इत्येवमादयः । तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम् । गुरोरनुगमात्प्रीतो गुरुरध्यापयिष्यति ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यतीति । तथा च दर्शयति ‘ तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति ’ इति । प्रपास्तडागानि च परोपकाराय, न धर्मायेत्येवावगम्यते । तथा च दर्शनम् ‘ धन्वन्निव प्रपा असि ’ इति । तथा ‘ स्थलयोदकं परिगृह्णन्ति ’ इति च । गोत्रचिह्नं शिखाकर्म, दर्शनं च ‘ यत्र बाणाः संपतन्ति कुमारा विशिखा इव ’ इति । तेन ये दृष्टार्थास्ते तत एव प्रमाणम् । ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति ।

**वा**— सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः शेषाणि च विद्यास्थानानि स्वार्थे प्रतिपादयन्त्युपलभ्यन्ते । मन्वादीनां चाप्रत्यक्षत्वात्तद्विज्ञानमूलमदृष्टं किंचिदवश्यं कल्पनीयम् । तत्र च— ‘ **भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भनात् । दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥** ’ सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यं यद्दृष्टं न विरुणद्धि न वाऽदृष्टान्तरमासञ्जयति । तत्र भ्रान्तौ तावत्सम्यङ्निबद्धशास्त्रदर्शनविरोधापत्तिः सर्वलोकाभ्युपगतदृढप्रामाण्यबाधश्च । इदानींतनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुवर्तिता । तत्परिहारोपन्यासश्च मन्वादीनामित्यनेकादृष्टकल्पना । अनुभवेऽपि स एव तावदनुभवः कल्पयि-

तव्यः । पुनश्चेदानींतनसर्वपुरुषजाति विपरीतसामर्थ्य-
कल्पना, मन्वादेस्तच्चैतत्सर्वज्ञवादे निराकृतम् । पुरुष-
वाक्यपराऽप्यन्धपरम्परया निराकृता । न हि निष्प्रतिष्ठ-
प्रमाणात्मलाभो दृश्यते । तथा विप्रलम्भेऽपि तत्कल्पना ।
विप्रलिप्सा प्रयोजनं लोकस्य च तत्र भ्रान्तिस्तस्याश्चेयन्तं
कालमनुवृत्तिरित्याद्याश्रयणीयम् । उत्पन्नस्य च दृढस्य
प्रत्ययस्य प्रामाण्यनिराकरणाद्दृष्टविरोधः । तस्मात्सर्वेभ्य-
श्चोदनाकल्पनैव ज्यायसी । तत्र हि तन्मात्रादृष्टाभ्युपगमः ।
शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते । संभा-
व्यते च मन्वादीनां चोदनापूर्वविज्ञानकारणत्वेन । तदर्थ-
मेवाऽऽह 'तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्' इति ।
यानि पुनरनुपपन्नवेदसंभावनानां म्लेच्छादीनामती-
न्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदना
संभावनापदं नाऽऽरूढेति मिथ्यात्वहेतुभूतचतुष्टयपारि-
शेष्यादप्रमाणत्वम् । संभावितायां पुनश्चोदनायां कार-
णान्तरनिषेधे कृते निर्मूलत्वासंभवात्परिशेषसिद्धं चोद-
नामूलत्वम् । यत्तु किमर्थं चोदना नोपलभ्यन्ते इति ।
तत्र केचिदाहुः । नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते ।
यथा लिङ्गादिकल्पिताः । कथमनुच्चारितानां मूलत्वोप-
पत्तिरिति चेत् । **नैष दोषः ।** पाठाविच्छेदवत्पारम्पर्येण
स्मरणात्तत्सिद्धेः । यथैव हि ग्रन्थः संप्रदायादविच्छिन्नोऽ-
स्तित्वं भजते तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसंप्रदाया-
विच्छेदसिद्धिः । **तत्त्वयुक्तम् ।** अन्धपरम्परान्यायादेव
या हि चोदना न कदाचिदुच्चार्यते तस्याः सर्वपुरुष-
प्रत्यक्षादिप्रसराभावाद्दुर्लभतरमस्तित्वम् । तथा च
स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता । लिङ्गादीनां तु
नित्यत्वान्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम् ।
तेन वरं प्रलीनश्रुत्यनुमानमेव । न च प्रलयो न
संभाव्यते । दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चा-
ल्पविषयत्वम् । न चैवं सति यत्किंचित्प्रमाणमाप-
त्स्यते । शिष्टत्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलभ्यत्वात्
श्रुत्यनुमानस्य ।

यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु । कथ-
मनुपलब्धिरिति चेदुच्यते— '**शाखानां विप्रकीर्ण-
त्वात्पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात्स्मृते-
र्मूलं न दृश्यते ॥**' यत्तु किमर्थं वेदवाक्यान्येव नोप-
संगृहीतानीति । संप्रदायविनाशभीतेः । विशिष्टानुपूर्व्या
व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते । स्मार्ताश्च
आचाराः केचित्क्वचित्कस्यांचिच्छाखायाम् । तत्रापि तु
केचित्पुरुषमेवाधिकृत्याऽऽम्नायन्ते । ये तु क्रतुप्रक-
रणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां
भजन्ते । यथा 'मलवद्वाससा सह न संवदेत्' 'तस्मान्न
ब्राह्मणायावगुरेत्' इत्येवमादयः । तत्र यदि तावत्ता-
न्येव वाक्यान्युद्धृत्याध्यापयेयुस्ततः क्रमान्यत्वात्स्वाध्याय-
विधिविरोधः स्यात् । अनेन च निर्देशेनान्येऽप्यर्थ-
वादोद्धारेण विधिमात्रमधीयीरन् कर्मौपयिकमात्रं वा ।
तत्र वेदप्रलयः प्रसज्येत । न चावश्यं मन्वादयः
सर्वशाखाध्यायिनः । ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः
श्रुत्वाऽर्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः । न च
वाक्यविशेषो ज्ञायते । यथैव हि स्मृतेर्दृढत्वाद्भ्रा-
न्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि
ते विध्यर्थवादौ विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वा-
त्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमा-
णकम् । अपि च 'वेदोऽखिलो धर्ममूलम्' 'स सर्वोऽभि-
हितो वेदे' इति च स्वयमेव स्मर्तृभिरात्मा बद्ध्वा सम-
र्पितस्तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्वृद्धिकारित्वादुपलब्ध-
मतः सिद्धं वेदद्वारं प्रामाण्यम् । यस्तु कर्तृसामान्या-
त्स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति
तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः । श्रूयमाण-
श्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता तस्मादर्थापत्तिरेवात्रा-
व्यभिचारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता । 'अस्या
एव स्मृतेर्द्रढिम्नः' इति । दृढत्वात्कारणानुमानमथवा
दृढत्वस्य । 'न हि मनुष्या इहैव' इति । निःशेष-
संस्कारच्छिदा मरणेनान्तरित्वात्कर्मफलसंबन्धानुसंधाना-
संभवेनोच्यते । 'स्मृतिवैदिकपदार्थयोः कर्तृसामान्या-
दुपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्' इति । चोदनामूल-
संभावनापदलाभार्थम् । 'विस्मरणमप्युपपद्यते' इति ।
दृश्यते ह्यद्यत्वेऽप्यर्थस्मरणं ग्रन्थनाशश्च । यदा तु



शाखान्तरेषु विद्यन्ते एव ताः श्रुतयस्तदाऽपि कस्यां
शाखायां काः पठ्यन्ते इत्यस्यांशस्य विस्मरणम् ।
वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति । तद्वि-
शेषज्ञानं पुनरनौपयिकत्वादनादर्तव्यमेव । 'तथा
प्रत्युपस्थितनियमानाम्' इति । आगतमागतं निमित्तं
प्रति ये नियम्यन्ते वृद्धवयःप्रत्युत्थानादयस्तेषाम् ।
'दृष्टार्थत्वादेव प्रामाण्यम्' इति ।

एतदयुक्तम् । कुतः— '**धर्मं प्रति यतोऽत्रेदं
प्रामाण्यं प्रस्तुतं स्मृतेः । तस्मात्कृष्यादिवत्तेषामुप-
न्यासो न युज्यते ॥**' न हि यावत्किंचिदाचरणं
तस्य सर्वस्य मूलमिह प्रमाणी क्रियते । धर्मजिज्ञासाधि-
कारात् । यदि च गुर्वनुगमादीनां केवलं दृष्टार्थत्वमेव
स्यात्ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्य-
सितव्याः । स्यादेतदप्रमाणत्वेनैषामुपन्यास इति । न ।
तथा सति 'हेतुदर्शनाच्च' इत्यत्रोदाहर्तव्या भवेयुः ।
तस्मात् श्रेयांसमिति च दर्शनं निष्फलम् । न च
नियोगतः शास्त्रादृते प्राप्तिः । शक्यते ह्युपायान्तरे-
णापि सामदानादिना गुरुरध्यापनादीनि कारयितुम् ।
तत्रास्ति नियमविधेरवकाशः । सर्वत्र च यथा-
कथंचिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका
दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम् । न चाव-
घातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदि-
कत्वम् । तस्मात्सत्यपि दृष्टार्थत्वे संभाव्यते वेदमूलत्वं
नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात् । अतश्च गुर्वनु-
गमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः करणे च न
भवति । दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि
निष्पद्यते । नियमाच्चाविघ्नसमाप्त्यर्थापूर्वसिद्धिः । एवं
च 'आचारादृगृह्यमाणेषु तथा स्यात्' (६।२।१०।
३१) इत्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः ।
इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात् ।
यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तं तत्पूर्व-
पक्षवाद्यतिशयार्थम् । एतदुक्तं भवति, यास्तावददृष्टार्थाः
स्मृतयस्ताः कथंचिदप्रमाणी कुर्यान्भवान्, इमाः
पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्य-
न्तीति । सभाप्रपादीनां यद्यपि विशेषश्रुतिः नैव
कल्प्यते तथाऽपि परोपकारश्रुत्यैव समस्तानामुपादाना-
त्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये
सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति । यथा धन्वनि
निरुदके कृताः प्रपाः परेषामुपकुर्वन्त्येवं त्वमिति देवता-
स्तुतिपरे वाक्ये सिद्धवत्प्रपासद्भावस्तस्याश्च पारार्थ्यं
दृश्यते । गोत्रचिह्नं शिखाकर्म तत्राप्याचारनियमस्या-
दृष्टार्थत्वान्नैव तावन्मात्रमेव प्रयोजनम् । शक्यं ह्युपा-
यान्तरेणापि गोत्रं स्मर्तुं तेनान्य एवाभिप्रायः । कर्मा-
ङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थमवश्यं
स्मर्तव्यं गोत्रम् । अतश्च तच्चिह्नार्थमपि तावच्छिखा-
कल्पस्मृतेः प्रामाण्यमस्तु । तन्नियमादृष्टस्य त्वेकान्ते-
नैवानन्यगतित्वात्पुरुषार्थता सेत्स्यतीति । तेन सर्वस्मृ-
तीनां प्रयोजनवती प्रामाण्यसिद्धिः । तत्र यावद्धर्ममोक्ष-
संबन्धि तद्वेदप्रभवम् । यत्त्वर्थसुखविषयं तल्लोकव्यवहार-
पूर्वकमिति विवेक्तव्यम् । एषैवेतिहासपुराणयोरप्युप-
देशवाक्यानां गतिः । उपाख्यानानि त्वर्थवादेषु
व्याख्यातानि । यत्तु पृथिवीविभागकथनं तद्धर्माधर्म-
साधनफलोपभोगप्रदेशविवेकाय किंचिद्दर्शनपूर्वकं किंचि-
द्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मणक्षत्रियजातिगोत्र-
ज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि
लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसंप्रदाया-
नुमानपूर्वकम् । भाविकथनमपि त्वनादिकालप्रवृत्त-
युगस्वभाव – धर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण
वेदमूलम् । अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं
लोकवेदपूर्वकत्वेन विवेक्तव्यम् । तत्र शिक्षायां ताव-
द्यद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम् ।
यत्तु तथाविज्ञानात्प्रयोगे फलविशेषस्मरणम् । 'मन्त्रो
हीनः स्वरतो वर्णतो वा' इति च प्रत्यवायस्मृतिस्त-
द्वेदमूलम् । एवं कल्पसूत्रेष्वर्थवादादिभिश्शाखान्तर-
विप्रकीर्णन्यायलभ्यविध्युपसंहारफलमर्थनिरूपणं तत्तत्प्र-
माणमङ्गीकृतम् । लोकव्यवहारपूर्वकाश्च केचिदृत्विगादि-
व्यवहाराः सुखार्थहेतुत्वेनाऽऽश्रिताः । व्याकरणेऽपि
शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्ष-

निमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिरपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम् । तथा चानिष्टं श्रूयते 'यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा ' इत्यादि । ज्योतिःशास्त्रेऽपि युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसंप्रदायगणितानुमानमूलं ग्रहसौस्थ्यदौस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । ईदृशा वा विषयः सर्वत्रानुमातव्याः । ईदृशे गृहशरीरादिसंनिवेशे सत्येतदेतच्च प्रतिपत्तव्यमिति । **मीमांसा** तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसंप्रदायपण्डितव्यवहारैः प्रवृत्ता । नहि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरं व्याचक्षीत । **' विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते । ते च जात्यादिभेदेन संकीर्णा लोकवर्त्मनि ॥ स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा । परीक्षकार्पितैः शक्याः प्रविवेक्तुं न तु स्वतः ॥ वेदोऽपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः । स्वार्थं साधयतीत्येवं ज्ञेयास्ते न्यायविस्तरात् ॥ '** तथा च मानवेऽप्यभिहितम्— **'प्रत्यक्षमनुमानं च शाब्दं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ '** तथा— **' यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ '** इत्यादिभिः तर्कविशुद्धिराश्रिता । प्रायेण च मनुष्याणामधर्मभूयिष्ठत्वात्तज्ज्ञानप्रतिबद्धाः प्रतिभास्तेषु तेषु कुमार्गेषु प्रवर्तन्ते । तत्र लोकार्थवादोपनिषत्प्रसूतैस्तर्कशास्त्रैः सर्वविप्रतिपत्तिमुखप्रदर्शनम् । तदुपपत्तयस्तद्बलाबलपूर्वकं च निश्चयद्वारं कथ्यते । अन्यथा पुनः— **' प्रतिभान्त्यः स्वयं पुंसामपूर्वा ह्युपपत्तयः । भ्रान्तिं बहुमताः सत्यः कुर्युरज्ञानबोधनात् ॥ '** सर्वासु तु प्रदर्शितासु स्वातन्त्र्येण विशोधयन्तः काश्चिदुत्सृज्यान्याः प्रमाणी करिष्यन्ति । यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपातादृतेऽन्यतरांशनिरूपणाशक्तेः । अवश्यं च सर्वात्मकवस्तुयुगपद्ग्रहणासंभवात्तद्भागोपनिपातिपदविषयविवेकार्थमेकैकनिरूपणमादरेण कर्तव्यम् । अन्यथा येऽनवाप्तसामान्यविशेषाद्युपपत्तयः पुरुषास्ते पदप्रतिपाद्यं निष्कृष्टं वस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः । मन्त्रार्थवादोपात्ताश्च स्तुतिनिन्दास्तत्तन्नित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्युः । याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः । प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम् । सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम् । सर्वत्र हि तद्बलेन प्रवर्तते तदुपरमे चोपरमतीति । विज्ञानमात्रक्षणभङ्गनैरात्म्यादिवादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम् । सर्वत्र च यत्र कालान्तरफलत्वादिदानीमनुभवासंभवस्तत्र श्रुतिमूलता । सांदृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः ।

**शा**— **' वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः । संभाव्यवेदमूलत्वात्स्मृतीनां वेदमूलता ॥ '**

**सोम**— साक्षात् निरपेक्षतया धर्मप्रमितिजनकत्वात् चोदनायाः प्रथमं प्रामाण्यं विचारितम्, तदनन्तरं तदेकवाक्यतापन्नानां अर्थवादादीनाम्, इत्येवं कृत्स्नस्य वेदस्य प्रामाण्यविचारानन्तरं तन्मूलतया प्रमाणत्वात् स्मृत्यादीनां प्रामाण्यं विचार्यते इति आनन्तर्यमित्यर्थः । **सूत्रार्थस्तु**—चोदनैव धर्मे प्रमाणमिति धर्मस्य वेदैकमूलत्वात् मूलभूतवेदरहितं स्मृत्यादिकं धर्मप्रमाणत्वेन अनपेक्ष्यमिति ।

**वि**— ' अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथवा ।, निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥



वैदिकैः स्मर्यमाणत्वात्संभाव्या वेदमूलता । विप्रकीर्णार्थसंक्षेपात् सार्थत्वादस्ति मानता ॥ न मा स्मार्ताष्टकाङ्गत्वाद्यां जना इति मन्त्रगीः । तन्न, स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् ॥ '

**भाट्ट**— शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिस्मृतीनां धर्माधर्मयोः प्रामाण्यमस्ति न वेति संदेहे सन्मूलकत्वनिश्चायकाभावात् अप्रामाण्यम् । न ह्यत्र प्रत्यक्षादि मूलम्, तेषां धर्माधर्मयोः अप्रवृत्तेः । वेदस्य च प्रत्यक्षपठितस्यानुपलम्भात् । उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात् । प्रत्यक्षपठितस्य इदानीमुच्छेदस्य च वैदिकैर्यथापरिगणनं शाखानां मात्रामात्रापरित्यागेन पाल्यमानतया कल्पयितुमशक्तेः । न च नित्यानुमेयो वेदो मूलम् । स्मृतेर्मूलसामान्यव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेन अनुमानानुपपत्तेः । मनोरप्यनुमेयत्वकल्पने अन्धपरंपरापत्तेश्च । अतश्च सन्मूलत्वासंभवात् भ्रान्त्यादिमूलत्वेन अप्रामाण्यम् । इति प्राप्ते, शिष्टानामद्ययावदविगीतपरंपरया ज्योतिष्टोमादिष्विव अष्टकाकलञ्जभक्षणादिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहात् मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसंभवाच्च तन्मूलकत्वमेव युक्तम्, न तु भ्रान्त्यादिमूलकत्वम् । तत्कारणस्य अद्ययावत्तदज्ञानस्य च कल्पने गौरवाच्च । श्रुतिश्च प्रत्यक्षपठितैव मूलम् । न च स्मृतिप्रणयनवैयर्थ्यम् । शाखान्तरोपसंहारेण अर्थवादार्थोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनस्य सार्थक्यात् । अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाप्रयोजकत्वं स्मृतीनामिति सिद्धम् ।

**मण्डन**— ' मन्वादिवाक् विस्तृतवेदमूला । '

**शंकर**— ' स्मृतीनां च प्रमाणत्वम् । '

* **स्मृत्यधिकरणे** एव उभयोरपि स्मृत्याचारयोः प्रामाण्यं स्थापितम् । कौ. १।४।६।८, * स्मृत्यधिकरणे भ्रान्त्यादिकल्पनातो वेदमूलत्वकल्पनाया लघुभूतत्वात् वेदमूलत्वमेवाश्रितम् । १।३।६।११. * स्मृत्यधिकरणे स्मृतीनां वेदमूलकत्वस्य वक्ष्यमाणत्वात् अध्ययनादिधर्मनियमस्मृतेर्निर्मूलत्वेनाप्रामाण्यं न शङ्क्यम् । सु. पृ. ५३. * स्मृत्यधिकरणे स्मृत्याचारयोः अनुमानविधया न श्रुत्यनुमापकत्वं किंतु अर्थापत्तिविधया इत्युक्तम् । **कौ.** १।३।७।१५. * कल्पसूत्राणां वेदमूलकतया प्रामाण्यं **स्मृत्यधिकरणे** तुल्यन्यायतया अवगतम् । कु. १।३।७।१० पृ. ६७. * यत्र कल्पसूत्राणां मूलभूता श्रुतिर्न प्रत्यक्षा तत्र तावत् पौरुषेयत्वेन लौकिकवाक्यवत् धर्मप्रमाजनकत्वाभावेऽपि मूलभूतप्रमाणोपस्थापकत्वेन धर्मप्रमाप्रयोजकत्वात् भाक्त एव प्रामाण्यव्यवहारः इति स्मृत्यधिकरणे एव ( धर्मप्रमाजनकत्वं ) निरस्तम् । **कौ.** १।३।६।१२ पृ. ९१. * युक्तोपयोगोपाख्यानमार्गेण सृष्टिप्रलयादिवाक्यानामपि यथासंभवं धर्माद्युपयोगिता उन्नेया । सा च स्मृत्यधिकरणे वक्ष्यते । सु. पृ. ४२.

* कल्पसूत्राणि किं वेदरूपाः एव, किंवा पौरुषेयाः सन्तः **स्मृत्यधिकरणन्यायेन** वेदमूलतया प्रमाणं इति संदेहः । **कौ.** १।३।६।११, * कल्पसूत्रादीनां तु स्मृत्यधिकरणन्यायेन वेदमूलत्वोपपत्तेः नाप्रामाण्यम् । १।३।६।१२.

* **स्मृत्यधिकरणवक्ष्यमाणप्रामाण्यायाः** सदाचाररूपायाः याज्ञिकप्रसिद्धेः असन्मूलत्वाशङ्का न युक्ता । सु. पृ. ९४.

* विरोधाविरोधयोः प्रामाण्याप्रामाण्ये **स्मृत्यधिकरण–विरोधाधिकरणाभ्यामेव** सिद्धे । **सोम.** १।३।४.

* कल्पसूत्राणामपि विप्रकीर्णानेकशाखागत–श्रुत्यर्थनिबन्धनेन स्मृतितुल्यत्वात् **स्मृत्यधिकरणविषयत्वमस्त्येव** । सु. पृ. २२८, * कल्पसूत्राणामपि स्मृत्यधिकरणे वेदमूलत्वं प्रतिपादितं इत्यभ्युपेत्योक्तम् । इदानीं अशब्दत्वेन तत्र पूर्वपक्षकरणात् कल्पसूत्रेषु च तदसंभवात् एषां स्मृत्यधिकरणविषयत्वाभावात् इत्याह । मूलभूतवेदानुमानेन तत्र सिद्धान्तकरणात् प्रत्यक्षवेदमूलेषु कल्पसूत्रेषु अनुमानायोगाच्च सिद्धान्तासंभवेनापि तेषां स्मृत्यधिकरणविषयत्वं नास्ति इत्याह । पृ. २२७.

* स्मृत्यपेक्षया श्रुतिः प्रबला । १।३।२।३-४. मीको. पृ. ३६५४ 'विरोधाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**स्मृत्याचारयोर्बलाबलम्** ॥ ( वार्तिककारमतेन ) ।

**[ तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥ शास्त्रस्था वा तन्निमित्तत्वात् । ९ ॥ ]**

अथवा स्मृत्याचारविरोधविषयं एतदधिकरणम् । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यथा हि मन्वादिस्मृतीनां श्रुतिमूलत्वं तथा सदाचाराणामपि श्रुतिमूलत्वं निरूपितमेव । तत्र स्मृतिविरुद्धानामपि अदृश्यमानलोभादिमूलानां वेदव्यवहारिभिरेव आचर्यमाणत्वेन सदाचारत्वाविशेषात् 'अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्' ( १।३।१।२ ) इत्यनेन न्यायेन स्मृतिविरोधेऽपि वेदविरोधाभावेन विप्रतिपत्तेः समत्वात् सदाचारस्य वेदमूलत्वमेव । अथवा आचारस्यैव बलीयस्त्वम् । स हि श्रुत्यनुमाने लिङ्गभूतः प्रत्यक्षेणैवावगम्यते । स्मृतिः पुनः मनुवचनादनुमिता श्रुतिमनुमापयति इति विप्रकर्षात् दुर्बला । येषामपि मनुवचनमेव श्रुत्यनुमाने लिङ्गम्, तेषामपि वक्तृज्ञानानुमानद्वारेण श्रुत्यनुमानं इति विप्रकृष्टत्वमेव स्मृतेः, आचारात् इति । तदुक्तं '**यावद् विस्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते । तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति ॥ प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् । तेनाचारबलीयस्त्वं समत्वं वेह युज्यते ॥**' इति । ( यावद्धि स्मरणं दृष्ट्वा इति वार्तिकमूले पाठः । स एव च युक्तः । वा. पृ. २२० ) । एवं प्राप्ते, **अभिधीयते** । भवेदेवं यदि स्मृत्याचारयोः तुल्यरूपत्वं भवेत् । किंतु स्मृतिः भ्रान्त्यादिशून्याप्ततरमन्वादिप्रणीता सोपनिबन्धना च अनन्यथासिद्धा वेदमेव मूलभूतं कल्पयति इति युक्तम् । आचारस्य तु वेदव्यवहारिभिः धर्मबुद्धया प्रयुक्तस्यापि कालविप्रकर्षात् न्यायाभासादिमूलतया च अन्यथाभावशङ्कया न स्मृतिविरोधे प्रामाण्यम् । दृश्यन्ते च अद्यत्वेऽपि वेदव्यवहारिणामेव धर्मबोधे अनाक्षराः स्मृतिविरुद्धाः । यथा दाक्षिणात्यब्राह्मणीनां अनुमरणम् । तथा च स्मरन्ति– '**मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् । इतरेषां तु वर्णानां स्त्रीधर्मोऽयं व्यवस्थितः ॥**' इति । न च स्मृतेः मनुवचनानुमितायाः अप्रत्यक्षत्वेन आचारस्यैव बलवत्त्वं इति वक्तव्यम् । यतः स्मृतेः साक्षादेव श्रुत्यनुमानम् । आचारस्य तु अस्मर्यमाणस्य अनाचरणीयत्वात् तद्विषयं तावत् आचरितृस्मरणम् । ततश्च अपरापरपूर्वपूर्वभाविनानाविधाचरितृस्मृत्यनुमानपरंपरया मन्वादिस्मृत्यनुमानम्, ततश्च श्रुत्यनुमानं इति बहुतरविप्रकर्षात् न तुल्यबलत्वं नतरां आचारबलीयस्त्वमिति । तदुक्तं– '**आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना । तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥**' इति ( वा. पृ. २२० । 'श्रुतिर्विज्ञायते ततः' इति द्वितीयचरणपाठः आनन्दाश्रमीये ) । न च मन्वादिस्मृतेरिव आचरितृस्मृतेरपि साक्षादेव श्रुतिमूलत्वम्, मन्वादयो हि महर्षयः प्रकृष्टज्ञानतया विप्रकीर्णनानाशाखागतां तत्तदाचारमूलभूतां श्रुतिमनुसृत्य स्मृत्वा स्वनिबन्धनैः प्रतिपादयन्ति इति युक्तम्, न तु आचरितारः सर्वे नानावेदशाखाऽनुसरणक्षमाः । किंतु मन्वादिमहर्षिसंकल्पितमेव अर्थं पूर्वपूर्वाचरितृपरंपराऽऽयातमवगम्य स्मृत्वा आचरन्ति इति संभवति । तेन यत् पूर्वाधिकरणे शिष्टाचारस्य श्रुतिमूलत्वेन प्रामाण्यमभिहितम्, तत् मन्वादिस्मृत्यविरुद्धस्यैव इति एतदधिकरणव्युत्पाद्यम् । तेन न वक्तव्यं 'व्यभिचारास्पदत्वादाचारस्य क्वचिदपि न प्रामाण्यम्' इति, एवंभूताचारस्य अव्यभिचारादिति । **प्रयोजनं**– पूर्वपक्षे स्मृतिविरोधेऽपि यथाचारमनुष्ठानं कर्तव्यम् । सिद्धान्ते तु न कर्तव्यमिति । **सूत्रं तु**– शास्त्रस्था ये मन्वादयः तेषामेव स्मरणं बलवत् तन्निमित्तत्वादेव शिष्टाचारस्येति । तौता. १।३।५.



* स्मृत्याचाराणां सर्वधर्मत्वमसति विशेषणे । होलाकाधिकरणम् । भा. १।३।७।१५-२३.

* स्मृत्याचारप्रामाण्याधिकरणम् । १।३।१।१-२. मीको. पृ. ४४३३ 'स्मृत्यधिकरणम्' इति बिन्दौ द्रष्टव्यम् ।

* स्मृत्याचारविरोधे बलाबलविचारः । वा. १।३।४।९ पृ. २२०, * 'स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।' १।३।८।२४ पृ. २६०.

**स्मृत्याचारविरोधाधिकरणम्** । आचारेभ्यः स्मृतिर्बलीयसी ( १।३।४।९ सूत्रे ) ॥

वा– '**स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये । 'समा विप्रतिपत्तिः स्यात्' (१।३।४।८) मूलसाम्याद् द्वयोरपि ॥ यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता । आचाराणां तथैवेति न विशेषो बलाबले ॥ यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात् प्रतीयते । फलाद्वियुज्यमानं हि प्रमाणं दुर्बलीभवेत् ॥ श्रुतिराचारमूलं या फलस्था सोपलभ्यते । यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥ तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति । प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥ तेनाचारबलीयस्त्वं, समत्वं वेह युज्यते । स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ॥ उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् । सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ॥ तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते । आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ॥ तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते । न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका ॥ भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्तनम् । नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः । क्वचित् प्रकरणे कश्चित् कथंचिदुपलभ्यते ॥**' तद्यथाऽग्निप्रकरणे 'यत् सप्तदशवतीमुपदधाति अन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां पुरुषोऽन्नमत्ति' इति सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसंभवात् 'विधायिष्यते तु वेदे वचनेन' इत्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतः अर्थतः प्राप्तम्, येन 'तस्मात् प्रजा दश मासान् गर्भं धृत्वा एकादशमनु प्रजायन्ते तस्मादश्वतर्यः प्रजाः' इतिवत् स्वभावप्राप्तत्वेन अर्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान् पितोपजीवति' इतिवत् अनूद्येत इत्यतो न्यायात् पुरुषधर्मविधिः । एवं 'अन्नमेव तद्दक्षिणतो दधाति तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति । तथा 'दीक्षितो नयनं दक्षिणं प्रथममङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै' इति । तथा यूपैकादशिन्यां 'द्वेद्वे रशने यूपमृच्छतः तस्मात् स्त्रियः पुंसोऽतिरिक्ताः तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून् पतीन्' इति । तथा दर्शपूर्णमासप्रकरणे अग्नीषोमीयविधिसंबन्धलङ्घनेन त्वाष्ट्रवधनिमित्तेन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागतरजस्वलाव्रतानां भूमिशयन–अस्नानामांसभक्षणानभ्यङ्गानञ्जनाविलेखनाकर्तनादन्तधावनानखच्छेदनारज्जुसंसर्जनादीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्मत्वावधारणम् । '**एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः । स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः ॥ तेनाचारः स्मृतिं यावदनुमातुं प्रवर्तते । स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवावधारयेत् ॥**' तस्मात् आचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धना इति । १।३।४।९ पृ. २२०-२२१.

शा– स्मृत्याचारविरोधे वा । यत्र मन्वादिनिबन्धनानां अनिबन्धनानां चाचाराणां विरोधो मातुलदुहितृपरिणयनादिषु तत्र किं तुल्यकक्षत्वं उत स्मृतीनां बलीयस्त्वं इति चिन्त्यते । तत्र '**बलाबलविशेषस्तु कक्षान्तरितकारितः । श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः ॥**' श्रुत्या हि साक्षादर्थः प्रतीयते, स्मृत्या तु श्रुतिकल्पनया इत्येकान्तरितप्रामाण्यत्वात् अव्यवहितप्रामाण्या श्रुतिर्बलीयसीति । तेन तत्र युक्तं यत्स्मृतेरननुष्ठानलक्षणमप्रामाण्यम् । इह तु एवं विशेषो नास्ति, द्वयोरपि श्रुतिमूलत्वेन एकान्तरितयोरविशेषात् । तस्मात्समा विप्रतिपत्तिरिति । अत्रोच्यते– '**सप्रत्यय-**

प्रणीता हि स्मृतिः सोपनिबन्धना । तस्यास्तेन वलीयस्त्वमाचारान्निर्निबन्धनात् ॥' ( निबन्धनं- इतस्ततो विप्रकीर्णत्व – परप्रकरणगतत्व–सिद्धवन्निर्देश- कल्प्यत्वादिना तिरोहितान् विधीनुपसंहृत्य तत्प्रतिपाद्य- कर्मणां कर्तव्यत्वकथनम् । सोम. ) । प्रत्ययिततरा हि मन्वादयः स्मर्तारः । तत्स्मरणं गुणवत्तरकर्तृकत्वात् इतरजनचारित्र्यात् विस्रम्भणीयतरम् । इति व्यक्तमेतत् । अपि च आचरितॄणां जनानां स्वयमितस्ततो विप्रकीर्ण- परप्रकरणादिगतश्रुत्युद्धरणेन अर्थे प्रतिपत्तुमसामर्थ्यात् अवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थं अनुतिष्ठन्ति इत्यङ्गीकार्यम् । अतश्च आचारस्य स्मृति- कल्पनेन श्रुतिकल्पकत्वं इति द्व्यन्तरितप्रामाण्यात् दुर्ब- लत्वम् । अपि च आचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षम् , कर्तव्यता तु विमर्शपूर्वकं अर्थसुखादिहेत्वन्तरासंभव- निरूपणेन पारिशेष्यात् कल्पयितव्या । तां च कल्प- यित्वा पश्चात् मूलकल्पनं इति विप्रकर्षः । सनिबन्धनासु तु स्मृतिषु द्रागेव ग्रन्थतः कर्तव्यता गम्यते, मूलमात्रं तु कल्प्यं इति संनिकर्षः । सर्वेषां च स्मृतिविरुद्धा- चाराणां मातुलदुहितृपरिणयनादिविषयाणां कामादि- हेत्वन्तरं स्पष्टमेव दृश्यते इति न कथंचिदपि श्रुति- मूलत्वं संभावनीयम् । न चात्र विकल्पाभ्युपगमेन उभयोरपि प्रामाण्यं संभवति, वस्तुनि विकल्पासंभ- वात् । न हि मातुलदुहितृपरिणयनात् प्रत्यवायस्यो- त्पत्तिरनुत्पत्तिश्च संभवति इत्यवश्यं अन्यतरस्याप्रामाण्य- माश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्य आचारस्य अप्रामाण्यं इति सिद्धं एवंजातीयकानां दुराचारत्वम् । १।३।४ पृ. ३३–३४.

**वि**-- 'यो मातुलविवाहादौ शिष्टाचारः स मा न वा ।, इतराचारवन्मात्व – ममात्वं स्मार्तबाधनात् ॥ स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च । अनुमेया स्मृतिः, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥'

**भाट्ट**--यत्र मातुलकन्यापरिणयनादौ स्मृत्याचारयो- र्विरोधः तत्रोभयोरपि श्रुतिकल्पकत्वात् तुल्यबलत्वम् । इति प्राप्ते, स्मृतीनां सप्रत्ययप्रणीतत्वात् स्मृतिषु कर्तव्यतावाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम् । आचा- रेषु तु आचरितॄणां जनानां मन्वाद्यपेक्षया तथा प्रत्य- यितत्वाभावात् इतस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यव- गमस्याशक्यत्वात्, परकीयाचारमात्रदर्शनेन कर्तव्यता- वाचिविधिप्रत्ययस्य अवश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एव इदानींतनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा स्मृतिकल्पनम्, स्मृतीनां तु साक्षादेव इति विशेषः । अतश्च स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं स्मृतिदर्शनं वा अननु- ष्ठानम् ।

**मण्डन**— कुमारिलमतेन अत्राधिकरणे स्मृतिसदा- चारयोः प्रामाण्यतारतम्यं विचारितम् । उभयोरपि वेद- मूलत्वात् तुल्यमेव प्रामाण्यमिति पूर्वपक्षे, स्मृतेः साक्षात् वेदमूलत्वात् सदाचारस्य च स्मृतिद्वारैव वेदमूलत्व- कल्पनासंभवात् स्मृतेरेव बलवत्तरं प्रामाण्यमिति सिद्धान्तः ।

**शंकर**-- 'स्मृत्याऽऽचारस्य बाधः स्यात् ।'

* **स्मृत्यादिकल्प्यः** प्रतिषेधः द्विविधः, क्रत्वर्थः पुरुषार्थश्च । क्रत्वर्थोऽपि द्विविधः, पुरुषार्थमात्रविषयकः क्रत्वर्थमात्रविषयकश्चेति । बाल. पृ. ३१, * स्मृत्यादि- कल्प्यः प्रतिषेधः पुनर्द्विविधः, अदृष्टार्थः दृष्टार्थश्चेति । पृ. ३१.

* **स्मृतिकल्प्यः** प्रतिषेधो यथा- सगोत्रा न परिणेया । बाल. पृ. २९.

* **स्मृतिग्रन्थेऽपि** आम्नायशब्दप्रयोगः । वा. १।३।३।७ पृ. २११.

* **स्मृतिज्ञानं** ग्राह्यं वस्तु न गृह्णाति, अस्फुटाव- भासित्वात्, बाह्यस्य च स्फुटरूपत्वात् । न च ग्राहक- सामग्रीभेदेन स्फटास्फुटावभासभेदः, वेद्याभेदात् । अतो ग्राह्यावभासाभावेऽपि तदध्यवसायिना उपजायमानं तदालम्बनमिव भाति स्मृतिज्ञानम् । इति बौद्धाः । ऋजु. पृ. ४१.

* **स्मृतितः** श्रुतिर्बलीयसी । भा. १२।३।७।१९.



* **स्मृतित्वं** ज्ञातविषयकज्ञानत्वम्, संस्कारजन्य- ज्ञानत्वं वा । मणि. पृ. १३.

* **स्मृतित्वानुभवत्वयोः** विरुद्धयोः एकज्ञान- वृत्तित्वं न संभवति । मणि. पृ. ३०.

* **स्मृतिपादः** प्रथमाध्यायस्य तृतीयः, आचारोऽपि अत्रैव । 'विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् । प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥' वि. प्रस्तावना श्लोकः १३. * **स्मृतिपादे** ( १।३ ) स्मृतिमूलविचारः प्रकरणार्थः । तथाहि, 'स्मृतीनां श्रुतिमूलत्वं, विरोधे भ्रान्तिमूलता । उक्तोपवीतस्मृत्या- दावविरोधं निरूप्य च ॥ आर्यैर्विरोधे म्लेच्छानां शब्दा- र्थविषयस्मृतेः । भ्रान्तिर्मूलमसत्त्वेऽस्य पिकादौ लोक- मूलता ॥ मूलापेक्षं च कल्पादेरव्यवस्थितगोचरम् । होलाकादिस्मृतेर्मूलमुक्तं शब्दस्मृतेरपि ॥' इति । सु. पृ. ३७०.

* **स्मृतिप्रणेतॄणां** त्रैवर्णिकत्वं कल्प्यते वैदिकपदार्थ- कर्तृभिस्त्रैवर्णिकैः, स्मार्तानां पदार्थानां क्रियमाणत्वात् तेषां च अत्रैवर्णिकोक्तपदार्थाननुष्ठातृत्वस्वभावदर्शनात् । सु. पृ. १२५.

* **स्मृतिप्रामाण्यं** तर्कोपबृंहितशिष्टत्रैवर्णिकदृढ- परिग्रहान्यथानुपपत्तिप्रसवया अर्थापत्त्या वेदमूलत्व- कल्पनेन साधितम् । सु. पृ. १२४, * **स्मृति- प्रामाण्ये** विचिकित्सा न कार्या 'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥' इति निषिद्धत्वात् । पृ. १३६.

* **स्मृतिप्रामाण्यहेतुः** शिष्टत्रैवर्णिकपरिग्रहादरः । सु. पृ. १७०.

* **स्मृतिवचनेन** न श्रुतिवचनं युक्तं बाधितुम् । भा. ६।१।४।१७. * स्मृतिवचनेन बलवत्पदार्था- श्रयेण, दुर्बलक्रमाश्रयं वेदवाक्यं बाध्यते 'क्षुते आचामेत्' 'वेदं कृत्वा वेदिं करोति' इति । बाल. पृ. १४०.

* **स्मृतिविरुद्धानां** मातुलसुतापरिणयादीनामन- नुष्ठानप्रतिपादनम् । भाट्ट. १।३।४ वर्णकं २.

* **स्मृतिविहितेषु** नियमादिषु उपनीतस्याधिकारो नानुपनीतस्य । वि. ६।२।६.

* **स्मृतिशब्दस्य** धर्मशास्त्रेष्वेव प्रसिद्धिः । सु. पृ. १२१.

* **स्मृतिहेतोः** संस्कारस्य सर्वत्रानुच्छेदः । वा. ३।३।७।१४ पृ. ८२९.

**स्याच्छ्रुतिलक्षणे नियतत्वात् । ६।३। १५।३३ ॥**

'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति यत्र प्रतिनिधिः श्रुतः, तत्र प्रतिनिधेरपचारे प्रतिनिधि- सदृशस्य उपादानं कर्तव्यं इति पूर्वपक्षी आह । श्रुति- लक्षणे श्रुतिर्लक्षणं प्रमाणं यस्य तादृशे पूतीकद्रव्ये विनष्टे सति प्रतिनिधेः प्रतिनिधिः स्यात् । नियतत्वात् पूतीकानां तत्सदृशमेव द्रव्यमुपादेयं स्यात् न सोम- सदृशम् । तस्मात् अत्र प्रतिनिधौ प्रतिनिधिः इति **पूर्वः पक्षः ।**

'स्याच्छ्रुतिलक्षणे' इत्येतावदेव सूत्रं कुतूहले । अनुवृत्त्या तु अर्थपूरणं भवति ।

**न तदीप्सा हि । ३४ ॥**

सोमापचारे श्रुतिविहिताः पूतीका ग्राह्याः । अथ पूतीकापचारे पूतीकसदृशः प्रतिनिधिः नोपादेयः । हि यस्मात् पूतीकविधिनाऽपि तदीप्सा सोमावयवानामेव कतिपयानामपि ईप्सा आप्तुमिच्छा प्रदर्शिता । तथा च पूतीकापचारे पुनः सोमसदृशमेव पूतीकभिन्नं द्रव्यमपे- क्षणीयम् । इति **सिद्धान्तः** । के.

**स्युर्वा होतृकामाः । १०।२।२२।५६ ॥**

होतृकामाः पठिताः प्रकृतौ 'यं कामयेतापशुमान् स्यादिति पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति' 'यं कामयेत वर्षीयान् स्यादिति उच्चैस्तरां तस्य याज्याया वषट् कुर्यात्' इत्यादयः । एते होतृकामाः अस्थियज्ञे स्युर्न वा इति विचारे 'स्युः होतृकामाः'

अस्थियज्ञे चोदकानुग्रहात् । होतुः कामा एते अस्थ्नां कामाभावेऽपि होतुः स्युरेव कामाः । तस्मात् कर्तव्या होतृकामा इति **पूर्वः पक्षः ।**

**न तदाशीष्ट्वात् । ५७ ॥**

प्रकृतौ पठिताः होतुः कामाः अस्थियज्ञे न कर्तव्याः । तदाशीष्ट्वात्, तस्य यजमानस्य आशीरेषा होत्रा क्रियते । होता यं यजमानं एवं कामयते तदर्थं होत्रा एवं कर्तव्यमिति वाक्यार्थः । तस्मात् यजमानाशीरेवैषा । अस्थ्नां च कृते होता नैवं कामयितुं शक्नोति । किंच 'यां वै कांचन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव तामाशिषमाशासते' इति यजमानाशीष्ट्वमेवोक्तम् । तस्मात् अस्थियज्ञे होतृकामाः सूक्तवाकगतकामवत् न कर्तव्याः इति **सिद्धान्तः** । के.

* '**स्योनं** ते॰' इति मन्त्रे नीवारपदस्योहः 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यत्र । **भा.** ९।३।१।१–२,४–८. * 'स्योनं ते॰' इति मन्त्रार्धयोः क्रमेण सदने सादने चाङ्गत्वम्, लिङ्गस्य वाक्यात् प्राबल्यात् दर्शपूर्णमासयोः । वि. ३।३।८. * 'स्योनं ते सदनं कृणोमि॰ तस्मिन् सीदामृते॰' अत्र लिङ्गात् पूर्वार्धः उपस्तरणे, उत्तरार्धस्तु पुरोडाशासादने प्रयोक्तव्यः । न तु सर्वः क्वचित् । **भा.** ३।३।७।१४.

* **स्रग्वत्** । यथा 'स्रजमुद्गात्रे (दशपेये) ददाति' इयं उद्गातृभागस्य निर्वर्तिका स्रक् न कृत्स्नस्य क्रतुदाक्षिण्यस्य, उद्गातृसंयोगात् । **भा.** १०।३।१८।६५–६८.

* **स्रुचः** शमीमय्यः हिरण्मय्यो वा संमार्ष्टव्याः वरुणप्रघासेषु सिद्धान्ते । पूर्वपक्षे तु नानावृक्षस्रुचः । **भा.** २।१।४।९–१२, * स्रुचो हिरण्मय्यः शमीमय्यो वा इत्यादयः चातुर्मास्यवरुणप्रघासगतैककपालस्य वैशेषिका धर्माः । ७।१।५।२३, * 'स्रुचः संमार्ष्टि' इति संमार्जनं गुणकर्म न प्रधानकर्म । २।१।४।९–१२. * 'हंसमुख्यः स्रुचोऽग्राः (?) त्वक्तो बिलाः (न्यक्बिलाः)' इति स्रुचां हंसमुखत्वप्रसेचकत्वादिविधिवत् ...। सु. पृ. ९१४. * **स्रुचि** सोमहविर्नासाद्यते । **भा.** ८।१।३।६. * **स्रुक्षु** आज्यग्रहणम् । तत्र औपभृतस्याज्यस्यानुयाजाः प्रयोजकाः चतुर्थपञ्चमौ च प्रयाजौ । वि. ४।१।१५.

* **स्रुगादापननिगदे** 'अग्निर्होता वेत्तु' इति आहवनीयवादः । **संकर्ष.** ४।२।१९. **मीको.** पृ. ५९ "'अग्निर्होता वेत्तु' इति स्रुगादापननिगदे॰" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्रुगादापनप्रैषस्य** आवृत्तिः पशौ उत्तमप्रयाजार्थमपि । **संकर्ष.** ४।४।१०. **मीको.** पृ. २४९१ 'पशौ उत्तमप्रयाजार्थमपि॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**स्रुगादापनमन्त्रे 'इमे वयं' 'स्मो वयं' इति पाठौ कर्मान्तरे सावकाशत्वात् न अनयोः विकल्पः ॥**

स्रुगादापनमन्त्रे शाखाभेदेन 'इमे वयं' 'स्मो वयं' इति पाठौ द्वावपि विनिन्द्य 'वेत्तु प्रावित्रमित्येव ब्रूयात्' इति विहितम् । तथा 'नमस्याम नमस्यान्' इत्यंशोऽपि शाखाभेदेन प्रथमतो मध्यतोऽन्ततश्च पठितः । तत्र आद्यद्वयं विनिन्द्य 'अन्तत एव ब्रूयात्' इति विहितम् । तत्र निन्दाया विहितस्तुत्यर्थत्वेन विकल्पे प्राप्ते, निन्दितस्य गिरापदवत् कर्मान्तरे सावकाशत्वाद्यथाविधानमेवानुष्ठानम् । आपादितयोराम्नातयोर्विकृतौ विकल्पार्थत्वमिति भाष्ये विकृतिशब्दो ब्रह्मयज्ञादिपरो नेयः । (भाष्योक्तमपि युक्तमेव तथानुष्ठानदर्शनात् इति केवलः ।) । **संकर्ष.** ४।३।१.

* **स्रुग्धारणार्थः** प्रस्तरः । **भा.** ३।२।५।११, ६।४।१४।४४.

* **स्रुग्व्यूहनमन्त्राः** 'वाजस्य मा प्रसवेन' इति अध्वर्युणा यजमानेन च उभाभ्यां पठनीयाः, न केवलं अध्वर्युणा एव दर्शपूर्णमासयोः । **भा.** ३।८।७।१७.

* **स्रुक्संमार्गस्य** प्रकृतौ बहुसाधनकत्वात् कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात् पात्राविवृद्धावपि



पशुचातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे, सिद्धान्ते तु सर्वाः, संस्कारस्य प्रतिप्रधानावर्तित्वात् । **वा.** २।१।४।१२ पृ. ४१५.

* **स्रुवः** अव्यभिचरितक्रतुसंबन्धवान् । **वि.** ३।६।१. * स्रुवः खादिरः, अत्र फलश्रुतिः अर्थवादः न फलप्रयुक्तता, क्रत्वर्थः सः । **भा.** ४।३।१।१–४. * स्रुवः खादिरः अनारभ्यविहितः प्रकृतौ निविशते, विकृतौ तु चोदकात् । वि. ३।६।१, * स्रुवः द्रवद्रव्यावदाने करणम्, सामर्थ्यात् । १।४।२०. * '**स्रुवेणाव**द्यति, स्रुवेणाघारमाघारयति, स्रुवेण पार्वणौ जुहोति' । **वा.** ३।६।१।१. * 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति । अत्र आज्य–मांस–पुरोडाशेषु हविःषु स्रुवाद्या अवदानहेतवो नियताः । शक्तिरत्र नियामिका । 'अञ्जलिना सक्तून् प्रदाय जुहुयात्' अत्राञ्जलिः न नमस्कारकालिक इव ग्राह्यः, अशक्तेः किंतु सक्तुग्रहणशक्तया प्रसृतोऽञ्जलिर्ग्राह्यः । **वि.** १।४।२०. * 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति श्रूयते । तत्र संदेहः किं स्रुवेणावदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति । तत्र अर्थतो व्यवस्था इति सिद्धान्तः । **भा.** १।४।१४।२५. * स्रुवेण दीक्षाहुतयो हूयन्ते । **वि.** १०।३।४.

* **स्रुवाधिकरणम्** (स्रुवखादिरत्वविधिः प्रकृतिगामी) । ३।६।१।१–८. **मीको.** पृ. ३७३ 'अनारभ्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **स्रुवाधिकरणे** (३।६।१।१–८) वाक्यशेषवत् सामर्थ्यस्यापि संदिग्धनिर्णायकत्वेन धर्मप्रमोपयोगो व्युत्पादितः । सु. पृ. ३९८.

* **स्रुवादिशब्दानां** आकृतिवचनत्वम् । वा. ३।६।५।१५.

* **स्रुवधर्मैः** स्वधितिः स्रुवधर्मा भवति । **भा.** ६।३।१०।२६.

* **स्रेकपर्णशब्दस्या**ध्रिगुप्रैषगतस्य कार्त्स्न्येनोद्धरणप्रकाशकत्वम् । **भा.** ९।४।५।२५–२७.

**स्वं महिमानमावह इति गार्हपत्यवादः ॥**

'स्वं महिमानमावह' इत्यत्र स्वशब्दस्य आत्मीयपरत्वेन संबोधनीयाहवनीयपरत्वावश्यम्भावात् तन्निष्ठस्य होतृत्वयष्टृत्वादिधर्मनिकरस्यैव महिमरूपतया तद्धर्मविशिष्टो भवत्येतदर्थकोऽयं निगद आहवनीयपर एव । इति प्राप्ते, अथ 'यत्स्वं महिमानमावाहयति वायुं तदावाहयति वायुर्वा अग्ने स्वो महिमा' इति कौषीतके श्रवणाद्वायुपदस्य च 'वायोरग्निः' इत्यादिश्रुत्या जनकपरत्वेनाहवनीयजनकगार्हपत्यपर एवायं निगदः । होतृत्वादिधर्माश्च देवतावोढृत्वेनाहवनीय इव हव्यवोढृत्वेन गार्हपत्येऽपि संभवन्तीति न ते आहवनीयासाधारणाः । 'अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचेवेष्ट्वं हि यज्वा' इति स्विष्टकृत्यपि प्रयोगात् । तस्मादेकस्यैव गार्हपत्यस्य हव्यवोढृत्वेनाहवनीयजनकत्वेन चावाहनम् । आवाह्यतावच्छेदकभेदादावहतेरावृत्तिः । तेन पितृमेधे वाक्यद्वयस्यापि स्थाने 'अग्निं कव्यवाहनमावह' इत्येक एव निगदः । **संकर्ष.** ४।२।१२.

**स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायः ।**

स्फुटः । **साहस्री.** ३६०.

**'स्वाङ्गुष्ठमपि चुम्बन्तमिक्षुदण्डमयाचत' इति न्यायः ।** यत्र श्रौतस्मार्तसनातनधर्मानभिज्ञवर्णाश्रमभ्रष्टा मूर्खा जनाः स्वस्वप्रीतिगोचरेभ्यः स्वाभिलषितार्थतृष्णाग्रस्तेभ्यः आचार्याभासेभ्यो निजाभीष्टार्थान् याचन्ते तत्रायं चरितार्थ इति । **साहस्री.** ८०.

* '**स्वाधीने शब्दप्रयोगे किमिति अवाचकं पदं प्रयोक्ष्यामहे**' 'अदितिः पाशं॰' 'अदितिः पाशान्॰' इति । प्रकृतौ यया वृत्त्या एकत्वोपस्थितिः न तया विकृतौ द्वित्वोपस्थितिः इति प्राकृतवृत्तिबाधात् तद्द्वारकस्य बहुवचनस्यापि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन शक्तद्विवचनप्रक्षेपावश्यम्भावः । 'स्वाधीने॰ प्रयोक्ष्यामहे' इति न्यायात् । **भाट्ट.** ९।३।४, * 'प्रशसा बाहू' इत्यत्र सिद्धान्ते '**स्वाधीने शब्दप्रयोगे॰**' इति न्यायेन प्रशस्तान् बाहून इत्यूहः, पूर्वपक्षे च प्रशासैः इति द्रष्टव्यम् । ९।४।४.

* स्वार्थं अनुमानं परामर्शेन स्वस्यैव (अनुमातुः) साध्यज्ञानजनकम् । मणि. पृ.३९. * स्वार्थं सामान्यतोदृष्टमनुमानम् । स्वार्थं विशेषतोदृष्टमनुमानम् । बाल. पृ. ८. * स्वार्थे प्रवर्तते जन्तुः । को हि परार्थं प्रयासमातिष्ठेत् । पुरुषः स्वार्थेन करोति । भा. ११।१।१।१ पृ. २०९९, * स्वार्थे हि सर्वं क्रियते, न परविशेषणार्थेन । भा. ९।४।६।२८.

* '**स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥**' (१।४।१३।२४ सूत्रे वार्तिकं पृ. ३६६ )। पदार्थानां परस्परान्वयाकाङ्क्षापर्यवसानेऽपि वाक्यार्थानां परस्परापेक्षया अन्वयो न विरुद्धः इत्याशयः । भावप्रत्ययेन संबन्धामिधानात् अङ्गस्य अङ्गिसंबन्धापेक्षया अङ्गिनश्चाङ्गसंबन्धापेक्षया आग्नेयादिप्रधानानामेकफलसंबन्धापेक्षया अङ्गानां च एककरणोपकारकसंबन्धापेक्षया स्वार्थपर्यवसितानामपि वाक्यानां संहत्य एकमहावाक्यार्थापादनेन एकवाक्यत्वं भवतीत्यर्थः । अङ्गप्रधानवाक्यैः सहार्थवादानां वैषम्याभिधानेन दूषितमेतत् । सु. पृ. ५२५, * 'सुरा पातव्या' इत्येतावतो वाक्यत्वाभावेन अशास्त्रत्वात् तद्विरोधायोगेऽपि 'लः कर्मणि च ' इत्येतावतः '**स्वार्थबोधे समाप्तानां०**' इत्यनेन न्यायेन वाक्यान्तरैकवाक्यत्वेऽपि वाक्यत्वसद्भावात् तद्विरोधोद्भावनोप( वनानुप? )पत्तिः । पृ. १४१९.

* स्वात्मानं स्थिरं ज्ञात्वा धर्मानुष्ठाने यतमानो धर्मादेव श्रेयो लभते । ऋजु. पृ. १६७. * स्वात्मनि क्रियाविरोधः । वा. २।२।५।१४.

**स्वकरकुचन्यायः** । यथा स्वकरेण स्वकुचयोर्मर्दनं कुर्वती युवती न सुखं लभते, तथा जिज्ञासुरपि न स्वतन्त्रविचारेण ज्ञानमाप्नोति, किन्तु आचार्यद्वारा तत्त्वज्ञानं प्राप्नोति ' आचार्यवान् पुरुषो वेद ' इति श्रुतेरिति । **साहस्री.** ३४६.

* स्वकालादुत्तरो गौणः । इतिन्यायमनुसृत्यापि तत्पूर्वं तदुत्तरं वा न प्रतिगृह्णीयात् । **सत्याश्रौ.** ८।८।२७ ज्योत्स्ना.

**स्वकाले स्यादविप्रतिषेधात् । ५।४।५।१५॥**

अन्तरागर्भिणीरूपस्य अधिकरणस्य पूर्वपक्षसूत्रम् । ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत न नक्षत्रम् ' इति किं आधानकालस्य निषेधः उत सोमकालस्येति विचारे पूर्वपक्षमाह । 'उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् ' ( ५।४।४।१० ) इति सूत्रात् सोमः इति पदं अनुवर्तते । सोमः स्वकाले स्यात् । आधानकालस्य तु बाधः स्यात् अविप्रतिषेधात् अङ्गकालबाधे विरोधाभावात् । प्रधानकालबाधे तु विप्रतिषेधः स्यात् ।

**अपनयो वाऽऽधानस्य सर्वकालत्वात् । १६ ॥**

**सिद्धान्तसूत्रम्** । सोमपूर्वाधानपक्षे सोमकालस्यैव ' नर्तुं प्रतीक्षेत् न नक्षत्रम् ' इत्यनेन अपनयः बाधः स्यात् । आधानस्य सर्वकालत्वात् ' यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत ' इत्युक्तत्वेन आधानकालस्य अप्राप्तत्वात् प्रतिषेधो न कर्तव्यः । सर्वस्मिन् काले आधानं कर्तव्यम् । वा-शब्दः पूर्वपक्षनिरासार्थः । तस्मात् सोमकालस्यैव बाधः । के.

* ' स्वकाले स्यादविप्रतिषेधात् ' (५।४।५।१५) इत्यधिकरणे तन्त्ररत्ने ' यदा क्वचन कदाचनोपनमेदथादधीत अथ यजेत ' इति शतपथवाक्यस्य ज्योतिष्टोमे ऋत्वन्तरविधित्वोक्तेः तच्छेषस्य ' अपहतपाप्मानो वा ऋतवः ' इत्यस्य कालविधिसरूपत्वं अर्थादुक्तम् । बाल. पृ. ५६.

**स्वजातिर्दुरतिक्रमेति न्यायः** । अत्र गाथाऽस्ति । यथा– गङ्गातटे कस्यचिन्मुनेरञ्जलौ श्येनमुखात्परिभ्रष्टा मूषिका पतिता, मुनिश्च तां दृष्ट्वा दयार्द्रहृदयो निजतपोयोगबलेन मानवीं कन्यां कृत्वाऽनपत्यायै स्वजायायै दत्तवान् । सा तथा पालिता युवती वरार्हा जाता । ततस्तत्परिणयाय वरयितुं सूर्यपर्जन्यमारुतगिरीनावाह्य मुनिः स्वकन्यामुवाच– पुत्रि, एष्वन्यतमं वरय । सा तानर्कादीनतिदहनात्मक–कृष्णवर्णजडात्मक–अतिचपलात्मक–कठिनस्तब्धात्मकान् निरूप्यानुररीचकार । ततः स मुनिर्मूषकमावाह्य कन्यां प्राह– पुत्रि, एनं वरय । ततः सा मूषकं दृष्ट्वा प्रसन्ना सती मुनि-



मुवाच– भगवन् मां पूर्ववन्मूषिकां कृत्वा मूषकाय देहि । मुनिना तथैव कृतम् । उक्तं च– ' सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् । स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ ' इति । **साहस्री.** ८०८.

**'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इति न्यायः** । अयं श्रीहर्षोक्तिरूपः। अस्यार्थः– हि यतो यस्मात् सतां साधूनां परार्थता परोपकारित्वं स्वत एव स्वभावत एव भवतीति शेषः । यथा– ग्रहणानां ज्ञानानां स्वतः यथार्थता प्रामाण्यम् । ज्ञानानां स्वतः प्रामाण्यं न तु परत इति **मीमांसकाः** । यद्वा गृह्यन्ते ज्ञायन्ते अर्थाः एभिरिति ग्रहणानि इन्द्रियाणि, तेषां यथार्थता– अर्थाननतिक्रम्य वर्तिता, स्वस्वार्थग्राहकतेत्यर्थः । यथा श्रवणादीन्द्रियाणि संनिकृष्टं शब्दाद्यर्थमन्यमनपेक्ष्यैव प्रत्यक्षयन्ति, तथा साधवः परस्य प्रेरणमनपेक्ष्यैवोपकुर्वन्तीति भावः । **साहस्री.** ९७३.

* स्वतस्त्वं प्रामाण्यस्य कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वम् । याथार्थ्यघटितप्रामाण्यस्य स्वतस्त्वम् । कु. १।१।५।५ पृ. ७.

* स्वतःप्रामाण्यं नाम कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । बाल. पृ. ५–६. * स्वतःप्रामाण्यं विधेः अबोधकत्व–सापेक्षत्वयोरप्रामाण्यकारणयोरभावात् । वि. १।१।५, * स्वतःप्रमाण्यं विधेर्धर्मे । १।१।५.

* स्वतःप्रामाण्याभ्युपगमाद् विधिवाक्यानाम् , क्वचित् फलादौ संवादाद्यपेक्षा नास्ति । वि.१।१।५.

* स्वतःप्रामाण्यवादिनां मते प्रमाणस्य सापेक्षता नास्ति । वि. १।१।२.

* स्वत्वम् । न च त्यागमात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसंबन्ध आपद्यते । भा. ३।३।१५।४४. * स्वत्वं यथेष्टविनियोज्यत्वलक्षणम् । सु. पृ. १५३४.

* स्वत्वोपायः अनन्यपरिगृहीततृणादिवत् परिग्रहाख्यः । सु. पृ. १५२८.

* स्वत्वपरित्याग–परस्वत्वापादनसद्भावो विक्रयेऽपि । वा. ३।४।१०।२८ पृ. ९६१.

**स्वदाने सर्वमविशेषात् । ६।७।१।१॥**

विश्वजिति यागे श्रूयते ' सर्वस्वं ददाति ' इति । तेन यदा स्वस्य स्वीयस्य दानं कर्तव्यं तदा धनं, माता, पिता, भूमिः इत्याद्यपि यावत्-किंचित् स्वीयम् , तत् सर्वं दातव्यम् । अविशेषात् । इदं देयं इदं न देयं इति विशेषोक्तेरभावात् । इति **पूर्वः पक्षः** ।

**यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् । २ ॥**

विश्वजिति यागे सर्वस्वदाने पित्राद्यपि स्वीयत्वात् देयं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पित्रादि देयम् । किंतु यजमानः यस्य स्वीयस्य प्रभुः स्यात् तदेव देयम् । इतरस्य यस्मिन्नास्ति प्रभुत्वं तस्य दातुं अशक्यत्वात् न देयता । न च पुत्रः पितुः प्रभुः । तस्मात् पित्रादि न देयम् । अत्र ' यस्य वा प्रभुत्वमितरस्याशक्यत्वात् ' इति **कुतूहलपाठोऽपि** साधीयान् । के.

* स्वपरिज्ञानबुद्धिर्हि निःश्रेयसे । बृहती. पृ. १६७.

**स्वप्रकाशाश्रयन्यायः** । यथा रवेस्तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्त्वरूपसाजात्येनाऽभेदस्तथा प्रकृतेऽपि । **साहस्री.** १५८.

**स्ववतोस्तु वचनादैककर्म्यं स्यात् । ६।१।४।१७ ॥**

अन्तरागर्भिण्यधिकरणे सिद्धान्तसूत्रम् । दंपती उभावपि स्ववन्तौ द्रव्यवन्तौ । तयोः स्ववतोरपि सतोः ऐककर्म्यं स्यात् । उभौ संभूय यजेयातां न पृथक् पृथक् । ' धर्मे चार्थे च कामे च नातिचरितव्या ' इति स्मृतिवचनात् । तस्मादुभयोः सहाधिकारः ।

**लिङ्गदर्शनाच्च । १८ ॥**

अन्तरागर्भिण्यधिकरणस्थं सूत्रं ' दंपत्योः कर्मणि सहाधिकारः ' इति सिद्धान्ते लिङ्गबोधकम् । चकारो हेत्वन्तरसमुच्चयार्थः । ' योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं मिथुनत्वाय ' इत्यत्र मिथुनत्वेन संस्तुतिः कृता । तदिदं दंपत्योः सहाधिकारे लिङ्गं दृश्यते तस्मात् दंपत्योः सहाधिकारः **सिद्धान्तः** । के.

**स्ववाक्यश्रुतफलानां कर्मणां न स्वर्गः फलम् ॥**

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः । ४।३।९।२०॥**

**भाष्यम्**— काम्यानि कर्माण्युदाहरणं ‘ सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ’ इत्येवमादीनि । तत्र संदेहः किमेषां स्वर्गः फलं कामश्च, उत काम एवेति । किं प्राप्तम् ? काम्ये कर्मणि नित्यः स्वर्गः स्यात् । कथम् ? सर्वपुरुषार्थाभिधायी सामान्यवचनः शब्दो न विशेषेऽवस्थापितो भवति । शक्यते ह्यस्य दूरस्थेनापि स्वर्गकामशब्देन संबन्धः । आह । ननु विशेषकः शब्दः श्रूयते ‘ब्रह्मवर्चसकामः’ इति । नैष विशेषकः । उपाधिकर एषः । यथा काष्ठान्याहर्तुं प्रस्थित उच्यते, ‘भवता शाकमप्याहर्तव्यम् ’ इति । काष्ठाहरणे शाकाहरणमुपाधिः क्रियते इति । किमिदमुपाधिः क्रियते इति । काष्ठाहरणाधिकारसमीपे द्वितीयं कर्मोपधीयते । सति काष्ठाहरणे, इदमपरं कर्तव्यमिति । एवमिहापि स्वर्गफले फलमपरमुपधीयते ‘ ब्रह्मवर्चसकामो यागेन स्वर्गमभिनिर्वर्तयेत् ’ इति । न हि तत्र ब्रह्मवर्चसफलवचनं स्वर्गफलस्य प्रतिषेधकम् । यथा यज्ञाङ्गे क्रत्वर्थः ‘ गोदोहनेन पशुकामस्य प्रणयेत् ’ इति । यः पशुकामः स गोदोहनेन प्रणयनमभिनिर्वर्तयेदिति ।

**टुप्**— ‘ निर्वपेत् ’ इत्ययं विधिः पुरुषमात्रं प्रवर्तयति । तत्र यदि स्वर्गः फलमिष्यते, पुरुषप्रयत्नवचनस्य न बाधः । प्रीतिमात्रं हि सर्वे एवेच्छन्ति । तस्मात्स्वर्गः फलम् ।

**वीते च कारणे नियमात् ।२१॥**

**भाष्यम्**— वीते च कारणे वीतायां फलेच्छायामवाप्ते वा फले समाप्तिनियमो दृश्यते । वृष्टिकामेष्ट्यां ‘ यदि वर्षेत्तावत्येव जुहुयात् , यदि न वर्षेत् श्वोभूते जुहुयात् ’ इति । यदि न स्वर्गः, किमर्थः समाप्तिनियमो भवेत् । तस्मात् नित्यः स्वर्गः इति ।

**कामो वा तत्संयोगेन चोद्यते ।२२॥**

**भाष्यम्**— कामो वा फलं भवेन्न स्वर्गः । तत्संयोगेनास्य चोदना भवति, न स्वर्गकामसंयोगेन । आनुमानिकोऽस्य स्वर्गकामेनैकवाक्यभावः । प्रत्यक्षस्तु कामवचनेन । प्रत्यक्षं चानुमानाद्बलीयः । तस्मात्काम एव फलमिति ।

**अङ्गे गुणत्वात् ।२३॥**

**भाष्यम्**— अथ यदुक्तं ‘ यथा यज्ञाङ्गे ’ इति । युक्तम्, अङ्गे गुणत्वात् । प्रत्यक्षस्तत्र क्रतुना संयोगः, कामेन च ‘यः पशुकामः स्यात्स गोदोहनेन प्रणयनमभिनिर्वर्तयेत् ’ इति । न त्वत्र प्रत्यक्षः शब्दोऽस्ति ‘ यो ब्रह्मवर्चसकामः स्यात् , स यागेन स्वर्गमभिनिर्वर्तयेत् ’ इति । कथं तर्हि ? यो ब्रह्मवर्चसकामः स्यात् , स तद्यागेन निर्वर्तयेदिति । तस्मान्नाङ्गवद्भवितुमर्हतीति ।

**वीते च नियमस्तदर्थम् । २४ ॥**

**भाष्यम्**— अथ यदुक्तं ‘ वीतायां फलेच्छायामवाप्ते वा फले समाप्तिनियमो दृश्यते ’ इति । तत्र ब्रूमः । वीते नियमस्तदर्थम् । वीते नियमो भवति, तस्मै प्रयोजनाय । कस्मै ? शिष्टाविगर्हणाय । उपक्रम्यापरिसमापयतस्तदनन्तरमेवैनं शिष्टा विगर्हयेयुः, प्राक्रमिकोऽयं कापुरुष इति वदन्तः । ये हि देवेभ्यः संकल्प्य हविः , न यागमभिनिर्वर्तयन्ति, तान् शिष्टा विगर्हन्ते । तस्मादवश्यं समापयितव्यम् । तत्रैतद्दर्शनं युक्तं भविष्यति ‘ यदि वर्षेत्तावत्येव जुहुयात् ’ इति । तस्मात् काम्यानां काम एव फलमिति ।

**शा**— यत्र स्वर्गादन्यत् फलं श्रुतं ‘ सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः ’ इति तत् किं स्वर्गार्थं श्रुतफलार्थं च, उत श्रुतफलार्थमेवेति संशयः । तत्र ‘ **विधिः सामान्यरूपेण सर्वेषां हि प्रवर्तकः । स्वर्गश्चाभ्यर्थितः सर्वैरिति तादर्थ्यनिश्चयः ॥** ’ अत्रोच्यते – ‘ **अविशेषप्रतीतिर्या पदमात्रेण जायते । पदान्तरैकवाक्यत्वाद्विशेषे स्थाप्यते हि सा ॥ ब्रह्मवर्चसकामादिविषयोऽयमतो विधिः । स्याच्चेदन्वाचयस्तस्य भवेदन्योन्यसंश्रयः ॥** ’ तस्मात् ब्रह्मवर्चसाद्येव फलम् ।

**सोम**— **सूत्रार्थस्तु**— काम्ये कर्मणि स्वर्गः नित्यफलं ब्रह्मवर्चसादिकमन्वाचयफलं यथा प्रस्तरप्रहरणादौ



यज्ञाङ्गे क्रतूपकारो नित्यः , सूक्तवाकप्रकाश्यायुरादिकं त्वन्वाचयफलम् , तद्वदिति । भाष्ये तु क्रतौ क्रतुकामं कामयेत यज्ञाङ्गादौ तु यज्ञाङ्गकाममित्यादिकल्पसूत्रकारव्यवहारात् यज्ञाङ्गशब्दो गोदोहनादिपरतया व्याख्यातः ।

**वि**— ‘ श्रुताश्रुते श्रुतं वैकं सौर्ये सर्वप्रवृत्तये । आद्यो मैवं श्रुतेनैव फलाकाङ्क्षानिवर्तनात् ॥ ’

**भाट्ट**— यत्र श्रुतब्रह्मवर्चसादिफलकेष्वपि शास्त्रस्य महाविषयत्वलाभार्थं स्वर्गकल्पना, ब्रह्मवर्चसादिकं तु आयुरादिवदानुषङ्गिकम्, तत्र किं वाच्यं रात्रिसत्रे इति शङ्कां मन्दविषन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम् । फलाकाङ्क्षायाः श्रुतफलेनैव शान्तेरुद्देश्यानेकत्वनिमित्तवाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना । महाविषयत्वाभावस्तु विशेषश्रवणे न दोषः । आयुरादौ प्रमाणद्वयसत्त्वादानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च ।

**मण्डन**— ‘ तत्तत् श्रुतं फलं काम्ये । ’

**शंकर**— ‘ न स्वर्गस्तु फले श्रुते । ’

* ‘ **स्वव्यापारे** हि विधिना पुरुषो विनियुज्यते । ’ इति न्यायात् विधिः पुरुषव्यापाररूपां भावनामाक्षिपति । कौ. १।४।३।३ पृ. १७९.

* **स्वशब्दः** अयं आत्मीयधनज्ञातीनां प्रत्येकं वाचको न समुदायस्य । भा. ६।७।१।२. * स्वशब्दः नाम कार्यापत्तिप्रमाणम् । बाल. पृ. ८. * स्वशब्दात् कार्यापत्तिः । ‘ परिधौ पशुं नियुञ्जीत ’ इति स्वशब्देनैव यूपकार्ये परिधिर्वर्तते । टुप्. ९।२।१२।४०.

* **स्वशाखाविहितेन** परशाखाविहितं बाध्यते, अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०. * स्वशाखाविहितेन परशाखाविहितं बाध्यते । यथा उदितहोमादि अनुदितहोमादिना । बाल. पृ. १४१.

* **स्वशाखाविहितज्ञानस्य** स्वाध्यायाध्ययनजनितस्य कर्माङ्गत्वात् तत्संभवे इतरस्यानाक्षेपः । बाल. पृ. ९१.

* **स्वसामर्थ्यप्रवृत्तैस्तु** ब्राह्मणपदैः शक्त्या शक्त्यनपेक्षं अङ्गत्वं अभिधीयते । वा. ३।३।७।१४ पृ. ८२५.

**स्वस्थानात्तु विवर्धेरन् कृतानुपूर्व्यत्वात् । ५।३।२।३॥**

अग्निष्टोमे तिस्र उपसदः । अग्निचयने तु षडुपसदः । तत्र किं तिसृणां दण्डकलितवदावृत्तिः, एकदा क्रमेण तिस्रः, पुनस्ता एव क्रमेण तिस्र इति उत स्वस्थानविवृद्धिः, प्रथमा द्विवारं मध्यमा द्विवारं तृतीया च द्विवारं इति । इति विचारे दण्डकलितवत् आवृत्तिः इति पूर्वपक्षे उत्सूत्रे प्राप्ते, **सिद्धान्तमाह्** । तुशब्दः पक्षव्यावृत्तिमाह । उपसदः स्वस्थानात् स्वस्वस्थानात् विवर्धेरन् विवर्धितुमर्हन्ति । कृतानुपूर्व्यत्वात् प्रकृतौ कृतं क्लृप्तं आनुपूर्व्यं क्रमो यासां तादृशत्वात् चयनेऽपि स्वस्थानविवृद्ध्या अनुष्ठाने एव तदनुसरणसंभवात् । दण्डकलितवदावृत्तौ तु क्लृप्तं आनुपूर्व्यं बाध्येत तृतीयाया अनन्तरं प्रथमायाः करणप्रसङ्गात् । के.

* **स्वस्थानविवृद्धिः** प्रपाठकाध्ययनवत् । एकं भागमनेकवारमावर्त्य, द्वितीयो भागोऽनेकवारमावर्तनीयः, एवं तृतीयो भागः इति । वि. ५।३।२, १०।५।२५. * **स्वस्थानविवृद्ध्या** अभ्यासो गवामयने त्र्यनीकायाः । १०।५।२५।८३–८७. मीको. पृ. १९७९ ‘त्र्यनीकाधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * स्वस्थानविवृद्ध्या उपसत्संख्यासंपत्तिः न तु दण्डकलितवत् । भा. ५।३।२।३. * स्वस्थानविवृद्ध्या प्रयोगो द्वादशाहे दीक्षाणामुपसदां च । टुप्. ११।४।५।१८.

‘ **स्वशिश्नमपि चुम्बन्तमिक्षुदण्डमयाचत** ’ इति न्यायः । तादृशात् मूर्खात् इक्षुदण्डप्राप्तिः स्वाभिलषितप्राप्तिरित्यर्थः , न स्यादेवेति । **न्यासं.**

* **स्वतन्त्रे** महाव्रते तार्प्यादिभिरहतवाससः समुच्चयः । १०।४।७।१३–१५. **मीको.** पृ. ३१३२ ‘ महाव्रते तार्प्यादिभिः ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्वतन्त्रार्थवादकल्प्यः** प्रतिषेधो द्विविधः– दोषार्थवादकल्प्यः सिद्धवत्कीर्तनार्थवादकल्प्यश्चेति । बाल. पृ. ३०, * स्वतन्त्रार्थवादकल्प्यः विधिः (प्रमाणं) त्रिविधः–फलार्थवादकल्प्यः, सिद्धवत्कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च । पृ. १२.

* **स्वतन्त्रकामनायामेव** पशूद्देशेन विहितं पशुप्रयोज्यं गोदोहनं कर्तव्यम् । भाट्ट. ४।१।२ वर्णकं ३.

* **स्वतन्त्रपर्युदासविधिर्यथा**– ‘ नेक्षेतोद्यन्तमादित्यम् ’ इति । **बाल.** पृ. २०.

* **स्वधितिः** छेदनहेतुः शस्त्रं ( छूरी ) । **वि.** ९।४।२. * **स्वधितिः** स्रुवधर्मैः स्रुवधर्मा भवति । **भा.** ६।३।१०।२६. * ‘ **स्वधितिनाऽवद्यति** ’ । शक्त्यनुसारेण स्वधितिर्मांसावदाने उपयुज्यते । **वि.** १।४।२०. * ‘ **स्वरुणा स्वधितिना** वा पशुं समनक्ति ’ । **भा.** ११।३।५।८.

* **स्वप्नः** बाह्यविषयः । तथाहि, स्वप्ने दिवसानुभूतदेशकालान्तरगताः शिरश्छेदादयो विषयाः अदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणा निद्रारूपदोषवशेन आत्मनिष्ठतया भासन्ते । एवं चान्यसंबन्धित्वेन अवगतानां अन्यसंबन्धित्वेन भानं शुक्तिरजतज्ञानवत् । न च बाह्यविषयेषु मनसः तदानीं असंबन्धात् कथं भानमिति वाच्यम् । ज्ञानलक्षणायाः प्रत्यासत्तेरङ्गीकारात्, प्रमुष्टतत्ताकस्मरणाङ्गीकाराद्वा न दोषः । अतः स्वप्नज्ञानानां बाह्यविषयत्वं सिद्धम् । **मणि.** पृ. २६.

※ **स्वप्ने नृप इति न्यायः** । अयं ‘ यथा स्वप्ने नृपो भूत्वा भुक्त्वा भोगान् यथेप्सितान् । चतुरङ्गबलोपेतः शत्रून् जित्वा रणाङ्गणे ॥ परात्पराजितो भूत्वा वनं प्राप्य तपश्चरन् । मुहूर्तमात्रमात्मानं मन्यते कल्पजीवितम् ॥ तथैव जाग्रत्कालेऽपि मनोराज्यं करोत्यसौ । कालनद्योघवेगेन क्षीणमायुर्न पश्यति ॥ ’ इति । **साहस्री.** ९०७.

* **स्वप्नार्थो** मन्त्रः ‘ त्वमग्ने व्रतपा असि ’ इति । कृत्स्नं रात्रिमुद्दिश्य असौ मन्त्रं प्रयुङ्क्ते । यदा प्रतिबुद्धः पुनः स्वपिति तदा मन्त्रस्य नावृत्तिः, ज्योतिष्टोमे । **भा.** ११।४।१७।५०.

* **स्वप्नादावपि** हि चिन्ताऽदृष्टादिसंभवात् । स्वप्नेऽपि हि सुखदुःखमनुभूयते । सुखदुःखहेतुश्चादृष्टम् । अतः अदृष्टहेतुकमेव स्वप्नादिज्ञानम्, किंचित् चिन्तादिहेतुकं इति उपपन्नं शुक्तिकादिज्ञानतुल्यत्वं स्वप्नादिज्ञानस्य । **बृहती.** पृ. ५५.

* **स्वप्नादिज्ञानं** तावत् मिथ्येति सिद्धम् । तच्च यदि बाह्यालम्बनमेव, ततो मिथ्याभाव एव न घटते । जाग्रतः सम्यक्प्रत्ययवत् । न चार्थत्वे सत्यपि मिथ्यात्वे कारणं अन्यत् कल्पयितुं युक्तम् । तस्मात् अर्थशून्यतैव मिथ्यात्वम् ( इति बौद्धाः ) । **ऋजु.** पृ. ५४.

* **स्वप्नादिज्ञानोत्पादनद्वारेण** अदृष्टमेव सुखदुःखं जनयत् स्वप्नज्ञानहेतुः । **ऋजु.** पृ. ५५.

* **स्वप्नारम्भप्रभृति** स्वप्नावसानपर्यन्तं जायमानप्रत्यये करणं सनिद्रं मनः इति करणदोषरूपा निद्रा मिथ्यात्वस्य हेतुः । **वैद्यनाथः.** पृ. ३०.

* **स्वप्नकारणम्** । चिन्ता च न तदानींतनी एव स्वप्नकारणम्, किंतु कियत्यपि पुरस्तात्काले निर्वृत्ताऽपि संस्कारमुखेन । तेन जाग्रद्दशाभाविनी चिन्ताऽपि स्वप्नस्य हेतुः, अदृष्टं च । **ऋजु.** पृ. ५५.

* **स्वप्नकृतगङ्गास्नानादीनां** मिथ्यात्वेऽपि श्रेयःसाधनतया धर्मत्वम् । **मणि.** पृ. ९.

* **स्वप्नज्ञानं** तावत् प्रत्युत्पन्नकारणाभावात् अनन्तरदिवसानुभूतस्य च स्वप्ने वर्तमानवदाभासात् संस्कारमात्रजं स्मरणमेव । ततश्च यद्यपि अस्मिन् जन्मनि अननुभूतं स्वप्नेऽनुभूयते तस्यापि अन्यथाऽनुपपत्त्या जन्मान्तरे अनुभवकल्पनात् सिद्धमस्तित्वम् । **रत्नाकरः.** पृ. ३२७.

※ **स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् । ११।४।१७।५३॥**

ज्योतिष्टोमे स्वप्नस्य निद्रायाः प्रतिमन्त्रणे ‘ त्वमग्ने व्रतपा असि० ’ इति मन्त्रः, नदीतरणे ‘ देवीरापः० ’ इति, अभिवर्षणे ‘ उन्दतीरोजो धत्त ’ इति, अमेध्यदर्शने ‘ अबद्धं चक्षुः ’ इति । यदा तु एकस्यां रात्रौ प्रतिबुद्धः पुनः स्वपिति, अनेकस्रोतसं नदीं तरति, संतानेन अभिवृष्यते, अनेकममेध्यं एककालं पश्यति वा तदा मन्त्रस्य प्रत्येकमावृत्तिः आदौ सकृद्वा प्रयोगः इति विचारे सिद्धान्तमाह । स्वप्नस्य नदीतरणस्य अभिवर्षणस्य अमेध्यस्य च प्रतिमन्त्रणेषु च एवं कण्डूयनवत् मन्त्रस्य सकृत् प्रयोगः । **के.**

* **स्वप्नप्रत्ययः** । अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः । सनिद्रस्य मनसो दौर्बल्यात्



निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ, स्वप्नान्ते च सुषुप्तस्याभाव एव । प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति । स्वप्नेऽपि सुपरिनिश्चिताऽऽसीत् ( बुद्धिः ) प्राक् प्रबोधात् स्वप्ने विपर्ययदर्शनात् । **भा.**वृत्तिग्रन्थे १।१।५।५ पृ. २९–३०.

※ **स्वप्नव्याघ्रन्यायः** । यथा– स्वप्ने दृष्टो व्याघ्रः स्वप्ने विलाप्य तत्र वर्तमानेन बाध्यरूपेण स्वयमपि विलीयते, एवं प्रकृतेऽपि । **साहस्री.** २७२.

* **स्वप्नसुखं** अनिरूपितनिमित्तम् । **रत्नाकरः.** पृ. २२०.

※ **स्वभावो दुरतिक्रमः इति न्यायः** । स्पष्टः । **साहस्री.** २७३.

※ **स्वभावो मूर्ध्नि वर्तते इति न्यायः** । स्पष्टः । **साहस्री.** ७४१.

* **स्वभावसिद्धः** कर्मणां फलं प्रति गुणभावः । **भा.** ७।४।१।१.

※ **स्वभावसिद्धन्यायः** । अयम् ‘ स्थानेऽन्तरतमः ’ ( पा. १।१।५० ) इतिसूत्रमहाभाष्ये ध्वनितः– “ तद्यथा– ‘ समाजेषु समासेषु समावायेषु चास्यताम् ’ इत्युक्ते, नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः, येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते । तथा– गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते । तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु, अचेतनेष्वपि । तद्यथा– लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति, पृथ्वीविकारः पृथिवीमेव गच्छत्यान्तर्यतः । तथा– या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः, स धूमः आकाशे निवाते नैव तिर्यग्गच्छति, नावागवरोहति, अब्विकारोऽप एव गच्छत्यान्तर्यतः । तथा ज्योतिषो विकारोऽर्चिः आकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति, नावागवरोहति, ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः ” इति, तथा प्रकृतेऽपि । उक्तं चान्यत्रापि– ‘ घृष्टंघृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं, छिन्नंछिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धंदग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं, न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ’ इति । **साहस्री.** ४४१.

※ **स्वयमशक्तः कथं परान् साधयिष्यतीति न्यायः** । यथा– चाक्षुषदर्शनाभावमितस्य राहोः केतोर्वा शुभाशुभफलदातृत्वसामर्थ्यं नास्तीति केषांचित् ज्योतिर्विदां मतम् । **साहस्री.** ३५४.

* **स्वयमातृण्णोपधाने** वरदानमध्वर्योः कर्म अग्निचयने । **वि.** ३।८।२.

※ **स्वयं तीर्णः परांस्तारयतीति न्यायः** । यथा जलतरणविद्याकुशलः स्वयं तीर्णः परानपि तारयितुं शक्नोतीति, तथा सुगुरुः शिक्षानुशिष्टः स्वशिष्यान् शिक्षयतीति भावः । **साहस्री.** ५४४.

* **स्वयं** यष्टुर्यजमानस्य भक्षास्तित्वं ज्योतिष्टोमे ऋतुयाजेषु । **भाट्ट.** ३।५।१४.

※ **स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् । १०।६।२।३॥**

‘ रथंतरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेत’ इति श्रूयते । रथंतरे साम्नि आरभ्यमाणे नेत्रसंमीलनं उद्गात्रा कार्यम् । ‘ अभि त्वा शूर नोनुमः ’ इति रथंतरस्य योनिभूता ऋक् । तस्या उत्तरार्धे ‘ ईशानमस्य जगतः स्वर्दृशं ’ इति स्वर्दृशं प्रति स्वर्दृक्शब्दोच्चारणकाले वीक्षेत नेत्रोन्मीलनं कृत्वा द्रष्टव्यं इत्युक्तम् । तथा च इदं स्वर्दृशं प्रति वीक्षणं उच्यमानं कालमात्रं स्यात् स्वर्दृक्शब्दोच्चारणकाले वीक्षणं कर्तव्यं इति कालार्थः संयोगः । साम्नः परार्थत्वात् देवतास्तुत्यर्थत्वात् । तस्मात् कालार्थः संयोग इति सिद्धान्तः । उत्तरयोर्ऋचोरपि आदित आरभ्य संमीलनम्, स्वर्दृक्शब्दो यावति भागे योनौ, उत्तरयोरपि तावति भागे वीक्षणं इति ज्ञेयम् । **के.**

* ‘ स्वर्दृशं प्रति वीक्षेत ’ । अत्र ब्रूमः । प्रतिशब्दः कर्मप्रवचनीयत्वात् स्वर्दृक्शब्दस्य ( वीक्षणं प्रति ) लक्षणतामाचष्टे श्रुत्यैव । तत्र इह लक्ष्यलक्षणसंबन्धः

( वीक्षण-स्वर्दृक्शब्दयोः ) प्रयोजनप्रयुक्तः इति गृह्यते एव संबन्धविशेषः । भा. १०।६।२।३ पृ. १९८७,

* ' स्वर्दृशं प्रति वीक्षेत ' इति स्वर्दृक्शब्द-वीक्षणयोः संयोगः कालार्थः । स्वर्दृक्शब्दोच्चारण-काले उद्गात्रा चक्षुरुन्मीलयेत्, यत् प्रस्तावकाले संमीलितम् । १०।६।२।३.

* स्वर्दृक्-शब्देन वीक्षणस्य कालार्थता । वि. १०।६।२.

* स्वर्दृक्शब्दोच्चारणस्य मीलनकालावधिताद्योत-कत्वम् । भाट्ट. १०।६।२.

* ' स्वर्लोके तैजसप्राया देहाः शुद्धप्रभान्विताः । आप्यायन्ते विकीर्णेन भानवीयेन तेजसा ॥ ' वा. ३।१।७।१३ पृ. ७०२.

* स्वरः । अवभृथादिसाम्नां अनुबन्ध्यादिसाम्नां च स्वरूपतः प्राप्तो यथावेदमेव स्वरो युक्तः । सु. पृ. ११८३. * स्वरः । आधानसाम्नां याजुर्वैदिकप्रधान-विधिविहितत्वात् उपांशुत्वम् । वा. ३।३।२।९ पृ. ८१३. * स्वरः उपांशु उपसत्सु, स चोपसदपूर्वप्रयुक्तो न ज्योतिष्टोमपरमापूर्वप्रयुक्तः । भा. ९।१।१।२।३ वर्णकं २, * स्वरः ऋग्वेदस्य उच्चैः, यजुर्वेदस्य उपांशुः, साम-वेदस्य उच्चैः । ३।३।१।१. * स्वरः । ऋग्वेदसाम-वेदाभ्यां यत् किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् सर्वमुच्चैः कर्तव्यम् । एवं याजुर्वैदिकमपि उपांशुत्व-मुदाहर्तव्यम् । वा. ३।३।२।९ पृ. ८१३, * स्वरः । क्व पुनरिदानीं नानावेदस्वरस्यावकाशः ? उच्यते । यत्प्राकृतस्वराङ्गयुक्तायां विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यत इति । या विकृतिर्यस्मिन् वेदे भवति तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु यत्तस्मिन्नेव वेदेऽङ्गान्तरम-पूर्वं चोद्यते स विषय इति । प्रधानं विषयः । ३।३।२।९ पृ. ८१३. * स्वरः जपादिमन्त्रेषु मन्त्रसमाम्नायसिद्धो ग्राह्यः । १२।३।८।२०-२२. मीको. पृ. ३०५७ ' भाषास्वराधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्वरः ज्योतिष्टोमे उपांशुः, याजुर्वैदिकत्वात् । 'ज्योति-ष्टोमेन स्वर्गकामो यजेत ' इतिवाक्यस्य यजुःसामवेदयो-राम्नातत्वेऽपि सोमद्रव्यस्य, वाय्वादिदेवतानाम्, अङ्ग-बाहुल्यस्य च यजुर्वेदे श्रवणात् सामवेदे गुणविधा-नायानुवादात् । वि. ३।३।३, * स्वरः ज्योतिष्टोमे दीक्षणीयायां अवान्तरापूर्वप्रयुक्त एव न परमापूर्व-प्रयुक्तः । ९।१।१।२ वर्णकं २, * स्वरः ज्योतिष्टोमे दीक्ष-णीयादौ अग्नीषोमीयात् प्राक् उपांशुः । स चाङ्गविषयः, न प्रधानविषयः । ९।१।६, * स्वरः । ज्योतिष्टोमे यजु-र्वेदोत्पन्ना ऋचोऽपि उपांश्वेव पठनीयाः । ' उपांशु यजुषा ' । यजुषा यजुर्वेदेनेत्यर्थः । ३।३।१, * स्वरः ज्योतिष्टोमे 'यावत्या वाचा कामयेत तावत्या दीक्षणीयाया-मनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु, उच्चैरग्नीषोमीये ' इति । ९।१।१।२ वर्णकं २. * स्वरः । ज्योतिष्टोमे वाचनिकसवनविभागविहितमन्द्र-मध्यमोत्तमोच्चारणावधारणम्, दीक्षणीयादिप्रधानमात्रे तु ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनु-ब्रूयात्, मन्द्रं प्रयणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु ' इति । अग्नीषोमीये तु सवनविभाग-स्वरेणैव ' मन्द्रयाऽऽज्यभागान्तं ' इत्यादिप्राकृतस्वर-प्रतिप्रसवः । सवनविभागतुल्यं वा । वा. ३।३।२।९ पृ. ८१२, * स्वरः । दर्विहोमेषु सर्वेषु ' उपांशु यजुषा ' इत्यर्थवत् । ३।३।२।९, * स्वरः । दर्शपूर्णमासयोः ' मन्द्रया आज्यभागान्तं परं मध्यमया उत्तमया अनु-याजादि ' इति । ३।३।२।९ पृ. ८११. * स्वरः । दीक्षणीयादिपरिशामसु ' प्राचीनमग्नीषोमीयात् ' इत्यने-नोपांशुत्वम् । ३।३।२।९. * स्वरः मन्द्रः प्रायणीयायां स च प्रायणीयापूर्वप्रयुक्तो न परमापूर्वप्रयुक्तः । भा. ९।१।१।२।३ वर्णकं २. * स्वरः-' मन्द्रं प्रातःसवने चरन्ति ' इत्यादिसप्तम्या सवनानां आधारत्वप्रतीतेः, कर्ममध्ये अनुष्ठानादेव च कर्मणामाधारत्वप्रतीतेः, कर्मकाले च अनुष्ठानं विना अनुष्ठानस्य कर्ममध्यत्वा-सिद्धेः, सवनकाले यत् प्रयुज्यते तत्र सर्वत्र मन्द्रादि-विध्यवगमात् सवनीयादिष्वपि यथासवनमेव स्वरा भवन्ति । सु. पृ. ११८०. * स्वरः मन्द्रतरः आति-थ्यायां स चातिथ्यापूर्वप्रयुक्तो न ज्योतिष्टोमपरमा-



पूर्वप्रयुक्तः । भा. ९।१।१।२।३ वर्णकं २, * स्वरः ' यावत्या वाचा कामयीत ' इत्यादिना विहितः अङ्गा-पूर्वप्रयुक्त एव न परमापूर्वप्रयुक्तः । ९।१।२।३ वर्णकं २. * स्वरः । येषां प्राकृतानामङ्गानां प्राकृतः स्वरः, तद्वत्यां विकृतौ चोदकेन प्रयोगवचनबाधात्, प्रयोग-वचनं च विना प्रधानधर्माप्राप्तेः अपूर्वे अङ्गे स्ववेद-स्वरोपपत्तिः । सु. पृ. ११८१. * स्वरः लोके नास्ति । ' न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः । ' वा. १।३।८।२४ पृ. २६७. * स्वरः वाङ्नियमः । ' उच्चैः प्रवर्ग्येण ' इति करणविभक्ति-निर्देशात् साङ्गस्योच्चैष्ट्वम् । टुप्. ९।१।६।२५. * स्वरः वाङ्नियमः । ' यावत्या वाचा कामयेत ' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु, तस्मादुपांशुत्व-मङ्गेषु, प्रधानेषु ' यावत्या वाचा ' । टुप्. ९।१।६।२५ । ( यावत्या वाचा इति- ) स धर्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात् । उपांशुत्वं प्रधानवर्जितेषु अङ्गेषु निवेक्ष्यते । भा. ९।१।६।२५. * स्वरः । विकृतिषु अहीनादिषु नानावेदस्वरस्य अपूर्व-मङ्गं विषयः । सु. पृ. ११८१, * स्वरः वैदिकेषु पदेषु नियतः, लौकिकेषु अनियतः । पृ. ३३३, * स्वरः । सर्वेषु एकाहाहीनसत्रेषु ज्योतिष्टोमिकस्वर-न्यायः । पृ. ११८०-८१, * स्वरः सवनान्तरगते सवनीयादौ स्तोत्रादौ च यथासवनम् । पृ. ११८०. * स्वरः । सुत्योत्तरकालानि यान्यङ्गानि तेषु सवन-ग्रहणाभावात् यथावेदमेव स्वरः इति अवभृथसामा-दीनामपि उच्चैस्त्वसिद्धिः । वा ३।३।२।९. * ' स्वराः विंशतिरेकश्च ' शिक्षावाक्यम् । संकर्ष. ४।१।४. * स्वरस्य, अग्नीषोमीयात् कौण्डपायिनामयनगता-त्प्राचीने दीक्षणीयादौ उपांशुत्वमेव । वि. ९।१।६. * स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वम् । भा. ९।१।२।३ वर्णकं २. * स्वरस्य भाषिकस्य नियमः क्रतौ ब्राह्मणो-त्पन्नमन्त्रेषु । १२।३।९।२३-२४. मीको. पृ. १४९७ ' क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* स्वराभावात् नैतत्सम्यङ्निबन्धनम् ( कल्प-सूत्राणि ) । भा. १।३।६।१२.

* स्वरोच्चारणे दोषाः । ' ग्रस्तं निरस्तं निहताव-लम्बिते अम्बूकृतं ध्मातमथो विकम्पितम् । संदष्टमेणी-कृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः ॥ ' इति स्मृत्यवगतग्रस्तत्वादिदोषवर्जित-नियतह्रस्वादिकालामि-व्यङ्ग्ययथालक्षितक्रमग्राह्येषु वर्णेषु अभियुक्तानां साधु-शब्दप्रयोगात्, तद्विपरीतेषु च असाधुशब्दप्रयोगात् अवश्यं तदालम्बनं किंचित् व्यवस्थितं वक्तव्यम् । सु. पृ. ३०६ । ( ' ग्रस्तं ' इत्यादेरर्थस्तु-- ग्रस्तं जिह्वामूले निगृहीतम् । निरस्तं निष्ठुरम् । निहतं रूक्षम् । निर्हतं इति महाभाष्ये कैयटे च पाठः । अवलम्बितं वर्णान्तर-संमिश्रम् । अम्बूकृतं यो व्यक्तोऽपि अन्तर्मुख इव श्रूयते । ध्मातं श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । विकम्पितं कम्पयुक्तम् । संदष्टं वर्धितमिव । एणीकृतं अविशिष्टं किमयं ओकारः अथ औकार इति यत्र संदेहः । अर्धकं दीर्घमपि ह्रस्वमिव । द्रुतं झटिति उच्चारितम् । विकीर्णं वर्णान्तरे प्रसृतम् । एकोऽपि अनेकनिर्भासि इत्यपरे । इदं कैयटोक्तम् ॥ अत्र केषां-चित् स्पष्टतार्थं अन्यथा व्याख्यायते । ग्रस्तं यदक्षरं निगीर्णमिव भाति । निरस्तं यत् मुखाद्बहिः पतित-मिव भाति । निहतं बाधितम् । अम्बूकृतं सनिष्ठीवं इत्यमरः । संदष्टं दन्तैः कुट्टितमिव । के. ) । अन्येऽपि केचिद्दोषा महाभाष्ये उक्ताः । यथा संवृतः कलः प्रगीतः उपगीतः क्ष्विण्णः रोमशः इति । तत्र एकारादीनां संवृतत्वं दोषः । कलः स्थानान्तरनिष्पन्नः, काकलीत्वेन ( गानशास्त्रे ) प्रसिद्धः ( यथा चतुर्थश्रुतिस्थः सन्नपि षड्जः तृतीयश्रुतिस्थत्वेन गीयमानः ) । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्यनुरक्तः । क्ष्विण्णः कम्पमान इव । रोमशः गंभीरः । इति कैयटः । इमौ भाष्यकैयटौ पस्पशास्थौ ॥ पुनरत्र सुधाग्रस्तं अविभक्तिकोच्चारणम् । निरस्तं विश्लेषितसंयोगम् । अम्बूकृतं सनिष्ठीवम् । संवृतकलप्रगीतोपगीतक्ष्विण्णरोम-शादीनां आदिशब्देन ( वार्तिकस्थेन ) उपादानं इति । सु. पृ. ३१४.

* **स्वरचर्चा** । ' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' । वि. ३।३।१ । उत्पादकवेदस्वरात् विनियोजकवेदस्वरः प्रबलः । ३।३।२ । उपांशुत्वं काम्येष्टिषु प्रधाने एव, अङ्गेषु तु तत्तद्वेदानुसारेण ध्वनिः । ३।८।२० । ऋचोऽपि यजुर्वेदगता उपांशु पठनीयाः । ३।३।१. * **स्वरचर्चा** । **वा**— पृ. ८११–८१३ । ननु याजुर्वेदिकज्योतिष्टोमाद्यङ्गानां स्तोत्रशस्त्रादीनामपि अनेनैव न्यायेन उपांशुत्वं प्राप्नोति । सत्यं प्राप्नोति, वचनात्तु सर्वत्र स्वरान्तरलाभः । कथम् ? दर्शपूर्णमासयोस्तावत् वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्मः उपांशुत्वं प्राप्नोति, ततो वाचनिकः स्वरो भवति ' मन्द्रया आज्यभागान्तं ', ' परं मध्यमया ', ' उत्तमया अनुयाजादि ' इति । तथा विकृतीनां इष्टिपशुबन्धादीनां एतस्मिन्नेव प्राकृते स्वरत्रये प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ ' तद्ग्रहणाद्वा स्वधर्मः स्यात् ' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षित्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेवेष्टम् । एवं ज्योतिष्टोमाङ्गानामपि दीक्षणीयादीनां प्राकृते स्वरे प्राप्ते प्रत्यक्षोपदेशवशेन बाध्यमाने चोदकबलीयस्त्वेन पुनरुपस्थिते ज्योतिष्टोमस्य याजुर्वेदिकत्वात् क्लृप्तोपकारप्राकृतधर्माग्रहणाच्च गुणमुख्यव्यतिक्रमन्यायेनैव तद्गतोपांशुत्वधर्मप्रसङ्गे सति ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् ' इत्येते स्वरा गुणमुख्यव्यतिक्रमन्यायबाधेनैव साङ्गानां प्राप्ताः । ततः ज्योतिष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणावधारणात् तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमोच्चारणान्येव प्रधानद्वारेण प्राप्तानि । ततो ' यत्किंचित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ति ' इत्युपांशुत्वे साङ्गानां दीक्षणीयादीनां प्राप्ते प्रधानमात्रवाचिदीक्षणीयादिशब्दोद्देशेन विहिताः प्रधानमात्रेषु एते स्वरविशेषा भवन्ति ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु ' इति । तत्र उपांशुत्वस्य पूर्वेणैव सर्वव्यापिना उपांशुत्वविधिना प्राप्तत्वात् दीक्षणीयादिस्वरप्रशंसार्थः नित्यानुवाद एव । अग्नीषोमीये तु सवनविभागस्वरेणैव ' मन्द्रया आज्यभागान्तम् ' इत्यादिप्राकृतस्वरप्रतिप्रसवः । सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणसंपादनं कार्यम् । एतेन अनूबन्ध्या–अवभृथ–उदयनीया–उदवसानीयास्वपि उच्चारणविशेषा व्याख्याताः । सुत्याकालसवनीयादीनामपि एवं स्वरे प्राप्ते प्रातःसवनाद्यन्तर्गतत्वात् यथासवनमेव स्वरा भवन्ति । ननु सवनशब्दानां सोमयागावयववचनत्वात् दीक्षणीयाद्यङ्गवत् तदीयस्वराभावप्रसङ्ग इति चेत्, न, सप्तमीनिर्देशेन तत्कालप्रयुज्यमानत्वमात्राश्रयणात् । **' यदि षष्ठी भवेदत्र सवनेभ्यः परा ततः । तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत् ॥ सप्तम्यां तु तदाधारो यावान्मन्त्रः प्रयुज्यते । तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः ॥ केचिदाहुर्यदाधारमात्रत्वं सवनेष्विह । तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः ॥ आधारे सवने भिन्नं यदाधेयतया श्रुतम् । सवनीयादि तस्यैव मन्द्राद्युच्चारणं भवेत् ॥ स्तोत्रशस्त्रानुवाक्यादिशेषस्तु सवनस्य यः । षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः ॥ इत्युक्ते नैष दोषोऽस्ति यतः षष्ठ्या विनाऽप्ययम् । षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः ॥ यथा हि शकुनिर्वृक्षे पुष्पाद्यपि तथेष्यते । ततश्चाधेयधर्मोऽर्थः स द्वयेऽपि विधीयते ॥ यदि वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याङ्गमेव नः । आधार एव तस्यापि सवनानीतराङ्गवत् ॥ नानावेदस्वरस्तस्मात् स्तोत्रादेः प्राप्त आदितः । प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः ॥ ततो वाचनिकेनैव यथासवनभाविना । मन्द्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्ज्महे ॥ '** एतेन सर्वे ज्योतिष्टोमविकाराः ( एकाहाहीनसत्राणि ) व्याख्याताः ।



क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति ? उच्यते । ' तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यादव्यक्तः शेषे ' इतिवत् कल्पनीयः । यत् प्राकृतस्वराङ्गयुक्तायां विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यते इति । ननु तत्रापि गुणमुख्यव्यतिक्रमन्यायेन प्रधानधर्मभाव एव । ( पक्षान्तरं शङ्कते– ) एवं तर्हि या विकृतिः यस्मिन् वेदे भवति तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु यत् तस्मिन्नेव वेदे अङ्गान्तरमपूर्वं चोद्यते स विषय इति । ( शङ्कते– ) सोऽपि प्रधानद्वारेणैव लब्धत्वात् । ( पक्षान्तरं शङ्कते– ) तदेव तर्हि प्रधानं विषय इति, न, तस्यापि प्राकृतावरुद्धत्वात् ।

न तर्हि प्रधानद्वारेण अपूर्वस्याङ्गस्य प्राप्तिः इति तदेव विषय इति । नैवमपि यः प्रधानस्य धर्मः तस्यैव तत्रापि भावात् ।

अपि च त्रेधा विभक्तेषु यज्ञभागधर्मे च स्वरे स्थिते यदपूर्वमपि तद्भागपाति भवति तस्य न यूपावटस्तरणबर्हिस्तुल्यत्वं इति भवितव्यमेव प्राकृतेन धर्मेण । तस्मादपि नास्ति विषयः । प्रकरणाम्नानं च अत्यन्तमेवानर्थकं स्यात् । ( शङ्काद्वयमपि परिहरति– ) अत्र समाधिः । ' उपांशु यजुषा ' इति तावत् सर्वदर्विहोमेषु अर्थवत् । ऋक्सामवेदयोरपि काम्यनैमित्तिकेष्वङ्गेषु अर्थवत्ता । ' मन्द्रं प्रातःसवने ' इत्यादि हि नित्यत्वात् अनित्यैः काम्यनैमित्तिकैः असंबध्यमानं नित्याङ्गविषयमेव भवति । तेन यत् ऋग्वेदसामवेदाभ्यां किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् सर्वं उच्चैः कर्तव्यम् । तथा ' तं भिन्नमभिमृशेत् यद्दते चिदभिश्रिषः ' इत्यादि । एवं याजुर्वेदिकमपि उपांशुत्वमुदाहर्तव्यम् । तथा यानि सुत्योत्तरकालानि अङ्गानि तेषु सवनग्रहणाभावात् यथावेदमेव स्वर इति अवभृथसामादीनामपि उच्चैस्त्वसिद्धिः । अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयादिपरिसामसु तु ' प्राचीनमग्नीषोमीयात् ' इत्यनेन उपांशुत्वम् । प्रवर्ग्यसाम्नां पुनः ' उच्चैः प्रवर्ग्येण ' इत्येवं उच्चैस्त्वम् । आधानसाम्नां तु याजुर्वेदिकप्रधानविधिविहितत्वादेव उपांशुत्वम् । ' य एवं विद्वान् वामदेव्यं गायति ' इत्यादीनि यजुर्वेदवाक्यान्येव । **वा.** ३।३।२।९ पृ. ८११–८१३.

* **स्वरनियमः** ' यावत्या वाचा कामयीत तावत्या वाचा दीक्षणीयायां० ' इति, न ज्योतिष्टोमापूर्वार्थः किंतु दीक्षणीयापूर्वार्थ एव । **बाल.** पृ. १४२.

* **स्वरविशेषेण** उदात्तादिना बहुव्रीहि– तत्पुरुषसमासादिनिश्चये अर्थविशेषोऽवबोद्धुं शक्यते । **वि.** ९।२।८ वर्णक ३.

* **स्वरशब्दस्य** ' मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ' ( पाणिनीयशिक्षा श्लो. ७ ) इत्यादिदर्शनात् वायवीयसंयोगविभागजनितनादाख्यध्वन्यपरपर्यायघोषात्मकशब्दपरत्वं अवगम्यते । **सु.** पृ. ८६२.

* **स्वरसंस्कारौ** समर्थौ प्रादेशिकेन गुणेन अन्वितौ भवतः ( स्यातां इति यास्के मूलपाठः ) । **भा.** १०।४। १७।३४.

* **स्वरसामा** प्रथमः आग्रयणाग्रः, द्वितीयः ऐन्द्रवायवाग्रः, तृतीयः शुक्राग्रः । **टुप्.** १०।५।२५।८५.

* **स्वरसामानः** त्रयः दिवाकीर्त्यमभितः गवामयने, अष्टरात्रे पृष्ठ्यः षडहः द्वौ स्वरसामानौ । तौ च द्वौ तेषां त्रयाणां धर्माणां ग्राहकौ । **भा.** ७।३।१०।२६.

**स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । ७।३।१०।२७॥**

स्वरसामा च एककपालश्च आमिक्षा च तेषां समाहारः स्वरसामैककपालामिक्षम् । एते शब्दाः धर्मातिदेशकाः । गवामयने ' अभितो दिवाकीर्त्यमहः त्रयः स्वरसामानो भवन्ति ' इति । संवत्सरसत्रस्य मध्यमं अहः विषुवान् नाम । तच्च दिवाकीर्त्यम् । तन्मन्त्राणां दिवैव पठनीयत्वात् । तस्य दिवाकीर्त्यस्य अह्नः अभितः पुरस्तादुपरिष्टाच्च त्रयस्त्रयः स्वरसामानो नाम सोमयागविशेषा भवन्ति इति । तेषां ' सप्तदशा भवन्ति ' इत्यादयो धर्मा विहिताः । सप्तदशत्वं सप्तदशस्तोमकत्वम् । अन्यत्र च ' पृष्ठ्यः षडहः द्वौ स्वरसामानौ ' इति अष्टरात्रे श्रुतम् । तस्य च वाक्यशेषे ' यत् तृतीयं सप्तदशहमहः तत् त्रयस्त्रिंशस्य

स्थानमभिपर्याहरन्ति, स उत्तराणां स्तोमानां अव्यवायाय, त्रयाणां च सप्तदशानां अनूचीनतायै ' इति श्रुतम् । अस्यार्थः कुतूहले-- पृष्ठ्ये षडहे त्रिवृत्-पञ्चदश-सप्तदश-एकविंश-त्रिणव- त्रयस्त्रिंशस्तोमकानि क्रमेण षट् अहानि भवन्ति । अष्टरात्रे च यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशादूर्ध्वं उत्कष्टव्यम् । तथा सति षट्षट्संख्योत्तराणां त्रयाणां स्तोमानां त्रिवृत्-(९) पञ्चदश- एकविंशानां अव्यवायो भवति । तथा सप्तदशस्य त्रयस्त्रिंशादूर्ध्वं उत्कर्षे इदमेकं सप्तदशम्, स्वरसामानौ च द्वौ सप्तदशावेव इति त्रयाणां सप्तदशानां नैरन्तर्यं च भवति इति ।

अयं अष्टरात्रगतः स्वरसामशब्दः गवामयनगतस्वरसामधर्माणां अतिदेशकः ग्राहकः स्यात् । उक्तवाक्यशेषे लिङ्गस्य दर्शनात् । अष्टरात्रगतयोः स्वरसाम्नोः सप्तदशत्वे एव त्रयाणां सप्तदशानां अनूचीनता नैरन्तर्यं भवति नान्यथेति । एतस्मात् लिङ्गदर्शनात् स्वरसामशब्दः धर्मग्राहकः । तथा वैश्वदेवपर्वणि ' द्यावापृथिव्य एककपालः ' श्रुतः । तस्य धर्माश्च ' सर्वहुतं जुहोति ', ' अपर्यावर्तयन् जुहोति ' इति । आग्रयणे च द्यावापृथिव्यैककपालं विधाय ' यत् सर्वहुतं करोति सा त्वेका परिचक्षा (दोषः), हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत ' इति आज्यविधिपरे वाक्ये सर्वहोमं अपर्यावृत्तिं च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति । एतस्मात् लिङ्गदर्शनात् आग्रयणगत एककपालशब्दः वैश्वदेवपर्वगतैककपालधर्माणां ग्राहकः ।

तथा वैश्वदेवपर्वणि वैश्वदेवी आमिक्षा । तत्र वाजिनप्रचारो भवति । क्वचिच्च मैत्रावरुणी आमिक्षा । तत्र च ' न वाजिनेन प्रचरन्ति ' इति वाजिनप्रचारो निषिद्धः । एतस्मात् लिङ्गदर्शनात् मैत्रावरुण्यामिक्षाशब्दः वैश्वदेव्यामिक्षाधर्मग्राहकः इति ज्ञायते । एवं स्वरसामशब्दः एककपालशब्दः आमिक्षाशब्दश्च धर्मग्राहकाः इति **सिद्धान्तः** ।

( चोदनासामान्याद्वा । २८ ॥ सूत्रम् )

उक्तं लिङ्गं च चोदनासामान्यानुगृहीतम् । चोदनासामान्यं च स्वरसामत्वसामान्यरूपं एककपालत्वसामान्यरूपं आमिक्षासामान्यरूपं च । के.

**स्वरसामैककपालामिक्षाधिकरणम्** । अतिदेशः कर्मान्तरगतस्वरसामैककपालामिक्षे गवामयनादिगतस्वरसामैककपालामिक्षधर्माणाम् ॥

**स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । ७।३।१०।२७ ॥**

**भाष्यम्**— गवामयने श्रूयते 'अमितो दिवाकीर्त्यमहः, त्रयः स्वरसामानो भवन्ति ' इति । तेषां विशेषधर्मा आम्नाताः, यथा ' सप्तदशा भवन्ति, संततया अतिग्राह्या गृह्यन्ते ' इत्येवमादयः । पुनरन्यत्र श्रूयते ' पृष्ठ्यः षडहो द्वौ स्वरसामानौ ' इति । तथा वैश्वदेवे श्रूयते ' द्यावापृथिव्य एककपालः ' इति । तत्र आम्नाता विशेषधर्माः ' सर्वहुतं जुहोति, अपर्यावर्तयन् जुहोति ' इति । पुनरपरत्र ' काय एककपालः ' इति । तथा तत्रैव श्रूयते ' वैश्वदेव्यामिक्षा ' इति । तत्रापि विशेषधर्माः केचिदाम्नाताः । पुनरन्यत्र ' मैत्रावरुण्यामिक्षा ' इति । तत्र संदेहः, किं स्वरसामशब्दः अन्यत्र श्रूयमाणः गावामयनिकेभ्यः स्वरसामभ्यः धर्माणां ग्राहकः उत नेति । एवं एककपालामिक्षाशब्दौ अपि । तत्र ' गुणविधिस्तु न गृह्णीयात् समत्वात् ' ( ७।३।६।१७ ) इति **अग्रहणे प्राप्ते**, इदमुच्यते । स्वरसामैककपालामिक्षं च धर्माणां ग्राहकम् । किं कारणम् ? लिङ्गदर्शनात् । लिङ्गं तत्र तादृशं दृश्यते, येन ज्ञायते सर्वे एते धर्माणां ग्राहका इति । स्वरसामसु तावत् ' पृष्ठ्यः षडहो द्वौ स्वरसामानौ ' इत्युक्त्वा आह ' तत्र यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशस्य स्थानं अभिपर्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय, त्रयाणां च सप्तदशानामनूचीनतायै ' इति । यदि एतौ स्वरसामानौ गावामयनिकानां धर्माणां ग्राहकौ तत्र एतावपि सप्तदशौ । तथा अत्र त्रयः सप्तदशाः अनूचीनाः भवन्ति । तत्र एतद्वचनं युज्यते 'त्रयाणां सप्तदशानामनूचीनतायै ' इति । तथा ऽऽग्रयणे द्यावापृथिव्यं एककपालं विधाय आह, ' यत् सर्वहुतं करोति सा त्वेका परिचक्षा, हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत ' इति आज्यविधिपरे वाक्ये सर्वहोममपर्यावृत्तिं च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति । तथा मैत्रावरुण्यामामिक्षायां ' न वाजिनेन प्रचरन्ति ' इति वाजिनेज्यां वैश्वदेविकं धर्मं प्रतिषेधन् ततो धर्मप्राप्तिं दर्शयति । एतेभ्यो लिङ्गेभ्यः एतत् ज्ञायते यथास्वं धर्माणां ग्राहका इति । प्रतिपत्त्यर्थकर्म वाजिनेज्या, स्विष्टकृत्तुल्यां मत्वा एतदुक्तम् । आह । लिङ्गमपदिष्टम् । कुतः प्राप्तिरिति । उच्यते । लक्षणया प्राप्तिः, लिङ्गात्तु लक्षणापरिग्रहः ।

( चोदनासामान्याद्वा । २८ ॥ )

[ अत्र ' स्वरसामैक० ' सूत्रोत्तरं ' चोदनासामान्याद्वा ' इति सूत्रं बृ-यपुस्तकयोर्नास्ति । इतरत्र तु सर्वत्र विद्यते एव । भाष्येऽपि आनन्दाश्रमीये तत्सूत्रं तदीयभाष्यत्वेन च कियाँश्चिद्ग्रन्थोऽपि मुद्रितः । एवमेव म-सापुस्तकयोरपि । परंतु एतत्सूत्रीयभाष्यत्वेन मुद्रितो ग्रन्थो न कथंचिदपि सूत्रार्थेन संबध्यते । ' लिङ्गात्तु लक्षणापरिग्रहः स्वरसामत्वसामान्यात् ' इत्यादिरेकः सन् ग्रन्थः संशोधकैर्मध्ये एव च्छेदितः । तदिदं सर्वमनवधानमूलकमिति मन्यामहे । नेदं सूत्रं भाष्येण व्याख्यातमिति च । बृ- यग्रन्थौ चात्रानुकूलौ । तथापि ' यस्य लिङ्गमर्थसंयोगात् ' इत्यत्र ( ८।१।२।२ ) वर्तमानेन ' चोदकवाक्यमनुमापयता लिङ्गेन ' इति विस्तरग्रन्थेन ' का पुनश्चोदना लिङ्गनिमित्तस्यातिदेशस्य आष्टमिकस्य नामधेयप्रस्तावसंगतिः ' इति तन्त्ररत्नेन च स्वरसामसूत्रवार्तिकमवतारयता ज्ञापकेन ' चोदनासामान्याद्वा ' इति सूत्रं ज्ञापितमिति शङ्का संभवतीति । तेनेयं भाष्यपङ्क्तिः स्यादिति स्वीकार्यम् । के. ]

स्वरसामत्वसामान्यात् एककपालत्वसामान्यात् आमिक्षासामान्याद्वा । ' यस्य लिङ्गमर्थसंयोगात् ' ( ८।१।२।२ ) इत्यनेन प्राप्तिरिति ।

टुप्-- अपवादापवादप्रसङ्गेन इदमारभ्यते । नामधेयेन अतिदेशः । स्वराणि सामानि अस्येति । यथैव गवामयने गुणविधिः तथा इतरत्रापि ' पृष्ठ्यः षडहः द्वौ स्वरसामानौ ' इति । आमिक्षैककपालावपि द्रव्यविधित्वात् गुणविधी । एवं गुणविधित्वात् अतिदेशाभावे प्राप्ते ' यस्य लिङ्गमर्थसंयोगात् ' ( ८।१।२।२ ) इत्यनेन अतिदेशः प्राप्यते ।

शा— अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामत्वादिचोदनाशब्दोपबृंहितेभ्यः तद्विकारत्वम् ।

**सोम**-- चोदनालिङ्गात् विशेषातिदेशस्य आष्टमिकस्यापि नामधेयापवादप्रसङ्गात् अत्र **संगतिः** । गुणविधित्वात् स्वरसामादिशब्दानां अतिदेशकत्वाभावेऽपि चोदनालिङ्गात् अतिदेशमादाय गावामयनिकादिविकारत्वं युक्तं इति सिद्धान्तः । अत्र माधवीये (विस्तरे) 'त्रयस्त्रिंशस्य स्थानमभिपर्याहरन्ति' इति व्यत्यासविधिरित्युक्तम् । तस्यापि सप्तदशस्योत्कर्षविधावेव तात्पर्यम्, न विनिमये इति द्रष्टव्यम् । अत्र वाजिनयागस्य प्रधानतया अङ्गत्वाभावेनानतिदेशात् वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तं इति कृत्वाचिन्तयेदं इति केचिदाहुः, तदयुक्तम् । वाजिनयागस्य वाजिनापचारे द्रव्यप्रयोजनाशक्ततया अनित्यस्य नित्यैरामिक्षायागादिभिः सहाधिकारविधिविषयत्वाभावेन वाजिनस्य प्रतिपत्त्यर्थतया स्विष्टकृदादिवत् अङ्गत्वस्यैव युक्तत्वात् । सूत्रार्थस्तु- स्वरसामैककपालामिक्षं च प्रागुक्तलिङ्गदर्शनात् गावामयनिकवैश्वदेविकधर्मग्राहकमिति ।

**वि**— 'न विकारा विकारा वा स्वरसामादयो, न हि । वैष्णवन्यायतो, मैवमनन्यगतिलिङ्गतः ॥ '

**भाट्ट**— पूर्वमुत्तरवेदिप्रतिषेधरूपेण लिङ्गेन सौमिकप्रणयनातिदेशो निरस्ते अधुना लिङ्गादपि अतिदेशोऽस्ति इत्येवं तदपवादः प्रस्तूयते । गवामयने ' त्रयः स्वरसामानः ' इति सप्तदशस्तोमकत्वादिधर्मका यागाः समाम्नाताः । अन्यत्रापि ' द्वौ स्वरसामानौ ' इति । तथा वैश्वदेवे पर्वणि ' वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः ' इति सधर्मकौ यागौ । अन्यत्रापि ' मैत्रावरुण्यामिक्षा काय एककपालः ' इत्यद्यामिक्षैककपालद्रव्यका यागाः श्रुताः । ते किं स्वरसामानः गावामय-

निकस्वरसामप्रकृतिकाः, अन्ये आमिक्षायागाश्च वैश्वदेविकामिक्षायागस्य, अन्ये एककपालाश्च वैश्वदेविकैककपालस्य उत न इति चिन्तायाम्, गुणत्वादिनैव कल्पितेन अतिदेशेन इतिकर्तव्यताकाङ्क्षाशान्तेः स्वरसामादिशब्दानां च स्वराख्यसामादिरूपगुणविधायकत्वेन अनतिदेशकत्वात् नोक्तयागप्रकृतिकत्वम् । इति प्राप्ते, गुणत्वादिसादृश्यापेक्षया स्वरसामकत्वादिविशेषसादृश्येन लिङ्गोपबृंहितेन अतिदेशकल्पनात् चोदनालिङ्गातिदेशेन तत्प्रकृतिकत्वम् । लिङ्गानि च स्वरसामसु तावत् ' पृष्ठ्यः षडहः द्वौ स्वरसामानौ ' इत्युक्त्वा आह, ' तत्र यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशत्स्तोमकस्य स्थानमभिपर्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय, त्रयाणां सप्तदशानां अनूचीनतायै ' इति द्वयोः स्वरसाम्नोः सप्तदशस्तोमकत्वदर्शनम् । मैत्रावरुण्यामिक्षायां च ' न वाजिनेन प्रचरन्ति ' इति प्रतिषेधवचनम् । आग्रयणे द्यावापृथिव्यमेककपालं विधाय ' यत् सर्वहुतं जुहोति सा त्वेका परिचक्षा ( निन्दा ), हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत ' इति एककपालयागे सर्वहुतत्वादिप्रयुक्तं दोषमभिधाय वैकल्पिकाज्ययागविधिपरं वचनम् । न हि उक्तातिदेशाभावे सप्तदशस्तोमकत्व-वाजिनेज्या-सर्वहुतत्वादीनां प्राप्तिः संभवति । तस्मादतिदेशः । अयं च तत्तदसाधारणधर्माणां साधारणधर्माणां च नवप्रयाजत्वप्रसूनमयत्वादीनां चातिदेशः । मुख्यानां भूयसां च प्रधानान्तराणां अनुरोधेन तु क्वचित् विरोधे साधारणधर्माणां वा बाधः । याज्ञिकास्तु असाधारणधर्माणामेव अतिदेशं मन्यन्ते ।

**मण्डन**— ' धर्मातिदेशी स्वरसाम-शब्दः । '

**शंकर**— ' स्वरसामातिदेशकम् । '

**स्वरुः अग्नीषोमीये पशौ छेदनादेर्न प्रयोजकः । स्वर्वधिकरणम् ॥**

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् । ४।२।१।१ ॥

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्रेदमाम्नातम् ' खादिरे बध्नाति' 'पालाशे बध्नाति ' 'रौहितके बध्नाति ' इति । तत्संनिधौ इदमपरमाम्नायते 'स्वरुणा पशुमनक्ति' 'यूपस्य स्वरुं करोति' इति । अथेदानीमिदं संदिह्यते किं भेदेन यूपात् स्वरुरुत्पादयितव्यः उत यूपं क्रियमाणमनुनिष्पन्नः शकलो ग्रहीतव्य इति । तत्रेदं तावत् नः परीक्ष्यं किं छेदनाद्युत्पत्तेः प्रयोजकः स्वरुः, उत अप्रयोजक इति । प्रयोजकश्चेत् भेदेन यूपान्निष्पाद्येत, न चेत् प्रयोजकः यूपं निष्पद्यमानमनुनिष्पन्नः शकलो ग्रहीष्यते इति । स कथं प्रयोजकः स्यात्, कथं वा न प्रयोजक इति । यदि एषा वचनव्यक्तिः स्वरुशब्दवाच्यं भाव्यते । कथम् ? जोषणादिना इतिकर्तव्यताविशेषेण इति, ततः 'स्वरुणा पशुमनक्ति' इति स स्वरुः इत्यवगतो ग्रहीष्यते, ततः प्रयोजकः । अथैवं विज्ञायते, ' स्वरुणा पशुमनक्ति ' इति, अनवगतः स्वरुः । एतावदवश्यं विज्ञायते अञ्जनं तेन क्रियते इति । इदमपि ' यूपस्य स्वरुं करोति ' इति यूपैकदेशं स्वरुकार्ये अञ्जने विनियुङ्क्ते इति ततः अप्रयोजकः । किं तावत् प्राप्तम् ? ' स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ' । स्वरुर्न यूपेनैकनिष्पत्तिः स्यात् । यूपमनपेक्षमाणस्य स्वरोः जोषणादिना उत्पत्तिः । कुतः ? स्वकर्मशब्दत्वात् । स्वो ह्यस्य कर्मशब्दः स्वरुतायाः विधायको भवति ' स्वरुं करोति ' इति । एवं च यूपकाष्ठावयवस्य स्वरुत्वं क्रियते इति । ' यूपस्य स्वरुं करोति ' इति लक्षणया यूपशब्दः, खदिराद्यवयवस्येत्यर्थः । कुतः ? स्वरुत्वभावना हि श्रुत्या गम्यते । ' स्वरुं करोति ' इति स्वरुमुत्पादयतीति । यूपावयवोपादानं वाक्येन । वाक्याच्च श्रुतिर्बलीयसी इति । तस्मादेवं सति न नियोगतो यूपकाष्ठादेव स्वरुरुत्पादयितव्यः । निरपेक्षादन्यस्मादपि वृक्षात् कर्तव्यो भेदेनेति ।

**टुप्**— ' यूपस्य स्वरुं करोति ' इत्यत्र करोतिः अभूतप्रादुर्भाववचनः । तस्य किं कर्म इत्याकाङ्क्षायां



स्वरुं इति । तस्मात् स्वरुः भाव्यमानः । तस्य च करणेतिकर्तव्यताकाङ्क्षायां यूपशब्दो जोषणादिकां इतिकर्तव्यतां लक्षयति, खदिरादि च काष्ठं करणम् । सा च ' यूपं तक्षति ' इति इतिकर्तव्यता अस्यापि वाक्येन । यदि च यूपशब्दः इतिकर्तव्यतां न लक्षयेत् अनर्थकमेव अस्योच्चारणं भवेत् । यत् स्वरुं करोति तत् यूपादिति चेत्, तन्न । एवं वाक्यार्थः स्यात्, स्वरुं भावयेत् इति तु श्रुत्यर्थः । करोतिभावयत्यादीनां सामान्यधातूनां यद् द्वितीयान्तं तद् धातुस्थानीयं भवति द्रव्यं क्रिया वा । तस्माच्च कर्तव्यतां प्रतिपद्यते । तेन चोत्पन्नः ' स्वरुणा पशुमनक्ति ' इत्यनेन विनियुज्यते । तस्मात् प्रयोजक इतिकर्तव्यतायाः । यद्यपि यूपेन सह एकवाक्यता इतिकर्तव्यतायाः तथापि स्वरोः साकाङ्क्षत्वात् तदीयेतिकर्तव्यताया निराकाङ्क्षता, संनिधानाविशेषात् । याऽपि वाक्यसंयुक्ता साऽपि शक्या अनुषङ्क्तुम्, स्वरुशब्दस्यानर्थक्यभयात् । एवं चेत् तत्रापि यूपशब्दे भवति इतिकर्तव्यतासंबन्धः ।

**जात्यन्तराच्च शङ्क्यते । २ ॥**

**भाष्यम्**— इतश्च निरपेक्षस्य स्वरोरुत्पत्तिः इति गम्यते । कुतः ? जात्यन्तरादपि आशङ्का भवति, वृक्षान्तरात् । कथम् ? ' नान्यस्य स्वरुं कुर्यात्, यद्यन्यस्य वृक्षस्य स्वरुं कुर्यात् अन्येऽस्य लोकमन्वारोहेयुः, यूपस्य स्वरुं करोति ' इति । न हि यूपमनुनिष्पन्नस्य ग्रहणे जात्यन्तराशङ्का अवकल्पते । यूपशकलो हि स्वरुकार्ये तदानीं विनियुज्येत । तस्मादपि भेदेन यूपात् स्वरुः उत्पादयितव्यः इति ।

**टुप्**— ' नान्यस्य वृक्षस्य स्वरुं कुर्यात् ' इति अनुनिष्पन्नपक्षे वृक्षान्तराशङ्काऽपि नास्ति, नतरां जात्यन्तरशङ्का । प्रयोजकवादिनस्तु भवति जात्यन्तराशङ्का । तत्र सजातीयो विधीयते ।

**तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् । ३ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । यूपैकदेशो हि यूपमनुनिष्पन्नः शकलो ग्रहीतव्य इति । कस्मात् ? एवमाम्नायते, ' यद्यन्यस्य वृक्षस्य स्वरुं कुर्यात् अन्येऽस्य लोकमन्वारोहेयुः, यूपस्य स्वरुं करोति ' इति । न चात्र अयमर्थो विधीयते स्वरुमुत्पादयतीति । किं तर्हि ? स्वरुकार्यं कर्तुं यमुपादत्ते, तं यूपादिति । कुतः ? स्वरुत्वस्य तन्निमित्तत्वात् । स्वरुत्वमत्र श्रूयते स्वरोः, यूपस्य स्वरुं करोतीति । कस्यात्मीयम् ? यूपस्येति । आत्मीयश्च समुदायस्यैकदेशो भवति । एकदेशश्चाप्रयोजक इति । तस्मादिदमुच्यते । अप्राणिनः षष्ठी पञ्चम्यर्थे भवति, यथा शाकस्य देहि शाकाद्देहि इति । तथा क्वचित् तृतीयार्थे घृतस्य यजति– घृतेन यजति । पञ्चम्यर्थे, घृताद्यजति– घृतस्य यजति इति । द्वितीयार्थे वा, सोमस्य पिबति– सोमं पिबति, सोमात् पिबति इति । ननु उक्तम्, यूपावयवोऽत्र वाक्येन विधीयते, श्रुत्या स्वरोरुत्पत्तिः, श्रुतिश्च वाक्यात् बलीयसीति । उच्यते । सत्यमेवम् । यूपस्य इति तु शब्दः अविवक्षितार्थो भवति । तत्र श्रुतिरपि बाध्यते, वाक्यमपि । न तु अस्मत्पक्षे किंचिदविवक्षितार्थम्, स्वरुं करोति इति स्वार्थं एवानुवादो भविष्यतीति । यूपशकलो विधायिष्यते । स्वरुशब्दश्च अञ्जनार्थेन शकले उपचरित इति गम्यते । अवयवप्रसिद्धिश्च एतमर्थं गमयिष्यति । भवति हि ब्राह्मणं 'अथ कस्मात् स्वरुर्नाम, एतस्माद्धि योऽवच्छिद्यते, तदस्यैतत् स्वमिव अरुर्भवति, तस्मात् स्वरुर्नाम ' इति ।

**टुप्**— ' स्वरुणा पशुमनक्ति ' इत्युच्चरिते अञ्जनसमर्थं द्रव्यं प्रतीयते, तत् कुत उपादातव्यं इत्याकाङ्क्षिते, यूपात् इति निराकाङ्क्षीक्रियते । यूपस्य इति अवयवलक्षणार्था षष्ठी । विद्यमाने चावयविनि अवयवा भवन्ति । तस्मात् छेदनादीनामप्रयोजकः स्वरुः । अलौकिकत्वाद्भाव्यते इति चेत्, नैवायमलौकिकः रथंतरादितुल्यः । यद्यपि अत्र प्रातिपदिकमात्रान्न ज्ञायते, तथापि पूर्वपदोत्तरपदवाक्यान्तरैः शक्योऽवधारयितुम्, यथा लोके । अवधृते चाञ्जनकार्ये अर्थादुत्पत्तिर्भविष्यति । सोऽयं ' स्वरुं करोति ' इत्यनूद्यते । स्वरुं करोति इत्युपश्लेषलक्षणया श्रुत्या स्वरोः कर्तव्यतेति ।

उच्यते । त्वत्पक्षे सुतरां श्रुतिबाधः । शब्दस्य धर्मी अर्थः । शब्दोऽपि क्रमस्य धर्मी, शब्दधर्ममनुजिघृक्षता तस्य धर्मी बाध्यते । स एषः अङ्गाङ्गेन प्रधानबाधः । तस्मात् यूपशब्दस्य लक्षणाभयात् इतरा वचनव्यक्तिः, यत् स्वरुं करोति, तत् यूपस्य इति । अनेन अभिप्रायेणाह– 'श्रुतिरपि बाध्यते वाक्यमपि' इति ।

**शकलश्रुतेश्च । ४ ॥**

**भाष्यम्**— इतश्च यूपमनुनिष्पन्नस्य ग्रहणम् । कुतः ? शकलश्रुतेः । शकलश्रुतिर्भवति स्वरोः । 'यः प्रथमः शकलः परापतेत् स स्वरुः कार्यः' इति । शकलश्चैकदेशः । एकदेशश्चाप्रयोजकः । संबन्धिशब्दत्वात् । तावता च व्यवहारात् समुदायापेक्षिणः । तत्र प्रकरणात् अन्यार्थेन खदिरादिना जोषणादिकर्मविशिष्टेन यागार्थेन प्रकृतेन अस्यैकवाक्यता । यूपाय खदिरादि जोषयते, छिनत्ति, तक्षति च । तत्र यः शकलः प्रथमः परापतेत् तं च स्वरुं अञ्जनार्थं करोतीति । स्वरुशब्दं च तत्र अनुवदन्नेवोपचरति । तस्मात् नैतदस्ति पृथङ्निष्पत्तिः स्वरुरिति, येन अन्यस्मादपि वृक्षादिति शङ्क्यते । तस्मात् जात्यन्तराशङ्कावचनं नित्यानुवादो यूपशकलस्तुत्यर्थः ।

**प्रतियूपं च दर्शनात् । ५ ॥**

**भाष्यम्**— इतश्च न पृथङ्निष्पत्तिः स्वरुः । कुतः ? एकादशिन्यां प्रतियूपं च दर्शनात् । 'यथाऽऽनुपूर्व्यं स्वरुभिः पशून् समज्य मध्यमे रशनागुणे स्वं स्वं यूपशकलमुपगूहति' इति स्वरुबहुत्वं दर्शयति । यदि च स्वरुः पृथङ्निष्पत्तिः स्यात्, एक एव एकादशिन्यां तन्त्रेण कार्यं साधयेत् । यूपमनुनिष्पन्नस्य तु ग्रहणे प्रकृतौ स्वयूपशकलेन अञ्जनं कृतम्, इत्येकादशिन्यामपि चोदकः स्वयूपशकलमेव प्रापयति इति बहुत्वमुपपन्नं भवति । स्वयूपशकलग्रहणं च प्राकृतस्य ग्रहणादध्यवसीयते । यादृशोऽसौ प्राकृतः, तादृशोऽसौ ग्रहीतव्यः, न विशिष्ट इति । तस्मात् स्वरुः उत्पत्तेर्न प्रयोजक इति ।

**आदाने करोतिशब्दः । ६ ॥**

**भाष्यम्**— अथ यदुक्तं उत्पत्तिरस्य शब्देनोच्यते स्वरुं करोतीति, एवं च करोतिशब्दः अवकल्पिष्यते इति । उच्यते । आदाने करोतिशब्दो भविष्यति । स्वरुं करोति– स्वरुमादत्ते इति । यथा काष्ठानि करोति, गोमयानि करोति इति आदाने करोतिशब्दो भवति, एवमिहापि द्रष्टव्यम् । ( आनन्दाश्रमीयभाष्यपुस्तके 'स्वरुस्तु०' इत्यादीनां षण्णामपि सूत्राणां वाक्यान्तररचनया व्याख्यानं भाष्यकारीयं मुद्रितम् । तत्तु नास्माभिः संगृह्यते । तत्र टिप्पण्यां एवमुक्तं– 'भाष्यं कस्मिंश्चित् लिखितपुस्तके उपलभ्यते नान्यस्मिन्' इति । के. ) ।

**शा**— '**करोतिर्भावनावाची सा च श्रुत्या विधीयते । वाक्यार्थविधिरन्याय्यो लक्षणा चान्यथा भवेत् ॥**' इति प्रयोजकः स्वरुः । नैवम् । '**बह्वर्थविधिरेवं स्यान्मुख्यशब्दस्य लक्षणा । अल्पार्थविधिरस्माकं जघन्यस्य च लक्षणा ॥**' यूपानुनिष्पन्नशकलस्योपादानात् अप्रयोजकः स्वरुः ।

**सोम**-- किमेष स्वरुः छेदनादीनां खदिरादेश्च प्रयोजक उत नेति । तदर्थं च किमेष यूपात् पृथङ्निष्पन्नः उत यूपानुनिष्पन्नः शकलो ग्रहीतव्यः । तदर्थं च किं स्वरुं करोतीति स्वरुभावनाविधिः उत स्वरूपादानापादानविधिः इति संशयः । स्वरुनाशे येन केनचिच्छकलेन अञ्जनं कार्यं न तु स्वर्वर्थं पुनस्तक्षादिप्रयुक्तिः ।

**वि**-- 'स्वरुं कुरुत इत्यत्र स्वरुर्यूपात् पृथक् छिदाम् । प्रयोजयेन्न वा, ऽऽद्योऽस्तु विशिष्टस्य विधानतः ॥, आद्यस्य यूपखण्डस्य स्वरुत्वाख्यविशेषणे । विहिते लाघवं तस्मादनुनिष्पन्न एव सः ॥'

**भाट्ट**-- दैक्षे पशौ 'यूपस्य स्वरुं करोति, स्वरुणा पशुमनक्ति' इति श्रुतम् । तत्र स्वरुशब्दवाच्यस्य अप्रसिद्धत्वात् आद्यवाक्येन ( 'यूपस्य स्वरुं करोति' इति वाक्येन ) स्वरुकर्मिका भावना विधीयते । तत्र च साधनीभूतद्रव्यापेक्षायां 'तत्र यः प्रथमः शकलः परापतेत् स स्वरुः' इति वचनेन शकलस्य साधनत्वावगमात्, इतिकर्तव्यतापेक्षायां यूपपदेन तद्धर्मलक्षणया अञ्जनप्रोक्षणादयो विधीयन्ते । अथवा यथैव यूपावयवकत्वं सिद्धान्ते षष्ठ्यर्थः तथैव मन्मते यूपधर्मकत्वं संबन्धः षष्ठ्यर्थः इति न लक्षणाऽपि । एवमुत्पन्नस्य च द्वितीयवाक्येन ( 'स्वरुणा पशुमनक्ति' इति वाक्येन ) विनियोगः । अस्तु वा द्वितीयवाक्याक्षिप्तस्वरुकर्मकभावनानुवादेन यूपधर्ममात्रविधिः इति न विशिष्टविधिरपि । न चैवं शकलशब्दस्य ससंबन्धिकत्वादेव उत्तरार्धादिवत् यूपीयत्वोपपत्तेः अप्रयोजकत्वापत्तिः, स्वतन्त्रकाष्ठाप्रयोजकत्वेऽपि स्वरुनिष्ठाञ्जनप्रोक्षणादिधर्मप्रयोजकत्वोपपत्तेः । अत एव धर्मप्रयोजकत्वेन काष्ठान्तरप्रयोजकत्वशङ्कायां तन्निवर्तकत्वेन 'यदन्यस्य वृक्षस्य स्वरुं कुर्यात् अन्येऽस्य लोकमन्वारोहेयुः' इति निन्दाऽपि संगच्छते । धर्मप्रयोजकत्वेऽपि च यूपैकादशिन्यां 'यथाऽऽनुपूर्व्यं स्वरुभिः पशून् समज्य' इति यूपभेदेन स्वरुभेददर्शनं नानुपपन्नम् । न चैवमपि षष्ठ्या यूपावयवकत्वसंबन्धेनापि उपपत्तेः यूपधर्मकत्वरूपसंबन्धपरत्व एव नियामकाभावः, शकलकरणकत्वादेव यूपीयत्वसिद्धेः आद्यवाक्यवैयर्थ्यापत्तेरेव नियामकत्वात् । **इति प्राप्ते**, न यूपधर्मकत्वसंबन्धः षष्ठ्यर्थः, आनुशासनिकयूपावयवकत्वसंबन्धस्यैव तदर्थत्वोपपत्तेः । न च शकलश्रुत्यैव प्राप्तत्वात् तद्विधिवैयर्थ्यम् (यूपावयवत्वविधि), एतद्विध्यभावे यूपपदरहितानां परश्वादान–वनगमन – वृक्षच्छेदन – स्थाण्वाहुत्यादीनां यूपार्थत्ववत् स्वर्वर्थत्वस्यापि संभवेन शकलश्रुतेः वृक्षप्रतियोगिकतयैव उपपत्तेः । अत एव यथाशक्तिप्रयोगादौ यूपाभावेऽपि स्वर्वर्थमेव वनगमनादिसिद्धिः । पञ्चारत्नित्वसिद्ध्यर्थं द्वितीययूपच्छेदनादि 'यूपं छिनत्ति' इत्यादिवाक्येन विहितम्, यूपाभावे परं निवर्तताम्, न तु वनगमनाद्यपि । अतस्तन्निवृत्तिफलकयूपानुनिष्पन्नत्वसिद्ध्यर्थं यूपावयवत्वविधिः अर्थवानेव । अत एव यूपानुनिष्पन्नप्रथमशकलनाशे येन केनचित् काष्ठेन अञ्जनं पशोः । तेन प्रोक्षणादेः स्वर्वर्थत्वे प्रमाणाभावात् न स्वरुस्तेषां प्रयोजकः ।



सूत्राणि च सुधीभिः अस्मिन्नेवार्थे व्याख्येयानि, न तु भाष्याकारोक्ते ।

**मण्डन**-- 'यूपैकदेशः स्वरुरप्रयोक्ता ।'

**शंकर**— 'स्वर्वर्थं खादिरादि न ।'

**स्वरुश्चाप्येकदेशत्वात् । ४।४।१०।२५॥**

अग्नीषोमीये पशौ श्रूयते 'स्वरुणा स्वधितिना वा पशुमनक्ति' इति । अयं स्वरुः किं यूपाङ्गं पश्वङ्गं वेति विचारे पूर्वः पक्षः । अपिचशब्देन पूर्वाधिकरणोक्तं रशनाया यूपाङ्गत्वं दृष्टान्तं करोति । यथा रशना यूपाङ्गं तथा स्वरुरपि यूपाङ्गं स्यात् । स्वरोः यूपस्य एकदेशत्वात् । यूपच्छेदनकाले प्रथमः पतितः शकलः स्वरुर्नाम । तस्मात् स्वरुर्यूपाङ्गम् ।

**निष्क्रयश्च तदङ्गवत् । २६ ॥**

स्वरुः यूपाङ्गं इति पूर्वपक्षे हेत्वन्तरार्थं सूत्रम् । तदङ्गवत् यूपाङ्गमिव स्वरुः यूपस्य निष्क्रयः इति दर्शयति अर्थवादः । 'अपश्यन् ह स्म वै पुरा ऋषयः, ये यूपं प्रापयन्ति, संभज्य स्रुचम्, ते मन्यन्ते यज्ञवैशसाय वा इदं कर्मेति । ते प्रस्तरं स्रुचो निष्क्रयमपश्यन्, यूपस्य स्वरुं अयज्ञवैशसाय' इति । केचिदृषयः यज्ञान्ते यूपं अग्नौ प्रक्षिपन्ति स्म । स्रुचं च संभज्य भित्त्वा अग्नौ प्राक्षिपन् । तदपरे केचन ऋषयः अपश्यन् अमन्यन्त च इदं केषांचिदृषीणां कर्म यज्ञवैशसाय यज्ञस्य नाशायैव भवतीति । कथं तर्हि कर्तव्यम् ? स्रुचः प्रस्तरो निष्क्रयः, यूपस्य निष्क्रयश्च स्वरुः । तथा सति स्रुचः स्थाने प्रस्तर एव अग्नौ प्रक्षेपणीयः, यूपस्य स्थाने च स्वरुः प्रक्षेपणीयः । तेन अग्नौ प्रक्षेपणं च स्यादेव यज्ञनाशश्च न स्यात् इत्यर्थवादार्थः । तस्मात् स्वरुः यूपाङ्गं न पश्वङ्गमिति ।

**पश्वङ्गं वाऽर्थकर्मत्वात् । २७ ॥**

'स्वरुणा पशुमनक्ति' इति अग्नीषोमीये उक्तः स्वरुः यूपाङ्गं इति पूर्वपक्षे सूत्रद्वयेन प्राप्ते वाशब्देन तं निरस्य सिद्धान्तयति । स्वरुः न यूपाङ्गं किंतु पश्वङ्गम् । अर्थकर्मत्वात् । अर्थः प्रयोजनम् । पशोः घृतेन अञ्जनं स्वरोः प्रयोजनस्य कर्म । पशोरञ्जनं स्वरोरुत्पत्ति

प्रयोजयति । तथा च स्वरोः पश्वञ्जनसाधनत्वात् पश्वङ्गत्वम् । पश्वञ्जनं च दृष्टं प्रयोजनम् । यूपाङ्गत्वे तु अदृष्टं कल्प्यं स्यात् । तस्मात् स्वरुः पश्वङ्गम् ।

**भक्त्या निष्क्रयवादः स्यात् । २८ ॥**

'स्वरुणा पशुमनक्ति' इति अग्नीषोमीये पशौ श्रुतः स्वरुः यूपाङ्गं इति पूर्वपक्षे स्वरुणा यूपस्य निष्क्रयवादो हेतुत्वेनोक्तः । तस्य निराकरणं सिद्धान्तिना क्रियते अनेन सूत्रेण । योऽयं निष्क्रयवाद उक्तः स भक्त्या गुणस्तुत्या स्यात् । अग्नौ स्वरोः प्रक्षेपे यूप एव भवति इति निष्क्रय इव स्वरुणा यूपस्योक्तः सा स्तुतिः । तस्मात् पश्वङ्गमेव स्वरुः इति **सिद्धान्तः । के.**

* स्वरुः छेदनादीनां खदिरादेश्च प्रयोजकः उत नेति संशये नेति सिद्धान्तः यूपप्रयुक्ते छेदनेऽनुनिष्पन्नोऽयम् । **सोम.** ४।२।१. * स्वरुः तन्त्रं पशुत्रयार्थः अग्निष्टोमे । ११।३।५।१०–१४. **मीको.** पृ. ७२ 'अग्निष्टोमे पशुत्रयार्थः स्वरुस्तन्त्रम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**ꣳ स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् । ११।३।५।१०॥**

'यूपस्य स्वरुं करोति' इति स्वरुः श्रुतः । स किं ज्योतिष्टोमे त्रयाणां पशूनां भिन्नः उत तन्त्रं इति विचारे पूर्वपक्षमाह । स्वरुः तन्त्रापवर्गः स्यात् एकैकस्य पशोः प्रयोगे अपवृक्ते अपवृक्तः स्यात् । तन्त्रेण अपवर्गः समाप्तिः तन्त्रापवर्गः । अस्वकालत्वात् स्वरोः स्वकालत्वाभावात् नास्य उत्पत्तौ स्वः कालः । पशोः समञ्जनकाले असौ उपादीयते । पशुसमञ्जनकालो वा तस्य स्वकालः स्यात् । तस्मात् स्वरुः प्रतिपशु भिन्नः ।

**साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् । ११ ॥**

सिद्धान्तमाह । स्वरुः यूपं छिद्यमानमनुनिष्पत्तिः । अनु निष्पत्तिः उत्पत्तिर्यस्य । तस्य यूपस्य च पशुत्रये साधारणत्वात्, स्वरुरपि साधारणः स्यात्, न प्रतितन्त्रं भिन्नः ।

**सोमान्ते च प्रतिपत्तिदर्शनात् । १२ ॥**

सिद्धान्ती आह 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं च अयज्ञवैशसाय' इति सोमान्ते सोमप्रयोगान्ते स्वरोः प्रतिपत्तेः दर्शनात् न प्रतिपशु तन्त्रापवर्गे स्वरोरपवर्गः । तस्मात् पशुत्रयस्य साधारणः स्वरुः ।

**तत्कालो वा प्रस्तरवत् । १३ ॥**

पूर्वपक्षी आह । सोमान्ते प्रह्रियमाणः स्वरुः तत्कालः अनुबन्ध्याकालः स्यात् सोमान्ते स्वरोः यत् प्रहरणमुक्तं तत् अनुबन्ध्यासंबन्धिनः स्वरोः न तु सवनीयसंबन्धिनः । प्रस्तरवत्, यथा सोमान्ते अनुबन्ध्याकालीनस्यैव प्रस्तरस्य प्रहरणं ज्ञायते तथा ।

**न वोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा । १४ ॥**

सिद्धान्ती परिहरति । न अनुबन्ध्याकालीनस्य स्वरोः प्रहरणं 'सोमान्ते प्रस्तरं प्रहरति स्वरुं चायज्ञवैशसाय' इति वाक्ये उच्यते । अस्य उत्पत्तिवाक्यत्वात्, स्वरोः उत्पत्तिवाक्यं इदमेव । अनेन च वाक्येन क्रमात् अग्नीषोमीयकालस्यैव प्रस्तरस्य प्रहरणं गम्यते । पशुत्रयसाधारणस्य च स्वरोः सर्वपशूनां कर्मणि समाप्ते सोमान्ते प्रहरणमुक्तम् । प्रस्तरे तु तथा स्यात् अनुबन्ध्यासंबन्धिन एव प्रस्तरस्य सोमान्ते प्रहरणं स्यात् दर्शपूर्णमासयोः प्रस्तरप्रहरणस्य प्रदेशः काल इत्यर्थः, 'आशीर्भिः प्रस्तरं प्रहरति' इति सिद्धः । ज्योतिष्टोमेऽपि पशुप्रस्तरप्रहरणस्य स एव प्रदेशः । स च सोमान्ते भवति । तस्मात् विषमो दृष्टान्तः । तस्मात् पशुत्रयार्थं स्वरुः तन्त्रं इति **सिद्धान्तः । के.**

**ꣳ स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् । ४।२।१।१॥**

अग्नीषोमीये पशौ 'खादिरे बध्नाति' इत्यादिना यूप उक्तः, पुनश्च 'स्वरुणा पशुमनक्ति' 'यूपस्य स्वरुं करोति' इति स्वरुः उक्तः । अयं स्वरुः किं यूपाद्भेदेन निष्पादयितव्यः, छेदनादेः प्रयोजकश्चायं यद्वा यूपं क्रियमाणमनु निष्पन्नः शकलो ग्रहीतव्यः, न चायं छेदनादेः प्रयोजकः इति विचारे पूर्वपक्षसूत्रमिदम् । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः । पादान्तरत्वद्योतकः इति तु कुतूहलम् । स्वरुः अनेकनिष्पत्तिः यूपेन सह एकयत्ननिष्पत्तिको न भवति । यूपनिष्पादनप्रयत्नात् स्वरुनिष्पादनप्रयत्नो भिन्नः कर्तव्यः इत्यर्थः । न एकेन प्रयत्नेन निष्पत्तिर्यस्य इति विग्रहः । कुतः ? स्वकर्मशब्दत्वात्, स्वः स्वीयः कर्मशब्दः कर्तव्यताबोधकः शब्दः स्वरुताया विधायकः भवति 'स्वरुं करोति' इति । तस्मात् यूपात् भेदेन स्वरुरुत्पादयितव्यः जोषणच्छेदनादेश्चायं प्रयोजकः । स्वः कर्मशब्दो यस्य तादृशत्वात् इति विग्रहः ।

**जात्यन्तराच्च शङ्क्यते । २ ॥**

पूर्वपक्षे हेत्वन्तरपरं सूत्रम् । य–पुस्तके कुतूहले च सूत्रे शङ्क्यते इति पाठः । कुतूहलमूले तु तत् पदं न पठितं नापि व्याख्यातम् । अन्यत्र तु सर्वत्र शङ्कते इत्येव पाठः । 'नान्यस्य स्वरुं कुर्यात् यद्यन्यस्य वृक्षस्य स्वरुं कुर्यात् अन्येऽस्य लोकमन्वारोहेयुः' इति जात्यन्तरात् यज्जातीयो यूपवृक्षः ततो भिन्नजातीयात् वृक्षात् स्वरोः करणे शङ्का प्रदर्शिता । यूपमनुनिष्पन्नस्य ग्रहणे तु जात्यन्तराशङ्का नावकल्पते । जात्यन्तरशङ्कनात्तु ज्ञायते यूपीयवृक्षात् भिन्नादपि वृक्षात् स्वरुः उत्पादितः स्यादिति । तस्मात् यूपनिष्पादनप्रयत्नात् भिन्नेन प्रयत्नेन स्वरुरुत्पादयितव्यो वृक्षान्तरादपीति ।

**तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् । ३ ॥**

अग्नीषोमीये पशौ यूपः स्वरुश्च श्रुतः । स च यूपात् भेदेन उत्पादयितव्यः वृक्षान्तरादपि च, प्रयोजकश्चासौ जोषणच्छेदनादेः इति सूत्रद्वयेन पूर्वपक्षे प्राप्ते सिद्धान्तमाह सूत्रम् । वाशब्दः पक्षं व्यावर्तयति । स्वरुः इत्यनुवर्तते । स्वरुः यूपस्य एकदेशः स्यात् । यूपं क्रियमाणमनु प्रथमं निष्पन्नः शकलः स्वरुर्नाम ग्रहीतव्यः । स्वरुत्वस्य तन्निमित्तत्वात् यूपनिमित्तत्वात् । तस्मान्नासौ स्वरुः जोषणच्छेदनादेः प्रयोजकः ।

**शकलश्रुतेश्च । ४ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । 'यः प्रथमः शकलः परापतेत् स स्वरुः कार्यः' इति शकलश्रुतेः स्वरोः यूपमनुनिष्पन्नस्य ग्रहणम् । चकारो हेत्वन्तरसमुच्चयार्थः । शकलः अवयवः एकदेशः ।

**प्रतियूपं च दर्शनात् । ५ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । यूपैकादशिन्यां 'यथाऽनुपूर्व्यं स्वरुभिः पशून् समज्य मध्यमे रशनागुणे स्वंस्वं यूपशकलमुपगूहति' इति प्रतियूपं यूपेयूपे स्वरोः दर्शनं भवति । यदि च स्वरुः यूपात् पृथङ्निष्पत्तिः स्यात् तदा एक एव स्वरुः एकादशिन्यां तन्त्रेण कार्यं साधयेत् । यूपमनुनिष्पन्नस्य तु ग्रहणे प्रकृतौ स्वयूपशकलेन अञ्जनं कृतं इति एकादशिन्यामपि चोदकः स्वयूपशकलमेव प्रापयति इति बहुत्वमुपपन्नं भवति । तस्मात् स्वरुः स्वतन्त्रोत्पत्तेर्न प्रयोजकः । चकारो हेत्वन्तरसमुच्चयार्थः ।

**आदाने करोतिशब्दः । ६ ॥**

यूपं क्रियमाणमनु निष्पन्नः शकलः स्वरुर्नाम, न स यूपात् भेदेन छेदनादिना उत्पादयितव्यः । न च स उत्पत्तेः प्रयोजकः । यस्तु 'स्वरुं करोति' इति करोतिशब्दः स आदाने भविष्यति । स्वरुं करोति स्वरुमादत्ते इत्यर्थः, न तु उत्पादयति इत्यर्थः । तस्मान्न स्वरुः उत्पत्तेः प्रयोजकः । **के.**

* स्वरुः न प्रयोजकः अञ्जनस्य अग्नीषोमीये पशौ । स्वरुनाशे केनचित् काष्ठेन पश्वञ्जनं कर्तव्यम् । **भाट्ट.** ४।२।१. * स्वरुः पश्वङ्गं न यूपाङ्गम् । षष्ठी तु यूपीयच्छेदनजन्यत्वात् 'यूपस्य स्वरुं करोति' इति । **वि.** ४।४।१०. * स्वरुः पशुगणे सर्वेषामञ्जनार्थः, न तु कस्यचित्पशोरञ्जनेन प्रतिपत्तिः । **सोम.** ४।४।१०. * स्वरुः पशुभेदेऽपि तन्त्रेण कृतः सर्वेषु पशुषूपकरिष्यति 'स्वरुणा स्वधितिना वा पशुमनक्ति' । **वि.** ११।३।५. * स्वरुः । यः प्रथमः शकलः परापतेत् (यूपच्छेदनकाले) स स्वरुः कार्यः । **भा.** ४।२।१।४, ११।३।५।९. * स्वरुः यूपात् पृथगेव निष्पन्नः उत यूपानुनिष्पन्नः शकलो ग्रहीतव्य इति संशये द्वितीयः पक्षः सिद्धान्तः । **सोम.** ४।२।१. * स्वरुः साधारणः पशूनां यूपस्य साधारणत्वात् । **भा.** ११।३।५।९, * **स्वरोः** पश्वञ्जनं प्रयोजकम् । ४।४।

१०।२७. * स्वरोः प्रतिपत्तिः सोमान्ते 'संस्थिते यज्ञे प्रस्तरं प्रहरति स्वरुं वा' इति। **वि.** १२।२।१२. * स्वरोः यावदनुबन्ध्यापश्वञ्जनं धारणं कर्तव्यं न तु अग्नीषोमीयपश्वञ्जनेन प्रतिपत्तिः। **सोम.** ४।४।१०. * स्वरोः यूपानुनिष्पन्नप्रथमशकलस्य नाशे येन केनचित् काष्ठेन पशोरञ्जनम्। **भाट्ट.** ४।२।१.

**स्वर्व( रु-अ ) धिकरणम्।** स्वरुः पश्वङ्गम्। अग्नीषोमीये पशौ स्वरुः पश्वर्थः॥

**स्वरुश्चाप्येकदेशत्वात्। ४।४।१०।२५॥**

**भाष्यम्**—'अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः सोमाङ्गभूतः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र श्रूयते 'स्वरुणा स्वधितिना वा पशुमनक्ति' इति। तत्र संदेहः, किं यूपाङ्गं स्वरुः उत पश्वङ्गमिति। किं प्राप्तम्? यूपाङ्गमिति ब्रूमः। कुतः? एकदेशत्वात्। एकदेशः स्वरुर्यूपस्य इति श्रूयते, 'यूपस्य स्वरुं करोति' इति। स्वरुमन्तं यूपं कुर्यात् इत्यर्थः। एवं स यूपो भवतीति। यथा चषालम्।

**निष्क्रयश्च तदङ्गवत्। २६॥**

**भाष्यम्**—यूपाङ्गमिव स्वरुं निष्क्रयवादो दर्शयति। 'अपश्यन् ह स्म वै पुरा ऋषयो ये यूपं प्रापयन्ति, संभज्य स्रुचं ते मन्यन्ते यज्ञवैशसाय वा इदं कर्मेति, ते प्रस्तरं स्रुचो निष्क्रयमपश्यन्, यूपस्य स्वरुमयज्ञवैशसाय' इति निष्क्रयश्रवणात् तदङ्गता विज्ञायते। तस्मात् यूपाङ्गमिति।

**पश्वङ्गं वाऽर्थकर्मत्वात्। २७॥**

**भाष्यम्**—पश्वङ्गं वा, तस्य हि अञ्जनार्थेन स्वरुणा प्रयोजनम्। तथाहि श्रूयते 'स्वरुणा पशुमनक्ति' इति। तदञ्जनं पशोः स्वरोरुत्पत्तिं प्रयोजयति। यदि तदर्थं एष स्वरुः, ततो दृष्टं प्रयोजनम्। अथ यूपार्थः, अदृष्टं प्रयोजनम्, ततः कल्प्यम्। तस्मात् पश्वङ्गमिति।

**भक्त्या निष्क्रयवादः स्यात्। २८॥**

**भाष्यम्**—कया भक्त्या? एवमाह, 'यूपः किलाग्नौ प्रक्षेप्तव्यः। यत् स्वरुः प्रक्षिप्यते। तेन यूपः प्रक्षिप्यते' इति। स एष निष्क्रय इव भवति। अनया भक्त्या स्तुतिरिति। किं भवति प्रयोजनम्? एकयूपे एकादश पशवो यदा नियुज्यन्ते, तदा एकस्यैव पशोः समञ्जनं पूर्वस्मिन् पक्षे। सर्वेषां सिद्धान्ते। श्लोकश्च भवति—'**स्वरुर्यूपाङ्गमिति चेदेकस्यैव समञ्जनम्। बहूनामेकयूपत्वे सर्वेषां तु समञ्जनम्॥**' इति।

**शा**—'**स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः। स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता॥**' इति पश्वर्थो यूपः।

**सोम**—रशनावत् स्वरुरपि यूपाङ्गं इति प्रत्यवस्थानात् ( दृष्टान्त– ) **संगतिः। सूत्रार्थस्तु**—स्वरुश्चापि यूपाङ्गं स्यात् 'यूपस्य स्वरुं करोति' इत्यस्य षष्ठीबलेन स्वरुमन्तं यूपं करोति इत्यर्थपर्यवसानेन यूपैकदेशतया तदङ्गत्वौचित्यादिति।

**वि**—'स्वरुर्यूपे पशौ वाऽङ्गं, यूपस्येत्युक्तितोऽग्रिमः। स्वरुणा पशुमञ्ज्यादित्युक्तेः पश्वङ्गता स्फुटा॥'

**भाट्ट**—'यूपस्य स्वरुं करोति' इति षष्ठ्या स्वरोः यूपार्थत्वावगमात् 'स्वरुणा पशुमनक्ति' इति अञ्जनं प्रतिपत्तिः, 'यत् किंचित् सोमलिप्तं तेनावभृथं यन्ति' इतिवत्। **इति प्राप्ते,** स्वरोर्यूपार्थत्वे अदृष्टार्थत्वापत्तेः षष्ठ्याश्च अवयवव्यतिरेकनिमित्तत्वेनापि उपपत्तेः 'स्वरुणा' इति तृतीयादिबलात् पश्वञ्जनार्थत्वमेव। सोमलिप्ते तु अवभृथपदे गौणत्वाद्यनेकदोषभिया तदङ्गीकरणं इत्युक्तमेव ( ४।२।८ )। प्रयोजनं पूर्वपक्षे एकयूपके पशुगणे एकस्यैव पशोः स्वरुणा समञ्जनम्, सिद्धान्ते तु सर्वेषामिति। **पार्थसारथिमते** तु प्रयाजशेषाभिघारणन्यायेन आघारनियमस्य पशुसंस्कारार्थत्वापत्तेः पूर्वपक्षेऽपि सर्वेषामञ्जनप्रसङ्गात् प्रयोजनानुपपत्तिः इति भाष्यविरोधोऽपि।

**मण्डन**—'यूपगुणं स्वरुमाह न षष्ठी।'

**शंकर**—'स्वरुः पश्वञ्जनाङ्गं स्यात्।'



* **स्वरुकार्यं** ज्ञायते पशोरञ्जनम्। **भा.** ११।३।५।८.

* **स्वरुशब्दस्य** तदर्थस्य च अलौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः। **वि.** १।३।१०.

* **स्वरूपम्।** लक्षणेन लक्षित आकारः स्वरूपम्। **वि.** ३।१।२. * **स्वरूपेण** अविधेयत्वेऽपि विशिष्टरूपेण विधेयत्वं संभवति। **सु. पृ.** ८६४. * स्वरूपेण पदार्थानामतिदेशः इति दशमाद्यपूर्वपक्षन्यायः। **सोम.** ९।२।९.

* **स्वरूपासिद्धिः** हेत्वाभासः, 'हेत्वाभासाः' इति बिन्दौ द्रष्टव्यः। **मणि. पृ.** ४१.

* **स्वरूपबलाबलेन** आश्रयबलाबलस्य बाध्यत्वं पिकनेमाधिकरणे वक्ष्यते। **सु. पृ.** १७४.

* **स्वरूपभेदसमर्थनम्।** संप्रति स्वरूपभेदः समर्थ्यते। यदिदं द्रव्यगुणादीनामसाधारणं रूपं तद्व्यतिरेकेण भेदो नाम धर्मो नास्ति, स्वरूपमात्रेणैव भेदव्यवहारयोरुपपत्तेः। **ननु** यदि स्वरूपमात्रमेव भेदः, तर्हि स्वरूपमात्रदर्शनानन्तरमेव भेदव्यवहारः स्यात्, न च तथा दृश्यते। सत्यम्, स्वरूपसमकालं भेदव्यवहारो नास्ति, तथापि स्वरूपातिरिक्तो भेदो नास्त्येव किंतु प्रतियोगिसापेक्षो भेदव्यवहारः, स्वरूपमात्रदर्शने तदभावान्न भेदव्यवहारप्रसङ्गः। **ननु** तर्हि प्रतियोगिसव्यपेक्षो भेदः स्वरूपं तु प्रतियोगिनिरपेक्षमेव, कथमनयोरेकत्वम्? **नैवम्,** भेदस्तु न प्रतियोगिसव्यपेक्षः किंतु भेदव्यवहार एव, अत एव निर्विकल्पके प्रतियोगिज्ञानाभावादेव भेदव्यवहाराभावः। तर्हि को भेदव्यवहारविषयः? स्वरूपमात्रमेवेत्युक्तम्। न चैतावता स्वरूपदर्शनमात्रेण भेदव्यवहारप्रसङ्गः, भेदस्तु स्वरूपतन्त्रमेव, न हि स्वरूपमात्रं भेदः। यथा देवदत्तः पित्रपेक्षया पुत्रः, न तु देवदत्तमात्रं पुत्रः, अथ देवदत्तव्यतिरिक्तोऽपि न भवति पुत्रः।

**ननु** किमनया क्लिष्टकल्पनया? भेदस्तावत् '**अयमस्माद्भिन्नः**' इति प्रत्यक्षेण प्रतीयते एव। सत्यं प्रतीतिरस्ति। न च स्वरूपादिवत् द्रव्यधर्मत्वमुपपद्यते, द्रव्यगुणादिष्वनन्तर्भावात्, गुणादिवृत्तित्वात्। न च पदार्थान्तरत्वकल्पनमुचितम्। भेदप्रतीतिव्यवहारयोः स्वरूपमात्रालम्बनत्वेनोपपद्यमानत्वात्।

**ननु** तर्हि स्वरूपाणामानन्त्याद्भेदशब्दवाच्यमेकं न भवेत्, **नैवम्,** प्रतियोगिसव्यपेक्षं स्वरूपमित्यौपाधिकत्वेनैकत्वोपपत्तेः।

**ननु** प्रतियोगिसव्यपेक्षं स्वरूपं भेद इत्युक्तम्, केयं प्रतियोगिसव्यपेक्षता नाम? यदि स्वरूपमात्रमेव, तर्हि पूर्वोक्तो दोषः, अथ धर्मान्तरं प्रतियोगिसव्यपेक्षत्वम्, तर्हि स एव भेद इति, अङ्गीकृतः स्वरूपातिरिक्तो भेदः। **नैवम्,** धर्मभेदवादिनां मिथ्याभेदवादिनां च भेदव्यतिरिक्तमेव प्रतियोगिव्यपेक्षत्वं नाम धर्मान्तरमङ्गीकर्तव्यम्; इतरथा घटस्वरूपमात्रेण तद्गतभेददर्शनादेकस्मिन्नेव भेदव्यवहारप्रसङ्गात्। **अथ** संयोगादिवद्विशिष्टत्वाद्भेदस्य द्वयोर्दर्शन एव भेदप्रतीतिः, **नैवम्,** घटाद्भिन्नः पटः इति भेदव्यवहारः, न संयोगवद्विशिष्टतया, तत्रायमस्मात्संयोगः इति न कदाचिदपि प्रतीतिः। एवं संप्रतियोगिकत्वेन प्रतिपन्नस्य भेदस्य पश्चाद् व्यवहारमात्रमनयोर्भेद इति। तस्माद्भेदव्यतिरेकेण प्रतियोगिसव्यपेक्षत्वं नाम सर्वभेदवादिभिरङ्गीकर्तव्यम्, तदपेक्षं स्वरूपं भेदव्यवहारकारणमस्तु, किमन्तर्गडुना भेदधर्मेण?

**ननु** धर्मवादिना प्रतियोगिसव्यपेक्षस्वभावत्वं धर्मस्याङ्गीकर्तुमुचितम्, सर्वत्र तदपेक्षादर्शनात्। स्वरूपं तु न, प्रतियोगिनिरपेक्षस्यापि स्वरूपस्य कदाचिद्दर्शनात्। अतो न प्रतिबन्दिसिद्धिरिति, **नैवम्,** अत्रापि प्रतियोगिसव्यपेक्षत्वं न स्वरूपस्य स्वभावः, किंतु भेदव्यवहारस्य।

**ननु** विलक्षणव्यवहारो विलक्षणव्यवहार्यनिबन्धनोऽपि दृष्टः, यथा घटव्यवहारात् भेदिनो भिन्नो भेदः – इति व्यवहारः, तत्र विलक्षणो व्यवहारोऽस्ति, न तु विलक्षणं व्यवहार्यम्, अतोऽनैकान्तिको हेतुः। अभिन्नो भेदिनो भेद इत्यङ्गीकारे नामान्तरेण स्वरूपभेदवाद एव स्वीकृतः स्यात्। अथ तत्रा-

थैक्याद्विलक्षणव्यवहारत्वमेव नास्ति, तर्हि भिन्नो घटः इत्यत्रास्मन्मतेऽथैक्यात् विलक्षणव्यवहारवैलक्षण्यमेव न भवेत्, अतः स्वरूपातिरेकेण भेदाङ्गीकारो न युक्तः।

ननु स्वरूपस्य प्रतियोग्यपेक्षा वक्तव्या, तत्र विकल्पनीयम्– किं स्वरूपाद्भिन्नः प्रतीयोगी, किंवा अभिन्नः इति। न तावदभिन्नः, स्वयमेव स्वस्य प्रतियोगित्वप्रसङ्गात्। न च भिन्नः, भेदे सति प्रतियोगित्वसिद्धिः, प्रतियोगित्वसिद्धौ च भेदसिद्धिरितीतरेतराश्रयत्वम्। अथ भेदान्तरेण भिन्नः प्रतियोगी, तर्ह्यनवस्थाप्रसङ्ग इति। नैवम्, धर्मभेदवादिनोऽपि प्रतियोगिसव्यपेक्षत्वमस्त्येव, तत्राप्येवं विकल्पो दोषश्च समानः, यस्तत्र परिहारः स एवात्रापि।

ननु स्वरूपभेदवादः प्रतीतिविरुद्धः। तथाहि, 'पटाद्भिन्नो घटः' इति विशेषणत्वेन भेदः प्रतीयते, भवतस्तु स्वरूपव्यतिरेकेण भेदाभावाद्विशेषणभूतोऽर्थो नास्त्येव, अतः 'भेदो घटः' इत्येव व्यवहारः स्यात्, न 'भिन्नो घटः' इति। नैवम्, भेदिनो भिन्नो भेदः इत्यत्र भेदव्यतिरेकेण विशेषणभूतो भेदो नास्त्येव, तथापि भिन्नो भेदः इति।

अथ भेदस्य भेदान्तराभावेऽपि प्रतियोगिसव्यपेक्षं स्वरूपं विशेषणम्, भेदमात्रं विशेष्यमिति, तर्हि 'भिन्नो घटः' इत्यत्रापि प्रतियोगिसव्यपेक्षस्वरूपस्यैव विशेषणत्वं स्वरूपमात्रस्य विशेष्यत्वमिति तुल्यचर्चः, पाचकादिशब्दवत्। यथा 'पाचको देवदत्तः' इत्यत्र पाचकव्यक्तिष्वनुगतमेकं सामान्यं गुणो वा नास्त्येव, तथापि तटस्थभूतपचनक्रियोपलक्षितपाचकव्यक्तिषु पाचकशब्दो वर्तते। न हि पाचकशब्दस्य पचनक्रियार्थः। एवं प्रतियोग्युपलक्षितस्य विशेषणत्वाङ्गीकारादेव प्रतीतिविरोधोऽपि नास्त्येव।

यत्तूक्तम्, भेदपटशब्दयोः पर्यायत्वप्रसङ्ग इति, तदपि भिन्नो भेदः इत्यत्रापि समानम्। तथाप्युच्यते, प्रतियोगिसव्यपेक्षरूपस्य भेदशब्दप्रवृत्तिनिमित्तत्वात् न पर्यायतेति।

अथोच्येत। भेदस्य विदारणात्मकत्वात् स्वरूपस्यैव विदारणात्मकत्वात्तदंशांशस्यापि तथैव प्रसङ्गात् शून्यं जगदभविष्यदिति, नैवम्, भेदस्य विदारणात्मकत्वेऽपि यस्माद्यस्य भेदव्यवहारः तस्मात् तस्यैव विदारणात्मकत्वम्, न हि सर्वस्मात् स्वस्य भेदव्यवहार इति न तत्र विदारणात्मकत्वम्, अतः उपेक्षणीयोऽयं पक्षः।

यदप्येतदुक्तम्, भेदस्य भेदान्तराभ्युपगमेऽपि नानवस्थादोषः, मूलभेदव्यवहारस्य भेदान्तरापरिज्ञानेऽपि विरोधाभावादिति। तच्च नैवम्, भेदस्य ज्ञायमानतया व्यवहारहेतुत्वात्, यत्र सत्तया हेतुत्वं बीजाङ्कुरादौ, तत्र नानवस्थादोषः, अत्र त्वाश्रयप्रतियोगिभ्यां भिन्नत्वेन ज्ञातो भेदो भेदव्यवहारहेतुः, अन्यथा ताभ्यां भेदस्य च भेदान्तरापरिज्ञाने वस्तुदर्शनमात्रेण सकलभेदव्यवहारप्रसङ्गः। भेदिनो भेदस्य भेदज्ञाने आश्रयधर्मयोर्भेदज्ञानस्यावश्यं भावित्वात्, तस्याप्येवमित्यनवस्था दुर्निवारैव। यत्तु कैश्चिदुक्तम्—भेदस्य भेदान्तरापेक्षा नास्त्येव, परगतभिन्नव्यवहारहेतुत्वात्, यत् परगतकार्यकारि तत्तथाभूते कार्ये न परमपेक्षते, यथा रूपं रूपव्यवहारे परिमाणं वा मानव्यवहारे, अतो भेदस्य भेदान्तरापेक्षा नास्त्येवेति, तर्हि सिद्धो नः पक्षः। भिन्नव्यवहाराः सर्वत्र भेदधर्मयोगिन इति त्वत्पक्षं परित्यज्य भेदस्वरूपमेव स्वस्मिन् भिन्नव्यवहारहेतुरित्युक्तं भवताऽपि, तदेवास्माभिरपि साध्यम्, सर्वत्र स्वरूपं स्वस्मिन् व्यवहारहेतुरित्यास्थेयम्, लाघवात्।

अथ रूपस्य व्यवच्छेदे रूपान्तरनिरपेक्षत्ववद्घटादयोऽपि स्वव्यवच्छेदं स्वयमेव कुर्वन्त्विति रूपापलापप्रसङ्ग इति, नैवम्, यदि रूपव्यतिरेकेण रूपबुद्धिः स्यात्, तदा रूपापलापोऽपि भवेत्, न हि कदाचिद्रूपमन्तरेण रूपिबुद्धिरस्ति, अत्र तु भेदमन्तरेणापि स्वरूपस्य कदाचित् ग्रहणमस्तीति भवतैवोक्तम्, अतो यो धर्मभेदवादिभिः आश्रयोऽङ्गीकृतः, प्रतियोगी वा, तस्मिन्नेवाऽऽश्रये तस्मात् भेदव्यवहारः प्रवर्तते इति किं प्रमाणशून्येन भेदधर्मेण।

यत्तूक्तम्, स्वरूपभेदवादिभिरुक्तेन दूषणेन धर्मभेदवादो दूषितः, धर्मभेदवादिभिरुक्तेन दूषणेन स्वरूपभेदवादो दूषितः, अतो भेदस्य प्रमाणा-



सहिष्णुत्वात् भ्रान्त एव। किंच, **विवादाध्यासितो भेदो मिथ्या, भेदत्वात्, द्विचन्द्रादिभेदवत्। विवादाध्यासितो भेदो मिथ्या, दृश्यत्वात्, रज्जुसर्पवत्।** 'नेह नानास्ति किंचन' इत्यागमाच्च प्रतीयमानस्य भेदस्य भ्रान्तत्वमवगम्यते, प्रमाणाभावाच्च, न हि प्रत्यक्षं भेदग्राहि, सन्मात्रविषयत्वात्तस्य, तन्मूलत्वादेव नानुमानादिकमपि भेदे प्रमाणं इति।

**अत्रोच्यते।** 'घटाद्भिन्नः पटः' इति प्रतीतिव्यवहारौ सर्ववादिभिरङ्गीकर्तव्यौ, अतः प्रतितिबलसिद्धो भेदः कथमपह्नोतुं शक्यते? सत्यं प्रतीतिरस्ति, तथापि कारणाभावात् भ्रान्तत्वमिति चेत्, नैवम्। प्रतीतिरेव हि कार्यभूता यथायोग्यं कारणमुपस्थापयति, न हि कारणादर्शनमात्रेण प्रतीतेरपलापो युज्यते, शून्यवादप्रसङ्गात्। तदुक्तं **प्रकरणपञ्चिकायाम्**– 'कार्यं हि प्रतीयमानं कारणकल्पनायां प्रमाणम्, न पुनः स्फुटावधारितकार्यकारणानिरूपणयाऽपन्यायमर्हति' इति।

**किंच** एवमनङ्गीकारे सति सकलानुमानोच्छेदप्रसङ्गः। पर्वते धूमदर्शनमात्रेऽग्न्यदर्शनमात्रेण धूमप्रतीतेर्भ्रान्तत्वं न लाघवाद्धियते, अतोऽनुमानोच्छेद एव। अथ धूमस्य अग्निव्याप्त्यवगतेरग्न्यभावे सति क्लृप्तहानिरेव स्यात्, अतः क्लृप्तकल्पनमेव वरमिति पर्वतेऽग्निरस्तीति कल्प्येत, तर्हि कार्यमपि योग्येन कारणेन व्याप्तमिति भेदप्रतीतिकार्यदर्शनात् योग्यमेव कारणमनुमास्यामहे।

ननु शुक्तिकारजतज्ञानेऽपि रजतज्ञानदर्शनात् तदनुगुणं कारणमपि कल्प्यते इति सर्वत्र भ्रान्तिर्न स्यात्, नैवम्, तत्रापि कार्यदर्शनाद्योग्यमेव कारणमनुमीयते एव, किन्तु अबाधितकार्यदर्शनात् क्वचित् पुष्कलमेव कारणमनुमीयते, क्वचित्तु बाधितकार्यदर्शनात् तद्योग्यस्य कारणदोषादेः परिकल्पनमिति सर्वत्र योग्यकारणानुमानमस्त्येव, अतो भ्रान्ताभ्रान्तव्यवस्थाऽप्युपपद्यते एव। तदुक्तम्, 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः' – इति। भेदव्यवहारस्य तु न साक्षात् बाधकमस्ति नायं भेदः इति। यौक्तिकमपि बाधकं नास्त्येव, कार्यत एव कारणस्य कल्प्यमानत्वात्।

यत्तु पश्चादद्वैतज्ञानेन बाधो भविष्यतीत्युक्तम्, तदपि नास्ति, उपनिषदां कार्यशेषतया प्रामाण्यवर्णनात्, तासामद्वैतज्ञानजनकत्वासिद्धेः तथाविधबाधा न संभाव्यते। प्रमाणप्रमेयव्यवहारिणां तावद्भेदस्य बाधादर्शनेन तात्त्विकत्वमुपपद्यते एव।

यत्तु प्रत्यक्षं सन्मात्रग्राहि, न भेदग्राहीति, नैतदुपपद्यते। यदि सन्मात्रमेव गृह्यते, तर्हि 'सन् घटः' इति प्रतीतिर्न स्यात्। अथ सत्ताव्यतिरेकेण घटोऽपि नास्त्येव, तर्हि सन् इति तत्प्रत्ययः स्यात्, न 'सन् घटः' इति, सन् घट इति पर्यायत्वप्रसङ्गश्च।

अथ घटादावनुवर्तमानं सत्त्वमेव, अतश्चानुवृत्तमेव प्रत्यक्षम्, व्यावर्तमानत्वात् घटादिरप्रत्यक्ष एवेति, केयं राजाज्ञा अनुवर्तमानमेव प्रत्यक्षमिति? यदिन्द्रियेण गृह्यते अनुवर्तमानं व्यावर्तमानं वा तत् प्रत्यक्षमिति सर्वजनसिद्धम्।

यत्तु भेदो मिथ्येत्यनुमानम्, तत्र वक्तव्यम्– यद्यन्यत्रामिथ्याभूतस्य द्वित्वस्य चन्द्रे मिथ्यात्वम्, तदा यत्र अमिथ्याभूतो भेदः तेनानैकान्तिको भेदत्वादिति हेतुः, यदि वा सर्वत्र मिथ्याभूतत्वमभिप्रेत्य चन्द्रेऽमिथ्यात्वम्, तर्हि साध्यविकलो दृष्टान्तः, अन्यत्र घटादौ अमिथ्याभूतस्यैव चन्द्रमात्रेऽमिथ्यात्वाभ्युपगमात्, अनुमानान्तरेऽपि तथैव दोषः (अतो भ्रान्तिभेदवादोऽपि न युक्त इत्यलमतिप्रसङ्गेन)। प्रवि. पृ. ७०–७५.

* **स्वरूपयोग्यत्वरूपं** कारणत्वं सहकार्यन्तराभावावच्छिन्नजनकत्ववैशिष्ट्यम्। नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमः इति प्रसिद्धिः। **मणि. पृ. ४५.**

* **स्वरूपव्याक्रियैव** पराक्रिया इति न्यायः। कस्यचिद्विषयस्य स्वरूपे व्याकृते विवरणेन स्पष्टीकृते सति प्रतिवादिनः पराक्रिया निरासः तावतैव भवति। न तत्र स्वतन्त्रस्य युक्तिवादस्यापेक्षा भवति। इति न्यायार्थः। **के.**

* स्वर्गः तावदामुष्मिक एव। पशुपुत्रादीनां तु ऐहिकामुष्मिकत्वम्, न तु केवलामुष्मिकत्वम्। तदभावे तु ऐहिकत्वमेव। यत्र तु वृष्ट्यादौ ऐहिके एव कामना तत्र केवलैहिकत्वम्। वृष्ट्यादावपि पारत्रिककामना सत्त्वे तु पारत्रिकत्वमपि। केवलैहिकत्वं तु पुत्रगतपूतत्वादौ। भाट्ट. ४।३।९।२७–२८ वर्णकं २. * स्वर्गस्तु जन्मान्तरे एव। स हि निरतिशया प्रीतिः कर्मानुरूपा च इति न शक्या इह जन्मनि अनुभवितुम्। यतः अस्मिन् लोके क्षणेक्षणे सुखदुःखे अनुभवन्ति ( जनाः )। ... देशान्तरं तु ( कर्मदेशव्यतिरिक्तम् ) निरतिशयप्रीत्यनुभवान्यथाऽनुपपत्त्या कल्प्यते। तच्च अमृतस्य ( पुरुषस्य ) न संभवति, इत्यतः जन्मान्तरे एव स्वर्गः। टुप्. ४।३।११।२८ वर्णकं २. * स्वर्गः दुःखमिश्रितत्वाभावात् निरतिशयसुखत्वाच्च सर्वपुरुषाणामिष्टः। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥' वि. ४।३।७. * स्वर्गः देशविशेषरूपः सुखविशेषरूपो वा। भाट्ट. ४।१।१२. * स्वर्गः नक्षत्रदेशो वा वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेनोच्यते। यथाहि वेदे – 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्राणि तथा चैषः ज्योतिष्मन्तं पुण्यलोकं जयति' इति। यदि वा इतिहासपुराणोपपन्नं मेरुपृष्ठम्। अथवा अन्वयव्यतिरेकाभ्यां विभक्तं केवलमेव सुखं यत् संवत्सरादिषु अनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितार्थापत्तिसिद्धदेशान्तरानुभवनीयम्। तच्च यद्यपि तादृशमदृष्टपूर्वं तथापि मिश्रानुभवादेव विवेकेनोद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयति। (वा. १।३।९।३० पृ. २९९)। सर्वस्वर्गानुवर्ति तु अदुःखमिश्रसुखनिष्ठसुखत्वसामान्यं स्वर्गशब्दवाच्यम्। सु. पृ. ३५२. * स्वर्गः नाम 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्॥' अस्य विवरणादिकं तु मीको. पृ. ३२०१ 'यन्न दुःखेन' इति बिन्दौ द्रष्टव्यम्। ( बाल. पृ. ४८–४९ ) [ इदं च वाक्यं वाचस्पतिमिश्रैः सांख्यतत्त्वकौमुद्यां प्रथमकारिकायामुदाहृतम्। ] के. * स्वर्गः निरतिशयप्रीतिः। स च देशविशेषभोग्यत्वेन प्रसिद्धो मन्त्रार्थवादादौ। भाट्ट. ४।३।९ वर्णकं २. * स्वर्गः मे भवेदिति यः कामयते तस्य यागः। भा. ३।१।३।५, * स्वर्गः। यत् फलवत् चोद्यते तत् इतिकर्तव्यतानुबध्यते। अपूर्वं च फलवत्, न स्वर्गाग्न्यादि। ९।१।३।५. * स्वर्गं प्रार्थयमानस्य करणमभिलषतः तृतीयया करणं निर्दिश्यते। तद्विवक्षायां दर्शपूर्णमासादीनि निर्दिश्यन्ते, स्वर्गं प्रार्थयमानः कमुपायं कुर्यात्, यागं कुर्यात् इति। टुप्. ७।४।१।१. * स्वर्गं लोकं गच्छन् मनुना अभिहितः ( 'एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति। स गच्छति परं स्थानं' ) 'तेजोमूर्तिः पथर्जुना' ( मस्मृ. ३।९३ ) ( पथा ऋजुना ) इति। वा. ३।१।७।१३ पृ. ७०२. * यः स्वर्गं न कामयते बन्धात्मकत्वात् मोक्षार्थी, तस्य कर्मस्वरूप एव कर्तव्यता ( न फले )। टुप्. ६।३।१।२ पृ. १४०८. * 'स्वर्गस्यामुष्मिकत्वं तु षष्ठाद्ये स्थापयिष्यते।' श्लोवा. चित्राक्षेपपरिहारे २३. * स्वर्गस्यैकस्यैव फलस्य दर्शपूर्णमासादिषु समुच्चिता एवाग्नेयादयः साधनम्। ११।१।१।१–४. मीको. पृ. १९३७ 'तन्त्रन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * यथा स्वर्गस्य उपायत्वेन अग्निहोत्रं विधीयते तथा दीक्षोपायत्वेन दीक्षणीया विधीयते। रत्न. ५।३।११। २९–३१.

* स्वर्गाङ्गत्वं यागस्य। भाट्ट. ३।१।३.

* स्वर्गार्थता विश्वजिदादेः। ४।३।७।१५–१६. मीको. पृ. ३६९७ 'विश्वजिन्न्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* स्वर्गादिः शेषी शेषं यागादिकं स्वार्थे प्रयुङ्क्ते न परार्थम्। बाल. पृ. १०७. * स्वर्गादयोऽपि अङ्कुरादिस्थानीयां तावत् अपूर्वावस्थां प्रतिपद्यन्ते ( ज्योतिष्टोमाद्यनुष्ठानेन )। तया चोत्पद्यमानया त एवोत्पन्ना भवन्ति इति। अपूर्वं नाम सूक्ष्मशक्त्यात्मकं फलम्। वा. २।१।२।५ पृ. ३९५.



* स्वर्गादिफलं अपूर्वोत्पत्तेः तत्पालनस्य च प्रयोजकम्, उपादानं तु नास्त्येव इति तस्य अप्रयोजकम्। बाल. पृ. १०७. * स्वर्गादिफलं यागोत्पत्तेः प्रयोजकम्, यागोपादानपालनयोस्तु अप्रयोजकम्। पृ. १०७. * स्वर्गादिफलं रागसिद्धत्वान्न विधेयम्। वि. ४।१।२ वर्णकं २.

* स्वर्गादिफलसाधनता यागादिकर्मणाम्। भाट्ट. ६।१।१.

* 'स्वर्गकामः चातुर्मास्यैर्यजेत'। भा. १०।४। २५।५०, * स्वर्गकामः ज्योतिष्टोमेन यजेत। तत्र सवनत्रये ग्रहाः। ग्रहधर्माश्च सर्वार्थाः। ३।६।९।३०, * स्वर्गकामः ज्योतिष्टोमे उक्थ्यानां ब्रह्मसाम्नि सौभरे 'ऊ' इति निधनं कुर्यात्। २।२।१३।२८, * स्वर्गकामः दर्शपूर्णमासाभ्यां यजेत। ११।४।१।२. * स्वर्गकामः पुरुषो यागफलं भजमानो यथा प्रधानभूतः तथा आचार्यः उपनयनफलमाचार्यत्वं भजमानः प्रधानभूतः। रत्न. ६।१।६।२४ वर्णकं २. * 'स्वर्गकामः यजेत' फलसंयोग एवायम्। यागात् स्वर्गो भवतीति। फलमुद्दिश्य यागो विधीयते स्वर्गं यागेन कुर्यादिति। भा. ११।१।१।१,३। याग एव फले विधीयते। भावना सर्वविशेषणविशिष्टा विधीयते। टुप्टीका. * 'स्वर्गकामः यजेत' स्वर्गकामो यागेन स्वर्गं भावयेत् इति तदेतदेवमापद्यते। भा. ११।१।४।२४. * स्वर्गकामः। स्वर्गमात्मसंबन्धित्वेन प्रार्थयमानः स्वर्गकामोऽभिधीयते। स स्वर्गमभिलषमाणः उपायमभिलषति। तस्मात् अनयोरविनाभावात् स्वर्गकामशब्देन शक्यते तदुपायो लक्षयितुम्। अतः शास्त्रेण यागादयस्तत्रोपायत्वेन विधीयन्ते। टुप्. ६।१। १।३. * स्वर्गकामाः। सर्वे हि पुरुषाः स्वर्गकामाः। प्रीतिर्हि स्वर्गः। भा. ४।३।७।१५, * स्वर्गकामाय कर्मोपदिश्यते न तु स्वर्गकामः कर्मणे उपदिश्यते 'स्वर्गकामो यजेत' इति। ८।१।१३।२१, * स्वर्गकामस्य अनेक उपकारः पशुपुत्रग्रामान्नाद्यादिलाभः। ११।१।१।१. * स्वर्गकामस्य आयुरतिरात्रः– कातीये। बाल. पृ. ३४. * स्वर्गकामस्य, स्वर्गकामेनेदं कर्तव्यं इति यावच्छ्रुतं तत् साकल्येन अकुर्वतः फलाभावः स्यात्। भा. ११।१।३।१२.

☸ **स्वर्गकामाधिकरणम्।** स्वर्गकामस्य ज्योतिष्टोमाद्यनुष्ठाने अधिकारः। अधिकारन्यायः। द्रव्यकर्मसंयोगन्यायः॥

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः। ६।१।१।१॥**

**भाष्यम्**— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादि समाम्नायते। तत्र संदेहः किं स्वर्गो गुणतः कर्म प्रधानतः, उत कर्म गुणतः स्वर्गः प्रधानतः इति। कुतः संशयः? इह स्वर्गकामो निर्दिश्यते, यजेत इत्यपि। अत्र स्वर्गकामयागयोः संबन्धो गम्यते। तस्मिंश्च संबन्धे किं यागः साधनत्वेन संबध्यते उत साध्यत्वेन इति भवति विचारणा। तत्र यदि स्वर्गकामस्य पुरुषस्य यागः कर्तव्यतया चोद्यते स्वर्गकामेन यागः कर्तव्यः इति स्वर्गेच्छाविशिष्टस्य स सिध्यति इति गम्यते। स्वर्गेच्छा तत्र पुरुषस्य यागं प्रति उपदिश्यते। तेन तस्य स सिध्यति, नान्यस्येति। यः स्वर्गकामः स शक्नोति पुरुषो यागं साधयितुम्। अथ स्वर्गकामस्य कामः कर्तव्यतया चोद्यते, ततो यागविशिष्टा कर्तव्यता इति यागः साधकः अभ्युपगम्यते। स चायं उभयोऽप्यर्थः एकस्मात् उच्चरितात् वाक्यात् अवगम्यते। यागो वा कर्तव्यः, कामो वेति। न चैतत् यौगपद्येन संभवति। यदा कामो न तदा यागः, यदा यागः न तदा कामः। वचनव्यक्तिभेदात् उपपन्नः संशयः।

तथा इदमपरं संदिग्धम्। किं प्रीतिः स्वर्गः उत द्रव्यमिति। यदि द्रव्यं स्वर्गः ततः प्रधानं कर्म, द्रव्यं गुणभूतम्। अथ प्रीतिः स्वर्गः ततो यागो गुणभूतः, स्वर्गः प्रधानमिति। कुतः संशयः? नास्त्यत्र कामस्य गुणत्वेन प्राधान्येन वा श्रुतिः। संबन्धमात्रं तु अस्य यागेन गम्यते। द्रव्यस्य तु कर्मार्थता स्वभावतः। पुरुषप्रयत्नस्य च फलार्थता। किं तावत् प्राप्तम्?

स्वर्गो गुणतः, कर्म प्रधानतः इति। तत्र एवं तावत् वर्णयन्ति। द्रव्यं स्वर्ग इति। कथमवगम्यते? सर्वेषामेव शब्दानां अर्थज्ञाने लौकिकः प्रयोगः अभ्युपायः। तस्मिंश्च लौकिके प्रयोगे द्रव्यवचनः स्वर्गशब्दो लक्ष्यते। कौशेयानि सूक्ष्माणि वासांसि स्वर्गः, चन्दनानि स्वर्गः, द्व्यष्टवर्षाः स्त्रियः स्वर्ग इति यद्यत् प्रीतिमत् द्रव्यं तत्तत् स्वर्गशब्देन उच्यते। तेन सामानाधिकरण्यात् प्रीतिमत् द्रव्यं स्वर्ग इति मन्यामहे। उपमानात् शब्दप्रवृत्तिः इति चेत्, न हि कस्मिंश्चित् अनुपमितो लोके प्रसिद्धः, यस्यैतत् उपमानं स्यात्। तस्मान्नोपमानम्। अतो द्रव्यं स्वर्ग इति। **नेत्याह**। प्रीतिः स्वर्ग इति। न द्रव्यम्। व्यभिचारात्। तदेव हि द्रव्यं कस्यांचिदवस्थायां न स्वर्गशब्दः अभिदधाति। प्रीतिं तु न कस्यांचिदवस्थायां नाभिदधाति। तस्मात् अन्वयव्यतिरेकाभ्यां एतदवगम्यते, प्रीतौ स्वर्गशब्दो वर्तते इति। नैतदस्ति प्रीतेरभिधायकः स्वर्गशब्द इति। कुतः? विशेषणत्वात् प्रीतेः। यद् विशेषणं न तत् शब्देनोच्यते। तद्यथा दण्डीति दण्डनिमित्तः पुरुषवचनः। दण्डोऽस्य निमित्तम्, नाभिधेयः। एवमेष न प्रीतिवचनः। प्रीतिसाधनवचनस्तु एष स्वर्गशब्द इति।

**ननु** स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे। यस्मिन्नोष्णम्, न शीतम्, न क्षुत्, न तृष्णा, नारतिः, न ग्लानिः। पुण्यकृत एव प्रेत्य तत्र गच्छन्ति, नान्ये। **अत्रोच्यते**। यदि तत्र केचित् अमृत्वा न गच्छन्ति, तत आगच्छन्ति अजनित्वा वा, न तर्हि स प्रत्यक्षो देश एवंजातीयकः। नापि अनुमानात् गम्यते। नान्येन। **ननु** च अन्ये सिद्धाः केचित् दृष्टवन्तः, ते च आख्यातवन्तः इति चेत्, न तत्र प्रमाणमस्ति, सिद्धा एवंजातीयकाः सन्ति, ते च दृष्ट्वा आचक्षीरन् इति। तस्मादेवंजातीयको देश एव नास्ति। **ननु** च लोकात् आख्यानेभ्यो वेदाच्च अवगम्यते देश एवंजातीयकः स्वर्ग इति। **तन्न**। पुरुषाणां एवंविधेन देशेन असंबन्धात् अप्रमाणं वचः। आख्यानमपि पुरुषप्रणीतत्वात् अनादरणीयम्। वैदिकमपि स्वर्गाख्यानं विधिपरं नास्त्येव। भवति तु विध्यन्तरेण एकवाक्यभूतं स्तुतिपरम्। यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्। तथापि अस्मत्पक्षस्य अविरोधः, प्रीतिसाधने स्वर्गशब्द इति। तेन देशेन व्यवहाराभावात् कुतस्तस्य अभिधायकः स्वर्गशब्दो भविष्यति।

यदा प्रीतिमत् द्रव्यं स्वर्गः तदा ब्रूमः। 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति (६।१।१।१ सू.)। यागोऽत्र कर्तव्य इति श्रूयते स्वर्गकामस्य। तत्र अवश्यं स्वर्गस्य यागस्य च संबन्धः। तत्र भूतं द्रव्यम्। भव्यं कर्म। भूतस्य च भव्यार्थता न्याय्या, दृष्टार्थत्वात्। न तु भव्यस्य भूतार्थता। तत्र दृष्ट उपकारस्त्यज्येत। कथं पुनरवगम्यते यागः कर्तव्यतया चोद्यते इति। यदा कामस्यापि कर्तव्यता अस्मात् वाक्यात् अवगम्यते। **उच्यते**। कामस्य कर्तव्यता वाक्यात्, यज्यर्थस्य कर्तव्यता श्रुतेः। श्रुतिश्च वाक्यात् बलीयसी। तस्मादयमर्थः स्वर्गकामो यागं कुर्यात् इति। स्वर्गकामस्य यागः कर्तव्य इति। कर्तव्यश्च सुखवान्। अकर्तव्यो दुःखवान्। कर्तव्य इति च एनं ब्रूते। तस्मात् सुखफलो यागो भविष्यति। स तु यस्येच्छा तस्य सिध्यति, नान्यस्य इति गम्यते। तेन स्वर्गेच्छा यागस्य गुणभूता। सर्वस्यापि कर्मणो द्रव्येच्छा भवति गुणभूता। तया द्रव्यमानेतुं यतते दृष्टेनैव द्वारेण। इह तु स्वर्गसंज्ञकद्रव्येच्छैव नियम्यते। यथैव सा गुणभूता प्राप्ता, तथैव सती नियम्यते। दृष्टेनैव द्वारेण, नादृष्टेनोपकारेण। तेन स्वर्गेच्छया गुणभूतया स्वर्गद्रव्यं प्रति यतिष्यते यागं साधयितुम्। अथापि अदृष्टेन तथापि न दोषः।

**टुप्**— औपोद्घातिकमेतत्। फलवत्त्वे अवगते क एतैरधिक्रियते इति युक्तो विचारः। अफलवत्त्वे तु विचारानुपपत्तिः। यदि च एवं कामशब्दैः फलमभिधीयते ततो भावार्थाधिकरणे (२।१।२) चिन्ता, किं भावशब्दाः फलसंबन्धिनः उत द्रव्यगुणशब्दाः इति। ततः अपूर्वचिन्ता। ततः अतिदेशः। फल-



सद्भावे च (तद्विकारात्) चोदनालक्षण इति विचारः। अयमेव अवसरः अध्यायस्य। कथम्? भेदाभेद– शेषशेषि– प्रयोजकाप्रयोजक– एवंक्रमयुक्तैः कर्मभिः कोऽधिक्रियते इति विचारस्य अयमेवावसरः। 'किं स्वर्गो गुणतः कर्म प्रधानतः' इति (भाष्यं) अयुक्तमिदम्। स्वर्गशब्दो यदि आख्यातेन संबध्यते, न कामपदेन। अथ कामपदेन, न आख्यातेन। कामपदेन स्वपदोपात्तेन श्रुत्या अस्य संबन्धः। आख्यातेन पदान्तरोपात्तत्वात् वाक्यम्। श्रुतिश्च वाक्यात् बलीयसी। तस्मात् स्वर्गशब्दः पुरुषविशेषणत्वेन उपक्षीणत्वात् नान्येन संबन्धुमर्हति। यथा राजजातिविशिष्टः कर्ता राजसूयसाधनं विधीयते, राजसूयो वा तदर्थत्वेन। राजजातिर्न साध्या, नापि साधनम्, एवं न स्वर्गः। तस्मात् स्वर्गेच्छाविशिष्टः कर्ता कर्मसंबन्धी। एवं चेत् संशयानुपपत्तिः। किंच 'यजेत स्वर्गकामः' इति सामानाधिकरण्यात् यागे गुणभूतः कर्ता निर्दिश्यते। यथा 'देवदत्तः पचति' इत्यत्र न देवदत्तार्थः पाकः, एवमिहापि अत्यन्तगुणभूत एव कर्ता प्रतीयते। उच्यते। नायमेकान्तो यत् प्रथमान्तं गुणभूतम्, प्रधानमपि भवति क्रियायाम्। यथा 'मलिनः स्नायात्' इति। संशयोऽपि युक्त एव। पदेतरार्थे अवगते अपदार्थोऽवधार्यते, तदुत्तरकालं वाक्यार्थः। तत्र यदि स्वर्गशब्देन द्रव्यमभिधीयते, ततोऽसौ साधनत्वेन तत्कामयमानो यागे साधनांशेनैव संबध्यते। अथास्य प्रीतिरभिधेया, ततः तां आत्मसंबन्धित्वेन कामयमानः स्वर्गकामशब्देन अभिधीयते। तदुत्तरकालं यागेन अभिसंबध्यमानः साध्यांशेनैव संबध्यते। यागस्तु गुणभूतः। एवं द्विप्रकारायां कामनायां स्वर्गो गुणभूतः, अथ प्रधानभूतः इति उपपन्नः संशयः। पदे पदेतरार्थवाक्यानि निर्णेतव्यानि। राजजात्याऽपि न सादृश्यम्। न हि कामयोगिनी जातिः। द्विप्रकारः पूर्वपक्षः। स्वर्गेच्छाविशिष्टस्य यागे कर्तृता, अतद्विशिष्टेन यागो न कर्तव्यः। यथा राजजातिविशिष्टेन राजसूयः कार्यः न अतद्विशिष्टेन, तद्वत्रापि। एवं चेत् नावश्यं उपादेयं प्रीतिमत् द्रव्यम्। तद्विषया तु इच्छा अदृष्टविषयद्वारेण उपकरिष्यति। 'अथापि अदृष्टेन, तथापि न दोषः' (प्रथमसूत्रान्ते भाष्यम्) इत्यस्मात् ग्रन्थात् अयं द्वितीयः पक्षः अनुमीयते। शब्दवस्तुभ्यां च पूर्वः पक्षः (श्रुतिलिङ्गाभ्यां इत्यर्थः)। कथम्? यजेत इति प्रत्ययः यस्यैव परः श्रूयते तस्य श्रुत्या कर्तव्यतामाह। अपि च अनिष्पन्नत्वात् यागस्य भाव्यत्वम्। यच्च भाव्यं तत् कर्तव्यतां प्रतिपद्यते। यत् निष्पन्नं तत् करणत्वं प्रतिपत्तुं शक्नोति दात्रादि। अनेन प्रकारेण भाव्यमानो यागः, न स्वर्गः। किमुत यदा प्रीतिमद्द्रव्यवचन एव लोके स्वर्गशब्दः, ततः तत्साधनांशेनैव काम्यते। 'यद्यत् प्रीतिमत् द्रव्यं तत्तत् स्वर्गशब्देनोच्यते। तद्यथा दण्डी इत्यनेन' अस्य ग्रन्थस्य संबन्धो व्यवहितस्यापि (तद्यथा दण्डी...स्वर्गशब्द इति, यद्यत् प्रीति... तत्तत्स्वर्गशब्देनोच्यते इति क्रमेण)।

अत्र ग्रन्थः। 'यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात् तथापि अस्मत्पक्षस्याविरोधः' प्रीतिसाधनं स्वर्ग इति। 'तेन देशेन व्यवहाराभावात् कुतस्तस्याभिधाता स्वर्गशब्दो भविष्यति' इति। एकस्य (सिद्धान्तिनः) प्रीतिः स्वर्गशब्दवाच्या, अपरस्य (पूर्वपक्षिणः) प्रीतिमद् द्रव्यम्। विशिष्टो देशः उभयोरपि अवाच्यः। किं कारणम्? तस्य अप्रत्यक्षत्वेन व्यवहाराभावः। तेन व्यवहाराभावात् प्रयोगाभावः। किंतु यस्य प्रीतिरभिधेया तत्साधनं च यागः, तेन सा नानुभूयते इति अर्थापत्त्या वाच्योऽपि स कल्प्यते। यथा अपूर्वम्। ननु अस्मिन्नपि देशे शक्या प्रीतिरनुभवितुम्। चन्दनानुलेपनादिभिः कृतैः अनन्तरं प्रीतिरुपलभ्यते। यैषा भोजनादिप्रीतिः एषा क्षणिकी। कर्मणां तु अल्पमध्यममहतां अल्पमध्यममहत्य एव प्रीतयः। तत्र या प्रीतिः निरतिशया अनुभवितव्या सा च शीतोष्णादिद्वंद्वरहिते देशे शक्या अनुभवितुम्। अस्मिंश्च (मर्त्यलोके) देशे मुहूर्तशतभागोऽपि द्वंद्वैर्न मुच्यते। तस्मात् निरतिशयप्रीत्यनुभवाय कल्प्यो

विशिष्टो देशः । चन्दनादिजन्या तु या प्रीतिः चन्दनादीन्येव तस्या उत्पादकानि न यागः । अस्मिंश्च देशे यावत् जङ्गमतिर्यगादि तत् सर्वं प्रीत्यप्रीती अनुभवति । न च तैः कर्माणि कृतानि अस्मिन् देशे । अतो ये साधारणे प्रीत्यप्रीती ते स्वभावकृते । अथोच्येत अन्यस्मिन् जन्मनि तैः कृतानि कर्माणि, येन प्रीतिमनुभवन्तीति । यथा अस्मिन् जन्मनि सर्वाणि न कुर्वन्ति, एवमन्यस्मिन् जन्मनि । अनुभवन्ति च सर्वाणि प्रीतिम् । अतो यदि इयं कर्मजन्या स्यात् कैश्चिदेवानुभूयेत । अकर्मजन्यत्वे न दोषः । तस्मात् स्वर्गशब्दस्य प्रीतिरभिधेया । सा च अशक्या विशिष्टदेशादृते अनुभवितुम् । इति विशिष्टदेशोऽनुमीयते । 'यद्यपि केवलसुखश्रवणार्थापत्त्या' इति अभ्युपेत्यवादेन अयं ग्रन्थः । यतः स्वर्गशब्देन द्रव्यमभिधीयते । भवता प्रीतिसामर्थ्यात् विशिष्टो देशः कल्प्यते, तथापि प्रीतिमत् द्रव्यं तस्य साधनम् । तस्य देशस्य तु व्यवहाराभावात् स्वर्गशब्देन अवाच्यता भवतोऽपि । तस्मात् निष्प्रमाणको विद्यमानोऽपि नास्मत्पक्षं विरुणद्धि । यथा च स्वर्गशब्दो द्रव्यवचनः तथोक्तं लोकव्यवहारात् इति ।

'स्वर्गकामस्य यागः कर्तव्यः । कर्तव्यश्च सुखवान्, अकर्तव्यो दुःखवान् । कर्तव्य इति चैनं ब्रूते । तस्मात् सुखफलो यागो भविष्यति' इति । अयुक्तोऽयं ग्रन्थः । यदा यागो भाव्यः तदा अन्यत् भाव्यतां न प्रतिपद्यते । कतरत् वा फलवत् आख्यातं दृष्टम्, येन अत्रापि फलमनुमीयेत । अनुमीयमानमपि (फलपदं) द्रव्यवचनतां प्रतिपद्यते । तस्मात् अस्य कीदृशी वर्णना ? यागस्तावत् वस्तुश्रुतिभ्यां (लिङ्श्रुतिभ्यां इत्यर्थः) कर्तव्यरूपः । यश्च कर्तव्यरूपः तस्य लोके कर्तव्यतोत्तरकाले अभ्युदयो दृष्टः । इहापि कर्तव्यरूपत्वात् भवितव्यं केनापि फलेन । तच्च निरीक्ष्यमाणं प्रमाणाभावात् न किंचिदवतिष्ठते । तस्मात् अनर्थकत्वात् फलनिराकरणमेव क्रियते । ननु उत्पत्तिवाक्यशिष्टं पुरोडाशादि अशक्यं बाधितुं विकल्पयितुं वा । उच्यते । रूपरससौरभ्यादयः तेषु करिष्यन्ते स्वर्गशब्दवाच्यत्वाय ।

**असाधकं तु तादर्थ्यात् । २ ॥**

**भाष्यम्**-- तुशब्देन पक्षो व्यावर्त्यते । तत एतत्तावत् वर्णयन्ति प्रीतिः स्वर्ग इति । कुतः ? एवमुक्तं भवता, प्रीतिविशिष्टे द्रव्ये स्वर्गशब्दो वर्तते इति । यद्येवं पूर्वं तर्हि प्रीतौ वर्तितुमर्हति । तां हि स न व्यभिचरति, व्यभिचरति पुनर्द्रव्यम् । यस्यैव प्रीतिसाधनस्य द्रव्यस्य वक्ता स्वर्गशब्दः तद्देव यदा न प्रीतिसाधनं भवति तदा न स्वर्गशब्देन अभिधीयते । तस्मात् प्रीतिवचनोऽयम् । यत्तूक्तं दण्डिशब्दवदिति, सोऽपि प्रतीते शब्दात् दण्डे दण्डिनि प्रत्ययमादधाति । अन्तर्गतस्तत्र दण्डशब्दः । स दण्डस्य वाचकः । इह पुनः स्वर्गशब्दः एव प्रीतेरभिधाता । प्रीतिवचनश्चेत् यागो गुणभूतः प्रीतिः प्रधानम् । कुतः ? तादर्थ्यात् पुरुषप्रयत्नस्य । प्रीत्यर्थं हि पुरुषो यतते । तेन न प्रीतिर्यागसाधनं इति विज्ञायते । द्रव्यं हि यागसाधनम् । न ऋते द्रव्यात् यागो भवति । यस्मात् द्रव्यदेवताक्रिये यजतिशब्दो वर्तते ।

असत्यामपि प्रीत्यां भवति यागः । यदि च यागो न प्रीत्यर्थो भवेत् असाधकं कर्म भवेत्, साधयितारं नाधिगच्छेत् । यो हि प्रीत्यर्थः स साध्यते नान्यः । **ननु** कर्तव्यतया यागः श्रूयते । **उच्यते** । सत्यं कर्तव्यतया श्रूयते, कामोऽपि कर्तव्यतया अवगम्यते । आह, श्रुत्या यागस्य, वाक्येन कामस्य । न चोभयोः, वाक्यभेदप्रसङ्गात् । **उच्यते** । यद्यपि यागः कर्तव्यः श्रूयते तथापि न कर्तव्यः । सुखदः कर्तव्यो भवति । दुःखदो यागः । तस्मात् प्रत्यक्षेण अकर्तव्यः । प्रत्यक्षेण च दुःखदः । कर्तव्यतावचनात् अनुमानेन सुखदो भवतीति । **उच्यते** । अनुमानं च प्रत्यक्षविरोधात् न प्रमाणम् । तस्मात् अकर्तव्यो यागः, यदि न प्रीत्यर्थः । अथ आनर्थक्यपरिहाराय कल्पितेन अन्येन फलवचनेन संभन्त्स्यते इति । **उच्यते** । ततः संबध्यमानोऽपि अविधीयमानो न समीपवचनमात्रेण फलवान् विज्ञायते । तस्मात् अनर्थको मा भूत् इति स्वर्गस्य कर्तव्यता गम्यते । पुरुषप्रयत्नश्च यागविशिष्टः



इति यागस्तस्य करणं स्यात् । तस्मात् सुष्ठूक्तं यागो गुणभूतः स्वर्गः प्रधानभूत इति ।

**टुप्**-- आकृत्यधिकरणन्यायेन (१।३।९) स्वर्गशब्दस्य प्रीतिरभिधेया । सा साध्या, पुरुषार्थत्वात् । सर्वो हि प्रीत्यै यतते, तत्र प्रीत्यै यागः । न ततो यागः (साध्यः) । न चोभौ साध्यौ । एकेन भाव्येन भवितव्यं अन्येन भावकेन । यद्यपि यागे तृतीया न श्रुता, नापि स्वर्गे द्वितीया, तथापि स्वर्गस्य भाव्यत्वात् यागस्य करणता । **ननु** पशुकामे द्रव्यवचनत्वात् कामना न प्राप्नोति । **उच्यते** । यत् ईप्सितं पुरुषार्थत्वेन, तस्यैव कामना मुख्या, तदुपायभूता क्रिया, तत्साधनानि च नान्तरीयकत्वात् काम्यन्ते । साध्यसंपत्तये सर्वः प्रवर्तते, न तु कर्म सेत्स्यतीति । अपि च यत् साधनभूतं द्रव्यं तस्य कामपदोच्चारणमन्तरेणापि कामना अर्थलभ्या इति कामपदोच्चारणमनर्थकम् । यस्य पुनः पशुकामशब्देन फलमभिधीयते तस्य पशुं कामयमानः पशुकामः अभिधीयते । तत्र यदि कामशब्दो नोच्चार्यते पशवोऽस्य अभिप्रेता इति नैवं विज्ञायेत । अज्ञानात् पशवः फलम्, यागः साधनं इति सर्वं नावकल्प्येत । साधनपक्षे कामपदोच्चारणादृतेऽपि लभ्यत एव । यथा 'व्रीहिभिर्यजेत' इति । यागे च स्वर्गविधिमिच्छतः पुरोडाशादिभिः सह विरोधो नास्ति । कथम् ? पुरोडाशादि स्वर्गशब्देन नाभिधीयते । रूपरससौरभादयस्तत्र स्वर्गशब्देन अभिधेयाः अन्यथा न संभवन्ति इति क्रियन्ते । एतदयुक्तम् । यदेव स्वर्गशब्दवाच्यं अप्रयत्नजनितं तस्मिन्नेव उपादातव्ये विस्पष्टे शब्दार्थे पुरोडाशादौ अश्रुतः प्रयत्नः किमर्थमाश्रीयते । क्रियमाणेनापि अश्रुतेन यागः कृतो भवेत् । चन्दनाद्येव उपादास्यते इति चेत्, न, तत्र उत्पत्तिवाक्यशिष्टेन अवरोधात् विकल्पसमुच्चयौ न संभवतः । संनिधौ च विपरिवर्तमानं उपेक्ष्य कर्मान्तरमशक्यं कल्पयितुम् । विधीयमानेऽपि स्वर्गशब्द आत्मानमुपस्थापयत्येव । सर्वप्रयत्नपुरुषार्थत्वेन उपस्थाप्यमाने यदि अन्यः श्रूयेत, साध्यता न स्यात् । न चान्यः पुरुषार्थः श्रूयते । तस्मादयमेव पुरुषार्थतां प्रतिपद्यते । तस्मात् कर्मान्तरेऽपि कल्पिते स्वर्गः सिध्यत्येव । तस्मात् निर्ज्ञातस्य फलमिदम् । तव च धात्वर्थे किंचिद्विधीयते इति वाक्यम् । अन्यत्र विधाने (मम तु धात्वर्थस्य विधाने सति इत्यर्थः) श्रुतिः । अतो वस्तुतः शब्दाच्च स्वर्गः कर्तव्यः ।

**प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसंबन्धस्तस्मात् कर्मोपदेशः स्यात् । ३ ॥**

(अत्र सूत्रे भाष्यं वार्तिकं च विभज्य तत्तद्भाष्यविभागोत्तरं स स वार्तिकविभागो लिख्यते सुखेन ज्ञानार्थम्—के.)

**भाष्यम्**— न केवलं आनर्थक्यभयात् यागस्य गुणभावं ब्रूमः । किं तर्हि ? स्वर्गसंज्ञकमर्थं प्रति करणत्वेन यागो विधीयते । **ननु** यागः कर्तव्यतया श्रुत्या विधीयते । **सत्यमेवम्** । आनर्थक्यं तु तथा भवति । स्वर्गं प्रति अविहिते यागे स्वर्गकामः तस्मिन् निष्फले विधीयमानोऽपि निष्प्रयोजनः स्यात् । तत्र अस्योपदेशवैयर्थ्यम् । द्वयोश्च विधीयमानयोः परस्परेण असंबद्धयोः वाक्यभेदप्रसङ्गः ।

**टुप्**-- आनन्तर्यश्रुत्या यागस्य कर्तव्यता । प्रत्ययः पुनः स्वार्थे भावनायां पुरुषं प्रवर्तयति । सा च प्रयोज्यादिभिरविनाभूता । तेन यन्नियमितं तदेव पुरुषार्थं प्रयोज्यत्वेन आकाङ्क्षति, न यागम् । यश्च भावनाव्यापारः सामान्यरूपः तत्र यागादयः तं विशेषयन्तः साधनांशेन संबध्यन्ते । व्यापारोद्दिष्टफलसाधनात् साध्यभूतोऽपि धात्वर्थः करणमुच्यते, परशुवत् । स हि पुरुषव्यापारव्याप्योऽपि करणं भवति । व्यापारोद्देश्यद्वैधीभवनं तदधीनमिति । एवमिहापि यागस्य साध्यत्वं करणत्वं च नानुपपन्नम् । सोऽपि प्रयोज्यमुत्पादयन् इतिकर्तव्यतामभिलषति । अतः एभिरंशैः परिपूर्णा । ततः प्रत्ययो भावनायां पुरुषं प्रवर्तयति । तस्मान्नैव कदाचित् यागे प्रत्यय उपनिपतति सत्येवानन्तर्ये । अतो यत्र कर्तव्यतावचनः तत्र पुरुषार्थः साक्षात् पारंपर्येण वा अविनाभूतः । तस्मात् यागस्य कर्तव्यता प्राप्ता, सा

भावनाशब्दस्य नियतपुरुषार्थप्रयोज्यत्वात् बाध्यते । अपिच प्रत्ययोच्चारणानन्तरमेव तिस्र आकाङ्क्षा उत्पद्यन्ते । तत्र यदि प्रथमांशे पुरुषार्थ उपनिपतति, द्वितीये च यागः, ततः कतरशब्दस्य बाधा कृता । अथ किमंशे याग उपनिपतति ततो नियतप्रयोजिका प्रत्ययस्य शक्तिः, सा बाध्यते । कर्मणां चानर्थक्यम् । तस्मात् शब्दवस्तुभ्यां करणभूतो यागः । **अथवा** अन्यप्रकारेण यागस्य करणता । कथम् ? स्वर्गं आत्मसंबन्धित्वेन प्रार्थयमानः स्वर्गकामोऽभिधीयते । स स्वर्गं अभिलषमाणः उपायमभिलषति । तस्मात् अनयोः अविनाभावात् स्वर्गकामशब्देन शक्यते तदुपायो लक्षयितुम् । अतः शास्त्रेण यागादयः तत्र उपायत्वेन विधीयन्ते ।

**भाष्यम्—** अतो न स्वर्गकामपदेन स्वार्थो विधीयते । किं तर्हि ? उद्दिश्यते ।

**टुप्—** 'अतो न स्वर्गकामशब्देन स्वार्थो विधीयते'। अभिधीयते इत्यर्थः । अनेन ग्रन्थेन उपायलक्षणार्थं स्वर्गकामशब्दं ब्रवीति ।

**भाष्यम्—** तत्र वाक्यादवगतस्य कामस्य कर्तव्यता अवगम्यते, यागस्य च करणता । एवं च यागकर्तव्यतायां न प्रत्यक्षविरोधो भविष्यति । तस्मात् कर्मोपदेशः स्यात् (सूत्रावयवः), कर्म स्वर्गं प्रति उपदिश्यते, न स्वर्गः कर्म प्रति । किमतो यदि स्वर्गो नोपदिश्यते ? एतदतो भवति, न हि अनुपदिष्टः अर्थग्रामश्च गुणो भवति । तस्मात् स्वर्गः प्रधानतः, कर्म गुणतः इति । अपिच, यस्य स्वर्ग इष्टः स्यात् स यागं निर्वर्तयेत् इति असंबद्धमिव अन्यदिच्छति अन्यत् करोति । अथ मतम्, ततः स्वर्गो भवति इति संबन्धात् इदं गम्यते इति । न शब्दप्रमाणकानां अन्तरेण शब्दं अवगतिर्न्याय्या । वाक्यादेव अस्मात् इमं संबन्धमवगच्छामः, यथा 'काष्ठान्याहर्तुकामः अरण्यं गच्छेत्' इति यदि ब्रूयात्, ब्रूयादेतत्, दृष्टं तत्र प्रमाणान्तरेण अरण्यगमनस्य काष्ठाहरणसामर्थ्यं विद्यते इति । अथ मन्यते उपदेशानर्थक्यं मा भूदिति अर्थापत्तिर्भविष्यतीति । उच्यते । न उपदेशानर्थक्यस्य एतत् सामर्थ्यम् । यत्, अन्तरेण फलवचनम्, यागस्य प्रीतिः फलं अवगम्येत, कामं अस्यानर्थक्यं भवेत्, न जातुचित् सामर्थ्यमस्य जायते । न हि दग्धुकामस्य उदकोपादानं असति दाहे अनर्थकं इति दहनशक्ति अस्य जनयेत् ।

**अथवा** स्वर्गकामस्य यागो विधीयते इति पक्षान्तरावलम्बनेन अस्य अर्थवत्ता भविष्यतीति ।

**टुप्—** 'तत्र वाक्यादवगतस्य कामस्य कर्तव्यताऽवगम्यते, यागस्य (च) करणता' इति । (पूर्वभाष्यविभागस्य आदिमं वाक्यम्)। 'अथवा स्वर्गकामस्य यागो विधीयते इति पक्षान्तरावलम्बनेन अस्यार्थवत्ता भविष्यति इति' यागं कुर्यादित्येतस्मात् पक्षान्तरं यागेन कुर्यात् इति । 'अथवा स्वर्गकामस्य' इति 'अतः स्वर्गकामस्य' इति द्रष्टव्यम् । उपपत्त्यन्तरस्य अनुक्तत्वात् ।

**भाष्यम्—** ननु इतरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते, न यागात् स्वर्गः । **नैतदेवम्** । तस्मिन् खलु पक्षे स्वर्गं प्रार्थयमानस्य अनुष्ठानमनूद्य यागः तस्य उपायत्वेन विधीयते इति न दोषः । तदनुष्ठानं स्वर्गं प्रति इति नास्ति वचनं इति चेत्, इष्टमर्थं प्रति अनुष्ठानं भवति । स्वर्गकामस्य च स्वर्ग इष्टः । तदनुष्ठानविशेषग्रहणार्थमेव स्वर्गकामविशेषणग्रहणं इति निरवद्यम् । तस्मात् स्वर्गकामस्य यागकर्मोपदेशः स्यात् । अतः स्वर्गः प्रधानतः, कर्म गुणत इति स्वर्गकाममधिकृत्य यजेत इति वचनं इति अधिकारलक्षणमिदं सिद्धं भवति ।

**टुप्—** 'ननु इतरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते, न यागात् स्वर्गः' इति, कोऽभिप्रायः ? पदार्थपूर्वकत्वात् वाक्यार्थस्य यागेन स्वर्गं इति यदि श्रूयेत तत इदं साध्यं इदं साधनं इति स्यात् । न च यागेन स्वर्गं इति श्रूयते । तस्मात् पूर्वोक्तो दोषस्तदवस्थ एव । नैतदेवम् । तस्मिन् खलु वै पक्षे स्वर्गं प्रार्थयमानस्य अनुष्ठानमनूद्य यागः तस्य उपायत्वेन



विधीयते इत्यदोषः । स्वर्गं प्रार्थयमानः तत्संबन्धितया उपायमपि अभिलषति । नहि उपायादृते उपेयमस्ति । तस्मात् स्वर्गकामशब्दः शक्नोति उपायं लक्षयितुम् । स च लक्षितः सन् उपायत्वेन विधीयते । पदान्तरोपात्तो यागो विशेषः । तेन पदार्थपूर्वक एव वाक्यार्थः । तस्मात् फलवत्त्वे कर्मणां युक्तं अधिकारलक्षणमारब्धुम् । अधिकारी इति कर्मणां उपरिभावेन अवस्थितः, स्वामी इत्यर्थः ।

**शा—** '**भेदादिलक्षणैरेवमनुष्ठेये निरूपिते । कोऽनेनाधिक्रियेतेति सांप्रतं संप्रधार्यते ॥ तदुपोद्घातरूपेण त्वादावेतद् विचार्यते । कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा ॥**' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिषु किं पुरुषस्य अधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वं अस्ति न वा इति चिन्त्यते । तदर्थं इदं विचार्यते, येयं प्रत्ययोपात्ता भावना तस्याः किं धात्वर्थ एव भाव्यः प्रधानम्, स्वर्गादि तु साधनतया गुणभूतं उत काम्यमानत्वेन उपात्तः स्वर्गादिरेव भाव्यः तत्साधनं च धात्वर्थ इति । ततोऽपि एतत् विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः संबन्धः तत्र किं क्रिया प्रधानतः, पुरुषो गुणतः, ततो विपरीतं वेति । इदमपि च चिन्त्यते स्वर्गशब्दो द्रव्यवचनः प्रीतिवचनो वेति । तत्र पूर्वः पक्षः '**धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते । स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥ भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे । उपदेश्यं न भूताय भव्यकर्मोपदेशनम् ॥**' इति प्राप्तेऽभिधीयते '**पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना । अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा ॥ स्वर्गादिः कामनायोगात् फलत्वेनैव गम्यते । स्वरसात् पुरुषाणां हि कामना फलगोचरा ॥**'

**सोम—** सूत्रार्थस्तु– द्रव्याणां स्वर्गपश्वादीनां कर्मभिः संयोगे श्रूयमाणे द्रव्याणां कर्मजननसामर्थ्यात् गुणत्वेन संबन्धः इति ।

**वि—** 'कर्माधिकारः कर्तुर्नो किंवाऽस्ति, न पदश्रुतेः । धात्वर्थभाव्यताभानात् फलभोगविवर्जनात् ॥, बलीयस्या विधिश्रुत्याऽवरुद्धा भावनाऽत्र च । भाव्यः स्वर्गः पुमर्थत्वात् कमियोगाच्च सोऽस्त्यतः ॥'

**भाट्ट—** एवं सक्रमे प्रयोज्यवर्गे निरूपिते अधुना तत्र अधिकारी निरूप्यते । तत्र अधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम् । श्राद्धादौ पित्रादेः ऋत्विजां च अधिकारव्यावृत्त्यर्थं विशेषणद्वयम् । **न** चैवं जातेष्टौ पितुः फलभोगाभावात् अधिकारानापत्तिः । सत्यपि अकरणे प्रत्यवाये करणस्य पूतत्वादिफलकत्वेन पापक्षयफलकत्वाभावात् इति वाच्यम् । प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वस्यैव विवक्षितत्वात् । जातेष्टिश्राद्धादावपि फलस्य अन्यनिष्ठत्वेऽपि तदिच्छाया यजमाननिष्ठत्वात् अधिकाराविघातः । ऋत्विजामपि 'यजमानस्य फलं भूयात्' इतीच्छायाः स्वनिष्ठकर्तृकत्वसमानाधिकरणत्वादधिकारापत्तिः अतः प्रवृत्तीत्युक्तम् । 'दक्षिणाप्राप्तिर्मे भूयात्' इतीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेन उक्तविधेच्छायाः प्रवृत्तिप्रयोजकत्वाभावात् । अयं चाधिकारः विध्याक्षिप्तस्वेष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्वबललभ्यत्वात् विधिप्रमाणकः । अयमेव अधिकारविधिरित्युच्यते । तत्र च अधिकारस्य इष्टरूपप्रवृत्तिफलघटितत्वात् तदेव इष्टरूपं फलं भावनायामस्ति न वा इति प्रथमं विचार्यते । तत्र भावनायाः भाव्यापेक्षायां पदश्रुत्या धात्वर्थस्यैव सर्वत्र भाव्यत्वम्, न स्वर्गादेः, अपि तु तस्य साधनत्वमेव योग्यत्वात् । पश्वादेरिव स्वर्गशब्दस्यापि 'चन्दनं स्वर्गः' इत्यादिप्रयोगात् द्रव्यवाचित्वमेव सुखविशेषभोगयोग्यदेशविशेषवाचित्वग्राहकस्य अन्यपरत्वाच्च । कामशब्दस्तु अर्जनकामनानुवादः । **अथवा** स्वर्गकामशब्दः कर्तृविशेषमेव यागाङ्गत्वेन विदधत् विशेषणीभूतां कामनामपि तदङ्गत्वेन विधत्ते इति न कश्चित् विरोधः । **न च** विधिश्रुत्यनुरोधात् इष्टभाव्यकत्वावगमः, विधेः प्रवृत्तिजननस्वरूपयोग्यत्वस्यैव वाच्यत्वेन फलोपधानैयत्याभावात्, प्रवृत्तिविरहेऽपि अरण्यस्थदण्डवत् विधेः

प्रवृत्तिजनकत्वोपपत्तेः । नहि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थः, विधिशतश्रवणेऽपि केषांचित् प्रवृत्त्यदर्शनात् । अत एव प्रवृत्तिविषयस्य इष्टसाधनत्वाक्षेपकत्वमपि विधेर्न प्रामाणिकम् । यदि तु प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तौ वाक्यस्य वैयर्थ्यापत्तिः शङ्क्येत ततो यागस्य समानपदश्रुत्या भाव्यत्वावगमेऽपि यागे भ्रमप्रमासाधारणप्रवृत्तिकारणेष्टसाधनत्वज्ञानस्यैव आक्षेपात् भ्रमात्मकेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धेः नेष्टसाधनत्वाक्षेपकत्वम् । अथवा अस्तु 'स्त्रीकामः प्रायश्चित्तं कुर्यात्' इतिवत् स्वर्गकामनाया अपि निमित्तत्वम् । ततश्च निमित्ते नैमित्तिकाकरणे प्रत्यवायमात्रम्, न तु करणे किंचिदिष्टम् । अकरणे प्रत्यवायभियैव च पुरुषप्रवृत्तिसिद्धेः न विधिवैयर्थ्यमपि । सर्वथा यागस्यैव भाव्यत्वेन इष्टसाधनत्वाभावात् न प्रवृत्तिप्रयोजकप्रवृत्तिविषयजन्यफलेच्छासमानाधिकरणकर्तृत्वरूपाधिकारसिद्धिः । इति प्राप्ते, न प्रवृत्तिस्वरूपयोग्यत्वमात्रं विध्यर्थः वैयर्थ्यापत्तेः । नापि इष्टसाधनत्वानुमितेः भ्रमत्वम्, ज्ञानानां स्वतःप्रमाणत्वेन बाधकं विना भ्रमत्वानुपपत्तेः । अतश्च उत्सर्गसिद्धप्रमात्वनिर्वाहार्थं यागे इष्टसाधनत्वं विषयोऽपि वक्तव्यः एव इति भावनायां इष्टभाव्यकत्वं यागकरणत्वं च आपन्नमेव । यदपि कामनायाः निमित्तत्वमङ्गीकृत्य विधेः अकरणजन्यप्रत्यवायाक्षेपकत्वेन प्रवर्तकत्वं इत्युक्तम्, **तन्न**, कामनायाः प्रवृत्तिजनकत्वेऽपि निमित्तत्वे प्रमाणाभावात् । 'स्त्रीकामः' इत्यादावपि न तस्याः निमित्तत्वम्, प्रायश्चित्ताकरणे प्रत्यवायान्तरप्रसङ्गात् । अपि तु प्रमाणान्तरसिद्धकामनाजनितप्रत्यवायनाशार्थत्वमेव इति तत्रापि इष्टसाधनत्वाक्षेपकत्वमेव विधेः । अत एव सर्वत्र नैमित्तिकस्थले अकरणे प्रत्यवायाक्षेपकत्वापेक्षया लाघवात् इष्टसाधनत्वमेव विधिना आक्षिप्यते इति तद्वशात् भावनायाः इष्टभाव्यकत्वसिद्धिः । यथा चैवं सति नैमित्तिकस्थले पापक्षयभाव्यकत्वं तथा यावज्जीवाधिकरणे ( २।४।१ ) निरूपितम् । तच्च इष्टं स्वर्गपुत्रादि स्वर्गकामादिपदैः समर्प्यते, योग्यत्वात् कामशब्दयोगाच्च । कामनाऽपि स्वरसतः फले, द्रव्ये तु औपचारिकी । अत एव स्वर्गशब्दोऽपि श्रुतिस्मृतिपुराणादिवशात् दुःखासंभिन्नसुखभोगयोग्यदेशविशेषवाची आकृत्यधिकरणन्यायेन ( १।३।९ ) तादृशसुखमात्रवाची वा, न तु चन्दनादिवाची, तत्र हि आधुनिकप्रयोगस्य औपचारिकत्वात् । अत एव स्वर्गकामादिपदमपि लक्षणया स्वर्गपरं प्रथमा च कर्मत्वपरा इति भावनान्वयोपपत्तेः नान्योपसर्जनत्वेन स्वर्गस्य तदनन्वयाशङ्का । स्वर्गकामो वा अधिकारित्वेन अन्वीयते इति स्वर्गादिवाचकद्वितीयान्तपदाध्याहारेण तदन्वयः इति **केचित्** । **तन्न**, फलापेक्षायाः प्राथमिकत्वात् लक्षणायाः अध्याहारापेक्षया लघुत्वाच्च । एवं च बलवत्तरविधिश्रुत्याद्यनुरोधेन स्वर्गादेरेव भाव्यत्वावगतेः सामान्यप्रवृत्ता पदश्रुतिरपि यागादेः करणत्वमेव लक्षणया प्रतिपादयति इति सिद्धः उक्ताधिकारः । अत्र च उक्तविधेच्छाफलान्यतरसमानाधिकरणं ( प्रवृत्तिप्रयोजकप्रवृत्तिविषयजन्यफलेच्छाफलान्यतरसमानाधिकरणं ) कर्तृत्वं अधिकारः इति बोध्यम् । तेन नित्यस्थले पापक्षयेच्छायाः प्रवृत्तिप्रयोजकत्वाभावेऽपि नाधिकारविघातः ।

**मण्डन**— 'स्वर्गादि फलमिज्यादेः ।'

**शंकर**— 'स्वर्गः साध्यो न साधनम् ।'

* स्वर्गकामाधिकरणम् । ( न्यायस्वरूपं ) अफलस्य काम्यत्वायोगात् कामशब्दोपबन्धे 'असाधकं तु तादर्थ्यात्' ( ६।१।१।२ ) इति स्वर्गकामाधिकरणसिद्धान्तन्यायेन पशुकामशब्दः फलपरः ( 'चित्रया यजेत पशुकामः' इति ) । **सु.** पृ. ४१५, * स्वर्गकामाधिकरणम् । ( न्यायस्वरूपं ) स्वतन्त्रकर्मविधौ कामपदस्य फलपरत्वाभावे नैष्फल्यात् विधानानर्थक्यापत्तेः, फलपरत्वेऽपि ज्योतिष्टोमफलेन फलत्वोपपत्तेः पशुकामशब्दो न पशुयागफलं प्रतिपादयति । पृ. ४१५, *** स्वर्गकामाधिकरणे** फलस्य उद्देश्यतया उक्तत्वात् भेदहेतुत्वं संभवति । पृ. ९५८, * 'चित्रया यजेत पशुकामः' इति प्रकृत्य ... न चायं द्रव्यार्जनाङ्गपशुकामानुवादः इति युक्तम्, तदनुवादत्वस्य



**स्वर्गकामाधिकरणे** निराकरिष्यमाणत्वात् । **कु.** १।४।३।३.

* न च भावार्थाधिकरणे धात्वर्थस्य करणत्वमुक्तमिति वाच्यम् । उक्तस्यापि तस्य षाष्ठे स्वर्गकामाधिकरणे ( ६।१।१ ) समानपदश्रुत्या धात्वर्थस्यैव फलत्वं न तु स्वर्गादेरित्याक्षिप्य साधयिष्यमाणत्वात् । ततश्च **स्वर्गकामाधिकरणन्यायेन** भाव्यत्वात् प्रच्युत्यनन्तरमेव भावार्थाधिकरणप्रवृत्तिः । **कु.** ३।१।३।६.

* ( 'चित्रया यजेत पशुकामः' इति ) पशुकामशब्दोऽपि **स्वर्गकामाधिकरणपूर्वपक्षन्यायेन** अर्जनाङ्गत्वात् अनुवादोऽभिमतः, न यागफलम् । 'न हि पशुयागः पशुमकामयमानेन अनुष्ठातुं शक्यते, यागानुवादो विज्ञातत्वात् । **वा.** १।४।२।३ पृ. ३२८.

* स्वर्गकामादिबहुव्रीह्यर्थस्य पुरुषस्य भावनाक्षेपलभ्यत्वात् स्वर्गकामादिशब्दस्य लोहितोष्णीषादिवत् विशेषणपरत्वावगतेः तदुपात्तस्य स्वर्गादेः यागं प्रति गुणत्वेनान्वयः प्राधान्येन वा इति संदिह्य 'द्रव्याणां कर्मसंबन्धे गुणत्वेनाभिसंबन्धः' ( ६।१।१।१ ) इति **षष्ठाद्यस्वर्गकामाधिकरणपूर्वपक्षसूत्रे** 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायात् भूतस्य स्वर्गपश्वादेः भव्यं कर्म प्रति गुणत्वेन अन्वयस्य वक्ष्यमाणत्वात् पशुकामशब्दात् पशोः साधनत्वावगतिः । **सु.** पृ. ४१५. .

*** स्वर्गकामाधिकरणसिद्धान्तसूत्रं** 'असाधकं तु तादर्थ्यात्' ( ६।१।१।२ ) इति । कामशब्दोपबन्धस्य फलत्वाप्रतिपादकत्वे कर्म तत्साधकत्वशून्यं स्यात् फलार्थत्वात् प्रवृत्तेः इति सूत्रार्थः । **सु.** पृ. ४२१.

* **स्वर्गकामादिश्रुत्या** देहातिरिक्तात्मसिद्धिः । **मणि.** पृ. ५४.

* **स्वर्गकामवाक्यन्यायः** । 'स्वर्गकामो यजेत' इत्यत्र विधिना इष्टसाधनत्वे बोधिते भावनाभाव्यस्य रूपद्वयमवगतं भवति साध्यत्वमिच्छाविषयत्वं चेति । तत्र स्वर्गस्य इच्छाविषयत्वं शाब्दम् । भाव्यं तु कामनया अर्थाक्षिप्तम्, सिद्धे इच्छाविरहात् । कामनायां तु नोभयम् । अतः कामनामुल्लङ्घ्य स्वर्गपदमेव इष्टविशेषाकाङ्क्षापूरकं तत्रोपगतम् । यद्यपि च यागे साध्यत्वमुपस्थितं तथापि तस्य गौणतया मुख्यतया वा स्वर्गसाधनत्वान्वयात् प्राक् इष्टत्वं न सिद्धं इति सोऽपि तत्र भाव्यत्वेन नान्वेति । **आभरणम्** . ३।४।५।२५ ब्रसू.

* **स्वर्गकामशब्दस्य** ब्राह्मणादिशब्दवत् पुरुषविशेषसमर्पकत्वं आत्मार्थं यः स्वर्गमिच्छति स एव स्वर्गकामशब्दार्थो नान्यः । **सोम.** ६।१।१ पृ. ४४५.

* **स्वर्गनरकौ** च निरतिशयसुखदुःखात्मकत्वात् देशान्तरजन्मान्तरानुभवनीयौ न कर्मानन्तरं संभवतः ( ततः अपूर्वमवश्यं वक्तव्यं ) इति षष्ठाद्ये वक्ष्यामः । **वा.** २।१।२।५ पृ. ३९७, * स्वर्गनरकौ । न हि स्वर्गनरकौ नाम निरतिशयसुखदुःखस्वभावौ, देशविशेषात्मकौ वा याविहैव जन्मनि नानुभूयेयाताम् । अलौकिकानां जिहासोपादित्सानुपपत्तेः । ( शाबरभाष्यखण्डकवृत्त्यन्तरकारमतमिदम् ) । २।१।२।५ पृ. ३९३.

* **स्वर्गफलस्य** आमुष्मिकत्वं नियतम् । **वि.** ४।३।१२. * 'न च **स्वर्गफलस्येह** कश्चिदंशोऽनुवर्तते । १५ । नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम् । गौतमीयेऽपि तच्छेषस्तस्माच्चित्राद्यपेक्षया ॥'१६॥ **श्लोवा.** चित्राक्षेपपरिहारे.

* **स्वर्गशब्दश्च** उत्कृष्टसुखे रूढः चन्दनादिद्रव्ये तु लाक्षणिकः । देशविशेषः स्वर्गः इत्यपि । **वि.** ६।१।१, * **स्वर्गशब्देन** फलनिर्देशः । 'स्वर्गकामः' इत्यत्र कर्मयोगेन साध्यताप्रतीतेः । १०।२।२१.

* स्वस्त्ययन्यां इष्टौ रक्षितवन्तौ आज्यभागौ 'अग्ने रक्षा णो अंहसः० त्वं नः सोम विश्वतः०' इति । **आश्वश्रौ.** २।१०।५.

**ꣿ स्वस्थे चित्ते वृत्तयः संस्फुरन्तीति न्यायः ।** 'चिन्ताऽऽक्रान्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् । तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते वृत्तयः संस्फुरन्ति ॥' **साहस्री.** ९३६.

* **स्वाध्यायः** । अधीयते इति कर्मव्युत्पत्त्या शाखावाचि–अध्यायशब्दाभ्युपगमेन स्वश्चासौ अध्यायश्च

इति विग्रहाश्रयणात् स्वाध्यायविधित एव प्रतिचरणं शाखाव्यवस्थासिद्धिः । सु. पृ. ९९१. * ' स्वाध्यायोऽध्येतव्यः ' अयं विधौ कृत्यः श्रौतः । बाल. पृ. ३९. * ' स्वाध्यायोऽध्येतव्यः ' इति विधिः स्वर्गाद्यर्थं स्वाध्यायाध्ययनं विधत्ते । अतश्च अध्ययनमात्रेण स्वर्गफलनिष्पत्तेः न धर्मजिज्ञासार्थं गुरुकुलेऽवस्थातव्यं इति पूर्वपक्षः । विधिः अक्षरादिग्रहणपरंपरोपजायमानवाक्यार्थज्ञानार्थं अध्ययनं विधत्ते, तस्य च विचारमन्तरेणासंभवात् धर्मजिज्ञासार्थं गुरुकुले अवस्थातव्यं इति सिद्धान्तः ! प्रथमाधिकरणमिदम् । **वैद्यनाथः**. १।१।१।१. * ' स्वाध्यायोऽध्येतव्यः ' इति सकलस्य तावद्वेदस्य अध्ययनभावना विधीयते । तत्र किं भावयेदित्यपेक्षायां अध्ययनमिति आगतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेनापुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेः तदंशान्निराक्रियते । ततश्च अध्ययनेनेति अविरोधात् संनिधेश्च करणांशे निविशते । तेन किमित्यपेक्षिते ' यच्छक्यते ' इत्युपबन्धादक्षरग्रहणं इत्यापतति । तस्यापि अपुरुषार्थत्वात् तेन किमिति पदावधारणमित्युपतिष्ठते तेनापि पदार्थज्ञानं तेन वाक्यार्थज्ञानं तेन चानुष्ठानं अनुष्ठानेन स्वर्गादिफलप्राप्तिः इति एतावति प्राप्ते निराकाङ्क्षी भवति । एवं सर्वविधीनां प्राक् पुरुषार्थलाभात् अपर्यवसानम् । **वा.** १।२।१।७ पृ. ११३. * ' स्वाध्यायोऽध्येतव्यः ' इति स्वाध्यायाध्ययनेन भावयेत् किमिति ? स्वाध्यायाध्ययनेन यदवबोध्यते, तदत्र फलम् । पदार्थाश्चानवबुद्धाः अनेन बोध्यन्ते क्रमश्च । अतः स्वाध्यायेन पदार्थज्ञानं भावयेत् क्रमज्ञानं चेत्यर्थः । **टुप्.** ५।१।४।६. * ' स्वाध्यायः ' इत्येकवचनेन अनेकशाखाध्ययननिषेधः । सु. पृ. ९९०. * स्वाध्यायो नाम ' शाखान्तराध्ययनं ' इति बिन्दौ **मीको.** पृ. ३९०२ इत्यत्र द्रष्टव्यम् । **वा.** २।४।२।९. * स्वाध्यायः । ' येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति ॥ ' इति स्मृत्यालोचनया, काठकादिसमाख्यालोचनया, स्वाध्याय इति शब्दालोचनया च पितृपितामहादिपरंपरात्मकसंप्रदायागतशाखात्यागेन शाखान्तराध्ययनं न युक्तम् । सु. पृ. ९९१. * स्वाध्यायः । विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते । **वा.** १।३।१।२ पृ. १६४. * स्वाध्यायः । स्वशब्देन आत्मीयवाचिना पितृपितामहादिपरंपरागतायाः एव शाखायाः कर्मव्युत्पत्त्या स्वाध्यायशब्दोक्तायाः अध्येतव्यत्वोक्तिः । सु. पृ. ९८५ । स्वाध्यायाध्ययनविधिना एकवेदाध्ययनविधानात् वेदान्तरानध्ययनप्रसक्तावपि वचनान्तरेण प्रतिप्रसवात् वेदान्तराध्ययनसिद्धिः । पृ. ९८५ । स्वाध्यायगतैकत्वसंख्यया अनेकशाखाध्ययननिषेधसूचनम् । स्वशब्देन च स्वीयशाखानियमात् शाखान्तराध्ययननिवृत्तिः । पृ. ९८६. * कर्माणि कर्तुं स्वाध्यायं अभ्यस्यन्ति । **भा.** १०।६।१।१.

* **स्वाध्यायाध्ययनं** तु न विनियुक्तम्, अतः प्रयोज्यम्, न च अङ्गं इति सिद्धम् । **बृहती.** पृ. ४. * **स्वाध्यायाध्ययनस्य** कर्मार्थत्वात् यत् कर्मणि उपयोक्ष्यते तदभ्यसितव्यम् । **वा.** १।२।४।३१–७.

* **स्वाध्यायाध्ययनविधेः** आचार्यकरणविधिप्रयोज्यत्वम् । **बृहती.** पृ. २.

* **स्वाध्यायत्वं** स्वशाखात्वम् । स्वत्वं च परंपरया अध्ययनविषयत्वं अनुष्ठानविषयत्वं च । तेन वेदत्रयान्तर्गतैकैकशाखापरः स्वाध्यायशब्दः । तेन अध्ययनानुष्ठानयोः स्वपरंपरापरिगृहीताध्ययनानुष्ठानविषयत्वोपपत्तिः । **मणि.** पृ. ३.

* **स्वाध्यायविधिविचारः** प्रसङ्गादागतः **मीको.** पृ. ६५८ अर्थवादाधिकरणे **भाट्टे** द्रष्टव्यः ।

* **स्वापः** । एकस्यां रात्रौ प्रतिस्वापं नावृत्तिर्मन्त्रस्य किंतु सकृदेव मन्त्रः । **भा.** ११।४।१७।५०.

* **स्वाभाविकानां** स्वभावत एव कार्यकारिणां सापेक्षत्वमनपेक्षत्वं च दर्शनादेवावगम्यते । दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतौ आलोकसापेक्षत्वम्, दहने चानपेक्षत्वं अग्न्यादेः । **बृहती.** पृ. १०७–१०८.



* **स्वामी** । परिक्रीयमाणो न स्वामी भवति । यः फलं प्राप्नोति स स्वामी । **भा.** ६।३।९।२४, * **स्वामी** । योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते, यश्च स्वं प्रदेयं त्यजति स स्वामी । स एव हि फलेन संबध्यते । य उत्सर्गं करोति स फलवान् भवति । ६।३।७।२१. * **स्वामिनः** कस्यचित् मरणे सत्रे प्रतिनिधिर्भवति । ६।३।८।२२. **मीको.** पृ. ४१०१ ' सत्रे कस्यचित् स्वामिनो मरणे प्रतिनिधिर्भवति ' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्वामिनः न प्रतिनिधिः । ६।३।७।२१. **मीको.** पृ. २७१० ' प्रतिनिधिर्न भवति स्वामिनः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' स्वामिनो वा तदर्थत्वात् ' ( ३।४।१३।३५ ) । अथापि तत्त्वज्ञानं प्रयोजनं ततो जञ्जभ्यमानपक्षः परिग्रहीतव्यः, तथा च सूत्रकारः ' स्वामिनो वा० ' इत्याह । **वा.** ३।४।१३।३५ पृ. ९७३. * **स्वामिनां** अस्थितपरिमाणत्वात् यजतिचोदनाच्च अहीनत्वम् । **भा.** १०।६।१६।६१.

* **स्वामिकर्म** ऋत्विजां परिक्रयः । ३।८।१।१–२. **मीको.** पृ. १२५२ ' ऋत्विजां परिक्रयः स्वामिकर्म० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् । ३।८।१।१ ॥**

ज्योतिष्टोमादौ दक्षिणादानरूपं कर्म अध्वर्युणा कर्तव्यं आध्वर्यवसमाख्याते प्रकरणे पाठात् इति **पूर्वपक्षे** उत्सूत्रे प्राप्ते **सिद्धान्तः** । परिक्रीयन्ते आनम्यन्ते ऋत्विजः येन स परिक्रयः दक्षिणादानम् । स परिक्रयः न अध्वर्योः कर्म किंतु स्वामिनः कर्म । ज्योतिष्टोमादेः कर्मणः तदर्थत्वात् स्वाम्यर्थत्वात् यजमानफलार्थं हि कर्मानुष्ठानम् । फलकामो हि यजमानः परिक्रयेण कर्म कारयति । तस्मात् स्वामिकर्म परिक्रयः ।

**वचनादितरेषां स्यात् ।**

ज्योतिष्टोमादौ दक्षिणादानरूपः परिक्रयः स्वामिन एव कर्म नाध्वर्योः इत्युक्तं पूर्वसूत्रे तत्रेयमाशङ्का, ननु ' य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात् ' इत्यनेन यः स्वयमातृण्णाख्यां इष्टकां उपदधाति चयने, तेन त्रयो वरा देया इत्युक्तम् । तथा च वरदानस्य कथं स्वामिकर्मत्वं सेत्स्यति । अत्रोच्यते । क्वचित् यजमानादितरेषां कर्म दक्षिणादानरूपं स्यात् वचनात् वचनबलात् । तत्र यद्यपि उपधानकर्ता ददाति तथापि यजमानस्यैव द्रव्यं गृहीत्वा ददाति इति स्वामिकर्मत्वं न हीयते । अत्र **कुतूहले** ' य एतामविद्वान् ब्राह्मणः स्वयमातृण्णामुपदध्यात् सोऽध्वर्यवे त्रीन् वरान् दद्यात् ' इति वचनमुदाहृतम् । वचनद्वयस्यापि तु एकमेव तात्पर्यम् । **के.**

* ' स्वामिकर्म परिक्रयः० ' ( ३।८।१।१ ) । यश्च क्रतोः कर्ता स ' स्वामिकर्म परिक्रयः ' इत्येवं अश्वस्य दाता । **वा.** ३।४।११।२१ पृ. ९६५.

* **स्वामित्वं** फलभोक्तृत्वम्, अधिकारोऽप्ययमेव । **वि.** ६।१।१.

* **स्वामित्वाख्यस्य** प्राधान्यस्य श्रुत्यनुक्तस्यापि लक्षणया प्रत्यायनम् । सु. पृ. १३८२.

* **स्वामिफलं** आशासितव्यं करणमन्त्रेषु । **वि.** ३।८।१४.

**स्वामिभृत्यादिन्यायः** । यथा भृत्यादिः सर्वो जनः स्वाम्यादिकं सर्वं स्वप्रयोजनाय वाञ्छत्येवं स्वाम्यादिरपीति भावः । **साहस्री.** २१.

* **स्वामिभृत्यन्यायः** । ननु चेतनमपि अचेतनं चेदं जगत्, चेतनं प्रति कार्यकारणभावेन उपकरणभावोपगमात् । नहि साम्ये सति उपकार्योपकारकभावो भवति । न हि प्रदीपौ परस्परस्य उपकुरुतः । ननु चेतनमपि कार्यकारणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति । न । स्वामिभृत्ययोरपि अचेतनांशस्यैव चेतनं प्रति उपकारकत्वात् । **शांभा.** २।१।३।४ ब्रसू.

**स्वामियुक्ताधिकरणम्** । ज्योतिष्टोमे वपनादयो यजमानसंस्काराः प्रधानार्थाः ॥

**फलसंयोगात्तु स्वामियुक्तं प्रधानस्य । ३।७।२।६ ॥**

**भाष्यम्**–– ज्योतिष्टोमे केशश्मश्रुणोर्वपनं पयोव्रतानि तपश्च आम्नातानि । तेषु संदेहः किमङ्गप्रधाना-

र्थानि, उत प्रधानार्थानि । किं तावत् प्राप्तम् ? अङ्गप्रधानार्थानीति पूर्वेण न्यायेन प्राप्तम् । एवं प्राप्ते, **ब्रूमः** । स्वामियुक्तमेतत् । तस्मात् प्रधानस्य । कस्मात् ? फलसंयोगात् । पुरुषस्य यागेन अयं संबन्धः । यागः अपूर्वस्य दाता, पुरुषः प्रतिग्रहीता । **ननु** अपरोऽपि अस्ति संबन्धः । यागो निर्वर्त्यः, पुरुषः अभिनिर्वर्तक इति । फलेन तु संबन्धो भविष्यतीत्येवमर्थः पुरुषः श्रूयते । नहि यागं स साधयति । यागः सत्तया संभन्स्यते इति । किमिति तर्हि ? निर्वर्तयतः फलं भवतीति । संस्काराश्च संस्कुर्वन्तीत्युच्यन्ते । यत्तस्य संस्कर्तव्यस्य प्रयोजनम्, तत्र सामर्थ्यं जनयन्तीति । फलं च ग्रहीतुं पुरुषस्य प्रयोजनम्, न यागमभिनिर्वर्तयितुम् । तस्मात् ये पुरुषसंस्काराः, ते पुरुषं फलप्रतिग्रहणसमर्थं कुर्वन्ति, न यागनिर्वृत्तिसमर्थम् । आह । यदि यागनिर्वृत्तौ न सामर्थ्यं जनयन्ति, कथं तर्हि यागधर्मास्ते भवन्ति । उच्यते । यागस्य स्वार्थं साधयतः साहाय्ये वर्तन्ते । कश्च तस्य स्वार्थः ? यदस्य कर्ता फलेन संबध्यते । तस्मात् स्वामिसंस्काराः प्रधानार्था इति ।

**वा**— ' याजमानास्तु तत्प्रधानत्वात् कर्मवत् ' ( ३।८।२।४ ) इत्यनेनाधिकरणेन येषां याजमानत्वं सिद्धम्, ते किं यजमानस्य कर्तृत्वांशेन अङ्गप्रधानार्थाः, उत भोक्तृत्वांशेन केवलप्रधानार्थाः इति । किं प्राप्तम् ? पूर्वेणाधिकरणेन सर्वार्थत्वम् । सर्वार्थे हि यजमाने अवस्थिताः शक्नुवन्ति सर्वेषामुपकर्तुम् । न च व्यावृत्तिकारणमस्ति । इति प्राप्ते, अभिधीयते । **'येनैव हेतुनैतेषां स्वामिगामित्वनिश्चयः । तेनैव तु प्रधानार्थप्रतिपत्तिरपि स्फुटा ॥'** यदि ह्येते कर्तृत्वांशपातिनो भवेयुः, ततः सर्वार्थत्वं प्रतिपद्येरन् । भोक्तृत्वांशस्थास्त्वेते । स हि तैर्विना नोपपद्यते (भोक्तृत्वांशस्यादृष्टरूपत्वेनानिर्ज्ञातप्रकारत्वादिति शेषः ) । कर्तृत्वं तु तदभावेऽपि यथा भवति तथा सर्वलोकप्रत्यक्षम् । ऋत्विजामपि च तत्संभवात् नैव तेभ्यो निवृत्तिः स्यात् । अभीष्टे चार्थे योग्यताऽऽधानमाकाङ्क्षति, यत्र च योग्यत्वमनुपजातम् । न तु यजमानस्य कर्तृत्वस्वरूपमभीष्टम् । न च प्रागेभ्यो न निष्पन्नम् । योग्यतां च आदधानाः क्रियाः संस्कारा इत्युच्यन्ते । तस्मात् भोक्तृत्वांशं भजन्ते । यस्य च कर्मणः फलं यजमानेन भुज्यते, तद्देशस्थाः तस्यैवोपकर्तुं शक्नुवन्ति नान्यस्य । प्रधानस्य फलं पुरुषैर्भुज्यते नाङ्गानाम्, क्रत्वर्थत्वात् । तस्मात् प्रधानस्य एवंजातीयकाः । आह । यदि क्रतोर्निर्वर्तकांशे न पतन्ति, तत् ( तदा ) फलस्यैव अङ्गं प्राप्नुवन्ति । नैष दोषः । एष एव हि प्रधानस्योपकारः, यदस्य फलग्रहणाय योग्यः कर्ता क्रियते । ततश्च यथैव अन्यानि अदृष्टार्थानि अङ्गानि फलयोग्यतामपि कुर्वन्ति ( शबन्तमिदम् ) नाङ्गत्वात् प्रच्यवन्ते, तथैव एतेऽपि ( याजमानाः संस्काराः ) द्रष्टव्याः । प्रयोजनं अग्नीषोमीयादिविकारेषु गमनं वपनादीनां अगमनं सिद्धान्ते ।

**शा**— संस्काराः वपनादयः अङ्गप्रधानार्थाः स्युः, इति प्राप्तेऽभिधीयते । **' भोक्तृत्वस्य प्रधानत्वाद्दृष्टत्वाच्च तद्गुणाः । संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः ॥ '**

**सोम**— पूर्वापवादात् संगतिः । प्रयोजनं पूर्वपक्षे अग्नीषोमीयपशुविकारे निरूढपशुबन्धादौ तेषां प्रवृत्तिः, सिद्धान्ते तु नेति । **सूत्रार्थस्तु**– स्वामिसंयुक्तं वपनपयोव्रतादिकं प्रधानस्य धर्मः फलसंयोगात् फलभाक्त्वरूपभोक्तृत्वसंयोगात् इति ।

**वि**— ' वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत । मुख्य एव, द्वयोरस्तु कृत्स्नकर्तृगतत्वतः ॥, युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभोजिनः । विनाऽपि संस्कृतिं दृष्टं कर्तृत्वं तत्र नास्ति सः ॥ ' सः वपनादिकृतः उपकारः तत्र कर्तृत्वाकारे नास्ति ।

**भाट्ट**— दर्शपूर्णमासयोः ज्योतिष्टोमादौ च केशश्मश्रुवपनादयस्तावत् क्रतुयुक्तपुरुषसंस्कारार्थाः, न तु आरादुपकारकाः 'केशश्मश्रु वपते' 'नखानि निकृन्तते' ' दतो धावते ' ' स्नाति ' ' आङ्क्ते ' ' अभ्यङ्क्ते ' इत्यादौ आत्मनेपदनिर्देशेन पुरुषार्थत्वावगमात् । क्रिया-



फलस्य हि आत्मगामित्वे आत्मनेपदम् । आरादुपकारकत्वे तु तत्फलस्य क्रतुसाद्गुण्यस्य क्रतुगतत्वेन न आत्मगामित्वम् । यत्तु अवान्तरादृष्टम्, न तत्क्रियाफलम् । यद्यपि कृतीअञ्जूधातुः परस्मैपद्येव, तथापि छन्दस्यात्मनेपददर्शनात्, तस्यापि च सार्थकत्वे संभवति साधुत्वार्थत्वस्य अन्याय्यत्वात्, ' स्वरित ' इत्यादिविधेरेव अनित्यत्वं परिकल्प्य आत्मगामिक्रियाफलकत्वाङ्गीकारो न दोषाय । एवं ' दतो धावते ' इत्यादौ दन्तानां द्वितीययाऽपि संस्कार्यत्वावगमः । ' पयोव्रतं ब्राह्मणस्य ' इत्यादौ षष्ठ्या । स्नानस्य तु मलापकर्षणार्थत्वलिङ्गात् । एवं तपसोऽपि वक्ष्यते । अन्ततो यत्र न किंचिद्गमकम्, तत्र दीक्षासमाख्यैव तथा, यमादिपरिग्रहानुकूलपुरुषसंस्कारवाचित्वात् । पुरुषस्य च क्रतूपयोगित्वं कर्तृतया, क्रतुजन्यफलभोक्तृतया वा । तदिह संस्काराः किं कर्तृत्वांशोपयोगिनः, उत भोक्तृत्वांशोपयोगिनः इति चिन्तायाम्, भोक्तृत्वार्थत्वे समप्राधान्यापत्तेः प्रकरणावगतक्रतुसंबन्धबाधापत्तिः, अतः कर्तृत्वार्थाः । दन्तधावनादीनां शरीरसंस्कारार्थत्वात्, तस्य च परलोकभोग्यफलभोक्तृत्वे अनुपयोगादपि तथात्वम् । अतश्च कर्तुरङ्गप्रधानार्थत्वात् संस्काराणामपि तथात्वम् । इति प्राप्ते, कर्तृत्वस्य शरीरादिवदेव संस्कारव्यतिरेकेणापि जायमानत्वात् वैयर्थ्यात् अदृष्टरूपभोक्तृत्वार्थत्वमेव युक्तम् । भोक्तृत्वस्य कर्तृत्वापेक्षया अभ्यर्हितत्वाच्चैवम् । शरीरादीनामपि स्वावच्छेद्यजीवव्यक्तिगतत्वसंबन्धेन भोक्तृत्वोपयोगित्वं अव्याहतम् । न च एवं प्राधान्यापत्तिः, क्षेत्रसंस्काराणां बीजावपनार्थत्वस्येव आत्मसंस्काराणामपि क्रतुजन्यफलाधानयोग्यताजननार्थानां क्रत्वङ्गत्वोपपत्तेः । अत एव सर्वैरेव संस्कारैः स्वस्वावान्तरादृष्टद्वारा समुच्चित्य सा जन्यते । प्रधानफलमेव वा आत्मन्युत्पाद्यते इति तदर्था एव संस्काराः, न अङ्गार्थाः, तत्फलस्य क्रतुगामित्वात् । यत्र तु दृष्टविधया वचनादेव वा कर्तृत्वोपयोगित्वम्, यथा प्राथमिकशुद्ध्यर्थस्नानाचमनादौ, ' हिरण्यमालिनः प्रचरन्ति ' इत्यादौ च, बहुवचनात् तत्र कर्तृत्वे एवोपयोगादङ्गप्रधानार्थत्वम् । अत एव तादृशस्थले अङ्गविकृतिषु तस्य अतिदेशः ।

**मण्डन**— ' मुख्यार्थाः स्वामिसंस्क्रियाः । '

**शंकर**— ' फलर्थं वपनादि च । '

※ **स्वामिसप्तदशाः ऋत्विजो ज्योतिष्टोमे । ३।७।१८।३८. मीको. पृ. १२५०** ' ऋत्विजः स्वामिसप्तदशाः ज्योतिष्टोमे ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

## स्वामिसप्तदशाः कर्मसामान्यात् । ३।७।१८।३८ ॥

ऋत्विजः सप्तदश इत्युक्तं प्राक् । तत्र किमेषां सदस्यः सप्तदशः उत गृहपतिः इति विचारे कर्मकरत्वात् चमसस्य वरणस्य च सद्भावात् सदस्यः सप्तदशः इति उत्सूत्रे पूर्वपक्षे प्राप्ते **सिद्धान्तसूत्रम्** । उक्ताः सप्तदश ऋत्विजः स्वामिसप्तदशाः स्युः । स्वामी सप्तदशः सप्तदशसंख्यापूरणः येषां ते तथा । तेषां सप्तदशः स्वामी स्यादित्यर्थः । कुतः ? कर्मसामान्यात् यज्ञकर्मसामान्यात् । यत्तु चमसो वरणं च तत् ब्रह्मण एव न पृथक् । सदस्यस्तु ब्रह्मणोऽन्यो नास्त्येवेति **भाष्यकारः** । **वार्तिककारस्तु** सदस्यं ब्रह्मणो भिन्नं मन्यते, तथापि सप्तदशत्वं स्वामिन इति तस्यापि मतम् । तदुक्तिस्तु– " यत्तु सदस्योऽपि प्रत्यवेक्षणात् यजतीति, वचनसामर्थ्यादेवासौ व्रियते, न तु कश्चित् पदार्थः तदधीनः येनास्य व्यपदेशः स्यात् । न च प्रत्यवेक्षणं नाम कश्चित् पदार्थः, येनास्य कर्तृविशेषः केनचित् प्रमाणेन नियम्येत । तस्मात् सत्येव सदस्ये सूक्तं स्वामिसप्तदशा इति " । इति ।

अत्र **कुतूहलम्**– शाखान्तरे तु दीक्षादक्षिणवाक्येषु सदस्यसप्तदशाः ऋत्विजोऽनुक्रान्ताः । ' चमसेषु समाख्यानात्० ' ( ३।५।७।२२ ) इत्यत्र भाष्ये एव ' प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणां, प्र यजमानस्य, प्रयन्तु सदस्यानाम् ' इति प्रैष आम्नातः । ततश्च सदस्यचमसीयो यज्यभ्यासः भक्षणं च तस्य अस्त्येव । तस्मात् अन्यशाखाविषयमधिकरणं द्रष्टव्यम् । इति । के.

* ' स्वामिसप्तदशाः कर्मसामान्यात् ' । (३।७।१८।३८ ) इति यजमानस्यापि ब्रह्मादिवत् ऋत्विक्त्वं

वक्ष्यति । वा. ३।४।११।३१ पृ. ९६५. * 'स्वामिसप्तदशाः कर्मसामान्यात् ।' (३।७।१८।३८) सत्रे 'ये यजमानास्त ऋत्विजः' अत्र न तावत् यजमानानां ऋतुयजनकर्तृत्वरूपऋत्विक्त्वमादाय द्वयोः प्रथमान्तयोः सामानाधिकरण्येन अन्वयः 'स्वामिसप्तदशाः०' इति न्यायेन प्राप्ततया वाक्यवैयर्थ्यापत्तेः । **भाट्ट.** ६।६।२.

* स्वामिस्थले सत्रे प्रतिनिहितस्य न स्वामित्वम् । ६।३।९।२३–२५. **मीको.** पृ. ४१०९ 'सत्रे स्वामिस्थले प्रतिनिहितस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्वामिस्थले सत्रे प्रतिनिहितस्य स्वामिधर्मा वपनादिसंस्कारा भवन्ति । ६।३।१०।२६. **मीको.** पृ. ४१०९ 'सत्रे स्वामिस्थले प्रतिनिहितस्य स्वामिधर्मत्वं भवति' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्वायंभुवमतम्** । (कार्यकारणयोर्भेदाभेदौ) तत्र विधिविवेकग्रन्थ इत्थम्— अपि च निरुपादानकार्यानुत्पादात् तदत्यन्तव्यतिरेकाभावात् उपादेयस्य उपादानरूपेण सत उत्पत्तिरुच्यते । सर्वात्मना तु सत्त्वे तदनुपपत्तेः वैयर्थ्याच्च उपादेयवत् । साध्यं नोपादानम् । कथं तर्हि कर्म कारकम् ? नैव कर्म कारकम्, कारकाश्रितं इति केचित् । विकार्यप्राप्ययोर्वा सत्त्वात् अदोषः । त्रैविध्यं तर्हि हीयते, कामम्, न तु असतः कारकत्वं शक्याध्यवसानम् । कथं तर्हि 'घटं करोति' इति प्रयोगः ? उपादेयश्रुत्या उपादाननिर्देशात् । बुद्धिस्थस्य वा क्रियासूपयोगात् युक्तो निर्वर्त्यस्य कारकभावः, यथोक्तं– '**व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः । कारकत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥**' इति । (अथ न्यायकणिकामिश्रितः अयमेव ग्रन्थो निवेश्यते अर्थज्ञानाय । **के.**) (अपि च समानतीर्था अपि स्वायंभुवाः एकान्तानभ्युपगमात् इति वदन्तः न सर्वात्मना सतः उत्पत्तिमभ्युपयन्ति, अपि तु उपादेयस्य उपादानरूपेण सतः, न पुनः उपादेयरूपेणापि सतः इत्याह– ) अपि च निरुपादानकार्यानुत्पादात् (निष्क्रान्तं उपादानात् कार्यं निरुपादानं तन्त्वादिभ्यो भिन्नप्रदेशं इति यावत्) तदत्यन्तव्यतिरेकाभावात् उपादेयस्य उपादानरूपेण सतः उत्पत्तिरुच्यते (एतदुक्तं भवति– यथा कुविन्दादिभ्यो भिन्नदेशे एतदुपलभ्यते, नैवं तन्त्वादिभ्यः, सोऽयं धर्मधर्मिभावः नैकान्तिकभेदे भवितुमर्हति गवाश्वस्येव । नाप्यभेदे ऐकान्तिके धर्मिरूपस्येव । तस्मात् कथंचिद्भेदः, कथंचिदभेदः एषितव्यः । सोऽयं अनेकान्ताऽभ्युपगमः इत्यर्थः । (अथ उपादेयस्वरूपेणापि सतः किमिति उत्पत्तिर्नोच्यते ? इत्यत आह–) सर्वात्मना तु सत्त्वे तदनुपपत्तेः (तस्मादुत्पत्तेरनुपपत्तेः । हेत्वन्तरमाह– ) वैयर्थ्याच्च (साधनानां) उपादेयवत् । साध्यं नोपादानम् । (साध्यं साधनार्हं नोपादानम् । यतो निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात् । ननु यदि असतः उत्पत्तिः ततः तस्य असत्त्वेन क्रियां प्रति निमित्तभावाभावात् कथं कर्म कारकं इत्याह– ) कथं तर्हि कर्म कारकम् ? (तदेकदेशिमतेन परिहरति– ) नैव कारकं कर्म कारकाश्रितं इति केचित् (यथा आहुः 'कारकादुत्पत्तेः कर्म' इति । तदेतत् कारकाधिकारे कर्मसंज्ञाविधानविरुद्धं इति अनादृत्य पक्षान्तरमुपन्यस्यति– ) विकार्यप्राप्ययोर्वा सत्त्वात् अदोषः । (चोदयति– ) त्रैविध्यं तर्हि हीयते (वैयाकरणप्रवरसंमतं कर्मणो हीयेत, निर्वर्त्यस्य असत्त्वेन अकर्मत्वात् । परिहरति– ) कामं (हीयतां) न तु असतः कारकत्वं शक्याध्यवसानम् (तत्रभवतः अभियुक्तस्य पाणिनेर्विरोधे कात्यायनस्य असद्वादित्वं इति भावः । ननु यदि न निर्वर्त्यस्य कर्मता ) कथं तर्हि 'घटं करोति' इति (द्वितीया– ) प्रयोगः ? (तस्मात् लौकिकप्रयोगविरोधात् पाणिनेरेव असद्वादित्वमित्यर्थः । समाधत्ते- ) उपादेयश्रुत्या उपादाननिर्देशात् (उपादेयस्य घटस्य श्रुत्या घटशब्देन इति यावत्, उपादानस्य कपालानां तादर्थ्यनिमित्तोपचारात् । उपादानस्य च सत्त्वेन कारकत्वोपपत्तेः द्वितीयाप्रयोगसिद्धिः । एतदुक्तं भवति, प्रयोगो लौकिकः 'घटं करोति' इति, न पुनस्तस्य मुख्यत्वमपि, औपचारिकस्यापि तस्य लोके दर्शनात् 'मञ्चाः क्रोशन्ति' इति यथा । तदिह कारके 'कर्तुरीप्सिततमं कर्म' 'कर्मणि द्वितीया' इत्यभियुक्तस्मृतेः औपचारिकः इति निश्चीयते । अतो यस्य स्मृत्या विरोधो मुख्यत्वस्य, न तस्य लौकिकत्वम्, यस्य तु प्रयोगस्य लौकिकत्वम्, न तस्य विरोधः इति । अस्तु वा मुख्यत्वं तथापि अविरोधः इत्याह– ) बुद्धिस्थस्य वा क्रियासूपयोगात् युक्तो निर्वर्त्यस्य कारकभावः । यथोक्तम्– '**व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः । कारकत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥**' (आकृतौ हि पदार्थे तस्या नित्यत्वात् जन्यमानत्वानुपपत्तेः इत्यर्थः) । **विवि.** कारिका ६ पृ. ३३–३५.

* स्वाराज्यकामः वाजपेयेन यजेत । **भा.** २।२।७।२१, १०।४।३।६. * **स्वाराज्यकामस्य** राजसूयसंज्ञको याग उपायत्वेन चोद्यते । स उपाये प्रवर्तमानः आदौ एव ऋत्विजो वृणीते 'राजसूयसंज्ञकेन यागेन याजयत' इति । तच्च अगृह्यमाणविशेषत्वात् सर्वेषां ऋत्विजां कृतं भवति इति (तन्त्रम्) । **टुप्.** ११।४।२।५.

* 'स्वाहाऽग्निं स्वाहा सोमं०' इत्युत्तमप्रयाजमन्त्रः प्रधानभूतदेवताविधिः । **बाल.** पृ. ६३.

**'स्वाहाऽग्निं होत्राज्जुषाणाः' इति स्विष्टकृद्वादः ॥**

उत्तमप्रयाजे 'स्वाहाऽग्निं होत्राज्जुषाणाः' इत्यत्र होत्रायेति तादर्थ्यस्यानाम्नानात् प्रयाजदेवताया अग्नेरेव वादः उपक्रान्तत्वात्, इति प्राप्ते, 'स्वाहा देवानाज्यपान्' इत्यस्योत्तरपाठादेव स्थानाद्यत् 'अनिष्टाभ्यो देवताभ्यः स्वाहा करोति' इति वचनेन यक्ष्यमाणदेवतेज्याप्रतीतेः होत्रादित्यनेन हव्यवहननिमित्तकत्वस्य सौविष्टकृतहविर्जोषणे भृतिरूपे प्रतीतिसंभवात् स्विष्टकृत एवैष वादः । **संकर्ष.** ४।२।१५.

**'स्वाहा देवा आज्यपाः' इति प्रयाजानुयाजदेवतावादः ॥**

'स्वाहा देवा आज्यपा जुषाणाः' इत्युत्तमप्रयाजयाज्यायां श्रुतं यद्यपि 'देवां आज्यपां आवह' इति आवाहनमन्त्रैः प्रयाजानुयाजदेवता मिलित्वा कीर्तिताः । 'यद्देवां आज्यपां आवाहयति प्रयाजानुयाजांस्तदावाहयति' इति श्रुतेः । तथाऽपि 'तं स्वाहाकारेण प्रयाजेषु समस्थापयन्' इति श्रुत्या यज्ञसमाप्तेरिव कीर्तनात् 'यदनिष्टाभ्यो देवताभ्यः स्वाहा करोति' इति श्रुत्यन्तराच्च प्रयाजानामिष्टत्वेनानिष्टानामनूयाजदेवतानामेवेदं कीर्तनम् । तेन आतिथ्यायामस्यांशस्य लोपः । अपबर्हिषोर्द्विवचनान्तोहश्च । अस्तु वा अनिष्टत्वाविशेषेणोत्तमप्रयाजदेवताया अप्यभिधानमित्यातिथ्यायामेकवचनान्त ऊह एव । इति प्राप्ते, उत्तमप्रयाजस्याग्न्येकदेवताकत्वेन यदनिष्टाभ्य इत्यर्थवादस्याज्यभागादिदेवतापरत्वेनापि उपपत्तेः मान्त्रवर्णिकदेवताकीर्तनस्य स्मरणरूपसंस्काराधायकत्वेन तस्य च इष्टानिष्टसाधारण्येन अविस्मरणफलकत्वेन आवाहनमन्त्रवैलक्षण्यायोगेन प्रयाजानूयाजदेवतानां सर्वासामभिधानम् । **संकर्ष.** ४।३।९.

* 'स्वाहा देवेभ्यः, देवेभ्यः स्वाहा' इति परिपशव्ये (? परिवप्ये) आहुती अग्नीषोमीये पशौ । **बाल.** पृ. ३६.

* 'स्वाहा यज्ञं वातादारभे' इत्यादौ स्वाहाकारस्य न होमार्थता, चतुर्थ्या अभावात् संप्रदानानिर्धारणात् । **संकर्ष.** २।४।१७.

**'स्वाहाकृतमिन्द्राय ते जुहोमि' इत्यादौ स्वाहाशब्दो न प्रदानार्थः ॥**

'स्वाहाकृत्य ब्रह्मणा ते जुहोमि' 'स्वाहाकृतमिन्द्राय ते जुहोमि' इत्यादावक्तन्यायेन चतुर्थ्यन्तसमभिव्याहृतानां प्रदानार्थत्वे प्राप्ते, प्रत्ययार्थे उपसर्जनत्वेनान्वितानां स्वाहाकाराणां मुख्यविशेष्यत्वाभावात् द्रव्यस्तुतिद्वारैव वाक्यार्थसमवायान्न प्रदानार्थता । **संकर्ष.** २।४।१८.

* स्वहाशब्दः वषट्-शब्दश्च प्रदानार्थः । **भा.** ८।४।५।१७.

* **स्वाहाकारः** शब्दपदार्थो न शक्नोति देवतां वक्तुम् । **टुप्.** १०।१।७।१४. * स्वाहाकारः सर्वेषु

दर्विहोमेषु भवति । **भा.** १०।८।१०।२०-२२. * '**स्वाहाकारं** यजति ' इति । पञ्चमप्रयाजस्य कर्मनामधेयम् । वि.१०।१।७. * **स्वाहाकारेण** वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते । **संकर्ष**.२।४।२१. * स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते। **भा.** ८।४।५।१७, * स्वाहाकारेण संयुक्ता दर्विहोमाः 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा ' इति । ८।४।५।११, * स्वाहाकारेण संयुक्ता दर्विहोमाः । सोमिके च तन्त्रे वषट्कारो निर्दिष्टः । ८।४।५।११, * **स्वाहाकारस्य** प्रकृतौ एवार्थवत्त्वं नारिष्टहोमेषु, पार्वणहोमयोश्च । ८।४।५।१५. * **स्वाहाकाराणां** पुरस्तात् श्रूयमाणानां ' स्वाहा वाचे, स्वाहा वाचस्पतये ' इत्यादौ न होमार्थता इति **पूर्वपक्षः** । वागादीनां चतुर्थ्यन्तत्वेन देवतात्वावगमात् क्वापि स्थितस्य अर्थप्रकाशकत्वानपायात् प्रदानार्थतैव इति **सिद्धान्तः** । **संकर्ष**. २।१४।१७, * स्वाहाकाराणां प्रदानार्थत्वं ' पृथिव्यै स्वाहा ' ' अन्तरिक्षाय स्वाहा ' इत्यादौ । २।४।१७.

* **स्वाहाकारादिमन्त्रेण**– आवाहनमन्त्रेण देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दार्ढ्यार्थं पुनः स्मरणम् । **भाट्ट**. १०।१।९ पृ. २०५.

* **स्वाहाकारनियमः**– ' स्वाहाऽग्निं, स्वाहा सोमम् ' इत्यादिः । **भा.** १०।४।१४।२४.

* **स्वाहाकारपुनःश्रवणं** किंचिद्दर्विहोमस्थं अनारभ्याधीतस्वाहाकारानुपसंहारकम् । १०।८।१०।२०-२२. **मीको**. पृ. २०१५ ' दार्विहोमेषु क्वचित् स्वाहाकारपुनःश्रवणस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्वाहाकार-पुरस्तात्स्वाहाकारो**ऽपि मन्त्रः होमे करणम् । **संकर्ष**. २।४।१७. ' होमे पुरस्तात्स्वाहाकारा अपि मन्त्राः करणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्वाहाकारयागः** ( पञ्चमः प्रयाजः ) चयनादावयागे नास्ति । **भाट्ट**. ४।१।७, * **स्वाहाकारयागो** वाचनिकप्रयाजादिविनियोगस्थले ( चयने ) । ४।१।७.

* **स्वाहाकारविधानं** अविहितस्वाहाकारेषु प्रदानेषु। वि. १०।८।१०.

* **स्वाहाकारशब्दः** ( उत्तमप्रयाजः ) यागवचनः यथा समिदादयः । **भा.** १०।१।७।१४.

* **स्विष्टकृत्** अग्निः आहवनीयादन्य एव न तु आहवनीय एव । स चान्यो गार्हपत्यः । **संकर्ष**. ४।२।९-१०, * स्विष्टकृदग्निः उह्यमानो ( वह् ) न होमार्थं किंतु हव्यप्रापणार्थम् । ४।२।११. * स्विष्टकृदग्निः गार्हपत्याधिष्ठाता देवताविशेष एव । **संकर्ष**. ४।२।१०. **मीको**. पृ. १९ ' अग्निः स्विष्टकृत् गार्हपत्याधिष्ठाता० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्विष्टकृत् अनिज्याशेषैः त्रिभिरङ्गैः कर्तव्यः अग्नीषोमीये पशौ । १०।७।३।१०-११. **मीको**. पृ. १२४ ' अग्नीषोमीये पशौ स्विष्टकृत्० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्विष्टकृत् अनुयाजेषु संस्कारकर्म । वि. १०।४।२१.

**स्विष्टकृदावापिकोऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् । १०।४।१९।३८॥**

दर्शपूर्णमासयोः तृतीयोऽनुयाजः आराटुपकारकः इति **पूर्वः पक्षः** । संस्कारकर्म इति सिद्धान्तः । तदर्थमाह– अनुयाजे तृतीयानुयाजमन्त्रे यः स्विष्टकृदग्निः पठ्यते स आवापिकः स्यात् न आवापबाह्यः । आज्यभागस्विष्टकृतौ अन्तरा आवापस्थानम् । तत्र भव आवापिकः । तस्मात् बहिर्विद्यमानस्तु बाह्यः । अनुयाजे आवापिकस्विष्टकृत्कर्म प्रयोजनवत् दृष्टफलकं प्रधानाग्नेः स्मरणद्वारा संस्काररूपफलवत् । अङ्गानां आराटुपकारकाणां प्रकरणेन क्रतूपकारलक्षणप्रयोजनेन संयोगात् संनिपातिनां तु श्रुत्यादिना संस्कार्येण अर्थेन संयोगात् संबन्धात् । आराटुपकारकेभ्यश्च संनिपातिनां बलवत्त्वात् । तस्मात् अनुयाजे स्विष्टकृत्पठनं आवापिकाग्नेः संस्कारकर्म इति **सिद्धान्तः** । के.

* स्विष्टकृत् उत्तरार्धात् अवदातव्यम् । **भा.** ३।५।४।१७. * स्विष्टकृत् एकदेवताके पशुगणे तन्त्रेण यथा प्राजापत्यपशुषु । **भाट्ट**. ५।२।६. * स्विष्टकृत् गृहमेधीयेऽस्ति । आज्यभागौ स्विष्टकृत् भक्षश्चेति तत्रानुष्ठेयमेव । वि. १०।७।१०. * स्विष्टकृत् दर्शपूर्णमासादौ, तेन देवतायामदृष्टं क्रियते न देवतायाः संस्कारः । भा. ४।१।७।१८-२०.



**स्विष्टकृद् देवतान्यत्वे तच्छब्दत्वान्निवर्तेत । १०।४।१७।३४॥**

सौमिके अवभृथे ' अग्नीवरुणौ स्विष्टकृतौ यजति ' इति श्रुतम् । स्विष्टकृच्छब्दः अग्नेः वाचकः । अग्नीवरुणयोश्च केवलाग्निदेवतायाः सकाशात् अन्यत्वं व्यासज्यवृत्तिदेवतात्वकत्वात् । तस्मात् अग्नीवरुणयोः देवतान्यत्वे सति स्विष्टकृत् इति शब्दः तच्छब्दत्वात् अग्नीवरुणवाचकत्वात् निवर्तेत । अग्नीवरुणयोः स्विष्टकृत् इति विशेषणं न देयमित्यर्थः । तस्मात् ' अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि ' इति न वक्तव्यं किन्तु ' अग्निवरुणाभ्यामनुब्रूहि ' इति वक्तव्यं इत्यादि । इति **पूर्वः पक्षः** ।

**संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् । ३५ ॥**

सौमिके अवभृथे ' अग्नीवरुणौ स्विष्टकृतौ यजति ' इति श्रुतम् । तत्र अस्विष्टकृच्छब्दकं कर्तव्यं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । संयोगः स्विष्टकृच्छब्दस्य अग्नीवरुणशब्देन स्यात् । ' अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि ' इत्यादि सस्विष्टकृच्छब्दकं कर्तव्यं इत्यर्थः । अर्थापत्तेः अग्नेरर्थे अग्नीवरुणयोः आपत्तेः प्राप्तेः । प्रकृतौ यत्र अग्निः स्विष्टकृत् तत्र स्थाने अवभृथे अग्नीवरुणौ प्राप्तौ, तस्मात् स्विष्टकृच्छब्दवन्तौ कर्तव्यौ । अभिधानस्य कर्मजत्वात् स्विष्टकृत् इति अभिधानस्य ' स्विष्टं कृतवान् स्विष्टकृत् ' इति स्विष्टकरणनिमित्तकत्वात् । यद्यपि इदानीं अग्नीवरुणाभ्यां स्विष्टं न कृतं तथापि अव्यवहिते भविष्यति काले करिष्यतः इति यौगिकस्विष्टकृच्छब्दबोध्यत्वं तयोर्न विरुद्धम् । तस्मात् सस्विष्टकृच्छब्दकं वचनं कर्तव्यं इति **सिद्धान्तः** । के.

* ' स्विष्टकृद् देवतान्यत्वे० ' ( १०।४।१७।३४-३५ ) । अवभृथे ' अग्नीवरुणौ स्विष्टकृतौ यजति ' इति स्विष्टकृच्छब्दलक्षिते स्विष्टकृत्वविशिष्टाग्निकार्ये अग्नीवरुणयोः विधौ विशिष्टस्थानापत्तेः अस्विष्टकृच्छब्दकं वचनं कार्यं इति पूर्वपक्षिते यजतिना प्राकृतस्विष्टकृद्यागमेवोद्दिश्य अग्नीवरुणयोर्विधौ एकविशेष्यस्थानापत्तिरेव द्वयोः, इति विशेषणं प्राप्तमेवानूद्यते स्विष्टकृतौ इति इत्युक्तं दशमे । **बाल**. पृ. १४३. * स्विष्टकृत् पितृयज्ञे ' उत्तरार्धात् सकृदवद्यति ' इति । **भा.** ११।१।७।३६. * स्विष्टकृत् प्रतिपत्तिर्यागश्च । तत्र च मन्त्राणामङ्गत्वम् ( ४।१। १८ इत्यत्र वक्ष्यते ) । **वा.** ३।२।५।१५. * स्विष्टकृत् यागद्रव्यशेषसंस्कारको दृष्टः दर्शपूर्णमासयोः । **टुप्**. १०।७।३।११ पृ. २०२८. * **स्विष्टकृत्** शेषकार्यम् । **वा.** ३।४।१४।३७, ३।४।१५।४२. * स्विष्टकृत् संस्कारार्थः अपूर्वार्थश्च इत्युभयार्थः । **वि.** ४।१।७, * स्विष्टकृत् सर्वेषां हविषां ' उत्तरार्धात् सकृत् सकृत् स्विष्टकृतेऽवद्यति ' इति । १०।४।२१. * स्विष्टकृत् साकंप्रस्थायीये नास्ति । **संकर्ष**. १।३।४. **मीको**. पृ. ४२५२ 'साकंप्रस्थायीये उपस्तरणाभिधारणे०' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्विष्टकृत् सोमस्य वाजिनस्य च नास्ति, अनुवषट्कारेण तस्य सिद्धिः । **संकर्ष**. १।४।१. * स्विष्टकृत् हविःसंस्कारापूर्वोभयार्थः । वि. ४।१।७. * **स्विष्टकृतं** शेषात् यजति । **भा.** ११।२।२।१०. * **स्विष्टकृता** द्रव्यप्रतिपत्तिश्चिकीर्षिता न यागनिर्वृत्तिः । **टुप्**. ६।४।२।३. * **स्विष्टकृते** यदपि अवदीयते तदपि ध्रुवातः एव । **वा.**३।५।१।४. * **स्विष्टकृतोऽग्नेरावाहनं** हव्यवहनायैव इति तत्रैव ' अग्निं होत्राय ' इति निगदः । **संकर्ष**.४।२।११. **मीको**. पृ. १२६ ' अग्नेः स्विष्टकृत आवाहनं० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्विष्टकृतः अवदानादिप्रदानान्तं कर्म, आग्नेयादिप्रधानावदानानन्तरं कार्यम् । वि. ५।४।२. * स्विष्टकृतः आमिक्षायागीयस्य न बाधः । **संकर्ष**. १।४।२. **मीको**. पृ. ३४९५ ' वाजिनानुवषट्कारस्यैव०' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्विष्टकृतः पुरोडाशप्रयोजकत्वं नास्ति दर्शपूर्णमासयोः । **भा.** ४।१।१३।२८-३२, * **स्विष्टकृति**

अग्नीषोमीयपशुपुरोडाशस्य गुणलोपः श्रूयते 'अग्निं यजति' इति, तत्र सर्वेषु स्विष्टकृन्निगमेषु गुणलोपः कर्तव्यः न याग एव । १०।४।१८।३६–३७, * स्विष्टकृति दर्शपूर्णमासयोः द्विर्हविषोऽवद्यति । ११।१।७।३७.

**🕮 स्विष्टकृति भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात् । १०।७।११।३५ ॥**

गृहमेधीये 'अग्निं स्विष्टकृतं यजति' इति स्विष्टकृति श्रूयमाणे भक्षप्रतिषेधः भक्षाणां प्रतिषेधः स्यात्। अन्येषां शेषभक्षाणां भक्षस्य च परिसंख्या स्यात्। स्विष्टकृतो भक्षाणां च तुल्यकारणत्वात् शेषसंस्कारार्थत्वस्य कारणस्य तुल्यत्वात्। तस्मात् स्विष्टकृत् इतरेषां शेषकार्याणां परिसंख्यापकः इति सिद्धान्तः ।

**अप्रतिषेधो वा दर्शनादिडायां स्यात् । ३६ ॥**

वाशब्दः सिद्धान्तप्रतिषेधार्थः। शेषभक्षाणां अप्रतिषेधः न प्रतिषेधः स्यात् । इडायां दर्शनात् । 'इडामुपह्वयति' इति वचनं सति भक्षणे युज्यते नासति। तस्मान्न प्रतिषेधः । पूर्ववान् गृहमेधीयः इति कृत्वाचिन्तेयम् ।

**प्रतिषेधो वा विधिपूर्वस्य दर्शनात् । ३७ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । स्विष्टकृता अन्येषां शेषभक्षाणां प्रतिषेधः स्यात्। इडायां तु विधिपूर्वस्य दर्शनात् न दोषः । प्रथमं चोदकशास्त्रेण हविःशेषप्रतिपत्तिसामान्यप्राप्तिः, ततः स्विष्टकृद्विधिना परिसंख्यया स्वातिरिक्तनिवृत्तौ पुनरिडाविधिः अभ्यनुज्ञारूपः, नेतरप्रापकः इति भावः। तदत्र विधिपूर्वकः अभ्यनुज्ञारूपः इडाभक्षो दृश्यते । तस्मात् स्विष्टकृत् इतरेषां परिसंख्यापकः इति **सिद्धान्तः। के.**

* 'स्विष्टकृति भक्षप्रतिषेधः स्यात्' इत्यधिकरणे (१०।७।११) गृहमेधीये परिसंख्यापक्षे 'आज्यभागौ यजति' इत्यस्य अवधारणार्थलक्षकस्य आज्यभागसजातीयस्य यागान्तरव्यवच्छेदकत्वम्, स्विष्टकृद्विधानस्य च अवधारणार्थलक्षकस्य शेषकार्यान्तरव्यवच्छेदकत्वं दर्शितम् । पराक्रमः. ६।७।१. * स्विष्टकृति यथा अंशभेदः तथा प्रयाजशेषे नांशभेदः । भाट्ट.४।१।१४.

**🕮 स्विष्टकृदधिकरणम् ॥**

**अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् । ३।४।१५।४२ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ, तत्र शेषकार्याणि ऐडप्राशित्रसौविष्टकृतादीनि । तत्र संदेहः किं हविषो हविषः कर्तव्यानि, उतैकस्माद्धविष इति । किं प्राप्तम् ? अप्रयोजकत्वात् एकस्मात्क्रियेरन् । अप्रयोजकानि शेषकार्याणि हविषाम् । यदि शेषकार्यैः प्रयुक्तानि, भवेयुः सर्वाणि प्रयुक्तानीति सर्वेभ्यः क्रियेरन् । अन्यार्थानि त्वेतानि, नावश्यं शेषकार्येषु विनियोक्तव्यानि । संनिधानात्तु यतः कुतश्चिदनुष्ठातव्यानि । शेषो हि साधनममीषामिति ।

**वा**— यदाऽऽहवनीये प्रक्षेपेण, अक्षपितो हविःशेषः प्रतिपादितस्तदा शेषकार्याणि स्विष्टकृदादीनि कथं क्रियन्तामिति विचार्यते। तत्र अर्थकर्मत्वं मन्यमानः 'एकस्मात्' इत्याह। ('यदि शेषकार्यैः' इत्यादि भाष्यं व्याचष्टे 'सत्यपि' इत्यादिना) सत्यप्यर्थकर्मत्वे यदि तदर्थमेवैतानि द्रव्याण्युत्पन्नानि भवेयुस्ततः सर्वेषां संभावनाय पश्ववदानानामिवैकस्मादपि सिध्यति (शेषकार्यमिति शेषः) यागे सर्वेषां संबन्धः क्रियेत। तत्तु नास्ति अप्रयोजकत्वात्। अतस्तुषोपवापकपालवदेकेनैव सिद्धिः ।

**संस्कृतत्वाच्च । ४३ ॥**

**भाष्यम्**— सकृच्च एवंजातीयकेन शेषकार्येण संस्कृतं प्रधानमिति कृत्वा नापरस्मादपि कर्तव्यमिति ।

**वा**—यश्च प्रधानानामेवादृष्टः संस्कारः स एकद्रव्यनिष्पादितैः शेषकार्यैः सिध्यतीति न द्रव्यान्तरमपेक्षते । 'सकृच्छब्दश्च' सकृदवदानाभिप्रायः । इतरथा तु सर्वावदानेऽपि तन्त्रेण प्रयोगात्सकृत्त्वोपपत्तेरवक्तव्यतैव स्यात् । अथवा ततः शेषकार्याणि सर्वेभ्यः क्रियेरन् यदि संस्कारकाणि भवेयुर्न त्वेतानि संस्कारकाणि । कुतः ? संस्कारान्तरैरेव (पर्यग्निकरणादिभिः) संस्कृतत्वात् । अयमप्यविरोधाद्भविष्यतीति चेत्। तत्राप्येष सूत्रार्थः, संस्कारक्रमस्यातिक्रान्तत्वात्। यावद्द्रव्यकृतप्रयोजनं द्रव्यं भवति तावत्संस्कारमपेक्षते प्रधाननिर्वृत्त्युत्तरकालं तु कृतं संस्कारैरिति संस्काराणामनवसरः ।



**सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात् । ४४ ॥**

**भाष्यम्**— सर्वेभ्यो वा हविर्भ्यः शेषकार्याणि कर्तव्यानि । कुतः ? कारणाविशेषात् । यदेकस्य हविषः शेषकार्यक्रियायां कारणम्, तत्सर्वेषाम् । स हि शेषः प्रतिपादयितव्यः । यस्यैव न प्रतिपाद्यते तस्य तेन संस्कारेण वर्जनं स्यात्। तस्मात्सर्वेभ्यः कर्तव्यानीति ।

**वा**— 'यैस्तु द्रव्यं चिकीर्ष्यते' (२।१।३।८) इत्येवं संस्कारकर्माण्येतानि । तत्रापि 'उत्पत्तौ येन संयुक्तम्' (४।२।७।१९) इति प्रतिपत्तयः। ताश्च सर्वैः कृतार्थत्वाविशेषादपेक्षिताः । यद्यपि चैताभिर्द्रव्याणि न प्रयोक्ष्यन्ते तथाऽपि द्रव्यैरेव तासां प्रयुक्तत्वात्सर्वविषयता । निवृत्तेऽपि च प्रधाने तदीयानां सतामेषां का प्रतिपत्तिर्भवत्वित्यपेक्षिते शक्यः प्रतिपत्तिनियमो विधातुम् ।

**लिङ्गदर्शनाच्च । ४५ ॥**

**भाष्यम्**— लिङ्गं च दृश्यते 'देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति, वृणीष्वेति तेऽब्रुवन्, सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्' इति वीप्सादर्शनम् । तस्मात् सर्वेभ्यः शेषकार्याणीति ।

**वा**— 'सकृत्सकृत्' इति स्विष्टकृदवदानवीप्सा सर्वेभ्योऽवदाने संस्कारपक्षे वाऽवकल्पते नान्यथा। (एवं तावद्यथाभाष्यमधिकरणान्तरपरतया सूत्राणि व्याख्याय तत्र चैतादृशविषये प्रतिपत्तिकर्मत्वस्य चतुर्थाध्यायद्वितीयपाद एव व्यवस्थापयिष्यमाणतया पौनरुक्त्यापत्तेरपरितोषात्स्वयं तावत्पूर्वाधिकरणप्रयोजनकथनार्थतया सूत्राणि व्याकरोति–प्रयोजनेत्यादिना) 'प्रयोजनसूत्राणि चैतानि। यदि नाम शेषकार्यवशेन पूर्वपक्षेऽप्यसर्वप्रदानं किं भवति तदा विचारस्य प्रयोजनमिति । तत्र यः पूर्वमस्माभिरभिहितोऽर्थस्तत्रैवं सूत्रं योज्यम्। पूर्वपक्षे हवींषि शेषकार्याणामप्रयोजकानीत्येकस्मात्क्रियेरन् । बलाच्चापहारः प्रधानेभ्यः, सकृत्कृते समस्तः कृत इति संस्कृतत्वान्नान्यतोऽपि कर्तव्यः । सिद्धान्ते तु सर्वहविषां प्रयोजकत्वाविशेषात्सर्वेभ्यः । लिङ्गदर्शनं च पौर्णमास्यधिकरणवत्प्रयोजनेऽवस्थितसिद्धान्तं द्योतयति ।

**शा**— सति शेषे शेषकार्याणि स्विष्टकृदादीनि किं एकस्माद्धविषः कार्याणि उत सर्वेभ्यः इति विचारः । तत्र एकस्मादेव शेषात् स्विष्टकृत इति शास्त्रार्थस्य कृतत्वात् एकस्मादेव कार्याणि न सर्वेभ्यः । इति **प्राप्ते,** उच्यते । यदि शेषगुणकानि प्रधानकर्माण्येतानि, ततः स्यादेवम्। शेषस्य तु आकीर्णकरस्य अपेक्षितप्रतिपत्तेः प्रतिपत्तिनियमोऽयं विधीयते। स यस्यैव न क्रियते तस्यैव प्रतिपत्तिनियमलोपात् वैगुण्यं स्यात्। तस्मात् सर्वेभ्यः प्रतिपत्तिः ।

**सोम**— पूर्वोपजीवित्वात् **संगतिः** विज्ञेया । **सूत्रार्थस्तु**– एकस्मादेव शेषकार्याणि क्रियेरन् शेषस्य शेषकार्यं प्रति गुणभूततया तत्प्रयोजकत्वाभावादिति ।

**वि**— 'शेषात्स्विष्टकृदेकस्मात्सर्वेभ्यो वैकृतः कृते। शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः संस्कारसाम्यतः ॥'

**भाट्ट**— अत्र भाष्यकारेण शेषकार्याणां अर्थकर्मत्वात् एकस्मादेव हविषः शेषकार्याणि कर्तव्यानि इति पूर्वपक्षयित्वा प्रतिपत्तित्वं प्रसाध्य सर्वेभ्य इति सिद्धान्तितम्। तत् चतुर्थे एव तादृग्विषये प्रतिपत्तित्वस्य साधयिष्यमाणत्वात् पुनरुक्तत्वापत्तेः पूर्वाधिकरणप्रयोजनकथनार्थानि एतानि सूत्राणि इति **वार्तिककारो** व्याचख्यौ । यदि पूर्वाधिकरणे शेषकार्याणां हविरन्तराक्षेपकत्वं पूर्वपक्षे तदा स्पष्टमेव प्रयोजनम्। यदा तु शेषकार्यानुरोधेन शेषस्थापनं तदा तेषां परप्रयुक्तद्रव्योपजीवित्वेन अप्रयोजकत्वेऽपि अर्थकर्मत्वेन तुषोपवापकपालवच्छेषस्य गुणभूतत्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादुपादेयविशेषणत्वेन तद्गतसंख्याया विवक्षितत्वाच्च एकस्मादेव करणं शेषकार्याणाम्। 'सकृत्सकृत्'

( तैसं. २।६।६ ) इति विशेषश्रवणं तु ' चतुर्थे-चतुर्थेऽह्न्यहीनस्य ' इतिवत् प्रयोगान्तरविषयम् । सिद्धान्ते तु विद्यमानशेषत्वात् चातुर्थिकन्यायेन प्रतिपत्तिकर्मत्वात् अविवक्षितसंख्यशेषाख्यसंस्कार्यानुरोधेन सर्वेभ्यः करणम् । वीप्सा च उपपन्नतरा ।

**मण्डन—** ' शेषक्रिया सर्वहविर्भ्य एव । '

**शंकर—** ' नैकस्माच्छेषकार्यं स्यात् । '

* **स्विष्टकृदर्थावत्तनाशे** पुनरवदानाभावः । वृ. ६।४।२।३.

* **स्विष्टकृदवदानं** आग्नेयपुरोडाशस्य पूर्वं कर्तव्यं ततः सांनाय्यस्य, प्रवृत्तिक्रमान्मुख्यक्रमस्य बलीयस्त्वात् । दर्शपूर्णमासयोः । टुप्. ५।४।२।२–४.

* **स्विष्टकृदादि** यावदुक्तं कर्तव्यं गृहमेधीये । १०।७।१०।३४. **मीको.** पृ. १६०३ ' गृहमेधीये यावदुक्तं कर्तव्यम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **स्विष्टकृदादीनि** प्रधानचोदनाक्षिप्तस्यैव शेषस्य ग्राहकाणि भवन्ति, तेषां परप्रयुक्तद्रव्योपजीवनात् अप्रयोजकत्वे सति नाशदोषापहारेष्वपि अक्रिया सिद्धा भवति । वा. ३।४।१४।३७. * **स्विष्टकृदादिः** उपयुक्तहविःसंस्कारः । **मीन्या.** * **स्विष्टकृदादीनां** कृतं प्रधानं निमित्तम्, अग्न्यन्वाधानादीनां तु करिष्यमाणम् । **टुप्.** ५।१।५।८. * स्विष्टकृदादीनां निर्वृत्तयागभावित्वात्तु स्फुटमेवाप्रयोजकत्वं भविष्यति । वा. ३।४।१४।४१ पृ. ९८३.

* **स्विष्टकृदाद्यर्थं** पुरोडाशान्तराणि उत्पाद्येरन् इति पूर्वपक्षः, नेति सिद्धान्तः । वा. ३।४।१४।३७.

* **स्विष्टकृदादिशेषकर्म** प्राथमिकहविःशेषादेव । ३।४।१६।४६–४७. **मीको.** पृ. २७५१ ' प्रथमोपस्थितन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **स्विष्टकृदादिशेषकर्मसु** कर्मसंस्कारपक्षः, हूयमानसंस्कारपक्षः, शेषसंस्कारपक्षश्च । वा. ३।५।४।१७.

* **स्विष्टकृदादिशेषकार्यमेव** नास्ति इति आदिमेऽधिकरणत्रये ( ३।५।१–३ ) साधितम् । इत उत्तरं आपादपरिसमाप्ति शेषकार्यमस्तीति स्वीकृत्य तत्र विशेषः चिन्त्यते । वा. ३।५।४।१६. * **स्विष्टकृदादिशेषकार्यं** न ध्रौवाज्यात् । ३।५।१।११–१२. * **स्विष्टकृदादिशेषकार्यं** साकंप्रस्थायीये नास्ति, कुम्भीभिरेव होमे सति हविःशेषाभावात् । वि. ३।५।२.

* **स्विष्टकृदिडं** अमावास्यायां सांनाय्यादवदीयते । वा. ३।५।२।१३. * **स्विष्टकृदिडं** उपांशुयाजद्रव्यादाज्यात् नावदातव्यम् । ३।५।१।११–१२. **मीको.** पृ. १२०४ ' उपांशुयाजद्रव्यादाज्यात् ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **स्विष्टकृदिडं** शेषकार्यं साकंप्रस्थायीये नास्ति । साकंप्रस्थायीयाधिकरणम् । ३।५।२।१३. * **स्विष्टकृदिडं** सर्वपृष्ठेष्टौ सकृदेव कर्तव्यम्, न प्रतिकर्म । सर्वपृष्ठेष्टिः । ३।५।४।१६–१७. * **स्विष्टकृदिडं** सौत्रामण्यां न कर्तव्यम् । ३।५।३।१४–१५.

* **स्विष्टकृद्गुणकः** तृतीयोऽनुयाजः दर्शपूर्णमासयोः । वि.१०।४।२१.

* **स्विष्टकृत्तन्त्रानुष्ठानं** पूर्वपक्षयित्वा पृथक्त्वेन आवृत्तिः वक्ष्यते **संकर्षे** ( १।१।३ ) । सु. पृ. ११५६.

* **स्विष्टकृद्देवतासंस्कारकतया** दर्शपूर्णमासगततृतीयानुयाजः संनिपत्योपकारकः । १०।४।१९।३८. **मीको.** पृ. ४२१ ' अनुयाजस्य तृतीयस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्विष्टकृन्निगदे** ' अयाट् देवानामाज्यपानां ' इति प्रयाजदेवता अभिधीयन्ते इति प्राप्ते, प्रयाजानूयाजदेवतानामभिधानं इति सिद्धान्तः । **संकर्ष.** ४।३।१४.

* **स्विष्टकृत्प्रक्षेपोऽपि** प्रधानाङ्गभूतः प्रधानप्रयुक्तश्च सन् स्विष्टकृद्यागस्याप्यङ्गं तत्प्रयुक्तश्च । भाट्ट. ४।१।१३.

* **स्विष्टकृद्यागः** अर्थकर्मैव । भाट्ट. ४।१।१३. * **स्विष्टकृद्यागः** उपयुक्तहविःसंस्कारः । तथापि अंशभेदेनापूर्वफलकत्वम् । मन्त्रपाठः, द्रव्यप्रक्षेपः, देवतोद्देशेन त्यागश्चेति त्रयोंऽशाः । तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वं स्विष्टकृद्यागेनोत्पद्यते इति दृष्टादृष्टार्थः स्विष्टकृत् । वि.४।१।७. * **स्विष्टकृद्यागः** द्रव्यप्रक्षेपांशेन दृष्टार्थः देवतोद्देशांशेन तु अदृष्टार्थः । अग्नेः स्विष्टकृतः क्वचिदन्यत्र विनियोगाभावात् । इदं च दृष्टादृष्टोभयार्थं द्रव्यसंस्कारकं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । बाल. पृ. ८३. * **स्विष्टकृद्यागो** नावयविनो नोत्तरार्धस्य वा प्रयोजकः । आज्यप्रक्षेपस्य तु प्रयोजकः दर्शपूर्णमासयोः । भाट्ट. ४।१।१३. * **स्विष्टकृद्यागः** प्रकृतमाग्नेयादिपुरोडाशं उपजीव्यैव प्रवर्तते न तु स्वतन्त्रपुरोडाशप्रयोजकः । शेषप्रतिपत्तिविशेषोऽयम् । तेन प्रधानयागोत्तरं अवशिष्टहविर्नाशे स्विष्टकृदादिशेषकार्यलोप एव । वि.४।१।१३. * **स्विष्टकृद्यागः** प्रतिपत्तिरूपः संस्कारोऽपि मन्त्रयागः प्रतिपत्तिश्चेत्युभयात्मकः इति ' आश्रयिष्वविशेषेण० ' ( ४।१।७।१८ ) इत्यधिकरणे वक्ष्यते । सु. पृ. ११०७. * **स्विष्टकृद्यागः** प्रधानहविषां संस्कारः न कर्मान्तरम् । भा. २।३।५।१३. * **स्विष्टकृद्यागः** वनस्पतियागस्य प्रकृतिः । वि. १०।४।१८. * **स्विष्टकृद्यागः** शेषस्य अप्रयोजकः । बाल. पृ. १०७, * **स्विष्टकृद्यागः** शेषोत्पत्त्युपादानयोः अप्रयोजकः पालनमात्रस्य तु प्रयोजकः । पृ. १०७. * **स्विष्टकृद्यागस्य** लोप एव एककपालस्य सर्वहोमे आज्येनापि समापनं नास्ति । **भाट्ट.** ४।१।७. * **स्विष्टकृद्यागे** ' अग्निः स्विष्टकृत् ' इति सगुणा देवता । वि. १०।४।१८, * **स्विष्टकृद्यागे**, अवभृथे, ' अग्नीवरुणौ स्विष्टकृतौ यजति ' इति विधानात् सविशेषणौ देवौ वक्तव्यौ । १०।४।१९.

* **स्विष्टकृद्यागलोपेऽपि** देवतावाहनलोपो न भवति । **संकर्ष.** ४।२।९.

* **स्विष्टकृद्यागीयनिगमेषु** अग्नीवरुणयोः वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे अवभृथे । १०।४।१७।३४–३५. **मीको.** पृ. ७०२ ' अवभृथे स्विष्टकृद्यागीयनिगमेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**स्विष्टकृद्याज्यानिगदे ' अयाळग्निरग्नेः ' इति गार्हपत्यस्यैव वादः ॥**

मी. को. ५६२

स्विष्टकृद्याज्यानिगदे ' अयाळग्निरग्नेः प्रिया धामानि ' इत्यत्र आहवनीयस्योपक्रान्तत्वेन ' यक्षदग्नेः ' इत्यत्रापि तस्यैव वादः । ' जातवेदा जुषतां हविः ' इति हविर्जोषणलिङ्गेन गार्हपत्यस्य पृथङ्निर्दिष्टत्वात् । इति प्राप्ते, स्थानादेव गार्हपत्यस्यैव वादः तस्यैव ' सोऽध्वर ' इत्यनेन प्रकृतहविर्जोषणाभ्यनुज्ञार्थं पुनर्निर्देशोपपत्तेः । **संकर्ष.**४।२।१७.

* **स्विष्टकृद्वदुभयसंस्कारः** स्यात् । ३।२।५।१५ ॥ भाष्यकृता यद्यपि इदं सूत्रं पूर्वेण एकसूत्रतया व्याख्यातं तथापि भाष्यकृत्प्रक्रियया सूत्रद्वयमेवैतत् । उभयरूपश्चासौ संस्कारश्च इति कर्मधारयः भाष्ये व्याख्यातः । **वार्तिके** तु षष्ठीसमासः । यथा स्विष्टकृत् द्रव्यसंस्कारोऽपि यागः तथा प्रस्तरप्रहरणमपि उभयोः द्रव्यदेवतयोः संस्कारोऽपि यागत्वं न निरुणद्धि । **अथवा** यथा स्विष्टकृत् द्रव्यदेवतयोः उभयोः संस्कारः तथा प्रहरणमपि इति सर्वथा साम्येनापि व्याख्यातव्यम् । सु. पृ. ११०७. * **स्विष्टकृद्वत्** । यथा स्विष्टकृति अंशभेदः तथा प्रयाजशेषे नांशभेदः । **भाट्ट.** ४।१।१४.

* **स्विष्टकृद्विकारो** वनस्पतिः इति संकर्षे वक्ष्यते । भा. १०।४।१६।३२.

* **स्विष्टकृद्विधिः**— प्रतिपत्तिविधिः दृष्टादृष्टोभयार्थः । बाल. पृ. २४.

* **स्विष्टकृच्छब्दलोपः** अग्नीषोमीयपशुपुरोडाशस्विष्टकृति त्यागे आवाहनादिनिगदेषु च । १०।४।१८।३६–३७. **मीको.** पृ. १०२ ' अग्नीषोमीयपशुपुरोडाशस्विष्टकृति त्यागे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्विष्टकृच्छ्रवणं** शेषकार्याणां निवर्तकं चातुर्मास्येषु गृहमेधीये पञ्चमे पक्षे । १०।७।११।३५–३७. **मीको.** पृ. १६०२ ' गृहमेधीये आज्यभागपुनःश्रवणस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **स्विष्टकृद्धोमः** दर्शपूर्णमासयोः प्रधानहोमनारिष्ठहोमानन्तरभावी, प्राशित्रादिभक्षणात् (इडादिभक्षणात् ) प्राचीनः, पुरोडाशादिद्रव्यकः । वि.१०।४।२१,

* स्विष्टकृद्धोमः सर्वेषां हविषा शेषेभ्यः कर्तव्यः न तु कस्यचिदन्यतरस्य शेषात्। ३।४।१९, * स्विष्टकृद्धोमे अग्नीषोमीयपशुपुरोडाशीये 'अग्निं यजति' इति केवलाग्निपदात् स्विष्टकृच्छब्दो विलोपनीयः, केवलोऽग्निशब्द एव वक्तव्यः। एवमुक्तपशुपुरोडाशे सर्वनिगमेष्वेव स्विष्टकृच्छब्दलोपः। १०।४।२०.

* स्वीयस्य दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य देयता विश्वजिति। ६।७।७।८-१३. मीको. पृ. ३६८७ 'विश्वजिति दक्षिणार्थनिर्दिष्टे०' इत्यत्र अधिकरणं द्रष्टव्यम्। * स्वीयस्य दक्षिणाकाले विद्यमानस्यैव विश्वजिति देयता। ६।७।६।७. मीको. पृ. ३६८८ 'विश्वजिति दक्षिणाकाले०' इत्यत्र अधिकरणं द्रष्टव्यम्। * स्वीयस्य सर्वस्य विद्यमानस्यैव दानं विश्वजिति। ६।७।४।५. मीको. पृ. ३६८९ 'विश्वजिति विद्यमानस्यैव सर्वस्वस्य दानम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

## ह.

ञ्ञ हंसकाकन्यायः। अयं श्लोकोपनिबद्धः। तथाहि- 'इभतुरगशतैः प्रयान्ति मूढा गुणवन्तो विबुधाश्चलन्ति पद्भ्याम्। गिरिशिखरगताऽपि काकपङ्क्तिः पुलिनगतैर्न समेति राजहंसैः॥' इति। साहस्री. ९९१.

* हंसक्षीरोदकन्यायः। हंसक्षीरन्यायार्थक एवायम्। 'अनुमानज्ञानं तावत् व्याप्तिपक्षधर्मतापरामर्शवशात् लिङ्गवशेन उपजायमानं हंसक्षीरोदकन्यायेन व्यापकविशेषविषयमेव उपजायते। तौना. १।३।११।३३.

ञ्ञ हंसक्षीरन्यायः। क्षीरे नीरमिश्रितेऽपि हंसः क्षीरमेव तत्रत्यं गृह्णाति न नीरम्। तद्वत् सदसन्मिश्रिते व्यवहारे सन्तमेव गृह्णाति नासन्तमिति। के.

ञ्ञ हंसबकन्यायः। यत्रासोक्तसत्योत्कृष्टपदार्थे मूर्खजनोपहासस्तत्रायं प्रवर्तते। तद्यथा- 'कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो मानसात्किं तत्रास्ति सुवर्णपङ्कजवनं नीरं सदा निर्मलम्। रत्नानां निचयाः सुवर्णलतिका वैदूर्यरोहाः क्वचिन्मण्डूका अपि तत्र सन्ति न, बकैराकर्ण्य हीहीकृतम्॥' इति हंसबकसंवादरूपपद्येन विवृतोऽयमिति। यद्वा- 'हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः। क्षीरनीरपृथक्कारे हंसो हंसो बको बकः॥' इति पद्येन वा विवृतः। साहस्री. ७५.

* हठः:- चिरन्तनतडागोदकाच्छादितहरितद्रव्यमुच्यते। तत् उत्सार्यमाणमपि स्वच्छन्दतः पुनः पुनरुदकं छादयति। एवं योऽन्योऽपि स्वच्छन्दव्यवहारः स हठ इति प्रसिद्धः। वा. ११४।१।२ पृ. ३२४.

ञ्ञ हन्तिपिष्यधिकरणम्। दर्शपूर्णमासयोः प्रोक्षणादीनि संनिपत्योपकारकाणि अपूर्वप्रयुक्तानि॥

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात्। ९।१।२।२ वर्णकं १॥**

भाष्यम्— दर्शपूर्णमासौ प्रति समामनन्ति 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि' इति। तत्रायमर्थः सांशयिकः किं प्रोक्षणं हन्तिपिषिप्रयुक्तम्, उत अपूर्वप्रयुक्तमिति। किं प्राप्तम्? संस्कारे हन्तिपिष्याख्ये प्रयुज्यमानस्य प्रोक्षणस्य तत्प्रयुक्तता स्यात् संस्कारप्रयुक्तता। संस्कारौ हि हन्तिपिषी। कुत एतत् तत्प्रयुक्ततेति? तादर्थ्यात्। यत् हि येन कर्तव्यं भवति, तत् तस्य प्रयोजकम्। यदि अपूर्वमनेन क्रियते, ततः अस्यापूर्वं प्रयोजकम्, यदि हन्तिपिषी, ततस्तौ प्रयोजकौ। प्रकरणाच्च अपूर्वे कर्तव्यं गम्यते, वाक्यात् हन्तिपिषी, वाक्यं च प्रकरणात् बलीय इति। ननु हन्तिपिष्योः क्रियमाणमपूर्वार्थे भविष्यति, तत्र प्रकरणं च वाक्यं च उभयमपि अनुग्रहीष्यते। उच्यते। न शक्यमुभयं अनुग्रहीतुम्। न प्रकरणसमाम्नायमात्रेण प्रकरणवतः अर्थेन समाम्नातमिति गम्यते। प्रकरणसमाम्नानात् प्रकृतेन एकवाक्यता भवति, ततः तादर्थ्यमवगम्यते। इह तु प्रत्यक्षाभ्यां हन्तिपिषिभ्यां प्रोक्षणस्य एकवाक्यता। सा



प्रकृतेन एकवाक्यतां परोक्षां बाधेत। न च द्वाभ्यामपि सह एकवाक्यता स्यात्। यदा एकेन एकवाक्यता, तदा तेन निराकाङ्क्षस्य नान्येनापि एकवाक्यता कल्प्यते। तस्मात् प्रकृतेन एकवाक्यत्वाभावात् नापूर्वार्थं प्रोक्षणम्। आह। ननु हन्तिपिषी अपूर्वार्थौ, तदर्थं प्रोक्षणम्। तस्मादपूर्वस्योपकारकमिति। उच्यते। भवति प्रणाड्या उपकारकम्। न त्वपूर्वप्रयुक्तम्। द्विविधं हि अङ्गमङ्गस्योपकारकं भवति। किंचिदपूर्वस्य एतदङ्गं विशिष्टमित्यनेन कारणेन अङ्गेन संबध्यते, किंचित् अनपेक्ष्यैव अपूर्वसंबन्धं स्वरूपेणैव कारणेन संबध्यते। यदपूर्वसंबन्धं कारणत्वेन उपादाय धर्मजातमङ्गविशेषेण संबध्यते, तदपूर्वप्रयुक्तं भवति। तादृशं च विकृतौ अर्थान्तरे तत्कार्यापन्ने, ऊहितव्यं भवति।

यत्र पुनः स्वरूपमङ्गस्य धर्मसंबन्धे कारणं भवति, तत् स्वरूपप्रयुक्तम्। तत्र यद्यपि तेन धर्मवता अपूर्वं साध्यते। तत्र साध्यमानमपूर्वं न धर्मस्य प्रयोगहेतुभूतं भवति, न तत्प्रयोजकम्, तस्य स्वरूपं विद्यते इति न धर्मः प्रयुज्यते। तत्र विकृतौ अर्थान्तरे तद्रूपाभावादूहो नावकल्पते। एवं सति वाक्यान्निर्णयः। यदि वाक्यमपूर्वस्य कारणतां वदति, ततः अपूर्वप्रयुक्तम्। अथाङ्गस्य, ततः अङ्गप्रयुक्तम्। तच्च उक्तप्रकरणादपूर्वप्रयुक्तं स्यात्। वाक्यात्तु अङ्गप्रयुक्ततेति। तस्मात् हन्तिपिषिप्रयुक्तं प्रोक्षणमिति। यत्रयत्र हन्तिपिषी प्रयुज्येत, तत्रतत्र एवंधर्मकौ भवतः इति।

टुप्— ननु अधस्तात् अपूर्वार्था धर्मा इति स्थिते हन्तिपिषिप्रयुक्तं प्रोक्षणं इति (पूर्व-) पक्षस्य अनुत्थानमेव। सत्यम्, किन्तु श्रुतिलिङ्गवाक्यैर्ये संयुक्ताः (संनिपातिनः) ते अपूर्वार्था न संभवन्ति इति मन्यमानः पूर्वपक्षं करोति त्रिभिरधिकरणैः (वाक्यलिङ्गश्रुतिभिः इति व्युत्क्रमेण)। अत्र चोद्यते किं उलूखलमुसलप्रयुक्तं प्रोक्षणम्, उत अपूर्वप्रयुक्तमिति संशयो युक्तः, न तु हन्तिपिषिप्रयुक्तमिति। कथम्? 'प्रोक्षिताभ्या' इति प्रपूर्वात् उक्षतेः निष्ठाश्रवणात्। निष्ठा च कर्मणि उपपद्यते। ईप्सिततमं च कर्म। तस्मात् यथा 'व्रीहीन् प्रोक्षति' इति (अत्र) व्रीह्यर्थं (प्रोक्षणम्) एवमिहापि निष्ठाश्रवणात् उलूखलमुसलार्थमेव प्रोक्षणम् (न हन्त्यर्थम्)। उच्यते। 'व्रीहीन् प्रोक्षति' इत्यत्र व्रीह्यर्थं प्रोक्षणं भवति। (तत्र हि) प्रोक्षति इति भावना विद्यते, तस्याश्च भाव्येन भवितव्यम्। तत्र कश्चित् क्रियमाणतया भाव्यः (यथा अवघातभावनायाः व्रीहयः), कश्चित् संस्कार्यत्वेन (यथा व्रीहयः प्रोक्षणभावनायाः), कश्चित् उत्पाद्यत्वेन (यथा संयवनभावनायाः पुरोडाशः), कश्चित् प्राप्यत्वेन (यथा 'गां पयो दोग्धि' इत्यत्र गो-दोहनभावनायाः पयः)। 'व्रीहीन् प्रोक्षति' इति (भाव्यवाचि-) द्वितीयासंयोगात् व्रीहयो भाव्याः। केन? प्रोक्षणेन। (प्रकृते आह-) निष्ठान्ते पुनः नास्ति भावना। तदभावात् भाव्यमानस्यापि अभावः। (ननु द्वितीयया कर्मत्ववाचिन्या भाव्यमुच्येत, तत्राह-) सत्यपि कर्मत्वे प्रोक्षणं उलूखलमुसलार्थमिति केनोक्तम्? (द्वितीययेति चेत्, तत्राह-) द्वितीयाचतुर्थ्यौ सत्यां भावनायां (एकभावनाऽऽपादितसंबन्धा) आत्मार्थां क्रियां (धात्वर्थं) कुरुतः। तृतीयाऽऽद्याश्च सत्यामेव भावनायां (तद्द्वारेण) आत्मार्थं क्रियाऽर्थमेव कुर्वन्ति। अथवा द्वितीया उद्भूतशक्ति कर्म प्रतिपादयति, निष्ठा (तु) न्यग्भूतम्। कथं ज्ञायते? (अतः) आह, उलूखलमुसले अत्र कर्मभूते। ते च कारके कारकान्तरेण अत्र संयुज्यमाने दृश्येते 'उलूखलमुसलाभ्याम्' इति। न च द्वितीयाऽन्तं कारकं कारकान्तरेण संयुज्यते, उद्भूतशक्तित्वात्। तस्मात् यत् उद्भूतशक्ति कारकम्, तत् क्रिया वशीकरोति, न तु अनुद्भूतशक्ति, अनुद्भूतशक्तित्वात्। अपि चैवं उलूखलमुसलयोः प्रोक्षणस्य च संबन्धार्थे हन्तिरुच्चार्येत, तत्र अत्यन्तं वाक्यं स्यात्। तस्मात् हन्त्यर्थम्, (प्रोक्षणम्, नोलूखलमुसलार्थं इति युक्तो विचारः। इदानीं उलूखलमुसलाद्यर्थत्वापरित्यागेनैव अयं विचारः, न तदपह्नवेन इत्याह-) अथवा वाक्यान्तरेण करणतया प्राप्ते उलूखलमुसले अर्थप्राप्ते वा ते अनूद्य उप-

सर्जनार्थो विधीयते ( प्रोक्षणं हन्त्यर्थेन ) । अत्र पूर्वः पक्षः, वाक्यात् हन्तिपिष्यर्थं प्रोक्षणम्, प्रकरणात् अपूर्वार्थम् । वाक्यं च प्रकरणात् बलीयः ।

**तेन त्वर्थेन यज्ञस्य संयोगाद् धर्मसंबन्धस्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् । ३ ॥**

**भाष्यम्—** तुशब्दः ,पक्षं व्यावर्तयति । न त्वेतदस्ति, हन्तिपिषिप्रयुक्तं प्रोक्षणमिति । तेन त्वर्थेन हन्तिना पिषिणा वा यस्मादपूर्वस्य संयोगः, तस्मात्तस्य प्रोक्षणसंबन्धः । अपूर्वसाधनविशेषकारितः प्रोक्षणसंस्कारेण संबन्धो न हन्तिपिषिकारितः । कथम् ? निष्प्रयोजनौ हन्तिपिषी । यदि तत्प्रयुक्तं प्रोक्षणम् , तदपि निष्प्रयोजनम् । अतो न तत्प्रयुक्तम् । आह । अपूर्वस्योपकारकौ हन्तिपिषी, न निष्प्रयोजनाविति । उच्यते । न प्रोक्षणस्य अपूर्वस्य कश्चिदस्ति संबन्धः । यदि प्रोक्षणं न क्रियते, न हन्तिपिषी अपूर्वस्य साधनभावं न गच्छतः । तस्मात् यद्यपि हन्तिपिषी अपूर्वस्योपकारकौ, तथापि ताभ्यां संबध्यमानं प्रोक्षणमनर्थकमेव । अथोच्यते, यदर्थं हन्तिपिषी उपादीयेते तत् प्रोक्षणसंबद्धौ शक्नुतः कर्तुम्, नान्यथेति । उच्यते । नैवंजातीयकः शब्दोऽस्तीति । तत्राह । अयमेव शब्द एतमर्थमभिवदतीति । कथम् ? प्रोक्षिताभ्यामवहन्ति, प्रोक्षिताभ्यां पिनष्टि इति यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणसंबद्धाभ्यामिति हन्तिपिषिकार्येण प्रोक्षणं संबध्यते, न ताभ्यामिति । उच्यते । नैतदेवम् । यदि यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणेन अभिसंबध्यते, संबन्ध एव प्रोक्षणस्य न स्यात् । तद्धि ताभ्यामभिनिर्वर्त्यते । किमपरं तत् प्रोक्षणमभिनिर्वर्तयेत् । अथ प्रोक्षिताभ्यामपूर्वं क्रियते इति संबन्धः, न तर्हि हन्तिना पिषिणा वा । अथ तत्संबन्धोऽपि उच्यते इति, अनेकसंबन्धे वाक्यं भिद्येत । तस्मात् हन्तिपिषिभ्यां प्रोक्षणं संबध्यमानं अप्रयोजनमिति प्रकरणादपूर्वेण संबध्यते । नन्वेव हन्तिपिषिसंबन्धो नावकल्प्येत । अवकल्पिष्यते इति ब्रूमः । कथम् ? इह अवघातं प्रति यतमानस्य द्वयं निष्पद्यते, अवहन्तिरूपं, तण्डुलनिर्वृत्तिश्च । प्रणाड्या च अपूर्वभावनाविशेषः । तण्डुलनिर्वृत्तिर्हि अपूर्वोपकारः । सोऽवहन्तिक्रियया चिकीर्षितः । तेन प्रोक्षणस्य संबन्धः । यद्यपि अवहन्तिरूपेण संबध्यमाने प्रोक्षणे श्रुत्या संबन्धो भवति, तथापि तत्र निष्प्रयोजनत्वात् लक्षणैव आश्रीयते । लक्षणा हि प्रत्यक्षा । सा अदृष्टकल्पनाया ज्यायसी । न च अवहन्तिः आरादुपकारकः अपूर्वं निष्पादयति । दृष्टमुपकारं कुर्वन् अदृष्टेन सामर्थ्येन समीचीनं करोतीति गम्यते । यद्यपि च निष्पादयेत् , तथापि उपकारेण असंबध्यमानं प्रोक्षणं केवलावहन्तिसंबन्धेन अनर्थकमेव स्यात् । अतः अवहन्तिलक्षितेन उपकारविशेषेण अस्य संबन्धः । तस्मात् अनवहन्तिरपि यः तत्कार्यापन्नः, तत्र प्रोक्षणं भवत्येव । यथा नखनिर्भिन्ने चरौ नखेषु । तस्मादपूर्वप्रयुक्त एवंजातीयको धर्म इति ।

**टुप्—** अत्र केचित् वर्णयन्ति ( सिद्धान्तम् ), वाक्ये परिगृह्यमाणे आनर्थक्यं प्रोक्षणस्य आपद्येत । तस्मात् वाक्यार्थो बाध्यते । तत्र असंयुक्तं पदान्तरेण प्रोक्षणं अपूर्वेण संभन्त्स्यते । अपूर्वं च अमूर्तं अशक्यं प्रोक्षितुम् । अतो व्रीहिद्वारेण ( व्रीहिपदं च ‘ व्रीहीन् प्रोक्षति ’ इत्येतदपि उलूखलमुसलवाक्यतुल्यन्यायम्, इत्यभिप्रेत्य प्रयुक्तम् ) अपूर्वं प्रोक्ष्यते इति । एतदयुक्तम् । कथम् ? प्रोक्षणमपूर्वेण गृह्यते, तच्च प्रयाजवत् आरादुपकारकं प्राप्नोति । तत्र कथं ज्ञेय ‘ इदं संस्कारकम् ’ इति । अथोच्येत लोके संस्कारकं दृष्टमिति, तन्न । इह शब्दलक्षणः संस्कारः गृह्यते, न च कश्चित् शब्दः संस्कारकं प्रोक्षणमाह । प्रकरणाम्नानात् आरादुपकारकं गम्यते । अपि च लोके नैकान्ततः संस्कारकमेवेदम् । कदाचित् असंस्कारकमपि स्यात् । अभ्युपेत्य ब्रूमः, ( अस्तु ) संस्कारकं प्रोक्षणम् । न च अपूर्वं शक्यं प्रोक्षितुम् । एवमपि ( प्रकरणविनियोगाङ्गीकरणेऽपि वाक्यविनियोगाङ्गीकरणवत्- ) तदवस्थमेव आनर्थक्यम् । अथोच्येत, ‘ आनर्थक्यात् तदङ्गेषु ’ इति ( अस्ति व्रीहिषु प्रोक्षणमिति, तथा सति ) अङ्गत्वाविशेषात् सर्वाङ्गेषु स्यात् । अपूर्वस्य संनिकर्षाद्वा द्रव्यवदाने । अथोच्येत, व्रीहीणां वाक्ये श्रवणात् तेषां भविष्यति ( इति, तदयुक्तम् । यतः ) स वाक्यसंबन्धो भवतैव निराकृतः । एवं अवहन्त्यादिष्वपि एते दोषाः प्राप्नुवन्ति अनेन व्याख्यानेन । तस्मात् वाक्यमबाधित्वा योऽर्थः, स ग्रहीतव्यः न तद्बाधेनेति । वाक्ये चोच्चारिते द्वैविध्यं भवति । प्रकरणपाठात् तण्डुलनिर्वृत्तिप्रणाड्या शक्यमपूर्वं लक्षयितुम् । ('वाक्ये' इत्यादि ‘ लक्षयितुं ’ इत्यन्तं तन्त्ररत्ने नास्ति । स्वतन्त्रैव च पङ्क्तिः रत्ने उपलभ्यते सा चेत्थम्— “ कथं तर्हि सिद्धान्तः, यावता वाक्याङ्गीकरणे व्रीहिहन्तिपिष्यादिप्रयुक्ता एकवाक्यता कल्प्यते ‘प्रकृतापूर्वसंबन्धिनो व्रीहीन्’ इति । ततस्तैः तण्डुलनिर्वृत्तिः कार्यभूता लक्ष्यते, तद्द्वारेण वा अपूर्वमेव लक्षितलक्षणया लब्ध्वा अपूर्वसाधनव्रीहित्वैकार्थसमवायि व्रीहिशब्देन लक्षयित्वा तादर्थ्येन विनियुक्तं प्रोक्षणं व्रीह्यर्थत्वापरित्यागेनैव अपूर्वार्थं शक्यमवगन्तुम् ” इति । लिखितमुद्रितयोश्च टुप्टीका समानैव ) । शक्यते च व्रीह्यर्थं प्रोक्षणं प्रतिपत्तुम् ( तदेवं वाक्याबाधेनैव श्रुतिलक्षणाभ्यां अर्थद्वयं संभवति । सिद्धान्तमाह- ) तत्र लक्षितलक्षणायां गृह्यमाणायां फलकल्पना न भवति । श्रुतिवृत्ते फलकल्पना स्यात् । तस्मात् फलकल्पनाभयात् लक्षितलक्षणया अपूर्वार्थं प्रोक्षणमिति सिद्धम् ।

**शा—** ‘ **अवहन्तिश्रुतेस्तावदवघातः प्रतीयते । तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते ॥ सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् । एवं हन्त्यर्थताऽपूर्वशेषत्वं प्रक्रियावशात् ॥** ’ एवं प्राप्तेऽभिधीयते । ‘ **अवघातावसायं सत्** ( अवघातः अवसायः यस्य ) **प्रोक्षणं स्यादनर्थकम् । विनाऽपि प्रोक्षणं हन्तिरूपनिष्पत्तिदर्शनात् ॥ तद्द्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत् । नहि तेन विना तस्य निष्पत्तिरवगम्यते ॥** ’ तस्मादपूर्वप्रयुक्तं प्रोक्षणम् ।

**सोम—** पूर्वाधिकरणोक्तापूर्वार्थत्वाक्षेपात् **संगतिः । सूत्रार्थस्तु—** संस्कारे हन्त्यादौ युज्यमानानां साधनत्वेन संबध्यमानानां प्रोक्षणादीनां हन्त्यादिप्रयुक्तता स्यात् तदर्थत्वादिति ।

**वि—** ‘ मुसलाद्युक्षणं हन्त्यै स्यादपूर्वाय वो, —क्तितः ( वचनात् ) । आद्यः , प्रकरणादन्त्यो व्यर्थं तत् स्यादिहान्यथा ॥ ’

**भाट्ट—** अत्र मूले संनिपत्योपकारकेषु पूर्वमुक्तमपि अपूर्वार्थत्वं त्रिभिरेभिरधिकरणैराक्षिप्य समाधीयते । तत्रेह वाक्यसंयुक्ते अग्रिमाधिकरणद्वये च लिङ्गश्रुतिसंयुक्तयोरिति विवेकः । तदिह दर्शपूर्णमासप्रकरणे श्रुते ‘प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति ’ इत्यादौ प्रोक्षणं नापूर्वार्थम् , वाक्येन तस्यावघातार्थत्वावगमेन प्रकरणमात्रादपूर्वार्थत्वकल्पनानुपपत्तेः । न च निष्ठाप्रत्ययोक्तोलूखलमुसलोद्देशेनैव प्रोक्षणस्य ‘ व्रीहीन् प्रोक्षति ’ इतिवत् विधानात् कथं वाक्येनापि तस्यावघातार्थत्वम् , द्वितीयावत् निष्ठया कर्मत्वस्य विशेष्यतयाऽनुक्तेः कर्मत्वस्य द्रव्योपसर्जनत्वप्रतीत्या तयोरुद्देश्यत्वानुपपत्तेः । अतश्च प्रोक्षणस्य आनर्थक्यतदङ्गन्यायेन उलूखलमुसलयोरवतारेऽपि वाक्यादवघातोद्देशेनैव विधानम् । अस्तु वा उलूखलादावेव अवतारे प्रमाणाभावात्, प्रोक्षणस्य पदश्रुत्या तदन्वयेऽपि तृतीयया अन्यसाधनीभूतयोरेव तयोः प्रतीतेः प्रोक्षणस्यापि यत् उलूखलमुसलयोः कार्यं तदर्थत्वावगतेः अवघातार्थत्वसिद्धिः । सर्वथा नापूर्वार्थत्वम् । एवं च ‘ नैवारश्चरुर्नखावपूतानाम् ’ इत्यादौ अवघातस्य उलूखलमुसलयोर्वा अभावात् नखेषु न प्रोक्षणम् । इति प्राप्ते, पूर्वाधिकरणोक्तरीत्यैव अवघातस्वरूपे उलूखलमुसलस्वरूपे च आनर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणया अपूर्वार्थत्वावसायात् ऊहोपपत्तिरित्युक्तम् । तदनुपपन्नम्, आक्षेपप्रकारस्य अधिकस्याभावेन पौनरुक्त्यापत्तेः । किञ्च, अत्र प्रोक्षणं न तावदवघातोद्देशेन विधीयते, उलूखलमुसलविशेषणत्वेनैव प्रतीतेः । नहि अस्य प्रधानक्रियान्वयो व्युत्पन्नः, अपि तु निष्ठाक्षिप्तक्रियान्वयः एव । नापि अवघातसाधनीभूतोलूखलमुसलोद्देशेन, विशिष्टोद्देशापत्तेः । उलूखलमुसलयोः विशिष्टयोः शुद्धयोर्वा उद्देश्यत्वे एकप्रसरताभङ्गापत्तेश्च । अतो नैवं

पूर्वपक्षः संभवी । अपि तु विध्यन्तरप्राप्तावघातानुवादेन अर्थात् संभवत्प्रासिकयोरपि उलूखलमुसलयोः पूर्वप्रवृत्त्यङ्गीकारेण प्रोक्षणविशिष्टयोर्विधौ आर्थिकेन विशेषणविधिना उलूखलमुसलोद्देशेन प्रोक्षणविधिर्वाच्यः । ततश्च उलूखलमुसलत्वेन उद्देश्यता अपूर्वसाधनत्वेन वेति विचारः कार्यः । सोऽपि च तदा भवेत्, यदि सकलपौरोडाशिकपात्रसाधारण्येन प्रोक्षणविधिर्न स्यात् । न त्वेतदस्ति 'उत्तानानि पात्राणि प्रोक्षति ' इति विध्यन्तरेण तस्य प्राप्तत्वात् । नहि मीमांसकमते पौरोडाशिकपात्रप्रोक्षणाभावः, किन्तु मन्त्राभावः, मन्त्राभावस्यैव परं तृतीये साधनात् । अतः प्रकारान्तरेण प्राप्तस्यार्थस्य अयमनुवादः अभ्युदयशिरस्कतया उलूखलमुसलविधानार्थः । समासोपात्तत्वाच्च नानेकविधेयता दोषाय । अत एवं विचारो वाच्यः— पात्रप्रोक्षणविधिनैव उलूखलमुसलयोरपि प्रोक्षणं प्राप्तम्, तत्तु पूर्वाधिकरणन्यायेनैव उलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तम् । तयोश्च तत्साधनता न साक्षात्, अपि तु यागाङ्गपुरोडाशाङ्गव्रीहितदवघातद्वारिकैव प्रयोजकत्वापरपर्याया । तत्र च अतिप्रसङ्गपरिहारार्थं साधनताऽवच्छेदकस्यापि यागत्वपुरोडाशत्वव्रीहित्वतदवघातत्वादेरपि विवक्षा, उत तद्व्यापारकसाधनतामात्रस्यैव इति चिन्तायाम्, व्यापारवत् विनिगमनाविरहेण साधनताऽवच्छेदकस्यापि विवक्षा, इतरथा स्रुगादौ अतिप्रसङ्गापत्तेः । अथवा साधनताया अवच्छेदकं विना निरूपयितुमशक्यत्वात् तदेव विवक्षितम्, न तु व्यापारः, तं विनाऽपि साधनतायास्तत्त्वेन निरूपयितुं शक्यत्वात् । अतश्च नखेषु अवघाताद्यभावात् न प्रोक्षणम् । एवं च यद्यपि श्रुतस्य उलूखलत्वादेरपूर्वसाधनत्वलक्षणोपयिकतया उपक्षीणत्वादविवक्षा स्यात्, तथापि आन्तरालिकानां साधनताऽवच्छेदकानां यागत्वप्रभृतीनां विवक्षा दुर्निवारैव । इति प्राप्ते, अपूर्वनिष्ठकार्यतानिरूपितकारणतायामतिप्रसङ्गपरिहारार्थं मध्यवर्तितया झटित्युपस्थितव्यापारस्यैव व्यापारसत्त्वे विवक्षा, न तु साधनताऽवच्छेदकस्य, तस्य कारणतायाः पश्चादुपस्थितेः । अत एव यत्र मध्ये यागादौ न व्यापारः, तत्र कारणताया एव शृङ्गग्राहिकया विवक्षणम्, न तु तदवच्छेदकस्य, गौरवात् । उपपादितं चैतत् कौस्तुभे तेषामर्थाधिकरणे विस्तरेण । अतः अवघातत्वादेरविवक्षितत्वात् नखेषु प्रोक्षणसिद्धिरिति ।

**मण्डन्**— ' न प्रोक्षणं हन्तिपिषिप्रयुक्तम् । '

**शंकर**— ' वाक्यीयेऽपूर्वशेषत्वम् । ' ७.

* हयः देववाहकोऽश्वजातिविशेषः ' हयो भूत्वा देवानवहत् ' ( बृउ. १।१।२ ) इति । **वि.** ९।४।२.

* हरणं बर्हिषः ' बृहस्पतेर्मूर्ध्ना हरामि ' इति मन्त्रेण क्रियते । **वि.** १२।१।२१.

**हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणां चार्थशेषत्वात् । ४।२।४।१० ॥**

दर्शपूर्णमासयोः ' सह शाखया प्रस्तरं प्रहरति ' इति श्रूयते । प्रहरति अग्नौ क्षिपति । अत्रोक्तं शाखाप्रहरणं प्रतिपत्तिर्वा अर्थकर्म वा इति संशये **पूर्वपक्षं** सूत्रेणाह । पक्षान्तरनिरासार्थस्तुशब्दः । हरणे ' सह शाखया प्रस्तरं प्रहरति ' इति प्रस्तरस्य प्रहरणे उक्ते सति शाखाया अपि जुहोतिः होम एव ज्ञातव्यः । यथा प्रस्तरप्रहरणं अर्थकर्म तथा शाखाप्रहरणमपि अर्थकर्मैव इत्यर्थः । योगसामान्यात् प्रस्तरस्येव शाखाया अपि प्रहरणापरपर्यायहोमेन योगस्य संबन्धस्य समानत्वात् । यद्यपि शाखया इति तृतीया, प्रस्तरं इति द्वितीया तथापि उभयोः प्रहरणेन समान एव संबन्धः । द्रव्याणां च अर्थशेषत्वात् । अर्थशब्देन उत्पत्त्या चिकीर्षितो यागो गृह्यते । शाखाप्रस्तरादीनां द्रव्याणां अर्थशेषत्वं यागाङ्गत्वं ' भूतं भव्यायोपदिश्यते ' इति न्यायात् । तस्मात् शाखाप्रहरणं अर्थकर्म ।

**प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् । ११ ॥**

दर्शपूर्णमासयोः ' सह शाखया प्रस्तरं प्रहरति ' इति श्रुतं शाखाप्रहरणं अर्थकर्म इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तमाह । वाशब्दः पूर्वपक्षं निराचष्टे । शाखाप्रहरणं नार्थकर्म किंतु प्रतिपत्तिः । सह शाखया प्रहरति इति शब्दस्य तत्प्रधानत्वात् शाखाप्रधानत्वात् । यद्यपि शाखया इति तृतीया, तथापि तुल्ययोगे इयम् । यदि



प्रहरणे प्रस्तरः प्रधानम्, शाखा च प्रस्तरस्य गुणभूता तदा शाखाप्रस्तरयोस्तुल्ययोगो न स्यात् । तस्मात् यः प्रस्तरे द्वितीयार्थः स शाखायामपि । अतः शाखाऽपि प्रधानम् । अतः प्रस्तरप्रहरणमिव शाखाप्रहरणमपि प्रतिपत्तिरेव नार्थकर्म ।

**अर्थेऽपीति चेत् । १२ ॥**

दर्शे ' सह शाखया प्रस्तरं प्रहरति ' इति पलाशशाखायाः प्रहरणं प्रतिपत्तिः इति सिद्धान्तिना उक्तम् । पूर्वसूत्रे च ' प्रस्तरेण शाखां ' इति विभक्तिव्यत्ययेन शाखाया द्वितीयान्तत्वेन प्राधान्यमुक्तम्, तत्र पूर्वपक्षिणः शङ्का । ' सक्तून् जुहोति ' इति अर्थेऽपि शेषत्वेऽपि गुणभावेऽपि द्वितीया भवेत् तथा च द्वितीययाऽपि प्राधान्यं न लभ्यते इति चेत् ।

**न, तस्यानधिकारादर्थस्य च कृतत्वात् । १३॥**

दर्शपूर्णमासयोः ' सह शाखया प्रस्तरं प्रहरति ' इति श्रुतम् । तत्र शाखाप्रहरणं प्रतिपत्तिः इति सिद्धान्तिना उक्तम् । शाखां प्रस्तरेण इति च विभक्तिव्यत्ययं युक्त्या प्रसाध्य शाखायाः द्वितीयान्तत्वेन प्राधान्यं सिद्धान्तिना उक्तम् । तत्र ' सक्तून् जुहोति ' इत्यत्र गुणभावेऽपि द्वितीयाया दृष्टत्वात् शाखायाः द्वितीयान्तत्वे स्वीकृतेऽपि गुणत्वमेव स्यात् न प्राधान्यं इति पूर्वपक्षिणा ' अर्थेऽपीति चेत् ' इति शङ्किते सिद्धान्ती उत्तरयति । न एतत् सक्तुभिस्तुल्यम् । तस्य सक्त्वादेः अनधिकारात् अन्यत्र विनियोगाभावात् करणत्वेन सक्तवो विनियोक्तव्या भवन्ति इति द्वितीयान्तत्वेऽपि तेषां करणत्वं स्वीकर्तव्यम् । शाखायास्तु वत्सापाकरणादिरूपस्य अर्थस्य कृतत्वात् विहितत्वात् न करणत्वादि अत्र वक्तव्यम् । तस्मात् उपयुक्तायाः शाखायाः प्रहरणं प्रतिपत्तिरेव नार्थकर्म इति **सिद्धान्तः ।**
**के.**

* ' हरणे तु जुहोतिः० ' ( ४।२।४।१० ) इति ( याग एव ) प्रक्षेपाधिकत्वात् होमः इत्यवधार्यते । **वा.** ३।२।५।१३ पृ. ७६३.

* हरणमन्त्रः बर्हिषः, आतिथ्याबर्हिषि संनह्याग्नीषोमीयदेशे नीयमाने पृथक् न प्रयोज्यः । लवनदेशात् संनह्य हरणे हि स मन्त्रः । **वि.** १२।१।२१.
* हरणमन्त्रस्य नावृत्तिः आतिथ्याबर्हिषि संनह्य अग्नीषोमीयदेशे स्तरणार्थमाह्रियमाणे । १२।१।२१। ४६–४७. **मीको.** पृ. ४१२७ ' संनहनहरणमन्त्राधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हरितपदस्य** स्थाने रक्तपदस्य मौद्गे चरौ बर्हिःस्तरणमन्त्रे ऊहः । ९।३।२।३. **मीको.** पृ. १२२६ ' ऊहः रक्तपदस्य हरितपदस्थाने० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हरिवादिशब्दानां** ज्योतिष्टोमस्थसुब्रह्मण्यानिगदगतानां अग्निष्टुति नोहः । ९।१।१६।४२–४४. **मीको.** पृ. ६२ ' अग्निष्टुति सुब्रह्मण्यानिगदे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हरिवासरे** पारणानिषेधः आचारकल्प्यः प्रतिषेधः । **बाल.** पृ. २९.

**हलान्तं ब्रह्मवर्चसमिति न्यायः ।** यथा– ' राज्यश्रीर्ब्रह्मशापान्ता हलान्तं ब्रह्मवर्चसम् । आचारो घोषवासान्तः कुलस्यान्तं स्त्रियश्चलाः ॥ ' इति । उक्तं च श्रीमद्भागवते तृतीयस्कन्धे नवमाध्याये– ' नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः । रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः ॥ ' इति । अस्य श्लोकस्य टीका– अम्भसि सतो यस्य नाभिह्रदादिहासम्, विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी, अस्य रूपमिदं विस्तारयतो मे निगमस्य अवयवभूतानां गिरां विसर्गः उच्चारणं मा रीरिषीष्ट ' हलान्तं ब्रह्मवर्चसम् ' इति न्यायेन मा लुप्यतामिति । **साहस्री.** ४१७.

* **हविः** अत्तुं योग्यं भवति । **वि.** ४।१।१२.
* हविः आज्यं अनादेशे । **संकर्ष.** ३।२।२०. * हविः कर्मणः प्रत्यासन्नम् (देवतापेक्षया) । **भा.** ८।१।१७।३२.
* हविः । न च यागसंबन्धात् प्राक् पुरोडाशादीनां

हविष्ट्वं अवधार्यते। संबन्धिशब्दो ह्ययं न द्रव्यस्वरूपप्रयुक्तः। तदेव हि द्रव्यं अयागसंबद्धं पयःप्रभृति न लोके हविःशब्दवाच्यं भवति। **वा.** १।४।६।९ पृ. ३४१. * हविः पशुयागे कृत्स्नपशुरेव इति चेन्न। पशोरङ्गान्येव हवींषि, प्रत्यङ्गं हविर्भेदः। 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' 'दोष्णोरवद्यति' 'पार्श्वयोरवद्यति' इत्यादि। **वि.** १०।७।१, * हविः मुख्यं मध्यः पूर्वार्धश्च, तन्नाश–दोष–अपहारेषु आज्यं प्रतिनिधिः। ६।४।१, * हविः हूयमानं द्रव्यम्। १०।७।२. * अवदीयमानं हि हविः। 'मध्यात् पूर्वार्धाच्चावद्यति' 'हृदयस्याग्रेऽवद्यति' इति। **मीन्या.** * न च अनिर्वृत्तप्रयोजनं हविः अन्यत्र प्रतिपाद्यम्। **भा.** ६।४।१।२. * यस्मात् द्रव्यादवदीयते तत् हविः। **टुप्.** १०।७।१।२. * हवींषि अग्निहोत्रहवण्या निर्वपति। **भा.** ८।१।४।११. * हविषः आहवनीयप्रक्षेपेण देवतार्थता भवति। **वा.** ३।४।१४।३७ पृ. ९७३. * हविषः उत्पन्नस्य नाशे हविरन्तरोपादानम्। **भा.** ६।४।१।१–२. * हविषः एकस्यार्तावपि पञ्चशराव ओदनः प्रायश्चित्तम्। हविरार्तिन्यायः। आर्तिन्यायः। ६।४।६।२२–२३. * हविषः एव चतुरवत्तसंपत्तिर्दर्शपूर्णमासयोरुपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि। १०।८।१३।३३–३४. **मीको.** पृ. ११९९ 'उपांशुयाजे उपस्तरणाभिघारणयोः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * हविषः कृत्स्ननाशे दोषे वा आज्यस्य प्रतिनिधित्वम्। **टुप्.** ६।४।१।१. * हविषः देवतासंबन्धः– यत्तामुद्दिश्य परिग्रहोऽस्य त्यजते। **भा.** ९।३।१२।३६, * हविषो नाशे आज्यं प्राप्तम्। 'यस्य सर्वाणि हवींषि नश्येयुः दुष्येयुः अपहरेयुर्वा आज्येन ता देवताः परिसंख्याय यजेरन्' इति। ६।४।१।२. * हविषः हविष्ट्वप्रयोजको धर्मः अवदानम्, होतुमवदीयमानत्वात्। **वि.** १०।७।१. * हविषां आसादनार्था दार्शपौर्णमासिकी वेदिः, सौमिकी प्रचारार्था। **भा.** १२।१।३।८, * हविषां श्रपणं 'गार्हपत्ये हवींषि श्रपयति' इति। ११।३।२।२, * हविषि आसन्ने सवनीयपुरोडाशस्य प्रयाजा इज्यन्ते। १२।१।१।२.

* **हविरभिघारणं** प्रयाजशेषेण अङ्गप्रधानार्थम्। **वा.** ३।७।१।५. * हविरभिघारणं प्रयाजशेषेण, तच्च शेषप्रतिपत्तिः। **वि.** ४।१।१४. * हविरभिघारणं प्रयाजशेषेण प्रतिपत्तिश्च हविःसंस्कारश्च इति अभिघारणं उपयुक्त–उपयोक्ष्यमाणोभयसंस्कारः। **शा.** ४।१।१४.

* **हविरभिमर्शनं** अङ्गप्रधानोभयार्थम्। ३।७।४।८,१०. **मीको.** पृ. ५५९ 'अभिमर्शनाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * हविरभिमर्शनं अमावास्यायां पञ्चहोत्रा, पौर्णमास्यां चतुर्होत्रा। **भा.** ८।१।१५।२६.

* **हविरभिमर्शनकरणमन्त्रयोश्चतुर्होतृपञ्चहोत्रोः** पौर्णमासिकदार्शिकयोर्विकल्पः। **भा.** ८।१।१५।२६.

* **हविरभिवासनस्य** अमावास्यायां पूर्वेद्युरपकृष्टया वेद्या सह नापकर्षः। **टुप्.** ५।१।१६।२९.

* **हविरभिवासनान्तान्** अमावास्यायां पूर्वेद्युरपकृष्यमाणा वेदिः न अपकर्षति। **भा.**५।१।१६।२९.

* **हविरार्तौ** पञ्चशराव ओदनः कर्मान्तरम्, न सांनाय्यस्य प्रतिनिधिः। ६।४।९।२८–२९. **मीको.** पृ. २०६८ 'दर्शपूर्णमासयोः हविरार्तौ०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **हविरार्त्यधिकरणे** (६।४।६।२२–२३) 'यस्योभयं हविरार्तिमार्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति आर्तिगमनसंबद्धस्य हविषः निमित्तत्वेन उद्देश्यत्वात् हविष्ट्वस्य च प्रकृतापूर्वसाधनलक्षणत्वेन प्रतीतिमात्रौपयिकत्वात् ग्रहवत् अविवक्षितविशेषणत्वसिद्धौ अपि उभयपदानर्थक्यापत्तेः उभयत्वस्य उद्देश्ये अन्तर्गत्यभ्युपगमेन विवक्षां पूर्वपक्षयित्वा आधिकारिकोभयत्वाभ्युपगमेन उभयपदानर्थक्यपरिहारः वक्ष्यते। **सु.** पृ. १०४३.

* **हविरार्त्यधिकरणन्यायः** (६।४।६)। 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्'



इत्यत्र 'द्वयोर्यजमानयोः' इति यदि सप्तमी तदा सा निमित्तत्वपरा। यद्यपि च पृथग्विभक्तिश्रवणं तथापि हविरार्त्यधिकरणन्यायेन पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोः निमित्तत्वं प्रतिपाद्यते। **भाट्ट.** ३।३।९.

* **हविरार्त्यधिकरणसिद्धान्तः**। 'यस्योभयं हविरार्तिमार्छति' इत्यत्र यस्य कस्यचिदार्तौ सत्यां निर्विषयकनिमित्तकयागस्य अप्राप्तेः हविःशब्दस्य विवक्षा, तद्विशेषणीभूतोभयशब्दस्य प्राप्तानुवादकत्वात् तद्विधाने वाक्यभेदापत्तेः। तस्मादुभयशब्दस्याविवक्षा इति। **सु.** पृ. २००–२०१.

* **हविरार्तिनिमित्तकः** पञ्चशरावयागो दर्शस्याङ्गम्। ६।४।१०।३०–३१. **मीको.** पृ. २०१९ 'दर्शस्याङ्गं हविरार्तिनिमित्तकः०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **हविरार्तिन्यायः** (६।४।६।२२–२३)! इदमेव आर्त्यधिकरणं पञ्चशरावन्यायश्च। अधिकरणं **मीको.** पृ. ९९२ इत्यत्र 'आर्तिन्यायः' इति बिन्दौ द्रष्टव्यम्। * 'आग्नेयं चतुर्धा करोति'। उपजीव्यस्य प्रथमावगतस्य देवतात्वस्यैव अपूर्वसाधनलक्षकत्वोपपत्तेः तदेव प्रातीतिकं उद्देश्यतावच्छेदकम्। देवतात्वस्य च नियमेन अनुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेन अग्नेर्हविषश्च विवक्षाङ्गीकारात्। **कौ.** ३।१।१५।२७ पृ. २२०. * 'आग्नेयं चतुर्धा करोति'। प्रथमावगतस्य देवतात्वस्यैव उद्देश्यतावच्छेदकत्वम्। तस्य तु अनुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेन 'अर्धमन्तर्वेदि' इतिवत् अग्निदेवताकहविष्ट्वस्यैव लक्षणया उद्देश्यतावच्छेदकत्वसिद्धिः। तेनोपसंहारः। **भाट्ट.** ३।१।१५, * 'यस्याग्निरुद्धृतो अहुते अग्निहोत्रे उद्वायेत्' इत्यत्र उद्वानं हविरार्तिन्यायेन प्रतियोगितासंबन्धेन अग्निविशेषणम्। (इति पूर्वपक्षोपस्थितम्)। ९।४।६.

* **हविरासादनं** आग्नेयस्य पूर्वं ततः सांनाय्यस्य। दर्शपूर्णमासयोः। प्रवृत्तिक्रमान्मुख्यक्रमस्य बलीयस्त्वम्। **भाट्ट.** ५।४।२. * हविरासादनं वेदिकार्यम्। **वि.** ३।८।१७.

* **हविरुभयत्वाधिकरणम्** (६।४।६।२२–२३)। यत्र पृथक् पदश्रवणं तत्र साधुत्वादिप्रयोजनासंभवात् विशिष्टलक्षणया विवक्षामाशङ्क्य निराकरिष्यते हविरुभयत्वाधिकरणे। **कौ.** ३।१।७।१४ पृ. १८५.

* **हविर्गणे** अध्वरकल्पायां 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय, अग्नये शुचये' इत्यत्र शुचिदेवत्ये आग्नेयस्य विध्यन्तः आग्नावैष्णवे चाग्नीषोमीयस्य, न वैपरीत्यम्। **भा.** ८।३।१।१–२.

**हविर्गणे परमुत्तरस्य देशसामान्यात्। ८।३।१।१॥**

अध्वरकल्पायां आग्नावैष्णवं प्रथमं हविः, अग्नये शुचये पञ्चमं हविः। तत्र आग्नावैष्णवस्य आग्नेयविध्यन्तः शुचिदेवतस्य च अग्नीषोमीयविध्यन्तः अथवा अतो विपरीतं इति संशये पूर्वपक्षमाह। हविर्गणे अध्वरकल्पादौ परं अन्तिमं शुचिदेवतं उत्तरस्य आग्नेयादुत्तरस्य अग्नीषोमीयस्य विकारः स्यात्। एवं पूर्वं पूर्वस्य आग्नावैष्णवं आग्नेयस्य विकारः स्यात्। देशसामान्यात् क्रमसामान्यादित्यर्थः। प्रकृतौ आग्नेयः प्रथमः, अत्र आग्नावैष्णवः प्रथमः। प्रकृतौ अग्नीषोमीयो द्वितीयः, इह शुचिदेवतो द्वितीय इति। तस्मात् देशसामान्येन लिङ्गेन परमुत्तरस्य पूर्वं प्रथमस्य विकारः।

**देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात्। २॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति। नात्र देशसामान्यान्नियमः। किंतु देवतया नियम्येत। शब्दवत्त्वात् देवतावाचकशब्दवत्त्वात् आग्नावैष्णवं अग्नये शुचये इति। इतरस्य देशस्य तु अश्रुतित्वात् देशवाचकशब्दाभावात्। अयं भावः, देवताप्रत्ययः कर्मचोदनायामन्तरङ्गः, देशसामान्यं तु पौर्वापर्यापेक्षयोत्पद्यते इति बहिरङ्गम्। तस्मात् शुचिदेवत्ये आग्नेयस्य विध्यन्तः आग्नावैष्णवे च अग्नीषोमीयस्य इति **सिद्धान्तः**। **के.**

* ' हविर्गणे परमुत्तरस्य देशसामान्यात् । ' (८।३।१।१) इत्यधिकरणे आग्नावैष्णवे अग्नीषोमीयस्य विध्यन्तः इति साध्ये देवतासामान्यात् इति हेतुरसंगतः स्यात् । द्विदेवत्यत्वस्य ऐन्द्राग्नेऽपि तुल्यत्वात्, एवं अग्निसमवायमात्रस्यापि । तद्धितमात्रं तु आग्नेयेऽपि तुल्यं तदवश्यं पञ्चाक्षरतद्धितान्तपदवत्त्वं अग्निमुखतद्धितान्तपदवत्त्वं वा किंचित् चोदनालिङ्गान्तरं इह सिद्धान्तहेतुतया विवक्षितं गम्यते । बाल. पृ. १२०. * हविर्गणेषु ' अग्नये पवमानायाग्नये शुचयेऽग्नये पावकायाष्टाकपालम् ' (पाठान्तरं ' अग्नये पावकाय, अग्नये शुचयेऽष्टाकपालम् ) । अयं गणः आग्नेयविकृतिः न तु अग्नीषोमीयादिविकृतिः । वि. ८।३।१, * हविर्गणेषु ' आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुम्, बार्हस्पत्यं चरुम् ' इत्याग्नावैष्णवादिर्गणः अग्नीषोमीयविकृतिः, द्विदैवत्यसाम्यस्य अर्थसिद्धस्थानतो बलीयस्त्वात् । न तु आग्नेयविकृतिः । ८।३।१.

* हविस्त्यागव्यतिरिक्तं सर्वं कर्म आर्त्विज्यम् । वि. ३।८।१.

* हविष्ट्वं यज्ञायुधानां नास्ति किंतु यज्ञायुधवाक्यं संभरणविध्यर्थवादः दर्शपूर्णमासयोः । वि. ४।१।४. * हविष्ट्वं हृदयादीनामेव तेन इतरावयवानां हविष्ट्वपरिसंख्या पशौ अग्नीषोमीये । १०।७।२।३–९. * हविष्ट्वं हृदयाद्यङ्गानामेव अग्नीषोमीये पशौ । १०।७।१।१–२.

* हविर्देवतयोः संनिपाते हविःसामान्यस्य बलीयस्त्वम् । वि. ८।१।१७.

* हविर्धानं नाम शकटद्वयं ज्योतिष्टोमे महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे स्थाप्यते । तत्र हविर्धानशकटद्वये हवींषि आसाद्यन्ते । वि. १२।१।७. * हविर्धानं वैष्णव्या उपतिष्ठते ज्योतिष्टोमे । सा च वैष्णवी प्रकृतैव ग्राह्या न तु दाशतयीस्था । भा. ३।२।८।२१–२४, * हविर्धानस्य दक्षिणस्य अधस्तात् ज्योतिष्टोमे चत्वार उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः खन्यन्ते । तत्र हस्तौ प्रवेश्य अध्वर्युः यजमानमाह ' किमत्र ' यजमानः ' भद्रं ' अध्वर्युः ' तन्नौ सह ' इति । अत्र व्यपदेशात् उभयोः फलम् । ३।८।१४।२९. * हविर्धानस्य दक्षिणस्य देशे सामिधेन्यनुवचनं ज्योतिष्टोमे । ३।७।७।१५–१७. मीको. पृ. १७८७ ' ज्योतिष्टोमे उत यत् सुन्वन्ति ' इत्यत्र अधिकरणं द्रष्टव्यम् । * हविर्धानस्य सोमधारणेन नैरपेक्ष्यम् । वा. ३।७।७।१६. * ' हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति ' अत्र केवलं भक्षणमप्राप्तं विधीयते । टुप्. ३।५।१०।३१ पृ. १००८. * ' हविर्धाने ग्रावभिरभिषुत्य, आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति ' ( तैसं. ६।२।११. अत्र तु ' हविर्धाने चर्मन्नधिग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति ' इति पाठः ) । अत्र होमाभिषवयोः कर्ता भक्षणं प्रति अङ्गत्वेन पूर्वमप्राप्तत्वाद्विधीयते । वि. ६।४।७. * हविर्धाने दक्षिणे ( शकटे ) सोममासादयन्ति । भा. ३।७।७।१६.

**हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् । १२।१।७।१४ ॥**

अग्निष्टोमे हविर्धानमण्डपे हविर्धानशकटे द्वे स्थापिते । अथ यानि औषधगुणकानि ऐष्टिकानि कर्माणि पशुपुरोडाशाः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः इति । तेषां निर्वापः कर्तव्यः । तं निर्वपणरूपं अर्थं हविर्धाने शकटे द्वे साधयेताम् । द्वयोरन्यतरत् शकटं निर्वापं साधयेत् । निर्वापे उपयुक्तं स्यात् । प्रयुक्तत्वात् निर्वापात् प्राक् प्रयुक्तत्वात् । इति **पूर्वपक्षः ।** हविर्धाने इति प्रथमाद्विवचनम् । साधयेतां इति द्विवचनम् । साधयेत् साधयेतां साधयेयुः इति ।

**असिद्धिर्वाऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् । १५ ॥**

अग्निष्टोमे ऐष्टिकेषु कर्मसु कर्तव्यो निर्वापः हविर्धानशकटयोरन्यतरस्मिन् कर्तव्य इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निवारयन् सिद्धान्तमाह । हविर्धानशकटे निर्वापस्य असिद्धिः सिद्धिर्न स्यात् । निर्वापस्य अन्य-



देशत्वात् । अपरेण ' गार्हपत्यं प्राग्रीषमनोऽवस्थितं भवति, तस्य दक्षिणं चक्रमारुह्य अनसोऽधि निर्वपति ' इति वचनेन गार्हपत्यस्य पश्चिमदेशः निर्वापदेशत्वेन विहितः । निर्वापस्य हविर्धानशकटात् हविर्धानमण्डपस्थितात् अन्यदेशत्वात् सिद्धिर्न स्यात् । प्रधानवैगुण्यात् यदि हविर्धानशकटं गार्हपत्यस्य पश्चिमे देशे निर्वापार्थं नीयेत तथा सति प्रधानस्य सोमस्य महत् वैगुण्यमापतेत् । हविर्धाने हि समन्त्रकः सोमः स्थापितः । तादृशं च हविर्धानशकटं हविर्धानमण्डपे स्थापितम् । तत्सर्वं विगुणं स्यात् । अवैगुण्ये च साधयितव्ये प्रधानस्य प्रसङ्गः स्यात् । प्रधानस्य हि प्रसङ्गानुसारेण इतरत् सर्वं कर्तव्यम् । तस्मात् हविर्धानशकटे न निर्वापः इति **सिद्धान्तः ।**

**अनसां च दर्शनात् । १६ ॥**

सिद्धान्ते हेत्वन्तरमाह । नहि हविर्धानशकटे द्वे एव किंतु तत्र अनसां त्रयाणां दर्शनात् त्रीणि । तत्र द्वे हविर्धाने महावेद्यां प्रवर्तनीये तृतीयं तु निर्वापाद्यर्थं प्राचीनशालायां प्राजहितात् पश्चिमे देशे प्रवर्तनीयम् । ततस्तत्रैव निर्वापः, न हविर्धानयोः इति सिद्धान्तः । **के.**

* हविर्धाने प्राचीनवंशस्थितसोमस्य प्रणयनं वैसर्जनहोमादूर्ध्वं कर्तव्यम् । वि. ५।१।१४.

* हविर्धानग्रहणं सामिधेनीनां देशलक्षणार्थम् । भा. ३।७।७।१६.

* हविर्धानमण्डपे द्वे हविर्धानशकटे दक्षिणमुत्तरं च । तत्र दक्षिणशकटसमीपे सोमाभिषवः । उभयोरपि आहवनीयपश्चिमदेशत्वात् सामिधेन्यङ्गत्वे चोदकेन प्राप्ते ' उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः ' इतिवाक्येन दक्षिणशकटदेशो लक्ष्यते । वि. ३।७।७.

* हविर्धानमण्डपोपस्थानं प्रकृतया वैष्णव्या ऋचा कर्तव्यम् । न तु दाशतयीस्थया कयाचित् । हिरण्यकेशिनः ' इदं विष्णुः० ' अनया कुर्वन्ति, बौधायनास्तु ' विष्णो त्वं नो० ' इत्यनया । वि. ३।२।८.

* हविर्धानशकटाभ्यां भिन्ने शकटे ज्योतिष्टोमे इष्ट्यादौ हविर्निर्वापः । १२।१।७।१४–१६. मीको. पृ. १७८६ ' ज्योतिष्टोमे इष्ट्यादौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * हविर्धानशकटयोः अक्षे पदरजसा संयुक्तं अञ्जनं प्रक्षिप्यते । पदरजः– सोमक्रयणीसप्तमपदस्थानीयं रजः । वि. ४।१।१०, * हविर्धानशकटे अवस्थितात् सोमात् द्वादशाहादौ अहर्गणे प्रत्यहं कियांश्चित् सोमभागः उपावहर्तव्यः । तदर्थं पृथक्पृथक् वासः संपाद्यम् । तच्च वासःसंपादनं न मानकाले किंतु उपावहरणकाले एव । उत्तमेऽहनि तु मानवाससैवोपावहरणम् । १०।६।२१–२२.

* हविःप्रत्यभिघारणं पशौ सौविष्टकृतव्यङ्गेषु च अस्त्येव, स्नेहार्थत्वात् । संकर्ष. २।२।१७.

* हविर्भाजो देवताः – ' आग्नेयोऽष्टाकपालः ' इति । भा. १०।४।१२।२३.

* हविर्भाक्त्वलक्षणं देवतात्वम् । सु. पृ. ७५२.

* हविर्भूतस्य मांसस्य पाको नियमः । वि. १०।७।२.

**हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात् । १०।७।२।३॥**

पशौ प्रत्यङ्गं हविर्भेदः इत्यवगतम् । हविर्भेदात् कर्मणः अवदानकर्मणः अभ्यासः स्यात् । तस्मात् तेभ्यः अवदाने संकीर्तितेभ्यः हृदयादिभ्यः अवशिष्टेभ्यश्च अवदाने असंकीर्तितेभ्यः अवदानं स्यात् । इति **पूर्वः पक्षः ।**

**आज्यभागवद्वा निर्देशात् परिसंख्यास्यात् । ४ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । हृदयादिभ्य एकादशभ्य एव अङ्गेभ्योऽवदातव्यं नावशिष्टात् । ' एकादश वैतानि पशोरवदानानि ' इति हृदयादीनामेव निर्देशात् । ' एकादश वैतानि ' इति तु न विधिः प्राप्तत्वात्, नानुवादः आनर्थक्यात्, किंतु एकादशभिन्नानां परिसंख्या व्यावृत्तिः स्यात् । तथा च इतराङ्गानां प्रतिषेधः । आज्यभागवत्, यथा गृहमेधीये ' आज्यभागौ यजति ' इति आज्यभागव्यतिरिक्तानामङ्गानां परिसंख्या पञ्चमे पक्षे तद्वत् ।

**तेषां वा व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् । ५ ॥**

वाशब्दः सिद्धान्तं व्यावर्तयति । नावशिष्टानां परिसंख्या । तेषां हृदयादीनां व्यवदानत्वं विवक्षन् विधास्यन् 'एकादश वैतानि पशोरवदानानि' इति निर्दिशेत् 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्यसमूहः । एकादश द्विर्द्विरवद्यति इति वचनव्यक्तिः पशोः पञ्चावदानत्वात् पश्वङ्गानि यथा पञ्चावदानत्वं स्यात् तथा अवदातव्यानि भवन्ति । इतरदङ्गं तु सकृदवदातव्यं स्यात् । तस्मात् अवशिष्टेभ्योऽप्यवदेयम् । पूर्वपक्षसूत्रम् ।

**अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् । ६ ॥**

इदं पूर्वपक्षसूत्रं परिसंख्यापक्षमेव निवर्तयति । तदन्यपरिसंख्याने तदन्यैः अंसादिभिन्नैः हृदयादिभिः अंसादीनां परिसंख्याने स्वीकृते अंसस्य स्कन्धस्य, शिरसः, अनूकस्य मूत्रबस्तेः सास्नाया: वा, सक्थ्नः ऊरोरधोभागस्य च यः प्रतिषेधः 'नांसयोरवद्यति' इत्यादिवाक्येन कृतः, सः प्रतिषेधः अनर्थकः स्यात् । तस्मान्न अंसादीनां परिसंख्या । तेषां अंसादीनामपि यः प्रतिषेधः सः निरवदानस्य सर्वशः अवदानस्य द्विरवदानस्य प्रतिषेधः स्यात्, न तु सकृदवदानस्य । अंसादीनामपि प्रदानत्वात् प्रदीयन्ते इति कर्मव्युत्पत्तिः प्रदेयत्वादित्यर्थः । तस्मात् नावशिष्टानां अंसादीनां परिसंख्या ।

**अपिवा परिसंख्या स्यादनवदानीयशब्दत्वात् । ७ ॥**

सिद्धान्तसूत्रम् । अपिवेति पक्षव्यावृत्तिः । अंसादीनां परिसंख्यैव स्यात् अनवदानीयशब्दत्वात् । अवदातुं योग्यानि अवदानीयानि, न अवदानीयानि अनवदानीयानि । 'अनवदानीय' इति शब्दो येषां तानि अनवदानीयशब्दानि कानिचित् अंसादीन्यङ्गानि । नहि तेषामवदानं भवति । 'मारुत्यान् अनवदानीयान् सुराग्रहांश्च आजिसृद्भ्यो हरन्ति' इति केषांचिदङ्गानां अनवदानीयत्वं उक्तम् । तस्मात् हृदयजिह्वादिभ्य एकादशभ्यः अङ्गेभ्यो भिन्नानां अंसादीनां परिसंख्या स्यात् ।

**अब्राह्मणे च दर्शनात् । ८ ॥**

सिद्धान्तसूत्रम् । चकारः पूर्वोक्तहेतुसमुच्चयार्थः । अब्राह्मणे ब्राह्मणभिन्ने क्षत्रियकुमारे ककुभो भक्षस्य दर्शनात् । 'ककुभो राजपुत्रः प्राश्नाति ध्रुवगोपः' इति ककुभो भक्षं दर्शयति । श्रुतिवाक्ये ककुभः इति द्वितीयाबहुवचनम् । भाष्यवाक्ये ककुभः इति षष्ठया एकवचनम् । 'मारुत्याः ककुदं राजपुत्रः प्राश्नीयात्' इति श्रुतिवाक्यं कुतूहले । तेन ककुभ्शब्दस्य ककुद् इत्येवार्थः स्यात् । एवं च ककुभः भक्षणार्थत्वात् यागो नास्ति । तस्मात् इतरेषां परिसंख्या ।

**शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् । ९ ॥**

सिद्धान्तसूत्रम् । इतश्च परिसंख्या । शृताशृतोपदेशात् 'द्वयान्यङ्गान्यभिमृशति शृतानि अशृतानि च' इति शृतानां पक्वानां अशृतानां च उपदेशाच्च परिसंख्या । यदि न परिसंख्या सर्वेषां श्रपणं स्यात्, अशृतदर्शनं नोपपद्येत । तस्मात् हृदयादिभिन्नानां तेषां अशृतानां अयज्ञशेषत्वं गम्यते । उत्सर्गवत् । यथा 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति उत्सर्गे कृते उत्सृष्टस्य न यज्ञशेषत्वं तद्वत् । तस्मात् हृदयादिभ्य एकादशभ्यो भिन्नानां अंसादीनां परिसंख्या इति **सिद्धान्तः** । के.

* **हविर्भोजनं** देवतास्तित्वसाधकं 'अद्धीन्द्र (क्वचित्–अद्धीदिन्द्र) प्रस्थितेमा हवींषि' इति चेन्न, मन्त्राणां स्वार्थे तात्पर्याभावात् । वि. ९।१।४.

* **हविर्यज्ञे** क्वचित् ग्रहचमसेन होमो न श्रुतः । भा. १२।१।४।११.

* **हविर्विभागमन्त्रावृत्तिः** सर्वपृष्ठेष्टौ नास्ति । संकर्ष. १।३।२४. मीको. पृ. ४२२९ 'सर्वपृष्ठायामिष्टौ न हविर्विभागमन्त्रावृत्तिः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हवि:शब्दः** यागार्थद्रव्यवाची । सु. पृ. ४५८.



* हवि:शब्दः कर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । वि. १०।७।१.

* **हविःशेषभक्षणं** प्रतिपत्तिः । वि.३।४।२१.

* **हविःशेषविषयकविचारः । भा.** ३।४।१६–३।५।२०.

* **हविःसामान्यं** देवतासामान्यात् बलवत् । त्यागरूपे कर्मणि हविषोऽन्तरङ्गत्वात्, देवताया उद्दिश्यमानत्वेन बहिरङ्गत्वात् । वि. ८।१।१७. * हविःसामान्यं देवतासामान्यात् बलीयः । अत एव ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशस्य विध्यन्तः आग्नेये पयसि च सांनाय्यस्य विध्यन्तः । भा. ८।१।१७।३२–३४.

* **हविःस्वीकारो** देवतास्तित्वसाधकः 'अग्निरिदं हविरजुषत' इत्यादिः, इति चेन्न, मन्त्राणां स्वार्थे तात्पर्याभावात् । वि. ९।१।४.

* '**हविष्कृत्** एहीति त्रिरवघ्नन्नाह्वयति' । अवहननकाले एव अर्थेन हविष्कृदाह्वातव्या । तत्रायमेव संबन्धोऽनूद्यते । केवला तु त्रिरावृत्तिर्विधीयते । लौकिकी हि लक्षणा । मन्त्रोऽपि च रूपादेव आह्वाने प्राप्तः सोऽपि अनूद्यते एव । चोदितश्च वाक्यान्तरेणावघातः शक्नोति कालं लक्षयितुम् । **भा.** ३।२।३।६, * 'हविष्कृदेहि इति त्रिरवघ्नन्नाह्वयति' इत्यत्र यदि 'हविष्कृदेहि इति अवघ्नन्' इति संबन्धः क्रियेत ततो मन्त्रः हन्तिं प्रति उपदिश्येत । अथ 'अवघ्नन्नाह्वयति' इति संबन्धः क्रियेत ततः मन्त्रस्य कालं हन्तिः लक्षयेत् । द्वितीयः सिद्धान्तः । ३।२।३।५. * 'हविष्कृदेहीति त्रिरवघ्नन् आह्वयति' या हविः करोति यजमानस्य पत्नी तदाह्वानप्रकाशनसमर्थो मन्त्रः । स तत्रैव विनियुज्येत, अवहन्तिसंयोगस्य कालार्थत्वेनाविरोधात् । अवघ्नन् एतेन आह्वयति इत्येवं संबन्ध्य रूपादेव प्राप्तं आह्वानकाले मन्त्रमनूद्य त्रिरिति विधीयते ततः अवघ्नन्नित्यस्य स्वकाललक्षणार्थत्वात् नायथार्थं वचनम्, इति यथार्थ एव मन्त्रः । **वा.** ३।२।३।५. * 'हविष्कृदेहि' इति मन्त्रः आह्वानाङ्गम् । ३।२।३।५–९. **मीको.** पृ. १०२२ 'आह्वानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'हविष्कृदेहि' इति मन्त्रः कस्यांचिच्छाखायां सकृत् पठितः क्वचित् द्विवारं क्वचिच्च त्रिवारम् । वि. ३।२।२. * 'हविष्कृदेहि' इति मन्त्रोक्ता हविष्कृत् पत्नी एव नाध्वर्युः दैवी वाग्वा । **संकर्ष.** १।१।११. * हविष्कृत्— देवतानामर्थे या हविः संपादयति अवहननादिना सा । वि. ३।२।३. * हविष्कृत् यजमानस्य पत्नी । 'यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम् ।' भा. ३।२।३।७.

**हविष्कृत् सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्यात् विद्यमानत्वात् । १२।२।३।११॥**

सवनीयेषु पुरोडाशेषु हविष्कृत् न स्यात्, हविष्कृदाह्वानं न कर्तव्यम् । असौ पशुं प्रति आहूता, पशुमध्यपतिताश्च सवनीयाः । तेषु सैव विद्यमानत्वात् अवहननादि कुर्यात् । सा प्रकृतौ यदि सर्वार्था आज्यौषधसांनाय्यार्था स्यात् तदा इदमुक्तमस्माभिः । अन्यदा तु सवनीयार्थं हविष्कृदाह्वातव्या । क्त्वाचिन्तेयम् । के.

**हविष्कृतः अध्रिगोः पुरोऽनुवाक्यामनोतयोश्च आवृत्तिः ॥**

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात् स्यात् । ११।४।२०।५७॥**

**भाष्यम्— अथवा अधिकरणान्तरम्** । ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः, तेषु हविष्कृदाह्वानम् । वाजपेये ऋतुपशवः प्राजापत्याश्च, तत्र अध्रिगुप्रैषः । कृष्णग्रीवयोः पुरोनुवाक्या मनोतासूक्तं च । तेषु चिन्ता । किं तस्य तस्य सकृत्प्रयोगः, अथवा आवृत्त्येति । सहत्वानुग्रहाय सकृत्, इति प्राप्ते, उच्यते । आवृत्तिः स्यादिति । कुतः ? कालभेदात् । प्रातःसवने यद्धविष्कृदाह्वानमध्रिगुप्रैषश्च, तस्य कालभेदात् गृह्यते विशेषः । प्रातःसवनीयानां पुरोडाशानामयं हविष्कृत् ऋतुपशूनां चाध्रिगुरिति । तथा कृष्णग्रीवयोः सौम्येन व्यवायात् पूर्वस्य कृष्णग्रीवस्येयं पुरोनुवाक्या मनोता चेति । सर्वत्र कालो भिद्यते । कालभेदात् गृह्यते विशेषः । तस्मादावृत्तिः ।

**अध्रिगोश्च विपर्यासात् । ५८ ॥**

**भाष्यम्**— अध्रिगोश्चायमपरो विशेषः, विपर्यासः स्यात् । तन्त्रभावे अध्रिगोर्ये पुरस्तात्पदार्थाः प्राजापत्यानाम्, यथा पश्वालम्भ आश्रुतप्रत्याश्रुते अवैदग्निरिति मन्त्रः । ते यदि तावत् प्रातःसवने क्रियन्ते, पर्यग्निकरणान्तं काण्डं नोत्सृष्टं भवति । अथ मा भूदेष दोष इति ब्रह्मसाम्नि क्रियन्ते, तथापि विपर्यासः कृतो भवति । पुरस्तादध्रिगोः कर्तव्यानां परस्तात् करणेन । तस्मादप्यावृत्तिः ।

**करिष्यद्वचनाच्च । ५९ ॥**

**भाष्यम्**— किंच या चेयं अध्रिगोर्विभक्तिः, आरभध्वमुपनयतेति, सा प्राप्तकालं करिष्यमाणं ब्रूते । स यदि प्रातःसवने उच्यते, अप्राप्तकालत्वात् पदार्थस्यासमर्थः स्यात् । अथ प्रेषणार्थम्, तथा समर्थः स्यात् । प्रेषणं प्रवृत्त्यर्थम् । न च प्राजापत्येषु तत् प्रवृत्त्यर्थं युज्यते । बहूनां कर्मराशीनां व्यवायान्नष्टः प्रेषणप्रत्ययो भवति । तथाप्यसमर्थः । तस्मादध्रिगोरावृत्तिरिति सिद्धम् ।

**शा**— ज्योतिष्टोमे अनुसवनं सवनीयाः पुरोडाशाः । तेषु चोदकप्राप्तं हविष्कृदाह्वानं तन्त्रं उत प्रतिसवनं भेदेन । तथा वाजपेये प्राजापत्यान् क्रतुपशूंश्च सह उपक्रम्य यदा प्राजापत्यान् पर्यग्नि कृत्वा उत्सृज्य ब्रह्मसाम्नि आलभेत, तदा किं क्रतुपश्वारम्भकाले प्रातःसवनकाले कृतं अध्रिगुवचनं प्राजापत्यानामपि तन्त्रम्, उत प्राजापत्यार्थत्वेन ब्रह्मसामकाले पुनरध्रिगुर्वक्तव्यः । तथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवम्' इति कृष्णग्रीवयोर्भेदेन प्रदाने क्रियमाणे अवदाने च किमनुवाक्यायाः मनोतामन्त्रस्य च तन्त्रत्वम्, उत आवृत्तिः, इति विचारे, सर्वत्र असंनिपातित्वात् प्रयोगवचनानुग्रहाय तन्त्रत्वम् । न हि एतेषां करणवत् संनिपातित्वम् । अनुवाक्याऽपि हि याज्याव्यवधानात् असंनिपात्येव । तस्मात् अगृह्यमाणविशेषत्वात् तन्त्रत्वभ्रान्तिः कस्यचित् स्यात्, तद्व्यावृत्त्यर्थमिदं सूत्रम् । ( अनेनैव पूर्वपक्षस्य मन्दतया भाष्यकारकृतं अधिकरणान्तरपरतया व्याख्यानं अयुक्तम्, किंतु प्रयाजादीनामसंनिपातिनां तन्त्रत्वं इति पूर्वमुक्तस्य प्रत्युदाहरणतया संनिपातित्वाभावेऽपि हविष्कृदादीनां आवृत्तिप्रतिपादनार्थमिदम्, इति यत् व्याख्यानान्तरं तदेव समीचीनं इति सूचितम् ) हविष्कृदादीनामावृत्तिः कालभेदेन विशेषग्रहणात् ।

**सोम**— पूर्ववैषम्येण उत्थानात् **संगतिः** ।

**वि**— 'हविष्कृदादिमन्त्राणां सवनीयादिगामिनाम् । तन्त्रं न वा, सहत्वार्थे तन्त्रं, नो कालभेदतः ॥'

**भाट्ट**— सोमे अनुसवनं सवनीयाः पुरोडाशादयः । तेषु प्रतिसवनं भेदेनैव चोदकप्राप्तं हविष्कृदाह्वानम्, कालभेदेन गृह्यमाणविशेषतया तन्त्रत्वानुपपत्तेः । यद्यपि पत्नीसंयाजान्तं जघनेन गार्हपत्यमवस्थितैव पत्नी, तथापि उत्करदेशमवघातार्थं भेदेनाह्वातव्यैव । तथा वाजपेये क्रतुपशूनां प्रातःसवनकाले प्राजापत्यानां च ब्रह्मसामकाले पश्वालम्भे क्रियमाणे अध्रिगुप्रैषोऽपि कालभेदादावर्तते एव । सत्यप्यकरणमन्त्रत्वे दृष्टार्थत्वेन तज्जन्यस्मृतेर्विच्छेदात् । तथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवम्' इत्यत्र भेदेन प्रदानात् याज्यायां समानजातीयायामेवोभयाङ्गभूतायां तावत् करणमन्त्रत्वादेवावृत्तिः । अनुवाक्यायामपि करणमन्त्रत्वाभावेऽपि दृष्टार्थत्वाविशेषात् पूर्ववदेवावृत्तिः । एवं मनोतामन्त्रेऽपि । इदं च प्रत्युदाहरणमात्रमिति नात्र विशेषाशङ्का । तदेवं निरूपितं तन्त्रत्वम् ।

**मण्डन**— 'नाध्रिगोस्तन्त्रता कार्या ।' २१.

**शंकर**— 'कालभेदेऽध्रिगावेवम् ।' न तन्त्रम् । २१.

* हविष्कृतः यज्ञविमोके ( पत्नीसंयाजानन्तरं ) विसर्गः न प्राक् । भा. १२।२।४।१३.

**☒ हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात् स्यात् । ११।४।२०।५७ ॥**

ज्योतिष्टोमे प्रतिसवनं कर्तव्येषु सवनीयपुरोडाशेषु हविष्कृदाह्वानस्य, अध्रिगोः वाजपेये क्रतुपशूनां प्राजापत्यपशूनां च अध्रिगुप्रैषस्य, कृष्णग्रीवयोः पुरोऽनुवाक्यायाः मनोतायाः मनोतासूक्तस्य च कालभेदात् भिन्नकालत्वात् आवृत्तिः स्यात् । हविष्कृच्च अध्रिगुश्च पुरोऽनुवाक्या च मनोता च तेषां समाहारः इति द्वंद्वे नपुंसकत्वम् ।



**अध्रिगोश्च विपर्यासात् । ५८ ॥**

अध्रिगौ विशेषमाह । अध्रिगोः मन्त्रस्य सकृत्करणपक्षे विपर्यासात् विपर्यासप्रसङ्गात् आवृत्तिरेव । अध्रिगोः प्राक्तनानां आश्रुतप्रत्याश्रुतादीनां प्रातःसवने अनुष्ठाने पर्यग्निकरणान्ते विहित उत्सर्गो बाधितः स्यात् । तृतीयसवने करणे च प्राजापत्याध्रिगोः पुरस्तात् कर्तव्यानां परस्तात् करणेन क्रमलोपः स्यात् । तस्मात् अध्रिगोरावृत्तिः ।

**करिष्यद्वचनाच्च । ५९ ॥**

अत्रापि अध्रिगोरेव विशेषमाह । करिष्यत् उच्चारणाव्यवहितोत्तरक्षणे अनुष्ठापकं वचनं 'आरभध्वं' 'उपनयत' इति शब्दः यस्मिन् अध्रिगौ स करिष्यद्वचनः । प्रातःसवने अध्रिगौ सकृत् कृते बहुकर्मणा व्यवहितमेव मन्त्रप्रतिपादितस्यार्थस्य अनुष्ठानं स्यात् ततश्च वचनस्य बाधः स्यात् । तस्मात् हविष्कृदाह्वानाध्रिगुप्रैषादीनां आवृत्तिः कर्तव्या इति सिद्धान्तः । के.

**☒ हविष्कृदाह्वानं तार्तीयसवनिकपुरोडाशेषु सौम्यचरु–आश्विनद्विकपाले च भेदेन न कर्तव्यम् ॥**

**पशौ तु संशृते विधानात् तार्तीयसवनिकेषु स्यात् सौम्याश्विनयोश्चापवृक्तार्थत्वात् । १२।२।४।१२ ॥**

**भाष्यम्**— तार्तीयसवनिकेषु पुरोडाशेषु तु सौम्याश्विनयोश्च भेदेन हविष्कृत् स्यात् । कुतः ? पशौ संस्कृते ( संशृते ) विधानात् । पक्वे पशावेते विधीयन्ते । तस्मिन् काले पाशुकी हविष्कृत् कृतार्थत्वादपवृक्ता । तस्मादन्या आह्वातव्या ।

**योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् । १३ ॥**

**भाष्यम्**— न वा अन्या आह्वातव्या । सैव कुर्याद्विद्यमानत्वात् । ननु कृतार्थत्वादपवृक्ताऽसौ । नापवृज्यते । कुतः ? योगाद्यज्ञाय । यज्ञायासौ पशुबन्धाय, युक्ता आदावेव । न केवलं सा यज्ञाङ्गानि सर्वाणि साधयितुम् । 'कस्त्वा युनक्ति स त्वा युनक्ति' इत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता । तस्या यज्ञविमोके विसर्गो न्याय्यः । यत्कारणम् । कस्यांचिदापदि पुनस्तया कदाचित् कार्यं भवेत् । तस्मान्न भेदेनाऽऽह्वातव्या ।

**सोम**— पूर्वत्र समाख्याबलात् पशुपाकपर्यन्तं अनपवृक्तत्वात् पाकात् पूर्वभाविषु प्रातःसवनीयमाध्यंदिनसवनीयकेषु प्रसङ्गसंभवेऽपि इह नास्ति प्रसङ्गः, पाकानन्तरमपवृक्तत्वात् हविष्कृतः इति पूर्ववैषम्येण उत्थानात् **संगतिः** । **सूत्रार्थस्तु**– तार्तीयसवनिकेषु पुरोडाशेषु सौम्याश्विनयोश्च हविष्कृत् भेदेन न स्यात्, पक्वे पशौ तेषां विहितत्वेन तस्यास्तदानीमपवृक्तत्वात् इति ।

**वि**— 'अस्त्याहूतिश्चरौ सौम्ये नास्ति वा, पशुपाकतः । निवृत्तत्वादस्ति, नैवमनिवृत्तेः पुरोत्थितेः ॥' आहूतिः हविष्कृतः आह्वानम् ।

**भाट्ट**— कृत्वाचिन्तायामेव तार्तीयसवनिकसवनीयहविःषु सौम्यचरौ आश्विनद्विकपाले च सवनीयपशुपाकोत्तरं क्रियमाणे भेदेन पुनराह्वातव्या, हविष्कृत्समाख्यया तस्या हविष्करणमात्रप्रयोजनकत्वेन वृत्ते पशुपाके तस्या अपवृत्तत्वात् । इति प्राप्ते, समाख्याया उपलक्षणत्वात् सहायकरणमात्रार्थं सा । अतः पाके वृत्तेऽपि आसवनीयपशुतन्त्रं तस्याः सत्त्वान्नाह्वातव्या । वस्तुतस्तु उपलक्षणत्वे प्रमाणाभावात् हविःकरणार्थत्वेऽपि कृतेऽपि कार्ये पत्नीसंयाजोत्तरमुत्थानविधानात् आपत्नीसंयाजान्तं तस्या विहारदेशे सत्त्वाद्युक्त एव प्रसङ्गः ।

**मण्डन**— 'तार्तीयेष्वपि नैव सा ।' सा हविष्कृत् ।

**शंकर**— 'सौम्यादावपि सा नैव ।'

* हविष्कृदाह्वानेन सवनीयपशुगतेन पशुपुरोडाशे प्रसङ्गसिद्धिः ( औषधार्थं हविष्कृदाह्वानं पशौ नास्त्येव एषा तु कृत्वाचिन्ता ) । वि. १२।२।३, * हविष्कृदाह्वानात् प्राचीनापूर्वप्रयुक्त एव दर्शपूर्णमासयोः

वाङ्नियमः । ९।१।७, * हविष्कृदाह्वाने प्रणीता-संबन्धिवाङ्नियमस्य त्यागः । वाङ्नियमस्य च मध्य-कालीनाङ्गजातापूर्वं प्रयोजकं न परमापूर्वम् । ९।१।७.

* हविष्कृदाह्वानाभावः सवनीयपुरोडाशेषु । १२।२।३।११. **मीको.** पृ. ४२४२ 'सवनीयपुरोडा-शेषु हविष्कृदाह्वानाभावः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* हविष्कृदाह्वानकाले अन्त्यव्रीजसंबन्धिनि एव वाग्विसर्गो राजसूये नानाव्रीजेष्टौ । ११।३।७।१७. **मीको.** पृ. २३१३ 'नानाव्रीजेष्टौ अन्त्यव्रीजसंबन्धि०' इत्यत्र अधिकरणं द्रष्टव्यम् । * हविष्कृदाह्वानकाले पशुपुरोडाशसंबन्धिनि, वाग्विसर्गोऽग्नीषोमीये पशौ । **भा.** ११।३।८।१८. **मीको.** पृ. १२२ 'अग्नीषोमीये पशौ वाग्विसर्गः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हविष्कृदाह्वानमन्त्रः** अवहननकाले पठनीयः । स चाह्वानाङ्गं नावघाताङ्गम् । **वि.** ३।२।३, * हवि-ष्कृदाह्वानमन्त्रः त्रिरभ्यसनीयः । ३।२।३, * हवि-ष्कृदाह्वानमन्त्रः सवनीयपुरोडाशेषु आवर्तनीयः, न तु तन्त्रं कालभेदात् । ११।४।२१.

* **हविष्कृन्मन्त्रस्य** सवनत्रयगतपुरोडाशेषु आवृत्तिः ज्योतिष्टोमे । ११।४।२०।५७–५९. **मीको.** पृ. ४२०१ 'हविष्कृतः अध्रिगोः०' इत्यत्र अधि-करणं द्रष्टव्यम् ।

* हविष्याणामावापनं निर्वपणे प्रयोक्तव्यम् । **भा.** ११।४।१४।४४.

* हस्तः वितस्तिद्वितयम् । **सु.** पृ. १२८. * 'हस्तेनावद्यति' पुरोडाशावदाने हस्तः करणं सामर्थ्यात् । **वि.** १।४।११.

* हस्तावनेजनं सर्वशेषः 'हस्तावनेनिक्ते' इति । **वि.** ३।१।१४. * हस्तावनेजनं हस्तसंस्कारा-र्थम् । **भा.** ३।१।१४।२४.

* **हस्तावनेजनाधिकरणम्** । हस्तावनेजनादीनां कृत्स्नप्रकरणाङ्गता । ३।१।१४।२४–२५. **मीको.** पृ. ९३६ 'आनन्तर्याधिकरणम्' इत्यत्र अधिकरणं द्रष्ट-व्यम् ।

**हस्तामलकन्यायः** । यथा हस्ते स्थितं आमलकं फलं असंदिग्धं दृश्यते, तथा 'तत्त्वमसि' इत्यादिमहावाक्यं कर्तृकर्मवासनाभ्यां प्रतिबन्धरहितं सत् पूर्वं परोक्षतया प्रकाशिते तत्त्वे अपरोक्षतया तत्त्वाव-भासनसमर्थं ज्ञानं जनयतीति भावः । उक्तं च पञ्च-दश्याम्– 'वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते । करामलकवद्बोधमपरोक्षं प्रसूयते ॥' इति । **साहस्री.** २८०.

* **हस्तसंज्ञा** ह्येवं संकेत्यते यदा अयमर्थो मया अभिप्रेतः, तदा अयं मया हस्तश्चालयितव्य इति । स यदा तथैव हस्तं पुनश्चालयति तदा प्राचीं व्युत्पत्तिं स्मृत्वा हस्तसंज्ञातः पुनरभिप्रायविशेषमवसाय अर्थमव-गच्छति । उपाधिमात्रं हस्तसंज्ञा । **ऋजु.** पृ. १५३.

* **हस्तिनो** बालः कलभः । **वा.** ३।४।४।१३ पृ. ९२०.

* **हाउवाक्–सामानि** त्रीणि अनृक्काणि । **बाल.** पृ. ७२.

* **हाउहोवा–साम** अनृक्कम् । **बाल.** पृ. ७२.

* **हानोपादानादि** च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुम्, न अप्रमितविषयम् । **बृहती.** पृ. २५५.

* **हानोपायनाधिकरणम्** । ( ३।३।१५।२६ ब्रसू. हान्यधिकरणं चेदमेव ) । ( शङ्कायां ) सुकृतदुष्कृत-योर्हानोपायने यत्र श्रुते, केवलोपायनं वा यत्र श्रुतं तत्रोपायनस्य तद्विद्यान्वयेन निरपेक्षत्वेऽपि, यत्र निर्गुण-विद्यायां केवलहानं श्रुतं 'अश्व इव रोमाणि विधूय पापं' इति, तत्रापि स्तुतिप्रकर्षलाभाय विद्यापेक्षया उपा-यनशब्दस्यान्वयो भाष्यकारैरुक्तः । ( उत्तरे ) हानोपाय-नाधिकरणे स्तुतिप्रकर्षो भाष्यकारैः आनुषङ्गिकप्रयोजन-तयोक्तः न तूपायनशब्दान्वये प्रमाणतया । प्रमाणं तत्रा-वश्यकम्– कुतश्चिद्धीनं किंचिदुपैति इति हानस्योपायना-पेक्षा, कुतश्चिद्धीनमपि सुकृतदुष्कृतं फलजननाय कंचिदाश्रयमपेक्षते इति तदपेक्षा च इत्युभयमेव । **आभरणम्.** ३।४।३।२१ ब्रसू.



* **हारियोजनं** अन्यदेव प्रधानम्, तथा परिधयः पश्वङ्गम्, न तयोः संबन्धः । **भा.** ४।३।१४।३६, * हारियोजनं परिधिप्रहरणानन्तरं अग्निष्टोमे । ११।३।१५।४६, * हारियोजनम् । 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति । ११।१।७।३५. * **हारियोजनः** ग्रहः अग्निष्टोमे तृतीयसवनान्ते । अत्र सत्याषाढः— प्रहृतेषु परिधिषु संस्रावेणाभिहुत्य हारियोजनेन चरन्ति । ९।४।४६ ॥ 'उपयामगृहीतोऽसि हरिरसि हारियोजनः' इति उन्नेता द्रोणकलशेन हारियोजनं सर्वं आग्रयणं गृह्णाति । ४७ ॥ तं बह्वीभिर्धानाभिः श्रीत्वा न सादयति ।४८॥ शीर्षन्नधि निधाय उपनिष्क्रम्य 'इन्द्राय हरिवते-ऽनुब्रूहि, इन्द्राय हरिवते प्रेष्य इति संप्रेष्यति । ४९ ॥ 'हरिः स्थ हर्योर्धानाः' इति विक्रम्य ( अग्रतः पृष्ठतश्च पादौ पुनः पुनः कृत्वा) वषट्कृते जुहोति (वषट्कारोत्तरं तूष्णीमेव विक्रमणं इति ज्योत्स्ना, प्रागेव इति केवलः ) अनुवषट्कृते हुत्वा हरति भक्षम् । ५० ॥ तं सर्वे समशः प्रतिविभज्य उन्नेतरि उपहवमिष्ट्वा 'इष्टयजुषस्ते देव सोम' इति चिष्चिषाकारं धाना भक्षयन्ति । ५१ ॥ संदश्य असंभिन्दन्तः धानानां निम्नानि कुर्वन्तो निरवध-यन्तः 'आपूर्याः स्थाऽऽमा पूरयत' इत्युत्तरवेद्यां धाना निष्ठीव्य उपवपन्ति, 'रय्यै त्वा पोषाय त्वा' इति वा । ९।४।५२–५३ ॥ इति । * हारियोजनः सवनीय-विकारे सोमयागानङ्गे न कार्यः । **भाट्ट.** ४।३।१२. * **हारियोजनस्य** परिधिप्रहरणोत्तरकालमात्रविधानं नाङ्गता । **भा.** ४।३।१४।३६, * **हारियोजने** ग्राव-स्तुतोऽपि भक्षप्रतिपादनं ज्योतिष्टोमे । ३।५।९।३० पृ. १००६. * हारियोजने सर्वे एव ग्रावस्तुत्सहिताः भक्षयितारः इति सिद्धम् । **वा.** ३।५।९।३०.

* **हारियोजनादि** बर्हिःप्रहरणान्तं कर्म द्वादशाहे आद्येषु नवस्वहःसु एकादशे च न कर्तव्यं किंतु पत्नी-संयाजोत्तरं विरामः कर्तव्यः । अवशिष्टं च कर्म द्वादशेऽहनि पत्नीसंयाजोत्तरं कर्तव्यम् । **वि.** ९।१।९.

* **हारियोजनोत्तरत्वं** पत्नीसंयाजानाम् । **भाट्ट.** ९।१।९.

* **हारियोजनगतसर्वशब्दन्यायः** ३।५।९।२७–३० **मीको.** पृ. १६४९ 'ग्रावस्तुतोऽपि हारियोजने०' इत्यत्र द्रष्टव्यः ।

* **हारियोजनन्यायः** । हारियोजने ग्रावस्तुतोऽपि सोमभक्षः । ३।५।९।२७–३०. **मीको.** पृ. १६४९ 'ग्रावस्तुतोऽपि हारियोजने सोमभक्षः' इत्यत्र अधि-करणं द्रष्टव्यम् ।

* **हारियोजनपरिधिप्रहरणयोः** कालार्थः संयोगः नाङ्गाङ्गिभावः । **भा.** ४।३।१४।३६.

* **हारीतादिस्मृतिविशेषाः** केचित् क्वचिद्देश-विशेषे दृश्यन्ते । ततश्च व्यवस्थया प्रामाण्यमिति चेन्न, अनुमितवेदमूलकत्वेन सर्वसाधारणत्वात् । **वि.** १।३।८.

* **हिंसा** च प्रतिषिद्धा । **भा.** १।१।२।२ पृ. १९. * हिंसा प्राणवियोगः, प्राणवियोगानुकूलव्यापारो वा । **मणि.** पृ. ८, * 'हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः । सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत् पृथक् ॥' पृ. ८. * **हिंसायाः** क्रत्वर्थायाः नानर्थत्वम् । **वि.** १।१।२.

* **हि–शब्दः** चार्थे ( क्वचित् ) । **ऋजु.** पृ. १४१. * हि–शब्दः ततश्च इत्यर्थे (क्वचित्) । **सु.** पृ. ३५७, * हि–शब्दः । निपातानामनेकार्थत्वात् ( १ ) तस्माच्छब्दार्थे हि–शब्दः । ( २ ) हि–शब्दः प्रसिद्धा-र्थवाची । पृ. ४९०. * **हि–शब्दात्** अनुवादत्व-प्रतीतिः । **वि.** ३।४।४.

**'हितं मनोहारि च दुर्लभं वचः' इति न्यायः** । इति भारविः, स्पष्टः । **साहस्री.** ९६१.

* **हिरण्मय्यः** शमीमय्यो वा स्रुचः संमार्ष्टव्याः वरुणप्रघासेषु सिद्धान्ते । **भा.** २।१।४।१२.

* **हिरण्यं** अश्मनां तेजः । **भा.** ८।१।१८।३५.

**हिरण्यमाज्यधर्म तेजस्त्वात्** । ८।१।१८। ३५ ॥

'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायु-ष्कामः' इत्यत्र कृष्णमुखगुञ्जाशतपरिमितं हिरण्यं हविः श्रुतम् । तत् हिरण्यं आज्यधर्म, आज्यस्य उपांशुयाजा-

ज्यस्य धर्माः यस्मिन् तत् आज्यधर्म । 'धर्मादनिच् केवलात्' (पा. ५।४।१२४) इति अनिच् समासान्तः । कुतः ? तेजस्त्वात् । हिरण्यं अश्मनां तेजः आज्यं गवां तेजः सार इत्यर्थः। अथवा हिरण्यं उज्ज्वलं आज्यमपि उज्जलत्वकरम् । तस्मात् शतकृष्णलश्चरुः उपांशुयाजधर्मकः इति पूर्वः पक्षः ।

**धर्मानुग्रहाच्च । ३६ ॥**

प्राजापत्ये शतकृष्णले चरौ उपांशुयाजाज्यविध्यन्तः इति पूर्वपक्षे हेत्वन्तरम् । आज्यस्य धर्माणां अवेक्षणादीनां हिरण्ये अनुग्रहात् औषधधर्माणां च अवहननादीनां हानात् आज्यधर्मा एव ग्राह्याः इति ।

**औषधं वा विशदत्वात् । ३७ ॥**

प्राजापत्ये शतकृष्णले चरौ आज्यस्य विध्यन्तः इति पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । ओषधीनां अयं औषधः । औषधः विध्यन्तः अस्य अस्ति तत् हिरण्यं औषधम् । हिरण्यं औषधं स्यात् । हिरण्ये ओषधीनां व्रीहीणां विध्यन्तः स्यात् । विशदत्वात् हिरण्यमपि विशदं ओषधयोऽपि विशदाः । तस्मात् औषधविध्यन्तः सिद्धान्तः ।

**चरुशब्दाच्च । ३८ ॥**

प्राजापत्ये शतकृष्णले चरौ तेजस्त्वसामान्यात् आज्यविध्यन्तः प्राप्तः विशदत्वसामान्याच्च औषधविध्यन्तः प्राप्तः । एवं सति को विशेषः औषधविशेषे इत्याशङ्कायां विशेषहेतुमाह । चरुशब्दात् इति । प्राजापत्यं चरुं इति चरुशब्दोऽत्र भवति । चरुशब्दश्च औषधस्य प्रवक्ता । तदेतत् बलवल्लिङ्गम् । अस्माद्विशेषात् औषधविध्यन्त एव हिरण्ये स्यात् ।

**तस्मिंश्च श्रपणश्रुतेः । ३९ ॥**

प्राजापत्ये शतकृष्णले चरौ औषधविध्यन्तो ग्राह्यः इति सिद्धान्ते हेत्वन्तरमाह । समुच्चयार्थश्चशब्दः । तस्मिन् शतकृष्णले चरौ 'घृते श्रपयति' इति श्रपणस्य श्रुतिः भवति, श्रपणं च औषधधर्मः, न आज्यधर्मः । श्रपणश्रुतेर्हेतोः औषधधर्मः एव शतकृष्णले स्यात् इति सिद्धान्तः । के.

* हिरण्यं दक्षिणा प्रथमायामवेष्टौ राजसूये । भाट्ट. ११।४।३. * **हिरण्ये** शतकृष्णलाख्ये औषधधर्माणामतिदेशः । वि. ८।१।१८.

* **'हिरण्यादानदण्डस्तु समुदाये समाप्यते'** । **वा.** ३।१।६।१२ पृ. ६९७.

* **हिरण्यदानं** द्वादशाहे 'हिरण्यमात्रेयाय ददाति' इति विहितमदृष्टार्थं कर्तव्यम् , आनत्यर्थता तु नास्ति । वि. १०।२।२६. * **हिरण्यदानस्य** अदृष्टार्थस्य सत्रे न बाधः । १०।२।२६।६३. **मीको.** पृ. १२४६ 'ऋतुयाज्यावरण–हिरण्यदानयोः अदृष्टार्थयोः०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **हिरण्यधारणं** पुरुषार्थम् , तस्य स्वर्गो वा फलम्, शोभनवर्णप्राप्तिः अर्थवादगता वा फलम् । वि. ३।४।१२.

**हिरण्यधारणन्यायः** । हिरण्यधारणं पुरुषार्थम् । सुवर्णधारणविधिः पुरुषार्थः ।

**अप्रकरणे तु तद्धर्मस्ततो विशेषात् । ३।४।८।२० ॥**

**भाष्यम्**— अनारभ्य श्रूयते 'तस्मात् सुवर्णं हिरण्यं भार्यम् , दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति । 'सुवाससा भवितव्यं रूपमेव बिभर्ति' इति । तत्र किं प्रकरणधर्मः उत पुरुषधर्मः इति संशयः । अत्रोच्यते । अप्रकरणे तु तद्धर्मस्ततो विशेषात् । पुरुषधर्मः एवंजातीयकः स्यात् । कुतः ? ततः प्रकरणाधीतात् विशेषोऽस्य । नायं प्रकरणाधीतः । यदि अप्रकरणे समाम्नातः सर्वप्रकरणधर्मः स्यात् । अप्रकरणे समाम्नानं न कंचित् विशेषं कुर्यात् । तस्मात् एवंजातीयकः पुरुषधर्म इति ।

**वा**— इदानीं अप्रकरणाधीतानि श्रुतिलिङ्गवाक्यानि प्रकरणसमवायं गच्छन्ति न वा इति विचार्यते । 'तस्मात् सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति' इत्येवमादिषु संदेहः । किं कर्मसु हिरण्यधारणमनूद्य सुवर्णता विधीयते, वासःपरिधाने च शोभनत्वम् , उत विशिष्टविधानरूपेण नित्यः पुरुषधर्मो विधीयते इति । तत्र



अनेकार्थविधिभयात् कर्मस्थहिरण्यवासोऽनुवादेन सुवर्णशोभनत्वविधिप्राप्तौ उच्यते पुरुषधर्म इति । कुतः ? **'हिरण्यवाससोर्धर्मो भवंस्तावदनर्थकः । कर्मणा सह संबन्धे प्रमाणं तु न विद्यते ॥'** प्रकरणाम्नानस्य हि एतदेव प्रयोजनम्, कथं नाम तदङ्गत्वं विज्ञायेत इति । यदि अप्रकरणाधीतस्यापि कर्माङ्गतैव स्यात् ततः प्रकरणाम्नानं अनर्थकं भवेत् । यतस्तु वेदेनैव प्रकरणाप्रकरणाम्नानविवेकः कृतः । ततोऽवगम्यते नूनं प्रकरणाधीतानां पुरुषधर्मत्वमिति ।

**अद्रव्यदेवतत्वात् शेषः स्यात् । २१ ॥**

**भाष्यम्**— तुशब्दः पक्षव्यावृत्तौ । न पुरुषधर्मो भवेत् । अग्निहोत्रादीनां शेषः स्यात् । कस्मात् ? अद्रव्यत्वात् । नात्र द्रव्यदेवतं श्रूयते । तच्छ्रवणात् भार्यं, यष्टव्यं, इति परिकल्प्येत । असति तु द्रव्यदेवतासंबन्धे बिभर्तिरयं धारणावचनः संस्कारवाची । संस्कारश्च शेषभूतस्यावकल्पते, नान्यथा । तस्मात् कर्मणां अग्निहोत्रादीनां शेषः । एवं 'सुवाससा भवितव्यम्' इति ।

**वा**–– यद्यपि तावत् विशिष्टविधानं तथापि कर्मशेष एव स्यात् । अन्यथा हिं फलं कल्प्येत । ननु क्रतुसंबन्धोऽपि कल्पयितव्य एव । सत्यम् , प्रमाणवती हि तत्कल्पना । कर्मणश्च सामान्येन प्रयोजनाकाङ्क्षायां कर्मैव उपतिष्ठते । तेन तत्संबन्धः प्रमाणवान् , न स्वर्गसंबन्धः । एवं च मन्यते, यथा यागदानहोमान् मुक्त्वा नान्यत् प्रधानकर्मत्वं प्रतिपद्यते । न चेह यागादित्वमस्ति, संप्रदानाद्यभावात् । अतः औत्पत्तिकेन अङ्गत्वेन कर्मशेषत्वम् । **अथवा** धारणमेतत् श्रूयते । तच्च उत्पत्त्यैव धार्यमाणशेषभूतम् । न च लौकिकस्य निष्प्रयोजनत्वात् संस्कारार्हत्वम् । अतः कर्माङ्गभूतयोः वासोहिरण्ययोर्विधिः । **अथवा** तत एव अनेकार्थविधिदोषात् सति च संभवे बलाद्गुणे विधिशक्तिसंचारणात् हिरण्यधारणं 'हिरण्यं हस्तेन भवति अथ गृह्णाति' 'हिरण्यं हस्ते संप्रदाय षोडशिना स्तुवते' इत्येवमादिवाक्यविहितं अनूद्य सुवर्णता विधीयते । 'वासः परिधत्ते' इति च एतद्विहिते वाससि शोभनत्वम् । एवं च सूत्रकाराणां 'हिरण्यमिति जातरूपं प्रतीयात्' इत्यादिपरिभाषणस्य एतदेव मूलम् । अन्यथा रजतजातरूपसाधारणे सति हिरण्यशब्दे अन्यतरावधारणमूलं अन्यत् कल्प्यं स्यात् ।

'अद्रव्यत्वात्' इति च (सूत्रे) नात्र द्रव्यं विधीयते, किं तर्हि ? तद्विशेषमात्रविधानमेतत् । अतश्च यत्र द्रव्यं तत्रानेन गन्तव्यमिति । **'यत्त्वत्र भाष्यकारेण देवताग्रहणं कृतम् । तदुत्सूत्रमयुक्तं च प्रधानं हि जपाद्यपि ॥'** अयागानामपि प्राधान्यदर्शनात् न किंचित् देवताग्रहणेनेति ।

**वेदसंयोगात् । २२ ॥**

**भाष्यम्**— आध्वर्यवमिति वेदसंयोगः शेषभूतस्य युज्यते । शेषभूतो हि अध्वर्युणा क्रियते, न पुरुषधर्मः । दर्शपूर्णमासादीनां हि कर्मणां साङ्गानामध्वर्युः कर्ता । तस्मादपि कर्मधर्मा एवंजातीयका इति ।

**वा**— कर्माङ्गत्वे च अस्याः क्रियायाः आध्वर्यवसमाख्या विनियोक्त्री भविष्यति । पुरुषधर्मत्वे बाध्येत । यदाऽपि हिरण्यानुवादेन सुवर्णता विधीयते, तदाऽपि तद्विधिवशवर्तित्वात् अक्रियात्मकत्वाच्च नैव समाख्या व्याप्रियते इति वैदिकत्वसामान्यं वेदसंयोगस्यार्थः । तेन यो नाम वदेत् लोकतोऽपि अस्त्येव वासोहिरण्यधारणप्राप्तिः , ततः तदनुवादेनापि शक्यं गुणविधानं इति, सोऽपि व्यावर्तितो भवति ।

**द्रव्यपरत्वाच्च । २३ ॥**

**भाष्यम्**— द्रव्यपरश्चात्र भवति निर्देशः 'सुवर्णं भार्यम्' इति द्वितीयार्थसंयोगात् । द्रव्यसंस्कारश्च कर्मशेषपक्षे प्रयोजनवान् , अनर्थकः पुरुषधर्मे ।

**वा**–– पूर्वं धारणस्य स्वाभाविकमेव संस्कारत्वं इत्युपन्यस्तम् । इदानीं तत्रैव उपचयहेतुरुच्यते कर्मत्वनिर्देशात् इति । तत्र हिरण्यं इति अमन्तत्वदर्शनात् 'द्वितीयार्थसंयोगात्' इति च भाष्यात् व्रीहीन् इतिवत् द्वितीयेयं इति भ्रान्तिर्भविष्यति । कृत्प्रत्ययेन तु अभिहितत्वात् नात्र कर्मणि द्वितीया उत्पन्ना, प्रथमैवेयम् । द्वितीयार्थस्तु भार्यं इति ण्यत्प्रत्ययेन उक्तः इति द्रव्यपरत्वाभिधानम् । अत एव भाष्यकारेणापि 'द्वितीयार्थ-

संयोगात्' इत्युक्तम्। अन्यथा द्वितीयासंयोगात् इत्येवावक्ष्यत्। तस्मात् संस्कारत्वात् कर्मशेषत्वं धारणस्य।

**स्याद्वाऽस्य संयोगवत् फलेन संबन्धस्तस्मात् कर्मैतिशायनः। २४॥**

**भाष्यम्**— स्याद्वा फलेन एवंजातीयकानां संबन्धः, पुरुषधर्म इत्यर्थः। सुवर्णस्य वाससो वा धर्मो भवन् निष्प्रयोजनः स्यात्। ननु संस्कृतेन सुवर्णेन वाससा च कर्म सेत्स्यति। नैतदेवम्। सुवर्णस्य अङ्गं न कर्मण उपकुर्यात्। श्रुत्यादीनामभावान्न कर्माङ्गम्। तस्मात् 'दुर्वर्णोऽस्य भ्रातृव्यो भवति' इत्येवमादिना एवंजातीयकानां फलेन संबन्धः। ननु वर्तमानापदेशोऽयम्। सत्यमेवमेतत्। आनर्थक्यपरिहाराय फलचोदनया संबन्ध एषितव्यो भवति। अन्यस्माच्च एषितव्यात् एकवाक्यगतस्य विपरिणामो लघीयान्। कुतः? प्रत्यक्षा तेन एकवाक्यता, परोक्षा अन्येन। विपरिणामश्च वर्तमानकालस्य अविवक्षा। संबन्धस्य च तात्पर्याध्यवसानम्। तस्मादेवंजातीयकः प्रधानकर्मोपदेशः स्यात्। यथा प्रजापतिव्रतानां फलेन संबन्धः 'एतावता हैनसा वियुक्तो भवति' इति, एवमत्रापि द्रष्टव्यम्। तस्मादेवंजातीयकः पुरुषधर्म इति।

**वा**— कर्मसंबन्धस्तावत् न केनचित् क्रियते। सर्वो हि अनारभ्यवादो वाक्यसंयोगेन अङ्गं विधत्ते। लिङ्गेन वा केनचित् अव्यभिचारिणा। तदिह वाक्यसंयोगस्तावत् नास्त्येव। हिरण्यधारणमपि व्यभिचारादलिङ्गम्। तदेव कर्तव्यतावचनेन विशेष्यते। यदि कर्तव्यतावचनं विशेषणम्, ततश्च तद्व्यापारोपक्षयात् अविधायकत्वप्रसङ्गः। तेन द्रव्यस्वरूपसंबन्धमात्रमेव प्रमाणवत्। तत्र च आनर्थक्यं इति न संस्कारता। न चेह अपूर्वसाधनताकारितः संबन्धोऽवकल्पते। प्रकरणलभ्यत्वात् अपूर्वसाधनलक्षणायाः। तस्मात् भूतभव्यसमुच्चारणन्यायेनैव हिरण्यसाधनकं वासःसाधनकं च धारणं परिधानं च कर्तव्यम्। किं प्रयोजनं इत्यर्थाक्षिप्तेनापि तावत् कर्त्रा संबन्धः इति पुरुषोपकारकल्पना। सुवाससा इति बहुव्रीहेः अन्यपदार्थप्रधानत्वात् विस्पष्टमेव पुरुषप्राधान्यम्। ननु एवं सति फलं कल्प्यम्। **नैष दोषः।** सामान्यतः पुरुषार्थत्वे अवधारिते तस्य सुकल्प्यत्वात्। स्वर्गाद्युत्पत्तेश्च क्रियारम्भकत्वात् अन्यत्र वेदमूलत्वात् उभयमपि साधारणं पर्युपस्थापकं इति कर्मोपस्थापननिवृत्तिः। अपि च स्ववाक्यगतमेव भ्रातृव्यदुर्वर्णताकरणं रूपधारणं फलमुभयत्रापि श्रूयते। सत्यपि च अर्थवादसरूपत्वे पारार्थ्यानवधारणात् एवंजातीयकेषु फलविधित्वं वक्ष्यति 'फलमात्रेयो निर्देशात्' ( ४।३।८।१८ ) इति। तत्र हि फलसंबन्धस्यैव काम्यत्वमात्रं परिकल्प्य क्रियायास्तादर्थ्यं अध्यवसातव्यम्। अन्यत्र क्रतुसंबन्धात् प्रभृति सर्वं कल्पनीयम्। तस्मात् सर्वकामादिपदसंयोगवत् इहापि फलेन संबन्धात् विशिष्टविधानाच्च कर्म उपदिश्यते। तथा च स्मृतिः 'न जीर्णमलवद्वासाः स्यात्' 'धारयेद्वैणवं दण्डं शुभे रौक्मे च कुण्डले' इत्यादि सूपपत्स्यते।

**शा**— अनारभ्य श्रूयते 'तस्मात् सुवर्णं हिरण्यं भार्यम्' इति। तत्र संशयः, किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणं संस्कारो विधीयते, अथवा 'हिरण्यं हस्ते भवति' इति विहितधारणानुवादेन सुवर्णता शोभनरूपता विधीयते 'यत् हिरण्यं भार्यम्, तत् सुवर्णम्' इति, आहोस्वित् हिरण्यधारणं पुरुषार्थतया विधीयते इति। तत्र '**पुरुषार्थत्वपक्षे हि फलं कल्प्यमतः क्रतोः। अङ्गं स्यात् वैदिकत्वेन क्रियात्वेन च साम्यतः॥**' त्रेधाऽपि तावत् क्रत्वर्थं इति प्राप्ते, अभिधीयते '**न क्रतुस्तद्धिरण्यं वा धारणं वाऽत्र गम्यते। तस्मान्न क्रतुशेषत्वं विधेस्तु पुरुषार्थता॥**' तस्मात् पुरुषार्थत्वम्। ३।४।१२.

**सोम**— पूर्ववदिह फलस्यासिद्ध्या न पुरुषार्थत्वं इति प्रत्यवस्थानात् **संगतिः।**

**वि**— 'हिरण्यं वर्णवद् भार्यं क्रत्वङ्गं भरणं भवेत्। हिरण्यसंस्कृतिर्वाऽत्र वर्णो वोत पुमर्थता॥', वैदिकत्वात् क्रतुस्मृत्या तदङ्गं कर्मकारके। प्राधान्यात् संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात्॥', अनारभ्यश्रुत-



त्वेन नियता न क्रतुस्मृतिः। अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वाऽस्तु रात्रिवत्॥' तस्मात् पुरुषार्थो धारणविधिः।

**भाट्ट**— अनारभ्य 'सुवर्णं हिरण्यं भार्यम्, दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति श्रुते न तावत् क्रतुगतहिरण्योद्देशेन सुवर्णत्वविधिः, धारणप्राप्त्यभावेन अनुवादानुपपत्तेः। नापि 'हिरण्यं हस्ते संप्रदाय षोडशिनः स्तोत्रमुपाकरोति' इति विहितक्रतुहिरण्यधारणानुवादेन सुवर्णत्वविधिः, विशिष्टोद्देशापत्तेः। अतः भार्यं इति कृत्प्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात् तदुद्देशेनैव धारणाख्यसंस्कारविधिः। हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादत्वम्। न च एवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः, सुवर्णस्वरूपे आनर्थक्यात्, लौकिकक्रियासाधनीभूतग्रहणेऽपि च तत्तादवस्थ्यात्। सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य च आश्रयाभावात् अनुपपत्तेः। परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तिः। इति प्राप्ते, न तावत् प्रकरणात् क्रतुसंबन्धोपपत्तिः, अनारभ्याधीतत्वात्। नापि जुह्वादिवत् अव्यभिचरितत्वात्, लोकेऽपि सुवर्णसत्त्वेन व्यभिचारात्। न वा पारिशेष्यात्, श्रुतकर्मत्वान्यथानुपपत्त्या सुवर्णस्य आर्थवादिकफलसाधनत्वकल्पनाया एव प्रसक्तेः परिशेषाभावात्। धारणस्य संस्कारकस्यापि आश्रयापेक्षायां सुवर्णस्य तत्त्वेनापि अर्थादन्वये बाधकाभावात्। न चेष्टापत्तिः, तथात्वे धारणसुवर्णोभयकरणकयोः द्वयोर्भावनयोः अपूर्वयोस्तत्पदयोश्च कल्पने गौरवापत्तेः, सुवर्णांशेऽपि अपूर्वविधित्वप्रसङ्गाच्च। 'अध्वर्युं वृणीते' 'स्वाध्यायोऽध्येतव्यः' इत्यादौ तु उभयोरपि दृष्टार्थत्वात् उक्तगौरवाभावेन संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेऽपि न दोषः। प्रकृते तु धारणेन सुवर्णं संस्कुर्यात् तेन च तदाश्रितेन फलं भावयेत् इति कल्पने गौरवम्। अतः कृत्प्रत्ययलक्ष्या एकैवात्र भावना। तस्यां च आवश्यकत्वात् आर्थवादिकफलस्यैव भाव्यत्वं न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात्। अतः सक्तुन्यायेन ( २।१।५ अधिकरणे ) विनियोगभङ्गात् सुवर्णहिरण्यविशिष्टधारणमेव अर्थकर्मतया विधीयते। किंच सुवर्णस्वरूपे आनर्थक्ये यथैव तत्कार्यं क्रतुः, एवं लौकिक्यपि क्रिया। तस्यामपि च नैवानर्थक्यम्, क्षेत्रकर्मणि बलिहरणादिवत् निर्विघ्नपरिसमाप्त्यर्थत्वेन धारणाख्यसंस्कारोपपत्तेः। अतः पारिशेष्याभावात् न क्रत्वर्थत्वम्। न च उभयार्थत्वम्, एकस्यैव विधेः अंशे प्रयोजकत्वं अंशान्तरे च प्रधानप्रयुक्तत्वात् अप्रयोजकता इति वैरूप्यापत्तेः। अतः सक्तुवत् विनियोगभङ्गमङ्गीकृत्य धारणस्य अर्थकर्मतैव युक्ता। न च तस्यापि वैदिकक्रियात्वसामान्यात् क्रत्वङ्गत्वम्, सादृश्येन क्रतूपस्थितौ धर्मातिदेशस्येव अङ्गत्वेऽपि बाधकाभावात् इति वाच्यम्। विधिबलेन उपस्थितेषु अनियमेन सर्वेषु इष्टेषु तद्गतनिरतिशयत्वस्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्, आर्थवादिकफलस्य स्ववाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च। क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम्। अत एव विश्वजिद्रात्रिसत्रादौ न तत्कल्पनम्। प्रकृते तु विशिष्टधारणस्य आर्थवादिकमेव फलं इति पुरुषार्थता। तत्त्वं तु– सुवर्णस्य कर्मत्वमेव, तस्यैव तु आर्थवादिकं फलम्। 'तेन' इति पदाध्याहारस्य स्तुतिपक्षेऽपि समानत्वात्। न च अत्र आश्रयापेक्षा, विधिवैयर्थ्यस्य संस्कारविधिनैव परिहारात्। 'दुर्वर्णोऽस्य भ्रातृव्यो भवति' इत्यत्र भविष्यदर्थकत्वमात्रलक्षणा तु प्राचीनमतेऽपि अविशिष्टा। स्तुतिलक्षणा, सुवर्णपदे अपूर्वसाधनत्वलक्षणा च तवाधिका, इति ममैव लाघवमिति। ३।४।१२.

**मण्डन**— 'पुंसो हिरण्यस्य धृतिः क्रतोर्न।' ८.

**शंकर**— 'स्वर्णधारणमेव च।' (न क्रतोरङ्गम्)।

* हिरण्यधारणन्यायः (३।४।८)। भाष्यकारादिभिः प्रजापतिव्रतवाक्ये पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितं तदपि कलञ्जभक्षणप्रतिषेध–हिरण्यधारणन्यायेन क्रत्वर्थत्वशङ्कानुपपत्तेः उपेक्षितम्। भाट्ट. ४।१।३.

▣ **हिरण्यनिधिन्यायः** । यथा— सति त्रिविध-भूतभाविवर्तमानाऽन्यतमप्रतिबन्धे ज्ञानं नोदेति । तद्यथा— हिरण्यनिधिं निहितं क्षेत्रे उपर्युपरि संचरन्तो न विन्देयुः, एवमेवेमाः प्रजाः सर्वा अहरहर्ब्रह्मलोकं गच्छन्ति अत एतं ब्रह्मलोकं न विन्दन्तीति संक्षेपः । **साहस्री.** ४५५.

* **हिरण्यपरिमाणवचनः** कृष्णलशब्दः । भा. १०।२।२।६.

* **हिरण्यमालित्वं** वाजपेये सर्वेषामेव ऋत्विजाम्, नाध्वर्योरेव । ३।८।४।१२. **मीको.** पृ. ३३८९ 'लोहितोष्णीषाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

▣ **हिरण्यशकलाधिकरणम्** । वेतसावकन्यायः । अग्निचयने प्रोक्षणविकर्षणयोः सकृदनुष्ठानम् ॥

**अग्निधर्मः प्रतीष्टकं संघातात् पौर्णमासीवत् । ९।१।८।२६॥**

**भाष्यम्**–– अस्त्यग्निः 'य एवं विद्वानग्निं चिनुते' इति । तत्र एवं समाम्नायते 'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति' 'दध्ना मधुमिश्रेणाग्निं प्रोक्षति' 'वेतसशाखया-ऽवकाभिश्चाग्निं विकर्षति' 'मण्डूकेनाग्निं विकर्षति' (इति) । तत्रायमर्थः सांशयिकः प्रतीष्टकं किं विकर्षणं प्रोक्षणं च कर्तव्यं अथ सकृदेव (चितिसमुदाये) कर्तव्यमिति । तत्रैवं तावत् विचार्यते, किं इष्टका-समुदाये अग्निशब्दः उत तद्व्यतिरिक्ते द्रव्यान्तरे इति । यदि समुदाये, ततः तल्लक्षितानामिष्टकानां अगम्यमाने विशेषे सर्वासां प्रोक्षणं विकर्षणं च । यदा च द्रव्यान्तरे, ततः सकृदेवेति । किं प्राप्तम् ? प्रतीष्टकमिति । कुतः ? समुदाये ह्यग्निशब्दो वर्तते । कथमवगम्यते ? द्रव्यान्तरस्याभावात् । द्रव्यान्तरमेव अन्यन्नास्ति, कोऽग्नि-शब्देनाभिधीयेत, कस्मिन्नग्निः निधीयेतेति । कथं पुनः नास्तीति गम्यते ? द्रव्यान्तरवैलक्षण्यात् । तत्र हि द्रव्यान्तरमस्तीति गम्यते, यत्र एकस्मिन्नवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते । कोऽभिप्रायः ? यदि एकोऽवयवो हस्तेन संयुक्तः कृष्यते, न द्रव्यान्तरम्, कः प्रसङ्गो यत्तत्र द्वितीयोऽपि अवयवः कृष्येतेति । अथ द्रव्यान्तरमपि तत्र कृष्यते, तत्र द्रव्यान्तरस्य समवायिनां अवयवानामपि निर्भागात् कर्षणमुपपन्नम् । न च संयुक्तसंयोगस्य द्रव्यान्तरादृते धर्म एषोऽवकल्पते । नहि अबद्धे काष्ठपूलके, काष्ठे एकस्मिन् आकृष्यमाणे काष्ठान्तराणि कृष्यन्ते । यत्र हि परस्परव्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचिदनु-मानेनानुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते । इह तु यैव इष्टका गृहीत्वा कृष्यते, सैव आगच्छति, नेष्टकान्त-राणि, संधिश्च लक्ष्यते । तेन नावयवसंस्यूतिरस्ति इति गम्यते । तस्मात् नास्ति द्रव्यान्तरम् । तत्र 'इष्टकाभिरग्निं चिनुते' इति चयनमात्रमिष्टकाभिः कर्तव्यम् । न चयन-मात्रेण कृतेन किंचित् दृष्टमस्ति, तस्मात् अग्निनिधा-नार्थानामिष्टकानां चयनसमुदायोपलक्षितानां अगम्यमाने विशेषे सर्वासामेव प्रोक्षणं विकर्षणं च कर्तव्यम्, पौर्ण-मासीवत् । यथा 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति आग्नेयादय एव क्रियन्ते, नार्थान्तरं किंचित्, एवमिहापि इति ।

**टुप्**–– प्रतीष्टकं प्रोक्षणादि कर्तव्यम् । कुतः ? व्यतिरिक्तस्यावयविनोऽभावात् । यत्र व्यतिरिक्तोऽवयवी अस्ति तत्र एकावयवाकर्षणेन कृत्स्नोऽवयवी आकृष्यते । इह तु एकेष्टकाकर्षणेऽपि न द्वितीया आकृष्यते । तस्मात् अग्निशब्दः इष्टकासमुदायवचनः ।

**अग्नेर्वा स्याद् द्रव्यैकत्वादितरासां तदर्थत्वात् । २७ ॥**

**भाष्यम्**— वाशब्दात् पक्षो विपरिवर्तते । नैतदस्ति प्रतीष्टकं कर्तव्यमिति । कथं तर्हि ? सकृदेवेति । तत एतत् वर्ण्यते, द्रव्यान्तरमिष्टकाभिः क्रियते, तत्राग्नि-र्निधातव्यः । तत्र चाग्निशब्दो वर्तते इति । कथम् ? परार्थेनेष्टकानां निर्देशात् 'इष्टकाभिरग्निं चिनुते' इति तृतीयया विभक्त्या पारार्थ्यमिष्टकानामवगम्यते । यदि चयनमात्रमत्रोच्येत तत् इष्टकासंस्कारार्थमवगम्येत, तत्र द्वितीयया विभक्त्या संयोगः स्यात्, तृतीयया संयोगो बाध्येत । तस्मात् इष्टकाभिरन्यत् क्रियते । तत्राग्नि-र्निधातव्यः । तदर्था इष्टकाश्चयनं चेति ।



आह, ननु एतदुक्तम्, तस्याभावादयमन्यः पक्षः परिगृह्यते इति । अत्रोच्यते । नाभावः । प्रत्यक्षा तत्रैक-बुद्धिः । सा बह्वीषु इष्टकासु नावकल्पते । न च अवयव-संधिर्दृश्यते पुरीषच्छन्नानाम् । तस्मात् पक्वामसंयोगेऽपि एकबुद्धेरुत्पादात् एकमिष्टकाभ्यो व्यतिरिक्तं द्रव्यं अग्नि-निधानार्थमस्ति । यदि वा इष्टकासंस्यूतिरपि एकबुद्धे-रेवावगम्यते । यत्तु एकाकर्षणे न कृत्स्नाकर्षणमिति, सत्यम्, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्याणि स्थावराणि जङ्गमानि च । तत्र स्थावरेषु विच्छेदो भवति यथा वनस्पतौ पर्णे गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते स्थावरत्वात्, एवमिदमपि । स्थावरं हीदं अग्निद्रव्यम् । तस्मात् सकृदेव प्रोक्षणं विकर्षणं च कर्तव्यमिति ।

**टुप्**— 'इष्टकाभिरग्निं चिनुते' इति शब्दतस्तावत् इष्टकानां (तृतीयान्तानां) पारार्थ्येनावगतत्वात् तदर्थं प्रोक्षणं न भवति, द्वितीयासंयोगात् अग्न्यर्थं प्रोक्षणम् । (अग्निशब्दश्च ज्वलनवचनोऽपि प्रोक्षणादिवाक्येषु तदा-धारभूते स्थले लक्षणया वर्तत इति वेदितव्यम् ।) ननु अग्निशब्देन समुदायोऽभिधीयते इत्युक्तम् । उच्यते । प्रत्यक्षेण इष्टकाव्यतिरिक्तः अवयवी उपलभ्यते । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति शक्यते कल्पयितुम् । अपि चात्मीयानवय-वानपेक्ष्य इष्टकाऽपि अवयविनी भवत्येव । अथोच्येत, इष्टका अपनीय स निदर्श्यतां यदि व्यतिरिक्तोऽस्ति, तस्मादिष्टका एव परमार्थतः सन्तीति । (परिहरति–) एवं वर्ण्यमाने भवता आत्मीयावयवव्यतिरिक्ता इष्टका निदर्शयितव्या, न च शक्यते (भवताऽपि निदर्श-यितुम्) । अपि च इष्टकानामवयवान्तरम्, तेषामपि (अवयवान्तराणां) अन्ये, तेन परमाणुषु प्रोक्षणमव-तिष्ठते । न च शक्याः (ते) प्रोक्षितुम् । तस्मात् पूर्व-पक्षिणः प्रोक्षणमेवानर्थकम् । अथ अवयवव्यतिरिक्ता इष्टका अस्ति, ततः अग्निरपि इष्यताम् । यदुक्तं एके-ष्टकाकर्षणेऽपि न कृत्स्नः कृष्यते इति । तदुच्यते । यत्रयत्र द्रव्यान्तरबुद्धिः तत्रतत्र द्रव्यान्तरम् । न यत्र एकस्मिन्नवयवे कृष्यमाणे कृत्स्नः (अवयवी) कृष्यते । (बुद्धिरेवात्र प्रमाणम्, नापकर्षणमित्यर्थः) । यत्र कृत्स्नः कृष्यते तत्रापि तथा दृष्टम् । यत्र तु एकस्मिन् कृष्यमाणे (स एव) एकः कृष्यते तत्रापि तथा दृष्टम् (न चैतावता अवयव्यपलापः शक्यते कर्तुम्) । न च एकस्मिन् कृष्यमाणे यस्मात् कृत्स्नः कृष्यते तस्मात् द्रव्यान्तरम् । न च द्वितीये कृष्यमाणे द्रव्यान्तरं द्रव्यान्तरस्य कारणम् । (किंतु–) यत्र द्रव्यान्तरबुद्धिर्न विपर्येति (तत्र अवयवैः अवयवी आरभ्यते इति) ।

**चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् । २८ ॥**

**भाष्यम्**— अथ यदुक्तं 'य एवं विद्वान् पौर्ण-मासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति, नात्र आग्नेयादिभ्यः किंचिदर्थान्तरम्, तथा इहापीति । उच्यते । युक्तं पौर्णमास्यां तथाभावः । चोदनासमुदायो हि तत्र कर्म । न च कर्मसाध्यं विद्यते । इह तु द्रव्या-न्तरमस्तीत्युक्तम् । तस्मात् वैषम्यं पौर्णमास्या इति ।

**शा**–– अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षति' इति । किं प्रोक्षणं सकृदेव स्यात् उत प्रतीष्टकं भेदे-नेति । यदि इष्टकाव्यतिरिक्तः अवयवी अग्निशब्दाभि-धेयः, ततः सकृत् । अथ इष्टका एव संहता अग्निधार-णार्थेन स्थापिताः अग्निशब्देनाभिधीयन्ते, ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यम् (यद्यपि वनादिवत् इष्टका-संघ एव अग्निशब्दवाच्य इति पूर्वपक्षेऽपि वक्तुं युक्तम्, न तु संहता इष्टकाः इति, तथापि संघस्य अमूर्तस्य प्रोक्षणानर्हत्वात् संहतानामिष्टकानां अग्निशब्द-वाच्यत्वमुक्तम्) । यत्र एकावयवाकर्षणे अवयवान्तर-माकृष्यते संधिश्च न दृश्यते तत्रैव देवदत्त–घटादौ अवयवी अभ्युपगम्यते । न चेह एकेष्टकाकर्षणे अन्यासामाकर्षणम्, संधिश्चात्र पुरीषच्छन्नानामपि इष्टकानामनुमानेन दृश्यते । तस्मात् नास्त्यव-यवी 'पक्वामसंयोगे च न द्रव्यान्तरारम्भः' इति काश्यपीयाः । तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् ।

नैवम् । एकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी । सा चेहापि विद्यते । वृक्षादिषु च अवयविसद्भावेऽपि आकर्षणं न दृष्टं इति अतन्त्रं तत् अवयविसद्भावेऽपि । संधिदर्शनं च पटादौ अनैकान्तिकम् । तस्मात् प्रत्यक्षबलात् पक्वामसंयोगेऽपि अस्ति अग्निरवयवी इति तस्येदं प्रोक्षणं सकृदेव कर्तव्यम् ।

पूर्वाधिकरणे ग्रहयज्यभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता, समुदायप्रसङ्गात् प्रोक्षणं विचार्यते इति प्रासङ्गिकी ( अध्याये अनन्तरं च ) संगतिः ।

**सोम**-- ननु यथा व्रीहिषु न प्रत्येकं प्रोक्षणम्, एवमिष्टकानामग्निशब्दवाच्यत्वेऽपि न प्रत्येकं प्रोक्षणम् । तस्मादिदमनुपपन्नमिति चेत् । **मैवम्** । शास्त्रार्थो हि प्रोक्षणान्वयी । शास्त्रार्थता च व्रीहीणां हविःप्रकृतितया एकसाधनतावच्छिन्नानां चतुर्मुष्टिपरिमितानामेव, न प्रत्येकम्, तेन तत्र न प्रत्येकं प्रोक्षणम्, इष्टकानां तु ' वज्रिणीरुपदधाति ' इत्यादिषु भेदेनैव शास्त्रार्थत्वात् प्रत्युद्देश्यं भेदेनैव प्रोक्षणम्, ग्रहेषु संमार्ग इव । तथा च ' व्रीहिभिर्यजेत ' इति शास्त्रात् बहूनां साधनत्वम्, इह तु साधनानां बहुत्वं इति वैषम्यम् । किंच ' उक्ष सेचने ' इति यद्यपि अविशेषेण शाब्दिकाः स्मरन्ति तथापि एकदेशस्य जलसंयोगे एव लोके प्रयोगः । न च प्रत्येकं व्रीहिषु एकदेशस्य जलसंयोगः शक्यानुष्ठानः इति विधेयानुरोधात् सहितव्रीह्यन्वयः । यथा एकादशत्वस्य सहितप्रयाजान्वयः । किंच प्रत्येकं व्रीहिषु प्रोक्षणे जलसंबन्धाधिक्यात् अवहननायोग्यता स्यात् इति प्रधानकार्यविरोधः, नैवमिष्टकासु, प्रत्युत इष्टकासु संयोगदार्ढ्योपादकत्वात् अनुकूलमेव प्रोक्षणं इति प्रतिप्रधानं प्रोक्षणस्यावृत्तिरेव युक्ता इति ( पूर्वपक्षाशयः ) । प्रथमसूत्रार्थस्तु अग्निधर्मः प्रोक्षणादिः प्रतीष्टकं स्यात् संघातस्यैव अग्निशब्दवाच्यत्वात् ' चतुर्होत्रा पौर्णमासीमभिमृशेत् ' इतिवत् इति ।

**सूत्रार्थस्तु**--अग्निधर्मः प्रोक्षणादिः प्रतीष्टकं स्यात् संघातस्यैव अग्निशब्दवाच्यत्वात् चतुर्होत्रा पौर्णमासीमभिमृशेदितिवत् इति ।

वि-- ' विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा ।,
आद्योऽवयव्यसत्त्वेन, मैवं भूदेशसत्त्वतः ॥

**भाट्ट**-- अग्नौ श्रुते ' हिरण्यशकलसहस्रेणाग्निं प्रोक्षति ' इत्यादौ किं अग्निशब्देन संस्थानविशेषसाधनीभूता इष्टका एवोच्यन्ते, तदर्थं च प्रोक्षणं उत इष्टकारब्धं अवयव्यन्तरमेव अग्निशब्देनोच्यते तदर्थं च प्रोक्षणं इति चिन्त्यते । तत्र, यत्रैकावयवाकर्षणेन इतरावयवाकर्षणम्, यत्र वा न संधिदर्शनम्, तत्रैव शरीरघटादौ अवयव्यन्तराभ्युपगमः । न चेह एकेष्टकाकर्षणेन इतरेष्टकाकर्षणम्, संधिश्च पुरीषच्छन्नानामपि इष्टकानां अनुमानेन दृश्यते एव । अतो व्यापकाभावात् ' पक्वामसंयोगेन द्रव्यान्तरम् ' इति काश्यपवचनाच्च अवयव्यन्तरे प्रमाणाभावात् इष्टकासंस्कारार्थमेव प्रोक्षणम् । अतश्च इष्टकात्वसमानाधिकरणमेव अपूर्वसाधनत्वमग्निपदेन लक्ष्यते इति तस्य प्रत्येकवृत्तित्वात् प्रतीष्टकं प्रोक्षणं इत्यपि सिद्धं भवति । न चैवं व्रीहिपात्रप्रोक्षणादावपि प्रत्येकं तदापत्तिः । न्यायतस्तथापत्तावपि 'अग्नये वो जुष्टं प्रोक्षामि, शुन्धध्वम् ' इति मन्त्रे बहुवचनोपादानबलेन तन्त्रत्वप्रतीतेः । प्रकृते तु तादृशगमकाभावात् प्रत्येकमेव । इति प्राप्ते, एकावयवाकर्षणेन इतरावयवाकर्षणस्य नावयविव्यापकत्वम्, नापि संध्यदर्शनस्य, वृक्षपटादौ व्यभिचारात् । अतो यत्र एकाकारप्रतीतिरबाधिता तत्रैव अवयविस्वीकारः । इतरथा इष्टकाया अपि स्वीकारे प्रमाणाभावः । काश्यपीयं तु वचनं मूलाभावादनादरणीयम् । वनं इत्यादौ तु बाधिता एकाकारप्रतीतिः । अतश्च अग्निपदेन अवयविन एवोक्तत्वात् तदर्थमेव प्रोक्षणम् । तस्य च एकत्वात् सकृदेव प्रोक्षणम् । न चैवं अवयविस्वरूपे आनर्थक्ये अपूर्वसाधनीभूताग्न्याधारत्वलक्षणायां अग्नाविव उत्तरवेद्यामपि हिरण्यशकलप्रोक्षणादिधर्मापत्तिः । इष्टकादिसंपादितलौकिकस्थलविशेषे अग्न्यादिपदप्रयोगाभावेन अदृष्टविशेषावच्छिन्नस्थलविशेषस्यैव अग्न्युत्तरवेद्यादिशब्दाभिधेयत्वात् । तत्र च आनर्थक्याभावेन अपूर्वसाधनत्वलक्षणाया एवाभावात् । अतश्च नाग्न्युत्तरवेदिधर्माणां



सांकर्यम् । न चैवं उत्तरवेदिधर्माणां अग्नौ अतिदेशकथनं संकर्षे विरुध्येत इति वाच्यम् । दैक्षवत् अग्नौ बहुतरवैशेषिकधर्माम्नानेऽपि अपेक्षितहविर्धानपूर्वदेशवर्तित्वादिकतिपयधर्माणां स्थानापत्त्यतिदेशेन उत्तरवेदितः प्राप्तेरविरोधात् । उत्तरवेद्यां तु यावदपेक्षितधर्मसाकल्यात् न वैपरीत्याशङ्का । अतश्च प्रकृतौ तत्तत्प्रोक्षणादिधर्माणां अग्न्युत्तरवेदिमात्रार्थत्वेऽपि यत्र विकृतौ तदुभयकार्यापन्नं उक्तपरिमाणं स्वतःसिद्धभूमिकं तद्बहिःखातभूमिकं स्थण्डिलं अग्न्याधारकत्वेन समाम्नातं तत्र प्रोक्षणादीनामूहसिद्धिः । संस्थानविशेषोपधायकक्रियासाधनीभूततदवयवार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावात् न प्रोक्षणादि इति ऊहविचारोपयोगित्वं चास्याधिकरणस्य । यदि चैवंविधा विकृतिः न संभाव्यते तदा क्त्वाचिन्तया उदाहरणान्तरे वा ऊहोपयोगः अनुसंधेयः । प्रासङ्गिकं वा इदमधिकरणम् ।

**मण्डन**-- ' द्रव्यैकभावात् सकृदग्निधर्माः । '

**शंकर**-- ' नाग्निधर्मः प्रतीष्टकम् । ' ९।१।१४.

* हिरण्यशकलाधिकरणम् । ९।१।८।२६-२८ ॥ न चैवं तण्डुलव्यापारककारणत्वस्य कारणतावच्छेदकीभूतव्रीहित्वसमव्याप्तस्य प्रतिव्रीहि भिन्नत्वात् हिरण्यशकलाधिकरणपूर्वपक्षन्यायेन प्रतिव्रीहि प्रोक्षणापत्तिरिति वाच्यम् । न्यायतस्तथाप्राप्तावपि ' अग्नये वो जुष्टं प्रोक्षामि ' इतितन्मन्त्रे बहुवचनश्रवणेन सकृत्प्रोक्षणप्रतीतेः । अत एव तद्वाक्यस्थव्रीहिपदे कारणताकूटलक्षणा । कौ. ३।१।४।१० पृ. १५२.

* हिरण्यशकलसहस्रेण अग्निचयने अग्नेः प्रोक्षणम्, तच्च सकृदेव न प्रतीष्टकम् । वि. ९।१।८.

## हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । १०।३।२।१३ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति श्रूयते । तत्र हिरण्यगर्भः हिरण्यगर्भमन्त्ररूपगुणविधिः पूर्वस्य प्रथमस्य आघारस्य गुणविधिः स्यात् । मन्त्रलिङ्गात् । प्रजापतिवचनोऽयं मन्त्रः । हिरण्यगर्भो हि प्रजापतिः । प्राजापत्यश्च पूर्व आघारः । उत्तरस्तु ऐन्द्रः । तस्मात् मन्त्रलिङ्गात् पूर्वस्याघारस्य गुणः हिरण्यगर्भमन्त्रः इति **पूर्वः पक्षः** ।

### प्रकृत्यनुपरोधाच्च । १४ ॥

प्रकृत्यनुपरोधात् प्रकृतेः प्रकृतिवत् इति चोदकस्य अनुपरोधात् विरोधाभावाच्च ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः वायव्ये पशौ पूर्वस्याघारस्याङ्गं इति पूर्वपक्षसिद्धिः । इतरथा उत्तराघारस्य मन्त्रः अपनीयेत न चापनीतः ।

### उत्तरस्य वा मन्त्रार्थित्वात् । १५ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः आघारे उक्तः । तत्र पूर्वस्य आघारस्य गुणोऽयं मन्त्रः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पूर्वस्याघारस्य गुणः किंतु उत्तरस्याघारस्य गुणोऽयं मन्त्रः स्यात् । मन्त्रार्थित्वात् । पूर्वस्याघारस्य प्रकृतावपि नास्त्येव मन्त्रः । इति वायव्ये पशावपि पूर्वः आघारो न मन्त्रमर्थयते । उत्तरस्य तु अस्ति मन्त्रस्याकाङ्क्षा । तत्र प्राकृतं मन्त्रं बाधित्वा अयं वैकृतो मन्त्रो विहितः । तस्मात् हिरण्यगर्भमन्त्रः उत्तरस्याघारस्य गुणो न पूर्वस्येति सिद्धान्तः ।

### विध्यतिदेशात् तच्छ्रुतौ विकारः स्याद् गुणानामुपदेश्यत्वात् । १६ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति श्रुतम् । तत्र तच्छ्रुतौ आघारश्रुतौ विध्यतिदेशात् गुणविधेरुपदेशात् स मन्त्रः उत्तराघारमन्त्रस्य विकारः बाधकः स्यात् । गुणानां उपदेश्यत्वात् । उद्देश्यो हि मन्त्रविशेषः अत्र उत्तरस्मिन्नाघारे । तस्मादुत्तरस्य आघारस्य गुणविधिरयम् । इति सिद्धान्तः ।

### पूर्वस्मिंश्चामन्त्रत्वदर्शनात् । १७ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति विहितो मन्त्रः उत्तरस्याघारस्य गुणः इति सिद्धान्ते हेत्वन्तरमाह । पूर्वस्मिन् आघारे अमन्त्रत्वस्य दर्शनात् ' न स्वाहेति करोति, मन्त्रं च नाह ' इति स्पष्टमेव अमन्त्रत्वं दर्शितम् । तस्मात् हिरण्य-

गर्भमन्त्रः न पूर्वस्याघारस्याङ्गं किंतु उत्तरस्येति सिद्धान्तः । के.

* 'हिरण्यगर्भः समवर्तताग्रे०' अयं मन्त्रः प्रजापतिपरः सन् इन्द्रपरः साधितो भाष्यकारैः सिद्धान्ते । भा. १०।३।२।१५.

* **हिरण्यगर्भमन्त्रेण** वायव्यपशौ आघारे विहितेन प्राकृताङ्गान्तराणां न बाधः । भा. १०।३।१।११–१२.

**हिरण्यगर्भमन्त्रन्यायः** । वायव्यपशौ हिरण्यगर्भमन्त्रस्य उत्तराघारे निवेशः ॥

**हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । १०।३।२।१३ ॥**

**भाष्यम्**— अस्ति वायव्यः पशुः 'वायव्यं श्वेतमालभेत भूतिकामः' इति । तत्र श्रूयते 'हिरयगर्भः समवर्तताग्र इत्याघारमाघारयति' इति । तत्रायमर्थः समधिगतः, प्राप्ते एवाऽऽघारे गुणविधिरयमिति । इदं तु चिन्त्यते किं पूर्वस्मिन्नाघारे गुणविधिः, उतोत्तरस्मिन्निति । किं प्राप्तम्? हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । पूर्वस्य आघारस्य गुणविधिरयम् । कुतः? मन्त्रलिङ्गात् । एवं मन्त्रार्थो भवति । 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति' इत्यत्र मन्त्रे इदमस्ति वचनम्, 'भूतस्य जातः पतिरेक आसीत्' इति । एक इति च प्रजापतेरभिधानमिति । स हि प्रजोत्पत्तिसंभवात् प्राक् प्रजोत्पत्तेः एकसंख्यायुक्त इति गम्यते । स एष मन्त्रः प्रजापतिमभिवदितुं शक्नोति । प्राजापत्यश्च पूर्वः आघारः । तत्रायं समर्थः कार्यं निर्वर्तयितुम्, नोत्तरस्मिन् । अतः पूर्वस्य गुणविधिरिति ।

**टुप्**-- मन्त्रलिङ्गेन पूर्वः पक्षः ।

**प्रकृत्यनुपरोधाच्च । १४ ॥**

**भाष्यम्**-- 'प्रकृतिवत्' इति चोदकस्य अनुपरोधो भविष्यति । उत्तरस्याघारस्य मन्त्रानपनयात् । इतरथा अपनीयेत 'ऊर्ध्वोऽध्वरः' इति मन्त्रः । तस्मादपि पूर्वस्य गुणविधिरिति ।

**टुप्**-- प्रकृतिवत् इति उपचयसूत्रमिदम् । ('प्रकृत्यनुपरोधाच्च' इत्येतदर्थंत उपात्तम् । तच्च अन्वाचयहेतुप्रतिपादकमेव ) ।

**उत्तरस्य वा मन्त्रार्थित्वात् । १५ ॥**

**भाष्यम्**-- वाशब्दः पक्षं व्यावर्तयति, न पूर्वस्य गुणविधिरिति । किं तर्हि? उत्तरस्य गुणो विधीयते । तस्य मन्त्रेणार्थः, न पूर्वस्य । कथम्? एवमाम्नायते 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति' इति । कोऽर्थः? आघारे एतामृचमुच्चारयतीति । सोच्चारिता विशिष्टं श्रौतं विज्ञानमङ्गभूतं करोति । 'कस्मै देवाय हविषा विधेम' इति एकस्मै देवायेत्यर्थः । एकारलोपेन एतच्छब्दविज्ञानात् एतदर्थप्रत्ययो भवति, एकस्मै देवाय हविर्दातव्यमिति । न च पूर्वस्मिन्नाघारे श्रौतं विज्ञानमङ्गभूतमस्ति । तत्र कल्पयितव्यं स्यात् । श्रौतं विज्ञानमङ्गभूतं भवतीति । तच्च हिरण्यगर्भः समवर्तताग्रे इत्येतेन कर्तव्यमिति कल्पनायां न प्रमाणमस्ति । इदं हि वाक्यं मन्त्रकार्यविशेषस्य विधायकम्, न मन्त्रकार्यसामान्यस्य नियामकम् । सामान्यं मन्त्रकार्यं पाक्षिकम् । तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत् । आनर्थक्यम्, असत्पक्षपरिग्रहश्च, उपदेशस्य चार्थवत्त्वम्, जोहवाघारविषयत्वात् । तस्मादुत्तरस्य गुणविधिरिति ।

यदुक्तम्, प्रजापतिवचनोऽयं मन्त्रः इन्द्रमभिवदितुमशक्तो भविष्यतीति । नैतदेवम् । यथा हि प्रजापतिरेक इति संस्तुतः, प्रजापतिशब्दत्वात् । एकोऽसौ प्राक् प्रजोत्पत्तेरिति प्रजापतिरेक आसीदित्युच्यते । एवमिन्द्रोऽपि, ऐश्वर्यवचनत्वादिन्द्रशब्दस्य । सर्वमुत्पादयितुमयमलमिति संस्तूयते । 'क ईं स्तवत्कः पृणात् को यजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥' इति । तथा, 'क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः । यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥' इति । क ईं स्तवत्कः पृणात्को यजाते इति, ऐन्द्रे सूक्ते वचनादैन्द्री ऋक् । क एनं शक्नोति स्तोतुम्, को वाऽस्मै ददाति, को वा यजतीति सर्वत्रानवक्लृप्तिः । अयमेव सर्वमिदं करोति । यथा, गच्छन् कश्चित्पूर्वपादमपरं करोति, अपरं च पूर्वम् । एवमयमिदं सर्वं करोतीति । अयं



चेत्सर्वं करोतीति, प्राक्करणादेकः । तथा, क उ नु ते महिमनः समस्येति, के अस्य सकलस्य महिम्नः अस्मत्पूर्वे अपि ऋषयोऽन्तं प्राप्तुं शक्नुवन्ति? यन्मातापितरावपि स्वस्माच्छरीराज्जनयसीति, मातापितृभ्यामपि पूर्वः, किमुतान्यस्मात् जनादिति सिद्धमेकत्वमस्येति । सोऽपि प्राक् सर्वोत्पत्तेरेक एव । अत इन्द्राभिधायिन्येषा ऋक् । तस्मादविरोधः ।

**टुप्**-- आघारश्रुतिस्तावत् उभयोः पक्षयोस्तुल्या ( नान्यतरस्य प्रमाणं भवति ), वाक्यं च ( तुल्यम् )। लिङ्गं च ( भाष्ये ) वक्ष्यमाणन्यायेन तुल्यमेव । ततः किम्? ( इदं ततो भवति, ) प्रकृतौ पदार्थस्मरणे सर्वत्र उपायचतुष्टयं प्रसक्तं ब्राह्मणपद–मन्त्र–सूत्र–उपद्रष्टारः । तद उत्तरस्मिन् आघारे मन्त्राम्नानात् ( मन्त्राम्नानसामर्थ्यात् ) इतरेषां निवृत्तिः । पूर्वस्मिंस्तु ( आघारे ) मन्त्रो नास्ति ( अतः ) तत्र त एव ( ब्राह्मणादयोऽभ्युपायाः ) प्राप्नुवन्ति । विकृतावपि तथैव ( प्राप्तिः ) पूर्वः अमन्त्रकः, उत्तरः समन्त्रक इति । एवं ( सति ) उत्तरे ( समन्त्रके मन्त्र–)विशेषमात्रं विधायिष्यते । इतरथा पूर्वस्मिन् ( आघारे मन्त्र–)सामान्यं ( मन्त्र– ) विशेषश्च विधातव्यः । ( कथमित्याह– ) भेदस्मरणं ( विशेषस्मरणं ) विधीयते । तत्सामान्यं च ( विधातव्यम्, तच्च मन्त्रविशेषजनितं इति ) मन्त्रकार्यं च ( सामान्यरूपं श्रौतं विज्ञानं पूर्वाघारे ) पाक्षिकम् । ( दैवात् देवतास्मरणविस्मरणाभ्यां पाक्षिकत्वम् । अतस्तदपि विधातव्यम्, तत्र मन्त्रविशेषश्च ) तत्र ( मन्त्रविशेष– )नियम एव युक्तः, न विधिः । 'तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत्' ( इति भाष्यं निगदव्याख्यातम् । आनर्थक्यं इति भाष्यस्यार्थमाह– ) यदा मन्त्रप्राप्तिः, तदा विशेषविधानमित्यानर्थक्यं मन्त्रस्य । कदाचिद्भावः ( मन्त्रस्य ) कदाचिन्न ( तेन पक्षे आनर्थक्यम् । 'असत्पक्षपरिग्रहश्च' इति भाष्यस्यार्थमाह– ) मयाऽपि सामान्येन प्राप्ते ( मन्त्रकार्ये विशेषो ) विधीयते । तत्र नियमेन मन्त्रस्य प्रयोगः ( भविष्यति ) इतरथा पाक्षिकः स्यात् । ('उपदेशस्य चार्थवत्त्वम्' इति भाष्यस्यार्थमाह– ) यदि नित्यं समाम्नानं ( मन्त्रकार्यस्य ) न स्यात्, ततः अनुपपत्त्या पाक्षिकोऽपि मन्त्रोपदेशः कल्प्येत । (अस्ति चोत्तराघारे नित्यसमाम्नानम्, तत्र मन्त्रविशेषोपदेशस्य नित्यवदर्थवत्ता लभ्यते ) तस्मादुत्तरत्र मन्त्रः । उत्तरसूत्रे कार्यापत्तिं प्रतिपादयति 'विधेस्तु तत्र' (१०।३।३।२०) इति ( तत्र हि क्लृप्तकार्यापत्तौ संभवन्त्याम्, न कार्यान्तरं कल्प्यं इति । तच्च पूर्वाघारे न विद्यते, तस्मादुत्तराघारे इति )।

**विध्यतिदेशात् तच्छ्रुतौ विकारः स्याद् गुणानामुपदेश्यत्वात् । १६ ॥**

**भाष्यम्**-- गुणविधिरयमुपदिश्यते आघारश्रुतौ । स तन्मन्त्रस्य विकारः स्यात् । उपदेश्यो हि मन्त्रविशेषोऽत्र उत्तरस्मिन्नाघारे । अन्यच्छ्रौतं मन्त्रविशेषविज्ञानं 'ऊर्ध्वोऽध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् बृहद्भावी हि मघोघृतस्य स्वाहा' इति । तत् अङ्गभूतमुपकारकस्य विज्ञानस्य साधनमितीन्द्राय हविर्दातव्यम् । इह तु हिरण्यगर्भ इति विज्ञानं श्रौतम्, श्रौतस्य प्राकृतस्य विज्ञानस्य कार्यं विधातुमर्हति, सामर्थ्यात् । 'इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेन' इति भोजने तैलमुपकारकं श्रूयमाणं यस्य प्राकृतस्य कार्यमभिनिर्वर्तयितुं शक्नोति, तस्य कार्ये विनियुज्यते घृतस्य । सामान्यं ह्यस्य स्नेहनसामर्थ्यं घृतेनेति । इहापि मन्त्र उच्चार्यमाणः प्राकृते श्रौतविज्ञाने विशेषमुत्पादयति । तच्चोत्तरस्मिन्नङ्गभूतं तदर्थविज्ञानस्य साधकम्, न पूर्वस्मिन् । तस्मादुत्तरस्य गुणविधिरिति ।

**पूर्वस्मिंश्चामन्त्रत्वदर्शनात् । १७ ॥**

**भाष्यम्**-- पूर्वस्मिंश्चाऽऽघारे अमन्त्रत्वमेव दर्शयति, 'न स्वाहेति करोति, मन्त्रं च नाऽऽह' इति । तस्मादप्युत्तरस्य गुणविधिरिति ।

**शा**-- वायव्ये पशौ श्रूयते 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति' इति । तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितम् । प्रकृतौ च द्वौ आघारौ, पूर्वः प्राजापत्यः अमन्त्रकः, उत्तरस्तु ऐन्द्रः समन्त्रकः । तदिह

किं पूर्वस्य आघारस्य मन्त्रविधिः उत उत्तरस्य इति संशये, मन्त्रस्य प्रजापतिलिङ्गत्वात् ‘ प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय ’ इति च वाक्यशेषात् पूर्वस्य। इति प्राप्ते, ब्रूमः। पूर्वस्मिन् मन्त्राभावात् न मन्त्रकार्यमस्ति। तत्र मन्त्रविधौ मन्त्रकार्यं अप्राकृतं कल्प्यं स्यात्। उत्तरत्र तु प्रकृतावेव मन्त्रविधानात् अस्ति मन्त्रनियमजन्यमदृष्टं तत्र मन्त्रविधानं सुकरं मन्त्रलिङ्गं तु इन्द्रे अपि अविशिष्टं इति दर्शितं भाष्ये। वाक्यशेषोऽपि प्रजानां पतिः प्रजापतिरित्येवं इन्द्र एवोपपन्नः। ‘ यो हि खलु वाव प्रजापतिः स एवेन्द्रः ’ इति च एकत्वात् उपपत्तिर्वाक्यशेषस्य, पूर्वाघारस्य च आहत्यैव अमन्त्रत्वं दृश्यते– ‘ न स्वाहेति करोति मन्त्रं च नाह ’ इति, तस्मादुत्तरस्य मन्त्रः।

**सोम**–– पूर्वसिद्धं प्राकृतानुवादेन गुणमात्रविधिमुपजीव्य प्रवृत्तेः **संगतिः**। **सूत्रार्थस्तु**– ‘ हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ’ इत्यत्र पूर्वस्मिन्नेव आघारे मन्त्रविधिः स्यात् लिङ्गबलादिति।

**वि**–– ‘ हिरण्यगर्भं आघारे पूर्वस्मिन्नुत्तरेऽथवा।, लिङ्गादाद्ये, समं लिङ्गं क्लृप्तकार्यत्वतोऽन्तिमे ॥ ’

**भाट्ट**–– वायव्ये पशौ ‘ हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ’ इति श्रुतम्। प्रकृतितश्च द्वावाघारौ, पूर्वोऽमन्त्रकः प्राजापत्यः उत्तर ऐन्द्रो मन्त्रवान्। तदिह वैशेषिको मन्त्रो न तावदाघारद्वयेऽपि विधीयते, वक्ष्यमाणविधया तदसंभवात्। एकत्रापि पूर्वाघारे एव विधीयते, तस्य प्रजापतिदेवताकत्वेन मन्त्रस्य सामर्थ्यात्। हिरण्यगर्भादिशब्दा हि प्रजापतौ रूढाः योगरूढा वा। ‘ स्रष्टा प्रजापतिर्वेधाः ’ ‘ हिरण्यगर्भो लोकेशः ’ इत्याद्यनुशासनात्, ‘ कस्मै देवाय हविषा विधेम ’ इति मन्त्रशेषे श्रवणात्, कशब्दस्य प्रजापतौ श्रुतत्वाच्च। अत एव ‘ प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय ’ इति वाक्यशेषोऽपि संगच्छते। हिरण्यगर्भादिशब्दानामिन्द्रपरत्वे तदनुपपत्तेः। **न च** पूर्वाघारे प्रकृतौ मन्त्रस्याभावेन मन्त्रनियमादृष्टस्याभावात् तत्र वैशेषिकमन्त्रविधाने तन्नियमादृष्टकल्पनाऽऽपत्तिः, उत्तराघारे तु तस्य क्लृप्तत्वात् तत्र मन्त्रविधौ लाघवमिति वाच्यम्। लाघवस्य प्रमाणानुग्राहकत्वेन तद्विरोधे लिङ्गान्यथानयनस्यानुचितत्वात्। उत्तराघारे हि हिरण्यगर्भस्यैव देवतात्वकल्पनायां तवापि गौरवाच्च। किञ्च पूर्वाघारेऽपि सर्वत्र मन्त्राभावे ब्राह्मणस्यैव स्मारकतया नियमस्य पञ्चमे ( १।९ ) उक्तत्वात् ब्राह्मणनियमादृष्टसत्त्वेन तज्जनकत्वेनैव एतन्मन्त्रविधानोपपत्तेर्लाघवाविशेषः। न च तददृष्टं प्रति मन्त्रव्यभिचारः, तत्तत्क्रत्वपूर्वसाधनीभूतादृष्टं प्रति तस्यतस्य कारणत्वेनाव्यभिचारात्। इतरथा भवन्मतेऽपि तस्यानिवारणाच्च। **इति प्राप्ते,** यत्र मन्त्रसामान्यं क्लृप्तम्, तत्र मन्त्रविशेषविधाने लाघवादुत्तराघारे एव निवेशः। **वस्तुतस्तु** प्रकृतौ पूर्वाघारे ‘ न स्वाहेति करोति मन्त्रं च नाह ’ इति वचनमेव मन्त्रानाम्नानादेव मन्त्राभावप्रसक्तौ नित्यानुवादरूपमपि स्ववैयर्थ्यपरिहारार्थं हिरण्यमन्त्रस्य तत्रानिवेशतात्पर्यग्राहकम्। अत उत्तराघारे प्राकृतमन्त्रस्य बाधः, न तु पूर्वाघारे प्राकृतब्राह्मणस्य। अतश्चायं नित्यानुवादः पूर्वाघारे हिरण्यगर्भमन्त्रस्य परिसंख्याफलकः सन् उत्तराघारे एव तस्य विधिं गमयति। सोऽपि च मान्त्रवर्णिकहिरण्यगर्भदेवताकल्पनयेति तद्बलेनोत्तराघारे प्राकृतेन्द्रदेवताबाधोऽपि नानुपपन्नः। **अस्तु वा**– ‘ यो हि खलु वाव प्रजापतिः स उ वावेन्द्रः ’ इति वाक्याशेषानुसारात् हिरण्यगर्भादिपदे रूढिं परित्यज्य योगमात्रेणेन्द्रपरता ‘ कस्मै ’ इत्यत्रापि एकाराध्याहारेण एकस्मै अनन्यसाधारणायेत्यर्थाङ्गीकारः। इतरथा कशब्दस्य प्रजापतिपरत्वे सर्वनामत्वानुपपत्तेः। सर्वथा उत्तराघारे मन्त्रः।

**मण्डन**–– ‘ हिरण्यगर्भः प्रथमे न मन्त्रः। ’

**शंकर**–– ‘ पराघारे मन्त्रविधिः। ’

* **हिरण्यगर्भमन्त्रन्यायः** (१०।३।२।१३–१७)। तत्रायं सिद्धान्तन्यायः उक्तः ‘ मन्त्रविधौ मन्त्रजन्यं नियमादृष्टमपेक्षणीयम्, अन्यथा ब्राह्मणकल्पसूत्रोपद्रष्टृवचनादिभिरपि अनुष्ठेयार्थस्मरणसंभवेन मन्त्रनियमवैयर्थ्यात्। तत्तु नियमादृष्टं प्रकृतौ पूर्वाघारे न क्लृप्तं तत्र तस्यामन्त्रकत्वात्। इति पूर्वाघारे मन्त्रविधिपक्षे अत्रैव



तत् कल्पनीयम्, उत्तराघारे तु तत् क्लृप्तम्, तस्य प्रकृतावपि समन्त्रकत्वात्। अतः क्लृप्ते नियमादृष्टे मन्त्रविशेषमात्रविधानं लघु, इत्युत्तराघारे एव मन्त्रविधियुक्तः ’ इति। उक्तं च **टुप्टीकायां** ‘ मन्त्रनियमादवश्यमदृष्टं कल्पनीयं पूर्वाघारे, तत्तु क्लृप्तमुत्तराघारे, तस्मिन् सति कल्पयितुं न शक्यते ’ इति। **रसायनम्.** पृ. १०३. * कण्वरथंतरस्य बृहद्रथंतरस्थानापन्नत्वेन तद्गतस्तोभाश्रितगीत्यंशजन्यादृष्टार्थत्वेनैव **हिरण्यगर्भमन्त्रन्यायेन** ( १०।३।२ ) कल्पनात् तत्रापि धर्मप्राप्त्युपपत्तिः। **भाट्ट.** ९।२।१४ पूर्वपक्षप्रघट्टे सिद्धान्ती, * कण्वरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव ऋगन्तरजन्यसप्तदशसंख्याकगुणाभिधानव्यक्तिविधानात् तत्तत्संस्कारसमूहप्रयुक्तधर्मप्राप्त्युपपत्तिः। ९।२।१४ सिद्धान्तः, * सामद्वयजन्यनियमादृष्टभेदात् तन्नियमादृष्टसाधनत्वस्यैव च तद्धर्मविधौ उद्देश्यतावच्छेदकत्वात् कण्वरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् उच्चैस्त्वादिरूपधर्मसांकर्यानापत्तिः। ९।२।१४ पूर्वपक्षप्रघट्टे सिद्धान्ती.

* **हीनस्तोमकेषु** यावदर्थं प्राकृतं साम निवर्तयितव्यम्। **भा.** १०।४।१०।२०.

* ‘ हीष् ’ इति निधनं सौभरे काम्यं वृष्टिकामस्य विहितम्। वि. २।२।१३. * हीष्, ऊर्क्, ऊ इति निधनविशेषाणां सौभरे साम्नि एव फलभेदेन व्यवस्था न तु तेभ्यः सौभरात् पृथक् फलम्। सौभराधिकरणम्। २।२।१३।२८–२९.

* **हीषादिन्यायः** ( २।२।१३ )। हीषादिन्यायेन सर्वकामवाक्यप्राप्त–पशुप्रयोजकप्रणयनजनकत्वसंबन्धेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधीयते न तु साक्षात्। **भाट्ट.** ४।१।२ वर्णकं ३ ( पूर्वपक्षे ).

* **हुतहविर्दाहः** शिष्टाचारकल्प्यविधिप्राप्तः –– भूतोपयोगद्रव्यसंस्कारार्थं अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म। बाल. पृ. ८३.

* **‘हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः अथ वक्षसः’** अत्र अवदानमेव हृदयादिमात्रहविष्ट्वसिद्ध्यर्थं विधीयते। ततश्च क्रमबोधिका श्रुतिरपि अनुवाद एव, न तु क्रमे प्रमाणम्। **भाट्ट.** ५।१।१. * ‘ हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः अथ वक्षसः ’ अत्र क्रमः पाठक्रमः, न श्रौतः। अथशब्दः श्रुतिरपीयं सापेक्षत्वाद्दुर्बला। **टुप्.** ५।१।१।१ पृ. १२८९, * ‘हृदयस्याग्रेऽवद्यति’ इत्येवमादीनि न यागं चोदयन्ति इति द्वितीयेऽध्याये स्थितम् ( २।२।६।१७ )। १०।७।१।१.

* **हृदयादीनामेव** अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन, तदितरावयवानां हविष्ट्वपरिसंख्या। १०।७।२।३–९. * हृदयादीनां निष्पत्त्यर्थं पशोः विशसनकर्म न बाधन्याः। **भा.** १२।४।६।१३.

* **हृदयाद्यङ्गानामेव** हविष्ट्वं अग्नीषोमीये पशौ। **भा.** १०।७।१।१–२. * **हृदयाद्यङ्गेष्वपि** वपावत् पञ्चावत्तत्वमेव ज्योतिष्टोमेऽग्नीषोमीये पशौ। १०।७।२०।७२–७३. **मीको.** पृ. १२० ‘ अग्नीषोमीये पशौ वपायामिव० ’ इत्यत्र अधिकरणं द्रष्टव्यम्।

* **हृदयाद्यवदानमेव** पश्वालम्भस्य प्रयोजकम्, शकृत्संप्रवेधः लोहितनिरसनं च शेषप्रतिपत्तिः। **वि.** ४।१।१२. * **हृदयाद्यवदानानि** सांनाय्यावदानप्रकृतिकानि। **शा.** २।२।६.

**हृदयादिन्यायः**। अग्नीषोमीये पशौ अङ्गावदानेषु एकादशभ्य इतरेषां परिसंख्या। पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या ॥

**हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात्। १०।७।२।३॥**

**भाष्यम्**— प्रत्यङ्गं हविर्भेदः इत्येतत् समधिगतम्। इदमिदानीं संदिह्यते, किं येन केनचिदङ्गेन हविषा यागो निर्वर्तयितव्यः उत सर्वेभ्योऽवदातव्यम्, अथवा परिसंख्या केनचिदिति। किं प्राप्तम्? सर्वेभ्योऽवदातव्यमिति, अवदानकर्म अभ्यसितव्यमिति। कुतः? हविर्भेदात्। भिन्नानि हवींषि हृदयादीनि। यान्यवदाने संकीर्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि तेभ्यः सर्वेभ्योऽवदातव्यम्।

पश्वाकृत्या हि न केचित् विशेषाः परिच्छिद्यन्ते । तद्यदि एकस्मादङ्गादवदीयेत, न पश्वाकृतिपरिच्छिन्नाः सर्वे विशेषा उपसंगृह्येरन् । तत्र पश्वाकृत्या अङ्गभावो न कृतः स्यात् । अनेकविशेषणविशिष्टं हि मांसराशि परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा । एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशेः सर्वावदानानभ्यासेनैव यथाश्रुतादेवावत्तं भवति । पृथक् प्रकल्पितेषु अङ्गेषु एकस्मादङ्गादवद्यन् कांश्चिद्विशेषान् जह्यात् । अभ्यस्यंस्तु अवदानानि सर्वान् विशेषान् परिगृह्णाति । तस्मात् सर्वेभ्योऽवदातव्यमिति । आह । ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वात् अन्यतमेन यागः सिध्येत् । उच्यते । सिध्येदेवम्, यदि विशेषाणां यागसंबन्धः श्रूयेत । पश्वाकृतेस्तु श्रूयते । तस्मात् विशेषेषु गृह्यमाणेषु अङ्गभावः कृतो भवति इति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेषः, को वा विशेषो गृहीतः, को वा नेति । अतः सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय । यश्च विशेषो न गृहीतः, तेन विनाऽपि यथाश्रुतमेव भवति इति कल्प्यमाने, तस्य पश्वाकृत्या परिच्छेदे न कश्चिदपि अधिकोऽर्थोऽङ्गीकृतो भवति इति अनादरः तं प्रति आश्रितः स्यात् । तस्मात् सर्वेभ्योऽवदेयं हृदयादिभ्यः अवशिष्टाच्चेति ।

**आज्यभागवद्वा निर्देशात् परिसंख्या स्यात् । ४ ॥**

**भाष्यम्**— हृदयादिभ्योऽवदातव्यम्, नावशिष्टात् । कुतः ? तेषां निर्देशात् । निर्दिश्यन्ते हृदयादीनि 'एकादश वैतानि पशोरवदानानि' इति । तत्र प्राप्तत्वादेव एषामेष विधिर्न संभवति । आनर्थक्यान्नानुवादः । निर्गुणं च पुनःश्रवणं इतरेषामश्रुतानां परिसंख्यापकं भवति । यथा 'न गन्तव्यम्, न भोक्तव्यम्' इति च विस्पष्टं प्रतिषेधः, एवमत्र परिसंख्यायां प्रतिषेधः क्रियते । आज्यभागवत् । यथा गृहमेधीये पञ्चमे पक्षे आज्यभागग्रहणं परिसंख्यार्थमित्युक्तम् ( १०।७।९।२८ ) । एवमिहापि प्राप्नोति । तस्मात् परिसंख्येति ।

**तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् । ५ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति परिसंख्येति । तत्र हि त्रयो दोषाः– स्वार्थप्रहाणम्, परार्थकल्पना, प्राप्तबाधश्चेति । यदुक्तं निर्देशात् इति, नैतदेवम् । तेषां हृदयादीनां द्व्यवदानत्वं विवक्षन् अभिनिर्दिशेत् । नैवं वचनव्यक्तिर्भवति 'एकादशैव पशोरवदानानि, नाभ्यधिकानि, यान्यवदानानि तानि द्विर्द्विरवद्यति' इति । कथं तर्हि ? 'एकादश द्विर्द्विरवद्यति' इति । कुतः ? नात्रावदानमनूद्यते, अप्राप्तत्वात् । कथमप्राप्तिः ? पशोः पञ्चावदानत्वात् । पञ्चावदानत्वं हि पशोः श्रूयते । तस्मान्नानुवादः । एतानि द्विर्द्विरवद्यति इति एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति । अवशिष्टानां त्यागं न वारयति । तस्मात् सर्वेभ्योऽवदेयमिति ।

**अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् । ६ ॥**

**भाष्यम्**— इतश्च न परिसंख्या । कुतः ? अंसशिरोऽनूकसक्थिप्रतिषेधात् । एवमेतेषां प्रतिषेध उपपद्यते, यदि न परिसंख्यानं भवति । भवति च सः । 'नांसयोरवद्यति, न शिरसः, नानूकस्य, नापरसक्थ्योः' इति । परिसंख्याने अंसशिरोऽनूकसक्थ्नां प्रतिषेधः अनर्थकः स्यात् । अथ तु न परिसंख्या, ततः प्रदानत्वात्, यान्यंसादीनि तेषां निरवदानं प्रतिषिध्यते । किमिदं निरवदानमिति ? निष्कृष्य तस्मादङ्गात् अवदानं निरवदानं 'द्विरवद्यति' इति तत् प्रतिषिध्यत इति । अतः सर्वैरेवाङ्गैरिज्या क्रियते इति ।

**अपिवा परिसंख्या स्यादनवदानीयशब्दत्वात् । ७ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः । परिसंख्यैव स्यात् । नैव सर्वेभ्योऽवदातव्यम् । कुतः ? पुनःश्रवणस्यार्थवत्त्वात् । ननु त्रिदोषा परिसंख्येत्युक्तम् । उच्यते । नात्रायं दोषो भवति । कथम् ? अवदानं हि चोदकेन



होमार्थं प्राप्नोति । इह तस्य हृदयादिभिः संबन्धः क्रियते । तेन हृदयादीनि वाक्येन होमसंबद्धानि भवन्ति, नान्यान्यङ्गानि पश्वाकृतेर्देवतासंबन्धीनि । न च एतस्मिन् प्रपक्षे हृदयादिवाक्ये सति पश्वाकृतेर्देवतासंबन्धोऽन्येषामङ्गानां होमसाधनत्वेनोपपद्यते । हृदयादिष्वपि एवमाकृतिकात् गृह्यमाणेषु आकृतेर्देवतासंबन्ध उपपद्यते एव । तस्मात् अन्यान्यङ्गानि परिसंख्यायन्ते । अपि च अनवदानीयशब्दो भवति 'मारुत्यान् अनवदानीयान् सुराग्रहांश्च आजिसृद्भ्यो हरति' इति । यदि परिसंख्या ततः किंचिदङ्गं अनवदानीयं भवति । इतरथा सर्वमवदानीयं स्यात् । अनवदानीयशब्दो नोपपद्यते । तस्मात् परिसंख्येति । ननु शृङ्गखुराभिप्रायमनवदानीयं भविष्यति । नेत्युच्यते अनदनीयं हि तत् । अनदनीयहरणे आजिसृद्भ्यः इति चतुर्थी नोपपद्यते । नहि शृङ्गखुरेण आजिसृतोऽभिप्रेयन्ते । स्यादेतत् परिक्रयार्थं तत् भविष्यतीति । उक्तमेतत्, न देवताद्रव्येण स्वकार्याणि कर्तव्यानीति । तस्मात् न शृङ्गखुराभिप्रायम् ।

**अब्राह्मणे च दर्शनात् । ८ ॥**

**भाष्यम्**— इतश्च परिसंख्येति । कुतः ? अब्राह्मणे हि भक्षं दर्शयति । कथम् ? 'ककुभो राजपुत्रः प्राश्नाति ध्रुवगोपः' इति ककुभो भक्षं दर्शयति । इतरथा यागे प्रवृत्तस्य अदर्शनं स्यात्, सर्वप्रदानं च भवेत् । निरवदानप्रतिषेधात् । तस्मादपि परिसंख्येति ।

**शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् । ९ ॥**

**भाष्यम्**— इतश्च परिसंख्येति । कुतः ? शृताशृतोपदेशात् । शृताशृतोपदेशो हि भवति 'द्वयान्यङ्गान्यभिमृशति शृतान्यशृतानि च' इति । यदि न परिसंख्या, सर्वेषां श्रपणं स्यात्, अशृतदर्शनं नोपपद्येत । परिसंख्याने तु सति हृदयादिभ्योऽन्येषां अयज्ञशेषत्वम् । यथा 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । तेषां तत्र श्रपणं न स्यात् । अशृतदर्शनं चोपपद्यते । तस्मादपि परिसंख्येति ।

**शा**— 'एकेनापि पशोर्यागसाधनत्वोपपत्तितः । तन्मात्रेणैव यागः स्यात् सर्वैर्वा युगपन्मतेः ॥' नैतदेवम् । 'अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते । अवदानवचोभ्यस्तु विशेषोऽत्रावधार्यते ॥'

**सोम**— पूर्वाधिकरणोक्तसामान्यस्य विशेषपर्यवसाननिरूपणात् संगतिः ।

**वि**— 'एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजिः ।, एकेन यागसंसिद्धे, हविषां भेदतोऽखिलैः ॥, एकादशभिरन्येषां परिसंख्या भवेद्यतः । न त्रिदोषी गत्यभावादशृतोक्तेश्च सोचिता ॥' तस्मात् एकादशभिरेव यागः ।

**भाट्ट**— प्रदेयभूतावयवश्च नैक एव यः कश्चित् । विशसनादितात्पर्यग्राहकसहकृतपशुसाधनत्वान्यथानुपपत्त्या हि कल्प्यमानं स्वावयवसाधनत्वं अवयविनः सर्वावयवेषु व्यासक्तत्वात् सर्वावयववृत्त्येव कल्पयितुमुचितम् । अतो विनिगमनाविरहात् सर्वेषामेव साधनत्वावगमात् प्रदेयत्वम् । 'हृदयस्याग्रेऽवद्यति' इत्यादिवचनानि तु क्रमविधानार्थानि । प्रदेयत्वेनैव एतेषु अवदानप्राप्तेः एतेषां क्रमपरत्वात् । अत एव एकादशानामयं क्रमः, अन्येषां तु अनियमः । अथवा 'हृदयस्याग्रेऽवद्यति' इत्याद्युक्त्वा 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति' इति श्रवणात् एकादशसु द्विरवदानं अन्येषु तु पञ्चावदानसंपादकतया त्रिरवदानमित्येवंपरत्वेन सार्थकानि । न तु इतरपरिसंख्यार्थानि । अत एव 'नांसयोरवद्यति न शिरसो नानूकस्य नापरसक्थ्योः' इति पर्युदासोऽपि संगच्छते । इति प्राप्ते, यथैव विशसनादिसंस्कारानुरोधात् पशोरवयवप्रकृतित्वं कल्पयित्वाऽवयवानामेव साक्षात् हविष्ट्वमवगम्यते, तथैव 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्येषु हृदयादीनामेकादशानामेव प्राकृतहविःसंस्कारकावदानसंभवात् तेषामेव हविष्ट्वप्रतीतेस्तत्प्रकृतित्वमेव पशोरिति न सर्वेषामवयवानां साधनता । अत एव हृदयादिवाक्यानि तेषामवदानाख्यसंस्कारविधिद्वारा हविष्ट्वबोधकानि सन्ति इत-

रेषां हविष्ट्वपरिसंख्यार्थानि इत्युक्तं पशुसोमाधिकरणे **कौस्तुभे** । न चैतेषामतिदेशेनैवावदानस्य प्राप्तत्वात् ' अध्वर्युर्गृहपतिं दीक्षयित्वा ' इतिवत् क्रममात्रविधायकत्वम्, एतद्वाक्याभावे ' पञ्चावत्तैव वपा कार्या ' इति वचनेन एकप्रसरताभङ्गभयेन प्राकृतकार्यापन्नावदानान्तरविधेरावश्यकत्वात् वपारूपावयवद्वारैव पशोः साधनत्वप्रतीतेर्हृदयादीनां साधनत्वस्यैवाप्राप्तौ अवदानस्य सुतरामप्राप्तेः । अतश्च हृदयादिवाक्यैः प्राकृतावदानस्य वपासंस्कारकावदानस्यैव वा हृदयाद्युद्देशेन विधानात् तेषामपि वपावदेव हविष्ट्वसिद्धिः । अत एवावदानेषु क्रमोऽपि पाठादेव न तु श्रौतः । यत्तु ' एकादश वै पशोरवदानानि तानि द्विर्द्विः ' इत्यनेनैकवाक्यतया द्विरवदानमात्रविधायकत्वं हृदयादिवाक्यानामिति, तन्न, तथात्वे ' हृदयं, जिह्वा, वक्षः ' इत्येवं गणनयाऽपि तच्छब्दापेक्षितावयवविशेषसमर्पणोपपत्तेः ' हृदयस्याग्रेऽवद्यति ' इत्यस्य वैयर्थ्यापत्तेः । एतद्वाक्याभावे वपाया एव हविष्ट्वेन हृदयादीनां हविष्ट्वाभावात् हृदयादिष्ववदानस्यैवाप्राप्तौ द्विरवदानस्य सुतरां विधानानुपपत्तेश्च । **अस्मन्मते** तु हृदयादिवाक्यैर्हृदयाद्युद्देशेन वपासंस्कारकावदान एव प्रकृतत्वेन विहिते तदङ्गपञ्चत्वसंपादकतया द्व्यवदानविधिर्नानुपपन्नः । भिन्नवाक्यता तु आख्यातभेदादेव न दोषः । अतो हृदयादीनामेव हविष्ट्वमिति सिद्धम् । अंसादिप्रतिषेधस्तु नित्यानुवादः ।

**मण्डन**-- ' तस्यावदेयं हृदयादि नान्यत् । ' तस्य पशोः ।

**शंकर**— ' तच्चैकादशसंख्यं स्यात् । ' तत् पशौ हविः ।

* **हृदयशूलं** अग्नीषोमीय–सवनीय–अनूबन्ध्यानां तन्त्रम् । इति सिद्धान्तः । सर्वान्ते चोद्वासनम् । अग्नीषोमीये विकल्पः, सवनीये अभावः, अनूबन्ध्यायां सद्भावनियमः इति पूर्वपक्षः । **संकर्ष.** २।२।१. * **हृदयशूलस्य** तन्त्रं वाजपेये सप्तदशप्राजापत्यपशुषु । **वि.** ११।४।८, एवमैकादशिनेष्वपि । ११।४।९, भिन्नजातीयपशुषु तु भेदः । ११।४।११.

* **हेतुः** अदृष्टव्यभिचारः अनुमानाङ्गम् । सः यत्र क्वचिदपि दृष्टव्यभिचारः नानुमानज्ञानं जनयति । **रत्नाकरः.** पृ. ३६५ * हेतुश्चोभयसिद्धो भवति । **वा.** ३।१।६।१२ पृ. ६९५. * हेतुः— तृतीयान्तपञ्चम्यन्तान्यतरानुमितिप्रयोजकवाक्यत्वम्, यथा 'धूमवत्त्वात्' इति । **मणि.** पृ. ३९.

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् । १।२।३।२६ ॥**

वरुणप्रघासेषु ' करम्भपात्राणि जुहोति ' इति प्रकृत्य श्रूयते ' शूर्पेण जुहोति, तेन ह्यन्नं क्रियते ' इत्युक्तअन्नकरणत्वं होमसाधनत्वे हेतुः प्रतिपाद्यः स्यात् । अर्थवत्त्वोपपत्तिभ्यां, अर्थवत्त्वात् उपपत्तेश्च । हिशब्दस्य हेत्वर्थकत्वात् निरर्थकार्थवादवाक्यादिव प्रवृत्त्युपपत्तेश्च । इति **कुतूहलम्** ।

हेतुः हेतुत्वविधिः हेतुत्वांशे अज्ञातज्ञापनरूप एव स्यात् । भवति हि तदा अर्थवत्त्वं अर्थबोधकत्वरूपं कृञः शक्तिलक्षकतया ' तेन हि अन्नं कर्तुं शक्यते ' इत्येवंरीत्या । लटो वा भूतभविष्यत्काललक्षणया कृञो यथाश्रुतार्थकतयैव तद्वाक्यस्य अर्थवत्त्वम् । वाशब्देन ' होमकाले वर्तमानकालीनान्नकरणहेतुत्वाभावेन न हेतुत्वविधिपरतया अर्थवत्त्वसंभवः ' इति सिद्धान्तिशङ्काया निरासः । उपपत्तिश्च अन्नकरणत्वस्य शूर्पे साक्षादन्नकरणत्वाभावेऽपि परंपरया अन्नकरणसाधनत्वात् लाङ्गलाद्यपेक्षया साधकतमत्वाच्च । तस्मात् करम्भपात्रहोमस्य भाव्यतया तदन्वितभावनायां अन्नकरणत्वसाधनत्वहेतुकायाः शूर्पनिष्ठकरणतायाः अन्वये दर्विपिठरादेरपि अन्नकरणसाधनतया होमसाधनत्वं सिध्यति । इति पूर्वपक्षः । इति **कस्तूरिरङ्गाचार्याः** ।

' विधिर्वा स्यात् ' इत्यत्र पूर्वाधिकरणपूर्वपक्षहेतोः अपूर्वत्वात् ( १।२।२।१९ ) इत्यस्य अनुषङ्गेण पूर्वपक्षप्रतिज्ञायां हेत्वपेक्षापूरणात् । स्याच्छब्देन च अन्वयवाक्यकल्पनया हेतुत्वायोगशङ्कापरिहारः । दर्व्यादि-



प्राप्तिफलत्वोपपादनार्थत्वेन अर्थवत्त्वोपपत्त्योः साध्याकाङ्क्षापूरणात् सूत्रस्य अन्यूनत्वम् । इति **सुधा.** पृ. ८८ ।

विधिः स्यात् इति साध्ये अर्थवत्त्वोपपत्तिभ्यां इति साधनस्य नान्वयो भवति इति, विधिः स्यात् इत्यत्र अपूर्वत्वात् इति हेतुः । अर्थवत्त्वोपपत्तिभ्यां इति हेतोश्च दर्वीपिठरादेः प्राप्तिः इति साध्यं द्रष्टव्यम् । इति **सुधार्थः** ।

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति शूर्पं विधाय तस्य हेतुत्वेन ' तेन ह्यन्नं क्रियते ' इत्युक्तम् । तेन शूर्पेण सह दर्वीपिठरादेरपि प्राप्तिः इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह ।

' शूर्पेण जुहोति ' इति विधिः । ' तेन ह्यन्नं क्रियते ' इति तस्य स्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् अन्नकरणत्वे होमसाधनतां प्रति हेतुत्वस्य वेदैकसमधिगम्यत्वात् । वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगतं अन्नकरणत्वं हेतुः इत्याह, न तु दर्व्यादिगतमपि । अतः तस्य च दर्व्यादिकस्य अपि अचोदना यद्यत् अन्नकरणं तेनतेन होतव्यं इति विधेः अभावः । इति **कुतूहलम्** ।

अन्नकरणतया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वात् शब्देन च शूर्पेण होमकर्तव्यत्वे अन्नकरणत्वस्य हेतुत्वाभिधानात् तस्य च ' शूर्पेण जुहोति ' इतिविधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगतेः शूर्पस्यैव शब्दविहितत्वात् तदवरुद्धे होमे दर्व्यादेः अचोदना इत्येवं सूत्रं भाष्यकृता व्याख्यातम् । इति **सुधा.** पृ. ८८ ।

एतदेव सूत्रं अन्नस्वरूपस्य होमसाधनतया कल्प्येन शब्देन चोद्यमानतया इष्टत्वात् दर्व्यादेरकरणत्वात् अचोदना इत्यर्थपरम् । **सुधा.** पृ. ८९ ।

**व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति शूर्पं विधाय ' तेन ह्यन्नं क्रियते ' इत्युक्तम् । इदं वाक्यं शूर्पस्तुतिपरं इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । **ननु** प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति व्यर्थे प्रकृष्टान्नसाधनत्वरूपेण अर्थेन धर्मेण रहिते शूर्पे विषये स्तुतिः अन्याय्या इति चेत् पूर्वपक्षी ब्रूयात् ।

अर्थस्याभावो व्यर्थम् । अर्थाभावे अव्ययीभावः । ' तृतीयासप्तम्योर्बहुलम् ' ( पा. २।४।८४ ) इति अम्भावाभावः । स्तुत्यवलम्बनस्य अर्थस्य अभावे सति स्तुतिरनुचिता । इति **कुतूहलम्** ।

शूर्पेऽपि अन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोति इति **वार्तिकम्** ।

**अर्थस्तु विधिशेषत्वाद् यथा लोके । २९ ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति विधाय ' तेन ह्यन्नं क्रियते ' इति शूर्पस्य स्तुतिः क्रियते न हेतुवादः इति सिद्धान्तोपोद्बलकं सूत्रम् ।

अस्मत्पक्षे अर्थोऽस्ति स्तुत्यालम्बनकरणत्वं नाम । तदा च शूर्पेण जुहोतीति विधेः ' तेन ह्यन्नं क्रियते ' इत्येष शेषो भवति । यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति । प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते । ये तु देवदत्तात् निकृष्टबलाः तानपेक्ष्य भवति । एवं ' तेन ह्यन्नं क्रियते ' इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति । तस्मात् स्तुतिपरो वाक्यशेषः ।

**यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् । ३० ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय ' तेन ह्यशनं क्रियते ' इति तस्य स्तुतिः कृता । नात्र हेतुवादः येन दर्वीपिठरादेरपि होमसाधनत्वेन प्राप्तिः स्यात् इति सिद्धान्तिना उक्तम् । इदं सूत्रं तु अभ्युपेत्यवादेन हेतुवादस्वीकारेऽपि दोषप्रसङ्ग इति

प्रतिपादनार्थम् । यदि च 'तेन ह्यशनं क्रियते' इति हेतुः अवतिष्ठेत यद्यपि च भवेत् अन्नकरणं हेतुः दर्वीपिठरादिप्रकाराणां तथापि शूर्पे एव अवतिष्ठेत । शब्दात् अन्नकरणं हेतुरिति विज्ञायते । शब्दश्च शूर्पस्याह, न दर्वीपिठरादीनाम् । निर्देशात् इति 'तेन ह्यशनं' इति शूर्पगतस्यैव अन्नकरणत्वस्य हेतुत्वनिर्देशात् इत्यर्थः । सामान्यादिति चेत् । ननु अन्नकरणत्वस्य, शूर्पमात्रगतस्य होमसाधनत्वहेतुत्वकथनवैयर्थ्यात् दर्व्याद्यधिकार्थलाभाय सामान्यरूपेण अन्नकरणत्वमात्रस्य हेतुत्वं इति चेत् ब्रूषे, तत्र वदामः । अव्यवस्था विधीनां स्यात् । विधीनां विधेयानां दर्वीपिठरादीनां अव्यवस्था अवधारणाभावः स्यात् । वस्तुमात्रस्य कयाचित् प्रणाड्या अन्ननिष्पत्तिसाधनत्वात् होमसाधनत्वेन विधानं स्यात् । तस्मात् हेतुवादस्वीकारेऽपि दोषप्रसक्तिः । तस्मान्नायं हेतुवादः । किंतु हेतुवन्निगदस्यापि स्तुतिरेव कार्यं इति सिद्धान्तः । के.

* दृष्टान्ते गृहीतव्याप्तिं सहायीकृत्य बोधक आकारो हेतुः । वि. ३।१।२. * बलीयानपि हेतुः विरुध्यमानं अबलीयांसं बाधितुमर्हति नाविरुद्धम् । भा. ३।३।७।१४ पृ. ८४४, * सिद्धो हि हेतुर्भवति न प्रसाध्यः । ९।१।१५।४४. * हेतूनां स्वार्थसिद्धौ हेत्वन्तरनिरपेक्षता । बृहती. पृ. २४१.

* हेत्वधिकरणम् । (१।२।३।२६-३०) । शूर्पहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वात् आरादुपकारकः इति दूरापास्तं तस्य द्रव्यप्रयुक्तत्वम् । अन्नकरणत्वं त्वर्थवादो न हेतुरित्युक्तम् । शा. ९।१।५. * हेत्वधिकरणे अपि अन्वयवाक्यकल्पनेन दर्व्यादिसाधनांशाभिधानम् । सु. पृ. ७३. * इह ( ९।१।५।११-१९ ) अपूर्वार्थे होमे स्थिते प्रथमेऽध्याये ( हेत्वधिकरणे १।२।३।२६-३० ) किमन्नकरणं विधीयते उत अन्नकरणं स्तुतिः इत्ययं विचारः ( अतो नास्य विचारस्य हेत्वधिकरणेन पौनरुक्त्यम्, विषयभेदात् ) । टुप्. ९।१।५।११ पृ. १६५९. * इह द्रव्यस्य तृतीयानिर्देशबलात् होमस्यापूर्वार्थत्वे स्थिते हेत्वधिकरणे शूर्पशब्दं अवयुत्यानुवादं स्वीकृत्यान्नकरणमात्रं होमसाधनत्वेन न विधीयते किंतु अन्नकरणत्वं शूर्पविधेरेव स्तुतिरित्युक्तमिति अपुनरुक्तिरिति ध्येयम् । सोम. ९।१।५. * 'पूषा प्रपिष्टभागः अदन्तको हि' इत्यत्र पेषणे अदन्तकत्वं न हेतुः, हेत्वधिकरणे ( १।२।३ ) एवंजातीयकहेतुवादस्य अकिंचित्करत्वनिश्चयात् । कु. ३।३।२०।३९.

* प्रयोजनं ( कल्पसूत्राधिकरणस्य ) कल्पसूत्रादीनां वेदत्वे वेदतुल्यत्वे वा यत्र प्रत्यक्षश्रुतिविरोधः तत्र विकल्पः । यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासमूलकं वचनं तत्रापि वचनादेव तदनुष्ठानं न्यायोपन्यासस्तु हेत्वधिकरणन्यायेन अर्थवादः इति ( पूर्वपक्षे ) । भाट्ट. १।३।६.

* दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोजनस्य 'यदि च हेतुरवतिष्ठेत०' ( १।२।३।३० ) इत्यनेन निरासः । सु. पृ. ९९२.

* हेतुकर्तर्यपि कर्तृत्वमस्ति । तत्र यदा हेतुत्वं विवक्ष्यते तदा हेतुमद्व्यापारे विवक्षितेऽपि णिजुत्पद्यते कर्तृत्वमात्रविवक्षायां विनैव णिचा । वा. ३।४।११।३१ पृ. ९६८.

* हेतुत्वं अपक्षधर्मस्य नास्ति इति नैयायिकाः । बृहती. पृ. २३४. * हेतुत्वं द्रव्यादिनिरूपितत्वघटितसंसर्गेण क्रियान्वयित्वम् । यथा दण्डेन घटः इत्यादौ । रहस्य. पृ. १००.

## हेतुदर्शनाच्च । १।३।२।४ ॥

प्रत्यक्षश्रुतिविरुद्धा स्मृतिः अप्रमाणं इति सिद्धान्ते हेत्वन्तरमाह । चकारो हेतुसमुच्चये । सर्ववेष्टनादिस्मृतेः लोभादेर्हेतोः दर्शनात् अप्रामाण्यम् । लोभाद्वास आदित्समानाः औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित् । तत् स्मृतेर्बीजम् ।

**अथवा अधिकरणान्तरम्** । तत्रापि अक्षरार्थः स एव । उदाहरणं तु अन्यत् । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिः । लोभादाचरितवन्तः केचित् तत एषा स्मृतिः । अतो न प्रमाणमिति । के.

* हेतुदर्शनाधिकरणम् । ( १।३।२।४ ) । हेतुदर्शनाधिकरणस्य तु समनन्तरस्यापि ( शिष्टाकोपाधिकरणस्य समनन्तरं अव्यवहितपूर्वं ) विरोधाधिकरणाभ्युच्चय- (१।३।२) हेतुभूतहेतुदर्शनपरस्य स्वातन्त्र्येणापि अप्रामाण्यापादनशक्तिप्रतिपादनपरस्य वा विरोधाधिकरणभक्तत्वात् न तेन पृथक् संगत्यपेक्षा । सोम. १।३।३.

* 'हेतुमति च' ( पा. ३।१।२६ ) प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति । सि. कौमुदी.

* हेतुवदर्थवादाः धर्मे स्तुतिद्वारा प्रमाणम् । वि. १।२।३.

* हेतुवन्निगदः अर्थवादः 'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इति । बाल. पृ. ५०. * हेतुवन्निगदः 'स वै ध्रुवामेवाग्रेऽभिघारयति ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति । वा. ३।७।१।५, * हेतुवन्निगदानां अर्थवादत्वमुक्तम् । ३।६।७।२७ पृ. १०५२.

## हेतुवन्निगदाधिकरणम् । हेतुवत् निगद्यमानमपि वाक्यं स्तावकमेव ॥

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् । १।२।३।२६ ॥

**भाष्यम्**— अथ ये हेतुवन्निगदाः 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्येवमादयः । तेषु संदेहः, किं स्तुतिस्तेषां कार्यमुत हेतुरिति । किं प्राप्तम् ? हेतुः स्यादन्नकरणं होमस्य । ननु अप्रसिद्धे कार्यकारणभावे न हेतूपदेशः । सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे । शूर्पेण होमे कर्तव्येऽन्नकरणं हेतुरित्युपदिश्यते । किं प्रयोजनम् ? अन्यदपि दर्वीपिठराद्यन्नकरणं यत् तेनापि नाम कथं होमः क्रियेतेति । कुतः ? तस्याप्यन्नक्रियायामर्थवत्ता, शक्यते च तेनाप्यन्नं कर्तुम् । एतद्धि क्रियते इत्युच्यते । न हि वर्तमानकालः कश्चिदस्ति, यस्यायं प्रतिनिर्देशः । हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा । यदि च दर्वीपिठरादि न साक्षादन्नं करोतीति नान्नकरणमित्युच्यते । व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात् । शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ।

**वा**— इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिर्न च परमार्थहेतवस्त उदाहरणम् । तत्र यदि तावद्धेतुत्वं विधीयते ततः पूर्वेणैव गतम् । यदिह हेतुत्वं तच्छूर्पहोमसंबन्धं प्रति न चाविहितोऽसावस्तीति कस्य हेतुरुच्यते । अथ भूतानुवादमात्रं तत्तु वायुक्षेपिष्ठत्ववद्गतमित्यनारब्धव्यमेतत् । उच्यते । न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रं किं तर्हि हेतोः प्रसिद्धिपूर्वकत्वात्सिद्धवदुपदिष्टस्य यावत्यसिद्ध्याशङ्का तत्रार्थापत्तिलभ्याद्वचनात्सिद्धिः । याऽपि चार्थवादाकाङ्क्षा कस्मादिति साऽप्यनेनैव हेतुना निवर्त्यते इति मन्यते । अथाप्यर्थवादत्वं तथाऽपि तदन्तर्निर्णीतहेतुत्वमेवेति सर्वान्नकरणविषयं विज्ञायते ततश्च हेतुरप्यस्त्विति **पूर्वः पक्षः** । संबन्धस्य च विधेयत्वात्तद्गतमेव हेतुत्वं होमस्येति वदति । 'नन्वप्रसिद्धे कार्यकारणभावे' इति । **केचिदाहुः** । कार्यकारणयोरेवानुमानम् । तथा च दध्नेन्द्रियकामस्येत्यत्रापि वक्ष्यति । **तत्त्वयुक्तम्** । अकार्यकारणभूतानामपि कृत्तिकादीनां अचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते । **ननु** सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम् । **सत्यम्** । अन्यस्मिन्नेव तु संबन्धे सति पश्चात्प्रसिद्ध्यन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति । यद्वा शक्त्यभिप्रायं ययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन साऽवधृता तत्रैव हेतुता । अथवोदाहृतविषयहेतुलक्षणमेतत् ।

अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः, तत्रान्नकरणता होमे हेतुत्वेनोच्यमाना संबन्धान्तराभावात् कारणत्वेन स्यात् । तच्चाप्रसिद्धं तस्मान्न हेत्वपदेशः । सत्यं लोके हेतुव्यवहारकालात्प्रथमं प्रमाणान्तरेण संबन्धप्रसिद्धिरपेक्ष्यते वेदे तु हिशब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या संबन्धाभिधायि दृष्टान्तवचनं कल्प्येत यद्यदन्नकरणं तेन तेन जुहोतीति, तेन

चोपपन्नं हेतुत्वम् । 'किं प्रयोजनम्' इति । यदि च हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण । अपरस्त्वाह व्याप्तौ सिद्धायां सर्वान्नसाधनसाधनको होमः सिद्धो भवति । 'कुतः' इति । स एव सिद्धान्ताभिप्रायः । अथवा कुतो दर्विपिठरादेः साधकतमत्वम् । इतरस्त्वाह अन्नक्रियायां तावत्तस्यार्थवत्ताऽस्ति तावन्मात्रं वाऽऽश्रयिष्यते । 'शक्यते च तेनापि' इति । उपपत्तिशब्दस्यार्थः । पूर्वेण तु समानार्थता गम्यते । तेन विवक्षा । शक्यमिप्रायमेतत् । यदेव हि तदुपयोगिमात्रं तदेव शक्यते कथंचित्साधकतमत्वेन विवक्षितुम् । अथवाऽर्थवत्त्वं करणविभक्तिनिर्देशालम्बनमुपपत्त्या पुनर्वर्तमानान्नक्रियस्य हेतुत्वाभिधानात्तादृशस्य होमं प्रत्यनुपपत्त्याशङ्कयोपपत्तिं वदति । शक्यते च तेनेति । तत्र चोदयति । एतद्धि क्रियत इत्युच्यते तत्कथं शक्यत इत्यभिधीयते । वर्तमानक्रियस्यासंभवादित्युत्तरम् । यद्वा स्वयमेवाऽऽशङ्क्य परिहरति । 'यदि च न दर्विपिठरादि' इति । उभयोः परामर्शः । साधकतमत्ववर्तमानत्वे चेत्तत्र न विद्येते शूर्पेऽपि तथैवेति स्तुतिर्न स्यात् तेन यथा तव स्तुत्यर्थः कथंचित् विद्यते तथा मम हेत्वर्थ इत्यविशेषः । 'हेतौ च श्रुतिः' इत्यादि, असंबद्धवाक्यसंबन्धिदोषादन्ते द्रष्टव्यम् । 'स्तुतौ लक्षणा' इति । अन्नकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते । 'शूर्पेण' इति चास्मिन् पक्षे नित्यानुवादोऽन्नकरणसामान्येनैव प्राप्तस्य । इत्थं वा सूत्रगमनिका । तत्रार्थवत्त्वं तावदर्थवादात्प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धम्, संबन्धोऽपि काल्पनिकवाक्याश्रयणात् । तस्माद्धेतुः ।

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७॥**

**भाष्यम्**— न त्वेतदस्ति, शब्दपूर्वकोऽयमर्थोऽन्नकरणं हेतुरिति । शब्दश्चान्नकरणं शूर्पहोमे हेतुरित्याह । न च दर्वीपिठरहोमे, तेन शब्दपूर्वं शूर्पम्, न च दर्वीपिठरादेश्चोदना ।

**वा**— शूर्पेणेति तावत्करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमानिकैर्दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान्प्रतिपद्यते । होमश्च तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते । अनुत्थितायामेव च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति । तेन ब्रवीति– 'अचोदना च तस्य' इति । हेत्वपदेशश्च स्तुत्यैवोपपद्यमानः सन्नश्रुतदृष्टान्तकल्पनायै प्रभवति । शूर्पश्रुतिश्च विध्युद्देशपातिन्यनन्यप्रयोजना विस्पष्टा च सती परित्यक्तुं न युज्यते । तस्माद्यद्वाऽन्नकरणत्वादित्येष कर्तव्य इत्यनेनापेक्षितत्वाल्लक्षणयैतत्प्रतिपादयति प्रशस्तत्वादिति । अथवाऽन्नकरणत्वादिति श्रुतिवृत्तमेव । तत्र यथाश्रुतं विध्युद्देशे हेतुतामप्रतिपद्यमानं तदनन्तराकाङ्क्षितार्थोपप्लुतहेत्वपेक्षप्राशस्त्यहेतुरवधार्यते, अन्नकरणत्वात्प्रशस्त इति । कल्पनाद्वयेऽपि च लोकप्रसिद्धदृष्टान्तलाभान्नाश्रुततद्वाक्यानुमानप्रसङ्गो भविष्यति । सिद्धं हि प्रशस्तानां कर्तव्यत्वमन्नकरणानां च प्रशस्तत्वमिति । अचोदना च तस्येति व्याख्यान्तरम् । तव हि यद्यदन्नकरणं तच्चोद्यते न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात् । एवं चोत्तरसूत्रमापतति ।

**व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥**

**भाष्यम्**— इति पुनर्यदुक्तं तत्परिहर्तव्यम् ।

**वा**— यत्पुनः शूर्पेऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तं किं तत्राभिधीयते ।

**अर्थस्तु विधिशेषत्वाद् यथा लोके । २९ ॥**

**भाष्यम्**— अस्मत्पक्षेऽर्थोऽस्ति । वाक्यशेषो हि स विधेस्तदा भवति । संवादश्च स्तुतिवचनत्वेन, यथा वयं शूर्पेणान्नं क्रियमाणं जानीमः, तथा शूर्पेणान्नं क्रियते इत्येव गम्यते । तदा चावर्तमानं स्तोतुं वर्तमानमित्युपदिशति । त्वत्पक्षे एष दोषो यस्य ते हेतुविधिः । विधौ हि न परः शब्दार्थः प्रतीयते । न च वर्तमानमुपदिशन् वेदः शक्यमर्थं विदध्यात् । अस्मत्पक्षे तु एष परशब्दः परत्र वर्तते । यथा लोके 'बलवान्देवदत्तो यज्ञदत्तादीन् प्रसहते' इति । प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तानपेक्ष्य भवति । एवं तेन



ह्यन्नं क्रियत इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य, निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति ।

**वा**— अस्मत्पक्षे अर्थोऽस्ति स्तुत्यालम्बनकरणत्वं नाम, वाक्यशेषो हि भवन्पारतन्त्र्याद्गौणत्वाद्यपि प्रतिपद्यते तदा च विधेयान्तरवशादवश्यमनुवादेन भवितव्यमनुवादश्च यथाविज्ञातस्य भवति । अतः शब्देनैवाभ्यनुज्ञातं यादृशं वयमन्नकरणत्वं शूर्पे पश्यामस्तादृशमिदं संकीर्त्यते इति । अनेन वर्तमानापदेशो व्याख्यातः । तत्रापि हि कृतं वा करिष्यमाणं वा स्तोतुं क्रियते इत्युच्यते । कथं स्तुतिः, सर्वलोकस्य भूतभविष्यदनादरेण वर्तमानोपकारानुरागाद्वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिरिति क्रियते एवानेनान्नमित्युच्यते । अथवा अन्नक्रियाशक्तेर्वर्तमानतामन्नक्रियायामेवोपचर्य स्तौति । तत्रापि जनानां शक्त्यतिक्रमेणाभिव्यक्तिप्रियत्वात्क्रियत इत्युक्ते स्तुतिर्भवति । न शक्त्यभिधानात् । तव तु विधिवादित्वात् मुख्यान्नकरणत्ववर्तमानत्वयोरग्रहणे दोषः । किं कारणम् ? विधानं ह्यत्यन्तानवगतार्थविषयम् । तत्र यथाश्रुतादन्यथाग्रहणं निष्प्रमाणकम् । एतदेवाऽऽह– 'विधौ हि न परशब्दार्थः प्रयोजनम्' इति । परशब्दार्थो हि लक्षणासु प्रयोजनम् । तदिह भूतभविष्यत्क्रियावाचिनः शक्तिवर्तमानतावाचिनो वा स्वार्थे वर्तमानान्नक्रियावाची शब्दः कल्पनीयः ।

तन्निमित्तमात्रे शब्दार्थे साधकतमत्ववाचिनी तृतीया । न चैवंभूतत्वं कुतश्चित्सिद्धमित्यप्रमाणकम् । अथ मुख्यार्थपरिग्रहः । तत्रोच्यते । न च वर्तमानं साधकतमं चोपदिशन् वेदः शक्यमर्थं विदध्यात् । न हि वर्तमानान्नक्रियेण शूर्पादिना साधकतमेन वा पाकेन होतुं शक्यते तस्मादुभयथाऽपि विप्रतिषिद्धम् । अस्मत्पक्षे त्वनुवादत्वात् परशब्दार्थग्रहणम् । 'यथा लोके बलवान्देवदत्तः' इति भूम्न्यतिशायने वा मतुप्प्रवृत्तिर्न च विशेष उपात्तोऽमुष्मात्प्रकृष्टबल इति । तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दो न च तथा संभवति सिंहादीनां बलवत्तरत्वादिति देवदत्तान्न्यूनतरबलानपेक्ष्यैवमभिधीयते तथाऽत्र विप्रकृष्टतरान्नसाधनलाङ्गलाद्यपेक्षया शूर्पं साधकतममित्युच्यते । नन्वेवमापेक्षिकप्रवृत्तेर्मुख्यत्वमेव स्यात्, तथा च देवदत्ते बलवच्छब्दप्रवृत्तिं नैव गौणीं मन्यते । सत्यमेवम्, यदा तावन्न्यूनमात्रापेक्षयैव प्रयुज्यते यदा त्वविशेषप्रवृत्तेस्तदधिकबलेष्वपि बलवद्बुद्धिर्जाता तदा स एव शब्दः कुतश्चिदपि न्यूनबले वर्तमानो गौणः संपद्यते । तथा यदि विध्युद्देशोपात्तं शूर्पेऽन्नकरणत्वमनूद्यते ततस्तन्न्यूनमात्रापेक्षया वा मुख्यत्वं न्यूनानुपादानाद्वा सामान्यतः प्रवृत्तस्य सर्वप्रकृष्टगामित्वबुद्धौ सत्यां गौणता । भवतस्त्वपूर्वविधानादत्यन्तसाधकतमत्ववर्तमानत्वयोः क्रियां प्रत्युपादानान्न्यूनापेक्षागौणत्वयोर्निमित्तं नास्तीत्यतिक्लेशः स्यादित्यसमानम् ।

**यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् । ३० ॥**

**भाष्यम्**— यद्यपि च भवेदन्नकरणं हेतुर्दर्वीपिठरप्रकाराणाम्, तथापि शूर्प एवावतिष्ठेत । शब्दादन्नकरणं हेतुरिति विज्ञायते । शब्दश्च शूर्पस्याऽऽह, न दर्वीपिठरादीनाम् । तद्धि निर्दिश्यते, यस्मात् शूर्पेणान्नं क्रियते, तस्मात् शूर्पेण जुहोतीति । यथा यस्मात् बलवदुपध्मातोऽग्निस्तेन मे गृहं दग्धमिति, नानग्निरपि बलवदुपध्मातो दहतीति गम्यते । अथ मतम्, येन येनान्नं क्रियते प्रणाड्या शूर्पादन्येनापि, तेन तेनापि होमः क्रियते इति । अव्यवस्था विधीनां स्यान्न केनचित् । प्रणाड्याऽन्नं क्रियते । तत्र यावदुक्तं स्याज्जुहोतीति, तावदेवान्नकरणेन जुहोतीति । अस्मत्पक्षे पुनः शूर्पं स्तूयते । तेन ह्यन्नं क्रियते इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनायैव । तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्यमिति ।

**वा**— अभ्युपेत्यवादोऽयम् । यद्यपि हेतुविधानं तथाऽपि न दर्विपिठरादेः प्रसङ्गः । कुतः ? शूर्पं हि विधायान्नकरणं हेतुरुच्यते । सोऽपि च न लोके प्रसिद्धः, शब्दमेव दृष्टान्तवाचिनमनुमाय साधयितव्यः । तदनुमाने च श्रुतहेतुत्वान्यथानुपपत्तिः प्रमाणम्, सा च यावत्येव हेतुत्वमुपपन्नं ततोऽधिककल्पनायै न प्रभवति । शूर्पे च होमसंबन्धित्वेन प्रतिज्ञातेऽन्यधर्मस्या-

हेतुत्वादवश्यं तद्गतमेवान्नकरणत्वं वक्तव्यम् । संनिधेश्च तदवच्छिन्नमेव तद्गम्यते । लोकेऽपि च यं धर्मिणं प्रतिज्ञाय यो हेतुरुपदिश्यते स प्रथमं तावत्तद्गतविशेषात्मनैव प्रतीयते । तदात्मकस्य तु साध्यांशानुगमाभावात्सामान्यमात्रं विवक्षितमिति दृष्टान्तप्रयोगवेलायामेवावधार्यते, वेदहेतूनां पुनर्न सामान्यात्मना साध्यसंबन्धोऽवगतो न विशेषात्मना सोऽधुनैवार्थापत्त्या कल्पनीयः । तत्र विशेषस्योपादानात्सामान्याप्रसिद्धेश्च तत्परित्यागनिमित्तस्यासंभवादुपात्तविशेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि तु दर्विपिठरादिगतान्नकरणत्वहोमसंबन्धाविनाभावो न कल्प्यते । न किंचिच्छ्रुतं दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्यं यद्यच्छूर्पमन्नकरणं तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम् । लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम् । यथा च गमनं गोशब्दव्युत्पत्तिनिमित्तत्वेन उपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दव्यवस्था तथा शूर्पगतान्नकरणहेत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः । तत्रैतावानर्थः स्यात् । यद्यदन्नकरणसमर्थं शूर्पं तेन तेन होतव्यं न दर्विपिठरादिग्रहणम् । यथा बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेन्न तु शङ्खादयो बलवदुपध्माता दहन्ति । तस्माद्यवस्था । यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण महासामान्यं विवक्ष्यते ततो यद्यद्गृहीतं तस्य तस्य काचिदन्ननिमित्तता विद्यत इत्यव्यवस्थितत्वाद्धोमाक्षिप्तद्रव्यमात्रानुवादः सन्ननर्थकोऽन्नकरणशब्दः । तस्मादन्नहेतुत्वेन स्तुतित्वमेव वरमिति ।

शा— एवं आनर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्च अर्थवादा विचारिताः । इदानीं हेतुप्रतियोगिनो विचार्यन्ते । एवं श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति । तत्र संशयः किं शूर्पेण होमे कर्तव्ये अन्नकरणता हेतुः उत अर्थवाद इति । तत्र हि शब्दश्रुत्या हेतुत्वं गम्यते, लक्षणया प्राशस्त्यम् । अनर्थकप्रायश्च अर्थवादः । हेतुस्तु अर्थवान् । कः पुनरर्थो हेतोः ? येन येन अन्नं क्रियते शूर्पादन्येनापि दर्वीपिठरादिना तेन तेनापि होमसिद्धिः हेतोः प्रयोजनम् । कथमप्रसिद्धायां व्याप्तौ हेतुत्वव्यपदेशः ? अत एव हेतुव्यपदेशात् व्याप्तिमन्तरेण अनुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येन येन अन्नं क्रियते तेन तेन होतव्यमिति । तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः 'शूर्पेण जुहोति' इति अवयुत्यानुवादः । तेन ईदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वं अन्नकरणत्वात् हेतोः, अतः शूर्पं अन्यत् वा यत् अन्नकरणं तेन होतव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते, न तत् आनुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हति । न च वेदेन उच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते, वेदस्यैव तत्र प्रमाणत्वात् अर्थवादस्तु अपेक्षितः प्ररोचनार्थत्वेन । तस्मादर्थवादत्वम् । एवं च अप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति । 'क्रियते' इति च अवर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति । नहि भूते भाविनि वा तादृशी प्रीतिः यादृशी वर्तमाने । तेन रुच्यर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्तः । विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणम् । तस्मात् अर्थवादत्वम् ।

सोम— यदुक्तं सर्वेषां विधिवन्निगदानां स्तुत्यर्थत्वमिति, तदयुक्तम् । केषुचित् हेतुविधिसंभवात् इति पूर्वाधिकरणोक्ताऽऽक्षेपेण प्रवृत्तेः **संगतिः । सूत्रार्थस्तु**— 'तेन ह्यन्नं क्रियते' इति हेतुविधिः स्यात्, तथा सति दर्व्यादीनामपि होमसाधनत्वलाभेन अर्थवत्त्वात् हिशब्दश्रुत्युपपत्तेश्च ।

वि— 'तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः ।, हिना श्रुता हेतुताऽतः शूर्पमन्यच्च साधनम् ॥ , शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते । अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्तिका ॥'



भाट्ट— चातुर्मास्ये 'शूर्पेण जुहोति' इति शूर्पकरणकहोमं विधाय श्रुते 'तेन ह्यन्नं क्रियते' इत्यर्थवादे न स्तुतिलक्षणा । अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते । न ह्यत्र पूर्ववत् भाव्यत्व इव किञ्चित् कल्पनीयमस्ति, हिशब्दश्रुत्यैव हेतुत्वाभिधानात् । हेतुश्च व्याप्तिमन्तरेणानुपपन्नः यद्यदन्नकरणं तेनतेन होतव्यमिति व्याप्तिवचनं कल्पयति । ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम्, अवयुत्यानुवादो वा । यद्वा— तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः । तेन च विशिष्यैव व्याप्तिकल्पनात् अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिरथं शूर्पपदमन्यथा नेयमिति **पूर्वः पक्षः । सिद्धान्तस्तु**— क्रियते इति लडन्तनिर्देशात् वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम् । न च होमकाले अन्नकरणत्वं संभवति । अतो लटः भूतभविष्यत्कालान्तरलक्षणा विधौ तवाप्यावश्यकी । यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी, तथाऽप्यनुवादस्थत्वात् प्राशस्त्योपपादकत्वाच्च न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः । किंच, अपेक्षितप्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः । अतः सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम् ।

**मण्डन**— 'स्तुतिः शूर्पेऽन्नहेतुत्वम् ।'

**शंकर**— 'शूर्पे हेतुविधिर्नास्ति ।'

* हेतुवन्निगदाधिकरणं अर्थवादाधिकरणस्यैव शेषः । सु. पृ. ९३.

* **हेतुविधिः** अर्थवादः — 'चतुर्गृहीतान्याज्यानि भवन्ति, स ह्यत्रानुयाजान् यक्ष्यन् भवति' इति । बाल. पृ. ५२, * हेतुविधिर्मन्त्रः — 'इन्दवो वामुशन्ति हि' इति । पृ. ६१.

* **हेतुविधिसरूपो** मन्त्रः — 'द्वादशारं न हि तज्जराय' इति । बाल. पृ. ६२.

* **हेतुविपर्यये** प्रायेण कार्यविपर्ययो दृश्यते । वा. २।४।२।११ पृ. ६३६.

* **हेतुहेतुमतोर्लिङ्** विधिः — 'यदि ब्राह्मणो यजेत' इति । बाल. पृ. २९.

* **हेत्वाभासाः ।** अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानप्रकारो हेतुनिष्ठो दोषः हेत्वाभासः । भवति च असिद्धत्व—अनैकान्तिकत्व—बाधकत्वादिज्ञानाभावः प्रतिबन्धकाभावविधया अनुमितिकारणीभूतः तत्प्रतियोगिप्रमाप्रकारकत्वं असिद्धत्वादीनाम्, तेन हेतुनिष्ठो दोषो हेत्वाभासः । यादृशविशिष्टविषयत्वेन यथार्थज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्वं इति यावत् । यद्वा तादृशप्रमाविषयत्वम् । ( तत्त्वं इत्यस्य स्थाने ) तेन दुष्टो हेतुर्हेत्वाभासः । 'धूमो वह्निव्यभिचारी' इत्यादिभ्रमवारणाय यथार्थेति । उपाधिवारणाय कारणेति । उपाधिज्ञानस्य साक्षात् प्रतिबन्धकत्वाभावेन तदभावस्य अनुमितिप्रयोजकतया हेतुत्वाभावात् ।

ते ( हेत्वाभासाः ) त्रयः असिद्धानैकान्तिकबाधकाः । तत्र असिद्धिः स्वरूपासिद्धिः संबन्धासिद्धिः व्यतिरेकासिद्धिः आश्रयासिद्धिः व्याप्यत्वासिद्धिः इति पञ्चधा । तत्र हेत्वप्रसिद्धिः स्वरूपासिद्धिः । 'बुद्धो धर्माधर्मवेदी सर्वज्ञत्वात्' इति । अत्र सर्वज्ञत्वं हेतुः अप्रसिद्धः । पक्षे व्याप्यत्वेन अभिमतस्याभावः स्वरूपासिद्धिः इति अक्षपादीयमते तु ईश्वरे प्रसिद्धिसत्त्वे बुद्धे तदभावात् अक्षतिः ।

पक्षे व्याप्यत्वाभिमतस्य हेतुतावच्छेदकसंबन्धेनाभावः संबन्धासिद्धिः । वह्निरदाहकः शीतत्वात् इति ।

पक्षतावच्छेदकहेत्वोरभेदे व्यतिरेकासिद्धिः । गोशब्दः सास्नादिमद्वचनः गोशब्दत्वात् इति । अयमसाधारणानैकान्तिक इति अक्षपादीयाः । इदमेव पक्षमात्रवृत्तित्वं असाधारणस्य । अत्र साध्यवत् साध्याभावसाधकतया अनुमितिप्रतिबन्धो दूषकताबीजम् ।

पक्षाप्रसिद्धिः आश्रयासिद्धिः । आकाशो नित्यः निरवयवद्रव्यत्वात् इति । सौत्रान्तिकं (बौद्धं) आकाशाभाववादिनं प्रति आश्रयासिद्धिः । पक्षतावच्छेदकाप्रसिद्धिरपि सा । काञ्चनमयपर्वतो वह्निमान् इति ।

पक्षैकदेशे हेतोरवृत्तित्वं व्याप्यत्वासिद्धिः । यथा वायुः आकाशश्च अनित्यः, मूर्तत्वात् इति । ' साध्ये साध्यतावच्छेदकस्य, हेतौ हेतुतावच्छेदकस्य अप्रसिद्धिः व्याप्यत्वासिद्धिः । काञ्चनमयवह्निमान्, काञ्चनमयधूमात् इति । एवं नीलधूमात् इत्यादावपि नीलधूमत्वस्य गुरुतया हेतुतानवच्छेदकत्वेन साऽपि व्याप्यत्वासिद्धिः ' इत्यक्षपादीयाः ।

साध्यसंदेहजनको हेतुः अनैकान्तिकः । संदेहजनकत्वं च साध्यतदभावसंबन्धित्वज्ञानेन सत्प्रतिपक्षितत्वेन च । यथा नित्यः शब्दः अमूर्तत्वात् इति । अत्र अमूर्तत्वं अनित्यक्रियादिसाधारणत्वात् साध्यसंदेहं जनयति । एवं वायुः अप्रत्यक्षः अरूपिद्रव्यत्वात्, वायुः प्रत्यक्षः महत्त्वे सति उद्भूतस्पर्शवत्त्वात् । अत्र उभयोः समबलत्वात् साध्यसंदेहजनकतेति ।

सत्प्रतिपक्षस्थले साध्यतदभावव्याप्यताज्ञानात् परस्परानुमितिप्रतिबन्धः, न संशयाकारानुमितिः इति अक्षपादीयाः ।

**अत्राहुः ।** स्थाणुत्वपुरुषत्वव्याप्यवत्ताज्ञाने प्रत्यक्षरूपसंशयवत् सत्प्रतिपक्षस्थलेऽपि संशयाकारानुमितिरस्तु । यत्र एककोटिव्याप्यदर्शनं प्रबलं तत्र अधिकबलतया द्वितीयकोटिमानप्रतिबन्धात् न संशयः । फलबलेन च अधिकसमबलभावः कल्प्य इति ।

**अत्र नव्याः ।** तदभाववत्ताज्ञानस्येव तदभावव्याप्यवत्ताज्ञानस्यापि लौकिकसंनिकर्षाजन्यज्ञानत्वमेव प्रतिबध्यतावच्छेदकम्, तेन न संशयाकारानुमितिः इत्याहुः ।

बाधकस्तु साध्याभावसाधकः । अयं विरुद्धः इति अक्षपादीयाः । यथा शब्दो नित्यः कृतकत्वात् इति । अत्र कृतकत्वं अनित्यत्वव्याप्यं नित्यत्वं बाधते । अयं साध्यसामान्यविपर्ययसाधक इत्युच्यते इति दिक् । **मणि. पृ. ४०-४२.**

* ' **हेमन्ते** साकमेधैर्यजेत ' चातुर्मास्येषु । **भा. ११।२।३।१३.**

**हेरम्बनरसिंहन्यायः ।** यथा हेरम्बनरसिंहयोरेकदेशे गजत्वं सिंहत्वं वाऽपरस्मिन्नरत्वमिति देशभेदेन विरोधाभावात्तस्याऽऽर्हतस्यैकस्मिन्देश एव सत्त्वाऽसत्त्वादिना अनेकान्तत्वाभिधाने दृष्टान्ताऽनुपपत्तेरिति रामानुजीया इति । **साहस्री. ७०७.**

* ' **होतव्यमग्निहोत्रं न होतव्यम्** ' इत्यादावर्थवादः । **भाट्ट. १०।८।५.**

* **होता** आध्वर्यवं करणमन्त्रं कुर्यात्, हौत्रं तु मन्त्रं कश्चित् होतृपुरुषः कुर्यात् कुण्डपायिनामयने यूपपरिव्याणे बहिरङ्गो वा कश्चित् । **भा. ३।८।१०।२१.** * होता ऋत्विक् । पशौ इडायां ' अध्यूध्नीं होत्रे हरन्ति ' अनया अध्यूध्न्या शिष्टभक्ष्यया होतुः इतरेडाभागबाधः । **वि. १०।७।४.** * होता तावत् अग्रतो गार्हपत्यस्य, पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन संबोधयन् यागस्य कर्ता इत्युच्यते । **भा. ११।२।१०।४५.** * होता प्रथमवर्गस्थः ऋत्विक् । अयं पूर्णां दक्षिणां द्वादशगोरूपां लभते । **वि. ३।७।१७.** * होता प्रातरनुवाकमनुब्रूते । **भा. ३।७।९।२२.**

**' होतर्यज, प्रशास्तर्यज ' इति वक्तृविकल्पः ॥**

सर्वैश्चमसैः सहाध्वर्युरादौ होतृयाज्यया हुत्वा ततस्तेषां मध्ये होत्रादीनां मध्यतःकारिणां चमसानन्यत्र विनियुज्य अवशिष्टचमसेषु सशेषेष्वेव पुनःसोममभ्युन्नीय तैः क्रमेण मैत्रावरुणादिकतिपयहोत्रकयाज्याभिः जुहोतीति स्थितिः । तत्र पुनरभ्युन्नीतहोमेष्वध्वर्युकर्तृकप्रैषगणमध्ये ' होतर्यज, प्रशास्तर्यज ' इति श्रुतौ प्रैषौ, तत्रत्यहोतृशब्देन मैत्रावरुण एवोच्यते । ' सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तहोत्राः प्राचीर्वषट्कुर्वन्ति ' इति वचनेन तस्यापि याज्यायामधिकारात् । मुख्येन होत्रा प्रथमं वषट्कृतत्वाच्च प्रशास्तृशब्दस्यापि मैत्रावरुणवाचित्वात्तस्य प्रैषे द्वयोर्मन्त्रयोर्विकल्पः इति कल्पसूत्रमतेन प्राप्ते, सप्तहोतृप्रैषप्राये पठितयोर्होतृप्रशास्तृशब्दयोः प्रतिनियतनिर्देशादेव भिन्नार्थकत्वावसायान्मध्यतःकारिचमसहोमीयमैत्रावरुणोक्तप्रैषान्त्यावयवे होतर्यजेत्यत्र होतुरेवोप-



स्थितत्वाच्च मुख्यहोतैवोच्यते । ततश्चैकस्यां याज्यायां होतृप्रशास्त्रोर्वक्त्रोर्विकल्पः, न त्वेकस्मिन्नेव प्रशास्तरि वक्तरि प्रैषयोर्विकल्पः । अथवा, मैत्रावरुणेनेवाध्वर्युणाऽपि होता प्रैषणीय इति न कोऽपि विकल्प इति । **संकर्ष. २।३।१४.**

* ' **होतारमध्वर्युर्दीक्षयति** ' । **वि. ३।७।१७.**

**होतारमपि जुह्वानं स्पृष्टो दहति पावक इति न्यायः ।** अयं चण्डकोपानां कश्चिदपि प्रियो न भवतीति द्योतयतीति । **साहस्री. ९८७.**

* होतारं वृणीते । **भा. ३।७।९।२४,** * **होत्रा** हौत्रं कर्तव्यम् । ३।७।१९।४०, * **होत्रे** ऋग्भिर्युक्तं रथं ददाति वाजपेये नान्यं न चान्यस्मै । १०।३।२१। ७५. * **होतुः** अध्वर्योश्च एकस्मिन् पात्रे यदा भक्षणं तदा लिङ्गवाक्याभ्यां होतुः प्रथमभक्षणं ततोऽध्वर्योः । न तु अध्वर्योः प्रथमभक्षः । **वि. ३।५।१३.** * होतुरपि अध्वर्युवशात् प्रवरेषु आनुपूर्वीनियमः । **संकर्ष. ३।४।४. मीको. पृ. १००९** ' आर्षेयवरणे अध्वर्युवशात्० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुरेव ऊर्ध्वज्ञुत्वादिर्वरणधर्मः, न सर्वेषामृत्विजाम् । **संकर्ष. ४।२।५. मीको. पृ. ३४२१** ' वरणधर्मः ऊर्ध्वज्ञुत्वादिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । होतुरेव प्रवरः पूर्वः, अध्वर्योरुत्तरः । **संकर्ष. ४।२।६. मीको. पृ. २८१०** ' प्रवरः होतुरेव पूर्वः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः करणमन्त्रस्यानुष्ठातृत्वम् । **भा. ३।८।१०।२१ पृ. ११२६.** * होतुः कृत्स्नेडाभक्षस्य अध्यूध्न्या निवृत्तिः अग्नीषोमीये पशौ । १०।७।४। १२-१६. **मीको. पृ. ३३५** ' अध्यूध्नीन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः क्रियमाणानुवादी मन्त्रः यूपपरिव्याणे ' युवा सुवासा० ' इति । **भा. ३।८।१०। २१,** * होतुश्चमसः । होता यत्र चमति, चमिष्यति, अचमीद्वा, स होतुश्चमसः । ३।५।७।२२. * होतुश्चमसभक्षणे वषट्कारः कारणम् । **वि. ३।५।१०.** * होतुः पुरुषाश्रयः मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत् च । **वि. ३।७।१७.** * होतुः पृष्ठं वैरूपं विश्वजिति सर्वपृष्ठे । **भा. १०।६।५।१४.** * होतुः पृष्ठे निवेशो वैरूपादिसाम्नां उक्थ्यादिक्रतौ, न कृत्स्ने क्रतौ । १०।६।६।१५-२१. **मीको. पृ. १०८६** ' उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः पृष्ठस्तोत्रे एव बृहद्रथंतरयोः समुच्चित्य निवेशः संसवादौ उभयसामके क्रतौ । १०।६। ८।२४-२६. **मीको. पृ. ४०३६** ' संसवादौ उभयसामके क्रतौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः पृष्ठस्तोत्रार्थं षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव निवेशः विश्वजिति । १०।६।५।१३-१४. **मीको. पृ. ३६९०** ' विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः प्रथमं भक्षः एकपात्रे बहुभिः सोमभक्षणे । ३।५।१३। ३६-३९. **मीको. पृ. १७९२** ' ज्योतिष्टोमे एकपात्रे बहुभिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * होतुः प्राग् वरणात् सामिधेनीकर्मणा संयोगः ' अवृतः सामिधेनीरन्वाह ' इति । **भा. १२।१।१८।४१.** * होतुर्याज्यापनयेऽपि यजमानाद्भक्षो नापनीयते ज्योतिष्टोमे क्रतुग्रहयागेषु यजमानस्य स्वयं याज्यापाठपक्षे । **वा. ३।५।१८।४४-४६.** * होतुः वरणं अदृष्टार्थम् । तत् ऐष्टिकेषु कर्मसु दीक्षणीयादिषु कर्तव्यम् । **भा. १२।१। १८।४१.** * होतुः वरणं दर्शादावदृष्टार्थमेव, वरणात् प्रागपि सामिधेनीषु तस्य प्रवृत्तेः । अत एव ज्योतिष्टोमगतेष्टिकेषु सौमिकवरणात् पृथगैष्टिकं वरणं कर्तव्यम् । **वि. १२।१।१८,** * होतुः वषट्कारो भक्षहेतुः समाख्या च । निमित्तयोश्च समुच्चयः । प्रतिनिमित्तमदृष्टभिन्नम् । ३।५।१२. * होतुर्विहारद्वये तन्त्रम् । वरुणप्रघासेषु । ११।२।१०।४४-४८. * होतुः वैरूपं साम विश्वजिति । **भा. ७।३।३।८.**

* **होत्रादीनां** च सदसि कर्मप्रवृत्तेः अवश्यं वषट्कारसमाख्यानिमित्तभक्षार्थं सदसि सोमाः आनेतव्याः । **वा. ३।५।११।३२.**

* **होतृकामः** ' यं कामयेत वसीयान् स्यादित्युच्चैस्तरां तस्य वषट् कुर्यात् ' इत्यादिः दर्शपूर्णमासादौ

अस्त्येव । अस्थियज्ञे मृताधिकारपक्षे तु न संभवति । वि. १०।२।२२. ❀ होतृकामानामननुष्ठानं अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२।५६–५७. मीको. पृ. ७६० ( ६ ) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

❀ होतृपुरुषः ग्रावस्तुत् नाम ज्योतिष्टोमे । भा. ३।५।१९।२७.

❀ होतृमैत्रावरुणयोः द्वयोः वरणं निरूढपशुबन्धे । संकर्ष. ३।४।१३. मीको. पृ. २३७१ 'निरूढपशुबन्धे होतृ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**卐 होतृवरणं दार्शिकं ज्योतिष्टोमे इष्टिपशुषु कर्तव्यम्, ब्रह्मवरणं तु न कर्तव्यम् ॥**

**प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । १२।१।१८।३६ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः होतुर्वरणं आम्नातम् 'अग्निर्देवो दैव्यो होता देवान् यक्षत्' इति । तत् चोदकेन ऐष्टिकेषु कर्मसु सोमाङ्गभूतेषु प्राप्यते । अस्ति तु सोमेऽपि होतुर्वरणं 'अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते' इति । तत्र विचार्यते, किं ऐष्टिकेषु कर्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्तव्यं उत नेति । किं प्राप्तम् ? न कर्तव्यमिति । कस्मात् ? वरणं तावदानत्यर्थम् । सौमिकेन च वरणेन आनतो होता । साङ्गस्य सोमस्य करणेन च आनतस्य आनमनकार्यमस्ति । तस्मान्न कर्तव्यम् । एवं प्राप्ते, ब्रूमः । प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । नैतदस्ति, 'सौमिकं वरणं प्रसङ्गात् दार्शपौर्णमासिकस्य कार्यं साधयिष्यति' इति । प्रवृत्ते वरणात्, प्रवृत्ते कर्मणि दार्शपौर्णमासिकं वरणं क्रियते । अतस्तत् नानत्यर्थम् । किं तर्हि ? कर्ममात्रम् । न चेत् क्रियेत तेन गुणवैगुण्यं स्यात् । तस्मात् प्रतिकर्म भेदेन कर्तव्यम् ।

**ब्रह्माऽपीति चेत् । ३७ ॥**

**भाष्यम्**— इति चेत् पश्यसि प्रवृत्तवरणात् होतुर्वरणं प्रतिकर्म कर्तव्यमिति, ब्रह्माऽपि प्रवृत्ते कर्मणि व्रियते प्रणीताप्रणयनकाले । तस्मात् तस्यापि वरणं धर्ममात्रम् । अतस्तदपि प्रतिकर्म कर्तव्यम् । वक्तव्यो वा विशेषः ।

**न प्राङ्नियमात् तदर्थं हि । ३८ ॥**

**भाष्यम्**— न ब्रह्मवरणं कर्तव्यम् । किं कारणम् ? प्राङ्नियमात् प्राग्वरणादित्यर्थः । सत्यम्, प्रवृत्ते कर्मणि ब्रह्मणो वरणम् । प्राग्वरणात् न किंचित् ब्रह्मत्वमस्ति । वरणादुत्तरकालं ब्रह्मणः कर्म, तदर्थं वरणं कर्मार्थम् । तस्मान्न धर्ममात्रम् । किमर्थं तर्हि ? आनत्यर्थमेव । सौमिकेन वरणेन आनतोऽसौ । तस्मात् ब्रह्मवरणं न कर्तव्यम् ।

**निर्दिष्टस्येति चेत् । ३९ ॥**

**भाष्यम्**— अथोच्येत, अस्ति अमावास्यायां औपवसथ्ये अहनि वेदिकर्म निर्दिष्टम्, 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । तत्र वेदिपरिग्रहप्रसवः ब्रह्मणा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरण इति ।

**नाश्रुतित्वात् । ४० ॥**

**भाष्यम्**— पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतम्, न परिग्रहणम्, अश्रुतत्वात् । यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्मार्थत्वात् । न प्राक् वेदिकरणात् पूर्वपरिग्रहः । तत्रापि ब्रह्मणा प्रसवो दातव्यः । बाढम् । अयं तर्हि अन्यः परिहारः । दर्शपूर्णमासप्रकरणे हविषां अभिवासनादूर्ध्वं वेदिकरणमाम्नातम् । ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राक् ब्रह्मत्वप्रवृत्तेः दृष्टार्थत्वात् आनत्यर्थम् । एवं स्थिते अमावास्यायां वेदिकरणं वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः, प्रसवोऽपि, ब्रह्मवरणमपि, प्रधानदेशकालत्वात् गुणानाम् । एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । उभयत्र अप्रवृत्ते ब्रह्मत्वे । तस्मादुभयत्र आनत्यर्थम् । अतो न प्रतिकर्म ब्रह्मवरणं कर्तव्यं सौमिकेनैव वरणेन आनतत्वात् ब्रह्मणः ।

**होतुस्तथेति चेत् । ४१ ॥**

**भाष्यम्**— इति चेत् पश्यसि, यद्यपि प्रवृत्ते कर्मणि ब्रह्मणो वरणम्, न च वरणात् प्राक् किंचित्



ब्रह्मणः कर्मास्ति, तस्मात् न प्रवृत्तवरणो ब्रह्मा इति । होतुस्तथा । होतुरपि प्राक् वरणात् न किंचित् कर्मास्ति । तस्यापि वरणं न धर्ममात्रम् ।

**न कर्मसंयोगात् । ४२ ॥**

**भाष्यम्**— अस्ति होतुः प्राग्वरणात् सामिधेनीकर्मणा संयोगः 'अवृतः सामिधेनीरन्वाह' इति । तस्मात् होतृवरणमदृष्टार्थम् । तत् ऐष्टिकेषु कर्मसु दीक्षणीयादिषु कर्तव्यम्, ब्रह्मवरणं तु दृष्टार्थम्, तत् सौमिकेनैव कृतत्वात् न कर्तव्यमिति ।

**शा**— होतृवरणं न कर्तव्यं उत अदृष्टार्थत्वात् कर्तव्यमिति संशये, वरणस्य आनत्यर्थत्वात्, आनतिश्च सौमिकेन वरणेन प्रसङ्गात् सिद्धा अतः न कर्तव्यं इति पूर्वपक्षे प्राप्ते, प्रवृत्तस्य वरणं न कथंचित् दृष्टार्थं भवति । दक्षिणादानं हि भविष्यदवश्यमपि भवति आनतिनिमित्तम्, लोके तथा दर्शनात् न तु वरणेन भाविना भवति आनमनं तस्मात् अदृष्टार्थम् । ब्रह्मवरणं तु अप्रवृत्ते ब्रह्मणि क्रियते । पौर्णमास्यां तावदप्रवृत्त एव क्रियत इत्यविवादम् । अमावास्यायामपि पूर्वेद्युरपकृष्यमाणा वेदिः स्वाङ्गभूतप्रसवसिद्धये ब्रह्मणो वरणमप्यपकर्षति । तस्मात् अप्रवृत्तविषयत्वात् ब्रह्मवरणं दृष्टार्थम् । अतः ब्रह्मवरणं न कर्तव्यम् ।

**सोम**— भक्षाणां कृतकार्यत्वाभावेऽपि वरणं आनत्यर्थत्वात् कृतकार्यं इति उदयितेः **संगतिः** ।

**वि**— 'नैतासु ( सोमाङ्गेष्टिषु ) वरणं होतुरस्ति वा, ऽऽनत्यभावतः । नास्त्य, न्वाहार्यवद् धर्मकृत्वादत्रेष्टिवद् भवेत् ॥'

**भाट्ट**— दार्शिकं होतृवरणमपि सोमार्थेन समन्त्रकेण वरणेन दीक्षणीयादिषु न प्रसज्यते, प्रकृतौ तस्यादृष्टार्थत्वात् । प्रवृत्तेषु हि केषुचित् पदार्थेषु पश्चात् 'अग्निर्देवो होता देवान् यक्षत्' इत्यादिना प्रकृतौ होतृवरणमाम्नातम् । अतस्तस्य प्रवृत्तत्वेन दृष्टार्थत्वानुपपत्तेः अदृष्टार्थत्वावसायात् अप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थेन सौमिकेन न प्रसङ्गसिद्धिः । न च प्रवृत्ताभ्यर्थत्वेऽपि ब्रह्मवरणवत् अदृष्टार्थत्वोपपत्तिः ब्रह्मवरणस्यापि पूर्वेद्युः वेदिकरणाभ्यनुज्ञानार्थं प्रवृत्तस्यापि प्रणीताप्रणयनात् पूर्वं करणादिति वाच्यम्, पौर्णमास्यां तावत् वेदिकरणस्य हविरभिवासनोत्तरकालीनत्वेन पूर्वेद्युःकालत्वाभावात् प्रणीताप्रणयनकालीनब्रह्मवरणस्य अप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थत्वोपपत्तेः, अमावास्यायामपि वेदिकरणापकर्षे तदङ्गभूताभ्यनुज्ञानार्थतया ब्रह्मवरणस्यापि अर्थक्रमेण पाठक्रमं बाधित्वा अपकर्षसंभवेन अप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थत्वोपपत्तेः । न चैवं होतृवरणेऽपि अर्थक्रमानुसारात् सामिधेनीतः पूर्वं करणापत्तिः । 'अवृतः सामिधेनीरन्वाह' इति होतृवरणवाक्यशेषेण पाठक्रमाबाधकत्वप्रतीतेः । अयं हि न स्वतन्त्रः सामिधेनीमात्रे वरणपर्युदासः । तथात्वे निविन्मन्त्रेभ्यः पूर्वं वरणापकर्षापत्तेः । किंतु एकवाक्यतालाभाय पाठक्रमाबाधमात्रतात्पर्यग्राहकः । अतश्च अस्यापकर्षानुपपत्तेः प्रवृत्ताभ्यर्थनरूपत्वेन अदृष्टार्थत्वात् न प्रसङ्गः । ब्रह्मवरणस्य तु दृष्टार्थत्वाद्युक्त एव प्रसङ्ग इति वैषम्यम् । न च प्रवृत्ताभ्यर्थनरूपत्वेऽपि लोके लोभवशेन संदेहेऽपि यत्किंचित्कर्मणि प्रवृत्तस्यापि कर्मकरस्य मध्ये निष्क्रायकलिखनादेर्दृष्टार्थत्ववत् वरणसंदेहेऽपि स्वलोमेन सामिधेनीषु प्रवृत्तस्यापि होतुः मध्ये वरणस्य दृष्टार्थत्वोपपत्तिः इति वाच्यम् । संदेहेन प्रवृत्तस्य कदाचित् परिभ्रंशो अङ्गप्रधानयोः एककर्तृकत्वबाधापत्तेः अवश्यं यजमानेनैव सामिधेनीतः पूर्वं लौकिकस्य अप्रवृत्ताभ्यर्थनाद्युपायस्य करणेन अस्य वैधवरणस्य अदृष्टार्थत्वावश्यकत्वात् । अत एव 'अवृतः' इत्यस्य वैधवरणशून्यः इत्येवार्थः । एवं च ऋतुयाज्यावरणवत् वृतवरणत्वमेव अदृष्टार्थत्वप्रयोजकम्, न तु अप्रवृत्ताभ्यर्थनत्वं इत्यपि ध्येयम् । न चैवं सत्यपि अदृष्टार्थके वरणे वरणशब्दस्य औपचारिकत्वापत्तिः । प्रार्थनस्यैव तत्पदवाच्यत्वात् । अतश्च सौमिकेन वरणेन ब्रह्मवरणमेव प्रसज्यते न तु होतृवरणं इति सिद्धम् । वस्तुतस्तु सौमिकस्य वरणस्य प्राकृतवरणवदेव कर्तृसंस्कारकतया अङ्गप्रधानार्थत्वात्, दक्षिणावच्च प्रधानमात्रार्थत्वग्राहकाभावात्, तेन ऐष्टिकब्रह्मवरणादेः बाध एव न

प्रसङ्गः। वैश्वहोतृवरणस्य तु सोऽपि न इति ध्येयम्। प्रासङ्गिकी च अस्मिन् पक्षे अध्यायसंगतिः।

मण्डन— 'होतुर्वृतिः स्यादिह पौर्णमासिकी।'

शंकर— 'होतुर्वरणमेव च ( स्यात् )।'

* होतृवरणं सोमार्थे 'यद्धोतारं वृणीते जगतीं तद् वृणीते' इति। भा. ११।३।९।१९, * होतृवरणस्य अवभृथे प्रतिषेधः 'न होतारं वृणीते नार्षेयम्' इति। ११।३।९।१९.

* होतृवरणपर्युदासो महापितृयज्ञे। १०।८।१। १-४. मीको. पृ. २४७४ 'पर्युदासन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* होतृशब्दः हौत्रप्रवचनाख्यऋग्वेदविहितकर्मकारिवाची। सु. पृ. ११००-११०१.

* होत्रं हूयते इति कर्मणि जुहोतेः 'हुयामाश्रु०' इति औणादिके त्रन्प्रत्यये गुणे च कृते होत्रशब्दः निष्पद्यते। सु. पृ. ४३८. * होत्रं होमः इति पूर्वपक्षः। होतुः कर्म होत्रम्। इति सिद्धान्तः। संकर्ष. ४।२।११.

* होत्रकाः— प्रशास्तृ–ब्राह्मणाच्छंसि–पोतृ–नेष्टृ–अच्छावाक–आग्नीध्राः। सु. ३।७ पृ. २५. * होत्रकाः मैत्रावरुण–ब्राह्मणाच्छंसि–नेष्टृ–पोतृ–आग्नीध्राः पञ्च। सोम. ३।२।१२. * होत्रकाः मैत्रावरुण–ब्राह्मणाच्छंसि– पोतृ– नेष्टृ– अच्छावाक– आग्नीध्राः। कु. ३।२।१२।२७. * होत्रकाः होतुर्वषट्कारेण इन्द्रे हुते चमसमभ्युन्नीय देवतान्तरेभ्योऽनुवषट्कारेण जुह्वति। वि. ३।२।१२.

* होमः आध्वर्यवं कर्म। वि. ३।७।२२, * होमः आहवनीये भवति इत्युत्सर्गः। १२।२।१. * होमः क्रियात्मकत्वात् किं इत्यपेक्षमाणः प्रधानकथंभावेन इत्थं अनुग्राहकत्वेन गृह्यते नैवं द्रव्यम्। वा. २।१।४।१२ पृ. ४११. * होमः चित्रेष्टौ 'अग्ने गोभिर्न' इत्यादिभिः पुष्टिमन्त्रैरेव। संकर्ष. २।४।५. मीको. पृ. १७०९ "चित्रेष्टौ 'अग्ने गोभिर्न०" इत्यत्र अधिकरणं द्रष्टव्यम्। * होमः। जुहोतिचोदनाभावेऽपि प्रक्षेपाधिके यागे अभियुक्तप्रसिद्धेः होमरूपता। एवं 'चतस्रः पूर्णाः प्रागुदीच्यो निनयेत् ऋतुभ्यः स्वाहा, दिग्भ्यः स्वाहा, सप्तऋषिभ्यः स्वाहा, इतरजनेभ्यः स्वाहा' इत्यादिविहितस्य उदकनिनयनादेः मान्त्रवर्णिकदेवताऽन्वयात् होमता। सु. पृ. ११०४. * होमः दर्विहोमेषु प्रतिहोमं समिधमाधायैव। संकर्ष. २।४।८. मीको. पृ. २०१६ 'दर्विहोमेषु प्रतिहोमं०' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमः। देवतां च विना होमायोगः। सु. पृ. ४५७, * होमः देवतोद्देश–द्रव्यत्याग–प्रक्षेपसमुदायात्मकः। पृ. ६३१, * होमः देवतोद्देश–द्रव्यत्याग–प्रक्षेपाख्यत्र्यंशः। पृ. १५२९. * होमः नाम आसेचनाधिको यागः। भा. ४।२।१३।२८. * होमः प्रधानम्, आज्यग्रहणमुपसर्जनम्। वि. ४।१।१७. * होमः। 'फलवाक्ये यजेरेव संबन्धः श्रूयते स्फुटः। तत्संनिधौ समाम्नानात् जुहोतेरङ्गतेष्यते॥' वा. ३।४।१४।४१ पृ. ९८२, * होमः। यागः प्रधानम्, यस्तु प्रक्षेपः ( होमः ) सोऽङ्गमेव। ३।४।१४।४१ पृ. ९८२, * होमः। ये तु जुहोतिचोदनोत्पत्तयः तेषु पूर्वार्धभूतोऽपि यजिः आत्मा वा भविष्यति, अथवा तेषामपि सोऽङ्गम्। ३।४।१४।४१ पृ. ९८३. * होमः 'शूर्पेण जुहोति' इत्युक्तः अपूर्वप्रयुक्तः न तु शूर्पान्नहेतुत्वप्रयुक्तः चातुर्मास्यवरुणप्रघासेषु। भा. ९।१।५।११. * होमः सदाचारः। वा. १।३।३।७ पृ. २०५. * होमः सोमस्य, उत्तरवेद्यां भवति। वि. ३।५।११. * आसेचनोपलक्षितप्रक्षेपाधिको यागो होमः, न तु यागमात्रं होमः। सु. पृ. १५२८. * इष्टिर्यागः स एव च आसेचनाधिको होमः। भा. ६।८।१।७. * देवतामुद्दिश्य द्रव्यत्यागो ( न मम इत्याकारकः ) यागः, त्यक्तस्य च वह्नौ प्रक्षेपो होमः। त्यागमात्रात्मको यागः, प्रक्षेपाधिको होमः। वि. ४।२।१२. * देवतोद्देशेन स्वत्वत्यागमात्रं यागः। देवतोद्दिष्टत्यज्यमानस्वत्वद्रव्यप्रक्षेपो होमः। वा. ३।४।१४।४१ पृ. ९८१, * 'अथवा नैव भिद्येते यागहोमौ परस्परम्। पूर्वापरौ हि सदृशौ तद्वागौ नरसिंहवत्॥' ३।४। १४।४१ पृ. ९८३. * होमाः अतिपन्ना अपि कर्तव्याः



एव। भा. ६।५।११।४०, * होमाः कर्मसंयुक्ताः जयादयः उदाहरणम्। एते किं सर्वकर्मणां कृष्यादीनां शेषभूता उत वैदिकादीनां अग्निहोत्रादीनां इति संशये वैदिकानां एव शेषभूताः इति सिद्धान्तः। ३।४।९। २५-२७. * होमाः चतुर्विधाः- ऐष्टिकाः, पाशुकाः, सौमिकाः, दार्विकाश्चेति। वि. ११।३।२. * होमस्य त्यागात्मकत्वम्। भा. २।२।११।२५ पृ. ५४३. * होमस्य पुरुषार्थस्य दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे। १०।८।७।१२-१५. 'नदीक्षिताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमस्य फलार्थत्वम्, अभिषवस्य च होमार्थत्वम्। भा. ३।५।११।३२, * होमस्य मन्त्रदेवतादिसाधनत्वम्। २।२।११। २५. * होमस्य यागात् भिन्नता। 'तथा शब्दार्थसंबन्धस्मृतितत्त्वावधारणात्। प्रक्षेपाधिकतामात्राद्यागाद्धोमस्य भिन्नता॥' वा. ३।१।१।१ पृ. ६४९. * होमयोः। पिष्टलेपफलीकरणहोमयोः अनूयाजोत्तरत्वं नास्ति। भाट्ट. ५।१।१५. * होमानामुपनयनाङ्गानां लौकिकाग्नावनुष्ठानम्। ६।८।२।११-१९. मीको. पृ. ११४७ 'उपनयनहोमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमानामेव नामधेयं दर्विहोमशब्दः, न यागानाम्। ८।४।३।४. मीको. पृ. २०१८ 'दर्विहोमशब्दः होमानामेव०' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमानां भेदनादिनिमित्तकानां दर्शपूर्णमासमात्राङ्गता। ६।५।१५।४५-४७. मीको. पृ. २०६९ 'दर्शपूर्णमासाङ्गं भेदनादिनिमित्तकहोमाः' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमानां मूलप्रकृतिः अग्निहोत्रम्। वि. ८।१।३ वर्णकं २. * होमानां लौकिकानामेव वाचकः पाकयज्ञशब्दः। संकर्ष. २।४। ११. मीको. पृ. २५३४ 'पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः' इत्यत्र अधिकरणं द्रष्टव्यम्।

होमे पुरस्तात्स्वाहाकारा अपि मन्त्राः करणम्॥

'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इत्यादौ मन्त्रान्ते पठ्यमानस्वाहाकाराणां प्रदानार्थत्वेऽपि 'स्वाहा वाचे स्वाहा वाचस्पतये' इत्यादौ पुरस्ताच्छ्रूयमाणानां न तदर्थत्वम्, स्वस्थानप्रच्युतानां नखकुण्डलादीनां कण्डूयनालङ्करणादिकार्याक्षमत्वदर्शनात्। अत एव इरापदस्य गिरापदस्थाने एव निवेशो द्विरावृत्तिश्च कल्प्यते। तस्मात् 'स्वाहा यज्ञं वातादारभे' इत्यादाविव न होमार्थता। इति प्राप्ते, तत्र चतुर्थ्या अभावात् संप्रदानानिर्धारणेन होमार्थत्वाभावेऽपि वागादीनां चतुर्थ्यन्तत्वेन देवतात्वावगमात् यत्र क्वापि स्थितस्य दीपस्येव पदस्याप्यर्थप्रकाशकत्वानपायाद्ब्राह्मणाय देहि देहि ब्राह्मणाय इति वाक्याभ्यामविशेषेण बोधानुभवाच्च प्रदानार्थतैव। अत एव 'पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात् स्वाहाकारा वा अन्ये' इति श्रुत्योभयोरपि प्रदानार्थत्वमनूद्यते। संकर्ष. २।४।१७.

* होमेषु आहवनीयसंयोगो भवति। भा. ३।४। ९।२६. * होमेषु सर्वेषु। अनारभ्योच्यते 'चतुर्गृहीतं जुहोति' इति सर्वहोमेषु। भा. ४।१।१७।४८। अनारभ्यविधानात् होममात्रे चतुर्गृहीतम्। वा.

* 'होमाङ्गस्य च ( मन्त्रस्य ) याज्यात्वं न कस्यचिदपीष्यते।' वा. ३।२।५।१२ पृ. ७६१.

* होमान्तं अवदानमेकः पदार्थः। तेन दर्शपूर्णमासयोः आग्नेयाग्नीषोमयोः अनुसमयः। वि. ५।२।४.

* होमाभिषवौ ज्योतिष्टोमे सोमभक्षणे एकं निमित्तम्। ६।४।७।२४-२५. मीको. पृ. १८३७ 'ज्योतिष्टोमे होमाभिषवौ सहितौ०' इत्यत्र अधिकरणं द्रष्टव्यम्। * होमाभिषवौ सोमभक्षे समुच्चित्य निमित्तान्तरम्। ३।५।११।३२. मीको. पृ. १८३३ 'ज्योतिष्टोमे सोमभक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

होमाभिषवाभ्यां च। ३।५।११।३२॥

सिद्धान्तसूत्रम्। सोमभक्षस्य निमित्तद्वयं प्रागुक्तम्। तृतीयनिमित्तप्रतिपादनार्थमिदं सूत्रम्। सोमलतां अवहत्य रसनिष्पादनं अभिषवः। होमश्च अभिषवश्च ताभ्यां उभाभ्यां मिलित्वा एकेन निमित्तेन तृतीयेन सोमं भक्षयेत्। चकारः पूर्वनिमित्तसमुच्चयार्थः। पूर्वसूत्रात् भक्षयेत् इति पदस्यानुवृत्तिः। तृतीयमिदं

निमित्तं अध्वर्योरुपयुज्यते । न च अध्वर्युचमस इति समाख्याऽस्ति । नापि तस्य प्रायो वषट्कर्तृत्वम् । के.

* **होमाभिषवयोः** कर्ता भक्षणं प्रति अङ्गत्वेन पूर्वमप्राप्तत्वात् ' हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा० ' इत्यनेन विधीयते । वि. ६।४।७, * होमाभिषवयोः सहितयोः भक्षणनिमित्तता न प्रत्येकम् । ६।४।७.

* **होमाभिषवनिमित्ताः** वषट्कारनिमित्ताश्च शेषभक्षा ज्योतिष्टोमे । ते च न परिक्रयार्थाः किंतु संस्कारार्थाः । भा. १०।२।९।२९.

* **होमाभिषवनिमित्तकभक्षप्रतिपादनं** ज्योतिष्टोमे । भा. ३।५।१।१।३२ पृ. १००९.

**होमाभिषवभक्षणं च तद्वत् । ६।४।७। २४ ॥**

अग्निष्टोमे ' हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति ' इति भक्षणं श्रुतम् । तत्र भक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं यथा पञ्चशरावे प्रत्येकस्य हविषः आर्तिः निमित्तं तद्वत् इति पूर्वपक्षमाह । होमश्च अभिषवश्च होमाभिषवौ । होमाभिषवाभ्यां संयुक्तं होमाभिषवसंयुक्तम् । होमाभिषवसंयुक्तं च तत् भक्षणं च होमाभिषवभक्षणं इति शाकपार्थिवादिवत् समासः । तद्वत् हविरार्तिवत् इत्यर्थः । चकारेण दृष्टान्तसंगतिरुक्ता ।

**उभाभ्यां वा, नहि तयोर्धर्मशास्त्रम् । २५ ॥**

सोमशेषभक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निवारयन् सिद्धान्तमाह उभाभ्यां । होमाभिषवाभ्यां मिलिताभ्यामेव निमित्तेन सोमभक्षः स्यात्, न प्रत्येकं निमित्तेन । तयोः होमाभिषवयोः धर्मस्य भक्षणस्य शास्त्रं विधानं नहि, नास्त्येव । यदि तयोर्धर्मो विधीयेत ततो होमाभिषवौ प्रधानं इति भक्षणं गुणः प्रतिप्रधानं भिद्येत । अथ पुनः उभाभ्यां निमित्ताभ्यां भक्षणं विधीयते । तस्मिन् विहिते एकोऽर्थो विहितो भवति, तेन एकं वाक्यम् । तदेतावति पर्यवसितं भवति ' अभिषुत्य हुत्वा भक्षयन्ति ' इति । तेन उभौ मिलित्वा निमित्तं इति सिद्धान्तः । के.

* **होमावृत्तिः** दर्शादौ भेदनादिनिमित्तावृत्त्या । वि. ६।२।९.

* **होमतन्त्रत्ववत्** । युगपदनेककपालभेदने होमतन्त्रत्ववत् वारुणेष्टेः तन्त्रत्वप्रसक्तौ । भाट्ट. ५।२।२.

* **होमदानपाकानामुत्कर्षो** दीक्षाकालोत्कर्षे । ६।५।१०।३८–३९. मीको. पृ. २१०८ ' दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **होमपाकयोः** अर्थतः क्रमः । वि. ५।१।२.

* **होमपादः** । संकर्ष. २।४।१–३०.

* **होममात्रे** चोदिते वेदाध्यायी शक्तः इत्यधिक्रियते, नाविद्वान् । भा. ३।८।८।१८.

* **होममात्ररूपेण** फले विहितस्य कर्मणः द्रव्यादिग्रहणे विरोधाभावः । सु. पृ. ७७७.

**होमलक्षणम् ॥**

**तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् । ४।२।१३।२८ ॥**

**भाष्यम्—** अथ किंलक्षणको जुहोतिरिति । तदुक्ते यजत्युक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके । तस्मात् यजतिरेवाऽऽसेचनाधिको जुहोतिः । हुतमनेनेत्येवंजातीयके वक्तारो भवन्ति लोके । वेदेऽपि यजतिचोदितं जुहोतिनाऽनुवदति । ' संग्रामिणं चतुर्होत्रा याजयेत् ', ' चतुर्गृहीतमाज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धम् ' इति । अथ ददातिः किंलक्षणक इति । आत्मनः स्वत्वव्यावृत्तिः, परस्य स्वत्वेन संबन्धः । यजतिददातिजुहोतिषु सर्वेषूत्सर्गः समानः । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रम्, जुहोतिरासेचनाधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्ध इत्येष एषां विशेष इति ।

[ शा- वि-भाट्ट-ग्रन्थेषु इदमधिकरणं पूर्वाधिकरणे अन्तर्भावितम् । ]

**मण्डन—** 'प्रक्षेपयुक्तो यजिरेव होमः । ' 'त्यागः परस्वीकरणं च दानम् । '



**शंकर—** ' होमलक्षणमेव च । ' ' दानलक्षणमप्यत्र । ' ' प्रयोगो यागहोमयोः । ' ' द्रव्यदेवान्वयो यागो होम आसेचनाधिकः । '

* **होमवत्** । द्यवदानस्य होमवत् हविःसंस्कारकत्वात् प्रत्येकानुसमयः किं न स्यादिति चेन्न, प्रत्येकं साहित्यानवगतेः । भाट्ट. ५।२।७.

* **होमसाधनत्वेन** पिठरादयः शूर्पेण विकल्प्यन्ते, ' शूर्पेण जुहोति ' इति विधाय ' तेन ह्यन्नं क्रियते ' इति हेतुसमर्पणात् इति पूर्वः पक्षः । हेतुर्व्यर्थः, स्तुतिस्तु प्ररोचनोपयुक्ता इति स्तावकमेव ' तेन ह्यन्नं क्रियते ' इति वाक्यं इति सिद्धान्तः । वि. १।२।३.

* **होलाका** वसन्तोत्सवः । वि. १।३।८.

**होलाकाधिकरणम्** । होलाका सर्वलोकधर्मः, न प्राच्यानामेव ॥

**अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् । १।३।७।१५ ॥**

**भाष्यम्—** अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणं तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति । तस्मात् होलाकादयः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादयः उदीच्यैरेव । यथा शिखाकल्पो व्यवतिष्ठते ' केचित् त्रिशिखाः केचित् पञ्चशिखाः ' इति ।

**वा—** **' देशधर्मानुदाहृत्य संप्रत्येतद्विचार्यते ॥ किं व्यवस्थितमूलास्ते किं वैषां सर्वधर्मता । विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ॥ इह सर्व उदाहार्या विचार्याश्च विभागशः । प्राच्या याननुतिष्ठन्ति वर्जयन्ति च साधवः ॥ तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते । एवं ये दाक्षिणात्यानां प्रतीच्यानां च केचन ॥ उदीच्यानां तथाऽऽचारा विचार्याः सर्व एव ते । आद्यं सूत्रद्वयं यावदिदमप्यत्र चिन्त्यताम् ॥ गृह्यगौतमसूत्रादिव्यवस्थासर्वगामिते ॥ '** पुराणमानवेतिहासव्यतिरिक्तगौतमवसिष्ठशङ्खलिखितहारीतापस्तम्बबौधायनादिप्रणीतधर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा, गौतमीयगोभिलीये छन्दोगैरेव च परिगृहीते । वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इत्येवं तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम् । – किं तानि तेषामेव प्रमाणान्युत सर्वाणि सर्वेषामिति ? ' **किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः । न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥**' अनुमीयतेऽनेनेत्यनुमानं लिङ्गमेवोच्यते । ' **तच्च व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् । विधिर्वा प्रतिषेधो वा न हि सोऽन्यत्र लिङ्ग्यते ॥** ' तत्र ग्रन्थात्मकाद् आचारात्मकाद्वा लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधावनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ । कुतः ? ' **अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत् । प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥ यथोपनयनं येषामाधानं च विधीयते । तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥ यथा च जातितद्भेदकुलधर्मा व्यवस्थिताः । तथैव देशधर्मादिव्यवस्थाऽपि भविष्यति ॥ यदि स्यात्सर्वगामित्वं विधानप्रतिषेधयोः । आचारोऽपि तथैव स्याद्व्यवस्थाहेत्वसंभवात् ॥** ' सर्वविषयशास्त्रप्रणीतो ह्याचारः सर्वदेशगतशक्तिमत्पुरुषैः अग्निहोत्रवदेवानुष्ठीयेत । '**यस्तु तं विनियोगेन कुरुते तद्व्यवस्थितम् । तेन नूनं श्रुतिः काऽपि तेषामेवं विधायिका ॥ अन्यथाऽनुपपत्त्या च श्रुतिरत्र प्रतीयते । तन्मात्रानुपपत्त्या च सा तत्रैवावधार्यते ॥** ' यस्मादयं देशाचारोऽयं वा गृह्यादिग्रन्थोऽन्यथा नोपपद्यते यदि श्रुतिमूलकत्वं नास्तीत्यनयोपपत्त्या मूलकल्पना तस्माद्व्यवस्थितविषयैव साऽध्यवसातव्या । तथा चोक्तम् । यदि च हेतुरवतिष्ठेत निर्देशादिति । ' **यदन्नकरणं हेतुः शूर्पहोमे विधीयते । तन्मात्रगतमेवासौ दृष्टान्तमपि कल्पयेत् ॥ यदन्नकरणं शूर्पं तेन तेनैव हूयते । ततश्चातिप्रसङ्गः स्यान्न दर्विपिठरादिषु ॥ एवं व्यवस्थितान् दृष्ट्वा देशाचारान्**

**समंततः। तन्मात्रविषया युक्ता तन्मूलश्रुतिकल्पना ॥ अनुमानव्यवस्थानाद्देशादिनियमादतः। तत्संयुक्तं प्रमाणं स्याद्यद्वाक्यमनुमीयते ॥'**

**अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद् विधानस्य। १६ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः। एवंजातीयकः सर्वधर्मः स्यात्। कुतः? तन्न्यायत्वाद् विधानस्य। विधीयते अनेनेति विधानं शब्दः। सोऽनुमीयते स्मृत्या। न च तस्य आकृतिवचनता न्याय्या, न च व्यक्तिवचनता। न सर्वेषामनुष्ठातॄणां यदेकं सामान्यम्, तस्य वाचकः कश्चिच्छब्दोऽस्ति, योऽनुमीयेत। तस्मात् सर्वधर्मता विधेर्न्याय्या। कुतः? पदार्थाः कर्तव्या इति प्रमाणमस्ति, व्यवस्थायां तु न किंचित् प्रमाणमस्ति।

**वा**— **'अपि वा सर्वधर्मः स्यादित्यत्रोत्तरमुच्यते। तन्न्यायत्वाद्विधानस्य शक्तमात्राधिकारिणः ॥'** इह स्मृतीराचारांश्चोपलभ्य मूलश्रुतिष्वनुमीयमानासु कारणानुविधायिकार्यन्यायेन अवश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यमिति भावनानामविशेषव्यवच्छिन्नयागदानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलककारकेतिकर्तव्यताविषयः तावदनुमातव्याः। एवं वर्जनीयेष्वपि देहेन्द्रियमनोद्वारव्यवहारेषु प्रतिषेध्यक्रियाकारकं नरकाद्यनिष्टफलप्रतिषेधकशब्दानुमानमवश्यंभावि तावता च योग्यत्वमात्रविषयत्वान्न दिग्देशपरिच्छिन्नकर्तृविशेषाधिकारनियतप्रतिपत्तिलाभः। कुतः? **'त्रिधैव ज्ञायते कर्ता विशेषेण प्रतिक्रियम्। योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः ॥'** तदिह विहितानुष्ठानयोग्यता तावत् समस्तार्यावर्तनिवासिवर्णाश्रमाणामन्धबधिरजडमूकादिवर्जमविशिष्टा। वर्जनीययोग्यत्वमपि यथोपलभ्यमानं द्वित्रिचतुर्वर्णाश्रममात्रसंबद्धं वा तदभ्यधिकदर्शनानुमितसमस्तम्लेच्छादिविषयं वा विज्ञायते। **'न त्वत्रोपपदं किंचिद्यथाचारानुसारि यत्। अनुमीयेत देशस्थदृष्टकर्तृविशेषणम् ॥ येऽपि च प्रतिषिध्येरन्देशान्तरनिवासिनः। तद्वाच्यपि पदं किंचिदनुमातुं न शक्यते ॥'** योग्यत्वेनाविशेषप्रवृत्तोऽप्यधिकारः केनचित्कर्तृविशेषणपदेन राजा राजसूयेन, वैश्यो वैश्यस्तोमेन इत्यादिवद्विशेष्येत न चात्र दृश्यमानाचरितृवाचि किंचिदेकमनेकं संभावयितुं शक्यम्। कुतः? **'सर्वं नामपदं तावद्व्यक्त्याकृतिनिबन्धनम्। यद्यदेवानुमीयेत नैकार्थमपि तद्भवेत् ॥'** न तावत्प्राच्यत्वदाक्षिणात्यत्वादिजातिः प्रतीच्योदीच्यादिव्यक्तिव्यावृत्ता सर्वप्राच्यादिव्यक्तिष्वनुगता काचिदुपपद्यते। यद्वचनमुपपदं होलाकाद्यधिकारं विशिंष्यात्। यास्तु मनुष्यत्वब्राह्मणत्वादिजातयः तासु विद्यन्ते ताः सर्वदेशवासिव्यक्तिष्वविशिष्टा इति नाऽऽचारानुरूपविशेषणसमर्थत्वेन ज्ञायन्ते। **'व्यक्तिवाचि तु यन्नाम तदेकत्रैव वर्तते। देवदत्तादिवत्तेन न सिध्येत् कर्त्रनेकता ॥'**

न ह्यनन्तभेदानां प्राच्यादिपुरुषव्यक्तीनां व्यस्तसमस्तानां संबन्धानुभवासंभवादेकमभिधानमवकल्पते। एतेन गुणक्रियाजातिविशिष्टपुरुषव्यक्तिवचनत्वं प्रत्युक्तम्। न हि काश्चिदपि गुणक्रियाजातिव्यक्तयः प्रतिदेशव्यवस्थितपुरुषव्यक्त्युपलक्षणयोग्याः संभाव्यन्ते। सर्वत्र तत्रापि व्यावृत्त्यविशेषात्। **'व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते। यमाश्रित्य प्रवृत्तं स्यादधिकारिविशेषणम् ॥'** एतदेव प्रतिपादयन् भाष्यकार आह। शक्तमात्रपुरुषाधिकारप्रवृत्तविधानविशेषणं येनोपपदेनानुमीयमानेन क्रियते 'न तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनता' इति। न ह्येते होलाद्याचाराः कांचिदाकृतिमनुविधीयन्ते न व्यक्तिं न हि यावत्सु पुरुषेष्वेतेऽवस्थितास्तावतामेकेनापि व्यपदेशेनोपसंग्रहः संभवति। केषांचित्तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनतेति ग्रन्थस्तेषामभिप्रायः यथैव 'जातिं तु बादरायणोऽविशेषात्' (६।१।८) इति सूत्रकारः स्वर्गकामपदं यौगिकमप्युद्दिश्यमानपुंस्त्वविशेषणासंभवात् फलार्थिमात्रमनुष्यजातिविषयोपपत्तेश्च सामर्थ्याक्षिप्तजातिमात्राधिकारं वक्ष्यति, **'तथेहापि फलार्थित्वकर्तृशक्त्याववोधनात्। देशधर्मेषु सर्वेषु नरजातेरधिक्रिया ॥'** कश्चित्पुनराख्यातशब्दार्थमुपवर्णयन् इमं ग्रन्थपाठं



दूषयित्वा पूर्वमेव समर्थयमानः सूत्रगतयावच्छ्रुतविधानशब्दजनितभ्रान्तिर्विधिभावनयोश्च भेदमपश्यन्नुभयस्वरूपनिरूपणपर्यनुयोगग्रासाद्भावार्थाधिकरणसिद्धान्तं विनाशयन्नेवमाह भाव इति वाऽनाख्येयः स्वधर्मेणान्यदतः शब्दज्ञानात्कारकवदिति।

तेन यः कश्चिदाख्यातप्रत्ययार्थतत्त्वं जिज्ञासमानः पृच्छति कः पुनरयं भावो भावना चेति तं प्रत्यनन्यशब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्वधात्वर्थसामान्यवचनकरोतिपरलिङाद्युच्चारणमात्रेणैवोत्तरं दास्यते कुर्याच्छब्द इत्यर्थः, सर्वश्चाऽऽख्यायमानोऽर्थ आकृतिरूपेण वाऽऽख्यायेत व्यक्त्याकृतिगोचरातिक्रान्तिश्च किलाऽऽख्यातशब्देनोपायरहितत्वादनाख्येयोऽस्यार्थ इति। तदेव किलानेनापि ग्रन्थेनोक्तं भाष्यकारेण। 'न तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनता' इति। विधानशब्दो हि सूत्रे पूर्वं प्रकृतस्तमेव तच्छब्देन निर्दिश्य व्यक्त्याकृतिवचनत्वादपनयति। **'कुर्यादित्युच्यमानो हि करोमीति प्रपद्यते। न विधेर्भावना या वा सामान्यव्यक्तिरूपताम् ॥'** तदिदमसंबद्धमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणान्यार्थमेव सच्चतुःशृङ्गादिमन्त्रवद्भाष्यकाराभिप्रेतार्थत्यागेन स्वप्रज्ञाविलसितं प्रकाशयताऽन्यस्मिन्नेवार्थे योजितम्।

देशाचारसर्वधर्मोपपत्तिविचारणार्थोऽयं ग्रन्थः स यदि पूर्वकृतया व्याख्ययोपपदनिराकरणविषयत्वेन वर्ण्यते तत एतत्सूत्रव्याख्यानेन संबध्यते यथोक्तन्यायमार्गेण। यदि तु तत्परित्यागेनाऽऽख्यातप्रत्ययार्थानामनाख्येयत्वापत्तिमेव व्यक्त्याकृतिरहितार्थत्वेन वर्णयेत्ततोऽत्यन्तासंबन्धानुपयुज्यमाननिरुपपत्तिकार्थत्वेन हेय एव स्यात्। तथाहि— **'यस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता। तस्मात्तद्विहितं कर्म सर्वार्थमिति विस्मयः ॥'** यदि नाम लिङादिप्रत्ययो भावनाया विधेर्वा व्यक्तिमाकृतिं वा वदेत्ततो होलाकादयः प्रतिनियतदेशधर्माणो भवेयुर्यतस्तु व्यक्त्याकृतिविनिर्मुक्तोऽव्यपदेश्योऽर्थस्तस्मात्तद्विहितधात्वर्थविषयः सर्वपुरुषधर्म इत्येवं नीयमानमसंबद्धोदाहरणे ज्येष्ठमेव स्यात्। **'अनाख्येयत्वमुक्त्वा च पर्यायैः स्वविकल्पितैः। अन्वाख्यानं कृतं तच्च पूर्वोक्तेन विरुध्यते ॥'** विध्युपदेशकर्तव्यताभावनाशब्दानां ह्यत्यन्ताभूतमेव बहुभाषित्वप्रख्यापनापरपर्यायत्वमध्यारोप्य आचक्षाणेन स्वयमनाख्येयत्वमतीव स्थापितम्। यद्यपि तावदाख्यातप्रत्ययः कर्तृशक्तितदाधारद्रव्यमात्रं वा वदेत्तथापि 'ब्राह्मणो यजमानः' इतिवदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न स्वगतव्यक्त्याकृतिवचनत्वविचाराधीनाधिकारित्वनिर्णयः स्यात्किमुत यदा कर्त्रभिधाननिरपेक्षविधिर्भावनादिमात्रवाचित्वमेवावस्थास्यते। यदि चैतावन्मात्रमेव सर्वधर्मत्वकारणं भवेत्ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमाख्यातप्रत्ययविधेयत्वाविशेषात्सर्वधर्मत्वप्रसङ्गः। अथ तेषामनिर्देश्यार्थप्रत्ययविहितानामपि राजाद्युपपदवशादसर्वधर्मत्वम्। एवं तत्राप्यसर्वधर्मत्ववादिना तदेवोपन्यसनीयम्। सर्वधर्मत्ववादिना च निराकर्तव्यम्। तच्चाऽऽचारानुरूपव्यक्त्याकृतिवचनत्वासंभवात्सामर्थ्यलभ्यमनुष्याकृतिमात्राधिकारप्रतिपत्तेर्वा निराकृतमेव। तद्यथा चोत्तरसूत्राणि 'लिङ्गाभावाच्च नित्यस्य' 'आख्या हि देशसंयोगात्' इत्येवमादीन्युपपदोपन्यासप्रत्याख्यानार्थानि संगंस्यन्ते। तस्मात्सर्वाधिकारन्यायत्वाद्विधानस्य व्यवस्थितदेशाचारगृह्यधर्मसूत्रनिबद्धधर्माणामपि सर्वधर्मत्वम्।

**दर्शनाद्विनियोगः स्यात्। १७ ॥**

**भाष्यम्**— अथ यदुक्तं यथा शिखाकल्पो व्यवतिष्ठते इति गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम्।

**वा**— यस्तु जातिकुलगोत्रधर्मवद्व्यवस्थितविध्यनुमानमिति। **'तत्रैकशब्दवाच्यानां जात्यादीनां व्यवस्थया। दर्शनाद्विनियोगः स्यात्पञ्चावत्तादिधर्मवत् ॥'** यथैव पञ्चावत्तं तु भृगूणां वसिष्ठशुनकात्रिवध्र्यश्वकाण्वसंकृतिराजन्यानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यन्वयतो व्यतिरेकतश्चोपलक्षणसंभवाद्व्यवस्थितविध्यवसानं तथैव प्रतिजातिगोत्रनियत-

त्रिशिखैकशिखादिकल्पव्यवस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ।

**लिङ्गाभावाच्च नित्यस्य । १८ ॥**

**भाष्यम्**— इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । कानि तानि पदानि ? अथ किमर्थं न लिङ्गाद् व्यवस्था ? यथा 'शुक्लो होता' इति । नास्ति तन्नियमेषां लिङ्गम्, यद्यथादर्शनमनुवर्तते । येऽपि श्यामा बृहन्तो लोहिताक्षास्तेऽपि न सर्वं आह्नीनैबुकादीन् कुर्वते । अनेवंलिङ्गा अपिचानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति प्रत्यक्षा श्रुतिः ।

**वा**— '**व्यक्त्याकृत्यभिधेयेऽर्थे प्रत्याख्याते विशेषणे । लोहिताक्षादिचिह्नानामधुनाऽन्या निराक्रिया ॥**' जातिव्यक्तिवाच्युपपदाभावेऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवत् अधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते— '**लिङ्गाभावाच्च नित्यस्य नास्ति कर्तुर्विशेषणम् । नियतेन हि लिङ्गेन नित्यः कर्तोपलक्ष्यते ॥ यच्चिह्नं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते । अन्येषामपि तद् दृष्टं तदनाचरतामपि ॥ दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि । तस्माद्व्यवस्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥**' यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्य उपसर्जनीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात् स्वार्थाक्षिप्तसंबन्ध्यन्तरत्वेन सामर्थ्यविघाताभावात् भवितव्यमेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा । '**नैतत्तुल्यमनेनेष्टमपेक्षान्तरसंगतेः । नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥**' गुरुशब्दस्य हि शिष्यापेक्ष एव आत्मलाभ इति देवदत्तशब्दोपात्तशिष्यसंबन्धानतिरेकान्तर्णीतस्वार्थत्वान्नाभ्यधिकापेक्षाकृतसामर्थ्यप्रतिबन्धप्रसङ्गः । '**इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया । न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥**' यद्यपि चैष गम्यगमकसंबन्धे सति लिङ्गशब्दः प्रवर्तते तथाऽपि गुरुशिष्यपितापुत्रादिसंबन्धवन्नास्य तदपेक्षप्रवृत्तिनिमित्तसंबन्धिशब्दत्वप्रसिद्धिः । '**लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते । लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥**' लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न संबन्धिशब्दत्वेनोच्यते तथाऽपि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति कामं 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यत्वं पुनर्लब्धस्वार्थलिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपनीयत इति तत्संबन्धापेक्षायामपरिहार्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा नियतस्य कर्तुर्नित्यस्याधिकारस्य वा न प्रतिपादकं किंचिच्चिह्नमस्तीति न तदभिधाय्युपपदविशेषितव्यवस्थितहोलाकादिविधानोपपत्तिः ।

**आख्या हि देशसंयोगात् । १९ ॥**

**भाष्यम्**— अथ कस्मान्न समाख्यया नियमः । ये दाक्षिणात्या इति समाख्यातास्ते आह्नीनैबुकादीन् करिष्यन्ति, ये उदीच्या इति समाख्यातास्ते उद्वृषभयज्ञादीन्, ये प्राच्या इति ते होलाकादीन् । यथा, 'राजा राजसूयेन' इति । नैतदेवम् । देशसंयोगादाख्या भवति । दक्षिणदेशान्निर्गतः प्राक्षु वा उदक्षु वाऽवस्थितः आह्नीनैबुकादीन् करोत्येव । उदीच्याश्च देशान्तरे उद्वृषभयज्ञादीन्, प्राच्याश्च होलाकादीन् । अन्यदेशश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति । तस्मान्न व्यवस्था । 'राजा राजसूयेन' इति तु नियता जातिः ।

**वा**— '**इदानीं तु यदाचारमत्यन्तमनुवर्तते । तत्प्राच्यादिसमाख्याख्यमुपन्यस्तं विशेषणम् ॥**' सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते । तस्मात् समाख्याविशिष्टविध्यनुमानात् तत्संयुक्तप्रमाणपक्ष एव ज्यायानिति । तत्र समाधिः । '**आख्या हि देशसंयोगाद्यस्मात्कर्तृषु वर्तते । आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥ देशश्च दिग्विशिष्टः स्याद्दिग्रूपं चानवस्थितम् । न च तद्देशसंबन्धादनाचारोऽनुवर्तते ॥ निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्यदर्शनात् ॥**' समाख्यायास्तावन्न देशादन्यन्निमित्तमस्ति तद्विशिष्टविधिविहिताश्चाऽऽचाराः केवलमेव तद्देशसंबन्धमनुवर्तेरन् । उभयथाऽपि तु व्यभिचारान्न देशनिमित्तसमाख्याविशिष्टविधानकल्पना घटते ।

**न स्याद्देशान्तरेष्विति चेत् । २० ॥**

**भाष्यम्**— इति चेत् पश्यसि, यदि देशसंयोगात् आख्या भवेत्, देशान्तरस्थस्य न भवेत् । भवति च देशान्तरस्थस्य, 'माथुरः' इत्यसंबद्धस्यापि मथुरया । तस्मान्न देशसंयोगादाख्या ।

**वा**— अपरस्त्वनयैवोपपत्त्या लब्धात्मीयपक्षोपपत्तिः प्रत्यवतिष्ठमान आह— 'न स्याद्देशान्तरेष्विति चेत्' इति । '**यदि देशनिमित्तत्वात्समाख्या दूषिता त्वया । शक्यमन्यनिमित्तत्वं वक्तुमस्या मया पुनः ॥ सति देशनिमित्तत्वे न स्याद्देशान्तरेष्वियम् । तस्मात्किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥ अस्तु वा निर्निमित्तैव विशेक्ष्यति तथाऽपि तु । लब्धाचारनिमित्तानां किं निमित्तान्तरेण नः ॥**' तस्मादनिमित्तया समाख्ययैवाधिकारविशेषसिद्धेर्न व्यभिचारिदेशनिमित्तत्वमस्याः कल्पयितव्यमित्युक्ते अभिधीयते ।

**स्याद् योगाख्या हि माथुरवत् । २१ ॥**

**भाष्यम्**— देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा, न भूतवर्तमानभविष्यत्संबन्धापेक्षा । यतो दृश्यते मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन् मथुराया निर्गतश्च । यस्य त्वतोऽन्यतमः संबन्धो नास्ति न स माथुरः । तस्मान्न समाख्यया व्यवस्था ।

**वा**— '**संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते । निवासभवजातत्वतदागमनहेतुभिः ॥**' 'सोऽस्य निवासः' तत्र भवस्तत्र जातस्तत आगत इत्येवमादिनिमित्तपरित्यागेन न कदाचित्प्राच्यादिसमाख्या वर्तते । न चैषा देशसंयोगं व्यभिचरति । न चैनामाचारोऽनुवर्तते तन्निवासिनामपि केषांचिदनाचरणाच्चिरनिर्गतपुत्रपौत्रादीनां च देशान्तरेष्वप्याचरणादिति न समाख्यया नियतविधिसिद्धिः । यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तं तत् 'तद्गच्छति पथि दूतयोः' इति वा दूतविषयं कल्पयितव्यमप्रत्ययितोक्तत्वाद्वा उपेक्षितव्यम् । सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ।

**कर्मधर्मो वा प्रवणवत् । २२ ॥**

**भाष्यम्**— अथ कस्मान्न कर्माङ्गं देशः । यः कृष्णमृत्तिकाप्रायः स आह्नीनैबुकादीनाम्, यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति ।

**वा**— इदानीं कर्तृविशेषणविशिष्टविध्यनुमानात्प्रतिहतः कर्माङ्गभूतप्राग्देशादिविध्यनुमानसंभवं मन्यमान आह— 'कर्मधर्मो वा प्रवणवत्' इति । '**प्रागुदक्प्रवणो यद्वत्प्राचीनप्रवणोऽपि वा । देशो भवति कर्माङ्गं प्राग्देशादिस्तथा भवेत् ॥**' इति ।

**तुल्यं तु कर्तृधर्मेण । २३ ॥**

**भाष्यम्**— यथा कर्तर्यव्यवस्थितं लिङ्गं श्यामादि न पदार्थैः संवादमुपैति, तद्वद्देशलिङ्गमव्यवस्थितम् । कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति, तथाऽन्यलिङ्गेऽपि कुर्वन्ति । तस्मान्न देशतो व्यवस्था । प्राचीनप्रवणं तु श्रुत्या नियतं वैश्वदेवस्य ।

**वा**— '**तुल्यं तु कर्तृधर्मेण**' तच्चिह्नमनवस्थितम् । **दिक्कृष्णमृत्तिकाप्रायप्रभृतिव्यभिचारतः ॥ प्राग्देशो यो हि केषांचित्सोऽन्येषां दक्षिणापथः । तथोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ॥ मृत्तिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम् । होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ॥ पुरुषापेक्षयाऽऽचारस्तस्मिन्नपि न दृश्यते । अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणम् ॥**' इति ।

**शा**— स्मृतीनां आचाराणां च विरोधाविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते । स्वातन्त्र्यं च स्मृतीनां निरस्तम् । इदानीं केषांचित् आचाराणां स्मृतीनां च व्यवस्था अव्यवस्था वा इति चिन्त्यते । होलाकादयो हि कैश्चिदेव प्राच्याद्यभिमानिभिरनुष्ठीयन्ते न सर्वैः । गृह्याणि मानवातिरिक्ताश्च स्मृतयः कैश्चिदेव काश्चित्

पठ्यन्ते न सर्वैः । तदेतान् स्मृत्याचारानुदाहृत्य विचार्यन्ते । किमेते तेषामेव धर्मा उत सर्वेषामिति । तदर्थं च किं तेषां स्मृतिर्मूलभूता व्यवस्थितविषया शक्यते कल्पयितुं उत सर्वसाधारण्येन एव इति । तत्र ' लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते । धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते ॥ ' स्मृत्याचारलिङ्गगम्या श्रुतिर्न प्रत्यक्षा । तच्च लिङ्गं केषुचिदेवोपलभ्यते । अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते । नहि तस्याः सर्वविषयत्वे प्रमाणमस्ति । व्यवस्थितविषयत्वेऽपि स्मृत्याचारयोरुपपत्तेः । यदि च साधारणी श्रुतिः स्यात् ततस्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्याताम् । यदि हि आलस्यादिनिमित्तमितरेषां अनाचरणं तदा स्यादपि साधारणानुमानम् । यत्तु प्राच्याद्यभिमानिनामाचरणं इतरेषां च अनाचरणं न तत्साधारणानुमानेऽवकल्पते । तस्मात् व्यवस्थितमेषां धर्मत्वम् । इति प्राप्ते, अभिधीयते– ' **विशेषाभावमात्रेण प्रसिध्येत्सर्वधर्मता । विशेषणाद्व्यवस्था स्यात् तच्च नेहोपपद्यते ॥**' यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति तदयुक्तम् । नहि सर्वधर्मत्वादिना प्रमाणमुपन्यसितव्यम् । उभयवादिसिद्धेनैव विधिना असति विशेषोपादाने सर्वधर्मत्वसिद्धेः, व्यवस्थावादिना तु वक्तव्यं विशेषे प्रमाणम् । तच्च नास्ति । तथाहि स्मृतयः तावत् साधारण्येनैव विदधतीति न तेषु चरणविशेषोपादानमस्ति । स्मृत्यनुसारेव च श्रुतिकल्पनमिति तदपि साधारणं न्याय्यम् । पाठव्यवस्था तु कर्तुस्तच्चरणत्वात् । कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थं अध्यापयामास । ते अपि अन्यान् छन्दोगान् इत्येवं गौतमीयस्य छन्दोगैः पाठः । तथा आपस्तम्बग्रन्थस्य तैत्तिरीयैरेवं गृह्यग्रन्थानामपि इति व्यवस्थितधर्मविषयत्वं अप्रमाणकम् । आचाराणां तु सर्वाचरित्रनुगतं अनाचरितृभ्यश्च व्यावृत्तं आकृतिव्यक्तिगुणसंस्थानादिकं न किंचित् विशेषणं संभवति, यदुपादाय होलाद्यधिकारं विशिंष्यात् । तथा प्राच्यादिसमाख्याऽपि व्यभिचारिणी तद्देशगतानामपि केषांचित् अनाचरणात् । चिरविनिर्गतपुत्रपौत्रादीनां च असत्यामपि समाख्यायां आचरणात् । तस्मात् असति विशेषणे सर्वधर्मत्वं आचाराणां स्मृतीनां च इति सिद्धम् ।

**सोम**— विषयपरिशोधनेन तत्प्रामाण्यस्य स्थिरीकरणात् प्रामाण्यस्य स्वातन्त्र्याभावस्य च असत्त्वे व्यवस्थाविचारानुपपत्तेश्च **संगतिरिति** । **सूत्रार्थस्तु**– अनुमापकस्य व्यवस्थितत्वात् व्यवस्थासंयुक्तमेव श्रुतिरूपं प्रमाणमनुमेयं स्यादिति ।

**वि**— ' होलाकादेर्व्यवस्था स्यात्साधारण्यमुताग्रिमः । देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः ॥ प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे । अर्थाबोधादमात्वं चेत् न सामान्यानुमानतः ॥ '

**भाट्ट**— अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीयाः छन्दोगैरेव, तथा आचारेषु कर्तृव्यवस्था यथा होलाकादि प्राच्याद्यभिमानिभिरेव, तत्र तदनुमेयश्रुतिरप्यनुमापकस्य नियतविषयत्वात् नियताधिकारिकैवेति नान्यैस्तदनुष्ठेयम् । इति प्राप्ते, यद्यप्यनुमापकं नियतविषयकं तथाऽपि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम् । न हि प्राच्यत्वं नाम सर्वाचरित्रनुगतं जातिव्यक्तिगुणसंस्थानादिभिर्निर्वक्तुं शक्यम् । तत्र तद्देशगतानामप्यनाचरणात् चिरनिर्गतपुत्रपौत्राणामप्याचरणाच्च । अतो विशेषणाभावात् सर्वविषयत्वम् । गौतमीयादिस्मृतेस्तु न छन्दोगाधिकारस्मरणम्, येन श्रुतावपि तत्संभाव्येत । पाठमात्रं तु तेषां स्मृतिकर्तुस्तच्छाखीयत्वादुपपन्नम् । कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् ग्रन्थमध्यापयामास । तेऽप्यन्यानित्येवं पाठः तन्मात्रे व्यवस्थित इति तत्रापि सर्वविषयत्वमेव ।

**मण्डन**— ' होलाककर्मानियमेन कार्यम् । ' 'होलाककर्म ' होलाकाद्याचारानुष्ठानम्, ' अनियमेन ' व्यवस्थितविषयत्वाभावेन सर्वजनसाधारण्येन, ' कार्यम् ' कर्तव्यमिति योजना ।

**शंकर**— ' होलाकाद्यव्यवस्थितम् । '

* होलाकाधिकरणम् । (१।३।८) । दाक्षिणात्यानां मांसभक्षणवर्जनाचारः, प्राच्यादीनां च मांसभक्षणाचारः । तत्रोभाभ्यामाचाराभ्यां श्रुत्यनुमानं सामान्यत एव स्यात्, दाक्षिणात्यप्राच्याद्युपपदकल्पनायाः होलाकाधिकरणे निरस्तत्वात् । बाल. पृ. १३९.



## ▣ होलाकाधिकरणन्यायः । साहस्री. ८५९.

* होलाकादयः किं प्राच्यानामेव धर्मः उत सर्वेषां इति संदेहे सर्वेषामिति सिद्धान्तः । भा. १।३।७। १५–२३.

* होलाकाद्याचाराः भविष्योत्तरादौ निबद्धाः । सु. पृ. १८९.

* होलाकाद्याचारव्यवस्थाकारणं कर्तृविशेष एव न देशः । सु. पृ. २५७.

* होलाकोत्सवादिः सदाचारः शिष्टाचारत्वात् प्रमाणम् । वि. १।३।४ वर्णकं ३.

* हौत्रं, आध्वर्यवं, औद्गात्रं इति समाख्यया धर्मनियमः । वि. ३।३।६. * हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यया होतुः अध्वर्योः उद्गातुश्च तत्तत्कर्मभिः संबन्धः । ३।३।६।१३. मीको. पृ. ४१५९ 'समाख्याऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * हौत्रं इति वृद्धिदर्शनात् होतृशब्दात् तस्येदं कर्म इत्येवमन्वाख्यानं इति गम्यते । वा. ३।७।१९।४०. * हौत्रं इति समाख्याया अर्थवत्त्वात् होता हौत्रस्य कर्ता भवति । भा. १२।४।१४।३५, * हौत्रमिति समाख्यातानि कर्माणि होत्रा कर्तव्यानि । ३।३।६।१३, * हौत्रं वैष्णवं अमावास्यां प्रकृत्य आम्नायते ' इदं विष्णुर्विचक्रमे० ' ' प्रतद्विष्णुः स्तवते वीर्येण० ' इति । १०।८।१७।५३, * हौत्रं होत्रा कर्तव्यम् । ३।७। १९।४०.

## ▣ हौत्रास्तु विकल्पेरन्नेकार्थत्वात् । १२।३। १६।३६ ॥

हौत्राः, होत्रा अनुवचनीया ये मन्त्राः यूपोच्छ्रयणार्था वा यूपपरिव्याणार्था वा ते एकार्थत्वात् एककार्यकरत्वात् विकल्पेरन् इति **पूर्वः पक्षः** ।

**समुच्चयो वा क्रियमाणानुवादित्वात् । ३७ ॥**

न विकल्पः किंतु समुच्चयः स्यात् हौत्राणां मन्त्राणाम् । क्रियमाणानुवादित्वात् । अध्वर्युणा क्रियमाणं अनुवदन्ति इति क्रियमाणानुवादिनः । इति **सिद्धान्तः** ।

**समुच्चयं च दर्शयति । ३८ ॥**

' त्रिः प्रथमामन्वाह, त्रिरुत्तमाम् ' इत्यादि लिङ्गं हौत्राणां मन्त्राणां समुच्चयं दर्शयति । के.

* हौत्रप्रवचनाख्यः ऋग्वेदः । सु. पृ. ७५७, ११००.

## ▣ हौत्रमन्त्राणां समुच्चयः ॥

**हौत्रास्तु विकल्पेरन्नेकार्थत्वात् । १२।३।१६। ३६ ॥**

**भाष्यम्**— हौत्रास्तु ये मन्त्राः यूपोच्छ्रयणीया वा ' उच्छ्रयस्व वनस्पते ' इति, यूपपरिव्याणार्था वा ' युवा सुवासाः ' इति, ते विकल्पेरन् । कुतः ? एकार्थत्वात् । एकार्था एते उच्छ्रयणस्य, परिव्याणस्य चाभिधायकाः । एकैकश्च तेषामितरानपेक्षस्तदभिदधाति । तस्माद्विकल्पः ।

**समुच्चयो वा, क्रियमाणानुवादित्वात् । ३७ ॥**

**भाष्यम्**— समुच्चयो वा हौत्राणाम् । कुतः ? क्रियमाणानुवादित्वात् । करणानां विकल्प उक्तः । न चैते करणाः । क्रियमाणानुवादिनः एते । कः पुनरनयोर्विशेषः ? करणाः करोमीत्येवं प्रत्ययं कुर्वन्ति । क्रियमाणानुवादिनः एवं कर्तव्यमिति । कथं कृत्वा ? उच्यते । अध्वर्योस्तावत् करोमीत्येतेन प्रत्ययेनार्थः । असति ह्येतस्मिन् क्रियैव न प्रवर्तते । एष च प्रत्ययः सति पूर्वस्मिन् प्रत्यये भवति । यो हि स्मरति इदं मया कर्तव्यमिति, स तत् करोति । क्रियमाणानुवादिनश्चाध्वर्युणा क्रियमाणमर्थमनुवदन्ति, ' अञ्जन्ति त्वामध्वरे देवयन्तः ' इति । सोऽनुवादः अलमध्वर्योः स्मृतिं कर्तुम् । अतस्तत्स्वरूपः । तेन च कर्मणा आकाङ्क्षितत्वात् स्मरणार्था एते विज्ञायन्ते । स्मरणार्थस्य च मन्त्रस्य आम्नानसामर्थ्यात् स्मारितं कृतमदृष्टार्थाय भवति यथाप्रेषितं कृतम् । ननु विधिशब्दा-

देव स्मृतिर्भवति । सत्यम्, विधिशब्दादपि सामर्थ्याद्भवति । मन्त्रादपि भवति । मन्त्रस्य आम्नानसामर्थ्यान्मन्त्रेण कर्तव्या । प्रततेषु च कर्मसु स्मृतिसंतानेनार्थः इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे संभवः इति क्रियमाणानुवादित्वाद्धौत्राणां समुच्चयः ।

**समुच्चयं च दर्शयति । ३८ ॥**

**भाष्यम्**-- 'त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह, ज्योतिष्मतीरनुब्रूयात्' इति । अनेकसंनिपाते चैतद्भवति प्रथमा, उत्तमेति । तस्मात् समुच्चयः ।

**शा**— 'उच्छ्रयस्व वनस्पते' इत्यादयो ये क्रियमाणानुवादिनो हौत्रा मन्त्राः तेषामपि करणवत् एकार्थत्वात् विकल्पप्राप्तौ उच्यते । करणानि हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । न च एकेन तत्सिद्धौ इतरेण कार्यमस्तीति युक्तः तत्र विकल्पः । क्रियमाणानुवादिनस्तु अध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः । स्मृत्यविच्छेदश्च आन्तादपेक्षितः इति सर्वेषां समुच्चयः ।

**के**-- ब्राह्मणविहितानां प्रथनादिमन्त्राणामिव हौत्राणामपि विकल्प इत्युत्थानात् **दृष्टान्तसंगतिः ।**

**वि**-- 'उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।, विकल्पः स्मारकत्वैक्या, दाकारान्यत्वतोऽन्तिमः ॥' 'कर्तव्यं करोति' इति स्मृतिप्रकारान्यत्वात् कार्यैक्याभावात् समुच्चयः ।

**द्वितीयवर्णकमारचयति**— 'उच्छ्रयस्व समिद्धस्वेत्यादीनां किं विकल्पनम् । समुच्चयो वा, कार्यैक्यादाद्यो, ऽनुस्मृतयेऽन्तिमः ॥'

**भाट्ट**— ये तु क्रियमाणानुवादिनो हौत्रा मन्त्राः, तेषामपि क्रियमाणकर्मस्मृतिजनकत्वेन दृष्टार्थत्वस्यैव मन्त्राधिकरणे कौस्तुभे स्थापितत्वात् करणमन्त्रवत् विकल्पः । इति प्राप्ते, करणमन्त्रजन्यस्मृतेः अनुष्ठानजनकत्वेन एकेन सिद्धौ इतरस्य वैयर्थ्यापत्तौ विकल्पः । प्रकृते तु अध्वर्युणा क्रियमाणस्य बहुक्षणव्यासक्तस्य कर्मणः स्मृत्यविच्छेदार्थं पुनःपुनः स्मरणात् अनेकैरपि मन्त्रैः तत्तद्व्यापाराणां स्मरणोपपत्तेः अष्टदोषदुष्टविकल्पायोगेन युक्त एव समुच्चयः । अत एव 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्', 'ज्योतिष्मतीरनुब्रूयात्' इत्यादिकानि लिङ्गान्यपि संगच्छन्ते ।

**मण्डन**-- 'हौत्रो मन्त्रः स्यात् समुच्चेय एव ।'

**शंकर**-- 'क्रियमाणानुवादिषु ।' समुच्चयः ।

* **हौत्रकाध्यायः । संकर्ष. ३.**

⌛ **ह्रदनक्रन्यायः ।** यथा ह्रदनक्रयोः परस्परवियुक्तयोः धीवरेण प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्धर्षता भवति, तथा प्रकृतेऽपि । (अतः रक्ष्यरक्षकभावे अयं न्यायः) । **साहस्री. ३९२.**

* **हृसीयसी** गायत्री । पादेषु अक्षराणि ६।६।७। उदा० 'प्रेष्ठमु प्रियाणां' ( **ऋसं.** ८।१०३।१० ) किंवा ७।६।६। उदा० 'इन्द्रः सहस्रदाव्नां' ( **ऋसं** १।१७।५ ) ।